THE

KASHI SANSKRIT SERIES

145

( Alaṅkāra Section, No. 6 )

# THE SAHITYADARPAṆA

OF

**S'ri Vis'vanatha Kaviraja**

( Chapter I VI Called Part I )

*Edited with*

**The LAKSHMI Sanskrit Commentary and N**

BY

SĀHITYĀCHĀRYA

PT. SRI KRISHNA MOHAN THAKUR.



PUBLISHED BY

JAYA KRISHNA DAS HARIDAS GUPTA

*The Chowkhamba Sanskrit Series Office,*

काशी संस्कृत सीरिज-ग्रन्थमाला

१४५

अलङ्कारविभागे (९) षष्ठं पुष्पम् ।

॥ श्रीः ॥

श्रीमद्विश्वनाथकविराजप्रणीतः

# साहित्यदर्पणः

( प्रथमपरिच्छेदात्मकः प्रथमो भागः )

काशीस्थविश्वनाथमन्दिराध्यक्षपदाध्यासितश्रीभवानीशङ्करसंस्कृतमहा-
विद्यालयप्रधानाध्यापकेन साहित्याचार्यठक्कुरोपनामक-
श्रीकृष्णमोहनशास्त्रिणा सटिप्पण-'लक्ष्मी'
संस्कृतहिन्दीटीकाभ्यां विभूषितः
सम्पादितश्च ।

प्रकाशकः

जयकृष्णदास-हरिदास गुप्तः,
चौखम्बा संस्कृत सीरिज आफिस,
बनारस सिटी ।

सं० २००४ । [ ई० १९४७

काशी-संस्कृत-सीरिज-ग्रन्थमाला
१४५

अलङ्कारविभागे (६) षष्ठं पुष्पम् ।

॥ श्रीः ॥

श्रीमद्विश्वनाथकविराजप्रणीतः

# साहित्यदर्पणः

(षष्ठपरिच्छेदान्तः प्रथमो भागः)

काशीस्थविश्वनाथमन्दिराध्यक्षसंस्थापितश्रीभवानीशङ्करसंस्कृतमहा-
विद्यालयप्रधानाध्यापकव्याकरणसाहित्याचार्यठकुरोपनामक-
श्रीकृष्णमोहनशास्त्रिणा सटिप्पण-'लक्ष्मी'
नामकटीकया विभूषितः
सम्पादितश्च ।



प्रकाशकः
जयकृष्णदास-हरिदास गुप्तः,
चौखम्बा संस्कृत सीरिज आफिस,
बनारस सिटी ।

सं० २००४ ] [ ई० १९४७

॥ श्रीः ॥




गीर्वाणवाग्वल्लिललिताल्वालकल्पानां धर्मनयविनयमनस्वितादिगुणविभूषि-
तानां देशकुलजातिशास्त्राचारादिसमस्तसनातनमर्यादापालनतत्पराणां देश-
प्रसिद्धवत्सकुलकमलदिवाकराणां दिगन्तयशसां दैवज्ञशिरोमणीनां
विविधविद्याविद्योतितान्तःकरणवैयाकरणसकेसरिकैवल्यपथपथिक
'बदरिनाथशर्म'तनूजन्मनां ठक्कुरोपनामक"श्रीलोक-
नाथशर्म"तातपादानां विशुद्धसनातनपद्धतिमवष्ट-
भ्य"लक्ष्मी"नामकसंस्कृतटीकोपेतं ग्रन्थरत्नमेनं
शिष्योपशिष्यैरहमहमिकया चिरायार्च्यं
तयोः पादपङ्कजयोः सादरं सविनयं
सबहुमानञ्चादधाति —

तदीयः

**श्रीकृष्णमोहनशर्मा**

॥ श्रीः ॥



# समर्पणम्

गीर्वाणवाग्वल्लिलालितालवालकल्पानां धर्मनयविनयमनस्वितादिगुणविभूषि-
तानां देशकुलजातिशास्त्राचारादिसमस्तसनातनमर्यादापालनतत्पराणां देश-
प्रसिद्धवत्सकुलकमलदिवाकराणां दिगन्तयशसां दैवज्ञशिरोमणीनां
विविधविद्याविद्योतितान्तःकरणवैयाकरणसकेरिकैवल्यपथपथिक
'बदरिनाथशर्म'तनूजन्मनां ठक्कुरोपनामक"श्रीलोक-
नाथशर्म"तातपादानां विशुद्धसनातनपद्धतिमवष्ट-
भ्य"लक्ष्मी"नामकसंस्कृतटीकोपेतं ग्रन्थरत्नमेनं
शिष्योपशिष्यैरहमहमिकया चिरायार्चि
तयोः पादपङ्कजयोः सादरं सविनयं
सबहुमानञ्चादधाति —

तदीयः

## प्रशस्तिपञ्चकम्

श्रीकृष्णमोहनकविप्रवरप्रणीतां
श्रीनामतोऽखिलजनानुसवेदय "लक्ष्मीम्" ।
साहित्यदर्पण-सदर्पणमेवटीकां
टीकान्तरस्फुटविविक्तबहुप्रतीकाम् ॥ १ ॥

या न प्रतिप्रतीकाऽऽविष्कृतभावाऽस्फुटोक्तिकोटीका ।
नासौ नटी, न टीकाऽशोकानां कौतुकं कुरुते ॥ २ ॥

रसस्वरूपमास्वाद्य[illegible] सपरिश्रमम् ।
अदर्शयद्विवाऽऽदर्शे टीकाकृद्विशदैः पदैः ॥ ३ ॥

मूलोद्धृतोदाहरणार्थवर्णनक्रमेण
स व्याख्यः कृतभृकुटीः कृती ।
स्वव्यञ्जनाऽऽमयधूलताकिंकोऽपि
तद्धूकास्याभिरचीकसच्च सः ॥ ४ ॥

किमधिकैरनयोत्तमटीकया
स्फुटदशेषरहस्यचिरन्तुपाम् ।
स्वसद्गुणां विदुषामपि विद्विषां
रचयितुः शुभदाऽस्तु शिखाऽऽशिषाम् ॥ ५ ॥

व्या० न्या० मी० सां० यो० वेदान्ताचार्य-
लब्धस्वर्णपदक-कविरत्न-
**श्रीभूपनारायणशर्मा झोपाह्वः**

# प्रशस्तिपञ्चकम्

श्रीकृष्णमोहनकृतिप्रथमप्रणीतां
प्रीताः परतोऽधिकमनूनमवेत्य 'लक्ष्मीम्' ।
साहित्यदर्पण-सदर्पणयोग्यटीकां
टीकान्तरस्फुटविविक्तचतुष्प्रतीकाम् ॥ १ ॥

या न प्रतिप्रतीकाऽऽविष्कृतभावाऽस्फुटोक्तिकोटीका ।
नासौ नटी, न टीकाऽभीकानां कौतुकं कुरुते ॥ २ ॥

रसस्वरूपमास्वादक्रमञ्च सपरिश्रमम् ।
अदर्शयदिवाऽऽदर्शे टीकाकृद्विशदैः पदैः ॥ ३ ॥

मूलोद्धृतोदाहरणार्थवर्णनक्रमेण
सव्याख्यमलङ्कृतीः कृतौ ।
स्वकल्पनाऽऽगमधृतसार्थकोऽपि
तद्वृत्तकारस्याभिरुचिकरश्च सः ॥ ४ ॥

किमधिकैरनयोऽसमटीकया
स्फुटदशेषरहस्यविरन्तुषाम् ।
स्वरसजुषां विदुषामपि विद्विषां
रचयितुः शुभदाऽस्तु शिवाऽऽशिषाम् ॥ ५ ॥


व्या० न्या० मी० सां० यो० वेदान्ताचार्य-
लब्धस्वर्णपदक--कविरत्न--
**श्रीभूपनारायणशर्मा झोपाह्वः**
काशिक-राजकीय सं० महाविद्यालयाध्यापकः ।

॥ श्रीः ॥

# साहित्यदर्पण-'लक्ष्मी'टीका

## एतट्टीकाविषये—

## साहित्यरत्नाकराणां महामहोपाध्यायप्रभृति-भारतविभूतीनां विद्वद्धौरेयाणां

## सम्मति-पत्रम् ।

---

### महामहोपाध्याय पण्डित श्री हरिहरकृपालु द्विवेदी

प्रिंसिपल सन्यासि-संस्कृत कालेज, काशी ।

मिथिलामण्डलान्तर्गत-बरौनीग्रामवास्तव्यः प०श्रीकृष्णमोहनठक्कुरमहोदयो व्याकरण-साहित्याचार्यो मीमांसाशास्त्री ममातीव परिचितः स्वाधीतशास्त्रीयमार्मिकान्तस्तलप्रविष्ट-प्रकृष्टपाण्डित्यप्रकर्षे इत्येतावतैवेतरान्नातिशेते अपि तु इतरेष्वपि शास्त्रेषु प्ररूढव्युत्पत्ति-प्रबुद्धमना गूढार्थं विविच्य परान् प्रत्येषिपून् प्रत्युपदिशतीति संविदानस्य कस्य सहृदयस्य-हृदयं न जरिहृषीति । साम्प्रतमप्ययमनुपरतज्ञानपिपासः 'श्रीभवानीशङ्कर संस्कृत विद्यालय' प्रधानाध्यापकोऽध्यापनकौशलेन छात्रान् प्रहर्षयन् काशीमध्यास्ते द्रव्यार्जना-पेक्षया विद्यार्जनं द्विजानां गरीय इत्यभिप्रयन् । यथाऽध्यापने पटुप्रज्ञस्तथा विचारेऽप्य-पूर्वार्थोन्मेषधिषणः मुस्फुरत्-सुप्रतिभो विमलवाग्विन्यासेन विदुषां चेतो रारञ्जि । अयमेव महानुभावः साहित्यशास्त्रशेखरायमाणं साहित्यदर्पणं विषमस्थले परैरुपेक्षितमपेक्षितव्या-ख्यानमटीकिष्ट, विशिष्य जिज्ञास्यं गूढार्थतत्त्वं विवृण्वानोऽनूचानानां विदुषाञ्च जिज्ञासूना-मुपचिकीर्षयेति तद्दर्शनादेव तद्गुणाः स्फुरन्त्यमत्सरमनसामिति कृतं तत्र भूरिभाषितेन ।

---

### महामहोपाध्याय पण्डित श्री गोपीनाथ (देव) कविराज, एम. ए.

भूतपूर्व प्रिंसिपल गवर्नमेण्ट संस्कृत कालेज, काशी ।

साहित्याचार्यठक्कुरोपनामकश्रीकृष्णमोहनशर्मणा विरचिता साहित्यदर्पणटीका स्थाली-पुलाकन्यायेन मया यथावसरं क्वचित् क्वचिदवलोकिता, यद्यपि साहित्यदर्पणस्य प्राचीनानि नवीनानि च बहूनि व्याख्यानानि सन्ति तथापि न तानि मन्दमतीनां श्रमपराङ्मुखानां विद्यार्थिनां बोधसौकर्याय तादृशमुपकारमावहन्तीति मन्यमानो ग्रन्थकारः तदुद्देश्यप्रेरितः प्राचीनटीकाभ्यः सारमाहृत्याभिनवां टीकामिमां रचितवान् । अस्या वाग्गुम्फनं सरलपद-[illegible] । [illegible]कारिण्यपि विद्व-

॥ श्रीः ॥

# साहित्यदर्पण-'लक्ष्मी'टीका

## एतट्टीकाविषये—

## साहित्यरत्नाकराणां महामहोपाध्यायप्रभृति-भारतविभूतीनां विद्वद्धौरेयाणां

## सम्मति-पत्रम् ।

---

**महामहोपाध्याय पण्डित श्री हरिहरकृपालु द्विवेदी**

**प्रिंसिपल सन्यासि-संस्कृत कालेज, काशी ।**

मिथिलामण्डलान्तर्गत-वरौनीग्रामवास्तव्यः प० श्रीकृष्णमोहनठक्कुरमहोदयो व्याकरण-साहित्याचार्यो मीमांसाशास्त्री ममातीव परिचितः स्वाधीतशास्त्रीयमार्मिकान्तस्तलप्रविष्ट-प्रकृष्टपाण्डित्यप्रकर्षं इत्येतावतैवेतरान्नातिशेते अपि तु इतरेष्वपि शास्त्रेषु प्ररूढव्युत्पत्ति-प्रबुद्धमना गूढार्थं विविच्य परान् प्रत्येषिषून् प्रत्युपदिशतीति संविदानस्य कस्य सहृदयस्य-हृदयं न जरिहृषीति । साम्प्रतमध्ययमनुपरतज्ञानपिपासः 'श्रीभवानीशङ्कर संस्कृत विद्यालय' प्रधानाध्यापकोऽध्यापनकौशलेन छात्रान् प्रहर्षयन् काशीमध्यास्ते द्रव्यार्जना-पेक्षया विद्यार्जनं द्विजानां गरीय इत्यभिप्रयन् । यथाऽध्यापने पटुप्रज्ञस्तथा विचारेऽप्य-पूर्वार्थोन्मेषधिषणः सुस्फुरत्-सुप्रतिभो विमलवाग्विन्यासेन विदुषां चेतो रारङ्क्ति । अयमेव महानुभावः साहित्यशास्त्रशेखरायमाणं साहित्यदर्पणं विषमस्थले परैरुपेक्षितमपेक्षितव्या-ख्यानमटीकिष्ट, विशिष्य जिज्ञास्यं गूढार्थतत्त्वं विवृण्वानोऽनूचानानां विदुषाञ्च जिज्ञासूना-मुपचिकीर्षयेति तद्दर्शनादेव तद्गुणाः स्फुरन्त्यमत्सरमनसामिति कृतं तत्र भूरिभाषितेन ।

---

**महामहोपाध्याय पण्डित श्री गोपीनाथ (देव) कविराज, एम. ए.**

**भूतपूर्व प्रिंसिपल गवर्नमेण्ट संस्कृत कालेज, काशी ।**

साहित्याचार्यठक्कुरोपनामकश्रीकृष्णमोहनशर्मणा विरचिता साहित्यदर्पणटीका स्थाली-पुलाकन्यायेन मया यथावसरं क्वचित् क्वचिदवलोकिता, यद्यपि साहित्यदर्पणस्य प्राचीनानि नवीनानि च बहूनि व्याख्यानानि सन्ति तथापि न तानि मन्दमतीनां श्रमपराङ्मुखानां विद्यार्थिनां बोधसौकर्याय तादृशमुपकारमावहन्तीति मन्यमानो ग्रन्थकारः तदुद्देश्यप्रेरितः प्राचीनटीकाभ्यः सारमाहृत्याभिनवां टीकामिमां रचितवान् । अस्या वाग्गुम्फनं सरलपद-विन्यासमूलकमिति बालबोधोपयोगि । विषयप्रतिपादनसरणिश्च छात्रोपकारिण्यपि विद्व-न्मनोहारिणी मामान्यतो जिज्ञासजनशङ्कापनोदनक्षमा च । व्याख्यानस्यास्य विद्यार्थि-

# साहित्यदर्पण-'लक्ष्मी' टीका

## एतट्टीकाविषये—
## साहित्यरत्नाकराणां महामहोपाध्यायप्रभृति-
## भारतविभूतीनां विद्वद्धौरेयाणां
## सम्मति-पत्रम् ।

---

### महामहोपाध्याय पण्डित **श्री हरिहरकृपालु द्विवेदी**
### प्रिंसिपल सन्यासि-संस्कृत कालेज, काशी ।

मिथिलामण्डलान्तर्गत-वगौलीग्रामवास्तव्यः प० श्रीकृष्णमोहनठक्कुरमहोदयो व्याकरण-साहित्याचार्यो मीमांसाशास्त्री ममातीव परिचितः स्वाधीतशास्त्रीयमार्मिकान्तस्तलप्रविष्ट-प्रकृष्टपाण्डित्यप्रकर्षं इत्येतावतैवेतरान्नातिशेते अपि तु इतरेष्वपि शास्त्रेषु प्ररूढव्युत्पत्ति-प्रबुद्धमना गूढार्थं विविच्य परान् प्रत्येषिष्नून् प्रत्युपदिशतीति संविदानस्य कस्य सहृदयस्य-हृदयं न जरिहृषीति । साम्प्रतमध्ययमनुपरतज्ञानपिपासः 'श्रीभवानीशङ्कर संस्कृत विद्यालय' प्रधानाध्यापकोऽध्यापनकौशलेन छात्रान् प्रहर्षयन् काशीमध्यास्ते द्रव्यार्जना-पेक्षया विद्यार्जनं द्विजानां गरीय इत्यभिप्रयन् । यथाऽध्यापने पटुप्रज्ञस्तथा विचारेऽप्य-पूर्वार्थोन्मेषधिषणः सुस्फुरत्-सुप्रतिभो विमलवाग्विन्यासेन विदुषां चेतो रारङ्क्ति । अयमेव महानुभावः साहित्यशास्त्रशेखरायमाणं साहित्यदर्पणं विषमस्थले परैरुपेक्षितमपेक्षितव्या-ख्यानमटीकिष्ट, विशिष्य जिज्ञास्यं गूढार्थतत्त्वं विवृण्वानोऽनूचानानां विदुषाञ्च जिज्ञासूना-मुपचिकीर्षयेति तद्दर्शनादेव तद्गुणाः स्फुरन्त्यमत्सरमनसामिति कृतं तत्र भूरिभाषितेन ।

---

### महामहोपाध्याय पण्डित **श्री गोपीनाथ (देव) कविराज**, एम. ए.
### भूतपूर्व प्रिंसिपल गवर्नमेण्ट संस्कृत कालेज, काशी ।

साहित्याचार्यठक्कुरोपनामकश्रीकृष्णमोहनशर्मणा विरचिता साहित्यदर्पणटीका स्थाली-पुलाकन्यायेन मया यथावसरं क्वचित् क्वचिदवलोकिता, यद्यपि साहित्यदर्पणस्य प्राचीनानि नवीनानि च बहूनि व्याख्यानानि सन्ति तथापि न तानि मन्दमतीनां श्रमपराङ्मुखानां विद्यार्थिनां बोधसौकर्याय तादृशमुपकारमावहन्तीति मन्यमानो ग्रन्थकारः तदुद्देश्यप्रेरितः प्राचीनटीकाभ्यः सारमाहृत्याभिनवां टीकामिमां रचितवान् । अस्या वाग्गुम्फनं सरलपद-विन्यासमूलकमिति बालबोधोपयोगि । विषयप्रतिपादनसरणिश्च छात्रोपकारिण्यपि विद्व-न्मनोहारिणी, सामान्यतो जिज्ञासुजनशङ्कापनोदनक्षमा च । व्याख्यानस्यास्य विद्यार्थि-सङ्घेषु प्रचारबाहुल्यं भविष्यतीति दृढमाशंसे ।

---

प्रिंसिपल तथा प्रधानाध्यापक गवर्नमेण्ट संस्कृत कालेज, काशी ।

श्रीमता व्याकरण-साहित्याचार्यादिपदवीसमलङ्कृतेन, अस्मत्सुहृदन्यतमविद्वत्कविप्रवरश्रीताराचरणभट्टाचार्यमहाशयान्तेवासिना पण्डितवरेण श्रीकृष्णमोहनठक्कुरशर्मणा सुनिर्मितां "लक्ष्मी" नामधेयविद्योतमानां साहित्यदर्पणस्य तृतीयपरिच्छेदात्प्रभृतिविरचितामभिनवां टीकां दृशोरतिथीभूतामुपलभ्य परमामोदमविन्दम् । स्थालीपुलाकन्यायेन टीकामिमां दर्शं दर्शं समुपयुक्तव्याख्यानकौशलपरिश्रमं टीकाकर्तुरभिनन्दामि विविधनिबन्धसमुचितप्रतीकावचयव्यवसायञ्च ।

अद्यतनपरीक्षाप्रणालीमनुगन्तारश्छात्राः स्वभ्यस्तयाऽनया टीकया नूनं साफल्यमासादयिष्यन्तीति नोदेति सन्देहः । एवमस्या अध्ययनाध्यापनसंग्रहादौ सार्वपथीनामुपादेयतामनुभूय विद्वांसष्टीकाकर्तुः श्रमान् सफलयिष्यन्ति-इत्याशासे ।

तेन च समेधमानोत्साहः पण्डितवरोऽयमन्यान्यपि लेखनकार्याणि विरचयन् सुरभारतीसेवां विदधात्विति शिवम् ।

---

साहित्यरत्नाकर कवितार्किक पण्डित श्री महादेव शास्त्री

साहित्यविभागाध्यक्ष हिन्दू विश्वविद्यालय, काशी ।

सहृदयसौहित्यसमर्पणे साहित्यदर्पणे मिथिलामहीसुरस्य श्रीकृष्णमोहनठक्कुरस्य साहित्यव्याकरणाचार्यस्य "लक्ष्मी" नाम्नी टीका कतिपयस्थलेषु विलोकिता मां चमदचीकरत् । भूयः परिश्रान्तं पराक्रान्तं चानेन विदुषा टीकायामस्याम् । अत्र विषयान्तराण्यपि मूलसम्बद्धानि साधु स्फोरितानि । वैशद्येन विवेचनं टीकायित्रा निरूपितं ध्रुवमुपकरिष्यति पठनशीलानामन्तेवसतामिति मामकीनो विश्वासः ।

---

साहित्यचूडामणि कविशेखर पण्डित श्री बदरीनाथ झा

साहित्यप्रधानाध्यापक-धर्मसमाज संस्कृत कालेज, मुजफ्फरपुर, ( मिथिला )

"लक्ष्मी" त्यन्वितार्थाभिधानां साहित्यदर्पणस्य नूतनां टीकामवलोकमानस्य मानसं मे प्रसीदतितराम् । उच्चावचेषु सत्स्वपि टीकान्तरेषु सरलसरलया शैल्या ग्रन्थग्रन्थीनामुन्मोचनेन परिमितयोः शब्दार्थयोः प्रसन्नतया चेयं प्रायः सर्वातिशायिनीति सुतरामेतस्याः प्रणेता व्याकरणसाहित्याचार्यः पण्डितश्रीकृष्णमोहनठक्कुरः, प्रकाशकः श्रेष्ठिश्रीजयकृष्णदासगुप्तश्च परश्शतान् साधुवादानर्हतः । अतः परमध्यापने सुधियः, परीक्षायामन्तेवासिनश्चात्यन्तमुपकुर्वती लक्ष्मीरियं प्रतिसरस्वतीसदनं प्रचरेदिति निकामं कामये, इति ।

---

प्रिंसिपल–प्राच्यविद्याविभाग, हिन्दू विश्वविद्यालय, काशी।

प० श्रीकृष्णमोहनशर्मठक्कुरप्रणीते सारगर्भितस्य मिताक्षरस्य साहित्यदर्पणस्य प्रख्यातमाहात्म्यायाः संस्कृतवाङ्मयविकाशलक्ष्म्याः कादम्बय्याश्च टीकेऽवाऽऽलोकिषाताम्। विकसिता चैतन्नूतनसन्दर्भदर्शनेन मदीया चित्तवृत्तिः। पण्डितप्रकाण्डस्यास्य प्रज्ञाप्रतिबिम्बायमानाऽसौ प्रत्यग्रा कृतिः, गाम्भीर्येण समुद्रायमाणस्य ग्रन्थद्वयस्य मन्थनाविर्भूता सुधाधारेव दिवौकसां विपश्चितां चेतो बलाच्चमत्करोति। पाण्डित्यप्रयोजकानिगूढग्रन्थग्रन्थीनां विश्लेषणतया स्फोटकतया चालङ्कारिकप्रशस्तराद्धान्तानामारोहति मनांसि, क्रान्तदर्शनानां कवीनामिव तर्ककर्कशमतीनां विदुषामपि।

साहिनीसुधामुहितमानसानां सुमनसां मनीषा निकषायमाणैषा नभोमण्डलमण्डनायमानास्तारावलीरविमरीचिमञ्जरीव ग्रन्थद्वयमधिकृत्य वर्तमाना निखिला अपि टीका अधरीकरोति। नयते च लेखकमहोदयं साहित्यशास्त्रनिवन्धनिर्मातृमूर्धन्यतामिति दृढं निश्चिनोति।

## वेदान्तभास्कर पण्डित श्री कमलाकान्त मिश्र

### प्रिंसिपल–गोयनका संस्कृत महाविद्यालय, काशी।

अयं मुङ्गेरमण्डलान्तर्गतबरौनीग्रामाभिजनः पण्डित-श्रीकृष्णमोहनठक्कुरशर्मा व्याकरणसाहित्याचार्यो मीमांसाशास्त्री वाराणसेय—'श्रीभवानीशङ्करविद्यालय' प्रधानाध्यापकपदमलङ्कुर्वाणः स्वाधीतविषयान् विलक्षणविवेचनया समुपपादयन् विजेयमनांसि समतूतुषत्। प्रगाढपाण्डित्यञ्चैतदीयं प्रतिदिनमेधमानं काशीस्थविदुषां छात्राणाञ्च हृदये परमादरणीयतामगमत्। अध्यापनौपयिकापूर्वप्रतिभाभराञ्चितोऽपि सम्पादनकलाकुशलोऽन्तर्वाणिदुर्लभगुणान्वितोऽयमेव बुधवरः साहित्यशास्त्रसकलविषयप्रतिपादकस्य साहित्यदर्पणस्य विद्यमानास्वपि बह्वीषु टीकासु प्रकृतग्रन्थग्रन्थिभेदनक्षमां सरलां विशदाञ्च कामपि टीकामनासाद्य कठिनपरिस्थितिमुपेयुषां विदुषां छात्राणाञ्चोपकाराय महता परिश्रमेणाभिनवां लक्ष्मीनाम्नीं टीकां निर्माय महान्तमुपकारं संस्कृतसमाजस्य व्यदधात्। दृढं विश्वसिमि च गुणानुरागिणोऽधिकारिपुरुषाः पण्डितवर्याः समृद्धिशालिनो देशोपकारपरायणाः सज्जनाश्चभविष्णुमेनं विशिष्टकार्ये नियुज्य देशसेवापुण्यलाभेनात्मनः संभावयेयुरिति।

## दार्शनिक कवि पण्डित श्री रामचन्द्र मिश्र

### वेदान्तदर्शनाध्यापक–धर्मसमाज संस्कृत कालेज, मुजफ्फरपुर।

श्रीकृष्णमोहनकृतिप्रवरप्रणीतां साहित्यदर्पणगतामवलोक्य 'लक्ष्मीम्'।
सन्तोषमञ्चति मनो मम तद्गुणौघैः प्रत्यक्षरं प्रतिपदं प्रकटीभवद्भिः ॥ १ ॥
टीकाकृतोऽस्य विषयप्रतिपादनेषु सुस्पष्टता सहचरीं रुचिरार्थरीतिम्।
ग्रन्थान्तरज्ञविनिवेदनकौशलञ्च पश्यन् प्रसीदतितमां नहि को गुणज्ञः ॥ २ ॥
वृद्धैश्चिराय सुरवाचमुपासनाभिः प्रीणद्भिरप्यनधिगम्यमयं प्रपद्य।
व्युत्पत्तिवैभवसनाथममोघबोधं चित्तानि नः क्षिपति विस्मयदम्नगाढौ ॥ ३ ॥

## महामहोपाध्याय साहित्यवाचस्पति पण्डित श्री नारायणशास्त्री खिस्ते
### प्रिंसिपल तथा प्रधानाध्यापक गवर्नमेण्ट संस्कृत कालेज, काशी ।

श्रीमता व्याकरण-साहित्याचार्यादिपदवीसमलङ्कृतेन, अस्मत्सुहृदन्यतमविद्वत्कविप्रवरश्रीताराचरणभट्टाचार्यमहाशयान्तेवासिना पण्डितवरेण श्रीकृष्णमोहनठक्कुरशर्मणा सुनिर्मितां "लक्ष्मी" नामधेयविद्योतमानां साहित्यदर्पणस्य तृतीयपरिच्छेदात्प्रभृतिविरचितामभिनवां टीकां दृशोरतिथीभूतामुपलभ्य परमामोदमविन्दम् । स्थालीपुलाकन्यायेन टीकामिमां दर्शं दर्शं समुपयुक्तव्याख्यानकौशलपरिश्रमं टीकाकर्तुरभिनन्दामि विविधनिबन्धसमुचितप्रतीकावचयव्यवसायञ्च ।

अद्यतनपरीक्षाप्रणालीमनुगन्तारश्छात्राः स्वभ्यस्तयाऽनया टीकया नूनं साफल्यमासादयिष्यन्तीति नोदेति सन्देहः । एवमस्या अध्ययनाध्यापनसंग्रहादौ सार्वपथीनामुपादेयतामनुभूय विद्वांसष्टीकाकर्त्तुः श्रमान् सफलयिष्यन्ति-इत्याशासे ।

तेन च समेधमानोत्साहः पण्डितवरोऽयमन्यान्यपि लेखनकार्याणि विरचयन् सुरभारतीसेवां विदधात्विति शिवम् ।

---

## साहित्यरत्नाकर कवितार्किक पण्डित श्री महादेव शास्त्री
### साहित्यविभागाध्यक्ष हिन्दू विश्वविद्यालय, काशी ।

सहृदयसौहित्यसमर्पणे साहित्यदर्पणे मिथिलामहीसुरस्य श्रीकृष्णमोहनठक्कुरस्य साहित्यव्याकरणाचार्यस्य "लक्ष्मी" नाम्नी टीका कतिपयस्थलेषु विलोकिता मां चमदचीकरत् । भूयः परिश्रान्तं पराक्रान्तं चानेन विदुषा टीकायामस्याम् । अत्र विषयान्तराण्यपि मूलसम्बद्धानि साधु स्फोरितानि । वैशद्येन विवेचनं टीकायित्रा निरूपितं ध्रुवमुपकरिष्यति पठनशीलानामन्तेवसतामिति मामकीनो विश्वासः ।

---

## साहित्यचूडामणि कविशेखर पण्डित श्री बदरीनाथ झा
### साहित्यप्रधानाध्यापक—धर्मसमाज संस्कृत कालेज, मुजफ्फरपुर, ( मिथिला )

"लक्ष्मी" त्यन्विितार्थाभिधानां साहित्यदर्पणस्य नूतनां टीकामवलोकमानस्य मानसं मे प्रसीदतितराम् । उच्चावचेषु सत्स्वपि टीकान्तरेषु सरलसरलया शैल्या ग्रन्थग्रन्थीनामुन्मोचनेन परिमितयोः शब्दार्थयोः प्रसन्नतया चेयं प्रायः सर्वातिशायिनीति सुतरामेतस्याः प्रणेता व्याकरणसाहित्याचार्यः पण्डितश्रीकृष्णमोहनठक्कुरः, प्रकाशकः श्रेष्ठिश्रीजयकृष्णदासगुप्तश्च परश्शतान् साधुवादानर्हतः । अतः परमध्यापने सुधियः, परीक्षायामन्तेवासिनश्चात्यन्तमुपकुर्वती लक्ष्मीरियं प्रतिसरस्वतीसदनं प्रचरेदिति निकामं कामये, इति ।

---

## विद्वच्छिरोमणि पण्डित श्री कालीप्रसाद मिश्र
### प्रिंसिपल-प्राच्यविद्याविभाग, हिन्दू विश्वविद्यालय, काशी।

प० श्रीकृष्णमोहनशर्मठक्कुरप्रणीते सारगर्भितस्य मिताक्षरस्य साहित्यदर्पणस्य प्रख्यातमाहात्म्यायाः संस्कृतवाङ्मयविकाशलक्ष्म्याः कादम्बिन्याश्च टीकेऽवाऽऽलोकिषाताम्। विकसिता चैतन्नूतनसन्दर्भदर्शनेन मदीया चित्तवृत्तिः। पण्डितप्रकाण्डस्यास्य प्रज्ञाप्रतिविम्बायमानाऽसौ प्रत्यग्रा कृतिः, गाम्भीर्येण समुद्रायमाणस्य ग्रन्थद्वयस्य मन्थनाविर्भूता सुधाधारेव दिवौकसां विपश्चितां चेतो बलाच्चमत्करोति। पाण्डित्यप्रयोजकानिगूढग्रन्थग्रन्थीनां विश्लेषणतया स्फोटकतया चालङ्कारिकप्रशस्तराद्धान्तानामारोहति मनांसि, क्रान्तदर्शनानां कवीनामिव तर्ककर्कशमतीनां विदुषामपि।

साहितीसुधामुदितमानसानां सुमनसां मनीषा निकषायमाणेषा नभोमण्डलमण्डनायमानास्ताराबलीरविमरीचिमञ्जरीव ग्रन्थद्वयमधिकृत्य वर्तमाना निखिला अपि टीका अधरीकरोति। नयते च लेखकमहोदयं साहित्यशास्त्रनिबन्धनिर्मातृमूर्धन्यतामिति दृढं निश्चिनोति।

---

## वेदान्तभास्कर पण्डित श्री कमलाकान्त मिश्र
### प्रिंसिपल-गोयनका संस्कृत महाविद्यालय, काशी।

अयंमुङ्गेरमण्डलान्तर्गतबरौनीग्रामाभिजनः पण्डित-श्रीकृष्णमोहनठक्कुरशर्मा व्याकरणसाहित्याचार्यो मीमांसाशास्त्री वाराणसेय—'श्रीभवानीशङ्करविद्यालय' प्रधानाध्यापकपदमलङ्कुर्वाणः स्वाधीतविषयान् विलक्षणविवेचनया समुपपादयन् विजेयमनांसि समतूतुषत्। प्रगाढपाण्डित्यञ्चैतदीय प्रतिदिनमेधमानं काशीस्थविदुषां छात्राणाञ्च हृदये परमादरणीयतामगमत्। अध्यापनौपयिकापूर्वप्रतिभाभराञ्चितोऽपि सम्पादनकलाकुशलोऽन्तर्वाणिदुर्लभगुणान्वितोऽयमेव बुधवरः साहित्यशास्त्रसकलविषयप्रतिपादकस्य साहित्यदर्पणस्य विद्यमानास्वपि बह्वीषु टीकासु प्रकृतग्रन्थग्रन्थिभेदनक्षमां सरलां विशदाञ्च कामपि टीकामनासाद्य कठिनपरिस्थितिमुपेयुषां विदुषां छात्राणाञ्चोपकाराय महता परिश्रमेणाभिनवां लक्ष्मीनाम्नी टीकां निर्माय महान्तमुपकारं संस्कृतसमाजस्य व्यदधात्। दृढं विश्वसिमि च गुणानुरागिणोऽधिकारिपुरुषाः पण्डितवर्याः समृद्धिशालिनो देशोपकारपरायणाः सज्जनाश्चभविष्णुमेनं विशिष्टकार्ये नियुज्य देशसेवापुण्यलाभेनात्मनः संभावयेयुरिति।

---

## दार्शनिक कवि पण्डित श्री रामचन्द्र मिश्र
### वेदान्तदर्शनाध्यापक-धर्मसमाज संस्कृत कालेज, मुजफ्फरपुर।

श्रीकृष्णमोहनकृतिप्रवरप्रणीतां साहित्यदर्पणगतामवलोक्य 'लक्ष्मीम्'।<br>
सन्तोषमञ्चति मनो मम तद्गुणौघैः प्रत्यक्षरं प्रतिपदं प्रकटीभवद्भिः॥ १॥

टीकाकृतोऽस्य विषयप्रतिपादनेषु सुस्पष्टता सहचरी रुचिरार्थरीतिम्।<br>
ग्रन्थान्तरज्ञविनिवेदनकौशलञ्च पश्यन् प्रसीदतितमां नहि को गुणज्ञः॥ २॥

वृद्धैश्चिराय सुरवाचमुपासनाभिः प्रीणद्भिरप्यनधिगम्यमयं प्रपद्य।<br>
व्युत्पत्तिवैभवसनाथममोघबोधं चित्तानि नः क्षिपति विस्मयदुस्तराब्धौ॥ ३॥

बोधोपयोगिविषयप्रतिपादनायामायस्यता सरलतां श्रयताप्यनेन ।
त्यक्तो न कश्चिदपि तत्त्वचयस्तदस्य लोकोपकारपरता शतशोऽभिनन्द्या ॥ ४ ॥
दोषज्ञताप्रथनबद्धहृदा प्रयस्य चेदुद्धृतो भवति कश्चिदिहापि दोषः ।
किन्तेन ? लोकनयनानि चमत्करोति किन्नाङ्कितोऽप्युदयमाप्य सुधामयूखः ? ॥५॥
आसाशेऽस्याः प्रचारेण टीकायाश्छात्रमण्डली ।
बुधावली च नितमामानन्दमुपयास्यति ॥

## विद्वत्प्रभाकर पण्डित श्री रामानुज ओझा

### अध्यापक–बिरला संस्कृत कालेज, काशी ।

साम्प्रतमविकाशि मैथिलकुलकमलभास्कर–श्रीकृष्णमोहनशर्मा मुद्गलपुरमण्डलजन्मा शैशवकालादेवानुपमपटीयान् व्याकरणसाहित्यमीमांसायाश्चातिगरीयान् विपश्चितामन्तेवसताञ्च स्पृहणीयगुणगणश्चिरकालादेवास्मत्परिचयचणस्त्यक्तषणोऽपि ज्ञानैषणोऽनुदिनमुदयमानो वाराणसेयविश्वेशपत्तनाध्यक्षारोपित—श्रीभवानीशङ्करसंस्कृतमहाविद्यालयेऽध्यापिपयिषया पाठशालाध्यक्षानेकशः प्रार्थितः प्रधानाध्यापकपदं समलङ्करोत् । तद्दिनादेवाध्यापनपरिपाटी-पटुप्रज्ञतया सदाचारा विष्टतया च समेषामध्ययनानुरागिणां विषयविरागिणां विदुषाम्मनांसि स्वशिक्षणेन समतूतुषत् । कदाचिन्महर्षिकल्पानां ज्ञानतोऽनल्पानां विद्वद्गोष्ठीषु लब्धगतिष्ठानां समादरणाय–श्रीताराचरणभट्टाचार्यमहोदयानामन्तिकमुपेत्य छात्रोपकारदत्तचित्तश्रेष्ठीश्वरः श्रीजयकृष्णदासमहोदयः साहित्यदर्पणे कस्यैचित् सारल्यानुप्राणितभावगभीरटीका-निर्मितये प्रार्थयत । भट्टाचार्यमहाशयाः परिपक्ववयस्कतया स्वीयश्रमशैथिल्याकलिततयै-तत्पाण्डित्याकृष्टमनस्कतया चायमपि कर्तुमीशत इति विशुद्धभावतया विदन्तोऽमुमेव सुगृहीतनामानमतुलवैदुष्यधामानङ्कृष्णमोहनशर्माणमस्मै कर्मणे व्यजिज्ञपन् । तदीयाज्ञां शिरसा दधानः स्वीयापूर्वपाण्डित्येन महनीयानां शुभकामनया चाल्पायासेनातिलघुकालेनापूर्व-कलया ग्रन्थाममं समटीकिष्ट । प्रायशो मुद्रितासु टीकासु दृष्टिगोचरासु सर्वातीयमतिशय्य वर्तत इति स्वभावोक्तिः । एषा न केवलं संस्कृतविदुषामेवामोदप्रदा किन्तु संस्कृतसाहित्य-प्रविविक्षूणां भाषान्तरविदां संस्कृतपक्षपातिनामन्तेवसताञ्च विशेषत उपकृतिमातनुत इतीमां विलोकयन्नमन्दमानन्दमनुभवन् टीकाकर्तुरपरिमितायुष्यङ्कामयमानष्टीकाया विपुलप्रचाराय भवानीशं भवमहर्निशं भावये ।

प्राप्तिस्थानम्—

जयकृष्णदास–हरिदास गुप्तः,

चौखम्बा संस्कृत सीरिज आफिस

विद्याविलास प्रेस, बनारस

मूल्यं १२)

* श्री दुर्गाशरणम् *

# यत् किञ्चित् प्रास्ताविकम् ।

अथेदमुपक्रम्यते-श्रीविश्वनाथकविराजप्रणीतं साहित्यदर्पणं मुद्रयित्वा प्रकाशयितुम् । यद्यपि बहोः कालादेवायं ग्रन्थः सर्वत्र पठनपाठनयोरपेक्ष्यते, बह्वीषु च परीक्षासु पाठ्यत्वेन निर्द्धारितोऽस्ति तथाप्येतावता कालेनाप्यस्य ग्रन्थस्यैकमपि संस्करणं तथाऽशुद्धिदोषरहितं यथा काम्यते न समुपलभ्यते । महदिदं दुःखाकरं चेतसः । किञ्च नाविदितचरमेतद् विद्वदग्रेसराणां यदस्य ग्रन्थस्य बह्व्यष्टीका बहुभिः सुप्रसिद्धपण्डितधौरेयैः प्राणायिषत लोके च प्रसिद्धिं गताः, परं ताः काश्चनातिविस्तृताः काश्चन चातिसंक्षिप्ता इति कृत्वा कोमलमतीनां विद्यार्थिनां नालं सुखबोधायेति हेतोः **काशीस्थ चौखम्बा संस्कृत ग्रन्थमालाध्यक्षै**रेतद्ग्रन्थसम्पादनार्थं बहुशोऽनुरुद्धोऽप्यहं समयाभावात् शरीरस्य चापाटवान्न तेषामनुरोधं सफलयितुमशक्तवम् । ततश्चाव्याहतोद्यमैः ग्रन्थमालाध्यक्षैरेतत्सम्पादनाय पण्डितवरः श्रीमान् नवकिशोरशास्त्री न्ययोजि । तस्मिन्नपि पण्डितवर्ये द्वितीयपरिच्छेदावधिकं ग्रन्थं सम्पाद्य देशान्तरं गतवति सोऽयं भारो मदीयच्छात्रेष्वन्यतमस्य व्याकरणसाहित्याचार्यस्य **श्रीमतः कृष्णमोहनठक्कुरस्यो**परि समापतितः । तेन च श्रीमता यावच्छक्यं बहुप्रयत्नावशिष्टां टीकां विरचय्य ग्रन्थः प्राकाश्यं नीतः । श्रीमतोऽस्यायं प्रयासः कियत्साफल्यं समधिगतवानिति तु परीक्षकाणां पुरतो व्यक्तीभविष्यति । यद्यपि ममैवाध्यक्षतायां ग्रन्थोऽयं प्रकाशीभवति मयापि यथामति सर्वमस्य विषयजातं समालोकितं समालोचितञ्च तथापि मम बुद्धेरपाटवाद्वा दृष्टिशक्तेः क्षीणतया वा नाहं प्रतिज्ञातुमुत्सहे यदिदं संस्करणं पुरातनेभ्यः संस्करणेभ्यो विशिष्टं सुविशुद्धं च भविष्यतीति परमेतद् वक्तुं प्रभवामि यदत्र यास्त्रुटयः समुपलप्स्यन्ते ताः पुनरन्यस्मिन् संस्करणे न स्थास्यन्तीति । भ्रान्तेः पुरुषधर्मत्वात् स्खलनं सर्वत्रैव सम्भवदपि 'क्षमामात्रसारा दोषज्ञास्तादृशं स्खलनं' सोढुं सर्वदा सन्नद्धा एव सन्तीति समाश्वासयति नश्चेतांसीति सविश्रम्भं विज्ञाप्य विरमामि । इति शुभम् ।

विजया दशमी
सं० २००४

विदुषामनुचरः
**श्रीताराचरणशर्म-भट्टाचार्यः**
काशीस्थटीकमाणीसंस्कृतकालेजाध्यक्षः

# उपोद्घातः

अये ! विविधविद्याविलासोल्लासितसत्त्वभूमयो विपश्चिद्वरा महानुभावाः !
प्रेयांसोऽन्तेवासिनश्च !

सर्वेष्वलङ्कारनिबन्धेषु ध्वन्यालोककाव्यप्रकाशसाहित्यदर्पणरसगङ्गाधरा एव नायकायन्त इति नाविदितं केषाञ्चिदपि सहृदयानाम् । एतेषूत्कर्षापकर्षपरीक्षायां(क)ध्वन्यालोक आमूलाग्रं सप्रपञ्चं ध्वनिरेव निरूपितो न तु दोषगुणालङ्कारादयः । ततोऽर्वाचीनोऽपि(ख)काव्यप्रकाशस्त्वतीव गहनो बुद्धिमतामपि दुर्बोधतां प्राप्नोति, ताभ्यामत्यन्तार्वाचीनोऽपि(ग)रसगङ्गाधरश्च तार्किकपथमनुसरन्नतिसूक्ष्मैक्षिकयैव कथञ्चिद्बोद्धुं शक्य इति सर्वथा दुरधिगमः सर्वानपि गलितगर्वान् करोति । किन्तु योऽयं श्रीमतां पुरतः सर्वतश्चकास्ति साहित्यदर्पणः सोऽतीव सुगमः सुकुमारमतीनामप्यल्पप्रयत्नेनैवावबोद्धुं योग्य इति । यद्यपि ध्वन्यालोकादिषु ये ये विषया उपनिबद्धास्तत्प्रतिपादकेऽप्यस्मिन् ग्रन्थे स्थलविशेषेषु नूतनत्वमवगम्यते । तथा ह्यत्रैव साहित्यसार्वभौमेन

---

(क) ध्वन्यालोककार आनन्दवर्द्धनः ख्रिष्टाब्दीयपञ्चपञ्चाशदधिकाष्टशतकात् त्र्यधिकाष्टाशीत्यधिकाष्टशतकं यावद् (८५५–८८३) विद्यमानस्य काश्मीरराजस्य**ावन्तिवर्मणः** सभापण्डितो **रत्नाकरस्य** समकालीनश्चासीदिति ।

"मुक्ताकणः शिवस्वामी कविरानन्दवर्द्धनः । प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः ॥"

इति **राजतरङ्गिणी**पद्यादवगम्यते ।

(ख) मम्मटेन अभिनवगुप्तस्य भोजराजस्य च स्वग्रन्थे पाठांशः समुद्धृतः । अतोऽयं तयोरर्वाचीनः । ध्वन्यालोकस्य लोचनाख्यव्याख्याकृदयमभिनवगुप्तः । तथाहि **लोचनारम्भे**—

"अपूर्वं यद्वस्तु प्रथयति विना कारणकलां जगद्ग्रावप्रख्यं निजरसभरात्सारयति च ।
क्रमात्प्रख्योपाख्याप्रसरसुभगं भासयति तत्सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयतात् ॥" इति ।

**समाप्तौ तु**—

"किं लोचनं निरालोको भाति चन्द्रिकयापि हि । तेनाऽभिनवगुप्तोऽत्र लोचनोन्मीलनं व्यधात् ॥"

**अस्यावस्थितिकालस्तु**—

"इति नवतितमेऽस्मिन् वत्सरेऽन्त्ये युगांशे । तिथिशशिजलधिस्थे (४११५) मार्गशीर्षाऽवसाने ॥"

इति तद्विरचित**बृहत्प्रत्यभिज्ञाविमर्षिणी**पद्यत एव बोध्यम् ।

भोजराजस्तु १००८ वैक्रमाब्दसंवत्सरे आसीत् । काव्यप्रकाशव्याख्याकृता माणिक्यचन्द्रेण तु १२१६ शकाब्दे (११५९—) ६० ख्रिष्टाब्दे सङ्केताख्या व्याख्या विनिर्मिता । अतो द्वादशशताब्द्या मध्यभागात्प्राग् एकादशशताब्द्याश्चरमे भागे काव्यप्रकाशं निरमायि मम्मटेन । एवञ्च एकादशशताब्द्यामयं प्रादुर्भूत आसीत् ।

(ग) रसगङ्गाधरकृता हि **जगदाभरणे** साजहानपुत्रस्य दाराभिधानस्य प्रशस्तिरुपनिबद्धा । "आसफ् विलासे" "दार" सभासद "नवाब आसफखां" इति नाम्नश्च प्रशस्तिर्वर्णिता । १६२८ ख्रिष्टाब्दीयतः १६५७ ख्रिष्टाब्दं यावत् साजहानो राज्यसिंहासनेऽधिष्ठित आसीत् । अत एव तदानीन्तनोऽयम् ।

काव्यप्रकाशकृता मम्मटेनोट्टङ्कितस्य काव्यस्वरूपस्य खण्डनेन रसस्य काव्यात्मत्वं प्रतिपादितम् । इतः पुरातनेषु नाट्यशास्त्रदशरूपकातिरिक्तेष्वलङ्कारग्रन्थेषु नायकनायकादिभेदोद्भावनोद्भावितं दृश्यकाव्यस्वरूपं तथा नावतरति यथा सविस्तरमत्र ग्रन्थे । शब्दव्युत्पित्सूना व्याकरणमिव हृद्यनिरवद्यकाव्यकलोन्मीलकः विविधभाषारसविन्यासविशेषाधायकश्च निसर्गरमणीयोऽयं ग्रन्थः कस्य सचेतस्कस्य न चेतश्चमत्करोति । यथा काव्यप्रकाशः कारिकावृत्त्युदाहृतिभिस्त्रिधाविभक्तो निरूपितस्तथैव साहित्यदर्पणोऽपि कारिकावृत्त्युदाहृतिभिस्त्रिधा विभक्तः समुल्लसति । तत्र कारिकावृत्तयः स्वकीया एव, उदाहृतयस्तु स्वकीयाः परकीयाश्च । अत्र च प्रायः सरलयैव रीत्या प्रमेयाणामुपादानम् , क्वचिच्च यद्गहनत्वं तद्विषयकाठिन्यमूलकमेव न तु लेखकाठिन्यमूलकम् । एवञ्च विलक्षणस्यास्य ग्रन्थस्य पूर्वोक्तग्रन्थैः सह सरस्वतीकण्ठाभरणाद्येकदेशीयैश्च सह तुलनाऽवकाश एव नास्ति ।

कविशिरोमणेर्नाट्यशास्त्रदीक्षागुरोरस्य विश्वनाथस्यास्मादेकस्मादेव साहित्यदर्पणग्रन्थात् यथा व्याकरणे तथा न्यायशास्त्रादावपि समधिकः परिचय इत्यवगम्यते । तथा च पञ्चमपरिच्छेदे अनुमान एव व्यञ्जनावृत्तिमन्तर्भावयतां नैयायिकानां मतमनूद्य सम्यक्तया दूषितम् । यत्र तत्रैतद्ग्रन्थे वेदान्तसिद्धान्तविषयोपन्यासेन तच्छास्त्रेऽपि पाण्डित्यप्रकर्षमेव, इत्थं नाट्यादिकलाशास्त्रेषु तथा प्रवेशः सर्वतोऽधिको वरीवर्तीति तत्रैतद्ग्रन्थमेव प्रमाणम् ।

यच्च क्वचन प्रकरणे शृङ्गारैकरसप्रवाहाप्लावनं—तच्चापरिहार्यतया न दोषाधायकाय सम्भवितुमर्हतीति दोषमाशङ्क्यैव काव्यालङ्कारे रुद्रटेन प्रतिपादितम्—

**नहि कविना परदारा एष्टव्या नापि चोपदेष्टव्या ।**
**कर्त्तव्यतयाऽन्येषां न च तदुपायोऽभिधातव्यः ॥**
**किन्तु तदीयं वृत्तं काव्याङ्गतया स केवलं वक्ति ।**
**आराधयितुं विदुषस्तेन न दोषः कवेरत्र ॥**

किं बहूक्त्या साहित्यशास्त्रस्य दुर्बोधा दुरधिगमाश्चाऽपि विषया अत्र तथा सारस्येन प्रतिपादिता यथा सुकुमारमतीनामप्यन्तेवासिनामञ्जसा सुगमाः सुबोधाश्च सञ्जाताः । अतो ह्यलङ्कारशास्त्रे प्रविविक्षूणामेकमेवावलम्बनमेतच्छास्त्रमिति दृढीयान् मे चेतसि विश्वासः । उक्तञ्च ग्रन्थकृता स्वयमेवैतद्ग्रन्थचरमे—

**"साहित्यदर्पणममुं सुधियो विलोक्य साहित्यतत्त्वमखिलं सुखमेव वित्त"**

लोचनारम्भे तत्पुत्रेणानन्तदासेनाऽपीत्थमभाणि—

**आसीत्कपिञ्जलकुलक्षीराकूपारचन्द्रमाः ।**
**त्रिकलिङ्गाधिपधराधामर्धासन्धिग्रः कृती ॥**
**अशेषभाषारमणीभुजङ्गः साहित्यविद्यार्णवकर्णधारः ।**
**ध्वन्यध्वनिप्रौढधियां पुरोगः श्रीविश्वनाथः कविचक्रवर्ती ॥**

स्वल्पाक्षरः सुबोधार्थः प्रध्वस्ताशेषदूषणः।
साहित्यदर्पणो नाम ग्रन्थस्तेन विनिर्मितः॥
पारं साहित्यविद्याब्धेर्गन्तुं वाञ्छन्ति ये क्षितौ।
कृतिरेषा तरिस्तेषां विश्वनाथमहाकवेः॥
श्रव्याभिनेयालङ्कारतत्त्वं सत्कविसम्मतम्।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्॥

## अथ ग्रन्थप्रणेतुः समयादिनिरूपणम्।

अथैवं धीरधुरीणस्य विद्वत्कुलललामभूतस्य सर्वतन्त्रस्वतन्त्रस्य कविपुङ्गवस्य भूशिरोमणेर्ग्रन्थकृतो विश्वनाथस्य समयादिकमत्र निरूप्यते। यद्यपि जन्मसमयादि निरूपणे स्फुटतरं तादृशं किमपि प्रमाणं नोपलभ्यते तथापि तन्निरूपणं नातिकठिन-मिव प्रतिभाति। तथाहि—साहित्यदर्पणस्य चतुर्थपरिच्छेदे-यवनाधिपतेरल्लावुदी-नस्य स्मारकः—

"सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः।
अल्लावदीननृपतौ न सन्धिर्न च विग्रहः॥"

इत्येवं श्लोको विलसति। स च यवनाधिपतिः ( सुलतान् अल्लाउदीन महम्मद खिल्जि ) इत्यभिधेयेन तत्समये प्रसिद्ध आसीत्। सो हि गौड़देशमाक्रम्य तत्रत्य भुवं शशास। कलिङ्गराज्यशासकेन नरसिंहभूपतिना चायं पराजित आसीत्। विषप्र-योगेण च खीष्टाब्दीयषोडशाधिकत्रयोदशशतके ( १३१६ ) केन चिद् व्यापादितः। विश्वनाथेन हि नरसिंहविजयाख्यं काव्यमेकं विनिर्मितम्। तथाहि-तत्रत्यमत्र पद्यम्—

"आहवे जगदुद्दण्डराजमण्डलराहवे।
श्रीनृसिंह महीपाल! स्वस्त्यस्तु तव बाहवे॥"

अत एव चावगम्यते यदयं विश्वनाथः कस्यापि नरसिंहाख्यनृपतेः सान्धिविग्र-हिकः ( अर्थात् मुख्यसचिवः ) आसीत्, तथा भानुदेवनृपतेश्च सान्धिविग्रहिक आसीदिति तदीयचन्द्रकलानाटिकातः स्फुटं प्रतीयते। एवञ्च विश्वनाथस्त्रयोदशशता-ब्द्याश्चरमे भागे नरसिंहनृपतेः, चतुर्दशशताब्द्याः पूर्वभागे भानुदेवनृपतेश्च समय एवासीदित्यवधार्यते। विजयनरसिंहाख्यकाव्यपद्यं लोचने तत्पुत्रेणानन्तदासेनोक्तं यथा मम तातपादानां विजयनरसिंहे—

निश्वासोद्धातवातप्रसरधुतकुलाहार्यमुद्धातदंष्ट्रा
जातज्योतिः स्फुलिङ्गप्रकरविरचितोल्कानिकायाभिशङ्काः।
अर्धे पारीन्द्रमर्धे नरमहह महालोकमालोक्य लोकाः
स्तोकाः स्तोकाऽवशेषाः शरणमुपययुर्वारिधिं वारिधिं वा॥

एतेन विजयनरसिंहकाव्यन्तदीयमेवेति न काचन विप्रतिपत्तिः। परं नरसिंह-

नामानो बहवो नृपतय उत्कलस्य राज्यसिंहासनमलञ्चक्रुः । एवं भानुदेवनामानोऽपि बहवो नृपतयस्तदासनमलञ्चक्रुः । एतत्पिताहोऽपि नरसिंहाख्यनृपतेरेव सभायामासीदिति स्वयमेव काव्यप्रकाशस्य **दर्पणाख्यव्याख्यायामुक्तम्**—

यदाहुः—"श्रीकलिङ्गभूमण्डलाखण्डमहाराजाधिराज-श्रीनरसिंहदेवसभायां धर्मदत्तं स्थगयन्तः सकलसहृदयगोष्ठीगरिष्ठकविपण्डितास्मत्पितामह-श्रीमन्नारायणदासपादाः" इति ।

तथा भानुदेवनृपतेश्चैतत्पिता चन्द्रशेखरः सान्धिविग्रहिक आसीदित्येतद्ग्रन्थद्वितीयपरिच्छेदे स्वयमेवोक्तम् "—यथा मम तातपादानां महापात्रचतुर्दशभाषाभुजङ्गम महाकवीश्वरश्रीचन्द्रशेखरसान्धिविग्रहिकाणाम्—दुर्गालङ्घितविग्रहो ·· ··· ···राजत्युमाबल्लभः" इत्यत्र प्रकरणेनाभिधेये उमावल्लभशब्दस्य उमानाम्नी महादेवी तद्वल्लभभानुदेवनृपतिरूपेऽर्थे नियन्त्रिते व्यञ्जनयेव गौरीबल्लभरूपोऽर्थो बोध्यते । भानुदेवनृपतेः प्राकरणिकत्वात्तस्यैव राज्ञः प्रशस्तिपरमिदं पद्यम् ।

**अत्रेदं विचारणीयम्**—विश्वनाथो हि कस्य नरसिंहनृपतेः कस्य च भानुदेवनृपतेः सान्धिविग्रहिक इति विचिकित्सायां प्रथमस्तावद्यो नरसिंहः सप्तदशोत्तरद्वादशशतकवत्सरे । (क) ( १२१७ ) तद्देशराज्यसिंहासनमलञ्चकार तस्यैव भूपतेः सभायां तत्पितामहो नारायण आसीदिति प्रतीयते । एवं प्रथमो यो भानुदेवो भूपतिस्तस्य तत्तातपादः सान्धिविग्रहिक आसीत् । अनेन हि द्वितीयो यो नरसिंहः खिष्टाब्दीयषडधिकत्रयोदशशतकम् ( १३०६ ) यावद् राज्यसिंहासनमलञ्चकार तस्य विजयप्रशस्तिर्निर्मितेति निश्चप्रचम् । निःशङ्कोपाधिको द्वितीयनरसिंहनृपतेरात्मजो भानुदेवनृपतिर्विश्वनाथस्य परिपोषक आसीत्, निजपराक्रमेण यतो निःशङ्कः अत एव निःशङ्क इति सार्थक उपाधिरभूत् । **केचित्तु** मुद्रितनिखिलसाहित्यदर्पणतृतीयपरिच्छेदगतरसविचारोपक्रमे "तत्प्राणत्वञ्चास्मद् वृद्धप्रपितामह-सहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादैरुक्तम्" इत्येवंरूपः प्रायेण पाठः समुपलभ्यते तद्बलान्नारायणस्य पितामहत्वन्नाङ्गीकुर्वन्ति । **परन्त्वेतदापातरमणीयम्,** काव्यप्रकाशदर्पणाख्योक्तसन्दर्भेण सर्वथा विरुद्धत्वात्, वृद्धप्रपितामहत्वे च नारायणे पञ्चमपुरुषत्वं समापतति विश्वनाथस्य तर्हि कस्यापि नरसिंहनृपतेः सभायां स्थितिर्नैव सम्भवेत्तथा च पञ्चदशशताब्द्यां तज्जन्म समापतेत् । एतद्ग्रन्थचरमे हि "नारायणचरणारविन्दमधुव्रत"इति प्रतिपादनेन चन्द्रकलानाटिकायाः प्रारम्भे "नारायणचरणारविन्दमधुकरीभूत"इति प्रतिपादनेन च कविना नारायणस्य पितामहत्वमेवाभिव्यञ्जितम् । प्रथमश्च यदा नरसिंहो राजा तदा 'सुल्तान अल्लाउदीन महम्मद खिल्जी' गौड़देशमधिकृत्य यः

(क)—"अत्रास्ति सप्तदशोत्तरद्वादशशतकवत्सरे ( १२१७ ) चतुर्दशभुवनाधिपत्यादिविरुदावलीविराजमानः श्रीवीरनरसिंहदेवमहीपतिः स्वराज्यस्यैकत्रिंशत्यङ्केऽभिलिख्यमाने सिंहशुक्लषष्ठ्यां सोमवारे" इत्यैतिहासिकफक्किका ।

समासीत् स एव तत्प्रतिपक्षी । तदानीं नरसिंहेन यवनाधिपतिः गौड़ेन्द्रः पराजितः । निःशङ्कोपाधिना द्वितीयभानुदेवेन राज्ञा "गियास् उदीन" यवनाधिपतिः पराजितस्तत्समये स एव गौड़ेन्द्र आसीत्, गौड़ेन्द्रविजयं लक्षीकृत्यैव "राजा गौड़ेन्द्रं कण्टकं शोषयति" इति तत्सामयिकोऽयं प्रवादः प्रचलित आसीत् ।

अस्य राज्ञः प्रशस्तिवर्णनाभिप्रायेणैवैतद्ग्रन्थे द्वितीयपरिच्छेदे रूढौ सारोपगौण्याः लक्षणलक्षणायाः उदाहरणत्वेन तद्वाक्यमुपनिबद्धं ग्रन्थकृता । बहवो यवनाधिपतयस्तद्देशाधिपतिपराक्रमेण पराजिता बभूवुः, अत एव तद्विजेतुः कलिङ्गनृपतेर्निःशङ्कोपाधिकस्य भानुदेवस्य गौडेन्द्रविजयं लक्षीकृत्यैव हि "कलिङ्गाः साहसिकाः" इत्यपि प्रवादस्तदानीमासीद् । इदञ्चापि वाक्यं जात्यैकत्वविवक्षया रूढौ लक्षणाया उदाहरणत्वेन द्वितीयपरिच्छेदे स्वयमेव प्रतिपादितम् । एतत्पूर्ववर्त्तिनः द्वादशशताब्द्यां प्रादुर्भूता- नैषध–प्रसन्नराघव–गीतगोविन्दप्रणेतारः **श्रीहर्षजयदेवादयः**। अत्र च तत्तद्ग्रन्थस्थाः "धन्यासि वैदर्भि, कदली कदली, हृदि विलसिताहारो नायम्भुजङ्गमनायक" इत्याद्याः श्लोकाः समुपलभ्यन्ते । खिष्टीयपञ्चदशशतकसमुद्भूतेन (१५००) काव्यप्रदीपकृता **गोविन्दठकुरेण** च "तददोषौ शब्दार्थौ" इत्यादिकारिकाविवरणावसरे "अर्वाचीनास्तु" इत्यादिना दर्पणकारमतमेवोपस्थापितम् । पञ्चदशशताब्द्याः प्रारम्भकाले समुद्भूतेन **कुमारस्वामिना** नामोल्लेखनपूर्वकं साहित्यदर्पणात्पाठः समुद्धृतः, इत्थञ्च दर्पणकारो विश्वनाथकविराजश्चतुर्दशशताब्द्यामभूदिति नात्र मनागपि सन्देहलेशः ।

काव्यप्रकाशदर्पणे नारायणान्ते दासपदोपलम्भात् साहित्यदर्पणे विश्वनाथनाम्नोऽन्ते तदनुपलम्भाद्व्यक्तिभेदो न शङ्कनीयः, विश्वनाथात्मजस्यैवानन्तदासेति नामोपलम्भात्, तथा विश्वनाथपितामहानुजस्य चण्डीदासस्यापि तथैव नामोपलम्भाच्च पितामहादयो अस्य दाससंज्ञका एवासन् । एतन्महानुभावस्य नाम बहुविशेषणघटितमवलोक्यते । तत्र श्रीमन्नारायणचरणारविन्देत्यादित्वास्तिक्यप्रदर्शनार्थम् ।

भाषाविषये भूयांसो विद्वांसो भवन्ति ये तु एकामेव संस्कृतभाषां कार्त्स्न्येनावबोद्धुं न शक्नुवन्ति संस्कृतभाषापारङ्गताः सन्तो ये च द्वित्रा अप्यन्या भाषाः साकल्येनावबुध्यन्ते ते तु विरला एव, परं विशालबुद्धिवैभवस्तु विश्वनाथकविराजो न केवलां संस्कृतभाषामेव नाऽपि वा द्वित्रा अन्यभाषाः किन्तु अष्टादशाऽपि भाषास्तथाज्ञातवान्यथा तासु तास्वपि भाषासु रमणीयान् गुणालङ्कारयुतान् भाषापाटवबोधकप्रबन्धान् रचयितुं समभूत् । अत एव "अष्टादशभाषावारविलासिनीभुजङ्ग" इति विशेषणेन संस्तूयते विद्वद्वरैः । तदीयप्राकृतसौरसेन्यादिविविधभाषाप्रकर्षपाण्डित्यद्योतकपद्यं यथा—

**मञ्जुलमणिमञ्जीरे कलगम्भीरे विलाससरसीतीरे ।**
**विरसासि केलिकीरे किमालि ! धीरे च गन्धसमीरे ॥**

अत्र संस्कृत–प्राकृत–सौरसेनी–प्राच्यावन्ती–नागरापभ्रंशेषु, एकविधमेव ।

सान्धिविग्रहिक इत्यादिविशेषणेन प्रधानमन्त्रिपदे स्थितो ब्राह्मण एवायमिति

निश्चीयते । मुख्यामात्यपदे ब्राह्मणस्यैवाधिकारित्वदर्शनात् ।

तथा च मनुः—

सर्वेषान्तु विशिष्टेन ब्राह्मणेन विशेषतः ।
मन्त्रयेत् परमं मन्त्रं राजा षाड्गुण्यसंयुतम् ॥

केचित्तु—"सान्धिविग्रहिक" इति राज्यदत्ताधिकारविशेषस्तत्समये विद्याप्रेमिकलिङ्गभूपतीनां राजसभायां तत्पूर्वजाश्चासन्नत एतन्नामापि तद्विशेषणघटितमिति वदन्ति महापात्रोपाधिस्तु लोकोत्तरपाण्डित्यबलेन राज्ञैव प्रदत्तः, न तु तत्कुलपारम्पर्यक्रमागतः । कविराजेत्युपाधिस्तु कवीनां राजा प्रधान इति स्वस्य कविष्वपि मुख्यप्रतिपादनपरत्वमेवाभिव्यनक्ति । अयञ्चोपाधिरस्य विलक्षणं काव्यं समीक्ष्य सुप्रीतमनसा त्रिकलिङ्गेश्वरेण प्रादायि इति—

धम्मिल्ले नवमल्लिकासमुदयो, हस्ते सिताम्भोरुहम् ।
हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः ॥
एकोऽपि त्रिकलिङ्गभूमितिलक ! त्वत्कीर्त्तिराशिर्ययौ ।
नानामण्डनतां पुरन्दरपुरीवामभ्रुवां विग्रहे ॥

अनेनावधार्य्यते । वैद्यजातिबोधकं कविराजपदमिति तु नापादनीयम्, तथात्वे सति प्रसिद्धत्वाद् "वैद्य" इत्येव निर्दिशेत् सामान्येऽपि चिकित्सकार्थे कविराजेत्युपाधिना व्यवहारात्तदर्थपरकत्वस्यान्याय्यत्वाच्च ।

काव्यप्रकाशदर्पणे तु "संगीतविद्याविद्याधर–कलाविद्यामालतीमधुकर–विविधविद्याविद्यार्णवकर्णधार" इतिविशेषणत्रयमधिकमुपलभ्यते ।

चन्द्रकलानाटिकायान्तु नाट्यशास्त्रदीक्षागुरुरित्यप्युपाधिरित्यवगच्छामः । एतन्निर्मितप्रबन्धास्तु बहव इति श्रूयन्ते परन्तु हन्त ! नाद्यापि निखिला अपि दृष्टिपथे समायाता इति नितरां चेखिद्यते चेतः । नामत एतन्निर्मितप्रबन्धा अत्र प्रदर्श्यन्ते—

१—राघवविलासः ( महाकाव्यम् )
२—कुवलयाश्वचरितम् ( प्राकृतकाव्यम् )
३—चन्द्रकला (नाटिका)
४—प्रभावतीपरिणयम् ( नाटकम् )
५—प्रशस्तिरत्नावलिः ( षोडशभाषानिर्मितकरम्भकम् )
६—नरसिंहविजयः ( खण्डकाव्यम् )
७—कंसवधम् ( काव्यम् )
८—साहित्यदर्पणः ( शास्त्रीयप्रबन्धः )
९—काव्यप्रकाशदर्पणः ( काव्यप्रकाशटीका )

साहित्यदर्पणे यत्र तत्र ग्रन्थनामानिर्देशेन "इदं मम" इतिकथनेन च एतद्भिन्ना अपि तन्निर्मिता प्रबन्धाः सन्तीत्यवगम्यते । अस्य च ग्रन्थरत्नस्य प्राचीना-

अर्वाचीनाश्च बह्व्यष्टीकाः साम्प्रतं विलसन्ति, तासु हरिदाससिद्धान्तवागीश-विनिर्मिता सर्वतोऽभिनवा छात्रहितैषिणी विवृतिः स्वल्पेनैव समयेन परां कीर्त्तिराशिं प्रतिदिशं विस्तारयामास । परन्तु यत्र तत्र प्रमेयांशविचारेऽन्यग्रन्थमपि सहायतासम्पादनार्थमपेक्षत एव साऽपीतिकृत्वा बहोः कालात्पूर्वमेव स्वकीययन्त्रालयतोऽभिनवां टीकां विनिर्माय प्रकाशयितुं कृतपरिश्रमैः गोलोकवासि—बाबू हरिदासगुप्तात्मज**श्रीजयकृष्णदासगुप्त**महोदयैः चौखम्बा संस्कृत सीरिजाध्यक्षैर्दिगन्तयशसः शिष्योपशिष्यैरुपगीयमानाः प्रातःस्मरणीया अस्मत्साहित्यशास्त्रगुरवः काव्यकाननपञ्चानन-**श्रीयुतताराचरणभट्टाचार्य्य**महोदयाः प्रार्थिताः, परञ्च वार्धक्यवशात् समयाभावाच्च तत्सम्पादनमङ्गीकर्त्तुं न शेकुः । तदा किशोरकेलिकरशर्म्मोपाह्व श्रीनवकिशोरशास्त्रि महोदयाः प्रार्थिताः स्वीचक्रुः । विपश्चिद्वरास्तेऽपि महानुभावा आदितः परिच्छेदद्वयं यावत्प्रकाशयित्वा कार्य्यवशाद्देशान्तरं प्रस्थिताः। कति वर्षाण्यित दाशया वर्तमानैरपि सीरिजाध्यक्षैः भग्नमनोरथमात्मानं मन्यमानैः तत्कार्य्यसम्पादनायाहं नियुक्तः ।

मयाऽपि यथामति प्रकृतग्रन्थोपयोगिबहुविषयान् समालोच्य "**लक्ष्मी**"नामिकया टीकया ग्रन्थोऽयं सम्पादितः । दर्पणे हि बहवः पाठभेदाः समुपलभ्यन्ते तथापि निर्णयसागरयन्त्रालयमुद्रितं म० म० दुर्गाप्रसादद्विवेदिसम्पादितं साहित्यदर्पणमेव प्रमाणयन्ति मान्या अतस्तत्स्थपाठ एवात्रास्माभिरपि स्थापितः । सम्पादने चाऽस्मिन् परोपकारबद्धपरिकर–सुरभारतीसंरक्षणतत्पर-परमपावनमहनीयकीर्त्तिपरिमलोल्लासितजगतीतलनिलय निखिललोकमानसमरन्दसुरभारतीविभ्रमभरैकनिकेतनप्राच्यविद्यामहार्णवपण्डितपुङ्गव**भगवत्प्रसादत्रिपाठिशास्त्रिमहोद**यात्मज-काशीविश्वनाथमन्दिराध्यक्ष "**श्रीभवानीशङ्करसंस्कृतमहाविद्यालय**" संस्थापकैः श्रीयुतभवानीशङ्करत्रिपाठिमहोदयैः यथासमयमार्थिकसाहाय्यं सम्प्राप्तन्तदर्थन्ते धन्यवादार्हाः । अत्र प्रूफसंशोधनादौ '**मिथिलाग्रन्थमाला**" सम्पादकैर्मित्रप्रवरैः **श्रीरामचन्द्रझा**जी महोदयैस्तथा पणशीकरोपाह्व **श्रीरामचन्द्र**जी महोदयैश्च महानुपकारः सञ्जातस्तदर्थं तेऽपि धन्यवादार्हाः ।

यद्यपि "**आत्मनः प्रियतया तनुभाजां नात्मनः कृतिषु दूषणदृष्टिः**" इति न्यायान्मत्सदृशसरागाणां स्वविरचितसन्दर्भे दोषदृष्टिर्नैव जायते तथापि स्वप्रेमपूर्णनयनावलोकनमात्रेण कस्यचित्सगुणत्वं न सम्भवितुमर्हत्येतत्प्रबन्धस्य समीचीनत्वासमीचीनत्वविचारणायां निष्पक्षन्यायभाजः सहृदया विद्वद्वरा एव प्रमाणम् ।

अपि च—

**मर्त्यैरसर्वविदुरैर्विहिते क नाम,**

**ग्रन्थेऽस्ति दोषविरहः सुचिरन्तनेऽपि ॥**

इति न्यायात् प्रमादस्य स्वाभाविकत्वात् कण्टकाक्षरदोषाद्वा यदत्र स्खलनं सञ्जातं तत् क्षमासारा विपश्चिद्वरा दयोदयमधुरदृशा निरीक्षमाणाः सदूचनं क्षमिष्यन्ते मामिति सप्रश्रयं निवेदयति—

"तद्विद्वांसोऽनुगृह्णन्तु चित्तश्रोत्रैःप्रसादिभिः।
सन्तः प्रणयवाक्यानि गृह्णन्ति ह्यनसूयवः॥
नचात्रातीव कर्त्तव्य दोषदृष्टिपरं मनः।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते॥
निर्दोषत्वैकवाक्यत्वं क्व वा लोकस्य दृश्यते।
सापवादा यतः केचिन्मोक्षस्वर्गावपि क्वचित्॥"

इत्यादिसूक्तयो ह्यत्र स्मरणीयाः सुधीवरैः।
व्याख्यामेनां समादाय विषमामपि चेतसि॥

मातृनवमी
सं० २००४

भावकः—
श्रीकृष्णमोहनशर्मा

# षष्ठपरिच्छेदान्तस्य
# श्लोकानामकाराद्यनुक्रमणिका ।

# साहित्यदर्पणगतस्थूलविषयाणामनुक्रमणिका ।



## साहित्यदर्पणस्योदाहरणसङ्ख्याः कारिकासंख्याश्च निरूप्यन्ते-

| | उ० सं० | का० सं० | | उ० सं० | का० सं० |
|---|---|---|---|---|---|
| प्रथमपरिच्छेदे | ६ | ३ | चतुर्थपरिच्छेदे | ४७ | १४ |
| द्वितीयपरिच्छेदे | ९ | २० | पञ्चमपरिच्छेदे | २ | ५ |
| तृतीयपरिच्छेदे | १४३ | २६७ | षष्ठपरिच्छेदे | ११४ | ३३७ |

१............

षष्ठपरिच्छेदान्तस्य

# विषयानुक्रमणिका ।

# साहित्यदर्पणधृतग्रन्थानां सूचीपत्रम्

॥ इति ॥

---

# साहित्यदर्पणधृतग्रन्थकारसंज्ञासूची ।

श्रीः ।

श्रीमन्नारायणचरणारविन्दमधुव्रत-साहित्यार्णवकर्णधार-ध्वनिप्रस्थापन-
परमाचार्य्य-कविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्ग-
गजपतिसाम्राज्यसान्धिविग्रहिक-महापात्र-
श्रीविश्वनाथकविराजकृतः-

# साहित्यदर्पणः

कवितार्किकोत्कल-यास्कश्रीनवकिशोरन्यायपञ्चाननप्रणीतप्रभालङ्कृतः।

## प्रथमः परिच्छेदः ।

**ग्रन्थारम्भे निर्विघ्नेन प्रारिप्सितपरिसमाप्तिकामो वाङ्मयाधिकृततया वाग्देवतायाः साम्मुख्यमाधत्ते (१) ।—**

### प्रभाव्याख्या ।

ध्यायेन्नित्यं गणपतिमहः शुद्धमद्वैततत्त्वं प्रत्यूहानां प्रशमनरतं निर्विकल्पे विभातम् ।
स्थूलं मूलं निखिलमहसां शैलजानन्ददायं वाचोऽतीतं गुणविगलितं किन्तु वेदान्तवेद्यम् ॥ १ ॥

या ब्राह्मी सृजति प्रकाण्डकमिमं कृत्स्नं प्रपञ्चं मुदा
या नित्यं प्रतिपालयत्यनलसं नारायणी मायया ।
या क्रोधेन हिनस्ति तं युगभराक्रान्तं भवानी तदा
सा सा सा सहसा त्रिधाकृतिवशा पायादपायात्तु नः ॥ २ ॥

बिम्बाधरसमायुक्तामम्बां दुर्गामुपास्महे । यत्कृपालेशमात्रेणाशेषश्वःश्रेयसं भवेत् ॥ ३ ॥
तातं चक्रधरं देवशर्म्माणं स्मृतिभूषणं । कर्म्मकाण्डैकनिपुणं प्रणमामो महाशयम् ॥ ४ ॥
न्यायवैशेषिकाचार्य्यं ब्रह्मविद्यामहार्णवं । श्रीमत्पद्मप्रसादाख्यं सद्गुरुं पर्य्युपास्महे ॥ ५ ॥
साहित्यदर्पणव्याख्या प्रभाख्या परिरच्यते । श्रिया नवकिशोरेण यास्केन करशर्म्मणा ॥ ६ ॥

अथ विभिन्नरुचिविजृम्भितस्य विविधप्रकारस्य च काव्यस्य ज्योतिष्टोमादेरिव श्रौतत्वाभावतया व्यवहारस्येव नरपतिशासनानधीनतया च किञ्चिन्नियन्तृत्वापेक्षायामलङ्कारशास्त्रस्यावश्यमारम्भ इति न कस्यापि विमतम् । अतः सत्स्वपि तेषु तेष्वलङ्कारसन्दर्भेषु कस्यापि संक्षिप्तशब्दार्थप्रतिपादकतया कस्यचन च काव्यमार्गे समीचीनविचारविधुरतया कस्यचिदपि आवश्यकानावश्यकविचाराविचारशून्यतया चादुष्टकाव्यनिरूपकविचारमव्याहतसिद्धान्तसन्तानमलङ्करणप्रकरणमारभमाणः कवितार्किकसार्वभौमोत्कलकलिङ्गराजसचिवमहापात्रश्री-विश्वनाथकविराजो निजकृतकारिकाणामेवार्थं मण्डूकप्लुतिन्यायेन वृत्त्या विशदीकुर्वन् ग्रन्थादौ निघ्नविघाताथाविगीतसदाचारपरम्परायाः प्राप्ततया स्वाभीष्टदेवताराधनेन सम्मुखीकरणसूचिकामार्य्यामवतारयति—

( १ ) **ग्रन्थारम्भ इति** । ग्रन्थस्य=एकार्थकवाक्यसन्दर्भस्य, प्रकृते च साहि-

न्यदर्पणाभिधानस्य, यद्वा ''विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरं। निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥'' इत्युक्तदिशा पञ्चाङ्गकवाक्यस्येत्यर्थः। न च तथा सति महाभारतादावव्याप्तिस्तत्रापि कृष्णार्जुनसंवादादौ पञ्चाङ्गानां सत्त्वात्। यद्वा ''सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥'' इत्युक्तप्रकारेण ग्रन्थश्रवणे शुश्रूषायाः कारणत्वात् प्रतिपाद्यप्रतिपादकभावप्रयोजनबोधाधानशुश्रूषाविषयशब्दसन्दर्भो ग्रन्थस्तस्येत्यर्थः। नन्वत्र 'घटमानय' इति वाक्ये तादृशशुश्रूषाया सत्त्वादतिव्याप्तिरिति चेन्न, तस्या अनेवंस्थलीयेवंविधवाक्यश्रुतिसामान्यसामग्र्या अन्यथासिद्धत्वात्। केचित्तु–''आम्नास्यमानविषयं महावाक्यं ग्रन्थस्तस्येत्यर्थः'' इत्याहुः, तन्न, अयं घट इतिवद्वाक्येऽतिव्याप्तेः, तदर्थस्याप्यभ्यस्यमानत्वाद् वाक्यान्तरनिराकाङ्क्षत्वेनाकाङ्क्षादिमत्पदकदम्बकत्वेन च महावाक्यत्वाच्च, अनभ्यस्तार्थके ग्रन्थेऽव्याप्तेश्च। आरम्भे = आरम्भप्राक्काले, आद्यकृतिरूपस्य मुख्यार्थस्य बाधितत्वादत्र लक्षणाङ्गीकार्य्या, झटिति विघ्नविघातसामर्थ्यप्रतिपत्तिश्च तत्फलम्। केचित्तु–आरम्भशब्दः आरभ्यतेऽस्मिन्निति व्युत्पत्त्या तत्प्राक्कालपर इत्याहुः, तन्न, तावताऽपि आरम्भकालस्यैव लाभेन पूर्वकालासंस्पर्शात्। नव्यास्तु–आरम्भ आद्योच्चारणे कर्त्तव्ये सतीत्यर्थः, सप्तम्या चाद्योच्चारणकृतिपूर्वकालता लभ्यते, गोषु धोक्ष्यमाणास्वागत इत्यादावागमने गोदोहनपूर्वकालतावत्–इत्यामनन्ति। सप्तमीयमधिकरणे न तु 'चर्म्मणि द्वीपिनं हन्ती'ति वन्निमित्तसप्तमी, क्रियाफलरूपस्य निमित्तस्य स्वान्वयिक्रियाकर्म्मणा योगे सतीत्यर्थकस्य ''निमित्तात्कर्मयोगे'' इति कात्यायनकृतवार्त्तिकस्य प्रकृतेऽप्रवृत्तेः, 'निर्विघ्नेन' इत्यनेन विघ्नविघातस्यैव क्रियाफलत्वेन बोधिततया ग्रन्थारम्भस्य क्रियाफलत्वाभावात्, तस्य च देवतारूपकर्म्मणा योगाभावाच्चेति ध्येयम्। निर्विघ्नेन = विघ्नः प्रतिबन्धकदुरितमथवा प्रवर्त्तकसुकृतविरहो वा तस्याभावो निर्विघ्नं तेन, करणे तृतीया, अस्य च परिसमाप्तिपदार्थेन सह योजना। प्रारिप्सितं = प्रारब्धुमिष्टं दृश्यश्रव्यकाव्यनिरूपकं प्रमेयजातं तस्य परिसमाप्तिः = यावद्विवक्षितार्थस्यास्खलनपूर्वकं समापनं चरमवर्णपर्य्यन्तानुष्ठानं वा तां कामयत इति स तथोक्तः, 'ग्रन्थकारः' इति शेषः। ननु अन्येषामभिलषितपूरकाणां देवानां साम्मुख्याधानमपहाय कथं वाग्देवताया एव साम्मुख्यमाधत्त इत्यत आह—वाङ्मयेति। वाङ्मयानि = अष्टादशविद्याः काव्यकलाः कामशास्त्रादीनि च तेषामधिकृततया = अध्यक्षतया अधिष्ठातृदेवतात्वेन हेतुना, अनेन स्वशास्त्रविधेयवाग्वैभवदातृतया ब्रह्मादिदेवाराध्यत्वेन भगवत्याः कृतार्थनिर्वाहकत्वं सूचितम्, वाग्देवतायाः = सरस्वत्याः, देवतेत्यनेन जडरूपवाङ्मात्रवैलक्षण्येन तदधिष्ठातृत्वं सूचितम्, साम्मुख्यं = स्वार्थसाधनानुकूलत्वं प्रार्थनया प्रसन्नमुखत्वम्, **आधत्ते** = करोति जनयति वा। रत्नार्थिनो रत्नाधिष्ठितपुरुषप्रार्थनमिव वाङ्मयारम्भार्थिनो महापुरुषस्यावश्यकं वाङ्मयाधिकृतदेवताप्रार्थनमिति मन्तव्यम्।

शरदिन्दुसुन्दररुचिश्चेतसि सा मे गिरां देवी ।
अपहृत्य तमः सन्ततमर्थानखिलान् प्रकाशयतु(२) ॥ १ ॥

अत्र 'आधत्ते' इति प्रथमपुरुषाभिधानं काल्पनिकभेदनिबन्धनं, रावणवक्तरि 'न्यकारो ह्यय'मिति पद्ये 'जीवत्यहो रावण' इति प्रथमपुरुषाभिधानवद्बोदितव्यम् । न च वृत्तिकारकारिकाकारयोर्वास्तवो भेद इति वाच्यम्, वृत्तौ 'रसस्वरूपं निरूपयिष्याम' इति प्रतिज्ञातुः कारिकायां तद्विधानदर्शनात् । व्यक्तेरभेदेऽपि कारिकाकर्त्तृत्वेन वृत्तिकर्त्तृत्वेन च भेदनिबन्धनप्रयोगस्य न्यायसिद्धान्तमुक्तावल्यादौ मङ्गलाचरणावतरणिकायां दृष्टचरत्वात् ।

( २ ) "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते, वीरपुरुषाणि च भवन्ति, अध्येतारश्च प्रवक्तारो भवन्ति" इति महाभाष्यकारोक्तेः ग्रन्थादौ वाग्देवीस्तवनरूपं मङ्गलमाचरन्नुपमया शरदिन्दुकार्य्यं साधयति—**शरदिन्दुरिति** । शरदिन्दोः शरत्कालिकचन्द्रस्येव सुन्दरी अतिविशदा रुचिर्दीप्तिर्यस्याः सा तथोक्ता, सा चतुराननादिवाग्वैभवदातृतया प्रसिद्धा, एन विष्णुना सह वर्त्तमाना वा, गिरां देवी वाचामधिष्ठात्री देवता सरस्वती । मे मम, चेतसि चित्ते, सन्ततं व्याप्तम्, तमो लक्षणया तमोगुणजनितं मोहमित्यर्थः, अपहृत्य विनाश्य, अखिलान् समग्रान् अर्थान् दृश्यश्रव्यकाव्यनिरूपकप्रमेयान् । अत्र विशेष्यविशेषणयोर्वैपरीत्येन विन्यासो विरुद्धमतिकृद्दोषपरिहाराय । प्रकाशयतु प्रकटीकरोतु । शरदिन्दुरपि तमोः=ध्वान्तमपहृत्य घटपटादिरूपानर्थान्=प्रमितपदार्थान् प्रकाशयतीत्युपमा । तथा च यथा शरदिन्दुर्निविडं ध्वान्तं विनाश्य लोकव्यवहारार्थं घटपटादिप्रमेयजातं प्रकाशयति तद्वदिति भावः।

अत्र तु मङ्गलस्य विघ्नध्वंसद्वारा प्रारिप्सितपरिसमाप्तिरेव फलमिति ग्रन्थकृद्भिः प्राचीनैरिवैतावता ग्रन्थेन दर्शितम् । ननु स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य का गतिरिति चेत्, उच्यते, यथा निष्पापकृतसन्ध्योपासनस्य कर्त्तुर्ब्रह्मलोकप्राप्तिरेव फलं न तु पापक्षयपूर्विका, तथा स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य प्रारिप्सितपरिसमाप्तिरेव फलं न तु विघ्नध्वंसपूर्विकेति शोभनः पन्था । न चात्र दृष्टान्तासिद्धिरिति वाच्यम्, "सन्ध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥" इत्यादिस्मृतेर्मानत्वात् (क) ।

पुत्रस्तु—"शरदिन्दुसुन्दररुचिरेव शरदिन्दुसुन्दररुचिरित्यध्यवसाना" इति प्राह ।

तर्कवागीशास्तु—शरदिन्दुसुन्दरः शिवस्तत्र रुचिरभिलाषो यस्याः सा तथोक्ता, सा प्रसिद्धा, देवी दुर्गा, चेतसि व्युत्पित्सूनां हृदि, तमोऽज्ञानम्, अपहृत्य विनाश्य, मे मम, गिरां प्रकृतसन्दर्भरूपवचसाम्, निखिलानर्थान् शक्यलक्ष्यव्यङ्ग्यात्मकानभिधे-

(क) यद्वा तस्य विघ्नाभावद्वारा प्रारिप्सितपरिसमाप्तिः फलम्, अभावश्चात्र ध्वंसः

**अस्य ग्रन्थस्य काव्याङ्गतया काव्यफलैरेव फलवत्त्वमिति काव्यफलान्याह(२) ।—**

यान् प्रकाशयतु ।—इति पक्षान्तरे योजयन्ति । अत्रोपमालङ्कारः । उपगीतिश्छन्दश्च ।

( २ ) अथ "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति वक्ष्यमाणकाव्यगुणदोषादिज्ञापनपरीक्षाशास्त्रस्य प्रयोजने वक्तव्ये "अङ्गिनः फलेनैवाङ्गस्य फलवत्त्व"मिति न्यायादुक्तां काव्यफलप्रतिपादिकां द्वितीयां कारिकामवतारयति—**अस्येति** । यद्वा "सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥" इति ग्रन्थेऽभिधेयसम्बन्धप्रयोजनाधिकारिचतुष्टयकथनं युक्तम् । तत्र सम्बन्धः प्रतिपाद्यप्रतिपादकभावोऽधिकारी च तत्फलार्थीति प्रसिद्धमित्यभिधेयं सप्रयोजनं प्रेक्षावत्प्रवृत्त्यर्थं वक्तुमावश्यकमित्यभिप्रेत्य परीक्षणीयतयाऽङ्गीभूतकाव्यस्य फलेनैव परीक्षणरूपं प्रकृतग्रन्थाभिधेयमङ्गं फलवदिति व्यञ्जयन्नाह—अस्येति । अस्य प्रक्रम्यमाणस्य ग्रन्थस्य काव्यपरीक्षाशास्त्रस्य, काव्याङ्गतया काव्यपरीक्षणद्वारा काव्यफलसाधनेऽप्रधानकारणतया । 'काव्याङ्गत्वं काव्यपरीक्षाशास्त्रत्वात्' इति पुत्रः । काव्यफलैरिति 'धान्येन धनवान्' इति वदभेदे तृतीया, एवकारः 'शङ्खः पाण्डुर एव' इत्यादिवत् अयोगव्यवस्थापने बोध्यः, तथा च यथा दर्शपौर्णमासाङ्गानां प्रयाजादीनां दर्शपौर्णमासफलेनैव फलवत्त्वं तथा काव्याङ्गस्यास्य काव्यफलैरेव फलवत्त्वमिति न ग्रन्थस्य निष्फलत्वं न वा काव्यफलकथनस्येति भावः(क) । एवञ्चाङ्गाङ्गिनो रैक्यादभिधेयं काव्यत्वेन परिणतमित्यतो वक्ष्यमाणकारिकायां काव्यफलप्रदर्शनं नानुपयुक्तमिति सर्वमवदातम् । इति हेतोः काव्यफलान्याह, मूलकार इत्यूह्यम् । धर्मार्थकाममोक्षभेदेन चतुर्वर्गाणां बहुतया तत्प्राप्तानामपि देशकालपुरुषभेदेन बहुत्वात् काव्यफलानीति बहुवचनम् । नन्वस्य चतुर्वर्गातिरिक्तकाव्यगुणदोषादिज्ञापनरूपफलसत्त्वात् कथमेवकारार्थान्वय इति चेन्न, 'फलवत्त्वम्' इत्यत्र मतोः प्राशस्त्यबोधकत्वेनोत्कृष्टफलपरत्वात् । अत एव चतुर्वर्गफलसाधनत्वा-

---

प्रागभावश्च विवक्षणीयो योग्यत्वात् । अत्यन्ताभावस्य ध्वंसप्रागभावाभ्यां सह विरोधेन विघ्नात्यन्ताभावस्य जन्तुमात्रेऽसम्भवात् सदातनसंसर्गाभावरूपस्य तस्य व्यापारत्वाभावाच्च । न च प्रागभावस्य जन्यत्वाभावात् कथं व्यापारत्वमङ्गीकृतमिति वाच्यम्, कार्य्यनाश्यस्य तस्य कालान्तरसम्बन्धस्येष्टसाधनत्वेन व्यापारत्वाङ्गीकारात्, कालान्तरसम्बन्धस्य जन्यत्वस्य सम्भवात् । अन्यथा विघ्नरूपकार्य्येण तत्प्रागभावस्य नाशे इष्टसमाप्तिर्न स्यात् ।

(क) ननु प्रयाजादीनामङ्गापूर्वजननद्वारा परमापूर्वं प्रति उपकारः सम्भवतीति तत्र तथाऽस्तु, प्रकृते तु शास्त्रस्य काव्यगुणदोषादिज्ञापनोपक्षीणत्वेन चतुर्वर्गं प्रत्युपकारासम्भवात् कथं तत्साधनत्वमिति चेन्न, काव्यं हि स्वरूपसन्न कारणम्, किन्तु कृतिज्ञप्त्यन्यतरविषयतया तत्रास्योपकारः सम्भवतीति न कापि विप्रतिपत्तिः ।

**चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।**
**काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते (४) ॥ २ ॥**

**चतुर्वर्गफलप्राप्तिर्हि काव्यतो रामादिवत् प्रवर्त्तितव्यं न रावणादिव-दित्यादि-कृत्याकृत्य-प्रवृत्ति-निवृत्त्युपदेशद्वारेण सुप्रतीतैव(५)।**

दिज्ञानेनात्र लोकानां साभिनिवेशप्रवृत्तिः ( क ) ।

( ४ ) अथ काव्यस्य फलं दर्शयन् तत्स्वरूपनिरूपणं प्रतिजानाति—**चतुर्वर्गेति** । यतः यस्मात् हेतोः, अल्पधियां सुकुमारमतीनाम्, अपिना परिणतबुद्धीनाञ्च सुखात् आयासं विनैव, काव्यात् तद्वचनपठनाद्युपायादित्यर्थः, एवकारेण वेदादिशास्त्र-व्यवच्छेदः, चतुर्वर्गो धर्म्मार्थकाममोक्षा एव फलं तस्य प्राप्तिर्भवतीति शेषः, तेन हेतुना, तत्स्वरूपं तस्य काव्यस्य स्वमसाधारणं रूपमितरव्यावर्त्तको धर्म्मो लक्षणमित्यर्थः, निरूप्यते ज्ञाप्यते ।

केचित्तु—'यत' इति 'काव्यात्' इत्यस्य विशेषणम्—'इति योजयन्ति, तेन=आयासं विना चतुर्वर्गसाधनत्वेनेत्यर्थः,—इत्यर्थयन्ति च ।

राजानककुन्तकोऽपि व्यक्तिविवेकेऽमुमेवार्थमाह, यथा—"धर्म्मादिसाधनोपायः सुकुमारक्रमोदितः । काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः॥" इति । अस्यार्थस्तु—अभिजाताः खलु राजपुत्रादयो धर्म्माद्युपेयार्थिनो विजिगीषव. क्लेशभीरवश्च सुकुमाराशयत्वात् तेषां धर्म्मादिसाधनोपायः—धर्म्मादेरुपेयभूतस्य चतुर्वर्गस्य साधने सम्पादने तदुपदेशरूपत्वादुपायस्तत्प्राप्तिनिमित्तं काव्यबन्ध इति ।

( ५ ) काव्यस्य चतुर्वर्गसाधनत्वं युक्त्या प्रतिपादयति—**चतुर्वर्गफलेति** । हि तथाहि । रामादिवत् चतुर्वर्गकामेन रामादिनेव, प्रवर्त्तितव्यं पित्राज्ञापालनादावित्यर्थः । रावणादिवत् रावणादिनेव न प्रवर्त्तितव्यं परदारहरणादावित्यर्थः, इत्यादि कृत्यं विहितकर्म्माकृत्यं निषिद्धं कर्म्म तयोः प्रवृत्तिनिवृत्ती यत्नविशेषौ तयोरुपदेशस्तज्जनकं ज्ञानं स एव द्वारं व्यापारस्तेन सुप्रतीतैव अतिप्रसिद्धैवेति शब्दमात्रार्थः । तथा हि यथा "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादिवेदवाक्यादग्निहोत्रादिविहितकर्म्मणि कर्त्तव्यताज्ञानात् पुरुषस्य प्रवृत्तेः कर्म्मानुष्ठानेन धर्म्मादिर्भवति, तथा रामायणादिमहाकाव्यात् पितृवाक्यपालनादिलक्षणतत्तद्विहितकर्म्मणि कर्त्तव्यताज्ञानेन प्रवृत्त्या तदनुष्ठानेन धर्म्म

(क) केचित्तु—'अस्य—बुद्धिस्थत्वेन सन्निकृष्टस्य ग्रन्थस्य साहित्यदर्पणस्य, काव्यमङ्गमस्येति तत्तया ( काव्यमङ्गभूतमिति हेतोः ) काव्यफलैः करादिशोभयाऽङ्गिशोभेव केवलं फलवत्त्वमिति तान्येवाह' । अयमाशयः—प्रकृतोऽयं ग्रन्थो वृक्षस्थानीयः, अस्य तु शाखास्थानीयं सर्वमेव काव्यम्, तथा च शाखादिसाद्गुण्येन वृक्षस्य साद्गुण्यमिव काव्यस्य फलैरेवास्य सफलत्वमिति वदन्ति ।

उक्तञ्च—"धर्म्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्त्तिं प्रीतिञ्च साधुकाव्यनिषेवणम्॥" इति (६)

उपजायते तस्मादर्थकामौ तद्धर्म्मफलाननुसन्धानाच्च मोक्ष इति काव्यं चतुर्वर्गफलप्राप्तिं प्रवर्त्तीति भावः। निषिद्धपक्षे तु तत्राप्रवृत्त्या धर्म्मफलाननुसन्धानेन च मोक्ष इति बोध्यम (क)। न च तदुपदेश आहत्य धर्म्मादिजनकोऽस्तु न पुनः काव्यमिति वाच्यम, उपदेशस्य तादृशधर्म्मादिजनने व्यापारत्वेन काव्यस्य तु व्यापारित्वेन, व्यापारेण व्यापारिणो नान्यथासिद्धेः। ननु वेदादिस्थले तादृशवाक्यस्य श्रूयमाणत्वात् गुर्वाद्युपदेशेन तत्तत्कर्मणि प्रवृत्तिः सम्भवति, रामायणादौ तु न तथेति चेन्न, अत्रापि रामादेः श्रेयसो रावणादेरश्रेयसश्च वर्णनाद्वारा तादृशप्रवृत्तिविधायकवाक्यस्य सुप्रतीतेः, गुर्वाद्युपदेशतुल्यत्वाच्च। एतेन काव्यस्य शास्त्रत्वं दर्शितम्। यदाहु-"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रमिति कथ्यते॥" ननु कथं कवितृप्रतिभोत्पादितेतिवृत्तानां मालतीमाधवरत्नावलीमृच्छकटिकादीनां स्वाभिधेयेषु प्रामाण्यम, न चाप्रामाण्यरूपस्य शब्दस्य शास्त्रत्वमिति चेदत्राह—"कविदग्धप्रमा काव्यं प्रमाणं सर्वमेव नः। स्वप्रकाशरसास्वादप्रमितिप्रभवा यतः॥" इति। ननु प्रकारभेदाः प्रहेलिका व्यङ्ग्यार्थविशिष्टे नीरसे वाक्यविशेषे यथा—"केदारपोषणरताः कार्शानलाम्बुवाहिनीगङ्गा। कंसं जघान कृष्णः कम्बलवन्तं न बाधते शीतः॥" इत्यत्र हि प्रश्नरूपोऽर्थो वाच्य उत्तररूपश्च व्यङ्ग्यः। तथा निर्बन्धविभावादिविज्ञानस्य बाष्पारोपितधूमज्ञानादेस्तात्त्विकधूमध्वजादिज्ञानाजनकत्ववत् रसप्रमित्यनुपपादकत्वमिति चेत्तत्राप्याह—"शरीरादिविविक्तात्मतत्त्वभावनया यथा। तत्त्वतोऽप्रमयापाष्टतत्त्वसाक्षात्कृतिः प्रमा॥" "असत्त्वमुल्लिखन्त्यापि विभावादिधिया यथा। तद्वदेव रसादीनां व्यक्तिः प्रकरणादिषु॥" इति। इह च न्यायोऽयमन्वाचयः। प्रकरणादि प्रमाणं रसास्वादजनकत्वात् काव्यत्वाद् वा न यदेवं यथा रामायणादि तथा चेदं तस्मात्तथेति। यदि पुनः प्रमाणं न स्यात् यथा प्रहेलिकेति। न च रसरूपप्रमाणत्वेऽपि प्रकरणादे रत्यास्वादनान्तरमसद्भूतत्वेनार्थानर्थोपदर्शनाभावात् हिताहितप्रवृत्तिकारित्वप्रयोजितं कथं हि शास्त्रत्वमिति वाच्यम्, तथा हि-"लोकप्रसिद्धो व्युत्पादो नाटकाद्यवलोकनात्। कार्यदर्शनतस्तस्यानुगुणा हेतुकल्पना॥" इति न्यायेन सत्यत्वासत्यत्ववर्णनाबलात्। "स्फुरता तेन वृत्तेन व्युत्पत्तिर्जायते नृणाम्। सत्यासत्यत्वजिज्ञासा रसादेश्चरितेष्वपि॥" व्युत्पत्तिकाले नैवास्ति तथा पाश्चात्ययावनं। कोकोऽस्ति वाटिकामध्य इति बालविभीषिका॥" "स्वार्थप्रामाण्यहीनापि न किं व्युत्पत्तिसाधनम्। रसस्य ज्ञानरूपत्वात्तादात्म्यादिति वक्ष्यते॥" "न चाप्रमरगंज्ञानं शुक्तौ रजतधीरिव। तस्मिन्न जायते बोधो यस्मादौत्तरकालिकः॥"—इति पुत्रटीकायां विचारः।

( ६ ) युक्त्या चतुर्वर्गसाधनत्वं प्रसाध्य सम्प्रति तत्रार्थे प्राचीनसम्मतिं दर्शयितुमाह—**उक्तञ्चेति**। प्राचीनैरिति शेषः, न केवलं मयोच्यत इत्याशयः। किमित्य-

( क ) "युक्तः कर्म्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्" इति स्मरणात्।

**किञ्च—काव्याद्धर्म्मप्राप्तिर्भगवन्नारायणचरणारविन्दस्तवादिना (७)।**

पेक्षायामाह—**धर्म्मेत्यादि** । साधुसम्यक् काव्यस्य निषेवणं करणं मननं ज्ञानञ्च कर्त्तृ, केचित्तु—साध्विति काव्येत्येतस्य विशेषणम्, काव्ये साधुत्वञ्च—दोषशून्यत्वे सति गुणालङ्कारशालित्वे सति वाक्यविशेषस्य रससमनुगृहीतत्वम्, तद्विरहोऽसाधुत्वम्, तदुक्तं भोजेन—"निर्दोषं गुणवत्काव्यम्" इत्यादि । तथा च साधु यत् काव्यं तस्य निषेवणमित्यर्थ इति वदन्ति । धर्म्मार्थकाममोक्षेषु तदुपायभूतेषु, वैचक्षण्यं विशिष्टज्ञानं, कलासु नृत्यगीतादिचतुःषष्टिप्रकारासु विद्यासु(क)च वैचक्षण्यं दर्शनश्रवणादिना विलक्षणज्ञानं, कीर्तिं कालिदासादेरिव यशः, प्रीतिं परामानन्दञ्च करोति । तथा च साधुकाव्यनिषेवणकर्तृको धर्म्मार्थकाममोक्षकलाविषयकवैलक्षण्याधायकः कीर्त्तिप्रीत्युत्पादानहेतुभूतश्च बोधानुकूलो व्यापारः सम्पद्यत इति वाक्यार्थबोधः ।

( ७ ) ननु काव्यं कर्त्तव्यत्वाकर्त्तव्यत्वज्ञानद्वारा कृत्याकृत्यप्रवृत्तिनिवृत्ती प्रति कारणमस्तु चतुर्वर्गं प्रति तु अन्यथासिद्धमेवेत्याशङ्कायां तस्य साक्षादेव धर्म्मादि प्रति कारणत्वमुपपादयितुमाह—**किञ्चेति** । काव्यादित्यस्य प्राप्त्यन्तपदचतुष्टयेऽन्वयः। स्तवो

( क ) अथ शैवतन्त्रोक्ता चतुःषष्टिः कला लिख्यते । गीतम् १, वाद्यम् २, नृत्यम् ३, नाटम् ४, आलेख्यम् ५, विशेषकच्छेद्यम् ६, तण्डुलकुसुमवलिविकाराः ७, पुष्पास्तरणम् ८, दशनवसनाङ्गरागाः ९, मणिभूमिकाकर्म्म १०, शयनरचनम् ११, उदकवाद्यम् १२, उदकघातः १३, चित्रायोगः १४, मालाग्रथनविकल्पाः १५, शेखरापीडयोजनम् १६, नेपथ्ययोगाः १७, कर्णपत्रभङ्गाः १८, गन्धयुक्तिः १९, भूषणयोजनम् २०, ऐन्द्रजालम् २१, कौचुमारयोगाः २२, हस्तलाघवम् २३, चित्रशाकपूपभक्ष्यविकारक्रिया २४, पानकरसरागासवयोजनम् २५, सूचीवापकर्म्माणि २६, सूत्रक्रीडा २७, प्रहेलिका २८, प्रतिमाला २९, दुर्वचकयोगाः ३०, पुस्तकवाचनम् ३१, नाटकाख्यायिकादर्शनम् ३२, काव्यसमास्यापूरणम् ३३, पट्टिकावेत्रवाणविकल्पाः ३४, तर्कुकर्म्माणि ३५, तक्षणम् ३६, वास्तुविद्या ३७, रूप्यरत्नपरीक्षा ३८, धातुवादः ३९, मणिरागज्ञानम् ४०, आकरज्ञानम् ४१, वृक्षायुर्वेदयोगाः ४२, मेषकुक्कुटलावकयुद्धविधिः ४३, शुकसारिकाप्रलापनम् ४४, उत्सादनम् ४५, केशमार्जनकौशलम् ४६, अक्षरमुष्टिकाकथनम् ४७, म्लेच्छितकविकल्पाः ४८, देशभाषाज्ञानम् ४९, पुष्पकटिकानिमित्तज्ञानम् ५०, यन्त्रमातृका ५१, धारणमातृका ५२, सम्पाद्यम् ५३, मानसी काव्यक्रिया ५४, क्रियाविकल्पाः ५५, छलितकयोगाः ५६, अभिधानकोषच्छन्दोज्ञानम् ५७, वस्त्रगोपनानि ५८, द्यूतविशेषः ५९, आकर्षक्रीडा ६०, बालकक्रीडनकानि ६१, वैनायकीनां विद्यानां ज्ञानम् ६२, वैजयकीनां विद्यानां ज्ञानम् ६३, वैतालकीनां विद्यानां ज्ञानम् ६४ । क्वचित्तु—'सूचीवापकर्म्मसूत्रक्रीडा इत्येकं पदं तदुत्तरं वीणाडमरुकवाद्यानि, इति पाठः, वैतालकीनामित्यत्र वैयासकीनामिति च पाठः ।

**"एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके च कामधुग्भवति" इत्यादिवेदवाक्येभ्यश्च सुप्रसिद्धैव (८)। अर्थप्राप्तिश्च प्रत्यक्षसिद्धा (९)। कामप्राप्तिश्चार्थद्वारैव (१०)। मोक्षप्राप्तिश्चैतज्जन्यधर्म्मफलाननुसन्धानात्(११)। मोक्षोपयोगिवाक्ये व्युत्पत्त्याधायकत्वाच्च(१२)।**

गुणज्ञापनम्। आदिना रामकृष्णादेर्जन्मोत्सवादिज्ञापनम्, तन्छ्रवणं चेत्यर्थः।

(८) ननु कुत्र कुत्रचिदपि काव्ये स्तवादेरभावदर्शनात्तेषां निष्फलत्वं स्यादित्याशङ्क्याह—**एक इति**। अयमर्थः—येन पुरुषेण एकोऽपि शब्दः सुप्रयुक्तो व्याकरणाविरोधेन रसवत्तया च काव्यान्तर्निवेशितः, येन च पुरुषेण सोऽपि शब्दः सम्यक् ताद्रूप्येण ज्ञातो वा; स प्रयोक्ता स च ज्ञाता स्वर्गे परलोके लोकेऽस्मिल्लोके च कामधुगभीष्टफलभाग्भवति सम्पद्यते। इत्यादि वेदवाक्येभ्यः काव्याद्धर्म्मप्राप्तिः सुप्रसिद्धैवेत्यनुषङ्गः। तथा च तादृशकाव्यस्य व्याकरणाविरोधेन रसवत्तया च प्रयुक्ततया ताद्रूप्येण ज्ञेयत्वेन च कृतिज्ञप्त्योरन्यतरस्य धर्म्मफलवत्त्वं श्रौतमिति भावः।

(९) **अर्थप्राप्तिरिति**। काव्यादित्यनुषज्यते। प्रत्यक्षसिद्धेति। श्रीहर्षादेर्धावकादीनामिव धनप्राप्तिः लोके प्रसिद्धैवेत्यर्थः। यदुक्तं मम्मटेन—"श्रीहर्षादेर्धावकादीनामिव धनम्" इति। धावकनामा कविः श्रीहर्षनृपनाम्ना रत्नावलीनाम्नीं नाटिकां कृत्वा बहुधनं लब्धवानित्युद्योतादौ स्पष्टम्।

(१०) **कामप्राप्तिरिति**। काव्यादित्यनुषज्यते। कामो विषयभोगः, विषयः स्रक्चन्दनवनितादिः, तस्य प्राप्तिरर्थद्वारैव, अर्थेन स्रगादीनां सम्भवात्, तथोक्तम्—"धर्म्मादर्थस्ततः कामः कामात्सुखसमुन्नतिः" इति। अत्र कामप्राप्तावर्थस्य व्यापारत्वात्काव्यं नान्यथासिद्धं "व्यापारेण व्यापारिणो नान्यथासिद्धि" रिति नियमात्। इति बोध्यम्।

(११) **मोक्षप्राप्तिरिति**। काव्यादिति योज्यम्। एतज्जन्यस्य काव्यजन्यस्य धर्म्मस्य यत् फलं स्वर्गादि तस्याननुसन्धानात् श्रवणादिकाले पुरुषस्याभिलाषविरहात्। न खलु कोऽपि पुरुषः स्वर्गाद्युद्देशेन काव्यं करोति शृणोति वा। एवञ्च निष्कामेण सम्पद्यमानो धर्म्मो मोक्षायैव भवति। यदुक्तं भगवता—"युक्तः कर्म्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्॥" इति। धर्म्मफलस्याननुसन्धानादेव तदधीनोत्पत्तिकयोरर्थकामयोरुत्पत्तिसम्भावनैव नास्तीति तयोरनुपादानम्। यद्वा—धर्म्मप्रधानं फलं धर्म्मफलं, तेनार्थकामयोरपि संग्रहः, तस्याननुसन्धानात् अपारमार्थिकत्वेन साध्यत्वानिर्धारणात् मोक्षप्राप्तिर्भवतीति योजना।

(१२) ननु "तरति शोकमात्मवित्" "ब्रह्मविद्ब्रह्मैव भवति" "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादिश्रुतेः, "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः" इत्यादि स्मृतेश्च मोक्षो ब्रह्मज्ञानेनैव भवतीति श्रूयते न पुनः काव्यादिति काव्यमन्यथासिद्धमिति चेत्तत्राह—**मोक्षोपयोगीति**। मोक्षोपयोगिवाक्यं "तरति शोकमा-

**चतुर्वर्गफलप्राप्तिर्हि वेदशास्त्रेभ्यो नीरसतया दुःखादेव परिणतबुद्धीनामेव जायते । परमानन्दसन्दोहजनकतया सुखादेव सुकुमारबुद्धीनामपि पुनः काव्यादेव (१३) ।**

**ननु तर्हि परिणतबुद्धिभिः सत्सु वेदशास्त्रेषु काव्येषु किमिति यत्नः करणीय इत्यपि न वक्तव्यम्,(१४) कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे कस्य वा रोगिणः सितशर्कराप्रवृत्तिः साधीयसी न स्यात् ?(१५) ।**

त्मवि॰"दित्यादि मोक्षजनकब्रह्मज्ञानप्रतिपादकोपनिषदादिवाक्यं तत्र व्युत्पत्त्याधायकत्वाद् विविधपदपदार्थज्ञानजननद्वारा दृढतरज्ञानजनकत्वात् । तथाचोपनिषदादिवाक्यज्ञानतज्जन्यब्रह्मज्ञानयोर्व्यापाररूपत्वेन मोक्षं प्रति काव्यं नान्यथासिद्धमिति भावः ।

( १३ ) अर्थवकारव्यवच्छेद्यार्थमाह—**चतुर्वर्गेति** । पुत्रस्तु—'सुखादित्यादि विवृणोति—**चतुर्वर्गेति ।**' इत्याह । हि तथाहि, वेदा ऋग्यजुःसामाथर्वाख्याः, शास्त्राणि मीमांसादीनि तेभ्यः, नीरसतया काव्योपमरसविरहतया, दुःखादेव न तु काव्यवत् सुखादित्येवकारार्थः, परिणतबुद्धीनां श्रुत्याद्यभ्यासलब्धक्लेशानां पुरुषाणामेव, न तु सुकुमारमतीनामित्येवशब्दार्थः, चतुर्वर्गफलप्राप्तिर्जायत इति योजना । तथा च परिणतबुद्धीनां वेदशास्त्रेभ्यश्चतुर्वर्गप्राप्तिः सुखान्न भवति, सुकुमारमतीनां तु दुःखादपि न भवतीति भावः । प्रकृतमुपसंहरति—**परमानन्देति ।** पुनस्तु, परमानन्दो रसादिरूपस्तत्सन्दोहो विगलितवेद्यान्तरसन्ततिस्तज्जनकतया, जनकत्वमत्रोपचारात् , सुखादेव न तु वेदादिवद्दुःखादित्यर्थः, सुकुमारमतीनां सुखैकप्रवणानां राजपुत्रादीनामपि न केवलं परिणतबुद्धीनामित्यर्थः, काव्यादेव चतुर्वर्गफलप्राप्तिर्जायत इति योजना । तथा च रसास्वादार्थमपि प्रवर्त्तमानस्य कृत्याकृत्योपदेशपर्य्यवसन्नं सत् काव्यं चतुर्वर्गमपि जनयतीति भावः ।

( १४ ) ननु चतुर्वर्गप्राप्त्यर्थं प्रेक्षावन्तो वेदशास्त्राण्यनादृत्यानाप्तवाक्ये तु काव्ये कथं प्रवर्त्तन्तामित्याशयेनाशङ्कते—**नन्विति ।** तर्हि काव्यस्य चतुर्वर्गसाधनत्वस्वीकारेऽपि, वेदादिशास्त्रेषु चतुर्वर्गफलसाधनत्वेन सत्सु, परिणतबुद्धिभिः परिपक्वबुद्धिभिः, किमिति कथं वा काव्येषु विषये यत्नश्चतुर्वर्गार्थमुद्यमः करणीयः क्रियेत ।

( १५ ) काव्यात्तावद्विनापि दुःखं रसास्वादश्चतुर्वर्गप्राप्तिश्च भवति वेदशास्त्रेभ्यस्तु दुःखादेव धर्म्मादिप्राप्तिरेवेति वेदाद्यपेक्षया काव्येऽधिकसमादर इत्युत्तरं लौकिकदृष्टान्तेनाह—**कटुकौषधेति ।** अत्र कटुकपदं 'काकेभ्यो दधि रक्ष्यताम्' इति वाक्ये दध्युपघातकपरं दधिपदमिव तिक्तकषायादिद्रव्यपरम् , सितशर्करेति सितपदमपि सुस्वादुद्रव्यमात्रपरं च बोध्यम्, सितशर्करा अतिशुभ्रगुडविकारविशेषः । तथाच रोगोपशमक्षमे तिक्तकषायादिद्रव्ये सत्यपि यदि सुस्वादुद्रव्येन तदुपशमः सम्भवेत् तर्हि यथा रोगिणस्तिक्तकषायादिद्रव्यमपहाय रोगोपशान्त्यर्थं सुस्वादुद्रव्यमेव सेवन्ते तथा चतुर्वर्गसाधनक्ष-

किञ्च--काव्यस्योपादेयत्वमाग्नेयपुराणेऽप्युक्तम्(१६) ।—

"नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा" ॥ इति(१७) ।

"त्रिवर्गसाधनं नाट्यम्" इति च(१८) । विष्णुपुराणेऽपि—

"काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च ।
शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः ॥" इति(१९) ।

मेषु वेदादिशास्त्रेषु सत्स्वपि तेषां नीरसतया दुर्बोधतया च तान्यपहाय चतुर्वर्गार्थिनः सुस्वादु सुबोधमनाप्तोक्तमपि स्मृतिसदाचारवद्वेदानुमापकत्वेन प्रमाणभूतं काव्यमवश्यमेव सेवेरन्निति भावः ।

( १६ ) अथ युक्त्या काव्यस्योपादेयत्वं प्रदर्श्य सम्प्रति तत्राप्तवचनमपि प्रमाणयितुमाह—**किञ्चेति** । उपादेयत्वं धर्म्मादिसाधनोपायत्वेनाहेयत्वम् , उक्तं भगवता व्यासेनेति शेषः ।

( १७ ) **नरत्वमिति** । लोकेऽस्मिन् जगति नरत्वं मानवशरीरधारित्वं दुर्लभं बहुपुण्यसापेक्षत्वेन दुःखलभ्यम् , तत्र नरत्वे सत्यपि विद्या शास्त्रज्ञानं सुदुर्लभा बहुतरपुण्यसापेक्षत्वादतिदुर्लभा, तत्र विद्यायां सत्यामपि कवित्वं काव्यं सहृदयत्वं च दुर्लभं बहुतमपुण्याधीनत्वात्, तत्र कवित्वे सत्यपि शक्तिः कवित्वबीजरूपः संस्कारविशेषः सुदुर्लभा पूर्वपूर्वापेक्षयाधिकपुण्यजन्यत्वादतिदुष्प्रापा । अत्र पूर्वपूर्वापेक्षया वस्तुनः परपरस्योपादेयत्वं दर्शितम् ।

( १८ ) काव्यस्योपादेयत्वेऽग्निपुराणं प्रमाणयित्वा सम्प्रति धर्म्मादिसाधनत्वेऽपि तस्यैव वाक्यं प्रमाणयति—**त्रिवर्गेति** । नाट्यमभिनेयप्रधानं नाटकादि, त्रिवर्गो धर्म्मार्थकामास्तस्य साधनं जनकम् । तथा च लोकानां चित्ताकर्षकतया नाटकादेर्दर्शनश्रवणादिभिर्धर्म्मस्ततोऽर्थस्ततश्च काम इति भावः । त्रिवर्ग इत्यत्र उपलक्षणत्वेन चतुर्वर्गस्य नाट्यपदात्तेनैव श्राव्यकाव्यस्यापि संग्रहः । तथाहि नाटकादेर्दर्शनश्रवणादिभिरुत्पद्यमानस्य धर्म्मफलस्यानुसन्धानात् मोक्षोऽपि भवतीति बोध्यम् । 'इति चे' त्यस्य 'आग्नेयपुराणेऽप्युक्तमि' ति पूर्ववाक्येन सहान्वयः ।

( १९ ) काव्यस्य चतुर्वर्गसाधनत्वेऽग्निपुराणं प्रमाणयित्वाऽनिवृत्तो विष्णुपुराणमपि प्रमाणयितुमाह—**विष्णुपुराणेऽपीति । काव्येति** । ये केचित् श्राव्यरूपा दृश्यरूपा वा काव्यालापाः कवि–पाठकैरुच्चार्य्यमाणा रसव्यञ्जका शब्दार्था इत्यर्थः, अखिलानि गीतकानि गीतगोविन्दप्रभृतीनि च, एते शब्दमूर्त्तिधरस्य शब्दमयस्य महात्मनः विष्णोरवयविनो नारायणस्य अंशा अवयवाः । तथा च समग्राणां काव्यालापानां गीतकानां च शब्दमयस्यावयविनो विष्णोरवयवत्वेन तेषां दर्शनश्रवणादिभिरुपासनया धर्म्मार्थकाममोक्षप्राप्तिरवश्यं भवतीति भावः ।

तेन हेतुना तस्य काव्यस्य स्वरूपं निरूप्यते। एतेनाभिधेयश्च प्रदर्शितम्(२०)।

तत् किंस्वरूपं तावत् काव्यमित्यपेक्षायां कश्चिदाह—"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि" इति (२१)।

एतच्चिन्त्यम्। (२२)तथाहि यदि दोषरहितस्यैव काव्यत्वाङ्गीकारः तदा—(२३)

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।
धिग् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिका-विलुण्ठन-वृथोच्छूनैः किमेभिर्भुजैः॥" (२४)।

(२०) कारिकास्थं चतुर्वर्गफलप्राप्तिरित्यंशं व्याख्याय सम्प्रति तेनेत्याद्यंशं व्याचष्टे—**तेनेति**। तेन चतुर्वर्गसाधनत्वेन हेतुना। स्वरूपमितरव्यावर्त्तको धर्म्मः, लक्षणमित्यर्थः। एतेन चतुर्वर्गफलप्राप्तिरित्यादिमूलग्रन्थेन, अभिधेयं काव्यस्वरूपादि। चकारेण प्रयोजनसम्बन्धयोर्लाभः। सम्बन्धश्चात्र प्रयोजनाभिधेययोः कार्य्यकारणभावरूपः।

(२१) अथ काव्यपरीक्षणं दिदर्शयिषुः प्राचीनकाव्यलक्षणेषु प्रमेयविरोधं दर्शयन्नाह—**तत्किमिति**। अपेक्षायामाकाङ्क्षायाम्। कश्चित् काव्यप्रकाशकारः। अदोषौ श्रुतिकट्वादिसकलदोषरहितौ, सगुणौ माधुर्य्याद्यन्यतमगुणवन्तौ, पुनः किन्तु, क्वापि कुत्रचिदपि, अनलङ्कृती अस्फुटालङ्कारावित्यर्थः, ईषदर्थे नञ्विधानात्, इषत्त्वस्य चात्रास्फुटत्व एव विश्रमात्। एतेन सर्वत्र सालङ्कारावित्यर्थः सूचितः। तथाच सर्वत्र सालङ्कारौ क्वचित्तु स्फुटालंकारविरहत्वेऽपि न काव्यत्वहानिरित्याशयः। एवम्भूतौ शब्दश्च अर्थश्च शब्दार्थौ, आस्वादव्यञ्जकत्वस्योभयत्राप्यविशेषात्, लक्ष्यतावच्छेदकत्वस्य व्यासज्यवृत्तित्वाच्च, तत् काव्यम्, एकवचनेन काव्यत्वस्य व्यासज्यवृत्तिता ध्वनिता, तथा च शब्दं विना काव्यत्वासम्भवेन शब्दप्रत्ययकालेऽर्थप्रत्ययस्याप्यावश्यकत्वान्न कश्चिद्विरोधः। एवञ्च दोषाभाववत्त्वे सति गुणालङ्कारशालिशब्दार्थत्वं काव्यत्वमिति मम्मटोक्तं काव्यलक्षणं फलितम्।।

(२२) **एतदिति**। काव्यलक्षणमित्यर्थः। चिन्त्यं दूष्यत्वेन भावनीयम्।

(२३) दोषमुपपादयति—**तथाहीति**। **काव्यत्वमिति**। अङ्गीकरोषीति शेषः। क्वचित्काव्यत्वाङ्गीकार इति पाठभेदः। 'तदे'त्यस्य 'अस्य श्लोकस्य' इत्यादिपरेणान्वयः।

(२४) उक्तलक्षणेऽव्याप्तिदोषोद्भावनाय लक्ष्यं दर्शयति—**न्यक्कार इति**। रामभद्रेणाभिभूयमानस्य रावणस्य निर्वेदोक्तिरियम्। मे मम त्रिभुवनविजयिनो रावणस्य न त्वन्यस्य, यदरयः शत्रवः सन्तीति शेषः, न त्वेकः शत्रुः न वा द्वाविति भावः,

**अस्य श्लोकस्य विधेयाविमर्शदोषदुष्टतया काव्यत्वं न स्यात् (२५), प्रत्युत ध्वनित्वेनोत्तमकाव्यतास्याङ्गीकृता तस्माद्व्याप्तिर्लक्षणदोषः(२६)।**

अयमेव अरिसद्भाव एव न त्वन्यः कश्चिदित्यर्थः, हीति निश्चये, न्यक्कारो धिक्कारः। अत्र त्रिभुवनविजयिनोऽरिसत्त्वस्यैवानादरातिशयप्रतिपादनाय न्यक्कारत्वेनारोप इति बोध्यम्। तत्रापि तेष्वरिष्वपि, असौ तुच्छ एको रामनामा, तापसस्तपोमात्रसहायो न तु पौरुषवान्, अयमपि द्वितीयो न्यक्कारः। सोऽपि, तुच्छतपस्वी रामोऽपि, अत्रैव लङ्कायामेव न तु दूरे, राक्षसकुलं राक्षससमूहं न त्वेकं राक्षसं न वा द्वित्रान् राक्षसान्, निहन्ति निःशेषेण हिनस्ति न तु लुक्कायितस्तिष्ठति, अयं तृतीयो न्यक्कारः। अहो आश्चर्य्यम्, (क) रावयति आक्रन्दयति लोकानिति रावणः, णेर्न्ण्यन्तात्कर्त्तरि ल्युट्, विश्रवसोऽपत्यं पुमानिति वा रावणः, तस्यापत्यमित्यणि कृते 'विश्रवणरवणौ' इति रवणादेशः, आदिवृद्धिः, स्वनामख्यातो राक्षसेश्वरः, जीवति काक्वा न जीवति। शक्रमिन्द्रं जितवानिति शक्रजिन्मेघनादस्तम्, धिक् धिक् नितान्तमेव निन्दामि। प्रबोधितवता उत्थापितेन कुम्भकर्णेन वा किम्? न किञ्चित्फलम्। तथा स्वर्ग एव ग्रामटिकाऽल्पग्रामस्तस्या विलुण्ठनेन विधूननेन वृथोच्छूनैर्व्यर्थमुद्रिक्तविक्रमैः, एभिर्विंशतिसंख्यकैः प्रसिद्धपराक्रमैर्वा भुजैर्बाहुभिः किं?, न किमपि फलम्, भुजद्वयशालिशत्रोरप्यजयात्। ग्रामशब्दादल्पार्थे 'तद्धिताः' इति बहुवचनबोध्यष्टिकच् प्रत्ययः। अत्र किंपदेन भुजवैयर्थ्यं वृथापदेन तदुच्छूनत्ववैयर्थ्यञ्चोक्तमिति न पौनरुक्त्यम्। शार्दूलविक्रीडितं छन्दः।

( २५ ) **अस्येति।** विधेयस्य वाक्यार्थे प्रधानस्य अविमर्शः अप्रधानतया निर्देशो विधेयाविमर्शः, अयमेवाविमृष्टविधेयांश इति कथ्यते, तल्लक्षणं तु 'विधेयस्यांशस्य विमर्शाभावेन गुणीभूतत्वमविमृष्टविधेयांशत्वम्' इति ग्रन्थकृदेवाह। तथा चोक्तं व्यक्तिविवेककारैः—"अनुवाद्यमनुक्त्वा तु न विधेयमुदीरयेत्। न ह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतितिष्ठति॥ विधेयोद्देश्यभावोऽयं रूप्यरूपकतात्मकः। न च तत्र विधेयोक्तिरुद्देश्यात् पूर्वमिष्यते॥" इति। न्यायेनोद्देश्यविधेययोः पौर्वापर्य्यभावो नियन्त्रितः। प्रकृते 'न्यक्कारो ह्ययम्' इत्यत्र अयमेव न्यक्कार इति न्यक्कारस्य विधेयत्वं विवक्षितम्, तच्च शब्दरचनावैपरीत्येन गुणीभूतम्, रचना च पदद्वयस्य विपरीतेति वाक्यगतो विधेयाविमर्शदोषः। तथा 'वृथोच्छूनैः' इत्यत्र च वृथात्वं विधेयं तच्च समासे गुणीभावादनुवाद्यत्वप्रतीतिकृदिति पदगतो विधेयाविमर्श इति द्विरूपो विधेयाविमर्शः। काव्यत्वं न स्यात् त्वन्मते निर्दोषशब्दार्थयोः काव्यत्वस्वीकारात्।

( २६ ) तत्रेष्टापत्तौ दोषमाह—**प्रत्युतेति।** वैपरीत्येनेत्यर्थः। अस्य श्लोकस्य

( क ) 'यस्माल्लोकत्रयं चैतद्रावितं भयमागतम्, तस्मात्त्वं रावणो नाम नाम्ना वीरो भविष्यति।' इत्युत्तरकाण्डे।

**ननु कश्चिदेवांशोऽत्र दुष्टो न पुनः सर्वोऽपि इति चेत् (२७), तर्हि यत्रांशे दोषः सोऽकाव्यप्रयोजकः, यत्र ध्वनिः स उत्तमकाव्यत्वप्रयोजक इत्यंशाभ्यामुभयत आकृष्यमाणमिदं काव्यमकाव्यं वा किमपि न स्यात् (२८)। न च कश्चिदेवांश काव्यस्य दूषयन्तः श्रुतिदुष्टादयो दोषाः, अपि तु सर्वमेव काव्यम् (२९)। तथाहि काव्यात्मभूतस्य रसस्यानपकर्षकत्वे**

ध्वनित्वेन व्यङ्ग्यार्थसत्त्वेन उत्तमकाव्यता अङ्गीकृता ध्वनिकारादिभिः पूर्वाचार्य्यैरिति शेषः। यद्वा 'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः' इत्युक्त्या भवतैवेति शेषः।

ध्वनित्वं ह्यत्र प्रतिपदमवभासते, तथा हि—अयमेवेत्यन्यार्थयोगव्यवच्छेदसूचकस्यैवकारस्य, मे इति काकुपदस्य, अरयः इति बहुवचनस्य, अत्रैवेति सर्वनाम्नः, निहन्ति जीवतीति तिङः, अहो इत्यव्ययस्य, रावण इति तत्तद्विशेषार्थान्तरसंक्रमितवाच्यपदस्य, धिग्धिगिति द्विरुक्तेः, शक्रजितमिति ताच्छिल्यविहितक्विप्प्रत्ययस्य, ग्रामटिकेति करूपतद्धितस्य, विलुण्ठनेति व्युपसर्गस्य, भुजैरिति बहुवचनस्य, तत्तद्व्यञ्जकविशेषत्वादसंलक्ष्यक्रमो ध्वनिश्चात्र स्वावमाननान्निर्वेदाख्यः संचारिभावः। तस्मादुक्तदोषसत्त्वेऽपि काव्यत्वाङ्गीकाराद्व्याप्तिर्लक्षणस्य निरुक्तकाव्यलक्षणस्य दोष इतरेतरभेदानुमानेऽसाधकत्वप्रयोजकः।

( २७ ) ननु विधेयाविमर्शदोषस्तावदांशिकस्तेन सर्वं काव्यं न दुष्टं निर्दोषस्यैव गुणालङ्कारसद्भावे काव्यत्वं स्यादेवेत्यभिप्रायेणाशङ्कते—**नन्विति**। अत्रोक्तश्लोके कश्चिदेवांशो 'न्यक्कारो ह्यय' मित्यंशः, 'वृथोच्छूनैः' इत्यंशश्च दुष्टो दोषघटितः, न पुनः सर्वोऽपि समस्तोऽपीत्यर्थः। तथा च निर्दोषांशे गुणालंकारसद्भावेन लक्षणसमन्वयात् काव्यत्वमस्त्येव ध्वनिसत्त्वेनोत्तमकाव्यत्वमपीति भावः।

( २८ ) उक्तार्थे विरोधमाह—**तर्हीति**। अंशविशेषस्य दुष्टत्वेऽपि समुदाये काव्यत्वाङ्गीकारे। यत्र यस्मिन्नंशे दोषो विधेयविमर्शसद्भावः, सोऽशोऽकाव्यत्वप्रयोजकः, लक्षणस्यानागमनादिति भावः। यत्र यस्मिन्नंशे निर्दोशे भागे ध्वनिः स ध्वनिमान्नंश उत्तमकाव्यत्वप्रयोजकः; तल्लक्षणयोगादिति भावः। अंशाभ्यां दुष्टादुष्टभागाभ्याम् उभयतः काव्यत्वाकाव्यत्वाभ्यामाकृष्यमाणं परस्परं व्यावर्त्यमानमिदं पद्यं काव्यमकाव्यं वा किमप्येकतरत् न स्यात्, उदासीनमेव स्यादन्योन्याभावस्य व्याप्यवृत्तित्वादित्यर्थः।

( २९ ) ननु यत्रैकस्यैव विषयस्य विरुद्धधर्म्मयोगो भवति तत्रैव विरोधःस्यात्। इह तु दोषस्य यदङ्गस्य दूषकत्वं तस्याकाव्यत्वं ध्वनेश्च यदङ्गस्योत्कर्षकत्वं तस्योत्तमकाव्यत्वमिति द्वयोर्भिन्नविषयत्वान्न विरोध इत्याशङ्क्याह—**न चेति**। श्रुतिदुष्टादयो दुःश्रवत्वादयः। आदिपदाद्विधेयाविमर्शादेः परिग्रहः। दोषाः दोषपदवाच्याः। सर्वमेव काव्यं काव्यत्वेनाभिमतं वाक्यजातं दूषयन्तः श्रुतिदुष्टत्वादयो दोषपदवाच्या भवन्ती-

**तेषां दोषत्वमपि नाङ्गीक्रियते (३०)। अन्यथा नित्यदोषानित्यदोषत्वव्यवस्थापि न स्यात् (३१)।**
**यदुक्तं ध्वनिकृता—"श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः।**
**ध्वन्यात्मन्यवे शृङ्गारे ते हेया इत्युदाहृताः॥"(३२)।**

**किञ्च। एवं काव्यं प्रविरलविषयं वा निर्विषयं वा स्यात्, सर्वथा निर्दोषस्यैकान्तमसम्भवात् (३३)।**

त्यर्थः। तथा च दोषाणां परम्परया रसदूषकत्वेनैव सर्वदूषकत्वमव्याहतमेवेति भावः।

(३०) ननु कथमङ्गमात्रनिष्ठस्य दोषस्य वाक्यापकर्षकतेत्यत्राह—**तथा हीति**। काव्यात्मभूतस्य साररूपतया काव्यजीवनाधायकभूतस्य रसस्य अनपकर्षकत्वे निकृष्टत्वाजनकत्वे तेषां श्रुतिदुष्टादीनां दोषत्वं नाङ्गीक्रियते रसापकर्षकाणां दोषत्वात्, भवतीति शेषः। तथाच दोषाणां रसापकर्षकत्वात् रसाणामपि काव्यत्वाभिमतसमस्तवाक्यव्यापकत्वाच्चांशमात्रवृत्तयोऽपि दोषाः समस्तमेव वाक्यमपकर्षयन्तीति दोषाणां दोषत्वमङ्गीक्रियते। एवञ्च सति 'न्यक्कारो ह्ययम्' इति सम्पूर्णपद्यं दुष्टं सदकाव्यत्वप्रयोजकमेव भवति।

(३१) अत्रेष्टापत्तौ दोषमाह—**अन्यथेति**। अन्यथा रसापकर्षकत्वेऽपि अदोषत्वे, नित्यदोषाश्च्युतसंस्कृतिप्रभृतयः तेषां सकलरसापकर्षकत्वात्, अनित्यदोषा दुःश्रवत्वादयः तेषां रौद्रादिरसे गुणत्वात्। यथोदाहरणम्—"निःश्वासोद्धातवातप्रसरधुतकुलाहार्य्यमुद्धृष्टदंष्ट्रा-जातज्योतिःस्फुलिङ्गप्रकरविरचितोल्कानिकायाभिशङ्काः। अर्द्धे पारीन्द्रमर्द्धे नरमहह महालोकमालोक्य लोकाः-स्तोकस्तोकावशेषाः शरणमुपययुर्वारिधिं वारिधिं वा"॥ इति। द्वन्द्वात् त्वप्रत्ययेन नित्यदोषत्वानित्यदोषत्वयोरित्यर्थः, व्यवस्था निरूपणं न स्यात्। तथा च दोषाणां नित्यत्वानित्यत्वसिद्धेः रसापकर्षकत्वेनैव तेषां दोषत्वमित्यवश्यमङ्गीकार्य्यमित्याशयः।

(३२) दोषाणां नित्यत्वानित्यत्वयोरप्रामाणिकत्वनिरासाय प्राचां सम्मतिं दर्शयति-**यदुक्तमिति**। ध्वनिकृता आनन्दवर्द्धनेन। **श्रुतिदुष्टेति**। अनित्या दोषाश्च ये श्रुतिदुष्टादयः सूचितास्तेऽपि न वाच्यार्थमात्रे न च व्यङ्ग्ये शृङ्गारव्यतिरेकिणि वा ध्वनेरात्मभावे, किं तर्हि? ध्वन्यात्मन्येव शृङ्गारेऽङ्गितया व्यङ्ग्ये ते हेया इत्युदाहृताः। अन्यथा हि तेषामनित्यदोषतैव न स्यात्-इत्यालोकः। शृङ्गार इत्युचितरसोपलक्षणार्थम्, वीरशान्ताद्भुतादावपि तेषां वर्जनात्। तथाच रसस्यानपकर्षकत्वेऽपि श्रुतिदुष्टादीनां दोषत्वाङ्गीकारे पूर्वाचार्य्यस्वीकृता तेषां नित्यानित्यत्वव्यवस्थोच्छिद्येत। तदर्थं रसापकर्षकत्वेनैव तेषां दोषत्वमित्यवश्यमङ्गीकार्य्यम्। तथा सति 'न्यक्कारोऽह्ययम्'मित्यादौ विधेयाविमर्शो रसापकर्षकतया सम्पूर्णं तत्काव्यं दूषयति न तु कञ्चिदेवांशमिति भावः।

(३३) उक्तलक्षणेऽव्याप्तिदोषं प्रदर्श्याधुनासम्भवतादोषमपि प्रदर्शयितुमाह—**किञ्चेति**। अपि चेत्यर्थः। एवं काव्यलक्षणेऽदोषत्वविशेषणसत्त्वे, काव्यं काव्यलक्षणं,

**ननु ईषदर्थे नञः प्रयोगः इति चेत् ? तर्हि ईषद्दोषौ शब्दार्थौ काव्यमित्युक्ते निर्दोषयोः काव्यत्वं न स्यात् (३४)। सति सम्भवे ईषद्दोषाविति चेत्। एतदपि काव्यलक्षणे न वाच्यम्, रत्नादिलक्षणे कीटानुवेधादिपरिहारवत् (३५)। नहि कीटानुवेधादयो रत्नस्य रत्नत्वं व्याहन्तुमीशाः,**

---

प्रविरला अत्यल्पा विषया लक्ष्याणि यस्य तत्तथाभूतं स्यात् प्रायेणैव दोषसम्भवादित्याशयः। अत्रेष्टापत्तावाह—**निर्विषयमिति**। निर्लक्ष्यमित्यर्थः। सर्वथा सर्वतो भावेन निर्दोषस्य शब्दार्थोभयस्येत्यर्थः। एकान्तमत्यन्तमित्यर्थः। **असम्भवादिति**। काव्यमात्रे यस्य कस्यापि दोषस्य सम्भवादिति भावः। तथा च क्लिष्टत्वाक्रमत्वादिदोषाणां काव्यमात्रेऽपि सम्भवादुक्तकाव्यलक्षणेऽदोषत्वविशेषणप्रक्षेपेऽसम्भवतादोषो दुर्वार एवेत्याशयः।

( ३४ ) ननु यदि सर्वत्रैव दोषः सम्भवति तदा ईषद्दोषौ शब्दार्थौ काव्यमित्युक्तौ का हानिरित्याशङ्कते—**नन्विति**। अदोषावित्यत्रानुदरा कन्येत्यादिवदीषदर्थे = अल्पार्थे नञः प्रयोगः, "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥" इति हरिकारिकोक्तेः। तथाच अदोषावित्यत्र नञ ईषदर्थत्वकरणेन ईषदर्थत्वस्य च बलवद्दोषराहित्यरूपत्वाद् बलवद्दोषरहितौ शब्दर्थौ काव्यमिति काव्यलक्षणे सति 'न्यक्कारो ह्यय' मिति पद्ये विधीयमानविधेयावमर्शस्येषद्दोषरूपत्वादेव न तत्राव्याप्तिरित्याशङ्काशयः। यदि केनचिन्निपुणतरकविना निर्दोषं काव्यं रचयितुं शक्यते तदा तत्राव्याप्तिः स्यादित्युत्तरमाह—**तर्हीति**। तर्हि नञ ईषदर्थत्वस्वीकारे 'अदोषौ' इत्यस्येषद्दोषावित्यर्थो भवति, एवञ्च ईषदल्पो दोषो ययोस्तौ एवम्भूतौ शब्दार्थौ काव्यमिति लक्षणे उक्ते सति निर्दोषयोः कदाचित्कविना दोषाभावेन निर्मितयोः शब्दार्थयोः काव्यत्वं न स्यात्; ईषद्दोषत्वरूपकाव्यलक्षणस्य तत्राव्यापनादिति भावः।

( ३५ ) अथ निर्दोषयोः शब्दार्थयोः प्रदत्ताया अव्याप्तेः परिहाराय पुनः शङ्कते—**सतीति**। सति सम्भवे दोषस्येति शेषः। एवञ्च सदोषाणां मध्ये बलवद्दोषरहितौ शब्दार्थौ काव्यमित्यर्थः सम्पद्यते। तथा च निर्दोषयोः शब्दार्थयोरुक्तोदाहरणे च बलवद्दोषाभावसत्त्वान्नाव्याप्तिरिति भावः। तद्दूषयति—**एतदपीति**। सति सम्भवे ईषद्दोषावित्यपीत्यर्थः, बलवद्दोषरहितत्वमपीति यावत्। काव्यलक्षणे न वाच्यं न वक्तव्यम्। कथमित्यपेक्षायां तद् दृष्टान्तेन प्रतिपादयति—**रत्नादीति**। आदिपदेन सुवर्णादिग्रहणम्। कीटेनानुवेधो दंशनम्। अत्रादिपदेन मलीनत्वादिपरिग्रहः। तस्य परिहारो राहित्यम्। यथा 'किं नाम रत्नत्व' मिति केनचित् पृष्टो रात्निकः 'बहुमूल्यत्वे सति तेजस्त्वव्याप्यविलक्षणजातिमत्त्वं रत्नत्व' मित्येव लक्षणं करोति न तु लक्षणकोटौ 'किटानुवेधरहितत्वे सती' ति विशेषणं नियच्छति, तथा किंस्वरूपं काव्यमिति पृष्टो भवान् 'गुणालंकारशालिशब्दार्थत्वं काव्यत्व' मित्येव लक्षणं ब्रूयात् न तु

**किन्तु उपादेयतारतम्यमेव कर्त्तुम्। तद्वदत्रापि श्रुतिदुष्टादयः काव्यस्य (३६)। उक्तञ्च—**

**"कीटानुविद्धरत्नादि-साधारण्येन काव्यता।**
**दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः॥"(३७)।**

'दोषाभाववत्त्वे सति' इति तत्र विशेषणमिति भावः।

( ३६ ) दृष्टान्तं विवृण्वन् प्रकृतमुपपादयति—**न हीति।** हि यस्मात्। रत्नस्य रत्नादे रत्नत्वं रत्नादित्वं व्याहन्तुं व्यावर्त्तयितुं स्वव्यापकाभावप्रतियोगीकर्तुमिति यावत्, न ईशा न शक्ताः। किन्तु अपि तु, उपादेयमुत्कर्षः, भावे यप्रत्ययः, तस्य तारतम्यं वैषम्यं कर्त्तुमीशा इत्यनुषङ्गः। तद्वत्तथा अत्रापि प्रकृते विवादग्रस्तकाव्येऽपि विद्यमानाः श्रुतिदुष्टादयो दोषा' तस्य काव्यस्य काव्यत्वं व्याहर्तुं नेशाः किन्तूपादेयतारतम्यमेव कर्त्तुमीशा इत्यन्वयः। तथाच बलवद्दोषसत्त्वे काव्यत्वव्यावृत्त्यर्थं सति सम्भवे ईषद्दोषाविति वक्तुं नोचितमेव तादृशदोषस्य तु काव्यत्वविनाशेऽकिञ्चित्करत्वादिति भावः।

( ३७ ) बलवद्दोषसद्भावेऽपि रसप्रतीतौ काव्यत्वमस्त्येवेत्यत्र प्राचीनसम्मतिं दर्शयितुमाह—**उक्तं चेति।** प्राचीनैरिति शेषः। **कीटानुविद्धेति।** दुष्टेष्वपि दोषवत्त्वेऽपि यत्र येषु वाक्येषु रसादीनां रसतदाभासभावादीनामनुगम उपलम्भः स्फुटः स्पष्टः बलवद्दोषजन्यवैरस्यातिशयानभिभूत इति यावत्, तत्रेत्यध्याहार्य्यम्, तेषु वाक्येष्वित्यर्थः, कीटैरनुविद्धानां दष्टानां रत्नादीनां साधारण्येन सामान्येन काव्यता मता अङ्गीकृता काव्यवेदिभिरिति शेषः। तथाचास्मन्मते 'न्यक्कार' इति पद्ये बलवत्तरदोषसत्त्वेऽपि निर्वेदाख्यभावानुगमादुत्तमकाव्यत्वमस्त्येव भवन्मते तु अदोषशब्दार्थत्वस्यैव तल्लक्षणत्वेन तत्त्वं न स्यादित्यव्याप्तितादवस्थ्यमिति प्रकृताशयः।

केचित्तु—'अदोषौ' इति शाब्दबोधविघटका ये च्युतसंस्कृत्यभवन्मतयोगक्लिष्टत्वादयो दोषास्तत्सामान्याभाववन्तावित्यर्थ'—इत्याहुः, तन्न, व्यतिरेकध्वनेरुदाहरणे "धन्याऽसि या कथयसि प्रियसंगमेऽपि विश्रब्धचाटुकशतानि रतान्तरेषु। नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किञ्चिदपि स्मरामि॥" इत्यत्र 'शपामि' इति च्युतसंस्कृतिदोषसत्त्वात्, "निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः" इत्यादावञ्जनस्यात्यन्तासत्त्वबोधाभिप्रायेण प्रयुक्तस्य 'दूरम्' इत्यस्य समासे गुणीभूतेन नञर्थेन सहान्वयेनाभवन्मतयोगत्वदोषसत्त्वाच्चाव्याप्तेः—इति वागीशग्रन्थः। यत्तु च्छायाख्यविवृतिपूर्त्तिकृतोक्तम्—'अत्राहोपुरुषिकामात्रमिदम्। दोषाभावसत्तायां तु काव्यता निर्बाधैवेति सदोषेऽतिव्याप्तिवारणाय 'अदोषौ' इत्यभिहितम्। तत्र दोषात्यन्ताभावस्य दुरुपपादत्वात् काव्यत्वोपमर्द्दका ये प्रबलतरा दोषास्तद्रहितौ शब्दार्थौ काव्यमित्यर्थोऽल्पार्थकनञ्स्वारस्याल्ल-

किञ्च। शब्दार्थयोः सगुणत्वविशेषणमनुपपन्नम्, गुणानां रसैकधर्म्म-त्वस्य "ये रसस्याङ्गिनो धर्म्माः शौर्य्यादय इवात्मनः" इत्यादिना तेनैव प्रति-पादितत्वात्(३८)। रसाभिव्यञ्जकत्वेन उपचारत उपपद्यत इति चेत्?(३९),

भ्यते । एवञ्च क्वचिदनित्यदोषसत्त्वेऽपि काव्यत्वमव्याहतमेवेत्यर्थात् सिद्धम्। अत एव 'न्यक्कारो ह्ययम्' इति पद्ये विधेयाविमर्शसत्त्वेऽपि ध्वनिकाव्यता जागरूकैव । नहीष-द्दोषावित्यनेन निर्दोषयोः काव्यत्वं व्यवच्छिद्यते सदोषयोर्वा लभ्यते; इति केनापि सचेत-साऽवधारयितुं वार्य्यते । निर्दोषयोः स्वतः काव्यत्वे सदोषयोर्लक्षणघटकत्वासम्भवे कुत्रचिदीषद्दोषयोरेव तथात्वेन क्रोडीकरणात्' इति । तत्र पृच्छ्यते–'अदोषा' वित्यनेन निर्दोषयोर्यदि काव्यत्वं प्रतिपाद्यते, तर्हि ईषद्दोषयोः केन, नच तद्विधायकं किञ्चित्,सति सम्भवे इति निवेश्यते चेत्तर्हि सर्वत्र निर्दोषौ क्वचित्पुनरीषद्दोषौ शब्दार्थौ काव्यमिति वक्तव्ये तथाभिधानं किम्मूलम् । अन्यथा अनलंकृती क्वापि इत्यपि किमर्थमुक्तम् । किञ्चैतादृशमपि लक्षणं न सुशोभते । न हि केनापि कीटदंशादिशून्यमेव रत्नं क्वचित्पु-नरीषत्कीटदंशादिमदपि रत्नं भवति; न तु सर्वथा कीटदंशादिमत् इति वक्तुं युज्यते । अदोषावित्यनेन काव्यत्वोपमर्दकैर्दोषैरेव शून्ययोर्यदि वा काव्यत्वमङ्गीक्रियते तर्हि किं नाम काव्यं ? किं तत्र तत्त्वं ? किं वा तदनभिधाय तदुपमर्दकदोषशून्ययोः काव्यत्वमित्यु-च्यते? कथं वा नात्रान्योन्याश्रयापातः?, यदि काव्यत्वोपमर्दकदोषशून्यत्वमेव काव्य-त्वमित्युच्येत ? तर्हि के काव्यत्वोपमर्दकाः ? के पुनर्नेति वक्तव्यम् । ननु अपरिहार्य्या नित्या दोषाः काव्यत्वोपमर्दका इति चेत् 'अहौ वा हारे वा' इत्यादौ भवद्दर्शितनयेन रसानौचित्यस्य केन परिहार्य्यम्, केन वा काव्यत्वमवस्थाप्यते ? तदिति सर्वं मत्तप्रल-पितमिति रुचिरग्रन्थः ।

( ३८ ) एवमदोषत्वस्य काव्यलक्षणं दूषयित्वा सगुणत्वस्यापि तद् दूषयितुमाह–**किञ्चेति** । अनुपपन्नमसम्भवीत्यर्थः । अनुपपन्नत्वे हेतुमाह–**गुणानामिति** । रसैक-धर्म्मत्वस्य रसमात्रधर्म्मकत्वस्य । 'आत्मनः शौर्य्यादय इवाङ्गिनः प्रधानस्य रसस्य ये धर्म्मास्ते गुणाः, इत्यादिना ग्रन्थेन, तेनैव काव्यप्रकाशकारेणैव प्रतिपादितत्वात् । तथाच गुणानां रसमात्रवृत्तित्वात्तैर्विशिष्टौ शब्दार्थौ न सम्भवतः, न ह्यन्यमात्रवृत्तिध-र्म्ममादायान्यस्मिन् वैशिष्ट्यव्यवहारः । नहि भवति पटो घटत्वविशिष्ट इति भावः ।

( ३९ ) पुनरत्राशङ्कते—**रसाभिव्यञ्जकत्वेनेति** । शब्दार्थयो रसाभिव्यञ्ज-कत्वेन स्वाश्रयरसाभिव्यञ्जकत्वरूपेण उपचारतः परम्परासम्बन्धेन उपपद्यते सगुणत्व-विशेषणमिति शेषः । तथा च शब्दार्थयोराहत्य गुणाभावेऽपि स्वाश्रयरसाभिव्यञ्जकत्व-रूपपरम्परासम्बन्धेन गुणवत्त्वात्तयोः सगुणत्वविशेषणमुपपद्यत एवेत्यर्थः, स्वं गुणस्त-स्याश्रयो रसस्तदभिव्यञ्जकौ शब्दार्थौ । पुत्रस्त्वेवमाह—अयमर्थः–शब्दार्थौ खलु प्राचीनोक्तरित्या निर्मितौ रसाभिव्यञ्जकौ भवतोऽप्यमनुमतौ तेन रसादिरूपव्यङ्ग्यरूपा-

**तथाऽप्ययुक्तम् , तथाहि तयोः काव्यस्वरूपत्वेनाभिमतयोः शब्दार्थयो रसोऽस्ति न वा? नास्ति चेत्, गुणवत्त्वमपि नास्ति, गुणानां तदन्वयव्यतिरेकानुविधायित्वात् (४०)। अस्ति चेत् , कथं नोक्तं रसव-**

णामपि माधुर्य्यादीनां व्यञ्जकरूपशब्दार्थधर्म्मत्वेनोपचारः, यदाह—'गुणवृत्त्या पुनस्तेषां स्थितिः शब्दार्थयोर्मता' इति । केचित्तु—इदं च ग्रन्थकृतारोपबीजानवधानादेवोक्तम् , तथाहि–परम्परासम्बन्धघटकस्य मध्यभूतसम्बन्धिनो बहिरिन्द्रियप्रत्यक्षे सत्येव नैवमारोपः, यत्र तु परम्पराघटकमध्यभूतसम्बन्धी न बहिरिन्द्रियप्रत्यक्षस्तत्र त्वेवमारोप दृश्यत एव, यथा—'शीतो वायुः' 'उष्णं जलम्' 'सुगन्धिर्वायु'-रित्यत्र परम्परासम्बन्धघटकानां मध्यभूतजलाग्निपुष्पावयवानां सूक्ष्मत्वेनाप्रत्यक्षत्वात्तादृशारोपः, प्रकृते तु बहिरिन्द्रियप्रत्यक्षस्य रसादेः परम्परासम्बन्धघटकत्वान्न सम्भवत्येव गुणत्वारोपः शब्दार्थयोरिति, अत एवोच्चैःशब्दत्ववत्तारत्ववदाकाशमिति नारोपः, तत्र परम्परासम्बन्धघटकस्य शब्दस्य बहिरिन्द्रियप्रत्यक्षत्वात्, न चैवं 'ज्ञानत्ववानात्मा' इत्यारोपापत्तिः, तत्र परम्पराघटकस्य मध्यभूतस्य ज्ञानस्य बहिरिन्द्रियाप्रत्यक्षत्वादिति वाच्यम् , यदि च तादृशारोपो नास्ति तदा कारणान्तराभावस्यैव तत्र कल्पनीयत्वात्, अत एवोदयानाचार्य्येणोक्तम्–'आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोपः।' इति । यत्तु जपाकुसुमस्य बहिरिन्द्रियप्रत्यक्षत्वेऽपि लोहितः स्फटिक इत्यारोपस्तत्र जपाकुसुमं नेदृशपरम्पराघटकं जपाकुसुमस्य स्फटिकावृत्तित्वात्, किन्तु जपाकुसुमस्य स्वच्छद्रव्यसान्निध्यमेव तद्रहितं पृथगेवारोपनिमित्तमिति सुधीभिरवधेयमित्याहुः । तन्न, स्थूलजलसंयोगेन शीतो वायुः, अर्कोपलसंयोगेन उष्णं जलमित्यादौ स्थूलजलार्कोपलसंयोगघटितयोः परस्परयोर्मध्यपदार्थयोः स्थूलजलार्कोपलयोर्बहिरिन्द्रियप्रत्यक्षत्वेऽपि विशिष्टधीनियामकत्वेन सम्बन्धत्वाङ्गीकारात्, चिदानन्दचमत्कारमयस्य रसस्य बहिरिन्द्रियप्रत्यक्षाविषयत्वेन तद्घटितपरम्परायाः सम्बन्धत्वाङ्गीकारे बाधाभावाच्च । वस्तुतस्तु–यत्र परम्परया विशिष्टधीनियामकत्वं तत्रैव तस्याः सम्बन्धत्वं कल्प्यते, यत्र तु विशिष्टधीनियामकत्वं तत्र तु सम्बन्धत्वं न कल्प्यत एव, तेन 'ज्ञानत्ववानात्मा' इत्यादौ स्वसमवायिसमवायस्य न सम्बन्धत्वमिति ।

( ४० ) उक्तमर्थं खण्डयितुमाह—**तथापीति** । उपचारतः सगुणौ शब्दार्थौ काव्यमिति यदुच्यते तदित्यर्थः, अयुक्तं न युक्तम् । कुतोऽयुक्तमित्याह—**तथाहीति** । तयोरुपचारतः सगुणयोः, **रसोऽस्ति न वेति** । रसस्य सद्भाव एव काव्यत्वं तदभावे वेत्यर्थः । प्रथमस्य तुच्छतया द्वितीयं पक्षं निराकरोति—**नास्तिचेदिति** । निरतिशयसुखज्ञानरूपस्य रसस्य स्ववृत्तितावच्छेदकसमवायसम्बन्धेनात्मनि सत्त्वात्तादृशशब्दार्थयो रसो नास्तीत्युच्यते चेदित्यर्थः । तर्हि तयोर्गुणवत्त्वमपि नास्तीत्यर्थः । कुत इत्याह—**गुणानामिति** । गुणानां माधुर्य्यादीनां तस्य रसस्य अन्वयव्यतिरेकयोर-

**न्ताविति विशेषणम् (४१)। गुणवत्त्वान्यथानुपपत्त्या एतल्लभ्यत इति चेत्? तर्हि सरसावित्येव वक्तुं युक्तम्, न सगुणाविति (४२)। नहि प्राणिमन्तो देशा इति वक्तव्ये शौर्य्यादिमन्तो देशा इति केनाप्युच्यते (४३)। ननु**

नुविधायित्वादनुगामित्वात्। तत्सत्त्वे तत्सत्तेत्यन्वयः, तदभावे तदभाव इति व्यतिरेकः। प्रकृते रसस्य सत्त्वे गुणसत्ता रसाभावे गुणाभाव इति। तथा च तव काव्यत्वेनाभिमतयोः शब्दार्थयोः रसाभावे गुणानामप्यभावात्सगुणत्वविशेषणमयुक्तमिति भावः। रामचरणस्तु 'गुणवत्त्वमपि नास्ती'ति प्रतीकं धृत्वाह—'तथा च भवदुक्ते 'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्' इति तृतीयकाव्यप्रकारेऽव्याप्तिः। नन्वत्रालंकारसत्त्वेनैव काव्यत्वमिति चेत्तर्हि 'सालङ्कारौ' इत्येव वक्तुं युक्तं किमव्याप्तिघटकेन सगुणावित्यनेनेति भाव' इति।

( ४१ ) रसोऽस्तीति प्रथमपक्षं दूषयति—**अस्ति चेदिति** स्ववृत्तितावच्छेदकसमवायसम्बन्धेनात्मनि सत्त्वेऽपि स्वव्यङ्ग्यत्वसम्बन्धेन शब्दार्थयोः पुना रसोऽस्त्येव, न हि समवायेन स्वावयवे तिष्ठन्नपि संयोगेन भूतले न तिष्ठेद्घट इत्युच्यते चेदित्यर्थः। अत्र दूषणमाह—**कथमिति**। तदा काव्यत्वेनाभिमतयोः। शब्दार्थयो रसवत्त्वमिति विशेषणं कथं नोक्तं तस्यात्यन्तावश्यकत्वात्, तमृते काव्यत्वानङ्गीकाराच्चेत्यर्थः। ननु रसगुणयोः समनियतत्वादेकतरोक्तौ प्रकृतनिर्वाहो भवतीति चेन्न, माधुर्यादित्रितयसाधारणस्य गुणत्वस्यैकस्याभावादननुगमस्य सम्भवात्, रसवत्त्वविशेषणेन तु भावादिसाधारणस्याखण्डस्यास्वादविषयताविशेषस्य रसत्वस्वीकारान्नाननुगम इति बोध्यम्।

( ४२ ) ननु शब्दार्थयोरन्वयव्यतिरेकाभ्यां रसवत्त्वाभावेन सगुणत्वासम्भवात् सगुणावित्युक्तौ सरसाविति विशेषणं लभ्यत इत्याशङ्कते—**गुणवत्त्वेति**। गुणवत्त्वस्य शब्दार्थयोरिति शेषः, अन्यथानुपपत्त्या अन्वयव्यतिरेकाभ्यां सरसत्वाभावेनासम्भवादित्यर्थः, एतत् सरसाविति विशेषणं लभ्यते तात्पर्य्येणाधिगम्यते। यथा शौर्य्यादिमन्तो देशा इत्युक्तावन्यथानुपपत्त्या प्राणिमन्त इति लभ्यते तथा सगुणौ शब्दार्थौ काव्यमित्युक्तौ सरसावित्यवश्यं लभ्यत इत्याशयः। तद्दूषयति—**तर्हीति**। शब्दार्थयोः सरसत्वविशेषणस्यावश्यकत्वे इत्यर्थः। सरसाविति शब्दार्थयोर्विशेषणं वक्तुं युक्तं रूढिप्रयोजनशून्यत्वेन लक्षणाप्रसङ्गाल्लाघवात् स्पष्टोक्तेश्चेति भावः।

( ४३ ) उक्तमर्थं व्यतिरेकदृष्टान्तेन द्रढयति—**नहीति**। हि यस्मात्, केनापि सचेतसा, शौर्य्यादिमत्त्वान्यथानुपपत्त्या प्राणिमत्त्वबोधसम्भवेऽपि 'प्राणिमन्तो देशा' इति वक्तव्ये सति, 'शौर्य्यादिमन्तो देशा' इति नोच्यते नैव कथ्यते, किन्तु 'प्राणिमन्तो देशा' इत्येवोच्यते, लाघवात् स्पष्टवाक्त्वाच्चेत्यर्थः। तथा च गुणवत्त्वान्यथानुपपत्त्या रसवत्त्वलाभेऽपि सरसौ शब्दार्थौ काव्यमित्येव वक्तुं युक्तं न तु 'सगुणौ' लाघवात् स्पष्टवाक्त्वाच्चेति भावः।

शब्दार्थौ सगुणावित्यनेन गुणाभिव्यञ्जकौ शब्दार्थौ काव्ये प्रयोज्यावित्यभिप्राय इति चेत् ?, न, गुणाभिव्यञ्जक-शब्दार्थवत्त्वस्यापि काव्ये उत्कर्षमात्राधायकत्वम्, न तु स्वरूपाधायकत्वम् (४४)। उक्तं हि-"काव्यस्य शब्दार्थौ शरीरम्, रसादिश्चात्मा, गुणाः शौर्य्यादिवत्, दोषाः काणत्वादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, अलङ्काराश्च कटककुण्डलादिवत्" इति (४५)।

एतेन "अनलङ्कृती पुनः क्वापि" इति यदुक्तं तदपि परास्तम्। अस्य ह्यर्थः—"सर्वत्र सालङ्कारौ क्वचित्तु अस्फुटालङ्कारावपि शब्दार्थौ काव्यम्" इति। तत्र सालङ्कारशब्दार्थयोरपि काव्ये उत्कर्षमात्राधायक-

( ४४ ) अथ काव्यलक्षणघटकस्य शब्दार्थयोः सगुणत्वविशेषणस्याभिप्रायान्तरमाशङ्कते—**नन्विति**। तथा च माधुर्य्यौजःप्रसादाख्या ये गुणास्तदभिव्यञ्जकौ शब्दार्थौ काव्ये प्रयोज्यावुत्कर्षाधायकत्वादित्युपदेशसूचकमेव शब्दार्थयोः सगुणत्वविशेषणं न तु काव्यलक्षणघटकमित्याशयः। उक्ताभिप्रायं दूषयति—**नेति**। उत्कर्षमात्राधायकत्वं रसादिमत्तया प्रतीतिजनकत्वम्। न तु स्वरूपाधायकत्वं काव्यत्वप्रयोजकत्वम्। तस्मात्तत्काव्यलक्षणे न वाच्यमिति भावः।

( ४५ ) तदेवोपपादयति—**उक्तमिति**। प्राचीनैरिति शेषः। हि—यस्मात्। काव्यस्य पुरुषरूपस्येति भावः। **शब्दार्थाविति**। सामान्यत एवोक्तं न तु गुणाभिव्यञ्जकशब्दार्थाविति। रसादिरित्यादिपदेन रसाभासभावतदाभासभावशान्तिभावोदयभावसन्धिभावशबलत्वादीनां ग्रहणम्। गुणाः वक्ष्यमाणा माधुर्य्यौजःप्रसादाः। दोषाः श्रुतिदुष्टाऽपुष्टत्वादयः। रीतयो वैदर्भीगौडीपाञ्चालीलाट्यः, अवयवसंस्थानविशेषवत् यथास्थाने करचरणादिसन्निवेशवत्। अलङ्कारा अनुप्रासोपमादयः। तथा च शौर्य्यादयो यथा पुरुषस्यान्यथासिद्धं पुरुषत्वं न साधयन्ति; किन्तूत्कर्षमात्रमुत्पादयन्ति; तथा माधुर्य्यादयो गुणा अपि काव्यस्यान्यथासिद्धं काव्यत्वं नैव साधयन्ति; किन्तूत्कर्षमात्रमुत्पादयन्तीति काव्यलक्षणे उक्तोपदेशायापि शब्दार्थयोः सगुणत्वविशेषणं नैव युक्तमिति भावः। यत्तु टिप्पणीकारेणोक्तं—निर्गुणेऽतिव्याप्तिवारणाय सगुणावित्युक्तमिति, तन्न, 'अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि! मां, कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्त्तिमुद्धर।' इत्यादावव्याप्त्यापत्तेः, न चात्रौजो गुणः प्रकृतरसपरिपन्थित्वात्, कथञ्चिदत्र प्रसादवत्तया लक्षणसमन्वयेऽपि 'मित्रात्रिपुत्रनेत्राय त्रयीशात्रवशत्रवे गोत्रारिगोत्रजित्राय गोत्रात्रे ते नमो नम' इत्यादावव्याप्तेर्दुर्वारत्वादिति। अत एवोक्तं पण्डितराजैः—लक्षणे गुणालङ्कारनिवेशोऽपि न युक्तः, 'उदितं मण्डलं विधोः' इति काव्ये दूत्यभिसारिकाविरहिण्यादिसमुदीरितेऽभिसरणादिविधिनिषेधजीवनाभावादिपरे 'गतोऽस्तमर्कः' इत्यदौ चाव्याप्त्यापत्तेः, न चेदमकाव्यमिति शक्यं वदितुं काव्यतया पराभिमतस्यापि तथा वक्तुं शक्यत्वादिति।

त्वात् (४६) । एतेन "वक्रोक्तिः काव्यजीवितम्" इति वक्रोक्तिजीवितकारोक्तमपि परास्तम्, वक्रोक्तेरलङ्काररूपत्वात् (४७) । यच्च क्वचिदस्फुटालङ्कारत्वे उदाहृतम् (४८) ।

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥" (४९) ।

( ४६ ) एवमदोषत्वस्य सगुणत्वस्य च काव्यलक्षणत्वं दूषयित्वा सालङ्कारत्वस्यापि दूषयितुमाह—**एतेनेति** । एतेन प्राचीनैरलङ्कारादीनां कटककुण्डलादिसामान्येनोक्तत्वेन हेतुना । परास्तं निराकृतं वेदितव्यमिति शेषः । लक्षणे लक्ष्यप्रदर्शने च दोषमुद्भावयितुं तन्मतसिद्धं 'अनलंकृती पुनः क्वापि' इति विशेषणस्यार्थं दर्शयति—**अस्य ह्यर्थ इति** । सर्वत्रेत्यनेन तन्मते काव्यत्वेनाभिमतयोः शब्दार्थयोर्यथा कथञ्चिदलङ्कारस्य सद्भावः परमावश्यक इति द्योत्यते । दूषयति—**तत्रेति** । तत्र भवदुक्तकाव्यलक्षणे, सप्तम्यर्थो घटकत्वम्, भवदुक्तकाव्यलक्षणघटकयोरित्यर्थः, सालङ्कारशब्दार्थयोः काव्ये उत्कर्षमात्रस्य न तु स्वरूपस्येत्यर्थः, आधायकत्वाज्जनकत्वात् । तथा च काव्यलक्षणे शब्दार्थयोः सगुणत्वविशेषणवत्सालङ्कारत्वविशेषणमप्ययुक्तिमदित्याशयः । किञ्चात्र 'तददोषा' विति लक्षणे शब्दार्थाविति वचनमप्यसमीचीनम् । तथा हि काव्यत्वसामान्यस्य किं संयोगादिवद् व्यासज्यवृत्तित्वं, तद्गोत्वादिवत्प्रत्येकं परिसमाप्तिवृत्तित्वं वा, नाद्यः, सामान्यत्वादेव, न द्वितीयः, शब्दार्थयोः प्रत्येकं काव्यत्वप्रसङ्गात् । एतच्चैतद्ग्रन्थकृता स्वकृतायां काव्यप्रकाशटीकायां लिखितमपि प्राचीनगौरवनियन्त्रितेनात्रोपेक्षितम् ।

( ४७ ) काव्ये रसाद्यपेक्षया वक्रोक्तेः प्राधान्यमङ्गीकुर्वतो राजानककुन्तकस्य मतं निराचष्टुमाह—**एतेनेति** । एतेन काव्येऽलंकारस्य कटककुण्डलादिसामान्येनोक्तत्वेनेत्यर्थः, वक्रा विचित्रा उक्तिर्वक्रोक्तिः, वैचित्र्यमलङ्कार इति सामान्यलक्षणमित्यभिप्रायः । काव्यस्य जीवितं जीवनं रसाद्यपेक्षया प्रधानमिति यावत् । इति वक्रोक्तिजीवितकारोक्तं राजानककुन्तकोक्तमपि परास्तं निराकृतं वेदितव्यमिति शेषः । तद्धेतुमाह—**वक्रोक्तेरिति** । वक्रोक्तेर्वाक्यगतवैचित्र्यस्य अलङ्काररूपत्वात् । तथा ह्युक्तं—'सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते । यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना ॥' इति । तथा चालंकाररूपाया वक्रोक्तेः काव्ये उत्कर्षमात्राधायकत्वात् साऽपि तस्य जीवनं नैव भवितुमर्हति, न हि कोप्यप्रमत्तः कटककुण्डलादीनलंकारान् पुरुषस्य जीवनं गदितुं न लज्जत इत्याशयः ।

( ४८ ) एवं काव्यलक्षणं दूषयित्वा काव्यप्रकाशकृतोऽस्फुटालंकारविरहोदाहरणे स्फुटालंकारं दर्शयन्नाह—**यच्चेति** । उदाहृतं काव्यप्रकाशकारैरिति शेषः ।

( ४९ ) अपरिणीतावस्थायामेव रेवानदीतीरे वेतसलतावेष्टिततरुतले केनचित्

पुंसा कृतसुरता काचित्स्वाधीनपतिका पश्चात्तेनैव परिणीता तद्गृहमागताऽपि पूर्वोपभुक्तेष्वपि सुरतोपकरणादिषु उत्कटासक्त्या तेषामत्यन्तोपादेयतां सूचयन्ती सखीमाह—**यः कौमारेति** । यः पुमान्, कुमारस्यायं भावः कौमारः कन्यकावस्था तं हरति मत्सम्बन्धिसम्भोगेच्छोत्पादनेन नाशयतीति कौमारहर आसीदिति शेषः, इदानीमपि स एव हि उपभोक्ता पुमान्, वरः परिणेता वर्त्तत इति शेषः । सुतरां तत्पुमर्थमप्युत्कण्ठा नैव सम्भवतीति भावः । अत्रैकार्थकाभ्यामेवहिशब्दाभ्यां तस्मिन् पुंसि उपपतेरत्यन्तासम्भवित्वं सूच्यते । ता एव यासु चैत्रक्षपासु सुरतः कृतस्तत्सजातीया एवेत्यर्थः, चैत्रक्षपाश्चैत्रमासीयरजन्यः, एता वर्त्तन्त इति शेषः, अतस्तत्क्षपार्थमप्युत्कण्ठा नैव सम्पद्यत इत्याशयः । ते च तस्मिन्नतीतोत्सवे ये कदम्बानिला आसन् तत्सजातीया एवेत्यर्थः, उन्मीलिताभिस्तत्कालं विकसिताभिः मालतीभिर्वासन्तिकाभि; सुरभयः शोभनगन्धाः, प्रौढाः रत्युद्दीपनादिप्रागल्भ्यशालिनः, अतो मन्दत्वेऽप्यविरोधः, कदम्बानिला धूलीकदम्बसंसर्गिवाताः, इदानीमपि वान्तीति शेषः, अत एव तदनिलार्थमप्युत्कण्ठा नैव युज्यत इत्यभिप्रायः । साचैवास्मि अहमपि तादवस्थ्येन नवयौवना वर्त्ते, न तूत्कण्ठाहेत्ववस्थान्तरं प्राप्ता येनोत्कण्ठा प्रादुर्भवतीति भावः । तथापि तादृशतत्तत्सुरतसामग्रीसत्त्वेऽपि, तत्रेत्यस्य त्रिष्वपि सप्तम्यन्तविशेषणेषु सम्बन्धः, रेवारोधसि नर्मदानदीतीरे, वेतसीवेष्टिततरुर्वेतसीतरुस्तस्य तलमधोदेशस्तस्मिन्, सुरतानुकूलव्यापाररूपा लीलाः कुसुमभरणादिकाः प्रसाधनादिकाः स्मिताश्लेषचुम्बनादिकाश्च तासां विधौ सम्पादने, चेतोऽन्तःकरणं कर्त्तृ, समुत्कण्ठते उत्सुकं भवतीत्यर्थः । एतेन तदानींतनसुरतात्कश्चिदनीर्वचनीय एवानन्द आसीदिति व्यज्यते ।

इह, केचित्तु—कौमारमभिनवयौवनं हरतीति कौमारहर इति व्याचक्रुः, तन्न, निषिद्धलक्षणापत्तेः । अन्ये तु—कौ पृथिव्यां मारं मदनं हरत्यनुहरतीति कौमारहर इति व्याचख्युः, तन्मन्दम्, प्रकरणवाक्यार्थविरोधात् । किञ्चात्र व्रियते प्रियया प्रियत्वेन स्वयमङ्गीक्रियते न तु पित्रादिपारतन्त्र्यादिति वर इत्यर्थः करणीयः, तेन अकृत्रिमप्रेमपात्रताप्रकटनद्वारा परस्परं दम्पत्योरनुरागदार्ढ्यं ध्वन्यते । स एवोपभोक्ताऽन्यो नेत्यर्थः—ईदृशार्थकरणे वक्ष्यमाणालङ्कारस्य स्फुटत्वं स्यात् । मालती वासन्तिकलता, न तु जातिश्चैत्रे तस्या असम्भवात् । कदम्बो धूलीकदम्बश्चैत्रे तस्यैव सम्भवात् । कदम्बानिला इत्यस्य सर्वदिक् सञ्चारित्वेन कदम्बाकारा अनिला इत्यर्थ,—इति केचित् । (क)मालतीकदम्बपदयोरेवं व्याख्यानं प्राचीनमतानुरोधेनैव । वस्तुतस्तु ऋतुमूर्द्धन्ये

(क) अन्ये तु—'कदम्बानिलाः कदम्बवनानिलाः, वनानिलानां प्रौढत्वे वनबहिर्भूतानां मान्द्योपलम्भादुद्दीपकत्वेनाह—'प्रौढा' इति । इति व्याचक्रुः, तन्न, तथात्वे कदम्बपर्य्यन्तानुधावनस्य निष्प्रयोजनत्वात् 'अरण्यानिला' इत्यनेनैव तदर्थलाभात् । न च मालतीसम्बन्धेनैवानिलानां सौगन्ध्यलाभात् कदम्बसम्बन्धदर्शनं व्यर्थमिति वा-

**एतच्चिन्त्यम्। अत्र हि विभावनाविशेषोक्तिमूलस्य सन्देहसङ्करालङ्कारस्य स्फुटत्वम् (५०)।**

---

वसन्ते सकलकुसुमवर्णनस्य कविसमयसिद्धत्वाच्च कश्चित् विरोधः । सम्प्रदायविदस्तु—स एव वसन्तः, ते एव वर्षा इति मन्मथोद्दीपकत्वाद्विशेषादृतुद्वयस्यावग्रहणमिति व्याचक्षते । कैश्चित्तु—चैत्रेत्यत्र भाद्रेति पाठः कल्पितः, सोऽसङ्गतः, नदीतीरनिकुञ्जे सुरतवर्णनस्यानुचितत्वात्, न च कच्छनिकुञ्जेऽनौचित्येऽपि तीरनिकुञ्जे नानौचित्यं 'मेघैर्मेदुर' मित्यादौ दृष्टत्वादिति वाच्यम्, भाद्रक्षपायां नदीतीरनिकुञ्जसङ्केतस्य स्वाधीनपतिकाया अनौचित्यात्, परैरसम्भावनीयतया परकीयाया एव तादृशसंकेतवर्णनाद्, चैत्रेतिपाठस्योपपादितत्वाच्चेति चिन्त्यम् ।

( ५० ) स्फुटालङ्कारोद्भावनायाह—**एतदिति** । एतदुक्तोदाहृतं चिन्त्यं स्फुटालंकारशालित्वेन भावनीयम् । तद्दर्शयति—**अत्र हीति** । हि यस्मात् । अत्र श्लोके विभावनाविशेषोक्तिमूलस्य विभावनाविशेषोक्तिनिरूपितस्य सन्देहसङ्करालङ्कारस्य सन्देहविषयत्वेन सङ्करालङ्कारस्य स्फुटत्वं स्पष्टत्वम् । तथाच कारणभावेऽपि कार्य्योत्पत्तिकथनं विभावना, प्रकृतेऽत्र सुरतोपकरणादीनामुपभुक्तत्वस्य कारणस्याभावेऽपि उत्कण्ठारूपस्य तत्कार्य्यस्योत्पत्तिकथनाद्विभावना । एवं कारणसत्त्वेऽपि कार्य्याभावकथनं विशेषोक्तिः, प्रकृतेऽत्र सुरतोपकरणोपभुक्तत्वरूपस्य कारणस्य सत्त्वेऽपि अनुत्कण्ठारूपस्य तत्कार्य्यस्याभावकथनाद्विशेषोक्तिः । किन्त्वत्र कार्य्यकारणयोरभावकथनस्यार्थिकस्य सत्त्वेऽपि तद्वाचकनञादिनानुपात्तत्वात्तयोरस्फुटत्वेऽपि साधकबाधकप्रमाणाभावेन तत्सन्देहालङ्कारस्य स्फुटत्वमव्याहतमेव, अन्यथा तयोः सन्देहसङ्कर एव न स्यात्। तस्मादस्फुटालङ्कारत्वविषये उदाहरणमप्येतदसङ्गतमेवेत्याशयः ।

यत्तु जयन्तेनोक्तं विभावनाविशेषोक्त्योः परिपूर्णात्मलक्षणाभावान्न तन्मूलः सन्देहसङ्कर इति, नहि निःशेषकारणभावे कार्य्योत्पत्तौ विभावनायाः पूर्णत्वम्, किन्तु कतिपयप्रसिद्धकारणनिषेधेऽपि विभावनायाः पूर्णता स्यात् । नापि निःशेषकारणसामग्र्यां कार्य्यानुत्पत्तौ विशेषोक्तेः पूर्णत्वम्, अपि तु प्रसिद्धकतिपयकारणसामग्र्यां कार्य्यानुत्पत्तिकथनमात्रेणाऽपि पूर्णता । अन्यथा विभावनाविशेषोक्ती उच्छिद्येताम् । इतश्च उक्तप्रकारेणापि विचित्रोक्तिनिर्वाहादुक्तवैचित्र्यस्यैवालङ्कारभूमित्वादतः परिपूर्णयोरेव तयोः साधकबाधकप्रमाणाभावात्तन्मूलः सन्देहसङ्करः स्फुट इति क्वचिदधिकः पाठः ।

यच्च केनचिदुक्तम्—'अनयोरस्फुटत्वेनैतन्मूलकसन्देहसङ्करोऽप्यस्फुट' इति, तत्प-

---

च्यम्, विलक्षणसौगन्ध्यलाभाय तस्य सार्थकत्वात् । यथा—'रमणीकमनीयकपोलतले परिपीतपटीररसैरलसः । अयमञ्चति पञ्चशरानुचरो नवनीपवनीधुवनः पवनः ॥ नवेति नवपुष्पितेत्यर्थः । अत्र चन्दनसम्बन्धेन सौगन्ध्यलाभेऽपि विलक्षणसौगन्ध्यलाभाय कदम्बसम्बन्धदर्शनमिति तर्कवागीशः ।

**एतेन—"अदोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।**
**रसान्वितं कविः कुर्वन् कीर्त्तिं प्रीतिञ्च विन्दति ॥"**
**इत्यादीनामपि काव्यलक्षणत्वमपास्तम् । (५१)**

**यत्तु ध्वनिकारेणोक्तम्—"काव्यस्यात्मा ध्वनिः"इति । तत् किं वस्त्वलंकाररसादिलक्षणस्त्रिरूपो ध्वनिः काव्यस्यात्मा उत रसादिरूपमात्रो वा? नाद्यः, प्रहेलिकादावतिव्याप्तेः । द्वितीयश्चेत्? ओमिति ब्रूमः (५२) । ननु यदि रसादिरूपमात्र एव ध्वनिः काव्यस्यात्मा तदा—**

क्षपातग्रस्तम्, अयुक्तिकत्वात् । नहि 'स्थाणुर्वा पुरुषो वे' त्यत्र विषये सन्देहेऽपि संदिग्धविषयमूलकत्वेन विषयिणि सन्देहः, न वाऽप्रत्यक्षमूलकत्वेनैव द्व्यणुकत्रसरेण्वादेरप्यप्रत्यक्षता स्यादिति केनाप्युच्यते । किञ्चात्रोत्कण्ठाभावरूपं कार्य्यं प्रति स एव हि वर इत्यादिबहुकारणोपन्यासात् समुच्चयालङ्कारस्य 'सुरतव्यापारलीलाविधौ रेवारोधसि वेतसीतरुतले' इत्यत्र रेफानुप्रासस्यापि स्फुटत्वमनिवार्य्यमेवेति प्रामादिकमेवेदमुदाहरणम् । अलंकारसर्वस्वकारोऽप्यस्मिन् पद्ये विभावनाविशेषोक्त्योः साधकबाधकप्रमाणाभावात् सन्देहसङ्कराख्योऽलंकारः स्फुटो मानितः ।

( ५१ ) अथ सरस्वतीकण्ठाभरणे भोजदेवेन 'अदोष'मिति पद्ये कण्ठतो लक्षणप्रयोजने दर्शिते, तत्र प्रयोजने निर्विवादतया तत्परिहाय तल्लक्षणमात्रं दूषयति—**एतेनेति** । एतेन 'तददोषा' विति लक्षणस्य काव्यलक्षणत्वाभावकथनेन 'अदोषम्' इत्यादीनां सरस्वतीकण्ठाभरणोक्तानामपि काव्यलक्षत्वमपास्तमित्यन्वयः । विशेषतश्चात्र सरसाविति वचने श्रुत्यर्थत्वेन सगुणाविति वचनं समनन्तरोक्तरीत्याऽनर्थकम् ।

( ५२ ) सम्प्रति रसमात्रध्वनेः काव्यत्वं सिषाधयिषुर्वस्त्वर्थालङ्कारयोस्तन्निरस्यन्नाह—**यत्त्विति** । ध्वनिकारेणानन्दवर्द्धनाचार्य्येण 'ध्वनिर्ध्वन्यर्थः काव्यस्यात्मा सारभूतः' इत्युक्तमिति सम्बन्धः (क) । तत्र दोषोद्भावनाय पृच्छति—**तत्किमिति** । वस्तु अर्थमात्रम्, अलङ्कारो विच्छित्तिरूपोऽर्थ एव, रसः शृङ्गारादिः, आदिशब्दाद् भावतदाभासादयोऽसंलक्ष्यक्रमभेदा गृह्यन्ते । त्रिरूपस्त्रिविधः । रसादिरूपमात्र इति मात्रपदेन वस्त्वलङ्काररूपयोर्व्यवच्छेदः । दूषयति—**नाद्य इति** । प्रहेलिका व्यङ्ग्यार्थविशिष्टो नीरसो वाक्यविशेषः । यथा—'केदारपोषणरताः, काशीतलाम्बुवाहिनी गङ्गा,

( क ) "काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ।
केचिद् वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनः प्रीतये तत्स्वरूपम् ॥"इति ध्वनिकारिका ।
ध्वन्यते शब्दवाच्यार्थापेक्षयाऽधिकचमत्कारितया प्रतीयते योऽर्थः स ध्वनिरिति योगमर्य्यादया व्यङ्ग्यविशेषो ध्वनिरित्याख्याभाक् ।

**"अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि ।**
**मा पहिअ ! रतिअन्धअ ! सज्जाए मह णिमज्जहिसि॥"(५३) ।**

कंसं जघान कृष्णः कं बलवन्तं न बाधते शीतः ।' इति, अत्र हि—दाराणां भार्य्याणां पोषणे रताः के ?, शीतलाम्बुवाहिनी गङ्गा का ?, कं कृष्णः संजघान ?, बलवन्तं कं शीतो न बाधते इति प्रश्नरूपो ऽर्थो वाच्यः । केदाराः=क्षेत्राणि तेषां पोषणे=बीजवपनादिभिः पुष्टीकरणे रता ये भवन्ति; ते दारपोषणरताः, इत्याद्युत्तररूपोऽर्थो व्यङ्ग्यः । तथा-चात्रेदृशवस्तुध्वनिसत्त्वात् काव्यत्वमतिव्याप्तं स्यात् । सिद्धांते तु तादृशार्थस्य रसपरिपन्थित्वेन तदभावान्नैव काव्यत्वम् । तस्मात् त्रिरूपो ध्वनिः काव्यस्यात्मेति यदुक्तं तन्न गम्यमिति भावः । प्रहेलिकादावित्यादिपदेन "देवदत्तो ग्रामं याति" इत्यादिवाक्यसंग्रहः । अत्रापि देवदत्तगमने तद्भृत्यानुसरणरूपवस्तुव्यङ्ग्यावगतेः काव्यत्वमतिव्याप्तं स्यादिति बोध्यम् । **द्वितीयश्चेदिति** । द्वितीयो रसादिरूपमात्रो ध्वनिः काव्यस्यात्मेति पक्षश्चेत् यद्यङ्गीक्रियत इत्यर्थः । तदा ओमिति ब्रूमः = वयमपि तत्पक्षमङ्गीकुर्म्मः इत्यर्थः, 'वाक्यं रसात्मकं काव्यम्' इति लक्षणस्यास्मत्सम्मतत्वादिति भावः । तथा सति रस-परिपन्थित्वान्न प्रहेलिकायां रसाभावाच्च न "देवदत्तो ग्रामं याति" इत्यादिवाक्ये ऽतिव्याप्तिः स्यादिति बोध्यम् ।

( ५३ ) अथ ध्वनिमात्रस्य काव्यात्मत्ववादी पुनः शङ्कते—**नन्विति** । रसा-दिरूपमात्र एव न तु वस्त्वादिरूप इत्यर्थः । **अत्तेति** । "अत्ता अत्र निमज्जति, अत्राहं, दिवसकं प्रलोकय । मा पथिक ? रात्र्यन्धक ! शय्यायां मम निमंक्ष्यसि ॥" इति संस्कृतम् । वसतिं प्रार्थयमानं संजातकामं पथिकं प्रति प्रोषितभर्तृकाया व्यभिचा-रिण्याः स्वयंदूत्या उक्तिरियम् । अत्र शय्याया अस्मिन् पार्श्वे, अत्ता श्वश्रूः निमज्जति जरत्तरत्वेन निष्पन्दा शेते, तेन शङ्काराहित्यं व्यज्यते । अत्र अस्मिन् पार्श्वे अहं स्वपिमीति शेषः, अत्र स्वापबोधकपदानुक्त्या आत्मनो मन्मथपीडनया निद्राराहित्यं सूच्यते । कुत्सितो दिवसो दिवसकस्तमिति काले कर्म्म, अत्र कुत्सायां कन्, सा चा-वयोः श्रेयःप्रतिकूलत्वात् । प्रलोकय सम्यगवलोकय । ननु किमेतैरुपदेशैरित्यत्राह—हे पथिक ! प्रवासिन् ! रात्र्यन्धक ! तैमिरिक ! मम शय्यायां मा निमङ्क्ष्यसि पार्श्वप-रिवर्त्तनादिभिरितस्ततो न विलुण्ठिष्यसि । दिवसे सम्यगवलोकनस्यैतदेव फलमिति भावः । अन्यथा रहस्यभङ्गः स्यात् ॥

हालकविकृतायां गाथासप्तशत्यां सप्तमशतके ६७ पद्यमिदम् । अत्र बहवः पाठ-भेदाः सन्ति । 'रतिअंधअ' 'रत्ति अन्धिय' 'रत्ति अन्धअ' इत्येकत्रैव पाठभेदाः । 'सज्जाए' इत्यत्र 'सेज्जाए' इति 'सेज्जाइ' इति च पाठभेदौ । "मह णिमज्जहिसि" इत्यत्र 'महँण मज्जहिसि' इति पाठः । निपातस्यानेकार्थत्वात् 'महँण' इति निपात आवयोरित्यर्थे । तथा सति 'शय्यायामावयोर्माङ्क्षीः' इति संस्कृतम् । आवयोः श्वश्रूस्नु-

**इत्यादौ वस्तुमात्रस्य व्यङ्ग्यत्वे कथं काव्यव्यवहार इति चेत्? अत्रापि रसाभासवत्तयैव ब्रूमः(५४)। अन्यथा "देवदत्तो ग्रामं याति" इति वाक्ये तद्भृत्यस्य तदनुसरणरूपव्यङ्ग्यावगतेरपि काव्यत्वं स्यात्(५५)।**

**अस्त्विति चेत्? न, रसवत एव काव्यत्वाङ्गीकारात् (५६)।**

**"काव्यस्य प्रयोजनं हि रसास्वादसुखपिण्डदानद्वारेण वेदशास्त्रविमुखानां सुकुमारमतीनां राजपुत्रप्रभृतीनां विनेयानां रामादिवत् प्रव-**

पयोः शय्यायां मा माङ्क्षीर्निस्सञ्ज्ञो मा पतेत्यर्थः। अत्र 'पथिक' इति सम्बोधनेन श्रमाद्विस्मरणयोग्यता, 'रात्र्यन्धक' इत्यनेन च शय्यायां पतनप्रसक्तिर्द्योत्यते। इह च गृहे श्वश्रूरहं च; श्वश्रूश्च जरत्तरत्वेन बधिरा निष्पन्दा च; जनान्तरसञ्चारस्तु नास्त्येव, अतो यथेष्टं मम शय्यायामेव स्वपिहीति व्यङ्ग्यं व्यभिचारिणीवक्तृबोद्धव्ययोर्वैशिष्ट्यात् प्रतिभाजुषां प्रतीयते॥

( ५४ ) अव्याप्तिं दर्शयति—**इत्यादाविति**। इदमादिपद्ये वस्तुमात्रस्य—मच्छय्यास्थानमभ्रान्तमागच्छेत्याद्यर्थमात्रस्य व्यङ्ग्यत्वे=ध्वनित्वे रसरूपध्वन्यभावे चेत्यर्थः, कथं काव्यव्यवहारो रसादिरूपमात्रध्वनेः काव्यात्मत्ववादिनस्तवेति शेषः। अव्याप्तिं वारयति—**अत्रापीति**। रसाभासवत्तयैव=पुंश्चल्याः परनायकविषयाया रतेः प्रकाशनात् शृङ्गाररसाभासरूपध्वनिसत्त्वेनैव; न केवलं वस्तुमात्रस्य व्यङ्ग्यत्वेनेत्यर्थः, काव्यव्यवहार इति ब्रूम इत्यर्थः। अथ वा नीरसेष्वपि वस्तुमात्रप्राधान्येन काव्यव्यवहारो भवतीति—**पुत्रः**। **रामचरणस्तु** रसाद्यसङ्कीर्णवस्त्वलङ्कारध्वनेः काव्यप्रकारमध्ये निर्वचनस्योन्मत्तप्रलपितत्वप्रसङ्गभयेनास्वाद्यव्यङ्ग्यमात्रस्य काव्यात्मत्वमवश्यं वाच्यम्। एवञ्च प्रकृते व्यङ्ग्यवस्तुरचनास्वाद्यतया तेनाऽपि काव्यव्यवहारो भवितुमर्हति, आस्वाद्यत्वं चाह्लादसंवलितप्रतीतिविषयः।—इत्याह। तथा च नाव्याप्तिरत्र दोष इति बोध्यम्।

( ५५ ) रसाद्यभावेऽपि वस्त्वलङ्कारध्वनिसत्त्वेन काव्यत्वाङ्गीकारे 'देवदत्तो ग्रामं याति' इति वाक्येऽतिव्याप्तिः स्यादिति तदुद्भावयति—**अन्यथेति**। अन्यथा वस्त्वलङ्कारध्वनिसत्त्वेन काव्यत्वस्वीकारे। तद्भृत्यस्य=देवदत्तभृत्यस्य, तदनुसरणरूपव्यङ्ग्यावगतेः=देवदत्तानुसरणरूपवस्तुध्वनिबोधादपीत्यर्थः। काव्यत्वं स्यादिति। तथा चातिव्याप्तिरित्याशयः। एतच्च पूर्वोक्तस्य 'प्रहेलिकादावतिव्याप्तेः' इत्यादिपदस्य व्याख्यानमिति बोध्यम्।

( ५६ ) इष्टापत्तिमुखेनाह—**अस्त्विति**। देवदत्तो ग्रामं यातीति वाक्ये काव्यत्वमिष्टमेवेति चेदित्यर्थः। परिहरति—**नेति**। रसवत एव वाक्यस्येति शेषः, काव्यत्वाङ्गीकाराल्लोकैरिति शेषः ( क )। तस्मादिहेष्टापत्तिर्नैव युक्तेति भावः।

( क ) लोकैरिति सहृदयैरित्यर्थः।

र्त्तितव्यं न रावणादिवदित्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशः" इति चिरन्तनैरप्युक्तत्वात् (५७) । तथा चाग्नेयपुराणेऽप्युक्तम्—

"वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् ।" इति (५८) । व्यक्तिविवेककारेणाप्युक्तम्—"काव्यस्यात्मनि अङ्गिनि रसादिरूपे न कस्यचिद्विमतिः" इति (५९) । ध्वनिकारेणाप्युक्तम्—"न हि कवेरितिवृत्तमात्रनिर्वाहेणात्मलाभ इतिहासादेरेव तत्सिद्धेः" इत्यादि (६०) ।

ननु तर्हि प्रबन्धान्तर्वर्त्तिनां केषामपि नीरसानां पद्यानां काव्यत्वं न स्यादिति चेत्? न, रसवत्पद्यान्तर्गतनीरसपदानामिव पद्यरसेन प्रब-

---

(५७) नीरसस्य काव्यत्वास्वीकारे चिरन्तनसम्वादमाह—**काव्यस्येति** । हि तथाहि । काव्यस्य प्रयोजनं कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशः, कीदृशः सः? रामादिवत्प्रवर्त्तितव्यं न रावणादिवदित्यादिरूपः, केषां सः?—वेदशास्त्रविमुखानाम्=आपाततः कर्कशतया वेदादिशास्त्रेभ्यो निवृत्तानाम्, विनेयानां=कृत्याकृत्योपदेशार्हाणां, सुकुमारमतीनां=सुकोमलधिया राजपुत्रप्रभृतीनाम् । केनोपायेन सः?—रसास्वादसुखपिण्डदानद्वारेण=रसास्वादसुखसन्तानप्रदानद्वारा । तथा च शब्दप्रधानेषु वेदेषु अर्थप्रधानेषु पुराणादिषु चायासबहुलेषु विमुखानां सुकुमारमतीनां हि गुणीभूतशब्दार्थेषु रसास्वादप्रधानेषु प्रथमं तावद्रसास्वादसुखोद्देशेन प्रवृत्तिस्ततः काव्यार्थानां कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशपरतावधारणं भवतीति भावः । तदुक्तम्—"स्वादुकाररसोन्मिश्रं वाक्यार्थमुपयुञ्जते । प्रथमालीढमधवः पिबन्ति कटुभेषजम् ॥" इति । एवञ्च नीरसवाक्यस्य काव्यत्वाङ्गीकारे उक्तप्राचीनोक्तिविरोधः स्यादिति भावः ।

(५८) तत्रार्थे चिरन्तनमतं प्रदर्श्य सम्प्रत्यार्षमतमपि प्रमाणयति—**तथा चेति** । वाचो वैदग्ध्यं वैचित्र्यं प्रधानं गुणाद्यपेक्षया श्रेष्ठं यत्र तादृशेऽपि, अत्र काव्ये रस एव न त्वलङ्कारादिरित्यर्थः, जीवितं जीवनाधायकम् ॥

(५९) स्वसिद्धान्ते बहुतरप्राचीनानामपि सम्मतिं दर्शयितुमाह—**व्यक्तिविवेकेति** । व्यक्तिविवेककारो महिमाचार्यः । आत्मनि आत्मभूते, अत एव अङ्गिनि अलङ्काराद्यपेक्षया प्रधाने रसादिरूपे, आदिपदेन रसाभासादेः संग्रहः । विमतिरस्वरसः । रसादीनां काव्यात्मतयाऽङ्गीकारे न कस्यापि विमतिरस्तीत्यर्थः । अन्यत्राप्युक्तं तेनैव—"न हि केचित् काव्यात्मनो रसादेरभावं भाक्तत्वं वाभ्युपगच्छन्ति । मुख्यवृत्त्या च काव्यात्मशब्दवाच्यो रसादिरेव युक्तो नापरः । तदभावे प्रतीयमानार्थान्तरसंस्पर्शेऽप्यर्थापत्त्यादिवाक्यवत् काव्यस्य निर्जीवतापत्तेः ।" इति ।

(६०) स्वोक्तिविरोधं प्रदर्शयितुमाह—**ध्वनिकारेणेति** । इतिवृत्तमात्रनिर्वाहेण—केवलवृत्तान्तावलकथनेन, आत्मलाभः कवित्वप्राप्तिः । इतिहासादेर्महाभारतादेरेव सकाशात् तत्सिद्धेरितिवृत्तनिर्वाहसिद्धेः । तथा च रसवद्वाक्येन वर्णनयैव कवित्व-

**न्धरसेनैव तेषां रसवत्ताङ्गीकारात् (६१)। यत्तु नीरसेष्वपि गुणाभिव्य-ञ्जकशब्दार्थसद्भावाद्दोषाभावादलङ्कारसद्भावाच्च काव्यव्यवहारः, स रसादिमत्काव्यबन्धसाम्याद्गौण एव (६२)।**

प्राप्तिः। एवञ्च रसवद्वाक्यस्यैव काव्यत्वं रस एव च काव्यस्यात्मेति फलितम्। एतेन वस्तुध्वन्यादेः काव्यात्मत्वाभिधानं विरुद्धमिति मन्तव्यम्।

( ६१ ) रसवद्वाक्यस्य काव्यत्वस्वीकारेऽपि अव्याप्तिमाशङ्कते—**नन्विति**। तर्हि रसवद्वाक्यस्य काव्यत्वस्वीकारे। प्रबन्धान्तर्वर्त्तिनां मेघदूतादिसन्दर्भान्तर्गतानां, नीरसानां केवलवस्त्वलङ्कारप्रधानानां वर्णितजनपदपर्वतादिपात्राणाञ्च "प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्" इत्यादीनां पद्यानामुपलक्षणत्वेन नीरसानां गद्यानामपि, काव्यत्वं न स्याद्रसवत्त्वाभावादित्यर्थः। तथा च रसवद्वाक्यस्य काव्यत्वाङ्गीकारेऽप्यव्याप्तिरिति भावः।

अव्याप्तिं वारयितुमाह—**नेति**।प्रबन्धान्तर्वर्त्तिनां नीरसानां पद्यानां काव्यत्वं न स्यादिति नेत्यर्थः। तत्र हेतुमाह—रसवदित्यादि। रसवत्पद्यं 'कश्चित्कान्ताविरहगुरुणे' त्यादिविप्रलम्भश्रृङ्गारादिमत्पद्यं तदन्तर्गतानां नीरसानां वसतिमित्यादीनां पदानाम्, तेषां साक्षाद्रसव्यञ्जकत्वाभावात्, यथा पद्यरसेन स्वव्यञ्जकपदप्रतिपाद्यपद्यप्रतिपादकत्वसम्बन्धेन रसवत्त्वं तथा तेषां प्रबन्धान्तर्वर्त्तिनां नीरसानां पद्यानां स्वव्यञ्जकपद्यप्रतिपाद्यप्रबन्धप्रतिपादकत्वसम्बन्धेन रसवत्त्वमिति भावः। पद्यरसेनेत्यत्र प्रबन्धरसेनेत्यत्र च धान्येन धनवानित्यत्रेवाभेदे तृतीया। तथा च पद्यरसाभिन्नो यो रसस्तद्वन्ति तद्घटकनीरसपदानीति, प्रबन्धरसाभिन्नो यो रसस्तद्वन्ति तदन्तवर्त्तिनीरसपद्यानीति चेत्यर्थः। प्रबन्धान्तवर्त्तिनां नीरसानां गद्यानामप्येवमेव व्यवस्थेत्यूह्यम्। तथा चास्मदीयलक्षणे नाव्याप्तिरित्याशयः।

( ६२ ) ननु प्रबन्धानन्तर्गतानामपि केषांचिन्नीरसानामपि पद्यानां गुणाभिव्यञ्जकशब्दार्थसद्भावेन दोषाभावेनालङ्कारवत्त्वेन च काव्यव्यवहारो भवति, तत्र भवदुक्तरीत्या स न स्यादित्यतो रसवद्वाक्यलक्षणेऽव्याप्तिस्तदवस्थैवेत्यत्राह—**यत्त्विति**। यदित्यस्य व्यवहारेऽन्वयः। तस्य च व्यवहारक्रियाविशेषणत्वात् क्लीबत्वम्, अग्रे स इत्यस्य च व्यवहारद्रव्यविशेषणत्वादेव पुंस्त्वम्। ईदृशः सिद्धान्तः "स्तोकं पाकः" "स्तोकः पाकः" इत्यादिप्रयोगसाधुत्वविचारावसरे जगदीशादिभिः कृत इति **शब्दशक्त्यादौ** मन्तव्यम्। **तर्कवागीशैस्तु**–'यत्' इत्यव्ययं 'यः' इत्यर्थे इति स्वीकृतम्। नीरसेष्वपि = "चन्द्रे शरन्निशोत्तंसे कुन्दस्तबकविभ्रमे। इन्द्रनीलनिभं लक्ष्म संदधात्यलिनः श्रियम्॥" इत्यादिपद्येषु, यत्काव्यव्यवहारो भवति, स तादृशः काव्यव्यवहारः, रसादिमत्काव्येषु यो बन्धः गुणादिसंयोगः तत्साम्यात्तत्तुल्यत्वात्, गौणो भाक्त एव, न तु मुख्यो रसादिमत्त्वाभावात्। तथा चास्मदुक्तरसवद्वाक्यलक्षणे नाव्याप्तिरिति भावः।

**यत्तु वामनेनोक्तं—"रीतिरात्मा काव्यस्य" इति, तन्न, रीतेः सङ्घटनाविशेषत्वात् सङ्घटनायाश्च अवयवसंस्थानरूपत्वात्, आत्मनश्च तद्भिन्नत्वात् (६३)। यच्च ध्वनिकारेणोक्तम्—**

**"अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः ।**
**वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥" इति (६४)।**

**तत्र वाच्यस्यात्मत्वं "काव्यस्यात्मा ध्वनिः" इति स्ववचनविरोधादेवापास्तम् (६५)।**

(६३) प्रमेयविरोधं दर्शयित्वा वामनमतं दूषयति—**यत्त्विति**। इत्युक्तं सूत्रितम्। वृत्तौ "रीतिनामेयमात्मा काव्यस्य शरीरस्येवेति वाक्यशेषः।" इत्यप्युक्तम्। संघटनाविशेषत्वात् गुणाभिव्यञ्जकशब्दविन्यासरूपत्वात्। तदुक्तं तेनैव—'विशिष्टा पदरचना रीतिः' 'विशेषो गुणात्मा' इति। ननु रीतेः संघटनाविशेषरूपत्वेऽपि काव्यात्मत्वाङ्गीकारे को दोष इत्यत आह—**संघटनायाश्चेति**। अवयवसंस्थानरूपत्वात् = काव्यशरीरस्य वाक्यस्य अवयवाः पदानि तेषां संस्थानं समुचितस्थाने निवेशस्तद्रूपत्वादित्यर्थः। आत्मनश्च=प्रकृते ऽङ्गीकृतस्य रसस्य च, तद्भिन्नत्वादवयवसंस्थानभिन्नत्वात्। तथा च यथा प्राणिनः शरीरस्य यथास्थाने हस्तपादाद्यङ्गसन्निवेशः, तथा काव्यशरीरस्य वाक्यस्य यथास्थाने पदविशेषसन्निवेशो हि रीतिः कथं काव्यात्मा भवितुमर्हति? कथमपि नेति भावः। तस्मात् काव्यात्मत्वेन सर्वैरङ्गीकृतेन रसादिना प्रमेयविरोधः स्यादिति ध्येयम्।

(६४) अथ सिंहावलोकनन्यायेन पुनरपि विरुद्धं ध्वनिकारमतं दूषयितुमाह—**यच्चेति**। सहृदयैः श्लाघ्योऽतिप्रशंसनीयः योऽर्थः काव्यस्यात्मा शरीरस्य जीव इव व्यवस्थितो निरूपितः बुधैरिति शेषः। तस्य काव्यात्मभूतस्यार्थस्य वाच्यप्रतीयमानाख्यौ उभौ भेदौ स्मृतौ कथितौ। तथा च वाच्योऽभिधेयरूप एको भेदः प्रतीयमानो व्यङ्ग्यरूपश्चापरो भेद इति काव्यात्मनः सहृदयश्लाघ्यस्यार्थस्य द्वौ भेदाविति यथाश्रुतोऽर्थो लभ्यते।

(६५) दूषयति—**तत्रेति**। वाच्यस्याभिधेयार्थस्यात्मत्वं काव्यात्मत्वमभिहितम्। पूर्व—"काव्यास्यात्मा ध्वनिः" इत्यादिकारिकायां व्यङ्ग्यार्थस्यापि काव्यात्मत्वमभिप्रेतञ्च। इतीत्थेवं स्ववचनस्य विरोधाद् विसंवादादेव अपास्तम्, नैतदर्थं युक्त्यन्तरं मया प्रदर्शनीयमित्यर्थः।

यत्त्वभिनवगुप्तेनात्र विरोधपरिहारायालोचितं लोचने—'शब्दार्थशरीरं तावत काव्यम्, तत्र शरीरग्रहणादेव केनचिदात्मना तदनुप्राणकेन भाव्यमेव, तत्र शब्दस्तावच्छरीरभाग एव सन्निविशते सर्वजनसंवेद्यधर्म्मत्वात् स्थूलकृशादिवत्। अर्थः पुनः सकलजनसंवेद्यो न भवति, न ह्यर्थमात्रेण काव्यव्यपदेशः, लौकिकवैदिकवाक्येषु तद-

**तत् किं पुनः काव्यम् ? इत्युच्यते—( ६६ ) ।**

**वाक्यं रसात्मकं काव्यम् , (६७) ।**

**रसस्वरूपं निरूपयिष्यामः । रस एवात्मा साररूपतया जीवनाधा-**

भावात्; तदाह–सहृदयश्लाघ्य इति । स एक एव अर्थो द्विशाखतया विवेकिभिर्विभा-गबुद्ध्याभियुज्यते । तथा हि—तुल्येऽर्थरूपत्वे किमिति कस्मैचित् सहृदयः श्लाघते, तद्भवितव्यं केनचिद्विशेषेण । यो विशेषः स प्रतीयमानभागो विवेकिभिर्विशेषहेतुत्वा-दात्मेति व्यवस्थाप्यते । वाच्यसंकलनाविमोहितहृदयैस्तु तत्पृथग्भावो विप्रतिपद्यते चार्वाकैरिवात्मपृथग्भावः । अत एवार्थ इत्येकतयोपक्रम्य सहृदयश्लाघ्य इति विशेषण-द्वारा हेतुमभिधायापोद्धारणदशा तस्य द्वौ भेदावंशावित्युक्तं न तु द्वावप्यात्मानौ काव्य-स्य' ।—इति । तत्स्वप्रतिभावशादेव न तु ध्वनिकारस्याभिप्रेतम् । तस्येति तत्पदेनो-द्देश्यविधेयसमुदितार्थविशेषस्यैव तत्र परामर्शात् । नित्यस्य विभोरात्मनो जीवात्मत्वप-रमात्मत्वाभ्यां द्वैविध्यं प्रकल्प्य तत्र प्रथमो जीवात्मत्वरूपो भेदः शरीररूपो द्वितीयः परमात्मत्वरूपो भेद आत्मस्थानीय इत्यभिधानवदुन्मत्तकल्पनात्वापत्तेश्च । एतेन लोच-नमलभुजामन्येषामपि समाधानं परास्तमेव ।

( ६६ ) एवं प्राक्तनलक्षणानां प्रमेयविरोधं दर्शयित्वा स्वलक्षणमवतारयति—**तत् किं पुनरिति** । यदि नैतानि काव्यलक्षणानीति शेषः ।

( ६७ ) अथ स्वाभिमतं काव्यलक्षणमाह—**वाक्यमिति** । रसात्मकं वाक्यं काव्यमित्यन्वयः । अत्र रसपदेनासंलक्ष्यक्रमभेदानां सर्वेषां परिग्रहः । तथा च व्यञ्ज-कतासम्बन्धेन रसादिमद् वाक्यत्वं काव्यत्वमिति काव्यत्वसामान्यलक्षणम् । तथा सति—दोषगुणालङ्काराणां सदसद्भावयोरौदासीन्यात् 'न्यक्कारोऽह्ययमेवे'ति पद्येऽसंल-क्ष्यक्रमात्मकनिर्वेदाख्यसञ्चारिभावसत्त्वात् 'यः कौमारहर' इति पद्येऽपि शृङ्गारस्य सद्भावात् 'अत्ता एत्थ' इति पद्ये तु रसाभासवत्त्वाच्च नाव्याप्तिः । "देवदत्तो ग्रामं याति" इति वाक्ये च रसाद्यभावान्नातिव्याप्तिरिति भावः । यत्तु रसगङ्गाधरकारेणोक्तं–'रसवदेव काव्य'मिति साहित्यदर्पणनिर्णीतं काव्यलक्षणं न सङ्गतं वस्त्वलङ्कारप्रधानानां काव्यानामकाव्यतापत्तेरिति । अत्र ब्रूमः । वस्त्वलङ्कारशालिकाव्येषु काव्यत्वव्यव-हारोऽपुत्रेषु तत्कार्यसामान्यदर्शनात् पुत्रव्यवहारवद् गौण एव न तु मुख्यः, काव्ये रसस्यैव जीवनाधायकत्वेन मुख्यताप्रतिपादनात् । न हि जलप्रवाहादिवस्तुमात्रवर्णनेन कश्चिन्महाकविर्भवति । तथा चोक्तं—"शृङ्गारी चेत्कविः काव्ये सर्वं रसमयं जगत् । स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ॥" इति । शृङ्गारी शृङ्गारोक्तविभावानुभावव्य-भिचारिचर्वणारूपप्रतीतिमयो न तु स्त्रीव्यसनो । शृङ्गारेति रसमात्रस्योपलक्षणम् । श्रुतावप्युक्तं–'रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इति । काव्यस्य प्रयोजनं हि रसास्वादसुखपिण्डदानद्वारा कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेश इति चिरन्तनैरपि समुद्घोषितम् । एवं च नीरसेऽपि चमत्कारिणि वस्त्वलङ्कारव्यञ्जके शब्दार्थयुगले यत्र

**यको यस्य, तेन विना तस्य काव्यत्वानङ्गीकारात् (६८)। रस्यत इति रस इति व्युत्पत्तियोगात् भावतदाभासादयोऽपि गृह्यन्ते (६९)। तत्र रसो (७०) यथा—**

**"शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-**
**र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।**
**विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं**
**लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता॥ (७१)।**

ध्वनिकारादिभिः काव्यत्वव्यवहारः कृतस्तत्र स व्यवहारो गुणवृत्त्येति सर्वमवदातम्।

( ६८ ) ननु को रस इत्यत आह—**रसस्वरूपमिति**। निरूपयिष्यामस्तृतीयपरिच्छेद इति शेषः। रसात्मकमित्यस्यार्थं विवृणोति—**रस इति**। रस एव न तु ध्वनिकाराद्युक्तो वाच्योऽर्थो न वा वस्त्वलङ्काररूपो प्रतीयमानोऽर्थ इत्यर्थः, आत्मा साररूपतया=आनन्दसान्द्रत्वेन=श्रेष्ठस्वभावतया जीवनाधायक उपादेयताप्रयोजको यस्य तत् रसात्मकमिति शेषः। तेन रसेन विना तस्य वाक्यस्य काव्यत्वानङ्गीकारात् 'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्' इति भगवद्बादरायणोक्तेरिति शेषः। तथा च प्राचीनमतमेव मम सम्मतमिति भावः।

( ६९ ) रसपदेनासंलक्ष्यक्रमभेदानां सर्वेषां परिग्रहाय व्युत्पत्तिं प्रदर्शयति—**रस्यत इति**। रस्यते आस्वाद्यते इति रसः, "रस आस्वादनस्नेहनयोः" अस्मात् "भावे" इति घञ् "एरच्" इत्यच् वा, इति व्युत्पत्तियोगात् अवयवार्थानुसारेणास्वादविषयत्वलाभादित्यर्थः। आस्वादश्च काव्यार्थसम्भेदादात्मानन्दसमुद्भव इत्युक्तप्रकारः, तत्कर्म्मत्वं रसादीनामुपचारात्, कर्म्मकर्त्तरि वा प्रयोग इति वक्ष्यते। भावः, तदाभासाः=रसाभासा भावाभासाश्च, आदिशब्दाद् भावस्य शान्तिरुदयः सन्धिः शबलता च गृह्यन्ते, तेषां भावादीनामपि आस्वादविषयत्वादिति भावः। एवञ्च "यस्यालीयत" इत्यादिवक्ष्यमाणपद्येषु न प्रकृतकाव्यलक्षणमव्याप्तमिति बोध्यम्।

( ७० ) **तत्रेति**। तेषु रसभावतदाभासादिषु मध्ये इत्यर्थः, रसः शृङ्गाररसः। तस्यान्येभ्यः प्राधान्यादादौ निर्देशः।

( ७१ ) अमरुकशतके प्रथमावतीर्णमदनविकारमुग्धावर्णनपरं पद्यमिदं—**शून्यमिति**। बाला नवविवाहिता वधूः, वासगृहं केलिभवनं शून्यं विविक्तं विलोक्य शून्यत्वेन ज्ञातमपि निभृतसखीसत्त्वाशङ्कया विशेषेण दृष्ट्वा, शनैर्मन्दं निःशब्दं च यथा स्यात्तथा, अन्यथा वलयादिक्वणने पतिनिद्राभङ्गः स्यादिति भावः, शयनात् शय्यातः, किञ्चित् अपरकायेन न तु सर्वतः, पतिनिद्राभङ्गेऽपि पार्श्वपरिवर्त्तनेन समाधातुं शक्यत्वादिति भावः, उत्थायोत्थिता भूत्वा, निद्राव्याजमनुरागपरीक्षार्थं छलनिद्राम्, यद्वा निद्रायाः व्याजं मिषं न तु व्याजेन निद्रां सर्वथा तदसम्भवादिति भावः, उपागतस्याश्रितस्य पत्युः न तु प्रियस्य, अपूर्वसमागमेनानुद्भिन्नरसत्वात्; तथा निर्वर्णनेऽपि

**अत्र हि सम्भोगशृङ्गाराख्यो रसः (७२)।**

**भावो यथा महापात्रराघवानन्दसान्धिविग्रहिकाणाम्—(७३)**

निद्राव्याजसहिष्णुत्वादित्यन्ये, मुखं सुचिरं दीर्घकालं यावद्बुद्धिवैभवमिति यावत्, निर्वर्ण्य अनुरागातिशयात् निद्रानिर्णयार्थं च सम्यक् परोक्ष्येत्यर्थः, सुचिरं निद्राव्याजमुपागतस्येति वान्वयः, विश्रब्धं विश्वासयुक्तं यथा स्यात्तथा, एतावताप्यभङ्गेन निद्रायां वास्तविकत्वभ्रमादिति भावः, परिचुम्ब्य परितः कपोलयोर्नेत्रप्रान्तयोश्च चुम्बनं कृत्वा, गण्डस्थलीं जातपुलकां आत्मनश्चुम्बनादुत्फुल्लरोमाङ्किताम्, पुलकस्य सर्वाङ्गीणत्वेऽपि गण्डस्थले एव दर्शनात् गण्डस्थलोक्तिः, गण्डस्य स्थलीत्वेन पुलकस्याङ्कुरता, अत्र गण्डेत्यश्लीलम्, आलोक्यावलोक्य, लज्जया व्रीडया नम्रमुखी अवनतवदना स्थिता सतीत्यर्थः, यद्वा लज्जते इति लज्जेति पृथक् पदं पचादित्वादच्, लज्जावतीत्यर्थः, अत एव नम्रमुखी स्थिता सतीत्यर्थः, लज्जनक्रियया समानकर्तृकत्वेन आलोक्येति क्त्वोपपत्तिः, अन्यानि क्त्वान्तान्यप्येतदपेक्षाण्येव, हसता हासं कुर्वता, तव सर्वं रहस्यमवगतमिति वा पूर्वं मत्प्रार्थनयाऽपि न प्रवृत्ताऽसि इदानीं कथमिति वा व्याजनिद्राफलं झटित्येव लब्धमिति वा हासः, प्रियेण तेन पत्या, चिरं लज्जापगमसम्भोगस्वीकारपर्य्यन्तमिति यावत्, चुम्बितेति सम्बन्धः। सवृद्धिकमूलधनग्रहणाय चिरमिति काव्यप्रकाशटीकायां चक्रवर्त्ती।

अत्र नर्मगर्भजातिरलङ्कारः, नायिका स्वीया, नायकोऽनुकूलः, नायिकानायकावालम्बनविभावौ,शून्यवासगृहादिरुद्दीपनविभावः,बालागतविलोकनादयो नायकगता व्याजनिद्रादयश्चानुभावाः। निद्राया हि व्याजारब्धतया न व्यभिचारित्वम्, व्यभिचारिणश्च नायिकागताः। विलोकनेन शङ्का, उत्थानेन चपलता, उत्थानस्य शनैर्हीनेन त्रासः, चिरं निर्वर्णनेन सुप्तो नवेति सन्देहप्रभवो वितर्कः, विश्रब्धमित्यनेन निद्रानिश्चयज्ञानेन हर्षः, परिचुम्बनेनौत्सुक्यम, आलोकनेन चपलता, मुखनमनेन लज्जा निर्दिष्टैव, नायकगता च व्याजनिद्राश्रयणे धृतिः, चिरं परिचुम्बनेनौत्सुक्यं हर्षश्च, एभिश्च साधारणेन प्रतीतैः साधारण्येनाभिव्यक्तः सामाजिकरतिभावः शृङ्गाररसरूपतां भजते। एवं वक्ष्यमाणोदाहरणेष्वपि विभावादिविवेको बोद्धव्यः। किञ्चात्र शून्यमित्यनेनोद्दीपनातिशयः चुम्बनप्रवृत्तियोग्यता च ध्वन्यते, वासगृहमित्यनेन स्रक्चन्दनादिसम्पत्तिः, पत्युरित्यनेन युक्तानुरागित्वम्, विश्रब्धमित्यनेन रागातिशयादविमृश्यकारित्वम्, नामितेति नोक्त्वा नम्रेतिकथनेन लज्जया तथा विह्वलत्वं यथा मुखनामनेऽप्यशक्तिरिति व्यज्यते। अत्र लज्जाहासयोर्व्यभिचारिण्योः स्वपदेनोपादानं चिन्त्यमित्युद्योतः।

( ७२ ) अत्र को नाम रस इत्यपेक्षायामाह—**अत्रेति**। हि तथा हि। अस्योपपत्तिः प्रागुक्ता विशेषस्तु रसविवेचनप्रकरणे वक्ष्यते।

( ७३ ) भावोदाहरणायाह—**भाव इति**। महापात्रराघवानन्दसान्धिविग्रहिकोऽस्य-पूर्वजो वंशधरः। बहुवचनमार्थप्रयुक्तम्। महापात्र इति राजदत्तोपाधिः, अग्रेसामन्त इत्यपि।

"यस्यालीयत शल्कसीम्नि जलधिः, पृष्ठे जगन्मण्डलं
दंष्ट्रायां धरणी, नखे दितिसुताधीशः, पदे रोदसी ।
क्रोधे क्षत्रगणः, शरे दशमुखः, पाणौ प्रलम्बासुरो
ध्याने विश्वमसावधार्म्मिककुलं कस्मैचिदस्मै नमः ॥" (७४)

अत्र भगवद्विषया रतिर्भावः (७५) ।

( ७४ ) **यस्येति** । अत्र भगवतो दशावतारवर्णनम् । यस्य नारायणस्य शल्कसीम्नि वल्कलप्रदेशे जलधिः समुद्रोऽलीयतायुज्यत, समुद्रस्य तन्मात्रसम्बन्धात् । अनेन भगवतो मत्स्यावतारो वर्णितः । यस्य पृष्ठे जगन्मण्डलमलीयत लग्नमभवत्, तन्मात्र एव जगतोऽवस्थानात् । अनेन कूर्म्मावतारो वर्णितः । यस्य दंष्ट्रायां दशनमण्डले धरणी पृथ्वी अलीयत लघुवस्तुवदवातिष्ठत्, सागरनिमग्नाया धरण्या दंष्ट्रयोत्तोलितत्वात् । एतेन वराहावतारः सूचितः । यस्य नखे दितिसुताधीशो हिरण्यकशिपुः अलीयत लयमगच्छत् । नखेनैव निहतत्वात् । अनेन नृसिंहावतारो वर्णितः । यस्य पदे चरणे रोदसी द्यावापृथिव्यौ अलीयेतां लीने अभवताम्, अत्र वचनविपरिणामः । पद्भ्यामेव द्यावापृथिव्योर्व्याप्तत्वात् । एतेन वामनावतारो वर्णितः । यस्य क्रोधे क्षत्रगणः क्षत्रियवर्गः अलीयत लयं प्राप्नोत्, कोपेनैव विनाशितत्वात् । अनेन परशुरामावतारो वर्णितः । यस्य शरे बाणे दशमुखो रावणः अलीयत लयमगच्छत्, शरेणैव विध्वंसितत्वात् । एतेन रामावतारो वर्णितः । यस्य पाणौ हस्ते प्रलम्बासुरः अलीयत लयमलभत, हस्तेनैव व्यापादितत्वात् । एतेन बलरामावतारो वर्णितः । यस्य ध्याने विश्वं जगत् अलीयत लीनमभवत् । ध्यानेन गोचरीकृतत्वात् । एतेन बौद्धावतारो वर्णितः । यस्य चासौ तरवारो 'अधार्मिककुलं म्लेच्छसमूहः अलीयत लयमलभत, तन्मात्रेण विध्वंसितत्वात् । अनेन कल्किनामावतारो वर्णितः । अत्र कल्क्यवतारस्य भविष्यत्त्वेऽपि "धाता यथा पूर्वमकल्पयत्" इत्यादिश्रुतेः पूर्वकल्पाभिप्रायेणातीतप्रयोगः । कस्मैचिद् विशेषतो निर्देष्टुमशक्यत्वादनिर्वचनीयाय अस्मै पुरुषाय नारायणायेत्यर्थः । नमोऽस्त्विति शेषः ।

दशावतारा यथा—"मत्स्यः कूर्म्मो वराहश्च नरसिंहोऽथ वामनः ।
रामो रामश्च रामश्च बौद्धः कल्की च ते दश ॥" इति ।

( ७५ ) इह कीदृशो भाव इत्यत आह—**अत्रेति** । अस्मिन्नुदाहृते श्लोके, भगवान् नारायण एव विषयो यस्याः सा तथोक्ता रतिरनुरागो भावः भावपदवाच्यः । तथा च भगवानालम्बनम्, तस्य चालौकिकचारित्र्यमुद्दीपनम्, तेन च स्वात्मापकर्षनिवेदनमनुभावः, तदभिव्यङ्ग्याः स्मृतिहर्षादयः सञ्चारिणो भावाश्च; तदिति प्रतीयमाना भगवद्विषया रतिः सहृदयानां चेतसि कमपि चमत्कारं भावयतीति भावपदव्यपदेश्यासौ ( रतिः ) काव्यत्वबीजम् । इदं मध्यमकाव्यमिति केचित् ।

रसाभासो यथा—

"मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्त्तमानः।
श्रृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः॥" (७६)

अत्र हि सम्भोगश्रृङ्गारस्य तिर्य्यग्विषयत्वाद्रसाभासः। एवमन्यत्।(७७)

दोषाः पुनः काव्ये किंस्वरूपाः? इत्युच्यन्ते—(७८)

## दोषास्तस्यापकर्षकाः। (७९)

**श्रुतिदुष्टापुष्टार्थत्वादयः काणत्वखञ्जत्वादय इव शब्दार्थद्वारेण देहद्वारेणेव व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयो मूर्खत्वादय इव साक्षात् काव्यस्यात्मभूतं रसमपकर्षयन्तः काव्यस्यापकर्षका उच्यन्ते (८०)। एषां विशेषोदाहरणानि वक्ष्यामः। गुणादयः किंस्वरूपाः?**

( ७६ ) रसाभासमुदाहर्त्तुमाह—**रसाभासो यथेति। मध्विति।** पद्यमिदं कालिदासस्य। द्वौ रेफौ रेफघटितौ अवयवौ यस्य स द्विरेफो भ्रमरशब्दः, लक्षणया तत्पदवाच्यो भ्रमररूपोऽर्थः, शब्दधर्म्मेणाऽप्यर्थस्य व्यपदेशोक्तेः, स्वां प्रियां भ्रमरीम् अनुवर्त्तमानः पक्षमारुतेन सेवमानः सन्; कुसुमं पुष्पमेवैकं पात्रं भाजनं तत्र, मधु तत्कुसुमरसं पपौ। कृष्णसारो मृगविशेषश्च श्रृङ्गेण स्पर्शेनात्मनः स्पर्शजन्यसुखेन निमीलिते मुद्रिते अक्षिणी चक्षुषी यया तां मृगीं स्वां प्रियां हरिणीम्, अकण्डूयत गात्रविघर्षणेन सेवितवानित्यर्थः।

( ७७ ) नन्वत्र सम्भोगश्रृङ्गारस्य सत्त्वाद्रसाभासः कथमित्याह—**अत्रेति।** हि तथाहि। तिर्य्यग्विषयत्वात् मनुष्येतरप्राणिगतत्वात्। रसाभासः रसस्य न्यग्भावित्वेन स्फुरणम्। अन्यत् भावाभासादि एवमूह्यमित्यर्थः।

( ७८ ) ननु दोषादीनां काव्यलक्षणाघटकत्वान्निराकाङ्क्षतया तन्निरूपणमसङ्गतमित्यत आकाङ्क्षामुत्थापयति—**दोषा पुनरिति।** येषां सद्भावेन काव्यत्वं खण्डितमित्यर्थः। किं स्वरूपाः किमाकारेण वर्त्तन्त इत्यर्थः।

( ७९ ) **दोषा इति।** तस्य काव्यस्येत्यर्थः, तत्पदस्य पूर्वपरामर्शित्वात्, पूर्वं तु 'वाक्यं रसात्मकं काव्य' मिति काव्यस्य विधेयत्वेनोक्तत्वाच्च। अपकर्षका अपकर्षापादकाः। रसापकर्षापादनद्वारेति भावः।

( ८० ) मूलार्थं युक्त्या विवृणोति—**श्रुतीति।** काणत्वखञ्जत्वादयो देहधर्म्मा आहत्यात्मानमपकर्षयितुमसमर्था अपि यथा देहद्वारेण स्वाश्रयाश्रितत्वरूपपरम्परासम्बन्धेनात्मानमपकर्षयन्ति; तथा काव्यस्य शरीरभूतयोः शब्दार्थयोर्ये धर्म्माः श्रुतिदुष्टत्वादयस्ते साक्षाद्रसादीनपकर्षयितुमसमर्था भवन्त्यपि शब्दार्थद्वारेण स्वाश्रयाश्रितत्वरूपपरम्परासम्बन्धेन रसादीनपकर्षन्ति। किञ्च यथात्मगता मूर्खत्वादयः साक्षाद्

इत्युच्यन्ते (८१)।

**उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः ॥३॥ (८२) ।**

**गुणाः शौर्यादिवत्, अलङ्काराः कटककुण्डलादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, देहद्वारेणेव शब्दार्थद्वारेण तस्यैव काव्यस्यात्मभूतं रसमुत्कर्षयन्तः काव्यस्योत्कर्षका उच्यन्ते (८३) । इह यद्यपि गुणानां रसधर्म्मत्वं तथापि गुणशब्दोऽत्र गुणाभिव्यञ्जकशब्दार्थयोरुपचर्यते । अतश्च "गुणाभिव्यञ्जकाः शब्दा रसस्योत्कर्षकाः" इत्युक्तं भवतीति**

वृत्तितावच्छेदकसमवायसम्बन्धेनैवात्मानमपकर्षयन्ति, तथा रसादिगता व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयो दोषाः साक्षाद्वृत्तितावच्छेदकस्वरूपसम्बन्धेनैव रसादीनपकर्षयन्तीति हृदयम् । रसमपकर्षयन्तो रसस्य न्यूनत्वं प्रत्याययन्तः । तथा सति रसस्योत्कर्षेण काव्यस्योत्कर्षः रसस्यापकर्षेण च काव्यस्य चापकर्ष इति फलितम् ।

( ८१ ) **एषामिति** । दोषाणामित्यर्थः । वक्ष्यामो दोषपरिच्छेदे इति शेषः । श्रोतुराकाङ्क्षायामाह—**गुणादय इति** । किं स्वरूपाः किमाकारेण वर्त्तन्त इति पूर्ववद्व्याख्यानम् ।

( ८२ ) **उत्कर्षहेतव इति** । तस्येत्यनुषङ्गः । काव्यस्येत्यर्थः ।

( ८३ ) मूलार्थं विवरणेनोपपादयति—**गुणा इति** । गुणानामपि शब्दार्थद्वारा रसोत्कर्षकत्वं पूर्ववद्बोध्यम् । शौर्य्यादीनामौपचारिकदेहधर्म्मत्वाभिप्रायेणायं दृष्टान्तः । शौर्य्यादिवदिति—शौर्य्यादिव्यञ्जकशरीरधर्मविशेषवदिति पुत्रः। ये च तद्धर्म्मविशेषान्तःपातित्वादिरूपेण प्रतिपादयिष्यमाणाः प्राचीनोक्तश्लेषप्रसादादयः, तद्युक्तश्चार्थश्च प्राचीनोक्तश्लेषप्रसादादिगुणयुक्तः, तयो रसादिरूपव्यङ्ग्यानां गुणानां व्यञ्जकत्वेनोपचर्य्यते । तदाह काव्यप्रकाशकार एव—'गुणवृत्त्या पुनस्तेषां स्थितिः शब्दार्थयोर्मता' इति । ननु भवन्मते माधुर्य्यादयस्त्रय एव गुणाः, ते च रसमात्रनिष्ठाः प्राचीनोक्ताः श्लेषप्रसादादयः शब्दार्थनिष्ठत्वेन विंशतिप्रकारास्ते च भवद्भिरस्वीकृतत्वेन च निर्देष्टव्यास्तत्कथमिदानीं तदुक्तयोः शब्दार्थयोर्व्यञ्जकत्वमुच्यते । उच्यते । न खलु नस्तेषामस्वीकारः । किन्तु अत्रान्तर्भावित्वादिरूपेण शब्दार्थमात्रनिष्ठत्वाद्रसमात्रनिष्ठगुणवैजात्यान्न पृथगुक्तिः । यदाह—'केचिदन्तर्भवन्त्येषु दोषत्यागात् परे श्रिताः' इति । न वयं तेषां यथा सम्भवं रसरूपधर्म्मत्वेनोक्तानां व्यञ्जकत्वं न स्वीकुर्म्मः । किन्तु रसधर्म्मत्वमेव । तदुक्तं ध्वनिकृता—"रौद्रवीररसाविष्टा लक्ष्यन्ते काव्यवर्त्तिनः । तद्व्यक्तिहेतौ शब्दार्थावाश्रित्योक्तौ व्यवस्थिताविति" ति सर्वमवदातम् ।

प्रागेवोक्तम्(८४)। एषामपि विशेषोदाहरणानि वक्ष्यामः।

इति श्रीमन्नारायणचरणारविन्दमधुव्रत-साहित्यार्णवकर्णधार-ध्वनिप्रस्थापन-परमाचार्य-कविसूक्तिरत्नाकराष्टादशभाषा-वारविलासिनीभुजङ्ग सान्धिविग्रहिक-महापात्र-श्रीविश्वनाथ-कविराजकृतौ साहित्यदर्पणे काव्यस्वरूपनिरूपणं नाम प्रथमःपरिच्छेदः ॥

---

( ८४ ) ननु निरलङ्कारकाव्यापेक्षयालंकाराणामिव निर्गुणकाव्यापेक्षया गुणाना काव्योत्कर्षकत्वं नोपपद्यते। निर्गुणत्वस्य नीरसत्वसमनियततया नीरसस्य काव्यत्वानङ्गीकारेणैव निर्गुणस्य काव्यत्वानङ्गीकारादित्यभिप्रायेणाशङ्कते—**इह यद्यपीति**। इह नवीनालंकारिकसम्प्रदायमते। रसधर्म्मत्वमिति—काव्ये गुणानामव्यभिचारित्वज्ञापनाय प्रसादगुणप्रकरणे प्राचीनैरुक्तम्—यथा "सच सर्वरसव्यापी काव्यजीवातुरिष्यते" इति। तथापीति। अत्रान्तरोक्तकारिकायाम्। शब्दानां गुणाभिव्यञ्जकत्वं गुणपरिच्छेदे व्यक्तीभविष्यति। अर्थानान्तूद्धतानुद्धततया ओजो माधुर्य्यव्यञ्जकत्वं झटिति प्रतिपाद्यत्वेन प्रसादव्यञ्जकत्वमवगन्तव्यम्। उपचर्य्यते लक्ष्यते। तथाचात्रगुणपदं गुणाभिव्यञ्जकशब्दार्थपरम्। अतश्च गुणशब्दौपचारिकत्वस्वीकाराच्च। शब्दाः शब्दार्थाः। एवञ्च गुणाभिव्यञ्जकशब्दार्थहीनमपि व्यङ्ग्यं सम्भवति तदपेक्षणा गुणाभिव्यञ्जकशब्दार्थयोः काव्योत्कर्षकत्वमुपपन्नमिति भावः।

इति करशर्म्मोपाधिक-यास्क-श्रीनवकिशोरन्यायपञ्चाननशास्त्रिविरचितायां साहित्यदर्पणटीकायां प्रभाभिख्यायां प्रथमपरिच्छेदः।

## द्वितीयः परिच्छेदः ।

**वाक्यस्वरूपमाह—(१)**

**वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः(२) । योग्यता पदार्थानां परस्परसम्बन्धे बाधाभावः(३) । पदोच्चयस्यै-**

(१) अथ "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः" इत्युक्तलक्षणया उपोद्घातसंगत्या प्रकृतकाव्यलक्षणयोर्वाक्यरसयोः स्वरूपजिज्ञासायां सत्यां प्रथमोद्दिष्टं वाक्यं द्वितीयपरिच्छेदे सपरिकरं निरूपयितुकामस्तत्सामान्यलक्षणप्रतिपादिकां वाक्यमित्यादिवक्ष्यमाणकारिकामवतारयति—**वाक्यमिति** । वाक्यस्य प्रकृतकाव्यलक्षणघटकवाक्यपदार्थस्य स्वरूपं लक्षणम्, आह मूलकार इति शेषः ।

(२) **वाक्यं स्यादिति** । पदानामुच्चयः पदोच्चयः पदस्तोम इत्यर्थः, पदं तु वक्ष्यमाणलक्षणकमेव, स्तोमत्वञ्चानेकत्वम् (क) । योग्यतादीनां लक्षणं स्वयमेव वक्ष्यते । तथा च योग्यताकाङ्क्षासत्तिमत्त्वे सत्यनेकपदत्वं वाक्यत्वमिति पर्य्यवसितम् । "शून्यं वासगृहं विलोक्य" इत्यादिभागेऽतिव्याप्तिवारणाय पर्य्यवसितान्वयत्वे सतीत्यपि विशेषणं देयम् ।

(३) योग्यतामाह—**पदार्थानामिति** । अभिधादिद्वारा पदप्रतिपाद्यानामर्थानामित्यर्थः(ख) । परस्परसम्बन्धे परस्परान्वयबोधे, हेतुविशेष इति शेषः, बाधस्य विपरीतबुद्धेरभावः । तथा च पदार्थानां परस्परान्वयबोधे हेतुभूतो विपरीतबुद्धेरभावो योग्यतेत्यर्थः । प्रत्यक्षादिकारणीभूतबाधाभाववारणाय भूतान्तं विशेषणम् । एवञ्च—"पयसा सिञ्चति" इत्यादौ 'सेकः पयःकरणकत्वाभाववान्' इत्यादिविपरीतबुद्धेरभावाल्लक्षणसमन्वयः । "वह्निना सिञ्चति" इत्यादौ तु 'सेको वह्निकरणकत्वाभाववान्' इत्यादिविपरीतबुद्धेः सत्त्वाद् योग्यताभावेन नैव वाक्यत्वम् ।

सा चात्र प्रमारूपैव ग्राह्या । अन्यथा तादृशभ्रमभाजि श्रोतरि सति 'पयसा सिञ्चति' इति वाक्यं न स्यात् । ननु तादृशप्रमाया अप्रसिद्ध्या तद्विरहस्याप्रसिद्धिरिति निरुक्तयोग्यता शशविषाणवदलीकेति चेत्तर्ह्येवं व्याख्येयम्—परस्परसंबन्धे इति। सप्तम्यर्थो निरूपकत्वम् । परस्परसंबन्धनिरूपकाणां पदार्थानामित्यर्थः तात्पर्य्यविषयीभूतपरस्परसंबन्धे सतीत्यर्थः । बाधाभावः=सद्भावः । एवञ्च तात्पर्य्यविषयीभूतसंबन्धेन तन्निरूपकाणां पदार्थानामेकतरस्मिन्नपरपदार्थसद्भावो योग्यतेति फलितम् ।

---

(क) अनेकत्वं तु एकभिन्नत्वम् । तेन घटो वर्त्तते इत्यादौ पदद्वयस्याप्यनेकपदत्वान्नाव्याप्तिः ।

(ख) पदार्थानामित्यत्र बहुवचनमविवक्षितम् । तेन घटोऽस्तीत्यादौ नाव्याप्तिः ।

**तदभावेऽपि वाक्यत्वे वह्निना सिञ्चतीत्यपि वाक्यं स्यात् (४)। आकाङ्क्षा प्रतीतिपर्यवसानविरहः (५)। स च श्रोतुर्जिज्ञासास्वरूपः (६)। निराकाङ्क्षस्य वाक्यत्वे गौरश्वः पुरुषो हस्तीत्यादीनामपि वाक्यत्वं स्यात् (७)। आसत्तिर्बुद्ध्यविच्छेदः (८)। बुद्धिविच्छेदेऽपि वाक्यत्वे इदानी-**

पाकादौ विद्यमानस्य वह्निकरणकत्वस्य सेकादौ येन केनचित्परम्परासम्बन्धेन सद्भावे 'वह्निना सिञ्चति' इत्यादेर्वाक्यत्वप्रसक्तौ तद्वारणाय तात्पर्य्यविषयीभूतेति सम्बन्धविशेषणम्। अस्ति च 'पयसा सिञ्चति' इत्यादौ पयःकरणकत्वस्य स्वरूपसम्बन्धेन सेके सद्भावः।

( ४ ) योग्यताया निवेशस्य फलमाह—**पदोच्चयस्येति**। एतदभावेऽपि योग्यताया अभावेऽपि, पदोच्चयस्य वाक्यत्वे अङ्गीकृते सतीति शेषः, 'वह्निना सिञ्चति' इत्यपि वाक्यं स्यात् आकाङ्क्षासत्त्योर्योग्यताभ्रमेणान्वयपर्य्यवसानस्य च सत्त्वादिति भावः। नन्वत्र कथमाकाङ्क्षेति चेत्, उच्यते, कारणस्य कार्य्यनिरूपितत्वनियमात् कार्य्यव्यतिरेकेणानुपपत्त्या सेकरूपे कार्य्येऽस्त्येवाकाङ्क्षेति।

( ५ ) आकाङ्क्षां निरूपयति—**आकाङ्क्षेति**। प्रतीतेः=पदजन्यपदार्थोपस्थितेः पर्य्यवसानस्य=अन्वयबोधजनकत्वेनेच्छाविरहस्य विरहः=अभावो नामाकाङ्क्षेत्यर्थः।

( ६ ) ननु भावरूपाया आकाङ्क्षाया अभावरूपत्वेन निरूपणेऽनुभवविरोधो भवेदाकाङ्क्षापदस्यापि तादृशार्थबोधकत्वे लक्षणापत्तिश्चेत्यत आह—**स चेति**। स च प्रतीतिपर्य्यवसानविरहश्च श्रोतुः तत्तत्पदश्रोतृजनस्य जिज्ञासारूपः अन्वयिपदान्तरबोधेच्छास्वभावः। तथा च पूर्वोक्तः अभावाभावः प्रतियोगिस्वरूप एव न त्वतिरिक्तः। यदुक्तमुदयनाचार्य्येण—"अभावविरहात्मत्वं वस्तुनः प्रतियोगिता"। इति। इति भावः। एवञ्च श्रोतुर्यत्किञ्चित्पदश्रवणानन्तरं तदन्वयिपदान्तरस्य पुनः श्रवणेच्छा आकाङ्क्षेति फलितोऽर्थः। अस्ति च 'पयसा सिञ्चति' इत्यादौ श्रोतुः पयसेति पदश्रवणानन्तरं 'सिञ्चति' इति पदान्तरस्य साध्यत्वेन श्रवणेच्छा तथा सिञ्चतीति पदश्रवणानन्तरमपि पयसेति पदान्तरस्य च साधकत्वेन श्रवणेच्छेति लक्षणसमन्वयः।

( ७ ) आकाङ्क्षाया व्यावृत्तिमाह—**निराकाङ्क्षस्येति**। निराकाङ्क्षस्य आकाङ्क्षाशून्यस्य पदोच्चयस्य। वाक्यत्वेऽङ्गीकृते सतीति शेषः। गौरश्वः पुरुषो हस्तीत्यादीनां पदानामपि वाक्यत्वं स्यात्। एवञ्चाव्याप्तिः स्यादिति भावः। तथा चात्र गवाद्यर्थबोधकसुबन्तपदश्रवणानन्तरमश्वादिपदान्तरश्रवणेच्छाविरहस्य स्वतः सिद्धत्वादाकाङ्क्षाशून्यत्वम्। न चात्र योग्यता नास्तीति वाच्यम्, परस्परविजातीयत्वसम्बन्धबोधे विपरीतबुद्धेरभाद् योग्यतायाः सत्त्वात्। ननु तथाप्यासत्तिः कथमिति चेन्न, बुद्ध्यविच्छेदरूपासत्तेः सुप्रतीतेः।

( ८ ) आसत्तिमाह—**आसत्तिरिति**। बुद्धेः पदार्थोपस्थितेरविच्छेदोऽव्यव-

**मुच्चरितस्य देवदत्तशब्दस्य दिनान्तरोच्चारितेन गच्छतीति पदेन सङ्गतिः स्यात् (९)। अत्राकाङ्क्षायोग्यतयोरात्मार्थधर्म्मत्वेऽपि पदोच्चयधर्म्मत्वमुपचारात् (१०)।**

---

धानम्, अव्यवहितपदार्थोपस्थितिरित्यर्थः। व्यवधानञ्च कालबाहुल्येन प्रकृतानुपयोगिपदार्थोपस्थित्या च सम्भवति। तथा च कालबाहुल्यादिव्यवधानशून्यतया अन्वयिपदार्थानामुपस्थितिरासत्तिरित्यर्थः। पयसा सिञ्चतीत्यादौ तादृशपदार्थोपस्थितिसत्त्वाल्लक्षणसमन्वयः।

( ९ ) आसत्तेर्व्यावृत्तिमाह—**बुद्धीति**। वाक्यत्वेऽङ्गीकृते सतीति शेषः। उच्चरितस्य = उक्तस्य । देवदत्तशब्दस्य = देवदत्तकर्तृकत्वबोधकस्वन्तदेवदत्तपदस्य दिनान्तरोच्चरितेनान्यदिनोक्तेन। दिनान्तरेत्यत्यन्तव्यवधानदर्शनाय। प्रहरादिव्यवधानेऽप्यनासन्नत्वं बोध्यम्। संगतिर्वाक्यव्यवहारोपयोगिमेलनम्। एवञ्चातिव्याप्तिरिति भावः। अत्र कालबाहुल्येन व्यवधानं दर्शितम्। प्रकृतानुपयोगिपदार्थोपस्थित्या व्यवधानं च यथा—'गिरिर्भुक्तमग्निमान् देवदत्तेने'ति। अत्र 'गिरिरग्निमान्' 'भुक्तं देवदत्तेने' ति वाक्यार्थद्वयं प्रकृतम्। तत्र प्रथमवाक्यार्थे प्रकृतानुपयोगिन्या भुक्तमिति पदार्थोपस्थित्या व्यवधानम्। द्वितीयवाक्यार्थेऽप्यग्निमानिति प्रकृतानुपयोगिन्या पदार्थोपस्थित्या व्यवधानम्। तथा चैतयोरासत्तेरभावान्नैव वाक्यत्वमिति भावः। प्रकृतोपयोगिन्या पदार्थोपस्थित्या व्यवधाने त्वासत्तिरस्त्येव। यथा—'अश्वेन ग्रामं गच्छति' इति। अत्र ग्रामपदार्थोपस्थित्या व्यवधानेऽपि अश्वपदस्य गच्छतीत्यनेनासत्तिरव्याहतैव, तस्याः प्रकृतोपयोगित्वात्। तथा चात्र वाक्यत्वमस्त्येव।

( १० ) ननु आकाङ्क्षायाः श्रोतुर्जिज्ञासारूपत्वेनेच्छारूपत्वात् समवायेनात्मनिष्ठत्वं योग्यतायाश्च, वृत्तितावच्छेदकसम्बन्धेनार्थनिष्ठत्वं स्फुटमेव, तथा सति कथं तयोः पदोच्चयधर्म्मत्वं मूलकृता प्रोक्तमित्यत्राह—**अत्रेति**। आत्मा च अर्थश्च तयोर्धर्म्मत्वेऽपि तन्निष्ठत्वेऽपि, पदोच्चयधर्म्मत्वं पदस्तोमनिष्ठत्वम्, उपचारादङ्गीकृतमिति शेषः। तथा च आकाङ्क्षाया उत्थापकत्वनिवर्त्तकत्वान्यतरसंबन्धेन पदोच्चयनिष्ठत्वं योग्यतायाश्च स्वाश्रयोपस्थापकत्वसम्बन्धेन पदोच्चयनिष्ठत्वमित्याशयः। आसत्तेः पुनर्विषयतासम्बन्धेन पदोच्चयनिष्ठत्वं स्वत एवेति तन्नाशङ्कितमिति बोध्यम्।

अत्र तर्कवागीशास्त्वेवं व्याचख्युर्यथा—योग्यताकाङ्क्षयोः पदोच्चयधर्म्मत्वमुपपादयति—**आकाङ्क्षेति**। आकाङ्क्षाया इच्छारूपत्वाद्विपरीतबुद्ध्यभावरूपयोग्यतायाश्चात्मनिष्ठतयान्वयबोधहेतुत्वादात्मवृत्तित्वमेव। उपचारात् = स्वजन्यजनकत्वरूपपरम्परासम्बन्धात्। एकपदार्थीयापरपदार्थसद्भावरूपयोग्यतायास्तु पदार्थधर्म्मत्वेऽपि स्वाश्रयोपस्थापकत्वसम्बन्धेन पदोच्चयधर्म्मत्वमेवावगन्तव्यम्। निरुक्तासत्तेरप्यात्मधर्म्मत्वात् तत्राप्येषैव रीतिरनुसर्त्तव्या। यदि पुनः समभिहारविशेष आकाङ्क्षा,

**वाक्योच्चयो महावाक्यम् । (११)**
**योग्यताकाङ्क्षासत्तियुक्त एव (१२) ।**
**इत्थं वाक्यं द्विधा मतम् ।**

**इत्थमिति वाक्यत्वेन महावाक्यत्वेन च । उक्तञ्च—**
**"स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया ।**
**वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥" इति (१३) ।**

**तत्र वाक्यं यथा—'शून्यं वासगृहम्" इत्यादि । महावाक्यं यथा—रामायण-महाभारत-रघुवंशादि (१४) ।**

**पदोच्चयो वाक्यमित्युक्तं तत् किं पदलक्षणमित्यत आह—(१५)**

अव्यवधानोच्चरितत्वमासत्तिः, तदानयोः साक्षादेव पदोच्चयधर्म्मत्वमित्यास्तां विस्तर इति ।

( ११ ) वाक्यनिरूपणानन्तरं तत्साजात्येनाकाङ्क्षोदयान्महावाक्यमपि निरूपयति—**वाक्योच्चय इति** । अत्राप्युच्चय इति पदं समूहपरम्, समूहत्वं च पूर्ववच्चानेकत्वं बोध्यम् ।

( १२ ) ननु वाक्योच्चयमात्रस्य योग्यताद्यभावेऽपि महावाक्यत्वस्वीकारे "चक्षुषा गृह्यताम्, गगनं वर्तते" इत्येतयोर्योग्यतारहितयोः "भिक्षुरुपवसति, गृही भुंक्ते" इत्येतयोर्निराकाङ्क्षयोः "चक्षुषा गृह्यताम्, घटो वर्तते" इति भिन्नदिनोच्चरितयोरेतयोरासत्तिशून्ययोरपि वाक्ययोस्तादृशानेकवाक्यानाञ्च महावाक्यत्वं स्यादित्यत आह—**योग्यतेत्यादि** । अत्रैवशब्दः 'शङ्खः पाण्डुर एव' इत्यादिवदयोगव्यवच्छेदे बोध्यः। तथा चात्र पूर्वोक्तवाक्यलक्षणघटकयोग्यताकाङ्क्षादिमत्त्वानुकर्षणाद् "योग्यताऽऽकाङ्क्षाऽऽसत्तिमत्त्वे सति वाक्योच्चयत्वं महावाक्यत्वमि"ति लक्षणं फलितम् । एवञ्च पूर्वोदाहृतेषु नातिव्याप्तिरिति भावः । 'चक्षुषा गृह्यतां, घटो वर्त्तते' इत्याद्योरव्यवधानेनोच्चरितयोर्वाक्ययोर्योग्यताकांक्षाऽऽसत्तिमत्त्वात् महावाक्यत्वमस्त्येवेति लक्षणसमन्वयः ।

( १३ ) महावाक्यस्यापि वाक्यत्वे आचार्य्यसम्मतिं दर्शयति—**उक्तं चेति** । स्वार्थबोधेन तत्तद्वाक्यार्थबोधेन हेतुना समाप्तानां निराकाङ्क्षाणां पुनरङ्गाङ्गित्वव्यपेक्षया गुणप्रधानभावेनाकाङ्क्षया संहत्य एकार्थप्रतिपादकत्वेन मिलित्वा स्थितानां वाक्यानामेकवाक्यत्वं जायते इत्यर्थः । वाक्यार्थानां गुणप्रधानभावेन वैशिष्ट्यादेकत्वं तत्प्रतिपादकत्वेन वाक्यानामेकवाक्यत्वमिति भावः ।

( १४ ) वाक्यमहावाक्ययोरुदाहरणप्रदर्शनायाह—**तत्रेति** । तत्र वाक्यमहावाक्ययोर्मध्ये इत्यर्थः । **रघुवंशादीति** । आदिपदेन "नाथ ! मयूरो नृत्यति तुरगाननवक्षसः कुतो नृत्यम्" इत्यादेः संग्रहः ।

( १५ ) अथ वाक्यनिरूपणे स्मृतस्य पदस्यानुपेक्षणीयत्वरूपप्रसङ्गसंगतिमुपपादयति-**पदोच्चय इति** । **उक्तमिति**। "वाक्यं स्याद्योग्यताकाङ्क्षा" इत्यादिनेति शेषः।

**वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः । (१६)**

**यथा-घटः (१७) । प्रयोगार्हेति प्रातिपदिकस्य व्यवच्छेदः (१८) अनन्वितेति वाक्यमहावाक्ययोः (१९) । एकेति साकाङ्क्षानेकपदवाक्यानाम् (२०)।**

( १६ ) **वर्णा इति** । अनन्वितमेकमर्थं बोधयन्तीति तेऽनन्वितैकार्थबोधकाः । प्रयोगार्हाश्च तेऽनन्वितैकार्थबोधकाश्चेति पश्चात् कर्म्मधारयः । प्रयोगार्हत्वं नाम वाक्यान्तर्निवेशयोग्यत्वं; तच्च क्वचित्सुबाख्यातान्यतरान्तत्वेन क्वचिल्लुगन्तत्वेन च ग्राह्यम् । अनन्वितत्वं तु अपर्य्यवसितान्वयत्वम् । इदन्त्वर्थविशेषणम् । वर्णाः स्वरव्यञ्जनरूपाः । तथा च प्रयोगयोग्यत्वे सति यादृशानुपूर्वीमन्तो वर्णा अपर्य्यवसितान्वयस्यैकस्यार्थस्य बोधकास्तादृशानुपूर्वीमद्वर्णत्वं पदत्वमिति लक्षणम् ।

( १७ ) उदाहरणं दर्शयति—**यथेति** । घट इत्यानुपूर्वीमन्तो वर्णाः सुबन्तत्वेन प्रयोगार्हास्तथा अनन्वितस्य कम्बुग्रीवादिमद्रूपस्यैकस्यार्थस्य बोधकाश्चेति लक्षणसमन्वयः । तथा चात्र पदत्वमस्त्येवेति भावः ।

( १८ ) प्रयोगार्हेत्यस्य व्यावृत्तिं दर्शयितुमाह—**प्रयोगार्हेति** । प्रातिपदिकस्य विभक्तिरहितनाम्नः, केवलस्य तस्याप्रयोगात् । एतदुपलक्षणम्, तेन धातोरित्यपि बोध्यम्, तस्यापि केवलस्याप्रयोगात् । यदुक्तं भाष्यकारेण—"नापि केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्ययः ।" इति । व्यवच्छेदः व्यावृत्तिः क्रियत इत्यर्थः । प्रयोगार्हत्वं च क्वचिल्लुगन्तत्वेनापि भवतीत्युक्तं प्राक् । तेन 'वाक्' इत्यादौ नाव्याप्तिः । एवमन्यत्रापि ।

( १९ ) अनन्वितेत्यस्य व्यावृत्तिमाह—**अनेति** । वाक्यस्य महावाक्यस्य च प्रयोगार्हत्वमस्त्येव विशिष्टैकार्थबोधकत्वमप्यस्त्येव, तथा सति तत्र वाक्ये महावाक्ये च पदत्वप्रसक्तिः स्यात्, अतोऽनन्वितेति विशेषणेन तयोर्व्यवच्छेदः क्रियत इत्यर्थः । तयोरन्वितार्थबोधकत्वादिति भावः ।

( २० ) एकेत्यस्य व्यावृत्तिं दर्शयति—**एकेतीति** । साकाङ्क्षाणि = आकाङ्क्षामात्रविशिष्टानि ; अयोग्यानि अनासन्नानि चेत्यर्थः ; यानि अनेकानि पदानि वाक्यानि च तेषाम् । तथा च—आकाङ्क्षामात्रविशिष्टानामयोग्यानामनासन्नानां चानेकपदानामनेकवाक्यानां चान्वितार्थबोधकत्वाभावात् पदत्वप्रसक्तौ तद्वारणायैकेतीति भावः । इदं तु तर्कवागीशमतेन व्याख्यानम् ।

पुत्रस्तु—साकाङ्क्षाणि यान्यनेकानि पदानि वाक्यानि च तेषामिति विग्रहः । साकाङ्क्षाण्यनेकपदानि यथा—'देवदत्तो दण्डेन गाम्' इति । अनेकवाक्यानि च-संघसमुदितार्थबोधनार्थमितरवाक्यसापेक्षाणि प्रबन्धेषु प्रसिद्धानि । तथाभूतानां हि पदानां वाक्यानां च विशकलितानेकार्थबधन?एव? भट्टमते सामर्थ्यं नत्वेकार्थबोधने । इति व्याचष्टे । वस्तुतस्तु—अत्र अपर्य्यवसितान्वयत्वप्रकाशनाय साकाङ्क्षेति

**अर्थबोधका इति क-च-ट-त-पेत्यादीनाम् (२१)। वर्णा इति बहुवचनमविवक्षितम् (२२)।**

विशेषणम्। तथा च 'शून्यं वासगृहं विलोक्य' इत्यादिश्लोकांशस्थानां पदानां समुदायस्य प्रयोगार्हत्वात् साकाङ्क्षत्वेनापर्य्यवसितान्वयत्वादर्थबोधकत्वाच्च पदत्वप्रसञ्जने एकेति विशेषणेन व्यवच्छेदो भवति प्रत्येकेनैवार्थबोधने समुदायस्य बह्वर्थबोधकत्वादित्याशयः। किञ्च—महावाक्येऽपि "देवदत्तोऽनलं ज्वालयति, यज्ञदत्तस्तत्रेन्धनं योजयति, विष्णुमित्रो दर्वीं मथ्नाति, इतीमे पचन्ति" इत्यादावादिमवाक्यत्रिकस्य प्रयोगयोग्यत्वात् चरमवाक्यसाकाङ्क्षत्वेन विशिष्टार्थान्वयापर्य्यवसानात् अर्थबोधकत्वाच्च पदत्वप्रसञ्जने एकेति विशेषणेन तस्यापि व्यवच्छेदो भवति; उक्तरूपेण तस्याप्यनेकार्थबोधकत्वादिति भावः।

( २१ ) **अर्थबोधिका इति**। अयमाशयः—'अर्थबोधका' इत्यनुक्तौ 'प्रयोगार्हानन्विता एके वर्णाः पदम्' इत्येव लक्षणं भवति। तत्र एक इति एकशब्दत्वेनाभिमता इत्यर्थो वाच्यः। एवञ्च सति वाक्यमहावाक्ययोः प्रयोगार्हत्वात् विशिष्टैकार्थबोधकत्वेन एकशब्दतयाभिमतत्वाच्च पदत्वप्रसञ्जने अनन्वितेति विशेषणेन तद्वारणम्। 'शून्यं वासगृहं विलोक्ये'ति भागस्थपदसमुदायस्य 'देवदत्तोऽनलं ज्वालयति, यज्ञदत्तस्तत्रेन्धनं योजयति, विष्णुमित्रो दर्वीं मथ्नाति' इति वाक्यत्रिकस्य च साकाङ्क्षत्वेनान्वयापर्य्यवसानात् पदत्वप्रसञ्जने एकेति विशेषणेनैव तद्व्यावृत्तिस्तयोरनेकशब्दत्वात्, तथा चेत्यादिस्थलेषु नैवातिव्याप्तिर्भवति। किन्तु 'क च ट त प' इत्यादिषु सा दुर्वारैव। तथा हि वर्णमालागतानां तेषां प्रत्येकत एवाव्ययत्वेन लुप्तविभक्तिकत्वस्वीकारेण प्रयोगार्हत्वात् अनन्वितत्वात् एकैकस्य एकैकशब्दतया अभिमतत्वाच्च एकैकस्यैव पदत्वप्रसञ्जने सति तद्व्यवच्छेदाय अर्थबोधका इति विशेषणमवश्यं देयम्। तादृशविशेषणदाने तु क-च-ट-त-पादीनामर्थबोधकत्वाभावान्न तेष्वतिव्याप्तिः। अर्थबोधकत्वमत्राभिधाद्यन्यतमवृत्त्यार्थप्रतिपादकत्वं, तच्च तेषां नास्त्येव। किन्तु तेषामर्थबोधकशब्दसाधर्म्येणार्थवत्ताङ्गीकारादेव प्रातिपदिकसंज्ञा। अभिधाद्यन्यतमवृत्त्या तेषामेकैकस्य प्रजापत्यादिरूपैकैकार्थबोधकत्वे तु पदत्वमस्त्येव—इति नव्याः।

परे तु—'अर्थबोधका' इत्यनुक्तौ अर्थविशेषणीभूतस्य 'अनन्विते' त्यस्य 'एके' त्यस्य चानुक्तिः सिद्धैव। ततः 'प्रयोगार्हा वर्णाः पदम्' इत्येव लक्षणं भवति। तथा सति क-च-ट-त-पेत्यादिष्वतिव्याप्तिः स्यात् वर्णत्वेन तेषां प्रयोगार्हत्वात्। वर्णा एव प्रयोगार्हा भवन्ति न त्वर्था इति।-व्याचक्षते।

(२२) नन्वेकवर्णद्विवर्णपदयोरव्याप्तिस्तत्र वर्णबहुत्वाभावादित्यत आह-**वर्णा इति**। बहुवचनमविवक्षितं, नाभीप्सितम्, व्यक्तिभेदेन वा प्रयुक्तमित्यर्थः। तेनैकस्य वर्णस्य

तत्र—(२३)

**अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः ॥२॥ (२४)**

**एषां स्वरूपमाह—(२५)**

**वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः ।**
**व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः ॥३॥(२६)**

**ता अभिधाद्याः ।**

**तत्र सङ्केतितार्थस्य बोधनादग्रिमाभिधा । (२७)**

---

द्वयोरपि वर्णयोः परिग्रहः। तेन 'मयि सानुग्रहो भवे' त्यत्राकारस्यैकवर्णस्य वासुदेवसम्बन्धिनोक्तस्य न पदत्वहानिः—इति पुत्रः ।

( २३ ) **तत्रेति ।** पदलक्षणे इत्यर्थः । यद्वा तत्रेति यथा सम्भवं पदवाक्ययोरित्यर्थः । तथाचाभिहितान्वयवादिनां मते पदाभिधेयो वाच्यार्थः । अन्विताभिधानवादिनां मते च वाक्याभिधेयः । लक्ष्यश्च पदमात्रस्यार्थः । व्यङ्ग्यश्च वर्णपदवाक्यादीनाम् । ये च तौतातितादयो लक्ष्यो वाक्यार्थ इत्यूचुः; तन्मते तात्पर्य्या वृत्तिरेव वाक्यार्थबोधिका द्वितीयलक्षणेत्यपरं नाम ।

( २४ ) अथ पदप्रतिपाद्यत्वमर्थत्वमिति सर्ववादिसम्मतत्वेनातिप्रसिद्धतया विप्रतिपत्तेरभावात्तदपास्योपोद्घातसङ्गत्यार्थभेदानेवाह—**अर्थ इति ।** पदप्रतिपाद्य इत्यर्थः । वाच्य उच्यतेऽसाविति तथोक्तः । लक्ष्यो लक्ष्यतेऽसाविति तथोक्तः । व्यङ्ग्यो व्यज्यतेऽसाविति तथोक्तः । चकाराधिक्यं समुच्चयार्थम् । त्रिधेति चाधिकसंख्याव्यवच्छेदार्थं बोध्यम् ।

( २५ ) **एषामिति ।** वाच्यादीनामित्यर्थः । स्वरूपं लक्षणम् ।

( २६ ) क्रमेण स्वरूपं दर्शयति—**वाच्य इति ।** अभिधया बोध्योऽर्थो वाच्य इत्यन्वयः । एवमग्रेऽपि । तृतीयार्थो जन्यत्वं सर्वत्र । तथा चाभिधाजन्यबोधविषयत्वं वाच्यार्थत्वमिति फलितम् । एवमन्ययोरपि । अर्थबोधे शब्दस्य वृत्तीनां च कारणत्वमत्र विषयविषयिणोरभेदोपचाराद्बोध्यम् । वास्तवकारणन्तु शब्दतद्वृत्तिज्ञानमेव । शब्दस्य प्रकृतिप्रत्ययादेः शक्तयः अर्थबोधे सहकारिवृत्तयः ।

( २७ ) अभिधां निरूपयन्नाह—**तत्रेति ।** तत्र तिसृषु शक्तिषु मध्य इत्यर्थः । सङ्केत इच्छाविशेषस्तद्विषयः सङ्केतितः, इच्छार्थकस्य सम्पूर्वककितेरत्र कर्म्मणि निष्ठाविधानात्तस्य च विषयत्वस्यैव कर्म्मत्वाच्च । यदुक्तं शक्तिवादे गदाधरभट्टाचार्य्यैः—"इदं पदमिममर्थं बोधयत्विति अस्मात् पदादयमर्थो बोद्धव्य इति वेच्छा सङ्केतरूपा वृत्ति" रिति । तथा च—वक्ता "घटपदं कम्बुग्रीवादिमन्तमर्थं बोधयत्वि" तीच्छया तथाविधार्थं निर्दिश्य प्रयुक्तं तत्पदं तादृशार्थं बोधयति । सङ्केतः स्वाभाविको व्यापार

**उत्तमवृद्धेन मध्यमवृद्धमुद्दिश्य "गामानय" इत्युक्ते तं गवानयनप्रवृत्तमुपलभ्य बालोऽस्य वाक्यस्य "सास्नादिमत्पिण्डानयनमर्थ" इति प्रथमं प्रतिपद्यते(२८)। अनन्तरञ्च "गां बधान, अश्वमानय" इत्यादावावापोद्वापाभ्यां गोशब्दस्य "सास्नादिमानर्थः" आनयनशब्दस्य च**

इति मीमांसकादयः। यथा तथा वास्तु सङ्केतितार्थो मुख्यार्थान्नातिरिच्यते। मुख्यत्वं च तस्य लक्ष्यव्यङ्ग्यापेक्षया प्रथमोपस्थितिविषयत्वम्। तथा च तिसृषु शक्तिषु मध्ये सङ्केतितार्थस्य = कोशव्याकरणादिप्रसिद्धस्य मुख्यार्थस्येत्यर्थः, बोधनात् = स्वज्ञानेन शाब्दबोधजननात् हेतोरग्रिमा = प्रथमा शक्तिरभिधानामेत्यर्थः। मुख्यार्थबोधकशक्तित्वमभिधात्वमिति लक्षणं पर्य्यवसितम्। केचित्तु—सङ्केतितार्थत्वं नाम सङ्केतितग्रहविषयार्थत्वमिति व्याचक्षते; तन्न; सङ्केतस्याभिधाया अभिन्नत्वेनात्माश्रयतापत्तेरिति पूर्वोक्तोऽर्थ एव साधीयान्।

(२८) "सङ्केतस्य ग्रहः पूर्वं वृद्धस्य व्यवहारतः, पश्चादेवोपमानाद्यैः शक्तिधीपूर्वकैरसौ" (इति मीमांसकोक्तेः) इत्युक्तेः प्रथममन्विताभिधानमतिमाश्रित्य वृद्धव्यवहारात्मकं सङ्केतग्रहोपायमाह—**उत्तमेति**। उत्तमवृद्धेन प्रयोजकवृद्धेन मध्यमवृद्धं प्रयोज्यवृद्धम्। वृद्धत्वमनयोः सङ्केतग्रहशालित्वम्। उत्तमत्वमध्यमत्वे तु प्रयोजकप्रयोज्यभावौ। उद्दिश्य लक्षीकृत्य। 'गामानये' त्युक्ते तादृशानुपूर्वीमद्वाक्ये प्रयुक्ते सति तं मध्यमवृद्धं गवानयनप्रवृत्तं गवानयनगोचरयत्नवन्तमुपलभ्य गवानयनक्रियया अनुमाय बालः सङ्केताग्रहवान् व्युत्पित्सुरस्य "गामानये" त्यस्य वाक्यस्य; सास्ना गलकम्बलः; आदिपदेन शृङ्गलाङ्गूलादिपरिग्रहः; तद्वत्पिण्डं गोप्राणी तस्यानयनं, प्रथमं सङ्केतज्ञानात् पूर्वं प्रतिपद्यते अवयवार्थप्रतिपत्तिं विनापि सामान्यतोऽनुमानेन जानाति। तथा च गवानयनक्रिययाऽनुमितेन यत्नेन मध्यमवृद्धस्य गवानयनगोचरं ज्ञानमनुमिनोति; तद्गोचरप्रवृत्तिं प्रति तद्गोचरज्ञानस्य हेतुत्वात्; ततोऽनुमितस्यैव तस्य ज्ञानस्य हेतुताजिज्ञासायामुपस्थितत्वाद् 'गामानये' ति वाक्यमेव हेतुत्वेन कल्पयतीति भावः।

केचित्तु—गामानयेति वाक्यस्य दृश्यमानप्राण्यानयनमेवार्थ इत्यवगच्छति बालः तच्छ्रवणोत्तरकाल एव मध्यमवृद्धस्य तादृशप्राण्यानयनप्रवृत्तिदर्शनादितिमात्रमनुमानेन प्रतिपद्यत इति भाव इत्याहुः।

अत्र गामानयेति वाक्यप्रयोगकाले बालकस्य तु गोशब्दस्य सास्नादिमानर्थः आनयशब्दस्य चानयनरूपोऽर्थ इत्थं प्रतिपदसङ्केतग्रहो नैव भवतीति पर्य्यालोचनीयम्। इममर्थं पुत्रोऽप्याह—"अयमर्थः—शब्दतदर्थयोर्वाचकत्वे वाच्यव्युत्पन्नानामेव वाक्यार्थप्रतीतिः, व्युत्पत्तिश्च वृद्धप्रयोगादेव; स च वाक्यरूप एव; वाक्यं चान्वितबोधनियतम्; ततश्चोपदेशकालेऽन्वित एव सम्बन्धग्रहणमिति" इति।

"आहरणमर्थ" इति सङ्केतमवधारयति(२९)।

**क्वचिच्च प्रसिद्धपदसमभिव्याहारात् । यथा—"इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति" इत्यत्र(३०)। क्वचिदाप्तोपदेशात् ।**

( २९ ) ननु तर्हि वाक्यभागरूपेषु पदेषु पदार्थबोधव्यतिरेकेण भिन्नवाक्यनिष्ठेषु पदेषु कथमर्थावबोध इत्यत आह—**अनन्तरञ्चेति** । यद्वा यदि बालको गामानयेति समुदायवाक्यस्यैव दृश्यमानप्राण्यानयनरूपोऽर्थ इति प्रतिपद्यते तर्हि कदा प्रतिपदसङ्केतमवधारयति इत्यत आह—**अनन्तरञ्चेति** । अनन्तरञ्च तथावधारणात् परक्षणमेव । "गां बधान" "अश्वमानय" इत्यादौ मध्यमं वृद्धमुद्दिश्योत्तमवृद्धेन पुनरुक्ते सति बालस्तं मध्यमवृद्धं गोर्बन्धने अश्वस्यानयने च प्रवृत्तमुपलभ्येति शेषः । आवापोद्वापाभ्याम् अन्वयव्यतिरेकाभ्याम् "गां बधान" इत्यत्र गोपदसत्त्वे सास्नादिमत्प्राणिपदार्थबोधसत्ता; आनयनपदासत्तायामाहरणक्रियाबोधासत्ता; "अश्वमानय" इत्यत्र च आनयनपदसत्तायामाहरणरूपक्रियाबोधसत्ता; गोपदासत्तायां सास्नादिमत्प्राणिपदार्थबोधासत्ता; इत्येवंरूपाभ्यामित्यर्थः । गोशब्दस्य सास्नादिमानर्थः आनयनशब्दस्य च आहरणमर्थ इति शक्तं शक्तिम्, तथा च यदोत्तमवृद्धेन गामानयेत्युक्तं तदा मध्यमवृद्धेन सास्नादिमान् प्राणी आनीतः; यदा पुनर्गां बधानेत्युक्तं तदाऽपि च सास्नादिमान् प्राण्येव बद्ध इत्यतो गोशब्दस्य सास्नादिमति अस्मिन् प्राणिन्येव शक्तिः; तथा यदोत्तमवृद्धेन "गामानय" इत्युक्तं तदा मध्यमवृद्धेन गोराहरणं कृतं यदा पुनरश्वमानयेत्युक्तं तदापि चाश्वाहरणमपि कृतमित्यत आनयनशब्दस्याहरणक्रियारूपेऽर्थे शक्तिरिति तत्तच्छब्दस्य तत्तदर्थे शक्तिमित्यर्थः, अवधारयति निश्चिनोति । अत्राह पुत्रः—"अयमाशयः—यद्यपि वृद्धव्यवहारपूर्विकैव सर्वा व्युत्पत्तिर्वृद्धव्यवहारश्च वाक्येनैव तथापि यस्य पदरूपस्य वाक्यभागस्यावापे यस्यार्थभागस्यावापो यदुद्धारे चोद्धारस्तस्मिन् पदार्थे तस्य पदस्य शक्तिरावापोद्धारदर्शनेनैवानुगृहीतयार्थापत्त्याऽवगम्यत इति । एवं चात्र पक्षे प्रत्ययार्थानुमानापत्तिभिः प्रमाणैः संकेतग्रह इति सूचितम् । तदाहुः—'शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति । श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥ अन्यथानुपपत्त्या च बोधे शक्तिद्वयात्मिकाम् । अर्थापत्त्या च बुध्येत सम्बन्धं त्रिप्रमाणकम् ॥इति । अस्यार्थस्तु लोचने स्फुटीभूत इति तत्रान्वेयम् ।

( ३० ) उपमानेन प्रमाणेन सङ्केतग्रहं दर्शयति—**क्वचिच्चेति** । अयमाशयः—त्रिधा खलु उपमानप्रमाणव्यवस्थितिः । यथाहुः—"सादृश्यं धर्म्ममात्रञ्च वैसादृश्यञ्च भेदतः" इति । तत्र सादृश्ये गोसदृशो गवयः । वैसादृश्ये काकविसदृशः कोकिलः । धर्म्ममात्रे प्रकृते यथैवोदाहरणम् । तथा चात्र हि—"प्रभिन्नकमलोदरे" मधुपातृत्वप्रतिपादकैः पूर्वावधारितसङ्केतिततया प्रसिद्धैः पदैः समभिव्याहारान्मधुकरपदार्थो भ्रमर इति संकेतमवधारयति । इदमुपलक्षणम् । तेन पूर्वोदाहरणयोरप्युपमा-

यथा—"अयमश्वशब्दवाच्यः" इत्यत्र(३१)।

नप्रमाणेन सङ्केतग्रहः सूचितः। यद्वा—"शक्तिग्रहं ......, सान्निध्यतः सिद्धपदस्य वृद्धाः,......वदन्ति"। इति वृद्धवचनात् प्रसिद्धपदसमभिव्याहारलक्षणं संकेतग्रहोपायं दर्शयति—**क्वचिदिति**। प्रसिद्धस्य पूर्वावगतसंकेतस्य पदस्य शब्दस्य समभिव्याहारात् साहचर्य्यात् समीपोच्चारितत्वादित्यर्थः, बालः सन्दिग्धसंकेतस्य शब्दस्य संकेतमवधारयतीति पूर्वेणान्वयः। प्रेक्षावद्भिः प्रायेण योग्यपदार्थोपस्थापकं पदं समीपे प्रयुज्यत इत्यादिनिबन्धतः प्रसिद्धपदार्थान्वययोग्यपदार्थविशेषोक्तिग्रहो भवतीति भावः। एवञ्च शक्यार्थे योग्यतासत्त्वेऽपि वक्तृतात्पर्य्यविशेषस्यात्र हेतुत्वकल्पनात्तत्र न शक्तिग्रहः। उदाहरणं दर्शयति-यथेहेति। मधुकर इह अस्मिन् प्रभिन्नकमलोदरे प्रफुल्लितपद्ममध्ये मधूनि पिबतीति। अत्र मधु करोतीति मधुकर इति व्युत्पत्त्या मधुकरशब्दस्य भ्रमरे संकेतो मधुमक्षिकायां वेति संशये भ्रमरस्यैव पद्मे पूर्वं मधुपानदर्शनेन कमलपदसमभिव्याहारात् मधुकरशब्दस्य भ्रमरे एव सङ्केत इत्यवधारयति। ननु "मधुव्रतो मधुकर" इति कोशादेव मधुकरशब्दस्य भ्रमरे एव संकेतनिर्णयसम्भवात् कथं मधुमक्षिकायां संशय इति चेत्, उच्यते, पूर्वोक्तकोषप्रमाणेन मधुकरशब्दस्य भ्रमरे शक्तिनिश्चयसत्त्वेऽपि मधु करोतीति मधुकर इति व्याकरणव्युत्पत्त्या मधुमक्षिकाया एव मधुकरणधर्म्मदर्शनेन तत्र भवति संशयः; कोशव्याकरणयोरुभयोरपि संकेतग्रहोपायत्वादिति। अयमभिसन्धिः—अत्र "कमले मधुकरो मधु पिबति" इति पदानामन्वययोग्यतार्थकत्वज्ञानेन मधुकरपदस्य भ्रमर एव शक्तिग्रहः, मक्षिकादौ तादृशयोग्यतासत्त्वेऽपि वक्तृतात्पर्य्यविशेषज्ञानाभावान्न शक्तिग्रहः, कमलाभ्यन्तरे भ्रमर एव मधु पिबतीति जानता जनेन कमलपदसमभिहारात् मधुकरशब्दस्य भ्रमरे संकेतो गृह्यत इति।

(३१) क्वचित् शब्दमात्रप्रमाणेन संकेतग्रहो भवतीत्याह—**क्वचिदिति**। आप्तो विश्वस्तः स च निर्द्धारितवचनस्तस्योपदेशाद् बालः क्वचित् संकेतमवधारयतीत्यनुषङ्गः। उदाहरणं दर्शयति—यथायमिति। तथा च "अयमश्वशब्दवाच्य" इत्याप्तेनोक्ते तत्र प्रामाणिकत्वनिश्चयाद् बालोऽश्वशब्दस्य घोटके संकेतमवधारयतीति भावः। एतदुपलक्षणम्। तेन व्याकरणादयोऽपि शक्तिग्रहोपाया द्रष्टव्याः। तदुक्तम्—"शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्यव्यवहारतश्च। सान्निध्यतः सिद्धपदस्य वृद्धा वाक्यस्य शेषाद् विवृतेर्वदन्ति॥" इति। व्याकरणात् यथा—'कर्म्मणि द्वितीया' 'कर्त्तरि परस्मैपदम्' इत्याद्यनुशासनात् कर्म्मत्वादौ द्वितीयादेः शक्तिग्रहः। उपमानात् यथा पूर्वमुक्तम्। कोषाद् यथा-"गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इत्यादिदर्शनात् श्वैत्यादौ शुक्लादिशब्दस्य शक्तिज्ञानम्। आप्तवाक्यात् यथा—उदाहृतम्। व्यवहारतः यथोदाहृते। सिद्धपदस्य सान्निध्यतः—यथोदाहृतञ्च। वाक्य-

**तत्र सङ्केतितमर्थं बोधयन्ती शब्दस्य शक्यन्तरानन्तरिता शक्तिरभिधा नाम(३२) ।**

**सङ्केतो गृह्यते जातौ गुण-द्रव्य-क्रियासु च ॥ ४ ॥ (३३)**

**जातिर्गोपिण्डादिषु गोत्वादिका । गुणो विशेषाधानहेतुः सिद्धो वस्तुधर्म्मः । शुक्लादयो हि गवादिकं सजातीयेभ्यः कृष्णगवादिभ्यो व्यावर्त्तयन्ति । द्रव्यशब्दा एकव्यक्तिवाचिनो हरि-हर-डित्थ डवित्थादयः । क्रियाः साध्यरूपा वस्तुधर्म्माः पाकादयः(३४) । एषु हि अधिश्र-**

स्य शेषात् यथा—"यवमयश्चरुर्भवति" इति श्रुतौ यवशब्दस्य कङ्गुप्रभृतौ म्लेच्छानां दीर्घशूके च शिष्टानां व्यवहारादेकमात्रे शक्तेः परिच्छेत्तुमशक्यत्वात् नानार्थत्वस्य चान्याय्यत्वाद् यवशब्दस्यार्थसन्देहे "वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः ॥" इति विध्यर्थाकांक्षाया प्रवर्त्तमानाद् वाक्यशेषाद् दीर्घशूके एव यवशब्दस्य शक्तिग्रहः । यथा वा—"स्वाराज्यकामोऽग्निष्टोमेन यजेत" इत्यादिविधिशेषीभूतेभ्यः "यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम्" ॥ इत्यादिवाक्येभ्यः स्वरादिशब्दस्य शक्तिग्रहः । विवरणाद् यथा—"पचति=पाकं करोति" इति तुल्यार्थकवाक्यात् कृत्यादौ तिङादेः शक्तिग्रहः । शक्तिः कवित्वबीजरूपः संस्कारविशेष इति काव्यप्रकाशविवृतिः ।

( ३२ ) संकेतग्रहोपायान् प्रदर्श्य सम्प्रति मूलकारिकार्थं व्याचष्टे—**तत्रेति** । तत्र प्रदर्शितरूपञ्च । अग्रिमेति कारिकापदार्थः शक्त्यन्तरानन्तरितेति । तेन लक्षणाव्यञ्जनयोरस्य वैपरीत्यं सूचितम् । लक्षणा हि अभिधान्तरितैव; व्यञ्जना तु यत्र लक्षणा नास्ति तत्राभिधान्तरिता कुत्रचिदभिधालक्षणोभयान्तरिता च । अभिधा पुनः शक्त्यन्तराभ्यामन्यशक्तिभ्यां लक्षणाव्यञ्जनाभ्याम् अनन्तरिता अतिरस्कृता पुरस्कृतेत्यर्थः । अत एव अग्रिमा प्रधाना ।

( ३३ ) इह केषाञ्चिन्मते जातिरेव पदार्थः केषाञ्चिन्मते जातिव्यक्ती केषाञ्चिन्मते जात्याकृतिव्यक्तयः केषाञ्चिन्मतेऽपोहश्चेत्यादीनि मतान्तराणि परिहृत्य सर्वेषां वाङ्मयानां व्याकरणमूलत्वादलंकारग्रन्थेषु च प्रायेण तदनुगतेनैव व्यवहाराच्च महाभाष्यकारस्य मतमाश्रित्याह—**सङ्केत इति** । तथा च महाभाष्यकारः-"गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः" इति । गृह्यते ज्ञायते ।

( ३४ ) जात्यादिपदार्थमाह—**जातिरिति** । गोपिण्डादिषु गोव्यक्त्यादिषु, गोत्वादिका सामान्यरूपेति शेषः, तेन शुक्लगोत्वादिकं न जातिः । सा च जातिः पदार्थस्य प्राणप्रदा । उक्तं हि वाक्यपदीये—"न हि गौः स्वरूपेण गौर्नाप्यगौः गोत्वाभिसम्बन्धात्तु गौ" रिति । गुणपदार्थं विवृणोति—**गुण इति** । विशेषाधना-

**यणावश्रयणाद्यन्तादिपूर्वापरीभूतो व्यापारकलापः पाकादिशब्दवाच्यः(३५)। एष्वेव हि व्यक्तेरुपाधिषु सङ्केतो गृह्यते, न व्यक्तौ, आनन्त्यव्यभिचारदोषापातात्(३६)।**

हेतुः सजातीयेभ्यो व्यावर्त्तनं विशेषस्तस्याधानं प्रत्ययस्तस्य हेतुरित्यर्थः, तेन जातेर्व्यवच्छेदः। सिद्धः=न तु साध्यः, तेन क्रियाया व्यवच्छेदः। "सिद्धो नित्यः, एतन्मते गुणानामपि नित्यत्वम्, आविर्भावतिरोभावावेव उत्पत्तिविनाशप्रतीतिविषयौ" इति विवृत्तिः। अन्ये तु "सिद्धो नित्यो नित्यवत्प्रतीयमानो दीर्घकालावस्थायीति यावत्" इति वदन्ति। प्रकाशकारेणापि सिद्धभेदे स च गृहीतः। वस्तुधर्म्मः वस्तुनि व्यक्तौ समवेतो धर्म्मः। गुणानां विशेषाधानहेतुत्वमुपपादयति—शुक्लादय इति। गवादिकं जात्या लब्धगोव्यवहारयोग्यताकम्। द्रव्येत्यादि। अयमर्थः—हेतुं विना अयं डित्थो डवित्थ इत्यादिरूपेण वक्तृस्वेच्छाकल्पितसंज्ञया शृङ्गग्राहिकया संकेतेन व्यक्तिषु सन्निवेशितः सजातीयशून्यो डित्थाद्यर्थोपस्थापकः शब्दः संकेतस्य विषय इति। आदिपदेन चैत्रमैत्रादिपरिग्रहः। क्रिया इति। साध्यरूपाः कर्त्तृनिष्पाद्यस्वाभावाः, एतेन गुणनां व्यवच्छेदः; तेषां सिद्धरूपत्वात्, वस्तुधर्म्मा द्रव्यवृत्तयः। ननु अस्तिभवत्यादीनान्तु कथं साध्यत्वम्, उच्यते, तेषामपि एकगणपाठसाधर्म्म्येण साध्यरूपतयोपचारः।

(३५) ननु विक्लित्तिसाधकाद्येकैकानुष्ठान एवाधिश्रयणाद्यनेकव्यापारान्तर्भावात् तेषु कतमस्य व्यापारस्य पाकादिशब्दवाच्यत्वमित्याह—**एष्विति**। एषु क्रियाख्येषु साध्यरूपवस्तुधर्म्मेषु मध्ये हि, अधिश्रयणं चुल्यां स्थाल्या आरोपणम् अवश्रयणं चुल्यां स्थाल्या अवरोपणं ते आद्यन्तौ आद्यान्त्यावयवौ यस्य स तादृशः, पूर्वापरीभूतः प्रधानक्रियाया अवयवरूपतया कार्य्याकारणभूतेन सन्तानीभूतः, व्यापारकलापः क्षुद्रक्षुद्रव्यापारसमूहः, पाकशब्दवाच्यः पाकपदार्थः। अवश्रयणाद्यन्तादीत्यादिना गृहनिर्गमनादिग्रामान्तरप्रवेशप्रभृतीनां ग्रहणम्, पाकादीत्यादिना गमनादिग्रहणम्। तथा च विक्लित्तिसाधकैकानुष्ठानेऽधिश्रयणाद्यारभ्यावश्रयणपर्य्यन्तमन्तराप्रविष्टाः सर्वे व्यापारा दर्वीसंघटनादयो मिलित्वा एकपाकक्रियारूपा भवन्तीत्यर्थः।

(३६) सम्प्रति कारिकार्थं व्याचष्टे—**एष्वेवेति**। एषु जात्यादिषु, एवहिशब्दद्वयमत्यन्तावधारणसूचनार्थम्, व्यक्तेरुपाधिषु भेदकधर्म्मेषु यथासम्भवमेकैकस्मिन्नित्यर्थः, इह च द्रव्यस्योपाधिविशेषत्वासम्भवेऽपि तत्संज्ञाया उपाधित्वेन तत्त्वमुपचारात्। यद्यपि डित्थाद्यर्थे चानन्त्यव्यभिचराभावात् उपाधिं विनैव सम्भवति वाच्यवाचकसम्बन्धसमयग्रह इति नोपाधिरपेक्ष्यते, वक्तृस्वेच्छाकल्पितस्य संज्ञाशब्दस्य स्वप्रवृत्तावुपाध्युपगमे पुनरात्माश्रयदोषः। तथापि द्रव्यसंज्ञाया अप्युपाधित्वं प्रतीतानुरोधेनोक्तम्। विवृतिकारास्तु।-एष्वेव हीति। जात्यादिषु चतुर्षु मध्ये ये व्यक्तेरुपा-

अथ लक्षणा । (३७)

धर्मो धर्म्माः जातिगुणक्रियास्वरूपास्तेष्वेवेत्यर्थः । संज्ञाशब्दानां तु व्यक्तावेव संकेतग्रहः, द्रव्यस्य व्यक्तिव्यतिरिक्तत्वाभावेनोपाधित्वाभावान्नानात्वाभावेनोक्तदोषद्वयाभावाच्च—इत्याहुः । संकेतो गृह्यते शक्तिर्ज्ञायते । तथा च गोशब्दस्य गोत्वजातौ शुक्लादिशब्दस्य शुक्लादिगुणे डित्थादिशब्दस्य तत्तद्व्यक्तिरूपद्रव्ये पाकादिशब्दस्य च पूर्वापरीभूतव्यापारकलापादौ संकेतो गृह्यत इति । एवहिशब्दव्यवच्छेद्यं स्वयमाह—**न व्यक्ताविति** । व्यक्तौ संकेतो न गृह्यत इत्यर्थः । तत्र हेतुमाह—**आनन्त्येति** । गवादिव्यक्तीनां नानात्वान्नानाव्यक्तिषु नानाशक्तिकल्पनस्यावश्यकत्वेन गौरवं स्यादित्यभिप्रायः । यद्वा अनन्तानां गोव्यक्तीनामेकदोपस्थित्यसम्भवेन तत्र संकेतो नैव ग्रहीतुं शक्यते इत्यभिप्रायः—इति प्रकाशटीकाकृतः । ननु नानन्तव्यक्तिषु सङ्केतग्रहः किन्तु दृष्टव्यक्तावेवेति कुतो गौरवमित्यत आह—**व्यभिचारेति** । संकेतग्रहकालादृष्टव्यक्तावपि बोध्यस्य कार्य्यस्य सत्त्वाद् व्यक्तिसंकेतग्रहरूपकारणस्य सिद्धत्वाद् व्यभिचार इति भावः । यद्वा यस्यां गोव्यक्तौ संकेतग्रहः स्वीकृतस्तदतिरिक्ताया गोव्यक्तेर्गोशब्दाद्भानं न स्यादिति व्यभिचार इति प्रकाशटीकाकृतो विवरणकाराः । यद्वा शक्तिग्रहाविषयीभूतस्यापि शाब्दबोधविषयत्वे व्यभिचारेण शक्तिग्रहस्य कारणतानुपपत्तिरिति भावः । अथ वा व्यभिचारो व्यभिचारप्रसङ्गः, तथा च संकेतग्रहविषयत्वाविशेषेऽश्वादेरपि भानप्रसङ्ग इति, संकेतितस्यैव शाब्दबोध इति नियमाभावप्रसङ्ग इति वेति भावः । एतन्मते तु गोत्वजातौ गोशब्दस्य संकेतज्ञानम् , ततश्च जातेरेकत्वात् न संकेतज्ञानस्यानन्त्यदोषः, न वा व्यभिचारः । ननु गुणक्रियाणामपि प्रतिव्यक्तिभिन्नत्वेन आनन्त्यव्यभिचाराभ्यां कथं संकेतग्रह इति चेन्न, तन्मते गुणादीनामपि जातिवदेकत्वमेव । नन्वेवं गवादिपदेन सङ्केतितत्वाज्जातावभिहितायां कथं व्यक्तिप्रतीतिः, अविनाभावस्यानुसन्धानमन्तरेणाक्षेपकत्वाभावात् । यथा वा धूमादिगतस्याग्न्यादेरविनाभावानुसन्धानमत्रानुपलब्धिबाधितम् । तदत्रान्वययोगिताया व्यक्तेः शाब्दबोधित्वं विना शाब्देऽन्वये प्रवेशासम्भव इति जात्यभिधायके शब्दे व्यक्तिबोधनार्थं व्यञ्जनैव वृत्तिरूपासितुमुचितेति रहस्यम् । एवञ्च जातिमात्रसंकेतपक्षे च निर्विवादम् । यथा च काव्यप्रकाशे—"संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा" । इति । एतन्मते गवादौ गोत्वादिरिव शुक्लादौ शुक्लत्वादिः, पाकादौ पाकत्वादिः, डित्थादौ डित्थत्वादिरस्ति; डित्थादीनां प्रकृत्यवस्थाकालभिन्नत्वेन भिन्नत्वाङ्गीकारात्तद्वृत्तिडित्थत्वादिजातिस्वीकारः ।

( ३७ ) **अथेति** । अथाभिधानिरूपणानन्तरम् , लक्षणा उद्देश्यक्रमप्राप्ता निरूप्यत इति शेषः ।

**मुख्यार्थबाधे तद्युक्तो ययाऽन्योर्थः प्रतीयते ।**
**रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता ॥ ५ ॥ (३८)**

"कलिङ्गः साहसिकः" इत्यादौ कलिङ्गशब्दो देशविशेषादिरूपे स्वार्थे असम्भवन् यया शब्दस्य शक्त्या स्वसंयुक्तान् पुरुषादीन् प्रत्या-

( ३८ ) **मुख्यार्थेति** । मुख्यार्थस्य अभिधेयार्थस्य बाधे अन्वयानुपपत्तिग्रहे ताद्रूप्येण तात्पर्य्याविषयत्वे वा सति, रूढेरनादिवृद्धव्यवहारप्रसिद्धेः प्रयोजनादुद्देश्य-विशेषाद्वा, यया शक्त्या, तद्युक्तः तेन मुख्यार्थेन येन केनचित् प्रतीतेन सम्बन्धेन सम्बद्धः, अन्यः मुख्यार्थतावच्छेदकातिरिक्तधर्म्मावच्छिन्नोऽर्थः, प्रतीयते बुध्यते, असौ सा, अर्पिता आरोपिता, मुख्यार्थव्यवहितलक्ष्यार्थविषयकत्वादर्वाचीनैः शब्देषु कल्पितेत्यर्थः, शक्तिः वृत्तिः, लक्षणा लक्ष्यतेऽनयेति तथोक्ता, उच्यते इति शेषः । अत्र सूत्रे "यया-ऽन्योऽर्थः प्रतीयतेऽसौ लक्षणा"—इति लक्षणाया लक्षणम् । मुख्यार्थबाधः मुख्यार्थ-योगः रूढिप्रयोजनान्यतरच्चेति त्रयं लक्षणाया हेतुः । आद्ययोर्दण्डचक्रादिन्यायेन मिलितयोरेव कारणत्वम्, रूढिप्रयोजनयोस्तु तृणारणिमणिन्यायेन प्रत्येकमेव कार-णत्वम् । मुख्यार्थबाध इत्यनुक्तौ "राजत्युमावल्लभः" इत्यादौ वक्ष्यमाणे व्यञ्जना-वृत्तिमात्रबोध्ये गौरीवल्लभरूपान्यार्थे मुख्यार्थेन सह सादृश्याख्यसम्बन्धेन सम्बद्धत्वात् राज्ञः शङ्करवदसाधारणत्वप्रतिपादनरूपप्रयोजनसत्त्वाच्च तत्रातिव्याप्तिः स्यात्; अतस्त-द्वारणाय "मुख्यार्थबाध" इत्युक्तम् । तस्मिंश्च सति "राजत्युमावल्लभ" इत्यादौ मुख्या-र्थस्य बाधाभावान्नातिव्याप्तिः । "तद्युक्त" इत्यनुक्तौ "वेदानध्यापयामास मूषिको बुद्धि-मत्तरः" इत्यादौ मुख्यार्थान्वयानुपपत्तिग्रहसत्त्वात् मूषिकस्यालौकिकशक्तिसम्पन्नत्वरूप-प्रयोजनसद्भावाच्च लक्षणया मूषिकपदेन बृहस्पत्यादिरूपान्यार्थप्रतीतावतिव्याप्तिः स्यात्; अतस्तद्वारणाय "तद्युक्त" इत्युक्तम् । तस्मिंश्च सति "वेदानध्यापयामास मूषिक" इत्यादौ मुख्यार्थमूषिकेन सह बृहस्पतेः केनचित् प्रतीतेन सम्बन्धेन सम्बन्धित्वाभा-वान्नातिव्याप्तिः । "अन्योऽर्थ" इत्यत्र मुख्यार्थभिन्नोऽर्थः" इत्यर्थस्तु न समीचीनः, यतस्तादृशार्थकरणे तु "कदली-कदली" इत्यादौ द्वितीयकदलीपदेन जाड्यादिगुणविशिष्ट-कदलीबोधनेऽपि तत्र कदलीप्रतियोगिकभेदाभावादव्याप्तिः स्यात् । अतस्तादृशाव्याप्ति-वारणाय तत्र शक्यतावच्छेदकातिरिक्तधर्म्मावच्छिन्नत्वरूपोऽर्थः स्वीकरणीयः । तथा सति तत्र शक्यतावच्छेदकधर्म्मः कदलीत्वं तदतिरिक्तधर्म्मो जाड्यादिस्तदवच्छिन्नार्थ-बोधकत्वान्नाव्याप्तिः । एवं "पण्डितकवयः कवयो ह्यन्ये कवयस्तु केवलं कवयः" इत्यादावपि द्वितीयकविपदस्य काव्यजन्यलाभपूजाख्यात्यादिभागित्वेन कवेरेवोपस्था-नेऽपि लक्षणा संगच्छते । एवञ्च सामान्यशब्दस्य विशेषपरत्वेऽपि लक्षणा सम्भवति शक्यतावच्छेदकघटितविशिष्टधर्म्मस्यापि शक्यतावच्छेदकातिरिक्तत्वस्वीकारात् । यथा "त्वामस्मि वच्मी" त्यादौ ।

यति, यथा च "गङ्गायां घोषः" इत्यादौ गङ्गादिशब्दो जलमयादिरूपार्थवाचकत्वात् प्रकृते असम्भवन् स्वस्य सामीप्यादिसम्बन्धसम्बन्धिनं तटादिं बोधयति, सा शब्दस्यार्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा शक्तिर्लक्षणा नाम। (३९)

पूर्वत्र हेतू रूढिः प्रसिद्धिरेव। उत्तरत्र गङ्गातटे घोष इति प्रतिपादनादलभ्यस्य शीतत्वपावनत्वातिशयस्य बोधनरूपं प्रयोजनम्। (४०)

( ३९ ) उदाहरणप्रदर्शनपूर्वकं कारिकार्थं वृत्त्या विशदयति—**कलिङ्ग इति।** कलिङ्गो देशविशेषः, जगन्नाथपुरीतः पूर्वभागवर्ती कृष्णनदीतीरत उत्तरभागवर्ती प्रसिद्धो देशः, सम्प्रति उत्कलप्रदेशान्तर्भुक्तः "गञ्जाम्" नाम्ना ख्यातः, इदमेव ग्रन्थकर्तुर्निवासस्थानम्, "कलिङ्गराजसचिव" इति स्वयमेव नाम्नि विशेषितत्वात्। तदुक्तं— "जगन्नाथात् पूर्वभागे कृष्णातीरान्तरे शिवे, कलिङ्गदेश" इति। साहसिको दुष्करकर्म्मकारी "साहसं तु दमे दुष्करकर्म्मणि" इति हैमः, इत्यादौ इत्यादिप्रयोगे, आदिना "वङ्गो भीरुः" "वेदान्तो मोक्षनिश्रेणि" रित्यादि ग्रहणमिति–रुचिराग्रन्थः। कलिङ्गादिशब्द इति। आदिना वङ्गादीनां ग्रहणम्। मुख्यार्थबाधं दर्शयितुमाह—देशविशेषादिरूप इति। आदिना शास्त्रविशेषादीनां ग्रहणम्। स्वार्थेऽभिधेयार्थे असम्भवन् देशविशेषादिरूपार्थस्याचेतनतया साहसिकाद्यर्थेनान्वयानुपपत्त्या तात्पर्य्यानुपपत्त्या वानुपपद्यमानप्रयोगः सन्नित्यर्थः। मुख्यार्थसम्बन्धं दर्शयितुमाह–**स्वसंयुक्तानिति।** स्वेनाभिधेयार्थेन संयुक्तान् संयोगसंबन्धेन सम्बद्धान्। **पुरुषादीनिति।** आदिना तल्लक्ष्यब्रह्मसाक्षात्कारादीनां ग्रहणम्। यथा च शब्दस्य शक्या। मुख्यार्थबाधं दर्शयति–**प्रकृत इति।** प्रकृते स्वाभिधेयेऽर्थे। असम्भवन् जलमयाद्यर्थस्य घोषाद्यर्थेन सहान्वयानुपपत्त्या तात्पर्य्यानुपपत्त्या वानुपपद्यमानप्रयोगः सन्नित्यर्थः। मुख्यार्थसम्बन्धं दर्शयितुमाह– **स्वस्येति।** स्वस्याभिधेयार्थस्य जलमयादेः। **सामीप्यादीति।** आदिना संयोगसंबन्धस्य ग्रहणम्। भट्टमतमाश्रित्याह–**स्वभाविकेतरेति।** तन्मते स्वाभाविकः शब्दव्यापारोऽभिधा तेरीश्वरानङ्गीकारात्। तथाच शब्दस्य स्वाभाविकव्यापारादन्येत्यर्थः। नैयायिकमतमाश्रित्याह—**ईश्वरानुद्भावितेति।** एतन्मते "अस्माच्छब्दादयमर्थो बोद्धव्य" इतीश्वरेच्छाविषयत्वं शक्तिः। तथाच ईश्वरेणानुद्भाविता=अनुत्थापिता इदानींतनवक्तृभिरुत्थापितेत्यर्थः।

(४०) लक्षणाया रूढिहेतुकत्वं प्रयोजनहेतुकत्वं च परिचाययति—**पूर्वत्रेत्यादि।** पूर्वत्र कलिङ्गः साहसिक इत्यत्र। प्रसिद्धिरनादिवृद्धव्यवहारसिद्धिरेव न तु प्रयोजनमित्यर्थः। उत्तरत्र गङ्गायां घोष इत्यत्र। "गङ्गातटे घोष" इति प्रतिपादनात् लक्षणया गङ्गाशब्देन गङ्गातटमात्ररूपार्थबोधनात्। अलभ्यस्य शक्तिलक्षणाभ्यामप्रतिपाद्यस्य, शाब्दबोधाविषयीभूतस्येत्यर्थः। बोधनरूपं तीरवृत्तित्वेन शीतत्वपावनत्वातिशयस्य

**हेतुं विनापि यस्य कस्यचित् सम्बन्धिनो लक्षणेऽतिप्रसङ्गः स्यादित्यत उक्तं—"रूढेः प्रयोजनाद्वासौ" इति । (४१)**

**केचित्तु "कर्म्मणि कुशलः" इति रूढावुदाहरन्ति । तेषामयमभिप्रायः—"कुशं लाति" इति व्युत्पत्तिलभ्यः कुशग्राहिरूपो मुख्योऽर्थः प्रकृते असम्भवन् विवेचकत्वादिसाधर्म्यसम्बन्धसम्बन्धिनं दक्षरूपमर्थं बोधयति । (४२)**

---

ज्ञानमित्यर्थः । प्रयोजनं फलम् । तच्च व्यञ्जनावृत्तिमात्रप्रतिपाद्यमिति बोध्यम् । तथा च तीरस्य विप्रकृष्टांशगतशीतत्वाद्यपेक्षया सन्निकृष्टांशगतशीतत्वादेराधिक्यमत्रातिशयः । एवञ्चातिशीतेऽतिपावने तीरे घोष इति व्यञ्जनावृत्तिजन्यबोधो लक्षणायाः प्रयोजनमिति भावः ।

( ४१ ) ननु रूढिं वा प्रयोजनं वा विनापि लक्षणाकरणे को दोष इत्यत आह—**हेतुमिति** । हेतुं विनापि रूढिं प्रयोजनं वा विनापि । सम्बन्धिनो मुख्यार्थेन सह सम्बन्धवतः । लक्षणे लक्षणया बोधने । अतिप्रसङ्गोऽतिव्याप्तिः । तथा च रूढिं वा प्रयोजनं वा विनापि लक्षणास्वीकारे "कमले चरणाघातं मुखं सुमुखि तेऽकरोत्" इत्यत्र रूढिप्रयोजनयोरभावेऽपि चरणाघातपदेन लक्षणया निर्जितत्वबोधनादतिव्याप्तिः स्यादिति भावः । अत एव एषा नेयार्थलक्षणा दोषतया वक्ष्यते । सा च कविप्रयोगानर्हत्वात् प्रकृतलक्षणस्य लक्ष्या नैव भवतीति बोध्यम् ।

( ४२ ) रूढशब्दस्यापि यौगिकार्थमेव मुख्यार्थं मत्वा प्रयोगे तस्यान्वयानुपपत्त्या लक्षणामङ्गीकुर्वतां मम्मटाचार्य्यप्रभृतीनां मतं दूषयितुमाह—**केचिदिति** । कर्म्मणि चित्रकर्म्मणीत्यर्थः । न तु कुशनिष्पाद्ये यागकर्म्मणि, तथा सति तत्र तन्मतसिद्धकुशग्राहिरूपयौगिकमुख्यार्थस्यान्वयानुपपत्तिविरहाल्लक्षणैव न स्यात् । तन्मतेन लक्षणामुपपादयितुमाह--**तेषामित्यादि** । कुशं दर्भं लाति गृह्णाति । व्युत्पत्तिः प्रकृतिप्रत्ययविभागकल्पना तया लभ्यः प्रतिपाद्यः । तथा च कुशलपदस्य कुशोपपदात् 'लादाने' इति ग्रहणार्थकलाधातोः "आतोऽनुपसर्गे कः" इति कप्रत्ययेन सिद्धेः कुशग्राहिण्येव शक्तिरिति स एवार्थो मुख्यार्थ इति भावः । प्रकृते चित्रकर्म्मान्वये । असम्भवन् योग्यतामलभमानः । पदार्थस्यान्वयानुपपत्तिप्रतिसंधानद्वारा लक्षणयामुपयोगित्वमित्यभिप्रायेणेदम् । लक्ष्यार्थे मुख्यार्थयोगं दर्शयितुमाह—**विवेचकत्वादीति** । विवेचकत्वादि साधर्म्यमेव सम्बन्धस्तेन सम्बन्धिनं सम्बन्धवन्तमित्यर्थः । दक्षरूपं चतुररूपम् । बोधयति लक्षणयेति शेषः । सा च रूढिहेतुका । अत एव तत्रैवं काव्यप्रकाशव्याख्यातारो व्याचख्युः— कुशान् दर्भान् लाति आदत्त इति व्युत्पत्त्या कुशलपदं कुशग्राहिणि शक्तम्, दक्षे तु रूढ्या लाक्षणिकमिति । न च मुख्यार्थबाधाप्रतिसन्धानेऽपि झटिति दक्षबोधाच्छक्तिरेव, अन्यथा मण्डपादिपदस्यापि गृहादौ शक्त्यभावप्रसङ्ग इति वाच्यम्, क्लृप्ता-

**तदन्ये न मन्यन्ते, कुशग्राहिरूपार्थस्य व्युत्पत्तिलभ्यत्वेऽपि दक्षरूपस्यैव मुख्यार्थत्वात् (४३)। अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तम्, अन्यच्च प्रवृत्तिनिमित्तम्। व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे "गौः शेते" इत्यत्रापि लक्षणा स्यात्। "गमेर्डोः" इति गम्धातोर्डो प्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि प्रयोगात् (४४)।**

वयवशक्तिकस्यान्यत्र लक्षणयैवोपपत्तावतिरिक्तशक्तिकल्पनाया अन्याय्यत्वात्, मण्डपादिपदस्यापि गृहादौ निरूढलक्षणाङ्गीकारात्। नचैवं पङ्कजादिष्वप्येवमापत्तौ योगरूढिविलोपापत्तिरिति वाच्यम्, तत्र योगार्थविशिष्टरूढ्यर्थस्यैव नियमत उपस्थित्या रूढिकल्पनेन वैषम्यात्। मुख्यार्थबाधप्रतिसन्धानमपि व्युत्पन्नानामस्त्येव, कदाचिच्छक्तिभ्रमाद्बोधे तदभावेऽपि न क्षतिः—इति प्रकाशप्रभायां स्पष्टम्।

(४३) सम्प्रति तेषां मतं खण्डयति—**तदन्य इति**। इदं स्वस्यापि मतम्। अन्ये अस्मदादयः। तत् 'कर्म्मणि कुशल' इति रूढ्युदाहरणम्। न मन्यन्ते नाङ्गीकुर्वन्ति। कुत इत्यपेक्षायामाह—**कुशेत्यादि**। व्युत्पत्तिलभ्यत्वेऽपि प्रकृतिप्रत्ययविभागकल्पनालभ्यत्वेऽपि। दक्षरूपस्यैव न तु कुशग्राहिरूपस्यार्थस्येत्यर्थः। मुख्यार्थत्वात् मुख्यार्थत्वावधारणात्। तथा च प्रकृते मुख्यार्थस्य बाधविरहितत्वाल्लक्षणाप्रसक्तिरेव नास्तीत्याशयः।

(४४) व्युत्पत्तिलभ्यार्थस्य मुख्यार्थत्वाङ्गीकारे आपत्तिं दर्शयति—**अन्यद्धीति**। हि यस्मात्। व्युत्पत्तिलभ्यार्थप्रतीतौ प्रकारीभूतो धर्म्मो व्युत्पत्तिनिमित्तम्। यथा गोशब्दस्य गमनकर्तृत्वम्। संकेतग्रहे प्रकारीभूतो धर्म्मः प्रवृत्तिनिमित्तम्। यथा गोशब्दस्य गोत्वजातिः। एतदुभयं परस्परमत्यन्तमेव भिन्नम्। एतत्सूचनायैवोभयत्राप्यन्यशब्दप्रयोगः। तथा च तादृशप्रकारीभूतधर्म्मयोरत्यन्तभेदात्तादृशार्थयोरप्यत्यन्तभेदः। प्रकृते तु कुशग्राहित्वरूपस्य व्युत्पत्तिनिमित्तत्वेऽपि "कृती कुशल" इति कोषात् दक्षत्वेनैव संकेतग्रह इति दक्षरूप एवार्थो मुख्यार्थः। ननु कोषवत् व्युत्पत्त्याधायकव्याकरणस्यापि संकेतग्राहकत्वात् कुशलशब्दस्य कुशग्राहिरूप एवार्थो मुख्यार्थोऽस्तु ? इत्यत्राह—**व्युत्पत्तीति**। व्युत्पत्तिलभ्यस्य व्याकरणात् प्रकृतिप्रत्ययविभागकल्पनालभ्यस्य, मुख्यार्थत्वे मुख्यार्थत्वाङ्गीकारे। आपत्तिविषयीभूतलक्षणाया अन्यतरहेतुभूतं मुख्यार्थबाधं प्रतिपादयति—**गमेर्डोरिति**। इदं पाणिनीयव्याकरणोणादिसूत्रम्। शयनकालेऽपि गमनकले इवेति शेषः। तथा च शयनकाले गमनकर्तृत्वरूपमुख्यार्थबाध इति तत्र लक्षणा स्यादिति भावः। यदि पुनरुणादिप्रत्ययानां व्युत्पत्तेः प्रायिकत्वमुपगम्यते तदा "निषङ्गे सायकाः सन्ति" इत्यत्र लक्षणापत्तिरूपदोषो द्रष्टव्यः, 'षो' अन्तकर्म्मणि' इत्यस्माण्ण्वुल्प्रत्ययनिष्पन्नस्य सायकशब्दस्य विनाशाभावकालेऽपि प्रयोगात्। न चात्रापि लक्षणायामिष्टापत्तिरिति वाच्यम्, 'वृक्षः फलती' त्यादावपि च्छेदनार्थकव्रश्चधा-

तद्भेदानाह—(४५)

**मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये ।**
**स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा ॥६॥ (४६)**

तोः कर्त्तरि सन्प्रत्ययाल्लक्षणाप्रसङ्गेन प्रायसः सर्वत्र लक्षणाप्रसङ्गात् । किञ्च तस्या अभिधातोऽपि प्रबलत्वापत्तेः । ननु रूढिवद् व्युत्पत्तिरपि पदार्थोपस्थापिकेति रूढिविषयस्येव व्युत्पत्तिविषयस्यापि विनिगमनाभावान्मुख्यत्वमास्तामिति चेत्, न, रूढया प्रतिरुद्धाया व्युत्पत्तेः पदार्थोपस्थापकत्वाभावात् । तदुक्तं भट्टैः—"लब्धात्मिका सती रूढिर्भवेद्योगापहारिणी । कल्पनीया तु लभते नात्मानं योगबाधतः ।" इति । अयमर्थः–लब्धात्मिका = जनितपदार्थोपस्थितिका कोषपरम्पराप्रसिद्धा, सती = अनादिसिद्धा, योगापहारिणी=व्युत्पत्तिलभ्यार्थप्रतीतिप्रतिबन्धिका, कल्पनीया = लाघवाप्रतिसंधातृभिरिदानींतनैरुद्भावनीया । आत्मानं पदार्थोपस्थितम्, न लभते=न जनयति । योगबाधतः = योगेन बाधनात् । रूढेस्तस्याः पदार्थोपस्थापकत्वस्य च कल्पनामुपेक्ष्य क्लृप्तयोगस्यैव पदार्थोपस्थापकत्वमात्रं कल्प्यत इति । यत्र तु रूढयर्थो न प्रतीयते तत्र पाचकशब्दादौ व्युत्पत्तिलभ्यार्थ एव व्याकरणानुसारेण मुख्योऽर्थः ।

( ४५ ) अर्थान्तरसंक्रमितवाच्यध्वन्यादिव्यवस्थार्थं लक्षणाया भेदान् दर्शयितुमारभते—**तद्भेदानिति** । तस्याः सामान्यतो निरूपितायाः लक्षणायाः, भेदान् अन्तर्गतविशेषान्, आह निरूपयति । मुख्यार्थेत्यादिनेति शेषः ।

( ४६ ) आदौ तत्रोपादानलक्षणाया लक्षणमाह—**मुख्यार्थस्येति** । अत्र ययेत्यध्याहार्य्यम् । वाक्यार्थे समभिव्याहृतपदार्थे विषये, मुख्यार्थस्य अभिधेयार्थस्य, अन्वयसिद्धये अन्वयबोधविषयत्वसिद्धये, यया शक्त्या, इतरस्य मुख्यार्थतावच्छेदकातिरिक्तधर्म्मावच्छिन्नार्थस्य आक्षेपो मुख्यार्थवैशिष्ट्येनैवोपस्थापनं स्यात् । एषा सा, आत्मनोऽपि मुख्यार्थस्यापि, अपिना मुख्यार्थेतरार्थस्यापि ग्रहणम्, उपादानात् प्रत्यायनाद्धेतोः उपादानलक्षणेत्युच्यते । मुख्यार्थविषयिणी प्रतीतिरुपादानम्, तद्धेतुर्लक्षणा उपादानलक्षणा । यद्वा उपादीयते स्वार्थो गृह्यतेऽनेनेत्युपादानं तन्नाम्नी लक्षणा उपादानलक्षणा । ईदृशं नाम प्रति आत्मनोऽप्युपादानादिति हेतुरुक्तः । तथा च मुख्यार्थविशिष्टतदितरार्थबोधकशब्दत्वमित्युपादानलक्षणाया लक्षणं फलितम् । अत्र लक्ष्यार्थः क्वचिन्मुख्यार्थ एव, क्वचिन्मुख्यार्थविशिष्टो मुख्यार्थभिन्न एव, क्वचिन्मुख्यार्थस्तद्भिन्नश्चेत्युभयम् । आद्यो यथा—'कदली कदली' त्यादि । अत्र द्वितीयकदल्यादिशब्दस्य शैत्यादिधर्म्मपुरस्कारेण कदल्याद्यर्थ एव लक्ष्यार्थः । द्वितीयो यथा—'कुन्ताः प्रविशन्ति' इत्यादि । अत्राचेतनस्य कुन्तादिपदार्थस्य प्रवेशासम्भवात् स्वविशिष्टः पुरुषरूपः स्वेतरार्थ एव लक्ष्यार्थः । तृतीयो यथा—'एते राजकुमारा गच्छन्ति' इत्या-

**रूढावुपादानलक्षणा यथा—श्वेतो धावति । प्रयोजने यथा—कुन्ताः प्रविशन्ति । अनयोर्हि श्वेतादिभिः कुन्तादिभिश्च अचेतनतया केवलैर्धावनप्रवेशनक्रिययोः कर्तृतयाऽन्वयमलभमानैरेतत्सिद्धये आत्मसम्बन्धिनोऽश्वादयः पुरुषादयश्चाक्षिप्यन्ते (४७) पूर्वत्र प्रयोजनाभावात्**

दि । अत्र यानक्रियायाः कर्तृत्वोपपत्त्या राजकुमाररूपोऽर्थः । तावन्मात्राभिधाने तात्पर्य्याभावेन तद्भिन्नार्थश्चेत्युभयरूपोऽर्थो लक्ष्यार्थः । इह चाभिधाजन्यमुख्यार्थोपस्थितेरन्वयानुपपत्तिग्रहाद्युपक्षिणत्वेन तदुपस्थितये पुनर्लक्षणापेक्षेत्यवगन्तव्यम् । एवमपि 'काकेभ्यो रक्षतामन्नम्' 'छत्रिणो यान्ति' इत्यादिस्थलेषु लक्ष्यार्थोऽध्यवसेयः । ननु 'काकेभ्यो रक्ष्यतामन्नम्' 'छत्रिणो यान्ति' 'एते राजकुमारा गच्छन्ति' इत्यादौ मुख्यार्थबाधाभावेन लक्षणायाः सामान्यलक्षणमेव न लक्ष्यघटकं ; किं पुनरुपादानलक्षणाया इति चेत्, न, प्रयोक्तुस्तात्पर्य्यानुपपत्तावेव मुख्यार्थबाधस्य सुसम्भवात् । तथा चोपघातकेभ्योऽन्नं रक्षणीयमित्यभिप्रायेणैव वक्त्रा काकेभ्यो रक्ष्यतामन्नमिति वाक्यं प्रयुक्तम्, तथा छत्र्यच्छत्रिसामान्यगमनाभिप्रायेणैव वक्त्रा 'छत्रिणो यान्ति' इति प्रयुक्तम्, एवमन्यत्राप्यूहनीयम् । तस्मादेतादृशतात्पर्य्यानुपपत्तावेव मुख्यार्थबाधाल्लक्षणाऽत्र लक्ष्यग्राहिणीति सर्वमवदातम् । यथाऽऽहुर्भट्टाः—"काकेभ्यो रक्ष्यतामन्नमिति बालोपदेशतः । उपघातप्रधानत्वात् किं श्वादिभ्यो न रक्ष्यते" इति । किं च "गङ्गायां घोष" इत्यादौ गङ्गापदस्यैव तीरे लक्षणा न पुनर्घोषपदस्य मत्स्ये, तत्रैव वक्तृतात्पर्य्यनिर्णयात् । शाब्दबोधे तात्पर्य्यज्ञानमेव कारणम् । केचित्तु प्रकरणज्ञानमेव शाब्दबोधनिरूपकमिति वदन्तीत्यन्यदेतत् । विस्तरस्तु विवृतावबगन्तव्यः ।

( ४७ ) उपादानलक्षणाया रूढिमूलकत्वेन प्रयोजनमूलकत्वेन च द्वैविध्यात् क्रमेण तल्लक्ष्यं दर्शयति—**रूढाविति । प्रयोजन इति** । उदाहरणयोर्लक्षणं योजयितुमाह—**अनयोरिति**। हि तथाहि अनयोर्द्विविधयोरुदाहरणयोः । अचेतनतयेति अन्वयमलभमानैरित्यनेन सम्बध्यते। अचेतनतया जडतया । केवलैश्चेतननिरपेक्षैः । अन्वयमलभमानैः चेतनान्वययोग्याभ्यां धावनप्रवेशनक्रियाभ्यां सह सम्बन्धमलभमानैः । एतेन मुख्यार्थबाधो दर्शितः । एतत्सिद्धये धावनप्रवेशनकर्त्तृत्वान्वयसिद्धये । आत्मसम्बन्धिनो यथाक्रमं समवायसंयोगाभ्यां श्वेतगुणकुन्तास्त्रसम्बन्धिनः । एतेन मुख्यार्थसम्बन्धो दर्शितः । आक्षिप्यन्ते लक्षणया प्रत्याय्यन्ते । श्वेतादिशब्दानां गुणशक्तिवादिनां मते एव लक्षणा; गुणिशक्तिवादिनां तु मते न सा संभवतीत्यवधेयम् । यत्तु केनचिदुक्तम्—अत्र 'श्वेतो धावति' इत्युदाहरणं चिन्त्यम्, धावनानुकूलकृतिरूपस्य धावनकर्त्तृत्वस्याश्वसम्बन्धेनापि श्वेतगुणेऽन्वयासम्भवात् । न च 'कुन्ताः प्रविशन्ति' इत्यादौ यथा कुन्तस्याचेतनस्यापि पुरुषसम्बन्धेन प्रवेशनकर्त्तृत्वमुपचर्य्यते तथात्रापि अचेनतस्य धावनकर्त्तृत्वमौपचारिकमिति वाच्यम्, कुन्तस्य पुरुषसम्बन्धोत्पन्न-

रूढिः। उत्तरत्र तु कुन्तादीनामतिगहनत्वं प्रयोजनम् (४८)। अत्र च मुख्यार्थस्यात्मनोऽप्युपादानम्, लक्षणलक्षणायान्तु परस्यैवोपलक्षणमित्यनयोर्भेदः (४९)। इयमेव "अजहत्स्वार्था" इत्युच्यते (५०)।

**अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये।**
**उपलक्षणहेतुत्वादेषा लक्षणलक्षणा॥ ७॥ (५१)**

---

क्रियासम्बन्धेनैव कर्त्तृत्वोपचारात्। प्रकृते तु श्वेतगुणस्याश्वसम्बन्धेनापि क्रियासम्बन्धासंभवादिति। अत्र ब्रूमः। 'श्वेतो धावति' इत्यत्र धावनक्रियायां श्वेतगुणस्यापि सामानाधिकरण्यसम्बन्धेनैवान्वयसिद्धेः सुष्ठूक्तमिदमुदाहरणमिति।

(४८) पूर्वोदाहरणे लक्षणाया रूढिमूलकत्वं प्रयोजनमूलकत्वपरिहारेण दर्शयति- **पूर्वत्रेति**। पूर्वत्र श्वेतो धावतीत्यत्र। प्रयोजनाभावात् प्रसिद्धिमात्रमूलकत्वादिति शेषः। अत्र तु सम्भाव्यमानप्रयोजनाभावमात्रज्ञापनार्थैव पुनर्वचनम्। उत्तरत्र प्रयोजनस्वरूपं दर्शयति—**उत्तरत्रेति**। उत्तरत्र कुन्ताः प्रविशन्तीत्यत्र। अतिगहनत्वम् अतिनिविडत्वम्। किञ्चात्र कुन्तगततैक्ष्ण्यस्य कुन्तगतबाहुल्यस्य वा पुरुषेषु प्रतीतिरपि प्रयोजनम्। अत्रापि प्रयोजनसारूप्यमात्रप्रदर्शनार्थैव पुनर्वचनम्।

(४९) उपादानलक्षणालक्षणलक्षणयोः परस्परं भेदं दर्शयितुमाह-**अत्र चेति**। अत्र उपादानलक्षणायाम्। आत्मनः स्वस्य, अपिना स्वेतरार्थस्यापि ग्रहणम्। उपादानं प्रत्यायनम्। परस्य मुख्यार्थभिन्नार्थस्य, एवकारेण मुख्यार्थस्य व्यवच्छेदः, न तु मुख्यार्थस्येत्यर्थः। उपलक्षणं लक्षणयोपस्थापनम्। तथा च उपादानलक्षणायां मुख्यार्थस्य स्वेतरार्थस्य चोभयोर्भानं लक्षणलक्षणायां तु मुख्यार्थभिन्नार्थस्यैवेत्यनयोर्भेदो दर्शितः।

(५०) उपादानलक्षणायाः पर्य्यायान्तरं दर्शयति—**इयमिति**। इयम् उपादानलक्षणैव, अजहत्स्वार्था=अजहत् अत्यजन् स्वार्थो यां सा तथोक्ता। आरूढवानर इत्यादिवद्द्वितीयान्तान्यपदार्थको बहुव्रीहिः। उच्यते परैरिति शेषः।

(५१) लक्षणलक्षणामाह—**अर्पणमिति**। अत्रापि ययेत्यनुषज्यते। वाक्यार्थे समभिव्याहृतपदार्थे, परस्य मुख्यार्थभिन्नार्थस्य, अन्वयसिद्धये अन्वयबोधविषयत्वसिद्धये, यया शक्त्या, स्वस्य मुख्यार्थस्य, अर्पणं त्यागो भवेदिति शेषः, स्वान्वयिन्यन्वयित्वमुपलक्षणत्वम्, स्वं लक्षणीयम्, उपलक्षणपदञ्च भावसाधनमवगन्तव्यम्, तस्य हेतुत्वात् स्वार्थत्यागप्रयोजकतया कारणत्वादित्यर्थः, एषा सा लक्षणलक्षणा उच्यत इति शेषः। तथा च लक्षणे तादृशोपलक्षणत्वविषये लक्षणा लक्षणलक्षणा, एवञ्च अन्यार्थमात्रप्रतिपादकशक्तित्वं लक्षणलक्षणात्वमिति तल्लक्षणम्। गङ्गायां घोष इत्यादौ लक्षणीयतटाद्यन्वयिनि घोषादौ गङ्गादेरनन्वयित्वेनोपलक्षणत्वात् लक्षणलक्षणात्वम्। श्वेतो धावतीत्यादौ तु लक्षणीयाश्वान्वयिनि धावनक्रियादौ श्वेतादीनां सामानाधिक-

**रूढिप्रयोजनयोर्लक्षणलक्षणा यथा—कलिङ्गः साहसिकः, गङ्गायां घोष इति च (५२)। अनयोर्हि पुरुषतटयोर्वाक्यार्थे अन्वयसिद्धये कलिङ्गगङ्गाशब्दावात्मानमर्पयतः (५३)। यथा वा—**

**"उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्।**
**विदधदीदृशमेव सदा सखे! सुखितमास्स्व ततः शरदां शतम्॥" (५४)**

रण्येनान्वयित्वेनोपलक्षणत्वाभावात् न लक्षणलक्षणात्वम्, किन्तूपादानलक्षणात्वव्यवहारः । विवृतिकृतस्तु—वाक्यार्थान्वयिमुख्यार्थामिश्रितमुख्यार्थान्यपदार्थोपस्थितिरुपलक्षणम्। "कुन्ताः प्रविशन्ति" इत्यादावुपादानवारणाय मिश्रितान्तं विशेषणम्। "कलिङ्गः साहसिकः" इत्यादिसंग्रहाय वाक्यार्थान्वयीति मुख्यार्थविशेषणम्। 'उपदिशति कामिनीनां यौवनमद एव ललितानि' इत्यत्रोपदिशतीत्यादौ शिक्षावचनरूपोपदेशेनामिश्रित एवाविष्कारः प्रतीयते। 'कलिङ्गः साहसिकः' इत्यत्र तु देशविशेषरूपमुख्यार्थस्य मिश्रितस्य पुरुषस्य प्रतीतिरस्ति। किन्तु तस्य वाक्यार्थान्वयित्वासम्भवेन विशिष्टमुख्यार्थामिश्रणं सम्भवत्येव—इत्याहुः। केचित्तु—वाक्यार्थान्वयिनो मुख्यार्थस्येतरव्यावृत्तिबोध उपलक्षणम्। 'कलिङ्गः साहसिकः' इत्यादौ वाक्यार्थे साहसादौ अन्वयिनो मुख्यार्थस्य देशविशेषादेः पञ्चालप्रभृतेर्व्यावृत्तिबोधो लक्षणयैव जायते इति वदन्ति, तन्न, "उपदिशति कामिनीनां यौवनमद एव ललितानि" इत्यादौ मुख्यार्थस्येतरव्यावृत्तिबोधनाभावेनाव्याप्त्यापत्तेरिति,—अनयोर्विवृतिकृदुक्तिरेव साधीयसी।

( ५२ ) क्रमेणोदाहरति—**रूढिप्रयोजनयोरिति** । कलिङ्गः साहसिक इति रूढावुदाहरणम्। गङ्गायां घोष इति प्रयोजने उदाहरणं वेदितव्यम्।

( ५३ ) उदाहृतयोर्लक्षणं सङ्गमयति—**अनयोरिति** । हि तथाहि। वाक्यार्थे समभिव्याहृत-साहस-घोषरूपपदार्थे, अन्वयसिद्धये अन्वयबोधविषयत्वसिद्धये। आत्मानमर्पयतः स्वस्वस्वार्थत्यागेन पुरुषतटयोरर्थयोरात्मानं योजयतः; यथायथं पुरुषतटबोधेनोपयोगीकुरुत इति यावत्। एतेन लक्षणलक्षणाहेतुभूतमात्मार्पणं दर्शितम्। मुख्यार्थबाधो मुख्यार्थसम्बन्धश्चेति लक्षणासामान्यस्य हेतुद्वयं पूर्वमेव दर्शितम्।

( ५४ ) उक्तोदाहरणवैशद्येनोदाहरणान्तरं दर्शयितुमाह—**यथेति । उपकृतमिति** । बहुभिरपकारैस्तप्यमानस्य कस्यचिदुक्तिरियम्। भवता बहु प्रचुरम् उपकृतम्, उपकारवैपरीत्येनात्यन्तमेवापकृतमित्याशयः। तथा सुजनता सौजन्यं परमत्यन्तं यथा स्यात्तथा प्रथिता प्रकटिता, सुजनतावैपरीत्येन नितान्तदुर्जनतैव प्रकटितेत्याशयः। तत्र तयोर्विषये किमुच्यते किं वाच्यम्? किमपि वक्तुं न शक्यत इत्यर्थः। हे सखे! ईदृशमेव सदा विदधत् कुर्वत्, ततः बहूपकरण-सुजानताप्रथनाभ्यामित्यर्थः, शरदां वर्षाणां शतं व्याप्य सुखितं सुखयुक्तं यथा स्यात्तथा आस्स्व तिष्ठ, अनुष्ठानानुरूपं दुःखितमेवास्स्वेत्याशयः। अत्र मुख्योऽर्थः प्रकरणादिनोपकारिभावे

**अत्रापकारादीनां वाक्यार्थेऽन्वयसिद्धये उपकृतादयः शब्दा आत्मानमर्पयन्ति । अपकारिणं प्रत्युपकारादिप्रतिपादनान्मुख्यार्थबाधः । वैपरीत्यलक्षणः सम्बन्धः । फलमप्यपकारातिशयः (५५) ।**

**इयमेव "जहत्स्वार्था" इत्युच्यते (५६) ।**

**आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा । (५७)**

---

प्रबाधितो विपरीतं लक्षयति, तद्यथा;—उपकृतम् अपकृतम्, सुजनता दुर्जनता, सखे ! शत्रो !, सुखितं दुःखितमिति । तदुक्तं शब्दव्यापारविचारे—'मूर्खे बृहस्पतिशब्देन मुर्खत्वमिव वक्तृमहिम्ना अपकारिदुर्जनत्वादि अत्र लक्ष्यते' इति ।

( ५५ ) उदाहृते लक्षणं सङ्गमयति—**अत्रेत्यादि** । अपकारादीनामित्यादिपदेन दुर्जनत्वदुःखितत्वयोर्ग्रहणम् । अयं मुख्यार्थभिन्नपदार्थः । वाक्यार्थे स्वसमभिव्याहृतपदार्थे । उपकृतादय इत्यादिपदेन सुजनतासुखितशब्दयोर्ग्रहणम् । आत्मानमर्पयन्ति स्वस्वस्वार्थत्यागेन यथाक्रममपकारदुर्जनतादुःखितार्थेष्वात्मानं नियुञ्जते; तान् बोधयन्तीत्यर्थः । लक्षणाहेतुं मुख्यार्थबाधं दर्शयति—अपकारिणमिति । उपकारादिप्रतिपादनादिति । उपकृतादिपदेनेति शेषः । मुख्यार्थसम्बन्धं दर्शयति—वैपरीत्येनेति । प्रयोजनं दर्शयति—फलमिति । अपकाराद्यतिशयः स्वशब्दाभिधानालभ्यः । फलं प्रयोजनम् ।

( ५६ ) लक्षणलक्षणायाः पर्य्यायान्तरं दर्शयति—**इयमिति** । इयमेव लक्षणलक्षणैव । जहत्स्वार्था जहत् त्यजन् स्वार्थो यां सा तथोक्ता । अत्रापि 'आरूढवानर' इत्यादिवत् द्वितीयान्तान्यपदार्थबहुव्रीहिः । उच्यते अन्यैरिति शेषः । तथाचोक्तं जगदीशभट्टाचार्य्यैः—'जहत्स्वार्थोऽजहत्स्वार्था निरूढाधुनिकादिका । लक्षणा विविधाः प्रोक्ता लक्षणं स्यादनेकधा ॥' इति ।

( ५७ ) उक्तरूपेण चतुर्विधाऽपि लक्षणा प्रत्येकं सारोपासाध्यवसानेत्यष्टविधेत्याह—**आरोपेति** । लक्ष्यार्थस्य पदोपस्थाप्यमुख्यार्थेन सह तादात्म्यप्रतीतिरारोपः । लक्ष्यार्थस्य पदानुपस्थाप्यमुख्यार्थेन सह तादात्म्यप्रतीतिरध्यवसानम् । ताभ्यां करणाभ्याम्, ताश्चतुर्विधा लक्षणाः, प्रत्येकमपि एकैकमपि, द्विधा द्विद्विप्रकाराः भवन्तीति शेषः । एवञ्चाष्टविधा लक्षणा जता इति प्रतिपत्तव्यम् ।

"निगीर्णस्वरूपसामान्यतादात्म्यप्रतीतिरारोपः । विषयनिगरणे भेदप्रतिपत्तिर्विषयिणोऽध्यवसानम्" इति पुत्रः । अत्राहुर्विवृतिकाराः—"आरोपाध्यवसानाभ्यामिति । अत्र विशेषणे तृतीया, तेन सारोपाः साध्यवसानाश्चेति । 'अश्वः श्वेत' इत्यादौ निराकाङ्क्षपदद्वयेन धारावाहिकभेदप्रतीतिरेव जायते न तु लक्षणाजन्यप्रतीतिरिति । तत्प्रतिबन्धकः पदयोः समानविभक्तिकत्वबलेन शक्यलक्षणयोरभेदारोपः कल्पनीय इति भावः । ननु भेदप्रतीत्यनन्तरमभेदारोप आहार्य्य एव सम्भवति, तस्य प्रतिबन्धकत्वं केनापि नाङ्गीक्रियत इति चेत्, न, लाक्षणिकबोधानुरोधेन शुक्लगुणविशिष्ट-

ताः पूर्वोक्ताश्चतुर्भेदलक्षणाः (५८)।
विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत् ॥ ८ ॥
सारोपा स्यान्निगीर्णस्य मता साध्यवसानिका । (५९)
विषयिणा अनिगीर्णस्य विषयस्य तेनैव सह तादात्म्यप्रतीतिकृत्

बोधाभिप्रायबोधसहकृतस्याहार्य्यस्याप्यभेदारोपस्य प्रतिबन्धकत्वकल्पनात् । न च सहकार्य्येव प्रतिबन्धकोऽस्तु किमाहार्य्यस्य प्रतिबन्धकत्वकल्पनेनेति वाच्यम् । आहार्य्या-भावानवगाहित्वेन तस्य प्रतिबन्धकत्वकल्पनाया अन्याय्यत्वात् । वस्तुतस्तु—आहा-र्य्यत्वस्य तत्प्रतिबन्धकत्वस्य च कल्पनामपेक्ष्यावश्याङ्गीकरणीयस्य सहकारिण एव प्रतिबन्धकत्वकल्पने लाघवमस्ति तथापि प्राचीनमतानुसारादेवं व्याख्यातमिति । प्रतीयमानेन लक्ष्यार्थेन शक्यार्थस्याहार्य्यभेदप्रतीतिरध्यवसानम् । लक्षणाजन्यपदा-र्थोपस्थितेः प्राक्काले तादृशारोपाध्यवसानयोः सत्त्वाल्लक्षणायास्तद्वैशिष्टयमवगन्तव्यं फलपरिच्चेयम्” इति ।

( ५८ ) कारिकास्थं 'ता' इति पदार्थं व्याख्यातुमाह—**ता इति** । चतुर्भेदल-क्षणा इति । रूढि-प्रयोजनमूलकत्वाभ्यां उपादानलक्षणाया द्वैविध्यम् , तथैव लक्षण-लक्षणाया अपि द्वैविध्यमिति मिलित्वा चातुर्विध्यम् ।

( ५९ ) एवं शब्दार्थमहिम्ना गतार्थत्वेऽपि स्फुटीकरणाय लक्षणेन निर्दिशति—**विषयस्येति** । अनिगीर्णस्य अतिरस्कृतस्य पदप्रतिपादितस्येत्यर्थः, विषयस्य मुख्या-र्थस्य अन्येन मुख्यार्थतावच्छेदकारिक्तधर्म्मावच्छिन्नेन लक्षणार्थेन समं तादात्म्यप्रती-तिकृत् अभेदबोधकृल्लक्षणा सारोपा = आरोपेण समं वर्त्तत इति तथोक्ता स्यात् । तथा निगीर्णस्य तिरस्कृतस्य पदाप्रतिपादितस्येत्यर्थः विषयस्य मुख्यार्थस्य अन्येन मुख्या-र्थतावच्छेदकातिरिक्तधर्म्मावच्छिन्नेन लक्ष्यार्थेन समं तादात्म्यप्रतीतिकृत् अभेदबोध-कृल्लक्षणा साध्यवसाना अध्यवसानेन समं वर्त्तत इति तथोक्ता स्यात् । तथाच पदोपस्थापितानुपस्थापितमुख्यार्थत्वाभ्यामनयोर्भेदः । एवञ्च पदोपस्थाप्यमुख्यार्थ-लक्ष्यार्थयोस्तादात्म्यबोधजनकत्वं सारोपात्वम् , पादानुपस्थाप्यमुख्यार्थ-लक्ष्यार्थयो-स्तादात्म्यबोधजनकत्वं साध्यवसानात्वमिति तयोर्लक्षणे बोध्ये । प्रकाशकारास्तु—आरो-प्यमाणः आरोपविषयश्च यत्रानपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते सा लक्षणा सारोपा, विषयिणा = आरोप्यमाणेनान्तः कृते निगीर्णे अन्यस्मिन्नारोपविषये सति सा-ध्यवसाना स्यादिति स्वकृतकारिकाविवृतौ प्राहुः । तट्टीकाकृतस्तु—यत्र विषयनिष्ठ-साधारणधर्म्मप्रतिपत्तिसहकृताऽन्यस्यान्यतादात्म्यप्रतीतिः सा सारोपा, यत्र विषयनि-ष्ठाऽसाधारणधर्म्मप्रतिपत्त्यसहकृताऽन्यस्यान्यतादात्म्यप्रतीतिः सा साध्यवसानेति टीकयन्ति ।

**सारोपा (६०) । इयमेव रूपकालङ्कारस्य बीजम् (६१) । रूढावुपादानलक्षणा सारोपा यथा—अश्वः श्वेतो धावति (६२) । अत्र हि श्वेतगुणवानश्वोऽनिगीर्णस्वरूपः स्वसमवेतश्वेतगुणतादात्म्येन प्रतीयते (६३) । प्रयोजने यथा—एते कुन्ताः प्रविशन्ति । अत्र सर्वनाम्ना कुन्तधारिपुरुषनिर्देशात् सारोपात्वम् (६४) ।**

( ६० ) कारिकायाः सारोपालक्षणप्रतिपादकं पूर्वदलं व्याकरोति—**विषयिणेत्यादि** । तत्र कारिकायामनिगीर्णस्य इत्यस्य केनानिगीर्णस्येत्याकाङ्क्षायामाह—**विषयिणेति** । विषयिणा लक्ष्यार्थेन, अस्य तु लक्षणाप्रकरणत्वेन लक्षणाया एव बोधविषयत्वात् प्रतिपाद्यत्वसम्बन्धेन लक्ष्यार्थस्यैव लक्षणास्वरूपविषयित्वमिति मन्तव्यम् । अनिगीर्णस्य अतिरोहितस्य, विषयस्य स्वाभाविकशाब्दबोधविषयीभूतस्य मुख्यार्थस्य, तेनैव लक्ष्यार्थेनैव, तादात्म्यप्रतीतिकृत् अभेदबोधकृत् सारोपा लक्षणा। तथा च "अश्वः श्वेतो धावति" इत्यत्र मुख्यार्थस्याश्वस्य साक्षादश्वपदेनैव प्रतिपादितत्वात् तं लक्ष्यार्थो न निगिरति न तिरस्करोति । "श्वेतो धावति" इत्यत्र तु मुख्यार्थस्याश्वस्य पदाप्रतिपादितत्वादेव तं श्वेतगुणविशिष्टरूपो लक्ष्यार्थो निगिरति तिरोदधाति । एवञ्च वाचकपदस्य विद्यमानत्वाविद्यमानत्वाभ्यामेव लक्ष्यार्थेन मुख्यार्थस्य निगीर्णत्वानिगीर्णत्वयोर्व्यवस्थेति बोध्यम् । एवमन्यत्रापि ।

( ६१ ) आलङ्कारिकैर्लक्षणाया ईदृशाभिनवभेदप्रकाशने बीजमाह—**इयमिति** । इयं सारोपालक्षणैव रूपकालङ्कारस्य बीजं निदानम् । एनामुपजीव्य रूपकप्रवृत्तेः । इदमुपलक्षणम् । तेन—साध्यवसाना तु अतिशयोक्तेर्बीजमित्यपि ज्ञेयम् ।

( ६२ ) क्रमेणोदाहरणप्रदर्शनाय क्रमिकभूमिकां दर्शयति—**रूढावित्यादि ।** धावति वेगेन गच्छति ।

( ६३ ) प्रकृतलक्ष्ये प्रकृतलक्षणं सङ्गमयति—**अत्रेति** । हि तथाहि । अनिगीर्णस्वरूपः पदप्रतिपाद्यः अश्वपदेनैवोपस्थापितत्वादिति भावः । स्वसमवेतेति । स्वमश्वस्तस्मिन् समवेतः समवायसम्बन्धेन विद्यमानो यः श्वेतगुणस्तस्य तादात्म्येन प्रतीयते, लक्ष्यार्थप्रतीतेः पूर्वमिति शेषः । समानविभक्तिभिरभेदप्रतीतेर्व्युत्पत्तिसिद्धत्वात् अश्वः श्वेत इत्युभयत्रापि समानप्रथमाविभक्तिनिर्देशात् श्वेतादिशब्दानां गुणे एव शक्तिस्वीकाराच्चेत्याशयः ।

( ६४ ) प्रयोजने उपादानलक्षणायाः सारोपाया उदाहरणं दर्शयितुमाह—**प्रयोजन इति । एते कुन्ता इति ।** विषयस्य सामान्यवाचिना सर्वनाम्ना निर्देशेऽपि विशेषरूपेणानुपस्थितौ साध्यवसाना लक्षणैवेति काव्यप्रकाशकारमतम् । तद्वद्भूतलमिति प्रतीतिसत्त्वे 'घटाभाववद्भूतलम्' इति प्रतीत्यनुदयात् सर्वनाम्नोऽपि विशेषरूपेणोपस्थापकत्वं कल्प्यत इत्यभिप्रायेण पूर्वमतमनङ्गीकृत्य तत्रापि सारोपा

रूढौ लक्षणलक्षणा सारोपा यथा—कालिङ्गः पुरुषो युध्यते । अत्र कलि-ङ्गपुरुषयोराधाराधेयभावः सम्बन्धः । (६५) प्रयोजने यथा—आयु-र्घृतम् । अत्रायुष्कारणमपि घृतं कार्य्यकारणभावसम्बन्धसम्बन्ध्या-युस्तादात्म्येन प्रतीयते । अन्यवैलक्षण्येनाव्यभिचारेणायुष्करत्वं प्रयो-जनम् (६६) ।

यथा वा राजकीये पुरुषे गच्छति "राजासौ गच्छति" इति । अत्र स्वस्वामिभावलक्षणः सम्बन्धः । यथा वा—हस्ताग्रमात्रेऽवयवे "हस्तो ऽयम्" । अत्रावयवावयविभावलक्षणः सम्बन्धः । ब्राह्मणेऽपि "तक्षा-सौ" । अत्र तात्कर्म्यलक्षणः सम्बन्धः । इन्द्रार्थासु स्थूणासु "अमी इन्द्राः" । अत्र तादर्थ्यलक्षणः सम्बन्धः । एवमन्यत्रापि (६७) ।

---

लक्षणेति दर्शयति—**अत्र सर्वनाम्नेति** । सर्वनाम्ना एतच्छब्देन । सारोपात्वं न तु साध्यवसानात्वम् । प्रत्यक्षदशायामिदमेतदादिपदानां वाचकपदसमानोपस्थापकत्वनि-यमेनात्र निगीर्णरूपत्वाभावादिति भावः ।

( ६५ ) **रूढाविति** । अत्रापि पुरुषपदप्रयोगाद् विषयस्यानिगीर्णत्वमस्ति । मुख्यार्थसम्बन्धं दर्शयति—**अत्रेत्यादि** । अचेतन-चेतनरूपयोर्मुख्यार्थयोः सामाना-धिकरण्येनान्वयानुपपत्त्यात्र मुख्यार्थबाधः सुस्पष्ट एव ।

( ६६ ) प्रयोजने लक्षणलक्षणायाः सारोपाया उदाहरणं दर्शयितुमाह—**प्रयोजन इति । आयुर्घृतमिति** । "आयुर्घृतं यशस्त्यागो भयं चौरः सुखं प्रिया । वैरं द्यूतं गुरुर्ज्ञानं श्रेयस्तीर्थनिषेवणम्" इति माणिक्यचन्द्रकृतसङ्केते स्पष्टम् । "आयुर्वै घृतम्" इति वेदेऽपि च दृश्यते । आयुर्दीर्घकालजीवनम्, तच्च कार्य्यम्, घृतं कारणम् । अत्र घृतपदप्रयोगाद् विषयस्यानिगीर्णत्वमस्ति । आयुःपदेनायुष्करत्वमत्र लक्ष्यते । तेना-युरभिन्नं घृतमिति बोधः । अत्र मुख्यार्थबाधं मुख्यार्थसम्बन्धञ्च दर्शयन् लक्ष्यार्थप्र-तीतेः पूर्वभूमिकामाह—**अत्रेति** । आयुष्करणमपि घृतमित्यनेन मुख्यार्थयोरायुर्घृतयोः सामानाधिकरण्येनान्वयबाधो दर्शितः । कार्यकारणभावसम्बन्धेन सम्बन्धि तदभिन्न-सम्बन्धवत् कार्य्यतासम्बन्धवदित्यर्थः यदायुस्तस्य तादात्म्येन अभेदेन प्रतीयते लक्ष-णाकरणात् पूर्वमिति शेषः । एतेन कार्य्यतारूपः सम्बन्धो दर्शितः । लक्षणाया अन्य-तमबीजभूतं प्रयोजनमत्र दर्शयति—**अन्येति** । अन्येभ्यो घृतेतरपदार्थेभ्यो वैलक्षण्येन असामान्येनाधिक्येनेत्यर्थः । अव्यभिचारेण नियतरूपेण वेत्यर्थः । प्रयोजनमिति । अस्य तु व्यञ्जनयैव प्रतीतिः । आयुः पीयत इति मात्रोक्तौ तु विषयस्य निगीर्णत्वं स्यात् । तस्मात्तत्र साध्यवसानेति बोध्यम् ।

( ६७ ) एवं सारोपाया रूढिप्रयोजनयोरुदाहरणचतुष्टयं दर्शयित्वा विषयव्याप्त्यर्थं सम्बन्धभेदेनोदाहरणान्याह—**यथा वेति** । 'राजाऽसौ' इत्यत्र पूर्ववददःशब्देन विष-

**निगीर्णस्य पुनर्विषयस्य अन्यतादात्म्यप्रतीतिकृत् साध्यवसाना (६८)। अस्याश्चतुर्षु भेदेषु पूर्वोदाहरणान्येव (६९) । तदेवमष्टप्रकारा लक्षणा (७०)।**

यप्रकटनम्। राजकर्म्मातिशयपरिच्छदातिशयौ राजवदलङ्घ्यशासनत्वं वा प्रयोजनम् । स्वस्वामिभावलक्षणः स्वत्वस्वामित्वरूपः । पुरुषः स्वं राजा च स्वामी । मुख्यार्थबाधश्च स्पष्ट एव । **अग्रेति ।** अत्र हस्तावयवेऽग्रेऽपि हस्तशब्दप्रयोगः, एकदेशदाहेऽपि ग्रामो दग्ध इतिवत् । अत्रेदंशब्देन राजासावित्यत्रादःशब्दवद् विषयप्रकटनम् । अत्र प्रयोजनाभावाल्लक्षणाबीजं रूढिरेव । हस्तावयवेन हस्तव्यापारं करोतीति बलाधिक्यं प्रयोजनमित्यन्ये । **तक्षासाविति ।** तक्षेति जातिविशेषावच्छिन्ने रूढम् । वार्द्धकिरित्यर्थः । ब्राह्मणेऽपीत्यपिना क्षत्रियादिपरिग्रहः । ब्राह्मणस्य समस्ततक्षकर्म्मणि नैपुण्यमत्र प्रयोजनम् असावित्यनेन विषयप्रकटनम् । तात्कर्म्म्यलक्षणः तत्कर्म्मकारित्वरूपः। **इन्द्रार्थास्विति।** इन्द्रार्थासु इन्द्रपूजार्थं कल्पितास्वित्यर्थः, स्थूणासु स्तम्भेषु। अमी इत्यनेन विषयस्य प्रकटनम्। अत्रेन्द्रवत्पूज्यमानत्वं प्रयोजनम्। तस्मै इदं तदर्थं तदर्थस्य भावस्तादर्थ्यं तत् लक्षणं स्वरूपं यस्य सः, उपकार्य्योपकारकभाव इति यावत् । एतदुदाहरणचतुष्टयमपि सारोपाया एवेति ज्ञातव्यम् । तदेतदुक्तं नागोजीभट्टैरपि—शक्यसम्बन्धो लक्षणा। सा च लक्षणा तात्स्थ्यादिनिमित्तका । तदाह— "तात्स्थ्यात्तथैव ताद्धर्म्म्यात्तत्सामीप्यात्तथैव च । तत्साहचर्य्यात्तादर्थ्याज्ज्ञेया वै लक्षणा बुधैः ॥" इति ।

( ६८ ) 'निगीर्णस्य मता साध्यवसानिका' इति कारिकादलं विवृणोति—**निगीर्णस्येति ।** निगीर्णस्य तिरोहितस्य पदं विनैवाक्षेपादिना प्रतीयमानस्येत्यर्थः, विषयस्य मुख्यार्थस्य । अन्येन मुख्यार्थतावच्छेदकातिरिक्तधर्म्मावच्छिन्नेन लक्ष्यार्थ्येनेत्यर्थः सह तादात्म्यप्रतीतिकृत् अभेदबोधकृल्लक्षणा साध्यवसाना । इदन्तु कारिकाव्याख्यानावसरे व्याख्यातमिति तत्र द्रष्टव्यम् ।

( ६९ ) लक्ष्यं दर्शयति—**अस्या इति ।** अस्याः साध्यवसानायाः । पूर्वोदाहरणान्येवेति । रूढौ उपादानलक्षणा साध्यवसाना यथा—'श्वेतो धावति' इति । प्रयोजने सैव यथा—'कुन्ताः प्रविशन्ति' इति । रूढौ लक्षणलक्षणा साध्यवसाना यथा—'कलिङ्गः साहसिक इति । प्रयोजने सैव यथा—'गङ्गायां घोषः' इति । एष्वश्वादिपदानुपादानाद् विषयस्य निगीर्णत्वम् । 'गङ्गायां घोष' इत्यत्रापि तीरं पदं विनैव प्रतीयत इति निगीर्णत्वमस्त्येव ।

( ७० ) **तदेवमिति ।** चतस्रः सारोपाः चतस्रश्च साध्यवसाना इति गणनायां मिलित्वा अष्टप्रकाराः सञ्जाता इत्यर्थः ।

**सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि ॥ ६ ॥**
**सादृश्यात्तु मताः गौण्यस्तेन षोड्शभेदिताः । (७१)**

**ताः पूर्वोक्ता अष्टभेदा लक्षणाः सादृश्येतरसम्बन्धाः कार्य्यकारणभावादयः । अत्र शुद्धानां पूर्वोदाहरणान्येव (७२) । रूढावुपादानलक्षणा सारोपा गौणी यथा--"एतानि तैलानि हेमन्ते सुखानि" । अत्र तैलशब्दस्तिलभवस्नेहरूपं मुख्यार्थमुपादायैव सार्षपादिस्नेहेषु वर्त्तते(७३)।**

( ७१ ) एवमष्टविधा अपि लक्षणाः प्रत्येकं शुद्धा गौणी चेति षोडशप्रकारा इति दर्शयति-**सादृश्येतरेति** । ताश्चतुर्विधास्सारोपाः चतुर्विधास्साध्यवसानाश्चेत्येवमष्टविधा इत्यर्थः, सकलाः समग्रा अपि न तु तिस्रस्तिस्र लक्षणाः, सादृश्याद् सादृशाख्यसम्बन्धात् इतरेऽन्ये सम्बन्धाः कार्य्यकारणभावादयो यासु ताः, शुद्धाः शुद्धाभिधानाः, मता विज्ञेयाः; उपचारेणामिश्रितत्वादिति भावः । अत्यन्तं विशकलितयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनमात्रमुपचार इति स्वयमेव वक्ष्यते । तथा सादृश्यात् तदाख्यसम्बन्धाद्धेतोस्ता एवाष्टप्रकारा एव लक्षणाः गौण्य गौण्यभिधाना मताः; उपचारेण ( गुणेन ) मिश्रितत्वादिति भावः । तेन हेतुना, षोड्शभेदाः षोड्शप्रकारा आसां सञ्जाता इति षोडशभेदिताः, तारकादित्वादितच्, लक्षणा मिलित्वा भवन्तीति शेषः ।

( ७२ ) **पूर्वोदाहरणान्येवेति** । रूढावुपादानलक्षणा सारोपा शुद्धा यथा—'अश्वः श्वेतो धावति' इति । अत्र हि सम्बन्धः सादृश्येतररूपः । स च स्वसमवेतश्वेतगुणतादात्म्यरूपः । एवमन्यत्रापि । प्रयोजने उपादानलक्षणा सारोपा शुद्धा यथा—'एते कुन्ताः प्रविशन्ति' इति । अत्र सम्बन्धः संयोग एव । रूढौ लक्षणलक्षणा सारोपा शुद्धा यथा—'कलिङ्गः पुरुषो युध्यते' इति । अत्र सम्बन्धः आश्रयाश्रयिभाव एव । प्रयोजने लक्षणलक्षणा सारोपा शुद्धा यथा--'आयुर्घृतम्' अत्र सम्बन्धः कार्य्यकारणभावः एवमन्यान्यप्युदाहरणान्यूह्यानि ।

( ७३ ) अथ गौणीरुदाहरति—**रूढावित्यादिना । एतानीत्यादि** । अत्रैतानीति सर्वनाम्ना सार्षपादिविविधस्नेहोपस्थितत्वाद्विषयस्यानिगीर्णत्वं तेन च सारोपात्वम् । तैलपदस्य तिलभवस्नेहमात्रवाचकत्वात् प्रकृते तस्य केवलस्य सुखमयत्वाविवक्षणात् मुख्यार्थबाधः । प्रयोजनाभावाद्रूढिः । उपादानलक्षणात्वं मुख्यार्थमुपादायैवेति वृत्त्या स्मारितम् । स्नेहेषु वर्त्तत इत्यनेनोभयोः स्नेहरूपत्वात् सादृश्यलक्षणः सम्बन्धः । प्रयोगोऽयमायुर्वेदशास्त्रानुसारेणेति बोध्यम् । अत्राहुर्विवृतिकाराः—**सार्षपादिस्नेहेषु वर्त्तत इति** । घृतादिविलक्षणद्रवत्वरूपैकधर्म्मसम्बन्धेन सर्षपादिस्नेहान् प्रतिपादयतीत्यर्थः । छत्रिणो यान्ति इतिवत्तिलस्नेहस्यापि सुखजननेऽन्वयोऽस्तीति मन्तव्यम् । नन्वेवं कथमत्र मुख्यार्थबाध इति चेत्, सर्षपादिस्नेहानां तिलभवत्वाभावात् । सामानाधिकरण्येनान्वयानुपपत्तेरेवात्र मुख्यार्थबाधत्वाङ्गीकारात् ।

**प्रयोजने यथा—राजकुमारेषु तत्सदृशेषु च गच्छत्सु "एते राजकुमारा गच्छन्ति" (७४)। रूढावुपादानलक्षणा साध्यवसाना गौणी यथा-"तैलानि हेमन्ते सुखानि" (७५)। प्रयोजने यथा-"राजकुमारा गच्छन्ति"(७६)। रूढौ लक्षणलक्षणा सारोपा गौणी यथा-"राजा गौडेन्द्रं कण्टकं शोधयति"(७७)। प्रयोजने यथा-"गौर्वाहीकः"(७८)।**

न चैतत्पदार्थैकदेशस्य तिलस्नेहस्य तिलभवत्वसम्भवात् कथमन्वयानुपपत्तिरिति वाच्यम्, तादृशान्वयस्याव्युत्पन्नत्वेनानङ्गीकारात्। न हि पिकहरिणविहङ्गमभुजङ्गा इत्यन्वयः केनाप्यप्रमत्तेनाङ्गीक्रियते। एवञ्च "तैलानि सुखानि" इत्यत्र प्रतीयमानेनैतत्पदार्थेन तैलपदार्थस्यान्वयानुपपत्तिरेव मुख्यार्थबाधः। न चैवं 'गङ्गायां घोष.' इत्यादौ सर्वत्रैव तादृशमुख्यार्थबाधसम्भवे किमिति ग्रन्थकारैर्मुख्यार्थबाधान्तरं दर्शितमिति वाच्यम्, विस्पष्टस्य मुख्यार्थबाधस्य प्रतिसन्धानेनैवोपपत्तौ क्लिष्टस्य तस्य प्रतिसन्धानानुसन्धानस्यान्याय्यत्वात्—इति।

( ७४ ) **प्रयोजन इति**। प्रयोजन इत्यनन्तरमुपादानलक्षणा सारोपा गौणीत्यनुषज्यते। एवमुत्तरत्राप्युदाहरणे पूर्वोक्तवृत्तिः। **एत इति**। अत्र राजकुमारसदृशेष्वपि राजकुमारपदप्रयोगान्मुख्यार्थबाधः। एत इति सर्वनाम्ना राजकुमारेतराणामप्युपस्थापितत्वाद्विषयस्यानिगीर्णत्वं तेन च सारोपात्वम्। शौर्यसौन्दर्यपरिच्छदादिभिः सादृश्यं सम्बन्धः; तस्माच्च गौणीत्वम्। प्रयोजनमेषामतिशयः। सदृशानामपि राजकुमारवदादरणीयत्वं प्रयोजनमिति—विवृतिग्रन्थः। एवमन्यत्राप्यनुसन्धेयम्।

( ७५ ) **रूढाविति। तैलानीति**। अत्र तदेतदादिशब्दद्वाराऽनिर्देशाद् विषयस्य निगीर्णत्वं तेन च साध्यवसानत्वम्।

( ७६ ) **प्रयोजन इति**। अत्र प्रयोजनादिकं पूर्ववदनुसन्धेयम्।

( ७७ ) **रूढाविति। राजेति**। शोधयति दमनेन निर्वैरं करोति। अत्र तीक्ष्णाग्रवृक्षावयवविशेषे शक्तस्य कण्टकशब्दस्य गौडेन्द्रमित्यनेन सममभेदनिर्देशान्मुख्यार्थबाधः। अत एव कण्टकशब्दस्य प्रकृते स्वार्थपरित्यागाल्लक्षणलक्षणा। गौडेन्द्रस्य विषयस्य शब्दोपस्थापितत्वेनानिगरणात् सारोपात्वम्। क्षुद्रदुःखदायित्वं सादृश्यं सम्बन्धः, तस्मात् गौणीत्वम्। गौडेन्द्रकण्टकशब्दस्य प्रयोगे प्रयोजनाभावाद् रूढिः। "क्षुद्रशत्रौ च कण्टकः" इत्यादिकोषस्तु निरूढलक्षणाया एव ग्राहकः, न त्वभिधाया इति भाव्यम्।

( ७८ ) **प्रयोजन इति**। वाहीको हलवाहकः। वाहीको नाम देशविशेषः (पञ्जाब्) इति प्रसिद्धः, तत्रत्यः पुरुषो वाहीक इति केचित्। अन्ये तु बहिर्भवो वाहीक इति व्युत्पत्त्या शास्त्रीयाचाराद्बहिर्भूत इत्यर्थः, बहिषष्टिलोपो यञ्च' 'ईकक्च'—इति वा-

**रूढौ लक्षणलक्षणा साध्यवसाना गौणी यथा—"राजा कण्टकं शोधयति" (७९)। प्रयोजने यथा—"गौर्जल्पति" (८०)।**

**अत्र केचिदाहुः—"गोसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यन्ते। ते च गोशब्दस्य वाहीकार्थाभिधाने निमित्तीभवन्ति" (८१)। तदयुक्तम्।**

त्तिकद्वयेन बहिःशब्दस्य टिलोपे ईकक्प्रत्यये च कृते ववयोरभेदाद् बाह्लीक इति रूपमित्याहुः। अत्र विजातीययोर्गोवाहीकयोरभेदेनान्वयानुपपत्तेर्मुख्यार्थस्य बाधः। तस्मादत्र गोशब्दः स्वार्थं परित्यज्य वाहिकरूपेऽर्थे आत्मानं समर्पयतीति लक्षणलक्षणात्वम्, वाहिकशब्दप्रयोगादेव विषयस्यानिगरणात् सारोपात्वम्, अज्ञत्वादिरूपसादृश्यसम्बन्धाच्च गौणीत्वम्, अज्ञत्वातिशयस्तु प्रयोजनमिति वृत्तावेवाग्रे स्फुटीभविष्यति।

( ७९ ) **रूढावित्यादि।** अत्र गौडेन्द्रपदानभिधानादेव विषयस्य निगरणात् साध्यवसानात्वम्। अन्यत्सर्वं पूर्ववद्बोध्यम्।

( ८० ) **प्रयोजन इति।** पूर्ववद्वृत्तिरनुषञ्जनीया। जल्पनं व्यक्तवचनं तच्च गोर्न सम्भवतीति अन्वयानुपपत्तिरूपो मुख्यार्थबाधः। तस्मादत्र गोशब्दः स्वमुख्यार्थं परित्यज्य वाहीकरूपेऽर्थे आत्मानं समर्पयतीति लक्षणलक्षणात्वम्, वाहिकपदाभिधानादेव विषयस्य निगरणात् साध्यवसानत्वम्, अज्ञत्वादिरूपसादृश्यसन्बन्धाच्च गौणीत्वम्, अज्ञत्वाद्यतिशयस्तु प्रयोजनम्।

( ८१ ) संप्रति पूर्वपक्षनिरासपूर्वकं गौण्या वृत्तेर्लक्षणायामन्तर्भावं दर्शयन्नेकत्राप्युदाहरणे विप्रतिपत्तिनिरासेन सर्वमपि समञ्जसं भविष्यतीत्याह—**अत्रेति**—इति पुत्रः। "गौर्वाहिक" इत्यत्र शाब्दबोधप्रकारं दर्शयन् परमतं निराकरोति—**अत्र केचिदाहुरिति।** इति केचित्। वस्तुतस्तु गौर्वाहीक इत्यत्र लक्षतावच्छेदकं निरूपयिष्यन् तत्र निर्युक्तिकपरमतनिरसनायाह—**अत्रेति**। अत्र गौर्वाहीक इत्यत्र। गोसहचारिणो गोवृत्तयो गोत्वसमानाधिकरणा वा। जाड्यमज्ञत्वम्, मान्द्यं विदग्धकर्म्माक्षमत्वम्, आदिपदेन च दुःखसहिष्णुत्वादिपरिग्रहः, तिष्ठन्मुत्रत्वादिपरिग्रह इति केचित्। गुणाः धर्म्माः। लक्ष्यन्ते लक्षणया बोध्यन्ते। तथाचैतन्मते गोवृत्तिजाड्यमान्द्यादिधर्म्मत्वमेव लक्षतावच्छेदकमिति भावः। नन्वेवं वाहीकार्थेन सह कथमन्वय इत्यत आह—**ते चेति**। वाहीकार्थाभिधाने वाहीकरूपस्य अर्थस्याभिधया बोधने, निमित्तीभवन्ति लक्षणायाः परं प्रवृत्तिनिमित्तत्वमुपयान्ति; शक्यतावच्छेदकीभूता भवन्तीत्यर्थः। गोशब्दाल्लक्षणया प्रथमं जाड्याद्युपस्थितिः; ततोऽभिधया वाहीकस्य बोध इति भावः। अयं निष्कर्षः—गोशब्दो हि भिन्नार्थकत्वात् वाहीकेन सहानुपपद्यमानसामानाधिकरण्यत्वेन बाधितमुख्यार्थः सन् स्वार्थसहचारित्वसम्बन्धेन जाड्यादिगुणान् लक्षयित्वा तानेव प्रवृत्तिनिमित्तीकृत्य ( शक्यतावच्छेदकीकृत्य ) वाहीकरूपमर्थमभिधया बोधयति। इति।

**गोशब्दस्यागृहीतसङ्केतं वाहीकार्थमभिधातुमसामर्थ्यात् गोशब्दार्थमात्रबोधनाच्च (८२)। अभिधाया विरतत्वात् विरतायाश्च पुनरुत्थानाभावात् (८३)। अन्ये च पुनः-"गोशब्देन वाहीकार्थो नाभिधीयते, किन्तु स्वार्थ-**

"गोशब्देन सास्नादिमत्प्राण्यर्थाभिधाने तद्वृत्तिगोत्वं यथा प्रवृत्तिनिमित्तम्, तथा उक्तप्रकारेण लक्षिता जाड्यमान्द्यादयोऽपि पुणा गवीव वाहीकेऽपि विद्यमाना इति गोशब्देन वाहीकार्थाभिधाने ते प्रवृत्तिनिमित्तीभवन्तीत्याशयः"-इति टीकान्तरे स्पष्टम्।

तथा च जाड्यवदभिन्नो वाहीक इति शक्तिलक्षणाभ्यां बोधः। तदेतत्सर्वं काव्यप्रदीपे शब्दान्तरैर्व्याख्यातम्, तथाहि—गोशब्दस्य शक्त्या गोत्वं प्रवृत्तिनिमित्तम्, लक्षणया तु गोशब्दार्थगतं जाड्यमान्द्यादि प्रवृत्तिनिमित्तं भवतीति गोशब्देन जडत्वेन रूपेण वाहीकः शक्त्या बोध्यत इति। **'ते च'** इति चकारेण न खलु तेषां लक्षितत्वमात्रेण विश्रान्तिरिति लभ्यते।

( ८२ ) खण्डयति—**तदयुक्तमिति**। अगृहीतोऽज्ञातः सङ्केतो यस्मिन् तम्। इदं हेतुगर्भविशेषणम्। तेन च वाहीकार्थाभिधानेऽसामर्थ्यं दर्शितम्। तथा च गोशब्दस्य वाहीकार्थेऽसङ्केतितत्वात् तेन तादृशार्थः शक्त्या नोपस्थाप्यत इति भावः। ननु गोत्वे गृहीता शक्तिरविनाभावबलाद् गोव्यक्तिमिव उक्तरीत्या लक्षितगुणवाहीकत्वयोरप्यविनाभावात् वाहीकार्थमपि बोधयत्वित्यत आह—**गोशब्देति**। गोशब्दार्थमात्रबोधनात् सास्नादिमत्प्राण्यर्थमात्रबोधनात्। मात्रपदेन न तु वाहीकार्थबोधनमिति तद्व्यवच्छिद्यते। तथा च गोत्वगोव्यक्त्योरविनाभावस्य सर्वत्रैव दृष्टचरत्वात् गोत्वे गृहीतसंकेतेनापि गोशब्देन गोव्यक्तिरभिधीयते। किन्त्वीदृशमुदाहरणं विनान्यत्र तादृशलक्षितगुणवाहीकत्वयोरविनाभावदर्शनादगृहीतसंकेतेन गोशब्देन कथं वाहीकार्थोऽभिधीयेत; प्रचुरप्रयोगदर्शनस्यैव पदार्थाभिधाननिश्चये नियामकत्वादित्याशयः।

( ८३ ) ननु गोशब्दः सास्नादिमत्प्राण्यर्थमभिधाय पुनरपि वाहीकार्थमभिदधात्वित्यत्राह—**अभिधाया इति**। विरतत्वात् सास्नादिमत्प्राण्यर्थमभिधाय नष्टप्रायत्वात् "सकृदुच्चारितः शब्दः सकृदेवार्थं गमयति" इति नियमेन सास्नादिमत्प्राण्यर्थाभिधानानन्तरं प्रक्षीणशक्तिकत्वादित्यर्थः। नन्वस्य नियमस्य श्लेषादौ व्यभिचारदर्शनात् तत्र यथा द्वितीयार्थोऽभिधीयते तथाऽत्रापि सास्नादिमत्प्राण्यर्थमभिधाय विरतयाऽप्यभिधया पुनरुत्थाय वाहीकार्थोऽभिधीयेतेत्यत्राह—**विरतायाश्चेति**। विरताया एकमर्थं बोधयित्वा नष्टशक्त्याश्च तस्याः पुनरुत्थानाभावात्; "शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावः" इति न्यायादिति शेषः। ननु तर्हि श्लेषादौ का गतिरिति चेत्, उच्यते, तत्र हि युगपदेवोभयार्थबोधनम्। अत्र तु तथात्वाङ्गीकारे लक्षणैवोच्छिद्येतेति महान् विप्लवः स्यात्, अभिधान्तरकल्पने तु कल्पनागौरवमपि। तथाच गोवृत्तिजाड्यमान्द्यादिधर्म्मत्वं न लक्ष्यतावच्छेदकं न वा लक्षितं तद्वृत्तिजाड्यमान्द्यादि वाहीकार्थाभिधाने शक्यतावच्छेदकं भवतीति भावः।

**सहचारिगुणसाजात्येन वाहीकार्थगता गुणा एव लक्ष्यन्ते" (८४)। तद्प्यन्ये न मन्यन्ते। तथाह्यत्र गोशब्दाद्वाहीकार्थः प्रतीयते न वा? आद्ये, गोशब्दादेव वा? लक्षिताद्वा गुणादविनाभावद्वारा? (८५)। तत्र न प्रथमः—वाहीकार्थेऽस्यासङ्केतितत्वात्। न द्वितीयः,—अविनाभावलभ्यस्यार्थस्य शाब्दे अन्वये प्रवेशासम्भवात्। शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यते (८६)। न द्वितीयः। यदि हि गोशब्दाद्वाहीकार्थो न प्रतीयते तदास्य**

---

(८४) तत्रैव मतान्तरं निरसितुमुत्थापयति—**अन्ये चेति**। अत्राहुरित्यनुवर्त्तते। पुनःशब्दः किन्त्वर्थे। नाभिधीयते; उक्तादेव न्यायात्। स्वार्थस्य गोशब्दार्थस्य गोत्वस्येत्यर्थः, एतन्मतेऽपि जातौ संकेतस्वीकारात्, सहचारिणः समानाधिकरणा ये गुणा जाड्यमान्द्यादयस्तेषां साजात्येन सजातीयत्वेन हेतुना, वाहीकार्थगता वाहीकपदार्थवृत्तयो गुणा जाड्यमान्द्यादय एव। एवकारेण गुणिनो वाहीकार्थस्य व्यवच्छेदः लक्ष्यन्ते लक्षणया बोध्यन्ते। तथाचैतन्मते गोगतजाड्यसजातीयजाड्यवान् वाहीक इति बोधः, वाहीकवृत्तिजाड्यमान्द्यादिधर्म्मत्वमेव लक्ष्यतावच्छेदकमिति।

(८५) निरस्यति—**तदपीति**। अन्येऽस्मदादयः। अत्र गौर्वाहीक इति प्रयोगे। आद्ये प्रतीतिपक्षे। अविनाभावोऽव्यभिचरितसम्बन्धस्तद्द्वारा तद्बलेनाक्षेपादिति भावः। लक्षितात् लक्षणाविषयीकृताद् गुणात् स्वनिष्ठजाड्यमान्द्यादेः। तथा च गौर्वाहीक इत्यादौ किं गोशब्द एव वाहीकत्वमभिधत्ते अथवा गोशब्दलक्षितो वाहीकनिष्ठजाड्यमान्द्यादिगुणोऽव्यभिचरितसम्बन्धबलेन वाहीकत्वं प्रत्याययति? इत्यत्र भवते कतरः कल्पो रोचत इति प्रश्नार्थः।

(८६) उभयस्मिन्नपि पक्षे दोषमुद्भावयति—**तत्र न प्रथम इति**। प्रथमो गोशब्दमात्राद्वाहीकस्य प्रतीतिकल्पः। प्रतीतिश्चात्राभिधया बोधः। गोशब्द एव वाहीकत्वमभिदधातीति प्रथमः कल्पो न संगच्छत इत्यर्थः। अस्य गोशब्दस्य। असङ्केतितत्वात् संङ्केतविषयत्वाभावात्। तथाच गोशब्देन तादृशार्थेऽगृहीतसङ्केतेन सता कथं सोऽर्थोऽभिधीयेत हठेनैव तदङ्गीकारे तु लक्षणाया उच्छेदः स्यादिति भावः। **न द्वितीय इति**। द्वितीयः अविनाभावद्वारा लक्षिताद् गुणाद् वाहीकत्वार्थप्रतीतिकल्पः। स च न सङ्गच्छत इत्यर्थः। अविनाभावलभ्यस्य अविनाभावबलेनाक्षेपप्राप्यस्य न तु शब्दबोधितस्येत्यर्थः, अर्थस्य वाहीकार्थस्य, शाब्देऽन्वये शब्दप्रतिपाद्ये बोधे, प्रवेशासम्भवात् उपस्थित्ययोगात्। अविनाभावलभ्योऽर्थः शाब्दबोधे विषयो न भवतीत्यर्थः। तत्राचार्य्यसम्मतिमाह—**शाब्दीत्यादि**। हि यस्मात्। शाब्दी शब्दसम्बन्धिनी शब्दोपस्थापितेत्यर्थः, आकाङ्क्षा अन्याऽन्वयिशब्दश्रवणेच्छा, शब्देनैव अन्याऽन्वयिशब्देनैव न तु अविनाभावादिलभ्यार्थेनेत्यर्थः, प्रपूर्य्यते निवर्त्यते। तथा च यथा द्वारमिति पदोपस्थापिताऽऽकाङ्क्षा पिधेहीत्यन्याऽन्वयिशब्देनैव प्रपूर्य्यते न पुनरविनाभावादिलभ्यार्थेन

**वाहीकशब्दस्य च सामानाधिकरण्यमसमञ्जसं स्यात् (८७)।**

तथा वाहीकनिष्ठगुणलक्षकगोशब्दोपस्थापिताऽऽकाङ्क्षा तदन्वयिवाहीकशब्देनैव प्रपूर्य्यते न पुनरविनाभववललभ्येन वाहीकार्थेनेत्याशयः। एतच्च शब्दाध्याहारवादिनां मतमाश्रित्योक्तम्। अर्थाध्याहारवादिनां मीमांसकानां मते त्वविनाभावलभ्यस्याप्यर्थस्य शाब्दबोधविषयत्वाङ्गीकारान्नैतद्दूषणम्। अन्यथा उपाधिशक्तिवादिनां मते व्यक्तेः शाब्दबोधविषयत्वं न स्यात्। न च लक्षणयैव तत्र व्यक्तेरुपस्थितिरिति वाच्यम्, रूढिप्रयोजनाभावत्तत्र लक्षणाया असम्भवात्। न च गवादिपदानां व्यक्तौ रूढिरस्तीति वाच्यम्, लक्ष्यार्थव्यतिरिक्तशक्यार्थप्रयोगशालिनः शब्दस्य लक्ष्यार्थप्रयोगरूपाया रूढेर्लक्षणाहेतुत्वाङ्गीकारात् गवादिपदानां तु व्यक्तिसहकृत एव गोत्वादौ प्रयोगः। लक्ष्यार्थे प्रयोगमात्रस्यैव लक्षणाहेतुत्वाङ्गीकारे उपाधिशक्तिवादिमते सर्वत्रैव लक्षणया व्यक्तिबोधसम्भवात्। "ऐन्द्रया ऋचा गार्हपत्यमुपतिष्ठते" इत्यादौ द्वितीयान्तपदरूपाया श्रुतेर्लिङ्गापेक्षया झटित्यर्थोपस्थापकत्वरूपबलवत्त्वम् "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति जैमिनिसूत्रोक्तं न स्यात्। आक्षेपापेक्षया लक्षणया मुख्यार्थबाधादिप्रतिसन्धानसापेक्षत्वेन विलम्ब्यार्थोपस्थापकत्वात् समवाये विरोधेऽर्थविप्रकर्षात् विलम्ब्यार्थोपस्थापकत्वात्। 'श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि। सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या। इति कारिकया सूत्रार्थव्याख्या"—इति विवृतिः।

(८७) **न द्वितीय इति**। न प्रतीत्यभावकल्पः। गोशब्दात् वाहीकार्थो न प्रतीयत इति प्रथमभेदद्वयान्तर्गतद्वितीयकल्पोऽपि न युज्यत इत्यर्थः। कथं न युज्यत इत्यत्राह—**यदीत्यादि**। हि तथाहि। अस्य गोशब्दस्य, सामानाधिकरण्यम् एकार्थप्रतिपादकत्वम्, असमञ्जसम् अयुक्तम्। अयमाशयः—समानविभक्तिकत्वं हि शाब्दसामानाधिकरण्यं तच्च शब्दार्थानामभेदप्रत्याय्यकम्, यथा धनि चैत्रकुलम्, तथा च यदि गोशब्दाद्वाहिकार्थो न प्रतीयते किन्तु वाहीकशब्दात् वाहीकत्वं गोशब्दाद् गोत्वं प्रतीयते तदा त्वनयोरभेदबोधकसामानाधिकरण्यासम्भवात् समानविभक्तिकत्वेन प्रयोगोऽसङ्गतः स्यादिति। एवञ्च वाहीकनिष्ठजाड्यमान्द्यादिगुणत्वं न लक्ष्यतावच्छेदकमिति बोध्यम्। 'अन्ये तु पुनः' इत्यादिना प्रतिपादितमन्यमतं काव्यप्रकाशेऽप्युट्टङ्कितम् 'इत्यन्ये' इत्यन्तग्रन्थेन। तत्र तट्टीकाकृद्भिरपि 'अन्ये' इत्यनेनास्वरसमुद्भाव्य तद्बीजं च प्रदर्शितम्। तद् यथा-'तद्बीजं तु एकधर्मिबोधकत्वाभावात् गौर्वाहीक इति सामानाधिकरण्यानुपपत्तिः। न च जातिशक्ताविवानुमानसहकृतपदेन व्यक्तिबोधानुपपत्तिरिति वाच्यम्, अन्वयानुपपत्त्याः प्रसरन्त्याः लक्षणायाः साक्षादन्वययोग्यार्थबोधकतैवोचितेत्यभिप्रायादिति प्रदीपोद्योतयोः स्पष्टम्। नरसिंहठक्कुरास्तु—तद्बीजं तु अनन्यलभ्यतया धर्म्मिणोऽलक्ष्यत्वे तीरादेरपि गङ्गापदलक्ष्यताऽनापत्तिरित्याहुः।

**तस्मादत्र गोशब्दो मुख्यया वृत्त्या वाहीकशब्देन सहान्वयमलभमानोऽज्ञत्वादिसाधर्म्म्यसम्बन्धाद्वाहीकार्थं लक्षयति । वाहीकस्याज्ञत्वाद्यतिशयबोधनं प्रयोजनम् (८८) ।**

**इयञ्च गुणयोगात् "गौणी" इत्युच्यते । पूर्व्वा तु उपचारामिश्रणात् शुद्धा (८९) । उपचारो हि नाम अत्यन्तविशकलितयोः सादृश्यातिशय-**

( ८८ ) तत्का गतिरित्याकाङ्क्षायां स्वमतमाह—**तस्मादिति** । उपदर्शितमतद्वये दोषसम्भवात् यस्मादेवान्यगतिर्नास्तीत्यर्थः । गोशब्दो गोशब्दार्थः, शब्दतदर्थयोरभेदोपचारात् । एवमन्यत्राप्येवंविधस्थले बोध्यम्—इतिपुत्रः । मुख्यया वृत्त्या अभिधया । अन्वयम्; अभेदसम्बन्धेनेति शेषः । अलभमानः अप्रतिपद्यमानः । एतेन मुख्यार्थबाधो दर्शितः । **अज्ञत्वादीति** । अत्रादिपदेन मन्दत्वादिपरिग्रहः । व्यक्तिभेदेऽपि गुणक्रिययोरैक्यमित्यभिप्रायेणेदं निर्वचनम् । अन्यथा शक्यलक्ष्ययोरेकधर्म्मत्वरूपसम्बन्धो न सम्भवति । अनेन मुख्यार्थसम्बन्धोऽपि प्रदर्शितः । लक्षयति लक्षणया बोधयति । तथाच—स्वमते वाहीके एव लक्षणा, वाहीकत्वमेव लक्ष्यतावच्छेदकम् , अतो न सामानाधिकरण्यानुपपत्तिरिति भावः । अत्र प्रयोजनं दर्शयति—**वाहीकस्येत्यादि** । वाहीकोऽज्ञ इत्यादिस्वशब्दप्रतिपादनालभ्यातिशयः प्रयोजनमित्यर्थः । अत्राहार्य्याभेदप्रतीतिः प्रयोजनमिति—काव्यप्रकाशकारः ।

अत्रेयं पुत्रोक्तिः—इह च गङ्गातटयोस्तादात्म्यप्रतीत्या तटे शीतत्वाद्यतिशयः गौर्वाहीक इत्यत्र गोवाहीकशब्दयोस्तादात्म्यप्रतीत्या वाहिके जाड्याद्यतिशयः प्रतीयत इति व्यर्थोऽयमुपचारो लक्षणायासः काव्यप्रकाशकारस्येति चण्डीदासपण्डितानामभिचारितानामभिचारिताभिधानम् । तथा हि—सादृश्यसम्बन्धिनोरिव तदितरसम्बन्धिनोर्न सम्बन्धौदासिन्ये न वृत्तिः । अत एवान्यैरुक्तम्—सम्बन्धानन्तरं लक्ष्यलक्ष्यकयोः साक्षाद्दत्तं पदम् । सादृश्यं तु गोवाहीकादितद्धर्म्मसाजात्यरूपं न तथेति । अत एव क्वचित्तटादौ गङ्गादिसम्बन्धात् किञ्चित् शैत्यमस्त्येव । किन्तु गङ्गाशब्देन प्रतिपादने गङ्गात्वप्रतीतौ तत् शैत्यादिकमधिकं प्रतीयते वाहीके पुनर्गोनिष्ठानां गुणानां कदाचिन्न सम्भवः । किन्तु तत्सजातीयानाम् । किञ्च गौर्वाहिक इत्युक्तेऽपि प्रतिगन्तुः सर्वथा नाभेद प्रतिपत्तिः; किन्तु सामानाधिकरण्यप्रयोगात् तस्याः स्थगनमात्रम् । तदुक्तं शारीरिकमीमांसाव्याख्याने वाचस्पतिमिश्रैः—अपि च परः शब्दः परत्र वक्ष्यमाणगुणयोगेन प्रवर्त्तत इति । यः प्रयोक्तृप्रतिपत्तेः संप्रतिपत्तिः स गौणः । स च भेदप्रत्ययभेदपुरःसर इति ।

( ८९ ) एतदभिप्रेत्योक्तप्रकारेण लक्षणाविशेषणयोर्गौणशुद्धयोर्भेदं दर्शयति—**इयञ्चेति** । अनयोर्गौणी शुद्धेति संज्ञाकरणे बीजमाह—**इयञ्चेति** ।–इति केचित् । इयञ्च "एतानि तैलानि हेमन्ते सुखानि" इत्यादौ निर्द्दिष्टा च । गुणयोगात्=लक्ष्ये मुख्यस्य सम्बन्धो गुणस्तद्वत्त्वात् न तु साक्षात्सम्बन्धात् । यद्वा—"गुणस्य साधारणधर्म्मस्य

**महिम्ना भेदप्रतीतिस्थगनमात्रम् (९०)। यथा—अग्निर्माणवकयोः (९१)। शुक्लपटयोस्तु नात्यन्तभेदप्रतीतिः। तस्मादेवमादिषु शुद्धैव लक्षणा(९२)।**

योगात् स्वविषयकज्ञानजनकत्वसम्बन्धात्", तदुक्तं—"लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता'।—इति विवृत्तौ व्याख्यातम्। पुत्रस्तु—"इयं सादृश्यसबन्धहेतुका गुणयोगा न तु साक्षात् सम्बन्धात्'—इत्येवाह। पूर्वा सादृश्यातिरिक्तसंबन्धनिबन्धना।

(९०) केचित्तु शक्यलक्ष्ययोरभेदारोपमेवोपचारमाहुः। तथा सति 'आयुर्घृतम्' इत्यादावपि सारोपाया उपचारमिश्रणाच्छुद्धात्वं न स्यादित्यतः प्रकारन्तरेणोपचारबीजमाह-**उपचार इति।** हि तथा हि। विशकलितयोः विभिन्नयोः, सादृश्यातिशयमहिम्ना बहुविधधर्म्मघटितसादृश्यसामर्थ्येन, भेदप्रतीतेर्भेदज्ञानस्य स्थगनमात्रं विराममात्रं न तु सर्वथाभाव इत्यर्थः। तथा च आयुर्घृतमित्यादौ भेदप्रतीतेर्विरामाभावत्वेनोपचाराामिश्रणाच्छुद्धात्वमव्याहतमेव। अत्र 'अत्यन्तम्' इत्यस्य व्युत्पत्तिवैचित्र्यात् समासैकदेशेन 'भेदप्रतीति' इत्यनेन सहान्वयः। भेदप्रतीतेरात्यन्तिकत्वञ्च शक्यलक्ष्ययोः सम्बन्धानवगाहितया। तथा शुक्लः पट इत्यत्र शुक्लगुणवान् पटः शुक्लगुणाद्भिन्न इति शक्यलक्ष्ययोः समवायो भासते न तथा अग्निर्माणवक इत्यत्र लक्षणाजन्यबोधात् प्राक् शक्यलक्ष्ययोः सादृश्यसम्बन्धो भासते। किन्तु सादृश्यबोधाभिप्रायबोधानन्तरमेवात्यन्तिकभेदप्रतीतिः सम्भवति। तस्याश्च सादृश्यातिशयबोधाभिप्रायबोधसहकृतेनाभेदारोपेण स्थगनमनुवृत्तिरेवोपचारः, न त्वभेदारोप इति—विवृतिकारः।

(९१) उपचारोदाहरणं दर्शयति—**यथेति। अग्नीति।** अत्र विजातीयतयाऽत्यन्तभिन्नयोरप्यग्निमाणवकयोस्तेजःस्वित्वादिबहुविधधर्म्मघटितसादृश्यसामर्थ्येन भेदज्ञानस्य स्थगनसत्त्वादुपचारः सम्भवतीत्याशयः।

(९२) अत्यन्तपदव्यावृत्तिमाह—**शुक्लपटयोरिति।** 'तु' इत्यव्ययेन पूर्वोदाहरणादस्योदाहरणस्य वैलक्षण्यं सूचितम्। तथा च 'सिंहो माणवकः' इत्यादौ अत्यन्तभिन्नयोरग्निमाणवकयोस्तेजःस्वित्वादिसादृश्यातिशयमहिम्ना भेदप्रतीतिविरामादस्त्युपचारः। 'शुक्लः पटः' इत्यत्र तु शुक्लादिपदानां गुणिवाचकत्वमते सर्वथैव भेदाभावात् गुणवाचकत्वमतेऽपि "गुणगुणिनोरभेद" इति न्यायात् निरूढलक्षणाङ्गीकाराचऽत्यन्तभेदप्रतीतेरभावान्नास्त्युपचारः,-इति वैलक्षण्यमित्याशयः। तस्मादुपचारामिश्रणात्, एवमादिषु शुक्लः पट इत्यादिषु शुद्धैव लक्षणा। शुद्धैवेत्यकारेण गौणी व्यवच्छिद्यते, तत्रोपचारापेक्षणादिति भावः। ननु गौणलक्षणातो रूपकालङ्कारस्य को भेदः, रूपकालङ्कारेऽप्यभेदारोपानन्तरं सादृश्यबोधस्यानुभवसिद्धत्वादिति चेत्; रूपके अभेदारोपात् प्रागपि सादृश्यप्रतीतिः सम्भवति। आरोप्यमाणस्य प्राङ्निर्देशे हि गौणलक्षणाप्रयोगवाक्यम्, पश्चान्निर्देशे रूपकप्रयोगवाक्यमिति केचित्। 'गौडेन्द्रं कण्टकं शोधयति' इति गौणलक्षणो-

**व्यङ्ग्यस्य गूढागूढत्वाद्द्विधा स्युः फललक्षणाः । (९३)**

**प्रयोजने या अष्टभेदा लक्षणा दर्शितास्ताः प्रयोजनरूपव्यङ्ग्यस्य गूढा-गूढतया प्रत्येकं द्विधा भूत्वा षोडशभेदाः । तत्र गूढः—काव्यर्थभावना-परिपक्वबुद्धिविभवमात्रवेद्यः । यथा—"उपकृतं बहु तत्र" इति (९४) ।**

---

दाहृणं 'राजति व्योमकासारे राजहंसः सुधाकरः' इति रूपकोदाहरणं ददतो ग्रन्थकृत-स्तन्नाभिमतमिति मन्तव्यम् । शोभातिशायित्वानतिशायित्वाभ्यामेव गौणलक्षणाया एव रूपकालङ्कारत्व-तन्मात्रत्वयोर्व्यवहारः, वैचित्र्यजनकधर्म्मस्यैवालङ्कारस्य वक्ष्यमाण-त्वात् । तथा हि—'बाहुलता पाणिपद्मम्' इत्यादौ गौणलक्षणायाः शोभातिशायितयैव रूपकालङ्कारता । 'गौर्वाहीकः' इत्यादौ तु तस्याः तादृशशोभातिशायित्वाभावात्तन्मात्र-त्वमेवेत्यपरेषां समाधिः ।

( ९३ ) सम्प्रति व्यङ्ग्यवैचित्र्येणैव प्रयोजनलक्षणायाः पुनर्द्वैविध्यमाह—**व्यङ्ग्य-स्येति** । फलं प्रयोजनं तद्युक्ता लक्षणा फललक्षणा, व्यङ्ग्यस्य व्यञ्जनावृत्तिलभ्यस्य फलापरपर्य्यायस्य लक्षणामूलीभूतस्य प्रयोजनस्य । गूढत्वं सहृदयमात्रवेद्यत्वम्, अगू-ढत्वं सहृदयेतरैरपि वेद्यत्वम् । सहृदयश्च काव्यवासनापरिपक्वबुद्धिः । लक्षणामूलीभूतं प्रयोजनं व्यञ्जनावृत्तिमात्रगम्यमिति 'व्यङ्ग्यस्य' इत्यनेन सूचितम् । "आभ्यामेव व्यङ्ग्यस्य गूढत्वागूढत्वाभ्यां ध्वनिगुणीभूतव्यङ्ग्याख्यौ काव्यप्रकारविशेषौ वक्ष्येते" इति-पुत्रः ।

( ९४ ) गूढत्वमगूढत्वञ्च स्वयं निर्वक्ति—**तत्र गूढ इति** । गूढो व्यङ्ग्योऽर्थः । गूढ इत्यस्य व्यङ्ग्यार्थविशेषणत्वात् पुंस्त्वम् । काव्यार्थानां भावनया गवेषणया परिप-क्वा परिनिष्ठिता या बुद्धिस्तस्या विभवमात्रेण सामर्थ्यमात्रेण वेद्यो बोध्यः, न त्वपरि-पक्वबुद्धिबोध्य इत्यर्थः । गूढव्यङ्ग्यस्योदाहरणमाह—**यथा उपकृतमिति** । अत्रोप-कृतमित्यादिपदेनापकृतमित्याद्यर्थो वक्तृमहिम्ना लक्ष्यते । अपकाराद्यतिशयो व्यङ्ग्यः । स च काव्यार्थभावनापरिपक्वबुद्धिभिः सहृदयैरेव ज्ञायत इति भावः । काव्यप्रकाशकारे-णेदं गूढोदाहरणमाह, तद्यथा—

> "मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं
> समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः ।
> उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
> बतेन्दुवदना कथं तरुणिमोद्गमो मोदते ॥' इति ।

अत्र विकासस्य पुष्पधर्म्मस्य स्मिते, वशीकरणस्य चेतनधर्म्मस्य प्रेक्षिते ऊर्ध्वग-तिविशेषरूपसमुच्छलनस्य मूर्त्तद्रव्यधर्म्मस्य विभ्रमे, संस्थाया मर्य्यादायास्त्यागस्य चेतनधर्म्मस्य मतौ, मुकुलितत्वस्य पुष्पधर्म्मस्य स्तनयोः उद्धुरत्वस्योत्कृष्टधुरावत्त्व-रूपस्य चेतनधर्म्मस्य जघने, मोदस्य हर्षस्य चेतनधर्म्मस्य यौवनोद्गने बाधितत्वा-द्विकसितादिपदैरुपदर्शितपदार्था लक्ष्यन्ते ।

**अगूढः—अतिस्पष्टतया सर्व्वजनसंवेद्यः । यथा-**

**"उपदिशति कामिनीनां यौवनमद एव ललितानि ।" (९५)**

**अत्र "उपदिशति" इत्यनेन "आविष्करोति' इति लक्ष्यते । आविष्कारातिशयश्चाभिधेयवत् स्फुट प्रतीयते (९६) ।**

**धर्म्मिधर्म्मगतत्वेन फलस्यैता अपि द्विधा । (९७)**

तत्र विकासेनासङ्कुचितत्वसम्बन्धेन सातिशयत्वं लक्ष्यते, सौरभादि व्यङ्ग्यम् । वशीकरणेन स्वाधीनत्वं लक्ष्यते, अभिमतविषयनिवृत्तिः सम्बन्धः, युक्तानुरागित्वं व्यङ्ग्यम् । समुच्छलनेन बाहुल्यं लक्ष्यते, प्रयोज्यप्रयोजकभावः सम्बन्धः, सकलमनोहारित्वं व्यङ्ग्यम् । संस्थापासनेनाधीरत्वं लक्ष्यते, हेतुहेतुमद्भावः सम्बन्धः, पूर्वं मुग्धतया गुरुजनसन्निधौ प्रियतमेऽप्यङ्गीकृतमर्य्यादामतिरासीत् इदानीं तु मौग्ध्यत्यागात् तथा इत्यनुरागातिशयो व्यङ्ग्यः । मुकुलितत्वेन काठिन्यं लक्ष्यते; निबिडावयवत्वं सम्बन्धः, यद्वा उद्भिन्नत्वं लक्ष्यम्, आलिङ्गनयोग्यत्वं व्यङ्ग्यम् । उद्धुरत्वेन विलक्षणरतियोग्यत्वं लक्ष्यते, भारसहनक्षमत्वं सम्बन्धः, रमणीयत्वं व्यङ्ग्यम् । मोदेनोत्कर्षो लक्ष्यते, जन्यजनकभावः सम्बन्धः, स्पृहणीयत्वं व्यङ्ग्यम् । तथा चात्रैतानि व्यङ्ग्यानि काव्यवासनापरिपक्वबुद्धेः सहृदयस्यैव प्रकाशन्त इति ।

( ९५ ) **अतीति** । सर्वजनसंवेद्यः सहृदयैरपि बोध्यः । **उपदिशतीति** । श्लोकसमुदायो यथा—

"श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥" इति ।

व्याख्या तु—जडा अनभिज्ञा अपि जनाः, श्रियाः लक्ष्म्याः परिचयः प्रथमसम्बन्धस्तस्मादेव, विदग्धानां चतुराणां यानि चरितानि चरित्राणि तेषामभिज्ञाः ज्ञातारो भवन्तीत्यन्वयः । तत्रार्थान्तरं न्यसति—उपदिशतीति । यौवनस्य मदो हर्षः भर इति यावत्, कामिनीनां स्त्रीणां, यद्वा चतुर्थ्यर्थे षष्ठी, कामिन्यै इत्यर्थः, ललितानि 'सुकुमारतयाङ्गानां विन्यासो ललितं भवेत्' इत्युक्तलक्षणलक्षितानि, 'अनाचार्य्योपदिष्टं स्याल्ललितं रतिचेष्टितम्' इत्युक्तलक्षणलक्षितानि वा, बहुवचनेन बिव्वोकविलासादिसर्वहावसंग्रहः, उपदिशति अविष्करोति ।

( ९६ ) अत्र व्यङ्ग्यार्थस्यागूढत्वं दर्शयति—**अत्रेति** । उपदेशो हि ज्ञानानुकूलशब्दप्रयोगः, स च चेतनकर्तृकः, अचेतने यौवनमदे तत्कर्तृकत्वस्यासम्भवान्मुख्यार्थबाधः, तस्मादुपपूर्वधाधातुना स्वार्थं परित्यज्य आविष्काररूपोऽर्थो लक्ष्यते, इयञ्च लक्षणलक्षणा बोध्या । आविष्करातिशयश्च प्रयोजनात्मा व्यङ्ग्यार्थ इत्यर्थः । अभिधेयवत् वाच्यार्थवत्, स्फुटं प्रतीयते सहृदयेतरैरपीति शेषः ।

( ९७ ) पुनरपि तासां द्वैविध्यमाह—**धर्मीति** । एताः पूर्वोक्ताः प्रयोजनमूलाः

**एता अनन्तरोक्ताः षोडशभेदा लक्षणाः फलस्य धर्म्मिगतत्वेन धर्म्मगतत्वेन च प्रत्येकं द्विधा भूत्वा द्वात्रिंशद्भेदाः (९८)। दिङ्मात्रं यथा--**

**"स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्वलाका घना**
**वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।**
**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे**
**वैदेही तु काथं भविष्यति हहा ! हा देवि ! धीरा भव ॥ (९९)**

**अत्रात्यन्तदुःखसहिष्णुरूपे रामे धर्म्मिणि लक्ष्ये तस्यैवातिशयः**

---

षोडशप्रकारा अपि लक्षणाः, फलस्य प्रयोजनस्य, धर्म्मी लक्ष्यः तद्गतत्वेन; धर्म्मः लक्ष्यवृत्तिपदार्थस्तद्गतत्वेन चेत्यर्थः, प्रत्येकमेव द्विधा भवन्ति ।

( ९८ ) विवृणोति—**एता इत्यादि** । अनन्तरोक्ता अव्यवहितपूर्वोक्ताः प्रयोजनमूला इत्यर्थः ।

( ९९ ) सर्वासां तासामुदाहरणप्रदर्शने ग्रन्थभूयस्त्वं स्यादित्यत आह—**दिङ्मात्रेति** । अनयोरेकैकप्रकारमात्रमुदाहरणं प्रदर्श्यत इति शेषः ।

फलस्य धर्म्मिगतत्वेनोदाहरणमिदम्—**स्निग्धेति** । विरहिणः श्रीरामस्योक्तिरियम्। स्निग्धा श्लक्ष्णा श्यामला अत्यन्तकृष्णा या कान्तिस्तया लिप्तं व्याप्तं सम्यगाच्छादितं वियदाकाशं यैस्तथाभूताः, वेल्लन्त्यो विलासात् खेलन्त्यो वलाका वकपङ्क्तयो येषु तथा भूताश्च, घना मेघाः, कामं यथेष्टं यथा स्यात्तथा सन्तु भवन्तु । तथा शीकरिणोऽम्बुकणधारिणो वाता वायवश्च कामं सन्तु । तथा कला मधुरास्फुटाः, पयोदसुहृदां मेघमित्राणां मयूराणाम्, पयोदस्य मयूरसुहृत्वं केकाजनकतया, आनन्दकेकाः प्रमोदजनितकेकाध्वनयश्च कामं सन्तु । विरहिमारकेभ्यस्तेभ्य उद्दीपकातिशयेभ्यो न विभेमीति भावः। ननु त त्वे भवतो महत् कष्टमेव भविष्यतीत्यत्राह—दृढमित्यादि । दृढं बलवत् कठोरं कर्कशं हृदयमन्तःकरणं यस्य तादृशः अहं रामोऽस्मि सकलदुःखपात्रत्वेन प्रसिद्धोऽस्मीति तात्पर्य्यम् । अत एव सर्वं=पितृमरण मातृवियोग-वनवास-जटाधारण-फलमूलाहारादिवत् जानकीविरहमपि पूर्वोक्तविरहिमारकोद्दीपकातिशयं क्लेशमपि वेत्यर्थः, सहे सोढुं शक्नोमि । अत्रैतादृशदुःखजनकसमाजेऽपि प्राणधारणादात्मन्यचक्कारो व्यज्यते । तु किन्तु, वैदेही आजन्मसुखसम्बर्द्धिताऽतिसुकुमारी राजकुमारी सीता, कथं भविष्यति ईदृशघनादिदर्शने मां विना कीदृशी भविष्यति, अत्यन्तमेवाधीरा भविष्यतीति भावः , यद्वा—कथं भविष्वति केन प्रकारेण जीविष्यति तज्जीवनं न सम्भाव्यत इत्यर्थः । हहेति विषादातिशये । हा देवि ! सीते ! धीराभव ईदृशेऽपि व्यापारे धैर्य्यावलम्बिनी भव । अत्र देवत्वेन परमसौकुमार्य्येऽपि धैर्य्यौचित्यं व्यज्यते ।

काव्यप्रकाशटीकायां कमलाकरेण तु "सीतामरणं सम्भाव्य रामः पृथिवी प्रत्याह—हे सर्वंसहे वसुधे देवि ! धीरा भव दुहितृशोकेन त्वं मा विदीर्णा भवे"ति व्याख्यातम् ।

फलम् (१००) "गङ्गायां घोषः" इत्यत्र तटादिषु लक्ष्येषु शीतत्वपावनत्वादिरूपधर्म्मस्यातिशयः फलम् (१)

**तदेवं लक्षणाभेदाश्चत्वारिंशन्मता बुधैः ॥११॥ (२)**

रूढावष्टौ फले द्वात्रिंशदिति चत्वारिंशल्लक्षणाभेदाः ।

किञ्च--

**पदवाक्यगतत्वेन प्रत्येकं ता अपि द्विधा । (३)**

ता अनन्तरोक्ताः । तत्र पदगतत्वेन यथा--"गङ्गायां घोषः" । वाक्यगतत्वेन यथा-"उपकृतं बहु तत्र" इति । एवमशीतिप्रकारा लक्षणा (४) ।

अत्र रामपदेन दुःखपात्रतालक्षणया व्यज्यमानस्य राज्यत्याग-जटा-वल्कलधारण-पितृशोकाद्यधिगतदुःखसहनातिशयस्यावगमे व्यञ्जनयावगतैः शोकावेगधैर्य्यनिर्वेदादिभिः परिपुष्टो विप्रलम्भः प्रकाश्यत इति प्रकाशोद्योते स्पष्टम् ।

( १०० ) फलस्यात्र धर्मिगतत्वमेवेति समन्वयति—**अत्रेत्यादिना** । धर्मिणि अत्यन्तदुःखसहिष्णुत्वरूपधर्म्मवति । लक्ष्ये लक्षणाप्रतिपाद्ये । तस्यैव दुःखसहिष्णुत्वरूपस्य रामस्य, अतिशयो दुःखसहिष्णुत्वविषयकोत्कर्पः, फलं प्रयोजनम् । अयमर्थः- "रामोऽस्मि सर्वसहे" इत्यत्र केवलस्यैव रामस्य सर्वसहत्वस्याप्रसिद्धेर्मुख्यार्थबाधात् रामस्य चात्यन्तदुःखसहिष्णुत्वरूपविशेषो लक्ष्यते । तथा हि मुख्यार्थस्य रामस्य 'सर्वं सहे' इति वाक्यार्थेऽन्वयसिद्धये अत्यन्तदुःखसहिष्णुत्वरूपेतरार्थस्याक्षेपादियमुपादानलक्षणा बोध्या, अत्यन्तदुःखसहिष्णुत्वं लक्ष्यतावच्छेदकम् । एवञ्च लक्ष्यार्थेऽत्यन्तदुःखसहिष्णुरूपे रामे तस्यैव दुःखसहिष्णुत्वविषयकोत्कर्षरूपोऽतिशयः प्रतीयत इति लक्षणायाः फलं धर्मिगतमेवेति बोध्यम् ।

( १ ) फलस्य धर्म्मगतत्वं दर्शयितुमाह—**गङ्गायामिति** । धर्म्मस्यातिशयो धर्म्मनिष्ठ एवेति फलमत्र धर्म्मगतं बोध्यम् । यद्यप्युक्तश्लोके लिप्तपदस्य व्याप्तेर्लक्षणा व्याप्तेरतिशयः फलमिति धर्म्मगतफललक्षणाया उदाहरणं तत्रैव सम्भवति, तथापि गङ्गायां घोष इति प्रसिद्धोदाहरणमुपन्यस्तम् ।

( २ ) संख्यया लक्षणाः सङ्कलयति—**तदेवमिति** । तत् तस्मात्, एवमुक्तप्रकारेण ।

( ३ ) संख्यया सङ्कलितानां तासामपि लक्षणानां पुनर्द्वैविध्यं दर्शयितुमाह—**किञ्चेति** । अपि चेत्यर्थः । **पदेति** । ता लक्षणाः, प्रत्येकम् एकैकम्, पदवाक्यगतत्वेन क्वचित् पदगतत्वेन क्वचिच्च वाक्यगतत्वेनेत्यर्थः । ननु अभिधावल्लक्षणायाः पदधर्म्मत्वेन कथं वाक्यगतत्वमिति चेत्, उच्यते, यत्र वाक्ये वाक्यसमुदाये वा बहुपदेषु लक्षणा तत्रैव तस्या वाक्यगतत्वमुपचारात् ।

( ४ ) **वाक्यगतत्वेनेति** । "उपकृतं बहु तत्रे"त्यत्र बहुपदनिष्ठत्वाभिप्रायेण

लक्षणाया वाक्यगतत्वं बोध्यम् । एवमेव हि ध्वनिगुणीभूतव्यङ्ग्यदोषगुणालङ्काराणां वाक्यनिष्ठत्वं प्राचीनालङ्कारग्रन्थेष्वपि प्रायशो दृश्यते । तथा चेदं काव्यप्रकाशे वाक्यगतनिहतार्थत्वे उदाहरणम्, यथा—

सायकसहायवाहो मकरध्वजनियमितक्षमाधिपतेः ।
अब्जरुचिभासुरस्ते भातितरामवनिप ! श्लोकः ॥

इत्यत्र सायकादयः शब्दाः खड्गाब्धिभूचन्द्रयशः पर्य्यायाः शराद्यर्थतया प्रसिद्धाः । तस्मादत्र वाक्यगतो निहतार्थत्वदोषः । एवमन्येषामुदाहरणान्यूह्यानि ।

अशीतिप्रकारा लक्षणा

यथा—

रूढौ उपादानलक्षणा सारोपा शुद्धा यथा—अश्वः श्वेतो धावति इति । १ ।
रूढौ उपादानलक्षणा साध्यवसाना शुद्धा यथा—श्वेतो धावति इति । २ ।
रूढौ लक्षणलक्षणा सारोपा शुद्धा यथा—कलिङ्गः पुरुषो युध्यते इति । ३ ।
रूढौ लक्षणलक्षणा साध्यवसाना शुद्धा यथा—कलिङ्गः साहसिक इति । ४ ।
रूढौ उपादानलक्षणा सारोपा गौणी यथा—एतानि तैलानि हेमन्ते सुखानि इति ।५।
रूढौ उपादानलक्षणा साध्यवसाना गौणी यथा—तैलानि हेमन्ते सुखानि इति।६।
रूढौ लक्षणलक्षणा सारोपा गौणी यथा—राजा गौडेन्द्रं कण्टकं शोधयति इति ।७।
रूढौ लक्षणलक्षणा साध्यवसाना गौणी यथा—राजा कण्टकं शोधयति इति ।८।

इत्येवं केवलरूढिमूला अष्टौ लक्षणाः ।

प्रयोजने उपादानलक्षणा सारोपा शुद्धा यथा—एते कुन्ताः प्रविशन्ति इति ।१।
प्रयोजने उपादानलक्षणा साध्यवसाना शुद्धा यथा—कुन्ताः प्रविशन्ति इति ।२।
प्रयोजने लक्षणलक्षणा सारोपा शुद्धा यथा—आयुर्घृतम् इति । ३ ।
प्रयोजने लक्षणलक्षणा साध्यवसाना शुद्धा यथा—आयुः पिबति इति । ४ ।
प्रयोजने उपादानलक्षणा सारोपा गौणी यथा—एते राजकुमारा गच्छन्ति इति ।५।
प्रयोजने उपादानलक्षणा साध्यवसाना गौणी यथा—राजकुमारा गच्छन्ति इति ।६।
प्रयोजने लक्षणलक्षणा सारोपा गौणी यथा—गौर्वाहीक इति ।७।
प्रयोजने लक्षणलक्षणा साध्यवसाना गौणी यथा—गौर्जल्पति इति । ८ ।

इत्येवं प्रयोजनमूला अष्टौ लक्षणाः ।

ताश्च प्रयोजनमूला लक्षणा प्रयोजनात्मकव्यङ्ग्यस्य गूढत्वेनागूढत्वेन च प्रत्येकं द्विधा भूत्वा षोडशप्रकारा भवन्ति ।

गूढत्वे उदाहरणं यथा—"उपकृतं बहु तत्र किमुच्यत" इत्यादि ।

अगूढत्वे उदाहरणं यथा—"उपदिशति कामिनीनां यौवनमद एव ललितानि" इत्यादि ।

ता अपि तत्प्रयोजनस्य धर्म्मिवृत्तित्वेन धर्म्मवृत्तित्वेन च प्रत्येकं द्विविधाः सत्यो द्वात्रिंशद्विधा जायन्ते ।

अथ व्यञ्जना (५)।

**विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः ॥ १२ ॥**

**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च । (६)**

**"शब्द-बुद्धि-कर्म्मणां विरम्य व्यापाराभावः" इति नयेन अभिधा-लक्षणा-तात्पर्य्याख्यासु तिसृषु वृत्तिषु स्वं स्वमर्थं बोधयित्वा उपक्षीणासु, यया अपरः अन्योऽर्थो बोध्यते, सा शब्दस्यार्थस्य प्रकृतिप्रत्ययादेश्च वृत्तिर्व्यञ्जन-ध्वनन-गमन-प्रत्यायनादिव्यपदेशविषयो व्यञ्जना नाम (७)।**

प्रयोजनस्य धर्म्मिवृत्तित्वेनोदाहरणं यथा—"रामोऽस्मि सर्वं सहे" इत्यादि।

प्रयोजनस्य धर्म्मवृत्तित्वेन तूदाहरणं यथा—"गङ्गायां घोषः" इत्यादि।

ताश्च प्रयोजनमूला द्वात्रिंशत्प्रकारा लक्षणा उक्ताभिः रूढिमूलाभिरष्टाभिः सह मिलित्वा चत्वारिंशत्प्रकारा भवन्ति।

एताश्च सर्वाः लक्षणा पदवृत्तित्वेन वाक्यवृत्तित्वेन च पुनः प्रत्येकं द्विधा भूत्वा समष्ट्या अशीतिप्रकाराः सम्पद्यन्ते।

पदवृत्तित्वेनोदाहरणं यथा—"गङ्गायां घोष" इत्यादि।

वाक्यवृत्तित्वेनोदाहरणं यथा—"उपकृतं बहु तत्र किमुच्यते" इत्यादि।

(५) अथोद्देश्यक्रमप्राप्तां व्यञ्जनां निरूपयितुमाह—**अथेति**। लक्षणानिरूपणानन्तरम्।

(६) **विरतास्विति**। अभिधाद्यासु अभिधा लक्षणा-तात्पर्य्यात्मिकासु तिसृष्वेव वृत्तिषु विरतासु स्वं स्वमर्थं बोधयित्वोपक्षीणासु सतीषु, यया वृत्त्या अपरोऽभिधेयादिव्यतिरिक्तो व्यङ्ग्यत्वेन निरूपयिष्यमाणो वस्त्वलङ्काररसलक्षणोऽर्थो बोध्यते, सा शब्दस्य अर्थस्य च वृत्तिर्व्यञ्जना नामेत्यन्वयः। तथा च अभिधेयादिभिन्नार्थोपस्थापकवृत्तित्वं व्यञ्जनात्वमिति तल्लक्षणं पर्य्यवसितम्। आदिपदेन लक्ष्यार्थतात्पर्य्यार्थयोः संग्रहः। अत्र वाच्यत्वस्य केवलान्वयित्वेऽपि तत्तत्पदनिष्ठवाचकतानिरूपितवाच्यत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वमर्थस्य विवक्षितमिति नाप्रसिद्धिः। अत्रेदं विवृतिकारव्याख्यानम्—वृत्तिर्व्यापारः, सा च वक्तृतात्पर्य्यविशेषरूपा, वक्तृतात्पर्य्यञ्च 'एतत्पदं वाक्यं वा इममर्थं बोधयतु, इति वक्तुरिच्छाविशेषः। शाब्द्या व्यञ्जनायाः पदधर्म्मत्वम्, आर्थ्यास्तु वाक्यधर्म्मत्वम्, एतत्पदं वाक्यं वैतदर्थबोधाभिप्रायकमिति ज्ञानविषय एव सा स्वार्थं बोधयति—इति। मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसम्बद्धाऽसम्बद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जनेति मञ्जूषाकारः।

(७) विवृणोति—**शब्दबुद्धित्यादि**। शब्दो गवादिः बुद्धिः प्रत्यक्षादिः कर्म्म

तत्र—(८) ।

**अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा ॥१३॥ (९)**

अभिधामूलमाह—

**अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।**
**एकत्रार्थेऽन्यधीर्हेतुर्व्यञ्जना साभिधाश्रया ॥१४॥ (१०)**

ज्योतिष्टोमादि च तेषाम्, विरम्य एकवारमात्रस्वस्वविषयोपस्थापनानन्तरमुपरम्योपक्षी-णीभूय स्थितानामिति शेषः, व्यापाराभावः उपक्षीणत्वेनानर्हत्वात्पुनस्तद्विषयोपस्थाप-नाभावः । अयं भावः—एकवारमुच्चरितो गोशब्द एकवारमेव सास्नादिमन्तमर्थं प्रति-पाद्योपक्षीणो न पुनस्तमर्थं प्रतिपादयेत् । तथा धूमध्वजाद्यनुमितावेकवारं कृतं धूमादि-दर्शनमेकवारमेव वह्न्याद्यनुमानं साधयित्वोपक्षीणं न पुनस्तत्साधयेत् । तथैकवारमनु-ष्ठितं यागादि कर्म्मैकवारमेव स्वर्गादिजननयोग्यमपूर्वं जनयित्वोपक्षीणं न पुनस्तं जन-येदिति । तिसृष्वित्यभिहितान्वयवादिमतमाश्रित्य, अन्विताभिधानमते तु द्वयोः, तत्रापि लक्षणाया अभावे तु प्रथममते द्वयोः, द्वितीयमते ह्येकस्याः ।—इति पुत्रः । अर्थादिकस्येत्यादिपदं विवृणोति—**प्रकृतीति** । प्रकृतिर्नाम अर्थावबोधहेतुः प्रत्ययवि-धानावधिभूतः शब्दविशेषः । सर्वेषामेव प्रत्ययानां प्रकृतिं निमित्तीकृत्यैवोत्पत्तिविधा-नात् । भाष्येऽप्युक्तम्—"तावेव सुप्तिङौ यौ ततः परौ सैव प्रकृतिराद्या" इति । अय-मर्थः—ततः विधानावधेः यौ परौ तावेव सुप्तिङौ, या च तयोराद्या विधानावधिभूता सैव प्रकृतिरिति । प्रत्ययस्तु प्रकृतिमवधीकृत्य विधीयमानः स्वार्थबोधकः शब्दविशेषः । अत एवोक्तं हरिणा—यः शब्दः स्वेतरस्यार्थे स्वार्थस्यान्वयबोधने । यदपेक्षस्तयोः पूर्वा प्रकृतिः प्रत्ययः परः ॥—इति । आदिपदादुपसर्गादिग्रहणम् । ध्वननादयो व्य-ञ्जनस्य पर्य्यायान्तराणि । अत्राप्यादिपदात् सूचनादेर्ग्रहणम् ।

( ८ ) व्यञ्जनाया विभागकरणायाह—**तत्रेति** । तत्र व्यञ्जनाविषये अयं विभाग इति शेषः ।

( ९ ) **अभिधेति** । अभिधालक्षणे मूले कारणे यस्याः सा । तथा च—शाब्दी व्यञ्जना द्विविधा, एका अभिधामूला द्वितीया लक्षणामूला च । अभिधान्वय-व्यतिरेकानुविधायित्वमभिधामूलत्वं लक्षणान्वयव्यतिरेकानुविधायित्वं च लक्षणामूल-त्वम् ।—इत्यर्थः ।

( १० ) **अनेकार्थस्येति** । अनेकार्थस्य = अनेकत्र गृहीतशक्तिकस्य शब्दस्य एकत्रार्थे=एकस्मिन्नर्थे संयोगाद्यैः=अनुपदमेव वक्ष्यमाणैः संयोगादिभिर्नियामकैः पदार्थैः करणैः नियन्त्रिते = अर्थान्तरनिरुद्धप्रसरतयाऽभिधया व्यवस्थापिते सति, अन्यस्य = अभिधाया अविषयस्यार्थान्तरस्य धीहेतुः=प्रतीतिकारणं या वृत्तिः सा अभिधाश्रया =अभिधामूला व्यञ्जना स्यात् । प्राकरणिकमर्थं बोधयित्वाभिधायां विरतायां अप्राकर-

आद्यशब्दाद्विप्रयोगादयः । उक्तं हि—(११) ।

"संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥" (१२)

"सशङ्खचक्रो हरिः" इत्यत्र शङ्खचक्रसंयोगेन हरिशब्दो विष्णुमे

णिकबोधे व्यञ्जना अभिधान्तरमपेक्षत इत्यभिधामूलत्वमस्याः । ननु अभिधान्तरस्य संयोगादिना प्रतिरुद्धत्वेन कथं व्यञ्जनाजन्यबोधे सहकारित्वमिति चेन्न, अभिधायाः स्वातन्त्र्येणार्थान्तरोपस्थापने संयोगादेः प्रतिबन्धकत्वकल्पनात् । ननु अभिधयैवार्था-न्तरमुपस्थाप्यतां किं व्यञ्जनया संयोगादेः प्रतिबन्धकत्वस्य च कल्पनेनेति चेत्, न, अप्राकरणिकद्वितीयार्थबोधान्निष्कम्पप्रवृत्त्यभावेन तस्य आस्वादविशेषजनकत्वेन च तत्र वैजात्यस्यावश्यं वाच्यत्वेन तस्य च कारणविशेषाधीनसिद्धिकत्वेन व्यञ्जनासिद्धेरभि-धया द्वितीयार्थस्य प्रथममुपस्थाने संयोगादेः प्रतिबन्धकत्वकल्पनस्यावश्यकत्वाच्च । इति विवृतिः ।

( ११ ) **उक्तं हीति** । भर्तृहरिणेति शेषः ।

**संयोग इति** । संयोगः सम्यक् योगः प्रसिद्धसम्बन्धः । विप्रयोगः प्रसिद्धसम्ब-न्धध्वंसः विभागो वा । साहचर्य्यम् एककालदेशावस्थायित्वम्, एकस्मिन् कार्य्ये पर-स्परसापेक्षत्वं वा । केचित्तु—साहचर्य्यं सादृश्यम्, सदृशयोरेव प्रायेण सहचरणदर्श-नात्, शब्दयोरपि सदृशार्थयोरेव सह प्रयोग इत्युत्सर्गाच्चेत्याहुः । विरोधिता वध्य-घातकत्वं सहानवस्थानञ्च । अर्थः प्रयोजनापरपर्य्यायमनन्यथासाध्यं फलम् । प्रकरणं प्रस्तावः । लिङ्गं संयोगातिरिक्तसम्बन्धेन परपक्षव्यावृत्तो धर्म्म इति केचित्, परे तु—संयोगातिरिक्तसम्बन्धेन परपक्षव्यावर्त्तको धर्म्मो न त्वसाधारणो धर्म्मः, सशङ्खचक्र इत्यादावतिव्याप्तेः, कुपितो मकरध्वज इत्यत्राव्याप्तेश्चेत्याहुः । अन्यस्य सन्दिग्धा-र्थकभिन्नस्य शब्दस्य समानविभक्त्यन्तपदस्य सन्निधिरव्यवधानम् । केचित्तु—शब्द-स्यान्यस्य सन्निधिः=समासाद्यधीनसमानार्थकताकशब्दान्तरसमभिव्याहारः, समासा-द्यधीनत्वविशेषणात् 'सशङ्खचक्र' इत्यत्रातिव्याप्तिर्निरस्ता, समानार्थकतेति विशेषणात् 'स्थाणुं वन्दे' इत्यत्रातिव्याप्तिश्च निरस्ता । सन्निधिः सामानाधिकरण्यमिति—पुत्रः प्राह । सामर्थ्यं तत्कारणनियमः । औचिती योग्यता । देशस्तद्विशेषः । कालस्तद्वि-शेषः । व्यक्तिः पुंस्त्वादिः । स्वरा उदात्तादयः । आदिपदात् हस्तभङ्गीप्रभृतयश्च । एते शब्दार्थस्य शब्दवाच्यार्थस्य अनवच्छेदेऽनिश्चये सति; कतमोऽर्थोऽत्र विवक्षित इति सन्देहे सति तदपाकरणद्वारेण विशेषस्मृतिहेतवः विशेषस्य विवक्षितार्थस्य या स्मृति-र्ज्ञानं तद्धेतवः तज्जनका भवन्तीत्यर्थः ।

वाभिधत्ते (१३)। "अशङ्खचक्रो हरिः" इति तद्वियोगेन तमेव (१४)। "भीमार्ज्जुनौ" इति अर्ज्जुनः पार्थः (१५) "कर्णार्ज्जुनौ" इति कर्णः सूत्रपुत्रः (१६)। "स्थाणुं वन्दे" इति स्थाणुः शिवः (१७)। "सर्व्वं जानाति देवः" इति देवो भवान् (१८)। "कुपितो मकरध्वजः" इति मकरध्वजः कामः (१९)। "देवः पुरारिः" इति पुरारिः शिवः (२०)। "मधुना मत्तः पिकः" इति मधुर्वसन्तः (२१)। "यातु वो दयिता

(१३) एषां नियन्त्रणस्वरूपं क्रमादुदाहरणैर्दर्शयितुमादौ संयोगस्य नियामकत्वमुदाहरति—**सशङ्खेति** । अत्र हरिर्विष्णुः सिंहादिर्वा इति सन्देहे सतीति योज्यम् । विष्णुमेवेत्येवकारेण सिंहाश्वादेर्व्यवच्छेदः ।

(१४) वियोगस्य नियामकत्वमुदाहरति—**अशङ्खेति** । अत्रापि पूर्ववत्सन्देहे सतीति योज्यम् । तयोः शङ्खचक्रयोर्वियोगेनाभावेन तं हरिमेवाभिधत्त इत्यनुषज्यते, प्रतिषेधस्य प्रसक्तिपूर्वकत्वात् ।

(१५) साहचर्य्यस्य नियामकत्वमुदाहरति—**भीमेति** । अत्र अर्जुनो वृक्षविशेषः पार्थो वेति सन्देहे भीमसाहचर्य्यात् अर्जुनः पार्थस्तृतीयपाण्डव एव न तु वृक्षविशेषः ।

(१६) विरोधिताया नियामकत्वमुदाहरति—**कर्णेति** । अत्र कर्णः श्रवणं सूतपुत्रो वेति सन्देहे अर्जुनसूतपुत्रयोर्विरोधितया कर्णः सूतपुत्रो राधेय एव न तु श्रवणेन्द्रियम् । अत्र वध्यघातकत्वरूपविरोधिता ।

(१७) अर्थस्य नियामकत्वमुदाहरति—स्थाणुमिति । अत्र स्थाणुः शङ्कुः शिवो वेति सन्देहे स्थाणुपदस्य शङ्कुवाचकत्वे भवच्छेदरूपं प्रयोजनं न घटते । अतः स्थाणुः शिव एव न तु शङ्कुः । प्रयोजनमत्र भवच्छेदः ।

(१८) प्रकरणस्य नियामकत्वमुदाहरति—**सर्वमिति** । अत्र देवपदेन त्रिदशनृपयोः सन्देहे प्रस्तावात् देवो भवान् प्रकृतो राजा न तु कश्चित् त्रिदशः । अत्र राजसम्बोध्यकदूतकथा प्रकरणम् ।

(१९) लिङ्गस्य नियामकत्वमुदाहरति—**कुपित इति** । अत्र मकरध्वजपदेन कामसमुद्रयोः सन्देहे कोपरूपप्राणिधर्म्मस्य समवायेन कामे एव सम्भवात् मकरध्वजः कामो मदनो न तु समुद्रः तस्याप्राणित्वेन कोपरूपधर्म्माभावात् ।

(२०) अन्यशब्दसन्निधेर्नियामकत्वमुदाहरति—**देव इति** । अत्र पुरारिः किं त्रिपुरासुरहन्ता शिवः शत्रुपुरनाशकस्तदन्यः कश्चिद्वेति सन्देहे देवतावाचकसमानविभक्त्यन्तदेवपदसान्निध्यात् पुरारिः शिव एव ।

(२१) सामर्थ्यस्य नियामकत्वमुदाहरति—**मधुनेति** । मधुपदेन मद्यवसन्तयोः संशये मद्येन पिकस्य मत्तताया अप्रसिद्धत्वात् वसन्तकाले एव तस्याः पिके सुसम्भवात् मधुर्वसन्तो न तु मद्यम् ।

मुखम्" इति मुखं साम्मुख्यम् (२२)। "विभाति गगने चन्द्रः" इति चन्द्रः शशी (२३)। "निशि चित्रभानुः" इति चित्रभानुर्वह्निः (२४)। "भाति रथाङ्गम्" इति नपुंसकव्यक्त्या रथाङ्गं चक्रम् (२५)। स्वरस्तु वेद एव विशेषप्रतीतिकृत्, न काव्य इति तस्य विषये नोदाहृतम् (२६)। इदञ्च केऽप्यसहमाना आहुः—"स्वरोऽपि काक्वादिरूपः काव्ये विशेषप्रतीतिकृदेव, उदात्तादिरूपोऽपि मुनेः पाठोक्तदिशा शृङ्गारादिरसविशेषप्रतीतिकृदेवेत्येतद्विषये उदाहरणमुचितमेव" इति, (२७) तन्न,

( २२ ) औचित्यस्य नियामकत्वमुदाहरति—**यात्विति**। अत्र दयिता प्रिया वो युष्माकं तवेत्यर्थः; मुखं वदनं यातु प्रविशतु अथवा मुखं मानमपहाय साम्मुख्यं यातु प्राप्नोतु इत्यर्थ इति सन्देहे दयितायाः सामुख्यप्राप्तेरेव योग्यत्वात् मुखं साम्मुख्यमेव। न तु वदनम्।

( २३ ) देशस्य नियामकत्वमुदाहरति—**विभातीति**। अत्र चन्द्रः कर्पूरः शशी वेति सन्देहे शशिनो गगनदेशसम्भवात् चन्द्रः शश्येव न तु कर्पूरः।

( २४ ) कालस्य नियामकत्वमुदाहरति—**निशीति**। अत्र चित्रभानुः सूर्यो वह्निर्वेति संशये चित्रभानुर्वह्निरग्निरेव न तु सूर्यः, निशि काले तस्यासम्भवात्।

( २५ ) व्यक्तेर्नियामकत्वमुदाहरति—**भातीति**। अत्र रथाङ्गपदेन चक्र-चक्रवाकयोः सन्देहे नपुंसकव्यक्त्या=नपुंसकलिङ्गेन रथाङ्गं चक्रमेवाभिधीयते न तु चक्रवाकः, तद्वाचकस्य पुंलिङ्गत्वात्।

( २६ ) स्वरस्य नियामकत्वं किमित्यपेक्षायामाह—**स्वरस्त्विति**। विशेषप्रतीतिकृत् उदाहृतवदेकतरार्थनियामकः। तदुक्तं पाणिनीयशिक्षायाम्—"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्"॥ इति। यथा—इन्द्रशत्रुरिति पदे इन्द्रः शत्रुः शातयिता यस्येति बहुव्रीहौ आद्यपदोदात्तत्वम्। तेन च इन्द्रस्य शातनकर्तृत्वं बोध्यते। इन्द्रस्य शत्रुरिति षष्ठीतत्पुरुषपक्षे अन्त्यपदोदात्तत्वम्। तेन च इन्द्रस्य शातनकर्मतयाऽवगमः। न काव्ये स्वरो विशेषप्रतीतिकृदित्युनुषङ्गः। नोदाहृतं प्राचीनैरिति शेषः। तथाहि प्राचीनपथावलम्बिना मयापि नोदाहृतमिति भावः।

( २७ ) **इदञ्चेति**। अव्यवहितपूर्वोक्तं प्राचीनमतं केऽपि भट्टादयः चण्डीदासराघवानन्दप्रभृतयश्च। काकुः "भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते" इत्युक्तलक्षणः, विकृतस्वर इति यावत्। यथा—"मथ्नामि कौरवशतं समरे न कोपात्" इत्यादौ काक्वादिरूपः स्वरो विशेषप्रतीतिकृदेव। उदात्तादिरूपोऽपि स्वरः, आदिपदेनानुदात्तसमाहारयोर्ग्रहणम्। उच्चस्वर उदात्तः, नीचस्वरोऽनुदात्तः, मध्यस्वरः समाहारश्च। मुनेर्भरतस्य नाट्याचार्य्यस्य पाठोक्तदिशा वचनानुसारेणेत्यर्थः। यथा—

तथाहि स्वराः काक्वादय उदात्तादयो वा व्यङ्ग्यरूपमेव विशेषं प्रत्याययन्ति, न खलु प्रकृतोक्तमनेकार्थशब्दस्यैकार्थनियन्त्रणरूपं विशेषम् (२८)। किञ्च यदि यत्र क्वचिदनेकार्थशब्दानां प्रकरणादिनियमाभावादनियन्त्रितयोरप्यर्थयोरनुरूपस्वरवशेनैकत्र नियमनं वाच्यम्, तदा तथाविधस्थले श्लेषानङ्गीकारप्रसङ्गः, न च तथा (२९)। अतएवाहुः श्लेषनिरूपणप्रस्तावे—"काव्यमें स्वरो न गण्यत इति च नयः" इत्यलमुपजीव्यानां मान्यानां व्याख्यानेषु कटाक्षनिक्षेपेण (३०) आदिशब्दात् "एतावन्मात्रस्तनी" इत्यादौ हस्तादिचेष्टादिभिः स्तनादीनां कमलकोरकाद्याकारत्वम् (३१)। एवमेकस्मिन्नर्थे अभिधया नियन्त्रिते या शब्द-

---

हास्यशृङ्गारयोः स्वरितोदात्तम्, वीररौद्राद्भुतेषूदात्तस्वरितम्, करुणबीभत्सभयानकेष्वनुदात्तस्वरितमुत्पादयेत्" इति। स्वरितयुक्त उदात्तः स्वरितोदात्तस्तम्, प्रथमतः स्वरितं क्रमशश्चोदात्तमुत्पादयेदित्यर्थः। एवमन्यत्रापि।

(२८) भट्टचण्डीदासराघवानन्दप्रभृतीनां मतं दूषयितुमाह—**तन्नेति**। व्यङ्ग्यरूपमेव विशेषं न त्वभिधेयरूपं विशेषमित्यर्थः। न खलु न त्वित्यर्थः। प्रकृतोक्तमेतत्प्रकरणोक्तम्। तथा च—"संयोगो विप्रयोगश्च ।……विशेषस्मृतिहेतवः ॥" इत्यत्र विशेषपदेनाभिधेयार्थविशेष एव प्रतिपाद्यते न पुनर्वृत्त्यर्थविशेष इति भावः।

(२९) एवं भट्टचण्डीदासराघवानन्दोक्तं दूषयित्वा 'नन्वभिधेयार्थविशेषग्रहणे विनिगमनाभावाद् वृत्त्यर्थविशेषोऽपि ग्रहीतुं शक्यते' इति पूर्वपक्षं स्वयमुत्पाद्य निराचष्टे—**किञ्चेति**। अनियन्त्रितयोरनियमितयोरप्यर्थयोर्मध्ये। एकत्रेति। एकस्यार्थस्येत्यर्थः, षष्ठीसप्तम्योरर्थयोर्भेदाभावात्। तथाविधस्थल इति।

"येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च यो धारयन्।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः ॥"

इत्यादौ श्लेषानङ्गीकारप्रसङ्गः। तथा चाव्याप्तिरिति भावः। न तथेति। श्लेषानङ्गीकारो न चेत्यर्थः। सर्वैरेवालङ्कारिकैस्तथाविधस्थले श्लेषाङ्गीकारादिति भावः।

(३०) अत्राचार्य्यसम्मतिं दर्शयति—**अत एवेति**। न गण्यते अभिधेयार्थविशेषनियामकत्वेनेत्यर्थः। नयो नीतिः लोकप्रसिद्धिः। तेषामुपजीव्यत्वञ्च तद्ग्रन्थनिष्ठस्वव्युत्पत्तिविशेषसम्पादनात्।

(३१) **आदिशब्दादिति**। 'कालो व्यक्तिः स्वरादयः' इत्यत्रादिशब्दात्। चेष्टादीत्यादिपदेन 'इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्' इत्यादावात्मनिर्देशादयः।

स्यान्यार्थबुद्धिहेतुः शक्तिः, सा अभिधामूला व्यञ्जना (३२)। यथा मम तातपादानां महापात्र-चतुर्दशभाषाविलासिनीभुजङ्ग-महाकवीश्वर-श्री-चन्द्रशेखर-सान्धिविग्रहिकाणाम्—

"दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसा
प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः।
नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचिं धारयन्
गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभः॥" (३३)

---

(३२) सम्प्रति कारिकार्थं व्याचष्टे—**एवमिति**। एवं संयोगादिभिरित्यर्थः।

(३३) **दुर्गालङ्घितेति**। दुर्गैः परिखादिभिरलङ्घितः प्रतिरोद्धुमपारितः रिपुभिरनिवारितो विग्रहः सङ्ग्रामो यस्य सः, रिपूणां दुर्गं भित्त्वाऽपि तैः सह सङ्ग्रामकारीत्यर्थः। यद्वा दुर्गैरलङ्घितः अव्यवहितो विग्रहो यस्य सः, दुर्गव्यवधानं विनैव युद्धकारीत्यर्थः। तेजसा कान्त्या मनसिजं कामं सम्मीलयन् लज्जया सङ्कोचयन्, कामादपि सुन्दर इत्यर्थः। प्रोद्यत् प्रकृष्टाभ्युदययुक्तं राजकं राजसमूहं लाति वश्यतया गृह्णातीति तथोक्तः, अधीनीकृतमहाराज इत्यर्थः। गृहीतगरिमा सर्वत्र प्राप्तगौरवः। भोगिभिः स्रक्चन्दनादिभोगवद्भिः पुरुषैः विष्वक् सर्वतः वृतः परिवेष्टितः। क्षेत्रेशेषु क्षत्रियश्रेष्ठेषु कृतेक्षणो दत्तदृष्टिर्न भवतीति तथाभूतः, क्षेत्रेश्वरेष्वपि तुच्छबुद्धिरिति भावः। अत्र 'गमिकर्म्मीकृतनैकनीवृता' इत्यादिवदभावार्थकनशब्देन समासात् नकारलोपाभावः। गिरिर्हिमालयः गुरुः श्वशुरो यस्य स शिवः, यद्वा गिरिगुरुः कैलासेश्वरः तस्मिन् गाढां प्रबलां रुचिं भक्तिं धारयन् वहन्, अथ वा गुरौ गम्भीरार्थायां गिरि वाचि गाढामुत्कृष्टां रुचिं प्रकाशं धारयन् कुर्वन्। गां पृथ्वीमाक्रम्य पराक्रमेणायत्तीकृत्य, विभूत्या सम्पदा सम्पज्जनितविविधालङ्कारेण भूषिता तनूः शरीरं यस्य सः। उमावल्लभः उमानाम्न्या महिष्या वल्लभः पतिर्भानुदेवो नाम राजा। राजति दीप्यते।

अयमर्थः प्रथममभिधयैव प्रतिपद्यते। पश्चादस्य वाक्यस्यानेकार्थपदघटितत्वज्ञानाज्जायमानं वक्तृतात्पर्य्यज्ञानमभिधाऽन्तरग्रहसहकृतमेवमर्थं बोधयति।—

**दुर्गालङ्घितेति**। दुर्गया पार्वत्या लङ्घितोऽर्धत्वेनाक्रान्तः; यद्वा अलङ्घितोऽपरित्यक्तः विग्रहः शरीरं यस्य सः, अर्द्धनारीश्वरत्वेन पार्वत्या शरीरार्द्धशरीर इत्यर्थः। मनसिजं कन्दर्पं तेजसा तृतीयनयनोत्थज्योतिषा सम्मीलयन् अचेतयन् नाशयन्नित्यर्थः। प्रोद्यन्ती उदयमाना राज्ञश्चन्द्रस्य कला खण्डं यस्मिन् सः, चन्द्रशेखर इत्यर्थः। गृहीतगरिमा ईश्वरत्वेन जगत्सु प्राप्तगौरवः। भोगिभिः सर्पैः विष्वक् सर्वतः वृतः परिवेष्टितः। नक्षत्रेशेन तारापतिना चन्द्रेण कृतमीक्षणं चक्षुर्येन सः, चन्द्रसूर्य्याग्निनेत्रत्वात्। गिरिर्हिमालय एव गुरुः श्वशुरस्तस्मिन् गाढां रुचिमत्यन्तमनुरागं धा-

**अत्र प्रकरणेनाभिधया उमावल्लभशब्दस्य उमानाम्नी महादेवी तद्वल्लभभानुदेवनृपतिरूपेऽर्थे नियन्त्रिते व्यञ्जनयैव गौरीवल्लभरूपोऽर्थो बोध्यते । एवमन्यत् (३४) ।**

रयन् आश्रयन् । गां वृषभम् आक्रम्य आरुह्य; विभूत्या भस्मना भूषिता तनुर्देहो यस्य सः । उमावल्लभः उमायाः पार्वत्याः वल्लभः पतिः शिवः, राजति दीप्यते ।

( ३४ ) लक्ष्ये लक्षणं सङ्गमयति—**अत्रेत्यादिना** । प्रकरणेन भानुदेवनृपप्रस्तावेन करणेन, अभिधया कर्त्र्या । महादेवी पट्टमहिषी । नियन्त्रिते नियम्य प्रतिपादिते । एवमन्यदिति । अन्यत् संयोगादिनियन्त्रणस्थलीयमभिधामूलव्यञ्जनोदाहरणम् , एवमूह्यमिति शेषः ।

इदमत्र बोध्यम् ।–प्रकरणेन वर्णनीयत्वादिह च उमावल्लभशब्देन योऽयमप्रकृतो महेश्वरार्थः प्रतीयते, तस्या सम्बन्धत्वमासीदिति महेश्वरभानुदेवयोरुपमानोपमेयभावः कल्प्यते । तेन उमावल्लभ उमावल्लभ इवेत्युपमालङ्कारध्वनिः ।

व्यञ्जनयैव बोध्यत इत्यत्रैवकारस्यायमाशयः—इह खलु उमावल्लभशब्दात् येयं द्वितीयाऽर्थप्रतीतिस्तत्राभिधायाः प्रकृतार्थमात्रबोधनविरमात् लक्षणायाश्च मुख्यार्थबाधहेतुकत्वात् तात्पर्य्यस्यापि शक्त्यभिहितलक्षितसंसर्गमात्रबोधननैयत्यात् व्यञ्जनाख्या तुरीया वृत्तिरुपास्यैवेति ।

नन्वत्राप्यर्थभेदेन शब्दभेद इति दर्शनाच्छब्दभेदद्वयमस्ति, तच्च साजात्यादैक्यभ्रमहेतुः । अतश्च प्रथममुमावल्लभादिपदेन राजार्थबोधनाद् विरतायां प्रथमाभिधायां द्वितीयः शब्दानुष्ठानोऽभिधाशक्त्या द्वितीयार्थं बोधयतु, किं वृत्त्यन्तरकल्पनयेति चेत् , न, अत्र हि शब्दद्वयकल्पने कथं प्रकृतार्थस्य प्रथमं प्रतीतिः स्यात् , द्वयोरभिधात्वेन पूर्वपश्चाद्भावनैयत्यासम्भवात् । एवं—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥

इत्यादावपि विषशब्दस्य गरलार्थत्वे भुजगादिपदसान्निध्यान्न पुनरभिधाया उज्जीवनं किन्तु व्यञ्जनैव व्यापारः । किन्त्वत्र द्वितीयार्थबोधे हेतुर्भुजगादिरूपः शाब्दः, 'दुर्गालङ्घित' इत्यादावार्थः । 'येन ध्वस्त' इत्यादौ तु नियामकाभावादनेककालविषयः सन्देहः । 'व्यथां द्वयेषामपि मेदिनीभृताम्' इत्यादौ चोभयाभिधानमपीति चण्डीदासपण्डिताः । एतन्निराकरिष्यामहे श्लेषालङ्कारव्याख्यानावसरे । 'दुर्गालङ्घित' इत्यादौ च द्वितीयार्थस्यानुभवसिद्धस्याभावं वदतो महिमाचार्य्यस्य गजनिमीलिकैव । दुर्व्याख्यातृदुरुपदंशपरम्परयैव द्वितीयार्थप्रत्याख्याने व्यासवाल्मीकिप्रभृतिमहाकवीनां तादृशकाव्यनिबन्धस्य निष्फलताप्रसङ्गः । अर्थद्वयस्यापि प्रतीयमानत्वविशेषात् व्याख्याविशेषविनिगमनायां प्रामाण्याभावश्च । किञ्च द्वितीयार्थबोधने धर्म्मिकल्पनातो धर्म्म-

लक्षणामूलामाह—(३५)

**लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ।**

**यया प्रत्याय्यते सा स्याद्व्यञ्जना लक्षणाश्रया ॥१५॥ (३६)**

"गङ्गायां घोषः" इत्यादौ जलमयाद्यर्थबोधनादभिधायां तटाद्यर्थबोधनाच्च लक्षणायां विरतायां यया शीतत्वपावनत्वाद्यतिशयादिर्बोध्यते सा लक्षणामूला व्यञ्जना (३७)।

एवं शाब्दीं व्यञ्जनामुक्त्वा आर्थीं व्यञ्जनामाह—(३८)

**वक्तृ-बोद्धव्य-वाक्यानामन्यसन्निधिवाच्ययोः ।**

**प्रस्ताव-देश-कालानां काकोश्चेष्टादिकस्य च ॥ १६ ॥**

**वैशिष्ट्यादन्यमर्थं या बोधयेत् सार्थसम्भवा । (३९)**

---

कल्पनमिति भिन्नशब्दकल्पना भिन्नैव व्यञ्जनाख्या वृत्तिरङ्गीकर्त्तुमुचिता । तस्यास्तु यत्र तत्र प्रसरेऽतिप्रसङ्गभीत्या सम्बन्धत्वेन सैवाभिधाऽऽश्रीयत इति सर्वमवदातम्— इति पुत्रोक्तिः ।

( ३५ ) **लक्षणेति** । लक्षणामूलाम् उद्देशक्रमप्राप्ताम् । इति शेषः ।

( ३६ ) **लक्षणोपास्यत इति** । यस्य कृते यन्निमित्तम्, लक्षणा प्रयोजनमूलकलक्षणा, उपास्यते शब्दशक्तित्वेनाङ्गीक्रियते । तत्तु प्रयोजनं; यया शब्दशक्त्या प्रत्याय्यते । सा शब्दशक्तिः; लक्षणाश्रया लक्षणामूला व्यञ्जना । लक्षणाहेतुभूतप्रयोजनबोधकत्वं लक्षणामूलव्यञ्जनात्वमिति निष्कृष्टलक्षणम् ।

( ३७ ) उदाहरणं दर्शयति—**गङ्गायामिति** । अभिधायां विरतायामित्यग्रेणान्वयः । चकारात् तात्पर्य्यार्थबोधनात् तात्पर्य्याख्यायां वृत्तौ विरतायामिति च लभ्यते । "शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावः" इति न्यायादिति भावः । यया शब्दस्य शक्त्या । शब्दगताभिधालक्षणामूलकत्वादुक्तद्विविधा शाब्दी व्यञ्जनेति ज्ञेयम् ।

( ३८ ) प्रकरणसङ्गतिमाह—**एवमिति** ।

( ३९ ) **वक्त्रिति** । परप्रतिपत्तये यो वाक्यमुच्चारयति स वक्ता, बोधनीयः पुरुषो बोद्धव्यः, साकाङ्क्षाणां पदानां समूहो वाक्यं च तेषाम् । अन्यस्य वक्तृबोद्धव्यभिन्नस्य योग्यस्य सन्निधिः सामीप्यम्, वाच्यः शक्योऽर्थः तयोः । प्रस्तावः प्रकरणम्, देशो विजनादिः, कालो वसन्तादिः तेषाम् । काकोः विकृतस्वरस्य, उच्चारयितुः शोकाद्यनुमापको जातिविशेषः काकुस्तस्या इत्यर्थः, तदुक्तं—"भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते" इति "काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः" इति च । चेष्टादिकस्य अङ्गभङ्गयादेश्च, आदिशब्दान्निश्चेष्टत्वादेश्च । वैशिष्ट्यात् सम्बन्धात् वैलक्षण्याद्वा हेतोः, या शक्तिः, अन्यं वाच्यलक्ष्यभिन्नमर्थम्, बोधयेत् प्रत्याययेत्, सा

व्यञ्जनेति सम्बध्यते(४०) तत्र वक्तृ-वाक्य-प्रस्ताव-देश-कालवैशिष्ट्ये यथा मम—

"कालो मधुः कुपित एष च पुष्पधन्वा
धीरा वहन्ति रतिखेदहराः समीराः ।
केलीवनीयमपि वञ्जुलकुञ्जमञ्जु-
दूरे पतिः कथय किं करणीयमद्य ॥" (४१)

अत्रैतं देशं प्रति शीघ्रं प्रच्छन्नकामुकस्त्वया प्रेष्यतामिति सखीं प्रति कयाचिद्व्यज्यते ।

बोद्धव्यवैशिष्ट्ये यथा—

"निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरः
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि ! दूति ! बान्धवजनस्याज्ञातपीडागमे !
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥" (४२)

---

अर्थसम्भवा आर्थी व्यञ्जना स्यात् । वाच्येति लक्ष्यव्यङ्ग्ययोपलक्षणम् । वैशिष्ट्यादिति पञ्चम्यर्थः सहकारित्वरूपं हेतुत्वम् । तच्च तदभावे व्यञ्जनानुदयाद् बोद्धव्यम् । एवञ्च वक्त्रादिवैलक्षण्यहेतुका याऽन्यार्थधीस्तद्धेतुशक्तित्वमर्थव्यञ्जनात्वम् ।

( ४० ) **सम्बध्यत इति** । कारिकयेति शेषः ।

( ४१ ) **काल इति** । कालो मधुर्वसन्तः । एषोऽनुभूयमानः, एतेन तत्कालानुभूयमानोन्मादकत्वं कामस्य सूचितम्, पुष्पधन्वा मदनश्च कुपितः, अत्यन्तसन्तापदायकत्वादिति भावः । धीरा मन्दाः, अतएव रतिखेदहराः रमणजनितश्रमोपशमनसमर्थाः, समीरा वायवो वहन्ति वान्ति । इयमपि केलिवनी अल्पोद्यानं वञ्जुलकुञ्जेन अशोकशाखावृतस्थानेन मञ्जुर्मनोज्ञा । दूरे च पतिर्भर्त्ता न तु प्रियः । तस्मादद्य किं करणीयं तत् त्वं कथय भण ।

अत्र वक्तृनायिकाया मदनविह्वलत्वादिना वैशिष्ट्यम्, वाक्यस्य तथाऽनुभूयमानविच्छित्तियुक्तत्वेन वैशिष्ट्यम्, प्रस्तावस्य पतिदूरस्थित्यादिना वैशिष्ट्यम्, देशस्य क्रीडावनरूपस्य वञ्जुलकुञ्जादिना वैशिष्ट्यम्, कालस्य वसन्तत्वेन वैशिष्ट्यम् । एवमेषां वैशिष्ट्येन वक्रोक्त्या व्यङ्ग्यार्थप्रकाशनं स्फुटमेव ।

( ४२ ) **निःशेषेति** । नायकानयनाय प्रेषितां तमेव नायकं सम्भुज्य समागतां तां दूतीं प्रति स्नानकार्य्यप्रकाशनमुखेन सम्भोगं प्रकाशयन्त्या विदग्धोत्तमनायिकाया उक्तिरियम् ।—अयि मिथ्यावादिनि !=तदन्तिकमगत्वैव मया गत्वा बहुधा प्रसादितोऽपि स नागत इति मिथ्याभाषणशीले ! । बान्धवजनस्य मद्रूपस्य सुहृज्जनस्य अज्ञातः स्वार्थसाधनपरायणतयाऽनाकलितः पीडायाः वियोगानलसम्भूताया

**अत्र तदन्तिकमेव गतासीति विपरीतलक्षणया लक्ष्यम्। तस्य च रन्तुमिति व्यङ्ग्यं प्रतिपाद्यं दूतीवैशिष्ट्याद् बोध्यते (४३)।**

आगमः प्राप्तिर्यया तत्सम्बोधने। हे दूति! सन्देशहरे! न तु सखि!, मत्प्रतारणा कर्तृत्वात्, दूतीत्यनेन मिथ्याभाषणशीलत्वयोग्यता व्यज्यते। तव स्तनयोः कुचयो-स्तटं प्रान्तसमदेशः, निःशेषं यथा स्यात्तथा च्युतं स्खलितं चन्दनं यस्मात्तथाभूतम्, न तु उरःस्थलं नापि सन्ध्यादिरूपनिम्नोन्नतभागोऽपि, वापीगतबहलयुवजनत्रपापा-रवश्यार्दसद्वयलग्नाग्रस्वस्तिकीकृतभुजलतायुगलेन तटस्यैवोन्नततया मुहुर्मुहुः परा-मर्शात्। अतएव च्युतमित्युक्तम्, न तु च्यावितं क्षालितं वेति, युवजनसंमर्दैन तत्राप्यनवकाशात्। व्यङ्ग्यपक्षे तु तटे एव मर्दनाधिक्यात् सन्ध्यादौ नायककरपराम-र्शायोगाच्च तटमेव तथा भूतमिति स्पष्टमेव। तव अधरः अधरोष्ठः, निःशेषं यथा स्यात्तथा मृष्टः न त्वीषन्मृष्टः रागः ताम्बूलरक्तिमा यस्य तथाभूतः, उत्तानत्वेन बहु-लजलसम्बन्धात्, न तूत्तरोष्ठः न्युब्जतया तदसम्बन्धात्। व्यङ्ग्यपक्षे तु अधरोष्ठे एव कामशास्त्रे चुम्बनविधेः उत्तरोष्ठे चुम्बननिषेधाच्च तत्रैव तत्कृतं तथात्वम्। तव नेत्रे चक्षुषी दूरं प्रान्तभागे एव अनञ्जने कज्जलरहिते, स्नानकाले नयनयोर्मुद्रणात् मध्ये जलसम्बन्धाभावात्। व्यङ्ग्यपक्षे तु प्रान्ते एव कामशास्त्रे चुम्बनविधेर्मध्ये तन्निषे-धाच्च तत्रैवानञ्जनत्वम्। तथा तव इयं दृश्यमाना तनुः शरीरं तन्वी कृशा स्नान-जन्यशीतवशात्, अतएव पुलकिता पुलका रोमोद्गमाः सञ्जाता अस्यास्तथाभूता। व्यङ्ग्यपक्षे तु कार्श्यं सुरतश्रमात्, पुलकश्च तत्रानुभूताद्भुतरसस्मरणात्। अतएव त्वम् इतो मत्सकाशात् वापीं दीर्घिकामेव स्नातुं स्नानार्थं जलावगाहनं कर्त्तुं गता-ऽसि। पुनः किन्तु तस्य बहुधा कृतापराधस्य, अत एवाधमस्य दुःखप्रयोजककर्म्म-शीलस्य नीचनायकस्य अन्तिकं समीपं न गतासीत्यन्वयः।

(४३) **अत्रेत्यादि।** अयमभिप्रायः।—स्नानेनोरुःस्थलकुचसन्ध्यादिरूप-निम्नोन्नतभागगतचन्दनस्यापि क्षालनसम्भवे स्तनतटचन्दनमात्रस्य च्युतिमात्रकथ-नात्, तथा स्नानेनाधरोत्तरयोरुभयोरप्योष्ठयोरेव ताम्बूलादिरक्तिमलोपसम्भवे अधर-मात्रस्यैव रागलोपाभिधानात्, तथा स्नानेन सर्वतो नयनयोरनञ्जनत्वसम्भवे नेत्रयोः प्रान्तभागे एवाञ्जनरहितत्वोक्तेः, एवं स्नानेन शीतोदयात् तस्मिन् क्षणे एव रोमाञ्चा-दिसम्भवे बहुपरक्षणेऽपि तद्वचनात् तात्पर्य्यानुपपत्त्या मुख्यार्थबाधः। तस्मादेषां पदार्थानां वापीस्नानविरुद्धानामनुसन्धानादेव वापीस्नानाभावमात्रस्य प्ररोहाभावेन तदन्तिकं न गतासीत्यत्र 'उपकृतं बहु तत्र' इत्यादिवत् विपरीतलक्षणया तदन्तिकं= नायकान्तिकमेव गतासि इति लक्ष्यते। प्रयोजनमत्र रमणमिति प्रयोजनमूलेयं लक्षणा। सम्बन्धश्च वैपरीत्यलक्षणः।

व्यङ्ग्यार्थं दर्शयति—**तस्येति।** तस्य गताऽसीत्यस्य। रन्तुमित्यतः पूर्वं तेन

**अन्यसन्निधिवैशिष्ट्ये यथा—**

**"उअ णिच्चल ! णिप्पन्दा भिसिणीपत्तम्मि रेहइ बलाआ ।**

**णिम्मल-मरगअ-भाअण-परिट्ठिआ सङ्खसुत्तिव्व ॥"(४४)**

**अत्र बलाकाया निष्पन्दत्वेन विश्वस्तत्वम्, तेनास्य देशस्य विजनत्वम्, अतः सङ्केतस्थानमेतदिति कयापि सन्निहितप्रच्छन्नकामुकं प्रत्युच्यते। अत्रैव स्थानविजनत्वरूपं-व्यङ्ग्यार्थवैशिष्ट्यं प्रयोजकम्(४५)।**

---

सहेति शेषः । **दूतीवैशिष्ट्यादिति** । निरुक्तसुरतचिह्नचतुष्टयमेव दूतीवैशिष्ट्यम् । तच्च उरःकरसम्मर्द्दनेन स्तनतटस्यैव निःशेषचन्दनच्युतिः, चुम्बनेन अधरस्यैव रागभ्रंशः, तेनैव नेत्रप्रान्तयोः कज्जललोपः, सुरतश्रमाच्च कार्श्यं तत्रानुभूताद्भुतरसस्मरणात् पुलकश्चेति ।

( ४४ ) **उअ इत्यादि** । हालकविकृतायां शालिवाहनसप्तशत्यां गाथाकोशे प्रथमशतके चतुर्थपद्यमिदम् । जनागमनशङ्कया पूर्वकृतसङ्केतस्थानत्वसन्देहेन रमणोद्यमहीनमासन्नमुपपतिं प्रति रमणसत्वरायाः कस्याश्चिदुक्तिरियम् ।

पश्य निश्चलनिष्पन्दा विसिनीपत्रे राजते वलाका ।
निर्म्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥

इति संस्कृतानुवादः । अस्य व्याख्या—हे निश्चल ! जनागमनशङ्कया विहार (रमण) व्यापारनिरुद्योग ! निर्म्मलं स्वच्छं यत् मरकतस्य नीलमणेः भाजनं पात्रं तत्र परिस्थिता विद्यमाना शङ्खशुक्तिः शङ्खकपालमिव, शङ्खशुक्तिश्च शङ्खघटितं शुक्त्याकारं पात्रम्, न तु मुक्ताशुक्तिः, तस्या बलाकावर्णत्वाभावात्, शङ्खशुक्तिपदस्य तत्रासामर्थ्याच्च । अत्राचेतनोपमया लेशतोऽपि क्षोभाभावः, तेन निर्जनत्वं गम्यते । निष्पन्दा वलाका वकपक्षिणी विसिनीपत्रे कमलिनीपर्णे राजते विद्यते, इति त्वं पश्य । अत्र वाक्यार्थः कर्म्म ।

केचित्तु—निश्चला चासौ निष्पन्दा चेति विशेषणोभयकर्म्मधारयः, शीतोष्णं जलमितिवत् । चलनं शरीरक्रिया स्थानान्तरप्रापिका, स्पन्दस्त्ववयवक्रिया स्थानान्तराप्रापिका 'स्पदि किञ्चिच्चलने' इति धात्वनुसारात्—इत्याहुः ।

( ४५ ) **अत्रेति** । अत्र अस्मिन् काव्ये । निष्पन्दत्वेन वाच्येन । विश्वस्तत्वं आश्वस्तचित्तत्वम्; अभीतत्वं वा व्यङ्ग्यम् । तेन उक्तव्यङ्ग्येन विजनत्वं जनरहितत्वं व्यङ्ग्यमिति शेषः । फलितमाह—**अत इति** । सन्निहितप्रच्छन्नकामुकम् अव्यवधानसंस्थं गुप्तकामिनमुपनायकं प्रति । उच्यते उक्तिवत्स्पष्टं व्यञ्जनया प्रतिपाद्यते । सान्निध्यं तावदत्राव्यवधानम्, तस्य चात्र प्रच्छन्नकामुककृतत्वमेव वैशिष्ट्यम्, तद्भिन्नव्यक्तिसन्निधाने ईदृशोक्तेर्निष्पन्नत्वादिति भावः । अत्रैव अस्मिन्नुदाहरणे एव स्थाननि-

"भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते ।" इत्युक्तप्रकारायाः काकोर्भेदा आकरादिभ्यो ज्ञातव्याः (४६) ।

एतद्वैशिष्ट्ये यथा—

"गुरुपरतन्त्रतया वत दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते नैष्यति सखि ! सुरभिसमयेऽसौ ॥" (४७)

---

अनतत्वरूपस्य व्यङ्ग्यार्थस्य अनायासबोध्यस्येत्यर्थः वैशिष्ट्यमाधिक्यं प्रयोजकम्, अन्यसन्निधिवैशिष्ट्यमूलकव्यञ्जनाया निष्पादकं वेदितव्यमिति शेषः । स्थानस्यातिनिर्जनत्वरूपव्यङ्ग्यार्थेनैव सान्निध्यगतप्रच्छन्नकामुककृतत्वरूपवैशिष्ट्यस्य निष्पादितत्वादित्यभिप्रायः ।

वाच्यवैशिष्ट्ये यथा काव्यप्रकाशे उदाहृतम्—

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।
किञ्चैतस्मिन् सुरतसुहृदस्तन्वि ! ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥

अत्र नर्मदोद्देशरूपस्य तद्विशेषणीभूतवातकुञ्जादिरूपस्य च वाच्यस्य (क) यथोक्तविशेषणस्य वैशिष्ट्यात् सुरतार्थं प्रविशेति व्यज्यते ।

( ४६ ) परोक्तं काकोः सामान्यलक्षणमाह—**भिन्नकण्ठेति** । भिन्नकण्ठध्वनिर्विकृतकण्ठस्वरः । व्याख्यातमिदं कारिकाव्याख्यानावसरे । **आकरेभ्य इति** । उपजीव्यमानभरतादिग्रन्थेभ्यः । तथा चोक्तं—

"वाक्याभिधीयमानेऽर्थे येनान्यः प्रतिपद्यते ।
भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते" ॥ इति ।

( ४७ ) प्रवासं जिगमिषौ नायके नायिकायाः सख्याश्च वचनप्रतिवचनरूपं पद्यमिदम् ।—**गुर्विति** । हे सखि ! गुरुपरतन्त्रतया पित्राद्यधीनतया, वतेति खेदे, दूरतरं देशं विषयान्तरं गन्तुमुद्यतः उद्युक्तः, असौ मम कान्तः, अलिकुलैः भ्रमरसमूहैः कोकिलैश्च ललिते रमणीये, सुरभिसमये वसन्तकाले, नैष्यति नागमिष्यति ।

अत्र नैष्यतीति निषेधाभिप्रायेण नायिकयोक्तम् । पुनस्तदेवोत्तरयन्त्या सख्या तु 'न एष्यति' अपि तु एष्यत्येवेत्यर्थतया काक्वा योज्यते । अत्रान्यथायोजनं च व्यञ्जनयैवेति—प्रकाशप्रदीपोद्द्योतयोः स्पष्टम्

---

( क ) यथोक्तविशेषणस्येति बहुव्रीहिः । उद्देशविशेषणानि सरसेत्यादीनि, वातविशेषणं सुरतसुहृत्त्वम्, कुञ्जविशेषणं गुञ्जन्मधुकरकरम्बितकुसुमसमृद्ध्यादिरूप उत्कर्ष इति बोध्यम् ।

अत्र नेष्यस्यपि तर्हि एष्यस्येवेति काका व्यज्यते(४८)।
चेष्टावैशिष्ट्ये यथा—

"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥" (४९)

अत्र सन्ध्या सङ्केतकाल इति पद्मनिमीलनादिचेष्टया कयाचित् द्योत्यते (५०)। एवं वक्त्रादीनां व्यस्तसमस्तानां वैशिष्ट्ये बोद्धव्यम्(५१)।

त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता ॥१७॥ (५२)

( ४८ ) अत्र व्यङ्ग्यार्थं स्वयं दर्शयति—**अत्रेति** । अत्र अस्मिन्नुदाहृते पद्ये । अपि तर्हि अपि तु । अत्र काकोः सम्भावनासूचकत्वरूपं वैशिष्ट्यं बोध्यम् ।

( ४९ ) **सङ्केतेति** । आनन्दवर्धनकृते ध्वन्यालोके द्वितीयोद्योते उदाहृतं पद्यमिदम् । विदग्धया चतुरया कयाचिदुपनायिकया, ईषत् स्वल्पं यथा स्यात्तथा, नेत्राभ्याम् अर्पितं सूचितम् आकूतं रहस्य येन तादृशं, विटं जारम् (पिङ्गम् = उपपतिम्), सङ्केतकाले मनो यस्य तादृशं सङ्केतकालजिज्ञासुमिति तात्पर्य्यम्, ज्ञात्वा लीलापद्मं क्रीडासम्बन्धि कमलं, निमीलितं सङ्कोचितमित्यर्थः । 'हसन्नेत्रार्पिते'ति पाठे हसद्भ्यां विकसद्भ्यां नेत्राभ्यामित्यर्थः । प्रकाशसुधासागरकारास्तु—'हस्ते नेत्रार्पिताकूतम्' इति पाठं मन्यमानाः,—नेत्रे अर्पितः एकस्मिन्नयने किञ्चिन्निमीलने कृतः आकूतः अभिप्रायसूचको व्यापारविशेषो येन तादृशं विटं सङ्केतकालमनसं ज्ञात्वा लीलापद्मं हस्ते निमीलितम् अपरहस्तेनाच्छादितम्—इति व्याचख्युः ।

अत्र जिज्ञासितः सङ्केतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः—इति प्रकाशः ।

( ५० ) **अत्रेति** । अत्र नेत्रार्पिताकूतत्वमेव चेष्टावैशिष्ट्यम् । पद्मनिमीलनादीत्यादिपदेन नेत्रविस्तारग्रहणम् । चेष्टादेत्यादिपदेन वर्णनीयनायकादिगतसात्त्विकादिपरिग्रहः ।—इति पुत्रः । चेष्टादिकस्येत्यादिपदेन चेष्टाविरहादिग्रहः । तद्वैशिष्ट्ये यथा—

नादत्ते भूषणं दत्तं नाहूता चिरमृच्छति ।
मृगाक्षी न क्षिपत्यक्षि सादरं मयि पश्यति ।

अत्र चेष्टाविरहेण कोपो व्यज्यते । तस्य च कान्तापराधकालीनत्वं वैशिष्ट्यम् ।—इति विवृतिकारः ।

( ५१ ) **एवमिति** । वक्त्रादीनां कारिकोक्तवक्तृप्रभृतीनां मध्ये व्यस्तानामेकैकेषां समस्तानाम् एकपद्यादौ कियतां सर्वेषां वा मिलितानाम् । तथा चात्र संख्यानियमस्यानादृतत्वात् वक्तृप्रभृतिकतिपयवैशिष्ट्ये 'कालो मधुः' इत्यादि, एकैकवैशिष्ट्ये च 'निःशेषे' त्याद्युदाहृतमिति बोध्यम् ।

( ५२ ) आर्थ्या व्यञ्जनाया भेदमाह—**त्रैविध्यादिति** । अर्थानां त्रैविध्यात्

अर्थानां वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रिरूपतया सर्वा अप्यनन्तरोक्ता व्यञ्जनास्त्रिविधाः। तत्र वाच्यार्थस्य व्यञ्जना यथा—"कालो मधुः" इत्यादि (५३)। लक्ष्यार्थस्य यथा—"निःशेषच्युतचन्दनम्" इत्यादि (५४)। व्यङ्ग्यार्थस्य यथा—"उअ णिच्चल !" इत्यादि (५५)। प्रकृतिप्रत्ययादिव्यञ्जकत्वन्तु प्रपञ्चयिष्यते (५६)।

**शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः।**
**एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ॥१८॥ (५७)**

वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रिप्रकारतया इयमार्थी व्यञ्जना प्रत्येकमुक्तानां मध्ये एकैकैव त्रिविधा मता। तदुक्तं प्रकाशे—'सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते'। इति सर्वेषां वाच्यलक्ष्यव्यङ्ग्यानामित्यर्थः।

(५३) **काल इति।** अत्र वाच्येनैवार्थेन वक्त्रादिरूपतत्तद्वैशिष्ट्यात् 'प्रच्छन्नकामुकस्त्वया प्रेषणीयः' इति सामाजिकैर्व्यङ्ग्यार्थप्रतीतेः तस्यैव व्यञ्जना = व्यञ्जकत्वमिति बोध्यम्।

(५४) **निःशेषेति।** अत्र विपरीतलक्षणया लक्षितेन 'तदन्तिकमेव रन्तुं गतासि' इत्यनेन 'रन्तु'मिति दूतीवैशिष्ट्यात्प्रतीतेर्लक्ष्यार्थस्यैव व्यञ्जना = व्यञ्जकत्वमिति बोध्यम्।

(५५) **उ अ इति।** अत्र निष्पन्दत्वेन वाच्येन आश्वस्तत्वं व्यज्यते, तेन च व्यङ्ग्यार्थेन देशस्य विजनत्वं व्यङ्ग्यमित्यन्यसन्निधिवैशिष्ट्यात्प्रतीतेर्व्यङ्ग्यस्यैव व्यञ्जना = व्यञ्जकत्वमिति बोध्यम्।

(५६) **प्रपञ्चयिष्यते इति।** असंलक्ष्यक्रमव्यङ्ग्यध्वन्युदाहरणे इति शेषः।

(५७) ननु शाब्द्यां व्यञ्जनायामर्थस्य आर्थ्यामपि व्यञ्जनायां शब्दस्योपयोगित्वमस्त्येवेति कीदृशमनयोर्भेदकारणमत आह—**शब्दबोध्य इति।** शब्दबोध्यः शब्दप्रतिपाद्यो यःकश्चिदर्थो व्यनक्ति स्वभिन्नमर्थं व्यक्तीकरोति। यथा 'सङ्केतकालमनसम्' इत्यादौ लीलापद्मनिमीलनरूपो वाच्यार्थः 'सन्ध्या सङ्केतकालः' इति स्वभिन्नमर्थं व्यक्तं करोति। तथा अर्थान्तराश्रयः व्यङ्ग्येतरार्थोपस्थापकः शब्दोऽपि व्यनक्ति अर्थान्तरं व्यक्तीकरोति। यथा 'गङ्गायां घोषः' इत्यत्र गङ्गाशब्दः प्रवाहतीररूपवाच्यलक्ष्यार्थभिन्नं शीतत्वपावनत्वाद्यतिशयरूपमर्थं व्यनक्ति। तथा च अर्थनिरूपितत्वे नार्थव्यञ्जनात्वस्य शब्दनिरूपितत्वेन च शाब्दव्यञ्जनात्वस्य व्यवस्था नैव स्यात्, उभयोर्वैपरीत्येनोभयनिरूपितत्वादिति भावः। इति अनुपपत्तिदर्शनानन्तरमुपपत्तिमाह—**एकस्येति।** एकस्य एकतरस्य व्यञ्जकत्वे साक्षाद्व्यञ्जने अन्यस्य व्यवहितस्यान्यतरस्य सहकारिता अप्रधानकारणत्वं स्वीक्रियत इति शेषः। अप्रधानत्वं च व्यवहितोपकारित्वेन। तथा च यत्रार्थः साक्षाद् व्यनक्ति तत्र शब्दस्य सहकारितैवेति

**यतः शब्दो व्यञ्जकत्वेऽर्थान्तरमपेक्षते, अर्थोऽपि शब्दम्। तदेकस्य व्यञ्जकत्वे अन्यस्य सहकारिता अवश्यमङ्गीकर्त्तव्या (५८)।**

**अभिधादित्रयोपाधिवैशिष्ट्यात्त्रिविधो मतः ।**
**शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा ॥१६॥ (५९)**

**अभिधोपाधिको वाचकः। लक्षणोपाधिको लक्षकः। व्यञ्जनोपाधिको व्यञ्जकः।**

साक्षादर्थमूलत्वमार्थव्यञ्जनात्वम्, यत्र तु शब्दः साक्षाद् व्यनक्ति तत्रार्थस्य सह कारितैवेति साक्षाच्छब्दमूलत्वं शाब्दव्यञ्जनात्वमिति चानयोर्भेदव्यवस्थेति भावः । एवञ्च 'सङ्केतकालमनसम्' इत्यादौ लीलापद्मनिमीलनरूपार्थप्रतीत्यनन्तरमेव 'सन्ध्या सङ्केतकालः' इति व्यङ्ग्यार्थप्रतीतेस्तत्रार्थव्यञ्जना । 'गङ्गायां घोषः' इत्यादौ शब्द-प्रतीत्यनन्तरमेव शीतत्वपावनत्वातिशयादिरूपव्यङ्ग्यार्थप्रतीतेस्तत्र शाब्दव्यञ्जनेति न काप्यनुपपत्तिः ।

पुत्रोऽप्येवमेवाह । यथा—अयमर्थः—शब्दार्थयोरेकस्य व्यञ्जकत्वे तदितरः सह-कारी । स त्ववर्जनीयः सन्निधिमात्रेणावस्थितः । किन्तु यत्र यच्छक्तिरुत्कटा तत्र तन्मूलो व्यञ्जकत्वव्यपदेशः । द्वयोरुत्कटत्वे उभयशक्तिमूलत्वम्—इति ।

ननु नाटकादौ वेशाभिनयादेरपि व्यञ्जकत्वसम्भवेन कथं व्यञ्जकद्वैविध्यमात्रमुक्त-मिति चेत्, न, तत्रापि शब्दोपहितार्थस्यैव व्यञ्जकत्वाङ्गीकारात्। वेशाभिनयादेस्तु चेष्टादिवैशिष्ट्यरूपसहकारित्वोपगमात् । तत्र शब्दसत्त्वेऽपि वेशाभिनयदर्शनस्य प्राधान्येनैव दृश्यव्यवहारः । अत एव वक्ष्यति—

> "श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः ।
> भवदर्थमिव निबद्धं नाट्यं सीतास्वयं वरणम्" ॥ इति । इति विवृतिकाराः ।

( ५८ ) विवृणोति—**यत इति** । यतः यस्माद्धेतोः । अर्थान्तरं व्यङ्ग्येतर मर्थम् । अपेक्षते नियतोपस्थाप्यत्वादिति भावः । शब्दमपेक्षत इत्यनुषज्यते । तत् तस्माद्धेतोः । अवश्यमङ्गीकर्तव्या तयोरजसम्बन्धादिति शेषः ।

( ५९ ) एवमर्थानां शक्तीनां च त्रैविध्यं दर्शयित्वा शब्दानामपि त्रैविध्यं दर्श-यति—**अभिधेति** । अभिधादित्रयोपाधिवैशिष्ट्यात्=अभिधा—लक्षणा—व्यञ्जना-रूपत्रिविधशक्ति ( व्यापार ) विशेषितत्वादित्यर्थः, शब्दोऽपि त्रिविधः=वाचकः लक्षकः व्यञ्जकश्चेति त्रिप्रकारको मतः । त्रिधेत्यनेनोपाधीनामेव त्रित्वं न तूपाधेया-नाम् । न हि कश्चित् वाचक एव कश्चिल्लक्षक एव कश्चिद् व्यञ्जक एवेत्यस्ति नियमः । अत एव 'गङ्गायां घोषः' इत्यादावेकस्यापि गङ्गाशब्दस्य वाचकत्वं लाक्षणिकत्वं व्य-ञ्जकत्वं चोपपद्यते ।

किञ्च—

**तात्पर्य्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने ।**
**तात्पर्य्यार्थं तदर्थञ्च वाक्यं तद्बोधकं परे ॥२०॥ (६०)**

**अभिधाया एकैकपदार्थबोधनविरामात् वाक्यार्थरूपस्य पदार्थान्वयस्य बोधिका तात्पर्य्यं नाम वृत्तिस्तदर्थश्च तात्पर्य्यार्थः तद्बोधकञ्च वाक्यमित्यभिहितान्वयवादिनां मतम् (६१) ।**

**इति साहित्यदर्पणे वाक्यस्वरूपनिरूपणो नाम**
**द्वितीयः परिच्छेदः ॥**

( ६० ) इह यद्यपि गुरुमतमाश्रित्य शब्दार्थशक्तीनां त्रैविध्यमेव दर्शितं तथाप्यभिहितान्वयवादिमतेऽपि नौदासिन्यमस्माकं व्यञ्जनामात्रप्रसाधनग्रहिलत्वादित्यत आह—**किञ्चेति । तात्पर्य्याख्यामिति ।** परे भाट्टमीमांसकाः प्राचीननैयायिकाश्च, पदार्थानाम् अभिधया लक्षणया वोपस्थापितानामर्थानाम् अन्वयबोधने परस्परयथासम्भवसम्बन्धबोधने तात्पर्य्याख्यां तात्पर्य्यनाम्नी द्वितीयलक्षणापर्य्यायां वृत्ति शक्तिमाहुः । तथा तस्यास्तात्पर्य्यवृत्तेरर्थं प्रतिपाद्यं तात्पर्य्यार्थम्, तथा वाक्यमेव तस्य तात्पर्य्यार्थस्य बोधकमुपस्थापकञ्चाहुः । तात्पर्य्यवृत्तिप्रतिपाद्योऽर्थस्तात्पर्य्यार्थः, तदर्थबोधकं वाक्यमेव; न त्वभिधादिद्वारा वाक्यघटकः शब्द इत्याहुरित्यर्थः । तदुक्तं प्रकाशे—आकाङ्क्षायोग्यतासन्निधिवशाद् वक्ष्यमाणस्वरूपाणां पदार्थानां समन्वये तात्पर्य्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम् ।-इति ।

( ६१ ) व्याचष्टे—**अभिधाया इति ।** अभिधाया इति ।लक्षणाया उपलक्षणम् । विरमात् 'शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावः' इत्युक्तनयेनेति शेषः । तात्पर्य्यं नाम वृत्तिरिति । अयमाशयः—घटं करोतीत्यादौ घटवृत्तिकर्म्मतानुकूलकृतिरित्यर्थो बोध्यते, तत्र च घटशब्दस्य घटोऽर्थः, अम्प्रत्ययस्य च कर्म्मता, वृत्तिता तु न कस्याप्यर्थः, तत्तदर्थं प्रतिपाद्य विरताया अभिधाया पुनरुत्थानासम्भवात् तत्तच्छब्देन पुनर्वृत्तितारूपोऽर्थः प्रतिपादयितुं शक्यते । अतो वृत्तितारूपार्थबोधिका तात्पर्य्यं नाम वृत्तिरवश्यमुपास्या । इयमेव तात्पर्य्यवृत्तिराधुनिकैः संसर्गमर्य्यादोच्यते । अभिहितान्वयवादिनां भाट्टमीमांसकानां प्राचीननैयायिकानाञ्च मतम् । अन्विताभिधानवादिनो मीमांसकगुरवस्तु—क्रियाकारकयोः प्रथमत एवान्वयबोधो जायते, ततः शक्तिग्रहः, पदविशेषसमभिहारात्तु विशेषस्मृतिरिति किं तात्पर्य्यवृत्तिस्वीकारेणेत्याहुः । तदुक्तं प्रकाशे—वाच्य एव वाक्यार्थ इत्यन्विताभिधान वादिनः । इति ॥

इति करशर्म्मोपाह्व-यास्क-श्रीनवकिशोरन्यायाचार्य्यविरचितायां प्रभाभिख्यायां साहित्यदर्पणटीकायां द्वितीयः परिच्छेदः ।

# तृतीयः परिच्छेदः ।

## "लक्ष्मी" नामकसंस्कृतटीकया विराजितः ।

(१)अथ कोऽयं रस इत्युच्यते—

**(२)विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा ।**
**रसतामेति रत्यादिः स्थायीभावः सचेतसाम् ॥१॥**

साम्बं सदाशिवमखण्डसुखैकराशिं, संसेव्यमानमनिशं मुनिदेववृन्दैः ।
संस्मृत्य तं पशुपतिं हृदि कामयेऽहं पायादपायपटलात्सस्सदाशिवान्नः ॥ १ ॥
"श्रीलोकनाथं" मनसा स्वजन्मदं
"लक्ष्मीं" सदाऽऽनन्दविधायिनीन्ताम् ।
ईडे च "ताराचरणं" शरण्यम् ।
गुरुं कृपासागरम॰ • स्रू ॥ २ ॥
सुधिया नवकिशोरेण यास्कैः स्वयम् ।
एतावताप्रबन्धेन व्याख्यातं प्रभया श्रिया ॥३॥
एतस्यैव हि पूर्त्यर्थं लक्ष्म्याऽलङ्कृत्य साम्प्रतम् ।
"कृष्णमोहन" शर्माऽहं तनोमिच्छात्रतुष्टये ॥ ४ ॥
गुणगुम्फितबह्वयस्तु टीकाः सन्ति मनोरमाः ।
ग्रन्थस्यास्य न सन्देहस्तथाप्यभ्यर्थना मम ॥ ५ ॥
कदाचित्किन्न ! विदुषा कटुरास्वाद्यते मुदा ।
तथैव टीकामेतान्तु जिघृक्षिष्यन्ति किन्नहि ? ॥ ६ ॥

(१) 'वाक्यं रसात्मकं काव्यमिति काव्यलक्षणघटकं वाक्यलक्षणमभिधायावसरसङ्गत्या लक्षणघटकीभूतं रसस्वरूपं प्रतिपिपादयिष्यन् पृच्छति—**अथेति** । वाक्यस्वरूपनिरूपणानन्तरं कोऽयं रसो यदात्मकं वाक्यं काव्यमिति भावः । अत्रेदम्बोद्धयम्—सङ्गतिः षड्विधा "सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा । निर्वाहकैककार्यत्वे षोढासङ्गतिरिष्यते" इति । तत्र, "चिन्तां प्रकृतसिद्धयर्थामुपोद्घातं विदुर्बुधाः" इत्युक्तदिशा प्रकृतोपपादकत्वमुपोद्घातत्वमित्युपोद्घातलक्षणं, तच्चात्र संघटत एव । सङ्गतिसामान्यलक्षणन्तु—'अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयस्मरणानुकूलसम्बन्धत्वम्' तथाहि—वाक्यनिरूपणानन्तरं रसनिरूपणे प्रयोजकजिज्ञासा रसज्ञानं मे भवतु, इत्याकारिका तज्जनकं ज्ञानं रसज्ञानं मदिष्टसाधनमित्याकारकम्, तद्विषयो रसः, तत्स्मरणानुकूलसम्बन्धः प्रकृतोपपादकत्वरूपः रसनिष्ठ इति समन्वयो बोध्यः ।

(२) **विभावेनेति** । अत्र विभावादिपदेन तज्ज्ञानं लक्षणया बोध्यते । तेन वि-

(३) विभावादयो वक्ष्यन्ते। सात्विकाश्चानुभावरूपत्वात् न पृथगुक्ताः

भावेन काव्यान्तर्गतनायकनायिकादिरूपाऽऽलम्बनविभावज्ञानेन, तथा चन्द्रचन्दनादिरूपोद्दीपनविभावज्ञानेन चेत्यर्थः। अनुभावेन अनुरागादिप्रकाशकस्तम्भस्वेदादिरूपानुभावज्ञानेनेत्यर्थः। तथा सञ्चारिणा निर्वेदादिरूपसञ्चारिभावज्ञानेनेत्यर्थः। व्यक्तः व्यञ्जित इत्यर्थः। यद्वा स्वयं स्वयं ताद्रूप्येण परिणम्य पिण्डीभावेन प्रकाशितः, सचेतसां सामाजिकानां सहृदयानां रत्यादिरनुरागप्रभृतिः स्थायीभावः स्थायिभावज्ञानं रसतां रसस्वरूपत्वमेति प्रतिपद्यते। नायकादिनिष्ठोऽपि रत्यादिर्ज्ञानसम्बन्धेन सामाजिकनिष्ठो रसो भवतीति'सार'इति सारवेदिनो वदन्ति। तत्वञ्च सामाजिकेषु विभावादिज्ञानमेव युगपद्रसरूपेण प्रकाशत इति भावः। विभावनादिव्यापारयोगाद्विभावादिसंज्ञाप्येतेषाम्बोध्या। तथाहि—वासनारूपतयातिसूक्ष्मरूपेणावस्थितान् रत्यादीन् स्थायिनः विभावयन्ति आस्वादयोग्यतां नयन्तीति विभावाः। रत्यादीन् स्थायिन अनुभावयन्ति अनुभवविषयी कुर्वन्तीति अनुभावाः। सम्यक् ( सर्वाङ्गव्यापितया ) रत्यादीन् काये चारयन्ति सञ्चारयन्ति मुहुर्मुहुरभिव्यञ्जयन्तीति वा सञ्चारिण इति। अस्मिन् पक्षे नास्ति लक्षणायाः प्रयोजनम्। काव्ये कारणानि विभावाः इति कार्याणि अनुभावा इति सहकारिणः सञ्चारिण इति व्यपदेशं लभन्ते। सर्वत्र सहार्थे तृतीया। तेन सम्भूयेति लब्धम्। अत एवाहुः प्रदीपकाराः-नन्वेवं स्थायिविभावादिसमूहालम्बनात्मिका रसस्य प्रतीतिरिति पर्यवसन्नम्। तच्च न युक्तम्। विभावादीनां पार्थक्येन प्रतीतिप्रसङ्गात् घटपटाविति समूहालम्बनवदिति चेन्न, पानकरसन्यायेन चर्वणात्। यथा पानके कर्पूरादंशो न पार्थक्येनानुभूयते तथात्रापि विभावाद्यंश इति।

**अत्र पुत्रस्तु**—"सचेतसां सहृदयनां रत्यादिः स्थायीभावः भाव्यते वास्यत इति व्युत्पत्या अनादिवासनान्तर्लीन इत्यर्थः। तदुक्तम्—

> वासनानादिकालीना यासौ हृदि सचेतसाम्।
> स्वसामग्रीं समासाद्य व्यक्ता सैति रसात्मताम्॥ इति।

यद्यपीह मिलितो रत्यादिः प्रपानकरसन्यायेन चर्व्यमाणोऽखण्डस्वरूपो रसस्तथापि लोकप्रसिद्धिमासाद्य प्रत्यभिज्ञानात् स्थायिभावो रसतामेति," इत्थं व्याख्यातवान्।

(३) उक्तं वि णोति—**विभावादय** इति। वक्ष्यन्ते इहैव परिच्छेदे। सामान्यतस्तु—

> कारणानि च कार्याणि सहकारीणि यानि च।
> रत्यादेः स्थायिनो लोके तानि चेन्नाटयकाव्ययोः।
> विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः॥

**(४)व्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतो व्यक्तीकृत एव रसो न तु दीपेन घट इव पूर्वसिद्धो व्यज्यते ।**

इत्युक्तप्रकारा बोध्याः । नन्वन्यैरुक्तम्—

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
अनीय नीतः स्वाद्यत्वं स्थायीभावो रसः स्मृतः ॥ इति ।

तर्हि सात्त्विकभावोऽपि रसादिव्यञ्जकस्तत्कथमत्र लक्षणे सात्त्विकानुपादानमित्याशङ्क्य निराकरोति—**सात्त्विकाश्चेति** । सात्त्विकाः स्तम्भस्वेदादयः । अनुभावरूपत्वान्न पृथगुक्ता इति, अनुभावग्रहणेनैव ग्रहणादिति भावः । नन्वग्रे वक्ष्यति–'सत्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावत' इति, तेन विरोध इति चेत् सत्यम् , अपिनाभेदबोधनेन विरोधाभावात् ।

(४) ननु घटदीपयोरिव व्यङ्ग्यव्यञ्जकयोः सर्वत्र व्यतिरेकदर्शनादत्रापि व्यङ्ग्यव्यञ्जकरूपयो रसविभावाद्यो र्व्यतिरेकोऽवश्यं भाव्य इति कथं "ततः संवलितः सर्वो विभावादिः सचेतसाम् । प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत्" इति वक्ष्यमाणरीत्या प्रतिपादितो रसविभावाद्योरभेदः सङ्गटत इत्यत आह—**व्यक्त** इति । दध्यादिन्यायेनेति । दुग्धं यथाम्लयोगाद्दधिरूपेण परिणम्यात्मानं दधित्वेन व्यनक्ति, तथा सहृदयवृत्तिविभावादिज्ञानं काव्यनाट्यगतवचनचातुर्यवशात् रूपान्तरेण विलक्षणसुखमयज्ञानत्वेन परिणतः सन्नात्मनैवात्मा रसत्वेन व्यक्तीकृत एव रसो व्यपदिश्यत इति भावः । दध्यादीत्यत्रादिना कुम्भादीनां परिग्रहः । एतेन विभावादिपदस्य तत्तदर्थज्ञान एव लक्षणेति मूलकृत आशयः । **अत्र वदन्ति**–"दुग्धमेवाम्लद्रव्ययोगेन दध्यादिरूपतया परिणमति । तन्न्यायेन रामादिरत्यादिरेव विभावादिनिष्ठस्वादनाख्यव्यापारेण सामाजिकरत्यादौ अभेदेनारोप्यमाणः स्वप्रकाशानन्दात्मक ज्ञानरूपतया परिणमतीत्यर्थः" इति । व्यक्त इत्यस्यकारिकास्थस्यार्थं परिणत इत्यन्तेन प्रदर्श्य तादृगवस्थ एव रसोनत्वतादृगवस्थ इति ध्वनयन्पुनराह–**व्यक्तीकृत एवेति** । एवशब्दव्यवच्छेद्यं स्वयमेव दर्शयति–**नत्विति** । **पूर्वसिद्ध** इति । दीपेन व्यक्तीकरणात्प्राङ्निष्पन्नः । रसस्य हि विभावादिज्ञानात्प्रागनिष्पन्नत्वादिति सुस्पष्टं भेदः । **तर्कवागीशास्त्वित्थं व्याचक्षते**— "दध्यादीत्यादिना प्रपाणकादि परिग्रहः । रूपान्तरं विभिन्नरूपं परिणतः प्राप्तः । यद्वा रूपान्तरं परिणतं निष्पन्नं यस्य स तथा अग्न्याहित इति वत् क्तान्तस्य परनिपातः । पयो यथाम्लयोगेन रूपान्तरं परिणतं सद्दध्युच्यते । यथा वामिक्षा कर्पूरखण्डमरिचादियोगेन रूपान्तरपरिणता प्रपाणकमुच्यते तथा रत्यादिः स्थायीभावः काव्योपस्थापितविभावादियोगेन रूपान्तरपरिणतश्चिदानन्दचमत्कारस्वरूपं प्राप्तः । विषयस्यैव ज्ञानत्वेन परिणाम इति परिणामवादिनां मतेनेदम् । ननु चिरविनष्टस्य रत्यादेः कथं रूपान्तरापत्तिरिति चेन्न, रत्यादिपदेन रत्यादितादात्म्येनाध्यवसितायाः सामाजिकवासनाया लक्षणात् । तदुक्तं प्रकाशकृता–'सामाजिकानां वासनात्मतया स्थितो रत्यादिर्भावः'

(५)तदुक्तं लोचनकारैः—"रसाः प्रतीयन्त इति त्वोदनं पचतीतिवद् व्यवहारः" इति । (६)अत्र च रत्यादिपदोपादानादेव प्राप्ते स्थायित्वे

इति । वासामनङ्गीकुर्वतां मतमाह-व्यक्तीकृत इति । व्यक्तीकृत एव ज्ञानविषयतापन्न एव रत्यादी रसः । एवकारेण वस्तुसत्वव्यवच्छेदः । चिरविनष्टस्यापि ज्ञानविषयत्वसम्भवादितिभावः ।

व्यक्तीकृत एवेत्यनन्तरं वाकारो बोध्यः । एतद्व्यक्ती करोति नन्विति" इति ।

(५) रसो ज्ञानरूप एवेत्यत्र नास्माकमेव मतं किन्तु प्राचीनानामपीति दर्शयति-**तदुक्तमिति** । लोचनकारैरभिनवगुप्ताचार्यैः । **रसाः प्रतीयन्त** इति । अयमभिप्रायः यथा तण्डुलपाकानन्तरमेवौदनपदव्यवहारो नतु ततः पूर्वं, किन्तु ओदनं पचतीति प्रथमपाक एव प्रयोगे ओदनपाकाऽनुपपत्त्या पचतीत्यस्य निष्पादयतीत्यर्थे उपचारस्तथा काव्यनाटययोः श्रवणदर्शनयोः 'रसाः प्रतीयन्त' इति प्रयोगे ज्ञानस्वरूपत्वेन प्रतीतिरूपाणामेव रसानां प्रतीत्यनुपपत्त्या प्रतीयन्त इत्यस्य रसात्मकप्रतीतयः क्रियन्त इत्यर्थे उपचारः । एतेन प्रतीतेः पूर्वं रससत्ता न वर्त्तते अतो दीपदृष्टान्तो न युज्यते किन्तु पूर्वोक्त दध्नः साद्दश्य एव युक्तः । अत्रेदम्बोध्यम्—हरिम्भजति घटं जानातीत्यादौ पूर्वं विद्यमानस्यैव कर्मत्वं कर्मसंज्ञायास्तथैव विधानात् पूर्वं यदि घटो न स्यात्तदा तज्ज्ञानमपि भवितुं नार्हति, एवमेव 'रसाः प्रतीयन्त' इति व्यवहारोऽपीति पूर्वपक्षाशयः । समाधातुरयमाशयो न खलु विद्यमानं यद्वस्तु तस्यैव कर्मत्वं 'घटं करोति' 'ओदनं पचती'त्यादौ क्रियोत्पन्नवस्तुनोऽपि कर्मत्वं भवति तथैवात्रापीति । कर्म च सप्तविधं भवति अतो दोषाभावात् । तथाहि—

निर्वर्त्यञ्च विकार्यञ्च प्राप्यञ्चेति त्रिधामतम् । तच्चेप्सिततमं कर्मचतुर्धान्यत्तु कल्पितम् ।
औदासीन्येन यत्प्राप्यं यच्च कर्त्तुरनीप्सितम् । संज्ञान्तरैरनाख्यातं यद् यच्चाप्यन्यपूर्वकम्
यदसज्जायते सद्वा जन्मना यत्प्रकाशते । तन्निवर्त्यं, विकार्यं तु द्वेधा कर्म व्यवस्थितम् ॥
प्रकृत्युच्छेद सम्भूतं किञ्चित्काष्ठादिभस्मवत् । किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥
क्रियाकृतविशेषाणां सिद्धिर्यत्र न दृश्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥

**तर्कवागीशास्तु** एवं व्याचक्षते यथा—रूपान्तरपरिणामे सदृष्टान्तप्राचीनसंवादमाह-**तदुक्तमिति** । यथा पाकसम्बन्धेन ओदनरूपं प्राप्तस्तण्डुल ओदनेन व्यवह्रियते तथा प्रतीतिसम्बन्धेन रसरूपं प्राप्ता सामाजिकवासना रसत्वेन व्यवह्रियत इति भावः इति । **पुत्रस्तु**—ओदनं पचतीतिवदिति" प्रतीकमादाय–'न खल्वोदनः पूर्वसिद्धो व्यज्यते किन्तु पक्वः सन् ओदनो भवतीति, तथायमपि व्यक्तः सन् रसो भवतीत्यर्थः, इत्याह ।

(६) नन्वग्रे 'रतिर्हासश्च' इति वक्ष्यमाणकारिकया रत्यादीनामेव स्थायित्वं वक्ष्यति तदत्र स्थायिपदं व्यर्थमित्याशङ्कां निराकरोति-**अत्रचेति** । रसलक्षणेचेत्यर्थः ।

पुनः स्थायिपदोपादानं रत्यादीनामपि रसान्तरेष्वस्थायित्वप्रतिपादनार्थम् । ततश्च हासक्रोधादयः शृङ्गारवीरादौ व्यभिचारिण एव । तदुक्तम्—"रसावस्थः परम्भावः स्थायितां प्रतिपद्यते" इति ।

(७)अस्य स्वरूपकथनगर्भ आस्वादप्रकारः कथ्यते—

(८)सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः ।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः ॥ २ ॥
लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः ।

---

प्राप्ते सिद्धे । रसान्तरेष्विति, व्यभिचारितयेति शेषः । **हासक्रोधादय** इति, आदिना जुगुप्सादीनां परिग्रहः व्यभिचारिण एव नतु स्थायिन इत्यर्थः अत एवाग्रे वक्ष्यति—"शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथामतः । शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः" । इत्यादि । एतदेव प्राचां संवादेन स्फुटीकरोति—**तदुक्तमिति** । रसे अवस्थास्वरूपं यस्य स रसावस्थः रसरूपताप्राप्तियोग्य इत्यर्थः । भावो रतिहासादिरूपः परं केवलं स्थायितां प्रतिपद्यते, लभते । इदञ्च न लक्षणं स्थायिभावस्य किन्तु परिचायकमेव । तथाच तन्मते नान्योन्याश्रयदोषो भवति । **तातस्तु**-रस एवोत्तरकालमवस्था यस्य तादृशः हासक्रोधादिभावः परं केवलं स्थायितां प्रतिपद्यते अतादृगवस्थस्तु न स्थायित्वं प्रतिपद्यते इत्यर्थः, इत्येवाह ।

(७) यत्स्वरूपं लब्ध्वा रत्यादिरसो भवति तद्दर्शयंस्तत्रास्वाद एव प्रमाणमिति तन्निरूपणमारभते—**अस्येति** । रसस्येत्यर्थः । स्वरूपकथनं गर्भे यस्य सः, आस्वादप्रकारः अनुभवाकारः । आस्वादप्रकार-इत्यौपचारिकः प्रयोगः, आस्वादाभिन्नत्वात् ।

(८) **सत्त्वोद्रेकादिति** । कैश्चित् प्रमातृभिर्ज्ञातृभिर्नतु सर्वैरितिभावः । सत्वस्य मनोवृत्तिकेवलसत्वस्य उद्रेकात् नाट्यकाव्यदर्शनश्रवणवशेनाविर्भावात् । अखण्डः विभावादिसमूहालम्बनात्मकत्वादेक एव नतु विषयभेदाद्भिन्न इत्यर्थः । स्वप्रकाशः स्वेनात्मना प्रकाशते दीप्यते इति तथाभूतो न पुनर्ज्ञानान्तरगम्यः । यथा ज्ञानान्तरं स्वविषयं घटादिकं प्रकाशयति तथा रस एवात्मानं प्रकाशयतीर्थः । आनन्दचिन्मयः आनन्द संवलितज्ञानरूपः वेद्यान्तरस्य अन्यज्ञेयपदार्थस्य स्पर्शेन तत्कालसंस्पर्शेन शून्यो रहितः, रसास्वादकाले ज्ञानान्तरस्यासत्वादिति भावः । ब्रह्मास्वादसहोदरः आनन्दमयत्वादेव ब्रह्मसाक्षात्कार सदृशः । ब्रह्मास्वादे ब्रह्ममात्रं प्रकाशते रसे तु विभावादिकमपीति भिन्नत्वात्सहोदरत्वेति कथनम् । तदुक्तं लोचनकारैः—'परब्रह्मास्वादः सब्रह्मचारित्वं वास्तु अस्य रसास्वादस्य' इति । तथा लोकोत्तरः अलौकिको यश्चमत्कारः चित्तविकासः स एव प्राणः जीवनभूतो यस्य सः । नायकादीनां नायिकादिरत्यादिषु लौकिकचमत्कारस्यैव सम्भवात्, अस्य तु सहृदयनिष्ठस्यालौकिकत्वमिति भावः । अयं रसः, एतावत्स्वरूपकथ-

स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः* ॥ ३ ॥

नम्प्रदर्शितम् । अथास्वादप्रकारः कथ्यते—**स्वाकारेति**। स्वाकारवन्निजदेहवत् अभिन्नत्वेन एकत्वेन आस्वाद्यते अनुभूयते यथा स्वस्माद्भिन्नोऽपि देहोऽहंस्थूल इत्यादिभेदोल्लेखाभावेन प्रतीयते तथा रसोऽपि ज्ञातृज्ञानभेदोल्लेखाभावेनास्वाद्यत इत्यर्थः। घटादिज्ञाने जाते वेद्मीति यथा ज्ञातृज्ञानभेदः प्रतीयते तथात्र नेति भावः।

* अत्रायं विसंवादः—समुचित सन्निवेशचारुणा काव्येन समर्पितैः सहृदयहृदयं प्रविष्टैस्तदीयसहृदयता सहकृतेन भावनाविशेष महिम्ना विगलितदुष्यन्तरमणीयत्वादिभिरलौकिकविभावानुभावव्यभिचारिशब्दव्यपदेश्यैः शकुन्तलादिभिरालम्बनकारणैः चन्द्रिकादिभिरुद्दीपनकारणैरश्रुपातादिभिः कार्यैः, चिन्तादिभिः सहकारिभिश्च सम्भूय प्रादुर्भावितेनालौकिकेन व्यापारेण तत्कालनिर्वर्त्तितानन्दांशावरणाज्ञानेन अत एव प्रमुष्टपरिमितप्रमातृत्वादिनिजधर्मेण प्रमात्रा स्वप्रकाशतया वास्तवेन निजस्वरूपानन्देन सह गोचरीक्रियमाणः प्राग्विनिविष्टवासनारूपो रत्यादिरेव रसः। तथाचाहुः—'व्यक्तः स तैर्विभावाद्यैः स्थायिभावो रसः स्मृतः' इति। व्यक्तो व्यक्तिविषयीकृतः। व्यक्तिश्च भग्नावरणाचित्। यथाहि शरावादिना पिहितो दीपादिस्तन्निवृत्तौ सन्निहितान्पदार्थान् प्रकाशयति स्वयं च प्रकाशते, एवमात्मचैतन्यं विभावादिसंवलितान् रत्यादीन्। अन्तःकरणधर्माणां साक्षिभास्यत्वाभ्युपगतेः। विभावादीनामपि स्वप्नतुरगादीनामिव रङ्गरजतादीनामिव साक्षिभास्यत्वमविरुद्धम्। व्यञ्जकविभावादिचर्वणाया आवरणभङ्गस्य वोत्पत्तिविनाशाभ्यामुत्पत्तिविनाशौ रसे उपचर्यते वर्णनित्यतायामिव व्यञ्जकताल्वादिव्यापारस्य गकारादौ। विभावादिचर्वणावधित्वादावरणभङ्गस्य निवृत्तायां तस्यां प्रकाशस्यावृतत्वाद्विद्यमानोऽपि स्थायी न प्रकाशते। यद्वा विभावादिचर्वणामहिम्ना सहृदयस्य निजसहृदयता वशोन्मिषितेन तत्तत्स्थाय्युपहित स्वस्वरूपानन्दाकारा समाधाविव योगिनश्चित्तवृत्तिरुपजायते तन्मयीभवनमितियावत्। आनन्दोऽयं न लौकिकसुखान्तरसाधारणः, अनन्तःकरणवृत्तिरूपत्वात्। इत्थञ्चाभिनवगुप्त-मम्मटभट्टादिग्रन्थस्वारस्येन भग्नावरणचिद्विशिष्टो रत्यादिः स्थायीभावो रस इति स्थितम्।

वस्तुतस्तु वक्ष्यमाणश्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणाचिदेव रसः। सर्वथैव चास्या विशिष्टात्मनो विशेषणं विशेष्यं वा चिदंशमादाय नित्यत्वं स्वप्रकाशत्वञ्च सिद्धम्। रत्याद्यंशमादाय त्वनित्यत्वमितरभास्यत्वञ्च। चर्वणाचास्य चिद्गतावरणभङ्ग एव प्रागुक्ता, तदाकारान्तःकरणवृत्तिर्वा। इयञ्च परब्रह्मास्वादात् समाधेर्विलक्षणा विभावादिविषयसंवलितचिदानन्दालम्बनत्वात्। भाव्या च काव्यव्यापारमात्रात्। अथास्यां सुखांशभाने किं मानमितिचेत्! समाधावपि तद्भाने किं मानमिति पर्यनुयोगस्य तुल्यत्वात्। 'सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्'इत्यादि शब्दोऽस्ति तत्रमानमिति चेत्, अस्त्यत्रापि 'रसो वै सः' रसं ह्येवायं लब्ध्वानन्दी भवति' इति श्रुतिः, सकलसहृदयप्रत्यक्षञ्चेति प्रमाणद्वयम्। येयं द्वितीयपक्षे तदाकारचित्तवृत्यात्मिका रसचर्वणोपन्यस्ता सा शब्दव्यापारभाव्यत्वाच्छाब्दी। अपरोक्षसुखालम्बनत्वाच्चापरोक्षात्मिका। तत्वं वाक्यजबुद्धिवत्। इत्याहुरभिनवगुप्ताचार्यपादाः।

**यद्वा** स्वाकारवत्स्वविषयवत् । परिणामवादिभिर्ज्ञानतद्विषययोर्भेदानङ्गीकारादिति भावः । आस्वाद्यत इत्यनेनामृततुल्यत्वं सूचितम् । एतेन आनन्दचमत्कारमयत्वे सति विभावादिसमूहालम्बनज्ञानत्वं रसलक्षणं फलितम् । वस्तुतस्तु रसत्वमेव रस सामा-

भट्टनायकास्तु—'ताटस्थ्येन रसप्रतीतावनास्वाद्यत्वम् । आत्मगतत्वेन तु प्रत्ययो दुर्घटः । शकुन्तलादीनां सामाजिकान् प्रत्यविभावत्वात् । विना विभावमनालम्बनस्य रसादेरप्रतिपत्तेः । नच कान्तात्वं साधारणविभावतावच्छेदकमत्राप्यस्तीतिवाच्यम् अ-प्राण्यनिश्चयानालिङ्गिताऽगम्यात्वप्रकारकविरहस्य विशेष्यतासम्बन्धावच्छिन्नप्रतियोगि-ताकस्य विभावतावच्छेदककोटावश्यं निवेश्यत्वात् । अन्यथा स्वस्रादेरपि कान्तात्वादि-ना तत्त्वापतेः । एवमशोच्यत्व कापुरुषत्वादिज्ञानविरहस्य तथाविधस्य करुणरसादौ । तादृशज्ञानानुत्पादस्तु तत्प्रतिबन्धकान्तरनिर्वचनमन्तरेण दुरुपपादः स्वात्मनि दुष्यन्ता-द्यभेदबुद्धिरेव तथेति चेन्न, नायके धराधौरेयत्व धीरत्वादेरात्मनि चाधुनिकत्व कापुरुषत्वादे-र्वैधर्म्यस्य स्फुट प्रतिपत्तेरभेदबोधस्यैव दुर्लभत्वात् । किञ्च केयं प्रतीतिः प्रमाणान्तरानुप-स्थानाच्छाब्दीति चेत्, न । व्यावहारिकशब्दान्तरजन्यनायकमिथुनवृत्तान्तवित्तीनामिवा-स्या अप्यहृदयत्वापत्तेः। नापि मानसी, चिन्तोपनीतानां तेषामेव पदार्थानां मानस्या प्रतीते-रस्यावैलक्षण्योपलम्भात् । नच स्मृतिः, तथा प्रागननुभवात् । तस्मादभिधया निवेदिता पदार्था भावकत्वव्यापारेणागम्यत्वादि रसविरोधिज्ञानप्रतिबन्धद्वारा कान्तात्वादिरसा-नुकूलधर्मपुरस्कारेणावस्थाप्यन्ते । एवं साधारणीकृतेषु दुष्यन्तशकुन्तलादेशकाल-वयोवस्थादिषु, पञ्चौ पूर्वव्यापारमहिमनि, तृतीयस्य भोगकृत्वव्यापारस्य महिम्नानी-गीर्णयो रजस्तमसोरुद्रिक्तसत्वजनितेन निजचित्स्वभावनिर्वृतिविश्रान्तिलक्षणेन सा-क्षात्कारेण विषयीकृतो भावनोपनीतः साधारणात्मा रत्यादिः स्थायी रसः । तत्रभुज्यमा-नो रत्यादिभोगोवेत्युभयमेव रसः । सोऽयं भोगो विषयसंवलनाद्ब्रह्मास्वादसविधवर्ती-त्युच्यते । एवञ्च त्रयोंऽशाः काव्यस्य "अभिधाभावना चैव तद्भोगीकृतिरेवच" इत्याहुः । मतस्यैतस्य पूर्वस्मा द्भावकत्वव्यापारान्तर स्वीकार एवविशेषः । भोगस्तु व्यक्तिः । भोग कृत्वं तु व्यञ्जनादवशिष्टम्, अन्यातु सैव सरणिः । नव्यास्तु काव्ये नाट्ये च कविना नटेन च प्रकाशितेषु विभावादिषुव्यञ्जनव्यापारेण दुष्यन्तादौ शकुन्तलादिरतौ गृहीताया मनन्तरञ्च सहृदयोल्लासितस्य भावनाविशेषरूपस्य दोषस्य महिम्ना कल्पितदुष्य-न्तत्वावच्छादिते स्वात्मन्यज्ञानावच्छिन्ने शुक्तिकाशकल इव रजतखण्डः समुत्पद्यमा-नोऽनिर्वचनीयः साक्षिभास्यशकुन्तलादिविषयकरत्यादिरेव रसः । अयञ्च कार्यो दोष-विशेषस्य । नाश्यश्च तन्नाशस्य । स्वोत्तरभाविना लोकोत्तराह्लादेन भेदाग्रहात्सुख पद-व्यपदेश्यो भवन्ति । स्वपूर्वोपस्थितेन रत्यादिना तदग्रहात्तद्वतित्वनैकत्वाध्यवसानाद्वा व्यङ्ग्यो वर्णनीयश्चोच्यते । अवच्छादकं दुष्यन्तत्वमप्यनिर्वचनीयमेव । अवच्छादकत्वञ्च-रत्यादिविशिष्टबोधे विशेष्यतावच्छेकत्वम् । एतेन "दुष्यन्तादिनिष्ठस्य रत्यादेरनास्वा-द्यत्वान्न रसत्वम् । स्वनिष्ठस्य तु तस्य शकुन्तलादिभिरतत्सम्बन्धिभिः कथमभिव्य-क्तिः स्वस्मिन्दुष्यन्ताद्यभेदबुद्धिस्तु पराहता" इत्यादिकमपास्तम् । यदपि विभादीनां सा-धारण्यं प्राचीनैरुक्त तदपि काव्येन शकुन्तलादिशब्दैः शकुन्तलात्वादिप्रकारकबोधजनकैः प्रतिपाद्यमानेषु शकुन्तलादिषु दोषविशेषकल्पनं विना दुरुपपादम् । अतोऽवश्यक-ल्प्ये दोषविशेषे तेनैव स्वात्मनि दुष्यन्ताद्यभेदबुद्धिरपि सूपपादा ।

न्यलक्षणम्, नच तत्र मानाभावः ? रसपदशक्यतावच्छेदकतया तत्सिद्धेः। तच्च वाधकाभावाज्जातिरखण्डोपाधिर्वा।

---

नन्वेवमपि रतेरस्तु नाम दुष्यन्त इव सहृदयेऽपि सुखविशेषजनकता, करुणरसादिषु तु स्थायिनः शोकादेर्दुःखजनकतया प्रसिद्धस्य कथमिव सहृदयाह्लादहेतुत्वम्। प्रत्युत नायक इव सहृदयेऽपि दुःखजननस्यैवौचित्यात्। नच सत्यस्य शोकादेर्दुःखजनकत्वं क्लृप्तं न कल्पितस्येति नायकानामेव दुःखम्, न सहृदयस्येति वाच्यम्, रज्जुसर्पादेर्भयकम्पाद्यनुत्पादकतापत्तेः। सहृदये रतेरपि कल्पितत्वेन सुखजनकतानुपपत्तेश्चेति चेत्, सत्यम्, शृङ्गारप्रधानकाव्येभ्य इव करुणप्रधानकाव्येभ्योऽपि यदि केवलाह्लाद एव सहृदय हृदयप्रमाणकस्तदा कार्यानुरोधेन कारणस्य कल्पनीयत्वाल्लोकोत्तरकाव्यव्यापारस्यैवाह्लाद प्रयोजकत्वमिव दुःखप्रतिबन्धकत्वमपि कल्पनीयम्। अथ यथाह्लाद इव दुःखमपि प्रमाणसिद्धं तदा प्रतिबन्धकत्वं न कल्पनीयम्। स्वस्वकारणवशाच्चोभयमपि भविष्यति। अथ तत्र कवीनाञ्च कर्तुम्, सहृदयानाञ्च श्रोतुं, कथं प्रवृत्तिः। अनिष्टसाधनत्वेन निवृत्तेरुचितत्वादिति चेत्, इष्टस्याधिक्यादनिष्टस्य च न्यूनत्वाच्चन्दनद्रवलेपनादाविव प्रवृत्तेरुपपत्तेः। केवलाह्लादवादिनां तु प्रवृत्तिरप्रत्यूहैव। अश्रुपातादयोऽपि तत्तदानन्दनुभवस्वाभाव्यात् नतु दुःखात्। अत एव भगवद्भक्तानां भगवद्गुणाकर्णनादश्रुपातादय उपपद्यन्ते, नहि तत्र जात्वपि दुःखानुभवोस्ति। नच करुणरसादौ स्वात्मनि शोकादिमद्दशरथादि तादात्म्यारोपे यद्याह्लादस्तदा स्वप्नादौ संनिपातादौ वा स्वात्मनि तदारोपेऽपि स स्यात्, आनुभविकं च तत्र केवलं दुःखमितीहापि तदेव युक्तमिति वाच्यम्, अयं हि लोकोत्तरस्य काव्यस्य महिमा तत्प्रयोज्या अरमणीया अपि शोकादयः पदार्था आह्लादमलौकिकं जनयन्ति। विलक्षणो हि कमनीयः काव्यव्यापारज आस्वादः प्रमाणान्तरजादनुभवात्। जन्यत्वं च स्वजन्यभावनाजन्यरत्यादिविषयकत्वम्, तेन रसास्वादस्य काव्यव्यापारजन्यत्वेऽपि न क्षतिः। शकुन्तलादावगम्यात्वज्ञानोत्पादस्तु स्वात्मनि दुष्यन्ताद्यभेदबुद्ध्या प्रतिबद्ध्यत' इत्याहुः।

परे तु व्यञ्जनव्यापारस्यानिर्वचनीयख्यातेश्चानभ्युपगमेऽपि प्रागुक्तदोषमहिम्ना स्वात्मनि दुष्यन्तादितादात्म्यावगाही शकुन्तलादिविषयकरत्यादिमद्भेदबोधो मानसः, काव्यार्थभावनाजन्मा विलक्षणविषयताशाली रसः। स्वाप्नादिस्तु तादृशबोधो न काव्यार्थचिन्तनजन्मेति न रसः। तेन तत्र न तादृशाह्लादापत्तिः। एवमपि स्वस्मिन्नविद्यमानस्य रत्यादेरनुभवः कथं नाम स्यात्, मैवम्, न ह्ययं लौकिकसाक्षात्कारो रत्यादेः, येनाऽवश्यं विषयसद्भावोऽपेक्षणीयः स्यात्। अपितु भ्रमः। आस्वादनस्य रसविषयकत्वव्यवहारस्तु रत्यादिविषयकत्वालम्बन इत्यपिवदन्ति। एतैश्च स्वात्मनि दुष्यन्तत्वधर्मितावच्छेदकशकुन्तलादिविषयकरतिवैशिष्ट्यावगाही, स्वात्मत्वविशिष्टे शकुन्तलादिविषयकरतिविशिष्टदुष्यन्ततादात्म्यावगाही, स्वात्मत्वविशिष्टे दुष्यन्तत्वशकुन्तलाविषयकरत्योर्वैशिष्ट्यावगाही वा त्रिविधोऽपि बोधो रसपदार्थतयाऽभ्युपेयः। तत्र रतेर्विशेषणीभूतायाः शब्दादप्रतीतत्वाद्व्यञ्जनायाश्च तत्प्रत्यायिकाया अनभ्युपगमाच्चेष्टादिलिङ्गकमादौ विशेषणज्ञानार्थमनुमानमभ्युपेयम्।

मुख्यतया दुष्यन्तादिगत एव रसो रत्यादिः कमनीयविभावाद्यभिनयप्रदर्शनकोविदे दुष्यन्ताद्यनुकर्तरि नटे समारोप्यसाक्षात्क्रियत इत्येके। मतेऽस्मिन् साक्षात्कारोदुष्यन्तो

**( २ ) 'रजस्तमोभ्यामस्पृष्टं मनः सत्वमिहोच्यते' इत्युक्तप्रकारो बाह्यमेयविमुखतापादकः कश्चनान्तरोधर्मः सत्त्वम् । तस्योद्रेकोरजस्तमसी अभिभूय आविर्भावः । अत्र च हेतुस्तथाविधालौकिककाव्यार्थपरिशीलनम् ।**

(९) सत्त्वपदार्थं विवृणोति—**रजस्तमोभ्यामिति** । कामलोभादिमूलभूतौ मनोधर्मौ रजस्तमसी ताभ्यामस्पृष्टं स्पर्शरहितं मनो मनोवृत्तिकेवलसत्वं सत्वपदार्थः । इत्युक्तप्रकारः सरस्वतीकण्ठाभरणे भोजदेवोक्तस्वरूप इति भावः । बाह्यमेयानि काव्यातिरिक्तबहिर्वर्त्तिज्ञेयवस्तूनि घटपटादीनि तेभ्यो विमुखता वैमुख्यं ज्ञानानुकूलव्यापाराभावस्तस्यापादकः प्रयोजकः ज्ञानानुकूलव्यापारश्चात्र इन्द्र्मनः संयोगः कश्चन प्रत्यक्षतोबोधयितुमशक्यः अनिर्दिष्टरूप इति यावत् , अन्तररन्तःकरणं तस्यायमित्यर्थेऽण् आन्तरो मानस इत्यर्थः, धर्मोगुणविशेषः सत्वं सत्वपदार्थः । तस्य सत्वस्य उद्रेकादित्यत्र सम्बन्धः । अभिभूय स्वकार्यासमर्थे कृत्वा आविर्भावः प्रतिबन्धकाभावेन स्वकार्यसमर्थत्वेनावस्थानम् ।

ननु कथमेवंविधः सत्वोद्रेको जायत अत आह—**अत्र चेति** । अत्र रजस्तमसी अभिभूय सत्वस्याविर्भावे तथाविधः श्रुतदृष्टरूपः अलौकिको लोकोत्तरः अतिशयचमत्कारकारीत्यर्थः । यः काव्यार्थो दृश्यश्रव्यकाव्यविषयोविभावादिरिति यावत् , तस्य परिशीलनमेकाग्रतया दर्शनं श्रवणञ्च अत्यन्ताभिनिवेशो वेत्यर्थः । हेतुः प्रयोजकम् । रसानुभवहेतुभूतसत्वोद्रेकंप्रति तदानीं हेत्वन्तरासम्भवादित्याशयः । अत्र पुत्रस्तु—**रजस्तमोभ्यामिति** । मनो हि सत्वरजस्तमोरूपत्रिगुणात्मकम्, बाह्यमेया घटादयआन्तरोधर्मः, स्वत्वमात्रावस्थितिरूपः । ननु कथमेवंविधः सत्वोद्रेको जायते ततश्च कथमखण्डस्वप्रकाशानन्दोद्बोध इत्याशंक्याह—**अत्र चेति** । अयमाशयः—

सत्वं सुखे सञ्जयति रजः कर्मणि भारत ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥

---

**ऽयं शकुन्तलादिविषयकरतिमानित्यादिः प्राग्वद्धर्म्यंशे लौकिक आरोप्यांशेत्वलौकिकः । दुष्यन्तादिगतो रत्यादिर्निष्टे पक्षे दुष्यन्तत्वेन गृहीते विभावादिभिः कृत्रिमैरप्यकृत्रिमतया गृहीतैर्भिन्ने विषयेऽनुमितिसामग्र्याबलवत्वादनुमीयमानो रसः' इत्यपरे ।**

**'विभावादयस्त्रयः समुदिता रसाः' इति कतिपये । त्रिषु य एव चमत्कारी स एव रसोऽन्यथा तु त्रयोऽपि न इति बहवः । भाव्यमानो विभाव एव रसः, इत्यन्ये । अनुभावस्तथेतीतरे । व्यभिचार्येव तथा तथा परिणमति इति केचित् ।**

**इत्थं नानाजातीयाभिः शेमुषीभिर्नानारूपतयाऽवसितोऽपि मनीषिभिः परमाह्लादाविनाभावितया प्रतीयमानः प्रपञ्चेऽस्मिन्नसो रमणीयतामावहतीति निर्विवादम्, इति स्पष्टं रसगङ्गाधरे ।**

**(१०) अखण्ड इत्येक एवायं विभावादिरत्यादिप्रकाशसुखचमत्कारात्मकः। अत्र हेतुं वक्ष्यामः। (११) स्वप्रकाशत्वाद्यपि वक्ष्यमाणरीत्या। (१२) चिन्मय इति स्वरूपार्थे मयट्।**

इत्यादि भगवद्वचनात्त्रिगुणात्मके मनसि सत्त्वांशस्य प्रकाशे सुखोत्पत्तिः सत्वांशस्य प्रकाशश्च रजस्तमसोरभिभवाद्वैषयिकं सुखं जनयति। तथाहि सत्त्वांशप्रकाशतारतम्यात् वैषयिकसुखस्यापि तारतम्यं दृश्यते ततश्च सुखतारतम्यं सुखकारणतारतम्यहेतुकमित्यवश्यमभ्युपगन्तव्यं तच्च स्वस्वकारणं यदि सफललौकिकसुखकारणोत्तरं तेन रजस्तमसोः सर्वथाभिभवः शक्यक्रिय एवेति। ततो न्यायाद्यदि काव्यार्थश्रवणरूपकारणात्सर्वथा रजस्तमसी अभिभूय मनसः सत्वांशस्यैव प्रकाशस्तदा तन्मात्रहेतुकोऽखण्डस्वप्रकाशरूप आत्मावबोधः प्रामाणिक एव। अत एवाहुः—स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः' इत्युक्तप्रकारः। स चात्मानन्दाद्बोधो यदि—

"अन्वयव्यतिरेकाभ्यां निरस्याप्रीणितो यतिः।
वीक्ष्यासन्नस्य कोऽस्मीति तरामित्याह सौहृदात्" ॥

इत्यादि शास्त्रनयनहेतुकःस्यात्तदा निरुपहितं ब्रह्म प्रकाशते। यदि पुनर्नाट्यकाव्यदर्शनश्रवणाभ्यां तदा विभावादिरत्याद्यंशकर्बुरितत्वेन किं कुर्मः कारणवैचित्र्यस्यैवायं सहृदयानुभवसिद्धोऽनुभावः" इति, इत्थमेव व्याख्यातवान्।

(१०) अखण्डपदार्थं विवृणोति—**अखण्ड इतोति**। विभावादिरत्यादीनां प्रकाशस्तद्विषयकं ज्ञानं सुखमामोदश्चमत्कारो विस्मयश्चात्मा स्वरूपं यस्य सस्तथोक्तः अयं रस एक एव न पुनर्घटपटादिसंविदिव पृथक्पृथगित्यर्थः। विभावादीत्यादिपदेन अनुभावसञ्चारिभावयोः रत्यादीत्यादिपदेन हि हासादिस्थायिभावान्तराणां च परिग्रहः। अत्रादिद्वयोपादानन्तु विभावादित्रयं कारणकूटं रत्यादिकन्तु कार्यकूटमितिकार्यकारणभेदेन गणयोर्द्वित्वादेव बोध्यम्। ननु विभावादयो मिलिता रसस्तत्कथमस्याखण्डत्वमित्यत आह—**अत्रेति**। रसस्याखण्डतायामिति भावः। हेतुं समूहालम्बनज्ञानतादात्म्यम्। वक्ष्यामः प्रतिपादयिष्यामः। एवञ्च यद्यपि प्रत्येकस्य खण्डरूपतैव विभावादीनां तथापि प्रपाणकरस इव समूहालम्बनविधया तेषामभेदेन तदाबोधादेतस्य रसस्याखण्डत्वं वक्ष्याम इति भावार्थः।

(११) रसस्य रत्याद्यंशवलितत्वेऽपि यथा स्वप्रकाशत्वमविरुद्धं तथैवाग्रे दर्शयिष्यते तदेवाह–**स्वप्रकाशत्वादिति**। आदिनानन्दचिन्मात्रत्वयोर्ग्रहणम्। समुच्चायार्थकोऽत्रापिः। 'अपि सम्भवगर्हाशीर्मृतिभूषासमुच्चये' इत्युक्तदिशापिशब्दोह्यनेकार्थः।

(१२) चिन्मय इति **स्वरूपार्थे मयडिति**। स्वरूपार्थे इत्यनेन मयटः प्रस्तुतार्थस्य निराशस्तेन स्वप्रकाशानन्दाभिन्नत्वं रसस्योक्तं भवति। न तु अ मयो

(१३) चमत्कारश्चित्तविस्ताररूपोविस्मयापरपर्य्यायः । तत्प्राणत्वञ्चास्मद्वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादैरुक्तम् । तदाह धर्मदत्तः स्वग्रन्थे—

(१४) 'रसेसारश्चमत्कारः सर्वत्राप्यनुभूयते ।
तच्चमत्कारसारत्वे सर्वत्राप्यद्‌भुतो रसः ।
तस्माद‌द्भुतमेवाह कृतीनारायणो रसम्' ॥ इति ।

(१५) कैश्चिदिति प्राक्तनपुण्यशालिभिः ।

यज्ञ इतिवत्प्राचुर्यार्थे द्वन्द्वान्मयड्‌विधानात् "द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यत" इति न्यायात्, आनन्दमयश्चिन्मयश्च रसो लभ्यते ।

यद्वा स्वप्रकाशानन्द एव चिद् ज्ञानं तत्स्वरूप इत्यर्थः । ज्ञानानन्दयोरभेदस्वीकारात् ।

(१३) द्वितीयकारिकार्थं विवृणोति—**चमत्कार इति** । लोकातीतार्थकलनेन किमेतदिति ज्ञानधाराजनने चित्तस्य दीर्घप्रायत्वं चित्तविस्तारः । चित्तं विस्तीर्य्यते स्वावबोधकाले दीर्घमिव क्रियतेऽनेनेति चित्तविस्तारस्तद्रूप इत्यर्थः । दृष्टहेतुभ्योऽसम्भवित्वज्ञानेन हेत्वनुसन्धाने मनोव्यापारणमेव चित्तविस्तार इति केचिद्वदन्ति । **विस्मयेति** । विस्मयः विस्मयशब्दोऽपरपर्यायो वाचकान्तरं यस्य सः । अपरपर्य्याय इत्यनेनाभिन्न इत्यर्थो वा बोध्यः । तत्प्राणत्वञ्च रसस्य चमत्कारसारत्वञ्च यत्किञ्चिद्वर्णयिता कविः । पण्डा कुशाग्रा बुद्धिर्यस्याऽसौ पण्डितः, तारकादित्वादितच् ।

यद्वा पण्डितो बन्धमोक्षवित् । अनयोः कोशादेकपर्यायत्वेऽपि वस्तुतो भेद एवेति ध्येयम् । **नारायणपादैरुक्तमिति** । तदाहुः—

'चमत्कार एव सर्वरसप्राणभूतः तस्य च रत्याद्यंशशबलत्वेन यथायथं शृङ्गारादिरसव्यपदेशस्तद्भावादद्‌भुतव्यपदेश' इति ।

(१४) **रस इति** । सर्वत्र शृङ्गारादौ रसे चमत्कारश्चित्तविस्ताररूपः विस्मय एव सारः स्थिरांशः, रसास्वादहेतुत्वात्सारः अनुभूयते प्रतीयते । विस्मय एव सारत्वेन प्रतीतो भवतीति भावः । तत्तस्मात्करणात् चमत्कारस्य सारत्वे सति सतिसप्तमीयम् । सर्वत्र काव्यादौ रसोऽपि अद्भुतश्चमत्कारी भवतीति शेषः । सर्वैरपि बुधवरैस्तथैव स्वीक्रियत इति भावः । तस्मात्सर्वबुधवरैः स्वीकारादेव कृती पण्डितः नारायणोऽपि रसमद्भुतमेवाह ।

**तर्कवागीशास्तु**—उक्तमर्थं स्वीकृत्य "वस्तुतस्तु रत्याद्यंशस्यानुभूयमानत्वे यथायथं शृङ्गारादिव्यपदेशस्तस्याननुभावेऽद्‌भुतव्यपदेश इति मन्तव्यम्" इत्याहुः ।

(१५) **कैश्चिदिति** । कारणाभावात्कार्याभाव इति नियमाद्धेतुभूतप्राक्तनपुण्यरहितानां कार्यभूतसुखस्वरूपरसास्वादासम्भवादिति भावः । एवञ्च वासनायामास्वादनाख्यव्यापारे च पुण्यमेव हेतुरिति सारम् । स्वयमेव ग्रन्थकृदपि वक्ष्यति—"न जायते तदा स्वादो विनारत्यादिवासनाम्" इति । विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः स्वाद-

**यदुक्तम्—'पुण्यवन्तः प्रमिण्वन्तियोगिवद्रससन्ततिम्' । इति ।**

**(१६) यद्यपि 'स्वादः काव्यार्थसम्भेदादात्मानन्द समुद्भवः'। इत्युक्त दिशा रसस्यास्वादानतिरिक्तत्वमुक्तम्, तथापि "रसः स्वाद्यते" इति काल्पनिकं भेदमुररीकृत्य कर्म्मकर्त्तरि वा प्रयोगः। (१७) तदुक्तम्-**

नाख्यः कश्चिद्व्यापारः इति वक्ष्यमाणत्वादपि । 'अत्र वागीशाः—प्राक्तनेति प्रतीकमादाय ऐहिकपुण्यस्यैतच्छरीरे सुखजनननासम्भवादिति भावः" इति वदन्ति ।

**यदुक्तमिति** । पुण्यवन्त इति । पुण्यवन्तः प्राक्तनपुण्यशालिनो जनाः योगिवत् योगिन इव रससन्ततिं शृङ्गारादिरसधारां ब्रह्मज्ञानामृतधाराञ्च प्रमृण्वन्ति प्रमाविषयीकुर्वन्ति साधुतयाऽनुभवन्ति ।

**अत्र पुत्रास्तु**—पुण्यवन्त इति । प्रमिण्वन्तीत्युपचारप्रयोगः स्वप्रकाशरूपस्यास्य प्रमाविषयत्वानुपपत्तेः । योगिवदिति यथा योगिनः शुद्धं ब्रह्म स्वप्रकाशानन्दचिद्रूपतया साक्षात् कुर्वन्ति, रत्याद्यंशकर्बुरितमपि तथा पुण्यवन्त इत्यर्थः । तथाचोक्तम्—'विभावादिसंभिन्नाङ्गरत्याद्यंशकर्बुरितः स्वप्रकाशानन्दचमत्काररूपो रस'इति । इत्थमेवाहुः

(१६) "स्वाकारवदभिन्नत्वेनायमास्वाद्यते रस' इति स्वोक्तिम्प्रत्यनुपपत्तिमाशङ्क्य समाधत्ते-**यद्यपीति** । काव्यार्थो विभावादिः तत्सम्भेदादिति ल्यब्लोपे पञ्चमी तेन विभावादिशवलित इत्यर्थः । यद्वा रत्यादिरूपो यः काव्यार्थः व्यङ्ग्यार्थस्तत्सम्भेदात् तत्परिशीलनादित्यर्थः । आत्मनि य आनन्दस्तद्रूपेण समुद्भवो यस्य तादृश इतिं । एवञ्चानन्दात्मकस्य रसस्यास्वादानतिरिक्तत्वमित्यर्थः । तथाच यथा मधुस्वाद्यत इत्यादौ स्वाद्यस्वादयोः कर्मक्रिययोर्भेदेन प्रतीतिर्भवति तद्वत् रसः स्वाद्यत इत्यत्र भेदेन प्रतीतिर्न भवति । अतः कथं तादृश प्रयोग उपपद्यते इति शङ्कितुराशयः । समाधानमुपपादयति-**तथापीति** । काल्पनिकमारोपितमलौकिकमिति यावत् । भेदम् उररीकृत्याङ्गीकृत्य वर्त्तमानस्य कर्त्तुः प्रयोगेऽन्वयः । एवञ्च 'राहोः शिर' इत्यादावभेदेऽपि औपचारिकं भेदमङ्गीकृत्य तादृशप्रयोगो भवति, तद्वत् रसास्वादयोः कर्मक्रियाभावेनोल्लेखो भेदग्रहणमन्तरेण न सम्भवतीत्यभेदेऽपि काल्पनिकं भेदं स्वीकृत्यैव प्रयोग इति समाधातुराशयः । काल्पनिकभेदस्यालीकत्वात् तत्रारुचिंमन्यमानः समाधानान्तरमुपस्थापयति—कर्मकर्त्तरिवेति ।

"भिद्यते काष्ठः स्वयमेव" इत्यत्रैकस्यैव काष्ठस्य कर्मत्वकर्त्तृत्वोभयविवक्षयाभेदारोपवदत्रापि आस्वाद्यास्वादनयोरभेदेऽपि भेदविवक्षया कर्मकर्त्तरि प्रयोग इति भावः । न च आस्वाद्ये आस्वादस्य विषयिता एव तत्कथं कर्त्तृत्वमिति वाच्यम् स्वप्रकाशत्वेन तत्र कर्त्तृत्वारोपात् ।

(१७) रसस्यास्वादरूपत्वे प्राचां सम्मतिं दर्शयति-**तदुक्तमिति** । रस्यमानेति । रस्यमानता आस्वादः तन्मात्रस्य नत्वतिरिक्तस्य केवलास्वादरूपस्यैति यावत् । सार-

"रस्यमानतामात्रसारत्वात् प्रकाशशरीरादनन्य एव हि रसः" इति ।

(१८) एवमन्यत्राप्येवंविधस्थलेषूपचारेण प्रयोगो ज्ञेयः ।

(१९) नन्वेतावता रसस्याज्ञेयत्वमुक्तं भवतीति व्यञ्जनायाश्च ज्ञान विशेषत्वात् द्वयोरैक्यमापतितम् । ततश्च—

(२०) "स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः ।
यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात् ॥"

---

त्वात् सारत्वेन सामाजिकैरनुभूयमानत्वाद्धेतोः प्रकाशशरीरात् संवित्स्वरूपात् अनन्य एव अनतिरिक्त एव रसः । न तु ततो भिन्न इति भावः । अत्र तातस्तु अमुमेवार्थमाह— "सारपदमत्र स्वरूपार्थकम् । तथाच रस्यमानताया आस्वादकर्मत्वं दर्शितम् प्रकाश-शरीरत्वेन आस्वादकर्तृत्वञ्च दर्शितं तथाच स्वप्रकाशस्य प्रकाश्यप्रकाशकोभयरूप-त्वात् कर्मकर्तृत्वमुपपादितं ताभ्यामनन्य एवेत्यर्थः" इति । **वागीशास्तु**—उक्त दिशाव्याख्याय 'ज्ञानरूपतापन्न एव रत्यादिः सामाजिकानामानन्दचमत्कारसंवल-नोपादेयत्वात् रस इति भावः" इत्याहुः ।

( १८ ) **एवमिति** । अन्यत्रापि अन्येष्वपि एवंविधस्थलेषु उपचारेण काल्प-निकभेदस्वीकारेण कर्मकर्तरिप्रयोगस्वीकारेण वा 'न जायते तदास्वाद' 'तदास्वादे-विभावादेः' इत्यादिस्थलेषु ज्ञेयो वेदितव्यः ।

(१९) अथापरामनुपपत्तिमाशङ्कते-**नन्विति** । एतावता यद्यपीत्यादिग्रन्थेनेत्य-र्थः । रसस्यास्वादाभिन्नत्वकथनेनेति यावत् । अज्ञेयत्वं स्वभिन्नज्ञानाग्राह्यत्वं, स्वेनैव स्वस्वग्राह्यत्वेन घटादिवज्ज्ञानविषयत्वन्नेति भावः । उक्तं भवति तात्पर्यलब्धं भवति । ननु तर्हि व्यञ्जनया रसास्वादो जायतामतआह—**व्यञ्जनायाश्च ज्ञानविशेषत्वा-दिति** । विशिष्टवैशिष्ट्यज्ञानरूपत्वात् । द्वयोः रसव्यञ्जनयोरैक्यमभिन्नत्वमापतितम् । इदमत्रानुसन्धेयम्—यदि रसो ज्ञानविशेषरूपः ज्ञानविशेषरूपा च व्यञ्जना तदोभयोः साम्यमिति कथं साध्यसाधकत्वमिति । नन्वेतावताकिमनिष्टमित्यतो विभावादेर्व्यञ्जकत्वा-नुपपत्या रसस्य व्यङ्ग्यत्वानुपपत्तिरेवानिष्टेति वक्तुं प्रथम घटव्यञ्जकदीपवैलक्षण्येन वि-भावादेर्व्यञ्जकत्वानुपपत्ति सम्पादयति-**ततश्चेति** । अत्र तच्छब्दसर्वनाम्नः कथं रसस्य व्यङ्ग्यतेत्यत्रान्वयो बोध्यः । दीपो यथा घटादेर्व्यञ्जको व्यञ्जनादेश्चस्तथात्वा-ऽभावात् घटव्यञ्जकदीपतो व्यञ्जनायाः पार्थक्यं पृथग्भावो वैलक्षण्यमिति समुदितार्थः।

(२०) पार्थक्य एव द्वयोः व्यङ्ग्यव्यञ्जकभावो भवितुमर्हति नत्वभिन्नतायामित्यत्र ध्वनिकारादिमतं प्रदर्श्येष्टापत्तिं निराकरोति-**स्वज्ञानेनेति** । कारकज्ञापकत्वेन द्विविधो-हेतुः । तत्र करोति क्रियां निर्वर्त्तयतीति व्युत्पत्या पूर्वमसिद्धं वस्तु यः खलु सम्पादयति स कारकोऽर्थादुत्पादकः । यथा घटादेर्भाविनो हेतुश्चक्रचीवरदण्डकपालादिः । ज्ञापकभूत-हेतुं दर्शयति-**स्वज्ञानेनेति** । स्वं व्यञ्जकत्वेनाभिमतम् । अर्थे व्यङ्ग्यपदार्थे सिद्धे कुतोऽपि

(२१) इत्युक्तदिशा घटप्रदीपवत्व्यङ्ग्यव्यञ्जकयोः पार्थक्यमेवेति कथं रसस्य व्यङ्ग्यतेति चेत्, (२२)सत्यमुक्तम्। अतएवाहुः-"विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः स्वादनाख्यः कश्चिद्व्यापारः । अतएव हि रसनास्वादनचमत्करणादयो विलक्षणा एव व्यपदेशाः" इति । अभिधादिविलक्षणव्यापारमात्रप्रसाधनग्रहिलैरस्माभी रसादीनां व्यङ्ग्यत्वमुक्तं भवतीति ।

निष्पन्ने सत्येव यः स्वस्य व्यञ्जकत्वेनाभिमतवस्तुनो ज्ञानेन अन्यस्य पूर्वमेवव्यङ्ग्यत्वेनाभिमतपदार्थस्य धीर्हेतुर्ज्ञानजनकः स व्यञ्जको मतः । तत्र दृष्टान्तमाह—**यथादीप इति**। सामग्रीभिः पूर्वं सिद्धस्य घटस्य दीपो यथा व्यञ्जक इति भावः । दण्डादिवद्दीपो न हि घटं करोति किन्तु पूर्वसिद्धमेव तमभिव्यनक्ति अन्यथाभावे असिद्धार्थज्ञापकत्वे अस्य व्यञ्जकस्य कारकात् निष्पादकदण्डादिपदार्थात् को विशेषो भेदो न कोऽपीत्यर्थः ।

( २१ ) **इतीति** । इत्युक्तदिशा इत्थं प्राचां ध्वनिकारादीनां व्यञ्जकलक्षणेन व्यङ्ग्यव्यञ्जकयोः पार्थक्यमिति अनेन व्यङ्ग्यस्य व्यञ्जकस्य च पार्थक्यं न्यायानुभवसिद्धमेवेति भावः । न खलु घटदीपयोरैक्यम् । इति-हेतोः । कथं रसस्य व्यङ्ग्यता स्यात् । कर्तृत्वकर्मत्वञ्चैकस्यैवानुपपत्तेरिति चेदयुच्यत इत्यर्थः ।

( २२ ) नन्वित्यादि शङ्कां समाधत्ते-**सत्यमिति,** सत्यमित्यनेनार्द्धाङ्गीकारो-बोध्यते । अतएवाहुरिति अतएव यतो ज्ञानरूप एव रसस्तस्मादेवेत्यर्थः, आहुरित्यभिनवगुप्ताचार्यमतानुयायिनो न्यायविद आचार्या इति शेषः । आहुरित्यस्य "**व्यङ्ग्यत्वमुक्तं भवतीति**" दूरस्थेनेति शब्देनान्वयः । कृतिर्दण्डादेर्भ्रम्यादिरुत्पादको व्यापारः, ज्ञप्तिर्ज्ञापको व्यापारः, अभिधालक्षणाव्यञ्जनास्तद्रूपा ये भेदा विशेषास्तेभ्यो विलक्षणो विशेषतो भिन्न एव, स्वादनाख्यः स्वादनं स्वादः सच "काव्यार्थसंभेदादात्मनन्दासमुद्भवः" इत्युक्तप्रकारः, अयं रससाक्षात्कारानुकूलः, कश्चिद्विलक्षणो व्यापारोऽङ्गीक्रियत इति शेषः । स्वादनमितिकरणेल्युट्विधानात् क्रियाबोधकम् , अत एव क्रियारूपास्वादादभिधाद्यन्यतमव्यापारेण च रसं ब धयितुमशक्यत्वात्तेभ्योऽपि स्वादनं भिन्नमिति तत्त्वमिति भावः । यथा संयुक्तसमवायेन सुखादिसाक्षात्कारस्तथैव स्वादनाख्यविलक्षणव्यापारेण वक्ष्यमाणस्ववासनासाक्षात्कार इति भावः । शुक्ताविदं रजतमित्यत्र यथा शुक्त्यंशे लौकिकं रजतांशेऽलौकिकं तथा रससाक्षात्कारोऽपि वासनांशे लौकिको रत्याद्यंशे उपनीतभानात्मकालौकिक इति सारवेदिना वदन्ति अत एव रसमात्रबोधकस्वादनाख्यव्यापारस्य विलक्षणत्वाभ्युपगमादेव। रस्यतऽऽस्वाद्यत अनेनेति रसनं करणे ल्युट् । रसनम् आस्वादनं चमत्करणञ्चादिर्येषान्ते । आदिपदेन विस्मयादीनां ग्रहग्रहणम् । विलक्षणा एव अभिधादिव्यपदेशभ्य सम्पूर्णभिन्ना एव व्यपदेशा अस्मदङ्गीकृतस्वादनाख्यवृत्तेर्नामानि । अत एवाग्रे स्वयं वक्ष्यति "रसव्यक्तौ पुनर्व्यक्तिं रसनाख्यां परे विदुः"इति। ननु रसादीनामन्यत्राव्यङ्ग्यत्वं,यदुक्तं तत्कथं संघटत अत आह-**अभिधा-**

(२३) ननु तर्हि करुणादीनां रसानां दुःखमयत्वाद्रसत्व (तदुन्मुखत्वं) न स्यादित्युच्यते—

(२४) **करुणादावपि रसे जायते यत्परं सुखम् ।**
**सचेतसामनुभवः प्रमाणं तत्र केवलम् ॥ ४ ॥**

(२५) आदिशब्दाद्बीभत्सभयानकादयः ।

(२६) तथाप्यसहृदयानां मुखमुद्रणाय पक्षान्तरमुच्यते—

---

**दीति** । अत्रादिपदेन लक्षणादेः संग्रहो बोध्यः । एवञ्चाभिधादिभ्यो विलक्षणो भिन्नो यो व्यापारः स्वादनाख्यो व्यञ्जना नाम तन्मात्रस्य प्रसाधनाय सिद्धये प्रहिलैर्यत्नवद्भिरस्माभिर्नवीनालङ्कारिकैः । रसादीनामित्यादिपदेन रसाभासादि परिग्रहः । व्यङ्ग्यत्वं व्यञ्जनाजन्यज्ञानविषयत्वमुक्तं भवति प्रकाशनमात्रोपचारादिति भावः ।

तथाच पञ्चमे वक्ष्यति स्वयमेव "वृत्तीनां विश्रान्तेरभिधातात्पर्यलक्षणाख्यानाम् । अङ्गीकार्यातुर्यावृत्तिर्बोधे रसादीनाम्" इति । तस्माद्रसादिबोधनाय स्वादनाख्यं व्यापारं वयं स्वीकुर्मः । रसव्यञ्जनयोरैक्यापत्तिः कथं परिहर्त्तव्येत्युभयोर्लक्षणानुसन्धानेनैव साधनीयेति तत्वम् ।

( २३ ) स्वकृतलक्षणेऽव्याप्तिं शङ्कते—**नन्विति** । तर्हि यदीदृशानन्दस्वरूपो रस इत्यर्थः । दुःखमयत्वात् स्थायिनश्शोकादेर्दुःखजनकतयेति शेषः । अश्रुपातादिदर्शनाद्दुःखमयत्वनिश्चयः । रसत्वं न स्यादिति । तथाच लक्ष्ये लक्षणागमनादव्याप्तिरिति भावः ।

( २४ ) करुणादिरसानामपि सुखमयत्वमेवेति सहृदयहृदयानुभवं प्रमाणीकृत्य निराकरोति—**करुणादाविति** । करुणादौ रसेऽपि यत् परमत्यन्तं सुखं जायते तत्र तस्मिन्विषये सचेतसां समानं चेतो येषां तेषां सहृदयानां रसावस्थाभिज्ञमहानुभावानां अनुभवः केवलं प्रमाणम् । तथाच सहृदयानां तत्र सुखानुभवात् करुणादयो न रसा दुखमयाः किन्तु सुखरूपा एवेति नास्त्यव्याप्तिदोषलेशः ।

( २५ ) कारिकास्थादिपदेन केषां ग्रहणमिति स्फुटीकरोति—**आदिशब्दादिति** । बीभत्सभयानेकादय इत्यादावादिपदेन विप्रलम्भश्रृङ्गारमध्यवर्त्ति-नाम-प्रवास-करुणात्मकभेदत्रयस्य रौद्ररसस्य च ग्रहणम्बोध्यम् ।

( २६ ) ननु केवलं सचेतसामनुभवस्य करुणादीनां सुखमयत्वम्प्रति प्रमाणत्वेऽपि अचेतसां पक्षे दुःखमयत्वादव्याप्तेर्वारणमशक्यमेवेत्यत आह—**तथापीति** । करुणादिरसेषु दुःखमयत्वानुभवो यद्यप्यचेतसां भवति तथापीत्यर्थः । असहृदयानां रसचर्वणायामसमर्थानामित्यर्थः । मुखमुद्रणाय अव्याप्तिदोषोद्घाटनाय व्यात्तमुखानां मुद्रणाय संकोचीकरणाय पक्षान्तरं कल्पान्तरमुच्यते मया ग्रन्थकारेणेति शेषः ।

**(२७) किञ्च तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः ।**

(२८) नहि कश्चित् सचेता आत्मनो दुःखाय प्रवर्त्तते । करुणादिषु च सकलस्यापि साभिनिवेशप्रवृत्तिदर्शनात् सुखमयत्वमेव ।

(२९) अनुपपत्त्यन्तरमाह—

**(३०) तथा रामायणादीनां भविता दुःखहेतुता ॥५॥**

(३१) करुणरसस्य दुःखहेतुत्वे करुणरसप्रधानरामायणादिप्रबन्धानामपि दुःखहेतुता प्रसङ्गः स्यात् ।

(३२) ननु कथं दुःखकारणेभ्यः सुखोत्पत्तिरित्याह—

**(३३) हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात् ।**

( २७ ) स्पष्टयति-**किञ्चेति** । अपिचेत्यर्थः । यदा यदि तेषु करुणादिरसेषु दुःखं स्यात्तदा कोऽपि लोकः तदुन्मुखस्तदुत्सुकः करुणादिरसप्रतिपादककाव्यादिश्रवणादौ प्रवृत्तो न स्यात् किन्तु भवति तु न तथा तस्मान्नाव्याप्तिरिति भावः ।

( २८ ) ननु कुतूहलार्थं दुःखसत्त्वेऽपि करुणादौ यदि प्रवर्त्तेतेतिचेदत आह—**नहीति** । कश्चित्सचेता सहृदयः सुखदुःखविवेचनशीलो जन इति भावः । आत्मनः स्वस्य दुःखाय क्लेशार्थं नहि प्रवर्त्तते, सर्वदैवात्मनः प्रतिकूलमयत्वादिति भावः । च किन्तु करुणादिषु रसेषु सकलस्यापि साभिनिवेशप्रवृत्तिदर्शनात् , तेष्वप्याग्रहसहितेनोद्यगदर्शनात् न दुःखमयत्वमपितु सुखमयत्वमेव "सुखाभिलाषीजीव" इति श्रुत्या सुखस्य सदैवानुकूलतया तत्रैव प्रवृत्तिसम्भवादिति भावः ।

( २९ ) **अनुपपत्तीति** । करुणादीनां रसानां दुःखमयत्वाभ्युपगम इति शेषः ।

( ३० ) **तथेति** । करुणादिरसानां दुःखमयत्वस्वीकारे करुणरसप्रधानरामायणादिकाव्यानां, रामायणमत्र करुणरसविशिष्टस्तदेकदेशः । आदिना करुणविप्रलम्भप्रधानोत्तररामचरितादीनां ग्रहणं बोध्यम् ।

( ३१ ) स्वयमेव विवृणोति कारिकार्थं—**करुणेति** । करुणपदमत्रोपलक्षणम् , तेन वीभत्सादीनां परामर्शः । दुःखहेतुताप्रसङ्गःस्यादिति । तथा च रामायणादिप्रबन्धेषु केषामपि प्रवृत्यभावेन लोकसमाजेभ्यस्तेषां विलीनत्वमेवस्यादिति भावः । अत एव किञ्चेत्यादिना पौनरुक्त्यन्नभवतीति ।

( ३२ ) ननु 'कारणगुणाः कार्यगुणानारभन्त' इति न्यायात्करुणादिषु तु स्थायिनः शोकादेर्दुःखजनकतया तेभ्यः सुखं कथमुत्पद्यत इत्याशङ्कते—**नन्विति** । दुःखकारणेभ्यः रामादिविभादिभ्यः । करुणादिरसरूपकार्यस्य कथमुत्पत्तिरिति भावः ।

(३३) समाधत्ते—**हेतुत्वमिति** । लोकसंश्रयात् चराचरवस्तुजातस्वभावात् । शोकहर्षादेर्हेतुत्वं गतेभ्यः रामवनवासराज्याभिषेकोद्योगादिभ्यः, लोके जनसमाजे लौ-

शोकहर्षादयो लोके जायन्तां नाम लौकिकाः ॥६॥
अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात् ।
सुखं सञ्जायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः ॥७॥

(३४) 'ये खलु रामवनवासादयो लोके 'दुःखकारणानि' इत्युच्यन्ते त एव हि काव्यनाट्यसमर्पिता अलौकिकविभावनव्यापारवत्तया कारण-शब्दवाच्यतां विहाय अलौकिकविभावशब्दवाच्यत्वं भजन्ते। तेभ्यश्च सुरते दन्तघातादिभ्य इव सुखमेव जायते । अतश्च 'लौकिकशोकहर्षादि-कारणेभ्यो लौकिकशोकहर्षादयो जायन्ते' इति लोक एव प्रतिनियमः । काव्ये पुनः 'सर्वेभ्योऽपि विभावादिभ्यः सुखमेव जायते' इति नियमान्न कश्चिद्दोषः ।

(३५) कथं तर्हि हरिश्चन्द्रादिचरितस्य काव्यनाट्ययोरपि दर्शन-

किकाः लोकप्रकृतिसिद्धाः शोकहर्षादयो जायन्तां नामेति तुष्यतु दुर्जनन्यायेनोक्त्वाह-**अलौकिकेति** । किन्तु काव्यसंश्रयात् काव्यान्तर्निवेशवशात् अलौकिकविभावत्वं शोकादेर्लोकविलक्षणहेतुत्वं प्राप्तेभ्यः सर्वेभ्योऽपि तेभ्यो वनवासराज्योद्योगादिभ्यः सुख-मेव सञ्जायत इत्यत्र का क्षतिरनुपपत्तिर्न काऽपीति भावः । दुःखकारणेभ्यो दुःखस्यैवो-त्पत्तिरिति काव्यातिरिक्तस्थल एवैष नियमः । दुःखकारणे सत्यपि सुखोत्पत्तौ कविरच-नाकौशलमेवात्र निदानमिति भावः । सभ्याः रामवनवासादीन् काव्यसेवनसमयेऽऽत्मग-गतानिवानुभवन्तोऽजस्रं त्यजन्तोऽपि वाष्पाश्रूणि कविताचातुरीसमाश्लिष्टाः सन्तो नितरामानन्दाम्बुधौ मज्जन्तीति रहस्यमत्र बोध्यम् ।

( ३४ ) स्वाशयं स्फुटीकरोति-**ये खल्वित्यादिना** । रामवनवासादय आदिना-राज्याभिषेकादेर्ग्रहणम् । लोके तदानीन्तनलोकसमाजे। त एव वनवासादयएव दुःख का-रणानि । काव्यनाट्ययोः समर्पिताः कविनोपनिबद्धाः सन्त अलौकिको लोकाद्विलक्षणो यो विभावनव्यापारः वासनात्मतयातिसूक्ष्मरूपेणावस्थितानां रत्यादीनां विभावनव्यापार-वत्तयास्वादनयोग्यतयानयनरूपस्याविर्भावनम्विभावनन्तदेव व्यापारो विषयतासम्ब-न्धेन, तद्वत्तया हेतुना । भजन्ते प्राप्नुवन्ति । अत एव कारणशब्दं परित्यज्य विभावा-दिशब्दं समाजिकाः प्रयुञ्जत इति भावः ।

**सुरते दन्तघातादिभ्य इवेति** । अनेन देशकालादिविशेषेण सुखमयस्यापि दुःखमयत्वं दुःखमयस्यापि सुखमयत्वमायाति । अत एव "प्रपञ्चस्य सुखदुःखमोहा-त्मकत्वम्" **सांख्या** आहुः ।

( ३५ ) अथानुपपत्यन्तरमाशङ्कते-**कथमिति** । तर्हि करुणादिरसाभिव्यञ्जक-विभादिभ्योऽपि सुखोत्पत्यङ्गीकारे । अश्रुपातादय इत्यत्रादिना निःश्वासादिपरिग्रहः ।

श्रवणाभ्यामश्रुपातादयो जायन्त इत्युच्यते--

**(३६) अश्रुपातादयस्तद्वद्द्रुतत्वाच्चेतसो मताः ।**

(३७) तर्हि कथं काव्यतः सर्वेषामीदृशी रसाभिव्यक्तिर्न जायत-इत्यत आह—

**(३८) न जायते तदास्वादो विना रत्यादिवासनाम् ॥८॥**

(३९) वासना चेदानीन्तनी प्राक्तनी च रसास्वादहेतुः, (४०)तत्र यद्याद्या

**जायन्त** इति । केवलदुःखेनैवाश्रुपातादीनां सम्भवादिति भावः ।

( ३६ ) उत्तरयति-**अश्रुपातादय इति** । चेतसो द्रुतत्वात् चित्तस्य सदयत्वमेव द्रुतत्वम् । सुखसत्वेऽपि तद्दयया अश्रुपात इति भावः । रसानन्देन द्रवीभावात् हर्षेण गलितप्रायत्वात् । तद्वत्सुखोत्पत्तिवत् । अश्रुपातादयो मताः सामाजिकानामिति शेषः । एवञ्च आनन्दजनिता एव ते खल्वश्रुपातादय इति भावः ।

( ३७ ) अन्यामापत्तिमाशङ्कते-**तर्हीति** । तर्हि रसानामानन्दमयत्वे सिद्धे ईदृशी-आह्लादरूपा रसाभिव्यक्तिः रसास्वादः कथं नजायते, कारणसद्भावे कार्योत्पत्तेरवश्य-म्भावित्वादित्याशयः ।

( ३८ ) समाधत्ते—**न जायत इति ।** तदास्वादः रसास्वादः रत्यादिवासनां-रत्यादितादात्म्येन प्रतीयमानां वासनां विना न जायते बोधो न भवति । तथा च ण्यजनितवासनाऽपि रसास्वादहेतुरित्युक्तम् ।

( ३९ ) का नाम वासनेति सविभागं दर्शयति-**वासनेति** । रसास्वादहेतु-(क)र्वासनेत्यनुषङ्गः । वासना च सूक्ष्मसंस्कार इति केचित् । रतिहासादिसम्बन्धसहकृ-तकाव्यार्थबोधेच्छा रत्यादिवासनेत्यपरे । इदानीन्तनी प्राक्तनीचेति सा वासना द्विविधा । काव्यनाट्यश्रवणावलोकनकालवर्त्तिनी इदानीन्तनी, पूर्वकालवर्त्तिनी च प्राक्तनी ।

( ४० ) मिलितयोरेव तयोर्वासनयोः रसास्वादम्प्रति कारणत्वमिति स्पष्टयति—**तत्रेति** । तत्रोभयोर्मध्ये । आद्या इदानीन्तनीवासना । श्रोत्रियो वैदिकः । "एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा । षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्" । जरद्गतिवृद्धो मीमांसकः यज्ञाभिनिविष्टचेताः ब्रह्मज्ञानाभिनिविष्टचेताश्च । आदिना शुष्कनैया-यिकादीनां परिग्रहः। एतेषामपि सः रसास्वादः स्यात्प्रसज्येत । नचेष्टापत्तिः, एतेषां रसा-स्वादो भवत्येव नहि वैपरीत्येन काव्यार्थेषु घृणोदयात् रत्यादिसम्बन्धसहकृतकाव्या-र्थज्ञानेच्छाभावाच्च । अत्र "ननु तेषां प्राक्तनवासना सद्भावे किम्मानमिति चेत् तदभावे प्रमाणासत्वेनैतत्सिद्धेः । न च फलाभाव एव प्रमाणमिति वाच्यम् , इदानीन्तनवासना-व्यतिरिक्तस्यैव फलाभावप्रयोजकत्वोपगमेनैवोपपत्तौ तदभावस्य तत्प्रयोजकत्वकल्प-

( क ) अत एवोक्तम्—**"वासना चेन्नहेतुः स्यात्सस्यान्मीमांसकादिषु" इति ।**

**न स्यात्तदा श्रोत्रियजरन्मीमांसकादीनामपि स स्यात् । (४१)यदि द्वितीया न स्यात्तदा यद्रागिणामपि केषाञ्चिद्रसोद्बोधो न दृश्यते तन्न स्यात् । (४२) उक्तञ्च धर्म्मदत्तेन—**

**"सवासनानां सभ्यानां रसस्यास्वादनं भवेत् ।**

**निर्वासनास्तु रङ्गान्तःकाष्ठकुड्याश्मसन्निभाः" ॥ इति ।**

**(४३) ननु कथं रामादिरत्याद्युद्बोधकारणैः सामाजिकरत्याद्युद्बोध इत्युच्यते—**

**(४४) व्यापारोऽस्ति विभावादेर्नाम्ना साधारणी कृतिः ।**

**तत्प्रभावेण यस्यासन्पाथोधिप्लवनादयः ॥ ९ ॥**

---

नाया अन्याय्यत्वात् । वस्तुतस्तु इदानीन्तनवासनायां प्रमाणन्नास्ति । न च रागाद्यनन्यथानुपपत्तिरेव मानमिति वाच्यम् , तस्या रागादिम्प्रत्यजनकत्वादिष्टसाधनताज्ञानादिनैवतत्सिद्धेः, इति **वागीशा** आहुः । एतेषाञ्च यौवनादौ प्राक्तनी कादाचित्करतिहासादिसम्बन्धरूपा वासना त्वासीदेवेति रहस्यम् ।

(४१) प्राक्तनी वासनाऽस्वीकारेऽतिप्रसक्तिं दर्शयति-**यदि द्वितीयेति** । द्वितीया प्राक्तनी वासना रागिणामपि काव्यरसबोधानुभववतामपि रसोद्बोधो रसास्वादो न दृश्यते तन्नस्यात् रसोद्बोधदर्शनन्नस्यात् । अपि तु रसोद्बोधदर्शनमेव प्रसज्येत तेष्विदानीन्तनवासनाया सद्भावादिति भावः । वस्तुतस्तु तेषां प्राक्तनवासनाया अभावात् इदानीन्तनकाव्यार्थपरिशीलनसत्वेऽपि रसास्वादो न भवतीति न स्यादिति सारमत्र बोध्यम्

(४२)उक्तविषये प्रमाणं दर्शयति-**उक्तञ्चेति। सवासनानामिति।** सवासनानां दर्शितोभयविधवासनाविशिष्टानां वासना एव रसास्वादे हेतुः । सभ्यानां सहृदयानां रसस्य आस्वादनमनुभवो भवेत् । किन्त्वर्थैस्त्विति । निर्वासनाः उक्तोभयविधवासनारहिताः सभ्याः रङ्गान्तः नाटयशालामध्ये काष्ठं दारुमयस्थूणादि कुड्यं भित्तिः अश्मा प्रस्तरस्तेषां सन्निभाः सदृशाः । रङ्गमध्ये काष्ठकुड्यादीनां रसास्वादो यथा न भवति तथैव वासनारहितानां नाटकदर्शकानां सामाजिकानां रसास्वादो न भवति । सर्वथैव रसोद्बोधहीना त इत्याशयः ।

(४३) रसोद्बोधे साधारण्याभिमानस्य हेतुतां व्यवस्थापयितुमाशङ्कते-**ननुकथमिति** । रामादिरत्याद्युद्बोधकारणैरिति, नाटयकाव्यदृष्टश्रुतसीतादिभ्य इत्यर्थः । **सामाजिकरत्याद्युद्बोधः** सामाजिकरत्यादिवासनोद्बोधः । तेषान्तम्प्रत्यसाधनत्वादिति भावः ।

(४४)सजातीयरत्यादिसाजात्येनाऽपि सामाजिकानां नायकाद्यभेदावगाहिरसबोधोपपत्तौ वक्ष्यमाणसमाधानमकिञ्चित्करमतो मनुष्यसामाजिकानामतिदुर्जयम्प्रति **वीरालम्बनोत्साहबोधोऽत्यन्तासम्भवीति** तं सम्पादयितुं वीररसं दर्शयन् समाधत्ते-**व्यापारो**

**प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते ।**

**(४५) ननु कथं मनुष्यमात्रस्य समुद्रलङ्घनादावुत्साहोद्बोध इत्युच्यते-**

**(४६) उत्साहादिसमुद्बोधः साधारण्याभिमानतः ॥१०॥**

**नृणामपि समुद्रादिलङ्घनादौ न दुष्यति ।**

**ऽस्तीति**। विभादेरित्यादिपदेनानुभावसञ्चारिभावयोः सङ्ग्रहः। एवञ्च विभावानुभावसञ्चारिभावानां नाम्ना साधारणीकृतिः, सा च सामाजिके रामाद्यभेदारोपरूपस्य रामादि-सीतादौ स्वीयत्वारोपरूपस्य स्वीयरत्यादौ रामादिरत्याद्यभेदारोपरुपस्य च साधारणीकृतिरिति कारिकार्थः। साधारणीकरणमितियावत्। तच्चान्यसम्बन्धित्वेनासाधारणस्य विभादेः स्थायिनश्च व्यक्तिविशेषांशपरित्यागेनोपस्थापनमिति भावः। तत्प्रभावेण साधरणीकरणव्यापारेण यस्य रामस्य पाथोधिप्लवनादयःसमुद्रनिग्रहादयः। आदिना सीतापहर्त्तुः रावणनिग्रहादिग्रहणम्। तस्य रामस्य अभेदेनैकरूप्येण स्वात्मानं स्वं प्रतिपद्यते बुध्यते यथा—

"स्तपोपवासादिभिरप्युदग्रैः स्वरूपमस्यानवलोकयन्तम्।

भूभेदभीमाननितम्बमब्धिं विव्याध बाणत्रिनयेन रामः" ॥

अत्र विभावादीनां समुद्रादीनां एषु साधारण्याभिमानान्मनुष्यसामाजिकानामपि "रामोऽहं क्रुद्धः स्वरूपानवलोकनोद्दीपितसमुद्रनिग्रहविषयक उत्साहवान्" इति प्रतिपत्तिरुत्पद्यते। ज्ञानोपनीतस्य रामोत्साहस्याभेदेन स्वादनाख्यव्यापारेण स्ववासनैयव सामाजिकैरास्वाद्यते। एवञ्च स्फटिके स्थापितजवाकुसुमरागमिव साधारणीकरणव्यापारेण सामाजिकात्मनि सीतादिकृतो रामादिरत्यादिरेव प्रतिबिम्बीभवतीति नोक्तसंदेहदोषलेशोऽपीति भावः।

(४५) नायकसामाजिकाभेदबोधमुक्त्वा वासनोत्साहाद्यभेदबोधम्प्रतिपादयितुमाह-**ननु कथमिति**। **मनुष्यमात्रस्येति**। साजात्येनाभेदप्रतीतिस्तादृशोत्साहाद्यसम्भवेन मनुष्याणां न सम्भवतीति बोधनाय। लङ्घनं निग्रहः। आदिपदेनात्र रावणहननादिग्रहणम्। एवञ्च महामहिमशालिभिर्दैवरपि विधातुमशक्ये रावणवधादौ नाट्यकाव्यदर्शनश्रवणविधायिनः मनुष्यसामान्यस्य सर्वथैवाशक्ये समुद्रलङ्घने च उत्साहोद्बोधः कथमाविर्भाव इत्याशयः।

( ४६ ) उत्तरयति-**उत्साहादीति**। नृणामपि सामान्यमनुजानामपि साधारण्याभिमानतः नाटयकाव्यदर्शनश्रवणसमये विभावादेः साधरणीकरणनामकव्यापारेण स्वस्य रामादिभ्योऽभेदज्ञानेन समुद्रादिलङ्घनादौ। समुद्रादीत्यादिपदेन गिरिकाननादेः परिग्रहः। उत्साहादीत्यादिना क्रोधादीनां ग्रहणम्, लङ्घनादौतूक्तमेव। उत्साहादीनां समुद्बोधः साधुतयाविर्भावो न दुष्यति सङ्घटत एवेति भावः।

नन्वलौकिकसन्निकर्षेणातिसमीपवर्त्तिनः उत्साहादेः प्रकारत्वं सामाजिके साक्षा-

(४७) रत्यादयोऽपि साधारण्येनैव प्रतीयन्त इत्याह—

(४८) साधारण्येन रत्यादिरपि तद्वत्प्रतीयते ॥ ११ ॥

(४९) रत्यादेरपि स्वात्मगतत्वेन प्रतीतौ सभ्यानां व्रीड़ातङ्कादिर्भवेत्। परगतत्वेन त्वरस्यतापातः ।

(५०) विभावादयोऽपि प्रथमतः साधारण्येन प्रतीयन्त इत्याह—

देवास्तु, अलं वासनायाः प्रकारत्वाभ्युपगमेनेति चेन्मैवम् । तथासति लौकिकप्रत्यक्षस्यैव साक्षात्त्वाभ्युपगमाद्वासनांशे साक्षात्कारवत्प्रमात्वानुपपत्तेः । नच वासनांशे प्रमात्वाभ्युपगमे न मानं किञ्चिदपीति वाच्यम् , "शक्तिग्रह" मित्यादिना व्यवहारेऽपि शक्तिग्रहात् । प्रकृते "पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम्" इत्यादि प्राचीनव्यवहारेण 'धर्मिणि सर्वमभ्रान्तं प्रकारे तु विपर्ययः' इत्युक्तदिशा वासनांशे रसबोधस्य प्रमात्वस्वीकारात् । अतएव पूर्वकारिकायां प्रमातृपदोपन्यासः ।

( ४७ ) अथोत्साहादिशमान्तस्थायिभावेष्वेवायं विभादेः साधरणीकृतिव्यापारोऽभ्युपेयत उताहोऽन्येषामपि स्थायिभावानामिति सर्वेषां स्थायिभावानां साधारण्यप्रतीतौ प्रतिबन्धकाभावम्प्रतिपादयितुमाह—**रत्यादयोऽपीति** । आदिना रतिभिन्नानां सर्वेषां परिग्रहः । साधारण्येनैव उभयसाधारण्येनैवेत्यर्थः । नत्वात्मगतत्वेनैव रामादिगतत्वेनैवेति भावार्थः । प्रतीयन्त इत्यत्र सामाजिकैरिति शेषः ।

(४८) तमेवस्पष्टयति -**साधारण्येनेति** । साधारण्येन साधारणीकरणव्यापारवशात् रामादिभिःसह स्वस्याभेदज्ञानेन तद्वत् समुद्रलङ्घनादावुत्साहादिवत् रत्यादिरपि सामाजिकैः प्रतीयत इति भावः ।

(४९) अनुकूलप्रतिकूलतर्कौ प्रकटयन्नुपपादयति–**रत्यादेरपीति** । आत्मगतत्वेन आत्ममात्रसम्बन्धित्वेन सभ्यानां रत्यादेः प्रतीतौ सत्यामेव व्रीडा । आत्मगतत्वेन रतिप्रतीतौ पित्रादिगुरुजनसन्निधानाल्लज्जा । भयप्रतीतावातङ्कशङ्का भवेदिति भावः । आदिना हासादीनां परिग्रहः । तु किन्त्वर्थे । परगतत्वेन नायकमात्रसम्बन्धित्वेन प्रतीतावित्यत्रान्वयः । अरस्यतापात अनास्वाद्यतापत्तिः । एवञ्च व्रीडातङ्कादिर्नस्यादिति भावः । **इदमत्र बोध्यम्**–रत्यादिकोमलस्थायिभावेष्वपि नाट्यकाव्यदर्शनश्रवणसमये व्रीडातङ्काद्युपलम्भात्साधरणीकरणनामकव्यापारोऽस्त्येवेत्यत्र नास्माकं विप्रतिपत्तिः किञ्चिदपीति ।

( ५० ) विभावादौ साधरण्यप्रतीतिप्रतिबन्धकाभावप्रदर्शनेनोपपादयति–**विभावादय इति** । आदिनानुभावव्यभिचारिभावयोर्ग्रहणम् । प्रथमतः रसबोधात्पूर्वम् । विभावादिभिः सह साधारण्येन स्वस्याभिन्नत्वेन प्रतीयन्ते सभ्यैरिति शेषः । रसबोधारम्भकाले तु न विभावादीनां नवात्मनः पृथग्बोधो भवतीतिभावः ।

**(५१) परस्य न परस्येति ममेति न ममेति च ।**
**तदास्वादे विभावादेः परिच्छेदो न विद्यते ॥१२॥**

**(५२) ननु तथापि कथमेवमलौकिकत्वमेतेषां विभावादीनामित्युच्यते—**

**(५३) विभावनादिव्यापारमलौकिकमुपेयुषाम् ।**
**अलौकिकत्वमेतेषां भूषणं न तु दूषणम् ॥१३॥**

(५१) **परस्येति** । तदास्वादे तस्य रसस्य आस्वादे अग्रेभाविनि सति तत्पूर्वमिति भावः । इति अयमुच्यमानोऽभिनीयमानो वा समुद्रलङ्घनादिव्यापारः परस्य नायकस्यैवासीत् इति अयं पुनदर्शनादिव्यापारः परस्य नायकस्य रामादेर्नेति इति अयमवलोकनादिव्यापारो ममैव अयम्पुनर्लङ्घनादिव्यापारो न मम, इत्थं विभावादेः परिच्छेदः सम्बन्धविशेषस्वीकारपरिहाराध्यवसायोऽऽत्मना सह भेदज्ञानमिति यावत्' न विद्यते न वर्त्तते सभ्यस्येति शेषः । एवञ्चात्र "तादृशाध्यवसायस्य प्रतिबन्धकस्याभावेनोपहितः साधरणीकरणाख्यव्यापारः सामाजिकानां सीतादयो मम रामादेश्चेति साधारणप्रत्ययमव्याहतमेव जनयतीति भावः" इति **तर्कवागीशाआहुः** ।

नन्वत्रानुपदोक्तं प्रमाता तदभेदेनेत्यादिना सहैतस्य पुनरुक्तत्वमिति चेन्मैवम् उद्देश्यभेदेन सकृदानुक्तावपि पुनरुक्तदोषानभ्युपगमात् । अत्र द्वयोरेवेतिशब्दयोरुभयत्र काकाक्षिगोलकन्यायेनान्वयः ।

(५२)रसस्यहि अलौकिकत्वं 'लोकोत्तरचमत्कारप्राणैरित्यनेन साधितम् , अग्रेऽपि "तस्मादलौकिकः" इत्यादिना प्रतिपादयिष्यति परन्तु लौकिकविभावादिभ्योऽलौकिकरसोत्पत्तिःकथमित्याशङ्कां समाधित्सुः तेषामप्यलौकिकत्वं सम्पादयितुमाशङ्कते-**नन्विति** । तथापि अनुपपत्तिकूटनिराकरणेन साधरणीकृत्याख्यव्यापारस्वीकारेऽपि । एवम् रसोत्पत्त्यनुगुणमेतेषां विभावादीनाम् ।

(५३) **विभावनादीति** । अलौकिकमुपेयुषाम् सभ्यसमाजेषु पूर्वमसन्तं विभावनादिव्यापारं हेतुता सम्बन्धेन लब्धवताम्, एतेषां विभावादीनामपि अलौकिकत्वं स्वीकृतमिति शेषः । ननु रसोत्पत्ते र्विगुणमेवैतेषामलौकिकत्वं नत्वनुगुणमलौकिकात्फलसिद्धेरदृष्टचरत्वादत आह–**भूषणमिति** । अलौकिकरससिद्धिरिति शेषः । भूषणम्भूषणवदुपकारकं रसाविर्भावानुगुणमेवेति' भावः । नतु दूषणम् अविवेकित्वादिलौकिकदोषवन्न रसाविर्भावविगुणमित्यर्थः । रसविभावाद्योरुभयोरप्यलौकिकत्वेन तुल्यत्वादिति तत्त्वम् । एवञ्चालौकिकाल्लौकिककार्यसिद्धिर्मास्तु, काव्यनिबन्धनाद्विभावादीनामलौकिकत्वे सति तेभ्योऽलौकिकरसोत्पत्तिः सामाजिकानामनुभवसिद्धैवेतिदुरपह्नव एवालौकिकयोः कार्यकारणभावः ।

(५४)आदिशब्दादनुभावसञ्चारणे । तत्र विभावनं रत्यादेर्विशेषेणा-स्वादाङ्कुरणयोग्यतानयनम्। अनुभावनमेवम्भूतस्य रत्यादेः समनन्तर-मेव रसादिरूपतया भावनम् । सञ्चारणं तथाभूतस्यैव तस्य सम्यक् चारणम् ।

(५५) विभावादीनां यथासङ्ख्यं कारणकार्य्यसहकारित्वे कथं त्रया-णामपि रसोद्बोधे कारणत्वमित्युच्यते—

(५६) कार्य्यकारणसञ्चारिरूपा अपि हि लोकतः ।

( ५४ ) कारिकार्थं विवृणोति-**आदीत्यादिना** । अनुभावसञ्चारणे एतदुभयमपि ग्राह्यमिति भावः । विभावनादिपदव्युत्पत्तिलभ्यमेव विभावनादिस्वरूपमाह **तत्रेति** । **विशेषेणेति** । अतिशयेनेत्यर्थः । विभावनपदघटितविशब्दस्यैव विशेषणमर्थः । अङ्कु-रणमङ्कुरसदृशीभवनं सूक्ष्मरूपेणाविर्भावः तस्य योग्यतायानयनम्प्रापणम् । तथाच रत्यादेः सूक्ष्मास्वादरूपेण यो आविर्भावस्तच्छक्तिप्रापणमिति समुदायार्थः । एवम्भूतस्य-रसत्वेनाङ्कुरतां प्राप्तस्य सूक्ष्मास्वादरूपेणाविर्भूतस्येति यावत् । अनुभावपदघटितस्या-नुशब्दस्यार्थमाह-**समनन्तरमिति**। स्वनिष्ठस्वादनाख्यव्यापारेण रत्यादेः रसरूपतया प्रवेशनमिति भावः । रसादिरूपतया शृङ्गारादिरूपतयेत्यर्थः । रत्यादीत्यादिना भावादीनां परामर्शः तेन तेषामपि विभादिजन्यत्वम् बोध्यम् । भावनम्प्रतिपादनम् । अनुभाव परिपुष्टस्यैव रसव्यवदेशोऽस्ति न तु सूक्ष्मास्वादरूपेणाविर्भूतस्यापि । काण्डपल्लववि-शिष्ट एव वृक्षव्यवहारो नत्वङ्कुरोद्गम एवेति । तथाभूतस्य समग्ररूपेण रसतां प्राप्तस्य तस्य रत्यादेः सम्यक् चारणं परिपुष्टीकरणम् । व्यभिचारिभावेनात्यन्तपरिपुष्टस्यैव रत्यादेरत्यन्तास्वादनम्भवति । तथाचास्वादपरिपोषातिपरिपोषजनकत्वेनैवानुभावस-ञ्चारिभावयोरास्वादजनकत्वमिति सरलार्थः। कारणकार्यसहकारिणो विभावनुभावव्यभि-चारिणो भवन्तीति क्रमः ।

(५५) रसनिष्पत्तिम्प्रति त्रयाणामेव विभावादीनां हेतुत्वमुपपादयितुमाशङ्कते— **विभावादीनामिति** । अनुभावसञ्चारिभावयोरादिपदेनपरिग्रहो बोध्यः । **यथासं-ख्यमिति** । संख्यामनतिक्रम्य यथासंख्यं यथार्थेऽव्ययीभावः । अर्थकृतमत्र यथासंख्यं ज्ञातव्यम्। एवञ्च रामादिरत्यादेः सीतादिविभावः कारणम् । तदीयरत्यादेः रामादिगत-स्तम्भस्वेदाद्यनुभावः कार्यम् । सीतादिगतचाञ्चल्यानन्दादिसञ्चारिभावश्च तद्गतरत्यादेः सहकारिकारणम् । तथाच रत्यादेःरसरूपतया परिणतेः तत्कार्यभूतस्यानुभावस्य न कारणत्वं किन्तु विभावसञ्चारिभावयोरेवेति पूर्वपक्षाशयः ।

(५६) **समाधत्ते—कार्येति**। रसोद्बोधे ते विभावाद्याः विभावानुभावसञ्चारिभावाः लोकतो हि लोकनियमेनैव कारणकार्यसञ्चारिरूपा अपि सभ्येषु रसत्वेनाविर्भावे तस्य रत्यादेः कारणान्येव प्रत्येकं हेतव एव मताः स्वीकृताः । हर्षचाञ्चल्यादिसहकृतसीता-

रसोद्बोधे विभावाद्याः कारणान्येव ते मताः ॥१४॥

(५७) ननु तर्हि कथं रसास्वादे तेषामेकः प्रतिभास इत्युच्यते--

(५८) प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते ।

ततः सम्बलितः सर्व्वो विभावादिः सचेतसाम् ॥१५॥

प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत् ।

(५९) यथा खण्डमरिचादीनां सम्मेलनादपूर्व्व इव कश्चिदास्वादः

दिविभावस्य शृङ्गारादिरसास्वादम्प्रति सभ्यानां यथा कारणत्वन्तथा तद्गतस्तम्भस्वेदाद्यनुभावानामपि कारणत्वम्, तदवलोकनेनाऽपि सभ्यानां रसस्य पुष्टीकरणात् । ननु "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति" रिति भरतसूत्रे समुदितानामेव विभादीनां कारणत्वं भवतीत्युक्तन्तर्हिमूले "कारणान्येवेति" कथं बहुवचनस्योपपत्तिः, एतादृशस्थल एकवचनस्यैव युक्तत्वात्, अतएव **प्रकाशकृता** "इतिहेतुस्तदुद्भवे" इत्यस्य विवृतौ "इतिसमुदिताहेतुर्नतुहेतव" इत्युक्तमितिचेत् ? सत्यम्, यत्र कारणपदस्यैकधर्मावच्छिन्नकार्यतानिरूपितकारणतापरत्वे तत्र ह्येकवचनम् । कारणतामात्रपरत्वे तु-बहुवचनं साध्वेव तादृशस्थलेऽपि । प्रकृते तु रत्यादेःकार्यभूतयोरप्यनुभावसञ्चारिभावयोः रसरूपतोत्पत्तौ कारणत्वमिति कारणतामात्रे तात्पर्यन्नतु तादृशकारणतायाम् । **यद्वा** यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्र समानवचनकत्वनियमः। एवञ्च प्रकृते विवक्षितत्वात्तथा **प्रकाशे**ऽपि तथैव समाधान्नदोषलेश इति सारवेदिनो वदन्ति ।

(५७) विभावादीनां रसम्प्रति व्यञ्जनाजन्यैकज्ञानविषयत्वे सत्येव कारणत्वमिति वक्तुमुपक्रमते—**नन्विति**। तर्हि यथासंख्यं रसविभावायोः कार्यकारणत्वे सति । रसास्वादे सभ्यानां रसोद्बोधसमये तेषां कारणीभूतविभावादीनां एकप्रतिभास एकरसस्वरूपतया परिणामः कथम् । कार्यकारणभावयोर्भिन्नत्वेन तद्बोधस्यापि भिन्नत्वस्यावश्यकत्वादिति भावः। अतीतस्यापि विभादेः रसास्वादकारणत्वप्रतिपादनं तज्ज्ञानाभिप्रायेणेति बोध्यम् ।

(५८) **प्रतीयमान** इति । प्रथमं सामाजिकानां रसतया प्रतीतेः प्राक् प्रतीयमानः सर्वो विभादिः प्रत्येकं हेतुरुच्यते रत्यादिम्प्रतिकारणमुच्यते । ततः प्रत्येकज्ञानानन्तरं संवलितः व्यञ्जनया विशिष्टवैशिष्ट्यावगाह्येकज्ञानरूपतां प्राप्तः सर्वो विभादिरेव प्रपाणकरसन्यायात् प्रापाणकद्रव्य इव चर्व्यमाणः स्वाभिन्नाह्लादमयचर्वणाविषयः प्रपाणकः सचेतसां सामाजिकानां रसो भवेत् । रसस्य चर्वणानन्यत्वेऽपिकाल्पनिकमाश्रित्यचर्व्यमाण इति ।

(५९) उपमानोपमेययोश्चर्व्यमाणत्वमुपपादयति-**यथेति** । खण्डमरिचादीनाम्,

प्रपाणकरसे सञ्जायते विभावादिसम्मेलनादिहापि तथेत्यर्थः ।

(६०) ननु यदि विभावानुभावव्यभिचारिभिर्म्मिलितैरेव रसस्तत् कथमेकस्य द्वयोर्व्वा सद्भावेऽपि स स्यादित्युच्यते—

(६१) सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत् ॥१६॥
झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते ।

अन्यसमाक्षेपश्च प्रकरणादिवशात् । यथा—

(६२) "दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
सङ्क्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितो नितम्बि जघनं पादावुदग्राङ्गुली
छन्दो नर्त्तयितुर्यथैव मनसः सृष्टं तथास्या वपुः" ॥

---

इक्षुशर्करानिर्मितं खण्डमित्युच्यते । मरिचं तन्नाम प्रसिद्धं द्रव्यम् । आदिनामिक्षाकर्पूरयोर्ग्रहणम् । अत्रैतेषां पृथगास्वादने मधुरादिविभिन्नरसः प्रतीयमानो भवतीति नाविदितं केषामपि । अत्र यथा खण्डादिचतुष्टयमेलकादुत्पद्यमाने प्रपाणकद्रवे(क) माधुर्यादिविलक्षणो विशिष्यवक्तुमशक्यः आस्वादो रसाख्यगुणविशेष इव सञ्जायते विभावादिचतुष्टयमेलकात् तथोत्पद्यमाने शृङ्गारादिरसेऽप्याह्लादः सञ्जायत इति तात्पर्य्यम् । नचात्र यथेवाद्युभयोः प्रयोगात्पौनरुक्त्यमिति वाच्यम् "आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः" इत्यादाविव सप्तम्यन्तप्रथमान्तपदार्थयोरुपमाद्वयमुपस्थापयतोर्न यथेवशब्दयोः-पौनरुक्त्यमित्याशयात् । अतएव श्लिष्टत्वाद्रसास्वादपदयोरुपमानोपमेयभावः सिध्यतीति भावः ।

(६०)एवं सत्यप्यापत्त्यन्तरमाशङ्कते—**नन्विति** । स स्यात् कथं रसः स्यादितिभावः । यथा तुरीवेमादीनां मुख्यकारणसहकारिकारणानां मध्ये कस्यचिदसत्त्वेऽपि पटकार्यानिष्पत्तिस्तथा विभावानुभावव्यभिचारिणां मध्ये कस्यचिदसत्त्वेऽपि रसानिष्पत्तिरिति पूर्वपक्षाशयः ।

(६१)समाधत्ते-**सद्भावश्चेदिति** । चेद्यदि विभावादेर्मध्ये द्वयोरेकस्य वा सद्भावो वर्त्तमानत्त्वं भवेत् , तदा झटिति तत्कालादेव अन्यस्यावर्त्तमानस्य भावस्य समाक्षेपे व्यञ्जनया बोधे सति दोषो न विद्यते रसनिष्पत्त्यनुपपत्तिर्नेति भावः । **प्रकरणादिवशा**त्प्रस्तावादिवैशिष्ट्यात् ।

(६२)एतादृशस्थलमुदाहरति—**दीर्घाक्षमिति** । मालविकाग्निमित्रे नृत्यारम्भसमयेऽग्निमित्रकर्त्तृकं मालविकायाः रूपवर्णनमिदम् । उत्तमनटीं नर्त्तयितुर्मनसो यथैवच्छन्दोऽभिप्रायस्तथैवास्या वपुः सृष्टं नृत्योपयोगितया घटितम् । तदेवाह-**दीर्घाक्षमिति** ।

---

**( क ) इक्षुशर्कराखण्डमरिचचूर्णामिक्षाकर्पूरैः रचितं प्रपाणकं नाम द्रव्यविशेषस्तत्समयप्रसिद्धो ज्ञेयः ।**

(६३) अत्र मालविकामभिलषतोऽग्निमित्रस्य मालविकारूपविभावमात्रवर्णनेऽपि सञ्चारिणामौत्सुक्यादीनामनुभावानाञ्च नयनविस्फारादीनामौचित्यादेवाक्षेपः। (६४) एवमन्याक्षेपेऽप्यूह्यम्।

(६५) "अनुकार्य्यगतो रसः" इति वदतः प्रत्याह—

**(६६) पारिमित्याल्लौकिकत्वात्सान्तरायतया तथा ॥१७॥**

मालविकाया वदनमाननं दीर्घाक्षं दीर्घनेत्रम्, एणीसदृशमिति भावः। शरदिन्दुकान्ति-शरच्चन्द्रसुषमान्वितञ्च बाहू भुजौ अंसयोः स्वमूलयोर्नतौ नम्रौ, स्त्रीणां नतस्कन्धत्वं प्रशस्तमिति भावः। निबिडौ अन्योन्यसंसक्तौ उन्नतौ च स्तनौ कुचौ यत्र तत्। इत्थम्भूतं सदपि संक्षिप्तमविस्तीर्णं स्त्रीणामविस्तीर्णमुरस्त्वं गुण इति भावः। पार्श्वे उदरपार्श्वद्वये तुल्यत्वात् केनचित्पाणिना प्रमृष्टे लिप्त इव पार्श्वास्थ्नामदृश्यत्वादियमुत्प्रेक्षा। मध्यः कटिप्रदेशः पाणिमितः नितान्तकृश इति भावः। जघनमूरुद्वयं नितम्बि विस्तीर्णनितम्बद्वयसंयुतम्। उदग्रोन्नता अङ्गुल्यो ययोस्तावुदग्राङ्गुली पादौ चरणौ।

(६३) **अत्रेति**। अभिनयं वर्णयतः। मालविकारूपविभावमात्रवर्णनेऽपि तदात्मककेवलालम्बनविभाववर्णनेऽपि औचित्याद्वाच्यस्य विभावस्य वैशिष्ट्यात्। आक्षेपो बोधः।

(६४) **एवमिति**। अन्याक्षेपे विभावाक्षेपेऽपि बोध्यम्।

**यथा**—"परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदकान्तः कपोलः॥"

अत्र विप्रलम्भश्रृङ्गारस्यानुभावमात्रस्याङ्गसौष्ठवादेः सत्वम्। तदालम्बनविभावादीनामाक्षेपः। एवम्,—

"वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः।
धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे।"

इत्यादौ आलम्बनोद्दीपनविभावमात्रवर्णनेऽपि प्रसीदेति पदसामर्थ्यात् कटाक्षविक्षेपादीनामनुभावादीनां मुग्धे इत्यतो गर्वामर्षासूयादीनां च व्यभिचारिणामौचिदेवाक्षेपः।

(६५)नन्वनुकार्यगतत्वं रसस्याभ्युपेतुं शक्यते! इति शङ्कांनिराकर्त्तुमाह—**अनुकार्यगत इति**। काव्येऽनुकार्यो रामादिरनुकारको नटः पाठकश्च। अनुकार्यपदमत्र श्रव्यकाव्ये प्रधानप्रतिपाद्यस्याप्युपलक्षणम्। तद्गतस्तन्निष्ठो रत्यादिरेव रसपदवाच्य-इति भावः। एतन्मते नाटयकाव्यदर्शनश्रवणाभ्यां तदर्थप्रतीतिरेव सामाजिकानां प्रमोदमावहतीति ध्येयम्।

(६६)**पारिमित्यादिति**। पारिमित्यात् सीतादिविषयकरतेः रामादिमात्रनिष्ठत्वेनाल्पत्वादित्यर्थः। रसस्य तु नानासामाजिकगतत्वेन तदसंभवादिति भावः। **लौकिकत्वात्** तन्निष्ठरत्यादेस्तत्रैव दृष्टत्वादित्यर्थः। काव्यनाटययोस्तु तद्गतरत्याद्यभेदेन आरोपविषयस्य सामाजिकरत्यादेरलौकिकत्वमेव। सान्तरायतया रामादिरत्यादेर्नाटयकाव्य-

अनुकार्यस्य रत्यादेरुद्बोधो न रसो भवेत् ॥

**(६७) सीतादिदर्शनादिजो रामादिरत्याद्युद्बोधो हि परिमितो लौकिको नाट्यकाव्यदर्शनादेः सान्तरायश्च । तस्मात् कथं रसरूपतामियात् । (क)रसस्यैतद्धर्म्मत्रितयविलक्षणधर्म्मकत्वात् ।**

दर्शनश्रवणाप्रतिकूलतया । अनुकार्यपदमात्राप्युपलक्षणम्बोध्यम् । तेन अनुकार्यस्य नाट्ये श्रव्ये च काव्ये प्रधानप्रतिपाद्यस्य नायकादेः रत्यादेरुद्बोधः सीतादिविषयक प्रीतिप्रभृतेराविर्भावः रसो न भवेत् । किन्तु तदभेदेनारोपविषयः सामाजिकरत्यादिरेव विभावादिनिष्ठस्वादनाख्यव्यापारजन्यास्वादविषयो रस इति तत्त्वम् ।

(६७) विवृणोति—**सीतादीति** । हि यतः । सीतादिदर्शनजः, श्वशुरादिगृहे प्रकृतसीताद्यवलोकनतद्गुणश्रवणाद्युत्पन्नः रामादिरत्याद्युद्बोधः प्रकृतानुरागादीनां प्रकृतस्नेहादीनामाविर्भावः परिमितः तद्व्यक्तिमात्रनिष्ठत्वेन परिमितत्वादल्पः लौकिकः सर्वलोके स्थितत्वात्तत्तद्व्यक्तेर्नचमत्कारी, नाट्यकाव्यदर्शनादीत्यत्रादिना श्रवणस्य परिग्रहः । सान्तरायश्च सविघ्नश्च । तस्मात्पारिमित्यादित्रयसम्बन्धात् । इयात् प्राप्नुयात् । एतदिति पारिमित्यादित्यर्थः । धर्मत्रितयात् परिमितत्वादिरूपधर्मत्रयाद् विलक्षणा विपरीता धर्मा यस्य तत्त्वात् । **अत्रेदम्बोध्यम्**—सीताम्प्रत्यनुरागो रामस्य स्वमात्रनिष्ठत्वादल्पः मुहुर्मुहुः सीताम्प्रत्युत्कण्ठाजनकतया चमत्कर्तुमेवाक्षमः शृङ्गाररसो रामे कथम्भवितुमर्हति । सामाजिकानान्त्वपरिमितत्वात्सोऽनुरागोऽपि ज्ञानसम्बन्धेनापरिमितोऽन्तरायरहितश्चेति, रसस्य सामाजिकवृत्तित्वमेवाकामेनापि स्वीकार्यमिति भावः ।

(क) रसस्यैतद्धर्मत्रितयविलक्षणधर्मकत्वादिति । अत्र रसवृत्तिधर्मे परिमितित्वलौकिकत्वसान्तरायत्वधर्मत्रितयविलक्षणत्वं प्रतिपादितं भवति । तत्र विलक्षणत्वं न भेदरूपत्वं स्वीकार्यं किन्तु स्वाभावव्याप्यत्वमेव ग्राह्यम्, यथा पटवृत्तिपटत्वरूपधर्मस्य घटत्व विलक्षणत्वं घटत्वाभावव्याप्यत्वरूपमेव भवति व्याप्यत्वञ्च स्वाभाववदवृत्तित्वम्, पटत्वस्य घटत्वाभावाभावात्मकघटत्वाश्रये घटेऽवृत्तित्वात्समन्वयः । प्रकृते च रसवृत्तिरूपे रसत्वरूपधर्मे परिमितित्वलौकिकत्वसान्तरायत्वरूपधर्माभावाभाववति परिमिते लौकिके सान्तराये चावृत्तित्वात्त्रितयवैलक्षण्यम्, तेन च धर्मत्रितये रसभेदव्याप्यत्वं गम्यते, तथाहि यद्वृत्तिधर्मः यद्धर्माभावव्याप्यः स धर्मस्तद्भेदव्याप्य इति व्याप्तिः । यथा च पटत्वे-पटवृत्तिधर्मे घटत्वाभावव्याप्यत्वम् घटत्वे च पटभेदव्याप्यत्वमपि, तथैव रसवृत्तिधर्मे रसत्वे प्रकृतधर्मत्रयाभावव्याप्यत्वं धर्मत्रये च रसभेदव्याप्यत्वं सिद्धं भवति । यथा श्रुते विलक्षणत्वस्य भेदरूपत्वाङ्गीकारे, यद्वृत्तिधर्मः यद्धर्मभिन्नः स धर्मस्तद्भेदव्याप्य इति व्याप्तिस्वरूपं निर्णीतं भवति किन्तु तच्च न सङ्गतम्, यतः घटवृत्तिधर्मस्य द्रव्यत्वस्य घटत्वभिन्नत्वात् घटत्वे घटभेदव्याप्यत्वप्रसङ्गः । यदि च यद्वृत्तिधर्मत्वावच्छेदेन यद्धर्मभिन्नत्वं तस्य धर्मस्य तद्भेदव्याप्यत्वमितिव्याप्तिस्वरूपं निर्णीयते तदा तु यथा श्रुतमपि सङ्गच्छत इति विभावनीयम् ।

(६८) अनुकर्त्तृगतत्वञ्चास्य निरस्यति—

**(६९) शिक्षाभ्यासादिमात्रेण राघवादेः स्वरूपताम् ॥१८॥**
**दर्शयन्नर्त्तको नैव रसस्यास्वादको भवेत् ।**

(७०) किञ्च ।

**(७१) काव्यार्थभावनेनायमपि सभ्यपदास्पदम् ॥१९॥**

(७२) यदि पुनर्नटोऽपि काव्यार्थभावनया रामादिस्वरूपतामात्मनो दर्शयेत् तदा सोऽपि सभ्यमध्य एव गण्यते ।

**(७३) नायं ज्ञाप्यः स्वसत्तायां प्रतीत्यव्यभिचारतः ।**

(६८) ननु मास्त्वनुकार्यगतत्वं किन्त्वनुकर्त्तृगतत्वमेव मन्यताम् । एवञ्च कालादिभेदेनानुकर्त्तॄणाम्बहुत्वात् रसस्यापरिमितत्वादिकमपि सेत्स्यत्येवेत्यत आह—**अनुकर्त्रीति** । अनुकर्तृगतत्वं नटवृत्तित्वं श्रव्ये च वाचयितृत्वञ्च । अस्य रसस्येत्यर्थः ।

(६९) **शिक्षाभ्यासेति** । नाट्यगुरुतोऽभिनयोपदेशग्रहणमत्र शिक्षा । शिक्षितार्थस्य मुहुर्मुहुरनुष्ठानेन संस्कारातिशयोऽभ्यासः । आदिना स्वकौशलादिकस्य परिग्रहः । मात्रपदेन च काव्यार्थभावना|व्यवच्छिद्यते । तथा च नर्त्तको नटः, एकत्वं नर्त्तके जातौ । शिक्षाभ्यासादिमात्रेण राघवादेः, आदिना नलदुष्यन्तादेश्च स्वरूपतां वनवासराज्याभिषेकादिव्यापारं दर्शयन् अभिनयं कुर्वन् रसस्यास्वादको न भवेत् तज्ज्ञानवान्न स्यात् दृश्येऽभिनयसम्पादने एव व्यग्रचित्तत्वाच्छ्रव्ये यथास्थितपाठने व्याप्तचित्तत्वाच्च रसस्यास्वादको न स्यात्तस्मात्तद्वृत्तित्वं नाभ्युपेयं रसस्येति कारिकाशयः ।

(७०) ननु यदि काव्यार्थभावनापूर्वकं नटोऽभिनयं कुर्य्यात्तदा रसास्वादः किं तस्य न स्यादत आह—**किञ्चेति** ।

(७१) एवं स्थिताविष्टापत्तिं स्वीकुर्वन्नाह—**काव्यार्थभावनेनेति** । काव्यार्थभावनेन अभिनीयमानकाव्यर्थज्ञानेन अभिनयं दर्शयन्निति शेषः । अयमपि नर्त्तकोऽपि । सभ्यपदास्पदं सभ्यपदवाच्योऽङ्गीक्रियत इति शेषः । तथाच श्रव्यकाव्येऽपि काव्यार्थभावनया वाचको हि रसास्वादयिता स्यादेवेत्यूहनीयम् ।

(७२) विवृणोति **यदीति** । रामादिस्वरूपताम् अनुकार्याणां रामादीनां वनवासादिव्यवहारम् । दर्शयेदभिनयेन प्रकटयेत् । सभ्यमध्य एव गण्यते तदापि सभ्यमध्यान्तर्गतत्वेनैव तस्य रसस्यास्वादकत्वं स्वीक्रियत इति भावः । एतेन रामादिरत्यादिस्थायिभावो ज्ञानसम्बन्धेन सभ्यवृत्तिरेव रस इति सारमत्रबोध्यम् ।

(७३) स्वप्रकाशत्वं रसस्य प्रागुक्तमेव द्रढयितुं ज्ञानान्तरग्राह्यत्वं निरस्यति—**नायमिति** । अयं रसो ज्ञाप्यो न जन्यज्ञानविषयो नेति भावः । रसस्य जन्यत्वाभावस्याग्रे निरूपयिष्यमाणत्वान्न बाधः । जन्यत्वानुपादाने ईश्वरज्ञानविषयत्वस्य केवला-

(७४) यो हि ज्ञाप्यो घटादिः सन्नपि कदाचिदज्ञातो भवति । न ह्ययं तथा प्रतीतिमन्तरेणाभावात् ।

(७५) यस्मादेष विभावादिसमूहालम्बनात्मकः ॥२०॥

तस्मान्न कार्य्यः—

न्वयितया साध्याप्रसिद्धिरेव स्यात् । स्वसत्तायां रसावस्थानकाले प्रतीत्यव्यभिचारतः सभ्यानां तत्प्रतीतेर्व्यभिचाराभावात्, रससत्तायां हि सभ्यानां स्वस्वान्तःकरणेषु सदैव तत्प्रतीतिसद्भावात् ।

(७४) अत्र साध्यसाधनयोः पक्षमात्रवृत्तित्वेनान्वयदृष्टान्ताभावादन्वयव्याप्तिग्रहो न सम्भवतीति व्यतिरेकव्याप्तिग्रहोपायं व्यतिरेकदृष्टान्तमाह विवृतौ-**योहीति** । अत्र य इति वीप्सयानुक्तोऽपि वीप्सा वेदितव्या । सन्नपि वर्त्तमानोऽपि । कदाचिज्ज्ञानसामग्र्यभावदशायाम्, घटादिबोधकाले स्वप्नकाले वेति यावत् । तथाहि यो यो ज्ञाप्यः स स प्रतीतिं विना स्वप्रतीत्यभावकालेऽपि तिष्ठति यथा घटादिरित्यभिप्रायः । हेतुरत्र ज्ञानाभावकालीनवर्त्तमानत्वाभाव एव पर्य्यवसितः । ईश्वरज्ञानातिरिक्तं स्वविषयकं ज्ञानञ्चात्र बोध्यम् । अत एव हेत्वप्रसिद्धिर्नेति भावः । ज्ञाप्यत्वाभावस्य साध्यस्य व्यतिरेकः ज्ञाप्यत्वमेव, उक्तहेतुव्यतिरेकश्च ज्ञानाभावकालीनवर्त्तमानत्वं तयोः सहचारज्ञानेन साधनेन साध्यव्याप्तिं बोधयित्वा पक्षधर्मत्वं बोधयति-**नह्ययमिति** । **अयं** रसो नहि तथा न तादृशस्तथासन्नपि न कदाचिदज्ञातो भवतीति भावः । तत्रापि हेतुमाह—**प्रतीतिमिति** । प्रतीति स्वस्वरूपप्रतीतिमन्तरेण विना अभावादनवस्थितत्वात् । रसो हि स्वप्रतीत्यभावकालेऽवतिष्ठत एव न विभावादिप्रतीतिमात्ररूपत्वात् । एतेन रसो ज्ञाप्यो न किन्तु अज्ञेय एव इति । अज्ञेयत्वञ्चात्र घटादिसाधरणेतरसाक्षात्कारविषयम्, ज्ञेयत्वस्य केवलान्वयित्वेन तदभावासम्भवात् । **आकारश्चेत्थम्भवति**-"रसो ज्ञाप्यो न स्वप्रतीतिकाले प्रतीत्यभावाभावात्" इति ।

(७५) "प्रपाणकरसन्यायाच्चर्व्यमाणो रसोभवेदित्युक्तं तेन विभावादिरत्यादिसमूहालम्बनात्मको रस इत्यायाति तच्च समूहालम्बनं स्वादनाख्यव्यापारजन्यम्, तथाच कार्य एव रस इति शङ्कामपनुदति—**यस्मादिति**। यस्मादेष रसो विभावादिसमूहालम्बनात्मको विभानुभावव्यभिचारिभावात्मकसमुदाय एवालम्बनं विषयः यस्य तत्तदेवात्मास्वरूपं यस्य स तथोक्तः । तस्मान्न कार्यः विभावादिज्ञानजन्यो नेति भावः । प्रागभावस्य ध्वंसेऽपि जन्यत्वं यथा न तथैव रसो जन्यो न भवतीति कारिकाशयः । **अत्रानुमानाकारश्चेत्थम्**-"रसः कार्यत्वाभाववान् सुखमयत्वे सति विभावादिसमूहविषयकत्वात्" सत्यन्तस्य हेतुविशेषणत्वानुपादाने रससमानाकारे व्यञ्जनाजन्यज्ञाने व्यभिचारोऽतस्तदुपादानम् ।

**(७६) यदि रसः कार्य्यः स्यात्तदा विभावादिज्ञानकारणक एव स्यात्। (७७) ततश्च रसप्रतीतिकाले विभावादयो न प्रतीयेरन्। कारणज्ञानतत्कार्य्यज्ञानयोर्युगपददर्शनात्। नहि चन्दनस्पर्शज्ञानं तज्जन्यसुखज्ञानञ्चैकदा सम्भवति। रसस्य च विभावादिसमूहालम्बनात्मकतयैव प्रतीतेर्न विभावादिज्ञानकारणकत्वमित्यभिप्रायः।**

**(७८) नो नित्यः पूर्व्वसंवेदनोज्झितः।**

(७६) रसस्य हि विभावादिज्ञानजन्यत्वाभ्युपगमे बाधं प्रदर्श्य विवृणोति—**यदि रस इति**। कार्यः जन्यः। विभावादिज्ञानकारणक एव स्यात् विभावादिज्ञानेनैव रसो जन्येतेति भावः। रसप्रादुर्भावप्राक्क्षणे विभावादिज्ञानस्यैव सम्भवात् तत्कारणकत्वमेवोपपद्यते अयोग्यत्वेन हेत्वन्तरासम्भवादित्येवकारेण ध्वन्यते। विभावादिज्ञानकारणः तत्समूहालम्बनकारणक इत्यर्थः। प्रत्येकं विभावादिज्ञानकारणकत्वे त्विष्टापत्तिरेव "प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते" इत्यनेन प्रत्येकस्य हेतुत्वोक्तेः।

(७७) ननु तादृशसमूहालम्बनकारणत्वे दोषः क इत्याह—**ततश्चेति**। रसस्य विभावादिज्ञानकारणकत्वस्वीकाराच्चेत्यर्थः। रसप्रतीतिकाले स्वादनाख्यव्यापारजन्यविभावादिसमूहालम्बनात्मकरसप्रतीत्युत्पत्तिकाले न प्रतीयेरन् तत्कालोत्पन्नप्रतीतिविषया न स्युरित्यर्थः। अत्र च यदि रसो विभावादिज्ञानकारणकः स्यात्तदा विभावादिबोधोत्पत्तिकालोत्पन्नप्रतीतिविषयो न स्यादिति तर्क ऊहनीयः। तर्कानुकूलव्याप्तिं दर्शयति—**कारणज्ञानेति**। अत्र ज्ञानेति प्रकृताभिप्रायेणैव। कारणकार्यमात्रयोरेव युगपदुत्पत्त्यभावात्। कार्यज्ञान कारणज्ञानयोर्युगपदुत्पत्त्यसम्भवं दर्शयति—**नहि चन्दनेति**। हि तथाहि नञः क्रियायामन्वयः। चन्दनस्पर्शतज्जन्यसुखञ्चैकज्ञानविषयो न भवति, विभिन्नज्ञानानां यौगपद्यासम्भवादिति भावः। ननु घटदण्डयोः कार्यकारणयोर्यौगपद्यं प्रत्यक्षमेवोपलभ्यते तथैव प्रकृते विभावादिकारणज्ञानं रसरूपतत्प्रकार्यज्ञानञ्चैककालावच्छेदेनैव सामाजिकानां भविष्यत्यत आह—**रसस्येति**। चोऽत्र किन्त्वार्थे। एवपददानेन विभावादिसमूहालम्बनात्मकज्ञानरसज्ञानयोर्भेदं व्यवच्छिनत्ति, स्वम्प्रति स्वस्य कारणत्वं न भवतीति विभावादिसमूहालम्बनज्ञानमेव तु रसस्तदेव विभावादिज्ञानं रसम्प्रतिकारणं कथम्भवितुमर्हत्यसम्भवादिति भावः। एवञ्च विभावादिज्ञानस्य रसं प्रति यत्कारणत्वमुक्तं तत्पूर्ववर्त्तित्वमात्रेणौपचारिकमिति बोध्यम्।

(७८) ननु तर्हि आत्माकाशादिवन्नित्यत्वमेवाङ्गीक्रियतामत आह—**नो नित्य इति**। एष इति पूर्वकारिकातोऽनुषङ्गः कार्यः। हि यतः पूर्वसंवेदनं विभावादिज्ञानात् प्राग्ज्ञानं तद्रहित इति भावः। तस्मान्न नित्य इत्यर्थः। आत्माकाशादिज्ञानं यथा क्वचिद्गमनसमये भवति तथा तत्पूर्वस्थितिकालेऽपि तज्ज्ञानम्भवत्यतो नित्योऽऽत्माकाशादिः रसज्ञानन्तु सभायां गमनसमये सभ्यानां न भवति किन्तु नाट्यदर्शनादिवेलायामेवातो

**(७९) असंवेदनकाले हि न भावोऽप्यस्य विद्यते(१) ॥२१॥**
**(८०) न खलु नित्यस्य वस्तुनोऽसंवेदनकालेऽसम्भवः ।**
**(८१) नापि भविष्यन् साक्षादानन्दमयस्वप्रकाशरूपत्वात् ।**
**कार्यज्ञाप्यविलक्षणभावान्नोवर्त्तमानोऽपि ॥२२॥**

रसो न नित्य इति भावार्थः । **अत्रापीत्थं तर्कोऽनुसन्धेयः**-यदि रसो नित्यः स्यात्तदा विभावादिज्ञानात्प्रागपि ज्ञायेतेति ।

(७९) नन्वधुना हरिश्चन्द्राद्यभिनयदर्शनसमये विष्णुमित्रभवने य एव रसोऽनुभूतो मया तत्पूर्वपूर्वसमये स्वमित्रभवनेऽपि भूरिशः स एव रसो मयानुभूत इति आत्माकाशादिवत्पूर्वसंवेदनरहित्वाभावाद्रसोऽपि नित्य एव सुतरां सिद्ध्यतीत्यत आह-**असंवेदनकाले होति** । हि यतः अस्य रसस्य असंवेदनकालेऽपि भावो न विद्यते । संवेदनशरीरत्वादसंवेदकाले सुतरामसंभव इति भावः । तस्मान्नित्यो नेति पूर्वेण सम्बन्धः ।

(८०) अनुपदोक्तदोषेण "पूर्वसंवेदनोज्झितः"इति हेतोरकिञ्चित्करत्वात् द्वितीयमेव "असंवेदने काले ही"त्यादिकं हेतुं गृहीत्वा रसस्यानित्यत्वं स्थिरयितुं नित्ये वैपरीत्यमुपपादयति—**नखल्विति** । असंवेदनकालेऽप्रतीतिकाले नित्यस्य वस्तुनोऽसम्भवोऽभावो न खलु अपि तु सम्भव एव । घटादिज्ञानकालेऽऽकाशस्याप्रतीतावपि विद्यमानत्वान्नित्यत्वम् , प्रतीतिमात्रस्वरूपस्य रसस्य हि प्रतीत्यभावकालेऽवर्त्तमानत्वादनित्यत्वमिति सरलार्थः । तथाच अप्रतीतिवेलायामविद्यमानत्वाद्रसो न नित्य इत्याशयः ।

(८१) ननु तथापि नाट्यकाव्यदर्शनश्रवणानन्तरं विभावादिस्मरणात्मकज्ञानमेव रसो जायतामत आह—**नापीति** । पूर्वस्मादेष इत्यस्यानुषङ्गो विधेयः । रसो नापि भविष्यन् नापि भावी नाट्यकाव्यदर्शनश्रवणानन्तरं विभिन्नसमये विभावादिस्मृतिरूपो रस इत्यपि वक्तुं न शक्यत इत्यर्थः । साक्षात् नाट्यकाव्यदर्शनश्रवणकालयोरेव प्रत्यक्षीभूतमानन्दमयं स्वप्रकाशञ्च रूपं स्वरूपं यस्य तस्य भावस्तस्मात् । साक्षात्कारविषयानन्दबहुलप्रकाशरूपत्वादित्यर्थः । लौकिकप्रत्यक्षे विषयस्यहेतुत्वाभ्युपगमेन भविष्यतस्तदसम्भवादिति भावार्थः । यद्यपि संवेदनात्पूर्वमसत्वेनैव भविष्यत्वं दुरपह्नवं तथापि भविष्यत्पदार्थान्तरस्य साक्षादानन्दमयप्रकाशत्वस्वरूपाभावात् तद्वैलक्षण्यमेव भविष्यत्वाभावः कौतुकादुक्त इति । **वस्तुतस्तु** "साक्षादनुभूयमानस्य हि कथं भविष्यत्वम् । यस्य खलु वस्तुनो भविष्यत्वं सहजो धर्मस्तत्सदा भविष्यदेवेति भावः ।

---

( १ ) "नचानादिरनन्तोऽयमनित्यः सम्भवेद्रसः ।
अस्य भानमभानञ्च चर्वणावशतः परम् ॥"

चर्वणायां सत्यां निवृत्तायां च रसस्य तदा भानमभानञ्चाविरुद्धम् । इत्यपि मूलपाठः क्वचित्क्वचिदुपलभ्यते ।

(८२) विभावादिपरामर्शविषयत्वात् सचेतसाम् ॥
परानन्दमयत्वेन संवेद्यत्वादपि स्फुटम् ॥२३॥
न निर्व्विकल्पकं ज्ञानं तस्य ग्राहकमिष्यते ।
(८३) तथाऽभिलापसंसर्गयोग्यत्वविरहान्न च ॥ २४ ॥
सविकल्पकसंवेद्यः--

ननु तर्हि रसस्य वर्त्तमानत्वमेवाङ्गीक्रियतामित्याशङ्क्य समाधत्ते—**कार्यज्ञाप्येत्यादि** । रसो नापि घटपटादिवद्वर्त्तमानो विद्यमानरूपः सिद्ध इति भावः । कार्यं जन्यं ज्ञाप्यं जन्यबोधविषयीभूतं तयोर्विलक्षणभावादपूर्वत्वात् । वर्त्तमानस्य वस्तुनः कार्य्यज्ञाप्यान्यतरत्वनियमादिति भावः । इतः प्रागेव कार्यत्वं ज्ञाप्यत्वञ्च रसस्य नेत्युक्तम् । एवञ्च जन्यो घटः ज्ञाप्योऽपीति वर्त्तमानत्वं तत्र अजन्योऽप्याकाशो ज्ञाप्यश्चेति वर्त्तमानत्वन्तत्रापि, रसो हि न जन्य उत न ज्ञाप्य इति नो वर्त्तमानोपीति कारिकाशयः ।

(८२) ननु रसस्य निर्विकल्पाख्यज्ञानस्वरूपत्वमेव किन्नोपेयत इत्याशङ्कायामाह—**विभावादीति** । निर्विकल्पकज्ञानविषये हि प्रकारताविशेष्यता च न भासते । इत्थञ्च तल्लक्षणम्, **कारिकावल्यां** "प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत्" नामरूपजात्यादिविशेषशून्यं ज्ञानं निर्विकल्पकमिति भावः, तद्विपरीतं सविकल्पकम् । तथाच युगपद् घटपटत्वे इति ज्ञानं निर्विकल्पकं यथा तथैव काव्यनाट्यश्रवणादर्शनकालयोर्युगपद् रसरसत्वे इति ज्ञानं निर्विकल्पकम् । एतेन रसो ज्ञेय एव सेत्स्यतीति **पूर्वपक्षिणामाशयः** । **समाधातुरयमाशयः**-निर्विकल्पकं ज्ञानं संसर्गानवगाहिज्ञानं तस्य रसस्य ग्राहकं विषयतानिरूपकं नेष्यते रसो निर्विकल्पज्ञानविषयो नेति भावः । तत्साधयति हेतुद्वयेन विभावादीनां परामर्शो विशिष्टवैशिष्ट्यावगाहिज्ञानं सम्बन्ध इति यावत् । विषयो विशेष्यरूपेण ज्ञेयो यस्य तस्य भावस्तस्मात् । स्वप्रकाशरूपस्य स्वेनैव विषयीकरणादिति भावः । हेत्वन्तरमाह—**परानन्दमयत्वेनेति** । तथा सचेतसां मनस्विसभ्यानां परानन्दमयत्वेन अत्यन्तसुखमयत्वप्रकारेण स्फुटं संवेद्यत्वात् ज्ञेयत्वाच्च । संवेदनं हि ज्ञानम् । अत्र हि विभावादिनिष्ठप्रकारतायाः परमानन्दत्वनिष्ठप्रकारतायाश्च निरूपकस्य रसज्ञानस्य निष्प्रकारात्मकनिर्विकल्पस्वरूपत्वं न संभवतीति भावः । इत्थञ्च स्वमात्रग्राह्यस्य रसस्य निर्विकल्पाख्यज्ञानरूपत्वमपि न सिद्ध्यतीत्यवधेयम् ।

(८३) अथ यद्यप्यत्र तद्ग्राहकस्य निर्विकल्पकत्वाभावयुक्तिप्रदर्शनेनैव सविकल्पकसंवेद्यत्वं सिद्धं तथापि सविकल्पकसंवेद्यान्तरतो वैलक्षण्येन तदवेद्यत्वं दर्शयति—**तथेति**--तथा च अपिचेत्यर्थः । प्रकारताविशेष्यताशालिसम्बन्धावगाहिज्ञानमेव सविकल्पकं भवति । रसः सविकल्पकज्ञानेन संवेद्यो ज्ञेयोऽपि न भवितुमर्हतीति भावः । तत्र **हेतुमाह--अभिलापेति** । अभिलापो वचनं तस्य संसर्गः प्रयोगः तद्योग्यत्वा-

(८४) सविकल्पकज्ञानसंवेद्यानां हि वचनप्रयोगयोग्यता । न तु रसस्य तथा ।

(८५) साक्षात्कारतया न च ।

**परोक्षस्तत्प्रकाशो नापरोक्षः शब्दसंभवात् ॥ २५ ॥**

(८६) तत्कथय कीदृगस्य तत्त्वमश्रुतादृष्टपूर्वनिरूपणप्रकारस्येत्याह—

भावात् रसस्य व्यङ्ग्यत्वेन वाचकलक्षकशब्दैः प्रयोगायोग्यत्वात् । यो यो हि वाचकलक्षकशब्दैः प्रयोगार्हः स स सविकल्पकज्ञानविषयः यथा घटपटादिः । रसस्य तु विभावाद्यभिधानद्वारेणैव ज्ञेयत्वं न तु काव्यस्थशब्देन, तथासति स्वशब्दवाच्यत्वं दोष एव स्यात् तस्माद्व्यङ्ग्यत्वेन वाचकलक्षकत्वाभावान्न सविकल्पकज्ञानज्ञेय इति भावः । स्वप्रकाशत्वेनाऽपि ज्ञानान्तरग्राह्यत्वात्सविकल्पकादस्य वैलक्षण्यं बोध्यम् । **प्रभाकरमते** तु–सविकल्पकज्ञानानां स्वेनैव ग्रह इति नैतद्वैलक्षण्यम् ।

**पुत्रस्तु**-सविकल्पकस्वरूपम्—

अतः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।

बुद्धयाऽवसीयते सापि प्रत्यक्षत्वेन सम्मता" ॥ इति ।

प्रत्यक्षमत्र प्रकरणात्सविकल्पकम् । सविकल्पकत्वेन सम्मतेत्युक्तप्रकारम् । अतः परमित्यत्रेदमानुपूर्वोक्तनिर्विकल्पकपरामर्श इत्याह ।

(८४) विवृणोति—**सविकल्पकेति** । हि तथाहि सविकल्पकसंवेद्यानां घटपटादीनां वचनप्रयोगयोग्यता—"अयं घट" इति, अभिलापव्यवहारयोग्यता तत्काव्यस्थशब्देनास्तीति शेषः । व्यङ्ग्यत्वेन रसस्य तु न तथेत्यर्थः ।

(८५) ननु भावनाख्यसंस्कारादयो यथातीन्द्रियास्तथैवातीन्द्रिय एव रसोऽङ्गीक्रीयतामत आह-**साक्षात्कारतयेति**। चेति किन्त्वर्थे साक्षात्कारतया साक्षादनुभवस्वरूपतया रसो न परोक्षोऽतीन्द्रियो न । स्वादनाख्यव्यापारस्य मनःसंयोगत्वाभ्युपगमेन तज्जन्यत्वादिति भावः । **एवञ्च** रसज्ञानं न परोक्षं प्रत्यक्षानुभवस्वरूपत्वादित्यनुमानम् । साक्षात्कारानन्तरवैलक्षण्यप्रतिपादनाय साक्षात्काररूपस्यापि तत्प्रकाशस्य साक्षात्कारत्वाभावमुपपादयति —**नापरोक्ष** इति । तत्प्रकाशो रसग्रहो नापरोक्षो नापि प्रत्यक्षरूपः । शब्दसंभवात् काव्यजन्यविभावादिज्ञानजन्यत्वनियमात् । **अत्रेदम्बोध्यम्**—यद्यज्ज्ञानं केवलशब्दजन्यं यथा "आसीत्तुङ्गध्वजोराजा" इति तत्तन्न प्रत्यक्षस्वरूपम् । यद्यपि प्रत्यक्षत्वं तु नाटयकाव्यदर्शनश्रवणकालयोर्मानसिकं भवत्येव तथाप्यन्यप्रत्यक्षतो वैलक्षण्यं ज्ञेयम्, तत्त्वास्वीकारे साक्षात्कारतयेति पूर्वहेतोर्वैयर्थ्यापत्तेरिति विचारणीयम् । अनया कारिकया तु प्रत्यक्षान्तरवैलक्षण्यमेव साधितं न प्रत्यक्षभिन्नत्वमिति तत्त्वम् ।

(८६) एवं हि रसे ज्ञाप्यत्वादिसामान्यधर्माणां निराकरणेन साश्चर्ययुक्तो वस्तुतत्त्वाभिलाषी जिज्ञासते—**तत्कथयेति** । तदेत्यर्थः । अस्य रसस्य । तत्त्व याथार्थ्यम् । **एवमित्थम्**, न श्रुतौ न दृष्टौ च पूर्वं यौ तावश्रुतादृष्टपूर्वौ निरूपणप्रकारौ इतरभेदानुमापकौ धर्मौ स्वभावौ यस्य तस्य तथोक्तस्य ।

(८७) तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयम् ।

(८८) तत्किं पुनः प्रमाणं तस्य सद्भाव इत्याह—

(८९) प्रमाणं चर्वणैवात्र स्वाभिन्ने विदुषां मतम् ॥ २६ ।

चर्वणा आस्वादनम् । (९०) तच्च 'स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः' इत्युक्तप्रकारम् ।

(९१) ननु यदि रसो न कार्यस्तत्कथं महर्षिणा(क)विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति लक्षणं कृतमित्युच्यते—

(८७) तस्मादिति । तस्मादुपदर्शितलौकिकज्ञानानन्दवैलक्षण्यात् ज्ञाप्यत्वादिलौकिकधर्मनिराकरणादित्यर्थः । सहृदयैः सभ्यैः न तु वैयाकरणमीमांसकदर्दुरैर्युष्माभिरिति भावः । अयं रसः अलौकिकः सत्यं वेद्यो ज्ञेयः । यद्वा "सत्यमित्येवकारार्थे, अलौकिक एवेत्यर्थः । अन्यत्राश्रवणादर्शनञ्चालौकिकवस्तुसिद्धौ गुण एव न तु दोष इति" भावः । तदुक्तम्—"अलौकिकसिद्धेर्भूषणमेव न तु दूषणम्" इति तर्कवागीशाः ।

(८८) एतादृशञ्च तत्त्वमवबोद्धुमसमर्थो जिज्ञासते- तत्किमिति । तस्य रसस्य सद्भावे वर्त्तमानत्वे ।

(८९) समाधत्ते—प्रमाणमिति । स्वाभिन्ने चर्वणास्वरूपे । उक्तञ्च-"चर्वणैव भगवती स्वसंवित्स्वस्वरूपादभिन्ने तस्मिन्प्रमाणम्" इति । अत्र रसे विदुषां सभ्यानां सहृदयानां चर्वणैव नाट्यकाव्यदर्शनश्रवणकालयोरास्वादनं प्रमाणं मतम् । काव्यार्थबोधसमये तदीयसाक्षात्कार एव प्रमाणमित्यर्थः । नखल्वदर्शनमात्रेणानुभूयमानवस्तुस्वरूपापह्नवो विधातुं शक्य इति भावः ।

(९०) ननु का नाम चर्वणा अत आह—चर्वणेति । नन्वास्वादनं किमित्यत आह—तच्चेति । स्वाद इति । एतच्च व्याख्यातं पूर्वमेवानुसन्धेयं न तस्मादपूर्वम् ।

(९१) "पूर्वं यस्मादेव" इत्यादिना रसस्य कार्य्यत्वाभावोनुमितस्तत्र सन्दिहानः पृच्छति-ननु यदीति । महर्षिणा भरतेनेत्यर्थः । विभावानुभावव्यभिचारिणां

---

(क) अत्रेदमवबोध्यम्-नाट्यसूत्रमिदं व्याख्यातृणामनेकेषां बहवः पक्षास्तेषु केचन प्रकृतोपयोगित्वात् व्युत्पत्याधायकत्वाच्च निरूप्यन्ते । तत्र भट्टोल्लटास्त्वित्थं व्याचख्युः तथाहि—स्थायिनां विभावैर्ललनादिरूपालम्बनकारणैः, उद्यानादिरूपैरुद्दीपनकारणैः अनुभावैः कटाक्षभुजोत्क्षेपप्रभृतिभिः कार्यैः, व्यभिचारिभिर्निर्वेदादिरूपैः सहकारिभिश्च संयोगात् क्रमेणोत्पाद्योत्पादकभावरूपात्, गम्यगमकभावरूपात्, पोष्यपोषकभावरूपाच्च सम्बन्धाद्रसनिष्पत्तिः । क्रमेणोत्पत्तिः रभिव्यक्तिः पुष्टिश्च भवतीति सूत्रार्थः, इति । अयमाशयः-आलम्बनविभावैः स्थायीरत्यादिको जनितः, उद्दीपनविभावैरुद्दीपितः, अनुभावैः प्रतीतियोग्यः कृतो व्यभिचारिभिः परिपोषितो रामादावनुकार्ये नाट्येनाभिनेये रसः । नर्त्तके तु तुल्यरूपतानुसन्धानवशादारोप्यमाणः सभ्यानां चमत्कारहेतुः । निष्कर्षस्तु

संयोगात् सम्मेलनात् रसनिष्पत्तिः रसोत्पत्तिर्जायते । कार्यत्वञ्चोत्पत्तिमत्त्वम् ।
तथा च महर्षिभरतवचसा भवदुक्तिर्विरुद्ध्यत इत्यर्थः । अस्या विप्रतिपत्तेः "यस्मा-

मतस्यात्स्यायम्भवति,–यथा सर्पाभावेऽपि सर्पतयावलोकिताया दाम्नोऽपि भीतिरुत्प-द्यते, तथा सीतादिविषयिणी अनुरागरूपा रामरतिविद्यमानाऽपि अभिनयनैपुण्येन तस्मिन् स्थितेव प्रतीयमाना सहृदयहृदये चमत्कारमर्पयन्तीव रसपदवीमधिरोहतीति । व्याख्यानेऽस्मिन् रामादावेवानुकार्ये रसनिष्पत्त्या सामाजिके रसनिष्पत्त्यभावात् सामाजिकानां चमत्कारानापत्तिरित्यरुचिं मनसि निधाय प्रकारान्तरेण श्रीशङ्को व्याख्यातवान् तथाहि—स्थायिनो विभावादिभिरुक्तरूपैः संयोगात् अनुमाप्यानुमापकभावरूपात् सम्बन्धाद्रसनिष्पत्तिरनुमितिरिति सूत्रार्थः । अत्र हि लोकप्रसिद्धप्रतीतय एवम्भूता दृश्यन्ते यथा 'राम एवायम्' "अयमेव रामः' इत्ययोगान्योगव्यवच्छेदविषये नियमविषया धीः सम्यग्बुद्धिः । उत्तरकालिके 'न रामोऽयम्'' इति बाधे "रामोऽयम्' इत्यादौ अनन्तरावतीर्णबाधा तु मिथ्याबुद्धिः । विरुद्धोभयकोटिका तु संशयबुद्धिः यथा 'अयं रामो न वा' इति । सदृशोभयविषया हि सादृश्यबुद्धिः यथा—'राम सदृशोऽयम्' इति । एताभ्यो विलक्षणा यथा बालानां चित्रतुरगे वस्तुपरिच्छेदशून्यो तुरगोऽयमिति बुद्धिर्भवति तथा रामोऽयमिति प्रतिपत्त्या ज्ञानेन प्रथमं पक्षभूतो नटो विषयीक्रियते । ततस्तत्र पूर्वमेव रोमाञ्चाविर्भावने गुरूपदेशम्प्राप्य कृतदृढाभ्यासेन नटेन—

"सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः ।
मनोरथः श्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥
दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च ।
अविरलविलोलजलदः कालः समुपागतश्चायम्" ।

इत्यादि काव्यानुसन्धानबलाद्विभावादित्रयं लिङ्गमवगम्यते । अथ तैः कृत्रिमत्वेनातल्लिङ्गैरपि कृत्रिमत्वेनाज्ञानात् स्थायी रत्यादिरनुमीयते । अनुमानस्वरूपन्तु 'रामोऽयम्' सीताविषयकरतिमान् सीतादिविषयककटाक्षादिमत्वात् । अत्र यत्तद्भ्यां सामान्यतो व्याप्तिस्त्वित्थं बोध्यम्—'यो यदात्मकविभावत्वे सति अनुभावसञ्चारिभाववान् स तद्रतिमानिति । यन्नैवं तन्नैवं यथाहमिति व्यतिरेकव्याप्तिर्वा । सैव चानुमितिः चमत्कारप्रतीतिरूपा चर्वणा तया विषयीक्रियमाणः स्थायी रस इति कथ्यते, सामाजिकानाञ्चर्वणातस्तेष्वेव रस इति व्यपदेशः । एतन्मतस्यायं सारः—यथा कुज्झटिकाकुलितेदेशेऽविद्यमानस्यापि धूमस्याभिमानात् धूमनियतस्य वह्नेरनुमानम्, तथा नटेनैव सुनिपुणं 'ममैवेते विभावादयः' इति प्रकाशितैस्तत्रावर्त्तमानैरपि विभावादिभिस्तन्नियता रतिरनुमीयमानाऽपि निजसौन्दर्यबलात्सामाजिकानामास्वाद्यमानतया चमत्कारमादधती रसतामेतीति रतेरनुमितिरेव रसनिष्पत्तिरिति ।

द्वितीयव्याख्यानेऽपि प्रत्यक्षमेव ज्ञानं चमत्कारजनकं नानुमित्यादिः' इति लोकप्रसिद्धिं तिरस्कृत्यान्यथाकल्पने प्रमाणाभावादन्यथैव योजनासम्भवात् । नचैवमपि 'प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः,इति मिश्रोक्त्यानुमानमपि युक्तमेवेति वाच्यम्, हेतूनामाभासत्वेन केवलं व्यञ्जनयैव रसोद्बोधप्रत्यायनसम्भवात् । अथवा जायतां नामानुमितिः, संज्ञातबाधस्य सामाजिकस्य नटे निरुक्तानुमित्यभावेऽपि आस्वादोदयाद्रसं साक्षा-

देषसमूहालम्बनात्मकस्तस्मान्न कार्यः" इत्यनन्तरमेवोत्थापयितुमौचित्येऽपि सिद्धान्तस्य चर्वणाज्ञानसध्यत्वाच्चर्वणानिरूपणानन्तरमेवोत्थापनमुचितमिति भावः।

त्करोमीत्यनुव्यवसायानुपपत्तेरित्यरुचि मनसि निधाय, प्रथमं तावन्नटगतत्वेन नानुमातुं शक्यते तदानीं रामाद्यभावेन तद्रत्यादेरप्यसत्वादसतः सत्वेनानुमानाविषयत्वात्तत्वतो रामादिविषयिण्या नटगतत्वेनानुमितयाऽपि रत्या सामाजिकेऽविद्यमानतया तच्चमत्कारोत्पादनासम्भवाच्च। विभावादीनां पारमार्थिकत्वाभावेन रामादिनायकगतत्वेनाऽपि नोत्पद्यते। सामाजिक एवाभ्युपेयतामितिचेन्मैवम्, सिद्धस्यैव व्यङ्ग्यत्वाद्रसस्यासिद्धत्वात् सर्वेषामप्यभिव्यक्तिप्रसङ्गाच्च। तस्माद्विभावादिभिः संयोगात् भोज्यभोजकभावसम्बन्धाद्रसस्य निष्पत्तिर्भुक्तिरिति सूत्रार्थं व्याचष्टे भट्टनायकः। एतन्मतस्यायं सारः—शब्दस्याभिधारूपव्यापारवत् काव्यनाट्ययोस्तद्विलक्षणं भावकत्वभोजकत्वनामकं व्यापारद्वयमतिरिक्तमस्ति। काव्यार्थबोधोत्तरमेव तत्राद्येन भावकत्वव्यापारेण विभावादिरूपसीतादयो रामसम्बधिनी रतिश्च सीतात्वरामत्वसम्बन्धांशमपहाय सामान्यतः कामिनीत्वरतित्वादिनैवोपस्थाप्यते। अन्त्येन भोजकत्वव्यापारेण तु उक्तरीत्या साधारणीकृत्य विभावादिसहकृतेन सा रतिः सहृदयैरास्वाद्यते (अत एवासत्याया अपि रतेरास्वादः अलौकिकत्वादुपपन्नः) इति रतेरास्वाद एव रसनिष्पत्तिरिति। एतद्व्याख्यानेऽपि व्यञ्जनाव्यापारेणैव गतार्थतयैतादृशव्यापारद्वयकल्पने मानाभावः, साक्षात्कारस्य सत्त्वोद्रेकेत्याद्युक्तस्वरूपत्वकल्पने मानाभावश्च। नच व्यञ्जनास्थानीं तादृशभोग एव कश्चिद्व्यापारः कल्पनीय इति वाच्यम्, तथापि भावकत्वरूपाधिकव्यापारान्तरकल्पनस्यैव दोषत्वादित्यरुचि मनसि निधाय "स्थायिनां विभावादिभिः समं संयोगात् व्यङ्ग्यव्यञ्जकभावरूपात् सम्बन्धात् विभावादीनामेव वा परस्परं संयोगात् मिलनाद्रसस्य निष्पत्तिरभिव्यक्तिरिति सूत्रार्थः" इत्यभिनवगुप्ताचार्यपादा आहुः। एतन्मतस्य स्थूलत इदं मर्मरतिकारणादीनामनुभवादसकृदनुमिता रतिः संस्काररूपेण सहृदयहृदयमधिरोहति। अथ कियता कालेन सुनिपुणमनुष्ठितयोः रामादिव्यक्तिविशेषसम्बन्धिरतिकारणविभावादिप्रतिपादकयोरपि काव्यनाट्ययोः पूर्वोक्तभावकत्वव्यापारेण रामसीतादिविशेषांशपरिहारेण रतिकारणसाधारणकामिनीत्वादिना प्रतीतैः विभावादिभिः सहृदयहृदयावस्थिता सा रतिर्व्यञ्जनया अभिव्यक्ता सामाजिकानामास्वाद्यतामायातीति, एतादृशास्वाद एव रसनिष्पत्तिरिति। पूर्वमतेऽविद्यमाना या अपि रतेरास्वादः, अत्र तु वासनया स्थिताया एवेत्यनयोर्भेदः इति। अत्र नव्यानां मतन्त्वितः पूर्वटिप्पण्यामेव (९८) पृष्ठे द्रष्टव्यम्। इदमेव सूत्रमित्थं व्याचक्षते विद्वद्वराः—विभावादीनां संयोगात् समुदायाद्रसनिष्पत्तिः रसपदव्यवहार इति विभावदयस्त्रयः समुदिता रस इति। तत्र काव्यप्रकाशे चतुर्थोल्लास एतानेव निराकर्तुं 'न खलु विभावानुभावव्यभिचारिण एव रसः, अपि तु रसस्तैरित्यस्तिक्रमः स तु लाघवान्न लक्ष्यते इत्युक्तं श्रीमता मम्मटाचार्येण। केचित्तु विभावादीनां संयोगात् सम्यग्योगात् चमत्कारात् रसनिष्पत्तिरिति सूत्रार्थं मन्वाना विभावादिषु यः प्रधानतया चमत्कारः स एव रस इति वर्णयन्ति। इदमपि न विभावादय एव रस इति पूर्वेणैव प्रत्युक्तम्। भाव्यमानो विभाव एव रसः, अनुभावस्तथा सञ्चारी एव तादृशस्तथापरिणमतीति स्वस्वप्रतिभानुसारेण वर्णयन्ति। परन्तु मतत्रयमप्युत्सूत्रमिति प्रामाणिका आहुः। तथाहि—यथा व्याघ्रादयो भयानकस्य

(९२) निष्पत्त्या चर्वणस्यास्य निष्पत्तिरुपचारतः ।

(९३) यद्यपि रसाभिन्नतया चर्वणस्यापि न कार्यत्वं तथापि तस्य कादाचित्कतया उपचरितेन कार्यत्वेन कार्यत्वमुपचर्यते ।

(९४) अवाच्यत्वादिकं तस्य वक्ष्ये व्यञ्जनरूपणे ॥ २७ ॥

तस्य रसस्य । आदिशब्दादलक्ष्यत्वादि ।

(९५) ननु यदि मिलिता रत्यादयो रसास्तत्कथमस्य स्वप्रकाशत्वं

(९२) उत्तरमाह—**निष्पत्त्येति** । चर्वणस्यास्वादनस्य निष्पत्त्या नाट्यकाव्यदर्शन-श्रवणकालयोरुत्पत्त्या अस्य रसस्य उपचारतः स्वाश्रयग्राह्यत्वसम्बन्धेन रसतदास्वादन-योरभेदारोपाद्वा निष्पत्तिर्भरतमुनेर्निष्पत्त्युक्तिः सङ्घटत इति भावः, तत्त्वतस्तु कार्यत्वं नास्त्येव रसस्येत्यवधेयम् ।

(९३) ननु रसतदास्वादनरूपचर्वणयोरभिन्नत्वं सर्वैरेवाभ्युपेयते यदि रसस्य कार्य-त्वाभावस्तच्चर्वणस्य निष्पत्तिः कार्यत्वरूपात् कथं सङ्घटत अत आह—**यद्यपीति** । **चर्वणस्यापीति** । अपिना न केवलं रसस्य तदास्वादनस्यापीत्यर्थः । न कार्यत्वं कार्यत्वरूपानिष्पत्तिर्न सङ्गच्छत इति शेषः । तस्य चर्वणस्य । आविर्भावतिरोभाववशेन कदाचिद्भवतया । उपचरितेन लक्षणया प्रतीतेन कार्यत्वेन कार्यसादृश्येन हेतुना तृती-यात्राभेदे तदभिन्नं कार्यत्वमिति भावः । कार्यसादृश्यत्वमुपचर्यते आरोप्यते उक्त-परम्परासम्बन्धेन प्रयुज्यते इति वा । चर्वणस्यौपचारिकं कार्यत्वं स्वीक्रियत इति सारार्थ इति तत्त्वम् । नचैवमन्यथासिद्धविभावादिज्ञानोत्तरभावित्वेन तत्कार्यत्वं चर्व-णायामवास्तवमेव तत्कथमुपचार इति वाच्यम् , रत्याद्यभिन्नतया तत्कार्यत्वस्यैवौचि-त्यात् शुद्धायास्तस्या अवास्तवत्वमित्यभिप्रायात् ।

(९४) ननु "तथाभिलापसंसर्गयोग्यत्वविरहान्नच" इत्यनेनावाच्यत्वं रसस्य प्रतिपादितं किन्तु काव्यतो रसस्य वाच्यत्वसम्भवादुक्तावाच्यत्वं कथं सङ्घटत अत आह—**अवाच्यत्वादिकमिति** । अवाच्यत्वमनभिधेयत्वम् । व्यञ्जननिरूपणे व्यञ्ज-नायाः प्रामाण्यनिरूपणे **पञ्चमपरिच्छेद** इत्यर्थः ।

**अलक्ष्यत्वादीत्यादिना** तात्पर्यग्राह्यत्वस्य ग्रहणम् । यद्वा अलक्ष्यत्वादीत्य-त्रादिपदादननुमेयत्वपरिग्रहः ।

(९५) अथ रसस्य स्वप्रकाशत्वमखण्डत्वञ्चोपपादयिष्यन्नाशङ्कते—**ननु यदीति** ।

**विभावा एवं वीराद्भुतरौद्राणामपि । यथा च आश्रुपातादयः शृङ्गारस्यानुभावा एवं क-रुणादीनामपि । शृङ्गारवीरादिषु सञ्चारित्वं समानं चिन्तादीनाम् । एवञ्चान्यतमस्य रसा-न्तरासाधारण्येन नियतरसव्यञ्जकतानुपपत्तेः सूत्रे मिलितानामुपादानमिति स्फुट एवा-न्यतमेन रसनिष्पत्तिमङ्गीकुर्वतां सूत्रविरोधः । अन्येषां व्याख्यानमनुपयोगितयो-पेक्षितमिति ।**

कथं वाखण्डत्वमित्याह—

(९६) रत्यादिज्ञानतादात्म्यादेव यस्माद्रसो भवेत् ।
अतोऽस्य स्वप्रकाशत्वमखण्डत्वं च सिध्यति ॥२८॥

(९७) यदि रत्यादिकं प्रकाशशरीरादतिरिक्तं स्यात्तदैवास्य स्वप्रकाशत्वं न सिध्येत् । न च तथा तादात्म्याङ्गीकारात् । यदुक्तम्— (९८)'यद्यपि रसानन्यतया चर्वणापि न कार्या ( र्थम् ) तथापि कादा-

मिलिता इति । विभावादिसाहित्येन समूहालम्बनविषया इत्यर्थः । तत्तदा अस्य रसस्य "सत्त्वोद्रेकादित्यादा"वुक्तस्वप्रकाशत्वं स्वस्वरूपज्ञानत्वं कथं रत्यादीनां जडत्वेन तदसंभवात् रत्यादेर्ज्ञानरूपत्वाभावात् ज्ञानस्यैव स्वप्रकाशत्वादिति भावः । कथं वा अखण्डत्वमेकरूपत्वं परिणामवादिमते सङ्गच्छते, विभावदिभेदेन नानारूपत्वस्यैव प्रतीतिसम्भवात् ।

(९६) समाधत्ते—**रत्यादीति** । यस्मात् ज्ञानतादात्म्यादेव नाटयदर्शनादिसमये स्वस्वविषयकज्ञानस्वरूपत्वमग्रे कृत्वैव वर्त्तमानो रत्यादिः विभावादिसमूहालम्बनबोध एव रसो भवेदिति भावः । ज्ञानतादात्म्यादित्यत्र ल्यबलोपे पञ्चमी अतोऽस्माद्धेतोः । वेदान्तसिद्धान्तिनये ज्ञानस्य स्वप्रकाशत्वाभ्युपगमेनास्य रसस्य तत्तादात्म्यात्स्वप्रकाशत्वमखण्डत्वञ्च सिद्धयतीति भावः ।

अत्र पुत्रः—अस्य रत्याद्यंशस्येत्यस्याहुः—

"आत्मभूतसुखाकारप्रकाशप्रतिमानतः ।
ज्ञानाकारावलम्बित्वे सिद्धा स्यात् स्वप्रकाशता" इति ।

अस्यार्थः—ज्ञानाकारावलम्बित्वेनात्मभूतः सुखाकारोऽपि प्रकाशते । तस्य प्रतिमानतः तत्सादृश्यात् रत्याद्यंशोऽपि स्वप्रकाश इति । ननु यदि चैतन्यस्य सज्ञानत्वेन जडस्य स्वप्रकाशता तदा प्रमातृभावमापन्नस्यान्तःकरणस्यापि स्वप्रकाशत्वं स्यादिति चेन्मैवम्—तत्र हि त्रिगुणात्मके मनसि सत्वांशस्य रजस्तमोभ्यामस्पृष्टत्वम् । येनात्मानन्दस्वप्रकाशाकारावृत्तिरुत्पद्यते । नच तयोः शवलत्वं तात्त्विकं कुतस्तादात्म्य मिति "किमार्द्रकवणिजां नो वहित्रचिन्तया" इत्याह ।

(९७) अनुकूलतर्कं प्रदर्श्य विवृणोति—**यदीति** । रत्यादिकं रतिविभावादिभावसमूहं प्रकाशशरीरात् ज्ञानस्वरूपात् अतिरिक्तं रत्यादिपदशक्यार्थज्ञानेन भिन्नं तदैव अस्य रसस्य स्वप्रकाशत्वम् आत्मनैव प्रकाश्यमानत्वं न सिद्धयेत किन्तु नच तथा रत्यादिकं प्रकाशशरीराद्भिन्नं नैवेति भावः । तादात्म्याङ्गीकारात् रत्यादितज्ज्ञानयोरभेदाभ्युपगमात् । नच विभावेनानुभावेनेत्यत्र विभावादिपदेन नोक्तं सङ्गच्छते तथाप्रतीत्यभावादिति वाच्यम् तत्र लक्षणया तत्तज्ज्ञानग्रहणेन दोषाभावादिति सारवेदिनो वदन्ति ।

(९८) नन्वेतावता रसस्य स्वप्रकाशचिन्मयत्वस्वीकारेण तद्ग्राहकस्य चर्वणस्य

चित्कतया कार्यत्वमुपकल्प्य तदेकात्मन्यनादिवासनापरिणतिरूपे रत्यादिभावेऽपि व्यवहार इति भावः' इति । 'सुखादितादात्म्याङ्गीकारे चास्माकीं सिद्धान्तशय्यामधिशय्य दिव्यं वर्षसहस्रं प्रमोदनिद्रामुपेयाः' इति च । 'अभिन्नोऽपि स प्रमात्रा वासनोपनीतरत्यादितादात्म्येन गोचरीकृतः' इति च । (९८)ज्ञानस्य स्वप्रकाशत्वमनङ्गीकुर्वतामुपरि वेदान्ति-

तद्रूपत्वमुपपन्नं तथासति "निष्पत्त्या चर्वणास्यास्य निष्पत्तिरुपचारत इति यदुक्तं तद्विरुद्धमत आह—यद्यपीति । रसानन्यतया रसाभिन्नतया । न कार्या न जन्या । उपकल्प्य लक्षणया व्यवहृत्य तदेकात्मनि चर्वणास्वरूपे, अत्र तदेकात्मनीति पदं तादात्म्यसूचकम् । अनादिवासना सामाजिकानां प्राक्तनी या वासना तया रसादिरूपापरिणतिर्यस्य तादृशरूपे आविर्भूतरत्यादिज्ञानरूपे रसे इत्यर्थः । विभावादिकार्यत्वव्यवहार इति भावः। तत्त्वतस्त्वकार्यत्वमेव रसस्येति बोध्यम् । ननु परिणामवादिमते रत्यादेर्ज्ञानतादात्म्यं स्वप्रकाशत्वञ्चोपपद्यतां "स्वप्रकाशानन्दचिन्मय" इत्यनेन रसस्यानन्दमयत्वं "चमत्कारप्राण" इत्यनेन चमत्कारमयत्वञ्चोक्तं तदसंगतं विजातीयानां चिदानन्दचमत्काराणामेकरूपत्वासम्भवादत आह—सुखादीति । द्वितीय इति चेतिपर्यन्तं सम्वादवाक्यं बोध्यम् । आदिपदेन चिच्चमत्कारयोः परिग्रहः ।

सुखादीनां तादात्म्याङ्गीकारे त्वया रसस्याभेदाभ्युपगमे आस्माकीमालङ्कारिकसम्प्रदायसम्बन्धिनी "रसः सुखमयश्चिन्मयश्चमत्कारमयः "तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयम् , इति सिद्धान्त एव निरुद्वेगस्थानत्वात् सुखसम्पादकत्वेन शय्या तामधिशय्य, आश्रित्य दिव्यं दिविभवं वर्षसहस्रं 'मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवत' इति प्रमाणेन परिमितं प्रमोद आनन्द एव नेत्रनिमीलनादिकारित्वेन निद्रास्तामुपेयाः प्राप्नुहि । एवञ्चास्माकं सिद्धान्तावलम्बनेन चिरकालमपि चिन्तया वादिभिश्शङ्कोद्भावनं कर्तुमशक्यमिति तात्पर्यम् । इति च उक्तमिति पूर्वेणैवान्वयः । स्वप्रकाशत्वं रसस्योपसंहरन्नाह—अभिन्नोऽपीति । स्वस्मादिति शेषः । स रसः । प्रमात्रा स्वविषयकप्रमाज्ञानयोग्येन सामाजिकजनेन । प्रमात्रेति भावप्रधाननिर्देशो ज्ञेयः वासनया संस्कारेणोपनीतोऽलौकिकसन्निकर्षेणाभेदेन प्रकारीकृतः, नाट्यदर्शनादिवेलायामुपस्थापित इत्यर्थः यो रत्यादिस्तस्य तादात्म्येन विशिष्टः गोचरीकृतः स्वज्ञानविषयीकृतः । गोचरीकृत इति 'चिदानन्दमयोऽयं पुरुषः' इतिवदुपचारः । एतेन सभ्या एवात्र प्रमाणमिति दर्शितम् इति चेत्युक्तमित्यत्र सम्बन्धो विधेयः ।

(९९) ननु महामहोपाध्यायैः जगद्विख्यातैर्नव्यन्यायप्रवर्तकैः मैथिलश्रीगङ्गेशोपाध्यायैरनुव्यवसायवादचिन्तामणौ-व्यवसायस्यार्थमात्रविषयत्वमनुभूयते न तु स्वविषयत्वमपि गौरवेण तस्य स्वविषयभानतया प्रवृत्त्यहेतुत्वात् । तत्रैव हि विवादाध्यासितमिन्द्रियजन्यं ज्ञानं नैतज्ज्ञानविषयताश्रयः, एतज्जनकेन्द्रियसन्निकर्षानाश्र-

भिरेव पातनीयो दण्डः। (१००)तादात्म्यादेवास्याखण्डत्वम्।

रत्यादयो हि प्रथममेकैकशः प्रतीयमानाः सर्वेऽप्येकीभूताः स्फुरन्त एव रसतामापद्यन्ते। तदुक्तम्—

'विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः।
प्रतीयमानाः प्रथमं खण्डशो यान्त्यखण्डताम्॥' इति।

'परमार्थतस्त्वखण्ड एवायं वेदान्तप्रसिद्धब्रह्मतत्त्ववद्वेदितव्यः'

त्वात्'' इति प्रतिपादितम्। तर्हि सर्वमेव ज्ञानं ज्ञानान्तरप्रकाश्यत्वं स्वीकृतम् 'तथा-चाहं पटज्ञानवान् इति जानामीत्यत्र हि ज्ञानस्यानुव्यवसायेनैव ज्ञानं भवतीति कथं रसस्य स्वप्रकाशत्वं सिद्ध्येदित्याशङ्कायामाह—**ज्ञानस्येति**। अनङ्गीकुर्वतां नव्यनैया-यिकानामिति भावः। उपरि मते सिद्धान्त इत्यर्थः। वेदान्तिभिरुत्तरमीमांसानिपुणैः **वाचस्पतिमिश्रा**दिभिरित्यर्थः। दण्डो दोषः पातनीयः स्थापनीयः। ज्ञानस्यानुव्य-सायेन तस्यापि'ज्ञानान्तरग्रह इत्यनवस्थारूपोऽत्र दोष उद्भावनीयः। तस्मात् सर्वेषां ज्ञानानां स्वतःप्रामाण्यमेवाभ्युपेत्य वेदान्तिसिद्धान्तवदस्माभिरपि रसात्मकज्ञानस्य स्वप्रकाशत्वमेवाभ्युपेयत इति ग्रन्थाभिप्रायः।

(१००) नन्वेवमपि रत्यादिविभावादिनानाविषयभेदेनाभेदाभावात् सखण्डत्वप्र-सक्तौ कथमखण्डत्वं रसस्य भवितुमर्हतीत्याशङ्कायामाह—**तादात्म्यादेवेति**। ज्ञान-तादात्म्यादेवेत्यर्थः। अस्य रसस्य। अत्र कारणं दर्शयति—**रत्यादयो हीति**। आ-दिना विभावादीनां हासादिस्थायिभावानाञ्च परिग्रहः। हि यतः। प्रथमं नाट्यदर्शन-प्रारम्भे एकीभूता व्यञ्जनाजन्यैकज्ञानविषयत्वेन एकात्मतां प्राप्ताः स्फुरन्त एव चिद्रूप-त्वं प्राप्नुवन्त एव। प्रत्येकतः न स्फुरन्तीति ध्वनयितुमेवकारः। **रसतामाद्यन्त इति**। सभ्यानां स्वप्रतीतिरेवात्र साक्षिणीति विभावनीयम्। अखण्डत्वे सम्मतिं दर्शयति—**तदुक्तमित्यादि**। विभावा अनुभावाः सात्त्विका व्यभिचारिणश्च भावाः प्रथमं नाट्य-दर्शनादिप्रारम्भे खण्डशः प्रत्येकं प्रतीयमानाः सन्तः अखण्डतां व्यञ्जनाजन्यैकज्ञान-विषयत्वेन एकात्मतां यान्ति लभन्ते। नन्वत्रानुभावे सात्विकानामन्तर्गतत्वेन पृथगुप-न्यासो व्यर्थ इति चेद् ? ''गोबलीवर्दन्यायेन''उपन्यासात् तथा चानुभावत्वावच्छिन्न-प्रतियोगिताकभेदाभावेन सहानुभावत्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदस्य समावेशः, यथा बलीवर्दे गोत्वावच्छिन्नप्रतियोगिताकभेदाभावेन सह गोत्वसमाना-धिकरणधेनुत्वादिधर्मावच्छिन्नप्रतियोगिताकभेदस्येति भावः। अत्र ''विभावा'' इत्या-दिकारिकायां रत्यादिप्रकाशसुखचमत्कारा अकण्ठोक्ता अपि प्रकरणादवसेया। ननु ज्ञानतादात्म्याङ्गीकारेऽप्यखण्डत्वं न संभवति सुखचमत्काराभ्यामैक्यासंभवादत आह—**परमार्थतस्त्विति**। वस्तुतस्त्वित्यर्थः। अलौकिकस्वभावादिति यावत्। **अयं रसः**। ब्रह्ममीमांसा वेदान्तस्तत्र ''चिदानन्दोऽयं पुरुषः'' इत्यनेन चिदानन्दयोरेक-

इति (क)च ।

(१) (ख)अथ के ते विभावानुभावव्यभिचारिण इत्यपेक्षायां विभावमाह—

**(२) रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः ।**

ब्रह्मस्वरूपत्वमुपपादितं तथा नाट्यदर्शनाद्यारंभकाले विभावादिभेदेन सखण्डत्वप्रतीतावपि क्रमशो रसोऽपि तत्त्वतो व्यञ्जनाजन्यैकज्ञानकालेऽखण्ड एवेति, चिदानन्दचमत्काराणामेकरसरूपत्वमिति भावः । इयताप्रबन्धेन वेद्यान्तरस्पर्शशून्यत्वं ब्रह्मास्वादसहोदरत्वम्, अखण्डत्वम्, अलौकिकत्वञ्च रसस्य सर्वमेवोपपादितमिति सुधीभिर्विभावनीयम्।

**अत्रेमाः सङ्ग्रहकारिकाः—**

"विभावत्वानुभावत्वसञ्चारित्वाद्युपागतैः । उपनायकमाहात्म्यात्कारणत्वादिवर्जितैः ॥
केवलं स्थाय्यभिव्यक्तौ हेतुत्वेनैव सम्मतैः । वासनावशतः सत्त्वसमुद्रेकान्निराविले ॥
वासनात्मतया पूर्वं सामाजिकहृदि स्थितः । साधारणतया भातैः कारणादिभिरेव यः ॥
रत्यादिर्व्यज्यते स्थायी रसः सोऽस्मन्मते मतः ।
वासनोद्बोधकं चात्र काव्यनाट्यानुभावनम् ॥
सोऽयं रसः स्वप्रकाशसुखात्मकधिया यया । गृह्यते चर्वणा सैव कार्या सैव च सम्मता ॥
विभावा अनुभावाश्च सञ्चारिस्थायिनौ तथा । गुणप्रधानभावेन चर्व्यमाणा रसात्मताम् ॥
यान्ति पानकवत्तेन प्रमाणमिह सा मता । विरुद्धरूपसम्भेदादैकरूप्यं परानुदत् ॥
अलौकिकः परब्रह्मसंवेदनसहोदरः । रसोऽयमिह संवित्तेरन्यन्मानमपार्थकम् ॥
वस्तुतस्तु न रत्यादौ रसत्वं कारणादि च । विभावत्वादितामेति किंतु तन्मयभावतः ॥
सामाजिकानां जायन्ते ये तदाकारसुन्दराः । चित्तवृत्तिविशेषास्ते विभावत्वाद्यलौकिकम् ॥
रूपं भजन्ते तदनु सकलाकारसुन्दरा । एका विलक्षणा चित्तवृत्तिर्या जायते सताम् ॥
रसनात्मा रसः सैव शङ्काशङ्कनिवारिता । इति ब्रूमो वयन्त्वत्र तदिदं मत्सरं विना ।
विचारणीयं रसिकैरिति सर्वं समञ्जसम् ॥" इति

( १ ) अथ सयुक्तिकं रसस्वरूपमभिधायानन्तरं प्रसङ्गसङ्गत्या रसलक्षणघटकविभावादिपदार्थान् यथाक्रममुपपादयितुमाह—**अथेति** । अथ सयुक्तिकरसनिरूपणानन्तरम् । अपेक्षायामाकांक्षायाम् ।

( २ ) तत्र विभावं लक्षयति—**रत्यादिति** । लोके लोकसमाजे रत्यादीनामनादि-

(क) इति 'रसनिरूपणम्' इत्यधिकं क्वचित्-पुस्तके(ख) 'अथ-' इत्यादिः 'मन्यते॥ इति हरिकारिकान्तः पाठो क्वापि-पुस्तके नास्ति, किंतु 'ननु विभावादिभ्यो रस इत्युक्तं के ते विभावाद्या इत्याह—
वहवोऽर्था विभाव्यन्ते वागङ्गाभिनयात्मकाः
अनेन यस्मात्तेनायं विभाव इति कीर्तितः ॥' इत्येव पाठोऽस्ति ।

(३) ये हि लोके रामादिगतरतिहासादीनामुद्बोधकारणानि सीतादयस्त एव काव्ये नाट्ये च निवेशिताः सन्तः 'विभाव्यन्ते आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा एभिः' इति विभावा उच्यन्ते ।

तदुक्तं भर्तृहरिणा—

'शब्दोपहितरूपांस्तान्बुद्धेर्विषयतां गतान् ।
प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते ॥'

(४) तद्भेदावाह—

**(५) आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ ।**

कालीनवासनान्तर्लीनानां रतिहासादिस्थायिभावानाम् , उद्बोधकाः प्रकाशकाः, त एव काव्यनाट्ययोर्निवेशिताः सन्तो विभावा विभावपदव्यपदेश्या उच्यन्ते । नाट्यं नटप्रयोज्यं नाटकादि । यद्यप्यत्रकाव्यपदोपादानादेव नाट्यलाभस्तथापि पुनर्नाटयपदोपादानं गोवलीवर्दन्यायेन काव्येषु तेषां प्राधान्यद्योतनार्थम् ।

( ३ ) कारिकार्थं व्याचष्टे—**येहीति** । नाटयकाव्यदर्शनश्रवणवेलायां स्वस्वविषयज्ञानसम्बन्धेन सामाजिकरत्यादिभावाः सामाजिकवृत्तयो रत्यादिस्थायिभावाः, आस्वादाङ्कुरप्रादुर्भावयोग्याः प्ररोहसदृशसूक्ष्मभावेन रसाविर्भावे सम्भवपराः काव्यैर्नाट्यैर्वेति शेषः । एभिरित्यत्र करणे तृतीया । विभाव इत्यत्र करणे घञ् बोध्यः । यत एभिर्विभावादिभिः सामाजिकरत्यादिभावा आस्वादाङ्कुरप्रादुर्भावयोग्या क्रियन्ते, अतोविशेषेण भाव्यन्ते इत्यर्थः, अतो विभावा उच्यन्त इति भावः । सामाजिकरत्यादीनां तथात्वकरणं रामादिरत्यादीनाञ्च तत्रारोपाद्बोध्यम् । स चारोपो वासनासहकृतैर्विभावादिभिर्व्यञ्जनयेति ध्येयम् । **अत एवोक्तम्**—"वासनोपनीतरत्यादितादात्म्येनेति" । अस्या परिभाषाया योगारूढत्वादेतद्योगार्थस्यानुभावादौ सत्वेऽपि न तत्र प्रयोग इति । काव्यनाटयप्रवेशितपात्राणां विभावसंज्ञावतां रत्याद्युद्बोधकत्वे प्राचां सम्मतिं दर्शयति—**तदुक्तमिति । शब्दोपहितेति** । तान् प्रसिद्धान् कंसादीन् श्रीकृष्णादिक्रोधस्य रौद्ररसस्थायिभावस्य आलम्बनविभावान् शब्दोपहितरूपान् शब्दैः काव्यान्तर्गतपदैः उपहितानि स्थापितानि रूपाणि स्वभावा येषां तांस्तथोक्तान् , अत एव बुद्धेः शाब्दबोधस्य विषयतां गतान् प्राप्तान् , प्रत्यक्षानिव सामाजिका मन्यन्ते । तत्र हेतुं दर्शयति—**साधनत्वेनेति** । शब्दोपहितत्वरुपप्रत्यक्षसाधनत्वेनेत्यर्थः । **षट्सहस्री कृताप्युक्तम्**-'एभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्ते" इति ।

( ४ ) **तद्भेदाविति** । तस्य विभावस्य भेदौ द्विप्रकारौ । एवं स्थलान्तरेष्वप्यवधेयम् ।

( ५ ) **आलम्बनेति** । कारिकार्द्धमेतत् सुस्पष्टमतो न व्याख्यायते । उक्तञ्च

स्पष्टम् ।

(६) तत्र—

**आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात् ॥ २९ ॥**

आदिशब्दान्नायिकाप्रतिनायिकादयः । अत्र यस्य रसस्य यो विभावः स तत्स्वरूपवर्णने वक्ष्यते ।

तत्र नायकः—

**(७) त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।**
**दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता ॥ ३० ॥**

---

विभावद्वैविध्यमग्निपुराणे—

"विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते ।
विभावो नाम स द्वेधालम्बनोद्दीपनात्मकः ॥" इति ।

( ६ ) **तत्रेति** । तयोरालम्बनोद्दीपनयोर्मध्य इत्यर्थः । **आलम्बनमिति** । तं नायकमालम्ब्य आश्रित्य रसस्य शृङ्गारादेः उद्गमात् सभ्यचित्तेष्वाविर्भावात् । एवञ्च यमालम्ब्य लौकिकरस आविर्भवति स आलम्बनविभाव इति फलितम् । तेन नायकनिष्ठे लौकिकरसे नायिकालम्बनविभावः । नायिकानिष्ठे च तस्मिन् नायक इति ज्ञेयम् । प्रतिनायिकाचोपनायिका सा च शृङ्गाराभासे ।

उक्तं चाग्नेये—'रत्यादिभाववर्गोऽयं यमाजीव्योपजायते ।
आलम्बनविभावोऽसौ नायकादिभवस्तथा' ॥ इति ।

इत्थञ्च रसप्रकृतिभूतरत्याद्याश्रयत्वमालम्बनविभावत्वमिति लक्षणं द्योतितम् ।

( ७ ) नायकं लक्षयति—**त्यागीति** । त्यागी दाता सर्वस्वदायक इति यावत् । कृती वीरः कर्मकुशल इति यावत् । कुलीनः सत्कुलोद्भवः । सुश्रीको बुद्धिमान् सौन्दर्यवानित्यर्थकत्वे रूपशब्देन पौनरुक्त्यापत्तेरतो 'लक्ष्मी सरस्वती धी त्रिवर्गसम्बद्धिभूतिशोभासु । उपकरणवेशरचनाविधासु च श्रीरिति प्रथिता" । इति व्याडिवचनाज्ज्ञानार्थेऽत्र श्रीशब्दप्रयोगः । धनसमृद्धिमानित्यर्थकत्वे तु दरिद्रचारुदत्तानां मृच्छकटिकादौ नायकत्वं न स्यात् । रूपं मनोहरं यौवनं तारुण्यम् उत्साहः कर्मण्यध्यवसायश्च तेऽस्य सन्तीति सः रूपादित्रयवानिति यावत् । दक्ष अनलसः, अनुरक्ता लोका यस्मिन् सः । 'द्वन्द्वान्ते मतुपः श्रवणात् 'द्वन्द्वान्ते श्रूयमाणमि'ति न्यायात्तस्य प्रत्येकाभिसम्बन्धः । तथा तेजः परकृतनिन्दाद्यसहिष्णुत्वरूपं तद्वान् , वैदग्ध्यं चातुर्ययुक्तः, अत्र निगूढाभिप्रायत्वमेव वैदग्ध्यम् । शीलं सद्वृत्तं तानि अस्य सन्तीतिः सः । नेता नायकः ।

(८) दक्षः क्षिप्रकारी। शीलं सद्वृत्तम्। एवमादिगुणसम्पन्नो नेता नायको भवति।

तद्भेदानाह—

**(९) धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च।**
**धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः॥ ३१॥**

स्पष्टम्।

(१०) तत्र धीरोदात्तः—

**(११) अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।**

---

( ८ ) कृतिदक्षशब्दयोस्तुल्यतया पौनरुक्त्यम्भवतीति मनसि निधाय व्याचष्टे **दक्ष इति**। क्षिप्रकारी क्षिप्रं करोतीति क्षिप्रकारी द्रुतमेव कार्यसम्पादक आलस्य शून्य इत्यर्थः। स्वभावार्थकत्वं निराकरणायाह—**शीलमिति**। आदिना धार्मिकत्वादीनां परामशः।

**त्यागी** नायको यथा—"त्वचं कर्णः शिविर्मांसं जीवं जीमूतवाहनः।
ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम्॥" इति।

**दक्षो** यथा वीरचरिते—"स्फूर्जद्वज्रसहस्रनिर्मितमिव प्रादुर्भवत्यग्रतो-
रामस्य त्रिपुरान्तकृद्दिविषदां तेजोभिरिद्धं धनुः।
शुण्डारः कलभेन यद्वदचले वत्सेन दोर्दण्डक-
स्तस्मिन्नाहित एव गर्जितगुणं कृष्टं च भग्नं च तत्॥"इति।

**अनुरक्तलोको** यथा तत्रैव—
"त्रय्यास्त्राता यस्तवायं तनूजस्तेनाद्यैव स्वामिनस्ते प्रसादात्।
राजन्वन्तो रामभद्रेण राज्ञा लब्धक्षेमाः पूर्णकामाश्चरामः॥" इति।

विस्तरभयादन्येषामुपेक्षितम्।

( ९ ) नायकभेदं निरूपयति—**धीरोदात्त इति**। धीरः सन्नुदात्तः सर्वथैवोग्रप्रकृतिर्धीरोदात्तः। धीरः सन्नुद्धत अविनीतप्रकृतिर्धीरोद्धतः। धीरः सन् ललितो मृदुप्रकृतिर्धीरललितः। धीरः सन् प्रशान्तो विनीतप्रकृतिर्धीरप्रशान्त इति अनेन प्रकारेण प्रथम आद्योऽयं चतुर्विधश्चतुर्धा उक्तः।

**उक्तञ्चाग्निपुराणे**—'धीरोदात्तो धीरोद्धतः स्याद्धीरललितस्तथा।
धीरप्रशान्त इत्येवं चतुर्धा नायकः स्मृतः'॥ इति।

( १० ) यद्यपि धीरोदात्तादीनामुक्तान्वर्थानुसारेण यथाकथञ्चित् लक्षणं प्राप्तं तथापि विशेषतः प्रतिपादयितुमाह—**तत्रेति**। उक्तचतुर्विधेषु नायकेषु मध्ये आद्यो धीरोदात्तः प्रतिपाद्यत इति शेषः। इत्थमन्यत्रापि बोध्यम्।

( ११ ) धीरोदात्तं लक्षयति—**अवीति**—अविकत्थनः विकत्थना आत्मश्लाघा

स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥३२॥

अविकत्थनोऽनात्मश्लाघाकरः। महासत्त्वो हर्षशोकाद्यनभिभूतस्वभावः। निगूढमानो विनयच्छन्नगर्वः। दृढव्रतोऽङ्गीकृतनिर्वाहकः।

यथा—रामयुधिष्ठिरादिः।

अथ धीरोद्धतः—

(१२) मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः।
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः॥ ३३ ॥

यथा—भीमसेनादिः।

अथ धीरललितः—

(१३) निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्।

तद्रहितः, आत्मप्रशंसाकरणरहित इति यावत्। क्षमावान् अपकारिणः प्रत्यपकार सामर्थ्ये सत्यपि तद्विमुखता क्षमा साऽस्त्यस्मिन् क्षमागुणयुक्त इत्यर्थः। अतिगम्भीरः अन्यैर्दुर्ज्ञेयाभिप्रायः। महासत्त्वो हर्षशोकादिभिरनभिभूतचित्तः। स्थेयान् अचिरकर्त्तव्येष्वपिकार्येषु अत्यन्तस्थिरप्रकृतिः। निगूढमान निगूढं छन्नं मानमहङ्कारो यस्य सः सत्यभिमाने विनयेन तदाच्छादकः। दृढव्रतः सत्यप्रतिज्ञो नायकः धीरोदात्तः कथितः, पूर्वैरिति शेषः।

यथा रामं प्रति—"आहूतस्याभिषेकाय विसृष्टस्य वनाय च।
न मया लक्षितस्तस्य स्वल्पोऽप्याकार विभ्रमः इति ॥" इति।

(१२) धीरोद्धतं लक्षयति-**मायापर** इति। मायापरः परवञ्चनतत्परः। प्रचण्ड उग्रप्रकृतिः। चपलः अस्थिरस्वभावः। अहं महानिति ज्ञानविशेषोऽहङ्कार। दर्पः शौर्य-वीर्याद्यतिशयः अहङ्कारदर्पौ भूयिष्ठौ बहुलौ यस्य सः तथोक्तः। आत्मश्लाघा निरतः स्वप्रशंसाकरणतत्परो धीरोद्धतः। **नन्वत्र** लक्षणे यदि परप्रतारणतत्परत्वमपि निवेश्यते तर्हि भीमसेनस्य तथात्वाभावात् कथं धीरोद्धतत्वम्? अथवा कथं न आत्मगोपनरूपवञ्चनया वालिवधान् रामस्य धीरोद्धतत्वम्, तथा 'अश्वत्थामा हतो नरो वा कुञ्जरो वा इति वाक्छलेन द्रोणवधात् युधिष्ठिरस्य न धीरोद्धतत्वं तस्मादव्याप्त्यतिव्याप्तिदोषग्रस्ततया नेदं निर्दुष्टं लक्षणमिति चेत्? सत्यम्, स्वाभाविकाहङ्कारदर्पभूयिष्ठत्वमेवात्र धीरोद्धतलक्षणम्, तदितरोपादनं किमर्थमिति चेत्? सम्भवता मात्रस्फुटीकरणाय एवञ्च नोक्तदोषलेश इति बोध्यम्। एतादृशलक्षणस्वीकारेण प्रत्युत प्रतिनायकादेरपि मलयकेतुप्रभृतेः **मुद्राराक्षसादौ** धीरोद्धतत्वं सङ्गच्छते।

(१३) धीरललितं लक्षयति—**निश्चिन्त इति**। निश्चिन्तो मन्त्रिवर्गादिषु स्थापितभारत्वात् उद्वेगरहितचित्तः। मृदुः अप्रचण्डप्रकृतिः ऋजुस्वभाव इत्यर्थः। अनिशं

कला नृत्यादिका । यथा—रत्नावल्यादौ वत्सराजादिः ।

अथ धीरप्रशान्तः--

**(A)सामान्यगुणैर्भूयान्द्विजादिको धीरप्रशान्तः स्यात् ॥ ३४ ॥**

यथा—मालतीमाधवादौ माधवादिः ।

(१४) एषां च शृङ्गारादिरूपत्वे भेदानाह—

**(१५) एभिर्दक्षिणधृष्टानुकूलशठरूपिभिस्तु षोडशधा ।**

(१६) तत्र तेषां धीरोदात्तादीनां प्रत्येकं दक्षिणधृष्टानुकूलशठत्वेन षोडशप्रकारो नायकः

**(१७) एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः ॥ ३५ ॥**

---

रात्रिंदिवं कलापरः नृत्यगीतादितत्परः ।

पद्यं यथा—"राज्यं निर्जितशत्रु योग्यसचिवे न्यस्तः समस्तो भरः

सम्यक्पालनलालिताः प्रशमिता शेषोपसर्गाः प्रजाः ।

प्रद्योतस्य सुतावसन्तसमयस्त्वंचेति नाम्ना धृतिं

कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः ॥" इति ।

( A ) धीरप्रशान्त लक्षयति--**सामान्येति** । सामान्यगुणैः उक्तत्यागित्वादिभिर्नायकसाधारणगुणैः । द्विजादिको ब्राह्मणादिर्नायको धीरप्रशान्तो भवेत् । अत्र धीरोदात्तादित्रितयभिन्नो नायको धीर प्रशान्त इत्यभिप्रायः इति—**वागीशाः** । **माधवादि**रित्यादिपदेन मृच्छकटिके चारुदत्तादिः ।

**यथा**—तत उदयगिरिरिवैक एव स्फुरितगुणद्युतिसुन्दरः कलावान् ।

इह जगतिमहोत्सवस्य हेतुर्नयनवतामुदियाय बालचन्द्रः ॥" इत्यादि ।

**यथा** वा—"मखशतपरिपूतं गोत्रमुद्भासितं यत्

सदसि निविडचैत्यब्रह्मघोषैः पुरस्तात् ।

मम निधनदशायां वर्त्तमानस्य पापै-

स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥" इति ।

( १४ ) उक्तानां चतुर्विधानां धीरोदात्तादीनां नायकानां शृङ्गाररसविषये पुनः प्रत्येकस्य चतुर्विधत्वं प्रतिपादयितुमाह—**एषाञ्चेति** । भेदान् अवान्तरस्वरूपानित्यर्थः ।

( १५ ) **एभिरिति** । एभिर्धीरोदात्तप्रभृतिभिः प्रत्येकमेव दक्षिणधृष्टानुकूलशठरूपिभिर्वर्त्तमानैः समुदायेन षोडशधा शृङ्गारे षोडशप्रकारो नायको भवति रसान्तरे तु चतुष्प्रकार एवेत्यवधेयम् । दक्षिणधीरोदात्तः, दक्षिणधीरोद्धतः, दक्षिणधीरललितः दक्षिणधीरप्रशान्तः, एवं धृष्टादिपदयोजनया षोडशप्रकारा नायका प्राप्यन्त **इति शेषः** ।

( १६ ) **तत्रेति** । तत्र शृङ्गारिरूपत्व इत्यर्थ ।

( १७ ) दक्षिणनायकं निरूपयति—**एष्विति** । एषु तु दक्षिणादिचतुर्विधेषु

(१८) द्वयोस्त्रिचतुःप्रभृतिषु नायिकासु तुल्यानुरागो दक्षिणनायकः । यथा—

(१९) स्नाता तिष्ठति कुन्तलेश्वरसुता, वारोऽङ्गराजस्वसु-
द्यूते रात्रिरियं जिता कमलया, देवी प्रसाद्याद्य च ।
इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः ॥

मध्ये अनेकमहिलासु अनेकस्त्रीषु समस्तुल्यो रागोऽनुरागो यस्य सः दक्षिण नायकः कथितः साहित्यविद्भिरिति शेषः ।

( १८ ) **द्वयोरिति** । अनेकशब्दस्यैकाधिकबोधकत्वेन द्वयोर्नायिकयोः त्रिचतुः प्रभृतिषु वा नायिकासु ।

तथा च भरतः—"मधुरस्त्यागी रागं न याति मदनस्य नापि वशमेति ।
अवमानितश्च नार्य्या विरज्यते स तु भवेज्ज्येष्ठः ॥ इत्यत्र न रागं याति न मदनस्य वशमेतीत्यनेनासाधारण एकस्यां स्नेहो निषिद्धो दक्षिणस्येति । अतो वत्सराजादेराप्रबन्धसमाप्ति स्थितं दाक्षिण्यमिति ।

( १९ ) स्वयमुदाहरति—**स्नातेति** । अन्तः पुरजनस्य अनेकपत्नीसम्भोगार्हा इयं रात्रिरिति तत्कर्म नियुक्तस्य कस्यचिद् राज्ञि निवेदनम् । अद्य कुन्तलेश्वरसुता कुन्तलदेशीयराजपुत्री तद्रूपैकापत्नो भवत्सङ्गमलाभाय स्नाता ऋतुस्नाता तिष्ठति वर्त्तते 'ऋतौ भार्यामुपेयात्' इति नियमविधिना अद्यगमनन्तत्रैवधम् । अङ्गराजस्वसुः अङ्गदेशीयराजभगिन्यास्तद्रूपैकपत्न्याः, अद्य वारः भवतस्तत्संभोगनियतवासरः, अतस्तत्रापि गमनमुचितप्राप्तमेव । कमलया नानिकया कयापि पत्न्या इयं रात्रिर्द्यूते जिता भवता सहात्मप्राप्यत्वेन रात्रिमिमामक्षक्रीडायां पणीकृत्य तज्जयेनात्मसुरतार्थं प्राप्ता अतः सापि न त्याज्या किन्तु गमनार्हैवेति भावः ।

तथा अद्य देवी कृताभिषेकाराजपत्नी पट्टराज्ञीत्यर्थः, प्रसाद्या केनाऽपि हेतुना तस्या अद्यावश्यं प्रसादनम् , इति इत्थं विज्ञाय अन्तःपुरस्यसुन्दरीः प्रति रमणीगणमभिलक्ष्य मया विज्ञापिते तत्तद्वृत्तान्तनिवेदने कृते देवेन राज्ञा अप्रतिपत्त्या कर्त्तव्यानिश्चयेन मूढं व्याकुलं अप्राप्तिनिश्चयशून्यं वा मनो यस्य तेन । द्वित्रा द्वे वा त्रीणि वा परिमाणान्येषामिति द्वित्राः नाडिका दण्डान् स्थिताः कर्त्तव्यनिश्चयाय मौनीभूतम् । सर्वासु अनुरागसाम्येन कस्याऽप्युपेक्षानर्हत्वात् अप्रतिपत्त्या कर्त्तव्यनिर्णयभावेन मूढमनस्कत्वेन द्वित्रादिण्डस्थितिः । अत्र चतसृष्वपि नायिकासु तुल्यस्नेहत्वेनैव कर्त्तव्यमूढत्वात् राज्ञो दक्षिणनायकत्वम् । **इदमत्रानुसन्धेयम्**-ऋतुस्नातैवपत्नी तावदनुपेक्षणीया किम्बकथ्यं कुन्तलमहाराजदुहिता । सामान्येऽपि काले दुर्लङ्घ्यः किंवक्तव्यम्

(२०) कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः ।
दृष्टदोषोऽपि मिथ्यावाक्कथितो धृष्टनायकः ॥ ३६ ॥

यथा मम—

(२१) शोणं वीक्ष्य मुखं विचुम्बितुमहं यातः समीपं, ततः
पादेन प्रहृतं तया, सपदि तं धृत्वा सहासे मयि ।
किञ्चित्तत्र विधातुमक्षमतया बाष्पं सृजन्त्याः सखे !
ध्यातश्चेतसि कौतुकं वितनुते कोपोऽपि वामभ्रुवः ॥

(२२) अनुकूल एकनिरतः—
एकस्यामेव नायिकायामासक्तोऽनुकूलनायकः ।

अङ्गनाथभगिनीप्सितन्यायप्राप्तसमागमकालः । सामान्येऽपि जये पराधीनता किं वक्तव्यं सौन्दर्य्यसुधानिष्यन्दि कमलाप्रयुक्ते । एवमुत्तरोत्तरकार्यसंपातेऽपि महाराश्याः प्रसादनं तावत्सर्वोपरीति रहस्यमिति सारवेदिनो वदन्ति। पद्येऽस्मिन् **शार्दूलविक्रीडितं** छन्दः।

( २० ) क्रमप्राप्तं धृष्टनायकं लक्षयति—**कृतागा इति** । आगोऽपराधः कृतो ऽऽगो येन सः । केनापि कार्येण प्रियासविधे कृतापराधोऽपि सन् निःशङ्कः तर्जनादिना प्रियया तर्जितोऽपि भर्त्सितोऽपि सन् न लज्जितः । तथा प्रियया दृष्टोऽवलोकितोऽन्यासक्त्यादिर्यस्य स तादृशः सन्नपि मिथ्यावाक् मयैतन्न कृतमित्ययथार्थवचनः । यद्यपि लक्षणेनानेन त्रिविधो धृष्टनायकः कथितस्तथापि धृष्टत्वरूपणैकविध एवेति ज्ञेयम् ।

( २१ ) स्वकीयं पद्यमाद्ययोरुदाहरति-**शोणमिति** । रोषारुणमुखीं प्रियां चुम्बितुं गतस्य तया प्रहर्त्तुमुद्यतं पादं धृत्वा किञ्चित्कर्त्तुमक्षमीकृतां रुदतीं तां दृष्ट्वा नायकस्य सख्यौ वृत्तान्तकथनमिदम् ।

हे सखे ? अहं प्रियतमाया आगसैव शोणं रक्तवर्ण मुखं वीक्ष्य तदेव चुम्बितुं तस्या समीपं यातो गतः, अनुनयादिकमकृत्वापीति भावः । तदनन्तरं तया प्रियतमया पादेन प्रहृतं मदङ्गमिति शेषः । मयि सपदि तत्क्षणं तं पादं धृत्वा सहासे हास्यं विदधति सति तत्र तस्मिन्समये किञ्चिदप्यणवपि विधातुं कर्त्तुम् अक्षमतया असमर्थतया कारणेन बास्पम् अश्रुजलं त्यजन्त्याः वामभ्रुवः रमणीयायास्तस्याः कोपोऽपि चेतसि स्वान्ते ध्यातः स्मृतः सन् कौतुकं कुतूहलं वितनुते विस्तारयति । पद्येऽस्मिन् **शार्दूलविक्रीडितं छन्दः** । अत्र स्वापराधेनैव शोणीभूतं मुखं तदेव चुम्बितुं तत्समीपगमनात् निःशङ्कत्वेन तथा पादप्रहारेण जातापमानेऽपि पादधारणेन ह्रियोऽभावेन चाद्ययोर्लक्षणसमन्वयः । अन्त्यस्योदाहरणं **मालविकाग्निमित्रादा**वनुसन्धेयम् ।

( २२ ) क्रमप्राप्तमनुकूलत्वं लक्षयति—**अनुकूल इति** । विवरणे स्फुटोऽर्थः ।

यथा—

(२३) अस्माकं सखि ! वाससी न रुचिरे, ग्रैवेयकं नोज्ज्वलं,
नो वक्रा गतिरुद्धतं न हसितं, नैवास्ति कश्चिन्मदः ।
किन्त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतो-
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम् ॥

**(२४) शठोऽयमेकत्र बद्धभावो यः ।**
**दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति ॥ ३७ ॥**

(२५) यः पुनरेकस्यामेव नायिकायां बद्धभावो द्वयोरपि नायिकयोर्बहिर्दर्शितानुरागोऽन्यस्यां नायिकायां गूढं विप्रियमाचरति स शठः।

---

( २३ ) अनुकूलनायकमुदाहरति—**अस्माकमिति** । स्वस्य पतिप्रियत्वमावेदयितुं कस्याश्चिन्नायिकायाः सखीं प्रत्युक्तिरियम् । हे सखि ! अस्माकम् एकत्वे द्वित्वे च विवक्षिते 'अस्मदो द्वयोश्चेति' सूत्रेणैकत्वे बहुत्वविधानमत्र तेन ममेत्यर्थः । वाससी वसनद्वयं परिधेयमुत्तरीयञ्चेति भावः । न रुचिरे न मनोहरे, ग्रैवेयकं कण्ठभूषणं न उज्ज्वलं न कान्तिमत्, गतिर्गमनं नो वक्रा नो हावभावादिद्योतिका चित्रा, हसितं हसनं न उद्धतं प्रियतमचित्ताकर्षणसमर्थनातिरिक्तम्, तथा कश्चित्सौभाग्ययौवनाद्यवलेपजो विकारो मदो नैवास्ति । वस्त्रौज्ज्वल्यादिकं नायकवशीकरणकारणं सौभाग्यकारणं च मम किमपि नास्ति किन्तु तथापि न केवलमहमेव अन्ये परकीया अपिना स्वकीया जना वदन्ति अस्याः पतिः सुभगोऽपि सौन्दर्येणान्यनायिकाभिलषणीयत्वरूपसौभाग्यवानपि यद्वा मनोज्ञोऽपि अन्यत अन्यस्यां नायिकायां दृष्टिं न क्षिपतीति । इयता एतावतैव मिथ्यावादेन विश्वम्–एतद्विश्ववर्त्ति स्त्रीजनं दुःस्थितं मयि असूयया मदपेक्षया सौभाग्याल्पत्वेन वा दुःस्थितं दुष्टचित्तं प्रतिकूलं वा मन्यामहे ।

अस्य नायकस्य एकस्यामेवास्यां वक्तृनायिकायां निरतत्वादनुकूलनायकत्वमवगन्तव्यम् । पूर्वोक्तं छन्दः ।

( २४ ) पुनरपि क्रमप्राप्तं शठं लक्षयति—**शठोऽयमेकत्रेति** । विवरण एव स्पष्टोऽर्थः, अतो न व्याख्यायते कारिकामेनाम् ।

( २५ ) **विवृणोति—य इति** । अत्र पुनश्शब्दस्त्वर्थे । यो नायकस्तु बद्धभावो वस्तुतो धृतानुरागः यस्यां नायिकायां बद्धभावस्तां गृहीत्वा द्वयोरिति ध्येयम् । बहिः सुरतातिरिक्तविषये दर्शितानुरागः दर्शितं भूषणदानादिसाम्येनानुरागः प्रेम येन सः । अन्यस्यां यस्यां बद्धभावस्तदतिरिक्तायां गूढं छन्नं विप्रियमप्रियम् आचरति अनुतिष्ठति स शठः शठनायक इत्यर्थः ।

यथा—

(२६) 'शठान्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः ।
तदेतत्काचक्षे घृतमधुमयत्वद्बहुवचो-
विषेणाघूर्णन्ती किमपि न सखी मे गणयति ॥'

(२७) एषां च त्रैविध्यादुत्तममध्याधमत्वेन ।
उक्ता नायकभेदाश्चत्वारिंशत्तथाष्टौ च ॥ ३८ ॥

(२८) एषामुक्तषोडशभेदानाम् ।

( २६ ) लक्ष्यमुदाहरति-शठेति । नायिकाया विप्रियकारिणं नायकं भर्त्सयन्त्या सख्या उक्तिरियम् । हे शठ ! खल ! मम सखीमाश्लिष्यन् आलिङ्गन्नेव त्वं यत् अन्यस्या आगच्छन्त्या अपरस्या नायिकायाः काञ्चीमणिरणितं रशनादाममणिभणितम् आकर्ण्य श्रुत्वा सहसा यत् प्रशिथिलभुजग्रन्थिः श्लथीभूतालिङ्गनकालीनबाहुवेष्टनः, अभवो जातोऽसि तदेतत् तवाचरणं काचक्षे कुत्र कथयामि कुत्रापि कथयितुं नार्हामीति भावः । अतो मे सखी घृतमधुमयेन मिश्रितघृतमधुरूपेण तव यद्बहु नानाप्रकारं वचो वचनं तदेव विषम् । घृतमधु यथा आपाततः स्वादु पश्चाद्विषम् , तथा तव वचनमप्यापाततो रमणीय पश्चादनिष्टाचरणेनायथार्थत्वप्रतिभासाद्विषतुल्यमिति भावः । आघूर्णन्ती विमुह्यन्त किमपि कर्त्तव्यं हितमहितं वा न गणयति न निश्चेतुं शक्नोतीत्यर्थः। अन्यथा तवेदृग्बहिरनुरागाद्विरमेदित्याशयः । शिखरिणीच्छन्दः पद्येऽस्मिन् । अत्र आगच्छन्त्यां नायिकायां तात्त्विकबद्धभावतया केवलाश्लेषरूपबहिरनुरागप्रकटनेन अपरस्यां नायिकायां गूढविप्रियाचरणात् नायकस्यास्य शठनायकत्वमिति स्पष्टमेव लक्षणोदाहरणम् ।

( २७ ) पुनरपिनायकभेदमेव दर्शयितुमाह—एषाञ्चेति । चोऽत्र किञ्चेत्यर्थे । एषां सर्वेषां शृङ्गारिनायकानां उत्तमाधममध्यमत्वेन त्रैविध्यात् त्रिप्रकारकत्वात् नायकभेदाश्चत्वारिंशत् तथाष्टौ च षोडश त्रैगुण्येनाष्टचत्वारिंशत् ।

( २८ ) विवृणोति—एषामिति । शृङ्गाररसे प्रत्येकत एव धीरोदात्तादीनाञ्चतुर्णां दक्षिणधृष्टादिरूपत्वेन चतुर्विधत्वात् समूहेन ये षोडशभेदा उक्तास्तेषामित्यर्थः । एतद्भिन्ने तु चतुर्विधा एवेति पूर्वमुक्तमेव । अत्रेदमप्यनुसन्धेयम्—कामशास्त्रे दत्तादिजातिभेदेन चतुर्विधो नायकोऽभवतीत्युक्तम् , तथाहि—

"पुनश्चतुर्धा कथितः कामशास्त्रेषु जातितः । दत्तो भद्रः कूचिमारः पाञ्चाल इति सूरिभिः ॥
पद्मिनी वल्लभो दत्तो भद्रः स्याच्चित्रिणीप्रियः ।- पाञ्चालः कूचिमारौ तु पद्मिनी शङ्खिनीप्रियौ"॥

इति मन्दारमन्दे शुद्धबिन्दौ ।

(२९) अथ प्रसङ्गादेतेषां सहायानाह—

**(३०) दूरानुवर्तिनि स्यात्तस्य प्रासङ्गिकेतिवृत्ते तु ।**

**किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्दाख्यः ॥३९॥**

**(३१) तस्य नायकस्य बहुव्यापिनि प्रसङ्गसंगते इतिवृत्तेऽनन्तरोक्तैर्नायकसामान्यगुणैः किञ्चिदूनः पीठमर्दनामा सहायो भवति । यथा–रामचन्द्रादीनां सुग्रीवादयः ।**

(३२) अथ शृङ्गारसहायाः—

**(३३) शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः ।**

( २९ ) एवं नायकभेदान्निरूप्य तत्सहायान् वक्तुमुपक्रमते **अथेति** । अथ भेदसहितनायकनिरूपणान्तरम् , **प्रसङ्गादिति** । नायकविषये किमपरं बोद्धव्यमित्याकाङ्क्षोत्थितेन प्रसङ्गसङ्गतेरित्यर्थः । अत एव प्रकरणेऽस्मिन् नायकसहायप्रतिपादनस्यासङ्गतिर्नेति ध्येयम् । अत्र एतेषामित्यनेन नायकमात्रस्यैव परामर्शो न तु प्रक्रान्तशृङ्गारीयाष्टचत्वारिंशत एव । अत एव रामस्य सुग्रीवसहायो दर्शयिष्यते । एषां हि सहाययुक्तत्वेन कार्यकारित्वेऽधिकरसपरिपोषः । एवमन्यत्र ।

( ३० ) सहायेषु मध्ये पीठमर्दं लक्षयति - **दूरादनुवर्त्तिनीति** । तस्य नायकस्य दूरादनुवर्त्तिनि बहुदेशव्याप्यसाध्ये इत्यर्थः । प्रासङ्गिकेतिवृत्ते प्रसङ्गवशादुत्थापिते चरित्रे यद्वा दैवत उपस्थित इतिवृत्ते वृत्तान्ते किञ्चित् तद्गुणहीनः तस्य नायकस्य गुणैस्त्यागित्वादिभिर्हीनोऽल्प एव प्रायेण तत्समगुणवानेव न त्वत्यन्तं निकृष्टमित्यर्थः । पीठमर्दाख्यः कार्यविशेषेऽधिकृतत्वात्पीठं मृद्नातीति पीठमर्द इत्यन्वर्था संज्ञा । तदाख्यस्तन्नामा अस्य नायकस्य सहायः स्यात् , शृङ्गारातिरिक्तेषु रसेष्विति शेषः । पादपूरणे तु शब्दो बोध्यः । **मालविकाग्निमित्रे** धारिणीदेव्याः शान्तरसादौ कौशिक्यादीनां स्त्रीणामपि पीठमर्दिकात्वदर्शनादत्र अस्येति पुंस्त्वमविवक्षितम् ; तेन स्त्रीणामपि पीठमर्दाख्यसहायो नानुपपन्नः ।

( ३१ ) विवृणोति—**तस्येति** । दूरानुवर्त्तिनीत्यस्यार्थमाह बहुव्यापिनीति बहुदेशव्याप्यसाध्येत्यर्थः । प्रसङ्गसङ्गते प्रसङ्गक्रमेण लब्धे । किञ्चित्तद्गुणहीन इत्यस्यार्थमाह–**अनन्तरेति** । अनन्तरोक्तैः पूर्वोक्तैः नायकसामान्यगुणैस्त्यागित्वकृतित्वादिभिः । सुग्रीवादयः पीठमर्दाः । सीतानयनयादिविस्तृतचरिते साहाय्यविधानादिति भावः । आदिपदेन **मालतीमाधवे**—मकरन्दः ।

( ३२ ) शृङ्गारसहायन् दर्शयितुमाह—**अथेति** । शृङ्गारातिरिक्तनायकसहायनिरूपणानन्तरमित्यर्थः । शृङ्गारसहायाः शृङ्गारे रसे सहाया नायकस्येत्यर्थः । प्रतिपाद्यन्त इति शेषः ।

( ३३ ) तद्दर्शयति—**शृङ्गारेऽस्येति** । भक्ता नायकानुरक्ता नर्मसु परिहासेषु

**भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ॥४०॥**

(३४) आदिशब्दान्मालाकाररजकताम्बूलिकगान्धिकादयः ।

(३५) तत्र विटः—

**(३६) संभोगहीनसंपद्विटस्तु धूर्त्तः कलैकदेशज्ञः ।**

**वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम् ॥४१॥**

(३७) चेटः प्रसिद्ध एव ।

निपुणाः कुपितवधूमानभञ्जनाः कुपितानां वधूनां मानिनीनां मानभङ्गे क्षमाः, शुद्धा नायककार्ये औदासीन्यादिदोषशून्याः परदारगमनदोषरहिता वा विट-चेट-विदूषकाद्या अस्य नायकस्य शृङ्गारे रसे सहाया भवेयुः । अत्रोऽप्यस्येति पुंस्त्वमविवक्षितं तेन नायिकानामपि विटादयः सहायाः स्युरिति बोध्यम् । अत एव वसन्तसेनायाः सहायो विटः **मृच्छकटिके**, कलहंसादिश्चेटः सहायो **मालतीमाधवादौ**, **शकुन्तलादौ च** विदूषकः सहाय इति ध्येयम् ।

**उक्तञ्चाग्न्येये**—पीठमर्दो विटश्चैव विदूषक इति त्रयः ।

शृङ्गारे नर्मसचिवा नायकस्यानुनायकाः ॥ इति ।

( ३४ ) कारिकोक्ताद्यपदं व्याचष्टे—**आदिशब्दादिति** । ताम्बूलिकस्ताम्बूलविक्रयी । गान्धिको गन्धिविक्रयी । वृत्तावादिपदेन मालतीमाधवादौ मकरन्दादिना सुहृदा नायकस्य साहाय्यदर्शनात् सुहृद्वर्गादयो ग्राह्याः । ननु मूले त्वाद्यशब्दोपादानाद्विवरणे चादिशब्दादिति प्रतीकमुपादानमयुक्तमिति चेत् ? सत्यम् , आदौ भव आद्य इत्यस्य प्रकृतित्वादादिशब्दादित्यस्य सङ्गतेः ।

( ३५ ) **तत्रेति** । तत्र विटादिषु मध्ये यथाक्रमं विटः प्रदर्श्यत इति शेषः ।

( ३६ ) विटं लक्षयति—**सम्भोगहीनसम्पदिति** । तु शब्दोऽत्र शृङ्गारससहायगणनभेदज्ञापकः । सम्भोगेन बहुव्ययेन हीना विनाशिता सम्पद्येन सः । अतोऽयं जीविकायै अपरमाश्रयति । धूर्त्तः कूटस्वभावः द्यूतनिरतो वा । कलैकदेशज्ञः, नृत्यादिकलानामेकदेशं जानाति न तु समुदायम् । वेशे वेश्यालये ये उपचारा व्यवहारा स्तेषु कुशलो दक्षः । वाग्मी वक्ता मधुरो मधुरभाषी । अथ गोष्ठ्यां शृङ्गारीयगोष्ठ्यां, "वेश्याभवने सभायामन्यतमस्योदवसिते वा समानविद्याबुद्धिशीलवित्तवयसां सह वेश्याभिरनुरूपालापैरासनबन्धो गोष्ठी इति **वात्स्यायनः** । अन्यतमस्य नागरस्योदवसिते गृहे वा । स्त्रीप्रतिबद्धकलाप्रतिपत्त्यर्थं गोष्ठ्यां वेश्यानामन्तर्भाव इति तद्व्याख्यातारः । बहुमतो लोकैः समाहृतो विटः स्यात् । "विट शब्दे' इति **यशोधरः** । तेन वेश्यानागरिकयोः परस्परं सन्देशं विटति कथयतीति विटः । 'एकविद्यो विटश्चेटः संधानकुशलो मतः । इति ।

( ३७ ) **चेट इति** । "भृत्ये दासेरदासेय-दास-गोप्यकचेटकाः" इत्यमरात् चेटो भृत्यत्वेन प्रसिद्ध एव सर्वलोकविदित एव चेटीपुत्र इत्यर्थः । अत एवास्य

(३८) कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः ।
हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः ॥ ४२ ॥

(३९) स्वकर्म हास्यादि ।

(४०) अर्थचिन्तने सहायमाह—

(४१) (क) मन्त्री स्यादर्थानां चिन्तायां—

(४२) अर्थास्तन्त्रावापादयः ।

(४३) यत्त्वत्र सहायकथनप्रस्तावे—'मन्त्री स्वं चोभयं वापि सखा तस्यार्थचिन्तने' इति केनचिल्लक्षणं कृतम्, तदपि राज्ञोऽर्थचिन्तनो-

लक्षणकथनं नावश्यकमिति भावः। मालतीमाधवादौ चोदाहरणं स्पष्टम् ।

( ३८ ) क्रमप्राप्तं विदूषकं निरूपयति-कुसुमेत्यादि । कुसुमवसन्तादिरभिधा संज्ञा यस्य सः । यत्किञ्चित्पुष्पवाचकशब्दाभिधो वसन्तकालवाचकशब्दाभिधो वेत्यर्थः। आदिनान्यविधाभिधोऽपिग्राह्यः । कुसुमाभिधो विदूषको यथा रसालकादिः । वसन्तकालवाचकशब्दनामा यथा शाकुन्तले माधव्यः । अन्यविधनामा यथा मालविकाग्निमित्रे गौतमः । कर्मणा कार्येण वपुषा शरीरचेष्टाविशेषेणेत्यर्थः, वेशेन वसनभूषणादिना भाषाद्यैर्हास्यकरः सर्वेषां हास्यजनकः । कलहे विवादे रतिरनुरागः, तथा स्वकर्म भोजनादिकं जानातीति स्वकर्मज्ञः, नायकसहायो विदूषकः स्यात् ।

( ३९ ) स्फुटार्थत्वाभावात्केवलं स्वकर्म्म शब्दं व्याचष्टे स्वकर्म्मेति आदिपदेन धनादीनां ग्रहणं बोध्यम् ।

( ४० ) रसीयनायककथनप्रसङ्गादन्यत्रापि सहायमाह—अर्थचिन्तन इति । अर्थानां स्वपरराज्ये कर्त्तव्यानां चिन्तने उपायनिरूपणे ।

( ४१ ) मन्त्रीति । अस्य इति सहाय इति चानुषज्यते । नायकस्य राज्ञः अर्थानां चिन्तायां मन्त्री सहायः स्यादित्यर्थः ।

( ४२ ) कारिकोक्तार्थशब्दं व्याचष्टे—अर्था इति । तन्त्रणं तन्त्रम् । स्वाधीनत्वात्स्वमण्डले क्रियमाणं कर्म्मापि तन्त्रशब्देनोच्यते । आ समन्ताद् वपन्तीतिकर्त्तव्यताबीजमत्रेत्यावापः । "डुवप् बीजसन्ताने" तस्मात् "हलश्च" इति घञ् । परमण्डले क्रियमाणं कर्म्म आवापः । ( तन्त्रं राजकृत्यं तस्य आवापो योग्यायोग्यानुष्ठानमित्यर्थः ) आदिपदेन शत्रुनिग्रहव्यवहारदर्शनादीनां परिग्रहः ।

(४३) नायकसहायकथनप्रस्तावे दशरूपके धनञ्जयोक्तं प्रकरणान्तरीयलक्षणाभिधानं दूषयितुमुपन्यस्यति यत्त्विति । स्वं चेति । स्वं राजा चकारो वार्थः यत्त्व-

( क ) क्वचित् पुस्तके 'मन्त्री स्यादर्थानां चिन्तायां तद्वदवरोधे । इत्यर्धार्धे स्वविवरणगतपद्योजनेन 'मन्त्री स्यादर्थचिन्तायामर्थास्तन्त्रावापादयः। इत्येवमनुष्टपरूपत्वं प्रापितम् 'तथा तद्वदवरोधे' इति खण्डं गद्ये योजितं वर्त्तते ।

पायलक्षणप्रकरणे लक्षयितव्यम्, न तु सहायकथनप्रकरणे।

(४४) नायकस्यार्थचिन्तने मन्त्री सहायः' इत्युक्तेऽपि नायकस्यार्थत एव सिद्धत्वात्।

(४५) यदप्युक्तम्—'मन्त्रिणा ललितः शेषा मन्त्रिष्वायत्तसिद्धयः' इति, तदपि स्वलक्षणकथनेनैव लक्षितस्य धीरललितस्य मन्त्रिमात्रायत्तार्थचिन्तनोपपत्तेर्गतार्थम्। न चार्थचिन्तने तस्य मन्त्री सहायः। किं तु स्वयमेव संपादकः। तस्यार्थचिन्तनाद्यभावात्।

---

त्रेत्यादेर्गतार्थमित्यत्र सम्बन्धः। तस्य राज्ञोऽर्थचिन्तने उपायनिरूपणे मन्त्री केवलो मन्त्री, वा स्वं केवलो राजा उभयश्चापि परस्परं मिलित्वा सखा उपाय इत्यर्थः। अर्थं चिन्तनस्य उपायचिन्तनस्य य उपायास्तेषां प्रकरणे प्रस्तावे लक्षितव्यं तल्लक्षणं विधेयम्। प्राकरणिकत्वात्तथैव कर्त्तुमुचितमिति भावः। नायकस्य सहायकथनप्रकरणे तु न लक्षितव्यमित्यत्रान्वयः। स्वस्य स्वसहायत्वमसम्भवः सहायताया भिन्नव्यक्तिवृत्तित्वादिति भावः।

( ४४ ) नन्वात्मनः सखिशब्दप्रतिपाद्यत्वं न भवितुमर्हति किन्तु केवलमन्त्रिण एवेति चेत्? अत आह-नायकस्यार्थचिन्तन इति। इत्युक्तेऽपि। अनेन प्रकारेणोक्तकारिकार्द्धस्यार्थप्रतिपादनेऽपि। अर्थतः तात्पर्यत एव सिद्धत्वात् गतार्थत्वात्। एवञ्च स्वञ्चेत्यादिकथनं निरर्थकं स्यात् तदनुपादानेऽपि तल्लाभादित्यर्थः। स्वयं चिन्तापक्षे स्वस्य सहकारित्वरूपसहायत्वानुपपत्तेरतः "अर्थचिन्तने मन्त्री सहायः" एतावन्मात्रोक्तावपि स्वस्याप्यर्थचिन्तनप्राप्तत्वात् "स्वञ्चोभयञ्च" इति व्यर्थमेव स्यादिति भावः। अत्र सखिशब्दस्योपायार्थत्वम् न तु सहायपरत्वमित्यवगन्तव्यम्।

( ४५ ) पुनस्तदुक्तं दूषयितुमुत्थापयति-यदप्युक्तमिति। ललितो धीरललितस्तादृशो राजा मन्त्रिणैवार्थसिद्धिरिति शेषः। स्वस्य शृङ्गारनिरतत्वात्। धीरललितस्य राज्ञः कार्यसिद्धिमन्त्र्यायत्तेत्यर्थः। शेषा अवशिष्टा धीरोदात्तादयो राजानः मन्त्रिणा स्वेनात्मना च आयत्ता निघ्ना सिद्धिर्येषान्ते तथोक्ताः। धीरललितव्यतिरिक्तास्त्रयस्त्रिविधाः केचन मन्त्रायत्तसिद्धयः केचन स्वायत्तसिद्धयः केचन चोभयायत्तसिद्धयः। स्वलक्षणकथनेनेति। धीरललितलक्षणकथनेनेत्यर्थः। "निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्" इति धीरललितलक्षणे निश्चिन्तत्वेनार्थचिन्तनस्य मन्त्रिमात्रवृत्तित्वसिद्धेः तस्य मन्त्रिणः सहायकथनं गतार्थमिति भावः। अतो "मन्त्रिणा ललितः" इत्याद्युक्तिर्निरर्थिकैवेति वेदितव्यम्। धीरललितस्य यो मन्त्री तस्य स्वयमेवार्थचिन्तकत्वम्, न तु स्वचिन्तने तस्य सहायत्वमिति स्फुटीकुर्वन्नाह- न चार्थचिन्तनमिति। तस्य धीरललितस्य स्वयमेव मन्त्र्येव निष्पादकः कार्यसम्पादकः, प्रधानकारणमित्यर्थः। तस्यार्थचिन्तनाद्यभावादित्यत्रापि तस्य

(४६) अथान्तःपुरसहायाः—

(४७) तद्वदवरोधे ।

वामनशण्ढकिरातम्लेच्छाभीराः शकारकुब्जाद्याः ॥ ४३ ॥

(४८) मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्तः ।

सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः ॥ ४४ ॥

आद्यशब्दान्मूकादयः । तत्र शण्ढवामनकिरातकुब्जादयो यथा रत्नावल्याम्—

---

धीरललितस्य अर्थचिन्तनाद्यभावात् स्वयं कार्यपर्य्यालोचनाद्यभावात् । तथासति निश्चिन्तत्वकथनमेव व्याकुर्य्येतेति भावः ।

यत्वात्रादेः सन्दर्भस्यायमाशयः-"सहायकथनप्रस्तावे मन्त्रिण एव सहात्वकथनं युक्तम् , नत्वात्मन उभयस्य वा आत्मन एवात्मसहायत्वं विरुद्धम् । किन्तु राजा केनार्थचिन्तनं कुर्यादित्यपेक्षायामेव क्वचिन्मन्त्रिणा क्वचिदात्मना क्वचिदुभयेनेति वक्तुं युक्तम्, धीरललितस्य निश्चिन्तत्वादिरूपकथनेन मन्त्रिमात्रायत्तार्थचिन्तनमुपपद्यते । किञ्च तदप्यर्थचिन्तनोपायप्रकरण एव लक्षितव्यम् , न तु सहायकथनप्रकरणे, धीरललितस्य तस्य न च सहायः सः । मन्त्रिणः सहायत्वे धीरललितस्याप्यर्थचिन्तनप्रसङ्गात्" इति ।

( ४६ ) अथान्तः पुरसहायान्वक्तुमुपक्रमते—अथान्तःपुरेति । नायकस्यान्तःपुरेऽवरोधे सहायाः पर्य्यवेक्षणादिकार्यसाधकाः प्रतिपाद्यन्त इति शेषः । अत्र नायकसहायकथनप्रस्तावे तद्रमणीनामित्युक्तिः केषाञ्चिदविचारितमेवेत्यधेयम् ।

( ४७ ) प्रतिपादयति—तद्वदवरोध इति । तद्वत् तथा अवरोधेऽन्तःपुरे वामनः खर्वस्वरूपः, शण्ढः शाम्यति पौरुषाभावादिति शण्डः 'शमु उपशमे' इत्यस्माड्ढः । मूर्धन्यादिस्तु षणुप्रकृतिकः तत्र अमन्ताड्डः तस्य बाहुलकाड्ढत्वं षस्य सत्त्वाभावश्च । शण्ढः छिन्नोपस्थः क्लीबो वा । किरातो हीनजातिविशेषः, म्लेच्छस्तु प्रसिद्ध एव आभीरो गोपालः शकारो वक्ष्यमाणस्वरूपः कुब्जः कुटिलाकृतिः, तदाद्या नायकस्य अन्तःपुरसहाया इत्यत्र सम्बन्धः ।

( ४८ ) एतेषां मध्ये केवलं शकारस्याप्रसिद्धार्थकत्वेन तमेव निरूपयति—मदेत्यादिना । मदमूर्खताभिमानी मदो गर्वो मद्यविकारो वा मदमूर्खताभ्याभिमानी अहं महानिति ज्ञानवान् , दुष्कुलता नीचवंशोत्पन्नता ऐश्वर्य्यं धनसमृद्धिस्ताभ्यां संयुक्तः सम्बद्धः, अनूढाया अविवाहिताया उपभोग्यायाः स्त्रियाः, भ्राता अत एवास्य सत्कारातिशयेन मदाभिमानयोः सम्भव इति ध्येयम् । अयं सः प्रसिद्धःश्यालः शकार इत्युक्त आलङ्कारिकैरिति शेषः । आद्यशब्दादिति । कुब्जाद्या

(४९) नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तःकञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः।
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः॥

शकारो मृच्छकटिकादिषु प्रसिद्धः।

(५०) अन्येऽपि यथादर्शनं ज्ञातव्याः।

अथ दण्डसहायाः—

(५१) दण्डे सुहृत्कुमाराटविकाः सामन्तसैनिकाद्याश्च।

दुष्टनिग्रहो दण्डः। स्पष्टम्।

---

इत्यत्राद्यशब्दादित्यर्थः। अत्राप्यादिपदेन बधिरान्धादयो ग्राह्याः। यत्त्वत्र स्वभावतः स्त्रीणामनुरागानर्हा वृद्धकुरूपादयस्तत्र अन्तःपुरे विनोदादावेतेषामयोग्यत्वात्।

( ४९ ) वामनादीनुदाहरति—**नष्टमिति**। **रत्नावलीनाटिकायां** वानरवेषेणागच्छन्तं विदूषकमवलोक्यान्तःपुरस्थनपुंसकादीनां भीत्या पलायनमिदम्। मनुष्येषु मध्ये **गणनाभावात्** प्रजोत्पादनशक्त्यभावात् एतेषां मनुष्येषु गणना न भवतीत्याशयः। **त्रपां** पलायनादिजनितां लज्जाम् अपास्य त्यक्त्वा **त्रासाद्भयादिति** सर्वत्र योजनीयम्। **वर्षवरैर्न**पुंसकैः **नष्टं** पलायितम्, **षण्ढो** वर्षवर इति नार्थान्तरम्। **वर्षवरस्य** लक्षणन्तु—

ये त्वल्पसत्त्वाः कुशलाः क्लीबाश्च स्त्रीस्वभाविनः।
जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः॥ इति।

**नाट्यशास्त्रे** स्त्रीपुंसोपचाराध्याये। **अयं** पुरोवर्ती वामनः खर्वाकृतिः पुरुषः **कञ्चुकिनो** वृद्धब्राह्मणस्य **कञ्चुकस्य** सर्वाङ्गव्यापकवस्त्रस्य **अन्तर्**मध्यभागे विशति। **पर्यन्ताश्रयिभिः पर्यन्त**प्रान्तभागमाश्रयन्ति ये तैः प्रान्तवर्तिभिरित्यर्थः, किरातैर्निजस्य नाम्नः **सदृशं** युक्तं **कृतम्** आचरितम्। "कॄ विक्षेपे" इत्यस्मात् **'इगुपधज्ञाप्रीकिरः कः'** इति कप्रत्यये किर इति किरं पर्यन्तदेशमतन्ति सततं गच्छन्तीति पचाद्यच् किरात इति **नाम्नस्तत्सदृशं** विक्षिप्ततया इतस्ततो भ्रमणमित्यर्थः। तथा **आत्मेक्षणाशङ्किनः**-आत्मने **यदीक्षणं** वानरकर्तृकं **दर्शनं** तत्र आशङ्कन्ते इति ते तादृशाः कुब्जा जना न पलायिताः किन्तु **नीचतयैव** स्वभाव खर्वत्वेऽपि पुनः खर्वाकारेण **शनकैर्**मंदं मन्दं **यान्ति** गच्छन्ति। **शार्दूलविक्रीडित** छन्दः।

( ५० ) **अन्येऽपीति**। अन्येऽवशिष्टा अपि म्लेच्छाभीरादयः।

( ५१ ) दण्डसहायान् दर्शयति—**दण्ड** इति। **सुहृदः** सखायः **कुमाराः** पुत्राः, आटविका-**वनचारिणः** सामान्ताः स्वाधिकारान्तर्वर्तिनो नृपाः सैनिकाः सैन्याः आद्यपदेन हिंस्रादयश्च दण्डे दुष्टनिग्रहे नायकस्य सहायाः स्युः। तत्र **रामा-**

(५२) ऋत्विक्पुरोधसः स्युर्ब्रह्मविदस्तापसास्तथा धर्मे ॥ ४२ ॥

(५३) ब्रह्मविदो वेदविदः, आत्मविदो वा ।

अत्र च—

(५४) उत्तमाः पीठमर्दाद्याः—

आद्यशब्दान्मन्त्रिपुरोहितादयः ।

(५५) मध्यौ विटविदूषकौ ।

तथा शकारश्चेटाद्या अधमाः परिकीर्तिताः ॥ ४३ ॥

आद्यशब्दात्ताम्बूलिकगान्धिकादयः ।

**यथादौ**-रामादीनां हनूमदादयः सुहृदः । **महाभारतादौ**-युधिष्ठिरादीनामभिमन्युप्रभृतयः कुमाराः । **आटविकानां** दण्डसहायत्वन्तु-दण्डनीयस्य अटव्यां पलायितस्य प्रदर्शकत्वाद्दण्डनीयविपक्षराज्याटव्यां स्थितत्वात्तद्वृत्तान्तज्ञातत्वाच्च । **यथा मुद्राराक्षसादौ**-कौलूतादयः । **सामन्ताः**-अधीना राजानः **सैनिकाः** सैन्याः आदिना सेनापतिप्रभृतयश्च दण्डे शत्रुविजयादौ नायकसहाया भवेयुः । यथा **मुद्राराक्षसादौ**-मलयकेतुप्रभृतीनां सामन्तादय इति बोध्यम् ।

( ५२ ) धर्मसहायान् दर्शयति-**ऋत्विक्पुरोधस** इति । **ऋत्विज** ऋतिव कर्मणि वृता याज्ञिकाः, **पुरोधसः** पुरोहिताः **ब्रह्मविदः** ब्रह्म वेद तदध्ययनार्थं व्रतमपि ब्रह्म विदन्ति ये ते विप्रदुक्ताः, तथा **तापसाः** तपस्विनश्च धर्म्मे नायकस्य सहायकाः । उदाहरणन्तु क्रमेण यथा-पुत्रेष्ट्यादौ दशरथादीनां ऋष्यश्रृङ्गादयः ऋत्विजः तेषामेव वशिष्ठादयः पुरोधसः **यद्वा युधिष्ठिरादीनां** धौम्यादयः **परीक्षितादीनां** शुकादयो ब्रह्मविदः । विश्वामित्रप्रभृतयस्तापसा दशरथादीनाम् ।

( ५३ ) ब्रह्मशब्दस्य वेदपरत्वम् , आत्मपरत्वं वा "वेदस्तत्त्वं तपो ब्रह्म" **इत्यमरोक्त**दिशा द्विविधमपि भवितुमर्हतीति ध्वनयन्नाह-**ब्रह्मविद** इति । **आत्मविदो** योगिनः ।

( ५४ ) एवं नायकसहायान्निरूप्य तद्भेदान् दर्शयति-**उत्तमा** इति । पीठमर्दस्य नायकतुल्यगुणत्वादुत्तमत्वम् , मन्त्रिपुरोहितादीनान्तु उच्चजातीयत्वाद्विद्यादिगुणवत्वाच्चोत्तमत्वं बोध्यम् ।

( ५५ ) **मध्याविति** । विटश्च विदूषकश्चेति **विटविदूषकौ** तन्नामभाजौ **मध्यौ** मध्यमौ । वाग्मित्वमधुरत्वादिगुणयुक्तत्वाद्धूर्त्तादिदोषवत्वाच्च **विटस्य** मध्यमत्वम् , विश्वस्तादिगुणयुक्तत्वात् कलहप्रियत्वादिदोषयुक्तत्वाच्च **विदूषकस्य** मध्यमत्वम्बोध्यम् मदमूर्खतादिप्रबलदोषयुक्तत्वा**च्छकारस्या**धमत्वम् । अतिनिकृष्टकार्यकरणाच्चे**टताम्बूलिका**दीनामधमत्वमिति ग्रन्थतात्पर्यम् ।

**(५६) अथ प्रसङ्गाद्दूतानां विभागगर्भलक्षणमाह—**

**(५७) निसृष्टार्थो मितार्थश्च तथा संदेशहारकः ।**
**कार्यप्रेष्यस्त्रिधा(क)दूतो दूत्यश्चापि तथाविधाः ॥४७॥**

**(५८) तत्र कार्यप्रेष्यो दूत इति लक्षणम् ।**

**तत्र—**

**(५९) उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।**

---

( ५६ ) नायकसहायकार्ये दूतस्यापि सहायविशेषत्वेनानुपेक्षणीयत्वात्तल्लक्षणं विभागकथनञ्चावश्यकमिति प्रसङ्गात् तत्प्रतिपिपादयिषन्नाह—**अथेति** । **प्रसङ्गात्** नायकसहायकथनप्रस्तावरूपप्रसङ्गात् । **विभागगर्भलक्षणमिति** । विभागो गर्भे मध्ये यस्य तत्तादृशञ्च लक्षणं स्वरूपञ्चेति तत्तथोक्तम् ।

( ५७ ) **निसृष्टार्थ इति** । **दूतल**क्षणन्तु "कार्य्यप्रेष्यो दूत" इत्येतावन्मात्रम् । स च **त्रिविधः**—निसृष्टार्थो मितार्थः सन्देशहारकश्च । तथाविधास्त्रिप्रकारा दूत्यश्चापि भवन्तीति शेषः । **यथा**-निसृष्टार्था मितार्था सन्देशहारिका चेति ।

( ५८ ) **तत्रेति** । कार्यप्रेष्यः कार्य्याय वार्त्ताप्रापकाय तदानयनाय वा प्रेष्यः नियोज्यः । यस्य प्रेषणमेव प्रधानकर्म तादृशः प्रेष्य इत्यनेन नियोज्यो लभ्यते । अत एव कमप्यानयितुं गतस्यापि दूतत्वमिति बोध्यम् ।

( ५९ ) निसृष्टार्थादीनां क्रमेण लक्षणं निरूपयति-**उभयोरिति** । उभयोरित्यस्य वृत्तावेव विवरणं स्पष्टम् । **भाव**मभिप्रायं **स्वय**मात्मनैव उन्नीय ऊहित्वा

---

(क) अथ प्रसङ्गाद्दूतानां गुणकथनमपि युक्तमिति मत्वा तान् प्रतिपाद्यते—

"आत्मवान् मित्रवान् युक्तो भावज्ञो देशकालवित् ।
अभ्यासमप्ययत्नेन कार्यं संसाधयेन्नरः" ॥

आत्मनि स्थापितगुणत्वादात्मवान् । सहायविमर्शेन मित्रवान् । युक्त इति राजवृत्ताचरणेन युक्तः स्वकर्मतत्पर इत्यर्थः ।

एवं पटुता धाष्टर्यम्, इङ्गिताकारज्ञता, प्रतारणकालज्ञा विषह्यबुद्धित्वं लघ्वी प्रतिपत्तिः सोपायाचेति दूतगुणा ज्ञेयाः ।

एवमेव दूतीविशेषा अपि अन्यत्र प्रतिपादिताऽति संक्षिप्ततयात्र निरूप्यते । तथाहि- निसृष्टार्था परिमितार्था, पत्रहारी, स्वयंदूती, भार्यादूती, मूढदूती, मूकदूती, वातदूती चेति ।

"तत्रोभयोर्भावमुन्नीय' इत्यादिना नायकलक्षणलक्षितैवात्रापि निसृष्टार्था बोध्या यथा मालतीमाधवे-लवङ्गिकादिः । परिमितः परिच्छिन्नोऽर्थोः यस्याः सा परिमितार्था यथा शाकुन्तले-मिश्रकेशी मेनकायाः परिमिताख्या दूती कार्यस्य स्थिरत्वात् सन्देशमात्रं पत्रेण वाचा वा प्रापयतीति पत्रहारी । अन्यासां लक्षणान्याकरतो ज्ञेयानि विस्तरभयान्नेह प्रतन्यते ।

सुश्लिष्टं कुरुते कार्यं निसृष्टार्थस्तु स स्मृतः ॥ ४८ ॥

उभयोरिति येन प्रेषितो यदन्तिके प्रेषितश्च ।

(६०) मितार्थभाषी कार्यस्य सिद्धकारी मितार्थकः ।

यावद्भाषितसंदेशहारः संदेशहारकः ॥ ४९ ॥

(६१) अथ सात्त्विकनायकगुणाः—

(६२) शोभा बिलासो माधुर्यं गाम्भीर्यं धैर्यतेजसी ।

ललितौदार्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः ॥ ५० ॥

तत्र—

(६३) शूरता दक्षता सत्यं महोत्साहोऽनुरागिता ।

---

उत्तरं वदति । उभाभ्यां कथनादतिरिक्तविषये उभयोरपि जातप्रश्ने तयोरिङ्गितं मुखावलोकादिनानुमाय उत्तरं प्रतिवादवाक्यं वदतीत्यर्थः । कार्यञ्च **सुश्लिष्टं** सुशोभनं कुरुते सम्पादयति **स** निसृष्टार्थः स्मृतः कथितः **निसृष्टः** स्वप्रज्ञास्वभावेनैव निष्पादितः अर्थः स्वामिप्रयोजनं येन सो निसृष्टार्थः । महाप्रज्ञाशालित्वात् सुश्लिष्टकार्य्यकारित्वाचायं सर्वदूतेषूत्तमः । **शिशुपालवधे** शिशुपालेन श्रीकृष्णसविधे प्रेषितो निसृष्टार्थो दूतः ।

( ६० ) अथ मितार्थसन्देशहारकयोरेकयैव कारिकया स्वरूपं निरूपयति—**मितार्थभाषीति** । **मितार्थभाषी** अल्पभाषी, अपि च कार्यस्य सिद्धिकारी सम्पन्नताविधायी मितार्थको नाम दूतः स्यादिति शेषः । अयञ्च नोत्तमः निसृष्टार्थवत्प्रज्ञाशीलत्वाभावात् किन्तु कार्यसिद्धिकारित्वान्मध्यमो दूतः । **यथा किराते**—दुर्योधनवृत्तान्तमादाय समागतो वनेचरः । **यावद्भाषितसन्देशहारकः** स्वामिना यावदुक्तं तावदेव सन्देशं हरति नयतीति तथोक्तः सन्देशहारको दूतः । कार्यसिद्धिकरत्वाभावादस्य दूतेष्वधमत्वम् । अयञ्च नन्दनप्रेषितः पुरुषो **मालतीमाधवे** द्रष्टव्यः । सन्देशहारिका दूत्यपि एवं लक्षणलक्षितैव सा च **मालविकाग्निमित्रे** इरावती सविधे धारिणी प्रेषिता नागरिकी ।

( ६१ ) एतावता नायकस्य सहायानुक्त्वा सत्त्वगुणप्रधाननायकगुणा आह—**अथेति** । सात्त्विका सत्त्वगुणाज्जाताः **यद्वा** सत्त्वं बलं, **सात्त्विका** नायकगुणा बलवन्नायकगुणा इत्यर्थः । **यद्यपि** स्तम्भस्वेदादीनां सात्त्विकत्वमग्रे वक्ष्यति **तथापि** ते नायकस्य नायिकायाश्च भवन्ति एते शोभादयः पुनर्नायकस्यैवेति विशेषः । एतच्च कारिकायां **पौरुषा** इति प्रतिपादनेन स्फुटीकृतम् ।

( ६२ ) **शोभेत्यादि** । एतद्व्याख्यानं प्रतिलक्षणेनैवानुसन्धेयम् ॥

( ६३ ) अथ क्रमेण शोभादीनां मध्ये प्रथमं शोभां लक्षयति-**शूरतेति** । **यतः**-

**नीचे घृणाधिके स्पर्धा यतः शोभेति तां विदुः ॥५१॥**

**तत्रानुरागिता यथा—**

**(६४) अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।**
**उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥**

**(६५) एवमन्यदपि ।**

यस्माद्धेतोः नायकस्य शूरता वीरत्वम् , दक्षता सर्वकर्मसु कुशलता सत्यं वाचा कर्मणा वा सत्यव्यवहारः, महोत्साहो गुरुतरोद्योगः, अनुरागिता जनेषु प्रेमवत्त्वम्, नीचे क्षुद्रे घृणा दया, अधिके प्रबले स्पर्धा विजिगीषा जायते अतस्तां शोभेति विदुस्ता शोभा वदन्तीत्यर्थः । केवलानुरागितायामेवोदाहृतत्वात् शूरतादीनामन्यतमत्वमेव शोभात्वमिति लक्षणं **ग्रन्थ**कर्त्तुरभिप्रायः ।

( ६४ ) शोभादिषु **अनुरागिता**मुदाहरति—**अहमेवेति** । रघुवंशे अजवर्णनमिदम् । प्रकृतिषु अमात्येषु प्रभृतिषु मध्ये सर्व एव जनः, 'अहमेव महीपतेरजस्य मतः स्नेहपात्रतया सम्मतः इति इत्थमचिन्तयत् । चिन्ताया बीजमुपन्यस्यति—**उदधेरिति** । निम्नगाशतेषु नदीसमूहेषु उदधेः पयोधेरिव क्वचिदपि जने अस्य **अ**जस्य विमानना अवज्ञा अपमानमित्यर्थः नाभवत् कमपि जनं नापमानितवान् अजः, अपि तु समादृतवानेव सर्वम् अतो ह्येतादृशी चिन्ता सम्भवत्येवेत्यर्थः । यथा नाना देशागतासूच्चावचासु सरित्सु सरित्पतेरेकाकारतया प्रेमभेदो न लक्ष्यते तथा महीपतेरजस्यापि प्रजासु क्वापि जने विमाननावतारो नालक्ष्यतेति भावः । एतेन अज अनुरागितारूपशोभाख्यगुणवानासीदिति ध्वनितम् **सुन्दरी** वृत्तम् । "अयुजोर्यदि सौ जगौ युजोः सभरालगौ यदि सुन्दरी तदा ।" इति लक्षणात् ।

( ६५ ) **एवमिति** । अन्यच्छूरतादिष्वपि एवमुदाहरणमूहनीयमित्यर्थः ।

तत्र **शौर्यशोभा** यथा—

अन्त्रैः स्वैरपि संयताग्रचरणो मूर्च्छाविरामक्षणे
स्वाधीनव्रणिताङ्गशस्त्रनिचितो रोमोद्गमं वर्मयन् ।
भग्नानुद्बलयन्निजान् परभटान्संतर्जयन्निष्ठुरं
धन्यो धाम जयश्रियः पृथुरणस्तम्भे पताकायते ॥ इति ॥

**दक्षशोभा** यथा **वीरचरिते—**

स्फूर्जद्वज्रसहस्रनिर्मितमिव प्रादुर्भवत्यग्रतो
रामस्य त्रिपुरान्तकृद्दिविषदां तेजोभिरिद्धं धनुः ।
शुण्डारः कलभेन यद्वदचले वत्सेन दोर्दण्डक-
स्तस्मिन्नाहित एव गर्जितगुणं कृष्टं च भग्नं च तत् ॥ इति ।

अथ विलासः—

**(६६) धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः ।**

यथा—

**(६७) दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा**
**धीरोद्धता नमयतीव गतिर्धरित्रीम् ।**
**कौमारकेऽपि गिरिवद्गुरुतां दधानो**
**वीरो रसः किमयमेत्युत दर्प एव ॥**

**(६८) संक्षोभेष्वप्यनुद्वेगो माधुर्यं परिकीर्तितम् ॥ ५२ ॥**

---

नीचे **घृणा** यथा तत्रैव—

उत्तालताड़कोत्पात दर्शनेऽप्यप्रकम्पितः ।
नियुक्तस्तत्प्रमाथाय स्त्रैणेन विचिकित्सति ॥ इति ।

गुणाधिकैः **स्पर्धा** यथा—

एतां पश्य पुरःस्थलीमिह किल क्रीड़ाकिरातो हरः
कोदण्डेन किरीटिना सरभसं चूड़ान्तरे ताड़ितः ।
इत्याकर्ण्य कथाद्भुतं हिमनिधावद्रौ सुभद्रापते-
र्मन्दं मन्दमकारि येन निजयोर्दोर्दण्डयोर्मण्डलम् ॥ इति ।

( ६६ ) **विलासं** लक्षयति—**धीरेति ।** विलासे सात्त्विके गुणे सति पुरुषस्य दृष्टिर्विलोकनम्, धीरा चञ्चलरहिता गतिर्गमनं चित्रा आश्चर्य्य, वचो वचनं सस्मितं स्मितं मन्दहासस्तेन सह वर्त्तते तत्तादृशं भवति । धीराद्यन्यतमजनकत्वं विलासत्व-मिति सामान्यलक्षणमेतेनायातम् ।

( ६७ ) **विलास**मुदाहरति—**दृष्टिस्तृणीकृतेति । उत्तरराम**चरिते कुशवलोक्य श्रीरामचन्द्रेण वर्णनमिदम् । दृष्टिः अस्य कुमारस्य दृष्टिपातः तृणीकृतस्तुच्छी-कृतो जगत्त्रयस्य सत्त्वानामुत्साहानां सारो वलञ्च यया सा । "सारो वले स्थि-राशे च न्याय्यं क्लीवे वरे त्रिषु" इत्यमरः । धीरा मन्थरा व्यग्ररहितेति यावत् उद्धता उद्भटा च गतिः पादन्यासः, धरित्रीं पृथिवीं नमयतीव एतेन गतेश्चि त्रत्वं नैकरूपत्वञ्च सूचितम् । कौमारके कैशोरिकेऽपि वयसि गिरिवत् पर्वत इव गुरुतां भारवत्त्वं दधानो धारयन् अयं शिशुः किं वीरो रसः उत अथवा एष दर्प एति आकृतिमानहङ्कार आयाति । **अत्र** वीररसत्वेन दर्पत्वेन चोल्लेखो हि नाय-कस्य उत्साहदर्पयोरतिशयद्योतनाय । धीरदृष्टिराश्चर्यगतिजनकरूपो विलासः कुशस्य श्लोकेन प्रतिपादितो भवति । **वसन्ततिलकं** छन्दः । उक्ता वसन्ततिलका तभजा-जगौ गः" इति लक्षणात् ।

( ६८ ) **माधुर्यं** लक्षयति—**संक्षोभेष्विति ।** संक्षोभेष्वपि उद्वेगकारणेषु

(६९) ऊह्यमुदाहरणम्—

(७०) भीशोकक्रोधहर्षाद्यैर्गाम्भीर्यं निर्विकारता।

यथा—

(७१) आहूतस्याभिषेकाय विसृष्टस्य वनाय च।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः॥

विकारहेतुषु सत्स्वपि अनुद्वेगो माधुर्य्यं परिकीर्त्तितं सङ्क्षोभाभावः कथितम्।

( ६९ ) ऊह्यमिति। तदुदाहरणं यथा—

'त्यजतो मङ्गलक्षौमे चीरे च प्रतिगृह्णतः।
ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः॥

अत्र हि मङ्गलक्षौमे गृह्णतः चीरे प्रतिलक्षीकृत्य त्यजतश्च रामस्य मुखरागं विस्मिता जनाः समानं ददृशुः इत्यनेन वनवासार्थं चीरग्रहणसंक्षोभेऽपि मङ्गलक्षौम-ग्रहणवद् अनुद्वेगः।

( ७० गाम्भीर्यं लक्षयति—भीशोकेति। भीर्भयम्, शोक इष्टमरणादिना चेतसो व्याकुलता, क्रोधोऽपकारादिना तदनिष्टाय चित्तक्षोभः, हर्ष इष्टाभ्युदया-दिना चित्तविकारः, तदाद्यैस्तथोक्तैः आद्यपदेन मोहादेः परिग्रहः। निर्विकारता विकारराहित्यं गाम्भीर्य्यम्। भयशोकयोरत्र प्रवेशात् माधुर्य्यतः कियान् भेदः। न-न्वत्र उद्वेगोऽपि विकारविशेषस्तर्हि अनुद्वेगनिर्विकारयोरैक्यापत्तिरिति चेन्मैवम्, तस्य हि चित्तविकाररूपत्वात् अत्र तु विकारपदेन आकृतिविकारस्यैव ग्रहणात्। एतेन माधुर्य्यगाम्भीर्ययोः स्पष्टभेदो विद्यते इति धीधनैरवगन्तव्यः।

( ७१ ) गाम्भीर्य्यमुदाहरति-आहूतस्येति। राज्याभिषेकसमये श्रीरामं सा-क्षात्कुर्वतः कमपि प्रतिकस्यचिदुक्तिरियम्। राज्येऽभिषेकाय अभिषेको युवराजपदे नियोक्तुमाभ्युदयिकः कर्म्मविशेषस्तस्मै तं सम्पादयितुमित्यर्थः, आहूतस्य अनन्त-रमेव च वनाय विसृष्टस्य परित्यक्तस्य तस्य रामस्य स्वल्पोऽपि आकारो मुख-नेत्रादिः तस्य विभ्रमो वैपरीत्यं विकार इति यावत्, येन हर्षशोकादयो लक्ष्यन्ते तन्मया न लक्षितो ज्ञातः। उदाहरणञ्चेदं माधुर्यस्यापि भवितुमर्हति अतो माधुर्य्या-संकीर्णं गाम्भीर्योदाहरणमिदम्—

"योऽविकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः।
आत्मपक्षपरिपूरितेजगत्यस्य नित्यसुखिनः कुतो भयम्॥ इति।

इयं तपस्यतः परमेश्वरेण भीषितस्य कस्यचिदुक्तिः। अविकल्पं निःसंशयं निखिलमर्थमण्डलं यो भगवद्वपुः स्वरूपं पश्यति आत्मपक्षेण भवता परिपूरिते जगति अस्य कुतो भयमित्यर्थः। यथा वा "न खल्वनिर्जित्य रघुं कृती भवान्' इतीन्द्रेण भीषितस्य रघोरुक्तिः।

**(७२) व्यवसायादचलनं धैर्यं विघ्ने महत्यपि ॥ ५३ ॥**

**यथा—**

**(७३) श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव ।**
**आत्मेश्वराणां नहि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥**

**(७४) अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् ।**
**प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥ ५४ ॥**
**वाग्वेशयोर्मधुरता तद्वच्छृङ्गारचेष्टितं ललितम् ।**
**दानं सप्रियभाषणमौदार्य्यं शत्रुमित्रयोः समता ॥**

**(७५) एषामुदाहरणान्यूह्यानि ।**

---

( ७२ ) धैर्यं निरूपयति **व्यवसायादिति** । महत्यपि विघ्ने आगतेऽपि व्यवसायात् उद्यमात् प्रारब्धकर्मण इत्यर्थः अचलनं अप्रच्यवनं धैर्यम् ।

( ७३ ) धैर्यमुदाहरति–**श्रुताप्सरोगीति**रिति । **कुमारसम्भवस्य** तृतीयसर्गस्थपद्यमिदम् । अस्मिन् क्षणे वसन्तप्रकटनकाले हरो महादेवः, श्रुता आकर्णिता अप्सरसां स्वर्गणिकाना गीतिः स्मरोद्दीपकं गानं येन सः तथोक्तः सन्नपि, प्रसंख्यानं समाधिस्तत्परो बभूव । हरस्य समाधिभङ्गार्थमप्सरस्सु गीयमानास्वपि तस्य समाधिभङ्गो नाभूदित्यर्थः । अत्रार्थान्तरन्यासमाह–**आत्मेश्वराणामिति** । हि यस्मात् विघ्नाः आत्मेश्वराणाम् "आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च" इति **कोशात्** आत्मा धृतिस्तदीश्वराणां स्वायत्तधृतीनामित्यर्थः । जितेन्द्रियेणां मनोनिरोधक्षमानामिति भावः, जातु कदाचिदपि समाधिभेदे योगभ्रंशने प्रभवः समर्था न भवन्ति । **अत्र** अप्सरसां गानश्रवणरूपे महाविघ्ने समुत्पन्नेऽपि हरस्य योगादच्युतरूपं धैर्यं व्यञ्जितम् । **उपेन्द्रवज्रयेन्द्र**वज्रयोपजातिवृत्तम्, "अनन्तरोदितिलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति **तल्लक्षणात्** ।

( ७४ ) तेजो निरूपयति—**अधिक्षेपापमाने**ऽपीति । परेण शत्रुणा प्रयुक्तस्य कृतस्य अधिक्षेपापमानादेः अधिक्षेपो भर्त्सनम् अपमानः पराभवः आदिपदेन अन्यप्रकारकापकारश्च तस्य प्राणात्ययेऽपि जीवननाशसम्भावनेऽपि यत् असहनं तत् तेजः समुदाहृतम् उक्तम् । वाग्वेशयोर्मधुरता माधुर्य्यम् तद्वत् मधुरताशालि शृङ्गारचेष्टितं कामुकव्यापारः ललितम् एतेषामेकैकमेव ललितमित्यर्थः । सप्रियभाषणं प्रियवचनसहितं दानं शत्रुमित्रयोः समता तुल्यदर्शिता च औदार्य्यम् । अनयोरपि प्रत्येकमौदार्य्यं बोध्यम् । अत्र **गीति**श्छन्दः ।

( ७५ ) **एषामपीति**। एषां तेजोललितौदार्य्याणाम् । ऊह्यानि गवेषणीयानि ।

**(७६) अथ नायिका त्रिभेदा स्वान्या साधारणा स्त्रीति।**
**नायकसामान्यगुणैर्भवति यथासंभवैर्युक्ता ॥५६॥**

**(७७) नायिका पुनर्नायकसामान्यगुणैस्त्यागादिभिर्यथासंभवैर्युक्ता भवति। सा च स्वस्त्री अन्यस्त्री साधारणस्त्रीति त्रिविधा। तत्र स्वस्त्री—**

**(७८) विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया।**

**तत्र तेजस** उदाहरणं यथा—

"पुरोजन्मा नाद्य प्रभृति मम रामः पुनरहं
न पुत्रः पौत्रो वा रघुकुलभुवां च क्षितिभुजाम्।
अधीरं धीरं वा फलयतु जनो मामयमहो
मया बद्धो दुष्टद्विजदमनदीक्षा परिकरः॥

इयं परशुरामेणाधिक्षिप्तस्य लक्ष्मणस्य उक्तिः। **ललितो**दाहरणं यथा—
प्रसादे वर्त्तस्व प्रकटय मुदं संत्यज रुषं प्रिये ? शुष्यत्यङ्गान्यमृतमिव ते सिञ्चतु वचः।
नधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं न मुग्धे ? प्रत्येतुं प्रभवति गतः कालहरिणः॥

**अत्र** हि कामिनो वाङ्मधुरता शृङ्गारचेष्टा च।

**औदार्यो**दारणं यथा—

"एते वयममी दाराः कन्येयं कुलभूषणा।
ब्रूत केनार्थिनो यूयमनास्था बाह्यवस्तुषु" ॥ इति।

सप्तर्षीन्प्रतिहिमालयस्योक्तिः।

( ७६ ) पूर्वं 'आलम्बनं नायकादिः" इत्यत्रादिपदेन नायिकादयः परिगृहीताः तत्र क्रममाप्तमधुना नायिकां निरूपयितुमाह-**अथेति**। अथ सहायादिसहितनायक-निरूपणानन्तरं लक्षणीया नायिकेत्यर्थः। यथासम्भवैर्नायकसामान्यगुणैर्युक्ता स्त्री नायिकेति नायिकालक्षणम्। **अत्र** यथासम्भवैरित्युक्त्या दक्षतोत्साहतेजांसि नायि-कानां न वर्णनीयानि। नायकगुणानां मध्ये त्रयाणामेव दक्षतेत्यादीनां नायिका-यामनभिलषितम्, अत एव दक्षतादयो नायकस्यैव सात्त्विका गुणा निरूपिताः। सा चेत्थं नायिका त्रिभेधा स्त्रीति सर्वत्रान्वेति। तथा च स्वा स्वकीया "स्वः स्यात् पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये स्त्रियां धने।" इति **मेदिनी**। अन्या परकीया स्त्री साधारणी सर्वोपभोगयोग्या स्त्री च।

( ७७ ) एतदेव विवृणोति-**नायिकेति**। त्यागादिभिरित्यत्रादिपदेन "त्यागी कृती कुलीनः" इत्यादिनायकगुणोक्तानामुत्साहदक्षतातेजोरहितानां सर्वेषामेव गुणा-नां परिग्रहः।

( ७८ ) तत्र क्रमप्राप्तां स्वीयां लक्षयति—**विनयेति**। विनयार्जवादियुक्ता

यथा—

(७९) "लज्जापज्जत्तपसाहणाइँ परभत्तिणिप्पिवासाइं ।
अविणअदुम्मेधाइं धण्णाण घरे कलत्ताइं ॥"

**(८०) सापि कथिता त्रिभेदा मुग्धा मध्या प्रगल्भेति ॥५७॥**

तत्र—

**(८१) प्रथमावतीर्णयौवनमदनविकारा रतौ वामा ।**

विनयो नम्रता आर्जवं सरलता आदिना सदाचारादिगुणाना परिग्रहः तैर्युक्ता, गृहकर्मपरा गृहस्थोपयोगिकार्यतत्परा, पतिव्रता एकपत्नी, सतीत्यर्थः, **पति**व्रता नाम—

"आर्त्तार्त्ते मुदिता हृष्टा प्रोषिते मलिना कृशा ।
मृतौ म्रियेत या पत्युः सा स्त्री ज्ञेया पतिव्रता" ॥

एतादृशलक्षणलक्षिता स्त्री स्वीया स्वकीया नायिका । **अत्र** विनयार्जवादीत्युक्त्या अविनीतादीनाम्, गृहकर्म्मपरेत्यनेन तटस्थायाः, पतिव्रतेत्यनेन कुलटाया व्यावृत्तिः । विनयेत्यादिलक्षणकरणात् स्त्रीविशेषाणामेव स्वीयात्वमभ्युपगम्यते नत्वविनीतादिदोषयुक्तानां स्त्रीत्वेऽपि स्वीयात्वम्, अन्यथा "स्वस्त्री स्वीया" इत्येवतावल्लक्षणं वदेत् । **अयमत्र**सारः—एतादृशगुणरहिता तु स्वस्त्री अपि नोपक्रान्तशृङ्गारविभावः किन्तु तदाभासविभाव एवेति बोध्यम् । **यद्यप्यत्र** प्रथमचरणे द्वादशमात्राया अभावादार्याभङ्गः, तथापि सूत्रप्रायत्वान्न दोष इति ध्येयम् ।

( ७९ ) स्वीयोदाहरणं दर्शयति—**लज्जेति** ।

लज्जापर्य्याप्तप्रसाधनानि परभर्तृनिष्पिपासानि ।
अविनयदुर्मेधानि धन्यानां गृहे कलत्राणि ॥ इति संस्कृतम् ।

पतिव्रतां प्रसंशतः कस्यचिदुक्तिरियम् । लज्जैव पर्य्याप्तं यथेष्टं प्रसाधनं भूषणं येषां तानि । "आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्" इत्यमरः । परभर्तृषु अन्यासां पतिषु निष्पिपासानि निःस्पृहाणि तत्सौभाग्यभागायालुब्धानीत्यर्थः । अविनयदुर्मेधानि अविनयस्य दुर्मेधान्यनभिज्ञानि कलत्राणि स्त्रियः धन्यानां जनानां गृह एव भवन्ति । **आर्य्या** छन्दः ।

( ८० ) एवं स्वकीयायाः स्वरूपमुपपाद्य भेदात्मनाऽवस्थामुपपादयति—**सापीति** । स्वीयाऽपि मुग्धा, मध्या, प्रगल्भा, इतीत्थं त्रिभेदा त्रिप्रकारा, अपिना अन्यदीया साधारणस्त्री च त्रिविधा भवतीति केचिद् वदन्ति ।

( ८१ ) तत्र यथाक्रमं मुग्धां लक्षयति—**प्रथमावतीर्णेति** । यौवनञ्च मदनविकारश्चेति यौवनमदनविकारौ प्रथमावतीर्णौ अभिनवोन्मेषौ यौवनमदनविकारौ तारुण्यानङ्गविभ्रमौ यस्याः सा तथोक्ता । समासेऽपि द्विविधत्वमत्रविवक्षितमिति

**कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥९८॥**

**तत्र प्रथमावतीर्णयौवना यथा मम तातपादानाम्—**

**(८२) मध्यस्य प्रथिमानमेति जघनं, वक्षोजयोर्मन्दता**
**दूरं यात्युदरं च, रोमलतिका नेत्रार्जवं धावति ।**
**कन्दर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणा-**
**दङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः ॥**

बोध्यम् । तेन प्रथमावतीर्णयौवना, प्रथमावतीर्णमदनविकारेति द्विधा । एतानि विशेषणानि एकैकान्येव मुग्धाया बोध्यानि, **रतौ वामा** सुरते प्रतिकूला,

"सकम्पा चुम्बते वक्त्रं हरत्येषोपगूहिता ।
परावृत्य चिरं तल्प आस्ते रन्तुञ्च वाञ्छति ॥"

**इत्युक्त**दिशा रतौ वामात्वमवधेयम् । माने मृदुः प्रणयकोपेऽपि कोमला न तु मध्यादिवत्तीक्ष्णस्वभावा ।

"अन्यां निषेवमाणेऽपि यदि कुप्यति सा प्रिये ।
रोदित्यस्याग्रतःस्वल्पमनुनीता च तुष्यति ॥"

**इत्युक्त**दिशा माने मार्दवमवधेयम् । **समधिकलज्जावती** चेति पञ्चविधत्वं मुग्धायाः क्रमेणोदाहरणप्रदर्शनेन ग्रन्थकारस्यैवाभिप्रेतम् । एतेन लक्षणगर्भा मुग्धाया विभागाः प्रदर्शिताः । नामानुरूपाण्येव लक्षणानि बोध्यानि । अत्र अङ्कुरितानङ्गवन्नायिकात्वं मुग्धात्वमिति **मुग्धायाः** सामान्यलक्षणं बोध्यम् ।

( ८२ ) प्रथमावतीर्णयौवनामुदाहरति-**मध्यस्येति** । नूतनं यदस्या मनोराज्यं मनस्याधिपत्यं तत्राभिषिक्तं कन्दर्पं परिवीक्ष्य सुभ्रुवः सुन्दरभ्रूयुगशालिन्या नायिकाया अङ्गानि कर्तॄणि, परस्परं निर्लुण्ठनं परस्परवस्त्वपहरणं विदधते कुर्वन्तीव राज्ञः प्रथमाधिपत्यदिनेऽराजके राज्ये प्रजाः हर्षेण परस्परं द्रव्यं लुठन्तीति व्यवहारः । तद्दर्शयति-**मध्यस्येति** । जघनं कर्तृ, शैशवे मध्यस्य कटिदेशस्य प्रथिमानं स्थूलत्वमेति प्राप्नोति यौवने च मध्यभागे या विशालतासीत्सा जघनेन लुण्ठिता तेन तद्विशालं जातम् , एवं जघने यत्कार्श्यं तन्मध्यभागेन लुण्ठितं तेन स कृशो जात इति भावः । **वक्षोजयोः** कुचयोः मन्दता अल्पता कर्त्री, दूरमतिशयमुदरं याति प्राप्नोति, उदरस्थौल्यं निर्लुण्ठितं सत् कुचयोर्जातम् , कुचयोश्च कार्श्यमुदर इति भावः । तथा **रोमलतिका** रोमश्रेणी नेत्रयोरार्जवं शैशवकालिकसरलतां धावति प्राप्नोति रोमलता कौटिल्यं नेत्रयोः संगतम् , नेत्रयोः सारल्यं रोमलतायामिति भावः । अत्र जघनस्थूलतादिप्राप्त्यारम्भवर्णनेन प्रथमावतीर्णयौवनात्वं द्योतितम् । **शार्दूलविक्री**डितं छन्दः । तल्लक्षणं तु "सूर्य्याश्वैर्मसजस्तताः सगुरुवः शार्दूलविक्रीडितम्" । इति ।

प्रथमावतीर्णमदनविकारा यथा मम प्रभावतीपरिणये—

(८३) दत्ते सालसमन्थरं भुवि पदं, निर्याति नान्तःपुरात्,
नोद्दामं हसति, क्षणात्कलयते ह्रीयन्त्रणां कामपि,
किंचिद्भावगभीरवक्रिमलवस्पृष्टं मनाग्भाषते,
सभ्रूभङ्गमुदीक्षते प्रियकथामुल्लापयन्तीं सखीम् ॥

रतौ वामा यथा—

(८४) 'दृष्टा दृष्टिमधो ददाति, कुरुते नालापमाभाषिता,
शय्यायां परिवृत्य तिष्ठति, बलादालिङ्गिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते,
जाता वामतयैव संप्रति मम प्रीत्यै नवोढा प्रिया ॥'

( ८३ ) एवं प्रथमावतीर्णयौवनात्वमुदाहृत्य प्रथमावतीर्णमदनविकारामुदाहरति—**दत्त इति**। सा प्रभावती भुवि पृथिवीतले अलसवन्मन्थरं मंदं च यद्वा सालसं मन्थरं च यथास्यात्तथा पदं चरणं दत्तेऽर्पयति अन्तःपुरात् न निर्य्याति न निर्गच्छति । उद्दाममुत्कटं न हसति क्षणात् प्रतिक्षणं कामप्यनिर्वचनीयां ह्रीयन्त्रणां ह्रियो लज्जायाः यन्त्रणां बन्धनता तथोक्ताम्, कलयते अनुभवति प्रकाशयति वा किञ्चिद्भावेन केनापि निगूढाप्रियेण गभीरं दुरवगाहं वक्रिम्णा कुटिलतया लवमल्पत्वं स्पृष्टं यथास्यात्तथा मनाक् शनैः किञ्चिदल्पं भाषते तथा प्रियस्य पत्युः कथा प्रसङ्गम् उल्लासयन्तीं प्रस्तुवन्तीं सखीं सभ्रूभङ्गं यथास्यात्तथा उदीक्षते मुखमुन्नमय्य पश्यति । **अत्राङ्कुरितस्यापि** कामस्य तत्समयाविकलज्जया ह्रीयन्त्रणामित्यनेन अन्तर्धानसूचनात् प्रियकथोत्थापनात् सभ्रूभङ्गावलोकनेन कामाभिलाषसूचनाच्चास्याः प्रथमावतीर्णमदनविकारत्वमभ्युपगन्तव्यम् । **उक्तं** छन्दः ।

( ८४ ) रतौ वामामुदाहरति—**दृष्टा दृष्टमिति** । नवोढाया वृत्तं सख्ये कथयत उक्तिरियम् । नवोढा नव परिणीता प्रिया मया दृष्टा अवलोकिता सत्येव दृष्टिम् अधो ददाति अर्पयति, आभाषिता आलपिता सती आलापं न कुरुते शय्यायां परिवृत्य मद्दिशि पृष्ठं कृत्वा तिष्ठति न तु शेते इत्यर्थः । मया बलादालिङ्गिताश्लेषिता सती वेपते कम्पते सखीषु वासभवनात् निर्य्यान्तीषु निस्सरन्तीषु सतीषु निर्गन्तुमेव ईहते चेष्टते सखीः विहाय तत्रैकाकिनी स्थातुं नाभिलषतीति भावः । इत्थञ्च वामतयैव सुरतौ प्रतिकूलाचरणवत्तयैव प्रतिकूलस्वभावतयैव सम्प्रति नवसंगमे मम प्रीत्यै प्रमोदाय जाता, अतीव कौतुकोत्पादनादिति भावः । **अत्रेदं** रहस्यम्—अभिनवसमागमे वध्वाः प्रतिकूलवर्त्तित्वमेव नितरां भूषणम् अन्यथा गौरवराहित्येन **दौःशील्यमापद्येत** । रतौ वामत्वमत्र स्फुटमेव । **उक्तं** छन्दः ।

मानें मृदुर्यथा—

(८५) 'सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥

समधिकलज्जावती यथा—

(८६) 'दत्ते सालसमन्थरम्—'इत्यत्र (१५९ पृ.) श्लोके ।

(८७) अत्र समधिकलज्जावतीत्वेनापि लब्धाया रतिवामताया

---

( ८५ ) माने मृदुरुदाहरति—**सा पत्युरिति** । अमरुशतके अल्पमानायाः क्रिया सखीं प्रति कथयन्त्याः सख्या उक्तिरियम् । सख्योपदेशं सख्येन सौहार्देन कृतमुपदेशम्। अथवा सख्येति हेत्वर्थतृतीयान्तं पदम् तेन सख्या कृतमुपदेशमित्यर्थः । तं विना सा बाला पत्युः अपराधोऽन्यनायिका सम्भोगरूपः प्राथमिकतज्ज्ञानसमये, सविभ्रमं सविलासं यथास्यात्तथा अङ्गस्य भ्रुकुट्यादेः वलना स्वाभिप्रायाविष्करणाय चालनं वक्रीकरणम्, याश्च वक्रोक्तयः कुटिलभाषणानि ताभिः संसूचनमपराधज्ञापनं यतो नो जानाति स्वयं न वेत्ति ततः **स्वच्छैरतिनिर्मलैः** अच्छयोर्निर्मलयोः कपोलयोः गण्ड-योः मूलादुपरिभागात् गलितैः निःसृतैः, लुठल्लोलालकैः लुठन्तः परिवर्त्तमानाः लोलाश्चञ्चला अलकाश्चूर्णकुन्तला येषु तानि तैः अश्रुभिर्वाष्पैः पर्यस्ते चपले व्या-कुले वा नेत्रोत्पले यस्याः सा तथोक्ता सती केवलं रोदित्येव रोदनमेव करोति न तु भ्रुकुटिबन्धादिकं किञ्चिदुपायं जानातीत्यर्थः, मुग्धा तूपदेशं विना न किञ्चिज्जा-नातीति भावः । **अत्र** सविभ्रमाङ्गवलनेत्यनेन शय्याविरहो बोध्यते अञ्जनपत्र-रचनाव्यपगमादश्रुकपोलयोः स्वच्छता तेन रोदनाधिक्यम्, उत्तानशयनान्मूलेन-गलनम् । एकशय्याशयनेनैवालकानामश्रुलुठनं सम्भवति । **अश्रुभिः** इतीत्थं भूत-लक्षणे तृतीया । अश्रुज्ञाप्यं विशिष्टं वा केवलं रोदनमेव करोतीति भावः । नायकः शठः प्रतीयमानविप्रलम्भश्रृङ्गारः पतिं प्रति च रूक्षव्यवहारमपहाय केवलं रोदनाद-स्या मानेऽपि मृदुत्वं बोध्यम् । **उक्तं** छन्दः ।

( ८६ ) समधिकलज्जावतीमुदाहरति—**दत्ते** इति । "क्वचिदन्योन्यसाकर्यादासां लक्ष्येषु दृश्यते" इत्यग्रे वक्ष्यमाणत्वात् "दत्ते सालसमन्थरम्" इत्यादि श्लोकप्रति-पादितनायिकायाः प्रथमावतीर्णमदनविकारवत्वं समधिकलज्जावतीरूपत्वञ्च स्वीकृत-मित्यभ्युपगन्तव्यम् ।

( ८७ ) **ननु** समधिकलज्जावती तावत् रतौ प्रतिकूला भवतीति 'रतौ वामा'-इत्यनेनैव गतार्थत्वात् समधिकलज्जावती इति पृथगुपादानं किमर्थमित्यत आह—**अत्रेति**

**विच्छित्तिविशेषवत्तया पुनः कथनम् ।**

**अथ मध्या—**

**(८८) मध्या विचित्रसुरता प्ररूढस्मरयौवना ।**
**ईषत्प्रगल्भवचना मध्यमव्रीडिता मता ॥ ५९ ॥**

**विचित्रसुरता यथा—**

**(८९) 'कान्ते तथा कथमपि प्रथितं मृगाक्ष्या**
**चातुर्यमुद्धतमनोभवया रतेषु ।**
**तत्कूजितान्यनुवदद्भिरनेकवारं**
**शिष्यायितं गृहकपोतशतैर्यथास्याः ॥'**

**लब्धाया** गतार्थायाः । **विच्छित्ति**विशेषवत्तया वैचित्र्यविशेषसंपादकत्वेन । **ननु** समधिकलज्जावतीत्वेनेत्यत्र पुंवद्भावः कथन्नेति चेत् ? मैवम् नायिकाविशेषस्य संज्ञात्वात् । "**संज्ञापूरण्योश्च**" इति निषेधेन पुंवद्भावाभावात् ।

( ८८ ) एवं मुग्धालक्षणोदाहरणं प्रदर्श्य मध्यामपि तथैव दर्शयति—**मध्येति** । मुग्धापेक्षया किञ्चिदधिकानङ्गादिमत्वं **मध्याया** सामान्यलक्षणम् । एषापि **पञ्च**-विधेति तथाविधमेव वृत्तावुदाहरणप्रदर्शनादवगम्यते । **तथाहि** विचित्रसुरता विचित्रमनन्यसदृश सुरतं विहारविशेषो यस्याः सा तादृशी प्ररूढस्मरा, प्ररूढयौवना, ईषत्प्रगल्भवचना, मध्यमव्रीडिता चेति । एवञ्च अत्रापि स्मरश्च यौवनञ्चेति स्मरयौवने प्ररूढे अत्यर्थं मुग्धापेक्षया अतिरेकेणोत्पन्ने स्मरयौवने यस्याः सा तथोक्ता समासेऽपि प्ररूढस्मरा प्ररूढयौवनेति विशेषणद्वयं मध्याया इति बोध्यम् । ईषत्प्रगल्भमनतिधृष्टं वचनं यस्याः सा । मध्यमं व्रीड़ितं लज्जा यस्याः सा ।

( ८९ ) विचित्रसुरतामुदाहरति—**कान्त इति** । शृङ्गारतिलकस्थपद्यमिदम् । उद्धतमनोभवया उद्धतः उत्कटः मनोभवः कन्दर्पो यस्यास्तया मृगाक्ष्या हरिणलोचनया रतेषु बहुतररतिक्रीड़ासु सुरतव्यतिरेकेषु चित्तपरिस्पन्देन रमणाद्रतम् । बहुवचनञ्चात्र कपोतानां चिराध्ययनलाभाय **अन्यथा** तादृशी शिष्यता भज्येत । कान्ते पत्यौ पतिं प्रतीत्यर्थः कथमपि महता व्यवसायेन तथा चातुर्य्यं सुरतसंगरवैदग्ध्यं प्रथितं प्रकटितं यथास्याः **तानि** विविधभङ्गिवैलक्ष्ण्येण प्रथितानि एतेन ग्राह्यत्वं सूचितम्, कूजितानि रमणकालीना व्यक्तशब्दान् अनेकवारमसकृत् अनुवदद्भिः कूजनाव्यहितोत्तरकालमनुकुर्वद्भिः सद्भिः गृहकपोतशतैः गृहपालितपारावतगणैः शिष्यायितम् अन्तेवासिवदाचरितम्, **यथा** शिष्या गुरुवचनमाकर्ण्य तदनुकुर्वन्ति **तथा** गृहकपोता अपि नायिकाया रमणकालीनाव्यक्तशब्दान्निशम्य तानेनकवारमनुचक्रुरित्यर्थः । सुरते च कण्ठे नायिकया पारावतवद्ध्वनयः उच्चारिताः पारावतैश्च तदनुवादः कृत इति समुच्चयार्थो बोध्यः । **वसन्ततिलकं** तल्लक्षणं तूक्तं प्रागेव । (१५३ पृ०)

**(९०) प्ररूढस्मरा यथात्रैवोदाहरणे ।**

**प्ररूढयौवना यथा मम—**

**(९१) 'नेत्रे खञ्जनगञ्जने, सरसिजप्रत्यर्थि पाणिद्वयं,**
**वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः ।**
**कान्तिः काञ्चनचम्पकप्रतिनिधिर्वाणी सुधास्यन्दिनी,**
**स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटा ॥'**

**(९२) एवमन्यत्रापि ।**

( ९० ) **प्ररूढस्मरेति** । **अत्रै**वोदाहरणे "कान्ते तथा" इत्याद्युक्तपद्ये उद्धत-मनोभवयेत्यनेन मुग्धापेक्षयाधिकेन स्मरोत्पत्तिवर्णनात् व्यक्ता नायिका प्ररूढस्मरापि भवितुं शक्यत इत्यर्थः । एवञ्चात्र विचित्रसुरताप्ररूढस्मरयोः साङ्कर्यमुदाहरणम् । किन्तु सुरतवैचित्र्याभावे प्ररूढस्मराया असङ्कीर्णमुदाहरणं बोध्यम् । यथा—

"निद्रानिवृतावुदिते द्युरत्ने सखीजने द्वारपदं प्रयाते ।
श्लथीकृताश्लेषरसे भुजङ्गे चचाल नालिङ्गनतोऽङ्गना सा ॥ इति ।

**भुजङ्गे** कामके ।

( ९१ ) प्ररूढयौवनामुदाहरति-**नेत्रे इति** । कस्याश्चिन्नायिकायाः वर्णनमिदम् । तस्याः रमण्याः नेत्रे चक्षुषी खञ्जनानां तदाख्यपक्षिणां गञ्जने पराभवकारिणी त-तोऽपि सुन्दरे इत्यर्थः, पाणिद्वयं करतलद्वयं सरसिजप्रत्यर्थि पद्मप्रतिद्वंद्वि ताभ्यां सादृश्यलाभः वक्षोजौ कुचौ करिकुम्भयोः विशिष्टभ्रमं करोति या पूर्णसादृश्यात् विशेषभ्रमजनिका ताम् अत्युन्नतिम् अत्यन्तोन्नतत्वं गच्छतः प्राप्नुतः कान्तिर्देहच्छविः काञ्चनचम्पकयोः कनकचम्पककुसुमप्रभयोः प्रतिनिधिः तुल्या वाणी वचनं सुधास्यन्दिनी पीयूषवर्षिणी कटाक्षच्छटा कुटिलदृष्टिधारा स्मेरस्य प्रफुल्लस्य इन्दीवरदाम्नः कुवलयमालायाः सोदरं सदृशं वपुः स्वरूपं यस्याः सा तथोक्ता । **अत्र** स्मरक्रियानुक्त्या प्रथमावतीर्णयौवनापेक्षया अस्याः स्तनोन्नतिप्रभृत्यतिरेकात् यौवनस्यैव प्ररूढत्वम् । **शार्दूलविक्रीडितं** छन्दः । तल्लक्षणं तूक्तमेव (१५८ पृ०)

( ९२ ) **एवमिति** । एव लक्षणानुसारेण अन्यत्रापि अन्ययोरपि ईषत्प्रगल्भ-वचनामध्यमव्रीडितयोः उदाहरणमूह्यमिति शेषः । यथा '**दीर्घाक्षंशरदिन्दु**' इत्यादौ बोध्यम् । अन्यदप्युदाहरणं यथा—

"सुभग ! कुरवकस्त्वं किं ममालिङ्गनोत्कः किमु मुखमदिरेच्छुः केसरो नो हृदिस्थः ।
त्वयि नियतमशोके युज्यते पादघातः प्रियमिति परिहासात् पेशलं काचिदूचे ॥"
"किञ्चिदाकुञ्चयत्यास्यं मन्दहासातिसुन्दरम् । दरमुद्रितनेत्रान्ता चुम्बतीशे नितम्बिनी ॥"

अथ प्रगल्भा—

(९३) स्मरान्धा गाढतारुण्या समस्तरतकोविदा ।
भावोन्नता दरव्रीडा प्रगल्भाक्रान्तनायका ॥ ६० ॥

स्मरान्धा यथा—

(९४) 'धन्यासि या कथयसि प्रियसंगमेऽपि
विश्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किंचिदपि स्मरामि(क) ॥'

( ९३ ) प्रगल्भां लक्षयति—**स्मरान्धेति** । अत्यधिकस्मरादिमत्वं प्रगल्भाया लक्षणम् । तत्र स्मरो मदनस्तेनान्धा लक्षणया अन्धसदृशी स्थानास्थानसमयासमयादि समीक्षणासमर्था गाढतारुण्या समग्रावतीर्णयौवना समस्तरतकोविदा सर्वविधसुरताभिज्ञा "सन् सुधीः कोविदो बुधः" इत्यमरः, भावोन्नता भावैर्भ्रूभङ्गाद्यनुभावैः उन्नता लब्धप्रकर्षा दरव्रीड़ा समधिकलज्जाहीनेत्यर्थः तेन स्वल्पव्रीड़त्वेऽपि दरव्रीड़त्वं बोध्यमिति ग्रन्थकृतोऽभिप्रायः । आक्रान्तनायका रमणायाबद्धवल्लभा, एवं षड्विधेयं प्रगल्भा भवतीति ज्ञेयम् ।

( ९४ ) स्मरान्धानायिकामुदाहरति-**धन्यासीति** । विज्जकायाः पद्यम् । सखिषु मध्ये एकया नायिकया कथितम्—"मया रतिकाले बहूनि चाटुवचांसि पत्यौ कथ्यन्ते" तां रसानिविष्टां प्रतिपादयितुं तत्कालेऽत्यन्तरसाविष्टत्वमात्मनः द्योतयन्ती काचित्सोल्लुण्ठमाह—**धन्यासीति** ।

हेसखि ! या त्वं प्रियसङ्गमेऽपि रतान्तरेषु अत्यन्तरसावेशयोग्येषु रतमध्येषु यद्वा विस्रब्धानां विश्वासयुक्तानां चाटुकानां प्रियवाक्यानां शतानि संस्मृत्याधुना प्रकाशयसि अतस्त्वं धन्यासि । प्रथमतः विलक्षणानन्दमन्थरतया तत्कथनमशक्यम्, तत्रापि रते तत्रापि नादौ न चान्ते किन्तु मध्ये तस्य च पुनरिदानीं स्मरणमिति महदाश्चर्यभूतं तव सावधानत्वमिति भावः । भोः सख्यः प्रियेण नीवीं नाभितलवसनग्रन्थिं प्रति करे हस्ते प्रणिहिते तन्मोचनाय व्यापारिते सति यदि किञ्चिदपि स्मरामि तदा शपामि भवतीनां शपथो न किञ्चिदपि स्मरामीत्यर्थः । किं पुनस्तादृशवाक्यमित्यपि शब्दार्थः । अत्र च रतकालेऽपि विषयान्तरवेदनेन रागस्य

( क ) अस्यैव श्लोकस्य छायाभूतः रुद्रकविकश्लोकः—
धन्यास्ता सखि "योषितः प्रियतमे ? सर्वाङ्गलग्नेऽपि या,
प्रागल्भ्यं प्रथयन्ति मोहनविधावालम्ब्य धैर्यं महत् ।
अस्माकं तु तदीयपाणिकमलेऽप्युन्मोचयत्यंशुकं
कोऽयं का वयमत्र किं नु सुरतं नैव स्मृतिर्जायते ॥" इति ॥

गाढतारुण्या यथा—

(९५) 'अत्युन्नतस्तनमुरो नयने सुदीर्घे,
वक्रे भ्रुवावतितरां, वचनं ततोऽपि।
मध्योऽधिकं तनु, रनूनगुरुर्नितम्बो
मन्दा गतिः किमपि चाद्भुतयौवनायाः॥'

समस्तरतकोविदा यथा—

(९६) 'क्वचित्ताम्बूलाक्तः क्वचिदगरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः।

कृत्रिमतामावेदयता चाटुकथनेन **त्वमधन्येति** व्यज्यते। तथोत्तरार्द्धेन प्रियकर-स्पर्शमात्रेण सम्मोहानन्दमन्थरत्वेनाकृत्रिमरागातिशयं विषयान्तरानुभावाभावं च सूचयताहं **धन्येति** प्रतीयते। पूर्वं साकूतोक्तावेकस्याः सम्बोध्यत्वादेकवचनं **धन्येति**। ततः स्वोत्कर्षकथने बह्वीनामवधानाय **सख्य** इति बह्वीनां सम्बोधनम्। अत्र च नीवीं प्रति करप्रणिधानमात्रमेव स्मरातिशयेन संज्ञाहीनप्रायत्वादियं वक्त्री नायिका स्मरान्धा प्रतीयते। यद्यपि शपामीत्यत्र ("शप उपालम्भने") इति वार्त्तिकेनात्मनेपदं प्राप्नोति **तथापि** शपथकरणप्रकाशनविवक्षाभावान्न तत्प्रवृत्ति-रिति ध्येयम्। **वसन्त**तिलकं **छन्दः**-तल्लक्षणं तूक्तं प्रागेव (१५३ पृ०)

(९५) गाढतारुण्यामुदाहरति—**अत्युन्नतेति**। अद्भुतयौवनायाः उद्दामयौ-वनायाः अस्याः रमण्या उरो वक्षः अत्युन्नतौ स्तनौ यत्र तत्तथोक्तम् नयने लोचने सुदीर्घे भ्रुवौ वक्रे कुटिले वचनं वाक्यं ततोऽपि भ्रूभ्यामपि अतितरामत्यर्थं वक्रमि-त्यर्थः। मध्यः कटिदेशः अधिकं तनुः अतीवकृशः नितम्बः अनूनगुरुः अतिस्थूलः गतिश्च किमप्यनिर्वचनीया मन्दा मन्थरा। नायिकेयमत्युन्नतस्तनत्वात् अनूनगुरु-नितम्बत्वाच्च गाढतारुण्या। **उक्तं** छन्दः।

(९६) समस्तरतकोविदामुदाहरति—**क्वचिदिति**। प्रच्छदपटः शय्यावरण-वस्त्रम्, सर्वावस्थं न्युब्जोत्तानाद्यवस्थीयं स्त्रिया रतं रतिं कथयति सूचयति। पटः कीदृशः? क्वचित् नायकस्कन्धस्थापनदेशे ताम्बूलाक्तः ताम्बूलरसरञ्जितः नायकोपरि न्युब्जभावेन पतनात् तच्चुम्बनसमये च विवृतवदनायास्ताम्बूलरसप्रच्युतिसम्भवा-त्तेन विपरीतरतिरत्र द्योतिता। क्वचित्कस्मिंश्चिद्देशे अगुरुपङ्कस्य कुचलिप्तकालागुरु-द्रवस्य अङ्केन चिह्नेन मलिनः। एतेन नायकं पृष्ठे कृत्वा विहिता रतिः सूचिता, यतो हि तदैव प्रच्छदपटे कुचयोर्लग्नता सम्भवात्। क्वचित् कस्मिन्नपि भागे चूर्णानि कुचलिप्तशुष्कचन्दनधूलयस्तत्सौरभिमित्यर्थः उद्गिरति निष्ठीवति प्रकटयतीति वेति चूर्णोद्गारी। नायकोरुपरि नायिकोरुसंघर्षेण तदधोलिप्तचन्दनच्यवनसम्भवादुपविश्य विहिता रतिरेतेन सूचिता। क्वचिदपि च प्रदेशे सालक्तकानि लाक्षारसयुक्तानि

वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः
स्त्रियाः सर्वावस्थं कथयति रतं प्रच्छदपटः ॥'

भावोन्नता यथा—

(९७) 'मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्जनै
रभसरचितैरङ्गन्यासैर्महोत्सवबन्धुभिः ।
असकृदसकृत्स्फारस्फारैरपाङ्गविलोकितै-
स्त्रिभुवनजये सा पञ्चेषोः करोति सहायताम् ॥'

स्वल्पव्रीडा यथा—

(९८) 'धन्यासि या कथयसि-' इत्यत्रैव ( १६३ पृ० )

पदानि पदतलाङ्कानि यत्र सः । शय्यास्तरणवस्त्रे पादतलचिह्नपतनेन दण्डायमानया विहिता रतिरनेन सूचिता । वलीभिस्त्रिवलीभिः कृता ये भङ्गा निम्नत्वानि तेषामाभोगैः परिपूर्णताभिः, त्रिवलीलेपचिह्नपतनेन पार्श्वशयितया विहिता रतिरनेन सूचिता । अलकेभ्यश्चूर्णकुन्तलेभ्यः पतितैः स्खलितैः संघर्षाद्विच्युतैरिति भावः । शीर्णकुसुमैः उपमर्दितपुष्पैश्चोपलक्षितः । समस्तरतकोविदा चेयं स्पष्टा, विचित्रसुरतायास्त्वेतादृशविमर्दाभावादस्यास्ततो भेदः ।

**शार्दूलविक्रीडितं** छन्दः । तल्लक्षणं तूक्तमेव ( १५८ पृ० )

( ९७ ) भावोन्नतामुदाहरति—**मधुरवचनैरिति** । शृङ्गारतिलकस्येदं पद्यम् । सा नायिका सभ्रूभङ्गैः भ्रूविलाससहितैः मधुरवचनैः मनोहरवाक्यैः, कृतानि अङ्गुलीनां तर्जनानि भङ्गीविशेषा यत्र तैः, रभसचरितैः वेगकृतैः महोत्सवस्य बन्धुभिः सहायैः जनकैः यूनां नयनानन्दकरैरित्यर्थः, अङ्गन्यासैः अङ्गविक्षेपैः असकृदसकृत् मुहुर्मुहुः स्फारस्फारैः अतिदीर्घैः अपाङ्गविलोकितैः कुटिलकटाक्षनिरीक्षणैः पञ्चेषोः कामस्य

कामस्य पञ्चेषवस्तु—

"उन्मादनस्तापनश्च शोषणस्तम्भनस्तथा ।
सम्मोहनश्च कामस्य पञ्चबाणाः प्रकीर्तिताः ॥"

इत्युक्तप्रकारा बोध्याः । त्रिभुवनविजये सहायतां साहाय्यं करोति विदधाति । त्रिभुवनवर्तिनाम् एतादृशभावप्रदर्शनेनैव कामाधीनभूतत्वादिति भावः । अत्रान्य युवतीभ्यो भ्रूभङ्गाद्यनुभावैरुत्कर्षप्राप्तत्वादियं भावोन्नतेत्यवगन्तव्यम् । **हरिणी** छन्दः "हरिणीन्सौ म्रौ स्लौ गृतुसमुद्रऋषयः" इति लक्षणात् ।

( ९८ ) स्वल्पव्रीडामुदाहरति—**धन्यासीति** । सखीसमुदाये आत्मनो रतिकालीनावस्थायाः स्पष्टप्रतिपादनात् "धन्यासि ये" त्यादिपद्यस्य वक्त्रीनायिका स्वल्पव्रीडारूपाऽपीति भावः । एवञ्च स्मरान्धादरव्रीड़योः सङ्कीर्णरूपेयमिति ध्येयम् । **वस्तुतस्तु** अत्राल्पाया अपि व्रीड़ाया अप्रतीतेः नेदमुदाहरणं युक्तं किन्तु—

आक्रान्तनायका यथा—

(९९) स्वामिन्भङ्गुरयालकं, सतिलकं भालं विलासिन्कुरु,
प्राणेश त्रुटितं पयोधरतटे हारं पुनर्योजय।
इत्युक्त्वा सुरतावसानसमये सम्पूर्णचन्द्रानना
स्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनम् ॥'

मध्याप्रगल्भयोर्भेदान्तराण्याह—

(१००) ते धीरा चाप्यधीरा च धीराधीरेति षड्विधे।
(१) ते मध्याप्रगल्भे।

---

"शूलिनः करतलद्वयेन सा संनिरुध्य नयने हृतांशुका।
तस्य पश्यति ललाटलोचने मोघयत्नविधुरा रहस्यभूत् ॥"

इत्येव स्वल्पव्रीडोदाहरणम्। अत्र पार्वतीशूलिनोर्नयने इत्यन्वयः।

( ९९ ) आक्रान्तः सुरतानन्दानुभावनेन स्वायत्तीकृतो नायको यया सा तादृशी-प्रगल्भानायिकेत्यर्थः। तामुदाहरति—**स्वामिन्निति**। **श्रृङ्गारतिलके** कस्या अपि स्वात्मनि नितान्तमनुरक्तं नायकं प्रत्युक्तिरियम्। सम्पूर्णचन्द्रानना सम्पूर्णचन्द्र इव आननं मुखं यस्याः सा तथोक्ता कामिनी सुरतावसानसमये हे स्वामिन्! अलकं मदीयं स्खलितचूर्णकुन्तलं भङ्गुरय भङ्गीयुक्तं कुरु तवैव रमणसङ्घर्षेण स्खलनात् पुनरपि पूर्ववत् संयमयेति भावः, रतौ भङ्गुराणामलकानां विकीर्णत्वात् पुनर्भङ्गुरीकरणाय प्रेरणा। हे विलासिन्! मदीयं ललाटं सतिलकं तिलकसंयुक्तं कुरु तवैव ललाटमर्द्दनेन तिलकप्रोञ्छनात्पुनरपि पूर्ववत् तिलकमङ्कयेति भावः।

हे प्राणेश! त्रुटितं छिन्नं हारं पयोधरतटे कुचप्रदेशे तवैव विमर्द्देन त्रुटितत्वात् पुनर्योजय संमिश्रय, इत्युक्त्वा स्थीयमाना सा तेन स्वामिना तथैवोक्तप्रकारेण तेषु स्थानेषु स्पृष्टा अत एव जातमुत्पन्नं पुलको रोमाञ्चो यस्याः सा पुनर्मोहनम् सुरत-सुखादिज्ञानं प्राप्ता लब्धा सुरतामोदेन विषयान्तरज्ञानहीना सती पुनरपि रतौ प्रवृत्तेति भावः। **अत्र** रतिखेदेन संज्ञाहीनस्य नायकस्य स्वामिन्नित्यादिनाज्ञाकरणादि-यमाक्रान्तनायका। **शार्दूलविक्रीडितं** छन्दः। तल्लक्षणं तूक्तमेव (१५८ पृ०)

( १०० ) अथ सिंहावलोकनन्यायेन मध्याप्रगल्भयोर्भेदान्तराणि प्रतिपादयितु-माह—**ते इति**। ते मध्याप्रगल्भे प्रत्येकं धीरा च अधीरा च धीराधीरा च इतीत्थं षड्विधे षट्प्रकारिके भवतः। **तथाहि** यथा-मध्या त्रिप्रकारा-धीरा अधीरा धीराधीरा च एवं प्रगल्भाऽपि त्रिप्रकारा—धीरा अधीरा धीराधीरा च। धीराधीरेत्यनेन क्वचित् धीरा धैर्यवती क्वचित् अधीरा अधैर्यवती च।

( १ ) **ननु** मुग्धादीनां मध्ये मुग्धयोःभेदान्तरमनभिधाय मध्याप्रगल्भयोरेव कथं धीरेत्यादिना भेदो निरुपित इत्याशङ्कां मनसिं निधायाह—**ते मध्याप्रगल्भे इति**।

तत्र—

(२)प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्रुषा ॥ ६१ ॥
धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः ।

तत्र मध्या धीरा यथा—

(३) 'तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद्दुकूलं दधानः ।
मदधिवसतिमागाः कामिनां मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन ॥'

ते इति द्विवचनान्तत्वेन प्रक्रान्तानां मुग्धादीनां मध्ये द्वयोरेव ग्रहणे कर्त्तव्ये सन्निकृष्टत्वात् तच्छब्दस्य पूर्वपरामर्शित्वाच्च मध्याप्रगल्भयोरेव ग्रहणं बोध्यम् ।

( २ ) **प्रियमिति** । मध्याधीरा रुषा अन्यनायिकासक्तिप्रतीत्युत्पन्नक्रोधेन सोत्प्रासवक्रोक्त्या सपरिहासश्लिष्टवचनेन प्रियं पतिं दहेत् सन्तापयेत् । मध्या धीराधीरा तु रुषा रुदितैः रोदनैः प्रियं दहेत् । मध्या अधीरा तु रुषा परुषोक्तिभिः कटुवचनैः प्रियं दहेत् । एतानि तु आसां कार्याणि । लक्षणानि तु स्मितपूर्वकवक्रोक्तिद्वाराप्रियसन्तापोत्पादिका मध्याधीरा, क्रन्दनद्वारा प्रियसन्तापोत्पादिका मध्याधीराधीरा कटुवचनद्वारा प्रियसन्तापोत्पादिका मध्या अधीरेति ।

( ३ ) तत्र मध्याधीरामुदाहरति—**तदवितथ**मिति । **माघ**काव्ये अन्यकामिन्याः सम्भोगं विधाय तदीयवसनं परिधाय समागते नायके नायिकाया उक्तिरियम् । त्वं मम प्रियेति यदवादीस्तदवितथम् सत्यम् परमार्थतस्तु—न वितथं मिथ्या यस्मात्तथोक्तम्, अत्यन्तमसत्यमित्यर्थः । एतदेव दर्शयति **यदि**ति । यत् यस्मात् । प्रियजनेन उपनायिकया सपत्न्या वा परिभुक्तं परिहितं दुकूलं वस्त्रं दधानः वसानः सन् मदधिवसतिं मम गृहमागा आगतोऽसि । **नन्वे**तावता कथं प्रियेत्युक्तेः सत्यत्वमत आह—**कामिनामिति** । कामिनां जनानां मण्डनश्रीः मण्डनेन भूषणेन कृता श्रीः शोभाः प्रियजनपरिभुक्तवस्त्रधारणमेवात्र मण्डनश्रीः वल्लभा प्रिया तत्कर्तृकावलोकनेन सफलत्वं व्रजति प्राप्नोति । **अत्र** अवितथमिति मिथ्या यत् यस्मात् मम तापाय प्रतिनायिकापरिहितवस्त्रं परिधाय मम गेहमागाः, यद्यहं ते प्रिया स्यां तदा मत्तापजनकं कर्म न कुर्य्याः एतावत्सतां मण्डनं न भवति, यदि तवैतन्मण्डनं तदा तज्जन्यशोभायाः या प्रिया भवति तामेवावलोकय ममावलोकनया किं वा प्रयोजनमिति श्लेष एवात्र वक्रोक्तिर्बोध्या । स्मितपूर्वकवक्रोक्तिद्वारा प्रियसन्तापोत्पादनादियं नायिका मध्या धीरा । **मालिनी**च्छन्दः, "ननमययुतेयं मालिनी भोगिलोकैरिति लक्षणात् ।

मध्यैव धीराधीरा यथा—

(४) 'बाले, नाथ, विमुञ्च मानिनि रुषं, रोषान्मया किं कृतं,
खेदोऽस्मासु, न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा, कस्याग्रतो रुद्यते,
नन्वेतन्मम, का तवास्मि, दयिता, नास्मीत्यतो रुद्यते ॥'

(५) इयमेवाधीरा यथा—

(६) 'सार्धं मनोरथशतैस्तव धूर्त कान्ता
सैव स्थिता मनसि कृत्रिमहावरम्या ।

(४) मध्या धीराधीरामुदाहरति-बाले इति । अमरुशतके अन्यरमण्यासक्त-कामुकस्य तद्वृत्तान्तावबोधेन रुदत्या मानिन्याश्चोक्तिप्रत्युक्तिरूपश्लोकोऽयम्। हेबाले ? इति कामुककृतं सम्बोधनम् । हे नाथ ? इति नायिकाकृतं प्रतिसम्बोधनम् । हे मानि-नि ! रुषं क्रोधं विमुञ्च त्यज इति कामुकस्य सानुनयोक्तिः । मया रोषान् किं कृतमिति नायिकायाः स खेदोक्तिः, अस्मासु मयि खेदः कृत इत्यन्वयः इयमुक्तिर्नायिकस्य प्रेमव्यञ्जिका । भवान् मे मह्यं न अपराध्यति किन्तु सर्वे एवापराधा मयि, अतो रोषाभावेन त्वयि मे दुःखविधानमसम्भवमेवेति भावः । इति सखेदा कुटिला च नायिकाया प्रत्युक्तिः । तत्तदा यदि ममापराधो न तर्हि कस्मात् गद्गदेनास्फुटेन वच-सा वचनेन रोदिषि इति नायकस्योक्तिः । कस्य अग्रतो मया रुद्यत इति नायिका प्रत्युक्तिः । ननु मम अग्रतः एतद् रुद्यते नायकस्योक्तिः । अहं तव का अस्मीति नायिकायाः निःसम्पर्कद्योतिका प्रत्युक्तिः । त्वं मम दयिता प्रियासि इति पूर्ववद्धि-ष्यमानप्रेमबोधिका नायकस्योक्तिः । अहं न दयिता प्रेमपात्रमित्यर्थः त्वदासक्तिविष-यत्वाभावादिति भावः । इत्यतः कारणान्मया रुद्यते इत्यतिकष्टयुक्तनायिकायाः प्रत्युक्तिः । अत्र यथाक्रममुत्तरप्रदानात् धैर्य्यं रोदनाच्चाधैर्य्यं ज्ञातव्यम् । एवञ्च रोदनेन प्रियसन्तापोत्पादनात् मध्या धीराधीरेयम् । शार्दूलविक्रीडितं छन्दः । तल्लक्षणंतूक्तमेव ( १५८ पृ० )

(५) इयमिति । इयमेव मध्यैवेत्यर्थः ।

(६) अथ तृतीयां मध्याऽधीरामुदाहरति—सार्द्धमिति । अन्यरमणीसम्भो-गानन्तरमागतं जातापराधं चरणपतितं कामुकं प्रति मानिन्याः कस्याश्चित् अधीर-मध्यायाः उक्तिरियम् । धूर्त्तेति कान्तसम्बोधनम्, परप्रतारणचतुरेत्यर्थः । कृत्रिमेण स्वाभाविकेतरेण हावेन भावविशेषेण रम्या तव मनोहरा, अनेन च स्वस्य स्वाभा-विकमेव मनोहरत्वं ध्वनितम् । सैव उपनायिकैव कान्ता मनोरथशतैः तवैव विवि-धसम्भोगाभिलाषैः सार्द्धं साकं तव मनसि स्थिता अतस्तव मनसि अस्माकं मम कश्चिदपि अवकाशः स्वल्पोऽपि अवस्थितिस्थानं न चास्ति तयैव कान्तया सर्वतो

अस्माकमस्ति नहि कश्चिदिहावकाश-
स्तस्मात्कृतं चरणपातविडम्बनाभिः ॥[७]

(७) प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा ॥ ६२ ॥
उदास्ते सुरते तत्र दर्शयन्त्यादरान्बहिः ।

तत्र प्रिये ।

यथा—

(८) 'एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरत-
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।

व्यापनादिति भावः । तस्मात्कारणात् चरणपातविडम्बनाभिः चरणपातेन विडम्बनाभिः प्रतारणाभिः अद्यपर्य्यन्तं यदपराद्धं तन्मर्षय इति यत्पादयोः पतित्वा मुहुः क्षमाप्रार्थिवदनुकरोषि तेनेति भावः । कृतं व्यर्थम्, इत्थं प्रतारणां मा कुरु इति भावः । कृतं शब्दयोगे स्वार्थे तृतीया । **अत्र** परुषोक्तिद्वारा प्रियसन्तापोत्पादनादधीरेयम् । **वसन्ततिलकं**छन्दः । तल्लक्षणंतूक्तमेव ( १५३ पृ० )

उदाहरणान्तरं यथा—

"जातस्ते निशिजागरो ममपुनर्नेत्राम्बुजे शोणिमा
निष्पीतं भवता मधु प्रविततं व्याघूर्णितं मे मनः ।
भ्राम्यद्भृङ्गघने निकुञ्जभवने लब्धं त्वया श्रीफलं
पञ्चेषुः पुनरेष मां हुतवहक्रूरैः शरैः कृन्तति ॥

( ७ ) त्रिविधरुपायाः प्रगल्भायाः पृथक् पृथक् स्वरूपेण त्रैविध्यमुपपिपादयिषुः प्रथमां धीरामेवोपपादयति-**प्रगल्भेति** ।प्रगल्भानायिका यदि धीरा स्यात् तदा छन्ना कृत्रिमहासादिना संवृता कोपाकृतिः कोपसूचको मुखरागादिर्यस्याः सा तथा **तत्र** प्रिये वहिर्वाह्यान् नत्वान्तरान् आदरान् दर्शयन्ती प्रकटयन्ती सति रुषा क्रोधेन सुरते उदास्ते उदासीना अनुरागहीना भवति अनुत्सुका तिष्ठतीत्यर्थः । एतान्यस्याः कार्य्याणि प्रदर्शनात् **धीरा**प्रगल्भाया लक्षणञ्च छन्नकोपचिह्ना सती वहिरादरप्रदर्शिनी सुरतोदासीना नायिका धीरप्रगल्भा ।

( ८ ) धीराप्रगल्भानायिकामुदाहरति—**एकत्रासनेति** । अमरुशतकस्य पद्यमिदम् । चतुरया नायिकया परनायिकासक्तमागच्छन्तमालोक्येत्यध्याहारः, दूरत एव प्रत्युद्गमात् अभ्युत्थानात् एकत्रैकस्मिन्नासने आसनसंस्थितिः उपवेशनसम्बन्धः परिहृता त्यक्ता, ताम्बूलानयनच्छलेन रभसा श्लेषोऽपि कान्तेन सहालिङ्गनमपि संविघ्नितः सम्यक् प्रतिरुद्धम् । तथा अन्तिके कान्तस्य समीपे परिजनं सेवकं व्यापार-

**आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके**
**कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥'**

**(९) धीराधीरा तु सोल्लुण्ठभाषितैः खेदयत्यमुम् ॥६३॥**

**(१०) अमुं नायकम् ।**

**यथा मम—**

**(११)'अनलङ्कृतोऽपि सुन्दर? हरसि मनो मे यतः प्रसभम् ।**
**किं पुनरलङ्कृतस्त्वं सम्प्रति नखरक्षतैस्तस्याः ॥'**

यन्त्या नियोजयन्त्या नायकपरिचर्य्यार्थं सव्यापारीकुर्वत्येत्यर्थः, आलापोऽपि न मिश्रितः नोत्तरेण युक्तः कृतः पुरुषान्तरसन्निधानात् लज्जयेव आलापः सम्भाषणं न कृत इत्यर्थः, इत्थं कान्तं नूतनागतं पतिं प्रति उपचारतः प्रीतिहेतुव्यापारान् विधाय कोप इति संभोगप्रतिरोधः कोपफलम् । तेनैव कान्तो वशीकृत इति भावः । कृतार्थी **कृतः** संवरणेन तद्वञ्चनात् सार्थकीकृत इत्यर्थः। अनेनात्र सुरतौदासीन्यमपि प्रदर्शितम् । अत एव धीरा प्रगल्भा चेयं नायिकावगन्तव्या । **शार्दूलविक्रीडितं** छन्दः । (१५८पृ०)

( ९ ) धीराधीरायाः प्रगल्भाया रुषात्वे स्वरूपं निर्दिशति-**धीराधीरेति**। धीराधीरा तु प्रगल्भा रुषा सोल्लुण्ठभाषितैः प्रियवद्भासमानमप्रियं **सोल्लुण्ठनम्** । श्रवणमात्रतः प्रियवत् प्रतीयमानैरपि वस्तुतः कटुवचनैः अमुं नायकं खेदयेत् सन्तापयेत् । **एवञ्च** सोल्लुण्ठभाषणद्वारा प्रियसन्तापोत्पादिका नायिका धीराधीराप्रगल्भेति लक्षणमवधेयम् ।

( १० ) कारिकास्थकाठिन्यांशं स्फोरयति—**अमुमिति** । ननु अमुमित्यस्य-प्रक्रान्तत्वेन प्रियमिति कथनमुचितं न तु नायकमिति चेत् ? प्रतिपाद्यभेदाभावाद्दोषाभावो बोध्यः ।

( ११ ) धीराधीराप्रगल्भामुदाहरति—**अनलङ्कृत इति** । अन्यनायिकानखक्षताङ्कितं नायकं प्रति नायिकाया उक्तिरियम् । हे सुन्दर ! त्वं अनलंकृतोऽपि अलङ्कारैरभूषितोऽपि यतो मे मम मनः प्रसभं बलात् हरसि आकर्षसि अतः सम्प्रति-तस्याः सपत्न्याः नखरक्षतैः सुरतकालीननखाघाताङ्कितैः "नखोऽस्त्रीनखरोऽस्त्रियाम्" इत्यमरः । अलङ्कृतो भूषितः सन् हरस्येवेत्यत्र किं पुनः किमुत वक्तव्यमित्यर्थः । **अत्र** नखक्षतानामलङ्कारत्वासम्भवात् एतदुक्तेः कटुत्वस्य अतिस्फुटत्वात् "तदवितथमवादी" रित्यादिधीरमध्योदाहरणादस्य विशेषः । तत्र दुकूलस्यालङ्कारताया अपि सम्भवात् । कटुत्वस्फुटत्वादेव चास्याः प्रगल्भात्वं नतु मध्यमत्वम् । अत्रोपगीतिश्छन्दः ।

(१२)तर्जयेत्ताडयेदन्या—

अन्या अधीरा । यथा-(१३) 'शोणं वीक्ष्य मुखं-' इत्यत्र (१६०पृ०)। अत्र च सर्वत्र 'रुषा' इत्यनुवर्तते ।

(१४) प्रत्येकं ता अपि द्विधा ।

कनिष्ठज्येष्ठरूपत्वान्नायकप्रणयं प्रति ॥ ६४ ॥

(१५) ता अनन्तरोक्ताः षड्भेदा नायिकाः ।

यथा—

(१६) 'दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने पिधाय विहितक्रीड़ानुबन्धच्छलः ।

( १२ ) प्रगल्भाया अधीरत्वे स्वरुपं लक्षयति-**तर्जयेदिति** । अन्या अधीरा प्रगल्भानायिका रुषा तर्जयेत् नायकं भर्त्सयेत् ताड़येत् प्रहरेद्वा पादाघातादिना वा प्रियमिति शेषः । एतेन नायकस्य तर्जनताडनान्यतरविधायिनी नायिका अधीरा प्रगल्भा ।

( १३ ) उदाहरति-**शोणमित्यादि** । धृष्टनायकोदाहरणे व्याख्यातमिदम् । तत्र पादप्रहारकथनात्ताड़नम् । **अत्र** च सर्वत्र एषु च सर्वेषु धीराधीरादिलक्षणपञ्च-केषु "रुषा" इत्यनुवर्त्तते "प्रियं सोत्प्रासवक्रोक्त्या मध्याधीरादहेद्रुषा" इत्यत इति शेषो बोध्यः । अनेन च मध्याप्रगल्भयोर्धीरादिभेदाः मानाख्यविप्रलम्भश्रृङ्गाररस एव न पुनरन्येषु रसेष्विति ध्वनितम् ।

( १४ ) एवं मध्याप्रगल्भयोः षड्भेदानुक्त्वैतेषामपि द्वैविध्यमिति प्रतिपादयति-**प्रत्येकमिति** । ताः पूर्वोक्ताः धीरादिषड्विधा अपि मध्याप्रगल्भानायिकाः प्रत्येकं नायकप्रणयं प्रति नायकप्रीतिविषये कनिष्ठज्येष्ठरूपत्वात् नायकस्य यः कपट-प्रणयस्तं प्रति न्यूनाधिक्यादित्यर्थः । द्विधा भवन्ति ।

( १५ ) कारिकास्थकाठिन्यांशं विवृणोति—**ता इति** । अनन्तरोक्ता पूर्वप्रति-पादिताः षड्भेदा धीरादिषड्विधाः ।

( १६ ) कनिष्ठज्येष्ठनायिकामुदाहरति—**दृष्ट्वैकेति** । अमरुशतकस्य पद्यमिद-म् । धूर्त्तः परप्रतारणकुशलो नायकः प्रियतमे भार्य्ये पत्नीद्वयमित्यर्थः एकस्मिन् आसने संस्थिते उपविष्टे दृष्ट्वा दूरतोऽवलोक्य आदरात् स्वागमननिःशब्दत्वम्प्रति यत्नात् पश्चात् पृष्ठतः उपेत्य गत्वा विहितक्रीड़ानुबन्धच्छलः कृतक्रीड़ानुसारिकौतुकोत्पत्तिः, एकस्याः स्वल्पप्रणयनायिकायाः नयने लोचने पिधाय पाणिद्वयेनाच्छाद्य, ईषदल्पं यथा स्यात्तथा वक्रिता वक्रीकृता ग्रीवा येन स तथोक्तः सपुलकः सन्, प्रेमणोल्लसन्मानसान् प्रेम्णा प्रणयेन उल्लसत् उत्फुल्लत् मानसं चेतो यस्यास्ताम् तथान्तर्यो हासस्ते न लसन्तौ

**ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-**
**मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥'**

**(१७)मध्याप्रगल्भयोर्भेदास्तस्माद्द्वादश कीर्तिताः ।**
**मुग्धा त्वेकैव तेन स्युः स्वीयाभेदास्त्रयोदश ॥ ६५ ॥**

नायिकाप्रतारणदृष्टनायकवैदग्ध्यजन्यबहुलानन्दोदयेन देदीप्यमानौ कपोलौ फलकाविव यस्यास्ताम् अपराम् अतिप्रणयिनीं भार्य्यां चुम्बति । अत्र चाद्या नायिका कनिष्ठा चुम्बनेन प्रतारणत्वात्, अपरा तु चुम्बनेन चरितार्थत्वात् ज्येष्ठा । मध्याप्रगल्भाधीरादीनां लक्षणं यद्यपि किञ्चिदपि न घटते तथापि अस्तित्वसम्भावनयैवोदाहृतम् । अत्र नायिकानुरागस्य न्यूनाधिकत्वं स्फुटमेव । **शार्दूलविक्रीडितं** छन्दः । तल्लक्षणंतूक्तमेव ( १५८ पृ० )

( १७ ) एवं स्वकीयाभेदानुपपाद्य सन्देहदूरीकरणाय सिंहावलोकनन्यायेन तानुपपादियति—**मध्येति** । तस्मात् उपदर्शितलक्षणभेदादित्यर्थः मध्याप्रगल्भयोर्द्वादशभेदाः कीर्त्तिताः । षड्द्वैगुण्यात्दिति भावः । मुग्धा तु एकैव एकप्रकारैव तस्याः प्रथमावतीर्णमदनविकाराद्यभावादेकत्वम् , अत एव **रुद्रकविनोक्तम्**—

"एकाकारा मता मुग्धा पुनर्भूश्च यतोऽनयोः ।
अतिसूक्ष्मतया भेदः कविभिर्न प्रदर्शिताः ॥"

तेन हेतुना स्वीयायाः भेदास्त्रयोदश स्युः । अत्र केचिदित्थं लक्षयन्ति, उदाहरन्ति च तथाहि—

एते च धीरादिषड्भेदा द्विविधाः ज्येष्ठा कनिष्ठा च धीरा ज्येष्ठा कनिष्ठा च, अधीरा ज्येष्ठा कनिष्ठा च धीरा धीरा ज्येष्ठा कनिष्ठा च, परिणीतत्वे सति भर्त्तुरधिकस्नेहा ज्येष्ठा, परिणीतत्वे सति भर्त्तुर्न्यूनस्नेहा कनिष्ठा अधिकस्नेहासु न्यूनस्नेहासु च परकीयासु सामान्यवनितासु च नातिव्याप्तिः परिणीतपदेन व्यावर्त्तनात् ।

तत्र धीराज्येष्ठाकनिष्ठा च यथा—

"एकस्मिन् शयने सरोरुहदृशोर्विज्ञाय निद्रां तयो-
रेकां पल्लविताऽवगुण्ठनपटामुत्कन्धरो दृष्टवान् ।
अन्यस्याः सविधं समेत्य निभृतं व्यालोकहस्ताङ्गुलि-
व्यापारैर्वसनञ्चपलयन् स्वापच्युतिं क्लृप्तवान् ॥

अधीरा ज्येष्ठा कनिष्ठा च यथा—

"अन्तः कोपकषायिते प्रियतमे पश्यन् घने कानने
पुष्पस्यावचयाय नम्रवदनामेकं समायोजयत् ।
अर्द्धोन्मीलितलोचनाञ्चलचमत्काराभिरामाननां
स्मेरार्द्धाधरपल्लवांनवबधूमन्यां समालिङ्गति ॥"

(१८)परकीया द्विधा प्रोक्ता परोढा कन्यका तथा ।

(१९) तत्र—

(२०)यात्रादिनिरतान्योढा कुलटा गलितत्रपा ॥ ६३ ॥

यथा—

(२१) 'स्वामी निःश्वसितेऽप्यसूयति, मनोजिघ्रः सपत्नीजनः,
श्वश्रूरिङ्गितदैवतं, नयनयोरीहालिहो यातरः ।

---

धीरा धीरा ज्येष्ठा कनिष्ठा च—

"धैर्याधैर्यपरिग्रहग्रहिलयोरेणीदृशोः प्रीतये
रत्नद्वन्द्वमनन्तकान्तिरुचिरमुष्टिद्वये न्यस्तवान् ।
एकस्याः कलयन् करे प्रथमतो रत्नं परस्याः प्रिये
हस्ताहस्ति मिषात् स्पृशन् कुचतटीमानन्दमाविन्दति ॥"

( १८ ) एवं स्वकीयायाः स्वरूपप्रतिपादनपूर्वकं भेदान् प्रतिपाद्य परकीयां प्रतिपादयितुमुत्थापयति—**परकीयेति** । परकीया अन्यदीया चेत्यनर्थान्तरम् । **परोढा** परेणान्येन ऊढा विवाहिता कन्यका अजातपरिणीता । न च कन्यकायाः कथं परकीयात्वमिति वाच्यम् , पित्राद्यधीनत्वेन परकीयात्वाभ्युपगमात् ।

( १९ ) एवं परकीयाया द्वैविध्यं निरूपयित्वा तत्राद्यायाः स्वरूपं निरुपयितुमाह-**तत्रेति** । परोढाकन्यकयोर्मध्ये इत्यर्थः । परोढायाः लक्षणं निरुप्यत इति शेषः ।

( २० ) **यात्रेति** । अन्योढा परोढा । सा च द्विप्रकारा आद्या गलितत्रपा निर्लज्जा यात्रादिनिरता यात्रा अभिसारः आदिना दूतीप्रेषणात् नायकानयनादि-परिग्रहः । अपरा गृहस्थापि गलितत्रपा, कुलमटति अतिक्रामति या सा कुलटा पुरुषान्तरगामिनीत्यर्थः । "पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी" इत्यमरः । गलितत्रपेत्युभयोर्विशेषणं बोध्यम् । इयमन्योढा न प्रधानरसे क्वचिन्निबन्धनीया । तथाच्चोक्तम्—"अन्यस्त्री कन्यकोढा च नान्योढाङ्गिरसे क्वचित् ।
कन्यानुरागमिच्छातः कुर्यादङ्गाङ्गि संश्रयम्" ॥ इति ।

( २१ ) कुलटाया उदाहरणं दर्शयति—**स्वामीति** । उपनायकं प्रति नायिकाया उक्तिरियम् । स्वामी परिणेता न तु प्रियः अनेन तत्रानुरागाभावः प्रकटितः, निःश्वसितेऽपि निःश्वासपरित्यागेऽपि असूयति दोषं प्रकटयति, निःश्वसितेन हेतुना प्रच्छन्नकामुकाप्रातिदुःखमनुमाय मह्यमीर्ष्यतीति भावः । सपत्नीजनः समानः पतिर्यस्याः सोऽसौ जनस्तादृशः, मनोजिघ्रः मनसा घृतमप्यनायासादनुमिनोति ईर्षालिङ्गेनापि मम परनायकविषयमनोऽनुसन्धत्त इति भावः । मनसा घ्राणजप्रत्यक्षासम्भवेन अभिप्रायवेदने लक्षणाऽवगन्तव्या तस्य याथार्थ्ये प्रयोजनम् । एवमग्रो-

तद्दूरादयमञ्जलिः, किमधुना दृग्भङ्गिभावेन ते,
वैदग्धीमधुरप्रबन्धरसिक ! व्यर्थोऽयमत्र श्रमः ॥'

**(२२)अत्र हि मम परिणेतान्नाच्छादनादिदातृतया स्वाम्येव न तु वल्लभः। त्वं तु वैदग्धीमधुरप्रबन्धरसिकतया मम वल्लभोऽसीत्यादिव्यङ्ग्यार्थवशादस्याः परनायकविषया रतिः प्रतीयते।**

**(२३) कन्या त्वजातोपयमा सलज्जा नवयौवना।**

रपि स्वयमूह्यम्। श्वश्रूः पत्युर्माता, "पतिपत्नी प्रसूः श्वश्रूः" इत्यमरः, इङ्गितस्य अभिप्रायसूचकस्य चेष्टाविशेषस्य दैवतं देवतावत् सर्वं भावमवगच्छतीत्यर्थः। दैवत्वेनात्यन्तं तद्बोध्री इङ्गितज्ञानं तस्या एव आयत्तमिति भावः।

यातरः पतिभ्रातृणां भार्य्याः, "भार्य्या तु भ्रातृवर्गस्य यातरः स्युः परस्परम्" इत्यमरः, नयनयोः मम लोचनयोः ईहालिहश्चेष्टाविशेषसूचनीयार्थाभिज्ञाः तत्तस्माद्धेतोः दूरादेव एतेन समीपं गन्तुं नाहं समर्थोऽस्मीति ध्वन्यते, अयमञ्जलिः मया विहित इति शेषः। ते तव अधुना अस्मिन् समये दृग्भङ्गिभावेन नेत्रसङ्केतेन किं प्रयोजनमिति शेषः। वैदग्ध्या चातुर्य्येण मधुरो मनोहरस्तत्सम्बुद्धौ हे वैधग्धीमधुर ! विदग्धस्य भावः कर्म्म वा वैदग्धी गुणवचनब्राह्मणादित्वात् ष्यञ् "विदग्धश्चतुरेऽत्यन्तं दग्धे च त्रिषु वाच्यवत्" इति गोपालः, प्रबन्धेषु सुरतप्रयोगादिषु रसिको रसयुक्तः। यद्वा वैदग्ध्या मधुरः प्रबन्धो व्यापारस्तत्र रसिकस्तत्सम्बोधने तथा समस्तपदम्। रसिकेत्यनेन चातुर्य्येण निर्वाह्यो यो मदभिगमनार्थं प्रयोगस्तमाचरेति भावः। अत्र स्वाम्याद्याकीर्णे देशे अयं तव श्रमः मत्प्राप्तिसाधननयनभङ्गादिव्यापारः व्यर्थः, उक्तविधनानाप्रतिबन्धकवशेन मयाधुना तवमनोरथस्य सम्पादयितुमशक्यत्वादित्याशयः। अयमञ्जलिश्च परमेश्वराय विधीयते स एव यदा मयि प्रसन्नः स्यात्तदा कदाचित्त्वया सह विहरिष्य इति भावः।

**शार्दूलविक्रीडितं** छन्दः—तल्लक्षणं तूक्तं प्रागेव ( १५८ पृ० )

( २२ ) ननु स्वप्राप्तिसाधनव्यापारस्य "व्यर्थोऽयमत्रश्रमः" इत्यनेन व्यर्थत्वकथनादस्याः परनायकरत्यभावः स्फुट एव प्रतीयते तेन च कुलटात्वाभावः इति कथमस्याः परनायिकात्वमित्यत आह—**अत्रेति**। परिणेता विवाहकर्त्ता स्वाम्येव प्रभुरेव नतु वल्लभः वैदग्धीमधुरत्वेन प्रबन्धरसिकतया च। वल्लभोऽसीत्यादि इत्यत्रादिपदात् अञ्जलिकरणादपीत्यर्थः। रतिरनुरागः प्रतीयते तत्प्रतीतिवशाच्चास्या निरतत्वसिद्धिः। **एतदुपलक्षणम्**, "अधुना अत्र" पदाभ्यामपि कालान्तरे स्थानान्तरे च श्रमसार्थकत्वव्यञ्जनेनापि रतिः प्रतीयत इति ध्येयम्।

( २३ ) एवं परोढामुदाहृत्य कन्यायाः परकीयायास्तावत्स्वरूपं दर्शयति—**कन्येति**। अजातोपयमा न जातः उपयमो विवाहो यस्याः सा तादृशी "विवाहोप-

(२४) अस्याश्च पित्राद्यायत्तत्वात्परकीयात्वम् । यथा मालतीमाधवादौ मालत्यादिः ।

**(२५) धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका ॥ ६७ ॥**

**(२६) निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि ।**
**वित्तमात्रं समालोक्य सा रागं दर्शयेद्बहिः ॥ ६८ ॥**
**काममङ्गीकृतमपि परिक्षीणधनं नरम् ।**
**मात्रा निःसारयेदेषा पुनःसंधानकाङ्क्षया ॥ ६९ ॥**

---

यमौ समौ" इत्यमरः । **नवयौवनेति** । अन्यथा सुरतौत्कट्यं न स्यादिति भावः ।

( २४ ) नन्वेवं लक्षणे कृते कन्यायाः कथं परकीयात्वमत आह-**अस्याश्चेति** । अनेन च प्रीतिविषयीभूतनायकापेक्षया अन्यजनाधीनत्वं परकीयात्वमिति लक्षणं द्योतितम् । उदाहरणान्तरन्तु **नैषधीयचरिते** यथा—

"अनैषधायैव जुहोति तातः किं मां कृशानौ न शरीरशेषाम् ।
ईष्टे तनूजन्म तनोः स जन्मा मत्प्राणनाथस्तु नलस्तथापि" ॥

अत्र विवाहात्पूर्वमेव दमयन्त्या नलानुरागः ।

( २५ ) स्वान्या साधारणीत्युक्तां साधरणीमाह—**धीरेति** । धीरा सुरतपण्डिता कला नृत्यगीतादयः यद्वा कला विलासकला विलासो विब्बोकादयः । तत्र प्रगल्भा अतिनिपुणा सामान्यनायिका साधारणीनायिका सा च वेश्या इत्यर्थः । धीरा प्रगल्भेति तु तस्या एव भेदद्वयम् । लक्षणन्तु धैर्य्यादिगुणविशिष्टत्वे सति वेश्यात्वं सामान्यनायिकात्वमिति ध्येयम् ।

( २६ ) वेश्यां बोधयितुं तत्स्वभावं निरूपयति—**निर्गुणानपीति** । सा वेश्या निर्गुणानपि निरस्ता गुणा वदान्यत्वाद्यतिरिक्ता धैर्य्यादयो येषांस्तान् जनान् न द्वेष्टि न बहिर्विद्वेषं प्रकटयति तेभ्यो धनलाभसम्भवादित्याशयः । गुणिष्वपि वदान्यत्वाद्यतिरिक्तधैर्य्यादिगुणवत्स्वपि जनेषु न रज्यति बहिर्दर्शयते नत्वन्तर्वहति तथा सति अनुरागेणैव रिरंसया पुरुषप्रवृत्तौ धनलाभासम्भव इति भावः । वित्तमात्रं समालोक्य स्वकामिनः पुरुषस्य धनमात्रं दृष्ट्वा बहिः कृत्रिमम् , न पुनरन्तरेणापीति भावः, रागमनुरागं दर्शयेत् केवलधनलिप्सयेति तत्त्वम् । अनेन च केवलम् अर्थलाभलोभेन जनमात्रकामुकी वेश्येति प्रदर्शितं भवति । एषा वेश्या कामंमत्यर्थं यथास्यात्तथा अङ्गीकृतमपि वल्लभत्वेन स्वीकृतमपि परिक्षीणधनं हेत्वन्तरेण प्रदानेन वा नष्टार्थं नरं स्वकामुकं जनं पुनः सन्धानकांक्षया पुनरपि कालान्तरीणसङ्घटनेच्छया मात्रा मय्यनुरक्ततया सर्वं द्रव्यादिकं मदधीनं विधाय क्षीणधनोऽयं सञ्जातः, अथ यद्येनं निस्सारयिष्ये तर्हि कथमपीतस्ततो धनमुपाज्र्य शीघ्रमेव मामुपैष्यतीत्यभि-

तस्कराः पण्डका मूर्खाः सुखप्राप्तधनास्तथा ।
लिङ्गिनश्छन्नकामाद्या अस्याः प्रायेण वल्लभाः ॥ ७० ॥
एषापि मदनायत्ता क्वापि सत्यानुरागिणि ।
रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभम् ॥ ७१ ॥

(२७)पण्डको वातपाण्ड्वादिः। छन्नं प्रच्छन्नं ये कामयन्ते ते छन्नकामाः।

लाषयेति भावः। वेश्याया एष स्वभावो यदनुरक्तं निष्पीड्य परं परमभिलषति कथमप्युपार्जितधनमनुरञ्जयतीति । जननीद्वारा निःसारयेत् दूरीकारयेत्, नत्वात्मना, पुनर्धनयोगे सति मातरि दोषं दत्त्वा परिग्रहणात्। इदमुपलक्षणम्-तेन कुट्टिन्याद्यन्यद्वाराऽपि बोध्यम्। तस्कराश्चौराः पण्डकाः "पडि गतौ" अस्मादच्। पणतेर्वा अमन्ताडुः ततश्चाल्पार्थे कः। वातरोगेण विनष्टाण्डकोशाः, तथा चोक्तं चरके द्वितीयाध्याये—"वाय्वग्निदोषाद्वृषणौ तु यस्य नाशं गतौ वातिकपण्डकः सः" इति। मूर्खाः सर्वविधविद्यारहिताः सुखेनानायासेन प्राप्तं धनं यैस्ते, सुखप्राप्तिधनन्तु पित्रा द्यर्जितधनम्, दुःखार्जितस्य व्ययितुमशक्यत्वात् । लिङ्गिनस्तपस्विवेषधारिणः, छन्नकामाः गुप्तेन सुरताभिलाषिणो जनाः, प्रच्छन्नकामिनो हि प्रकटं न कामयन्ते लोको मा शासीदिति ते कामेन बाध्यमाना बहु वितरन्ति छन्नं यथा स्यात्तथा कामयन्त इति, कर्मण्यण्। तदाद्याः (क) प्रायेणाधिक्येन "प्रायश्चानशने मृत्यौ प्रायो बाहुल्यतुल्ययोः" इति विश्वः। आसां वेश्यानां वल्लभाः प्रियाः, एषा वेश्याऽपि मदनायत्ता कामाधीना मदनस्पवशत्वस्य स्त्रीपुरुषसाधारणत्वात्तदुद्भवस्तस्यां नायुक्तः। क्वाऽपि कस्मिन्नऽपि पुरुषे सत्यानुरागिणी प्रतारणशून्यानुरक्ता स्यात्। रक्तायामनुरागिण्या विरक्ताया वा अस्यां वेश्यायां रत सुदुर्लभम् अत्यन्तं दुःखेन सम्पादयितुं शक्यमित्यर्थः। रक्तायामधिकरमणेन देहक्षयशङ्कया तयानेकछलविधानात्, विरक्तायामपि विरागादेवेति भावः। ननु रतमस्यां न स्यादित्यनुक्त्वा सुदुर्लभमिति पदोपादानं किमर्थमिति चेत्? एतत्प्रायिकाभिप्रायेणाभिधानात्। यत्त—टिप्पणीकृता "रतमस्यां सुदुर्लभमि"ति प्रतीकमुपादाय खण्डितं तन्न पेशलम्, न हि सुदुर्लभमित्यस्यात्यन्तमुपादेयमित्यर्थो ग्रन्थकृतामभिप्रेतः "वित्तमात्रमि" त्यादिना स्पष्टं तत्सम्भोगतुच्छत्वस्य प्रदर्शनात्।

( २७ ) स्फुटतयार्थप्रतिपत्तिर्द्वयोर्न भवतीति तद् व्याचष्टे-पण्डक इति।

(क) "छन्नकामाद्या" इत्यत्राद्यपदं कामसूत्रेष्वशिष्टानां वाचकम्। यथोक्तं—"स्वतन्त्रः पूर्वे वयसि वर्त्तमानो वित्तवानपरोक्षवृत्तिरधिकरणवानकृच्छ्राधिगतवित्तः। सङ्घर्षवान् सन्ततायः सुभगमानी श्लाघनकः पण्डकश्च पुंशब्दार्थी। समानस्पर्धी स्वभावतस्त्यागी। राजनि महामात्रे वा सिद्धो दैवप्रमाणवित्तावमानी गुरूणां शासनातिगः सजातानां लक्ष्यभूतः सवित्त एक पुत्रो लिङ्गी प्रच्छन्नकामः शूरो वैद्यश्च" ॥ इति।

तत्र रागहीना यथा लटकमेलकादौ मदनमञ्जर्यादिः । रक्ता यथा मृच्छकटिकादौ वसन्तसेनादिः ।

(२८) पुनश्च --

(२९) अवस्थाभिर्भवन्त्यष्टावेताः षोडशभेदिताः ।
स्वाधीनभर्तृका तद्वत्खण्डिताथाभिसारिका ॥ ७२ ॥
कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका ।
अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा ॥ ७३ ॥

(३०) तत्र—

(३१) कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम् ।
विचित्रविभ्रमासक्ता सा स्यात्स्वाधीनभर्तृका॥ ७४ ॥

---

पण्डको रतिप्रतिबन्धकव्याधिविशेषः । "न रज्यति गुणिष्वपि" इत्यस्योदाहरणं दर्शयति—**रागहीना यथेति** ।

लटकमेलकादावित्यत्रादिपदेन **हास्यार्णवादेः** परिग्रहः । मदनमञ्जर्यादिरित्यत्रादिपदेन **शशाङ्कलेखादेः** परिग्रहः ।

"क्वापि सत्यानुरागिणी" इत्यस्य चोदाहरणं दर्शयति—**रक्ता यथेति** । मृच्छकटिकादिरित्यत्रादिपदेन **मालविकाग्निमित्रादेः** परिग्रहः । वसन्तसेनादिरित्यत्रादिपदेन**रावत्यादेः** परिग्रहः ।

( २८ ) अथ नायिकानामवस्थाभेदेनान्येऽपि भेदाः सम्भवन्तीति दर्शयितुमुत्थापयति—**पुनश्चेति** । पुनरपि तासामेव भेदान् प्रदर्श्यत इति शेषः ।

( २९ ) **अवस्थाभिरिति** । त्रयोदश स्वीयाः परकीये द्वे साधारणी चैकेति मिलित्वा षोडश भेदिता एता स्वाधीनपतिकाद्यष्टावस्थाभिरष्टौ अष्टगुणा भवन्ति । ता एव प्रतिपादयति—**स्वाधीनभर्तृकेत्यादि** ।

( ३० ) **तत्रेति** । तास्वष्टासु मध्य इत्यर्थः ।

( ३१ ) स्वाधीनभर्तृकालक्षणं निरूपयति—**कान्त इति** । कन्यकायास्तु उपनायक एव कान्तो भर्त्ता चेति बोध्यम् । रतिगुणेन अनुरागरूपगुणेन आकृष्ट आकर्षित कान्तः पतिः, यस्याः अन्तिकं समीपम् , न जहाति परित्यजति विचित्रविभ्रमासक्ता विचित्रो भूषणाद्यन्तराऽपि कान्तमनोग्राही यो विभ्रमः शोभा तया आसक्ताऽऽश्लेषितेति तादृशी, सा नायिका स्वाधीनभर्तृका स्यात् । स्वस्या अधीनोऽऽयत्तो भर्त्ता यस्याः सा तथोक्ता ।

(३२) यथा — 'अस्माकं सखि वाससी—' इत्यादि ( १४१ पृ. ) ।
(३३) पार्श्वमेति प्रियो यस्या अन्यसंयोगचिह्नितः ।

( ३२ ) पूर्वोदाहरणान्येवास्या अपीत्यभिप्रायेणाह—यथेति ।

**अस्माक**मिति । पद्येऽस्मिन् "अस्याः प्रियो नान्यतो दृष्टिं निक्षपति" इत्यनेन रतिगुणाकृष्टत्वेन प्रियस्य तदन्तिकापरित्यागात् प्रतिपादयित्री नायिका स्वाधीनभर्तृका । **इत्यादी**त्यादिपदेन "दृष्टा दृष्टि..." "कान्ते तथा..." "स्वामिन् भङ्गुरया..." इत्याद्युदाहरणं बोध्यम्। तथा च **रसमञ्जरीकारा** अपीत्थमुदाहरन्ति । मुग्धा स्वाधीनपतिका यथा—

'मध्ये न कृशिमा, स्तने न गरिमा, देहे न वा कान्तिमा,
श्रोणौ न प्रथिमा, गतौ न जड़िमा, नेत्रे न वा वक्रिमा ।
लास्ये न द्रढ़िमा, न वाचि पटिमा, हास्ये न वा स्फीतिमा
प्राणेशस्य तथाऽपि मज्जति मनो मय्येव किं कारणम् ॥"

मध्या स्वाधीनपतिका यथा—

"यदपि रतिमहोत्सवे नकारो यदपि करेण च नीविधारणानि ।
प्रियसखि ! पतिरेष पार्श्वदेशं तदपि न मुञ्चति तत्किमाचरामि ॥"

प्रगल्भा स्वाधीनपतिका यथा—

"वक्त्रस्याधरपल्लवस्य वचसो हास्यस्य लास्यस्य वा
धन्यानामरविन्दसुन्दरदृशां कान्तस्तनोति स्तुतिम् ।
स्वप्नेनापि न गच्छति श्रुतिपथं चेतः पथं दृक्पथं
काऽप्यन्या दयितस्य मे सखि ! कथं तस्यास्तु भेदग्रहः ॥"

परकीया स्वाधीनपतिका यथा—

"स्वीयाः सन्ति गृहे गृहे मृगदृशो यासां विलासक्कणत्—
काञ्चीकुण्डलहेमकङ्कणझणत्कारो न विश्राम्यति ।
को हेतुः सखि ! कानने पुरपथे सौधे सखीसन्निधौ
भ्राम्यन्ती मम वल्लभस्य परितो दृष्टिर्न मां मुञ्चति ॥"

स्वाधीनपतिका सामान्यवनिता यथा—

"सन्त्येव प्रतिमन्दिरं युवतयो यासां सुधासागर-
स्रोतः स्यूतसरोजसुन्दरचमत्कारा दृशो विभ्रमाः ।
चित्रं किन्तु विचित्रमन्मथकलावैशद्यहेतोः पुन-
र्वित्तं चित्तहरं प्रयच्छति युवा मय्येव किं कारणम् ॥ इति ।

( ३३ ) खण्डितालक्षणं निरूपयति—**पार्श्वमेतीति** । अन्यसम्भोगचिह्नितः अन्यस्या नायिकायाः, संभोगचिह्नं दन्तक्षततदीयदुकूलपरिधानादिकमस्य सञ्जातमिति

सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता ॥ ७५ ॥

(३४) यथा—'तदवितथमवादीः—' इत्यादि (१६७ पृ.)

(३५) अभिसारयते कान्तं या मन्मथवशंवदा ।

स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका ॥ ७६ ॥

(३६) क्रमाद्यथा—

(३७) न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि।
निपुणं तथैनमभिगम्य वदेरभिदूति काचिदिति संदिदिशे ॥

तथोक्तः सन् तारकादित्वादितच् । प्रियः पतिः यस्याः पार्श्वं सन्निकटम् , एति आयाति, ईर्ष्यया परोपभोगचिह्नावलोकनजन्येनासहिष्णुताहेतुभूतेन मनोविकारविशेषेण कषायिता कलुषीकृतचित्ता सा नायिका खण्डितेति धीरैः पण्डितैः कथिता । व्युत्पत्तिश्चास्याः खण्डिता समये परित्यक्ता । कन्यकायास्तु उपनायक एव प्रियः । एवं साधारण्या अपि ।

( ३४ ) उदाहरति—**यथेति** । अस्मिन् पद्ये परनायिकादुकूलपरिधानरूपसम्भोगचिह्नितस्य कान्तस्यागमनात् ईर्ष्या कलुषिता, प्रतिपादयित्री नायिका खण्डिता। अत्राप्यादिपदेन "सा पत्युः प्रथमा..." "एकत्रासन..." "अनलङ्कृतोऽपि" इत्याद्युदाहरणान्यवगन्तव्यानि । अन्यानि विस्तरभयान्नेहोपन्यस्तानि ।

( ३५ ) अभिसारिकालक्षणं निरूपयति—**अभिसारयत इति** । या मन्मथं मदनं वशमधीनं वदति सा तथोक्ता सती कान्तं वल्लभं पुरुषम् अभिसारयते स्वाभिमुखं दूत्यादिना प्रापयति या वा स्वयमेवाभिसरति वल्लभाभिमुखं याति सा धीरैरभिसारिका उक्ता । तथा च अभिसारयित्र्यभिसारणी चेति, द्विविधाऽभिसारिका । न च स्वीयायाःकथमभिसारः उपनायकाभिसारे परोढात्वं स्यादिति वाच्यम् , पितृगृहस्थायाः स्वस्वामिन्यपि अभिसारसम्भवात् ।

( ३६ ) उदाहर्तुमुपक्रमते—**क्रमाद्यथेति** । प्रथमं कान्तमभिसारयन्त्यास्ततः कान्तमभिसरन्त्या उदाहरणं ब्रूम इत्यर्थः ।

( ३७ ) प्रथमामभिसारिकामुदाहरति—**न चेति** । शिशुपालवधस्येदं पद्यम् । स वल्लभो मे मम मन्मथवशंवदाया लघुताञ्च तुच्छस्वभावत्वं यथा नावगच्छति मनागपिकामावेगासहिष्णुतामिति भावः । यथा च मयि करुणाम् असमयेऽपि रमणे प्रवृत्तिरूपां दयामित्यर्थः कुरुते आगत्येति भावः । एनं कान्तम् अभिगम्य सम्मुखं प्राप्य न तु यथाकथमपि प्रियवर्गादिद्वारेत्याशयः, त्वं तथा निपुणं यथा स्यात्तथा वदेः । काचित् नायिका अभिदूति अभिमुखागतां दूतीम्प्रति संदिदिशे वाचिकं न्यस्तवती । दूतीद्वाराभिसारणकरणादियमाद्याभिसारिका । **प्रमिताक्षरा** वृत्तम् । "प्रमिताक्षरा सजससैः कथिता" इति लक्षणात् ।

(३८) 'उत्क्षिप्तं करकङ्कणद्वयमिदं, बद्धा दृढं मेखला,
यत्नेन प्रतिपादिता मुखरयोर्मञ्जिरयोर्मूकता ।
आरब्धे रभसान्मया प्रियसखि ! क्रीडाभिसारोत्सवे,
चण्डालस्तिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः ॥'

(३९) संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा ।
अवगुण्ठनसंवीता कुलजाभिसरेद्यदि ॥७७॥

(४०) विचित्रोज्ज्वलवेषा तु रणन्नूपुरकङ्कणा ।

( ३८ ) अथ द्वितीयामभिसारिकामुदाहरति—**उत्क्षिप्तमिति**। तमस्विन्यां चन्द्रोदयात् पथि स्वस्याभिसारभङ्गं सख्यां निवेदयन्त्या उक्तिरियम् । प्रियसखि ! इदं करकङ्कणद्वयं करभूषणयुग्मम् उत्क्षिप्तं मणिबन्धादूर्ध्वं न्यस्तम् , एतेन तयोः शब्दप्रतिरोधः । यथा शब्दो न भवेत्तथा मेखला काञ्ची दृढं बद्धा । मुखरयोः शब्दायमानयोः मञ्जीरयोर्नूपुरयोः मूकता मूकीभावत्वं यत्नेनात्यन्तमुद्यमेन प्रातिपादिता विहिता । मया रभसात् आनन्दात् क्रीड़ाभिसारोत्सवे विहारायाभिसरणरूपोत्सवे आरब्धे सति, चण्डालः चण्डालवत्क्रूरः विधुर्निशापतिः तिमिरमेव अन्धकार एव आवरकत्वात् अवगुण्ठनपटः आच्छादनवस्त्रं तस्य क्षेपं हठादुदयेनापसारणं विधत्ते अतीतसामीप्ये वर्त्तमानं व्यधादित्यर्थः । अतः पूर्णमभिसरणं नासीदिति भावः । अत्र स्वयमभिसरणात् वक्त्री नायिकेयं द्वितीयाभिसारिका । **शार्दूलविक्रीड़ितं** छन्दः। तल्लक्षणन्तूक्तं प्रागेव ( १५८ पृ० )

( ३९ ) प्रसङ्गात् कुलजादिभेदेनाभिसरणक्रममाह—**संलीनेति**। यदि कुलजा- कुलीना स्वकीयेति यावत् । अभिसरेत्तदा सा स्वेषु गात्रेषु अङ्गेषु संलीना अतीव- संकुचिता सङ्कुचितसर्वाङ्गीत्यर्थः । मूकीकृतानि निःशब्दीकृतानि भूषणानि यया सा तथोक्ता, अवगुण्ठनेनाच्छादनपटेन संवीता संवृतदेहा अन्यकर्तृकस्वरूपज्ञान- भयादिति भावः । **एतदुपलक्षणम्**-अनुलेपनादिनापि संवीता तत्रान्धकारे नीलवस्त्र- कुसुमकस्तूरिकासंवीता ज्योत्स्नायां चन्दनद्रवसंवीता । क्रमेणोदाहरणं यथा—

"सितं वसनमर्पितं वपुषि नीलचैलभ्रमा-
न्मया मृगमदाशया मलयजद्रवः सेवितः ।
करेण परिबोधितः स्वजनशङ्कया दुर्जनः
परं परमपुण्यतः सखि ! न लङ्घिता देहली ॥"

"मल्लिकादालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः" ॥

( ४० ) वेश्याभिसरणं दर्शयति—**विचित्रेति**। यदि वेश्या अभिसरेत्तदा

प्रमोदस्मेरवदना स्याद्वेश्याभिसरेद्यदि ॥ ७८ ॥

( ४१ ) मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसंचारा स्यात्प्रेष्याभिसरेद्यदि ॥ ७९ ॥

( ४२ ) तत्राद्ये 'उत्क्षिप्तं-इत्यादि ( १८० पृ. ) । अनयोरूह्यमुदाहरणम् ।

प्रसङ्गादभिसारस्थानानि कथ्यन्ते—

( ४३ ) क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम् ।
मालापञ्चः श्मशानं च नद्यादीनां तटी तथा ॥ ८० ॥
एवं कृताभिसाराणां पुंश्चलीनां विनोदने ।

विचित्रो विलक्षणः उज्ज्वलः प्रकाशमानो वेशो भूषणं यस्याः सा तथोक्ता, रणन्ती शब्दायमाने नूपुरकङ्कणे यस्याः सा, तथा प्रमोदेन धनादिजन्यहर्षेण स्मेरं विकसितं वदनं यस्याः सा, तादृशी च स्यात्। वेश्या तु द्रष्टॄणां चित्ताकर्षणार्थम् एवं करोति ।

( ४१ ) प्रेष्याभिसरणं दर्शयति—मद इति । यदि प्रेष्या अनुचरी अभिसरेत्तदा सा मदेन कामोन्मत्ततया स्खलितः त्रुटितः संलापो भाषणं यस्याः सा, विभ्रमेण विलासेन उत्फुल्ले विकसिते लोचने नयने यस्याः सा, आविद्धया उद्धतया गत्या पादन्यासेन सञ्चारः सङ्केतस्थानप्राप्तिर्यस्याः सा तथोक्ता, अतिशयमदनातुरत्वादिति भावः ।

( ४२ ) उदाहरति—तत्राद्य इति । तत्र तेषु अभिसरणक्रमेषु मध्ये आद्ये कुलजाभिसरणप्रकारे "उत्क्षिप्तम्" इत्यादिश्लोकमुदाहरणम् । अन्ययोः वेश्याप्रेष्याभिसरणप्रकारयोः । तत्र क्रमेणोदाहरणम् । यथा—

"अनणुरणन्मणिनूपुरमविरतशिञ्जानमाञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥"

इयं हि अभिसरन्तीं वेश्यां प्रति शान्तस्य कस्यचिदुक्तिः । रणरणकं कामचिन्ताम् ।
प्रेष्याभिसारिका यथा—

"ताम्बूलाक्तं दशनमसकृद्दर्शयन्तीह चेटी
वोटीहेषात् विकृतरुदितं हेतुहीनं हसन्ती ।
स्थानास्थानस्खलितपदविन्यासमाभाषमाणा
यूनामग्रे सरति कुटिलं नर्त्तितोच्चैर्नितम्बम् ॥

( ४३ ) अभिसारस्थानान्याह—क्षेत्रमिति । क्षेत्रम् आच्छादनोपयोगिशस्योत्पत्तिस्थानम्, वाटी "वाटो वास्तौ गृहोद्यान" इति हेमोक्त्या निर्जनवास्तु स्थानम्, मालापञ्चः पुष्पोद्यानमिति विवृतिकारः, यद्यपि मालापञ्चशब्दः संदिग्धस्तथापि विवृतिव्याख्यापुष्पोद्यानपदाभिप्रायेण मालानां पञ्चो व्यक्तीकरणं यस्मादित्यादिक्रमेण यथाकथञ्चिद् व्याख्येयः । मालापं च इति पाठे मा नास्ति आलापो यत्र तच्छून्यं गृहमित्यर्थः । मालयञ्चेति पाठे मा लक्ष्मीः शोभा लीयतेऽवतिष्ठत अस्मिन्निति व्युत्पत्त्या मालयमुपवनम् । कृताभिसाराणाम् उदाहृतविधिना विहिताभिसाराणाम् पुंश्चलीनां व्यभिचारिणीनां विनोदने सुरतोत्सवाय एवमेतानि अष्टौ स्थानानि अष्टानां स्थानानां महर्षिणोक्तत्वाद्भिन्ननिर्देशः । यदाह—"स्थनान्यष्टौ प्रवदति मुनिः पुंश्चलीनां विनोदे"

**स्थानान्यष्टौ तथा ध्वान्तच्छन्ने कुत्रचिदाश्रये ॥ ८१ ॥**

**( ४४ ) चाटुकारमपि प्राणनाथं रोषादपास्य या ।**
**पश्चात्तापमवाप्नोति कलहान्तरिता तु सा ॥ ८२ ॥**

यथा मम तातपादानाम्—

( ४५ ) 'नो चाटुश्रवणं कृतं, न च दृशा हारोऽन्तिके वीक्षितः,
कान्तस्य प्रियहेतवो निजसखीवाचोऽपि दूरीकृताः ।
पादान्ते विनिपत्य तत्क्षणमसौ गच्छन्मया मूढया
पाणिभ्यामवरुध्य हन्त सहसा कण्ठे कथं नार्पितः ॥'

**( ४६ ) प्रियः कृत्वापि संकेतं यस्या नायाति संनिधिम् ।**
**विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता ॥ ८३ ॥**

यथा—

( ४७ ) 'उत्तिष्ठ दूति, यामो, यामो यातस्तथापि नायातः ।

---

इति अष्टौ स्थानानि एतान्येव क्षेत्रादीनि । तथा ध्वान्तच्छन्नेषु अन्धकारावृतेषु क्वचित् केषुचिद् गृहादिषु स्थानेषु आश्रये आधारे पुंश्चल्योऽभिसरन्तीति शेषः । आश्रय इति प्रथमान्तपाठे तु ध्वान्तच्छन्ने कुत्रचिद्देशे आश्रयोऽधिष्ठानं पुंश्चलीनां विनोदाय भवतीत्यर्थः ।

( ४४ ) कलहान्तरितां लक्षयति—चाटुकारमपीति । या नायिका रोषात् चाटुकारमपि प्रियवचनभाषिणमपि प्राणनाथं वल्लभम् अपास्य परित्यज्य पश्चात्तापम् अवाप्नोति प्राप्नोति सा कलहान्तरिता । कलहेन अन्तरिता व्यवहितं या सा तथोक्ता । कन्यका साधारण्योरुपनायक एव प्राणनाथः ।

( ४५ ) कलहान्तरितानायिकामुदाहरति—नो चाटुश्रवण इति । प्रार्थ्यमानस्यापि वल्लभस्य रोषात् निरसनेन पश्चात्तापं प्राप्तायाः सखीं प्रति कस्याश्चिदुक्तिरियम् । चाटोः वल्लभोक्तप्रियवचनस्यापि श्रवणं नो न कृतं विहितम् । अन्तिके समीपे हारो मम प्रसादाय नायकेन दीयमानो मुक्ताकलापः दृशा चक्षुषाऽपि नच वीक्षितो मया नावलोकितः, तथा कान्तस्य प्रियहेतवे सन्तोषकरणाय निजसख्याः वचोऽपि उपदेशवचनान्यपि दूरीकृताः त्यक्ताः । असौ कान्तः पादान्ते विनिपत्य मम प्रसन्नताविधानाय पादसमीपे विनिपत्य तत्क्षणमेव गच्छन् मया निराकृत इति शेषः । मूढया मया पाणिभ्यामवरुध्य सहसा तत्क्षणमेव कथं कण्ठे नाऽर्पितो न स्थापितः, हन्त इति खेदे 'हन्त हर्षेऽनुकम्पायां प्रसादे विस्मयेऽपि च' इत्यमरः ।

शार्दूलविक्रीडितं छन्दः । तल्लक्षणन्तूक्तं प्रागेव । ( १६८ )

अत्रानुनयतत्परप्रियनिरसनेनानुतापलब्धेयं वक्त्री नायिका कलहान्तरिता ।

( ४६ ) विप्रलब्धां लक्षयति—प्रिय इति । प्रियः कान्तो जनः सङ्केतं निश्चयं "तत्र त्वया विहरिष्यामी"ति प्रतिज्ञामिति यावत्, कृत्वापि यस्याः सन्निधिं समीपं नायाति न प्राप्नोति तेनैव तु नितान्तम् अवमानिता तिरस्कृता सा विप्रलब्धा ज्ञेया । विप्रलब्धा विशेषेण प्रलब्धा वञ्चितेति तादृशी ।

( ४७ ) उदाहरति—उत्तिष्ठ इति । सङ्केतस्थानं प्राप्य प्रियविलम्बमवलोकयन्त्याः

याऽतः परमपि जीवेज्जीवितनाथो भवेत्तस्याः ॥'

**(४८) नानाकार्यवशाद्यस्या दूरदेशं गतः पतिः ॥**
**सा मनोभवदुःखार्ता भवेत्प्रोषितभर्तृका ॥ ८४ ॥**

यथा—

(४९) 'तां जानीयाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥'

कामिन्याः दूतीं प्रति सखेदोक्तिरियम् । हे दूति ? उत्तिष्ठ वयं यामो गच्छामः स्वस्थान इति शेषः, येन यामो मदाभिगमनप्रहरो यातः सङ्केतकालो व्यतीत इत्यर्थः । तथापि स प्रियो नायातो नागतः । अतः परमपि या जीवेत् तस्या नायिकायाः स जीवितनाथः प्राणेश्वरो भवेत् भविष्यतीत्यर्थः न तु मम । दुःसहकामवेदनया नातः परमहं जीवामि स च मे न भवेदिति भावः ।

आर्य्या वृत्तम् । तल्लक्षणं तु—

"यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि ।
अष्टादशद्वितीये चतुर्थके पञ्चदश साऽऽर्य्या ॥" इति ।

अत्र सङ्केतं विधायापि कान्तस्यानागमनादियं नायिका विप्रलब्धा ।

(४८) प्रोषितभर्त्तृकालक्षणमाह—नानाकार्येति । अत्रापि कन्यापरोढ्योरुपनायक एव पतिः । यस्याः पतिः नानाकार्य्यवशात् शिक्षार्थार्जननियोगादिवशात्, इदं शापसंभ्रयोरप्युपलक्षणम्, तेनोक्ते उदाहरणे नाव्याप्तिः । दूरदेशं गतः मनोभवेन कामेन दुःखार्त्ता पीड़ातुरा सा नायिका प्रोषितो विदेशं प्राप्तः भर्त्ता यस्यां सा तादृशीतिव्युत्पत्त्या प्रोषितभर्त्तृका भवेत् ।

(४९) प्रोषितभर्त्तृकामुदाहरति-तां जानीया इति । मेघदूते कुबेरशापप्रतिरुद्धप्रियासन्निधिगमनस्य प्रोषितस्य कस्यश्चिद्यक्षस्य मेघं सम्बोध्य प्रियावस्थाकथनमिदम् । सहचरे सहभोगिनि मयि तन्नायके यक्षे, दूरीभूते स्वसहचरे चक्रवाके , एकामसहायिनीं चक्रवाकीं पक्षिणीमिव विद्यमानां परिमितकथां मितालापां मृतप्रायामित्यर्थः, तां पूर्वकथितां नायिकां मे मम द्वितीयं जीवितं प्राणं जानीयाः। यथा सा मां विना परिमितकथा तथा तां विना अहमपि परिमितकथ एवास्मीति सा मम प्राणमेवेति त्वं जानीहीत्याशयः । सम्प्रति वर्णितस्वरूपवैषम्येऽवलोकितेऽपि त्वया न किञ्चिद्भ्रमितव्यमित्याह—गाढोत्कण्ठामिति । गुरुषु विरहेण वृद्धिमुपतेषु एषु दिवसेषु गच्छत्सु सत्सु गाढोत्कण्ठाम् अस्मद्र्थमतीवोत्कण्ठिताम् (क) अत एव तां बालां शिशिरमथितां हिमपातेन व्यग्रीकृतां पद्मिनीं 'पद्मिनी योषिदन्तरे अब्जेऽब्जिन्यां सरस्यां चेति हैमः' वा इव अन्यरूपां क्षीण मलिनां अहं जातां मन्ये । इवार्थे वाशब्दोऽत्र "वा स्याद्विकल्पोपमयोरिवार्थे च समुच्चये" इति

(क) उत्कण्ठितालक्षणं यथा—
"रागे त्वलब्धविषये वेदना महती तु या । संशोषिणी च गात्राणां तामुत्कण्ठां विदुर्बुधाः ॥ इति ।'

( ५० ) कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि ।
सा तु वासकसज्जा स्याद्विदितप्रियसङ्गमा ॥ ८५ ॥

यथा राघवानन्दानां नाटके—

( ५१ ) 'विदूरे केयूरे कुरु, करयुगे रत्नवलयै-
रलं, गुर्वी ग्रीवाभरणलतिकेयं किमनया ।
नवामेकामेकावलिमयि मयि त्वं विरचये-
र्न नेपथ्यं पथ्यं बहुतरमनङ्गोत्सवविधौ ॥'

विश्वात् "ववा यथा तथैवैवं साम्ये" इत्यमराच्च बोध्यः । मन्दाक्रान्ताच्छन्दः । तल्लक्षणं तु "मन्दाक्रान्ताम्बुधिरभनगैर्म्मो भनौ गौ च युग्मम्" इति ।

अत्र कुबेरशापेन भर्त्तुर्दूरदेशस्थितत्वादियं नायिका प्रोषितभर्त्तृका ।

( ५० ) वासकसज्जालक्षणमाह-कुरुत इति । सज्जिते शय्याप्रदीपादिभिः केलियोग्यतया परिष्कृते वासवेश्मनि निवासस्थाने, यस्याः मण्डनं प्रसाधनं सखीजनादिः कुरुते विरचयति विदितप्रियसङ्गमा विलम्बेन, निश्चितप्रियसङ्गमा । स्वीयाकन्यकयोस्तु पितृगृहस्थयोरेवंभावो बोध्यः । सा तु नायिका वासके वासवेश्मनि सज्जा यस्याः तथोक्ता वासकसज्जा स्यात् ।

( ५१ ) वासकसज्जामुदाहरति—विदूरे इति । वासगृहे नायकसंयोगार्थमल्पभूषणरचनार्थं सखीं प्रेरयन्त्याः कस्याश्चिन्नायिकाया उक्तिरियम् । केयूरे अङ्गदद्वयं "केयूरमङ्गदं तुल्ये" इत्यमरः, विदूरे नितान्तं दूरे कुरु केयूरद्वयं न प्रसाधयेत्यर्थः । करयुगे रत्नवलयैः रत्नजटितैरपि कङ्कणैः, अलं तत्प्रयोजनं नास्तीति भावः । इयं ग्रीवायां कण्ठे आभरणलतिका माला गुर्वी गुरुतरा आलिङ्गने दुःखदायीत्यर्थः, अतोऽनया ग्रीवाभरणरूपया लतया नास्ति प्रयोजनमिति भावः । अयीति मधुरामन्त्रणे, हे सखि ! त्वं नवीनां नवगुम्फिताम्, अन्यथा परिरम्भभरेण झटिति त्रुटिता स्यात्, बहुयष्टिकहारस्य परिरम्भातिविघ्नहेतुत्वादाह—एकावलिमिति । एकयष्टिकहारमित्यर्थः । एकां केवलां मयि विरचयेः कुर्य्याः, ननु कथं सर्वाणि परित्यज्यैकमेतदेवाभरणमित्यत आह-अनङ्गेति । अनङ्गोत्सवविधौ अनङ्गो मदनस्तस्योत्सवः प्रियसङ्गजन्यानन्दस्तस्य विधिर्विधानं तस्मिन् तथोक्ते, पथ्यं न हितम् । काठिनसंयोगत्वेन आलिङ्गने दुःखदायी अतोऽलङ्कारान्तरं निषेधतीति भावः ।

शिखरिणिच्छन्दः । तल्लक्षणं तु-"रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणी" ।

अत्र वासगृहे मण्डनकरणादियं नायिका वासकसज्जा (क)बोध्या ।

( क ) वासवेश्मनि सुकल्पिततल्पे या समागमविधिं विदधाना ।
तिष्ठति प्रियसमागमसज्जा तां मुनिर्वदति वासकसज्जाम् ॥
अङ्गेष्वाभरणं करोति बहुशः पत्रेऽपि सञ्चारिणि
प्राप्तं त्वां परिशङ्कते वितनुते शय्यां चिरं ध्यायति ।
इत्याकल्पविकल्पतल्परचनासङ्कल्पलीलाशत-
व्यासक्ताऽपि विना त्वया वरतनुर्नैषा निशां नेष्यति ॥

इति लक्षणोदाहरणं पुस्तकान्तरे पाठः समुलभ्यते ।

(५२) आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः ।
तदनागमदुःखार्ता विरहोत्कण्ठिता तु सा ॥ ८६ ॥

यथा—

(५३) 'किं रुद्धः प्रियया कयाचि, दथवा सख्या ममोद्वेजितः,
किं वा कारणगौरवं किमपि, यन्नाद्यागतो वल्लभः ।
इत्यालोच्य मृगीदृशा करतले विन्यस्य वक्त्राम्बुजं
दीर्घं निःश्वसितं, चिरं च रुदितं, क्षिप्ताश्च पुष्पस्रजः ॥'

(५४) इति साष्टाविंशतिशतमुत्तममध्याधमस्वरूपेण ।

(५२) विरहोत्कण्ठितालक्षणमाह—आगन्तुमिति । यस्याः प्रियः कान्तः आगन्तुं कृतचित्तोऽपि कृतस्वीकारोऽपि दैवात् दैववशेन नायाति न प्राप्नोति, तदनागमेन प्रियानागमेन दुःखार्त्ता सा तु नायिका विरहेण दैवकृतप्रतिबन्धेन उत्कण्ठिता विरहोत्कण्ठिता भवेत् । अत्रापि कन्यकापरोढयोरुपनायक एव पतिः ।

(५३) विरहोत्कण्ठितामुदाहरति—किं रुद्ध इति । संकेतस्थाया नायिकाया प्रियानागमने सखेदोक्तिरियम् । कयाचित् अन्यया प्रियया वयस्या आनेतुं मयैव प्रेषितयेत्यर्थः, किं स्वित्, रुद्धः अत्रागन्तु मवरुद्धः, अथवा ममैव सख्या उद्वेजितो वचनवैषम्येण विरक्तीकृतः किं वा किमपि अवबुद्धपूर्वं कारणगौरवं प्रयोजनगुरुत्वं महत्तरं प्रयोजनमिति भावः, तन्नागन्तुम् अवरुणद्धीति शेषः । यद्यस्मात् अद्य 'अस्मिन्नवश्यं त्वत्समीपमागमिष्ये, इति प्रतिज्ञाया विषयभूते दिवसे वल्लभो नागतः, इति चेतसि आलोच्य विचिन्त्य मृगीदृशा हरिणलोचनया नायिकया वक्त्राम्बुजं वदनपङ्कजं करतले विन्यस्य स्थापयित्वा, दीर्घं बहुकालं निःश्वसितं रुदितम् पुष्पस्रजः सुरतार्थधृताः पुष्पमालाश्च क्षिप्ताः देहाद्दूरं पातिताः । शार्दूलविक्रीडितं छन्दः तल्लक्षणं तूक्तं प्राक् (१९८ पृ०)

अत्रागमनाय स्वीकृतिकारिणोऽपि प्रियस्यानागमनेन दुःखपीडितेयं नायिका विरहोत्कण्ठिता(क) ।

(५४) अधुना साकल्येन नायिकाभेदान् गणयितुमाह—इतीति । इति इत्थम् साष्टाविंशतिशतम् , अष्टाविंशत्या सहेति साष्टाविंशति तच्च शतञ्चेति तथोक्तम् । एतेन स्वाधीनभर्तृकात्वाद्यष्टविधिसमुदायसहितेन एकशताष्टाविंशतिप्रकारा नायिका स्युरित्यर्थः । तथाहि—स्वीया तावत्त्रिविधा-मुग्धा मध्या प्रगल्भा चेति । तत्र मुग्धैकधा, मध्याप्रगल्भे तु धीराधीरोभयभेदेन षड्विधे धीरामध्या अधीरामध्या धीराधीरामध्या । एवमग्रेऽपि । षड्विधाश्चैताः जेष्ठत्वकनिष्ठत्वाभ्यां द्विविधाः-धीराज्येष्ठा कनिष्ठा, अधीरा ज्येष्ठा-

(क) उद्दाममन्मथमहाज्वरवेपमानां रोमाञ्चकञ्चुकितमङ्गकमावहन्तीम् ।
गाढानुरागवचनां पुरतः सखीनामुत्कण्ठितां वदति तां भरतः कवीन्द्रः ॥
इति लक्षणान्तरम् ।
एणीदृशः प्रबलतापभयादिवास्याः श्वासानिलाः प्रतिमुहु प्रसरन्ति दूरम् ।
बाष्पाम्बुवीचिषु निमज्जनकातरेव निद्रादृशोर्न सविधेऽपि पदं विधत्ते ॥
इत्युदाहरणान्तरञ्च पुस्तकान्तरे दृश्यते ।

चतुरधिकाशीतियुतं शतत्रयं नायिकाभेदाः ॥ ८७ ॥

( ५५ ) इह च "परस्त्रियौ कन्यकान्योढे संकेतात्पूर्वं विरहोत्कण्ठिते, पश्चा-

कनिष्ठा, धीराधीराज्येष्ठा-कनिष्ठा चेति एवं द्वादशभेदा मुग्धया सह त्रयोदश भवन्तीति स्वीया कथा। परकीया द्विविधा-परोढा कन्यका चेति। सामान्यात्वेका। ताश्च मिलित्वा समुदायेन षोडश विधा। पुनश्चैताः सभेदाः स्वकीयाः परकीयाः सामान्याः स्वाधीनभर्तृ-कात्वप्रभृत्यष्टभेदभिन्नाः सत्यः समुदायेन अष्टाविंशत्यधिकशतं नायिकाः, षोडशानामष्ट-भिर्गुणने अष्टाविंशत्यधिकशतसम्भवात्। पुनश्च तासामपि प्रत्येकमेव उत्तममध्यमाधम-त्वेन भेदत्रयमाह—उत्तमेति। प्रदर्शितप्रकारेण अष्टाविंशत्यधिकशतप्रकाराणामपि तासां नायिकानां प्रत्येकमेव सौन्दर्यादिगुणतारतम्येन उत्तमामध्यमाधमत्वरूपतो हेतोः अव-शिष्टसमुदायेन नायिकाभेदानां चतुरधिकाशीतियुतं शतत्रयं स्यात्। तथा च अष्टाविंश-त्यधिकशतस्य त्रिभिर्गुणने समुदायेन नायिकाः त्रिशतचतुराशीतिप्रकारा इति भावः। अत्र च नायकस्य ज्येष्ठत्वेन कनिष्ठत्वेन च भेदद्वयकल्पनम् तथा उत्तमादिभेदत्रयकल्पनञ्च समीचीनतया निरुचेतुमशक्यत्वादनियतत्वाच्च अनावश्यकमिवाभातीति सुधीभिराकल-नीयम्। परन्तूक्तानां नायिकाभेदानां त्रिभिर्गुणने दिव्यादिव्योभयभेदगणनया द्विपञ्चा-शदधिकैकादशशतं भेदा जायन्ते। इदमप्यत्रानुसन्धेयम्—यद्यपि मुग्धाया लज्जाप्राधान्येन, मध्याया लज्जामदनप्राधान्येन प्रगल्भायाः प्रौढिप्राधान्येन, धीराया धैर्यप्राधान्येन, अधीराया अधैर्यप्राधान्येन, धीराधीराया अधैर्यप्राधान्येन, ज्येष्ठायाः प्रेमज्यैष्ठप्राधान्येन, कनिष्ठायाः प्रेमकानिष्ठ्यप्राधान्येन परोढाया रहस्य प्राधान्येन, मुग्धाया इव कन्यकायाः, सामान्यायाः वित्तप्राधान्येन, अष्टविधा नायिका भवन्ति तथापि—

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं कृतं
दृष्ट्वा न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिताः
गन्तव्ये सति जीवितप्रियसुहृत्सार्थः किमु त्यज्यते ॥

इत्यादिलक्ष्यादुत्तरक्षणे कृतदेशान्तरगमनाध्यवसाये प्रिये प्रवत्स्यद्भर्तृका नवमी ना-यिका भवितुमर्हति। तस्याः प्रोषितभर्तृकाविप्रलब्धाविरहोत्कण्ठितासु नवान्तर्भावः, सन्निहिते प्रेयसि तत्त्वायोगात्। नच कलहान्तरितायामन्तर्भावः कलहाभावादनवमा-नितत्वाच्च। न खण्डितायामन्तर्भावः, अन्योपभोगलाञ्छितस्य प्रियस्यागमनाभावात् प्रियायाः कोपाभावदर्शनात्, काकुवचनकातरावलोकनादिसूचितान्तरिकपक्षपातदर्श-नाच्च। न वासकसज्जायामन्तर्भावः, गच्छति प्रिये सज्जीकरणाभावात् खेदोद्गमाच्च। न स्वाधीनभर्तृकायामन्तर्भावः, उत्तरक्षण एव विप्रयोगदर्शनात् भर्त्तरि स्वाधीनत्वव्या-घाताच्च। नाप्यभिसारिकायामन्तर्भावः, उत्साहराहित्यात् अन्तस्तापदर्शनाच्चेति। एतल्लक्षणन्तु—

पतिर्देशान्तरं यस्याः यास्यत्येवोत्तरक्षणे।
प्रवत्स्यत्पतिका सा स्यात्प्रयाणाच्छेदनोद्यमा ॥

स्पष्टञ्चैवमेव रसमञ्जर्याम्।

( ५६ ) अत्र परस्त्रियोः कन्यकोढयोरवस्थात्रयस्यैवासम्भवात् अष्टगुणत्वाभावेन उक्तसंख्या न भविष्यन्तीति कश्चिदाह तद्दर्शयति—इह चेति। इह च नायिकाभेदनिरूप-

द्विदूषकादिना सहाभिसरन्त्यावभिसारिके, कुतोऽपि संकेतस्थानमप्राप्ते नायके विप्रलब्धे । इतित्र्यवस्थैवानयोरस्वाधीनप्रिययोरवस्थान्तरायोगात् ।" इति कश्चित् ।

( ५६ ) क्वचिदन्योन्यसांकर्यमासां लक्ष्येषु दृश्यते ।

णप्रकरणे कश्चित् आचार्यधनिक आहेति परेणान्वयः । परस्त्रियावित्यादिकस्तदीयग्रन्थसन्दर्भः । परस्त्रियौ परतन्त्रस्त्रियौ । तत्र कन्यका पित्राद्यधीना, अन्योढा च पत्याद्यधीना । सङ्केतात् सुरताय स्थाननिर्दिष्टात् । विरहोत्कण्ठिते इति प्रथमाविभक्तेः द्विवचने रूपम्, स्यातामिति शेषः ।

एवमेवाभिसारिके विप्रलब्धे इत्यनयोरपि बोध्यम् । अभिसरन्त्यावित्युपलक्षणम्, तेन दूत्यादिना परपुरुषाभिसारयन्त्यावपि अभिसारिके स्याताम् । अस्वाधीनप्रिययोः न स्वस्याः आत्मनः अधीनः प्रियः कान्तः परनायको ययोस्तयोस्तथोक्तयोः अनयोः कन्यकोढयोः, अवस्थान्तरायोगात् स्वाधीनभर्तृकात्वखण्डितात्वकलहान्तरितात्वप्रोषितभर्तृकात्ववासकसज्जात्वरूपाः पञ्चावस्थाः भर्तृघटिताः, कन्यकापरोढयोस्तादृशावस्थाभावादित्यर्थः, इति त्र्यवस्थैव त्रयः प्रकारा एव । एवञ्च कन्यका परोढा च विरहोत्कण्ठिता, अभिसारिका, विप्रलब्धा च भवितुमर्हति न पुनरन्यविधेति भावः । एवञ्चैतस्यायमभिप्रायः—कन्यकान्योढयोः एतयोर्न स्वाधीनभर्तृकात्वम्, यतस्तयोः समीपे परनायकस्य अनर्थपातभयेन सततमवस्थानायोगात्, न च तयोः खण्डितात्वम् । स्वस्त्रीसम्भोगस्य अवश्यम्भावित्वेन तच्चिह्नितस्य परनायकस्य अन्तिकागमने ईर्ष्याया असम्भवात् । नच कलहान्तरितात्वम्, स्वस्त्रीसम्भोगस्य नियतत्वात् तत्र रोषाभावेन परनायकस्य त्यागासम्भवात् । नापि प्रोषितभर्तृकात्वम्, दूरस्थितस्यैव परनायकस्य पुनर्दूरदेशप्रयाणासम्भवात् । नचापि वासकसज्जात्वम्, पत्युरविद्यमाने अनिष्टपातभयेन परार्थं प्रसाधनासम्भवात् । तेनैतयोः प्रत्येकमेव उपदर्शितपञ्चविधासम्भवात् साकल्येन दशविधासम्भवेन अष्टादशाधिकशतप्रकारा नायिकाः । उत्तमाधमभेदात्ताश्च पुनः चतुष्पञ्चाशदधिकत्रिशतप्रकाराः समुदायेन सम्पद्यन्त इति ।

अत्र ग्रन्थकर्त्तुः कश्चिदित्यस्वरससूचनस्यायमभिप्रायः—सर्वत्र भर्तृपतिपदानि उत्कटानुरागविषयकामुकपराणि स्वभर्तृपरनायकसाधारणानि निर्विवादने तदुभयमते तथा च पितृगृहे कन्यायाः पतिगृहे परोढायाश्च पितुः पत्युश्चातिविश्वस्तस्य कार्यान्तरनियुक्तस्य परनायकस्य अनवरतमेव समीपावस्थानसम्भवात् तयोः कन्यकापरोढयोः स्वाधीनभर्तृकात्वं सम्भवति । स्त्रीमात्रस्यैवेयं प्रकृतिः यत्प्रियनायकस्य अन्यस्त्रीसम्भोगं न सहते इति, तेन निजस्त्रीसम्भोगाङ्कितस्यापि अतिशयप्रेमीभूतस्य नायकस्य अन्तिकागमने ईर्ष्यासम्भवात् कन्यकापरोढयोः खण्डितात्वमपि सम्भवति । तस्मादेव निजस्त्रीसम्भोगेनाऽपि रोषसम्भवात् अतिशयप्रेमीभूतस्य परनायकस्य त्यागसम्भवेन तयोः कलहान्तरितत्वं स्पष्टमेव । एवंविधपरनायकस्य दूरदेशगमनेन मनोभवदुःखार्तत्वसम्भवात् प्रोषितभर्तृकात्वञ्च पत्युरविद्यमानेऽपि व्याजान्तरेण तादृशपरनायकार्थमेव प्रसाधनसम्भवात्तयोर्वासकसज्जात्वमपि स्फुटमेव तस्माद्यथोक्तसंख्या न्याय्या एव । अपि च स्वस्त्रिया अपि पितृगृहस्थायाः पित्रधीनत्वेन पत्या सह स्वच्छन्दसम्भोगासम्भवात्, पत्यौ अभिसारविरहोत्कण्ठाविप्रलम्भा भवन्त्येवेति ध्येयम् ।

( ५६ ) क्वचिदिति । क्वचित् कतिपयेषु लक्ष्येषु महाकविप्रयोगेषु आसाम् उपदर्शि-

यथा—

( ५७ ) 'न खलु वयममुष्य दानयोग्याः पिबति च पाति च यासकौ रहस्त्वाम् ।
विट विटपममुं ददस्व तस्यै भवति यतः सदृशोश्चिराय योगः ।

( ५८ ) तव कितव किमाहितैर्वृथा नः क्षितिरुहपल्लवपुष्पकर्णपूरैः ।
ननु जनविदितैर्भवद्व्यलीकैश्चिरपरिपूरितमेव कर्णयुग्मम् ॥'

( ५९ ) मुहुरुपहसिताविवालिनादैर्वितरसि नः कलिकां किमर्थमेनाम् ।
वसतिमुपगतेन धाम्नि तस्याः शठ ! कलिरेष महांस्त्वयाद्य दत्तः ॥'

तत्प्रकाराणां नायिकानाम्, अन्योन्यसाङ्कर्य्यमेकस्यामेव लक्षणद्वयादिसम्मेलनम् अवलोक्यते अतो लक्ष्यानुसारेण लक्षणानां निबन्धनीयतया तत्साङ्कर्य्यमस्माभिरपि स्वीक्रियते, अत एव तत्तत्सांकर्य्यालयैव तादृशी नायिका भवतीति बोध्यम् ।

( ५७ ) साङ्कर्यमासामुदाहरति—न खल्विति । माघकाव्ये कुसुमितविटपशाखां दित्सुं स्वनायकं प्रति कोपनायाः कलापकेन कस्याश्चिदुक्तिरियम् । हे विट ! परस्त्रीलम्पट ! "विटोऽद्रौ धवले षिङ्गे ( लम्पटे ) मूषिके खदिरेऽपि च" इति मेदिनी । वयं विटपेतरास्त्रियः, अमुष्य विटपस्य दानयोग्या दानाधिकारिण्यो न खलु किन्तु असकौ त्वत्प्रिया असावेवासकाविति कल्पतद्धितत्वेन तस्याः कुत्सितत्वं प्रकाश्यते । रह एकान्ते त्वां पिबति सम्भुनक्ति पाति सुरते प्रीतिजननात्प्रतिपालयति योषिदन्तरेभ्यो वारयति च, तस्यै प्रियायै असुं विटपं सपुष्पमालां शाखां यद्वा विटान् पातीति विटपं पल्लवम् । "विटपः पल्लवः षिङ्गे विस्तारे स्तम्बशाखयोः" इति विश्वः, ददस्व प्रयच्छ । यतः सदृशोस्तुल्ययोः योगः सम्मेलनं चिराय भवति । असदृशोस्तु क्षणिककृत निष्फल इत्यर्थः । "अत्र विटं त्वां पिबति पाति वेति व्युत्पत्तिद्वयेन सैव विटपा अयमपि विटप इति तुल्ययोर्योगो योग्यो भवतीत्यर्थः" इति वागीशोक्तभावः परमरमणीयः ।

( ५८ ) तव कितवेति । वृक्षपल्लवं कर्णपूरं ददानं नायकं प्रति कोपवत्या नायिकाया उक्तिरियम् । हे कितव ! धूर्त्त ! । वृथा व्यर्थमेव आहितैर्मत्कर्णयोः स्थापितैः, क्षितिरुहाणां वृक्षाणां पल्लवानिव पुष्पाणि च तान्येव कर्णं पूरयन्तीति कर्णपूराः कर्णभूषणानि तैर्न अस्माकं किं तत्साध्यम्, अपि तु अन्यथैव तत्प्रयोजनस्य सिद्धत्वात्किमपि नेत्यर्थः । नन्वन्यथा कथं तत्प्रयोजनं सिद्धमत आह—नन्विति । जनविदितैः भवद्व्यलीकैः परस्त्रीगमनाद्भवतोऽप्रियवचनैः कर्णयुग्मं चिरं परिपूरितं नित्यं पूर्णमेव अतः पूरितस्य पूरणायोगात् कर्णभूषणार्थं पल्लवपुष्पप्रदानमलमिति भावः ।

( ५९ ) मुहुरिति । अलिनादैः एतत्कोरकस्यैवोपर्युपविष्टभ्रमररवैः, ( कर्त्तृभिः ) मुहुरुपहसितां प्रतारणार्थेयमिति परिहासविषयतां नीतामिव एनां कलिकां कोरकम्, अल्पं कलिं कलहञ्च "कलहे च युगे कलिः" इति वैजयन्ती । श्लेषे स्त्रीप्रत्ययस्त्वविवक्षितः । नोऽस्मभ्यं किमर्थं वितरसि ददासि, यतो हि हे शठ ! गूढविप्रियकारिन् ! तस्याः दुष्टचारितात्वेन प्रसिद्धाया अत एवानुच्चारणीयनामधेयायास्त्वत्प्रियायाः धाम्नि भवने "धामशक्तौ प्रभावे च तेजो मन्दिरजन्मसु" इति विश्वः, वसतिं वासम्, उपगतेन प्राप्तेन अद्यैव त्वया ( कर्त्रा ) एष वर्त्तमानो महान् कलिः कलहः, आवयोर्विवाद इति भावः, कलिका च दत्तः । अतः त्वद्दत्त एव महति कलौ विद्यमाने किमर्थं कल्यन्तरेणेति भावः ।

( ६० ) 'इति गदितवती रुषा जघान स्फुरितमनोरमपक्ष्मकेसरेण ।
श्रवणनियमितेन कान्तमन्या सममसिताम्बुरुहेण चक्षुषा च ॥'

( ६१ ) इयं हि वक्रोक्त्या परुषवचनेन कर्णोत्पलताडनेन च धीरमध्यताधीर-मध्यताधीरप्रगल्भताभिः संकीर्णा ।

( ६२ ) एवमन्यत्राप्यूह्यम् ।

**( ६३ ) इतरा अप्यसंख्यास्ता नोक्ता विस्तरशङ्कया ॥ ८८ ॥**

( ६० ) इति गदितेति । पूर्ववर्णितनायिकातोऽन्या नायिका इति उक्तप्रकारं गदित-वती उक्तवती सती रुषा रोषेण स्फुरितं मनोहरं पक्ष्मैव केशरवत् यस्य तादृशेन चक्षुषा, स्फुरितो मनोहरपक्ष्मवत् केशरो यस्य तादृशेन असिताम्बुरुहेण तथा श्रवणनियमितेन कर्णधृतेन कर्णपर्य्यन्तं विस्तारितेन च असिताम्बुरुहेण नीलोत्पलेन चक्षुषा च समं युग-पदेव कान्तं प्रियं जघान ताडयामास । कषायितचक्षुषा दर्शनमेव हननं बोध्यम् । उदा-हृतेषु पुष्पिताग्राछन्दस्तल्लक्षणं तु—"अयुजि नयुगरेफतो जकारो युजि च नगौ जरगाश्च पुष्पिताग्रा" इति ।

( ६१ ) इयमिति । हि तथाहि, इयं न खल्वित्यादिपद्यत्रयाणां वक्त्री नायिका ; वक्रोक्त्येत्यादीनां यथासंख्येन धीरमध्यतेत्यादिभिः सह सम्बन्धो बोध्यः । एवञ्च 'प्रियं सोत्प्रासवक्रोक्त्या मध्याधीरा दहेद्रुषा" इति लक्षणात् वक्रोक्त्या प्रथमपद्ये विटपादि-पदार्थस्यान्यथा योजनरूपया वाचा धीरमध्यता । "अधीरा परुषोक्तिभिः" इत्युक्तलक्ष-णात् परुषवचनेन "तव कितवकिमाहितैः" इत्यादि पद्यद्वयात्मककटुवाक्येन अधीरमध्य-ता । 'तर्जयेत्ताडयेदन्या' इति लक्षणात् "इति गदितवती" इत्यादिपद्यविवरणेन कर्णोत्पलताडनेन अधीरप्रगल्भता । महाकविनिबद्धानामेतेषां साङ्कर्य्यमभ्युपेयमिति ग्रन्थकर्त्तुराशयः ।

( ६२ ) उक्तनियमस्यान्यत्रापि स्वीकर्त्तुमाह—एवमिति । अन्यत्र उत्तररामचरितादौ, तत्र सीता प्रथमं स्वाधीनभर्तृकात्वेन अनन्तरञ्च प्रोषितभर्त्तृकात्वेन सङ्कीर्णा । एवं यथा गोप्यादीनाम्—

"मधुप कितव बन्धो ! मा स्पृशाङ्घ्रिं सपत्न्याः कुचविलुलितमाला कुङ्कुमश्मश्रुभिन्नः"

इत्यादौ परकीयानामपि "सपत्न्या" इत्याद्युक्त्या स्वकीयात्वमिति सङ्कीर्णत्वम् ।

( ६३ ) इतरा । इतरा अपि दिव्यादिव्यादयः पद्मिनीहस्तिनीप्रभृतयः । (क)

(क) एतावता कथनेनापि शान्ताकाङ्क्षाभावात् अन्यत्र प्रतिपादितपद्यानि प्रदर्श्यन्ते । तथाहि—
पुनश्च तास्त्रिधा ज्ञेया दिव्यादिव्योभयात्मना । चतुर्धा चोद्धतोदात्ता ललिता शान्तिका तथा ॥
अक्षता च क्षता याता याता यायावरेत्यपि । पुनश्चतुर्द्धा कथिताः पूर्वैर्भोजादिभिर्बुधैः ॥
पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनीति च । पुनश्चतुर्धा कथिता कामशास्त्रेषु जातितः ॥
कफिनी वातुला पित्तला प्रकृत्या पुनस्त्रिधा । अथोक्तानाञ्च भेदानां लक्षणोदाहृती ब्रुवे ॥
दिव्याः शच्यादय प्रोक्ता अदिव्या मालती मुखाः ।
दिव्यादिव्या इति प्रोक्ता जानकी रुक्मिणी मुखाः ॥
गर्वशालिन्युद्धता स्यादुदात्ता गूढमानिनी । ललिता साध्यमानेहा शान्ता निर्मानमानसा ॥

ता नायिकाः ।

( ६४ ) अथासामलंकाराः—

( ६५ ) यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः ।

अलंकारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः ॥ ८९ ॥

शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता ।

औदार्यं धैर्यमित्येते सप्तैव स्युरयत्नजाः ॥ ९० ॥

लीला विलासो विच्छित्तिर्विव्वोकः किलकिञ्चितम् ।

मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः ॥ ९१ ॥

( ६४ ) इत्थं नायिकाभेदप्रभेदवर्णनं निरूप्य तासामलङ्कारान् प्रतिपादयितुमुपक्रमते-अथेति । अथ नायिकानिरूपणानन्तरम्, आसां नायिकानाम् अलङ्काराः "यौवने" इत्यादिना प्रदर्श्यन्त इति शेषः ।

( ६५ ) यौवन-इति । सत्त्वजा सत्त्वात् रजस्तमसी अभिभूयोज्जृम्भमाणाद्गुणविशेषाज्जायन्ते इति ते शृङ्गाराभिव्यञ्जकसत्त्वगुणोत्पन्ना इत्यर्थः, तासां नायिकानाम् । अलङ्कारा अलङ्क्रियते भूष्यते एभिरित्यलङ्काराः, भवन्तीति शेषः । तत्र तेषु मध्ये भावाद्यास्त्रय इमेऽलङ्कारा अङ्गजाः । नन्वग्रे "निर्विकारात्मके चित्ते" इत्यादिना त्रयाणां भावादीनां चित्तमात्रोत्पन्नत्वात् कथमङ्गजत्वमिति चेत् ? सत्यम्, भ्रूनेत्रादिषु तेषां क्रियोत्पादादङ्गजा इति व्यपदेश्यत्वलाभात् । अयत्नजाः अयत्नेन शरीरमनसोः स्वभावेन जाताः सिद्धाः । स्वभावजाः स्वभावेन रत्यादिस्थायिभावस्वभावेन जन्याः, कृत्रिमाश्चापि यथासम्भवं चकाराद्बोध्याः । भावादीनामलङ्कारत्वं च कटककुण्डलादिवन्मनोहरत्वजनकतासादृश्यादिति बोध्यम् । यद्यपि "उक्ताः स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजाः" इत्याद्यनुभावबोधककारिकायामङ्गजस्वभावजालङ्कारग्रहणे एव वर्त्तते तथाप्यत्र अङ्गजा-यत्नज-

उदात्तैव भवेद्धीरा थाधीरातूद्धता मता । ललिता तु भवेन्मुग्धा शान्ता स्वीयोत्तमा मता ॥
भुक्तान्येन पुरा पश्चादूढान्येनाक्षता मता । भुक्ता शक्तिसुतेनोढा राज्ञा सत्यवती यथा ॥
गते भर्त्तरि यद्यन्यं श्रिता सा तु क्षता मता । यथा तारा रविसुतं श्रिता वालिनि मारिते ॥
याता याता तु युगपदूढानेकैस्तु भर्त्तृभिः । यथा पाण्डुसुतैरूढा द्रुपदस्य कुमारिका ॥
ऊढैकेन तु संत्यक्ता क्रमाद्यायावरा मता । यथा बहुवरैरूढा माधवी चोपलात्मजाः ॥
पद्मिनी चन्द्रवदना शिरीषमृदुला तथा । शङ्खिनी स्याद्बृहन्मध्या कोपिन्यल्पस्तनी तथा ॥
दीर्घपादा द्रुतगतिः कुटिलाक्षी च पिङ्गला । हस्तिनी बहुकक्कूडा निस्त्रपा पिङ्गकुन्तला ॥
ह्रस्वा स्थूलधरा गौरशरीरा मन्दगामिनी । कफिनी दृढरागास्याच्छ्यामा सुस्निग्धलोचना ॥
वातुला तु कठोराङ्गी चञ्चला कृष्णपाणिजा । श्यामधूसरवर्णा च बहुभोज्या प्रलापिनी ॥
पित्तला शोणनयना गौराङ्गी कुशला रते । सा चतुर्धा पुनरपि नायिका प्रतिनायिका ॥
यथा द्रुपदजा प्रोक्ता वेणीसंहारनाटके । हेतुरीर्ष्यारुडादीनां सपत्नी प्रतिनायिका ॥
दुर्योधनस्य दयिता तत्र भानुमती यथा । तस्याः कैश्चिद्गुणैर्हीना पूज्या चैवोपनायिका ॥
समान्यूनापि वा किञ्चित् कनीयस्यानुनायिका ।
इत्यादि मन्दारमरन्दे स्पष्टमुक्तम् ॥ ।

**विहृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम् ।**
**हसितं चकितं केलिरित्यष्टादशसंख्यकाः ॥ ९२ ॥**
**स्वभावजाश्च भावाद्या दश पुंसां भवन्त्यपि ।**

( ६६ ) पूर्वे भावादयो धैर्यान्ता दश नायकानामपि संभवन्ति । किंतु सर्वेऽप्यमी नायिकाश्रिता एव विच्छित्तिविशेषं पुष्णन्ति ।

तत्र भावः—

( ६७ ) **निर्विकारात्मके चित्ते भावः प्रथमविक्रिया ॥ ९३ ॥**

( ६८ ) जन्मतः प्रभृति निर्विकारे मनसि उद्बुद्धमात्रो विकारो भावः ।

यथा—

( ६९ ) 'स एव सुरभिः कालः स एव मलयानिलः ।
सैवेयमबला किंतु मनोऽन्यदिव दृश्यते ॥'

अथ हावः—

( ७० ) **भ्रूनेत्रादिविकारैस्तु संभोगेच्छाप्रकाशकः ।**

---

स्वभावजेति संज्ञात्रयविधानं तत्रायत्नजालङ्कारव्यावृत्त्यर्थं तत्कारिकासंक्षेपार्थञ्चेत्यवधेयम् । अत्र भावाद्यास्त्रयः शोभाद्याः सप्त लीलाद्या अष्टादश इति मिलित्वा अष्टाविंशतिरलङ्काराः ।

( ६६ ) "भावाद्या दशपुंसां भवन्त्यपि "इत्यपि शब्दस्य योजनां दर्शयन् विवृणोति—पूर्वे इति । पूर्वे प्रागुक्ताः, भावादयः "भाव" इत्यारभ्य पठिताः, सम्भवन्ति लक्षणसमन्वयादिति भावः । अमी अष्टाविंशतिसंख्यकाः भावादयोऽलङ्काराः नायिकाश्रिता एव नायिकास्थिता एव, विच्छित्तिविशेषं भङ्गीविशेषं विलक्षणवैचित्र्यमिति भावः । अत एषां नायिकाश्रितत्वमेव वर्णनं विधेयमिति ध्येयम् ।

( ६७ ) अङ्गजेषु क्रमेण भावालङ्कारं निरूपयति—निर्विकार इति । निर्विकारात्मके विकारो मदनविकारः बालत्वेन रत्याद्यपरिचितया सर्वथाविकाररहिते चित्ते नायिकाया नायकस्य वा मनसि प्रथमविक्रिया सम्भोगेच्छायाः प्रथमः प्रकृतिविपर्यासः भाव— इत्युच्यते ।

( ६८ ) जन्मत इति । प्रभृति आरभ्य, इदञ्चाव्ययम्=तथाच भाष्यम्—"कार्त्तिक्याः प्रभृत्याग्रहायणी मासे" इति ।

उद्बुद्धमात्रः प्रकाशितमात्रः न तु स्फुटं प्रतीयमानः, एतेन हावहेलालक्षणातिव्याप्तिर्वारिता ।

( ६९ ) उदाहरति—स एव इति । स एव सुरभिः कालो वसन्तसमयः स एव।मालयानिलः मलयाचलपवनः, सैवेयमबला स्त्री किन्तु परन्तु मनोऽन्यदिव विलक्षणमिव दृश्यतेऽवलोक्यते, पूर्ववत् सरलतयाद्यालापाद्यविधानादित्याशयः ।

अत्र मनोऽन्यदिवेत्यनेन चेतसि प्राथमिकविकाररूपो भावोऽवगम्यते ।

( ७० ) अथ हावमलङ्कारं निरूपयति—भ्रूनेत्रादिति । भ्रूनेत्रादीनां विकारैः आकुञ्चनकटाक्षपातस्मितादिभिः सम्भोगेच्छायाः सम्भोगसुखलाभेच्छायाः प्रकाशको ज्ञापकः।

**भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते ॥ ६४ ॥**

यथा—

( ७१ ) 'विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥'

अथ हेला—

**( ७२ ) हेलात्यन्तसमालक्ष्यविकारः स्यात्स एव तु ।**

स एव भाव एव ।

यथा—

( ७३ ) 'तह से झत्ति पउत्ता वहुए सव्वङ्गविब्भमा सअला ।
संसइअमुद्धभावा होइ चिरं जह सहीणं पि ॥'

कौमारे चाञ्चल्यादिरहितानां भ्रूनेत्रादीनां चाञ्चल्यादिरूपप्रकृतिविपर्यासैः अल्पसंलक्ष्य विकारः अल्पं यथास्यात्तथा संलक्ष्योऽनुमेयः विकारः स्वभावो यस्य सः तथोक्तो भाव एव हाव उच्यते । अनेन हेलालक्षणातिव्याप्तिर्वारिता । आदिपदेन मुखादीनां परिग्रहः ।

( ७१ ) उदाहरति—विवृण्वतीति । तपस्यतो महेशस्य समीपे कामेन धनुषि आरोपिते पार्वत्या हाववर्णनमिदम् । शैलसुतापि हिमालयदुहिता पार्वत्यपि, न केवलं हर इति शेषः, एतेन—

हरस्तु किञ्चित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्ब फलाधरोष्ठे व्यापारयामास विलोचनानि ॥

इत्युपपादितो हरस्य हावः स्मार्यते । स्फुरद्बालकदम्बकल्पैः क्रमाद्विकसितनूतन कदम्बकुसुमसदृशैः रोमाञ्चितैरित्यर्थः अङ्गैरवयवैर्भावं महेशदर्शनेन प्राथमिकमनोविकारं विवृण्वतीप्रकटयन्ती अभिव्यञ्जयन्ती वा पर्यस्तविलोचनेन शिवे परीक्षिप्तनेत्रेण चारुतरेण मुखेन साचीकृता वक्रीकृता शिवं प्रति संमुखीभूता इत्यर्थः, तस्थौ स्थितवती उपजातिश्छन्दस्तल्लक्षणन्तूक्तं (१९९ पृ०) अत्र हावेऽपि भावविशेषत्वात् भावशब्दप्रयोगः । बालकदम्बेत्यनेन पुलकस्याल्पत्वं तेन भावस्याल्पलक्ष्यत्वं प्रतीयते तेन च हावो नामालङ्कारः ।

( ७२ ) हेलां निरूपयति—हेलात्यन्तेति । अत्यन्तसमालक्ष्यः अन्यैः समस्तविज्ञेयः विकारो मानसक्षोभो यस्य स तादृशः स भाव एव च हेला स्यात् । एतेषां लक्षणानां परस्परवैलक्षण्यन्तु अन्तः प्रकाशितो जातमात्रो मनोविकारो भावः। किञ्चिद्बहिः प्रकाशितो मनोविकारो हावः, बहिः समस्तप्रकाशको मनोविकारो हेलेति । एवञ्च न कापि मिथोऽतिव्याप्तिः ।

( ७३ ) उदाहरति—तह इति ।

"तथा तस्या झटिति प्रवृत्ता वध्वाः सर्वाङ्गविभ्रमाः सकलाः ।
संशयितमुग्धभावा भवन्ति चिरं यथा सखीनामपि" ।

इति संस्कृतम् । नायकं प्रति नायिकायाः विभ्रमोन्मेषवर्णनमिदम् । तस्या वध्वाः नूतनपरिणीतायाः झटिति सहसैव सकलाः सर्वाङ्गविभ्रमाः कटाक्षपातादिविलासाः तथा प्रवृत्ताः सञ्जाताः यथा सखीनामपि चिरं संशयितः समस्तमतिक्रान्तो न वेति सन्देहविषयीभूतः मुग्धभावः बालकालीननिर्विकारत्वं यस्याः सा तादृशी भवति ।

अथ शोभा—

( ७४ ) **रूपयौवनलालित्यभोगाद्यैरङ्गभूषणम्** ॥ ६५ ॥

**शोभा प्रोक्ता**—

तत्र यौवनशोभा यथा—

( ७५ ) 'असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥'

( ७६ ) एवमन्यत्रापि ।

अथ कान्तिः—

( ७७ ) **सैव कान्तिर्मन्मथाप्यायितद्युतिः ।**

अत्र हि वध्वाः सकलविभ्रमाणां सर्वाङ्गेषु अवलोकनेन मनो विकारस्य पूर्णलक्ष्यतया हेलालक्षणसमन्वयः ।

( ७४ ) अथायत्नजेषु शोभां निरूपयति—रूपयौवनेति । रूपं सौन्दर्यम्, यौवनं युवावस्था, लालित्यम् अङ्गानां सुकुमारत्वम् भोगः पुष्पचन्दनादिधारणजन्यानन्दः आद्यपदात् वसनभूषणादयश्च तैरङ्गभूषणम् अङ्गशोभा शोभा प्रोक्ता ।

( ७५ ) उदाहरति—असम्भृतमिति । कुमारसम्भवस्थपद्यमिदम् । अथ शैशवानन्तरं सा पार्वती अङ्गयष्टेर्देहलतायाः असम्भृतम् अयत्नसिद्धम्, मण्डनं भूषणं मदस्य मत्ततायाः अनासवाख्यं आसवस्य मदिरायाः या आख्या संज्ञा तद्रहितमासवभिन्नमिति यावत् करणं हेतुं, तथा कामस्य पुष्पधन्वत्वेन प्रसिद्धस्य पुष्पव्यतिरिक्तं पुष्पभिन्नम् अस्त्रम् अस्त्रस्वरूपम्, बाल्याच्छैशवात्परं वयोऽवस्थां यौवनमिति यावत् प्रपेदे प्राप्तवती याव-नोन्मेषेणैव हि युवतयो भूष्यन्ते माद्यन्ते काम्यन्ते चेति भावः । उपजातिश्छन्दस्तल्ल क्षणन्तूक्तं प्रागेव ( १६९ पृ० ) अत्र पार्वत्यास्तारुण्येनैव अङ्गानां भूषणाच्छोभा ।

( ७६ ) एवमिति । अन्यत्रापि रूपलालित्यभोगादावपि यथासम्भवमूह्यमिति शेषः।

तत्र रूपशोभा यथा—

"आलोक्य सुन्दरि मुखं तव मन्दहासं
नन्दन्त्यमन्दमरविन्दधिया मिलिन्दाः ।
किञ्चासिताक्षि ! मृगलाञ्छनसम्भ्रमेण
चञ्चूपुटं चपलयन्ति चिरं चकोराः ॥"

लालित्यशोभा यथा—

"अधारि पद्मेषु तदङ्घ्रिणा घृणा क्व तच्छयच्छायलवोऽपि पल्लवे ।
तदास्य दास्येऽपि गतोऽधिकारितां न शारदः पार्विकशर्वरीश्वरः ॥"

भोगशोभा यथा—

'वियति विलोलति जलदः, स्खलति विधुश्चलति कूजति कपोतः ।
निष्पतति तारकाततिरान्दोलाति वीचिरमरवाहिन्याः ॥"

अलङ्कारशोभा यथा—

"कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य ।
अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥

( ७७ ) क्रमेण कान्तिं निरूपयति—सैवेति । मन्मथाप्यायितद्युतिः मनांसि मथ्ना-

( ७८ ) मन्मथोन्मेषेणातिविस्तीर्णा शोभैव कान्तिरुच्यते ।

यथा—'नेत्रे खञ्जनगञ्जने—' इत्यत्र ( १६२ पृ. ) ।

अथ दीप्तिः—

**( ७९ ) कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते ॥ ६६ ॥**

यथा मम चन्द्रकलानामनाटिकायां चन्द्रकलावर्णनम्—

( ८० ) 'तारुण्यस्य विलासः समधिकलावण्यसंपदो हासः ।
धरणितलस्याभरणं युवजनमनसो वशीकरणम् ॥'

अथ माधुर्यम्—

**( ८१ ) सर्वावस्थाविशेषेषु माधुर्यं रमणीयता ।**

यथा—

( ८२ ) 'सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।

---

तीति मन्मथो मदनस्तेन आप्यायिता परिवर्द्धिता द्युतिः कान्तिः यस्याः सा तथोक्ता सा निरुक्तस्वरूपा शोभैव कान्तिरुच्यते ।

( ७८ ) स्फोरयति-मन्मथेति । मन्मथोन्मेषेण मन्मथाविर्भावेन । अतिविस्तीर्णाऽत्यन्तं विस्तारं प्रापिता । "नेत्रे खञ्जन" इत्यादिपद्यप्रतिपाद्यनायिकायाः रूपशोभायः मन्मथाभिर्भावेन वर्द्धनात् कान्तिनामालङ्कारः ।

( ७९ ) दीप्तिं निरूपयति-कान्तिरेवेति । अतिविस्तीर्णा कान्तिरेव दीप्तिरित्यभिधीयत इत्यन्वयो बोध्यः ।

( ८० ) उदाहरति—तारुण्यस्येति । तारुण्यस्य युवावस्थायाः विलासः आविर्भावः, यौवनस्यातिशयाविर्भावस्थानमिति भावः ।
समधिकं यदपेक्षयाऽनन्यातिशयस्तादृशं यल्लावण्यं—

"मुक्ताफलेषुच्छायाया-स्तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥"

इत्युक्तस्वरूपं सौन्दर्यं तस्य सम्पत् तस्यास्तथोक्तायाः, हासो विकासः । अतिशयविकासस्थानम् , धरणितलस्य आभरणम् अतिशयेन भूषणरूपा तथा युवजनानां यूनां मनसो वशीकरणम् अतिशयेन वशीकरण=हेतुः ।

अत्र तारुण्यविलासादीनामतिशयो लक्षणाप्रयोजनम् , तेन प्रतिपादितरमण्याः दीप्तिनामालङ्कारः ।

( ८१ ) माधुर्यं निरूपयति-सर्वावस्थेति । सर्वेषु अवस्थाविशेषु भूषणादिषु विद्यमानेष्वविद्यमानेषु वेत्यर्थः । रमणीयता "क्षणे क्षणे यन्नवतामुपैति तदेवरूपं रमणीयतायाः" इत्युक्तस्वरूपं—सौन्दर्यं माधुर्यमलङ्कारः ।

( ८२ ) उदाहरति—सरसिजमिति । शाकुन्तले शकुन्तलाया वल्कलधारणेऽपि शोभातिशयमनुभवतो दुष्मन्तस्य स्वयं परामर्शोऽयम् । शैवलेन जलनील्या "जलनीली तु शैवालं शैवलम्" इत्यमरः, अनुविद्धं व्याप्तमपि सरसिजं पद्मम् , रम्यं मनोहरमेव भवति ।

इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥'

अथ प्रगल्भता—

( ८३ ) **निःसाध्वसत्वं प्रागल्भ्यम्**—

यथा—

( ८४ ) 'समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि ।
दष्टाश्च दंशनैः कान्त दासीकुर्वन्ति योषितः ॥'

अथौदार्यम्—

( ८५ ) **औदार्यं विनयः सदा ॥ ६७ ॥**

यथा—

( ८६ ) 'न ब्रूते परुषां गिरं, वितनुते न भ्रूयुगं भङ्गुरं,
नोत्तंसं क्षिपति क्षितौ श्रवणतः सा मे स्फुटेऽप्यागसि ।

---

तथा हिमांशोश्चन्द्रस्य लक्ष्म कलङ्कः, मलिनमपि लक्ष्मीं शोभां 'लक्ष्मीः सम्पत्तिशोभयोः' ऋद्धयौषधे च पद्मायां वृद्धिनामौषधेऽपि च" इति मेदिनी। तनोति विस्तारयति । तद्वित् इयं तन्वी कृशाङ्गी शकुन्तला, वल्कलेनापि तुच्छतरत्वचापि तुच्छवस्तुसम्पर्केणापि, पट्टवस्त्रमण्डनादीनां का कथेत्यपेरर्थः, अधिकमनोज्ञा अतिमनोहरा दृश्यत इति शेषः । हि यस्मात्, मधुराणां सुन्दराणां स्वभावतः सर्वजनाह्लादिनीनामिति भावः । आकृतीनाम् अवयवानां सम्बन्धे, किमिव-वस्तु मण्डनं भूषणं न भवति ? अपि तु यावद्वस्तुमात्रमपि मण्डनं भवत्येवेत्यर्थः यथा शैवललक्ष्म संपर्कस्य माधुर्यविघटकत्वेऽपि सरसिज चन्द्रमसोः स्वाभाविकमाधुर्यसत्वान्न कापि हानिस्तथा वल्कलधारणेन शकुन्तलाया अपीत्याशयः मालिनीच्छन्दस्तल्लक्षणं तूक्तमेव ( १६७ पृ० )

अत्र शकुन्तलायाः वल्कलधारणेऽपि सौन्दर्यान्माधुर्यमलङ्कारः ।

( ८३ ) प्रगल्भतां निरूपयति-निः साध्वेति । निर्गतं साध्वसं भयं धार्ष्ट्याचरणेभय-रहितमित्यर्थः, दयितापराधविचारजन्यो दयिताया दयितेन दयितस्य दयितया वा। सह यथेष्टं सुरतिप्रतिबन्ध इति यावत् यस्या यस्य वा तस्यास्तस्य वा भावस्तादृशम्, प्रागल्भ्यं प्रगल्भता ।

( ८४ ) उदाहरति—समाश्लिष्टा इति । योषितः रमणीविशेषाः समाश्लिष्टाः प्रियेण समालिङ्गिताः सत्य एव समाश्लेषैः प्रत्यालिङ्गनैः, चुम्बिताः सत्य एव प्रतिचुम्बनैः दष्टाः दशनक्षताश्च सत्य एव दंशनैः दन्तेनाधरादिखण्डनैःकान्' वल्लभं दासीकुर्व्वन्ति-अदासं दासीभूतं कुर्वन्तीति दासीकुर्वन्ति अभूततद्भावे 'च्विः, दासवद् स्वाधीनं कुर्वन्ति ।]

श्लोकश्छन्दः । अत्र हि प्रत्याश्लेषादौ रमणीविशेषाणां भयरहितत्वात् प्रगल्भ-तारूयालङ्कारः ।

( ८५ ) औदार्य्यं निरूपयति-औदार्य्यमिति । सदा सर्वस्मिन् काले अपराधसम्भवे-ऽसम्भवे वेत्यर्थः, विनयः कोपाविष्करणाभावः नम्रता वा औदार्य्यम् ।

( ८६ ) उदाहरति- न ब्रूत इति । प्रियायाश्चरितं सख्यौ कथयतः कस्यचिदुक्ति-रियम् । मे मम आगसि अपराधे स्फुटेऽपि अन्योपभोगरूपेऽपराधे व्यक्ते सत्यपी-

कान्ता गर्भगृहे गवाक्षविवरव्यापारिताक्ष्या बहिः
सख्या वक्त्रमभि प्रयच्छति परं पर्यश्रुणी लोचने ॥'

अथ धैर्यम्—

( ८७ ) **मुक्तात्मश्लाघना धैर्यं मनोवृत्तिरचञ्चला ।**

यथा—

( ८८ )'ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी,
दहतु मदनः, किंवा मृत्योः परेण विधास्यति ।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥'

त्यर्थः । सा कान्ता प्रियतमा रुषा परुषां क्रोधव्यञ्जिकां रूक्षां गिरं वाक्यं न ब्रूते, नोच्चरति यदि ब्रूते तदा कोमलामेवेत्याशयः, भ्रयुगं भङ्गुरं क्रोधाभिव्यञ्जककौटिल्ययुक्तं न वितनुते न विदधाति, यदि वितनुते तदा कोमलमेव भ्रुयुगमित्यभिप्रायः, तथा अवनताः उत्तंसं कर्णात्कुण्डलादिकं भूषणं क्षितौ भूमौ न क्षिपति पातयति यदि क्षिपति तदा तथा सन्निधानस्थान एवेति भावः,। परं केवलं गर्भगृहे वासगृहाभ्यन्तरे स्थिता सती बहिरवलोकनार्थं गवाक्षविवरेण वातायनपथेन व्यापारिते वटादिदर्शनाय सञ्चारिते अक्षिणी चक्षुषी यया तस्यास्तथाभूतायाः सख्याः वक्त्रमभि आननं लक्षीकृत्य परिगतानि बाहुल्येन प्राप्तानि अश्रूणि ययोस्ते पर्यश्रुणी लोचने नयने प्रयच्छति योजयति, केवलं सखीमुखमेव पश्यतीत्यर्थः। विषयान्तरावलोकनतत्परेयं ममैवं विधां दशां न ज्ञास्यतीति तथानुतिष्ठति, अन्यथा स्वजनसमीपे दुःखोत्पीडस्य प्रतिरोद्धुमसमर्थतया तद्भवाभिव्यक्तैर्विनयव्यत्यासः सम्पद्येत । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक्, ( १५८ पृ० )।

अत्र प्रियागसेन रूक्षव्यवहारसम्भवेऽपि तथा करणात् प्रतिपाद्यमाननायिकाया औदार्यमलङ्कारः ।

( ८७ ) धैर्यं निरूपयति-मुक्तात्मेति । अचञ्चला मनोवृत्तिर्या मुक्तात्मश्लाघना मुक्ता परित्यक्ता आत्मश्लाघना आत्मविकत्थना यस्यां सा तथोक्ता सा धैर्यम् ।

( ८८ ) उदाहरति-ज्वलत्विति । मालतीमाधवे नैरिकाविवाहे उद्वेजमानायास्तत्र संमिताया मालत्याः लवङ्गिकां प्रत्युक्तिरियम्। रात्रौ रात्रौ प्रतिरात्रम्, गगने अखण्डाः पूर्णाः कला यस्य स तादृशः, शशी ज्वलतु सन्तापकः सन् दीप्यताम्, मदनोऽपि दहतु मां दहतु पूर्णचन्द्रसाहाय्येन यथेष्टं मां दग्धं करोत्विति भावः शशीमदनश्च मृत्योः परेण अधिकं "परेण" इत्यधिकार्थेऽव्ययम्, किं वा विधास्यति करिष्यति मरणावधिविधानमेव तयोः साध्यं किन्तु तच्च ममाभिलषितमेवेति भावः। मम तु श्लाघ्यः सर्वजनप्रशंसनीयः निष्कलङ्क इत्यर्थः तातः पिता दयितः प्रियः, जननी च अमलान्वया सत्कुलोत्पन्ना दयिता अमलान्वयेति लिङ्गव्यत्ययेन "तात" इत्यनेनाप्यन्वेति, कुलं स्वामिकुलम् अमलिनं कलङ्कहीनं दयितम्। तु किन्तु अयं मल्लक्षीभूतो जनो माधवो नैव दयितः । यो ह्यवलोकन मात्रेणैव क्लिश्नातीति भावः । तथा जीवितम् आत्मजीवनञ्च नैव दयितम्, येन न निःसरति तन्निसरणे नेदृक् क्लेशं भवेदिति भावः । हरिणी छन्दस्तल्लक्षणं तूक्तं ( १६१ पृ० )

( ८९ ) अथ लीला—

**( ९० ) अङ्गैर्वेषैरलंकारैः प्रेमिभिर्वचनैरपि ॥ ९८ ॥**
**प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः ।**

यथा—

( ९१ ) मृणालव्यालवलया वेणीबन्धकपर्दिनी ।
हरानुकारिणी पातु लीलया पार्वती जगत् ॥

अथ विलासः—

**( ९२ ) यानस्थानासनादीनां मुखनेत्रादिकर्मणाम् ॥ ९९ ॥**
**विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना ।**

यथा—

( ९३ ) 'अत्रान्तरे किमपि वाग्विभवातिवृत्तवैचित्र्यमुल्लसितविभ्रममायताक्ष्याः।
तद्भूरिसात्त्विकविकारमपास्तधैर्यमाचार्यकं विजयि मान्मथमाविरासीत्॥'

---

अत्रोक्तविधविरहसन्तापसत्त्वेऽपि मालत्याः "न च जीवितम्" इत्यनेन आत्मबला-द्यावर्जनेन अचञ्चलमनोवृत्तेविद्यमानत्वाद्धैर्यम् ।

( ८९ ) इत्थं भावादीनि त्रिण्यङ्गजानि, शोभादीनि सप्ताऽयत्नजानीत्येवं नायिकाना-यकोभयसाधारणानि दशालङ्कारलक्षणोदाहरणान्युपपाद्य सम्प्रति स्वभावजान् केवल-नायिकालङ्कारानुपपादयितुमुपक्रमते—अथेति ।

( ९० ) लीलां निरूपयति—अङ्गैवेषैरिति । प्रीत्या आमोदेन प्रयोजितैः निबन्धनैः अलङ्कारैः अङ्गैः अङ्गचेष्टाभिः वेषैः वस्त्रादिभिः,भूषणैः तथा प्रेमिभिः प्रीतिद्योतकैर्वाक्यै-रपि प्रियस्य वल्लभस्य अनुकृतिम् अनुकरणं लीलां विदुः पूर्वैरिति शेषः ।

( ९१ ) उदाहरति—मृणालव्यालेति । मृणालं कमलमूलमेव व्यालः सर्पो वलयं यस्याः सा, वेणीबन्ध एव कपर्दो जटाजूटो यस्या अस्तीति सा कपर्दो महादेवस्य जटा-जूटः, अत एव लीलया न तु कारणान्तरेण स्ववल्लभस्य जटावतो हरस्य शम्भोः अनुका-रिणी पार्वती शैलतनया जगत् पातु सर्वतो रक्षतु । श्लोकश्छन्दः ।

अत्र व्यालवलयतुल्येन मृणालवलयेनचाभूषणेन कपर्दतुल्येन वेणीबन्धेव रचनया च पार्वत्या हरस्यानुकरणाल्लीला ।

( ९२ ) अथ क्रमेण विलासं लक्षयति—यानासनेति। इष्टस्य प्रियतमस्य सन्दर्शनादिना अत्र आदिपदेन तदागमनश्रवणादीनां ग्रहणम् । यानं गमनम् स्थानम्, अवस्थानम् आसनम्, उपविष्टम् आदिपदेन शयनादिकञ्च ग्राह्यम् तेषान्तथोक्तानाम्, तथा मुखनेत्रादीनामवयवानां कर्माणि तेषान्तथोक्तानाम्, तत्र मुखकर्म ताम्बूलचर्वणसुह-सितविकसनादि, नेत्रकर्म सप्रेमसलज्जावलोकनादि, विशेषो हर्षसूचकं वैलक्षण्यन्तु वि-लासः स्यात् विलासो नामालङ्कारो भवेत् ।

( ९३ ) उदाहरति—अत्रान्तर इति । मालतीमाधवे बकुलवीथ्यामुपविष्टं माधवं वि-लोक्य गजेन यान्त्या मालत्या हर्षक्रियां मकरन्दे कथयतः माधवस्योक्तिरियम् । अत्रा-न्तरे नायकसन्दर्शनादिसमये आयते दीर्घे अक्षिणी नयने यस्यास्तस्या मालत्याः किमपि

अथ विच्छित्तिः—

( ६४ ) **स्तोकाप्याकल्परचना विच्छित्तिः कान्तिपोषकृत् ।**

यथा—

( ६५ ) 'स्वच्छाम्भः स्नपनविधौतमङ्गमोष्ठस्ताम्बूलद्युतिविशदो विलासिनीनाम् ।
वासस्तु प्रतनु विविक्तमस्त्वितीयानाकल्पो यदि कुसुमेषुणा न शून्यः ॥'

अथ विव्वोकः—

( ६६ ) **विव्वोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः ॥ १०० ॥**

यथा—

( ६७ ) 'यासां सत्यपि सद्गुणानुसरणे दोषानुवृत्तिः परा,
याः प्राणान्वरमर्पयन्ति, न पुनः सम्पूर्णदृष्टिं प्रिये ।

---

अनिर्वचनीयम्, वाग्विभवं वाक्शक्तिम् अतिवृत्तम् अतिक्रम्य स्थितं वैचित्र्यं गमनादिचातुर्यं यस्य तत्, उल्लसितः प्रकाशितो विभ्रमो विलासो यस्मिंस्तत्, भूयः प्रचुराः सात्त्विकविकाराः स्तम्भादयो यत्र तत्, अपास्तं दूरीकृतं धैर्यं येन तत्, अत एव विजयि जयशीलम् अन्यैरजेयमित्याशयः; तत् प्रसिद्धम् मान्मथं मदनसम्बन्धि आचार्यकमुपाध्यायकर्म भावशिक्षाविशेषः आविरासीत् आविर्भूतम्, मन्मथदेवाराधनेन यं यं भावविशेषमधिगतवती तं तं तत्र प्रकाशितवतीत्यर्थः । वसन्ततिलकं छन्दः, तल्लक्षणन्तूक्तं प्रागेव ( १६३ पृ० ) ।

अत्र माधवं दृष्ट्वा विविधनेत्रादिभङ्गिचातुर्याद् मालत्या विलासो नामालङ्कारः ।

( ९४ ) विच्छित्तिं लक्षयति—स्तोकाऽप्येति । कान्तिपोषकृत् शोभापोषिका स्तोकापि आकल्परचना अल्पापि वेशरचना विच्छित्तिरलङ्कारः ।

( ९५ ) उदाहरति—स्वच्छाम्भ इति । शिशुपालवधस्येदं पद्यम् । विलासिनीनां कामिनीनाम् अङ्गगात्रं स्वच्छाम्भसा निर्मलपयसा यत् स्नपनं प्रक्षालनं तेन विधौतं विक्षालितम् ओष्ठ अधरः ताम्बूलस्य द्युत्या रक्तिमया विशदः मनोज्ञः, तथा वासो वस्त्रन्तु प्रतनु अतिसूक्ष्मं विविक्तं विमलञ्च अस्तु जायताम् । इत्येवंरूपम् इयान् एतावानेव आकल्पो नेपथ्यम् "आकल्पवेषौ नेपथ्यम्" इत्यमरः, किमन्यैरित्यर्थः । यदि स आकल्पः कुसुमेषुणा पुष्पबाणेन शून्यो न स्यात् अन्यथा उद्विजितानामिव कनकभूषणमपि भारायत एवेति भावः । प्रहर्षिणी छन्दस्तल्लक्षणन्तु—"त्र्याशाभिर्मनजरगाः प्रहर्षणीयम्" इति ।

अत्राङ्गविक्षालिताद्युक्तविधाल्पवेशेनैव कामिनीविशेषाणां कान्तिपोषणाद्विच्छित्तिर्नामालङ्कारः ।

( ९६ ) विव्वोकं निरूपयति—विव्वोक इति । इष्टेऽपि प्रियेऽपि वस्तुनि नीवीस्रंसनादिरूपे अतिगर्वेण अनादरः आदराभावः विव्वोको नामालङ्कारः ।

( ९७ ) उदाहरति—यासामिति । सत्यपि भावे वामाचरणशीलासु नायिकासु अनुरागिणः कस्यचित् कामुकस्य सखायं प्रत्युक्तिरियम् । सद्गुणानुसरणे अन्येषां सद्गुणादानसामर्थ्ये सत्यपि यासां परा केवला दोषाणामनुवृत्तिः स्वयं पुनः पुनरुद्भावनम्, याः वरं प्राणान् अर्पयन्तिसमर्पयितुं शक्नुवन्ति न पुनः प्रिये जने सम्पूर्णदृष्टिम् अर्पयन्ति

'अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मक-
स्तास्त्रैलोक्यविलक्षणप्रकृतयो वामाः प्रसीदन्तु ते ॥'

अथ किलकिञ्चितम्—

**( ६८ ) स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम् ।**
**साङ्कर्यं किलकिञ्चितमभीष्टतमसङ्गमादिजाद्धर्षात् ॥ १०१ ॥**

यथा—

( ६९ ) 'पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः ।
कामिनः स्म कुरुते करभोरूर्हारि शुष्करुदितं च सुखेऽपि ॥'

मानग्रहग्रस्तत्वात्प्राणार्पणं तावत् सुकरम्, न पुनः सम्पूर्णहृदयार्पणमिति भावः । यासाञ्च अत्यन्ताभिमतेऽपि वस्तुनि वसनभूषणादौ नीवीविस्रंसनादिरूपे वा निषेधात्मको विधिः नैतद्दातव्यम्, नैवं विधेयमित्यादिनिषेधरूपो विधिः त्रैलोक्ये त्रिभुवनमध्ये विलक्षणप्रकृतयो विलक्षणस्वभावास्ता वामाः योषितः ते तव प्रसीदन्तु । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्रागेव ( १९८ पृ० ) ।

अत्र हि स्त्री विशेषाणामभिलषितेऽपि वस्तुनि अनादराद्विव्वोको नामालङ्कारः ।

( ९८ ) किलकिञ्चितं निरूपयति—स्मितशुष्केति । अभीष्टतमस्य अतिशयेनाभीष्ट अभीष्टतमः, अतिशायने तमप् तस्य प्रियतमजनस्येत्यर्थः सङ्गमः सम्मेलनम् अभीष्टसङ्गमादिभ्यो जायत इति तस्मात्तथोक्तात्, आदिपदेन तद्दर्शनं तदागमनश्रवणालिङ्गनादिकञ्च ग्राह्यम्, हर्षात् आनन्दात् स्मितम् ईषद्धास्यं शुष्करुदितं कारणं विना रोदनम् हसितं हसनं त्रास आतङ्कः क्रोधः प्रणयकोपः श्रमः वेगेन परिश्रमः तेषां साङ्कर्यं यथासम्भवं मेलनं 'खले कपोतन्यायेन' युगपदुपस्थितिरिति यावत्, किलकिञ्चितं नामालङ्कारः । श्रमादीत्यादिशब्देन कम्पनोज्जृम्भणजडतादीनां परिग्रहः ।

( ९९ ) उदाहरति—पाणिरोधमिति । शिशुपालवधस्थमिदं पद्यम् । करभोरूः करभः करिकर इव ऊरूर्यस्याः सा करभोरूः स्त्री "ऊरूत्तरपदादौपम्ये" इति सूत्रेण स्त्रियामूङ्, "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः, अविरोधितवाञ्छम् अनिवारितप्रियमनोरथं यथास्यात्तथा कामिनो नायकस्य पाणिरोधं नीवीमोक्षणे प्रवृत्तस्य प्रियपाणेः रोधं निवारणं कुरुते स्म चकार "लट् स्मे" इति सूत्रेण लट् तथा मधुरं स्मितं गर्भे मध्ये यासां ताः मन्दहासमिश्राः भर्त्सनतर्जनाश्च कुरुते स्म तथा सुखेऽपि अधरपीडनादौ सुखमयव्यापारेऽपि हारि मनोहरं शुष्करुदितम् अनश्रुत्वादनार्द्रं कारणं विना रोदनं, कुरुते स्म, योषितामेष स्वभावो यदिष्टमनिष्टतया निवारयन्त्य एव सुरतसुखमुपभुञ्जत इति भावः । स्वागता छन्दस्तल्लक्षणन्तु—"स्वागता रनभगैर्गुरुणा स्यात्" इति ।

अत्र स्मितशुष्करुदितयोः साङ्कर्यात् श्लोकप्रतिपाद्यकामिन्याः किलकिञ्चितमलङ्कारः ।

उदाहरणान्तरं यथा—

"रतिक्रीडाद्यूते कथमपि समासाद्य समयं
मया लब्धे तस्याः क्वणितकलकण्ठार्धमधरे ।
कृतभ्रूभङ्गासौ प्रकटितविलक्षार्धरुदित-
स्मितक्रोधोद्भ्रान्तं पुनरपि विदध्यान्मयि मुखम् ॥"

अथ मोट्टायितम्—

(१००) तद्भावभाविते चित्ते वल्लभस्य कथादिषु ।
मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम् ॥ १०२ ॥

यथा—

( १ ) 'सुभग ! त्वत्कथारम्भे कर्णकण्डूतिलालसा ।
उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि साङ्गना ॥'

अथ कुट्टमितम्—

( २ ) केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात् ।
आहुः कुट्टमितं नाम शिरःकरविधूननम् ॥ १०३ ॥

यथा—

( ३ ) 'पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे ।
पर्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण ॥'

( १०० ) मोट्टायितं निरूपयति—तद्भावभावित इति । वल्लभस्य प्रियपुरुषस्य कथा सखीभिः सह चरित्रालापः तेषु प्रवृत्तेषु सत्सु कथादिष्वित्यादिपदेन जृम्भाङ्गभङ्गचित्र-दर्शनस्मरणादीनां परिग्रहः, चित्ते नायिकायाः स्वान्ते तद्भावभाविते तदनुरागनिषेविते सति आकारेङ्गितादिना स्मरणेन व्याप्त इत्यर्थः कर्णकण्डूयनं कर्णखर्जनं मोट्टायितं प्राहुः साहित्यविद्भिरिति शेषः । कण्डूयनादिकमित्यत्रादिना भूमिलिखनादिकानां परिग्रहः ।

( १ ) उदाहरति—सुभगेति । कस्यचिन्नायकस्य सखायं प्रति कान्ताप्रणयसूचि-कोक्तिरियम् । हे सुभग ! नायिकाप्रिय ! त्वत्कथारम्भे सति सखीभिः सह तव चरित्र-वर्णने सति कर्णकण्डूतिलालसा कर्णकण्डूयनतत्परा सा अङ्गना तव प्रिया, उद्गता जृम्भा यत्र तत्तादृशं वदनाम्भोजं मुखपङ्कजं यस्याः सा तादृशी सती अङ्गानि भिनत्ति मोट्टा-यितं विदधातीत्यर्थः । श्लोकश्छन्दः ।

अत्राङ्गनाया कर्णकण्डूयनजृम्भादिविधानान्मोट्टायितं नामालङ्कारः ।

( २ ) कुट्टमितं निरूपयति—केशस्तनेति । केशाश्च स्तनौ च अधरादयश्चेति केश-स्तनधरादयस्तेषां तथोक्तानाम् आदिपदेन हस्तादयो ग्राह्याः ग्रहे नायकेन ग्रहणे कृते हर्षे प्रमोदेऽपि सति, सम्भ्रमात् वेगात् शिरःकरविधूननं निषेधद्योतकं शिरसः हस्तयोर्विधून-नम् कुट्टमितं प्राहुरालङ्कारिकैरिति शेषः ।

( ३ ) उदाहरति—पल्लवोपमितीति । शिशुपालवधस्थमिदं पद्यम् । अभीष्टे प्रिये पल्ल-वस्य किसलयस्य उपमित्या तुलनया यत् साम्यं तुल्यत्वं तेन सपक्ष सखायम् पल्लवस्यैव सुहृत्स्वरूपमित्यर्थः, अधरबिम्बम् अधरो बिम्बमिवाधर एव वा बिम्बं तत्तथोक्तम्, अधरोष्ठं दष्टवति चुम्बनं कुर्वति सति रुजा वेदनया सह वर्तत इति सरुक् तेनेव धर्मि-णोऽधरक्षतमेव तदवयवस्यापि करस्य रुगिति भावः । तथा तारमित्युच्चस्वरं लोलं चपलं वलयं कङ्कणं यत्र तेन "तारं च रजतेऽत्युच्चस्वरेऽवदीरितम्" इति विश्वः, तरुण्या-युवत्या नायिकाया निषेधार्थं धूयमानेन करेण पाणिना पर्य्यकूजि महाशब्दः कृतः । स्वा-गता छन्दस्तल्लक्षणन्तूक्तं प्रागेव ( १९१ पृ० ) ।

अथ विभ्रमः—

( ४ ) त्वरया हर्षरागादेर्दयितागमनादिषु ।
अस्थाने विभ्रमादीनां विन्यासो विभ्रमो मतः ॥ १०४ ॥

यथा—

( ५ ) 'श्रुत्वायान्तं बहिः कान्तमसमाप्तविभूषया ।
भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः ॥'

अथ ललितम्—

( ६ ) सुकुमारतयाङ्गानां विन्यासो ललितं भवेत् ।

यथा—

( ७ ) "गुरुतरकलनूपुरानुनादं सललितनर्तितवामपादपद्मा ।
इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम ॥'

---

अत्र प्रतिपाद्यमाननायिकायाः हस्तकम्पनात् कुट्टमितम् । स्वरस्वतीकण्ठाभरणकारस्तु विपरीतमेव लक्षणमाह तथाहि—

"केशस्तनाधरादीनां ग्रहाद् दुःखेऽपि यत्पुनः ।
सुखाविष्करणं तन्व्यास्तच्च कुट्टमितं मतम् ।"

यथा—

"ह्रीभरादवनतं परिरम्भे रागवानवटुजेष्ववकृष्य ।
अर्पितोष्ठदलमाननपद्मं योषितो मुकुलिताक्षमथासीत्" इति ।

( ४ ) विभ्रमं निरूपयति—त्वरयेति । दयितस्य प्रियजनस्य आगमनादिस्तेषु, हर्षः प्रमोदः रागश्च अनुरागादयस्तस्मात् हेतोः त्वरया हर्षादिजन्यावेगेन अस्थाने अनुपयुक्ते स्थाने भूषणादीनां विन्यास स्थापनम् विभ्रमो मतः विभ्रमनामालङ्कारः । तत्र प्रथमेनादिपदेन महोत्सवदर्शनादेः द्वितीयादिपदेन दयिताभिसरणादेः, तृतीयेन तिलकाञ्जनलाक्षादुकूलादीनां परिग्रहः ।

( ५ ) उदाहरति—श्रुत्वायान्तमिति । बहिर्देशे कान्तं वल्लभम् आयान्तं आगच्छन्तं श्रुत्वा असमाप्तविभूषया कयाचित्कान्तया भाले ललाटे अञ्जनं चक्षुषोर्योग्यं कज्जलं कृतं दत्तम् दृशोर्नेत्रयोः लाक्षां हस्तपादादिषु देयमलक्तकं कृता दत्ता तथा कपोले गण्डे करणीयः तिलको बिन्दुः कृतः ।

अत्र हर्षादञ्जनादीनां त्वरया अनुपयुक्तस्थानेषु विधानाद्विभ्रमो नामालङ्कारः ।

( ६ ) ललितं निरूपयति—सुकुमारेति । अङ्गानां करचरणाद्यवयवानां सुकुमारतया कोमलतया विन्यासो विलक्षणन्यासः ललितं तन्नामालङ्कारो भवेत ।

( ७ ) उदाहरति—गुरुतरेति । शिशुपालवधस्थमिदं पद्यम् । अथ अनन्तरम्, सा बाला सुललितं सुन्दरं नर्त्तितं नृत्ये इव विन्यस्तं वामपादरूपं पद्मं यया तथा सती अनतिलोलमनतिचञ्चलम् अति महान् कलः नूपुरस्यानुनादो रणे यस्मिंस्तादृशम् इतरत् पदं दक्षिणं पदं शनैः आदधाना भूमौ विन्यसन्ती मन्मथेन कामवशेन मन्थरं मन्दं जगाम गतवती ।

अत्र कोमलभावेन पादयोर्विन्यासात् प्रतिपाद्यमाननायिकाया ललितम् ।

अथ मदः—

**( ८ ) मदो विकारः सौभाग्ययौवनाद्यवलेपजः ॥ १०५ ॥**

यथा—

( ९ ) 'मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं न खलु भाजनमीदृशीना
वैरी न चेद्भवति वेपथुरन्तरायः ॥'

अथ विहृतम्—

**( १० ) वक्तव्यकालेऽप्यवचो व्रीडया विहृतं मतम् ।**

यथा—

( ११ ) 'दूरागतेन कुशलं पृष्टा नोवाच सा मया किञ्चित् ।
पर्यश्रुणी तु नयने तस्याः कथयाम्बभूवतुः सर्वम् ॥'

( ८ ) मदं निरूपयति—मद इति । सौभाग्यं कान्तप्रियत्वं यौवनादयस्ताद्रुण्यादयस्ते-षामवलेपजः गर्वाज्जातो विकारो मदनामालङ्कारः । यौवनादीत्यादिपदेन उत्कृष्टवसनाल-ङ्कारादेः परिग्रहः ।

( ९ ) उदाहरति—मा गर्वमिति । स्वकपोलतले कान्तकृतं मञ्जरीलेखं दर्शं दर्शं स्मितेनात्मनः पतिसौभाग्याधीनगर्वं सूचयन्तीं काञ्चित् मदनोद्धतां प्रति कस्याश्चि-त्सख्या उक्तिरियम् । हे मदविह्वले ! सखि ! मम कपोलतले गण्डप्रदेशे कान्तेन प्रियेण स्वहस्तेन निजकरेण लिखिता चित्रिता मञ्जरी पुष्पकलिका तत्स्वरूपश्चित्रविशेष इति भावः चकास्ति शोभते कान्तो हि कामाधीनः कान्तायाः कपोलयोर्मञ्जर्यादि लिखतीति कविसम्प्रदायः, इति हेतोः गर्वं पतिसौभाग्याधीनमभिमानं मा उद्वह न विधेहि यतः चेद्यदि वेपथुः स्पर्शसञ्जातसात्विकभावविशेषः वैरी मञ्जरीरचनाविघटकत्वेन शत्रुरिव अन्तरायस्तादृशचित्रप्रतिबन्धको न भवति, तदा अन्यापि मादृश्यपि ईदृशीनां त्वत्कपो-लतललिखितया मञ्जर्या सदृशीनामनेकासां मञ्जरीणां भाजनं पात्रं न खलु भवति अपि तु भवत्येवेत्यर्थः, तव तावत्कपोलतले एकैव मञ्जरी यदृच्छयापि भवितुमर्हति, तेन सौभाग्यातिशयो न प्रतीयते इति गर्वो नोचित एव । ईदृशीनामिति बहुवचनेन सौभा-ग्यातिशयो व्यञ्जितः । वसन्ततिलकं छन्दस्तल्लक्षणन्तूक्तं प्रागेव ( १६३ ) ।

अत्रोभयोरपि वक्तृबोद्धव्ययोर्नायिकयोः सौभाग्याभिमानजनितविकारान्मदो ना-मालङ्कारः ।

( १० ) विहृतं निरूपयति—वक्तव्यकाल इति । वक्तव्यकालेऽपि कथनावसरेऽपि व्री-डया लज्जया अवचः अभाषणं विहृतं मतं भरताद्यैरिति शेषः ।

( ११ ) उदाहरति—दूरागतेनेति । सख्यौ सख्युक्तिरियम् । मया दूरागतेन कुशलं पृष्टा सा मम प्रिया किञ्चिदपि नोवाच तु किन्तु पर्यश्रुणी अश्रुपरिप्लुते तस्या नयने लोचने सर्वं मम प्रवासे दुःखातिशयम् आगमने आनन्दातिशयञ्च कथयाम्बभूवतुः प्रकट-यामासतुः । गीतिश्छन्दः ।

अत्र पृष्टेऽपि पत्यौ तदुत्तरदानौचित्येऽपि नायिकायास्तदकरणाद्विहृतं नामालङ्कारः ।

अथ तपनम्—

( १२ ) **तपनं प्रियविच्छेदे स्मरवेगोत्थचेष्टितम् ॥ १०६ ॥**

यथा मम—

( १३ ) 'श्वासान्मुञ्चति, भूतले विलुठति, त्वन्मार्गमालोकते,
दीर्घं रोदिति, विक्षिपत्यत इतः क्षामां भुजावल्लरीम् ।
किंच, प्राणसमान, काङ्क्षितवती स्वप्नेऽपि ते सङ्गमं
निद्रां वाञ्छति, न प्रयच्छति पुनर्दग्धो विधिस्तामपि ॥'

अथ मौग्ध्यम्—

( १४ ) **अज्ञानादिव यः पृच्छा प्रतीतस्यापि वस्तुनः ।
वल्लभस्य पुरः प्रोक्तं मौग्ध्यं तत्तत्त्ववेदिभिः ॥ १०७ ॥**

यथा—

( १५ ) 'के द्रुमास्ते क वा ग्रामे सन्ति केन प्ररोपिताः ।
नाथ ! मत्कङ्कणन्यस्तं येषां मुक्ताफलं फलम् ॥'

---

उदाहरणान्तरं यथा,—

"पादाङ्गुष्ठेन भूमिं किसलयरुचिना सापदेशं लिखन्ती
भूयो भूयः क्षिपन्ती मयि सितशबले लोचने लोलतारे ।
वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना
यन्मां नोवाच किञ्चित् स्थितमपि पुरतो मानसं तद्दुनोति ॥" इति ।

( १२ ) तपनं निरूपयति—तपनमिति । प्रियस्य कान्तजनस्य विच्छेदे विरहे स्मरावेशेन कामाविर्भावेन उत्थचेष्टितमुत्पन्नो व्यवहारः, तपनमलङ्कारः ।

( १३ ) उदाहरति—श्वासानिति । प्रवासिनं वल्लभं प्रति विरहिण्याश्चेष्टां कथयन्त्या नायिकादूत्या उक्तिरियम् । हे प्राणसमान ! स्वकान्तायाः प्राणतुल्य ! तव कान्ता श्वासान् निःश्वासान् मुञ्चति परित्यजति, भूतले पृथिव्यां न तु शय्यायामिति शेषः, विलुठति मरणोन्मुखेवेतस्ततो निपततीत्याशयः, त्वन्मार्गं तवागमनमार्गम् , अवलोकते निरीक्षते त्वद्दर्शनाप्राप्तौ दीर्घं दीर्घकालं रोदिति, अत एव इतस्ततः क्षामां विरहेण कृशाम् , भुजावल्लरीं बाहुमञ्जरीं विक्षिपति प्रक्षिपति । किञ्च अपि च स्वप्नेऽपि किं पुनर्जागृताविति शेषः, ते तव सङ्गमं काङ्क्षितवती अभिलषितवती, तथा निद्रां वाञ्छति किन्तु क्रोधेन दग्धो विधिर्निर्दयी विधाता तस्यै तां निद्रामपि न प्रयच्छति न प्रददाति यत्र तव समागमागमः स्यादिति भावः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्रागेव (१९८) ।

अत्र कामावेगेन निःश्वासमुञ्चनादिव्यवहारात् प्रतिपाद्यनायिकायास्तपनमलङ्कारः ।

( १४ ) मौग्ध्यं निरूपयति—अज्ञानादिवेति । प्रतीतस्यापि पूर्वमवगतस्यापि किं पुनर्वस्तुतोऽज्ञातस्येत्याशयः, वस्तुनः अज्ञानादिव वल्लभस्य प्रियस्य पुरः पृच्छा प्रश्नः तत्त्ववेदिभिः अलङ्कारमर्मज्ञैः तत्–मौग्ध्यं प्रोक्तम् ।

( १५ ) उदाहरति—के द्रुमास्त इति । हे नाथ ! मत्कङ्कणन्यस्तं मदीयवलये खचितं मुक्ताफलं मौक्तिकं येषां द्रुमाणां फलं ते द्रुमाः वीरुधाः के ? क कुत्र ग्रामे सन्ति । केन वा जनेन प्ररोपिताः । श्लोकश्छन्दः ।

अथ विक्षेपः—

( १६ ) **भूषाणामर्धरचना मिथ्या विष्वगवेक्षणम् ।**
**रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके ॥ १७८ ॥**

यथा—

( १७ ) 'धम्मिल्लमर्धमुक्तं कलयति तिलकं तथासकलम् ।
किञ्चिद्वदति रहस्यं चकितं विष्वग्विलोकते तन्वी ॥'

अथ कुतूहलम्—

( १८ ) **रम्यवस्तुसमालोके लोलता स्यात्कुतूहलम् ।**

यथा—

( १९ ) 'प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव ।
उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्कां पदवीं ततान ॥'

अत्र शुक्तिकादावुत्पन्नस्य मुक्ताफलस्य पूर्वं ज्ञातस्यापि तदज्ञानादिव नायिकाया पुनः प्रश्नविधानात् मौग्ध्यं नामालङ्कारः ।

उदाहरणान्तरं यथा—

"यदि चूतस्य मञ्जर्यां सख्यः सन्निहितः स्मरः ।
भग्नायां तत्कथं सौख्यं मनागपि न दृश्यते ॥" इति ।

( १६ ) विक्षेपं निरूपयति—भूषाणामिति । भूषाणां भूषणानां अर्द्धं यथास्यात्तथा रचना गुम्फनं अर्द्धांशमात्रविधानम् , वृथा व्यर्थं विष्वक् समन्तात् अवेक्षणम् अवलोकनम् , तथा दयितस्य प्रियस्य अन्तिके ईषत् रहस्यस्य गोपनीयोदन्तस्य आख्यानम् अभिधानञ्च विक्षेपोऽलङ्कारः ।

( १७ ) उदाहरति—धम्मिल्लमिति । तन्वी कृशशरीरा नायिका धम्मिल्लं बद्धकेशसमूहम् "धम्मिल्लः संयतः कचाः" इत्यमरः अर्द्धमुक्तम् अर्द्धांशस्खलितं कलयति विदधाति अर्द्धस्खलितभावेनाकेशपाशं रचयतीति भावः । तथा असकलं खण्डितं तिलकं कलयति भाले बिन्दोरर्द्धमात्रं रचयतीति भावः । देहलीदीपन्यायेन काकाक्षिगोलकन्यायेन वा कलयतीत्यस्योभयत्रान्वयः, रहस्यं गुह्योदन्तं किञ्चित् अस्फुटं वदति । तथा चकितं यथा स्यात्तथा विष्वक् समन्तात् अवलोकते पश्यति । अत्र पूर्वार्द्धं नायकानुरागोद्दीपकं परार्द्धं लज्जया, पद्येऽस्मिन् नायिकाया विक्षेपः स्फुट एवाभाति । उपगीतिश्छन्दः ।

उदाहरणान्तरं यथा—

"चकार काचित् स्मितचन्दनाङ्के काञ्चीकलापं स्तनभारपृष्ठे ।
प्रियं प्रति प्रेमितचित्तवृत्तिर्नितम्बबिम्बे चपलं च हारम् ॥" इति ॥

( १८ ) कुतूहलं निरूपयति—रम्यवस्त्विति । रम्यवस्तुनः रमणीयपदार्थस्य समालोके दर्शने लोलता सतृष्णत्वं कुतूहलं नामालङ्कारः ।

( १९ ) उदाहरति—प्रसाधिकेति । रघुवंशे सप्तमसर्गे इन्दुमत्या स्वयंवृतस्य अजस्य पुरीप्रवेशे दिदृक्षोः स्त्रियाः क्रियावर्णनमिदम् । काचित् पुरकामिनी प्रसाधिका मण्डनकर्त्री तया आलम्बितं धारितम् द्रवरागम् आर्द्रालक्तकरञ्जितरागम् अग्रपादं चरणाग्रम् आक्षिप्य आकृष्य नीत्वा उत्सृष्टा वेगवशात् परित्यक्ता लीलया गतिः मन्थरगमनं यस्याः

अथ हसितम्--

**( २० ) हसितं तु वृथाहासो यौवनोद्भेदसम्भवः ॥ १०६ ॥**

यथा--

( २१ ) 'अकस्मादेव तन्वङ्गी जहास यदियं पुनः ।
नूनं प्रसूनबाणोऽस्यां स्वाराज्यमधितिष्ठति ॥

अथ चकितम्—

**( २२ ) कुतोऽपि दयितस्याग्रे चकितं भयसम्भ्रमः ।**

यथा—

( २३ ) 'त्रस्यन्ती चलशफरीविघट्टितोरूर्वामोरूरतिशयमाप विभ्रमस्य ।
क्षुभ्यन्ति प्रसभमहो विनापि हेतोर्लीलाभिः किमु सति कारणे तरुण्यः॥

---

सा तथोक्ता सती आगवाक्षात् वातायनद्वारपर्य्यन्तं पदवीं मार्गम् अलक्तकाङ्कां लाक्षाचिह्नां ततान विस्तारयामास । उपजातिश्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ( १९९ ) ।

अत्र अजेन्दुमतीदर्शनाय कस्याश्चिद्रागातिशयः कुतूहलम् । पद्यञ्चेदं कुमारसम्भवस्य सप्तमसर्गेऽपि ।

उदाहरणान्तरं यथा—

"पारावत इवानङ्गमोहिते कूजति प्रिये ।
पश्य कौतुकिनी जाया समीपमुपसर्पति ॥"

( २० ) हसितं निरूपयति—हसितन्त्विति । यौवनोद्भेदसम्भवः यौवनादिविकारजं वृथा निरर्थकं हासो हसितमलङ्कारः ।

( २१ ) उदाहरति—अकस्मादेवेति । आकस्मिकेन हास्यमानां नवीनतरुणीमवलोक्य उत्प्रेक्षया कस्यचिदुक्तिरियम् । इयं तन्वङ्गी कृशाङ्गी नायिका अकस्मादेव कारणं विनैव यत्पुनर्जहास हसितवती तन्नूनं निश्चितं प्रसूनबाणः कामः अस्यां नायिकायां स्वाराज्यं स्वर्गवदधिकारम् अधितिष्ठति कुरुते निजं स्वर्गीयमाधिपत्यमस्यामारोपयतीति भावः । श्लोकश्छन्दः । अत्रोक्तनायिकायाः निष्प्रयोजनहासात् हसितम् ।

( २२ ) चकितं निरूपयति—कुतोऽपीति । दयितस्याग्रे प्रियजनस्य समीपे कुतोऽपि अलक्षितकारणात् भयसम्भ्रमः भयेनातिचाञ्चल्यं चकितं नामालङ्कारः ।

( २३ ) उदाहरति—त्रयस्यन्तीति । शिशुपालवधे दयितेन सह जलक्रीडायां नायिकाया सखीं प्रति भयविभ्रमवर्णनमिदम् । चला जलमध्ये भ्रमणशीला या शफरी प्रोष्ठीमत्स्यस्तया विघट्टितशरीरेण सङ्घर्षितः ऊरुर्यस्याः सा तादृशी अत एव त्रयस्यन्ती बिभ्यन्ती वामे मनोहरे ऊरू ऊरुयुगो यस्याः सा कान्ता, विभ्रमस्य पयो मध्ये एव विशेषेण भ्रमणस्य अतिशयम् अधिकताम् अवाप प्राप अहो आश्चर्यम्, तरुण्यो युवत्यो हेतोर्विनाऽपि लीलाभिः शृङ्गारचेष्टाविशेषैरेव प्रसभं बलात्कारो यथास्यात्तथा क्षुभ्यन्ति भयव्याकुला भवन्ति कारणे सति किमु सुतरामित्यर्थः । "प्रसभं तु बलात्कारः" इत्यमरः । प्रहर्षिणी छन्दस्तल्लक्षणन्तूक्तं प्रागेव । ( १९८ पृ० )

अत्र नायिकायाः शफरीमत्स्यसङ्घर्षमात्रेणैव भयसम्भ्रमाच्चकितमलङ्कारः ।

अथ केलिः—

( २४ ) **विहारे सह कान्तेन क्रीडितं केलिरुच्यते ॥ ११० ॥**

यथा—

( २५ ) 'व्यपोहितुं लोचनतो मुखानिलैरपारयन्तं किल पुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मनाः प्रियं जघानोन्नतपीवरस्तनी ॥'

( २६ ) अथ मुग्धाकन्ययोरनुरागेङ्गितानि—

( २७ ) **दृष्ट्वा दर्शयति व्रीडां सम्मुखं नैव पश्यति ।**
**प्रच्छन्नं वा भ्रमन्तं वातिक्रान्तं पश्यति प्रियम् ॥ १११ ॥**
**बहुधा पृच्छ्यमानापि मन्दमन्दमधोमुखी ।**
**सगद्गदस्वरं किञ्चित्प्रियं प्रायेण भाषते ॥ ११२ ॥**

---

( २४ ) केलिं निरूपयति—विहार इति । विहारे सुरतौ कान्तेन वल्लभेन सह यत्क्रीडितं किञ्चित्खेलनं तत्केलिरुच्यते ।

"वल्लभेन सहैकान्ते कान्तायाः क्रीडितेषु यः ।
चुम्बनालिङ्गनादीनां विशेषः केलिरुच्यते ॥"

इति लक्षणान्तरमपि ज्ञेयम् ।

( २५ ) उदाहरति—व्यपोहितुमिति । उन्नतपीवरौ स्तनौ यस्याः सा काचिन्नायिका उन्मनाः कामोद्विग्नमनाः सती मुखानिलैः आननमारुतैः लोचनतो निजनेत्रात् पुष्पजं रजः कुतोऽपि प्रविष्टकुसुमधूलिं व्यपोहितुं निरसितुम् अपारयन्तम् अशक्नुवन्तं प्रियं वल्लभं किल पयोधरेण स्तनेन एकत्वं पीनोन्नतत्वाभ्यामभेदं बोधयति, उरसि वक्षसि जघान ताडयामास असामर्थ्यापराधदण्डव्याजेनेति भावः । वंशस्थं छन्दस्तल्लक्षणन्तु "जतौ तु वंशस्थमुदीरितं जरौ" इति ।

अत्र नायकोरसि पयोधरेण हननरूपखेलनान्नायिकायाः केलिनामालङ्कारः ।

यथा वा—"मदनशरहतस्योपांशु कान्तासमन्तादुपरि निरवलम्बा प्रेयसो निष्पपात ।
सपदि स पतिरेनामालिलिङ्ग चुचुम्बे स्मरशरविनिपातं केवलं पुण्यभाजाम् ॥"

यद्यपि—"कृष्णस्तु तत्स्तनविषज्जितकुङ्कुमस्रक् क्रीडाभिषङ्गधुतकुन्तलवृन्दबन्धः ।
सिञ्चन्मुहुर्युवतिभिः प्रतिषिच्यमानो रेमे करेणुभिरिवेभपतिः परीतः ॥"

इत्यादौ नायकस्यापि केलिरित्यभिधातुं शक्यते, तथापि तत्र तत्र नायिकाया एव मुख्यत्वम् , तामाश्रित्य कामस्य स्वाराज्यादित्यवधेयम् ।

( २६ ) इत्थं केवलनायिकाया अङ्गजादीनामलङ्काराणां लक्षणोदाहरणान्युपपाद्यानन्तरमिङ्गितान्युपपादयितुं प्रथमं मुग्धाकन्यकयोरनुरागेङ्गितान्युपक्रमते—अथेति । मुग्धाकन्यकयोः पूर्वप्रतिपादितलक्षणयोः अनुरागेङ्गितानि अनुरागसूचकचेष्टितानि निरूप्यन्ते इति शेषः । नायिकानिरूपणप्रस्तावे तेषां प्रसङ्गसङ्गतेरित्याशयः ।

( २७ ) दृष्ट्वेति । प्रिये नायके विषयसप्तमीयम्, अनुरागिणी नायकं प्रत्यनुरक्ता बालाऽप्रौढा मुग्धा कन्यका च भवति, सा हि दृष्ट्वाऽवलोकयित्वा नायकमिति शेषः, व्रीडां त्रपां दर्शयति नताननादिनेति भावः । सम्मुखं यथास्यात्तथा प्रियं नायकं कान्त-

अन्यैः प्रवर्तितां शश्वत्सावधाना च तत्कथाम् ।
शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी ॥ ११३ ॥

( २८ ) अथ सकलानामपि नायिकानामनुरागेङ्गितानि—

( २९ ) चिराय सविधे स्थानं प्रियस्य बहु मन्यते ।
विलोचनपथं चास्य न गच्छत्यनलङ्कृता ॥ ११४ ॥
क्वापि कुन्तलसंव्यानसंयमव्यपदेशतः ।
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत्स्फुटम् ॥ ११५ ॥

मित्यर्थः नैव पश्यति व्रीडावशेनेति भावः । किन्तु अतिक्रान्तम् आभिमुख्यात् प्रस्थितं प्रच्छन्नम् अन्तिकेऽपि लतागुल्मादिना किञ्चिद् व्यवहितम्, भ्रमन्तं नातिदूरे सञ्चरन्तं वा प्रियं पश्यति अत एवास्यानुरागो व्यज्यते बहुधा बहुविधैः विप्रकारैः विषयविशेषं पृच्छ्यमानापि अधोमुखी सती मन्दं मन्दम् अतिमन्दमित्यर्थः सगद्गदस्वरम् अनभिव्यक्तस्वरम् प्रायेण प्रियं किञ्चिदल्पं भाषते । कामसूत्रेऽप्युक्तम्—'पृष्टा च किञ्चित्सस्मितमव्यक्ताक्षरमनवसितार्थञ्च मन्दं मन्दमधोमुखी कथयति" इति । "प्रायेण भाषत" इत्यत्र प्रायपदोपादानेन गुरुतरप्रयोजने तु सति अधिकतरमपि भाषत इति द्योतितम् । अन्यैः प्रवर्त्तितां प्रसङ्गं प्राप्य प्राप्य बोधीताम्, तस्य प्रियस्य नायकस्य कथां गुणादिवर्णनं सावधाना एकाग्रमनसा अन्यत्र दिशि दत्ताक्षी स्थापितदृष्टिश्च सती शश्वत् निरन्तरं "न तु यदा कदा वे"ति शेषः, शृणोति ।

अत्रोदाहरणानि तु—"दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता"
"दत्ते सालसमन्थरं भुवि पदं निर्याति नान्तः पुरात्"
"एवं वादिनि देवर्षौ पार्श्वे पितुरधो मुखी" ।
लीलाकमलपत्राणि गणयामास पार्वती" ॥

इत्याद्यवगन्तव्यानि । तथाऽभिज्ञानशाकुन्तले प्रथमेऽङ्के, शकुन्तला (आत्मगतम्) (क)किं णु क्खु इमं पेक्खिअ तवोवणविरोहिणो विआरस्स गमणी आह्मि संवुत्ता" इत आरभ्य गान्धर्वविवाहावधि शकुन्तलायाः कन्यात्वे तानीङ्गितानि । एवमन्यदप्युदाहार्यम् ।

( २८ ) अथ सकलनायिकाया अनुरागेङ्गितान्युपपादयितुमुपक्रमते—अथेति । अथ मुग्धाकन्यकयोरनुरागेङ्गितानि निरूपणानन्तरम् । सकलानामपि सर्वप्रकाराणामपि । अनुरागेङ्गितानि अनुरागसूचकचेष्टितानि निरूप्यन्त इति शेषः । अनेन वक्ष्यमाणव्यवहाराः मुग्धाकन्यकयोरपि सम्भवन्तीति सूचितम् ।

( २९ ) चिरायेति । अग्रे वक्ष्यमाणपदस्य "अनुरक्ता नितम्बिनी" इत्यस्य कर्तृतया सर्वत्रान्वयो विधेयः । प्रियस्य कान्तस्य सविधे निकटे चिराय स्थानं बहुकालमुपस्थिति बहु मन्यते । युक्तं श्रेष्ठं चेत्यवगम्यत इत्यर्थः, अनलङ्कृता भूषणरहिता सती अस्य प्रियस्य विलोचनपथं नयनगोचरं न गच्छति । क्वापि कुत्रचित्स्थाने

( क ) 'किन्नु खल्विमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता" इत्यनुवादः ।

आच्छादयति वागाद्यैः प्रियस्य परिचारकान् ।
विश्वसित्यस्य मित्रेषु बहु मानं करोति च ॥ ११६ ॥
सखीमध्ये गुणान्ब्रूते स्वधनं प्रददाति च ।
सुप्ते स्वपिति दुःखेऽस्य दुःखं धत्ते सुखे सुखम् ॥ ११७ ॥
स्थिता दृष्टिपथे शश्वत्प्रिये पश्यति दूरतः ।
आभाषते परिजनं सम्मुखं स्मरविक्रियम् ॥ ११८ ॥
यत्किञ्चिदपि संवीक्ष्य कुरुते हसितं मुधा ।
कर्णकण्डूयनं तद्वत्कवरीमोक्षसंयमौ ॥ ११९ ॥
जृम्भते स्फोटयत्यङ्गं बालमाश्लिष्य चुम्बति ।
भाले तथा वयस्याया रचयेत्तिलकक्रियाम् ॥ १२० ॥
अङ्गुष्ठाग्रेण लिखति सकटाक्षं निरीक्षते ।

कुन्तलानां केशपाशानां संव्यानस्य उत्तरीयवस्त्रस्य च यः संयमो यथोचितन्या-सस्तद्व्यपदेशतस्तद्व्याजात्, "चिकुरः कुन्तलो बालः कचः केशः सरोरुहः" इत्य-मरः, संव्यानमित्यत्र संवीयतेऽनेनेति "व्येञ् संवरणे" अस्माल्ल्युट् "संव्यानमुत्तरी-यञ्च" इत्यमरः, तत्र केशसंयमव्याजेन बाहुमूलं स्तनौ च स्फुटं दर्शयेत्, अधोवस्त्रपरि-धानव्याजेन च नाभिपङ्कजं दर्शयेदिति भावः, प्रियमिति शेषः । वागाद्यैः चाटुवचनव-सनालङ्कारदानादिभिः प्रियस्य परिचारकान् दूतान् भृत्यान् वा आच्छादयति पिहितान् करोति उपचाराद् वशीकरोतीत्यर्थः, अस्य प्रियस्य मित्रेषु सुहृदेषु, विश्वसिति विश्वासं करोति बहुमानम् अतिसत्कारञ्च करोति । उक्तं च कामसूत्रकृता—"परिजनानवष्टभ्य तास्ताश्च लीला दर्शयति, तन्मित्रेषु विश्वसिति वचनं चैषां बहुमन्यते करोति च, तत्परिचारकैः सह प्रीतिं सङ्कथां द्यूतमिति च करोति" इत्यादि । सखीमध्ये प्रियस्य गुणान् ब्रूते स्वधनं जनकादिदत्तं स्वद्रव्यं प्रददाति च याचकाय प्रियाय इति शेषः । सुप्ते प्रिये स्वयं स्वपिति । अस्य प्रियस्य दुःखे कष्टे दुःखं कष्टं सुखे च सुखं धत्ते स्वी-यत्वेन मनुते प्रिये पश्यति सति दूरतोऽस्य दृष्टिपथे स्थिता भवतीति शेषः । सम्मुखम् अभिमुखं वर्त्तमानं परिजनं स्मरविक्रियं मदनविकाररोमाञ्चादि शश्वत् वारम्वारं आ-भाषते ब्रवीति । तथाच—दूरे स्थिता "पश्यतु मा" मिति मन्यमाना समदनविकारमा-भाषते" इति । यत्किञ्चिदपि संवीक्ष्य दृष्ट्वा मुधा व्यर्थं हसितं हसनं कुरुते । तद्वत् कर्ण-कण्डूयनं श्रोत्रखर्जनमुपलक्षणेन गण्डस्य च कण्डूयनञ्च कवरीमोक्षसंयमौ बद्धानां केश-पाशानां मोचनं मुक्तानाञ्च तेषां बन्धनं कुरुते । जृम्भते जृम्भां करोति अङ्गं स्फोटयति लीलया भङ्गुरयति । बालं शिशुम् आश्लिष्य आलिङ्ग्य तमेव चुम्बति पतिसम्मुखे इति शेषः । तथा वयस्यायाः सख्या भाले ललाटे तिलकक्रियां रचयेत् विरचयेत् पादस्य अङ्गुष्ठाग्रेण पृथिवीं लिखति ।

यद्यपीदमशुभं तथापि तदभिव्यक्तं वर्ण्यत एव । अत एव श्रीमद्भागवते—

"कृत्वा मुखान्यवशुचः श्वसनेन शुष्यद्बिम्बाधराणि चरणेन भुवं लिखन्त्यः ।
अस्रैरुपात्तमषिभिः कुचकुङ्कुमानि तस्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम् ॥"

सकटाक्षं प्रियं निरीक्षते पूर्वं कटाक्षपूर्वकहासोक्तिः इदानीं कटाक्षमात्रस्य इति भेदः ।

दशति स्वाधरं चापि ब्रूते प्रियमधोमुखी ॥ १२१ ॥
न मुञ्चति च तं देशं नायको यत्र दृश्यते ।
आगच्छति गृहं तस्य कार्यव्याजेन केनचित् ॥ १२२ ॥
दत्तं किमपि कान्तेन धृत्वाङ्के मुहुरीक्षते ।
नित्यं हृष्यति तद्योगे वियोगे मलिना कृशा ॥ १२३ ॥
मन्यते बहु तच्छीलं तत्प्रियं मन्यते प्रियम् ।
प्रार्थयत्यल्पमूल्यानि सुप्ता न परिवर्तते ॥ १२४ ॥
विकारान्सात्त्विकानस्य सम्मुखी नाधिगच्छति ।
भाषते सूनृतं स्निग्धामनुरक्ता नितम्बिनी ॥ १२५ ॥

स्वाधरञ्च दशति निजदन्तैरिति शेषः । स्वाधरदशनमपि लीलाविशेष एवेति बोध्यम् ।
यथा—'एका भ्रुकुटिमाबध्य प्रेमसंरम्भविह्वला ।
व्यनर्तीवैक्षतकटाक्षेण सन्दष्टदशनच्छदा ॥'

अत्रहिस्मरविकारादियुक्तपरिजनाभाषणादीनि स्वाधरदशनपर्यन्तानि कर्माणि पूर्वेण प्रिये पश्यतीत्यनेनान्वयः । अधोमुखी सती प्रियं ब्रूते ।

यथा शाकुन्तले—
"वाचं न मिश्रयति यद्यपि मद्वचोभिः कर्णं ददात्यभिमुखं मयि भाषमाणे ।
कामं न तिष्ठति मदाननसम्मुखीना भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥"

यत्र स्थित्वा नायको दृश्यते तं देशं नच मुञ्चति त्यजति तत्रैव कथञ्चिदपि स्थातुं वाञ्छतीति भावः ।

यथा—"अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः ।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः ॥"

केनचित् कार्य्यव्याजेन तस्य भिन्नगृहस्थितस्य प्रियस्य गृहम् आगच्छति ।
यथा मम—"यद्यपि विलसत्याखुस्तेन तनुर्विक्षता विपुलम् ।
तदपि कथं नहि यायां चिरपतितं नूपुरं नश्येत् ॥"

कान्तेन दत्तं किमपि तुच्छमपि वस्तु अङ्के धृत्वा मुहुर्व्वारम्वारं ईक्षते पश्यति । तद्योगे प्रियवयोगे नित्यं सर्वस्मिन् काले हृष्यति प्रसन्ना भवति। तद्वियोगे प्रियविरहे मलिना कृशा च जायते । तस्य प्रियस्य शीलं चरित्रं बहुमन्यते समाद्रियते तत्प्रियं प्रियप्रीतिजनकं वस्तु स्वस्यापि प्रियं मन्यते । प्रियस्य अन्तिके अल्पमूल्यानि वस्तूनि प्रार्थयति स्वाभीष्टं याचते । अन्यथा यदि तस्य मनोव्यथा स्यादिति भावः, ननु "अर्थ उपयाञ्चायाम्" इत्यस्यागर्वीयत्वादात्मनेपदेन भाव्यं तत्कथमत्र परस्मैपदमिति चेत् ? अविवक्षितप्रेषणे णिज्विधानेनेष्टसिद्धेः तदुक्तं—"णेरणौ" इति सूत्रे भाष्ये "निवृत्त-प्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यत" इति । सुप्ता सती न परिवर्त्तते प्रियदिशि पृष्ठं न करोतीत्यर्थः। अस्य प्रियस्य सम्मुखी सती सात्त्विकान् विकारान् स्तम्भस्वेदादीन् अधि-गच्छति प्रकाशयति । तथा सूनृतं प्रियसत्यवचनं स्निग्धां वयस्यां स्निग्धमिति पाठे

( ३० ) एतेष्वधिकलज्जानि चेष्टितानि नवस्त्रियाः ।
मध्यव्रीडानि मध्यायाः स्रंसमानत्रपाणि तु ॥ १२६ ॥
अन्यस्त्रियाः प्रगल्भायास्तथा स्युर्वारयोषितः ।

( ३१ ) दिङ्मात्रं यथा—

स्नेहव्यञ्जकं यथास्यात्तथा भाषते इत्यर्थः प्रियमिति शेषः "सूनृतं मङ्गलेऽपि स्यात् प्रिय· सत्ये वचस्यपि" इति मेदिनी ।

( ३० ) अधुना मुग्धादिभेदेन प्रतिपादितानां साधरणचेष्टितानां नियमं प्रदर्शयति— एतेष्वधिकेति । एतेषु नायकनिकटावस्थानादिचेष्टितेषु मध्ये नवस्त्रियाः मुग्धायाः नवोढाया अभिनवसङ्गमाया वा कन्यकायाश्च चेष्टितानि कार्य्याणि अधिकलज्जानि भवन्ति मध्याया नवोढाप्रगल्भयोर्मध्यवर्त्यवस्थायाश्चेष्टितानि मध्यव्रीडानि मुग्धाद्यपेक्षया अल्पत्रपाणि प्रगल्भाद्यपेक्षया तु बहुत्रपाणीत्यर्थः ।

स्रंसमाना नश्यन्ती त्रपा लज्जा येषु तानि "मन्दाक्षं ह्रीस्त्रपाव्रीडा लज्जा" इत्यमरः अन्यस्त्रियाः केवला परोढायाः प्रगल्भायाः पूर्वोक्तस्वरूपप्रगल्भाख्यस्वकीयायाः, तथा वारयोषितः सामान्यस्त्रीरूपायाः गणिकायास्तु चेष्टितानि स्रंसमानाश्च्युता त्रपा व्रीडा येषु तथोक्तानि भवन्ति ।

तत्र नवस्त्रिया उदाहरणं यथा शाकुन्तले—

"मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु ॥"

मध्याया यथा—

"प्रातस्तरां प्रणमने विहिते गुरूणामाकर्ण्य वाचममलां भव पुत्रिणीति ।
नेदीयसि प्रियतमे परमप्रमोदपूर्णादरं दयितया दधिरे दृगन्ताः ॥"

प्रगल्भाया यथा—(क)विवरीअ रच्छी बह्मं दट्ठूण णाहि कमलट्ठम् ।
हरिणो दाहिण णअणं रसाउला झत्ति ढक्केइ ॥

परस्त्रिया यथा—"शयिता सविधेऽप्यनीश्वरा सफलीकर्तुमहो मनोरथान् ।
दयिता दयिताऽऽननाम्बुजं दरमीलन्नयना निरीक्षते ॥"

सामान्यवनिता यथा—

"सा मज्जनालेपदुकूलभूषणस्रग्गन्धताम्बूलसुधाऽऽसवादिभिः ।
प्रसाधितात्मोपससार माधवं सव्रीडलीलोत्स्मितविभ्रमेक्षितैः ॥"

( ३१ ) इत्थं नायिकानामनुरागेङ्गिताबस्थां प्रतिपाद्याह—दिङ्मात्रमिति । एतेषां केवलमेकमेवोदाहरणमित्यर्थः । ग्रन्थविस्तरभयादितरेषामुदाहरणानि तु न प्रदर्शितानीति भावः । अस्माभिरपि कानिचिदेव यत्र तत्रोदाहृतानि अवशिष्टानि त्वाकरतोऽनुसन्धेयानि ।

( क ) विपरीतरतेलक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥ इति संस्कृतम् ।

( ३२ ) 'अन्तिकगतमपि मामियमवलोकयतीव हन्त ! दृष्ट्वापि ।
सरसनखक्षतलक्षितमाविष्कुरुते भुजामूलम् ॥'

( ३३ ) तथा—

( ३४ ) लेख्यप्रस्थापनैः स्निग्धैर्वीक्षितैर्मृदुभाषितैः ॥ १२७ ॥
दूतीसम्प्रेषणैर्नार्या भावाभिव्यक्तिरिष्यते ।

दूत्यश्च—

( ३५ ) दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी ॥ १२८ ॥

---

( ३२ ) उदाहरति—अन्तिकगतमपीति । वल्लभस्य प्रेयसीसखीं प्रति, प्रेयसीचेष्टित-दर्शनार्थोक्तिरियम् । हन्तेति प्रेयस्या भावप्रदर्शनेन प्रतिपादयितुः हर्षमभिव्यनक्ति । मया दृष्टापि इयं प्रिया अन्तिकगतं समीपावस्थितं मामपि अवलोकयतीव न पुनरेकान्ततः एव व्रीडावशाद् दृष्टिमधो निक्षिपतीति भावः । तथा सरसेन आशूत्पन्नत्वादार्द्रेण नखक्षतेन लक्षितं चिह्नितं भुजामूलं स्तनाभोगश्लिष्टं बाहुमूलम् आविष्कुरुते प्रकटय मां दर्शयति केशपाशबन्धनव्याजेनेति भावः । अनेनैव "कापिकुन्तलसंव्यान" इत्यादेरुदाहरणं बोध्यम् । अत्रावलोकयतीवेत्यनेन मध्यव्रीडत्वद्योतनात् मध्या नायिकेयम् । आर्याच्छन्दस्तल्लक्षणं चोक्तं प्राक् (१८३ पृ०)

( ३३ ) भावाभिव्यक्तेः कारणमुपपादयितुमाह-तथेति । पूर्ववत् सर्वासामपि नायिकानामित्यर्थः ।

( ३४ ) लेख्यप्रस्थापनैरिति । लेख्येन लिपिना प्रस्थापनैः प्रेषणैः स्निग्धैः वीक्षितैः सानुरागावलोकनैः मृदुभाषितैः कोमलोक्तिभिः तारस्वरवर्जितोक्तिभिरित्यर्थः दूतीसम्प्रेषणैश्च नार्या नायिकाया उपलक्षणतया नायकस्यापि भावाभिव्यक्तिः अभिप्रायाभिव्यञ्जनम्, इष्यते ।

तत्र लेख्यप्रस्थापनेन यथा—

प्राणेश ! विज्ञप्तिरियं मदीया तत्रैव नेया दिवसाः कियन्तः ।
सम्प्रत्ययोग्यस्थितिरेष देशः करा हिमांशोरपि तापयन्ति ॥

स्निग्धवीक्षितेन यथा मालतीमाधवे—

अलसवलितमुग्धस्निग्धनिष्पन्दमन्दैरधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षैरपहृतमपविद्धं पीतमुन्मूलितञ्च ॥

मृदुभाषितेन यथा नैषधे—

यस्मिन्नलस्पृष्टकमेत्य दृष्ट्वा भूयोऽपि तं देशमगान्मृगाक्षी ।
निपत्य तत्रास्य धरारजःस्थे पदे प्रसीदेति शनैरवादीत् ॥

दूतीसम्प्रेषणेन यथा—

"श्वासान्मुञ्चति भूतले विलुठति" इत्यत्र पूर्वोदाहृते पद्ये गीतगोविन्दादौ च ।

नायकस्य लेख्यप्रस्थापनेन यथा—

कल्याणि ! चन्दनरसैः परिषिच्य गात्रं द्वित्राण्यहानि कथमप्यतिवाहयेथाः ।
अङ्के निधाय भवतीं परिरभ्य दोर्भ्यां नेष्यामि सूर्यकिरणानपि शीतलत्वम् ॥
एवमन्यदपि ज्ञेयम् ।

(३५) ननु का नाम दूत्यो यासां सम्प्रेषणं भावाभिव्यञ्जकं भवतीत्यत आह—दूत्य इति ।

**बाला प्रव्रजिता कारूः शिल्पिन्याद्याः स्वयं तथा ।**

( ३६ ) कारू रजकीप्रभृतिः । शिल्पिनी चित्रकारादिस्त्री । आदिशब्दात्ताम्बूलिकगान्धिकस्त्रीप्रभृतयः ।

तत्र सखी यथा—'श्वासान्मुञ्चति —' इत्यादि ( २०३ पृ. )

स्वयंदूती यथा मम—

( ३७ ) 'पन्थिअ पिआसिओ विअ लच्छीअसि जासि ता किमण्णत्तो ।
ण मणं वि वारओ इध अत्थि घरे घणरसं पिअन्ताणं ॥'

**( ३८ ) एताश्च नायिकाविषये नायकानामपि दूत्यो भवन्ति ।**

---

नटी नृत्यप्राणधारिणी । धात्रेयी धात्री दुहिता । प्रतिवेशिनी प्रतिविशति प्रत्यासन्नतया निविशत इत्येवं।।शीला गृहसमीपस्थायिनीत्यर्थः । बाला अविज्ञातसंसारभावा बालिका प्रव्रजिता श्रमणा क्षपणा रक्तपट्टिकादयस्तद्विशेषाः सर्वा अपि ग्राह्याः कारूस्तक्षादीनां स्त्री तदुक्तं स्मृतौ—

"तक्षा च तन्तुवायश्च नापितो रजकस्तथा ।
पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः ॥"

रूपान्तरेणान्यत्र—

रजकस्तक्षकश्चैव तन्तुवायश्च नापितः । चर्मकारस्तथेत्येवं कारुः पञ्चविधः स्मृतः ॥

शिल्पंकलादिकर्मास्या अस्तीति शिल्पनी चित्रकारिण्यादयः यत्र ताः, "शिल्पं कर्मकलादिकम्" इत्यमरः । स्वयं नायिका इत्येता" इति शेषः । दूत्यो "भवन्ती"तिशेषः

( ३६ ) अप्रसिद्धस्य पदस्यार्थं विवृणोति—कारूरिति । ननु मूले आद्यपदोपादानेन तत्प्रतीकमादिशब्दादित्यत्रादिना तत्परामर्शः कथमिति चेत् ? अभिन्नार्थत्वात् । एतदादीनां योषितो हि प्रगल्भा निष्णाता अप्रतिषिद्धसञ्चारिण्यश्च भवन्ति ।

तदुक्तम्—विचेक्षणिका दासी भिक्षुकी शिल्पकारिका ।
प्रविशत्याशु विश्वासं दूतीकार्यञ्च विन्दति ॥

( ३७ ) पन्थिअ इति ।

"पथिक ! पिपासित इव लक्ष्यसे यासि तत्किमन्यत्र ।
न मनागपि वारक इहास्ति गृहे घनरसं पिबताम्" ॥ इति संस्कृतम् ।

सम्भोगेच्छुकमिव कञ्चित् पथिकं दृष्ट्वा स्वैरिण्याः कस्याश्चिदुक्तिरियम् । हे पथिक ! त्वं पिपासित इव जलतृषित इव सम्भोगेच्छुक इव च प्रतीयसे तत्तदा अन्यत्र जलाशये गुरुजनपरतन्त्रकामिन्याश्च अन्तिके किं यासि, इह मम गृहे घनरसं मेघजलं सम्भोगसुखञ्च यद्वा घनो निबिडो रसो रागो यत्र सोऽधरस्तम् , पिबताम् अनुभवतां जनानां मनाक् वारकः अल्पमपि प्रतिषेधकः नास्ति तत्स्वेच्छया यथेष्टं पिबेति भावः । गीतिश्छन्दः ।

अत्र स्वयमेव दूतीकार्य्यविधानात् स्वयं दूती नायिकेयम् ।

(३८) केवलं नायिकानामेव दूत्यो न भवन्ति किन्तु नायकानामपीत्याह-एताश्चेति । एता अनन्तरोक्ताः सख्यादयः ।

दूतीगुणानाह—

( ३९ ) कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः ॥ १२९ ॥
माधुर्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः ।
एता अपि यथौचित्यादुत्तमाधममध्यमाः ॥ १३० ॥

एता दूत्यः ।

अथ प्रतिनायकः—

( ४० ) धीरोद्धतः पापकारी व्यसनी प्रतिनायकः ।

यथा रामस्य रावणः ।

( ३९ ) अथ प्रसङ्गात् दूतीगुणान् प्रतिपादयति—कलाकौशलमिति । कला नृत्यगीतादिचतुष्षष्टिविद्याः(क) कौशलं सर्वकर्मसु दक्षत्वं यद्वा कलासु कौशलम् , उत्साह कर्म्मसु उद्योगः भक्तिः प्रयोजकं प्रति प्रीत्यतिशयः । चित्तज्ञता प्रयोजकस्य अभिप्रायज्ञता, स्मृतिः स्मरणं माधुर्यं मधुरभाषणम् , नर्मविज्ञानं हास्यकुतूहलाद्यभिज्ञानम् , वाग्मिता वाक्चातुर्य्यञ्चेति तद्गुणा तासां दूतीनां गुणाः । वात्स्यायनो हि दूतीकर्म्माण्यप्याह—

"विद्वेषं ग्राहयेत् पत्यौ रमणीयानि वर्णयेत् ।
चित्रान् सुरतसम्भोगानन्यासामपि दर्शयेत् ॥
नायकस्यानुरागञ्च पुनश्च रतिकाशलम् ।
प्रार्थनां चाधिकस्त्रीभिरवष्टम्भं च वर्णयेत् ॥

अवष्टम्भं नायिकाविषयं निश्चयम् । एता अनन्तरोक्ता दूत्योऽपि न केवलं नायिकाया एव यथौचित्यात् यथासम्भवात् उत्तमाधममध्यमास्त्रिप्रकारा भवन्तीति शेषः ।

( ४० ) इत्थं नायकादीन् निरूप्य सम्प्रति प्रतिनायकं निरूपयति—धीरोद्धत इति । धीरोद्धतः पूर्वप्रतिपादितस्वरूपः पापकारी अधर्म्माचारी व्यसनी मनुप्रतिपादिताष्टादशप्रकारव्यसनस्यान्यतमप्रकारवान् , नायकस्य प्रतिपक्षः प्रतिनायकः । प्रतिनयति प्रापयात्यनर्थमिति,व्युत्पत्तिः । अष्टादशेषु व्यसनेषु विभजनया सामान्यतथा व्यसनं द्विविधम्—कामजं कोपजं च तथा हि—

"कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः ।
वियुज्यतेऽर्थधर्म्माभ्यां क्रोधजेष्वात्मनैव तु ॥
मृगयाक्षो।दिवास्वप्नः परिवादः स्त्रियो मदः ।
तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः ॥
पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् ।
वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः" ॥ इति ।

अक्षो द्यूतक्रीड़ा तौर्य्यत्रिकं नृत्यगीतवाद्यानि । पैशुन्यम् अविज्ञातपरदोषाविष्करणम्, साहसं साधोर्बन्धनादिना निग्रहः, द्रोहो जिघांसा, ईर्ष्या परगुणासहिष्णुता, असूया परगुणेषु दोषाविष्करणम् , अर्थदूषणम् अर्थानामपहरणम् , देयानामदानं च ।

यथा रामायणे हि परमहितैषिणोऽपि मन्त्रिणः शुक्रस्य भ्रातुर्विभीषणस्य अविज्ञातात्मद्रोहरूपदोषप्रकटनेन व्यसनित्वात् जगन्मातासीतापहरणरूपाधर्मकारित्वाच्च रावणस्य प्रतिनायकत्वम् ।

( क ) चतुष्षष्ठिकलाश्च ७ पृष्ठे प्रभाटिप्पण्यां द्रष्टव्यम् ।

( ४१ ) अथोद्दीपनविभावाः—

**( ४२ ) उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये ॥ १३१ ॥**

ते च

**( ४३ ) आलम्बनस्य चेष्टाद्या देशकालादयस्तथा ।**

( ४४ ) चेष्टाद्या इत्याद्यशब्दाद्रूपभापणादयः । कालादीत्यादिशब्दाच्चन्द्रचन्दनकोकिलालापभ्रमरझंकारादयः ।

तत्र चन्द्रोदयो यथा मम—

( ४५ ) 'करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य ।
विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः ॥'

---

अपि च मुद्राराक्षसे—अत्यन्तहितैषिणोऽपि सचिवस्य राक्षसस्य अविज्ञातात्मद्रोहरूपदोषप्रकटनेन व्यसनित्वात् अधर्मकारित्वाच्च मलयकेतोः प्रतिनायकत्वमित्यवगन्तव्यम्।

**( ४१ )** एवं सपरिकरं विभावस्य नायकाद्यालम्बनाख्यं भेदं निरूप्य "आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ" इत्युद्देशक्रमप्राप्तम्, उद्दीपनविभावाख्यभेदं निरूपयितुमाह—अथेति । आलम्बनाख्यविभावनिरूपणानन्तरम्, उद्दीपनविभावा निरूप्यन्त इति शेषः । बहुत्वमत्र व्यक्तिभेदाद्बोध्यम् ।

**( ४२ )** उद्दीपनेति । ये पदार्थाः आलम्बनविभावेनाङ्कुरितं रसं उद्दीपयन्ति परिपोषातिशयं नयन्ति ते उद्दीपनविभावाः, कथ्यन्त इति शेषः ।

**( ४३ )** नन्वनेन वचसा एतावन्मात्रमेव लक्षणं फलितम्भवति यत् रसोद्दीपकत्वमुद्दीपनविभावत्वम्, तथा सति विभावादिना व्यक्तो रत्यादी रसः रसोद्दीपकश्चोद्दीपनविभाव इत्यन्योन्याश्रयः, 'अन्योन्याश्रयाणि कार्याणि न प्रकल्पन्ते' यथा नौर्नाविबद्धा नेतरत्राणाय इत्यतो लक्षणाभिप्रायेण स्फुटीकरोति—आलम्बनस्येति । आलम्बनस्य नायिकादेः चेष्टाद्याः नेत्रविक्षेपादयः तथा देशकालादयश्च ते उद्दीपनविभावा भवन्ति । आलम्बनस्येत्यत्र षष्ठ्या निर्देशेन भेदबोधनात्-आलम्बनभिन्नत्वे सति रत्याद्युद्दीपकत्वम् उद्दीपनविभावत्वमिति लक्षणं द्योतितम् । चेष्टाद्या इत्यादिकन्तूक्तलक्षणस्यैव स्फुटीकरणायोक्तम् एवञ्च "रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः" इति सामान्यलक्षणस्यापि सङ्गतिरिति बोध्यम् ।

**( ४४ )** कारिकाकाठिन्यं परिहरति—चेष्टाद्या इति वीरादिरसेषु कवचशस्त्रधारणादीनां परिग्रहाय रूपभूषणादय इत्यत्र पुनरादिशब्दोपादानम्, वीरादिष्वेव रसेषु सिंहनादादीनां परिग्रहाय भ्रमरझङ्कारादय इत्यत्रादिशब्दोपादानम् ।

**( ४५ )** उद्दीपनविभावमुदाहरति—करमुदयेति । अयं सुधांशुश्चन्द्रः तद्वन्मनोहरो नायकश्च गलितं स्वप्रकाशेन च्युतं तमःपटलं तिमिरवितानमेव, तद्वच्च अंशुकं वसनं यस्य तादृशे उदयमहीधर उदयाचल एव उदयाचलवच्च स्तनः पयोधरस्तदग्रे उपरिभागे चुचुके च करं रश्मिं पाणिं च निवेश्य करेण स्तनाग्रमाश्रित्येति भावः, अमरेशस्य दिशः प्राच्या नायिकायाश्च विकसितानि प्रफुल्लानि कुमुदानि कैरवाण्येव तद्वच्च ईक्षणे चक्षुषी

यो यस्य रसस्योद्दीपनविभावः स तत्स्वरूपवर्णने वक्ष्यते ।

( ४६ ) अथानुभावाः—

( ४७ ) **उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन् ॥ १३२ ॥**

**लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः ।**

( ४८ ) यः खलु लोके सीतादिचन्द्रादिभिः स्वैः स्वैरालम्बनोद्दीपनकारणै रामादेरन्तरुद्बुद्धं रत्यादिकं बहिः प्रकाशयन्कार्यमित्युच्यते, स काव्यनाट्ययोः पुनरनुभावः।

कः पुनरसावित्याह—

( ४९ ) **उक्ताः स्त्रीणामलंकारा अङ्गजाश्च स्वभावजाः ॥ १३३ ॥**

यस्य तत्तादृशं तथोक्तं मुखम् अग्रभागम् आस्यं च "मुखमुपाये प्रारम्भे श्रेष्ठे निस्सारणास्ययोः" इति हैमः, विचुम्बति स्पृशति चुम्बनञ्च सम्बन्धः मुखसंयोगविशेषश्च। यद्यप्यत्र चन्द्रो नायक एव उद्दीपनविभावः, तथापि चन्द्रदिशोर्नायकनायिकयोर्वृत्तान्तदर्शनात् उद्दीप्तस्य वक्तृशृङ्गारस्य चन्द्र उद्दीपकः। स्फुटमुदाहरणन्तु—

कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यूनः।
लीलाशिरोऽशुंकनिवेशविशेषक्लृप्तिव्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥

( ४६ ) "विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा" इतिकारिकायामुक्तालम्बनोद्दीपनरूपविभावप्रतिपादनान्तरमुद्देशक्रमप्राप्तमनुभावं निरूपयितुमवतारयति—अथेति। अथ विभावनिरूपणान्तरम् अनुभावा निरूप्यन्त इति शेषः। बहुत्वमत्रापि व्यक्तिभेदादेवेत्यूहनीयम्।

( ४७ ) तानेव दर्शयति—उद्बुद्धमिति। स्वैः स्वैर्वृत्तिविवरणैः कारणैः वीप्सायां द्वित्वम्, उद्बुद्धम् उत्पादितं रामादेर्वासनान्तर्लीनं रत्यादिस्थायिभावं बहिः प्रकाशयन् जनान्तरेषु प्रकटयन् लोके लौकिकावस्थायां व्यवहारमार्गे इति यावत्, यः कार्यरूपः स्थायिभावजन्यस्वरूपः स काव्यनाट्ययोः काव्ये नाट्ये च निवेशितः सन् अनुभाव इति कथ्यते। एवञ्च स्थायिभावजन्यत्वमनुभावत्वमिति लक्षणं फलितम्।

अत्र सहृदयेषु रत्यादिस्थायिभावस्यालौकिकरसस्वरूपतायाम् अनुभावोऽपि कारणमेवेति "लोके यः कार्यरूपः" इत्यनेन द्योतितम्, तेन 'कार्य्यकारणसञ्चारी'त्यत्र विभावादीनां कारणत्वोक्तं सङ्गच्छते। अनुभाव इत्यत्र जातावेकवचनम्। रत्यादीन् स्थायिनः अनुभावयन्ति अनुभवविषयीकुर्वन्तीति अनुभावाः।

( ४८ ) विवृणोति—यः खल्विति। लोके लौकिकावस्थायां सीतादीत्यत्रादिशब्देन शृङ्गारे शकुन्तलादीनां वीरादौ रावणादीनां परिग्रहः स्वैः स्वैः स्वकीयैः स्वकीयैः "स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये स्त्रियां धने" इति मेदिनी, चन्द्रादीत्यत्रादिशब्देन शृङ्गारे स्रक्चन्दनताम्बूलादीनां वीरादौ चेष्टादीनां ग्रहणं बोध्यम्। अत्र क्रमेणान्वयः, तथा हि सीतादीनि आलम्बनकारणानि चन्द्रादीनि चोद्दीपनकारणानि। रामादेरित्यत्रादिना शृङ्गारे दुष्यन्तादीनां वीरादौ युधिष्ठिरप्रभृतीनां परिग्रहः अन्तरन्तःकरणे। अनुभावस्तत्पदेन व्यवह्रियत इत्यर्थः।

( ४९ ) अथास्य स्वरूपमुपपादयति—उक्ता इति। अङ्गजा अङ्गान्मनसो जायन्ते ये ते तथोक्ता भावादयस्त्रयः, स्वभावजा स्वः स्वकीयो नायिकासम्बन्धीति यावत् यो भावो

**तद्रूपाः सात्त्विका भावास्तथा चेष्टाः परा अपि ।**

तद्रूपा अनुभावस्वरूपाः । तत्र यो यस्य रसस्यानुभावः स तत्स्वरूपवर्णने वक्ष्यते।

तत्र सात्त्विकाः—

**( ५० ) विकाराः सत्त्वसंभूताः सात्त्विकाः परिकीर्तिताः ॥ १३४ ॥**

( ५१ ) सत्त्वं नाम स्वात्मविश्रामप्रकाशकारी कश्चनान्तरो धर्मः ।

**( ५२ ) सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः ।**

( ५३ ) 'गोबलीवर्दन्यायेन' इति शेषः ।

---

मनोविकारास्तज्जाः, यद्वा सत्त्वगुणप्रधानजाः लीलादयोऽष्टादश, ये स्त्रीणाम् अलङ्कारा उक्ताः "यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः" इत्यादिना पूर्वमभिहिताः, ये सात्त्विका भावाः स्तम्भस्वेदादयः प्रतिपादयिष्यमाणाः, तथा परा सात्त्विकविकाराभिन्ना याश्चेष्टा रत्यादिमतो लोकस्य नेत्रविक्षेपादयः, ते तद्रूपाः सोऽनुभावो रूपं स्वरूपं येषां ते तादृशा इत्यर्थः । अत्र स्त्रीणामित्युपलक्षणं तेन पुंसामपि यथासम्भवमलङ्कारा ग्राह्या अत एव पूर्वप्रतिपादितम् "भावाद्या दशपुंसां भवन्त्यपि" इति संगच्छते । शोभाकान्त्यादीनां सप्तानां नानुभावरूपता रत्यादिस्थायिभावजन्यत्वाभावात्, अत एवायत्नजानां व्यावृत्तये 'अङ्गजाश्च स्वभावजाः" इत्येव केवलमुपात्तम् ।

( ५० ) सात्त्विकभावस्वरूपं दर्शयति—विकारा इति । सत्त्वसम्भूता सत्त्वगुणेनाभिव्यक्ता विकारा अन्यथाभावा मनस इति शेषः, सात्त्विकाः भावा इति शेषः परिकीर्त्तिताः कथिता आलङ्कारिकैरिति शेषः ।

( ५१ ) ननु सत्त्वमेव किं स्वरूपमिति "रजःस्तमोभ्यामस्पृष्टंमनः सत्त्वमिहोच्यते" इत्युक्तमपि शिष्यसौकर्याय पुनराह—यद्वा तत्स्वरस्वतीकण्ठाभरणोक्तं वर्त्तते सम्प्रति स्वमतमाह—सत्त्वमिति । स्वात्मनि सामाजिकात्मनि एवं विश्रामोऽवस्थितिर्यस्य स रसादिः तस्य प्रकाश उद्बोधः तत्कर्त्तु शीलं यस्य स तथोक्तः । आन्तरो धर्मः स च परगतदुःखहर्षादिभावनायामत्यन्तानुकूलान्तःकरणत्वम् । तस्य च समाहितमनस्त्वेन शैववादिसमानादान्तरत्वम् । सांख्यकारिकायामप्युक्तम् "सत्त्वं लघुप्रकाशकमिष्टम्" इत्यादि ।

( ५२ ) ननु यद्यनुभावरूपत्वमेव सात्त्विकभावानामपि तर्हि "विभावा अनुभावाश्च सात्त्विका व्यभिचारिण" इति पूर्वकारिकायां किमर्थं सात्त्विका इत्युपादानं सङ्गच्छत अत आह—सत्त्वमात्रेति । ते सात्त्विकविकाराः सत्त्वमात्रोद्भवत्वात् केवलसत्त्वगुणोत्पन्नत्वात् अनुभावतो अनुभावेभ्यो भिन्ना अपि अपिना अभिन्ना इत्यस्य लाभो ध्वन्यते एवञ्च "तद्रूपाः सात्त्विकाभावा" इति पूर्वोक्तस्यापि सङ्गतिरित्यवधेयम् ।

( ५३ ) ननु व्याप्यवृत्त्योर्भेदाभेदयोरेकत्र स्थितेरसम्भवादेकेनैव सात्त्विकभावेन अनुभावभिन्नत्वं तदभिन्नत्वञ्च कथं सङ्घटत इत्याशङ्कां मनसि निधाय समाधत्ते—गोवलीवर्देति । न तु स्वरूपेण । वलीवर्दो वृषभः । एवञ्च यथावलीवर्दे सुरभिरूपाया गोर्भेदः वृषभरूपस्य तु गोरभेदः, तथा सात्त्विकभावे स्तम्भस्वेदादौ भावहावादिरूपानुभावस्य भेदः स्तम्भस्वेदादिरूपानुभावस्य तु अभेद इति भावः । तथा च "सात्त्विकाश्च अनुभावरूपत्वान्न पृथगुक्ता" इति स्वोक्तं सात्त्विकभावानामनुभावाभिन्नत्वाङ्गीकारे,

के त इत्याह—

( ५४ ) स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ॥ १३५ ॥
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ।

तत्र

( ५५ ) स्तम्भश्चेष्टाप्रतीघातो भयहर्षामयादिभिः ॥ १३६ ॥
वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः ।
हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया ॥ १३७ ॥
मदसंमदपीडाद्यैर्वैस्वर्यं गद्गदं विदुः ।
रागद्वेषश्रमादिभ्यः कम्पो गात्रस्य वेपथुः ॥ १३८ ॥
विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता ।
अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजम् ॥ १३९ ॥
प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः ।

यथा मम—

( ५६ ) तनुस्पर्शादस्या दरमुकुलिते हन्त ! नयने
उदञ्चद्रोमाञ्चं व्रजति जडतामङ्गमखिलम् ।

---

"विभावा अनुभावाश्च" इत्यादिकं प्राचीनाभिहितं तेषामनुभावभिन्नत्वस्वीकारे इत्यवगन्तव्यम् ।

( ५४ ) किं किं नामानः किं किं स्वरूपाश्चेत्यपेक्षायां तन्नामान्याह—स्तम्भ इति । स्तम्भो जडीभावः' 'स्तम्भौ-स्थूणाजडीभावौ" इत्यमरः, रोमाञ्चो रोम्णामुद्गमः वैवर्ण्यं विकृतवर्णता ।

( ५५ ) अथ क्रमेण स्वरूपाण्याह—स्तम्भ इति । आमयो व्याधिः । आदिपदात् अत्यन्तानुरागादि यथासम्भवस्थायिभावान्तराणां परिग्रहः । तेन स्तम्भादिषु प्रदर्शितानुभावलक्षणस्य नाव्याप्तिः । यद्यपि आमयाद्युत्पन्नानां स्तम्भादीनां रसव्यञ्जकप्रदर्शितानुभावरूपत्वाभावस्तथापि केवलसम्भवप्रदर्शनार्थमभिहितमिति ध्येयम् । चेष्टाप्रतीघातः शारीरिकव्यापारस्य मानसिकव्यापारस्य च विघातः स्तम्भः । रतिः सुरतम्, घर्म्म आतप, आदिपदात् ज्वरपरिग्रहः । वपुर्जलोद्गमः वपुषो जलाविर्भावः स्वेदः । रोम्णो विक्रिया उद्गमः रोमाञ्चः । भयादीत्यत्रादिपदात् शीतपरिग्रहः । मदसम्मदेत्यत्र मदो मत्तता सम्मदो हर्षः पीडाद्यैरित्यत्रादिपदात् अत्यन्तरुदितपरिग्रहः वैस्वर्य्यं स्वरभङ्गम् । रागोऽनुरागः प्रहर्षः हर्षमात्रम्, तेन अनुरागहर्षस्याप्युपादानात् अश्रुण्यपि प्रदर्शितानुभावलक्षणस्याव्याप्तिर्न । सुखदुःखाभ्यां सुखेन दुःखेन वा चेष्टायाश्शारीरिकव्यापारस्य मानसिकस्य च निराकृतिरनुत्पादः प्रलयः । पूर्ववदेव प्रलयेऽप्यनुभावलक्षणसमन्वयः ।

( ५६ ) तत्र कतिपयानां सात्त्विकभावानामेकत्रैव लाघवायोदाहरणं दर्शयति—तनुस्पर्शादिति । विहितनायिकासुरतस्य नायकस्य स्वावस्थावर्णनमिदम् । हन्तेति हर्षे, अस्याः प्रत्यक्षायाः प्रियतमायाः तनुस्पर्शात् गात्रसम्पर्कात् तमनुभूयेत्यर्थः नयने अक्षिणी दरमुकुलिते किञ्चिन्मुकुलीभावं प्राप्ते उदञ्चन्त उत्पद्यमाना रोमाञ्चा रोमविकारा यत्र तादृशम्, अखिलं समग्रम् अङ्गम् जडतां स्तब्धतां व्रजति

कपोलौ घर्मार्द्रौ ध्रुवमुपरताशेषविषयं
मनः सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमम् ॥'

( ५७ ) एवमन्यत् ।

( ५८ ) अथ व्यभिचारिणः—

( ५९ ) विशेषादाभिमुख्येन चरणाद्व्यभिचारिणः ।

प्रयाति । एतेन स्तम्भरोमाञ्चौ प्रतिपादितौ । कपोलौ घर्मार्द्रौ स्वेदसलिलपिच्छिलौ जातौ । अनेन स्वेदः प्रदर्शितः । उपरता विरता अशेषा विषया समग्रबहिरिन्द्रियव्यापारा यस्मात्तादृशं मनः (कर्त्तृ) ध्रुवं निश्चितं सान्द्रानन्दं घनानन्दस्वरूपं परमं सर्वोत्कृष्टं ब्रह्म स्पृशति साक्षात्करोति ब्रह्मानन्दवद्घनानन्दे प्रलीयत इति भावः । एतेन प्रलयः प्रदर्शितः । पद्येऽस्मिन् "नयनेऽउद्गत्" इति "ईदूदेद्द्विवचनं प्रगृह्यम्" इति सूत्रेण द्विवचनस्य प्रगृह्यसंज्ञायां "प्लुतप्रगृह्या अचि नित्य" मिति प्रकृतिभावे प्रगृह्यहेतुकानुप्रासनिको विश्लेष उचितः परन्तु तस्या असकृदेव दोषाधायकत्वाभ्युपगमेनाक्षतेः । शिखरिणीच्छन्दस्तल्लक्षणं चोक्तं प्राक् ( १८४ पृ० )

( ५७ ) अवशिष्टमुदाहर्त्तुमाह—एवमिति । अन्यदपि एवमूह्यमित्यर्थः, एवञ्च-'बाले नाथ विमुञ्चमानिनि रुषम् इत्यत्र (१६८पृ०) स्वरभङ्गः । "मागवेमुद्वहं" इत्यत्र (२०२पृ०) वेपथुः । "शोणं वीक्ष्य मुखम्" (१४०पृ०) इत्यत्र वैवर्ण्यमश्रु चेति तर्कवागीशाः । यथा वा—

"उन्मादिकोकिलककुङ्कणनोज्ज्वलानि संवाद्यमानकुररीगणकूजितानि ।
सम्भ्रान्तगद्गदविभिन्नसुदुःस्वराणि चेतो हरन्ति वचनानि सरोरुहाक्ष्याः ॥"

इत्यत्र वैस्वर्यम् ।

"वारं वारं तिरयति दृशोरुद्गमं वाष्पपूरस्तत्सङ्कल्पोपहितजडिमस्तम्भमभ्येति गात्रम् ।
सद्यः स्विद्यत्ययमविरतोत्कम्पलोलाङ्गुलीकः पाणिर्लेखाविधिषु नितरां कम्पते किं करोमि ॥'

अत्र वेपथुः ।

"परिमृदितमृणाली म्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदपाण्डुः कपोलः ॥"

अत्र वैवर्ण्यम् ।

"शशाम वृष्ट्या मेघानामुत्सङ्गे तस्य भूभृतः । विरराम न रामस्य धारासन्ततिरश्रुणः॥"

अत्राश्रु ।

( ५८ ) व्यभिचारिभावं निरूपयितुमुपक्रमते—अथेति । अथ अनुभावप्रतिपादनानन्तरं व्यभिचारिणः सञ्चारिभावाः प्रतिपाद्यन्त इति शेषः व्यभिचारीस ञ्चारीतिनार्थान्तरम् । एवञ्च "विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा" इति पूर्वकारिकया नासङ्गतिः तत्र सञ्चारिपदस्यैवात्रोद्देशक्रमप्राप्ततया व्यभिचारिपदेन निरूपणात् ।

( ५९ ) व्यभिचारिण इत्यत्र वि अभिपूर्वकाच्चरधातोः कर्त्तरि णिनिः । तत्रोपसर्गस्य क्रमेणार्थं निरूपयन् व्यभिचारिलक्षणं दर्शयति-विशेषादित्यादिना । विशेषात् विभावानुभावापेक्षया अतिरेकात् इदं वेरुपसर्गार्थनिरूपणम् । आभिमुख्येन आस्वादव्यञ्जने सहायत्वेन इदञ्चाभेरर्थप्रदर्शनम् । चरन्तो रत्यादौ रसपरुतया नयन्तः प्रवर्त्तमाना इति यावत् । अत्र कथं नयन्त इति जिज्ञासायां यथा सूर्य इदं नक्षत्रममुं वासरं नयति न च तेन बाहु-

स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च, तद्भिदाः ॥ १४० ॥

( ६० ) स्थिरतया वर्तमाने हि रत्यादौ निर्वेदादयः प्रादुर्भावतिरोभावाभ्यामाभिमुख्येन चरणाद् व्यभिचारिणः कथ्यन्ते ।

के त इत्याह—

( ६१ ) निर्वेदावेगदैन्यश्रममदजडता औग्र्यमोहौ विबोधः
स्वप्नापस्मारगर्वा मरणमलसतामर्षनिद्रावहित्थाः ।
औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसन्त्रासलज्जा
हर्षासूयाविषादाः सधृतिचपलता ग्लानिचिन्तावितर्काः १४१

तत्र निर्वेदः—

( ६२ ) तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् ।

भ्यां स्कन्धेन वा नीयते किन्तु लोकप्रसिद्धमेतत्—यथायं सूर्यो नक्षत्रमिदं वा नयति, एवमेते व्यभिचारिण इत्यवधेयम् । तथा स्थायिनि भावे कदाचिदुन्मग्नाः जलबुद्बुदवत् झटिति प्रतीयमानत्वेन प्रादुर्भूताः, निर्मग्ना जलबुद्बुदश्च विलम्बप्रतीतिकरत्वेन पुनस्तिरोभूता भावा व्यभिचारिणः कथ्यन्त इति शेषः । "स्थायिन्युन्मग्ननिर्मग्ना इति स्वभावकथनमात्रमवगन्तव्यम् । निर्वेदादीनां व्यभिचारिणां विशेषेण रस पुष्टिजनने सामाजिकानां सभ्यानां प्रतीतिरेव साक्षिणीत्यवधेयम् । इत्थञ्च विभावानुभावापेक्षयाविशेषेण रसपुष्टिजनकभावत्व व्यभिचारित्वमिति लक्षणं फलितम् । तस्य व्यभिचारिणः भिदाः प्रकारास्त्रयस्त्रिंशत्, त्रयस्त्रिंशदित्युक्त्या न्यूनसंख्याया एव व्यावृत्तिः न त्वधिकसंख्यायाः । अत एवोक्तम्—"हासक्रोधादयः शृङ्गारादौ व्यभिचारिण" इति । अग्रे च स्वयं स्फुटीकरिष्यति 'एते च त्रयस्त्रिंशद्व्यभिचारिभावा यदुक्तं तदुपलक्षणमित्याह—"रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिण" इति तेन त्रयस्त्रिंशदेव न व्यभिचारिणः किन्तु रत्यादयोऽपि रसान्तरेषु व्यभिचारिणो भवन्तीत्युपलक्षणं त्रयस्त्रिंशदिति बोध्यम् ।

( ६० ) काठिन्यांशं विवृणोति—स्थिरतयेति । स्थिरतया रसान्तरोपस्थितिं यावत् वर्त्तमाने प्रतीयमाने' प्रवाहवत् स्थायित्वेन । निर्वेदादयो वक्ष्यमाणाः । प्रादुर्भावेत्युन्मग्नतायास्तिरोभावेति निर्मग्नतायाः व्याख्या प्रादुर्भावतिरोभावौ चोत्पत्तिविनाशौ न तु प्रकाशाप्रकाशौ मरणादेस्तथात्वाभावात् आभिमुख्येन रसपुष्टिकरणायानुकूल्येन "येतूपकर्त्तुमायान्ति स्थायिनं रसमुत्तमम्" । "उपकृत्य च गच्छन्ती" त्युक्तेन सहायकेनेति यावत् । चरणात् प्रवर्त्तनात् ।

( ६१ ) निर्वेदादीन्नाम्ना निर्दिशति-निर्वेदेति । निर्वेदश्चावेगश्च दैन्यं च श्रममदजडताश्चेति तथोक्ताः । निर्वेदादीनां स्वरूपमनुपदमेव स्फुटीभविष्यति । स्रग्धराच्छन्दसोपनिबद्धेयं कारिका तल्लक्षणञ्च 'म्रभ्नैर्यानां त्रयाणां त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्'। स्मृतिमतिसहिता इत्यस्य विषादा इत्यत्रान्वयः। साहित्यञ्च उक्तावेव न तु एषां परस्परसाहित्यम् , एकैकस्य तथात्वात् सधृतीत्यत्र सहशब्दोपादानं छन्दःपूरणार्थमित्यवधेयम्।

( ६२ ) निर्वेदादीनां नामानि निर्दिश्य क्रमशो लक्षणं निरूपयति-तत्त्वेति । तत्त्वज्ञानं यथार्थज्ञानं तच्च देहविषयादावनुपादेयज्ञानमेव न तु जीवात्मपरमात्मनोरभेदज्ञानं तस्मिन् सति मोक्ष एव न तु स्वावमाननम्। आपत् ईर्ष्या आदिशब्देन पुराणश्रवणादीनां

( ६६ ) एवमन्यदूह्यम् ।

अथ दैन्यम्—

( ६७ ) **दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत् ॥ १४५ ॥**

यथा—

( ६८ ) 'वृद्धोऽन्धः पतिरेष मञ्चकगतः, स्थूणावशेषं गृहं,
कालोऽभ्यर्णजलागमः कुशलिनी वत्सस्य वार्तापि नो ।
यत्नात्संचिततैलबिन्दुघटिका भग्नेति पर्याकुला
दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रूश्चिरं रोदिति ॥'

( ६६ ) एवमिति । ऊह्यमूहनीयम् । यथा मम-
इयं साक्षान्मम प्रिया रतिरूपेव तिष्ठति ।
शोचन्त्यश्रुविमुञ्चन्ती धर्मतो रक्ष हे सखे ! ॥

अत्र विदेशे जिगमिषोर्नायकस्य प्रियप्रियाविश्लेषजनित आवेगः । यथासम्भवमन्यत्राप्येवामनुसन्धेयम् ।

( ६७ ) दैन्यं लक्षयति—दौर्गत्याद्यैरित्यादि । दौर्गत्यं दारिद्र्यम् , "दरिद्रो दुर्गतोऽपि सः" इत्यमरः, आद्यपदात् इष्टालाभेन चिन्तया श्रमेण च तैर्जातम् , मलिनतां मुखादिमालिन्यम् आदिपदान्मनोव्यथादिकञ्च करोतीति तत्तथोक्तम् अनौजस्यम् ओजोहानिर्निस्तेजस्त्वमिति यावत् , दैन्यम् । उक्तञ्च—
'चिन्तौत्सुक्यान्मनस्तापाद्दौर्गत्याच्च विभावतः ।
अनुभावात्तु शिरसोऽप्यावृत्तेर्गात्रगौरवात् ।
देहोपस्कारणत्यागाद्दैन्यं भावं विभावयेत् ॥ इति ।

एवञ्च दुःखदौर्गत्यापराधादिजनितत्वे सति स्वापकर्षभाषणादिहेतुश्चित्तवृत्तिविशेषो दैन्यम् ।

( ६८ ) उदाहरति—वृद्धोऽन्ध इति । वृद्धान्धदरिद्रभर्तृकायाः प्रोषितपुत्रायाः तैलघटिकाभङ्गेन रोदनस्य वर्णनमिदम् । मम एष पतिः वृद्धो जरया जर्जरीकृतशरीरः अथ चान्धो लोचनरहितः मञ्चकगतः चलितुमसमर्थतया खट्वाश्रितः, एतेन विद्यमानदुःखप्रतीकाराऽसमर्थत्वमभिव्यक्तम् । गृहं निकेतनं स्थूणावशेषं स्तम्भमात्रावशिष्टम् । 'स्थूणास्तम्भेऽपि वेश्मनि' इत्यमरः । एतेन वृष्टिपातस्यानिवार्यत्वाद् गृहेऽस्मिन्नवस्थितिरपि दुष्करेति द्योतितम् । कालः समयः अभ्यर्णो निकटे जलागमो वर्षा यस्य सः "उपकण्ठान्तिकाभ्यर्णाभ्यग्रा" इत्यमरः, । अनेन वृष्टिपातजनितक्लेशोऽवश्यमेवाशुभावीति व्यञ्जितम् । वत्सस्य धनार्जनाय प्रोषितस्य पुत्रस्य कुशलिनी कुशलमयी वार्त्ता नो जनाननादवृत्तश्रवणम् "वार्त्ता वृत्तौ जनश्रुतौ" इत्यमरः, लभ्यत इति शेषः । अनेनाऽपि महाशङ्काहेतुत्वमभिव्यनक्ति । तथा यत्नात् महताप्रयत्नेन सञ्चितानां तैलबिन्दूनां घटिका क्षुद्रपात्रं भग्ना नष्टा अत्र तैलबिन्दुरेव न तु बहुतैलम् , तच्च वधूप्रसवार्थम्बोध्यम्, इति हेतोः पर्याकुला अतीव खिन्ना श्वश्रूः निजवधूमात्मस्नुषां "स्वके नित्ये निजं त्रिषु" 'वधूर्जायास्नुषा स्त्री चेति' चामरः, गर्भभरालसाम् आसन्नप्रसवसमयां दृष्ट्वा रोदिति ।

अत्र दैन्यं स्फुटमेव ।

अथ श्रमः—

( ६९ ) खेदो रत्यध्वगत्यादेः श्वासनिद्रादिकृच्छ्रमः ।

यथा—

( ७० ) 'सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी
सीता जवात्त्रिचतुराणि पदानि गत्वा ।
गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम् ॥'

अथ मदः—

( ७१ ) संमोहानन्दसंभेदो मदो मद्योपयोगजः ॥ १४६ ॥
अमुना चोत्तमः शेते, मध्यो हसति गायति ।
अधमप्रकृतिश्चापि परुषं वक्ति रोदिति ॥ १४७ ॥

( ६९ ) श्रमं लक्षयति—खेद इति । रतिः सम्भोगः, अध्वगतिर्दूरमार्गगमनम्, तस्माज्जातः, आदिपदात् व्यायामादीनां परिग्रहः । श्वासं दीर्घश्वासं निद्रादिञ्च करोतीति स तथोक्तः । अत्राऽऽद्यादिनाऽङ्गपीडनादेः परिग्रहः । खेद आयासः श्रमः ।

यदाहुः—

अध्वव्यायामसेवाद्यैर्विभावैरनुभावकैः ।
गात्रसंवाहनैरास्य—संकोचैरङ्गमोटनैः ॥
निःश्वासैर्जृम्भितैर्मन्दैः पादोत्क्षेपैः श्रमो मतः ।

सत्यपि बलेऽयंमुत्पद्यते तत्रापि शरीरव्यापारादेवात एव ग्लानितो भेदोऽवसेयः ।

( ७० ) उदाहरति—सद्य इति । महानाटके मुहुर्मुहुर्गन्तव्याध्वपरिमाणजिज्ञासया सीतायाः स्वल्पपथलङ्घनश्रममवधार्य श्रीरामस्य परिदेवनमिदम् । शिरीषमृद्वी शिरीषपुष्पवदतिमृदुगात्री सीता पुरीपरिसरेऽयोध्यासमीप एव सद्यस्तत्कालात् जवाद्भसात्त्रिचतुराणि पदानि गत्वा, अन्यत्किमयत् किं-प्रमाणम् गन्तव्यमस्ति काननोपस्थिताविति शेषः, इति असकृन्मुहुर्मुहुर्ब्रुवाणोच्यमाना सती, रामस्य अश्रुणः प्रथमाऽवतारं पूर्वाविष्करणम् कृतवती सीताहरणे तूत्तरोत्तरं बह्वश्रुपातः स्यादिति भावः ।

अत्र सीतायाः 'कियद्गन्तव्यमस्तीति' मुहुः प्रतिपादनादेव पीडाप्रतीत्या श्रमः ।

यथा वा—

'विधाय सा मद्वदनानुकूलं कपोलमूलं हृदये शयाना ।
चिराय चित्रे लिखितेव तन्वी न स्पन्दितुं मन्दमपि क्षमासीत्' ॥

अत्रापि श्रमः स्फुट एव ।

( ७१ ) मदं लक्षयति—सम्मोहेति । मद्यस्य स्वनामप्रसिद्धस्यासवस्यो उपयोगात् सेवनाज्जातः उपयोगोपपदाज्जनेर्डः । प्रकृतिबुद्धितोऽन्याहशबुद्धिः सम्मोहः सचानन्दश्च तयोः सम्भेदो मेलनं मदो मत इति शेषः । तस्य कार्यं दर्शयत्यमुनेति । अमुना दर्शितस्वरूपेण मदेन उत्तमो धीरप्रकृतिः शेते शयनमात्रं विदधाति, मध्यो मध्यप्रकृतिर्जनो हसति गायति च । अधमप्रकृतिरधीरस्वभावो जनश्च परुषं निष्ठुरं वक्ति अपि च रोदिति । नव्यमते तु तरुणमध्यमाधमभेदेन मदोऽयं त्रिविधः-तत्राव्यक्तासङ्गतवाक्यैः सुकुमार-

यथा—

( ७२ ) 'प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः ।
गूढसूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः ॥'

अथ जडता—

( ७३ ) अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।
अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र ॥ १४८ ॥

स्खलद्गत्या च योऽभिनीयते स आद्यः, भुजाक्षेपस्खलितघूर्णितादिभिर्मध्यमः, गतिभङ्ग-स्मृतिनाशहिक्काछर्द्यादिभिरधमः । प्रदीपकारास्त्वत्र—

'उत्तमसत्त्वः प्रहसति गायति तद्वच्च मध्यमप्रकृतिः ।
परुषवचनाभिधायी शेते रोदित्यधमसत्त्वः, ॥

इति विपरीतमेवाहुः ।

( ७२ ) उदाहरति—प्रातिभमिति । शिशुपालवधे दशमसर्गे पद्यमिदम् । त्रयाणां सरकाणां मद्यपानानां समाहारस्त्रिसरकम् "त्रिसरकं त्रिवारमधुपानम्" इति मल्लिनाथः । तेन त्रिवारमधुपानम्, "सरकं शीधुपात्रे स्यच्छीधुपाने च शीधुनि" इति विश्वः । पुत्रस्तु त्रिविधः सरको मधु 'गौडी माध्वी पैष्टी चेत्याह । प्रतिभैव प्रातिभं बुद्धिप्रभावविशेषं तत्प्रातिभं गतानां त्रिवारमद्यपानोत्कटमदोद्बुद्धप्रागल्भ्यप्राप्तानां सुभ्रुवां कामिनीनां वक्रवाक्यरचनया व्यङ्ग्योक्त्या रमणीयः मनोरमः । गूढानि पूर्वं लज्जावशात् संवृतानि सूचितानि इदानीं मदवशात्प्रकाशितानि रहस्यानि सुरतसम्बन्धीनि प्रलपितानि यस्मिन् स चासौ सहासश्चेति स तथोक्तः, अत्र विशेषणविशेष्यभावस्य वैवक्षिकत्वेन विशेषणसमासः, परिहासो नर्मकेलिः प्रववृते प्रवृत्तः । स्वागताच्छन्दस्तल्लक्षणन्तु "स्वागता रनभगैर्गुरुणा च" इति ।

अत्र रमणीनां हासविधानान्मदः स्पष्टः ।

उदाहरणान्तरं यथा—

'मधुरसान्मधुरं हि तवाधरं तरुणि ! मद्वदने विनिवेशय ।
मम गृहाण करेण कराम्बुजं पपपतामि हहा भभ भूतले' ॥"

( ७३ ) जडतां लक्षयति—अप्रतिपत्तिरिति । इष्टानिष्टयोः पुत्रजन्मतन्मरणाद्योर्दर्शनानि श्रुतयः श्रवणानि च ताभिस्तथोक्ताभिः अप्रतिपत्तिः किंकर्त्तव्यानिश्चयः जडता स्यात् । तत्र तस्यां जडतायां वर्त्तमानायाम् अनिमेषेण नयनेन निरीक्षणन्तूष्णीम्भावो मौनम्, आदिपदान्निष्पन्दतादीनां परिग्रहः । इयञ्च मोहात्पूर्वतः परतश्च समुत्पद्यते ।

तथाचोक्तम्—

'कार्याविवेको जडता पश्यतः शृण्वतोऽपि वा ।
तद्विभावाः प्रियानिष्टदर्शनश्रवणो रुजा ॥
अनुभावास्त्वमी तूष्णीम्भावविस्मरणादयः ।
सा पूर्वं परतो वा स्यान्मोहादिति विदां मतम्' ॥ इति ।

भरतोऽपि—

इष्टं वानिष्टं वा सुखदुःखं वा न वेत्ति यो मोहात् ।
तूष्णीकः परवशगः स भवति जडसंज्ञकः पुरुषः ॥ इत्याह ।

यथा मम कुवलयाश्वचरिते प्राकृतकाव्ये—

( ७४ ) 'णवरिअ तं जुअजुअलं अण्णोण्णं णिहिदसजलमन्थरदिट्ठि ।
आलेक्खओपिअं विअ खणमेत्तं तत्थ संट्ठिअं मुक्कसण्णं ॥'

अथोग्रता—

( ७५ ) **शौर्यापराधादिभवं भवेच्चण्डत्वमुग्रता ।
तत्र स्वेदशिरःकम्पतर्जनाताडनादयः ॥ १४६ ॥**

यथा—

( ७६ ) 'प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।

( ७४ ) उदाहरति—णवरिअ इति ।

"केवलं तद्युवयुगलमन्योऽन्यं निहितसजलमन्थरदृष्टि ।
आलेख्यार्पितमिव क्षणमात्रं तत्र स्थितं मुक्तसङ्गम्" ॥ इति संस्कृतम् ।

णवरिअ इति केवलार्थे देशीयभाषा इति व्याख्या । वहोः कालानन्तरं सम्मिलितयोः प्रथमावलोकने स्वरूपवर्णनमिदम् । केवलं तत् मुक्तसङ्गं परित्यक्तसंसर्गं युवयुगलं युवा च युवतिश्च युवानौ तयोर्युगलम् । चिरप्रवासागतपतिगृहस्थितपत्नीरूपं युवकयुवतिद्वयम् युगलपदेनानुरागातिशयं व्यनक्ति अन्योऽन्यं परस्परं निहिता स्थापिता सजला अश्रु सिक्ता मन्थरा निर्निमेषा दृष्टिर्येन तत् अत एव आलेख्यार्पितं चित्रपटेऽङ्कितमिव क्षणमात्रं तत्र स्थितम् अत्र स्कन्धकं छन्दस्तल्लक्षणन्तु—

'स्कन्धकमिति तत्कथितं यत्र चतुष्कलगणाष्टकेनार्धं स्यात् ।
तत्तुल्यमग्रिमदलं भवति चतुष्षष्टिमात्रकशरीरमिदम्' ॥

अत्रान्योन्ययोरेवेष्टदर्शनात् क्षणमात्रं किं कर्त्तव्यविमूढतया जड़ता ॥

( ७५ ) उग्रतां लक्षयति—शौर्य्यापराधादिति । शौर्य्यं रिपोर्वीरत्वं परस्यापराध आदिपदात्परकृतापकारादिकञ्च तस्माद्भवतीति तत्ताहशम्' चण्डत्वमत्यन्तासहिष्णुत्वम् उग्रता भवेत् । तत्र तस्यामुग्रतायां विद्यमानायां स्वेदो धर्मविन्दुः शिरसः कम्पः तर्जना ताड़ना आदिपदात् नेत्ररक्तिमा इत्यादयश्च भवन्तीति शेषः ।

भरतस्तु—चौर्यग्रहणनिरोधनृपापराधात्ततोऽग्रता भवति ।
वधबन्धताड़नादिभिरनुभावैरभिनयस्तस्याः ॥ इत्याह ।

अन्यत्रत्वेवम्—

"नृपापराधसद्दोषकीर्त्तनं चोरधारणम् ।
विभावास्युरथो बन्धो वधस्ताड़नभर्त्सने ॥
एते यत्रानुभावास्तदौग्र्यं निर्दयतात्मकम् ।

( ७६ ) उदाहरति-प्रणयसखीति । मालतीमाधवे मालतीं हन्तुमुद्यतमघोरघण्टं प्रति माधवस्योक्तिरियम् । यद्वपुःप्रणयिनीनां प्रीतिभाजनानां सखीनां सलीलो यः परिहासस्तत्र रसेन रागेण स्वेच्छयेत्यर्थः । अधिगतैर्लब्धैः, ललितस्य मृदुनः शिरीषपुष्पस्य हननैः प्रहारैरपि ताम्यति क्लेशमापद्यते । तत्र तस्मिन् वपुषि शरीरे मालत्या इति शेषः,

वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥'

अथ मोहः—

( ७७ ) **मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः ।**
**मूर्च्छनाज्ञानपतनभ्रमणादर्शनादिकृत् ॥ १५० ॥**

यथा—

( ७८ ) 'तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥'

वधाय हन्तुं शस्त्रखड्गमुपक्षिपतः प्रहरतस्तवाघोरघण्टस्य शिरसि मुस्तके अकाण्डेऽसमये मम एष माधवसम्बन्धीभुजः समुष्टिबन्धः सव्येतरहस्तो यमदण्डः कालदण्ड इव पततु । नर्कुटकं छन्दस्तल्लक्षणं यथा-'यदि भवतो नजौ भजजला गुरु नर्कुटकम्' ।

अत्र मालती शरीरे शस्त्रप्रहारं विदधतोऽघोरघण्टस्यापराधेन माधवस्य चण्डत्वमेतादृशोक्त्या द्योत्यते ।

उदाहरणान्तरं यथा—

'अवाप्य भङ्गं खलु सङ्गराङ्गणे नितान्तमङ्गाधिपतेरमङ्गलम् ।
पराप्रभावं मम गाण्डिवं धनुर्विनिन्दतस्ते हृदयं न कम्पते ॥

कर्णेन पराभूतं गाण्डिवं निन्दन्तं युधिष्ठिरं प्रत्यर्जुनस्योक्तिरियम् ।

( ७७ ) मोहं लक्षयति-मोहइति । भीतिः दुःखम्, आवेगः, अनुचिन्तनम् अतिशयचिन्ता तैर्जाता, मूर्च्छना कश्मलताम्, गात्रपतनं भूमाववलुण्ठनम्, भ्रमणम्, अदर्शनम् अत्रादर्शनमन्तर्धानमिषद्दर्शनं वा न त्वज्ञानम्, तस्य पृथगुपादानेनैव गतार्थत्वात्, एवञ्चाज्ञानमिति व्याख्यानं सहृदयहृदयं नानन्दयतीति विभावनीयम् । आदिना श्रवणस्वहननादिकञ्च करोतीति एतैरुपपदात्करोतेः क्विप् सा तादृशी विचित्तता चित्तस्य निमीलनत्वं विषयाद्विगतचित्तता ज्ञानलोप इति यावत्, मोहः स्यादितिशेषः । भीत्यादीनामत्रोपादानं सुषुप्तिवारणाय । एवञ्च भयदुःखादिप्रयोज्या वस्तुतत्त्वानवधारिणी चित्तवृत्तिर्मोह इति फलितम् ।केचित्तु-'अवस्थान्तरशबलिता चित्तवृत्तिर्मोह' इति वदन्ति । भरतस्तु "मोहो नाम दैवोपघातव्यसनव्याधिभयावेगपूर्ववैरस्मरणादिभिर्विभावैरुत्पद्यते । तस्य निश्चेष्टिताङ्गभ्रमणपतनघूर्णनदर्शनादिभिरनुभावैरभिनयःप्रयोक्तव्य" इत्याह ।

( ७८ ) उदाहरति—तीव्राभिषङ्गेति । कुमारसम्भवे मदनदहनानन्तरं रतेरवस्थावर्णनेयम् । रतिर्मदनसहधर्मिणी, तीव्रः सोढुमशक्योऽसावभिषङ्गोभर्तृनिधनशोकः पराभवो वा स एव प्रभवो यस्य तेन इन्द्रियाणि 'श्रोत्रत्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायवः' इति वाह्यानि दश तेषां वृत्तिं श्रवणादिविषयग्रहणव्यापारं संस्तम्भयता प्रतिबध्नता मोहेन मूर्च्छया, न तु प्रदर्शितरूपभावविशेषेण तथा सति तस्य व्यङ्ग्यत्वोपपत्तिर्न स्यात् । 'मूर्च्छा तु कश्मलं मोहोऽपीत्यमरः । एतेनाज्ञानकरत्वं मोहस्य द्योतितम् । अज्ञातं विस्मृतं भर्तुः स्वामिनो मदनस्य व्यसनं विपन्मरणं यया सा तथोक्ता सती मुहूर्तं क्षणं कृत उपकारो भर्तृमरणविस्मरणेन व्यसननिवर्त्तनं यया सा बभूव जाता । इन्द्रवज्रोपेन्द्रयोरुपजातिच्छन्दस्तल्लक्षणमुक्तं प्राक् ( १९९ पृ० )

अथ विबोधः—

( ७६ ) निद्रापगमहेतुभ्यो विबोधश्चेतनागमः ।
जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत् ॥ १५१ ॥

यथा—

( ८० ) 'चिररतिपरिखेदप्राप्तनिद्रासुखानां
चरममपि शयित्वा पूर्वमेव प्रबुद्धाः ।
अपरिचलितगात्राः कुर्वते न प्रियाणा-
मशिथिलभुजचक्राश्लेषभेदं तरुण्यः ॥'

अत्र रतेः स्वामिमरणदुःखोत्पन्नोऽज्ञानकारी मोहः यथा वा—
विरहेणविकलहृदया विलपन्ती दयितदयितेति ।
आगतमपि तं सविधे परिचयहीनेव वीक्षते बाला ॥

( ७९ ) विबोधं लक्षयति—निद्रापगमेति । निद्राया अपगमहेतवः कारणानि गीतवादित्राणि तेभ्यो जात इति शेषः, जृम्भाम् मुखविस्फारम् अङ्गभङ्गं गात्रप्रसारणम्, नयनमीलनम् लोचनोन्मीलनम् अङ्गानामवलोकनम् करतलाद्यवयवानान्निरीक्षणं तान् करोतीति स तादृशः, चेतनागमो ज्ञानलाभो विबोध, । निद्रानाशोत्तरमुत्पद्यमानो बोधो विबोध इति फलितम् ।

भरतेनाऽप्युक्तम्—

"आहारविपरिणामाच्छब्दस्पर्शादिभिश्च सम्भूतः ।
प्रतिबोधस्त्वभिनेयो जृम्भणवलनाक्षिपरिमर्दः" ॥

( ८० ) उदाहरति—चिररतिपरिखेदेति । माघकाव्ये प्रभातवर्णनमिदम् । तरुण्यो युवत्यः चरममपि नायकनिद्रायाः पश्चात्सुप्तास्तज्जागरणात्पूर्वमेव प्रबुद्धा अपि ।

'सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुद्ध्यते ।
नान्यं कामयते चित्ते सा स्त्री ज्ञेया पतिव्रता, ॥

इति स्मरणा दिति भावः । अपरिचलितगात्राः प्रियनिद्राभङ्गभयान्निष्पन्ददेहाः सत्यः, चिरं रमणं तया परिश्रमस्तस्मात् तं प्राप्येति यावत् ल्यब्लोपे पञ्चमी परिखेदः प्राप्तनिद्रासुखानां प्रियाणां पतीनाम् अशिथिलो गाढो यो भुजचक्रेण परस्परबाहुमण्डलेन आश्लेषोऽऽलिङ्गनं तस्य भेदं विश्लेषं न कुर्वते किन्त्वाश्लिष्यैव स्थिताः । अन्यथा तन्निद्राभङ्गः स्यात् 'शयानं न प्रबोधयेदिति' निषेधस्मरणात् निद्राभङ्गो मा भूदित्येतदर्थं पूर्वं प्रबुद्धा अपि शयिता इवासन्निति भावः । मालिनीच्छन्दस्तल्लक्षणन्तु "ननमययुतेयं मालिनी भोगिलोकै" इति ।

अत्र तरुणीनां समयनियमनाल्लोचनोन्मीलनकारी चेतनागमो विबोधः । परमार्थतो विविक्तोदाहरणं तु—

"एकेन नेत्रकमलं मलयन् करेण पाणिं परं च कलयन्नवनीतभाण्डे ।
निद्राविरामकमनीयमुखाम्बुजश्रीर्मां पातु पादरजसा ननु नन्दबालः" ॥

इति केचिद्वदन्ति ।

अथ स्वप्नः—

( ८१ ) **स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः ।**
**कोपावेगभयग्लानिसुखदुःखादिकारकः ॥ १५२ ॥**

यथा—

( ८२ ) 'मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि मया स्वप्नसंदर्शनेन ।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥'

अथापस्मारः—

( ८३ ) **मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः ।**
**भूपातकम्पप्रस्वेदफेनलालादिकारकः ॥ १५३ ॥**

---

केचित्तु-अविद्याध्वंसजन्यममुं विबोधमभ्युपगच्छन्ति तदाचेदमुदाहार्यम्—
'नष्टोमोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ! ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव' ॥ इति ।

( ८१ ) स्वप्नं लक्षयति—स्वप्न इति । कोपावेग-भय-ग्लानि-सुखदुःखादिकारकः, आदिपदाच्चित्रत्कारकश्च निद्रामुपेतस्य लोकस्य यो विषयानुभवः विषया दृश्याः श्रुता वा ये चक्षुरादिभिर्ग्राह्यास्तेषामनुभवो चेतसैवारोप्य तथानुसन्धानं स स्वप्नप्रो मत इति शेषः। भरतोऽप्याह—"स्वोच्छ्वासैर्निश्वासैर्मन्दाक्षिनिमोलनेन निश्चेष्टः ।
सर्वेन्द्रियसम्मोहात् सुप्तं स्वप्नैः प्रयुञ्जीत" ॥

( ८२ ) उदाहरति—मामाकाशेति । मेघदूते यक्षस्य मेघं प्रति प्रियाऽन्तिके वाचिकप्रेषणमिदम् । मया कथमपि महता कष्टेन स्वप्नसन्दर्शनेन स्वप्नः शयनावस्थायां जागरणसमयस्थितानां दृष्टश्रुतविषयाणामनुसन्धानम् , स एव सन्दर्शनं सम्यग्दर्शनं संविदिति यावत् । 'स्वप्नः सुप्तस्य विज्ञानम् 'इति विश्वः, 'दर्शनं समये शास्त्रे दृष्टौ स्वप्नेऽक्षि संविदि" इति शब्दार्णवः, लब्धायास्ते तव निर्दयाश्लेषहेतोः गाढालिङ्गनार्थम् आकाशे शून्ये प्रणिहितभुजम् अर्पितबाहुं मां त्वत्प्रियम् अत एव त्वद्विरहेण विफलम् , पश्यन्तीनां स्थलीदेवतानां वनदेवतानां मुक्ता इव स्थूलाः अश्रुलेशा नयनोद्बिन्दवः, तरुकिसलयेषु वृक्षपल्लवेषु बहुशो बहुवारं न पतन्ति इति न खलु अपि तु पतन्त्येव । एतादृशं मामवलोक्य वनदेवता अपि रुदन्तीति भावः । मन्दाक्रान्ता वृत्तं तल्लक्षणन्तूक्तं प्राक् । ( १८४ पृ० )

अत्र यक्षस्य आकाशे बाहुप्रणिधानकारी प्रियतमारूपविषयानुभवः स्वप्नः ।

( ८३ ) अपस्मारं लक्षयति—मनः क्षेपस्त्विति । ग्रहाणां सूर्यादीनाम् आदिपदात् भूतादीनाञ्च परिग्रहः आवेशनात् अधिष्ठानात्, अत्रादिपदेन धातुवैषम्यादिपरिग्रहः तस्माज्जायत इति तथोक्तः, भूपातम् कम्पम् प्रस्वेदं घमविन्दुः फेनम् लालाम् । आदिपदात् अचैतन्यञ्च करोति यः सः तथोक्तः, मनसः क्षेपः नाडीविशेषणनिवेशेन घूर्णनम् , विषयग्रहणासामर्थ्यमिति यावत् अपस्मारः ' एवञ्च मोहाद्भेदः स्पष्ट एव । नचाग्रे व्याधेर्वक्ष्यमाणत्वात्तदन्तर्भाव मृइति वाच्य, व्याध्यन्तःपातित्वेऽपि विशेषाकारेण प्रतिपादनं

( ८४ ) 'आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥'

अथ गर्वः—

**( ८५ ) गर्वो मदः प्रभावश्रीविद्यासत्कुलतादिजः ।**
**अवज्ञासविलासाङ्गदर्शनाविनयादिकृत् ॥ १५४ ॥**

तत्र शौर्यगर्वो यथा—

( ८६ ) 'धृतायुधो यावदहं तावदन्यैः किमायुधैः ।
यद्वा न सिद्धमस्त्रेण मम तत्केन साध्यताम् ॥'

---

विभत्सभयानकयोरस्यैव व्याधेरङ्गत्वं नान्यस्येति स्फोरणाय विप्रलम्भे तु व्याध्यन्तरस्यापि च । अत्र भरतः—

'भूतपिशाचस्मरणग्रहणानुच्छिष्टशून्यगृहगमनात् ।
कालान्तरातिपातादशुचेश्च भवेदथापस्मारः ॥
सहसा भूमौ पतनं प्रकम्पनं वदनफेनमोक्षश्च ।
निःसंज्ञाभ्युत्थानं रूपाण्येतान्यपस्मारे' ॥

( ८४ ) उदाहरति—आश्लिष्टभूमिमिति । शिशुपालवधे तृतीयसर्गे समुद्रवर्णनमिदम् । असौ श्रीकृष्णः, आश्लिष्टा आलिङ्गिता भूमिर्येन सः तं तथोक्तम् भुवि पतितमिति भावः, उच्चैः रसितारं शब्दायमानम्, लोलन्तः स्रंसमानाः भुजाकारा बृहन्तो महान्तस्तरङ्गा यस्य तम्, फेनायमानम्, फेनमुद्वमन्तम्, आपगानां सरितां पतिं सागरम्, अपस्मारिणम् अपस्माररोगवन्तम्, आशशङ्के तत्कर्मयोस्तथासम्भावयामासेत्यर्थः । अपस्मारी अपि भूमौ पतति एवम् आश्लिष्टेत्यादि अपस्मारिधर्मास्तत्राप्युन्नेया, इयान्विशेषः—समुद्रे आरोप्यमाणः पुरुषे समर्थ्यमाण अपस्मारः । एवञ्चात्र सम्भाव्यमानग्रहावेशादिजातो भूपातफेनकारक उपमानव्यक्तेरपस्मारः ।

अत्र चेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दस्तल्लक्षणं चोक्तं प्राक् ( १६६ पृष्ठे )

( ८५ ) गर्वं लक्षयति—गर्व इति । राज्ञः कोशदण्डादिजन्यः प्रतापः प्रभावः श्रीवर्गसम्पत्तिः विद्याशास्त्रादिज्ञानम्, सत्कुलता शुद्धान्वयोत्पत्तिः, आदिपदात् शौर्यादेः परिग्रहः तस्माज्जायत इति सः अवज्ञा परस्मिन्नवहेलनम्, सविलासम् अङ्गदर्शनम्, अविनयं शिष्टाचाररहितम्, औद्धत्यमिति यावत् आदिपदादात्मप्रशंसादिञ्च करोति यः सः, मद अहङ्कारो गर्वः ।

भरतोऽपि—

"विद्यायौवनरूपादैश्वर्यादथ धनागमाद्वापि ।
गर्वः खलु नीचानां दृष्ट्यङ्गविचारणैः कार्यः ॥ इति ।

( ८६ ) उदाहरति—धृतायुध इति । वेणीसंहारनाटके कर्णम्प्रत्यश्वत्थाम्न उक्तिरियम् । यावदहं धृतायुधः गृहीतशस्त्रः स्थितः तावत् अन्यैरन्यगृहीतैरायुधैः किं प्रयोजनम् ? यद्वा कार्यं मम कर्णस्य अस्त्रेण न सिद्धम् तत् कार्यं केन पुंसा साध्यताम् अपि तु न केनाऽपीत्यर्थः । श्लोकश्छन्दः ।

अत्र वक्तुर्द्रौणेः शौर्यजात आत्मश्लाघाकारी मदो गर्वः ।

अथ मरणम्—

( ८७ ) शराद्यैर्मरणं जीवत्यागोऽङ्गपतनादिकृत् ।

यथा—

( ८८ ) 'राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥'

---

उदाहरणान्तरं यथा—

"दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन् मृगपतिः"? ॥

( ८७ ) मरणं लक्षयति—शराद्यैरिति । शराद्यैर्बाणाघातदण्डप्रहारादिभिर्जातः, अङ्गपतनादिकृत्, भूमिपतनरक्तपाताद्युत्पादकः जीवस्य जीवनस्य त्यागः मरणम् ।

भरतोऽपि—

"व्याधीनामेकभावो हि मरणाभिनयः स्मृतः ।
विषण्णगात्रैर्निश्चेष्टैरिन्द्रियैश्च विवर्जितः" ॥

अत्र विज्ञप्रिया तातस्तु-उक्तरूपं मरणं न व्यभिचारिभावः किन्तु मरणमात्रकथनमिदम् राममन्मथेत्यादिकमपि मरणमात्रस्यैवोदाहरणम् । व्यभिचारिभावरूपमरणन्तु जातप्रायमेव वर्णनीयम्, न तु जातमित्याह । स्फुटीभविष्यति चोपरिष्टात् ।

( ८८ ) उदाहरति—राममन्मथशरेणेति । रघुवंशे ताड़कावधवर्णनेयम् । सा निशाचरी राक्षसी ताडका सैव निशाचरी अभिसारिका नायिका च, राम एव मन्मथः कामस्तस्य शरेण बाणेन हृदये वक्षसि मनसि च ताडिता सती, 'हृदयं मानसे वुक्कोरसोरपि नपुंसकम्' इति मेदिनी' अत एव गन्धवत् दुर्गन्धि सुगन्धि च रुधिरं चन्दनमिव रुधिरमिव चन्दनं तेनोक्षिता लिप्ता 'रुधिरं कुङ्कुमासृजोः' इति विश्वः, जीवितेशस्य कृतान्तस्य प्राणनाथस्योपनायकस्य च वसतिं गृहं जगाम "वसतिः स्यात्स्त्रियां वासे यामिन्यां च निकेतने" इति मेदिनी । अत्र रथोद्धताच्छन्दस्तल्लक्षणं चोक्तं प्राक् (१२२. पृ०)

अत्र शराघातेन ताड़कायाः मरणं स्पष्टमेव ।

अत्राहुः प्रदीपकाराः—

'जीवस्योद्गमनारम्भो मरणं परिकीर्त्तितम् ।
संमोहेन्द्रियसंग्लानि गात्रविक्षेपणादिकृत्" ॥ इति ।

रसगङ्गाधरकाराऽपि—

रोगादिजन्या मूर्च्छारूपा मरणप्रागवस्था मरणम् ।

न चात्र प्राणवियोगात्मकं मुख्यं मरणमुचितं ग्रहीतुम्, चित्तवृत्त्यात्मकेषु भावेषु तस्याप्रसक्तेः । भावेषु च सर्वेषु कार्यसहवर्त्तितया शरीरप्राणसंयोगस्य हेतुत्वात् ।

उदाहरणम्—

'दयितस्य गुणाननुस्मरन्ती शयने सम्प्रति या विलोकितासीत् ।
अधुना खलु हन्त ! सा कृशाङ्गी गिरमङ्गीकुरुते न भाषिताऽपि' ॥

प्रियविरहोऽत्र विभावः, वचनविरामोऽनुभावः, हन्तपदस्यात्रात्यन्तमुपकारकत्वाद्व्यङ्ग्योऽप्ययं भावः पदव्यङ्ग्यतामावहति । एतेन भावस्य पदव्यङ्ग्यतायां

अथालस्यम्—

( ८९ ) आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भासितादिकृत् ॥ १५५ ॥

यथा—

( ९० ) 'न तथा भूषयत्यङ्गं न तथा भाषते सखीम् ।
जृम्भते मुहुरासीना बाला गर्भभरालसा ॥'

अथामर्षः—

( ९१ ) निन्दाक्षेपापमानादेरमर्षोऽभिनिविष्टता ।
नेत्ररागशिरःकम्पभ्रूभङ्गोत्तर्जनादिकृत् ॥ १५६ ॥

नात्यन्तं वैचित्र्यमिति परास्तम् । दयितस्य गुणाननुस्मरन्तीत्यनेन व्यज्यमानं 'चरमावस्थायामपि तस्या दयितगुणविस्मरणं नाभूदिति वस्तु विप्रलम्भस्य शोकस्य वा चरममभिव्यक्तस्य पोषकम् । अयम्भावः-व्यञ्जकवाक्योत्तरवर्त्तिना वाक्यान्तरेण सन्दर्भघटकेन नायिकायाः प्रत्युज्जीवनवर्णने विप्रलम्भस्य, अन्यथा तु करुणस्य पोषक इति विवेकः । कवयः पुनरमुं प्राधान्येन न वर्णयन्ति, अमङ्गलप्रायत्वात् ।

( ८९ ) आलस्यं लक्षयति—आलस्यमिति । श्रमोऽध्वगमनादिना क्लान्तत्वम्, गर्भो गर्भधारणम्, आदिपदाद्रात्रिजागरणादयश्च तैर्जातम्, जृम्भाम्, मुखव्यादानम्, आसितम् उपवेशनम्, आदिना स्वापादिकञ्च करोति यत्तत् तथोक्तम्, जाड्यम् आलस्यम् ।

श्रमादिजन्या चेतसः क्रियानुन्मुखतालस्यमिति फलितम् ।

अत्र हि नासामर्थ्यम्, नापिकार्याकार्यशून्यत्वम् । अत एव कार्याकरणरूपस्यानुभावस्य समत्वेऽपि ग्लानेर्जडतायाश्चास्य भेदो ज्ञेय इति नव्याः ।

( ९० ) उदाहरति—न तथेति । गर्भभरेणालसा आलस्ययुक्ता बाला न तु प्रगल्भा तथा भूतपूर्वमिव अङ्गं शरीरं,

'अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति ।
क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके ॥ इति मेदिनी ॥

न भूषयति मण्डयति, सखीमपि तथा पूर्वमिव न भाषते न वक्ति केवलम् आसीना उपविष्टा सती मुहुः पुनः पुनर्जृम्भते मुखं व्यादत्ते । यद्यपि कदाचित् माङ्गल्यलक्षणत्वात्सख्यादीनां कथनाद्वा गात्रमप्यलङ्करोति सखीमपि वक्ति किन्तु यथा मुहुरासीना मुखं व्यादत्ते तथा नेत्याशयः ।

( ९१ ) अमर्षं लक्षयति—निन्दाक्षेपेति । निन्दा शान्तभावेन दोषोद्भावनम्, आक्षेप उग्रभावेन भर्त्सनम्, अपमानस्तिरस्कारः । गौरवहानिकरणमिति यावत्, आदिपदात् वित्तक्षेत्रकलत्रहरणादिपरिग्रहः तस्मात् । उत्पन्नेति शेषः ॥ नेत्रयोः रागं लौहित्यम्, शिरः कम्पम्, भ्रूभङ्गम्, ऊत्तर्जनं वाण्या भयप्रकटनम्, आदिना प्रतिज्ञाहननादिकञ्च करोति या सा तादृशी अभिनिविष्टताऽभिनिवेशोऽत्यन्तमाग्रहः अमर्षो 'मत' इति शेषः । ननु क्रोधामर्षयोः स्थायिसञ्चारिणोर्भावयोः किं भेदकमिति चेत् !, उत्कटावस्थापन्नो भावः क्रोधः, कोमलावस्थापन्न अमर्ष इत्यनयोर्वैलक्षण्यं गृहाण।

यथा—

( ९२ ) प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात् ।
न त्वेव दूषयिष्यामि शस्त्रग्रहमहाव्रतम् ॥

अथ निद्रा—

( ९३ ) चेतःसंमीलनं निद्रा श्रमक्लममदादिजा ।
जृम्भाक्षिमीलनोच्छ्वासगात्रभङ्गादिकारणम् ॥ १५७ ॥

यथा—

( ९४ ) 'सार्थकानर्थकपदं ब्रुवती मन्थराक्षरम् ।
निद्रार्धमीलिताक्षी सा लिखितेवास्ति मे हृदि ॥'

( ९२ ) उदाहरति—प्रायश्चित्तमिति । महावीरचरिते वशिष्ठादीन् प्रति परशुरामस्योक्तिरियम् । पूज्यानां आदरणीयानां वो युष्माकं वशिष्ठशतानन्दविश्वामित्राणामित्याशयः व्यतिक्रमात् शस्त्रत्यागोपदेशरूपवचनप्रतिकूलाचरणाद् वरं प्रायश्चित्तं प्रायस्य पापस्य चित्तं शोधनमिति तत् "प्रायस्य चित्तिचित्तयोः" इत्यनेन सुडागमः, 'प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम्" इति हि स्मृतिः, चरिष्यामि आचरिष्यामि । किन्त्वर्थे त्विति । एवमनेन युष्माकमनुरोधेन शस्त्रादानमेव महाव्रतम् अवश्यविधेयकार्यं तन्न दूषयिष्यामि । गुरुवचनातिक्रमरणतो महाव्रतपरित्यागस्य गुरुतरपापोत्पादकत्वादित्याशयः ।

श्लोकश्छन्दः ।

अत्र दशरथिना शिवधनुर्भङ्गात्तस्य च स्वगुरोरपमानेन दाशरथिं प्रति परशुरामस्यैतादृश प्रतिकारी अमर्षः ।

कश्चित्तु—लाक्षागृहानल-विषान्न-सभाप्रवेशैःप्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्य पाण्डववधूपरिधानकेशान् स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः॥

इदमप्युदाहरणं समुपलभ्यते ।

( ९३ ) निद्रां लक्षयति—चेतः सम्मीलनमिति । श्रमः परिश्रमः क्लमो मनः खेदः मदो मद्यादिपानजातो विकारः आदिना भेषजविशेषभक्षणादयश्च तैर्जाता या सा तथोक्ता, जृम्भायाः मुखव्यादानस्य अक्षिमीलनस्य लोचनमुद्रणस्य उच्छ्वासस्य दीर्घनिश्वासस्य गात्रभङ्गस्य अङ्गाकुञ्चनस्य आदिपदेन स्वापादेश्च कारणं हेतुः चेतसश्चित्तस्य सम्मीलनं मेऽव्याख्यनाडीप्रवेशेन निश्चलत्वम् निद्रा 'मते'ति शेषः ।

( ९४ ) उदाहरति—सार्थकेति । सखायं प्रति निद्राणां प्रियां स्मरतः कस्यचिद् विरहिण उक्तिरियम् । निद्रया अर्द्धनिमिलिते अर्द्धसंकुचिते अक्षिणी लोचने यस्याः सा तथोक्ता, सार्थकानि अनर्थकानि च पदानि यथास्यात्तथा एवं मन्थराणि गम्भीराणि अनासन्नानि असम्पूर्णानि वा अक्षराणि वर्णा यत्र तद्यथास्यात्तथा ब्रुवती कथयन्ती सा कान्ता मे मम हृदि लिखिता चित्रितेवास्ति । लिखितेवेति धारावाहिकस्मरणस्फोरणाय "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" इत्यासीदित्यर्थे वर्त्तमानत्वम् इति तर्कवागीशाः

श्लोकश्छन्दः ।

अत्र सम्भाव्यमानसुरतश्रमजाता अक्षिमीलनविधायिनी नायिकाया निद्रा ।

अथावहित्था—

( ६५ ) भयगौरवलज्जादेर्हर्षाद्याकारगुप्तिरवहित्था ।
व्यापारान्तरसक्त्यन्यथावभाषणविलोकनादिकरी ॥ १५८ ॥

यथा—

( ६६ ) 'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥'

अथौत्सुक्यम्—

( ६७ ) इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ।
चित्ततापत्वरास्वेददीर्घनिःश्वसितादिकृत् ॥ १५६ ॥

---

उदाहरणान्तरे यथा—

"सा मदागमबृंहिततोषा जागरेण गमिताखिलदोषा ।
बोधितापि बुबुधे मधुपैर्न प्रातराननजसौरभलुब्धैः ॥"

निमीलितादक्षियुगाच्च निद्रया हृदोऽपि बाह्येन्द्रियमौनमुद्रितात् ।
अदर्शि संगोप्य कदाप्यवीक्षितो रहस्यमस्याः स महन्महीपतिः ॥

( ९५ ) अवहित्थां लक्षयति—भयगौरवेति । भयं गौरवं लज्जा व्रीडा आदिपदात् धार्ष्ट्यादिश्च तस्मात्तथोक्ताज्जातेति शेषः । व्यापारान्तरे अन्यस्मिन्कार्ये सक्तिरासङ्गः, अन्यथा प्रकारान्तरेण अवभाषणम् अप्रक्रान्तस्य भाषणं विलोकनादि च करोति या सा, आदिना अपसरणादिक्रियामात्रस्य परिग्रहः । हर्षाकारो मुखविकासनादिः आद्यपदात् कामाद्याकारारोमाञ्चादयश्च तेषां गुप्तिः संवरणम् अवहित्था 'कथ्यते' इति शेषः । अवहिः स्थितिरवहित्था पृषोदरादित्वात्साधनीया । एवञ्च व्रीडादिभिर्निमित्तैर्हर्षाद्यनुभावानां गोपनाय जनितो भावविशेषोऽवहित्था । तदुक्तम्—

'अनुभावपिधानार्थोऽवहित्थंभाव उच्यते ।
तद्विभाव्यं भयव्रीडाधार्ष्ट्यकौटिल्यगौरवैः ॥ इति ।

( ९६ ) उदाहरति—एवं वादिनीति । कुमारसम्भवे नारदनगराजयोः पार्वतीपरिणयविषयकसंवादसमये समीपवर्त्तिन्यास्तस्याः क्रियावर्णनमिदम् । देवर्षौ नारदे एवं वादिनि सति महेशेन पार्वतीपरिणयघटनावाक्यवादिनि सतीत्यर्थः । पर्वतस्यापत्यं पार्वती पितुर्नगराजस्य पार्श्वे अधोमुखी स्थिता सती लीलाकमलपत्राणि करस्थखेलानलिनदलानि गणयामास संचख्यौ गणयतेर्लिटि रूपम् । अत्र पद्मपत्रगणनव्याजेन तदनुमोदने स्वहर्षं जुगोपेति भावः ।

तथा चात्मपरिणयसंलापश्रवणेन मुखादिविकाररूपहर्षाकारस्य प्रापकत्वात् लीलापद्मपत्रगणनच्छलेन संवरणात् पार्वत्या अवहित्था ।

एवमेव महावीरचरिते दशाननस्य मन्दोदर्याः समीपे भयस्य धार्ष्ट्येन गोपनम्, नैषधीयचरिते च नलस्य परिषदि दमयन्तीविषयकस्नेहस्य मूर्च्छनादिना गोपनमिति विभावनीयम् ।

( ९७ ) औत्सुक्यं निरूपयति—इष्टानवाप्तेरिति । इष्टस्य अभिलषितपदार्थस्य प्रियसङ्गमादेः अनवाप्तिः प्राप्त्यभावस्तस्माज्जातमिति शेषः । चित्ततापं, त्वरां, स्वेदं घर्मजलम्, दीर्घनिःश्वसितं दीर्घोच्छ्वासः आदिपदात् तत्प्राप्तिक्रियादिकञ्च करोति या

( ९८ ) यथ—'यः कौमारहरः स एव हि वरः—' इत्यादौ ( २१ पृ० )

( ९९ ) अत्र यत् काव्यप्रकाशकारेण रसस्य प्राधान्यमित्युक्तं तद्रसनधर्मयोगित्वाद्व्यभिचारिभावस्यापि रसशब्दवाच्यत्वेन गतार्थं मन्तव्यम् ।

अथोन्मादः—

( १०० ) चित्तसंमोह उन्मादः कामशोकभयादिभिः ।

सा तथोक्ता, कालाक्षेपासहिष्णुता कालस्य क्षेपोऽत्ययस्तस्यासहिष्णुताऽसहनशीलत्वम्—औत्सुक्यम् । एवञ्चेदानीमेवास्य प्राप्तिर्मम भवत्वितीच्छा औत्सुक्यमिति फलितम् । इष्टवियोगादिरत्र विभावः । निद्रातन्द्रादयोऽनुभावाः । यदाहुः—

"संजातमिष्टविरहादुद्दीप्तं प्रियसंस्मृतेः ।
निद्रया तन्द्रया गात्रगौरवेण च चिन्तया ॥
अनुभावितमाख्यातमौत्सुक्यं भावकोविदैः ॥" इति ।

(९८) उदाहरति-यथेति यः कौमारहर इति । प्रागेवेदम् (२१) पृष्ठे व्याख्यातन्तत एवोहनीयम्,

अत्र प्रतिपादिकाया नायिकाया रेवारोधसि वेतसीतरुतले अभिलषितविहारस्य पुनरलाभादौत्सुक्यम् ।

(९९) नन्विदमेव पद्यमुदाहृत्य काव्यप्रकाशकृता मम्मटेन 'अत्र रसस्य च प्राधान्यात्' इत्यनेन प्राधान्यं रसस्य स्वीकृतम्, अत्रोदाहरणप्रदर्शयद्भिर्भवद्भिस्तु औत्सुक्याख्यव्यभिचारिभावस्यैव प्राधान्यं व्यञ्जितमिति 'यथोत्तरं मुनीनां प्रामाण्यमिति' न्यायादाप्ततरेण सह तव विरोधो नोचित इत्याशङ्कां परिजिहीर्षुराह—अत्र यदिति । तद् रसस्य प्राधान्यमिति वचः रसनधर्मयोगित्वात् रसनधर्मस्य आस्वादनाख्यव्यापारस्य योगित्वं योगस्तस्मात्, व्यभिचारिभावस्य व्यभिचारिभावरूपस्यौत्सुकस्येत्यर्थः गतार्थं ममाभिलषितेनार्थेन प्राप्तविषयम् । एवञ्चानुभावापुष्टत्वादचमत्कारित्वाच्च स्थायिभावात्मकरसस्य न प्राधान्यं तैरङ्गीकृतं किन्त्वत्र स्थितौत्सुक्यरूपव्यभिचारिभावस्यापि आस्वादनयोग्यत्वेन रसरूपत्वात् 'रसस्य च प्राधान्यात्' इत्युक्त्या तादृश रसस्यैव प्राधान्यमङ्गीकृतमतो न कश्चिद्विरोध इति ध्येयम् ।

अत्र तातस्तु—रसनधर्मयोगित्वादिति प्रतीकमादायाह—"असंलक्ष्यक्रमत्वं रसधर्मः व्यभिचारिभावेऽप्यस्तीत्यर्थः । एतन्मते शृङ्गाराभासो नात्र प्रधानम्, किन्तु तथापि चेतः समुत्कण्ठते इत्यनेन व्यङ्ग्ये विस्मय एव प्रधानतया भासते । स चाद्भुतरस्य स्थायिभावोऽपि शृङ्गाराभासीयश्लोके व्यभिचारिभाव इत्यभिप्रायेण तस्य व्यभिचारिभावत्वं युक्तम् । तस्य चात्र निराकांक्ष्यवाक्यव्यङ्गत्वेन शृङ्गाराभासापेक्षया प्राधान्यम् । नचैवमद्भुत एव तदात्र इति वाच्यम् । लोकविलक्षणगुणबन्धतुल्यविषयत्वे एव विस्मयस्याद्भुतरसत्वप्राप्तिर्नान्यविषयत्वे अद्भुतालम्बनतया । वक्ष्यते हि 'वस्तुलोकातिगम् आलम्बनं मतम्' इति । "गुणानां तस्य महिमा भवेदुद्दीपनं पुनः" इति च । अत्र चोत्कण्ठाया अहेतुरेव विस्मयस्य विषयः" इति ।

(१००) उन्मादं लक्षयति—चित्तसम्मोह इति । कामः, शोकः, भयम्, आदिपदात् वातपित्तादयश्च तैस्तथोक्तैर्जात इति शेषः । अस्थानेऽसमये हासरुदितं गीतं प्रलपनम्

अस्थानहासरुदितगीतप्रलपनादिकृत् ॥ १६० ॥

यथा मम—

( १ ) 'भ्रातर्द्विरेफ भवता भ्रमता समन्ता-
त्प्राणाधिका प्रियतमा मम वीक्षिता किम् ? ।

( झंकारमनुभूय सानन्दम् । )

ब्रूषे किमोमिति सखे ? कथयाशु तन्मे
किं किं व्यवस्यति कुतोऽस्ति च कीदृशीयम् ॥'

अथ शङ्का—

( २ ) परक्रौर्यात्मदोषाद्यैः शङ्कानर्थस्य तर्कणम् ।
वैवर्ण्यकम्पवैस्वर्यपार्श्वालोकास्यशोषकृत् ॥ १६१ ॥

आदिपदादसम्बद्धभाषणादिकञ्च करोति यः स तथोक्तः चित्तस्य सम्मोहश्चेतनाचेतनादिविशेषज्ञानजननाक्षमत्वम् उन्मादः अस्य हि व्याधावन्तर्भावे सम्भवत्यपि पृथगुपादानं व्याध्यन्तरापेक्षया वैचित्र्यविशेषद्योतनायेत्यवधेयम्।

अत्र भरतः—

"इष्टजनविभवनाशादभिघाताद्वातपित्तकफकोपात् ।
विविधात्पित्तविकारादुन्मादो नाम सम्भवति ॥
अनिमितहसितरुदितोपविष्टगतिप्रधावितोत्क्रुष्टैः ।
अन्यैश्च विकारकृतैरुन्मादं सम्प्रयुञ्जीत ॥"

(१) उदाहरति—भ्रातर्द्विरेफेति । द्विरेफं सम्बोध्य विरहोन्मत्तस्योक्तिरियम् । हे भ्रातर्द्विरेफ ! द्वा रेफौ यस्मिन् स द्विरेफस्तत्सम्बुद्धौ भ्रमर ! समन्तात् भ्रमता पर्य्यटता भवता मम प्राणाधिका प्रियतमा किं वीक्षिता काऽप्यवलोकिता ? झङ्कारमनुभूय सानन्दमिति कविवाक्यं मध्ये चूर्णकम् । 'किं ब्रूषे' इति प्रश्ने 'ओम्' इत्युत्तरम् , ओमिति स्वीकारार्थऽव्ययम् । एवञ्च "मया दृष्टा" इति किं स्वीकरोषीत्यर्थः । तत्तदा हे सखे ! आशु त्वरितं मे मह्यं कथय ! इयं मम प्रियतमा किं किं व्यवस्यति कर्त्तुमीहते । कुतः क्वास्ति कीदृशी किंस्वरूपा च सति । वसन्ततिलकाछन्दस्तल्लक्षणन्तूक्तं प्राक् ( १·३ पृ० ) ।

अत्र भ्रमरस्य प्रत्युत्तरदानाक्षमत्वेन विशेषनिर्द्धारणाक्षमत्वाद्वक्तृनायकस्य प्रदर्शितविलापकारी कामजनित उन्मादः ।

यथा वा—

"का त्वं चिकीर्षसि च किं मुनिवर्य ! शैले मायासि काऽपि भगवत्परदेवतायाः ।
विज्ये बिभर्षि धनुषी सुहृदात्मनोऽर्थे किं वा मृगान् मृगयसे विपिने प्रमत्तान् ॥"

(२) शङ्कां लक्षयति—परक्रौर्य्येति । परक्रौर्यं परस्य क्रूरतयाऽवलोकनम् आत्मदोषः, आद्यपदात् दुर्दैवजनितोत्पातादयश्च तैस्तथोक्तैर्जातम्, वैवर्ण्यं विकृतस्वरूपतान् , कम्पं गात्रकम्पनम् , वैस्वर्य्यं विकृतस्वरत्वम् , पार्श्वे अवलोकं दृष्टिम् आस्यशोषं वदनशोषणञ्च करोति यत्तत् तथोक्तम् अनर्थस्यापत्तेः तर्कणं सम्भावना शङ्का "मते"ति शेषः

अत्रभरतोऽपि—

चौर्य्यादिजनिता शङ्का प्रायः कार्या भयानके ।

था मम—

( ३ ) 'प्राणेशेन प्रहितनखरेष्वङ्गकेषु क्षपान्ते
जातातङ्का रचयति चिरं चन्दनालेपनानि ।
धत्ते लाक्षामसकृदधरे दत्तदन्तावघाते
क्षामाङ्गीयं चकितमभितश्चक्षुषी विक्षिपन्ती ॥'

अथ स्मृतिः—

**( ४ ) सदृशज्ञानचिन्ताद्यैर्भ्रूसमुन्नयनादिकृत् ।**
**स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते ॥ १६२ ॥**

यथा मम—

( ५ ) 'मयि सकपटं किंचित्क्वापि प्रणीतविलोचने
किमपि नमनं प्राप्ते तिर्यग्विजृम्भिततारकम् ।

---

प्रियव्यलीकजनिता तथा शृङ्गारिणी मता ॥ इति ।
इयं तु भयाद्युत्पादेन वैवर्ण्यादिकारिणी न तु चिन्ता ॥

( ३ ) उदाहरति—प्राणेशेनेति । मुग्धानायिकायाश्चेष्टां प्रदर्शयन्त्याः कस्याश्चिन्ना- यिकासख्या नायकं प्रत्युक्तिरियम् । क्षपान्ते "त्रियामा क्षणदा क्षपा" इत्यमरः तस्या अन्ते प्रातः कालेत्यर्थः । जात उत्पन्न आतङ्कः सख्याद्युपहासरूपा शङ्का यस्याः सा तादृशी "रुक्तापशङ्का स्वातङ्क" इत्यमरः, इयं क्षामाङ्गी तन्वङ्गी, चकितं यथास्या- त्तथा अभितः परितः चक्षुषी लोचने विक्षिपन्ती पातयन्ती सती, सखीनामेवावलोक- नातङ्केनेति भावः, प्राणेशेन वल्लभेन प्रहितनखरेषु कृतनखाघातेषु अङ्गकेषु स्तनादिषु चन्दनानाम् आलेपनानि समन्ताल्लेपनानि चिरं रचयति विदधाति । तथा प्राणेशेन दत्ता दन्तावघाता दन्तक्षतानि यस्मिंस्तादृशे अधरे लाक्षाम् अलक्तकम् उपचारात्तद्रस- मित्यर्थः असकृन्मुहुर्मुहुर्धत्ते । उपहासादिहेतुनखक्षतादित्वमेवात्रात्मदोषो ज्ञेयः । मन्दा- क्रान्ताच्छन्दस्तल्लक्षणं चोक्तं प्राक् । ( १८४पृ० )

अत्र सख्याद्युपहासरूपानर्थस्य तर्कणात् सम्भोगचिह्नगोपन एव विश्रान्तिरिति शङ्कायाः प्राधान्यम् ।

( ४ ) स्मृतिं लक्षयति—सदृशज्ञानेति । सदृशस्य समानवस्तुनो ज्ञानं बुद्धिः चिन्ता भावनाख्यसंस्कारः, आद्यपदात् सम्बन्धिज्ञानादयश्च तैस्तथोक्तैर्जातम् भ्रुवोः समुन्नम- नम् , आदिपदात् मुखभङ्गिविशेषादिकञ्च करोति यत्तत्तादृशम् , पूर्वानुभूतः पूर्वमनुभव- विषयीभूतः अर्थः पदार्थ एव विषयो यस्य तत्तथोक्तम् ज्ञानं स्मृति रुच्यते । अत्र च भरतः—स्मृतिर्नाम सुखदुःखकृतानां भावानामनुस्मरणं स्वास्थ्यजघन्यरात्रिनिद्राच्छेदस- मानदर्शनोदाहरणचिन्ताभ्यासादिभिरुत्पद्यते । तत्र शिरः कम्पनावलोकनभ्रूसमुन्नमन- प्रहर्षादय अनुभावाः इति ॥

अत्र सदृशज्ञानादेः संस्कारोद्बोधनद्वारा संस्कारस्य तु स्मृतिं प्रति साक्षादेव हेतुत्व- मिति ध्येयम् ।

( ५ ) उदाहरति—मयि सकपटमिति । वायुना परिभूयमानेनापि मधुकरेण पुनः पुन निपीयमानं पद्ममवलोक्य तथैव प्रियतमाया मुखपानोत्पन्नेच्छायां कदाचिदनुभूतं प्रिय- तमायाः स्मितोद्गारं स्मरतः कस्यचित् प्रवासिन सख्युरन्तिक उक्तिरियम् । सकपटं यथा-

स्मितमुपगतामालीं दृष्ट्वा सलज्जमवाञ्चितं
कुवलयदृशः स्मेरं स्मेरं स्मरामि तदाननम् ॥'

अथ मतिः—

( ६ ) नीतिमार्गानुसृत्यादेरर्थनिर्धारणं मतिः ।
स्मेरता धृतिसंतोषौ बहुमानश्च तद्भवाः ॥ १६३ ॥

यथा—

( ७ ) 'असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥'

---

स्यात्तथा क्वापि कस्मिन्नपि पद्मे इति शेषः किंचित् प्रणीते निक्षिप्ते विलोचने नयने येन तादृशे मयि नायके इति शेषः तिर्यक्कुटिलं यथास्यात्तथा विजृम्भिते व्यापारिते प्रकाशिते वा तारके कनीनिके यस्य तत्तादृशं नयनं नायिकाया इति शेषः । लोचनपथं प्राप्ते सति स्मितमुपगतां तथाभूतावस्थया ईषद्धास्यं विदधतीम् आलीं सखीं दृष्ट्वा सलज्जं यथास्यात्तथा अवाञ्चितमानमितं स्मेरं स्मेरं पुनः पुनः स्मितयुक्तं "तत् कुवलयमिन्दीवरं च नीलाब्जम्" इति नाममाला, आननं वदनं स्मरामि । हरिणीच्छन्दस्तल्ल० (१६९ पृ०)

उदाहरणान्तरं यथा—

"तन्मञ्जु मन्दहसितं श्वसितानि तानि सा वै कलङ्कविधुरा मधुराननश्रीः ।
अद्यापि मे हृदयमुन्मदयन्ति हन्त ! सायन्तनाम्बुजसहोदरलोचनायाः ॥"

अत्र नायकस्य भावनावशेन पूर्वानुभूतनायिकामुखस्मरणात् स्मृतिः ।

( ६ ) मतिं लक्षयति—नीतिमार्गेति । नीतिमार्गो नीतिशास्त्रं तस्यानुसृतिरनुसरणम् आदिपदेनानुमानादेश्च हेतोः अर्थानद्धारणं पदार्थनिर्णयो मतिः, उच्यते इति शेषः शास्त्रादिविचारजन्यमर्थनिर्धारणं मतिरिति सारार्थः ।

स्मेरता ईषद्धास्यम्, धृतिर्धैर्यम्, सन्तोषो मितलाभेनाऽप्यनाकुलत्वम् बहुमानः सत्कारश्च एते तस्यामन्तर्भवन्तीति तद्भवास्तज्जन्या इत्यर्थः । अत्र भरतस्तु—

"नानाशास्त्रविनिष्पन्ना मतिः सञ्जायते नृणाम् ।
शिष्योपदेशार्थकृतस्तस्यास्त्वभिनयो भवेत्" ॥ इत्याह ।

( ७ ) उदाहरति—असंशयमिति । अभिज्ञानशकुन्तले शकुन्तलां निरीक्ष्य दुष्यन्तस्तद्विषये ब्राह्मणकन्यकाबुद्ध्या जातसन्देहः स्वयमेव दृढयति—असंशयमिति । असंशयं निःसन्देहं नूनमेव इयं शकुन्तला क्षत्रेण क्षत्रियेण परिग्रहस्य क्षमा पत्नीत्वेन ग्रहणयोग्या "क्षत्रं क्षत्रियराजन्या" इति नाममाला, ब्राह्मणकन्या नैवत्यर्थः । "परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः" इति विश्वः । कुत इत्यत आह—यदार्यमिति । यत् यस्माद्धेतोः मे विद्याविनयादिगुणयुक्तस्य मम आर्यम् अनुचितानभिलाषित्वेन उत्तमं मन अन्तःकरणम् अस्याम् अज्ञातवंशायां संशयितवंशायां वा परकन्यायां शकुन्तलायाम् अभिलाषि कृताभिलाषं भवतीति शेषः । अर्थान्तरन्यासमाह—सतां हीति । हि तथाहि सन्देहपदेषु सन्देहास्पदेषु वस्तुषु विषयेषु सतां सज्जनानाम्, अन्तःकरणस्य प्रवृत्तयः संकल्पादयः प्रमाणं निश्चयबीजम् । तथाह मनुः-"साधूनामात्मनस्तुष्टिरेव च" इति ।

अथ व्याधिः—

( ८ ) व्याधिर्ज्वरादिर्वाताद्यैर्भूमीच्छोत्कम्पनादिकृत् ।

( ९ ) तत्र दाहमयत्वे भूमीच्छादयः । शैत्यमयत्वे उत्कम्पनादयः । स्पष्ट-मुदाहरणम् ।

अथ त्रासः—

( १० ) निर्घातविद्युदुल्काद्यैस्त्रासः कम्पादिकारकः ॥ १६४ ॥

तथा च अस्यां शकुन्तलायां मदन्तःकरणस्य बलवत्प्रमाणत्वादियं नूनं क्षत्रपरिग्रहक्षमेति भावः । वंशस्थंच्छन्दस्तल्लक्षणन्तूक्तं प्राक् (२०६ पृ०)

अत्र दुष्यन्तस्य अनुमानेन शकुन्तलायाः क्षत्रियजातिविवाहयोग्यत्वनिश्चया-त्मतिः । यद्यपि—

"या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः ।
प्रायस्ता एव कर्त्तव्याः समानार्थे विशेषणे ॥"

इत्युक्तदिशा अन्तःकरणप्रवृत्तयः इति बहुवचनं प्रमाणमित्येकवचनमनुपपन्नं तथापि "वेदाः प्रमाणम्" इतिवत् अजहल्लिङ्गात् बहुत्वावच्छिन्नप्रवृत्तेरविवक्षितत्वाच्च समाधेयम् ।

( ८ ) व्याधिं लक्षयति—व्याधिर्ज्वरादिरिति । वाताद्यैर्वातपित्तकफवैषम्याय विर-हादिभिर्जात इति शेषः, भूमीच्छां भूमिपतनेच्छाम्, उत्कम्पनम्, आदिपदात् श्वसित प्रलपनगात्रविक्षेपणतृषादिकञ्च करोति यः स तादृशो ज्वरादी रोगो व्याधिः "उच्यते" इति शेषः । रोगविरहादिप्रभवो मनस्तापो व्याधिरिति फलितार्थः ।

केचित्तु—

"एकैकशो द्वन्द्वशो वा त्रयाणां वा प्रकोपतः ।
वातपित्तकफानां स्युर्व्याधयो ये ज्वरादयः ।
इह तत्प्रभवो भावो व्याधिरित्यभिधीयते" ॥ इत्याचक्षते ।

( ९ ) व्याधेः कार्यं दर्शयति-तत्रेति । तत्र व्याधावित्यर्थः । दाहः प्राचुर्येण प्रस्तुतो यत्तस्य भावस्तत्त्वं तस्मिंस्तथोक्ते, शैत्यमयत्वेऽप्येवमेव विग्रहो बोध्यः । स्पष्टमुदा-हरणमिति ।

"भूमौ पतति तापार्त्ता विप्रयुक्ता वधूरिव ।
कदलीवानिलोद्धूता ज्वरार्त्ता कम्पते प्रिया ॥"

अत्र नायिकायाः वातादिवैषम्यात् सन्तापरूपो ज्वरः ।

यथा वा—"हृदये कृतशैवलानुषङ्गा मुहुरङ्गानि यतस्ततः क्षिपन्ती ।
तदुदन्तपरे मुखे सखीनामतिदीनामियमादधाति दृष्टिम् ॥"

( १० ) निर्घातं लक्षयति—निर्घातविद्युदिति । वायुना हतो भूमिस्पर्शी वायुविशेषो निर्घातः, तथाचोक्तम्—

"यदान्तरिक्षे बलवान्मारुतो मरुता हतः ।
पतत्यधः स निर्घातो जायते वायुसम्भवः" ॥" इति ।

यथा—

( ११ ) 'परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥'

अथ व्रीडा—

( १२ ) धाष्टर्याभावो व्रीडा वदनानमनादिकृद्दुराचारात् ।

( १३ ) यथा—'मयि सकपटं—' इत्यादि ( २३६ पृ० ) ।

---

विद्युत् सौदामिनी, व्योमचारी लम्बमानतेजः पुञ्जश्च उल्का, उक्तञ्च—

"वृहच्छिखा च सूक्ष्माग्रा रक्तनीलशिखोज्वला ।
पौरुषी च प्रमाणेन उल्का नानाविधा स्मृता ॥"

उल्काद्यैरित्यत्राद्यपदेन भूकम्पादेः परिग्रहः तैस्तथोक्तैर्जात इति शेषः, कम्पम् आदिपदान्मूर्च्छादिकञ्च करोति यः सः त्रासो भीतिरेव त्रासः "उच्यते" इति शेषः । नव्यास्तु "भीरोर्घोरसत्त्वदर्शनस्फूर्जथुश्रवणादिजन्मा चित्तवृत्तिविशेषस्त्रासः" अनुभावाश्चास्य रोमाञ्चकम्पस्तम्भभ्रमादयः । अयं भयाद्भिद्यते । तदुक्तम्—

'पूर्वापरविचारोत्थं भयं भासाद् पृथग् भवेत्" । इत्याहुः ।

( ११ ) उदाहरति—परिस्फुरदिति । किरातार्जुनीये जलक्रीडायामुरुप्रविष्टमीनकदर्थितानामप्सरसां त्रासवर्णनमिदम् । परिस्फुरद्भिर्विचरद्भिर्मीनैर्विघट्टितास्ताडिता ऊरवो जङ्घप्रदेशाः यासां तास्तथोक्ताः, अत एव त्रासविलोलदृष्टयः भयेन चञ्चललोचनाः सुराङ्गना अप्सरसः कम्पितपाणिपल्लवाः सत्यः सखीजनस्यापि अपिना का कथा नायकस्येति भावः, विलोकनीयतां कुतुकेन दर्शनीयताम् उपाययुः प्रापुः । वंशस्थं छन्दस्तल्लक्षणन्तूक्तं प्राक् ( २०६ पृ० )

अत्र देवाङ्गनानां मीनविघट्टनात् पाणिकम्पकारी त्रासः ।

यथा वा—आलीषु केलीरभसेन बाला मुहुर्ममालापमुपालपन्ती ।
आरादुपाकर्ण्य गिरम्मदीयां सौदामिनीयां सुषमामयासीत् ॥"

( १२ ) व्रीडां लक्षयति—धाष्टर्याभाव इति । दुराचारात् स्वस्य सहसा कुचनितम्बप्रकाशादिदुराचाराद्धेतोः परस्या वा व्याजदर्शनादिदुराचारात् वदनानमनम्, आननतिः आदिपदाद्वैवर्ण्यादिकञ्च करोति यः सस्तथोक्तः धाष्टर्याभावः प्रागल्भ्यराहित्यम्, सङ्कुचितत्वमिति यावत् व्रीडा "उच्यते" इति शेषः । अत्र स्त्रीणां पुरुषमुखावलोकनादेः पुंसां च प्रतिभङ्गपराभवादेरुत्पन्नो वैवर्ण्याधोमुखत्वादिकारणीभूतश्चित्तवृत्तिविशेषो व्रीडा" इति नव्याः ।

भरतस्तु—

"किञ्चिदकार्यं कुर्वन् यो हि नरो दृश्यते शुचिभिरन्यैः ।
पश्चात्तापेन युतो व्रीडित इति वेदितव्योऽसौ ।
लज्जा निगूढवदनो भूमिं विलिखन् नखैश्च विनिकृन्तन् ।
वस्त्राङ्गुलीयकानां संस्पर्शं व्रीडितः कुर्यात् ॥" इत्याह

( १३ ) उदाहरति—यथेति । मयि सकपटमिति । पूर्वमेव (२३६) पृष्ठे ।

अत्रनायकावलोकनात् नायिकाया वदनावनमनविधायिनी व्रीडा ।

अथ हर्षः—

( १४ ) हर्षस्त्विष्टावाप्तेर्मनःप्रसादोऽश्रुगद्गदादिकरः ॥ १६५ ॥

यथा—

( १५ ) 'समीक्ष्य पुत्रस्य चिरात्पिता मुखं निधानकुम्भस्य यथैव दुर्गतः ।
मुदा शरीरे प्रबभूव नात्मनः पयोधिरिन्दूदयमूर्च्छितो यथा ॥'

---

यथा वा—पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् ।
प्रवृत्तेऽपि प्रष्टुं न गदति सखीं पश्यति परं-
समुत्ताम्यत्यन्तः प्रथमपरिहासे नववधूः ॥'

( १४ ) हर्षं लक्षयति—हर्षस्त्विति । इष्टस्य अभीप्सितवस्तुनः अवाप्तेः, प्राप्तेर्हेतोः, अश्रुगद्गदम् अस्फुटवचनम् , आदिपदात् हासादिकञ्च करोति यः सस्तथोक्तः मनः प्रसादः स्वान्तस्य प्रसन्नत्वम् "प्रसादस्तु प्रसन्नता" इत्यमरः, हर्षः प्रोक्त इति शेषः । एवञ्च इष्टप्राप्त्यादिजन्मा सुखविशेषो हर्ष इति फलितम् । तदुक्तम्—

"देवभर्त्तृगुरुस्वामिप्रसादः प्रियसंगमः ।
मनोरथादिरप्राप्यमनोहरधनागमः ॥
तथोत्पत्तिश्च पुत्रादेर्विभावो यत्र जायते ।
नेत्रवक्त्रप्रसादश्च प्रियोक्तिः पुलकोद्गमः ॥
अश्रुस्वेदादयश्चानुभावा हर्षं तमादिशेत् ॥" इति ।

( १९ ) उदाहरति—समीक्ष्येति । रघुवंशे तृतीयसर्गे रघोर्मुखं वीक्ष्य दिलीपस्य प्रमोदवर्णनमिदम् । दुर्गतो निर्धनो जनः निधानकुम्भस्य यथा धनपूर्णकलशस्येव, पाति रक्षति भयादिभ्य इति पिता दिलीपः चिरात् बहोः कालादनेकदेवाराधनाद्यनन्तरमिति भावः, पुत्रस्य मुखं निरीक्ष्यावलोक्यैव, इन्दोरुदयेन मूर्च्छितो वर्द्धितः पयोधि र्जलनिधिर्यथा, तथा मुदा हर्षेण आत्मनः शरीरे न प्रबभूव शरीरसञ्चालने न समर्थो बभूवेत्यर्थः अतिप्रवृद्धस्य समुद्रस्य स्तम्भितत्वं भवतीत्यभिप्रायेणेयमुपमा । यद्वा पयोधिरिन्दूदयेन तरलो भवति तथा पुत्रोत्पत्त्या हर्षतरलो बभूवेत्युपमालङ्कारो ज्ञेयः । वंशस्थं छन्दस्त ल्लक्षणन्तूक्तं प्राक् (२०६ पृ०) ।

अत्र दिलीपस्य पुत्रप्राप्त्या हर्षः ।

अयं श्लोक इदानीन्तनप्रचलितपाठे नोपलभ्यतेऽतः—

'निवातपद्मस्तिमितेन चक्षुषा नृपस्य कान्तं पिबतः सुताननम् ।
महोदधेः पूर इवेन्दुदर्शनाद्गुरुः प्रहर्षः प्रबभूव नात्मनि" ॥ अयमेव श्लोकः रूपान्तरेण ग्रन्थकारेणोपन्यस्त इति ज्ञेयम् । क्षेपकत्वेन तूपलभ्यत एव ।

यथा वा—

अवधौ दिवसान्तसाकाले भवनद्वारि विलोचनं दधाना ।
अवलोक्य समागतं तदामामथ रामा विकसन्मुखी बभूव ॥

अथासूया—

( १६ ) असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता ।
　　दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत् ॥ १६६ ॥

यथा—

( १७ ) 'अथ तत्र पाण्डुतनयेन सदसि विहितं मधुद्विषः ।
　　मानमसहत न चेदिपतिः परवृद्धिमत्सरि मनो हि मानिनाम् ॥'

अथ विषादः—

( १८ ) उपायाभावजन्मा तु विषादः सत्त्वसंक्षयः ।
　　निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् ॥ १६७ ॥

( १६ ) असूयां लक्षयति—असूयान्येति । दोषोद्घोषम् अन्यस्य दोषवर्णनम् भ्रुवोर्भ्रुकुटयोः विभेदम् अनार्जवत्वम्, अवज्ञाम् अवहेलनां क्रोधेङ्गितं कोपलक्षणं नेत्रमुखरक्ततादिम् आदिपदात् कलहादिञ्च करोति या सा तादृशी औद्धत्यादहङ्कारात्, अन्यस्य गुणानां विद्यासौन्दर्यादीनामृद्धीनामाधिक्यानां या असहिष्णुता सा असूया मतेति शेषः । एवञ्च परोत्कर्षदर्शनादिजन्यः परनिन्दादिकारणीभूतश्चित्तवृत्तिविशेषोऽसूयेति फलितम् । इमामेवासहनादिशब्दैर्व्यवहरन्ति ।

( १७ ) उदाहरति—अथ तत्रेति । शिशुपालवधकाव्ये पद्यमिदम् । अथ श्रीकृष्णस्य मुख्यतया अर्घ्यसमर्पणानन्तरम्, चेदिपतिः शिशुपालः तत्र सदसि परिषदि पाण्डुतनयेन धर्मराजेन विहितं कृतं, मधुं द्वेष्टीति मधुद्विट् तस्य श्रीकृष्णस्य मानम् अर्घ्यप्रदानेन प्रतिष्ठां न असहत ईर्ष्यामकरोदित्यर्थः । तत्रार्थान्तरं न्यस्यति—परवृद्धीति । हि यतो मानिनामहङ्कारिणां मनश्चित्तं परेषां वृद्धौ अभ्युदये मत्सरि असहिष्णुः "मत्सरोऽन्यशुभद्वेषः" इत्यमरः । अत्रोद्गताच्छन्दस्तल्लक्षणन्तु—

　　"सजसादिमे सलघुके च न सजगुरुकेऽप्यथोद्गता ।
　　अङ्घ्रिगतभजनजलागयुताः सजसा जगौ चरणमेकतः पठेत् ॥

उदाहरणान्तरं यथा उत्तररामचरिते—

　　"वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्त्तते
　　　सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।
　　यानि त्रीण्यकुतो भयान्यपि पदान्यासन् खरा योधने ।
　　　यद्वा कौशलमिन्दुसूनुदमने तत्राप्यभिज्ञो जनः ॥"

( १८ ) विषादं लक्षयति—उपायाभावेति । उपायानाम् अनर्थनिराकरणकारणानाम् अभावात् जन्म उत्पत्तिर्यस्य स तादृशः, निःश्वासम् उच्छ्वासं प्रनष्टाशां हृत्तापं मनःसन्तापं सहायान्वेषणम् आदिपदादश्रुपतनादिकञ्च करोति यः स तथोक्तः सत्त्वसंक्षयो बलहानिर्विषाद 'उच्यते' इति शेषः । नव्यास्तु—"इष्टासिद्धिराजगुर्वाद्यपराधजन्योऽनुतापो विषाद" इति वदन्ति । भरतस्तु—

　　"कार्या निस्तरणकृतशौर्यादिग्रहणराजदोषाद्यः ।
　　दैवादिष्टो योऽर्थस्तदसम्प्राप्तौ विषादः स्यात्" ॥

इत्याद्याह ।

यथा मम—

( १९ ) एसा कुडिलघणेन चिउरकडप्पेण तुह णिबद्धा वेणी ।
मह सहि दारइ डंसइ आअसजट्ठिव्व कालउरइव्व हिअअं ॥

अथ धृतिः—

( २० ) ज्ञानाभीष्टागमाद्यैस्तु संपूर्णस्पृहता धृतिः ।
सौहित्यवचनोल्लाससहासप्रतिभादिकृत् ॥ १६८ ॥

यथा मम—

( २१ ) 'कृत्वा दीननिपीडनां निजजने बद्ध्वा वचोविग्रहं
नैवालोच्य गरीयसीरपि चिरादामुष्मिकीर्यातनाः ।

---

( १९ ) उदाहरति—एसेति ।

"एषा कुटिलघनेन चिकुरकलापेन तव निबद्धा वेणी ।
मम सखि दारयति दशति आयसयष्टिरिव कालोरगीव हृदयम्" ॥

इति संस्कृतानुवादः । बद्धवेणिकां प्रोषितभर्तृकां दृष्ट्वा सख्या विषादोक्तिरियम् । हे सखि ! कुटिलो वक्रश्चासौ घनः सान्द्रश्चेति तेन तथोक्तेन । चिकुरकलापेन केशपाशेन निबद्धा एषा तव वेणी आयसो लोहस्तम्भस्य यष्टिः शलाकेव मम हृदयं स्वान्तं दारयति विदीर्णं करोति । तथा कालः कृष्णो य उरगः सर्पः कृष्णसर्प इत्यर्थः तदिव मम हृदयं दशति च तव विरहतापव्यञ्जकत्वादिति भावः । दारणे आयसयष्टिर्दृष्टान्तः दंशने च कालोरगी । आर्यागीतिश्छन्दः ।

अत्र हि विरहसन्तापनिराकरणोपायाभावात् सख्या विषादः । संस्कृते उदाहरणन्त्विदं ज्ञेयम्—

"भास्करसूनावस्तं याते जाते च पाण्डवोत्कर्षे ।
दुर्योधनस्य जीवित ! कथमिव नाद्यापि निर्यासि ॥" इति ।

( २० ) धृतिं लक्षयति-ज्ञानाभीष्टेति । ज्ञानेन यथार्थबोधेन अभीष्टः प्रियजनस्तस्यागमेनागमनेन आदिना विपन्निवृत्तिप्रभृतयस्तैस्तथोक्तैर्जातेति शेषः । सौहित्यवचनं तृप्तिजनकं वाक्यम् "सौहित्यं तर्पणं तृप्ति"रित्यमरः, उल्लासम् आह्लादं हासो हास्यं तत्सहिता प्रतिभा बुद्धिविकासस्तां तथोक्ताम् आदिना शान्त्यादिकञ्च करोति या सा तादृशी सम्पूर्णस्पृहता पूर्णकामता आप्तकामतेति यावत्, धृतिः उच्यते इति शेषः केचित्तु—लोभशोकभयादिजनितोपप्लवनिवारणकारणीभूतश्चित्तवृत्तिविशेषो धृतिः" इति वदन्ति । अत्र भरतः—

"विज्ञानशौचविभवश्रुतिशक्तिसमुद्भवा धृतिः सद्भिः ।
भयशोकविषादाद्यैरहिता तु सदा प्रयोक्तव्या ॥
प्राप्तानामुपभोगः शब्दस्पर्शरसरूपगन्धानाम् ।
अप्राप्ते नहि शोको यस्यां हि भवेद् धृतिः सा तु ॥ इति ।

( २१ ) उदाहरति—कृत्वा दीनेति । पूर्वमसदुपायेन द्रव्याणि सञ्चित्य वृद्धावस्थायां संसारविरक्तस्य तपोवनस्थस्य निजपूर्वावस्थां निन्दतः कस्यचिज्ज्ञानवत उक्तिरियम् ।

द्रव्यौघाः परिसंचिताः खलु मया यस्याः कृते सांप्रतं
नीवाराञ्जलिनापि केवलमहो सेयं कृतार्था तनुः ॥'

अथ चपलता—

( २२० ) मात्सर्यद्वेषरागादेश्चापल्यं त्वनवस्थितिः ।
तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ॥ १६६ ॥

यथा—

( २३ ) 'अन्यासु तावदुपमर्दसहासु भृङ्ग !
लोलं विनोदय मनः सुमनोलतासु ।

---

दीनानां दरिद्राणामपि निपीडनामुत्कोचादिना निष्पीडनं कृत्वा, निजजने स्वकीयबन्धुवर्गे वचो विग्रहं वाक्कलहं बद्ध्वा कृत्वा, गरीयसीरतितरां गुर्वीः आमुष्मुकीः पारलौकिकीः चिरात् दीर्घकालस्थायिनीः यातनाः विविधनरकपीड़ाः नैवालोच्य अपर्यालोच्य मया यस्यास्तनोः कृते निमित्ते द्रव्यौघाः धनसमूहाः परिसञ्चिताः इतस्ततः परिभ्रम्य एकत्रीकृताः, साम्प्रतं सेयं तनुः शरीरं केवलं नीवाराञ्जलिनाऽपि अञ्जलिपरिमिततृणधान्येनाऽपि 'तृणधान्यानि नीवाराः' इत्यमरः कृतार्था कृतकृत्या अहो इदमाश्चर्यमेवेत्यर्थः । शार्दूलविक्रीडितंछन्दस्तल्लक्षणन्तूक्तं प्राक् (१९८ पृ०)

अत्र प्रतिपादकपुंसो यथार्थज्ञानवशेन नीवाराञ्जलिनापि पूर्णकामत्वात् धृतिः ।

यथा वा—वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः,
सम इह परिणामे निर्विशेषो विशेषः ।
स तु भवतु दरिद्रो यस्य तृष्णा विशाला,
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥'

( २२ ) चपलतां लक्षयति—मात्सर्यद्वेषेति । मात्सर्य्यम् एकतरपक्षपातेनेतरत्राऽसूया तस्मात् द्वेषात् रागात् आदिना उन्मादादेश्च कारणात् अनवस्थितिः स्थैर्य्याभावः चापल्यं चपलता । तत्र चापल्ये सति भर्त्सनं पारुष्यं निष्ठुरता कठोरता स्वच्छन्दाचरणं यदृच्छया व्यवहारः आदिपदात् सन्यस्तादयश्च जायन्त इति शेषः । नव्यास्तु—अमर्षादिजन्यवाक्पारुष्यादिकारणीभूतश्चित्तवृत्तिविशेषश्चापल्यम् । यदाहुः—

"अमर्षप्रातिकूल्येर्ष्या रागद्वेषाश्च मत्सरः ।
इति यत्र विभावाः स्युरनुभावस्तु भर्त्सनम् ॥
वाक्पारुष्यं प्रहारश्च ताडनं बधबन्धने ।
तच्चापल्यमनालोच्य कार्यकारित्वमिष्यते ॥"

इति वदन्ति ।

( २३ ) उदाहरति—अन्यास्विति । विकटनितम्बाम् अप्राप्तयौवनां बालिकामेव रिरंसितुं कमपि हठकामुकं प्रति भ्रमरायोपदेशव्याजेन उदासीनस्य कस्यचिदुक्तिरियम् । हे भृङ्ग ! भ्रमर ! पक्षे हठकामुक ! उपमर्दसहासु मधुपानकालीनचरणप्रहारादिरुपमर्दः, पक्षे सम्भोगकालीनचुम्बनालिङ्गनादिस्तत्सहासु समर्थासु अन्यासु सुमनोलतासु पुष्प

मुग्धामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमालिकायाः ॥'

अथ ग्लानिः—

( २४ रत्यायासमनस्तापक्षुत्पिपासादिसंभवा ।
ग्लानिर्निष्प्राणताकम्पकार्श्यानुत्साहतादिकृत् ॥ १७० ॥

यथा—

( २५ ) 'किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।

---

लतासु युवतिषु च तावत् तृप्तिपर्यन्तमित्यर्थः लोलं सतृष्णं मनो विनोदय मधुपानेन सुरतेन च आनन्दय । मुग्धां कोमलां सुरतमृद्वाञ्च विमर्दासहामित्यर्थः । अजातरजसां रजः परागः आर्त्तवञ्च न जात उत्पन्नं रजो यस्याः सा ताम् अजातरजोयोगामित्यर्थः ।

रजः क्लीबं गुणान्तरे ।
आर्त्तवे च परागे च रेणुमात्रेऽपि दृश्यते ।

इति मेदिनी ।

नवमालिकायाः सप्तलायाः 'सप्तला नवमालिका' इत्यमरः । कलिकां कस्याश्चिद् वालिकां कन्याञ्च, अकाले मकरन्दाभावदशायां बाल्ये च किं कथं व्यर्थं मनोऽभिलषितपूर्त्यभावादनर्थकं, कदर्थयसि दूषयसि । समासोक्तिवशाच्चेह नवोढाकदर्थननायकप्रतीतिः । वसन्ततिलकं छन्दस्तल्लक्षणन्तूक्तं प्राक् (१६२ पृ०)

अत्र वाच्यभृङ्गस्य व्यङ्ग्यनायकस्य च रागवशाद्यदृच्छाचरणहेतुभूतं मनसः अस्थिरतारूपं चापल्यम् । पद्येऽस्मिन् "नवमल्लिकायाः" इति क्वाचित्कः पाठो ज्यायान् मुग्धेत्युपादानात् ।

( २४ ) ग्लानिं लक्षयति—रत्यायासेति । रतेराश्लेषात् आयासात् अन्यविषयपरिश्रमात् मनस्तापात् क्षुधो बुभुक्षायाः पिपासायाः आदिपदात् क्लेशादेश्च सम्भवति या सा तादृशी, कम्पं, कार्श्यम् अनुत्साहताम् आदिपदात् तूष्णीम्भावादश्च करोति या तथोक्ता या निष्प्राणता अत्र निर्गतः प्राणो यस्मात्तस्य भावस्तत्तेति न मुख्यार्थः किन्तु लक्षणया असामर्थ्यं देहस्य दुर्बलतेति यावत् यद्वोपसर्गबलादपि समावेयम् । सा ग्लानिः ।

अत्र भरतः—"वातविरक्तव्याधिषु तपसा जरसा च जायते ग्लानिः ।
गदितैः क्षामक्षामैर्नेत्रविकारैश्च दीनसञ्चारैः ।
श्लथभावाचाङ्गानां मुहुर्मुहुर्निर्दिशेद् ग्लानिम् ॥" इति ।

नव्यास्तु—व्याध्यादिप्रबलबलनाशं ग्लानिमाहुः परन्तु तेषां मते चित्तवृत्त्यात्मकेषु भावेषु नाशरूपाया ग्लानेः कथं समावेश इति ध्येयम् । यद्यपि "बलस्यापचयो ग्लानिराधिव्याधिसमुद्भवः" इति पूर्वाचार्यलक्षणवाक्यादपचयशब्दस्य नाश एवार्थः प्रतीयते, तथापि प्रागुक्तानुपपत्त्या बलनाशजन्यं दुःखमेव बलापचयशब्देन विवक्षितम् ।

( २५ ) उदाहरति—किसलयमिवेति । उत्तररामचरिते गोदावरीजलाशयान्निसरन्तीं सीतां दृष्ट्वा मुरलाया उक्तिरियम् । हृदयमेवातिमृदुत्वात्कुसुमं तच्छोषयतीति हृदयकु-

ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥'

अथ चिन्ता—

( २६ ) ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत् ।

यथा मम—

( २७ ) 'कमलेण विअसिएण संजोएन्ती विरोहिणं ससिबिम्बं ।
करअलपल्लत्थमुही किं चिन्तसि सुमुहि अन्तराहिअहिअआ ॥'

---

सुमशोषी दारुण अतिकठिनो दीर्घशोकः दीर्घ आयतश्चिरकालस्थायीत्यर्थः शोको रामचन्द्रेण सह विरहजनितान्तस्ताप इति तथोक्तः, बन्धनादुत्पत्तिस्थानात् विप्रलूनं विच्छिन्नम्, मुग्धं मनोहरं किसलयं पल्लवमिव स्थितम्, अस्याः सीतायाः परिपाण्डु 'परितः पाण्डुः पीतसंवलितः शुभ्रकान्तिः सोऽस्यास्तीति तत्तथोक्तम् । "पाण्डुस्तु पीतभागार्धः केतकीधूलिसन्निभः' इति शब्दार्णवः । क्षामं कृशं शरीरं शरदिकाले जात उत्पन्नः शरदिज इत्यलुक्समासः, घर्म आतपः केतक्याः कुसुमस्य गर्भपत्रमिव ग्लपयति ग्लानिं प्रापयति । मालिनीच्छन्दस्तल्लक्षणन्तूक्तं प्राक् (१६५पृ०)

अत्र मनस्तापोत्पन्ना कार्श्यविधायिनी शरीरकृशतारूपा सीताया ग्लानिः । "निष्प्राणत्वानौजस्यसत्त्वसंक्षयाणां बलहानिरूपत्वेऽपि विभिन्नहेतुत्वेन ग्लानिदैन्यविषादानां भेदो बोध्यः' इति तर्कवागीशाः ।

( २६ ) चिन्तां लक्षयति—ध्यानमिति । हितस्य अनाप्तेरलाभाद्धेतोः जातमिति शेषः, शून्यतां संसारस्य शून्यत्वप्रतीतिं श्वासं तापञ्च करोति यत्तत्तथोक्तं यत् ध्यानं भावना सा चिन्ता । नव्यास्तु—"इष्टाप्राप्त्यनिष्टप्राप्त्यादिजनिता ध्यानापरपर्याया वैवर्ण्यभूलेखनाधोमुखत्वादिहेतुश्चित्तवृत्तिविशेषश्चिन्ता, यदाहुः—

"विभावा यत्र दारिद्र्यमैश्वर्यभ्रंसनं तथा ।
इष्टार्थापहृतिः श्वसत्च्छ्वासोच्छ्वासावधो मुखम् ॥
सन्तापः स्मरणञ्चैव कार्श्यं देहानुपस्कृतिः ।
अधृतिश्चानुभावाः स्युः सा चिन्ता परिकीर्त्तिता' ॥
वितर्कोऽस्याः क्षणे पूर्वं पाश्चात्ये वोपजायते ।" इति वदन्ति ।

( २७ ) उदाहरति—कमलेण इति ।

कमलेन विकसितेन संयोजयन्ती विरोधिनं शशिबिम्बम् ।
करतलपर्य्यस्तमुखी किं चिन्तयसि सुमुखि ! अन्तराहितहृदया ॥

इति संस्कृतानुवादः । प्रियतमचिन्तानिमग्नां प्रोषितभर्तृकां प्रति सख्या उक्तिरियम् । शोभनं मनोहरं मुखं यस्यास्तत्सम्बुद्धौ हे सुमुखि ? अन्तरभ्यन्तर एव आहितं निहितं हृदयं मनो यया सा तथोक्ता, तथा करतले पर्य्यस्तं स्थापितं मुख वदनं यस्याः सा तादृशी, त्वम् अत एव विकसितेन कमलेनारविन्देन तस्य विरोधिनं संकोचविधायित्वाद्रिपुं शशिनश्चन्द्रस्य बिम्बं मण्डलं संयोजयन्ती मेलयन्ती किं चिन्तयसि विचारयसि । एवञ्चात्र करतलमेव रूपकेन विकसितं कमलं, मुखमेव च शशिबिम्बः, तेनेदृशे-

अथ तर्कः—

( २८ ) तर्को विचारः संदेहाद्भ्रूशिरोऽङ्गुलिनर्तकः ॥ १७१ ॥

( २९ ) यथा—'किं रुद्धः प्रियया–' इत्यादि ( १६७ पृ. )।

( ३० ) एते च त्रयस्त्रिंशद्व्यभिचारिभेदा इति यदुक्तं तदुपलक्षण-मित्याह—

( ३१ ) रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः।

---

करतले मुखन्यासात् कमले तद्विरोधी शशिबिम्बः संयोजित एवेति सहृदयाः।

प्रोक्तनायिकायश्चात्र हितस्य प्रियप्राप्तेरलाभाच्चिन्ता। गीतिश्छन्दः।

यथा वा—

खेदोज्झितामपि तनूमवसादयन्ती विश्वं निरावरणमेव तिरोदधाना।
निद्रां विनापि नयने विनिमीलयन्ती चिन्तापदं कुलवती हृदये ततोऽस्याः॥

( २८ ) तर्कं लक्षयति-तर्क इति। सन्देहाज्जात इति शेषः। इदं विपर्ययस्याप्युपल-क्षकम्, भ्रूशिरोऽङ्गुलीनां नर्तकः सञ्चालकः यो विचारः विविधज्ञानं स तर्को वितर्कः, सन्देहाद्यनन्तरं जायमान ऊहस्तर्क इति फलितम्। अत्र भरतोऽपि—

विचारणादिसम्भूतः सन्देहजननात्मकः।
वितर्कस्त्वभिनेयः स्याच्छिरोभ्रूपक्ष्मकम्पनैः॥ इत्याह।

( २९ ) उदाहरति—यथेति। किं रुद्धमिति। "किं रुद्धः प्रियया" इत्यादौ नायि-काया प्रियतमानागमनविषये विविधज्ञानात् वितर्कः।

( ३० ) एते चेति। व्यभिचारिभावलक्षण एव "त्रयस्त्रिंशच्चतद्भिदा" इत्युक्तम्। अत्रा-पि पूर्वोक्तार्थमाश्रित्यैवेदमुक्तम्—एते च त्रयस्त्रिंशद् व्यभिचारिभेदा इति। त्र्युत्तरत्रिंशत्सं-ख्याका इत्यर्थः। उपलक्षणं ज्ञापनं न पुनरक्षरतस्त एवेति नियमनमित्याशयः। एवम्—

"त्रयस्त्रिंशदिमे भावा विज्ञेया व्यभिचारिणः"।

इति भरतोक्तावपि त्रयस्त्रिंशदित्युपलक्षणमित्यवधेयम्।

एतान्युदाहरणानि च व्यभिचारिस्वरूपसद्भावप्रदर्शनपराणि। तेषां क्वचित् प्राधान्ये क्वचिदप्राधान्ये वा न कापि प्रतीतिक्षतिरिति ध्येयम्।

अत्र नव्यास्तु—नन्वेषां व्यभिचारिभावानां कथं संख्यानियमः, मात्सर्योद्वेगदम्भेर्ष्या विवेकनिर्णयक्लैव्यक्षमाकुतुकोत्कण्ठाविनयसंशयधाष्टर्यादीनामपि तत्र तत्र लक्ष्येषु दर्श-नादिति चेत्? न उक्तेष्वेवैषामन्तर्भावेण संख्यान्तरानुपपत्तेः। असूयातो मात्सर्यस्य, त्रासादुद्वेगस्य, अवहित्थातो दम्भस्य, अमर्षादीर्ष्यायाः, मतेर्विवेकनिर्णययोः, दैन्यात् क्लैव्यस्य, धृतेः क्षमायाः, औत्सुक्यात् कुतुकोत्कण्ठयोः, लज्जातो—विनयस्य, तर्कात् संशयस्य, चापलाद्धाष्टर्यस्य च, वस्तुतः सूक्ष्मे भेदेऽपि नान्तरीयकतया तदनतिरिक्त-स्यैवाध्यवसायात्। मुनिवचनानुपालनस्य सम्भवे उच्छृङ्खलताया अनौचित्यात्। एषु सञ्चारिभावेषु मध्ये केचन केषाञ्चन विभावा अनुभावाश्च भवन्ति तथाहि—ईर्ष्याया निर्वेदम्प्रति विभावत्वम्, असूयां प्रति चानुभावत्वम्, चिन्ताया निद्राम्प्रति विभा-वत्वम्, औत्सुक्यं प्रति चानुभावत्वम् एवमग्रेऽपि स्वयमूह्यमिति वदन्ति।

( ३१ ) रत्यादयोऽपीति। अनियते स्वावस्थितिनियमरहिते स्थायिभावानां ये रसा

तथाहि—शृङ्गारेऽनुच्छिद्यमानतयावस्थानाद् रतिरेव स्थायिशब्दवाच्या हासः पुनरुत्पद्यमानो व्यभिचार्येव । व्यभिचारिलक्षणायोगात् ।

( ३३ ) तदुक्तम्—

'रसावस्थः परं भावः स्थायितां प्रतिपद्यते ।' इति ।

( ३४ ) तत्कस्य स्थायिनः कस्मिन्रसे संचारित्वमित्याह—

( ३५ ) शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः ॥ १७२ ॥
शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः ।
इत्याद्यन्यत्समुन्नेयं तथा भावितबुद्धिभिः ॥ १७३ ॥

नियतास्तद्भिन्ने इत्यर्थः रसे स्वातिरिक्तस्थायिभाववति रसे रत्यादयोऽपि रतिहासा-दीनां स्थायिभावानां मध्ये एकैके शृङ्गारादेः स्थायिभावा अपि किं पुनर्निर्वेदादय इत्यर्थः व्यभिचारिणः सञ्चारिभावाः एवञ्च यथासम्भवम् एकत्र रसे अन्यरसीयः स्थायि-भावोऽपि सञ्चारिभावो भवितुं शक्नोतीत्याशयः । तथा चाधिकसंख्याया अवश्यं भावित्वात् "त्रयस्त्रिंशच्च तद्भिदाः" इति पूर्वोक्तस्यान्यूनोपलक्षणत्वमवगन्तव्यम् ।

( ३२ ) कारिकोक्तमुपपादयति—तथाहीति । अनुच्छिद्यमानतया मुख्यत्वात् अन्यभावे-नोच्छेत्तुमसमर्थतया धाराप्रवाहेणेत्यर्थः, रतिदम्पत्योरनुरागविशेष एव न तु हासादय इति शेषः । स्थायिशब्दवाच्या इति । यावत्कालं शृङ्गारस्तावत्कालं रतिरवतिष्ठत इति तत्र रतिः स्थायिशब्दवाच्या हासादयस्तु न तु तथेत्याशयः । हास इति क्रोधादेरप्युपलक्षणं तेन हासादय इत्यर्थः । उत्पद्यमानः कदाचिज्जायमानः परं विलीयमानश्च एतच्चो-पलक्षणतया बोध्यम्, व्यभिचार्य्येवेति एवकारेण न केवलं स्थायीत्येव तल्लक्षणासम्भ-वादिति तात्पर्यम् । व्यभिचारिलक्षणायोगादिति । उन्मग्ननिमग्नतारूपस्य कादाचित्कत्वस्य स्पष्टं विद्यमानत्वात् विशेषेण तत्तद्रसपुष्टिजनकत्वेन च "विशेषादाभिमुख्येन चरन्तो व्य-भिचारिणः" इति लक्षणसङ्गतेरिति भावः ।

( ३३ ) स्थायिभावोऽपि व्यभिचारिभावो भवतीत्यत्रार्थे बीजं प्रदर्शयति—तदुक्तमिति । रसावस्थमिति । व्याख्यातञ्चैतत्प्रागेव ( १७ पृ० ) अयमत्र विशेषोऽवधेयः—'परं पदमाम र्यादेव रस एव उत्तरकालम् अवस्था यस्य स परं केवलं तादृश एव भावः रत्यादि-स्थायित्वं प्रतिपद्यते, अतादृगवस्थस्तु रसान्तर एव सम्भवति स च तत्र यदि उपका-रको भवति तदा तदीयस्थायिनि आभिमुख्येन चरणात् व्यभिचारिलक्षणाक्रान्तत्वेन तत्राऽपि व्यभिचारिपदस्य योगरूढत्वात् सोऽपि व्यभिचारी भवति अर्थवशलभ्यमिम-र्थमभिप्रेत्य सम्बन्धो ज्ञेयः' इति स्पष्टं विज्ञप्रियादौ ।

( ३४ ) रत्यादयो इत्यादिनोक्तं स्फुटीकर्त्तुमुपक्रमते—तत्कस्येति । तत् तर्हि । स्थायिनः स्थायिभावस्य । सञ्चारित्वम् सञ्चारिभावत्वम् । इत्येवं जिज्ञासा समाधातु-मिति शेषः । एवञ्चोत्तरकारिका पूर्वकारिकोत्तरार्द्धस्य व्याख्यानात्मिकेति भावः ।

( ३५ ) शृङ्गारवीरयोरिति । शृङ्गारवीरयो रसयोः उपचाराददद्भुतेऽपि हासः हास्यर-सीयः स्थायिभावः व्यभिचारितया सञ्चारितया मतः पूर्वैरिति, शेषः, तथा वीरे वीर रसे उपलक्षणेन शृङ्गारेऽपि क्रोधः रौद्ररसीयःस्थायिभावः उपचाराद्रागोऽपि व्यभिचारि-

( ३६ ) अथ स्थायिभावः—

( ३७ ) अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः ।
आस्वादाङ्कुरकन्दोऽसौ भावः स्थायीति संमतः ॥ १७४ ॥

तया मतः । पुनः शान्ते शान्तरसे जुगुप्सा बीभत्सरसीयः स्थायिभावः व्यभिचारितया कथिता उपचारात् शोकोऽपि इत्यादि अन्यत् यथा भयानके भयस्य व्यभिचारित्वम्, भावितबुद्धिभिः काव्यार्थभावनापरिपक्वमनीषिभिः समुन्नेयं निश्चेतव्यम् । एवञ्च हास्ये विस्मयो व्यभिचारी, करुणे भयम् , रौद्रे हासः, भयानके शोकश्च यथासम्भवं व्यभिचारी भवतीति ध्येयम् । अत्रेदं बोध्यम्—अल्पैर्विभावैरुत्पन्नास्त एव । रत्यादयो व्यभिचारिणः, यदा तु प्रधानपरिपोषार्थं सोऽपि बहुविभावजः क्रियते तदा तु रसालङ्कार इति । तदुक्तं रत्नाकरे—

"रत्यादयः स्थायिभावाः स्युर्भूयिष्ठविभावजाः ।
स्तोकैर्विभावैरुत्पन्नास्त एव व्यभिचारिणः ॥" इति ।

( ३६ ) स्थायिभावं निरूपयितुं प्रतिजानीते—अथेति । अथ व्यभिचारिभावप्रतिपादनानन्तरम्—"विभावेनानुभावेने"त्यादिकारिकाऽवशिष्ट एव उद्देशक्रमप्राप्तः स्थायिभावोऽधुना निरूप्यत इति शेषः ।

( ३७ ) अविरुद्धा विरुद्धा वेति । अविरुद्धा अप्रतीपा अनुकूला इति यावत् विरुद्धैरपि भावैः स्थायिनोऽतिरोधानं महाकविकाव्येष्वभिव्यक्तमेव, उदाहरणञ्चानुपदमेव स्फुटीभविष्यति; विरुद्धा प्रतिकूला वा भावाः यं भावं तिरोधातुं तिरोहितं कर्त्तुं स्वबोधाऽवसरेऽपि बोधाऽविषयीकर्त्तुम् अक्षमाः स्वेषामप्रधानत्वादसक्ताः आस्वादो रसः सोऽङ्कुर इवेति तस्य कन्दो मूलमित्येत्यर्थः । अथवा आस्वादस्य रसज्ञानस्य (तरोरिव) अङ्कुरःसूक्ष्म तथाभिनवोद्भेदः प्राथमिकः सम्भवस्तस्य कन्दो मूलभूतः, 'अङ्कुरोऽभिनवोद्भिदि" इत्यमरः, 'कन्दोऽस्त्री सूरणे शस्य मूले जलधरे पुमान्' इति मेदिनी, असौ भावोऽन्तःकरणवृत्तिस्वरूपः स्थायी इति सम्मतः स्थायिभाव इति संज्ञयाऽनुमतः । एवञ्च चन्द्रचन्दनरोलम्बाद्य उद्दीपनविभावाः शोभाविलासादयोऽनुभावाः आवेगदैन्यश्रमादयो व्यभिचारिभावा वा अनुकूलास्तिष्ठन्तोऽपि अविच्छिन्नभावेन प्रवर्त्तमानां रतिं कदाऽपि तिरोधातुं नार्हन्ति एवमेव भयानके हिंस्रचेष्टादय उद्दीपनविभावाः प्रलयादयोऽनुभावाः मरणादयो सञ्चारिभावा वाऽननुकूलास्तिष्ठन्तोऽपि रतिं तिरोधातुं न शक्नुवन्ति अतएव रतिः स्थायीभावः, इयं रतिर्मदनाविष्टा स्त्रीपुंसनिष्ठैव शृङ्गारस्य स्थायी नत्वन्यथा स्थायिलक्षणायोगात्, एवं हि स्त्रीपुंसयोरन्योन्यालम्बनः प्रेमाख्यश्चित्तवृत्तिविशेषो रतिः स्थायीभावः, गुरुदेवतापुत्राद्यालम्बनस्तु व्यभिचारी । तथाचानुगतलक्षणन्तु स्थिरतरत्वे सति रसमूलत्वं स्थायिभावत्वम् । हासस्य हास्यरसमूलत्वेऽपि शृङ्गारे व्यभिचारितया अस्थिरत्वात् शृङ्गारकालेऽतिव्याप्तिवारणाय सत्यन्तदलोपादानम् । काव्यबहिर्निवेशिताया लौकिकरतेः स्थिरतरत्वेन तत्रातिव्याप्तिवारणाय विशेष्यदलम् । रत्याद्यन्यतमत्वं स्थायित्वन्तु केषाञ्चिल्लक्षणमनुपादेयमेव रत्यादीनामेकस्मिन् प्ररूढेऽन्यस्याप्ररूढे व्यभिचारित्वोपगमात् । बहुविभावजन्यत्वं प्ररूढत्वम् , अल्पविभावजन्यत्वं चाऽप्ररूढत्वं बोध्यम् , मानञ्चात्र पूर्वं रत्नाकरमतं प्रदर्शितमेव । नन्वन्तःकरणवृत्तिस्वरूपस्य रत्यादेरा-

( ३८ ) यदुक्तम्—

'स्रक्सूत्रवृत्त्या भावानामन्येषामनुगामकः ।
न तिरोधीयते स्थायी तैरसौ पुष्यते परम् ॥' इति ।

---

शुविनाशित्वेन यावद्रसमवस्थानाऽसम्भवात् कथं स्थायिभावत्वमिति चेत् ! आप्रबन्धं संस्कारात्मना स्थिरत्वात् यावद्रसप्रतीतिकालमनुसन्धीयमानत्वाच्चामीषां भावानां स्थायित्वोपगमात् । नचान्तःकरणरूपाणामेषामाशुविनाशित्वेन स्थिरत्वस्य दुर्लभत्वात् वासनारूपतया स्थिरत्वं तु व्यभिचारिष्वपि प्रसक्तमिति वाच्यम् ,वासनारूपाणाममीषां मुहुर्मुहुरभिव्यक्तेरेव स्थिरपदार्थत्वात् । व्यभिचारिणां मुहुर्मुहुरभिव्यक्तिर्नैव, भवति, तदभिव्यक्तेर्विद्युद्द्योतप्रायत्वात् । यदाहुः—

"विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते नयः ।
आत्मभावं नयत्याशु स स्थायी लवणाकरः ॥
चिरं चित्तेऽवतिष्ठन्ते सम्बध्यन्तेऽनुबन्धिभिः ।
रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽत्र ते ॥"

चिरमिति व्यभिचारिवारणाय । अनुबन्धिभिर्विभावादिभिः । तथा—

"सजातीयविजातीयैरतिरस्कृतमूर्त्तिमान् ।
यावद्रसं वर्त्तमानः स्थायिभाव उदाहृतः ॥" इति ।

नाट्यशास्त्रेऽप्युक्तम्—

'यथा नराणां नृपतिः शिष्याणाञ्च यथा गुरुः ।
एवं हि सर्वभावानां भावः स्थायी महानिह ॥"

अत्र निष्कर्षस्तु—"यथा हि समानलक्षणास्तुल्यपाणिपादोदरसमाना अपि पुरुषाः कुलशीलविद्याकर्मशिल्पविचक्षणत्वयुक्ता राजत्वमाप्नुवन्ति 'तत्रैव 'मन्दबुद्धयोऽनुचरा भवन्ति, तथा विभावानुभावव्यभिचारिणः स्थायिभावानुपाश्रिता भवन्ति तत्र बह्वाश्रितत्वात्स्वामिभूता स्थायिनो भावाः, तत्स्थानीयपुरुषगुणभूता अन्ये-भावास्तान् गुणतया श्रयन्ते परिजनभूता व्यभिचारिणो भावाः। को दृष्टान्त इति । यथा नरेन्द्रो बहुजन-परिवारोऽपि सन् स एव नाम लभते नान्यः सुमहानपि पुरुषः, बहुषु गच्छत्सु कश्चित् क्वचित् पृच्छति कोऽयमिति स च तमाह राजेत्येव, तथा विभावानुभावव्यभिचारिपरिवृतः स्थायभावो रसनाम लभते" इति स्पष्टमाकरे ।

( ३८ ) स्वोक्तिं प्राचां संवादेन द्रढयति—यदुक्तमिति। स्रक्सूत्रवृत्त्येति। स्रक्सूत्रवृत्त्या मालान्तर्गतसूत्रसादृश्येन अन्येषां मणीनामिव स्थितानामिति शेषः, अनुभावादीनां भावानामनुगामुकः व्यङ्ग्यत्वेन समाप्तिपर्य्यन्तमनुसरणकारी स्थायिभावः तैरन्यैर्भावैर्न तिरोधीयते न बुद्ध्यविषयीक्रियते । किन्तु परं केवलम् असौ पुष्यते रसरूपतां नीत्वा प्रवृद्धः क्रियते पुष्टिमेव प्राप्यत इत्यर्थः । तथा च यथा—मणिभिस्तदाधारभूतं सूत्रं न तिरस्क्रियते प्रत्युत भूष्यते तथान्यैर्भावैः स्थायीभावो न तिरस्क्रियते प्रत्युत परिपुष्टो विधीयते । इत्थञ्च रसो हि मालास्थानीयः, स्थायी सूत्रस्थानीयः, अनुभावादिश्च मणिस्थानीय इति बोध्यम् ।

तद्भेदानाह—

( ३९ ) रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च ॥ १७५ ॥

तत्र—

( ४० ) रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायितम् ।
वागादिवैकृतैश्चेतोविकासो हास इष्यते ॥ १७६ ॥
इष्टनाशादिभिश्चेतो वैक्लव्यं शोकशब्दभाक् ।
प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोध इष्यते ॥ १७७ ॥
कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते ।

( ३९ ) नन्वास्वादस्य वैजात्यविरहेण कथमष्टौ नव वा भेदाः ? स्थायिभेदाद्भेद इति चेत् ! के ते स्थायिनो भावा इत्यपेक्षायामाह—रतिर्हासश्चेति । अत्र रसानामष्टविधत्वस्य स्वाभिमततया स्थायिभावा अपि स्वमते अष्टावेवेति ध्वनयितुम् "अष्टौ प्रोक्ताः" इत्युक्त्वा पुनः शमोऽपि चेत्युक्तम् । अपि चेत्यनेन वत्सलताया अपि परिग्रहो बोध्यः । अतिप्रामाणिकत्वेन भरतमतसिद्धः शमो वत्सलत्वञ्च कथञ्चित् स्थायिभावत्वेन स्वीक्रियते न पुनरन्येषामिति ग्रन्थकर्त्तुराशयः । शृङ्गारादिरसानां यथासंख्येनैते स्थायिन इत्यर्थः । ते च चित्तवृत्तिविशेषा वासनारूपा इति बोध्यम् ।

( ४० ) क्रमशः रत्यादिपदार्थान् व्याचिख्यासुराह—रतिरित्यादि । मनसः अनुकूले प्रिये वस्तुनि प्रवणायितम् उत्कट आवेशः स चानुराग एव पर्य्यवस्यति । एवञ्च प्रेमार्द्रं मनो रतिरित्यर्थः, अनुरागोऽपि प्रकृते सुरतेच्छारूप एव बोध्यः । काव्यमालायान्तु—

"मनोऽनुकूलेष्वर्थेषु सुखसंवेदनं रतिः ।
आसंप्रयोगविषया सैव प्रीतिर्निगद्यते ॥" इति ।

विशदतरलक्षणन्तु स्त्रीपुंसयोरन्योऽन्यालम्बनः प्रेमाख्यश्चित्तवृत्तिविशेषो रतिः, गुरुदेवतापुत्राद्यालम्बनस्तु व्यभिचारी । भरतस्तु—"रतिर्नाम आमोदात्मको भावः ऋतुमाल्यानुलेपनाभरणप्रियजनपरमभवनानुभवनाप्रातिकूल्यादिभिर्विभावैःसमुत्पद्यते, स्मितवचनमधुरवचन भ्रूक्षेपकटाक्षादयास्तत्रानुभावा भवन्ति" इत्याह । वागादीनां वचोभङ्ग्यादीनाम् आदिपदात् वेशपरिग्रहः । वैकृताद्विकारात् चेतसो विकासः विलक्षणचित्तसंयोगजन्यं ज्ञानम् प्रसारणसद्भाव इति यावत् हास इष्यते, एवञ्च वागङ्गादिविकारदर्शन जन्मा विकासाख्यो हास इति भावः । इष्टनाशादिभिः स्वप्रियस्त्रीपुत्रादिनाशादिभिः, कारणैः चेतसो वैक्लव्यं दुःखविशेषः शोकशब्दभाक् शोकपदवाच्यं शोक इति भावः । अत एवोक्तम्—'पुत्रादिवियोगमरणादिजन्मा वैक्लव्याख्यश्चित्तवृत्तिविशेषश्शोकः' इति प्रतिकूलेषु विरोधिषु प्रतिपक्ष्यादिष्विति यावत् । तैक्ष्ण्यस्य उत्कटापचिकीर्षाया अवबोधोऽवबोधजनकचित्तविकारविशेषः क्रोध इष्यते ।

अन्ये तु गुरुबन्धुवधादिपरमापराधजन्मा प्रज्वलनाख्यः क्रोधः । अयं च परविनाशादिहेतुः, क्षुद्रापराधजन्मा तु पुरुषवचनासंभाषणादिहेतुः, अयमेवामर्षाख्यो व्यभिचारीति

रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम् ॥ १७८ ॥
दोषेक्षणादिभिर्गर्हा जुगुप्सा विस्मयोद्भवा ।
विविधेषु पदार्थेषु लोकसीमातिवर्तिषु ॥ १७९ ॥
विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः ।
( क ) शमो निरीहावस्थायां स्वात्मविश्रामजं सुखम् ॥ १८० ॥

वदन्ति । कार्य्यारम्भेषु सन्निकृष्टकार्येषु स्थेयान् स्थिरतरः संरम्भ उत्कट आवेशः उद्योग इति यावत् उत्साह उच्यते ।

केचित्तु—संरम्भः सहर्षं प्रवृत्तिरित्याहुः तन्न विचारसहम्—आद्यप्रवृत्तिरूपस्यारम्भस्य प्रवृत्त्यसंभवात् वीररसे उत्कटावेशस्यैव स्थायित्वेनास्वाद्यमानत्वाच्च ।

अन्ये तु परपराक्रमदानादिस्मृतिजन्मा औन्नत्याख्य उत्साह इति वदन्ति । रौद्रशक्त्या शास्त्रादेरनिष्टदर्शनसामर्थ्येन जनितं यच्चित्तस्य वैक्लव्यदं विह्वलताजनकं तर्कणमिति शेषः तद् भयम् ।

अन्ये तु "व्याघ्रदर्शनादिजन्मा परमानर्थविषयको वैक्लव्याख्यः स भयम् । परमानर्थविषयकत्वाभावे तु स एव त्रासो व्यभिचारीति ।

अपरे तु औत्पातिक प्रभवस्त्रासः, स्वापराधोत्थं भयमिति" वदन्ति । विस्मयोद्भवा विस्मयेन जनिता दोषाणामीक्षणादिभिरवलोकनस्पर्शनादिभिर्या गर्हा निन्दा सा जुगुप्सा । ईक्षणादिभिरित्यत्रादिपदेन घ्राणपरिग्रहः ।

अन्ये तु कदर्यवस्तुविलोकनजन्मा विचिकित्साख्यश्चित्तवृत्तिविशेषो जुगुप्सा इत्याहुः । विविधेषु लोकसीमातिवर्त्तिषु लोकव्यवहारातिक्रान्तेषु अलौकिकेष्वित्यर्थः, पदार्थेषु इन्द्रजालव्यापारादिषु ज्ञातेषु यश्चेतसो विस्फारो विस्तारो स च दृष्टहेतुभ्योऽसंभवित्वज्ञानेन हेत्वनुसन्धाने मनोव्यापाररूपः स तु विस्मय उदाहृतः पूर्वैरिति शेषः, । एवञ्चालौकिकवस्तुदर्शनादिजन्मा आश्चर्याख्यो विस्मय इति फलितम् , अत एव हासादस्य भेदः ।

निरीहावस्थायां निस्पृहदशायां स्वस्य जीवस्य आत्मनि परमात्मनि विश्रामो ऽवस्थानं तज्जन्यमित्यर्थः सुखं शमः वत्सलता च स्नेह इति ध्येयम् ।

---

( क ) अत्र शमो निरीहावस्थायामित्यादेरिदं मर्म—"शान्तो नाम नवमो रसस्तावदवदनुभवसिद्धतया दुरपह्नवः, नचैतस्य स्थायी निर्वेदो युज्यते तस्य विषयेषु अलंप्रत्ययरूपत्वात् आत्मावमाननरूपत्वाद्वा । शान्तेश्च निखिलविषयपरिहारजनितात्ममात्रविश्रामानन्दप्रादुर्भावमयत्वानुभवात् ।

तदुक्तम्—कृष्णद्वैपायनेन—

"यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥" इति ।

अत एव "सर्व ( चित्त ) वृत्तिविरामोऽस्य स्थायी" इति परास्तम् । अभावस्य स्थायित्वायोगात् तस्माच्छमोऽस्य स्थायी निर्वेदादयस्तु व्यभिचारिणः । स च शमो निरीहावस्थायामानन्दः स्वात्मविश्रमात्' इति **प्रदीपे** उक्तम् । **तर्कवागीशा** अपि प्रदर्शितसरणिमेव शरणीकुर्वाणा निर्वेदस्यात्र व्यभिचारित्वमेवाङ्गीकुर्वन्ति, **उद्योतकारास्तु**—विषयेषु अलंप्रत्यय ( हेयत्वज्ञानं ) रूपस्य आत्मावमाननरूपस्य वा निर्वेदस्य शोकवत् समाधानात् । वस्तुतो रत्यादिकमुपजीव्य हर्षादेरिव तत्त्वज्ञानजनिर्वेदमुपजीव्य शमादिप्रवृत्तेः स एव स्थायी न शमः । न च "क्वचिच्छमः"

इति भरतमुन्युक्तविरोध इति वाच्यम्, शम्यते यस्मादिति व्युत्पत्त्या तस्य निर्वेदपरत्वात्। तृष्णायाः क्षयो यस्मादिति व्युत्पत्त्या तृष्णाक्षयोऽपि निर्वेद एव अत एव "एको न पञ्चाशद्भावाः" इति मुन्युक्तिः सङ्गच्छते, तथाहि अष्टौ स्थायिनः अष्टौ सात्त्विकाः त्रयस्त्रिंशद्व्यभिचारिण इत्येवं गणनया हि एकोनपञ्चाशत्त्वम् शमस्यापि भावत्वे त्वाधिक्यापत्तिरिति" वदन्ति। शान्ते निर्वेदस्य स्थायित्वमन्यत्रापि प्रतिपादितम्—

तथाहि—'रतिः शोकश्च निर्वेदक्रोधोत्साहाश्च विस्मयः।
हासो भयं जुगुप्सा च स्थायिभावाः क्रमादमी'॥

ध्वन्यालोकलोचने तृतीयोद्योते अभिनवगुप्ताचार्यपादा अपि—

"एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान्"

इत्यादिध्वनिकारिकावृत्तिव्याख्यानावसरे "ननु नास्त्येव शान्तो रसः, तस्य तु स्थाय्येव-नोपदिष्टो मुनिना" इत्याशङ्क्य विचारयन्तः पर्यवसाने-"आधिकारिकत्वेन तु शान्तो रसो न निबद्धव्य इति चन्द्रिकाकारः। तच्चेहास्माभिर्न पर्यालोचितम्, प्रसङ्गान्तरात्। मोक्षफलत्वेन चायं परम-पुरुषार्थनिष्ठत्वात् सर्वरसेभ्यः प्रधानतमः। स चायमस्मदुपाध्यायभट्टतौतेन काव्यकौतुके अस्माभिश्च तद्विवरणे बहुतरकृतनिर्णयः पूर्वपक्षसिद्धान्त इत्यलं बहुना" इत्याहुः। अन्येऽपि स्पष्ट-मेवेत्थमाहुः—

"द्वैतप्रबोधौदासीन्यमतिमुख्यैः सुपोषितः।
विभावाद्यैस्तु निर्वेदस्थायी शान्तो रसः स्मृतः॥"

द्वैतपदेनात्रालम्बनम्, प्रबोधो ब्रह्मसाक्षात्कार उद्दीपनम्, औदासीन्यमनुभावः, मतिर्व्यभि-चारीति यथाक्रममूहनीयमिति टिप्पण्यादावपि स्पष्टम्। अत्रेदं विचारणीयम्-न खलु साक्षाच्छ्री-वाग्देवतावताराणां विद्वत्कुलशिरोमणीनां प्रमादो भवितुमर्हति। तथाहि-शम्यते यस्मादिति व्युत्पत्तिस्तावन्न युक्तिसहा अपादाने घञोऽविधानात्। बाहुलकादपि न अतिप्रसङ्गात्। ननु अकर्त्तरि च कारके संज्ञायाम्" इत्यत्र संज्ञायामित्यस्य प्रायिकत्वेन तेनैवेष्टसिद्धिः स्यादिति चेत्? प्रायिकस्य यथाभावेन सिद्धावनभ्युनुज्ञानात्। नच निर्वेद एव स्थायीभाव इत्यर्थं तथोक्तमिति वाच्यम्, शमनं शम इति व्युत्पन्नस्यैव स्थायित्वाङ्गीकारात्। एवमेव पूर्वोक्तव्युत्पत्त्या 'तृष्णाक्षयशब्दोऽपि निर्वेदपर इत्यपि वक्तुं न शक्यते व्यधिकरणबहुव्रीहेरसार्वत्रिकत्वात् "सप्तमी विशेषणे बहुव्रीहौ" इति ज्ञापकस्याप्यनित्यत्वाच्च। अथैवमपि निर्वेदातिरिक्तत्वेन शमस्य स्थायित्वाभ्युपगमे सङ्कलनयै-कोनपञ्चाशत्त्वं भावानां कथं सङ्गमिष्यत इति चेत्?—

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
बीभत्साद्भुतसंज्ञाश्चेत्यष्टौ प्रोक्ताः शमोऽपि च—
एते ह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना॥

इत्यत्र शान्तस्यानुक्त्या तत्स्थायिभावशमस्याप्यगणनेनोक्तापत्तेरभावात्। अत एव "क्वचि-च्छम" इत्यादौ क्वचिदित्यपि सङ्गच्छते। निर्वेदस्य तु कथञ्चिदपि शान्तस्थायिभावत्वमनभ्युपेय-मेव तस्य हि व्यभिचारित्वेन प्रतिपादनात्।

अत्र केचित्—

"शान्तस्य शमसाध्यत्वान्नटे च तदसम्भवात्।
अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते॥"

इत्याहुः। तच्चापरे न क्षमन्ते। तथाहि—नटे शमाभावादिति हेतुरसंगतः, नटे रसाऽभिव्यक्ते-

( ४१ ) यथा मालतीमाधवे रतिः । लटकमेलके हासः । रामायणे शोकः । महाभारते शमः । एवमन्यत्रापि ।

( ४२ ) एते ह्यन्तरा उत्पद्यमानैस्तैस्तैर्विरुद्धैरविरुद्धैश्च भावैरनुच्छिन्नाः प्रत्युत परिपुष्टा एव सहृदयानुभवसिद्धाः ।

( ४१ ) उदाहरति—यथेति । मालतीमाधवे तन्नामके भवभूतिकृते प्रकरणे। रतिरिति। मालतीमाधवयोः परस्परालम्बनेति शेषः ।

लटकमेलक इति । लटकानां दुर्जनानां मेलको यत्र तत् शङ्खधरविरचिते प्रहसने इति यावत् । व्यधिकरणबहुव्रीहिरत्र रघुवंशादिवद्बोध्यः । नच लटकान् मेलयतीत्येव कुतो न व्युत्पाद्यत इति वाच्यम् । पस्पशाह्निके वैयाकरणानां लक्ष्यैकचक्षुष्कत्वप्रतिपादनात् । श्रीहर्षेणाप्युक्तं नैषधे २२ सर्गे—

"भङ्क्तुं प्रभुर्व्याकरणस्य दर्पं पदप्रयोगाध्वनि लोक एषः ।
शशो यदस्यास्ति शशी ततोऽयमेवं मृगोऽस्यास्ति मृगीति नोक्तः॥" इति ॥

हास इति ।"दन्तुरादीनां निरीक्षणादिजन्य" इति शेषः । रामायणे वाल्मीकीयरचिते महाकाव्ये इति शेषः । शोक इति । रामदशरथादिविरहजन्य इति शेषः ।

शम इति । पाण्डवानामिति शेषः । एवमन्यत्रापीति । अन्यत्राऽपि प्रदर्शितातिरिक्तस्थायिभावेऽपि एवमूहनीया इत्यर्थः । तथाहि—माघे पञ्चदशसर्गे क्रोधः । वेणीसंहारे उत्साहः । शाकुन्तलपञ्चमांशावतारे जालुकस्य भयम् । मालतीमाधवे पञ्चमाङ्के श्मशाने जुगुप्सा, नच मूले रतिः स्थायीभाव उक्त इति तद्विरोध इति वाच्यम् , तस्य प्राधान्यातिशयेन प्रतिपादनात् , उत्तररामचरिते सप्तमाङ्के विस्मयः । रघुवंशतृतीयसर्गे बहुशो वात्सल्यम् ।

( ४२ ) अवसरक्रमेण "अविरुद्धा विरुद्धा वा" इत्यादिकारिकां विवृणोति—एते हीति । रत्यादयो हीत्यर्थः । एषु स्थायिभावपरिणत श्रृङ्गारादिरसेषु अन्तरा मध्ये मध्ये

रनङ्गीकारात् । सामाजिकानां शमवत्वेन तत्र रसोद्बोधे बाधकाभावात् । नच नटस्य शमाभावात्तदभिनयप्रकाशकत्वानुपपत्तिरिति वाच्यम् , तस्य भयक्रोधादेरप्यभावेन तदभिनयप्रकाशकताया अप्यसङ्गत्यापत्तेः । यदि च नटस्य क्रोधादेरभावेन वास्तवतत्कार्याणां वधबन्धादीनामुत्पत्यसम्भवेऽपि कृत्रिमतत्कार्याणां शिक्षाभ्यासादित उत्पत्तौ नाऽस्ति बाधकमिति निरीक्ष्यते, तदा प्रकृतेऽपि तुल्यम् ।अथ नाट्ये गीतवाद्यादीनां विरोधिनां सत्त्वात् सामाजिकेष्वपि विषयवैमुख्यात्मनः शान्तस्य कथमुद्रेक इति चेत् ? नाट्ये शान्तरसमभ्युपगच्छद्भिः फलबलात्तद्गीतवाद्यादेस्तस्मिन् विरोधिताया अकल्पनात् । विषयचिन्तासामान्यस्य तत्र विरोधित्वस्वीकारे तदीयालम्बनस्य संसारानित्यत्वस्य तदुद्दीपनस्य पुराणश्रवण—सत्सङ्ग-पुण्यवन तीर्थावलोकनादेरपि विषयत्वेन विरोधित्वापत्तेः । अतएव च चरमाध्याये सङ्गीतरत्नाकरे—

"अष्टावेव रसा नाट्ये इति केचिदचूचुदन् ।
तदचारु यतः कंचिन्न रसं स्वदते नटः ॥"

इत्यादिना नाट्येऽपि शान्तो रसोऽस्तीति व्यवस्थापितम् । यैरपि नाट्ये शान्तो रसो नास्तीत्यभ्युपगम्यते तैरपि बाधकाभावान्महाभारतादिप्रबन्धानां शान्तरसप्रधानतया अखिललोकानुभवसिद्धत्वाच्च काव्ये सोऽवश्यं स्वीकार्यः, इत्यलं पल्लवितेन ।

( ४३ ) किं च—

( ४४ ) नानाभिनयसंबन्धान्भावयन्ति रसान्यतः ।
तस्माद्भावा अमी प्रोक्ताः स्थायिसंचारिसात्त्विकाः ॥ १८१ ॥

( ४५ ) यदुक्तम्—
'सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनम्'

( ४६ ) अथ रसस्य भेदानाह—

( ४७ ) शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः ॥ १८२ ॥

"अथाऽन्तरेऽन्तरा । अन्तरेण च मध्ये स्यु" रित्यमरः । विरुद्धैः प्रतीपैः अविरुद्धै. रनुकूलैश्च भावैरुद्दीपनादिभिः अनुच्छिन्ना बुद्धिविषयीभूताः । ननु कथं परिपुष्टा इति जातमत आह—सहृदयेति ।

( ४३ ) भावानां विशेषलक्षणान्युक्त्वा सामान्यलक्षणमाह—किं चेति ।

( ४४ ) नानाभिनयेति । यतो यस्मात्, दृश्यकाव्ये वेशचेष्टादिभिर्नायकसदृशीकरण. मभिनयः श्रव्ये पठनं श्रवणं वा तत्सम्बन्धान् तद्व्यङ्ग्यान् नानारसान् भावयन्ति बोध. यन्ति, तस्मादमी स्थायि सञ्चारि-सात्त्विका भावा भावसंज्ञका प्रोक्ताः । अनुभावमात्र द्योतनाय सात्त्विकपदम्, नच विभावानुपादाने न्यूनतेति शङ्क्या, बहुवचनेन तद्ग्र. हणस्याऽपि सम्भवात् ।

( ४५ ) ननु विभावादीनां भवन्मते भावसंज्ञकत्वे किं मानमित्याशङ्कां समाधित्सुः स्वाभिमते प्राचां सम्मतिं दर्शयति—यदुक्तमिति । सुखदुःखादिभिरिति । सुखं शमः, दुःखं शोकः, आदिना रत्यादिपरिग्रहः । तथा च यस्मात् सुखदुःखादिभिः स्थायिभावैस्त. द्भावभावनं सामाजिकानां तत्तन्मयत्वबोधनं तस्मात् विभावादिसमुदायो भावो भाव. संज्ञकः । भावयति सामाजिकान् सुखित्वदुःखित्वादिरूपेण परिणमयतीति व्युत्पत्तिलभ्यो भावः । भरतस्तु—

> "यथा बीजाद्भवेद्वृक्षो वृक्षात्पुष्पं फलं यथा ।
> तथा मूलं रसाः सर्वे तेषु भावा व्यवस्थिताः ॥
> विभावेनाहृतो योऽर्थस्त्वनुभावेन गम्यते ।
> वागङ्गसत्त्वाऽभिनयैः स भाव इति संज्ञितः ॥
> वागङ्गमुखरागैश्च सत्त्वेनाऽभिनयेन च ।
> कवेरन्तर्गतं भावं भावयन् भाव उच्यते ॥" इत्याह ।

( ४६ ) एवं सपरिकरस्य रसस्य स्वरूपं निरूपयितुमुद्दिशति—अथेति । अथ विभावा. दिरसव्यञ्जकगणनिरूपणानन्तरम्, प्रसङ्गसङ्गत्या तद्व्यङ्ग्यस्य रसस्य प्रकारान्निरूप. यतीत्यर्थः ।

( ४७ ) शृङ्गारेति । शृङ्गारस्य सर्वैरेवालङ्कारिकादिभिः रसप्रकारगणनायां प्रथममुपा. त्तत्वादत्रापि ग्रन्थकृद्भिस्तथैवादृतमिति वेदितव्यम् । अष्टाविति । सात्त्विबहुलगीतवा

तत्र शृङ्गारः—

( ४८ ) शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते ॥ १८३ ॥
परोढां वर्जयित्वा तु वेश्यां चाननुरागिणीम् ।
आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः ॥ १८४ ॥

द्यादिपूर्वकपुराणवृत्तानुकाराभिनयाश्रयत्वेन महर्षिणा भरतेनोक्तः, अभिनवगुप्ताचार्या अपि तथैव, अमरसिंहादयोऽप्येवमेवेति स्वमते रसानामष्टविधत्वस्य बहुवादिसम्मततया युक्तिसिद्धतया चाष्टविधत्वमेवेति द्योतयितुम् "अष्टौ रसाः" इत्युक्त्वा "शान्तस्तथा मतः" इति भङ्गीविशेषेण वाक्यान्तरेण परमतत्वद्योतनायोक्तम् । तथापदेन भरतसम्मतो वत्सलोऽपि ग्राह्यः । गोस्वामिनस्तु—प्रेमादयः षोडशप्रकारा रसाः, दशप्रकारा भरतरभसौ नवप्रकारा रत्नकोषादयः चत्वार एवाभियुक्ता इति निरूपयन्ति किन्तूक्तदिशा भरतमुनेरतिप्राचीनतया महाप्रमाणिकतया च तत्सम्मतः शान्तो वत्सलश्च रसतया कथञ्चिदङ्गीक्रियते न पुनर्गोस्वामिनामित्यभिप्रायः कारिकया स्पष्टं सूचितम् । यत्तु वागीशाः—"अष्टाविति नाट्याभिप्रायेण शान्तस्य नाट्ये तादृक्पुष्टिविरहात्-तदुक्तम्—"अष्टौ नाट्ये रसाः स्मृताः" इति वदन्ति तन्न विचारसहम्, राजानकमम्मटाचार्याः "अष्टौ नाट्ये रसाः स्मृताः" इत्युपक्रम्य "शान्तोऽपि नवमो रसः" इत्युपसमहार्षुस्तेन तद्विरोधस्य स्पष्टत्वात् । मुनिनाऽप्युक्तम्—

"शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतशान्ताश्च काव्ये नव रसाः स्मृताः ॥" इति ।

एवञ्च निरतिशयसुखास्वादनलक्षणत्वादेक एव रसो न विशेषाः सन्तीति वादिनां मतमविचारितरमणीयमात्रम् अत एवोक्तम्—

'यत्कारणञ्च कार्यञ्च ये च स्युर्व्यभिचारिणः ।
स्वरूपं यच्च तद्भावात् शृङ्गारादिभिदाः, स्मृताः ॥" इति ।

( ४८ ) शृङ्गारादीनामुद्देशक्रमेण लक्षणं निरूपयति—शृङ्गं हीति । हि तथाहि, शृणाति चरमदशाप्रापणेन हिनस्ति कामुकानिति शृङ्गं मन्मथोद्भेदः । शॄ हिंसायाम्' इत्यस्माद्धातोः "शृणातेर्ह्रस्वश्च" इत्युणादिगुन्नुड्ह्रस्वाः । शृङ्गशब्दस्येहोत्कर्षाद्यर्थलाभेऽपि योगजशक्त्या मरणावधिको मान्मथो व्यापार इति व्यज्यते । मन्मथोद्भेदस्य शृङ्गमिति नामान्तरम् । तस्यागमनं प्राप्तिरेव हेतुर्यस्य सः शृङ्गारो रसः वीतरागाणां रसानुत्पत्तेः । प्रायेण बाहुल्येन उत्तमाप्रकृतिमूलम् आलम्बनं यस्य स तथोक्त इष्यते । प्राय इत्यनेन पदेनैतत्सूचितम्-यत्, अधमालम्बनेनापि शृङ्गारो भवत्येव परन्तु स शृङ्गाराभासव्यपदेश्यः । स्वयमेव वक्ष्यति-"अधमपात्रतिर्यगादिगते" इत्यादिना । एवञ्च शृङ्गं ऋच्छति स्वकारणत्वेन प्राप्नोतीति शृङ्गारपदव्युत्पत्तिरप्यवधेया । शृङ्गोपपदात् ऋच्छतेः कर्मण्यण् । तत्र मन्मथोद्भेदस्य विशेषनिर्देशादुभयोरप्येतद्रसप्रकृतिभूतयोः स्त्रीपुंसयोः परस्परं प्रौढतरानुरागहेतुकत्वमस्य सूचितम् । अनुरागस्यैकनिष्ठत्वे हि रसाभास इत्यप्यनुसन्धेयम् । अत्र शृङ्गारे परोढाम् अन्यविवाहिताम् अनुरागिणीमपि स्त्रियम् अननुरागिणीं अनुरागशून्यां वेश्यां गणिकाञ्च वर्जयित्वा विद्यमानाः सर्वा अन्या नायिका

चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम् ।
भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्तितः ॥ १८५ ॥
त्यक्त्वौग्र्यमरणालस्य जुगुप्साव्यभिचारिणः ।
स्थायिभावो रतिः श्यामवर्णोऽयं विष्णुदैवतः ॥

( ४९ ) यथा—'शून्यं वासगृहम्—' इत्यादि ( ३१९. ) । अत्रोक्तस्वरूपः पतिः, उक्तस्वरूपा च बाला आलम्बनविभावौ । शून्यं वासगृहमुद्दीपनविभावः । चुम्बनमनुभावः । लज्जाहासौ व्यभिचारिणौ । एतैरभिव्यक्तः सहृदयविषयो रतिभावः श्रृङ्गाररसरूपतां भजते।

( ५० ) तद्भेदावाह—
विप्रलम्भोऽथ संभोग इत्येष द्विविधो मतः ॥ १८६ ॥

दक्षिणाद्या नायकाश्च आलम्बनं स्युरित्यन्वयः । अनेन च परकीयायाः कन्याया अनुरागिण्या वेश्यायाश्च आलम्बनत्वमभिलषितम् । परोढायाम् अननुरागिण्यां वेश्यायाञ्च रतौ तु श्रृङ्गाराभासत्वमित्यपि द्योतितम् । रोलम्बो भ्रमरस्तस्य रुतं झङ्कारशब्दः । आदिना रहःस्थानयौवनकोकिलकूजनादिकञ्च उद्दीपनम् उद्दीपनविभावः । नायकनायिकयोः भ्रूविक्षेपः कटाक्षः आदिपदात् मुखविकसनहस्तसङ्केतादिश्च । औग्र्यं मरणम् आलस्यं जुगुप्सां बीभत्सरसस्थायिभावरूपां वृणाञ्च त्यक्त्वा वर्त्तमानाः सर्वेऽपि निर्वेदादयो व्यभिचारिणो भावाः भवेयुः ।

अत एव मरणादयो व्यभिचारिभावाः प्रतिकूला इति स्थायिभावव्याख्यायां प्रतिपादितमस्माभिः । रतिः निरुक्तलक्षणानुराग इत्यर्थः स्थायीभावः । ननु श्यामवर्णस्यास्य कथमुत्तमप्रकृतिप्रायत्वमत आह…विष्णुदैवत इति । विष्णुर्दैवतं देवतास्य विष्णुदैवतः । एवञ्च नायकनायिकयोः परस्परमाश्लेषनिबन्धनम्-असाधारणं सुखमुत्पद्यते, सुखमात्रमेव च केवलं सत्त्वगुणजन्यम्, सत्त्वगुणस्याधिनायकश्च विष्णुरित्यत उभयोरपि मुख्यत्वाच्च श्रृङ्गाररसो विष्णुदैवत एवोचित इति भावः । अत एवायं श्यामवर्णः सङ्घटते तत उत्तमप्रकृतिप्रायत्वमिति बोध्यम् । ननु ज्ञानमात्ररूपस्य रसस्य श्यामवर्णत्वं कथमिति चेत्? काल्पनिकत्वेनाभ्युपगमात् । एवमन्यत्रापि बोध्यम् ।

( ४९ ) लक्ष्यं निरूप्य तत्र लक्षणं सङ्घटयितुमाह—यथेति । शून्यमिति । श्रृङ्गारस्योदाहरणमिति शेषः । व्याख्यातञ्च पूर्वमेवैतत् पद्यम् ( ३१९० ) उक्तस्वरूप इति । उक्तो निद्राव्याजमुपागतस्येत्यादिनोक्तं स्वरूपं यस्य स तादृशः । उक्तस्वरूपेति । उक्तं "शयनादुत्थाय" इत्यादिनाभिहितं स्वरूपं यस्याः सेति तादृशी । बालाऽचिराद्विवाहिता नायिकेत्याशयः । आलम्बनविभावावित्यत्र द्विवचनोपादानमुभयोरेवालम्बनविभावत्वमिति द्योतनाय अन्यथोद्देश्यविधेयभावकल्पनाद्द्विवचनं न स्यादेवेति विभावनीयम् ।

सहृदयो रसज्ञानयोग्यसभ्यस्तेषां विषयो रतिभावः चमत्कारिभावेनानुरागाविर्भावः। श्रृङ्गाररसरूपतां श्रृङ्गाररसस्वरूपत्वम् । अत्र श्रृङ्गारः सम्भोगाख्यः ।

( ५० ) तद्भेदाविति । तद्भेदौ श्रृङ्गारभेदौ । विप्रलम्भ इति । एष श्रृङ्गारः । विप्रलभ्यते मदनेन प्रताड्यते नायको नायिका च यत्र स विप्रलम्भः विशेषेण प्रलम्भ ईर्ष्यादिना

रतेरुच्छेदो लक्षणया तन्मूलरस इति तात्पर्यम् । सम्भुज्यतेऽन्योन्यमुपभुज्यते यत्र स सम्भोगः ईर्ष्याराहित्यादिनाऽत्र रतेरुन्मेषो लक्षणया तन्मूलो रस इति तात्पर्यम् ।

तर्कवागीशास्तु—यत्र रसे प्रकृष्टा प्रकरणादिना प्रधानत्वं प्राप्ता रतिरस्ति, नायिका नायको वाऽभीष्टं नायकं नायिकां वा नोपैति नोपभुङ्क्तेऽसौ विप्रलम्भ इत्यर्थः । तथा च—उपभोगाभावसंवलितप्रकृष्टरतिविषयो रसो विप्रलम्भ इत्यर्थः । करुणादौ शोकोद्दीपनतया रतिसत्त्वेन तत्रातिव्याप्तिवारणाय प्रकृष्टेति । सम्भोगेऽतिव्याप्तिवारणायोपभोगाभावेति । विप्रलम्भसमानविषयके ज्ञानान्तरे संस्कारे वाऽतिव्याप्तिवारणाय रस इत्यर्थः। अन्ये तु यत्र दुःखसंवलितत्वाद्रतिर्न प्रकृष्टाऽभीष्टमुपैति विषयीकरोति स विप्रलम्भ इति व्याकुर्वन्ति तन्न करुणेऽतिव्याप्तेः । यदि च यत्रेत्यस्य "शृङ्गार" इति व्याकारात् करुणे नातिव्याप्तिरित्युच्यते तदा "अभीष्टमुपैतीत्यस्या" नर्थक्यम् अभीष्टविषयकरतेरेव शृङ्गारत्वेन परिणामात् । अपरे तु—नायिकादिभिरभीष्टं नोपैति न सङ्गच्छते तथाचाभीष्टविच्छेदाभावेनातिव्याप्तेः । केचित्तु—

संयोगः सुखसम्भिन्नो विप्रलम्भस्तु दुःखयुक् ।
रतिस्तयोः प्रकर्षः स्यादाधिक्यात्सुखदुःखयोः ॥

इति दर्शनात् —

दुःखासंवलितरतिस्थायिभावको रसो विप्रलम्भ इत्याहुस्तन्न, प्रणयमाने दुःखायोगादव्याप्तेः" इति विविण्वते । ईर्ष्यादिनिमित्तिकादिति प्रवेशे तु न कोऽपि दोषलेशः । आदिपदेन प्रणयमानगुरुजनाधीनत्वप्रवासादीनां परिग्रहः । अत एव हि रसगङ्गाधरकाराः—शृङ्गारो द्विविधः—संयोगो विप्रलम्भश्च । रतेः संयोगकालावच्छिन्ने ( परस्परसंयोगजन्ये रतेः यत्र स्थितिरित्याशयः, प्रथमः । वियोगकालावच्छिन्नत्वे द्वितीयः । संयोगश्च न दम्पत्योः सामानाधिकरण्यम् , एकतल्पशयनेऽपीर्ष्यादिसद्भावे विप्रलम्भस्यैव वर्णनात् । एवं वियोगोऽपि न वैयधिकरण्यम् , दोषस्योक्तत्वात् पृथक्स्थानस्थितावपि हृदये रतेः सत्त्वे, ईर्ष्यादीनाञ्चासत्त्वे वियोगो न भवति, अपि तु संभोग एवेति, वैयधिकरण्यस्य विप्रयोगलक्षणत्वे दोष एवेत्यभिप्रायः ) तस्माद्द्वाविमौ संयोगवियोगाख्यावन्तःकरणवृत्तिविशेषौ । यत्संयुक्तो वियुक्तश्चास्मीति धीः । तत्राद्यो यथा—

शयिता सविधेऽप्यनीश्वरा सफलीकर्त्तुमहो मनोरथान् ।
दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते ॥' इति ।

अत्रालम्बनस्य नायकस्य, सविधशयनाक्षिप्तस्य रहः स्थानादेरुद्दीपनस्य, च विभावस्य, तादृशनिरीक्षणादेरनुभावस्य औत्सुक्यादेश्च व्यभिचारिणः संयोगाद्रतिरभिव्यज्यते । द्वितीयो । यथा—

वाचो माङ्गलिकीः प्रयाणसमये जल्पत्यनल्पं जने
केलीमन्दिरमारुतायनमुखे विन्यस्तवक्त्राम्बुजा ।
निःश्वासग्लपिताधरोपरिपतद्बाष्पार्द्रवक्षोरुहा
बाला लोलविलोचना शिव-शिव-प्राणेशमालोकते ॥

अत्राप्यालम्बनस्य नायकस्य, निश्वासाश्रुपातादेरनुभावस्य, विषादचिन्तावेगादेश्च व्यभिचारिणः, संयोगाद्रतिरभिव्यज्यमाना वियोगकालावच्छिन्नत्वाद्विप्रलम्भरसव्यपदेशहेतुरित्याहुः ।

तत्र—

( ५१ ) यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ ।

( ५२ ) अभीष्टं नायकं नायिका वा ।

( ५३ ) स च पूर्वरागमानप्रवासकरुणात्मकश्चतुर्धा स्यात् ॥१८७॥

तत्र—

( ५४ ) श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥ १८८ ॥

( ५५ ) श्रवणं तु भवेत्तत्र दूतवन्दिसखीमुखात् ।
इन्द्रजाले च चित्रे च साक्षात्स्वप्ने च दर्शनम् ॥ १८९ ॥

---

( ५१ ) विप्रलम्भं निरूपयति—यत्रत्विति । तु शब्दः किन्त्वर्थे यत्र शृङ्गारे रतिर्नायकनायिकयोः परस्परानुरागः प्रकृष्टा अतीववृद्धिं गता, तु किन्तु अभीष्टं नायकं नायिका नायिकां नायकं वा न उपैति केनचित्कारणेन यथेच्छं न प्राप्नोति असौ स विप्रलम्भः । तथा चोभोगाभावसंवलितप्रकृष्टरतिविषयो रसो विप्रलम्भ इत्याशयः ।

( ५२ ) अभीष्टमिति । इत्यस्येति शेषः । नायकम् इत्यर्थ इति शेषः अत्राभीष्टमित्यस्य हि लिङ्गव्यत्यासेनाभीष्टां नायिकामित्यर्थो ज्ञेयः ।

( ५३ ) अथास्य चतुर्विधत्वमुपपादयति—स चेति । स च सोऽपि विप्रलम्भ इत्यर्थः। चतुर्धेति । चतुष्प्रकार इत्यर्थः । "इदमुपलक्षम्, विरहोऽपि वेदितव्यः स च गुर्वादिपराधीनत्वाद्भवति । सङ्गमप्रतिरोधो यथा—"किं रुद्धः प्रियया" (१८९ पृ०) इत्यादौ । अन्यथा तस्य निरुक्तप्रकारचतुष्टयानन्तर्भावाल्लक्ष्यत्वाभावेन तत्र सामान्यलक्षणस्यातिव्याप्तिप्रसङ्गात्" इति तर्कवागीशाः ।

( ५४ ) तत्र प्रथमं पूर्वरागं निरूपयति—श्रवणाद्दर्शनाद्वेति । श्रवणात् ( सौन्दर्यादिगुणानामाकर्णनात् रूपस्य दर्शनाद्वापि मिथोऽन्योन्यं 'संरूढरागयोरुत्पन्नप्रेमयोः नायकनायिकयोरन्योन्यमप्राप्तौ परस्परासङ्गमे यो दशाविशेषोऽवस्थाभेदः स प्राप्तेः पूर्वस्मिन् काले रागः पूर्वराग उच्यते । अन्योन्यमुत्पन्नानुरागयोर्नायकनायिकयोः स्वध्वंसानधिकरणसमयप्राप्तिप्रागभावसमयवृत्तिरवस्थाविशेषः पूर्वराग इति परमार्थः । स्वपदेन प्राप्तेर्ग्रहणम्, तेन प्राप्त्यनन्तरवर्त्तिप्रवासेनाऽतिव्याप्तिः, लक्षणस्यानागमनात् । अत एवायं पूर्वरागः कन्यारूपायामेव नायिकायां भवितुमर्हति । यथा-नलदमयन्त्युषानिरुद्धमालतीमाधवादिषु ।

( ५५ ) ननु श्रवणादिकं कुतः स्यादित्यत आह—श्रवणन्त्विति । तत्र पूर्वरागे दूतो निसृष्टार्थ इति लक्षणलक्षितः, बन्दिनः स्तुतिपाठकाः, अत्र दूतपदं दूत्याः बन्दिपदञ्च द्विजादीनामप्युपलक्षणम् । श्रवणादीनां यथाक्रममुदाहरणानि तु—
नैषधे—नलदमयन्त्योः दूतबन्द्यादिमुखेभ्यः श्रवणम् । मालतीमाधवे-बुद्धिरक्षिताया सख्याः मुखात् मकरन्दस्य सख्या मदयन्तिकया श्रवणम् । "कथमीक्षे कुरङ्गाक्षीम्" इति वक्ष्यमाणपद्ये प्रियतमेन प्रियतमाया इन्द्रजाले दर्शनम्, इदमुपलक्षणं मायिकदर्शितदृश्यजातस्य । मालविकाग्निमित्रे-अग्निमित्रेण चित्रे ( लिखिते दृश्ये ) मालविकाया दर्शनम् ।

( ५६ ) अभिलाषश्चिन्तास्मृतिगुणकथन,
उन्मादोऽथ व्याधिर्जडता मृतिरिति दश। "नेत्रे खञ्जनगञ्जने"–

( ५७ ) अभिलाषः स्पृहा चिन्ता प्राप्त्युपायादिचिन्तनम्। उद्वेगः ।
उन्मादाश्चापरिच्छेदश्चेतनाचेतनेष्वपि ॥ १६१ ॥
अलक्ष्यवाक्प्रलापः स्याच्चेतसो भ्रमणाद्भृशम्।
व्याधिस्तु दीर्घनिःश्वासपाण्डुताकृशतादयः ॥ १६२ ॥
जडता हीनचेष्टत्वमङ्गानां मनसस्तथा ।

शेषं स्पष्टम् ।

---

शाकुन्तले–दुष्यन्तशकुन्तलयोः साक्षाद्दर्शनं प्रत्यक्षावलोकनम्। श्रीमद्भागवते–उषया अनिरुद्धस्य स्वप्ने दर्शनम्।

( ५६ ) अभिलाष इति। चिन्ता वक्ष्यमाणस्वरूपं चिन्तनम्। स्मृति (ध्यानं) श्च गुणकथनं चोद्वेग (व्याकुलता) श्च संप्रलापश्चेति तादृशाः, जड़ता निश्चेतनत्वम् मृतिर्मरणम्।

अत्र पूर्वरागे दश दशप्रकाराः कामकृता रतिजन्यदशाः कामदशाः नायकनायिकयो· रवस्थाः, भवन्तीति शेषः।

( ५७ ) उक्तकारिकायां स्वदृष्ट्यास्पष्टानि पदानि व्याकरोति ग्रन्थकारः—अभि· लाष इति। स्पृहा अभीष्टप्राप्तीच्छा। नायकनायिकयोरन्योऽन्यमेवेति शेषः। अन्य त्राप्येवमेव। प्राप्तेर्नायकसङ्गस्योपायतत्प्रतिरोधनिराकरणैकान्ततदुपयोग्युत्तरादेश्चिन्तनम्, चेतनाचेतनेष्वपि जड़ाजडेष्वपि पदार्थेषु अपरिच्छेदो विशेषनिर्द्धारणाभावो विवेकाभाव इति यावत्, उन्मादः। एतेनायुर्वेदोक्तोन्मादलक्षणमत्र नाभीष्टमिति द्योतितम्। चेतसो भृशं बहुभ्रमणात् चञ्चलत्वेन अलक्ष्यवाक् लक्ष्यशून्यवल्गनं निर्विषयं वच इत्यर्थः, प्रलापः संप्रलापः स्यात्। दीर्घनिःश्वासः, अङ्गस्य पाण्डुता कृशता, आदिपदात् मुख· श्रीविहीनादयश्च व्याधिः, न त्वायुर्वेदोक्तो विषमज्वरादिरिति भावः। एतेन व्याधिः पीड़ाज्वरादिरिति व्याख्यानं कस्यचिदनुपादेयमेवेत्यवधेयम्। अङ्गानां करचरणाद्यवय· वानां हीनचेष्टत्वं स्वस्वकार्यासमर्थत्वम्, तथा मनसो हीनचेष्टत्वम् अन्यभावनारहित· त्वञ्च जड़ता स्यात्। शेषम् अवशिष्टं स्मृतिगुणकथनोद्वेगस्मृतिरूपं चतुष्टयं स्पष्टमतिप्र· सिद्धमतो न व्याख्याता अस्मीति भावः। ग्रन्थकृदनुक्तमपि स्मृत्यादिकं सुखबोधाय प्रदर्श्यतेऽस्माभिः, तथाहि—

"द्वेषो यत्राऽन्यकार्येषु तदेकाग्रं च मानसम्।
श्वासैर्मनोरथैश्चापि चेष्टास्ता स्मृतिरुच्यते" ॥
"सौन्दर्यहसितालापैर्नास्त्यन्यस्तत्समो युवा।
इति वाणी भवेद्यत्र तदुक्तं गुणकीर्त्तनम् ॥"
"यस्मिन्नरम्यमरम्यं वा न च हर्षाय जायते।
प्रद्वेषः प्राणितव्येऽपि स उद्वेगोऽभिधीयते ॥"

तत्र—

(५१) यत्र तु प्रणयस्पृशः परिचयादुद्गाढरागोदया-

(५२) स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।

(५ यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-

त दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥'

(६०) अत्र मालतीसाक्षाद्दर्शनप्ररूढरागस्य माधवस्याभिलाषः ।

(६१) 'कथमीक्षे कुरङ्गाक्षीं साक्षाल्लक्ष्मीं मनोभुवः ।

इति चिन्ताकुलः कान्तो निद्रां नैति निशीथिनीम् ॥'

(६२) अत्र कस्याश्चिन्नायिकाया इन्द्रजालदर्शनप्ररूढरागस्य नायकस्य चिन्ता ।

---

"श्वासप्ररोदनोत्कम्पवसुधोल्लेखनैरपि ।

व्यापारो जायते यत्र स उन्मादो निरूप्यते ॥"

**(५८)** एवमभिलाषादीन् व्याख्याय सम्प्रति यथाक्रममुदाहर्त्तुमाह—क्रमेणोदाहरणानीति । क्रमेण यथोक्तपौर्वापर्येण उदाहरणानि अभिलाषादिकामदशानामित्यर्थः । प्रदर्श्यन्त इति शेषः ।

(५९) प्रेमार्द्रा इति । मालतीमाधवे पञ्चमाङ्के मालतीप्राप्त्यै श्मशानसाधने प्रवृत्तस्य माधवस्याभिलाषोऽयम् । अयं मम अहमस्येत्याकारकः पक्षपातविशेषः प्रेम तेन आर्द्राः स्निग्धाः । प्रेमाभिव्यञ्जका इति यावत् । तथा प्रेम्णैवावलोकनादिना प्रकर्षं नीतम् अपराधसहस्रेणाऽप्यविचालितं वा प्रणयः तं स्पृशन्तीति प्रणयस्पृशः प्रणययुक्ताः । तथा परिचयान्मुहुर्मुहुर्दर्शनात् हठासंगाद्वा उद्गाढः ( स्थिरतया ) निःशेषमुत्सारितगुर्वादिपारतन्त्र्यः रागस्य सुरतेच्छायाः तस्योदयो यासु तथाभूताः । मुग्धदृशः सुन्दरनयनायाः मालत्याः निसर्गेण स्वभावेन मधुरा मनोहरास्तास्ता पूर्वानुभूताश्चेष्टाः दर्शनहसितादिरूपा मयि ( पुनः ) भवेयुः आशंसायां लिङ् । अत एव आशंसया मनोरथेन परिकल्पितासु संकल्पविषयीभूतास्वपि किं पुनरनुभूतास्वित्यपि शब्दार्थः । यासु चेष्टासु क्षणात् बाह्यकरणस्य चक्षुरादेरिन्द्रियस्य व्यापारं विषयग्राहित्वं रूपादिस्वस्वविषयग्रहणसामर्थ्यं रुणद्धीति तादृशः अन्तःकरणस्य मनसः आनन्देन सान्द्रो घनः लयः तन्मयत्वं भवतीत्यर्थः । शार्दूलविक्रीडितं छन्दः । तल्लक्षणन्तूक्तं प्राक् ( ९८पृ० )

अत्र मालती आलम्बनम् , तद्विलासानुस्मरणमुद्दीपनम् , आशंसानुभावः, तद्व्यङ्ग्योत्कण्ठा व्यभिचारिभावः, रतिः स्थायिभावः ।

**(६०)** अभिलाषं सङ्गमयति—अत्रेति । मालत्याः साक्षादात्मना दर्शनं तेन प्ररूढरागस्य । अभिलाषो मालतीविषयक इति शेषः ।

**(६१)** चिन्तामुदाहरति—कथमीक्षे इति । इन्द्रजालावलोकितस्वरूपां नायिकां प्रति कामिदूत्या उक्तिरियम् । मनोभुवः कामस्यापि लक्ष्मीं सेवनोयरमारूपां कुरङ्गाक्षीं मृगनयनां कथं हतभाग्योऽहं केन प्रकारेण साक्षात् प्रत्यक्षमीक्षे पश्येयम् इति चिन्तया शोकेन आकुलो विह्वलः कान्तो नायकः निशिथिनीं समग्रां क्षपां व्याप्यापि निद्रां ( कर्म ) न एति लभते ।

**(६२)** उदाहरणं सङ्गमयितुमाह—अत्रेति । इन्द्रजालस्यानिर्वचनीयदृश्यस्य दर्शनं

इदं मम ।

'मयि सकपटम्'-इत्यादौ (२३६पृ०) नायकस्य स्मृतिः । 'नेत्रे खञ्जनगञ्जने''-इत्यादौ (१६२पृ०) गुणकथनम् । 'श्वासान्मुञ्चति' —इत्यादौ (२०३पृ०) उद्वेगः ।

(६३) 'त्रि भागशेषासु निशासु चक्षणं निमील्यनेत्रे सहसा व्यबुध्यत क्व ।
नीलकण्ठ ! व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना ॥'

अत्र प्रलापः ।

'भ्रातर्द्विरेफ'—इत्यादौ ( २३५पृ० ) उन्मादः ।

तेन प्ररूढो रागो यस्य तस्य तथोक्तस्य । चिन्ता प्राप्त्युपायादिचिन्तनं लक्ष्यत इत्याशयः । एवमेव—

"मनस्तु यं नोज्झति जातु यातु मनोरथः कण्ठपथं कथं सः ।
का नाम बाला द्विजराजपाणिग्रहाभिलाषं कथयेदलज्जा ॥"

अत्रापि नलगुणश्रवणात् दमयन्त्यास्तत्प्राप्त्युपायादिचिन्तनाच्चिन्ता ।

"मयि सकपटम्" (२३६पृ०) इत्यादौ स्मृत्याख्योदाहरणे इत्यर्थः ।

नायकस्य स्वप्रियादर्शनप्ररूढरागस्येत्यर्थः ।

उदाहरणान्तरं यथा नैषधे—

"अजस्रमारोहसि दूरदीर्घां सङ्कल्पसोपानततिं तदीयाम् ।
श्वासान् स वर्षत्यधिकं पुनर्यद् ध्यानात्तवत्वन्मयतामवाप्य ॥

अत्र नलस्य दमयन्त्याः स्मृतिः ।

"नेत्रे खञ्जनगञ्जने" (१३६ पृ०) इत्यादौ प्ररूढयौवनोदाहरण इत्यर्थः ।

उदाहरणान्तरं यथा शाकुन्तले—

"अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥

अत्र दुष्यन्तस्य शकुन्तलागुणवर्णनम् । "श्वासान्मुञ्चति"(२०३पृ०)इत्यादौ तपनोदाहरणे।

( ६३ ) त्रिभागशेषास्विति । कुमारसम्भवे पार्वतीसख्या विजयाया जटिलवेशप्रच्छन्नं महेशं प्रत्युक्तिरियम् । किं चेति चार्थः । शिष्यते इति शेषः कर्मणि घञ् । त्रिभ्यो भागेभ्यः शेष्टासु अवशिष्टासु । यद्वा रात्रेस्त्रियामत्वेन प्रसिद्धत्वात्तृतीयो भागस्त्रिभागः । संख्या शब्दस्य वृत्तिविषये पूरणार्थत्वमिष्यते, यथा शतांशः सहस्रांश इति । त्रिभागः शेषो यासां तासु निशासु रात्रिषु क्षणं क्षणकालं नेत्रे नयने निमील्य मीलयित्वा सहसा सद्यः हे नीलकण्ठ क्व व्रजसि गच्छसि इति इत्थम् अलक्ष्या निर्विषया वाक् वाक्यं यस्याः सा तादृशी, तथा असत्यं मिथ्या शिवस्य कण्ठे कण्ठदेशे अर्पितं स्थापितं बाहुबन्धनं यया सा, यद्वा असत्यस्य अलीकदृष्टस्य शिवस्य कण्ठे अर्पितं बाहुबन्धनं यया सा तथोक्ता तथासती पार्वती सहसैव व्यबुध्यत विबुद्धितवती । विरहवशादस्या निद्रैव नायाति कदाचिद् यद्यायाति तर्हि स्वप्नेऽपि शिवमेव पश्यतीति भावः । अत्र सम्प्रलापापरपर्यायः प्रलापो लक्ष्यत इति मूलकारः । मल्लिनाथस्तु—एतेन "जागरोन्मादौ सूचितौ" इत्याह तयोरपि सम्भवात्तदुक्तमपि सङ्गच्छत एवेत्यवधेयम् । वंशस्थं छन्दस्तल्लक्षणन्तूक्तं प्रागेव (२०६पृ०) "भ्रातर्द्विरेफ"इत्यादौ (२३५पृ०) उन्मादाख्यसात्त्विक-

( ६४ ) "पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि ! हृदन्तः ॥"

अत्रव्याधिः ।

( ६५ ) 'भिसणीअलसअणीए निहिअं सव्वं सुणिच्चलं अङ्गं ।
दीहो णीसासहरो एसो साहेइ जीअइत्ति परं ॥'

अत्र जड़ता । इदं मम ।

---

भावोदाहरणे । उन्मादस्तन्नामधेया कामदशेति भावः । उदाहरणान्तरं नैषधे यथा—

"निमेति रुष्टाऽसि किलेत्यकस्मात् स त्वां किलाऽपैति हसत्यकाण्डे ।
यान्तीमिव त्वामनुयात्यहेतोरुक्तस्त्वयेति प्रतिवक्ति मोघम् ॥"

अत्र नलस्यापरिच्छेदादुन्मादः ।

( ६४ ) व्याधिमुदाहरति—पाण्डिवति । मालतीमाधवे मालत्यां तद्विरहावस्थां पृच्छन्त्या लवङ्गिकाया उक्तिरियमिति विज्ञप्रियायाम् , परन्तु प्रचलितपाठे नोपलभ्यतेऽतः अविवाहितां स्वाभिलाषं प्रकाशयितुमक्षमां वयस्यां प्रति वयस्याया उक्तिरियम् । हे सखि ! पाण्डु सितं गतलालिमा अतएवाशोभनमिति यावत् । "पाण्डुः कुन्तीपतौ सिते" इति हैमः । क्षामं क्षीणञ्च तव वदन मुखम् , सरसं स्नेहार्द्रं तव हृदयम् , तथा—अलसं कार्य्यासमर्थं तव वपुर्देहश्च ( कर्तृ ) हृदन्तः तवैव हृदयमध्ये नितान्तमत्यन्तम् , क्षेत्रियं रोगम् परक्षेत्रे न छेदनीयो रोगः क्षेत्रियरोगः अस्मिन् शरीरासाध्यव्याधिमित्यर्थः । आवेदयति प्रकटयति कामवेदनां सूचयतीत्यर्थः । आर्याच्छन्दस्तल्लक्षणं चोक्तं प्राक् ( १८३पृ० )

लक्षणं सङ्गमयितुमाह—अत्रेति । काम्यनुरञ्जिताया बालाया व्याधिरिति भावः ।

उदाहरणान्तरं यथा शाकुन्तले—

'क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनाक्लिष्टेयमालक्ष्यते ।
पत्राणामिव शोषणेन मरुता स्पृष्टालता माधवी ॥'

अत्र दुष्यन्तेऽनुरागयुक्तायाः शकुन्तलाया व्याधिः ।

( ६९ ) जड़तामुदाहरति—भिसणी'ति ।

"बिसनीदलशयनीये निहितं सर्वं सुनिश्चलमङ्गम् ।
दीर्घो निश्वासभर एष साधयति जीवति इति परम् ॥"

इति संस्कृतानुवादः । अत्यन्तमदनसन्तप्तां कामप्यवलोक्य अन्यसखीजनं प्रति सख्या उक्तिरियम् । बिसनीदलशयनीये पद्मिनीदलपर्यङ्के "नालिन्यां तु बिसनी पद्मिनीमुखाः" इत्यमरः, निहितं स्थापितं सर्वमप्यङ्गं सुनिश्चलम् किञ्चिदपि स्पन्दादिरहितम् , अतएव मृतव्यक्तेस्तुल्यमेतदिति भावः । परं किन्तु एव दीर्घो निश्वासानां भरो बाहुल्यम् इदं जीवति इति साधयति ज्ञापयति । आर्याच्छन्दस्तल्लक्षणं चोक्तं प्राक् (१८३पृ०)

अत्र जड़ता कुत्राऽप्यनुरक्तायाः कामिन्या इति शेषः ।

उदाहरणान्तरं यथा—

( ६६ ) रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते ॥ १६३ ॥
जातप्रायं तु तद्वाच्यं चेतसाकाङ्क्षितं तथा ।
वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः ॥ १६४ ॥

( ६७ ) तत्राद्यं यथा—

( ६८ ) 'शेफालिकां विदलितामवलोक्य तन्वी
प्राणान्कथंचिदपि धारयितुं प्रभूता ।
आकर्ण्य संप्रति रुतं चरणायुधानां
किं वा भविष्यति न वेद्मि तपस्विनी सा ॥'

भवद्वियोगाच्छिदुरार्त्तिधारा यमस्वसुर्मज्जति निःशरण्यः ।
मूर्च्छामयद्वीपमहान्धपङ्के हा हा महीभृद्भटकुञ्जरोऽयम् ॥
अत्र नलस्य मूर्च्छाया वर्णनाज्जडता ।

( ६६ ) ननु कामदशासु मरणस्याऽप्यन्तर्भावात् कविभिस्तत्कथन्नाङ्कनमत आह—रसविच्छेदेति । रसस्य रतेः विच्छेदहेतुत्वात् विनाशहेतुत्वात् यदि मरणवर्णनं स्यात्तदा रत्याश्रयस्य मरणाद्रतेर्नाश इति मरणरूपानुभावेन रतेर्मिलनाभावाद्रसत्वं न संपद्यते किन्तु शृङ्गारं विच्छिद्य करुण एवाविर्भवति शोकस्थायिभावोपलब्धेरिति भावः । वर्ण्यते कविभिरिति शेषः । एवं सति कामदशासु किमर्थं मरणोपादनमित्यत आह—जातप्रायन्त्विति । तन्मरणं मरणाख्या दशा । चेतसा कांक्षितं—तन्मरणं वाच्यमिति सम्बन्धः। नन्वेवमपि कादम्बर्यां बाणभट्टेन पुण्डरीकस्य मरणं कथमुपनिबद्धमित्याशङ्क्य निराकरोति—वर्ण्यतेऽपीति । अदूरतो मरणवार्त्तायाः नातिदूरे यदि प्रत्युज्जीवनं मरणात्परं जीवनं प्रत्युज्जीवनमित्युच्यते तदा वर्ण्यतेऽपि पुनरव्यवहितेऽलम्बनस्य जीवने सति मरणमपि वर्णनीयमित्यर्थः । एवञ्च तस्मिन् समये जायमानोऽपि शोकः क्षणिकत्वेन दुर्बलतया धाराप्रवाहां प्रबलां रतिं न नाशयितुं शक्नोतीति तत्राऽपि शृङ्गार एव रस इति ग्रन्थकर्त्तुराशयः । केचित् प्राचीनास्तु तत्समयेऽपि करुणमेव स्वीकुर्वन्ति, एतच्च स्फुटीभविष्यति करुणविप्रलम्भव्याख्यानावसरे । तथाचोक्तकामदशास्वन्तर्गन्ततावचातुर्विधम्-प्रत्युज्जीवनाशाशून्यम्, जातप्रायमरणम्, आकांक्षितमरणम् समीपवर्त्तिपुनरुज्जीवनकपरञ्च । तत्राद्यं रसभङ्गहेतुत्वान्न वर्ण्यते, अवशिष्टन्तु तदभावाद्वर्ण्यत एवेत्यवधेयम् ।

( ६७ ) उदाहर्त्तुं प्रतिजानीते—तत्रेति । तत्रानुपदोक्तत्रिविधमरणेषु मध्ये आद्यं प्रथमं जातप्रायमरणमित्यर्थः ।

( ६८ ) शेफालिकामिति । कयाचिन्नायिकादूत्या रात्रिशेषे नायकं प्राप्योक्तिरियम् । तन्वी कृशाङ्गी "तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे" इति विश्वमेदिन्यौ । तपस्विनी मैथुनरहितत्वाद्ब्रह्मचारिणी यद्वा तुच्छा शोच्या वा सा नायिका शेफालिकां निर्गुण्डीम् "शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा" इत्यमरः, विदलितां विकसिताम् अवलोक्य कथञ्चिदपि महताक्लेशेनेत्यर्थः प्राणान् धारयितुं रक्षितुं प्रभूता समर्था आसीत् । शेफालिकाविदलनेन निशीथकालः सूचितः तथात्र हि अर्धरात्रे शेफालिका विकसति कदाचित्तदानीमपि नायकागमनसम्भावनया प्राणधारणमिति भावः । सम्प्रति तु रात्रिशेषयामार्धे चरणायुधानां कुक्कुटानां "कुक्कुटश्चरणायुधः" इत्यमरः । रुतं शब्दम् आकर्ण्य निशम्य किं वा भविष्यति इति न वेद्मि नावगच्छामीति मरणसम्भावनया लज्या

( ६९ ) द्वितीयं यथा—

( ७० ) 'रोलम्बाः परिपूरयन्तु हरितो झंकारकोलाहलै-
मन्दंमन्दमुपैतु चन्दनवनीजातो नभस्वानपि ।
माद्यन्तः कलयन्तु चूतशिखरे केलीपिकाः पञ्चमं
प्राणाः सत्वरमश्मसारकठिना गच्छन्तु गच्छन्त्वमी ॥'

ममतौ।

( ७१ ) तृतीयं यथा—कादम्बर्यां महाश्वेतापुण्डरीकवृत्तान्ते । एष च प्रकारः करुणविप्रलम्भविषय इति वक्ष्यामः ।

---

विषादोक्तिः । रात्रिशेषयामार्धे कुक्कुटा नदन्ति इदानीं रात्रेः प्रभातप्रायत्वेन त्वामप्राप्य सा मृतप्राया भविष्यतीति भावः । वसन्ततिलकाच्छन्दस्तल्लक्षणन्तूक्तं प्राक् (१९३पृ०)

अत्र च "किं वा भविष्यति" इत्युक्त्या जातप्रायमरणं बोध्यम् ।

( ६९ ) चेतसाकाङ्क्षितमरणदाहृत्तुं प्रतिजानीते-द्वितीयमिति ।

( ७० ) रोलम्बा इति । अप्राप्तनायकदर्शनाया नायिकाया उक्तिरियम् । रोलम्बाः भ्रमराः रोलम्बः स्यान्मधुकरे" इति गोपालः, झङ्कारकोलाहलैः झङ्कारा एव ह्रासहत्वात् कोलाहकास्तैः, हरितो दिशः, "आशाश्च हरितश्च ताः" इत्यमरः परिपूरयन्तु परितश्चतुर्दिक्षु व्याप्ताः कुर्वन्तु । चन्दनवनीजातश्चन्दनविपिनोत्पन्नः दाक्षिणात्यो नभस्वान् पवनोऽपि "नभस्वद्वातपवनपमानप्रभञ्जनाः" इत्यमरः, मन्दं मन्दम् अतिमन्दमित्यर्थः, अत्र वीप्सायामेव कथञ्चिद्द्विरुक्तिर्निर्वाह्या, "प्रकारे गुणवचनस्य" इत्येतदाश्रयणे तु कर्मधारयवद्भावे सुब्लुकि मन्दमन्दमिति स्यात् । तदुक्तं वामनेन—"मन्दमन्दमिति प्रकारार्थे द्विर्भावः" इति । उपैतु आगच्छतु । केलीपिकाः क्रीडनाय गृहपालितकोकिलाः, 'केलिः केली रतिः क्रीडा" इति गोपालः, कोकिकः माद्यन्तो वसन्तस्वभावेन मदविह्वलाः सन्तः चूतशिखरे रसालवृक्षोपरि पञ्चमं तत्संज्ञकं स्वरविशेषं "पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः" इत्यमरः, कलयन्तु गायन्तु । अश्मसारकठिनाः लोहकठिनाः "लोहाऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसीयसी। अश्मसार" इत्यमरः, अमी मामकीनाः प्राणाः सत्वरमाशु गच्छन्तु गच्छन्तु आभीक्ष्णे द्विर्भावः । अनेन प्राणानां नितरामनावश्यकत्वं सूचितम् । शार्दूलविक्रीडितं च्छन्दस्तल्लक्षणन्तूक्तमेव ( १९८ पृ० )

अत्र मदनवेदनां सोढुमसमर्थया नायिकया चेतसा मरणमाकांक्षितम् ।

( ७१ ) तृतीयमिति । तृतीय समीपवर्त्ति पुनरुज्जीवकं मरणम् । कादम्बर्यां बाणभट्टरचितगद्यकाव्ये। महाश्वेतापुण्डरीकवृत्तान्ते हि प्रथमं पुण्डरीको मृतः किन्त्वदूर एव पुनर्जीवितः । यद्यपि ग्रन्थे दूरेणैव जीवनं प्रतीयते तथापि (क)उपाख्यानांशेन त्वदूर एवेति

---

( क ) एतदुपाख्यानं तत्र त्वेवम्—हंसाख्यगन्धर्वराजतनया महाश्वेताभिधाना, श्वेतकेतोर्विप्रमूर्धन्यस्य पुण्डरीक इत्यभिधस्तनयश्चास्ताम् । कदाचित् समवलोक्य जातपरस्परानुरागोऽनन्तरं पुण्डरीको वियुज्य वर्तमानस्तपोधनमुख्योऽपि कामवेदनया जर्जरीकृतः प्राणान् मुमोच । एवं विधोदन्तमुपलभ्य तद्दुःखदुःखितायां तथैव विधातुमुद्यतायां महाश्वेतायाम् आकाशवाण्या चैवमुपदिष्टम्—वत्से ! महाश्वेते ! न हाप्यास्त्वया: प्राणाः पुनरपि तवानेन भविष्यति समागमः । अनेन समीपवर्त्तिपुनरुज्जीवनं पुण्डरीकस्य स्पष्टमेव ।

( ७२ ) केचित्तु—

'नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ संकल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥
उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः ॥' इत्याहुः ।

( ७३ ) तत्र च—

**( ७४ ) आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः ।**

( ७५ ) इङ्गितान्युक्तानि । ( ७६ ) यथा रत्नावल्यां सागरिकावत्सराजयोः ।

---

विभावनीयम् । वक्ष्याम इति । करुणविप्रलम्भस्य वर्णने "यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये" इत्यादिनेति शेषः ।

(७२) उपदर्शितप्रकारतो भिन्ना एव मरणदशा इति दर्शयितुं मतान्तरमुत्थापयति—केचित्त्विति । वात्स्यायनादय इत्यर्थः । नयनप्रीतिरिति । प्रथमं नयनप्रीतिः नायिकां पश्यतः संयोगेच्छालक्षणात्कामादनन्तरं नयने स्निग्धे जायेते, ततो विषयालाभे चित्तस्य आसङ्गः परस्परमासक्तिः । अथ अनन्तरं संकल्पः 'कथमेनां प्राप्स्यामि लब्ध्वा चैवं विधातव्यम्' इत्येवं मनसा कल्पना । इतोऽग्रेऽथेत्यनुषङ्गः सर्वत्र । अथ सङ्कल्पयतो निद्राच्छेदः निद्राराहित्यम् । निद्रामलभमानस्य तनुता देहस्य क्षीणता । विषयेभ्यः शरीरयात्रानिर्वाहक भोग्यपदार्थेभ्यो निवृत्तिर्वैराग्यम्, सर्वथा तदासक्तचित्तत्वादन्यविषयाञ्ज्वलज्ज्वलनज्वालावद्दृष्टत्वात्तद्विरक्तिरित्यर्थः । तेभ्यश्च निवर्तमानस्य त्रपाया लज्जाया नाशः प्रणाशनम्, गुरुभ्योऽपि लज्जानाशान्न भीतो भवतीति भावः, विप्रणष्टस्य निर्भीकस्य चोन्मादः स च प्रागुक्तलक्षण एव । अथ मूर्च्छा अचैतन्यं भवति । अथ मृतिर्मरणम् । 'एता दशैव स्मरस्य कामस्य दशास्तत्कृता अवस्था इत्यर्थः ।

केचित्त्विति कथनेनास्वरस्वः सूचितस्तद्बीजन्तु महाकविनिबन्धेषु एवं विधानां प्रायेणादर्शनमिति ।

( ७३ ) पूर्वरागः प्रथमं कस्य वक्तव्यमिति जिज्ञासायां समाधातुमुपक्रमते—तत्रेति । तत्र पूर्वराग इत्यर्थः ।आदाविति । आदौ पूर्वं स्त्रिया नायिकाया नायकविषयः इति शेषः, रागोऽनुरागः, पश्चात्तस्याः ।

( ७४ ) स्त्रिया इङ्गितैरनुरागचेष्टितैः पुंसो रागो वाच्य इत्यत्र सम्बन्धः ।

( ७५ ) इङ्गितानीति । इङ्गितानि अनुरागचेष्टितानि "आकारस्त्विङ्ग इङ्गितम्" इत्यमरः, उक्तानि-"दृष्ट्वा दर्शयति व्रीडाम्" इत्यादिना प्रदर्शितानि पूर्वोक्तेन सन्दर्भद्वयेनेति शेषः ।

( ७६ ) आदौ स्त्र्यनुरागं दर्शयति—यथेति रत्नावल्यामिति । रत्नावली प्रस्तुत्य श्रीहर्षदेवरचितनाटिकायामित्यर्थः । अत्र सागरिकायाः पूर्वमनुरागः ।

अयमाशयः—सिंहलेश्वरस्यात्मजा वासवदत्तायाः सखी रत्नावलीतोऽतिरिक्ता सागरिकाभिधेया वासवदत्तायाः पतिश्च वत्सराजो नाम । तयोरेव परस्परं प्रेमसूचकानि इङ्गितानि रत्नावली नाटिकायामुपनिबद्धानि । तथाहि—वासवदत्तया व्याजेन स्वसमीपतः प्रत्यावर्तयितुं सागरिका समीपं गन्तुं व्यापारितया सागरिकया किञ्चित्ततोऽपसृत्या-

( ७७ ) आदौ पुरुषानुरागे संभवत्यप्येवमधिकं हृदयङ्गमं भवति ।

( ७८ ) नीली कुसुम्भं मञ्जिष्ठा पूर्वरागोऽपि च त्रिधा ॥ १९५ ॥

तत्र—

( ७९ ) न चातिशोभते यन्नापैति प्रेम मनोगतम् ।
तन्नीलीरागमाख्यातं यथा श्रीरामसीतयोः ॥ १९६ ॥

( ८० ) कुसुम्भरागं तत्प्राहुर्यदपैति च शोभते ।

त्मानं संगोप्य कामदेवं पूजयितुं कुसुमावचयादारभ्य ( हद्दी हद्दी ! कहं कुसुमलोहो क्खित्तहि अआण अदि चिरं जेव्व मए किदं, ता इमिणा सिन्दुवार विडवेण ओ वा रिअसरीरा भविअ पेक्खामि कहं पेक्खिदो जेव्व अपुव्वो कुसुमा उहो अह्माणं ताद्स्स अन्ते उरे चित्तगदो अच्चो अदि इह दु पच्चक्खो लक्खी अदि ) "हाधिक् हाधिक् ! कथं कुसुमलोभोत्क्षिप्तहृदययाऽतिचिरमेव मया कृतम्, तस्मादमुनैव सिन्धुवारविटपेना-पवारितशरीरा भूत्वा प्रेक्षिष्ये । कथं प्रेक्षित एवापूर्वः कुसुमायुधः । अस्माकं तात स्यान्तः पुरे चित्रगतोऽर्च्यते, इह तु प्रत्यक्षो लक्ष्यते" । इत्यादिना वत्सराजविषयकप्रेम-सूचकानि इङ्गितानि । वत्सराजेन पुनः—चित्रफलकदर्शनानन्तरम्—

लीलाऽवधूतपद्मा कथयन्ती पक्षपातमधिकं न ।
मानसमुपैति केयं चित्रगता राजहंसीव ॥ इत्युक्तिपर्यन्तम्—
श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः ।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मा मृतद्रवः ॥ इत्यादिनोपनिबद्धानि ॥

( ७७ ) ननु आदौ पुरुषानुरागस्याऽपि सम्भवात् स्त्रिया एवादौ भवेदित्यत्र विन-गमकाभावात्, आदौ स्त्रिया एव रागो वाच्य इत्युपदेशः कथं सङ्गच्छत इत्यत आह—आदाविति। एवं प्रथमं स्त्रिया एव रागस्य वर्णने हृदयङ्गमं मनोहरं भवति काव्यमिति शेषः।

( ७८ ) पूर्वरागमपि विभज्य दर्शयति—नीलीति । नीली नीलीरागः कुसुम्भरागः, मञ्जिष्ठारागश्चेति त्रिधा त्रिप्रकारेत्यर्थः ।

( ७९ ) तत्र नीलीरागलक्षणं दर्शयति—नचातिशोभत इति । मनोगतं नायकनायिक-योर्हृदयगतं यत्प्रेम अनुरागः न अपैति कुतश्चिदपि हेतोर्हृदयान्नापसर्पति नच अतिशोभते चेष्टादिकं वहिर्भावं प्रकाश्य सखीजनमध्ये वा धैर्यत्रपाभ्यां नातिमनोहरायते तं नीली-रागम् आख्यातं कथितं कविभिरिति शेषः । यथा—नीलाद्रुम( नीलपेड़ ) द्रवेण विहितं वस्त्रादिषु रञ्जनं जलादिना नापैति न चातिशोभते तद्वदयमपि नीलीरागो नाम पूर्वराग इति भावः । अत्र पूर्वरागभेदे—औपम्यगर्भो नीलीरागशब्दोऽय योगरूढो बोध्यः । उदा-हरणं दर्शयति—यथेति । श्रीरामस्य धीरोदात्तत्वात् पुरुरवस इवात्यन्तप्रलापाभावेन ना-तिशोभते इत्यर्थः । विवाहात्पूर्वं श्रीरामसीतयोर्हि श्रवणादिनोत्पन्नं परस्परं प्रेम शिव-धनुर्भङ्गविघ्नेनापि नापेतं धैर्यत्रपाभ्यां सखीजनमध्येऽपि न व्यक्तबहिर्भाव आसीदिति भावः।

( ८० ) द्वितीयं कुसुम्भरागलक्षणं दर्शयति—कुसुम्भरागमिति । नायकनायिकयोर्य-त्प्रेम अपैति केनचित्कारणेन हृदयाच्च्यवते शोभते बहिर्भावप्रकाशेन सखीजनमध्ये मनोहरायते च तं कुसुम्भरागं प्राहुरालङ्कारिका इति शेषः । "कुसुम्भं हेमनि महारजते ना कमण्डलौ" इति मेदिनी, यथा कुसुम्भ ( कुसुमफल ) द्रवेण विहितं वस्त्रादिषु रञ्जनं

( ८१ ) मञ्जिष्ठारागमाहुस्तद् यन्नापैत्यतिशोभते ॥ १८७ ॥

अथ मानः—

( ८२ ) मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः ।

( ८३ ) द्वयोः प्रणयमानः स्यात्प्रमोदे सुमहत्यपि ॥ १८८ ॥

प्रेम्णः कुटिलगामित्वात्कोपो यः कारणं विना ।

( ८४ ) द्वयोरिति नायकस्य नायिकायाश्च उभयोश्च प्रणयमानो वर्णनीयः ।

जलादिना नश्यति सत्ताकाले शोभते च तद्द्वयमपि पूर्वरागभेद इत्याशयः । पूर्ववदेवायमपि योगरूढो ज्ञेयः । उदाहर्तुमाह—देवहूत्येति । कर्दमस्य देवहूत्याश्च मिथोऽनुरागो यावत्तद्भगवदवतार इति कुसुम्भराग सदृश इत्याशयः ।

(८१) मञ्जिष्ठारागलक्षणं दर्शयति–मञ्जिष्ठारागमिति । नायकनायिकयोर्यत्प्रेम नापैति विशेषान्तरायेनापि हृदयान्नापसर्पति अतिशोभते अत्यन्तं शोभते बहिः प्रचुरतरभावप्रकटनेन सखीजनमध्ये अतीवमनोहरायते च तं मञ्जिष्ठारागम् आहुरालङ्कारिका इति शेषः । यथा स्वसंज्ञया प्रसिद्धमञ्जिष्ठा ( मजीठ ) द्रवेण विहितं वस्त्रादिषु रञ्जनं कथञ्चिदपि नापैति अतीव शोभते च तद्द्वयमपि पूर्वरागभेद इत्यर्थः । एवञ्च मञ्जिष्ठारागशब्दोऽपि पूर्ववदेव योगरूढो ज्ञेयः । यथा श्रीकृष्णराधिकयोः ।

उदाहर्तुमाह—इन्दुमत्येति ! अजस्य रघोः सुतस्य यथा इन्दुमत्या साकमिति शेषः । वाऽथवा नलस्य निषधाधिपतेः दमयन्त्या विदर्भराजपुत्र्या साकमिति शेषः । तथाचोभयत्रोभयोः मिथोऽनुरागो यावज्जीवनं स्पष्टमेवाभूदित्यत्र मञ्जिष्ठासमो गाढो मनोहरश्चेति ।

( ८२ ) अथ पूर्वरागानन्तरं क्रमप्राप्तं मानं निरूपयति–मान इति । कोपो लक्षणया तन्मूलो विप्रलम्भ इत्यर्थः मान इति मानस्य लक्षणम् । अनुरागे सति कोपमूलो विप्रलम्भो मान इति भावः । तेनोदासीनस्य नायकस्य उदासीनाया नायिकाया वा कोपमात्रेऽतिव्याप्तिर्न भवति । किन्त्वयंत्विति, प्रणयेन प्रीतिप्रार्थनेन ईर्ष्यया असपत्न्याद्युत्कर्षासहिष्णुत्वेन वा समुद्भवो यस्य तादृशः समानः द्वेधा प्रणयमान ईर्ष्यामानश्चेति द्विप्रकारः । "प्रश्रयप्रणयौ समौ" प्रणयास्त्वमी । "विश्रम्भयाच्ञाप्रेमाणः" इति "अक्षान्तिरीर्ष्या"इति चामरः ।

( ८३ ) तत्र प्रणयमानं निरूपयति–द्वयोरिति । द्वयोर्नायकनायिकयोः सुमहति प्रमोदे अन्योन्यसम्मिलनजनितानन्दे सत्यपि यः कोपः स प्रणयमानः स्यात् । ननु प्रमोदे सति कोप एव न सम्भाव्यते कथं तत्र मानलक्षणं सङ्गच्छते इत्याशङ्कां मनसि निधायाह प्रेम्ण इति । कुटिलगामित्वात् वक्रनायकादिवृत्तित्वात् दुरवगमस्वभावत्वाद्वा कारणं कोपस्य स्वाभाविकहेतुम् अपराधादिकं विनापि यः कोप इत्यत्रान्वयः । स प्रणये सति मानः प्रणयमानः ।

तथाच वह्नौ सुवर्णस्येव कोप एव प्रेम्णः परीक्षेति कवयस्तथैव वर्णयन्ति नायिकानायकौ च तथैवानुतिष्ठतः । तत्साधूक्तं प्रेम्णः कुटिलगामित्वादिति ।

( ८४ ) कारिकायां द्वयोरित्यनेन कस्य परामर्श इत्याकाङ्क्षायां तद्दर्शयति–द्वयोरिति ।

उदाहरणम् । ( ८५ ) तत्र नायकस्य यथा—

'अलिअपसुत्तअणिमिलिअच्छ देसु सुहअ मज्झ ओआसं ।
गण्डपरिउम्बणापुलइअङ्ग ण पुणो चिराइस्सं ॥'

( ८६ ) नायिकाया यथा कुमारसंभवे संध्यावर्णनावसरे ।

उभयोर्यथा—

( ८७ ) 'पणअकुविआणँ दोण्ह वि अलिअसुत्ताणँ माणइल्लाणं ।
णिच्चलणिरुद्धणीसासदिण्णअण्णाणँ को मल्लो ॥'

( ८५ ) इत्थं प्रणयमानस्य त्रिप्रकारत्वे यथाक्रममुदाहर्त्तुमुपक्रमते—तत्रेति । तत्र तेषु नायकादिसम्बन्धित्वेन त्रिप्रकारेषु प्रणयमानेष्वित्यर्थः ।

अलिअ इति ।

अलीकप्रसुप्तक विनिमीलिताक्ष ? देहि सुभग ! मह्यमकाशम् ।
गण्डपरिचुम्बनपुलकिताङ्ग ! न पुनश्चिरयिष्यामि ॥

इति संस्कृतम् । गाथासप्तशत्यां चिरायितायां नायिकायां सकलामपि शय्यामावृत्य मिथ्याप्रसुप्तस्य नायकस्य गण्डं परिचुम्ब्य नायिकायाः सानुनयवचनमिदम् । हे अलीकप्रसुप्तक ! मिथ्यानिद्रित ! हे विनिमीलिताक्ष ! अत्यन्तसङ्कुचितनयन !

यद्वा—अलीकप्रसुप्तकनिमीलिताक्षेति समग्रैक्यम् । एवञ्च अलीकं मिथ्या यत्प्रसुप्तं प्रस्वापस्तस्य कं सुखं ( क्रीडारसः ) तेन निमीलिते सङ्कुचिते अक्षिणी नयने यस्य तत्सम्बुद्धौ रूपम् । प्रसुप्तमित्यत्र भावे क्तः । "अलीकं त्वप्रियेऽनृते।" इत्यमरः, "सुखशीर्षजलेषु कम्" इति मेदिनी । हे सुभग ! सुन्दर ! मह्यम् अनुनयपरायै तव प्रियायै अवकाशं स्वापाय स्थानं देहि। गण्डे कपोले परचुम्बनेन पुलकितानि रोमाञ्चितानि अङ्गानि यस्य तत्सम्बुद्धौ रूपम् । अहं पुनर्न चिरष्यामि स्वापाय न विलम्बं विधास्यामि । मम विलम्बे तव कोपो जात इति लक्ष्यते, पुनरेवं विलम्बं न करिष्यामीति भावः । गाथाच्छन्दः ।

अत्र नायिकाया विलम्बेन प्रणयकोपरूपो नायकस्य मानः ।

( ८६ ) इत्थं नायकस्य प्रणयमानं प्रदर्श्य नायिकायास्तत्प्रदर्शितुमाह–नायिकाया इति । अष्टमसर्गे कुमारसम्भवे हि सन्ध्यावन्दनाय गते महेशे शैलसुतायाः प्रणयमाने । तस्य तद्भङ्गप्रवृत्तौ ।

"सन्ध्यया कमलयोनिकन्यया या तनुः सुतनु ! पूर्वमुज्झिता ।
सेयमस्तमुदयञ्च सेवते तेन मानिनि ! ममात्र गौरवम् ॥"

इत्युक्तिः सन्ध्यावर्णनावसरे वर्णितः ।

( ८७ ) उभयोरुदाहरति ' पणअ कुविअ इति ।

"प्रणयकुपितयोरप्यलीकप्रसुप्तमानविज्ञयोः ( वतोः ) ।
निश्चलनिरुद्धनिःश्वासदत्तकर्णयोः को मल्लः ॥"

इति संस्कृतम् । गाथासप्तशत्यां परस्परं रुष्टयोर्नायकनायिकयोः स्वरूपं पश्यन्त्या कस्याश्चिदन्तःपुरचारिण्याः "पर्यङ्कसम्मानम्" इति तन्नाशार्थं प्रयासशीलिन्या वितर्कोक्तिरियम् । प्रणयकुपितयोः, अत एव अलीकप्रसुप्तयोर्मिथ्यानिद्रितयोः मानविज्ञयोः मिथो मानकरणकुशलयोः तथा निश्चलं यथास्यात्तथा निरुद्धे अवरुद्धे निश्वासे

( ८८ ) अनुनयपर्यन्तासहत्वे त्वस्य न विप्रलम्भभेदता, किंतु संभोगसंचार्याख्यभावत्वम् । यथा—

( ८९ ) 'भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते ।
कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिञ्जने ॥'

( ९० ) यथा वा—

( ९१ ) 'एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-

निश्वासशब्दे दत्तौ कर्णौ याभ्यां तयोस्तथोक्तयोः द्वयोरपि नायकनायिकयोः को मल्लः को मानभङ्गसमर्थ इति न ज्ञायते इति भावः । अत्रापि गाथाछन्दः ।

अत्रोभयोरपि नायकनायिकयोः प्रणयकोपरूपो मानः ।

( ८८ ) अथैवं मानकरणचेष्टामात्रस्य मानत्वं न स्यादत आह—अनुनयेति । प्रियवचनादिरूपमानभङ्गानुकूलव्यापारोऽनुनयः तत्पर्य्यन्तासहत्वे अनुनयं विनैव भङ्गुरत्वे चेत्यर्थः। अस्य प्रणयमानस्य मानचेष्टाया इत्यर्थः, न विप्रलम्भभेदता न मानाख्यविप्रलम्भशृङ्गारप्रभेदता । सम्भोगे सम्भोगाख्यशृङ्गारे सञ्चारिरूपो व्यभिचारिरूपो य ईर्ष्याख्यभावः असूयाख्यभावस्तस्य भावस्तत्त्वम्, असूयाया एव व्यभिचारित्वेन परिगणनं बोध्यम् । एवञ्चानुनयरूपफलोपधायकत्वाभावात् तादृशी मानकारणचेष्टा न मानाख्यविप्रलम्भशृङ्गारः किन्तु तत्र सम्भोगशृङ्गार एव रसः, असूयाख्यसञ्चारिभावरूपया मानचेष्टया तु सम्भोगस्यैव पुष्टीकरणादित्यभिप्रायः । अनेन प्रणयकोपस्य अनुनयपर्य्यन्तमेव स्थायित्वे तस्यैव मानत्वमिति ग्रन्थकृतामाशयः ।

( ८९ ) भ्रूभङ्ग इति । अमरुशतके मानरक्षणसमर्थाया नायिकायाः मानमुपदिशन्तीं सखीं प्रत्युक्तिरियम् । भ्रूभङ्गे मानद्योतके भ्रुवोः कौटिल्ये रचितेऽपि परिश्रमेण कृतेऽपि दृष्टिर्मम लोचनम्, अधिकं सोत्कण्ठं यथास्यात्तथा क्रियाविशेषणम् उद्वीक्षते पश्यात कलेशमवलोकयितुं प्रावर्त्ततेति यावत् । "गर्हायां लडपिजात्वोः" इति गर्हायां भूते लट् । वल्लभमिति शेषः । वाचि वचने पारश्रमेण रुद्धायामपि निर्व्यापारितां गमितायामपि इदं मम दग्धाननं गर्हितं मुखं सस्मितं जायते । तथा चेतसि कार्कश्यं कठोरत्व गमितेऽपि परिश्रमेण प्रापितेऽपि तनुर्मम देहो रोमाञ्चं पुलकत्वम् आलम्बते । अत एव तस्मिन् जने मम वल्लभे दृष्टे सति कथं मानस्य प्रणयकोपस्य निर्वहणं निर्वाहो मानावलम्बनमित्यर्थः भविष्यति कथमपि नेत्यर्थः ।

शार्दूलविक्रीडितं छन्दः । तल्लक्षणन्तूक्तं प्राक् (१२८ पृ)

अत्र दर्शनादीनामनुभावादीनां बलवत्वेन तैः परिपुष्टा रतिः सम्भोगशृङ्गारमेवावलम्बत । भ्रूभङ्गादिभिर्व्यज्यमानाया ईर्ष्यायास्तु तत्साधकत्वमेव न तु विघटकत्वमिति भावः । नायककर्तृकानुनयात्पूर्वमेव वक्तृनायिकाया मानभङ्गोऽत्र ऊहनीयः ।

( ९० ) उदाहरणान्तरमपि उदाहरति—यथा वेति ।

( ९१ ) एकस्मिन्निति । अमरुशतकस्थपद्यमिदम् । एकस्मिन् शयने शय्यायाम्,

रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दंपत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः ॥'

( ९२ ) पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते ॥ १९९ ॥
ईर्ष्या मानो भवेत्स्त्रीणां तत्र त्वनुमितिस्त्रिधा ।
उत्स्वप्नायितभोगाङ्कगोत्रस्खलनसंभवा ॥ २०० ॥

तत्र दृष्टे यथा—

( ९३ ) 'विनयति सुदृशो दृशोः परागं प्रणयिनि कौसुममाननानिलेन ।
तदहितयुवतेरभीक्ष्णमक्ष्णोर्द्वयमपि रोषरजोभिरापुपूरे ॥'

---

"शयनं सुरते निद्राशय्ययोश्च नपुंसकम्" इति मेदिनी । पराङ्मुखतया अन्योन्यवैपरीत्येन वर्तमानयोरिति शेषः । वीतोत्तरं वीतं विगतमुत्तरमुक्तिप्रत्युक्तिरूपं तूष्णीमिति यावत् यस्मिन् कर्मणि तद्यथास्यात्तथा ताम्यते चेतसि क्लिश्यमानयोः अन्योन्यस्य परस्परस्य हृदि अनुनये अनुनयकरणेच्छायां वर्तमानेऽपि गौरवं स्वं स्वं दार्ढ्यं संरक्षतोः तथा शनकैः अपाङ्गवलनात् नेत्रप्रान्तचालनात् "अपाङ्गो नयनस्यान्ते स्याच्चित्रकप्रधानयो." इत्यजयः । मिश्रीभवन्ति संयुज्यमानानि चक्षूंषि नयनानि ययोस्तयोस्तथोक्तयोः, नायकनायिकयोः सहासेन सहितं सहासन्तद्यथास्यात्तथा रभसेन जवेन व्यासक्तो भुजबन्धनेन दृढं प्रवृत्तः कण्ठग्रह आलिङ्गनं यस्मिन् स तथोक्तः मन् मानः, कलिः प्रणयकोपकलहे भग्नो नष्टः "कली स्त्री कलिकायां ना शूराजिकलहे युगे" इति मेदिनी शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक् (१९८ पृ०)

अत्रापि नायकनायिकयोरन्योन्यम् अनुनयात्पूर्वमेव मानभङ्गो ज्ञेयः ।

(९२) इत्थं प्रणयमानं निरूप्य ईर्ष्यामानं निरूपयति—पत्युरन्येति । पत्युः अन्यप्रियतमायाम् आसङ्गे आसक्तौ दृष्टे तत्परिभुक्तवसनधारणाद्यवलोकनद्वाराऽनुमिते वा श्रुते सति स्त्रीणां यः प्रणयकोपः स ईर्ष्यामानो भवेत् । स्त्रीणामेवैष ईर्ष्यामानो हि सम्भवति न तु नायकस्येति बोधनाय स्त्रीणामित्यभिहितम् । पुंसान्तु पत्न्या अन्यपुरुषासक्ते दृष्टेऽनुमिते श्रुते वा प्रणयमुज्झित्वा केवलकोपस्यैवोत्पद्यमानत्वात् रत्यभावेन शृङ्गाररूपत्वस्यैवाभावात् । तत्र तु तेषु दर्शनादिषु मध्ये तु अनुमितिरनुमानम् , उत्स्वप्नायितम् पत्युरन्यप्रियासङ्गस्य स्वप्ने दर्शनम् , भोगाङ्कः सम्भोगचिह्नदर्शनम् , स्वनाम्नि उच्चारणकर्त्तव्ये आसक्तिवशादन्यप्रियाया नामोच्चारणं गोत्रस्खलनम् । "गोत्रं कुलाख्ययोः" इति मेदिनी, तथा च उत्स्वप्नायितसम्भवा, सम्भोगचिह्नदर्शनसम्भवा, गोत्रस्खलनसम्भवा च त्रेधा अनुमितिः ।

( ९३ ) पत्युरन्यप्रियासक्ते दृष्टे उदाहरति— विनयतीति । माघकाव्ये सप्तमसर्गे पद्यमिदम् । प्रणयिनि प्रियतमे आननानिलेन निजमुखफूत्कारेण सुदृशो मनोहरनयनायाः एकस्याः प्रियायाः दृशोर्नेत्रयोः कौसुमं पुष्पसम्बन्धिनं परागं रजः ।

पराग: कौसुमे रेणौ स्नानीयादौ रजस्यपि'
गिरिप्रभेदे विख्यातावुपरागे च चन्दने ॥

संभोगचिन्हेनानुमिते यथा—

( ९४ ) 'नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्प-
न्नवपरिमलगन्धः केन शक्यो वरीतुम् ॥'

( ९५ ) एवमन्यदपि ।

इति मेदिनीकोशात् पराग शब्दस्यानेकार्थतया कौसुममिति विशेष्यार्थकत्वान्न पौनरुक्त्यम्, प्रत्युत पुनरुक्तवदाभासार्थत्वमिति बोध्यम् । विनयति समुद्धूय दूरीकुर्वति सति तस्याः महितयुवतेः प्रतिपक्षनायिकायाः अक्ष्णोर्द्वयं नयनयुगलमपि रोषरजोभिः नायकापराधजन्यक्रोधप्रभवपरागैः अभीक्ष्णं मुहुर्मुहुः आपुपूरे परिपूर्णम् । पुष्पिताग्रा छन्दस्तल्लक्षणन्तूक्तमेव प्राक् ( १८९ पृ० )

अत्र पत्युः पूर्वप्रियायामासक्तेऽवलोकिते अपराया ईर्ष्यामानः ।

( ९४ )अनुमितावुदाहरणं दर्शयति-नवनखपदमिति । माघकाव्ये एकादशसर्गे सपत्नीगृहादागतं नायकं प्रति मानिन्या उक्तिरियम् । नवानि नूतनानि नखपदानि अन्यनायिकानखक्षतचिह्नानि यस्मिंस्तथोक्तम्, "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः । अङ्गम् अंशुकेन वस्त्रेण गोपयसि निगूहसे स्वार्थे णिच्, तथा अन्यनायिकया दन्तैर्दशनैर्दष्टम् ओष्ठं पुनः पाणिना करेण स्थगयसि आच्छादयसि । क्रोधातिशयव्यञ्जनाय सम्बुद्धिपदानुपादानमत्रेत्यवगन्तव्यम् । किन्तु प्रतिदिशं दिशिदिशि विसर्पन् पवनेन प्रसरन् अपरस्त्रीसङ्गशंसी अन्यनायिकाश्लेषद्योतकः नवपरिमलगन्धः नवो नूतनो यः परिमलः कुसुमामर्दनजन्यगन्धः शोभन आमोदः "विमर्दोत्थे परिमलः" इत्यमरः, केन उपायेन वरीतुं गोपायितुं त्वया शक्य अपितु न केनाऽपीत्यर्थः । अन्यनायिकासङ्गचिह्नखपदादिकमंशुकादिना यद्यपि गोपायितुं शक्नोषि तथापि कुसुमामर्दनजन्यगन्धः केनोपायेन वारयितुं शक्य इति समुदितार्थः। मालिनीच्छन्दस्तल्लक्षणन्तूक्तं प्राक्(१६७ पृ)

अत्र सम्भोगचिह्नावलोकनेन पत्युरन्यप्रियासक्तेऽनुमिते ईर्ष्यामानः ।

( ९० ) एवमिति । अन्यत्र पत्युरन्यप्रियासक्ते उत्स्वप्नायितेनानुमिते गोत्रस्खलनेनानुमिते श्रुते च एवमुदाहरणमवगन्तव्यमित्यर्थः । तत्रोत्स्वप्नायितेनानुमिते यथा—

"सखि त्वं किं ब्रूषे ? न भवति मदन्यत्र निरतः
पतिर्मे धूर्तोऽसावृजुरसि न जानासि तमिमम् ।
समुद्रस्यागाराद्परयुवतीसङ्गनिरतो
मया दृष्टः स्वप्ने तदलमिह संप्रीतिकथया"

गोत्रस्खलितेनानुमिते यथा—

"परासक्तासक्तः सखि ? मम स यत् चाटु कुरुते
समस्तोऽसौ व्याजप्रणय इति जानीहि नियतम् ।
तदा तां तु ध्यायन् स खलु कितवः केलिसमये
मुहुस्तस्या नाम्ना ननु रहसि सम्बोधयति माम् ॥

( ९६ ) साम भेदोऽथ दानं च नत्युपेक्षे रसान्तरम् ।
तद्भङ्गाय पतिः कुर्यात्षडुपायानिति क्रमात् ॥ २०१ ॥
( ९७ ) तत्र प्रियवचः साम, भेदस्तत्सख्युपार्जनम् ।
दानं व्याजेन भूषादेः पादयोः पतनं नतिः ॥ २०२ ॥
सामादौ तु परिक्षीणे स्यादुपेक्षावधीरणम् ।
रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरम् ॥ २०३ ॥

( ९८ ) यथा—'नो चाटुश्रवणं कृतम्-' इत्यादि ( १८२ पृ. ) । अत्र सामादयः पञ्च सूचिताः ।

---

श्रुते यथा शिशुपालवधे—

"तव कितव ! किमाहितैर्वृथा नः क्षितिरुहपल्लवपुष्पकर्णपूरैः ।
ननु जनविदितैर्भवद्व्यलीकैश्चिरपरिपूरितमेव कर्णयुग्मम्" ।

अत्र पत्युरन्यप्रियासङ्गश्रवणात् वक्तृनायिकाया ईर्ष्यामानः ।

( ९६ ) अथावसरप्राप्त्या मानभङ्गोपायानाह—सामभेद इति । साम सान्त्वनम्, भेदो मानिन्याः सहचरीं वशीकृत्य तद्द्वारापराधस्यान्यथा ख्यापनम्, दानम् व्याजेन कङ्कणादिदानम्, नतिश्चरणयोर्निपत्य प्रसादनम्, उपेक्षा अवहेलनेन सामादिप्रयोगाभावः रसान्तरम् । अन्यरसावतारणमिति षडुपायाः । तथा च पतिः तस्याः प्रणयिन्या मानस्य प्रणयकोपस्य भङ्गाय नाशाय प्रदर्शितानुपायान् क्रमात् क्रमशः पूर्वपूर्वस्य विफलत्वे परपरादानिति भावः, कुर्यात् ।

तदाह शृङ्गारतिलके—

"यथोत्तरं बलीयांस इत्युपायान् प्रसादने ।
आद्यावयो वनं कार्या विदग्धैः पश्चिमाः क्वचित् ॥" इति ।

( ९७ ) स्वयमेव सामादीन् विवृणोति—तत्रेति । तत्र तेषु सामादिषु मध्ये प्रियवचः मानवतीं प्रति प्रीतिजनकं वचनं साम । तस्या मानिन्याः सख्या उपार्जनं प्रसादनम् आसीकरणमिति यावत् भेदः । व्याजेन केनचित्कपटेन भूषादेरलङ्कारवस्त्रादेः दानं दानमित्यर्थः, एवमेवात्रदानपदमुद्देश्यविधेयोभयात्मकं ज्ञेयम् । मानिन्याः पादयोः पतनं नतिः । सामादौ सामादिचतुष्टये परिक्षीणे विफले सति अवधीरणम् अवज्ञया त्याग उपेक्षा इति यावत् । तथा रभसः कोऽपि जवः, त्रासो भयम्, हर्ष आनन्दः, आदिपदात् उत्कटकाव्यातिपाताःनष्टप्रदर्शनादिपारग्रहः, तस्मात् अनुष्ठितात् उत्पन्नः कोपभ्रंशो मानभङ्गोपायः रसान्तरम् अन्यरसावतारणं भवेत् ।

(९८) लक्ष्यमुपपादयति-यथेति । नोचाट्विति । कलहान्तरितोदाहरणम् । (१८२पृ०) अत्र "नोचाट्वि"त्यनेनात्मनो मानभङ्गाय पत्युः साम सूचितम् । "नच दृशा"इत्यनेन दानं सूचितम् । "निजसखीवाचोऽपदूरीकृताः"इत्यनेन सखीनामासिकरणरूपो भेदः सूचितः । "पादान्त" इत्यनेन नतिः सूचिता । 'गच्छन्" इत्यनेन उपेक्षा चैताः पञ्च सूचिता इत्यर्थः । एभिरुपायैरस्या मानभङ्गाभावेऽपि न तदुपायहानिः तस्यामजातोद्गमरूपसहकारिविरहेण फलानुत्पादनात् । पश्चात्तु तत्प्राप्त्यां भग्न एव मानः ।

( ९९ ) रसान्तरमूह्यम् ।
( १०० ) अथ प्रवासः—

प्रवासो भिन्नदेशित्वं कार्याच्छापाच्च संभ्रमात् ।
( १ ) तत्राङ्गचेलमालिन्यमेकवेणीधरं शिरः ॥ २०४ ॥
निःश्वासोच्छ्वासरुदितभूमिपातादि जायते ।
( २ ) किं च—
( ३ ) अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशतारुचिः ॥ २०५ ॥

( ९९ ) रसान्तरमूह्यमिति । हर्षाद्यथा—

"चिरप्रवासात् सुहृदि प्रयाते यस्तत्र हर्षो मिथुनस्य जातः ।
तन्मानिनी मानविघातहेतुः स एव जातः चटुलाविमानी" ॥

अत्र तन्मानिनी तन्मिथुनाभिमानिनी। अत्र च हर्षएव व्यभिचारिभावो रसान्तरम्।
भयाद् यथा—

"प्रवृत्ते मानभङ्गाय पत्यौ नाग उपागतः ।
तं दृष्ट्वा सहसा कण्ठे पतिं जग्राह मानिनी" ॥

अत्र भयानको रसान्तरम् ।
यथा वा मालविकाग्निमित्रे चतुर्थाङ्कचरमे वकुलक्ष्म्या वानरकृतत्रासकथयैव इरावत्या मानभङ्गः ।
तर्कवागीशैस्तु रसान्तरे—
"कथं ममोरसि कृतपक्षनिस्वनः शिलीमुखोऽपतदिति जल्पति प्रिये ।
विवृत्य किं किमिति सजल्पया तया ससाध्वसं कुपितमवोचि कान्तया ॥"
इत्युदाहृतम् ।
( १०० ) विप्रलम्भस्य पूर्वरागमानप्रवासकरुणरूपचातुर्विध्यस्योक्तत्वात् पूर्वरागं मानञ्च समाप्य प्रवासं निरूपयितुमाह—अथ प्रवास इति ।

प्रवास इति । कार्य्यात् नायकनायिकयोरन्यतरस्य उभयोरेव वा कर्त्तव्यानुरोधात् शापात् सम्भ्रमात् राजोपद्रवादिहेतुकत्वरावशाच्च यत्र भिन्नदेशत्वम् उभयोःभिन्नदेशवृत्तित्वम् स तथोक्तो विप्रलम्भः प्रवासः । स्यादिति शेषः । यत्र स्थिति काले इच्छामात्रेण मनोरथो न प्राप्यते स खलु भिन्नदेशः, अतएव नायकनायिकयोः समीपपवर्त्तिपरस्परभिन्नसदनादौ वर्त्तमानेऽपि न प्रवासत्वमिति ध्येयम् । अत्र भिन्नदेशित्वमिति पाठो न ज्यायान् "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः" इति विरोधात् । अयमेव प्रवासो "विरह" इत्युच्यते कविभिः ।

( १ ) अस्यानुभावानाह—तत्रेति । प्रवास इत्यर्थः । अङ्गानां करचरणादीनां चेलस्य वस्त्रस्य च मालिन्यम्, "चेलं वसनमंशुकम्"इत्यमरः, शिर उत्तमाङ्गम् एका सुगन्धतैलाद्युद्वासनाभावेन जटिलत्वमुपगता वेणी केशरचनाविशेषः तस्या धरमिति तादृशम् निश्वासे दीर्घनिश्वसितम्, उच्छ्वासा भग्नाशता, रुदितं क्रन्दनम्, भूमौ, पातः, आदिपदात् अत्युत्कण्ठादिकञ्च जायते समुद्भवति यथासम्भवं नायकनायिकयोरिति शेषः ।

( २ ) विजातीयानि अनुभावान्तराणि कामदशात्वेनाङ्गीकृतानि प्रदर्शयितुमाह—किञ्चेति । अपिचेत्यर्थः ।

( ३ ) दर्शयति—अङ्गेष्विति । एतद्विवरणं स्वयमेव मूलेऽनुपदं स्फुटीभविष्यति ।

अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः ।
मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह ॥ २०६ ॥

( ४ ) असौष्ठवं मलापत्तिस्तापस्तु विरहज्वरः ।
अरुचिर्वस्तुवैराग्यं सर्वत्रारागिताधृतिः ॥ २०७ ॥
अनालम्बनता चापि शून्यता मनसः स्मृता ।
तन्मयं तत्प्रकाशो हि बाह्याभ्यन्तरतस्तथा ।

( ५ ) शेषं स्पष्टम् ।

( ६ ) एकदेशतो यथा मम तातपादानाम्—

( ७ ) 'चिन्ताभिः स्तिमितं मनः, करतले लीना कपोलस्थली,
प्रत्युषक्षणदेशपाण्डु वदनं, श्वासैकखिन्नोऽधरः ।

---

मृतिश्चेत्यत्र समुच्चयार्थकश्चकारः । 'चान्वाचय समाहारेतरेतरसमुच्चये" इत्यमरः । अत्रासौष्ठवादीनां गणनयैव दशत्वे लब्धे पुनर्दशेतिपदमधिकसंख्याव्यवच्छेदार्थम् एवञ्च "दशेत्यत्र एकादशेति विज्ञेयम्" इति विवृतिकृतोक्तं पाण्डुताकृशताया द्वैतभ्रमेणेत्यवधेयम्।

( ४ ) असौष्ठवादेर्लक्षणमाह—असौष्ठवमिति । मलापत्तिः अङ्गानां संस्काराभावात् मृत्तिकादिमलसम्बन्धः असौष्ठवम् । पूर्वत्राङ्गमालिन्यन्तु विरहोष्मणा अङ्गानां वैवर्ण्यमेव नातः पुनरुक्तिशङ्का । विरहेण वियोगेन जनितो यो ज्वरः सन्तापः स तादृशः वस्तुषु पूर्वमादृतेषु भोग्यद्रव्येषु वैराग्यं निस्पृहत्वम् अरुचिः । सर्वत्र स्नानभोजनविहारादौ अरागिता निस्पृहता अधृतिः । एवञ्चाभिन्नार्थमुभयोर्नशङ्कनीयम् । मनसः शून्यता विषयाग्राहित्वम् अनालम्बनता च अनालम्बः स्मृता । तथा बाह्ये बहिरिन्द्रियग्राह्ये अभ्यन्तरे अन्तर्हृदये चेति बाह्याभ्यान्तरतः । तस्य अभिलषितस्य नायकस्य प्रकाशोऽलीकदर्शनं तन्मयं तन्मयीभावः ।

( ५ ) शेषमिति । शेषम् उन्मादमूर्च्छनामृतिरूपमवशिष्टं पदत्रयं स्पष्टं सुगमम् अत न मूले व्याख्यातमिति मूलकर्त्तुराशयः ।

( ६ ) एकदेशत इति । एकदेशतः असौष्ठवादिदशविधकामदशासु मध्ये केषाञ्चित् तापपाण्डुताऽनालम्बानामुदाहरणं यथेत्यर्थः । इतरेषामुदाहरणानि तु स्वयमेव गवेषणीयानि ।

( ७ ) चिन्ताभिस्तिमितमिति । प्रवासस्थे पत्यौ करतले गण्डं कृत्वा चिन्तयन्त्या विरहिण्या अवस्थामवलोक्य कञ्चित्प्रति तत्सख्या उक्तिरियम् । अस्या मनश्चिन्ताभिः स्तिमितं जडीकृतम् , विषयान्तरसञ्चाराक्षममिति भावः । एतेनानालम्बनता सूचिता कपोलस्थली गण्डदेशः करतले लीना निश्चलं स्थिता । वदनं प्रत्यूषे प्रभाते यः क्षणदेशश्चन्द्रमाः तद्वत्पाण्डु निष्प्रभमित्यर्थः । अनेन पाण्डुता उक्ता । अधरः श्वासेनैकं मुख्यमत्यन्तमित्यर्थः । खिन्नं क्लान्तं न तु कान्तदन्तक्षतेनेति भावः । तापः शरीरसन्तापः अम्भःशीकरैश्चन्दनोदककणिकाभिः पद्मिनीकिसलयैः नलिनीदलैश्च यद्वा अम्भसां शीकरा

अम्भःशीकरपद्मिनीकिसलयैर्नोपैति तापः शमं,
कोऽस्याः प्रार्थितदुर्लभोऽस्ति सहते दीनां दशामीदृशीम् ॥'

**(८) भावी भवन्भूत इति त्रिधा स्यात्तत्र कार्यजः ॥ २०८ ॥**

(९) कार्यस्य बुद्धिपूर्वकत्वात्त्रैविध्यम् ।

तत्र भावी यथा मम —

( १० ) 'यामः सुन्दरि, याहि पान्थ, दयिते शोकं वृथा मा कृथाः,
शोकस्ते गमने कुतो मम, ततो बाष्पं कथं मुञ्चसि ।
शीघ्रं न व्रजसीति, मां गमयितुं कस्मादियं ते त्वरा,
भूयानस्य सह त्वया जिगमिषोर्जीवस्य मे संभ्रमः ॥'

---

येषु तथोक्तैः पद्मिनीकिसलयैरपि सद्यस्त्रोटितत्वादिविभावः शमं शान्तिं नोपैति न लभते। एतेन तापो दर्शितः । को जनः प्रार्थितः सन् दुर्लभः य ईदृशीं दीनां दैन्यव्यञ्जिकां शोचनायामिति यावत् दशां सहते । शार्दूलविक्रीडितं च्छन्दस्तल्लक्षणन्तूक्तं प्राक् (१९८पृ०)

( ८ ) प्रवासस्य कार्यात् शापात् इत्यादित्रैविध्यस्योक्तत्वात् कार्यजमेव त्रिविधमाह—भावीति । तत्र तेषु कार्यजशापज-सम्भ्रमजरूपेषु त्रिप्रकारेषु प्रवासेषु मध्ये कार्य्यजः प्रवासः भावी जनिष्यमाणः, भवन् जायमानः, भूतो जातश्चेति त्रिधा स्यात् कार्य्यानुरोधेन प्रवासस्त्रिविध इत्यर्थः । अत्र च विरहप्रकारासमयापेक्षया भावित्वादिकं ज्ञेयम् ।

( ९ ) ननु कथं केवलकार्य्यजस्यैव त्रैविध्यमुक्तं शापजसम्भ्रमजयोरपि प्रवासयोरतीतादिकालत्रयसम्बन्धादत आह—कार्य्यजस्येति । बुद्धिपूर्वकत्वात् स्वेच्छया विधीयमानत्वात् । इदमत्रबोध्यम्—यद्यतीतमेव कार्यं स्वेच्छया आनुकूल्येन ज्ञातम् , तदा अतीत एव प्रवासः वर्त्तमाने चेद्वर्तमान एव, भविष्यति चेद्भविष्यत्येव । शापजसम्भ्रमजयोस्तु न तथा परव्यापाराधीनत्वात् स्वेच्छाया अभावात् केवलपरेच्छानुसारित्वेन तत्तत्कालसम्बन्धमात्रमेवेत्यतो नानयोस्त्रैविध्यं किन्त्वेकविधित्वमेवेति तत्त्वम् । एवञ्च भिन्नदेशगमनस्य सम्भावनायां भावित्वम् , निश्चये वर्त्तमानत्वम् , निष्पत्तौ भूतत्वमिति ।

( १० ) यामः सुन्दरीति । विदेशं जिगमिषोर्नायकस्य तद्विरहसहनासमर्थाया नायिकायाश्च उक्तिप्रत्युक्तिरूपमिदम् । हे सुन्दरि ! वयं यामः वर्त्तमानसामीप्ये लट् । नायकस्य नायिकाम्प्रतीयमुक्तिः, हे पान्थ ! याहि इति नायिकाया नायकं प्रत्युक्तिः । गमनसम्भावनामात्रेण तत्र यत् पान्थ' इति सम्बोधनन्तदात्मनि नायकस्य प्रेमाभावसूचनाय। तदवगत्य झटित्येव "दयिते इत्यादि मा कृथाः" इत्यन्तं नायकस्योक्तिः, हे दयिते ! वृथा शोकं मा कृथाः न विधेहि, 'शीघ्रमेवाहमागमिष्यामीति भावः । ते तव गमने मम शोकः कुत इति नायिकाया उक्तिः । ततश्शोकाभावात् कथं बाष्पमश्रु मुञ्चसीति नायकस्योक्तिः त्वं शीघ्रं न व्रजसीति हेतोर्बाष्पं मुञ्चामीति नायिकोक्तिः । मां गमयितुं कस्मादियं ते त्वरा ! इति नायकस्य । त्वया सह जिगमिषोः प्रस्थातुमिच्छोरस्य मे जीवस्य जीवनस्य भूयानत्यन्तः सम्भ्रमस्त्वरा अत एव त्वां गमयितुं ममेयं

भवन्यथा—

( ११ ) 'प्रस्थानं वलयैः कृतं, प्रियसखैरस्रैरजस्रं गतं,
धृत्या न क्षणमासितं, व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित ! प्रियसुहृत्सार्थः किमु त्यज्यते ॥'

( १२ ) भूतो यथा —'चिन्ताभिः स्तिमितम्–' इत्यादि ( २७४ पृ. )

त्वरेति नायिकोक्तिः । अत्र कान्तासम्मतिसापेक्षतया भाविनि काले नायकस्य प्रवासः" "यामः सुन्दरि" इत्यनेन द्योतितः । शार्दूलविक्रीडितंछन्दस्तल्लक्षणन्तूक्तं प्राक् (१९८ पृ०)

( ११ ) द्वितीयं प्रवासमुदाहरति प्रस्थानमिति । प्रियतमे विदेशं गच्छति स्वजीवितं सम्बोध्य निराशायाः प्रियाया उक्तिरियम् । प्रियतमे वल्लभे यातुं विदेशे गन्तुं निश्चितं निश्चयवृत्तिमत्कृतं चेतो येन तादृशे सति वलयैः कटकैः करकङ्कणैरित्यर्थः प्रस्थानं कृतं प्रास्थितं यात्रा कृता बहुदिनव्यापकतद्वार्त्तया कार्श्येन वलयभ्रंशः सञ्जात इति भावः । मम प्रियसखैर्विरहसञ्चारत्वाद्बन्धुभूतैः अस्रैर्नयनजलैः अजस्रं निरवच्छिन्नं गतं गन्तुमारब्धम्, विरहवेदनया प्रागेव पतितुमारब्धमिति भावः । एषु प्रियसखत्वप्रतिपादनमत्यन्तप्रियत्वसूचनाय । धृत्या धैर्येण क्षणमपि न आसितम् अवस्थितम् , विरहशङ्कया पूर्वमेवाधीराहमित्यभिप्रायः चित्तेन पुरः प्रियतमस्याग्रत एव गन्तुं व्यवसितम् उद्यतम् , प्रियतमनिवासस्थानदेशे तस्याप्यवश्यगन्तव्यत्वादिति भावः । "पुरो गन्तु"मित्यनेन चित्तस्य पुरःसरत्वमेवोपपादितन्तु विभिन्नकालीनं गमनं तेन "समं प्रस्थिता" इत्यस्य नानुपपत्तिः । इत्थञ्च समं युगपदेव सर्वे प्रस्थिताः चलिताः । तेन हे जीवित ! प्राण ! भवतोऽवश्यं गन्तव्ये सति प्रियसुहृत् एकत्रावस्थानात् प्रियबन्धुभूतः सार्थः वलयादिसङ्गिवर्गः किमु कथं त्यज्यते तैरेव साकं गम्यतामित्यर्थः । प्रियसुहृद्भिः सह गमने कष्टातिशयो न भविष्यतीति साम्प्रतमेव तवापि गमनं समुचितमिति भावः । यद्वा प्रियजीवन एव वलया धार्यन्त इति वलयानां धृतेः प्रीतिजनकत्वाच्चित्तस्य तत्प्रवणत्वात् प्रियस्य सुहृत्वम् , अस्राणान्तु मानभङ्गव्यञ्जकतया अत्यन्तसखित्वमित्यत्र पृथक् प्रियसखित्वोपादानम् । प्रियतमगमने गन्तुमुद्यता वलयादयः सख्योचितं कर्म कुर्वन्ति । त्वमपि प्रियस्य सुहृद्भवसीति तवापि गमनमुचितमित्याह—गन्तव्ये सतीति । अत्रेयमुक्तिरनुभावः । अश्रुपातहृत्तापव्यञ्ज्यो विषादा सञ्चारिभावः, प्रियतम आलम्बनम् , नायिकाया रतिर्ज्ञे सभ्ये रसोत्पत्तिः । अत्र च विरहप्रकाशप्रवासारम्भयोरेक एव वर्त्तमानकाल इति भवन् प्रवासः ।

( १२ ) तृतीयमुदाहरति—भूत इति । "चिन्ताभिः स्तिमितं मनः" इत्यादौ विरहप्रकाशसमयापेक्षया प्रागेव प्रवासस्योत्पन्नत्वात् भूतः प्रवासः ।

कश्चित्तु—

"किं गतेन यदि सा न जीवति प्राणिति प्रियतमा तथापि किम् ? ।
इत्युदीक्ष्य नवमेघमालिकां न प्रयाति पथिकः स्वमन्दिरम् ॥"

इत्युदाहरणमुपलभ्यते ।

( १३ ) शापाद्यथा—'तां जानीयाः-' इत्यादि ( १८३ पृ. )

( १४ ) (क)संभ्रमो दिव्यमानुषनिर्घातोत्पातादिजः । यथा—विक्रमोर्वश्यामुर्वशीपुरूरवसोः ।

( १५ ) अत्र पूर्वरागोक्तानामभिलाषादीनामत्रोक्तानां चाङ्गासौष्ठवादीनामपि दशानामुभयेषामप्युभयत्र संभवेऽपि चिरंतनप्रसिद्धया विविच्य प्रतिपादनम् ।

---

( १३ ) शापजप्रवासमुदाहरति—शापाद्यथेति । तां जानीया इति । (१८३पृ०) प्रोषितभर्तृकाया नायिकाया उदाहरणमिदम् ।

अत्र कुबेरशापाद् यक्षस्य प्रवासः ।

(१४) सम्भ्रमजप्रवासमुदाहरणाय सम्भ्रमपरिचयस्यावश्यकत्वात् पूर्वं तत्कारणानि स्पष्टयति—सम्भ्रम इति । दिव्यो देवताविद्युदुल्कादिः, मानुषो मर्त्यलोकभवो भूकम्पादिः, निर्घातो वायुताडितो वायुस्तन्नामप्रसिद्धः । इदञ्चोपलक्षणम्-तेन नाभसोऽपि ग्राह्यः तेभ्य उत्पात अनिष्टसूचको देवकृतप्रकृतिविपर्यासः, आदिपदादुन्मादादिपरिग्रहस्तस्माज्जातः सम्भ्रमस्त्वरेत्यर्थः ।

तत्र दिव्यसम्भ्रमजप्रवासमुदाहरति—यथेति । विक्रमोर्वश्यां महाकविकालिदासकृते त्रोटकाभिधे दृश्यकाव्यभेदे इत्यर्थः । "चतुर्थेऽङ्के" इति शेषः । उर्वशी, काचित् दिव्याप्सरा, पुरूरवाभिधश्च राजर्षिः, तयोस्तथोक्तयोः । तत्रायं सन्दर्भः-कदाचित् पुरूरवसा कापि विहरन्त्युदकवती नाम गन्धर्वतनया क्षणमवलोकिता, तनश्च रोषात् मित्रावरुणशापाच्च हतज्ञाना ज्ञातप्रभावमपि कुमारवनं प्रविशन्त्येव लता संजाता राजर्षिश्च तामन्विष्यन् प्रवासमन्वभूत् । इति ।

उर्वशीपुरूरवसोरिति प्रतीकमादाय तर्कवागीशास्तु—उर्वशी हि पुरा मित्रावरुणशापान्मनुष्यलोकं प्राप्य पुरूरवसो गृहे "यदि भवन्तं सुरतसमयातिरिक्तसमये नग्नमवलोकयिष्यामि तदा त्वामहं त्यक्त्वा व्रजिष्यामि, मम मेषद्वयं भवता रक्षणीयम्" इति नियमं कृत्वा स्थिता । तदनन्तरं देवैरन्धतमसे मेषद्वयमपहृतम्, तच्छ्रुत्वा पुरूरवाः ससम्भ्रमेण वसनमपरिधायैव खड्गपाणिर्मेषापहर्त्तुः पश्चाद्धावितः । एतस्मिन्नन्तरे विद्युज्ज्वलितं नग्नमवलोक्योर्वशी स्वर्गं गतेति ग्रन्थस्य वक्तुलार्थः । अत्र देवकृतमेषापहरणरूपदिव्योत्पातेन पुरूरवसः सम्भ्रमः तेनोर्वश्या भिन्नदेशवर्त्तित्वमित्याचक्षते । परन्तन्त्वत्रत्यं मूलं मृग्यम् ।

दिव्योल्कासम्भ्रमजप्रवासं यथा मम—

"देशान्तरादागतमेकदृष्ट्या कान्तं पिबन्ती सुचिरं हि बाला ।
उल्कानिपातं च कुतोऽपि श्रुत्वा सद्यो विवेशाथ गृहं तदानीम् ॥"

एवमन्यदप्यूह्यम् ।

( १५ ) ननु पूर्वरागेऽभिलाषादीनां प्रवासे अङ्गासौष्ठवादीनाञ्च नियमने किं मानम्, उभयत्रापि उभयेषाम्भवितुं शक्यत्वादत आह—अत्रेति । दशानां दशविधानाम्, उभयेषामिति पुल्लिङ्गत्वानुपपत्त्या दशानां कामदशानामित्यर्थो नाभ्युपेयः । तथा च उभयेषां कामकृतभावानाम्, उभयत्र पूर्वरागे प्रवासे च । चिरन्तनप्रसिद्धया प्राचीना-

---

( क ) "दिव्यनाभसमानुष्योत्पातजात् सम्भ्रमात्त्रिधा" उन्मादादीनामत्रैवान्तर्भावात्र पार्थक्यम् । इति पाठान्तरं पुस्तकान्तरे ।

अथ करुणविप्रलम्भः—

( १६ ) यूनोरेकतरस्मिन्गतवति लोकान्तरं पुनरलभ्ये ।
विमनायते यदैकस्तदा भवेत्करुणविप्रलम्भाख्यः ॥ २०६ ॥

( १७ ) यथा कादम्बर्यां पुण्डरीकमहाश्वेतावृत्तान्ते ।

( १८ ) पुनरलभ्ये शरीरान्तरेण वा लभ्ये तु करुणाख्य एव रसः ।

( १९ ) किंचात्राकाशसरस्वतीभाषानन्तरमेव शृङ्गारः, सङ्गमप्रत्याशया रतेरुद्भवात् । प्रथमं तु करुण एव, इत्यभियुक्ता मन्यन्ते ।

---

लङ्कारिकसम्प्रदायप्रसिद्धिवशेन विविच्य पृथग्भावेन नियम्य प्रतिपादनं कथनं कृतमिति बोध्यमिति शेषः ।

( १६ ) एवं प्रवासं लक्षयित्वा करुणविप्रलम्भं लक्षयति—यूनोरिति । यूनोर्नायकनायिकयोः लोकान्तरं गतवति एकतरस्मिन् नायके नायिकाजने वा पुनर्लभ्ये जीवता जनेन पुनः प्राप्ये सति एकस्तयोरेकतरो जीवितजनः यदा विमनायते शोकव्याकुलचित्ततया विलापं कुरुते तदा तस्य शोकमिलितरतिस्थायिभावः करुणविप्रलम्भाख्य शृङ्गारो भवेत् । प्राणवियोगानन्तरं पुनर्लभ्यविषयकशोकमिलितरतिः करुणविप्रलम्भ इति भावः । आर्याछन्दस्तल्लक्षणन्तूक्तं प्राक् (१८३ पृ०)।

( १७ ) उदाहरणं दर्शयति—यथेति । कादम्बर्यां बाणभट्टकृतगद्यकाव्यपूर्वभाग इत्यर्थः । तत्र हि पूर्वं पुण्डरीको मृतः, अनतिदूरे चासौ महाश्वेतया बहुविलापे कृते पुनर्लब्धः । एवञ्च तत्र पुण्डरीकस्य मरणात् अनन्तरञ्च पुनर्जीवनलब्धे ग्रन्थे यद्यपि नानतिदूरत्वम् तथाप्युपाख्यानगतानतिदूरत्वेन "वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः" इत्याद्युक्तकारिकया सह विरोधो नेति ध्येयम् । एतद्ग्रन्थकर्त्तुः कुवलयाश्वचरिते च युवतेर्मदालसायास्तथाभावे कुवलयाश्वस्य शरीरान्तरेण लभ्ये अजेन्दुमतीवद् विलाप इति नायिकाविषयमुदाहरणं बोध्यम् ।

( १८ ) अथ करुणविप्रलम्भव्यवस्थामुपपादयति-पुनरलभ्य इति । पुनरलभ्ये प्रत्युज्जीवनाशारहिते तथा विधेनैव देहान्तरेण वा सम्मिलनायोग्य इति भावः । लभ्ये "यूनोरेकतरस्मि"न्निति शेषः। करुणाख्य एव शुद्धकरुण एव नच करुणविप्रलम्भशृङ्गार इति भावः । तत्र हि मिलनाशाया अभावेन केवलशोकस्यैव स्थायिभावत्वसम्भवादिति तत्त्वम् । रतेर्नाशात् उत्कटशोकसम्भवाच्च ।

( १९ ) पुण्डरीकमहाश्वेतावृत्तान्ते करुण एवेत्यत्रार्थे प्राचां सम्मतिं दर्शयति-किञ्चेति । अत्र कादम्बर्यां चन्द्रापीडं प्रति स्वप्रेयसः पुण्डरीकस्येतिवृत्तं कथयन्त्या महाश्वेताया वाक्येषु इत्यर्थः । आकाशसरस्वती भाषानन्तरमेव "वत्से ! महाश्वेते ! न परित्याज्यास्त्वया प्राणाः, पुनरपि तवानेन भविष्यति समागमः अनेन प्रकारेण आकाशस्थितपुरुषस्य वाक्यकथनानन्तरमेव सङ्गमप्रत्याशया स्वप्रियतमपुण्डरीकेन सह सम्मिलनाशया रतेरुद्भवात् महाश्वेताया इति शेषः । प्रथमो महाश्वेतायाः प्रारम्भिको भावः स्वप्रेयसः पुण्डरीकस्य मरणादारभ्य आकाशसरस्वतीश्रवणान्तो महाश्वेताया भाव इत्यर्थः। करुण एव केवलशोकस्यैव स्थायिभावत्वात् शुद्धकरुण एव, अभियुक्ता मान्याः। अत्राभियुक्ता इत्यनेन अस्वरसः सूचितस्तद्बीजन्तु—यथा हि उदासीनस्य कस्यचिन्म-

( २० ) यच्चात्र 'संगमप्रत्याशानन्तरमपि भवतो विप्रलम्भशृङ्गारस्य प्रवासाख्यो भेद एव' इति केचिदाहुः, तदन्ये 'मरणरूपविशेषसंभवात्तद्भिन्नमेव' इति मन्यन्ते ।

रणे उदासीनायाः शोकासम्भवात्, कादम्बर्यामपि प्रथमं रतिमूल एव शोको महाश्वेतायाः आकाशसरस्वतीभाषानन्तरञ्च पुनरेव रतिः इत्याद्यावन्ते च समुत्पन्नाभ्यां रतिभ्यां मध्यवर्त्तिनः शोकस्य स्थायिरूपत्वेन दृढतया वर्त्तमानत्वाभावात् शोकनिबन्धनः करुणः काव्यांशेऽपि नोपपद्यते । अपि च आद्यन्तवृत्तान्तज्ञानवतां सभ्यानां मानसेषु शोकमिलितरतिभावस्यैव स्थायितयोपलभ्यमानत्वात् करुणविप्रलम्भलक्षणस्य सम्बन्धात् सर्वांश एव करुणविप्रलम्भः, शोकमिलितरतिस्थायिभावसत्त्वादेवास्य नाम करुणविप्रलम्भ इति बोध्यम् । उत्तररामचरिते कुवलयाश्वेऽपि चानयैव दिशा करुणविप्रलम्भः प्रधानरस इति ध्येयम् ।

( २० ) मतान्तरद्वयमुत्थापयति—यच्चेति । अत्र कादम्बर्यां पुण्डरीकमहाश्वेतावृत्तान्ते । सङ्गमप्रत्याशाऽनन्तरमपि सङ्गमप्रत्याशाजनकाकाशसरस्वतीश्रवणेनेति शेषः। भवत उत्पद्यमानस्य । प्रवासाख्यो भेद एव नायकनायिकयोः परस्परभिन्नदेशस्थितत्वेन प्रवासलक्षणसमन्वयादिति शेषः, न तु करुणविप्रलम्भ इति तेषामभिप्रायो बोध्यः । केचिदिति आचार्यधनिकादयो ग्राह्याः, ते हि "कादम्बर्यां तु प्रथमं करुणः, आकाशसरस्वतीवचनादूर्ध्वं प्रवासशृङ्गार एव" इत्याहुः । मरणरूपस्य विशेषस्य प्रवासावृत्तिधर्मस्य सम्भवात् पुण्डरीकमहाश्वेतावृत्तान्ते विद्यमानत्वात् तद्भिन्नमपि प्रवासातिरिक्तमपि कञ्चित् प्रकारमिति यावत् । अस्मदङ्गीकृतं करुणविप्रलम्भन्तु न पुनस्ते तत्र मन्यन्त इत्याशयः । अत्रापि केचिदित्युक्त्या अन्ये इत्युक्त्या चाल्परसः सूचितः तद्बीजन्तु प्रवासे मरणधर्मासत्त्वात् पुण्डरीकमहाश्वेतावृत्तान्ते प्रवासो न भवितुमर्हति पूर्वरागादिकरुणात्मकचतुष्टयातिरिक्तस्य विप्रलम्भभेदस्य प्राचीनैरनभ्युपगमात्तदतिरिक्तप्रकाराश्रयणमपि न तत्र सङ्घटत इति । ननु विप्रलम्भस्य पूर्वराग-मान-प्रवास-करुणात्मकचतुष्टयस्यैवाभ्युपगमे किं बीजम् ? कैश्चिदभिलाषमिश्रितपञ्चविधत्वेनाऽभ्युपगमादिति कथं चतुर्थाभिन्नत्वमस्य नाङ्गीक्रियत इति चेत् ? तदुक्ताभिलाषस्य हि पूर्वरागे प्रवासे वान्तर्भावात्; तथा हि यदि सङ्गमप्रागभावरूपोऽभिलाष इत्युच्यते तदा पूर्वराग एव । एकदेशस्थयोरपि गुर्वादिवशात् सङ्गमोपरोधस्वरूप- प्रवासश्च । यदि कन्याविषयस्तदा पूर्वराग एव, यदा तु परोढाविषयस्तदा रसाभावसत्त्वात् न शृङ्गाररसभेदः, यदि तूपभुक्तनायिकाविषयः, तदास्य प्रवासाख्यभेदान्तः पातः । एवमेव शापतोऽन्तराये एकदेशस्थयोरपि प्रवासाख्यभेदमेव अत एव महर्षिणा प्रवासदशदशालक्षणे "पूर्वानुभवजा ज्ञेया दश स्मरदशा इह ।"इति पूर्वानुभवत्वमुक्तम् । पूर्वानुभवः पूर्वोपभोगानुभवः । एवञ्च पूर्वरागोऽनुपभुक्तविषयः । तथा च एकदेशस्थयोभिन्नदेशस्थयोर्वा पूर्वरागप्रवासौ भवतः। यत्तु प्रवासलक्षणे भिन्नदेशत्वमुक्तं तद् व्यवहितत्वमात्रविषयम् । यदि चैकदेशस्थयोर्न प्रवासस्तत्कथय कियति योजने कियति वा क्रोशेऽसौ महर्षिभिर्निरूपितः । कथं वा दूरदेशस्थयोर्नलदमयन्त्योः प्रद्युम्नप्रभावत्योश्च हंसमुखाद् गुणश्रवणानन्तरं पूर्वरागः, तथा चक्रवाकयोस्तृणमात्रव्यवधानेऽपि शापप्रवासाख्यशृङ्गाराभासः । इति चतुष्टयातिरिक्ताऽभ्युपगमे न किञ्चिन्मानमिति सर्वं सुस्थमिति लोचनादौ स्पष्टम् ।

विप्रलम्भशृङ्गारविषये नव्यास्तु—स्त्रीपुंसयोस्तु वियोगे जीवितत्वज्ञानदशायां

अथ संभोगः—

( २१ ) दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ।
यत्रानुरक्तावन्योन्यं संभोगोऽयमुदाहृतः ॥ २१० ॥

आदिशब्दादन्योन्याधरपानचुम्बनादयः ।

( २२ ) यथा—'शून्यं वासगृहम्–' ( ३१ पृ० ) इत्यादौ ।

वैक्लव्यपोषितायाः रतेरेव प्राधान्याच्छृङ्गारो विप्रलम्भाख्यो रसः वैक्लव्यं तु सञ्चारिमात्रम्। मृतत्वज्ञानदशायां तु रतिरोहितस्य वैक्लव्यस्येति करुण एव । यदा तु सत्यपि मृतत्वज्ञाने देवताप्रसादादिना पुनरुज्जीवनज्ञानं कथञ्चित्स्यात्, तदालम्बनस्यात्यन्तिकनिराशाभावाच्चिरप्रवास इव विप्रलम्भ एव न स करुण इति वदन्ति ।

( २१ ) विप्रलम्भानन्तरं सम्भोगं निरूपयति—दर्शनस्पर्शनादीनीति । अन्योऽन्यं परस्परम् अनुरक्तौ विलासिनौ विलासिनी च विलासी च विलासिनावित्येकशेषः । भोगसुखलालसावित्यर्थः । स्त्रीपुंसौ यत्र रतौ सत्याम् अन्योन्यं दर्शनस्पर्शनादीनि निषेवेते कुरुतः अयं स सम्भोगः सम्भोगश्रृङ्गार उदाहृतः कविभिरिति शेषः । एतन्निष्कर्षस्तु—अनुरक्तयोः प्रत्यक्षभोगानुभावको रतिभावः सम्भोगश्रृङ्गार इति । विप्रलम्भेऽतिव्याप्तिवारणाय दर्शनस्पर्शनादीनिति । पूर्वरागमानयोस्तु कदाचिद्दर्शनादौ जातेऽपि तस्योत्कण्ठाकुलिततया वास्तविकभोगरूपत्वाभावात्तत्रापि नातिव्याप्तिः । उदासीनयोः स्त्रीपुंसयोः परस्परदर्शनादौ सत्यपि अनुरक्ताविति कथनेन नातिव्याप्तिः । एकतरस्यानुरागाभावे श्रृङ्गाराभास इति तद्वारणाय अन्योन्यमिति ।

इदमत्र बोध्यम्—नायकनायिकयोः प्रागसंगतयोः संगतवियुक्तयोर्वा मिथः समागमे प्रागुत्पन्नस्तदानीन्तनो वा रत्याख्यस्थायिभावोऽभिलषणीयालिङ्गनादीनामनासौ सत्यां ऋतुधानोपगमजलक्रीडा पर्वतोपदेशप्रसाधनगृहमधुपानेन्दूदयादिभिरुद्दीपनविभावैरुद्दीप्यमानः, सविभ्रमभ्रूकटाक्षविक्षेपालापसम्भ्रमस्मितादिभिरनुभावैरभिव्यज्यमानः, समुपजायमानैर्हर्षधृति-स्मृतिमतिप्रभृतिभिर्व्यभिचारिभावैः संमृज्यमान ईप्सितमासादयन् जिहासितं वा जिहानः प्राप्तप्राप्यप्रकर्षारम्भः सम्भोगश्रृङ्गाराख्यां लभते इति ।

केचित्तु—अन्योन्यमित्यस्यायमर्थः—कदाचित् एकैकेन कदाचित्तूभयेनापि दर्शनादिकं क्रियत इत्यर्थः । तेन एकैकस्य दर्शनादौ अपि सम्भोगो बोध्यः । शून्यं वासगृहमित्यादौ तूभयोरेव ।

"यान्त्या मुहुर्वलितकन्धरमाननन्तदावृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥"

इत्यत्र गजोपरिस्थितायामालत्या दर्शनम् । माधवस्य तु विप्रलम्भ एव इति वदन्ति ।

( २२ ) उदाहरति—यथेति । "शून्यं वासगृहम्" इत्यादौ चुम्बनात्मकप्रत्यक्षभोगरूपानुभवशालित्वात् उभयोर्नायकनायिकयोः रतिभावः सम्येषु सम्भोगश्रृङ्गाररूपत्वं लभते

उदाहरणान्तरं यथा—

त्वं मुग्धाक्षि ! विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥

( २३ ) संख्यातुमशक्यतया चुम्बनपरिरम्भणादिबहुभेदात् ।
अयमेक एव धीरैः कथितः संभोगश्रृङ्गारः ॥ २११ ॥
( २४ ) तत्र स्यादृतुषट्कं चन्द्रादित्यौ तथोदयास्तमयः ।
जलकेलिवनविहारप्रभातमधुपानयामिनीप्रभृतिः ॥ २१२ ॥
अनुलेपनभूषाद्या वाच्यं शुचि मेध्यमन्यच्च ।

( २५ ) तथा च भरतः—'यत्किञ्चिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तत्सर्वं श्रृङ्गारेणोपमीयते ( उपयुज्यते च )' इति ।

( २६ ) किं च—

( २७ ) कथितश्चतुर्विधोऽसावानन्तर्यात्तु पूर्वरागादेः ॥ २१३ ॥

( २३ ) नन्वेक एवायमुतैतस्य भेदा अपि सन्तीति जिज्ञासायामाह—संख्यातुमिति । चुम्बनपरिरम्भादीनां चुम्बनालिङ्गनादीनाम् अनुभावानाम् आदिपदात् विभावानुभाववैचित्र्यादेः परिग्रहः । बहुभेदात् असंख्यभेदात् संख्यातुं सम्भोगस्य भेदं गणयितुम् अशक्यतया असमर्थतया हेतुना धीरैरयं सम्भोगश्रृङ्गार एक एकप्रकार एव कथितः । "प्राधान्येन व्यपदेशा भवन्ती"ति न्यायादिति भावः ।

( २४ ) अथास्योद्दीपनविभावान् निरूपयति—तत्रेति । तत्र सम्भोगश्रृङ्गारे इत्यर्थः। ऋतूनां वसन्तादीनां षट्कम्, चन्द्रादित्यौ तथा तयोः सूर्याचन्द्रमसोः उदयेन युक्त अस्तमय इत्युदयास्तमयः शाकपार्थिवादित्वात्समासः । तथा जलकेलिः, वनविहारः, प्रभातम्, मधुन आसवस्य पानम्, यामिनी रात्रिः, प्रभृतिपदात् क्षौमादीनां परिग्रहः । उद्दीपनविभावः स्यात् । तथा अनुलेपनं चन्दनादि, भूषा भूषणम् । आद्यपदात् वस्त्रादयश्च उद्दीपनविभावाः स्युः । तथा शुचि शुद्धं वस्त्रादि अत्यन्तं निर्मलम्, मेध्यम् पवित्रम् अन्यत् यत्किञ्चित् दर्शनीयं शय्यागृहादि तदुद्दीपनविभावरूपतया वाच्यं वर्णनीयमित्यर्थः । तथाचोक्तम्—

ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवनतः ।
उपवनगमनविहारैः श्रृङ्गाररसः समुद्भवति ॥

( २५ ) ननु शुचिमेध्ययोः तदुद्दीपने कथं योग्यतेत्यत आह—तथा चेति । शुचि स्वच्छम् आदर्शादि मेध्यं पवित्रं चन्दनादि, उज्ज्वलम् अलङ्कारादि, सुन्दरं चित्रादि । श्रृङ्गारेणोपमीयते । श्रृङ्गारेण हेतुना उपमीयते तदुद्दीपनतया उपस्थाप्यत इत्यर्थः । वर्ण्यते इति यावत् । (उपयुज्यते उद्दीपनतया योग्यो भवति) शुच्यादिपदार्थानां श्रृङ्गारोद्दीपनयोग्यतायां प्रत्यक्षानुभूतत्वान्महर्षिभरतेनापि प्रतिपादनेन मयापि वर्णितमिति ग्रन्थकृतामाशयः ।

( २६ ) सम्भोगश्रृङ्गारस्य एकविधत्वमुक्त्वा पूर्वरागाद्यानन्तर्येण तस्य चातुर्विध्यं वक्तुमाह—किञ्चेति ।

( २७ ) तदुपपादयति—कथितश्चतुर्विध इति । असौ सम्भोगः पूर्वरागादेरानन्तर्यात्तु चतुर्विधो मयापि कथित एव आदिना मानप्रवासकरुणविप्रलम्भानां ग्रहणम् । तथा च प्रथमानुरागानन्तरः, मानानन्तरः प्रवासानन्तरः करुणविप्रलम्भानन्तरश्चेति सम्भोगश्रृङ्गारश्चतुर्विधः । तत्तदनन्तरे तु सम्भोगस्य पुष्टिरेव भवेदिति तच्चतुर्विधत्वं मयाङ्गीक्रियत इत्याशयः ।

( २८ ) यदुक्तम्—

'न विना विप्रलम्भेन संभोगः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान्रागो विवर्धते ॥' इति ।

( २९ ) तत्र पूर्वरागानन्तरं संभोगो यथा कुमारसंभवे पार्वतीपरमेश्वरयोः ।

प्रवासानन्तरं संभोगो यथा मम तातपादानाम्—

( ३० ) 'क्षेमं ते ननु पक्ष्मलाक्षि !–किमत्थं खेमं मइङ्गं दिढं,
एतादृक्कृशता कुतः–तुह पुणो पुट्ठं सरीरं जदो ।
केनाहं पृथुलः प्रिये !–पणइणीदेहस्स संमेलणात्,
त्वत्तः सुभ्रु ! न कापि मे–जइ इदं खेमं कुदो पुच्छसि ॥'

( २८ ) अत्र प्राचां सम्मति दर्शयति—यदुक्तमिति । विप्रलम्भेन विप्रलम्भशृङ्गार-सम्बन्धेन विना सम्भोगः शृङ्गारः पुष्टिं न अश्नुते प्राप्नोति हि तथाहि वस्त्रादौ कषा-यिते प्रथमं किञ्चिद्रक्तीकृते रागः भूयान् सन् विवर्द्धते । एतेन सम्भोगस्य विप्रलम्भ-सम्बन्धाभावे—तादृशी पुष्टिर्न भवतीति व्यक्तम् । तथा च प्रकृष्टाप्रकृष्टभेदेन सम्भोगो द्विविधः, विप्रलम्भानन्तरः सम्भोगः प्रकृष्टः स च विप्रलम्भो भेदेन चतुर्विधः तद्विपरीतो-ऽपकृष्ट इति फलितम् ।

( २९ ) तत्र पूर्वरागानन्तरमिति । पार्वतीपरमेश्वरयोः तयोर्वृत्तान्त इत्यर्थः । पूर्वरागस-म्भोगो मदनदाहानन्तरं विवाहे सति पार्वतीपरमेश्वरयोः । एवं मालतीमाधवयोरपि बोध्यम् ।

( ३० ) प्रवासानन्तरं सम्भोगमुदाहरति—क्षेमं ते नन्वित्यादि । इमे दम्पत्योरुक्ति-प्रत्युक्ती । तत्र प्रवासादागतस्य पत्युः संस्कृतोक्तिः तत्पत्न्याः प्राकृतोक्तिः प्रथमसंस्कृ-तेन स्वविरहेण क्लिश्यन्तीं प्रियतमां प्रति पृच्छा नायकस्य, तथा प्राकृतेनोत्तरं प्रिया-याः । एवमुत्तरोत्तरमवगन्तव्यम् । हे पक्ष्मलाक्षि सुन्दरलोमविशिष्टनयने ! ते तव क्षेमं कुशलं ननु किम् "प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु" इत्यमरः । "कुशलं क्षेमं मदङ्गं दृढम्" इति संस्कृतानुवादः । मदङ्गं यत् दृढमतिशयितं कृशकं जातं तदेव क्षेमम् "दृढं स्थूलं नितान्ते च प्रगाढे बलवत्यपि" इति मेदिनी । कुतस्तव एतादृक् कृशता ? "तव पुनः पुष्टं शरीरं यतः" इति संस्कृतानुवादः यतस्तव शरीरं पुष्टमत एव मम कृशता जाते-त्यर्थः । हे प्रिये केन कारणेन पृथुलः स्थूलोऽहमस्मीति शेषः । "प्रणयिनीदेहस्य सम्मे-लनात्" इति संस्कृतानुवादः तव प्रवास एव कस्याश्चित् अन्यस्याः प्रियायाः देहस्य संमिश्रणात् त्वं पृथुलोऽसीत्यर्थः । यद्वा प्रणयिन्या मम देहस्य सम्मेलनात्-संकोचात् कृशीकरणादित्यर्थः एतावत्कालं तव वैदेश्यात् निश्चितेन तवानुरागेण यतोऽहं कृशा, अतो मां कृशां कृत्वा मन्मांसेन तव शरीरं पुष्टमित्यर्थः । हे सुभ्रु त्वत्तः सकाशात् त्वां परित्यज्येत्यर्थः कापि मे मम न प्रणयिनीति शेषः । "यदि इदं क्षेमं कुतः पृच्छसि" इति संस्कृतानुवादः, इदं यदि अहमेव तव प्रणयिनीत्यर्थः तदा कुतः कथं क्षेमं पृच्छसि, यदा-ऽहमेव प्रणयिनी किमिति मां परिहृत्य दूरं गतोऽसि यद्धेतुकस्तवायं प्रश्नः । प्रणयिनो वियोगे प्रणयिन्याः क्षेमाभावस्य सकलजनवेद्यतया तव तत्प्रश्न एव नोचित इति भावः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक् (१५८ पृ०) ननु "नेयुवङ्वङ्स्थानावस्त्री"

( ३१ ) एवमन्यत्राप्यूह्यम् ।

अथ हास्यः —

( ३२ ) विकृताकारवाग्वेषचेष्टादेः कुहकाद्भवेत् ।
हास्यो हासस्थायिभावः श्वेतः प्रमथदैवतः ॥ २१४ ॥
विकृताकारवाक्चेष्टं यमालोक्य हसेज्जनः ।
तमत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम् ॥ २१५ ॥
अनुभावोऽक्षिसंकोचवदनस्मेरतादयः ।
निद्रालस्यावहित्थाद्या अत्र स्युर्व्यभिचारिणः ॥ २१६ ॥

---

इत्यनेन भ्रूशब्दस्य तदन्तस्य च निषेधान्नदीत्वं न स्यात् तदभावे च ह्रस्वाभावात् "सुभ्रु" इति कथम् ? नच नेयङुवङित्यत्र वामीत्यतो वा ग्रहणमपकृष्य व्यवस्थितविभाषाश्रयणे नानुपपत्तिरिति वाच्यम्, तथासति "वेयङुवङ्स्थानौ" इत्येव सिद्धे इह नञ्ग्रहणं वामी· त्युत्तरसूत्रं च व्यर्थं स्यात् तथाचेदृशमहाकविप्रयोगे सामान्यनपुंसकत्वमाश्रित्य समाधेयम् ।

( ३१ ) एवमन्यत्रापिति । मानानन्तरसम्भोगे करुणविप्रलम्भशृङ्गारानन्तरसम्भोगे च एवमुदाहरणमूह्यमूहनीयमित्यर्थः । मानानन्तरं सम्भोगो यथा शिशुपालवधे नवमसर्गे–

"सुदृशः सरसव्यलीकतप्तः तरसा श्लिष्टवतः स यौवनोष्मा ।
कथमप्यभवत्स्मरानलोष्णः स्तनभारो न नखम्पचः प्रियस्य ॥ इति ।

यथा वा "सन्दष्टेऽधरपल्लवे स चकितं हस्ताग्रमाधुन्वती
मा मा मुञ्च शठेति कोपवचनै रानार्त्तितभ्रूलता ।
सीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी
प्राप्तं तैरमृतं श्रमाय मथितो मूढैः सुरैः सागरः ॥

करुणविप्रलम्भानन्तरं सम्भोगो यथा—

उत्तरार्द्धे कादम्बर्यां कादम्बरीचन्द्रापीडयोः महाश्वेता पुण्डरीकयोश्च ।

उक्तञ्च वात्स्यायनेन—नवो नव इवोदेति सम्भोगोऽनन्तरो हि सः ।
स चेतः प्रीतये चन्द्रः परिमुक्तो घनैरिव ॥

( ३२ ) इत्थं सप्रभेदं शृङ्गाररसं निरूप्य हास्यरसं निरूपयति—विकृताकारवागिति । विकृतः स्वाभाविकविपरीत आकारः स्वरूपः वाक्, वेशः, चेष्टाकरचरणादिभङ्गी, आदि· पदात् चिह्नादिश्च, यस्य तस्मात् तथोक्तात् कुहकात् नर्त्तकात् "कुहको नर्त्तको नटः" इति गोपालः यद्वा कुहकाख्यवञ्चना प्रयोगाच्च, एतदुपलक्षणम्, विकृताकारादिविषयक श्रव्यकाव्यादपि हास्यो हास्यरसः । स च हास्यः प्रागुक्तस्वरूपो हासः स्थायिभावो यस्य स तथोक्तः, अत एव श्वेतः श्वेतवर्णः । ननु श्वेतवर्णत्वं कुतो ज्ञातमिति चेत् ? "धवलता वर्ण्यते हासकीर्त्योः" इति कविसमयप्रसिद्धेः । प्रमथः शिवगणो दैवतम् अधिष्ठात्री देवता यस्य स तथोक्तः, प्रमथगणस्य हासकुतूहलनिरतत्वात् । विकृता आकारवाक्, चेष्टा यस्य तथोक्तं यं पदार्थमालोक्य जनो हसेत् अत्र हास्यरसे तत् आलम्बनम् आलम्बनविभावं प्राहुः । अत्र तदिति प्रक्रंस्यमानलिङ्गभागित्वात्

( ३३ ) ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च ।
नीचानामपहसितं तथातिहसितं तदेष षड्भेदः ॥ २१७ ॥
( ३४ ) ईषद्विकासिनयनं स्मितं स्यात्स्पन्दिताधरम् ।
किंचिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ॥ २१८ ॥
मधुरस्वरं विहसितं सांसशिरःकम्पमवहसितम् ।
अपहसितं सास्राक्षं विक्षिप्ताङ्गं[च]भवत्यतिहसितम् ॥२१९॥

"य आधारस्तदधिकरणम्" इतिवन्नपुंसकं ज्ञेयम् । तच्चेष्टा विकृताकारादिपुरुषचेष्टा उद्दीपनम् उद्दीपनविभावो मतमिष्टम् । अक्षिसंकोचः नेत्रनिमीलनम् आदिपदात् वदनावरणादिश्च अनुभावः । निद्रा आलस्यम् , अवहित्था उक्तरूपा आदिपदात् श्रमादयश्च अत्र हास्यरसे व्यभिचारिणो भावाः स्युः । हास्यस्थायिभावकः विकृतकुदालम्बनको वैकृताद्युद्दीपितो गल्लफुल्लाद्यनुभावितः श्रमादिसञ्चारितो हास्य इति निष्कर्षोऽर्थः ।

( ३३ ) अथोत्तमादिप्रकृतिभेदेन हास्यरसस्थायिभावस्य हासस्य भेदानाह-ज्येष्ठानामिति । ज्येष्ठानाम् उत्तमप्रकृतीनाम् लोकानां स्मितं हसितञ्च स्यात् । एतदधिकहासे उत्तमत्वभङ्गस्याशङ्कादित्याशयः । मध्यानां लोकानां विहसितम् अपहसितञ्च स्यात्। एतयोर्मध्यमहास्यत्वेन मध्यस्वभावानामेव सम्भवादिति भावः । नीचानाम् अधमस्वभावानां लोकानाम् अपहसितं तथा अतिहसितञ्च स्यात् । अतिशयहास्येनासभ्यतारोपेऽपि तेषान्तत्र भयाभावादित्यभिप्रायः । तदिति हासभेदादित्यर्थः, इत्थं हासस्य षड्भेदाः भवेयुः ।

( ३४ ) स्मितादीनां लक्षणं दर्शयति—ईषदिति । तत्र तेषु हासेषु मध्ये ईषद्विकासिनी किञ्चिन्मात्रविस्फारिते नयने यस्मिंस्तत्तथोक्तम् , तथा ईषत् स्पन्दितश्चलित अधरः यस्मिंस्तत्तथोक्तम् , हास्यं स्मितं स्यात् । किञ्चिल्लक्ष्या अल्पमात्रदृश्या द्विजा दन्ता यस्मिंस्तत्तथोक्तं हासं बुधैः हसितं कथितम् "दन्ता विप्राण्डजाद्विजाः" इत्यमरः । मधुरः आकर्णने मनोहरः सुश्राव्य इति यावत् स्वरो यस्मिंस्तत्तथोक्तं हासं विहसितम् । अंसयोः स्कन्धयोः शिरस उत्तमाङ्गस्य च कम्पनेन अवधूननेन साकमिति तत्तादृशं हासम् अवहसितम् । सास्रे अश्रुसहिते अक्षिणी नयने यत्र तत्सास्राक्षं हासम् अपहसितम् । तथा विक्षिप्तानि सञ्चालितानि अङ्गानि अवयवानि यस्मिंस्तत्तादृशं हासम् अतिहासितं भवति ।

अत्र विषये अन्ये तु—

आत्मस्थः परसंस्थश्चेत्यस्य भेदद्वयं मतम् । आत्मस्थो द्रष्टुरुत्पन्नो विभावेक्षणमात्रतः॥
हसन्तमपरं दृष्ट्वा विभावश्चोपजायते । योऽसौ हास्यरसस्तज्ज्ञैः परस्थः परिकीर्तितः ॥
उत्तमानां मध्यमानां नीचानामप्यसौ भवेत् ।
त्र्यवस्थोमथितस्तस्य षड्भेदाः सन्ति चापरे ॥
स्मितं च हसितं प्रोक्तमुत्तमे पुरुषे बुधः । भवेद्विहसितं चोपहसितं मध्यमे नरे ॥
नीचेऽपहसितं चातिहसितं परिकीर्तितम् । ईषत्फुल्लकपोलाभ्यां कटाक्षैरप्यनुल्वणैः ॥
अदृश्यदशनो हासो मधुरः स्मितमुच्यते । वक्रनेत्रकपोलैश्चेदुत्फुल्लैरुपलक्षितः ॥

यथा—

( ३५ ) 'गुरोर्गिरः पञ्चदिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयं च ।
अमी समाघ्राय च तर्कवादान्समागताः कुक्कुटमिश्रपादाः ॥'

( ३६ ) अस्य लटकमेलकप्रभृतिषु परिपोषो द्रष्टव्यः ।

( ३७ ) अत्र च—

( ३८ ) यस्य हासः स चेत्क्वापि साक्षान्नैव निबध्यते ।
तथाप्येष विभावादिसामर्थ्यादुपलभ्यते ॥ २२० ॥

किञ्चिल्लक्षितदन्तश्च तदा हसितमिष्यते । सशब्दं मधुरं कालगतं वदनरागवत् । आकुञ्चिताक्षि मन्द्रं च विदुर्विहसितं बुधाः । निकुञ्चितांसशीर्षश्च जिह्मदृष्टिविलोकनः ॥ उत्फुल्लनासिको हासो नाम्नोपहसितं मतम् ॥ अस्थानजः साश्रुदृष्टिराकम्पस्कन्धमूर्धजः॥ शार्ङ्गदेवेन गदितो हासोऽपहसिताह्वयः । स्थूलकर्णः कटुस्वानो वाष्पपूरप्लुतेक्षणः ॥
करोपगूढपार्श्वश्च हासोऽतिहसितं मतम् ॥'

इत्थं वदन्ति ।

( ३५ ) गुरोरिति । कञ्चित् कुक्कुटनामानमागतं दृष्ट्वा शास्त्रालोचनतत्परमित्रपरिषदि कस्यचित्सकौतुकोक्तिरियम् । अमी कुक्कुटमिश्रपादाः पक्षिविशेषरूपविप्रश्रेष्ठचरणाः पञ्चदिनानि यावत् पञ्चसंख्याकैरिव दिनैरित्यर्थः । गुरोर्भट्टप्रभाकरस्य गिरो मीमांसाशास्त्ररूपाः वाक्यानि अधीत्य, दिनत्रयञ्च त्रिभिरेव दिनैरित्यर्थः यावत् वेदान्तशास्त्राणि उत्तरमीमांसा ब्रह्मसूत्रादिग्रन्थान् अधीत्य, तर्कवादान् नव्यन्यायादीनि तर्कशास्त्राणि समाघ्राय च समागताः, अतः प्रधानाचार्ययोग्यमासनमस्मै दीयतामिति वक्तुरभिप्रायः।

• उपजातिश्छन्दस्तल्लक्षणं चोक्तं प्राक् ( ६९ पृ० )

( ३६ ) अयं हि महावाक्यविशेषे परिपुष्टिमापद्यमान उपलभ्यत इत्यत आह—अस्येति । हास्यस्येत्यर्थः । लटकानां धूर्तानां मेलकं तत्प्रभृतिषु तदादिषु महावाक्यविशेषेषु इति शेषः । प्रभृतिपदेन हास्यार्णवादीनां परिग्रहः । परिपोषो द्रष्टव्यः परिशेषो ऽनुभवितव्यः ।

अत्र कुक्कुटमिश्रपादा आलम्बनविभावाः । तेषाञ्च पञ्चदिनाध्ययनादय उद्दीपनविभावाः कायोच्छ्वसनदृष्टिसंकोचादयः हर्षावहित्थादयश्च अनुभावव्यभिचारिण अनुक्ता अपि सामर्थ्यबलाल्लभ्याः । हासश्च स्थायिभावः । एते सामाजिकेषु हास्यरसरूपतां भजन्ते ।

उदाहरणान्तरमपि यथा—

श्रीतातपादविहिते निबन्धे निरूपिता नूतनयुक्तिरेषा ।
अङ्गं गवां पूर्वमहो पवित्रं न वा कथं रासभधर्मपत्न्याः ॥ इति ॥

( ३७ ) ननु रसे नायकस्याभेदः सामाजिके भासते स चात्र "गुरोर्गिरः" इति श्लोकेन निबद्धः कथं तस्याभेदारोपो भवेदित्यत आह—अत्र चेति । अत्र हास्यरसे चकारादन्यत्र ।

( ३८ ) यस्येति । यस्य हासः यदालम्बनको हास इत्यर्थः । स चेत् यदि क्वापि कुत्रापि वाक्ये साक्षात् अभिधायकपदेन नैव निबध्यते नैव प्रतिपाद्यते तथापि एष

अभेदेन विभावादिसाधारण्यात्प्रतीयते ।
सामाजिकैस्ततो हास्यरसोऽयमनुभूयते ॥ २२१ ॥

( ३९ ) एवमन्येष्वपि रसेषु बोद्धव्यम् ।

अथ करुणः—

( ४० ) इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् ।
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः ॥ २२२ ॥
शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम् ।
तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः ॥ २२३ ॥
अनुभावा दैवनिन्दाभूपातक्रन्दितादयः ।
वैवर्ण्योच्छ्वासनिःश्वासस्तम्भप्रलपनानि च ॥ २२४ ॥
निर्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमाः ।
विषादजडतोन्मादचिन्ताद्या व्यभिचारिणः ॥ २२५ ॥

शोच्यं विनष्टबन्धुप्रभृति ।

---

विभावादेः सामर्थ्यात् अन्यथानुपपत्तिज्ञानात् उपलभ्यते प्रतीयते सामाजिकैरिति वक्ष्यमाणेनान्वयः । ततः सामाजिकैः साधारण्यात् साधारणीकरणव्यापारसामर्थ्यात् विभावादिः स आलम्बनादिः अभेदेन स्वपरसाधारणत्वेन आत्माभिन्नत्वेनेत्यर्थः । प्रतीयते ततश्च साधारण्यज्ञानात् अयं हास्यरसः अनुभूयते अनुभवविषयीक्रियते । एवं श्रव्यकाव्यत्वेऽपि नानुपपत्तिरित्यवधेयम् । पूर्वं यद्यप्ययमर्थः प्रतिपादितोऽपि व्यवहितत्वात्पुनरिह स्मार्यत इति पौनरुक्त्यन्न शङ्कनीयम् ।

( ३९ ) अत्र हासादि स्थाय्यन्तरादेरप्युपलक्षकमिति दर्शयति—एवमन्येष्वपीति । बोद्धव्यमिति । बोधप्रकारस्तु प्रागेव "व्यापारोऽस्ति विभावादेः" इत्यादौ "सद्भावश्चेद्विभावादेः" इत्यादौ च स्पष्टीकृत इति तत एवावधेयम् ।

( ४० ) इत्थं हास्यरसं लक्षयित्वा करुणरसं लक्षयति—इष्टनाशादिति । इष्टनाशश्च पुत्रादेर्विच्छेदो मरणं च वित्तादेर्नाशश्च तस्मात्तथोक्तात् अनिष्टानां महोत्पातादीनाम् आप्तेः प्राप्तेश्च अन्यतरस्माद्धेतोः करुणाख्यो रसो भवेत् । तथाहि भरतः—

"इष्टवधदर्शनाद्वा विप्रियवचनस्य संश्रयाद्वापि ।
एभिर्भावविशेषैः करुणरसो नाम सम्भवति ॥" इति ॥

धीरैरयं करुणरसः कपोतवर्णो गृहकपोतवर्णः मलिनवर्ण इति भावः । शोकस्थायिभावकत्वात् शोकस्य च पापोद्भवत्वात् "मालिन्यं व्योम्नि पापे" इति कविसमयप्रसिद्धेन मलिनत्वादित्यभिप्रायः । यमो दैवतं देवताऽस्यासौ यमदैवतश्च "साऽस्य देवता" इत्यण्, कथित उक्तः एतेन शोकस्य यमजन्यत्वं प्रदर्शितम् । अत्र करुणरसे शोकः स्थायिभावः स्यात् । शोच्यं शोचनीयनष्टपुत्रवित्तादिकम् आलम्बनं मतम् । तस्य नष्टपुत्रवित्तादेः दाहस्ताप आदिपदात् चार्यादीनां परिग्रहः, उद्दीपनविभावः । दैवनिन्दा भूपातः, क्रन्दितम्, आदिपदात् व्यथाजनकवचनादयश्च वैवर्ण्योच्छ्वासनिश्वासस्तम्भप्रलपनानि च अनुभावाः । निर्वेदमोहादयो व्यभिचारिणः आद्यपदान्मरणा-

यथा मम राघवविलासे—

( ४१ ) 'विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः ।
अनयोर्घटना विधेः स्फुटं ननु खड्गेन शिरीषकर्त्तनम् ॥'

( ४२ ) अत्र हि रामवनवासजनितशोकार्त्तस्य दशरथस्य दैवनिन्दा ।

( ४३ ) एवं बन्धुवियोगविभवनाशादावप्युदाहार्यम् । परिपोषस्तु महाभारते स्त्रीपर्वणि द्रष्टव्यः ।

---

दयश्च व्यभिचारिणो भवन्ति, अत्र शोकस्थायिभावको मृताद्यालम्बनकस्तद्गुणाद्युद्दीपितो रोदनाद्यनुभावितो दैन्यादिसञ्चारितः करुण इति सारांशः ।

( ४१ ) उदाहरति—विपिन इति । वनगमनाय प्रस्थितं श्रीरामं प्रति दशरथस्योक्तिरियम् । हे पुत्र ! विपिने गहनकानने तव जटानिबन्धनं ऋषिव्रतानुष्ठानाय जटाधारणं क्व, इदं मनोहरम् अतिकोमलम् वपुः शरीरञ्च क्व, द्वौ क्वौ महदन्तरं सूचयतः, एतादृशमृदुशरीरेण तादृशक्लेशकरणं महदसम्भवमेवेत्याशयः । विधेः दैवस्य षष्ठी चेयं कर्त्तरि । अनयोर्जटाधारणश्रीरामशरीरयोः घटना योजना एकत्र सृष्टिरिति यावत् स्फुटं स्पष्टं ननु ध्रुवं खड्गेन करवालेन शिरीषस्य अतिमृदुपुष्पविशेषस्य कर्त्तनं भेदनम् । अहो ! ईदृशे शरीरे ऋषिव्रतानुष्ठानव्यवस्था शिरीषे खड्गप्रहार इव अतीव सोढुमशक्येति विधातुरपि सुनिश्चितमविवेकित्वमिति भावः । वैतालीयं च्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

अत्र राम आलम्बनविभावः, तस्य वनगमप्रस्थानमुद्दीपनविभावः स चाध्याहारलभ्यः, दैवनिन्देयमनुभावः, ग्लानिविषादाद्याः-व्यभिचारिभावाश्च अध्याहारलभ्याः । अत्र प्रकरणाद्दशरथो नायक इति लभ्यते ।

( ४२ ) अत्रेति । दैवनिन्देति । अत्रानुचिताचरणमेव दैवनिन्दा ।

( ४३ ) नन्विष्टनाशादौ करुणरसस्य स्वीकारेण प्रकृतोदाहरणे शङ्कितवस्तुनः समुपास्थतौ करुणसत्वस्यैव विद्यमानत्वात्तत्कथमुपेक्षितमत आह—एवमिति । आदिपदादनिष्टप्राप्तेः परिग्रहः । बन्धुवियोगो बन्धुमरणं यथा रघुवंशे—

"गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥"

अत्रेन्दुमती मरणजनितशोकविह्वलस्याजस्य मृत्युनिन्दा । यथा वा—

हा मातस्त्वरितासि कुत्र किमिदं हा देवता क्वाशिषः ।
धिक् प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ ।
इत्थं घर्घरमध्यरुद्धकरुणा पौराङ्गनानां गिरो
चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥

इदं मदालसायां मृतायां पुरस्त्रीणां रोदनस्य केनापि कथनम् ।

वित्तनाशो यथा—

यच्चिन्तितं तदिह दूरतरं प्रयाति, यच्चेतसाऽपि न कृतं तदिहाभ्युपैति ।
प्रातर्भवामि वसुधाधिपचक्रवर्त्ती, सोऽहं व्रजामि विपिने जटिलस्तपस्वी ॥

अत्र गतराज्यस्य श्रीरामस्य विलापः ।

( ४४ ) अस्य करुणविप्रलम्भाद्भेदमाह—

( ४५ ) शोकस्थायितया भिन्नो विप्रलम्भादयं रसः ।
विप्रलम्भे रतिः स्थायी पुनःसंभोगहेतुकः ॥ २२६ ॥

अथ रौद्रः—

( ४६ ) रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः ।
आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम् ॥ २२७ ॥
मुष्टिप्रहारपातनविकृतच्छेदावदारणैश्चैव ।
संग्रामसंभ्रमाद्यैरस्योद्दीप्तिर्भवेत्प्रौढा ॥ २२८ ॥

---

यथा वा—किं करोमि क्व गच्छामि शरणं क्व व्रजाम्यहम् ।
चिरेणोपार्जितं वित्तं दस्युनापहृतं मम ॥

अनिष्टप्राप्तौ यथा—

नाथ ! प्रार्थनया कया नहि मया भूयो भवानर्थितः
कस्यां वा भवता कृपां कलयता नालस्य मभ्यासितम् ।
निर्लज्जोऽस्मि तथाप्यनन्यशरणः श्रीमन्तमभ्यर्थये
कालव्यालमुखान्तरालपतितं गोपाल ! मां पालय ॥

( ४४ ) ननु शोकस्य करुणविप्रलम्भशृङ्गारेऽपि विद्यमानत्वात् तत्रास्यातिव्याप्ति-रित्यत आह-अस्येति ।

( ४५ ) शोकस्थायितयेति । अयं करुणो रसः शोकस्थायितया हेतुना विप्रलम्भात् करु-णविप्रलम्भशृङ्गाराद् भिन्नः । ननु स्थायिरूपेणैव तत्रापि शोकोऽस्तीत्यत आह-विप्रलम्भ इति विप्रलम्भे करुणविप्रलम्भशृङ्गारे पुनः सम्भोगो हेतुर्ज्ञापको यस्य स तथोक्तः । पुनः सम्भोगसम्भावनाहेतुक इत्यर्थः । क प्रत्ययोऽत्र स्वार्थे । रतिरनुरागः स्थायीभावः इति शेषः, शोको हि तत्र गौणभावेन केवलः सहचरः, अत्र हि प्रधानः शोक एव रतिस्तु वर्तत एव नेति भेदो ज्ञेयः । पूर्वरागमानप्रवासहेतुकत्वे करुणसाङ्कर्यशङ्कैव नास्ति मरणे-सत्येव तत्साङ्कर्यसम्भावनेति सुधीभिराकलनीयम् ।

( ४६ ) करुणरसं निरूप्य रौद्ररसं निरूपयति-रौद्र इति । रौद्रः रौद्ररसः क्रोधः प्राक्कथितस्वरूपः स्थायीभावो यस्य स तथोक्तः । रक्षो दानवोद्धतमनुष्यप्रभवः सङ्ग्रा-महेतुकः । रक्तो लोहितवर्णः क्रोधस्य रजोगुणप्रभवत्वात् रजोगुणस्य च "अजामेकां लोहितशुक्लकृष्णाम्" इति श्रुत्या "काम एष क्रोध एष रजोगुण समुद्भवः" इति गीतो-क्त्या च लोहितवर्णत्वात् । रुद्रो महेशः अधिदैवतम् अधिष्ठात्री देवताऽस्येति "साऽस्य-देवता" "इत्यण् रुद्राधिदैवतः क्रोधस्य संहारहेतुत्वेन भुवनसंहारिणः रुद्रस्यैव।तदधिदैव-तत्वस्य युक्तत्वादित्यभिप्रायः । तत्र रौद्ररसे अरिर्वैरी "रपौवैरिसपत्नारि" इत्यमरः आल म्बनम् आलम्बनविभावः, तच्चेष्टा रिपुचेष्टा उद्दीपनविभावः । अरेश्चेष्टां विशिष्य दर्शय-ति-मुष्टेति । मुष्टिप्रहारः अङ्गुद्वारकप्रहारमात्रस्योपलक्षणमिदम् । पातनमाक्रमणम् , वि-कृतं विरुद्धाचरणम्, छेदः खड्गादिना स्वसैन्यादेः कर्तनम्, अवदारणं शूलादिना स्वसै-न्यादेः भेदनम् । तथा संग्रामसम्भ्रमेण युद्धाय वेगेन आपदाद् शिविरविनाशादिश्च अस्य

भ्रूविभङ्गोष्ठनिर्दंशबाहुस्फोटनतर्जनाः ।
आत्मावदानकथनमायुधोत्क्षेपणानि च ॥ २२९ ॥
अनुभावास्तथाक्षेपक्रूरसंदर्शनादयः ।
उग्रतावेगरोमाञ्चस्वेदवेपथवो मदः ॥ २३० ॥
मोहामर्षादयस्तत्र भावाः स्युर्व्यभिचारिणः ।

यथा—

( ४७ ) 'कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥'

रौद्रस्य प्रौढा अतिशया उद्दीप्तिर्भवेत्। भ्रूविभङ्गो भ्रुकुटिविधानम्, ओष्ठनिर्दंशः ओष्ठदंशनम्, बाहुस्फोटनं बाह्वास्फालनम्, तर्जना त्रासप्रदर्शनवचनम्, तास्तथोक्ताः । तथा आत्मावदानकथनम् स्वविहितकर्मणां कथनम् "अवदानं कर्मवृत्तम्" इत्यमरः आयुधोत्क्षेपणानि अस्त्रप्रहाराः (बहुत्वेनास्त्रप्रहारादेशादयश्च) तथा आक्षेपो गर्हा क्रूरसंदर्शनं क्रूरदृष्टि आदिपदात् क्रूरप्रतिज्ञाविधानम्, क्रूरकर्मणि प्रवृत्तिः, क्रूरजनसङ्गः, स्वसैन्यप्रसंशादयश्च अनुभावाः । तत्र रौद्रे उग्रतादयः प्राक्प्रदर्शितस्वभावाः आदिपदात् उग्रताजनकागर्वादयश्च व्यभिचारिणो भावाः स्युः । एवञ्च क्रोधस्थायिभावको द्विषदालम्बनकस्तदपकाराद्युद्दीपितो भ्रूविभङ्गाद्यनुभावितः, उग्रतादिसञ्चारितो रौद्र इति फलितः ।

ननु यदुक्तं राक्षसादीनां रौद्रो रसः स किमन्येषां न स्यादिति चेत्? सत्यम्, अस्त्यन्येषामपि रौद्रः किन्त्वधिकारोऽत्र गृह्यते । ते हि स्वभावत एव रौद्रा बहुबाहवो बहुमुखाः प्रोद्धूतविकीर्णपिङ्गलशिरोजाः रक्तोद्धृतविलोचना भीमासितरूपिणश्चैव । यच्च किञ्चित्समारभन्ते स्वभावचेष्टितं वागङ्गादिकं वा तत्सर्वं रौद्रमेव । तेषाञ्चानुगामिनो ये पुरुषास्तेषामपि सम्प्रहारकृतो रौद्ररसोऽनुमन्तव्य इति ।

( ४७ ) उदाहरति—कृतमनुमतमिति । वेणीसंहारनाटके धृष्टद्युम्नकृतद्रोणशिरश्छेदनेन क्रुद्धस्याश्वत्थाम्नो दुर्योधनान्तिकेऽर्जुनं सम्बोध्योक्तिरियम् । मनुजपशुभिर्विवेकहीनत्वात्पशुतुल्यैरेव मनुष्यैः निर्मर्यादैर्गुरुत्वमर्यादाया अपि अपेक्षारहितैः उदायुधैरुद्यतशस्त्रैर्भवद्भिः इदं मृतस्य मम पितुः शिरश्छेदरूपं गुरुपातकं ब्रह्महत्यारूपं महापातकम् कृतं धृष्टद्युम्नेन, अनुमतं द्रुपदसैन्यादिना, दृष्टमवलोकितं वा युष्माभिः, नरकरिपुणा नरकान्तकेन श्रीकृष्णेन सार्द्धं सभीमकिरीटिनां भीमार्जुनयुक्तानां तेषां सर्वेषामेव भवताम् असृङ्मेदोमांसैरयमेतत्क्षणवर्त्यैवाहं दिशां दिगवस्थितभूतानां बलिं भक्षितोपहारं करोमि । यद्यपि धृष्टद्युम्नं सम्बोध्येयमुक्तिरुचिता तथापि महापातकित्वेन तस्य नामोच्चारणानुचितमित्यवधार्य पराक्रमोचिततया अरे रे अर्जुनार्जुन ! सात्यके सात्यके । इति सम्बोध्योक्तिरित्यवधेया ।

अत्र नरकरिपुपदोपादानात् नरकहेतुपातकहन्तारं गुरुपातककारिणञ्च हनिष्यामीति सूचनात् मत्क्रोधे जगदेव नङ्क्ष्यतीति सूचितम् । अपि च उदायुधैः सद्भिरेव दुर्योधना-

( ४८ ) अस्य युद्धवीराद्भेदमाह—

( ४९ ) रक्तास्यनेत्रता चात्र भेदिनी युद्धवीरतः ॥ २३१ ॥

अथ वीरः—

( ५० ) उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः ।
महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः ॥ २३२ ॥

( क ) आलम्बनविभावास्तु विजेतव्यादयो मताः ।

दिभिरवलोकितत्वात् किन्तु धृष्टद्युम्नस्य निवारणाकरणात् सापराधत्वेन तान्प्रत्यपि वचोभङ्ग्या उक्तिरियमिति सुधीभिर्विभावनीयम् ।

अत्र क्रुद्धस्याश्वत्थाम्नोऽपकारिणोऽर्जुनादयः आलम्बनम्, पितृहन्तृत्वमन्यादेश्चमनं चोद्दीपनम्, एतदुक्तिरूपं गर्जनमनुभावः अन्यनैरपेक्ष्यगर्वो व्यभिचारिभावः, क्रोधः स्थायिभावः, सामाजिके क्रोधप्रकृतिको रौद्रो रसो व्यज्यते ।

अत्रेदम्बोध्यम्—पद्येऽस्मिन् रौद्ररसव्यञ्जनक्षमावृत्तिर्नास्ति अतः—

"नवोच्छलितयौवनस्फुरदखर्वगर्वज्वरे, मदीयगुरुकार्मुकं गलितसाध्वसं वृश्चति ।
अयं पततु निर्दयं दलितदृप्तभूभृद्गलस्खलद्रुधिरघस्मरो मम परश्वधो भैरवः ॥"

इदमुदाहरणीयम् । एषा च श्रीरामभद्रं प्रति परशुरामस्योक्तिः । अत्र रामत्वेनाज्ञातो गुरुकार्मुकभञ्जक आलम्बनम् । अत एव विशेष्यानुपादानम्, गुरुद्रुहो नामग्रहणाऽनौचित्यात् क्रोधाविष्काराद्वा ध्वनिविशेषानुमितो निश्शङ्कधनुर्भङ्ग उद्दीपकः । परुषोक्तिरनुभावः । गर्वामर्षादयः सञ्चारिणः । अत्र च महोद्धता वृत्ती रौद्रस्य परमौजस्वितां परिपुष्णातीति ।

( ४८ ) ननु रौद्रयुद्धवीरयो रिपुरालम्बनं विभाव इत्यनयोरैक्यापत्तिरिति तयोर्भेदं प्रकटयितुमाह—अस्येति । रौद्ररसस्येत्यर्थः ।

( ४९ ) रक्तास्येति । किञ्चेत्यर्थे चकारो बोध्यः । अत्र रौद्रे रक्ते रक्तवर्णे आस्यनेत्रे वदनलोचने यस्य स तथोक्तः पुरुषस्तस्य भावस्तत्ता, रक्तास्यनेत्रताजनकः इत्यर्थः । क्रोध एव युद्धवीरतो भेदिनी भेदबुद्धिविधायिनी । तथाचोभयत्र रिपोरालम्बनत्वेऽपि क्रोधाविर्भावे रौद्रः, उत्साहाविर्भावे युद्धवीर इत्यनयोर्भेदः स्पष्ट एवेति भावः ।

( ५० ) एवं रौद्ररसं निरूप्य वीररसं निरूपयति—उत्तमप्रकृतिरिति । उत्तमा धीरोदात्तरूपा प्रकृतिर्नायको यस्य स उत्कृष्टजननिष्ठ इति यावत् । अथवा उत्तमा चमत्कारातिशयाधायकतया रसान्तरादुत्कृष्टा प्रकृतिः स्वभावो यस्य स वीरो रसः, "प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ लिङ्गपौरवर्गे" इति मेदिनी, उत्साहः प्राग्दर्शितस्वरूपः स्थायीभावो यस्य सः । महेन्द्रो देवोधिपतिः दैवतम् अधिष्ठात्री देवता अस्येति महेन्द्रदैवतः महेन्द्रस्य समग्रवीराधिपतित्वादिति भावः । अत एवायं वीरो रसो हेमवर्णः सुवर्णवर्णः "हिरण्यं हेम हाटकम्" इत्यमरः, समुदाहृतः तद्वर्णत्वमेव महेन्द्रस्यापीत्याशयः । विजेतव्यादयः पदार्था आलम्बनविभावा मताः । तत्र युद्धवीरे विजेतव्यः प्रतिपक्षी दानवीरे

( क ) 'आलम्बन–' इत्यादेः'–रोमाञ्चाः' इत्यस्य पाठस्य स्थाने 'प्रतिनेतृतदुक्तिर्यालम्बनोद्दीपनान्वितः । चतुर्थामन्त्रणस्थैर्यप्रसादाद्यनुभावभूः ॥ क्रोधाभिमानहासप्रमुखव्यभिचारिपरिपुष्टः ।' इति पाठः समुपलभ्यते पुस्तकान्तरे ।

विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः ।
अनुभावास्तु तत्र स्युः सहायान्वेषणादयः ॥ २३३ ॥
संचारिणस्तु धृतिमतिगर्वस्मृतितर्करोमाञ्चाः ।
स च दानधर्मयुद्धैर्दयया च समन्वितश्चतुर्धा स्यात् ॥ २३४ ॥

सम्प्रदानविप्रादिः, धर्मवीरे धर्मः, दयावीरे दुःस्थितादिश्चालम्बनविभाव इति सरलार्थः। विजेतव्यादीनां प्रतिपक्षिप्रभृतीनां चेष्टाद्या द्वेषकरणादिक्रिया-आद्यपदेन दाने सत्त्वाध्यवसायादेः धर्मे धर्मशास्त्राध्ययनादेः दीनस्य कातरोक्त्यादेः परिग्रहः, तस्य वीररसस्य उद्दीपनविभावाः। तत्र वीरे सहायान्वेषणादयः, सहायः सहकारी स च युद्धे सैन्यं दाने वित्तं धर्मे द्रव्यमन्त्रादि दयायां त्यागादि, आदिपदात् युद्धवीरे सहायान्वेषणभेदप्रयोगादयः, दानवीरे त्यक्तवित्तसंग्रहादयः, धर्मवीरे यागानुष्ठानादयः, दयावीरे च शान्तिवचनादयः अनुभावाः स्युः। तत्र रोमाञ्चस्तज्जनको हर्षः रोमाञ्चस्य सञ्चारिभावत्वाभावात्तज्जनकहर्षे लक्षणा बोध्या। स च वीरश्चेत्यर्थः। दान-धर्म-युद्धैस्तत्तदाख्यैस्त्रिभिर्भेदैः दयया तदाख्येन च भेदेन समन्वितो युक्तः सन् चतुर्धा चतुर्विधः स्यात्। अत्र चतुर्धेत्युक्तिस्त्वभ्युच्चयवादः। श्रृङ्गारस्येव बहवो वीररसस्य प्रकाराः निरूपयितुं शक्यन्ते—तथाहि अग्रे प्रतिपादयिष्यमाणस्य "राज्यं च वसुदेहश्च" इत्यस्योत्तरार्द्धं "ते यथेष्टं विप्लवन्तां मा भूत्सत्यस्य विप्लवः" इत्यस्य विपर्यासेन पद्यान्तरतां प्रापिते सत्यवीरस्यापि सम्भवात्। न च सत्यस्यापि धर्मान्तर्गततया धर्मवीररस एव तद्वीरस्याप्यन्तर्भाव इति वाच्यम्, तथासति दानदययोरपि तदन्तर्गततया तद्वीरयोरपि धर्मवीरात् पृथग्गणनानौचित्यात्। एवं पाण्डित्यवीरोऽपि प्रतीयते यथा—

"अपि वक्ति गिरां पतिः स्वयं यदि तासामधिदेवतापि वा ।
अयमस्मि पुरो हयाननस्मरणोल्लङ्घितवाङ्मयाम्बुधिः ॥"

अत्र वाचस्पत्याद्यालम्बनः सभादिदर्शनोद्दीपितो निखिलविद्वत्तिरस्कारानुभावितो गर्वेण सञ्चारिणा पोषित उत्साहो वक्तुः प्रतीयते। ननु चात्र युद्धवीरत्वम्, युद्धत्वस्य वादसाधारणस्य वाच्यत्वादिति चेत्!

"अपि वहलदहनजालं मूर्ध्नि रिपुर्मे निरन्तरं धमतु ।
पातयतु वाऽसि धारामहमणुमात्रं न किञ्चिदाभाषे ॥"

इत्यादौ क्षमावीरे किं ब्रूयाः। क्षमावत उक्तिरियम्। तथा—

"परिहरतु धरां फणिप्रवीरः सुखमयतां कमठोऽपि तां विहाय ।
अहमिह पुरुहूतपक्षकोणे निखिलमिमं जगदक्षमं वहामि" ॥

इत्यादौ बलवीरे वा किं समादध्याः। पुरुहूतं प्रत्येषा वैनतेयस्योक्तिः। ननु "अपि वक्ति" "परिहरतु धराम्" इत्याद्यन्तयोर्नोत्साहः किन्तु गर्व एव, मध्यस्थपद्ये तु धृतिरेव ध्वन्यते इति भावध्वनय एवैते न रसध्वनय इति चेत्! तर्हि युद्धवीरादिष्वपि गर्वादिध्वनितामेव किं न ब्रूयाः? रसध्वनिसामान्यमेव वा किं न तद्व्यभिचारध्वननेनान्तर्भावयेः? ननु रसध्वनिस्थले व्यभिचार्यपेक्षया स्थायिभावस्य प्रतीतिरतिशया विद्यत इति तत्कृतो रसध्वनिव्यवहार एव स्यादिति चेत्? सत्यवीरादिष्वपि स्थायिनः प्रबलतया वीररसध्वनिव्यवहारः कथं प्रतिबन्धनीयो भवेत्। अनन्तरोक्तपद्ये तु नोत्साहः प्रतीयते दयावीरादिषु तु प्रतीयते इति तु राजाज्ञामात्रम्।

स च वीरो दानवीरो धर्मवीरो युद्धवीरो दयावीरश्चेति चतुर्विधः ।

( ५१ ) तत्र (क)दानवीरो यथा परशुरामः—

'त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः' इति ।

( ५२ ) अत्र परशुरामस्य त्यागे उत्साहः स्थायिभावः, संप्रदानभूतब्राह्मणैरालम्बनविभावैः सत्त्वाध्यवसायादिभिश्चोद्दीपनविभावैर्विभावितः, सर्वस्वत्यागादिभिरनुभावैरनुभावितो, हर्षधृत्यादिभिः संचारिभिः पुष्टिं नीतो दानवीरतां भजते ।

---

वस्तुतस्तु—निरुपपदवीरपदस्य युद्धवीर एव प्रयोगोऽतो नैते वीररसा अन्यथा पलायनवीरादिभेदेनानन्त्यं स्यात् । दानाद्युत्साहस्तु भाव एव। अत एव काव्यप्रकाशे सप्तमोल्लासे शीर्णघ्राणेति उदाहरणं मम्मटेन नीरसत्वेन प्रदर्शितमिति तत्त्वविदो वदन्ति ।

(५१) उदाहर्तुं दर्शयति—तत्रेति । प्रदर्शितचतुर्विधेषु दानवीरो दानवीररसघटकदानोत्साहाश्रयः। अनयैव दिशा धर्म्मवीरादिष्वपि वक्ष्यमाणेषु ज्ञातव्यम्। त्याग इति । अयं च तृतीयचरणः, समस्तपद्यञ्चेदृशम्—

"उत्पत्तिर्जमदग्नितः स भगवान् देवः पिनाकी गुरुः
वीर्यं यत्तु न तद्गिरां पथि ननु व्यक्तं हि तत्कर्म्मभिः ।
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः
सत्यब्रह्म-तपोनिधेर्भगवतः किं वा न लोकोत्तरम् ॥" इति ।

इदं हि महावीरचरिते द्वितीयाऽङ्के रामस्य परशुरामप्रशंसनपरम्। जमदग्नित उत्पत्तिः, भगवान् देवः स प्रसिद्धः पिनाकी महेशः गुरुर्ज्ञानदाता एतस्य यत्तु वीर्यं पराक्रमं तद्गिरां पथि वचनमार्गे न विद्यत इति शेषः, अतिशयत्वात्प्रवक्तुमशक्यमित्याशयः । तद्वीर्यं कर्म्मभिः त्रिःसप्तकृत्वराजन्यवर्गनिधनादिभिः व्यक्तं संसारे प्रसिद्धम् । सप्तभिः समुद्रैरर्णवैः वेष्टिता या मही भूतस्यानिर्व्याजं निरुपाधि यद्दानं तदेवावधिः सीमा यस्य स तथोक्तस्त्यागसामर्थ्यम् । अत एव सत्यं यथार्थव्यवहारः ब्रह्माणि वेदाः तपांसि विविधतपस्याश्च तेषां निधेराश्रयस्य भगवतः अस्य जामदग्न्यस्य किं वा कर्म्म न लोकोत्तरं सर्वातिशयम्' अपि तु सर्वमेवेत्यभिप्रायः, ।

तत्र दानवीरमुदाहर्त्तुमाह—तत्रेति

(५२) अत्र दानवीररसत्वं योजयितुमाह—अत्र परशुरामस्येति । त्यागे दाने "त्यागो विहापितं दानम्" इत्यमरः, सम्प्रदानभूतैरित्यादिषु साक्षादप्रतिपादितैरपि यथासम्भवं प्रतीतिलभ्यैरिति विशेषणं ज्ञेयम् । सत्त्वस्य गुणविशेषस्य अध्यवसाय उद्रेकः आदिपदात् दानस्य प्ररोचनादयश्च तैस्तथोक्तैः, विभावतो विशेषेण कथितः । त्यागादिभिरित्यत्रादिपदात् त्यागे कर्त्तव्यानां सङ्कल्पदक्षिणादेः परिग्रहः । अनुभावितः । सामाजिकानामनुभवविषयीकृतः । उत्साहः स्थायिभावो दानवीरतां दानवीररसत्वं भजते प्राप्नोति ।

---

( क ) दानवीर इति । यदि तु विप्रलम्भादीनामिवास्य स्वशब्देनाभिधानं विरुद्धमङ्गीक्रियते तदेदमुदाहरणं व्याख्यम्—

"कियदिदमधिकं मे यद्द्विजायार्थयित्रे कवचमरमणीयं कुण्डले चार्पयामि ।
अकरुणमवकृत्य द्राक्कृपाणेन निर्यद्बहलरुधिरधारं मौलिमावेदयामि ॥"

धर्मवीरो यथा युधिष्ठिरः—

( ५३ ) 'राज्यं च वसु देहश्च भार्या भ्रातृसुताश्च ये ।
यच्च लोके ममायत्तं तद् धर्माय सदोद्यतम् ॥'

इत्थं दानवीरमुदाहृत्य धर्मवीरमुदाहरति—धर्मवीर इति ।

( ५३ ) राज्यञ्चेति । कस्मिन्नपि नाटके पद्यमिदमिति केचित् । राज्यम्, वसु वित्तम्, देहो वपुः, भार्या द्रौपदी स्त्री ये च भ्रातरो भीमसेनादयस्तेषां सुता आत्मजा

एषा द्विजवेषाय स्वर्गाधिपतये कवचकुण्डलदानोद्यतस्य तद्दानविस्मितान् सभ्यान्प्रत्युक्तिः । अत्र याचमान आलम्बनम् । तदुदीरिता स्तुतिरुद्दीपिका । कवचादिवितरणं तत्र लवुत्वादिकश्चानुभावः । इत्यर्थान्तरसंक्रमितवाच्यध्वन्युत्थापितो गर्वः स्वकीयलोकोत्तरपितृजन्यत्वादिस्मृतिश्च व्यभिचारिणौ । वृत्तिरप्यत्र तत्तदर्थानुरूपोद्गमविरामशालितया सहृदयैकचमत्कारिणी । तथाहि—उत्साहपोषकं कवचकुण्डलार्पणयोर्लघुत्वनिरूपणं विधातुं पूर्वार्धे तदनुकूलशिथिलबन्धात्मिका । उत्तरार्धे तु मीलितः प्राग्वक्तृगतगर्वोत्साहपरिपोषणायोद्धता ।

ततः परं ब्राह्मणे सविनयत्वं प्रकाशयितुं तन्मूलीभूतं गर्वराहित्यं ध्वनयितुं पुनः शिथिलैवा अत एवावेदयामीत्युक्तम् । न तु ददामि वितरामीति वा । **इदन्तु नोदाहरणीयम्**—

"यस्योद्दामदिवानिशार्थिविलसद्दानप्रवाहप्रथा-
माकर्ण्यावनिमण्डलागतवियद्वन्दीन्द्रवृन्दाननात् ।
ईर्ष्यानिर्भरफुल्लरोमनिकरव्यावल्गदूधः स्रव-
त्पीयूषप्रकरैः सुरेन्द्रसुरभिः प्रावृट् पयोदायते ॥"

अत्रेन्द्रसभामध्यगतसकलनिरीक्षकालम्बनः अवनिमण्डलगतवियद्वन्दीन्द्रवदनविनिर्गतराजदानवर्णनोद्दीपितः, ऊधः प्रस्रुतपीयूषप्रकरैरनुभावितः, असूयादिः सञ्चारिभिः परिपोषितोऽपि कामगवीगत उत्साहो राजस्तुतिगुणीभूत इति न रसव्यपदेशहेतुः ।

अत एवेदमपि नोदाहरणीयम्—

"साब्धिद्वीपकुलाचलां वसुमतीमाक्रम्य सप्तान्तरां
सर्वो द्यामपि सस्मितेन हरिणा मन्दं समालोकितः ।
प्रादुर्भूतपरप्रमोदविदलद्रोमाञ्चितस्तत्क्षणं
व्यानम्रीकृतकन्धरोऽसुरवरो मौलिं पुरो न्यस्तवान् ॥"

इह च भगवद्वामनालम्बनाः, तत्कर्तृकमन्दनिरीक्षणोद्दीपितः, रोमाञ्चादिभिरनुभावितः, हर्षादिभिः पोषितः· उत्साहो व्यज्यमानोऽपि गुणः । प्रागन्यगतस्येव प्रकृते राजगतस्यापि तस्य राजस्तुत्युत्कर्षकत्वात् । एतेन "त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः" इति प्रकृतोदाहरणं न मनोहरमावहतीति । तस्य गुणीभूतव्यङ्ग्यत्वेन रसध्वनिप्रसङ्गेऽनुदाहरणीयत्वात् । ननु "अकरुणमवकृत्य" इत्यत्रापि प्रतीयमानस्य दानवीरस्य कर्णस्तुत्यङ्गत्वात्कथं ध्वनित्वमिति चेत्? सत्यम्, अत्र कवेः वर्णवचनानुवादमात्रकत्वे कर्णस्तुतौ तात्पर्यविरहात्, कर्णस्य च महाशयत्वेनात्मस्तुतौ तात्पर्यानुपपत्तेः स्तुतिः वाक्यप्रतिपाद्या नास्ति परन्तु वीररसप्रत्ययानन्तरं तादृशोत्साहेन लिङ्गेन स्वाधिकरणे सा अनुमीयते ( अनुमानाकारश्च कर्णोऽयं स्तुतिपात्रं तादृशोत्साहशालित्वात् ) राजवर्णनपद्ये "यस्योद्दामदिवानिशम्" "साब्धिद्वीपकुला" इत्यादौ तु वर्णनीयैव राजस्तुतिरिति, प्रधानभूतायां राजस्तुतौ, उत्साहादेर्गुणीभूतत्वमेवेति केचिद् वदन्ति ।

युद्धवीरो यथा श्रीरामचन्द्रः—

( ५४ ) भो लङ्केश्वर ! दीयतां जनकजा रामः स्वयं याचते
कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किंचिद्गतम् ।
नैवं चेत्खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः ॥'

कि बहुना लोके "लोकस्तु भुवने जने" इत्यमरः यच्च उद्यानादिकं ममायत्तम् मदधीनम् "अधीनो निघ्न आयत्तः" इत्यमरः । विद्यते तद्राज्यादिसर्वमेव मया धर्माय धर्महेतवे सदा उद्यतं सर्वदा त्यागादावुपयुक्तम् ।

अत्र वक्तुर्युधिष्ठिरस्य वैदिककर्मण्युत्साहः स्थायीभावः धर्म आलम्बनविभावः "स्वर्गकामो यजेत" "धर्मान्न प्रमदितव्यम्" इत्यादिस्वर्गजनकतादिश्रुतिरुद्दीपनविभावः, एताद्दशोक्तिरनुभावः, हर्षधृत्यादयश्च व्यभिचारिभावः, अङ्गाङ्गिभावं प्राप्तैः समुदायैरास्वाद्यमानः सामाजिकानां धर्मवीररसतामापद्यते ।

( ५४ ) भो लङ्केश्वरेति । बालरामायणे दशाननं प्रति श्रीरामचन्द्रस्योक्तिरियम् । भो लङ्केश्वर ? रावण ! जनकजा मिथिलेशसुता मम प्राणवल्लभा सीता दीयताम् मह्यमिति शेषः रामो रामनाम्ना ख्यातो वलिहन्ता स्वयं याचते त्वामिति शेषः, न पुनर्दूतादिना, येनाविश्वासो भवेदिति भावः । अयं ते तव को नु मतिविभ्रमः बुद्धिभ्रमः । नयं नीतिं स्मर बलवद्विरोधिता दुरन्ता भवतीति नीतिं विचिन्तयेत्यर्थः । अद्यापि मया ते किञ्चिदपि राज्यपुत्रादिनाशं न कृतं विहितम् , तथापि मया सह सन्धेरुपायः कोऽपि न कृत इत्यर्थः । चेद् यदि एवं जनकजां न दास्यसीति शेषः, तदा खरदूषण-त्रिशिरसां पूर्वनिषूदिततत्तद्दैत्यानां कण्ठासृजा कण्ठच्छेदसमये तदीयरुधिरेण पङ्किलः पङ्कयुक्तः शोभित इत्यर्थः, धनुषो ज्याबन्धुबन्धूकृतः गुणयोजितः रिपुहननान्मम मित्रीकृत इत्यर्थः, एष पत्री शरः न सहिष्यते एव न क्षमिष्यते एव, यद्यप्यात्मनोऽसहनरूपधर्मस्तथापि पत्रिण्यारोपेन रिपुहनने तस्य प्रधानोपायत्वं सूचितम् । शार्दूलविक्रीडितं छन्दस्तल्लक्षणमुक्तं प्राक् ( १९८ पृ० )

अत्र रावण आलम्बनविभावः, तत्कर्तृकसीतापहरणमुद्दीपनविभावः, एताद्दशोक्तिरनुभावः, सहिष्यते इति गम्यगर्वादयश्च सञ्चारिभावाः एवं परस्परमिलितैः समुदायैरास्वाद्यमानः श्रीरामस्य युद्धोत्साहः स्थायीभावः सामाजिकानां युद्धवीररसतामापद्यते ।

उदाहरणान्तरं यथा—

"क्षुद्राः सन्त्रासमेते विजहत हरयः क्षुण्णशक्रेभकुम्भाः
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां, नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि" ॥

अत्र राम आलम्बनविभावः तत्कारितं सेतुबन्धनमुद्दीपनविभावः क्षुद्रेषूपेक्षा पराक्रमशालिनि रामे चातिस्पर्धाऽनुभावो लज्जां दधतीति व्यङ्ग्यया गर्वः "क्षुण्णशक्रेभकुम्भा" इति व्यङ्ग्या स्मृतिश्च व्यभिचारी । एवं परस्परमिलितैरास्वाद्यमानो मेघनादस्य युद्ध उत्साहः स्थायिभावः सामाजिकानां युद्धवीररसतामापद्यते ।

दयावीरो यथा जीमूतवाहनः—

( ५५ ) 'शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवापि तावत्किं भक्षणात्त्वं विरतो गरुत्मन् ! ॥'

( ५६ ) एष्वपि विभावादयः पूर्वोदाहरणवदूह्याः ।

अथ भयानकः—

**( ५७ ) भयानको भयस्थायिभावो भूताधिदैवतः ।
स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः ॥ २३५ ॥**

**( क ) यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम् ।
चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः ॥ २३६ ॥
अनुभावोऽत्र वैवर्ण्यगद्गदस्वरभाषणम् ।**

( ५५ ) शिरामुखैरिति । नागानन्दनाटके गरुडेन भक्ष्यमाणं नागं परित्रातुं तद्भक्षणाय आत्मदेहार्पितवतस्तद्भक्षितबहुमांसस्य जीमूतवाहनस्यातृप्तं गरुडं प्रत्युक्तिरियम् । हे गरुत्मन् ! वैनतेय ! शिरामुखैः तव चञ्चुप्रहारेण नाडीच्छेदैः "नाडी तु धमनी शिरा" इत्यमरः, रक्तं शोणितं स्यन्दत एव निर्गच्छत्येव तथा अद्यापि अधुनापि मम "जीमूतवाहनस्ये"ति शेषः, देहे मांसमस्ति । तवापि तावत् तृप्तिं मन्मांसखादनेन क्षुन्निवृत्त्या सन्तोषं न पश्यामि नावलोकयामि । एवं सति त्वं किं कथं भक्षणान्मम मांसादनाद्विरतोऽसि । अयं च गरुडः श्येनरूपधारी शक्रो ज्ञेयस्तमुद्दिश्य गरुत्मन्निति सम्बोधनम् । अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिच्छन्दस्तल्लक्षणं चोक्तं प्राक् (१९९ पृ०)

अत्र नाग आलम्बनविभावः, तस्य कातरोक्तिरुद्दीपनविभावः, एतादृशोक्तिरनुभावः धृत्यादयश्च व्यभिचारिभावाः एभिः परस्परमिलितैः समुदायैरास्वाद्यमानः, जीमूतवाहनस्य कपोतरूपधारिधर्मात्मकपरदुःखप्रहरणोत्साहः स्थायीभावः सामाजिकानां रसतामापद्यते ।

( ५६ ) दानवीर इव धर्मवीरादिष्वपि विभावाद्यूह्यमिति दर्शयितुमाह-एष्विति । एषु धर्मवीरादिष्वित्यर्थः । पूर्वोदाहरणवत् दानवीरोदाहरणवत् । अन्यत् स्पष्टम् ।

( ५७ ) इत्थं वीररसं निरूप्य भयानकं निरूपयिति-भयानक इत्यादिना । तत्त्वविशारदैरलङ्कारशास्त्रमर्मज्ञैः भयानको रसः, भयं प्राक्प्रदर्शितस्वरूपं स्थायीभावो यस्य सः । कालः कृतान्तः अधिदैवतमधिष्ठात्री देवताऽस्येति सः, प्राणिनां मृत्युविधायकत्वेन भयस्य यमेन प्रयोज्यत्वादित्यभिप्रायः । अतश्च कृष्णः श्यामवर्णः, स्त्री स्त्रीजातिः नीचोऽधमजनश्च प्रकृतिराश्रयो यस्य सः स्त्रीनीचनायक इत्यर्थः "बालस्त्रीनीचनायकः" इति रुद्रभट्टः भयस्य उत्तमपात्राश्रिते तु भयानकाभास एव ज्ञेयः । एतच्च स्वयमेव मूलकृद्वक्ष्यति "उत्तमपात्रगतत्वे भयानके" इत्यादिना यस्माद्वस्तुनो भीतिर्भयम् उत्पद्यते तद्वस्तु आलम्बनं मतम् । तस्य आलम्बनस्य घोरतरा चेष्टा पुनरुद्दीपनं भवेत् "वेदाः प्रमाणमि"ति वदुद्देश्यविधेयभावेनान्वयोपपत्तिरवगन्तव्या । अत्र भयानके वैवर्ण्यं वदनदिवि-

( क ) व्याघ्राद्यालम्बनस्तत्तद्दैकृतोद्दीपनो मतः । कम्पप्रस्वेदरोमाञ्चमीलनाद्यनुभाववान् ॥ जडतादीनत त्रासमोहादिव्यभिचारियुक् ॥' इति पाठान्तरं यस्मादित्यारभ्य "व्यभिचारिणः" इत्यस्यस्थाने उपलभ्यते ।

प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः ॥ २३७ ॥
जुगुप्सावेगसंमोहसंत्रासग्लानिदीनताः ।
शङ्कापस्मारसंभ्रान्तिमृत्युबाधा व्यभिचारिणः ॥ २३८ ॥

( ५८ ) यथा—'नष्टं वर्षवरैः–' इत्यादि ( १४८ पृ. ) ।

अथ बीभत्सः—

( ५९ ) जुगुप्सास्थायिभावस्तु बीभत्सः कथ्यते रसः ।
नीलवर्णो महाकालदैवतोऽयमुदाहृतः ॥ २३९ ॥
दुर्गन्धमांसरुधिरमेदांस्यालम्बनं मतम् ।
तत्रैव कृमिपाताद्यमुद्दीपनमुदाहृतम् ॥ २४० ॥
निष्ठीवनास्यवलननेत्रसंकोचनादयः ।

वर्णता गद्गदस्वरेण अस्फुटशब्देन च भाषणम् अनुभावः । अपि च प्रलयो नष्टचेष्टता, स्वेदो धर्मजलम्, रोमाञ्चः रोमाञ्चोल्लासः, कम्पः कम्पिताङ्गत्वम् दिक्प्रेक्षणम् इतस्ततः कातरतया दृष्टिप्रक्षेपः, आदिपदात् अपसरणादयश्च अनुभावाः । जुगुप्सा बीभत्सरसस्था- यिभावः, संभ्रान्तिरुन्मादः आद्यपदात् गरलादयश्च सञ्चारिभावा भवेयुः एवञ्च भयस्था- यिभावको विकटाद्यालम्बनकृतद्विकटचेष्टाद्युद्दीपितः वैवर्ण्याद्यनुभावितः जुगुप्सादिस- ञ्चारितो भयानक रस इत्यवधेयम् ।

( ५८ ) यथेति । नष्टमिति । प्राग्प्रदर्शितमिदमुदाहरणमत्रचरणद्वयमेवोदाहरणत्वेन प्रदर्शितन्नत्वन्यत्रैव द्वित्राण्यक्षराणि प्रतीकमात्राणि तेनैतावतैवं भयानकरसस्य पर्याप्ता प्रतीतिर्भवतीत्यवगन्तव्यम् ।

अत्राकस्मादागतो वानर आलम्बनविभावः तस्योग्रदन्तप्रकाशनादिरुद्दीपनविभावः, वर्षवरादीनां पलायनादयोऽनुभावाः, शङ्कादयश्च सञ्चारिभावाः एवमेतैर्मिलितैरास्वा- द्यमाना भयं स्थायीभावः सामाजिकानां रसतामापद्यते । कचित्तु-"ग्रीवाभङ्गाभिरामम्" इत्युदाहरणं दृश्यते । बालनायको यथा—

"घोरमम्भोधरध्वानं निशम्य व्रजबालकाः ।
मातुरङ्के निलीयन्ते सकम्पविकृतस्वराः ॥"

अत्र व्रजबालकानां भयमम्भोधरध्वानेनालम्बनविभावेन तद्वैकल्येनोद्दीपनविभावेन मातॄणां क्रोडेषु निलयनेन सकम्पस्वरवैकृत्येन चानुभावाभ्यां त्रासावेगाभ्यां सञ्चारिभा- वाभ्याञ्च भयं स्थायीभावः सामाजिकानां रसतामापद्यते ।

स्त्रीनायको यथा—

"इदं मघोनः कुलिशं धारा सन्निहितानलम् । स्मरणं यस्य दैत्यस्त्री गर्भपाताय कल्पते ॥"

अथ विभावादयः स्वयमेवाह्याः ।

( ५९ ) भयानकरसं निरूप्य बीभत्सरसं निरूपयति—जुगुप्सेति । जुगुप्सा पूर्वदर्शि- तस्वरूपा घृणा निन्दितत्वेनावगमनमिति यावत्, स्थायी भावो यस्य सस्तथोक्तस्तु रसो बीभत्स इति कथ्यते । वधकुत्सायाम्, अस्मात् कुत्सायां सन्, भावे घञ् । अयं बीभत्सो महाकालः कात्यायनी वल्लभा दैवतं देवता अस्य स, महाकालस्य भूतपिशाचादिरूप- बीभत्सगणसेवित्वादिति भावः । नीलवर्णः धूम्रवर्णकः उदाहृतः कथितः, धूम्रवर्णकत्वञ्च—

"महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णम्"

( क ) अनुभावास्तत्र मतास्तथा स्युर्व्यभिचारिणः ॥ २४१ ॥
मोहोऽपस्मार आवेगो व्याधिश्च मरणादयः ।

यथा—

( ६० ) 'उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्त्तः पर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥'

इति स्मृत्याऽवगम्यते । दुर्गन्धानि मांसरुधिरमेदांसि आलम्बनं मतम् । अत्राप्य-समानविभक्तित्वं पूर्ववदेवावगन्तव्यम् । तत्र मांसादिष्वेव कृमिपाताद्यं कीटपतनाद्यम् आद्यपदेन दुर्गन्धादीनां परिग्रहः, उद्दीपनम् उदाहृतं कथितम्, आचार्यैरिति शेषः । तत्र बीभत्से निष्ठीवनं थूत्कप्रक्षेपः आस्यवलनं मुखसंवरणम् नेत्रसङ्कोचनम् आदिपदात् वा-न्तादिश्च अनुभावा मताः । तथा मोहः अपस्मारः, आवेगः, व्याधिः, मरणम्, आदिप-दात् ग्लान्यादयश्च व्यभिचारिणः स्युः ।

तथा च जुगुप्सा स्थायिभावको दुर्गन्धाद्यालम्बनको मांसादौ कृमिपाताद्युद्दीपितो निष्ठीवनाद्यनुभावितो ग्लान्यादिसञ्चारितो महाकालदैवतो नीलवर्णो बीभत्सो रसः ।

( ६० ) उदाहरति—उत्कृत्योत्कृत्येति । मालतीमाधवे पञ्चमेऽङ्के श्मशानगतशवभो-जिनं प्रेतरङ्कं दृष्ट्वा माधवस्योक्तिरियम् । आर्त्तः क्षुत्पीडितः पर्य्यस्ते परितः आ समन्तात् अस्ते बलवत्पिशाचापहरणशङ्कया क्षिप्ते नेत्रे येन सः तथा प्रकटिताः दैन्यात्स्थपुट-गतमांसग्रहणाय च प्रकाशिताः दशना दन्ता येन सः । प्रेतरङ्कः प्रेतेषु रङ्को कृपणो दरिद्र इति यावत् पिशाच इति व्याख्यानं हेयमेव तत्पर्यायेष्वपाठात् "प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः" इति मेदिनी । "रङ्कुः कृपणमन्दयोः" इति गोपालः । प्रथमम् आदौ कृत्तिं शवचर्म "अजिनं चर्म कृत्तिः स्त्री" इत्यमरः । उत्कृत्योत्कृत्य नखैरुत्पाट्यो-त्पाट्य वीप्सायां द्विर्भावः । अथ अनन्तरं पृथुना महता उच्छोथेन उत्पन्नशोथरोगेण भूयांसि बहुलानि अंसौ स्कन्धौ स्फिक् ऊरुमूलं कटिसन्धिभागश्च "स्त्रियां स्फिचौ कटि प्रोथौ" इत्यमरः, पृष्ठपिण्डी जङ्घोर्ध्वभागः एवमाद्यवयवेषु सुलभानि उग्रपूतीनि उत्कट-दुर्गन्धानि "पूतिगन्धस्तु दुर्गन्धः" इत्यमरः मांसानि जग्ध्वा भक्षयित्वा अङ्कस्थात् उत्स-ङ्गस्थात् करङ्कात् प्रेतशरीरात् अस्थिशेषात्तन्मस्तकाद्वा "करंको मस्तकः" इति मेदिनी, अस्थिसंस्थं अस्थिसंलग्नं स्थपुटं विषमोन्नतभागः "स्थपुटं विषमोन्नतम्" इति गोपालः, तत्र गतं स्थितमपि क्रव्यम् अपक्वमांसम् "पललं क्रव्यमामिषम्" इत्यमरः, अत एव रङ्कत्वम्, अव्यग्रं शनैर्यथास्यात्तथा अत्ति भक्षयति ।

अत्र स्थपुटगतस्यापकर्षणादार्त्तत्वम् कश्चिदाच्छिद्य नेष्यतीति भयात् पर्यस्तनेत्रम् । तदाकर्षणार्थं च दशनप्रकटनम् । भोजनसमाप्तिभयाच्छनैरिति । यावत्कृत्तिसत्त्वमुत्की-र्त्तनम् । स्रग्धराच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ( २१९ पृ० ) ।

अत्र शवः प्रेतरङ्को वा आलम्बनविभावः, तत्कर्त्तनं मांसादनं चोद्दीपनविभावः, तद्द्रष्टुर्नासाकुञ्चनवदनविधूनन-विवर्त्तन—निष्ठीवनादयोऽनुभावाः, उद्वेगग्लान्यादयो

( क ) अनुभावाश्च मोहाद्यस्तथा स्युर्व्यभिचारिणः" इति पाठान्तरमप्यन्यत्रोपलभ्यते ।

अथाद्भुतः—

( ६१ ) अद्भुतो विस्मयस्थायिभावो गन्धर्वदैवतः ॥ २४२ ॥
पीतवर्णो वस्तु लोकातिगमालम्बनं मतम् ।
गुणानां तस्य महिमा भवेदुद्दीपनं पुनः ॥ २४३ ॥
स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसंभ्रमः ।
तथा नेत्रविकासाद्या अनुभावाः प्रकीर्तिताः ॥ २४४ ॥
वितर्कावेगसंभ्रान्तिहर्षाद्या व्यभिचारिणः ।

यथा—

( ६२ ) 'दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
टंकारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।

व्यभिचारिभावाः, एतैः संवलित आस्वाद्यमानः जुगुप्सा स्थायीभावः सामाजिकानां रसतामापद्यते । ननु-आलम्बनं तदेव यमाश्रित्य रसो भवति, तदाश्रयो बोद्धा यस्य हृदये रसोद्बोधः, तथासति रतिशोकादिषु प्रागुदाहृतेषु यथाऽऽलम्बनाश्रययोः सम्प्रत्ययः न तथा हासे जुगुप्सायां च तत्रालम्बनस्यैव प्रतीतेः, न च पद्यश्रोतैवाश्रयः तस्य च रसास्वादाधिकरणत्वेन लौकिकहासजुगुप्साश्रयत्वानुपपत्तेरिति चेत्? सत्यम्, तदाश्रयस्य द्रष्टृपुरुषविशेषस्य तत्राक्षेप्यत्वात् । तदनाक्षेपे तु श्रोतुः स्वकान्तावर्णनपद्यादिव रसोद्बोधे बाधकाभावादिति स्पष्टमाकरे

( ६१ ) अद्भुतरसं निरूपयति-अद्भुत इति । अद्भुतो रसः, विस्मयः स्थायीभावो यस्य सः, गन्धर्वा दैवतं देवतास्येति गन्धर्वदैवतः, "गानादिना विस्मयोत्पादनं गन्धर्वैः क्रियत" इति पुराणादिषु प्रसिद्धमित्यवधेयम् । "अद्भुतो ब्रह्मदैवत" इति भरतोक्त्या तु "ब्रह्माधिदैवतः" इति पाठो भवितुं युक्तः । पीतवर्णः गन्धर्वाणां पीतवर्णत्वादेवायमपि पीतस्वरूपः, लोकातिगं लोकं संसारमतिगच्छत्यतिक्रामतीति तादृशं लोकोत्तरमलौकिकमिति यावत्, इन्द्रजालादिकं वस्तु आलम्बनं मतम् । तस्य लोकातिगवस्तुनो गुणानां महिमा गुणमहत्वं पुनरुद्दीपनं भवेत्। स्तम्भो जाड्यम्, स्वेदः, रोमाञ्चः, गद्गदस्वरः सम्भ्रमो वेग इमे तथा नेत्रविकासः, आद्यपदात् निमेषरहितावलोकनादयश्च अनुभावाः प्रकीर्त्तिताः कथिताः। वितर्कः, आवेगः, सम्भ्रान्तिजेड्त्वम्, हर्षः, आद्यपदात् औत्सुक्यादयश्च व्यभिचारिणो भवेयुः ।

तथा च विस्मयस्थायिभावको विस्मयजनकवस्त्वालम्बनको विस्मयकर्माद्युद्दीपितः स्तम्भाद्यनुभावितो वितर्कादिसञ्चारितोऽद्भुतो रसः ।

( ६२ ) उदाहरति—दोर्दण्डाञ्चितेति । महावीरचरिते रामेण धनुषि भग्ने सति दीर्घकालव्यापकेन हरधनुष्टङ्कारेण विस्मयापन्नस्य लक्ष्मणस्योक्तिरियम् । दोर्दण्डाभ्यां भुजदण्डाभ्यां "भुजबाहूप्रवेष्टो दोः" इत्यमरः, अञ्चित आकृष्टो यश्चन्द्रशेखरस्य महेशस्य धनुर्दण्डस्तस्य अवभङ्गाय द्विखण्डीकरणाय उद्यत उत्थितः, आर्यस्य श्रीरामभद्रस्य बालचरितानां प्रस्तावनायाम् उपक्रमे डिण्डिमो वाद्यभेदः, टङ्कारध्वनिः अत्र दण्डद्विरुक्त्या पुनरुक्तत्वं दोषः, द्राक् झटिति पर्य्यस्तो विक्षिप्तः कपालसंपुट ऊर्ध्वकटाहाधः कटाहः पिधानपात्राकारब्रह्माण्डोपरिभाग इति यावत् तेन भिन्दत् लङ्घच्छमानं ब्रह्माण्ड एव

द्राक्पर्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥'

अथ शान्तः—

( ६३ ) शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः ॥ २४५ ॥
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः ।

भाण्डं स्थाल्यादिवत् पात्रं तस्य उदरे अभ्यन्तरे भ्राम्यन् अत एव पिण्डितः स्तूपीकृतो बहुलीकृत इति यावत् चण्डिमा प्रखरता यस्य स तथोक्तः सन् कथमद्यापि इदानीमपि न विश्राम्यति न विरमति शरावाच्छन्नमुखस्थालीमध्ये उत्पद्यमानः शब्दो बहुलो भवत्यभिप्रेत्येदम्, इत्यहो महदाश्चर्यम् । शार्दूलविक्रीडितं छन्दः, तल्लक्षणन्तूक्तं प्रागेव (१८८पृ०)

अत्र धनुष्टङ्कार आलम्बनविभावः, तस्य विशालतोद्दीपनविभावः, तस्यैतादृशवर्णनमनुभावः, हर्षादयश्च व्यभिचारिभावाः, लक्ष्मणस्य विस्मयः स्थायीभावः एतत्समुदितोऽद्भुतरसतामापद्यमानः सामाजिकैरनुभूयते ।

अत्रोदाहरणप्रसङ्गे यच्च सहृदयशिरोमणिभिः प्राचीनैरुदाहृतम्—

"चित्रं महानेष बतावतारः क्व कान्तिरेषाभिनवैव भङ्गिः ।
लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः ॥" इति ।

तत्र यथा महाभारते गीतासु विश्वरूपं दृष्टवतः पार्थस्य तद्गता भक्तिरेव—

"पश्यामि देवांस्तव देव ! देहे सर्वांस्तथा भूतविशेषसङ्घान्"

इत्यादिवाक्यसन्दर्भेणाग्रे च—

"नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा"॥

इति भगवदुक्त्या च प्रधानं प्रतीयते विश्वरूपदर्शनजो विस्मयश्च तदुत्कर्षकः, तथैव प्रतीयतां नामात्र विस्मयः, परन्त्वसौ कथङ्कारमद्भुतरसध्वनिव्यपदेशहेतुः ? प्रतिपाद्यमहापुरुषविशेषविषयायाः प्रधानीभूतायाः स्तोतृगतभक्तेः प्रकर्षत्वे विस्मयस्य भक्तिं प्रति गुणीभूतत्वादस्य रसालङ्कारत्वमेवोचितम् । ननु भक्तिर्नैव तत्र प्रतीयत इति चेत्? अत्र सहृदया एव प्रष्टव्याः । इदन्तूदाहार्यम्—

"एते किन्नु सत्यमेव तरवश्चूतप्रसूनोत्कराः
किं वा काचन वाटिकेयमनघा यस्याममी कोकिलाः ।
चित्रं कुत्र तिरोहिता मरुधरा सा यत्र मे पत्तनं
नानानिर्झरवैभवं कुत इदं सद्यः समुन्मीलितम् ॥"

स्वदेशे ऐन्द्रजालमहिम्ना पुष्पवाटिकाऽऽविर्भावमवलोकयता मरुदेशीयस्य कस्यचिदुक्तिरियम् ।

( ६३ ) शान्तरसं निरूपयति—शान्त इति । शान्तो रसः शमः पूर्वप्रदर्शितस्वरूपः स्थायीभावो यस्य सः, अतश्चोत्तमा प्रकृतिः स्थायिभावाधारो यस्य स, उत्तमपात्रवृत्तिस्थायिभावक इत्यर्थः ।

कुन्दो माघ्यं पुष्पविशेष इन्दुश्चन्द्रस्तयोरिव सुन्दरी मनोहरा छाया कान्तिर्यस्य स अतिधवलवर्ण इत्यर्थः "छाया सूर्यप्रभाकान्तिः प्रतिबिम्बमनातपः" इत्यमरः,

"शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः"

अनित्यत्वादिनाशेषवस्तुनिःसारता तु या ॥ २४६ ॥
परमात्मस्वरूपं वा तस्यालम्बनमिष्यते ।
पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः ॥ २४७ ॥
महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः ।
रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः ॥ २४८ ॥
निर्वेदहर्षस्मरणमतिभूतदयादयः ।

यथा—

( ६४ ) 'रथ्यान्तश्चरतस्तथा धृतजरत्कन्थालवस्याध्वगैः
सत्रासं च सकौतुकं च सदयं दृष्टस्य तैर्नागरैः ।

---

इति श्रीमद्भागवतोक्त्या सत्ययुगे महाविष्णोरपि शुभ्ररूपत्वादिति भावः । यद्वा— "तत्र सत्त्वं निर्मलत्वात्प्रकाशक"मितिगीतोक्त्या शमजनकसत्त्वगुणस्य शुभ्रवर्णत्वात् स्फटिकवत्प्रकाशकत्वाच्च शमस्यापि शुभ्रवर्णत्वमित्याशयो ज्ञेयः । नारा आप अयनं स्थानं यस्य स नारायणः श्रिया महालक्ष्म्या सहितो नारायणो महाविष्णुरेव दैवतं देवता अस्येति सः, शमस्य सत्त्वगुणोत्पत्तेः सत्त्वस्य च नारायणाश्रितत्वादित्यभिप्रायः । अनित्यत्वम् अवश्यविनाशित्वम् आदिपदाच्चरमे आत्मनोऽहितकारित्वादिकञ्च तेन कारणेन या शेषाणां समग्राणां वस्तूनां वित्तपुत्रादिपदार्थानां निःसारता निस्तत्त्वता, परमात्मस्वरूपं वा तस्य शान्तस्य आलम्बनमिष्यते।पुण्याश्रम चित्रकूटादि हरिक्षेत्रं श्रीक्षेत्रादि तीर्थं प्रयागादि रम्यवनं नैमिषारण्यादि, आदिपदात् वैद्यनाथादयः, तथा महापुरुषसङ्गः आद्यपदात् मोक्षशास्त्रश्रवणमननादयश्च तस्य शान्तरसस्य उद्दीपनरूपिणः। रोमाञ्चः आद्यपदात् दयासंन्यस्ततादयश्च अनुभावाः । तथा निर्वेदः, हर्षः, स्मरणं मतिः, भूतेषु सर्वजन्तुषु दया तज्जनिका धृतिः व्यभिचारिगणे दयाया अन्तर्भावाभावात् दयापदेन धृतिग्रहणम् , आदिपदादौत्सुक्यादयश्च व्यभिचारिणः स्युः । अत्र प्रायः—

"रोमाञ्चाद्यानुभावास्तथा स्युर्व्यभिचारिणः । निर्वेदहर्षस्मरणमतिभूतदयादयः ॥"

इति पाठान्तरं समुपलभ्यते । अत्र आद्यपदेनामोदोन्मादादीनां परिग्रहः, आदिपदेन धैर्यादीनाञ्च परिग्रहो बोध्यः । भूतदया च दैन्यविशेषरूपत्वाद्भावः । यदाह— 'भूतदया चैतन्यविशेष एव परदुःखेन परोपचिकीर्षया वा स्वदुःखेन स्वानौजस्यस्य दयात्वेन क्रोडीकरणात्' इति ।

तथा च—शमस्थायिभावक अनित्यत्वाद्यालम्बनकः, पुण्याश्रमाद्युद्दीपितः रोमाञ्चाद्यनुभावितः निर्वेदादिसञ्चारितश्शान्तो रसः ।

( ६४ ) उदाहरति—रथ्यान्तश्चरित इति। जातनिर्वेदस्य कस्यचिद्भिक्षोरुक्तिरियम् । कदा निःशङ्कः करटः काकः 'काके तु करटारिष्टपलिपुष्टसकृत्प्रजा." इत्यमरः, रथ्याः पन्थाश्चत्वरो वा तदन्तस्तन्मध्ये चरतो भिक्षार्थंभ्रमतः, "रथ्या तु रथसङ्घाते प्रतोल्यां पथि चत्वरे" इति मेदिनी, धृतः परिहितः जरत्या जीर्णायाः कन्थाया लवा लेशः खण्डमिति यावत् , येन तस्य तथोक्तस्य, अध्वनि मार्ग गच्छन्ति ये तेऽध्वगाः पथिकास्तैः, तैर्नागरै ग्रामवासिभिर्जनैः छिद्रमयत्वेन बीभत्सवेषदर्शने च सत्रासञ्च नग्नप्रायत्वेनानुपादेयकन्थावधारणेन च सकौतुकञ्च अकिञ्चनात्वात्सदयञ्च यथास्यात्तथा दृष्टस्य, तथा

निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कः करटः कदा करपुटीभिक्षां विलुण्ठिष्यति ॥'

( ६५ ) पुष्टिस्तु महाभारतादौ द्रष्टव्या ।

( ६६ ) अस्य दयावीरादेः सकाशाद्भेदमाह—

निरहंकाररूपत्वाद्दयावीरादिरेष नो ॥ २५६ ॥

निर्व्याजीकृतः कामादिनाशेन निष्प्रतिबन्धकीकृतो यश्चित्सुधाया ज्ञानामृतस्य रसो ज्ञानेनास्वादस्तस्य मुदा आनन्देन निद्रायमाणस्य मुद्रितलोचनस्य मे मम करपुटीभिक्षां करस्थितभिक्षाप्राप्ततण्डुलादिकं विलुण्ठिष्यति लुण्ठनं विधाय नेष्यति तं समयमेवाभिलषामीति भावः । अत्र निर्बीजीकृत इति पाठे तु तस्यायमर्थः—निर्गतं बीजं संसारकारणम् अविद्याख्यं यस्मात्प्रकाशादित्यर्थः । वा निर्गतं बीजम् आत्मप्रकाशज्ञानकारणं मनो यत्र स निर्बीजःब्राह्माकारां वृत्तिमुत्पाद्य मनसः सत्त्वांशस्यापि विनाशाभ्युपगमात्। यद्वा बीजं वासना तच्छून्यीकृत्येत्यर्थः।शार्दूलविक्रीडितं छन्दस्तल्लक्षणञ्चोक्तं प्राक्। (६६८पृ०

अत्र समस्तसुखहेतूपक्षेपणात् लब्धाशेषवस्तुनिःसारता आलम्बनविभावः, नागरेकरूपेण दर्शनानि उद्दीपनविभावाः, भिक्षावलुण्ठनाशंसालभ्यौ रोमाञ्चहर्षौ अनुभावव्यभिचारिणौ वक्तुर्भिक्षोः शमः स्थायीभावः एष समुदायः सामाजिकेषु शान्तरसतया परिणमति ।

उदाहरणान्तरं यथा—

"शिलं किमनलं भवेदनलमोदरं बाधितुं ?
पयः प्रसृतिपूरकं किमु न धारकं सारकम् ।
अयत्नमलमल्पकं पथिपटच्चरं कच्चरं-
भजन्ति विबुधा मुधा हहह कुक्षितः कुक्षितः ॥"

अत्र जगतोऽनित्यताज्ञानेनालम्बनेन सुकृतिविशेषेणोद्दीपनेन तृष्णाराहित्यादिनाऽनुभावेन निर्वेदादिना सञ्चारिणा च शमः स्थायीभावः सामाजिकेषु शान्तरसतया परिणमति ।

( ६५ ) बाहुल्येनास्य परिपुष्टिस्तु महाभारतशान्तिपर्वादाविति दर्शयति—पुष्टिस्त्विति । स्पष्टम् ।

( ६६ ) नन्वत्रापि प्राणिदयायां धर्मादौ चोत्साहस्य विद्यमानत्वात् तादृशोत्साहस्यैव स्थायिभावाऽभ्युपगमत्वेनायमपि दयावीरादावेवान्तर्भवतीति अलमतिरिक्तशान्तरसकल्पनयेत्यत आह—अस्येति ।

निरहङ्कारेति । अस्मिन् शमे उत्पन्ने शमिनो निरहङ्काररूपत्वात् "अहमिदं विधास्यामि" "एतानि वस्तूनि मम" इत्याकारकसर्वाहङ्काररहितत्वात् एष शान्तत्वेनाभिलषितो रसो नो दयावीरादि न दयावीराद्यन्तर्गतो भवितुमर्हति "अभावे नह्य नो नापी" त्यमरः, आदिपदात् धर्मवीरदेवताविषयरतिप्रभृतीनां परिग्रहः । इदमत्रानुसन्धेयम्—अहंकारसंवलितो दयादिरेव दयावीरादेः प्रयोजकः, निरहङ्कारत्वे तु शान्तरस इति वैचित्र्यविशेषाद्भेदाभ्युपगम।इति ।

( ६७ ) दयावीरादौ हि नागानन्दादौ जीमूतवाहनादेरन्तरा मलयवत्याद्यनुरागादेरन्ते च विद्याधरचक्रवर्तित्वाद्याप्तेर्दर्शनादहंकारोपशमो न दृश्यते। शान्तस्तु सर्वाकारेणाहंकारप्रशमैकरूपत्वान्न तत्रान्तर्भावमर्हति। ततश्च नागानन्दादेः शान्तरसप्रधानत्वमपास्तम्।

( ६८ ) ननु—

( ६९ ) 'न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा।
रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु समप्रमाणः॥'

( ७० ) इत्येवंरूपस्य शान्तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात्तत्र संचार्यादीनामभावात्कथं रसत्वमित्युच्यते—

( ७१ ) युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः।

( ६७ ) कारिकार्थं स्फुटीकरोति—दयावीरादाविति। नागानन्दादौ नागानन्दं नाम श्रीहर्षप्रणीतं तदादौ दयावीरप्रधाने नागानन्दाख्यनाटकादावित्यर्थः। आदिपदेन धर्मवीरादेः, द्वितीयादिपदेन धर्मराजयुधिष्ठिरादेः तृतीयादिपदेन राज्यप्राप्त्यादेः तुरीयादिपदेन वैरूप्यप्रकारादेः, पञ्चमादिपदेन च भारतसाम्राज्यादेः परिग्रहः। जीमूतवाहनश्च नागानन्दनाटकस्य नायकः। मलयवती चैतस्यैव नाटकस्य नायिका। अहङ्कारस्य उपशमो निवृत्तिर्न दृश्यते तथासति अनुरागाद्यसम्भवः स्यात्। सर्वप्रकारेणाहङ्कारप्रशमैकरूपत्वात् सर्वप्रकाराहङ्कारनिवृत्तिलक्षणत्वात्। तत्र दयावीरादौ। ततश्चैतादृशविशेषावधारणाच्च। अपास्तं खण्डितं ज्ञातव्यम्।

( ६८ ) शान्तस्य कथमपि रसत्वं न स्यादित्याक्षिपति—नन्विति।

( ६९ ) न यत्रेति। यत्र रसे स्थायिभावाश्रयस्य शमिनो न दुःखम् तच्चात्मनः प्रतिकूलतया वेदनीयम्, न सुखं तदप्यात्मनोऽनुकूलतया वेदनीयम्, न चिन्ता, न द्वेषो रिपूणामपचिकीर्षा रागो मित्राणामुपचिकीर्षा, इच्छा वैषयिकसुखतदुपायेच्छा नच काचिदपि सर्वेषु लोष्टाश्मकाञ्चनादिषु भावेषु पदार्थेषु सत्सु रागद्वेषशून्येन समं तुल्यं प्रमाणं ज्ञानं यत्र सः स शान्तो रसो मुनीन्द्रैर्भरतप्रभृतिभिः कथितः। "अत्र शमप्रधानः" इति पाठोऽपि कस्यचित्सम्मतः तत्र शम एव स्थायितया प्रधानं यत्र स इति विग्रहो बोध्यः। उपजातिश्छन्दस्तल्लक्षणञ्चोक्तं प्राक् (१८८ पृ०)

( ७० ) इत्येवं रूपस्येति। इत्येवं प्रकारेण निर्दोशितस्वरूपस्येत्यर्थः। शान्तस्य शमगुणस्य। आत्मस्वरूपापत्तिलक्षणायां जीवस्य परमात्मस्वरूपत्वप्राप्तिदशायां परमात्मनि लयप्राप्तिरूपायामिति यावत्। तत्र मुक्तिदशायाम्। सञ्चार्यादीनामित्यादिपदेन आलम्बनोद्दीपनानुभावानां परिग्रहः। एवञ्च परिपोषकादीनामसत्त्वेन पुष्ट्यसम्भवात् शममात्रस्य कथं शान्तरसत्वमिति पाशङ्कृतुराशयः। नचान्यस्थलादाविवात्राप्याक्षेपेण आलम्बनादीनामुपलम्भः स्यादेवेति वाच्यम् मुक्तिदशायां शमिनोऽहङ्कारस्यासत्त्वेन आलम्बनादीनामाक्षेपस्यैवाशक्यत्वात्, अत एव च कतिपये शान्तस्य रसत्वमेव न स्वीकुर्वन्तीत्यवधेयम्।

( ७१ ) समाधत्ते—युक्तवियुक्तदशायामिति। तत्र विषयेभ्यः परावृत्य साक्षात्कर्त्तव्ये ब्रह्मणि

रसतामेति तदस्मिन्सञ्चार्यादेः स्थितिश्च न विरुद्धा ॥२५ ॥

( ७२ ) यश्चास्मिन्सुखाभावोऽप्युक्तस्तस्य वैषयिकसुखपरत्वान्न विरोधः ।
उक्तं हि—

( ७३ ) 'यच्च काममुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥'

( ७४ ) 'सर्वाकारमहंकाररहितत्वं व्रजन्ति चेत् ।
अत्रान्तर्भावमर्हन्ति दयावीरादयस्तथा ॥'

---

निधाय वर्त्तमानश्चिन्तासन्तानवान् युक्तः, यत्र च योगजधर्मसहकृतेन मनसा जिज्ञासित-वस्तुसाक्षात्कारो जायते यश्च भूतेन्द्रियजयाः अणिमाद्याः कार्यसिद्धीः दूरश्रवणाद्याश्चेन्द्रियसिद्धीरासादितवान् स समाधिव्युत्थितो वियुक्तः । यस्य योगजधर्मसहकृतानि बहिरिन्द्रियाणि स्वे स्वे विषये महत्त्वसन्निकर्षादिसहकारनिरपेक्षाणि वर्त्तन्ते, एवं यथा—राजर्षिर्जनकः । तद्दशायां तदवस्थायां पुरुषस्य यः शमः अवस्थितो वर्त्तते स एव तादृशशम एव स्थायिभावो यतो रसताम् एति लभते ततस्तस्मादस्मिन् शान्तरसे सञ्चार्यादेः, आदिपदादालम्बनोद्दीपनानुभावानाञ्चापि स्थितिश्च न विरुद्धा प्रतिकूला पुरुषस्य तस्मिन् कालेऽपि संसारासक्तिमत्त्वेन निर्वेदादीनामपि भवितुं शक्यत्वादिति समाधानुराशयः । आर्याच्छन्दस्तल्लक्षणञ्चोक्तं प्राक् ( १३ पृ० )

( ७२ ) ननु पूर्वं "शमो निरीहावस्थायाम्" इत्यादिना भवद्भिः सुखरूपत्वं शमस्य प्रतिपादितम् "न यत्र दुःखम्" इत्यनेन सुखाभावस्य प्रतिपादनात्परस्परं विरोध आपद्यत इत्यत आह—यश्चेति । अस्मिन् "न यत्र दुःखम्" इत्यादिश्लोके । तस्य सुखाभावस्य । वैषयिकसुखपरत्वादिति । तेन शान्तस्य वैषयिकसुखभिन्नं तृष्णाक्षयाधीनं सुखं विद्यत एवेत्युक्तम्, एवञ्च "न यत्र दुःखं न सुखम्" इत्यादिना कामिनीसम्भोगादिजनितसुखाभाव उक्तो न पुनर्ब्रह्मसुखाभावोऽपीति न परस्परविरोध इत्यवधेयम् । शमे ब्रह्मानन्दप्राप्तेः बीजप्रदर्शनायाह—उक्तं हीति ।

( ७३ ) यच्चेति । लोके अमुष्मिंल्लोके यच्च काममुखम् कामिनीसम्भोगादिवैषयिकसुखम्, यच्च दिव्यं पारलौकिकं यागादिक्रियया स्वर्गीयं महत्सुखं लोके महासुखत्वेन ख्यातं सुखम्, एते कामसुखदिव्यसुखे तृष्णायाः ऐहिकामुष्मिकभोगविषयाया अभिलाषायाः क्षयः एकान्ततोऽपनोदनं तस्य सुखमानन्दवल्ल्यादिषु ब्रह्मानुभवजन्य आनन्दस्तस्य तथोक्तस्य सुखस्य शमसुखस्य षोडशीं कलामपि षोडशांशभागपरिमाणमपि नार्हतः । अयमाशयः, तृष्णाक्षयो हि—

विषया विनिवर्त्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते ॥

इत्युक्तदिशा परमात्मसाक्षात्कारानन्तरं एवेति तस्मिन् सति ऐहिकञ्चामुष्मिकञ्च सर्वं सुखं वैरस्यमावहति अत्र परश्शता आनन्दश्रुतय एव प्रमाणम् ।

( ७४ ) शान्तरसस्य दयावीरादावन्तर्भावस्तु कथमपि भवत्येव न हि प्रत्युत तत्पात्राणामहङ्कारसामान्याभावे दयावीरादिरसा एव शान्तरसेऽन्तर्भावं प्राप्स्यन्तीत्यत आह—सर्वाकारमिति । पुरुषाश्चेद्यदि सर्वं देहेन्द्रियादि आकारः आश्रयो यस्य तत्तथोक्तं

( ७५ ) आदिशब्दाद्धर्मवीरदानवीरदेवताविषयरतिप्रभृतयः ।

( ७६ ) तत्र देवताविषया रतिर्यथा—

( ७७ ) 'कदा वाराणस्यामिह सुरधुनीरोधसि वस-
न्वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।
अये गौरीनाथ ! त्रिपुरहर ! शंभो ! त्रिनयन !
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥'

---

सर्वप्रकारमित्यर्थः । एतेनाहङ्कारसामान्याभावो व्यज्यते । अहङ्कारोऽभिमानः स च देहेन्द्रिययोरहमित्यारोपः । देहादिसम्बन्धिनि पुत्रादौ ममेत्यारोपश्च । तद्रहितत्वं तद्भावं भजन्ति दयावीरादिनायका इति शेषः । तदा तदीयदयोत्साहघटिता दयावीरादयो रसा एव अत्र शान्तरसे अन्तर्भावमर्हन्ति । यदि दयावीरादिनायका देहेन्द्रियादिविषयकाभिमानशून्या भवन्ति तदा दयावीरादयो रसाः शान्तस्वरूपा भवन्तीति भावार्थः । एवञ्च शान्तो नामातिरिक्तो रसोऽङ्गीकार्य्य एवेति निर्विवादोऽयं विषयः ।

( ७५ ) आदिशब्दोपादानप्रयोजनमुपपादयति—आदिशब्दादिति । अनुपदोक्त "निरहङ्काररूपत्वाद्दयावीरादिरेष नो" इति कारिकास्थादिपदादित्यर्थः । प्रभृतिग्रहणेन गुरु-विप्र-मुनि-राज-विषया रतिभावा अत्र गृह्यन्त इति बोध्यम् ।

( ७६ ) तत्रेति । तत्र शान्तरसान्तर्भूतेषु दयावीरादिषु मध्ये । देवताविषया रतिर्यथेति । शान्तरसस्यान्तर्भूतदेवताविषयारतिर्यथेत्यर्थः ।

( ७७ ) कदेति । मुक्तिदशायां शिवभक्तस्य कस्यचिदुक्तिरियम् । कदा इह वाराणस्यां काश्यां ब्रह्मपुराणे—

"वरणा चास्यसिश्चैव द्वे नद्यौ सुरवल्लभे ! ।
अन्तराले तयोः क्षेत्रं भूमावपि विशेन्न तत् ॥
पञ्चक्रोशप्रमाणन्तत्क्षेत्रं दत्तं मया तव ॥" इति ।

एतेन असीवरणयोर्मध्ये वाराणसीक्षेत्रमित्युच्यते अतस्तद्व्याख्यस्य तत्त्वाभावो ज्ञेयः । सुरधुन्या गङ्गाया रोधसि तीरे पुलिने वा वसन् कौपीनं चीरं गुह्यं वा वसानः परिदधानः, शिरस्यञ्जलिपुटं निदधानः स्थाप्यमानश्च सन्नाहम्, "अये ( प्रेम्णामन्त्रण इदम् ) "अये अयि चानुनये" इति गोपालः, गौरीनाथ पार्वतीवल्लभ ! हे त्रिपुरहर त्रिपुराणां स्थूलसूक्ष्मकारणभेदात् त्रिप्रकाराणां देहानां वा हरस्तत्सम्बुद्धौ तथोक्त ! शम्भो त्रिनयन विरूपाक्ष ? सूर्यचन्द्रानलात्मकलोचनत्रयशालिन्नित्यर्थः, प्रसीद इति क्रोशन् उच्चैरुच्चारयन् निमिषमिव तत्परिमित समयमिव दिवसान् नेष्यामि यापयिष्यामि ।

अत्र कौपीनपरिधानेच्छया अहङ्कारनिवृत्तिः प्रतीयते । एवञ्च कौपीनादिविशेषणैः सुखादिराहित्यप्राप्त्या सर्वाहङ्कारराहित्यलाभाद् देवविषयरतेरपि शान्तरसत्वप्राप्तिः । एतेन "सन्त्वार्यादिभिरपुष्टतया न शान्तो रसः किन्तु शिवविषयं रतिमात्रं भावशब्दवाच्यम्" इत्युक्तिः परास्ता । शिखरिणीछन्दः स्तल्लक्षणन्तूक्तं प्राक् ( १८४ पृ० ) ॥

सुरस्रोतस्विन्याः पुलिनमधितिष्ठन्नयनयो-
र्विधायान्तर्मुद्रामथ सपदि विद्राव्य विषयान् ।

( ७८ ) अथ मुनीन्द्रसंमतो वत्सलः—

( ७६ ) (क)स्फुटं चमत्कारितया वत्सलं च रसं विदुः ।
स्थायी वत्सलतास्नेहः पुत्राद्यालम्बनं मतम् ॥ २५१ ॥
उद्दीपनानि तच्चेष्टा विद्याशौर्यदयादयः ।
आलिङ्गनाङ्गसंस्पर्शशिरश्चुम्बनमीक्षणम् ॥ २५२ ॥
पुलकानन्दबाष्पाद्या अनुभावाः प्रकीर्तिताः ।
संचारिणोऽनिष्टशङ्काहर्षगर्वादयो मताः ॥ २५३ ॥
पद्मगर्भच्छविर्वर्णो दैवतं लोकमातरः ।

विधूतान्तर्ध्वान्तो मधुरमधुरायां चिति कदा
निमग्नःस्यां कस्यांचन नवनभस्याम्बुदरुचि ॥"

इत्यादौ देवताविषयारतिरहङ्कारपुरस्कृतेति न तत्र शान्तरसव्यवहर्त्तुं शक्येति विभावनीयम् ।

( ७८ ) अथ मुनीन्द्रसम्मत इति । मुनीन्द्रस्य परमप्राचीनालङ्कारिकस्य भरतस्य सम्मतोऽभिमतो वत्सलो रसः प्रतिपाद्यत इति शेषः । अनया वचो भङ्ग्या वत्सलस्य रसत्वे नव्यानां स्वस्य च सम्मतिर्नास्तीति सूचितम् । एवञ्च सञ्चार्यादिभिः परिपुष्टसत्वे आत्मजादिस्नेहस्य दयावीरादावन्तर्भावः, अन्यथा स्नेहाख्यं भावशब्दवाच्यमित्यवधेयम्, तथापि भरतमुन्यभिमतस्यार्षतानापलपितुमशक्यत्वात् तत्सम्मतत्वेनेह प्रतिपाद्यत इति ग्रन्थकर्त्तुराशयः ।

( ७९ ) स्फुटमिति । स्फुटम् उत्कटं चमत्कारितया चमत्कारजनकतया वत्सलञ्च रसं विदुः भरतादय इति शेषः । चमत्कारस्यात्रोक्तप्रकारेण रसे सारत्वान्निर्देशः । एवञ्च स्वमतेऽपि चमत्कारातिशयेन वत्सलस्य रसत्वं स्वीक्रियत एवेत्याशयः । वत्सलतारूपः स्थायीभावः, पुत्रः, आदिशब्दात् अनुजतनुजादिकञ्च आलम्बनं मतम् । तस्य पुत्रादेश्चेष्टा खेलनकूर्दनहास्यादिः, विद्या शास्त्रादिज्ञानम्, शौर्य्यं वीरत्वम् उदयो वित्तोपार्जनादिभिरुन्नतिः, आदिपदात् सेवादयश्च उद्दीपनानि उद्दीपनविभावाः ।

वत्सलता स्नेहः इति । नचैवं दयावीरत्वप्रसक्तिरिति वाच्यम्, आत्मापकारेणापि परोपचिकीर्षाप्रयोजकधर्मविशेषस्य दयात्वात् सुखसम्बन्धिनि अनुरागविशेषस्य च स्नेहत्वादित्यनयोर्भेदात् । आलिङ्गनञ्च अङ्गसंस्पर्शश्च शिरश्चुम्बनञ्चेत्येतेषां समाहारद्वन्द्वः । ईक्षणम् अवलोकनम्, पुलको रोमाञ्चः, आनन्दबाष्पं हर्षाश्रुपातः आद्यपदात् वसनभूषणदानादयश्च अनुभावाः प्रकीर्तिताः । अनिष्टशङ्का हर्षः, गर्वः, आदिपदात् धृत्यादयश्च सञ्चारिणो मताः । लोकमातरः गौर्यादिषोडशमातरो दैवतं देवता, तासामत्यधिकस्नेहयुक्तत्वादित्यभिप्रायः । अतश्च पद्मगर्भः पङ्कजकोषस्तस्य छविरिव छविः शोभा यस्य स तथोक्तो वर्णःशुभ्रपीतसदृशेत्यर्थः । मातृणामपि तद्रूपत्वादिति भावः । एतेषां रसानां वर्णदैवतयोः कल्पनाहेतुं तु शृङ्गार एव निरूपितम् ।

( १ ) स्फुटमित्यतः पूर्वं क्वचित्—
"वत्सलश्च रस इति तेन स दशमो मतः" इत्यपि पाठः समुपलभ्यते ।

यथा—

( ८० ) 'यदाह धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलीम् ।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः ॥'

( ८० ) उदाहरति-यदाह धात्र्येति। रघुवंशे रघोः शैशवावस्थावर्णनमिदम् । धात्र्या उपमात्र्या उदितस्य उच्चारितस्य प्रथममिति प्रथमोच्चारितम् "राजदन्तादिवत्समासः" यद्वा प्रथमम् उदितं।वचः "मा" इत्यादिकं वचनं यदाह कथयति स्म, तदीयां धात्रीसम्बन्धिनीम् अङ्गुलीम् अवलम्ब्य आश्रित्य यच्च ययौ प्रणिपातशिक्षया नमस्कारविधानोपदेशेन यच्च नम्रोऽभूत्, तेन कर्मणा स अर्भक शिशू रघुः "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः । पितुर्दिलीपस्य मुदं हर्षं ततान विस्तारयामास ।

अत्र रघुरालम्बनविभावः, तथोक्तभाषणादिकमुद्दीपनविभावः, अध्याहारलभ्या आलिङ्गनादयोऽनुभावाः, हर्षादयश्च व्यभिचारिभावाः एतैः समुदितैः अध्याहारलभ्यो दिलीपस्य स्नेहः स्थायीभावः, सभ्येषु वत्सलरसतामापद्यते (क) उदाहरणान्तरं यथा—

"एह्येहि वत्स ! रघुनन्दन ! पूर्णचन्द्र ! चुम्बामि मूर्द्धनि चिरञ्च परिष्वजे त्वाम् ।
आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देऽथवा चरणपुष्करकद्वयन्ते ॥"

अथानुजालम्बनोऽयं यथा—

देशे देशे कलत्राणि देशे देशे च बान्धवाः ।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥

अत्र श्रीरामस्यानुजस्नेहस्ताद्दशोक्त्या अनुभावेनस्वाद्यमानो रसतामापद्यते ।

यथा वा—

"बालोऽसि मुग्धमधुरोऽसि सुखोचितोऽसि दूरं प्रयान्तमनुयाहि न मां प्रयाहि
हा हन्त ! लक्ष्मण ! किमित्यनुयासि तात ! स्वेदाञ्चितं मुखमिदं श्रमितोऽसि कष्टम् ॥

( क ) अत्र काव्यप्रकाशानुयायिनामयमभिप्रायः-यदाह 'धात्र्या" इत्यादिषु वात्सल्यलक्षणा रतिरेव प्रतीयते, तेन वत्सलो रसो न स्वीकरणीयः, भावत्वेनैव गतार्थत्वात् । स च यदि रसत्वव्यपदेशमर्हति तदा भगवदालम्बनो रोमाञ्चाश्रुपाताद्यनुभावितो हर्षादिसञ्चारितो भागवतादिपुराणश्रवणसमये भगवद्भक्तैरनुभूयमानो भक्तिरसः कुतो न स्यात् ? भगवदनुरागरूपा भक्तिश्चात्र स्थायिभावः, भक्तिर्नाम—

"द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता ।
सर्वेशे मनसो वृत्तिः भक्तिरित्यभिधीयते ॥" इति ।

नचायं शान्तरसेऽन्तर्भावमर्हति अनुरागस्य वैराग्यविरुद्धत्वात् , इत्युच्यते-

"रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ।
भावः प्रोक्तस्तदाभासा ह्यनौचित्यप्रवर्त्तिताः ॥"

इति प्राचां सिद्धान्तात् भक्तेर्देवादिविषयरतित्वेन भावान्तर्गततया रसत्वव्यपदेशस्यालाभात् । नच तर्हि रतित्वाविशेषात्कामिनीविषयायामपि रतेर्भावत्वमस्तु । अथवास्तुविनगमनाविरहात् भगवद्भक्तेरेव स्थायित्वम् , कामिन्यादिरतीनां च भावत्वमिति वाच्यम् , भरतादिमुनिवचनानामेव रसभावत्वादिव्यवस्थापकत्वेन स्वातन्त्र्यायोगात् अन्यथा पुत्रादिविषयाया अपि रतेः स्थायिभावत्वं कुतो न स्यात् ? न स्याद्वा कुतः शुद्धभावत्वं जुगुप्साशोकादीनामित्यखिलदर्शनव्याकुलता स्यात् अन्यथैवोपपत्तौ मुनिशासनातिक्रमेण रसानां नवत्वाधिककल्पने मानाभावादिति ।

( ८१ ) एतेषां च रसानां परस्परविरोधमाह—

( ८२ ) आद्यः करुणबीभत्सरौद्रवीरभयानकैः ॥ २५४ ॥

भयानकेन करुणेनापि हास्यो विरोधभाक् ।

करुणो हास्यशृङ्गाररसाभ्यामपि तादृशः ॥ २५५ ॥

रौद्रस्तु हास्यशृङ्गारभयानकरसैरपि ।

भयानकेन शान्तेन तथा वीररसः स्मृतः ॥ २५६ ॥

शृङ्गारवीररौद्राख्यहास्यशान्तैर्भयानकः ।

शान्तस्तु वीरशृङ्गाररौद्रहास्यभयानकैः ॥ २५७ ॥

शृङ्गारेण तु बीभत्स इत्याख्याता विरोधिता ।

( ८३ ) आद्यः शृङ्गारः ।

( ८४ ) एषां च समावेशप्रकारा वक्ष्यन्ते ।

( ८५ ) कुतोऽपि कारणात्क्वापि स्थिरतामुपयन्नपि ॥ २५८ ॥

---

( ८१ ) ननूक्तानां रसानां परस्परं विरोधः केनापि सह विद्यते न वेति जिज्ञासोदयात्तमेव निरूपयितुमाह—एतेषाञ्चेति । चेति किञ्चार्थं । एषाम् अनुपदोक्तानामित्यर्थः, एतच्छब्दस्य तत्रैव शक्तः, तथाहि—

"इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम् ।
अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ।" इति ॥

प्रकरणादत्रैव विरोधप्रदर्शनादग्रे सप्तमपरिच्छेदीय"परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः ।"

इत्यनेन विरोधिरसदोषविवेचनसौकर्य्यं भवतीति बोध्यम् ।

( ८२ ) आद्य इति । आद्यः प्रथमः शृङ्गारः करुण-बीभत्सरौद्रवीरभयानकैः विरोधभागित्यग्रिमेणान्वयः । अन्यत्राप्येवं तृतीयान्तपदैः सह प्रथमान्तपदानां विरोधभागित्यनेन सम्बन्ध ऊहनीयः । प्रतिबन्धकत्वमेव विरोधो नाम । यद्यपि तत्प्रतिबन्धकत्वं वस्तुतः स्थायिभावानामेव सम्भवति तथापि तेषामेव रसरूपत्वेन परिणतत्वात्परस्परं रसेष्वेव तत्पर्यवस्यतीति रस एव विरोधभागित्यवगन्तव्यम् , एवञ्च शोकजुगुप्सादिस्थायिभावसद्भावे शृङ्गारस्थायिभावरतेरुद्भव एव न स्यादिति हेतुना शृङ्गारः करुणादिभिः सह विरोधभागिति ध्येयम् । अन्यत्राप्येवमेव, अत्र "शान्तस्तु वीरशृङ्गारै" इत्युक्त्याद्यः शान्तेनापि सह विरोधभागिति ज्ञातव्यम् । इत्थमेवान्यत्रापि स्वविरोधिनां मध्ये कस्याप्यप्रतिपादनादपि तदध्याहार ऊहनीयः ।

( ८३ ) संशयदूरीकरणाय कारिकास्थमाद्यपदार्थं स्फुटीकरोति—आद्य इति ।

( ८४ ) एषाञ्चेति चेति किञ्चार्थेति । एषां विरोधभाजां समावेशप्रकारा अवस्थानोपायाः वक्ष्यन्ते । इहैव दोषपरिच्छेदावसरे इति शेषः । अस्माभिरपि तत्रैव विवेचयिष्यते ।

( ८५ ) ननु शृङ्गारादावुन्मादादेरपि सम्भवात् कथं रत्यादिस्थायिभावत्वमत आह—कुतोऽपीति । कुतोऽपि कारणात् अभिलषितप्राप्त्यादिवशात् क्वापि कुत्रापि तद्रसविशेषे

**उन्मादादिर्न तु स्थायी न पात्रे स्थैर्यमेति यत् ।**

( ८६ ) यथा विक्रमोर्वश्यां चतुर्थेऽङ्के पुरूरवस उन्मादः ।

**( ८७ ) रसभावौ तदाभासौ भावस्य प्रशमोदयौ ॥ २५९ ॥**

**सन्धिः शबलता चेति सर्वेऽपि रसनाद्रसाः ।**

( ८८ ) रसनधर्मयोगित्वाद्भावादिष्वपि रसत्वमुपचारादित्यभिप्रायः ।

भावादय उच्यन्ते—

**( ८९ ) संचारिणः प्रधानानि देवादिविषया रतिः ॥ २६० ॥**

**उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ।**

---

स्थिरतां केनापि प्रकारेण बहुकालस्थायित्वम् उपयन्नपि लसन्नपि उन्मादः आदिपदात् निर्वेदादिश्च न तु स्थायी न स्थायिभावपदव्यपदेश्यः । यत् यस्मात् पात्रे नायकादौ स्थैर्यस्थायित्वं न एति प्राप्नोति । एवञ्च स्थिरतया वर्त्तमानत्वमेव स्थायित्वं लभते उन्मादादिस्तु न तथा तिष्ठतीति न तेषां स्थायित्वमिति बोध्यम् ।

( ८६ ) उदाहरति यथेति । विक्रमोर्वश्यां हि उर्वश्यां पुरूरवसोः रतेः समग्रग्रन्थे स्थायित्वात् तस्या एव स्थायिभावत्वम्, उन्मादस्य तु तुरीयाङ्कपर्यन्तमेव स्थायित्वान्न स्थायिभावत्वमिति भावुकैर्विभावनीयम् ।

( ८७ ) ननु यदि रसात्मकं वाक्यमेव काव्यं तर्हि भावादिप्रधानमकाव्यं स्यादत आह—रसभावाविति । रसो भावश्च तौ तथोक्तौ तयो रसभावयोराभासौ रसाभासो भावाभासश्च, भावस्य प्रशम उदयश्चेति तौ भावशान्तिर्भावोदयश्च भावसन्धिर्भावशबलता चेति सर्वेऽपि अष्टप्रकाराः रसनादानन्दसंवलितज्ञानसम्बन्धात् तद्रूपसादृश्यात् गौण्या लक्षणया रसा रसपदप्रतिपाद्या इत्युच्यन्ते ।

( ८८ ) रसनधर्मयोगित्वादिति । रसनधर्मयोगित्वात् काव्यनाट्ययोरास्वादविषयत्वात् । भावादिष्विति । आदिशब्देन भावादयः सप्तनिर्दिष्टानामेव ग्रहणम्, रसानुबन्धितया तत्रैवोपचाराश्रयणस्यौचित्यात् रस्यत इत्युक्तव्युत्पत्तियोगस्यापि तत्रैव तात्पर्यात् एवञ्चादिशब्देन वा दर्शितव्युत्पत्त्या वस्त्वलङ्कारध्वनयो न गृह्यन्त इति बोध्यम् । उपचारात् रत्यादिस्थायिभावानामसत्त्वेन मुख्यलक्षणायोगादिति भावः । न च देवादिविषयरतिसद्भावात् स्थायिभावाभावः कथमितिवाच्यम्, कान्तादिविषयरतेरिव स्थायित्वापपादनाद् । एवञ्च 'वाक्यं रसात्मकं काव्यम्" इत्यत्र सामान्यत्वाद्विविधस्यैव रसस्य बोध इत्युक्तम्भवति ।

( ८९ ) भावं निरूपयति—सञ्चारिण इति । प्रधानानि रसापेक्षया प्राधान्येन व्यज्यमानाः सञ्चारिणो निर्वेदादयो व्यभिचारिभावाः । प्राधान्यञ्चात्र निराकाङ्क्षवाक्यबव्यङ्ग्यत्वमेव । सञ्चारिणो विशेषणत्वेपि नित्यनपुंसकत्वपक्षाश्रयणेन प्रधानानीति नपुंसकनिर्देशो ज्ञेयः । देवादिविषया रतिरनुरागः परिपोषं न नीतेति शेषः, उद्बुद्धमात्रः ज्ञातमात्रः न तु विशिष्य निश्चित इत्यर्थः, स्थायी स्थायिभाववद् वाच्यो न तु स्थिरतामापन्न इत्यर्थः, भाव इत्यभिधीयते । यथा विभावादिरभिव्यक्तो रत्यादिश्चिदानन्दचमत्काररूपत्वेन परिणतो रसतामापद्यते तथा स्वकार्यकारणाभ्यामभिव्यक्तो देवादिविषयरत्यादिश्चिदानन्दरूपतां प्राप्तो भावत्वं प्राप्नोति । चमत्कारसत्त्वासत्त्वाभ्यामनयोर्भेद इति बोध्यम् ।

( ९० ) 'न भावहीनोऽस्ति रसो न भावो रसवर्जितः ।
परस्परकृता सिद्धिरनयो रसभावयोः ॥'

( ९१ ) इत्युक्तदिशा परमालोचनया परमविश्रान्तिस्थानेन रसेन सहैव वर्तमाना अपि राजानुगतविवाहप्रवृत्तभृत्यवदापाततो यत्र प्राधान्येनाभिव्यक्ता व्यभिचारिणो देव-मुनिगुरुनृपादिविषया च रतिरुद्बुद्धमात्रा विभावादिभिरपरिपुष्टतया रसरूपतामनापद्य-मानाश्च स्थायिनो भावा भावशब्दवाच्याः ।

( ९२ ) तत्र व्यभिचारी यथा—'एवंवादिनि देवर्षौ–'इत्यादि ( २३३ पृ. ) । अत्रावहित्था ।

( ९० ) सञ्चारिभावानां प्रधानत्वं स्वसिद्धान्तानुकूलेन प्राचीनमतेनोपपादयति—न भावहीन इति वृद्धा—ननु 'सञ्चारिणस्तावद्रसनधर्मसम्बन्धिन एव ततश्च सञ्चारित्वे-ऽवश्यंरसत्वम्, तथाच ध्वनिरेव रस इत्यतः कथं तत्र भावध्वनित्वमित्यत आह—न भावहीनोऽस्तीति । रसः शृङ्गारादिः भावैर्निर्वेदादिभिः व्यभिचारिभिः हीनोऽसंवलितो नास्ति, तैर्हि रसस्य परिपोषितत्वेन तेषामवश्यापेक्षणीयत्वादिति भावः । देवादिरति-भावस्य रसहीनत्वात् तत्र यथाऽप्रधानतया रसस्तिष्ठति' एवं रसेऽपि अप्रधानतया भाव-स्तिष्ठतीत्यत आह—न भावो रस इति । भावो निर्वेदादिर्व्यभिचारिभावोऽपि रसव-र्जितो नास्ति रसघटकस्थायिभावे निमग्नोन्मग्नभावेनैव निश्चितावस्थानादिति भावः अत एव परस्परकृता अनयो रसभावयोः सिद्धिर्निष्पत्तिः ।
तदुक्तम्—

"योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः ।
शरीरं व्याप्यते तेन शुष्ककाष्ठमिवाग्निना ॥" इति ।

( ९१ ) इत्युक्तदिशेति । इत्युक्तदिशा इत्येवं विधिना भारतादिग्रन्थेनेत्यर्थः । परमालो-चनया सूक्ष्मेक्षिकया इदमवगम्यत इति शेषः । परमविश्रान्तिस्थानेन स्वीयनिश्चितावस्थानावलम्बनेन । सहैव वर्तमाना अपि एकव्यञ्जनाज्ञेयत्वात् सहचरभावेनैकस्मिन्नेव काव्यादौ विद्यमाना अपि । राजानुगतेति । स्वविवाहदिने भृत्य एव प्रधानम् राजा च तदनुगः । एवं प्रधानमपि रसो निराकाङ्क्षवाक्यव्यङ्ग्यस्य प्रधानस्य भावस्य अनुग इत्यर्थः । यथा-स्वसेवकस्य परिणयसभायाम् उपविष्टप्राकृतिकवेशधारिनृपापेक्षया परि-णयोचितात्युज्ज्वलवेशभूषितः सेवको जनानामापाततो नयनाध्वनि' प्राधान्येनाभि-व्यक्तो भवति तथैव वाक्यविशेषे स्थायिभावापेक्षया श्रवणमात्रतः प्राधान्येनाभिव्यक्ता निर्वेदादयो व्यभिचारिणो भावा विद्यन्त तत्रैव ते भावपदव्यपदेश्या भवन्तीति भाव' । राजादीत्यादिपदात् मित्रादिपरिग्रहः । रतिरुद्बुद्धमात्रा इत्यादिकं स्थायिनो भावा इत्यस्य विशेषणम् । तेषां रसतानाप्तौ हेतुः विभावादिरिति तैरपरिपोषश्च तस्य विशिष्याऽ-निश्चितत्वात् । तच्चाग्र उदाहरणे स्फुटीभविष्यति । स्थायिनो भावा रतिहास्यादयः पूर्वोक्ताः ।

( ९२ ) तत्रेति । तत्र तेषु व्यभिचारिभावादित्रिप्रकारभावेषु मध्ये व्यभिचारी तत्सं-ज्ञको भाव इत्यर्थः ।

एवं वादिनीति । देवर्षौ नारदे हरेण पार्वतीघटनार्थंवाक्यवादिनि सति इत्यर्थः ।

( ९३ ) देवविषया रतिर्यथा मुकुन्दमालायाम्—

( ९४ ) 'दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक ! प्रकामम् ।
अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि ॥'

मुनिविषया रतिर्यथा—

( ९५ ) 'विलोकनेनैव तवामुना मुने ! कृतः कृतार्थोऽस्मि निबर्हितांहसा ।
तथापि शुश्रूषुरहं गरीयसीर्गिरोऽथवा श्रेयसि केन तृप्यते ॥'

---

अधोमुखत्वं लज्जया । कमलपत्रगणनावधानसूचना हर्षाकारगोपनाय ।

अत्रेति । अवहित्था आकारगुप्तिः तदाख्यो व्यभिचारिभाव एव भावशब्दवाच्य इत्यर्थः । सा चावहित्थाधोमुखत्वव्यङ्ग्यलज्जया करणेन लीलाकमलपत्रगणनरूपव्यापारासङ्गेन च झटिति प्रतीयत इति तस्याः प्राधान्यम् । विभावादीनामत्यन्ततिरस्कृतत्वेन शृङ्गारस्याप्रधानत्वं बोध्यम् ।

( ९३ ) देवविषयेति । मुकुन्दमालायामिति तदाख्ये स्तोत्र इत्यर्थः ।

( ९४ ) दिवि वा भुवि वेति । हे नरकान्तक ! नरकासुरनिहन्तः ! यद्वा—नास्ति रमणं यत्रासौ नरकः तन्नाम्नो लोकविशेषस्तस्य अन्तको विनाशको निवृत्तक इति यावत् तत्सम्बुद्धौ तादृश ! "नरकः पुंसि निरये देवारातिप्रभेदयोः" इति मेदिनी । मम दिवि स्वर्गे भुवि वा नरके वापि प्रकामं यथेष्टं यथास्यात्तथा वासोऽस्तु । तथापि अवधीरितस्वसौन्दर्य्येण तिरस्कृतं शारदारविन्दं शरत्कालीनपद्मं याभ्यां तादृशौ ते तव चरणौ चिन्तयामि स्मरामि केचित्—मरणकालेऽपि स्मरामीति व्याचक्षते तन्न विचारसहम्, तथाहि तदा च दिवि वा इत्यादिकमसम्बद्धं स्यात् न हि त्वच्चरणस्मरणात् नरकवासप्रसक्तिः येन तत्सहितोक्तिः स्यात् तस्मात्तथाव्याख्यानं हेयमेव । वैतालीयं छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

अत्र वक्तुः श्रीकृष्णभक्तिविषयकरतिरूपो भावः । नचैतस्या अपि रतेः स्थायिभावत्वात् तदुपयोगिविभावाद्यपेक्षणाच्च रसत्वमेव किं न स्यादिति वाच्यम्, नायकनायिकयोः परस्परविषयकरतेरेव रसघटकस्थायिभावत्वाभ्युपगमात् "शृङ्गं हि मन्मथोद्भेदः" इत्यादिना तत्रैव शृङ्गाररसत्वात् । अनेन च नायकनायिकयोः परस्परविषयकरत्यतिरिक्ताया एव रतेर्भावत्वमित्युक्तम्भवति ।

उदाहरणान्तरं यथा—

"चित्रं महानेष तवावतारः क्व कान्तिरेषाभिनवैव भङ्गिः ।
लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः ॥"

अत्र "पश्यामि देवांस्तवदेव ! देहे सर्वांस्तथाभूतविशेषसङ्घान्" इत्यादाविव विस्मयस्य प्रतीयमानत्वेऽपि पुरुषोत्तमविषयायाः स्तोतृगतभक्तेरेव प्राधान्येन प्रतीतिः ।

( ९५ ) विलोकनेनैवेति । शिशुपालवधे प्रथमसर्गे नारदं प्रति श्रीकृष्णस्योक्तिरियम् । हे मुने ! निबर्हितांहसा निबर्हितं विनाशितमंहः पापं येन तादृशेन विनाशितपापेनेत्यर्थः । अमुना तव सानुकम्पविलोकनेनैव कृतार्थः कृतः पर्याप्तः अर्थः धर्मादिचतुर्वर्गप्रयोजनं यस्य स तादृशः परिपूर्णसर्वार्थ इत्यर्थः, "युगपर्याप्तयोः कृतम्" इत्यमरः कृतोऽस्मि । तथापि तव गरीयसीः अतिशयेन गुर्वीः गिरो वचनानि अहं शुश्रूषुः श्रोतुमिच्छुरस्मि । शृणोतेः सन्नन्तात् "सनाशंसभिक्ष उः" इत्युप्रत्ययः । हेतुं विनैव श्रवणे-

राजविषया रतिर्यथा मम—

( ९६ ) 'त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् ।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥'

( ९७ ) एवमन्यत् ।

उद्बुद्धमात्रस्थायिभावो यथा—

( ९८ ) 'हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥'

---

च्छामुक्त्वा हेतुमपि दर्शयति—अथवेति । तथाहि श्रेयसि मङ्गलप्राप्तिविषये केन जनेन तृप्यते अपि तु न केनाऽपीत्यर्थः । प्राप्तेऽपि मङ्गले मङ्गलान्तरस्याप्यभिलाषोदेत्येवेति भावः । वंशस्थं छन्दस्तल्लक्षणञ्चोक्तं प्राक् । ( २०६ पृ० )

अत्र श्रीकृष्णस्य प्रीत्यात्मकरतिरूपो भावः ।

( ९६ ) त्वद्वाजिराजीति । राजानं प्रति कस्यचिदुक्तिरियम् । हे राजन् ? हरो महेशः शिरसा मूर्ध्ना तव वाजिराज्या अश्वसङ्घेन निर्धूतं संग्रामगमनसमये उत्थापितं यद् धूलीनां रेणूनां पटलं समूहं तेन पङ्किलां कर्दमितां गङ्गां जाह्नवीं पङ्किलत्वात्पङ्कजलाभ्यां भूरिर्भारः तद्भिया वोढुमसामर्थ्येन उत्तरोत्तरं भाविदुःखद्वेषरूपेण भयेनेत्यर्थः, न धत्ते धारयति, अत एव जटाजूटात्तां निःसारयतीति भावः ।

अत्र स्वयमेव जगत्पावनाय समुल्लसन्त्या भगवत्या भागीरथ्या अन्यथावर्णनेन-वक्तुः राजविषयकप्रीत्यात्मकरतिरूपो भावोऽभिव्यज्यते ।

( ९७ ) एवमन्यदिति । अन्यत् गुर्वादिविषयकरतेरुदाहरणम् एवमूहनीयमित्यर्थः ।

तत्र गुरुविषयारतिर्यथा—

"अस्मद्गोत्रमहत्तरः क्रतुभुजामद्यायमाद्योरपि·
यज्वानो वयमद्य ते भगवती भूरद्य राजन्वती ।
अद्य स्वं बहु मन्यते सहचरैरस्माभिराखण्डलो
येनैतावदरुन्धतीपतिरपि स्वेनानुगृह्णाति नः ॥"

अत्र वक्तुः दशरथस्य वशिष्ठगुरुविषयकप्रीत्यात्मकरतिरूपो भावः ।

पित्रोरपि गुरुत्वात्तद्विषयकरतिः ।

"जीवत्सु तातपादेषु नवे दारपरिग्रहे । मातृभिश्चिन्त्यमानानां ते हि नो दिवसागताः ॥"

अत्र वक्तुः श्रीरामस्य पितृमातृविषयकानुरागात्मकरतिरूपो भावः ।

मित्रविषयारतिर्यथा—

"अद्य राज्यं मया प्राप्तमद्य वाली हतो मया ।
हरीणामद्य पूज्योऽस्मि यद्भवान्मित्रतां गतः ॥"

अत्र वक्तुः सुग्रीवस्य मित्रश्रीरामविषयकानुरागात्मकरतिरूपो भावः ।

एवमाचार्यगुर्वादिविषयकमुदाहरणमूह्यम् । केचित्तु—आदिपदेन पुत्रादिविषयकरतिमप्युदाहरणत्वेनेच्छन्ति तन्मन्दम्, तद्विषयकरतेर्वत्सलरसत्वेनैव मूलकृता दर्शितत्वात् ।

( ९८ ) हरस्त्विति । कुमारसम्भवतृतीयसर्गे कन्दर्पेण धनुषि आरोपिते आकालिके वसन्ते जाते तपस्यतो महेशस्य पार्वतीं दृष्ट्वा किञ्चिद्धैर्य्यपरावृत्तिवर्णनमिदम् । चन्द्रोदयस्य आरम्भे प्राथमिकदशायां तदानीमेव अम्बुराशिः समुद्र इव किञ्चित्परिलुप्तधैर्यः

( ९९ ) अत्र पार्वतीविषया भगवतो रतिः ।

किञ्चिद्विनष्टधैर्यः हरो महेशस्तु बिम्बफलमिव अधरोष्ठौ यस्य तादृशे उमायाः पार्वत्याः मुखे विलोचनानि त्र्यम्बकान्येव व्यापारयामास प्रेरयामास तत्र चक्षुपातनं चकारेत्यर्थः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दस्तल्लक्षणञ्चोक्तं प्राक् । ( १९९ पृ० )

( ९९ ) अत्रेति । भगवतो महेशस्य । अत्रोमामुखावलोकनरूपानुभावमात्रेणाविर्भवन्ती रतिरुद्दीपनविभावादिपर्य्यालोचनया परिशेषाभावाद् रसत्वं नापद्यते, रसान्तराङ्गत्वाद् न व्यभिचारित्वम् अतो भावनामात्रविषयत्वात् भावव्यपदेश एवास्योचित इति भावः ।

यथा वा—

"स्मरत्यगस्ति पथिकः प्रपापाल्यञ्जलिं स्पृशन् ।
साऽपि स्मरति वामाक्षी भजते ससवारिधीन् ॥"

अत्र परस्परानुरागरूपाया रतेरुद्बोधमात्रम्, न त्वनुभवादिभिः परिपोषः ।

एवम्—

"जरद्म्बरसम्बरग्रन्थग्रन्थविधौ ग्रन्थकारोऽहम् ।
परिमिलकदन्नवण्टनविधानपारङ्गता गृहिणी ॥"

इत्यत्र दुर्गतस्यात्मदशापर्य्यालोचनयाविर्भूतोऽपि हासः परिपोषराहित्येन न रसप्रकृतिः ।

तथा उद्बुद्धमात्रः क्रोधो यथा—

"समाधिभङ्गाय समीहमानं रतिप्रियं वीक्ष्य वसन्तमित्रम् ।
मनाङ्नतभ्रूलतिकोऽपि हन्त ! मुग्धोऽयमित्येव शमी शशाम ॥"

अत्र क्रोध उत्पद्यमानोऽपि शान्तेः साम्राज्येन रसत्वाधिकाराच्च्यावितः ।

शोको यथा—

"पविं पतन्तं परिलोक्य मूर्ध्नि हन्तेत्यनीचैः रुरुवुः क्षणं ते ।
दैवानुकूल्येन चमूच्चरीणां च्युते तदा तत्र जहर्षुराराद् ॥"

अत्र शोकोऽपि उत्तरक्षण एव हर्षनिदानेन विकसत्कुड्मलतामेव नीतः ।

जुगुप्सा यथा—

"विण्मूत्रे लेपयन्नङ्गं लालाभिः स्पृष्टभूतलः ।
हन्तेत्युद्घ्राणमह्नाय स्वार्भकोऽङ्के समुद्धृतः ॥"

इत्यत्र मातुः ।

भयं यथा—

"व्योम्नः प्रपातेन विशीर्णवर्ष्मणो दैत्यस्य दीव्यन्तमुरस्यवेक्ष्य तम् ।
सर्वेऽपि नष्टा व्रजवासिनः क्षणं शक्तिः समानेतुमभून्न कस्यचित् ॥"

अत्र तृष्णावर्त्तस्य मृतस्यापि शरीरपातेन गोपानां भयं जायमानमपि श्रीकृष्णस्य कुशलितयोपलब्धौ न रसतां प्राप्तः । विस्मयस्तु पूर्वोदाहृत "चित्रं महानेष" इत्यादौ (३१० पृ०) इतोऽधिकमाकरतोऽनुसन्धेयम् ।

(१००) ननूक्तं प्रपाणकरसवद्विभावादीनामेकोऽयमाभासो रस इति ।
तत्र संचारिणः पार्थक्याभावात्कथं प्राधान्येनाभिव्यक्तिरित्युच्यते—

**(१) यथा मरिचखण्डादेरेकीभावे प्रपाणके ॥ २६१ ॥**
**उद्रेकः कस्यचित्क्वापि तथा संचारिणो रसे ।**

अथ रसाभासभावाभासौ—

**(२) अनौचित्यप्रवृत्तत्व आभासो रसभावयोः ॥ २६२ ॥**

(३) अनौचित्यं चात्र रसानां भरतादिप्रणीतलक्षणानां सामग्रीरहितत्वे एकदेशयोगित्वोपलक्षणपरं बोध्यम् ।

---

(१००) "सञ्चारिणः प्रधानानि" इत्युक्तं पूर्वं तेन प्रधानीभूतस्यैव व्यभिचारिभावस्य भावत्वग्राहिरुक्ता, विभावादीनां सर्वेषामेव रसादिबोधे एकीभावेन विषयतोक्ता' न तु तत्र व्यभिचारिभावस्य पार्थक्येन प्राधान्यमवगम्यते अत एव कथम् "एवं वादिनी' त्यत्रावहित्थायाः प्राधान्यमिति स्वोक्ति प्रत्येव विरोधमाशङ्कते-ननूक्तमिति । उक्तं—

"ततः संवलितः सर्वो विभावादिः सचेतसाम् ।
प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत् ॥"

इत्यनेनेति शेषः । अत्र प्रपाणकरसवदित्यादिकन्तु तस्यैव स्फुटार्थंप्रकटनमात्रमिति ज्ञेयम् । रस इत्यत्र भाव एव रसः भावस्यैवाप्राधान्यशङ्कया भावत्वाभावस्यैव शङ्कितत्वात्, पार्थक्याभावात पृथक्प्राधान्याभावादित्यर्थः ।

(१) यथाखण्डमरिचादेरिति । यथा प्रपाणके रसे खण्डमारीचादेः एकीभावे मेलने सत्यपि क्वापि कुत्रापि कस्यचित् खण्डस्य मरीचादेर्वा उद्रेको मेलनतारतम्याच्चर्वणायामाधिक्येनानुभवः, तथा विभावाद्येकज्ञानविषयेऽपि रसे क्दापि कस्यचित् सञ्चारिण उद्रेकः काव्यबन्धवैचित्र्यात् प्राधान्येनाभिव्यक्तिर्जायते अतश्च विरोधाभाव इत्यभिप्रायः । रसो भाव उद्रेकनिश्चयश्च निराकाङ्क्षवाक्यव्यङ्ग्यत्वेन बोध्यम् ।

(२) अनौचित्यप्रवृत्तत्व इति । रसभावयोः अनौचित्येन लोकशास्त्रादिविरुद्धत्वेन प्रवृत्तत्वे वर्त्तमानत्वे सति आभास रसाभासो भावाभावश्च दोषो भवति तथा च क्वापि अयोग्यालम्बनविषयस्थायि क्वापि वा भावमात्रस्य अयोग्यपात्रवृत्तित्वं रसभावयोराभास इति भावः । निष्कर्षलक्षणन्तु—अनुचितविभावालम्बनत्वं रसाभासत्वम् । अनुचितविषयत्वं भावाभासत्वमिति । अयोग्यत्वञ्च कदाचित् धर्मशास्त्रनिषेधादसम्भवात्तत्त्वज्ञानासमर्थत्वाच्च ज्ञातव्यम् ।

(३) अनौचित्यपदस्याभिप्रायं स्फुटीकरोति—अनौचित्यमिति । अनौचित्यपदमित्यर्थः । भरतभोजराजादिभिरतिप्रामाणिकैः प्रणीतानि प्रणीय प्रतिपादितानि यानि लक्षणानि तेषां तथोक्तानाम् अत एव तत्तदुक्तसामग्रीणां नाप्रामाण्यसंदेहः इत्याशयः । सामग्रीरहितत्वे पात्रालम्बनादीनां योग्यतादिहेतुसमुदायाभावे सति एकदेशयोगित्वस्य स्थायिभावादिकिञ्चिदंशलक्षणसम्बन्धत्वस्य उपलक्षणपरन्तद्बोधतात्पर्यकमनौचित्यमित्यर्थः । एवञ्चानौचित्यपदेनात्र यत्र पात्रालम्बनादीनां योग्यता नास्ति किन्तु केवलं स्थायिभाव उद्दीपनविभावो वा विद्यते तादृशावस्यैव विवक्षितं वर्त्तत इत्यवधेयम् ।

( ४ ) तच्च बालव्युत्पत्तये एकदेशतो दर्श्यते—

( ५ ) उपनायकसंस्थायां मुनिगुरुपत्नीगतायां च ।
बहुनायकविषयायां रतौ तथानुभयनिष्ठायाम् ॥ २६३ ॥
प्रतिनायकनिष्ठत्वे तद्वदधमपात्रतिर्यगादिगते ।

( ४ ) उक्तकारिकासमूहोक्तेरभिप्रायं निरूपयति—तच्चेति । तच्च अनौचित्यञ्च । बालव्युत्पत्तये बालानां बोधसिद्धये ग्रहणधारणपटुरेवात्र बालपदेन विवक्ष्यते न तु स्तनन्धयः । एकदेशतः कतिपयस्थल इत्यर्थः ।

( ५ ) उपनायकेति । विवाहितायां नायिकाया रतावनुरागे उपनायकसंस्थायाम् उपपतिविषयायां सत्यां श्रृङ्गारे रसे अनौचित्यं भवेत् उपनायकविषयकरतेः धर्मशास्त्रनिषेधत्वेन अयोग्यालम्बनविषयकत्वात् । उपनायकसंस्थायामित्यत्राग्रे प्रतिपादितसम्बन्धाद्यन्यतम एव उपनायको ग्राह्यः, अन्यथा "बहुनायकविषयायाम्" "प्रतिनायकनिष्ठत्वे" इत्युभयोरुपादानमसङ्गतं स्यात् ।

अत्र श्रृङ्गारे "दक्षिणाद्याश्च नायकाः" तत्र नायकलक्षणे—"त्यागी कृती कुलीनः" इत्यत्र कुलीन इत्यनेन सत्कुलप्रसूतत्वं शीलवानित्यनेन सद्वृत्तत्वं च नायकस्य गम्यते । "नायकसामान्यगुणैर्भवति यथासम्भवैर्युक्ता" इत्यनेन नायिकायाश्च सद्वृत्तत्वं न भवतीति तद्विषयश्रृङ्गारस्य तथोक्तनायकाभावदेकदेशयोगित्वम् । निषिद्धयोषित उक्ता श्रृङ्गारतिलके—

"सम्बन्धिमित्रद्विजराजहीनवर्णाधिकानां प्रमदा न गम्याः ।
व्यङ्ग्यस्तथा प्रव्रजिता विभिन्नमन्त्राश्च धर्मार्थमनोभवज्ञैः ॥" इति ।

एवं योषितामपि सम्बन्ध्यादयः पुरुषा निषिद्धाःइति तर्कवागीशा वदन्ति ।

नायकस्य रतौ मुनिपत्नी गुरुपत्नी गतायां सत्यां श्रृङ्गारे अनौचित्यम्, चकारेण सम्बन्ध्यादिपत्न्यो ग्राह्याः, तस्या अपि रतेस्तथैवायोग्यालम्बनविषयकत्वात् । परिणीताया नायिकाया रतौ बहुनायकविषयायां सत्यां श्रृङ्गारे अनौचित्यम्, अनेकेष्वेकस्या रसघटनोपयोगिसमग्ररतेरसम्भवात् । यत्तु-वेश्यायाः कन्याया वा बहुनायकविषयायामित्युक्तं तन्न अनूढवेश्यायां रतौ तस्या उपनायकाभावात् । सम्बन्ध्यादिभिन्ना अपि बहुनायका निषिद्धा इति भावः । तथा रतौ अनुभयनिष्ठायां नायकनायिकयोरेकमात्रनिष्ठत्वे इत्यर्थः ।

नायकस्य नायिकां प्रति रतेः विद्यमानत्वे नायिकायाश्चाविद्यमानत्वे तथा नायिकाया नायकं प्रति रतेर्वर्तमानत्वे नायकस्य चाविद्यमानत्वे श्रृङ्गारे अनौचित्यम्, तस्या अपि रतेः रसघटनोपयोगिपूर्णरतेरसम्भवात् । नायिकाया रतेः प्रतिनायकः प्रतिपक्षी तन्निष्ठत्वे तद्वर्तित्वे श्रृङ्गारे अनौचित्यम्, तस्या अपि रतेः भर्त्तुरनभिमताचरणेनासद्वृत्तत्वाद्रसत्वेन तथा पूर्णत्वासम्भवात् । इदञ्च वीररसे तत्र जेतव्यः प्रतिनायके भवति । तद्वत् अनुरागे अधमपात्रे असत्कुलजातकिरातादिनीचनायके तथा तिर्यगादौ मनुजेतरजन्तुषु तापसादौ च गते विद्यमाने सति श्रृङ्गारे अनौचित्यम्, तेषां नायकलक्षणाभावेन अनुरागतत्त्वज्ञानासमर्थत्वात् । रौद्र इत्यादौ "अनौचित्यम्" इत्यन्वेति' । तथा च गुर्वादिगतो गुरुपितृमुनिसुराद्यादिविषयोऽसौ कोपस्तस्मिन् सतीत्यर्थः । रौद्रे रसे अनौचि-

शृङ्गारेऽनौचित्यं रौद्रे गुर्वादिगतकोपे ॥ २६३ ॥
शान्ते च हीननिष्ठे गुर्वाद्यालम्बने हास्ये ।
ब्रह्मवधाद्युत्साहेऽधमपात्रगते तथा वीरे ॥ २६४ ॥
उत्तमपात्रगतत्वे भयानके ज्ञेयमेवमन्यत्र ।

त्यम्, गुर्वादि प्रति क्रोधस्य धर्मशास्त्रनिषिद्धत्वेन अयोग्यालम्बनविषयकत्वात् ।

"क्रोधात्मको भवेद्रौद्रः प्रतिशूरैरमर्षितः ।
रूक्षप्रायो भवेदत्र नायकोऽप्युग्रविग्रहः ॥"

इत्यनेन रौद्रे प्रतिशूरजनितक्रोधो न तु गुर्वादिजनितक्रोधो नायक इति भावः । शमे हीननिष्ठे अधमजातीयपात्रगते शान्ते रसे च अनौचित्यम्, तथाविधपात्रस्य शमतत्त्वज्ञानासमर्थत्वात् । गुरुपित्रयादिरेव आलम्बनं यस्य तथोक्ते सति हास्ये हास्यरसे अनौचित्यम्, तथाविधहास्यस्य धर्मशास्त्रनिषिद्धत्वेन अयोग्यालम्बनविषयकत्वात् । ब्रह्मवधे आदिपदात् स्त्रियादिवधे अनधिकारिणं प्रति दानदययोः कृत्रिमधर्मे च विषये उत्साहे सति वीरे वीररसे अनौचित्यम्, तथाविधोत्साहस्य धर्मशास्त्रनिषिद्धत्वेन अयोग्यालम्बनविषयकत्वात्, तथा उत्साहे अधमपात्रगते ।

"उत्साहात्मा भवेद्वीरो दयादानादिपूर्वकः । त्रिविधो नायकस्तत्र जायते सत्त्वसङ्कुलः ॥
गाम्भीर्यौदार्यशौटीर्यधैर्यवीर्यादिभूषितः । आवर्जितजनो यत्र विरूढप्रौढविक्रमः ॥

इत्युक्तगुणहीननायकगते चेत्यर्थः वीरे अनौचित्यम्, अयोग्यपात्रगतत्वेन तत्रोत्साहस्यासम्भवात् । तथा भयस्य उत्तमपात्रगतत्वे सति भयानके रसे चानौचित्यम्, तत्राप्ययोग्यपात्रगतत्वेन भयस्यासम्भवात्, "बालस्त्रीनीचनायकः" इत्यनेन भयानकस्य बालादिनायकत्वमेवोचितम् । एवमन्यत्रेति । अदैवहतपात्रगते करुणे, ब्रह्मज्ञानिगतजुगुप्से बीभत्से, विशेषदर्शितपात्रगते अद्भुते, दारुणशत्रुवृत्तिस्नेहे च वत्सले अनौचित्यमवगन्तव्यम् ।

अत्रेदम्बोध्यम्—

"अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् । प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥"

इति ध्वनिकारोक्तदिशा 'यावताऽनौचित्येन रसस्य भावस्य परिपुष्टिर्न भवेत् परिपुष्टिर्वापहीयेत तावत्तत्रानौचित्यं परिहरणीयं विरुद्धायाः सर्वथा निषिद्धत्वात् । एवं सति उपपतिविषयारतिनैव वर्णनीया, अत एव "स्वामी निश्वसिते (७३पृ०) इत्यादौ शृङ्गाराभास एव । शृङ्गारस्तु नाशङ्कनीयः, उपपतिविषयाया रतेः शृङ्गारस्थायित्वानौचित्यात् अन्यथा "उत्तमप्रकृतिप्रायः" इत्याद्युक्तेरसङ्गतिः स्यादेव । एवम्—गुरुपितृमुनिसुराणां ज्यायः सहजादीनाञ्च स्वस्वपत्नीविषयापि रतिर्नैव वर्णनीया हीनत्वव्यञ्जकतया वैरस्योल्लासे रसाच्छेदस्य वारयितुमशक्यत्वात् । उक्तञ्च रसगङ्गाधरकृताऽपि—"रतेः सम्भोगरूपाया मनुष्येष्विवोत्तमदेवतासु स्फुटीकृतसकलानुभाववर्णनमनुचितम्" इति । इत्थमेव यथा दक्षिणनायकस्यानेकमहिलास्वेककालावच्छेदेनानुरागौचित्यम्भवति न तथा स्वकीयनायकेष्वपि नायिकायाः । अत एव—

"युधिष्ठिरं मोदयति स्म सुस्मितैः कलेन भीमं परिरम्भतोऽर्जुनम् ।
श्रवा प्रणीतैर्नकुलं च सान्त्वनैः पदोश्च तैः सा सहदेवमञ्चितैः ॥"

तत्र रतेरुपनायकनिष्ठत्वे यथा मम—

( ६ ) 'स्वामी मुग्धतरो वनं घनमिदं बालाहमेकाकिनी
क्षोणीमावृणुते तमालमलिनच्छाया तमःसंततिः ।
तन्मे सुन्दर ! मुञ्च कृष्ण ! सहसा वर्त्मेति गोप्या गिरः
श्रुत्वा तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः ॥'

अत्र पतिविषयकोऽपि द्रौपद्या अनुरागो न शृङ्गारव्यवहारयोग्यः । "स्नाता तिष्ठति" ( १३१ पृ० ) इत्यादौ च भावाभास एव । तथा—

"आक्रान्ता रमयति हन्त ! कान्तमेकं सन्दष्टाधरसुधयाऽपरौ प्रियौ द्वौ ।
प्रेयांसावुरसिजयोर्निपीडितान्यौ धन्येयं युगपदनेकधाऽर्दिताऽपि ॥"

अत्र वाराङ्गनाया अनेकविषयारतिरिति न शृङ्गारव्यवहारयोग्या । एवमन्यत्राऽपि यथायोग्यं स्वयमूहनीयम् ।

( ६ ) स्वामीमुग्धतर इति । सन्ध्याकाले पन्थानमावृत्य तिष्ठन्तं श्रीकृष्णं प्रति गोप्या उक्तिरियम् हे श्रीकृष्ण ? स्वामी मम परिणेता न तु प्रियः, मुग्धतर अतिमूढः "मुग्धः सुन्दरमूढयो"रित्यमरः भद्रानभिज्ञो वा विलम्बेऽचिरणैव क्रोधकारी मम तव च आसङ्गं तर्कयितुमसमर्थः तथाचात्यन्तसुरतानभिज्ञस्तेन मे रतितृप्तिर्नजायत इति च द्योतितम् । इदं वनं न तु नगरं घनं निविडमनेकवृक्षजालग्रथितमिति भावः, तेन भयदत्वम् , सघनतया जनदर्शनाभावेन सुरतयोग्यस्थानत्वञ्च सूचितम् । अहमेकाकिनी बाला अल्पवयस्का कान्तेत्यर्थः, "बालोऽज्ञेऽश्वेभपुच्छयोः । "बाला तु त्रुटियोषितोः" इति हेमः । अतो विलम्बो न न्याय्यः प्रतिबन्धकाभावात् स्वच्छन्दं रमस्वेति च ध्वनितम् । तमालतापिच्छं तद्वत् मलिना छाया यस्याः सा तादृशी तमः सन्ततिः अन्धकारसमूहः क्षोणीं धरणीम् आवृणुते, अतो दारुणोऽयं समयः गोप्यरसप्रकाशाभावश्चेति सूचितम् । तत्तस्मात् हे सुन्दर ! रूपातिशयेन मन्मनोमोहन ? एतेन स्वप्रियत्वं त्वां विहाय गन्तुं न शक्नोमीति च व्यञ्जितम् । सहसा द्रुतमेव मे मम वर्त्म गृहं गमनमार्गं मुञ्च परिहर इति अनेन प्रकारेण गोप्याः कस्याश्चिद्गोपिकायाः गिरो भाषणानि श्रुत्वा, तां गोपीं परिरभ्य आश्लिष्य मन्मथकलासक्तः रमणतत्परो हरिः वो युष्मान् पातु रक्षतु । शार्दूलविक्रीडितंच्छन्दः तल्लक्षणमुक्तं प्रागेव ( १९८ पृ० )

अत्र "स्वामी मुग्धतरः" इत्यनेन स्वस्यान्यपरिणीतत्वद्योतनादस्या गोप्याः श्रीकृष्णस्य सम्बन्धित्वेनोपनायकत्वात्तदनुरागोऽनुचितः नचैवमपि "स्वामीनिःश्वसितेऽप्यसूयति—" इत्यादि परनायिकोदाहरणं शृङ्गाराभासः स्यादिति वाच्यम् , तथासति शृङ्गारे परनायिकोदाहरणस्यानर्थकत्वापत्तेः परे तु शृङ्गाराभास एवेति युक्तियुक्तं मन्यन्ते ।

मुनिपत्नीगतत्वे यथा—

"तपोविभावसम्भवातुलविभूतिकः सौभरि-
र्मुनिर्नृपतिकन्यकाशतपरिग्रहः कामतः ।
प्रचुम्बति मुहुर्मुहुः कुचनिपीडमालिङ्गति
स्मितोत्तरमुदीक्षते परिहसत्यजस्रं प्रियाम् ॥" इति ।

बहुनायकनिष्ठत्वे यथा—

( ७ ) 'कान्तास्त एव भुवनत्रितयेऽपि मन्ये
येषां कृते सुतनु ! पाण्डुरयं कपोलः ।'

( ८ ) अनुभयनिष्ठत्वे यथा—मालतीमाधवे नन्दनस्य मालत्याम् ।

( ९ ) 'पश्चादुभयनिष्ठत्वेऽपि प्रथममेकनिष्ठत्वे रतेराभासत्वम्' इति श्रीमल्लोचनकाराः ।

( १० ) तत्रोदाहरणं यथा—रत्नावल्यां सागरिकाया अन्योन्यसंदर्शनात्प्राग्वत्सराजे रतिः ।

( ११ ) प्रतिनायकनिष्ठत्वे यथा—हयग्रीववधे हयग्रीवस्य जलक्रीडावर्णने ।

---

गुरुपत्नीगतत्वे यथा—

"मधौ प्रभूते पिकनाददूते मन्दानिलोद्भूतविकाशिचूते ।
प्रियामुखालोकनमात्रकर्म्मा गुरुर्न धर्माय न पाठनाय ॥ इति ।

( ७ ) कान्तास्त इति । हे सुतनु ! सुन्दरि ! अयं कपोलः तव गण्डप्रदेशः येषां नायकानां कृते हेतौ पाण्डुर्वियोगात्पाण्डुवर्णोऽभूदिति शेषः, भुवनत्रितयेऽपि मध्ये त एव कान्ताः कमनीयपुरुषा इत्यहं मन्ये ।

अस्य पूर्वार्द्धञ्चेदम्—

"सङ्केतितेषु सुभगेषु रता त्वमेव भूत्वाऽथहो धनवधूस्त एव नूनम् ।" इति

अत्र "येषां" "ते" "कान्ता"श्चेति बहुवचनत्रयेण नायिकाया बहुनायकनिष्ठरतिरवगम्यते ।

( ८ ) अनुभयनिष्ठत्व इति । मालतीमाधवे तदाख्ये मालतीमाधवयोरनुरागवर्णनमुपजीव्य श्रीभवभूतिमहाकविना निर्मिते प्रकरणे इत्यर्थः । "प्रथमेऽङ्के" इति शेषः । नन्दनस्य नन्दनसंज्ञकस्य राजमित्रस्यैव मालत्यां रतिर्न तु मालत्या अपि तत्र नन्दने रतिरिति विचारणीयम् ।

( ९ ) नायिकानायकयोर्यावदेकतरस्यैव रतिस्तावत्तस्य भविष्यदुभयसम्बन्धित्वेऽपि न शृङ्गारयोग्यत्वमित्यभिप्रायेणाभिनवगुप्तपादाचार्यमतमुत्थापयति-पश्चादुभयनिष्ठत्वे इति प्रथमं प्राक्, "विवाहात्, द्वयोर्वा गुणश्रवणात्, परस्परं वावलोकनादे"रिति शेषः । एकनिष्ठत्वे एकतरनिष्ठत्व इत्यर्थः । रतेः प्रथममेकनिष्ठाया इति शेषः । आभासत्वं शृङ्गाराभासत्वम् । श्रीमल्लोचनकारा ध्वन्यालोकस्य लोचननामकव्याख्याकारा अभिनवगुप्तपादाचार्या इत्यर्थः ।

( १० ) अत्रोदाहरणं किमिति जिज्ञासायामाह—तत्रोदाहरणमिति । तत्र तस्मिन् रतेरौचित्याभावे । रत्नावल्यां तन्नामिकायां रत्नावल्यां वत्सराजविषयिकां रतिमनुजीव्य श्रीहर्षकविनिर्मितायां नाटिकायामित्यर्थः । सागरिकाया रत्नावल्या इत्यर्थः । प्राक् प्रथमं "विद्यमाने"ति शेषः । रतिरनुराग "अनुचिता" इति शेषः ।

( ११ ) हयग्रीववधे इति । हयग्रीवाख्यो दैत्यो विष्णुना हत इत्याख्यायिकाश्रिते काश्मीरकभर्तृमेण्ठप्रणीते महाकाव्य इत्यर्थः । हयग्रीवस्य प्रतिनायकस्य । जलक्रीडावर्णने "ललनाजनेन साक"मिति शेषः ।

अधमपात्रगतत्वे यथा—

( १२ ) 'जघनस्थलनद्धपत्रवल्ली गिरिमल्लीकुसुमानि कापि भिल्ली ।
अवचित्य गिरौ पुरो निषण्णा स्वकचानुत्कचयांचकार भर्त्रा ॥'

तिर्यगादिगतत्वे यथा—

( १३ ) 'मल्लीमतल्लीषु वनान्तरेषु वल्ल्यन्तरे वल्लभमाह्वयन्ती ।
चञ्चद्विपञ्चीकलनादभङ्गीसंगीतमङ्गीकुरुते स्म भृङ्गी ॥'

( १४ ) आदिशब्दात्तापसादयः ।

( १५ ) रौद्राभासो यथा—

---

( १२ ) जघनस्थलेति उदारराघवस्थपद्यमिदम् । जघनस्थले कटिपश्चाद्भागे नद्धा धृता पत्रवल्ली पत्रलता यया सा तादृशी कापि काचिदज्ञातनाम्नी भिल्ली किराती गिरिमल्लीकुसुमानि कुटजपुष्पाणि अवचित्य आहृत्य गिरौ पर्वते पुरः स्वामिनोऽग्रतः निषण्णा आसीना सती, भर्त्रा स्वप्रयोज्येन स्वकचान् स्वकेशान् अवचितकुसुमैः उत्कुचयाञ्चकार उद्ग्रथाञ्चकार बन्धयामासेति यावत्। दीप्त्यर्थक=कचधातोरिदं रूपम्। मालभारिण्यच्छन्दस्तल्लक्षणन्तु—"विषमे ससजा गुरू अनोजे सभरायश्च तु मालभारणीयम्" इति ।

अत्र रतेः तत्त्वज्ञानासमर्थत्वादधमनायकनायिकागतत्वेन शृङ्गाराभासः ।

( १३ ) मल्लीमतल्लीष्विति । उदारराघवस्थ पद्यमिदम् । भृङ्गी भ्रमरी वनान्तरेषु वनमध्येषु मल्लीमतल्लीषु प्रशस्तमल्लीषु वर्त्तमाना वल्ल्यन्तरे अन्यस्यां लतायां वर्त्तमानं मधुपानोपविष्टमिति शेषः वल्लभं प्रियं भृङ्गमाह्वयन्ती सुरतार्थमाकारयन्ती सति चञ्चन्ती स्वनन्ती या विपञ्ची वीणा तस्याः कलो मधुरा स्फुटः शब्दस्तस्य भङ्गी वैदर्भी सुरचना "व्याजच्छलनिभे भङ्गी वैदर्भी तनमीलिका" इति रभस, तद्वत्तत्त्वल्यं-यत्सङ्गीतं गानं तदङ्गीकुरुते स्म स्मरोद्दीपनोपकरणं कुरुते स्म । इन्द्रवज्राच्छन्दस्तल्लक्षणन्तु- 'स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति । "मधुद्विरेफः कुसुमैकपात्रे" इत्यादेः रूपान्तरं प्रदर्शनमिदम् ।

अत्र रतेस्तत्त्वज्ञानासमर्थतिर्यग्गतत्वात् शृङ्गाराभासः ।

( १४ ) आदिशब्दादिति । आदिशब्दात् "तिर्यगादिगतत्वे इत्यत्रादिपदात्। अत्राप्यादिपदात् उन्मादरोगादिग्रहणम् ।

तत्र तापसगतानुरागे यथा—

तापसस्य जीमूतवाहनस्य नृपस्य मलयवत्यां रतिराभासः ।

यथा वा कादम्बर्याम्—

"तस्यास्तु तमवलोकयन्त्याः प्रेममन्दमुकुलितेनानन्दबाष्पभरतरङ्गतरलतारेण लोचनयुगलेन रूपमास्वादयन्त्या जृम्भिकारम्भमन्थरमुखविन्यस्तहस्तपल्लवा मन्मथविकृतं मन आसीत् ।"

अत्रानुरागतत्त्वज्ञानासमर्थश्वेतकेतौ लक्ष्म्या रतिसद्भावेन शृङ्गाराभासः ।

( १५ ) एवं दिङ्मात्रेण शृङ्गारेऽनौचित्यं प्रदर्श्य रौद्रे तद्दर्शयितुमाह—रौद्राभास इति ।

( १६ ) 'रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तराङ्गो मुहु-
मुक्त्वा कर्णमपेतभीर्धृतधनुर्बाणो हरेः पश्यतः ।
आध्मातः कटुकोक्तिभिः स्वमसकृद्दोर्विक्रमं कीर्तय-
न्नंसास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्जुनः ॥'

भयानकाभासो यथा—

( १७ ) 'अशक्नुवन्सोढुमधीरलोचनः सहस्ररश्मेरिव यस्य दर्शनम् ।
प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः ॥'

( १८ ) स्त्रीनीचविषयमेव हि भयं रसप्रकृतिः ।

( १६ ) रक्तोत्फुल्लेति । युद्धे कर्णहननासामर्थ्येन गाण्डीवादिनिन्दुं कुर्वन्तं युधिष्ठिरं प्रहर्तुमुद्यतेऽर्जुने सेवकवर्गस्योक्तिरियम् । रक्ते कोपेन लोहितवर्णे उत्फुल्ले विकाशिते विशाले प्रसृते लोले आघूर्णिते च नयने लोचने यस्य सः, मुहुः पुनः पुनः कम्पः उत्तर अधिको येषु तादृशानि अङ्गानि अवयवानि यस्य सः, कर्णं मुक्त्वा युद्ध्यमानं सूतपुत्रप्रतियोद्धारं कर्णं त्यक्त्वा अपेतभीर्गुरुहननभयरहितः धृतधनुर्बाणः कटुकोक्तिभिः कर्णात्पराभवमानस्य युधिष्ठिरस्य कटुवाक्यैः, आध्माता दग्धः, अंसयोः स्कन्धयोः आस्फोटे कराघाते पटुस्तत्परः असौ कुपितोऽर्जुनः, असकृन्मुहुर्मुहुः, स्वं स्वीयम्, दोर्विक्रमं भुजबलं कीर्त्तयन् सन्, पश्यत एव हरेः "हरेः" इत्यनादरे षष्ठी, पश्यन्तं हरिमनादृत्येत्यर्थः, हन्तु शिविरं प्रविष्टः प्रवृत्तः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक् ( १९८ पृ० )

अत्रार्जुनस्य ज्येष्ठभ्रातरि गुरौ युधिष्ठिरे क्रोधोऽनुचितोऽतो रौद्ररसाभासः ।

( १७ ) अशक्नुवन्निति । शिशुपालवधमहाकाव्ये प्रथमसर्गस्थपद्यमिदम् । कौशिको वासवः सहस्ररश्मेः सहस्रकिरणस्य सूर्यस्येव यस्य रावणस्य दर्शनं सोढुमशक्नुवन्, अधीरलोचनः कातरात् चञ्चललोचनः बिभ्यद् भीतश्च सन् हेमाद्रेर्गुहेव कन्दरेव गृहं तस्यान्तरं मध्यं प्रविश्य दिवसानि दिनानि निनाय यापयामास । शब्दशक्तिमूले उपमाध्वनिरियम्, तथापि कौशिकः पेचकः उलूक इतियावत् सहस्ररश्मेर्दर्शनं सोढुमशक्नुवन् अद्रिगुहां प्रविश्य यथा दिनानि नयति अधीरबुद्धिरलोचनो दिवान्धत्वात् तथा च पेचक इव इन्द्र इत्युपमाध्वनिः । वंशस्थं छन्दस्तल्लक्षणन्तूक्तं प्राक् ( २०६ पृ० )

भयस्य देवराजवृत्तित्वेनात्र भयानकरसाभासत्वम् ।

इदमत्रावधेयम्—रसभावतदाभासादीनामसंलक्ष्यक्रमव्यङ्ग्यत्वम् अग्रे स्वयमेव ग्रन्थकृद् वक्ष्यति । तच्च स्थायिभावस्य व्यङ्ग्यस्य बोधक्रमापरिचयादेव, अत्र श्लोके भयस्य स्थायिभावस्य "बिभ्यदि" त्येतद्वाच्यत्वात् व्यङ्ग्यत्वमेव नास्ति, कथं व्यङ्ग्यक्रमापरिचयाधीनमसंलक्ष्यक्रमव्यङ्ग्यत्वम् अतोऽयं न रसाभासध्वनिः किन्तूपमाध्वनिरेव ।

भयानकाभासोदाहरणन्तु—

'जातिदुष्टोऽपि संश्लाघ्यः स कालयवनो नृपः ।
युद्धोद्युक्तं यमालोक्य श्रीकृष्णोऽपि पलायितः ॥"

( १८ ) नन्वत्रोदाहरणे को दोषो यद्भयानकरसस्याभासत्वमुच्यत इत्यत आह—स्त्रीनीचेति । हि यतः स्त्री स्त्रीजातिः नीचोऽधमजनश्च विषय आश्रयो यस्य तत्तादृशमेव भयं रसप्रकृतिः भयानकरसमूलं स्थायीभाव इत्यर्थः, "स्त्रीनीचप्रकृतिः" इत्युक्तत्वेनात्र भयस्योत्तमपात्रवृत्तित्वमेवानौचित्यंद्दोष इति सारार्थो ज्ञेयः ।

( १९ ) एवमन्यत्र ।
( २० ) भावाभासो लज्जादिके तु वेश्यादिविषये स्यात् ॥ २६६ ॥
( २१ ) स्पष्टम् ।

( १९ ) एवमिति । अन्यत्र शमादीनां हीननिष्ठत्वादौ एवमुदाहारणमूहनीयमित्यर्थः । तथाहि हीननिष्ठे शान्ते गुर्वाद्यालम्बने हास्ये ब्रह्मबधाद्युत्साहेऽधमपात्रगते वीरे च यथाक्रममुदाहरणं प्रदर्श्यते—

"चण्डालयोनाविह जन्मलब्धं द्विजातिजन्मापि न कांक्षितं मे ।
पुण्ये वने क्वापि वपुर्विहास्यन् पुनर्भवच्छेदमहं समीहे ॥
अपानवायुं सततं विमुञ्चन् असंमयव्यग्रकपूर्वकेशः ।
अध्यापयत्येष गुरुः सदा मे लालाक्तवक्त्रो मलदिग्धवासाः ॥
अनिवृत्तपिपासा हि क्षुत्रवीरजशोणितैः ।
द्रोणस्य रुधिरेणाद्य तृप्यन्तु मम सायकाः ॥
नरेन्द्रपुत्रान् मृगया प्रवृत्तान् विद्धं मृगं नेतुमुपात्तवेगाः ।
अमी किराताः शरपूर्णचापा धावन्ति मत्वा तृणवत्तमेव ॥

( २० ) भावाभास इति । लज्जायां व्रीडायाम् आदिपदाच्चिन्तादिके सञ्चारिभावे, वेश्या गणिका आदिपदात् अनुरागिण्यादयश्च विषया आश्रया यस्य तस्मिन् सति तु भावाभासः स्यात् ।

( २१ ) स्पष्टमिति । उदाहरणमिति शेषः । लज्जाऽभासो यथा—हास्यार्णवे मृगाङ्कलेखायाः ।

चिन्ताभासो यथा—

राकासुधाकरमुखी तरलायताक्षी सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी ।
तत्किं करोमि विदधे कथमत्र मैत्रीं तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥

सीतामुद्दिश्य रावणस्योक्तिरियम् । अत्र नायिकायाः स्वीकारोपायचिन्तयानुरागाभावो ध्वन्यते । तथाचात्र चिन्तानुचिता ।

एवं राजादिविषयरतेः वैश्यादिविषयत्वेऽप्यनौचित्यमवगन्तव्यम् ।

वेश्यादिनिष्ठे यथा—

लीलानम्रमुखी शिरोंऽशुकमवाकृष्यानयन्ती पुरो-
नेत्रोपान्तविलोकनेन परितो यूनां धयन्ती मनः ।
दृष्टा वारविलासिनी ननु सखे ! कस्यापि पुण्यात्मनः
पुण्यौघं परिपाकमाशमयितुं लीलोत्तरं गच्छति ॥

अत्र वेश्यालज्जामिश्रितत्वम् ।

भामिनीविलासे स्मृत्याभासो यथा—

"सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता, विद्यापि खेदकलिता विमुखी बभूव ।
सा केवलं हरिणशावकलोचना मे नैवापयाति हृदयादधिदेवतेव ॥"

गुरुपुत्र्यां स्वयमेवानुरागं प्राप्तवतः कस्याऽप्युक्तिरियम् । एवमन्यत्राऽप्यनुसन्धेयम् ।

( २२ ) भावस्य शान्तावुदये संधिमिश्रितयोः क्रमात् ।
भावस्य शान्तिरुदयः संधिः शबलता मता ॥ २६७ ॥

क्रमेण यथा—

( २३ ) 'सुतनु ! जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित्कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किंचित् ॥'

( २४ ) अत्र बाष्पमोचनेनेर्ष्याख्यसंचारिभावस्य शमः ।

( २२ ) इत्थं भावाभासं निरूप्य शान्त्यादिं निरूपयति-भावस्येति । एतल्लक्षमन्यन्त-पदेनान्वेति । भावस्य यस्य कस्यचिद् व्यभिचारिभावस्य शान्तौ निवृत्तौ भावस्य शान्तिः, विरुद्धसामग्रीबलात्प्रशमावस्था, तथा च शान्त्यादावास्वाद्ये सति भावशान्त्या-दिनामा काव्यास्यात्मा भवतीत्यर्थः । एवमन्यत्रापि व्याख्यानं विधेयम् । कस्यचिद्भा-वस्य उदये स्वसामग्रीमाहात्म्ये नोद्गमावस्थाम् भावोदयनामा उदयश्च व्यभिचारिण एव न तु स्थायिनः, स्रक्सूत्रवृत्त्या सन्ततमविच्छेदिनस्तस्य शान्त्यादिवर्णनं विरसमेव । कस्यचिद्भावयोः सन्धौ उभयसामग्रीप्राबल्यात् परस्परविमर्दं, भावसन्धिनामा । स च परस्परविमर्दयोरेकनाशे चान्योत्पत्तिरित्येवं रूपः । केषाञ्चिद्बहूनां भावानां तुल्यभावेन मिश्रितत्वे भावशवलतानामा च काव्यस्यात्मा स्यात् शवलतानाम पूर्वपूर्वोपमर्देन उत्तरोत्पत्तिः । मिश्रणं च पूर्वपूर्वस्य बाध्यत्वेन उत्तरोत्तरस्य बाधकत्वेनैकत्रकाव्ये निब-न्धनम् । बाध्यत्वञ्च विरोधिसामग्रीस्थगितपरिपुष्टिकत्वम् । बाधकत्वञ्च विरोधि । तच्च बलपरिपुष्टिप्रतिबन्धकत्वम् अस्मिन्मते दन्त्यः सवलशब्दो ज्ञेयः ।

भावशान्तावेकस्यैव नाशः । उदये एकस्यैवोत्पत्तिः । सन्धौ द्वयोरेव मुहुर्विनाशोत्पत्ती । शवलतायां बहूनां विनाशोत्पत्ती, इति विशेषः, चतुष्टयं भावशान्त्यादिपदेन बोध्यते । अत्र भावस्य शान्तिनाशः स चोत्पत्तिकालावच्छिन्न एव । उदय उत्पत्तिः । सन्धिर-न्योन्यानभिभूतयोरन्योन्याभिभावनयोग्ययोः सामानाधिकरण्यम् , तच्चैकदेशवृत्तित्व-विशिष्टैककालवृत्तित्वरूपम् । शवलता बाध्यबाधकभावापन्नानामुदासीनानां वा भावानां व्यामिश्रणम् , एकचमत्कृतिजनकज्ञानगोचरत्वमिति यावदिति नव्या वदन्ति ।

( २३ ) भावशान्तिमुदाहरति—सुतन्विति । अमरुशतकस्थपद्यमिदम् । हे सुतनु ! सुन्दरि ! कोपं जहिहि त्यज, पादानतं मां पश्य, कदाचिदपि तव एवं विधः कोपो न खलु पूर्वमभूत् , नाथे पत्यौ इति निगदति कथयति सति तिर्यगामीलिताक्ष्या कुटिलभावेनेष-न्मुद्रितनयना कयाचिन्नायिकया अनल्पं बहुतरं नयनजलम् अश्रु मुक्तं पातितम् , किन्तु किञ्चिदपि नोक्तं न जल्पितम् । कोपस्य द्विरभिधाने यद्यपि पुनरुक्तत्वं तथापि "उदेति सविताताम्रः" इत्यत्रेव गुणत्वं तस्यैव प्रत्यायकत्वात् । मालिनी छन्दःस्तल्लक्ष-णन्तूक्तं प्राक् (१६७ पृ०)

( २४ ) अत्रपादपतनरूपप्रसादसामग्र्या ईर्ष्याख्यव्यभिचारिभावस्य शमः । बाष्पनिःसरणे जायमाने ईर्ष्यादिसमाप्तेः सर्वत्र दर्शनादिति भावः ।

( २५ ) 'चरणपतनप्रत्याख्यानात्प्रसादपराङ्मुखे
निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते ।
व्रजति रमणे निःश्वस्योच्चैः स्तनस्थितहस्तया
नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता ॥'

( २६ ) अत्र विषादस्योदयः ।

( २७ ) 'नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् ।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे ॥'

( २८ ) अत्र हर्षविषादयोः संधिः ।

( २५ ) भावोदयमुदाहरति—चरणपतनेति । अमरुशतकस्थपद्यमिदम् । चरणयोः स्वपादयोः पतनेऽपि प्रत्याख्यानात् निराकरणात् प्रसादपराङ्मुखे दयितां प्रति प्रसन्नतारहिते हे निभृतकितवाचार ! सहसानुपलक्षितगुप्तधूर्त्तव्यवहार ? इत्युक्त्वा रुषा कोपेन परुषीकृते स्नेहहीने कृते रमणे वल्लभे व्रजति त्यक्त्वा प्रस्थिते सति उच्चैर्निश्वस्य स्तनस्थितहस्तया उरसि स्थापित हस्तया स्तनमध्ये हस्तस्थापनेन हृदय ! मा स्फुटेति हृदयाश्वास इति भावः, कयापि नायिकया नयनसलिलेन वाष्पेण आच्छन्ना आवृता दृष्टिः सखीषु सहचरीषु निवेशिता अर्पिता । हरिणीछन्दस्तल्लक्षणन्तूक्तं प्राक् (१६२ पृ०)

( २६ ) अत्रेति । अत्र नायकप्रत्याख्यानरूपसामग्र्या विषादस्योदयः विषादोदयाभावे दृष्टेर्नयनजलाच्छन्नत्वासम्भवादिति भावः ।

( २७ ) भावसन्धिमुदाहरति—नयनेति । नयनयुगस्य आसेचनकमतितृप्तजनकम्, "तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्" दित्यमरः, मानसवृत्त्यापि मनोरथेनापि दुष्प्रापं पृथिव्यां विरलत्वाद्दुर्लभम्, मदिराक्ष्या दृष्टिविशेषनयनायाः इदं रूपं मे मम हृदयं मदयति आनन्दयति, दुनोति च दुर्लभत्वात्संतापयति च । पद्येऽस्मिन् मदिरादृष्टिविशेष एव ग्राह्यः, तथा च संगीतकलिकायाम्—

"सौष्ठवेन परित्यक्ता स्मेरापाङ्गमनोहरा । वेपमानान्तरा दृष्टिर्मदिरा परिकीर्त्तिता ॥"

हरविजयटीकायां काव्यप्रकाशपूर्त्तिकृद्भिरलकराजानकैरप्युक्तम्—

"आघूर्णमानमध्या या क्षामा चाञ्चिततारका ।
दृष्टिर्विकासितापाङ्गा मदिरा तरुणे मदे" ॥ इति ।

अत्रोद्गीतिश्छन्दस्तल्लक्षणन्तु—

"आर्या द्वितीयकेऽर्द्धं यद्गदितं लक्षणं तत्स्यात् ।
यद्युभयोरपि दलयोरुद्गीति तां मुनिर्ब्रूते ॥" इति ।

( २८ ) अत्रेति । अत्रैकस्यैव कामिनीरूपस्यात्युत्कृष्टत्वेन आनन्दस्योपभोगाप्रयोजकत्वेन विषादस्य जनकत्वम् अत्युत्कृष्टत्वबोधसमये हर्षः उपभोगाप्रयोजकत्वबोधसमये विषाद इत्युभयोः सन्धिः, विरुद्धयोरपि तयोरेकत्रसमावेशः काललाघवेन संसर्गप्रतिभासः वक्तुश्चित्ते तुल्यभावेन क्रमिकावस्थानात्सन्धिरित्याशयः ।

उदाहरणान्तरं यथा—

"यौवनोद्गमनितान्तशङ्किताः शीलशौर्यबहुकान्तिलोभिताः ।
सङ्कुचन्ति विकसन्ति राघवे जानकीनयनवारिजश्रियः ॥"

( २९ ) 'क्वाकार्यं, शशलक्ष्मणः क्व च कुलं, भूयोऽपि दृश्येत सा,
दोषाणां प्रशमाय मे श्रुतमहो, कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः, स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि, कः खलु युवा धन्योऽधरं धास्यति ॥'

( ३० ) अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता ॥

अत्र व्रीडौत्सुक्ययोः सन्धिः ।

( २९ ) भावशवलताया उदाहरणं दर्शयति—क्वाकार्य्यमिति । विक्रमोर्वश्यां चतुर्थेऽङ्के उर्वशीविरहे मरणे प्रवृत्तस्य निवृत्तस्य पुरूरवस उक्तिरियम् । अकार्यं मुनिसुतायामासक्तिरूपं क्व शशो मृगभेदः लक्ष्म चिह्नं यस्य तस्य शशलक्ष्मणः चन्द्रस्य स्वच्छं कुलं च क्वद्वयेन ज्ञानद्वयस्य सहानवस्थानप्रतिपत्तिः तेनात्यन्तानौचित्यं व्यज्यते । यद्वा क्वद्वयेनो भयोरत्यन्तवैधर्म्याद्विषमालङ्कारो व्यज्यते । अत्र शान्तिसञ्चारिवितर्कागमः । अत्र 'शशलक्ष्मण" इत्यनुचितम् "सुधांशो" रित्युचितम् । भूयः पुनरपि साऽद्भुतसौन्दर्या उर्वशी दृश्येत, कथं दृग्गोचरा भवेत्, अपिना सम्भावनौत्कट्यं द्योत्यते । अत्र व्यङ्ग्येन शृङ्गारसञ्चार्यौत्सुक्येन शान्तसञ्चारिवितर्कबाधनम् । नोऽस्माकं श्रुतं शास्त्रश्रवणं दोषाणां प्रमादादीशादीनां प्रशमाय आत्यन्तिकनिवारणाय । अत्र व्यङ्ग्यया शान्तसञ्चारिण्या मत्या पूर्वौत्सुक्यबाधनम् । अहो आश्चर्यम् । कोऽपि तस्या मुखं कान्तं मनोहरम् अत्र व्यङ्ग्येन शृङ्गारसञ्चारिणा स्मरणेन पूर्वोक्तमतेर्बाधनम् । अपगतं कल्मषं पापं येभ्यस्तेऽपकल्मषाः, कृते सदाचारे महात्मभिराचरिते पुण्यकर्मणि धीर्येषां ते कृतधियः पण्डिताः किं वक्ष्यन्ति । अत्र व्यङ्ग्यया शान्तसञ्चारिण्या शङ्कया पूर्वोक्तस्मरणबाधनम् । स्वप्नेऽपि दृष्टाश्रुतपूर्वघटकेऽपि सा दुर्लभा अत्र व्यङ्ग्येन शृङ्गारसञ्चारिणाभिमताप्राप्तिप्रयुक्तदैन्येन पूर्वोक्तशङ्काबाधनम् । हे चेतः ! स्वास्थ्यं स्थिरत्वम् उपैहि प्राप्नुहि । अत्र व्यङ्ग्यया शान्तसञ्चारिण्या धृत्या पूर्वोक्तदैन्यबाधनम् । कः खलु धन्यो नाहमिव मन्दभाग्यः युवा तरुणः अधरं धास्यति पास्यति । अत्र व्यङ्ग्यया शृङ्गारसञ्चारिण्या चिन्तया पूर्वोक्तधृतिबाधनम् । तथाचात्र काव्ये पार्यन्तिकचिन्तया शान्तोपमर्द्देन शृङ्गारस्य विश्रान्तिः, सा च शत्रुविजयपूर्वकराज्यलाभ इव प्रकर्षनिदानम् । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक् (१९८ पृ०) अत्र वागीशा "अत्र द्वयोर्द्वयोर्भावस्य पूर्वस्य प्रशमाङ्गस्य बाध्यत्वम्, उत्तरस्य विप्रलम्भाङ्गस्य बाधकत्वम्, चिन्तायां विश्रान्तेस्तदङ्गकस्य विप्रलम्भशृङ्गारस्य शान्तापेक्षया परिपोषः तस्यात्यन्तरात्तरा प्रशमोदयादेकान्तमभिलाषस्य नास्वाद्यत्वमिति खण्डरसत्वमिति बोध्यम् । उभयाङ्गस्य भावसमूहस्य बाध्यबाधकभावो मुख्यत्वेनास्वाद्यत इति भावशवलताया एव एव प्रधानत्वमिति" वदन्ति ।

( ३० ) अत्र पूर्वपूर्वोपमर्दन उत्तरोत्तरं प्रतीयमानं चमत्कारमादधातीति तत्स्वरूपा शबलता, तदेव प्रदर्शयति—अत्र वितर्केत्यादि ।

अन्यपदार्थस्यास्वादमनुपमृद्नन्तो नारिकेलजलादयः पदार्थामिश्रणे सति विलक्षणमास्वादं यथोत्पादयन्ति तथा पृथक् पृथगभिव्यज्यमाना अप्यमी भावा महावाक्यार्थबोधे सम्मिलितमपूर्वं चमत्कारमुत्पादयन्तीत्यभिप्रायः तदुक्तम्—

( अत्र मूलकारिकाः = ( २६७ । ) पूर्वाभिः सह ( २९० । ) उदाहरणश्लोकाः= ( १४३ । ) पूर्वैः सह ( १५८ । )

इति साहित्यदर्पणे रसादिनिरूपणो नाम तृतीयः परिच्छेदः ।

"नारिकेलजलक्षीरसिताकदलमिश्रणे ।
विलक्षणो यथास्वादो भावानां संहतौ तथा ॥" इति (क)

इति वत्सकुलावतंस-दैवज्ञशिरोमणि-**श्रीलोकनाथात्मज**-साहित्यव्याकरणार्य-
ठक्कुरोपनामक**श्रीकृष्णमोहनशास्त्रि**विरचितायां "लक्ष्मी" नामिकायां
साहित्यदर्पणटीकायां तृतीयः परिच्छेदः ।

(क) अत्र **रसगङ्गाधरकारास्तु**—य एते भावशान्त्युदयसन्धिशवलताध्वनय उदाहृतास्तेऽपि भावध्वनय एव । विद्यमानतया चर्व्यमाणेष्विवोत्पत्त्यवच्छिन्नत्व-विनाश्यदवस्थत्व-संधीयमानत्व-परस्परसमानाधिकरणत्वैः प्रकारैश्चर्व्यमाणेषु भावेष्वेव प्राधान्यस्यौचित्यात् चमत्कृतेस्तत्रैव विश्रान्तेः । यद्यप्युत्पत्तिविनाशसन्धिशवलतानां तत्सम्बन्धिनां भावानां च समानायां चर्वणाविषयतायां न प्राधान्यं विनियन्तुं शक्यते तथापि स्थितौ भावेषु प्रधानतायाः क्लृप्तत्वात् भावशान्त्यादिष्वपि तेष्वेव शान्तिप्रतियोगित्वादिभिर्व्यज्यमानेषु तस्याः कल्पयितुमौचित्यात् । किं च यदि भावशान्त्यादौ भावो न प्रधानम्, किन्तु तदुपसर्जनकशान्त्यादिरेवेत्यभ्युपेयते तदा व्यज्यमानभावेष्वभिहिततत्प्रशमादिषु काव्येषु भावप्रशमादि ध्वनित्वं न स्यात् ।

तथाहि—

"उषसि प्रतिपक्षनायिकासदनादन्तिकमव्रति प्रिये ।
सुदृशो नयनाब्जकोणयोरुदियाय त्वरयारुणद्युतिः ॥"

अत्रोत्पूर्वकेणेतिना भावोदयस्य वाच्यतयैव प्रत्यायनात् । इत्यादिकमाहुः ।

**इयं पुनर्भावध्वनिभ्यो भावशान्त्यादिध्वनीनां चमत्कारवैलक्षण्ये निदानम्**—भावध्वनौ स्थित्यवस्थापन्नामर्षादित्वस्य, केवलामर्षादित्वस्य वा प्रकारतया चर्वणा भवति, भावशान्त्यादिषु ध्वनिषु तु भावत्वेन सह प्रशमावस्थापन्नत्वस्यापि । भावध्वनौ अमर्षादिकृतचमत्कार एवास्वादनीयो भवति, भावशान्त्यादिषु तु भावैः सह प्रशमोदयादिकृतश्चमत्कारोऽप्यास्वादनीयो भवतीति तेषामभिप्रायोऽवगन्तव्यः ।

इति साहित्यदर्पण "लक्ष्मी" टिप्पण्यां तृतीयः परिच्छेदः ।

# चतुर्थः परिच्छेदः ।

( १ ) अथ काव्यभेदमाह—

**( २ ) काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यं चेति द्विधा मतम् ।**

( ३ ) तत्र—

**( ४ ) वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम् ॥ १ ॥**

---

( १ ) एवं सपरिकरं काव्यस्वरूपमुक्त्वा विशेषं निरूपयितुमवतारयति—अथेति । अथ काव्यस्वरूपघटकसानुषङ्गिकरसप्रतिपादनानन्तरम्, तत्काव्यं कतिविधमिति जिज्ञासायाम् "उपोद्घातादिभिन्नत्वे सति स्मरणप्रयोजकसम्बन्धत्वं प्रसङ्गत्वम्" इति प्रसङ्गसङ्गत्या तत्काव्य (क)भेदमाह ग्रन्थकार इत्यर्थः ।

( २ ) काव्यमिति । द्विधा द्विविधं मतम् । तत्राद्यो ध्वनिः, द्वितीयस्तु गुणीभूतव्यङ्ग्यम् । गुणीभूतं वाच्यार्थादुत्कर्षानाधायकत्वादप्रधानीभूतं व्यङ्ग्यं प्रतीयमानोऽर्थो यस्मिन्निति गुणीभूतं काव्यम् , अत्र विशेषः प्रतिपादयिष्यते । ननु काव्यमिति नपुंसकं ध्वनिरिति पुंस्त्वं कथमिति चेत् ? द्वयोरप्यजहल्लिङ्गतया "कलत्रं दाराः" इत्यादिवन्निर्देशेन दोषाभावात् ।

( ३ ) तत्रेति । तयोर्ध्वनिगुणीभूतव्यङ्ग्ययोर्मध्ये इत्यर्थः ।

( ४ ) ध्वनिलक्षणं निरूपयति—वाच्यादतिशायिनीति। व्यङ्ग्ये व्यङ्ग्यार्थे सति वाच्यात् अभिधावृत्तिप्रतिपाद्यात् अर्थात् अतिशयश्चमत्कारातिशयः अस्यास्तीति स तादृशस्त-

---

(क) अत्र केचित्—सजातीयविजातीयस्वगतभेदेन भेदस्तावत् त्रिविधः । यथा घटाद् घटस्य भेदः सजातीयः, पटाद् घटस्य भेदो विजातीयः, एकस्यैव घटस्य पुनः कपालैकदेशादिभ्यः स्वगतो भेदः । तत्र वक्ष्यमाणः काव्यभेदः सजातीयादिषु मध्ये कतमः ? न तावत् स्वगतः—चमत्कारापरपर्यायस्य रसपदवाच्यस्य काव्यत्वस्याखण्डैकरसत्वे सावयवित्वासम्भवात् । नचापि द्वितीयः—अपरे काव्यसंसारे काव्यत्वं विना प्रतीत्यसम्भवात् । न वाऽप्याद्यः—काव्यत्वस्य सावच्छिन्नत्वाभावात् । "तमेव भान्तमनुभाति सर्वम् , तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् , सर्वं खल्विदं ब्रह्म नेह नानाऽस्ति किञ्चन, एकमेवाद्वितीयं ब्रह्म, रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति, इत्यादिपरश्शतश्रुतिस्वारस्यात् ।

"यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः" ।

इत्यादिस्मृतिस्वारस्याच्च काव्यसंसारे चमत्कारापरपर्यायस्य काव्यात्मकस्य रसस्यैव भासा सर्वं वाच्यत्वादिरूपमिदं जगद् भासते तदसत्वे सर्वस्यैवामुष्य जगतो भासमानत्वासम्भवात् । "विज्ञानमानन्दं ब्रह्मे" त्यादिभिः श्रुतिभिरुद्घोष्यमाणं ब्रह्मणो विज्ञानात्मकत्वमानन्दात्मकत्वं च रसरूपस्यैव सम्भवितुमर्हति तत्र काव्यार्थभावनापरिपक्वबुद्धयः सहृदया एव प्रमाणमिति चेत् ! सत्यम् , न हि काव्यभेदो वास्तविकः किन्त्वौपाधिकः, स च जपाकुसुमसम्पृक्तलौहित्यस्फटिकमिव जातिव्यक्त्यादिः शरीरस्येव देश–काल–वक्तृ–तात्पर्य–संयोग–विप्रयोगादिः शब्दार्थयोः, तत्समर्पितः पुना रसस्येति लापयन्ति ।

( ५ ) वाच्यादधिकचमत्कारिणि व्यङ्ग्यार्थे ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या

स्मिन् सति ध्वनिः। तच्च ध्वनिरूपं काव्यम् उत्तमम् गुणीभूतव्यङ्ग्यनिर्व्यङ्ग्यात्मकद्विविधभेदापेक्षया उत्कृष्टम् "उच्यते" इति शेषः। एतद्धि वाच्यार्थादधिकचमत्कार्यर्थद्योतकत्वादेवेति विभावनीयम्। अनेन येन केनापि हेतुना व्यङ्ग्यार्थविद्यमानत्वात् गुणीभूतव्यङ्ग्यं काव्यं मध्यमम्, सर्वथा व्यङ्ग्यार्थाविद्यमानत्वान्निर्व्यङ्ग्यं काव्यमधममिति ग्रन्थकृतामाशयोऽवधेयः।

( ६ ) वाच्यादतिशयिनीत्यस्यार्थं स्फुटीकुर्वन् ध्वनिशब्दस्य योगरूढत्वं स्पष्टयति—वाच्यादिति। वाच्यादतिशयश्च तात्पर्यविषयत्वाद्बोध्यः। व्यङ्ग्यार्थे सतीत्यर्थः। ध्वन्यते व्यञ्जनया व्यज्यतेऽस्मिन् (क)वाक्यार्थसमुदाये काव्ये इति ध्वनिः, ध्वनतेः 'खनिकष्यज्यसिवसिवसिसनिध्वनिग्रन्थिचलिभ्यश्च" इत्याणादिकादिप्रत्ययः। ध्वनिशब्दो ह्यनेकार्थः, तथाहि ध्वन्यत इति ध्वनी रसादिरर्थः। ध्वनतीति ध्वनिः शब्दवाच्यादिरर्थो वा। ध्वन्यतेऽस्मिन्निति ध्वनिः, शब्दादिगता शक्तिः। ध्वननं ध्वनिः रसादिप्रतीतिः, ध्वन्यतेऽस्मिन्निति ध्वनिः काव्यमिति। वस्तुतस्तु—ध्वनति व्यञ्जनया रसादीन्प्रत्याययतीति ध्वनिः शब्दार्थसमुदाय इत्यर्थः। वस्त्वलङ्कारध्वन्योः काव्यघटकत्वाभावेऽपि काव्योत्कर्षकतया तद्व्यञ्जकशब्दार्थयोर्ध्वनित्वमवगन्तव्यम्, अन्यथा वक्ष्यमाणध्वनिकाव्यप्रकारसंख्यानुपपत्तेः। यद्यपि गुणीभूतव्यङ्ग्येऽप्युक्तव्युत्पत्तिसम्भवेऽपि ध्वनिपदस्य निरुक्तरूढिसापेक्षत्वान्न तत्र व्यवहारः।

परे तु—वाक्यविशिष्टवाक्यत्वं ध्वनित्वम्। वैशिष्ट्यञ्च स्वतादात्म्य स्वविशिष्टार्थविषयकज्ञानजन्यत्व चमत्काराधिकचमत्कारजनकव्यङ्ग्यार्थप्रतिपादकत्वोभयसम्बन्धेन स्ववैशिष्ट्यञ्च स्वशक्तिलक्षणान्यतरसम्बन्धेनेति सर्वं सुस्थमिति सुधीभिरालोचनीयम्।

अत्राहू राजानकानन्दवर्द्धनाचार्याः—प्रथमे हि विद्वांसो वैयाकरणाः व्याकरणमूलत्वात्सर्वविद्यानाम्। ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति। "श्रोत्रशष्कुलीं सन्तानेनागता अन्त्याः शब्दाः श्रूयन्ते" इति प्रक्रियायां श्रूयमाणाः शब्दा इत्युक्तम्। तेषां घण्टानुरणनरूपत्वं तावदस्ति ते च ध्वनिशब्देनोक्ताः। तदुक्तं भगवता भर्तृहरिणा—

"यः संयोगविभागाभ्यां करणैरुपजायते।
स स्फोटः शब्दजः शब्दो ध्वनिरित्युच्यते बुधैः॥"

एवं घण्टादिनिर्ह्रादस्थानीयोऽनुरणनात्मकोपलक्षितो व्यङ्ग्योऽप्यर्थो ध्वनिरिति व्यवहृतः। इत्येतत्प्रकारोऽव्यक्तशब्दानामेव विद्यते।

व्यक्तशब्दानां तथा श्रूयमाणा ये वर्णा नादशब्दवाच्या अन्त्यबुद्धिनिर्ग्राह्याः स्फोटाऽभिव्यञ्जकास्ते ध्वनिशब्देनोक्ताः। यदुक्तं—

"प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा। ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते॥" इति

एतेनेह व्यञ्जकौ शब्दार्थावपि ध्वनिशब्देनोक्तौ। अपि च वर्णेषु तावन्मात्रपरिमाणेष्वपि विद्यमानेषु। यथोक्तम्—

"अल्पीयसाऽपि यत्नेन शब्दमुच्चारितं मतिः।
यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम्॥" इति।

---

(क) अत्र सप्तम्यर्थो वृत्तित्वम्, तच्च व्यञ्जनाजन्यबोधरूपस्य ध्वननपदार्थस्यैकदेशे व्यञ्जनायामन्वेति। तथाच यद्वृत्तिव्यञ्जनाजन्यबोधविषयो रसादिर्ध्वनिरित्यर्थः।

ध्वनिर्नामोत्तमं काव्यम् ।

( ६ ) भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूलौ ।
अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च ॥ २ ॥

( ७ ) तत्राविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः । लक्षणामूलत्वादेवात्र वाच्यमविवक्षितं बाधितस्वरूपम् ।

---

तेषु तावत्स्वेव श्रूयमाणेषु वक्तुर्योऽन्यो द्रुतविलम्बितादिवृत्तिभेदात्मा प्रसिद्धादुच्चारणादिव्यापारादभिव्यक्तः स ध्वनिरुक्तः । यदुक्तं तेनैव—

"शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदास्तु वैकृताः ।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥" इति ।

व्याख्यातञ्चाभिनवगुप्ताचार्यपादाः । अत्रेदं सारम्—घटादिभिर्वर्णसमुदायरूपैः क्षणिकैः पदैः स्फोटरूपो नित्यः शब्दो व्यज्यते तेन चाभिव्यक्तेन चार्थः प्रतीयत इति तादृशस्य प्रधानीभूतस्फोटव्यञ्जकस्य वर्णसमुदायरूपस्य घटादिशब्दस्य ध्वनिरिति संज्ञेति शाब्दिकानां सिद्धान्तपद्धतिः । ततस्तन्मतानुसारिभिरन्यैः प्रधानीभूतव्यङ्ग्यव्यञ्जकत्वसाधर्म्याद्गुणीभूतवाच्यं यद्व्यङ्ग्यं तद्व्यञ्जनक्षमस्य शब्दार्थयुगलरूपस्योत्तमकाव्यस्य ध्वनिरिति संज्ञा विहिता । तदुक्तं ध्वनिकृता—

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥" इति ।

एतत्सर्वं टिप्पण्यादौ स्पष्टम् ।

( ६ ) काव्यात्मभूतस्य ध्वनेर्भेदप्रदर्शनेनैव ध्वनिकाव्यप्रभेदान् दर्शयति—भेदाविति । द्वौ ध्वनेरपि भेदौ प्रकारौ उदीरितौ कथितौ । द्विवचननिर्देशादेव द्वित्वप्रतीतिसिद्धौ द्वाविति नियमार्थम्बोध्यम् । अत्र यद्यपि वस्त्वलङ्कारध्वनीनां काव्यात्मत्वं न स्वीकृतं तथापि रसादिप्रकर्षकत्वेनैव तेषां काव्यात्मत्वमित्याशयेन तत्साधारणं ध्वनिप्रभेदनिरूपणमारभत इत्यभिप्रायो बोध्यः । लक्षणाभिधामूलाविति । लक्षणामूलोऽभिधामूलश्चेत्यर्थः । तयोर्मध्ये आद्यो लक्षणामूल अविवक्षितम् अनुपयुक्तमन्वयायोग्यं वा वाच्यं वाच्योऽर्थः यत्र स ध्वनिः अविवक्षितवाच्यः । अन्योऽभिधामूलो ध्वनिरित्यनुषङ्गः पूर्वतो विधेयः, ( वाच्यं ) विवक्षितम् अन्वययोग्यमपि अन्यपरं व्यङ्ग्योपसर्जनीभूतं वाच्यं वाच्योऽर्थो यत्र स विवक्षितान्यपरवाच्यः ।

( ७ ) अथ कारिकायाः पूर्वभागस्य सुगमत्वात्तदुपेक्ष्य तदुत्तरभागमेव व्याचष्टे—तत्रेति । तत्र तयोर्द्वयोर्मध्ये । "आद्य" इति शेषः । अविवक्षितमिति । वाच्यं मुख्योऽर्थ इत्यर्थः । सामान्येनात्र नपुंसकत्वमवगन्तव्यम् । वाच्याविवक्षायां बीजं दर्शयति—बाधितस्वरूपमिति । केनापि कारणेन अनुपपन्नावस्थमित्यर्थः ।

अत्रेदम्बोध्यम्—अविवक्षितवाच्ये ध्वनौ प्रधानार्थस्य केनापि कारणेन बाधितत्वादेव तस्य न विवक्षितत्वमित्याशयः । वाच्यतावच्छेदकरूपेण विवक्षाभावात् तेन रूपेण बाधो विशिष्टाभावरूपः । तेन अजहत्स्वार्थात्मिकायाम् उपादानलक्षणायां वाच्यस्याऽबाधेऽपि वाच्यतावच्छेदकरूपेण तद्बाधः, जहत्स्वार्थायां तु अर्थयोरेव बाधः इति ।

( ८ ) विवक्षितान्यपरवाच्यस्त्वभिधामूलः । अत एवात्र वाच्यं विवक्षितम् । अन्यपरं व्यङ्ग्यनिष्ठम् ।

अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः । यथा—प्रदीपो घटस्य ।

( ९ ) अभिधामूलस्य बहुविषयतया पश्चान्निर्देशः ।

( १० ) अविवक्षितवाच्यस्य भेदावाह—

**( ११ ) अर्थान्तरं संक्रमिते वाच्येऽत्यन्तं तिरस्कृते ।**
**अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति ॥ ३ ॥**

---

( ८ ) विवक्षितान्येति । विवक्षितम् अबाधितस्वरूपम् । अत एव अभिधामूलत्वादेव । अत्र विवक्षितान्यपरवाच्ये ध्वनौ । वाच्यं विवक्षितमिति । वाच्यं मुख्योऽर्थः । विवक्षितं वाच्यतावच्छेदकरूपेणेति बोध्यम् । विवक्षितान्यपरवाच्यशब्दान्तर्गतम् अन्यपरशब्दं विवृणोति—अन्यपरमिति । व्यङ्ग्यनिष्ठं व्यङ्ग्ये निष्ठा तात्पर्यं वाच्यार्थस्य तादृशं व्यङ्ग्यार्थतया पर्य्यवसितमिति यावत् एतेन गुणीभूतव्यङ्ग्यव्यवच्छेदः । वाच्यार्थस्य व्यङ्ग्यपरत्वमुपपादयति—अत्र हीति । वाच्यार्थस्य स्वोपस्थितिद्वाराशाब्दबोधं प्रति हेतुत्वमित्याशयेनेदम् । अयमाशयः—अविवक्षितवाच्ये लक्ष्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थं प्रकाशयति तत्र लक्षणामूलाव्यञ्जना इह तु वाच्योऽर्थः तथा इत्यभिधामूला यथा प्रदीपःस्वरूपं प्रकाशयन्नेव घटस्य प्रकाशकः ।

( ९ ) ननु कारिकायां विवक्षितान्यपरवाच्यस्य अभिधामूलत्वात् प्रथमं बुद्धिविषयत्वाच्च तस्यैव प्रथमोपादनमुचितमिति कथं पश्चात्तदुपादानमित्यत आह—अभिधामूलस्येति । तथाच अभिधामूलस्य ध्वनेः बहुविषयत्वात् , लक्षणामूलध्वनेरल्पविषयत्वात् सूचीकटाहन्यायेन प्रथमं निर्देश इति भावः ।

अत्रेदमवगन्तव्यम्—यद्यप्यविवक्षितवाच्ये शब्द एव व्यञ्जकस्तथापि अर्थस्यापि सहकारिता न भ्रुज्यति, अन्यथा अज्ञातार्थोऽपि शब्दस्तद्व्यञ्जकः स्यात् । विवक्षितान्यपरवाच्ये च शब्दस्यापि सहकारित्वं भवत्येव विशिष्टशब्दाभिधेयतया विना तस्यार्थस्याव्यञ्जकत्वादिति सर्वत्र शब्दार्थयोरुभयोरपि ध्वननं व्यापारः । विशिष्टशब्दार्थश्चाप्यत्र गुणालङ्कारोपस्कृतेति बोध्यः ।

( १० ) अथोक्तमेव क्रममादाय लक्षणामूलस्याविवक्षितवाच्यस्य भेदद्वयवत्तायां हेतुमुपपादयन् तदन्वयव्यतिरेकानुविधायिनीं काव्यद्वयोपपत्तिञ्च प्रतिपादयन् भेदद्वयोपपादनं करोति—अविवक्षितवाच्यस्येति । अविवक्षितो वाच्यो मुख्यार्थो यत्र तस्य अत एव लक्षणामूलस्येति भावः, ध्वनेरिति शेषः ।

( ११ ) अर्थान्तरमिति । वाच्ये मुख्यार्थे अर्थान्तरमवच्छेदकान्तरं संक्रमिते प्रापिते उपादानलक्षणया स्वविशेषार्थतां गमिते इत्यर्थः । अत्यन्तं तिरस्कृत इति । वाच्यार्थस्यावच्छेदकान्तरेणापि अविवक्षणात् अत्यन्तं तिरस्कारः । तथा च अत्यन्तं तिरस्कृते वाच्ये लक्षणलक्षणया सर्वथैव प्रतीत्यविषये च सति अविवक्षितवाच्योऽपि ध्वनिः द्वैविध्यं द्विप्रकारत्वं ऋच्छति प्रतिपद्यते । काकाक्षिगोलकन्यायेन "वाच्य" इत्युभयत्र सम्बध्यते ।

( १२ ) अविवक्षितवाच्यो नाम ध्वनिरर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः ।

( १३ ) यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति, तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसंक्रमितत्वादर्थान्तरसंक्रमितवाच्यत्वम् ।

यथा—

( १४ ) 'कदली कदली, करभः करभः, करिराजकरः करिराजकरः ।
भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः ॥'

---

रूपत्वेन पर्यवसितेन सर्वथैव प्रतीतिविषयत्वाभावात् अत्यन्ततिरस्कृतवाच्यो नाम ध्वनिरिति सारार्थो बोध्यः ।

( १२ ) कारिकार्थं बोधयितुमाद्यप्रभेदतात्पर्यं स्पष्टयति—अविवक्षितवाच्य इति । नामेति प्रसिद्धे ।

नाम कामे ( कोपे ) भ्युपगमे विस्मये स्मरणेऽपि च ।
सम्भाव्यकुत्साप्राकाश्यविकल्पेष्वपि दृश्यते ॥" इति मेदिन्युक्तेः ।

( १३ ) अर्थान्तरसंक्रमितवाच्यशब्दस्य व्युत्पत्तिपूर्वकमर्थावधायाह—यत्रेति । प्रकृतान्वय इति शेषः, अनुपयुज्यमानः केनचित्कारणेन स्वान्वयबोधमुत्पादयितुमशक्नुवन्नित्यर्थः, अर्थान्तरे वाच्यलक्ष्यसाधारणेऽर्थे परिणमति उपादानलक्षणया पर्य्यवस्यतीत्यर्थः । स्वविशेषरूपे अर्थान्तरे संक्रमितत्वात् उपादानलक्षणया सञ्चारितत्वादित्यर्थः । अर्थान्तरे ( स्वस्यैव विशेषरूपे ) संक्रमितं वाच्यं यत्र स अर्थान्तरसंक्रमितवाच्यः ।

अत्रायमाशयः—यथा "काकेभ्यो दधिरक्ष्यता" मित्यत्र वाच्योऽपि काको दध्युपघातकरूपेण लक्ष्योऽर्थस्तथा यत्र यद्रूपेण प्रकृतान्वयानुपयोगी तदितरप्रकारेण स्वयं परिणमन्निव लक्ष्यः सोऽर्थान्तरसङ्क्रमितवाच्यो ध्वनिरिति । अत्र वागीशास्तु—"स्वयं मुख्यतावच्छेदकरूपेण स्वविशेषरूपे स्वकीयमुख्यतावच्छेदकव्याप्यधर्मे परिणमति विशेष्यतया भासते । अर्थान्तरे संक्रमितत्वाद् विशेष्यतया भासमानत्वात । एतेन मुख्यार्थस्य मुख्यतावच्छेदकरूपेण प्रकृतान्वयानुपयोगित्वं बाधस्तस्यैवविशेषान्तररूपेण बोध इतीयमुपादानलक्षणा इति सूचितम्" इत्याहुः ।

( १४ ) उदाहरति—कदलीकदलीत्यादि । प्रसन्नराघवे काञ्चिद्रमणीं दृष्ट्वा कस्यचिद्रसिकजनस्योक्तिरियम् । कदली रम्भा तरुः कदली अत्यन्तशैत्यविशिष्टो रम्भातरुरेव अतः सा नानुष्णाशीतरूपस्य अस्योरुयुगस्य तुलां विभर्तीति भावः । करभ ऊर्वाकार "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इति कोषात् पाणिपार्श्वभागः, करस्य मणिबन्धदेशात् कनिष्ठाङ्गुलिपर्यन्तो भाग इत्यर्थः । करभः अत्यन्तह्रस्वस्तादृशभाग एव एवञ्च स यथासम्भवविस्तृतस्य अस्योरुयुगलस्य तुलां न विभर्त्तीत्यभिप्रायः । करिराजस्य गजश्रेष्ठस्य करः शुण्डा करिराजकरः अत्यन्तकठिना करिश्रेष्ठशुण्डैव । "करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः" इति मेदिनी, अतश्च सोऽपि अतिमृदुलस्य तुलां न विभर्त्तीत्याशयः । अत एव चमूरोः अजिनयोनिमृगविशेषस्यैव दृशौ लोचने यस्यास्तस्या अस्या नायिकाया मृगलोचनाया इति यावत् । इदम् ऊरुयुगलं भुवनत्रितयेऽपि त्रैलोक्येकस्यापि तुलां सादृश्यं न बिभर्त्ति न धारयति । रमण्या ऊरुयुगलस्योपमेयस्य त्रैलो-

( १५ ) अत्र द्वितीयकदल्यादिशब्दाः पौनरुक्त्यभिया सामान्यकदल्यादिरूपे मुख्यार्थे बाधिता जाड्यादिगुणविशिष्टकदल्यादिरूपमर्थं बोधयन्ति ।

( १६ ) जाड्याद्यतिशयश्च व्यङ्ग्यः ।

( १७ ) यत्र पुनः स्वार्थं सर्वथा परित्यजन्नर्थान्तरे परिणमति, तत्र मुख्यार्थस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम् ।

यथा—

( १८ ) निःश्वासान्ध इवादर्शश्चान्द्रमा न प्रकाशते ।

---

क्येऽपि कदली-करभ-करिराजकरेतरणामुपमानपदार्थानां मध्ये कस्यापि साहश्याभावात् निरुपमेयमिति भावः । तोटकंछन्दस्तल्लक्षणन्तु—"वद तोटकमब्धिसकारयुतम्" इति ।

( १५ ) लक्ष्ये लक्षणं सङ्घटयति—अत्रेत्यादिना । आदिपदेन करभकरिराजपदयोः परिग्रहः । पौनरुक्त्यभिया एकत्रार्थे उक्तयोरुभयोः पदयोः प्रथमेनैव तदर्थबोधोपपत्तौ द्वितीयस्य वैयर्थ्यभीत्या । मुख्यार्थबाधं प्रति हेतुरयं प्रतिपादितः । सामान्यकदल्यादिरूपे शीताष्णादिसाधारणकदलीकरभादिरूपे बाधिता अनुपपन्ना प्रकृतान्वयानुपयोगित्वं गतेत्यर्थः लक्षणायामयं हेतुः प्रदर्शितः । एवञ्चेषु उद्देशेषु द्वितीयकदल्यादिपदानां पौनरुक्त्यात् तदर्थानां विधेयत्वासम्भवात् तानि पदानि जाड्यादिविशिष्टकदल्यादिपराणि । तदेवाह—जाड्यादिविशिष्टकदल्यादिरूपमर्थं बोधयन्तीति । तथाच प्राथमिककदल्यादिपदेभ्यः कदल्याद्यंशप्राप्तौ जाड्यादिवैशिष्ट्यमात्रे द्वितीयकदल्यादिशब्दानां "श्वेतो धावति" इत्यादाविवोपोपादनलक्षणा ततः कदली जाड्या करभोऽशोभनखर्वः करिराजकरः कर्कश इत्यर्थः । तत्र जाड्यं शैत्यम् , नच शैत्यं पयस्येव कथं कल्यादाविति वाच्यम् , परम्परया कदलीवृत्तित्वाभ्युपगमात् । नच शैत्यादीनामन्यत्रापि सत्त्वात् कथं कदलीत्यादिव्याप्यत्वमिति वाच्यम्, शैत्यादिविशेषस्यैवात्र विवक्षितत्वात् ।

( १६ ) अत्रत्यध्वनित्वप्रयोजकं लक्षणायां प्रयोजनञ्चाह—जाड्येति । आदिशब्देन खर्वत्व-कठिनत्वयोः परिग्रहः, व्यङ्ग्यो लक्षणप्रयोजनबोधविषयः सर्वत्रैव मुख्यार्थस्याभेदः सम्बन्धः । एवञ्च कदल्यतिशीता करभोऽतिखर्वः करिराजकरोऽतिकर्कशः इति हेतोश्चमूरुदशः इदमीदृशमूरुयुगं तुलां न बिभर्तीत्यर्थः । यत्र तु कदल्यादौ सादृश्यं सम्भाव्यते तदातिशैत्यादिनापकृष्टमिति सुतरां भुवनत्रितये तुलना नास्तीति भावः । अत्र हि व्यतिरेकालङ्कारो व्यङ्ग्यः ।

( १७ ) अत्यन्ततिरस्कृतवाच्यं ध्वनिमुदाहर्त्तुं तदर्थपरिष्कारं दर्शयति—यत्रेति । पुनः शब्दो तुशब्दार्थे । स्वार्थं मुख्यं । सर्वथा विशेष्यविशेषणेनोभयथापि । अर्थान्तरे मुख्यार्थभिन्ने परिणमति लक्षणलक्षणया वर्त्तते । अत्र परिणमतीत्युपचारप्रयोगस्तेन प्रवर्तते इत्यर्थः । अत्यन्ततिरस्कृतत्वात् सर्वथाबाध्यत्वात् ।

( १८ ) तदेवोदाहरति—निःश्वासान्ध इति । वाल्मीकीयरामायणे आरण्यकाण्डषोडशसर्गे शूर्पणखाया भाविनः कामोद्दीपनस्य द्योतनाय लक्ष्मणमुखेन हेमन्तवर्णनप्रस्तावे पञ्चवट्यां रामस्योक्तिरियम् । एतत्पूर्वार्द्धस्तु—

"रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः" इति ।

निश्वासेन निश्वासबाष्पवातेन मन्ध अप्रकाशः आविलीभूत इति यावत् आदर्शो दर्पण

( १९ ) अत्रान्धशब्दो मुख्यार्थे बाधितेऽप्रकाशरूपमर्थं बोधयति । अप्रकाशातिशयश्च व्यङ्ग्यः ।

( २० ) अन्धत्वाप्रकाशत्वयोः सामान्यविशेषभावाभावान्नार्थान्तरसंक्रमितवाच्यत्वम् ।

---

इव चन्द्रमाः कुज्झटिकायां चन्द्रो न प्रकाशते न दीप्यते ।

( १९ ) अत्राचेतनस्यादर्शस्यान्धत्वबाधात् लक्ष्यार्थमाह—अत्रेति । अन्धो दृष्टिशक्तिरहितः मुख्यार्थं दृष्टिहानरूपे । बाधित इति । दृष्टिशक्तिरहितत्वस्याचेतने दर्पणेऽसम्भवत्वेन बाधितत्वं ज्ञेयम् । अप्रकाशरूपम् आविलताम्रूपम् । बोधयति प्रत्याययति लक्षणलक्षणयेति शेषः । अत्र चाक्षुषज्ञानाजनकत्वरूपैकधर्मवत्वं मुख्यलक्ष्ययोः सम्बन्धो बोध्यः । यद्यपि "अन्धं स्यात्तिमिरे क्लीबे चक्षुर्हीनेऽभिधेयवत्" इति मेदिनीकारोक्त्या "अन्धं तमस्यपि "इत्यमरोक्त्या चान्धशब्दः प्रकाशाभावरूपं तिमिरार्थेऽपि निर्दिष्टोऽवगम्यते, तथापि तदर्थकस्य तस्यान्धशब्दस्य केवलनपुंसकलिङ्गत्वस्वीकारान्न प्रकृतान्वयोपयोग्यर्थकत्वम् , अन्धमस्यास्तीत्यन्ध इत्युपपादयितुमशक्यः अवश्यक्लृप्तद्रव्यविशेषस्य तेजसोऽभावरूपेणैव तिमिरस्याङ्गीकाराद् गुणवचनत्वाभावेन "गुणवचनेभ्यो मतुपो लुगिष्ट "इति वार्त्तिकाप्रवृत्तेः ।

अत्राहुः लोचनकारा—अन्ध इति चोपहतदृष्टिः । जात्यन्धस्यापि गर्भे दृष्ट्युपघातात् । अन्धोऽयं पुरो न पश्यतीत्यत्र तिरस्कारोऽन्धार्थस्य न त्वत्यन्तम् । इह तु आदर्शस्यान्धत्वमारोप्यमाणमपि न सह्यमिति । अन्धशब्दोऽत्र पदार्थस्फुटीकरणाशक्तत्वं नष्टदृष्टिगतं निमित्तीकृत्यादर्शे लक्षणया प्रतिपादयति । असाधारणविच्छायत्वानुपयोगित्वादिधर्मजातमसंख्यं प्रयोजनं व्यनक्ति । नच निश्वासान्ध इवय आदर्शस्तद्रूपश्चन्द्रमा" इत्याशयकान्वयः भट्टनायकोक्तसाध्विति वाच्यम् , अत्रादर्शचन्द्रमसोहि सादृश्यमिव शब्दो द्योतयति । निश्वासान्ध इति चादर्शविशेषणम् इवशब्दस्त्वन्धार्थेन योजने आदर्शश्चन्द्रमा इत्युदाहणं भवेत् । योजनं चैतदिवशब्दस्य क्लिष्टम् । नच निश्वासेनान्ध इवादर्शः स इव चन्द्र इति कल्पना युक्ता, जैमिनीयसूत्रे इयेवं योज्यते न काव्येऽपीत्यलमिति ॥

( २० ) नन्वत्रापि अन्धशब्दार्थस्य शक्यतावच्छेदकभिन्नेन अप्रकाशत्वेन रूपेण बोधनादर्थान्तरसंक्रमितत्वेन कथं नार्थान्तरसंक्रमितवाच्यरूपध्वनित्वमित्यत आह–अन्धत्वाऽप्रकाशत्वयोरिति । शक्यतावच्छेदकलक्ष्यतावच्छेदकयोः सामान्यविशेषभाव एवार्थान्तरसंक्रमितवाच्यत्वं भवति यथा घटपदस्य नीलघटपदत्वे यथा वा "त्वामस्मि वच्मी" त्यादौ । अत्र तु लक्ष्यतावच्छेदकमप्रकाशत्वमेव सामान्यम् , अन्धत्वमेव तद्विशेष इति अतो न तथेति भावः । अत एवाहुः—नह्यत्रार्थस्याप्रकाशत्वं विशेषः, किन्तु सामान्यं ततश्च सामान्ये—सर्वविषयाणामन्तर्भावात् विशेष एवार्थान्तरं भवितुमर्हतीति न पुनर्विशेषस्य सामान्यमिति । नच—

यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा
अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥ इत्यादौ

काव्यप्रकाशकारदत्तोदाहरणे मित्रत्वादीनां मुख्यतावच्छेदकानां लक्ष्यतावच्छेदकैरा-

यथा—

( २१ ) भम धम्मिअ वीसत्थो, सो सुणओ अज्ज मारिओ देण ।

गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण ॥

( २२ ) अत्र 'भ्रम धार्मिक—' इत्यतो भ्रमणस्य विधिः प्रकृतेऽनुपयुज्यमानतया भ्रमणनिषेधे पर्यवस्यतीति विपरीतलक्षणाशङ्का न कार्या ।

---

घस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वैः सह सामान्यविशेषभावाभावात् कथमुक्तनियम इति वाच्यम् आश्वस्तादिविशेषस्यैवात्र विवक्षितत्वात् । इदन्तु प्रायिकमेव न सार्वत्रिकं "रामोऽस्मि सर्वं सहे" इत्यत्र दुःखसहिष्णुत्वरामत्वयोः 'करभः करभ" इत्यत्र शोभाराहित्यकरभत्वयोश्च तथात्वाभावात् किन्तु अत्रान्धत्वरूपस्वार्थपरित्यागादेव न तथात्वमिति बोध्यम् । एवञ्च यत्र सामान्यार्थं तद्विशेषार्थस्य प्रतीतिस्तत्र अर्थान्तरसंक्रमितवाच्यत्वम्, मुख्यार्थस्य सर्वथापरित्यागे तु अत्यन्ततिरस्कृतवाच्यत्वमित्यनयार्भेद इति प्रतिपादितं भवति ।

( २१ ) ननु "भम धम्मिअ" इत्यादौ विपरीतलक्षणासत्त्वेन तन्मूलकात्यन्ततिरस्कृतवाच्यध्वनेरिदमुदाहरणं भवितुमर्हतीति सन्दिहानं प्रत्याह—भम धम्मिअ इति ।

"भ्रम धार्मिक ! विश्वस्तः स श्वाऽद्य मारितस्तेन ।

गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन" ॥ इति संस्कृतम् ।

हालककविकृतगाथासप्तशत्या द्वितीये शतके गोदावरीनदीतत्तीरे कुञ्जे कृतसंकेताया कुलटायाः तत्रैव प्रतिदिनपुष्पावचयनेन तत् संकेतभञ्जकं स्वपोषितकुक्कुरोपद्रवेणापि अनिवृत्तं धार्मिकं प्रति तस्या एव दिनान्तरे उक्तिरियम् । हे धार्मिक ! धर्मं चरतीति धार्मिकः "धर्मपथ्यर्थन्यायादनपेते" इति ठक् तत्सम्बुद्धाविदम्, अद्य विश्वस्तः कुक्कुरोत्पाताभावेन आश्वस्तहृदयः सन् भ्रम पुष्पावचयनाय पर्यट । येन गोदावर्या नद्या यः कच्छो जलप्रायदेशस्तटस्तत्र यत्कुञ्जं लतावृतस्थानं तत्र वासिना "कच्छो द्रुभेदे नौकाऽङ्गेऽनूपप्राये तटेऽपि च" इति हैमः । "निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः । तेन विख्यातेन दृप्तसिंहेन यो दिनान्तरे त्वामुद्वेजयति स श्वा तव उपद्रावक कुक्कुर इत्यर्थः, मारितः । एतावद्दिनपर्यन्तं तव कुक्कुरोपद्रव एवासीत्, अद्य तु साक्षाद् दृप्तः सिंह एवोपस्थितः, एवं स्थितौ यद्यपि त भ्रमणे मरणमेव भावीति कथमपि तत्र न भ्रमेत्याशयः ।

अत्र जघनविपुलाछन्दस्तल्लक्षणन्तु—

संलङ्घ्य गणत्रयमादिमं शकलद्वयोर्भवति पादः ।

यस्या ( आर्याया ) स्तां पिङ्गलनागो विपुलामिति समाख्याति ॥इति।

( २२ ) उक्तोदाहरणे हि भ्रम इत्यस्य न भ्रम इत्यर्थे तात्पर्यात् लक्षणलक्षणात्मकविपरीतलक्षणया अत्यन्ततिरस्कृतवाच्यरूपो ध्वनिरित्याशङ्कितुराशयस्तं दूषयितुमाह—अत्रेति । भ्रमणस्य विधिः प्रकृते अनुपयुज्यमानतया इति—सिद्धवत्वेन कथिते तात्पर्यविषयीभूतस्वैरविहारे स्वसंकेतस्थले' भ्रमणोपदेशस्य बाधितार्थकत्वात् निवृत्तीच्छया उक्तवाक्यस्य प्रवर्त्तकत्वानुपपत्तेश्च निषेधे पर्यवस्यतीति विपरीतलक्षणया इति शेषः । विपरीतलक्षणायास्तन्मूलकात्यन्ततिरस्कृतवाच्यध्वनेराशङ्का न कार्या इति छात्रान्प्रत्युपदेशः ।

( २३ ) यत्र खलु विधिनिषेधावुत्पद्यमानावेव निषेधविध्योः पर्यवस्यतस्तत्रैव तदवसरः ।

( २४ ) यत्र पुनः प्रकरणादिपर्यालोचनेन विधिनिषेधयोर्निषेधविधी अवगम्येते तत्र ध्वनित्वमेव ।

( २३ ) कथं तदाशङ्का न विधेयेत्यत आह—यत्रेति । उत्पद्यमानावेवेति—वाक्यार्थबोधोत्पत्तिदशायामेवेत्यर्थः । तद्दशायां क्वचिद् विधिः निषेधे निषेधो विधौ पर्यवस्यतीत्यर्थः । तदवसरः तस्य विपरीतलक्षणामूलकात्यन्ततिरस्कृतवाच्यध्वनेः अवसरः सम्भवः । एवञ्चात्र लक्षणामूलध्वनेरवसरो नास्तीत्यर्थः । अथ वाक्यार्थबोधोत्पत्तिदशायामन्वयबोधात्प्राक् विधेः निषेधे पर्यवसाने यथा—

"गच्छ गच्छसि चेत् कान्त ! पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥"

अत्र गच्छेति विधिज्ञानकाल एव न गच्छेति निषेधप्रतीतेर्विपरीतलक्षणामूलकात्यन्ततिरस्कृतवाच्यरूपो ध्वनिः ।

यथा च—"औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम् ।
मम मन्दभागिन्याः कृते सखि ! त्वामपि परिभवति ॥"

इत्यत्र नायिकायाः सोल्लुण्ठवाक्ये मम कृते इति विधेः न मम कृते इति लक्षणया पर्यवसानम् ।

एवं निषेधस्य विधौ पर्यवसाने यथा—

"श्वश्रूरत्र निमज्जति अत्राहं दिवस एव प्रलोकय
मा पथिक ! रात्र्यन्धक ! शय्यायामावयोर्निमङ्क्ष्यसि" ।

अत्र स्वयंदूतिकाया उक्तौ गमननिषेधस्य स्वशय्यायामागमनविधौ लक्षणया पर्यवसानम् ।

( २४ ) यत्र पुनरिति । विधिश्रवणानन्तरं प्रकरणादिपर्य्यालोचनेन निषेधः प्रतीयते निषेधश्रवणानन्तरञ्च तथैव विधिः प्रतीयते इत्यर्थः । तत्र ध्वनित्वमेव । अभिधामूलकवस्तुव्यङ्ग्यत्वमेवेत्यर्थः न तु लक्ष्यत्वमेवेत्यर्थः । एवञ्च "भम धम्मिअ" इत्यादौ प्रथमं भ्रमणविधिः शक्त्यैव प्रतीयते पश्चादेव तस्याः कुलटात्वस्य प्रकरणादिना प्रतीतौ न भ्रमेति भ्रमणनिषेधो व्यञ्जनयैव प्रतीयते इत्यतोऽभिधामूलकवस्तुध्वनिरेव तस्मात् "उपकृतं बहु तत्र" इत्यादाविव विपरीतलक्षणामूलकार्थान्तरसंक्रमितवाच्यत्वं नाऽभ्युपेयमिति भावः(क) ।

( क ) अत्र चाभिनवगुप्तपादाचार्यास्तु—"स्वतः सिद्धमपि भ्रमणं श्वभयेनापोहितमिति प्रतिप्रसवात्मको निषेधाभावरूपः न तु वियोगप्रैषादिरूपोऽत्र विधिः । अतिसर्गप्राप्तकालयोश्चेयं लोट् तत्र भावतदभावयोर्विरोधाद् द्वयोस्तावन्न युगपद् वाच्यता, न क्रमेण, विरम्य व्यापारद्वयाभावात् । "विशेष्यं नाभिधा गच्छेदि" त्यादिना अभिधाया विरम्य व्यापारासम्भवाभिधानात् । ननु तात्पर्यशक्तिरपर्यवसिताविवक्षया दृप्तधार्मिकतदादिपदार्थान्वयरूपमुख्यार्थबाधकवलेन विरोधनिमित्तया-विपरीतलक्षणया च वाक्यार्थीभूतनिषेधप्रतीतिमभिहितान्वयदृशा करोतीति शब्दशक्तिमूल एव सोऽर्थः । एवमनेनोक्तमिति हि व्यवहारस्तत्र वाच्यातिरिक्तोऽन्योर्थः, इति नैतत् । त्रयो ह्यत्र

तदुक्तम्—

( २५ ) 'क्वचिद्बाध्यतया ख्यातिः क्वचित्ख्यातस्य बाधनम् ।

पूर्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु ॥'

( ६ ) अत्राद्ये मुख्यार्थस्यार्थान्तरे संक्रमणं प्रवेशः न तु तिरोभावः।

( २५ ) उक्तार्थे प्राचां सम्मतिमुपपादयति—क्वचिद्बाध्यतयेति । क्वचित् प्रयोगे बाध्यतया विपरीतार्थपर्य्यवसन्नतया ख्यातिरन्वयबोधः यथा "गङ्गायां घोषः" इत्यादौ घोषनिवासस्य यथा वा "उपकृतं बहु तत्र किमुच्यते" इत्यपकारिणं प्रत्युक्त्वा उपकारस्य च प्रथममेव बाध्यतया ख्यातिः क्वचित् प्रयोगे ख्यातस्य अन्वयबोधविषयीभूतस्य बाधनं बाधोदयाद्विपरीतार्थपर्य्यवसानम्, यथाऽत्रैव श्लोके निःशेषच्युतचन्दनमित्यादौ च । तयोर्मध्ये पूर्वत्र पूर्वस्मिन् स्थले लक्षणैव लक्षणामूलध्वनिरेव स्यात् तत्र लक्षणां विनान्वयबोधासम्भवेन लक्षणामूलकव्यञ्जनाप्रतिपाद्यध्वनेरेवोचितत्वादिति भावः । उत्तरत्र अभिधैव अभिधामूलध्वनिरेव अभिधयैवान्वयबोधोपपत्तौ लक्षणाश्रयणस्यायुक्तत्वेन अभिधामूलकव्यञ्जनाप्रतिपाद्यध्वनेरेव न्याय्यत्वादिति भावः। एवञ्चैतेन निषेधविध्योस्तु व्यङ्ग्यत्वमेवेति दर्शितम् । तथाच प्राचीनमतेऽपि "गच्छ गच्छसि चेत् कान्त !" इत्यादौ सर्वथैव प्रियतमविश्लेषमसहिष्णोर्नायिकायास्तद्वियोगघटकगमनानुमतेरत्यन्तासम्भवेन गच्छेति विधिप्रतीतिसमये एव बाधज्ञानाद्विपरीतलक्षणया न गच्छेति निषेधप्रतीत्या लक्षणामूलकव्यञ्जनाप्रतिपाद्यात्यन्ततिरस्कृतवाच्यध्वनिरेव । "भम धम्मिअ" इत्यादौ तु भ्रमेतिविधिश्रवणसमये बाधज्ञानाभावेन तद्गृहे स्वीयस्वच्छन्दविहारबाध इति प्रकरणपर्य्यालोचनयैवानन्तरं बाधज्ञानोत्पत्तेः भ्रमेतिवाच्यभ्रमणविधिरूपार्थस्य न भ्रमेति निषेधरूपव्यङ्ग्यार्थपरत्वेन विवक्षितान्यपरवाच्येति व्युत्पत्तेरपि सत्त्वेनाभिधामूलध्वनित्वमेव न्याय्यमिति पूर्वापरग्रन्थसन्दर्भाशयः ।

( २६ ) इत्थमविवक्षितवाच्यध्वनेरर्थान्तरसंक्रमितवाच्यत्वात्यन्ततिरस्कृतवाच्यत्वेन द्वैविध्यमुक्त्वा तदुदाहृतस्य च आद्यस्यार्थान्तरसंक्रमितवाच्यस्य तादृशपरिभाषायाः बीजमाह—अत्राद्ये इति । अत्र अनयोर्लक्षणामूलध्वन्योर्मध्ये, आद्ये अर्थान्तरसं-

व्यापाराः संवेद्यन्ते—पदार्थेषु सामान्यात्मस्वभिधाव्यापारः, समयापेक्षाऽर्थाऽवगमनशक्तिः, अभिधासमयश्च । तावत्येव न विशेषांशे, आनन्त्यादव्यभिचाराच्च । एवमस्य ततो विशेषरूपे वाक्यार्थे तात्पर्यशक्तिः परस्परान्विते "सामान्यस्यान्यथासिद्धेर्विशेषं गमयन्ति हि" इति न्यायात् । तत्र च द्वितीयकक्ष्यायां भ्रमेति विध्यतिरिक्तं न किञ्चित्प्रतीयते, अन्वयमात्रस्यैव प्रतिपन्नत्वात् । नहि "गङ्गायां घोषः, "सिंहो वटुः" इत्यत्र च यथाऽन्वय एव बुभूषन् प्रतिहन्यते योग्यताविरहात् । तथा तव भ्रमणनिषेद्धा स श्वा सिंहेन हतः, तदिदानीं भ्रमणनिषेधक–कारणवैकल्याद् भ्रमणं तवोचितमित्यन्वयस्य न काचित् क्षतिः, अत एव मुख्यार्थबाधा नात्र शङ्क्येति न विपरीतलक्षणाया अपसरः, भवतु वाऽसौ तथाऽपि द्वितीयस्थानसङ्क्रान्तत्वाभावादसौन भवति तथाहि मुख्यार्थबाधायां लक्षणाप्रवृत्तिः सा च विरोधप्रतीतिरेव, न चात्र पदार्थानां स्वात्मनि विरोधः । परस्परं विरोध इति चेत् ? सोऽयं तर्ह्यन्वये विरोधः प्रत्येयः । न च प्रतिपन्नेऽन्वये विरोधप्रतीतिः, विप्रतिपत्तिश्चान्वयस्य नाभिधाशक्त्या तस्याः पदार्थप्रतिपत्त्युपक्षीणाया विरम्य व्यापाराभावादिति तात्पर्यशक्त्यैवान्वयप्रतिपत्तिरित्याहुः ।

अत एवात्राजहत्स्वार्था लक्षणा । द्वितीये तु स्वार्थस्यात्यन्तं तिरस्कृतत्वाज्जहत्स्वार्था ।

**( २७ ) विवक्षिताभिधेयोऽपि द्विभेदः प्रथमं मतः ।**
**असंलक्ष्यक्रमो यत्र व्यङ्ग्यो लक्ष्यक्रमस्तथा ॥ ४ ॥**

( २८ ) विवक्षितान्यपरवाच्योऽपि ध्वनिरसंलक्ष्यक्रमव्यङ्ग्यः । संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः ।

---

क्रमितवाच्ये । मुख्यार्थस्य "कदली कदली" इत्यादौ द्वितीयकदल्यादिपदानां सामान्यकदल्यादिरूपाभिधेयार्थस्य । अर्थान्तरे शैत्यादिगुणविशिष्टकदल्यादिरूपे । तिरोभावः "मुख्यार्थस्ये"ति शेषः । अत एवेति । स्वार्थं स्वाश्रयशब्दस्य मुख्यार्थमजहती उपस्थापयन्ती अजहत्स्वार्था । नच कदली कदलीत्यादौ प्रथमकदलीपदेनैव कदल्या उपस्थितौ तत्र लक्ष्यार्थस्य अभेदान्वयसम्भवे किमर्थं कदल्यंशे लक्षणा इति वाच्यम्, लक्ष्यतावच्छेदकजड़त्वाश्रयत्वेन तेन रूपेण तदुपस्थापनस्यानिवार्यत्वात् । द्वितीये त्विति । अत्यन्ततिरस्कृतवाच्य इत्यर्थः । स्वार्थस्य "निश्वासान्ध" इत्यादौ दृष्टिसःक्तिराहित्यरूपान्धपदवाच्यार्थस्य अत्यन्तं तिरस्कृतत्वात् केनाऽपि रूपेणाऽवोधितत्वात्, स्वार्थं जहती अनुपस्थापयन्ती अजहत्स्वार्था ।

( २७ ) अथ लक्षणामूलध्वनिं प्रतिपाद्य विक्षितान्यपरवाच्यध्वनिं प्रतिपादयितुं प्रक्रमते—विवक्षिताऽभिधेयोऽपी इति । विवक्षितं व्यङ्ग्यार्थपरतया वक्तुमिष्टम् अभिधेयं मुख्यार्थो यस्य स विवक्षितान्यपरवाच्यनामापि ध्वनिः प्रथमं द्विभेदः द्विप्रकारको मतः प्रथममित्युक्त्वा तु पश्चात्तूभयोरपि प्रभेदबाहुल्यं प्रतिपादयिष्यन्त इति दर्शितम् । यत्र विवक्षिताभिधेयध्वनौ । व्यङ्ग्यः सम्यङ् न लक्षयितुं शक्यः क्रमो विभावानुभावाद्यर्थेन सह पौर्वापर्यं यत्र सः वाच्यज्ञानानन्तरं व्यङ्ग्यज्ञानं जायत इति क्रमो यत्राज्ञेय इति भावः । रसभावादीनाम् अत्यन्तास्वाद्यतया शीघ्रबोध्यत्वेन उत्पलपत्रशतव्यतिभेदनस्येव क्रमोऽज्ञेयो ज्ञेयः । काव्यात्मतया प्रधानानां रसादीनां लक्ष्यत्वादस्य भेदस्य प्राथमिको निर्देशः । लक्षयितुं शक्य अनुभवनीय इति यावत् क्रमो विभावादीनां पौर्व्यापर्यं यत्र सः, एवञ्च वस्त्वलङ्काररूपे व्यङ्ग्ये हि तज्ज्ञानोत्पत्तिक्रमस्य लक्षणीयत्वाल्लक्ष्यक्रम इति भावः ।

( २८ ) विवक्षिताभिधेय इत्यस्यार्थं दर्शयति—विवक्षितान्यपरवाच्य इति । असंलक्ष्यक्रम' संलक्ष्यक्रम इति । अत्र च रसवति काव्ये झटित्यास्वादपर्यन्तगमनाद्रसादीनां प्रतीतिर्न विलम्बिता, नीरसे तु प्रतीतिविलम्बात्तत्साजात्येन संलक्ष्यक्रमव्यवहार इति विभावनीयम् । ननु सर्वत्र भावनिरूपणानन्तरमेवाभावनिरूपणम्भवतीति प्रकृतेऽपि संलक्ष्यक्रमव्यङ्ग्यध्वनेर्निरूपणानन्तरमेवासंलक्ष्यक्रमव्यङ्ग्यस्यापि निरूपणमुचितमिति कथंम संलक्ष्यक्रमव्यङ्ग्यनिरूपणानन्तरं संलक्ष्यक्रमव्यङ्ग्यनिरूपणं सङ्गच्छते इति चेत्! सत्यम्, असंलक्ष्यक्रमव्यङ्ग्यो ह्येकप्रकार एव तदितरस्तु पञ्चदशेति सूचीकटाहन्यायेनासंलक्ष्यक्रमव्यङ्ग्यस्यैव प्रथममुपादानमित्येके । अपरे तु समानविषय एवोक्तन्यायप्रवृत्तिमङ्गीकृत्य प्रकृते भावाभावयोः पौर्वापर्यनियमात् संलक्ष्यक्रमव्यङ्ग्यध्वनेरेवानन्दत्वात् सहृदयहृदयप्रियत्वाच्च प्राधान्यादित्यतस्तत प्राङ्निरूपणमेतस्येत्यवधेयम् ।

( २६ ) तत्राद्यो रसभावादिरेक एवात्र गण्यते ।
एकोऽपि भेदोऽनन्तत्वात्संख्येयस्तस्य नैव यत् ॥ ५ ॥

उक्तस्वरूपो भावादिरसंलक्ष्यक्रमव्यङ्ग्यः ।

( ३० ) अत्र व्यङ्ग्यप्रतीतेर्विभावादिप्रतीतिकारणत्वात्क्रमोऽवश्यमस्ति किंतूत्पलपत्रशतव्यतिभेदवल्लाघवान्न संलक्ष्यते ।

( ३१ ) एषु रसादिषु च एकस्यापि भेदस्यानन्तत्वात्संख्यातुमशक्यत्वादसंलक्ष्यक्रमव्यङ्ग्यध्वनिर्नाम काव्यमेकभेदमेवोक्तम् ।

( ३२ ) तथाहि—एकस्यैव 'शृङ्गारस्यैकोऽपि संभोगरूपो भेदः परस्परालिङ्गनाधरपानचुम्बनादिभेदात्प्रत्येकं च विभावादिवैचित्र्यात्संख्यातुमशक्यः, का गणना सर्वेषाम् ।

---

( २९ ) अभिधामूलस्य ध्वनेर्द्वैविध्यं निरूप्य तत्राद्यस्वरूपं सहेतुप्रदर्शनपुरस्सरं निरूपयति-तत्राद्य इति । तत्र तयोर्मध्ये आद्योऽसंलक्ष्यक्रमव्यङ्ग्यः रसभावादिः एक एकप्रकार एव अत्रालङ्कारशास्त्रे गण्यते । आदिशब्देन रसाभासादिग्रहणम् । ननु यावन्तो रसभावादयः सन्ति तावन्त एव प्रकाराः सन्तु कथं केवलमेकप्रकारमेवोच्यत अत आह—एकोऽपीति । यद् यस्मात तस्य रसभावादेर्मध्ये केवलं शृङ्गाररसस्य एकोऽपि सम्भोगरूपो भेदः प्रकार अनन्तत्वात् अधरपानचुम्बनादिभेदेनातिबहुलत्वात् नैव संख्येयः संख्यातुं शक्यः, किं पुनर्वक्तव्यं सर्वेषामित्याशयः । अत एव रसभावादिर्नामासंलक्ष्यक्रमव्यङ्ग्यो ध्वनिरेकप्रभेद एवेति भावः ।

( ३० ) रसभावादेरसंलक्ष्यक्रमव्यङ्ग्यत्वाऽभ्युपगमे असंलक्ष्यक्रमशब्दस्य व्युत्पत्तिरसङ्गता स्यादिति पूर्वपक्षीकृत्य समाधत्ते-अत्रेति । व्यङ्ग्यानां रसादीनां प्रतीतेर्बोधस्य । विभावादिप्रतीतिकारणत्वादिति । "प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते" इत्युक्तत्वात् "तत्समूहालम्बनप्रतीतिस्तु रस एव" इत्युक्तत्वाच्च प्रत्येकं तत्प्रतीतिकारकत्वादित्यर्थः । एवञ्च विभावादिज्ञानेनैव रसोत्पत्तिर्भवति, तथा कार्याव्यवहितपूर्ववर्त्तित्वेन कारणत्वस्यावश्यकत्वात् क्रमोऽवश्यमस्तीति तस्य सर्वैरेव लक्ष्यक्रमत्वात् स्फुटमेवासंलक्ष्यक्रमशब्दस्य व्युत्पत्तिरसङ्गता भवतीति पूर्वपक्षिणामाशयः । समाधत्ते किन्त्विति । उत्पलपत्रशतानां व्यतिभेदो युगपाद्विदारणं तद्वत् । लाघवात् शीघ्रप्रतीतिकत्वात् स इति शेषः । न संलक्ष्यते तादृशकार्यकारणयोः पौर्वापर्य्यं सम्यग्ज्ञातुं न शक्यते इत्यर्थः । तथाच बहूनामुत्पलपत्राणाम् एकसूचिद्वारा एककालावच्छेदेन कस्य पूर्वं कस्य वा पश्चाद् भेदनं सञ्जातमिति भेदयित्रापि न ज्ञातुं शक्यते यौगपद्यात्, तथा कारणकार्यभूतयोरपि विभावादिप्रतीतिरसभावादिप्रतीत्योरेककालेनैव जायमानत्वात् सम्यैः सहृदयैरपि सममवबोद्धुं न शक्यते इति समाधातुराशयः ।

( ३१ ) एकोऽपि भेद इत्यादिकं व्याचष्टे—एषु चेति । रसादिषु मध्ये । एकभेदमेवेति । एकमेव भेदः प्रकारो यस्य तत्, असंलक्ष्यक्रमत्वमेकमुपाधिमाश्रित्य इति शेषः । उपायान्तराभावादिति भावः । एकत्वं तु काव्यात्मत्वरूपेणेति ज्ञेयम् ।

( ३२ ) उक्तमेवार्थं विशेषाख्यानेन द्रढयति—तथाहीति । विभावादिवैचित्र्यादिति । कन्यामध्याप्रगल्भात्वादिभेदेन उत्तममध्यमाधमत्वभेदेन वैचित्र्यमत्र बोध्यम् ।

( ३३ ) (क)शब्दार्थोभयशक्त्युत्थे व्यङ्ग्येऽनुस्वानसंनिभे ।

( ३३ ) इत्थमसंलक्ष्यक्रमव्यङ्ग्यं निरूप्य संलक्ष्यक्रमव्यङ्ग्यं ध्वनिं विभजते—शब्दार्थोभयेति। शब्दश्चार्थश्चोभे च तेषां याः शक्तयो व्यञ्जनाः तत उत्तिष्ठति प्रादुर्भवति यः स तदुत्थस्तदुद्भवस्तस्मिन् अनुस्वानः प्रतिध्वन्यादिपदाभिधेयः शब्दविशेषः प्रतीयते तत्संनिभस्तत्सदृशस्तस्मिन् प्रतिशब्दसदृश इत्यर्थः। व्यङ्ग्ये अथ सति लक्ष्यक्रमो

(क) ननु शब्दशक्त्या यत्रार्थान्तरं प्रकाशते स यदि ध्वनेः प्रकारस्तर्हि श्लेषस्य विषय एवापहृतः स्यादित्युक्तं ध्वनिकृता—

"आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते। यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः॥"

यस्मादलङ्कारो न वस्तुमात्रं यस्मिन् काव्ये प्रकाशते स एव शब्दशक्त्युद्भवो ध्वनिः। वस्तुद्वये च शब्दशक्त्या प्रकाश्यमाने श्लेषः, यथा "येन ध्वस्तमनोभवेन बलिजित्" इत्यादौ वक्ष्यमाणोदाहरणे। नन्वलङ्कारान्तरप्रतिभायामपि श्लेषव्यपदेशो भवतीति दर्शितं भट्टोद्भटेन—तत्पुनरपि शब्दशक्तिमूलो ध्वनिर्निरवकाश इत्याशङ्क्य "आक्षिप्त" इत्युक्तम्। शब्दशक्त्या साक्षादलङ्कारान्तरप्रतिभा यथा—

"तस्या विनापि हारेण निसर्गादेव हारिणौ।
जनयामासतुः कस्य विस्मयं न पयोधरौ"॥

अत्र शृङ्गारव्यभिचारी विस्मयाख्यो भावः साक्षाद्विरोधालङ्कारश्च प्रतिभासत इति विरोधच्छायानुग्राहिणः श्लेषस्यायं विषयः, न त्वनुस्वानोपमव्यङ्ग्यस्य ध्वनेः। यत्र तु सामर्थ्याक्षिप्तं सदलङ्कारान्तरं शब्दशक्त्या प्रकाशते स सर्व एव ध्वनेर्विषयः। यथा—"अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः। अत्र ऋतुवर्णनप्रस्तावनियन्त्रिता अभिधाशक्तयः।

यथा च—"उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः।
पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम्" ॥ इति।

अत एव "अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी" इति न्यायमपाकुर्वन्तो महाकालप्रभृतयः शब्दा एकमेवार्थमादाय कृतकृत्याः तदनन्तरमर्थावगतिः शब्दशक्तिमूलाद् ध्वननव्यापारादेव। अत्र केचिन्मन्यन्ते—यन्न एतेषां शब्दानां पूर्वमर्थान्तरेऽभिधाशक्तेरेव प्रतिपत्तिर्नियन्त्रिताभिधाशक्तिकेभ्य एतेभ्य प्रतिपत्तिर्ध्वननव्यापारादेवेति शब्दशक्तिमूलत्वं व्यङ्ग्यात्मत्वं चेत्यविरुद्धम्।

अन्ये तु—साभिधैव द्वितीयार्थसामग्र्यं ग्रीष्मस्य भीषणदेवताविशेषसादृश्यात्मकं सहकारित्वेन यतोऽवलम्बते ततो ध्वननव्यापाररूपोच्यते इति।

एके तु—शब्दश्लेषे तावद्भेदे सति शब्दार्थश्लेषेऽपि शक्तिभेदाच्छब्दभेद इति दर्शने द्वितीयः शब्दस्तत्र तत्र नीयते। स च कदाचिदभिधाव्यापाराद् यथोभयोत्तरदानाय "श्वेतो धावति—अलम्बुसानां याता" इति प्रश्नोत्तरादौ। वा तत्र शब्दान्तरबलादपि तदर्थान्तरं प्रतिपन्नं प्रतीयमानमूलत्वात्प्रतीयमानमेव युक्तमिति।

इतरे तु—संफुल्लमल्लिका एव धवलाट्टहासोऽस्येति व्याख्यानाश्रयणे तदर्थसामर्थ्यं तेन द्वितीयाभिधैव प्रतिप्रसूयते ततश्च द्वितीयोऽर्थोऽभिधीयत एव न ध्वन्यते। तदवसरं तु तस्य द्वितीयार्थस्य प्रतिपन्नस्य प्रथमार्थेन प्राकरणिकेन साकं या रूपणा तावन्मात्रमेव न चान्यतः शब्दादिति सा ध्वननव्यापारात्। तत्राभिधाशक्तेः कस्याश्चिदप्यनाशङ्कनीयत्वात्। तस्यां च द्वितीया शब्दशक्तिमूलम्।

ध्वनिर्लक्ष्यक्रमव्यङ्ग्यस्त्रिविधः कथितो बुधैः ॥ ६ ॥

( ३४ ) क्रमलक्ष्यत्वादेवानुरणनरूपो यो व्यङ्ग्यस्तस्य शब्दशक्त्युद्भवत्वेन, अर्थशक्त्युद्भवत्वेन शब्दार्थशक्त्युद्भवत्वेन च त्रैविध्यात्संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनेः काव्यस्यापि त्रैविध्यम् ।

( ३५ ) तत्र—

( ३६ ) वस्त्वलंकाररूपत्वाच्छब्दशक्त्युद्भवो द्विधा ।

नाम ध्वनिर्भवति । तथाच घण्टायां वाद्यमानायां प्रधानशब्दप्रतीत्यनन्तरं यथा क्षोदीयानपरस्तत्प्रतिशब्दो जायते तथा यत्र शब्दप्रतीत्यनन्तरमेव व्यङ्ग्यार्थप्रतीतिर्जायते स शब्दशक्तिमूलो ध्वनिः, यत्रार्थप्रतीत्यनन्तरमेव व्यङ्ग्यार्थप्रतीतिः स अर्थशक्तिमूलो ध्वनिः, यत्र हि शब्दार्थोभयप्रतीत्यनन्तरमेव व्यङ्ग्यार्थप्रतीतिः स शब्दार्थोभयशक्तिमूलो ध्वनिरिति भावः । अत एवायं लक्ष्यक्रमध्वनिः बुधैरालङ्कारिकैस्त्रिविधः कथितः । एवञ्च यथा ध्वनिप्रतिध्वन्योः क्रमो लक्ष्यते तथा यत्र वाच्यप्रतीयमानयोरर्थयोः प्रतीतिक्रमो लक्ष्यते स संलक्ष्यक्रम इति फलितम् । यद्यप्यविवक्षितवाच्येऽपि क्रमो लक्ष्यते तथापि व्यङ्ग्यव्यञ्जकयोः बाधप्रतिसन्धानेन विच्छेदात्ततोऽस्य भेदः, अत्र हि क्रममात्रं लक्ष्यते न विच्छेदोऽपीति ।

अत्रेदमप्यनुसन्धेयम्—शब्दपरिवृत्त्यसहत्वेन शब्दशक्तिमूलत्वम्, शब्दपरिवृत्तिसहत्वेनार्थशक्तिमूलत्वम्, अवच्छेदकभेदेन ( अंशभेदेन ) तदसहत्वसहत्वाभ्यां तूभयशक्तिमूलत्वमिति । तदुक्तं प्रदीपादौ—शब्दशक्तिमूलत्वं च एतदेव यत्तेनैव शब्देन तदर्थप्रतीतिर्न तु पर्यायान्तरेणापि । एतद्वैपरीत्यं चार्थशक्तिमूलत्वं न त्वभिधया तत्प्रतीतिरिति । अवच्छेदकभेदेनोभयान्वयव्यतिरेकानुविधाने तूभयशक्तिमूलत्वमिति च ॥

( ३४ ) तत्र "अनुस्वानसन्निभ" इति यदुक्तं तद्व्याचष्टे—क्रमलक्ष्यत्वादेवानुरणनरूप इति । क्रमस्य व्यङ्ग्यप्रतीतिपौर्वापर्यस्य लक्ष्यत्वात् स्फुटं प्रतीयमानत्वात् अनुरणनरूपः प्रतिध्वनिः स हि प्रथमध्वनेरनन्तरं जायते तदुत्पत्तिक्रमश्च लक्ष्यते तत्तुल्यो यो व्यङ्ग्यस्तस्य त्रैविध्यं व्याचष्टे—तस्य शब्दशक्त्युद्भवत्वेन इति । शब्दस्य अर्थस्य च शक्तिः व्यञ्जनसामर्थ्यं न तु अभिधारूपावृत्तिः तया व्यङ्ग्याबोधनात् अर्थस्य तदभावाच्च तेन सामर्थ्येन उद्भव उत्पन्नः विषयता यत्र तस्य भावस्तेन । तत्त्रैविध्यात् तत्सम्बन्धेन संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनिकाव्यस्य त्रैविध्यमित्यर्थः ।

( ३५ ) शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यस्य द्वैविध्यं दर्शयितुमुपक्रमते-तत्रेति । तत्र-तेषु उक्तेषु त्रिविधेषु संलक्ष्यक्रमव्यङ्ग्यमध्य इत्यर्थः ।

( ३६ ) वस्त्वलङ्काररूपत्वादिति । व्यङ्ग्यस्य वस्तुरूपत्वात् अलङ्काररूपत्वाच्च शब्द-

तया विना तस्या रूपणाया अनुत्थानात् । अत एवालङ्कारध्वनिरयमिति युक्तम्, वक्ष्यते च असम्बद्धार्थाभिधायित्वं मा प्रसाङ्क्षीत् इत्यादि । एतादृशस्थलेषु शब्दशक्त्या प्रकाशमाने सत्यप्रकरणिकेऽर्थान्तरे वाक्यस्यासंबद्धार्थाभिधायित्वं मा प्रसाङ्क्षीत्यप्राकरणिकप्राकरणिकाऽर्थयोरुपमानोपमेयभावः कल्पयितव्यः सामर्थ्यादित्यर्थाक्षिप्तोऽयं श्लेषादनुस्वानोपमव्यङ्ग्यस्य ध्वनेर्विषय इत्याहुः ।

अत्रत्यं सर्वमाकरग्रन्थे स्पष्टम् ।

( ३७ ) अलङ्कारशब्दस्य पृथगुपादानादनलङ्कारं वस्तुमात्रं गृह्यते ।

( ३८ ) तत्र वस्तुरूपः शब्दशक्त्युद्भवो व्यङ्ग्यो यथा—

( ३९ ) पन्थिअ ! ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उण्णअपओहरं पेक्खिअ उण जइ वससि ता वससु ॥

शक्त्युत्थः संलक्ष्यक्रमोध्वनिर्द्विधा द्विप्रकारो भवति । तथाच शब्दशक्तिमूलो वस्तुध्वनिः, शब्दशक्तिमूलोऽलङ्कारध्वनिश्च संज्ञा ।

( ३७ ) ननु वस्तुत्वस्य केवलान्वयित्वेन पदार्थमात्रसत्त्वात् अलङ्कारोऽपि वस्तु तत्कथं भेद इत्यत आह—अलङ्कारशब्दस्येति । सामान्यविशेषन्यायात् वस्तुपदेनालङ्कारभिन्नं समस्तं वस्तु गृह्यते । वस्तुध्वनिमध्ये अलङ्काररूपवस्तुध्वनेर्वैचित्र्यविशेषात् मुख्यत्वद्योतनार्थं पृथगुपादानं गोबलीवर्दन्यायेनेति भावः । अलङ्करणमलङ्कारः भावे घञ् स च धर्मपरो ग्राह्यः, तेन न विद्यते अलङ्कार उपमादिकृतशोभा यत्रेति बहुव्रीहिणैव अलङ्कारभिन्नमित्यर्थः, नञ् तत्पुरुषसमासे तु अलङ्कारशब्दस्य पुंलिङ्गत्वेन लिङ्गत्यागाभावात् क्लीवत्वं न स्यात् किन्तु "शेषतत्पुरुषद्वन्द्वाद्वन्द्वावन्त्यस्यपदलिङ्गकौ" इत्यनुशासनेन पुंस्त्वप्रसङ्गात् ।

( ३८ ) वस्त्वलङ्कारध्वनी क्रमादुदाहर्तुमिच्छुराह—तत्रेति । तयोर्वस्त्वलङ्कारध्वन्योर्मध्य इति यावत् । वस्तुरूपशब्दशक्त्युद्भवः शब्दशक्तिमूलो वस्तुध्वनिरित्याशयः ।

( ३९ ) पन्थि अ ण एत्थेति ।

"पथिक ! नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस ॥" इति संस्कृतम् ।

रात्रौ निवासाय प्रार्थयन्तं पथिकं प्रति स्वैरविहारिण्याः स्वयंदूत्या उक्तिरियम् । स्वयंदूतीहि—

"द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु"

इति कामशास्त्रमनुसृत्य पथिकं प्रति द्व्यर्थैः पदैराच्छाद्य रहस्यं कथयति । तथाहि हे पथिक ! प्रस्तराणां पाषाणानां "पाषाणप्रस्तरग्रावोपलाश्मानः शिलादृषत्" इत्यमरः, स्थले, अत्रास्मिन् ग्रामे ।

"विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि ।
स तु ग्राम इति प्रोक्तः शूद्राणां वास एव वा ॥
तथा शूद्रजनप्रायाः सुसमृद्धकृषीवलाः ।
क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसंज्ञिका ॥

इत्युक्तलक्षणायां वसताविति यावत् । मनाक् अल्पमपि स्रस्तरं शयनीयकटाद्यास्तरणं नास्ति प्रस्तर एव वयं स्वपिमीति भावः । पाषाणबाहुल्येन तृणदुर्लभता सूच्यते, तस्माच्छयनसामग्र्यभावेऽपि उन्नतम् उद्भूतं पयोधरं मेघं प्रेक्ष्य दृष्ट्वा यदि ( गमनप्रतिबन्धात् ) वससि तदा वस न तु विश्रामार्होऽयं ग्राम इत्यापाततो यथाश्रुतवक्त्रभिप्रायः ।

व्यङ्ग्यार्थस्तु—पाषाणानां तत्त्वेनाध्यवसितानां मूर्खाणां स्थले तन्मये अत्र ग्रामे स्रस्तरं 'परदारान्न गच्छेदि'त्यादि धर्मशास्त्रं यद्वा सत्थरं शास्त्रं कामशास्त्रमित्यर्थः मनाक् अल्पमपि नास्ति किं वक्तव्यं पुनः साहित्यम् तस्मादाकारेङ्गिताद्यभिज्ञविरहाद्भिः अङ्कु-

( ४० ) अत्र सत्थरादिशब्दशक्त्या यद्युपभोगक्षमोऽसि तदाऽऽस्स्वेति वस्तु व्यज्यते।
( ४१ ) अलङ्काररूपो यथा—"दुर्गालङ्घितविग्रहः" इत्यादि ( ८२ पृ० ) ।

---

तथा उन्नतम् अनुपभुक्तं पयोधरं स्तनं तथाविधोद्दीपकं मेघं च यदि वससि उपभोगक्षमोऽसि तदा वस आस्स्व रमस्वेति यावत्। "प्रस्तरस्थल" इत्युक्त्या शय्यापेक्षाऽपि नास्तीति व्यज्यते ।

जघनविपुलाच्छन्दस्तल्लक्षणन्तु वृत्तरत्नाकरे—

"संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ।
यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥" इति ।

( ४० ) अभिधामूलव्यञ्जनाप्रतिपाद्यं वस्तुरूपं व्यङ्ग्यं दर्शयति—अत्रेति । सत्थरादीत्यादिना 'पत्थरत्थल पओहर' शब्दयोर्ग्रहणम् । सत्थरादिशब्दशक्त्या अभिधामूलव्यञ्जनया प्राकृतः सत्थरशब्दः संस्तरस्य शास्त्रस्य च बोधकः, स्तनार्थकं मेघार्थकं च पओहरशब्दः ।

अत्र हि शास्त्राभावादाकारेङ्गितज्ञानानधिकरणे ग्रामे सति चैवं विधे उद्दीपने मेघे श्लेषमर्यादया शय्याविरहात् प्रस्तरस्थलीजनं पुरुषो लाति रत्यर्थं गृह्णाति इति प्रस्तरस्थलः तत्र इत्यर्थेन उन्नतस्तनदर्शने च को नामोपभोगक्षमोऽन्यत्र गन्तुमर्हतीति वक्तव्यभिप्रायः व्यञ्जनया प्रकाशत इत्यर्थः। तच्च पओहरसत्थरशब्दयोः परिवृत्त्यसहत्वाच्छब्दशक्तिमूलमिति शब्दशक्तिमूलोऽयं वस्तुध्वनिः। नन्वत्र पयोधरादिपदादुपस्थितार्थद्वयस्य परस्परमसम्बन्धात् वाक्यभेदापत्तिरिति चेत्? इष्टापत्तेः। नच वाच्यव्यङ्ग्ययोरसम्बद्धेऽसम्बद्धार्थकत्वापत्तिरिति वाच्यम् , ग्राम्यतापरिहाराय रहस्य संगोपनाय च वाच्यार्थाच्छादितव्यङ्ग्यार्थस्य प्रतिपाद्यतयाच्छाद्याच्छादकरूपसम्बन्धस्य विवक्षितस्य सत्त्वेनाक्षतेः। नचेह स्रस्तरशब्दस्य शास्त्रार्थत्वेन न वस्तुध्वनिः किन्तूपमाध्वनिरिति वाच्यम् , सादृश्यस्याविवक्षितत्वात्, वाच्यमभिभूयैव व्यङ्ग्यस्य स्थितत्वेन तयोरुपमानोपमेयभावसम्बन्धाकल्पनात्, द्वयोः समप्राधान्य एव तदवकाशाच्च तस्मादत्र नालङ्कारो व्यङ्ग्यः किन्तु वस्त्वेति ग्रन्थकर्त्तुराशयः ।

संस्कृते शब्दशक्तिमूलवस्तुध्वनेरुदाहरणं यथा—

"शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र ! यस्मै त्वम्।
यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥"

शनिर्ग्रहोऽशनिर्वज्रं च तमुच्चैरतिशयेन निहन्ति । उदार उद्भटो दाता वा महान् "उदारो दातृमहतोः" इत्यमरात्। अनुदार अनुगता दारा वनिता यस्य स यद्वा न विद्यते उदारो यस्मात्तथा भूतश्च । पक्षेऽशनिःशनिविरोधी, अनुदार उदारादन्यः ।

अत्राशनिशब्दशक्त्या शनिविरुद्धे व्यञ्जिते तद्वारा विरुद्धावपि तदनुवर्त्तनार्थमेकं कार्यं कुरुत इति वस्तु व्यज्यते, न तु विरोधालङ्कारः शनिरशनिरित्यनयोः सामानाधिकरण्याभावात्। एकधर्मिगतत्वेन शनित्वतद्भिन्नत्वयोरप्रतिपादनादित्यर्थः। नञो भिन्नार्थत्व एव विरोधाऽभ्युपगमाच्च । उत्तरार्द्धे तु विरोधाभास एवेति तन्नोदाहरणम् ।

( ४१ ) शब्दशक्त्युद्भवोपमालङ्कारस्य व्यङ्ग्यत्वं दर्शयितुमाह—अलङ्कार इति । शब्दशक्त्युद्भवो व्यङ्ग्य इति शेषः ।

( ४२ ) अत्र प्राकरणिकस्य उमानाममहादेवी-वल्लभ-भानुदेवनाम-नृपतेर्वर्णने द्वितीयार्थसूचितमप्राकरणिकस्य पार्वतीवल्लभस्य वर्णनमसम्बद्धं मा प्रसाङ्क्षीदिति ईश्वर-भानुदेवयोरुपमानोपमेयभावः कल्प्यते तदत्र उमावल्लभ उमावल्लभ इवेत्युपमा-लङ्कारो व्यङ्ग्यः ।

( ४३ ) यथा वा—

( ४४ ) "अमतः समितः प्राप्तैरुत्कर्षैर्हर्षद ! प्रभो ! ।
अहितः सहितः साधु यशोभिरसतामसि ॥"

( ४५ ) अत्रामित इत्यादावपिशब्दाभावाद्विरोधाभासो व्यङ्ग्यः ।

( ४२ ) उक्तोदाहरणे कथमुपमालङ्कारो व्यङ्ग्य इत्युपपादयति-अत्रेति। प्राकरणिकस्य राजस्तुतिप्रस्तावसंसृष्टस्य द्वितीयार्थसूचितं द्वितीयार्थः पार्वत्यादिः तेन सूचितं पार्वती-वल्लभस्य वर्णनमित्यर्थः । अप्राकरणिकस्य प्रस्तावासंसृष्टस्य । मा प्रसाङ्क्षीदिति । प्रसक्तो मा भूदित्यर्थः, तत्प्रसक्तौ कवेरुन्मत्ततापत्तेः, 'अतः कवेरीश्वरभानुदेवयोरुपमानोपमेय-भावे तात्पर्य्यात् उपमानोपमेयभावः कल्प्यते संव्यज्यते । स एव चोपमालङ्कारः तं व्यङ्ग्यं विशदयित्वा दर्शयति–तदत्रेति । उपमालङ्कार उपमानामालङ्कारः व्यङ्ग्यो ध्वन्यः 'अस्ती'ति शेषः ।

( ४३ ) ननूक्तोदाहरणेऽपि वक्ष्यमाण "हिममुक्तचन्द्ररुचिरः" इत्यादिवत् शब्दार्थो-भयशक्तिमूल एवोपमालङ्कारध्वनिर्भवितुमर्हति उभयोरेवोदाहरणयोः समत्वादित्याश-येनोदाहरणान्तरं दर्शयति–यथा वेति ।

( ४४ ) शब्दशक्त्या व्यङ्ग्यविरोधाभासालङ्कारमुदाहरति—अमित इति । शत्रुमि-त्रयोर्हर्षं द्यति खण्डयति ददाति चेति तत्सम्बुद्धौ हे हर्षद ! शत्रुहर्षखण्डक ! मित्रहर्ष दायक ! प्रभो ! स्वामिन् ! त्वं समितो युद्धात् "समित्याजिसमिद्युधः" इत्यमरः, प्राप्तैः उत्कर्षैरतिशयैर्विजयैरिति यावत् "उत्कर्षोऽतिशये" इत्यमरः, अमित अपरिमितः परि-च्छिन्नत्वरहित इति यावत्, असतां खलानाम् अहितः दण्डविधायकत्वेन शत्रुः "द्विड्-विपक्षाहितामित्रस्युशात्रवशत्रवः" इत्यमरः, अत एव साधुभिः उत्कृष्टैः यशोभिः सहितो युक्त इति प्रस्तुतपक्षेऽर्थः । अत्र पदाऽभङ्गेऽपि विरोधः तथाहि—अमितः परिमाण-शून्यः, अथ च समितः परिमाणसहितः, यद्वा-अमितः मितं मानं तेन रहितः, अथ च समितः मानसहितः, अहितः हितरहितः सहितः हितसहित इति ।

एवञ्चास्य पदाभङ्गत्वमेव पदभङ्गे तु—

"तिग्मरुचिरप्रतापो विधुरानशाकृद्विभो ! मधुरलीलः ।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥"

इत्युदाहरणान्तरमुक्तं केनचित्, तदापातरमणीयम् उक्तदिशाऽत्रापि पदभङ्गस्य स्फुटमुपलम्भात् ।

( ४५ ) अत्र हि प्रकरणादिना प्रथमार्थेऽभिधायाः नियमनेनाप्राकृतत्वात् द्वितीया-र्थस्य विरोधो व्यङ्ग्य एवेत्यलङ्कारध्वनित्वमिति दर्शयति—अत्रेति । विरोधाभासस्य वाच्यत्वे पदयोः समानविभक्तिकत्वमपि शब्दसत्त्वादिकञ्चापेक्षितं तदभावादेवात्र व्यङ्ग्यत्वमित्याशयेनाह—अपिशब्दाभावादिति । एतच्चोपलक्षणम्, समानविभक्तिकत्वा-

( ४६ ) व्यङ्ग्यस्यालङ्कार्यत्वेऽपि ब्राह्मणश्रमणन्यायादलङ्कारत्वमुपचर्य्यते ॥

( ४७ ) वस्तु वालङ्कृतिर्वापि द्विधार्थः सम्भवी स्वतः ॥ ७ ॥
कवेः प्रौढोक्तिसिद्धो वा तन्निबद्धस्य वेति षट् ।
षड्भिस्तैर्व्यज्यमानस्तु वस्त्वलङ्काररूपकः ॥ ८ ॥

भावाच्चेत्यपि बोध्यम्, तथा चादीनामन्येषामपि विरोधाभिधायिशब्दानामभावेऽपि विरोधाभासस्य व्यङ्ग्यत्वं ज्ञातव्यम् ।

अत्र प्रथमार्थे पर्यवसितार्थस्य विरोधाभावेन व्यङ्ग्यस्य विरोधस्यार्थमूलकत्वाभावात् शब्दश्रवणानन्तरमेव च विरोधप्रतीतेः केवलशब्दशक्तिमूलक एवायमलङ्कारध्वनिरित्यभिप्रायः ।

वाच्यविरोधालङ्कारादस्य भेदस्तु यत्र विरोधपदार्थानां समन्वये शब्दश्रवणादेव विरोधः प्रतिभासते तत्र वाच्ये विरोधः, यथा—"अजस्य गृह्णतो जन्म" इत्यादौ । यत्र तु शब्दश्रवणाऽविरुद्ध एव प्रकृतार्थः प्रतीयते पश्चात्तस्यैव शब्दस्य पुनरनुसन्धानेन विरोधस्तत्र ध्वनिरेवेति विभावनीयम् ।

अत्र प्रदीपकारोऽपि—"ननु विरोधस्य किं सर्वत्र व्यङ्ग्यत्वमेव ? नेत्युच्यते तत्कि यती सीमा, अपिशब्दादेर्विरोधव्यञ्जकस्य भावे वाच्यत्वम्, तदभावे व्यङ्ग्यत्वम्" इत्याह ।

( ४६ ) ननु व्यङ्ग्यार्थ एवास्वाद्यः तस्य शोभको यः स एवालङ्कारः तथाच उपमादेर्व्यङ्ग्यत्वे परेण शोभ्यमान एव सो न शोभकः तत्कथमत्र व्यङ्ग्योपमादेरलङ्कारत्वमित्याशयेनाह—व्यङ्ग्यस्येति । "उपमादे"रिति शेषः । अलङ्कार्यत्वे वाच्यालङ्कारान्तरेणैव शोभ्यत्वेऽपि अलङ्कारत्वम् अलङ्करणक्रियाकर्तृविषयत्वम् उपचर्य्यते उपचाराद्व्यवह्रियते, वाच्यतासामयिकमलङ्कारत्वमाश्रित्यैव व्यङ्ग्यतादशायामपि तथा व्यवहार इति । अत्रार्थे न्यायं सञ्चारयति—ब्राह्मणश्रमणेति । ब्राह्मणश्चासौ श्रमणो बौद्धसन्यासी यथा तस्याशास्त्रीयविधिना त्यक्तशिखासूत्रादेस्त्यक्तनित्यादिकर्मणश्च तदानीं ब्राह्मणत्वाभावेऽपि पूर्वकालिकब्राह्मणत्वमादाय ब्राह्मणत्वव्यवहारः, तथालङ्कार्यस्याऽपि व्यङ्ग्यतादशायामलङ्कारत्वाभावेऽपि वाच्यतादशायां विद्यमानमलङ्कारत्वमाश्रित्यालङ्कारत्वव्यपदेश इति भावः ।

( ४७ ) इत्थं शब्दशक्तिमूलं द्विविधं ध्वनिं प्रदर्श्य सम्प्रति अर्थशक्त्युद्भवं दर्शयितुं व्यङ्ग्यार्थस्य वस्त्वलङ्काररूपद्विविधस्य स्वतःसम्भवित्वादित्रैविध्येन षाड्विध्यं दर्शयति-वस्तु वाऽलङ्कृतिर्वेति। वस्तु अलङ्कारभिन्नःपदार्थो वा अलङ्कृतिः अलङ्कारो वापि द्विधा द्विविधोऽर्थः "व्यञ्जक" इति शेषः । स्वतः सम्भवी स्वभावसिद्धः कवेः काव्यरचयितुः

..................कविर्वाल्मीकिकाव्ययोः ।
सूरौ काव्यकरे पुंसि स्यात्खलीने तु योषिति ॥" इति मेदिनी

प्रौढोक्त्या चमत्कारानुगुणकथनेन सिद्धो वा लोकेऽदृष्टोऽपि कविप्रतिभामात्रेण कल्पित इत्यर्थः ( यथा कीर्त्यादेर्धावल्यादिः )

"अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" ।

इति न्यायादिति भावः । तथा तन्निबद्धस्य कविकल्पितस्य वक्तुः प्रौढोक्तिसिद्धश्चेति

**अर्थशक्त्युद्भवो व्यङ्ग्यो याति द्वादशभेदताम्**

षट् षट्प्रकारो भवति, उभयोस्त्रिभिर्गुणने षट्त्वमिति भावः ।

तैः षड्विधैः व्यज्यमानः व्यञ्जनया प्रतीतिविषयीक्रियमाणः वस्त्वलङ्काररूपकः वस्तुस्वरूप अलङ्कारस्वरूपश्च अर्थशक्त्युद्भवो व्यङ्ग्योऽर्थः द्वादशभेदतां द्वादशप्रकारत्वं याति प्रतिपद्यते । स्वतः सम्भवि कविप्रौढोक्ति(क)तन्निबद्धवस्तुप्रौढोक्तिसिद्धाभिः वस्त्वलङ्काररूपाभिः षड्विधाभिः व्यञ्जनाभिर्व्यङ्ग्ययोर्वस्त्वलङ्कारयोः द्वादशविधत्वेन द्वादशप्रकारमर्थशक्त्युद्भवव्यङ्ग्यध्वनिकाव्यमिति बोध्यम् । तथा च—

(१) स्वतः सम्भविना वस्तुना वस्तुध्वनिः ।
(२) स्वतः सम्भविना वस्तुना अङ्कारध्वनिः ।
(३) स्वतः सम्भविना अलङ्कारेण वस्तुध्वनिः ।
(४) स्वतः सम्भविना अलङ्कारेण अलङ्कारध्वनिः ।
(५) कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः ।
(६) कविप्रौढोक्तिसिद्धेन वस्तुना अङ्कारध्वनिः ।
(७) कविप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिः ।
(८) कविप्रौढोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिः ।
(९) कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः ।
(१०) कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिः ।
(११) कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिः ।
(१२) कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिः ।

---

(क) अत्र केचित्—

द्वावेव भेदावुचितौ कविनिबद्धवक्तृप्रौढोक्तिसिद्धस्य कविप्रौढोक्तिसिद्धभेद एवान्तर्भावात्, अन्यथा तन्निबद्धनिबद्धादेः पृथक् सङ्कलनया अनवस्थाप्रसक्तेर्निवारयितुमशक्यत्वात् । न च तन्निबद्धनिबद्धादेः कविनिबद्धत्वेनानुगमः, कवित्वेन प्रथमनिबद्धस्याऽपि अनुगमसम्भवात्, पार्थक्येन गणनायां विनगमनाविरहादित्याहुः ।

वस्तुतस्तु—वृद्धोक्तिविषयमपेक्ष्य शिशुकोक्तिरिव कन्युक्तिविषयात् कविनिद्धोक्तिविषयोऽधिकतररागप्रगटकत्वेन चमत्काराधिक्योदयस्य सकलसहृदयानुभवसिद्धत्वात् ! कवितन्निबद्धवक्तृप्रौढोक्तिसिद्धभेदद्वयं समुचितम् । तन्निबद्धनिबद्धादेस्तु प्रणिधानप्रतीतिकतया चमत्कारस्य स्थगनान्नानवस्थादोषप्रसक्तिरापद्यत इति ।

एवञ्चेदमुक्तम्भवति—

"नहि कविना परदारा एष्टव्या नापि चोपदेष्टव्याः कर्त्तव्यतयाऽन्येषां न च तदुपायोऽभिधातव्यः । किन्तु तदीयं वृत्तं काव्याङ्गतया स केवलं वक्ति आराधयितुं विदुषस्तेन न दोषः कवेरत्र ॥"

इति काव्यालङ्कारे रुद्रटोक्तदिशा वाल्मीकिप्रभृतीनामपि कवित्वेन तन्निबद्धानां यथा तत्र तत्र रागाद्याविष्टत्वं तथा न खलु कुत्रापि कवेः, किन्त्वौदासीन्यमेवेति कविप्रौढोक्तेः कविनिबद्धप्रौढोक्तावस्त्येवाधिकचमत्कारित्वमित्यतस्तन्निरूपणमितोऽधिकं सहृदया एव प्रमाणम् । स्फुटीकरिष्यति च स्वयमेव मूलकारोऽपि "न खलु" इत्यादिना ।

( ४८ ) स्वतः सम्भवी औचित्याद् बहिरपि सम्भाव्यमानः। प्रौढोक्त्या सिद्धः, न त्वौचित्येन।

तत्र क्रमेण यथा—

( ४९ ) दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति।
एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्राः तनुमालिखन्तु जरठच्छेदानलग्रन्थयः॥

( ५० ) अत्र स्वतः सम्भविना वस्तुना तत्प्रतिपादिकाया भावि परपुरुषोपभो-

---

( ४८ ) मूलस्थस्वतःसम्भवि—प्रौढोक्तिसिद्धपदयोः क्रमात्तात्पर्यं प्रदर्शयति—स्वतः सम्भवीति। औचित्याद् याथार्थ्याद् बहिरपि तादृशशब्दातिरिक्तप्रमाणेनापि अपिना अन्तरपि सम्भाव्यमानः प्रतीयमानः "अर्थः" इति शेषः। तथा च वाच्यतया स्फुटभावेन च प्रकाशितो योऽर्थः सर्वैः प्रतीयमानत्वेन ज्ञायते सः स्वतः सम्भवीत्यर्थः। प्रौढोक्त्या कवेः चमत्कारानुगुणकथनेनैव वर्णनमात्रेणेति यावत्, सिद्धो निष्पन्नवत्प्रतीयमानः नत्वौचित्येन वास्तविकत्वेन।

( ४९ ) १ स्वतः सम्भविना वस्तुना वस्तुध्वनिं दर्शयति—दृष्टिं हे इति! नदीजलानयनवर्त्मनि वने कृतसङ्केतायाः परपुरुषेण सह रमणाय तज्जलानयनच्छलेन अभिसरणमभिलषन्त्याः कस्याश्चित् कुलटायाः गृहसमीपस्थायिनीं काञ्चित् स्त्रियं प्रति भाविनखक्षतसंवरणोक्तिरियम्। हे प्रतिवेशिनि! सन्निहितगृहवासिनि! क्षणं मत्प्रत्यावर्त्तनसमयं यावत्, इहापि स्वगृह इव अस्मद्गृहेऽपीत्यर्थः,

"गृहं गेहोदवसितं वेश्मसद्मनिकेतनम्" इत्यमरः।

दृष्टिं दास्यसि यथा विडालादयः प्रविश्योपद्रवं न कुर्युरित्यर्थः। ननु त्वं क्व व्रजसीत्यत आह—अस्येति। अस्य मदीयस्य शिशोः पिता कुलटात्वात् स्वपतित्वेनानुक्तिः, प्रायेण बाहुल्येन

"प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययोः" इति मेदिनी।

विरसाः स्वादरहिता अपेया इति यावत् कौपीः कूपभवा अपः सलिलानि न पास्यति।

"आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्" इत्यमरः।

"कौपीरपः" इत्युक्त्या मम व्याध्यादिना अशक्तिदिने पास्यतीति व्यञ्जितम्। इतः कारणात् एकाकिन्यपि अहं सत्त्वरं तमालाकुलं तमालैः स्वनामप्रसिद्धैः श्यामरूपैर्वृक्षविशेषैराकुलमितस्ततो व्याप्तमिति तं तथोक्तम्,

"कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि" इत्यमरः।

स्रोतः स्वतोजलनिःस्सरणस्थानम्, "स्रोतोऽम्बुसरणं स्वतः" इत्यमरः, यामि गच्छामि। तत्र हि नीरन्ध्राःनिरवकाशा अत्यन्तघना इत्यर्थः, जरठः कठिनः छेदोऽग्रभागो येषां ते तादृशा नलग्रन्थयः नलाख्यतृणपवदेशाः तनुं मम शरीरम् आलिखन्तु खण्डयन्तु। लेखनसम्भावनासत्त्वेऽप्यगत्वा का गतिरियतो यामीति भावः। शार्दूलविक्रीडितञ्छन्दस्तल्लक्षणन्तूक्तं प्राक् ( १९८ पृ० )

( ५० ) अत्र व्यङ्ग्यार्थं स्पष्टयति—अत्रेति। अनेन वाक्यार्थेन स्वतः सम्भविना

गजनखक्षतादिगोपनरूपं वस्तुमात्रं व्यज्यते ।

( ५१ ) दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।

तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥

( ५२ ) अत्र स्वतः सम्भविना वस्तुना रवितेजसो रघुप्रतापोऽधिक इति व्यतिरेकालङ्कारो व्यज्यते ।

( ५३ ) आपतन्तममुं दूराद्रीकृतपराक्रमः ।

बलोऽवलोकयामास मातङ्गमिव केसरी ॥

( ५४ ) अत्रोपमालङ्कारेण स्वतः सम्भविना व्यञ्जकार्थेन बलदेवः क्षणेनैव

---

लोकप्रसिद्धेन, भर्त्तुः प्रियया कथमपि कदापि वैमनस्यावहं कार्यं न विधेयं सततं तथा तथा विधातव्यं यथा भर्त्ता प्रसीदेदिति तनूलिखनक्लेशं बोधयन्त्यपि तत्र यत इति लोकव्यवहारदृष्टेनेत्याशयः ।

वस्तुना तद्रूपेण व्यञ्जकेनार्थेनेत्यर्थः । अस्यार्थस्यालङ्कारभिन्नत्वात् वस्तुत्वमवगन्तव्यम् । एतत्प्रतिपादिकायाः एतत्पद्यरूपवाक्यार्थसमर्थयित्र्याः "कुलटाया" भावि भविष्यद् यत् परपुरुषस्य य उपभोगः सम्भोगस्तज्जं नखक्षतादि तस्य गोपनरूपम् परपुरुषविधीयमानोपभोगस्तदुत्पत्स्यमाननखक्षतादि केनाऽपि माऽवगम्यतामित्यात्मकमित्याशयः । व्यज्यते प्रतीयते ।

( ५१ ) २ स्वतः सम्भविना वस्तुना अलङ्कारध्वनिं दर्शयति–दिशीति । चतुर्थसर्गे रघुवंशे रघोर्दिग्विजयवर्णनेयम् । दक्षिणस्यां याम्यां दिशि रवेः सूर्यस्यापि तेजो मन्दायते मृदूभवति याम्यायने हि सूर्यस्य शैत्यप्रवृत्तिस्वभावादिति भावः । परन्तु तस्यामेव दिशि एवकारोऽप्यर्थे, पाण्ड्याः पाण्ड्यदेशीयाः राजानः "पाण्ड्योडर्यण् वक्तव्यः" इति ड्यण्, रघोः प्रतापं न विषेहिरे क्षन्तुं समर्था न बभूवुः सूर्यजेतॄणामपि जेता रघुरित्यभिप्रायः ।

( ५२ ) व्यङ्ग्यं दर्शयति—अत्रेति । वाक्यार्थेनेत्यर्थः । स्वतः सम्भविना याम्यायने सम्भवपरेण, वस्तुना रवितेजसो मृदुत्वरूपेण व्यञ्जकेनार्थेनेत्यर्थः । व्यतिरेकालङ्कार इति ।

"आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा ।"

व्यतिरेकः-

इति वक्ष्यमाणस्वरूपोऽर्थालङ्कारविशेषो व्यतिरेकः प्रकृते च उपमानात् रवितेजस उपमेयस्य रघुप्रतापस्याधिक्यं व्यतिरेकः स च व्यङ्ग्य एव असहनेनैव तत्प्राप्तेः ।

( ५३ ) ३ स्वतः सम्भविना अलङ्कारेण वस्तुध्वनिं दर्शयति—आपतन्तममुमिति । माघकाव्ये एकोनविंशतिसर्गे युद्धवर्णनेयम् । ऊरीकृतपराक्रम अङ्गीकृतविक्रमः कृतयुद्धप्रतिज्ञ इति यावत् बलो बलदेवः केशरी सिंहः

"सिंहो मृगेन्द्रः पञ्चास्यः हर्यक्षः केशरी हरिः" इत्यमरः ।

मातङ्गं गजमिव दूरात् आपतन्तं स्वाभिमुखमायान्तम् अमुं वेणुदारिसंज्ञकं बाणासुरतनयम् अवलोकयामास पश्यतिस्म विपुलविक्रमत्वेन बलस्य केशरितुल्यत्वं मदान्धत्वेन वेणुदारिणः मातङ्गतुल्यत्वं सर्वजनवेद्यमेव । अनुष्टुप् छन्दः ।

( ५४ ) व्यङ्ग्यमुपपादयति—अत्रेति । स्वतः सम्भविना इवपदस्य योग्यत्वात् सम्भ-

वेणुदारिणः क्षयं करिष्यतीति वस्तु व्यज्यते ।

( ५५ ) गाढकान्तदशनक्षतव्यथा संकटादरिवधूजनस्य यः ।

ओष्ठविद्रुमदलान्यमोचयन्निदर्शन्युधि रुषा निजाधरम् ॥

( ५६ ) अत्र स्वतः सम्भविना विरोधालङ्कारेणाधरो निर्दष्टः शत्रवो व्यापादिताश्चेति समुच्चयालङ्कारो व्यङ्ग्यः ।

( ५७ ) 'सज्जेहि सुरहिमासो ण दाव अप्पेइ जुअइजणलक्खमुहे ।

---

वपरेण व्यञ्जकार्थेन व्यङ्ग्यबोधकेनार्थेन तद्द्वारेति यावत् ।

( ५५ )४ स्वतः सम्भविना अलङ्कारेण अलङ्कारध्वनिमुदाहरति—गाढकान्तेति । कस्यापि राज्ञः प्रभावोत्कर्षवर्णनमिदम् । यो राजा युधि सङ्ग्रामे रुषा क्रोधेन निजस्य स्वस्य अधरमोष्ठम्,

"ओष्ठाधरौ तु रदनच्छदौ रदनवाससी" इत्यमरः ।

निदर्शन् दन्तैः खण्डयन् सन् अरीणां शत्रूणां वधूजनस्य स्त्री समाजस्य

"जनः समाजे लोके च लोकभेदे च पामरे" इति कोषः ।

ओष्ठरूपाणि विद्रुमस्य प्रवालस्य दलानि खण्डानि गाढस्य सोढुमसमर्थस्य कान्तदशनक्षतस्य भर्त्तृदन्तव्रणस्य व्यथा पीड़ा तद्रूपः सङ्कटो विपत्तिस्तस्मात्, यद्वा—गाढा तीव्रा या कान्तदशनक्षतव्यथा वल्लभदन्तव्रणार्त्तिः सैव सङ्कटोऽसह्योपद्रवः तस्मात् तथोक्तात्, अमोचयत् मोचितवान् । क्रोधाच्छत्रूणां वधेन रतिक्रीड़ा विरहात् पुनस्तद्दंशनाभाव इति भावः । रथोद्धताच्छन्दस्तल्लक्षणञ्चोक्तं प्राक् ।

( ५६ ) व्यङ्ग्यं दर्शयति—अत्रेति । अधरदंशकत्वाधरदंशमोचकत्वयोः वस्तुगत्या अविरोधेऽपि आपाततो विरोधस्याभासमानत्वात् विरोधाभासालङ्कारः । तथाहि-यो निजाधरं दशति स कथं परेषामधरान् मोचयतीति विरोधः, ओष्ठत्वेन सामानाधिकरण्यस्य विवक्षितत्वात् आश्रयभेदात्तु विरोधाभाव एव । एवञ्च विरोधालङ्कारेणेत्यस्य विरोधाभासालङ्कारेणेत्यर्थः । समुच्चयालङ्कारो व्यङ्ग्य इति । ओष्ठदशनेन ओष्ठव्यथामोचनं विरुद्धम्, विरुद्धञ्च ओष्ठदशनव्यथामोचनक्रिययोः कार्यकारणयोरपि समकालिकत्वम्, तेन च स्वाधरदशनशत्रुव्यापादनयोरेककालिकत्वरूपधर्मसम्बन्धात् समुच्चयालङ्कारः । निदर्शन्निति वर्त्तमाननिर्देशात्तत्समयमोचनेन तद्धेतुशत्रुव्यापादनस्यापि तत्समयत्वलाभः । यद्यपि-शत्रुव्यापादनाधरदंशनयोः कार्यकारणयोः समकालत्वं तु बाधितं तथाप्याहार्यप्रतीतिविषय एव शीघ्रकारिताव्यञ्जनमिति बोध्यम् । अत्र समुच्चयार्थकचकाराद्यभावेन शत्रुव्यापादनक्रियया व्यङ्ग्यत्वेन समुच्चयस्य व्यङ्ग्यत्वम् । अपि चात्र निदर्शनरूपक्रूरपिशाचो ममाधरं बलिरूपं प्राप्यान्यानधरान् सुखिनः करोत्विति बुद्ध्यैव निजाधरं दष्टवानिति तस्य राज्ञो बुद्धिमपेक्ष्य उत्प्रेक्षा च ततश्च समुच्चयोत्प्रेक्षयोरेकाश्रयानुप्रवेशः सङ्करालङ्कारो ज्ञेयः । केचित्तु—विरोधालङ्कारेण इत्यस्य वास्तविकविरोधमूलासङ्गत्यलङ्कारेणेत्यर्थः, स्वाधरनिदर्शनवैरिवधूजनोष्ठव्यथामोचनयोः कारणकार्ययोः वैयधिकरण्येन निर्देशाद्विरोधाभासस्य स्फुटत्वादिति वदन्ति, तच्चिन्त्यम्-मुख्यस्य विरोधाभासस्य निर्बाधत्वेन पूर्वं प्रतिपादितत्वात् ।

( ५७ ) अथ कविप्रौढोक्तिसिद्धे व्यञ्जकेऽर्थे चतुर्षु भेदेषु मध्ये वस्तुना वस्तुध्वनि-

अहिणवसहआरमुहे णवपत्तले अणङ्गस्स सरे ॥'

( ५८ ) अत्र वसन्तः शरकारः, कामो धन्वी, युवतयो लक्ष्यम् , पुष्पाणि शरा इति कविप्रौढोक्तिसिद्धं वस्तु प्रकाशीभवन्मदनविजृम्भणरूपं वस्तु व्यनक्ति ।

( ५९ ) 'रजनीषु विमलभानोःकरजालेन प्रकाशितं वीर ! ।
धवलयति भुवनमण्डलमखिलं तव कीर्तिसंततिः सततम् ॥'

---

मुदाहरति—सज्जे इति ।

"सज्जयति सुरभिमासो नचार्पयति युवतिजनलक्ष्यसहान् ।
अभिनवसहकारमुखान् नवपल्लवपत्रलान् अनङ्गस्य शरान् ॥"

इति संस्कृतम् । प्रथमप्रवृत्तवसन्तवर्णनमिदम् । सुरभिमासश्चैत्रः वसन्तकाल इति यावत्, अभिनवानि नवमुकुलितानि सहकाराणि आम्रकुसुमानि मुखम् आदिर्येषां तादृशान् युवतिजनास्तरुणीसमुदाया एव लक्ष्यं शरव्यं तत्सहन्ते भेत्तुं शक्नुवन्तीति तांस्तथोक्तान् "तरुणी युवतिः समे" इत्यमरः, "लक्ष्यं स्यादपदेशेऽपि शरव्येऽपि नपुंसकम्" इतिमेदिनी , नवानि नूतनानि पल्लवान्येव पत्राणि पक्षाणि तांल्लान्ति गृह्णन्तीति तांस्तादृशान्अनङ्गस्य कामदेवस्य शरान् वाणान् सज्जयति रचयति नच अर्पयति समर्पयति । शरसज्जनस्य वर्त्तमानत्वात् अनिष्पन्नत्वेन तन्निष्पत्त्यानन्तरमेव तादृशलक्ष्यशतेऽर्पयितुं प्रेरयिष्यतीति भावः । शतपदात् द्वित्रि युवत्यां त्वर्पयितुं प्रेरयतीति प्रतीयते । आर्याच्छन्दस्तल्लक्षणञ्चोक्तं प्राक् ।

( ५८ )व्यङ्ग्यं दर्शयति–अत्रेति। उक्तोदाहरणे वसन्तश्चैत्रवैशाखोपलक्षितऋतुविशेषः, शरकारः शरान् करोति रचयतीति शरकारः कर्मण्यण् , तद्वत् शरसज्जनकर्तृत्वात् । कामो मदनः धन्वी धनुर्धरः अनङ्गस्य शरानिति सम्बन्धनिर्देशात् ; युवतयो लक्ष्यम्, तस्य स्फुटमुक्तत्वात् । पुष्पाणि सहकारादीनामिति शेषः,शरा वाणाः सहकारमुखान् अनङ्गस्य शरानिति तुल्यविभक्तिनिर्देशादिति चाशयः ।

अत्र वसन्तस्तावदचेतनः, कामः पुनरनङ्गः, युवतयश्चावीराः कुसुमानि च मृदुलानीति यथाक्रममेतेषां शरकारत्वादिकमलौकमेव तदेव स्पष्टयति—कविप्रौढोक्तिसिद्धमिति । कवेः प्रौढोक्त्या प्रतिभावलात् प्रतिपादनेनैव सिद्धं नतु वास्तवम् , प्रकाशीभवत् सिद्धवद्भासमानं मदनविजृम्भणरूपं युवजनानां मदनविशेषाविर्भावात्मकम् । न च सुरभिमासादौ शरकारादिरूपकालङ्कार एव प्रकाशी भवति इत्यतोऽलङ्कारस्यैव व्यञ्जकत्वमिति वाच्यम्, सुरभिमासादौ शरकाराद्यभेदाऽप्रकाशात् किन्तु सुरभिमासादौ शरसज्जनादेरेव प्रकाशाद् वस्तु व्यङ्ग्यमेव ।

( ५९ ) ६ कविप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिं दर्शयति—रजनीष्विति । राज्ञः प्रशंसेयम् ।

हे वीर ! तव कीर्त्तिसन्ततिः यशः परम्परा विमलाः शुभ्राः भानवः किरणा यस्य तस्य शुभ्रांशोश्चन्द्रस्येत्यर्थः, "भानुर्ना किरणे सूर्ये" इति मेदिनी, करजालेन किरणसमूहेन रजनीषु रात्रिष्वेव प्रकाशितम् अखिलं समग्रं भुवनमण्डलं सततं रात्रिन्दिवं धवलयति शुभ्रकान्तिकं विधत्ते, । चन्द्रः केवलं रजनीषु प्रकाशयति तव कीर्त्तिसन्ततिस्तु अहर्निशमेवेत्यर्थः । अखिलमित्यनेनाधिकदेशप्रकाशकत्वमवगन्तव्यम् ।

( ६० ) अत्र कविप्रौढोक्तिसिद्धेन वस्तुना कीर्तिसंततेश्चन्द्रकरजालादधिककालप्रकाशकत्वेन व्यतिरेकालङ्कारो व्यङ्ग्यः ।

( ६१ ) 'दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।
मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः ॥'

( ६२ ) अत्र कविप्रौढोक्तिसिद्धेनापह्नुत्यलङ्कारेण भविष्यद्राक्षसश्रीविनाशरूपं वस्तु व्यज्यते ।

( ६३ ) 'धम्मिल्ले नवमल्लिकासमुदयो हस्ते सिताम्भोरुहं
हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः ।

---

( ६० ) व्यङ्ग्यमुपपादयति—अत्रेति । कविप्रौढोक्तिसिद्धेन न तु वास्तविकेनेत्यर्थः, कीर्त्तिसन्ततेः प्रशंसामात्रपरत्वेन निखिलभुवनधवलीकरणत्वासम्भवादिति भावः । अधिककालप्रकाशकत्वेन तद्रूपेण "वस्तुना" इत्यध्याहृत्यान्वयः । उपमानभूताच्चन्द्रकरजालात् उपमेयभूतायाः कीर्तिसन्ततेः अधिककालं व्याप्य प्रकाशकत्वेनाधिक्यवर्णनात् व्यतिरेकालङ्कारः स च साक्षाद्वाचकपदाभावाद् व्यङ्ग्य इत्यभिप्रायः ।

( ६१ ) ७ कविप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिमुदाहरति—दशाननेति। रघुवंशदशमसर्गे श्रीरामभद्रस्य जन्मवर्णनमिदम् । तत्क्षणं यस्मिन् क्षणे श्रीरामः पृथिव्यामवतीर्णस्तत्समये दशाननस्य रावणस्य किरीटेभ्यो दशसंख्यकमुकुटेभ्यो मणिव्याजेन मणिपतनच्छलेन ( प्रकृत्यादिभ्य उपसंख्यानम् ) इति तृतीया, राक्षसश्रियः राक्षसानां रावणपालितानां दुष्टप्रकृतीनां क्रव्यादानां श्रीः सम्पत् तस्यास्तथोक्तायाः, ।

"श्रीर्वेशरचना शोभा भारती सरलद्रुमे ।
लक्ष्म्यां त्रिवर्गसम्पत्तिविधोपचरणेषु च ॥"

इति मेदिनी, अश्रुबिन्दव अश्रुकणिकाः पृथिव्यां पर्यस्ताः पतिताः । अनुष्टुप् छन्दः ।

( ६२ ) अत्रेति । कविप्रौढोक्तिसिद्धेन न तु यथार्थेनेत्यर्थः । सम्पन्मात्रस्वरूपाया राक्षसश्रियः अश्रुबिन्दूनामसम्भवादित्यभिप्रायः। अपह्नुत्यलङ्कारेणेति । प्रकृतानां मणीनां प्रतिषेधेनाप्रकृतानामश्रुबिन्दूनां स्थापनादपह्नुतिरलङ्कारः ।

( ६३ ) ८ कविप्रौढोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिमुदाहरति—धम्मिल्ल इति। कस्यचिद्राज्ञः प्रशंसेयम् । हे त्रिकलिङ्गभूमितिलक ! तैलङ्गदेशभूत्रयतिलक ! एकोऽपि तव कीर्त्तिराशिः यशस्समूहः पुरन्दरपुरीवामभ्रुवाम् अमरावतीस्थाङ्गनानां ।

"वामं घने पुंसि हरे कामदेवे पयोधरे ।
वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियान्तथा ॥"

इति मेदिनी, विग्रहे शरीरे नानामण्डनताम् अनेकविधभूषणत्वं ययौ लब्धवान् । तथाहि तासां धम्मिल्ले संयते केशपाशे "धम्मिल्लः संयताः कचाः" इत्यमरः, नवमल्लिकानां स्वच्छ "वेल्ली"ति पुष्पविशेषाणां समुदायः समूहो जातः तद्वद् द्योतनादिति भावः ।

"मल्लिका शतभीरुश्च गवाक्षी भद्रमल्लिका ।
शतभीरुर्मदायन्ती भूपदीतृणशून्यकम् ॥"

इति वाचस्पतिः । हस्ते सिताम्भोरुहं पुण्डरीकं "पुण्डरीकं सिता म्भोजम्"इत्यमरः, कण्ठतटे ग्रीवा प्रदेशे हारो मुक्तामाला तथा पयोधरयुगे कुचद्वये च

एकोऽपि त्रिकलिङ्गभूमितिलक ! त्वत्कीर्तिराशिर्ययौ
नानामण्डनतां पुरन्दरपुरीवामभ्रुवां विग्रहे ॥'

( ६४ ) अत्र कविप्रौढोक्तिसिद्धेन रूपकालङ्कारेण भूमिष्ठोऽपि स्वर्गस्थानामुपकारं करोषीति विभावनालङ्कारो व्यज्यते ।

( ६५ ) 'शिखरिणि क नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।
सुमुखि ! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः ॥'

"युग्मे रथे हलाद्यङ्के न द्वयोस्तु कृतादिषु ।
युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च ॥

इति मेदिनी, घनः सान्द्रः

"घनं स्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः ।
ना मुस्ताब्दौघदार्ढ्येषु विस्तारे लोहमुद्गर ॥
त्रिषु सान्द्रे दृढे च स्यात्"......इति मेदिनी ॥

श्रीखण्डलेपः श्वेतचन्दनप्रलेपः तत्स्वरूप इति भावः ।

शार्दूलविक्रीडितं छन्दस्तल्लक्षणञ्चोक्तं प्राक् ( १९८ पृ० )

( ६४ ) अत्रेति । कविप्रौढोक्तिसिद्धेन न तु यथार्थेनेत्यर्थः । कीर्तिराशेरतिशयप्रशंसामात्ररूपतया नवमल्लिकादिसादृश्यस्य अयथार्थत्वेन तन्मूलकरूपकालङ्कारस्याप्ययथार्थत्वादिति भावः । रूपकालङ्कारेणेति । कीर्तिराशौ नवमल्लिकासमुदयत्वारोपादित्यभिप्रायः । विभावनालङ्कार इति ।

स्वर्गस्थितिरेव स्वर्गस्थानामुपकारकारणम् , कार्यकारणयोः सामानाधिकरण्यनियमात् । तदभावेऽपि स्वर्गस्थोपकारकरणरूपफलव्यक्तिरुक्ता विभावनालङ्कारः स च स्वर्गस्थित्यभाववाचकशब्दाभावाद् व्यङ्ग्यः । सिद्धान्तिनस्तु कार्यकारणयोर्भिन्नदेशत्वाद् सङ्गतिरलङ्कारोऽत्र व्यङ्ग्य इति वदन्ति ।

( ६५ ) १—कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुध्वनिं दर्शयति—शिखरिणीति । चञ्चुपुटेन बिम्बफलदंशिनं शुकशावकं दृष्ट्वा कस्यचित् कविनिबद्धवक्तुः काञ्चित् सुन्दरीं प्रत्युक्तिरियम् । हे सुमुखि ? असौ शुकशावकः क नु शिखरिणि कस्मिन् पर्वते कियच्चिरं कियद्दीर्घकालं यावत् किमभिधानं किं नामकं तपः अकरोत्, येन हेतुना तव अधरवत् पाटलं श्वेतरक्तं "श्वेतरक्तस्तु पाटलः" इत्यमरः, बिम्बफलं दशति अविच्छिन्नप्रबन्धतया आस्वादयति निरवशेषेणोपभोगे सति हि प्रबन्धविच्छेदो भवेत्तथा नेति भावः । अत्रौदरिकवन्नोपभोगः स हि रसास्वादवार्त्तानभिज्ञो निरवशेषमेव भोज्यद्रव्यं भुङ्क्ते किन्तु रसज्ञो रसास्वादनक्रियायाः तथाविधबिम्बफलप्राप्तिवदेव, रसज्ञताप्यस्य तपः प्रभावादेवेति बोध्यम् । तव अधरतुल्यवस्तुदंशनमपि तपः फलमिति श्लोकस्य भावार्थः । अत्र नामेत्यन्तेन हि नहि निर्विघ्नोत्तमसिद्धयोऽपि श्रीपर्वतादयः इमां तरुण्याधरपाटलिमलाभसुभगम्भावुकबिम्बफलदशनात्मिकां सिद्धिं विदध्युरिति ध्वन्यते । कियच्चिरमित्यनेन इदृश्याः सिद्धेः प्राप्तौ दिव्यकल्पसहस्रादिश्च परिमितः काल इति व्यज्यते । किमभिधानमित्यनेन च यथोक्तबिम्बफलदशनात्मकोत्तमफलजनकत्वेन पञ्चाग्निप्रभृत्यपि तपःश्रुतमिति प्रतीयते । पद्येऽस्मिन् तवेति भिन्नमेव पदं ग्राह्यम् , यतो हि अधर

( ६६ ) अत्रानेन कविनिबद्धस्य कस्यचित्कामिनः प्रौढोक्तिसिद्धेन वस्तुना त्वदधरः पुण्यातिशयलभ्य इति वस्तु प्रतीयते ।

( ६७ ) 'सुभगे ! कोटिसंख्यत्वमुपेत्य मदनाशुगैः ।
वसन्ते पञ्चता त्यक्ता पञ्चतासीद्वियोगिनाम् ॥'

( ६८ ) अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन कामशराणां कोटिसंख्यत्वप्राप्त्या निखिलवियोगिमरणेन वस्तुना शराणां पञ्चता शरान्विमुच्य वियोगिनः श्रितेवेत्युत्प्रेक्षालङ्कारो व्यज्यते ।

( ६९ ) 'मल्लिकामुकुले चण्डि ! भाति गुञ्जन्मधुव्रतः ।

---

पदार्थं त्वत्पदार्थसम्बोध्यमाननायिकासम्बन्धः प्राधान्येन विधेयतया जिज्ञापयिषितः । तादृशनायिकासम्बन्धितया व्यज्यमानस्याधरस्यास्वादनेनव शुकशावके धन्यधन्यतायाः सिद्धिः । समासे सति अधरपदार्थविशेषणतया विद्यमानस्य युष्मच्छब्दार्थस्य प्राधान्येन विधेयतया बोधो न स्यात् समासोपसर्ज्जनीभूतत्वेन तादृशसामर्थ्यविरहात्, समस्तस्वीकारे हि विधेयाविमर्शदोषोद्धारस्य विधातुमशक्यत्वाच्च तवेत्यस्य दशनक्रियायामपि अन्वयाभिप्रायेण भिन्नमेव तवेति पदं स्वीकार्य्यम्, तथाहि यथा—"अरुणया पिङ्गाक्ष्या गवा सोमं क्रीणाति" इत्यादिश्रुतौ गवाद्यन्विताारुण्यादेः साध्यतादिसम्बन्धेन क्रयणादावन्वयः, यथा वा "धनवान् सुखी" इत्यादिलौकिकवाक्ये मतुबाद्यर्थान्वितस्य धनादेः प्रयोज्यत्वादिसम्बन्धेन सुखादौ चान्वयः तथात्राधरान्वितस्य त्वत्सम्बन्धित्वस्य प्रयोज्यत्वसम्बन्धेन बिम्बफलकर्मकदंशनेऽप्यन्वयः, यतः शुकशावकोऽयं त्वदधरारुण्यलाभसुभगं भावुकं बिम्बफलं त्वत्सम्बन्धितया दशति त्वामेव प्रधानतयोद्दिश्य दशतीत्यर्थस्य विवक्षितत्वात् ।

( ६६ ) अत्रेति । अनेन पूर्वार्द्धार्थरूपेण । प्रौढौक्तिसिद्धेन न तु वास्तविकेनेत्यर्थः, शुकशावकस्य तपोविधानासम्भवादिति भावः । वस्तु अनलङ्कारम् । व्यज्यते प्रतीयते । यत्सादृश्येनोत्कृष्टं वस्तु पुण्यातिशयं विना न प्राप्यते तस्य सुतरामेव पुण्यातिशयप्राप्यत्वमित्याशयः ।

( ६७ ) १०-कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना अलङ्कारध्वनिमुदाहरति—सुभगे इति । हे सुभगे ! वसन्ते समये मदनाशुगैः आशु शीघ्रं गच्छन्तीति आशुगाः आशुपपदाद्गमेर्डः, मदनस्य कामस्य आशुगाः बाणास्तैस्तथोक्तैः कोटिसंख्यत्वम् उपेत्य कामदेवप्रभावादेव प्राप्य, पञ्चता स्वस्य पञ्चसंख्योपयोगित्वं त्यक्ता किन्तु वियोगिनां विरहिणां सा पञ्चता मरणकालीनपञ्चभूतविश्लेषः मृत्युरिति यावत् "पञ्चता पञ्चभावे स्यान्मरणेपि च योषिति" इति मेदिनी, आसीत् । अनुष्टुप् छन्दः ।

( ६८ ) अत्रेति । सुभगे इति सम्बोधनात् कामुक एवात्र वक्ता न तु कविः तन्निबद्धवक्तृप्रौढोक्तिसिद्धेन न तु वास्तविकेनेत्यर्थः, मदनबाणेनाखिलविरहिमरणस्यासम्भवादिति भावः । निखिलवियोगिमरणं प्रति कोटिसंख्यत्वप्राप्ततेति हेतुः । उत्प्रेक्षा व्यज्यत इति । तद्वाचकेवकाराद्यभावाद् व्यञ्जना ।

( ६९ ) ११-कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिमुदाहरति—मल्लिकामुकुल इति । मानवतीं प्रति मानभङ्गाय पत्युरुक्तिरियम् । हे चण्डि ! अत्यन्तकोपने !

प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव ॥'

( ७० ) अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनोत्प्रेक्षालङ्कारेण कामस्यायमुन्मादकः कालः प्राप्तस्तत्कथं मानिनि मानं न मुञ्चसीति वस्तु व्यज्यते ।

( ७१ ) 'महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती ।

अणुदिणमणण्णकम्मा अङ्गं तणुअं पि तणुएइ ॥'

( ७२ ) अत्रामाअन्तीति कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन काव्यलिङ्गालंकारेण तनोस्तनूकरणेऽपि तव हृदये न वर्तत इति विशेषोक्त्यलंकारो व्यज्यते ।

---

मल्लिकामुकुले नवमल्लिकापुष्पकोरके गुञ्जन् शब्दं कुर्वन् मधुवनो भ्रमरः पञ्चबाणस्य कामस्य प्रयाणे युद्धयात्रायां शङ्खं विजयशङ्खम् आपूरयन्निव मल्लिकामुकुलस्य शङ्खाकारत्वात् भृङ्गगुञ्जनस्य शङ्खशब्दतुल्यत्वात् भाति शोभते । अनुष्टुप् छन्दः ।

( ७० ) अत्रेति । कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन न तु यथार्थेनेत्यर्थः, पञ्चबाणस्य शङ्खासत्त्वेनैव तत्पूरणसम्भावनाया अप्यसम्भवादित्याशयः । यूनामुन्मादकः प्रोषितपीडातिशयजनकश्चायं कामस्य कालो वसन्तः प्राप्तः विद्यमान इत्यर्थः, मानिनीं प्रत्युक्त्यैव कविनिबद्धवक्तृप्रौढोक्तिसिद्धमुदाहरणमिदम् अत एव "कथं मानं न मुञ्चसी"ति व्याख्या विहिता ।

( ७१ ) १:-कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनालङ्कारेण अलङ्कारध्वनिं दर्शयति-महिलासहस्सेति ।

"महिलासहस्रभरिते तव हृदये सुभग ! सा अमान्ती ।

अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनूकरोति" ॥

इति संस्कृतम् । हालकविकृताया शालिवाहनसप्तशत्यां (गाथा सप्तशत्यां, चतुर्थशतके नायकस्य बहुनायिकाभावनादुःखेन कृशाया नायिकाया अवस्थां नायके कथयन्त्यास्तत्सख्या उक्तिरियम् ! हे सुभग ! सौभाग्ययुक्त ! सा अकृत्रिमस्नेहा नायिका महिला रमणी तासां सहस्रेण भरिते व्याप्ते तव हृदये अमान्ती स्थातुमवकाशमलभमाना अनुदिनं दिवसं व्याप्य प्रतिदिनं च अनन्यकर्म्मा त्यक्तान्यकार्या सती यद्वा न अन्यत् तनुतासंपादकातिरिक्तं कर्म कर्त्तव्यं यस्याः सा तथोक्ता तनु स्वतःकृशमपि अङ्गं शरीरं तनूकरोति तनयति कृशयति कथञ्चिदपि प्रवेशनाय कृशतरं करोतीत्यर्थः, अत एव सुभगेति सम्बोधनम् ।

अत्र सुभगेत्यनेन नायिकाया एवानुरागविषयत्वं न तु सा तवेति ध्वन्यते । एवं महिलासहस्रेत्यादिना त्वदनुरागविषया एव ता न तु त्वं तासामिति व्यज्यते । तनयतीति वर्त्तमाननिर्देशात् अद्यापि वृत्त्यभावं प्रतीयते । गाथाछन्दः ।

( ७२ ) अत्रेति । कविनिबद्धवक्तृदूत्याः प्रौढोक्तिमात्रसिद्धेन न तु पारमार्थिकेनेत्यर्थः सकलस्त्रीप्रियतमस्य तस्या अपि प्रियतमत्वेन स्थितिप्राप्तेरिति भावः । "अमान्ती"त्यत्र महिलासहस्रभरितत्वं हेतुः तनूकरणे चामान्तीत्वं हेतुरिति द्वाभ्यां हेत्वलङ्काराभ्यां "तनोस्तनूकरणेऽपि तव हृदये न वर्त्तते" इति विशेषोक्तिः । काव्यलिङ्गालङ्कारेणेत्यस्य हेत्वलङ्कारेणेत्यर्थः हेतुगर्भत्वादेवैतादृशोऽर्थः । अत्रैकवचनं जात्यभिप्रायेण । विशेषोक्त्यलङ्कार इति । स्वल्पावकाशे हृदये स्थानप्राप्तये अङ्गतनूकरणरूपकारणसत्त्वेऽपि

( ७३ ) न खलु कवेः कविनिबद्धस्येव रागाद्याविष्टता अतः कविनिबद्धवक्तृ-प्रौढोक्तिः कविप्रौढोक्तेरधिकं सहृदयचमत्कारकारिणीति पृथक्प्रतिपादिता।

( ७४ ) एषु चालंकृतिव्यञ्जनस्थले रूपणोत्प्रेक्षणव्यतिरेचनादिमात्रस्य प्राधान्यं सहृदयसंवेद्यम्, न तु रूप्यादीनामित्यलंकृतेरेव मुख्यत्वम्।(क)

( ७५ ) एकः शब्दार्थशक्त्युत्थे—

स्थानप्राप्तिरूपकार्याभावात् विशेषोक्त्यलङ्कार इत्यर्थः। स च साक्षात्प्रतिपादकाभावाद् व्यज्यत इत्यर्थः। दशमपरिच्छेदे—प्रतीयमानोत्प्रेक्षालङ्कारध्वनिरत्रेति वक्ष्यति मूलकारः स्वयमेव।

( ७३ ) ननु कविनिबद्धवक्तुः प्रौढोक्तिरपि कवेः प्रौढोक्तिरेव, कविनैव कञ्चिद्विषयं कल्पयित्वा तेन वक्त्रा तथा तथा पठितत्वात्, अतः कविप्रौढोक्तिसिद्धत्वेनैव उभयसंग्रहसम्भवे कारिकायां किमर्थं कविनिबद्धवक्तृत्वेन पृथगुपादानमित्यत आह—न खल्विति। कविनिबद्धस्येव कविनिबद्धवक्तुरिव। रागादीत्यादिना उत्साहादिपरिग्रहः। प्रौढोक्त्या हि वक्तृ रागाद्याविष्टचित्तत्वं प्रतीयते। तत्र कव्यपेक्षया कविनिबद्धस्य वक्तुरधिकरागाद्याविष्टचित्तत्वमिति तद् व्यञ्जिकायाः प्रौढोक्तेरधिकचमत्कारित्वमिति पृथगुपादानमिति भावः।

( ७४ ) ननु रूपणमेव रूपकालङ्कारः, उत्प्रेक्षणमेवोत्प्रेक्षालङ्कारः, व्यतिरेचनमेव व्यतिरेकालङ्कारः, तथा च यत्र रूपकालङ्कारस्य व्यङ्ग्यत्वं तत्र किं रूप्यमाणवस्तूदाहरणं स्यात्? एवमुत्प्रेक्ष्यमाणव्यतिरिच्यमानवस्तुनोरपि, एवं हि वस्तूनां व्यञ्जकत्वमात्राभ्युपगमेनैवोपपत्तौ कथमलङ्काराणां व्यञ्जकत्वस्य पृथगुपादानमत आह—एषु चेति। किञ्चेति चार्थः।

एषु प्रागुक्तद्वादशसु अर्थशक्त्युद्भवभेदेषु मध्ये इत्यर्थः अलंकृतिव्यञ्जनस्थले अलङ्कारव्यञ्जनस्थले। रूपणम्—"धम्मिल्ले नवमल्लिकासमुदयः" इत्यादौ रूपकालङ्कारघटकं कोत्तिराशौ नवमल्लिकासमुदयत्वादीनामारोपविधानम्। उत्प्रेक्षणम्—"सुभगे कोटिसंख्यत्वम्" इत्यत्र उत्प्रेक्षालङ्कारघटकं पञ्चबाणे पञ्चत्वत्यागेन वियोगिपञ्चत्वसम्भावनाकरणम्, एवं "मल्लिकामुकुले चण्डि" इत्यादावप्यूह्यम्। व्यतिरेचनम्—उपमानादुपमेयस्य आधिक्येन न्यूनत्वेन वा पृथक्करणम् यथा "दिशि मन्दायते तेजः" इत्यादौ। आदिपदात् उपमालङ्काराद्विघटकानां सदृशीकरणादीनाम् "आपतन्तममुं दूरात्" इत्यादौ ग्रहणम्। सहृदयसंवेद्यं तत्प्रतीतिमात्रसाक्षिकत्वादित्याशयः। मात्रशब्दव्यवच्छेद्यं दर्शयति—नत्विति। रूप्यादीनामित्यादिना उत्प्रेक्षणीयव्यतिरेचनीयादीनां ग्रहणम्। इति हेतोः अलङ्कृतेरलङ्कारस्यैव मुख्यत्वं प्रधानत्वम् अतो मुख्यानां पृथक्स्वीकारौचित्यादलङ्काराणामपि व्यञ्जकत्वस्य पार्थक्येनैवाभ्युपगम इति भावः।

( ७५ ) एवं द्विविधं शब्दशक्तिमूलं द्वादशविधमर्थशक्तिमूलं च संलक्ष्यक्रमव्यङ्ग्यं

(क) इतोऽग्रे एवं "वाच्यार्थस्य व्यञ्जकत्वे उदाहृतम्" इति पाठः क्वचिदुपलभ्यते। क्वापि च पुस्तके 'लक्ष्यार्थस्य यथा—निःशेषच्युतचन्दनम्—' इत्यादि। व्यङ्ग्यार्थस्य यथा-'उअ णिच्चल णिप्पन्दा—' इति। अनयोः स्वतःसंभविनौ लक्ष्यव्यङ्ग्यार्थौ। एवमन्येष्वेकादशसु भेदेषूदाहार्यम्।' इत्यपि पाठः, उपलभ्यते।

( ७६ ) उभयशक्त्युद्भवे व्यङ्ग्ये एको ध्वनेर्भेदः ।

यथा—

( ७७ ) 'हिममुक्तचन्द्ररुचिरः सपद्मको मदयन्द्विजाञ्जनितमीनकेतनः ।
अभवत्प्रसादितसुरो महोत्सवः प्रमदाजनस्य स चिराय माधवः ॥'

ध्वनिं प्रदर्श्येदानीमेकविधमुभयशक्तिमूलं तं प्रदर्शयति—एक इति । 'शब्दश्चार्थश्चेति शब्दार्थौ तद्रूपमुभयोः शक्त्या उत्थे उत्पन्ने व्यङ्ग्ये एकः ध्वनेर्भेदः स्यात् ।' वस्तुरूपयोः शब्दार्थयोरुभयोरेवात्र व्यञ्जकत्वात् वस्तुभिन्नतया पूर्वप्रदर्शितस्य केवलालङ्कारस्यैवावशिष्टत्वेन व्यङ्ग्यत्वात् तस्य च सामान्येनैकविधत्वात् शब्दार्थोभयशक्तिमूलो ध्वनिरलङ्काररूप एक एवेति ध्येयम् । यद्यपि शब्दशक्तिमूलेऽप्यर्थस्य अर्थशक्तिमूलेऽपि शब्दस्य व्यञ्जकत्वमस्तीति उभयशक्तिमूलत्वं सर्वत्रैवास्ति तथापि तत्र गुणप्रधानभावेनेति न काप्यनुपपत्तिः, अत्र तु द्वयोरेव प्राधान्येन व्यञ्जकत्वमित्युभयशक्तिमूलत्वम्—तथाहि परिवृत्यसहिष्णूनां शब्दानां प्राचुर्ये तत्प्रयुक्तात्प्राधान्यात् विद्यमानाया अप्यर्थशक्तेरप्राधान्याच्च व्यङ्ग्यस्य शब्दशक्तिमूलकत्वेनैव व्यवहारः, परिवृत्तिसहिष्णूनां तु प्राचुर्येऽर्थशक्तेरेव प्राधान्यात् विद्यमानाया अपि शब्दशक्तेः प्रधानानुगुण्यार्थतया मल्लग्रामादिवत् प्रधानेनैव व्यवहारः, यत्र तु परिवृत्तिसहमानानामसहमानानां च नैकजातीयप्राचुर्यम्, किन्तु साम्यमेव तत्रोभयोरेव प्राधान्येन व्यङ्ग्यार्थोपस्थापकपदानामविशेषे शब्दार्थोभयशक्तिमूलत्वं ज्ञेयम् । न चायमन्यतरशक्तिमूलकतयैव व्यपदिश्यतामिति वाच्यम्, तत्र प्रमाणाभावात्

( ७६ ) विवृणोति—उभयशक्त्युद्भव इति । उभयशक्तिः शब्दार्थोभयशक्तिः सैव उद्भव उत्पत्तिस्थानं यस्य तस्मिंस्तथोक्ते । ध्वनेः शब्दार्थशक्तिमूलस्य संलक्ष्यक्रमव्यङ्ग्यस्येति शेषः । भेदः प्रभेदः ।

( ७७ ) उभयशक्तिमूलं ध्वनिमुदाहरति—हिममुक्तेति । माघकाव्यस्य त्रयोदशसर्गे श्रीकृष्णस्येन्द्रप्रस्थोपस्थितौ स्थितिवर्णनमिदम् । हिमेन प्रालेयावरणेन मुक्तः निर्मल इत्यर्थः यश्चन्द्रः स इव रुचिरो मनोज्ञः, वसन्तपक्षे—हिमात् शीतकालात् मुक्तेन त्यक्तेन चन्द्रेण रुचिरो दीप्यमानः । पद्मा लक्ष्मीः तया सहितः सपद्मकः, पक्षे—विकसितपद्मपुष्पयुक्तः । द्वाभ्यां संस्काराभ्यां जाता द्विजाः ब्राह्मणक्षत्रियवैश्यास्तान्, पक्षे—कोकिलादीन् पक्षिणश्च "दन्ता विप्राण्डजा द्विजाः" इत्यमरः, मदयन् विनयसम्भाषणादिना हर्षयन्, पक्षे—स्वभावेनैव विक्षेपादिकं कुर्वंश्च । जनित उत्पादितः मीनकेतनः प्रद्युम्नाख्यपुत्रश्च येन तादृशः, पक्षे—जनितसुरताभिलाषः । प्रसादिता असुरवधादिना प्रसन्नचित्तीकृताः सुरा देवा येन तादृशः, पक्षे—प्रसादिता विमलीकृता सुरा मद्यं येन सः । स माधवः श्रीकृष्णः वसन्तश्च प्रमदाजनस्य नगररमणीगणस्य चिराय महोत्सवः दर्शनप्रदानेनैव महानानन्दोत्पादकः अभवत् । माधवपदस्य शक्त्या वसन्तप्रत्यायने शब्दशक्तिः, प्रमदाजनस्येत्यत्र च श्लिष्टशब्दाभावात् अर्थशक्तिरित्युभयशक्तिमूलो ध्वनिः । अत्रोभयशक्तिव्यङ्ग्यस्य वसन्तस्योपमा उभयशक्तिव्यङ्ग्या तथाहि—प्रमदाजनस्य महोत्सवजनने वसन्तस्यैव सामर्थ्यम् "यदर्थं यस्य प्रसिद्धिस्तत्रैव तदर्थस्य सामर्थ्यमिति नियमेनार्थप्रतिसंधानसहकृतेन माधवपदेन वसन्त एव ध्वन्यते न त्वर्थान्तरम्, तत्र

( ७८ ) अत्र माधवः कृष्णो माधवो वसन्त इवेत्युपमालंकारो व्यङ्ग्यः।

( ७९ ) एवं च व्यङ्ग्यभेदादेव व्यञ्जकानां काव्यानां भेदः।

( ८० ) **तदष्टादशधा ध्वनिः ॥ ३ ॥**

( ८१ ) अविवक्षितवाच्योऽर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। विवक्षितान्यपरवाच्यस्तु असंलक्ष्यक्रमव्यङ्ग्यत्वेनैकः। संलक्ष्यक्रमव्यङ्ग्यत्वेन च शब्दार्थोभयशक्तिमूलतया पञ्चदशेत्यष्टादशभेदो ध्वनिः।

( ८२ ) एषु च—

( ८३ ) **वाक्ये शब्दार्थशक्त्युत्थस्तदन्ये पदवाक्ययोः**

---

तस्य सामर्थ्यविरहात्। नचात्र शब्दार्थोभयश्लेषसत्त्वेनोभयशक्तिव्यङ्ग्योपमेति वाच्यम्, तथा सति "दुर्गालङ्घितविग्रह" इत्यत्राप्युभयश्लेषसत्त्वेनोभयशक्तिव्यङ्ग्यत्वमापद्येत गृहीतगरिमेत्यर्थश्लेषस्यापि तत्र विद्यमानत्वात्।

( ७८ ) व्यङ्ग्यमुपपादयति—अत्रेति। उपमालङ्कारो व्यङ्ग्य इति। "दुर्गालङ्घितविग्रहः" इत्यादाविव वसन्तस्याऽप्राकरणिकत्वेन तत्प्रत्यायनस्य प्रकृतेऽनुपयोगात् वसन्त इव कृष्ण इत्युपमालङ्कारश्चन्द्रपद्मादिशब्दानां परिवृत्त्यसहिष्णुतया हि मुक्तादिकानां तत्सहिष्णुतया द्वयोरपि प्राधान्येन व्यञ्जकत्वादुभयशक्तिमूलकः स च वाचकपदाभावात् व्यङ्ग्य एव।

( ७९ ) ननूक्तभेदेषु व्यङ्ग्यस्यैव भेदो दर्शितः तच्चासङ्गतम् "काव्यभेदमाह" इति पूर्वं प्रतिज्ञातत्वात् अप्रासङ्गिकप्रलापदोषश्चाप्यायातीत्याशयेनाह—एवं चेति। एवञ्च प्रदर्शितानां व्यङ्ग्यप्रकाराणां सम्भवे च। काव्यानां भेद इति। वाच्यभेदाद्यथा वाचकभेदस्तद्वदिति भावः।

( ८० ) नन्वेवं कियन्तः काव्यभेदाः सञ्जाता इत्याकाङ्क्षायामाह—तदिति। तस्मादुक्तक्रमादित्यर्थः। ध्वनिरगुणीभूतो व्यङ्ग्य अष्टादशधा अष्टादशप्रकारः प्रकारे धा प्रत्ययः। यावन्तो व्यङ्ग्यार्थास्तावन्ति पुनः काव्यान्यपीति सिद्धान्ताद् ध्वनेरष्टादशप्रकारत्वे काव्यस्यापि स्यादेवाष्टादशप्रकारत्वमिति निर्गलितोऽर्थः।

( ८१ ) अष्टादशत्वमेवोपपादयति—अविवक्षितेति। शब्दार्थोभयेति। शब्दशक्तिमूलतया, अर्थशक्तिमूलतया, तदुभयशक्तिमूलतया चेत्यर्थः। पञ्चदशेति वस्त्वलङ्काररूपत्वाच्छब्दशक्त्युत्थौ द्वौ, अर्थशक्त्युत्थश्च द्वादशविधः, उभयशक्त्युत्थे एक इति पञ्चदशभेदा', अर्थान्तरसंक्रमितवाच्यादिभेदत्रयेण साकमष्टादशेति। स्पष्टतया त्वित्थं ज्ञातव्यम्-

लक्षणामूलोऽविवक्षितवाच्यो ध्वनिर्द्विविधः— { अर्थान्तरसंक्रमितवाच्यः(१) / अत्यन्ततिरस्कृतवाच्यः(२) }

अभिधामूलो विवक्षितान्यपरवाच्यो ध्वनिः षोडशविधः—असंलक्ष्यक्रमव्यङ्ग्यः(१)

संलक्ष्यक्रमव्यङ्ग्यः— { शब्दशक्तिमूलो द्विविधः-(२) / अर्थशक्तिमूलो द्वादशविधः-(१२) / उभयशक्तिमूल एकविधः-(१) }

( ८२ ) एषु चेति। उक्तेषु अष्टादशविधेषु ध्वनिषु मध्य इत्यर्थः।

( ८३ ) एवं ध्वनेरष्टादशभेदान् प्रदर्श्य तेषां मध्ये उभयशक्तिमूलातिरिक्तानां सप्त-

( ८४ ) तत्रार्थान्तरसंक्रमितवाच्यो ध्वनिः पदगतो यथा—

( ८५ ) 'धन्यः स एव तरुणो नयने तस्यैव नयने च ।
युवजनमोहनविद्या भवितेयं यस्य संमुखे सुमुखी ॥'

---

दशभेदानां पदवाक्यगतत्वेन द्वैविध्यं वक्तुमुभयशक्तिमूलस्य वाक्यमात्रगतत्वेनैकविधत्वमेवेत्यत आह—वाक्य इति । शब्दार्थशक्त्युत्थः शब्दार्थोभयशक्तिमूलो ध्वनिः वाक्ये केवलवाक्य एव सम्भवति तस्योपमालङ्कारमात्ररूपत्वेन पर्य्यवसितवाक्यार्थसापेक्षत्वादित्यभिप्रायः। वाक्यञ्चात्र पदसमुदायः, तेन नानार्थपदघटितसमासगतत्वेऽपि न क्षतिः। वाक्य एवेत्यर्थकरणेन चासमस्तैकपदव्युदासः, एकपदेऽस्यासम्भवात्। एकस्यैव पदस्य परिवृत्तिसहत्वतदसहत्वयोर्वक्तुमशक्यत्वात्' ननूभयशक्तिमूलो ध्वनिर्वाक्य एवेति नायं नियमः शिशुपालवधे षोडशसर्गे तदुक्तौ ( शिशुपालदूतस्य श्रीकृष्णं प्रति वचने ) प्रबन्धेऽपि दर्शनात्। तथाहि "दमघोषसुतेन कश्चन प्रतिशिष्टः प्रतिभानवानथ" इत्यारभ्य "उभयं युगपन्मयोदितं त्वरया सान्त्वमथेतरच्च ते" इत्यन्तेन प्रबन्धेन सन्धेर्वाच्यतया विग्रहस्य च व्यञ्जनया प्रतिपादनादुभयशक्तिमूलत्वसम्भव इति। नच प्रबन्धस्य पदसमुदायरूपवाक्यत्वान्नक्षतिरिति वाच्यम्, क्रियाकारकभावापन्नस्यैव पदसमुदायस्य वाक्यशब्देन विवक्षितत्वात्। "तिङ्सुबन्तचयो वाक्यं क्रिया वा (क) कारकान्विता" इत्यमरोक्तेरितिचेन्नैवम्, तत्रोभयशक्तिमूलत्वेऽपि ध्वनित्वाभावात् वाच्यार्थेन तुल्यप्राधान्यात्। वक्ष्यमाणे "ब्राह्मणातिक्रमत्यागः" इत्युदाहरणे "क्षत्रियाणामिव रक्षसां क्षयः क्षणेन करिष्यति" इति व्यङ्ग्यमिव भूत्युपदेशो मित्रत्वाभिधानरूपञ्च सामोपायात्मकवाच्यमपि प्रधानमेव "दुर्मनायते" इति गम्भीरोक्त्या वाच्यस्यापि चमत्कारित्वात। एवं च व्यङ्ग्यं यथा वाच्यतुल्यचमत्कारं तथात्रापीति विभावनीयम्।

मूले—तदन्य इति। तदन्ये उभयशक्त्युत्थादन्ये अर्थान्तरसंक्रमितवाच्यादयः सप्तदश भेदाः पदवाक्ययोः क्वचित्पदे क्वचिद्वाक्ये च सम्भवन्ति नियामकाभावादित्यर्थः।

अत्रेदं बोध्यम्—यत्रैकस्यैव पदस्य प्राधान्येन व्यङ्ग्यार्थोपस्थितावानुगुण्यम् अन्येषां तु सहकारिमात्रं तत्रव पदगतत्वम्। नानापदानां तथात्वे तु वाक्यगतत्वमिति। यदाहुः—"यत्रैकस्य पदस्य शक्तेः प्राधान्यमन्येषामानुगुण्यमात्रं तत्र पदाश्रयता यत्र तु नानापदानां क्रियाकारकरूपाणां शक्तेस्तुल्यता तत्र वाक्याश्रयतेति भावः" इति।

( ८४ ) तत्रेति। तत्र पदगतवाक्यगतसप्तदशभेदेषु अविवक्षितवाच्यस्य ध्वनेर्भेदयोर्मध्ये। अर्थान्तरसंक्रमितवाच्यः आद्य इत्यर्थः। ध्वनिपदं व्यङ्ग्यपरम्। पदगतः पदमात्रव्यङ्ग्यः।

( ८५ ) धन्य इति। काञ्चित् परमसुन्दरीं कुमारिकामवलोक्य कस्यचित् सस्पृहोक्तिरियम्। स एव तरुणो युवा धन्यः पुण्यकर्मा, तस्यैव च तरुणस्य नयने लोचने नयने

---

( क ) वाशब्दश्चात्र चेदर्थे। कारकान्विता क्रिया चेद् बोध्या इति शेषः। तेन निरर्थकशब्दसमुदायव्यावृत्तिः सुप् च तिङन्तं च सुप्तिङन्ते सुब्विशिष्टं तिङन्तं सुप्तिङन्तम् तेषामेकशब्दः, तेन कारकान्वितक्रियाबोधकसुबन्तचयतिङन्तचयसुप्तिङन्तचयानां त्रयाणामपि वाक्यत्वलाभः। तत्र सुबन्तचयो "देवदत्तेन शयितव्यम्" "इत्यादि। द्वितीयं पचति भवति इत्यादि। तृतीयं चैत्रः पचति" इत्यादि। स्पष्टम् "त्वामौद्वितीयायाः" इति सूत्रे शब्देन्दुशेखरे।

( ८६ ) अत्र द्वितीयनयनशब्दो भाग्यवत्तादिगुणविशिष्टनयनपरः ।

वाक्यगतो यथा—

( ८७ ) 'त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥'

( ८८ ) अत्र प्रतिपाद्यस्य संमुखीनत्वादेव लब्धे प्रतिपाद्यत्वे त्वामिति पुनर्वचनमन्यव्यावृत्तिविशिष्टं त्वदर्थं लक्षयति ।

( ८९ ) एवं वच्मीत्यनेनैव कर्तरि लब्धेऽस्मीति पुनर्वचनम् ।

( ९० ) तथा विदुषां समवाय इत्यनेनैव वक्तुः प्रतिपादने सिद्धे पुनर्वच्मीति वचनमुपदिशामीति वचनविशेषरूपमर्थं लक्षयति ।

---

सार्थके लोचने, इयं युवजनानां मोहनविद्या विद्येव युवजनमोहिनीत्यर्थः सुमुखी कुमारिका यस्य सम्मुखे भविता स्थास्यति । यद्यपि "कदली कदली" इत्यादौ पदगतोऽर्थान्तरसंक्रमितवाच्यध्वनिरुदाहृत एव तथाप्युदाहरणान्तरप्रदर्शनमेतद् दृढस्थितये । अनुष्टुप्छन्दः ।

( ८६ ) अस्य ध्वनेर्लक्षणामूलकत्वेन लक्ष्यमर्थं दर्शयति—अत्रेत्यादिना । अत्र द्वितीयनयनशब्द अनुपयुक्तत्वादविवक्षितवाच्यः सन् भाग्यवत्तादिगुणविशिष्टनयनत्वं लक्षयति तेन नायकस्योचितत्वव्यवहारित्वादिकं व्यङ्ग्यमुपादानलक्षणायाः फलमिति भावः । अत्र लक्षणायां सामान्यविशेषभावः सम्बन्धो ज्ञेयः । अत्र हि वाक्यार्थानां प्रत्येकविश्रान्तत्वेन नैकवाक्यता । तेन तद्वाक्यगतनयनैकपदस्यैव व्यञ्जकता न तु वाक्यस्येति पदगतो ध्वनिरयम् । "त्वामस्मि वच्मि" इत्यत्र तु व्यङ्ग्यार्थोपस्थितिः एकवाक्यस्थैः सर्वैरेव पदैरिति वाक्यगतत्वमिति भेदः ।

( ८७ ) त्वामस्मीति । विद्वत्सभागच्छन्तं प्रति कस्यचिदाप्तस्योक्तिरियम् । अस्मीत्यहमर्थेऽव्ययम् । "यत्" इत्यध्याहार्यम् । यतोऽत्रविदुषाम् असाधारणज्ञानवतां समवायः एकवाक्यतापन्नः समुदायस्तिष्ठति तत् तस्मादात्मीयां आत्मनो हितां मतिम् आस्थाय आश्रित्य अत्र स्थितिं सावधानस्थितिं विधेहि कुरु इति त्वाम् उपदेशार्हमहमाप्तः वच्मि उपदिशामीत्यर्थः । यदहं वच्मि तदवश्यं विधेहि अन्यथा तव महाननर्थो भविष्यतीति भावः ।

( ८८ ) लक्ष्यार्थं व्यङ्ग्यार्थं च दर्शयति—अत्रेत्यादिना । प्रतिपाद्यस्य बोद्धव्यस्य उपदेशार्हस्येति यावत्, सम्मुखीनत्वादेव प्रतिपादयितुः सम्मुखे सत्वादेव प्रतिपाद्यत्वे बोद्धव्यत्वे । पुनर्वचनमिति लक्षयतीत्यस्य कर्तृपदम् । पुनः पुनर्वचनमिति हितकारिमदर्थं लक्षयतीति शेषः ।

( ८९ ) एवमिति । वच्मीत्यत्रोत्तमपुरुषस्य "अस्मद्युत्तम" इत्यनेन कर्तरि विधानात्तेनैव कर्तृत्वे लब्धे अस्मीत्यहमर्थकाव्ययस्य वैयर्थ्यापत्त्या मुख्यार्थबाधेन अहमेवेत्यर्थं लक्षणा । तेनात्यन्तहितसाधकत्वं व्यङ्ग्यम् । सर्वत्र मुख्यार्थस्याभेदः सम्बन्धः ।

( ९० ) वच्मीत्यस्य च निरर्थकत्वापत्त्या मुख्यार्थबाधेन व्यञ्जकं लक्ष्यार्थं प्रकटयितुमाह—तथेति । वक्तुः अस्य श्लोकस्य प्रतिपादयितुः । प्रतिपादने बोद्धव्यस्य बोधनीयार्थज्ञापने ।

( ९१ ) एतानि च स्वातिशयं व्यञ्जयन्ति ।

( ९२ ) एतेन मम वचनं तवात्यन्तं हितं तदवश्यमेव कर्तव्यमित्यभिप्रायः ।

( ९३ ) तदेवमयं वाक्यगतोऽर्थान्तरसंक्रमितवाच्यो ध्वनिः ।

( ९४ ) अत्यन्ततिरस्कृतवाच्यः पदगतो यथा—'निःश्वासान्ध–' इत्यादि ( ३३० पृ. ) । वाक्यगतो यथा–'उपकृतं बहु तत्र–' इत्यादि ।

( ९५ ) अन्येषां वाक्यगतत्वे उदाहृतम् ।

पदगतत्वं यथा—

( ९६ ) 'लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः ।
तदा सुधास्पदमभूदधुना तु ज्वरो महान् ॥'

---

( ९१ ) अधुना व्यङ्ग्यार्थं स्पष्टीकर्तुमाह—एतानीति । एतानि स्वामित्यादित्रीणि पदानि, लक्षणाप्रतिपादकानि सन्ति तेषां स्वातिशयं त्वत्पदार्थस्य वादजल्पादिक्षमत्वम् । मत्पदार्थस्यात्यन्तहितसाधनत्वम् । वचमीत्यत्र च वचनस्यालङ्घनीयत्वम् इत्येतानर्थान् व्यञ्जयन्ति व्यञ्जनया बोधयन्ति । स्वातिशयपदार्थस्तु स्वापेक्षयाऽधिकार्थ एव ज्ञेयः । एवं विद्वत्प्रत्क्षेऽपि 'विदुषाम्" इति आत्ममतेः सार्वकालिकत्वेऽपि "आत्मीयाम्" इति च यथाक्रमं सर्वशास्त्रविशारदरूपेण प्रमाणपरतन्त्रपरतया च परिगतम् । तेन च अन्यथाचरणे उपहसनीयत्वं व्यङ्ग्यम् ।

( ९२ ) प्रत्येकपदव्यङ्ग्यत्वं प्रदर्श्य वाक्यव्यङ्ग्यं दर्शयति—एतेनेति । पदसमूहेनेत्यर्थः । अभिप्रायः 'अवगम्यते' इति शेषः ।

( ९३ ) अधुना फलितार्थं प्रतिपादयति तदिति–तत्तस्मात् व्यङ्ग्यार्थस्यानेकपदनिष्ठ· त्वादित्यर्थः । यद्वाक्यगतध्वनेर्व्यवस्था तु व्यङ्ग्यार्थस्यैकपदानेकपदगतत्वे बाध्या ।

( ९४ ) इत्थमर्थान्तरसंक्रमितवाच्यप्रथमप्रभेदस्य लक्षणामूलस्य ध्वनेः पदनिष्ठत्व मुपपाद्य सम्प्रति अत्यन्ततिरस्कृतवाच्यस्य द्वितीयप्रभेदस्य पदनिष्ठत्वमुपपादयति— अत्यन्ततिरस्कृतवाच्य इति । अत्र केवलान्धपदगतत्वात् पदगतत्वमवगन्तव्यम् । वाक्यगत इति । अत्यन्ततिरस्कृतवाच्यो ध्वनिर्यथेत्यर्थः । "उपकृतम्" "सुजनता" "सुखितम्" इत्यनेकपदगतत्वाद् वाक्यगतत्वमवगन्तव्यम् । अत्र लाक्षणिकपदानामेकवाक्यस्थत्वा त्वादेकवाक्यस्थत्वेनैव व्यञ्जकत्वम् । यद्यप्येतेषां लाक्षणिकपदानां प्रत्येकवाक्यस्थत्वं तथापि महावाक्यगतत्वेन एकवाक्यस्थत्वं ज्ञेयम् ।

( ९५ ) अन्येषामिति । असंलक्ष्यसंलक्ष्यक्रमव्यङ्ग्यभेदानामित्यर्थः । उदाहृतम् "शून्यं वासगृहमित्यादिकमाद्यस्य "पन्थिअ ण एत्थ" इत्यादिकञ्च द्वितीयस्य उदाहरणं निरू· पितमित्यर्थः ।

( ९६ ) असंलक्ष्यक्रमं पदगतं व्यङ्ग्यमुदाहरति—लावण्यमिति । कस्यचिद्वियोगिनः परामर्शोऽयम् । कान्तायास्तत् अनुभवैकगोचरं लावण्यम् सर्वावयवगतः कोऽप्यतिशय एव लावण्यमित्युच्यते ।

तदुक्तम्—

"मुक्ताफलेषु छायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमुदाहृतम् ॥"इति ।

( ९७ ) अत्र लावण्यादीनां तादृगनुभवैकगोचरताव्यञ्जकानां तदादिशब्दानामेव प्राधान्यम् , अन्येषां तु तदुपकारित्वमेवेति तन्मूलक एव ध्वनिव्यपदेशः ।

असौ अनुभवैकगोचरा अनिर्वचनीया इति यावत् कान्तिः प्रत्येकमवयवानां संस्थानसौभाग्यम्, तत् अनुभवैकगोचरम् असाधारणमिति यावत् रूपं संस्थानसौन्दर्य्यम्, प्रदीपकारस्तु "अवयवस्य संस्थानसौष्ठवं रूपम् अवयविनस्तदेव लावण्यम्" इत्थं व्याख्यातवान् । स अनुभवैकगोचरः वचः क्रमः वाक्परिपाटी । एतत्सकलं तदा नायिकासन्निधानकाले अनुभवदशायां सुधास्पदम् अमृतस्थानम् सुधावत्सुखकरानुभवस्थानमिति यावत् अभूत् सर्वाङ्गीणसौष्ठवसम्पादकत्वादिति भावः । तु किन्तु अधुना तद्वियोगात्स्मृतिदशायां महान् ज्वर इव ज्वर अतिशयसन्तापजनको भवति सर्वाङ्गीणतापहेतुत्वादिति भावः ।

( ९७ ) ननु अत्रापि विभावादिव्यङ्ग्ये विप्रलम्भे लावण्यादिपदसहायेनैव तदादिपदानां व्यञ्जकत्वेन ध्वनेर्वाक्यगतत्वमेव स्यात्तदा कथं पदगतत्वेनोदाहियन्त अत आह— अत्रेति । लावण्यादीनां यस्तादृगनुभव अनुभवगोचरत्वादिरूपेण ज्ञानं तस्यैकगोचरताया निर्वक्तुमशक्यायास्तन्मात्रविषयताया इति यावत्, व्यञ्जकानां लावण्यादीनामनुभवगोचरत्वादिजन्यविप्रलम्भशृङ्गारद्योतकानामित्यर्थः । प्राधान्यमिति ।

लावण्यादेरनुभवैकगोचरत्वादिना स्मरणस्य विप्रलम्भपोषकत्वादिति भावः । अन्येषां विभावादीनां लावण्यादीनां वा तेषां तदादिपदानाम् उपकारित्वमेव व्यञ्जकत्वे सहकारित्वमात्रम्, तन्मूलक एव एकपदमूलक एव न तु वाक्यमूलकः "प्रधानेन व्यपदेशा भवन्ति" इति न्यायादिति भावः । ध्वनिव्यपदेशः ध्वनेः संज्ञा । अत्यन्तसन्तोषविधायकवस्तुस्मृत्या वियोगिनां क्लेशातिशयो भवतीति विप्रलम्भातिशयो व्यज्यत इत्येतस्य पदगतत्वसिद्धिरुपपन्ना । ननु तदादिपदानामनुभवगोचरे वाच्यत्वमेव, कथं व्यञ्जनेति चेत् ? मैवम्, अनुभवगोचरतेत्यनेनानिर्वचनीयत्वादिविवक्षणेनादोषात् । उक्तं च चण्डीदासेन—"अनुभवैकगोचरास्तत्कालचमत्कारिणो निर्वक्तुमशक्याः सर्वस्वव्ययप्राणपणादिभिरपि प्रार्थनीयाः" इति व्याख्यातम् । उद्योतकृताऽप्युक्तम्—अत्र तदादेर्बुद्धिविषयतावच्छेदकवति शक्त्या तत्पदानामनुभवैकगोचरत्वेन लावण्यादिबोधकता द्रष्टव्या" इति ।

अत्र हि विप्रलम्भप्रतीतेर्विभावादिसामग्रीसत्त्वेऽपि तदादिपदानां प्राधान्यमिति पदव्यञ्जकता । तदाद्यनेकपदानां चात्र न वाक्यत्वं विभिन्नवाक्यस्थत्वेन परस्परानन्वयात् । नच "तदा सुधास्पदमभूदि"त्यत्र सर्वेषां तदादिपदानामन्वयात् वाक्यत्वमेवेति वाच्यम्, तदावण्यमित्यनेनैव विप्रलम्भव्यञ्जनेन "तदा सुधास्पद"मित्यन्वयापेक्षां विनैव व्यञ्जकत्वेन पदत्वेनैव व्यञ्जकत्वात् । ( महावाक्यव्यङ्ग्यत्वेऽपि पदगतव्यङ्ग्यमूलो ध्वनिरिति व्यवहारः ) ध्वन्यालोककारा अपि "काव्यानां शरीरिणामिव संस्थानविशेषावच्छिन्नसमुदायसाध्यापि चारुत्वप्रतीतिरन्वयव्यतिरेकाभ्यां भागेषु कल्प्यत इति पदानामपि व्यञ्जकत्वमुखेन व्यवस्थितो ध्वनिव्यवहारः" इति वदन्ति ।

प्रदीपकाराश्चापि—"ननु पदस्य व्यञ्जकत्वे किमायातं वाक्यरूपस्य काव्यस्य ध्वनित्वम् , कथं वा पदमात्रस्य व्यञ्जकत्वे वाक्यस्यैव समस्तस्य चारुतेति चेत्! उच्यते

( ९८ ) तदुक्तं ध्वनिकृता—

'एकावयवसंस्थेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥'

( ९९ ) एवं भावादिष्वप्यूह्यम् ।

पदप्रकाश्यत्वं न पदमात्रस्य व्यञ्जकतया किन्तु तस्य प्राधान्येन । 'अविवक्षितवाच्ये पदमात्रस्य व्यञ्जकत्वेऽपि तद्वाक्यवर्त्तिशब्दस्यार्थस्य वा कस्याप्यतिशयितार्थव्यञ्जकत्वं तद्वाक्यस्यैव ध्वनित्वमित्यभ्युपगमात्र कश्चिद्दोषः । एकदेशस्थितेन च तादृशपदेन समस्तमेव वाक्यं चारुतामुपगच्छतीति कामिनीवैकावयवस्थेन भूषणेन" इत्याहुः । एवं सति पदगतस्य नेदमुदाहरणमिति वस्तुतस्त्वित्यादिना वदतां सिद्धान्तवागीशानां मतमयुक्तमिवाभातीति विभावनीयम् ।

( ९८ ) नन्वितरसाहाय्यमन्तरा पदस्य व्यञ्जकत्वं तावन्न सम्भवति । न च प्राधान्याप्राधान्येन निर्वाहः तद्विवेचनस्याकिञ्चित्करत्वात्, तथा सति वाक्यस्यैव व्यञ्जकत्वं सर्वत्रोपपन्नम्, पदगतध्वनिप्रभेदाभ्युपगमस्तु प्राचीनमतानुसारेणैवेत्याशयेन प्राचीनमतं दर्शयति—तदुक्तमिति । यद्यपि वाक्यव्यङ्ग्य एव सर्वो ध्वनिस्तथाप्यन्वयव्यतिरेकाभ्यां यत्र पदे वाक्ये वा चारुत्वमधिकमुपलभ्यते तस्यैव व्यञ्जकत्वं व्यवस्थाप्यते । एकावयवसंस्थेन नासिकादावेकाङ्गे विद्यमानेन भूषणेन अलङ्कारेण पदद्योत्येन पदव्यङ्ग्येन ध्वनिना अर्थेन सुकवेः भारती श्रोत्रग्राह्यवाक्यद्योत्या स्फोटरूपा । भाति शोभते । यदन्तःपातिना पदेन व्यङ्ग्योऽतिशयितोऽर्थश्चारुतया प्रकाश्यते तस्यैव ध्वनित्वमिति सारार्थः । न केवलं सर्वनामादिपदानामेव रसादिव्यञ्जकता किन्त्वन्येषामपि सम्भोगादौ बोध्या ।

यथा—

मुग्धे ! मुग्धतयैव नेतुमखिलः कालः किमारभ्यते ।
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ॥
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना ।
नीचैः शंस हृदिस्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥

अत्र भयप्रतिपाद्यकृत्रिमानुरागेण च सम्भोगः प्रकृष्यते इति तस्य प्राधान्येन भीताननपदप्रकाश्यता । शून्यं वासगृहमित्यादौ तु न तादृशं किमपि पदमिति तत्र वाक्यप्रकाशतैवेति भेदोऽवगन्तव्यः ।

( ९९ ) एवमिति । भावादिष्वपि पदद्योत्यभावादिष्वपीत्यर्थः । पदव्यङ्ग्ये रसादिरूपेऽसंलक्ष्यक्रमे उदाहृते भावादिरूपाऽसंलक्ष्यक्रमस्यापि पदव्यङ्ग्यत्वम् ऊहनीयमित्यर्थः भावादीत्यादिना रसाभासादीनां परिग्रहः । इदमत्रानुसन्धेयम्—भावादीनां तु वाक्येऽपि न रससदृशं चारुत्वं पदप्रकाश्यत्वे सुतराम्, अतस्तत्प्रभेदा नोदाहृतं ग्रन्थकृता । दिङ्मात्रं तु मयोदाह्रियते यथा—

"तन्मञ्जुमन्दहसितं श्वसितानि तानि सा वै कलङ्कविधुरा मधुराननश्रीः ।
अद्यापि मे हृदयमुन्मदयन्ति हन्त ! सायन्तनाम्बुजसहोदरलोचनायाः ॥"

अत्र तत्पदमात्रप्रकाश्यः स्मृतिभावध्वनिः ।

( १०० ) 'भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः ॥'

( १ ) अत्र सदागमशब्दः संनिहितमुपनायकं प्रति सच्छास्त्रार्थमभिधाय सतः पुरुषस्यागम इति वस्तु व्यनक्ति ।

( २ ) ननु सदागमः सदागम इवेति न कथमुपमाध्वनिः । सदागमशब्दयोरुपमानोपमेयभावाविवक्षणात् । रहस्यस्य संगोपनार्थमेव हि ह्यर्थपदप्रतिपादनम् । प्रकरणादिपर्यालोचनेन च सच्छास्त्राभिधानस्यासंबन्धत्वात् ।

( ३ ) 'अनन्यसाधारणधीर्धृताखिलवसुन्धरः ।

( १०० ) शब्दशक्त्युद्भवं पदगतं वस्तुना वस्तुध्वनिमुदाहरति—भुक्तिमुक्तिकृदिति । सखीजनसन्निधावुपनायकमुपस्थितमवलोक्याप्रस्तुतवेदादिप्रसंशाच्छलेन तदागमनाधीनं हर्षं द्योतयन्त्याः कस्याश्चिदुक्तिरियम् । भुक्तिः स्वर्गादिभोगः मुक्तिः कैवल्यं च करोतीति भुक्तिमुक्तिकृत् कर्मकाण्डवेदान्ताभ्यामुभयोपायज्ञापनादिति भावः । तथा एकान्तेन नियमेन ( स्वर्गकामो यजेत इत्यादिविध्यादिभिः करणैः ) सम्यगादेशने हितोपदेशने तत्परः सदागमः वेदादिकम् कस्य आस्तिकजनस्य विज्ञस्य आनन्दनिस्यन्दम् आनन्दप्रवाहम् न विदधाति न करोति अपि तु सर्वस्य करोत्येव निस्यन्देत्यत्र षत्वाभावस्तु "अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु" इत्यनेन वैकल्पिकत्वाद्बोध्य, इति वाच्यार्थः । व्यङ्ग्यार्थस्तु—भुक्तिः सुरतादिभोगः मुक्तिः विरहादिदुःखत्यागः ते करोतीति तादृशः । एकान्तस्य सङ्केतस्थानस्य समादेशने उपदर्शने तत्परः । सतो भवादृशस्य वल्लभस्य आगमः आगमनं कस्य मत्सदृशजनस्य आनन्दनिष्यन्दं प्रमोदप्रस्रवणं न विदधाति अपि तु सर्वस्य विदधात्येव ।

(१) अत्र श्लिष्टसदागमपदस्य प्राधान्याद् व्यञ्जकत्वम् अन्येषां सहकारित्वात्पदव्यङ्ग्यव्यवहार इत्याशयेनाह—अत्रेति । संनिहितं सखीजनादिसन्निधावुपस्थितम् । अभिधाय अभिधावृत्त्या बोधयित्वा ।

अत्र वक्तृबोद्धव्यवैशिष्ट्यबलात् सदागमपदेन प्राधान्येनोपपतिस्तुतिरूपं वस्तु व्यज्यते । अत एवाहुः प्रदीपकाराः—"काचित्सङ्केतदायिनमेवं मुख्यया वृत्त्या शंसति तत्र सदागमपदेन स्तुतिर्व्यज्यते" इति । यद्यपि भुक्तिमुक्त्येकान्तपदानामपि व्यञ्जकत्वमस्ति तथापि तदभावेऽपि सदागमपदमात्रं व्यङ्ग्यबोधने प्रभवति न त्वेतद्रहिता तानीति सदागमपदस्य प्राधान्यमिति पदव्यञ्जकता । "पन्थिअ ण" इत्यादौ तु अनेकपदप्रतिपाद्यं वस्तुव्यङ्ग्यमिति वाक्यव्यञ्जकतैवेति ततोऽस्य भेदः । सदागमपदस्य परिवृत्त्यसहत्वाच्छब्दशक्तिमूलत्वमवगन्तव्यम् ॥

(२) सत्पुरुषागमसच्छास्त्रयोरुपमाध्वनित्वमाशङ्कते—नन्विति । सदागमो वेदादिकमुत्तमं शास्त्रं सदागमः सतः पुरुषस्यागमनमिवेत्यर्थः । उपमाध्वनिरिति । "दुर्गालङ्घितविग्रहः" इतिवदिति भावः । समाधत्ते—सदागमशब्दयोरिति । सदागम इतिशब्दः प्रतिपादको ययास्तयोः सच्छास्त्रोपपत्यागमनयोरित्यर्थः । उपमानोपमेयभावाविवक्षणात् उपमानत्वोपमेयत्वयोर्विवक्षाभावादित्यर्थः । "नोपमाध्वनि"रिति शेषः ।

(३) ननु तदविवक्षणे को हेतुरित्यत आह—रहस्येति । हि यतः रहस्यसंगोपनार्थमेव

राजते कोऽपि जगति स राजा पुरुषोत्तमः ॥'

( ४ ) अत्र पुरुषोत्तमः पुरुषोत्तम इवेत्युपमाध्वनिः । अनयोः शब्दशक्तिमूलौ संलक्ष्यक्रमभेदौ ।

( ५ ) 'सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः ।

---

उनायकानुरागस्य गोपनार्थमेव न तूपमानोमेयभावबोधनार्थमिति भावः । "रहस्या स्त्री नदी भेदे गोपनीयेऽभिधेयवत्" इति मेदिनी । द्व्यर्थशब्दानां प्रतिपादनं प्रयोगः । ननु रहस्यसंगोपनार्थमुपमाचास्त्वित्यत आह—प्रकरणादिति । आदिना तात्पर्यवयोऽव- स्थादीनां परिग्रहः । पर्यालोचनेन अनुसन्धानेन । सच्छास्त्राभिधानस्यासम्बद्धत्वाच्चे- त्यन्वयः । असम्बद्धत्वात् प्रकृतानुपयोगित्वात् । तथा च सच्छास्त्रमापातत एव प्राक- रणिकम् , सत्पुरुषागम एवानुसन्धानेन प्राकरणिकः । अनुसन्धानेन सत्पुरुषागमस्यैव आस्वाद्यत्वेन अप्राकरणिकसच्छास्त्रस्य प्रकृतासम्बद्धत्वात् तस्या आस्वाद्यत्वाभावात् तदुपमाया अपि अनास्वाद्यत्वेन तावता सम्बन्धीकरणस्याप्यनुपयोगात् । एवञ्च यत्र हि शब्दशक्तिमहिम्नापस्थापितो द्वितीयोऽर्थोऽप्रकृततयाऽनुपपद्यमानः प्रकृतस्योपमान- त्वेन स्वात्मानं व्यवस्थापयति तत्रैवोपमाध्वनेर्विषयः । अत्र तु व्यङ्ग्यार्थस्य विवक्षित- तया प्रकृतत्वम् । नच तर्हि प्रकृततया वाच्यः स एवास्तु द्वितीयोऽथ इति वाच्यम् , रहस्य गापनार्थमप्रकृतस्यैव मुख्यतः प्रतिपाद्यमानत्वात् । उक्तं च "द्व्यर्थैः पदैः पिशुन- येच्च रहस्य वस्तु" इति ।

अत्र श्लिष्टस्य सदागमपदस्यैव व्यञ्जकत्वे प्राधान्यम्—अन्यपदानां तत्सहायेन व्य- ञ्जकत्वात् ।

(४) शब्दशक्तिमूलं संलक्ष्यक्रमभेदं पदद्योत्यमलङ्कारध्वनिं दर्शयति-अनन्येति । परोक्षे राजस्तुति वर्णनेयम् । अनन्यसाधारणा अनन्यतुल्या धीर्बुद्धिर्यस्य सः । धृता पालिता कच्छरूपेण पृष्ठे धारिता च वसुन्धरा पृथिवी येन सः । पुरुषाणाम् उत्तमो मनुष्यश्रेष्ठो- नारायणश्च । पुरुषोत्तमत्वं नारायणे कथमिति गीतायां भगवत एवोक्तिः—

"यस्मात्क्षरमतीतोऽहमीश्वरादपि चोत्तमः ।
अतोऽस्मिंल्लोके वेदे च प्रथितः पुरुषोत्तमः ॥" इति ।

तथा जगति भूमण्डले भुवनत्रितये कोऽपि अनिर्वचनीयो नृपतिः "राजा प्रभौ च नृपता" विति मेदिनी । राजते शोभते शासकत्वेन "तमेव भान्तमनुभाति सर्वं" मित्या- दिश्रुतिप्रसिद्धत्वेन वा विराजते इति यावत् ।

( ६ ) अत्रेति । पुरुषोत्तम इव विष्णुरिव । अत्र वाच्यार्थस्य राज्ञः प्राकरणिकादेवोप- माध्वनिरिति बोध्यम् ।

अत्र वागीशा—

"नन्वत्र पूर्वार्द्धेऽपि श्लेषसम्भवेन "दुर्गालङ्घितविग्रहः" इति वद्वाक्यव्यङ्ग्यमेवोप- मानोपमेयत्वमिति चेत् ! सत्यम् , अनेकार्थस्य पुरुषोत्तमपदस्य सार्थकत्वाय एकार्था- नामप्यनन्येतिपदानां व्यर्थकत्वं कल्प्यत इति पुरुषोत्तमपदस्यैव प्रधानत्वम् । "दुर्गा- लङ्घित" इत्यादौ तु बहूनामेव पदानां स्वभावत एवानेकार्थत्वमिति ततोऽस्य भेदः ।

आश्चर्यं तव सौकुमार्यमभितः क्लान्तासि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम् ॥'

( ६ ) अत्र स्वतःसंभविना वस्तुना कृतपरपुरुषपरिचया स्नातासीति वस्तु व्यज्यते ।

---

ननु संज्ञायामेव (संज्ञायामिति शास्त्रेण) समासशासनात् कथं पुरुषोत्तमपदस्यानेकार्थत्वम्, नच सप्तमीसमासस्यैव संज्ञायां विधानात् षष्ठीसमासेन पुरुषश्रेष्ठवाचकत्वमिति वाच्यम् निर्धारणे विहितायाः षष्ठ्याः (न निर्धारणे) इत्यनेन समासनिषेधात्। उच्यते—पुरुषोत्तमयति संसर्गेणोत्कृष्टं करोतीति व्युत्पत्या तस्य पुरुषश्रेष्ठवाचकत्वात्" इति वदन्ति। अनयोरिति । भुक्तिमुक्तिकृदित्याद्यनन्यसाधारणयोरित्याद्योः। संलक्ष्यक्रमस्य ध्वनेर्भेदौ प्रकारौ वस्त्वलङ्कारात्मकाववगन्तव्याविति शेषः ।

( ६ ) अर्थशक्तिरूपेण स्वतः सम्भविना वस्तुना पदगतं वस्तुध्वनिं दर्शयति—सायमिति। वर्त्मनि उपपतिना सह सुरतं विधाय तज्जनितश्रमापनयनाय स्नानादिकृतवर्तीं सखीं प्रति ज्ञातरहस्यायाः कस्याश्चिद् विदग्धायाः उक्तिरियम्। हे सखि ! तव सौकुमार्य्यं सुकुमारत्वं कोमलतेति यावत् आश्चर्य्यम् आश्चर्यभूतम् अनन्यसादृश्यतया अद्भुतमित्यर्थः। येन सौकुमार्य्येण अधुना क्लमसामग्र्यभावे तन्निवर्त्तकसामग्रीसत्त्वे च अभितो बहिरन्तश्च क्लान्तासीत्यत्रान्वयः । तादृशक्लममेव दर्शयति—नेत्रेत्यादिना। ते तव नेत्रद्वन्द्वं लोचनयुगलं कर्त्तृ, अमीलनव्यतिकरं न विद्यते मीलनस्य मुद्रणस्य व्यतिकरः सम्बन्धः पौनःपुन्येन प्रवृत्तिर्वा यत्र तादृशम् आसितुं स्थातुं न शक्नोति न समर्थं भवति एवञ्च मीलनसम्बन्धः सर्वाङ्गीणश्रमं कथयतीति भावः। ननु वर्त्मनि आतपात् क्लेशः कुतस्तवाश्चर्यमत आह—सायमिति । सायं सन्ध्यासमये भानावस्तोन्मुखे इत्यर्थः

अनेनस्नानानन्तरमन्यकार्य्याकरणं प्रतीयते । ननु दिनकृतगृहकृत्येनेदृशः श्रम अत आह—स्नानमिति। स्नानम् अङ्गप्रक्षालनम् उपासितं यत्नाच्चिरकालं कृतम्। तथाच सायं स्नानस्य श्रमनिवृत्तिमात्रफलकत्वात् दिनकृतगृहकर्मश्रमस्य तेनैव निवृत्तिर्जातेति भावः। तथा मलयजेन सुगन्धिना चन्दनेन अङ्गं वक्षःस्थलादिगात्रं समालेपितं सम्यगासमन्तात् लेपितं केनाऽपि चर्चितं वा ननु, लिप्तम् तथा च चन्दनलेपजनितश्रमस्यापि नावकाश इति भावः। ननु स्नानादुत्तरं त्रिमुहूर्त्तात्मकसायंकाले आतपसंभवात् तत एव क्लम अत आह—यातोऽस्तेति। अम्बरस्य आकाशस्य मणिरिव मणिः सूर्यः अस्ताचलस्य मौलिं शिखरमुल्लङ्घ्य यातो गतः। एतेन रात्रिर्जातेति भावः। अत एव सायमित्यनेन न गतार्थता तेनांशतोऽपि उष्णाभावो ध्वन्यते। द्रुतगमनात् क्लममपि निरस्यति—विस्रब्धेति। तथा अत्र कुञ्जादिना घनच्छायामार्गदेशे विस्रब्धं स्वच्छन्दं मन्थरमभीतं च यथा स्यात्तथा आगतिः आगमनम्। तेन वर्त्मनि द्रुतगमनकृतो भयाद्वा न श्रम इति भावः। तस्मात् स च श्रमः सामग्र्यन्तराभावेन केवलसौकुमार्यकृत एवेति अहो जगद्विलक्षणमाश्चर्यभूतं तव सौकुमार्य्यमित्यर्थः। "शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक् ( १९८ पृ० )

(६) अत्र "तव सौकुमार्यमाश्चर्यं येन धुना क्लान्तासि" इति वाच्यार्थरूपेण वस्तुना कृतपरपुरुषपरिचया ( गाढोन्मर्दना ) स्नातासि इति वस्तु अधुना पदेन प्राधान्येन व्यज्यते। तदेवाह—अत्रेति।

( ७ ) तच्चाधुना क्रान्तासि, न तु पूर्वं कदाचिदपि तवैवंविधः क्रमो दृष्ट इति बोधयतोऽधुना पदस्यैवेतरपदार्थोत्कर्षादधुनापदस्यैव पदान्तरापेक्षया वैशिष्ट्यम् ।

( ८ ) 'तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ॥
चिन्तयन्ती जगत्सूतिं परं ब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गतान्या गोपकन्यका ॥' ( युग्मकम् )

(७) नन्वीदृशार्थस्य वाक्यार्थव्यङ्ग्यत्वे वाक्यगतध्वनिरेवायमिति तत्कथं पदगतत्वमित्यत आह—तच्चेति । किञ्चेति चार्थः । तद्व्यङ्ग्यमधुना पदस्यैवेत्युत्तरेणान्वयः । अत्र हेतुगर्भं विशेषणं दर्शयति—अधुना । "कदाचिदपीत्यादि बोधयत" इत्यन्तम् । तथा च तादृशक्रमस्य सौकुमार्यप्रयुक्तत्वेऽन्यस्मिन्नपि दिने स्यात् नच तथाऽतोऽधुना पदादाधुनिकक्रमहेतुलाभ इति भावः । बोधयतः प्रतिपादयतः । नन्वेवमधुना पदस्यैवेति नियमः कथमुत्पद्यते, एवं स्वयमर्थं प्रतिपादयतामन्यपदानामपि व्यञ्जनापकारित्वसम्भवादित्यभिप्रेत्याह—इतरेति । अधुना पदस्येतरपदयोः क्रान्ता असीति पदयोरर्थाभ्यामभिधेयार्थद्वयात् उत्कर्षात् तादृशार्थप्रतिपादने सामर्थ्याधिक्यात् अधुनैव क्रान्ता न ततः पूर्वमेतादृशार्थप्रतिपादनेनैवेति भावः । पदान्तरापेक्षया क्रान्ता असीति पदद्वयापेक्षया । वैशिष्ट्यं तादृशार्थबोधने प्राधान्यम् । अतः "प्रधानेन व्यपदेशा भवन्तीति" न्यायात् अधुना पदार्थप्राधान्येन तावद्वाक्यार्थेन तादृशपदार्थान्तराणामपि परपुरुषपरिचयव्यञ्जकत्वम् । एवञ्च पदगतध्वनिरयम् । "दृष्टिं हे प्रतिवेशिनि" इत्यादौ तु नेदृशं पदमिति वाक्यगतध्वनिरेवेति ततोऽस्य भेदः । अत्र च शब्दानां परिवृत्तिसहिष्णुत्वादर्थशक्तिमूलत्वमवगन्तव्यम् । एवमग्रिमोदाहरणादावपि बोध्यम् ।

( ८ ) २–स्वतः सम्भविना वस्तुना पदगतमलङ्कारध्वनिं दर्शयति—तदप्राप्तीति । श्रीमद्भागवते स्वाम्याद्यवरोधने श्रीकृष्णस्य रासोत्सवे गन्तुमक्षमायाः कस्याश्चिद्गोपिकायाः मुक्तिवर्णनेयम् । युग्मकमिदम्, द्वाभ्यां छन्दोभ्यां वाक्यार्थसमाप्तेः, नतु पद्यद्वयमिदम् । तदुक्तम्—

"द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम् ।
कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतम् ॥" इति ।

तस्य श्रीकृष्णस्य अप्राप्त्या वियोगेन हेतुना यन्महादुःखं तेन तद्भोगेन विलीनानि नष्टानि अशेषाणि समस्तानि पातकानि अनेकजन्मसञ्चितपापानि यस्याः सा तथोक्ता, तथा तस्य श्रीकृष्णस्य चिन्तया भावनया अहर्निशं ध्यानेनेत्यर्थः यो विपुलो महान् आह्लाद आनन्दः तेन तद्भोगेनैव क्षीणः नष्टः पुण्यस्य चयः समूहः यस्याः सा तथोक्ता पापपुण्ययोः फलभोगनाश्यत्वात् "प्रारब्धकर्मणां भोगादेव क्षय" इति स्मरणादिति बोध्यम् । ननु "ऋते ज्ञानान्न मुक्तिः" इति सिद्धान्तात्कथं मुक्तिसम्भव इत्यत आह—चिन्तयन्तीति । जगतः सूतिर्जन्म यस्मात्तं तथोक्तं जगज्जनकं श्रीकृष्णमित्यर्थः । परं सर्वोत्कृष्टं ब्रह्मस्वरूपिणं सच्चिदानन्दरूपं चिन्तयन्ती भावयन्ती ध्यानेन साक्षात्कुर्वतीत्यर्थः, अन्या स्वामिजनाद्यवरुद्धा काचिद् गोपकन्यका, निरुच्छ्वासतया निरुद्धप्राणवायुतया "नास्य प्राणाः समुत्क्रामन्ति अत्रैव समवलीयन्ते" इतिश्रुतेः, मोक्षकाले निरुच्छ्वासता,

( ९ ) अत्राशेषचयपदप्रभावादनेकजन्मसहस्रभोग्यदुष्कृतसुकृतफलराशितादात्म्याध्यवसिततया भगवद्विरहदुःखचिन्ताह्लादयोः प्रत्यायनमित्यतिशयोक्तिद्वयप्रतीतिरशेषचयपदद्वयद्योत्या ।

( १० ) अत्र च व्यञ्जकस्य कविप्रौढोक्तिमन्तरेणापि संभवात्स्वतःसंभविता ।

---

यद्वा निरुच्छ्वासतया प्राणायामेन प्राणोत्क्रमणं विना वा मुक्तिं मोक्षं गता प्राप्ता ।

( ९ ) अत्र श्रीकृष्णवियोगदुःखचिन्ताह्लादयोरशेषदुष्कृतसुकृतफलत्वेनाध्यवसितयोरवगतिरित्यतिशयोक्तिद्वयमशेषचयपदप्राधान्येन व्यज्यते तदेव निरूपयति—अत्रेति । दुष्कृतसुकृतयोः सामस्त्यलाभश्चात्राशेष-चय-पदाभ्याम् । अशेष-चयपदयोः प्रभावात् सामस्त्यवाचकत्वसामर्थ्यात् । कारणसामस्त्येन फलसामस्त्यप्रतीतिर्दुर्वचेति भावः । तादात्म्याध्यवसिततयेत्यस्यायं हेतुः । अनेकजन्मसहस्रेषु भोग्यो यो दुष्कृतसुकृतराशिः पापपुण्यप्रचयस्तस्य तादात्म्येन अभेदेन अध्यवसिततया आरोपविषयतया । प्रत्यायनं प्रकरणवैशिष्ट्येन प्रतिपादनम् । अतिशयोक्तीति । "विषयनिगरणेन विषयितादात्म्यारोपोऽतिशयोक्तिः" इति लक्षणं तस्य यथा—"कथमुपरि कलापिनः कलापः" इत्यत्र प्रकरणवैशिष्ट्याविषयस्य केशपाशस्य लाभ इति विषयनिगरणम् । तथा च प्रकृते अनेकजन्मभोग्यानेकदुःखतत्कालीनविरहदुःखयोर्भेदेऽपि "विलीनाशेषपातका" इत्यत्र चयपदसामर्थ्येन तयोरभेदारोपादन्या अतिशयोक्तिश्चेति । अशेषेति चयेतिपदद्योत्या प्रतीयमाना । अत्र अशेषचयपदयोरेकवाक्यस्थत्वेऽपि द्वाभ्यां व्यङ्ग्यद्वयव्यञ्जनाद्भिन्नवाक्यत्वेन व्यञ्जकत्वमतः पदत्वेनैव व्यञ्जकत्वम् । "दिशि मन्दायते" इत्यादौ तु न किमपि तादृशपदमिति वाक्यगतत्वमेव, नचात्रोक्तव्यङ्ग्यस्य वाच्यसिद्ध्यङ्गतया गुणीभूतव्यङ्ग्यत्वमाशङ्कनीयम्, अन्यत्र तथात्वेऽपि प्रकृते भगवद्विषयकरत्युत्कर्षप्रयोजकतया वाच्यादतिशयितत्वेन तदप्रसङ्गात् । वाच्यादनतिशयत्वेन हि व्यङ्ग्यस्य गुणीभावः । स वाच्यसिद्ध्यङ्गतया क्वचित्क्वचित्प्रकारान्तरेणेत्यष्टौ गुणीभूतव्यङ्ग्यस्य भेदाः, न तु वाच्यसिद्ध्यङ्गत्वं गुणीभावनियतम्, वाच्यातिशयित्वे तदसम्भवात् ।

तातस्तु—अत्रेति प्रतीकमादाय 'तदप्राप्तिदुःखस्य तच्चिन्ताह्लादस्य चोपभोगेन तज्जनकपापपुण्ययोरेव क्षयः सम्भवति, न तु समस्तपापपुण्ययोः । अतः समस्तपापपुण्यनाशकसमस्ततत्फलदुःखसुखेष्वनुक्तेषु उक्तदुःखसुखयोरारोपः, अयमेवाचात्रातिशयोक्तिरलङ्कारः । अतोऽत्र तदलङ्कारद्वयम् । अनुक्ते उपमेये उक्तोपमानारोपस्य तथात्वात् । यथा—"कमलमनम्भसी" त्यत्रानुक्ते उपमेये मुखे उपमानकमलारोपः । प्रकृतान्यत्रोमेयानि अनुक्तानि उक्तसुखदुःखद्वयं चाऽप्रकृतत्वादुपमानानि अतस्तदारोपादतिशयोक्तिद्वयम् । उपमेयस्यानुक्तत्वेन चातिशयोक्त्यलङ्कारो व्यङ्ग्य एव । तद्व्यञ्जकौ चात्राशेषचयशब्दौ पापपुण्ययोः अशेषचयत्वाभ्यां नाशकयोर्दुःखसुखयोरशेषचयस्यव्यञ्जनात्" इत्याह ।

( १० ) नन्वत्र कुतः स्वतः सम्भवितेत्यत आह—अत्र चेति । व्यञ्जकस्य व्यञ्जनाद्वारा उक्तातिशयोक्तिद्वयबोधकस्य अशेषति-चयेति पदद्वयरूपस्य वाक्यार्थस्य वस्तुनः प्रौढोक्तिम्, कवेस्तन्निबद्धवक्तुश्च निरङ्कुशकल्पनाबलात्कथनम्, अन्तरेण रहितेनापि सम्भवात् तत्तदनेकजन्मसञ्चितदुष्कृतसुकृतविशेषणत्वे सम्भवपरत्वात्, स्वतः सम्भविता व्यञ्जकस्येति पूर्वेणान्वयः ।

३—तत्रैव स्वतः सम्भविनालङ्कारेण पदगतो वस्तुध्वनिर्यथा—

"क्षणदाऽसावक्षणदा वनमवनं व्यसनमव्यसनम् ।
बत वीर ! तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम्" ॥

अत्र पराङ्मुखे त्वयि पराङ्मुखं सर्वमित्यर्थान्तरन्यासे न विधिरपि त्वामनुवर्त्तते, इति वस्तु सर्वपदप्राधान्येन व्यज्यते । व्यञ्जकस्य सर्वपदस्य च नानार्थत्वाभावाद्वस्तुनोऽर्थशक्तिमूलालङ्कारव्यङ्ग्यता बोध्या । "अभिनवनलिनी" इत्यादौ तु न किमपि पदं तादृशमिति वाक्यगतत्वमेवेति भेदो ज्ञेयः ।

४—तत्रैव स्वतः सम्भविनालङ्कारेणालङ्कारस्य ध्वनिः पदगतो यथा—

"तव वल्लभस्य प्रभाते आसीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसम्मुखम् ॥"

रात्रावतिशयचुम्बितदयिताधरां वधूं प्रति कस्यचिदुक्तिरियम् ।

अत्राधरो म्लानकमलमिति रूपकालङ्कारेण त्वया तथास्याधरस्य मुहुर्मुहुः चुम्बनं कृतं येन तस्य म्लानत्वमिति काव्यलिङ्गालङ्कारो म्लानकमलदलपदप्राधान्येन व्यज्यते । अत एवात्र पदगतत्वम् । "गाढकान्तदशनक्षतव्यथा" इत्यत्र तु नेदृशं पदमिति वाक्यगतत्वमेवेति भेदः ।

५—तत्रैव कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः पदगतो यथा—

"रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ।
एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः ॥"

मानिनीं प्रति माननिर्वाहः कठिन इत्येतद्बोधिका सख्युक्तिरियम् ।

अत्र कविप्रौढोक्तिसिद्धेन वस्तुना "स्ववशासकानङ्गारवशेन कुशलैः कामिभिरुपभोगपरैरेव निशातिवाह्यते" इति वस्तु भुवनराज्यपदेन प्राधान्येन व्यज्यते । अत एव पदगतत्वम् । "सज्जयति सुरभिमासः" इत्यत्र तु तादृशपदाभावात् वाक्यगतत्वमित्यनयोर्भेदः ।

६—तत्रैव कविप्रौढोक्तिसिद्धेन वस्तुनालङ्कारध्वनिर्यथा—

"निशितशरधियार्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले ।
दिशि निपतति यत्र सा च तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ॥"

अवस्थाः प्रागुक्ता विरहकालीना दश कामदशाः ।

अत्र "व्यतिकरमेत्यावस्थाः समुन्मिषन्तीति" वस्तुना परस्परविरुद्धा अपि हसितरुदितनिर्वेदोन्मादादयोऽवस्थाः युगपदुद्भवन्तीति विरोधालङ्कारो व्यतिकरपदेन प्राधान्येन व्यज्यते । अत्र शरे योद्भ्रा स्वबलार्पणं तत्पातदिशि चावस्थासमुन्मेष इति सर्वं कविप्रौढोक्तिमात्रसिद्धम् । व्यतिकरपदस्य प्राधान्यात् पदगतत्वम् । "रजनीषु विमलभानोः" इत्यादौ तु नेदृशं किमपि पदं व्यञ्जकमिति वाक्यगतत्वमेवेति भेदः ।

७—तत्रैव कविप्रौक्तिसिद्धेनालङ्कारेण वस्तुध्वनिः पदगतो यथा—

"सन्तापभाजा हृदयेन हारो निवार्यमाणोऽपि मुहुर्मृगाक्ष्याः ।
वक्षोजभारस्य वयस्य भावाद्विशुद्धजातिर्नचलत्यमुष्मात् ॥"

नायिकाविपरीताचरणसूचिका कवेः प्रौढोक्तिरियम् । विशुद्धजातिर्विशुद्धमुक्ताजातिघटितः ।

अत्र विशुद्धजातित्वलक्षणकाव्यलिङ्गालङ्कारेण हारोऽनवरतं कम्पमान एवास्ते इति—

( ११ ) 'पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीम् ।
देव ! त्रिपथगात्मानं गोपयत्युग्रमूर्धनि ॥'

इदं मम ।

( १२ ) अत्र पश्यन्तीति कविप्रौढोक्तिसिद्धेन काव्यलिङ्गालंकारेण न केऽप्यन्ये दातारस्तव सदृशा इति व्यतिरेकालंकारोऽसंख्यपदद्योत्यः ।

( १३ ) एवमन्येष्वप्यर्थशक्तिमूलसंलक्ष्यक्रमभेदेषूदाहार्यम् ।

"न चलति" पदद्योत्यं वस्तु । अत्र मुक्ताजातेरत्यन्तशुभ्रत्वरूपे विशुद्धत्वे ब्राह्मणत्वादि कुलविशुद्धत्वाऽध्यवसायात्तस्य विशुद्धत्वस्याचलनहेतुता स्वतोऽसम्भविनीति कविप्रौढोक्तिसिद्धत्वम् । तथा "न चलती"ति पदस्य प्राधान्यात् पदगतत्वम् । "दशाननकिरीटेभ्यः" इत्यादौ तु न किमपि पदमीदृशं व्यञ्जकमिति वाक्यगतत्वमेवेत्यनयोर्भेदः ।

( ११ ) ८-कविप्रौढोक्तिसिद्धेनालङ्कारेणालङ्कारध्वनिं पदगतं स्वयमेवोदाहरति— पश्यन्तीति । राजस्तुतिरियम् । हे देव ! राजन् ! "राजा भट्टारको देवः" इत्यमरः, देवं हृषीके देवस्तु नृपतौ तोयदे सुरे "इति हैमः,

तव दानजलवाहिनीं वित्तप्रदानकालीनोत्सर्गजलनदीम् , असंख्यपथगां नानादिक्षु वितरणादनन्तमार्गगामिनीम् , पश्यन्ती अवलोकयन्ती त्रिपथगा त्रिपथगामिनी भागीरथी उग्रमूर्द्धनि हरशिरसि आत्मानं स्वशरीरं गोपयति व्रीडया तिरोदधाति । त्वद्दानजलवाहिन्या नद्या असंख्यपथगामित्वदर्शनात् पथत्रयमात्रगामिन्याः लज्जा सम्भवत्येवेति भावः ।

( १२ ) अत्रेति । कविप्रौढोक्तिमात्रसिद्धेन न तु वास्तविकेनेत्यर्थः । प्रवाहरूपायाः दर्शनासम्भवात् । यतः "पश्यन्ती अवलोकयन्ती अत एव गोपयतीति" पदार्थहेतुककाव्यलिङ्गालङ्कारेणेत्यर्थः । असंख्यपदद्योत्यो व्यङ्ग्यः । अत एव पदगतत्वम् । "धम्मिल्ले नवमल्लिकासमुदयः" इत्यादौ तु नेदृशं किमपि पदमिति वाक्यगतत्वमेवेति भेदः ।

( १३ ) एवमन्येष्वपीति । उदाहृतभिन्नेषु स्वतः सम्भव्यलङ्कारेण वस्तुध्वन्यादिष्वित्यर्थः । उदाहार्यमिति । तत्र स्वतः सम्भव्यलङ्कारेण वस्तुध्वन्यादिषु पञ्चानामुदाहृतं मया, अथावशिष्टमुदाह्रियते—

९—कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिः पदगतो यथा—

"नव पूर्णिमा मृगाङ्कस्य सुभग ! कस्त्वमसि भण मम सत्यम् ।
का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥"

बहुपरस्त्र्यासक्तं स्वामिनं प्रति खण्डिताया उक्तिरियम् ।

अत्र नवत्वेन चाञ्चल्यं क्षणिकानुरागित्वम् । पूर्णिमाचन्द्रः प्रदोषे रज्यतेऽनन्तरं तु विरज्यते । एवं पूर्णिमा मृगाङ्कत्वेन नायिकान्तरानुरागित्वं कलङ्कित्वम् प्रदोषपदेन प्रकृष्टदोषवत्त्वम् । रजनीपदेन मालिन्यं च व्यज्यते । अत्र कविनिबद्धानायिका वक्त्री तथा च यथोक्तवाक्यार्थरूपेण वस्तुना मयीवान्यस्यामपि नवेत्यादिपदेन प्रथममासक्तस्त्वमिति प्रदोषेत्यादिपदेन तु तत इत्युभयपदद्योत्यं वस्तु व्यज्यते, अत्रोभयोः पदयोः प्राधान्यात्पदगतत्वमवगन्तव्यम् । "सज्जयति सुरभिमास" इत्यादौ तु न किमपि पदं प्रधानमिति वाक्यगतत्वमिति भेदः । नचात्र "प्रदोषरजनीव"इत्युपमालङ्कारसत्वेन

( १४ ) तदेवं ध्वनेः पूर्वोक्तेष्वष्टादशसु भेदेषु मध्ये शब्दार्थशक्त्युत्थो व्यङ्ग्यो वाक्यमात्रे भवन्नेकः । अन्ये पुनः सप्तदश वाक्ये पदे चेति चतुस्त्रिंशदिति पञ्चत्रिंशद्भेदाः ।

वस्तुध्वनित्वं कथमिति वाच्यम्, तदनुपादानेऽपि "प्रदोषरजनी तव का" इत्येतावतैव व्यङ्ग्यव्यञ्जनं सम्भवतीति वस्तुमात्रस्य व्यञ्जकत्वोपपत्तेः । यथा वा नैषधे—

"पृथुवर्त्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया ।
विधिरेकचक्रचारिणं किमु निर्मित्सति मान्मथं रथम् ॥"

अत्र कविनिबद्धहंसप्रौढोक्तिसिद्धेन वाक्यार्थरूपेण वस्तुना दमयन्त्या नितम्बभागोऽतीव कामोद्दीपक इति वस्तुध्वनिर्मान्मथपदव्यङ्ग्यः ।

१०—कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुनालङ्कारध्वनिर्यथा—

"सखि ! नवनिधुवनसमरेऽङ्कपाली सख्या निविड्या ।
हारो निवारित एवोच्छिद्यमाणस्ततः कथं रमितम् ॥"

नवोढां नायिकां प्रति अत्यन्तविश्वस्ताया रसज्ञाया सख्या उक्तिरियम् ।

अत्र "निधुवनसमरे" इति रूपकस्य व्यञ्जनायामप्रयोजकतया वाच्येन वस्तुमात्रेण हारच्छेदानन्तरं प्रौढाङ्गनारताद्विलक्षणं नवोढायास्ते रतमभूत्तत्कथय कीदृगिति व्यतिरेकालङ्कारः कथंपदद्योत्य इति । कथंपदप्राधान्यादेव पदगतत्वम् "रजनीषु विमलभानो" रित्यादिषु तु नैतादृशं पदमिति वाक्यगतत्वमेव ।

११—कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुध्वनिर्यथा—

विश्रृङ्खलां त्वां सखि ! दृष्ट्वा कुटिलेन तरलतरदृष्टिम् ।
द्वारस्पर्शमिषेण चात्मागुरुक इति पातयित्वा विभिन्नः ॥

नदीकूले लतागहने कृतसङ्केतमप्राप्तं गृहप्रवेशसमये पश्चादागच्छन्तं कामुकं दृष्ट्वा पुनर्नदीगमनाय बुद्धिपूर्वं द्वारस्पर्शव्याजेन घटं स्फोटितवतीं नायिकां प्रति सख्याः "त्वदभिप्रायोऽवगतो मया तत्समाश्वासं विधाय समीहितसिद्धये व्रज अहं त्वद्श्वश्र्वादिनिकटे सर्वं समाधास्ये" इत्यभिप्रायगर्भाऽविदग्धजनप्रतारणाय उक्तिरियम् । विभिन्न इत्यन्तर्भावितण्यर्थोऽयम्, तेन विभेदित इत्यर्थः । तथा च नायं द्वारस्पर्शाद्घटनाशस्त्वया कृतः किन्तु गुरुतया परपीड़कत्वात् घटेनैव स्वात्मा विभेदितः इत्यपह्नुतिरत्राङ्कारस्तेन द्वारस्पर्शमिषेणेति पदद्योत्यं वस्तु द्योत्यते । द्वारस्पर्शमिषेणेति पदप्राधान्यात् पदगतत्वमस्य "दशाननकिरीटेत्यादौ तु न तथेति वाक्यगतत्वमेवेति भेदः ।

१२—कविप्रौढोक्तिसिद्धेनालङ्कारेणालङ्कारध्वनिर्यथा—

"ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा ।
वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयम् ॥"

वृद्धपरवधूमनुरक्तं नायकमुपहसन्त्यास्तरुण्या उक्तिरियम् । अत्र परवधूत्वेन सा तव हृदयं हरतीति काव्यलिङ्गालङ्कारेणास्मानुज्झित्वा वृद्धां परवधूमभिलषसीति त्वदाचरितं वक्तुं न शक्यत इत्याक्षेपालङ्कारः प्राधान्येन परवधूपदेन द्योत्यते । "महिला सहस्रभरिते" इत्यादौ तु नैतादृशं किमपि पदं व्यञ्जकमिति वाक्यगतत्वमेवेति भेदः ।

( १४ ) एतावता पुनर्ध्वनिसंख्याः गणयितुमुपक्रमते—तदेवमिति । शब्दार्थशक्त्युत्थः

( १५ ) **प्रबन्धेऽपि मतो धीरैरर्थशक्त्युद्भवो ध्वनिः ॥ १० ॥**

( १६ ) प्रबन्धे महावाक्ये । अनन्तरोक्तद्वादशभेदोऽर्थशक्त्युत्थः ।

( १७ ) यथा महाभारते गृध्रगोमायुसंवादे—

( १८ ) 'अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसंकुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयंकरे ॥
न चेह जीवितः कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥'

शब्दार्थोभयशक्तिमूलः व्यङ्ग्यो व्यङ्ग्यध्वनिरिति यावत्, वाक्यमात्रे इति । मात्रपदेन पद-व्यवच्छेदः, हेतुस्तत्र पूर्वमेव दर्शितः । पञ्चत्रिंशदिति-द्विविधः शब्दशक्तिमूलः, द्वादशविधोऽर्थशक्तिमूलः, द्विविधोऽविवक्षितवाच्यः, एक असंलक्ष्यक्रमव्यङ्ग्य इति सप्तदशानां पदवाक्यगतत्वेन चतुस्त्रिंशत्, शब्दार्थोभयशक्त्युत्थस्त्वेक इति मिलित्वा पञ्चत्रिंशदित्यर्थः ।

( १५ ) एवं ध्वनेः पञ्चत्रिंशद्भेदान् निरूप्य प्रकारान्तरेण भेदान् निरूपयति—प्रबन्धेऽपीति । अर्थशक्त्युद्भवोऽर्थशक्तिमूलो द्वादशविधो ध्वनिः प्रबन्धेऽपि न केवलं पदवाक्ययोरेव धीरैर्मतः । तथाच पूर्वोक्तैः पञ्चत्रिंशद्विधैः सह मिलित्वा एतावन्तं यावत् सप्तचत्वारिंशद्भेदा ध्वनयो भवन्ति ।

( १६ ) प्रबन्धपदस्यार्थं निरूपयति—प्रबन्ध इति । महावाक्यमिति,। कुलकरूपमहावाक्यमित्यर्थः । प्रदीपकारास्तु संघटितनानावाक्यसमुदायः, स च ग्रन्थरूपस्तदवान्तरप्रकाररूपश्चेत्याहुः । भोजराजस्तु—

"पदं चैव पदार्थश्च वाक्यं वाक्यार्थ एव च ।
विषयोऽस्याः प्रकरणं प्रबन्धश्चाभिधीयते ॥" इत्याह ।

ननु अर्थशक्त्युद्भव एक एवात्र गृह्यते ? उत द्वादशविधः ? इत्याशङ्क्य स्फुटीकरोति—अनन्तरोक्ता इति । अनन्तरोक्ताः पूर्वप्रदर्शिता द्वादशभेदाः प्रकारा यस्य सस्तथोक्तः ।

( १७ ) पदवाक्ययोरुदाहृतम्, प्रबन्धेतूदाहर्तुमाह—यथा महाभारते गृध्रगोमायुसंवाद इति ।

( १८ ) पद्यद्वयात्मके प्रबन्धे स्वतःसम्भविना वस्तुना वस्तुध्वनिमुदाहरति—अलमिति । महाभारते शान्तिपर्वण्यापद्धर्मे त्रिपञ्चाशदधिकशततमाध्याये मृतं बालं सायङ्काले श्मसाने समानीतं दृष्ट्वा दिवसे एव मृतमांसभक्षणसमर्थस्य रात्रावन्धत्वादसमर्थस्य गृध्रस्य तद्बन्धुजनविसर्जनपरमिदं श्लोकद्वयात्मकं वचनम् । गृध्रैः मांसादैः पक्षिविशेषैः गोमायुभिः शृगालैश्च सङ्कुले परिव्याप्ते तथा कङ्कालानि पूर्णमानुषास्थीनि यत्रैवंभूते अस्थिप्राये इत्यर्थः । "स्याच्छरीरास्थि कङ्कालः" इत्यमरः, अत एव घोरे भवादृशां भयङ्करे, सर्वेषां प्राणिनां शरीरिणां भयङ्करे त्रासोत्पादके, अस्मिन् श्मशाने स्थित्वा अलम् । निष्फला सम्भाविताानिष्टा चैवंविधस्थले भवादृशां स्थितिरत्यन्तायोग्येति भावः । ननु बालकोजीवनं भविष्यतीत्याशयात्र स्थीयत इत्यत आह—नचेहेति । इह जगति कालधर्मं मृत्युम् उपागतः प्राप्तः प्रियो बन्धुः द्वेष्यः शत्रुर्वा यदि वा अथवा कश्चित् तटस्थोऽपि वा, यद्वा प्रियाप्रियान्यतरोऽपि न जीवितः अद्यावधिपर्यन्तमिति शेषः । तथा च मृतस्य पुनरुज्जीवनमसम्भावितमिति भावः । तदेतत्समर्थयति—प्राणि-

( १९ ) इति दिवा प्रभवतो गृध्रस्य श्मशाने मृतं बालमुपादाय तिष्ठतां तं परित्यज्य गमनमिष्टम् ।

( २० ) 'आदित्योऽयं स्थितो मूढाः ! स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।

नामिति : प्राणिनां जनानाम् ईदृशी मरणानन्तरमपरावृत्तिरूपा गतिरवस्था प्राणमुत्सृज्यानन्तरं पुनर्न जीवन्ति "स्वभावो दुरतिक्रमः" इति न्यायात् स्वभावस्य दुरतिक्रमत्वात् परितापो न विधेय इति भावः ।

अत्र पद्यान्तरसचिवस्यैवास्य श्लोकस्य महावाक्यतेति स्फुटमेव ।

( १९ ) व्यङ्ग्यार्थं दर्शयति— इतीति । दिवा दिवसे प्रभवतः रात्रावन्धत्वाद्दिवस एव शवमांसभक्षणसमर्थस्य । गमनमिष्टमिति । एतस्य "वाक्यसमूहेन द्योत्यत" इत्यग्रिमेणान्वयः । वक्तुर्गृध्रस्य इष्टं मृतबन्धूनां गमनमित्यर्थः । एवञ्च बालकं त्यक्त्वा यूयं गच्छतेति वस्तु स्वतः सम्भविवस्तुनः उक्तप्रबन्धार्थस्य व्यङ्ग्यमित्यर्थः । तथा च स्वतः सम्भविना वाच्यार्थरूपेण वस्तुना पुरुषविसर्जनरूपं वस्तु व्यज्यते तद्व्यञ्जकश्चायं पद्यद्वयात्मको गृध्रवचनरूपः प्रबन्ध एव न तु तद्गतं पदं वाक्यं वेति प्रबन्धगतत्वमेव । "तदप्राप्तिमहादुःखेत्यादिश्लोकद्वयस्य, महावाक्यत्वेऽपि तत्र व्यञ्जकपदद्वयसत्वात् तद्द्वयद्वयस्यैवोदाहरणत्वेन तद्दर्शितमिति बोध्यम् ।

( २० ) इत्थं गृध्रसम्वादे वस्तुध्वनिमुदाहृत्य गोमायुसम्वादेऽप्युदाहरति—आदित्योऽयमिति । उक्तगृध्रवचनानुसारेण बालकशवमुत्सृज्य गन्तुमुत्सुकान् प्रति रात्रावेव शवमांसभक्षणसमर्थस्य तत्र स्थितस्य दिवान्धस्य श्रृगालस्य मृतबालकबन्धूनां श्मशाने रात्रि यावत् अवस्थानार्थं वचनमिदम् । हे मूढा मूर्खाः ! गृध्रवचनमात्रेणैव प्रस्थातुमुद्युक्तत्वादियमुक्तिः अयं आदित्यो भास्कर "आदित्यो भास्करो देवः" इति विश्वः, स्थितः अस्तीति शेषः । आदित्यसत्वात् युष्माकं रात्रिञ्चरेभ्योऽपि भयमधुना नास्तीति सूचितम् । अतो यूयं साम्प्रतं स्नेहं पुत्रस्यास्य वियोगकालिकं तत्परित्यागासहिष्णुत्वरोदनादिरूपं प्रेम कुरुत विधत्त । मृतस्य पुनरुज्जीवनासम्भवात् निष्फलमेवात्रावस्थानं स्यादित्यत आह—बहुविघ्न इति । अयं सन्ध्यात्मको मुहूर्त्तो बहुविघ्नो भूतावेशादिरूपविघ्नबहुलः । तथा च दारुणसमयत्वात् भूतावेशादिरूपग्रहग्रस्तश्चत्तदा एतन्मुहूर्त्तापगमे तद्विघ्ननाशोपशान्तावेशो बालः कदाचिज्जीवेदित्यर्थः । अपिः सम्भावनायाम् एतेन भूताद्याविष्ट एवायं बालको न तु मृत इत्यस्ति जीवनस्याशेति द्योत्यते । एवं जीवनसम्भावनामुत्पाद्य मोहयितुमाह—अमुमिति । कनकवर्णवत् सुवर्णवदाभाकान्तिर्यस्य तादृशम्, कनकवर्णाभत्वे रूपविपर्ययाभावान्न मृतः किन्त्वस्त्याशा जीवनस्येति ध्वनितम् । तथा न प्राप्तम् आसादितं यौवनं येन तादृशम्, अथापि परदारगमनादि पापराहित्येनायुः सत्त्वं प्रतीयते, तेनाऽपि मर्त्तुं नार्हतीति सूचितम् । परदारगमनेनायुः क्षीणता भवत्येव तदुक्तं मनुना—

"नहीदृशमनायुष्यं लोके किञ्चन विद्यते ।

गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः ॥'

( २१ ) इति निशि समर्थस्य गोमायोर्दिवसे परित्यागोऽनभिलषित इति वाक्य-समूहेन द्योत्यते । अत्र स्वतःसंभवी व्यञ्जकः ।

( २२ ) एवमन्येष्वेकादशभेदेषूदाहार्यम् ।

( २३ ) एवं वाच्यार्थव्यञ्जकत्वे उदाहृतम् ।

( २४ ) लक्ष्यार्थस्य यथा—'निःशेषच्युतचन्दनम्–' इत्यादि ।

( २५ ) व्यङ्ग्यार्थस्य यथा—'उअ णिच्चल–' इत्यादि ।

---

याद‍ृशं पुरुषस्येह परदारोपसेवनम्" । इति ।

अमुं बालं केवलात् गृध्रवाक्यात् अविशङ्किताः लोकापवादशङ्कारहिताः कथं त्यज-ध्वम्। अत्रार्षमात्मने पदम् ।

( २१ ) व्यङ्ग्यार्थं दर्शयति–इतीति । निशि समर्थस्य दिवान्धतया रात्रावेव मांसभ-क्षणसमर्थस्येत्यर्थः । गोमायोः जम्बूकस्य परित्यागो बालकस्येति शेषः । अनभिलषि-तेत्यत्र "मतिबुद्धिपूजार्थेभ्यश्चेति सूत्रेण कर्मणि क्तः, क्तयोगात्कर्त्तरि षष्ठी । तथा च स्वतः सम्भविना वाच्यार्थरूपेण वस्तुना जनव्यावर्त्तनरूपवस्तु प्रतीयत इति भावः । कीदृशो-ऽत्र व्यञ्जक इति जिज्ञासायामाह—अत्रेति । स्वतःसम्भवी वाक्यार्थ इति शेषः । पद्य-द्वयात्मको गोमायुवचनरूपः प्रबन्ध एव व्यञ्जकः न तु तद्गतं पदं वाक्यं वेति प्रबन्ध-गतत्वमेव ।

( २२ ) अर्थशक्त्युद्भवध्वनेर्द्वादशभेदानां मध्ये एक एवोदाहृतः अन्ये त्वेकादशभेदा अपि कुतो नोदाहृता इत्यत आह—एवमन्येष्विति । ग्रन्थविस्तरभयान्मया नोदाहृताः स्वयमेव लक्षणतोऽनुसर्त्तव्याः, तदाह—उदाहार्य्यमिति । तथा च दिङ्मात्रमुच्यते—रघुवंशे "समयुज्यत भूपतिर्युवा" इत्यादिना "उभयीं सिद्धिमुभाववापतुः" इत्यन्ते तुल्ययोगितया काव्यलिङ्गेन वा रघुराघवयोर्व्यतिरेकालङ्कारः प्रतीयते । अपि च कुमारसम्भवे–हिमगिरिवर्ण-नप्रौढोक्त्यप्रौढोक्तिसिद्धालङ्कारसंसृष्टे हिमगिरेरितरोत्कर्षः प्रतीयते । मूलेऽर्थशक्त्युद्भवेत्यु-पलक्षणम्—शब्दशक्त्युद्भवोऽपि क्वचिद् प्रबन्धव्यङ्ग्यो दृश्यते, यथा माघकाव्ये शिशुपा-लदूतोक्तौ सन्धौ काव्ये वस्तुमात्ररूपो विग्रहः उपमाध्वनिरपि तथाविधः सम्भाव्यते ।

( २३ ) एवमिति । एवं "दृष्टि हेप्रतिवेशिनि" इत्यादिकम् ।

( २४ ) लक्ष्यार्थस्येति । व्यञ्जकत्व इति शेषः । एवमुत्तरत्राऽपि । "निःशेषच्युतचन्द-नम्" इत्यादौ हि स्नानकार्यमिदं सर्वमिति "स्नातुमितो गताऽसी" त्यनेन बोधयन्त्या आपाततो दुर्विधानभिधया बोधयितुं तथा प्रयुक्तम्, किन्तु पश्चात्तस्यैव अनुरणनरीत्या स्नातुं न गताऽसीति विपरीतलक्षणया लक्ष्यार्थरूपेण स्वतःसम्भविना वस्तुना "भम धम्मिअ" इत्यादाविवात्र तदन्तिकमेव रन्तुं गतासीति अधमपदद्योत्यो वस्तुध्वनिः । नायकेऽधमत्वं तु नीचस्त्रीगमनादेवेति बोध्यम् ।

( २५ ) व्यङ्ग्यार्थस्येति । "उअ णिच्चल" इत्यादौ हि बलाकाया निष्पन्दत्वेन वाच्येन विश्वस्तत्वम् अचेतनोपमया लेशतोऽपि शोभाभावस्तेन निर्जनत्वं च गम्यते एवञ्च तद्दे-शस्य निर्जनत्वरूपेण स्वतः सम्भविना वस्तुना सङ्केतस्थानमेतदित्यत्रागन्तव्यमिति निष्पन्दपदव्यङ्ग्यो वस्तुध्वनिः ।

( २६ ) अनयोः स्वतःसंभविनोर्लक्ष्यव्यङ्ग्यार्थौ व्यञ्जकौ ।

( २७ ) एवमन्येष्वेकादशभेदेषूदाहार्यम् ।

( २८ ) पदांशवर्णरचनाप्रबन्धेष्वस्फुटक्रमः ।

( २९ ) असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिस्तत्र पदांशप्रकृतिप्रत्ययोपसर्गनिपातादिभेदादनेकविधः । यथा—

( ३० ) 'चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।

---

( २६ ) अनयोरिति । निःशेषच्युतचन्दनम्" उअ णिच्चल" इत्याद्योरुदाहरणयोरित्यर्थः ।

( २७ ) एवमिति । अन्येषु स्वतः सम्भविना वस्तुनालङ्कारध्वनिप्रभृतिभेदेषु । एकादशत्वं लक्ष्यव्यङ्ग्यप्रत्येकापेक्षया । उभयापेक्षया तु द्वाविंशतिरितिद्रष्टव्यमिति वागीशः । उदाहार्यमिति ।

तत्र स्वतः सम्भविना लक्ष्यार्थरूपेण वस्तुनाऽलङ्कारध्वनिर्यथा—

"वधानद्रागेव द्रढिमरमणीयं परिकरं किरीटे बालेन्दुं नियमय पुनः पन्नगगणैः ।
न कुर्यास्त्वं हेलामितरजनसाधारणधिया जगन्नाथस्यायं सुरधुनि ! समुद्धारसमयः ॥"

अत्र हि जगन्नाथ इति वाच्योऽर्थः प्रकृतानुपयुक्तपापविशिष्टत्वेन लक्ष्यते अपि पुनरितरजनसाधारणो नायं पापीति जगन्नाथो जगन्नाथ इव पापीयानित्यनन्वयालङ्कारं व्यञ्जयति । उदाहरणान्तरमाकरतोऽनुसन्धेयं ग्रन्थगौरवभयान्नेह तन्यते ।

( २८ ) असंलक्ष्यक्रमव्यङ्ग्यध्वनेर्भेदान् दर्शयति—पदांशेति । न स्फुटो न स्पष्टः क्रमो व्यङ्ग्यव्यञ्जकयोः पौर्वापर्यं यत्र सः तथोक्तः, असंलक्ष्यक्रमव्यङ्ग्य इत्यर्थः । स च ध्वनिः पदानां "सुप्तिङन्तमिति" पाणिन्यनुशासनात् तिङ्सुबन्तरूपाणाम् अंशेषु प्रकृतिप्रत्ययोपसर्गनिपातादिषु वर्णेषु "मूर्ध्निवर्गान्त्यगा युक्ताः"इत्यादिनाष्टमे वक्ष्यमाणेषु अक्षरविशेषेषु रचनायां वैदर्भ्यादिसंज्ञिकायाम् अष्टमे वक्ष्यमाणायाम्, यद्वा रचनासु दीर्घसमासादिरूपविन्यासविशेषेषु प्रबन्धेषु महावाक्येषु बहुवचनात् पदे वाक्ये च सम्भवतीति षड्विध इत्यर्थः । यद्यपि षड्विधत्वाऽभ्युपगमे "तत्राद्यो रसभावादिरेक एवात्र गण्यते" इति पूर्वोक्तेन सह विरोधः प्रतीयते तथापि तदवान्तरभेदाऽभ्युपगमेन समाधेयम् ।

( २९ ) अस्फुटक्रमपदस्य असंलक्ष्यक्रमव्यङ्ग्यध्वनिरर्थ इत्याह—असंलक्ष्येति । पदांशपदस्यार्थं बोधयितुमाह—तत्रेति । तत्र पदांशादिषु मध्ये । प्रकृतिः धातुरूपा नामरूपा चेति द्विविधा । तत्त्वञ्च प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तत्वं प्रत्ययविधानावधित्वं वा बोध्यम् । प्रत्ययः प्रत्येति अर्थं बोधयतीति प्रत्ययः तत्त्वञ्च प्रत्ययाधिकारपठितत्वे सत्यर्थबोधकत्वम् । उपसर्गाःप्रादयः । निपाता अत्राव्ययरूपाः, तेन द्योतकमात्रतया उपसर्गवत् स्वान्वयि पदांशत्वमित्यभिप्रायः । आदिशब्देन प्रथमपुरुषमध्यमपुरुषोत्तमपुरुषादीनां परिग्रहः ।

( ३० ) तत्र प्रकृतिरूपपदांशगतध्वनेरुदाहरणं दर्शयति—चलापाङ्गामिति । अभिज्ञानशाकुन्तले शकुन्तलां व्याकुलयन्तं भ्रमरं प्रति दुष्यन्तस्योक्तिरियम् । हे मधुकर ! भ्रमर ! त्वं चलौ तव दंशनभयाच्चपलौ अपाङ्गौ नेत्रप्रान्तभागौ यस्यास्ताम्, "अपाङ्गौ नेत्रयो·

करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती ॥'

( ३१ ) अत्र 'हताः' इति न पुनः 'दुःखं प्राप्तवन्तः' इति हन्प्रकृतेः ।

( ३२ ) 'मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु ॥'

---

रन्तौ" इत्यमरः, अत एव वेपथुमतीं त्वद्भयेन कम्पमानाम्, अतिचपलामित्यर्थः दृष्टिं स्पृशसि, रहस्यं गोपनीयम आचष्टे आख्याति वेति रहस्याख्यायी गुप्तविषयभाषीव, कर्णान्तिकचरः श्रवणेन्द्रियसमीपचारी सन्, मृदु कोमलम् अस्फुटं वा यथास्यात्तथा स्वनसि शब्दं करोषि, तथा करं हस्तं व्याधुन्वत्यास्तवापसारणाय इतस्ततो विलोलयन्त्याः शकुन्तलायाः, रतिसर्वस्वं रतेः सुरतेच्छायाः सर्वस्वं प्रधानकारणम्, यद्वा रतौ सर्वस्वं सर्वप्रधानतयादरणीयम्, वा रतेः कामपत्न्याः सर्वस्वं युवजये परमसहायम्, अधरं दन्तच्छदं पिबसि दशसि अत एव वयम् अहमित्यर्थः, तत्वान्वेषात् किं ब्राह्मणस्य औरसकन्यात्वेन मत्परिणयायोग्या किं वा तस्य क्षत्रियकन्यात्वेन मत्परिणययोग्या इत्येवं तत्त्वस्यान्वेषणादित्यर्थः । हता अत्यन्ताकुलतया मृतप्रायाः दैवेन विप्रलम्भिता इति शेषः, वयमेवंविधाभिलाषचाटुप्रवणा अपि तत्त्वान्वेषणाद्वस्तुवृत्तेरन्विष्यमाणोऽऽयासमात्रपात्रीभूता जाता इति भावः । किन्तु त्वं खलु कृती कृतार्थः जातोऽसि । शिखरिणी च्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

( ३१ ) व्यंङ्ग्यं दर्शयति—अत्रेति । हता इति प्रयुक्तम्, न तु दुःखं प्राप्तवन्त इति प्रयुक्तम्, तथा सति प्रकृतोपयुक्तस्य दुःखातिशयस्याभिव्यक्तिर्न स्यात् । हन् प्रकृतेः हन् धातुरूपप्रकृतेः दुःखातिशयस्य "व्यञ्जकत्व" मिति शेषः । अत्र मृत्युकथनात् विप्रलम्भातिशयो व्यङ्ग्यः । अत्र च हता इत्यस्य स्थाने क्तप्रत्ययं स्थापयित्वा हनः स्थाने प्रकृत्यन्तरनिवेशने न तथा प्रतीतिः । अथ च त्वं खल्विति निपातेनायत्नसिद्धं तवैवचरितार्थत्वमिति तथाहि—कथमेतदीयकटाक्षगोचरा भूयास्म, कथमेषास्मदभिप्रायव्यञ्जकं रहो वचनमाकर्ण्यात् कथं नु हठादनिच्छन्त्या अपि परिचुम्बनं विधेयास्मेति यदस्माकं मनोराज्यपदवीमधिशेते तत्तवायत्नसिद्धम् । भ्रमरो हि नालोत्पलधिया मदाशङ्काकरीं दृष्टिं पुनः पुनः स्पृशति, श्रवणावकाशपर्य्यन्तत्वाच्च नेत्रयोरुत्पलशङ्कानपगमात्तत्रैवातिशयेन ध्वनिं कुर्वन्नास्ते सहजसौकुमार्यत्रासकातरायाश्च रतिनिधानभूतं विकसितारविन्दकुवलयामोदमधुरमधरं पिबतीति भ्रमरस्वभावोक्तिरलङ्कारोऽङ्गतामेवाभिलाषविप्रलम्भस्य प्रकृतरसस्योपगतः ।

( ३२ ) निपातगतध्वनिमुदाहरति—मुहुरङ्गुलीति । शकुन्तलां प्राप्य तत्सम्भोगविघ्ने सति अनुतप्यमानस्य दुष्यन्तस्योक्तिरियम् । मुहुर्वारं वारम् अङ्गुल्या संवृतौ मत्कर्तृकचुम्बनप्रतिषेधाय आवृतौ अधरोष्ठौ यस्य तत्, प्रतिषेधाक्षरे 'मा' 'मा' इति चुम्बननिषेधकवाक्योच्चारणावसरे विक्लवेन विह्वलतया अभिरामं मनोज्ञम्, तादृशप्रतिषेधस्य विक्षिपर्य्यवसन्नतया तत्प्रयोगेण मुखस्य रमणीयत्वमिति भावः, तथा अंसे स्कन्धोपरिभागे विवर्त्तते चुम्बनाशङ्कात् तद्रक्षणायैव लज्जयैव वा परावर्त्तत इति अंसविवर्त्ति,

( ३३ ) अत्र 'तु' इति निपातस्यानुतापव्यञ्जकत्वम् ।

( ३४ ) 'न्यक्कारो ह्ययमेव मे यदरयः—' इत्यादौ (१२ पृ.) 'अरयः' इति बहुवचनस्य, 'तापसः' इत्येकवचनस्य, 'अत्रैव' इति सर्वनाम्नः, 'निहन्ति' इति 'जीवति' इति च तिङः, 'अहो' इत्यव्ययस्य, 'ग्रामटिका' इति करूपतद्धितस्य, 'विलुण्ठन'

---

पक्ष्माणि नयनलोमानि अनयोः सन्तीति पक्ष्मले घनलोमशालिनी "सिध्मादिभ्यश्च" इति पा० सूत्रेणास्त्यर्थे लच् प्रत्ययः, अक्षिणी लोचने यस्यास्तादृश्याः शकुन्तलायाः, मुखम् आननम्, कथमपि लोचनगतकुसुमपरागापनोदनच्छलेन उन्नमितम् अङ्गुलिभ्यां चुम्बनार्थमूर्ध्वीकृत्य धृतम्, तु किन्तु न चुम्बितम् ममायमतिशयः प्रमादोऽभूदिति भावः । औपच्छन्दसिकं च्छन्दस्तल्लक्षणन्तु—"गौपच्छन्दसकम्" इति पिङ्गलाचार्यः ।

( ३३ ) व्यङ्ग्यं निर्दिशति—अत्रेति । नत्रा एव चुम्बनाभावलाभे तु शब्देन चुम्बनस्यात्यन्तव्यवच्छेदलाभात् विप्रलम्भानुतापातिशयो व्यङ्ग्यः । एवञ्च तुशब्दस्य चुम्बितपदान्वयित्वात्तदंशत्वेन पदांशध्वनेरुदाहरणम् । व्यङ्ग्यान्तरमप्यत्र बोध्यम् तथाहि—नायिकाया अङ्गुलिसम्वरणपौनःपुन्योक्त्या नायकस्य तन्निषेधपौनःपुन्यं व्यज्यते, तथा कामशास्त्रे ऊर्ध्वोष्ठे चुम्बनस्याविधानादोष्ठपदेनैवाधरोष्ठस्य लाभेऽप्यधरपदोपादानेन "उमामुखे बिम्बफलाधरोष्ठे" इत्यादाविव तस्य पाटलिमसौकुमार्य्यमाधुर्य्यातिशयो ध्वन्यते । अपि च नायिकायाः प्रतिकूलाचरणेन नायकस्य मदनाभिवृद्धिः प्रतीयते । तथाचोक्तं रघुवंशे—

"चुम्बने विपरिवर्त्तिताधरं हस्तरोधि रसनाविघट्टने ।
विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतः ॥" इति ।

अथाप्यत्र बलात्कारे सत्यपि क्रन्दनापसरणादिकमविधाय अङ्गुलिसंवरणादिविधानेन सुरते नायिकाया अर्धाङ्गीकारो द्योत्यत इति ।

( ३४ ) प्रत्ययोपसर्गादीनां व्यङ्ग्यमुदाहर्त्तुं दर्शयति—न्यक्कार इति । एतद्व्याख्या-नन्तु ( ११ पृ० ) कृतम् । बहुवचनेत्यादिषष्ठ्यन्तानां व्यञ्जकत्वमित्यग्रिमेणान्वयः । अरय इति बहुवचनेन एकमात्रशत्रुसद्भावेऽपि यस्य निर्वेदो जायते तस्यैव मे रामलक्ष्मणसुग्रीवादयो बहव एव रिपवो जाता इति नास्ति निर्वेदावधिरिति ध्वन्यते । तापस इत्येकवचनेन तुच्छभूतमेकत्वं गम्यते यद्वा प्रतीकाराक्षमत्वमेव प्रतीयते । अत्रेति । सर्वनाम्ना रिपुनिग्रहे दूरगमनादिव्यापारो नास्ति तथापि किञ्चिद्विधातुमशक्यत्वादात्मनोऽत्यन्तमकर्म्मण्यत्वं द्योत्यते । निहन्तीति तिङापकारस्य वर्त्तमानत्वख्यापनेन विलम्बासहिष्णौ रिपुनिग्रहे नास्माकमुद्यम इति तथा नासौ निश्चेष्टो वर्त्तत इति च ध्वन्यते । जीवतीत्यनेन जीवनस्य वर्त्तमानत्वख्यापनेनेदृशे वृत्तान्ते रावणस्य प्रागेव मरणमुचितं येनैतादृशः पराभवो माभूदिति, अहो इत्यव्ययेन रावणे मृते सतीदृक्परिस्थितेरागमनं नाश्चर्य्यम् जीविते तु महदाश्चर्यम् । ग्रामटिकेति । अल्पग्रामवाचको हि ग्रामटी शब्दः क्वचित्प्रसिद्धः ततः "अज्ञाते" "कुत्सिते" इति वा क प्रत्यये "केऽणः" इति ह्रस्वे सिद्धो ग्रामटिकाशब्दः, अत्यन्तक्षुद्रग्राम इति तदर्थः, ध्वन्यालोकलोचनकारादयोऽप्येवमेवाहुः । नव्यास्तु "तद्धिताः" इति बहुवचनाट्टिकच् प्रत्ययमाहुः । अनेन कप्रत्ययेनाहमीदृशीवर्लीयेन मया सुविशालोऽपि स्वर्गः क्षुद्रो ग्राम इव प्रतीत आसीदिति व्यज्यते । विलुण्ठनेत्यत्र व्युप-

इति व्युपसर्गस्य, 'भुजैः' इति बहुवचनस्य व्यञ्जकत्वम् ।

( ३५ ) 'आहारे विरतिः, समस्तविषयग्रामे निवृत्तिः परा,
नासाग्रे नयनं तदेतदपरं यच्चैकतानं मनः ।
मौनं चेद, मिदं च शून्यमधुना यद्विश्वमाभाति ते,
तद्ब्रूयाः सखि! योगिनी किमसि, भोः! किं वा वियोगिन्यसि ॥'

( ३६ ) अत्र तु 'आहारे' इति विषयसप्तम्याः, 'समस्त' इति 'परा' इति च विशेषणद्वयस्य, 'मौनं चेदम्' इति प्रत्यक्षपरामर्शिनः सर्वनाम्नः, 'आभाति' इत्युपसर्ग-

---

सर्गेण अण्वपि किञ्चिदपहृत्य न विरतं किन्तु विशेषेण लुण्ठनं विहितमिति प्रत्याय्यते । भुजैरिति बहुवचनेन रिपुनिग्रहे रावणस्याधिकसाधनसत्त्वेऽपि किञ्चित्कर्त्तुं न शक्यत इति नास्ति दुःखस्य परिसीमेत्यवगम्यते । ध्वन्यालोककृताऽपि—

"सुप्तिङ्वचनसम्बन्धैस्तथाकारकशक्तिभिः ।
कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित् ॥"

इतिकारिकाया उदाहरणप्रसङ्गेऽमुमेव श्लोकमुदाहृतम् । यद्यप्येते संलक्ष्यक्रमव्यङ्ग्यानां वस्तुध्वनय एव प्रतीयन्ते तथाऽप्येतेऽसंलक्ष्यक्रमव्यङ्ग्यस्य निर्वेदाख्यभावस्य परिपोषका इति तेनैवव्यपदेश इति तत्त्वमिति वागीशादयो व्याचक्षते । अत्रेदमवगन्तव्यम्—न केवलं रसादिध्वनेरेव पदांशप्रकाशता, किन्तु वस्त्वलङ्कारयोरपि । अत्रालङ्कारस्य यथा-

"पथि पथि शुकचञ्चूचारुराभाङ्कुराणां
दिशि दिशि पवमानो वीरुधां लासकश्च ।
नरि नरि किरति द्राक् सायकान् पुष्पधन्वा
पुरि पुरि च निवृत्ता मानिनी मानचर्चा ॥"

अत्र किरतीति वर्त्तमानप्रत्ययेन निवृत्तेत्यत्र क्तप्रत्ययेन कार्यकारणपौर्वापर्यव्यत्यय-रूपातिशयोक्तिरलङ्कारः प्रतीयते ।

( ३५ ) इत्थं प्रकृत्यादीनां व्यञ्जकत्वमुदाहृत्य प्रत्ययादीनां व्यञ्जकत्वमुदाहरति—आहार इति । ध्यायन्तीं वियोगिनीं योगधर्मिणीमवलोक्योपहसन्त्याः सख्या उक्तिरियम् । भोः सखि! ते तव आहारे अन्नादिभक्षणे विरतिः रागाभावः, समस्ते समग्रे विषयग्रामे माल्यचन्दनादिभोग्यपदार्थनिचये परा परमा निवृत्तिः परावृत्तिः, नासाया अग्रे अग्रभागे नयनं वर्त्तते, यच्च एकतानम् एकस्मिन् विषये एकलयं तव मनः तदेतदपरं योगिन्या वियोगिन्या वा लक्षणमित्यर्थः, इदञ्च मौनम् इदञ्च विश्वं जगत् अधुना शून्यम्, यदाभाति तव हृदये शून्यमिव प्रतीयते। योगिन्या विश्वं शून्यमसद्भूतमाभाति वियोगिन्याश्च सदपि विश्वं प्रकृतानुपयोगित्वेनासदिव प्रतिभाति । तत् तस्मात् ब्रूयाः किं योगिनी असि किं वा वियोगिनी असि । आहारादिधर्माणामुभयोरेव सम्भवात्तत्त्वनिर्णयाभावेनेयं जिज्ञासोदेतीति वाच्यार्थः ।

अत्र नायिकाया विप्रलम्भातिशयः समस्तपदद्योत्यः ।

( ३६ ) प्रत्ययादीनां व्यञ्जकत्वं विचार्य स्फुटीकर्त्तुमाह-अत्रेति । विषयसप्तम्या इत्यादीनां तत्तद्विषयव्यञ्जकत्वमित्यग्रिमेणान्वयो बोध्यः । तथा च आहारे सर्वप्रकारविषयक

स्य, 'सखि' इति प्रणयस्मारणस्य, 'असि भोः' इति सोत्प्रासस्य 'किं वा' इत्युत्तरपक्षदार्ढ्यसूचकस्य वाशब्दस्य, 'असि' इति वर्तमानोपदेशस्य च तत्तद्विषयव्यञ्जकत्वं सहृदयसंवेद्यम् ।

( ३७ ) वर्णरचनयोरुदाहरिष्यते ।

( ३८ ) प्रबन्धे यथा—महाभारते शान्तः । रामायणे करुणः । मालतीमाधवरत्नावल्यादौ शृङ्गारः ।

---

रागाभाव एव न तु योगिनीवदनिष्टसाधनतावगमात् योगप्रतिकूलमत्स्यमांसादिरूपाहारान्निवृत्तिरिति विषयसप्तमी प्रत्याययति, सामान्यबोधकत्वादित्यभिप्रायः ।

"नात्यश्नतस्तु योगोऽस्ति नचैकान्तमनश्नतः" इत्युक्त्या योगिन्याः प्राणधारणार्थमाहारोऽस्त्येव तव तु सोऽपि नास्तीति भावः । योगिन्या योगाप्रतिबन्धकविषये चीरचीवरादौ निवृत्तिर्न वर्त्तते भक्तपारवश्यादिना तदितरविषये यदृच्छोपपन्नेऽपि च विषये प्रवृत्तिरस्ति तव तु आवश्यकेऽपि समस्तविषयग्राम एव सर्वथैव निवृत्तिरिति समस्तेति परेति च विशेषणद्वयमभिव्यनक्ति । योगिनी मौनसमये इङ्गितादिना अर्थं बोधयति तथा योगिन्यतरमागतं वदत्येव त्वन्तु सहचरीं मामागतां दृष्ट्वाऽपि तूष्णींम्भावमाश्रितेतीदं पदेन ध्वन्यते । प्रत्यक्षपरामर्शिना । "इदमस्तुसन्निकृष्टम्" इति नियमात् मौनप्रत्यक्षताद्योतकस्य । योगिन्यास्तत्त्वज्ञानेनैव विश्वमसदिति भाति न तु व्यावहारिकभावेन, तव तु स्वप्रयोजनाभावात् तत्त्वं विनैव विश्वस्यासत्त्वं भाति, इत्याङुपसर्गः प्रत्याययति । योगिन्या विश्वस्मिन् कुत्रापि रागिणि जने प्रणयो नास्ति तव तु मयि सोऽस्तीति सखीति सम्बोधनेन व्यज्यते । एवञ्च दृश्यमानो विप्रलम्भो न त्वया गोपनीय इति भावः । "असि भोः" इति पदद्वयप्रकार एव "सोत्प्रासः समनाक्स्मितम्" मन्दस्मितोपहासत्वं द्योतयति ।

तथा च योगिनी कस्यापि नोपहासविषयो भवति त्वं तु ममैवेति "असि भोः" इतिपदद्वयव्यङ्ग्यः सोपहा सोत्प्रासोऽवगमयति । त्वं योगिन्येव न तु वियोगिनीति "किं वा" शब्दो द्योतयति । वर्त्तमानोपदेशस्य "असि" इत्यत्र वर्त्तमानकालबोधक सि" विभक्ति निर्देशस्य । एवञ्चात्र योगित्वस्य तत्कालेऽसम्भवात् वियोगस्य तु तदैवोपलम्भात् त्वं वियोगिन्येवासीति मध्यमपुरुषैकवचनेन प्रतीयते ।

( ३७ ) सम्प्रतिवर्णरचनयोरसंलक्ष्यक्रमव्यङ्ग्यत्वमुपेक्ष्य प्रबन्धगतत्वेन तदुदाहर्तुमाह-वर्णेति । वर्णोऽक्षरविशेषः माधुर्यादिगुणव्यञ्जकः, रचना दीर्घसमासादिरूपविन्यासविशेषः, सा पि माधुर्यादिव्यञ्जिका । उदाहरिष्यते । अष्टमे नवमे च 'परिच्छेदे' इति शेषः । तेषां रसनिष्ठमाधुर्यादिगुणव्यञ्जकत्वेन गुणज्ञाने सत्येव तज्ज्ञानत्वसम्भवादत्र नोदाहृतमिति भावः । प्रत्ययादीनां तु स्वबोध्यनिष्ठतत्तद्विशेषव्यञ्जकत्वमित्यत्रैवोदाहृतम् ।

( ३८ ) प्रबन्ध इति । पूर्वं प्रबन्धशब्देन संघटितावान्तरवाक्यसमूहोऽभिहितः, अधुना तु संघटितमहावाक्यमिति पौनरुक्त्यं न शङ्क्यम् , पूर्वं हि अर्थशक्तिमूलमात्रस्य प्रबन्धविषयत्वस्योक्तत्वात् अत्र तु असंलक्ष्यक्रमव्यङ्ग्यस्येति पौनरुक्त्यभावात् । शान्त इति । स्वर्गारोहणरूपमहाभारतश्रोतुः युधिष्ठिरशमज्ञातुः शान्तरसो बोध्य इत्यर्थः । रामायण इति । रामशोकज्ञातुः रामायणश्रोतुः करुणरस इत्यर्थः । मालतीत्यादाविति माधववत्सरा-

( ३९ ) एवमन्यत्र ।

( ४० ) तदेवमेकपञ्चाशद्भेदास्तस्य ध्वनेर्मताः ॥ ११ ॥

संकरेण त्रिरूपेण संसृष्ट्या चैकरूपया ।

जरतिश्रोतुस्तन्नाटकश्रोतुः शृङ्गार इत्यर्थः । आदिशब्देन शकुन्तलादिपरिग्रहः ।

अत्रेदम्बोध्यम्—न केवलं वस्त्वलङ्कारध्वनिवदर्थान्तरमाह किन्तु वाक्यव्यङ्ग्येऽपि तत्समुदायभूते महाभारतादिप्रबन्धेऽपि अन्यथा काव्यत्वहानेरिति ।

( ३९ ) एवमन्यत्रेति । किरातार्जुनीयैकादशसर्गे सुरराजोक्तप्रबन्धे शान्तरसः । पार्थोक्तप्रबन्धे तु वीररसः। "माघे शिशुपालदूतोक्तौ सन्धौ वाच्ये वस्तुमात्ररूपो विग्रहः शब्दशक्तिमूलः प्रबन्धव्यङ्ग्यो दृश्यते" इति चण्डीदासः ।

( ४० ) अथेदानीं ध्वनीनां सङ्कलनं दर्शयति—तदेवमिति । तत्तस्मात् असंलक्ष्यक्रमव्यङ्ग्यस्यापि पदपदांशादिगतत्वेन षड्विधित्वादित्यर्थः । एवं शुद्धभेदेन तस्य ध्वनेः एकपञ्चाशद्भेदा मताः । व्यङ्ग्यस्य पदवाक्यगतत्वेन पञ्चत्रिंशद् (३५) भेदाः संख्याताः । तदनन्तरमर्थशक्त्युद्भवस्य प्रबन्धगतत्वेन द्वादशविधत्वम् । रसभावादिरूपस्यासंलक्ष्यक्रमव्यङ्ग्यध्वनेरपि पदांशवर्णरचनाप्रबन्धगतत्वेन चत्वार इति मिलित्वा ध्वनिकाव्यस्य एकपञ्चाशद्भेदाः (५१) शुद्धा इत्यर्थः । यद्यपि लक्ष्यार्थवाच्यार्थव्यङ्ग्यार्थभेदेन पदांशानां च प्रकृतिप्रत्ययादिभेदेनातोऽधिका बहुतरसंख्या भवन्ति तथापि प्राचीनसम्प्रदायानुरोधेनैकपञ्चाशत्त्वमेव दर्शितमिति बोध्यम् । सङ्करेण त्रिरूपेणेति । साक्षात्परम्परया वा यथा कथञ्चित् परस्परसापेक्षः सङ्करः तद्भिन्नः स संसृष्टिः । सङ्करस्थले हि क्वचित् साधकबाधकमानाभावादेकतरानिश्चयेन "अयम् अयं वा" इति भवति संशयः क्वचिच्च स्वत एवोपादेयतया प्रधानयोरपि एकस्य कथंचिदपरानुगुण्यमात्रेण अङ्गाङ्गिभावापरनामकानुग्राह्यानुग्राहकभावः, क्वचित्तु एकव्यञ्जकव्यङ्ग्यतया एकाश्रयानुप्रवेश इति सङ्करस्य त्रैविध्यम् । वक्ष्यति दशमपरिच्छेदे—

"अङ्गाऽङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ ।

सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः" ॥ इति ।

न चानुग्राह्यानुग्राहकभावेन सङ्करस्थलेऽनुग्राहकस्याङ्गतया गुणीभाव इति न ध्वनिसङ्करत्वमिति वाच्यम्, तत्र हि स्वतश्चमत्कारिण एव तस्य किञ्चित्परोपकारकतामात्रम् न तु शेषशेषिभाव एवेति प्रदीपे स्पष्टम्। एकरूपया परस्परनैरपेक्ष्यस्थितिरूपया संसृष्ट्या च । एभिर्याः संख्या भवन्ति ता आह—वेदेति । सजातीयानेकसंख्याप्रस्तावे-"अङ्कानां वामतः क्रमः" इति गणितशास्त्रप्रसिद्धत्वेन वेदाश्चत्वारः, तद्वामे खं शून्यम्, तद् वामेऽनयस्त्रयः, तद्वामे शराः पञ्चेति चतुरुत्तरशतत्रयाधिकपञ्चसहस्राणि ध्वनयः । नन्वेवमप्येकपञ्चाशतश्चतुर्गुणनेन चतुरधिकद्विशतमेव भवतीति तत्कथमेतादृशी संख्येति चेत् ? मैवम्, यतः प्रथमस्य सजातीयेनैकेन विजातीयैः पञ्चाशता च संसृष्टावेकपञ्चाशत्त्वम् ? एवं द्वितीयस्य सजातीयेनैकेन विजातीयैरूनपञ्चाशता च संसृष्टौ पञ्चाशत्त्वम् । तृतीयस्य सजातीयेनैकेन विजातीयैरष्टचत्वारिंशता च संसृष्टावूनपञ्चाशत्त्वम् तुरीयस्य सजातीयेनैकेन विजातीयैः सप्तचत्वारिंशता च संसृष्टावष्टचत्वारिंशत्त्वम् एवमन्येषामेकैकह्रासेन सप्तचत्वारिंशदादिकम् । चरमस्य सजातीयेनैकेन संसृष्टावेकविषयत्वमेवेति मिलित्वा

वेदखाग्निशराः(५३०४)शुद्धैरिषुबाणाग्निसायकाः (५३५५)॥१२॥

शुद्धैः शुद्धभेदैरेकपञ्चाशता योजनेत्यर्थः ।

षड्विंशत्यधिकत्रयोदशशतत्वं ध्वनिसंसृष्टेः। एवं क्रमेण अष्टसप्तत्युत्तरनवशताधिकत्रिसहस्रत्वं त्रिविधध्वनिसङ्करस्य मिलित्वा भवति "वेदखाग्नि" संख्याया उपपत्तिरिति स्पष्टं विवृतौ । काव्यप्रकाशकृता तु—एकपञ्चाशदभेदानाम् एकपञ्चाशतागुणने एकोत्तरषट्शताधिकसहस्रद्वयं ( २६०१ ) भवति। योजनं च संसृष्ट्यादिचतुःप्रकारैरिति तावतां चतुर्भिर्गुणने "वेदखाब्धिवियच्चन्द्राः" ( १०४०४ ) इत्युक्तम् । नन्वस्त्वेकपञ्चाशद्भेदेष्वेकतराणां पञ्चाशतायोजनम् स्वस्य तु स्वेन कथं योजनेति चेत्? न व्यक्तिभेदमादाय विजातीयवत्सजातीयेनाऽपि सङ्करादिति मम्मटाशयः। अत एव यथा कविकमतु लक्षणाया अशीति प्रकारा अनुदाहृताऽप्यभिप्रायवशेन स्वीक्रियते, तथा प्रकाशोक्ता भेदसंख्या अपि कथमिव न सम्भवनीया अन्यथा "एकोऽपि भेदोऽनन्तत्वादसंख्येयः" इति स्वोक्तिरपि कथं संगच्छेत।

वस्तुतस्तु अत्यन्तविचारे "वेदखाग्निशररूपा" या संख्या ग्रन्थकृता दर्शिता साऽपि न सम्भवति तथाहि—एकपञ्चाशत एवोक्तचातुर्विध्यं न सम्भवति पदैकदेश ।पदव्यङ्ग्ययोः पदवाक्यव्यङ्ग्ययोश्च शब्दशक्त्युद्भवव्यङ्ग्ययोरर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्यव्यङ्ग्ययोश्च एकव्यञ्जकानुप्रवेशसङ्करासम्भवात् चातुर्विध्याभावात् ।

यत्तु—चण्डीदासादयः "संसृष्टौ सङ्करयोजने च सिन्धुगगनशिखिशराः शुद्धयोगे शखबाणाग्निबाणाः" इत्याहुस्तन्न पेशलम् , अनुभवसिद्धौ तावत्पुण्डरीकादृक्षुरसेष्विव ध्वनिष्वपि हृद्यत्वाशयानतिशयौ तथा चार्थान्तरसंक्रमितवाच्यस्य यत्रातिशयस्तत्रात्यन्ततिरस्कृतवाच्येन तद्योजनम् ।

यत्र तु तद्वैपरीत्यं तत्रात्यन्ततिरस्कृतवाच्यस्येतरेण योजनमिति व्यपदेशः प्राधान्येन व्यपदेशा भवन्ति इति न्यायात्। एवमन्यत्राऽप्यूहयम् । एतदेव प्राधान्यमादाय गणना सौत्री । नन्वेवं यत्रोभयोस्तुल्यमेव चारुत्वं तत्र भेदान्तरं स्यादिति, नैवम् अपकर्षाभावस्यातिशयपदेन विवक्षितत्वात्तत्रोभयभेदसङ्करस्वीकारादिति प्रदीपादौ स्पष्टम्। एषु शुद्धैकपञ्चाशन्मिलने संख्यामाह—शुद्धैरिषुबाणेति । व्याचष्टे-शुद्धैरिति । संसृष्टिसङ्करसहितैर्योग इत्यर्थः। इषवः पञ्च, बाणाः पञ्च, अग्नयस्त्रयः, सायकाः पञ्चेतितन्मिता इत्यर्थः। एवञ्च तासां संख्यानामपि वामगत्या पञ्चपञ्चाशदुत्तरत्रिशतयुतपञ्चसहस्रसंख्यकभेदाः ( ५३५५ ) समुदायेन ध्वनयः। अत्र अभिन्नाभिन्नभेदस्य योजने एकैकभेदह्रासात् एवं प्रकारेण एवं योजनं भवति—

"एकोराशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु । समार्धेनासमो गुण्यः एतत्सङ्कलितं लघु॥"

इत्युक्तदिशा द्विपञ्चाशदर्धेन षड्विंशत्या एक पञ्चाशतं गुणयेत्। तथा (५१×२) ÷२=२६ ) ५१×२६=१३२६ रसद्वाग्निमेदिन्यः संख्या जायन्ते । तेषु चतुर्भिर्गुणितेषु ( १३२६×४=५३०४ ) पञ्चसहस्राणि चतुरधिकं शतत्रयं संकीर्णभेदाः ।

अथ ग्रन्थकारमतेन प्राङ्निर्दिष्टध्वनिसंख्यासङ्कलनप्रकारः प्रदर्श्यते—

| लक्षणामूलः अविवक्षितवाच्यः चतुर्विधः । | अर्थान्तरसंक्रमितवाच्यः—२ | पदगतः—१ |
| --- | --- | --- |
| | | वाक्यगतः—१ |
| | अत्यन्ततिरस्कृतवाच्यः—२ | पदगतः—१ |
| | | वाक्यगतः—१ |

- अभिधामूलः विवक्षितान्यपरवाच्यः मुख्यतो द्विविधः ।
  - असंलक्ष्यक्रमव्यङ्ग्यः ।
  - संलक्ष्यक्रमव्यङ्ग्यः ।

- तत्र रसभावादिरूप एकप्रकारोऽपि असंलक्ष्यक्रमव्यङ्ग्यः अवान्तरभेदात् षट्प्रकाराः ।
  - पदगतः—१
  - पदांशगतः—१
  - वाक्यगतः—१
  - महावाक्यगतः—१
  - वर्णगतः—१
  - रचनागतः—१

- संलक्ष्यक्रमव्यङ्ग्यः एकचत्वारिंशत्प्रकाराः ।
  - शब्दशक्त्युद्भवेषु
    - वस्तुरूपयोः—
      - पदगतः—१
      - वाक्यगतः—१
    - अलङ्काररूपयोः
      - पदगतः—१
      - वाक्यगतः—१
  - अर्थशक्त्युद्भवेषु (पूर्वोक्तनामसु)
    - पदगताः—१२
    - वाक्यगताः—१२
    - महावाक्यगताः—१२
  - शब्दार्थोभयशक्त्युद्भवे………………… १
  - मिलित्वा शुद्धाः ५१

- सङ्कराः—
  - अङ्गाङ्गिभावसङ्कराः
    - साजात्ये
      - दर्शितानामेकपञ्चाशद्भेदानां शुद्धानां ध्वनीनां मध्ये एकैकस्य सजातीयेनान्येनैकेन सह सङ्करेषु एकपञ्चाशद्भेदाः———५१
    - वैजात्ये—
      - शुद्धस्य द्वितीयस्य शुद्धेन प्रथमेन सह संकरे एकः, शुद्धस्य तृतीयस्य शुद्धेन प्रथमेन द्वितीयेन वा सङ्करयोर्द्वौ शुद्धस्य तुरीयस्य शुद्धस्य शुद्धेन प्रथमेन द्वितीयेन तृतीयेन वा सङ्करेषु त्रयः, एवं क्रमेण पञ्चसप्तत्यधिक द्वादशशतभेदाः——— १२७५
  - एकाश्रयानुप्रवेशसङ्कराः
    - साजात्ये दर्शितरीत्या—५१
    - वैजात्ये दर्शितरीत्या—१२७५
  - सन्देहसङ्कराः—
    - साजात्ये दर्शितरीत्या—५१
    - वैजात्ये दर्शितरीत्या—१२७५
- संसृष्टयः—
  - साजात्ये दर्शितरीत्या—५१
  - वैजात्ये दर्शितरीत्या—१२७५

६३०४

शुद्धाः……………… ५१

समुदायेन मिलित्वा………६३५५

दिङ्मात्रं तूदाह्रियते—

( ४१ ) 'अत्युन्नतस्तनयुगा तरलायताक्षी द्वारि स्थिता तदुपयानमहोत्सवाय ।
सा पूर्णकुम्भनवनीरजतोरणस्रक्संभारमङ्गलमयत्नकृतं विधत्ते ॥'

( ४२ ) अत्र स्तनावेव पूर्णकुम्भौ, दृष्टय एव नवनीरजस्रज इति रूपकध्वनिरस-ध्वन्योरेकाश्रयानुप्रवेशः संकरः ।

( ४३ ) 'धिन्वन्त्यमूनि मदमूर्च्छदलिध्वनीनि धूताध्वनीनहृदयानि मधोर्दिनानि
निस्तन्द्रचन्द्रवदनावदनारविन्दसौरभ्यसौहृदसगर्वसमीरणानि ॥'

( ४४ ) अत्र निस्तन्द्रेत्यादिलक्षणामूलध्वनीनां संसृष्टिः ।

( ४१ ) पदगतध्वनिसङ्करं दर्शयति—अत्युन्नतेति । प्रवासादागच्छन्तं पतिं द्वारि-स्थित्वा दृष्टवती नायिकां कस्मैश्चिन्निवेदयतः कस्यचिदुक्तिरियम् । अत्युन्नतं स्तन-युगं कुचयुगलं यस्याः सा तादृशी, तरले चञ्चले आयते दीर्घे च अक्षिणी नयने यस्याः सा तादृशी सा नायिका द्वार्यवस्थिता द्वारि वर्त्तमाना सती तस्य वल्लभस्य उपयानम् उपगमः उपस्थितिरेवेति यावत्, तत्कालीनमहोत्सवस्तस्मै, अयत्न-कृतम् अनायासेनैव विहितम् । पूर्णकुम्भौ नवनीरजानां तत्क्षणविकसितपद्मानां तोरण-स्रजः तोरणमालास्तेषां सम्भार एव आयोजनमेव मङ्गलं तद्विधत्ते करोति । यथा महो-त्सवसमये द्वारपार्श्वं पूर्णकुम्भौ स्थापयन्ति माल्यादिना तोरणं च भूषयन्ति तद्वत्सा प्रवासात् प्रियतमागमनमहोत्सवे स्तनरूपकुम्भद्वयं स्थापितवती नयनरूपनवनीरजैः तोरणस्रक्सम्भारं कृतवती ।

( ४२ ) सङ्करप्रकारं स्पष्टीकरोति—अत्रेति । स्तनकटाक्षयोर्यथासम्भवं पूर्णकुम्भत्वेन नवनीरजमालात्वेन च साक्षादारोपाभावेन तस्य व्यङ्ग्यत्वाद् रूपकालङ्कारध्वनिः, तयोरे-व नायकरतेरुद्दीपकतया सम्भोगश्रृङ्गाररसस्य च ध्वनिः । उभयोश्च ध्वन्योः "स्तनयुगेति" "तरलायताक्षीति" चैकैकपदरूपे एकैकस्मिन्नाश्रये उभयोरुभयोरेवानुप्रवेशरूपः प्रवेशानन्तर-स्थितिरूपः सङ्कर इत्यर्थः ।

( ४३ ) पदगतध्वनिसंसृष्टिं दर्शयति—धिन्वन्तीति । वसन्तवर्णनेयम् । मदेन हर्षेण मूर्च्छन् वर्द्धमानः अलिध्वनिर्भ्रमररवो येषु तानि यथोक्तानि, धूतानि मदनावेगकारणेन कम्पितानि अध्वनीनां विरहवतां पथिकानां हृदयानि यैस्तानि तादृशानि, तथा निस्त-न्द्रोऽतिप्रकाशमानश्चन्द्र इव वदनं मुखं यासां तासां कामिनीनां वदनारविन्दानां सौर-भ्येण सौगन्ध्येन यत् सौहृदं प्रेमसम्पर्कस्तेन सगर्वः साहङ्कारः समीरणः पवनो येषु तानि तथोक्तानि अमूनि मधोर्वसन्तसमयस्य दिनानि धिन्वन्ति लोकान् प्रीणयन्ति ।

( ४४ ) अत्रेति । लक्षणामूलध्वनीनामत्यन्ततिरस्कृतवाच्यानाम् । तन्द्रा प्रमीला तस्या-श्चन्द्रेऽभावात् मुख्यार्थबाधेन जहत्स्वार्थलक्षणया निस्तन्द्रपदस्य प्रकाशमानरूपोऽर्थो ऽभिधीयते । प्रकाशातिशयबोधः प्रयोजनम् । तच्च व्यञ्जनागम्यमित्येकोऽत्यन्ततिर-स्कृतवाच्यो ध्वनिः ।

एवं सौहृदगतौ चेतनधर्मौ तयोश्च समीरणेऽसम्भवात् यथाक्रमं सादृश्ये उत्कृष्टे च जहत्स्वार्था लक्षणा, सादृश्यातिशयबोधः प्रयोजनम् सोऽपि च व्यञ्जनागम्य

( ४५ ) अथ गुणीभूतव्यङ्ग्यम्—

**( ४६ ) अपरं तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये ।**

अपरं काव्यम् ।

( ४७ ) अनुत्तमत्वं न्यूनतया साम्येन च संभवति ।

**( ४८ ) तत्र स्यादितराङ्गं काक्वाक्षिप्तं च वाच्यसिद्ध्यङ्गम् ॥१३॥**

---

एवेत्यन्यावपि अत्यन्ततिरस्कृतवाच्यौ ध्वनी, इति त्रयाणां पदगतानां लक्षणामूलध्वनीनाम् अन्योन्यनैरपेक्ष्यस्थिते संसृष्टिरित्यर्थः । इदमुपलक्षणम्—अलिध्वनिचन्द्रसमीरणैः कामोद्दीपकैः व्यङ्ग्यस्य शृङ्गारस्याऽप्यत्र प्रतीतिरित्यतस्तस्य चन्द्रोज्ज्वलत्वेन समीरणोत्कृष्टत्वेन तस्य सुखस्पर्शत्वेन च लक्षणामूलकव्यङ्ग्येन प्रकर्षणादनुग्राह्यानुग्राहकरूपसङ्करोऽप्यत्रैव श्लोके बोध्यः, एवं त्रिविधसङ्करस्याप्रसक्तेरित्युक्तः कथं सङ्गच्छत इति स एव प्रष्टव्यः । सन्देहरूपसङ्करश्चात्र नोदाहृतः । तदुदाहरणं च काव्यप्रकाशकृता दत्तमित्यन्वेषणीयम् यथा—

> "क्षणप्राघुणिकदेवरजायया किमपि ते भणिता ।
> रोदिति पश्चाद्भागवलभीगृहे अनुनीयती वराकी ॥"

गृहपतिप्रसक्तामुपनायिकामुत्सवे तद्गृहागतानां तत्पत्न्या भर्त्सितां पश्चाद् गृहे रुदतीमनुनेतुं गृहपतिज्येष्ठभ्रातृपत्न्याः सोपहासोक्तिरियम् ।

अत्र चानुनयो वाच्यार्थः । तद्व्यङ्ग्य उपभोग इति । अयं किं स्वतः सम्भविवस्तुध्वनिः, किं वा अनुनयपदे उपभोगलक्षणा, तद्व्यङ्ग्यस्तस्य दुःखापसरणमित्ययमर्थान्तरसंक्रमितवाच्यलक्षणामूलध्वनिरिति ध्वन्योः संशयास्पदत्वम् । एतादृशव्यङ्ग्योपयोगाय पश्चाद्गृहमुक्तमनिर्जनत्वादिति विज्ञप्रियादयः ।

( ४५ ) एवं ध्वन्याख्यं काव्यस्य भेदं निरूप्य गुणीभूतव्यङ्ग्यमवतारयति—अथेति ।

( ४६ ) अपरमिति । तुर्भिन्नक्रमः । व्यङ्ग्ये व्यङ्ग्यार्थे वाच्यादर्थादनुत्तमे वाच्यापेक्षयातिशयितचमत्काराणाधायके इत्यर्थः । ततो न्यूने वा सति अपरं ध्वनिभिन्नं काव्यं गुणीभूतव्यङ्ग्यं तन्नामकं स्यात् ।

ध्वनिकृताऽप्युक्तम्—

> 'प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।
> यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात्प्रकर्षवत् ॥"

इति ।

> प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
> यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥

इत्युक्तरूपो यः प्रतिपादितस्तस्य प्राधान्ये ध्वनिरित्याम्नातम् । तस्यैव गुणीभावेन वाच्यार्थचारुत्वप्रकर्षे गुणीभूतव्यङ्ग्यो नामान्यः काव्यभेद इति तदभिप्रायः ।

( ४७ ) अनुत्तमत्वमिति । व्यङ्ग्यानुत्तमत्वेन काव्यानुत्तमत्वमित्यर्थः ।

( ४८ ) तद्गुणीभूतव्यङ्ग्यं नामतो भेदतश्च विभज्य दर्शयति—तत्रेति । तत्र गुणीभूतव्यङ्ग्ये व्यङ्ग्यं वस्तु इतरस्य रसादेर्वा वाक्यार्थीभूतस्य वाक्यतात्पर्यविषयतया प्रधा-

संदिग्धप्राधान्यं तुल्यप्राधान्यमस्फुटमगूढम्।
व्यङ्ग्यमसुन्दरमेवं भेदास्तस्योदिता अष्टौ ॥ १४ ॥

( ४९ ) इतरस्य रसादेरङ्गं रसादिव्यङ्ग्यम्।

नस्य वा अङ्गम् उपकारकम् उत्कर्षकमिति यावत्। काकुर्ध्वनेर्विकारः तया आक्षिप्तं झटिति प्रकाशितं यथा काका विना वाक्यार्थ एव नात्मानं लभते तथा प्रकाश्यमित्यर्थः। काका हठेनोपस्थापितमिति वा अत एव मुख्यार्थबाधाद्यनुसन्धानविलम्बाभावान्न लक्षणावसर इति भावः। वाच्यसिद्ध्यङ्गं वाच्यस्य वाच्यार्थस्य ( कुतोऽपि वैगुण्यात् अविश्रान्तस्य ) सिद्धिः विश्रान्तिः तत्र अङ्गम् निदानम् वाच्यस्यान्वयबोधबीजमेतदिति बोध्यम्। सन्दिग्धप्राधान्यं नाम सन्दिग्धं वाच्यकृतं व्यङ्ग्यकृतं वेत्यनिश्चितं प्राधान्यं चमत्कारित्वं यस्य यत्र वा तत् यद्वा सन्दिग्धं चमत्कारजनने वाच्यव्यङ्ग्ययोः सन्देहविषयभूतं प्राधान्यं यत्र तत्, वाच्यकृतो व्यङ्ग्यकृतो वा चमत्कार इति सन्देहः। तुल्यप्राधान्यन्तु तुल्यमर्थाद्वाच्येन समानं प्राधान्यं यत्र तत्, चमत्कारजनने वाच्यव्यङ्ग्ययोर्द्वयोरपि समर्थत्वेन समानता बोध्या। अस्फुटं सहृदयानामपि दुःखसंवेद्यं सहृदयैरपि झटित्यसंवेद्यमिति यावत्। अगूढं चासहृदयैरपि झटिति संवेद्यम् तादृशं वाच्यायमानतया न तथा चमत्करोति।

यथा—

"नान्ध्रीपयोधर इवातितरां प्रकाशो नो गुर्जरीस्तन इवातितरां निगूढः।
अर्थो गिरामपिहितः पिहितश्च कश्चित् सौभाग्यमेति मरहट्टवधूकुचाभः॥"

अपि च—

अनुद्घृष्टः शब्दैरथच रचनातः स्फुटरसः
पदानामर्थात्मा जनयति कवीनां बहु मुदम्।
यथा किञ्चित्किञ्चित्पवनचलचोलाञ्चलतया
कुचद्वन्द्वं कान्ति किरति न तथोद्घाटितमुरः॥

एवं च "कामिनीकुचकलशन्यायेन" सहृदयैकवेद्यमेव व्यङ्ग्यं ध्वनित्वमुपयाति। सहृदयैरपि दुःखसंवेद्यं सहृदयैरपि वेद्यं वेत्युभयमपि गुणीभूतव्यङ्ग्यमेवेति बोध्यम्। एवमन्येष्वपि भेदेष्वनुभव एव साक्षीति प्रदीपादौ स्पष्टम्। असुन्दरं चमत्कारजनने वाच्यमुखनिरीक्षकम्, यद्वा स्वभावादेव वाच्यापेक्षया चारु। एवमित्थं तस्य गुणीभूतव्यङ्ग्यस्य अष्टौ भेदा उदिताः कथिताः। तथा च—१ इतराङ्गम्, २ काकाक्षिप्तम्, ३ वाच्यसिद्ध्यङ्गम् ४ सन्दिग्धप्राधान्यम् ५ तुल्यप्राधान्यम्, ६ अस्फुटम्, ७ अगूढम्, ८ असुन्दरञ्चेत्यष्टौ नामान्यप्येतेषां बोध्यानि। अत्र गणनादेवाष्टत्वे लब्धेऽष्टाविति न्यूनाधिक्यव्युदासाय। तेनाप्रधानं संन्दिग्धतुल्यप्राधान्यञ्चेति गुणीभूतव्यङ्ग्यं त्रिविधमित्युक्तिरपास्ता उपाधिवैलक्षण्यस्य निह्नोतुमशक्यत्वात्।

( ४९ ) यथोद्देशमुदाजिहीर्षुरितराङ्गमिति विवृणोति—इतरस्येति। इतरस्य प्रधानभूतस्य रसादेः, रसशब्देन रस्यत आस्वाद्यत इति व्युत्पत्त्या भावरसाभासभावाभास भावशान्ति-भावोदय भाव-संन्धिभावशवलतारूपस्यासंलक्ष्यक्रमस्य ग्रहणम्, आदिशब्देन वाच्यस्य वाच्यार्थस्य लक्ष्यक्रमस्य च ग्रहणम्, अङ्गमुपकारकम् उत्कर्षकारीति यावत्। रसादि असंलक्ष्यक्रमरूपमित्यर्थः। निष्पन्नरसभावस्याङ्गत्वाभावाद्रसपदमत्र

यथा—

( ५० ) 'अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥'

( ५१ ) अत्र शृङ्गारः करुणस्याङ्गम् ।

---

स्थायिभावपरम् । आदिशब्दादनुरणनरूपं संलक्ष्यक्रममित्यर्थः ॥ एवञ्चासंलक्ष्यक्रमम् अनुस्वानाभसंलक्ष्यक्रमं चेति द्विविधमितराङ्गव्यङ्ग्यमित्याशयः । अत्र रसभावादिप्रधानानां मध्ये रसभाववाच्यरूपस्य त्रिविधस्यैव प्रधानस्य मूलकृता उदाहरणानि प्रदर्शितानि रसाभासाद्यसंलक्ष्यक्रमरूपस्य संलक्ष्यक्रमरूपस्य च प्रधानस्योदाहरणानि तु शेमुषीभिः स्वयमूह्यानि ।

( ५० ) रसस्य रसाङ्गतायामपराङ्गव्यङ्ग्यं मध्यमकाव्यमुदाहरति—अयं स इति । महाभारते स्त्रीपर्वणि चतुर्विंशेऽध्याये समरच्छिन्नं भूरिश्रवसो हस्तमादाय तत्कान्ताया विलपनमिदम् । अयं दृश्यमानदुःखस्थः, सः पूर्वानुभूतरसनोत्कर्षणादि तत्तच्छृङ्गारवस्तु, उत्कर्षतीत्युत्कर्षी "सुप्यजातौ णिनिस्ताच्छील्ये" ३।२।७८ इति पाणिनिसूत्रेण ताच्छील्ये णिनिप्रत्ययः । रसनाया उत्कर्षी रमणाय कटिदेशात् काञ्चीदामोत्सारणकारी । तथा पीनौ पुष्टौ स्तनौ मदीयकुचौ विमर्दयति यः सस्तथोक्तः । नाभिश्च ऊरू च जघनं चैतानि स्प्रष्टुं शीलमस्य । जघनं कटिपुरोभागः ।

"जघनं स्यात् स्त्रियाः श्रोणि पुरोभागे कटावपि" इति मेदिनी ।

नीव्याः बा.अतलवसनग्रन्थेः विस्रंसनः .मोचक इत्यर्थः, एवम्भूतः करोहस्तः दृश्यमानदुःखस्थो वर्त्तत इति शेषः ।

( ५१ ) अत्र किं कस्याङ्गमिति जिज्ञासायामाह—अत्रेति । अत्र रसनोत्कर्षणादिना व्यङ्ग्यः शृङ्गारः आलम्बनस्य भूरिश्रवसो मृतत्वेन रसतामनापन्नो मृतालम्बनकस्य करुणस्याङ्गम्, रसतापन्नस्य तस्य शृङ्गारेण प्रकर्षणात् पूर्वानुभूतसुखस्मरणे हि करुणप्रकर्षः, एवञ्च शृङ्गारो विशेषेण शोकमुद्दीप्य करुणं पुष्णातीति भवति तस्याङ्गमिति भावः । नच तदानीं शृङ्गारस्य रसत्वाऽप्राप्त्याकथमस्य रसाङ्गरसोदाहरणत्वं सेत्स्यतीति वाच्यम्, तदानीं शृङ्गाररसस्य पूर्णरसत्वाऽभावेऽपि खण्डरसस्य विद्यमानत्वात् । शृङ्गारस्य करुणविरुद्धत्वेऽपि स्मृतिविषयत्वेन गुणत्वमेव न तु दोषत्वम्, अनयोः समावेशस्य समाधानं खण्डरसत्वं चापि दोषपरिच्छेदे निर्णेष्यते । अत्र करुणमादाय काव्यस्य ध्वनित्वम्, शृङ्गारस्थायिनमादाय गुणीभूतव्यङ्ग्यत्वं बोध्यम् । शोकावेशादेव शृङ्गारोऽपुष्टः । ननु रसध्वनौ भावध्वनिरवश्यं वाच्या तथाच क्वचन प्रधानव्यङ्ग्यमादाय ध्वनित्वं क्वचनाङ्गभूतमादाय गुणीभूतव्यङ्ग्यत्वमिति निमित्तद्वयसमावेशाद्विगमनाविरहे कथं व्यपदेशनियम इति चेत्? सत्यम् "प्राधान्येन व्यपदेशा भवन्ती"ति न्यायेन भवति तथात्वम्, तथाहि यत्र यन्मुखेन चमत्कारस्तत्र तेनैव व्यवहारः प्राधान्यं च चमत्कारप्रयोजकत्वम्, तथा चाङ्गीभूतरसादीनां चमत्कृत्यतिशये गुणीभूतव्यङ्ग्यत्वम् अङ्गिनस्तथात्वे ध्वनित्वमिति भावः । एवञ्च प्रकृते करुणध्वनावपि गुणीभूतव्यङ्ग्यशृङ्गारेणैव चमत्कार इति तेनैव व्यवहारो न तु ध्वनित्वेनेति सहृदयहृदयप्रमाणम् ।

( ५२ ) 'मानोन्नतां प्रणयिनीमनुनेतुकामस्त्वत्सैन्यसागररवोद्गतकर्णतापः ।
हा! हा! कथं नु भवतो रिपुराजधानीप्रासादसंततिषु तिष्ठति कामिलोकः ॥

( ५३ ) अत्रौत्सुक्यत्राससंधिसंस्कृतस्य करुणस्य राजविषयरतावङ्गभावः ।

( ५२ ) रसस्य भावाङ्गतायामितराङ्गव्यङ्ग्यं मध्यमकाव्यमुदाहरति—मानोन्नतामिति । राज्ञः स्तुतिरियम् । हे राजन्! भवतो रिपुराजधान्याः प्रासादसन्ततिषु अट्टालिकासमूहेषु मानोन्नताम् अतिमानवर्तीं प्रणयिनीं प्रियतमाम् अनुनेतुकामः प्रसादयितुमिच्छुः कामिलोकः तव सैन्यसागरस्य रवेण आक्रमणशब्देन उद्गतो ज्ञातः कर्णयोःश्रोत्रयोस्तापः पीडा यस्य स तादृशः सन् हाहेति त्रासविज्ञातुर्वक्तुस्तद्विषयशोकः । कथं नु तत्र तिष्ठति? वसन्ततिलकाच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ( १९३ पृ० )

( ५३ ) अत्र किं कस्याङ्गमित्याकांक्षायामाह—अत्रौत्सुक्येति अत्र प्रथमपादेन मानिन्यनुनयकामनया औत्सुक्यं व्यङ्ग्यम्, तद्विरुद्धो द्वितीयपादेन त्रासः यथोक्तकर्णतापपदव्यङ्ग्य इत्यनयोः सन्धिना संस्कृतस्य परिपोषितस्य, तथा च तादृशसन्धिविशिष्टानां रिपुराजधानीकामिलोकानां शोच्यावस्थाज्ञातुर्वक्तुः शोकरूपः करुणो राजविषयरतिभावस्याङ्गमित्यर्थः । भावस्यास्वादमात्रत्वेन प्रधानत्वम्, वाच्यार्थो व्यङ्ग्यकरुणनिरपेक्ष एव तस्य व्यञ्जकः । औत्सुक्यादीनां व्यङ्ग्यार्थानां वाच्यार्थापेक्षया न्यूनचमत्कारित्वेन गुणीभूतव्यङ्ग्यत्वं बोध्यम् ।

अत्र हि हा! हा! शब्दः क्रोधव्यञ्जकहुङ्कारवन्निरर्थकः तथाहि शोकव्यञ्जक इति ग्रन्थकृतोऽभिप्रायः तदैव व्यङ्ग्यभूतहाहाशब्दप्रतिपाद्यस्य शोकरूपकरुणस्य व्यङ्ग्यत्वोपपत्तेः, हा हा शब्दस्य वाच्य एव शोकरूपः करुणः हाहेत्युक्ते शोचामीति प्रतीत्या तद्वाच्यतोपपत्तेः अन्यथा गोशब्दस्यापि गौर्नवाच्यः स्यादित्युच्यते—

तदा—

"कैलासालयभाललोचनरुचा निर्वर्त्तितालक्तकव्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा प्रीयताम् ।
स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्य्यते ॥

इदमुदाहरणीयम् । प्रणति परे भगवति भवे भवान्याः मानभङ्गेन नेत्रारुण्यनाशवर्णमिदम् । अत्र कविनिष्ठे पार्वतीविषयकप्रीतिरूपे भावे पार्वतीपरमेश्वरयोः शृङ्गारोऽङ्गमिति भावः । एवं भावादीनां भावाद्यङ्गत्वे उदाहरणानि काव्यप्रकाशाद्युक्तानि ज्ञेयानि ।

तत्र भावस्य भावाङ्गतायामितराङ्गव्यङ्ग्यं यथा—

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः ।
आश्चर्य्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥

अत्र भूविषयको रतिभावो राजविषयकस्य रतिभावस्याङ्गम् ।

रसाभासभावाभासयोर्भावाङ्गतायामितराङ्गव्यङ्ग्यं यथा—

"बन्दीकृत्य नृपद्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः ।

( ५४ ) 'जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।

अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधेः
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे" ॥

अत्र भावस्य रसाभासभावाभासौ प्रथमार्धद्वितीयार्धद्योत्यौ राजविषयकस्य रतिभावस्याङ्गम् ।

भावसन्धेः भावाङ्गतायामितराङ्गव्यङ्ग्यं यथा—

"अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥"

अत्र वैरिणो मदाख्यो गर्वरूपो भावस्तस्य प्रशमः ( शान्तिः ) कविनिष्ठराजविषयकरतिभावस्याङ्गम् ।

भावोदयस्य भावाङ्गतायामितराङ्गव्यङ्ग्यं यथा—

"साकं कुरङ्गकदृशा मधुपानलीलां कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो ! गृहीतं केनापि तत्र विषमामकरोदवस्थाम् ॥"

अत्र विषमावस्थाव्यङ्ग्यस्य त्रासरूपभावस्योदयः कविनिष्ठस्य राजविषयकस्य रत्याख्यभावस्याङ्गम् ।

भावसन्धेर्भावाङ्गतायामितराङ्गव्यङ्ग्यं यथा—

"असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात्कपटवटुवेशापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥"

अत्र स्मरहरगतयोः त्वरापदशैथिल्यपदगम्ययोरावेगधैर्याख्यभावयोः सन्धिः कविनिष्ठस्य शिवविषयकरतिभावस्याङ्गम् ।

भावशबलतायाः भावाङ्गतायामितराङ्गव्यङ्ग्यं यथा—

"पश्येत्कश्चिच्चलचपलरे ! का त्वराहं कुमारी,
हस्तालम्बं वितर, हहहा व्युत्क्रमं क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरण्यवृत्तेः
कन्याकश्चित्फलकिसलयान्याददानाऽभिधत्ते ॥"

अत्र "पश्येत्कश्चित्" इति शङ्का "चलचपलरे" इत्यसूया "का त्वरा" इति धृतिः "अहं कुमारी" इति स्मृतिः "हस्तालम्बं वितर" इति श्रमः "हहहा" इति दैन्यम्, व्युत्क्रम इति विबोधः" क्वासि यासि" इत्यौत्सुक्यम्, एतेषां शबलता राजविषयकरतिभावेऽङ्गम् ।

( ५४ ) अथ शब्दशक्तिमूलानुसरणरूपोपमालङ्कारस्य संलक्ष्यक्रमस्य वाच्याङ्गतायामितराङ्गव्यङ्ग्यं गुणीभूतव्यङ्ग्यमुदाहरति—जनस्थान इति ।

धनार्थमुद्योगं विदधतोऽपि कस्यचिद्दरिद्रस्याप्राप्तधनतया धनिसमक्षे सनिर्वेदोक्तिरियम् । कनकस्य सुवर्णस्य मृगोऽन्वेषणम् प्रार्थना वा तत्र या तृष्णा निष्फलाशा तया अन्धिता विवेकरहिता धीर्यस्य तादृशेन मया जनानां धनिलोकानां स्थाने ग्रामनगरादौ

कृता लङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥'

( ५५ ) अत्र रामत्वं प्राप्तमित्यवचनेऽपि शब्दशक्तेरेव रामत्वमवगम्यते । वचनेन तु सादृश्यहेतुकतादात्म्यारोपणमाविष्कुर्वता तद्गोपनमपाकृतम् । तेन वाच्यं सादृश्यं वाक्यार्थान्वयोपपादकतयाङ्गतां नीतम् ।

---

भ्रान्तं भ्रमणं कृतम् । अन्यत्र कनकमृगे मारीचे तृष्णाधारणलोभस्तया अन्धिता विवेकरहिता धीर्यस्य तेन रामेण जनस्थाने तन्नाम्नि दण्डकारण्यैकदेशे भ्रान्तम् । वै विश्चयेन प्रतिपदं प्रत्येकधनिस्थाने देहि प्रयच्छेति वचो वाक्यम् उदश्रु उद्गतम् उत्थितम् अश्रु नेत्रजलं यथास्यात्तथा प्रलपितं व्यर्थमेवोक्तम् । अन्यत्र तु प्रतिपदं प्रत्येकपादन्यासे वैदेहि ! हे जनकनन्दिनि सीते ! इति वचः उदश्रु यथास्यात्तथा प्रलपितं निरर्थकमेवोक्तम्, तत्प्रागेव रावणेन सीताया नीततया तत्प्रत्युत्तराप्राप्तेरति भावः । भर्त्तुः भरणकर्त्तुः धनिकस्य परिपाटीषु सेवारचनासु अलम् अत्यर्थं घटना प्रसंशायोजना न कृता अथवा का भर्त्तुः कुत्सितभर्त्तुः वदनपरिपाटीषु मिथ्याभाषणप्रकारेषु घटना उपपत्तिः न कृता, इति त्वं कथय, अपि तु सर्वैव कृतेत्यर्थः, तथापि ततो धनं न लब्धमिति भावः । अन्यत्र तु लङ्काभर्त्तुः रावणस्य वदनपरिपाट्यां मुखपंक्तौ इषुघटना शरसंयोजना कृता अत एव रामत्वं दाशरथित्वं रामधर्मं इति यावत् तत् आप्तं प्राप्तम्, परन्तु कुशलं दारिद्र्यपाकरणेन मङ्गलं परिणामसुरसं वा वसु धनं यस्य तद्भावः, अन्यत्र कुशलवौ सुतौ पुत्रौ यस्याः सा सीता नाधिगता न प्राप्ता । शिखरिणीच्छन्दस्तल्लक्षणञ्चोक्तं प्राक् । ( १८४ पृ० )

( ५६ ) अत्र शब्दशक्तिमहिम्ना पादत्रयव्यङ्ग्या प्रकृताप्रकृतयोः कथयितृरामयोरुपमा "मयाप्तं रामत्वमि"ति वाच्यायाः रामत्वप्राप्तेरुपकारकतयैव वक्तुरभिप्रेतेति उपमाया वाच्याङ्गत्वं तदेव दर्शयति—अत्र रामत्वमिति । अवचनेऽपि अनुक्तावपि शब्दशक्तेरेव शब्दशक्त्यभिधामूलव्यञ्जनावृत्तिसामर्थ्यादेव रामत्वं रामसादृश्यं वक्तरीति शेषः । वचनेन तु "मयाप्तं रामत्वमि"ति वाक्येन तु तदुक्तावित्यर्थः, सादृश्यं एकवाचकवाच्यत्वरूपं शाब्दमौपम्यं हेतुर्यस्य तत्तथोक्तम्, वक्तरि तादृशसादृश्यं विना रामस्याभेदरोपणासम्भवादित्याशयः । तादात्म्यारोपणं रामत्वप्राप्त्या रामतादात्म्यारोपम्, तदारोपश्च सादृश्यमूलक एवेति सादृश्यहेतुरित्यनेनोक्तम् । आविष्कुर्वता व्यञ्जयता वचनेनेति सम्बन्धः तद्गोपनं व्यङ्ग्यभूतरामसादृश्यस्य गूढत्वम् अपाकृतं खण्डितम् तद्गोपनात् सादृश्यस्य गुणीभूतत्वमुपपादितमिति भावः । एतेनाधिकचमत्कारित्वाभावेनास्योपमाध्वनित्वं न शङ्कनीयमिति सूचितम् । तेन सादृश्यस्य गोपनाकरणेन हेतुना वाच्यं 'मयाप्तं रामत्वम्" इति पदाभिधेयं व्यङ्ग्यमपि झटितिबोध्यतया वाच्यायमानं सादृश्यं रामतुल्यत्वं वाक्यार्थस्य आत्मना रामसादृश्यप्राप्तेःअन्वयोपपादकतया अन्वयप्रतियोगित्वेन सम्बन्धस्य सम्पादकतया, अन्यथा 'अन्यस्य धर्मं अन्यः कथं लभेदिति मयाप्तं रामत्वम्" इत्यस्यानुपपत्तेः वारयितुमशक्यत्वादिति भावः । अङ्गतां नीतम् उत्कर्षतां प्रापितं "मयाप्तं रामत्वमि"त्यभिधाय वक्त्रेति शेषः । एवञ्च व्यङ्ग्यार्थरूपस्य सादृश्यस्य वाच्यादधिकातिशयत्वाभावेन गुणीभूतव्यङ्ग्यत्वमिति ।

नन्वेवन्तर्हि वाच्यसिद्ध्यङ्गमित्यस्यैवोदाहरणं जातं नस्वितराङ्गस्येति चेत् ? मैवम्,

( ५९ ) काक्वाक्षिप्तं यथा—

'मथ्नामि कौरवशतं समरे न कोपा-
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवतां नृपतिः पणेन ॥'

यत्रापाततः प्रतीतस्यार्थस्यानुपपत्तिर्व्यङ्ग्यं निरस्यति स वाच्यसिद्ध्यङ्गस्य विषयः यत्र त्वापाततः प्रतीतस्य बाधेन तत्स्थानेऽसमानमर्पयित्वा सम्बन्धं सम्पादयति सोऽस्य विषय इत्यनयोर्भेदः । न च तथापि तद्रोपनात् अगूढरूपगुणीभूतव्यङ्ग्यप्रभेद एवायमिति वाच्यम्, तथात्वेऽपि इतराङ्गतानपायात् । ननु "रामत्वं प्राप्तम्" इत्यनेन रामाभेदप्राप्तिरेव प्रतीयते इति रूपकमेवेदमिति वाच्यम्, समानविभक्तिकत्वाभावात् भेदान्वयबोधस्याशाब्दत्वात् । न च श्लेषस्यायं विषय इति शङ्क्यः, यत्र शब्देन द्वितीयोऽर्थः साक्षात्प्रतिपाद्यते स श्लेषस्य विषयः यत्र तु शब्दसामर्थ्यादपरोऽर्थ आक्षिप्यते न तु शब्देनोच्यते स व्यञ्जनाया एव विषयः शब्दस्य साक्षात्प्रतिपादकं तत्रैव,-यत्र शब्दप्रतिपादितोऽर्थः समभिव्याहृतशब्दान्तरेण साकं विवक्षितमन्वयं प्राप्नोति यथा-"येन ध्वस्त" इत्यादौ । प्रकृते तु प्रतिपन्नो द्वितीयोऽर्थो रामेणेत्यन्वयप्रतियोगिपदाभावेनान्वयं लभते अतो रामेण यथा जनस्थानं भ्रान्तं मयापि तथा इत्यर्थो व्यञ्जनालभ्य एवेति बोध्यम् ।

अर्थशक्तिमूलानुरणनरूपस्य लक्ष्यक्रमस्य वस्तुनो वाच्याङ्गतायामितराङ्गव्यङ्ग्यत्वं यथा-

"आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गीम्
अम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एतां प्रसादयति पश्य ! शनैः प्रभाते
तन्वङ्गि ! पादपतनेन सहस्ररश्मिः ॥

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो रविकमलिनी वृत्तान्ताध्यारोपेणैव स्थितः।

( ५९ ) काक्वाक्षिप्तमिति । काकुः उच्चारणेन शिरश्चालनसहकृतध्वनिविशेषस्तया आक्षिप्तं शाब्दबोधात्प्राक् पदार्थविषया झटिति प्रत्यायितमित्यर्थः । काक्वाक्षिप्तव्यङ्ग्यमुदाहरति—मथ्नामीति । वेणीसंहारे प्रथमेऽङ्के दुर्योधनेन सह सन्धिकरणे प्रवृत्तं युधिष्ठिरं श्रुत्वा सन्धिकरणासहिष्णोः भीमसेनस्य सहदेवं प्रत्युक्तिरियम् । अहं समरे युद्धे कोपात् कौरवाणां दुर्योधनादीनां शतं न मथ्नामि । अत्र प्रतिज्ञातकुरुकुलक्षयभीमसेनस्य "न मथ्नामि" इत्युक्तिर्विरुद्धेति नञा शिरश्चालनसहकृता काकुः प्रतीयते। तथाच काकानर्थान्तरं प्रतीयते तेन "न मथ्नामि" इति न अर्थात् मथ्नाम्येवेत्यवधारणं गम्यते। एवमग्रेऽपि सर्वत्र । दुःशासनस्य उरस्त हृदयात् रुधिरं शोणितं न पिबामि अपि तु पिबाम्येव सुयोधनमिति दुर्योधनस्यापरं नाम । दुःखेन योधनीयत्वाभिप्रायेण दुर्योधनपदं त्यक्त्वा सुयोधनपदप्रयोगः । तस्य ऊरू सक्थियुग्मं गदया न सञ्चूर्णयामि अपि तु सञ्चूर्णयाम्येव भवतां नृपतिः राजा युधिष्ठिरः न तु मम प्रजानां वा स्वबुद्ध्या राजपारत्यागादितिभावः, पणेन—

"इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम् ।
देहि मे चतुरो ग्रामान् पञ्चमं किञ्चिदेव तु ॥"

( ५७ ) अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यस्य निषेधस्य सहभावेनैव स्थितम् ।

( ५८ ) 'दीपयन्रोदसीरन्ध्रमेष ज्वलति सर्वतः ।
प्रतापस्तव राजेन्द्र ! वैरिवंशदवानलः ॥'

( ५९ ) अत्रान्वयस्य वेणुत्वारोपणरूपो व्यङ्ग्यः प्रतापस्य दावानलत्वारोपसिद्ध्यङ्गम् ।

---

इत्युक्तेन ग्रामपञ्चकरूपेण सन्धि मैत्रीं करोत्वित्यर्थः । अत्र क्रोधातिशयान्मथनादौ वर्त्तमानत्वं बोध्यम्, यद्वा "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" इति पाणिनिसूत्रेण वर्त्तमानसामीप्ये भविष्यति लट् ।

वसन्ततिलकाच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ( १९३ पृ० )

( ९७ ) अत्र किं व्यङ्ग्यं कथं तस्य गुणीभाव इत्यत आह–अत्रेति । प्रतिज्ञातकुरुकुलक्षयस्य "न मथ्नामी" त्याद्युक्तिर्बाधितेति नञस्तु काकुः प्रतीयते,तया च काका नञर्थान्तरं बाधयति तेन न "न मथ्नामि" इति न किन्तु मथ्नाम्येवे (क) त्यवधारणं व्यङ्ग्यम्, तदेव मथ्नाम्येवेत्येवकारेण दर्शितः । आदिपदात् 'पिबाम्येवेत्यादिकं बोध्यम् । इत्यादिव्यङ्ग्यमिति । इत्याद्येकदेशरूपं व्यङ्ग्यं काकाक्षिप्तमिति सम्बन्धः । अतो विरोधिलक्षणाया अपि नायं विषयः मुख्यार्थबाधाद्यनुसन्धानात्प्रागेव काका विवक्षितार्थोपस्थितेः । ननु मथ्नाम्येवेत्यादिव्यङ्ग्यस्य चमत्कारित्वे ध्वनित्वमेव स्यात् तत्कथं गुणीभूतव्यङ्ग्यत्वमत आह–वाच्यस्येति । निषेधस्य 'न मथ्नामीत्यादेः सहभावेनैव समकालं प्रतीयमानत्वेनैव स्थितं व्यवस्थितमित्यर्थः । स्थितस्य वाच्यार्थस्य व्यङ्ग्यार्थोपस्थितावनुपयोगात् काकुरेव नियमविशिष्टविधिव्यञ्जिका इत्यर्थः । एवञ्च यथा निष्पीड्य पात्रस्थापितेक्षुरसापेक्षया स्वयं चर्वितेक्षुदण्डरसे माधुर्यातिशयं प्रतीयते तथा वाच्यार्थरूपमावेन व्यज्यमानव्यङ्ग्यार्थापेक्षया किञ्चिद्विचार्य व्यज्यमान एव व्यङ्ग्यार्थे माधुर्यातिशयः प्रतीयत इति भवति गुणीभूतव्यङ्ग्यत्वम्, एतेन ध्वनित्वनिरासो बोध्यः । यद्यप्यगूढव्यङ्ग्यान्तःपातित्वमस्य सम्भवति तथापि काकुरूपविच्छित्तिविशेषात्पृथग्ग्रहणं बोध्यम् ।

( ९८ ) वाच्यसिद्ध्यङ्गं व्यङ्ग्यमुदाहरति—दीपयन्निति । राज्ञः प्रसंशेयम् । हे राजेन्द्र ! वैरिवंशः शत्रुकुलमेव वंशो वेणुः तत्र दावानलः दावाग्निस्वरूपः, एष तवप्रतापः रोदसीरन्ध्रं द्यावापृथिव्योरन्तरालं दीपयन् प्रकाशयन् सर्वतो ज्वलति दीप्यते ।

( ९९ ) अत्रेति—अन्वयस्य वैरिकुलस्य वंशपदवाच्यस्य अन्वये इत्यर्थः, वेणुत्वारोपणरूपः वंशदण्डत्वारोपात्मकः व्यङ्ग्यो व्यङ्ग्यार्थः, प्रतापस्य या दवानलत्वारोपसिद्धिस्तस्या अङ्गम् उपकारकः । तथाच कुलवेणुद्व्यर्थकस्य वंशपदस्य प्रकरणात् कुले नियन्त्रणेन वेणोस्तद्व्यङ्ग्यत्वेन तद्रूपणस्यापि व्यङ्ग्यत्वात् दवानलत्वारोपसिद्ध्यङ्ग्यमिति कुले दवानलबाधेन वेणावेव तदबाधात् । अथ च प्रताप इति दावानल इत्युभयत्र

---

( क ) मथ्नाम्येवेत्येवकारेण—

"तथा भूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥

इत्यादौ मयि न योग्यः खेदः, कुरुषु तु योग्य इति काका प्रतीयमानस्यार्थस्य व्यवच्छेदो ज्ञेय इति केचित् ।

प्रथमाविभक्तिः अन्यथानुपपत्त्या प्रतापदवानलत्वारोपपूर्वकमेव तयोस्तादात्म्यं प्रतिपादयति, एवञ्च प्रतापे दवानलत्वारोपनिबन्धनं तादात्म्यरूपवाच्यार्थस्य सिद्धिनिर्वाहको वैरिकुले वंशदण्डत्वारोपरूपो व्यङ्ग्यार्थ एव अन्यथा सादृश्यघटकपदाभावेन प्रतापे दवानलत्वारोपणासम्भवात् । अत्र हि सादृश्यमात्रनिष्पादकतया व्यङ्ग्यारोपस्य वाच्यारोपादनधिकचमत्कारित्वेन गुणीभूतव्यङ्ग्यत्वम् ।

अत्रेदम्विचारणीयम्—यदि प्रकरणवशात् अनेकार्थस्य वंशपदस्य प्रथमं कुलबोधकत्वं तदैव वेणुरूपोऽर्थो व्यङ्ग्यो भवति तदेव तु न सम्भवति, दवानलस्य कुले बाधात् । किन्तु कुलवेण्वारुभयोरेकदा एव दवानलान्वयार्थं तात्पर्य्याद् वंशयोरुपस्थितया अर्थद्वयमेव वाच्यम् , न तु वेणुरूपोऽर्थो व्यङ्ग्यस्तथाच परम्परितरूपकमेवेदं वेणुत्वरूपणस्य दवानलत्वरूपणकारणत्वात् । तद्वक्ष्यति स्वयमेव—

"यत्रकस्यचिदारोपः परारोपस्य कारणम् ।
तत्परम्परितम्" ॥ इति ।

उदाहरिष्यति च—

"आहवे जगदुद्दण्डराजमण्डलराहवे ।
श्रीनृसिंहमहीपाल ! स्वस्त्यस्तु तव बाहवे ॥" इति ।

अत्र राजमण्डलस्य ग्रासकरूपसम्बन्धितया राहुबाधात् बाहौ राहुरूपणमनुपपन्नमतो नृपमण्डले चन्द्रमण्डलत्वस्यारोपो बाहौ राहुरूपणकारणमिति । अत एव काव्यप्रकाशकृताऽपि "सद्वंशमुक्तामणिः" इत्यत्र राज्ञो मुक्तामण्यारोपणस्य सत्कुले बाधात् सत्कुले सद्वेणुरोपणं तत्कारणमित्युक्तम् । अतो "दीपयन् रोदसी" इत्यादिकं परम्परितरूपकोदाहरणमेव, न वाच्यसिद्ध्यङ्गोदाहरणम् । अन्यथा स्वोक्तेः काव्यप्रकाशकृदुक्तेश्च विरोधापत्तेः । नहि दीपयन्नित्यादौ आहवे जगदुद्दण्डेत्यादौ च एकस्य वाच्यसिद्ध्यङ्गत्वमपरस्य परम्परितरूपकत्वमित्यत्र किमपि विनिगमकमस्ति । वाच्यसिद्ध्यङ्गोदाहरणन्तु—

"गच्छाम्यच्युत ! दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किन्त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसाम् ,
आश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥"

इतिकाव्यप्रकाशकृद्भिर्दत्तमेवान्वेष्टव्यम् । तथा हि "इत्यामन्त्रणेत्यादिर्वाच्यार्थः । पूर्वार्द्धामन्त्रणेत्यादिवाक्यार्थस्याप्रतीतिकालेऽसिद्धेस्तद्व्यङ्ग्यार्थस्य-हे अच्युत ! मद्विधनायिकादर्शनेनाऽपि धैर्यच्युतरहित इत्येवं विधायाः भङ्गयाः प्रतीत्यैव सिद्ध्यति । नच नृपमण्डले चन्द्रमण्डलारोपणमपि व्यङ्ग्यं सदेवालङ्कारः तथा च परम्परितरूपकालङ्कार वाच्य सिद्ध्यङ्गयोः सङ्कर एवेति वाच्यम् , व्यङ्ग्यत्वेऽलङ्काराभावस्य ब्राह्मणश्रमणेत्यादिना एवोक्तत्वात् । प्रथमं नृपमण्डले राहोरन्वयासम्भवेन राजमण्डलपदादेकदैव नृप चन्द्रमण्डलयोरुपस्थितया द्वयोरपि वाच्यत्वाच्च ।

ननु तत्कथम्—

"भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छां तमः शरीरसादम् ।
मरणं च जलदभुजगं प्रसह्य कुरुते वियोगिनीनाम् ॥"

इत्यत्र विशेषजले रूपितं हलाहलं व्यङ्ग्यं भुजगरोपणसिद्धिकृदित्युक्त्या हलाहलस्य

( ६० ) 'हरस्तु किंचित्परिवृत्तधैर्यः —' इत्यादौ (क) विलोचनव्यापारचुम्बनाभिलाषयोः प्राधान्ये संदेहः ।

( ६१ ) ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते ॥'

---

व्यङ्ग्यत्वमुक्त्वा काव्यप्रकाशकृता वाच्यसिद्ध्यङ्गोदाहरणत्वेन तदुक्तमिति चेत् ? मैवम्— तत्रोद्दीपकतया प्राकरणिकमनेकार्थस्य विषशब्दस्यार्थो जलम् इत्यतोऽप्राकरणिकं हलाहलं व्यङ्ग्यमित्युक्तम् । न च दीपयन्नित्यत्रापि प्राकरणिकत्वेन वंशपदार्थकुलवाच्यं वेणुस्तु अप्राकरणिको व्यङ्ग्य एवेति वाच्यम् , दवानलरूपणस्यापि तात्पर्यविषयत्वेन तस्य कुले बाधेन तदुपपादनतया वेणोरपि प्राकरणिकत्वात् । अन्यथा आहवे जगदुद्दण्ड' इत्यादावपि परम्परितरूपकं न स्यात् किन्तु वाच्यसिद्ध्यङ्गमेव तदपि स्यात् "भ्रमिमरतिमि" त्यादौ तु जलदे भुजगरूपणं श्यामत्वेनापकारित्वेन च जले हलाहलरूपं विनापि आपाततः सिद्ध्यत्येवेति हलाहलमप्राकरणिकमित्यतो व्यङ्ग्यमेव परन्तु प्रणिधाने सति जलस्य भुजगजन्यत्वाऽसम्भवेन भुजगरूपणाऽसिद्ध्या तत्सिद्धिकारित्वेन पश्चाज्जले हलाहलरूपणमिति विश्वप्रियातातपादा आहुः ।

( ६० ) सन्दिग्धप्राधान्यं व्यङ्ग्यमुदाहरति—हरस्त्विति । कुमारसम्भवे आकालिकेवसन्ते जाते सर्वेषामेव कामोद्रेके सति हरस्यापि किञ्चित्तथात्ववर्णनमिदम् । एतच्च व्याख्यातं प्रागेव अत्र प्राधान्यसन्देहो हरस्य शृङ्गारव्यञ्जकता विलोचनव्यापारो हि वाच्यः, चुम्बनाभिलाषस्तु व्यङ्ग्यः, तद्द्वयमपि शृङ्गारानुभावत्वेन रसो व्यञ्जितः इति सन्देहः । तथाहि शृङ्गारव्यञ्जकत्वात् किं विलोचनव्यापारस्य प्राधान्यम् उत व्यङ्ग्यत्वेनास्वाद्यत्वाच्चुम्बनाभिलाषस्य प्राधान्यमिति प्राधान्यविषये सन्देह इत्यर्थः । प्राधान्यस्य निश्चयाभावादेव चमत्काराजनकतया गुणीभूतव्यङ्ग्यत्वम् । नच द्वयोरपि शृङ्गारव्यञ्जकतया प्राधान्यमिति तुल्यप्राधान्यस्योदाहरणमेवेदमिति वाच्यम् , उभयोः प्राधान्यसन्देहे न तत् तत्र प्राधान्यतुल्यताया निश्चितत्वादिति ध्येयम् ।

( ६१ ) तुल्यप्राधान्यव्यङ्ग्यमुदाहरति—ब्राह्मणेति । दिग्विजये परशुरामं विजगीषुं रावणं प्रति तन्मन्त्रिणस्तत्रासकवचनमिदम् । सिद्धान्तवागीशेन तु—महावीरचरिते द्वितीयेऽङ्के रावणं प्रति पत्रद्वारा परशुरामस्योक्तिमभिधाय रामचरणेन "दिग्विजये भार्गवविजयीषु दशग्रीवं प्रतीत्युक्ति प्रति यल्लिखितं तदुक्तनाटकादर्शनादनुमानमात्रेणेति" यदुक्तं तदतिसाहसमात्रमेव तथाहि न हि तन्नाटकेऽन्यदीयानि पद्यानि सन्तीति वक्तुं युक्तम् बहूनामन्येषां पद्यानामुपलम्भात् । तथा च "ग्रीवाभङ्गाऽभिरामम्" इति पद्यं शकुन्तलानाटके प्रथमेऽङ्के विद्यमानं हनुमन्नाटके चतुर्थेऽङ्के दृश्यते । अपि च बालरामायणे षष्ठेऽङ्के पठितं "सद्यः पुरीपरिसरेऽपि" इति पद्यम् अनर्घ्यराघवनाटके तृतीयेऽङ्के पठितं "समन्तादुत्ताळैः सुरसहचरी" इति पद्यं च हनुमन्नाटके दृश्यत इति दिक् । ब्राह्मणानां अतिक्रम त्यागः पराभवपरित्यागः भवतां रक्षसामेव भूतये कल्याणाय भविष्यति न तु स्वार्थं ब्रवीमीत्यर्थः । जामदग्न्यः परशुरामस्तथा ब्राह्मण इत्यर्थः । मित्रं चेति चकारस्यान्वयः । क्रम-

---

( क ) "हरस्तु किञ्चित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाऽधरोष्ठे व्यापारयामास विलोचनानि ॥ इति समस्तम् ।

( ६२ ) अत्र परशुरामो रक्षःकुलक्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम् ।

( ६३ ) 'संधौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः ।
अल्लावदीननृपतौ न संधिर्न च विग्रहः ॥'

( ६४ ) अत्राल्लावदीनाख्ये नृपतौ दानसामादिमन्तरेण नान्यः प्रशमोपाय इति व्यङ्ग्यं व्युत्पन्नानामपि झटित्यस्फुटम् ।

( ६५ ) 'अनेन लोकगुरुणा सतां धर्मोपदेशिना ।
अहं व्रतवती स्वैरमुक्तेन किमतः परम् ॥'

योरेकाश्रयत्वेन शिवोपासकत्वेन च सतीर्थ्यतया मित्रत्वं तस्यातिक्रमो न केवलं ब्राह्मणातिक्रमो मित्रातिक्रमश्च । अन्यथा ब्राह्मणातिक्रमत्यागाभावे दुर्मनायते असन्तुष्टो भविष्यति "दुर्मनायत" इत्यत्र भविष्यत्सामीप्ये वर्त्तमानता । तथाच परशुरामातिक्रमप्रवृत्तावतिक्रमो न सेत्स्यति किन्तु तस्य दौर्मनस्यमेव भविष्यतीति यथा कार्त्तवीर्य्येण दौर्मनस्यं विधाय क्षत्रियकुलं नाशितं तथा भवताऽपि रक्षः कुलं नाशयितव्यमित्याशयः ।

( ६२ ) अत्रेति । व्यङ्ग्यस्य "दुर्मनायत" इति पदगम्यस्य, वाच्यस्य मित्रमित्यनेनाभिधीयमानस्य हितकारित्वरूपार्थस्य च तुल्यचमत्कारित्वात्तुल्यप्राधान्यम् । तथा च जामदग्न्यः क्षत्रियाणामिव रक्षसामपि क्षयं करिष्यतीति दण्डरूपं व्यङ्ग्यमिव भिन्नत्वाभिधानरूपं सामोपायात्मकं वाच्यमपि प्रधानमेव । अत एव व्यङ्ग्यार्थस्य वाच्यार्थाचमत्कारानाधायकत्वेन गुणीभूतव्यङ्ग्यत्वम् ।

( ६३ ) अस्फुटं व्यङ्ग्यमुदाहरति—सन्धाविति । अल्लावदीनेन सार्द्धं स्वस्य विरोधं सम्भाव्य कस्यचिच्छक्तिहीनराज्ञ उक्तिरियम् । सन्धौ अल्लावदीनेन सार्कं सन्धिविधाने सर्वस्वहरणं समग्रधनग्रहणं तेन कर्त्तव्यमिति शेषः, विग्रहे सङ्ग्रामकरणे तु प्राणनिग्रहस्तेन प्राणनाशः कर्त्तव्यः, अतो हेतोः अल्लावदीननृपतौ न सन्धिः परस्परं मैत्रीभावो न च विग्रहो युज्यत इति शेषः ।

( ६४ ) व्यङ्ग्यस्यास्फुटतां दर्शयति—अत्रेति । सामदानादीत्यादिपदेन पलायनग्रहणम् । नान्यः प्रशमोपाय इति व्यङ्ग्यं प्राणनिग्रहे प्राप्ते धनत्यागादेः ईषत्करत्वाऽभिप्रायेणेत्यर्थः । एवञ्च जीवनरक्षार्थं सर्वस्वदानेनाऽपि सन्धिः करणीय इत्येवं रूपं व्यङ्ग्यं व्युत्पन्नानामपि परिपक्वबुद्धीनामपि । अस्फुटं प्रतीत्यविषयीभूतम् । अत एव वाच्यार्थाद्धिकचमत्कारानाधायकत्वेन गुणीभूतव्यङ्ग्यत्वम् ।

( ६५ ) अगूढव्यङ्ग्यमुदाहरति—अनेनेति । शाक्यमुनेः तिर्यग्योषिता सह बलात्कारोपभोगमसहमानायास्तद्भार्यायास्तद्वृत्तान्तं ज्ञातुमभिलषन्तीं सखीं प्रत्युक्तिरियम् । सतां सज्जनानां धर्मोपदेशिना लोकगुरुणा अनेन स्वामिना अहं व्रतवती व्रतं गृहस्थधर्मानुष्ठानम्, तद्वती पतिव्रतायाः नियमवतीत्यर्थः अत एव अतः परं स्वैरं स्वच्छन्दं उक्तेन कथनेन स्वाम्याचरणेन किम् ! पतिव्रतायाः स्वाम्यवगुणस्यावाच्यत्वान्नातः परं मया किञ्चिद्वक्तव्यमित्याशयः ।

लोकगुरोः सद्धर्मोपदेशकस्यास्य दुर्वृत्ताचरणमनुचितमेव मम तु व्रताचरणसहायस्य तादृशस्य कथनमपि नोचितमिति गूढाऽभिप्रायोऽवगन्तव्यः ।

( ६६ ) अत्र प्रतीयमानोऽपि शाक्यमुनेस्तिर्यग्योषिति बलात्कारोपभोगः स्फुटतया वाच्यायमान इत्यगूढम् ।

( ६७ ) 'वाणीरकुडङ्गुड्डीणसउणिकोलाहलं सुणन्तीए ।
घरकम्मवावडाए बहुए सीअन्ति आङ्गाइं ॥'

( ६८ ) अत्र दत्तसंकेतः कश्चिल्लतागृहं प्रविष्ट इति व्यञ्जनात् 'सीदन्त्यङ्गानि'

( ६६ ) अत्रेति । प्रतीयमानोऽपि व्यङ्ग्यतया बोध्यमानोऽपि । प्रतीयमानस्य प्रायशोऽस्फुटत्वेन स्फुटत्वे तद्विरोधेऽत्राऽपिः । स्फुटतयेति प्रबन्धश्लोकात् प्रकरणवशाद् बलात्कारोपभोगज्ञानात् स्फुटता । वाच्यायमानो वाच्यार्थवत् शीघ्रं व्यज्यमानः । आक्षेपालङ्कारमहिम्ना व्यङ्ग्यरूपो विशेषो झटित्येव प्रतीयत इति वाच्यायमानत्वमस्य । व्यङ्ग्यापेक्षरहित एव वाच्य आक्षेपालङ्कार ईर्ष्याव्यभिचारिभावबोधकः, अत्र प्रतिनायिकायास्तिर्यग्योनित्वेन तदुपभोगस्य व्यङ्ग्यस्य नेर्ष्योत्कर्षाधायकत्वमिति व्यङ्ग्यार्थस्य स्फुटत्वेन वाच्यार्थातिशयत्वाभावाद्गुणीभूतव्यङ्ग्यत्वम् । अर्थशक्तिमूलानुरणनरूपोऽव्यङ्ग्यो ह्यत्रागूढः ।

अत्यन्ततिरस्कृतवाच्यस्यागूढत्वं यथा—

"एतद्विभाति चरमाचलचूडचुम्बि हिण्डीरपिण्डरुचिशीतमरीचिबिम्बम् ।
प्रज्वालितस्य रजनीं मदनानिलस्य धूमं दधत् प्रकट लाञ्छनकैतवेन ॥"

अत्र चुम्बीति पदे वदनसंसर्गरूपस्यार्थस्यासम्भवात् संसर्गमात्रं लक्ष्यते । तदतिशयश्चाभिधेयवत् स्फुटं प्रतीयते ।

( ६७ ) असुन्दरं व्यङ्ग्यमुदाहरति—वाणीरेति ।

"वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥"

इति संस्कृतम् । गृहपार्श्ववर्त्तिवेतसनिकुञ्जे दत्तसङ्केताया निकुञ्जोड्डीनपक्षिकोलाहलतर्कितोपनायकप्रवेशायाः गुरुजनपारतन्त्र्येण गृहकर्मव्यापृततया च तत्र गन्तुमशक्नुवन्त्याः स्वरूपवर्णनमिदम् । वानीरा वेतसाः ।

"अथ वेतसे । रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः" इत्यमरः ।

तेषां कुञ्जानि गहनस्थानानि

"निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे" इत्यमरः ।

तेभ्य उड्डीना उत्प्लुता ये शकुनयः पक्षिणस्तेषां कोलाहलं कलकलशब्दं शृण्वन्त्याः, गृहकर्मणि रन्धनादौ व्यापृतायाः प्रवृत्तायाः वध्वाः स्त्रिया अङ्गानि सीदन्ति आकुलतां प्राप्नुवन्ति प्रमोदावेगवशादवसन्नानि तत्तत्कर्मसमर्थानि भवन्तीत्यर्थः । सीदन्तीति वर्त्तमाननिर्देशादवसादस्याविरामः । शृण्वन्त्याः सीदन्तीति वर्त्तमानप्रत्ययाभ्यां श्रवणासादनयोः कारणकार्ययोः पौर्वापर्यविपर्ययरूपातिशयोक्तिरलङ्कारः । तेन चोत्कण्ठातिशयो व्यज्यत इत्युद्योते स्पष्टम् । मुखविपुलाच्छन्दः ।

( ६८ ) अत्रेति । अत्र दत्तसङ्केतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यम् । तत्र वध्वा गृहव्यापारवशादगमनेन अङ्गावसादः । स च वाच्योऽनुभावरूपो विप्रलम्भाभासव्यञ्-

इति वाच्यस्य चमत्कारः सहृदयसंवेद्य इत्यसुन्दरम् ।

( ६९ ) किंच । यो दीपकतुल्ययोगितादिषूपमाद्यलंकारो व्यङ्ग्यः स गुणीभूत-व्यङ्ग्य एव । वाच्यस्य दीपकादिमुखेनैव चमत्कारविधायित्वात् । तदुक्तं ध्वनिकृता—

( ७० ) 'अलंकारान्तरस्यापि प्रतीतौ यत्र भासते ।

तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः ॥'

---

कत्वात् यथा चमत्कुरुते न तथा व्यङ्ग्यमित्यसुन्दरम् । वाच्यस्य चमत्कार इति प्रतीकमादाय विज्ञप्रियातातस्तु—' वध्वा विप्रलम्भव्यञ्जकत्वे न ह्यत्र चमत्कारः । स चात्रोद्दीपकशकुनिकोलाहलश्रवणाधीनाऽवसादस्य विप्रलम्भं विना अन्यतोऽसम्भवात् तत्प्रतीत्यवश्यम्भावेन सङ्केतस्थले वध्वा अगमनादुक्ताऽवसादसहकारं विना न विप्रलम्भ प्रतीत्यवश्यम्भावः । वध्वा ईदृशकार्य्यत्यागेनापि तत्रागमनसम्भवाद्दते वाच्याङ्गावसादमुखप्रेक्षत्वेन तस्य न्यूनचमत्कारितेत्यर्थः" इत्याह ।

( ६९ ) असुन्दरस्य बहून्युदाहरणानि सम्भवन्तीति दर्शयितुमाह—किञ्च यो दीपकेति । बहूपमानानामेकधर्मान्वयो दीपकम् । उपमेयोपमानानामेकधर्मान्वयस्तुल्ययोगिता । आदिपदेन प्रतिवस्तूपमादृष्टान्तादीनां परिग्रहः । उपमाद्यलङ्कार इति । सर्वत्रैव व्यञ्जनया उपमा प्रतीयते। अत्रादिपदेन च अनेकक्रियाघटितदीपकादौ क्रियासमुच्चयादीनां ग्रहणम् । गुणीभूतव्यङ्ग्य एव असुन्दराख्य इति शेषः । उपमायाश्च गुणीभूतत्वे हेतुं दर्शयति—वाच्यस्येति । दीपकादिमुखेनैव आपातत एव व्यज्यमानदीपकादिद्वारैव न तु तात्पर्य्यावगतेरनन्तरं व्यज्यमानोपमादिना व्यङ्ग्यालङ्कारेणेत्येव शब्दार्थः । उपायान्तरेण दीपकादीनां पूर्वमसम्भवादिति भावः । अत एव चोक्तव्यङ्ग्यस्य असुन्दरसंज्ञापि सङ्घटत इति बोध्यम् । उक्तार्थे ध्वनिकारं प्रमाणयति—तदुक्तमिति । ध्वनिकृता आनन्दवर्धनेन—

( ७० ) अलङ्कारान्तरस्यापीति । यत्र स्थले अलङ्कारान्तरस्य रूपकादेरलङ्कारप्रतीतावपि व्यङ्ग्यतया बोधे सत्यपि वाच्यस्य तत्परत्वं व्यङ्ग्यालङ्कारान्तरतात्पर्य्यकत्वेन चारुत्वं न भासते न प्रतीतविषयो भवति। असौ प्रकारः ध्वनेर्मार्गो,विषयो न मतः, किन्तु गुणीभूत व्यङ्ग्यप्रकारविशेष एव मत इत्यर्थः । एवञ्च दीपकादावलङ्कारे उपमायाः प्रतीयमानत्वेऽपि चारुत्वस्यावस्थानाभ्नध्वनिव्यवहारः ।

यथा—

"रजनीशशिकरकिरणैर्बिसनीकमलैस्तरङ्गिणीसलिलैः ।

व्रततिः पुष्पस्तवकैः काव्यकथा भूष्यते सुजनैः ।

इत्यादिषूपमागर्भत्वेऽपि न तन्मुखेन चारुत्वं व्यवतिष्ठते, किन्तु वाच्यालङ्कारमुखेनैवेति अतोऽत्र वाच्यालङ्कारः काव्यव्यवहारो युक्तः । एवं समासोक्त्याक्षेपपानुक्तनिमित्तविशेषोक्तिपर्य्यायोक्तापह्नुतिसङ्करालङ्कारादावपि ज्ञेयम् ।

समासोक्तौ तावत्—

"उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।

यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम्" ॥

इत्यादौ व्यङ्ग्येनानुगतं वाच्यमेव प्राधान्येन प्रतीयते समारोपितनायिकानायक-

( ७१ ) यत्र च शब्दान्तरादिना गोपनकृतचारुत्वस्य विपर्यासः ।

यथा—

( ७२ ) 'दृष्ट्या केशव ! गोपरागहृतया किंचिन्न दृष्टं मया
तेनात्र स्खलितास्मि नाथ ! पतितां किं नाम नालम्बसे ।
एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गति-
र्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥'

व्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वात् । एवमाक्षेपानुक्तादावप्यनुसन्धेयम् । तथाचोक्तम्—

"व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः ।
समासोक्त्यादयस्तत्र वाच्यालङ्कृतयः स्फुटाः ॥
व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा ।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ॥
तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ ।
ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः ।" इति ।

( ७१ ) अन्यमपि गुणीभूतप्रकारं निरूपयितुमुत्थापयति—यत्र चेति । शब्दान्तरेण व्यङ्ग्यार्थस्य हठात् प्रत्यायकेन पदान्तरेण आदिना तादृशवाक्यान्तरेण वा गोपनेन व्यङ्ग्यद्वारा कृतं यच्चारुत्वं चमत्कारत्वं तस्य विपर्य्यासो भवति तत्रापि गोपनीयत्वापाकरणं गुणीभूतव्यङ्ग्य एवेति पूर्वेणान्वयः व्यङ्ग्यार्थस्य गोपनकृतचारुत्वे हि ध्वनित्वं तद्विपर्य्यासो व्यक्तीकरणं यत्र शब्दान्तरादिना क्रियते सोऽप्यगूढरूपगुणीभूतव्यङ्ग्यप्रभेद इत्यर्थः ।

( ७२ ) दृष्ट्येति । सश्लेषोक्तिः, तत्र वाच्यार्थो यथा—हे केशव ! गवां परागेण रजसा "परागः कौसुमेरेणौ स्नानीयादौ रजस्यपि" इत्यमरः, हृतया आच्छन्नया दृष्ट्या चक्षुषा मया किञ्चिन्मार्गादिकं न दृष्टं नावलोकितम्, तेन हेतुना अत्र तवाग्रत एव स्खलितास्मि पतितास्मि, अत एव हे नाथ ! पालक ! पतितां मां किं नालम्बसे न धारयसि । ननु कथमहं परस्त्रियमालम्बिष्ये इत्यत आह—एकस्त्वमिति । विषमेषु उच्चनीचेषु वातगर्तादिसङ्कटेषु वर्त्मसु खिन्नमनसां पतनेन क्लान्तहृदयानां, सर्वाबलानां सकलबलरहितानां स्त्रीणां पुंसां च यतस्त्वं गती रक्षकः, अतो रक्षणेच्छया परस्त्रीधारणेऽपि न दोषः शङ्क्य इति भावः । गोष्ठे गोप्या एवं सलेशं सश्लेषं गदितो हरिः श्रीकृष्णः वो युष्मान् चिरम् अवतात् रक्षतु ।

व्यङ्ग्यार्थस्तु यथा—गोपे निजस्वामिनि गोपाले यो रागोऽनुरागस्तेन हृतया लुप्तया मया, दृष्ट्या ज्ञानेन किञ्चित्तव रहस्यं न दृष्टं नानुभूतम् यद्वा गोपे गोपाले त्वयि यो रागस्तेन हृतया आकृष्टया मया दृष्ट्या किञ्चिन्निजपतिरोषादिकं न दृष्टं न विचारितम् । तेन अनुरागेण हेतुना अत्र गोष्ठे स्खलितास्मि विच्युतास्मि तथा च हे नाथ ! पतितां पतिभावं भर्तृत्वं किं नाम मां नालम्बसे नानुगृह्णासि । विषमेषुः कामः तेन खिन्नमनसां व्याकुलचेतसां सर्वासामबलानां त्वमेको गतिः रमणेन स्मरदुःखनाशकः । इति । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक् ( १५८ पृ० )

( ७३ ) अत्र गोपरागादिशब्दानां गोपे राग इत्यादिव्यङ्ग्यार्थानां सलेशमिति पदेन स्फुटतयावभासः। सलेशमिति पदस्य परित्यागे ध्वनिरेव।

( ७४ ) किंच। यत्र वस्त्वलंकाररसादिरूपव्यङ्ग्यानां रसाभ्यन्तरे गुणीभाव-स्तत्र प्रधानकृत एव काव्यव्यवहारः।

तदुक्तं तेनैव—

( ७५ ) 'प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।

( ७३ ) अत्रेति। गोपरागादीत्यादिना दृष्टयादेः परिग्रहः स्फुटतया स्पष्टतया अवभासः प्रतीतिः। श्लेषवशादेव तत्प्रतीतेः श्लेषलेशपदेन तत् स्फुटीकरणम्। ध्वनिरेवेति। शब्दश-क्तिमूलवस्तुध्वनिरेव न तु गुणीभूतव्यङ्ग्यमित्येव शब्दार्थो ज्ञेयः।

एवञ्च—

"गोप्यैवं गदितः समुद्धृतिपरः पायादपायाद्धरिः"। इति पठनीयम्।

तथाच कामिनीकुचकलशवद्गूढं चमत्करोति। अगूढन्तु स्फुटतया वाच्यायमानमिति तत्र गुणीभूतमेवेति भावः।

( ७४ ) क्वचित्तु व्यङ्ग्ये गुणीभूतेऽपि ध्वनिकाव्यव्यवहार एव न गुणीभूतव्यवहार इत्याशयेनाह—किञ्चेति। अपि चेत्यर्थः। रसादीत्यत्रादिपदेन भावादीनां ग्रहणम्। रसाभ्यन्तरे प्रधानीभूतरसादौ गुणीभावः अप्रधानभावेनावस्थितिः। प्रधानकृत एव काव्य-व्यवहार इति। प्रधानेनरसेनैव काव्यव्यहारो न तु गुणीभूतव्यङ्ग्यन तथाच तत्र "प्राधा-न्येन व्यपदेशा भवन्ति" इति न्यायादुत्तमकाव्यत्वमेवेत्यर्थः। यथा—"अयं स रसनो-त्कर्षी" इत्यादावेव हि शृङ्गारस्य गुणाभावेऽपि तं भागमवलम्ब्य मध्यमकाव्यव्यवहा-रोऽपि न कर्त्तव्यः, किन्त्वङ्गिनं करुणमाश्रित्य उत्तमकाव्यव्यहार एवेति भावः। अत्राह काव्यप्रकाशकारः-यद्यपि स नास्ति कश्चिद्विषयो यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदा-दिभिः सङ्करः संसृष्टिर्वा नास्ति तथापि "प्राधान्येन व्यपदेशा भवन्तीति" क्वचित् केनचिद् व्यवहारः कृत इति। न चेदं कथमुपपद्यते ईदृशस्थलेऽपराङ्गाख्यगुणीभूतव्यङ्ग्यस्यैवो-क्तत्वादिति वाच्यम्। यत्र गुणीभूतानामलङ्काररसादीनामङ्गिजनको न त्वङ्गिप्रकर्षकत्वं तत्रैवाङ्गिनो व्यञ्जकविशेषणत्वेनाङ्गिन एव चमत्कारित्वात् ध्वनित्वव्यवहारात्। यथा च "चलापाङ्गां दृष्टिम्" इत्यत्र मधुकरकामुकरूपालङ्कारस्य व्यङ्ग्यस्य "हताः" इति व्यञ्ज-कविशेषणत्वेन नापराङ्गत्वम्, किन्तु विप्रलम्भध्वनिरेव।

यथा वा—

"जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः।
नो यावत् परिरभ्य चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः॥

इत्यत्र विधिं प्रत्यसूयाध्वनिरेव "शठ" पदेन व्यञ्जकविशेषेण व्यक्तः। "नो यावदा-श्वासयामि" इत्यनेन व्यङ्ग्यस्य विप्रलम्भस्य तु असूयाजनकत्वमेव नासूया प्रकर्षकत्व-मित्यतो नेतराङ्गत्वमित्यादिस्वयमूहनीयम्। उक्तार्थे प्रमाणमुपपादयति-तदुक्तमिति। तेनै-वेति ध्वनिकृतैवेत्यर्थः।

( ७५ ) प्रकारोऽयमिति। अयं गुणीभूतव्यङ्ग्योऽपि प्रकारः इतराङ्गादिभेदः, रसादौ

धत्ते रसादितात्पर्यपर्यालोचनया पुनः ॥' इति ।

( ७६ ) यत्र तु—

( ७७ ) 'यत्रोन्मदानां प्रमदाजनानामभ्रंलिहः ( क ) शोणमणीमयूखः ।
संध्याभ्रमं प्राप्नुवतामकाण्डेऽप्यनङ्गनेपथ्यविधिं विधत्ते ॥'

(A) इत्यादौ रसादीनां नगरीवृत्तान्तादिवस्तुमात्रेऽङ्गत्वम्, तत्र तेषामतात्पर्यविषयत्वेऽपि तैरेव गुणीभूतैः काव्यव्यवहारः ।

( ७८ ) तदुक्तमस्मद्गोत्रकविपण्डितमुख्यश्रीचण्डीदासपादैः—'वाक्यार्थस्याखण्डबुद्धिवेद्यतया तन्मयीभावेनास्वाददशायां गुणप्रधानभावावभासस्तावन्नानुभूयते, का-

यत्तात्पर्यं रसादिबोधनेच्छया कवेरुच्चरितत्वं तस्य पर्यालोचनया अनुसन्धानेन पुनर्ध्वनिरूपतां धत्ते लभते । तथाच "अयं स रसनोत्कर्षी" इत्यादौ गुणीभावस्यापि शृङ्गारस्य ध्वनित्वसम्भवेन तं भागमवलम्ब्य शृङ्गारकाव्यव्यवहारप्रसक्तावपि तत्र करुणस्यैव प्राधान्यात्तेनैव काव्यव्यवहार इत्याशयः ।

( ७६ ) नन्वेवं यत्र रसादीनामन्यतमतात्पर्यविषयत्वेन प्रधानत्वं तत्रैव काव्यव्यपदेश इत्येतावता फलितम्, ततश्च ध्वनित्वासङ्कीर्णं गुणीभूतव्यङ्ग्यं क्वापि नास्तीति गुणीभूतव्यङ्ग्याख्यकाव्यभेदनिरूपणं व्यर्थमेवेत्यत आह—यत्र त्विति ।

( ७७ ) यत्रोन्मदानामिति । यत्र नगर्याम् अभ्रंलिहः अभ्राणि लिहन्तीति अभ्रंलिहाः "वहाभ्रे लिहः" इति खश्, मेघस्पर्शी, शोणमणीमयूखः पद्मरागमणीनां रश्मिः अकाण्डे असमये सन्ध्याभ्रमं तादृशरश्मिसञ्चरणादेव सन्ध्याकाल इति भ्रान्तिं प्राप्नुवताम्, उन्मदानां मदनमत्तानां प्रमदाजनानाम् अनङ्गनेपथ्यविधिं सुरतोपयुक्तवेशरचनां विधत्ते सम्पादयति । उपजातिछन्दस्तल्लक्षणन्तूक्तं प्राक् ( १६५पृ. )

(A) इत्यादाविति । नगरीवृत्तादिवस्तुमात्रे—केवलनागरीमध्यगतोदन्तरप्रभृतिप्रदर्शनरूपवस्तुविषये अङ्गत्वम् तत्परिपोषकत्वम् । तेषां रसादीनाम् अतात्पर्यविषयत्वेऽपि तात्पर्यविषयत्वेनाप्रधानत्वेऽपि तैरेव रसादिभिरेव काव्यव्यपदेशः । तथा च "यत्रोन्मदानाम्" इत्यादौ शृङ्गाररसस्य नगर्युदन्तं प्रति अङ्गत्वात् इतराङ्गभूतगुणीभूतव्यङ्ग्यत्वम्, एवञ्चापि "शृङ्गारकाव्यमिदम्" इत्येवात्रव्यपदेशो विधेयः न तु "नगर्युदन्तकाव्यम्" इति । तेन न गुणीभूतव्यङ्ग्याख्यकाव्यभेदनिरूपणं व्यर्थमिति ग्रन्थकर्त्तुराशयः ।

( ७८ ) अत्रार्थे प्राचां सम्मतिं दर्शयति—तदुक्तमिति । वाक्यार्थस्य पदार्थसमूहस्य अखण्डबुद्धिवेद्यतया एकबुद्धिग्राह्यतया । नन्वनेकपदार्थानामेकबुद्धिग्राह्यत्वनियमः कथमुपपद्यत अत आह—तन्मयीभावेनेति । अखण्डबुद्धिस्वरूपीभावेनेत्यर्थः । आस्वादद-

( क ) अत्र केचित्—अत्र शास्त्रसिद्धमपि कर्त्तुरेकवचनं किमपि अरुचिबीजं सहृदयहृदयेष्वङ्कुरयतीति त एवात्र प्रमाणम् । एवञ्चात्र "शोणमणिप्रकाशः" इतिपठनीयम् । अथवा—

"यत्रोन्मदानां प्रमदाजनानामभ्रंलिहा विद्रुमवेश्मभासः ।
सन्ध्याभ्रमं प्राप्नुवतामकालेऽप्युल्लासयन्ति स्मरवेषलीलाम् ॥"

एतादृशपाठो विधेय इत्याहुः ।

इति "लक्ष्मी" टिप्पण्यां चतुर्थः परिच्छेदः ।

लान्तरे तु प्रकरणादिपर्यालोचनया भवन्नप्यसौ न काव्यव्यपदेशं व्याहन्तुमीशः, तस्यास्वादमात्रायत्तत्वात्' इति ।

( ७९ ) केचिच्चित्राख्यं तृतीयं काव्यभेदमिच्छन्ति । तदाहुः—

( ८० ) 'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ।' इति ।

( ८१ ) तन्न । यदि हि अव्यङ्ग्यत्वेन व्यङ्ग्याभावस्तदा तस्य काव्यत्वमपि नास्तीति प्रागेवोक्तम् ।

( ८२ ) ईषद्व्यङ्ग्यत्वमिति चेत् ? किं नामेषद्व्यङ्ग्यत्वम् । आस्वाद्यव्यङ्ग्यत्वम्, अनास्वाद्यव्यङ्ग्यत्वं वा ।

---

धायां ज्ञानकाले गुणप्रधानभावेन अङ्गाङ्गिभावेन अवभासो द्वयोरुपस्थितिः । नानुभूयते सचेतोभिरिति शेषः तन्मयीभावदशेति भावः । कालान्तरे आस्वादविनाशदशायां तु भवन्नपि जायमानोऽपि असौ गुणप्रधानभावाऽवभासः काव्यव्यपदेशं रसादिघटितकाव्यसंज्ञां व्याहन्तुं नेशः प्राधान्यज्ञानेनाऽपि दूरीकर्त्तुं न समर्थः । अत्र हेतुमाह—तस्येति । तस्य काव्यव्यपदेशस्य आस्वादमात्रायत्तत्वात् आस्वादमात्राधीनत्वात् । तस्माच्छण्डीदासस्याऽपि मते गुणीभूतव्यङ्ग्यरूपरसादिना काव्यव्यवहार उपपन्न एवेति भावः । तथा च प्रकृते काव्यार्थः अनङ्गेनपथ्यव्यङ्ग्यः शृङ्गाररसस्तस्य विभावादिनानापदार्थघटितत्वेऽपि प्रपानकरसन्यायेन अखण्डबुद्धिवेद्यत्वं वाच्यस्तन्मयीभावेनाऽऽस्वाददशायां शृङ्गारो गुणः पुरीप्रकर्षः प्रधानमित्यवभासस्तावदापाततो नानुभूयते । ततश्चापाततस्तदननुभवेऽपि उत्तरकालं प्रकरणादिपर्यालोचनया पुरीप्रकर्षप्राधान्यावगमो भवन्नपि काव्यस्य गुणीभूतव्यङ्ग्यव्यपदेशं व्याहन्तुं नेश इति समुदिताभिप्रायः ।

( ७९ ) अथेदानीं काव्यप्रकाशकृत्सम्मतं चित्राख्यं, तृतीयकाव्यभेदं दूषयितुमुत्थापयति—केचिदिति । तथा हि तन्मते काव्यं त्रिविधम्—उत्तमं मध्यमम् अधमञ्चेति । तत्र "इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः" इतिलक्षणलक्षितं ध्वनिकाव्यमुत्तमम् । "अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्" इति लक्षणलक्षितं गुणीभूतव्यङ्ग्यकाव्यं मध्यमम् । स्फुटप्रतीयमानार्थरहितन्तु अधमं चित्राख्यम् ।

( ८० ) अधमकाव्यस्य लक्षणमाह—शब्दचित्रमिति । अत्र चित्रमित्यध्याहार्यम्, अन्यथा संज्ञान्तराकरणान्न्यूनतापत्तेः । तथा चाव्यङ्ग्यं काव्यम् अवरम् अधमं स्मृतम् । तदेव बुधैश्चित्रमिति कथितम् । तच्च चित्रं वाच्यचित्रञ्चेति ।

( ८१ ) दूषयति—तन्नेति । अव्यङ्ग्यत्वेन न विद्यते व्यङ्ग्यं यत्रेति त्रिपदबहुव्रीहिणा व्यङ्ग्यार्थशून्यत्वेन व्यङ्ग्याभावः रसादिव्यङ्ग्यसामान्याभावोऽभिप्रेतः । प्रागेवेति प्रथमपरिच्छेद एवेत्यर्थः । तथाहि सगुणाविति तैः काव्यलक्षणे कृते व्यङ्ग्यरसद्वारेणैव च सगुणत्वेन व्यङ्ग्याभावेन गुणत्वाभावात् काव्यत्वं नास्तीति तत्रोक्तमिति भावः ।

( ८२ ) तन्मतानुसारेण समाधानमाक्षिप्य तद्विकल्प्य च निरसितुमाह—ईषद्व्यङ्ग्यत्वमिति । "विवक्षितम्" इत्यनुषञ्जनीयम् । यदि अव्यङ्ग्यमित्यत्र ईषदर्थं नञ्ङ्गीकरणे अव्यङ्ग्यत्वं नाम ईषद्व्यङ्ग्यत्वमित्युच्यते चेत् ? आस्वाद्यव्यङ्ग्यत्वम् आस्वाद्यम् अनुभवयोग्यं व्यङ्ग्यं व्यङ्ग्यार्थो यत्र काव्ये तस्य भावस्तत्त्वम् वा अथवा अनास्वाद्यम् अननुभवयोग्यं व्यङ्ग्यं व्यङ्ग्यार्थो यत्र तस्य भावस्तत्त्वम् । अनयोर्मध्ये भवत्सम्मतं कतरद्युक्तमिति प्रश्नाशयः ।

( ८३ ) आद्ये प्राचीनभेदयोरेवान्तः पातः । द्वितीये त्वकाव्यत्वम् ।
( ८४ ) यदि चास्वाद्यत्वं तदाऽक्षुद्रत्वमेव क्षुद्रतायामनास्वाद्यत्वात् ।
( ८५ ) तदुक्तं ध्वनिकृता—
'प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।

( ८३ ) निराकरोति—आद्य इति । आस्वादव्यङ्ग्यत्वरूपेषद्व्यङ्ग्यत्वाऽभ्युपगमे प्राचीनैः स्वीकृतयोरेव ध्वनिगुणीभूतव्यङ्ग्यभेदयोर्मध्ये अन्तःपातः अन्तर्भावः, भवत्सम्मताव्यङ्ग्यसंज्ञककाव्यस्येति शेषः । तयोरुभयोरेवास्वादयोग्यत्वात् । तथाचाव्यङ्ग्यसंज्ञकतृतीयकाव्यभेदस्वाकारो व्यर्थ एवेति ग्रन्थाशयः । द्वितीये तु—अनास्वाद्यत्वेऽननुभवयोग्यत्वरूपेषद्व्यङ्ग्यत्वाऽभ्युपगमे तु अकाव्यत्वम् आस्वादव्यङ्ग्यत्व एव काव्यत्वाऽभ्युपगमात् ।

( ८४ ) ननु ध्वनिगुणीभूतव्यङ्ग्यकाव्ययोर्व्यङ्ग्यार्थस्य स्थूलत्वेनास्वाद्यत्वम्, मदीयाव्यङ्ग्यकाव्यवृत्तिव्यङ्ग्यार्थस्य तु ईषत्वेन आस्वाद्यत्वमिति—आस्वाद्य एव तारतम्यात् कथमेतस्य तयोरन्तर्भाव इत्याशयेनाह—यदि चेति । आस्वाद्यत्वम् अव्यङ्ग्यकाव्यवृत्तिव्यङ्ग्यार्थस्यापि अनुभवयोग्यत्वम्, स्वीक्रियत इति शेषः । तदा अक्षुद्रत्वमेव तस्यापि व्यङ्ग्यार्थस्य असूक्ष्मत्वमेव । अस्तु तावत्, क्षुद्रत्वन्तु काव्यत्वाप्रयोजकत्वेनाऽनुपादेयत्वादत आह—क्षुद्रतायामिति । क्षुद्रतायां सूक्ष्मतायाम् अनास्वाद्यत्वात् अनुभवाविषयत्वात् । तथा च अव्यङ्ग्यमित्यस्य ईषद्व्यङ्ग्यत्वमित्यर्थकरणमेव भवितुं नार्हति स्थूलत्वापातेन ईषत्वासम्भवात् । एवञ्च ध्वनिगुणीभूतव्यङ्ग्याख्यं द्वयमेव काव्यम्, चित्राख्यं पद्यं न तु काव्यमिति भावः ।

( ८५ ) सर्वथारसभावादितात्पर्यारहितस्य वाक्यस्य काव्यत्वाभावं प्रति नास्माकमेवाग्रहः किन्तु ध्वनिकारोऽप्यत्रार्थेऽनुकूल इति दर्शयति मूले-तदुक्तं ध्वनिकृता—

"प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।
उभे काव्ये ततोऽन्यद्यत्तच्चित्रमभिधीयते ॥" इति ।

व्यङ्ग्यस्य अर्थस्य प्रधानगुणभावाभ्याम् एवं, ध्वनिगुणीभूतसंज्ञके उभे द्विविधे काव्ये व्यवस्थिते व्यवस्थापिते । व्यङ्ग्यार्थस्य प्राधान्ये ध्वनिः, गुणभावे तु गुणीभूतव्यङ्ग्यतेति निरूपित इत्यर्थः । ततस्ताभ्यामुभाभ्यां भेदाभ्याम् अन्यत् यत् रसभावादितात्पर्यरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिरहितञ्च वाक्यं काव्यं केवलवाच्यवाचकवैचित्र्यमात्राश्रयेणोपनिबद्धमालेख्यप्रख्यं यदाभासते तच्चित्रं नाम काव्याभासमात्रम्, न तु वास्तवं काव्यम्, तेन रसभावादिरूपव्यङ्ग्याभावे काव्यत्वस्यैवाभावात् "अव्यङ्ग्यमवरं स्मृतम्" इति काव्यप्रकाशकृन्मतमयुक्तमेवेति तद्भावः ।

अत्रेदम्बोध्यम्, ध्वनिकृता हि—चित्रलक्षणमभिधाय तच्च द्विविधमपि तेनवाग्रिमकारिकया व्यवस्थापितम् ।

तथाहि—

"चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम् ।
तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम् ॥" इति ।

तत्र किञ्चिच्छब्दचित्रं यथा—दुष्करयमकादि । वाच्यचित्रम्—अतश्शब्दचित्राद्-

न्यदूव्यङ्ग्यार्थसंस्पर्शरहितं प्राधान्येन वाक्यार्थतया स्थितं रसादितात्पर्य्यरहितमु त्प्रेक्षादि। अथ किमिदं चित्रं नाम? यत्र न प्रतीयमानार्थसंस्पर्शः। तत्र यत्र वस्त्वलङ्कारान्तरं वा व्यङ्ग्यं नास्ति स नाम चित्रस्य कल्प्यतां विषयः। यत्र तु रसादीनामविषयत्वं स प्रकारो न सम्भवत्येव यस्मादवस्तु संस्पर्शिताकाव्यस्य नोपपद्यते। वस्तु च सर्वमेव जगद्गतमवश्यं कस्यचिद्रसस्य भावस्य वाङ्गत्वं प्रतिपद्यते अन्ततो विभावत्वेन। चित्तवृत्तिविशेषा हि रसादयः, न च तदस्ति वस्तु किञ्चिद्यन्न चित्तवृत्तिविशेषमुपजनयति तदनुत्पादने वा कविविषयतैव तस्य न स्यात्। कविविषयश्च चित्रतया कश्चिन्निरूप्यते। अत्रोच्यते—सत्यम्, न तादृक्काव्यप्रकारोऽस्ति यत्र रसादीनामप्रतीतिः। किन्तु यदा रसभावादिविवक्षाशून्यः कविः शब्दालङ्कारमर्थालङ्कारं वोपनिबध्नाति तदा तद्विवक्षापेक्षया रसादिशून्यतार्थस्य परिकल्प्यते। विवक्षोपारूढ एव हि काव्ये शब्दानामर्थः। वाच्यसामर्थ्यवशेन च कविविवक्षाविरहेऽपि तथाविधे विषये रसादिप्रतीतिर्भवन्ती परिदुर्बला भवतीत्यनेनापि प्रकारेण नीरसत्वं परिकल्प्य चित्रविषयो व्यवस्थाप्यते।

तदिदमुच्यते—

"रसभावादिविषयविवक्षाविरहे सति।
अलङ्कारनिबन्धो यः स चित्रविषयो मतः॥
रसादिषु विवक्षा तु स्यात्तात्पर्य्यवती यदा।
तदा नास्त्येव तत्काव्यं ध्वनेर्यत्र न गोचरः॥" इति।

एतेन ग्रन्थकृतः तृतीयकाव्यभेदस्य प्रत्याख्यानं न समीचीनतया सहृदयहृदयमधितिष्ठति। अत्र पक्षे मध्यमकाव्यलक्षणो व्यङ्ग्यपदं विवक्षितव्यङ्ग्यपरं बोध्यम्।

अत्र प्रदीपोद्योतयोस्तु इत्थं व्याख्यातम्। "अव्यङ्ग्यम् अस्फुटतरातिरिक्तव्यङ्ग्यरहितम्। तादृशं चास्फुटतरव्यङ्ग्यसद्भावे व्यङ्ग्यमात्राभावे वा" इति प्रदीपः। ( ननु व्यङ्ग्यरहितं काव्यमप्रसिद्धम्, पार्य्यन्तिकरसादिव्यङ्ग्यशून्यस्य प्रहेलिकत्वादत आह—अस्फुटतरेति। ईषत्त्वस्य नञर्थत्वात् अव्यङ्ग्यम् अस्फुटतरव्यङ्ग्यमित्यर्थ इत्येके) इत्युद्योतः।

अत्र नव्यास्तु-अर्थचित्रशब्दचित्रयोरविशेषेणाधमत्वमयुक्तं वक्तुम्, तारतम्यस्य स्फुटमुपलब्धेः। को ह्येवं सहृदयः सन्—

"विनिर्गतं मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयापि यम्।
ससम्भ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियाऽमरावती॥
सच्छिन्नमूलः क्षतजेन रेणुस्तस्योपरिष्टात्पवनाऽवधूतः।
अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवावभासे॥"

इत्यादिभिरर्थचित्रकाव्यैः।

तथा—

"स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-
मूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकायाह्नाय वः।
भिन्द्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुम-
द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम्॥"

इत्यादीनां पामरश्लाघादीनामविशेषं ब्रूयात्। सत्यपि तारतम्ये यद्येकभेदत्वं कस्तर्हि ध्वनिगुणीभूतव्यङ्ग्ययोरीषदन्तरितयोर्विभिन्नभेदत्वे दुराग्रहः" इति वदन्ति।

उभे काव्ये ततोऽन्यद्यत्तच्चित्रमभिधीयते ॥' इति ।

इति साहित्यदर्पणे ध्वनिगुणीभूतव्यङ्ग्याख्यकाव्यभेदनिरूपणो

नाम चतुर्थः परिच्छेदः * ।



तत्र परे तु—अव्यङ्ग्यं स्फुटप्रतीयमानार्थरहितं तु अवरं चरमं तृतीयकाव्यमिति यावत् । चरमत्वं च ध्वनिगुणीभूतव्यङ्ग्यापेक्षया किञ्चिन्न्यूनम् न त्वधमत्वमेव । तस्य चित्राख्य तृतीयकाव्यावान्तरभेदे परिगणितत्वात् । चित्रं च द्विविधमित्युक्तमेव तत्र शब्दचित्रस्य वाच्यचित्रापेक्षयापकृष्टत्वादधमत्वं बोध्यम् । न चास्मिन्मते ध्वनिकारोक्तिरपि प्रतिकूला भवतीत्याहुः । एतावता काव्यस्य द्वैविध्यमेव न किन्तु चातुर्विध्योपपत्तिरेवायाति तेनापि न क्षतिरिति ध्येयम् ।

तथा च "यत्र शब्दार्थौ गुणीभावितात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदुत्तमम्" । यथा—"निःशेषच्युतचन्दनम्" इत्यादि । इदञ्चोत्तमोत्तमत्वेन रसगङ्गाधरकारा आहुः ।

"यत्र व्यङ्ग्यमप्रधानमेव सच्चमत्कारजनकं तन्मध्यमम्"

यथा—

"राघवविरहज्वाला सन्तापितशैलशिखरेषु ।
शिशिरे सुखं शयानाः कपयः कुप्यन्ति पवनतनयाय ॥"

इतिश्लोके जानकीकुशलावेदनेन राघवः शिशरीकृत इति व्यङ्ग्यमाकस्मिककपिकर्तृकपवनतनयविषयककोपोपपादकतया गुणीभूतमपि दुढववशतो दास्यमनुभवद्राजकलत्रमिव कामपि कमनीयतामावहति । इदमुत्तमम् । "यत्र व्यङ्ग्यचमत्कारासमानाधिकरणो वाच्यचमत्कारस्तद्वाच्यचित्रम्" । यथा—"विनिर्गतम्" इत्यादि । इहामरावतीस्त्रीप्रत्ययकृतकामिनीत्वाध्यवसानमूलोत्प्रेक्षा वाच्यैव चमत्कारविश्रामभूमिः । वीररसचमत्कारांऽशतया वर्त्तमानोऽप्युत्प्रेक्षा चमत्कृतिक्रोड़निलीनो नागरेतरनायिकाकल्पितकाश्मीरद्रवाङ्गरागनिर्गतो निजाङ्गगौरिममेव प्रतीयते । इदं मध्यमम् ।

"यत्रार्थचमत्कारोपस्कृतः शब्दचमत्कारः प्रधानं तच्छब्दचित्रम् ।"

यथा—"स्वच्छन्द" इत्यादि । अत्र शब्दचमत्काराऽवलीढोऽर्थ चमत्कारः क्षाराकूपारपूरपतितगङ्गाप्रवाहमधुरिमेव न विभाव्यते । इति अधममिति शम् ।

* ( अत्र मूलकारिकाः—१४ ) पूर्वाभिः सह ३०४ ( उदाहरणश्लोकाः—४७ ) ( पूर्वैः सह २०१ )

इति वत्सकुलावतंस-दैवज्ञशिरोमणि-श्रीलोकनाथात्मज-साहित्यव्याकरणाचार्य-ठक्कुरोपनामक-श्रीकृष्णमोहनशास्त्रिविरचितायां "लक्ष्मी" नामिकायां

साहित्यदर्पणटीकायां चतुर्थः परिच्छेदः ।



# पञ्चमः परिच्छेदः ।

( १ ) अथ केयमभिनवा व्यञ्जना नाम वृत्तिरित्युच्यते—

---

( १ ) एतावता व्यङ्ग्यं तावत्काव्यव्यपदेशबीजमित्युपपादितम्, तथा च समनन्तरोक्तकाव्यभेदद्वयस्य व्यञ्जनाव्यापारसिद्ध्यधीनत्वेन तदप्रामाणिकत्वे सर्वमेतदनुपपन्नमेवेति तत्र विप्रतिपत्तिनिराकरणपूर्वकं प्रमाणोपन्यासाय परिच्छेदमारभमाणः प्रथममभिधादिप्राचीनवृत्तिवेद्यत्वनिरासिकां प्रथमकारिकामवतारयति—अथेति । अथ व्यङ्ग्यभेदनिरूपणानन्तरम् । का किं प्रमाणा किं स्वरूपा च इयं समनन्तरोक्ता व्यङ्ग्यार्थबोधसाधिनी । अभिनवा अखिलशास्त्रार्थतत्त्ववेदिनः काव्यपुरुषस्यावतारात् श्रीमदानन्दवर्धनाचार्यात् प्राचीनैराचार्यैरप्रदर्शिता नवीनैरभ्युपगम्यमानेत्यर्थः । वृत्तिः अर्थबोधिका शक्तिः । इत्युच्यते प्रतिपाद्यते "मया ग्रन्थकर्त्रेति" शेषः ।

यत्तु—"नैयायिकवैयाकरणादिभिर्व्यञ्जनायाः अनङ्गीकारेण"–इत्युक्तम्, तत्तुच्छम्, नैयायिकैरनभ्युपगमेऽपि वैयाकरणैरवश्यमभ्युपगन्तव्यत्वात् । तथाहि—व्यञ्जना कः पदार्थः" इति जिज्ञासायां 'मुख्यार्थबाधनिरपेक्षबोधजनकोमुख्यार्थसम्बन्धासम्बद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना" इत्युक्तम् । लक्षणयैव व्यञ्जनाऽन्तर्भूतेति तार्किकमतं निरसितुं—मुख्यार्थेति । मुख्यार्थस्य शक्यार्थस्य बाधः परस्परसम्बन्धनिरूपकाणां पदार्थानां तात्पर्यविषयीभूतसम्बन्धेनैकपदार्थेऽपरपदार्थाभावः । तन्निरपेक्षो यो बोधस्तज्जनकः । अन्वयश्च "संस्कारविशेषः" इत्यत्र । मुख्यार्थेन सम्बन्धासम्बद्धौ यौ अर्थौ तदुभयसाधारणौ यौ प्रसिद्धाप्रसिद्धार्थौ तौ विषयौ यस्य सस्तथोक्त इत्यर्थः । वक्त्रादीत्यादिना-वक्तृबोद्धव्यकाकूनामित्यादेः संग्रहः । तथा च वक्त्रादिवैलक्षण्यहेतुका या प्रतिभाशालिनामन्यार्थधीस्तद्धेतुव्यापारत्वं व्यञ्जनात्वं फलितम् । प्रतिभा च वासनाविशेषरूपा । वैयाकरणानां व्यञ्जनाऽभ्युपगमादेव निपातानां (क)द्योतकत्वं स्फोटस्य व्यङ्ग्यत्वं च इत्याद्युक्तं संगच्छते । अपि च निपातानां व्यञ्जनापरपर्य्यायद्योतकतारूपवृत्त्यार्थबोधकत्वरूपार्थवत्वात् प्रातिपदिकत्वसिद्धिः । काव्यप्रकाशकृतापि–"इदमुत्तममतिशायिनि" इति सूत्रविवरणे–"बुधैः वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः" इत्यभिधाय तन्मतात्स्वमते भेदप्रदर्शनाय "ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य" इत्युक्तम् ।

अत एवाहुः—

ननु कथं शब्दात् पदार्थवाक्यार्थावगमः आशुविनाशिनां क्रमिकाणां वर्णानां मेलकभावेन क्रमादवगन्तुमशक्यत्वादिति चेत्? एवं पूर्वपूर्ववर्णानुभवजनितसंस्कारविशेषान्तिमवर्णानुभवेन स्फोटोऽभिव्यज्यते । स च स्फुटयति प्रकाशयत्यर्थमिति स्फोटनं वा स्फोट इत्येवं ध्वन्यभिन्न एव, असौ नित्यो ब्रह्मस्वरूपः सकलप्रत्येयप्रत्यायनशक्तः, एतद्व्यञ्जकश्च वर्णात्मकः शब्दः, तत्र वृत्तिर्व्यञ्जना नाम अभिधालक्षणातात्पर्याख्याभ्यो वृत्तिभ्यो भिन्ना सङ्केताद्यनुत्पत्तेः ।" इति ।

---

( क ) द्योतकत्वञ्च—स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वम् ।

( २ ) वृत्तीनां विश्रान्तेरभिधातात्पर्यलक्षणाख्यानाम् ।
अङ्गीकार्या तुर्या वृत्तिर्बोधे रसादीनाम् ॥ १ ॥

एतेन वैयाकरणसिद्धान्तानभिज्ञतया काव्यप्रकाशमर्मावेद्यतया च रभसादेव तत्कथन मित्यधिकं सुधीभिरेव विभावनीयम् ।

( २ ) प्रमाणोपन्यासाय प्रथमं व्यञ्जनायाः स्वरूपं दर्शयति—वृत्तीनामिति । ननु "विरतास्वभिधाद्यासु" इत्यादिना-( ७६ पृ. ) व्यञ्जनायाः स्वरूपं प्रदर्शितम् । तथा "व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषया" इत्यनेन प्रमाणाञ्चाप्युपन्यस्तमेवेति चेत्? सत्यम्, तस्य लक्षणपरत्वात् दृढप्रतिपत्तये प्रमाणान्तरोपन्यासार्थञ्च पुनरायास इति बोध्यम् । वृत्तीनाम् अभिधा-तात्पर्य्य-लक्षणाख्यानां तिसृणां शक्तीनाम् विश्रान्तेः स्वार्थं-बोधनेन विरामात, रसादीनां रस-रसाभास-भाव-भावाभाससन्धिशबलतावस्त्वलङ्काराणाम् । रसस्य प्राधान्यात् प्रथममुपन्यासः । बोधे बोधनिमित्तं तुर्य्या काऽपि चतुर्थी वृत्तिः शक्तिः शब्दार्थयोरन्यतरस्य व्यापार इति यावत्, अङ्गीकार्य्या सर्वैरेवाभ्युपगन्तव्या।

अत्रेदं रहस्यम्—"गङ्गायां घोषः" इत्यत्र गङ्गाशब्दः सामान्यात्मके भगीरथरथखा-तावच्छिन्नजलप्रवाहे घोषशब्दश्चापि सामान्यात्मके आभीरपल्ल्यां च सङ्केतितौ । सामान्य एव सङ्केतात् । विशेषस्य हि सङ्केतकरणे आनन्त्यं व्यभिचारश्च स्यात् । तत-श्चाभिधया भगीरथरथखातावच्छिन्नजलप्रवाहमात्रम् आभीरपल्लिमात्रं च प्रतीतमित्याद्यः क्रमः एतदभिधायान्यबोधनेऽप्यभिधा न समर्था "विशेष्यं नाभिधा गच्छेत् क्षीणशक्ति-र्विशेषणे" इति न्यायेन-(क)अभिधशक्तिः विशेष्यं धर्मिणं न गच्छेत् बोधयितुं न समर्था भवति कुत इत्याकाङ्क्षायां यतः क्षीणशक्तिरिति । यतः विशेषणं प्राप्य पदशक्तिः क्षीणशक्तिः नष्टसामर्थ्या विरतव्यापारा भवतीत्यर्थः । नाऽगृहीतविशेषणाबुद्धिः विशेष्ये चोपजायते" इति न्यायात्, अगृहीतम् अविषयीकृतं विशेषणं ययेति व्युत्पत्त्या विशे षणाऽविषयिणीबुद्धिः, विशेष्ये च नोपजायते तथाच विशेष्यं प्रत्याय विरामादिति-तस्या विरम्य व्यापारासम्भवात् ।

"सामान्योनान्यथासिद्धेर्विशेषं गमयन्ति हि"

इतिन्यायात्तात्पर्य्यशक्त्या सामान्यान्याधाराधेयभावेनावस्थितं परस्परान्वितत्व-मात्रमेव बोध्यत इत्यपरा । भगीरथरथखातावच्छिन्नजलप्रवाहस्य च घोषाधिकरणत्वं न सम्भवतीति प्रमाणान्तरबाधितः सन् गङ्गाशब्दो हि तदधिकरणयोग्यं तीरं लक्षणया प्रत्याययतीति तृतीया । तत्र तावत् लक्षणा-मुख्यार्थबाधादित्रितयसन्निधावेव भवति । मुख्यार्थबाधश्चोक्तस्थले प्रत्यक्षादिप्रमाणन्तरगम्य एव । यश्चापि सामीप्यादिसम्बन्धः, सोऽपि प्रमाणान्तरबोध्य एव, । परन्तु शैत्यपावनत्वाद्यतिशयबोधनेच्छयोच्चरितं यत्त-त्पुनः शब्दान्तराप्रतिपाद्यं प्रमाणान्तराज्ञतञ्च कुत आगतम् ?

न तावत्प्रत्यक्षगम्यः, अस्मादेव शब्दात्प्रतीत्यसिद्धेः शब्दार्थे च तस्याप्रवृत्तेः । नाप्यनुमानम् सामीप्येऽपि शैत्यपावनत्वादेरसम्भवेन हेतोराभासात् । तदनुभवाभावाच्च न स्मृति, सत्यामपि च तस्यां नियतस्मरणं न स्यात् । अस्मादेव च शब्दादेतदेवावग-

( क ) अभिधा नित्येच्छेति नैयायिकाः । नित्यज्ञानं नित्ययत्नो वेति तदेकदेशिनः । पदार्थान्त-रमिति मीमांसकाः । बोधकतेति प्राचीनवैयाकरणाः । वाच्यवाचकभावापरपर्य्याया सेति नव्याः ।

( ३ ) अभिधायाः संकेतितार्थमात्रबोधनविरताया न वस्त्वलंकाररसादिव्यङ्ग्यबोधने क्षमत्वम् । न च संकेतितो रसादिः ।

( ४ ) नहि विभावाद्यभिधानमेव तदभिधानम् , तस्य तदैकरूप्यानङ्गीकारात् ।

( ५ ) यत्र च स्वशब्देनाभिधानं तत्र प्रत्युत दोष एवेति वक्ष्यामः ।

---

स्यत इत्यत्र को हेतुः । तस्मादस्यैव शब्दस्य कश्चन विलक्षणव्यापारः स्वीकर्त्तव्यः । निर्व्यापारस्य शब्दस्यार्थप्रतीतिकारित्वाभावात् । स च तावन्नाभिधात्मा सङ्केताभावात् न चापि तात्पर्य्यात्मा तस्यान्वयबोधन एव क्षीणशक्तिकत्वात्, । नापि लक्षणात्मा मुख्यार्थबाधादिरहितत्वात् । तस्मादभिधातात्पर्य्यलक्षणातिरिक्तः तुरीयकक्षास्थितो व्यङ्ग्यनिष्ठो व्यञ्जनाव्यापारः, व्यञ्जनध्वननगमनादिसोदरव्यपदेशनिरूपितोऽवश्यं स्वीकरणीय इति कारिकानिर्गलितार्थ इत्यन्यत्र स्पष्टम् ।

( ३ ) ननु शब्दवृत्तिसर्वशक्तिज्येष्ठाऽभिधैव तावद्भवदभिमतं व्यङ्ग्यार्थं जनयत्वित्याशङ्कां मनसि निधाय समाधत्ते—अभीधाया इति । सङ्केतितार्थमात्रस्य बोधने मात्रपदेन लक्ष्यादिविरतायाः क्षीणसामर्थ्यायाः विरतायाश्च पुनरुत्थानाभावादिति प्रागुक्तो हेतुरत्रावलोकनीयः । ननु सङ्केते कश्चन नियमाभावात्, रसादिरपि सङ्केतित एव तथाचाभिधयैव बोध्यतामत आह—नच सङ्केतित इति । "शून्यं वासगृहम्" इत्यादौ शून्यादिपदानां शृङ्गारादिर्नैव सङ्केतित इत्यर्थः । तथा सति सङ्केतितार्थस्य सर्वदा बोधकत्वनियमात् "शून्यं मण्डलम्" इत्यादावपि तत्प्रत्ययापत्तेः ।

( ४ ) ननु "देवदत्तं पश्य" इत्यादौ देवदत्तादिपदाभिधा तत्संज्ञकं मांसपिण्डं तथा तद्गतरूपादिकञ्च यथोपस्थापयति तथैव सीतादिपदानामभिधा सीताद्यालम्बनविभावादीनुपस्थापयन्ती अविनाभावद्वारा तद्विषयकशृङ्गारादीनपि कथन्नोपस्थापयिष्यतीत्यत आह—नहीति विभावादेः अभिधानम् अभिधया बोधनमेव तदभिधानम् रसाद्यभिधानम् वाच्यमिति शेषः । विभावादेरेव रसरूपत्वस्वीकारादिति भावः । तस्य विभावाद्यभिधानस्य तदैकरूप्यानङ्गीकारात् आस्वादरूपरसादिप्रतीतितादात्म्यास्वीरात् । तथा च विभावादयो ज्ञेयविशेषाः रसादयश्च ज्ञानविशेषा इत्यनयोरभेदेन एकस्य प्रतिपादने अन्यस्य प्रतिपादनासम्भवात् । "देवदत्तं पश्य" इत्यादौ तदीयरूपावगमस्तु तयोरभेदप्रतीतेरित्याशयः । एवञ्च विभावाद्यभिधानानन्तरं जायमानाया आस्वादरूपरसादिप्रतीतेः कारणतया व्यञ्जनावश्यमङ्गीकरणीयेति भावः ।

( ५ ) ननु

"तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः कोप्यजायत" इत्यादौ

"शृङ्गारः सखि ! मूर्तिमानिव मधौ मुग्धो हरिः क्रीडति" इत्यादौ च

रसादिपदेनैव रसाद्यभिधानात्तत्प्रतीतिरिति यत्र तादृशपदं नास्ति तत्रापि तत्कल्पनया रसादिप्रतीतिर्जायतामत आह—यत्र चेति । अपिचेति चार्थः । यत्र उक्तोदाहरणादौ स्वशब्देन रसशृङ्गारादिपदेन अभिधानम् अभिधया रसस्य प्रतिपादनम् तत्र स्थले स्वप्रकाशानन्दरूपत्वेन आस्वादरूपरसादेः प्रतीतिस्तु दूरे तिष्ठतु प्रत्युत वैपरीत्येन दोष एवेत्येवकारेण आस्वादरूपरसप्रतीतिव्यवच्छेदः । वक्ष्यामः सप्तमपरिच्छेदे "रसस्योक्तिः स्वशब्देन" इत्यनेन । "तामुद्वीक्ष्य" इत्यादावपि व्यञ्जनाद्वारेणैव शृङ्गारादिप्रतीतिः न तु शृङ्गारादिशब्देनेति भावः ।

( ६ ) क्वचिच्च 'शृङ्गाररसोऽयम्' इत्यादौ स्वशब्देनाभिधानेऽपि न तत्प्रतीतिः, तस्य स्वप्रकाशानन्दरूपत्वात् ।

( ७ ) अभिहितान्वयवादिभिरङ्गीकृता तात्पर्याख्या वृत्तिरपि संसर्गमात्रे परिक्षीणा न व्यङ्ग्यबोधिनी ।

( ८ ) यच्च केचिदाहुः—'सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः' इति,

---

( ६ ) ननु रसस्य स्वशब्दाभिधानं काव्ये एव दोषो न तु लौकिकवाक्ये एवं च काव्यदोषवशात्तादृशी प्रतीतिर्मास्तु लौकिकवाक्ये तु स्यादेव यद्वा तामुद्दिश्येत्यत्रापि रसादिपदादेव तत्तद्रसादिप्रतीतौ न किञ्चिद् बाधकमिति सन्दिहानानामन्वयव्यतिरेकव्यभिचार एव बाधक इति बोधयितुमाह-क्वचिच्चेति । क्वचित् शृङ्गाररसशून्ये "शृङ्गाररसोऽयमेतेन प्रदर्शितः" इति लौकिकवाक्ये चेत्यर्थः । तत्प्रतीतिः रसप्रतीतिः तस्य रसस्य । स्वप्रकाशानन्दरूपत्वादिति । स्वप्रकाशः स्वप्रकाशेनैव प्रकाशमानत्वम्, आनन्द आह्लादाभिन्नत्वं तद्रूपत्वात् तन्मात्ररूपत्वादिति यावत् । अत्र चाभिधया जायमानस्य बोधस्य प्रकाशत्वाभावादानन्दरूपत्वाभावाच्च न रसस्वरूपत्वाङ्गीकारः, तथा चोक्तवाक्ये शृङ्गारशब्दसत्वेऽपि शृङ्गाररसानुभवाभावादन्वयव्यभिचार एव तद्बोधने बाधकः । उपलक्षणञ्चैतत् "शून्यं वासगृहम्" इत्यादौ शृङ्गारादिपदसत्त्वेऽपि स्वप्रकाशत्वेनानन्दरूपत्वेन च तत्तद्रसानुभवाद्व्यतिरेकव्यभिचारोऽपि ज्ञातव्यः । ननु शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तत्र सर्वत्रापि उपस्थितत्वाच्छब्द एव निमित्तं कल्प्यते "नैमित्तिकानुसारेण निमित्तानि" कल्प्यन्त इति न्यायात् । तथाच व्यङ्ग्यप्रतीतिर्नैमित्तिका निमित्तान्तरानुपलब्धेः शब्द एव निमित्तमिति शब्दस्य पुनः पुनरनुसन्धानं कल्प्यते इति वाच्य इव व्यङ्ग्यार्थेऽपि न वृत्त्यन्तरकल्पनं किन्त्वभिधैव वृत्तिरिति चेत् ? मैवम् व्यङ्ग्योपस्थितौ शब्दस्य ज्ञापकत्वरूपनिमित्तत्वमस्माकमपि सम्मतम्, तत्र नास्माकं विवादः परन्तु व्यञ्जनाया अस्वीकारे तन्न सम्भवति । शब्दस्यार्थनिमित्तत्वं हि व्यापारसापेक्षमेव नियतम् यथा वाच्यार्थलक्ष्यार्थयोरभिधालक्षणाव्यापारौ । तथा इहापि कोऽपि व्यापारोऽवश्यमङ्गीकरणीयः अन्यथा हि शब्दस्य निमित्तत्वानिश्चयेन नैमित्तिको व्यङ्ग्यार्थ इत्येव भवदभिमतोऽपि न सिद्ध्यति यदि तु व्यापारं विनापि शब्दस्य निमित्तत्वं स्यात्तदा अभिधालक्षणे अपि दत्तजलाञ्जली स्यातामित्यस्माभिरुच्यते इत्यभिप्रायमबुद्ध्वाभिधानमविचारविजृम्भितमेव ।

( ७ ) ननु रसादिर्नाभिधया बोध्यतां किन्तु भट्टमीमांसकादिस्वीकृतया तात्पर्याख्यया वृत्त्यैव बोध्यतामिति कारिकोक्तक्रमेण तस्या अपि व्यङ्ग्यबोधनाक्षमत्वमुपपादयति--अभिहितान्वयेति । एतच्च वक्तृतात्पर्यविशेषरूपाया व्यञ्जनाया वारणाय । संसर्गमात्रे वाक्यघटकपदानां केवलं परस्परान्वयबोधजनने परिक्षीणा विगतसामर्थ्या सर्वतोभावेन क्षीणेति यावत् । तथा च तात्पर्याख्यावृत्तिरपि वाक्यघटकपदानां केवलं परस्परान्वयबोधं प्रतिपाद्यैव "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः" इति न्यायेन अर्थान्तरप्रतिपादने विगतसामर्थ्या सती कथं व्यङ्ग्यर्थान् प्रतिपादयेदिति भावः ।

( ८ ) अथ उभयसिद्धवाच्यार्थस्य बोधिका शक्तिरूपा वृत्तिरेव व्यङ्ग्यबोधिकेति भट्टमतोपजीविनां भट्टोल्लटादीनां केषाञ्चिन्मतम्, यच्च तात्पर्यवृत्तिरेव व्यङ्ग्यबोधिकेति

( ९ ) यच्च धनिकेनोक्तम्—

'तात्पर्याव्यतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः।
यावत्कार्यप्रसारित्वात्तात्पर्यं न तुलाधृतम् ॥' इति,

(१०) तयोरुपरि 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति वादिभिरेव पातनीयो दण्डः।

---

धनिकस्य मतन्तदुभयमपि दूषयितुमुत्थापयति—यच्च केचिदिति । इषोर्वाणस्येव स प्रसिद्धोऽयमभिधाया व्यापारःयत्कार्य्यं दीर्घदीर्घतरोऽतीव यथेष्टं प्रसरणशीलः, अयम्भावः—यथा बलवता प्रेरित एक एवेषुरेकेनैव वेगाख्येन व्यापारेण रिपोर्वर्मच्छेदं मर्मभेदं प्राणहरणञ्च विधत्ते, तथा सुकविप्रयुक्तः एक एव शब्दः एकेनैवाभिधाख्यव्यापारेण पदार्थोपस्थितिमन्वयबोधं च व्यङ्ग्यार्थप्रतीतिं च विधत्ते ( जनयति ) अतो व्यङ्ग्यत्वाभिमतस्यार्थस्य वाच्यत्वमेव इति नचैकार्थप्रतीतौ शब्दस्य विराम इति वाच्यम्, विवक्षितार्थप्रतीत्युत्तरमेव विरामाभ्युपगमात् ।

( ९ ) यच्च धनिकेनेति—तात्पर्य्याव्यतिरेकादिति । धनिको दशरूपककर्त्ता तात्पर्य्यस्य स्वाभिमततात्पर्य्यरूपवृत्तेः अव्यतिरेकात् भेदाभावात् हेतोः शब्दादेर्व्यञ्जकत्वस्य व्यञ्जनानामकाभिनववृत्तेः प्रतिपाद्यो न ध्वनिः । एवञ्च व्यञ्जनानामकाभिनववृत्तेरस्मदधिमत तात्पर्य्यवृत्त्यन्तर्गतत्वात् तात्पर्य्यवृत्तिप्रतिपाद्य एव ध्वनिः । तथा च व्यञ्जनानामवृत्त्यन्तरं गौरवादस्माभिर्न स्वीक्रियत इति भावः । ननु भवदभिलषिततात्पर्य्याख्यावृत्तिः पदानां संसर्गमात्रबोधनेनोपक्षीणा कथं व्यङ्ग्यार्थान् बोधयेत्, अतिरिक्तस्वरूपा च व्यञ्जना कथं वा तदन्तर्भवेदित्यत आह—यावदिति । यावन्ति कार्य्याणि अर्थबोधनव्यापाराः तावन्त्येव प्रसरति व्याप्रियत इति स तस्य भावस्तस्मात्तादृशात् आवश्यकतानुरूपव्याप्तिस्वीकारादित्यर्थः, तात्पर्य्यं तदाख्यावृत्तिः संसर्गव्यङ्ग्ययोर्बोधकत्वान्न तुलाधृतम् संसर्गमात्रबोधकत्वेन न नियन्त्रितमित्यर्थः। अस्मन्मते तात्पर्य्यवृत्तेः सीमा तु निर्धारितो न भवति अतोऽधिकं व्यङ्ग्यादिकमपि बोधयतीति भावः ।

तथा च भट्टमतोपजीविमतानुयायिधनिको हि 'यत्परः शब्दः स शब्दार्थ इति न्यायोक्तदिशा यंयमर्थं बोधयितुं प्रवृत्तः स शब्दः सर्वोपिऽपि शाब्दः, तत्त्वञ्च तात्पर्यम् । एवञ्च शब्दसम्बन्ध्यर्थस्वरूत्वं तात्पर्यमिति फलितम् । अथ तात्पर्यस्य दीर्घशरीरत्वाद् व्यञ्जकसम्बन्धित्वमपि तदभिन्नम्, व्यञ्जकसम्बन्धी च व्यङ्ग्य एवार्थः, तदेवं वाच्य इव व्यङ्ग्यः, द्वयोरप्येतयोः शाब्दत्वात् , तात्पर्यञ्च यावत्कार्यं प्रसरणशीलमिति न परिमेयपरिच्छिन्नत्वमनवच्छेद्यत्वात्" इति ।

(१०) तयोरुपरीति । इषुव्यापारवादितात्पर्य्यवादिनोरुपरीत्यर्थः । शब्दबुद्धिकर्मणामिति । वाचकस्य लाक्षणिकस्य वा शब्दस्य अभिधया लक्षणया वा सकृच्छाब्दबोधमुत्पाद्य पुनरभिधया लक्षणया वार्थान्तरबोधने सामर्थ्याभावादित्यर्थ । वादिभिरेव अभिहितान्वयवादभिरित्यर्थः । दण्डः पातनीयः दोषः प्रदर्शनीयः । तथा चाभिधा सङ्केतितार्थमात्रं जनयित्वा विगतसामर्थ्या सती कथं व्यङ्ग्यार्थमुत्पादयेत् । तात्पर्य्यवृत्तिरपि वाक्यघटकपदानां संसर्गमात्रं जनयित्वैव नष्टसामर्थ्या सती कथं व्यङ्ग्यार्थमप्युत्पादयेत् । तयोस्तत्तन्मात्रार्थनियन्त्रितत्वादित्याशयः ।'

(११) एवं च किमिति लक्षणाऽभ्युपास्या ! दीर्घदीर्घतराभिधाव्यापारेणापि तदर्थ-बोधसिद्धेः ।

(१२) किमिति च 'ब्राह्मण ! पुत्रस्ते जातः । कन्या ते गर्भिणी' इत्यादावपि हर्ष-शोकादीनामपि न वाच्यत्वम् ।

(११) ननु "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः" अयं न्यायो न राजाज्ञाप्रतिपादकः येन सर्वैरभ्युपेतव्यः स्यात् किन्तु कस्यचिन्मीमांसकमतमात्रपरस्तथा चाप्रामाणिक एव न वयमङ्गीकुर्म इत्यत आह—एवञ्चेति । यदि न्यायमेनं तिरस्कृत्य शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते तावति शब्दस्य तात्पर्याभिधान्यतरव्यापारेणैव व्यङ्ग्यार्थावबोधाऽभ्युपगमे चेत्यर्थः । उपास्या लक्ष्यार्थबोधाय आश्रयणीया, तदर्थबोधसिद्धेः लक्ष्यार्थज्ञानसिद्धेः । लक्षणाजन्यबोधानन्तरमपि व्यङ्ग्यबोधायाभिधासत्त्वाङ्गीकारे लक्षणासत्त्वाङ्गीकारस्य निष्प्रयोजनत्वादिति भावः ।

( १२ ) ननु लक्षणापि नाङ्गीकार्य्यैवेतीष्टापत्तौ दोषान्तरं प्रदर्शयति—किमिति चेति । न वाच्यत्वमित्यत्र सम्बन्धः । प्रोषितेन ब्राह्मणेन पृष्टो देशादागतो विप्रो गृहवार्त्तां कथयति—ब्राह्मणेति । कन्या अप्राप्तगर्भधारणसमया दुहिता, तथा चाहुर्देवलात्रिकश्यपाः—

"पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता ॥" इति ।

तथा च "पुत्रस्ते जातः" इति पुत्रोत्पत्तिवाक्यश्रवणानन्तरं प्रोषितस्य ब्राह्मणस्य मुखप्रफुल्लतादिदर्शनेन हर्षः । "कन्या ते गर्भिणी" इति वाक्यश्रवणानन्तरम् अविवाहितायाः कन्यायाः व्यभिचारबोधकत्वेन शोकः, ततश्च तच्छब्दीयदीर्घदीर्घतराभिधयैव तद्बोधसम्भवेन किमिति न वाच्यत्वम् अभिधया बोध्यत्वं स्यात् ? वाक्येन तदर्थप्रतीतिद्वारा हर्षशोकादय उत्पद्यन्ते न तु तत्प्रतीतिः हर्षशोकादिप्रतीतिस्तु हर्षशोकादिलिङ्गैर्मुखप्रसादमालिन्यादिभिरनुमानात्प्रत्याय्यते "अनन्यलभ्यो हि शब्दार्थः" इति न्यायेनाऽनन्यलभ्येऽर्थेऽभिधाकल्पनमिति सिद्धान्तः । अनुमानाकारस्तु—ब्राह्मणः सुखवान् मुखप्रसन्नयुक्तत्वात्, ब्राह्मणो दुःखवान् मुखमालिन्ययुक्तत्वादिति । अभिधयैवात्र निर्वाह इत्युच्यते तदा शाब्दबोधानां विनियमापत्तिः प्राचीनानामभिधादिलक्षणानामुच्छेदापत्तिश्च स्यादिति भावः ।

ननु "गङ्गायां घोष" इत्यादौ गङ्गाद्यर्थप्रतिपादनद्वारा तीरादिप्रतिपादनस्यापि अभिधयैव सम्भवात्रास्मन्मते लक्षणा नामातिरिक्तावृत्तिरिति लक्षणोच्छेदो न दूषणमिति चेत् ? मैवम्, एवं सति किमर्थं मीमांसादर्शने भगवता जैमिनिना ( क ) श्रुतिलिङ्ग

( क ) श्रुतिलिङ्गेति । (१) निरपेक्षो रवः श्रुतिः, निरपेक्षः स्वार्थबोधे शब्दान्तरानपेक्षो रवः शब्दः श्रुतिरित्यर्थः । यथा—"व्रीहीन् प्रोक्षति" । अत्र क्रियाजन्यफलभागित्वं कर्मत्वं प्रतिपादयन्त्या द्वितीयाविभक्तिरूपया श्रुत्या प्रोक्षणस्य व्रीह्यङ्गत्वं बोध्यते । शब्दसामर्थ्यं—लिङ्गम् ( २ ) शब्दस्यार्थविशेषप्रकाशनसामर्थ्यं लिङ्गमित्यर्थः । यथा—"अग्नये जुष्टं निर्वपामि" अस्य मन्त्रस्य निर्वपामीति निर्वापप्रकाशनसामर्थ्यरूपाल्लिङ्गात् बर्हिर्लवनाङ्गत्वम् । "यस्य मन्त्रस्य यत्प्रकाशनसामर्थ्यं तस्य तदङ्गत्वम्" इति न्यायात् । "परस्पराकाङ्क्षावशात्कचिदेकस्मिन्नर्थे पर्य्यवसितानि

(१३) यत्पुनरुक्तं "पौरुषेयमपौरुषेयं च वाक्यं सर्वमेव कार्यपरम्, अतत्परत्वेऽनु-

वाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्-" ३।३।७ इतिसूत्रेण यथाक्रममुक्तानां श्रुत्यादीनामेकत्रोपनिपाते परपरस्य विलम्बेनार्थोपस्थापकतया दुर्बलत्वमभिदधता श्रुत्यादिषु पूर्वपूर्वबलीयस्त्वं निरणायि। यदि शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तावति शब्दस्याभिधैव व्यापारः स्यात् तदा श्रुत्युपस्थापितार्थस्येव लिङ्गाद्यनुगृहीतार्थानामनभिधेयतया सर्वेषां समकालमर्थोपस्थापकत्वप्रसक्त्या अर्थविप्रकर्षाभिधानं मुनेरनुचितं स्यात्।

( १३ ) सम्प्रति व्यङ्ग्यार्थानामपि तात्पर्यग्राह्यत्वमनुमानेन साधयतो गुरुमतैकदेशिनो धनिकस्य मतं दूषयितुमुत्थापयति—यत्पुनरिति। पौरुषेयं "घटमानय" इत्यादिकं

---

पदानि वाक्यम्" ( ३ )॥ यथा—"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि" इति। अत्र निर्वपामीति लिङ्गेन निर्वापे विनियुज्यमानस्य समवेतार्थभागस्यैकवाक्यतावलेन "देवस्य त्वा इति भागस्यापि निर्वापे एव विनियोगः। "परस्पराकांक्षा प्रकरणम्" ( ४ )। यथा—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति दर्शपूर्णमासाभ्यां स्वर्गं भावयेत् ( स्वर्गापूर्वं कुर्यात् ) इति बोधानन्तरं भवत्याकांक्षा "कथमाभ्यां स्वर्गं भावयेत् "इति। तथा फलवदाग्नेयादिसन्निधौ "समिधो यजति, तनूनपातं यजति, इडो यजति" इत्यादिभिः प्रयाजादयः फलरहिताः श्रुताः। तेषां स्ववाच्येषु समिद्यागेन भावयेदिति बोधानन्तरं फलविशेषाश्रवणात् भवति प्रयोजनाकाङ्क्षा "किमेतेषां प्रयोजनम्" इति। ततश्च प्रयाजादीनां प्रयोजनाकाङ्क्षायां दर्शपूर्णमासयोः कथम्भावाकाङ्क्षायां परस्पराकाङ्क्षालक्षणेन प्रकरणेन प्रयाजादीनां सर्वेषां दर्शपूर्णमासाङ्गत्वं निश्चीयते। "समानदेशत्वं स्थानम्", ( ५ ) तदेव क्रम इत्युच्यते। समानदेशत्वं द्विविधम्। पाठसमानदेशत्वम्, अनुष्ठानसमानदेशत्वञ्च। पाठोऽपि द्विविधः यथासंख्यपाठः सन्निधिपाठश्च। तत्र यथासंख्यपाठेन समानदेशत्वम्, यथा—"इन्द्राग्नी रोचनादिवः वैश्वानरोऽजीजनत्०" इत्यादिमन्त्ररूपयाज्यानुवाक्यायुगलानां मध्ये "इन्द्राग्नी" इति प्रथमस्य याज्यानुवाक्यायुगलस्य "ऐन्द्राग्नमेकादशकपालं निर्वपेत् वैश्वानरं द्वादशकपालं निर्वपेत्" इत्येवं क्रमविहितेष्टीनां मध्ये "ऐन्द्राग्नमेकादश०" इति प्रथमायामैन्द्राग्नेष्टौ विनियोगः अङ्गत्वेन सम्बन्ध इति यावत्। वैश्वानरोऽजीजनः इति द्वितीयस्य याज्यानुवाक्यायुगलस्य "वैश्वानरं द्वादश०" इति द्वितीयायां वैश्वानरेष्टौ विनियोगः यथासंख्यपाठेन समानदेशत्वात्॥ "यौगिकः शब्दः—समाख्या" ( ६ )। सा च लौकिकी वैदिकी च। तत्र "हौत्रम्, आध्वर्यवम्, औद्गात्रम्, इत्याद्या। होतुश्चमसभक्षणाङ्गत्वम् "होतृचमसः" इति द्वितीया"।

श्रुत्यादीनां लक्षणानि सङ्ग्रहरूपेण—

"अभिधातुं पदेऽन्यस्मिन्ननपेक्षो रवः श्रुतिः।
सर्वत्राऽवगता शक्तिर्लिङ्गमित्यभिधीयते॥
संहत्यार्थं ब्रुवद्वृन्दं पदानां वाक्यमुच्यते।
प्रधानवाक्यस्याङ्गोक्त्याकाङ्क्षा प्रकरणं मतम्॥
स्थानं समानदेशत्वं समाख्या यौगिको रवः॥ इति

जैमिनिसूत्रस्य तु प्रकृतार्थविच्छेदकत्वेऽपि बहूपकारकत्वाद्दुरूहत्वाच्च विस्तरभयात्सङ्क्षेपेणैव व्याख्यातम्। इतोऽधिकं जिज्ञासुभिर्न्यायप्रकाशे, शाबरभाष्यादौ चावलोकनीयम्।

पादेयत्वादुन्मत्तवाक्यवत् । ततश्च काव्यशब्दानां निरतिशयसुखास्वादव्यतिरेकेण प्रतिपाद्यप्रतिपादकयोः प्रवृत्त्यौपयिकप्रयोजनानुपलब्धेर्निरतिशयसुखास्वाद एव कार्यत्वेनावधार्यते । 'यत्परः शब्दः स शब्दार्थः" इति न्यायात्' इति ।

(१४) तत्र प्रष्टव्यम्-किमिदं तत्परत्वं नाम, तदर्थत्वं वा, तात्पर्यवृत्त्या तद्बोधकत्वं वा ।

(१५) आद्ये न विवादः । व्यङ्ग्यत्वेऽपि तदर्थतानपायात् ।

(१६) द्वितीये तु केयं तात्पर्याख्या वृत्तिः । अभिहितान्वयवादिभिरङ्गीकृता, तदन्या वा ।

---

पुरुषनिष्पन्नं लौकिकम्, मन्वादिशास्त्ररूपञ्च अपौरुषेयं "विश्वजिता यजेत" इत्यादिकं पुरुषाप्रयुक्तं वैदिकं वाक्यम् । कार्य्यपरं सावयतात्पर्य्यकं कर्त्तव्यविशेषेच्छया उच्चरितमिति वा अतत्परत्वे कार्य्यपरत्वाभावे अनुपादेयत्वात् सर्वैरेवानङ्गीकारत्वात् उन्मत्तवाक्यवत् अप्रामाण्यं स्यादिति शेषः। ननु कार्य्यपरत्वे प्रकृते किमायातमत आह—ततश्चेति । काव्यशब्दानां "शून्यं वासगृहम्" इत्यादीनां निरतिशयसुखास्वादः रसाद्यनुभवः तद्व्यतिरेकेण तद्विना प्रतिपाद्य· यं प्रति वाक्यं श्राव्यते सः श्रोता प्रतिपादकः तस्य श्रावयिता तयोः, प्रवृत्तेः श्रोतुः काव्यश्रवणे वक्तुः काव्यपाठे यत्नस्य औपयिकं कारणीभूतफलेच्छाविषयं यत्प्रयोजनान्तरं चतुर्वर्गादिः, तस्यानुपलब्धेः शब्देनानुपस्थानात् निरतिशयसुखास्वाद एव रसाद्यनुभव एव कार्य्यत्वेन अवधार्य्यते तात्पर्य्येणानुमाय प्रतिपाद्यते । तस्मान्निरतिशयसुखास्वादरूपो रसादिरूपोऽर्थः शब्दस्य तात्पर्य्यविषयो जातः, किं वृत्यन्तरकल्पनयेति, ननु कार्यान्तरवद्रसादिरपि न प्रतीयेतेत्यत आह—यत्पर इति । यद्बोधनेच्छया उच्चरित इत्यर्थः । शब्दार्थः शब्दप्रतिपाद्यः । तथाचात्रानुमानाकारस्तु—"काव्यशब्दा रसादिव्यङ्ग्यार्थबोधकाः व्यङ्ग्यबोधनेच्छयोच्चरितत्वात्" इति । यथा—कम्बुग्रीवादिमन्तमर्थं बोधयतु इतीच्छया उच्चरितो घटशब्दः कम्बुग्रीवादिमन्तमर्थं बोधयति । यथा वा—तीरं बोधयतु इतीच्छया उच्चरितः "गङ्गा" शब्दस्तीरं बोधयति तथा रसादीन् बोधयतु इतीच्छया उच्चरिताः काव्यशब्दाः व्यङ्ग्यार्थान् बोधयिष्यन्तीति तात्पर्य्येणैव निर्वाहे व्यञ्जनाङ्गीकारेणालमिति तेषामाशयः ।

इदमत्रानुसन्धेयम्—'यत्परः शब्दः" इत्यस्य हि उपात्तशब्दैः प्रतिपाद्येष्वर्थेषु यदंशे विधेयत्वं तत्र वाक्यतात्पर्य्यं यत्र तात्पर्य्यं स शब्दार्थस्तदंशे शब्दस्यानधिगतार्थगन्तृस्वरूपं प्रामाण्यमित्यर्थः न तु यत्तात्पर्य्यकतया शब्दः प्रयुज्यते स शब्दार्थ इति भावः। एवं हि तात्पर्य्यस्यानियतत्वेन शक्तेरप्यनियतत्वापत्ति" रित्याहुः । इति

( १४ ) एतन्मतं विकल्प्य वितर्कयति—तत्र प्रष्टव्यमिति । "अतत्परत्वे अनुपादेयत्वात्" इत्येनेनागतं यत् "तत्परत्वे उपादेयत्वात्" इति तत्र तत्परत्वं किन्नामेति प्रष्टव्यमित्यर्थः । यद्वा—"स शब्दार्थः" इत्यस्य वाक्यस्य तत्परत्वमर्थः तदेव तत्परत्वं किन्नामेति प्रष्टव्यमित्यर्थः । तदर्थत्वम् सामान्यतस्तस्य शब्दस्य अर्थबोधकत्वम्, तात्पर्य्यवृत्या केवलयेति शेषः ।

( १५ ) दूषयति—आद्य इति । व्यङ्ग्यत्वेऽपि अस्मदीयव्यञ्जनावृत्या तदर्थबोधकत्वस्वीकारेऽपि तदर्थतानपायात् सामान्यतस्तदर्थबोधकत्वानपायात् ।

( १६ ) तात्पर्य्यवृत्या तद्बोधकत्वमिति द्वितीयकल्पं दूषयति—द्वितीये त्विति । तदन्येति । तात्पर्य्यातिरिक्तव्यङ्ग्यार्थबोधनोपयोगिनी काचित् प्रकारान्तरा ।

(१७) आद्ये दत्तमेवोत्तरम् । द्वितीये तु—नाममात्रे विवादः । तन्मतेऽपि तुरीयवृत्तिसिद्धेः ।

(१८) नन्वस्तु युगपदेव तात्पर्यशक्त्या विभावादिसंसर्गस्य रसादेश्च प्रकाशनम्—इति चेत् ? न , तयोर्हेतुफलभावाङ्गीकारात् ।

(१९) यदाह मुनिः—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति ।

(२०) सहभावे च कुतः सव्येतरविषाणयोरिव कार्यकारणभावः । पौर्वापर्यविपर्ययात् ।

(१७) आद्य इति । आद्ये अभिहितान्वयवादिस्वीकृतैव तात्पर्याख्यावृत्तिरिति कल्पे । दत्तमेवोत्तरम् "तात्पर्याख्यावृत्तिरपि संसर्गमात्रे परिक्षीणा न व्यङ्ग्यबोधिनी" इत्यनेनेनोत्तरं कृतमेवेत्यर्थः । "तात्पर्याख्यां वृत्तिमाहुः" इत्यादिना संसर्गमात्र एव तैस्तात्पर्याख्यवृत्त्यभ्युपगमः स्वीक्रियत इति प्रागेव निरूपितम् ।

द्वितीये तात्पर्यातिरिक्तव्यङ्ग्यार्थबोधनोपयोगिनी प्रकारान्तरैव तात्पर्याख्यावृत्तिरिति कल्पे । तन्मतेऽपि अभिहितान्वयवादिमतेऽपि रसादिबोधनस्यानपलपनीयत्वात् तात्पर्यस्य पदार्थान्वयबोधने परिक्षीणत्वात् तुरीयवृत्तिसिद्धिर्गलेऽऽपतत्येव केवलनामविषय एवावयोर्मतभेदः । तत्र व्यङ्ग्यबोधाय तुरीयतात्पर्याख्यवृत्तिकल्पनापेक्षया तदर्थबोधिकाया वृत्तेर्व्यञ्जनानाम्न्या एव युक्तत्वादस्मन्मतमेव नितरां श्रेय इमि भवताऽपि तदेवाङ्गीकरणीयमिति भावः ।

(१८) नन्वतिरिक्तपदार्थरूपा तात्पर्याख्या तुरीया वृत्तिर्नाभ्युपेयते किन्तु "शब्दबुद्धिकर्मणाम्" इत्यादिनियमेन विभावादिसंसर्गबोध-रसादिबोधयोः क्रमिकत्वाऽभ्युपगम एव तात्पर्यवृत्त्या पदार्थानामन्वयं बोधयित्वा क्षीणशक्तिकतया रसादीनां बोधो न स्यादिति दूषणस्याभिहितत्वात्, विभावादिसंसर्गबोधयोः यौगपद्यमेवाभ्युपेयत इत्यत आह—नन्विति । तात्पर्यशक्त्या तात्पर्यरूपया वृत्त्या 'विभावादिसंसर्गस्य विभावादिषु कारणतासम्बन्धस्य । प्रकाशनं बोधनम्, प्रकाशनमित्यस्यानन्तरम् "तथासति विरम्य व्यापारो न भविष्यति" इति शेषः । तयोः विभावादिसंसर्गबोधरसादिबोधयोः हेतुफलभावाङ्गीकारात् कार्यकारणत्वस्वीकारात् तथा हि विभावादिसंसर्गः कारणम्, रसादि कार्यम् परं तयोर्यौगपद्ये तु कार्यकारणभावो न सम्भवति, अनन्यथासिद्धनियतपूर्ववर्तित्वं कारणत्वम्, नियतपश्चाद्भावित्वं कार्यत्वमिति तल्लक्षणात् । एवञ्च कार्यकारणलक्षणस्य तत्राव्याप्तिरिति भावः । नच "यस्मादेष समूहालम्बनात्मकस्तस्मान्न कार्यः" इत्येकात्मकत्वं रसस्याकार्यत्वञ्च प्रागुक्तमिति तेन सह विरोध इति वाच्यम्, विभावादिसंसर्गबोधरसादिबोधयोः कारणकार्ययोरत्यन्तसमीपतया पौर्वापर्यस्य लक्षयितुमशक्यत्वमित्यभिप्रायेण तथोक्तत्वात् ।

(१९) विभावादिसंसर्गबोधरसादिबोधयोर्हेतुफलभावे ऋषिवचनं प्रमाणयति—यदाहेति । मतान्तरप्रदर्शनपूर्वकं प्रागेव ( १२६ पृ० ) व्याख्यातमिदम् ।

(२०) ननु सहोत्पन्नयोरपि तयोर्हेतुफलभाव आस्तामत आह—सह भावे चेति । युगपदुत्पत्तिस्वीकारे चेत्यर्थः । सव्येतरविषाणयोः गवादीनां वामदक्षिणशृङ्गयोरिव तयोर्विभावादिबोधरसादिबोधयोः कुतः कार्यकारणभावः कथमपि नेत्यर्थः । पौर्वापर्येति कारणस्य

( २१ ) 'गङ्गायां घोषः' इत्यादौ तटाद्यर्थमात्रबोधविरताया लक्षणायाश्च कुतः शीतत्वपावनत्वादिव्यङ्ग्यबोधकता। तेन तुरीया वृत्तिरुपास्यैवेति निर्विवादमेतत्।

( २२ ) किंच—

( २३ ) **बोद्धृस्वरूपसंख्यानिमित्तकार्यप्रतीतिकालानाम्।**

**आश्रयविषयादीनां भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्यः॥ २॥**

नियतपूर्ववर्तितया कार्यस्य नियतपश्चाद्भावितया व्यत्ययापत्तेरित्यर्थः।

अपि च—"यत्परः शब्द स शब्दार्थः" इति न्यायमङ्गीकुर्वतां व्यञ्जनानङ्गीकारे "वानीरकुञ्ज" इत्यादौ गुणीभूतः प्रतीयमानोऽर्थः प्रथममवतरन् शब्दस्य तत्परत्वाभावात् कस्य व्यापारस्य विषयतामवलम्बताम्? ननु तर्हि भट्टनयवत् अर्थापत्त्या "पीनोऽयं देवदत्तो दिवा न भुङ्क्ते" इत्यादौ "रात्रौ भुङ्क्ते" इत्यादिवदत्रापि व्यङ्ग्यार्थप्रतीतौ वाक्यशेषं कल्प्यतामिति चेत्? मैवम्, "धर्मिकल्पनातो वरं धर्मकल्पना" इति न्यायात् व्यापारान्तरकल्पनस्यैव न्याय्यत्वात्।

( २१ ) नन्वेवन्तर्हि लक्षणामूलव्यञ्जना नाङ्गीक्रियताम्, एकयैव लक्षणया लक्ष्यव्यङ्ग्यार्थद्वयं बोध्यतामित्यत आह—गङ्गायामिति। तटाद्यर्थमात्रस्य बोधनात् पश्चादेव विरताया विगतसामर्थ्यायाः "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः" इति नियमादिति भावः। उपसंहरति—तेनेति। अभिधातात्पर्यलक्षणानां रसादिबोधने सामर्थ्याभावेनेत्यर्थः। तुरीया वृत्तिः अभिधालक्षणामूलाव्यञ्जनानाम्नी चतुर्थीवृत्तिः उपास्यैव सर्वैराश्रयणीयैव।

नच अभिधालक्षणा च दीर्घतरीभूतैव व्यङ्ग्यार्थं बोधयतु कुतस्तयोर्विरामः शब्दस्य विरम्य व्यापारस्तु भवन्मतव्यङ्ग्यबोधन इव ममापीष्ट इति वाच्यम्, तथासति दीर्घतराभिधाव्यापारेणाऽपीष्टसिद्धौ लक्षणोच्छेदापत्तेरुक्तत्वात्। वाच्यवाचकव्यतिरेकेणाऽपि व्यङ्ग्यव्यञ्जकभावानभ्युपगमे असाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात्। तथा हि असाधुत्वादयो हि सर्वदैव हेया इति नित्यदोषाः। कष्टत्वादयस्तु श्रृङ्गाराद्यभिव्यक्तिप्रतिकूलतया श्रृङ्गारादावेव हेया अपि रौद्रादौ व्यङ्ग्येऽनुगुणतया उपादेया एवेत्यनित्यदोषाः। इत्थञ्च व्यङ्ग्यव्यञ्जकभावे प्रातिकूल्यानुकूल्याभ्यामेव नित्यानित्यदोषविभागः। स च व्यञ्जनाया असत्वे नोपपन्नः। वाच्यवाचकभावे हि कष्टत्वादीनामौदासीन्येन सर्वत्रैव दुष्टत्वमदुष्टत्वं वा अन्यतरन्नियतमेव स्यात्।

( २२ ) अभिधादिभ्यो व्यञ्जनाया भेदमुपपाद्य अभिधेयार्थादपि व्यञ्जनाया भेदमुपपादयति—किञ्चेति।

( २३ ) बोद्धृस्वरूपेति। बोद्धा अवगन्ता, स्वरूपं प्रकृतिः, संख्या एकत्वादिः, निमित्तं कारणम्, कार्यं फलम् उद्देश्यमिति यावत्, प्रतीतिर्बोधः, कालः समयश्च तेषां तथोक्तानाम्। तथा आश्रय आधारः, विषय उद्देश्यम्, आदिपदात् वक्तृप्रकरणादयश्च तेषां तथोक्तानाम् अनुक्तोऽपि चकारोऽत्रोहनीयः। भेदादित्यस्य बोद्धृत्यादौ प्रत्येकमन्वयः। तेन बोद्धृभेदात्, स्वरूपभेदात् संख्याभेदादित्यादि बोद्धव्यम्। भेदश्चैषां स्वयमेव दर्शयिष्यति। व्यङ्ग्य अर्थः अभिधेयतः अभिधाप्रतिपाद्यादर्थात् भिन्नः। उपलक्षणञ्चैतत् तेन लक्ष्यार्थात् तात्पर्यार्थाच्च भिन्न इत्यपि ज्ञेयम्।

( २४ ) वाच्यार्थव्यङ्ग्यार्थयोर्हि पदतदर्थमात्रज्ञाननिपुणैर्वैयाकरणैरपि सहृदयैरेव च संवेद्यतया बोद्धृभेदः ।

( २५ ) 'भ्रम धम्मिअ-' ( ३३२ पृ. ) इत्यादौ क्वचिद्वाच्ये विधिरूपे निषेधरूपतया, क्वचित् 'निःशेषच्युतचन्दनम्-' इत्यादौ निषेधरूपे विधिरूपतया च स्वरूपभेदः

( २४ ) तत्र कारिकोक्तदिशा भेदान् दर्शयितुं बोद्धृभेदं प्रथमं दर्शयति-वाच्यार्थव्यङ्ग्यार्थयोरिति । वाच्यार्थस्य वैयाकरणैर्वेद्यतया व्यङ्ग्यार्थस्य च सहृदैरित्येवं यथासंख्यमन्वयः ।

प्रतिकूलतया शृङ्गारादावेव हेया अपि रौद्रादौ व्यङ्ग्येऽनुगुणतया उपादेया एवेत्यनित्यदोषाः । इत्थञ्च व्यङ्ग्यव्यञ्जकभावे प्रातिकूल्यानुकूल्याभ्यामेव नित्यानित्यदोषविभागः । स च व्यञ्जनाया असत्त्वे नोपपन्नः । वाच्यवाचकभावे हि कष्टत्वादीनामौदासीन्येन सर्वत्रैव दुष्टत्वमदुष्टत्वं वा अन्यतरन्नियतमेव स्यात् ।

पदेति तदर्थेति पदाभिधेयेत्यर्थः । मात्रपदेन व्यङ्ग्यार्थव्यवच्छेदः अपिना सहृदयपरिग्रहः । सहृदयैरेवेत्येवकारेण वैयाकरणव्यवच्छेदः । उक्तञ्च ध्वनिकृता—

"शब्दार्थशासनज्ञानमात्रेणैव न विद्यते ।
वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम् ॥" इति ।

यदि च वाच्यरूप एवासावर्थः स्यात्तर्हि वाच्यवाचकपरिज्ञानादेव प्रतीतिः स्यात् । अथ वाच्यवाचकलक्षणायात्रकृतश्रमाणां काव्यतत्त्वार्थभावनाविमुखानां स्वरश्रुत्यादिलक्षणमिव प्रतीतानां गन्धर्वलक्षणविदामगोचर एवासावर्थः" इति व्याख्यातं च । अन्येनाऽप्युक्तम्-कविताऽऽस्वादसमये पदव्युत्पत्तिमात्रधीः ।
नीवीमोक्षस्य वेलायां यथा क्षौमार्घचिन्तकः ॥" इति ।

तथा च काव्यज्ञसहृदयाः वाचकलक्षकपदतदुभयार्थमात्रज्ञानसमर्था वैयाकरणा उभय एव वाच्यार्थं जानन्ति । व्यङ्ग्यार्थन्तु केवलकाव्यज्ञसहृदया एवावगच्छन्तीति स्पष्टं बोद्धृभेदः । स च वाच्यार्थव्यङ्ग्यार्थयोरभिन्नत्वे न सम्भवतीति भावः । यथा वा मम—

"सुन्दरि ! तव श्लेषाय बहुकालादवस्थितोऽहं स्पृहयन् ।
अवलोक्य पुनर्वत मां लीलापद्मं हसन् पिहितम् ॥"

त्वयेति शेषः

अत्र वैयाकरणो वक्ता तद्दृष्ट्या चमत्कारो नात्र प्रतिभासते । तत्तत्तात्पर्यान्वेषणतत्परसहृदयदृष्ट्या तु "सूर्यास्तपर्यन्तं मद्वियोगः" इति चमत्कारः प्रतीयत एवेति बोद्धृभेदः । एवमन्यत्राप्यूहनीयम् ।

( २५ ) स्वरूपभेदमुदाहरति—"भम धम्मि अ" इत्यादि "भ्रम" इति विधिरूपे वाच्ये सतीत्यन्वयः । व्यङ्ग्यार्थप्रतीतिसमये तु अभ्रणमिति निषेधरूपतया पर्य्यवसितादिति शेषः' स्वरूपभेद इत्यत्र सम्बन्धः ।

निशेषेति—

निशेषच्युतचन्दनस्तनतटं निर्मृष्टरागोऽधरः
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि ! दूति ! बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितोगताऽसि न पुनस्तस्याधमस्यान्तिकम् ॥

( २६ ) 'गतोऽस्तमर्कः' इत्यादौ च वाच्योऽर्थ एक एव प्रतीयते । व्यङ्ग्यस्तु तद्बोद्ध्रादिभेदात् क्वचित् 'कान्तमभिसर' इति 'गावो निरुध्यन्ताम्' इति 'नायकस्या-

अत्र निषेधरूपे "तस्याधमस्यान्तिकं न गतासि" इतिगमन निषेधरूपे "वाच्ये" इत्यन्वयः विधिरूपतथा व्यङ्ग्यार्थबोधसमये "तदन्तिकमेव रन्तु गता सि" इति पर्य्यव-सितात् स्वरूपभेदः स्वभाववैषम्यं वाच्यार्थव्यङ्ग्यार्थयोरिति पूर्वेणान्वयः ।

क्वचिद् वाच्ये विधिरूपे अनुभयरूपो यथा—

"व्रज ममैवैकस्याः भवन्तु निःश्वासरोदितव्यानि
मा तवापि तया विना दाक्षिण्यहतस्य जनिषत ॥"

अत्र व्रजेति विधिः । न प्रमादादेव नायिकान्तरसंगमनं तव, अपितु गाढानु(क)रागात येनान्याहृङ्मुखरागः गोत्रस्खलनादि च केवलं पूर्वकृतानुपालनात्मना दाक्षिण्येनैकरूपत्वा भिमानेनैव त्वमत्र स्थितः, ततसर्वथा शठोऽसीति गाढमन्युरूपोऽयं खण्डितनायिकाभिप्रायो ऽत्र प्रतीयते । नचात्र विध्यभावः (व्रज्याभावः) निषेधः; विध्यन्तरं वा व्यङ्ग्यम् अपि तु गाढमन्युरूपो नायिकाभिप्राय इति व्यङ्ग्यस्यानुभयरूत्वं बोध्यम् ।

क्वचिद्वाच्ये निषेधरूपे ऽनुभयरूपो यथा—

"प्रार्थये तावत्प्रसीद निवर्त्तस्व मुखशशिज्योत्स्ना विलुप्ततमो निवहे ।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ! ॥"

काचिद्रभसा प्रियतममभिसरन्ती तद्गृहाभिमुखमागच्छता तेनैव हृदयवल्लभेनैवमुप-श्लोक्यते प्रत्यभिज्ञाच्छलेन । अत एवात्मप्रत्यभिज्ञापनार्थमेव 'हताशे" इति नर्मवचनम् अन्यासां च विघ्नं करोषि तव चेप्सितलाभो भविष्यतीति का प्रत्याशा । अत एव मदीयं वा गृहमागच्छ त्वदीयं वा गच्छावेत्युभयत्रापि तात्पर्य्यादनुभयरूपो वल्लभाभिप्रायश्चाङ्गा-त्मा व्यङ्ग्य इति प्राचामभिप्रायः ।

( २६ ) संख्याभेदमुदाहरति—गतोऽस्तमिति । एकः सूर्य्यास्तगमनरूपः । व्यङ्ग्यस्तु "अर्थ" इति पूर्वेण सम्बन्धः । तस्य "गतोऽस्तमर्कः" इति वाक्यस्य बोद्धा प्रतिपाद्यः आदिपदात् प्रकरणादि च तेषां भेदात् वैलक्षण्यात् "अनेक" इत्युत्तरेण सम्बन्धः । क्वचि-त्—अभिसारिकारूपबोद्धृस्थले—कान्तमभिसरेति । क्वचिदनुचरबोद्धृस्थले—वनादौ वि-सृष्टा गावो निरुध्यन्तामिति । क्वचिद्वियोगिनीरूपबोद्धृस्थले—सहचरीरूपबोद्धृस्थले वा—"नायकस्यायमागमने"त्यादि । आदिपदेन-क्वचित् । सेनापतिरूपबोद्धृस्थले-"शत्रूणां हठेनावमर्द्दनावसरः" इति । क्वचित् वासकसज्जारूपबोद्धृस्थले—"प्रायप्रायस्ते प्रेयान्" इति । क्वचिद्गुरुरूपवक्तृस्थले-"सान्ध्यो विधिरुपक्रम्यताम्" इति । क्वचिद्दूरं जिगमिषुरूपबोद्धृस्थले—"दूरं मा गाः" इति । अधिकं प्रदीपादौ स्पष्टम् ।

( क ) शास्त्रेषु प्रेमप्रणयरागाणामुत्तरोत्तरतारतम्यं प्राप्तानामित्थं वर्णितानि, तत्र प्रेम नाम "अयं मम अहमस्य" इत्याकारकः पक्षपातविशेषः । प्रणयः—प्रेमैवावलोकादिना प्रकर्षं नीत अप-राधसहस्रेणाऽप्यविचालितं वा, रागः—परिचयातिशयेन रञ्जनक्षमः प्रणय एव । तत्र गाढत्वं निश्शे-षमुत्सारितगुर्वादिपारवश्यत्वमिति ज्ञेयम् । विशेषतस्त्वेषां भेदाः प्रेमरसायने जिज्ञासुभिर-वलोकनीया ।

यमागमनावसरः' इति 'संतापोऽधुना नास्ति' इत्यादिरूपेणानेक इति संख्याभेदः ।

( २७ ) वाच्यार्थः शब्दोच्चारणमात्रेण वेद्यः । एष तु तथाविधप्रतिभानैर्मल्यादिनेति निमित्तभेदः ।

( २८ ) प्रतीतिमात्रकरणाच्चमत्कारकरणाच्च कार्यभेदः ।

( २९ ) केवलरूपतया चमत्कारितया च प्रतीतिभेदः ।

( ३० ) पूर्वपश्चाद्भावेन च कालभेदः ।

( ३१ ) शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसंघटनाश्रयत्वेन चाश्रयभेदः ।

---

उदाहरणान्तरं काव्यप्रकाशे यथा—

"कथमवनिप ! दर्पो यन्निशातासिधारा-
दलनगलितमूर्ध्ना विद्विषां स्वीकृता श्रीः ।
ननु तव निहतारेरप्यसौ किं न नीता
त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥"

अत्र जीवत्येव रक्षणसमर्थे च त्वयि त्वत्प्रियायाः हीनाङ्गैः शत्रुभिरपहरणात् मृतानां श्रीहरणे गर्वोऽनुचित इति आपाततः प्रतीमानया निन्दया "सकलशत्रुविनाशेन त्रैलोक्य विश्रुतकीर्तिस्त्वम्" इति स्तुतिरवगम्यते ।

तथा च वाच्या निन्दा प्रतीयमाना स्तुतिस्तद्रूपेण वाच्यप्रतीयमानयोः स्वरूपस्य भेदः ।

( २७ ) निमित्तभेदमुपपादयति-वाच्यार्थ इति । शब्दोच्चारणं शब्दज्ञानं वाच्यार्थबोधे तस्यैव निमित्तत्वात् । मात्रपदेन प्रतिभानैर्मल्यादिनिरासः । एष तु व्यङ्ग्यार्थस्तु । तथाविधा या प्रतिभा गूढार्थग्रहणशक्तिस्तस्या नैर्मल्यं भ्रमादिसम्पर्कराहित्यम् , आदिपदात् पूर्वप्रदर्शितवक्त्रयादिवैशिष्ट्यज्ञानादिकञ्च तेन तथोक्तेन ।

( २८ ) कार्यभेदमुपपादयति—प्रतीतीति । वाच्यार्थो विषयतया केवलं प्रतीतिमात्रमेव जनयति । मात्रपदेन चमत्कारनिरासः । व्यङ्ग्यार्थस्तु सुखसंवलितप्रतीतिचमत्कारञ्च जनयतीति तयोः कार्यस्य फलस्य भेदः ।

( २९ ) प्रतीतिभेदं दर्शयति—केवलेति । वाच्यार्थप्रतीतेः केवलरूपतया सुखचमत्कारहीनतया केवलं शाब्दबोधस्वभावयेत्यर्थः । व्यङ्ग्यार्थप्रतीतेस्तु-सुखचमत्कारशाब्दबोधस्वभावतया चेत्युभयवत्तया भेदः ।

( ३० ) कालभेदं प्रतिपादयति—पूर्वेति । पूर्वं वाच्यार्थप्रतीतिः । पश्चाद्धि व्यङ्ग्यार्थप्रतीतिरिति कालभेदः ।

( ३१ ) आश्रयभेदं स्फुटीकरोति—शब्दाश्रयत्वेनेति वाच्यार्थस्य शब्दाश्रयत्वेन शब्दमात्रसम्बन्धित्वेन व्यङ्ग्यार्थस्य तु शब्दः पदघटकवर्णसमुदायः तदेकदेशः तादृशसमुदायस्य प्रकृतिप्रत्ययादिः, तदर्थः शब्दार्थः वाच्यलक्ष्यव्यङ्ग्यत्रिविधात्मकोऽपि वर्णः अक्षरम् , संघटना वर्णरचना च आश्रय आकारो यस्य तस्य भावस्तेन तथोक्तेन शब्दादिसम्बन्धित्वेनेत्यर्थः । तयोराश्रयस्य भेदः ।

यथा वा—

रेरे चञ्चललोचनाञ्चितरुचे ! चेतः ! प्रमुच्य स्थिर—
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि ।

( ३२ ) 'कस्स व ण होइ रोसो दट्ठूण पिआएँ सव्वणं अहरं ।
सभमरपउमग्घाइणि वारिअवामे सहसु एह्णिं ॥'

( ३३ ) इति सखीतत्कान्तविषयत्वेन विषयभेदः । तस्मान्नाभिधेय एव व्यङ्ग्यः।

मन्ये विहरिष्यसे बत ! हता मुञ्चान्तराशामिमा-
मेषा कण्ठतटे कृता खलु शिला संसारवारान्निधौ ॥

अत्र हि "किं त्वं मन्यसे अहं विहरिष्ये" इत्यनुक्त्वा किं त्वं मन्ये अहं विहरिष्यसे" इति पुरुषव्यत्ययनोक्तौ तदर्थं एव हासव्यञ्जक इति स्फुटं व्यङ्ग्यस्य वाच्यैकदेशाश्रितत्व-मित्याश्रयभेदः ।

( ३२ ) विषयभेदं दर्शयति—कस्स वेति ।

"कस्य न वा भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्रायिणि ! वारितवामे ! सहस्वेदानीम् ॥"

इति संस्कृतम् । "सभ्रमरपद्माघ्राणशीले" इति लोचनस्थः पाठः । स्वकान्ताया उप-पतिदष्टमधरं वीक्ष्य रुष्टे प्रोषितागते पत्यौ निरपराधत्वबोधनाय प्रतारयन्त्याः सख्या उक्तिरियम् । प्रियायाः स्वप्रियतमायाः सव्रणं व्रणसहितम् अधरम् अधरोष्ठं दृष्ट्वा कस्य वा पत्युः रोषो न भवति अपि तु सर्वस्यापि रोषो भवत्येवेति भावः। एतेनास्याः न कोऽपि दोष इति व्यञ्जितः। सभ्रमरं केनाऽपि भ्रमरेण सहितं पद्मम् आजिघ्रतीति तत्सबोधने रूपम् । अधरदशनपर्यन्तावसायि सभ्रमरपद्माघ्राणं तत्त्वेनाध्यवसित-षिङ्गनिधुवनं च मा कृथा इति वारितेऽपि वामे प्रतीपाचरणात्प्रतिकूले ! "वारि-तायामधरदशनपर्यन्तायां रतौ वामे" इति गूढव्यङ्ग्यम् । त्वम् इदानीम् अविचारितद-शायां प्रतिनायकसन्निधौ च सहस्व पत्युस्तर्जनां भ्रमरदंशनजन्यवेदनां चानुभव, इत्थमेवं खण्डिताधरा तदन्यहेतुकत्वाशङ्कया मा कुप्येत्यर्थः। गाथा छन्दः ।

( ३३ ) अत्राविनीतत्वरूपवाच्यार्थस्य संबोध्या सखी प्रकृतनायिकाविषयः। तत्र हि वाच्योऽर्थः श्रोत्र्याः सम्बोध्यनायिकाया व्यवतिष्ठते। "इयं भ्रमरेण दष्टा न तु षिङ्गेन" इति व्यङ्ग्यार्थस्य तु तत्कान्तो नायको विषयः, तदेव दर्शयति–इति सखीतत्कान्ते-त्यादि। वक्त्र्याः सखी नायिका तत्कान्तस्तत्पतिः, तद्विषयत्वेन तज्ज्ञानविषयत्वेन । विषयभेद इति वाच्यार्थबोधे सखी उद्देश्या, "भ्रमरेणास्या अधरो दष्टः न पुनरुपपतिना" इति व्यङ्ग्यार्थबोधे कान्त उद्देश्य इति विषयभेद इत्यर्थः। अत्रोभाभ्यामेव सखीतत्का-न्ताभ्यामुक्तव्यङ्ग्यार्थस्य ज्ञायमानत्वान्न बोद्धृभेद इति ज्ञेयम् । अथापि "ममैवं वैदग्ध्यम्" इति प्रतिवेशिनी विषयः, "इदं मया समाहितं पुनरेवं त्वया न विधेयम्" इत्यस्योपप-तिर्विषयः, "भ्रमरेणास्या अधर खण्डितो न तु भर्त्रेति त्वयेर्ष्या न विधेया" इत्यस्य सपत्नीविषयः, सरलतरेयं न किञ्चित्प्रपञ्चं जानाति" इत्यस्य साध्वीविषयः, "नान्यथा शङ्कनीया" इत्यस्य श्वश्रूः विषयः,"अनया विना त्वत्पतिर्न जीवतीति विदितमेव तदस्मत्स-मन्विते भेदो न विधेयः" इत्यस्योपपतिभार्याविषय(क)इत्यादिव्यङ्ग्योऽवधेयः । एवं

( क ) अत्रैवं पुनराहुर्लोचनकाराः—

"सहस्वेदानीमिति वाच्यमविनयवतीविषयम् , भर्तृविषयं तु "अपराधो नास्ती" त्यावेद्यमानं व्यङ्ग्यम् । तस्यां च प्रियजनेन गाढमुपालभ्यमानायां तद्व्यलीकशङ्कितप्रातिवेश्मिकलोकविषयं

( ३४ ) तथा—

बोद्धृस्वरूपादिभेदेऽपि यदि वाच्यव्यङ्ग्ययोरेकत्वं तदा क्वचिदपि नीलपीतगुणे तद्वति घटादौ च इदं नैल्यमिदं पैत्यमिति इदं नीलमिदं पीतमिति च तथा नरपुङ्गवादावपि भेदो न स्यात्। अत एवाहुः—"अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चे"ति। एवं बोद्धृस्वरूपादिभेदादवश्यं वाच्यार्थव्यङ्ग्यार्थयोर्भेदः स्वीकर्त्तव्यः इति महावाक्यसन्दर्भाशयः।

अत्र पुनस्तु—"ननु गतोऽस्तमर्कः" इत्यादिवाक्ये प्रकरणादिरूपज्ञापकान्तरसहायेनैव बोधितस्य "कान्तमभिसरे"त्यादिव्यङ्ग्यार्थस्य कथं शब्दप्रमाणबोध्यत्वम्, शब्दैकसमधिगम्यत्वाभावादिति चेत्? अत्र केचिदाहुः—यथा शब्दबोधितस्य क्वचिद्वाच्यार्थस्य सत्यासत्यत्वजिज्ञासायां सत्यत्वमनुमानविषय इति शब्दानुमानप्रमाणयोर्भिन्नविषयत्वम्, व्यङ्ग्यार्थस्तु एकैकशब्दप्रमाणेन प्रकरणादिबोध्य इति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम्। तत्र का गतिरिति चेत्? तत्रैवं सङ्गतिः—यथा प्रकरणादेर्विण्वाद्यनेकाभिधेयस्यापि हर्य्याद्यभिधेयावच्छेदकत्वं तथानेकव्यञ्जकस्यापि शब्दस्य एकव्यङ्ग्यप्रकरणादिसाहाय्यस्येतिकर्त्तव्यतारूपतया शब्दस्याङ्गत्वं स्वाङ्गस्य चाव्यवधायकत्वं न्यायसिद्धमेवेति न शब्दप्रमाणव्याकोपः। इह च यद्यपि वाक्यार्थस्य प्रतीत्यनन्तरं तस्य सत्यासत्यत्वजिज्ञासायां सत्यत्वं प्रमान्तरेणानुमानेनैव बोध्यते, तथापि सत्यासत्यत्वजिज्ञासातः पूर्वमुपपन्नाया वाक्यार्थप्रमाया अप्रमाभावात् शब्दैकसमधिगम्यत्वाच्च न शब्दप्रामाण्यव्याकोपः। न हि चक्षुरादिना प्रतीतौ सत्यासत्यत्वप्रत्यक्षप्रामाण्यं व्याकुप्येत" इत्याहुः। उपसंहरति—तस्मादिति। तस्मात् सर्वप्रकारेणैव भेदात् अभिधेयोऽर्थः नैव व्यङ्ग्य इत्यन्वयः। अनयोरभेदो नैवेत्यर्थः। अत्रैवमाहुर्ध्वनिकाराः—

"प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥" इति।

न केवलं वाच्यव्यङ्ग्ययोरेव वैधर्म्यं किन्तु वाचकव्यञ्जकयोरपीति बोध्यम्। अत्राहुः प्रदीपकाराः—"किं च वाचकव्यञ्जकयोरपि वैधर्म्याद्भेदो वक्तव्यः। यतो वाचकस्य सङ्केतितार्थापेक्षा, संकेतिते एव ह्यर्थेऽभिधा वर्त्तते न त्वेवं व्यञ्जकः, अन्यत्रापि व्यञ्जनया प्रत्ययजननात्" इति।

( ३४ ) ननु मास्तु व्यङ्ग्योऽभिधेयः किन्तु लक्ष्यः कथन्नेत्याशङ्क्य व्यङ्ग्यस्य लक्ष्यत्वं निराकरिष्णुः निराकृतेऽप्यभिधेये पुनः प्रकारान्तरेण निराकुर्वन् व्यञ्जनयैव प्रतिपाद्यत्वं स्थापयति—तथेति। न खलु एतावतैव व्यङ्ग्यानामभिधादिबोध्यत्वं नास्ति अपि तु इतस्थापीत्यर्थः।

---

चाविनयप्रच्छादनेन प्रत्यायनं व्यङ्ग्यम्, तत्सपत्न्यां च तदुपालम्भतदविनयप्रहृष्टाय सौभाग्यातिशयख्यापनं प्रियाया इतिशब्दबलादिति सपत्नीविषयं व्यङ्ग्यम्। "सपत्नीमध्ये इयत् खलीकृताऽस्मी"ति लाघवमात्मनि ग्रहीतुं न युक्तम्, प्रत्युतायं बहुमानः। सहस्व शोभस्वेदानीमिति सखीविषयं सौभाग्यप्रख्यापनं व्यङ्ग्यम्। अद्येयं तव प्रच्छन्नाऽनुरागिणी हृदयवल्लभेत्थं रचिता, पुनः प्रकटरदनदंशनविधिनं विधेय इति तच्चौर्यकामुकविषयसम्बोधनं व्यङ्ग्यम्। इत्थं मयैतदपह्नुतमिति स्ववैदग्ध्यख्यापनं तटस्थविदग्धलोकविषयं व्यङ्ग्यम्" इति।

( ३५ ) प्रागसत्वाद्रसादेर्नो बोधिके लक्षणाभिधे ।
किंच मुख्यार्थबाधस्य विरहादपि लक्षणा ॥ ३ ॥

( ३६ ) 'न बोधिका' इति शेषः ।

( ३७ ) नहि कोऽपि रसनात्मकव्यापाराद्भिन्नो रसादिपदप्रतिपाद्यः पदार्थः प्रमाणसिद्धोऽस्ति, यमिमे लक्षणाभिधे बोधयेताम् ।

( ३८ ) किंच । यत्र 'गङ्गायां घोषः' इत्यादावुपात्तशब्दार्थानां बुभूषन्नेवान्व-

( ३५ ) व्यङ्ग्यान्तरबोधे लक्षणाभिधा यथा तथास्तु रसादिबोधस्तु व्यञ्जनावृत्त्यनङ्गीकारेण सर्वथा न सम्भवतीत्याशयेनाह—प्रागसत्वादिति । प्राक् स्वानुभवोत्पत्तेः पूर्वं रसादेः असत्त्वात् अविद्यमानत्वात् हेतोः लक्षणाभिधे लक्षणा अभिधा च शक्ती नो बोधिके । प्रत्यक्षादिप्रमाणान्तरसिद्धमेव वस्तु लक्षणाभिधे बोधयतः यथा घटशब्दीया अभिधा पूर्वं प्रत्यक्षादिसिद्धं कम्बुग्रीवादिमत्पदार्थं बोधयति । यथा वा गङ्गाशब्दीयलक्षणा पूर्वंप्रत्यक्षादिसिद्धं तीरं बोधयति । रसादिस्तु न तथा तत्काव्यस्थशब्दजन्यो यो रसस्तस्य शब्दबोधानन्तरमेव जन्यत्वात् स्वोत्पत्तेः पूर्वं स्वरूपेण केनापि प्रमाणेनासत्त्वात् तत्र तत्काव्यस्थशब्दस्य शक्तेर्लक्षणाया वा ग्रहीतुमशक्यत्वादिति सरलार्थः ।

नच तत्काव्यात् प्रथममनुभूयमानो यो रसस्तन्निष्ठसामान्यधर्मरूपया सामान्यलक्षणया उपस्थिते भाविन्यपि रसे शक्तिग्रहोऽस्त्विति वाच्यम्, शक्त्या लक्षणया वा प्राथमिकरसबोधस्यैव तत्सम्भवात् प्राक् तस्याऽनुपस्थितत्वात् । विभावादिवाचकशब्दानां तत्र शक्तिग्राहकत्वाभावाच्च । नापि कोशग्राहितशक्तिकात् काव्यस्थशृङ्गारादिशब्दात्तद्बोधः अननुभवात् प्रत्युत तत्सत्त्वे रसादेः स्वशब्दवाच्यता दोषस्यैव वक्ष्यमाणत्वात् । अतः शृङ्गारादिबोध्ये रसत्वानाप्तेः किन्तु विभावाद्यभिधानद्वारैव तत्प्रतीतेरानुभविकत्वात् । नच रसादिपदमेव तद्बोधकम्, रसादिपदेन हि व्यञ्जनासिद्धरसादेरभिधया बोधनात् । ननु इह काव्यस्थात् शृङ्गारादिशब्दाज्ज्ञातस्य रसस्य प्रागुपस्थितत्वेन विभावादिवाचकशब्दैर्लक्षणया रसादेर्बोधोऽस्तु इत्यत आह—किञ्च मुख्यार्थेति अपि चेत्यर्थः । मुख्यार्थबाधस्य विरहादपि बाधाच्च लक्षणा रसादेर्न बोधिका । तथा हि मुख्यार्थबाध एव लक्षणां प्रति हेतुः । रसादिप्रतीतौ "गङ्गायां घोषः" इत्यादाविव मुख्यार्थबाधाभावात् स्वयमेवोद्भवितुमसमर्था कथं रसादिं लक्षणा बोधयितु शक्नुयादिति भावः ।

( ३६ ) कारिकास्थ"लक्षणा"पदस्य निष्क्रियत्वात् विभक्तिविपरिणामेन पूर्वतोऽनुषङ्ग्यान्वयमुपपादयति—न बोधिकेति ।

( ३७ ) ननु रसेऽपि तात्पर्यसत्त्वाल्लक्षणां विना तदनिर्वाह एव मुख्यार्थबाध उच्यते इत्याशयेनाह—न हीति । यदि रसादिशब्दात्तस्य प्रागुपस्थितिस्तदैव तस्य लक्षणाया बोधार्थमुक्तरूपमुख्यार्थबाधनिर्वचनं सैव तु नेत्यर्थः ।

रसनात्मकः व्यञ्जनात्मकः व्यापारो यस्य एतादृशरसाद् भिन्न एव रसादिप्रतिपाद्य इत्यर्थः । प्रमाणसिद्ध इत्यनन्तरं "क्वचिद्" इति शेषः । एतेन स्वानुभवात्पूर्वं रसादेरसत्वं प्रतिपादितम् ।

( ३८ ) एवं पूर्वार्द्धं व्याख्याय उत्तरार्द्धं व्याचिख्यासुः मुख्यार्थबाधाभावेन लक्षणायाः असम्भवमुपपादयितुमाह—किञ्चेति । अपि चेत्यर्थः । उपात्तशब्दार्थानाम् उच्च-

योऽनुपपत्त्या बाध्यते तत्रैव हि लक्षणायाः प्रवेशः ।

( ३९ ) यदुक्तं न्यायकुसुमाञ्जलावुदयनाचार्यैः—

'श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।
पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन संगतिः ॥'

( ४० ) न पुनः 'शून्यं वासगृहम्—' इत्यादौ ( ३१ पृ. ) मुख्यार्थबाधः ।

( ४१ ) यदि च 'गङ्गायां घोषः' इत्यादौ प्रयोजनं लक्ष्यं स्यात्, तीरस्य मुख्यार्थत्वं बाधितत्वं च स्यात्, ।

---

रितपदार्थानाम् । जलप्रवाहरूपायां गङ्गायाम् आभीरपल्लीति वाच्यार्थानामित्यर्थः । अन्वयः अन्वयबोधः बुभूषन् भवितुमिच्छन्नेव अनुपपत्या प्रवाहे घोषस्यासम्भवादसङ्गतिबोधेन । बाध्यते प्रतिवध्यते प्रवेशः । योग्यत्वम् । भवतीति शेषः ।

( ३९ ) उक्तार्थे संवादं दर्शयति—यदुक्तमिति । श्रुतान्वयादिति । श्रुतान्वयात् श्रुतपदार्थयोरन्वयसम्भवात् अबाधिताद्धेतोः अन्यत्रानाकाङ्क्षम् अर्थान्तराकाङ्क्षारहितं वाक्यं पदसमुदायविशेषः ( कर्तृ ) अन्यत् अर्थान्तरं नेच्छति नैवाकाङ्क्षति । परन्तु पदार्थान्वयवैधुर्यात् पदार्थयोरन्वयाऽसम्भवात् मुख्यार्थान्वयानुपपत्तिग्रहाद्धेतोरित्यर्थः, तेन मुख्यार्थेन आक्षिप्तः अन्वयोपपत्यर्थं सम्बन्धितया गृहीतो योऽर्थस्तेन सङ्गतिरन्वयापपत्तिः स्यात् यथा "गङ्गायां घोषः" इत्यादौ पदार्थानामन्वयकाल एव बाधप्रतिभासाद्यन्वयस्य विधुरीभावस्तदा तेन पदार्थेन जलप्रवाहादिना आक्षिप्तो यस्तटादिस्तेन सङ्गतिरन्वयोपपत्तिरित्यर्थः । एतेनोदयनाचार्यमतेऽपि अन्वयानुपपत्तिस्थल एव लक्षणेति प्रकटितम् ।

( ४० ) एवं "शून्यं वासगृहम्" इत्यादौ शून्यवासगृहादीनां विलोकनाद्यन्वयाबाधात् न रसे लक्षणेत्याह—नपुनरिति । न केवलं मुख्यार्थबाधाभाव एव, नचापि तद्योगः, परंपरासम्बद्धस्यापि व्यङ्ग्यत्वात्, नापि प्रयोजनम्, रसस्यैव परमप्रयोजनत्वात् ।

( ४१ ) नन्वेवं रसबोधनार्थमेव व्यञ्जना स्वीक्रियताम्, "गङ्गायां घोषः" इत्यादौ यत् शैत्यपावनत्वादिकं तीरलक्षणानन्तरं व्यङ्ग्यमुक्तं तत्रापि लक्षणैवास्तु किं व्यञ्जनया? इत्यत आह—यदि चेति । प्रयोजनं शीतत्वपावनत्वाद्यतिशयरूपं लक्षणोद्देश्यम्, लक्ष्यं लक्षणाबोध्यं स्यात् "तदा" इति शेषः, तीरस्य मुख्यार्थत्वं तत्सम्बन्धितया शीतत्वादेर्लक्ष्यत्वेन तीरार्थे गङ्गापदस्य शक्यार्थत्वमङ्गीकरणीयं स्यात् तथा तीरार्थे गङ्गापदस्य सङ्केताग्रहात् बाधितत्वं स्यात् । अत्रयमाशयः—शब्दो हि प्रथमं स्वमर्थं प्रतिपाद्य तस्य वाक्यार्थान्वयोपपत्तौ तत्सम्बन्धिनमर्थं लक्षयति । इह यदि तीरप्रत्ययानन्तरं बोध्यं प्रयोजनं लक्षयति तदा गङ्गापदस्य तीरं मुख्योऽर्थः स्यात् तस्य च वाक्यार्थान्वयानुपपत्तिः स्यादिति ।

बाधितत्वञ्च स्यादिति प्रतीकमादाय तर्कवागीशास्तु—"च कारेण पावनत्वाद्यतिशयेन लक्षणीयेन सम्बन्धश्चेत्यपि बोध्यम् । न च तीरे पावनत्वाद्यतिशयस्य सम्बन्धसत्त्वेन कथं तदापत्तिरिति वाच्यम्, तीरे त्वाहार्यप्रतीतिविषयस्य प्रवाहवृत्तिपावनत्वाद्यतिशयस्य सम्बन्धाभावात्, परम्परासम्बन्धस्याव्यावर्त्तकत्वेन लक्षणाहेतुत्वाभावात्, तटादिनिष्ठपावनत्वादेस्तु गङ्गापदेनानुपस्थितेरकिञ्चित्करत्वात्" इत्याहुः ।

( ४२ ) तस्यापि च लक्ष्यतया प्रयोजनान्तरं तस्यापि प्रयोजनान्तरमित्यनवस्थापातः ।

( ४३ ) न चापि प्रयोजनविशिष्ट एव तीरे लक्षणा । विषयप्रयोजनयोर्युगपत्प्रतीत्यनभ्युपगमात् ।

( ४४ ) नीलादिसंवेदनानन्तरमेव हि ज्ञाततायाः अनुव्यवसायस्य वा संभवः ।

( ४२ ) ननु गङ्गापदस्य तीरे सङ्केताभावादेव मुख्यार्थत्वं तस्य न स्यात् बाधितत्वञ्च ममाभिलषितमेवेत्यत आह—तस्यापीति । तस्यापि शीतत्वपावनत्वाद्यतिशयरूपप्रयोजनस्यापि "लक्ष्यतया" इति विशेषणे तृतीया, भवन्मते लक्षणयैव बोध्यतया हेतुना प्रयोजनान्तरं प्रथमप्रयोजनसूचकलक्षणाहेतुभूतद्वितीयं प्रयोजनम्, तस्यापि च द्वितीयप्रयोजनस्यापि च लक्ष्यतया प्रयोजनान्तरं तृतीयं प्रयोजनं स्वीकरणीयं स्यादिति शेषः इति अनेन प्रकारेण अनवस्थापातः । अनवस्थाया दूषकताबीजं तु प्रकृताप्रतिपत्तिकरत्वमेव । प्रयोजनपारम्पर्य्या लक्षणास्वीकारे प्रयोजनान्वेषणस्यापर्यवसानेन प्रकृतस्य पावनत्वादेस्तीरादेर्वा बोधाभावकृदनवस्थादोष इति भावः । तस्मात्तस्या एवं विधाऽनर्थमूलत्वेन परित्यागो न्याय्य इति ।

( ४३ ) ननु तटाद्यर्थबोधनाय लक्षणावृत्तिराश्रयणीया इह चेत्तद्विशिष्टमेव तटं लक्षणा बोधयतु किं वृत्त्यन्तरेण ? तथा हि गङ्गातादात्म्येन तटप्रत्ययस्तावल्लक्ष्यः गङ्गातादात्म्यप्रतीत्या च तटस्य दैवसिद्धमेव शैत्यपावनत्वादिविशिष्टत्वम्, तथा च "पशुना यजेत" इत्यादावभिधया पुंस्त्वैकत्वविशिष्टपशुज्ञानवत् उक्तलक्ष्यादावपि लक्षणयैव शैत्यपावनत्वादिप्रयोजनविशिष्टतीरज्ञानम् एककालावच्छेदेनैव सेत्स्यति तथासति नानवस्थादोषप्रसङ्ग इत्यत आह—नचापीति । प्रयोजनं शैत्यपावनत्वाद्यतिशयरूपं फलम्, प्रयोजनीभूतज्ञानविषयेण शैत्यपावनत्वादिना विशिष्ट एव गङ्गातटे लक्षणा वाच्यमिति शेषः । विषय- सर्ववादिसिद्धलक्षणाविषयीभूतं तटं प्रयोजनं शैत्यपावनत्वाद्यतिशयरूपं तयोः युगपत्प्रतीत्यनभ्युपगमात् एककालावच्छेदेन भानाऽनङ्गीकारात् । लक्षणाजन्यं तटज्ञानं कारणम्, शैत्यपावनत्वादिप्रयोजनज्ञानं च तत्कार्य्यम्, तेन च तयोः पौर्वापर्य्यस्यावश्यंभावित्वेन यौगपद्यासम्भवः । न हि विषयप्रयोजनं चैकदा सम्भवति ।

अत एवोक्तम्—

"प्रयोजनेन सहितं लक्षणीयं न युज्यते ।
ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।" इति ।

( ४४ ) ननु तदनभ्युपगमे किं बीजम् इति चेत् ? लक्षणाया यत् शैत्यपावनत्वादिविशिष्टं ज्ञानं जनयितव्यं तत्प्रयोजनीभूतं ज्ञानं च तदेव पर्य्यवसितमित्यतः कार्य्यकारणयोरभेदापत्तिरेव बीजमिति, सर्वत्र तु तयोर्भेद एव दृश्यते इत्यत्र दार्शनिकसंवादं दर्शयति—नीलादीति । नीलादिसंवेदानन्तरमेव "अयं नीलो घटः" इत्यादि नीलादिविषयकप्रत्यक्षोत्पत्तेः पश्चादेव ज्ञाततायाः "नीलमहं ज्ञातवान्" इति पूर्वप्रत्यक्षविषयकज्ञानान्तरस्य सम्भव इति भट्टमीमांसकमतम्, । अस्मिन् मते हि—नीलज्ञानानन्तरं "ज्ञातो नीलः" इति प्रत्ययात्तज्ज्ञानेन तस्मिन्नीले प्रकटतापरपर्य्याया ज्ञातता जायते । ज्ञानञ्चातीन्द्रियम्

तज्जन्या ज्ञातता प्रत्यक्षा, ज्ञाततया च ज्ञानमनुमीयते। अनुमानाकारश्चेत्थम्—"इयं ज्ञातता नीलविशेष्यकनीलत्वप्रकारकज्ञानजन्या नीलवृत्तिनीलत्वप्रकारकज्ञाततात्वात् या यद्वृत्तिर्यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानसाध्या यथा शुक्ले शुक्लप्रककारिका ज्ञातता" इति।

अतीतेऽनागते च नीले ज्ञानेन ज्ञाततायाजनयितुमशक्यत्वाज्ज्ञानविषयत्वमेव ज्ञातता न पदार्थान्तरम्, तथा च नीलज्ञाने "नीलमहं जानामि" इति प्रत्ययरूपः संविदपरपर्याय अनुव्यवसायः नीलज्ञानाज्जायते इति नैयायिकानां मुरारेश्च मतम्।

एवं प्रयोजनविशिष्टे लक्षणाया असम्भवात् प्रयोजनस्यापि पृथग् लक्ष्यत्वे त्वनवस्थापातात् प्रयोजनज्ञानार्थं व्यञ्जनावृत्तिरवश्य स्वीकर्त्तव्येति तयैव सर्वत्र बोधसम्भवे तदर्थमपूर्वलक्षणासामर्थ्यकल्पनमत्यन्तानुचितमिति भावः।

तत्त्वविदस्त्वत्र "नन्वेवमपि शून्यं वासगृहम्" इत्यादावभ्युपगम्यते तावद्विभावादिवाचकपदानां रसप्रतीतौ तात्पर्य्यम्, अन्यथा निष्प्रयोजनत्वप्रसङ्गात्। तन्निर्वाहश्च लक्षणया तथाहि—चुम्बनालिङ्गनादिचेष्टानां रत्यादिभिः सहाऽविनाभावो दृष्टः, ते च चुम्बनादयः काव्येऽभिधीयमानाःरत्यादिकं लक्षयन्ति "अभिधेयाविनाभूतप्रवृत्तिर्लक्षणोच्यते" इतिवचनात् लक्षितश्च रत्यादिर्वाक्यार्थः प्राधान्येन बोध्यत्वात्।

यथाह धनिकः—

"वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया।
वाक्यार्थः कारकैर्युक्तः स्थायीभावस्तथेतरैः॥" इति।

इतरैर्विभावादिभिः। लक्षणानभिमानस्तु मुख्यार्थानवधारणात्। किञ्चाऽस्ति मुख्यान्वयसम्भवेऽपि लक्षणा, "यष्टीः प्रवेशय" इत्यादौ, प्रकरणादिना यष्टिमत्प्रवेशतात्पर्य्ये निर्णीते तदनुपपत्त्या सेति चेत्? इतोऽपि दीयतां दृष्टिः। प्रमाणान्तरावधृतरसप्रत्यायनतात्पर्य्यानुपपत्त्या विभावादिवाचकपदानां तत्र लक्षणेति सुवचत्व त्।

अथोच्यते—लक्षणा तावत् द्विविधा अर्थान्तरसंक्रमितवाच्या अत्यन्ततिरस्कृतवाच्या च। तत्र न तावदाद्या यत्र हि मुख्यार्थः स्वेन रूपेणानुपयोगबाधितो रूपान्तरेणाऽन्वेति तत्रार्थान्तरसंक्रमः यथा "रामोऽस्मि सर्वं सहे" इति। अत्र हि रामत्वमात्रमेवाकाङ्क्षितं वक्तृत्वेनैव तल्लाभात्। अतो राज्यपरित्यागवनवासादिधर्मसहस्रविशिष्टो धर्मी लक्ष्यते धर्माश्च प्रत्येकमनन्तत्वात् लक्षयितुमशक्याः। नचात्र विभावादयोऽनुपयुक्ताः, नापि रूपान्तरेण गम्यन्ते अपि तु स्वरूपेणेति कथमर्थान्तरसंक्रमः स्यात्। न वा विभावादयो न प्रतीयन्ते रसाप्रतीतिप्रसङ्गात्। तस्यास्तत्समूहालम्बनरूपत्वात्, अतो नात्यन्ततिरस्कृतवाच्यता अतो न लक्षणेति। तत्र "गङ्गायां" घोष इत्यादौ मुख्यत्यागेन लाक्षणिकप्रयोगे प्रयोजनान्वेषणाया अयुक्तत्वात्। अत्र तु क्वापि न मुख्यप्रयोगः इति किमनयेति चेत्?
अत्रोच्यते—यत्तावदुक्तं विभावादिवाचकपदैः स्वार्थाविनाभूतत्वात् लक्षितो रत्यादिर्वाक्यार्थ इति तदयुक्तम्। विभावादिवाचकपदानां स्वार्थाबाधाद्रत्यादिलक्षकपदाभावात् अपदार्थस्य चावाक्यार्थत्वात्। यदप्यत्रोक्तं मुख्यार्थान्वयेऽपि तात्पर्य्यानुपपत्त्या यष्टीः" इत्यादौ लक्षणा दृष्टेति तत्रोच्यते न तावद्विभावादिसंसृष्टो रत्यादिर्लक्ष्यते संसर्गस्य लक्षणाफलत्वात्। यथाऽऽहुः—

"वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः ।
तत्सम्बन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते ॥" इति ।

अथ केवलीरत्यादिर्लक्ष्यते, तत्र तल्लक्षकपदाभावात् । अथ वाक्यार्थ एवापर्यवसितस्तमाक्षिपति अत एवापदार्थस्थानीयतेति तर्हि न पुनरन्वयः, तस्यैव रसत्वेन प्रतीतिविश्रामधामत्वात् । यदप्यभिहितमायुष्मता—अत्र क्वचिदपि मुख्यप्रयोजनाभावात् किं प्रयोजनान्वेषणयेति तन्न तस्यैव विवादास्पदत्वात् । अथ मुख्यप्रयोगे चमत्काराभावेन रसदोषप्रसङ्गान्न मुख्यप्रयोगभावस्य विवादास्पदता इति, तदपि न एवं हि रूढिलक्षणा स्यात् तथा च सर्वेषां रसप्रतीतिप्रसङ्गः" इति वदन्ति । वस्तुतस्तु—मुख्यार्थबाधादिहेतुत्रयाभावेऽपि जायमानावृत्तिस्तदितरैव भवितुमर्हति मात्सर्य्यमात्रात्तु भवद्भिर्लक्षणोच्यते" । इति इत्थं समालोचनकुशलाः समालोचयन्ति ।

वृहदुद्यानकारा अपि अत्रेत्थमाहुः—

"ननु "यष्टीः प्रवेशय" इत्याद्यनुरोधात्तात्पर्य्यविषयार्थान्वयानुपपत्तिरेव तद्बीजम्, लक्षणाबीजत्वं च लक्षणाजन्यशाब्दबोधे लक्षणया जननीये सहकारित्वम् । एवं च लाघवात्तात्पर्य्यानुपपत्तिरेव तद्बीजमस्तु, तात्पर्य्यानुपपत्तिश्चानुपपद्यमानतात्पर्य्यम् । तज्ज्ञानं च लक्ष्यार्थबोधे इव व्यङ्ग्यार्थबोधेऽप्यवश्यं कारणं वाच्यम्, अत एव "गङ्गायां घोषः" इत्यत्र शैत्यपावनत्वस्यैव प्रतीतिर्न केशवालुकादिमत्त्वस्येति सङ्गच्छते । अत एव चाननुगतानां प्रकरणादीनां व्यङ्ग्यबोधे सहकारित्वमुपपद्यते तात्पर्य्यग्राहकत्वेनानुगमात् । वस्तुतस्तात्पर्य्यग्रह एव व्यङ्ग्यबोधे सहकारी तानि तु तात्पर्य्यनिर्णायकान्येव । एवं च लक्ष्य एव व्यङ्ग्यार्थोऽस्तु ।

"गच्छ गच्छसि चेत् कान्त ! पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥"

इत्यादौ तात्पर्य्यानुपपत्तिसत्वात् 'वाणीरकुडङ्ग" इत्यादौ अचारोरपि व्यङ्ग्यस्य कवितात्पर्य्यविषयत्वे क्षत्यभावात । नच व्यङ्ग्यस्य लक्ष्यत्वे न रूढिर्न प्रयोजनमिति वाच्यम्, लक्ष्यप्रतीतेरेव प्रयोजनत्वात् । लक्षणा हि प्रयोजनेन नियता न तु लक्ष्यप्रतीत्यतिरिक्तप्रयोजनेन गौरवादप्रयोजकत्वाच्च । पदतदेकदेशादीनामर्थविशेषतात्पर्य्यग्राहकत्वं न तु प्रतिपादकत्वमिति नाश्रयभेदादपि भेद इति चेत् ? अत्राहुः—पदमेतदर्थस्य न वाचकं न लाक्षणिकं किन्तु व्यञ्जकमिति प्रामाणिकव्यवहारादेव व्यञ्जना सिद्धिः । अन्यथैकया अभिधयैव सिद्धे लक्षणा अप्युच्छिद्येत । किंचानेकविधशक्यसम्बन्धानां प्रयोजकत्वमपेक्ष्यैकस्या व्यञ्जनाया एव तत्वमुचितम् । तेषां तत्व सिद्धमिति चेत् ? तदन्तःपातिनामेव प्रयोजनान्तराद्यनियतानां चमत्कारिप्रतीतिजनकानां व्यञ्जना सञ्ज्ञा अस्तु । लक्षणा च रूढ्यतिरिक्ता लक्ष्यप्रतीत्यतिरिक्तप्रयोजननियतैव, अन्यथा लक्ष्यप्रतीतिरूप प्रयोजनस्य सर्वत्र सत्त्वेन दुष्टलक्षणोच्छिद्येत । वस्तुतस्तु—सम्बन्धज्ञानाभावेऽपि व्यङ्ग्यार्थबोधदर्शनेनातिरिक्तैव सा । सा न स्वरूपसत्येव हेतुः । वक्त्राद्यौचित्यज्ञानसहकारान्न नातिप्रसङ्गः । अभिधालक्षणे तु ज्ञात एवेति वैषम्यम् । किंच वक्तृतात्पर्य्यविषयकव्याञ्जनिकबोधस्तु दृश्यत एव । वस्तुतस्तु—प्रसिद्धार्थविषयबोधकत्वविशेषः शक्तिः, मुख्यार्थबाधादिसापेक्षा प्रसिद्धार्थविषयकबोधकत्वविशेषो लक्षणा, तन्निरपेक्षप्रसिद्धाप्रसिद्धार्थविषयः शब्दतदर्थतदेकदेशकवर्णादिनिष्ठो बोधकत्वविशेषो व्यञ्जनेत्यस्मत्कृतवैयाकरणसिद्धान्तमञ्जूषायाम् ।" इति ।

**( ४५ ) नानुमानं रसादीनां व्यङ्ग्यानां बोधनक्षमम् ।
आभासत्वेन हेतूनां स्मृतिर्न च रसादिधीः ॥ ४ ॥**

( ४६ ) व्यक्तिविवेककारेण हि—"यापि विभावादिभ्यो रसादीनां प्रतीतिः सानुमान एवान्तर्भवितुमर्हति । विभावानुभावव्यभिचारिप्रतीतिर्हि रसादिप्रतीतेः साधन

( ४५ ) नाट्ये रामत्वेनाहार्यज्ञानविषये नटे, काव्ये तु राम एव विभावादिभी रत्याद्यनुमानम् अनुमानाकारश्च "नटः रामो वा सीताविषयकरतिमान् सीतादिविभावादिमत्वात्" इति । ततस्तदनुमानोद्बोधितया सामाजिकानां वासनारूपप्रत्यासत्त्या साक्षात्कृतो रामादिरत्यादी रस इति श्रीशङ्कुमतानुयायिनां व्यक्तिविवेककारादीनां मतं दूषयितुमुत्थापयति—नानुमानमिति । हेतूनां लिङ्गानाम् आभासत्वेन व्यभिचारादिदोषग्रस्तत्वेन हेतुना व्यङ्ग्यानाम् अस्मन्मतीयव्यञ्जनाप्रतिपाद्यानाम्, रसादीनां रत्यादीनां अनुमानम् व्याप्तिविशिष्टपक्षधर्मताज्ञानम् न बोधनक्षमम् न बोधसमर्थम् । प्रतिपत्तिनिर्दिष्टानां सर्वेषामेव हेतूनां दुष्टत्वसूचनाय हेतूनामिति बहुवचनम् । ग्रन्थकृन्मते हि ज्ञायमानविभावादीनां रत्यादिलिङ्गत्वसम्भवेऽपि "रामः सीताविषयकरतिमान् सीतादिविभावादिमत्वात्" इत्यनुमितिर्न रसः तस्याऽऽनन्दस्वरूपत्वाभावेन अनास्वाद्यत्वात् किन्तु शब्दान्वयव्यतिरेकानुविधायित्वेन व्यञ्जनया शाब्दबोधविषयो रत्यादिर्भावुकैर्भाव्यमानः स्वप्रकाशानन्दमयत्वेन परिणत आस्वाद्यमानो रसः । तस्य च व्यङ्ग्यत्वं प्रपानकरसन्यायेन तच्छरीरप्रविष्टरत्यादेर्वा व्यङ्ग्यत्वादिति । तथाच तादृशरसस्य हेतूनां रत्यादिकार्यकारणसञ्चारिरूपाणां विभावादीनामाभासत्वेन नानुमानं नानुमितिरित्यर्थः । तथा हि विभावादयः सीतादयो हेतवो मतुवर्थदिदृक्षादिसम्बन्धेन रामादिवृत्तयः, साध्यस्तूक्तरूपो रसः काव्यबोद्धृनिष्ठ इत्यतो हेतूनां विरुद्धत्वमसिद्धिश्चेति हेत्वाभासत्वम् । अयमेवार्थो वृत्तावपि स्फुटीकरिष्यति । तथा "रसादिज्ञानं स्मृतिः संस्कारजन्यज्ञानत्वात्" इत्यनुमानेन रसादिबुद्धेः स्मृतित्वं साधयतां मतं दूषयितुमाह—"स्मृतिर्नच रसादिधीः" इति । रसादीनां धीर्ज्ञानं नच न वा स्मृतिः संस्कारजन्यज्ञानविशेषः तच्च संस्कारजन्यमित्यभिज्ञायां व्यभिचारादाभासरूपमेवेत्यग्रे निरूपयिष्यति । वस्तुतस्तु स्वप्रकाशानन्दरूपत्वेनैव न स्मृतिः तस्या एवं भावाभावात् ।

( ४६ ) तन्मतं दूषयितुं तत्प्रबन्धं दर्शयति—व्यक्तिविवेककारेण हीति । महिमभट्टेनेत्यर्थः । अनेन हि सपरिकरस्य ध्वनेरनुमितावन्तर्भावं विधातुं "व्यक्तिविवेको" निरमायि । यस्यायमाद्यश्लोकः—

"अनुमानेऽन्तर्भावं सकलस्यैव ध्वनेः प्रकाशयितुम् ।
व्यक्तिविवेकं कुरुते प्रणम्य महिमा परं वाचम् ॥"

व्यक्तिविवेककारेणेत्यस्य यदुक्तमित्युत्तरेणान्वयः । हि तथाहि अनुमाने एव अनुमितावेव अन्तर्भवितुमर्हति एवकारेणातिरिक्ता व्यञ्जना न स्वीकार्य्येति ध्वनितम् । अत्र हेतुं दर्शयति—विभावानुभावेति । हि यस्मात् साधन हेतुः । ननु विभावादिप्रतीतेः व्याप्तिज्ञानत्वाभावात् कथं तज्जन्यरसादिप्रतीतेरनुमितित्वम्, अतो विभावादीनां व्याप्तिवैशिष्ट्यमुपपादयति—ते हीति । हि यस्मात् ते विभावादयः । धूमादिकारणमार्द्रेन्धनादि यथा धूमादिव्याप्यम्, वह्न्यादिकार्य्यं धूमादि वह्निव्याप्यम्, तथा रत्यादेः कारणा

मिष्यते" ते हि रत्यादीनां भावानां कारणकार्यसहकारिभूतास्ताननुमापयन्त एव रसादीन्निष्पादयन्ति, ।

( ४७ ) त एव प्रतीयमाना आस्वादपदवीं गताः सन्तो रसा उच्यन्त इति, अवश्यंभावी तत्प्रतीतिक्रमः केवलमाशुभावितयासौ न लक्ष्यते, यतोऽयमद्याऽप्यभिव्यक्तिक्रमः" इति यदुक्तम् ,

( ४८ ) तत्र प्रष्टव्यम्—किं शब्दाभिनयसमर्पितविभावादिप्रत्ययानुमितरामादिगतरागादिज्ञानमेव रसत्वेनाभिमतं भवतः, तद्भावनया भावकैर्भाव्यमानः स्वप्रकाशानन्दो वा ।

---

विभावः कार्यमनुभावश्च रत्यादिव्याप्य इति भावः । तान् रत्यादीन् अनुमापयन्त एव स्वविषयकव्याप्तिविशिष्टपक्षधर्मताज्ञानेन बोधयन्त एव, । रसादीन् निष्पादयन्ति रसादिरूपतया ज्ञापयन्ति ।

अत्रायमाशयः—प्रथमतो विभावादिलिङ्गज्ञानम्, ततो व्याप्त्यादिज्ञानम् ततो मानसपरामर्शेन रामत्वेन प्रतीयमानं नटं पक्षीकृत्य सामाजिकानां रसानुमितिः सैव निष्पत्तिशब्दस्यार्थः । अनुमानाकारश्च—रामोऽयं सीताविषयकरतिमान् सीतादिविभावादिमत्वात्, अहमिवेति व्यतिरेकी । यद्वा स्वकान्ताविषयकरतिमान् तदालम्बनत्वात्, अहमिवेत्यन्वयी ।

( ४७ ) रसादिं प्रति विभावादीनां कारणत्वं प्रतिपादयति—त एवेति । ते विभावादय एव प्रतीयमानाः अनुमीयमानाः पुनः पुनरनुशीलनात् आस्वादपदवीं प्रत्यक्षविषयतां गताः सन्तो ज्ञानसम्बन्धेन सामाजिकनिष्ठरसतामापद्यन्त इत्यर्थः । तथाच दुग्धं यथाम्लयोगेन दधित्वं प्राप्नुवद्दध्नः कारणमुच्यते तथा विभावादयोऽप्यनुमीयमानरत्यादियोगेन रसादिरूपतां प्राप्नुवन्तो रसादेः कारणमुच्यते इति भावः ।

नन्वीदृशकार्य्यकारणभावस्वीकारे रसादेरसंलक्ष्यक्रमव्यङ्ग्यत्वं कथं सेत्स्यतीत्यत आह—अवश्यम्भावीति । तासां प्रतीतीनां क्रमः पौर्वापर्य्यम्, प्रथमं विभावादिज्ञानं ततो रत्यनुमितिः ततः पुनः पुनरनुशीलनम्, तत आस्वाद इत्येवं प्रतीतिक्रम इत्यर्थः । अवश्यम्भावी कारणकार्य्यरूपत्वादित्यभिप्रायः । केवलं किन्तु आशुभावितया रत्याद्यनुमितेर्विभावादिज्ञानानन्तर्य्यस्याशुभावितया असौ व्याप्त्याद्युपस्थित्यधीनानुमितिक्रमो न लक्ष्यते न लक्षयितुं शक्यते । तथाचोत्पलपत्रशतव्यतिभेदवत् क्रमसत्त्वेऽपि सूक्ष्मकालतया स न लक्ष्यत इत्यसंलक्ष्यक्रमव्यङ्ग्यत्वं सिद्ध्यतीति भावः । ननु भवन्मतेऽधिकं कल्पनमिदमत आह—यत इति । यतो यथा अयम् ईदृशः अद्यापि रसादीनां व्यञ्जनावृत्तिबोध्यत्वस्वीकारेऽपि अभिव्यक्तिक्रमो भवन्मतेऽपि कार्य्यकारणभावाद्विभावादिप्रतीतिरसादिप्रतीत्योः पौर्वापर्य्यम्, तथैव मम मते रसादीनामनुमानगम्यत्वेऽपि उक्तक्रमेण प्रतीतिक्रमः। तथाचोपदर्शितक्रमसत्त्वेऽप्याशुभावितया यथा रसादेरसंलक्ष्यक्रमत्वं भवन्मते तथाऽस्मन्मतेऽपीति न काऽप्यनुपपत्तिरिति भावः ।

( ४८ ) अधुनोक्तवादिमतं विकल्प्य दूषयितुं पृच्छति—तत्रेति । शब्दो विभावादिवाचकः शब्दः श्रव्यकाव्यमित्यर्थः, अभिनयो नाट्याभिनयः दृश्यकाव्यमित्यर्थः । ताभ्यां तयोरन्यतरेणेत्यर्थः, समर्पितो जनितो यो विभावादीनां प्रत्ययो ज्ञानं तेनानुमितो यो

( ४६ ) आद्ये न विवादः । किंतु 'रामादिगतरागादिज्ञानं रससंज्ञया नोच्यतेऽस्माभिः' इत्येव विशेषः ।

( ५० ) द्वितीयस्तु व्याप्तिग्रहणाभावाद्धेतोराभासतयासिद्ध एव ।

रामादिगतरागादिः सीतादिविषयकानुरागादिः तज्ज्ञानमेव भवतः ध्वनिमनुमानेऽन्तर्भावयितुं प्रवृत्तस्य श्रीमतः सम्बोध्यस्य तव अभिमत स्वीकृतम्,

तस्य विभावादेः भावनया बोधेन भावकैः सामाजिकैः भाव्यमान आस्वाद्यमान प्रागुक्तलक्षणः स्वेन आत्मना प्रकाशो यस्य स चासौ आनन्दश्चेति तथोक्तस्वप्रकाशानन्दो वेत्यत्रानुमित इति शेषः, अनुमितिविषयस्यैव वितर्क्यमाणत्वात् । भवतो रसत्वेनाभिमत इतिलिङ्गव्यत्यासेनान्वयः ।

( ४९ ) आद्यकल्पं दूषयति-आद्य इति । न विवाद इति । रत्यादेरनुमानं व्यञ्जना चेति विवादो नापातत इत्यर्थः, तथा हि "रामः सीताविषयकरतिमान् सीतादिविभावादिमत्वात्" इत्यनुमानस्य हेत्वाभासाभावात् व्याप्तिज्ञानसम्भवेन विवादाभावादिति भावः। विवादो ह्यत्र तदैव स्यात् यदा रामादिगतरत्यादिव्यञ्जनं मया रसत्वेनोक्तं स्यात्, तदेव तु नेत्यत आह—किन्त्विति । रामादिगतरत्यादिज्ञानम् अनुमानलभ्यमिति शेषः, विशेषो भेदः । मया तूच्यते रामादिगतरत्यादेर्व्यञ्जनमेव स्वप्रकाशानन्दविभावादिसमूहालम्बनात्मकज्ञानविशेष एव रस इति भावः । तेन रामादिगतरत्यादिविषयकं ज्ञानम् अरसमेवानुमानेन साधयता भवता वास्तविकरसस्यानुमानेन साधयितुमशक्यत्वात्तत्साधनार्थमेवास्माकं व्यञ्जनास्वीकारप्रयास इत्यभिप्रायः ।

( ५० ) ननु तर्हि व्यङ्ग्यरत्यादिरेव सामाजिकरत्यादावभेदेनारोप्यमाणो रसनाख्यव्यापारेणास्वाद्यमानो रस इति रसनिरूपणोक्तसिद्धान्तः स एव द्वितीयः पक्षः किन्तु तस्यानुमेयत्वासम्भव इति दर्शयितुं द्वितीयकल्पमपि दूषयति—द्वितीयस्त्विति ।

द्वितीयः सामाजिकवृत्तिः। हेतोराभासतया व्यभिचारादिदुष्टत्वेन हेतुना व्याप्तिग्रहणाभावात् सामानाधिकरण्यज्ञानाभावात्, इदमुपलक्षणं स्वरूपासिद्धेश्चेत्यपि बोध्यम्, सीतादिविभावस्य रामादिमात्रवृत्तेर्न तु सामाजिके । असिद्ध एव सर्ववादिसिद्धोऽप्यसौ रसः अनुमानेनानिष्पन्न एव । तथा च यत्र येन सम्बन्धेन पक्षे साध्यो वर्तते तथा हेतुरपि तेनैव सम्बन्धेन वक्तव्यः यथा पर्वतो वह्निमान् धूमादित्यत्र संयोगेन पक्षे साध्ये तेनैव तत्र हेतोरपि विद्यमानत्वम् साध्यतावच्छेदकसम्बन्धो हेतुतावच्छेदकसम्बन्धश्च स एव तथा 'काव्यं रसादिमत् विभावादिमत्वात्" इत्यत्र समवायसम्बन्धेनैव हेतुरतो हेतुतावच्छेदकसम्बन्धः समवायस्तेन सम्बन्धेन विभावादिप्रतीतेः सभ्यवृत्तित्वेन काव्यरूपपक्षे वृत्तित्वाभावात् "ह्रदो द्रव्यं धूमवत्वात्" इतिवत् स्वरूपासिद्धिरूपहेत्वाभासः । तथा यथा "उत्पत्तिकालीनघटो गन्धवान् पृथिवीत्वात् "इत्यत्र बाधरूपहेत्वाभासस्तथा प्रकृतेऽपि रसादेः साध्यतावच्छेदकसमवायसम्बन्धेन सभ्यवृत्तित्वे काव्यरूपपक्षे वृत्तित्वाभावात् । स्वरूपासिद्धेः परामर्शप्रतिबन्धः फलम् बाधस्य त्वनुमितिप्रतिबन्धः फलम् । अपि च यत्र यत्र विभावादिप्रत्ययस्तत्र तत्र स्वप्रकाशानन्दोत्पत्तिरिति व्याप्तेरपि श्रोत्रियजरन्मीमांसकादीनां विभावादिसत्वेऽपि स्वप्रकाशानन्दानुत्पत्तिदर्शनादयं हेतुर्व्यभिचारीति व्याप्तिग्रहाभावादनुमान न सम्भवतीति भावः। नचोक्तस्थले काव्यरूपपक्षे व्यङ्ग्यतासम्बन्धेन

( ५१ ) यच्चोक्तं तेनैव—'यत्र यत्रैवंविधाना विभावानुभावसात्विकसंचारिणा-मभिधानमभिनयो वा तत्र तत्र शृङ्गारादिरसाविर्भावः' इति सुग्रहैव व्याप्तिः पक्षधर्मता च ।
तथा—

( ५२ ) 'यार्थान्तराभिव्यक्तौ वः सामग्रीष्टा निबन्धनम् ।
सैवानुमितिपक्षे नो गमकत्वेन संमता ॥' इति ।

( ५३ ) इदमपि नो न विरुद्धम् ।

---

हेतुसाध्ययोरुभयोरेव वृत्तित्वात् नोक्तहेत्वाभासद्वयमिति वाच्यम् , व्यञ्जनाया भवन्मतेऽनभ्युपगमेन तत्सम्बन्धस्यैवासम्भवात् तत्स्वीकारे तु-अनुमानस्यैव प्रयोजनाभावात् ।

( ९१ ) व्यक्तिविवेककारेणोपायान्तरेण व्याप्तिग्रहमुपपाद्य रसादीनामनुमानसिद्धत्वमुपपादयितुं यत्पुनरुपन्यस्तं तदपि दूषयितुमुत्थापयति—यच्चोक्तमिति । तेनैव व्यक्तिविवेककारेणैवेत्यर्थः । यत्र यत्र स्थले । एवं विधानाम् उपपादितलक्षणानाम् । सात्त्विकसञ्चारिणामिति । शृङ्गाररसानुमित्यभिप्रायेणोक्तम्, तेषां शृङ्गाररसस्यैव व्याप्यत्वात् । क्वचित्तु विभावानुभावसञ्चारिणामित्येव पाठो न सात्त्विकेत्यादिः । अभिधानं श्रव्यकाव्येनोपस्थापनम् । अभिनयः दृश्यकाव्येन प्रकाशनम्, तदुभयमपि व्याप्तिः । व्याप्तिश्च यत्र यत्र धूमस्तत्र वह्निरिति साहचर्यनियमः, साध्याभाववदवृत्तित्वमित्यर्थः । पक्षधर्मता च । संदिग्धसाध्यधर्मपक्षस्तस्य धर्मता पक्षधर्मता काव्यमात्रं पक्षः तद्वृत्तित्वं विभावाद्यभिधानस्यास्तीति पक्षधर्मता । व्याप्त्या सामान्यसिद्धिः पक्षधर्मतया विशेषसिद्धिः यथा वह्निमान् धूमादित्यत्र व्याप्तया सामान्यसिद्धिः पक्षधर्मतया पर्वते वह्निमत्त्वादिसिद्धिः । तथा च "सभ्यो रसादिमान् विभावादिप्रतीतिमत्वात्' इत्यनुमानम् ।

एवञ्च रसादेः शाब्दबोधरूपसामग्र्याः जन्यतासम्बन्धेन काव्यवृत्तित्वात् काव्यस्यापि परम्परया सरसत्वसिद्धिः तथा च हेतुसाध्ययोः रसादिप्रतीतिविभावादिप्रतीत्योरुभयोरपि समवायसम्बन्धेनैव पक्षे वृत्तित्वात् व्याप्तिज्ञानमप्रयत्नेनैव जातम्, प्रदर्शितहेत्वाभासस्याभावश्चेति । श्रोत्रियादीनां तु विभावादेरेवोपस्थितिः न पुनर्विभावनादिव्यापारभागिनस्ते तत्र तादृग्व्यापारानङ्गीकारादिति न तत्रापि व्यभिचार इति भावः ।

( ९२ ) ननु रसादेरनुमानं वदद्भिर्भवद्भिरेवंविधा व्याप्तिरन्वेष्टव्येत्यत आह—यार्थेति । वो युष्माकं व्यञ्जनास्वीकुर्वतां मते वाच्यार्थलक्ष्यार्थातिरिक्तस्य व्यङ्ग्यार्थस्य रसस्याभिव्यक्तौ आस्वादने या सामग्री शाब्दबोधादिरूपः कारणसमूहः निबन्धनं प्रधानम् इष्टा अभिलषिता नः अस्माकं रसादेरनुमानबोध्यत्ववादिनाम् अनुमितिपक्षेऽपि सैव सामग्री गमकत्वेन रसाद्यनुमापकत्वेन सम्मता इष्टा । सामग्रीभावेऽपि हि व्यङ्ग्यार्थप्रतिपत्तौ यतः कुतश्चिदपि यदेव तदेव प्रतीयते । एवं व्यङ्ग्यस्य प्रकाशने लिङ्गमन्वेष्टव्यम्, तस्य व्याप्तिग्रहणं विना आभासतैव स्यादिति भवतामपि व्याप्तिग्रहणं विना न सम्भवतीति सुतरां न किञ्चिद्गौरवम्, न वा कोऽपि दोषलेश इति भावः । सम्मतेत्यत्रेतिपदस्य यच्चोक्तमित्यत्र सम्बन्धः ।

( ९३ ) दूषयति—इदमिति । इदमपि यत्र यत्रेत्यादिकं यार्थान्तरेतिकारिकान्तं नोऽस्माकं व्यञ्जनावादिनाम् न विरुद्धम्, उक्तानुमानस्यादुष्टत्वादस्माभिरपि स्वीक्रियत एवेति भावः ।

( ५४ ) नह्येवंविधा प्रतीतिरास्वाद्यत्वेनास्माकमभिमता किं तु—स्वप्रकाशमात्र विश्रान्तः सान्द्रानन्दनिर्भरः । तेनात्र सिषाधयिषितादर्थादर्थान्तरस्य साधनाद्धेतोराभासता ।

( ५४ ) नन्वविरुद्धमिति चेत्तर्हि अत्रैव विश्रम्यतामितः किं विवक्षुरित्यत आह—नहीति । एवं विधाप्रतीतिः "सभ्यो रसादिप्रतीतिमान् विभावादिप्रतीतिमत्त्वात्" इत्यनुमानगम्यो रसादिविषयकबोधः आस्वाद्यत्वेन रसादिस्वरूपत्वेन अस्माकं व्यञ्जनावादिनां नहि अभिमता अनुमानेन रसादिविषयकप्रतीतेः प्रत्यक्षेण रसादिस्वरूपप्रतीतेश्चोभयोरप्यतिरिक्तत्वादिति भावः । ननु तर्हि कीदृशी प्रतीतिर्भवतामास्वाद्यत्वेनाभिलषितमत आह—किन्त्विति स्वस्वरूपेण प्रकाशमात्रेणैव विश्रान्तो विषयीकृतः न पुनरनुमानादिना प्रकाश्य इत्यर्थः । सान्द्रस्य निरन्तरस्य आनन्दस्य निर्भरोऽतिशयस्तादृश एव सिषाधयिषितः स एवास्माकं आस्वाद्यत्वेनाभिमतस्तथैव सहृदयैरनुभूयमानत्वादित्यर्थः । न हि भवन्मतेऽनुमानगम्ये निरन्तरानन्दनिर्भरः स्वप्रकाशत्वं रसादिविषयकज्ञानस्य सम्भवतीति भावः । सिषाधयिषितत्व चात्र इच्छाविषयत्वमात्रम्, न त्वनुमित्सितत्वम् रसेऽनुमित्यभावात् ।

ननु हेतोर्व्यभिचाराभावेऽप्युक्तस्थले कथं तदाभासतेत्यत आह—तेनेति । रसादिविषयकप्रतीतिरसादिरूपप्रतीत्योर्भेदेन तादृशानुमितेरास्वाद्यत्वास्वीकारेणेत्यर्थः । अत्र 'सभ्यो रसादिमान् विभावादिप्रतीतिमत्त्वात्" इत्यत्र सिसाधयिषतात् साधयितुमिष्टात् अर्थात् स्वप्रकाशानन्दरूपात् अर्थान्तरस्य भिन्नार्थस्य रसादिविषयकप्रतीतेः साधनात् अनुमापनात् हेतोः "विभावादिप्रतीतिमत्त्वात्" इति लिङ्गस्य आभासता दुष्टता तथा च साध्यवति साध्याभावे च हेतोर्वर्त्तमानत्वे साधारणाख्यहेत्वाभासत्वेन प्रकृते सभ्ये रसादिरूपसाध्यवति श्रोत्रियजरन्मीमांसकादौ च रसादिरूपसाध्याभाववति विभावादिप्रतीतिरूपहेतोर्वृत्तितया साधारणाख्यहेत्वाभास एवेति भावः । वस्तुतस्तु सामाजिके साक्षात्क्रियमाणः स्वप्रकाशानन्दोऽनुमीयत एव न अनुमित्साभावात् । न हि तस्य नियमतोऽनुमित्सा भवति रसबोधस्तु नियमित एवेति बोध्यम् ।

यच्चोक्त "योर्थान्तरेति" तदप्ययुक्तम् विभावादिभिः सह प्रतीतेरनुमानासम्भवात् । यथाह धनिकः—"स्वरूपं प्रकाशयन्नेव परावभासनो व्यञ्जकः" इत्यादि । ज्ञातस्यार्थस्य व्यञ्जकत्वात् कथमेवमिति चेत् ? मैवम् व्यङ्ग्यज्ञानकाले व्यञ्जकज्ञानानुवर्त्तनात् । अत्र सम्बन्धज्ञानापेक्षणात् । नचातिप्रसङ्गः, प्रतिभाजुषामेव तदुदयात् । नन्वत्रापि न सहप्रतीतिरव्यवधाना वासनादिवशात्तु तथाभ्रम इति चेत् ? न बाधकमन्तरेण तत्कल्पनायोगात् । तदुक्तं वाचस्पतिमिश्रैः—

"मीयमानपरित्यागो बाधके नाऽसति स्फुटः" इति ।

नन्वदृष्टचरवृत्तिकल्पना गौरवमेव बाधकम्, तदुक्तं तैरेव—

"दृष्टात्कार्य्योपपत्तौ च नादृष्टपरिकल्पना"

इति चेत् ? सहप्रतीतिबलेन तत्कल्प्यते फलमुखत्वाद्गौरवस्य । किञ्चानुमितावेव गौरवम्, असंविदितव्याप्त्यादिकल्पनात् । सम्बन्धस्य बोधकत्वं तावल्लक्षणास्थलेऽभिमतमेवेतीहापि स एवाज्ञातो बोधयतीतिलाघवम् । नच तत्कल्पकमपि, फलस्यान्यथा-

( ५५ ) यच्च 'भम धम्मिअ—' इत्यादौ ( ३३२ पृ. ) प्रतीयमानं वस्तु,

( ५६ ) 'जलकेलितरलकरतलमुक्तपुनःपिहितराधिकावदनः ।
जगदवतु कोकयूनोर्विघटनसंघटनकौतुकी कृष्णः ॥'

( ५७ ) इत्यादौ च रूपकालंकारादयोऽनुमेया एव ।

सिद्धेः । अपि चानुमानं परार्थमेव स्यात् शब्दरूपत्वात् । तत्र च साध्यसाधननिर्देशनियमः, नचात्र तथा साध्यानुपादानात् ।

( ९९ ) एवं रसादेरनुमानागोचरत्वं व्यवस्थाप्य इदानीं व्यङ्ग्यभूतयोरपि वस्त्वलङ्कारयोरनुमानेनैव बोधो न तु तदर्थमपि व्यञ्जनावृत्तिरङ्गीकार्य्येति व्यक्तिविवेककारस्यैव मतान्तरं दूषयितुमुत्थापयति—यच्चेत्यादि पर्य्यवस्यतीत्यन्तेन ।

यच्चेत्यस्यान्वयश्च पर्य्यवस्यतीत्यनेनैव । उक्तमिति तस्य शेषः । तथाच यच्च पर्य्यवस्यतीत्युक्तमित्यर्थः । प्रतीयमानं व्यज्यमानं भ्रमणाभावरूपं वस्तु अनुमेयमेवेत्युत्तरेणान्वयः । तथाच "गोदावरीतीरं भीरुभ्रमणायोग्यं सिंहवत्त्वात् यन्नैवम् तन्नैवम् यथा गृहम्" इति भ्रमणाभावानुमितिः ।

( ९६ ) अलङ्कारव्यञ्जनास्थलमुदाहरति -जलकेलीति । जलकेलौ राधिकया सह जलक्रीड़ायाम्, तरलाभ्यां जलप्रक्षेपणेन चञ्चलाभ्यां करतलाभ्यां हस्ताभ्यां मुक्तं प्रथमं परित्यक्तं पुनः पिहितं पुनराच्छादितं राधिकाया वदनं मुखं येन स तादृशः । अत एव कोकयूनोः कोका च कोकश्चेति कोकौ युवती च युवा चेति युवानौ कोकौ अमू युवानाविति तयोः "पुमान् स्त्रिया" १।२।६७ पा० सूत्रेणैकशेषः । चक्रवाकदम्पत्योरित्यर्थः । विघटनसंघटनयोः विश्लेषणसंश्लेषणयोः कौतुकी कृष्णो वासुदेवः जगत् संसारम् अवतु रक्षतु । अत्र कथयितुरयमभिप्रायः—रात्रौ परस्परं चक्रवाकदम्पती वियुज्येते दिवसे च संयुज्येते इति लोकप्रसिद्धिः । ततश्चात्र जलकेलौ श्रीकृष्णेन स्वीयकरदत्तजलेन राधिकामुखचन्द्रं पुनः पुनरभिषिच्य स्वीयकरेण पिधीयते मुच्यते च । ततस्तादृशचन्द्रस्य पिधानमोचनाभ्यां चक्रवाकदम्पत्योः संघटनविघटने भवतः । पिधाने रात्रौ विरहिणोस्तयोः प्रातःकालभ्रमात् संघटनम्, मोचने चन्द्रोदयविशिष्टसन्ध्याकालभ्रमाद् विघटनम् । भगवतः श्रीकृष्णस्य तादृशकौतुकवर्णनमिदम् । अत्र विधानमोचने कृष्णस्यैव करेण न तु राधिकायाः, तत्करस्य जलकेलितरलत्वे कृष्णमुखस्यैव सिच्यमानत्वसम्भवेन स्वमुखस्य पिधानायोगात् ।

यद्वा राधिकाकरेण पिधानमोचनयोरपि जलसेकद्वारा कृष्णकरप्रयोज्यत्वात् तद्वारा कृष्णकरेणैव पिधानमोचने ।

अत्र हि राधिकावदने चन्द्रत्वारोपस्य वाच्यत्वाभावात् व्यज्यमान एव रूपकालङ्कारः।

( ९७ ) तस्य तु रूपकालङ्कारस्यानुमेयत्वमेवेति दर्शयितुमाह—इत्यादाविति । आदिपदद्वयात् श्लोकान्तरे अलङ्कारान्तरमित्यर्थः (क) अनुमेया एव न तु व्यङ्ग्या इत्यर्थः।

---

( क ) अत्र व्यक्तिविवेककारास्तु—

"भ्रम धार्मिक ! विश्वस्तः स शुनकोऽद्य मारितस्तेन ।
गोदानदीकच्छकुडङ्गवासिना दृप्तसिंहेन ॥"

इत्याद्यर्थकादौ श्लोके यद् भयाद् गृहान्तरेव सञ्चरसि सः शुनको दृप्तेन तेन सिंहेन मारित इति

( ५८ ) तथाहि—"अनुमानं नाम पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वविशिष्टा-ल्लिङ्गाल्लिङ्गिनो ज्ञानम् ।

( ५९ ) ततश्च वाच्यादसंबद्धोऽर्थस्तावन्न प्रतीयते । अन्यथातिप्रसङ्गः स्यात् । इति बोध्यबोधकयोरर्थयोः कश्चित्संबन्धोऽस्त्येव ।

( ६० ) ततश्च बोधकोऽर्थो लिङ्गम्, बोध्यश्च लिङ्गी, बोधकस्य चार्थस्य पक्षसत्त्वं निबद्धमेव । सपक्षसत्त्वविपक्षव्यावृत्तत्वे अनिबद्धे अपि सामर्थ्यादवसेये ।

तथाचानुमानाकारश्च—"राधिकावदनं चन्द्रः आत्मदर्शनादर्शनाभ्यां चक्रवाकविघटन-सघटनकारित्वात्" इति । अग्रे चेदमेवानुमानस्वरूप "य आत्मदर्शने" त्यादिना वक्ष्यति ।

( ५८ ) अनुमेयत्वमेव कथमित्युपपादयति—तथाहीति । नाम प्राकाश्ये । सदिग्ध-साध्यकः, सिषाधयिषाविरहविशिष्टसिद्ध्यभाववान् वा पक्षः तत्र सत्त्वं वर्त्तमानता, निश्चितसाध्यवान् सपक्षः तत्रापि सत्त्व वर्त्तमानता, साध्याभाववान् विपक्षः, तद्व्यावृ-त्तत्वं तदवृत्तित्वम्, तैर्विशिष्टात् लिङ्गात् व्याप्यात् हेतोरित्यर्थः । लिङ्गिनः साध्यस्य । तथाच "पर्वतो वह्निमान् धूमात्" इत्यत्र धूमवत्वे हेतौ पर्वतः पक्षः, तस्मिन्नेव हेतौ महानसादिः सपक्षः उभयत्रापि धूमस्य वर्त्तमानत्वात् । पूर्वोक्त एव हेतौ जलह्रदादिर्वि-पक्षस्तत्र धूमस्यावर्त्तमानत्वात् इति धूमदर्शनेन वह्निरूपस्य साध्यस्य ज्ञानमनुमिति-रित्यर्थः ।

( ५९ ) वाच्यात्तावद्व्यङ्ग्यमवबुद्ध्यत इति वाच्यार्थस्य लिङ्गत्वमभिप्रेत्य तत्र पक्ष-सत्त्वादित्रयमुपपादयति—ततश्चेति । तथाविधानुमाच्चेत्यर्थः । असम्बद्धोऽर्थः तात्पर्य-विषयीभूतसम्बन्धशून्यपदार्थः वाच्यात् अर्थात् न प्रतीयते किन्तु तात्पर्य्यविषयीभूतय त्किञ्चित्सम्बन्धविशिष्ट एवार्थो वाच्यार्थादवगम्यते, अन्यथा असम्बद्धप्रतीतिस्वीकारे अतिप्रसङ्गः स्यात् अज्ञेयस्यापि ज्ञानम् आपद्येत । यदि असम्बद्धार्थस्य प्रतीतिस्तदा यतः कुतश्चिदर्थात् यस्य कस्याऽप्यर्थस्य प्रतीतिर्भवेत् एकस्मिन् श्लोकेऽन्यश्लोकस्यापि प्रतीतिः स्यादित्यतिप्रसङ्गः स्यादित्यर्थः । तथाच—"भम धम्मिअ" इत्यादौ भ्रमेति विधिना भ्रमणाभावस्येव वटाभावादेरपि प्रतीतिः स्यात्, नचेष्टापत्ति कर्त्तुं शक्यते तत्र भ्रमेत्य-नेन भ्रमणवैपरीत्यरूपसम्बन्धविशिष्ट एवाभ्रमणरूपार्थाप्रतीतेरभ्युपगमात् । इति हेतोः बोध्यबोधकयोः अनुमेयानुमापकयोः, अर्थयोः कश्चित्सम्बन्धः प्रकृते तात्पर्य्यविषयीभूत-भ्रमणवैपरीत्यरूपः सम्बन्धः, अस्त्येव विद्यत एव ।

( ६० ) सम्बन्धस्यावश्यम्भावित्वेऽपि प्रकृते किमत आह—ततश्चेति । तथाविधस-म्बन्धस्यावश्यम्भावाच्च प्रकृते "भम धम्मिअ" इत्यत्र बोधकोऽर्थो वाच्यार्थो लिङ्गं हेतुः बोध्योऽर्थो व्यङ्ग्यः लिङ्गी साध्यः । पक्षसत्वं पक्षे प्रकृते धार्मिकरूपे समवायसम्बन्धेन

शुनकादपि भीरुस्त्वं तस्मिन् मृते गोदावरीकूलकुञ्जे पुष्पाणि सञ्चितानि कर्त्तुं प्रतिदिनं तत्र गच्छसि किन्तु त्वं जानासि वा न तत्र गन्तव्यमिति प्रत्याययतीति । तथा "जलकेली" त्यादौ करतलेन राधिकावदनस्यापिधानपिधानकरणपरः कृष्णो दिनमात्रसङ्गमशीलयोः कोकयोर्विघटनसङ्घटनकर इति वाच्योऽर्थः "राधिकावदनं चन्द्रः" इति प्रत्याययतीत्याहुः । परन्तु वक्ष्यमाणप्रकारेणोभयत्रैव न व्यङ्ग्यत्वम् किन्त्वनुमेयत्वमेवेति ।

( ६१ ) तस्मादत्र यद्वाच्यार्थाल्लिङ्गरूपाल्लिङ्गिनो व्यङ्ग्यार्थस्यावगमस्तदनुमान एव पर्यवस्यति" इति ।

( ६२ ) तन्न । तथा ह्यत्र "भम धम्मिअ-' इत्यादौ गृहे श्वनिवृत्त्या विहितं भ्रमणं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति" इति यदुक्तं तत्रानैकान्तिको

वृत्तित्वं निबद्धमेव वक्त्र्या नायिकया भ्रमेति पदेनोपस्थापितमेव । सपक्षसत्त्वविपक्षव्यावृत्त्वे तथाविधधार्मिकान्तररूपसमानपक्षवृत्तित्वतदन्यप्रकारजनरूपविपक्षवृत्तित्वाभावौ अनिबद्धे अपि, "ईदूदेद्द्विवचनं प्रगृह्यम्" १।१।११ इति प्रगृह्यत्वे संहिताभावः, तया वक्त्र्या शब्देनाऽनुपस्थापितेऽपीत्यर्थः, सामर्थ्यात् संस्कारबलात् अवसेये प्रत्येतव्ये पर्वतो वह्निमान् धूमात्" इत्यत्र यथा धूमस्य महानसादिसपक्षवृत्तित्व-जलह्रदादिविपक्षव्यावृत्तत्वे प्रतीयते तद्वदिति भावः ।

( ६१ ) महावाक्यार्थमुपसंहृत्य दर्शयति—तस्मादिति । अत्र "भम धम्मिअ" इत्यादौ । लिङ्गरूपात् हेतुभूतात् वाच्यार्थात् लिङ्गिनः साध्यस्य व्यञ्जनावादिमतसिद्धव्यङ्ग्यार्थस्येत्यर्थः, "यदवगमोऽवबोधः तदनुमान एव अनुमितावेव पर्य्यवस्यति । अतस्तद्बोधनार्थं व्यञ्जनास्वीकारो व्यर्थ एवेति भावः । इति शब्दो व्यक्तिविवेककारमतपूर्त्तिद्योतनार्थः ।

( ६२ ) दूषयितुं तदभिमतार्थमनुवदति—तन्न तथाहीति । गृहे गृहसमीपे चत्वरादौ तेनानवलोकितप्रदेश इत्यर्थः श्वनिवृत्त्या स्वोपद्रवजनककुक्कुरमरणप्रदर्शनेन विहितं धार्मिकाय नायिकयोपदिष्ट विधिविषयः सिंहोपलब्धेः नायिकावाच्योपलब्धसिंहादित्यर्थः । अनुमापयति सामाजिकानिति शेषः । अत्र नायिका कर्त्री यदुक्तं "गोदावरीतीरं भीरुभ्रमणायोग्य सिंहवत्त्वात् यन्नैवम् तन्नैवम्, यथा गृहम्" इति व्यतिरेकव्याप्तिरभिप्रेता ।

अत्र भीरुर्धार्मिकः सिंहवद्गोदावरीतीराभ्रमणवान् श्वनिवृत्तिविधीयमानगृहसमीपभ्रमणात् इत्यनुमानाकारो वा सामाजिकानां यदनुमानं व्यक्तिविवेककारेण स्वीकर्त्तव्यम्, अत्रोपलभ्यमानभयकारणवत्त्वं हेतुः । यद् यदुपलभ्यमानभयकारणवत् तत्तद्भीरुभ्रमणायोग्यं यथा महदरण्यम् इत्यन्वयी यद् यन्नभीरुभ्रमणायोग्यं न तदुपलभ्यमानभयकारणवद् यथा गृहम् , इति व्यतिरेकी । दूषयति—तत्रेति । अनैकान्तिको हेतुरिति एकस्य साध्यस्य तदभावस्य च योऽन्तःसहचारोऽव्यभिचरितसहचारः स चात्रव्याप्तिग्राहकः । एवञ्चैकमात्रव्याप्तिग्राहकसहचारवानैकान्तिकस्तद्भिन्नोऽनैकान्तिकः साध्यव्यभिचारीहेतुरित्यर्थः ।

व्यभिचारं ग्राहयति—भीरोरपीति । भीरोरपि सिंहाद्भयशीलस्यापि किं पुनर्वीरस्येति भावः, तस्य धार्मिकस्य छात्रत्वे आचार्यस्य पितुर्वा पूज्यस्य वा "गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि । पुमान् निषेकादिकरे पित्रादौ सुरमन्त्रिणि॥" इति मेदिनी । गुरोः दासत्वे प्रभोर्वा निदेशेन आज्ञया "निदेशः शासनोपान्तकथनेषु प्रयुज्यते" इति विश्वः, सङ्केतितप्रियायाम् अनुरागेण स्नेहेन वा एतदनन्तरं भयस्थाने" इति शेषः, गमनस्य सिंहवद्गोदावरीतीर एव भ्रमणस्य सम्भवात् भ्रमणप्रतिबन्धस्यापि भयरूपस्य गुर्वादिनिदेशेनान्तर्हितत्वादिति भावः ।

तथाच यो हेतुः सपक्षे विपक्षे च तिष्ठति स साधारणरूपानैकान्तनामा हेत्वाभासः

हेतुः भीरोरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण वा गमनस्य संभवात् ।

( ६३ ) पुंश्चल्या वचनं प्रामाणिकं न वेति संदिग्धासिद्धेश्च ।

( ६४ ) 'जलकेलि-' इत्यत्र 'य आत्मदर्शनादर्शनाभ्यां चक्रवाकविघटनसंघटनकारी स चन्द्र एव' इत्यनुमितिरेवेयमिति न वाच्यम् । उत्रासकादावनैकान्तिकत्वात् ।

( ६५ ) 'एवंविधोऽर्थ एवंविधार्थबोधक एवंविधार्थत्वात्, यन्नैवं तन्नैवम्'

---

साध्याभाववद्वृत्तिरिति यावत् यथा धूमवान् वह्नेरित्यत्र वह्नेः साध्ये पक्षे पर्वते साध्याभावेऽयोगोलके च वृत्तित्वमिति हेत्वाभासस्तथा प्रकृतेऽपि तथाविधगोदावरीतीरे अभ्रमणरूपसाध्यवति तत्रैव तत्तन्निदेशादिना भ्रमणरूपसाध्याभाववति च धार्मिके गृहसमीपभ्रमणरूपहेतोर्विद्यमानत्वेन साधारणरूपानैकान्तिकहेत्वाभासः ।

( ६३ ) ननु यदा धार्मिको गृहसमीपे भ्रमणं करोति तदा तथाविधगोदावरीतीरे अभ्रमणमेवेति, अन्यस्मिन्समये गुर्वाद्याज्ञया तत्र भ्रमेण विहितेऽपि तत्समये गृहसमीपभ्रमणस्याभावात् कथमुक्तहेत्वाभास इत्यतो दोषान्तरमाह—पुंश्चल्या इति पुंश्चल्याः कुलटायाः वचनं "भम धम्मिअ" इत्यादिवचनम्, प्रमाणिक प्रमाजनकं न वा इति इत्थं सदिग्धः संन्देहयुक्तो यो धार्मिकस्तस्मिन् पक्षे असिद्धेः उक्तहेतोरनिष्पत्तेः । किञ्च यः खलु वीरः स्पर्शादिशङ्कया शुनो बिभेति स सिंहसद्भावस्थानं प्रत्युत मृगयादिकुतूहलेन गच्छतीति दर्शनादपि हेतोः पक्षेऽसिद्धेः । तथा च वाक्यमिदं किं धार्मिकस्य भयजनकम् उत कुक्कुरस्पर्शशङ्कासकुचितभ्रमणस्य तस्य स्वच्छन्दभ्रमणविधायकमिति सामाजिकानां संदेहाद्धीरूत्वसंदेह इति संदिग्धासिद्धत्वंहेतुरित्याशयः ।

( ६४ ) एवं वस्तुरूपव्यङ्ग्यस्यानुमेयत्वं दूषयित्वा अधुनालङ्काररूपव्यङ्ग्यस्यानुमेयत्व दूषयितुमुत्थापयति—जलकेलीति एवञ्च "राधिकावदनं चन्द्रः आत्मदर्शनादर्शनाभ्यां चक्रवाकविघटनसघटनकारित्वात् "इत्यनुमानेन, इयं रूपकालङ्कारप्रतीतिः अनुमितिरेवेत्यवकारेण व्यञ्जना वृत्यन्तरेण गम्येति व्यवच्छिद्यते। उत्रासकः—यस्य करतलनादिनो त्रासेन पक्षिणो न घटन्ते तदभावे च संघटन्ते । आदिपदात् स्वप्रकाशेन सयोजकसूर्यपरिग्रहः । तथाच कश्चित् करतलदानादिना भयं दत्वापि चक्रवाकदम्पती अन्योन्यं विघटयितुं शक्नोति सूर्य्योऽपि स्वप्रकाशेन दिवसं बोधयित्वा तौ संघटयितुं शक्नोति तेन चन्द्रत्वारोपरूपसाध्यवति राधिकावदनरूपपक्षे यथा चक्रवाकदम्पतिविघटनसघटनकारित्वरूपहेतोर्वृत्तित्वं तथैव तदभाववति तथाविधे भयदातरि ।प्रकाशविधायके च विपक्षे ह्युक्तहेतोर्वृत्तित्वादत्रापि प्राग्वदेव साधारणरूपानैकान्तिनामा हेत्वाभास इति ग्रन्थकर्त्तुरभिप्रायः । तादात्म्यसम्बन्धेन साध्यस्य चन्द्रस्य वदने बाधाद्बाधरूपोऽपि हेत्वाभासोऽवधेयः ।

( ६५ ) प्रदर्शितानुमाने हेतोर्व्यभिचारभयेनाव्यभिचारिहेतुनानुमानप्रकारं प्रदर्श्य तदपि दूषयितुमाह—एवंविधेति । एवं विधोऽर्थः "भम धम्मिअ" इत्यादौ भ्रमणविधानोऽर्थः, एवं विधार्थबोधकः गोदावरीतीरे भ्रमणाभावरूपार्थबोधजनक एवंविधार्थत्वात् गोदावरीतीरे सिंहागमनेन गृहसमीप एव भ्रमणविधानरूपार्थत्वात् । एव "जलकेलि"त्यादावपि

इत्यनुमानेऽप्याभाससमानयोगक्षेमो हेतुः । 'एवंविधार्थत्वात्' इति हेतुना एवंविधानिष्टसाधनस्याप्युपपत्तेः ।

( ६६ ) तथा 'दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे-' इत्यादौ नलग्रन्थीनां तनूल्लिखनम्, एकाकितया च स्रोतोगमनम्, तस्याः परकामु-

---

एवंविधोऽर्थः राधिकावदनं चन्द्र इत्येवंविधरूपोऽर्थः, एवंविधार्थबोधकः राधिकावदने चन्द्रत्वारोपेण रूपकालङ्कारप्रतीतिजनकः, एवंविधार्थत्वात् आत्मदर्शनादर्शनाभ्यां चक्रवाकविघटनसंघटनकारित्वरूपार्थत्वात् । इत्थञ्च न क्वापि हेतोर्व्यभिचार इत्याशयः ।

अत्र हि पक्षीभूतवाक्यार्थेन प्रत्याययितुं समर्था ये येऽर्थास्त एव साध्यकोटिप्रविष्टेन "एवंविध" इत्यनेन गृहीतव्याः, अन्यथा वक्तुरभिलषितस्यैवार्थविशेषस्यैव साध्यत्वे "गतोऽस्तमर्कः" इत्यादौ वक्तुरभिलषितार्थमप्रत्याय्यार्थान्तरबोधके व्यभिचार आपद्येत । एवञ्चात्र हेतोः पक्षमात्रवृत्त्वेनान्वयोदाहरणासम्भवादन्वयव्याप्तिग्रहो न भवितुमर्हतीति व्याप्तिग्रहाय व्यतिरेकोदाहरणं दर्शयति—यन्नैवमिति । यत अर्थरूपं वस्तु नैवम् एवंविधार्थबोधकत्वाभाववत्, तत् अर्थरूपं वस्तु नैवम् एवंविधार्थत्वाभाववत् भ्रमणाभावबोधकं नेत्यर्थः । "घट उत्पद्यत इति वाक्यवत्" इति दृष्टान्तो ज्ञेयः । आभाससमानो योगक्षेमौ यत्र यस्य वा स तथोक्तः, आभासो हेतोरुपलभ्यमानो व्यभिचारः चक्रवाकादिस्थले तत्रासक्तिः स्वदर्शनादर्शनरूपः, एवंविधार्थत्वादिति हेतुस्तत्समानस्ततुल्यो यः स हेतुः साध्याभावेन सहचरितत्वेन व्यभिचरतीत्यर्थः । अप्राप्तस्य प्राप्तिर्योगः, लब्धस्य पुना रक्षणं क्षेमः,

"योगो पूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु । वपुःस्थैर्यप्रयोगे च विष्कम्भादिषु भेषजे ॥
विश्रब्धघातुके द्रव्योपायसंहनने वपि । कार्मणेऽपि ..................... ॥
.....................क्षेमोऽस्त्री लब्धरक्षणे ।
चण्डायां ना शुभे न स्त्री कात्यायन्यां च योषिति ॥ इति मेदिनी ।

तदेव दर्शयति—एवंविधार्थत्वादिति । एवंविधो योऽनिष्टार्थो वक्तुरनभिलषितार्थो घटपटादिस्तस्य साधनस्यापि निष्पादनस्यापि उपपत्तेः सम्भवात् । एवं च एवंविधशब्दस्य अनभिलषितार्थबोधकतया एवंविधार्थबोधकः कम्बुग्रीवादिमदर्थप्रतिपादकः एवंविधार्थत्वात् घटार्थत्वात् इत्यस्यापि वक्तुं शक्यत्वात् ।

तथाच यथादुष्टहेतुप्रयोगेण वादिविजयो भवति तथार्थान्तरसाधकप्रयोगेणापीत्याभाससमानयोगक्षेमत्वमिति भावः ।

( ६६ ) उदाहरणान्तरेऽपि व्यङ्ग्यान्तरस्यानुमेयतां हेतोर्व्यभिचारेण दूषयितुमुत्थापयति— तथेति । अस्य उच्यत इत्युत्तरेण सम्बन्धः । दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे" इत्यादाविति ।

"दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्राः तनुमालिखन्तु जरठच्छेदानलग्रन्थयः ॥" इतिश्लोक इत्यर्थः ।

कोपभोगस्य लिङ्गिनो लिङ्गमित्युच्यते। तच्चात्रैवाभिहितेन स्वकान्तस्नेहेनापि संभवतीत्यनैकान्तिको हेतुः।

(६७) यच्च 'निःशेषच्युतचन्दनम्-' इत्यादौ (८५ पृ.) दूत्यास्तत्कामुकोपभोगोऽनुमीयते तत्किं प्रतिपाद्यतया दूत्या, तत्कालसंनिहितैर्वान्यैः, तत्काव्यार्थभावनया वा सहृदयैः।

नलग्रन्थीनामित्यत्र कर्तरि षष्ठी बोध्या। ननूल्लिखनम् स्तनाद्यवयवानां खण्डनप्रतिखण्डनम्। स्रोतो गमनमित्यत्र स्रोतो गमनकथनं चेत्यर्थः। (कृद्योगा षष्ठी समस्यते इति वाच्यम्) इति समासः। तस्याः वक्तृनायिकायाः परकामुकोपभोगस्य पत्यतिरिक्तकामिजनसुरतिरूपस्य लिङ्गिनः साध्यस्य लिङ्गे तादात्म्येन हेतुः। तथाचेत्थमनुमानस्वरूम्—"इयं परकामुकोपभोगेच्छावती नलग्रन्थिना स्तनदारणसम्भावनासत्त्वेऽपि स्रोतोगमने एकाकिप्रवृत्तित्वात्" इति। कवेः स्तनाघातस्रोतोगमनयोः पृथक्कथनेऽपि न पृथग् हेतुद्वयम् किन्तु हेतुविशेषणमेव तद्द्वयमित्यवधेयम्। तच्च तादृशं लिङ्गञ्च अत्रैव "दृष्टिं हे प्रतिवेशिनि" इत्यादिश्लोक एव अभिहितेन "प्रायेणास्य शिशोः" इत्यादिना उक्तेन स्वकान्तस्नेहेनापि स्ववल्लभप्रेम्णापि अपिना तद्भयेनापीति बोध्यम्, अनैकान्तिको साध्यवत्पक्षमात्रानिश्रितः। तथा च परकामुकोपभोगेच्छारूपसाध्यवति नायिकारूपपक्षे परकामुकोपभोगेच्छारूपसाध्याभाववति स्वकान्तस्नेहिनायिकारूपविपक्षे च वृत्तित्वेन प्राग्वदेव साधारणरूपानैकान्तिकाख्यहेत्वाभास इति ग्रन्थकर्त्तुरभिप्रायः।

अत्र वागीशास्तु—"तथा च यत्र स्नेहस्य किं दुष्करमिति सर्वेषामेव श्रोतॄणां तादृशबोधो न जायते तत्रैव व्यभिचार इति भावः। यदि तु कालान्तरे तादृग्वाक्यप्रयोगेण यस्य कस्यापि श्रोतुस्तादृशार्थबोधादव्यभिचारो न भवतीति विभाव्यते, तदात्र "एतद्वाक्यप्रतिपाद्यं तादृशार्थद्वयं परकामुकोपभोगप्रतिपादकं तादृशार्थत्वात्" इत्यनुमाने बाधहेतुदोषो द्रष्टव्यः। यथा "गन्धप्रागभावकालीनो घटो गन्धवान्" इत्यादौ तत्कालीन साध्याभावमादाय बाधः, तथात्रापि व्यक्तिविशेषे कालविशेषे वा, एव विधार्थबोधकत्वरूपसाध्याभावमादाय बोध्यः" इति वदन्ति।

(६७) निःशेषच्युतेत्यादावपि दूत्यास्तत्कामुकोपभोगस्यानुमेयतां हेतोर्व्यभिचारेण दूषयितुमाह—यच्चेति। अनुमीयते सहृदयैरित्यन्वयः। दूत्याः सम्बोध्यमानायाः तत्कामुकोपभोगो नायिकाकामिपुरुषसम्भोगरूपः अनुमीयते इति। चन्दनच्यवनादिरूपदूतीवैशिष्ट्यमत्र हेतुः। प्रतिपाद्यतया दूत्येति। एवञ्च प्रतिपाद्या दूती तत्कामुकोपभोगवती चन्दनच्यवनादेः" इति सामाजिकानामनुमानं किमित्यर्थः, तत्काले "निःशेषेत्यादि" प्रतिपादनसमये सन्निहितैः नायिकासन्निधानवृत्तिभिः अन्यैः सखीजनादिभिर्वा। तथा च प्रतिपाद्या दूती तत्कामुकोपभोगवती नायिकासन्निधानसखीजनलक्षितचन्दनच्यवनादेरिति किं सामाजिकानामनुमानमित्यर्थः। तत्काव्यार्थभावनया तत्काव्यार्थपरिशीलनया वा सहृदयैः समाजिकैरनुमीयत इति पूर्वेणान्वयः। तत्काव्यार्थभावनयेति विशेषणे तृतीयावगन्तव्या। एवञ्च निःशेषेत्यादिकाव्यप्रतिपाद्या दूती तत्प्रतिपाद्यकामुकोपभोगवती तत्प्रतिप्रतिपाद्यस्तनचन्दनच्यवनादेरनेन प्रकारेण वा तत्काव्यार्थं परिशीलयतां सामाजिकानामनुमानमित्यर्थः।

( ६८ ) आद्ययोर्न विवादः । तृतीये तु तथाविधाभिप्रायविरहस्थले व्यभिचारः।

( ६९ ) ननु वक्त्राद्यवस्थासहकृतत्वेन विशेष्यो हेतुरिति न वाच्यम् । एवंविध-व्याप्त्यनुसंधानस्याभावात्

( ७० ) किंचैवंविधानां काव्यानां कविप्रतिभामात्रजन्मनां प्रामाण्यानावश्यक-त्वेन संदिग्धासिद्धत्वं हेतोः ।

---

( ६८ ) तत्र पक्षत्रये तृतीयप्रकारमनुमानं निरसितुमाद्यप्रकारद्वयं तत्काव्यार्थं परि-शीलयतां व्यभिचारग्रहानुदयेन दोषाभावादाह—आद्ययोरिति । न विवाद इति । स्नाना-दिनापि चन्दनच्यवनादीनां सम्भवात् । सम्भोगाव्यभिचारित्वेऽपि तेषां दूतीतत्कालस-न्निहितयोः प्रत्यक्षतो वैलक्षण्यग्रहसहस्रसम्भवेन व्यभिचारज्ञानानुत्पत्तेः व्याप्तिग्रहो भवितुं शक्यत इति भावः ।

वस्तुतस्तु—दूतीकर्तृकमनुमानं तावन्नैवसम्भवत्येव तस्यास्तदुपभोगस्य प्रत्यक्षसिद्धत्वेन सिद्धसाधनात् । तत्काले सन्निहितजनस्तु यदि न व्यङ्ग्यबोद्धा तदा तस्यानुमानमपि नास्तीति तत्रापि न विवादः । यदि तु व्यङ्ग्यबोद्धा तदा तृतीयपक्ष एवान्तर्भाव इति म-माशयः । सामाजिककर्तृबोधविषयस्यैवास्माभिरपि विचार्यमाणत्वेन तत्रैवानुमेयत्वा-दनुमेयत्वविवादात्तदनुमेयतां दूषयितुमाह—तृतीये त्विति । ननु सामाजिकानामपि निः-शेषेत्यादिपदाभिप्रायेणैव वैलक्षण्यावबोधो भविष्यतीत्यत आह—तथाविधेति । तथाविधा-भिप्रायबोधविरहस्थले—निःशेषेत्यादिपदानां दूत्यास्तत्कामुकोपभोगाभिप्रायविरहस्थल उक्तचन्दनच्यवनादेरुपभोगव्याप्यता नास्तीति तत्रैव व्यभिचार इत्यर्थः ।

( ६९ ) ननु स्नानादिव्यावृत्तचन्दनच्यवनादेर्विशेषणादानेन व्यभिचाराभाव इत्या-शङ्क्ते—नन्विति । वक्त्राद्यवस्थेति । वक्त्र्यवस्थादिरित्यर्थः, आदिपदात् स्तनाकर्षणनखक्ष-ताधरपानपरिग्रहः । अवस्था तु रतिक्लिष्टत्वम् । वक्त्र्याद्यवस्थया प्रतिपाद्याया दूत्याः स्तनाकर्षणचुम्बननखक्षताधरपानरतिक्लिष्टत्वाद्यवस्थया सहकृतत्वेन हेतुश्चन्दनच्यवना-दिः विशेष्यो विशेषणीयः, दर्शिततृतीयप्रकारानुमाने स्तनाकर्षणादिसहकृतचन्दनच्य-वनादेरिति हेतुर्वक्तव्य इत्यर्थः, तथा च स्नानादौ स्तनार्षणचुम्बनादीनामसम्भवाद्व्य-भिचाराभाव इत्याशयः । समाधत्ते—एवंविधेति । एवंविधविशेषणविशिष्टव्याप्त्यनुसन्धा-नस्येत्यर्थः । न हि श्लोके तादृशविशेषणमस्ति । तथा च स्तनाकर्षणाद्यवस्थासहकृतत्वस्य केनचिच्छब्देनानुपस्थापनात् प्रमाणान्तरस्य वा सम्भवादनुपस्थितिरिति कथं तदन्तर्भा-वेन व्याप्तिग्रह इति भावः ।

( ७० ) नन्वेवन्तर्हि "श्लोकाप्रतिपादितविशेषणं न दातव्यम्" किन्त्वीदृशश्रुतिवच-नाभावादित्येतादृशविशेषणदाने न कापि क्षतिरित्यत आह—किञ्चेति । एवं विधानां "निः-शेषच्युतचन्दनम्" इत्यादिरूपाणां कवीनां प्रतिभामात्रात् केवलकल्पनाकुशलतः जन्म उत्पत्तिर्येषां तेषां तथोक्तानां काव्यानां प्रामाण्यानावश्यकत्वेन श्रुत्यादिवचनानामिव प्रामाण्यग्रहस्य निश्चयाभावेन वक्त्र्या चन्दनच्यवनाद्यकथनेऽपि सम्भाव्यैव कवेस्तदुक्त्य-नुवादसम्भवेनेत्यर्थः । कव्यनूदितचन्दनच्यवनादिना हि सामाजिकैः सम्भोगोऽनुमा-तव्यः, तच्चन्दनादिकं वक्त्र्युक्तमनुक्तं वेति सामाजिकानामेव सन्देहेन संदिग्धासिद्धत्वम्, पक्षेऽसत्यत्वज्ञानात् स्वरूपासिद्धिर्हेत्वाभास इत्यर्थः ।

( ७१ ) व्यक्तिवादिना चाधमपदसहायानामेवैषां पदार्थानां व्यञ्जकत्वमुक्तम् । तेन च तत्कान्तस्याधमत्वं प्रामाणिकं न वेति कथमनुमानम् ।

( ७२ ) एतेनार्थापत्तिवेद्यत्वमपि व्यङ्ग्यानामपास्तम् । अर्थापत्तेरपि पूर्वसिद्धव्याप्तीच्छामुपजीव्यैव प्रवृत्तेः । यथा—'यो जीवति स कुत्राप्यवतिष्ठते, जीवति चात्र गोष्ठ्यामविद्यमानश्चैत्रः' इत्यादि ।

( ७१ ) ननु व्यभिचारिणा सन्दिग्धेन वा चन्दनच्यवनादिना कथमुपभोगस्य व्यञ्जनमते व्यञ्जनापीत्यत आह—व्यक्तिवादिना चेति । व्यञ्जनावादिना व्यञ्जनाव्यवस्थापकेनालङ्कारिकेणेत्यर्थः, एवञ्च व्यक्तिवादिनेत्यस्य विवरणं व्यक्तिविवेककारेणेति तद्धेयमेव । प्रदीपादिग्रन्थास्वरसात् । "अधमपदसहायानामेव तस्याधमस्यान्तिकम्" इत्यधमपदेन सह संश्लिष्टानामेव । नायकेऽधमत्वं च निकृष्टजातीयदूतीरमणेनैवेति भावः । एषां पदार्थानां चन्दनच्यवनाद्यर्थानाम् अत्राधमपदार्थसहकारेण यथा व्यञ्जकत्व तथा अधमपदार्थसहकारेण नुमापकत्वमपि स्यादिति नाशङ्कनीयं यतो हि आह—तेनेति । तेन काव्यानां दर्शितरीत्या प्रामाण्यानावश्यकत्वेन अधमत्वस्य पक्षधर्मता सन्देहात्कथमनुमानम् । नच शब्दादेव निश्चयः, तस्य कोपाकुलितकामिनीवचनत्वेनानिश्चायकत्वादिति भावः । तथा च नायकस्याधमत्वानिश्चयेन पूर्ववत्संन्दिग्धासिद्धिरित्याशयः । इदमुपलक्षणम्—अधमत्वस्य प्रामाणिकत्वेऽपि तस्य दूतीगमनेच्छाराहित्ये सति तावताऽप्यनुमानासम्भव इत्यपि बोध्यम् । ननु व्यञ्जनास्वीकर्तृनयेऽप्येष दोषोऽस्त्येव तथा च व्यञ्जना कथमिति चेत् ? मैवम् , तत्र व्याप्तेरनङ्गत्वेन सम्भावनामात्रादेव व्यङ्ग्यप्रतीतिरिति व्यञ्जनावादिमते सर्वथा दोषाभावस्य वक्तुं शक्यत्वात् । उक्तञ्च तेऽपि—"व्यभिचारस्फूर्त्तिमतामपि सामाजिकानामसति च पक्षधर्मतानिश्चये सम्भावितादप्यर्थादव्यक्तेरुदयादिति भावः किंच व्याप्तिस्मरणादिकल्पनातो व्यञ्जनायाः कारणत्वकल्पनमेवोचितमिति" । न च व्याप्त्याद्यनपेक्षत्वेऽपि व्यङ्ग्यप्रतीतावतिप्रसङ्ग इति वाच्यम् वक्त्रादिवैशिष्ट्यस्य नियामकत्वात् । इत्थमत्र भङ्गीविशेषेण टीकाकृता चोक्तम्—"निःशेषच्युत"इत्यादौ चन्दनच्यवनादीन्युपभोगव्यञ्जकतयोपात्तानि । नच तानि तद्व्याप्यानि कारणान्तरतोऽपि सम्भवात् । अत एवात्र स्नानकार्यत्वेनोपात्तानि, अतोऽनैकान्तिकात्कथममनुमानं स्यात् । ननु व्यक्तिरपि कथं तदिति चेत् ? अधमपदसाहित्यादिति ब्रूमः । अस्माकमपि तत्साहित्यमनैकान्तिकताव्यतिरेक इति चेत् ? भवेदप्येव यद्यधमत्व प्रमाणादवधारितं भवेत् , न त्वेवमस्ति । व्यक्तिरपि कथ तादृशाद्धेतोरिति चेत् ? धिङ्मूर्ख ! व्यञ्जनाया न व्याप्तेर्नापि पक्षधर्मतया निर्धारणमङ्गम् , किन्तु सम्भावितादप्येवं विधादेव विधोऽर्थः प्रतीयत इति मूकीभव' इति ।

( ७२ ) व्यङ्ग्यानामर्थापत्तिवेद्यत्वमपि खण्डयितुमाह—एतेनेति । "इदमस्तुसन्निकृष्ट समीपतरवर्त्ति चैतदो रूपम् । अदसस्तु विप्रकृष्ट तदिति परोक्षे विजानीयात्" इत्युक्तदिशा एतच्छब्देनानन्तरप्रतिपादितानुमानहेत्वाभासप्रदर्शनेनेत्यर्थः । भाट्टमतामाश्रमत अर्थापत्तिर्नाम पञ्चमं प्रमाणं त द्वेद्यं तद्ग्राह्यत्वमपि व्यङ्ग्यानां रसादीनाम् । अपास्तम् परास्तम् खण्डितमित्यर्थः । नन्वर्थापत्तेर्व्याप्तिग्रहादिनिरपेक्षत्वेन हेतोराभासत्वेऽपि का क्षतिरत आह—अर्थापत्तेरपीति । पूर्वसिद्धानां प्राङ्निष्पन्नानां व्याप्तीच्छां व्याप्तिग्रहम् अव्यभिचरि-

तसहचारमिति यर्थः, उपजीव्येव आश्रित्यैव प्रवृत्तेः सम्भवात् । अर्थापत्तेः स्वरूपं तु शबरस्वामिप्रतिपादितमित्थम्—(क)अर्थापत्तिरपि दृष्टः श्रुतो वाऽर्थोऽन्यथानोपपद्यत इत्यर्थकल्पना, यथा जीवति देवदत्ते गृहाभावदर्शनेन वहिर्भावस्यादृष्टस्य परिकल्पना" एतद्व्याचक्षाणाः पार्थसारथिमिश्राः "प्रमितस्यार्थान्तरेण विनाऽनुपपत्तिमालोच्य तदुपपत्तये यार्थान्तरकल्पना साऽर्थापत्तिः" इत्याहुः । भट्टा विवृण्वते दृष्ट इति । प्रत्यक्षानुमानोपमानार्थापत्त्यभावलक्षणैः पञ्चभिः प्रमाणैरुपलब्धः शब्दस्य च प्राधान्यद्योतनार्थं भेदेन निर्दिशति श्रुत इति । श्रुत इति शब्दलक्षणेन ज्ञातोऽर्थोऽर्थविशेषोऽन्यथानोपपद्यत इति । "शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते" इति दर्शनात्, "पीनो देवदत्तो दिवा न भुङ्क्ते" इत्यत्र रात्रौ भुङ्क्ते इति वाक्यशेषः कल्प्यते । प्रभाकरगुरुस्त्वाह—दृष्टः श्रुतो वेति । लौकिकोयमनास्थोक्तिः । ततो लोकप्रसिद्ध्योपलब्धिमात्रे वर्त्तते न तु विकल्पप्रतिपादन इति । शब्दो हि कल्प्यतेऽर्थप्रतीत्यै विप्रकृतसाधनं तद्वरम् अर्थ एव कल्प्यतामिति । तेन भट्टमते श्रुतार्थापत्तौ रात्रौ भुङ्क्ते" इति शब्दः कल्प्यते । गुरुमते तु अर्थापत्तौ रात्रिभोजनमर्थ एव । एवमेवात्र वाक्यविशेषः कल्प्यतां किं व्यञ्जना स्वीकारेणेति, मैवम्, "पीनो देवदत्त" इत्यादौ रात्रिभोजने, जीवश्चत्रोऽत्र गोष्ठ्यां न विद्यत इत्यत्र कुत्राप्यवस्थाने पूर्वानुभवव्याप्ति उपजीव्यवार्थापत्तेः प्रवृत्तिरिति । व्यङ्ग्यानां पूर्वसिद्धत्वाभावेनानुमानाविषयत्वान्नार्थापत्तिविषयत्वमिति भावः । व्याप्तिश्च साहचर्यनियमः । व्याप्तिशरीरं ग्राहयति—यथेति । गोष्ठ्यां सभायाम् ।

अत्र नागेशः—"अर्थापत्तिमाह—यथेति । "चैत्र एतद्भिन्नगोष्ठीस्थानेऽवतिष्ठते" इत्यर्थापत्तिजन्यज्ञानम् । अत्र जीवितत्वस्य यत्किञ्चिदधिकरणावस्थानव्याप्यत्वज्ञानमपेक्षणीयमिति व्याप्तिग्रहप्रदर्शनपुरस्सरं अर्थापत्तिप्रदर्शनमिदम्, 'जीवति च' इत्यादिकमर्थापत्तिदर्शनम्" इत्याहुः ।

एवञ्च व्यतिरेकव्याप्तिमादायवार्थापत्तिप्रवेशेन नैयायिका अर्थापत्तिं न स्वीकुर्वन्ति, तथाहि गोष्ठ्यभावविशिष्टं तु जीवनं बहिर्भावव्याप्यमेवेति निश्चितेन गोष्ठ्यभावविशिष्टजीवनेन यद्बहिर्भावस्य कल्पनं तदनुमानमेव तदुक्तम्—

(क) तत्रार्थपत्तिर्हि—प्रत्यक्षमितान्यथाऽनुपपत्त्यर्थकल्पना यथा—प्रत्यक्षतोऽवगताद्दाहाद्वह्नेर्दाहशक्तिकल्पना । अनुमानपूर्विकार्थापत्तिर्यथा—देशान्तरप्राप्तिलिङ्गकेनानुमानेनाऽऽदित्ये गतिमनुमाय तदन्यथानुपपत्त्याऽऽदित्ये गमनशक्तिकल्पना । शब्दपूर्विका प्रमाणग्राहिण्यर्थापत्तिर्यथा—"पीनोऽयं देवदत्तो दिवा न भुङ्क्ते" इति श्रुतेन वाक्येन दिवाऽभुञ्जाने देवदत्ते पीनत्वरूपो योऽर्थः प्रमितस्तदन्यथानुपपत्तिमालोच्य तदुपपत्तये रात्रौ भुङ्क्ते" इति रात्रिभोजनरूपार्थप्रतिपादकवाक्यान्तरस्य कल्पना । ननु अत्र दिवावाक्यप्रमितार्थस्योपपत्त्यर्थं रात्रिभोजनरूपार्थमात्रकल्पना युक्ता समाश्रयितुम् अत एव अप्रतीयमानार्थान्यथानुपपत्तिप्रतिसन्धानेन तदुपपत्तये आकाङ्क्षितस्यार्थान्तरस्य तद्बोधकेन वाक्येनैव समर्पणस्य युक्तत्वात्, शाब्दः शाब्देनान्वेतीति न्यायात् । उपमानपूर्विकार्थापत्तिर्यथा—गवयदर्शनादेतत्सदृशो गौरिति यद्गवि गवयसादृश्यमुपमितं तदन्यथानुपपत्त्या तादृशसादृश्यविशिष्टगवि तादृशप्रमाविषये त्वशक्तिरस्तीति कल्पना, अर्थापत्तिपूर्विकाऽर्थापत्तिर्यथा—अर्थबोधान्यथानुपपत्त्या शब्दस्य वाचकशक्तिं कल्पयित्वा पुनस्तदनुपपत्त्या शब्दस्य नित्यत्वकल्पना। अभावपूर्विकार्थापत्तिर्यथा—जीवति देवदत्ते गृहाभावदर्शनेन वहिर्भावस्यादृष्टस्य कल्पनेति ।

इति 'लक्ष्मी' टिप्पण्यां पञ्चमः परिच्छेदः ।

( ७३ ) किञ्च । वस्त्रविक्रयादौ तर्जनीतोलनेन दशसंख्यादिवत्सूचनबुद्धिवेद्योऽप्ययं न भवति ! सूचनबुद्धेरपि सङ्केतादिलौकिकप्रमाणसापेक्षत्वेनानुमानप्रकारताङ्गीकारात् ।

"अर्थापत्तेस्तु नैवेह प्रमाणान्तरमिष्यते ।
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥" इति ।

एतन्मतमाश्रित्यैव ग्रन्थकृता "नानुमानं रसादीनाम्" इति कारिकायामनुमानमात्रमुक्तम् ।। एतेनेत्यादिकन्तु मीमांसकमतमाश्रित्योक्तम् । मीमांसकास्तु—नानुमानेऽन्तर्भावं स्वीकुर्वन्ति तथाहि-न तावत् गोष्ठ्यामभावः गोष्ठ्यभावः स च मृतेऽपि चैत्रे सम्भवतीति न तेन बहिः सत्त्वकल्पना युक्ता । न जीवनमात्रं वा बहिः सत्त्वानुमापकं जीवने सति चैत्रस्य गोष्ठ्यामपि सद्भावसम्भवाज्जीवनस्य गोष्ठिसत्त्वेनापि सम्बद्धत्वेन बहिः सत्त्वव्यभिचारित्वात् । तस्माज्जीवनविशिष्टो गोष्ठ्यभावो बहिः सत्त्वानुमापक इति वक्तव्यमतो गोष्ठ्यां चैत्रस्याभावो दृष्ट इति बहिः सत्त्वनिश्चयं विना लिङ्गैकदेशस्य जीवनस्य निश्चयासम्भवात्तन्निश्चयं विना च तस्य बहिः सत्त्वानुमापकत्वासम्भवात् सर्वत्र निश्चितस्य पूर्वभाविन एवानुमापकत्वनियमात् । अनुमानात्पूर्वमेव विशिष्टेन हेतुना भवितव्यमिति हेतुभूतगोष्ठ्यभावविशेषणस्य जीवनस्य निश्चयाय बहिर्भावोऽवगत एवेति भावसंसर्गो बहिरभावसंसर्गश्च गोष्ठ्यामवगत इति जीवनविशिष्टगोष्ठ्यभावरूपहेतुनिश्चयेन सर्वं ज्ञातं न किञ्चिदवशिष्यते यदत्रानुमेयं स्यादिति-उक्तञ्च—

"विद्यमानत्वसंसृष्टगेहाभावधियानया ।
गेहादुत्कालिता सत्ता बहिरेवावतिष्ठते ॥" इति ।

इतोऽधिकजिज्ञासुभिः शास्त्रदीपिकादौ द्रष्टव्याः । तथा चेदमत्रानुसन्धेयम्—

पूर्वसिद्धव्याप्तिच्छायामित्युक्त्या "शून्यं वासगृहम्" इत्यादि प्रतिपाद्यकाव्यज्ञानेन शृङ्गारादिप्रतिपादककल्पनरूपार्थापत्त्या तेषां शृङ्गारादीनां ज्ञानं भवितुं नार्हति रसानां चर्वणाकालमात्रोद्भवतया पूर्वसिद्धत्वाभावेन व्यतिरेकव्याप्तिज्ञानस्यापि भवितुमशक्यत्वात् ।

( ७३ ) अधुना व्यङ्ग्यानामनुमानागम्यत्वं प्रदर्श्य सूचना नाम कश्चिद्व्यापारः कैश्चिदुच्यते तद्गम्य एव व्यङ्ग्यार्थ इति मतं दूषयितुमाह—किञ्चेति । तर्जनीतोलनेन तर्जन्युत्क्षेपदर्शनेन दशसंख्यादिवत् दशसंख्यादिर्यथा तर्जन्यादितोलनाधीनसूचनाबुद्धिगम्यस्तथा व्यङ्ग्यार्थोऽपीत्यर्थः । सूच्यतेऽनेनेति सूचनं हस्तचेष्टादिसङ्केतविशेषस्तज्जन्या या बुद्धिस्तया वेद्यो ज्ञेयः । अयं व्यङ्ग्यपदार्थः । सूचनाऽनुमितावप्यन्तर्भवतीति सिद्धान्तयति—सूचनाबुद्धेरपीति । सङ्केतादिलौकिकप्रमाणसापेक्षत्वे नेत्यनेन यत्र यत्रोर्ध्वं तर्जनी तत्र तत्र दश संख्येति पुनर्गृहीतव्याप्तिपुरस्कारवचनमिति प्रतीयते । अनुमानप्रकारताया अनुमितिस्वरूपताया अङ्गीकारात् । अत्रायमभिप्रायः—यदा कोऽपि वणिक् कस्यचित् क्रयणार्थिनः सविधे इत्थं सङ्केतयति यथा—अधिकतरक्रयणार्थिमध्ये भवता वसनमूल्येऽन्वेष्टिते परेभ्यो गोपयितुं मया तर्जन्याद्युत्तोलने कृते सति भवता दशसंख्या ज्ञातव्या" इत्यादि, तदैव वणिजस्तर्जनीतोलनदर्शनेन क्रयणार्थी दशसंख्यां जानाति । न पुनस्तथाविधसङ्केतासत्त्वेऽपि । तथा च तत्र क्रयणार्थिनः दशसंख्याबोधसूचन

( ७४ ) यच्च 'संस्कारजन्यत्वाद्रसादिबुद्धिः स्मृतिः' इति केचित् ।

( ७५ ) तत्रापि प्रत्यभिज्ञायामनैकान्तिकतया हेतोराभासता ।

( ७६ ) 'दुर्गालङ्घित-' इत्यादौ ( ८२ पृ. ) च द्वितीयार्थो नास्त्येव—इति यदुक्तं महिमभट्टेन तदनुभवसिद्धिमपलपतो गजनिमीलिकैव ।

( ७७ ) तदेवमनुभवसिद्धस्य तत्तद्रसादिलक्षणार्थस्याशक्यापलापतया तत्तच्छ-

बुद्धिरूपानुमितिरेव यदि व्यभिचारशङ्का न भवेत्तदा । तथा चानुमानम्—एतद्वसनं दशरूप्यकमूल्यकं प्राक् सूचिततर्जनीतोलनबोधितत्वात्" इति । इत्थञ्च रसादि बोधनाय काव्यशब्देषु तथाविधसङ्केताग्रहेण रसादिषु सूचनाबुद्धिरूपानुमितेः काव्यशब्देभ्यः प्रतिपादयितुमशक्यत्वात् एवं च चन्दनच्यवनादौ व्यभिचारग्रहात् सम्भोगादिबुद्धिर्व्यञ्जनाधीनैवेति भावः ।

( ७४ ) "स्मृतिर्न च रसादिधीः" इतिकारिकापदार्थं स्पष्टयति—यच्चेति । केचित् "रसादिबुद्धिः स्मृतिः संस्कारजन्यत्वात्" इत्यनुमानेन रसादिव्यङ्ग्यार्थमात्रज्ञानस्य यच्च स्मृतिरूपत्वं वदन्तीत्यर्थः । संस्कारजन्यत्वादित्यस्य संस्कारजन्यज्ञानत्वादित्यर्थः, अन्यथा संस्कारध्वंसादौ तज्जन्यत्वस्य विद्यमानत्वात् व्यभिचारः आपद्येत । संस्कारो ह्यत्र वासनाख्यसंस्कारः एवञ्च वासनाबलादतीतघटादिज्ञानमिव काव्यार्थवासनाबलात् सामाजिकानां यद्रसज्ञानं तत् स्मृतिरूपमेवेत्यनुमानगम्यतया तदर्थं व्यञ्जनास्वीकारो व्यर्थ एवेति· तेषामभिप्रायः ।

( ७५ ) तत्र सिद्धान्तयितुं दूषयति—तत्रापीति । प्रत्यभिज्ञा नाम अनुभूतपदार्थस्य-पुनरनुभवः । यथा–पाटलिपुत्रे यो मया दृष्टः स एवायं पुरुषः इति । एवं च प्रत्यभिज्ञायां सोऽयमित्याकारकज्ञाने अनैकान्तिकतया साध्यमन्तरेण विद्यमानतया हेतोः संस्कारजन्य-ज्ञानत्वस्य आभासता व्यभिचारिता तथा च प्रत्यक्षविशेषरूपायां साध्यस्मृतित्वाभाव-दशायां प्रत्यभिज्ञायामपि वासनाख्यसंस्कारजन्यत्वरूपहेतोर्विद्यमानत्वात् पूर्ववदेव साधारणाख्यहेत्वाभास इति भावः ।

अत्र विशेषः—एतच्च साधनं रसप्रतीतिकारिणीभूतवासनायाः संस्कारविशेषत्ववादि मतेन । तदतिरिक्तत्ववादिमतेन तु साधनस्य पक्षासत्वेन न केवलं व्यभिचारमात्रमेव-दोषः किन्तु स्वरूपासिद्धिरपीति । ये खलु प्रत्यभिज्ञायाः स्मृतित्वापत्तिशङ्कया स्मृतिजन्य-त्वमेव न तु संस्कारजन्यत्वमिति स्वीकुर्वन्ति तन्मते व्यभिचारो न भवतीत्यवगन्तव्यम् ।

( ७६ ) अभिधामूलव्यञ्जनामस्वीकुर्वन्तो व्यक्तिविवेककृतो मतं दूषयितुमुत्थापयति–''दुर्गालङ्घितेति" द्वितीयार्थोऽप्राकरणिकपार्वतीवल्लभरूपव्यङ्ग्योऽर्थः, नास्त्येव तत्प्रतीत्य-भावाद्बुद्धिविषयो नास्त्येवेत्यर्थः । अपलपतोऽस्वीकुर्वतो व्यक्तिविवेकस्य गजनिमीलिकैव पर्य्यालोचनं विनापि लोकापवादशङ्कया मत्तगजवच्चक्षुषी निमील्य वचनमित्यर्थः । सर्व-जनावगतेऽपि विषये तस्यानवगतेरिति भावः ।

( ७७ ) अधुना स्वसन्दर्भमुपसंहरति—तदेवमिति । तत्तद्रसादिलक्षणार्थस्य तत्तद्रस-भावादिस्वरूपार्थस्य वाच्यादिविलक्षणार्थस्येत्यर्थः ।

अशक्यालापतया सामाजिकैरनुभूयमानत्वादेव केनाऽप्यनङ्गीकर्तुमसमर्थतयेत्यर्थः । तत्तच्छब्दाः निःशेषच्युतचन्दनम्" इत्यादिकाव्यशब्दाः, आदिशब्दात् अर्थप्रस्ता-

ब्दाद्यन्वयव्यतिरेकानुविधायितया चानुमानादिप्रमाणावेद्यतया चाभिधादिवृत्तित्रयाबोध्यतया च तुरीया वृत्तिरुपास्यैवेति सिद्धम् ।

( ७८ ) इयं च व्याप्त्याद्यनुसंधानं विनापि भवतीत्यखिलं निर्मलम् ।

( ७९ ) तत्किंनामिकेयं वृत्तिरित्युच्यते—

**( ८० ) सा चेयं व्यञ्जना नाम वृत्तिरित्युच्यते बुधैः ।**
**रसव्यक्तौ पुनर्वृत्तिं रसनाख्यां परे विदुः ॥ ५ ॥**

---

वादयश्च तेषामन्वयव्यतिरेकयोरनुविधायितया अनुसारितया । इहान्वयव्यतिरेकोदाहरणेन कश्चिदेव शब्दस्तथाविधार्थख्यापनेऽलंकर्मीणः इति प्रकटितम् ।

उक्तं च ध्वनिकृता—

"सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगीशब्दश्च कश्चन ।
यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ॥"

इति व्यङ्ग्यव्यञ्जकाभ्यामेव हि सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनाम् , न वाच्यवाचकरचना मात्रेण" इति व्याख्यातं च ।

अपि च—

प्रतीयमानं पुनरन्यदेववस्त्वस्तिवाणीषु महाकवीनाम् ।
यत्तत्प्रसिद्ध वयवातिरिक्त विभाति लावण्यमिवाङ्गनासु ॥ इति ।

तादृशशब्दादिसद्भावे रसादिव्यङ्ग्यार्थसद्भावः तादृशशब्दाद्यस त्वे रसादिभावः इति नियमेन रसादिव्यङ्ग्यानामवश्यं स्वीकर्तव्यतयेत्यर्थः । अनुमाअर्थापत्त्यादेर्ग्रहणम् । अभिधादीत्या दपदेन लक्षणातात्पर्ययोर्ग्रहणम् । अभियम् अभिधा-लक्षणा-तात्पर्यरूपं तेनाबोध्यतया च, तुरीयावृत्तिः चतुर्थी उपास्यैव स्वीकर्त्तव्यैव ।

नन्वेवं भवन्मतसिद्धाया अपि तुरीयवृत्तेर्व्यङ्ग्यार्थबोधनाय व्याप्त्याद्यनुपरमावश्यकत्वे प्राग्दर्शित एव हेत्वाभासादिरापद्येतेत्यत आह—इयचेति । वृत्तिः व्याप्त्याद्यनुसन्धानं विनापि व्याप्तिहेत्वाभासज्ञानमन्तरेणापि भवति । तपादितमखिलं सर्वं निर्मलं निर्दुष्टम् ।

---

शब्दसमर्पितस्य विभावादेर्ज्ञानस्यैव रसादेर्जनकत्वात् काव्यमत्र साक्षान्न हेतुयत्त इति वाच्यम् 'स्वाङ्गमव्यवधायकम्" इतिन्यायेन विभावादि वभावनयापारीकरणेन काव्यस्यैवास्वादो भावकत्वात्, यथा स्वार्थस्य ज्ञानद्वारेण ावयतां पदानामेव करणत्वाभ्युपगमो नयायकादीनाम् । "सद्वारकरणम्" ान्तरालवर्त्ति व्यापारान्तरविरहादसम्भाव्यं विभावादिसवलनज्ञानस्यास्वादं त्वम् । नन्वेवं व्याप्त्याद्यनुसन्धानमन्तरेणाकस्माद्वाच्यार्थस्यावगतौ कथं नात शङ्क्याह—इयंचेति । इत्याह" ।

तत्किंनामिति । परिच्छेदेऽस्मन् व्यञ्जनाशब्दमप्रतिपाद्य तुरीयावृत्तिरूपास्यैवेथमकारिकाविवृत्तौ तथा चरमकारिकावद्वृत्तावपि प्रतिपादनात् "किं नामिइति जिज्ञासाचोदेतीति ज्ञेयम् ।

सा चेति । सा च तुरीयावृत्तिः बुधैः ज्ञेयज्ञापकप्रतिपादनकुशलैः व्यञ्जना-

( ८१ ) एतच्च विविच्योक्तं रसनिरूपणप्रस्ताव इति सर्वमवदातम् ॥

इति साहित्यदर्पणे व्यञ्जनाव्यापारनिरूपणो नाम पञ्चमः परिच्छेदः ।

# षष्ठः परिच्छेदः ।

( १ ) एवं ध्वनिगुणीभूतव्यङ्ग्यत्वेन काव्यस्य भेदद्वयमुक्त्वा पुनर्दृश्यश्रव्यत्वेन भेदद्वयमाह—

**( २ ) दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ।**

---

**नाम इत्युच्यते प्रतिपाद्यते । ननु रसादिग्रहार्थं रसनाख्यवृत्तिः स्वीकृता तदर्थं व्यञ्जनावृत्तिः कथमङ्गीक्रियते इत्यत आह**–रसव्यक्ताविति । **परे पुनः अन्ये नयायिकास्तु रसव्यक्तौ रसभावादिप्रतीतौ रसनाख्या रसननाम्नीं वृत्तिं व्यापारमाहुर्न त्वालङ्कारिकाः ।** तेषामयमभिप्रायः—**वस्त्वलङ्कारप्रतीत्यर्थं व्यञ्जनावृत्तिरवश्यमङ्गीकार्या तयैव रसादेरपि प्रतीतिरस्तु तदर्थं वृत्यन्तराङ्गीकरणमनर्थकमेवेति । न च व्यञ्जनाजन्यप्रतीतेरास्वादरूपत्वं नास्ति रसनाख्यव्यापारजन्यप्रतीतेस्तु तद्युतमिति वाच्यम्, एतादृशनियमाङ्गीकारे बीजाभावात्**

( ८१ ) एतच्चेति । **एतत्प्रकरणोक्तमखिलं विविच्य** रसनिरूप **प्रस्तावे "सत्त्वोद्रेकादित्यादि" कारिकाव्याख्यायां तृतीयपरिच्छेदप्रथमभागे उक्तमभिहितम् । सर्वं व्यञ्जनाव्यापारस्थापकमस्मदुक्तं प्रमेयजातम् अवदातं निर्म्मलम् अविरुद्धमित्यर्थः ।**

**( अत्र मूलकारिकाः = ९ पूर्वाभिः सह ८०९ उदाहरणश्लोकौ २ = पूर्वैः सह २०७ । )**

इति वत्सकुलावतंस–दैवज्ञशिरोमणि–**श्रीलोकनाथात्मज**–साहित्य–व्याकरणाचार्य–
ठक्कुरोपनामक–**श्रीकृष्णमोहन**शास्त्रिविरचितायां–"लक्ष्मी" नामक–
साहित्यदर्पण–टीकायां पञ्चमः परिच्छेदः ।

---

( १ ) **यद्यपि ध्वनिगुणीभूतव्यङ्ग्ययोर्भेदप्रभेदगणनैव संख्यातीता ततश्च काव्यभेदस्यापि तथैव प्राप्नोति तथापि "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायात्**

**"काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यञ्चेति द्विधा मतम्"**

**इत्युक्तदिशा भेदद्वयस्यैव मुख्यत्वात् तत्तद्भेदप्रभेदादौ ध्वनित्वादेरनुगतत्वात् द्विभेदस्यैव काव्यस्यान्योऽपि भेदोऽस्ति न वेति जिज्ञासायां प्रसङ्गसङ्गत्या षष्ठपरिच्छेदमारभमाणोऽवतारयति**—एवमिति । **एवं निरुक्तप्रकारेण ध्वनिगुणीभूतव्यङ्ग्ययोः संख्याऽतीतेऽपि "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायेनेति शेषः ध्वनिगुणीभूतव्यङ्ग्यत्वेन ध्वनित्वेन गुणीभूतव्यङ्ग्यत्वेन चेत्यर्थः । काव्यस्य चमत्कारप्राणवाक्यात्मकस्य । द्रष्टुं योग्यं दृश्यं श्रोतुं योग्यं श्रव्यम् एकत्र "ऋदुपधाच्चाक्लृपि चृतेः" ३।१।११० इति पा०सूत्रेण क्यप्, अन्यत्र "अचो यत्" ३।१।९७ इति पा०सूत्रेण यत्, दृश्यश्रव्ययोर्भावस्तेन तथोक्तेन दृश्यत्वेन श्रव्यत्वेन चेत्यर्थः । अत्र श्रव्यदृश्यत्वेने" त्यनभिधाय तथाकथनं तु प्रथमं दृश्यस्यैव निरूपयिष्यमाणत्वात् ।**

( २ ) दृश्यश्रव्यत्वभेदेनेति । **दृश्यं दर्शनीयप्रधानम्, श्रव्यं श्रोतव्यमात्रम्, तयोर्भावो दृश्यश्रव्यत्वं तस्य भेदस्तेन तथोक्तेन काव्यं पुनर्द्विधा मतं कथितं पूर्वैरिति शेषः । एवञ्च**

( ३ ) दृश्यं तत्राभिनेयं—

( ४ ) तस्य रूपकसंज्ञाहेतुमाह—

( ५ ) .................. तद्रूपारोपात्तु रूपकम् ॥ १ ॥

( ६ ) तद्दृश्यं काव्यं नटे रामादिस्वरूपारोपाद्रूपकमित्युच्यते ।

( ७ ) कोऽसावभिनय इत्याह—

( ८ ) भवेदभिनयोऽवस्थानुकारः स चतुर्विधः ।
आङ्गिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा ॥ २ ॥

( ९ ) नटैरङ्गादिभी रामयुधिष्ठिरादीनामवस्थानुकरणमभिनयः ।

काव्यं पूर्वोक्तभेदद्वयसमुदितेन मुख्यतश्चतुर्विधमित्यवगन्तव्यम् ।

( ३ ) दृश्यमिति तत्र तयोर्मध्ये अभिनेयम् अभिनययोग्यं नाट्याद्यभिनीयमानं नायकादिचरितमित्यर्थः । काव्यं दृश्यमिति दृश्यकाव्यस्वरूपम् । एतेन नटाद्यभावेनाभिनययोग्यत्वाभावात् श्रव्यकाव्ये नातिव्याप्तिरिति दर्शितम् । दर्शनात्मकचाक्षुषगोचरयोग्यत्वादस्य दृश्यमिति नाम ।

( ४ ) अभिनेयं रूपकमिति पर्य्यायाद्रूपकसंज्ञाहेतुं दर्शयितुमाह—तस्येति ।

( ५ ) तद्रूपेति । तद् दृश्यकाव्यम्, रूपाणां रामादिस्वरूपाणाम् आरोपात् वेशाभिनयाभ्यां तदारोपस्थानेन बोधनाद् हेतोः रूपकमुच्यते । एवञ्च रूपयति अन्यस्य रामादेः रूपेणान्यान् नटाननुकरोतीति रूपकम् । उक्तञ्च मन्दारमरन्दे—

"यथा मुखादौ पद्मादेरारोपो रूपकं मतम् ।
तथैव नायकारोपो नटे रूपकमुच्यते ॥" इति ।

यथा अनर्घराघवादि रूपकम्, रत्नावल्याद्युपरूपकं ज्ञेयम् ।

( ६ ) तदेव विवृणोति—तदिति । तत् अभिनेयापरपर्यायमिति शेषः । नटे अभिनेतरि रामादेर्नायकादेरारोपस्तस्मात्तं निमित्तीकृत्य प्रवृत्तत्वादिति भावः ।

( ७ ) तदारोपहेतुत्वेन प्राप्तमभिनयं पृच्छति—कोऽसाविति । असौ दृश्यलक्षणघटकाभिनेयपदव्यङ्ग्य इत्यर्थः ।

( ८ ) भवेदभिनय इति । अवस्थानां वास्तविकरामादेर्धर्माणां मनः कथावाक्यपाण्डुत्वादिरूपवेशसाधारणानाम् अनुकारः सदृशीकरणम् अनुकरणमित्यर्थः अभिनयो भवेत् । स चाभिनेयश्चतुर्विधः—१आङ्गिकः-अङ्गेन निष्पन्नः, २ वाचिकः-वचसा प्रतिपाद्यः, ३ आहार्य्यः-आहरणीयमुकुटकेयूरादिरचनानिष्पाद्यः, ४ सात्त्विकः-स्तम्भस्वेदादिरूपः, सर्वत्र नटानामिति सम्बन्धः । ननु वाचिकांशे रसात्मकवाक्यसद्भावात्तत्र मुख्यमेव काव्यत्वम्, किन्त्वेतदतिरिक्ताङ्गिकादित्रये रसात्मकवाक्यत्वाभावेन काव्यत्वं न स्यात्, नच तत्तदंशेऽकाव्यत्वमेवेतीष्टापत्तिं कर्त्तुं शक्यते, दर्शनयोग्यत्वांशमादाय काव्यत्वोपपत्तेरिति चेत्? वाचिकापेक्षया तत्तदंशेऽपि रसादिसद्भावात् गौणकाव्यत्वं बोध्यम् ।

( ९ ) तच्चतुः साधारणमभिनयलक्षणं दर्शयति—नटैरङ्गादिभिरिति । अङ्गं शरीरम्, आदिशब्दात् वचनपरिग्रहः । नाट्यशास्त्रे भरतोऽप्ययमेवार्थो भङ्ग्यन्तरेणाह—

"विभावयति यस्माच्च नानार्थान् हि प्रयोगतः ।
शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः ॥" इति ।

( १० ) रूपकस्य भेदानाह—

( ११ ) नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥ ३ ॥

( १२ ) किंच ।

( १३ ) नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् ।
प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ॥ ४ ॥
संलापकं श्रीगदितं शिल्पकं च विलासिका ।
दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ॥ ५ ॥
अष्टादश प्राहुरुपरूपकाणि मनीषिणः ।

( १४ ) विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम् ॥ ६ ॥

( १५ ) सर्वेषां प्रकरणादिरूपकाणां नाटिकाद्युपरूपकाणां च ।

( १६ ) तत्र—

( १७ ) नाटकं ख्यातवृत्तं स्यात्पञ्चसंधिसमन्वितम् ।
विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ॥ ७ ॥

---

मन्दारमरन्देऽपि—

उत्पादयन् सहृदये रसज्ञानं निरन्तरम् ।
अनुकर्तृस्थितो योऽर्थोऽभिनयः सोऽभिधीयते ॥"इति ।

( १० ) एवमभिनयं प्रदर्श्य रूपकं विशेषतः प्रदर्शयितुं प्रवृत्तस्तत्र तावत्तस्य भेद-प्रतिपादनं प्रतिजानीते—रूपकस्येति ।

आङ्गिको वाचिकश्चापि सात्त्विकाहार्य्यकाविति ।
स चतुर्धा कृतस्तज्ज्ञैराङ्गिकोऽङ्गक्रियोच्यते ॥
रागानुषङ्गि यद्वाक्यं नाट्ये वाचिक उच्यते ।
सत्त्वक्रिया सात्त्विकः स्यादाहार्य्यो भूषणादिकः ॥" इति ।

( ११ ) नाटकमिति । नाटकम्, प्रकरणम्, भाणः, व्यायोगः, समवकारः, ईहामृगः, अङ्कः, वीथी, प्रहसनम्, इति इतिसंज्ञकानि दश दशविधानि रूपकाणि स्युरिति शेषः ।

( १२ ) दशविधं नाटकमभिधायाष्टादशविधरूपकमभिधातुमाह—किञ्चेति । अपिचेत्यर्थः ।

( १३ ) नाटिकेति । प्रस्थानोल्लाप्येति । प्रस्थानम्, उल्लाप्यम् काव्यञ्चेति प्रस्थानोल्ला-प्यकाव्यानि त्रीणि । उपरूपकाणि ( कर्म ) मनीषिणो विद्वांसः, ( कर्तृ )

( १४ ) ननूक्तानामेषां किं किं लक्षणमिति जिज्ञासायां बोधसौकर्यायाह—विनेति । विशेषं प्रत्येकमवान्तरभेदम्, लक्ष्म वक्ष्यमाणलक्षणम् । नाटकवदिति । विशेषं विहाय सर्वेषां लक्षणं नाटकवदेवेत्यर्थः । मतं भरतादिभिः स्वीकृतम् ।

( १५ ) कारिकां स्पष्टयितुमाह—सर्वेषामिति । प्रकरणादीनां नवानां रूपकाणामित्यर्थः ।

( १६ ) तत्रेति । तेषु पूर्वमभिहितेषु नाटकादिरूपकेषु मध्य इत्यर्थः ।

( १७ ) यथोद्देशलक्षणमाह—नाटकमिति । ख्यातवृत्तादयः दृश्यकाव्यस्य विशेषणम्, एवञ्च एतादृशं यद्दृश्यकाव्यं तन्नाटकमित्यर्थः । नाटयति विचित्रं रञ्जनाप्रवेशेन सभ्यानां

ब्दाद्यन्वयव्यतिरेकानुविधायितया चानुमानादिप्रमाणावेद्यतया चाभिधादिवृत्तित्रयाबोध्यतया च तुरीया वृत्तिरुपास्यैवेति सिद्धम् ।

( ७८ ) इयं च व्याप्त्याद्यनुसंधानं विनापि भवतीत्यखिलं निर्मलम् ।

( ७९ ) तत्किंनामिकेयं वृत्तिरित्युच्यते—

( ८० ) **सा चेयं व्यञ्जना नाम वृत्तिरित्युच्यते बुधैः ।**

**रसव्यक्तौ पुनर्वृत्तिं रसनाख्यां परे विदुः ॥ ५ ॥**

वादयश्च तेषामन्वयव्यतिरेकयोरनुविधायितया अनुसारितया । इहान्वयव्यतिरेकोदाहरणेन कश्चिदेव शब्दस्तथाविधार्थख्यापनेऽलंकर्मीणः इति प्रकटितम् ।

उक्तं च ध्वनिकृता—

"सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगीशब्दश्च कश्चन ।

यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः ॥"

इति व्यङ्ग्यव्यञ्जकाभ्यामेव हि सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनाम् , न वाच्यवाचकरचना मात्रेण" इति व्याख्यातं च ।

अपि च—

प्रतीयमानं पुनरन्यदेवस्त्वस्तिवाणीषु महाकवीनाम् ।

यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥ इति ।

एवञ्च तादृशशब्दादिसद्भावे रसादिव्यङ्ग्यार्थसद्भावः तादृशशब्दाद्यभावे रसादिव्यङ्ग्यार्थासद्भावः इति नियमेन रसादिव्यङ्ग्यानामवश्यं स्वीकर्तव्यतयेत्यर्थः । अनुमानेत्यादिना अर्थापत्त्यादेर्ग्रहणम् । अभिधादीत्यादिपदेन लक्षणातात्पर्ययोर्ग्रहणम् । अभिधादिवृत्तित्रयम् अभिधा-लक्षणा-तात्पर्यरूपं तेनाबोध्यतया च, तुरीयावृत्तिः चतुर्थी काचिद्वृत्तिः उपास्यैव स्वीकर्त्तव्यैव ।

( ७८ ) नन्वेवं भवन्मतसिद्धाया अपि तुरीयवृत्तेर्व्यङ्ग्यार्थबोधनाय व्याप्त्याद्यनुसन्धानस्य परमावश्यकत्वे प्राग्दर्शित एव हेत्वाभासादिरापद्येतेत्यत आह—इयंचेति । इयञ्च तुरीयवृत्तिः व्याप्त्याद्यनुसन्धानं विनापि व्याप्तिहेत्वाभासज्ञानमन्तरेणापि भवति । अतोऽस्मत्प्रतिपादितमखिलं सर्वं निर्मलं निर्दुष्टम् ।

अत्र पूर्वस्तु—

"नच शब्दसमर्पितस्य विभावादेर्ज्ञानस्यैव रसादेर्जनकत्वात् काव्यमत्र साक्षान्न हेतुत्वेन व्याश्रियत इति वाच्यम् 'स्वाङ्गमव्यवधायकम्" इतिन्यायेन विभावादिविभावनस्यावान्तरव्यापारीकरणेन काव्यस्यैवास्वादो भावकत्वात्, यथा स्वार्थस्य ज्ञानद्वारेण तत्संसर्गं भावयतां पदानामेव करणत्वाभ्युपगमो नैयायिकादीनाम् । "सद्व्यापारकरणम्" इतिन्यायेनान्तरालवर्त्ति व्यापारान्तरविरहादसम्भाव्यं विभावादिसवलनज्ञानस्यास्वादं प्रति कारणत्वम् । नन्वेवं व्याप्त्याद्यनुसन्धानमन्तरेणाकस्माद्वाच्यार्थस्यावगतौ कथं नातिप्रसङ्ग इत्याशङ्क्याह—इयंचेति । इत्याह" ।

( ७९ ) तत्किंनामेति । परिच्छेदेऽस्मिन् व्यञ्जनाशब्दमप्रतिपाद्य तुरीयावृत्तिरूपास्यैवेत्युपक्रमे प्रथमकारिकावृत्तौ तथा चरमकारिकावृत्तावपि प्रतिपादनात् "किं नामिकेयं वृत्तिः" इति जिज्ञासाचोदेतीति ज्ञेयम् ।

( ८० ) सा चेति । सा च तुरीयावृत्तिः बुधैः ज्ञेयज्ञापकप्रतिपादनकुशलैः व्यञ्जना-

( ८१ ) एतच्च विविच्योक्तं रसनिरूपणप्रस्ताव इति सर्वमवदातम् ॥

इति साहित्यदर्पणे व्यञ्जनाव्यापारनिरूपणो नाम पञ्चमः परिच्छेदः ।

# षष्ठः परिच्छेदः ।

( १ ) एवं ध्वनिगुणीभूतव्यङ्ग्यत्वेन काव्यस्य भेदद्वयमुक्त्वा पुनर्दृश्यश्रव्यत्वेन भेदद्वयमाह—

**( २ ) दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ।**

---

नाम इत्युच्यते प्रतिपाद्यते । ननु रसादिग्रहार्थं रसनाख्यवृत्तिः स्वीकृता तदर्थं व्यञ्जनावृत्तिः कथमङ्गीक्रियते इत्यत आह—रसव्यक्ताविति । परे पुनः अन्ये नयायिकास्तु रसव्यक्तौ रसभावादिप्रतीतौ रसनाख्या रसननाम्नीं वृत्तिं व्यापारमाहुर्नत्वालङ्कारिकाः । तेषामयमभिप्रायः—वस्त्वलङ्कारप्रतीत्यर्थं व्यञ्जनावृत्तिरवश्यमङ्गीकार्या तयैव रसादेरपि प्रतीतिरस्तु तदर्थं वृत्त्यन्तराङ्गीकरणमनर्थकमेवेति । न च व्यञ्जनाजन्यप्रतीतेरास्वादरूपत्वं नास्ति रसनाख्यव्यापारजन्यप्रतीतेस्तु तद्युतमिति वाच्यम्, एतादृशनियमाङ्गीकारे बीजाभावात्

( ८१ ) एतच्चेति । एतत्प्रकरणोक्तमखिलं विविच्य रसनिरूपप्रस्तावे "सत्त्वोद्रेकादित्यादि" कारिकाव्याख्यायां तृतीयपरिच्छेदप्रथमभाग उक्तमभिहितम् । सर्वं व्यञ्जनाव्यापारस्थापकमस्मदुक्तं प्रमेयजातम् अवदातं निर्म्मलम् अविरुद्धमित्यर्थः ।

**( अत्र मूलकारिकाः=९ पूर्वाभिः सह ८०९ उदाहरणश्लोकौ २=पूर्वैः सह २०७ । )**

इति वत्सकुलावतंस-दैवज्ञशिरोमणि-श्रीलोकनाथात्मज-साहित्य-व्याकरणाचार्य-ठक्कुरोपनामक-श्रीकृष्णमोहनशास्त्रिविरचितायां-"लक्ष्मी" नामक-साहित्यदर्पण-टीकायां पञ्चमः परिच्छेदः ।

( १ ) यद्यपि ध्वनिगुणीभूतव्यङ्ग्ययोर्भेदप्रभेदगणनैव संख्यातीता ततश्च काव्यभेदस्यापि तथैव प्राप्नोति तथापि "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायात्

"काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यञ्चेति द्विधा मतम्"

इत्युक्तदिशा भेदद्वयस्यैव मुख्यत्वात् तत्तद्भेदप्रभेदादौ ध्वनित्वादेरनुगतत्वात् द्विभेदस्यैव काव्यस्यान्योऽपि भेदोऽस्ति न वेति जिज्ञासायां प्रसङ्गसङ्गत्या षष्ठपरिच्छेदमारभमाणोऽवतारयति—एवमिति । एवं निरुक्तप्रकारेण ध्वनिगुणीभूतव्यङ्ग्ययोः संख्याऽतीतेऽपि "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायेनेति शेषः ध्वनिगुणीभूतव्यङ्ग्यत्वेन ध्वनित्वेन गुणीभूतव्यङ्ग्यत्वेन चेत्यर्थः । काव्यस्य चमत्कारप्राणवाक्यात्मकस्य । द्रष्टुं योग्यं दृश्यं श्रोतुं योग्यं श्रव्यम् एकत्र "ऋदुपधाच्चाक्लृपिचृतेः" ३।१।११० इति पा०सूत्रेण क्यप्, अन्यत्र "अचो यत्" ३।१।९७ इति पा०सूत्रेण यत्, दृश्यश्रव्ययोर्भावस्तेन तथोक्तेन दृश्यत्वेन श्रव्यत्वेन चेत्यर्थः । अत्र श्रव्यदृश्यत्वेने" त्यनभिधाय तथाकथनं तु प्रथमं दृश्यस्यैव निरूपयिष्यमाणत्वात् ।

( २ ) दृश्यश्रव्यत्वभेदेनेति । दृश्यं दर्शनीयप्रधानम्, श्रव्यं श्रोतव्यमात्रम्, तयोर्भावो दृश्यश्रव्यत्वं तस्य भेदस्तेन तथोक्तेन काव्यं पुनर्द्विधा मतं कथितं पूर्वैरिति शेषः । एवञ्च

( ३ ) दृश्यं तत्राभिनेयं—

( ४ ) तस्य रूपकसंज्ञाहेतुमाह—

( ५ ) ………………तद्रूपारोपात्तु रूपकम् ॥ १ ॥

( ६ ) तद्दृश्यं काव्यं नटे रामादिस्वरूपारोपाद्रूपकमित्युच्यते ।

( ७ ) कोऽसावभिनय इत्याह—

( ८ ) भवेदभिनयोऽवस्थानुकारः स चतुर्विधः ।

**आङ्गिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा ॥ २ ॥**

( ९ ) नटैरङ्गादिभी रामयुधिष्ठिरादीनामवस्थानुकरणमभिनयः ।

---

काव्यं पूर्वोक्तभेदद्वयसमुदितेन मुख्यतश्चतुर्विधमित्यवगन्तव्यम् ।

( ३ ) दृश्यमिति तत्र तयोर्मध्ये अभिनेयम् अभिनययोग्यं नाट्याद्यभिनीयमानं नायकादिचरितमित्यर्थः । काव्यं दृश्यमिति दृश्यकाव्यस्वरूपम् । एतेन नटाद्यभावेनाभिनययोग्यत्वाभावात् श्रव्यकाव्ये नातिव्याप्तिरिति दर्शितम् । दर्शनात्मकचाक्षुषगोचरयोग्यत्वादस्य दृश्यमिति नाम ।

( ४ ) अभिनेयं रूपकमिति पर्य्यायाद्रूपकसंज्ञाहेतुं दर्शयितुमाह—तस्येति ।

( ५ ) तद्रूपेति । तद् दृश्यकाव्यम्, रूपाणां रामादिस्वरूपाणाम् आरोपात् वेशाभिनयाभ्यां तदारोपस्थानेन बोधनाद् हेतोः रूपकमुच्यते । एवञ्च रूपयति अन्यस्य रामादेः रूपेणान्यान् नटाननुकरोतीति रूपकम् । उक्तञ्च मन्दारमरन्दे—

"यथा मुखादौ पद्मादेरारोपो रूपकं मतम् ।
तथैव नायकारोपो नटे रूपकमुच्यते ॥" इति ।

यथा अनर्घराघवादि रूपकम्, रत्नावल्याद्युपरूपकं ज्ञेयम् ।

( ६ ) तदेव विवृणोति—तदिति । तत् अभिनेयापरपर्यायमिति शेषः । नटे अभिनेतरि रामादेर्नायकादेरारोपस्तस्मात्तं निमित्तीकृत्य प्रवृत्तत्वादिति भावः ।

( ७ ) तदारोपहेतुत्वेन प्राप्तमभिनयं पृच्छति—कोऽसाविति । असौ दृश्यलक्षणघटकाभिनेयपदव्यङ्ग्य इत्यर्थः ।

( ८ ) भवेदभिनय इति । अवस्थानां वास्तविकरामादेर्धर्माणां मनः कथावाक्यपाण्डुत्वादिरूपवेशसाधारणानाम् अनुकारः सदृशीकरणम् अनुकरणमित्यर्थः अभिनयो भवेत् । स चाभिनेयश्चतुर्विधः—१आङ्गिकः-अङ्गेन निष्पन्नः, २ वाचिकः-वचसा प्रतिपाद्यः, ३ आहार्य्यः-आहरणीयमुकुटकेयूरादिरचनानिष्पाद्यः, ४ सात्त्विकः-स्तम्भस्वेदादिरूपः, सर्वत्र नटानामिति सम्बन्धः । ननु वाचिकांशे रसात्मकवाक्यसद्भावात्तत्र मुख्यमेव काव्यत्वम्, किन्त्वेतदतिरिक्ताङ्गिकादित्रये रसात्मकवाक्यत्वाभावेन काव्यत्वं न स्यात्, नच तत्तदंशेऽकाव्यत्वमेवेतीष्टापत्तिं कर्त्तुं शक्यते; दर्शनयोग्यत्वांशमादाय काव्यत्वोपपत्तेरिति चेत् ? वाचिकापेक्षया तत्तदंशेऽपि रसादिसद्भावात् गौणकाव्यत्वं बोध्यम् ।

( ९ ) तच्चतुः साधारणमभिनयलक्षणं दर्शयति—नटैरङ्गादिभिरिति । अङ्गं शरीरम्, आदिशब्दात् वचनपरिग्रहः । नाट्यशास्त्रे भरतोऽप्ययमेवार्थो भङ्ग्यन्तरेणाह—

"विभावयति यस्माच्च नानार्थान् हि प्रयोगतः ।
शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः ॥" इति ।

( १० ) रूपकस्य भेदानाह—

( ११ ) **नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।**
**ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥ ३ ॥**

( १२ ) किंच ।

( १३ ) **नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् ।**
**प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ॥ ४ ॥**
**संलापकं श्रीगदितं शिल्पकं च विलासिका ।**
**दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ॥ ५ ॥**
**अष्टादश प्राहुरुपरूपकाणि मनीषिणः ।**

( १४ ) **विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम् ॥ ६ ॥**

( १५ ) सर्वेषां प्रकरणादिरूपकाणां नाटिकाद्युपरूपकाणां च ।

( १६ ) तत्र—

( १७ ) **नाटकं ख्यातवृत्तं स्यात्पञ्चसंधिसमन्वितम् ।**
**विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ॥ ७ ॥**

---

मन्दारमरन्देऽपि—

उत्पादयन् सहृदये रसज्ञानं निरन्तरम् ।
अनुकर्तृस्थितो योऽर्थोऽभिनयः सोऽभिधीयते ॥ इति ।

( १० ) एवमभिनयं प्रदर्श्य रूपकं विशेषतः प्रदर्शयितुं प्रवृत्तस्तत्र तावत्तस्य भेदप्रतिपादनं प्रतिजानीते—रूपकस्येति ।

आङ्गिको वाचिकश्चापि सात्त्विकाहार्य्यकाविति ।
स चतुर्धा कृतस्तत्त्रैराङ्गिकोऽङ्गक्रियोच्यते ॥
रागानुषङ्गि यद्वाक्यं नाट्ये वाचिक उच्यते ।
सत्त्वक्रिया सात्त्विकः स्यादाहार्य्यो भूषणादिकः ॥" इति ।

( ११ ) नाटकमिति । नाटकम्, प्रकरणम्, भाणः, व्यायोगः, समवकारः, ईहामृगः, अङ्कः, वीथी, प्रहसनम्, इति इतिसंज्ञकानि दश दशविधानि रूपकाणि स्युरिति शेषः ।

( १२ ) दशविधं नाटकमभिधायाष्टादशविधरूपकमभिधातुमाह—किञ्चेति । अपिचेत्यर्थः ।

( १३ ) नाटिकेति । प्रस्थानोल्लाप्येति । प्रस्थानम्, उल्लाप्यम् काव्यञ्चेति प्रस्थानोल्लाप्यकाव्यानि त्रीणि । उपरूपकाणि ( कर्म ) मनीषिणो विद्वांसः, ( कर्तृ )

( १४ ) ननूक्तानामेषां किं किं लक्षणमिति जिज्ञासायां बोधसौकर्यायाह—विनेति । विशेषं प्रत्येकमवान्तरभेदम्, लक्ष्म वक्ष्यमाणलक्षणम् । नाटकवदिति । विशेषं विहाय सर्वेषां लक्षणं नाटकवदेवेत्यर्थः । मतं भरतादिभिः स्वीकृतम् ।

( १५ ) कारिकां स्पष्टयितुमाह—सर्वेषामिति । प्रकरणादीनां नवानां रूपकाणामित्यर्थः ।

( १६ ) तत्रेति । तेषु पूर्वमभिहितेषु नाटकादिरूपकेषु मध्य इत्यर्थः ।

( १७ ) यथोद्देशलक्षणमाह—नाटकमिति । ख्यातवृत्तादयः दृश्यकाव्यस्य विशेषणम्, एवञ्च एतादृशं यद्दृश्यकाव्यं तन्नाटकमित्यर्थः । नाटयति विचित्रं रञ्जनाप्रवेशेन सभ्यानां

सुखदुःखसमुद्भूति नानारसनिरन्तरम् ।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः ॥ ८ ॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥ ९ ॥

हृदयं नर्त्तयतीति नाटकम् । केचित्तु—नमनार्थस्यापि नटेर्नाटकशब्दं व्युत्पादयन्ति, तत्र तु घटादित्वेन ह्रस्वाभावश्चिन्त्यः । यद्यपि कथादयोऽपि श्रोतृहृदयं नाटयन्ति तथाऽप्यङ्कोपायादीनां वैचित्र्यहेतूनामसत्त्वान्न तथा रञ्जकत्वमिति न ते नाटकपदव्यपदेश्याः ।

ख्यातवृत्तं लोकेषु प्रसिद्धवृत्तान्तम्, । पञ्चसन्धयः—मुख-प्रतिमुखादयो वक्ष्यमाणास्तैः समन्वितं संयुतम् ।

"धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः"

इत्युक्तलक्षणो नायकस्य गुणविशेषो विलासः ऋद्धिरभ्युदयः आदिपदात् धैर्य्यगाम्भीर्य्यप्रियप्राप्त्यादीनां ग्रहणम् । तत्तद्गुणवत्ता तु नायकद्वारैव काव्यस्येति ज्ञेयम् । नानाविभूतिभिः नानाविधविभूतिर्नायकाभ्युदयो येभ्यस्तैस्तथोक्तं युक्तम् । सुखदुःखाभ्यां समुद्भूतिः सम्भव उत्पत्तिरिति यावत् यस्य तत् सुखदुःखसमुद्भूति, नानारसैः शृङ्गारवीरादिबहुतररसैः निरन्तरं व्याप्तम् । तत्र नाटके अङ्काः परिच्छेदरूपाः वक्ष्यमाणाः, पञ्च आदयो येषां ते तथोक्ताः, तथा दश परे शेषा येषां ते तथोक्ताः । एतेन पञ्चमाङ्कादल्पं दशमाङ्कादधिकं नाटकं न भवेदिति प्रदर्शितम् ।

उक्तं च दशरूपके—

"पञ्चाङ्कमेतदवरं दशाङ्कं नाटकं परम्" इति ।

प्रख्यातवंशः रामायणमहाभारतादिप्रसिद्धः । राजर्षिः ऋषिवृत्तिदयादाक्षिण्यादिगुणवान्, राजा स चानभिषिक्तोऽपि रामजीमूतवाहन-पार्थादीनामनभिषिक्तानामपि दर्शनात् । राजा च क्षत्रिय एवेति नाग्रहः तथा सति चन्द्रगुप्तस्य शूद्रत्वेन मुद्राराक्षसस्य नाटकत्वं व्याहन्येत । धीरोदात्तः पूर्वोक्तलक्षणः । दिव्यः दिविभवः स्वर्गीय इत्यर्थः, दिव्यादिव्यो दिव्योऽपि स्वात्मनि मनुष्यत्वाभिमानी वा शब्दाद्दिव्यश्च तेन शाकुन्तले दुष्यन्तस्य नायकत्वं सङ्गच्छते । गुणवान् प्रशस्तगुणयुक्तः प्राशस्त्ये मतुप् । एकः शृङ्गार एव एको वीर एव वा अङ्गी प्रधानरसो भवेत् । उत्कर्षहेतवे एक एव रसोऽङ्गित्वेन निवेशनीय' इत्यर्थः शृङ्गारो वीरो वेति कथनं तु समुचितरसबोधकम्, तेनोत्तररामचरिते करुणस्य प्रबोधचन्द्रोदये शान्तस्य चाङ्गित्वमक्षतमेव ।

एवञ्च नाटकेऽवान्तररससम्भवेऽपि तेऽङ्गान्येव समस्तरसनिर्वाहकस्त्वेक एवाप्रधानमिति भावः ।

उक्तञ्च ध्वनिकृता—

प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने ।
एको रसोऽङ्गीकर्त्तव्यस्तेषामुत्कर्षमिच्छता ॥" इति ।

यत्तु—शृङ्गारवीर-शान्तानां मध्ये यः कश्चिदेक एव रसो नाटके प्रधानतया निबद्धव्यः" इत्युक्तं तदसारम्, तथासति प्रबोधचन्द्रोदयस्य नाटकत्वात्तावपि उत्तररामचरितादेर्नाटकत्वं न स्यात् तदर्थमत्र ध्वनिकारोक्तमतमेवावश्यमाश्रयणीयमिति तन्मतखण्डनमतिसाहसमात्रमेवेति सुधीभिर्विभावनीयम् ।

**एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।**
**अङ्गमन्ये रसाः सर्वे कार्यो निर्वहणेऽद्भुतः ॥ १० ॥**
**चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः ।**
**गोपुच्छाग्रसमाग्रं तु बन्धनं तस्य कीर्तितम् ॥ ११ ॥**

अन्ये सर्वे रसाः अङ्गमप्रधानभावेनावस्थातुं शक्यन्तीत्यर्थः । ननु रसान्तरेषु बहुषु प्राप्तपरिपोषकेषु सत्सु कथमेकस्याङ्गिता न विरुध्यते इति चेत्? अत्रोच्यते—

"रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः ।
नोपहन्त्यङ्गितां सोऽस्य स्थायित्वेनावभासिनः ॥" इति ।

अत्र रसान्तरेति प्रतीकमादाय लोचनकारः—'प्रस्तुतस्य समस्तेतिवृत्तव्यापिनस्तत एव विततिव्याप्तिव्याप्तिकत्वेनाङ्गिभावोचितस्य रसस्य रसान्तरैरितिवृत्तवशायत्तत्वेन परिमितकथासकलव्यापिभिर्यः समावेशः समुपबृंहणं स तस्य स्थायित्वेनेतिवृत्तव्यापितया भासमानस्य नाङ्गितामुपहन्ति अङ्गितां पोषयत्येवेत्यर्थः ।

एतदुक्तं भवति—अङ्गभूतान्यपि रसान्तराणि स्वभावादिसामग्र्या स्वावस्थायां यद्यपि ते लब्धपरिपोषाणि चमत्कारगोचरतां प्रतिपद्यन्ते तथापि स चमत्कारस्तावत्येव न परितुष्य विश्राम्यति किन्तु चमत्कारान्तरमनुधावति । सर्वत्रैव ह्यङ्गाङ्गिभावेऽयमयमेवोदन्तः । यथाह तत्र भवान्—

"गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्त्तते ॥" इति ।

ननु—

"या विशेष्येषु दृश्यन्ते लिङ्गसंख्या विभक्तयः ।
प्रायस्ता एव कर्त्तव्याः समानार्थे विशेषणे ॥"

इति नियमात् "रसाः अङ्गम्" इति कथमिति चेत्? "वेदाः प्रमाणम्" इतिवदुद्देश्यविधेयभावेन लिङ्गवचनव्यत्ययकल्पनात् । निर्वहणे उपसंहाराख्यचरमसन्धौ अद्भुतः आश्चर्यरसः कार्य्यो निबद्धव्यः । एतदावश्यकत्वमुक्तं नाट्यशास्त्रे—

"सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम् ।
निर्वहणे कर्त्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञैः ॥" इति ।

कार्य्ये नायककर्मणि व्यापृता निरताः पूरुषाः पुरुषाः "पुरुषाः पूरुषा नरः" इत्यमरः, चत्वारः पञ्च वा मुख्याः प्रधानाः निबद्धव्या इति शेषः । अत्र वाशब्दोऽनास्थायाम्, तेन कार्यपुरुषाश्चत्वारः पञ्च वेति यदुक्तं ततो न्यूनाधिकतथाविधपात्रनिबन्धनेऽपि न दोषः । तदुक्तं नाट्यशास्त्रे मुनिना—

"न महाजनपरिवारं कर्त्तव्यं नाटकं प्रकरणं वा ।
येनात्र कार्य्यपुरुषाश्चत्वारः पञ्च वा ते स्युः ॥" इति ।
"व्यायोगेहामृगसमवकारडिमसञ्ज्ञितानि कार्याणि ।
दशभिर्वा द्वादशभिर्वा षोडशभिर्वाऽपि पुरुषैः स्युः ॥" इति च ।

तस्य नाटकस्य बन्धनं विरचनं गोः पुच्छाग्रस्य गोलाङ्गूलाग्रभागस्य समं सदृशम् अग्रम् अवशिष्टांशो यस्य तत्तथोक्तं कीर्त्तितं कथितम् ।

( १८ ) ख्यातं रामायणादिप्रसिद्धं वृत्तम् । यथा—रामचरितादि । संधयो वक्ष्यन्ते ।

( १९ ) नानाविभूतिभिर्युक्तमिति महासहायम् ।

( २० ) सुखदुःखसमुद्भूतत्वं रामयुधिष्ठिरादिवृत्तान्तेष्वभिव्यक्तम् ।

( २१ ) राजर्षयो दुष्यन्तादयः । दिव्याः श्रीकृष्णादयः । दिव्यादिव्यः, यो दिव्योऽप्यात्मनि नराभिमानी । यथा—श्रीरामचन्द्रः ।

---

तदुक्तं मुनिना—

'कार्यं गोपुच्छाग्रं कर्त्तव्यं बन्धमासाद्य" ॥ इति ।

विवरणे स्पष्टीभविष्यतीतोऽधिकम् ।

अत्र विशेषो दशरूपके उक्तः—

"यत्तत्रानुचितं किञ्चिन्नायकस्य रसस्य वा ।
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ॥

यथा छद्मना वालिवधो मायुराजेनोदात्तराघवे परित्यक्तः वीरचरिते तु रावणसौहृदेन वाली रामवधार्थमागतो रामेण हत इत्यन्यथाकृतः ॥" इति ।

( १८ ) कारिकास्थास्फुटपदं यथाक्रमं विवृणोति—ख्यातमिति । आदिपदेन महाभरतादीतिहासपुराणजनसमाजानां परिग्रहः । वृत्तं चरितम्, 'यत्र तत्' इति शेषः "वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले" इत्यमरः । एवञ्च प्रबोधचन्द्रोदयादीनां ख्यातवृत्तत्वान्नाटकत्वसिद्धिः । रामचरितादीत्यादिना प्रसन्नराघवानर्घराघवादीनां परिग्रहः ।

( १९ ) नानाविभूतिभिरिति । महासहायमित्याशयेनोक्तमिति भावः । एवञ्च महान्तः पुरुषाः सहाया यत्र तत्तथोक्तम् । यथा रामादेः सुग्रीवादयो वेणीसंहारे युधिष्ठिरस्य भीमः, शाकुन्तलादौ च इन्द्रादयः ।

( २० ) सुखदुःखेति । यथा वेणीसंहारे युधिष्ठिरस्य प्रथमं दुःखम् अनन्तरञ्च सुखम् । यथा वा उत्तररामचरिते रामस्य प्रथमं सुखम् अनन्तरञ्च दुःखम् ।

( २१ ) राजर्षय इति । दुष्यन्तादयोऽदिव्यनायकाः । श्रीकृष्णादय इति । "ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः" इति नारायणाथर्वशिरोपनिषत् ।

महाभारते—

"यः स नारायणो नाम देवदेवः सनातनः ।
तस्यांशो वासुदेवस्तु कर्मणोऽन्ते विवेश ह" ॥ इति ।

"जगृहे पौरुषं रूपं भगवान् महदादिभिः ।
सम्भूतं षोडशकलामादौ लोकसिसृक्षया ॥"

"कृष्णस्तु भगवान् स्वयम्" इत्यादिश्रीमद्भागवतवचनादिभिः तच्चरित्रे प्रायेण देवभावाच्च श्रीकृष्णः केवलो दिव्य एव । आदिपदात् लक्ष्मीस्वयंवरे नारायणादयः । श्रीरामस्यापि ।

राम एव परं ब्रह्म राम एव परं तपः ।
राम एव परं तत्वं श्रीरामो ब्रह्मतारकम् ॥" ( रा० रह० )

"रामो न मानुषो देव ! साक्षान्नारायणोऽव्ययः" इति ।

( २२ ) गोपुच्छाग्रसमाग्रमिति 'क्रमेणाङ्काः सूक्ष्माः कर्तव्याः' इति केचित् । अन्ये त्वाहुः—'यथा गोपुच्छे केचिद्वाला ह्रस्वाः केचिद्दीर्घास्तथेह कानिचित्कार्याणि मुखसंधौ समाप्तानि कानिचित्प्रतिमुखे । एवमन्येष्वपि कानिचित्कानिचित् इति ।

( २३ ) प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ।
भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ॥ १२ ॥
विच्छिन्नावान्तरैकार्थः किंचित्संलग्नबिन्दुकः ।
युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्न च ॥ १३ ॥
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् ।
आवश्यकानां कार्याणामविरोधाद्विनिर्मितः ॥ १४ ॥

---

नारायणावतारत्वाद् दिव्यत्वम्, नराभिमानित्वद्योतनाय सीताविरहादौ विलापाच्च अदिव्यत्वमित्यभिप्रायः ।

अत्र नराभिमानीतिप्रतीकमादाय वागीशाः—

नराभिमानी नराभेदग्रहवान् । ईश्वरे नरत्वस्य बाधात्तादृशग्रहो भ्रम एव वाच्यः, स चेश्वरे न सम्भवतीति । तस्य नरचरताचरणं तु लोकशिक्षार्थं माययैव न तु नरत्वाभिमानात् ।

तदुक्तं पाद्मे—

"मायामानुषचारित्रो महादेवादिपूजितः" इति ।

श्रीमद्भागवते च—

"भ्राता वने कृपणवत् प्रियया वियुक्तः स्त्रीसङ्गिनां गतिमिति प्रथयंश्चचार ।" इति । तथा सति दिव्यादिव्यपदार्थं एवं वाच्यः-मानुष्यां देवेनोत्पादितो दिव्यादिव्यो यथा युधिष्ठिरादिः । एवं च श्रीरामचन्द्रोऽपि दिव्यनायक एव" इति वदन्ति ।

( २२ ) "कार्यं गोपुच्छाग्रं कर्त्तव्यं बन्धमासाद्य" इति भरतमुनिवचनं व्याख्यातॄणां मतभेदं दर्शयितुमाह—गोपुच्छाग्रेति । सूक्ष्मा अल्पाः । वाला लोमानि । कार्य्याणि नायककर्म्माणि मुखसन्धौ समाप्तानि, अत एव ह्रस्वानीत्याशयः ।

एवमिति । अन्येष्वपि गर्भविमर्शनिर्वहणेषु सन्धिषु । कानिचित्कानिचित् कार्य्याणि समाप्तानीति पूर्वेण सम्बन्धः । अत एव तानि दीर्घाणीत्याशयः । अत्रोभयविधव्याख्यानेऽपि क्षतिविरहादुभयविधव्याख्यानं ग्रन्थकृदभिप्रेतमिति बोध्यम् ।

( २३ ) "पञ्चाधिका दशपरास्तत्राङ्काः" इत्युक्तत्वात् परिच्छेदरूपस्याङ्कस्य स्वरूपं दर्शयति—प्रत्यक्षेति । प्रत्यक्षवद्भासमानं नेतुर्नायकस्य नेत्र्या नायिकाया वा चरित्रं यत्र, साक्षान्निर्दिश्यमाननायकव्यापार इत्यर्थः । भावो नायकनायिकयोराकूतम् । रसभावपदमुपलक्षणं तेन रसाभासादिपरिग्रहः, तेन समुज्ज्वलः शोभितः । अगूढः शब्दश्रवणमात्रेणैव तत्कालेऽनायासबोध्यः शब्दार्थो यत्र । प्रहेलिकादिवद्दुरूहार्थत्वे बोधमान्थर्य्येण झटिति सहृदयानां हृदयावर्जनायोगादुपेक्षणीयता स्यादिति भावः । क्षुद्रचूर्णकम् अदीर्घसमासं, संस्कृतं, तैः संयुतः । भवभूतेर्नाटके तु दीर्घसमासघटिततया दोष एवेति बोध्यम् । विच्छिन्नः परिसमाप्तः अवान्तरैकार्थः व्यापकप्रसङ्गस्यैकदेशरूपोऽर्थः यत्र सः । किञ्चित् लग्नः यथाकथञ्चित्प्रवृत्तो बिन्दुर्यत्र सः

नानेकदिननिर्वर्त्यकथया संप्रयोजितः ।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥ १५ ॥
दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः ।
विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा ॥ १६ ॥
दन्तच्छेद्यं नखच्छेद्यमन्यद्व्रीडाकरं च यत् ।
शयनाधरपानादि नगराद्यवरोधनम् ॥ १७ ॥
स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः ।
देवीपरिजनादीनाममात्यवणिजामपि ॥ १८ ॥
प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः ।
अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः ॥ १९ ॥

"अवान्तरार्थविच्छेदे बिन्दुविच्छेदकारणात्"

इति वक्ष्यमाणलक्षणे न अवान्तरार्थविच्छेदेऽपि प्रसङ्गान्तरोक्त्याकाङ्क्षोत्थापकं वस्तु बिन्दुसंज्ञकं भवति किञ्चित्तद्वानित्यर्थः। बहुभिः कार्य्यैः प्रधानोद्देश्यैर्न युक्तः। बीजं प्रथमार्थप्रकृतिः अभिनेतव्यप्रसङ्गस्याङ्कुर इत्यर्थः संहृतिः निर्वहणाख्यसन्धिः तयोर्नाङ्के विधानम्, किन्तु अर्थोपक्षेपके। अत एव बीजार्थख्यापकं च तत्" इत्यङ्कमुखलक्षणमभिधास्यति। नानाविधानैः बहुभिर्घटनाभिः संयुक्तः। नातिप्रचुरपद्यवानित्युक्त्या गद्यपद्यानां तारतम्येन निवेशनीयः।

उक्तं च महर्षिणा भरतेन—

"बहुचूर्णपादवृत्तं जनयति खेदं प्रयोगस्य"। इति।

एवञ्च गद्यापेक्षया स्वल्पपद्यवानित्यर्थः। प्रसिद्धोदाहरणेषु तथादर्शनात् तत्संख्याप्रतिपादनाच्च आवश्यकानां अवश्यमनुष्ठेयानां कार्याणां पात्रविशेषेषु प्राप्तानां सन्ध्यावन्दनादीनाम् अविरोधादपरित्यागात् विनिर्म्मितो रचितो भवेत्। अनेकदिननिर्वर्त्या अधिकदिनसम्पाद्या या कथा वृत्तान्तस्तया न सम्प्रयोजितो भवेत्। किन्तु स्वल्पदिनसम्पाद्यया उत्तरोत्तरभाविन्या कथयैव सम्प्रयोजितो भवेदित्यर्थः। आसन्नस्तत्रावर्त्तमानोऽपि सन्निहितो नायको नायकचरितं यत्र सः, प्रत्यक्षनेतृचरितत्वासम्भवे सन्निहितनेतृचरित इत्यर्थकरणान्न प्रागुक्तेन सहास्य पौनरुक्त्यम्। अत एव मुद्राराक्षस-प्रथमाङ्के-शाकुन्तल-चतुर्थाङ्कादौ च लक्षणसमन्वयः। त्रिचतुरैः पात्रैः त्रिभिश्चतुर्भिर्वा योग्यैः राजमन्त्र्यादिभिर्जनैरित्यर्थः।

"पात्रं स्रुवादौ योग्ये च नाटकीये च पूरुषे।
तीरद्वयान्तरे राजाऽमात्येऽमवेच पल्लवे ॥" इति गोपालः।

अङ्केऽभिनेतव्यवस्तूनां निषेधमाह—दूराह्वानमिति। दूरस्थजनस्याह्वानमित्यर्थः। वध युद्धादिकं च यस्य कस्यचिन्मुखेनान्येन वा कविप्रतिभोत्थेन प्रकारेण प्रदर्शनीयम्। भोजनमन्नभोजनम् दन्तच्छेद्यनखच्छेद्यवस्तुनोरपि भक्षणनिषेधः। शाप अभिसम्पातः उत्सर्गो मलत्यागः तौ तथोक्तौ। शाकुन्तले दुर्वाससः शापस्तु नाङ्के किन्तु विष्कम्भक इति न दोषः। दन्तच्छेद्यम् ओष्ठादौ दन्तघातः नखच्छेद्यं कुचादौ नखाघातः अन्यद्वसनमोचनादिकम्। तदपि नाभिनेतव्यम् एषामभिनयः सदस्यानाममङ्गलमित्यभिप्रायः।

( २४ ) बिन्द्वादयो वक्ष्यन्ते । आवश्यकं संध्यावन्दनादि ।

अङ्कप्रस्तावाद्गर्भाङ्कमाह—

( २५ ) **अङ्कोदरप्रविष्टो यो रङ्गद्वारामुखादिमान् ।**

**अङ्कोऽपरः स गर्भाङ्कः सबीजः फलवानपि ॥ २० ॥**

( २६ ) यथा बालरामायणे रावणं प्रति कोहलः—

---

दशरूपकेऽपि वर्जनान्याह—

"दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् ।
संरोधो भोजनं स्नानं सुरम्यञ्चानुलेपनम् ॥
अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ॥"

अङ्कैनैवोपनिबध्नीत प्रवेशादिभिरेव सूचयेदित्यर्थः ॥ इति ।

एभिर्दूराह्वानादिभिः वर्जितस्त्यक्तः देवो राजमहिषी परिजनास्तत्परिचारकाः राजकुमारादयो वा तेषां प्रत्यक्षचित्रचरितैर्युक्त इत्यन्वयः । भावरसोद्भवैरिति भावो लीला रसो वैदग्ध्यम् । भावरसयोरुद्भवो येभ्यस्तैस्तथोक्तैः । एवञ्च "रसभावसमुज्ज्वल" इत्यनेन न पौनरुक्त्यम् । प्रत्यक्षाणि न तु वाचनिकानि चित्राणि आश्चर्याणि यानि चरितानि तैर्युक्तः संयुतः । अन्ते समाप्तौ निष्क्रान्तानि रङ्गगृहान्निर्गतानि निखिलानि समग्राणि पात्राणि नायकतत्सहायाद्यो यस्य सः अङ्क इति कीर्त्तितः । महर्षिणा भरतेनाङ्कपदस्येत्थं निरुक्तिः प्रदर्शिता—

"अङ्क इति रूढिशब्दो भावश्च रसैश्च रोहयत्यर्थान् ।
नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः ॥" इति ।

( २४ ) संशयनिराकरणायाह—बिन्द्वादय इति । आदिना बीजादीनां परिग्रहः । सन्ध्यावन्दनादीति । रसान्तरप्रसक्तस्य नायकस्येति बोध्यम् ।

( २५ ) गर्भाङ्कः प्रधानाङ्कमध्येऽवान्तरविच्छेदरूपोऽपरोऽङ्कस्तल्लक्षणं दर्शयति—अङ्कोदरेति ।

अङ्कोदरप्रविष्टः उक्तलक्षणस्य यस्य कस्यचिदङ्कस्य अभ्यन्तरगतः, तेन चास्य गर्भाङ्क इति नाम । रङ्गद्वारं रङ्गे सूत्रधारेण क्रियमाणं मङ्गलाचरणम्, आमुखं प्रस्तावना तल्लक्षणं वक्ष्यति । रङ्गद्वारा मुखे प्रथमाङ्के। आदिपदात् सभापूजाकविसंज्ञादीनां वक्ष्यमाणलक्षणकशुद्धसंकीर्णविष्कम्भकद्वयस्य प्रवेशकस्य च परिग्रहः तद्वान् । वक्ष्यते हि वृत्तवर्त्तिष्यमाणकथांशप्रदर्शकोऽभिनयो विष्कम्भकः । स च मध्यविधजनप्रवर्त्तितः शुद्धः, मध्यनीचाभ्यां प्रवर्त्तितः सकीर्णः, नीचजनमात्रप्रवर्त्तितः प्रवेशकः तेषां तु सकलाङ्क एव सम्भवः । बीजेन "अल्पमात्रं समुद्दिष्टम्" इत्यादिवक्ष्यमाणलक्षणेनादिकारणेन सहेति सबीजः, फलं नायकनिष्पाद्यप्रधानप्रयोजनम्, तद्द्वयवांश्च यः अपरः अङ्कः स गर्भाङ्क-इत्यभिधीयते ।

( २६ ) तं गर्भाङ्कमुदाहरति—यथा बालरामायण इति । तत्र हि केनापि कविना निषद्धं श्रवणैरित्यादिगुणसंयुतं सीतास्वयवरं नाम नाट्यं (क) कोहलेन (कोहलो नाम वाद्यविशेषः उपचारात्तेन सङ्गीतप्रवर्त्तको नट इत्यर्थः तेन) रावणाय निवेदितम् । तच्छ्रवणात्

---

( क ) क्वचित्पुस्तके "रावणं प्रति कञ्चुकी" इति पाठः समुपलभ्यते, परन्तु सोऽपपाठ एव ।

'श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः ।
भवदर्थमिव निबद्धं नाट्यं सीतास्वयंवरणम् ॥"

( २७ ) इत्यादिना विरचितः सीतास्वयंवरो नाम गर्भाङ्कः ।

( २८ ) तत्र पूर्वं पूर्वरङ्गः सभापूजा ततः परम् ।
कथनं कविसंज्ञादेर्नाटकस्याप्यथामुखम् ॥ २१ ॥

सीताहरणकनकमृगरामक्रोधरूपबीजस्य सीताहरणरूपकस्य च प्रकाशनात् तद्द्वयवत् । किन्तत्पद्यमित्याकाङ्क्षायां श्रवणैरिति। अनेकैः श्रवणैः कर्णैः पेयं मधुरत्वात् सादरं श्रवणीयम्, दीर्घैः सुदृश्यत्वेनादरातिशयात् स्वमेयव विस्तृतैः बहुभिर्लोचनैर्नेत्रैः दृश्यं दर्शनीयञ्च सीतास्वयवरणं नाम नाट्यं अभिनीयं वस्तु, भवदर्थम् भवते प्रयोजनम् । इवोत्प्रेक्षायाम् । भवतो दशाननत्वेन बहूनि श्रवणानि लोचनानि च सन्ति भवतैव तद्द्रष्टुं श्रोतुं च योग्यमित्यर्थः, निबद्धं जनकेन आयोजितम् ।

( २७ ) इत्यादिना विरचित इति । इत्यादिना दर्शितः केनापि विरचित इत्यर्थः । कोहल ( नट ) वाक्येन तद्विरचनाभावात् । नृत्यपात्रभूतोऽपि रावणोऽस्य गर्भाङ्कस्य नटान्तरैरभिनेयस्य द्रष्टा ।

( २८ ) प्रसङ्गतो गर्भाङ्कमभिधाय प्रकृतनाटके यदभिनेतव्यं तद्दर्शयति—तत्र पूर्वमिति । तत्र नाटके पूर्वं प्रथमं पूर्वरङ्गः स च नटाभिनयरूपरङ्गद्वारादिसूत्रधारनिष्क्रमणान्तः क्रियाकलापः, तदाख्यं मङ्गलाचरणमित्यर्थः । ततः पूर्वरङ्गात् परं सामाजिकसमूहः सभा, तस्याः पूजा प्रसंशा, ततः कवेः संज्ञायाः नाम्नः आदिपदाद् यथारुचि कवेर्गोत्र-

---

तथाहि बालरामायणे तृतीयेऽङ्के त्वेवं दृश्यते—"रावणः-दिष्ट्या गतं दिवसेन, भो भो ! प्रहस्त ! वैरिञ्चा मुनय, प्रस्तूयतामिति । प्रहस्तः-( नेपथ्याभिमुखमवलोक्य ) भो भो भरत पुत्राः । प्रेक्षणकृते कृतक्षणः क्षणादाचरचक्रवर्ती तत्प्रस्तूयताम् । ( प्रविश्य ) कोहलः —

"कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने । नमः शृङ्गारबीजाय तस्मै कुसुमधन्वने ॥"

रावणः—द्वादशपदेयं नान्दी, तत्प्रस्तावयिष्यति । कोहलः—तत्र भवतः परमेष्ठिनो मानसभुवः प्रथमपुत्रस्य नाट्ययोनेर्भरताचार्यस्य कृतिरभिनवं सीतास्वयंवर इति नाटकं प्रयोक्तव्यम्, अतः कमलसम्भवोपदिष्टनाट्यवेदेन स्वपौरुषपरितोषितखण्डपरशुदर्शितलास्यताण्डवप्रपञ्चचतुरेण भवता दीनमवधानमभ्यर्थ्यते । यतः—श्रवणैः पेयमनेकैः"···रावणः-किं पुनरिदमसंस्तुतं प्रस्तूयते । कः पुनरसौ योऽयमत्र मयि रावणेऽपि सति सीतां स्वयं वृणुते ? ( विमृश्य ) भवतु निरङ्कुशा कविवाचः । कोहलः-( समन्तादवलोक्य ) अहो ! राक्षसराजस्य त्रिभुवनशिरः शेखरायमाणा प्रभुशक्तिः । ( नेपथ्ये गीयते )

"प्रकटितरामाम्भोजः कौशिकवान् सपदि लक्ष्मणा नन्दी ।
सुरचापदमनहेतोरयमवतीर्णः शरत्समयः ॥"

कोहलः—कथमुपक्रान्तं भरतपुत्रैः, यदियं लक्ष्मणानुगतस्य भगवती विश्वामित्रस्य प्रावेशिकी ध्रुवा तदहमप्यनन्तरकरणीयाय सज्जो भवामि ( इति निष्क्रान्तः ) । ( प्रस्तावना ) ( ततः प्रविशति विश्वामित्रः रामलक्ष्मणौ च ) विश्वामित्रः—अहो तत्त्वेऽभिनिविष्टं मनो जनकस्य" इति ।

तत्रेति नाटके ।

( २६ ) यन्नाट्यवस्तुनः पूर्वं रङ्गे रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥ २२ ॥
प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि ।
तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥ २३ ॥

मातापितृणां परिग्रहः, नाटकस्य संज्ञा स्वरूपादिकथनमिति सम्बन्धः । अथापि अनन्तरं च आमुखं प्रस्तावना । यथाक्रममेतानि कविना निबद्धव्यानीत्यर्थः ।

( २९ ) पूर्वरङ्गः क इति जिज्ञासायामाह—यन्नाट्येति । कुशीलवाः सूत्रधारादिनटाः "कुशीलवस्तु वाल्मीकौ नट्याचकयोरपि" इति मेदिनी, रङ्गे नाट्यशालायां सम्भाव्यमाना ये विघ्ना नटादिदुरदृष्टजन्योपद्रवास्तदुपशान्तये निराकरणाय नाट्यं काव्योपनिबद्धधीरोदात्ताद्यवस्थानुकारश्चतुर्विधाभिनयेन तादात्म्यापत्तिः, तदुक्तं दशरूपके "अवस्थानुकृतिर्नाट्यम्" इति तत्र वस्तुवर्णनीयपदार्थस्तस्मात्तादृशात् । पूर्वं सर्वप्रथमं यत् प्रकुर्वन्ति स्वसमाजनियमात कविनिर्देशात् सामाजिकादेशाद्वा आचरन्ति, स पूर्वरङ्ग उच्यते । पूर्वं रज्यतेऽस्मिन्निति पूर्वरङ्गो नाट्यशाला तत्स्थं कर्मापि पूर्वरङ्गपदेन व्यवह्रियते । अतः पूर्वरङ्गो नाम रङ्गोपद्रवनिवारकः नान्दीपाठगीतवादित्रादिनानाविधाङ्गविशेषो नाट्यादावनुष्ठेयः कर्मविशेषः ।

तदुक्तम्—

"सभापतिः सभा सभ्या गायका वादका अपि ।
नटी नटश्च मोदन्ते यत्रान्योन्यानुरञ्जनात् ॥
अतो रङ्ग इति ज्ञेयः पूर्ववत्स प्रकल्पते । तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते ॥" इति ।

यद्यपि अस्य पूर्वरङ्गस्य प्रत्याहारादिकानि बहूनि द्वाविंशतिसंख्यकानि अङ्गानि सन्ति तथापि विघ्नोपशान्तये नान्दी अवश्यं कर्त्तव्या । एतेन प्रत्याहारादिकानि तु कविना यथारुचि वर्णनीयानीति द्योतितम् ।

प्रत्याहारादिकान्यङ्गानि नाट्यशास्त्रे उक्तानि—

"प्रत्याहारोऽवतरणं तथाह्यारम्भ एव च । आश्रावणा वक्त्रपाणिस्तथा च परिघट्टना ॥
संघोटना ततः कार्या मार्गोत्सारितमेव च । ज्येष्ठमध्यकनिष्ठा च तथैवासारितक्रिया ॥
एतानि च बहिर्गीतान्यन्तर्यवनिकागतैः । प्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि तु ॥
ततश्च सर्वकुतपैर्युक्तान्यन्यानि कारयेत् । विघाट्य वै यवनिकां नृत्यपाठकृतानि च ॥
गीतानां मुद्रकादीनामेकं योज्यं तु गीतकम् । वर्धमानमथापीह ताण्डवं यत्र युज्यते ॥
ततश्चोत्थापनं कार्य्यं परिवर्त्तकमेव च । नान्दी शुष्कापकृष्टा च रङ्गद्वारं तथैव च ॥
त्रिकं प्ररोचना चापि पूर्वरङ्गे भवन्ति हि । एतान्यङ्गानि कार्य्याणि पूर्वरङ्गविधौ तु च ॥इति ।

एतेषां लक्षणानि तु तत्रैवेवं प्रतिपादिनि—

एतेषां लक्षणमहं व्याख्यास्याम्यनु पूर्वशः । कुतुपस्य सविन्यासः प्रत्याहार इति स्मृतः ॥
तथाऽवतरणं प्रोक्तं गायकानां निवेशनम् । परिगीतक्रियाऽऽरम्भ आरम्भ इति कीर्त्तितः ॥
आतोद्यरञ्जनाऽर्थञ्च भवेदाश्रावणाविधिः । वाद्यवृत्तिविभागार्थं वक्त्रपाणिर्विधीयते ॥
तन्त्रीयकरणार्थं तु भवेच्च परिघट्टनम् । तथा पाणिविभागार्थं भवेत्संघोटनाविधिः ॥

तस्याः स्वरूपमाह—

( ३० ) आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥ २४ ॥
मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥ २५ ॥

---

तन्त्रीभाण्डसमायोगात् मार्गमार्गिमिष्यते । कालपातविभागार्थंभवेदासारितक्रिया ॥ कीर्त्तनाद्देवतानाञ्च ज्ञेया गीतिविधिक्रिया । यस्मादुत्थापयन्त्यत्र प्रयोगं नान्दिपाठकाः ॥ पूर्वमेव तु रङ्गेऽस्मिन् तस्मादुत्थापनं स्मृतम् यस्माच्च लोकपालानां परिवृत्त्य चतुर्दिशम् ।
वन्दनानि प्रकुर्वन्ति तस्माच्च परिकीर्त्तनम् ॥

इत्येव भारतादिभिरुक्तानि प्रत्याहारादीन्यङ्गानि यद्यप्यनेकानि पूर्वरङ्गे विधेयानि तथापि यथा नान्द्याः स्थितिरत्यन्तावश्यकी भवति न तथा तेषामिति ।

नाट्यप्रदीपे नान्दीपदव्युत्पत्तिश्चेत्थमुक्ता—

"नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः ।
यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेह नान्दी ॥" इति ।

( ३० ) ननु नान्द्या अवश्यविधानं प्रतिपाद्यते तत्र का नामासौ नान्दी कथं च तादृश नामेत्याकाङ्क्षायामाह—आशीर्वचनेति । देवद्विजनृपादीनाम् आदिपदाद्गुर्वादीनां च आशीरासंशा तत्प्रतिपादकेन वचनेन आत्मनः परस्य वा तादृशाशीर्वादेन संयुक्ता स्तुतिः गुणकीर्त्तनं यस्मात्प्रवर्त्तते सभासत्सु नटैः श्राव्यते, अतस्तद्वचनमेव तत्सम्बन्धान्नान्दीति संज्ञिता "नान्दी" इत्थं सञ्जातसज्ञा । "स्तुतिः 'इत्यत्र "नित्यम्" इति पाठे स्तुतिरित्यध्याहार्य्यम्, तथा च नाटकादिषु सा नित्यमवश्यं प्रयुज्यते क्रियते न त्वस्याः कदाचित्कत्वस्थितिरित्यर्थः । नन्दयति स्तुत्या देवादीनानन्दयतीति नन्दा "टुनदि समृद्धौ" इत्यस्मात् पचादित्वादच् ततश्च स्वार्थेऽण्, अणन्तत्वाट्टिढेति ङीप् प्रत्ययः । यत् यत् वस्त्वात्मिका सा तत्तदाह—मङ्गल्येति । सा च नान्दी, मङ्गल्यं मङ्गलद्योतकम्, शङ्खम्, चन्द्रम्, अब्जं कमलम्, कोकं चक्रवाकम्, कैरवं श्वेतकमलम्, वाशंसति कयाचिदप्यभिधाद्यावृत्त्या प्रत्याययतीति सा तादृशी भवेत् । तथा सा द्वादशभिः पदैः सुबन्ततिङन्ताद्यन्यतमैः उत वा अष्टाभिः पदैर्युक्ता भवेत् ।

अत्र मन्दारमरन्दे विशेषः—

अष्टभिर्दशभिः श्रेष्ठा तथा द्वादशभिः पदैः ।
अष्टादशपदैर्वापि द्वाविंशत्या पदैर्युता ॥" इति ।

नाट्यशास्त्रे प्रथमाध्याये तु—

"पूर्वं कृता मया नान्दी आशीर्वचन संयुता ।
अष्टाङ्गपदसंयुक्ता प्रशस्ता वेदसंमता ॥" इति ।

तत्रैव पञ्चमाध्याये च

"सूत्रधारः पठेन्नान्दीं मध्यमस्वरमाश्रितः ।
नान्दीं पदैर्द्वादशभिरष्टाभिर्वाप्यलङ्कृताम् ॥" इति च ।

तट्टीकायामभिनवभारत्यामभिनवगुप्ताचार्य्यपादास्त्वित्थं व्याचख्युः—"अनेन त्र्यस्र-

तालानुगता त्रिपदा षट्पदा द्वादशपदेति चतुरस्रतालानुगता चतुष्पदा अष्टपदाषोडश-पदेति पृथक्त्रिविधैव । नातः परमपि भूयस्त्वादादृतेति । पदानि श्लोकावयवभूतानि तिङ-न्तानि सुबन्तानि वा श्लोकतुरीयांशरूपाणि वा अवान्तररूपाणि वा" इति व्याख्याय पुनराहुः—"आचार्यस्वरसा त्ववान्तरवाक्येष्वेव पदत्वम्" इति । एवं च कारिकाया पदशब्दस्य द्विरभिधानात् श्लोकपादरूपम्, सुप्तिङन्तरूपम्, अवान्तरवाक्यरूपञ्च अने-कप्रकारत्वाभिप्रायकं पदञ्चात्र ग्राह्यम् ।

तथा च नाट्यप्रदीपे—

"श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे ।
परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे ॥" इत्यभिहितम् ।

नाट्यशास्त्रे—

"नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यस्ततो नमः ।
जितं सोमेन वै राज्ञा शिवं गोब्राह्मणाय च ॥
ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा ॥
प्रशास्त्विमां महाराजः पृथिवीं च ससागराम् ॥
राष्ट्रं प्रवर्द्धतां चैव रङ्गस्याशा समृध्यतु । प्रेक्षाकर्त्तुर्महान्धर्मो भवतु ब्रह्मभाषितः ॥
काव्यकर्त्तुर्यशश्चापि धर्मश्चापि प्रवर्धताम् ।
इज्यया चानया नित्यं प्रीयन्तां देवता इति ॥"

इत्यवान्तरवाक्यरूपा द्वादशपदा नान्दी प्रतिपादिता । श्लोकतुर्य्यांशः पदमिति मते-ऽष्टपदेयम् ।

यथा—

आनन्दं विदधातु पद्म वसतिः शम्भुः शिवं यच्छतु
श्रीनाथः श्रियमातनोतु, तनुतां सीतापतिर्वाञ्छितम् ।
हेरम्बः कुरुतामविघ्नमनवं वाग्ब्रह्मविद्योततां
व्यासोक्तं तदुदेतु वस्तु भरतो नाट्येऽस्तु नः कौतुकी ॥ इति ।

श्लोकचतुर्थभागः पदमिति मते चतुष्पदेयं नान्दी । केचित्तु रत्नावल्यादौ श्लोकत्रयेण नान्दी दर्शनात् कारिकास्थप्रथमपदस्य श्लोकचतुर्थभागपरमिच्छन्ति, तन्न विचारसहम्, पदशब्दोह्यत्र स्वयमेवार्थप्रतिपादनसमर्थतया प्रधानत्वाद्वाचकपरो लक्षकपरश्च गृह्यते, तेनोत्तररामचरितनाटके प्रणीतायाम्—

इदं गुरुभ्यः पूर्वेभ्यो नमो वाकं प्रशास्महे । विन्देम देवतां वाचममृतामात्मनः कलाम् ॥

इत्यत्र द्वादशपदायां नान्द्यां प्रशब्दस्योपसर्गतया द्योतकत्वेन वाचकत्वलक्षकत्वाभा-वान्न सुप्तिङन्तरूपद्वादशपदत्वव्याघातो भवति त्वन्मते तस्या असङ्ग्रहापत्तेः । एवं चा-ष्टाभिरिति तदधिकोपलक्षणत्वेन वा श्लोकत्रयेण नान्द्या अभिधानं सङ्गच्छते । अत एव महानाटके ऽयधिकैः श्लोकैर्नान्दी विहिता । ननु कथं "या सृष्टिः स्रष्टु"रित्यादौ (क)

(क) समस्तपद्यन्तु—

"या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्यविश्वम्।

( ३१ ) अष्टपदा यथा अनर्घराघवे—'निष्प्रत्यूहम्' इत्यादि। द्वादशपदा यथा मम तातपादानां पुष्पमालायाम्—

( ३२ ) शिरसि धृतसुरापगे स्मरारावरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री।
अथ चरणयुगानते स्वकान्ते स्मितसरसा भवतोऽस्तु भूतिहेतुः॥

( ३३ ) एवमन्यत्र।

द्वादशाधिकपदघटिताया नान्द्याः सङ्ग्रह इति चेत्? अवान्तरैकैकवाक्यरूपाष्टपदाया नान्द्याः सत्त्वोपगमात्। नाट्यदर्पणे तु—

"यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः।
श्लेषेण वा समासोक्त्या नान्दी पत्रावली तु सा।" इति

नान्द्या विशेषसंज्ञाभिहिता। तदुदाहरणं च "यासृष्टिः स्रष्टु"रिति बोध्यम्।

( ३१ ) सुप्तिङन्तरूपाष्टपदाद्द्वादशपदयोरुदाहरणद्वयं दर्शयति—अष्टपदेति। निष्प्रत्यूहम्' इत्यादीति। सम्पूर्णपद्यं तु—

निष्प्रत्यूहमुपास्महे भगवतः कौमोदकी लक्ष्मणः
कोकप्रीतिचकोरपारणपटुज्योतिष्मतीलोचने।
याभ्यामर्धविबोधमुग्धमधुरश्रीरर्धनिद्रायितो
नाभीपल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः॥

अपि च—

विरमति महाकल्पे नाभीपथैकनिकेतनस्त्रिभुवनपुरः शिल्पी यस्य प्रतिक्षणमात्मनः।
किमधिकरिणा कीदृक्कस्य व्यवस्थितिरित्यसावुदरमविशद्द्रष्टुं तस्मै जगन्निधये नमः॥

इति शार्दूलविक्रीडितहरिणीवृत्ताभ्यामष्टपदानान्दी सम्पद्यते। नच निष्प्रत्यूहमित्यत्र विभक्त्यन्तपदानां द्वादशत्वमप्यस्ति तत्कथमष्टपदत्वं दर्शितमिति वाच्यम् उभयसत्त्वेऽपि अष्टपदत्वानपायात् तद्दर्शनौचित्यात्।

( ३२ ) द्वादशपदां नान्दीमुदाहरति—शिरसीति। स्मरारौ शङ्करे। शिरसि मूर्ध्नि धृता स्थापिता सुरापगा गङ्गा येन तादृशे सति, अरुणा सपत्न्या गङ्गायाः दर्शनात् कोपेन रक्तवर्णा मुखेन्दुरुचिर्मुखचन्द्रकान्तिर्यस्याः सा तथोक्ता, अथानन्तरं स्वकान्ते शङ्करे चरणयुगे आनते अवनते सति स्मितेन ईषद्धास्येन सरसा अनुरागार्द्रा गिरीन्द्रपुत्री शैलराजदुहिता पार्वती, भवतः सभापतेः भूतिहेतुः सम्पद्दात्री अस्तु भवतु। इन्दुपदोपन्यासादस्याश्चन्द्रशंसित्वं ज्ञेयम्।

( ३३ ) एवमिति। अन्यत्र श्लोकपादरूपपदविषये अवान्तरवाक्यरूपपदविषये च एवं नान्द्या उदाहरणमूहनीयमित्यर्थः।

तत्र श्लोकपादरूपद्वादशपदा नान्दी वेणीसंहारनाटके तत्र "निषिद्धै"रित्यादिना (क)

यामाहुः सर्वबीजप्रकृतिरिति यथा प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रसन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः॥" इति।

( क ) तत्र श्लोकत्रयं यथा—

"निषिद्धैरप्येभिर्लुलितमकरन्दो मधुकरैः करैरिन्दोरन्तश्छुरित इव सम्भिन्नमुकुलः।
विधत्तां सिद्धिं नो नयनसुभगामस्य सदसः प्रकीर्णः पुष्पाणां हरिचरणयोरञ्जलिरयम्॥ १॥

( ३४ ) एतन्नान्दीति कस्यचिन्मतानुसारेणोक्तम् ।

( ३५ ) वस्तुतस्तु 'पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गम्' इत्यन्ये ।

श्लोकत्रयेण द्वादशपादत्वात् । श्लोकपादरूपाष्टापदा नान्दी मालतीमाधवप्रकरणे तत्र श्लोकद्वयेनाष्टपादत्वात् । अवान्तरैकैकवाक्यरूपाष्टापदा नान्दी "या सृष्टिः स्रष्टु" रित्यादिश्लोकस्याष्टवाक्यघटितत्वात् । अवान्तरैकैकवाक्यरूपद्वादशपदा "नमोऽस्तु सर्वदेवेभ्य" इत्यादिभरतश्लोकस्य द्वादशवाक्यघटितत्वात् ।

विशेष्यतया प्रधानत्वात् प्रधानत्वेनैव च देवादीनामानन्दकारित्वाच्चात्र नान्दीत्वेन स्तुतिरित्येतावन्मात्रमेव ग्राह्यम् "आशीर्वचनसंयुक्तेति" "मङ्गल्येत्यादिकं च सम्भवप्रदर्शनार्थमुक्तमित्यवगन्तव्यम् । तेन केवलस्तुतिरूपत्वेपि प्रबोधचन्द्रोदये महावीरचरितादौ च नाटके नान्दीलक्षणं सङ्गच्छते ।

( ३४ ) ननु "देवद्विजनृपादीनां स्तुतिर्नान्दी प्रकीर्त्तिता" इत्येव नान्द्या लक्षणं विधीयतामलम् "आशीर्वचनसंयुक्ता" इति विशेषणमुक्त्वा पुनः स्तुतिमात्रस्य नान्दीत्वाभिधानमित्यत आह—एतन्नान्दीति । आशीर्वचनरूपा नान्दीत्यर्थः । कस्यचिन्मतानुसारेणेति "रङ्गविघ्नोपशान्तये" इत्यनेन पूर्वरङ्गस्य रङ्गविघ्नोपशान्तफलस्याभिहितत्वात् "तथाप्यवश्यं कर्त्तव्यनान्दीविघ्नोपशान्तये" इति तदर्थान्मुनीतरनाट्यकारिकाकृतः कस्यचिन्मताभिप्रायेणाभिहितमित्यर्थः । नास्माकं तदिष्टं महाकविनिबन्धेष्वेवाव्याप्तेरिति कस्यचित्पदेनास्वरसः सूचित इति भावः ।

( ३५ ) ननु त्वन्मते महाकविनिबन्धेष्वेव स्तुतिरूपादिकं किं नामकं तादृशं वाक्यमित्याशयेन स्वमत दर्शयति—वस्तुतस्त्विति । रङ्गद्वाराभिधानं रङ्गद्वारनामकम्, पूर्वरङ्गस्य पूर्वोक्तस्वरूपस्य अङ्गं स्वरूपनिर्वाहकम्, पूर्वरङ्गस्य रङ्गद्वारमेवाङ्गं न तु नान्दीत्यर्थः "अन्ये" इति बहुसम्मतत्वेन स्वस्यापि स्वरसः सूचितः । अत्रेदं बोध्यम्—"निष्प्रत्यूहमुपास्महे" इत्यादौ नान्दीलक्षणसमन्वयो भवतीत्येवैव नान्दीति न सर्ववादिसम्मतं मतम्, पूर्वरङ्गस्य रङ्गद्वारनाम्नोऽङ्गस्यात्र यथार्थतया विद्यमानत्वात् अत एव—

"एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः
कान्तासम्मिश्रदेहोऽप्यविषय उदितो यः परस्माद् यतीनाम् ।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥"

इत्यादौ अष्टपदाद्वादशपदान्यतमाया नान्द्या लक्षणासद्भावेऽपि न क्षतिरिति ।

---

कालिन्द्याः पुलिनेषु केलिकुपितामुत्सृज्य रासे रसं
गच्छन्तीमनुगच्छतोऽश्रुकलुषां कंसद्विषो राधिकाम् ।
तत्पादप्रतिमानिवेशितपदस्योद्भूतरोमोद्गते-
रक्षुण्णोऽनुनयः प्रसन्नदयितादृष्टस्य पुष्णातु वः ॥ २ ॥
दृष्टः सप्रेम देव्याः किमिदमिति भयात्सम्भ्रमाच्चासुरीभिः
शान्तान्तस्तत्त्वसारः सकरुणमृषिभिर्विष्णुना सस्मितेन ।
आकृष्यास्त्रं सगर्वैरुपशमितवधूसम्भ्रमैर्दैत्यवीरैः
सानन्दं देवताभिर्मयपुरदहने धूर्जटिः पातु युष्मान् ॥ ३ ॥

( ३६ ) यदुक्तम्--

'यस्मादभिनयो ह्यत्र प्राथम्यादवतार्यते ।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ॥' इति ।

( ३७ ) उक्तप्रकारायाश्च नान्द्या रङ्गद्वारात्प्रथमं नटैरेव कर्तव्यतया न महर्षिणा निर्देशः कृतः ।

( ३८ ) कालिदासादिमहाकविप्रबन्धेषु च--

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥

( ३९ ) एवमादिषु नान्दीलक्षणायोगात्

( ३६ ) उक्तार्थे प्राचां सम्मतिं दर्शयति—यदुक्तमिति । यस्मादभिनय इति । यस्मात् अत्र रङ्गशालायां प्राथम्यात् । आशीर्वचनतोऽपि प्राथम्यादित्यर्थः । आरम्भ विधायाभिनयः अवतार्य्यते नटः प्रदर्श्यते, अनेन रङ्गद्वाराभिहितत्वे हेतुः प्रदर्शितः । अतो वाचा देवादीनां स्तुत्यादिरूपवचनेन अङ्गैः करशिरःसंयोगादिरूपाभिरवयवचेष्टाभिश्च यः अभिनयः स एवात्मा स्वरूपं यस्य तत्तथोक्तं रङ्गस्य रङ्गक्रियमाणस्याभिनयस्य द्वारमारम्भः पूर्वरङ्गाङ्गत्वं रङ्गद्वारस्य न तु नान्द्या इत्यर्थः । एवञ्च नाट्याचार्य्येण मुनिना भरतेनैव रङ्गद्वाराभ्युपगमान्ममतमेव समीचीनमिति भावः ।

( ३७ ) नान्द्याः पूर्वरङ्गानङ्गत्वे महर्षेस्तथात्वाप्रदर्शनमपि साधकमिति दर्शयति—उक्तप्रकाराया इति ।

रङ्गद्वारात् उक्तप्रकारपूर्वरङ्गाङ्गात् नटैरेव नर्त्तकैरेव काव्यत्वान्तःपातित्वाभावादित्यर्थः महर्षिणा भरतेन । निर्देशविधेयतया निर्दिष्टः आदेश इत्यर्थः । "नान्दी शुष्कावकृष्टा च रङ्गद्वारं-तथैव च "इत्यादिना पूर्वरङ्गाङ्गभूतरङ्गद्वारात्पूर्वमेव नान्द्या उद्देशः कृतः । तथाच रङ्गद्वारात्पूर्वमेव नान्दी सा निर्विघ्नं ग्रन्थसमाप्तये कविनापि क्रियते इति भावः । एवं च "महर्षिणा नान्दीमात्रस्यैवानिर्दिष्टत्वात्" इत्यादि केषाञ्चिदुक्तिरनादरणीयैव ।

( ३८ ) द्वादशपदत्वादिविशेषणयुक्तायास्तस्या व्यभिचारं दर्शयितुमुत्थापयति—कालिदासादीति । एवमादिषु नान्दीलक्षणायोगाच्चेति चकारस्यान्वयः । नच तेषामलक्ष्यत्वमेवाभिधातुं शक्यते, महाक विपदेन तेषां प्रबन्धमात्रस्यैव महाप्रामाणिकत्वाभ्युपगमात् ।

( ३९ ) वेदान्तेष्विति । कालिदासरचितविक्रमोर्वश्यां पद्यमिदम् । वेदान्तेषु उपनिषत्सु रोदसी द्यावापृथिव्यौ "भूद्यावौ रोदस्यौ रोदसी च ते" इत्यमरः, व्याप्य स्थितं विद्यमानं यं एकपुरुषम् "सर्वं खल्विदं ब्रह्म "नेह नानास्ति किञ्चन" एकमेवाद्वितीयं ब्रह्म" इत्यादिश्रुतिप्रतिपादितमद्वितीयं ब्रह्म आहुः वेदान्तिन इति शेषः । यस्मिन् ईश्वर इति अनन्यविषयस्तन्मात्रप्रतिपादकः शब्दः यथार्थाक्षरः ईश्वरशब्दः "ईश ऐश्वर्ये" इत्यस्माद्धातोः "स्थेशभासपिसकसो वरच्" इति पा. सूत्रेण वरचि कृते सिद्धत्वात् सर्वेषामेव ईशानशीलत्वात् ऐश्वर्य्ययोगरूपोऽर्थस्तस्मिन्नेव तात्त्विक इत्यर्थः । अन्तर्मनसि नियमिताः

( ४० ) उक्तं च—'रङ्गद्वारमारभ्य कविः कुर्यात्–' इत्यादि ।

( ४१ ) अत एव प्राक्तनपुस्तकेषु 'नान्द्यन्ते सूत्रधारः' इत्यनन्तरमेव 'वेदान्तेषु–' इत्यादि श्लोकले(लि)खनं दृश्यते । यच्च पश्चात् 'नान्द्यन्ते सूत्रधारः' इति ले(लि)खनं तस्यायमभिप्रायः—नान्द्यन्ते सूत्रधार इदं प्रयोजितवान्, इतःप्रभृति मया नाटकमुपादीयत इति कवेरभिप्रायः सूचित इति ।

प्राणायामविधानेन परिचालिताः प्राणादयः प्राणापानादयः पञ्चवायवो यैस्तस्तथोक्तैः, मुमुक्षुभिः मुक्तिमिच्छुभिर्जनैः यश्च मृग्यते अन्विष्यते, स्थिरया दृढया भक्त्या योगेन च सुलभः, स स्थाणुर्महेश्वरः वो युष्माकं नि निश्चितं श्रेयो यस्मिन् तस्मै मोक्षायेत्यर्थः "निःश्रेयसं तु कल्याणमोक्षयोः शङ्करे पुमान्" इति मेदिनी, अस्तु भवतु । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक् (१९८ पृ.)

( ३९ ) एवमादिष्विति । आदिपदात् भवभूतिप्रभृतिरचितमालतीमाधवादिषु नान्दीलक्षणायोगात् द्वादशपदत्वाष्टपदत्वान्यतराभावेन तल्लक्षणाभावादव्याप्तेरित्यर्थः । तथाच "वेदान्तेषु" इत्यादि रङ्गद्वारमेव, न नान्दीति, तत्र नान्दीलक्षणागमने न क्षतिरिति भावः।

( ४० ) ननु नान्द्याः कविकरणपक्षे पूर्वरङ्गस्य रङ्गद्वाराभिधानाङ्गत्वे तस्य रङ्गविघ्नोपशान्तये नटकर्मत्वाभावात् कथं नाटकारम्भत्वमित्यत आह—उक्तं चेति । "महर्षिणा" इति पूर्वेणान्वयः । एवञ्च कविः स्वरचनोपद्रवनिर्विघ्नाय नाटकस्य रङ्गद्वारात्मकं मङ्गलं विधत्ते नटास्तु स्वाभिनयनिरुपद्रवाय तदेव पठन्तीति नाटकारम्भत्वे तस्या न काचिदनुपपत्तिरिति भावः । तथाच रङ्गद्वाररूपव नान्दी महर्षेरभिमतेति बोध्यम् ।

( ४१ ) अत एवेति । "वेदान्तेषु" इत्यादौ कविकर्तव्यरङ्गद्वारत्वाभ्युपगमादेव, यद्वा उक्तस्थले नान्दीत्वाभावादेवेत्यर्थः । नान्द्यन्ते रङ्गद्वाररूपनान्द्यन्त इत्यर्थः यच्च पश्चादिति । "वेदान्तेषु" इत्यादिश्लोकस्य पश्चादित्यर्थः । अयमभिप्रायः परिवर्त्तिलेखकस्येति शेषः ।

नान्द्यन्ते रङ्गद्वाररूपनान्द्यते सूत्रधार इदं "वेदान्तेषु" इत्यादिरूपम् । इतःप्रभृति "वेदान्तेष्वि" त्यादि, मया कविना नाटकम् उपादीयते गृह्यते विरचितुं प्रारभ्यत इत्यर्थः, इत्येवम्—सूचितः नान्द्यन्त इत्यादिना कविनैव सूचित इत्यर्थः । तथाच यत्र नान्द्यस्ति रङ्गद्वारं नास्ति तत्र तन्त्रेण सैव रङ्गद्वारम् । यत्र रङ्गद्वारमेवास्ति न नान्दी तत्र सा फलवलादनुमेया । यथा" "वेदान्तेषु" इत्यादौ सूत्रधारस्यावश्यकर्तव्यत्वेन नान्दीपाठस्तत्रानुमेयः, यत्र स्वारम्भे बहवः श्लोकास्तत्र श्लोकद्वयं नान्दी अपरे रङ्गद्वारमिति वागीशादयः ।

काव्येन्दुप्रकाशे तु—

"नीलीशुद्धेति भेदेन सा नान्दी द्विविधा भवेत् ।
उपादानं वर्णनं वा भवेद्यत्रेन्दुसूर्ययोः ।
सा नीली स्यात्तदन्या तु शुद्धेति परिगीयते ॥"

इति तद्भेदः प्रदर्शितः । तत्र पुष्पवदुपादानेन "या सृष्टिः स्रष्टराद्या" इति नीली । तद्वर्णनेन "निष्प्रत्यूहम्" इत्यपि नीली । "वेदान्तेषु यमाहुरि"ति शुद्धेति ज्ञेयम् । अत्रेदं बोध्यम्—यथा "आशीर्वचनसंयुक्ता" इत्यादिकं परमतानुसारेण नान्द्या लक्षणमभि-

( ४२ ) पूर्वरङ्गं विधायैव सूत्रधारो निवर्तते ।
प्रविश्य स्थापकस्तद्वत्काव्यमास्थापयेत्ततः ॥ २६ ॥
दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः ।
सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा ॥ २७ ॥

( ४३ ) काव्यार्थस्य स्थापनात्स्थापकः । तद्वदिति सूत्रधारसदृशगुणाकारः । इदानीं पूर्वरङ्गस्य सम्यक्प्रयोगाभावादेक एव सूत्रधारः सर्वं प्रयोजयतीति व्यवहारः । स स्थापको दिव्यं वस्तु दिव्यो भूत्वा, मर्त्यं मर्त्यो भूत्वा, मिश्रं च दिव्यमर्त्ययोरन्यतरो भूत्वा सूचयेत् । वस्तु इतिवृत्तम् । यथोदात्तराघवे--

( ४४ ) रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-
स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम् ।

धाय स्वयं तल्लक्षणमुपेक्षितं तत्र बीजन्तु कविकर्त्तव्यतापदेशस्यैवालङ्कारिकाणामुद्देश्यत्वात् नान्द्याश्च कविकर्तृकरचनायां नियमाभावादिति ।

( ४२ ) पूर्वरङ्गानन्तर कर्त्तव्यमाह—पूर्वरङ्गमिति । सूत्रं धरतीति सूत्रधारः ।

नाट्योपकरणादीनि सूत्रमित्यभिधीयते ।
सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते ॥

इत्युक्त्या सूत्रं प्रयोगानुष्ठान धारयतीति सूत्रधारः ।

अन्यच्च—

नाटकीयकथासूत्रं प्रथम येन सूच्यते ।
रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते ॥ इति ।

मातृगुप्ताचार्यस्तु लक्षणमेतस्येत्थमाह—

चतुरातोद्यनिष्णातोऽनेकभूषासमावृतः । नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥
नानागतिप्रचारज्ञो रसभावविशारदः । नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वितः ॥
छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः । तत्तद्गीतानुगलयकलातालावधारणः ॥
अवधाय प्रयोक्ता च योक्तॄणामुपदेशकः । एव गुणगणोपेतः सूत्रधारोऽभिधीयते ॥ इति ।

निवर्त्तते नाट्यशालान्निर्गच्छति । तद्वत् सूत्रधारवदित्यर्थः । काव्यं नाटकरूपम्, आस्थापयेत् सभापूजादिपुरस्सरं सूचयेत् । दिव्य स्वर्गीयं मर्त्यं मर्त्यलोकीयञ्चेति दिव्य-मर्त्ये । तथा च सः स्थापकः तद्रूपो दिव्यरूपः सन्, दिव्यं वस्तु, बीजं मुखं पात्रं वा सूचयेत्, मर्त्यरूपो हि मर्त्यलोकीयं वस्तु बीजादिकं सूचयेत् । तथा तयोर्दिव्यमर्त्ययोरन्यतरः मिश्रं दिव्यं मर्त्यं च वस्तु बीजादिकं सूचयेत् ।

( ४३ ) स्थापकपदस्य योगलभ्यमर्थं दर्शयति—काव्यार्थस्येति । सूत्रधारसदृशगुणाकार इति । तथाच भरतः—"स्थापकः प्रविशेत्तत्र सूत्रधारगुणाकृतिः" इति । इतिवृत्तम् अभिनेतव्यवृत्तान्तः ।

( ४४ ) वस्तुरूपं दर्शयति—राम इति । रामो गुरोः पितुर्दशरथस्येत्यर्थः आज्ञाम् आदेशं मालां स्रजमिव मूर्ध्नि शिरसि निधाय काननं महावनम् अगात् गतवान् भरतेन कैकेयिसुनुना तद्भक्त्या रामभक्त्या मात्रा कैकेय्या सहैव अखिलं समग्रं राज्यम् उज्झितं परित्यक्तम् । अनुगतौ तौ प्रसिद्धौ पुराणे श्रुतौ सुग्रीवविभीषणौ परामत्यन्तां सम्पदं

तौ सुग्रीवविभीषणावनुगतौ नीतौ परामुन्नतिं
प्रोत्सिक्ता दशकंधरप्रभृतयो ध्वस्ताः समस्ता द्विषः ॥

( ४५ ) बीजं यथा रत्नावल्याम्--

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥

( ४६ ) अत्र हि समुद्रे प्रवहणभङ्गमग्नोत्थिताया रत्नावल्या अनुकूलदैवलालितो वत्सराजगृहप्रवेशो यौगंधरायणव्यापारमारभ्य रत्नावलीप्राप्तौ बीजम् ।

( ४७ ) मुखं श्लेषादिना प्रस्तुतवृत्तान्तप्रतिपादको वाग्विशेषः । यथा—

(४८) आसादितप्रकटनिर्मलचन्द्रहासः प्राप्तः शरत्समय एष विशुद्धकान्तिः ।
उत्खाय गाढतमसं घनकालमुग्रं रामो दशास्यमिव संभृतबन्धुजीवः ॥

---

राज्यप्राप्तिरूपां रामेण बालिं रावणं च मारयित्वेति शेषः । तथा प्रोत्सिक्ता उद्धताः दशकन्धरप्रभृतय दशाननादयः समस्ताः समग्राः द्विषः रिपवो ध्वस्ता रामेणैव विनाशिताः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तमेव ॥ ( १६८ पृ० )

अनेनाभिनेतव्यसमस्तवस्तुजालस्य स्थापकेन सामान्यतः सूचितम् ।

( ४५ ) बीजम् अभिनेतव्यार्थमूलमङ्कुरः । द्वीपादन्यस्मादिति । दूरस्थेनाऽपि वरेण स्वीयकन्यापरिणयस्य भावित्वेन निजपत्नीमाश्वासयतः स्थापकस्य सूत्रधारस्य चोक्तिरियम् । अभिमुखीभूतः सम्मुखीभूत अनुकूल इति यावत् , विधिर्दैवम् "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः, अन्यस्मात् द्वीपात् द्विर्गता आपो यस्मिन्निति द्वीपं "द्व्यन्तरुपसर्गेभ्योऽप ईत्" इतीदादेशः इतरस्मादन्तरीपादपि, जलनिधेः जलानि निधीयन्तेऽस्मिन्निति जलनिधिः "कर्मण्यधिकरणे च" इति पा० सू० कि प्रत्ययः तस्य समुद्रस्य मध्यादपि, दिशः अन्ताच्छेषभागादपि च अभिमतम् इष्टं वस्तु आनीय झटिति घटयति शीघ्रं मेलयति । आर्याछन्दः-तल्लक्षणन्तूक्तम् ।

अत्र स्थापकनटो मर्त्यरूपो भूत्वा बीजं सूचयति ।

( ४६ ) बीजसूचनं स्वयमेवोपपादयति—अत्रेति । हि तथाहि प्रवहणस्य यानस्य भङ्गेन नाशेन आदौ मग्नाः पश्चाच्चोत्थिता तस्यास्तथोक्तायाः । रत्नावल्यास्तन्नाम्न्याः रत्नावलीनाटिकानायिकायाः, अनुकूलदैवेन, अनुकूलविधिना लालितः संयोजितः, वत्सराजस्योदयनस्य गृहप्रवेशः, अस्य बीजमित्यत्रान्वयः । योगन्धरायणस्य तन्नामकस्य महासचिवस्य, व्यापारं संयोजनाम् । रत्नावलीप्राप्तौ उदयनस्य रत्नावलीप्राप्तिं प्रति ।

( ४७ ) मुखं श्लेषादिनेति । आदिपदेनान्यापदेशसमासोक्तप्रस्तुतप्रशंसादेः परिग्रहः । प्रस्तुतः प्रकरणप्राप्तोऽसौ वृत्तान्तसाम्यप्रतिपादक इति तथोक्तः ।

( ४८ ) आसादितेत्यादि । शरत्पक्षे रामपक्षे च क्रमशोऽर्थोऽवगन्तव्यः । तथाहि-शरत्पक्षे-आसादितः प्राप्तः प्रकटो व्यक्तीभूतनिर्मलचन्द्र एव शशो येन सः, रामपक्षे-तु आसादितो रावणधार्थं काले एव धृतः प्रकटो लक्षणया, निकटः निर्मलः शोणितः चन्द्रहासः खड्गो येन सः । "चन्द्रहासोऽतिमात्रके । दशग्रीवकृपाणे च" इति हैमः। विशुद्धा घनव्यपगमात् उज्ज्वला कान्तिर्नक्षत्रादिज्योतिर्यत्र सस्तथोक्तः, "विशुद्धकान्तः" इति पाठस्तु मनोहरः ।

पात्रं यथा शाकुन्तले—

( ४९ ) तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥

( ५० ) रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।

तथाहि-विशुद्धो निर्मलः कान्तः कमनीयो यः सः, शरत्समये अगस्त्योदयेन जलाशयाः स्वच्छा रमणीयाश्च भवन्तीति भावः । रामपक्षे—विशुद्धा शत्रुक्षयात् विकसिता कान्तिर्मुखादिशोभा यस्य सः, "शोभा कान्तिर्द्युतिश्छविः" इत्यमरः, यद्वा-वह्नौ विशुद्धा कान्ता पत्नी यस्य तादृशः, तथा सम्भृताः पुष्पपूर्णाः बन्धुजीवाः बन्धूका यत्र तादृशः, पक्षे—सम्भृता जनिता बन्धूनां रणपतितवानराणां जीवा जीवनानि अमृतवृष्ट्या येन तादृशः । एष शरत्समयः, रामो दशास्यं दशाननमिव, गाढतमसं मेघाच्छन्नाद्गाढान्धकारम् , प्रकृष्टतमोगुणजनिताज्ञानं च, "राहौ ध्वान्ते गुणभिदि मौढ्ये शोके तमो मतम्" इति गोपालः । उग्रं भयदायकम् , घनकालं वर्षासमयम् , गाढश्यामवर्णं च, उत्खाय उत्पाट्य उन्मील्य वा, हत्वा च प्राप्त आगतः । वसन्ततिलकाछन्दस्तल्लक्षणन्तूक्त प्राक् (१९३पृ.)

अत्र चन्द्रहासादिपदश्लेषेण प्रस्तुतरामचरित्ररूपो वृत्तान्तः सूचितः । परन्तु नायकनामसूचनात् पात्रसूचनमपि संभवति । तथा चास्य पात्रासङ्कीर्णोदाहरणं यथानर्घराघवे-

"यान्ति न्यायप्रवृत्तस्य तिर्य्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥"

अत्र वानराणां रामसाहाय्यम् , विभीषणेन रामत्यागश्च श्लेषेण सूचितः । आदिपदग्राह्योऽन्यापदेशस्तूदाह्रियते यथातारावतीचन्द्रशेखरनाटके—

"उद्यते शशिनि पूर्वभूधरं राजितं कल्पचन्द्रशेखरम् ।
एष यास्यति शशी महार्णवं तातपादमिव बन्दनमिच्छुः ॥"

अत्र हि चन्द्रस्य तातमहार्णवगमनान्यापदेशेन प्रस्तुतवस्तुनश्चन्द्रशेखरनृपस्य वने तपः प्रसक्तस्य तातपादबन्दनार्थगमनसूचनम् । एवं समासोक्त्यादावप्यनुसन्धेयम् ।

( ४९ ) सूत्रधारेणाभिनेतव्यवस्तु विस्मृतं तत्र विस्मरणकारणं किमिति तत्प्रतिपादयति—तवास्मीति । हारिणा मनोहरेण चित्ताकर्षकेनेति यावत् , दूरमपहारिणा च तव भवत्या ( नट्याः ) गीतरागेण गानस्वरेण, अतिरंहसा वेगातिशयशालिना सारङ्गेण हरिणेन "चातके हरिणे पुंसि सारङ्गः" इत्यमरः, एष राजा दुष्यन्त इव प्रसभं हठात् हृत आकृष्ट अस्मि अहमर्थकाव्ययोऽयं शब्दः । राजपक्षे-दूरं प्रच्यावित इत्यर्थः । पथ्यावक्त्रं छन्दः ।

अनेन दुष्यन्तरूपपात्रप्रवेशः सूचितः ।

( ५० ) (क)रङ्गं प्रसाद्येति । स स्थापकः भारतीं वृत्तिम् आश्रितः अवलम्बमानः सन्

( क ) भावप्रकाशिकायामयमेवार्थः प्रकारान्तरेणोक्तः—

"इत्थं रङ्गविधानस्य सम्बन्धादिप्रसिद्धये । गोत्रं नाम च बध्नीयात् पूजावाक्यं समासदाम् ॥
वाञ्छाकलापः प्रथमं कलाविधिरनन्तरम् । वाञ्छा शून्या न दृश्यन्ते व्यवहाराः कथञ्चन ॥
वाञ्छाकलापस्तु कवेरभीष्टार्थप्रकाशनम् । स्वाभिधेयगतत्वेन स द्विधा परिपठ्यते ॥
स्वगतं तु स्वगोत्रादिस्वीयकीर्त्तिप्रकाशनम् । अभिधेयगतं यत्तत्काव्यनाम्ना प्रकाशनम् ॥" इति ।

**रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्तयेत् ॥ २८ ॥**
**ऋतुं च कंचित्प्रायेण भारतीं वृत्तिमाश्रितः ।**

स स्थापकः । प्रायेणेति । क्वचिदृतोरकीर्तनमपि यथा–रत्नावल्याम् । भारती-वृत्तिस्तु—

**( ५१ ) भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः ॥ २९ ॥**

काव्यार्थो दृश्यकाव्यवृत्तान्तः । तत्सूचकैः बोधकैः मधुरैः श्लोकैः रङ्गं नाट्यालऽधःस्थं सामाजिकगणंप्रसाद्य प्रीणयित्वा, रूपकस्य अभिनेयदृश्यकाव्यस्य तत्कवेश्च आख्यां संज्ञां तथा तस्य कवेर्गोत्रं कुलम् आदिपदात्तदीयनिवासस्थानादिकं च प्रायेण वसन्तादिकं ऋतुं च कीर्त्तयेत् कथयेत् । अत्र श्लोकैरिति बहुवचनमविवक्षितम् (क) आद्यर्थं वा तेन गद्यस्यापि सङ्ग्रहः ।

अत्रायमाशयः—प्रथमतोऽल्पं महद्वा सभाप्रशंसनं विधेयम् । अनन्तरं गद्येन पद्येन गद्यपद्योभयेन वा रूपकस्य नाम काव्यार्थसूचकेन कीर्त्तनीयम् । तथाच रूपकस्य तन्नामैव तथाविधं कर्त्तव्यम् , येन यथा तद्बोधनीयं वस्तु सहृदयहृदयगोचरतां सम्पद्येतेति फलितम् । तच्च रूपकं येन कृतं तस्य कवेर्नाम तत्समयेऽप्रसिद्धौ गोत्रादि अन्यथा यथाकामं बोधनीयम् । अत एव शकुन्तलादौ कविगोत्रादेरकीर्त्तनम् , उत्तररामचरितमुद्राराक्षसादौ च तत्कीर्त्तनं सङ्गच्छेते । अथ च तयोः कीर्त्तनं प्रायिकमित्यस्य स्फुटमुक्तत्वेनोत्तररामचरितादौ तदभावेऽपि न क्षतिः । एवमप्यद्येत्यादिना प्रायस्तस्य सूचनं सर्वत्र दृश्यते तद्यथा—उत्तररामचरिते—"अद्य खलु भगवतः कालप्रियानाथस्य यात्रायामार्यमिश्रान् विज्ञापयामि" इति । रत्नावल्यामपि-"अद्य वसन्तोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तः" इति । प्रबोधचन्द्रोदये च—"तदद्य राज्ञः श्रीकीर्त्तिवर्मणः पुरस्तादभिनेतव्यं भवता" इति। एवमन्यात्राऽप्यूहनीयमिति तत्त्वविदः ।

दशरूपके तु—

रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।
ऋतुं कञ्चिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ इति ।

रङ्गस्य प्रशस्तिं काव्यार्थानुगतार्थैः कृत्वा—

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवा पातु वः ॥

इत्यादिभिरेव भारतीं वृत्तिमाश्रयेत् इत्याह ।

( ५१ ) ननु का नाम भारतीवृत्तिरित्यत आह—भारतीवृत्तिस्त्विति । भारतीति । नटाश्रयः पुरुषविशेषप्रयोज्यः । स्त्रीवाचां प्राकृतत्वात् पुंसामप्यधमानां वचः प्राकृतत्वात् कारिकायां प्रायपदोपादानम् ।

( क ) अविवक्षितत्वञ्च—अर्थबोधजनकत्वप्रकारकमूलकृदिच्छाविषयत्वाभावः ।

( ५२ ) संस्कृतबहुलो वाक्प्रधानो व्यापारो भारती ।

**( ५३ ) तस्याः प्ररोचना वीथी तथा प्रहसनामुखे ।**

**अङ्गान्यत्रोन्मुखीकारः प्रशंसातः प्ररोचना ॥ ३० ॥**

प्रस्तुताभिनयेषु प्रशंसातः श्रोतॄणां प्रवृत्त्युन्मुखीकरणं प्ररोचना । यथा रत्नावल्याम्—

( ५४ ) श्रीहर्षो निपुणः कविः, परिषदप्येषा गुणग्राहिणी,
लोके हारि च वत्सराजचरितं, नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं, किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥

---

( ५२ ) संस्कृतबहुल इति । प्रायपदस्यार्थो बहुल इति । एवञ्चाल्पाल्पप्राकृतभाषासंयुतापि भवेदिति सूचिता । वाक्प्रधान इति । एतेनाल्पाल्पाङ्गिकाहार्यसात्त्विकाभिनयप्रकारोऽपि सम्भवितुमर्हतीति सूचितम् । व्यापारोऽभिनयः । इयं च भारती ऋग्वेदोत्पन्ना तथा च भरतः—"ऋग्वेदाद्भारतीवृत्ति"रिति । अस्याः स्वरूपं किञ्चिद्विशदीकृत्योक्तं तेनैव, तथाहि—

या वाक्प्रधाना पुरुषप्रयोज्या स्त्रीवर्जिता संस्कृतवाक्ययुक्ता ।
स्वनामधेयैर्भरतैः प्रयुक्ता सा भारती नाम भवेत्तु वृत्तिः ॥ इति ।

( ५३ ) भारतीवृत्तेर्भेदं दर्शयति—तस्या इति । भारती वृत्तेरित्यर्थः । प्ररोचनावीथी, प्रहसनम् , आमुखञ्च एतान्यङ्गानि । अत्र एषु चतुर्षु अङ्गेषु मध्य इत्यर्थः । (क)प्रशंसातः कविकाव्यसभ्यादिना प्रस्तुतार्थप्रशंसनेन, उन्मुखीकारः श्रोतॄणामभिनयदर्शनादौ प्रवृत्त्यौपयिकेच्छाजननम् । प्ररोचना नाम प्रकर्षेण रुच्युत्पादनं यस्यां सेत्यन्वर्थेयं संज्ञा ।

( ५४ ) श्रीहर्ष इति । श्रीहर्षस्तत्संज्ञकः, निपुणः प्रवीणः "प्रवीणे निपुणाभिज्ञः" इत्यमरः, कविरेतन्नाटिकाया निर्माता । यद्यपि धावक एवात्र कविस्तथापि राज्ञः श्रीहर्षस्य प्रीतये तत्रैव कवित्वारोपः कृतः । एषा परिषत् सभापि, परिषदादिशब्दाः स्थलविशेषे तत्रत्यपुरुषविशेषे च, "समज्या परिषद्गोष्ठी सभा समिति संसदः, "चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा" इत्युभयविधप्रयोगदर्शनात् । प्रकृते च तत्स्थाः पुरुषा ग्राह्याः "गुणग्राहिणी"ति विशेषणोपादानात् । गुणग्राहिणी गुणान् गृह्णाति तच्छीलेति ताच्छील्ये णिनिः । लोके जनसमाजे वत्सराजस्य उदयनस्य "उदयनस्तु वत्सराजे" इति हैमः, चरितञ्च हारि मनोहरम् , मन आकर्षकमिति यावत् अस्तीति शेषः । वयं नाट्ये अभिनयकार्ये दक्षा निष्णाताश्च, वयमिति 'त्यदादीनी'त्येकशेषः । एषां मध्ये एकैकमपि कविनिपुणत्वादिकं वस्तु, एकैकमित्यत्र "एकं बहुव्रीहिवत्" इत्यनेन बहुव्रीहिवद् भावः । इह प्रकृतनाटिकाभिनयविषये वाञ्छितफलप्राप्तेः सकलसभ्यजनप्रीत्युत्पादनरूपाभिलषित-

---

(क) प्रशंसा च द्विविधा तदुक्तम्—

प्रशंसा च द्विधा ज्ञेया चेतनाचेतनाश्रया ।
चेतनास्तु कथानाथकविसभ्यनटाः स्मृताः ॥
अचेतनौ देशकालौ कालो मधुशरन्मुखः । इति ।

( ५५ ) वीथीप्रहसने वक्ष्येते ।

**( ५६ ) नटो विदूषको वापि पारिपार्श्वक एव वा ।**
**सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ ३१ ॥**
**चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।**
**आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥ ३२ ॥**

---

फललाभस्य पदं स्थानं "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः, किं पुनरधिकमुच्यत इत्यभिप्रायः, मद्भाग्यस्य ममादृष्टस्य उपचयो वृद्धिस्तस्मात्तथोक्तात् अत्र हेतौ पञ्चमी। अयं सर्वो गुणानां निपुणकवित्वादीनां प्रीत्युत्पादकधर्माणां गणः समूहः समुदितः अद्यैकत्रितः सन् प्राप्तः। शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तमेव (१६८ पृ०)

अत्र सर्वेषां प्रशंसया प्रकृतनाटिकाभिनये श्रोतॄणां प्रवृत्युन्मुखीकरणात् प्ररोचना।

( ५५ ) वीथीप्रहसने इति। तद्द्वयं मुखरूपकविशेषौ नाटकप्रभेदौ। स्वप्रसङ्गे वक्ष्येते प्रतिपादयिष्येते। तौ च संस्कृतेनैवेति तद्द्वयं भारत्या अङ्गम्।

( ५६ ) अथावशिष्टमामुखं किन्तावदित्यपेक्षायामाह—नट इति। 'तस्मात्किञ्चिदूनो नटः" इति विवरणात्। "नटी विदूषको वापि नटो वा पारिपार्श्विकः" इति मन्दारमरन्दवचसा तु नट्या अपि ग्रहणं विधेयम्। विदूषकः पूर्वोक्तस्वरूपः, परि समन्तात् सूत्रधारस्य पार्श्वे चरतीति परिपार्श्विकः। उक्तञ्च—

सूत्रधारस्य पार्श्वे यः प्रकरोत्यमुना सह।
काव्यार्थसूचनालापं स भवेत्पारिपार्श्विकः॥ इति।

मन्दारमरन्देऽपि—

भरतेनाभिनीतं यो भावं नानारसाश्रयम्।
परिष्करोति पार्श्वस्थः स भवेत्पारिपार्श्विकः॥ इति।

एते सूत्रधारेण सहिता ( क ) युक्ताः सन्तः, स्वकार्य्योत्थैः स्वस्वकर्त्तव्यविषयमाश्रित्यैवोपयुक्ताः प्रस्तुतं प्रकृतं दृश्यकाव्यविषयम् आक्षिपन्ति सूचयन्तीति तैस्तथोक्तैः चित्रैर्बहुविधैर्वाक्यैः यत्र मिथ अन्योन्यम् संलापं सम्यग्भाषणं कुर्वते तत्तु आमुखं विज्ञेयम्, प्रकृताभिनयस्य मुखे प्रारम्भे विधेयत्वादिति भावः। तथा नाम्ना प्रसिद्धया संज्ञया, प्रस्तावयति प्रकृताभिनयविषयं सूचयति या सा प्रस्तावनापि विज्ञेया।

क्वचित्तु सदृष्टान्तमभिहितम्—

विधेयस्यैव सङ्कल्पो मुखतां प्रतिपद्यते।
प्रधानस्य प्रबन्धस्य तथा प्रस्तावना मता॥ इति।

---

( क ) "सहिता" इत्यत्र लिङ्गमविवक्षितम्, तथासति-सहितः सहिता सहिते सहितौ सहिता वा, सूत्रधारेण सहितो नटो विदूषकः पारिपार्श्विको वा, सहिता वा नटी, सहिते नटनटी वा, सहितौ नटविदूषकौ नटपारिपार्श्विकौ विदूषकपारिपार्श्विकौ वा, सहिता नटनटीविदूषका, नटीविदूषकपारिपार्श्विका नटविदूषकपारिपार्श्विका नटनटीविदूषकपारिपार्श्विकाश्चेति सरलार्थः। अत एवोक्तम्—

नटो विदूषको वाऽपि नटी वा पारिपार्श्वकः। एषु द्वौ वा त्रयो यत्र सर्वे वा स्थापकान्विताः॥
आमुखं तद्विजानीयान्नाम्ना प्रस्तावनां च ताम्। इति।

( ५७ ) सूत्रधारसदृशत्वात्स्थापकोऽपि सूत्रधार उच्यते । तस्यानुचरः पारिपार्श्वकः । तस्मात्किंचिदूनो नटः ।

( ५८ ) उद्घात्य(त)कः कथोद्घातः प्रयोगातिशयस्तथा ।
प्रवर्तकावलगिते पञ्च प्रस्तावनाभिदाः ॥ ३३ ॥

तत्र—

( ५९ ) पदानि त्वगतार्थानि तदर्थगतये नराः ।
योजयन्ति पदैरन्यैः स उद्घात्य(त)क उच्यते ॥ ३४ ॥

( ६० ) यथा मुद्राराक्षसे सूत्रधारः—
"क्रूरग्रहः सकेतुश्चन्द्रमसंपूर्णमण्डलमिदानीम् ।
अभिभवितुमिच्छति बलात्—'

( ५७ ) ननु "पूर्वरङ्गं विधायैव" इत्यादिना सूत्रधारस्य पूर्वमेव नाट्यशालातो निर्गमोपपादनात् स्थापकस्य काव्यार्थप्रतिपादनोपपादनाच्च पुनरत्र "सूत्रधारेण सहिताः" इत्युक्तिः कथं सङ्गच्छत इत्यत आह—सूत्रधारसदृशत्वादिति । एवञ्चात्र सूत्रधारपदं तत्तुल्यत्वात् स्थापकपरमित्याशयः । तस्य सूत्रधारस्य । तस्मात् सूत्रधारादेवेत्यर्थः किञ्चिदून किञ्चित्स्वल्पगुणको नटो नटविशेषः । तथा च "नटो विदूषको वापि" इत्यत्र वृत्तिसमन्वयाय नट इति पाठ एव ज्यायान् तस्मान्नटी सूत्रधारपत्न्यपि व्याचक्षाणाः परास्ताः । वस्तुतस्तु "स्त्री चेन्नटी" इत्यध्याहृत्य वृत्तिग्रन्थसमन्वयो विधेयः । नच तस्मात् "किञ्चिदूना नटी" इत्येव वृत्तौ कथन्न लिखितमिति वाच्यम्, नटसामान्यलक्षणस्यावश्यं वक्तव्यत्वेन नटीलक्षणस्य साक्षादनुक्तावपि दोषाभावात् ।

( ५८ ) ईदृशीं प्रस्तावनामभिधाय तस्याः पञ्चभेदानाह—उद्घात्यक इति । प्रवर्त्तकञ्च अवगलितञ्चेति प्रवर्त्तकावगलिते द्वे ।

( ५९ ) उद्देश्यक्रमप्राप्तमुद्घात्यकं प्रथमं निरूपयति-पदानि त्वगतार्थानीति । नराः नाट्यशालायां प्रविशन्तो लोकाः बहुवचनमत्राविवक्षितम्, अप्रसिद्धतया न गता न निश्चिता अर्था योजकवक्तृहृदस्थविषया येभ्यस्तानि तथोक्तानि पदानि तेषां योजकवक्तृहृदस्थविषयाणामर्थानां गतये निश्चयाय अन्यैः स्थापकोच्चारितभिन्नैः स्वाभिप्रेतार्थमात्रप्रतिपादकैः पदैः यत् योजयन्ति स्वहृदयस्थितां प्रतिपादयन्ति, स 'प्रवेष्टुरभिप्रेतार्थे स्थापकस्याभिप्रेतार्थं उद्धन्यत अन्तर्लीयत इत्युद्घात्यको नाम प्रस्तावनाभेदः ।

( ६० ) उदाहरति-यथेति । मुद्राराक्षसे तदाख्ये विशाखदत्तविरचिते नाटके इत्यर्थः । सूत्रधारः "नटीं प्रत्याह" इति शेषः । क्रूरग्रह । इति चन्द्रग्रहणं भविष्यतीति प्रतिपादयतः स्थापकस्योक्तिरियम् । क्रूरः अशुभफलदानेन दारुणः ग्रहः पापग्रह इत्यर्थः, पक्षे क्रूरे कर्मणि कूटव्यवहारे ग्रहः आग्रहः चन्द्रगुप्ताभिभवरूपः यस्य सस्तथोक्त अमात्यराक्षस इत्यर्थः । स प्रसिद्धः केतुरेकशरीरत्वेनाभेदाद् राहुरित्यर्थः, पक्षे तु केतुना मलयकेतुना 'नामैकदेशे-नामग्रहणम्" इति न्यायात् सत्यभामेतिवत्, सह सकेतुः राक्षसः । इदानीं पूर्णमण्डलं परिपूर्णबिम्बं चन्द्रमस चन्द्रम्, पक्षे तु असम्पूर्णमण्डलम् अचिरराज्याधिरूढतया अव्याहताज्ञाभावेन अस्वाधीनप्रजामण्डलम् ।

( ६१ ) इत्यनन्तरम्—'( नेपथ्ये । ) आः, क एष मयि जीवति चन्द्रगुप्त-मभिभवितुमिच्छति ।', इति ।

( ६२ ) अत्रान्यार्थवन्त्यपि पदानि हृदयस्थार्थगत्या अर्थान्तरे संक्रमय्य पात्रप्रवेशः ।

"मण्डलं परिधौ कोष्ठे देशे द्वादशराजसु ।
क्लीबेऽथ निवहे बिम्बे त्रिषु पुंसि तु कुक्कुरे ॥" इति मेदिनी।

चन्द्रं चन्द्रगुप्तम्, बलात् हठात् पक्षे बलं सामर्थ्यं मित्रादिसैन्यं वा आश्रित्य अभिभवितुं ग्रसितुं पक्षे पराजेतुम्, इच्छति अभिलषति बलादिति ल्यब्लोपे पञ्चमी। एतत्पद्यस्य चतुर्थपादस्तु—'रक्षत्येनं तु बुधयोगः" इति । तु किन्तु बुधेन स्वसुतेन सह चन्द्रस्य योगः एनं चन्द्रं चन्द्रमसं रक्षति पक्षे बुधेन चाणक्येन सह चन्द्रस्य चन्द्रगुप्तस्य योगः, क्रिया-कौशलम् एनं चन्द्रगुप्तं रक्षति दुष्टराक्षसाद्वारयति ।

बुधाच्चन्द्ररक्षा भवतीति चोक्तं गर्गाचार्य्येण—

"पञ्चग्रहसमायोगं दृष्ट्वा सौम्यविवर्जितम् ।
ग्रहणं तु वदेत्तत्र सबुधं न ग्रहं वदेत् ॥" इति ।

आर्याच्छन्दस्तल्लक्षणञ्चोक्तं प्राक् । अत्रेदमुक्तं भवति—चन्द्रोपरागनिमित्तं ब्राह्मणान् भोजयितुं पाकः सम्पद्यत इति नट्या कथितं श्रुत्वा साक्षे ज्योतिःशास्त्रे निपुणोऽस्मि नाद्योपरागः, तत्केनाऽपि प्रतारिताऽसि इत्यभिधाय सूत्रधारः—"आः साम्प्रतं चन्द्रमसं पूर्णमण्डलं सकेतुः क्रूरग्रहोऽभिभवितुं बलात् कामयते न पुनः प्रभाविष्यति" इत्यभिहितम् ।

( ६१ ) इत्यनन्तरमिति । नेपथ्ये वेषे उपचारात् भूमौ तत्स्थाने "नेपथ्यं तु प्रसाधने। रङ्गभूमौ वेषभूमौ" इति हैमः । आः क एष मयि ( चाणक्ये ) जीवति सतिसप्तमी-यम् । चन्द्रगुप्तं तत्संज्ञकप्रकृतनन्दात् सुरानाम्न्यां दास्यामुत्पन्नं चाणक्यसाहाय्येन योगानन्दं निहत्य तद्राज्येऽभिषिक्त राजानमित्यभिप्रायः । अभिभवितुं राज्याद्भ्रंशयितुम् इच्छति अभिलषतीति ।

( ६२ ) लक्ष्ये लक्षणं सङ्गमयितुमाह-अत्रेति । सूत्रधारोक्तावित्यर्थः, अन्यार्थवन्त्यपि पापग्रह-राहुपूर्णमण्डल-चन्द्ररूपान् स्थापकस्याभिप्रेतानर्थान् प्रतिपादयन्त्यपि पदानि क्रूरग्रह" सकेतु "चन्द्रमसम्पूर्णमण्डलम्" इत्येतान् शब्दान् हृदयस्थानां चाणक्यहृदय-स्थितानाम् अर्थानां चन्द्रगुप्ताभिभवरूप-मलयकेतुसहितराक्षस-अस्वाधीनप्रजामण्डल-चन्द्रगुप्तरूपाणां प्रतिपाद्यानाम्, प्रकृतश्चन्द्रोपरागरूपस्तस्यागत्याऽबोधेन अर्थान्तरे प्रकृताभिनयग्रन्थाभिधेये चन्द्रगुप्ताभिभवरूपप्रभृत्यर्थे संक्रमय्य चन्द्रपदेन गुप्तान्तपदपर्य्यन्तोल्लेखेन सञ्चार्य्य पात्रप्रवेशः चाणक्यप्रवेशः

दशरूपके तु—

गूढार्थपदपर्य्यायमाला प्रश्नोत्तरस्य वा ।
यत्रान्योन्यं समालापो द्वेधोद्धात्यं तदुच्यते ॥

गूढार्थं पदं तत्पर्य्यायश्चेत्येवं माला, प्रश्नोत्तरं चेत्येवं माला । द्वयोरुक्तिप्रत्युक्तौ तद्वि-

( ६३ ) सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा ।
भवेत्पात्रप्रवेशश्चेत्कथोद्घातः स उच्यते ॥ ३५ ॥

( ६४ ) वाक्यं यथा रत्नावल्याम्—'द्वीपादन्यस्मादपि--' इत्यादि (४५५पृ.) सूत्रधारेण पठिते--'( नेपथ्ये ) साधु भरतपुत्र ! साधु । एवमेतत् । कः सदेहः । द्वीपादन्यस्मादपि-' इत्यादि पठित्वा यौगंधरायणस्य प्रवेशः ।

---

विधमुद्धात्यकम् । तत्राद्यं विक्रमोर्वश्यां यथा "विदूषकः—( क ) भो वअस्स को एपो कामो जेण तुमं पि दूमिज्जसे । सो किं पुरिसो आदु इत्थि अत्ति ।

राजा—सखे !

मनोजातिरनाधीना सुखेष्वेव प्रवर्त्तते ।
स्नेहस्य ललितो मार्गः काम इत्यभिधीयते ॥

विदूषकः—(ख) एवं पि ण जाणे । राजा—वयस्य इच्छा प्रभवः स इति । विदूषकः—(ग) किं जो जं इच्छदि सो तं कामे दित्ति । राजा—अथ किम् ! विदूषकः-(घ) ता जाणिदं जह अहं सूव आरसा लाए भो अणं इच्छामि" ।

द्वितीयं यथा पाण्डवानन्दे—

का श्लाघा गुणिनां क्षमा परिभवः को यः स्वकुल्यैः कृतः
किं दुःखं परसंश्रयो जगति कः श्लाघ्यो य आश्रीयते ।
को मृत्युर्व्यसनं शुचं जहति के यैर्निर्जिताः शत्रवः
कैर्विज्ञातमिदं विराटनगरे छन्नस्थितैः पाण्डवैः ॥

अत्र सूत्रधारनिष्क्रान्तौ पाण्डवप्रवेशः इत्युक्तम् ।

( ६३ ) अथ द्वितीयं प्रस्तावनाभेदं प्रतिपादयति—सूत्रधारस्येति । सूत्रधारस्य वाक्यं समादाय समग्रमेव सूत्रधारवाक्यमुच्चार्य वा अथवा सूत्रधारवाक्यस्यार्थं समादाय सूत्रधाराभिप्रायेणैव विचार्य्य, पूर्वत्र वाक्यादानं वाक्यानुकरणम्, अत्रार्थादानं वाक्यानुकरणं विना तदर्थानुशीलनमिति भेदः । चेद्यदि पात्रस्य इतिवृत्तान्तर्गतलोकस्य प्रवेशो भवेत्, तदा कथया सूत्रधारवाक्येन उद्घातः पात्रोपस्थितिर्यत्र स=कथोद्घातो नाम द्वितीयः प्रस्तानाभेदः कथ्यते ।

उद्घात्यके सूत्रधाराऽभिप्रेतार्थस्य पात्रेणार्थान्तरे संक्रमणम्, अत्र तु तदभिप्रेतार्थस्यैव पात्रेण तत्त्वतो ग्रहणमित्यनयोर्भेदो ज्ञेयः ।

( ६४ ) उदाहरति—वाक्यमिति । रत्नावल्यां तदाख्यायां श्रीहर्षनृपतिकृतायां नाटिकायामिति भावः । द्वीपादिति । व्याख्यातमिदं पूर्वम् । सूत्रधारेण स्थापकेन नटेनेति यावत् । पठिते तत्कृतपाठानन्तरमित्यर्थः । साधु सम्यक् । एवं यथा भवानाह—"द्वीपादन्यस्मादपि" इत्यादि तथेत्यर्थः । एतत् विधिप्रसादवैलक्षण्यमिति शेषः । संदेहः

---

( क ) "भो वयस्य ! क एष कामो येन त्वमपि दूयसे । स किं पुरुषोऽथवा स्त्रीति" । इतिच्छाया
( ख ) "एवमपि न जानामि" इतिच्छाया ।
( ग ) "किं यो यदिच्छति स तत्कामयतीति ।" इति च्छाया ।
( घ ) 'तज्ज्ञातं यथाऽहं सूपकारशालायां भोजनमिच्छामि' इतिच्छाया ।

( ६५ ) वाक्यार्थो यथा वेण्याम्--

( ६६ ) निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥

( ६७ ) इति सूत्रधारेण पठितस्य वाक्यस्यार्थं गृहीत्वा--'( नेपथ्ये ) आः दुरात्मन् !, वृथा मङ्गलपाठक!, कथं 'स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः !' ततः सूत्रधारनिष्क्रान्तौ भीमसेनस्य प्रवेशः ।

---

संशयः । यौगन्धरायणस्य तदाख्यनगररक्षकस्य श्रीवत्सराजमन्त्रिण इति यावत् । इदमत्राभिहितं भवति देशान्तरे दातुं प्रतिज्ञातायाः पुत्र्याः कथं परिणयो भविष्यतीत्यावेगनिवृत्तये नटीं प्रति सूत्रधारेण तथाऽऽश्वासितम् । अत्र यौगन्धरायणमन्त्रिरूपपात्रस्य सूत्रधारवक्यं पुनरनुकृत्य प्रवेशात् प्रथमः प्रकारः कथोद्घात इति ज्ञेयम् ।

( ६५ ) वाक्यार्थं समादाय पात्रप्रवेशमुदाहरति—वाक्यार्थ इति । वेण्यां वेणीसंहारे तदाख्ये नारायणभट्टकृते नाटके इत्यर्थः ।

( ६६ ) निर्वाणवैरदहना इति । वैरं दहन इवेति वैरदहनः निर्वाणः प्रलुप्तः वैरदहनो येषां ते तथोक्ताः, अरीणां शत्रूणां दुर्य्योधनादीनाम् "रिपौ वैरि सपत्नारि" इत्यमरः, प्रशमात् सन्धिविधानेन शान्त्यवलम्बनात् निर्वाणवैरदहने चाऽयं हेतुः, पाण्डुतनयाः युधिष्ठिरादयः माया लक्ष्म्या धवो पतिर्यः सः तेन श्रीकृष्णेन, सह "इन्दिरालोकमाता मा" इत्यमरः, नन्दन्तु आनन्दं प्राप्नुवन्तु, रक्तेन अनुरागेण भावेक्तः प्रसाधिता वशीकृताः भूः पृथिवी यैस्ते तथोक्ताः अत एव क्षतः सन्धिविधानेन भग्नो विग्रहः कहलो येषां ते तथोक्ताः "अस्त्रियां समरानीकरणाः कलहविग्रहौ" इत्यमरः, सभृत्याः सानुचराः कुरुराजसुताः धार्त्तराष्ट्राः दुर्य्योधनादयश्च स्वस्थाः सुस्थिता भवन्तु सन्तु, सन्धिविधानफलमुभयपक्षः एव जायतामिति भावः । द्वितीयार्थस्तु—अरोणां शत्रूणां प्रशमात् मरणात् निर्वाणवैरदहनाः पाण्डुतनयाः माधवेन सह नन्दन्तु । रक्तैः रुधिरैः प्रसाधिता मण्डिता भूर्यैस्ते तथोक्ताः रुधिरव्याप्तभूमय इत्यर्थः क्षतविग्रहाः विक्षतशरीराः "शरीरं वर्ष्म विग्रहः" इत्यमरः, कुरुराजसुताः स्वस्थाः (क) स्वर्गस्थसुखेन तृप्ता भवन्तु "हतो वा प्राप्स्यसि स्वर्गम्" इति वचनात् । अत्र पक्षे ( खर्परे शरि वा विसर्गलोपो वक्तव्यः ) इति वार्त्तिकेन विसर्गलोपे वैरुप्यशङ्का नास्थेया । वसन्ततिलका छन्दस्तल्लक्षणन्तूक्तं प्राक् (१९३ पृ०) ।

अस्य पूर्वार्धं एव लक्ष्यम् उत्तरार्द्धस्य पताकाघटकत्वात्, अतश्च द्वितीयार्थस्य तत्रैवोपयोगः । अत एव चोत्तरार्द्धं एव द्वितीयपताकास्थानके उदाहृतम् ।

( ६७ ) लक्ष्ये लक्षणं सङ्गमयितुमाह—इति सूत्रधारेणेति । अर्थं गृहीत्वेति । तात्पर्यं गृहीत्वेत्यर्थः । एतद्वाक्यानुकरणं विना तदर्थानुशीलनेनैव "आ" इत्याद्युक्तवक्तुः भीमसेनस्य प्रवेश इत्यनन्तरं प्रथमार्थमादाय इति शेषः । अत्र द्वितीयः प्रकारः कथोद्घातः ।

केचित्तु—द्व्यर्थता यत्र वाक्यानां श्लेषेणार्थः प्रतीयते ।
शब्दभङ्ग्यानुपात्तोऽपि श्लेषगण्डः स उच्यते ॥

---

(क) "यन्न दुःखेन सम्भिन्नं नच ग्रस्तमनन्तरम ।
अभिलाषोपनीतं च तत्पदं स्वःपदास्पदम् ॥" इति ।

( ६८ ) यदि प्रयोग एकस्मिन्प्रयोगोऽन्यः प्रयुज्यते ।
तेन पात्रप्रवेशश्चेत्प्रयोगातिशयस्तदा ॥ ३६ ॥

( ६९ ) यथा कुन्दमालायाम्- '( नेपथ्ये ) इत इतोऽवतरत्वार्या । सूत्रधारः—कोऽयं खल्वार्याह्वानेन साहायकमपि मे संपादयति । ( विलोक्य ) कष्टमतिकरुणं वर्तते ।

( ७७ ) लङ्केश्वरस्य भवने सुचिरं स्थितेति रामेण लोकपरिवादभयाकुलेन ।
निर्वासितां जनपदादपि गर्भगुर्वीं सीतां वनाय परिकर्षति लक्ष्मणोऽयम् ॥

( ७१ ) अत्र नृत्यप्रयोगार्थं स्वभार्याह्वानमिच्छता सूत्रधारेण 'सीतां वनाय

---

इति नाट्यशास्त्रात् श्लेषगण्डाख्यं नाटकाङ्गमित्याहुः । दशरूपके—वाक्यस्य—"द्वीपादन्यस्मादपि" इति वाक्यार्थस्य "निर्वाणवैरदहनाः" इत्युदाहरणञ्च प्रदर्श्य, "ततोऽर्थेनाह—भीमः—

लाक्षागृहानलविषान्नसभाप्रवेशैः प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः ॥
इति प्रदर्शितम् ।

काव्येन्दुप्रकाशकारस्तु—
हृदिस्थानामर्थवतां पदानामन्यथाकृतेः ।
यः पात्रस्य प्रवेशः स्यात् स कथोद्घात इष्यते ॥ इत्यभिधाय

तत्र द्विविधमन्यथाकरणम्, पदभङ्गरूपमर्थभङ्गरूपञ्चेति । तत्राद्यं यथा "द्वीपादन्यस्मादिति" द्वितीयं निर्वाणवैरदहना" इत्याह ।

( ६८ ) तृतीयं प्रयोगातिशयलक्षणं निरूपयति—यदि प्रयोग इति । एकस्मिन् प्रयोगे एकस्य कस्यचिद्विषयस्य सूत्रधारेण । विचार्यमाणे सति यदि अन्यः प्रयोगः प्रयुज्यते तेनैव हि तत्पूर्वविषयविचारस्यातिक्रमणं विधाय अन्यस्य विषयस्य विचारं विधीयते चेत् यदि तेन द्वितीयप्रयोगेण पात्रस्य प्रवेशोऽस्ति तदा द्वितीयप्रयोगेण प्रथमप्रयोगस्य अतिशयः अतिक्रमो यत्र सः प्रयोगातिशयो नाम तृतीयः प्रस्तावनाभेदः स्यात् ।

( ६९ ) लक्ष्ये लक्षणं सङ्गमयितुमाह—यथा कुन्दमालायामिति तन्नामिकायां नाटिकायामित्यर्थः । इत इतोऽवतरत्विति । अत्रार्य्यपदर्थः सीतारूपो नेपथ्ये पात्राभिमतः । नटीरूपस्तु सूत्रधारेणावगतः स्वप्रयोगमतिशयानः प्रकृतार्थप्रतिपदिनात् । आर्य्यायाः स्वभार्य्याया नट्या आह्वानेन आमन्त्रणेन सहायकं सहायतां स्वकर्त्तव्यस्यान्येन विधानादिति भावः । अतिकरुणम् अत्यन्तशोकोपोद्बलकम् ।

( ७० ) लङ्केश्वरस्येति । सीता जनकनन्दिनी लङ्केश्वरस्य दशाननस्य भवने गृहे सुचिरं दशमासपर्य्यन्तं स्थिता, अतस्तस्याः सतीत्वे सन्देह एवेत्यभिप्रायः, इति अनेन प्रकारेण लोके यः परिवादः अपवादः तस्माद्यो भयस्तस्मात्तथोक्तात् आकुलेन विह्वलचित्तेन रामेण, गर्भेण गुर्वीं भारभूतामपि जनपदात् अयोध्यातो निर्वासितां निष्क्रामितां सीताम् अयं लक्ष्मणः परिकर्षति आकर्षति । वसन्ततिलकाच्छन्दः लक्षणन्तूक्तं प्राक् ( १९३ पृ० )

( ७१ ) लक्ष्ये लक्षणं घटयन् प्रयोगातिशयपदयोगार्थं दर्शयति—अत्रेति । नृत्यप्रयो-

परिकर्षति लक्ष्मणोऽयम्' इति सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजितः ।

( ७२ ) कालं प्रवृत्तमाश्रित्य सूत्रधृग्यत्र वर्णयेत् ।
तदाश्रयश्च पात्रस्य प्रवेशस्तत्प्रवर्तकम् ॥ ३७ ॥

( ७३ ) यथा—'आसादितप्रकट-' इत्यादि ( २८२ पृ. )। ( 'ततः प्रविशति यथानिर्दिष्टो रामः )'

( ७४ ) यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते ।
प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैः ॥ ३८ ॥

गार्थं सूत्रधारस्य नृत्यरूपः स्वप्रयोगस्तदर्थमित्यर्थः । स्वभार्यायाः नट्या आह्वानम् । स्वप्रयोगं स्वकृत्यविषयं नृत्यम् , अतिशयान एव अतिक्रामन्नेव प्रयोगः प्रयोजितः सीतालक्ष्मणयोः प्रवेशरूपोऽन्यः प्रयोगः सूचित इत्यर्थः । नन्वेमपि अन्ये-वप्युद्धात्यकादिषु प्रस्तावनाभेदेषु चतुर्षु सूत्रधारेण स्वप्रयोगमतिक्रम्य प्रयोगान्तरेणैव पात्रप्रवेशस्य द्योतितत्वात् प्रयोगातिशयातिप्रसङ्ग इति चेत्? मैवम् , सामान्यविशेषाभ्युपगमात् । तथा च यत्र यत्र विशेषाणामुद्धात्यकादीनामसम्भवस्तत्र तत्रैव प्रयोगातिशय इत्याशयः। अत एव मालतीमाधवोत्तररामचरितयोः प्रस्तावनायामन्यासम्भवात्प्रयोगातिशयरूपैवेति सिद्धान्तविदः।

दशरूपके तु—

एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः । पात्रप्रवेशो यत्रैष प्रयोगातिशयः स्मृतः ॥
इत्यभिधाय- "एष राजेव दुष्यन्तः" इत्युदाजहार ।

( ७२ ) तुरीयं प्रवर्त्तकलक्षणं निरूपयति—कालमिति । सूत्रधृक् सूत्रधारो यत्र प्रवृत्तं तत्समये विद्यमानं कालं वसन्तादिसमयविशेषम् , आश्रित्य अवलम्बनं विधाय वर्णयेत्, तदाश्रयश्च श्लेषादिद्वारा प्रवृत्तकालवर्णनासूचितश्च पात्रस्य इतिवृत्तान्तर्गतजनस्य प्रवेशो भवति । पात्रमभिनये प्रवर्त्तयतीति व्युत्पत्त्या प्रवर्त्तकं नाम तुरीयप्रस्तावनाभेदोऽवगन्तव्यः ।

ननु "कालं प्रवृत्तमाश्रित्य" इति यदुक्तन्तत्र कालपदेन वर्त्तमानकालस्यापि प्रतीतौ यत्किञ्चिदपि कर्मविधाने वर्त्तमानकालस्यावश्यम्भावित्वेन तत्कालाश्रयसम्भवस्यावश्यं वक्तव्यत्वे उद्धात्यकाद्युदाहरणे "अभिभवितुमिच्छति बलात्" इत्यादौ तिङा वर्त्तमानकालनिर्देशात् प्रवर्त्तकत्वप्रसक्तिरिति चेत्? सत्यम्—अत्रत्यकालपदस्य साक्षाद्वाचकपदनिर्दिष्टवसन्तशरदादिकालविशेषबोधनार्थत्वोपगमेनाक्षतेः । अत एव—

"आसादितप्रकटनिर्मलचन्द्रहासः प्राप्तः शरत्समय एष विशुद्धकान्तिः ।"
इति शरत्समयरूपकालविशेषप्रतिपादकमेवोदाहरणे प्रतिपादितम् ।

( ७३ ) लक्ष्ये लक्षणं घटयितुमाह—यथेति । यथानिर्दिष्टः प्रकटनिर्मलचन्द्रहासधरः ।

( ७४ ) पञ्चममवगलिताख्यं प्रस्तावनाभेदलक्षणं निरूपयति—यत्रैकत्रेति । प्रयोग इत्यनेनान्वयः ।यत्र प्रयोगे प्रस्तावनायाम् एकत्र एकस्मिन् विषये समावेशात् तत्प्रयोगस्य समनिर्दिष्टत्वात् हेतो , अन्यत् उपमानभूतपात्रप्रवेशसूचनरूपं कार्यं प्रसाध्यते सूत्रधारेण सूच्यते बुधैस्तदामुखं अवगलति पात्रप्रवेशेन सह शोभनमवसजतीति नाम्ना अवगलित-

( ७५ ) यथा शाकुन्तले—सूत्रधारो नटीं प्रति । 'तवास्मि गीतरागेण-' ( ४५६ पृ. ) इत्यादि । ततो राज्ञः प्रवेशः ।

( ७६ ) योज्यान्यत्र यथालाभं वीथ्यङ्गानीतराण्यपि ।

( ७७ ) अत्र आमुखे। उद्घात्य(त)कावलगितयोरितराणि वीथ्यङ्गानि वक्ष्यमाणानि ।

मिति कथितम् । ननु सादृश्योद्भावनेन उपमानभूतपात्रप्रवेशसूचकस्यावगलितत्त्वे प्रवर्त्तकोदाहरणेऽपि "रामो दशास्यमिव सम्भृतबन्धुजीवः" इत्यत्र सादृश्योद्भावेन उपमानभूतपात्रप्रवेशसूचनादवगलितत्वप्रसक्तिरिति चेत् ? मैवम् , "मुखं श्लेषादिना प्रस्तुतवृत्तान्तप्रतिपादको वाग्विशेषः । यथा—"आसादिते"त्यादिपूर्वमेव वृत्तौ प्रदर्शितं तथाच श्लेषादिसत्त्वे प्रवर्त्तकं तदभावे तु अवगलितमित्यभ्युपगमात् ।

( ७९ ) लक्ष्ये लक्षणं सङ्घटयति—यथा शाकुन्तल इति । तवास्मीति । व्याख्यातं प्राक् ( ४५६ पृष्ठे ) अत्र गीतप्रशंसारूपप्रयोगे राज्ञः प्रवेशरूपमन्यत्कार्य्यं साधितम् ।

मन्दारमरन्दे द्वैविध्यमस्योक्तम्—

"अन्यकार्यमिषादन्यकार्यस्य करणं तथा ।
द्विधावगलितं त्वन्यकार्य्याच्च स्वार्थसाधनम् ॥"

दशरूपके तु द्वैविध्यमुक्त्वा तदुदाहरणमपि प्रदर्शितम्—

"यत्रैकत्र समावेशात् कार्य्यमन्यत्प्रसाध्यते ।
प्रस्तुतेऽन्यत्र वाऽन्यत्स्यात्तच्चावगलितं द्विधा ॥"

तत्राद्यं यथोत्तरचरिते समुत्पन्नवनविहारगर्भदोहदायाः सीताया दोहदकार्य्येऽनुप्रविश्य जनापवादादरण्ये त्यागः । द्वितीयं यथा छलितरामे—रामः—लक्ष्मण ! तातवियुक्तामयोध्यां विमानस्थो नाहं प्रवेष्टुं शक्नोमि तदवतीर्य्य गच्छामि ।

"कोऽपि सिंहासनस्याधः स्थितः पादुकयोः पुरः ।
जटावानक्षमाली च चामरी च विराजते ॥

इति भरतदर्शनकार्य्यसिद्धिः ।

काव्येन्दुप्रकाशकारेण हि अत्र विशेषः प्रदर्शितः । तथा हि—

"यः पात्रस्य प्रवेशस्तद्गलितं चान्यवर्णनात् ॥" इति

अन्यपदार्थवर्णनेन पात्रप्रवेश इत्यर्थः । नच प्रवर्त्तकेऽस्यातिप्रसङ्ग इति वाच्यम् , प्रवृत्तकालवर्णनानुरूपपात्रप्रवेशसूचको हि सः, अयं तु यत्किञ्चित्प्रवर्त्तनात्पात्रप्रवेशरूप-इति ततोऽस्य भेदात् ।

( ७६ ) इत्थं प्रस्तावनारूपस्य उद्घात्यकादिपञ्चभेदमभिधाय तत्रैव प्रयोगे यथालाभं वीथ्यङ्गान्यपि प्रयोजनीयानीत्याशयेनाह—योजान्यत्रेति । अत्र प्रस्तावनायां यथालाभं यथासम्भवम् इतराण्यपि उद्घात्यकावगलितयोरेवेतराणि तथाच उद्घात्यकावगलितभिन्नान्यपीत्यर्थः, वीथ्या वक्ष्यमाणवीथ्याख्योपरूपनामकनाटकप्रभेदस्य अङ्गानि वक्ष्यमाणानि प्रपञ्चादीनि योज्यानि कविना निबद्धव्यानि । यथालाभमित्युक्त्या तेषामवश्यनिबद्धव्यत्वाभावः प्रतिपादितः ।

( ७७ ) विवृणोति—अत्रेति । वीथ्याख्योपरूपात्मकनाटकलक्षणप्रस्तावे उद्घात्यकावगलितयोरपि तदङ्गत्वेन वक्ष्यमाणत्वादभिहितम्-"उद्घातकावगलितयोरितराणि" इति ।

( ७८ ) नखकुट्टस्तु—

( ७९ ) नेपथ्योक्तं श्रुतं यत्र त्वाकाशवचनं तथा ॥ ३९ ॥
समाश्रित्यापि कर्तव्यमामुखं नाटकादिषु ।
एषामामुखभेदानामेकं कंचित्प्रयोजयेत् ॥ ४० ॥
तेनार्थमथ पात्रं वा समाक्षिप्यैव सूत्रधृक् ।
प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रयोजयेत् ॥ ४१ ॥

वस्त्वितिवृत्तम् ।

( ८० ) इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते ।
आधिकारिकमेकं स्यात्प्रासङ्गिकमथापरम् ॥ ४२ ॥
अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः ।
तस्येतिवृत्तं कविभिराधिकारिकमुच्यते ॥ ४३ ॥

फले प्रधानफले । यथा बालरामायणे रामचरितम् ।

---

( ७८ ) आमुखस्यामीपञ्चप्रभेदा प्रविष्टपात्रसूचितपात्रान्तरप्रवेशघटिता उक्ताः । अथाप्रविष्टसूचितपात्रघटितोऽपि नखकुट्टाख्यः षष्ठःप्रभेद इति दर्शयितुमाह—नखकुट्टस्त्विति ।

( ७९ ) तल्लक्षणं दर्शयति—नेपथ्योक्तमिति । यत्र येषु नाटकादिषु रूपकेषु नेपथ्यं जवनिका उक्तञ्चाजयेन—"नेपथ्यं स्याज्जवनिका रङ्गभूमिः प्रसाधनम्" इति, तस्मादुक्तं वाक्य श्रुतं सूत्रधारेणाकर्णितं समाश्रित्य विधाय तथा आकाशे वचनं भाषितं यस्य तादृश श्रुतं समाश्रित्य विधाय वा आमुखं समन्तान्मुखं द्वारमिति कर्त्तव्यम् इत्थमामुखस्य षड्भेदाः । सूत्रधृक् सूत्रधार एषाम् उद्घात्यकादीनाम् आमुखभेदानां प्रस्तावनाविशेषाणां यं कञ्चिदेकं भेदं प्रयोजयेत् विदध्यात् । तेन प्रयुक्तामुखभेदेन अर्थं वृत्तान्तम् अथवा पात्रं समाक्षिप्यैव सूचयित्वैव तादृशप्रस्तावनान्ते निर्गच्छेत् नाट्यशालातो निस्सरेत् ततः सूत्रधारगमनानन्तरं वस्तु इतिवृत्तं प्रयोजयेत् नाटकं रचयितुमारभेत।

अत्र पुत्रस्तु—

"श्रुतं कस्यापि सम्मुखीनस्य मुखात् , इतिवृत्तं प्रकृतग्रन्थाभिधेयम् । अस्य च प्रपञ्चनमर्थात् पात्रद्वारेणैव । यद्यपि "नासूचितस्य पात्रस्य रङ्गभूमिषु प्रवेशः" इति वचनात् सर्वेषामेव पात्राणां सूचितानामेव रङ्गे प्रवेशस्तथापि प्रस्तावनानन्तरं प्रवेश्यपात्राणाम् उक्तप्रकारेण विच्छित्तिभिः सूचनमिति शेषः क्वचित्तु सम्भ्रमादियुक्तानां पात्राणां प्रवेशेन सूचनं न पटीक्षेपोऽपि। यथा चन्द्रकलायां प्रविश्याऽपटीक्षेपेणसम्भ्रान्तःशबर इत्यादि"इति।

( ८० ) इतिवृत्तस्य भेदद्वयं दर्शयति—इदं पुनर्वस्त्विति । बुधैस्तत्त्वज्ञैः, इदं नखकुट्टकारिकोक्तं वस्तु इतिवृत्तं द्विविधं परिकल्पते । तयोरेकम् आधिकारिज्ञानं तावदाधिकारिकज्ञानकम् , तच्चाधिकारज्ञानाधीनमित्यधिकारं निरूपयति—अधिकार इति । फले प्रधानफले स्वाम्यं फलभोक्तृत्वम् अधिकारः, तत्प्रभुश्च तस्य प्रधानफलस्य स्वामी च अधिकारी कविभिरालङ्कारिकैःतस्य अधिकारिणः इतिवृत्तं वृत्तान्तआधिकारिकम् उच्यते प्रतिपाद्यते ।

उदाहरति—यथा बालरामायणे तदाख्ये राजशेखरकृते महानाटके इत्यर्थः । रामचरितमिति ।

( ८१ ) अस्योपकरणार्थं तु प्रासङ्गिकमितीष्यते ।

( ८२ ) अस्याधिकारिकेतिवृत्तस्य उपकरणनिमित्तं यच्चरितं तत्प्रासङ्गिकम् । यथा सुग्रीवादिचरितम् ।

( ८३ ) पताकास्थानकं योज्यं सुविचार्येह वस्तुनि ॥ ४४ ॥

इह नाट्ये ।

( ८४ ) यत्रार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥ ४५ ॥

( ८५ ) तद्भेदानाह—

( ८६ ) सहसैवार्थसंपत्तिर्गुणवत्युपचारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्तितम् ॥ ४६ ॥

( ८७ ) यथा रत्नावल्याम् -'वासवदत्तेयम्' इति राजा यदा तत्कण्ठपाशं मोचयति तदा तदुक्त्या 'सागरिकेयम्' इति प्रत्यभिज्ञाय 'कथम् ? प्रिया मे सागरिका ।

---

तत्र हि रामः रावणादिवधफले स्वामी तस्य चरितमाधिकारिकमिति तत्त्वम् ।

( ८१ ) अस्योपकरणार्थमित्विति अस्य तु आधिकारिकेतिवृत्तस्य उपकरणार्थं सहायतार्थम् ( अर्थेन नित्यसमासो विशेषलिङ्गताचेति वक्तव्यम् ) इति साधु । यच्चरितं तत् प्रसङ्गेन निर्वृत्तं प्रसङ्गिकम् आनुषङ्गिकम् इति कविभिरिष्यते ।

( ८२ ) अस्याधीति । उपकरणनिमित्तम् उपकरणमुपकारः साहाय्यमित्यर्थः, तन्निमित्तं तदर्थमित्यर्थः ।

उदाहरति—यथेति । सुग्रीवादिचरितस्य रामचरितसाहाय्ये निमित्तत्वात् प्रासङ्गिकमिति भावः । आदिनाप्रतिनायकादेर्ग्रहणम् ।

( ८३ ) नाटकस्यान्तरङ्गंपताकास्थानमाह—पताकेति । सुविचार्य्य कविना सम्यग्विचार्य्य इह नाट्ये वस्तुनि पदार्थे पताकास्थानकं योज्यं निबन्धनीयं रचनीयमित्यर्थः । पताकास्थानकमिति सर्वत्र सज्ञायां कन् बोध्यः ।

( ८४ ) ननु किन्तत् पताकास्थानमिति जिज्ञासायां तल्लक्षणं दर्शयति—यत्रार्थे इति । यत्र स्थाने अन्यस्मिन् अर्थे प्रयोजने चिन्तिते पदार्थत्वेन बुध्यमाने सति आगन्तुकेन अनभिसंनिहितेन अतर्कितेनेत्यर्थः भावेन पदार्थेन तल्लिङ्गः चिन्तितार्थसमानचिह्न अन्योऽर्थः प्रयुज्यते क्रियते उपस्थाप्यत इति यावत् तत्तु पताकावत् नाट्यस्य प्रसिद्ध्युत्पादकत्वात् तादृशबन्धोऽपि पताकास्थानकमित्यभिधीयते ।

( ८५ ) तद्भेदान् वक्तुमुपक्रममाण आह—तद्भेदानिति ।

( ८६ ) सहसैवेति । यत्र सहसैव अतर्कितकारणेनैव उपचारतः प्रीत्यनुकूलव्यापारात् गुणवती उत्कृष्टा अर्थसम्पत्तिः प्रयोजनसिद्धिः स्यात् तदिदं प्रथमम् आद्यं पताकास्थानकं परिकीर्त्तितम् ।

( ८७ ) लक्ष्ये लक्षणं सङ्घटयितुमाह—यथा रत्नावल्यामिति । वासवदत्तेयमिति । वासवदत्ता वत्सराजोदयनस्य पत्नी । अत्रत्यसन्दर्भश्चेत्थम्—( वासवदत्तावेशेन साग-

'अलमलमतिमात्रं साहसेनामुना ते,
त्वरितमयि ! विमुञ्च त्वं लतापाशमेतम् ।
चलितमपि निरोद्धुं जीवितं जीवितेशे !
क्षणमिह मम कण्ठे बाहुपाशं निधेहि ॥'

( ८८ ) अत्र फलरूपार्थसंपत्तिः पूर्वापेक्षयोपचारातिशयाद्गुणवत्युत्कृष्टा ।

**( ८९ ) वचः सातिशयं श्लिष्टं नानाबन्धसमाश्रयम् ।**
**पताकास्थानकमिदं द्वितीयं परिकीर्तितम् ॥ ५७ ॥**

रिका आयास्यतीति कृतसङ्केते राज्ञि स्थिते तज्ज्ञात्वा सागरिकाया आगमनात्पूर्वं वासवदत्तैवागत्य सङ्केतभङ्गं विधाय राजानं ह्रेपयित्वा प्रस्थिता । राजा च तामनुनेतुं पश्चाच्चलितः । ततस्तद्वेषा सागरिका आगत्य राजानमप्राप्य निर्वेदाल्लतापाशेनात्मानं बध्वा तत्रैव मर्त्तुमारब्धा । राजा च वासवदत्तामनुनेतुं चलितः । पथि तां दृष्ट्वा वासवदत्तैवेयं म्रियत इति सागरिकायां वासवदत्ताभ्रमे पाशं मोचयितुं प्रवृत्त इति ) तदुक्त्वा तस्याः सागरिकाया उक्त्या "सागरिकेयम्" इति प्रत्यभिज्ञाय ज्ञात्वा कथमिति प्रश्ने प्रिया मे सागरिका इत्यनन्तरम् ( इति कण्ठात्पाशमाक्षिप्य ) कण्ठात्पाशं निष्कास्येत्यर्थः ।

सुरतार्थं तामनुनयति—अलमलमतिमात्रमिति । ते तव अमुना उद्बध्यमरणरूपेण अतिमात्रम् अत्यन्तम् इदञ्च साहसपदार्थाविमृश्यकारित्वक्रियाया विशेषणम् , साहसेन प्राणत्यागरूपेण विमृश्यकर्मणा अलमलमिति सम्भ्रमे द्विरुच्चारणम् , मा मा इत्यर्थः, अयि ! त्वं प्राणत्यागार्थं गृहीतमेनं पुरो वर्त्तिनं लतायाः पाशः लतापाशस्तं तथोक्तम् , त्वरितमाशु यथास्यात्तथा विमुञ्च त्यज, जीवितस्य जीवनस्य ईशा स्वामिनी तत्संबोधने हेजीवितेशे ! चलितमपि कंपितमपि "चलिता कंपिता धुते" इत्यमरः, चञ्चलमित्यर्थः यद्वा गन्तुमुद्यतमपि इत्यर्थः, त्वद्वियोगेन निरोद्धुम् अवरोद्धुम् इह अस्मिन् देशे एकान्त इत्याशयः मम कण्ठे गले क्षणं क्षणकालम् अत्यन्तसंयोगे द्वितीया "अष्टादश निमेषास्तु काष्ठाः त्रिंशत्तु ताः कला । तास्तुत्रिंशत् क्षण" इत्यमरः बाहू एव पाशः बाहुपाशः तं निधेहि स्थापय । निपूर्वाद्धाञो लोटि "ध्वसोरेद्धावभ्यासेति" लोप एत्वं च । मालिनी छन्दस्तल्लक्षणं चोक्तं प्राक् (१६७ पृ०)

( ८८ ) अत्र वासवदत्ताया अनुनयपूर्वकं सुरतं राज्ञोऽभिलषितम् , तदन्यस्याः सागरिकायाः अनुनयपूर्वकसुरतस्यानुष्ठानमिति प्रतीयमानोऽर्थः तथाचोदाहृते लक्षणसमन्वयव्याजेन तदर्थं दर्शयति–अत्रेति । फलरूपस्य बहोः कालादुद्देश्यभूतस्य अर्थस्य सागरिकासुरतस्य सम्पत्तिः उपलब्धिः पूर्वापेक्षया पूर्वसुरतस्वरूपापेक्षया उपचारातिशयात् प्रीत्यतिशयोत्पादनात् गुणवती प्रशस्तगुणा ।

अत्र वासवदत्तामरणरूपेऽन्यस्मिन्नर्थे चिन्तिते आगन्तुकेन लतापाशेन वासवदत्तामरणचिह्नाद्यङ्कितम्रियमाणसागरिकारूपार्थप्रयोग इति पताकास्थानसामान्यलक्षणं बोध्यम् ।

( ८९ ) द्वितीयं पताकास्थानलक्षणं दर्शयितुमाह –वचः सातिशयमिति । सातिशयं श्लिष्टम् अनेकार्थबोधकानेकतरशब्दसहितम् , नानाबन्धो बीजप्रकाशननायकमङ्गलसूचनादिरूपः तत्समाश्रयं तद्विशिष्टम् , वचो वाक्यम् इदं द्वितीयं पताकास्थानकं परिकीर्त्तितं कथितम् ।

यथा वेण्याम्—

( ६० ) ( रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥ )

अत्र रक्तादीनां रुधिरशरीरार्थहेतुकश्लेषवशेन बीजार्थप्रतिपादनान्नेतृमङ्गलप्रतिपत्तौ सत्यां द्वितीयं पताकास्थानम् ।

( ६१ ) **अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् ।**
**श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥ ४८ ॥**

( ६२ ) लीनमव्यक्तार्थम्, श्लिष्टेन संबन्धयोग्येनाभिप्रायान्तरप्रयुक्तेन प्रत्युत्तरेणोपेतम्, सविनयं विशेषनिश्चयप्राप्त्या सहितं संपाद्यते यत्तत्तृतीयं पताकास्थानम् ।

( ६३ ) यथा वेण्यां द्वितीयेऽङ्के 'कञ्चुकी-देव ! भग्नम् । राजा—केन ।

---

( ९० ) रक्तप्रसाधितेति । सूत्रधारवचनमिदं क्रोधाद्भीमेनानूक्तम् । अस्य पूर्वार्द्धस्य "निर्वाणवैरदहनाः" इत्यस्य पताकाघटकत्वाभावादत्र ग्रन्थकृता तदुत्तरार्द्धमेवोपात्तम् । अत्र श्लेषलभ्योऽर्थस्तु तद्व्याख्यानावसरे (४६३ पृष्ठे) दर्शितमेव । तदाह—अत्र रक्तादीनामिति । रक्तादिपदानामित्यर्थः आदिना प्रसाधितविग्रहयोः परिग्रहः । रुधिरशरीररूपौ अर्थौ हेतू यस्य तादृशस्य श्लेषस्य वशेन तद्द्वारा भीमक्रोधोपचितो युधिष्ठिरोत्साहो, बीजं तस्य अर्थः प्रयोजनम् शत्रुमारणं प्रधानफलमिति यावत् तस्य प्रतिपादनात् सूचनात्, नेतुर्युधिष्ठिरस्य मङ्गलप्रतिपत्तौ नायकोत्साहजन्यशत्रुमरणानन्तरराज्यप्राप्तिरूपमङ्गलज्ञाने तथा च प्रतिनायकदुर्योधनमङ्गले चिन्तिते आगन्तुकेन प्रधानफलसूचनेन नायकमङ्गलज्ञानमिति द्वितीयं पताकास्थानकमिदम् । तथानुरक्ताद्यर्थे चिन्तिते शब्दरूपतल्लिङ्गोऽन्यो रुधिराद्यर्थ आगन्तुकेन शब्देन प्रयोगात् पताकास्थानसामान्यलक्षणसत्त्वमपि । इदं पताकास्थानमामुखान्तर्गतं वक्ष्यमाणं च वृत्तान्तर्गतमिति बोध्यम् ।

( ९१ ) तृतीयं पताकास्थानं दर्शयति—अर्थोपक्षेपकमिति । यत्तु स्थानम् अर्थस्य प्रस्तुतवस्तुन उपक्षेपकं सूचकं लीनमस्फुटार्थम्, सविनयं सनिश्चयम्, श्लिष्टेन उपयुक्तेन प्रत्युत्तरेण उपेतं युक्तञ्च वचो वचनं भवेदित्यर्थः, इदं तृतीयं पताकास्थानम् उच्यते।

( ९२ ) विवृणोति—लीनमिति । अव्यक्त अस्फुट अर्थो वक्तुरभिलषितविषयो यत्र तत् तथोक्तम्, सम्बन्धयोग्येन प्रस्तुतान्वयोपयुक्तेन अभिप्रायान्तरप्रयुक्तेन वक्त्रा अप्रस्तुतबोधाभिप्रायेणैव उक्तेन । सविनयमित्यत्र विनयो विशेषेण नयो निश्चयस्तदाह—विशेषेति । विशेषनिश्चयप्राप्त्या अनन्तरज्ञान्यतरनिश्चयसम्बधेनेत्यर्थः ।

( ९३ ) उदाहरति—यथेति । द्वितीयेऽङ्के—"राजा तत्किमिति अनास्तीर्णं कठिनं शिलातलमध्यास्ते देवी यतः—

लीलांशुकस्य पवलाकुलितांशुकान्तं त्वद्दृष्टिहारि मम लोचनबान्धवस्य ।
अध्यासितुं तव चिरं जघनस्थलस्य पर्याप्तमेव करभोरु ! ममोरुयुग्मम् ॥

( प्रविश्यापटीक्षेपेण सम्भ्रान्तः ) इत्यनन्तरमिति शेषः ।

कञ्चुकी—"अन्तः पुरचरो वृद्धो विप्रो गुणगणान्वितः ।
सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥"

कञ्चुकी—भीमेन। **राजा**—कस्य। **कञ्चुकी**—भवतः। **राजा**—आः, किं प्रलपसि। **कञ्चुकी**—(सभयम्) देव! ननु ब्रवीमि। भग्नं भीमेन भवतः। **राजा**—धिग् वृद्धापसद, कोऽयमद्य ते व्यामोहः- **कञ्चुकी** देव! न व्यामोहः। सत्यमेव।

(९४) 'भग्नं भीमेन भवतो मरुता रथकेतनम्।
पतितं किङ्किणीक्वाणबद्धाक्रन्दमिव क्षितौ॥'

(९५) अत्र दुर्योधनोरुभङ्गरूपप्रस्तुतसंक्रान्तमर्थोपक्षेपणम्।

**(९६) द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।**
**प्रधानार्थान्तराक्षेपी पताकास्थानकं परम्॥ ४१॥**

यथा रत्नावल्याम्—

(९७) 'उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।

---

इत्युक्तलक्षणः पुरुषविशेषः। "राजानं प्रत्याह" इति शेषः। देव राजन्! "देवो मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये" इति मेदिनी। भग्नमिति। "जरावैक्लव्ययुक्तेन विषद्गात्रेण कञ्चुकी" इत्युक्त्याऽस्य झटिति समग्रं वाक्यमुच्चरितुमसमर्थतया केवलभग्नमित्युक्तम्। भीमेन भयावहेन भीमसेनेन चेत्यर्थः। एवमुत्तरत्रापि। आ इति खेदे। किं प्रलपसि किमनर्थकं ब्रवीषि? वृद्धापसद! वृद्धाधम! व्यामोहो विभ्रम आगत इति शेषः।

(९४) किं भग्नमित्याह—भग्नमिति। भीमेन भयावहेन पक्षे भीमसेनेन मरुता वायुना पक्षे मरुद्रूपेण "आत्मा वै जायते पुत्र' इति न्यायात् भीमसेनस्य मरुद्रूपत्वं बोध्यम्। भग्नं छिन्नं भवतो रथस्य स्यन्दनस्य केतनं ध्वजः किङ्किणी क्षुद्रघण्टिका तस्याः क्वाणेन रवेण बद्धो जनितः आक्रन्दः क्रन्दनं येन तत्तादृशमिव सत क्षितौ भूमौ पतितम् अध आगतम्। दुर्योधनोरुभङ्गरूपार्थोपक्षेपकं भीमेनेत्यत्र भीमसेनरूपेण स्वानुष्ठानयोग्येन केतनभङ्गातिरिक्ताभिप्राययुक्तेन दुर्योधनस्य प्रत्युत्तरेणोपेतम्। भग्नमित्यादि गद्यभागे विशेष्यानभिधानादर्थस्यास्फुटत्वम्। एवं च रथकेतनभङ्गनिवेदनेऽभिमते ऊरुभङ्गनिवेदनमुपपन्नम्।

(९५) एतदेव दर्शयति—अत्रेति। दुर्योधनोरुभङ्गरूपः अप्रस्तुतविषयः प्रस्तुते रथकेतुभङ्गरूपविषये सङ्क्रान्तः पर्य्यवसन्नो यस्मिंस्तत्तथोक्तम् अर्थस्य उपक्षणं बोधनम्। तथा चात्र रथकेतुभङ्गरूपं अन्यस्मिन्नर्थे चिन्तिते आगन्तुकेन गदायुद्धेन ऊरुभङ्गरूपार्थप्रयोग इत्यतः पताकास्थानसामान्यलक्षणम्।

(९६) चतुर्थं पताकास्थानलक्षणमाह—द्व्यर्थो वचनेति। द्वावर्थौ यस्य स द्व्यर्थः सुश्लिष्टः अर्थद्वयेऽपि सुसम्बद्धः काव्यग्रन्थस्तत्र योजितो निवेशितः न तु सभाभ्यन्तरतया काव्यप्रयोगायोग्यः प्रधानान्तरार्थस्य मुख्यतया प्रतिपाद्यार्थान्तरस्य आक्षेपी सूचकः वचनविन्यासः काव्यग्रन्थे विन्यस्तवाक्यम् परं चतुर्थं पताकास्थानकं स्यादिति शेषः।

(९७) उद्दामेति। राज्ञा परिगृहीतां माधवीलतामकालकुसुमितां वासवदत्तायाः पराजयशंसिनीं तस्यैव दर्शयतो राज्ञ उक्तिरियम्। अहम् उद्दामा बन्धरहिताः परि-

अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन्कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥'

( ९८ ) अत्र भाव्यर्थः सूचितः ।

पूर्णा इति यावत् "उद्दामो बन्धरहित" इति मेदिनी एतादृशा उद्गता बहिर्गताः कलिकाः कोरकाः यस्याः सा तादृशी तां "कलिका कोरकः पुमान्" इत्यमरः। नारीपक्षे—उद्दामा निष्प्रतिबन्धा उत्कलिका प्रियविषयिणी उत्कण्ठा यस्याः सा तादृशी तां, "उत्कण्ठोत्कलिके समे" इत्यमरः। विशेषेण पाण्डुरा सर्वत्र पुष्पोद्गमाच्छुभ्रा रुक् कान्तिर्यस्याः सा तथोक्ता, तां, पक्षेऽप्येवमेव तत्र प्रियवियोगेन पाण्डुरकान्तिः, प्रारब्धा जृम्भा विकासो यया सा तथोक्ता तां, "जृम्भा विकासजृम्भणयोस्त्रिषु" इति मेदिनी। पक्षे प्रारब्धा जृम्भा जृम्भणम् आलस्याख्यं सञ्चारिभावो यया सा तादृशी तां, अविरलैः निरन्तरैः श्वसनानां वायूनां "श्वसनः स्पर्शनो वायुः" इत्यमरः, उद्गमैरुत्पत्तिभिः पक्षे निःश्वासोद्गमैश्च आत्मनः स्वस्य क्षणात् आयासां श्रमणजन्यक्लान्तिं पक्षे कामवेदनां च आतन्वतीं प्रकटयन्तीम् अन्यां समदनां मदनेन मन्मथेन सहितां सकामामित्यर्थः, नारीमिव स्त्रीमिव, समदनां मदनवृक्षसंश्लिष्टाम् इमां सन्निकृष्टाम् उद्यानलताम् आक्रीडवल्लीम् , "पुमानाक्रीड उद्यानम्" "वल्ली तु व्रततिर्लता" इति चामरः, पश्यन् दर्शनेन विलम्बं कुर्वन् पक्षे अवलोकयंश्च देव्या वासवदत्ताया मुखं वक्त्रं ध्रुवं निश्चितम् कोपेन मद्विलम्बजनितक्रोधेन अन्यनायिकाऽवलोकनजनितक्रोधेन च विशेषेण पाटला श्वेतरक्ता "श्वेतरक्तस्तु पाटलः" इत्यमरः, द्युतिः कान्तिर्यत्र तत्तथोक्तं "शोभा कान्तिर्द्युतिश्छविः" इत्यमरः, करिष्यामि विधास्यामि । पत्युः समदान्यनारीमुखदर्शने स्वीयायाः क्रोधेन आताम्रमुखं भवति । एतेन पद्येन राज्ञो नवमल्लिकादर्शने औत्सुक्यं प्रकटितम् ।

अत्र हि वत्सराजगृहीतनवमल्लिकापुष्पोद्गमेन स्वीयमाधवीलतायाः पुष्पोद्गमाभावेन च वासवदत्ताया मुखे पाटलिमोत्पत्तिरित्याशयः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक् ( १९८ पृ० )

( ९८ ) अत्र भाव्यर्थः सूचित इति । उद्दामोत्कलिकादिविशेषणविशिष्टां सागरिकां प्रति वासवदत्तातत्परिग्रहा परिणयानन्तरमेव राज्ञः साभिलाषदृष्टिपातेन वासवदत्तामुखस्य कोपपाटलीकरणरूपो भावी विषयः प्रागेव प्रकटित इत्यर्थः । उद्दामोत्कलिकामित्यादिविशेषणानां सुश्लिष्टत्वादिना "द्व्यर्थ" इत्यादेर्विशेषपताकास्थानलक्षणं बोध्यम् । तथा कुसुमितलतादर्शनजनितविलम्बेन भाविनि वासवदत्तामुखस्य कोपपाटलीकरणरूपार्थे चिन्तिते आगन्तुकेन सागरिका परिग्रहभावेन तां प्रतिभाविकाले सकामदृष्टिपातादपि वासवदत्तामुखस्य कोपपाटलीकरणरूपार्थः प्रयुक्त इति पताकास्थानसामान्यलक्षणसत्त्वम् ।

नन्वत्र द्वितीयपताकालक्षणमतिव्याप्तमिति चेत् ! अस्मिंल्लक्षणे प्रधानपदोपादानेन प्रधानार्थविशेषद्योतनं चेदम् अप्रधानार्थद्योतने तु तदित्याशयात् । एवं चोद्देश्यतया फलभूतार्थः प्रधानः तस्य हेतुभूतार्थस्तु अनुद्देश्यतया अप्रधानः । प्रकृतोदाहरणे उद्देश्यत्वेन प्रधानस्यैव सागरिकापरिग्रहस्य द्योतनम् , द्वितीयपताकास्थानोदाहरणे "रक्तप्रसाधित भुवः" इत्यादौ राज्यप्राप्तिरूपफलं प्रति हेतुत्वादप्रधानस्य भीमसेनरोषवृद्धयुधिष्ठिरोत्साहस्य द्योतनमिति स्पष्टं भेदः ।

( ९९ ) एतानि चत्वारि पताकास्थानानि क्वचिन्मङ्गलार्थं क्वचिदमङ्गलार्थं सर्वसंधिषु भवन्ति । काव्यकर्तुरिच्छावशाद्भूयो भूयोऽपि भवन्ति ।

(१००) यत्पुनः केनचिदुक्तम्—'मुखसंधिमारभ्य संधिचतुष्टये क्रमेण भवन्ति' इति, तदन्ये न मन्यन्ते । एषामत्यन्तमुपादेयानामनियमेन सर्वत्रापि सर्वेषामपि भवितु युक्तत्वात् ।

**( १ ) यत्स्यादनुचितं वस्तु नायकस्य रसस्य वा ।**
**विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ॥ ५० ॥**

( २ ) अनुचितमितिवृत्तं यथा—रामस्यच्छद्मना बालिवधः । तच्चोदात्तराघवे नोक्तम् । वीरचरिते तु वाली रामवधार्थमागतो रामेण हत इत्यन्यथा कृतः ।

( ९९ ) एतानीति । क्वचिन्मङ्गलार्थमिति । प्रथमे "अलमलमति मात्रम्" इत्यत्र मत्तुं प्रवृत्तवासवदत्ताज्ञानादभिलषितसागरिकाप्राप्तेः उद्दामोत्कलिकामित्यत्र भाविन्याः सागरिकाप्राप्तेश्च बोधनान्मङ्गलार्थता । "रक्तप्रसाधिते"त्यादौ तु कुरूणां मरणस्य "भग्नं भीमेने"त्यादौ दुर्योधनोरुभङ्गस्य च बोधनात्तेषाममङ्गलार्थता । एतेन "मङ्गलार्थान्युदाहृतानि चत्वारि" इति वदन्तोऽपास्ताः । भूयो भूयोऽपि स्थाने स्थाने इत्यर्थः ।

( १०० ) यत्पुनरिति । सन्धिचतुष्टये पताकास्थानस्य चतुष्कत्वात् प्रथमोपस्थितमुखे प्रतिमुखे, गर्भे, विमर्शे चेति सन्धिचतुष्टये इत्यर्थः । उपादेयानामुत्कृष्टत्वेन ग्राह्याणामित्यथः । सर्वत्राऽपि पञ्चसन्धिष्वपीत्यर्थः । सर्वेषामिति । सर्वपताकास्थानानामित्यर्थः ।

( १ ) काव्ये कवेर्न पारतन्त्र्यं किं तु स्वातन्त्र्यमेवेति दर्शयितुमाह—यत्स्यादनुचितमिति । यत् वस्तु इति वृत्तं नायकस्य रसस्य वा अनुचितं विपरीतस्वभावद्योतकत्वेन सङ्गतिशून्यम् रसस्यानुचितत्वं वक्ष्यमाणव्यभिचारिभावादेः स्वशब्दवाच्यत्वम्, विरुद्धं वा स्यात् तदितिवृत्तं कविना परित्याज्यम्, अन्यथा उचितं यथा भवति तथा पुराणादिविरुद्धमपि नायकस्य रसस्य वा सम्बन्धे उपयुक्तं वा स्वेच्छया कविः कल्पयेत् । कवेर्मुख्यतया नायकोत्कर्षप्रदर्शनस्य रसपुष्टिकरणस्य चोद्देश्यत्वादिति भावः । अत एव ध्वन्यालोके राजानकानन्दवर्धनाचार्यैः—

"अपारे काव्यसंसारे कविरेकः प्रजापतिः । यथास्मै रोचते विश्वं तथेदं परिवर्त्तते ॥
शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् । स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ॥
भावानचेतनानपि चेतनवच्चेतनानचेतनवत् ।
व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया ॥

इत्युक्तम् । विश्वं काव्यसंसारम् ।

( २ ) उदाहरणद्वारोक्तमर्थं किञ्चित् स्फुटीकरोति—अनुचितमिति । उदात्तराघवे नोक्तमेव मायुराजेनेति शेषः । अत्रेदम्बोध्यम्-रामादेर्हि छद्मना वालिवधादेरभिधाने गूढतरतदभिप्रायपरिज्ञानानिपुणानां नाटककाव्यादिभिः रसास्वादसुखपिण्डद्वारेण कृत्याकृत्यप्रवृत्तिनिवृत्तियोज्यानां सुकुमारमतीनां राजपुत्रप्रभृतीनां श्रीरामचन्द्रादिमहापुरुषचरितमालोच्यानुचितासु कथासु प्रवृत्तिप्रसङ्गः स्यात् । महापुरुषचरितमप्यनुचितमितिवृत्तं नाटकादौ परिहार्य्यमिति ।

वीरचरिते तु—इतोऽग्रे "रावणसौहृदेने"ति योज्यम् ।

( ३ ) अङ्केष्वदर्शनीया या वक्तव्यैव च संमता ।
या च स्याद्वर्षपर्यन्तं कथा दिनद्वयादिजा ॥ ५१ ॥
अन्या च विस्तरा सूच्या सार्थोपक्षेपकैर्बुधैः ।
( ४ ) अङ्केषु अदर्शनीया कथा युद्धादिकथा ।
( ५ ) वर्षादूर्ध्वं तु यद्वस्तु तत्स्याद्वर्षादधोभवम् ॥ ५२ ॥
( ६ ) उक्तं हि मुनिना—
'अङ्कच्छेदे कार्यं मासकृतं वर्षसंचितं वापि ।
तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित् ॥''
( ७ ) एवं च चतुर्दशवर्षव्यापिन्यपि रामवनवासे ये ये विराधवधादयः कथांशास्ते ते वर्षवर्षावयवदिनयुग्मादीनामेकतमेन सूचनीया न विरुद्धाः ।

---

( ३ ) ननु यदि दूराह्वानादयोऽङ्केष्वदर्शनीयास्तत्कथं नाटकादावुपक्षेपणीया । एकदिनमात्रस्य च कथाया अङ्कदर्शनीयत्वेन दिनद्वयादिकथायाः कथं परिग्रहः कथाविस्तारो वा रसविघ्नहेतुत्वात्कथमङ्के दर्शनीय इत्यत आह—अङ्केष्विति । या दूराह्वानवधादिप्रकाशिका कथा वृत्तान्तः अङ्केषु अदर्शनीया "दूराह्वानं बधो युद्धम्" इत्यादिनिषिद्धा अथ च वक्तव्यैव संमता अन्यथा पूर्वापरकथासंलग्नत्वाभावेन अवश्यवक्तव्यत्वेनाभीष्टा, या च कथा दिनद्वयादिजा दिनद्वयादिनिर्वर्त्या "नानेकदिननिर्वर्त्यकथया संप्रयोजितः" इत्यनेन तस्य अङ्के निषिद्धत्वेऽपि "वर्षपर्यन्तम्" इति नियमार्थं पृथगुपादानम् । अन्या एकदिननिर्वर्त्या विस्तरा अतिविस्तृता च या कथा सा तत् सर्वा अर्थोपक्षेपकैः वक्ष्यमाणार्थोपक्षेपकपरिभावितैर्विष्कम्भकादिपञ्चभिर्बुधैः कविभिः सूच्या प्रकाश्या, तस्या अपि- "नातिविस्तरः" इत्यनेनाङ्के निषिद्धत्वादिति भावः ।

( ४ ) अङ्केषु किमदर्शनीयमित्यत आह-अङ्केष्विति । स्फुटोर्थः ।

( ५ ) ननु एकवर्षकथैव यद्यर्थोपक्षेपेण वाच्या तदूर्ध्वं पुराणेतिहासादिषु प्रसिद्धानां वृत्तान्तानां किं परित्यागः स्यादित्यत आह-वर्षादूर्ध्वमिति । यत् वस्तु वृत्तान्तं वर्षादूर्ध्वं वर्षातिरिक्तकालनिर्वर्त्यं पुराणादिषु प्रसिद्धम् , पूर्वत्र वर्षपर्य्यन्तत्वमिह तु वर्षादूर्ध्वमिति भेदान्न पौनरुक्त्याशङ्का, तत् अर्थोपक्षेपकेष्वपि वर्षादधोभवं वर्षाभ्यन्तरनिर्वर्त्यं यथा स्यात्तथा कल्पयेत् , तथा सति अभीष्टो नितरां सिध्यतीति भावः ।

( ६ ) उक्तार्थे प्रमाणं दर्शयति-उक्तमिति । अङ्कच्छेद इति । मासकृतम् एकमासादिना निर्वर्त्यम् , वर्षसञ्चितं वा इतिवृत्तम् अङ्कस्यच्छेदे समाप्तौ विष्कम्भकादावित्यर्थः कार्यं कविना कर्त्तव्यम् । तु किन्तु कदाचित् अङ्कच्छेदेऽपि तत्सर्वं माससञ्चित वर्षसञ्चितं वापि इतिवृत्तम् वर्षादूर्ध्वं न कर्त्तव्यं वर्षातिरिक्तकालनिर्वर्त्यं कविना न रचनीयम् ।

( ७ ) फलितार्थमाह—एवञ्चेति । बहुसमयव्यापितया पुराणेतिहासादिषु प्रसिद्धानामपि वृत्तान्तानां स्वल्पसमयनिर्वर्त्येन वर्णनस्य नाट्यशास्त्रप्रवर्त्तकभरतादिमहर्षिसम्मतत्वे चेत्यर्थः । वर्षो हायनः वर्षावयवो मासः दिनयुग्मं वासरद्वयम् आदिपदादेकदिनादिकं च तेषामेकतमेन कविना प्रकटनीयाः, किन्तु तथात्वेन मृषात्वेऽपि न विरुद्धाः नाटकादौ न दोषाधायकाः । प्रसिद्धेतिवृत्तजन्यस्यापि नाटकादेः लोकमनोह्लादनस्यैव

( ८ ) दिनावसाने कार्यं यद्दिने नैवोपपद्यते ।
अर्थोपक्षेपकैर्वाच्यमङ्कच्छेदं विधाय तत् ॥ ५३ ॥
( ९ ) के तेऽर्थोपक्षेपका इत्याह—
( १० ) अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ ।
चूलिकाङ्काऽवतारोऽथ स्यादङ्कमुखमित्यपि ॥ ५४ ॥
( ११ ) वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥ ५५ ॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः ।
शुद्धः स्यात्स तु संकीर्णो नीचमध्यमकल्पितः ॥ ५६ ॥

---

प्रधानोद्देश्यत्वात् रसरहितभागानां संक्षेपबन्धनेनैव लोकमनोह्लादनसम्भवादिति भावः।

( ८ ) यच्चरितमभिनीय प्रदर्शयितुमारब्धोऽङ्कस्तद्यद्यत्र न सर्वं तथोपपद्येत तदा किं कर्त्तव्यमित्याकांक्षायामाह—दिनावसान इति। यत् कार्य्यम् इतिवृत्तम्, दिनमवसानमन्तोऽन्त्याऽवधिर्यस्य तस्मिन् तथाभूतेऽङ्के इत्यर्थः, नैव उपपद्यते तदपि कार्य्यम् अङ्कस्य छेदं विष्कम्भादिवाच्यं विधाय अर्थोपक्षेपकैर्वाच्यं कविना वर्णनीयम्। तथा सति संक्षेपतया रसरहितोऽपि अनायासेनोपपद्यत इति भावः।

तदुक्तं मुनिना—

"एकदिवसप्रवृत्तः कार्यस्त्वङ्कोऽथ बीजमाश्रित्य ।
आवश्यककार्याणामविरोधेन प्रयोगेषु ॥
दिवसाऽवसानकार्यं यद्यङ्के नोपपद्यते सर्वम् ।
अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधेयं हि ॥ इति ।

( ९ ) कारिकार्थं स्पष्टयितुमाह—के त इति ।

( १० ) अर्थोपक्षेपका इति। अर्थान् सरसवस्तून् उपक्षिपन्ति उपस्थापयन्ति ये ते तथोक्ताः। ते च पञ्च पञ्चविधाः। यथा—विष्कम्भकः, प्रवेशकः, चूलिका, अङ्कावतारः, अङ्कमुखञ्च।

( ११ ) यथोद्देशलक्षणं निरूपयति—वृत्तवर्त्तिष्येति। वृत्तानामतीतानाम्, वर्तिष्यमाणानाम् आगामिनाम्, कथांशानां वृत्तान्तभागानाम्, निदर्शकः ज्ञापकः रूपकांशविशेषः, संक्षिप्तार्थः अङ्कापेक्षया स्वल्पप्रसारः, अङ्कस्य आदौ आरम्भे प्रयोजितो विष्कम्भः स्यादित्यत्र सम्बन्धः। विष्कभ्नाति मध्यमांशपूरणेन पूर्वापराङ्कगतवृत्तान्तं प्रतिपादयति यः स तथोक्तः। स्कम्भेति सौत्रो धातुस्तस्मात् कर्तरि "ण्वुल् तृचौ" इति ण्वुलि विष्कम्भकः, पचादित्वादचि तु विष्कम्भ इति स्वरूपभेदेऽपि नार्थभेदः। "आदावङ्कस्य दर्शितः" इत्युक्त्याऽस्य प्रथमेऽङ्केऽपि सम्भव इति द्योतितम्।

शुद्धसङ्कीर्णभेदेन द्विविधो विष्कम्भकः। तत्र मध्येन मध्यमेन "नात्युच्चनीचपा मध्यमित्यभिधीयते" एकेन पात्रेण मध्यमाभ्यां द्वाभ्यां पात्राभ्यां वा मध्यमैर्बहुभिः पात्रैर्वा सम्प्रयोजितः सम्प्रयुक्तः कल्पित इत्यर्थः। संस्कृतात्मकः शुद्धः स्यात्। नीचम् अधमम्, मध्यमाभ्यां पात्राभ्यां कल्पितः प्रयोजितः संस्कृतप्राकृतात्मकः सङ्कीर्णः मिश्रः

( १२ ) तत्र शुद्धो यथा—मालतीमाधवे श्मशाने कपालकुण्डला । संकीर्णो यथा—रामाभिनन्दे क्षपणककापालिकौ ।

अथ प्रवेशकः—

**( १३ ) प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।**
**अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥ ५७ ॥**

( १४ ) अङ्कद्वयस्यान्तरिति प्रथमाङ्केऽस्य प्रतिषेधः । यथा—वेण्यामश्वत्थामाङ्के राक्षसमिथुनम् ।

स्यात् । तथा चैकजातीयपात्रप्रयुक्तत्वेन शुद्धत्वम्, विभिन्नजातीयपात्रप्रयुक्तत्वेन सङ्कीर्णत्वमित्यवगन्तव्यम् । इदमत्र बोध्यम्—विष्कम्भके पात्राणां संस्कृतभाषित्वस्य लक्ष्येषु दर्शनात्, मध्यमपात्राणां हि प्राकृतभाषित्वम् । तदुक्तं भाषार्णवे—

"भाषामध्यमपात्राणां नाटकादौ विशेषतः ।
महाराष्ट्री सौरसेनीत्युक्ता भाषा द्विधा बुधैः ॥" इति ।

नाट्यदर्पणेऽपि भङ्ग्यन्तरेणोक्तः—

अङ्कानर्हस्य वृत्तस्य त्रिकालस्यानुरञ्जिना ।
संक्षिप्य संस्कृतेनोक्तिरङ्कादौ मध्यमैर्जनैः ॥
शुद्धो विष्कम्भकस्तत्र सङ्कीर्णो नीचमध्यमैः ।
अङ्कसन्धायकः शक्यसन्धानातीतकालवान् ॥ इति ।

( १२ ) यथोक्तमुदाहर्तुमाह—तत्रेति । मालतीमाधवे प्रकरणरूपके । अघोरघण्टस्य कापालिका शिष्या तया प्रयोजित इति शेषः । अयमाशयः—मालतीमाधवे तृतीयेऽङ्के 'ततः प्रविशति आकाशयानेन भीषणोज्ज्वलवेषा कपालकुण्डला ( परिक्रम्याऽवलोक्य च गन्धमाघ्राय ) इदं तावत्पुराणनिम्बतैलाक्तपरिभृज्यमानरसोनगन्धिभिश्रिताधूमैः पुरस्ताद्विभावितस्य महतः श्मशानवटस्य नेदीयः करालायतनम्...... ( परिक्रम्य निष्क्रान्ता ) इत्येवं कपालकुण्डलया मध्यमपात्रत्वाच्छुद्धो विष्कम्भः । एवमुत्तरत्रापि ।

( १३ ) द्वितीयमर्थोपक्षेपकं लक्षयति—प्रवेशक इति । अङ्कद्वयस्य अन्तर्मध्ये अनुदात्तोक्त्या संस्कृतेतरभाषया नीचेन नीचाभ्यां पात्राभ्यां नीचैर्वा पात्रैः प्रयोजित रूपकांशविशेषः अप्रत्यक्षानर्थान् सामाजिकहृदये प्रवेशयति सूचयतीति प्रवेशको विज्ञेयः, अत्र नीचत्वं हि संस्कृतेतरभाषित्वादेव तेन सख्यादिभिश्च प्रवेशकस्य प्रयोजितत्वम् । शेषम् उक्तादन्यम् विष्कम्भके यथा विष्कम्भकवद्विज्ञेयम् । एवं च "वृत्तिवर्त्तिष्यमाण" इत्यादिविशेषणमत्राऽप्यवश्यं प्रयोक्तव्यमिति भावः ।

( १४ ) अङ्कद्वयपदस्य द्वितीयाद्यङ्कपरत्वमिति स्पष्टयति—अङ्कद्वयास्यान्तरिति । प्रथमाङ्के प्रथमाङ्कादावित्यर्थः । कर्त्तव्ये विधेये अस्य प्रवेशकस्य । वेण्यां वेणीसंहारनाटके, अश्वत्थमाङ्के अश्वत्थामप्रधानतृतीयाऽङ्के । राक्षसमिथुनमिति राक्षस्या राक्षसेन च नीचोक्त्या सिन्धुराजवधः, भाविदुःशासनवधश्च सूचित इति भावः । अत्र पात्रवैलक्षण्यप्रतिपादनेन विष्कम्भकादस्य वैलक्षण्यं प्रतिपादितम् ।

अथ चूलिका—

( १५ ) **अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका ।**

( १६ ) यथा वीरचरिते चतुर्थाङ्कस्यादौ—'( नेपथ्ये ) भो भो वैमानिकाः, प्रवर्तन्तां रङ्गमङ्गलानि' इत्यादि । 'रामेण परशुरामो जितः ।' इति नेपथ्ये पात्रैः सूचितम् ।

अथाङ्कावतारः—

( १७ ) **अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ॥ ५८ ॥**

( १५ ) तृतीयमर्थोपक्षेपकं लक्षयति—अन्तर्जवनिकासंस्थैरिति । जवनिका नटानां वेशस्थानम्, तस्या अन्तराले संस्थैः संस्थितैः पात्रैः जवनिकान्तर्देशस्थायिभिरित्यर्थः, अर्थस्य कस्यचिद्वस्तुविशेषस्य सूचना सा चूडेव चूलिका रङ्गाभिनेयार्थस्य नेपथ्यपात्रोक्तेः शिखाकल्पत्वात् । अत्रान्तर्जवनिकासंस्थैरिति बहुवचनेनैतत्सूचकानां सम्भाव्यमानानां सर्वेषामेव पात्राणां जवनिकाऽन्तर्देशस्थितत्वं ग्रन्थकृदभिप्रेतम्, अत एव शाकुन्तलचतुर्थाङ्कविष्कम्भके जवनिकान्तर्देशस्थितेन दुर्वाससा शापाभिव्यञ्जनेऽपि बाह्यस्थिताभ्यामेवानसूयाप्रियम्वदाभ्यामर्थसूचनान्नैतल्लक्षणातिव्याप्तिरिति बोध्यम् । तथा च यत्र प्रवेशविनिर्गमौ प्रत्यक्षसिद्धौ साङ्कबहिःस्थिता तत्र तृतीया चूलिका ।

काव्येन्दुप्रकाशे तु विशेषोऽत्र प्रतिपादितः—

"अनिर्गताप्रविष्टैश्च नेपथ्यान्तर्गतैस्तथा ।
प्रयोजिता मध्यपात्रैः सूचिका चूलिका भवेत् ॥
कर्त्तव्याद्येतराङ्केषु स्यादादौ मध्य एव वा ।
सा खण्डाखण्डभेदेन द्विविधा परिकीर्त्तिता ॥
आद्यान्तः स्याद्द्वितीया तु सप्रवेशविनिर्गमा ॥" इति ।

( १६ ) उदाहरति–यथेति । वैमानिकाः विमानचारिण इत्यर्थः । रङ्गमङ्गलानि नाट्यादिमहोत्सवाः ।

अयमाशयः—तत्र हि प्रवर्त्तन्तां मङ्गलानीत्युद्घोषानन्तरम्—

कृशाश्वान्तेवासी जयति भगवान्कौशिकमुनिः
सहस्रांशोर्वंशे जयति जगति क्षत्रमधुना ।
विनेता क्षत्रारेर्जगदभयदानव्रतधनः
शरण्यो लोकानां दिनकरकुलेन्दुर्विजयते ॥

इति पात्रैः पठित्वा "रामेण परशुरमो जित" इति सूचितं न तूक्तम् ।

यथा वा रत्नावल्याम्—

अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-
वास्थानीं समये समं नृपजनः सायन्तने सम्पतन् ।
सम्प्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥

इति नेपथ्यपात्रेण बन्दिना काननस्थस्योदयनवस्तुनः सागरिकां प्रति सूचनात् चूलिका ।

( १७ ) चतुर्थमर्थोपक्षेपकं लक्षयति—अङ्कान्त इति । यस्य कस्यचिदङ्कस्य अन्ते

**यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ।**

( १८ ) यथा—अभिज्ञाने पञ्चमाङ्के पात्रैः सूचितः षष्ठाङ्कस्तदङ्कस्याङ्गविशेष इवावतीर्णः ।

अथाङ्कमुखम्—

**( १९ ) यत्र स्यादङ्क एकस्मिन्नङ्कानां सूचनाखिला ॥ ५९ ॥**

**तदङ्कमुखमित्याहुर्बीजार्थख्यापकं च तत् ।**

( २० ) यथा—मालतीमाधवे प्रथमाङ्कादौ कामन्दक्यवलोकिते भूरिवसुप्रभृतीनां भाविभूमिकानां परिक्षिप्तकथाप्रबन्धस्य च प्रसङ्गात्संनिवेशं सूचितवत्यौ ।

---

अवसाने पात्रै अङ्कः सूचितः प्रयोजितः, यत्रेतिय इत्यर्थं । तस्य अङ्कस्य विभागस्तद्भेदः तदभिन्नत्वेनेत्यर्थः अङ्कः अङ्कान्तरम् अवतरति आविर्भवति एष स अभिन्नत्वेन अङ्कावतारमवतरत्यस्मिन्नित्यङ्काऽवतार इति स्मृतः कथितः । सक्षिप्तार्थत्वनियमो नात्रेति ज्ञेयम् ।

एकोनविंशाध्याये मुनिनाऽप्युक्तम्—

अङ्कान्तरेऽथवाङ्के निपतति यस्मिन् प्रयोगमासाद्य ।
बीजार्थयुक्तियुक्तो ज्ञेयो ह्यङ्काऽवतारोऽसौ ॥ इति ।

(१८) उदाहरति-यथेति । अभिज्ञाने अभिज्ञानशाकुन्तलनाटक इत्यर्थः, पञ्चमाङ्के पञ्चमाङ्कान्त इत्यर्थः, । षष्ठाङ्क इति । अङ्कविच्छेदेऽपि तदङ्कोत्थापिताऽऽकाङ्क्षयैवावतीर्णोऽपराङ्क इत्यर्थः, तदाह-तदङ्कस्याङ्गेति । अङ्गविशेष इवेति । तद्वृत्तान्तोपजीवित्वादिति भावः ।

परे तु यत्राङ्केऽन्याङ्कानां बीजलक्षणोऽर्थोऽवतार्य्यते तमङ्कावतारमामनन्ति । यथा रत्नावल्यां द्वितीयोऽङ्कः, तत्र हि (क)"ईदिसस्स कन्नगारयणस्स ईदिसे य्येव वरे अहिलासेण भोदव्वं" इत्यादिकोऽनुरागलक्षणः सर्वाङ्कानामर्थं इति ।

( १९ ) अथ पञ्चममर्थोपक्षेपकं लक्षयति—यत्रेति । एकस्मिन्नङ्के अङ्कानां समस्ताङ्कवक्ष्यमाणानामर्थानाम् अङ्कनिबन्धनीयवस्तूनामिति यावत् । अखिला सूचना स्यात् कवयस्तम् "अङ्कमुखम्" इत्याहुः । सर्वेषामङ्कानां विषयसूचनद्वारा मुखे तेषां प्रथममित्यङ्कमुखम् । तच्च बीजार्थस्य ख्यापकं वक्ष्यमाणार्थप्रकृतिविशेषस्य सूचकं भवेत् अङ्कावतारे तदङ्कमात्रसूचनम् , अङ्कमुखे तु समस्ताङ्कसूचनेति भेदो ज्ञेयः ।

भरतस्तु—

विश्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषेण वा ।
यदुपक्षिप्यते पूर्वं तदङ्कमुखमुच्यते ॥ इत्याह ।

( २० ) उदाहरति—यथेति । प्रथमाङ्कादौ प्रथमाङ्कस्य पूर्वमित्यर्थः । भाविन्यो भूमिकास्तद्वेशरचना येषां तेषान्तथोक्तानाम् परिक्षिप्तकथाप्रबन्धस्य समग्राङ्कसंक्षिप्तवृत्तान्तनिकरस्य । इदानीं प्रचलितमालतीमाधवे तु तस्य विष्कम्भकसंज्ञेत्यवलोक्यते ।

अयमाशयः—भाविनीनां नेपथ्यरचनानामपि नाम तयोः कल्याणिनोर्भूरिवसुदेवरातापत्ययोर्मालतीमाधवयोरभिलषितः पाणिग्रहो भवेत् "अयि किन्नु वेत्सि यदेकत्र नो विद्यापरिग्रहाय नानादिगन्तवासिनां साहचार्यमासीत्तदव चास्मत्सौदामनीसमक्षमन-

---

( क ) ईदृशस्य कन्यकारत्नस्येदृश एव वरेऽभिलाषेण भवितव्यम् इति संस्कृतम् ।

( २१ ) अङ्कान्तपात्रैर्वाङ्कास्यं छिन्नाङ्कस्यार्थसूचनात् ॥ ६० ॥

( २२ ) अङ्कान्तपात्रैरङ्कान्ते प्रविष्टैः पात्रैः । यथा वीरचरिते द्वितीयाऽङ्कान्ते—'(प्रविश्य) **सुमन्त्रः**—भगवन्तौ वशिष्ठविश्वामित्रौ भवतः सभार्गवानाह्वयतः । **इतरे**—क्व भगवन्तौ । **सुमन्त्रः**—महाराजदशरथस्यान्तिके । **इतरे**—तत्तत्रैव गच्छावः' इत्यङ्कपरिसमाप्तौ । '( ततः प्रविशन्त्युपविष्टा वशिष्ठविश्वामित्रपरशुरामाः । )' इत्यत्र पूर्वाङ्कान्त एव प्रविष्टेन सुमन्त्रपात्रेण शतानन्दजनककथाविच्छेदे उत्तराङ्कमुखसूचनादङ्कास्यम्' इति ।

( २३ ) एतच्च धनिकमतानुसारेणोक्तम् । अन्ये तु—'अङ्कावतरणेनैवेदं गतार्थम्' इत्याहुः ।

---

योर्भूरिवसुदेवरातयोर्वृत्तेयं प्रतिज्ञा । अवश्यमावाभ्यामपत्यसम्बन्धः कर्त्तव्य इति तदिदानीं विदर्भराजमन्त्रेणासता देवराजेन माधवं पुत्रमान्विक्षिकिश्रवणाय कुण्डनपुरादिमां पद्मावतीं प्रहिण्वता सुविहितमित्यादिना कामन्दक्या भूरिवसुदेवरातमालतीमाधवादीनां तच्चरितानां च" (क) अज्ज माहदोवि कोदूहल उप्पादिअ मए प्पउत्तमअणमहूसवं मअदणोज्जाणं पभादि अणुप्पेसिदो तहिं किल मालदी गमिस्सदि तदो अण्णोण्णसंदंसणं भोडत्ति । (ख) तदो किं ति मालदीं अमच्चो माहवस्स अप्पणा ण पडिवादेहि जेण चोरिआविआहे भअवदी तुवरावेदि" इत्यादिनाऽवलोकितया च मदनोद्यानादीनां परिणयरहस्यादेश्च सूचना कृता तस्मात्स्पष्टमङ्कमुखत्वमेतस्येति ।

( २१ ) लक्ष्यविशेषख्यापनार्थं धनिकेनोक्तमङ्कमुखस्य लक्षणान्तरमाह—अङ्कान्तपात्रैरिति । अङ्कान्ते प्रविष्टैः पात्रविशेषैरित्यर्थः । छिन्नस्य भिन्नस्य परिवर्त्तिन अङ्कस्य अर्थसूचनात विषयद्योतनाद्वा अङ्कास्यम् अङ्कमुखं स्यात् । पूर्वलक्षणे पूर्वं प्रविष्टपात्रैः समस्ताङ्कार्थसूचनम्, अत्र तु अङ्कान्तः प्रविष्टपात्रैस्तदुत्तराङ्कार्धमात्रसूचनमिति भेदः ।

( २२ ) अङ्कान्तपात्रैरिति । अङ्कान्ते प्रविष्टानि पात्राणि तैः, मध्यमपदलोपिसमासः । उदाहरति—यथेति । वशिष्ठविश्वामित्राविति । अतिशयेन वशी जितेन्द्रिय इति वशिष्ठः, विश्वं मित्रमस्येति विश्वामित्रः "मित्रे चर्षौ" इति पा० सूत्रेण दीर्घः, वशिष्ठश्च विश्वामित्रश्चेति तौ तथोक्तौ । भवतो युष्मान् । सभार्गवान् परशुरामजनकशतानन्दान् । इतरे परशुरामादयः । भगवन्तौ वशिष्ठविश्वामित्रौ । तत्र दशरथस्यान्तिके । अङ्कसमाप्तौ 'सत्या'मिति शेषः, तृतीयाङ्कारम्भे इत्याशयः । पूर्वाङ्कान्ते तृतीयापेक्षया पूर्वोऽङ्को द्वितीयस्तदन्ते । उत्तराङ्कमुखसूचनात् तृतीयाङ्कद्वारस्य द्योतनात् । अङ्कास्यम् अङ्कमुखं "ज्ञेय" मिति शेषः ।

( २३ ) एतल्लक्षणं धनिकमत एवेत्यत आह—एतच्चेति । धनञ्जयमतानुसारेण दशरूपककारमतमाश्रित्येति भावः । यदुक्तं तेन—

"अङ्कास्य पात्रैरङ्कास्यमिन्नाङ्कस्यार्थसूचनात्" इति ।

अङ्कावतरणेनैवेति । अङ्कावतारलक्षणेनैव इदम् उपरोक्तवीरचरितस्थानम् गतार्थं लब्ध-

---

(क) 'अद्य माधवोऽपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनोत्सव मदनोद्यानं प्रभातेऽनुप्रेषितस्तत्र किल मालती गमिष्यति तत्रान्योन्यसंदर्शनं भवत्विति, इति संस्कृतम् । (ख) "ततः किमिति मालती ममात्यो माधवस्यात्मना न प्रतिपादयति येन चौरिकाविवाहे भगवती त्वरयति, इति संस्कृतम् ।

( २४ ) अपेक्षितं परित्यज्य नीरसं वस्तु विस्तरम् ।
यदा संदर्शयेच्छेषमामुखानन्तरं तदा ॥ ६१ ॥
कार्यो विष्कम्भको नाट्य आमुखाक्षिप्तपात्रकः ।
( २५ ) यथा—रत्नावल्यां यौगंधरायणप्रयोजितः ।
( २६ ) यदा तु सरसं वस्तु मूलादेव प्रवर्तते ॥ ६२ ॥
आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः ।
( २७ ) यथा—शाकुन्तले ।
( २८ ) विष्कम्भकाद्यैरपि नो वधो वाच्योऽधिकारिणः ॥ ६३ ॥
अन्योऽन्येन तिरोधानं न कुर्याद्रसवस्तुनोः ।

विषयम् । एवं चात्राङ्कावतारलक्षणसत्त्वादयमङ्कावतार एवेत्येतदर्थं लक्षणान्तरमनावश्यकमेवेति तेषामभिप्रायः ।

वस्तुतस्तु—आहुरित्यनेनास्वरसः सूचितस्तद्बीजं तु स्वमतस्याप्रतिपादनमेव, तस्मादिदं विभिन्नप्रकारकमङ्कमुखमेवेति सुधीभिर्विभावनीयम् ।

अथ विष्कम्भकादीनां व्यवस्थामाह नाट्यदर्पणे—

"आद्यौ सूच्ये बहावन्ये क्रमादल्पेतरे तमे ।"

बहौ बहुकाले च सूच्ये आद्यौ विष्कम्भक-प्रवेशकौ । अल्पे अल्पकाले अङ्कास्यम्, अल्पतरे अल्पतरकाले च चूलिका अन्यतमे अन्यतमकाले च अङ्काऽवतार इति ।

( २४ ) विष्कम्भककरणमङ्कादावेवेति प्रागदर्शितम्, इदानीं तस्यैव विशेषवशादामुखस्यान्तेऽपि करणमित्याह—अपेक्षितमिति । यदा अपेक्षितम् एकवृत्तान्तगतत्वेनावश्यमाकाङ्क्षितं नीरसम् उद्देश्यरसशून्यम्, विस्तरं वस्तु बहुलं तद्वृत्तान्तांशम्, परित्यज्य विच्छिद्य कविः शेषं सरसं वस्तु सन्दर्शयेत् सन्दर्शयितुमभिलषेत् निर्मिमित्सेदिति यावत् । तदा तेन कविना आमुखानन्तरं प्रस्तावनानिर्मितेः परम् आमुखेन तया प्रस्तावनया आक्षिप्तं सूचितं पात्रं यस्य सस्तथोक्तो विष्कम्भको नाट्ये स्वनिर्मातव्यरूपके कार्य्यो निर्म्मातव्यः । विष्कम्भक इत्युपलक्षणम्, तेन प्रवेशकादेरपि सङ्ग्रहो बोध्यः ।

( २५ ) उदाहरति-यथेति । यौगन्धरायणप्रयोजित इति । विष्कम्भक इति शेषः । तत्र हि अपेक्षितो वत्सराजसागरिकयोर्वृत्तान्तः, तं परित्यज्यामुखानन्तरं स्वेच्छाचारी भीत एवास्मि भर्त्तुरिति नीरसं स्वभयं यौगन्धरायणेन दर्शितम् ।

( २६ ) "आदावङ्कस्य दर्शितः" इति यदुक्तं तद्विषयं दर्शयति-यदा त्विति । मूलादेव नीरसवस्त्वमिश्रणादेव सरसं वस्तु वृत्तान्तः प्रवर्त्तते, तदा आमुखेन प्रस्तावनया य आक्षेपः पात्रप्रवेशनसूचनं तं संश्रयति अवलम्बते तमाश्रित्य प्रवृत्त इत्यर्थः यः स तथोक्तः अङ्कः आदावेव कविना निर्मातव्यः स्यात् । प्रथमं तत्र विष्कम्भकनिर्माणस्य नास्ति प्रयोजनमिति भावः ।

( २७ ) उदाहरति—यथेति । शाकुन्तल इति अभिज्ञानशाकुन्तलनाटक इत्यर्थः । तत्र हि मूलादेवानुसूयया प्रवर्त्तितः स रस एव शकुन्तलाया विरहः ।

( २८ ) विष्कम्भकाद्यैरपीति । विष्कम्भकाद्यैरपि विष्कम्भकप्रवेशकादिद्वाराऽपि अधिकारिणः मुख्यफलस्वामिनः नायकादेः वधो न वाच्यः तेन कविना नायकवधः क्वापि न

( २९ ) रसः शृङ्गारादिः ।

( ३० ) यदुक्तं **धनिकेन**—

( ३१ ) 'न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत् ।
रसं वा न तिरोदध्याद्वस्त्वलंकारलक्षणैः ॥' इति ।

**( ३२ ) बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ॥ ६४ ॥**
**अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ।**

अर्थप्रकृतयः प्रयोजनसिद्धिहेतवः ।

तत्र बीजम्—

**( ३३ ) अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति ॥ ६५ ॥**
**फलस्य प्रथमो हेतुर्बीजं तदभिधीयते ।**

---

वर्णनीय इत्यर्थः । अत्रापेरुपादानादङ्कैस्तु न वर्णनीय एवेति द्योतितम् उभयत्रापि रसविच्छेदहेतुत्वादित्याशयः । तथा रसवस्तुनोः उद्देश्यरसवृत्तान्तयोः अन्योऽन्येन परस्परद्वारा तिरोधानम् विच्छिन्नत्वम् कविः न कुर्य्यात् । एवं चोद्देश्यरसं तिरस्कृत्य केवलं वृत्तान्तं न वर्णयेत् वृत्तान्तमवर्णयित्वा वा नैकविषय एव केवलं रसं वर्णयेत् किं तु रससंयुक्तमेव यथाक्रमं वृत्तान्तं वर्णयेदिति भावार्थः ।

( २९ ) रसपदवाच्यं प्रदर्शयति—रस इति । स्पष्टम् ।

( ३० ) उक्तार्थे प्राचां सम्मतिं दर्शयति—यदुक्तमिति । धनञ्जयेन दशरूपककृतेत्यर्थः ।

( ३१ ) नचातीति । वस्तु वृत्तान्तं रसतो रससम्बन्धात् अतिदूरं विच्छिन्नतां तिरोधानत्वं नच नेव नयेत् कविः प्रापयेत् । प्रयोगवशेन तु किञ्चिद्दूरं नेतुं शक्यत इत्यतिना सूचयति । वस्त्वलङ्कारलक्षणैः वस्त्वलङ्कारस्वरूपैः वा रसं न तिरोदध्यात् न तदास्वादप्रतिबन्धमुत्पादयेदित्यर्थः ।

उक्तञ्च महर्षिणाष्टादशाध्याये नाट्यशास्त्रे—

अङ्के प्रवेशके वा प्रकरणमाश्रित्य नाटके वापि ।
न वधः कर्त्तव्यः स्याद्यस्तत्र स नायकः ख्यातः ॥
अवतरणमेव कार्य्यं सन्धिर्वा ग्रहणमेव वा नित्यम् ।
बहुभिः कार्य्यविशेषैः प्रवेशकैः सूचयेद्वापि ॥ इति ।

( ३२ ) "नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम्" इत्युक्तदिशा सन्धिलक्षणं प्रक्रान्तं तन्निरूपणायैव तद्घटकार्थप्रकृतीः निरूपयति—बीजमिति । प्राक्रियते प्रयोजनं साध्यते आभिरिति प्रकृतयो हेतवः । तथा च बीजम्, विन्दुः, पताका, प्रकरी, कार्य्यञ्च, एताः पञ्च अर्थस्य प्रयोजनस्य प्रकृतयः सिद्धकारणानि ज्ञात्वा यथाविधि कवीनां विधिमनतिक्रम्य यथार्थेऽव्ययीभावः, योज्या दृश्ये कविना सन्निवेशनीयाः ।

( ३३ ) बीजं निरूपयति—अल्पमात्रमिति । यत् अल्पमात्रं समुद्दिष्टम् आदावङ्कुरितत्वमात्रेण प्रदर्शितं सत् बहुधा विसर्पति क्रमिकसहकारियोगेनोपचितं विविधावान्तरकार्याणि जनयति, तथा फलस्य नायकमुख्योद्देश्यस्य प्रथमो हेतुः आदिकारणम्, तत् धान्यबीजवत् बीजम् अभिधीयते कविभिरिति शेषः । बीजं हि नाटकादेरितिवृत्तार्थस्योपायः, आमुखं तु रूपकप्रस्तावनार्थं नटस्यैव वृत्तमिति बोध्यम् ।

( ३४ ) यथा—रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तिहेतुर्दैवानुकूल्यलालितो यौगन्धरायणव्यापारः ।

A यथा वा—वेण्यां द्रौपदीकेशसंयमनहेतुर्भीमसेनक्रोधोपचितो युधिष्ठिरोत्साहः ।

**( ३५ ) अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ॥ ६६ ॥**

( ३६ ) यथा—रत्नावल्यामनङ्गपूजापरिसमाप्तौ कथार्थविच्छेदे सति 'उदयनस्येन्दोरिवोद्वीक्षते' इति सागरिका श्रुत्वा '( सहर्षम् ) कधं एसो सो उदअणणरिन्दो' इत्यादिरवान्तरार्थहेतुः ।

**( ३७ ) व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ।**

---

अत्र विशेषो मातृगुप्ताचार्यैरुक्तः—

फले यस्य हि संहारः फलबीजं तु तद्भवेत् ।
वस्तुबीजं कथा ज्ञेया अर्थबीजं तु नायकः ॥ इति

( ३४ ) उदाहरति—यथेति । रत्नावलीप्राप्तिः फलं तस्य हेतुः । दैवानुकूल्येन लालितो दैवानुगुण्योपचितः । इदं च व्यापाररूपम् ।

A उदाहरणान्तरं प्रदर्शयति—यथा वेति । वेण्यां वेणीसंहारनाटके । द्रौपद्याः केशसंयमनं प्रधानं फलम् तस्य हेतुः । भीमसेनस्य क्रोधेन उपचितो जनितः । युधिष्ठिरोत्साहः युद्धार्थमभ्यनुज्ञानं बीजमित्यर्थः ।

( ३५ ) बिन्दुरूपामर्थप्रकृतिं निरूपयति—अवान्तरेति । अवान्तरार्थस्य सकलवृत्तान्तकभागस्य विच्छेदे समाप्तत्वेन लब्धविश्रामे अच्छेदस्य अविरामस्य कारणं हेतुर्बिन्दुः । जले तैलबिन्दुवत्प्रसारितत्वात् बिन्दुरिति व्यपदेशः । केवलं बीजं मुखसन्धावेव निबध्यते बिन्दुस्तु तदनन्तरमिति भेदः ।

( ३६ ) उदाहरति—यथेति । काव्यार्थस्य तद्वृत्तान्तभागस्य विच्छेदे समाप्तत्वेन लब्धविश्रामे सति । उदयनेति ।

अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा
वास्थानीं समये समं नृपजनः सायन्तने संपतन् ।
संप्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥

इति समस्तपद्यम् । इदञ्च बन्दिवाक्यम् । कधमित्यादि "कथमेष स उदयननरेन्द्रः" इति संस्कृतम् । वत्सराज एवोदयननामा । अवान्तरार्थस्य तन्नाटिकागतवृत्तान्तभागान्तरस्य हेतुः । उदयनं प्रति सागरिकाया अनुरागबोधनेन तद्वृत्तान्तभागान्तराकाङ्क्षाजननादिति भावः । अङ्कोऽवतारे तु पूर्वप्रविष्टपात्रैः सूचनेति ततोऽस्य भेदः ।

रत्नावल्यामेव द्वितीयबिन्दुर्यथा—देवीगमनानन्तरमेवान्तराविच्छेदे विदूषकं प्रति राज्ञो वचनम् । "धिङ् मूर्ख ! अलं परिहासेन आभिजात्येन गूढो देव्यास्त्वया न लक्षितः कोपः । तथाहि देवीमेव प्रसादयितुं गच्छाव" इति ।

( ३७ ) पताकारूपामर्थप्रकृतिं निरूपयति—व्यापीति । व्यापि निर्वहणपर्य्यन्तं स्थायि पात्रान्तरनिष्पाद्यं प्रधानफलसाधनं प्रासङ्गिकम् , वृत्तं वृत्तान्तः पताका इत्यभिधीयते ।

उक्तं च मुनिना—

प्रासङ्गिकं परार्थस्य स्वार्थो यस्य प्रसङ्गतः ।
सानुबन्धं पताकाख्यं प्रकरी च प्रदेशभाक् ॥

( ३८ ) यथा—रामचरिते सुग्रीवादे वेण्यां भीमादेः शाकुन्तले विदूषकस्य चरितम् ।

( ३९ ) **पताकानायकस्य स्यान्न स्वकीयं फलान्तरम् ॥ ६७ ॥**
**गर्भे संधौ विमर्शे वा निर्वाहस्तस्य जायते ।**

( ४० ) यथा—सुग्रीवादेः राज्यप्राप्त्यादि ।

( ४१ ) यत्तु मुनिनोक्तम् –
'आ गर्भाद्वा विमर्शाद्वा पताका विनिवर्तते ।' इति ।

---

यद्वृत्तं हि परार्थं स्यात्प्रधानस्योपकारकम् ।
प्रधानवच्च कल्प्येत सा पताकेति कीर्त्तिता ॥ इति ।

( ३८ ) उदाहरति—यथेति । स्पष्टम् ।

( ३९ ) उक्तपताकाया निर्वहणसन्धिपर्य्यन्तमपि व्यापित्वं बोधयितुमाह—पताकानायकस्येति । यस्य वृत्तान्तः पताकेत्यभिधीयते स पताकानायकः सुग्रीवभीमसेनादिः । एवं च व्यापीत्याद्युक्तस्वरूपायाः पताकाया नायकस्य तत्स्वामिनः सुग्रीवभीमसेनादेः स्वकीयं स्वमात्रोपकारि यत्फलान्तरं स्वप्रयोजनविशेषरूपं न स्यात् किं तु प्रकृतग्रन्थनायकस्य रामयुधिष्ठिरादेः फलजनिका स्यादित्यर्थः । तथा च तस्याः प्रासङ्गिकत्वमपि भवत्येवेति भावः । पताकानायकस्यापीति पाठे तु अनायकस्यापीत्यकारप्रश्लेषः । तथा चानायकस्य सुग्रीवादेरपि स्वकीयराज्यलाभफलान्तरं यत्तदपि पताकान्तरमित्यर्थः । अपिशब्दात् नायकस्य रामस्य सेतुबन्धादिफलान्तरमपि पताकान्तरमिति बोध्यम् । अस्य व्यापकत्वाभावमुपपादयति–गर्भ इति । येन हि गर्भे विमर्शे वा सन्धौ सन्धावित्यस्य काकाक्षिगोलकन्यायेनोभयत्रान्वयः । गर्भविमर्शोपसंहृतिरूपा हि सन्धयो वक्ष्यन्ते । तत्र गर्भविमर्शरूपसन्धिद्वये तस्य पताकानायकस्वकीयफलस्य, निर्वाहो निष्पत्तिः जायते । एवं च निर्वहणपर्य्यन्तवर्त्तमानस्य प्रकृतनायकफलस्य जनकत्वात् पताकाया अपि तत्पर्य्यन्तं वर्त्तमानत्वमेव तेन तस्याः स्वनायकफलविशेषरूपत्वे तत्फलस्य गर्भसन्धौ विमर्शसन्धौ वा सर्ववादिसिद्धा निष्पत्तिर्न जायत इत्यभिप्रायः । तथा चैतेन निर्वहणपर्य्यन्तमपि व्यापित्वमुक्तस्वरूपपताकाया उक्तं भवतीति बोध्यम् ।

( ४० ) प्रकृतनायकचरितमध्यभागात्मके गर्भसन्धौ विमर्शसन्धौ वा पताकानायकस्वकीयफलस्य निष्पत्तित्वं बोधयितुमुदाहरति—यथेति । रामचरिते हि पताकानायकः सुग्रीवः, वेण्यादौ भीमसेनादिः, तस्य रामचरितमध्यभाग एव वालिराज्यप्राप्तिरूपं स्वकीयफलं निष्पन्नम् , अनन्तरं च तस्यैव सुग्रीवस्य चरितं रामचरितफलभूतसीतोद्धरणपर्य्यन्तमप्युपलभ्यते । रामचरिते सुग्रीवचरितं पताका । एवमन्यत्रापि सङ्गतिः कार्य्या ।

( ४१ ) फलान्तरे मुनेः पताकापदप्रयोगस्याभिनवगुप्ताचार्यव्याख्यानेन गौणत्वमुपपाद्य स्वोक्तविरोधं निराकर्त्तुमाह—यत्त्विति । मुनिना नाट्याचार्येण भरतेनेत्यर्थः । आगर्भादिति । एतदुत्तरार्द्धं तु—

"कस्माद्यस्मान्निबन्धोऽस्याः परार्थः परिकीर्त्यते ।" इति ।

गर्भात् आ गर्भसन्धिसमाप्तेः पूर्वम्, अवध्यर्थकोऽत्राङ् । आ विमर्शात् आ विमर्श-

( ४२ ) तत्र 'पताकेति । पताका नायकफलं निर्वहणपर्यन्तमपि पताकायाः प्रवृत्तिदर्शनात्, इति व्याख्यातमभिनवगुप्तपादैः ।

**( ४३ ) प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता ॥ ६८ ॥**

( ४४ ) यथा—कुलपत्यङ्के रावणस्य जटायुसंवादः ।

**( ४५ ) प्रकरीनायकस्य स्यान्न स्वकीयं फलान्तरम् ।**

( ४६ ) यथा जटायोः मोक्षप्राप्तिः ।

**( ४७ ) अपेक्षितं तु यत्साध्यमारम्भो यन्निबन्धनः ॥ ६९ ॥**

---

सन्धि समाप्तेः पूर्वं वा पताका विनिवर्त्तते निष्पत्तिं प्राप्नोति । एतेन दर्पणकृतो महर्षिमतेन स्पष्टं विरोधः ।

( ४२ ) उक्तविरोधं परिजिहीर्षुः अभिनवगुप्ताचार्यव्याख्यानमुद्धरति—तत्रेति । मुनिवचन इत्यर्थः । पताका पताकापदम् गौण्या वृत्त्या पताकानायकफलं पताकानायकस्य सुग्रीवभीमसेनादेः स्वकीयराज्यप्राप्त्यादिरूपप्रयोजनपरम्, निर्वहणपर्य्यन्तमपि उपसंहृतिसन्धिपर्य्यन्तमपि पताकायाः प्रवृत्तेः स्थिरत्वस्य दर्शनात् । तथा च न कपोलकल्पितं किन्त्वभिनवगुप्ताचार्यमतमाश्रित्य पताकाया निर्वहणसन्धिपर्य्यन्तमपि स्थिरत्वं प्रतिपादितमिति ग्रन्थकर्त्तुराशयः ।

( ४३ ) प्रकरीरूपामर्थप्रकृतिं निरूपयति—प्रासङ्गिकमिति । प्रासङ्गिकं नायकचरिते प्रसङ्गादुपस्थितम्, प्रदेशस्थं प्रदेशविशेषे स्थितं चरितं वृत्तान्तः प्रकरोति नायकवृत्तान्तस्य प्रकर्षं जनयतीति प्रकरी मता । पताकायां प्रासङ्गिकवृत्तस्य बहुदेशवृत्तित्वम्, अस्यान्तु प्रदेशविशेषवृत्तित्वमिति भेदः ।

नाट्यशास्त्रे—

> फलं प्रकल्प्यते यस्याः परार्थं केवलं बुधैः ।
> अनुबन्धविहीनं स्यात् प्रकरीमिति निर्दिशेत् ॥ इति ।

अत्र विशेषो भावप्रकाशिकायाम्—

शोभायै वेदिकादीनां यथा पुष्पाक्षतादयः । अथर्त्तुवर्णनादिस्तु प्रसङ्गे प्रकरी भवेत् ॥ इति ।

यथा शाकुन्तले षष्ठाऽङ्के—"ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी । अपरा च पृष्ठतस्तस्याः इत्यादिना "नेपथ्ये" इत्यन्तेन ।

( ४४ ) स्वयमुदाहरति—यथेति । रावणस्य जटायुसंवाद इति । तस्यार्थप्रकृतित्वं तु रावणहृतसीतावर्णनमोक्षप्राप्तिद्वारा ।

( ४५ ) प्रकरीति । प्रकरीनायकस्य तत्प्रकरीनायकस्य जटायुप्रभृतेः स्वकीयं फलान्तरं स्वप्रयोजनविशेषरूपं न स्यात् किन्तु तत्तदंशे नायकफलोत्पादिकैव स्यादिति प्राग्वदेवार्थः ।

( ४६ ) उदाहरति—यथेति । जटायोर्मोक्षप्राप्तिरिति । अयमाशयः—जटायोर्मोक्षप्राप्तिर्वर्ण्यमाना न प्रकृतोपयोगिनी किन्तु तस्यैव पुण्यजनिकेति तदिदमुदन्तं न पताका । यः खलु रावणेन संवादः स प्रकृतोपयोगीत्यस्य प्राकरणिकत्वात्प्रकरीत्वम् । एतद्व्यतिरिक्तस्य तु तदेकदेशवर्त्तित्वमात्रम् ।

( ४७ ) कार्यरूपार्थप्रकृतिं निरूपयति—अपेक्षितन्त्विति । अपेक्षितम् आकाङ्क्षितं न तु प्रासङ्गिकमित्यर्थः । यत् साध्यं स्वशक्त्याशक्यम्, यन्निबन्धनो यदुद्देश्यकः आरम्भ

**समापनं तु यत्सिद्ध्यै तत्कार्यमिति संमतम् ।**

( ४८ ) यथा—रामचरिते रावणवधः ।

**( ४९ ) अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ॥ ७० ॥**
**आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ।**

तत्र—

**( ५० ) भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये ॥ ७१ ॥**

( ५१ ) यथा—रत्नावल्यां रत्नावल्यन्तःपुरनिवेशार्थे यौगंधरायणस्यौत्सुक्यम् । एवं नायकनायिकादीनामप्यौत्सुक्यमाकरेषु बोद्धव्यम् ।

**( ५२ ) प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः ।**

( ५३ ) यथा रत्नावल्याम्—'तह वि ण अत्थि अण्णो दंसणउवाओ त्ति जधा तधा आलिहिअ जधासमीहिदं करइस्सम् ।' इत्यादिना प्रतिपादितो रत्नावल्याश्चि-

---

उपाये प्रथमप्रवृत्तिः यस्य च सिद्धयै समापनं सामग्रीसमवधानम् तत्कार्य्यम् इति सम्मतम् ।

( ४८ ) उदाहरति—यथेति । रामचरिते तत्प्रधाने बालरामायणादावित्यर्थः । रावण वध इति । तत्सिद्धौ सत्यां नाटकसमापनम् ।

( ४९ ) अस्य कार्य्यस्य पञ्चावस्था भवन्तीति दर्शयति—अवस्था इति । आरम्भः, यत्नः, प्राप्त्याशा, नियताप्तिः, फलागमः, एताः पञ्च फलार्थिभिः उद्देश्यसिद्धिलब्धुमिच्छुभिः प्रारब्धस्य कार्य्यस्य अवस्था निष्पाद्यनिष्पादकरूपाः, ज्ञेया तत्रारम्भयत्नप्राप्त्याशानियताप्तिरूपाश्चतस्रोऽवस्था निष्पादिकाः, फलागमरूपा तु निष्पाद्या इत्यवगन्तव्या ।

( ५० ) तत्रारम्भलक्षणं दर्शयति—भवेदिति । मुख्यफलस्य नायकमुख्योद्देश्यस्य सिद्धये निष्पत्तये यत् औत्सुक्यम् उत्कटरागः स आरम्भो भवेत् ।

( ५१ ) उदाहरति—यथेति । नायकनायिकादीनामिति "नायकश्च नायिकादयश्च" इति विग्रहः, अतो नैकशेषः । आकरेषु तत्तन्नाटकेष्वित्यर्थः ।

यथा वा वेणीसंहारे प्रथमेऽङ्के सहदेवं प्रति—

"भीमः—अथ भगवान् कृष्णः केन पणेन सुयोधनं प्रति सन्धि कर्त्तुं प्रहितः ?

सहदेवः—ननु पञ्चभिः ग्रामैः" इत्यादि ।

( ५२ ) यत्नलक्षणं दर्शयति—प्रयत्न इति । फलावाप्तौ नायकस्य नायिकाया वा प्रधानफलप्राप्तिविषये अतित्वरान्वितो व्यापारः पात्रमात्रस्य आग्रहः प्रयत्नो भवेत् । तु पदम् आरम्भभेदसूचनाय ।

उक्तञ्च मुनिना—

अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति ।
परं चौत्सुक्यगमनं प्रयत्नः परिकीर्त्तितः ॥" इति ।

( ५३ ) उदाहरति—यथेति । तहवीति । तथापि नास्त्यन्यो दर्शनोपाय इति यथातथा आलिख्य यथा समीहितं करिष्यामि" इति संस्कृतम् । अङ्गुलिकम्पनानन्तरं तथाऽप्युक्तिः । आलिख्य उदयनप्रतिकृतिं चित्रयित्वा । यथा समीहितं पूर्वविचारितानुरूपम् । चित्रलेख-

अलेखनादिर्वत्सराजसंगमोपायः । यथा च—रामचरिते समुद्रबन्धनादिः ।

**( ५४ ) उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः ॥ ७२ ॥**

( ५५ ) यथा—रत्नावल्यां तृतीयेऽङ्के वेषपरिवर्तनाभिसरणादेः संगमोपायाद्वा-सवदत्तालक्षणापायशङ्कया चानिर्धारितैकान्तसंगमरूपफलप्राप्तिप्राप्त्याशा ।

( ५६ ) एवमन्यत्र ।

**( ५७ ) अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता ।**

अपायाभावान्निर्धारितैकान्तफलप्राप्तिः ।

( ५८ ) यथा रत्नावल्याम्—'राजा—देवीप्रसादनं त्यक्त्वा नान्यमत्रोपायं

---

नादिः उदयनप्रतिकृतिचित्रणादिः । सङ्गमोपायः तदङ्गभूतो व्यापारः, व्यापारस्यैव-यत्नत्वेनोक्तत्वात् ।

( ९४ ) प्राप्त्याशालक्षणं दर्शयति—उपायेति । उपायः फलसिद्धेः हेतुसद्भावश्च अपायस्य प्रतिबन्धकस्य शङ्का च ताभ्यां तथोक्ताभ्याम्, प्राप्तिसम्भवः उद्देश्यप्राप्तिस-म्भावना प्राप्तेः प्रधानफललाभस्याशा प्राप्त्याशा भवेत् ।

( ९५ ) उदाहरति—यथेति । वेशपरिवर्त्तनं सागरिकाया वासवदत्तावेशकरणम् । तेन राज्ञः समीपे तस्या अभिसरणम् अभिसारः । सङ्गमोपायात् राज्ञः सागरिका-सङ्गमोपायात् । वासवदत्तालक्षणापायशङ्कया वासवदत्तास्वरूपप्रतिबन्धकाशङ्कया । अनिर्द्धारिता अनिश्चिता संशयिता या एकान्ते निभृतौ उदयनसङ्गमरूपफलस्य प्राप्ति-स्तस्या आशा ।

( ९६ ) एवमन्यत्रेति । अन्यत्र वेणीसंहारादाविति भावः ।

यथा वेणीसंहारे तृतीयेऽङ्के भीमः—

> कृष्टा येन शिरोरुहेषु पशुना पाञ्चालराजात्मजा
> येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः ।
> यस्योरः स्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
> सोऽयं मद्भुजपञ्जरान्तरगतः संरक्ष्यतां कौरवाः ॥

इत्यत्र दुःशासनवधादशेषकौरववधसम्भावनेन युधिष्ठिरस्य राज्यप्राप्त्याशा ।

यथा वा नलविलासे चतुर्थे स्वयंवराङ्के—

"नलः—कलहंस ! मकरिके ! फलितः स एष वो प्रयासः ।

कलहंसः—देव ! नावयोः प्रयासः किन्तु देवस्य स्वप्नः ।

नलः—"समभूदिदानीं स्वप्नार्थप्राप्त्याशा ।" इति ।

( ९७ ) नियताप्तिलक्षणं दर्शयति—अपायाभाव इति । अपायस्य अन्तरायस्य अभा-वतो विलुप्तत्वात् निश्चिता प्राप्तिः निर्णीता फलप्राप्तिस्तु नियताप्तिर्भवेदिति शेषः ।

तदुक्तं मन्दारमरन्दे—

> नियताप्तिरविघ्नेन फलसंसिद्धिनिश्चयः । इति ।

( ९८ ) उदाहरति—यथेति । इति अनया उक्त्या । देवीलक्षणापायस्य वासवदत्तारू-पान्तरायस्य नियतफलप्राप्तिरिति । अत्र देव्याः कोपशान्तिरूपफलस्य नियताप्तिः ।

नचास्य कथं कार्य्यावस्थात्वं सागरिकासङ्गमनरूपकार्यस्य तेनाऽनिष्पादनादिति

पश्यामि ।' इति देवीलक्षणापायस्य प्रसादनेन निवारणान्नियतफलप्राप्तिः सूचिता ।

**( ५९ ) सावस्था फलयोगः स्याद्यः समग्रफलोदयः ॥ ७३ ॥**

( ६० ) यथा—रत्नावल्यां रत्नावलीलाभश्चक्रवर्तित्वलक्षणफलान्तरलाभसहितः । ( ६१ ) एवमन्यत्र ।

**( ६२ ) यथासंख्यमवस्थाभिराभिर्योगात्तु पञ्चभिः ।**
**पञ्चधैवेतिवृत्तस्य भागाः स्युः, पञ्चसंधयः ॥ ७४ ॥**

( ६३ ) तल्लक्षणमाह—

**अन्तरैकार्थसंबन्धः संधिरेकान्वये सति ।**

---

वाच्यम् , तत्कोपस्य तत्प्रतिबन्धकत्वेन तदभावस्य तत्कारणत्वात् ।

यथा वा वेणीसंहारे—

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम् ।
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः
क्वास्ते दुर्य्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥

इत्यादिना भीमार्जुनाभ्यामेकशेषदुर्य्योधनान्वेषणान्नियताप्तिर्दर्शिता ।

( ५९ ) फलागमलक्षणं दर्शयति—सावस्थेति । यः समग्रफलोदयः समस्तोद्देश्यफलसिद्धिः । सामग्र्यञ्च मुख्योद्देश्यफलस्य उद्देश्यफलान्तरसाहित्यम् तदभिधास्यति—फलान्तरसहित इति । सा फलयोगः फलागमो नाम अवस्था स्यात् । इयमवस्था पूर्वोक्तचतुरवस्थाभिर्निष्पाद्या ।

( ६० ) उदाहरति—यथेति । चक्रवर्तिलक्षणं साम्राज्यरूपं यत् फलान्तरं तस्य लाभेन सहितो युक्तः ।

( ६१ ) एवमन्यत्रेति । अन्यत्राप्येवमूहनीयमित्यर्थः ।

यथा वेणीसंहारे षष्ठेऽङ्के—

भूमौ क्षिप्त्वा शरीरं निहितमिदमसृक् चन्दनाभं मया (मा)ङ्गे
लक्ष्मीरार्य्ये निषण्णा चतुरुदधिपयः सीमया सार्धमुर्व्या ।
भृत्या मित्राणि योधाः कुरुबलमनुजा दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप ! तदधुना धार्त्तराष्ट्रस्य शेषम् ॥

इत्यनेन दुर्य्योधनं हत्वा भीमसेनेन युधिष्ठिरराज्यसमर्पणफलयोगो दर्शितः । यथा वा शाकुन्तले सर्वदमनाख्यपुत्रप्राप्तिसहितः शकुन्तलाप्राप्तिः ।

( ६२ ) सन्धि लक्षयितुमवतारयति—यथासंख्यमिति । आभिरनन्तरपूर्वोक्ताभिः पञ्चभिरवस्थाभिः आरम्भादिभिः योगात् इतिवृत्तस्य रूपकीयवृत्तान्तस्य पञ्चधैव पञ्चप्रकारा एव भागा अंशाः पञ्चसन्धयः स्युः ।

( ६३ ) को नाम सन्धिरिति जिज्ञासामपनुदति—तल्लक्षणमिति । तल्लक्षणं सन्धिसामान्यमित्यर्थः । अन्तरैकार्थेति । एकस्य प्रधानफलस्य अन्वये घटकत्वसम्बन्धे सति अन्तरैकार्थसम्बन्धः अन्तरैकफलसत्तासम्बन्धः सन्धिः । सन्धीयत इति सन्धिः । यथा—मालतीमाधवे प्रथमाङ्कादृद्वितीयाङ्कपर्य्यन्तमेको मुखनामा सन्धिः । तथा हि तत्र मालती-

( ६४ ) एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसंबन्धः संधिः।

( ६५ ) तद्भेदानाह—

मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः ॥ ७५ ॥
इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते ।

( ६६ ) यथोद्देशं लक्षणमाह—

( ६७ ) यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ॥ ७६ ॥
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्तितम् ।

( ६८ ) यथा—रत्नावल्यां प्रथमेऽङ्के ।

---

माधवयोः परिणयरूपप्रधानफलं प्रति तयोर्मिथोऽनुराग एव घटक इति प्रधानफलघटकत्वसम्बन्धस्य वर्त्तमानत्वम्, तदुभयानुरागरूपैकावान्तरफलसत्तासम्बन्धस्य वर्त्तमानत्वं चेति बोध्यम्। अत्रैकान्वये सतीत्यनुपादानेन यदि अन्तरैकार्थसम्बन्धः सन्धिरित्येतावन्मात्रमेव लक्षणं स्यात् तदा मूलवृत्तान्तसूचनरूपावान्तरैकफलसत्तासम्बन्धात् सर्वत्र प्रस्तावनायामतिव्याप्तिः स्यात्तन्निरासाय तत्प्रतिपादितम् ।

( ६४ ) तात्पर्यमाह—एकेनेति । एकेन प्रयोजेन प्रधानफलवृत्तेन अन्वितानां घटकत्वसम्बन्धेन युक्तानाम्, कथांशानां वृत्तान्तभागानाम् अवान्तरैकप्रयोजनसम्बन्धः नाटकीययत्किञ्चिदेकफलसत्तासम्बन्धः।

मन्दारमरन्देऽप्युक्तम्—

मुख्यप्रयोजनवशात्तथाङ्गानां समन्वये ।
अवान्तरार्थसम्बन्धः सन्धिःसन्धानरूपतः ॥ इति ।

( ६५ ) तद्भेदान् सन्धिभेदान्। मुखमिति । अस्य सन्धेः पञ्चभेदाः पञ्च प्रकाराः। अथैषां लक्षणानि यथा क्रममुपपादयितुं प्रतिजानीते—क्रमादिति । उक्तपञ्चावस्थासाहित्येनैव सन्धिपञ्चकसिद्धेरुक्तत्वात् तत्सहितमुखसन्ध्यादिक्रमेणेत्यर्थः । तथाचारम्भावस्थायुक्तः इतिवृत्ताद्याभासो मुखसन्धिः, यत्नयुक्तः प्रतिमुखसन्धिः, प्राप्त्याशायुक्तो गर्भसन्धिः, नियताप्तियुक्तो विमर्शसन्धिः, फलागमयुक्तः उपसंहृतिः निर्वहणसन्धिरित्यर्थः।

( ६६ ) यथोद्देशमिति । उद्देशमनतिक्रम्य यथोद्देशम् यथार्थेऽव्ययीभावः । उद्देशश्च नामकीर्त्तनम्। तथा च यथोद्देशमित्यस्य "मुखं प्रतिमुखं गर्भः" इत्यादिनामकीर्त्तनक्रमश इत्यर्थः।

( ६७ ) यत्र बीजेति। यत्र सन्धौ नाना अनेकैः अर्थैः वृत्तान्तैः रसैः शृङ्गारादिभिश्च सम्भवो व्यञ्जनं यस्याः सा तथोक्ता, तथा प्रारम्भेण समायुक्ता उत्साहरूपप्रारम्भावस्थायुक्ता इत्यर्थः, बीजस्य प्रागुक्तलक्षणस्य समुत्पत्तिर्भवति तत् मुखमिव मुखं मुखसन्धिः परिकीर्त्तितं कथितम्।

( ६८ ) उदाहरति—यथेति । प्रथमेऽङ्क इति। अत्र हि सागरिकाराजदर्शनरूपे अमात्यप्रारम्भविषयीकृतेऽर्थराशौ अमात्ययौगन्धरायणस्य पृथिवीसाम्राज्यविजिगीषोर्वीरः, वत्सराजस्य वसन्तविभावः शृङ्गारः, पौरप्रमोदावलोकनादद्भुतः, तत उद्यानगमनसदारभ्य पुनः शृङ्गार इति नानार्थरससम्भवः, तथा कन्दर्पपूजायां साकारिकाया

( ६९ ) फलप्रधानोपायस्य मुखसन्धिनिवेशिनः ॥ ७७ ॥
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखं च तत् ।

( ७० ) यथा- रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागमहेतोरनुराग-बीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसंगता-विदूषकाभ्यां ज्ञायमानतया किंचिल्लक्ष्यस्य वासवदत्तया चित्रफलकवृत्तान्तेन किंचिदुन्नीयमानस्योद्देशरूप उद्भेदः ।

( ७१ ) फलप्रधानोपायस्य प्रागुद्भिन्नस्य किंचन ॥ ७८ ॥
गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः ।

( ७२ ) फलस्य गर्भीकरणाद्गर्भः । यथा रत्नावल्यां द्वितीयेऽङ्के—'सुसंगता-सहि, अदक्खिणा दाणि सि तुमं जा एवं भट्टिणा हत्थेण गहिदा वि कोवं ण मुञ्च-सि' इत्यादौ समुद्भेदः । पुनर्वासवदत्ताप्रवेशे ह्रासः । तृतीयेऽङ्के—'तद्वार्तान्वेष-

---

राज्ञो दर्शनं विधिना आनीय घटितं बीजम् , तच्च सागरिकायास्तत्सङ्गमोत्साहसहितम् ।

( ६९ ) प्रतिमुखसन्धि निरूपयति—फलप्रधानेति । यत्र सन्धौ मुखसन्धौ निविशते उत्पत्त्या प्रवर्त्तते इति तस्य तथोक्तस्य, फलस्य प्रधानार्थस्य यः प्रधानोपायः मुख्यका-रणं तस्य तथोक्तस्य, लक्ष्यालक्ष्य इव किञ्चिल्लक्ष्य इव उद्भेदः उद्देशः अनुरागरूप-बीजस्य, तत्प्रतिमुखं मुखस्याभिमुख्येन वर्त्तत इति प्रतिमुखम् तन्नामा सन्धिः ।

( ७० ) उदाहरति—यथेति । वत्सराजसागरिकयोः समागमः संगमरूपं प्रधान-फलं तस्य हेतोः प्रधानोपायभूतस्य अनुरागस्तयोरन्योन्यं प्रेम तदेव बीजं तस्य तथो-क्तस्य प्रथमाङ्कोपक्षिप्तस्य प्रथमाङ्के कविना उपस्थापितस्य। सुसङ्गता सागरिकाया वयस्या। चित्रफलकेति । सागरिकालिखितेन राज्ञा स्वेन च युक्तं चित्रफलकं राज्ञा प्राप्तम् । वसन्त-कहस्तात् स्खलितं वासवदत्तया तत्प्राप्य तत्र लिखितस्य तदुभयानुरागबीजमुन्नीतम् , तादृशो भेदरूपः प्रतिमुखसन्धिश्च वासवदत्तायामागतायां सुसङ्गतावसन्तकयोर्व्या-पाररूपो यत्नसहितः ।

( ७१ ) गर्भसन्धिं निरूपयति—फलप्रधानोपायस्येति । प्रागुद्भिन्नस्य पूर्वसन्धिद्वये किञ्चि-त्प्रकाशं नीतस्य मुखप्रतिमुखसन्धावुद्भिन्नस्येत्यर्थः । फले प्रधानप्रयोजने प्रधानोपायस्य मुख्यसाधनस्य यत्र सन्धौ मुहुर्वारं वारं ह्रासान्वेषणवान् तिरोभावानुसन्धानवान् समु-द्भेदः अभिव्यक्तिर्भवति स गर्भो गर्भनामा सन्धिः ।

उक्तं च मुनिनाऽपि—

उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा ।
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥ इति ।

( ७२ ) गर्भशब्दस्यार्थं दर्शयति—फलस्येति । फलस्य प्रधानफलस्य गर्भीकरणात् अन्तःकुक्षिनिवेशात् । "सखि ! अदक्षिणेदानीमसि त्वं या एवं भर्त्रा हस्तेन गृहीताऽपि कोपं न मुञ्चसि" इति संस्कृतम् । इदानीं भर्त्रा करग्रहणकाले अदक्षिणा अकुशला भर्त्रा प्रियेण हस्तेन गृहीताऽपि करेण धृताऽपि । अन्या मानिन्यः प्रियहस्तावलम्बनपर्यन्तमेव मानं कुर्वन्ति त्वं, तु हस्तावलम्बनानन्तरमपि कोपं न मुञ्चसि एतेना तन्निष्ठुरत्वं तवेति व्यज्यते । समुद्भेदः प्रकाशः सागरिकासङ्गमोपायस्येति शेषः । तद्वार्तान्वेषणेति । तस्याः

णाय गतः कथं चिरयति वसन्तकः' इत्यन्वेषणम् । 'विदूषकः—ही ही भोः, कोसम्बीरज्जालाभेणावि ण तादिसो पि अवअस्सस्स परितोसो जादिसो मम सआसादो पियवअणं सुणिअ भविस्सदि ।' इत्यादावुद्भेदः । पुनरपि वासवदत्ताप्रत्यभिज्ञानाद् ह्रासः । सागरिकायाः सङ्केतस्थानगमनेऽन्वेषणम् । पुनर्लतापाशकरणे उद्भेदः । अथ विमर्शः—

( ७३ ) **यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः ॥ ७९ ॥**
**शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः ।**

( ७४ ) यथा शाकुन्तले चतुर्थाङ्कादौ—'**अनसूया**—पिअंवदे, जइ विगन्ध-

---

सागरिकाया वार्त्ता उदन्तः तस्या अन्वेषणाय गवेषणाय । वसन्तको विदूषकः गतः प्रेषितः । तत्तस्माद्धेतोः । कथमिति प्रश्ने । "ही ही भोः कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य परितोषः यादृशो मम सकाशात् प्रियवचनं श्रुत्वा भविष्यति । इति संस्कृतम् । हीहीति । आश्चर्ये भो भोः । प्रियवयस्यस्य वत्सराजस्य मत्सकाशात् अद्य प्रियवचनम् इष्टभाषणं श्रुत्वा यादृशो यत्प्रकारको हृदयाभिलाषो मनोरथः भविष्यति उत्पत्स्यते तादृशस्तथाविधः कौशाम्ब्या एतत्संज्ञकनगर्याः यद्राज्यम् आधिपत्यम् तस्य लाभेनापि प्रियवयस्यस्य हृदयाभिलाषः नासीदिति तर्कयामीत्यर्थः । वासवदत्ताप्रत्यभिज्ञानादिति सङ्केतभङ्गार्थमागतां तां दृष्ट्वेत्यर्थः । पुनःसागरिकाकर्त्तृकम् । उद्भेदः अनुरागस्येति शेषः । लतापाशकरणाद्धि राज्ञः सागरिकादर्शनं ततो गर्भसन्धेः प्राप्त्याशायोगरूपावस्थायोगः ।

( ७३ ) विमर्शसन्धिं निरूपयति—यत्र मुख्यफलोपायस्येति । यत्र सन्धौ मुख्यफलस्य प्रधानफलस्य उपायः कारणम्, गर्भतोऽधिकः गर्भसन्ध्यपेक्षयाधिकः उद्भिन्नः प्रकाशितो भवति । गर्भसन्धौ किञ्चिदुद्भिन्नो ह्रासान्वेषणवांश्च उद्भेदः, अत्र ततोऽधिकः, ह्रासराहित्यादिति भावः । तथा शापाद्यैः आदिपदेन क्रोधभयदैवतव्यसनानां परिग्रहः, सान्तरायो विघ्नाश्लिष्टः, स विमृष्यते पात्रैः कर्त्तव्यं विविच्यते अस्मिन्निति विमर्शस्तन्नामा सन्धिरिति स्मृतः ।

उक्तं च मुनिना—

गर्भान्निर्भिन्नबीजार्थो विलोभनकृतोऽपि वा ।
क्रोधव्यसनजो वाऽपि स विमर्श इति स्मृतः ॥ इति ।

( ७४ ) उदाहरति—यथेति । अनसूयेति वक्त्र्या उत्कीर्त्तनम् । "प्रियंवदे ! यद्यपि गान्धर्वेण विवाहेन निर्वृत्तकल्याणा प्रियसखी शकुन्तला, तथापि अनुरूपभर्त्तभागिनी संवृत्तेति निर्वृत्तं मे हृदयम्, तथाप्येतावच्चिन्तनीयम् इति संस्कृतम् । प्रियंवदे ! इत्यादिकम् उक्तिः । गान्धर्वेण—

इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स तु विज्ञेयः························ ॥

इत्यनेन वधूवरयोः मिथःस्वीकारपूर्वकेण विवाहेन परिणयेन निर्वृत्तं निष्पन्नं कल्याणं मङ्गलं यस्याः सा तथोक्ता जातविवाहमङ्गलेत्यर्थः "कल्याणं मङ्गलेऽपि च" इति विश्वः । अनेन निरतिशयमिथोऽनुरागः राज्ञः सर्वदा धर्मापेक्षित्वं च व्यज्यते । प्रियसखी शकुन्तले-

ण्वेण विवाहेण णिव्वुत्तकल्लाणा पिअसही सउन्तला अणुरूवभत्तुभाईणी संवुत्तेति णिव्वुदं मे हिअअम्, तह वि एत्तिअं चिन्तणिज्जम्' इत्यत आरभ्य सप्तमाङ्कोपक्षिप्ताच्छकुन्तलाप्रत्यभिज्ञानात्प्रागर्थसंचयः शकुन्तलाविस्मरणरूपविघ्नालिङ्गितः ।

अथ निर्वहणम्—

---

त्यनेन अनुरागाधिक्यं द्योत्यते। अनुरूपं योग्यं भर्त्तारं स्वामिनं भजते या सा अनुरूपभर्त्तृभागिनी संवृता जाता, निर्वृत्तं सुस्थीभूतं मे हृदयं मनः, तथापि शकुन्तलाया अनुरूपभर्त्तृभागिनीत्वेऽपीत्यर्थः। सप्तमाऽङ्केति। सप्तमाङ्के उपक्षिप्तात् कविना उपस्थापितात्। तत्पूर्वं दुर्वाससः शापेन राज्ञः शकुन्तलासमागमरूपप्रधानफलस्य उपायः प्रतिरुद्ध इति बोध्यम्। अर्थसञ्चयः व्यापारसमूहः शकुन्तलाविस्मरणरूपेण विघ्नेन आलिङ्गितः संश्लिष्टः विस्मरणं चात्र दुर्वाससः शापेन,

तथाहि—

विचिन्तयन्ती यमनन्यमानसा तपोनिधिं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन् कथां प्रमत्तः प्रथमोक्तामिव ॥ इति।

अयं शापप्रतिबन्धकप्रधानफलोपायरूपः विमर्शसन्धिः शकुन्तलाया राजसमागमप्राप्त्याशारूपावस्थो सहितः।

क्रोध.यथा—वेणीसंहारे षष्ठेऽङ्के सिद्धकल्पेऽपि कार्ये क्रोधातिशयादपर्युषितां प्रतिज्ञामास्थितवति भीमसेने दुर्योधने चान्तर्जलं निमग्ने यत्नान्वेषणैरप्यनुपलभ्यमाने युधिष्ठिरे निर्वेदाद् विमृशन्नाह—

तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम्।
भीमेन प्रियसाहसेन रभसात् स्वल्पाऽवशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥

एष भीमक्रोधात् कार्यनिपाते सति जात इति क्रोधजप्रतिज्ञा विघ्नात्मा विमर्शः।

भयाद् यथा—

रत्नावल्यां सागरिकासङ्गमोपायः, वत्सराजानुरागो वासवदत्ताभयालिङ्गितः।

दैवतो यथा विधिविलसिते पञ्चमेऽङ्के—

"कञ्चुकी हा! धिक् कष्टेनैवोल्लङ्घ्यः प्राक्तनः कर्मविपाकः"।

वार्त्तापि नैव यदिहास्ति स राजचन्द्रः तेनोज्झिता विधिविमोहितचेतनेन।
देवा वने त्रिदशनाथविलासिनीभिः कर्त्तुं गता जगति सख्यमिति प्रवादः ॥

अत्र सूदावारविलम्बिनि नले दैवत्यक्तदमयन्ती—राज्यप्राप्तिविघ्नजो विमर्शः।

व्यसनाद् यथा रामाभ्युदये पञ्चमेऽङ्के रामः—

प्रत्याख्यानरुषः कृतं समुचितं क्रूरेण ते रक्षसा
सोढं तच्च तथा त्वया कुलजना धत्ते यथोच्चैः शिरः।
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये! नोचितम् ॥

अत्र रावणेन यन्मायारूपसीताव्यापादनं तद्रूपेण व्यसनेन सीताप्राप्तिविघ्नजो विमर्शः। एवमनेकहेतुजो विमर्श इति बोध्यम्।

( ७५ ) बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ॥ ८० ॥
एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत् ।

( ७६ ) यथा वेण्याम्—'कञ्चुकी—( उपसृत्य, सहर्षम्- ) महाराज, वर्धसे । अयं खलु भीमसेनो दुर्योधनक्षतजारुणीकृतसर्वशरीरो दुर्लक्ष्यव्यक्तिः' इत्यादिना द्रौपदीकेशसंयमनादिमुखसंध्यादिबीजानां निजनिजस्थानोपक्षिप्तानामेकार्थयोजनम् ।

( ७७ ) यथा वा—शाकुन्तले सप्तमाङ्के शकुन्तलाभिज्ञानादुत्तरोऽर्थराशिः ।

( ७८ ) एषामङ्गान्याह—

---

( ७५ ) निर्वहणसन्धिं निरूपयति—बीजवन्त इति । यथायथं यथानियमं विप्रकीर्णाः कविना यथा स्थानमुपन्यस्ताः, बीजवन्तः पूर्वोक्तलक्षणबीजार्थयुक्ताः मुखादयोऽर्थाः इति वृत्तिभागाः, आदिपदेन प्रतिमुखगर्भविमर्शानां ग्रहणम्, यत्र सन्धौ एकार्थं केवलप्रधानप्रयोजननिमित्तम्, उपनीयन्ते केवलप्रधानप्रयोजनसाधनोपकरणभावं कविनैव उपस्थाप्यन्ते तत् हि निर्वहति प्रधानप्रयोजनं जायते अस्मिन्निति निर्वहणम् उपसंहारसन्धिः । निर्वहणम् उपसंहार उपसंहृतिरिति च पर्य्यायवाचका इति नार्थान्तरम् ।

अन्यत्रापि—

मुखसन्ध्यादयो यत्र विकीर्णा बीजसंयुताः ।
महाप्रयोजनं यान्ति तन्निर्वहणमुच्यते ॥ इति

( ७६ ) उदाहरति—यथेति । दुर्य्योधनस्य क्षतजेन ऊरुभङ्गादिजातशोणितेन अरुणीकृतं रक्तीकृतं सर्वं शरीरं यस्य स तथोक्तः ।

अत एव दुर्लक्ष्यव्यक्तिः स एवायं भीमसेन इति परिचेतुमशक्यस्वरूपः, द्रौपद्याः पाञ्चाल्याः केशसंयमनादीनां मुखसंन्ध्यादिषु यानि बीजानि भीमसेनक्रोधोपचितयुधिष्ठिराद्युत्साहरूपाणि तेषां तथोक्तानाम्, केशसंयमनादीत्यादिपदेन शत्रुनिपात–राज्यप्राप्त्यो· परिग्रहः । निजनिजस्थ नेषु स्वस्वस्थानेषु उपक्षिप्तानां कविना उपस्थापितानाम्, एकस्य प्रधानप्रयोजनस्य द्रौपदीकेशसंयमनादेः अर्थे निमित्ते योजनं सश्लेषणम् ।

( ७७ ) उदाहरणान्तरं दर्शयति—यथा वेति । अर्थराशिः विषयसमूहः ।

केचित्तु मुखादयः सन्धयोऽवस्थाश्च यत्र पृथक् पृथक् संक्षेपतः पुनरुल्लिख्यन्ते सोऽपि निर्वहणसन्धिरित्याहुः । यथा सत्यहरिश्चन्द्रे षष्ठेऽङ्के देवः—

आखेटो मुनिकन्यका कुलपतिः कीरः शृगालोऽध्वगा
विप्रो म्लेच्छपतिर्मनुष्यमरणं लम्बस्तनी मान्त्रिकः ।
उद्बद्धः पुरुषो वियच्चरवधूर्गोमायुनादः फणी
सर्वं सत्त्वपरीक्षणोत्सुकरसैरस्माभिरेतत्कृतम् ॥ इति ।

"आखेट" इत्यादिना मुखसन्धिनिबद्धाः, "कीर" इत्यादिना प्रतिमुखसन्धिभाविनः, "अध्वगे" त्यादिना गर्भसन्धिग्रथिताः, मनुष्येत्यादिना च विमर्शसन्धिसूत्रितायथासंख्यं प्रारम्भाद्यवस्थानुगताः फलवन्तोऽर्थनिर्वहणसन्धावेकवाक्यतापादनार्थं संक्षेपतः पुनरुपात्ता इति ।

( ७८ ) एषां मुखादीनामेव पञ्चसन्धीनामित्यर्थः । एवं लक्ष्यलक्षणाभ्यां सन्धीन्

( ७९ ) **उपक्षेपः परिकरः परिन्यासो विलोभनम् ॥ ८१ ॥**
**युक्तिः प्राप्तिः समाधानं विधानं परिभावना ।**
**उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे ॥ ८२ ॥**

( ८० ) यथोद्देशं लक्षणमाह--
**काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ।**

( ८१ ) काव्यार्थ इतिवृत्तलक्षणप्रस्तुताभिधेयः ।

( ८२ ) यथा वेण्याम्-'भीमः—
लाक्षागृहानल विषान्न-सभाप्रवेशैः प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्य पाण्डववधूपरिधानकेशान्स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥

( ८३ ) **समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः ॥ ८३ ॥**

निरूप्यैषामङ्गानि निरूपयितुं प्रतिजनिते—एषामिति ।

( ७९ ) तत्र मुखसन्धेर्द्वादशाङ्गान्याह—उपक्षेप इत्यादि । वै शब्दः पादपूरणे । मुखे मुखसन्धावित्यर्थः एतानि द्वादशसंख्याकानि भवन्तीति शेषः ।

( ८० ) एवं सामान्यतः प्रतिपाद्य विशेषाकांक्षायामाह—यथेति । यथोद्देशम् उद्देशं कारिकाया निर्देशमनतिक्रम्य । लक्षणम् उपक्षेपादीनां स्वरूपम् ।

काव्यार्थस्येति । काव्यार्थस्य तत्तद्दृश्यकाव्याभिधेयवृत्तान्तस्य समुत्पत्तिः संक्षेपेण प्रथमोपस्थितिः, उपक्षेप इति स्मृतः ।

( ८१ ) काव्यार्थस्येत्यत्रार्थपदस्य अभिधेयार्थपरत्वमिति बोधयितुं विवृणोति-काव्यार्थ इति । इतिवृत्तं वृत्तान्तस्तल्लक्षणं तत्स्वरूपश्चासौ प्रस्तुताभिधेयः प्रकृतप्रतिपाद्यश्चेति सः तथोक्तः ।

( ८२ ) उदाहरति—यथेति । वेण्यां वेणीसंहारे लाक्षागृहानलेति । "स्वस्था भवन्तु कुरुराजसुताः सभृत्याः" इति सूत्रधारस्योक्तिं श्रुत्वा प्रविष्टस्य भीमस्योक्तिरियम् । धार्त-राष्ट्राः धृतराष्ट्रपुत्रा दुर्योधनादयः, लाक्षया निर्मितं गृहं लाक्षागृहं मध्यमपदलोपि समासः तत्र दत्तोऽनलोऽग्निः, पुनरपि मध्यमपदलोपः, विषेण मिश्रितमन्नं विषान्नम् अत्रापि मध्यमपदलोपिसमासः, सभाप्रवेशः द्यूतार्थमिति शेषः एषां द्वन्द्वः ततस्तथोक्तः वित्तनिचयेषु धनसमूहेषु प्राणेषु असुषु च नोऽस्मान् प्रहृत्य जतुगृहदाह—विषसम्पृक्त-भोजनदानाभ्यां प्राणापहरणं विधाय द्यूतार्थं सभाप्रवेशेन सर्वप्रकारधनान्यपहृत्य चेत्यर्थः, तथा पाण्डववध्वाः पाञ्चाल्याः परिधानकेशान् वस्त्रकचान् आकृष्य च मयि भीमसेने जीवति प्राणान् धारयति सति स्वस्था सुस्थिता भवन्ति भविष्यन्ति भवन्तीति वर्त्तमान-सामीप्ये वर्त्तमानवद्वा इति पा० सू० वर्त्तमानसामीप्ये लट् ।

अत्र नाटकीयवृत्तान्तकुरुकुलवधप्रतिपादनस्य काव्यार्थस्य प्रथमोपस्थितेरुपक्षेपः वसन्ततिलकाच्छन्दस्तल्लक्षणन्तूक्तमेव ( १९३ पृ० )

यथा वा रत्नावल्याम् ( नेपथ्ये ) "द्वीपादन्यस्मादपि" इत्यादिना यौगन्धरायणो वत्सराजस्य रत्नावलीप्राप्तिहेतुभूतमनुकूलदैवं स्वव्यापारं बीजत्वेनोपक्षिप्तवानित्युपक्षेपः ।

( ८३ ) परिकरलक्षणं दर्शयति—समुत्पन्नेति । समुत्पन्नस्य अर्थस्य तत्तद्दृश्यकाव्य-

( ८४ ) यथा तत्रैव—

प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभिर्न तत्रार्यो हेतुर्न भवति किरीटी न च युवाम्।
जरासंधस्योरः स्थलमिव विरूढं पुनरपि क्रुधा भीमः संधिं विघटयति यूयं घटयत ॥

( ८५ ) तन्निष्पत्तिः परिन्यासः—

( ८६ ) यथा तत्रैव—

चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्य।

---

वृत्तान्तस्य बाहुल्यं पूर्वापेक्षया अतिशयेन सूचनम् पुनः परिकरणं बाहुल्येन काव्यार्थस्य सूचनं परिकरस्तन्नामकाङ्गं ज्ञेयः।

मन्दारमरन्देऽपि—

"परिक्रिया तु बीजस्य बहुलीकरणं मतम्" इति

( ८४ ) उदाहरति—यथेति। तत्रैव वेण्यामेवेत्यर्थः।

प्रवृद्धमिति। सन्धिकरणविमुखस्य भीमस्य सहदेवं प्रत्युक्तिरियम्। मम भीमस्य शिशोरेव बालकस्यैव "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः। यत् खलु कुरुभिर्दुर्योधनादिभिः सह वैरं विरोधः मम यौवनापेक्षापि तैर्न कृता शिशुकाल एव विषं दत्तमतो विरोध इति भावः, तत्र विरोधे आर्यो युधिष्ठिरो हेतुर्न भवति न भूत इत्यर्थः, किरीटी अर्जुनोऽपि हेतुर्न भवति युवां नकुलसहदेवावपि हेतू न भवथ इति शेषः। किन्तु तत्राहमेव हेतुरिति मम शान्तिसन्धिकरणेन न स्यादिति भावः। अत एव भीमः क्रोधेन रुषा जरासन्धस्य एतन्नामकस्य राज्ञः विरूढं जरायाश्चेष्टया संयुक्तम् उरःस्थलं वक्षःस्थलमिव "उरो वत्सं च वक्षश्च" इत्यमरः। विरूढं कृष्णादीनां चेष्टया समुत्पन्नं सन्धिं संश्लेषं पुनरपि भूयोऽपि विघटयति वियोजयति यूयं युधिष्ठिरादयः समर्थाश्चेत् घटयत संयोजयत युष्माभिः कृतमपि सन्धिं भेत्स्यामीति भावः। (जन्मकाले जरासन्धस्य शरीरं द्विखण्डमासीत्। प्रकृतिविरुद्धत्वात्परित्यक्तोऽपि जरानामिकया राक्षस्या भागद्वयं योजितं तस्माज्जरासन्ध इति नामजातं पुनरपि श्रीकृष्णसङ्केतेन भीमसेनेन द्विधाकृतमिति वृत्तान्तं शान्तिपर्वणि महाभारते अनुसन्धेयम्)। शिखरिणीछन्दस्तल्लक्षणन्तूक्तमेव (१४८ पृ.)।

अत्र पूर्वोत्पन्नस्य विषदानादिरूपकाव्यार्थस्य सन्धिविघटनादतिरेकेणोपस्थितेः परिकरः।

यथा वा रत्नावल्याम् "अन्यथा क्व सिद्धादेशप्रत्ययप्रार्थितायाः सिंहलेश्वरदुहितुः समुद्रे प्रवहणभङ्गमग्नोत्थितायाः फलकासादनम्" इत्यादिना "सर्वथा स्पृशन्ति स्वामिनमभ्युदयाः" इत्यन्तेन बीजोत्पत्तेरेव बहूकरणात्परिकरः।

( ८५ ) परिन्यासलक्षणं दर्शयति—तन्निष्पत्तिरिति। तस्य काव्याभिधेयरूपस्येतिवृत्तस्य निष्पत्तिः निश्चयापत्तिः तद्रूपतया परितो हृदये न्यसनमुपस्थितिः परिन्यास इति।

तथाचोक्तं—

"भविष्यद्वस्तु कथनं परिन्यासं प्रचक्षते" इति।

( ८६ ) उदाहरति—यथेति। तत्रैव वेण्यामेवेत्यर्थः।

चञ्चदिति। द्रौपदीं प्रति भीमस्योक्तिरियम्। हे देवि महिषि द्रौपदि! भीमः, चञ्चता चलता भुजेन भ्रमिता घूर्णिता चण्डा कठोरा या गदा तस्या अभिघातेन ताडनेन सञ्चूर्णितम् ऊरुयुगलं जङ्घाद्वयं यस्य तस्य तादृशस्य सुखेन युध्यत इति सुयोधनस्तस्य दुर्यो-

स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि ! भीमः ॥

( ८७ ) अत्रोपक्षेपो नामेतिवृत्तलक्षणस्य काव्याभिधेयस्य संक्षेपेणोपक्षेपणमात्रम् । परिकरस्तस्यैव बहुलीकरणम् । परिन्यासस्ततोऽपि निश्चयापत्तिरूपतया परितो हृदये न्यसनम् , इत्येषां भेदः ।

( ८८ ) एतानि चाङ्गानि उक्तेनैव पौर्वापर्येण भवन्ति, अङ्गान्तराणि त्वन्यथापि ।

( ८९ )... ...............गुणाख्यानं विलोभनम् ।

( ९० ) यथा तत्रैव—**'द्रौपदी**—णाध, किं दुक्करं तए परिकुविदेण' । यथा वा मम **चन्द्रकलायां** चन्द्रकलावर्णने—सेयम्—'तारुण्यस्य विलासः—' इत्यादि ( १९४ पृ. ) ।

---

धनस्येत्यर्थः, स्त्यानेन स्निग्धेन "स्त्यानं स्निग्धे प्रतिध्वाने घनत्वालस्ययोरपि" इति मेदिनी, अवनद्धं सम्बद्धं यद् घनं निबिडं शोणितं रुधिरं तेन शोणौ रक्तवर्णौ पाणी करौ यस्य सस्तथोक्तः सन् तव कचान् केशान् दुःशासनाकर्षणेन स्खलितानित्यर्थः उत्तंसयिष्यति विभूषयिष्यति । वसन्ततिलकाच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ( १९३ पृ० )

अत्र भाविन्या दुर्य्योधनोरुभङ्गात्मककाव्यार्थस्य निश्चयेनोपस्थितेः परिन्यासः ।

यथा वा रत्नावल्याम्—

प्रारम्भेऽस्मिन् स्वामिनी वृद्धिहेतौ दैवे चेत्थं दत्तहस्तावलम्बे ।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि स्वेच्छाचारी भीत एवास्मि भर्त्तुः ॥

इत्यनेन यौगन्धरायणः स्वव्यापारदेवयोर्निष्पत्तिमुक्तवान् ।

( ८७ ) उक्तत्रयाणामुपेक्षादीनां भेदं स्पष्टयति—अत्रेत्यादिना । इतिवृत्तिलक्षणस्य वृत्तान्तस्वरूपस्य काव्याभिधेयस्य काव्यप्रतिपाद्यस्य उपक्षेपणम् उपस्थापनं तन्मात्रम् मात्रपदोपादानेनेतरयोः बहुलीकरणपरिन्यसनयोः व्यावृत्तिः । निश्चयापत्तिरूपतया निश्चयस्य भाविकर्त्तव्यनिश्चयस्य आपत्तिरापादनम् उस्थितिरिति यावत् । हृदये बोद्धुश्चित्ते । न्यसनम् उपस्थापनम् ।

( ८८ ) एतानीति । उपेक्षादीनि त्रीणि इत्यर्थः । पौर्वापर्य्येण भवन्तीति । प्रथममुपक्षेपः ततः परिकरः ततश्च परिन्यास इति क्रमेणैव सम्भवन्तीत्यर्थः । अङ्गान्तराणि प्रतिपाद्यमानविलोमादीनि तु अन्यथापि प्रतिपाद्यमानक्रमभिन्नक्रमेणापि भवन्तीत्यत्र पूर्वेण सम्बन्धः । तेषामन्योन्यभिन्नस्वरूपत्वेनान्योन्यनिरपेक्षत्वादिति भावः ।

( ८९ ) विलोभनलक्षणं निरूपयति—गुणाख्यानमिति । गुणानां पात्रविशेषगतबलसौन्दर्य्यादीनाम् आख्यानं कथनं विशेषेण कर्त्तव्यविषये लोभोत्पादनं विलोभनं नामाङ्गम् ।

नाट्यशास्त्रेऽपि—

"गुणनिर्वहणं यत्तु विलोभनमिति स्मृतम्" इति ।

( ९० ) उदाहरति—यथेति । "नाथ ! किं दुष्करं त्वया कुपितेन" इति संस्कृतम् । "चञ्चद्भुज" इति श्लोकानन्तरं द्रौपद्या उक्तिरियम् । अत्र भीमस्य बलाधिक्यरूपगुणकथनेन सुयोधनादिवधे लोभोत्पादनाद्विलोभनम् । तारुण्यस्येत्यत्र च नायिकायां चन्द्रकलायां सौन्दर्य्यख्यापनेन स्वस्य लोभजननाद्विलोभनम् ।

( ९१ ) यत्तु शाकुन्तलादिषु 'ग्रीवाभङ्गाभिरामं---' इत्यादि मृगादिगुणवर्णनं तद्बीजार्थसंबन्धाभावान्न संध्यङ्गम् । एवमङ्गान्तराणामप्यूह्यम् ।

( ९२ ) संप्रधारणमर्थानां युक्तिः—

( ९३ ) यथा—वेण्यां सहदेवो भीमं प्रति---'आर्य ! किं महाराजसंदेशोऽयमव्युत्पन्न एवार्येण गृहीतः' इत्यतः प्रभृति यावद्भीमवचनम् ।

( ९४ ) 'युष्मान्ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः ।
न लज्जयति दाराणां सभायां केशकर्षणम् ॥' इति ।

यथा च रत्नावल्याम्—"अस्तापास्त समस्तभासिनभसः"—

इत्यादिवैतालिकमुखेन चन्द्रतुल्यवत्सराजगुणवर्णनया सागरिकायाः समागमहेत्वनुरागबीजानुगुण्येनैव लोभप्रतिपादनाद्विलोभनम् ।

( ९१ ) यत्त्विति । ग्रीवाभङ्गाभिराममिति ।

सम्पूर्णं तु—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंसिभिः कीर्णवर्त्मा ।
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥

मृगादिगुणवर्णनमिति । गुणः स्पृहणीयो धर्मः, अत्र क्रिया रूपः । बीजार्थः शकुन्तलाप्राप्तिरूपबीजोऽर्थः, मृगक्रियावर्णनस्य तदसम्बन्धात् सम्पर्काभावात् । न सन्ध्यङ्गं सन्ध्यङ्गत्वराहित्यम् । एवं बीजार्थसम्बन्धाभावे ऊह्यं सन्ध्यङ्गत्वराहित्यमूहनीयमित्यर्थः ।

( ९२ ) युक्तिलक्षणं निरूपयति—सम्प्रधारणमिति । अर्थानां कर्त्तव्यविषयाणां सम्प्रधारणम् उद्देश्यार्थोपपादकयुक्तिप्रदर्शनम् , सिद्धान्तबुद्ध्या योगो युक्तिर्नामाङ्गम् ।

नाट्यशास्त्रेऽपि—

"सम्प्रधारणमर्थानां युक्तिरित्यभिधीयते" इति ।

( ९३ ) उदाहरणं दर्शयति—यथेति । आर्य्य ! !

कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन् ।
तिष्ठति प्रकृताचारे यः स आर्य इति स्मृतः ॥ इत्युक्तगुणसंपन्न ! महाराजस्य युधिष्ठिरस्य सन्देशः मयि स्थितं वाचिकं "सन्देशवाग्वाचिकं स्या"दित्यमरः अव्युत्पन्न एव तात्पर्य्याविषय एव आर्य्येण भवता गृहीत अवगतः, तत्तात्पर्य्यानभिज्ञो भवानित्यर्थः ।

( ९४ ) युष्मानिति । क्रोधात् रोषात् शत्रुकुलस्य वैरिवंशस्य क्षयो विनाशः लोके संसारे युष्मान् सन्ध्यर्थे यतमानान् पाण्डवान् ह्रेपयति लज्जयति । सभायां परिषदि न तु रहसि दाराणां स्त्रीणाम्, केशाकर्षणं कचाकर्षणम्, (कर्त्तृ) युष्मान् न लज्जयति ह्रेपयति । सभायां द्रौपदीकेशाकर्षणतोऽधिकं न किञ्चिदपि लज्जाजनकमिति न लज्जयतीत्येतन्महदाश्चर्य्यमिति भावः । पथ्यावक्त्रं छन्दः ।

अत्र वैरिवंशविनाशस्य कर्त्तव्यतोपपादकाद् युक्तिः ।

यथा च रत्नावल्याम्—

"मयाऽपि चैनां देवीहस्ते सबहुमानं निक्षिपता युक्तमेवानुष्ठितम् । कथितं च मया यथा बाभ्रव्यः कञ्चुकी सिंहलेश्वरामात्येन वसुभूतिना सह कथं कथमपि समुद्रादुत्तीर्य्य कोशलोच्छित्तये गतस्य रुमण्वतो घटितः" इत्यनेन सागरिकाया अन्तःपुरस्थाया

( ६५ ) ... ... ... ... ... ... ... ... प्राप्तिः सुखागमः ॥ ८७ ॥

( ६६ ) यथा तत्रैव—'मथ्नामि कौरवशतं समरे न कोपात्—' इत्यादि (३८६ पृ.) । 'द्रौपदी—( श्रुत्वा सहर्षम्— ) णाध, अस्सुदपुव्वं क्खु एदं वअ-णम्, ता पुणो पुणो भण ।'

( ६७ ) बीजस्यागमनं यत्तु तत्समाधानमुच्यते ।

( ६८ ) यथा तत्रैव—'( नेपथ्ये कलकलानन्तरम् ) भो भो (क) द्रुपदविराट-वृष्ण्यन्धकसहदेवप्रभृतयः ! अस्मदक्षौहिणी पतयः कौरवचमूप्रधानयोधाश्च शृण्वन्तु भवन्तः—

वत्सराजस्य सुखेन दर्शनादिप्रयोजनावधारणाद्बाभ्रव्यसिंहलेश्वरामात्ययोः स्वनायकस-मागमहेतुप्रयोजनत्वेनावधारणाद्युक्तिरिति ।

यथा वोदात्तराघवे "लक्ष्मणः—

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतम्
मात्रा स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा ? ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु—
र्माताऽतातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥ इति ।

( ९५ ) प्राप्तिलक्षणं निरूपयति—प्राप्तिरिति । सुखागमः पात्रविशेषस्य आनन्दा-वाप्तिः प्राप्तिर्नामाङ्गम् ।

नाट्यशास्त्रेऽपि—

"सुखार्थस्याभिगमनं प्राप्तिरित्यभिधीयते" इति ।

( ९६ ) उदाहरति—यथेति । तत्रैव वेण्यामेव । मथ्नामीति । व्याख्यातं प्राक्(३८६पृ०) णाहेति । नाथ ! अश्रुतपूर्वं खल्विदं वचनम्, तत्पुनर्भण" इति संस्कृतम् ।

अनेन भीमक्रोधबीजान्वयेनैव सुखप्राप्त्या द्रौपद्याः प्राप्तिः ।

यथा च रत्नावल्याम्—

"सागरिका ( श्रुत्वा सहर्षं परिवृत्य सस्पृहं पश्यन्ती ) "कधं अ ओ" इत्यारभ्य "बहुमदं संजादम्" इत्यन्तेन सागरिकायाः सुखागमात्प्राप्तिः ।

( ९७ ) समाधानाङ्गलक्षणं निरूपयति—बीजस्येति । बीजस्य "अल्पमात्रं समुद्दिष्टम्" इत्यादिपूर्वोदितस्वरूपस्य आदिकारणस्येत्यर्थः, यदागमनं प्रधाननायकाभिमतत्वेन पुनरुपस्थितिः, तत्तु बीजस्य सम्यगासमन्तात् धानं पोषणं समाधानं नामाङ्गमुच्यते ।

( ९८ ) उदाहरति—यथेति । तत्रैव वेण्यामेव । भो भोः सम्भ्रमे द्विरुक्तिः द्रुपदवि राटवृष्ण्यन्धकसहदेवप्रभृतयः द्रुपदश्च विराटश्च वृष्णयश्च अन्धकाश्च सहदेवप्रभृतयश्चेति तत्सम्बुद्धौ तथोक्ताः । अत्र वृष्णयो वृष्णिवंश्या अन्धका अन्धकवंश्या इति लक्षणयाऽर्थो विधेयः। अन्यत्तु स्पष्टमेव । अस्मदक्षौहिणीपतयः पाण्डवाक्षौहिणीस्वामिनः, अक्षौहिणी च

(क) क्वचित्पुस्तके 'विराटद्रुपदप्रभृतयः, श्रूयताम्—इत्येव पाठः समुपलभ्यते । उपरितनपाठस्तु—संप्रति प्रकाशितवेणिसंहारतोऽवलोक्य मया लिखितम् ।

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद्द्यूतारणिसंभृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते ॥'

( ९९ ) अत्र 'स्वस्था भवन्तु मयि जीवति—' इत्यादि बीजस्य प्रधाननायकाभिमतत्वेन सम्यगाहितत्वात्समाधानम् ।

**( १०० ) सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् ॥ ८५ ॥**

---

अक्षौहिण्यामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः । संख्या युक्ता सहस्राणि गजानामेकविंशतिः ॥
एवमेव रथानां तु संख्यानं कीर्त्तितं बुधैः । पञ्चषष्टिः सहस्राणि षट् शतानि दशैव तु ॥
संख्यातास्तुरगास्तज्ज्ञैर्विना रथतुरङ्गमैः । नृणां शतसहस्रं तु सहस्राणि नवैव तु ॥
शतानि त्रीणि चान्यानि पञ्चाशच्च पदातयः ॥

गजाः………… २१८७०
अश्वाः………… ६५६१०
पदातयः………१०९३५०
} एतेऽक्षौहिणीपदवाच्याः ।

कौरवचमूप्रधानयोधाः कौरवचमूमुख्ययोद्धारः । चम्वश्च—
एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका । पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ।
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः । अनीकिनी…………………………इत्यमरः ।

गजाः………… ७२९
अश्वाः………… २१८७
पदातयः……… ३६४५
} एते चम्वः ।

यत्सत्यव्रतेति । सत्यमेव व्रतं सत्यव्रतं तस्य सत्यपालनरूपनियमस्य भङ्गात् विच्छेदाद् भीरु भीतं मनो यस्य तेन तथोक्तेन युधिष्ठिरेण (कर्त्रा) यत्नेन क्रोधावेगस्य दुर्निवारतया आयासेन यत् क्रोधज्योतिः क्रोधाग्निज्वाला मन्दीकृतम् अल्पीकृतं न तु विनाशितमिति भावः, क्रोधमन्दो यदि न भवेत्तदा सत्यभङ्गःस्यादित्येवं भीरुरित्याशयः । शमवता स्वभावत एव शान्तिगुणशालिना अत एव कुलस्य अन्वयस्य शान्तिं शमनम् इच्छता अभिषलता मया युधिष्ठिरेण यत् विस्मर्त्तुमपि ईहित चेष्टितम्, द्यूतम् अक्षक्रीडैव अरणिः वह्निमन्थनदारु इव तेन सम्भृतम् उत्पन्नम्, नृपसुतायाः द्रुपदपुत्र्याः केशस्य कचस्य अम्बरस्य वस्त्रस्य च आकर्षणैः तत्स्वरूपवातैः सन्धुक्षितमित्याशयः तदिदं यौधिष्ठिर युधिष्ठिरे भवं महत् क्रोधज्योतिः ज्योतिरिव क्रोध इत्युपमितसमासः कोपवह्निरित्यर्थः कुरुवने वन इव कुरुराजे जृम्भते प्रकाशते । शार्दूलविक्रीडितच्छन्दस्तल्लक्षणन्तूक्त प्राक् ( १९८ पृ० )

( ९९ ) समाधानपदस्य योगार्थमत्रोपपादयति—अत्रेति । बीजस्य क्रोधोद्दीपितभीमसेनोत्साहस्येत्यर्थः । सम्यगाहितत्वात् यथाक्रमं कविना नाटके उपन्यासादित्यर्थः ।

( १०० ) विधानाङ्गलक्षणं निरूपयति—सुखदुःखकृत इति । सुखदुःखाभ्यां कृतो विहितोऽर्थः विषयस्तद्विधीयत इति विधानं तन्नामाङ्गं स्मृतम् ।

( १ ) यथा बालचरिते—

'उत्साहातिशयं वत्स ! तव बाल्यं च पश्यतः ।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः ।'

( २ ) यथा वा मम प्रभावत्याम्-'नयनयुगासेचनकम्-' इत्यादि (३२२पृ.) ।

( १०१ ) उदाहरति—यथेति । बालचरिते बालरामचन्द्रचरितप्रधाने कस्मिंश्चिद्रूपके परशुराम "रामं प्रत्याह" इति शेषः ।

उत्साहेति । हे वत्स राम ! तव उत्साहातिशयं बाल्यं शैशववयश्च पश्यतोऽवलोकयतः मम मनो युगपत् हर्षविषादाभ्याम् सुखदुःखाभ्याम् आक्रान्तं संयुक्तम् । तथाचोत्साहातिशयावलोकनेन महावीरत्वनिश्चयात् सुखम् , शैशवावस्थायां हरकार्मुकभङ्गरूपाविचारितकर्मकरणेन तेन सह समरः कर्त्तव्य इति दुःखमिति भावः ।

अत्र परशुरामस्य श्रीरामपराभवोद्यमरूपोऽर्थः सुखदुःखाभ्यामुभाभ्यामेव विहितत्वाद्विधानम् ।

( १०२ ) प्रकारान्तरेणोदाहरति—यथा वेति । नयनयुगेत्यत्र यथोक्तार्थेन सुखम् , तद्विरहाद्दुःखम् , । तथा च सुखदुःखाभ्यां मनसः सम्बन्धविधानाद्विधानम् ।

एवं मालतीमाधवे प्रथमेऽङ्के माधवः—

यान्त्या मुहुर्वलितकन्धरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥
यद्विस्मयस्तिमितमस्तमितान्यभावमानन्दमन्दममृतप्लवनादिवाभूत् ।
तत्सन्निधौ तदधुना हृदयं मदीयमङ्गारचुम्बितमिव व्यथमानमास्ते ॥

इत्यनेन मालत्यवलोकनस्यानुरागस्य समागमहेतोर्बीजानुगुण्येनव माधवस्य सुखदुःखकारित्वाद्विधानम् ।

नाट्यदर्पणे तु—

"द्वयोः सुखदुःखयोरेकत्रानेकत्र वा पात्रे प्राप्तिरेकस्यैव वा सुखस्य दुःखस्य वा प्राप्तिर्विधानम्" इति तत्रैकत्रपात्रे सुखदुःखयोः प्राप्तिस्तूक्तोदाहरणेषु ।

अनेकत्र यथा तापसवत्सराजे काञ्चनमालया ज्ञातिगृहवार्त्ताविशेषापदेशात् वासवदत्ताया वियोगदुःखेऽपह्नुते राजा स्मित्वाऽऽह—

दृष्टिं प्रेम भरालसां मयि मुहुर्विन्यस्य लज्जावती
कालस्याहमिहासहेत्यविरतं प्रत्यर्पयन्ती मनः ।
जाता देवि ! तदा ममापनयने हेतुस्त्वमेवाधुना
किं सन्देशनवीभवत्कुलगृहोत्कण्ठाधिकं ताम्यसि ॥

अत्र च वासवदत्तायाः प्रवासाभ्युपगमात् दुःखम् , वत्सराजस्य चाविदितप्रवासवृत्तान्तस्य सुखम् ।

एकस्य सुखस्य प्राप्तिर्यथा रत्नावल्याम्—

(क)"कंचणमाले ! पइट्ठावेहि असोयमूले भयवन्तं पज्जुन्नं"

---

( क ) "कञ्चनमाले ! प्रतिष्ठापयाशोकमूले भगवन्तं प्रद्युम्नम्" इति संस्कृतम् ।

(३) कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावना ।

(४) यथा—वेण्यां द्रौपदी युद्धं स्यान्न वेति संशयाना तूर्यशब्दानन्तरम् 'णाध ! किं दाणिं एसो पल अजल हरत्थणिदमन्थ खणे खणे समरदुन्दुभि न्दुभी ताडीअदि ।'

(५) बीजार्थस्य प्ररोहः स्यादुद्भेदः—

(६) यथा तत्रैव-'द्रौपदी—(क)अरणं च णाह, पुणो वि तुम्हेहिं समरादो आ अच्छिअसमास्सासइदव्वा ।

(इत्युपक्रमे) राजा—

"कुसुमसुकुमारमूर्त्तिर्दधती नियमेन तनुतरं मध्यम् ।
आभासि मकरकेतोः पार्श्वस्था चापयष्टिरिव ॥"

इत्यारभ्य "वासवदत्ता राजानं पूजयति" इति यावत् ।

एकस्य दुःखस्य यथा "निर्भयभीमनाम्नि व्यायोगे भीमः—

अन्यायैकजुषः शठव्रतपुषो येऽस्माकमत्रद्विष-
स्ते नन्दन्ति मदं वहन्ति महतीं गच्छन्ति च श्लाघ्यताम् ।
ये तु न्यायपराः पराजवधरास्ते पश्यतामीवयम्
नीचैः कर्मकृतः पराभवभृतस्तत्राश्च वर्त्तामहे ॥

अत्र सुखस्य सुखहेतोश्च अन्वेषणरूपा प्राप्तिर्विधानम् ।

(३) भावनालक्षणं निरूपयति—कुतूहलेति । कुतूहलोत्तराः कौतूहलपूर्विकाः वाचां वचनानि तु परितस्सर्वतो भावना कुतूहलद्योतना परिभावना नामाङ्गं प्रोक्ता कथिता । वाच इत्यत्र बहुत्वमविवक्षितम् ।

(४) उदाहरति—यथेति । संशयाना संदेहं कुर्वाणा । "नाथ ! किमिदानीमेषप्रलयजलधरस्तनितमन्थरः क्षणे क्षणे समरदुन्दुभिस्ताड्यते" इति संस्कृतम् । प्रलयजलधरस्य प्रलयकालीनमेघस्य यत् स्तनितं गर्जितं तद्वत् मन्थरो धीरः । समरदुन्दुभिः युद्धकालीनभेरी ।

अत्र द्रौपदीवचनस्य कुतूहलपूर्वकत्वात् परिभावना ।

यथा च नागानन्दे (मलयवतीं दृष्ट्वा) नायकः—

स्वर्गस्त्री यदि तत्कृतार्थमभवच्चक्षुःसहस्रं हरे-
र्नागीचेन्न रसातलं शशभृता शून्यं मुखेऽस्याः सति ।
जातिर्नः सफलान्यजातिजयिनी विद्याधरी चेदियं
स्यात् सिद्धान्वयजा यदि त्रिभुवने सिद्धाः प्रसिद्धास्ततः ॥

अत्रापि नायकोक्तेः कुतूहलपूर्वकत्वात् परिभावना ।

(५) उद्भेदलक्षणं निरूपयति—बीजार्थस्येति । बीजार्थस्य "अल्पमात्रं समुद्दिष्टम्" इत्याद्युक्तस्वरूपस्य आदिकारणस्य प्ररोहः पुनरुद्भव उद्भेदः स्यात् ।

(६) उदाहरति—यथेति । तत्रैव वेण्यामेव ।

(क) णाध, पुणो वि तए समासासइदव्वा इति पाठान्तरम् ।

भीमः—ननु पाञ्चालराजतनये ! किमद्याप्यलीकाश्वासनया—

भूयः परिभवक्लान्तिलज्जाविधुरिताननम् ।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम् ॥

( ७ ) ........................................ करणं पुनः ॥ ८६ ॥

प्रकृतार्थसमारम्भः—

( ८ ) यथा तत्रैव—'देवि ! गच्छामो वयमिदानीं कुरुकुलक्षयाय' इति ।

( ९ ) ........................................ भेदः संहतभेदनम् ।

अन्यच्च नाथ! पुनरपि युष्माभिः समरादागत्याहं समाश्वासयितव्या" इति संस्कृतम्। समाश्वासयितव्या प्राप्तव्या मत्सन्निधावागन्तव्येत्यर्थः ।

भीम इति । "द्रौपदीं प्रत्याह" इति शेषः । पाञ्चालराजतनये द्रुपदराजपुत्रि ! । अलीकाश्वासनया असत्याश्वासनया ।

भूय इति । परिभवेन शत्रुजनितापमानेन या क्लान्तिः हर्षक्षयस्तेन लज्जा त्रपा तया विधुरितं विच्छायम् आननं मुखं यस्य तं तथोक्तम् "आननं लपनं मुखम्" इत्यमरः । तथा अनिःशेषिताः समूलमविनाशिताः कौरव्याः दुर्योधनादयो येन तं तथोक्तम्, वृकोदरं भीमं भूयः पुनः न पश्यसि नावलोकयसि । वर्त्तमानसामीप्ये भविष्यति लट् ।

अत्र शत्रुविजयोत्साहरूपबीजार्थस्य पुनरुद्भवादुद्भेदः ।

अन्ये तु गूढभेदनमुद्भेदमामनन्ति । यथा रत्नावल्याम् वत्सराजस्य कुसुमायुधव्यपदेशगूढस्य वैतालिकवचसा "अस्तापास्त" इत्यादिना "उदयनस्य" इत्यन्तेन बीजानुगुण्येनैवोद्भेदनादुद्भेदः ।

( ७ ) करणलक्षणं निरूपयति—करणमिति । प्रकृतार्थस्य प्रस्तुतविषयस्य समारम्भः सम्यगारम्भः पुनः करणमिति यावत् करणं नामाङ्गम् ।

( ८ ) उदाहरति—यथेति । तत्रैव वेण्यामेव । अत्र प्रस्तुतार्थस्य युद्धोद्योगस्य समारम्भात् करणम् ।

यथा वा रत्नावल्याम् (क) "णमोदे कुसुमाउह ता अमोह दसणो मे भविस्ससित्ति । दिट्ठं य पेक्खिदव्वम् । ता जावण्ण कोवि म पेक्खइ ता गमिस्सम् ।" इत्यनेनान्तराङ्गप्रकृतदर्शनसमारम्भात् करणम् ।

अन्ये तु विपदां शमनं करणमाहुः । शमनं चाशीर्वादवशेनान्यथा वा । यथा वेण्यामेव भीमं प्रति द्रौपदी—(ख) "जं असुरसमराभिमुहस्स हरिणो मङ्गलं तं तुम्हाणं भोदु" । इति

( ९ ) भेदलक्षणं दर्शयति—भेद इति । संहतानां संमिलितानां भेदनं विश्लेषणं पृथक्करणमिति यावत्, भेदः भेदो नामाङ्गम् ।

उक्तं च मुनिनापि—

"संघातभेदनार्थो यः स भेद इति कीर्त्तितः" । इति

---

(क) "नमस्ते कुसुमायुध ! तदमोघदर्शनो मे भविष्यसीति दृष्टं यत्प्रेक्षितव्यम् । तद्यावन्न कोऽपि मां प्रेक्षते तद्गमिष्यामि" इति संस्कृतम् ।

(ख) यदसुरसमराभिमुखस्य हरेर्मङ्गलं तद्युष्माकं भवतु । इति संस्कृतम् ।

( १० ) यथा तत्रैव—'अत एवाद्यप्रभृति भिन्नोऽहं भवद्भ्यः ।'

( ११ ) केचित्तु 'भेदः प्रोत्साहना' इति वदन्ति ।

( १२ ) अथ प्रतिमुखाङ्गानि—

**विलासः परिसर्पश्च विधुतं तापनं तथा ॥ ८७ ॥**
**नर्म नर्मद्युतिश्चैव तथा प्रगमनं पुनः ।**
**विरोधश्च प्रतिमुखे तथा स्यात्पर्युपासनम् ॥ ८८ ॥**
**पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ।**

तत्र—

( १३ **समीहा रतिभोगार्था विलास इति कथ्यते ॥ ८९ ॥**

( १० ) उदाहरति—यथेति । तत्रैव वेण्यामेव अत्र भीमेन युधिष्ठिरादिसंघातादात्मनो विश्लेषाद्भेदः ।

( ११ ) प्रकारान्तरेण लक्षयतां मतं दर्शयति–केचित्त्विति । दशरूपककारादय इत्यर्थः । "कर्त्तव्यं प्रति प्रकर्षणोत्साहोत्पादनं भेदः" इति वदन्ति । उदाहरणं यथा वेण्यामेव—(क) "णाध ! मा कखु जण्णसेणी परिभवुद्दीविदकोवा अणवेक्खिदसरीरा परिक्कमिस्सध । जदोअप्पमत्तसंचरणीयाइ सुणीयन्ति रिपुवलाई । भीमः–अयि ! सुक्षत्रिये ?

अन्योन्यस्फालभिन्नद्विपरुधिरवसासान्द्रमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
संग्रामैकार्णवान्तः पयसि विचरितुं पण्डिताः पाण्डुपुत्राः ॥

इत्यनेन विषण्णाया द्रौपद्याः क्रोधोत्साहबीजानुगुण्येनैव प्रोत्साहनाद्भेदः ।

अत्रेदम्बोध्यम्—एतानि द्वादशमुखाङ्गानि बीजारम्भद्योतकानि साक्षात्पारम्पर्येण वा नाटके कविनावश्यमुपन्यसनीयानि ।

( १२ ) प्रतिमुखसन्धेस्त्रयोदशाङ्गानि दर्शयति—विलास इति । विलासादीनि त्रयोदशाङ्गानि प्रतिमुखे सन्धौ स्युरित्यर्थः ।

अत्रेदमाकूतम्–प्रायेण श्रृङ्गाररसप्रधान एव दृश्यकाव्ये ह्येतानि सम्भवन्ति ग्रन्थकृता तथैव लक्षणोदाहरणानि प्रतिपादितानि । अवश्यमेव सकलदृश्यकाव्येषु चैतैः स्थातव्यमिति नैषनियमः—

रसव्यक्तिमपेक्ष्यैषामङ्गानां सन्निवेशनम् । न तु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥
इत्यग्रे स्वयमेव मूलकृतानियमेनोक्तत्वात् ।

( १३ ) विलासलक्षणं निरूपयति—समीहेति । रतिभोगार्था रतिरनुरागः तद्भोगार्था पात्रीभूतस्त्रीपुरुषान्यतरविषया समीहा इच्छा । यद्यपि रतिर्निधुवनं तद्भोगाय इच्छेत्येवमर्थ एव उदाहरणानुसारी युज्यते तथापि ग्रन्थकृद्व्याख्यानुरोधादित्थं व्याख्यातम् ।

(क) "नाथ ! मा खलु याज्ञसेनी परिभवोद्दीपितकोपा अनवेक्षितशरीराः परिक्रमिष्यथ । यतोऽप्रमत्तसञ्चरणीयानि श्रूयन्ते रिपुवलानि ।" इति संस्कृतम् ।

( १४ ) रतिलक्षणस्य भावस्य यो हेतुभूतो भोगो विषयः प्रमदा पुरुषो वा तदर्था समीहा विलासः ।

( १५ ) यथा शाकुन्तले—

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥

( १६ ) इष्टनष्टानुसरणं परिसर्पश्च कथ्यते ।

( १४ ) स्वयमेव स्फुटीकरोति—रतिलक्षणस्येति । रतिलक्षणस्य अनुरागस्वरूपस्य । भोगो विषयः । तथा च भुज्यते रतिसमये चेतसा सर्वदैवानुभवविषयीक्रियते यः स भोग इति । प्रमदा नारी । तदर्था तयोरेकतरविषया ।

( १५ ) उदाहरति—यथेति । काममिति । शकुन्तलालिप्सोर्दुष्यन्तस्योक्तिरियम् । प्रिया शकुन्तला कामं यथेष्टं न सुलभा न सुखलभ्या, अस्वतन्त्रत्वात्तस्या गुरोरपि असन्निधित्वाच्चेति भावः । अनेन बह्वायासलभ्या भवेदिति सूचितम् । ननु तर्हि त्यज्यतामलमायासेनात आह—मन इति । तु किन्तु तथापि मम मनश्चित्तम् , तस्याः शकुन्तलायाः ये भावाः अनुरागव्यञ्जकस्निग्धकटाक्षविक्षेपादिचेष्टाविशेषाः तेषां दर्शनेन अवलोकनेन आश्वासि आश्वासाभिलाषि जातम् , नन्वभिलाषितायाः असम्भवे मनसः कथमाश्वासितेत्याशयेनाह—अकृतार्थेऽपीति । मनसिजे कामे अकृतार्थेऽपि सम्भोगाप्रतिपादनेनाचरितार्थ्येऽपि सत्यपि कामिन उद्देश्यसिद्धिरेव मनसिजस्य कृतार्थतेति बोध्यम् । उभयप्रार्थना नायकनायिकयोरन्योन्यप्राप्तीच्छा रतिं सम्भविष्यत्सम्मेलजन्यमनुरागं कुरुते उत्पादयति । तथा च नायिकाया नायके नायकस्य नायिकायां यदि प्रार्थना दृश्यते तदा उपभोगाभावेऽपि तयोरनुरागो भवति, प्रकृते च शकुन्तलाया भावदर्शनेन प्रार्थना मयि अभिव्यक्तेति मनः समाश्वासीत्याशयः । आर्या छन्दस्तल्लक्षणं चोक्तं प्राक् ।

अत्र दुष्यन्तस्य शकुन्तलायां समीहाकरणात् विलासः ।

यथा वा रत्नावल्याम्—"सागरिका (क)हि अअ ! पसीद पसीद । किं इमिणा आआसमेत्तफलेण दुल्लहजणप्पत्थणाणुबन्धेण" ( इत्युपक्रमे ) "तहावि आलेखगदं तं जणं कदुअ जधासमीहिदं करिस्सम् । तहावि तस्य णत्थिअण्णो दंसणोवाउत्ति" इत्येतैर्वत्सराजसमागमरतिं चित्रादिजन्यामप्युद्दिश्य सागरिकाश्चेष्टा प्रयत्नोऽनुरागबीजानुगतो विलासः ।

अत्रेदं बोध्यम्—प्रतिमुखस्य चादावेवेदमङ्गं निबन्धनीयम् । य एव मुखे रस उपक्षिप्यते तस्यैव स्थायी विभावानुभावव्यभिचारिभिः पोषणीयः । कामफले च रूपके मुखसन्धावुपक्रान्तः शृङ्गारः प्रतिमुखे विलासेन स एव विस्तार्य्यते, विलासप्रकाशकान्येव चेतराण्यङ्गानि निबन्धनीयानि । एव सति वेणीसंहारे भानुमत्या सह दुर्य्योधनस्य दर्शितो रत्यभिलाषरूपो विलासः सः, नायकस्य तादृशेऽवसरेऽनुचित इति ।

( १६ ) परिसर्पलक्षणं निरूपयति—इष्टनष्टेति । नष्टेति "णश् अदर्शने" इति धात्व-

( क ) "हृदय ! प्रसीद प्रसीद । किमनेनायासमात्रफलेन दुर्लभजनप्रार्थनानुबन्धेन ।...... तथाप्यालेखगतं तं जनं कृत्वा यथासमीहितं करिष्यामि तथापि तस्य नास्त्यन्यो दर्शनोपाय" इति संस्कृतम् ।

( १७ ) यथा शाकुन्तले—'राजा—भवितव्यमत्र तया । तथा हि—

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥

( १८ ) कृतस्यानुनयस्यादौ विधुतं त्वपरिग्रहः ॥ ८० ॥

( १९ ) यथा तत्रैव-'अलं वो अन्तेउरविरहपज्जुस्सुएण राएसिणा उवरुद्धेण ।

---

र्थानुसारात् अदर्शनमर्थः । तथा च इष्टस्य अभीष्टस्य नष्टस्य अदर्शनं गतस्य सतः अनुसरणमन्वेषणं परितः सर्वतः सर्पणमन्वेषण परिसर्पस्तन्नामाङ्गं कथ्यते ।

( १७ ) उदाहरति—यथेति । अत्र लतामण्डपे । तया शकुन्तलया सन्निहितया भवितव्यं भाव्यम् ।

उक्तार्थं समर्थयति—अभ्युन्नतेति । पाण्डवः पाण्डुवर्णाः सिकता वालुका यस्मिंस्तस्मिंस्तथोक्ते अस्य लतामण्डपस्य द्वारे प्रवेशमार्गे पुरस्तात् पादाग्रभागे अभ्युन्नता पश्चाद्भागापेक्षया किञ्चिदुच्चा तथा पश्चात् पार्ष्णिदेशे गुल्फनिक्षेपस्थाने इत्यर्थः जघनगौरवात् नितम्बयोर्भारवत्वात् अवगाढा अग्रभागाङ्गुल्याद्यपेक्षया किञ्चिन्निम्ना अभिनवा अचिरजाता पदपङ्क्तिः पदचिह्नश्रेणी दृश्यते अवलोक्यते अन्यासां स्त्रीणामनसूयाप्रियंवदयोर्वा तादृशजघनगुरुत्वासम्भवात्प्रियतमायाः शकुन्तलाया एवेयं पदपङ्क्तिरित्यतो लतामण्डपेऽवश्यं तया भवितव्यमिति भावः । आर्याछन्दस्तल्लक्षणन्तूक्तं प्राक् ।

अत्र दुष्यन्तेन अदर्शनप्राप्ताभिलषितशकुन्तलायाः अन्वेषणात् परिसर्पः ।

दशरूपके तु- दृष्टनष्टानुसर्पणं परिसर्प इति ।

यथा वेणीसंहारे 'कञ्चुकी योऽयमुद्यतेषु बलवत्सु अथवा किं बलवत्सु वासुदेवसहायेष्वरिष्वस्माध्यन्तः पुरसुखमनुभवति । इदमपरमयथातथं स्वामिनः—

आ शस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने-
स्तापायास्य न पाण्डुसूनुभिरयं भीष्मः शरैः शायितः ।
प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो-
बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्वधात् ॥

इत्यनेन भीष्मादिवधे दृष्टस्याभिमन्युवधान्नष्टस्य बलवतां पाण्डवानां वासुदेवसहायानां सङ्ग्रामलक्षणबिन्दुबीजप्रयत्नान्वयेन कञ्चुकिमुखेन बीजानुसर्पणं परिसर्पः ।

मन्दारमरन्दे—

पूर्वदृष्टस्य बीजस्य त्वङ्कच्छेदादिना तथा ।
नष्टस्यानुस्मृतिः शश्वत्परिसर्प इतीरितः ॥ इति ।

( १८ ) विधृतलक्षणं निरूपयति—कृतस्येति । आदौ प्रथमतः कृतस्य अनुनयस्य प्रसादनस्य अपरिग्रहः अनङ्गीकारः, धृतमात्मनि धारिताद्विपरीतमिति विधृतं नामाङ्गम् ।

( १९ ) उदाहरति—यथेति । तत्रैव शाकुन्तल एव । "अलं वः अन्तःपुरविरहपर्युत्सुकेन राजर्षिणा उपरुद्धेन" इति संस्कृतम् । अन्तः पुराणां तत्रत्यनारीणां विरहेण वियोगेन पर्युत्सुक उत्कण्ठितस्तेन तथोक्तेन राजर्षिणा दुष्यन्तेन वो युष्माकं युष्माभिरिति यावत् उपरुद्धेन मदर्थमनुनीतेन अलम् , अन्तःपुरस्त्रीषु उत्कण्ठित हृदये दुष्यन्ते तपस्विन्यर्थमनुनयो निष्फल एव भवेदिति स न विधातव्य इति भावः ।

( २० ) केचित्तु 'विधूतं स्यादरतिः' इति वदन्ति ।

( २१ ) **उपायादर्शनं यत्तु तापनं नाम तद्भवेत् ।**

( २२ ) यथा रत्नावल्याम्—'सागरिका—

दुल्लहजणाणुराओ लज्जा गुरुई परव्वसो अप्पा ।
पियसहि विसमं पेम्मं मरणं सरणं णवरि एक्कम् ॥

अत्र शकुन्तलया प्रथमं चेतसि विहितस्यानुनयस्याधुना सखीभिः कारयितुमनङ्गीकारात् विधूतम् ।

( २० ) मतान्तरलक्षणं बोधयितुमाह—केचित्विति । दशरूपककारादय इत्यर्थः । अरतिररुचिः ।

मन्दारमरन्देऽपि—

नायकानामीप्सितानामर्थानामनवाप्तितः ।
अरतिर्या भवेत्सा तु विद्वद्भिर्विधृतं मतम् ॥ इति ।

उदाहरणं यथा—

श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-
र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दशदिशस्तद्वक्त्रमुद्राङ्किताः ॥ इति ।

( २१ ) तापनलक्षणं निरूपयति—उपायेति ! यत्तूपायादर्शनं क्लेशनिवारणहेत्वनवधारणम् तत् तापनं नामाङ्गं भवेत् ।

( २२ ) उदाहरति यथेति—दुल्लह इति ।

दुर्लभजनानुरागः लज्जा गुर्वी परवश आत्मा ।
प्रियसखि ! विषमं प्रेम मरणं शरणं केवलमेकम् ॥

इति संस्कृतम् । णवरिशब्दः केवलार्थो देशीयः । प्रियसखि ! दुर्लभे मादृशाधमेन दुष्प्रापे जने वत्सराजे मम अनुरागः प्रीतिः क्रियते तदनायासेनालब्धत्वान्नास्ति मनसिजक्लेशापाकरणसम्भावनेति भावः । लज्जा त्रपा गुर्वी सद्वंशोत्पन्नत्वाद्विपुला अतः स्वयं प्राप्यापि मदनव्यथामुपशान्तयितुं न शक्यत इति भावः । आत्मा परवशः अस्वतन्त्रः तस्मात्त्रपां परित्यज्यापि तत्रात्मसमर्पणं न युज्यत इत्याशयः । प्रेम विषमं वत्सराजं प्रति मम रतिश्चातिविशालः, अता विहातुमपि न सम्भवतीत्यभिप्रायः अतो ह्येकं मम मरणमेव केवलं शरणम् उपायान्तरादर्शनादिति भावः ।

अत्र सागरिकाया कामव्यथापाकरणोपायादर्शनात् तापनम् ।

यथा वा पार्थविजये "किञ्चुकी—भोः भोः लोकपालाः परित्रायध्वम् ।

एषा वधू भरतराजकुलस्य साध्वी
दुर्योधनस्य महिषी प्रियसङ्गरस्य ।
विस्मृत्य पाण्डु-धृतराष्ट्रपितामहादीन्
गन्धर्ववीरपशुभिः परिभूयते स्म ॥

युधिष्ठिरः—( श्रुत्वा दुर्योधनान्तःपुरे महदुपायादर्शनमाविष्कुर्वन्नाह ) अयि ! वत्स ! स्वगोत्रपरिभाविष्कारनिष्ठुरः शब्दः । अद्याऽप्यभ्रान्त एवासि कः कोऽत्र ! चापं चापम्

( २३ ) परिहासवचो नर्म—

( २४ ) यथा रत्नावल्याम्—'सुसंगता—सहि, जस्स किदे तुमं आअदा सो अअ दे पुरदो चिट्ठदि । सागरिका—( साभ्यसूयम् ) कस्स किदे अहं आअदा ? सुसंगता—अलं अण्णसंकिदेण । णं चित्तफलअस्स ।'

( २५ ) .................................धृतिस्तु परिहासजा ॥ ६१ ॥

नर्मद्युतिः—

( २६ ) तथा तत्रैव—'सुसंगता—सहि, अदक्खिणा दाणिं सि तुमं जा

( इति चापारोपणमभिनय सम्भ्रमादुत्तिष्ठति इति । दशरूपके तु तापनस्थले शम उल्लिखितः । तथा हि "तच्छमः शमः" इति । तस्या अरतेरुपशमः शमः ।

यथा रत्नावल्याम्:—

"राजा—वयस्य ! अनया लिखितोऽहमिति । यत्सत्यमात्मन्यपि मे बहुमानस्तत्कथं न पश्यामि इति क्रमे 'सागरिका—( आत्मगतम् ) ( क ) हिअअ ! समस्ससस । मणोरहोवि दे एत्तिअं भूमिंणगदो" इति किञ्चिदरत्युपशमाच्छम इति ।

एवम् "असशयं क्षत्रपरिग्रहक्षमा" इत्युदाहरणमपि ज्ञेयम् ।

मन्दारमरन्देऽप्येवमेव लक्षणम् —

"अरतेः शमनं तज्ज्ञाः शममाहुर्मनीषिणः" इति ।

( २३ ) नर्मलक्षणं निरूपयति—परिहासेति । परिहासवचः उपहासवाक्य नर्म नामाङ्गम् । शक्तिरपि नर्मशब्दस्य तत्रैव ।

नाट्यशास्त्रेऽप्युक्तम्—

"क्रीडार्थं विहितं यत्र हास्यं नर्मेति तत्स्मृतम्" इति ।

मन्दारमरन्देऽपि—

"परिहासप्रधानं यद्वचनं नर्म तद्विदुः" इति ।

( २४ ) उदाहरति—यथेति । "सखि । यस्य कृते त्वमागता सोऽयं ते पुरस्तिष्ठति । कस्य कृते अहमागता ? अयि अन्यशङ्किते । ननु चित्रफलकस्य इति संस्कृतम् ।

अत्र सखीवचने परिहासद्योतनात् नर्म । यथा च वेणीसंहारे—( दुर्योधनश्चेटीहस्तादर्घपात्रमादाय देव्यै समर्पयति । पुनः ) भानुमती ( अर्घं दत्वा ) ( क ) हला उवणेहि मे कुसुमाइं जाव अवराणं पि देवाण सवरिअं णिवत्तेमि । ( हस्तौ प्रसारयति ) दुर्योधनः पुष्पाण्युपनयति । भानुमत्यास्तत्स्पर्शजातकम्पाया हस्तात्पुष्पाणि पतन्ति ) इत्यनेन नर्मणा दुःस्वप्नदर्शनोपशमार्थं देवतापूजाविघ्नकारिणां बीजोद्घाटनात्परिहासस्य प्रतिमुखाङ्गत्वं समीचीनम् ।

( २५ ) नर्मद्युतिलक्षणं दर्शयति—धृतिस्त्विति । परिहासजा परिहासे उपहासे सत्यपि जाता धृतिर्धैर्य्यन्तु नमणो द्योतनं नर्मद्युतिर्नामाङ्गम् ।

नाट्यशास्त्रेऽपि—

दोषप्रच्छादनार्थं तु नर्मद्युतिरिति स्मृतम् । इति ।

( २६ ) उदाहरति—यथेति । तत्रैव रत्नावल्यामेवेत्यर्थः । "सखी ! अदक्षिणेदानी-

( क ) "हृदय ! समाश्वसिहि । मनोरथोऽपि त एतावतीं भूमिं न गतः" इति संस्कृतम् ।

एव्वं भट्टिणा हत्थावलम्बिदावि कोवं ण मुञ्चसि । सागरिका—(सभ्रूभङ्गमीषद्विहस्य) सुसंगदे, दाणिं वि कीलिदुं न विरमसि । केचित्तु—'दोषस्याच्छादनं हास्यं नर्मद्युतिः' इति वदन्ति ।

( २७ )............**प्रगमनं वाक्यं स्यादुत्तरोत्तरम्** ।

( २८ ) यथा विक्रमोर्वश्याम्—उर्वशी—जअदु जअदु महाराओ । **राजा**—मया नाम जितं यस्य त्वया जय उदीर्यते, इत्यादि ।

---

मसित्वं, या एवं भर्त्रा हस्तावलम्बितापि कोपं न मुञ्चसि । सुसङ्गते ! इदानीमपि क्रीडितुं न विरमसि । ' इति संस्कृतम् ।

अत्र सुसङ्गतया उपहासे विहितेऽपि सागरिकया धैर्य्यावलम्बनान्नर्मद्युतिः ।

अत्र च सागरिकायाः सुसङ्गताकृतपरिहाससहिष्णुत्वम्, नर्मणि तस्याऽसूयता प्रदर्शनादसहिष्णुत्वमिति भेदः ।

मतान्तरं दर्शयति—केचित्त्विति । दोषस्याच्छादनम् आवृतकरं यत् हास्यं तन्नर्म्मद्युतिः ।

उदाहरणं यथा रत्नावल्याम्—

"विदूषकः—(क) भो ? अज्ज ! वि एपा च उव्वेउवियवंभणो रिआउ । राजा—वयस्य ! किमप्यन्यचेतसा मया नावधीरितम्, तत्किमनयोक्तम् ? ।

विदूषकः—( ख ) भो एदं एदाए पढिदं—

दुल्लहजणाणुराओ लज्जा गरुई परव्वसो अप्पा ।
पिअसहि ! विसमं मरणं सरणं नवरमेक्कं ॥

राजा—भो महाब्राह्मण ! कोऽन्य एवं ऋचामभिज्ञः ?" इति । अत्र मौर्ख्यदोषं प्रच्छादनार्थं यद्विदूषकेणोच्यते तद्राज्ञो हास्यहेतुत्वान्नर्म्मद्युतिः ।

मन्दारमरन्दे तु—

कोपस्यापह्नवार्थं यद्धास्यं नर्मद्युतिर्मतम् इत्युक्तम् ।

( २७ ) प्रगमनलक्षणं निरूपयति—प्रगमनमिति । उत्तरोत्तरम् उत्कृष्टतरोत्तरस्वरूपं वाक्यं प्रकर्षेण उत्कृष्टरूपेण गमनं ज्ञानं यस्य तत् प्रगमनं नामाङ्गं स्यात् ।

उक्तञ्च मन्दारमरन्देऽपि—

तथानुरागबीजस्य चोत्तरोत्तरभाषणैः ।
प्रकाशनं प्रगमनमिति नाट्यविदो विदुः ॥ इति ।

( २८ ) उदाहरति—यथेति । 'जयतु जयतु महाराजः इति संस्कृतम् ।

अत्र मया नामेत्यादेरुत्कृष्टतरोत्तरवाक्यत्वात्प्रगमनम् ।

---

( क ) "भोः अयाप्येषा चतुर्वेदीयमाह्मण ऋचः पठितु प्रवृत्ता" इति संस्कृतम् ।

( ख ) भो एतदेतया पठितम्—

दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा ।
प्रियसखि ! विषमं प्रेम मरणं शरणं केवलमेकम् ॥ इति संस्कृतम् ।

( २९ ) विरोधो व्यसनप्राप्तिः—

( ३० ) यथा चण्डकौशिके—'राजा—नूनमसमीक्ष्यकारिणा मया अन्धेनेव स्फुरच्छिखाकलापो ज्वलनः पद्भ्यां समाक्रान्तः ।'

( ३१ ) ............... कृतस्यानुनयः पुनः ॥ ९२ ॥

यथा वा वेणीसंहारे—

भानुमती—( क ) अज्जउत्त ! अदिमित्तं मे संका बाधदि । ता अणुमन्नेदु मं अज्जउत्तो ।

राजा—अयि देवि !

किं नो व्याप्तदिशां प्रकम्पितभुवामक्षौहिणीनां फलं ?
किं द्रोणेन किमङ्गराजविशिखैरेवं यदि क्लाम्यसि ।
भीरु ! भ्रातृशतस्य मे भुजवनच्छायासुखापाश्रिता
त्वं दुर्योधनकेशरीन्द्रगृहिणी शङ्कास्पदं किं तव ? ॥

भानुमती—( ख ) अज्जउत्त ! न हु मे किञ्चि संका तुम्हेसु सन्निहिदेसु ॥ इति ।

( २९ ) विरोधलक्षणं दर्शयति—विरोध इति । व्यसनप्राप्तिर्विपत्प्राप्तिः सम्पत्प्राप्तेर्विरोधित्वाद्विरोधो नामाङ्गम् ।

( ३० ) उदाहरति—यथेति । राजा हरिश्चन्द्रः । असमीक्ष्यकारिणा अविचारितविधायिना । स्फुरद्देदीप्यमानः शिखाकलापः अर्चिः समूहो यस्य सतथोक्तो ज्वलनोऽग्निः ।

अत्र विश्वामित्राद्धरिश्चन्द्रस्य विपत्प्राप्तेर्विरोधः ।

यथा वा सत्यहरिश्चन्द्रे—

"राजा—देवि ! अवलम्बस्य मद्वचनम् । अत्रैव तिष्ठ । अशिक्षितपदचारा न शक्ष्यति भवती क्रमितुं दर्भाङ्कुरविधुरासु वनवसुन्धरासु ।

सुतारा—( ग ) जं भोदि तं भोदु । अहं गमिस्सं ।

राजा—( कुलपतिं प्रति ) भगवन् !

त्यजन् हेम्नो लक्षं ( क्षां ) चतुरुदधिकाञ्चीं च वसुधां
सुधाम्भोभिः स्नानादपि समधिकां प्रीतिमभजम् ।
सखस्तामेतां तु प्रवसनपरां वीक्ष्य दयिता-
मिदानीं मन्येऽहं ज्वलदनललीढं वपुरदः ॥ इति ।

अत्रापि विश्वामित्राद्विपत्प्राप्तेर्विरोधः ।

मन्दारमरन्दे तु—

"विरोधशङ्कया यच्च हितागमनिरोधनम्" इति ।

( ३१ ) पर्य्युपासनलक्षणं निरूपयति—कृतस्येति । कृतस्य दोषस्य अपराधस्य शान्तये पुनरनुनयः प्रसादनं पर्य्युपासनम् ।

---

( क ) आर्य्यपुत्र ! अतिमात्रं मे शङ्का बाधते । तदनुमन्यतां मामार्यपुत्रः ।

( ख ) आर्य्यपुत्र ! न हि मे किञ्चित् शङ्का युष्मासु सन्निहितेषु । इति संस्कृतम् ।

( ग ) "यद् भवति तद् भवतु अहं गमिष्यामि" । इति संस्कृतम् ।

स्यात्पर्युपासनं—

( ३२ ) यथा रत्नावल्याम्—'विदूषकः—भो, मा कुप्य । एसा हि कद-लीघरन्तरं गदा ।' इत्यादि ।

( ३३ )…………………………पुष्पं विशेषवचनं मतम् ।

( ३४ ) यथा तत्रैव—'(राजा हस्ते गृहीत्वा स्पर्शं नाटयति ) विदूषकः—भो वअस्स, एसा अपुव्वा सिरी तए समासादिदा । राजा—वयस्य । सत्यम्—

श्रीरेषा, पाणिरप्यस्याः पारिजातस्य पल्लवः ।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः ॥

उक्तञ्च भरतेन—

क्रुद्धस्यानुनयो यस्तु भवेत्तत्पर्य्युपासनम् इति ।

मन्दारमरन्देऽपि—

पर्य्युपासनमित्युक्तं स्वजनानुनयो बुधैः इति ।

( ३२ उदाहरति—यथेति । "भोः मा कुप्य । एषा हि कदलीगृहान्तरं गता" इति संस्कृतम् ।

अत्र विहितस्याविचारितकर्मणः शान्तये पुनरनुनयात्पर्य्युपासनम् ।

यथा वा तत्रैव राजा—

प्रसीदेति ब्रूयामिदमसति कोपेन घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा
किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे ! ॥

इत्यनेन चित्रगतयोर्नायकयोर्दर्शनात् कुपिताया वासवदत्ताया अनुनयनं नायकयो-रनुरागोद्घाटनान्वयेन पर्य्युपासनमिति ।

( ३३ ) पुष्पलक्षणं निरूपयति—पुष्पमिति । विशेषवचनम् उत्कर्षविशेषबोधकं वाक्यम् अयं विशेषो विलक्षणपदार्थ इत्येवमर्थकं वचनमित्यर्थः, पुष्पवच्चित्तापकर्षणात् पुष्पं नामाङ्गम् ।

मन्दारमरन्दे—

रागप्रकाशको वाक्यविशेषः पुष्पमुच्यते इति ।

( ३४ ) उदाहरति—यथेति । तत्रैव रत्नावल्यामेवेत्यर्थः ।

"भो वयस्य ! एषा अपूर्वा श्रीस्त्वया समासादिता" । इति संस्कृतम् ।

श्रीरेषेति । एषा नायिका श्रीः साक्षाल्लक्ष्मीः "लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया" इत्यमरः, अस्या नायिकायाः पाणिः हस्तोऽपि पारिजातस्य मन्दारवृक्षस्य "मन्दारः पारिजातकः" इत्यमरः, देवतरोरित्यर्थः पल्लवः किशलयः । अन्यथा कुतः कथं स्वेदच्छद्मघर्मव्याजः तादृश एष अमृतद्रवः सुधारसः स्रवति पाणितोश्च्यवति । पारि-जातादिदेववृक्षेभ्य एवामृतस्रवणदर्शनान्नूनमस्याः पाणिः पारिजातपल्लव इति भावः ।

अत्र सागरिकायाः सौन्दर्य्याद्युत्कर्षबोधनात् पुष्पम् ।

यथा वा सत्यहरिश्चन्द्रे—

"वसुभूतिः—( सरोषं राजानं प्रति )

( ३५ ) प्रत्यक्षनिष्ठुरं वज्रम्---

( ३६ ) यथा तत्रैव—'राजा—कथमिदृशोऽहं त्वया ज्ञातः। सुसंगता—ण केवलं तुमं समं चित्तफलएण। ता जाव गदुअ देवीए णिवेदइस्सम्।'

( ३७ ) ........ उपन्यासः प्रसादनम् ॥ ९३ ॥

( ३८ ) यथा तत्रैव—'सुसंगता—भट्टुणा, अलं सङ्काए। मए वि भट्टिणीए पसादेण कीलिदं ज्जेव एदिहिं। ता किं कण्णाभरणेण। अदो वि मे गरुअरो पसादो एसो, जं तुए अहं एत्थ आलिहिदत्ति कुविदा मे पिअसही साअरिआ। एसा ज्जेव पसादीअदु।

---

न नाम स्युः स्वर्ण-क्षिति-सुत-कलत्राणि यतिनां
तदस्मै यद्दत्तं तदिह निखिलं भस्मनि हुतम्।
विहाय व्यामोहं विमृश विमृशाद्यापि नृपते !
तपो व्याजच्छन्नं किमपि नियतं दैवतमिदम् ॥

कुलपतिः—( सोपहासम् ) अरे मुखर ! सचिवापसद ! चिराद् यथार्थमभिहितवानसि। दुस्तपतपः करकलितस्वर्गापवर्गशर्माणो मर्त्यापदेशेन दैवतान्येव मुनयः।"

अत्र वसुभूतिवाक्यादुत्तरवाक्यं समर्थकत्वेनोत्कर्षबोधनात् पुष्पम्।

( ३९ ) वज्रलक्षणं निरूपयति—प्रत्यक्षेति। प्रत्यक्षनिष्ठुरं साक्षात्कठोरवचनं वज्रतुल्यक्लेशदत्वात् वज्रं नामाङ्गम्

उक्तं च मन्दारमरन्दे—

वज्रं तदिति विज्ञेयं साक्षान्निष्ठुरभाषणम् इति।

महर्षिणा भरतेनाऽपि—

'विरुद्धवचनप्रायं वज्रमित्यभिधीयते' इति।

( ३६ ) उदाहरति—यथेति। तत्रैव रत्नावल्यामेवेत्यर्थः।

"न केवलं त्वं समं चित्रफलकेन। तद्यावद्गत्वा देव्यै निवेदयिष्यामि" इति संस्कृतम्।

अत्र राजानं प्रति "देव्यै निवेदयिष्यामि" इति वचनस्य साक्षात् कठोररूपत्वाद्वज्रम्।

यथा वा वेणीसंहारे—

"अश्वत्थामा—( कर्णमुद्दिश्य ) रे रे राधागर्भभारभूत ? सूतापसद !

कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य।
तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण एष न्यस्यते वारयैनम् ॥" इति।

अत्र रे रे इत्यादिवचनस्य साक्षात् कठोररूपत्वाद्वज्रम्।

( ३७ ) उपन्यासलक्षणं निरूपयति—उपन्यास इति। प्रसादनं प्रसन्नताजननम् उपन्यासनमुपस्थापनमुपन्यासो नामाङ्गम्।

( ३८ ) उदाहरति—यथेति। "भर्तः ? अलं शङ्कया। मयापि भर्त्र्याः प्रसादेन क्रीडितमेव एतैः। तत्किं कर्णाभरणेन अतोऽपि मे गुरुतरः प्रसाद एषः, यत्त्वया अहमालिखितेति कुपिता मे प्रियसखी सागरिका। एषैव प्रसाद्यताम्" इति संस्कृतम्।

अत्र राज्ञ आत्मानं प्रति प्रसन्नताजननादुपन्यासः।

( ३९ ) केचित्तु—'उपपत्तिकृतो ह्यर्थ उपन्यासः स कीर्तितः ।' इति वदन्ति ।
उदाहरन्ति च, तत्रैव—'अदिमुहरा क्खु सा गब्भदासी' इति ।

( ४० ) चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ।

( ४१ ) यथा महावीरचरिते तृतीयेऽङ्के—

परिषदियमृषीणामेष वीरो युधाजि-
त्सह नृपतिरमात्यैर्लोमपादश्च वृद्धः ।
अयमविरतयज्ञो ब्रह्मवादी पुराणः
प्रभुरपि जनकानामद्भ भो याचकस्ते ॥

देशाधिपतिः नृपतिः अयमपि जनकानां जनकवंशीयानां प्रभुः सीरध्वजो नामअ विरत-यज्ञः सर्वदा यागासक्तः पुराणः प्राचीनो ब्रह्मवादी वेदवक्ता एते सर्व एव ते तव समीपे

( ३९ ) भरतमतोपन्यासलक्षणं दर्शयितुमाह—केचित्विति। यः अर्थः पदार्थः उपपत्त्या युक्त्या कृत उपपादितः स उपन्यास इति कीर्त्तित इति। मतेऽस्मिन् विषयविशेषस्य युक्त्या उपन्यासादुपस्थापनादुपन्यास इति विशेषः। "अतिमुखरा खलु गर्भदासी" इति संस्कृतम्। दासीगर्भाज्जाता दासी गर्भदासी अन्तःपुरदासीत्यर्थः।

अत्र यतः सा गर्भदासी अत्यन्ताधमा, अत एवातिमुखरेति युक्त्या अतिमुखरत्व-स्योपन्यासादुपन्यासः।

तथाच मन्दारमरन्दे—

युक्तिभिः सहितो योऽर्थो ह्युपन्यासः स उच्यते इति।

नाटदर्पणेऽपि "उपपत्तिरुपन्यास" इति।

किञ्चिदर्थं विधातुं योपपत्तिर्युक्तिः स उपन्यास इत्यर्थः।

यथा रघुविलासे—

"विराधवेषो रावणः—( रामं प्रति ) आगन्तवो यूयम्, अहं पुनराकलितविपिनकु-हरो वनेचरदेशीयः प्रभूतान्तरायं सम्परायं च रावणप्रमुखेभ्यो रक्षोभ्यः सम्भावयामि भवताम्। वधूवागुरानियन्त्रितमनसश्च कुत एव योद्धुमलम्भविष्णवः। तदियमार्या वैदेही किमपि वनकुहरमलङ्करुताम्" इयमपहारार्थिना रावणेन सीतामेकाकिनीं कर्त्तुं युक्तिर्दर्शिता।

( ४० ) वर्णसंहारलक्षणं निरूपयति—चातुर्वर्ण्यमिति। चत्वारो वर्णा एव चातुर्व-र्ण्यम् "गुणवचनब्राह्मणादिभ्य" इति स्वार्थे ष्यञ् प्रत्ययः। तस्य चातुर्वर्ण्यस्य ब्राह्मण-क्षत्रियविट्शूद्रस्य "वर्णाः स्युर्ब्राह्मणादयः" इत्यमरः, उपगमनम् उपस्थितिरेकत्रमेलन-मिति यावत्, वर्णानां संहारो मेलनं यत्र स वर्णसंहारो नामाङ्गमिष्यते।

( ४१ ) उदाहरति यथेति। परिषदियमिति। मिलितब्राह्मणाद्यनेकवर्णसभाप्रदर्शन-मिदम्। अङ्ग ! भो जामदग्न्य ! इयम् ऋषीणां मुनीनां परिषत् सभा, ऋषति वेदं पश्य-तीति ऋषिः 'ये गत्यर्थास्ते दर्शनार्थाः" इति नियमाद् गत्यर्थकानां धातूनां ज्ञानार्थक-त्वात्, धातूनामनेकार्थत्वेह ऋषेर्दर्शने वृत्तिः। निरुक्तावपि ऋषिशब्दस्य प्रवृत्तिनिमित्तं दर्शनमेव निर्णीतम्। दर्शनं चात्र न चाक्षुषज्ञानं किन्तु प्रत्यक्षीकरणमेवेति ज्ञेयम्। एष वीरो युधाजित् कैकयी भ्रातापि अमात्यैः सचिवैः सह एष च वृद्धो लोमपादो नामाङ्ग-

इत्यत्र ऋषिक्षत्रादीनां वर्णानां मेलनम् ।

( ४२ ) अभिनवगुप्तपादास्तु—'वर्णशब्देन पात्राण्युपलक्ष्यन्ते । संहारोमेलनम्' इति व्याचक्षते । उदाहरन्ति च रत्नावल्यां द्वितीयेऽङ्के—'अदो वि मे अअं गुरुअरो पसादो–' इत्यादेरारभ्य 'णं हत्थे गेण्हिअ पसादेहि णम् । राजा—क्वासौ क्वासौ ।' इत्यादि ।

अथ गर्भाङ्गानि—

( ४३ ) **अभूताहरणं मार्गो रूपोदाहरणे क्रमः ॥ ६४ ॥**

**संग्रहश्चानुमानं च प्रार्थना क्षिप्तिरेव च ।**

**त्रो ( तो ) टकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा ॥ ६४ ॥**

( ४४ ) **तत्र व्याजाश्रयं वाक्यमभूताहरणं मतम् ।**

( ४५ ) यथा अश्वत्थामाङ्के—

याचकाः शान्तिप्रार्थिन आगता इति शेषः । मालनीछन्दस्तल्लक्षणन्तूक्तं प्राक् ( पृ०

अत्र अमात्यैरिति बहुवचनोपन्यासाद्यथासम्भवं तत्साहित्येन विट्शूद्रावपि ग्राह्यौ । एतच्च विवरणकृता "ऋषिक्षत्रियादीनाम्" इत्यत्रादिपदोपादानादेव स्फुटीकृतम्, ततश्च चातुर्वर्ण्यस्य मेलनाद्वर्णोपसंहारः ।

( ४२ ) वर्णपदं पात्रोपलक्षकमिति व्याचक्षतां मतं दर्शयति—अभिनवगुप्तपादा इति । एतैर्हि भरतसूत्रे भावप्रकाशिकानामकव्याख्या विहिता पात्राणि नाटकीयव्यक्तयः । "अतोऽपि मे अयं गुरुतरः प्रसाद" इति संस्कृतम् । इत्यादेरित्यवधौ पञ्चमी "ननु हस्ते गृहीत्वा प्रसादय एनाम्" इति च संस्कृतम् । क्वासौ क्वासाविति हर्षे वीप्सा ।

अत्र राज–विदूषक–सागरिका–सुसङ्गतासंज्ञकानां पात्राणां मेलनाद्वर्णसंहारः ।

नाट्यदर्पणकृताऽपि "वर्णानां नायकप्रतिनायकनायिकासहायादिपात्राणां संहार एकत्रकरणमि"त्युक्तम् । उक्तरीत्यवोदारणञ्चापि दर्शितम् ।

एके तु वर्णितार्थतिरस्कारं वर्णसंहारमामनन्ति । उदाहरन्ति च यथा वेणीसंहारे कञ्चुकिना रथकेतनपतने निवेदिते भानुमती—

(क) "अन्तरी अदु ताव एदं समत्थवंभणाणं वेयज्झुणिभंगलुग्घोसेण" इति ।

( ४३ ) गर्भसन्धेस्त्रयोदशाङ्गानीति प्रतिपादयितुमाह—अभूतेति । अभूताहरणादिविद्रवान्तास्त्रयोदशगर्भसन्धेरङ्गानीत्यर्थः ।

( ४४ ) तत्राभूताहरणलक्षणं निरूपयति—तत्र व्याजेति । तत्र तेषु त्रयोदशप्रकारेषु अङ्गेषु मध्य इत्यर्थः, व्याजाश्रये छलसंबद्धं वाक्यम् अभूतस्य असत्यस्य आहरणमाविष्करणं यत्र तत् अभूताहरणं नामाङ्गम् ।

मन्दारमरेन्देऽपि—

अभूताहरणं तत्स्याद्वाक्यं यत्कपटाश्रयम् इति ।

( ४५ ) उदाहरति—यथेति । अश्वत्थामाङ्के अश्वत्थामप्रधानाङ्के वेणीसंहारनाटकस्य तृतीयेऽङ्क इत्यर्थः । एवमेवाग्रेऽप्यनुसन्धेयम् ।

( क ) अन्तरीयतां तावदेतत् समर्थः ब्राह्मणानां वेदध्वनिमङ्गलोद्घोषेण ।

( ४६ ) अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति पुनर्व्याहृतं सत्यवाचा ।
तच्छ्रुत्वासौ दयिततनयः प्रत्ययात्तस्य राज्ञः
शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ॥

( ४७ ) **तत्त्वार्थकथनं मार्गः—**

( ४८ ) यथा चण्डकौशिके— **राजा**— भगवन् !
गृह्यतामर्जितमिदं भार्यातनयविक्रयात् ।
शेषस्यार्थे करिष्यामि चण्डालेऽप्यात्मविक्रयम् ॥

( ४६ ) द्रोणाचार्यस्य शस्त्रत्यागे कारणं दर्शयति—अश्वत्थामा हत इति । सत्यवाचा सर्वदा तथ्यवादिना पृथासूनुना कुन्तीतनयेन युधिष्ठिरेण "अश्वत्थामा हत" इति स्पष्टं परश्रवणयोग्यं यथास्यात्तथा उक्त्वा कथयित्वा शेषे वचनसमाप्तौ स्वैरं मन्दम् परश्रवणायोग्यमित्यर्थ इदमपि गज इति इतिशब्दः स्वरूपप्रदर्शनार्थः, व्याहृतमुक्तम् । तत् "अश्वत्थामा हत" इति वाक्यं श्रुत्वाऽऽकर्ण्य तस्य सत्यवाचः राज्ञो युधिष्ठिरस्य प्रत्ययाद्विश्वासात् दयितः प्रियस्तनयः पुत्रो यस्य स असौ द्रोणाचार्यः आजौ सङ्ग्रामे शस्त्राणि नयनसलिलं नेत्रजलञ्चापि तुल्यं युगपदेव मुमोच तत्याज । भीमसेनेन जवेन सङ्ग्रामान्निःसारितेऽश्वत्थाम्नि सङ्ग्रामे अश्वत्थामा हत इति कोलाहले सति दीर्घजीविनस्तस्य मरणासम्भवात् द्रोणाचार्येण पृष्टः सत्यवादी युधिष्ठिरः श्रीकृष्णमन्त्रणया अश्वत्थामानामकगजमरणच्छलेनोक्तवान् अश्वत्था हत इति ततः पुत्रशोकाकुलो द्रोणाचार्यः शस्त्रं मुमोचेति भावः । मन्दाक्रान्ता छन्दः । मन्दाक्रान्ताम्बुधिरभनगौ मो भनौ गौ च युग्ममिति तल्लक्षणात् ।

अत्र छलसम्बद्धत्वादद्भुताहरणम् ।

यथा वा रत्नावल्याम्— ( क ) साहु रे अमच्च वसन्त अ ! साहु । अदिसइदो तुए अमच्चो जोगन्धरा अणो इमाए संधिविग्गहचिन्ताए" इत्यादिना प्रवेशकेन गृहीतवासवदत्तावेशायाः सागरिकायाः वत्सराजाभिसरणं छद्म विदूषकसुसङ्गताकलसकाञ्चनमालानुवादद्वारेण दर्शितमित्यद्भुताहरणम् ।

( ४७ ) मार्गलक्षणं दर्शयति—तत्त्वार्थेति तत्त्वार्थस्य यथार्थकर्त्तव्यविषयस्य कथनं मृग्यते यथार्थतया धार्मिकैरन्विष्यत इति मार्गो नामाङ्गम् ।

उक्तं च नाट्यशास्त्रे—

तत्त्वार्थवचनं चैव मार्ग इत्यभिधीयते इति ।

( ४८ ) उदाहरति—यथेति । राजा हरिश्चन्द्रः ।

गृह्यतामिति । विश्वामित्रं प्रति हरिश्चन्द्रनृपतेरुक्तिरियम् । भार्यायाः तनयस्य च विक्रयात् अर्जितमिदं वित्तं गृह्यतां स्वीकुरुताम् । शेषस्य विशिष्टस्याप्यर्थे निमित्तं चण्डालेऽऽत्मविक्रियं करिष्यामि विधास्यामि ।

( क ) "साधु रे अमात्य वसन्तक साधु । अतिशयितस्त्वयामात्यो यौगन्धरायणोऽनया संधिविग्रहचिन्तया" इति संस्कृतम् ।

( ४६ ) ...... .. ... रूपं वाक्यं वितर्कवत् ॥ ६६ ॥

( ५० ) यथा रत्नावल्याम्—'राजा—

मनः प्रकृत्यैव चलं दुर्लक्ष्यं च तथापि मे ।
कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः ॥

अत्र हरिश्चन्द्रस्य यथार्थकर्त्तव्यविषयप्रतिपादनान्मार्गः ।

यथा वा मुद्राराक्षसे राजा—( प्रविश्य स्वगतमाह ) राज्यं हि नाम राजधर्मानुवृत्तिर्दुःखितस्य नृपतेर्महदप्रीतिस्थानम् कुतः ?—

परार्थानुष्ठाने जडयति नृपं स्वार्थपरता
परित्यक्तस्वार्थो नियतमयथार्थः क्षितिपतिः ।
परार्थश्चेत्स्वार्थादभिमततरो हन्त ! परवान्
परायत्तः प्रीतेः कथमिव रसं वेत्ति पुरुषः ? ॥

अपि च दुराराध्यालक्ष्मीरात्मवद्भी राजभिः । कुतः ?—

तिक्ष्णादुद्विजते मृदौ परिभवत्रासान्न सन्तिष्ठते
मूर्खं द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्सु च ।
शूरेभ्योऽभ्यधिकं बिभेत्युपहसत्येकान्तभीरूनहो !
श्रीर्लब्धप्रसरेव वेशवनितादुःखोपचर्य्या भृशम् ॥ इति ।

अत्रापि यथार्थकथनान्मार्गः ।

( ४६ ) रूपात्मकमङ्गं निरूपयति—रूपमिति । वितर्केऽसम्भविवस्तुहेत्वनुसन्धानं तद्वत् वाक्यं रूपं नामाङ्गम् ।

( ५० ) उदाहरति—यथेति । मनः प्रकृत्यैवेति । सागरिकाविरहिणो राज्ञोऽयं वितर्कः। प्रकृत्या स्वभावेनैव मनश्चलं चञ्चलम् अत एव दुर्लक्ष्यं सर्वेषामेव लक्षितुं शरसन्धातुमशक्यम् । तथापि कामेन मनसिजेन मे मम एतन्मनः कथं शिलीमुखैः शरैः समं समकालमेव विद्धम् ।

अत्रासम्भविवस्तुहेत्वनुसन्धानाद्रूपम् ।

यथा वा रत्नावल्याम् , 'राजा—अहो ! किमपि कामिजनस्य स्वगृहिणीसमागमपरिभाविनोऽभिनवं जनं प्रति पक्षपातः ।

तथाहि—

प्रणयविशदां दृष्टिं वक्त्रे ददाति न शङ्किता
घटयति घनं कण्ठाश्लेषे रसान्न पयोधरौ ।
वदति बहुशो गच्छामीति प्रयत्नधृताऽप्यहो !
रमयतितरां सङ्केतस्था तथापि हि कामिनी ॥

कथं चिरयति वसन्तकः । किं नु खलु विदितः स्यादयं वृत्तान्तो देव्याः । " इत्यनेन रत्नावलीसमागमप्राप्त्याशानुगुण्येनैव देवीशङ्कायाश्च वितर्काद्रूपमिति ।

नाट्यदर्पणकारस्तु "रूपं नानार्थसंशयः" इत्यामनन्ति ।

"गिरिरयममरेन्द्रेणाथ निर्लूनपक्षः
कृतरिपुरसुरेशैः शातितो वैनतेयः ।

( ५१ ) उदाहरणमुत्कर्षयुक्तं वचनमुच्यते ।
( ५२ ) यथा अश्वत्थामाङ्के—

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां,
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी, चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥

( ५३ ) भावतत्त्वोपलब्धिस्तु क्रमः स्यात्—

---

अपरमिह मनो मे यः पितुः प्राणभूतः
किमुत बत स एषः कल्पते वा जटायुः ॥" इत्युदाहरन्ति च ।

अन्ये तु "चित्रार्थं रूपकं वचः" इति पठन्ति । यथा वेणीसंहारे सुन्दरकेण चित्र-सङ्ग्रामवर्णनमिति ।

नाट्यशास्त्रेऽपि—

चित्रार्थसमवायो यस्तद्रूपमिति कीर्तितम् ॥ इति ।

( ५१ ) उदाहरणलक्षणं निरूपयति—उदाहरणमिति । उत्कर्षयुक्तं स्वस्य परस्य वा उत्कर्षसूचकं वचनं वाक्यम् उत्कर्षस्योल्लेखनमुदाहरणं नामाङ्गम् उच्यते ।

मन्दारमरन्देऽपि—

सोत्कर्षवचनं यत्तु तदुदाहरणं मतम् इति ।

( ५२ ) उदाहरति—यथेति । यो यः शस्त्रमिति । क्रुद्धस्याश्वत्थाम्न उक्तिरियम् । मयि अश्वत्थाम्नि रणे सङ्ग्रामे चरति भ्रमति सति पाण्डवानामिमा इति पाण्डव्यस्तासां पाण्डवसम्बन्धिनीनां चमूनां सेनाविशेषाणां मध्ये स्वभुजगुरुमदात् स्वस्वबाहुबलस्यातिदर्पात् यो यः शस्त्रम् आयुधं बिभर्ति धारयति, एवं पाञ्चालगोत्रे द्रुपदराजवंशे यो यः शिशुर्बालकः अधिकवयाः युवा वृद्धश्च बालकापेक्षयाधिकवयस्त्वादत्र तरुणवृद्धयोर्ग्रहणाम् , गर्भशय्यां शयनीयं तां गतः मातुर्गर्भशय्यां गतो वा तिष्ठति । यो यो जनः तत्कर्म मृतस्य मम पितुः शिरश्छेदनरूपं तस्य साक्षी द्रष्टा यश्च यश्च मम प्रतीपः प्रतिकूलः, क्रोधान्धोऽहम् इह सङ्ग्रामे स्वयम् एकाकी जगतां लोकानाम् अन्तकस्यापि यमस्यापि सतः तस्य तस्य अन्तको यमो विनाशकः अस्मि इति शेषः । रणे सर्वान् पूर्वोक्तान् विनाशयिष्यामीति भावः । स्रग्धराच्छन्दस्तल्लक्षणन्तु—म्रभ्नैर्यानां त्रयेण त्रिमुनियतिरता स्रग्धरा कीर्तितेयमिति ।

अत्र स्ववीरत्वोत्कर्षसूचनादुदाहरणम् ।

यथा वा रत्नावल्याम्, "विदूषकः—( सहर्षम् ) (क) ही ही भो कोसम्बीरज्जलाहेणावि ण तादिसो वअस्सस्स परितोसो असि, यादिसो मम सआसादो पिअवअणं सुणिअ भविस्सदित्ति तक्केमि" । इत्यनेन रत्नावलीप्राप्तवार्त्तापि कौशाम्बीराज्यलाभादतिरिच्यत इत्युत्कर्षसूचनादुदाहरणम् ।

( ५३ ) क्रमं निरूपयति—भावतत्त्वेति । "निर्विकारात्मके चित्ते भावः प्रथमवि-

---

( क ) "हीही भोः । कौशाम्बीराज्यलाभेनापि न तादृशो वयस्यस्य परितोष आसीत्, यादृशो मम सकाशात् प्रियवचनं श्रुत्वा भविष्यतीति तर्कयामि" इति संस्कृतम् ।

( ५४ ) यथा शाकुन्तले—'राजा—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । तथाहि—

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन ॥

क्रिया" इत्युक्तलक्षणस्य भावस्य तत्त्वोपलब्धिर्याथार्थ्यानुभवः क्रमणं बुध्या विषयीकरणमिति क्रमो नामाङ्गं स्यात् ।

( ५४ ) उदाहरति—यथेति । स्थाने खलु युक्तमेव "युक्तं द्वे साम्प्रतं स्थाने" इत्यमरः विस्मृतः निमेषो येन तेन तथोक्तेन निर्निमेषेणेत्यर्थः, प्रियां शकुन्तलाम् अवलोकयामि पश्यामि । तथाच निमेषरहितेन लोचनेन प्रियां यदवलोकयामि तद्युक्तमेवेति भावः ।

तदेवोपपादयति—तथाहीति । उन्नमितैकेति । पदानि श्लोकघटकसुप्तिङन्तरूपाणि रचयन्त्याः मयि मदनलेखसम्पादनार्थम् ऊहापोहाभ्यां निवेशयन्त्याः अस्याः शकुन्तलायाः उन्नमिता उदञ्चिता एका भ्रूलता यत्र तत्तथोक्तम् आननम् अनति जीवति अनेनेतित्यन्वर्थं मुखं ( कर्त्तृ ) पुलकाञ्चितेन रोमाञ्चितेन कपोलेन गण्डेन अत्रैकवचनेन यैवेका भ्रूलतोन्नमिता तद्दिगस्थकपोलस्यैव पुलकाञ्चितत्वमिति ध्वन्यते । मयि मद्विषये अनुरागं कथयति स्पष्टं सूचयति । मयीति आत्मनोऽधिकरणत्वेन धन्यतां सुभगंमन्यतां च व्यञ्जयति । रतेरेव षष्ठ्यवस्थानुरागः । उक्तञ्च सुधाकरे—

अङ्कुरपल्लवकलिकाप्रसूनपरिभोगभागियं क्रमशः ।
प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इत्युक्तः ॥ इति ।

अनुरागलक्षणमपि तत्रैव—

राग एव स्वसंवेद्यदशाप्राप्त्या प्रकाशितः ।
यावदाश्रयवृत्तिश्चेदनुराग इतीरितिः ॥ इति ।

आर्य्याछन्दः ।

अत्र पदरचनारूपचेष्टाया अनुरागरूपयाथार्थ्यानुभवात् क्रमः ।

अत्र च यद्यपि—

भ्रूनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः ।
भाव एवाल्पसंलक्ष्यविकारो हाव इष्यते ॥

इत्युक्तलक्षणो हाव एव तथापि विशेषतया तत्र स्थितिरिति नानुपपत्तिरिति ध्येयम् ।

यथा वा रत्नावल्याम्, 'राजा ( उपसृत्य ) प्रिये ! सागरिके-

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भागर्भनिभं तवोरुयुगलं बाहू मृणालोपमौ ।
इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग्यमा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥

इत्यादिना "इह तदप्यस्त्येव बिम्बाधरे" इत्यन्तेन वासवदत्तया वत्सराजभावस्य याथार्थ्यानुभवात्क्रमः ।

अन्ये तु "क्रमः संचिन्त्यमानाप्तिः"रित्याहुः । यथा रत्नावल्यां वत्सराजस्य सागरिका समागममभिलषतो विदूषकेणोपवने योजनम् ।

( ५५ ) ........ ....... संग्रहः पुनः ॥ ९७ ॥

सामदानार्थसंपन्नः—

( ५६ ) यथा रत्नावल्याम्—'राजा—साधु वयस्य, ! इदं ते पारितोषिकम् । ( इति कटकं ददाति ) ।

( ५७ ) ........ ....... लिङ्गादूहोऽनुमानता ।

( ५८ ) यथा जानकीराघवे नाटके-'रामः—

मन्दारमरन्दे तु द्विविधमपि क्रमलक्षणम्—

भावज्ञानं क्रमो यद्वा चिन्त्यमानार्थसंङ्ग्रहः इति ।

( ९९ ) सङ्ग्रहलक्षणं निरूपयति—सङ्ग्रह इति । साम्ना प्रियवचनेन तेन दानेन च अर्थसम्पन्नो धनादिलाभविषयः सङ्ग्रहो नामाङ्गम् ।

उक्तं च मन्दारमरन्दे—

सङ्ग्रहः सामदानोक्तिः प्रस्तुता परिकीर्त्तिता इति ।

अत्र सामदाने, भेददण्डयोर्मायेन्द्रजालादेरप्युपलक्षणम् ।

( ९६ ) तत्र सामादानाभ्यामर्थसम्पत्तिमुदाहरति—यथेति ।

अत्र प्रियवचने राज्ञा कटकदानात् सागरिकासमागमकारिणा विदूषकेण च तत्संग्रहणात्सङ्ग्रहः ।

भेदेन यथा रघुविलासे पञ्चमेऽङ्के क्रमात् पवनवेषो राक्षसः प्राह—"प्रसीदतु देवः ।

रावणः—गृहाण प्रसादम् । ( पुनः प्रतीहारीं प्रति ) वराहतुण्ड ! समादिश कुमारं कुम्भकर्णं यथा-पवनं किष्किन्धाराज्ये त्वरितमभिषिञ्च" । एष दौत्यार्थमागतवतो वालितनयस्य क्षोभार्थं कृतको हनुमत्पितुः सुग्रीवाद् भेदः ।

दण्डेन यथाऽत्रैव चतुर्थेऽङ्के "रावणः—

यायावरेण किमनेन वनेचरेण मां स्थावरं वरमुपाश्रय कुरङ्गकाक्षि ! ।

किं वा स्तुवे तव पुरश्चतुरस्थितीनां वैदग्ध्यसौरभवती भवती प्रकाण्डम् ॥

सीता—कोवि वा जाजावरो कोवि वा थावरत्ति विवेगं लक्खणाणाराय पढ्ढई वावि करिस्सई ।

रावणः— ( सरोषं चन्द्रहासं परामृश्य )

प्रेमावनद्धहृदयः सर्वं लङ्केश्वरः सुदति सोढा ।

सोढा न चन्द्रहासः पुनरयमुल्लुण्ठनृत्तानाम् ॥

एष सीताक्षोभार्थं रावणेन दण्डः प्रयुक्तः । मायाप्रयोगश्चात्रैव कृतकलक्ष्मण-सुग्रीवानयन-रावण-सीताघटनादिको निबद्ध इति ।

( ९७ ) अनुमानाङ्गलक्षणं निरूपयति—लिङ्गादिति । लिङ्गात् व्याप्तिविशिष्टपक्षधर्मताज्ञानाभ्यां साधनज्ञानात् ऊहो व्यापकतानुभवः साध्यज्ञानमिति यावत् अनुमानता अनुमानम् । स्वार्थे तल् प्रत्ययः ।

मन्दारमरन्देऽपि—

अर्थस्याभ्यूहनं लिङ्गादनुमानं प्रचक्षते इति ।

( ९८ ) उदाहरति—यथेति । जानकीराघवे जानकीराघवनामकनाटके ।

लीलागतैरपि तरङ्गयतो धरित्री-
मालोकनैर्नमयतो जगतां शिरांसि ।
तस्यानुमापयति काञ्चनकान्तिगौर-
कायस्य सूर्यतनयत्वमधृष्यतां च ॥

**( ५९ ) रतिहर्षोत्सवानां तु प्रार्थनं प्रार्थना भवेत् ॥ ६८ ॥**

( ६० ) यथा रत्नावल्याम्—'प्रिये सागरिके !
शीतांशुर्मुखमुत्पले तव दृशौ, पद्मानुकारौ करौ,
रम्भास्तम्भनिभं तथोरुयुगलं, बाहू मृणालोपमौ ।

---

लीलागतैरपीति । परशुरामवर्णनमिदम् । लीलागतैरपि सविलासगमनैरपि धरित्रीं पृथिवीं तरङ्गयतः चालयतः षष्ठ्यन्तमेतत् एवं नमयत इत्यपि । आलोकनैः दृष्टिपातैरपि जगतां लोकानां शिरांसि स्वसन्निधौ नमयतः दृष्टिमात्रैः सर्वैः प्रणम्यमानत्वादिति भावः । तथा काञ्चनकान्तिवत् सुवर्णच्छविवत् गौरः शुभ्रः कायः शरीरं यस्य तथोक्तस्य तस्य लक्ष्मणस्य सूर्य्यतनयत्वं सूर्यतुल्यतेजस्वित्वेन सूर्यपुत्रत्वम् अप्रधृष्यतां परैरनभिभवनीयतां च अनुमापयति अनुमानविषयीकरोति लोकानिति शेषः । तथाविधं लीलागतमालोकनं च ( कर्तृ ) । वसन्ततिलकाछन्दस्तल्लक्षणन्तूक्तं प्राक् ( १६२ पृ० ) ।

अत्र लीलागमनालोकनप्रयुक्तपृथ्वीकम्पनजगच्छिरोनमनरूपात् साधनद्वयात् सूर्यतनयत्वाधृष्यत्वरूपसाध्यद्वयस्य ज्ञानादनुमानम् ।

यथा च रत्नावल्याम्—"राजा- धिङ् मूर्ख ! त्वत्कृत एवायमापतितोऽस्माकमनर्थः । कुतः ?—
समारूढा प्रीतिः प्रणयबहुमानात्प्रतिदिनं व्यलीकं वीक्ष्येदं कृतमकृतपूर्वं खलु मया ।
प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति ॥

विदूषकः—भो वअस्स ! वासवदत्ता किं करिस्सदित्ति ण जाणामि । सागरिआ उण दुक्करं जीविस्सदित्ति तक्केमि" इत्यत्र प्रकृष्टप्रेमस्खलनेन सागरिकानुरागजन्येन वासवदत्ताया मरणानुमानादनुमानम् । एवं भासकृते स्वप्नवासवदत्तनाटकेऽपि द्रष्टव्यम्, यथा शेफालिकामण्डपशिलातलानवलोक्य वत्सराजः—

पादाक्रान्तानि पुष्पाणि सोष्म चेदं शिलातलम् ।
नूनं काचिदिहासीना मां दृष्ट्वा सहसा न (ग) ता ॥

अत्र पूर्वार्धं लिङ्गमुत्तरार्द्धमनुमानम् ।

( ५९ ) प्रार्थनारूपमङ्गं निरूपयति—रतिहर्षेति । रतिः सुरतम्, तदर्थं यो नायिकाया हर्षः नायकस्य तादृशोत्सवानां यद्वा रतिः सुरतम्, हर्षः प्रीतिः उत्सवः प्रमोदजनकव्यापारः तेषां तथोक्तानां प्रार्थना तत्तद्विधानाय भिक्षा प्रार्थनानामाङ्गं भवेत् ।

( ६० ) उदाहरति—यथेति । शीतांशुरिति । तव मुखम् आननं शीतांशुः साक्षाच्चन्द्रः, दृशौ नेत्रे उत्पले नीलोत्पलद्वयम्, करौ पाणी पद्मानुकारौ पद्मतुल्यौ, तथा ऊरुयुगलं जङ्घाद्वयं रम्भास्तम्भनिभं कदलीस्तम्भसदृशम्, बाहू भुजौ मृणालोपमौ बिसतन्तुसदृशौ चन्द्रादिसादृश्येन मदनानलतापशमनक्षमत्वं व्यञ्जितम् ।

इति शीतांशुत्वादिना आह्लादकराणि प्रमोदाधायकानि अखिलानि समग्राणि

इत्याह्लादकराखिलाङ्ग ! रभसान्निःशङ्कमालिङ्गय मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥

( ६१ ) इदं च प्रार्थनाख्यमङ्गम् । यन्मते निर्वहणे भूतावसरत्वात्प्रशस्तिनामाङ्गं नास्ति तन्मतानुसारेणोक्तम् । अन्यथा पञ्चषष्टिसंख्यत्वप्रसङ्गात् ।

( ६२ ) **रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्यात्**—

( ६३ ) यथाश्वत्थामाङ्के—

एकस्यैव विपाकोऽयं दारुणो भुवि वर्तते ।

---

अङ्गानि अवयवा यस्या स्तत्सम्बुद्धौ, त्वं रभसात् जवात् त्वरितमित्यर्थः, एहि एहि आगच्छ आगच्छ, निश्शङ्कं निःसन्देह मामालिङ्गय आश्लिष्य, अनङ्गतापेन कामसन्तापेन विधुराणि व्याकुलानि ममाङ्गानि निर्वापय प्रशमय तापशून्यानि कुरु इत्यर्थः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणमुक्तं प्राक् ( १६८ पृ० ) ।

अत्रालिङ्गनाधीनोत्सवप्रार्थनात् प्रार्थना ।

यथा वा देवीचन्द्रगुप्ते चतुर्थेऽङ्के चन्द्रगुप्तः—

प्रिये ! माधवसेने ! त्वमिदानीं मे बन्धमाज्ञापय—

कण्ठे किन्नरकण्ठि ! बाहुलतिकापाशः समासज्यतां
हारस्ते स्तनबान्धवो मम बलाद् बध्नातु पाणिद्वयम् ।
पादौ त्वज्जघनस्थलप्रणयिनी सानन्दयेन्मेखला
पूर्वं त्वद्गुणबद्धमेव हृदयं बन्धं पुनर्नार्हति ॥

अत्र रतेः प्रार्थनात्प्रार्थना ।

( ६१ ) अत्रैतदंशस्य निर्वहणसन्धेः प्रशस्तिनामाङ्गस्य वैकल्पिकीस्थितिः, अनयोर्मिलितस्थितसत्त्वे तु—

"चतुः षष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः"

इत्यनेन वक्ष्यमाणचतुःषष्टिसंख्यासन्ध्यङ्गानां न भवति पञ्चषष्टित्वापत्तेः । तथा हि—अत्र गर्भसन्धौ एतदङ्गसत्त्वे एतान्यङ्गानि त्रयोदश भवन्ति मुखसन्ध्यङ्गानि च द्वादशोक्तानि अन्यसन्धिद्वयाङ्गं च त्रयोदश त्रयोदश निर्वहणसन्ध्यङ्गानि तु चतुर्दशेति पञ्चषष्टित्वं प्रसजति अतो यन्मते निर्वहणसन्धौ प्रशस्तिनामकं चरमाङ्गं नास्ति तन्मत एवात्रेदमङ्गम् नान्यथेत्यत आह—इदञ्चेति ।

निर्वहणे उपसंहाराख्यचरमसन्धौ । इह गर्भसन्धौ । तत्र प्रशस्तिनामाङ्गसत्त्वे हेतुं दर्शयति—भूतावसरत्वादिति। प्रार्थनायां प्राप्तविषयत्वादित्यर्थः। अन्यथा अत्रापि प्रार्थनाख्याङ्गान्तराभ्युपगमे । एवं च प्रशस्तिनामाङ्गस्य मया निर्वहणे स्वीकारिष्यमाणत्वादत्र-प्रार्थनाख्यमङ्गं मतान्तरानुसारेणैव प्रतिपादितमिति भावः ।

( ६२ ) क्षिप्तिरूपमङ्गं निरूपयति—रहस्यार्थस्येति। रहस्यार्थोऽभिनेतव्यार्थ इतिवृत्तिरूपोऽर्थस्तस्य उद्भेद उत्पत्तिसूचनन्तु क्षिप्तिर्नामाङ्गं स्यात् ।

( ६३ ) उदाहरति—यथेति । एकस्यैवेति । एकस्यैव द्रौपदीकेशग्रहणस्य अयं कुरुपाण्डवसङ्ग्रामे अगणितजनक्षयरूपो दारुणो उत्कटो विपाकः फलं तावत् भुवि जगति वर्त्तते, एतत्संङ्ग्रामं प्रति तस्यैव केशग्रहस्य कारणत्वादिति भावः ।

केशग्रहे द्वितीयेऽस्मिन्नूनं निःशेषिताः प्रजाः ॥

( ६४ ) ............ त्रो ( तो )टकं पुनः ।

संरब्धवाक्—

( ६५ ) यथा चण्डकौशिके—'कौशिकः—आः, पुनः कथमद्यापि न संभृताः स्वर्णदक्षिणाः ।'

( ६६ )......... अधिबलमभिसंधिच्छलेन यः ॥ ८६ ॥

द्वितीये अस्मिन् केशग्रहे धृष्टद्युम्नेन मृतद्रोणाचार्यस्य केशाकर्षणे कृते तु नूनं निश्चितमेव प्रजा जनाः निःशेषिताः साकल्येन विनष्टाः भविष्यन्तीति शेषः । सर्वसंहारेच्छोरश्वत्थाम्न एव तत्र द्वारभूतत्वादिति भावः । पथ्यावक्त्रं छन्दः ।

द्वितीये मृतद्रोणस्य धृष्टद्युम्नेन केशग्रहेऽत्र सर्वसंहाररूपस्य रहस्यार्थस्य वाचा उत्पत्तिसूचनात्क्षिप्तिः ।

यथा वात्रैव सूतः—

दत्वा द्रोणेन पार्थादभयमपि न संरक्षितः सिन्धुराजः
क्रूरं दुःशासनेऽस्मिन् हरिण इव कृतं भीमसेनेन कर्म ।
दुःसाधामप्यरीणां लघुमिव समरे पूरयित्वा प्रतिज्ञां
नाहं मन्ये सकामं कुरुकुलविमुखं दैवमेतावताऽपि ॥

अत्र पाण्डवानां राज्यप्राप्तिरूपकार्यरहस्यार्थस्योत्पत्तिसूचनात्क्षिप्तिः-केचिदेतदंशं न मन्यन्ते ।

( ६४ ) त्रोटकं निरूपयति—त्रोटकमिति । पुनस्त्वर्थे । संरब्धस्य रुष्टस्य वाक् वचनं क्रोधव्यञ्जकवचनमित्यर्थः, त्रोटयति तोटयति वा परचित्तस्वास्थ्यं भेदयतीति । त्रोटकं नामाङ्गम् ।

उक्तं च भरतमुनिना—

संरब्धवचनप्रायं तोटकम् इति ।

दशरूपकेऽपि—

संरब्धवचनं यत्तु तोटकं तदुदाहृतम् इति ।

( ६५ ) उदाहरति—यथेति । कौशिको विश्वामित्रः । "हरिश्चन्द्रं प्रत्याह" इति शेषः । सम्भृताः सम्पन्नाः । स्वर्णदक्षिणाः अवशिष्टा इति शेषः ।

अत्र हरिश्चन्द्रं नृपं प्रति पृथिवीदानदक्षिणादानार्थं विश्वामित्रस्य क्रोधव्यञ्जकवचनत्वात् त्रोटकम् ।

यथा च वेणीसंहारे—

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशाम् ।

इत्यादिना—

धृतायुधो यावदहं तावदन्यैः किमायुधैः

इत्यन्तेनान्योन्यं कर्णाश्वत्थाम्नोः संरब्धवचसा सेनाभेदकारिणा पाण्डवबीजप्राप्त्याशान्वितं त्रोटकम् ।

( ६६ ) अधिबलं निरूपयति—अधिबलमिति । छलेन व्याजेन य अभिसन्धिः अभि-

( ६७ ) यथा रत्नावल्याम्—'काञ्चनमाला—भट्टिणि, इय सा चित्तसालिआ । वसन्तअस्स सण्णं करोमि' इत्यादि ।

( ६८ ) नृपादिजनिता भीतिरुद्वेगः परिकीर्तितः ।

---

प्रायपरिज्ञानं बलं बुद्धिबलमधिकृत्योत्पन्नं यत्तत् अधिबलं नामाङ्गम् ।

उक्तं च मन्दारमरन्देऽपि—

बुधैरधिबलं प्रोक्तं कपटेनाभिवञ्चनम् इति ।

( ६७ ) उदाहरति—यथेति । "भत्रि ! इयं सा चित्रशालिका, तद्यावद्वसन्तस्य संज्ञां करोमि" इति संस्कृतम् । चित्रशालिकायां राज्ञः समीपे वासवदत्तावेशेन सागरिकामानेतुं तया सह वसन्तकेन सङ्केते कृते काञ्चनमालया तज्ज्ञात्वा वासवदत्तामेवानीय वसन्तकस्थाने सागरिकाऽऽगता इत्यङ्गुलिसंज्ञां कर्त्तुं काञ्चनमालायाः वासवदत्तायामुक्तिरियम् । चित्रशालिका चित्ररचनास्थानम् । संज्ञां सङ्केतम् । इत्यादीत्यादिपदेनात्रैव—

किं पद्मस्य रुचं न हन्ति नयनानन्दं विधत्ते न वा

वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ? ।

वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्गतो

दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥ इति

इदं पद्यं ग्राह्यम् ।

अत्र काञ्चनमालावासवदत्तावेषधारिण्योः सुसङ्गतासागरिकयोर्व्याजेन काञ्चनमालावासवदत्ताभ्यां राजविदूषकयोराशयपरिज्ञानादधिबलम् ।

मन्दारमरन्दे तु—

यद्विष्टजनसंधानं बुधा अधिबलं विदुः ।

तोटकस्यान्यथा भावं केचिच्चाधिबलं विदुः ॥ इति ।

उदाहरणं च यथा रत्नावल्यामेव "राजा—देवि ! एवमपि प्रत्यक्षदृष्टव्यलीकः किं विज्ञापयामि ।

आ ताम्रतामपनयामि विलक्ष एव लाक्षाकृतां चरणयोस्तव देवि ! मूर्ध्ना ।

कोपोपरागजनितां तु मुखेन्दुबिम्बे हर्तुं क्षमो यदि परं करुणा मयि स्यात् ॥" इति ।

अत्र वासवदत्तां प्रति राज्ञो वञ्चनं विफलं जातम् ।

एके तु सोपालम्भं वाक्यमधिबलमिच्छन्ति । यथा वेणीसंहारे पञ्चमेऽङ्के धृतराष्ट्रमुद्दिश्य भीमसेनः—"अलमिदानीं मन्युना ।

कृष्णा केशेषु कृष्टा नृपसदसि वधूः पाण्डवानां नृपैर्यैः

सर्वे ते क्रोधवह्नौ कृशशलभकुलावज्ञया येन दग्धाः ।

एतस्माच्छ्रावयेऽहं न खलु भुजबलश्लाघया नापि दर्पात्

पुत्रैः पौत्रैश्च कर्मण्यतिगुरुणि कृते तात ! साक्षी भव त्वम् ॥" इति ।

( ६८ ) उद्वेगं निरूपयति—नृपादिजनितेति । नृपादौ केनापि जनिता भीतिर्भयम् उद्विज्यते हृदयमनेनेति उद्वेगो नामाङ्गं परिकीर्त्तितः । नृपादीत्यादिपदेन शत्रुप्रभृतेः परिग्रहः ।

मन्दारमरन्देऽपि—

तत्र चौरादिसम्भूतं भयमुद्वेग उच्यते इति ।

( ६९ ) यथा वेण्याम्—
प्रासावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः ।
स कर्णारिः स च क्रूरो वृककर्मा वृकोदरः ॥

**( ७० ) शङ्काभयत्रासकृतः संभ्रमो विद्रवो मतः ॥ १०० ॥**

( ७१ ) कालान्तककरालास्यं क्रोधोद्भूतं दशाननम् ।
विलोक्य वानरानीके संभ्रमः कोऽप्यजायत ॥

अथ विमर्शाङ्गानि—

**( ७२ ) अपवादोऽथ संफेटो व्यवसायो द्रवो द्युतिः ।**
**शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम् ॥ १०१ ॥**
**प्ररोचना विमर्शे स्यादादानं छादनं तथा ।**

( ६९ ) उदाहरति—यथेति । वेण्यां वेणीसंहारे प्रासाविति । सः कर्णारिरर्जुनः क्रूरः क्रूरप्रकृतिः, वृकस्य व्याघ्रविशेषस्येव निष्ठुरकर्म यस्य सः तथोक्तः वृकोदरो भीमश्च एतौ इतस्ततस्त्वां पृच्छन्तौ दुर्य्योधनः क्व तिष्ठतीति त्वद्विषयकप्रश्नं कुर्वन्तौ, एकरथारूढौ एकरथोपविष्टौ भ्रातरौ प्रासावागतावित्यर्थः । अनुष्टुप् छन्दः ।

अत्र कर्णारित्वेन क्रूरकर्मत्वेन च दुर्य्योधनस्य शत्रुभूतभीमार्जुनजनितभीतेरुद्वेगः ।

तथा मृच्छकटयां सार्थवाहचारुदत्तस्य चौर्य्याभिशापजं नृपाद् भयम् ।

तथा-अमात्यशङ्कुकविरचिते चित्रोत्पलावलम्बितके प्रकरणे पञ्चमेऽङ्के नेपथ्ये सचीत्कारम्—"गिण्हेधले ! गिण्हेध । वेढेध रे वेढेध । ( सर्वे सभयमवलोकयन्ति )

स्थविरः—हा ! धिक् कष्टं दस्यवः सम्पतन्ति । किमत्र शरणं प्रपद्येमहि" इति ।

अत्र नायिका-सखी-स्थविरादीनां राजगृहभङ्गेन विद्रुतानां दस्युभ्यो भयम् ।

( ७० ) विद्रवं निरूपयति—शङ्काभयेति । शङ्कया अनिष्टासम्भावनया अनिष्टत्राम तत्कृतो यः सम्भ्रमः व्याकुलता चित्तादिव्यग्रतेति यावत्, विशेषेण द्रवणं कम्पनं यत्र स विद्रवो नामाङ्गं मतः । भाव्यनिष्टद्वेषोऽत्र भयम्, अतर्कितानिष्टोत्था कर्तव्यमूढ़ता तु त्रासः । मन्दारमरन्दे तु—

अत्रुव्याघ्रादिसंभूतौ शङ्कात्रासौ हि संभ्रमः इति ।

( ७१ ) उदाहरति—कालान्तकेति । कालान्तकस्य संहारकालीनकृतान्तस्येव करालानि भयङ्कराणि आस्यानि मुखानि यस्य तं तथोक्तम्, क्रोधेन रुषा उद्धतम उत्कपितशरीरम्, दशाननं लङ्केशं विलोक्य वानराणां कपीनाम् अनीके सैन्ये कोऽपि विलक्षणसम्भ्रमो व्यग्रता अजायत उत्पन्नोऽभूत् ।

अत्र वातरसेनायाः शङ्कात्रासजनितसम्नमाद्विद्रवा ।

यथा वा रत्नावल्याम्—विदूषकः ( पश्यन् ) का ।उण एषा । ( ससम्भ्रमम् ) कथं देवी वासवदत्ता अत्ताणं वापादेदि । राजा ( ससम्भ्रममपसर्पत् ) क्वासौ क्वासौ" इत्यनेन वासवदत्ताबुद्धिगृहीतायाः सागरिकायाः मरणशङ्कासम्भ्राद्विद्रवः । ।

( ७२ ) विमर्शसन्धेस्त्रयोदशाङ्गानीति दर्शयति—अपवाद इति । विमर्शे विमर्शसन्धौ अपवादादिछादनान्तानि त्रयोदशाङ्गानि सम्भवन्तीत्यर्थः ।

( क ) का पुनरेषा । कथं देवी वासवदत्ता आत्मानं व्यापादयति इति संस्कृतम् ।

( ७३ ) **दोषप्रख्यापवादः स्यात्—**

( ७४ ) यथा वेण्याम्—'**युधिष्ठिरः**—पञ्चालक ! कच्चिदासादिता तस्य दुरात्मनः कौरव्यापसदस्य पदवी । **पाञ्चालकः**—न केवलं पदवी, स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः ।'

( ७५ )…… ……  **संफेटो रोषभाषणम्** ॥ १०२ ॥

( ७६ ) यथा तत्रैव—'**राजा**—अरे रे मरुत्तनय ! वृद्धस्य राज्ञः पुरतो निन्दितमप्यात्मकर्म श्लाघसे । शृणु रे—

---

( ७३ ) तत्रापवादं लक्षयति—दोषप्रख्येति । दोषस्य प्रख्या कथनम् अपकृष्टविषयको वाद अपवादो नामाङ्गम् ।

मन्दारमरन्देऽपि—

तत्रापवादो दोषाणां प्रख्यापनमितीर्यते इति ।

( ७४ ) उदाहरति—यथेति । वेण्यां वेणीसंहारनाटके । तस्य दुर्योधनस्य कौरवापसदस्य कौरवाधमस्य । पदवी पन्थाः "पन्थानं पदवी सृतिः" इत्यमरः, दुरात्मा दुर्य्योधनः । देव्या द्रौपद्याः केशपाशस्य स्पर्शो धारणमेव पातकं तस्य प्रधानहेतुः आदिकारणमाज्ञापकत्वादिति भावः, उपलब्धः प्राप्तः ।

अत्र दुर्य्योधनस्य दोषकथनादपवादः ।

यथा वा रत्नावल्याम् , "सुसङ्गता—(क) सा खलु तवस्सिणी भट्टिणीए उज्जइणिं णिअदत्ति पवादं करिअ उवत्थिदे अद्धरत्ते ण जाणीआदि केहिंपिणीदेत्ति । विदूषकः—( सोद्वेगम् ) सा खु देवीए उज्जइणिं पेसिदा अदो, अप्पिअत्ति कहिदम् । राजा—अहो निरनुरोधा मयि देवी" इत्यनेन वासवदत्तादोषकथनादपवादः । इदञ्च परदोषाख्यापनमेव । स्वदोषाख्यापनमपि यथा पुष्पदूषिते पञ्चमेऽङ्के—

ब्राह्मणः—मार्जिता हि ब्राह्मणस्य मुखमधुरः कालपाशः ।

तथा हि—हतः पुत्रो हता भ्राता हतो मार्जिलया पिता ।

तथाऽप्येतां स्वगोत्रघ्नीं निन्दामिव पिबामि च ॥ इति

( ७५ ) सम्फेटं लक्षयति—सम्फेट इति । रोषेण भाषणं सम्फेटनामाङ्गम् । सम्फेट इति गोमण्डलादिवत् रोषभाषणार्थेऽत्र रूढः ।

मन्दारमरन्देऽपि—

रोषसंग्रथितं वाक्यं सम्फेटं परिचक्षते इति ।

( ७६ ) उदाहरति—यथेति । तत्रैव वेण्यामेवेत्यर्थः । अरे रे इत्यादि—दुर्य्योधनस्य भीमाऽर्जुनौ प्रति सम्बोध्य उक्तिरियम् । मरुत्तनय ! वायुपुत्र ! अनेन जारज इति सूचितम् । वृद्धस्य राज्ञो धृतराष्ट्रस्य । आत्मकर्म बन्धुवधादिरूपं स्वकार्य्यं श्लाघसे विकत्थसे प्रशंससीत्यर्थः ।

---

( क ) "सा खलु तपस्विनी भट्टिन्योज्जयिनीं नीयत इति प्रवादं कृत्वोपस्थितेऽर्धरात्रे न ज्ञायते कुत्रापि नीतेति । अति निर्घृणं खलु कृतं देव्या भो वयस्य ! मा खल्वन्यथा सम्भावय सा खलु देव्योज्जयिन्यां प्रेषिता अतोऽप्रियमिति कथितम्" इति संस्कृतम् ।

कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी ।
तस्मिन्वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्वीर्यातिभारद्रविणगुरुमदं मामजित्वैव दर्पः ॥

( ७७ ) भीमः—( सक्रोधम् । ) आः पाप । राजा—आः पाप !' इत्यादि ।

( ७८ ) **व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसंभवः ।**

निरपराधिनां तेषां वधाद्गर्वो वृथेत्याह—कृष्टेति । मम भुवनपतेर्जगदीश्वरस्य आज्ञया एतेनाज्ञापालकत्वं तेषां धर्म इति व्यञ्जितम् । द्यूतेन लब्धा प्राप्ता दासी द्यूतदासी अत एवापमानयोग्या, पशोः अधुनाऽपि मां जेतुमसमर्थतया पशुसदृशस्य तव भीमस्य तव अर्जुनस्य च भीमार्जुनयोः सम्बोध्यत्वात् तव द्वयोपादानम् । तस्य राज्ञो युधिष्ठिरस्य वा तयोर्नकुलसहदेवयोर्वा भार्या द्रौपदी । अनेन कस्याश्चिदेकः पतिः, विपत्तौ प्रतीकारासमर्थोऽपि न तथा उपालम्भनीयः, भवन्तस्तु द्रौपद्याः पञ्च स्वामिनः सन्तोऽपि अधुनाऽपि यथार्थप्रतीकारासमर्थत्वादत्यन्तकातरा एवेति द्रौपदी च गणिकासदृशीति सूचितम् । भूपतीनां तत्रस्थनृपतीनां प्रत्यक्षमेव केशेषु कृष्टा तस्याः केशग्रहणं कृतमित्यर्थः । तस्मिन् केशग्रहरूपे वैरानुबन्धे वैरजनके ये नरेन्द्रास्तैः युष्माकं किमपराद्धं ये नरेन्द्रा नृपतयो युष्माभिर्घातिता इति वद, अपकर्त्ता त्वहमेवेति भावः, एवं च अन्यापराधेन अन्येषां दण्डविधानादविचार्यकारित्वेन भवन्तः पशुसदृशा एवेत्याशयः । बाह्वोः स्वभुजयोः वीर्य्यातिरेकः पराक्रमाधिक्यमेव द्रविणं धनं तेन गुरुर्महान् मदो गर्वो यस्य तं तादृशं मां दुर्योधनम् अजित्वैव जयमप्राप्यैव युष्माकं दर्पः, साम्प्रतं ते गर्वो न युक्त इति भावः । स्रग्धराच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

( ७७ ) भीम इति । आः पापेति भीमदुर्योधनयोः परस्परं प्रत्युक्तिः । राजा दुर्योधनः अत्र द्वयोरेव रोषभाषणात् सम्फेटः ।

यथा चात्रैव—भोः कौरवराज ! कृतं बन्धुनाशदर्शनजन्मना । मेवं विषादं कृथाः । पर्याप्ताः पाण्डवाः समरायाहमसहाय इति ।

पञ्चानां मन्यसेऽस्माकं यं सुयोधं सुयोधनः ।
दंशितस्यात्तशस्त्रस्य तेन तेऽस्तु रणोत्सवः ॥

इत्थं श्रुत्वासूयात्मिकां निक्षिप्य कुमारयोर्दृष्टिमुक्तवान्धार्त्तराष्ट्रः—

कर्णदुःशासनवधात्तुल्यावेव युवां मम ।
अप्रियोऽपि प्रियो योद्धुं त्वमेव प्रियसाहसः ॥

इत्युत्थाय च "परस्परं क्रोधाधिक्षेपपरुषवाक्कलहप्रस्तावितयोरसङ्ग्रामौ" इत्यनेन भीमदुर्य्योधनयोरन्योन्यरोषसंभाषणाद्बीजान्वयेन सम्फेट इति ।

( ७८ ) व्यवसायं लक्षयति—व्यवसायश्चेति । कार्य्यस्य निर्देशः प्रतिज्ञा हेतुः साधननिर्देशः कारणनिर्देश इति यावत् तयोः सम्भवो मेलनम् , तादृश उद्योग इति शेषः, व्यवसायो नामाङ्गम् ।

मन्दारमन्दे तु—

व्यवसायः

( ७९ ) यथा तत्रैव—'भीमः—

निहताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्ता दुर्योधनस्योर्वोर्भीमोऽयं शिरसा नतः ॥

( ८० ) **द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसंभवा** ॥ १०३ ॥

( ८१ ) यथा तत्रैव—'युधिष्ठिरः—भगवन् ! कृष्णाग्रज ! सुभद्राभ्रातः !

ज्ञातिप्रीतिर्मनसि न कृता, क्षत्रियाणां न धर्मो,
रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयि त्वम् ।

( ७९ ) उदाहरति—यथेति । तत्रैवेति । वेण्यां तु नेदानीमुपलभ्यते । निहतेति । निहता विनाशिता अशेषाः समग्राः कौरव्याः कुरुकुलोद्भवा येन सः तथोक्तः । दुःखेन शास्यतेऽसौ दुश्शासनस्तस्य असृजा शोणितेन क्षीबो मत्तः क्षीबत्वसम्पादनेन असृजो मधुत्वारोपणं व्यज्यते । तथा दुःखेन युध्यत इति दुर्योधनस्तस्य ऊर्वोः जङ्घाद्वयस्य भङ्क्ता खण्डयिता अयं भीमो भवन्तं शिरसा मूर्ध्ना नतः ।

अत्र द्रौपदीकेशाकर्षणादिहेतोस्तत्तत्प्रतिज्ञाञ्चास्योद्योगस्य सम्भवाद्व्यवसायः ।

यथा च रत्नावल्याम् "ऐन्द्रजालिकप्रवेशादारभ्य एक्कोउण खेडओ तए अवस्सं पेखिदव्वोः" इति यावत् । अत्र यौगन्धरायणेन यदङ्गीकृत तन्निष्पादकहेतुसमागमाद् व्यवसायः । अन्ये तु "व्यवसायः स्वशक्त्युक्तिः" इति पठन्ति । यथा वेणीसंहारे—

नूनं तेनाद्य वीरेण प्रतिज्ञाभङ्गभीरुणा ।
बध्यते केशपाशस्ते स चास्याकर्षणक्षमः ॥ इति ।

( ८० ) द्रवं लक्षयति—द्रव इति । शोकावेगात् आदिपदेन क्रोधावेगादेश्च सम्भवा गुरोः पूज्यस्य व्यतिक्रान्तिः, आदरलङ्घनं द्रवणं कर्त्तव्याच्च्यवनं द्रवो नामाङ्गम् ।

मन्दारमन्देऽपि—

गुरोस्तिरस्कृतिं प्राह द्रवं तु भरतो मुनिः, इति ।

भरतस्तु—

गुरुव्यतिक्रमो यस्तु विज्ञेयो विद्रवस्तु सः, इत्याह ।

( ८१ ) उदाहरति—यथेति । युधिष्ठिरस्य दुर्योधनानुरागक्रुद्धबलभद्रभर्त्सनमिदम् । अत्र बलरामस्योक्तिरियमित्युक्तिः कस्यचिन्न समीचीनं "युधिष्ठिरः"—इत्युपक्रमे कथनादिति सुधियो विभावयन्तु भगवन्निति सम्बोधनेनादरप्रदर्शनम् । कृष्णाग्रजेति, सुभद्राभ्रातरिति च द्वयं स्वपक्षानुरागौचित्याय सम्बन्धप्रदर्शनम् ।

ज्ञातिप्रीतिरिति । बलभद्रयुधिष्ठिरयोरेकचन्द्रवंशोद्भवत्वाज्ज्ञातित्वम् ।

ज्ञातयो वयमिति प्रीतिः प्रणयो मनसि न कृता भवतेति शेषः, एवमग्रेऽपि क्षत्रियाणां धर्मोऽपि मनसि न कृत इत्यर्थः । अयुध्यमानवधवैमुख्यं हि क्षत्रियाणां धर्मः, वयञ्चायुध्यमानाः । तथा अनुजस्य श्रीकृष्णस्य अर्जुनेन सार्द्धं तत् प्रसिद्धं रूढं बद्धमूलं सख्यमपि न गणितम् , शिष्ययोर्भीमदुर्योधनयोर्विषये भवतः स्नेहबन्धः स्नेहनिबन्धनहृदयाकर्षणं कामं यथेष्टं क्रियाविशेषणमिदम् , तुल्यो भवतु वरम् । मन्दभाग्ये मयि त्वं यद्वि-

(८२) तर्जनोद्वेजने प्रोक्ता द्युतिः—

(८३) यथा तत्रैव दुर्योधनं प्रति कुमारवृकोदरेणोक्तम्—

जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां

मां दुःशासनकोष्णशोणितमधुक्षीबं रिपुं मन्यसे

---

मुखो भीमंप्रति क्रुद्धत्वादेव प्रतिकूलः असि अयं कः पन्था को मार्गः। शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक् (१९८ पृ०)।

अत्र शोकाविष्टचित्तेन युधिष्ठिरेण गुरोर्बलभद्रस्यादरलङ्घनाद्द्रवः।

यथा वा उत्तररामचरिते—

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्त्तते

सुन्दस्त्री दमनेऽप्यखण्डयशसो लोके महान्तो हि ते।

यानि त्रीण्यकुतोमुखान्यपि पदान्यासन् खरायोधने

यद्वा कौशलमिन्द्रसूनुदमने तत्राप्यभिज्ञो जनः॥

इत्यनेन लव रामस्य गुरोस्तिरस्कारं कृतवानिति द्रवः।

रत्नावल्यामपि सन्निहितं भर्त्तारमवगणय्य विदूषकस्य सागरिकायाश्च वासवदत्तया बन्धनम्।

दशरूपककारास्तु द्रवातिरिक्तं विद्रवमपि मन्यन्ते। तथाहि "विद्रवो वधबन्धादिः" इति तल्लक्षणम्।

छलितरामे—

येनावृत्य मुखानि सामपठतामत्यन्तमायासितं

बाल्ये येन हृताक्षसूत्रवलयप्रत्यर्पणैः क्रीडितम्।

युष्माकं हृदयं स एष विशिखैरापूरितांशस्थलो

मूर्छा घोरतमःप्रवेशविवशो बध्वा लवो नीयते॥

इत्युदाहरन्ति च।

(८२) द्युतिं लक्षयति—तर्जनेति। यस्य कस्यचित् तर्जनं भर्त्सनम् उद्वेजनं भयोत्पादनं वा सन्देहजनकत्वेन द्योतनं प्रकाशनं द्युतिर्नामाङ्गं प्रोक्ता।

मन्दारमरन्देऽपि—

"द्युतिर्नामसमुद्दिष्टा तर्जनोद्वेजनेर्बुधैः" इति।

भरतोऽपि—

"वाक्यामाधर्षणाकृतं द्युतिस्तज्ज्ञैरुदाहृतम्" इति।

(८३) उदाहरति—यथेति। तत्रैव वेण्यामेवेत्यर्थः। जन्मेन्दोरिति। विमले दोषरहिते, इन्दोश्चन्द्रस्य कुले वंशे जन्म स्वस्योत्पत्तिं व्यपदिशसि प्रख्यापयसि चन्द्रवंशीयोऽहमिति व्यपदिशसि सङ्ग्रामभयान्निलीनश्च भवसीत्युपहासमित्याशयः। अद्यापि अधुनापि गदाम् अस्त्रविशेषं धत्से दधासि, दुःशासनस्य कोष्णेन मन्दोष्णेन "कोष्णं कवोष्णं मन्दोष्णम्" इत्यमरः, शोणितमधुना रुधिररूपमद्येन क्षीबं मत्तं मां वृकोदरं रिपुं शत्रुं मन्यसे न तु कार्य्येण प्राणदातारं मन्यस इत्यर्थः। शान्तोऽहं कथं योत्स्य अत आह—दर्पान्ध इति। तथा दर्पान्धः गर्वेण कर्त्तव्याकर्त्तव्यविमूढः सन्, मधुकैटभद्विषि मधुकैटभौ तन्नामासुरौ तयोरपि निहन्तरि श्रीकृष्णेऽपि विषये उद्धतम् उच्छृङ्खलं यथास्यात्तथा चेष्टसे व्यापारं करोषि यो हेलातस्तावलवन्तं श्रीकृष्णमपि वञ्चुमुद्यतः स कथं सङ्ग्रा-

दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
त्रासान्मे नृ-पशो ! विहाय समरं पङ्केऽधुना लीयसे ॥

( ८४ )............ शक्तिः पुनर्भवेत् ॥

**विरोधस्य प्रशननम्—**

( ८५ ) यथा तत्रैव—

"कुर्वन्त्वाप्ता हतानां रणशिरसि जना भस्मसात् देहभारान्
अश्रून्मिश्रं कथञ्चिद्ददतु जलममी बान्धवा बान्धवेभ्यः
मार्गन्तां ज्ञातिदेहान् हतनरगहने खण्डितान् गृध्रकङ्कैः
अस्तं भास्वान् प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि ॥

माद्विरतो भवेदिति भावः। किन्तु हे नृपशो ! मनुष्येषु पशुतुल्य ! मे दुर्य्योधनस्य त्रासा-द्भयात् समरं युद्धं विहाय त्यक्त्वा अधुना पङ्के द्वैपायनह्रदस्य कर्दमे लीयसे प्रच्छन्नो भवसि। अत्र कथमिति काकुगम्यम्। इदन्तु पूर्वपूर्वाचरणप्रतिकूलादत्यन्तं घृणितम-नुष्ठानमित्यभिप्रायः।

शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक् (१५८)। अत्र तर्ज्जनोद्वेजनाभ्यां द्युतिः। एवं "भो लङ्केश्वर ! दीयतां जनकजा" इत्यत्रापि द्युतिरिति बोध्यम्।

अन्ये तु "तिरस्कारो द्युतिः" इति लक्षयन्ति—

यथा कृत्यारावणे मन्दोदरीं प्रति अङ्गदः—

मा गास्तिष्ठ पुनर्व्रज क्षणमितो गत्वा पुनः स्थीयतां
यत्रास्ते भुजवीर्य्यदर्पितमदो विद्रावणो रावणः।
मद्बाहुद्वयपञ्जरान्तरगता मूढे ! किमाक्रन्दसि
सिंहस्याङ्कमुपागतामिव मृगीं कस्त्वां परित्रास्यते ॥ इति।

इत्युदाहरन्ति। एवं साक्षात्पारम्पर्य्येण वा न्यक्कारपरं वाक्यं द्युतिरेव।

अपरे तु "तर्जनाधर्षणे द्युति" मन्यन्ते।

( ८४ ) शक्तिं लक्षयति—शक्तिरिति। विरोधस्य विवादस्य प्रशमनं समापनं पुनः शक्तिसाध्यत्वात् शक्तिर्नामाङ्गं भवेत्।

मन्दारमरन्देऽपि —

उत्पन्नस्य विरोधस्य शमनं शक्तिरुच्यते, इति।

भरतोऽप्येवमेव—

विरोधोपगमो यस्तु सा शक्तिः परिकीर्त्तिता, इति।

( ८५ ) उदाहरति—यथेति। तत्रैव वेण्यामेव। कुर्वन्त्वाप्ता इति। आप्ता आत्मीयत्वेन विश्वस्ता जना बान्धवाः, रणशिरसि युद्धक्षेत्रोपरि हतानां जनानां देहभारान् शरीर-सङ्घान् वह्निसात् कार्त्स्न्ये न वह्निदेयान् कुर्वन्तु "विभाषा सातिकार्त्स्न्ये" इति पा० सू० साति प्रत्ययः तथा अमी बान्धवाः अश्रून्मिश्रं नेत्रजलमीलितं जलं कथञ्चिदतिक्लेशेन बान्धवेभ्यो युद्धे मृतेभ्यो ददतु "अदभ्यस्तादि"ति पा० सू० झस्यात्। तथा गृध्रकङ्कैः मांसभक्षकपक्षिविशेषैः खण्डितान् भक्षितमांसान् ज्ञातिदेहान् बान्धवशरीराणि हतनरा निहतमनुष्यदेहा एव गहनं वनं तस्मिंस्तथोक्ते, मार्गन्तां दग्धं गवेषन्ताम्। अयं भास्वान् सूर्य्यः रिपुभिः सह अस्तं प्रयातः सूर्य्यास्तमिव शत्रोरस्तजातमिति भावः। अत

( ८६ )······ ··· प्रसङ्गो गुरुकीर्त्तनम् ।

( ८७ ) यथा मृच्छकटिकायाम्—चाण्डालकः । एसो क्खु सागलदत्तस्स सुदो अज्जविस्सदत्तस्स णत्तिओ चालुदत्तो वावादिदुं वज्झट्ठाणं णिज्जइ: एदेण किल गणिआ वसन्तसेणा सुअस्सलोहेण वावादिता चारुदत्तः—( सनिर्वेदं स्वगतम् )

( ८८ ) मखशतपरिपूतं गोत्रमुद्भासितं यत्

सदसि निविडचैत्यब्रह्मघोषैः पुरस्तात् ।

एव बलानि स्वस्वसैन्यानि संह्रियन्तां सङ्कोच्यन्तां रणात्परावर्त्यन्तामिति यावत् । स्रग्धराच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

अत्र सैन्यसङ्कोचनोपदेशेन तदानीन्तनविरोधप्रशमनात् शक्तिः ।

यथा च रत्नावल्याम्, राजा—

सव्याजैः शपथैः प्रियेण वचसा चित्तानुवृत्त्याधिकं

वैलक्ष्येण परेण पादपतनैर्वाक्यैः सखीनां मुहुः ।

प्रत्यासत्तिमुपागता नहि तथा देवी रुदत्या यथा

प्रक्षाल्यैव तयैव बाष्पसलिलैः कोपोपनीतः स्वयम् ॥

इत्यनेन सागरिकालाभविरोधिवासवदत्ताकोपोपशमनाच्छक्तिः ।

यथा चोत्तररामचरिते लवः प्राह—

विरोधो विश्रामः प्रसरति रसो निर्वृतिघन-

स्तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ।

झटित्यस्मिन्दृष्टे किमपि परवानस्मि यदि वा

महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥ इति

( ८६ ) प्रसङ्गं लक्षयति—प्रसङ्ग इति । गुरोः पित्रादिगुरुजनस्य पूज्यस्येति यावत्, कीर्त्तनं विषयविशेषस्यातिशयसंशब्दनं प्रसङ्गेन सञ्जातत्वात् प्रसङ्गो नामाङ्गं भवतीति शेषः ।

मन्दारमरन्देऽपि—

प्रस्तुतार्थेन च गुरोः प्रसङ्गः परिकीर्त्तनम् , इति ।

नाट्यशास्त्रे तु—

प्रसङ्गश्चैव विज्ञेयो वाक्यरामर्षयोजितैः, इति ।

( ८७ ) उदाहरति—यथेति । मृच्छकटिकायां मृच्छकटिकोदन्तसम्बद्धदृश्यकाव्ये मृच्छकटिकसंज्ञकप्रकरणे इत्यर्थः । चाण्डालक इति । हन्तुं नीयमानं चारुदत्तं दृष्ट्वा चाण्डालक आह इत्यर्थः । "एष खलु सागरदत्तस्य सुतः आर्यविश्वदत्तस्य नप्ता चारुदत्तो व्यापादयितुं नीयते । एतेन किल गणिका वसन्तसेना सुवर्णलोभेन व्यापादिता" इति संस्कृतम् ।

व्यापादयितुं मारयितुम् ।

( ८८ ) एतच्छ्रुत्वा चारुदत्तः स्वीयप्रशस्तकुलकीर्त्तनात् लज्जया आह —मखशतेति । यदस्माकं गोत्रं कुलं मखशतैर्बहुतरयज्ञानुष्ठानैः परिपूतं पवित्रम् तथा निबिडे वैदिकजनव्याप्ते चैत्ये गृहे उद्भटैर्ब्रह्मघोषैः वेदपाठध्वनिभिः पुरस्तात् पूर्वकाले सदसि उद्भासितं सभायां उच्चैःस्वरेण ब्राह्मणद्वारा यशोभिः प्रशस्तम् आसीत् निधनदशायां मरणा-

मम निधनदशायां वर्त्तमानस्य पापै-
स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥

( ८९ ) इत्यनेन चारुदत्तवधाभ्युदयानुकूलप्रसङ्गात् गुरुकीर्त्तनमिति प्रसङ्गः ।

( ९० ) **मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः**

( ९१ ) मनः समुत्पन्नो यथा मालतीमाधवे—

दलति हृदयं गाढोद्वेगो द्विधा न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्म्मच्छेदी न कृन्तति जीवितम् ॥

वस्थायां वर्त्तमानस्य विद्यमानस्य मम तद्गोत्रम् असदृशमनुष्यैः मद्गोत्रघोषणानधिकारिजनैश्चाण्डालैः ( कर्तृभिः ) पापैः पापोदन्तैः "सुवर्णलोभेन गणिकाव्यापादिता" इति गर्हितोदन्तैरित्यर्थः घोषणायाम् अपवादवाद्यध्वनौ घुष्यते तारस्वरेण प्रख्याप्यते। इदञ्चातीव क्लेशजनकमिति भावः । मालिनीच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ( १६७ पृ० ) ।

( ८९ ) लक्ष्ये लक्षणं सङ्गमयितुमाह–इतीति । अनेन गद्यभागेन पद्येन च चारुदत्तस्य वधरूपो यो घातकानामभ्युदयस्तदनुकूलप्रसङ्गात् वधप्रसङ्गेन "एसो कखु" इत्यादि गद्यभागकथनात् स्वनिरपराधत्वद्योतनाय गोत्रनिष्कलङ्कत्वरूपाभ्युदय सूचनप्रसङ्गेन "मखशत" इति पद्यकथनाच्चेत्यर्थः । गुरुकीर्तनमिति । गद्यभागे गुर्वोः पितृपितामहयोः पद्ये तु गोत्रपदेनैव गुरूणां पितृपितामहादीनां कीर्त्तनं कथनमतः प्रसङ्गो नामाङ्गम् ।

यथा च रत्नावल्याम्—"देव ! याऽसौ सिंहलेश्वरेण स्वदुहिता रत्नावली नामायुष्मती वासदत्तां दग्धामुपश्रुत्य देवाय पूर्वं प्रार्थिता सती प्रति दत्ता ।" इत्यनेन रत्नावल्या लाभानुकूलभिजनप्रकाशिना प्रसङ्गाद्गुरुकीर्त्तनेन प्रसङ्गः ।

केचिदप्रस्तुतार्थवचनं प्रसङ्गमिच्छन्ति । यथा वेणीसंहारे षष्ठेऽङ्के–"युधिष्ठिरः—( द्रौपदीं प्रति )

स कीचकनिषूदनो बकहिडिम्बकिर्मीरहा
मदान्धमगधाधिपद्विरदसन्धिभेदाशनिः ।
गदापरिघशोभिना भुजयुगेन तेनान्वितः
प्रियस्तव ममानुजोऽर्जुनगुरुर्गतोऽस्ते किल ! ॥

अत्र मायया तपस्विना राक्षसेन व्यलीकभीमबधकथनात् युधिष्ठिरस्याप्रस्तुतः शोकः प्रसङ्गः ।

( ९० ) खेदं लक्षयति—मनश्चेष्टेति । मनसा शोकादिमानसिकव्यापारेण चेष्टया शारीरिकव्यापारेण वा समुत्पन्नः श्रमः परिश्रमः खिद्यतेऽनेनेति खेद इति नाम्नाङ्गं स्मृतः ।

( ९१ ) तत्राद्यमुदाहर्त्तुमाह—मनः समुत्पन्न इति । दलतीति । कपालकुण्डलापहृतमालतीशोकात् माधवस्योक्तिरियम् । गाढोद्वेगो दृढतरः प्रियाविरहक्लेशावेगः हृदयं दलति स्फुटति तु किन्तु द्विधा द्विखण्डं न भिद्यते तेन गाढोद्वेगेन न विदीर्य्यते । विकलः शोकाकुलः कायः शरीर म हं मूर्च्छां वहति प्राप्नोति, किन्तु चेतनां चैतन्यं न मुञ्चति न त्यजति । अन्तर्दाहः अन्तःकरणशोकसन्तापः तनुं देहं ज्वलयति किन्तु समग्रतः भस्मसात् वह्न्यधीनं न करोति न विदधाति, तथा मर्म्मच्छेदी मर्म्मनिकृन्तनो विधिर्नि

( ९२ ) एव चेष्टासमुत्पन्नोऽपि

( ९३ ) ईप्सितार्थप्रतीघातः प्रतिषेध इतीष्यते ।

( ९४ ) यथा मम प्रभावत्यां विदूषकं प्रति प्रद्युम्नः- सखे ! कथमिह त्वमेकाकी वर्तसे? क्व नु पुनः प्रियसखीजनानुगम्यमाना प्रियतमा मे प्रभावती ? । विदू । असुरवइणा आआरिअ कहिं वि णीदा । प्रद्युम्नः--( दीर्घं निश्वस्य )

( ९५ ) हा पूर्णचन्द्रमुखि ! मत्तचकोरनेत्रे !
मामानताङ्गि ! परिहाय कुतो गतासि ? ।
गच्छ त्वमद्य ननु जीवित ! तूर्णमेव
दैवं कदर्थनपरं कृतकृत्यमस्तु ॥

यतिः "विधिर्विधाने दैवे च भाग्यं स्त्री नियतिर्विधिः" इत्यमरः, प्रहरति ताडयति किन्तु जीवितं प्राणं न कृन्तति न छिनत्ति नोत्क्रामयतीत्यर्थः । हरिणीच्छन्दः (१६५ पृ०)। अयं चोत्तररामचरिते रामेणापि पठितः ।

अत्र प्रियाविरहक्लेशावेगेन माधवस्य श्रमात् खेदः ।

( ९२ ) एवमिति । चेष्टासमुत्पन्नोऽपि ऊह्य इत्यर्थः ।

तद्यथा शाकुन्तले प्रथमेऽङ्के राजा—

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।
बद्धं कर्णशिरीषरोधिवदने घर्माम्भसा जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजः ॥

अत्र शकुन्तलाया घटोत्क्षेपणचेष्टया श्रमः ।

एवं विक्रमोर्वश्यां पुरूरवाः—

"अहो ! श्रान्तोऽस्मि । भवतु । अस्यास्तावत् गिरिनद्यास्तीरे स्थितस्तरङ्गवातं सेविष्ये" इत्यादि ।

अत्र कायिकः श्रमः ।

( ९३ ) प्रतिषेधं लक्षयति—ईप्सितार्थेति । ईप्सितार्थस्य अभिलषितविषयस्य प्रतीघातः प्राप्तिप्रतिबन्धःप्रतिपूर्वकाद्धन्तेर्घञि "उपसर्गस्य घञ् मनुष्ये बहुलम्" इत्यनेन पा० सू० घञन्ते घातशब्दे परे प्रतेर्दीर्घः, प्रतिषेध इति नाम्नाङ्कम् इष्यते आलङ्कारिकैरिति शेषः। प्रतिषेधो बाध इति नार्थान्तरम् ।

( ९४ ) उदाहरति—यथेति । 'असुरपतिना आकार्य्य कुत्रापि नीता" इति संस्कृतम् । आकार्य्य आहूयेत्यर्थः । "हूतिराकरणाह्वानम्" इत्यमरः ।

( ९५ ) हा पूर्णचन्द्रेति। हा पूर्णचन्द्रमुखि ! पूर्णचन्द्रस्य मुखमिव मुखं यस्याः तत्सम्बुद्धौ शशिवदनीत्यर्थः, हा मत्तचकोरनेत्रे ! मत्तो यश्चकोरश्चक्रवाकस्तस्य नेत्रे लोचने इव नेत्रे यस्यास्तत्सम्बुद्धौ, हा आनताङ्गि ! कुचभारेण अवनतदेहे ! मां प्रद्युम्नं विहाय त्यक्त्वा कुतः कुत्र गतासि, एवं पूर्वार्द्धेन प्रियां सम्बोध्य शोचित्वा उत्तरार्द्धेन जीवितं सम्बोध्य आह—गच्छ त्वमद्येति । ननु जीवित ! हे प्राण ! तूर्णमेव त्वरितमेव त्वमद्य गच्छ व्रज, एवं च सति कदर्थनपरं दुःखदानतत्परं दैवं कृतकृत्यमस्तु । वसन्ततिलका-

( ९६ ) कार्य्यात्ययोपगमनं विरोधनमिति स्मृतम् ॥

( ९७ ) यथा वेण्याम्—युधिष्ठिरः

तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम् ।
भीमेन प्रियसाहसेन रभसादल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥

च्छन्दस्तल्लक्षणन्तूक्तं प्राक् ( १२३ पृ० ) ।

अत्रेप्सितस्य प्रभावतीसमागमप्रतिबन्धस्य सत्वात्प्रतिषेधः ।

( ९६ ) विरोधं लक्षयति—कार्य्यात्ययेति । कार्य्ये कर्त्तव्ये अत्ययोपगमनं विघ्नप्राप्तिः विरोधनं नामाङ्गं स्मृतम् ।

मन्दारमरन्दे तु—

विरोधनं विरोधोक्तिः संरब्धानां परस्परम्, इति ।

( ९७ ) उदाहरति—यथेति । तीर्णे इति । सनिर्विण्णयुधिष्ठिरस्योक्तिरियम् । भीष्मो गाङ्गेय एव महोदधिः सागरस्तस्मिंस्तथोक्ते तीर्णे उत्तीर्णे शरशय्यां प्रापित इत्यर्थः । द्रोण एव अनलो वह्निस्तस्मिंस्तथोक्ते कथमपि "अश्वत्थामा हत इति" व्याजोक्तिद्वारा शस्त्रत्यागेन निर्वृते निर्वाणतां गते स्वर्गं प्राप्ते सतीत्यर्थः । कर्णो राधेय एव आशीविषभोगी विषोद्गारी सर्पः तस्मिंस्तथोक्ते "आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति" इति । आशीविष इत्यत्र पृषोदरादित्वाद्दीर्घसलोपौ । केचित्त्वीकारान्तमाशीशब्दं मन्यन्ते, तथा च राजशेखरः "आशीमिव कलामिन्दोः" इति । प्रशमिते वधेन शान्तिं प्रापिते तथा शल्यो मद्रराज एव शल्यं तस्मिंश्च दिवं स्वर्गं याते गते च सति अत एव जये अल्पावशेषे सति प्रियं साहसो यस्य स तेन तथोक्तेन भीमेनेत्यर्थः रभसात् वेगात् "रभसो वेगहर्षयो" रिति विश्वः, वाचा अस्माकं मध्ये येन साकं तुभ्यं रोचते तेनैव साकं युध्यस्व" इति वचनेन अमी सर्वे वयं पाण्डवाः जीवितसंशयं प्राणसन्देहं यथास्यात्तथा समारोपिताः प्रापिताः । अद्य दुर्य्योधनं हनिष्यामीति भीम कृतायाः प्रतिज्ञाया विफले अहनने स्वयं प्राणांस्त्यक्ष्यामीति अपरप्रतिज्ञां सफलयितुं नूनं भीमः प्राणांस्त्यक्ष्यतीति तथाच तदनु वयमपि सर्वे प्राणांस्त्यक्ष्याम इत्याशयः । शार्दूलविक्रीडित छन्दस्तल्लक्षणं तूक्तं प्राक् ( १९ पृ० )

अत्र युद्धविजयरूपकार्य्य भीमवचनेन विघ्नप्राप्तेर्विरोधनम् ।

यथा च कृत्यारावणे सप्तमेऽङ्के—

कञ्चुकी—( लक्ष्मणविभीषणौ प्रति ) कुमार ! एतत् । उभौ किम् ? कञ्चुकी—आः इदम् । उभौ—आर्य्य कष्टाय कथय कञ्चुकिः—का गतिः ! श्रूयताम् । आर्य्या खलु सीता रावणाज्ञया किङ्करोपनीतं भर्त्तुर्मायाशिरोऽवलोक्य सखीभिराश्वास्यमानाऽपि निवृत्तप्रयोजना "नात्मानं क्लेशयामि" इत्युक्त्वा । सर्वे—किं कृतवती । कञ्चुकी—

यन्न शक्यते वक्तुम्—

शशिन इव कला दिनावसाने कमलवनोदरमुत्सुकेव हंसी ।
यतिमरणरसेन राजपुत्री स्फुरितकरालशिखं विवेश वह्निम् ॥

**( ९८ ) प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी ।**

( ९९ ) यथा वेण्याम् -- "पाञ्चालकः । अहं देवेन चक्रपाणिना सहितः --"
इत्युपक्रम्य कृतं सन्देहेन ।

> पूर्य्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
> कृष्णात्यन्तचिरोज्झिते तु कबरीबन्धे करोतु क्षणम् ।
> रामे शातकुठारभास्वरकरे क्षत्रद्रुमोच्छेदिनि
> क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ॥"

**(१००) कार्य्यसंग्रह आदानम्—**

---

**अत्र सीताप्रत्यानयनरूपे कार्य्ये प्रहस्तेन विघ्नप्राप्तेर्विरोधनम् ।**

**( ९८ ) प्ररोचनां** लक्षयति -प्ररोचनेति । संहारार्थस्य **उपसंह्रियमाणप्रयोजनस्य प्रदर्शिनी प्रतिपादिको प्रोत्साहना प्ररोचयति विश्रामाय रुचिमुत्पादयतीति प्ररोचना नामाङ्गं स्यात् ।**

मन्दारमरन्दे तु—**सिद्धवद्भाविनोऽर्थस्य सूचना स्यात्प्ररोचनम् इति ।**

**( ९९ ) उदाहरति** —यथेति । पाञ्चालकः—**गदायुद्धे भीमजयजिज्ञासार्थं कृष्णेन प्रहितो दूतः चक्रं पाणौ यस्य तेन चक्रपाणिना । संदेहेन संशयेन** विजयः **स्यान्नवेत्याकारकेण कृतम् अलम्**

**कथं न संदेह इत्यत** आह—पूर्य्यन्तामिति । **ते तव युधिष्ठिरस्य राज्ये** अभिषेकाय **अभिषेचनाय सलिलेन वारिणा रत्नैः मणिभिः** जटिताः **कलशाः रत्नकलशाः** शाकपार्थि-**वादित्वात्समासः ।**

**"रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्"**

**इति मेदिनी पूर्य्यन्तां** भ्रियन्तां **किङ्करैरिति** शेषः । कृष्णा **द्रौपदी तु अत्यन्तचिरो-ज्झिते अतिबहुकालेन परित्यक्ते कबरीबन्धे** केशवेशबन्धने **च क्षणम् उत्सवं "कालविशे-षोत्सवयोः क्षणः" इत्यमरः, करोतु कबरीबन्धाय सामग्रीसञ्चयं करोत्वित्यर्थः । ननु यदि भीमस्य विजयो न भवेत्तदा सर्वमनर्थकं** भवि यतीत्यत आह—राम इति । शातः **शाणा-दिना घर्षणेन तिक्ष्णीकृतो यः** कुठारः **परशु तेन भास्वरो देदीप्यमानः करो हस्तो यस्य तादृशे, तथा क्षत्राणि** घृतपत्राण्येव **द्रुमा** वृक्षास्तांश्छिनत्तीति **तस्मिंस्तथोक्ते भार्ग-वेण त्रिःसप्तकृत्वः क्षत्रिया विनाशिता इति भावः । रामे** भार्गवे **परशुराम इत्यर्थः क्रोधा-न्धे रोषाकुले वृकोदरे** भीमे **च आजौ रणे परिपतति साटोपं भ्रमति सति संशयः रणजये सन्देहः कुतः कुतोऽपि नेत्यर्थः,** विजये **सन्देहो नास्तीति भावः । यथा भार्गवेण स्वप्रति-ज्ञापूर्त्तिर्न विहिता तथा तत्तुल्यो भीमोऽपि प्रतिज्ञापूर्त्तिमवश्यं विधास्यतीति सारार्थः । शार्दूलविक्रीडितंछन्दस्तल्लक्षणन्तूक्तं प्राक् ( १९८ पृ० ) ।**

**अत्र पूर्य्यन्तामित्यादिचरणद्वयरूपाया सङ्ग्रामोपसंहारोक्तेः प्ररोचना ।**

अन्ये तु **सत्कारादेशनं प्ररोचनामाहुः यथा** वेणीसंहारे युधिष्ठिरः **(पुरुषमवलोक्य) भद्रः ! उच्यतामित्यारभ्य प्रत्युपकारैर्वर्त्तिष्यन्ते दुर्य्योधनप्रतिलम्भवार्त्तायै" इत्यन्तम् ।**

**(१००) आदानं लक्षयति**—कार्यसंग्रह **इति । कार्याणां कर्मणां सङ्ग्रहः सङ्कल-नम् आदानं नामाङ्गम् ।**

( १ ) यथा वेण्याम् — "भो भोः समन्तपञ्चकचारिणः ! ।

नाहं रक्षो न भूतो रिपुरुधिरजलाह्लादिताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।
भो भो राजन्यवीराः ! समरशिखिशिखाभुक्तशेषाः ! कृतं व-
स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥

( २ ) अत्र समस्तरिपुवधकार्यस्य संगृहीतत्वादादानम्

( ३ ) ... ....... तदाहुश्छादनं पुनः ॥

**कार्यार्थमपमानादेः सहनं खलु यद्भवेत् ।**

( ४ ) यथा तत्रैव—अर्जुनः—आर्य्य ! प्रसीद किमत्रक्रोधेन-
अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा ।

---

महर्षिणाऽप्युक्तम्—बीजकार्योपगमनमादानमिति संज्ञितम् , इति ।

( १ ) उदाहरति—यथेति । समन्तात् ह्रदानां पञ्चकमिति समन्तपञ्चकं कुरुक्षेत्रान्तःपातिदेशविशेषः तत्र युद्धार्थं चरितं शीलं येषान्ते तादृशास्तत्सम्बुद्धौ विद्म् ।

नाहमिति । अहं भवता दृश्यमानः रक्षो राक्षसो न, भूतो देवयोनिप्राणिविशेषः पिशाचादिर्न, अत एव पुंस्त्वम् "भूतोऽमी देवयोनयः" इत्यमरः । किन्तु रिपूणां शत्रूणां रुधिराणि शोणितान्येव जलानि सलिलानि तैराह्लादितानि आमोदितानि सिक्तानि अङ्गानि अवयवा यस्य स तथोक्तः तथा प्रकामं यथेष्टं यथास्यात्तथा निस्तीर्ण उत्तीर्णः ऊरुविषयिणीप्रतिज्ञाजलनिधिर्येन स अत एव गहनो दुर्द्धर्षः क्रोधनः क्रोधशीलः नन्द्यादित्वाल्ल्युप्रत्ययः कश्चित् क्षत्रियोऽस्मि । अत एव भो भोः समरो युद्धमेव शिखिशिखा विनाशकतया वह्निज्वाला तया भुक्तेभ्यो लीढेभ्यो दग्धेभ्य इत्यर्थः शेषा अवशिष्टास्तत्सम्बोधने तथोक्ते राजन्यवीराः क्षत्रियशूराः हतैःकरिभिर्हस्तिभिस्तुरगै रश्वैश्च अन्तर्हितास्तेषामन्तरालस्थितत्वेन लुक्कायितास्तैस्तथोक्तैः अत एव लीनैः प्रच्छन्नैः युष्माभिः यद्यस्मात्त्रासाद् भयादास्यते उपविश्यते अनेन वो युष्माकं त्रासेनालम् अहं युष्मान्न किमपि विधास्यामि वृथैव त्रासो मत्त इति त्वदीयोऽहं भीमसेन एवेति भावः । स्रग्धराच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

( २ ) लक्ष्ये लक्षणं सङ्गमयितुमाह—अत्रेति । संगृहीतत्वात् निस्तीर्णेत्यादिविशेषणेन समस्तरिपुवधकार्यस्य मुखतः सङ्कलितत्वादित्यर्थः ।

यथा च रत्नावल्याम्, "सागरिका ( दिशोऽवलोक्य ) (क) दिट्ठिआ समन्तादो पज्जलिदो भअवं हुअवहो अज्जकरिस्सदि दुक्खावसाणम् ॥" इत्यनेनान्यपरेणापि दुःखावसानकार्यस्य सङ्गृहीतत्वादादानम् ।

( ३ ) छादनं लक्षयति—तदाहुरिति । कार्यार्थं कर्त्तव्यविशेषसम्पादनाथ यत् खलु अपमानस्य आदिपदाद् दुरुक्तिपरिग्रहः सहनं भवेत् तत्पुनः छाद्यते संव्रियतेऽनेनेति छादनं नामाङ्गमाहुः कवयः, भरतोऽपि—अवमानात्कृतं वाक्यं कार्यार्थं छादनं भवेत् , इति

( ४ ) उदाहरति—यथेति । अप्रियाणीति । हतं विनष्टं भ्रातृशतं यस्य स तथोक्तः

---

(क) दिष्ट्या समन्तात्प्रज्वलितो भगवान् हुतवहोऽद्य करिष्यति दुःखावसानम्" इति संस्कृतम् ।

हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा ॥

अथ निर्वहणाङ्गानि ।

( ५ ) सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम् ॥
कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनम् ।
भाषणं पूर्ववाक्यञ्च काव्यसंहार एव च ॥
प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः ।

( ६ ) बीजोपगमनं सन्धिः—

( ७ ) यथा वेण्याम्—"भीमः । भवति ! यज्ञवेदिसम्भवे ! स्मरति भवती यन्मयोक्तम्-"चञ्चद्भुजे" त्यादि ।

( ८ ) अनेन मुखे क्षिप्तबीजस्य पुनरुपगमनमिति सन्धिः ।

( ९ ) ........ विबोधः कार्यमार्गणम् ॥

( १० ) यथा तत्रैव—"भीमः-मुञ्चतु मामार्यः क्षणमेकम् । युधिष्ठिरः-किम-

---

अत एव दुःखी अत्यन्तशोकाकुलः एष दुर्योधनः वाचा वचनमात्रेण अप्रियाणि अपकाराणि करोति कटुवचनानि वक्तीत्यर्थः । किन्तु कर्मणा कार्येण अप्रियाणि कर्त्तुं विधातुं न शक्तः समर्थः शक्त्यभावादिति भावः । अत एवास्य दुर्योधनस्य प्रलापैः विरुद्धवचनैः अस्माकं पाण्डवानां का व्यथा ? किं दुःखम् एतद्वचनेन दुःखं न विधातव्यम् अत एव ते कोपो न युक्त इति भावः ।

अत्र दुर्योधनकटूक्तिविहितापमानसहनात् छादनम् ।

( ५ ) निर्वहणसन्धेश्चतुर्दशाङ्गानीति दर्शयति—सन्धिर्विबोध इत्यादि । संहारे निर्वहणाख्यापरनामकोपसंहारसन्धौ सन्धिविबोध इत्यादीनि प्रशस्तिरित्यन्तानि चतुर्दशाङ्गानि नामतो बोध्यानीत्यर्थः ।

( ६ ) तत्र यथोद्देशे सन्धिरूपाङ्गं लक्षयति—बीजोपगमनमिति । बीजस्य मुखसन्धावुपक्षिप्तस्य बीजार्थस्य उपगमनं पुनःप्राप्तिः प्रतिज्ञातार्थस्य बीजस्य सिद्ध्या तत्स्मरणमित्यर्थः, पुनः सन्धानं सन्धिर्नामाङ्गं भवेत् । महर्षिणाऽप्युक्तम्—

मुखबीजोपगमनं सन्धिरित्यभिधीयते, इति ।

( ७ ) उदाहरति यथेति । तत्रैव वेण्यामेव एवमग्रेऽपि । कौरवशतं हत्वा "भवति यज्ञे"त्यादिकं भीमस्योक्तिः । भवतीत्यामन्त्रणम् । चञ्चद्भुजेत्यादिकं प्राग् व्याख्यातम् ।

( ८ ) लक्ष्ये लक्षणं सङ्घटयति —अनेनेति । मुखे प्रथमतः क्षिप्तमुपन्यस्तं प्रतिज्ञया बोधितं बीजं प्रतिज्ञातार्थरूपं पुनरुपगतं ज्ञापितमित्यर्थः । यथा च रत्नावल्याम्, "वसुभूतिः—( अग्निविद्रवानन्तरं सागरिकां निर्वर्ण्य ) बाभ्रव्य ! सुसदृशीयं राजपुत्र्याः । बाभ्रव्यः-ममाऽप्येवमेव मनसि" इत्यनेन नायिकाबीजोपगमात् सन्धिः ।

( ९ ) विबोधरूपमङ्गं लक्षयति—विबोध इति । कार्यमार्गणं कर्त्तव्यविषयस्य गवेषणम्, विधेयत्वप्रकारेण विशेषबोधविषयत्वाद्विबोधो नामाङ्गं भवेत् । भरतोऽपि—

कार्यस्यान्वेषणं युक्त्या विबोध इति कीर्त्तितः, इति ।

( १० ) उदाहरति—यथेति । तत्रैव वेण्यामेव । मुञ्चतु त्यजतु क्षणमिति "कालाध्व-

परमवशिष्टम् ? भीमः—सुमहदवशिष्टम् । संयमयामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् । युधिष्ठिरः—गच्छतु भवान् , अनुभवतु तपस्विनी वेणीसंहारम् ।” इति ।

( ११ ) अनेन केशसंयमनकार्यस्यान्वेषणाद्विबोधः ।

**( १२ ) उपन्यासस्तु कार्याणां ग्रथनम्—**

( १३ ) यथा तत्रैव—भीमः—पाञ्चालि ! न खलु मयि जीवति संहर्त्तव्या दुःशासनविलुलिता वेणिरात्मपाणिभ्याम् । तिष्ठ, स्वयमेवाहं संहरामि” इति

( १४ ) अनेन कार्यस्योपक्षेपाद्ग्रथनम् ।

( १५ ) ............... **निर्णयः पुनः ।**

**अनुभूतार्थकथनम्—**

( १६ ) यथा तत्रैव—भीमः—देव ! अजातशत्रो ! अद्यापि दुर्योधनहतकः ।

---

नोरत्यन्तसंयोगे” इति द्वितीया । सुमहत् अत्यधिकम् । सुयोधनस्य यत् शोणितं तेनोक्षितेन लिप्तेन पाणिना करेण दुःशासनावकृष्टं दुःशासनेनाकृष्टम् , केशहस्तं केशपाशम् । “पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे” इत्यमरः, संयमयामि बध्नामि । तपस्विनी शोच्या द्रौपदी । वेणीसहारं दुःशासनाकर्षणेन विक्षिप्ताया वेण्याः पुनःसंयमनम् ।

( ११ ) लक्ष्ये लक्षणं सङ्गमयति—अनेनेति । यथा वा रत्नावल्याम् , वसुभूतिः—( निरूप्य ) देव ! कुत इयं कन्यका । राजा—देवी जानाति । वासवदत्ता—(क)अज्जउत्त ! एसा सागरादो पावि अत्ति भणिअ अमच्च जोगन्धराअणेण मम हत्थे णिहिदा । अदो ज्जेव सागरिअत्ति सद्दावी अदि । राजा ( आत्मगतम् ) यौगन्धरायणेन न्यस्ता । कथमसौ मामानिवेद्य करिष्यति ? ।” इत्यनेन रत्नावलीलक्षणकार्यमार्गणाद्विबोधः ।

( १२ ) ग्रथनरूपाङ्गं लक्षयति—उपन्यास इति कार्याणां कर्त्तव्यविषयाणाम् उपन्यासः उपक्षेपनम् प्रकृतसन्दर्भे योजनं, ग्रथनं नामाङ्गं मतम् । मन्दारमरन्देऽपि—कार्यस्योपक्षेपणं यत्तु ग्रथनं परिकीर्त्तितम्, इति ।

( १३ ) उदाहरति—यथेति । संहर्त्तव्या बद्धव्या । दुःशासनेन विलुलिता विशकलीकृता । संहरामि बध्नामि ।

( १४ ) लक्ष्ये लक्षणं योजयति—अनेनेति । कार्यस्य कर्त्तव्यवेणीबन्धनस्य उपक्षेपात उपन्यासात् ।

यथा च रत्नावल्याम्—“यौगन्धरायणः—देव! क्षम्यतां यद्देवस्यानिवेद्य मयैतत्कृतम्” इत्यनेन वत्सराजस्य रत्नावलीप्रापणकार्योपक्षेपाद् ग्रथनम् ।

( १५ ) निर्णयरूपमङ्गं लक्षयति—निर्णय इति । अनुभूतार्थस्य प्रत्यक्षादिना पूर्वं ज्ञातविषयस्य कथनं पुनः निर्णीतविषयकत्वान्निर्णयो नामाङ्गं भवेत् । मन्दारमरन्देऽपि—पश्चाच्च स्वानुभूतार्थकथनं निर्णयो मतः, इति ।

( १६ ) उदाहरति—यथेति । अजातशत्रोः इति । युधिष्ठिरस्यापरं नाम ।

---

(क) आर्यपुत्र ! एषा सागरात्प्राप्तेति भणित्वामात्ययौगन्धरायणेन मम हस्ते निहितः । अत एव सागरिकेति शब्द्यते” इति संस्कृतम् ।

मया हि तस्य दुरात्मनः—

भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनाभं निजाङ्गे
लक्ष्मीरार्ये निषिक्ता चतुरुदधिपयःसीमया सार्द्धमुर्व्या।
भृत्या मित्राणि योधाः कुरुकुलमनुजा दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप! तदधुना धार्त्तराष्ट्रस्य शेषम्॥

(१७) ........................ वदन्ति परिभाषणम्॥
परिवादकृतं वाक्यम्—

(१८) यथा शाकुन्तले—राजा—आर्ये! अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी?। तापसी—को तस्स धम्मदारपरिच्चाइणो णामं गेण्हिस्सदि।"

भूमाविति। मया तस्य दुरात्मना दुर्योधनहतकस्य शरीरं भूमौ क्षिप्तं निष्प्रमाणीकृत्य पृथिव्यां पातितम्। चन्दनस्य रक्तचन्दनस्याभेवाभा यस्य तत् रक्तचन्दनसदृशमित्यर्थः इदम् असृक् शोणितं तस्य दुर्योधनस्य निजाङ्गे स्वावयवे निहितम् उपन्यस्तं स्थापितमित्यर्थः चतुर्णाम् उदधीनाम् समुद्राणां पयांसि जलानि सीमा यस्याः सा तथोक्तया ऊर्व्या पृथिव्या सार्द्धं साकं लक्ष्मीः राज्यश्रीः आर्ये भवति निषिक्ता स्थापिता, भृत्याः सचिवादयः मित्राणि सखायः योधा योद्धारः, तथा कुरुकुलस्य मनुजा दुःशासनप्रभृतयः एतत् समग्रं रणमेवाग्निरिति रूपकसमासः तस्मिंस्तथोक्ते दग्धं विनाशितम्, क्षितिमवनिं पातीति क्षितिपस्तत्सम्बोधने हे क्षितिप! एकं नाम यत् दुर्योधनेति संज्ञां ब्रवीषि धार्त्तराष्ट्रस्य दुर्योधनस्य तत् नाममात्रशेषमवशिष्टं वर्त्तते नामैवावशिष्टं सर्वाणि विनाशितानीति भावः। स्रग्धराच्छन्दःस्तल्लक्षणन्तूक्तं प्राक्।

अत्रात्मना विहितत्वात् प्रत्यक्षेणैवानुभूतविषयस्य कथनान्निर्णयः।

यथा च रत्नावल्याम्—यौगन्धरायणः-(कृताञ्जलिः) देव! श्रूयताम् इयं सिंहलेश्वरदुहिता सिद्धादेशेनोपदिष्टा, योऽस्याः पाणिं ग्रहीष्यति स सार्वभौमो राजा भविष्यति। तत्प्रत्ययादस्माभिः स्वाम्यर्थे बहुशः प्रार्थ्यमानापि सिंहलेश्वरेण देव्या वासवदत्तायाश्चित्तखेदं परिहरता यदा न दत्ता, तदा लावणके देवी दग्धेति प्रसिद्धिमुत्पाद्य तदन्तिकं बाभ्रव्यः प्रहितः" इत्यनेन यौगन्धरायणेन स्वानुभूतमर्थस्य ख्यापितत्वान्निर्णयः।

(१७) परिभाषणरूपमङ्गं लक्षयति—वदन्तीति। परिवादेन अपवादेन कृतं पुरस्कृतं वाक्यं वचनं परिवादसूचकं भाषणं परिभाषणं नामाङ्गं वदन्ति तत्त्ववेत्तारः कवय इति शेषः।

मन्दारमरन्दे तु—

विवादविधिरन्योन्यं परिभाषणमीरितम्, इति।

(१८) उदाहरति—यथेति। शाकुन्तले शकुन्तलानाटकदृश्यकाव्य इत्यर्थः। आर्ये! अथ सेत्यादिपृच्छा दुर्वाससः शापाधीनविस्मरणकृतशकुन्तलापरित्यागस्य पश्चात्तां स्मृत्वा तामनासाद्य विरहिणः स्वर्गादागच्छतस्तापसीमुखात् तत्प्रसङ्गं श्रुत्वा दुष्यन्तस्य प्रश्नः। तापसी 'राजानं प्रत्याह' इति शेषः। "कस्तस्य धर्मदारपरित्यागिनो नाम ग्रहीष्यति" इति संस्कृतम्।

अत्र दुष्यन्तस्य परिवादसूचनात्परिभाषणम्।

( १९ ) ......... लब्धार्थशमनं कृतिः ।

( २० ) यथा वेण्याम्—"कृष्णः । एते भगवन्तो व्यास-वाल्मीकिप्रभृतयोऽभिषेकं धारयन्तस्तिष्ठन्ति" इति ।

( २१ ) अनेन प्राप्तराज्यस्याभिषेकमङ्गलैः स्थिरीकरणं कृतिः ।

( २२ ) शुश्रूषादिः प्रसादः स्यात्—

( २३ ) यथा तत्रैव भीमेन द्रौपद्याः केशसंयमनम् ।

( २४ ) ......... आनन्दो वाञ्छितागमः ॥

( २५ ) यथा तत्रैव-"द्रौपदी । विसुमरिदं एदं वावारं णाधस्स पसादेण पुणोवि सिक्खिस्सं ।"

यथा च वेणीसंहारे-' भीमः-"कृष्ण ! येनासि राज्ञां सदसि नृपशुना तेन दुःशासनेन" इत्यादिना क्वासौ भानुमती योऽपहसति पाण्डवदारान्" इत्यन्तेन परिवादसूचनात्परिभाषणम् ।

( १९ ) कृतिरूपमङ्गं लक्षयति—लब्धार्थेति । लब्धैरर्थैः उपलब्धविषयैरित्यर्थः शमनं शोकादिनाशनं शोकादि निवार्य चेतसः स्थिरीकरणमित्यर्थः, कृतिर्नामाङ्गं स्यात् ।

मन्दारमरन्देऽपि—कृतिरित्युच्यते पूर्वैर्लब्धार्थस्य स्थिरीकृतिः, इति ।

( २० ) उदाहरति—यथेति । अभिषेकम् अभिषेकसामग्रीं धारयन्तः प्रापयन्तः । धारयन्तीति क्वचित् पाठः ।

( २१ ) लक्ष्ये लक्षणं सङ्गमयितुमाह—अनेनेति । प्राप्तराज्यस्येत्यस्य प्राप्तराज्ये इत्यर्थः षष्ठी तु सम्बन्धे । स्थिरीकरणं राज्यलाभसूचनेन चेतसः स्थैर्योत्पादनम् ।

यथा च रत्नावल्याम्—"राजा—को देव्याः प्रसादं न बहुमन्यते । वासवदत्ता—

अज्जउत्त ! दूरेसे मादुउलम् । ता तधा करेसु जधा बन्धुअणं न सुमरेदि" इत्यन्योन्यवचसा लब्धायां रत्नावल्यां राज्ञः सुश्लिष्टये उपशमनात्कृतिः ।

अन्ये पुनरस्य स्थाने प्राप्तस्य प्रातिकूल्यशमनं द्युतिमाहुः । यथा मुद्राराक्षसे "चाणक्यः—अमात्यराक्षस ! अपीष्यते चन्दनदासस्य जीवितम्" इत्यादिना "का गतिरेष गृह्णामि" इत्यन्तेन लब्धस्य राक्षसस्य साचिव्यग्रहणवामताप्रशमनात् द्युतिः ।

( २२ ) प्रसादरूपमङ्गं लक्षयति—शुश्रूषादिरिति । शुश्रूषा करादिना सेवा आदिपदाच्चामरव्यजनादिश्च प्रसीदत्यनेनेति प्रसादो नामाङ्गं स्यात् ।

उक्तं च भरतेन—शुश्रूषाद्युपसंपन्ना प्रसादः प्रीतिरुच्यते इति । मन्दारमरन्देऽपि—स्याच्छुश्रूषादिसम्भूता प्रसादस्तु प्रसन्नता, इति ।

( २३ ) उदाहरति—यथेति । स्पष्टम् । यथा वा रत्नावल्याम्—"देव ! क्षम्यताम्" इत्यादि ।

( २४ ) आनन्दरूपमङ्गं लक्षयति—आनन्द इति । वाञ्छितागमः अभिलषितप्राप्तिजन्या प्रीतिः आनन्दो नामाङ्गं भवेत् । तदुक्तं भरतेन—समागमस्तु योऽर्थानामानन्दः स तु कीर्त्तितः, इति । मन्दारमरन्देऽपि—अभीप्सितार्थसंप्राप्तिरानन्दः परिकीर्त्तितः, इति ।

( २५ ) उदाहरति—यथेति । "विस्मृतमेनं व्यापारं नाथस्य प्रसादेन पुनरपि शिक्षिष्ये" इति संस्कृतम् । एनं व्यापारं केशसंयमनरूपम् । प्रसादेन बन्धनरूपेण ।

( २६ ) समयो दुःखनिर्याणम्—

( २७ ) यथा रत्नावल्याम्--"वासवदत्ता। ( रत्नावलीमालिङ्ग्य ) समस्सस बहीणिए। समस्सस।"

( २८ ) ... ... तद्भवेदुपगूहनम्।

यत् स्यादद्भुतसम्प्राप्तिः —

( २९ ) यथा मम प्रभावत्यां नारददर्शनात् प्रद्युम्न ऊर्ध्वमवलोक्य---

दधद्विद्युल्लेखामिव कुसुममालां परिमल-
भ्रमद्भृङ्गश्रेणीध्वनिभिरुपगीतां तत इतः।
दिगन्तं ज्योतिर्भिस्तुहिनकरगौरैर्धवलय-
न्नितः कैलासाद्रिः पतति वियतः किं पुनरिदम् ॥

---

अत्र वेणीसंयनरूपाभिलाषितप्राप्तिजन्यप्रीतिरानन्दः। यथा च रत्नावल्याम्—"राजा—यथाह देवी। ( रत्नावलीं गृह्णाति )। अत्रेप्सितरत्नावलीप्राप्तत्वादानन्दः।

( २६ ) समयरूपमङ्गं लक्षयति—समय इति। दुःखस्य निर्याणम् अपगमः विसर्जनमिति यावत्। समयो नामाङ्गं भवेत्।

मन्दारमरन्दे तु—समयः स्यात्सुखावाप्तिर्दुःखप्रशनं च वा, इति।

( २७ ) उदाहरति—यथेति। "समाश्वसिहि भगिनि! समाश्वसिहि।" इति संस्कृतम्। इयं सागरिकायाः मातुलकन्यकात्वेन परिचये सति वासवदत्ताया उक्तिः। अत्र रत्नावल्या दुःखापगमात् समयः। यथा च वेणीसंहारे "भगवन्! कुतस्तस्य विजयादन्यद्यस्य भगवान् पुराणपुरुषः स्वयमेव नारायणो मङ्गलान्याशास्ते।

कृतगुरुमहदादिक्षोभसंभूतमूर्त्तिं
गुणिनमुदयनाशस्थानहेतुं प्रजानाम्।
अजममरमचिन्त्यं चिन्तयित्वाऽपि न त्वां
भवति जगति दुःखी किं पुनर्देव! दृष्ट्वा ॥

इत्यनेन युधिष्ठिरदुःखापगमात् समयः।

( २८ ) उपगूहनरूपमङ्गं लक्षयति—तद्भवेदिति। यत् अद्भुतस्य विस्मय-स्थायिभावात्मकाद्भुतरसस्य संप्राप्तिः उपलब्धिः तत् उपगूहनं नामाङ्गं भवेत्।

मन्दारमरन्देऽपि—

अद्भुतार्थस्य संप्राप्तिरुपगूहनमुच्यते, इति।

( २९ ) उदाहरति—यथेति। ऊर्ध्वम् आकाशे, अवलोक्य अवतरन्तं नारदमिति शेषः। दधद्विद्युदिति। परिमलेन पुष्पविमर्दनादुत्थितसुगन्धेन "विमर्दोत्थे परिमले गन्धो जनमनोहरे इत्यमरः, भ्रमन्तीनां भृङ्गश्रेणीनां भ्रमरपंक्तीनाम् "वीथ्यालिरावलिः पंक्तिः श्रेणीलेखास्तु राजयः" इत्यमरः। ध्वनिभिः झंकृतिभिः उपगीताम् उपशब्दिताम्, तथा विद्युल्लेखामिव विद्युत्पंक्तिमिव देदीप्यमानामिति शेषः, कुसुममालां पुष्पमयीमालां, दधत् धारयन्, तथा तुहिनकरगौरैः शशीतुल्यस्वच्छवर्णैः ज्योतिर्भिः शरीरकान्तिभिः तत इतःसर्वतः दिगन्तं धवलयन् वलक्षयन् कैलासाद्रेरपेतो वियतोऽआकाशादवधेः पतति कश्चित्पदार्थ इति शेषः। कैलासाद्रेरित्यपाये पञ्चमी कैलासाद्रिरिति प्रामादिकः पाठः,

( ३० ) ......... ...  सामदानादि भाषणम् ॥

( ३१ ) यथा चण्डकौशिके—'धर्मः--तदेहि धर्मलोकमधितिष्ठ' ।

( ३२ ) पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थोपदर्शनम् ॥ ११३ ॥

( ३३ ) यथा वेण्याम्--'भीमः—बुद्धिमतिके ! क्व सा भानुमती । परिभवतु संप्रति पाण्डवदारान् ।'

---

तस्य कुसुममालाधारणाभावात् । इदं पुनः किमाश्चर्यमित्यर्थः । शिखरिणीच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

अत्र नारदस्याद्भुतप्राप्तेरुपगूहनम् ।

यथा वा वेणीसंहारे (नेपथ्ये) महासमरानलदग्धशेषाय स्वस्ति भवते राजन्यलोकाय ।

क्रोधान्धैर्यस्य मोक्षात्क्षतनरपतिभिः पाण्डुपुत्रैः कृतानि
प्रत्याशं मुक्तकेशान्यनुदिनमधुना पार्थिवान्तः पुराणि ।
कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां
दिष्ट्या बद्धः प्रजानां विरमतु निधनं स्वस्ति राजन्यकेभ्यः ॥

युधिष्ठिरः—देवि ! एस ते मूर्धजानां संहारोऽभिनन्दितो नभस्तलचारिणा सिद्धजनेन" । इत्येतेनाद्भुतार्थप्राप्तिरुपगूहनम् । लब्धार्थशमनात्कृतिरपि ।

( ३० ) भाषणरूपमङ्गं लक्षयति—सामदानेति । साम सन्तोषजनकं वचनं दानादि च आदिपदेन प्रियहितादिपरिग्रहः भाषणं नाममाङ्ग स्यात् ।

उक्तं च भरतेन—सामदानादिसम्पन्नं भाषणं समुदाहृतम् , इति ।

मन्दारमरन्दे तु—प्राप्तकार्यानुमोदः स्याद्बुधैर्भाषणमीरितम् , इति ।

( ३१ ) उदाहरति—यथेति । स्पष्टम् । अत्र तदेहीति सन्तोषजनकवचनाद् धर्मलोकस्य दानाच्च भाषणम् । यथा च मृच्छकटिकाम्—आर्यकराजाज्ञया शार्वलिकश्चारुदत्तमाह —

त्वद्यानं यः समारुह्य गतस्ते शरणं पुरा ।
पशुवद्विद्यते यज्ञे हतस्तेनाद्य पालकः ॥

इत्यादिना शार्वलिकः—एवं यथाहार्यः, इत्यन्तेन साम–दान–प्रिय–हितजनकवचनाद्भाषणम् ।

( ३२ ) पूर्ववाक्यरूपमङ्गं लक्षयति—पूर्ववाक्यन्त्विति । यथोक्तार्थोपदर्शनं परेण यथोक्तकटुवाक्यस्य स्मरणं मुखसन्ध्याद्युक्तवाक्यसदृशवाक्यदर्शनं वा पूर्ववाक्यं नामाङ्गं विज्ञेयम् । उक्तं च महर्षिणा–पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थप्रदर्शनम् , इति

( ३३ ) उदाहरति –यथेति । बुद्धिमतिके ! ( तदाख्येयं चेटी ) भानुमती दुर्योधनस्य पत्नी तया दासीद्वारा प्राक् कटूक्तिः कृतेति पूर्ववाक्यम् ।

यथा च मुद्राराक्षसे—

चाणक्यः—(पुरुषं प्रति) इदं च वक्तव्यो दुर्गपालः अमात्यराक्षसप्रीतो देवश्चन्द्रगुप्तः समाज्ञापयति । विना हस्तिभ्यां क्रियतां सर्वबन्धनमोक्ष इति । अथवा अमात्यराक्षसे नेतरि किं हस्तिभिः प्रयोजनम् ?

विना वाहनपोताभ्यां मुच्यतां सर्वबन्धनम् ।
पूर्णप्रतिज्ञेन मया केवलं बध्यते शिखाः ॥

( ३४ ) **वरप्रदानसंप्राप्तिः काव्यसंहार इष्यते ।**

( ३५ ) यथा सर्वत्र—'किं ते भूयः प्रियमुपकरोमि ।' इति ।

( ३६ ) **नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते ॥ ११४ ॥**

( ३७ ) यथा प्रभावत्याम्—

राजानः सुतनिर्विशेषमधुना पश्यन्तु नित्यं प्रजा
जीयासुः सदसद्विवेकपटवः सन्तो गुणग्राहिणः
शस्यस्वर्णसमृद्धयः समधिकाः सन्तु क्ष्मामण्डले
भूयादव्यभिचारिणी त्रिजगतो भक्तिश्च नारायणे ॥

---

अत्र मुखे यदुपक्षिप्तम् "वध्यः को नेच्छति शिवां मे" इति तदेव भङ्ग्यन्तरेण प्रदर्शितम् ।

( ३४ ) काव्यसंहाररूपमङ्गं लक्षयति—वरप्रदानेति । वरप्रदानस्य अभिलषितविषयदानेच्छायाः सम्प्राप्तिरुपस्थितिः तत्र सति सर्वस्मिन्नेवेप्सिते सम्पन्ने प्रस्तुतकाव्यमेव संह्रियत इति काव्यसंहारो नामाङ्गम् इष्यते । मन्दारमरन्दे—उपसंहार इत्युक्तः कार्यार्थस्योपसंहृतिः, इति ।

( ३५ ) उदाहरति—यथेति । सर्वत्रेति प्रायेण दृश्यकाव्ये । स च प्रतिगृहीते वरेऽप्रतिगृहीते च वरे काव्योपसंहारः । यथा कृत्यारावणे सीतारक्षणे रामस्य प्रिये हिते च महति कर्मणि कृतेऽप्यसन्तुष्यन्नग्निराह—"वत्स ! उच्यतां किं ते भूयः प्रियमनुकरोमि" "रामः भगवन् ! अतः परमपि प्रियमस्ति ?" इति ।

यथा वा यादवाभ्युदये—

"युधिष्ठिरः—देव ! किमतः परं प्रार्थ्यते यदूनाम् ? । समुद्रविजयः-( साश्चर्यम् ) किमतः परमपि प्रार्थनीयमस्ति

त्रातो घोषभुवां विधृत्य मधुजित् कंसः क्षयं लम्भितः
सम्प्रत्येव विनिर्मितं मगधभूभर्त्तुः कबन्धं वपुः ।
पादाक्रान्तमजायतार्द्धभरतं तद्ब्रूहि नः किं परम् ?
श्रेयोऽस्मादपि पाण्डवेश ! पुनरप्याशास्महे यद्वयम् ॥

अनयोरप्रतिगृहीते वरे काव्योपसंहारः । वरस्य प्रतिग्रहश्चेन्दुलेखायां नाटिकायां द्रष्टव्यम् ।

( ३६ ) प्रशस्तिरूपाङ्गं लक्षयति—नृपादेशादीति । नृपस्य, देशस्य, आदिपदाद्देवतादीनां च शान्तिः स्वस्त्ययनम् आशीर्वाद इत्यर्थः, प्रशंसा उक्तिः प्रशस्तिर्नामाङ्गम् अभिधीयते । नृपस्येति देशस्येति च कर्तृत्वसम्बन्धषष्ठ्याः अधिकरणत्वसम्बन्धषष्ठ्याश्च समासो ज्ञेयः । मन्दारमरन्देऽपि – शुभप्रशंसनं धीरैः प्रशस्तिरिति कथ्यते, इति ।

( ३७ ) उदाहरति—यथेति । राजान इति । अधुना राजानः नित्यं सर्वदैव प्रजाः जनान् "प्रजाः स्यात् सतन्तौ जने" इत्यमरः । सुतनिर्विशेषं पुत्रानिवेति तात्पर्यम्, यथा-स्यात्तथा पश्यन्तु । सदसद्विवेके पटवः समर्थाः गुणग्राहिणः परेषां दोषानगृहीत्वा गुणान् ग्रहीतारः सन्तः शिष्टा जना जीयासुः जयन्तु उत्कर्षभाजो भवन्त्वित्यर्थः । क्ष्मामण्डले पृथ्वीमण्डले शस्यानां स्वर्णानां सुवर्णानां च समृद्धयः सम्पदः समधिकाः सन्तु । स्वर्णानां

( ३८ ) अत्र चोपसंहारप्रशस्त्योरन्त एकेन क्रमेणैव स्थितिः ।

( ३९ ) 'इदं च मुखसंधौ उपक्षेपपरिन्यासयुक्त्युद्भेदसमाधानानां, प्रतिमुखे च परिसर्पणप्रगमनवीजोपन्यासपुष्पाणां, गर्भेऽभूताहरणमार्गत्रो (तो) टकाधिबलक्षेपाणां, विमर्शेऽपवादशक्तिव्यवसायप्ररोचनादानानां प्राधान्यम् । अन्येषां च यथासंभवं स्थितिरिति केचित् ।

मितिपदमुपलक्षणं तेन धनसामान्यस्य ग्रहणम् । नारायणे परमात्मनि त्रिजगत भुवनत्रयवासिनो जनस्य अव्यभिचारिणी अनैकान्तिकी अकदाचित्कीत्यर्थः, भक्तिश्च भूयात् । भक्तिर्नाम—

द्रुतस्य भगवद्धर्माद्धारावाहिकतां गतः ।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते ॥

शार्दूलविक्रीडितंछन्दस्तल्लक्षणन्तूक्तं प्राक् ( १९८ पृ० )

अत्र नृपदेशादिशान्त्यादेराशंसनात् प्रशस्तिः ।

( ३८ ) लक्ष्ये लक्षणं योजयितुमाह—अत्र चेति । काव्यसंहाररूपमङ्गमुपसंहारः । अन्ते नाटकान्ते उपसंहारप्रशस्त्योरेकेन निर्दिष्टक्रमेणैव स्थितिरुपस्थितिरित्यर्थः ।

यथा च वेणीसंहारे "प्रीततरश्चेद् भवान्, तदिदमेवमस्तु—

अकृपणमतिः कामं जीव्याज्जनः पुरुषायुषं
भवतु भगवद्भक्तिर्द्वैतं विना पुरुषोत्तमे ।
कलितभुवनो विद्वद्बन्धुर्गुणेषु विशेषवि-
त्सततसुकृती भूयाद्भूपः प्रसाधितमण्डलः ॥ इति ।

अत्रापि जनादीनां शुभशंसनात् प्रशस्तिः । इत्येतानि चतुर्दशनिर्वहणसन्धेरङ्गानि

अत्राहुर्नाट्यदर्पणकाराः—

"सर्वसन्धीनां चाङ्गानीतिवृत्ताविच्छेदार्थमुपादीयन्ते । इतिवृत्तस्याविच्छेदश्च रसपुष्ट्यर्थः । विच्छेदे हि स्थाय्यादेस्त्रुटितत्वात् कुतस्त्यो रसास्वादः? ततो रसविधानैकतानचेतसः कवेः प्रयत्नान्तरानपेक्षं यदङ्गमुज्जृम्भते तदेवोपनिवद्धं सहृदयानां हृदयमानन्दयति । अङ्गानि च स्थायिविभावानुभाव-व्यभिचारिरूपाणि द्रष्टव्यानि । अमीषां च स्वसन्धौ सन्ध्यन्तरे च योग्यतया निवन्धः । योग्यतां च रसनिवेशैकव्यवसायिनः प्रबन्धकवयो विदन्ति न पुनः शब्दार्थग्रथनवैचित्र्यमात्रोन्मदिष्णवो मुक्तककवयः । तेनैकमप्यङ्गं रसपोषकत्वादेकस्मिन्नपि सन्धौ द्विस्त्रिर्वा निबध्यते । यथा वेणीसंहारे सम्फेटविद्रवौ पुनः पुनर्दर्शितौ वीररौद्ररसावुद्दीपयतः । रत्नावल्यां विलासः पुनः पुनरुक्तः शृङ्गारमुल्लासयति । अतः परमपि निवन्धस्तु वैरस्यमावहतीति । तथाङ्गद्वयेन साध्यं यदेकेनैव सिध्यति तदेकमेव निवध्यते । यथा श्रीभीमदेवसूनोर्मसुनागस्य कृतौ प्रतिमानिरुद्धे परिकरार्थस्योपक्षेपेणैव गतार्थत्वान्न तन्निवन्धः । एवमङ्गत्रयेणापि । यथा भेज्जलविरचिते राधाविप्रलम्भे रासकाङ्के परिकरपरिन्यासयोरुपक्षेपेणैव गतार्थत्वान्न तन्निवन्ध' इति ।

( ३९ ) सन्धिषु यान्यङ्गान्युक्तानि तेषु कतिचिदङ्गान्येव आवश्यकत्वेन प्रधानानीति केचिदाहुः । सन्धौ सन्धौ च तानि दर्शयति—इह चेति । नाटकादौ दृश्यकाव्ये चेत्यर्थः । प्राधान्यमिति प्राधान्यात् तत्तत्सन्धावयश्यं कर्त्तव्यत्वेन स्थितिः । अन्येषां विलोभनादीनामित्यर्थः ।

( ४० ) चतुःषष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः ।
कुर्यादनियते तस्य सन्धावपि निवेशनम् ॥ ११५ ॥
रसानुगुणतां वीक्ष्य रसस्यैव हि मुख्यता ।

( ४१ ) यथा वेणीसंहारे तृतीयाङ्के दुर्योधनकर्णयोर्महत्संप्रधारणम् । एवमन्यत्रापि ।

( ४२ ) यत्तु रुद्रटादिभिः 'नियम एव' इत्युक्तं तल्लक्ष्यविरुद्धम् ।

( ४३ ) इष्टार्थरचनाश्चर्यलाभो वृत्तान्तविस्तरः ॥ ११६ ॥
रागप्राप्तिः प्रयोगस्य गोप्यानां गोपनं तथा ।
प्रकाशनं प्रकाश्यानामङ्गानां षड्विधं फलम् ॥ ११७ ॥
अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत् ।
अङ्गहीनं तथा काव्यं न प्रयोगाय युज्यते ॥ ११८ ॥

---

( ४० ) स्वसिद्धान्तमुपन्यस्यति—चतुःषष्टिविधमिति । प्रार्थनाप्रशस्त्योर्मतभेदेन वैकल्पिकस्योक्तत्वात् । मुखसन्ध्यादेरङ्गानि मिलित्वा एतच्चतुःषष्टिविधम् अङ्गं मनीषिभिः प्रोक्तम् । प्रार्थनाप्रशस्त्ययोः समुच्चये तु पञ्चषष्टित्वापत्तेरित्युक्तं प्रागेव ।

रसानुगुणानुरोधेन तु एकसन्धेरङ्गानि अन्यसन्ध्यादावपि कुर्यादित्याह—कुर्यादनियते इति । रसस्यानुगुणताम् आनुकूल्यं वीक्ष्य कविः अनियते अकथितेऽपि सन्धौ तस्याङ्गस्य निवेशनं कुर्यात् । एवं च सति हि रसानुकूल्ये मुखसन्ध्यादिकथितविलोभनादीन्यङ्गानि प्रतिमुखसन्ध्यादावपि कविः प्रयोक्तुं शक्नोतीति भावः । तत्र हेतुः—रसस्यैवेति । हि यतः रसस्यैव मुख्यता शब्दार्थाङ्गादिमध्ये प्राधान्यम् । अतो मुख्यपुष्ट्यनुरोधेन गौणानां व्यत्यासोऽपि युज्यत एवेति भावः ।

( ४१ ) उदाहरति—यथेति । तृतीयाङ्के गर्भसन्ध्यन्तर्भूते इत्यर्थः । सम्प्रधारणमिति मुखसन्धेर्युक्तिरूपमङ्गसम्प्रधारणं तच्च गर्भसन्धावपि कृतमित्यर्थः । तत्र दुर्योधनकर्णाभ्यां युक्तिकरणात् । एवमन्यत्रापीति । तद्वर्णितमिति भावः ।

( ४२ ) अत्र मतान्तरं दूषयितुमुत्थापयति—यत्त्विति । (क) रुद्रटादिभिरिति । काव्यालङ्कारादिप्रणेतृभिः नियम एव यथोक्तैरङ्गैर्यथोक्तास्वेव सन्धिषु उपन्यसनीयमेतादृशनियम एवेत्यर्थः । तल्लक्ष्यविरुद्धमिति । लक्ष्येषु उदाहरणनाटकेषु अनियमदर्शनाद्विरुद्धमित्यर्थः । यथोदाहृतं महत्संप्रधारणमिति ।

( ४३ ) इदानीमुक्तानामङ्गानां यथासम्भवं षट्फलान्याह—इष्टार्थरचनेति । इष्टार्थस्य ईप्सितविषयस्य रचना आश्चर्यलाभो द्रष्टुरद्भुतवस्तुप्राप्तिः, वृत्तान्तविस्तरः उपाख्यानस्य विस्तरेण ज्ञानम् , प्रयोगस्य अभिनयस्य विषये रागप्राप्तिः द्रष्टुरनुरागोत्पत्तिः गोप्यानां विषयाणां गोपनम् , तथा प्रकाश्यानां विषयाणां प्रकाशनम् एतत् षड्विधम् अङ्गानाम् उपक्षेपादीनां फलं प्रयोजनम् ।

यथा काव्यार्थोत्पत्तिरूपस्य उपक्षेपरूपस्य मुखसन्ध्यङ्गस्य इष्टानुसरणं फलम् , एवमन्याङ्गानामन्यानि पञ्च फलानि यथासम्भवं नाटकेषु अनुसन्धेयानि ।

नाट्ये प्रयोगे अङ्गानामावश्यकत्वं दर्शयति—अङ्गहीन इति । यद्वत् अङ्गहीनो नेत्रा-

---

(क) इदानीन्तनप्रचलितपाठे सन्दर्भोऽयं नोपलभ्यते ।

**संपादयेतां संध्यङ्गं नायकप्रतिनायकौ ।**
**तदभावे पताकाद्यास्तदभावे तथेतरत् ॥ ११६ ॥**

( ४४ ) प्रायेण प्रधानपुरुषप्रयोज्यानि संध्यङ्गानि भवन्ति । किंतूपक्षेपादित्रयं बीजस्याल्पमात्रसमुद्दिष्टत्वादप्रधानपुरुषप्रयोजितमेव साधु ।

**( ४५ ) रसव्यक्तिमपेक्ष्यैषामङ्गानां संनिवेशनम् ।**
**न तु केवलया शास्त्रस्थितिसंपादनेच्छया ॥ १२० ॥**

---

द्यङ्गविकलो नरो न आरम्भक्षमः कार्यारम्भसमर्थो न भवेत्, तथा अङ्गैरुक्तैः सन्ध्यङ्गैर्हीनं काव्यं नाटकं प्रयोगाय प्रेक्षकानुरागाय न युज्यते नोपयोगि भवति ।

सम्पादयेतामिति । नायकप्रतिनायकौ सन्ध्यङ्ग सम्पादयेतां वचसा विधेयाताम् । अनेन सन्ध्यङ्गसम्पादकौ प्रथमतस्तावित्युक्तम् । तदभावे ताभ्यां सन्ध्यङ्गसम्पादनासम्भवे पताका आद्यपदात्कार्यप्रभृतीरर्थप्रकृतीः सम्पादयेताम्, पताका च "व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते" इत्यनेन नायकस्य वृत्तं पताकेत्युक्तम्, तस्याऽप्यभावे तथा इतरत् बीजं बिन्दुं वा सम्पादयेताम् ।

( ४४ ) विवृणोति—प्रायेणेति । प्रधानेति । एतेन नायकप्रतिनायकाविति पदद्वयं प्रधानपात्रमात्रोपलक्षणमिति प्रकटितम् । अत्र ततः—उपक्षेपाद्यङ्गत्रयस्य च प्रधाननायकेतरेण समुद्दिष्टत्वे एव साधुता इत्यत आह—किन्तूपक्षेपादीति । तत्र हेतुमाह—बीजस्येति । प्रधानेतिवृत्तिरूपस्य काव्यार्थस्य यन्मूलं तद्बीजं तस्याल्पमात्रसमुद्देशस्योपक्षेपकाद्यङ्गत्रयेण कृतत्वादप्रधानपुरुषभीमसेनादिसमुद्दिष्टत्वमेव साध्वित्यर्थः । प्रधानपुरुषस्य धीरोदात्तत्वेन कर्तव्येतिवृत्तबीजसमुद्देशस्याल्पस्यापि तेन करणानौचित्यादिति भावः । तथाहि काव्यार्थस्य समुत्पत्तिरूपं यदुपक्षेपरूपमङ्गं तेन वेण्यां "लाक्षागृहानले" त्यादिभीमोक्त्या कुरुकुलवधरूपकाव्यार्थस्य तस्य बीजसमुत्पत्तिः प्रतिपादिता । समुत्पन्नार्थबाहुल्यं यत्परिकरात्मकमङ्गं तेन "प्रवृद्धं यद्वैरं मम" इत्यादिभीमोक्त्या तद् बाहुल्यं प्रतिपादितम् । काव्यार्थनिष्पत्तिकथनरूपं यत् परिन्यासात्मकमङ्गं तेन "चञ्चद्भुजे" त्यादिभीमोक्त्या निष्पत्तिः प्रतिपादिता । एतत् त्रयञ्च प्रधाननायकोक्तं तदधीरतापादकं स्यात् । नच समुत्पन्नार्थबाहुल्यकाव्यार्थनिष्पत्त्योः कथं बीजस्याल्पसमुद्दिष्टत्वमिति वाच्यम्, असमस्तोद्दिष्टस्यैवाल्पोद्दिष्टत्वमित्यभिप्रायात् । बीजोद्देशमात्रादेव नायकस्य धीरोदात्तत्वभङ्ग इत्यत्र एव तात्पर्यादित्याह ।

( ४५ ) सर्वत्र रसव्यक्तिमपेक्ष्यैवाङ्गानां सन्निवेशः कर्त्तव्यः न त्वेतन्नाट्यशास्त्रोक्तरक्षणेच्छयेत्यभिप्रायेणाऽऽह -रसव्यक्तिमिति । रसस्य व्यक्तिं व्यञ्जनम् अपेक्ष्य कविः एषामङ्गानां सन्निवेशनं संस्थापनं कुर्यादिति शेषः । तु किन्तु केवलया शास्त्रस्थितिसम्पादनेच्छया एतन्नाट्यशास्त्रोक्तिरक्षणाभिलाषया अङ्गानां सन्निवेशनं न कुर्यादित्यर्थः । नाटकीयरसव्यक्तेरसम्भवे प्रधानाभावेनाप्रधानं नाट्यशास्त्रोक्तमङ्गमपि नोपन्यसनीयमिति भावः ।

उक्तञ्च ध्वनिकृता—

सन्धिसन्ध्यङ्गघटनं रसादिव्यक्त्यपेक्षया ।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥ इति ।

( ४६ ) तथा च यद्वेण्यां दुर्योधनस्य भानुमत्या सह विप्रलम्भो दर्शितः, तत्ता-दृशेऽवसरेऽत्यन्तमनुचितम् ।

**( ४७ ) अविरुद्धं तु यद्वृत्तं रसादिव्यक्तयेऽधिकम् ।**
**तदप्यन्यथयेद्धीमान्न वदेद्वा कदाचन ॥ १२१ ॥**

( ४८ ) अनयोरुदाहरणं सत्प्रबन्धेष्वभिव्यक्तमेव ।

( ४९ ) अथ वृत्तयः—

**शृङ्गारे कौशिकी वीरे सात्त्वत्यारभटी पुनः ।**
**रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ॥ १२२ ॥**

यद्यपीदं प्रागप्युक्तं तथापि रसव्यक्त्यनपेक्षया करणे दोषत्वप्रतिपादनाय पुनरुक्तम् ।

( ४६ ) तथा चेति । विप्रलम्भः शृङ्गारः । दर्शित इति । केवलनाट्यशास्त्रस्थितिसम्पादनेच्छया प्रतिमुखसन्धेरङ्गसमूहसंनिवेशनार्थं कविना उपस्थापित इत्यर्थः । तादृशेऽवसरे सङ्ग्रामलक्षणे वीररसे इत्यर्थः । अत्यन्तमनुचितम् रसव्यक्त्यनपेक्षया निवेशनं तु नोचितमेवेत्यर्थः । नचाङ्गसन्निवेशनानौचित्ये दर्शयितव्ये रसनिवेशनानौचित्यप्रदर्शनमिदमसम्बद्धमिति वाच्यम्, अङ्गहीनरसाभावेन विप्रलम्भप्रदर्शनादेव तदङ्गस्यापि प्रदर्शनात् ।

( ४७ ) अविरुद्धन्त्विति । यद्वृत्तं वृत्तान्तस्तु रसादिव्यक्तये रसभावादिव्यञ्जनाय अविरुद्धम् अनुकूलम्, अपि च अधिकम् अनुपयोगि भवति, धीमान् कविः तदपि अन्यथयेत् प्रकारान्तरं नयेत् उपक्रान्तरसाविरुद्धतया प्रतिपादयेदित्यर्थः । वा अथवा तदसम्भवे तु कदाचनापि न वदेत् तदुपेक्ष्यैव रसोपयोगि यथास्यात्तथा वृत्तान्तरं वर्णयेदित्यर्थः ।

( ४८ ) अनयोरिति । अन्यथाकरणाकरणयोरित्यर्थः । सत्प्रबन्धेषु शकुन्तलाद्युत्कृष्टनाटकेष्वित्यर्थः । यथा शाकुन्तले विशेषेण विप्रलम्भाभिव्यञ्जनाय "तस्मात्त्वं सर्वदा भर" इति महाभारतोपवर्णिताकाशवाण्या शकुन्तलापरिग्रहोदन्तं त्यक्त्वा शकुन्तलाया अन्तर्धानमेव कविना उपन्यस्तमित्यन्यथाकरणम् । वेणीसंहारे तु कर्णपर्वीयराजहंस–काकोदन्तादीनां सर्वथैवानुपन्यासः ।

( ४९ ) नाटकवृत्तीः प्रदर्शयितुमाह—अथेति । शृङ्गार इति । शृङ्गारे रसे कौशिकीनामवृत्तिः शृङ्गारप्रतिपादिका वृत्तिः कौशिकीत्यर्थः । वीरे रसे सात्त्वतीनामवृत्तिः वीरप्रतिपादिकावृत्तिः सात्त्वतीत्यर्थः । रौद्रे बीभत्से च रसे पुनरारभटीनामवृत्तिः, रौद्रबीभत्सप्रतिपादिकावृत्तिरारभटीत्यर्थः । सर्वत्र अन्येषु रसेषु भारतीनामवृत्तिः स्यात् । नायिकादीत्यत्रादिपदेन नायकप्रतिनायकादिसमस्तपात्रपरिग्रहः तथा च नायिकादीनां पात्राणां व्यापारविशेषाश्चेष्टाविशेषरूपाः, सर्वनाट्यस्य सकलप्रकाराभिनयस्य मातृका मातृवदुपजीव्या मूलभूता जनन्य इति यावत्, एताश्चतस्रो वृत्तयो नाटकादिषु नाटकप्रकरणादि दशरूपकेषु नाटिकाद्यष्टादशोपरूपकेषु च स्युः । आसां मध्ये कविः शृङ्गाररसप्रधानं नाटिकादिकं कौशिकीं वृत्तिमाश्रित्य वर्णयेदित्यर्थः । एवमन्यत्रापि । कौशिकीवृत्तिश्च सामत्रेदो स्पष्टा तदुक्तं भरतेन—

**चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः ।**
**स्युर्नायिकादिव्यापारविशेषा नाटकादिषु ॥ १२३ ॥**

( ५० ) तत्र कौशिकी--

( ५१ ) **या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसंकुला पुष्कलनृत्यगीता ।**
**कामोपभोगप्रभवोपचारा सा कौशिकी चारुविलासयुक्ता ॥ १२४ ॥**

( ५२ ) **नर्म च नर्मस्फूर्जो नर्मस्फोटोऽथ नर्मगर्भश्च ।**
**चत्वार्यङ्गान्यस्या—**

तत्र--

( ५३ ) ·········**वैदग्ध्यक्रीडितं नर्म ॥ १२५ ॥**

---

ऋग्वेदाद्भारतीवृत्तिर्यजुर्वेदात्तु सात्त्वती ।
कौशिकी सामवेदाच्च शेषा चाथर्वणी तथा ॥ इति ।

तत्र वर्त्तते रसोऽनयेति नायिकादिचेष्टाविशेषो वृत्तिरिति वृत्तिलक्षणम् । कौशिक्यादिशब्दास्तु गोमण्डलादिवत्तद्विशेषे रूढाः । कैशिकीति पाठे तु अतिशायिनः केशाः सन्ति आसामिति केशिकाः स्त्रियः "स्तनकेशवतीत्वं" हि स्त्रीणां लक्षणम् । तत् प्रधानत्वात् तासामियं कैशिकीति व्युत्पत्तिर्ज्ञेया .सर्वप्रथमश्रृङ्गाररससम्बन्धिवृत्तेरेव प्रथमं बुद्धिविषयत्वात् नायिकायाश्च तत्प्रयोजकत्वात् नायिकादिव्यापारेत्यभिहितम् ।

ध्वन्यालोके अभिनवगुप्तपादास्तु—वर्त्तन्ते अनुप्रासभेदा आसु इति वृत्तयः ।

सरूपव्यञ्जनन्यासं तिसृष्वेतासु वृत्तिषु ।
पृथक् पृथगनुप्रासमुशन्ति कवयस्तदा ॥

पृथक् पृथगिति परुषानुप्रासः, उपनागरिकानुप्रासः, कोमलानुप्रास इति वृत्तयोऽनुप्रासजातय एव इत्याहुः ।

सरस्वतीकण्ठाभरणे तु—

या विकाशेऽथ विक्षेपे सङ्कोचे विस्तरे तथा ।
चेतसो वर्त्तयित्री स्यात् सा वृत्तिः साऽपि षड्विधा ॥
कौशिक्यारभटीचैव सात्त्वती भारती तथा ।
मध्यमारभटी चैव तथा मध्यमकौशिकी ॥ इति ।

( ५० ) तासां यथाक्रमं विशेषलक्षणान्यभिधातुमाह—तत्रेति ।

( ५१ ) या श्लक्ष्णेति । श्लक्ष्णेन मनोरमेण नेपथ्यविशेषेण नायिकादिभूषणविशेषेण चित्रा शोभातिशयशालिनी स्त्रीसंकुला स्त्रीबहुला पुष्कलानि विपुलानि नृत्यगीतानि यस्यां सा तथोक्ता.कामेन मदनेन हेतुना य उपभोगः सम्भोगस्तत्प्रभवाः कारणानि उपचाराश्चन्द्रचन्दनवनसारादयो यस्यां सा तथोक्ता तथा चारुभिर्विलासैः पूर्वोक्तस्वरूपैर्युक्ता या वृत्तिः सा कौशिकी स्यात् । नाट्यशास्त्रेऽपि—

या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसंयुता वा बहुनृत्तगीता ।
कामोपभोगप्रभवोपचारा तां कौशिकीं वृत्तिमुदाहरन्ति ॥ इति ।

( ५२ ) अस्या अङ्गानि चत्वारि इति दर्शयति—नर्म चेति । नर्म, नर्मस्फूर्ज, नर्मस्फोट, नर्मगर्भश्च—एतानि चत्वारि अस्याः कौशिकीवृत्तेरङ्गानि ।

( ५३ ) नर्मलक्षणं निरूपयति—वैदग्ध्येति । इष्टजनस्य प्रियजनस्य सामाजिकादे·

**इष्टजनावर्जनकृत्तच्चापि त्रिविधं मतम् ।**
**विहितं शुद्धहास्येन सशृङ्गारभयेन च ॥ १२६ ॥**

( ५४ ) तत्र केवलहास्येन विहितं यथा रत्नावल्याम्--'**वासवदत्ता** - ( फलकमुद्दिश्य सहासम् ) एसा वि अवरा तव समीवे जधालिहिदा एदं किं अज्जवसन्तस्स विण्णाणम् ।

( ५५ ) सशृङ्गारहास्येन यथा शाकुन्तले--राजानं प्रति **शकुन्तला**—असंतुट्टो उण किं करिस्सदि । **राजा**—इदम् । (इति व्यवसितः शकुन्तलावक्त्रं ढौकते)

( ५६ ) सभयहास्येन यथा रत्नावल्याम्---आलेख्यदर्शनावसरे **सुसंगता**—जाणिदो मए एसो वुत्तन्तो समं चित्तफलएण । ता देवीए गदुअ निवेदइस्सम् ।

( ५७ ) एतद्वाक्यसंबन्धि नर्मोदाहृतम् । एवं वेषचेष्टासंबन्ध्यपि ।

---

रिति यावत् , आवर्जनं प्रीत्याधानं तत्करोतीति तथोक्तम् प्रीतिकारकमित्यर्थः । वैदग्ध्येन नैपुण्येन क्रीडितं क्रीडनं नर्म स्यात् । तच्चापि नर्म, शुद्धं केवलं यत् हास्यं तेन शृङ्गारभयाभ्यां सहेति तेन च विहितं सत् एवं च केवलहास्येन विहितम् , सशृङ्गारहास्येन विहितम् , सभयहास्येन विहितञ्चेत्यर्थः ।

( ५४ ) उदाहरति—तत्रेति । रत्नावल्यां द्वितीयेऽङ्के । वासवदत्ताफलकं रत्नावलीचित्रपटमिति भावः । सहासं वत्सराजं 'प्रत्याह' इति शेषः । एसावि इति । "एषाप्यपरा तव समीपे यथा लिखिता, एतत् किमार्यवसन्तकस्य विज्ञानम्" इति संस्कृतम् । चित्रफलके सागरिकया लिखितं राजानं दृष्ट्वा सुसङ्गतया तत्समीपे सागरिकापि लिखिता । तत्र लिखितं राजानं दृष्ट्वा वासवदत्तया पृष्टे केन त्वमत्र लिखिता इति । ततो राज्ञोऽर्थं शिल्पविज्ञानार्थं समुल्लिखितमिदमिति । ततस्तदन्तिके सागरिकालिखितं दृष्ट्वा 'एषा सा अवरे'त्याद्या वासवदत्तायाः पृच्छा । विज्ञानं शिल्पनैपुण्यम् ।

अत्र केवलहास्येन विहितं वासवदत्ताया नर्म, अन्तः क्रोधेन तस्याः शृङ्गाराभावात् ।

प्रबन्धरसस्तु शृङ्गार इति तत्रेयं वृत्तिः ।

( ५५ ) सशृङ्गारेति । असंतुट्ठो उणेति । "असन्तुष्टः पुनः किं करिष्यति" इति संस्कृतम् । "ननु कमलस्थमधुकरः सन्तुष्यति गन्धमात्रेण" इति राज्ञ उक्त्यनन्तरं शकुन्तलाया इयं पृच्छा । असन्तुष्टो मधुकर इति पूर्वोक्तेनान्वयः । व्यवसितश्चुम्बितुं प्रवृत्तः । वक्त्रमाननं ढौकते आच्छादयति ।

अत्र सशृङ्गारहास्येन विहितं शकुन्तलाया नर्म ।

( ५६ ) सभयहास्येनेति । जाणिदो इति । "ज्ञातो मया एष वृत्तान्तः, समं चित्रफलकेन । तद्देव्यै गत्वा निवेदयिष्यामि" इति संस्कृतम् ।

अत्र राज्ञो भीतियुक्तेन सुसङ्गताया हासेन विहितं नर्म ।

( ५७ ) एतदिति । एवमिति । ऊह्यमिति शेषः ।

वेषसम्बन्धिसभयहास्यकृतं नर्म यथा रत्नावल्याम्—'सुसङ्गता ( दृष्ट्वा विहस्य ) (क)अयि! कादरे! मा भाआहि ण होइ एसो वानरो अज्ज वसन्तओ क्खु एसो ॥ इति ।

---

(क) अयि! कातरे! मा बिभीहि न भवत्येषवानरः आर्य्यवसन्तकः खल्वेष इति संस्कृतम् ।

( ५८ ) नर्मस्फूर्जः सुखारम्भो भयान्तो नवसंगमः ।

( ५६ ) यथा मालविकायाम्—संकेतनायकमभिसृतायां 'नायकः—

( ६० ) विसृज सुन्दरि ! संगमसाध्वसं ननु चिरात्प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि ॥

( ६१ ) मालविका—'भट्टा, देवीए भएण अप्पणो वि पिअ कउं ण पारेमि ।'
इत्यादि ।

यथा च शाकुन्तले द्वितीयेऽङ्के विदूषकस्य ।

यथा वा—तत्रैव सागरिकायाः सङ्केतभङ्गार्थं तद्वेशाया वासवदत्ताया आगमने बोध्यम्

चेष्टासम्बन्धिसभयहास्यकृतं नर्म यथा—मालविकाग्निमित्रे उत्स्वप्नायमानस्य विदूषकस्योपरि निपुणिका सर्पभ्रमकारणं दण्डकाष्ठं पातयति ।

यथा वा मृच्छकटिके शकारस्य पदपरिवर्त्तनादिकम् । क्वचित् नायिकायाश्च पलायमानादिचेष्टयापि तद् बोध्यम् ।

केचित्तु शृङ्गाराङ्गे भयनर्म—

अभिव्यक्तालीकः सकलविफलोपायविभव—
श्चिरं ध्यात्वा सद्यः कृतकृतकसंरम्भनिपुणम् ।
इतः पृष्टे पृष्टे किमिदमिति संत्रास्य सहसा
कृताश्लेषं धूर्त्तः स्मितमधुरमालिङ्गति वधूम् ॥

इत्युदाहरन्ति ।

( ५८ ) अथ द्वितीयं नर्मस्फूर्जभेदं लक्षयति—नर्मस्फूर्ज इति । सुखमारम्भे यस्य सः तथोक्तः भयं भीतिरन्तेऽवसाने यस्य सः तथोक्तः यः सङ्गमः, नर्मणा स्फूर्जते देदीप्यते इति नर्मस्फूर्जः स्यात् ।

उक्तं च महर्षिणा विंशाध्याये—

नवसङ्गमसंभोगी रतिसमुदयवेशवाक्यसंयुक्तः ।
ज्ञेयो नर्मस्फूर्जो ह्यवमानभयात्मकश्चैव ॥ इति ।

( ५९ ) उदाहरति—यथेति । मालविकायामिति । मालविकानामनाटिकायामित्यर्थः । सङ्केते सङ्केतस्थाने आगतो नायकसङ्केतनायकः मध्यमपदलोपि समासः, तं तथोक्तम् । अभिसृतायां मालविकायामिति शेषः ।

( ६० ) विसृजेति । ननु सुन्दरि ! हे मालविके ! सङ्गमे सङ्गमविषये साध्वसं भयं विसृज परित्यज चिरात्प्रभृति बहुसमयादवधि प्रणयोन्मुखे भवत्याः प्रेमाभिलाषुके सहकारताम् अतिसौरभरसालताम् "आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः" इत्यमरः, गते प्राप्ते मयि, त्वं शौक्ल्यान्मुक्तामतिक्रान्तामतिमुक्ता सा चासौ लता चातिमुक्तालता माधवी तस्याश्चरितं वेष्टनरूपं प्रतिगृहाण अङ्गीकुरु माधविकया चूतालिङ्गनात् तद्वत्स्वच्छन्दं मामालिङ्गेति भावार्थः । द्रुतविलम्बित छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

( ६१ ) मालविकेति । भट्टा इति । "भर्त्तः देव्या भयेन आत्मनोऽपि प्रियं कर्त्तुं न पारयामि" इति संस्कृतम् । आत्मनः प्रियमपीत्यन्वयः ।

अत्र सुन्दरीति सम्बोधनेन सुखारम्भात् अवसाने भयाच्च पद्यमारभ्य गद्यांशे मालविकाया नर्मस्फूर्जः ।

अथ नर्मस्फोटः--

( ६२ ) **नर्मस्फोटो भावलेशैः सूचितात्परसो मतः ॥ १२७ ॥**

( ६३ ) यथा मालतीमाधवे—

गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं
श्वसितमधिकं किन्त्वेतत् स्यात् किमन्यदितोऽथवा ।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥

( ६४ ) अलसगमनादिभिर्भावलेशैर्माधवस्य मालत्यामनुरागः स्तोकः प्रकाशितः ।

---

सरस्वतीकण्ठाभरणे तु—

प्रासादो वृषपर्वणः प्रियसुता सङ्केतखण्डे नवे
वृष्टिः सेयमनम्बुदाऽमृतमयी गात्राणि मे सिञ्चति ।
किं जानासि विनोदयिष्यति मनः सन्तप्तमेवाद्य मे
दुर्वाल्येव निवर्त्तयिष्यति न भोस्तां देवयानीं प्रति ॥ इत्युदाहरणम् ।

**( ६२ ) नर्मस्फोटं** लक्षयति -नर्मस्फोटेति । भावलेशैः ईषत्प्रकाशितैर्भावैः सूचितो द्योतितः अल्पो रसः शृङ्गारो यत्र स तथोक्तो व्यापारो नर्मणः स्फोटः अभिव्यक्तिर्यत्र स नर्मस्फोटो मतः ।

उक्तञ्च महर्षिणाऽपि—

विविधानां भावानां लवैर्लवैर्भूषितो बहुविशेषः ।
असमग्राक्षिप्तरसो नर्मस्फोटस्तु विज्ञेयः ॥ इति ।

( ६३ ) यथेति । आगमिष्यन्तं माधवं दृष्ट्वा मकरन्दस्योक्तिरियम् । माधवस्य गमनम् अलसम् , दृष्टिः शून्या—

समतारा समपुटा निष्कम्पा शून्यदर्शना ।
बाह्यार्थग्राहिणी मध्या शून्या दृष्टिः प्रकीर्त्तिता ॥

इति भरतोक्तलक्षणरूपा, शरीरम् असौष्ठवम् अङ्गसंस्कारा भावाद्वाविसौन्दर्यशून्यम्, श्वसितं निश्वासः अधिकं प्राकृतिकाद्बहुलम् , एतत् किन्नु स्यात् । एतदलसगमनत्वादिकं रोगकृतं मदनकृत वेति वितर्कः । अथवा इतो मदनावेशात् अन्यत् किं स्यात् भवितुं शक्नोति अपि तु न किमप्यन्यदित्यर्थः । येन हि भुवने कन्दर्पस्य कामस्य आज्ञा आशक्त्यादेशः भ्रमति अविफला सत्येव हि सर्वान् प्रवर्त्तते यौवनं तारुण्यञ्च विकारि चित्तविकारकारि ललितमधुरा अतिरमणीयाः ते ते प्रसिद्धाः भावाः सुरतचेष्टाः चन्द्रचन्दनादयः पदार्थाश्च धीरतां धैर्य्यं क्षिपन्ति निराकुर्वन्ति । हरिणीप्लुत छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

( ६४ ) लक्ष्ये लक्षणं योजयति—अलसगमनेति । अलसगमनादिभिरित्यत्र अलसगमनादिभिः सूचितैरित्यर्थः । अनुरागो विप्रलम्भरसः । सम्भोगरूपनर्मच्छायावत्वात् अत्र नर्म । अत्रापि सरस्वतीकण्ठाभरणे—

इतः परानर्भकहार्य्यशस्त्रं वैदाभ पश्यानुमता मयासि ।
एवं विधेनाहवचेष्टितेन त्वं प्रार्थ्यते हस्तगता ममैभिः ॥ इति ।

( ६५ ) नर्मगर्भो व्यवहृतिर्नेतुः प्रच्छन्नवर्तिनः ॥

( ६६ ) यथा—तत्रैव सखीरूपधारिणा माधवेन मालत्या मरणव्यवसायवारणम् ।

( ६७ ) अथ सात्त्वती—

( ६८ ) सात्त्वती बहुला सत्त्व-शौर्य्यत्यागदयार्जवैः ।
सहर्षा क्षुद्रशृङ्गारा विशोका साद्भुता तथा ।

( ६५ ) नर्मगर्भं लक्षयति—नर्मगर्भ इति । प्रच्छन्नवर्त्तिनः प्रच्छन्नीभूय तिष्ठतः नेतु-र्नायकस्य व्यवहृतिर्व्यवहारः नर्म गर्भे यस्य स नर्मगर्भः स्यात् ।

महर्षिणापि—

विज्ञानरूपसम्भावनादिभिर्नायको गुणैर्यत्र ।
प्रच्छन्नैर्व्यवहरते कार्यवशान्नर्मगर्भोऽसौ ॥ इति ।

( ६६ ) उदाहरति—यथेति । सखीरूपेति । सखीरूपधारिणा लवङ्गिकास्थाने विद्य-मानेनेत्यर्थः ।

अत्रत्योदन्तस्तु—सखी लवङ्गिका, पित्रा राजाज्ञया जरते नन्दाय दातुं कृतनिश्चया मालतीति देवतागृहे स्वनिधनं याचयन्ती लवङ्गिकायाः पादे पतिता मालती । स्तम्भा-न्तरतःस्थितो माधवश्च लवङ्गिकावेशेनागत्य लवङ्गिकामपसार्य्य तत्स्थाने स्वपादं दत्वा स्थितः । ततो मालती उत्थाय लवङ्गिकाबुध्या तमालिङ्ग्य पश्चादवलोक्य परिचीयमाना व्यवसायान्निववृते इति मालतीमाधवे द्रष्टव्यः । यथा वा—सरस्वतीकण्ठाभरणे—

अथाजिनापाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥ इति ।

एवं "दृष्ट्वैकासनसंस्थिते" इत्यादावपि बोध्यम् ।

( ६७ ) सात्त्वतीवृत्तिं निरूपयितुमाह—अथेति । कौशिकीवृत्तिनिरूपणानन्तरमि-त्यर्थः । सात्त्वती निरूप्यते इति शेषः ।

( ६८ ) सात्त्वतीति । सत्त्वमध्यवसायः, शौर्य्यं बलम् , त्यागो दानसामर्थ्यम् , दया कृपा, आर्जवम् अकौटिल्यम् , तैर्बहुला तद्वैशिष्ट्यात् बाहुल्यवती, सहर्षा सानन्दा, क्षुद्र शृङ्गारा वीरे रसे शृङ्गारस्यानुषङ्गिकत्वेन क्षुद्रत्वम् , विशोका विगतशोका तथा साद्भुता या वृत्तिरिति शेषः । सा सात्त्वती सत् सत्त्व प्रकाशस्तद्यत्रास्ति तत्सत्त्वं मनस्तत्र भवा सात्त्वती सञ्ज्ञाशब्दत्वेन बाहुलकात् स्त्रीत्वम् । तथा च शोकहीनः सत्त्वशौर्यत्यागद-यार्जवहर्षादिभावोत्तरो नायकव्यापारः सात्त्वतीवृत्तिरित्यर्थः । अत्र क्षुद्रशृङ्गारत्वेन स्त्री संकुलत्वकामोपभोगराहित्येन वीररसत्वेन च कौशिकीतो भेदोऽवगन्तव्यः ।

नाट्यशास्त्रे चैषा परिष्कृत्योक्ता—

या सत्त्वजेनेह गुणेन युक्ता न्यायेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभावा सा सात्त्वतीनाम भवेत्तु वृत्तिः ॥
वागङ्गाभिनयवती सत्त्वोत्थानवचनप्रकरणेषु ।
सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वतीवृत्तिः ॥
वीराद्भुतरौद्ररसा निरस्तशृङ्गारकरुणनिर्वेदा ।
उद्धतपुरुषप्राया परस्पराधर्षणकृता च ॥ इति ।

**उत्थापकोऽथ सांघात्यः संलापः परिवर्त्तकः ।**
**विशेषा इति चत्वारः सात्त्वत्याः परिकीर्त्तिताः ॥**

**( ६९ ) उत्तेजनकरी शत्रोर्वागुत्थापक उच्यते ।**

यथा महावीरचरिते--

( ७० ) आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यन्तु ममापि सम्प्रति कुतस्त्वद्दर्शने चक्षुषः ।
त्वत्साङ्गत्यसुखस्य नास्मि विषयस्तत् किं वृथा व्याहृतैः ?
अस्मिन् विश्रुतजामदग्न्यदमने पाणौ धनुर्जृम्भताम् ॥

**( ७१ ) मन्त्रार्थदैवशक्त्यादेः सांघात्यः सङ्घभेदनम् ॥**

अस्या श्चत्वारो भेदा इति दर्शयति - उत्थापक इत्यादिना । तस्याः सात्त्वत्याः--उत्थापकः, संघात्यः, संलापः, परिवर्त्तकश्चेति चत्वारो विशेषा भेदाः परिकीर्त्तिताः कथिता नाट्यशास्त्रविद्भिरिति शेषः ।

( ६९ ) तत्रोत्थापकं लक्षयति--उत्तेजनेति । शत्रोः प्रतिपक्षस्य प्रतिनायकस्येत्यर्थः, उत्तेजनकरी उत्साहातिशयजनकक्रोधोत्पादिनी वाग् वचनं उत्थापयति उद्योगयतीति उत्थापको नाम सात्त्वतीभेद उच्यते ।

इदमपि परिष्कृत्य महर्षिणाम्नातम्--
अहमप्युत्थास्यामि त्वं तावद्दर्शयात्मनः शक्तिम् ।
इतिसंङ्घर्षसमाश्रयमुत्थितमुत्थापको ज्ञेयः ॥ इति ।

( ७० ) उदाहरति--यथेति । आनन्दाय चेति । श्रीरामं प्रति रावणप्रेरितस्य वालिन उक्तिरियम् । मया त्व प्रियदर्शनत्वादानन्दाय विलक्षणसौन्दर्य्यातिशयात् विस्मयाय च मारयितव्यत्वात् दुःखाय क्लेशाय वा दृष्टोऽसि । तु किन्तु अद्य सम्प्रति तव विनाशहेतौ त्वद्दर्शनेऽवलोकने मम चक्षुषो नेत्रस्य वैतृष्ण्यं तृष्णानिवृत्तिः कुतो भवेत् अपि तु न कुतोऽपीत्यर्थः, बहुकालस्थितेरसम्भवादिति भावः । तव माङ्गल्येन मङ्गलत्वेन सम्मेलनेन यत् विलक्षणं सुखं तस्य विषयोऽऽश्रयो नास्मि प्रतिपक्षित्वादिति भावः । तस्मात् वृथा व्याहृतैः ईदृशव्यर्थकथनैः किं प्रयोजनम् ? अपि तु न किमपीत्यर्थः । अस्मिन् अवलोक्यमाने विश्रुतं महावीरत्वेन प्रसिद्धं जामदग्न्यं परशुरामं विजयत इति तस्मिन् तथोक्ते तव बाहौ धनुर्जृम्भतां सङ्ग्रामाय प्रवर्त्ततामिति । अन्ये तु-- परशुरामागमे रामं प्रति जनकस्य वाक्यमिदमित्याहुः, तथाहि--धनुर्भङ्गेन प्रतिज्ञातार्थसिद्ध्या योग्यवरप्राप्त्या चानन्दः । वीर्य्यातिशयदर्शनाद्विस्मयः । रामं हन्तुं परशुरामागमनात् दुःखम् । अतोऽद्य त्वद्दर्शने सम्प्रति एतत्क्षणे चक्षुषः कुतो वैतृष्ण्यम् । उत्कण्ठाबाहुल्यात् क्षणान्तरेऽनिष्टनिवृत्तौ तु उत्कण्ठानिवृत्त्या वैतृष्ण्यं स्यादिति सम्प्रतिपदभावार्थः । बहुव्याहृतैर्वा किं यतो वैवाहिकमाङ्गल्यसुखस्य न विषयोऽस्मि अतोऽस्मिन्विस्मृतस्य जामदग्न्यस्य विजयनिमित्तं तव बाहौ धनुर्जृम्भतामित्यर्थः । अत्र विस्मयवशाद्रामसौन्दर्यैणानन्दादिना च वैशिष्ट्यं वीरो रसः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक्(१६८)

अनेन रामस्य जेतुमुत्तेजनकरणादत्र उत्थापकः ।

( ७१ ) साङ्घात्यलक्षणं निरूपयति--मन्त्रार्थेति । मन्त्रस्य मन्त्रणायाः, अर्थस्य

( ७२ ) मन्त्रशक्त्या यथा--मुद्राराक्षसे राक्षससहायानां चाणक्येन स्वबुद्ध्या भेदनम् । अर्थशक्त्यापि तत्रैव । दैवशक्त्या यथा–रामायणे रावणाद्विभीषणस्य भेदः ।

( ७३ ) **संलापः स्याद्गभीरोक्तिर्नानाभावसमाश्रयः ।**

( ७४ ) यथा वीरचरिते--रामः—अयं सः, यः किल सपरिवारकार्त्तिकेय-विजयावर्जितेन भगवता नीललोहितेन परिवत्सरसहस्रान्तेवासिने तुभ्यं प्रसादीकृतः परशुः । **परशुरामः**-राम ! दाशरथे ! स एवायमार्यपादानां प्रियः परशुः ।' इत्यादि ।

( ७५ ) **प्रारब्धादन्यकार्याणां करणं परिवर्तकः ।**

---

त्रिकस्य, दैवस्य अदृष्टस्य वा शक्तिः, आदिपदात्सहायशक्त्यादयश्च तस्माद्धेतोः सङ्घ-भेदनं सैन्यसमूहादिसहायानां पृथक्करणम् साङ्घात्यो नाम सात्त्वतीभेदः स्यात् । संघात एव सांघात्यः, तथा च रूढिवशाद्विपरीतलक्षणया सङ्घातभेदेऽपि स्थितिरस्यावगन्तव्या । उक्तं च भरतेन–

मन्त्रार्थवाक्यशक्त्या दैववशादात्मदोषयोगाद्वा ।
सङ्घातभेदजननस्तज्ज्ञैः साङ्घात्यको ज्ञेयः । इति ।

( ७२ ) उदाहर्त्तुमाह—मन्त्रशक्त्येति । राक्षसो मलयकेतुमन्त्री । चाणक्यो राजमन्त्री स्वबुद्ध्या स्वमन्त्रणया । अर्थशक्त्याऽपि तत्रैव यथा पर्वतकाभरणस्य राक्षसहस्तगमनेन मलयकेतुसहोत्थायिभेदनम् । रामायणे रामचन्द्रवर्णननाटकादौ ।

अत्र चाणक्यस्य सत्त्वदानाद्यनेकसत्त्वं संघभेदनवशात् साङ्घात्यः ।

( ७३ ) संलापलक्षणं निरूपयति—संलाप इति । नानाभावानाम् अनेकविधाशयानां समाश्रयः व्यञ्जकतासम्बन्धेनाश्रयीभूता अनेकविधभावप्रकाशक इत्यर्थः । गभीरा परिप-क्वबुद्धिभिरुन्नेयार्था उक्तिर्व्याहारः "व्याहार उक्तिर्लपितम्" इत्यमरः, संलापो नाम सा-त्त्वतीभेदो भवेत् ।

( ७४ ) उदाहरति – यथेति । सपरिवारस्य ससहायस्य कार्त्तिकस्य कुमारस्य विज-येन आवर्जितेन प्रीणितेन । अत्र कौतुकेनैव विजयो न तु वास्तव इति तत्पितृप्रसादग-म्यम् । परिवत्सरसहस्रं सहस्रसंख्यकवत्सरपर्य्यन्तं अन्तेवासिने शिष्यत्वं गतायेत्यर्थः । आर्य्यपादाना पूज्यानां महादेवानाम् । इत्यादीत्यादिपदेन—

शस्त्रप्रयोगखुरलीकलहे गणानां सैन्यैर्वृतो विजित एव मया कुमारः ।
एतावतापि परिरभ्य कृतप्रसादः प्रादादमुं प्रियगुणो भगवान् गुरुर्मे ॥ इत्यस्य परिग्रहः ।

तथाचापरप्रसादलब्धेन परशुना कोऽयं गर्व इति रामस्य गभीरात्मिका उक्तिः । परशुरामोक्तौ तत्प्रियवस्त्वपि मह्यं प्रदत्तमिति स्वमहत्त्वख्यापनमेव गभीरता ।

अत्र सपरिवारेत्यादिना त्वं महावीर इति परिवत्सरेत्यादिना अतिशयोद्यमीति प्रिय इत्यनेन च परशुः नितान्तमुत्कृष्टमिति च द्योतनात् संलापः ।

( ७५ ) परिवर्त्तकलक्षणं निरूपयति—प्रारब्धादिति । प्रारब्धात् प्रस्तुतकार्यात् अन्यानि यानि कार्याणि तेषां करणम् आचरणम्, परिवर्त्तयति कर्त्तारमिति परिवर्त्तको नाम सात्त्वतीभेदो भवेत् ।

उक्तं च मुनिना–उत्थानसमारब्धानर्थानुत्सृज्य योऽर्थयोगवशात् ।
अन्यानर्थान् भजते स चापि परिवर्त्तको ज्ञेयः । इति

( ७६ ) यथा वेण्याम्–'भीमः–सहदेव ! गच्छ त्वं गुरुमनुवर्तस्व । अहमप्यस्त्रागारं प्रविश्यायुधसहायो भवामीति यावत् । अथवा आमन्त्रयितव्यैव मया पाञ्चाली ।' इति ।

( ७७ ) अथारभटी–

( ७८ ) मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ॥ १३२ ॥
संयुक्ता वधबन्धाद्यैरुद्धतारभटी मता ।
वस्तूत्थापनसंफेटौ संक्षिप्तिरवपातनम् ॥ १३३ ॥
इति भेदास्तु चत्वार आरभट्याः प्रकीर्तिताः ।

( ७९ ) मायाद्युत्थापितं वस्तु वस्तूत्थापनमुच्यते ॥ १३४ ॥

---

( ७६ ) उदाहरति—यथेति । गुरुं युधिष्ठिरम्, अनुवर्तस्व अनुसर । अस्त्रागारम् आयुधगृहं प्रविश्य गत्वा आयुधसहायो गृहीतशस्त्रः । आमन्त्रयितव्यैव विचारयितव्यैव । पाञ्चाली द्रौपदी, तया सह विचारः कर्त्तव्य इत्यर्थः ।

अत्र प्रारब्धं कार्यं युद्धं ततोऽन्यत् , अथवेत्यादिना पाञ्चाल्यामन्त्रणकार्यकरणात् परिवर्त्तकः ।

यथा च वीरचरिते—

हेरम्बदन्तमुसलोल्लिखितैकभित्ति वक्षो विशाखविशिखव्रणलाञ्छनं मे ।
रोमाञ्चकञ्चुकितमद्भुतवीरलाभात् यत्सत्यमद्य परिरब्धुमिवेच्छति त्वाम् ॥

रामः—भगवन् । परिरम्भणमिति प्रस्तुतप्रतीपमेतत् ।" इत्यादि ।

( ७७ ) आरभटीं लक्षयितुमाह—अथेति । क्रमशः सात्वतीनिरूपणानन्तरमित्यर्थः ।

( ७८ ) मायेन्द्र इति । माया "असतो वस्तुनो माया सद्रूपोद्भावना तथा "इत्युक्तलक्षणः, इन्द्रजालः परस्परविरुद्धनानावस्तुप्रदर्शनं च विस्मयजनकव्यापारविशेष इति यावत् उक्तं च तल्लक्षणम्—

इन्द्रजालः स्थितार्थस्य मन्त्रचूर्णौषधादिभिः ।
अदर्शनमपारोक्ष्यमन्यथाकृतिरुच्यते ॥ इति ।

सङ्ग्रामो युद्धम्, क्रोधेन कोपेन उद्भ्रान्तम् अधीरतया कार्यसम्पादनम्, आदिपदात् साहसादयश्च तथोक्तश्चेष्टितैर्व्यापारैः वधबन्धाद्यैश्च चेष्टितैः संयुक्ता सहिता, उद्धता उग्रा वृत्तिः आरभेण प्रतोदेन तुल्या भटा उद्धताः पुरुषा आरभटास्ते सन्त्यस्यामिति "ज्योत्स्नादित्वा"दणि ङीपि आरभटीनाम । एतल्लक्षणं रुद्रटेनाप्युक्तम्—

या चित्रयुद्धभ्रमशस्त्रपातमायेन्द्रजालप्लुतिलङ्घिताढ्या ।
ओजस्विगुर्वक्षरबन्धगाढा ज्ञेया बुधैः सारभटीति वृत्तिः ॥ इति ।

तस्या आरभट्याः वस्तूत्थापनम्, सम्फेटः, संक्षिप्तिः, अवपातनञ्च इति चत्वारो भेदाः प्रकीर्त्तिताः ।

( ७९ ) तत्र वस्तूत्थापनं लक्षणं निरूपयति—मायेति । मायया उक्तलक्षणया आदिपदादिन्द्रजालेन च वस्तुपदार्थः यत् उत्थापितं प्रकटितं भवति तद्वस्तूत्थापनं नाम आरभटीभेद उच्यते ।

( ८० ) यथोदात्तराघवे—

जीयन्ते जयिनोऽपि सान्द्रतिमिरव्रातैर्वियद्व्यापिभि-

भास्वन्तः सकला रवेरपि कराः कस्मादकस्मादमी ।

एते चोग्रकबन्धकण्ठरुधिरैराध्मायमानोदरा

मुञ्चन्त्याननकंदरानलमुचस्तीव्रान् रवान्फेरवाः ॥ इत्यादि ।

( ८१ ) **संफेटस्तु समाघातः क्रुद्धसत्वरयोर्द्वयोः ।**

( ८२ ) यथा मालत्यां माधवाघोरघण्टयोः ।

( ८३ ) **संक्षिप्ता वस्तुरचना शिल्पैरितरथापि वा ॥ १३५ ॥**

**संक्षिप्तिः स्यान्निवृत्तौ च नेतुर्नेत्रन्तरग्रहः ।**

( ८० ) आद्यमुदाहरति—यथेति । जीयन्त इति । मायाप्रभावं दृष्टवतो मायिकस्य कस्यचिदुक्तिरियम् । अकस्मात् प्रकटकारणं विना वियद्व्यापिभिः सान्द्रतिमिरव्रातैः निशीथान्धकारैः जयिनोऽपि सर्वाभिभाविनोऽपि वीराः, भास्वन्तो देदीप्यमानाः सकलाः समग्रा अमी रवेः दिनकरस्य करा हस्ता अपि "बलिहस्तांशवः कराः" इत्यमरः जीयन्ते परिभूयन्ते आच्छाद्यन्त इति यावत् । उग्राणां रौद्राणां कबन्धानां शिरोहीनशरीराणाम्, कण्ठरुधिरैः आध्मायमानानि उत्फुल्लमानानि उदराणि येषां ते आध्मायमानोदराः ईष-द्दह्यमानजठरा इत्यर्थः, पीयमानरुधिराणां मुखानलेन उष्णत्वाज्जठरदाह इति वागीशाः । तथा आननानि वदनान्येव कन्दरा गुहास्ताभ्य अनलान् वह्नीन् मुञ्चन्ति त्यजन्ति ये ते तथोक्ता एते फेरवा जम्बूकाश्च तीव्रान् रवान् शब्दान् मुञ्चन्ति कुर्वन्ति । शार्दूलविक्रीडित-छन्दस्तल्लक्षणन्तूक्तं प्राक् (१९८ पृ०)

अत्र परस्परविरुद्धालीकतिमिररविकिरणादिप्रदर्शनरूपमिन्द्रजालादीनां वस्तूनां माययोत्थापितम् । रौद्रो रसः ।

केवलमिन्द्रजालोत्थापितं वस्तु यथा—

एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शङ्करोऽयं

दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः ।

एषोऽप्यैरावतस्थस्त्रिदशपतिरमी देवि ! देवास्तथान्ये

नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्यः ॥

( ८१ ) सम्फेटलक्षणं निरूपयति—सम्फेटस्त्विति । क्रुद्धौ च तौ सत्वरौ शीघ्रयुक्तौ चेति कर्मधारयः तयोस्तथोक्तयोर्द्वयोरेवान्योन्यं समाघातः प्रहारोक्तिस्तु सम्फेटो नाम आरभटीभेदः ।

( ८२ ) उदाहरति—यथेति । मालत्यां मालतीमाधवपञ्चमाङ्के । माधवाघोरेति । तत्र हि माधवीं चण्डिकायै बलीकर्तुमुद्यतमघोरघण्टं समीक्ष्य माधवस्य त्वरितम्—"अलं दुरात्मन् । अपेहि प्रतिहतोऽसि कापालिकापसद" इति प्रवेशः । तथात्र—द्वयोः क्रुद्धता सत्वरता परस्परप्रहारोक्तिश्च स्फुटैव । यथा च इन्द्रजिल्लक्ष्मणयोश्च रामायणप्रतिबद्धवस्तुषु ।

( ८३ ) संक्षिप्तिलक्षणं निरूपयति—संक्षिप्तिरिति । शिल्पैः विलक्षणवस्तुनिर्म्माण-कौशलैः इतरथा शिल्पेतरेण प्रकारेणापि वा वस्तुनः पदार्थविशेषस्य संक्षिप्ता रचना निर्म्माणं संक्षिप्तिः भवेत् तथा नेतुरेकस्य नृत्यपात्रस्य निवृत्तौ सत्यां नेत्रन्तरग्रहः

( ८४ ) यथोदयनचरिते कलिञ्जहस्तिप्रयोगः ।

( ८५ ) द्वितीयं यथा वालिनिवृत्त्या सुग्रीवः ।

( ८६ ) यथा वा परशुरामस्यौद्धत्यनिवृत्त्या शान्तत्वापादनम्—'पुण्या ब्राह्मणजातिः-' इति ।

**भिन्नपात्रत्वेन ग्रहणं बोधश्च संक्षिप्तिर्भवेत् भिन्नपात्रत्वेन ग्रहणं च व्यक्तिभेदाद्धर्मभेदाच्च द्विधा भवति।**

( ८४ ) उदाहरति—यथेति। (क) कलिञ्जहस्तिप्रयोगः, तत्र वास्तवहस्तिरूपपात्रनिवृत्तौ शिल्पेन काष्ठमयहस्तिन आविर्भावनम्।

अत्र शिल्पेन काष्ठमयहस्तिरचनया संक्षिप्तिः।

( ८५ ) द्वितीयमिति। अत्र वालिरूपस्य पात्रस्य निवृत्तौ व्यक्तिभेदेन सुग्रीवरूपपात्रस्यावगमात् संक्षिप्तिः।

( ८६ ) धर्मभेदान्नेत्रन्तरत्वमाह—यथा वेति । औद्धत्यनिवृत्त्या स्तब्धत्वनिवृत्तौ शान्तत्वापादनं तपस्वितया भवनम् तथा सति "पुण्या ब्राह्मणजाति" रिति। तथा च—

---

( १ ) अत्र स्फुटीकरणाय **कथासरित्सागरस्य** कथामुखलम्बकस्य चतुर्थतरङ्गता निम्नोद्धृता श्लोका अवश्यमवलोकनीयाः—

"अत्रान्तरे स वत्सेशः प्रदूतीतस्तदब्रवीत्। गत्वा प्रतिवचश्चण्डमहासेनाय भूभृते ॥
सोऽपि चण्डमहासेनस्तच्छ्रुत्वैव व्यचिन्तयत्। स तावदिह नायाति मानी वत्सेश्वरो भृशम् ॥
कन्या हि तत्र न प्रेष्या भवेदेव हि लाघवम्। तस्माद्बद्ध्वैव तद्युक्त्या नृपमानानयाम्यहम् ॥
इति संचिन्त्य संमन्त्र्य स राजा मन्त्रिभिः सह। अकारयत् स्वसदृशं महान्तं यन्त्रहस्तिनम् ॥
तं चान्तर्वीरपुरुषैः कृत्वा छन्नैरधिष्ठितम्। विन्ध्याटव्यां स निदधे राजा यन्त्रमयं गजम् ॥
तत्र तं चारपुरुषाः पश्यन्तिस्म विदूरतः। गजबन्धरसासक्तवत्सराजोपजीविनः ॥
ते च त्वरितमागत्य वत्सराजं व्यजिज्ञपन्। देव ! दृष्टो गजोऽस्माभिरेको विन्ध्यवने भ्रमन् ॥
अस्मिन्नियति भूलोके नैव योऽन्यत्र दृश्यते। वर्ष्मणा व्याप्तगगनो विन्ध्याद्रिरिव जङ्गमः ॥
ततश्चारवचः श्रुत्वा वत्सराजो जहर्ष सः। तेभ्यः सुवर्णलक्षं च प्रददौ पारितोषिकम् ॥
तं चेद्गजेन्द्रं प्राप्स्यामि प्रतिमल्लनडागिरेः। ततश्चण्डमहासेनो वश्यो भवति मे ध्रुवम् ॥
ततो वासवदत्तां तां स स्वयं मे प्रयच्छति। इति संचिन्तयन् सोऽथ राजा तामनयन्निशाम् ॥
प्रातश्च मन्त्रिवचनं न्यक्कृत्वा गजतृष्णया। पुरःस्कृत्यैव तांश्चारान् ययौ विन्ध्याटवीं प्रति ॥
प्रस्थानलग्नस्य फलं कन्यालाभं सबन्धनम्। यदूचुर्गणिकास्तस्य तत्स नैव व्यचारयत् ॥
प्राप्य विन्ध्याटवीं तस्य गजस्य क्षोभशङ्कया। वत्सराजः स सैन्यानि दूरादेव न्यवारयत् ॥
चारमात्रसहायस्तु वीणां घोषवतीं दधत्। निजव्यसनविस्तीर्णां तां विवेश महाटवीम् ॥
विन्ध्यस्य दक्षिणे पार्श्वे दूराच्चारैः प्रदर्शितम्। गजं सत्यगजाभासं तं ददर्श स भूपतिः ॥
एकाकी वादयन् वीणां चिन्तयन् बन्धनानि सः। मधुरध्वनिगायंश्च शनैरुपजगाम तम् ॥
गान्धर्वदत्तचित्तत्वात्सन्ध्याध्वान्तवशाच्च सः। न तं वनगजं राजा मायागजमलक्षयत् ॥
सोऽपि हस्ती समुत्कीर्णतालो गीतरसादिव। उपेत्योपेत्य विचलन् दूरमाकृष्टवान्नृपम् ॥
ततोऽकस्माच्च निर्गत्य तस्माद्यन्त्रमयाद्गजात्। वत्सेश्वरं तं सन्नद्धाः पुरुषाः पर्यवारयन् ॥"

इति **टिप्पण्या**मपीत्थमेवोद्धृतम् ॥

( ८७ ) **प्रवेशत्रासनिष्क्रान्तिहर्षविद्रवसंभवम् ॥ १३६ ॥**
**अवपातनमित्युक्तं—**

( ८८ ) यथा कृत्यरावणे षष्ठेऽङ्के—'( प्रविश्य खड्गहस्तः पुरुषः )' इत्यतःप्रभृति निष्क्रमणपर्यन्तम् ।

( ८९ ) ·····················**पूर्वमुक्तैव भारती ।**

( ९० ) अथ नाट्योक्तयः—

( ९१ ) **अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ॥ १३७ ॥**
**सर्वश्राव्यं प्रकाशं स्यात्तद्भवेदपवारितम् ।**
**रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते ॥ १३८ ॥**

---

पुण्या ब्राह्मणजातिरन्वयगुणः शास्त्रं चरित्रं च मे
येनैकेन हतान्यमूनि हरता चैतन्यमात्रामपि ।
एकः सन्नपि भूरिदोषगहनं सोऽयं त्वया प्रेयसा
वत्स ! ब्राह्मणवत्सलेन शमितः क्षेमाय दर्पामयः ॥

इति कथयतः परशुरामस्य शान्तत्वम् ।

औद्धत्यनिवृत्तौ शान्तत्वकथनेन धर्मभेदात् परशुरामस्य नेत्रन्तरत्वेन ज्ञानात् संक्षिप्तिः । औद्धत्यकालीनश्चात्र रौद्रो रसः । एवं सुग्रीवकलिङ्गहस्तिनोरपि पूर्वं रौद्रो रसो बोध्यः ।

( ८७ ) अवपातनलक्षणं निरूपयति—प्रवेशेति । प्रवेशः, त्रासो भीतिः, निष्क्रान्तिर्निष्क्रमणम्, हर्ष उत्सवः, विद्रवः पलायनञ्च तेभ्यः सम्भवति यत्तत्तथोक्तं स्पर्द्धनमिति शेषः, अवपातनं नाम आरभटीभेदान्तरमभिहितं नाट्यविद्भिरिति शेषः ।

( ८८ ) उदाहरति—यथेति । प्रविश्येति । तेन पुरुषेण सर्वमिदं कृतम् । क्रोधवशादेतत्करणाद्रौद्रो रसः ।

यथा च रत्नावल्याम्—

कण्ठे कृत्वावशेषं कनकमयमधः शृङ्खलादामकर्षन्
क्रान्त्वा द्वाराणि हेलावलचरणवलत्किङ्किणीचक्रवालः ।
दत्तातङ्को गजानामनुसृतसरणिः सम्भ्रमादश्वपालैः
प्रभ्रष्टोऽयं प्लवङ्गः प्रविशति नृपतेर्मन्दिरं मन्दुरातः ॥

इत्यादिना "नष्टं वर्षवरैः"रित्यन्तम् ।

( ८९ ) भारतीवृत्तिस्तु पूर्वमुक्तैवेत्याह—पूर्वमिति । "भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः" इत्यनेनेत्यर्थः । स्थापककृत्यप्रसङ्गेन प्रागुक्तेत्यर्थः । सा च सर्वसाधारण्येनेत्युक्तं रसे सर्वत्र भारतीति ।

( ९० ) अथ नाट्योक्तय इति । नाट्यपरिभाषाविशेषा इत्यर्थः ।

( ९१ ) अश्राव्यमिति । यत् खलु वस्तु वाक्यम् अश्राव्यम् अन्यस्य श्रवणायोग्यम् इह दृश्यकाव्ये तद्वाक्यं स्वस्मिन्नात्ममात्रे गतं प्रत्यक्षत्वेन स्थितमिति स्वगतं मतम् । आत्मात्मीयज्ञातिधनवाचिनोऽपि स्वशब्दस्येहात्मवाचित्वमेव ग्रहणं बोध्यम् । तथा च आत्मगतमित्यस्यैव नामान्तरम् । सर्वैः श्राव्यं श्रवणयोग्यं यद्वस्तु तत् सर्वेषु प्रकाशते प्रत्यक्षीभवतीति प्रकाशं स्यात् । परावृत्य स्थानान्तरं गत्वा अन्यस्य परस्य जनस्य

त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत्स्यात्तज्जनान्ते जनान्तिकम् ॥ १३९ ॥
किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते ।
श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशभाषितम् ॥ १४० ॥

( ९२ ) यः कश्चिदर्थो यस्माद्गोपनीयस्तस्यान्तरत ऊर्ध्वं सर्वाङ्गुलिनामितानामिकं त्रिपताकलक्षणं करं कृत्वान्येन सह यन्मन्त्र्यते तज्जनान्तिकम् । परावृत्यान्यस्य रहस्यकथनमपवारितम् । शेषं स्पष्टम् ।

समक्षे यत्तु रहस्यं गोपनीयम् अन्यैरकथनीयमित्यर्थः वस्तु प्रकाश्यते प्रतिपाद्यते तत् अपवारितं स्थानान्तरं गत्वान्यजनस्य श्रवणे वाधितमिति अपवारितं नाम भवेत् परावृत्यान्यस्य श्रवणयोग्यं रहस्यकथनमपवारितमित्यर्थः । तिसृणां पताकानाम् उत्तोलितपताकादण्डानां समाहारस्त्रिपताकं तद्वत् करो हस्तस्तेन तथोक्तेन

महर्षिणा त्रिपताकलक्षणमित्थमभिहितम् —

प्रसारिताः समाः सर्वा यस्याङ्गुल्यो भवन्ति हि ।
कुञ्चितं च तथाङ्गुष्ठः स पताक इति स्मृतः ॥ इत्यभिधाय
पताके तु यदा वक्राऽनामिका स्वङ्गुलिर्भवेत् ।
त्रिपताकः स विज्ञेयः इति ।

मन्दारमरन्दे तु किञ्चिद्विशेषेण प्रतिपादितम्—

तर्जनीमूलसंलग्नकुञ्चिताङ्गुष्ठकः करः ।
गण्डगः सहताकारप्रसारिततलाङ्गुलिः ॥
पताकः स्यादथ यदि वक्रितानामिकाङ्गुलिः ।
स एव श्रोत्रगस्तर्हि त्रिपताक इतीर्य्यते ॥ इति ।

अन्यान् जनान् अपवार्य्य आच्छाद्य कथामन्तरा यस्य कस्यचित् कथामध्ये जनान्ते पात्रसमूहमध्य एव यत् अन्योन्यस्य परस्परस्य आमन्त्रणं गुह्यभाषणं तत् जनान्तिकं स्यात् । नाट्ये अभिनये पात्रं विना जनं विना अनुक्तमपि अकथितमपि अर्थं विषयं श्रुत्वेव श्रवणाभिनयं कृत्वा "किं ब्रवीषि !" इति इत्यर्थकं यत् प्रयुज्यते प्रतिपाद्यते तत् आकाशे शून्ये लक्ष्यपात्राभावात् भाषितम् आकाशभाषितं स्यात् ।

( ९२ ) त्रिपताकेत्यादिकं विवृणोति—यः कश्चिदिति । अर्थो विषयः । यस्माज्जनात् । तस्यान्तरतः तद्भिन्ने जने इत्यर्थः । इयं जनान्त इत्यस्य व्याख्या । ऊर्ध्वम् उत्तोलितमिति करमित्यस्य विशेषणम्, सर्वासामङ्गुलीनां मध्ये नामिता नम्रीभूता अनामिका नाम मध्यकनिष्ठिकाङ्गुल्यन्तराला अङ्गुली यस्य तं तथोक्तम् । अत एव त्रिपताकलक्षणम् उत्तोलितपताकादण्डत्रयस्वरूपम् । मन्त्र्यते गुह्यमुच्यते । ऊर्ध्वं सर्वेत्यादिकं त्रिपताकव्याख्यानम् । अपवारितं विवृणोति—परावृत्येति । शेषमवशिष्टम् अश्राव्यमित्यादिकं स्फुटं सुगमम् अतो न विव्रियते इति भावः ।

**( ९३ ) दत्तां सिद्धां च सेनां च वेश्यानां नाम दर्शयेत् ।**
**दत्तप्रायाणि वणिजां चेटचेटयोस्तथा पुनः ॥ १४१ ॥**
**वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत् ।**

( ९४ ) वेश्या यथा वसन्तसेनादिः । वणिग्विष्णुदत्तादिः । चेटः कलहंसादिः । चेटी मन्दारिकादिः ।

**( ९५ ) नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम् ॥ १४२ ॥**

( ९६ ) यथा रामाभ्युदयादिः ।

**( ९७ ) नायिकानायकाख्यानात्संज्ञा प्रकरणादिषु ।**

यथा मालतीमाधवादिः ।

---

**( ९३ )** पात्राणां नामानि दर्शयितुमाह—दत्तामिति । वेश्यानां नाम दत्तां दत्ताश-ब्दान्तम् तेन दत्तान्तादिनाम' सिद्धां सिद्धशब्दान्तम्, सेना सेनाशब्दान्तं च दर्शयेत् नाटकादौ रचयितेति शेषः । वणिजां वश्यानां नामानि दत्तप्रायाणि दत्तान्तबहुलानि दर्शयेत् प्रायपदोपन्यासात् वणिजां नाम भूत्याद्यन्तमपि कदाचित् दर्शयितुं कविः शक्नो-तीति द्योतितम् । तथा वसन्तादिषु समयेषु वर्ण्यस्य वर्णनायोग्यस्य वस्तुनः कलहंसादेः यत् यादृशानुपूर्वीकं नाम भवेत्, चेटस्य दासस्य चेट्या दास्याश्च पुनस्तथा तादृशानुपु-र्वीकं नाम भवेदित्यर्थ' । मूले "पुमान् स्त्रिया" इत्यनेनचे टचेट्योरित्यत्रैकशेषाकरणं चिन्त्यम् वेणीसंहारादौ बुद्धिमतिका सुसङ्गताऽऽदिसंज्ञाकरणात् कल्पिते निवृत्ते एव रूपकेऽयं नियम इत्यवगन्तव्यम् ।

अत्र विशेषः कश्चिदाह –

ब्रह्मक्षत्रस्य नामानि गोत्रकर्मानुरूपतः ।
काव्ये कार्य्याणि कविभिः शर्मवर्मकृतानि च ॥
दत्तप्रायाणि नामानि वणिजां तु प्रयोजयेत् ।
शौर्यादात्तानि नामानि तथा शूरेषु योजयेत् ॥
विजयार्थानि नामानि राजस्त्रीणां च कारयेत् ।
दत्तामित्राथ सेनेति वेश्यानामानि कारयेत् ॥
नानाकुसुमनामानः प्रेष्याः कार्य्यास्तु नाटके ।
मङ्गलार्थानि नामानि चेटानामपि कारयेत् ॥ इति ।

**( ९४ )** उदाहरति—वेश्येति । वसन्तसमये कलहंसस्य वर्णनीयतया मालतीमाधवे माधवदासस्य कलहंसेति नाम । मन्दारकुसुमस्य शीतसमये प्रस्फुटिततया वर्णनीयत्वात् तत्रैव विहारदास्या मन्दारिकेति नाम ।

**( ९५ )** नाटकस्य कीदृशं नाम कार्यमिति दर्शयितुमाह–नामेति । नाटकस्य नाम, गर्भितो गर्भसन्धिना सूचितो योऽर्थः प्रयोजनं तस्य प्रकाशकं सूचकं कार्यं कविना विधातव्यम् ।

**( ९६ )** उदाहरति—यथेति । स्पष्टम् ।

**( ९७ )** नायिकेति । नायिका सहितो नायको नायिकानायकः मध्यमपदलोपि समा-सः, अन्यथैकशेषप्रसङ्गात् । नायिकानायकाख्यानां तत्तल्लक्ष्यन्तर्गतनायिकानायकोभ-

( ९८ ) नाटिकासट्टकादीनां नायिकाभिर्विशेषणम् ॥ १४३ ॥

( ९९ ) यथा रत्नावली कर्पूरमञ्जर्यादिः ।

(१००) प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते ।

( १ ) यथा शाकुन्तले- ऋषी 'गच्छावः' इत्यर्थे 'साधयावस्तावत्' ।

( २ ) राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः ॥ १४४ ॥

राजर्षिभिर्वयस्येति तथा विदूषकेण च ।

राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च ॥ १४५ ॥

स्वेच्छया नामभिर्विप्रैर्विप्र आर्येति चेतरैः ।

---

यमिश्रितसंज्ञानां तुल्या संज्ञा प्रकरणानां वक्ष्यमाणस्वरूपम् आदिपदात् भाणादयश्च तेषु विधेयेति शेषः । प्रायिकमेतत् वसन्तसेनाचारुदत्ताश्रयदृश्यकाव्यस्य सत्यपि प्रकरणत्वे नाटकवन्मृच्छकटिकेति गर्भितार्थप्रकाशकसंज्ञाकरणात् । तथा सौगन्धिकाहरणादिसंज्ञाकरणाच्च ।

( ९८ ) नाटिकेति । नाटिकासट्टकयोः वक्ष्यमाणस्वरूपयोः आदिपदात् नाट्यरासकादेश्च नायिकाभिः नायिकासंज्ञाभिः विशेषणम् अन्यदृश्यकाव्येभ्यो व्यावर्त्तनं कार्यं नायिकासंज्ञयैव नाम कार्यमित्यर्थः ।

( ९९ ) उदाहरति—यथेति । स्पष्टम् ।

(१००) प्रायेणेति । गमेः गत्यर्थकगमधातोः स्थाने प्रायेण बाहुल्येन ण्यन्तकः साधिः साधधातुः प्रयुज्यते कविभिरिति शेषः । एतत्तु नाटकप्रकरणान्न नाटक एव । तदितरत्र तु गमेः स्थाने ण्यन्तसाधेः प्रयोगे अवाचकत्वदोष एव स्यादित्यवगन्तव्यम् ।

( १ ) उदाहरति - यथेति । ऋषीति । शार्ङ्गरवशारद्वतयोर्वक्त्रोर्निर्देशः । प्रायपदोपादानात् "सुहं चिट्ठउ अज्जउत्तो । अहं गमिस्सम्" । इत्युत्थाय गच्छतीति रत्नावल्यां गमेः प्रयोगोऽपि ।

( २ ) पात्राणां सम्बोध्यत्वप्रकारमुपपादयति - राजेति । राजा वाच्य इत्यग्रिमेणान्वयः । भृत्यैः सचिवादिभिः राजा स्वामीति देवेति, वाच्यः स्वामिपदेन देवपदेन सम्बोधनीयो विशेषणीयो वेत्यर्थः । अधमैः नीचपात्रैः भट्टेति वाच्यः भट्टपदेन सम्बोधनीयो विशेषणीयो वेत्यर्थः । एवमन्यत्रापि । तथा राजर्षिभिरन्यैर्नृपतिभिः विदूषकेण च राजा वयस्येति वाच्यः ऋषिभिः स राजा राजन्निति अपत्यप्रत्ययेन पौरव ! दाशरथे ! इत्थमपत्यप्रत्ययान्तपदेन च वाच्यः । एतच्च पुत्रादिसम्बन्धिपदोपलक्षणम्, तेन रघुनन्दन ! इत्यादिनापि वाच्यः ।

अत्र विशेषः—

राजपत्न्यस्तु संभाष्याः सर्वाः परिजनेन तु ।
भट्टिनी स्वामिनी देवी इत्येवं नाटके बुधैः ॥
देवीति महिषी वाच्या राज्ञा परिजनेन तु ।
भोगिन्य इति शेषास्तु स्वामिन्य इति वा पुनः ॥ इति ॥

विप्रैस्तु स्वेच्छया अपत्यप्रत्ययेन सङ्केतितनामभिर्वा वाच्यः । इतरैः क्षत्रियादिभिश्च विप्र आर्येति वाच्यः । तेनानर्घराघवादौ विश्वामित्रेति कौशिकेति कुशिकनन्द-

वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः ॥ १४६ ॥
वाच्यौ नटीसूत्रधारावार्यनाम्ना परस्परम् ।
सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः ॥ १४७ ॥
सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः ।
वयस्येत्युत्तमैर्हंहो मध्यैरार्येति चाग्रजः ॥ १४८ ॥
भगवन्निति वक्तव्याः सर्वैर्देवर्षिलिङ्गिनः ।
वदेद्राज्ञीं च चेटीं च भवतीति विदूषकः ॥ १४९ ॥
आयुष्मन्रथिनं सूतो वृद्धं तातेति चेतरः ।
वत्सपुत्रकतातेति नाम्ना गोत्रेण वा सुतः ॥ १५० ॥
शिष्योऽनुजश्च वक्तव्योऽमात्य आर्येति चाधमैः ।
विप्रैरयममात्येति सचिवेति च भण्यते ॥ १५१ ॥
साधो ! इति तपस्वी च प्रशान्तश्चोच्यते बुधैः ।
स्वगृहीताभिधः पूज्यः शिष्याद्यैर्विनिगद्यते ॥ १५२ ॥

नेत्यादिना शतानन्देन विश्वामित्र उक्तः । विदूषकः राज्ञा वयस्येति वाच्यः । नटी सूत्रधारौ परस्परम् आर्यनाम्ना एकदेशे समस्तद्वयकीर्त्तनम्, तेन नट्या आर्य्यपुत्र इति सूत्रधारेणार्येति वाच्याविलर्थः । परि समन्तात् सूत्रधारस्य चरतीति पारिपार्श्विकः उक्तलक्षणो नट विशेषः सूत्रधारं भाव इति वदेत् । सूत्रधारश्च पारिपार्श्विकं मारिषेति न हिनस्ति नाशयति सामाजिकानां शान्तिमिति मारिषस्तत्सम्बोधने मारिषेति वदेत् । अधमैर्जनैः समा आत्मतुल्या अधमाः हण्डे इति वक्तव्या । हण्डे इत्यामन्त्रणद्योतकमव्ययम् उत्तमैर्जनैः आत्मतुल्या जना वयस्येति वक्तव्याः । मध्यैर्जनैः आत्मतुल्या जना हं हो इति वक्तव्याः । अनुजेन भ्रात्रा अग्रजो भ्राता आर्य्येति वक्तव्यः । देवाश्च ऋषयश्च लिङ्गिन दण्डकमण्डलुधारिणो ब्रह्मचारिपरिव्राजकप्रभृतयश्च ते सर्वैर्जनैः भगवन्निति वक्तव्याः ।
तथा चोक्तं मुनिना

देवानामपि ये देवा महात्मानो महर्षयः ।
भगवन्निति ते वाच्या यास्तेषां योषितस्तथाः ॥
देवाश्च लिङ्गिनश्चैव नानाश्रुतधराश्च ये ।
भगवन्निति ते वाच्याः पुरुषैः स्त्रीभिरेव च ॥ इति ॥

विदूषको राज्ञीं चेटीं दासीं च भवतीति वदेत् । वृद्धं सूतः सारथिः रथिनम् आयुष्मन्निति वदेत् । इतरो युवाबालकश्च वृद्धं जनं तातेति वदेत् । सुतः पुत्रः पित्रा जनकेन शिष्योऽन्तेवासी गुरुणा अनुजः अग्रजने च वत्स इति तात ! इति ! वा राम ! इत्यादिना नाम्ना गोत्रेण रघुनन्दन ! इत्यपत्यप्रत्ययान्तेन वा वक्तव्यः सम्बोध्यः । अधमैर्जनैः अमात्यः सचिवः आर्य्येति वक्तव्यः । अयममात्यो विप्रैस्तु अमात्येति सचिवेति च भण्यते कथ्यते । तपस्वी च प्रशान्तो वीतरागश्च बुधैर्ज्ञानिभिर्जनैः साधो ! इति उच्यते सम्बोध्यत इत्यर्थः । पूज्यो जनः शिष्याद्यैर्जनैः स्वगृहीता स्वेच्छया प्रयुक्ता अभिधा भगवन्निति महाभागेत्यादिना पूज्यत्वद्योतकनाम यस्य स तथोक्तः कृत्वा विनि-

उपाध्यायेति चाचार्यो महाराजेति भूपतिः ।
स्वामीति, युवराजस्तु कुमारो भर्तृदारकः ॥ १५३ ॥
भद्रसौम्यमुखेत्येवमधमैस्तु कुमारकः ।
वाच्या प्रकृतिभी राज्ञः कुमारी भर्तृदारिका ॥ १५४ ॥
पतिर्यथा तथा वाच्या ज्येष्ठमध्याधमैः स्त्रियः ।
हलेति सदृशी, प्रेष्या हञ्जे वेश्याज्जुका तथा ॥ १५५ ॥
कुट्टिन्यम्बेत्यनुगतैः पूज्या च जरती जनैः ।
आमन्त्रणैश्च पाषण्डा वाच्याः स्वसमयागतैः ॥ १५६ ॥
शका(शाक्या)द्यश्च संभाष्या भद्रदत्तादिनामभिः ।
यस्य यत्कर्म शिल्पं वा विद्या वा जातिरेव वा ॥ १५७ ॥
तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये यथोचितम् ।

गद्यते अभिधीयते । आचार्यश्च माणवकैः उपाध्यायेति वाच्यः सम्बोध्य इत्यर्थः । भूपतिः पृथिवीपतिः प्रजाभिः महाराजेति वा स्वामीति वाच्यः सम्बोध्यः । युवराजस्तु उत्तमैर्मध्यमैर्जनैः कुमारो भर्तृदारको वा वाच्यः सम्बोध्यः । अधमैर्जनैस्तु कुमारको युवराजः सौम्य ! वा भद्रमुख ! इत्येवं वाच्यः । राज्ञः कुमारी सुता प्रकृतिभिः प्रजाभिः भर्तृदारिकेति वाच्या सम्बोध्या । पतिः यथा यादृशसम्बोधनादिना वाच्यस्तथा तस्य स्त्रियोऽपि ज्येष्ठमध्याधमैरुत्तममध्यम । धमैः सर्वैरेव जनैः वाच्याः सम्बोध्याः राजेव राज्ञी स्वामिनीति देवीति भट्टिनीति वाच्येत्यर्थः । सदृशी आत्मतुल्या प्रेष्या सेविका हलेति वाच्या । वेश्या हञ्जे इति वाच्या । हला हञ्जे उभे अव्यये । परनारीं पुंसा संयोजयित्री शंभल्यपरपर्य्याया स्त्री कुट्टिनी अज्जुकेति वाच्या सम्बोध्येत्यर्थः । जकारद्वयमध्यघटितोऽज्जुका शब्दः ।

अत्र विशेष उक्तो महर्षिणा—

अज्जुकेति भवेद्वाच्या वेश्या परिजनेन तु ।
या त्वत्र वृद्धा सा त्वम्बा भाष्या परिजनेन तु ॥

तथानुगतैः सेवकैर्जनैः पूज्या गुर्वङ्गनाप्रभृतिस्त्री अजरत्यपि अम्बेति वाच्या, तथा जरती परिणतवयस्का वृद्धा स्त्री अपूज्यापि अम्बेति वाच्या पापानि सन्वन्ति ददते इति पाषण्डाः कापालिकादयश्च समन्ताड्डुप्रत्ययः पृषोदरादित्वात्साधु । यस्तु कवर्गद्वितीयमध्यस्तत्र शं खण्डयन्तीति "खडि भेदने" चुरादिस्तस्मादच् प्रत्ययेन साधु ।

उक्तञ्च—

पालनाच्च त्रयी धर्मः पाशब्देन निगद्यते ।
तं खण्डयन्ति ते यस्मात्पाखण्डास्तेन हेतुना ॥ इति ।

स्वसमयागतैः स्वसंकेतप्राप्तैः आमन्त्रणैः कापालिक इत्यादिसम्बोधनपदैः वाच्या सम्बोध्याः शकादयश्च शकयवनादिजातय शाक्येति पाठे शाक्याद्यो बौद्धप्रभृतयश्च भद्र-दत्तादिनामभिः संभाष्या । यस्य यत् मालाकरणादिकर्म यद्वा शिल्पं कलादिकर्म या वा विद्या मीमांसादिः, या च वा जातिः ब्राह्मणत्वादिः, असौ सः मालाकारादिः

( ३ ) अथ भाषाविभागः—

पुरुषाणामनीचानां संस्कृतं स्यात्कृतात्मनाम् ॥ १५८ ॥
सौरसेनी प्रयोक्तव्या तादृशीनां च योषिताम् ।
आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत् ॥ १५६ ॥
अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणाम् ।
चेटानां राजपुत्राणां श्रेष्ठानां चार्धमागधी ॥ १६० ॥
प्राच्यां विदूषकादीनां, धूर्तानां स्यादवन्तिजा ।
योधनागरिकादीनां दाक्षिणात्या हि दीव्यताम् ॥ १६१ ॥
शबराणां शकादीनां शाबरीं संप्रयोजयेत् ।
वाह्लीकभाषोदीच्यानां द्राविडी द्रविडादिषु ॥ १६२ ॥

---

तेनैव तत्कर्मादिप्रकाशकेन मालाकारादिपदेनैव नाम्ना वाच्यः, मालाकार ! तार्किक ! चार्वाक ! इत्यादिना सम्बोधनं कार्य्यं इत्यर्थः । अन्ये च मित्रादयो यथोचितं ज्ञेया तथा च शाक्यभिक्षुर्भदन्तेति, भगिनीपतिरावुत्तेति, जनक आवुकेति, राज्यश्यालो राष्ट्रिय इति तत्तत्पदेन यथाशास्त्रं ज्ञातव्यम् ।

( ३ ) यस्य या भाषा स्यात्तस्य तां दर्शयितुमाह—अथ भाषेति । वक्तृविशेषस्य भाषाविशेष इत्यर्थः ।

महर्षिणा चात्र विशेषो दर्शितः । तथा च—

मागध्यवन्त्यजा प्राच्या सूरसेन्यर्धमागधी ।
बाह्लीका दाक्षिणात्या च सप्तभाषाः प्रकीर्त्तिताः ॥ इति ।

अत्र रुद्रटस्तु—

प्राकृतसंस्कृतमागधपिशाचभाषाश्च सूरसेनी च ।
षष्ठोऽत्र भूरिभेदो देशविशेषादपभ्रंशः ॥ इत्याह ।

पुरुषाणामिति । अत्र दृश्यकाव्ये अनीचानां नीचेतरेषामुत्तममध्यमानाम्, कृतात्मनां पण्डितानां शिक्षितात्मनामित्यर्थः, पुरुषाणां संस्कृतं नाम भाषा भवेत् । अत एव शकुन्तलादौ कृतात्मनां दुष्यन्तादीनामुत्तमानां कृतात्मनां तत्सारथ्यादीनां च मध्यमानां संस्कृतम् । तत्रैव राजपुरुषस्य शिक्षितत्वेऽपि नीचत्वान्न संस्कृतम् । तादृशीनाम् अनीचानां कृतात्मनां च योषितां स्त्रीणां शौरसेनी नाम भाषा कार्य्या आसामुक्तप्रकाराणा योषितामेव तु गाथासु श्लोकेषु महाराष्ट्रीं भाषां प्रयोजयेत् कविरिति शेषः । राजान्तःपुरचारिणां वामनादीनां मागधीभाषा उक्ता नाट्यविद्भिरिति शेषः । चेटानां राजसेवकानां राजपुत्राणां श्रेष्ठिनां राजवैश्यानां च अर्धमागधीभाषा उक्तेत्यत्रान्वयः । एवमग्रेऽपि । विदूषकस्य आदिपदात् राजसुतोपमात्रादीनां प्राच्या गौडीया भाषा । धूर्तानाम-सद्देवानाम् अवन्तिजा भाषा अवन्तदेशोत्पन्ना भाषा। दीव्यतां खेलनतत्पराणां योधनागरिकादीनां योद्धनागरिक-पौरादीनां दाक्षिणात्या वैदर्भीभाषा । शबराणां पर्वतीर्थभिल्लानां किरातानामित्यर्थः, शक-यवनादीनां च शाबरीं भाषां सम्प्रयोजयेत् । उदीच्यानां नागप्रभृतिजातीनां बाह्लीकभाषा । द्रविडादिषु तत्पात्रेषु द्राविडीभाषा ।

आभीरेषु तथाभीरी चाण्डाली पुक्कसादिषु ।
आभीरी शाबरी चापि काष्ठपात्रोपजीविषु ॥ १६३ ॥
तथैवाङ्गारकारादौ पैशाची स्यात्पिशाचवाक् ।
चेटीनामप्यनीचानामपि स्यात्सौरसेनिका ॥ १६४ ॥
बालानां षण्डकानां च नीचग्रहविचारिणाम् ।
उन्मत्तानामातुराणां सैव स्यात्संस्कृतं क्वचित् ॥ १६५ ॥
ऐश्वर्येण प्रमत्तस्य दारिद्र्योपद्रुतस्य च ।
भिक्षुवल्कधरादीनां प्राकृतं संप्रयोजयेत् ॥ १६६ ॥
संस्कृतं संप्रयोक्तव्यं लिङ्गिनीषूत्तमासु च ।
देवीमन्त्रिसुतावेश्यास्वपि कैश्चित्तथोदितम् ॥ १६७ ॥
यद्देश्यं नीचपात्रं तु तद्देश्यं तस्य भाषितम् ।
कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः ॥ १६८ ॥
योषित्सखीबालवेश्याकितवाप्सरसां तथा ।
वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा ॥ १६९ ॥

आभीरेषु ब्राह्मणाच्छूद्रकन्यायामुत्पन्नेषु जातिविशेषेषु आभीरीभाषा । पुक्कसादिषु चाण्डालविशेषेषु चाण्डालीभाषा । काष्ठोपजीविषु तक्षकादिषु आभीरीभाषा पत्रोपजीविषु चापि शाबरी भाषेति यथाक्रममन्वयः । अङ्गारकारजातौ लोहादिधातुजीवजातौ आदिपदात् चर्मकारजात्यादौ च तथैव आभीरी शाबरी वा भाषा । पिशाचानां देवयोनिविशेषाणां वाग् भाषा पैशाची भवेत् । अनीचानामुत्तममध्यमाधमानां चेटीनां सेविकानामपि शौरसेनिकाभाषा भवेत् । बालानां बालकानां षण्डकानां नपुंसकानां नीचग्रहविचारिणाम् अधमदैवज्ञानाम् उन्मत्तानां विक्षिप्तानाम् आतुराणाञ्च सा शौरसेनी एव भाषा भवेत् क्वाचित्कं संस्कृतमप्यमीषाम् । ऐश्वर्य्येण धनमदेन प्रमत्तस्य उन्मत्तस्य दारिद्र्येण उपस्कृतस्य वैक्लव्यमापन्नस्य भिक्षोः लिङ्गिनः वल्कलधरस्य वृक्षत्वग्धारिणः परिव्राजकस्य आदिपदात् बौद्धपरिव्राजकादेश्च प्राकृतं सौरसेन्यादिद्राविडीपर्य्यन्तानामन्यतमं महाराष्ट्री वा संप्रयोजयेत् । लिङ्गिनीषु सन्यासादिचिह्नधारिणीषु उत्तमासु उच्चजातीयासु च नारीषु कविः स्वेच्छया संस्कृतं सम्प्रयोक्तव्यम् । कैश्चित् नाट्यविद्भिः देवी महिषी मन्त्रिसुता अमात्यपुत्री वेश्या च तास्वपि तथा संस्कृतं सम्प्रयोक्तव्यमित्युदितम् अभिहितम् । नीचपात्रं तन्तुवायादिकं यद्देश्यं यद्देशीयम्, तस्य भाषितं तद्देश्यं तद्देशीयम् । अपि च कार्य्यतः प्रयोजनविशेषवशात् उत्तमादीनां नायिकादीनां नारीणां भाषाविपर्य्ययः पूर्वोक्तभाषाव्यत्यासः कार्य्यः कर्त्तव्यः उत्तमस्य राजान्तःपुरचारित्वे मागधी न तु संस्कृतम् अत एव अनर्घराघवादौ राजपुत्रस्यापि रामचन्द्रादेरुत्तमकार्य्यविधायित्वेन संस्कृतेनैव व्यवहारो वर्णितः न त्वर्धमागध्या । तथा वैदग्ध्यार्थे वैचित्र्यविशेषज्ञापनार्थं कविना योषिन्नायिका सखीनायिकायाः सहचरी बालो राजपुत्रादिः वेश्या उत्कृष्टवारयोषित् कितवो धूर्तः, अप्सरसश्च तासां तथोक्तानाम् अन्तरा अन्तरा तत्तद्भाषाणां मध्ये मध्ये संस्कृतं प्रदातव्यम् । तत्र मालतीमाधवे मालत्या योषितो यथा—"ज्वलतु

( ४ ) एषामुदाहरणान्याकरेषु बोद्ध० ानि । भाषालक्षणानि मम तातपादानां भाषार्णवे ।

( ५ ) षट्त्रिंशल्लक्षणान्यत्र, नाट्यालंकृतयस्तथा ।
त्रयस्त्रिंशत्प्रयोज्यानि वीथ्यङ्गानि त्रयोदश ॥ १७० ॥
लास्याङ्गानि दश यथालाभं रसव्यपेक्षया ।

( ६ ) यथालाभ प्रयोज्यानीति संबन्धः । अत्रेति नाटके ।

तत्र लक्षणानि—

( ७ ) भूषणाक्षरसंघातौ शोभोदाहरणं तथा ॥ १७१ ॥
हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः ।
निदर्शनाभिप्रायौ च प्राप्तिर्विचार एव च ॥ १७२ ॥
दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा ।
विशेषणनिरुक्ती च सिद्धिर्भ्रंशविपर्ययौ ॥ १७३ ॥
दाक्षिण्यानुनयौ मालार्थापत्तिर्गर्हणं तथा ।
पृच्छा प्रसिद्धिः सारूप्यं संक्षेपो गुणकीर्तनम् ॥ १७४ ॥
लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा ।

---

गगने रात्रिरिति" । तत्रैव सख्या लवङ्गिकाया यथा "वयं तथा नाम" इत्यादि । अनर्घराघवे यथा बालस्य रामस्य । मृच्छकटिके वसन्तसेनाया वेश्याया यथा 'गर्ज वा वर्ष वा" इत्यादि । अन्ययोरूह्यम् ।

( ४ ) एषामिति । भाषाविशेषाणामित्यर्थः । आकरेषु महाकविप्रबन्धेषु बोद्धव्यानि ज्ञेयानि भाषालक्षणानि, भाषार्णवे तन्निर्मितस्वप्रबन्धे बोध्यानि अवगन्तव्यानि ।

( ५ ) नाटकीयवस्तुनो मनोहरताऽतिशयं प्रदर्शयितुं विधेयमुपपादयति -षट्त्रिंशदिति । अत्र नाटके षट्त्रिंशत् लक्षणानि, सकलानि षट्त्रिंशद्धर्माणीत्यर्थः त्रयस्त्रिंशत् नाट्यालङ्कृतयः, त्रयोदश वीथ्यङ्गानि तथा दश लास्याङ्गानि,एतानि रसव्यपेक्षया रसाकाङ्क्षया यथालाभं यथायोग्यम् कविप्रयोज्यानि यस्मिन् रसे यदाकांक्षितं योग्यं च भवति तत्तस्मिन् वर्णनीयानीत्यर्थः । तथा च रसाकांक्षासत्त्व एवामीषां प्रयोगो न पुनः केवलं तदभावेऽपि वर्णनीयान्येवेति नियम इति भावः ।

( ६ ) यथालाभमिति । यथायोग्यमित्यर्थः ।

( ७ ) तत्र षट्त्रिंशल्लक्षणानि उद्दिशति -भूषणेति । भूषणम् , अक्षरसङ्घातः , शोभा, उदाहरणम् ,हेतुः, संशयः, दृष्टान्तः,तुल्यतर्कः,पदोच्चयः, निदर्शनम्, अभिप्रायः, प्राप्तिः, विचारः, दिष्टम् , उपदिष्टम् , गुणातिपातः, गुणातिशयः, विशेषणम् , निरुक्तिः, सिद्धिः, भ्रंशः, विपर्ययः, दाक्षिण्यम् , अनुनयः, माला, अर्थापत्तिः, गर्हणम् , पृच्छा, प्रसिद्धिः, सारूप्यम् , सङ्क्षेपः, गुणकीर्त्तनम् , लेशः, मनोरथः, अनुक्तसिद्धिः, प्रियवचश्च, एतानि षट्त्रिंशत् लक्ष्यते नाटकस्वरूपमेभिरिति लक्षणानि, इत्युच्यन्ते लक्षणानीत्युत्तरस्यापकर्षोऽत्र कारिकायाम् । पादपूरणार्था च तत्रोक्तिः ।

तत्र—

(८) लक्षणानि गुणैः सालंकारैर्योगस्तु भूषणम् ॥ १७५ ॥

(९) यथा—

आक्षिपन्त्यरविन्दानि मुग्धे ! तव मुखश्रियम् ।
कोषदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥

(१०) वर्णनाक्षरसंघातश्चित्रार्थैरक्षरैर्मितैः ।

(११) यथा शाकुन्तले—'राजा—कच्चित्सख्यों वो नातिबाधते शरीरसंतापः ।
प्रियंवदा—संपदं लद्धोसहो उअसमं गमिस्सदि ।'

(१२) सिद्धैरर्थैः समं यत्राप्रसिद्धोऽर्थः प्रकाशते ॥ १७६ ॥

(८) यथाक्रमं लक्षणान्यभिधातुं प्रथमं भूषणमभिधत्ते—लक्षणानीति । अथ संख्यातानां लक्षणानां लक्षणानि अभिधीयन्त इत्यर्थः, । सालङ्कारैः यमकोपमाद्यलङ्कारसहितैः गुणैर्वक्ष्यमाणमाधुर्यौजःप्रसादैः योगो मिथो मेलनं भूषयति नाट्यं यत्तत् भूषणं नाम नाटकालङ्करणम् । उक्तञ्च महर्षिणा भरतेनापि—

अलङ्कारैर्गुणैश्चैव बहुभिः समलङ्कृतम् ।
भूषणैरिव विन्यस्तैस्तद्भूषणमिति स्मृतम् ॥ इति ।

(९) उदाहरति—यथेति । आक्षिपन्तीति । हे मुग्धे ! सुन्दरि ! "मुग्धः सुन्दरमूढयोः" इति विश्वः, अरविन्दानि पद्मानि (कर्तॄणि) "वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्" इत्यमरः, तव मुखश्रियम् वदनशोभाम् आक्षिपन्ति अभिभवनाय निन्दन्ति स्पर्द्धन्ते वा नन्वेषां वदनशोभाया अभिभवने किं सामर्थ्यमित्यत आह—कोषदण्डेति । कोषो: बीजकोषो भाण्डागारश्च, दण्डो नालचतुर्थोपायश्च ताभ्यां समग्राणि सकलानि तेषां तथोक्तानाम्, एषामरविन्दानां किं कार्यं दुष्करं कठिनमस्ति ? अपि तु न किमपीत्यर्थः । अर्थश्लेषमूलोऽर्थान्तरन्यासोऽलङ्कारः । तत्र प्रथमे चरणे माधुर्यगुणः तदन्यत्र तु प्रसादगुण इत्येतेषां मिथो मेलनाद्भूषणम् ।

(१०) अक्षरसङ्घातं लक्षयति—वर्णनेति । चित्रो विदग्धमनोरमोऽर्थो येषां तैस्तथोक्तैः, मितैरल्पैः, अक्षरैः वर्णैः वर्णना यत्किञ्चित् प्रतिपादनम् अक्षराणां सङ्घातो मिश्रणमिति अक्षरसङ्घातो नाम लक्षणम् ।

तथा च भरतः—

यत्राल्पैरक्षरैः श्लिष्टैर्विचित्रमुपवर्ण्यते ।
तमप्यक्षरसङ्घातं विद्यालक्षणसंज्ञितम् ॥ इति ।

(११) उदाहरति—यथेति । राजा दुष्यन्तः । वो युष्माकं सख्यौ शकुन्तलां शरीरसंतापः स्मरज्वालः कच्चित् ! ज्ञातुमिच्छामीत्यर्थः । "साम्प्रतं लब्धौषधमुपशमं गमिष्यति इति संस्कृतम् । साम्प्रतम् अधुना लब्धं प्राप्तं औषधं भवद्रूपं येन सः तं तथोक्तम् उपशमं गमिष्यति अभीष्टलाभेन शान्तिं प्राप्स्यति ।

अत्र त्वत्प्राप्तिरेवौषधप्राप्तिरिति भङ्ग्या प्रतिपाद्यमानोऽर्थश्चित्रः अक्षराणि मितानि । तेनाक्षरसङ्घातलक्षणसमन्वयः ।

(१२) शोभालक्षणं लक्षयति—सिद्धैरर्थैरिति । सिद्धैःसाधयितुमारब्धैः स्पष्टं व्यज्य-

श्लिष्टश्लक्ष्णचित्रार्था सा शोभेत्यभिधीयते ।

यथा—

( १३ ) 'सद्वंशसंभवः शुद्धः कोटिदोऽपि गुणान्वितः ।
कामं धनुरिव क्रूरो वर्जनीयः सतां प्रभुः ।

( १४ ) यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ॥ १७७ ॥
साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतम् ।

यथा—

( १५ ) अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम् ।
का दिनश्रीर्विनार्केण का निशा शशिना विना ॥

( १६ ) हेतुर्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात् ॥ १७८ ॥

---

मानैरुपमानभूतैरित्यर्थः अर्थः सममेकवाक्येनैव यत्र अप्रसिद्धो निगूढः कश्चिदुपमेयभूतोऽर्थः विधेयान्वयार्थं प्रकाशते बुद्धिविषयी भवति श्लिष्टश्लक्ष्णश्चित्रो विदग्धमनोरमोऽर्थो यस्याः सा तादृशी नाट्यशोभनात् शोभेति शोभा नाम लक्षणम् ।

( १३ ) उदाहरति—सद्वंशेति । सतो वंशात् अन्वयात् वेणोश्च सम्भवः समुत्पन्न शुद्धो निष्पापः कीटवेधादिरहितश्च, कोटिं कोटिसंख्यकं धनं ददातीति सः तथा कोटिसंख्याकरिंश्च द्यति प्रहृताशुगैः खण्डयति भिनत्तीति स चाग्रभाग इत्यर्थः, गुणः शौर्यादिः मौर्वी च, क्रूरः कुटिलहृदयः कर्कशश्च प्रभुः धनुरिव सतां वर्जनीयः सतामिति, कर्त्तरि षष्ठी आवर्जनहेतुगुणादिसत्त्वेऽपि क्रौर्यात् वर्ज्जनीय इति भावः ।

अत्र सिद्धेन सद्वंशादिना सममेकदैव प्रसिद्धो वेण्वादिरर्थो विधेयवर्जनान्वयार्थं प्रकाशनात् श्लिष्टशब्देन विचित्रार्थवत्वाच्च शोभा ।

( १४ ) उदाहरणलक्षणं लक्षयति—यत्र तुल्यार्थेति । यत्र तुल्यार्थयुक्तेन प्रक्रान्तसमानविषयावबोधकेन वाक्येन अभिप्रदर्शनात् प्रक्रान्तार्थस्याभिप्रायबोधनात् अभिमतोऽभिप्रेतोऽर्थः साध्यते ज्ञाप्यते यत् तत् उदाह्रियत अस्मिन्निति उदाहरणं नाम लक्षणं मतम् ।

( १५ ) उदाहरति—अनुयान्त्या इति । श्रीराममनुयान्तीं सीतां प्रति अनसूयाया उक्तिरियम् । जनातीतं जनेभ्यो निर्गतं वनगमनोन्मुखमित्यर्थः, यद्वा विलक्षणालौकिकगुणशालिनम् कान्तं स्वामिनम् अनुयान्त्या अनुगच्छन्त्या त्वया भवत्या साधु समीचीनं कृतं विहितम् । तथा च अर्केण सूर्येण विना का नाम दिनश्रीर्वासरशोभा ? मेघाच्छन्नदिनश्रियोऽर्काभावो बोध्यः । शशिना चन्द्रेण च विना का नाम निशा ? अपि तु न कापीत्यर्थः । अत्रार्कं विना दिनश्रीरिव शशिनं विना निशेव कान्तं विना योषिदशोभैवेति व्यज्यते ।

प्रकृते सीतायाश्च प्रशंसारूपोऽर्थोऽभिमतस्तदुक्तवाक्येन साधनात् उदाहरणम् । अत्र च वाक्यभेदात् उपमानोपमेययोः सहैव प्रकाशनाभावात् श्लेषाभावाच्च पूर्वस्माद्भेदः ।

( १६ ) हेतुसंज्ञकलक्षणं लक्षयति—हेतुरिति । हेतुदर्शनात् प्रष्टार्थस्योपयुक्तं कारणं दर्शयित्वा समासेन संक्षेपेणोक्तम्, इष्टकृत् प्रतिपाद्यस्याभीष्टार्थबोधकरं वाक्यं हेतुसम्बन्धात् हेतुर्नाम लक्षणम् ।

( १७ ) यथा वेण्यां भीमं प्रति 'चेटी—एवं मए भणिदं भाणुमदि तुह्माणं अमुक्केसु केसेसु कहं देवीए केसा संजमिअन्तित्ति ।'

( १८ ) संशयोऽज्ञाततत्त्वस्य वाक्ये स्याद्यदनिश्चयः ।

( १९ ) यथा ययातिविजये—

इयं स्वर्गाधिनाथस्य लक्ष्मीः किं यक्षकन्यका ।
किं चास्य विषयस्यैव देवता किमु पार्वती ॥

( २० ) दृष्टान्तो यस्तु पक्षेऽर्थसाधनाय निदर्शनम् ॥ १७१ ॥

अत्रोक्तं महर्षिणा—

बहूनां भाषमाणानामनेकार्थविनिर्णयात् ।
सिद्धौ समानवचनं हेतुरित्यभिसंज्ञितः ॥ इति ।

( १७ ) उदाहरति—यथेति । 'एवं मया भणितं भानुमति ! युष्माकमुक्तेषु केशेषु कथं देव्याः केशाः संयम्यन्ते" इति संस्कृतम् ।

अत्र द्रौपद्याः केशासंयमनहेतौ भानुमत्या पृष्टे सभ्रातृकदुर्योधनवधाभावे हेतौ प्रदर्शयितव्ये वैधव्यद्योतकभानुमतीकेशमोचनाभावहेतोः प्रदर्शनात् तस्यैव च भीमस्याभिमतत्वात्संक्षेपवाक्योपन्यासेन हेतुः ।

( १८ ) संशयाख्यं लक्षणं लक्षयति—संशय इति । अज्ञाततत्त्वस्य अज्ञातं तत्त्वं येन तस्य तथोक्तस्य अज्ञाततत्त्वविशेषस्य जनस्येत्यर्थः, वाक्ये शृण्वता यदनिश्चयोऽनिर्णयः स्यात् तत् अनिश्चय एव संशयजननात् संशयो नाम लक्षणम् । यदित्यनिश्चयक्रियाविशेषणं बोध्यम् ।

अत्र मुनिः—

अपरिज्ञाततत्त्वार्थं यत्र वाक्यं समाप्यते ।
अनेकत्वाद्विचाराणां संशयः परिकीर्त्तितः ॥ इति ।

( १९ ) उदाहरति—यथेति । इयमिति । काञ्चित् दिव्यकन्यकामवलोक्य तत्त्वमजानतो ययातेः वितर्कोऽयम् । इयं किं स्वर्गाधिनाथस्य स्वर्गस्य त्रिदशालयस्य अधिनाथः स्वामी तस्य तथोक्तस्य इन्द्रस्येत्यर्थः, लक्ष्मीः राज्यश्रीः ? किं वा यक्षकन्यका ? उभयत्र काकाक्षिगोलकन्यायेन किंपदार्थान्वयः । किञ्च वा अस्यैव विषयस्य देशस्य देवता अधिष्ठात्री ? किमु वा पार्वती ?

अत्राज्ञाततत्त्वस्य ययातेर्वाक्ये श्रोतुः कन्यकातत्त्वानिश्चयात् संशयः ।

( २० ) दृष्टान्ताख्यं लक्षणं लक्षयति—दृष्टान्त इति । पक्षे अर्थस्य साध्यस्य साधनाय बोधनाय यस्तु निदर्शनं हेतुप्रदर्शनम्, स दृष्टःअन्तः साध्यस्वरूपं यस्मादर्थादिति दृष्टान्तः तत्संज्ञको लक्षणम् ।

नाट्यशास्त्रेऽप्युक्तम्—

सिद्धौ पूर्वोपलब्धौ यः समत्वमुपपादयेत् ।
निदर्शनकृतस्तज्ज्ञैः स दृष्टान्त इति स्मृतः ॥ इति ।

( २१ ) यथा वेण्याम्—'सहदेवः—आर्य ! उचितमेवैतत्तस्या यतो दुर्योधन-कलत्रं हि सा' इत्यादि ।

**( २२ ) तुल्यतर्को यदर्थेन तर्कः प्रकृतिगामिना ।**

( २३ ) यथा तत्रैव—

प्रायेणैव हि दृश्यन्ते कामं स्वप्नाः शुभाशुभाः ।
शतसंख्या पुनरियं सानुजं स्पृशतीव माम् ॥

**( २४ ) संचयोऽर्थानुरूपो यः पदानां स पदोच्चयः ॥ १८० ॥**

---

( २१ ) उदाहरति—यथेति । सहदेवः ( भीमं प्रति ) तस्या भानुमत्याः । एतत् परिहासविधानम् । सा भानुमती ।

(क) अयि ! जण्णसेणि ! पञ्च ग्गामा पत्थी अतित्ति सुणी अति ता कीमदाणीं किं दे केशा ण संजमी अन्ति ? । इति तद्वाक्यम् ।

अत्र भानुमती रूपपक्षे परिहासविधानौचित्यरूपसाध्यस्य दुर्योधनकलत्रत्वरूपहेतुप्रदर्शनात् दृष्टान्तः ।

( २२ ) तुल्यतर्काख्यं लक्षणं लक्षयति—तुल्यतर्क इति । प्रकृतगामिना प्रस्तुतेन न तु प्रकृतिविपर्यासरूपेण अद्भुतेन, अर्थेन वस्तुना यत् तर्को भाव्यर्थानुसन्धानं स तु द्वारद्वारिणोर्वस्तुनोः समानतर्कणात्तुल्यतर्को नाम लक्षणम् । अत्रापि यदित्यव्ययम् । महर्षिणा त्वत्रेत्थमभिहितम्—

रूपकैरुपमानैर्वा तुल्यार्थाभिः प्रयोक्तृभिः ।
अप्रत्ययार्थसंस्पर्शस्तुल्यतर्कः प्रकीर्त्तितः ॥ इति ।

( २३ ) उदाहरति—यथेति । तत्रैवेत्यस्य वेण्यामेवेत्यर्थः । प्रायेणेति ।।नकुलेनाहिशतं हत्वा भानुमत्याः स्तने क्षत इति भानुमत्या दृष्टे स्वप्ने कथितदुर्योधनस्याशङ्केयम् । हि यतः प्रायेणैव शोभते एभिरिति शुभाः करणे घञ् शुभाश्चाशुभाश्चेति शुभाशुभाः स्वप्नाः शयनसमयेऽन्तःकरणपरिणामविशेषाः कामं यथेष्टम् दृश्यन्ते अवलोक्यन्ते । इयम् ईदृशी अहिगता पुनः स्वप्नानां शतसंख्या सानुजं दुःशासनादिभिः सहितम्, मां दुर्योधनम्, स्पृशतीव प्रत्येकं सम्बध्नातीव । अस्माकमपि शतसंख्यकत्वात् सर्पाणामपि तथात्वात् उभयोस्तुल्यसंख्यकत्वेन मम चेतसि महद्भयमित्यर्थः । पथ्यावक्त्रं छन्दः ।

अत्र प्रस्तुतानेकभ्रातृमरणतर्कणद्वारा-भविष्यत्स्वकीयादिमरणतर्कणात्तुल्यतर्कः ।

( २४ ) पदोच्चयाख्यं लक्षणं लक्षयति—सञ्चय इति अर्थानुरूपः । अभिधेयतुल्यः सुकुमारार्थे सुकुमारः उद्भटार्थे च उद्भट इत्यर्थः, यः पदानां सञ्चयः समूहः स पदोच्चयो नाम लक्षणम् ।

उक्तं च महर्षिणाऽपि—

बहूनां च प्रयुक्तानां पादानां बहुभिः पदैः ।
उच्चयः सदृशार्थो यः स विज्ञेयः पदोच्चयः ॥ इति

---

(क) "अयि ! याज्ञसेनि ! पञ्चग्रामाः प्रार्थ्यन्त इति श्रूयते तत् कस्मादिदानीमपि ते केशा न संयम्यन्ते" इति संस्कृतम् ।

( २५ ) यथा शाकुन्तले—

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।

कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥

( २६ ) अत्र पदपदार्थयोः सौकुमार्यं सदृशमेव ।

( २७ ) **यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ।**

**परपक्षव्युदासार्थं तन्निदर्शनमुच्यते ॥ ९८१ ॥**

( २८ ) यथा—

क्षात्रधर्मोचितैर्धर्मैरलं शत्रुवधे नृपाः ।

किं तु बालिनि रामेण मुक्तो बाणः पराङ्मुखे ॥

( २५ ) उदाहरति—यथेति । अधर इति । राज्ञा शकुन्तलावर्णनमिदम् । अधरोऽधरोष्ठः किसलयस्य पल्लवस्येव "पल्लवोऽस्त्री किसलयम्" इत्यमरः, रागो लौहित्यं यस्य स तथोक्तः रागेण किसलयसदृश इति भावः । बाहू भुजौ "भुजबाहू प्रवेष्टो दोः" इत्यमरः, कोमलौ मृदुलौ विटपौ स्कन्धोर्ध्वशाखे तदनुकारिणौ तत्सदृशावित्यर्थः । "स्कन्धादूर्ध्वं तरोः शाखाकटप्रो विटपो मतः" इति कात्यः । कोमलपदोपादानात्तयोरभ्रजत्वं प्रतीयते । तथा अङ्गेषु शरीरावयवेषु कुसुममिव पुष्पमिव लोभनीयं चित्तापकर्षकम् यौवनं तारुण्यम्, सन्नद्धं सञ्जातं स्वात्मना आविर्भूतमित्यर्थः । अङ्गेष्विति बहुवचनोपादानात् मुखे सुन्दरत्वम्, लोचनयोश्चञ्चलत्वम् कण्ठे त्रिरेखावत्त्वं कम्बुसाम्यं च, वक्षसि कुचयोरौन्नत्यम्, नाभौ निम्नत्वम्, नितम्बे मध्यनिम्नत्वं मांसलत्वं च उभयभागे चतुरस्रत्वम्, जघनजङ्घाजानुषु मांसलत्वम्, ऊर्वोर्विशालत्वं शीतलत्वं मृदुलत्वं च गतौ सविलासत्वमित्यादि व्यज्यते । मुख्यार्थबाधितः सन्नद्धशब्दो जहल्लक्षणया यौवनं लक्षयति तद्गतातिशयश्च प्रयोजनम् ।

( २६ ) लक्ष्ये लक्षणं संयोजयति—अत्रेति । अर्थो यथा कोमलस्तथा पदोच्चयोऽपि कटुवर्णविरहात् कोमल इत्यर्थः । सदृशमेवेति । अतः पदोच्चय इति भावः ।

उद्भटार्थे उद्भटपदोच्चयो यथा उत्तररामचरिते—

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविधाविर्भवत्

क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात् ।

उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-

र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥ इति ।

अत्र शब्दार्थयोरुद्भटत्वं सदृशमेवातः पदोच्चयः ।

( २७ ) निदर्शनाख्यं लक्षणं लक्षयति—यत्रार्थानामिति । यत्र परपक्षव्युदासार्थं परमतनिरासार्थम्, प्रसिद्धानाम् अर्थानां विषयाणाम्, परिकीर्तनं विधीयते तत् दृष्टान्तनिदर्शनात् निदर्शनं नाम लक्षणमुच्यते नाट्यविद्भिरिति शेषः ।

( २८ ) उदाहरति—यथेति । क्षात्रधर्मेति । नृपा राजानः क्षात्रधर्मोचितैः क्षत्रियजात्युचितैः, धर्मैः धर्मनियमैः सम्मुखसङ्ग्रामादिभिः शत्रुवधे रिपूच्छेदे अलं समर्था भवन्तीति शेषः । किन्त्विति यथार्थे । तथा च यथा रामेण पराङ्मुखे सुग्रीवेण सार्कं योधने व्यग्रे वालिनि सुग्रीवभ्रातरि बाणेन मुक्तः प्रक्षिप्तः ।

( २९ ) **अभिप्रायस्तु सादृश्यादभूतार्थस्य कल्पना ।**

( ३० ) यथा शाकुन्तले—

इदं किलाव्याजमनोहरं वपुस्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया समिल्लतां छेत्तुमृषिर्व्यवस्यति ॥

( ३१ ) **प्राप्तिः केनचिदंशेन किंचिद्यत्रानुमीयते ॥ १८२ ॥**

( ३२ ) यथा मम प्रभावत्याम्—'अनेन खलु सर्वतश्चरता चञ्चरीकेणावश्यं विदिता भविष्यति प्रियतमा मे प्रभावती ।'

( ३३ ) **विचारो युक्तिवाक्यैर्यदप्रत्यक्षार्थसाधनम् ।**

---

अत्र प्रथमार्द्धार्थक्षत्रधर्मनिरासार्थं परासक्ते वालिनि श्रीरामस्य बाणमोक्षः प्रसिद्धोऽर्थ उत्तरार्द्धेनार्थेन कीर्त्तनान्निदर्शनम् ।

( २९ ) अभिप्रायाख्यं लक्षणं विधत्ते—अभिप्रायस्त्विति । सादृश्यात् अभूतार्थस्य असम्भविनोऽर्थस्य कल्पना आपादनम्, तु अभिप्रायविशेषेण कल्पनात् अभिप्रायो नाम लक्षणम् ।

उक्तञ्च मनुनाऽपि—

अभूतपूर्वो योऽप्यर्थः सादृश्यात्परिकल्पितः ।
लोकेस्यो हृदयग्राही सोऽभिप्राय इति स्मृतः ॥ इति ।

( ३० ) उदाहरति—यथेति । इदं किलेति । तपस्योचितवेशां शकुन्तलामवलोक्य दुष्यन्तस्योक्तिरियम् । यः ऋषिः कण्वः, इदं पुरो दृश्यमानं शाकुन्तलीयमिति भावः अव्याजेन स्वभावेन न त्वलङ्करणादिनेत्यर्थः मनोहर सुन्दरम् अकृत्रिमरम्यमित्यर्थः, वपुः शरीरम्, किलेति निश्चयेन, अनुकम्पायामसहने वा किलशब्दः । तपःक्लमं तपस्याक्लेशतत्परम्, साधयितुं कारयितुम्, इच्छति अभिलषति । स ऋषिः कण्वः, ध्रुवं निश्चितम्, नीलोत्पलपत्रस्य इन्दीवरदलस्य धारया अग्रभागेन निशितमुखेनेत्यर्थः "खड्गादीनां च निशितमुखे धारा प्रकीर्त्यते" इति विश्वः, नीलोत्पलपत्रधारयेति कथनेन सौकुमार्यं खड्गादिसादृश्यं च व्यज्यते, शमीलताम् अतिकठिनं लताविशेषं छेत्तुं कर्त्तितुम्, व्यवस्यति प्रयतते । उत्पलपत्रधारया शमीलताच्छेदनमिव शकुन्तलाशरीरेण तपःसाधनमसम्भवीत्यर्थः ।

अत्र लतारूपसादृश्यात् नीलोत्पलपत्रधारया असम्भविनः शमीलताछेदनस्यापादनादभिप्रायः ।

( ३१ ) प्राप्त्याख्यं लक्षणं निरूपयति—प्राप्तिरिति । यत्र केनचित् अंशेन विशेषणेन वाक्यभागेनेत्यर्थः, किञ्चिदनुमीयते तत् आत्मनः प्राप्तेः प्राप्तिर्नाम लक्षणम् ।

उक्तं च महर्षिणा—

दृष्ट्वैवावयवान् कांश्चिद्भावो यत्रानुमीयते ।
प्राप्तिं तामपि जानीयाल्लक्षणं नाटकाश्रयम् ॥ इति ।

( ३२ ) उदाहरति—यथेति । अनेनेति । चञ्चरीकेण द्विरेफेण ।

अत्र 'सर्वतश्चरते' ति विशेषणेन भ्रमरकर्तृकप्रभावतीदर्शनानुमानात्प्राप्तिः ।

( ३३ ) विचाराख्यं लक्षणं निरूपयति—विचार इति । युक्तिवाक्यैः हेतुबोधकवाक्यैः

(३४) यथा मम चन्द्रकलायाम्—'राजा—नूनमियमन्तः पिहितमदनविकारा वर्तते । यतः-

'हसति परितोषरहितं निरीक्ष्यमाणापि नेक्षते किंचित् ।
सख्यामुदाहरन्त्यामसमञ्जसमुत्तरं दत्ते ॥'

**(३५) देशकालस्वरूपेण वर्णना दिष्टमुच्यते ॥ १८३ ॥**

(३६) यथा वेण्याम्—'सहदेवः—

यद्वैद्युतमिव ज्योतिरार्ये क्रुद्धेऽद्य संभृतम् ।
तत्प्रावृडिव कृष्णेयं नूनं संवर्धयिष्यति ॥'

**(३७) उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः ।**

---

अप्रत्यक्षार्थस्य परोक्षवस्तुनः यत् साधनं ज्ञापनम्, स विचारविषयत्वाद्विचारो नाम लक्षणम् ।

उक्तं च महर्षिणाऽपि—

पूर्वदेशसमानार्थैरप्रत्यक्षार्थसाधनैः ।
अनेकापोहसंयुक्तो विचारः परिकीर्त्तितः ॥ इति ।

(३४) उदाहरति—यथेति । राजेति । अन्तः पिहितो हृदयऽवरुद्धो मदनविकारः कामवेगो यस्याः सा तथोक्ता । हसतीति । परितोषः सन्तोषस्तद्रहितं यथास्यात्तथा हसति, अन्येन निरीक्ष्यमाणावलोक्यमानापि किञ्चिन्नेक्षते, सख्यां वयस्यायां प्रियसहचर्यामित्यर्थः उदाहरन्त्यां यत्किञ्चित् कथयन्त्याम्, असमञ्जसम् अयोग्यम् आकाङ्क्षानिवर्त्तकमित्यर्थः, उत्तरं दत्ते ।

अत्र नूनमित्यादि पद्यान्तभागे अप्रत्यक्षस्यान्यचित्तस्थितमदनविकारस्य "हसती"त्यादिसमस्तयुक्तिवाक्य ज्ञापनाद्विचारः । पूर्वोक्तमनुमानन्त्वंशेनेति ततोऽस्य भेदः ।

(३५) दिष्टाख्यं लक्षणं निरूपयति—देशकालेति । देशकालयोः स्वरूपेण साधर्म्येण वर्णना देशकालयोः स्वरूपेणोद्दिष्टत्वात् दिष्टं नाम लक्षणमुच्यते ।

नाट्यशास्त्रेऽपि—

यथादेशं यथाकालं यथारूपं च वर्ण्यते ।
यत्प्रत्यक्षं परोक्षं वा दृष्टं तद्वर्णतोऽपि वा ॥ इति ।

(३६) उदाहरति—यथेति । यद्वैद्युतमिति । अद्य इदानीम् क्रुद्धे कुपिते, आर्ये भीमसेने, विद्युतो भावो वैद्युतमिव तड़िद्भवतुल्यम्, यत् ज्योतिः क्रोधजनितं स्वतेजः सम्भृतम् आविष्कृतम्, इयं कृष्णा द्रौपदी, प्रावृट् वर्षाकाल इव नूनं निश्चयं तज्ज्योतिः संवर्धयिष्यति संवर्धनं करिष्यति । यथा प्रावृट्कालो विद्युत्तेजः संवर्द्धयति तथैव द्रौपदीयं भीमक्रोधं संवर्धयिष्यतीत्यर्थः ।

अत्र कालस्य साधर्म्येण भीमक्रोधद्रौपद्योर्वर्णनाद्दिष्टम् ।

(३७) उपदिष्टाख्यं लक्षणं निरूपयति—उपदिष्टमिति । शास्त्रानुसारतः प्रयुक्तम्, शास्त्रमत्र नीतिशास्त्रम् तथा मनोहारि रमणीयम्, वाक्यम् उपदिष्टं नाम लक्षणम् ।

यदुक्तं नाट्यशास्त्रे—

परिगृह्य च शास्त्रार्थं यद्वाक्यमभिधीयते ।
विद्वन्मनोहरत्वन्तदुपदिष्टं तदुच्यते ॥ इति ।

( ३८ ) यथा शाकुन्तले—

शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने,
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने, भाग्येष्वनुत्सेकिनी,
यान्त्येवं गृहिणीपदं युवतयो, वामाः कुलस्याधयः ॥

**( ३९ ) गुणातिपातः कार्यं यद्विपरीतं गुणान्प्रति ॥ १८४ ॥**

( ३८ ) उदाहरति—यथेति । शुश्रूषस्वेति । पतिगृहे प्रेष्यमाणां शकुन्तलां प्रति कण्वस्योपदेशोऽयम् । गुरून् श्वश्रूश्वसुरादिपूज्यजनान् शुश्रूषस्व सेवस्व अनलसा सती सभावं पादसंवाहनादिरूपां सेवां विधेहीत्यर्थः, श्रृणोतेः सन्नन्तात् "ज्ञाश्रुस्मृदृशां सनः" इति पाणिनीयसूत्रेणात्मनेपदम् । विध्यर्थे लोट् प्रयोगो ज्ञेयः ।

उक्तं च—

भर्तृशुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया ।
तद्बन्धूनां च कल्याणि ! प्रजानां चानुपोषणम् ॥ इति

परत्र चेह च श्रेयः साधनतया प्राधान्यात्तत्सूचनाय गुरुशुश्रूषणस्य प्रथमोपादानम्, उत्तरत्राप्येवं क्रमो ज्ञेयः । सपत्नीजने समान एकः पतिर्यस्याः सेति विग्रहे समासे "नित्यं सपत्न्यादिषु" इति पाणिनीयसूत्रेण निपातनात नकारादेशो ङीप्, समानस्य सादेशश्च सपत्नीति सा एव जनस्तस्मिन् तथोक्ते भर्तुः पाणिगृहीतद्वितीयस्त्रीजने इत्यर्थः, प्रियसखीवृत्तं प्रियसहचरीव्यवहारं कुरु विधेहि । इयमस्मत्प्रियसहचरीति यथा चेतसि उदियात्तथा तदाचरणमनुतिष्ठेत्यर्थः । विप्रकृतापि भर्त्रैव तिरस्कृताऽपि अपिना आदृता तु किं वक्तव्यम्, रोषणतया क्रोधनतया भर्तुः स्वामिनः प्रतीपं प्रतिकूलं मा स्म गमः न प्राप्नुहि तदनुकूलवर्तिन्येव सदा भव न प्रतिकूलवर्त्तिनीत्यर्थः । अन्यथा पातिव्रत्यं भज्येत इति भावः । परिजने सेवकसेविकादौ भूयिष्ठमत्यन्तं दक्षिणा उदारस्वभावा भव यथा सेवकादयस्त्वयि बद्धप्रेमाः भवन्ति तथा तन्मनोरथपूर्त्तिद्वारा उदारहृदया भवेत्यर्थः । तथा भोगेषु महादेव्यादिस्थानलब्धसुखेषु सत्स्वपीत्यर्थः । जन्मप्रभृतिवनवासिन्याः सहजदुर्भगायाः तथाविधं चक्रवर्त्तिविभवं लब्ध्वाऽहङ्कारस्यावश्यं भावित्वादिति भावः । एवमनेन प्रकारेण विद्यमाना इति शेषः, युवतयस्तरुण्यो गृहिणीपदं गृहीणीति व्यपदेशं गृहिण्याः स्थानं वा यान्ति लभन्ते किन्तु वामा उपदिष्टविपरीतकारिण्यो युवतयः कुलस्य पत्युः पित्रोश्चान्वयस्य आधयो मनोव्यथास्तदुत्पादिका भवन्तीति शेषः । तस्मादुपदिष्टप्रतिकूलस्वभावा मा भवेति भावः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं (१४८ पृ०)

अत्र समासेन वात्स्यायनोक्तनीतिशास्त्रानुसारिमनोहरवाक्यत्वादुपदिष्टम् ।

( ३९ ) गुणातिपाताख्यं लक्षणं निरूपयति—गुणातिपात इति । गुणाः स्ववृत्तिगुणास्तान् प्रति तेषां गुणानामित्यर्थः, तथा च स्ववृत्तिगुणानां विपरीतं विरोधि यत् स्वकार्यं तत् गुणस्यातिपतनादतिक्रमणात् गुणातिपातो नाम लक्षणम् ।

उक्तं च—

गुणाभिधानैर्विविधैर्विपरीतार्थयोजितैः ।
गुणातिपातो मधुरः इति ॥

( ४० ) यथा मम चन्द्रकलायां चन्द्रं प्रति—

तह संहरिज्जइ तमो घेप्पइ सअलेहि ते पाओ ।
वससि सिरे पसुवइणो तहवि ह इत्थीअ जीअणं हरसि ॥

( ४१ ) यः सामान्यगुणोद्रेकः स गुणातिशयो मतः ।

( ४२ ) यथा तत्रैव—'राजा—( चन्द्रकलाया मुखं निर्दिश्य )

असावन्तश्चञ्चद्विकचनवनीलाब्जयुगल-
स्तलस्फूर्जत्कम्बुर्विलसदलिसंघात उपरि ।
विना दोषासङ्गं सततपरिपूर्णाखिलकलः
कुतः प्राप्तश्चन्द्रो विगलितकलङ्कः सुमुखि ! ते ॥

( ४० ) उदाहरति-यथेति । "चन्द्रं प्रति कान्तविरहिता चन्द्रकला प्राह" इति शेषः । तह संहरिज्जइ इति ।

त्वया संह्रियते तमो गृह्यते सकलैस्तव पादः ।
वससि शिरसि पशुपतेस्तथापि स्त्रीणां जीवनं हरसि ॥

इति संस्कृतम् । यद्यपि त्वया भवता तमोऽन्धकारं संह्रियते अपाक्रियते तथापि सकलैः समग्रैर्लोकैस्ते तव पादो मयूखचरणश्च शिरसा धार्यते, संहर्तुश्चरणोपासनं विरुद्धन्तथापि सम्प्रति सम्भवतीति भावः । यद्यपि वा त्वं पशुपतेरीशस्यापि "शम्भुरीशः पशुपतिः" इत्यमरः, शिरसि मूर्ध्नि वससि तिष्ठसि तथापि स्त्रियः मत्सदृशप्रोषितभर्तृकाया जीवनं हरसि कामातिशयेन घातयसि ।

अत्रैतादृशमहत्त्वगुणयुक्तोऽपि तद्विरोधिस्त्रीजीवनहरणरूपाधमकार्यात् गुणातिपातः ।

( ४१ ) गुणातिशयाख्यं लक्षणं निरूपयति—यः सामान्येति । सामान्यगुणस्य उपमानोपमेयवृत्तिसाधारणधर्मस्य उद्रेकः उपमेयगतस्य कस्यचिद्धर्मस्य आधिक्यम्, गुणं सामान्यधर्ममतिशेत इति गुणातिशयो नाम लक्षणं मतः ।

नाट्यशास्त्रेऽपि—

बहून् गुणान् कीर्तयित्वा सामान्यजनसम्भवान् ।
विशेषः कीर्त्यते यस्तु ज्ञेयः सोऽतिशयो बुधैः ॥ इति ।

( ४२ ) उदाहरति—यथेति । असाविति । चन्द्रकलाया मुखमवलोक्य राज्ञ उक्तिरियम् । शोभनं मुखं यस्यास्तत्सम्बुद्धौ हे सुमुखि ! सुवदने इत्यर्थः, अन्तर्मध्यभागे चञ्चत् चञ्चलं विकचं विकसितं नवं नूतनं नीलाब्जयुगलं नयनद्वयरूपं नीलोत्पलद्वयं यस्य स तथोक्तः । तथा तलेऽधोभागे स्फूर्जत् देदीप्यमानः कम्बु कण्ठरूपो यस्य स तथोक्तः, कण्ठस्य रेखाभिः स एव कम्बुः शङ्खः । तथा उपरि उपरिभागे विलसन् शोभमानः अलिसङ्घातः भ्रमरसमूहो यस्य स तथोक्तः, अत्र केशा एवालिसङ्घातः । तथा दोषाया रात्रेरासङ्ग एव दोषाणामासङ्गस्तं विना दोषरहित इत्यर्थः, सततमनारतमेव परिपूर्णाखिलकलः कला शास्त्राणि षोडशभागश्च विगलितकलङ्कः कलङ्करहितः असौ दृश्यमानः मुखरूपश्चन्द्रः ते तव समीपे कुतः प्राप्तः, उपस्थितः । सम्बन्धविवक्षया निष्ठासंयोगेऽपि षष्ठी । शिखरिणीच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

( ४३ ) सिद्धानर्थान्बहूनुक्त्वा विशेषोक्तिर्विशेषणम् ॥ १८५ ॥

( ४४ ) यथा —

तृष्णापहारी विमलो द्विजावासो जनप्रियः ।
ह्रदः पद्माकरः किंतु बुधस्त्वं स जलाशयः ॥

( ४५ ) पूर्वसिद्धार्थकथनं निरुक्तिरिति कीर्त्यते ।

( ४६ ) यथा वेण्याम्—

'निहताशेषकौरव्यः—' इत्यादि । ( ५२५ पृ० )

( ४७ ) बहूनां कीर्तनं सिद्धिरभिप्रेतार्थसिद्धये ॥ १८६ ॥

अत्राह्लादकत्वादिसाधारणधर्मवतश्चन्द्रापेक्षया उपमेयभूतमुखस्य विगलितकलङ्कत्व-रूपसम्बन्धाधिक्याद् गुणातिशयः ।

( ४३ ) विशेषणाख्यं लक्षणं निरूपयति—सिद्धानिति । सिद्धान् उपमानोपमेयभूत-त्वेन प्रसिद्धान् बहून् उत्कर्षहेतून् अर्थान् सामान्यधर्मान् उक्त्वा अभिधाय विशेषस्य यस्य कस्यचिद् भेदकधर्मस्य उक्तिः कथनम् उपमेये उपमानव्यावर्तकधर्मोक्तिरित्यर्थः, विशिष्यते अनेनेति विशेषणं नाम लक्षणम् ।

तथा चोक्तं तत्रैव—

सिद्धान् बहून् प्रधानार्थान् उक्त्वा यत्र प्रयुज्यते ।
विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम् ॥ इति ।

( ४४ ) उदाहरति—यथेति । तृष्णापहारीति । अत्र त्वं चेत्यर्थवशाल्लभ्यते । ह्रदः सर-पुष्करिण्यादिरूपो गर्त इति यावत्, त्वं च, तृष्णां जलपिपासां धनाकाङ्क्षाञ्च अपहरसि जलदानेन धनदानेन च निवर्तयसीति तृष्णापहारी, विमलः स्वच्छजलः पापरहितश्च द्विजानां पक्षिणां "दन्ता विप्राण्डजा द्विजाः" इत्यमरः, विप्राणाञ्च आवासोऽधिकरण-माश्रयश्च, जनानां प्रियः हितकारित्वात् सन्तोषदायकः, तथा पद्मानां पद्मायाश्च आ-करो निवासस्थानम् । इत्थमुभयसाधारणानुकूलधर्मानभिधाय भेदकधर्ममभिदधाति-किन्त्विति । त्वं बुधः पण्डितः स तु ह्रदः जलानां सलिलानामाशय आधारः ख्यात एव जडाशयो मन्दबुद्धिः डलयोरेकत्वात् ।

अत्र तृष्णापहारित्वादीन् बहून् सामान्यधर्मानभिधाय बुधत्वजलाशयत्वरूपव्यावर्त-कधर्माभिधानात् विशेषणम् ।

( ४५ ) निरुक्त्याख्यं लक्षणं निरूपयति—पूर्वसिद्धेति । पूर्वं सिद्धानां जातानाम् अर्थानां वस्तूनां कथनं पूर्वसिद्धत्वादेव निश्चयेनोक्तिः निरुक्तिर्नाम लक्षणम् ।

आह च—

निरवद्यस्य वाक्यस्य पूर्वोक्ता तु प्रसिद्धये ।
यदुच्यते तु वचनं निरुक्तं तदुदाहृतम् ॥ इति ।

( ४६ ) उदाहरति—यथेति । निहतेति । प्रतिज्ञाहेतुसम्भवरूपस्य विमर्शसन्ध्यङ्ग-स्यापीदमुदाहरणमुपाधिभेदादविरुद्धम् ।

अत्र पूर्वसिद्धसमस्तकौरव्यादिवधनकथनान्निरुक्तिः ।

( ४७ ) सिद्ध्याख्यं लक्षणं निरूपयति—बहूनामिति । अभिप्रेतार्थसिद्धये इष्टवस्तु

( ४८ ) यथा—

यद्वीर्यं कूर्मराजस्य यश्च शेषस्य विक्रमः ।
पृथिव्या रक्षणे राजन्नेकत्र त्वयि तत्स्थितम् ॥

( ४९ ) हृष्टादीनां भवेद्भ्रंशो वाच्यादन्यतरद्वचः ।

( ५० ) यथा वेण्याम्—कञ्चुकिनं प्रति 'दुर्योधनः—

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे नचिरात्पाण्डुसुतः सुयोधनम् ॥'

---

सिद्धये बहूनाम् अनेकेषां कीर्त्तनं कथनं अभिप्रेतार्थसिद्धिनिमित्तकथनादेव सिद्धिर्नामलक्षणम् । बहूनामित्यनेकोपलक्षणं तेन यद्वीर्यमित्युदाहरणस्य नासङ्ग्रहः । तथा चैकस्मिन् बहूनां गुणकथनं सिद्धिरित्यर्थः ।

उक्तं च—

बहूनां च प्रयुक्तानां नाम यत्राभिकीर्त्यते ।
अभिप्रेतार्थसिद्ध्यर्थं सा सिद्धिरभिधीयते ॥ इति ।

( ४८ ) उदाहरति—यद्वीर्यमिति । हे राजन् ! कूर्मराजस्य शेषनागभारवहनकर्त्तुः कच्छपपतेः यद्वीर्यं यत् सामर्थ्यम् , शेषस्य पृथिवीभारकर्त्तुः शेषनागस्य च यो विक्रमः पराक्रमः पृथिव्या रक्षणे पालने एकत्र त्वयि तदुभयमेव स्थितं वर्त्तमानम् अस्तीति शेषः ।

अत्र राज्ञः पृथिवीपालनभारसहिष्णुतातिशयरूपाभिप्रेतार्थसिद्धये कूर्मराजशेषनागवलयोरुभयोः कीर्त्तनात् सिद्धिः ।

( ४९ ) भ्रंशाख्यं लक्षणं निरूपयति—हृष्टादीनामिति । हृष्टस्य साहङ्कारस्य आदिपदात् हृष्टदुःखितादेश्च, वाच्यात् वक्तुमिष्टात् अन्यतरद्विपरीतं वचो वाक्यं भ्रंशो नाम लक्षणं भवेत् ।

तदुक्तम्—

वाच्यमर्थं परित्यज्य हृष्टादिभिरनेकधा ।
अन्यस्मिन्नेव पतनादिह भ्रंशः स इष्यते ॥ इति ।

( ५० ) उदाहरति—यथेति । स्वप्रशंसाकर्णनादहङ्कारेण ज्ञानशून्यो दुर्योधनो विपरीतमुक्तवान्-सहभृत्यगणमिति । पाण्डुसुतो युधिष्ठिरः स्वबलेन स्वपराक्रमेण सहभृत्यगणं भृत्यगणेन सहितम् , सहस्यसादेश्याभावे चेदम् , सबान्धवं बन्धुजनसहितम् , सहमित्रं कर्णादिसहितम् , ससुतं लक्ष्मणादिपुत्रवर्गसहितम् , सहानुजं दुर्योधनादिसहितम् , सुयोधनं दुर्योधनं न चिरात् द्रुतमेव संयुगे सङ्ग्रामे निहन्ति घातयिष्यन्ति, वर्त्तमानसामीप्ये लट् ।

ललिताच्छन्दः "ससजा विषमे यदा गुरू समरा स्याल्ललिता समे लगौ" इति लक्षणात् ।
केचित्तु—सुन्दरीवृत्तमित्याहुः ।

अत्र "न चिरात्पाण्डुसुतं सुयोधनः" इत्येवं वक्तव्ये वक्तुर्दुर्योधनस्य गर्वितत्वेन 'पाण्डुसुत'मिति कर्मपदस्थाने "पाण्डुसुत" इति कर्तृपदस्य, "सुयोधन" इति कर्तृपदस्थाने कर्मपदस्य च विपरीताभिधानात् भ्रंशः ।

**( ५१ ) विचारस्यान्यथाभावः संदेहात्तु विपर्ययः ॥ १८७ ॥**

( ५२ ) यथा—

मत्वा लोकमदातारं संतोषे यैः कृता मतिः।
त्वयि राजनि ते राजन्न तथा व्यवसायिनः॥

**( ५३ ) दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्तनम्।**

वाचा यथा—

( ५४ ) प्रसाधय पुरीं लङ्कां राजा त्वं हि बिभीषण !।
आर्येणानुगृहीतस्य न विघ्नः सिद्धिमन्तरा॥

( ५५ ) एवं चेष्टयापि।

---

( ५१ ) विपर्ययाख्यं लक्षणं निरूपयति—विचारस्येति। सन्देहात् संशयात् विचारस्य तत्त्वनिश्चयस्य अन्यथाभावः विपर्ययो नाम लक्षणम्। सन्देहानन्तरं यो निर्णयस्तस्यान्यथात्वमित्यर्थः।

तथा चोक्तम्—

विचारस्यान्यथाभावस्तथा दृष्टोपयोगतः।
सन्देहात् कल्प्यते यस्तु स विज्ञेयो विपर्ययः॥ इति।

( ५२ ) उदाहरति—यथेति। मत्वेति। यैः पुरुषैः लोकम् अदातारं मत्वा, सन्तुष्टे याचनया धनप्राप्तिं विनैव प्रसन्ने, मतिः कृता। हे राजन्? त्वयि राजनि राजति विद्यमाने सति ते पुरुषाः तथा व्यवसायिनः याचनया धनलाभं विनैव सन्तोषावलम्बिनः "न विद्यन्त" इति शेषः, किन्तु अत्यन्तदानशीलं भवन्तं बुध्वा याचयन्तीति भावः।

अत्र "लोकमदातारमि"त्यनेन सामान्यतया सर्वलोकादातृत्वनिश्चयस्य "अयं राजा दाताऽस्ति न वा" इति सन्देहेन पूर्वविचारस्यागाद्विपर्ययः।

( ५३ ) दाक्षिण्याख्यं लक्षणं निरूपयति—दाक्षिण्यमिति। चेष्टया शारीरिकव्यापारेण वाचा वचनेन वा परचित्तस्य, अनुवर्त्तनं प्रीणनं, दक्षिणस्य भावः दाक्षिण्यं नाम लक्षणम्।

उक्तं च—

हृष्टैः प्रसन्नवदनैर्यत्परस्यानुवर्त्तनम्।
क्रियते वान्यचेष्टाभिस्तद्दाक्षिण्यमिति स्मृतम्॥ इति।

( ५४ ) उदाहरति—प्रसाधयेति। बिभीषणचित्तप्रीणनार्थं लक्ष्मणस्योक्तिरियम्। हे बिभीषण ? लङ्का पुरीं नगरीं प्रसाधय अधिष्ठानेन शोभय, हि यतः त्वं तस्या लङ्काया राजा। कथमित्याह—आर्येणेति। आर्येण श्रीरामभद्रेण अनुगृहीतस्य रक्षितस्य जनस्य सिद्धिमन्तरा कार्यसिद्धिं विना विघ्न अन्तरायो न स्यात् न भवेत्।

अत्रैतादृशवचनेन बिभीषणचित्तप्रीणनात् दाक्षिण्यम्।

( ५५ ) एवं चेष्टयापीति। तद्यथा शाकुन्तले—

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम्॥

(५६) वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनम् ॥ ८८ ॥

(५७) यथा वेण्याम्—अश्वत्थामानं प्रति 'कृपः—दिव्यास्त्रग्रामकोविदे भारद्वाजतुल्यपराक्रमे किं न संभाव्यते त्वयि ।'

(५८) माला स्याद्यदभीष्टार्थं नैकार्थप्रतिपादनम् ।

(५९) यथा शाकुन्तले—'राजा—

किं शीकरैः क्लमविमर्दिभिरार्द्रवातं
संचारयामि नलिनीदलतालवृन्तम् ।
अङ्के निवेश्य चरणावुत पद्मताम्रौ
संवाहयामि करभोरु ! यथासुखं ते ॥'

अत्र शकुन्तलायाश्चेष्टया दुष्यन्तस्य प्रीणनम् ।

यथा च तत्रैव— 'तदहमेनामनृणां करोमि (इत्यङ्गुलीयकं ददाति')। अत्राङ्गुलीयदानरूपचेष्टया शकुन्तलाचित्तप्रीणनम् ।

(५६) अनुनयाख्यं लक्षणं निरूपयति—वाक्यैः स्निग्धैरिति । प्रेमद्योतकैः वाक्यैर्वचनैःअर्थस्य प्रयोजनस्य साधनं सम्पादनम् अनुनयसम्बन्धादनुनयो नाम लक्षणं भवेत् ।

उक्तं च महर्षिणा—

उभयोः प्रीतिजननोर्विरुद्धाभिनिविष्टयोः ।
अर्थस्य साधकश्चैव विज्ञेयोऽनुनयो बुधैः ॥ इति ।

(५७) उदाहरति—यथेति । दिव्यास्त्रग्रामकोविदे उत्कृष्टास्त्रसमूहविदुषे भारद्वाजो द्रोणस्तस्य तुल्यः सदृशः पराक्रमो यस्य तस्मिन् तथोक्ते ।

अत्रैवंविधप्रेमद्योतकवचनैः युद्धप्रवर्त्तनरूपप्रयोजकसाधनादनुनयः ।

(५८) मालाख्यं लक्षणं निरूपयति—मालेति । अभीष्टार्थं स्वाभीष्टसिद्धये यत् नैकार्थस्य प्रतिपादनम् । अनेकविषयस्य ज्ञापनम्, सा अनेकार्थज्ञापनविषयत्वादेव माला नाम लक्षणं भवेत् ।

उक्तं च—

ईप्सितार्थप्रसिद्ध्यर्थं कीर्त्यंते यत्र सूरिभिः ।
प्रयोजनान्यनेकानि सा मालेत्यभिसंज्ञिता ॥ इति ।

(५९) उदाहरति—यथेति । राजा दुष्यन्तः । शकुन्तलासम्भोगरूपस्वाभीष्टसिद्ध्यर्थं शुश्रूषाप्रकारं विकल्पयति—किं शीकरैरिति । करभाविव मणिबन्धादाकनिष्ठाङ्गुलिपर्य्यन्तप्रदेशाविव "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः, ऊरू जङ्घे यस्याः तत्सम्बुद्धौ हे करभोरु ? क्लमविमर्द्दिभिः शरीरतापनाशिभिः शीकरैः जलबिन्दुभिः, आर्द्रः क्लिन्नः शीतलो वातः वायुर्यस्य तत्तथोक्तम्, नलिन्याः कमलिन्याः दलमेव पत्रमेव तालवृन्तं व्यजनं "व्यजनं तालवृन्तं स्यात्" इत्यमरः, तत् किं सञ्चालयामि व्यापारयामि ? उत किं वा पद्मे कमले इव ताम्रौ अरुणौ रक्तवर्णावित्यर्थः, ते तव चरणौ पादौ अङ्के मदीये उत्सङ्गे "उत्सङ्गचिह्नयोरङ्कः" इत्यमरः, निधाय स्थापयित्वा सुखमनतिक्रम्य यथासुखम् यथार्थेऽव्ययीभावः, मन्दं मन्दम्, येन विधिना ते सुखं भवेत्तेनैव विधिनेत्यर्थः संवाहयामि मर्द्दयामि "संवाहनं मर्द्दनं स्यात् "इत्यमरः, मर्द्दनेन खेदम-

**( ९० ) अर्थापत्तिर्यदन्यार्थोऽर्थान्तरोक्तेः प्रतीयते ॥ १८९ ॥**

( ९१ ) यथा वेण्याम्—द्रोणोऽश्वत्थामानं राज्येऽभिषेक्तुमिच्छतीति कथयन्तं कर्णं प्रति '**राजा**—साधु अङ्गराज ! साधु । कथमन्यथा—

दत्त्वाभयं सोऽतिरथो वध्यमानं किरीटिना ।
सिन्धुराजमुपेक्षेत नैव चेत्कथमन्यथा ॥'

**( ९२ ) दूषणोद्घोषणायां तु भर्त्सना गर्हणं तु तत् ।**

( ९३ ) यथा तत्रैव—कर्णं प्रति '**अश्वत्थामा**—

निर्वीर्यं गुरुशापभाषितवशात्किं मे तवेवायुधं
संप्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा ।

पनयामीत्यर्थः । तथाचात्र शुश्रूषा विधानाय मयि विद्यमाने सख्योर्गमनेऽपि न काचिदनुपपत्तिरिति अलमावेगेनेति तत्रत्याशयः । वसन्ततिलकं छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

अत्रात्मानं प्रति शकुन्तलायां सम्भोगरूपस्वाभीष्टसिद्ध्यर्थं दुष्यन्तस्य व्यजनसञ्चालनपादसंवाहनरूपानेकार्थज्ञापनान्माला ।

( ९० ) अर्थापत्तिर्नाम लक्षणं निरूपयति—अर्थापत्तिरिति । अर्थान्तरोक्तेः अन्यार्थप्रतिपादनात् यदन्यार्थः प्रतीयते तत् अर्थस्यापत्तिर्बुद्धावुपस्थितिरर्थापत्तिर्नाम लक्षणम् । तथा चोक्तं भरतेन—

अर्थान्तरस्य कथने यत्राऽन्योऽर्थः प्रतीयते ।
वाक्यमाधुर्यसंयुक्तं सार्थापत्तिरुदाहृता ॥ इति ।

( ९१ ) उदाहरति—यथेति । अङ्गराज ! इति कर्णसंबोधनम् । एवं त्वदुक्तं सत्यम् अन्यथा न चेत् राज्ये स्वपुत्राभिषेकेच्छा न चेदित्यर्थः तदा अतिरथः अगणितैः सह योद्धा स द्रोणः तेनैव किरीटिना अर्जुनेन वध्यमानं सिन्धुराजं जयद्रथं कथमुपेक्षेत तद्विमोचनायार्जुनं हन्तुमवश्यमेव यतेत यतस्तन्न कृतमतः स्वपुत्राभिषेक एव नूनं तद्धृदि आसीदित्यवगम्यते ।

अत्र सिन्धुराजोपेक्षारूपार्थान्तरोक्त्या द्रोणस्य स्वपुत्राभिषेकाभिप्रायरूपान्यार्थप्रतीतेरर्थापत्तिः ।

( ९२ ) गर्हणाख्यं लक्षणं निरूपयति—दूषणेति । दूषणोद्घोषणायां दोषोद्घाटनवेलायां या तु भर्त्सना तत्तु गर्हणं नाम लक्षणम् ।

नाट्यशास्त्रे तु—

अत्र संकीर्तयन् दोषं गुणमर्थेन दर्शयेत् ।
गुणातिपाताद् दोषाद्वा गर्हणं नाम तद्भवेत् ॥ इति ।

( ९३ ) उदाहरति—यथेति । तत्रैव वेण्यामवेत्यर्थः । निर्वीर्यमिति । तव इव मे ममापि आयुधम् अस्त्रम् गुरुः परशुरामस्तस्य शापरूपं भाषितं वाक्यं तद्वशात्तदधीनात् किं निर्वीर्यं बलहीनमेव किं करिष्यतीत्यर्थः । अयमत्र शापहेतुः—(कर्णो हि सूतजातमात्मानं संगोप्य स्वस्य विप्रत्वं प्रसिद्धीकृत्य परशुरामाच्छस्त्रविद्यां लब्धवान् । अनन्तरञ्च क्षत्त्राऽयमिति ज्ञातस्तेन तस्मै "तवायुधं निर्वीर्यं स्यादिति शप्त इति ) । त्वं यथा त्वमिव अहमपि किं सम्प्रत्येव भयात् भीतेः समरं सङ्ग्रामं विहाय परित्यज्य प्राप्त-

जातोऽहं स्तुतिवंशकीर्तनविदां किं सारथीनां कुले

क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्रेण नास्त्रेण यत् ॥'

(६४) अभ्यर्थनापरैर्वाक्यैः पृच्छार्थान्वेषणं मता ॥ १८० ॥

(६५) यथा तत्रैव - 'सुन्दरकः—अज्जा, अवि णाम सारधिदुदिओ दिट्ठो तुह्मेहिं महाराओ दुर्योधणो ण वेत्ति ।'

(६६) प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनम् ।

(६७) यथा विक्रमोर्वश्याम् —'राजा—

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।

स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥

---

शिविरे उपस्थितोऽस्मि ! अहं स्तुतिं राजस्तुतिं वंशकीर्तनं राजवंशावलीगुणोद्घोषणाञ्च विदन्तीति तेषां तथोक्तानां सारथीनां सूतानां कुले वंशे किं जातः उत्पन्नः ? नेति भावः । क्षुद्रेण अरातिना शत्रुणा कृतं जनितं वैरमपकारम् अस्रेण नयनाम्भसा किं प्रतिकरोमि प्रतिक्रियां सम्पादयामि ? अपितु कथमपि नेत्यर्थः । अस्त्रेण आयुधेन किं न प्रतिकरोमि ? अपि तु आयुधेनैव प्रतिक्रियां करोमीत्यर्थः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक् । ( १९८ पृ० )

अत्र शस्त्रादेर्निर्वीर्यत्वादिरूपदूषणोद्घोषणया दूष्यमाणस्य कर्णस्य भर्त्सनात् गर्हणम् ।

( ६४ ) पृच्छाख्यं लक्षणं निरूपयति—अभ्यर्थनेति । अभ्यर्थनापरैः सत्कारप्रार्थनासूचकैः वाक्यैर्वचनैः अर्थानां विषयाणाम् । अन्वेषणं मार्गणं पृच्छा नाम लक्षणम् ।

उक्तं च—

यत्राकारोद्भवैर्वाक्यैरात्मानमथवा परम् ।

पृच्छ्यते चाभिधत्तेऽर्थं सा पृच्छेत्यभिसंज्ञिता ॥ इति ।

( ६५ ) उदाहरति—यथेति । अज्जा इति । सुन्दरको कर्णसारथिः । "आर्याः, अपि नाम सारथिद्वितीयो दृष्टो युष्माभिर्महाराजो दुर्योधनो न वेति" इति संस्कृतम् ।

अत्र आर्या इति सत्कारप्रार्थनाद्योतक वचनेन दुर्योधनमार्गणात् पृच्छा ।

( ६६ ) प्रसिद्धाख्यं लक्षणं निरूपयति—प्रसिद्धिरिति । उत्कृष्टैः लोकसिद्धार्थैः लोकप्रसिद्धवस्तुभिः अर्थस्य पदार्थविशेषस्य साधनं परिचयः प्रसिद्धार्थैः साधनत्वात् प्रसिद्धिर्नाम लक्षणम् ।

उक्तं च—

वाक्यैः सातिशयैरुक्ता वाक्यार्थस्य प्रसाधकैः ।

लोकप्रसिद्धैर्बहुभिः प्रसिद्धिरिति कीर्तिता ॥ इति ।

( ६७ ) उदाहरति –यथेति । सूर्याचन्द्रमसाविति । स्वपरिचयवर्णनमिदम् । यस्य पुरूरवसः सूर्यश्च चन्द्रमाश्चेति तौ सूर्याचन्द्रमसौ मातामहपितामहौ मातुः पिता पितुः पिता च 'स्तः' इति शेषः । यो द्वाभ्याम् उर्वश्या भुवा च पतिः स्वयं वृत इत्यर्थः । सोऽहं पृच्छामीति शेषः । अत्रेदमवगन्तव्यम्— सूर्यपौत्रस्य मानवस्य सुद्युम्नस्य—"इतः प्रभृति य ओगममिष्यति स स्त्री भविष्यतीति शिवेन शप्ते प्रदेशे प्रविष्टस्य स्त्रीत्वे जाते इति सूर्यो मातामहः पुरूरवस्य राज्ञः । तथा चन्द्रात्मजस्य बुधस्यात्मज इति चन्द्रो

( ६८ ) सारूप्यमनुरूपस्य सारूप्यात्क्षोभवर्धनम् ॥ १६१ ॥

( ६९ ) यथा वेण्याम्-दुर्योधनभ्रान्त्या भीमं प्रति 'युधिष्ठिरः—दुरात्मन् ! दुर्योधनहतक !–'इत्यादि ।

( ७० ) संक्षेपो यत्तु संक्षेपादात्मान्यार्थे प्रयुज्यते ।

( ७१ ) यथा मम चन्द्रकलायाम्—राजा—प्रिये !

अङ्गानि खेदयसि किं शिरीषकुसुमपरिपेलवानि मुधा ।

( आत्मानं निर्दिश्य— )

अयमीहितकुसुमानां सम्पादयिता तवास्ति दासजनः ॥

( ७२ ) गुणानां कीर्तनं यत्तु तदेव गुणकीर्तनम् ॥ १६२ ॥

---

त्वस्य पितामहः । (यद्यपि सूर्यस्योक्तरीत्या प्रमातामहत्वमवगम्यते तथाऽप्युपचारात्तथा-प्रयोगो ज्ञेयः ) ।

अत्रोत्कृष्टाभ्यां लोकप्रसिद्धाभ्यां सूर्याचन्द्रमोभ्यां स्वस्य परिचयसाधनात् प्रसिद्धिः।

( ६८ ) सारूप्याख्यं लक्षणं निरूपयति—सारूप्यमिति । अनुरूपस्य सदृशस्य सारू-प्यात् सादृश्यजनितभ्रमात् अनुभूतस्य इति पाठे सादृश्यात् भ्रमविषयस्येत्यर्थः । क्षोभेण सविषादाधैर्येण वर्तनमाचरणं सादृश्यप्रयोज्यत्वात्सारूप्यं नाम लक्षणम् ।

मत्पिणाऽपि—

दृष्टश्रुतानुभूतार्थकथनादिभिः समुद्भवम् ।

सादृश्यभ्रमजनितं सारूप्यमिति संज्ञितम् ॥ इति ।

( ६९ ) उदाहरति—यथेति । "दुर्योधनेन भीमो हतः" इति वयस्यचनवचनेन भ्रम-विषयस्य युधिष्ठिरस्य दुर्योधनं हत्वा उपस्थिते भीमसेने दुर्योधनसदृशावलोकनेन दुरात्म-न्नित्यादिक्षोभप्रयुक्ताचरणात् सारूप्यम् ।

( ७० ) संक्षेपाख्यं लक्षणं निरूपयति—संक्षेप इति । संक्षेपात् अविशेषात् ल्यप् लोपे पञ्चमी यत्तु अन्यार्थं अर्थान्तरस्थाने आत्मा प्रयुज्यते निर्दिश्यते तत् सङ्क्षिप्तवा-क्यप्रयोजकत्वात्सङ्क्षेपो नाम लक्षणम् ।

( ७१ ) उदाहरति—यथेति । अङ्गानीति । शिरीषकुसुमवत् परिपेलवानि सर्वथा-तिमृदुलानि अङ्गानि मुधा व्यर्थं किं कुतः खेदयसि कुसुमापचयार्थं आयासमुत्पादयसि ! अयं दासजनः सेवकः तव ईहितकुसुमानां चेतुमभिलषितानां पुष्पाणां सम्पादयिता पुष्प-चयनकर्त्ता अस्ति ।

अत्रायमित्यनेन आत्मा अन्यो वेति न विशेषकथनम् , अत एवार्थान्तरस्थाने आ-त्मनः संक्षेपप्रयोगात् सङ्क्षेपः ।

( ७२ ) गुणकीर्त्तनाख्यं लक्षणं निरूपयति—गुणानामिति । गुणादीनां सौन्दर्यादीना-मित्यर्थः । कीर्त्तनं कथनम् ।

तथा चोक्तं महर्षिणा—

लोके गुणातिरिक्तानां गुणानां यत्र नामभिः ।

एकोऽपि शब्द्यते तत्तु विज्ञेयं गुणकीर्त्तनम् ॥ इति ।

( ७३ ) यथा तत्रैव—

'नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि—' इत्यादि ( पृ. ) ।

**( ७४ ) स लेशो भण्यते वाक्यं यत्सादृश्यपुरःसरम् ।**

( ७५ ) यथा वेण्याम्—'राजा—

हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम् ।

या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति ॥'

**( ७६ ) मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत् ॥ १०३ ॥**

( ७७ ) यथा—

रतिकेलिकलः किंचिदेष मन्मथमन्थरः ।

पश्य सुभ्रु ! समालम्भात्कादम्बश्चुम्बति प्रियाम् ॥

( ७३ ) उदाहरति—यथेति । नेत्रे इति । प्राग्व्याख्यातमेव ।

अत्र कामिन्याः सौन्दर्यगुणकीर्त्तनाद् गुणकीर्त्तनम् ।

( ७४ ) लेशाख्यं लक्षणं निरूपयति—स लेश इति । सादृश्यपुरःसरं सादृश्यतात्पर्यकम्, यद्वाक्यं यद्वचनं भण्यते सः सादृश्यप्रकाशनसम्बन्धाल्लेशो नाम लक्षणम् ।

उक्तं च—

यद्वाक्यं वाक्कुशलैरुपायेनाभिधीयते ।

सदृशार्थविनिष्पन्नः स लेश इति कीर्त्तितः ॥ इति ।

( ७५ ) उदाहरति—यथेति । हत इति । शिखण्डिनं द्रुपदात्मजं नपुंसकम्, पुरस्कृत्य अग्रे कृत्वा, जरति वृद्धे गाङ्गेये गङ्गापुत्रे भीष्मे, हते अर्जुनेन पातिते सति पाण्डुपुत्राणां युधिष्ठिरादीनां या श्लाघा प्रशंसा अस्माकं धार्त्तराष्ट्राणामपि अभिमन्युवधे सैव तत्सदृशैव श्लाघा भविष्यति । यदि वृद्धस्य कपटेन व्यापादनाद् पाण्डुपुत्रा न प्रशंसनीयाः तर्हि वयमपि बालकस्यासहायस्याभिमन्योर्व्यापादने न प्रशंसनीयाः यदि ते प्रशंसनीयास्तर्हि वयमपीति दुर्योधनाभिप्रायः ।

अत्र सादृश्याभिद्योतकवाक्यप्रयोगाल्लेशः ।

( ७६ ) मनोरथाख्यं लक्षणं निरूपयति—मनोरथस्त्विति । भङ्ग्यन्तरेण भङ्गिविशेषेण अभिप्रायस्य स्वाभिप्रायस्थवृत्तान्ततुल्यस्य अन्यदीयवृत्तान्तस्य यदुक्तिप्रदर्शनं स मनोरथविशेषेणोक्तत्वान्मनोरथो नाम लक्षणम् ।

महर्षिणाऽपि—

हृद्यार्थस्य वाक्यस्य गूढार्थस्य विभावकम् ।

अन्यापदेशैः कथनं मनोरथ इति स्मृतः ॥ इति ।

( ७७ ) उदाहरति रतिकेलीति । शोभनौ भ्रुवौ यस्यास्तत्सम्बुद्धौ हे सुभ्रु ! रतिकेलौ सुरतक्रीडायां कलो मधुरास्फुटाल्पध्वनिवादी मन्मथेन कामावेगेन मन्थरोऽलसः एष कश्चित् कादम्बः कलहंसः 'कादम्ब कलहंसः स्या'दित्यमरः, समालम्भात् प्रियप्राप्त्या आदराधिक्यात् प्रियां हंसीं चुम्बति इति पश्य अवलोकय ।

अत्र कादम्बकर्तृकप्रियचुम्बनप्रदर्शनभङ्ग्या तत्तुल्यस्य स्वाभिप्रायस्थप्रियाचुम्बनस्य प्रदर्शनान्मनोरथः ।

( ७८ ) **विशेषार्थोहविस्तारोऽनुक्तसिद्धिरुदीर्यते ।**

( ७९ ) यथा—'गृहवृक्षवाटिकायाम्—

दृश्येते तन्वि ! यावेतौ चारुचन्द्रमसं प्रति ।
प्राज्ञे कल्याणनामानावुभौ तिष्यपुनर्वसू ॥'

( ८० ) **स्यात्प्रमाणयितुं पूज्यं प्रियोक्तिर्हर्षभाषणम् ॥ १९४ ॥**

( ८१ ) यथा शाकुन्तले—

उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं विधिस्तव प्रसादस्य पुरस्तु संपदः ॥

( ७८ ) अनुक्तिसिद्ध्याख्यं लक्षणं निरूपयति—विशेषेति । विशेषो रूपलावण्याद्यतिशयज्ञापनं स एवार्थः प्रयोजनं यस्य स तादृशस्तस्य प्रकरणे सति ऊहविस्तारः तर्कातिशयः प्रकरणाभावे तु तादृशोहासम्भव एव अनुक्तसिद्धिर्नाम लक्षणम् ।

उक्तं च—

प्रस्तावेनैव शेषोऽर्थः कृत्स्नो यत्र प्रतीयते ।
वचनेन विजानातु सिद्धिः सा परिकीर्त्तिता ॥ इति

( ७९ ) उदाहरति—यथेति ।

दृश्येते इति । उद्यानवाटिकायां विश्वामित्रसन्निधे श्रीरामलक्ष्मणौ दृष्ट्वा हरधनुर्भङ्गात्पूर्वं सीतां प्रति तत्सखीनां वितर्कवर्णनमिदम् । हे तन्वि ! कृशाङ्गि ! चारुचन्द्रमसं प्रति मनाक्चन्द्रसमीपे यावेतौ दृश्येते अवलोक्येते, हे प्राज्ञे ! बुद्धिमति ! उभावेव कल्याणं मङ्गलं नाम ययोस्तौ तथोक्तौ तिष्यपुनर्वसुनक्षत्रे तत्सदृशसुन्दराकृतीत्यर्थः ।

अत्र विश्वामित्र राम लक्ष्मणानां सौन्दर्यातिशयबोधनार्थं पृथिव्यां चन्द्र-तिष्य-पुनर्वसुनामसम्भवेन तेषु वर्णनेन च वितर्कातिशयादनुक्तिसिद्धिः ।

( ८० ) प्रियोक्तिसंज्ञकं लक्षणं निरूपयति—स्यादिति । पूज्यं जनं प्रमाणयितुं प्रमाणत्वेन उत्कृष्टत्वेन ज्ञापयितुं हर्षजनकं भाषणम् आनन्दोत्पादकं वचनमित्यर्थः प्रियोक्तिर्नाम लक्षणं स्यात् ।

तथा च मुनिः—

यत्प्रसन्नेन मनसा पूज्यं पूजयितुं वचः ।
हर्षप्रकाशनार्थं तु सा प्रियोक्तिरुदाहृता ॥ इति ।

( ८१ ) उदाहरति—उदेतीति । कश्यपं प्रति दुष्यन्तस्योक्तिरियम् । पूर्वं फलसमागमात्प्राक् कुसुमं फलहेतुभूतं पुष्पम् उदेति आविर्भवति ततस्तदनन्तरं फलम् । आम्रादीनां कुसुमकार्यभूतं फलम् उदेति कारणस्य कार्यनियतपूर्ववृत्तित्वादिति भावः । तथा प्राक् जलवर्षणात्पूर्वं घनोदयः जलहेतुभूतमेघाविर्भावो जायते इति शेषः, तदनन्तरं ततःपरं पयः घनोदयकार्यभूतं वृष्टिजलं जायते । अत्रापि कारणस्य तथात्वादिति भावः । अत एव निमित्तनैमित्तिकयोः कारणकार्यमात्रयोः अयं विधिः पौर्वापर्यनियमः, तु किन्तु तव प्रसादस्य सम्पद्धेतुभूतानुग्रहस्य पुरः पूर्वमेव सम्पदः कार्यभूतसुतदारादिलाभसम्पत्तयो भवन्ति । अतश्च कारणकार्ययोर्नियतपौर्वापर्यवैपरीत्यादद्भुतोऽयं तव प्रसन्नतायाः प्रभाव इत्याशयः । वंशस्थं छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

( ८२ ) अथ नाट्यालंकाराः—

( ८३ ) आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः ।
उत्प्रासनस्पृहाक्षोभपश्चात्तापोपपत्तयः ॥ १९५ ॥
आशंसाध्यवसायौ च विसर्पोल्लेखसंज्ञितौ ।
उत्तेजनं परीवादो नीतिरर्थविशेषणम् ॥ १९६ ॥
प्रोत्साहनं च साहाय्यमभिमानोऽनुवर्तनम् ।
उत्कीर्तनं तथा याच्ञा परिहारो निवेदनम् ॥ १९७ ॥
प्रवर्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनम् ।
इति नाट्यालंकृतयो नाट्यभूषणहेतवः ॥ १९८ ॥

( ८४ ) आशीरिष्टजनाशंसा—

( A ) यथा--शाकुन्तले--

यथातेरिव शर्मिष्ठा पत्युर्बहुमता भव ।
पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥

---

अत्र कश्यपमुनि प्रमाणीकर्तु तदीयहर्षोत्पादकभाषणात् प्रियोक्तिः ।

( ८२ ) नाट्यालङ्कृतयस्त्रयस्त्रिंशदिति यदुक्तं ता अभिधातुमाह—अथेति । नाट्यलक्षणप्रतिपादनानन्तरं नाट्यालङ्कारा निरूप्यन्त इत्यर्थः ।

( ८३ ) ता अलङ्कृतीरुद्दिशति—आशीरित्यादि । आशीः, आक्रन्दः, कपटम्, अक्षमा, गर्वः, उद्यमः, आश्रयः, उत्प्रासनम्, स्पृहा, क्षोभः, पश्चात्तापः, उपपत्तिः, आशंसा, अध्यवसायः, विसर्पः, उल्लेखः, उत्तेजनम्, परीवादः, नीतिः अर्थविशेषणम्, प्रोत्साहनम्, साहाय्यम्, अभिमानः, अनुवर्त्तनम्, उत्कीर्त्तनम्, याच्ञा, परिहारः, निवेदनम्, प्रवर्त्तनम्, आख्यानम्, युक्तिः प्रहर्षः, उपदेशनञ्च इति एतानि त्रयस्त्रिंशत् नाट्यभूषणहेतवः अभिनयकाव्यशोभोत्पादिका नाट्यालङ्कृतयो व्यवह्रियन्ते ।

( ८४ ) तत्राशीराख्यामलङ्कृतिं निरूपयति—आशीरिति । इष्टजनस्य स्वप्रियपुंसः आशंसा अभिमतप्राप्तीच्छा आशीर्वाद इत्यर्थः, आशीर्नाम नाट्यालङ्कारः ।

( A ) उदाहरति—यथेति । ययातेरिवेति । शकुन्तलां प्रति महर्षिकण्वस्य शुभाशंसनमिदम् । ययातिर्नाम कश्चिद् चन्द्रवंशीयो राजा तस्य ययातेः, शर्मिष्ठा वृषपर्वराजपुत्री तत्पट्टराज्ञी इव, त्वं शकुन्तला, पत्युः दुष्यन्तस्य बहुमता अत्यादरस्थानीया भव । तथा सा शर्मिष्ठा पूरुं पुरुनामानं पुत्रमिव त्वमपि सम्राजं राजसमूहस्य शास्तारं चक्रवर्तिनमित्यर्थः ।

येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।
शास्ति यश्चाज्ञया राज्ञः स सम्राट्······॥ इत्यमरः ।

पुत्रम् आत्मजम्, अवाप्नुहि प्राप्नुहि ।

"पुराकिल राजर्षिः ययातिर्नाम शुक्रदुहितां देवयानीं वृषपर्वपुत्रीं शर्मिष्ठाञ्चोपयेमे । किन्तु अनयोर्मध्ये शर्मिष्ठैव तत्प्रियतमा बभूवेति । अत एव तत्पुत्रः पूरुरेव वृद्धपितुराज्ञया सम्राट्पदमलञ्चकार" इति महाभारतीया कथात्रानुसन्धेया ।

( ८५ ) ..................आक्रन्दः प्रलपितं शुचा ।

( ८६ ) यथा वेण्याम्---'कञ्चुकी--हा देवि ! कुन्ति, ! राजभवनपताके !--' इत्यादि ।

( ८७ ) **कपटं मायया यत्र रूपमन्यद्विभाव्यते ॥ १९९ ॥**

( ८८ ) यथा कुलपत्यङ्के—

मृगरूपं परित्यज्य विधाय कपटं वपुः ।
नीयते रक्षसा तेन लक्ष्मणो युधि संशयम् ॥

( ८९ ) **अक्षमा सा परिभवः स्वल्पोऽपि' न विषह्यते ।**

( ९० ) यथा शाकुन्तले—'राजा- भोः सत्यवादिन् ! अभ्युपगतं तावदस्माभिः । किं पुनरिमामभिसन्धाय लभ्यते । शार्ङ्गरवः—विनिपातः--' इत्यादि ।

---

अत्रोपमया सत्स्वप्यनेकासु रमणीषु त्वमेव पट्टराज्ञी भूया इति राजा च त्वत्पुत्रमेव यौवराज्येऽलङ्करिष्यतीति च व्यञ्जितम् ।

अत्रेष्टस्य महिषीपदस्य पुत्रस्य चाशंसनादाशीः ।

( ८५ ) आक्रन्दाख्यमलङ्कारं निरूपयति—आक्रन्द इति । शुचा शोकेन प्रलपितं रोदनम् आक्रन्दो नाम नाट्यालङ्कारः ।

( ८६ ) उदाहरति—यथेति । राजभवनस्य पताका स्वाचरणादिना पताकावद् सर्वोत्कृष्टा तत्सम्बोधने ।

अत्र शोकेन विलापकरणादाक्रन्दः ।

( ८७ ) कपटाख्यमलङ्कारं निरूपयति—कपटमिति । यत्र मायया व्याजेन अन्यद्रूपं विभाव्यते प्रकाश्यते तत् कपटं नाम नाट्यालङ्कारः ।

( ८८ ) उदाहरति—यथेति । मृगरूपमिति । तेन रक्षसा राक्षसेन मारीचेन मृगरूपं मृगधर्मं स्वरविशेषं परित्यज्य अर्थाल्लक्ष्मणेत्यस्वरविशेषं स्वीकृत्येत्यर्थः, कपटं वपुः छद्मयुक्तं पूर्ववत् राक्षसशरीरं धृत्वा युधि स्वामी लक्ष्मणः संशयं प्राणसन्देहं नीयते प्राप्यते ।

अत्र कपटेन मारीचस्य मृगस्वरूपाभावरूपग्रहणात् कपटम् ।

( ८९ ) अक्षमाख्यमलङ्कारं निरूपयति—अक्षमेति । स्वल्पोऽपि परिभवोऽवमानो यत्र विषह्यते सोढुं न शक्यते सा अक्षमानाम नाट्यालङ्कारो भवेत् ।

( ९० ) उदाहरति—यथेति । मुनिजनाक्षिप्तो राजा सोपहासं ब्रवीति—भो इति । अभ्युपगतं स्वीकृतम् , वयम् एवंविधा भवद्भिर्हितप्रतारा परवञ्चनतत्परा अनाप्तवाचा एवेत्यर्थः । प्रेक्षावतामन्यथा प्रवृत्तिर्न भवति अत आह—किं पुनरिति । इमां तपस्विनीं बालां शकुन्तलाम् , अभिसन्धाय वञ्चयित्वा किं फलं पुनर्लभ्यते किमपि नेत्यर्थः । एवं च सर्वत्र वञ्चने किमपि प्रयोजनमवलोक्यते किन्त्वस्यास्तपस्विन्याः शकुन्तलायाः वञ्चने कस्यचित्प्रयोजनस्याभावात् निरर्थकैव वञ्चनेत्यभिप्रायः । एवं श्रुत्वा कुपितः शार्ङ्गरव आह—विनिपात इति । विनिपात अधोगतिः सर्वनाश इति यावत् इमामभिसन्धाय लभ्यत इत्यनेन पूर्वेणान्वयः ।

तथा च तपस्विन्यवमाननजनितदुरितेन नूनमात्मनोऽधो गतिरेव भविष्यतीति तात्पर्यम् ।

( ६१ ) गर्वोऽवलेपजं वाक्यं—

( ६२ ) यथा तत्रैव--'राजा—ममापि नाम सत्त्वैरभिभूयन्ते गृहाः।'

( ६३ ) ..................कार्यस्यारम्भ उद्यमः॥ २००॥

( ९४ ) यथा कुम्भाङ्के--'रावणः—

पश्यामि शोकविवशोऽन्तकमेव तावत्'।

( ६५ ) ग्रहणं गुणवत्कार्यहेतोराश्रय उच्यते।

( ६६ ) यथा विभीषणनिर्भर्त्सनाङ्के--'विभीषणः—राममेवाश्रयामि।' इति।

( ६७ ) उत्प्रासनं तूपहासो योऽसाधौ साधुमानिनि॥ २०१॥

( ६८ ) यथा शाकुन्तले--'शार्ङ्गरवः—राजन्। अथ पुनः पूर्ववृत्तान्तमन्यसङ्गाद्विस्मृतो भवान्। तत्कथमधर्मभीरोर्दारपरित्यागः--' इत्यादि।

अत्र भोः सत्यवादिन्नित्याक्षेपोक्त्या दुष्यन्तकृतालपस्याप्यवमानस्य "विनिपात" इत्युक्त्या शार्ङ्गरवेणासहनादक्षमा।

( ९१ ) गर्वाख्यमलङ्कारं निरूपयति—गर्व इति। अवलेपजम् अहङ्कारजन्यं वाक्यं गर्वो नाम नाट्यालङ्कारः।

( ९२ ) उदाहरति—यथेति। सत्वैः प्राणिभिः।

अत्र ममापीत्यनेन व्यञ्जिताहङ्कारजन्यवाक्याद् गर्वः।

( ९३ ) उद्यमाख्यमलङ्कारं निरूपयति—कार्यस्येति कार्यस्य यस्य कस्यचित् कर्मणः आरम्भः आद्यकृतिः उद्यमो नाम नाट्यालङ्कारः।

( ९४ ) उदाहरति—यथेति। पश्यामीति। इन्द्रजित् शोकार्तस्य रावणस्य स्वयं समरोद्यमे आत्मनोऽन्तकत्वकथनमिदम्।

अत्र समररूपकार्यारम्भस्य पश्यामीत्यादौ सूचितत्वादुद्यमः।

( ९५ ) आश्रयाख्यमलङ्कारं निरूपयति—ग्रहणमिति। कार्यहेतोः। यत् किञ्चित्कार्यसाधनकारणम्, गुणवदुत्कृष्टं ग्रहणम् उत्कृष्टजनस्याश्रयणम् आश्रयो नाम नाट्यालङ्कार उच्यते।

( ९६ ) उदाहरति—यथेति। अत्रात्मनो लङ्काधिपत्यस्य गुणवत्कार्यस्य हेतो रामस्याश्रयणादाश्रयः।

( ९७ ) उत्प्रासनाख्यमलङ्कारं निरूपयति—उत्प्रासनमिति। आत्मानं साधु मन्यत इति "आत्ममाने खश्च" इति पा० सूत्रेण णिनिः। वृद्ध्यादिकृतसाधुमानी तस्मिन् साधुमानिनि आत्मनि साधुत्वमानिन्यसाधौ जने इत्यर्थः। यस्तु उपहासः तत् उत्प्रास्यतेऽन्यस्य हृदयमस्यर्थं क्षुभ्यते अनेनेति उत्प्रासनं नाम नाट्यालङ्कारो भवेत्।

( ९८ ) उदाहरति—यथेति। शार्ङ्गरवः कण्वशिष्य आह इति शेषः। अथेति प्रश्ने "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः, पूर्ववृत्तान्तं शकुन्तलायाः गान्धर्वपरिणयरूपम्, व्यासङ्गात् बहुतरकार्ये व्यापृतत्वात् अन्यस्त्रीसंसर्गरूपमोहाद्वा विस्मृतं स्मृतिमार्गाद्विच्युतं भवेत् सम्भावनायां लिङ्। अधर्मभीरोः पापाद्भयशङ्किनो भवतः। तथा च यदि ते अधर्माद् भयं वर्तते तदा दारपरित्यागः कथं विधीयते तत्राप्यधर्मोत्पत्त्यापत्। तथा च गौतमः—

( ९९ ) आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा ।

(१००) यथा तत्रैव--'राजा—

चारुणा स्फुरितेनायमपरिक्षतकोमलः ।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः ॥'

( १ ) अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु ॥ २०२ ॥

( २ ) यथा—

त्वया तपस्विचाण्डाल ! प्रच्छन्नवधवर्तिना ।
न केवलं हतो वाली स्वात्मा च परलोकतः ॥

( ३ ) मोहावधीरितार्थस्य पश्चात्तापः स एव तु ।

---

'पतिताऽत्यागयपतितत्यागिनश्च पतितः' इति । एवं सत्यपतिदारपरित्यागान्महत्पापं ते नूनं भावीति दारत्यागो न कार्य इति शार्ङ्गरवस्याभिप्रायः ।

अत्र कृतविस्मरणत्वात् राज्ञोऽसाधुत्वम् । तथा च शार्ङ्गरवेणासाधुत्वेन परिचीयमानमथ च साधुमानिनं दुष्यन्तं प्रति "राजन्नित्यादिनोपहासादुत्प्रासनम् ।

( ९९ ) स्पृहाख्यमलङ्कारं निरूपयति—आकाङ्क्षेति । वस्तुनः यस्य कस्यचिद्विषयस्य रमणीयत्वात् मनोहरत्वाद्धेतोः, तत्र तु या आकाङ्क्षा सा स्पृहा नाम नाट्यालङ्कारो भवेत् ।

( १०० ) उदाहरति—यथेति । चारुणेति । शकुन्तलायाः स्फुरदधरदर्शनात् मुखमुन्नमय्य तत्पानेच्छोः आत्मगतं राज्ञ उक्तिरियम् । न परीक्षित अपरिक्षित अननुभूतचुम्बनत्वात् केनचिन्नायकेन दन्तैरदष्टपूर्वः, अत एव कोमलो मृदुलः, अतोऽस्या अधरः पानयोग्य इति भावः, प्रियायाः शकुन्तलाया अधरो दन्तच्छद अधरोष्ठ इत्यर्थः । चारुणा मनोहरेण, स्फुरितेन ममाङ्गुलीभ्यामुन्नमनोत्पन्नस्फुरणेन, पिपासतः पातुमभिलषितः चुम्बनमिच्छत इति यावत् मम अनुज्ञां स्वयमेव पातुमनुमतिं ददातीव समर्पयतीव ।

अत्र शकुन्तलाधरस्य रमणीयत्वाद्दुष्यन्तस्याकाङ्क्षतः स्पृहा ।

( १ ) क्षोभाख्यमलङ्कारं निरूपयति—अधिक्षेपेति । अधिक्षेपो भर्त्सनं तदर्थं वचः करोतीति अधिक्षेपवचःकारी भर्त्सनोक्तिजनको यः क्षोभश्चलचित्तता चित्तविकारविशेष इति यावत् स एव क्षोभो नाम नाट्यालङ्कारः प्रोक्तः ।

( २ ) उदाहरति—यथेति । त्वयेति । श्रीरामं प्रति मरणासन्नस्य बालिन उक्तिरियम् । हे तपस्वि चाण्डाल ! राम ! प्रच्छन्नवधवर्त्तिना अलक्षितहिंसाकारिणा त्वया न केवलमहं वाली हतः किन्तु परलोकतः स्वस्य आत्मापि हतः अनेनैव गुरुतरपापजननादित्याशयः ।

अत्र बालिन एतादृशभर्त्सनोक्तिजनकक्षोभात् क्षोभः ।

( ३ ) पश्चात्तापाख्यमलङ्कारं निरूपयति–मोहावधीरितार्थस्येति । मोहेन चित्तभ्रमेण अवधीरितस्य अवज्ञातस्य अर्थस्य प्रयोजनस्य सम्बन्धे पश्चात्तापोऽनुताप एव तु पश्चात्तापो नाम नाट्यालङ्कारः स्यात् ।

( ४ ) यथानुतापाङ्के—'रामः—
किं देव्या न विचुम्बितोऽस्मि बहुशो मिथ्याभिशप्तस्तदा' इति ।
( ५ ) उपपत्तिर्मता हेतोरुपन्यासोऽर्थसिद्धये ॥ २०३ ॥
( ६ ) यथा वध्यशिलायाम्—
(क) 'म्रियते म्रियमाणे या त्वयि जीवति जीवति ।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममासुभिः ॥
( ७ ) आशंसनं स्यादाशंसा—
( ८ ) यथा श्मशाने—'माधवः—
तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम्' इति ।

---

उक्तं च महर्षिणा—

अकार्यं सहसा कृत्वा कृत्वा कार्यमथापि वा ।
सन्तापो मनसो यस्तु पश्चात्तापः स कीर्त्तितः ॥ इति ।

( ४ ) उदाहरति—यथेति । किं देव्या इति । गोत्रस्खलितादितो रामे मिथ्याभिशापं दत्वा मानिन्यां सीतायां तामननुनीय कार्यान्तराद्बहिर्गतस्य रामस्य तदा तत्कर्तृकचुम्बनाकरणानुतापोऽयम् । तदा मिथ्याभिशप्तः मिथ्यादत्तपरिवादः अहं किं कुतः देव्या सीतया न बहुशो विचुम्बितोऽस्मि ।

अत्र मोहेन सीतयावधीरिते स्वचुम्बनकार्ये श्रीरामस्यानुतापात् पश्चात्तापः ।

( ५ ) उपपत्त्याख्यमलङ्कारं निरूपयति—उपपत्तिरिति । अर्थसिद्धये अभिमतार्थनिष्पत्तये हेतोरुपन्यासः कारणस्य निर्देश उपपत्तिर्नाम नाट्यालङ्कारोऽभिमतः ।

( ६ ) उदाहरति—यथेति । वध्यशिलायामिति । यत्र वध्यचिह्ना आरोप्यन्ते तादृश्यां शिलायामित्यर्थः नाटकविशेष इति यावत् । म्रियते इति । वध्यशिलायां हन्तुमानीतं स्वमरणेन मरिष्यमाणां स्वप्रियामनुशोचन्तं कञ्चित् प्रति महादयालोरुक्तिरियम् । त्वयि भवति म्रियमाणे सति या म्रियते त्वयि भवति जीवति च सति या जीवति, यदि उक्तरूपां तां प्रियां जीवन्तीमिच्छसि तदा मम असुभिः प्राणैः प्राणदानैः आत्मानं रक्ष त्वत्परित्राणार्थ्यऽहं म्रिय इत्यर्थः ।

अत्र प्रियाया जीवनस्थितिरूपाभिमतार्थसिद्धये प्रियाजीवनपरित्राणरूपहेतोरुपस्थानादुपपत्तिः ।

( ७ ) आशंसाख्यमलङ्कारं निर्दिशति—आशंसनमिति । आशंसनम् अभिलषितवस्तुप्राप्तये प्रार्थनम्, आशंसा नामालङ्कारः । आशीर्नामालङ्कारस्तु परार्थस्य सिद्धये, अत्र तु स्वस्याभिलषितवस्तुलाभायेच्छेति परस्परं भेदः ।

( ८ ) उदाहरति—यथेति । तत्पश्येयमिति ।

सम्भूयेव सुखानि चेतसि परं भूमानमातन्वते ।

---

( क ) एतत्पद्यन्तु नागानन्दचतुर्थाङ्के "इयं ( माता ) अस्मद्विपत्तिखिन्ना यथा प्राणान्न मुञ्चेत्तथाऽभ्युपायश्चिन्त्यताम्" मिति प्रार्थयमानं शङ्खचूडं प्रति दयावीरस्य जीमूतवाहनस्योक्तिरियमितिबोध्यम् । युक्तञ्चेदमेवेति कुशलाः ।

( ९ ) ···················प्रतिज्ञाध्यवसायकः ।

( १० ) यथा मम प्रभावत्याम् 'वज्रनाभः—

श्रस्य वक्षः क्षणेनैव निर्मथ्य गदयानया ।

लीलयोन्मूलयाम्येव भुवनद्वयमद्य वः ॥'

( ११ ) विसर्पो यत्समारब्धं कर्मानिष्टफलप्रदम् ॥ २०४ ॥

( १२ ) यथा वेणयाम्—

'एकस्यैव विपाकोऽयम्–' इत्यादि ( ५०० पृ. ) ।

( १३ ) कार्यग्रहणमुल्लेखः —

( १४ ) यथा शाकुन्तले—राजानं प्रति 'तापसौ—समिदाहरणाय प्रस्थिता-

---

यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः

यद्बालेन्दुकलोच्चयादिव चितैः सारैरिवोत्पादितम् ॥

इत्यवशिष्टपादत्रयम् । अनङ्गस्य मन्मथस्य मङ्गलगृहं माङ्गलिकनिवासस्थानं तस्या मालत्यास्तन्मुखं तदाननं भूयः पुनरपि पश्येयम् अवलोकयेयम् ।

अत्राभिलषितमालतीवदनावलोकनप्राप्तयाशंसनादाशंसा ।

( ९ ) अध्यवसायाख्यमलङ्कारं निरूपयति—प्रतिज्ञेति । प्रतिज्ञा कार्यस्य कर्त्तव्यत्वेन निर्देशः अध्यवसायकः अध्यवसायमूलत्वादध्यवसायो नाम नाट्यालङ्कारो भवेत् ।

( १० ) उदाहरति—यथेति । कस्यापि राक्षसराजस्य नरराजस्य वा इन्द्रेण साकं सङ्ग्रामं कुर्वतः तं प्रति उक्तिरियम् । अस्येति । अद्य अधुना क्षणेनैव अनया गदया वो युष्माकं श्रीकृष्णादीनां सम्बन्धिनोऽस्य प्रद्युम्नस्य वक्षो निर्मथ्य लीलया अनायासेनैव भुवनद्वयं स्वर्गमर्त्यरूपम् उन्मूलयामि उत्पाटयामि ।

अत्र भुवनद्वयोत्पाटनरूपकर्त्तव्यत्वनिश्चयादध्यवसायः ।

( ११ ) विसर्परूपमलङ्कारं निरूपयति—विसर्प इति । अनिष्टफलप्रदम् अशुभफलदायकं यत् कर्म समारब्धं तत् विशेषेण हृदये सर्पणात् विसर्पो नाम नाट्यालङ्कारः ।

( १२ ) उदाहरति—यथेति । एकस्यैवेति । केशेषु गृहीत्वा धृष्टद्युम्नेन हतस्य द्रोणस्य शिरसि छिन्ने क्रुद्धस्य अश्वत्थाम्न उक्तिरियम् । श्लोकं सम्पूर्णं प्राग्व्याख्यातमेवातो न व्याख्यायते । अत्र केवलं प्रतीकमेवादाय विव्रियते । एकस्यैव द्रौपदीकेशग्रहस्यैव विपाकः परिणामः अयं राजसमूहविनाशरूपः । द्वितीये द्रोणसम्बन्धिनि निःशेषीकर्त्तुमारब्धः ।

अत्र द्रौपदीकेशग्रहणरूपस्य अशुभफलप्रदकर्मणः समारब्धत्वाद्विसर्पः ।

( १३ ) उल्लेखाख्यमलङ्कारं निरूपयति—कार्यग्रहणमिति । कार्यस्य ग्रहणम् अङ्गीकरणम् उल्लिख्यमानविषयत्वात् उल्लेखो नाम नाट्यालङ्कारः ।

( १४ ) उदाहरति—यथेति । तापसाविति । समिधां होमीयकाष्ठानाम् आहरणाय आनयनाय "तुमर्थाच्च भाववचनात्" इति पा० सूत्रात् तुमर्थे चतुर्थी तेन समिधानेतुमित्यर्थः । प्रस्थितौ चलितौ । गुर्वर्थं प्रस्थितत्वादधुना भवता सहाश्रमपदं गन्तुं न पारयावहे इति तापसयोराशयः । अनुमालिनीतीरं मालिन्यास्तीरे इत्यर्थः, शकुन्तलयैव-ऋषिपुत्र्यैव अधिदैवतेन अधिष्ठात्र्या देवतया सहेति साधिदैवतः शकुन्तलाधिष्ठित

वावाम्। इह चास्मद्गुरोः कण्वस्य कुलपतेः साधिदैवत इव शकुन्तलयानुमालिनी-तीरमाश्रमो दृश्यते। न चेदन्य ( था ) कार्यातिपातः, प्रविश्य गृह्यतामतिथिसत्कारः' इति।

( १५ ) ························उत्तेजनमितीष्यते।

**स्वकार्यसिद्ध्येऽन्यस्य प्रेरणाय कठोरवाक्॥ २०॥**

( १६ ) यथा—

इन्द्रजिच्चण्डवीर्योऽसि नाम्नैव बलवानसि।

धिग्धिक्प्रच्छन्नरूपेण युध्यसेऽस्मद्भयाकुलः॥

**( १७ ) भर्त्सना तु परीवादो—**

( १८ ) यथा वेण्याम्—'दुर्योधनः—धिग्धिक् सूत! किं कृतवानसि।

---

इत्यर्थः। एष पुरोऽवलोक्यमानः, अस्मद्गुरोः अस्माकमुपाध्यायस्य कुलपतेः अयुतशिष्यरक्षकस्य कण्वस्य तन्नामकमुनेः।

कुलपतिलक्षणं चोक्तम्—

मुनीनां दशसाहस्रं योऽन्नपानादिपोषणात्।

अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः॥ इति।

आश्रम आश्रमस्थानं दृश्यते। चेत् यदि अन्यकार्यस्य राजकीयकर्मणः अतिपातोऽतिक्रमो न स्यात्तदा। अत्राश्रमे प्रविश्य, अतिथिसत्कारः आतिथ्यं प्रतिगृह्यताम् अङ्गीक्रियताम्, प्रार्थनायां लकारः।

अत्र दुष्यन्तस्यातिथ्यग्रहणादुल्लेखः।

( १५ ) उत्तेजनाख्यमलङ्कारं निरूपयति—उत्तेजनमिति। स्वकार्यसिद्धये स्वप्रयोजननिष्पत्तये अन्यस्य जनस्य प्रेरणाय प्रवृत्तये कठोरा परुषा वाक् वचनं परुषोक्तिरित्यर्थः, उत्तेज्यतेऽनेनेति उत्तेजनं नाम नाट्यालङ्कार इष्यते।

( १६ ) उदाहरति—यथेति। इन्द्रजिदिति। अन्तर्हितस्य हननं दुःसाध्यमिति निश्चितवतो लक्ष्मणस्य प्रकाशयरणे प्रवर्त्तयितुमिन्द्रजितं सम्बोध्योक्तिरियम्। हे इन्द्रजित्! त्वं चण्डवीर्यः प्रचण्डविक्रमोऽसि, तथा इन्द्रजिदिति नाम्नैव न तु कर्मणा बलवान् ख्यातोऽसि इन्द्रं जितवानिति इन्द्रजित् इति प्रसिद्धिमागतोऽसि। किन्तु तथापि अस्मद्भयाकुलः मद्भीत्या व्यग्रः सन् प्रच्छन्नरूपेण मेघान्तरितवपुषा युध्यसे अत एव त्वां धिक् धिक् अत्यर्थं गर्हामीत्यर्थः।

अत्र जयरूपस्वप्रयोजननिष्पत्तये इन्द्रजितः प्रकाशयरणे प्रेरणाय लक्ष्मणकर्त्तृकपरुषोक्तेरुत्तेजनम्।

( १७ ) परीवादाख्यमलङ्कारं निरूपयति—भर्त्सनेति। भर्त्सना अवमानस्तु परीवादो नाम नाट्यालङ्कार इष्यते।

( १८ ) उदाहरति—यथेति। वेण्यां वेणीसंहारस्यैवाङ्कः। वत्सस्येति। सङ्ग्रामे दुःशासनं परित्यज्य पलायितं सारथिनं प्रति राज्ञः भर्त्सनमिदम्। श्लोकसमुदायस्त्वित्थम्—

वत्सस्य मे प्रकृतिदुर्ललितस्य पापः

पापं विधास्यति समक्षमुदायुधोऽसौ।

वत्सस्य मे प्रकृतिदुर्ललितस्य पापः
पापं विधास्यति-' इत्यादि ।

( १९ )...... ......नीतिः शास्त्रेण वर्तनम् ।

( २० ) यथा शाकुन्तले-'दुष्यन्तः-विनीतवेषप्रवेश्यानि तपोवनानि ।' इति ।

( २१ ) उक्तस्यार्थस्य यत्तु स्यादुत्कीर्तनमनेकधा ॥ २०६ ॥
उपालम्भविशेषेण तत्स्यादर्थविशेषणम् ।

( २२ ) यथा शाकुन्तले राजानं प्रति 'शार्ङ्गरवः— आः कथमिदं नाम । किमुपन्यस्तमिति । ननु भवानेव नितरां लोकवृत्तान्तनिष्णातः ।

अस्मिन्निवारयसि किं व्यवसायिनं मां
क्रोधो न नाम करुणा न च तेऽस्ति लज्जा ॥ इति ।

उद्यदायुधः उद्यतास्त्रः पापः पापी असौ भीमः प्रकृत्या स्वभावेन दुर्ललितस्य दुर्विलसितस्य मे मम वत्सस्य दुःशासनस्य पापं मरणं समक्षमेव विधास्यति करिष्यति । अस्मिन् भीमविषये व्यवसायिनम् भीमहननिवारणायोद्योगिनं मां दुर्योधनं किं निवारयसि अवरुणत्सि अत एव ते तव क्रोधो न ? राजबन्धुवधकाले त्वयावश्यं कोपो विधातव्यः, न करुणा नापि दया परविनाशसमयेऽवश्यं दयाविधेया, नच वा लज्जा अस्ति, मम सन्निधौ यद्रिपुणा प्रतिज्ञापूर्यते तदत्यर्थं त्रपा जनकमिति भावः । वसन्ततिलकाछन्दस्तल्लक्षणन्तूक्तमेव प्राक् ( १९३ पृ० ) ।

अत्र रथमादाय पलायितस्य सारथेर्भर्त्सनया परीवादः ।

( १९ ) नीत्याख्यमलङ्कारं निरूपयति—नीतिरिति । शास्त्रेण शास्त्रानुसारेण वर्त्तनं कर्मानुष्ठानं नीतिर्नाम नाट्यालङ्कारो भवेत् ।

( २० ) उदाहरति -यथेति । विनीतवेशेनेति । विनीतवेशेन शुद्धवेशेन प्रवेश्यानि प्रवेष्टव्यानि तपोवनानि मुनिवासभूतस्थानानि । तपस्विनीसविधे विनयभावाश्रयणं परमावश्यकमिति राज्ञोऽभिप्रायः ।

अत्र शास्त्रानुसारेण वर्त्तनान्नीतिः ।

( २१ ) अर्थविशेषणाख्यमलङ्कारं निरूपयति—उक्तस्यार्थस्येति । उक्तार्थस्य प्रतिपादितविषयस्य उपालम्भविशेषेण प्रतिकूलोक्तिवचनेन यत्तु अनेकधा उत्कीर्त्तनं बहुशः स्पष्टप्रतिपादनं स्यात् , तत् अर्थः प्रस्तुतविषयो विशेष्यतेऽवधार्यतेऽनेनेति अर्थविशेषणं नाम नाट्यालङ्कारः ।

( २२ ) उदाहरति—यथेति । आः कथमिदमिति । शकुन्तलां स्वीकर्त्तुं बहुशः शार्ङ्गरवेणोक्ते राज्ञोक्तं किमिदमिति उपहासविधया शार्ङ्गरवेणानेकधा तदनुवादः क्रियते· कथमिदमिति । अत्र वीप्सा बोध्या नन्विति प्रश्ने विशेषामन्त्रणे वा भवान् एव न तु वानप्रस्थाश्रमिणो वयमित्यर्थः, नितराम् अस्मत्तोऽधिकतया लोकवृत्तान्तेषु लोकव्यवहारेषु निष्णातो निपुणः । तथा च तपश्चरणसाधनभूते तपोवने सजीवैयं चिरं न्यासीकृता स्थातुमर्हति नवेत्यत्र लोकव्यवहारवान् भवानेव प्रमाणमिति परमार्थः ।

सतीमपि ज्ञातिकुलैकसंश्रयां जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥

**( २३ ) प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम् ॥ २०७ ॥**

( २४ ) यथा बालरामायणे —
कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि ।
तज्जगत्त्रितयं त्रातुं तात ! ताडय ताडकाम् ॥

**( २५ ) साहाय्यं सङ्कटे यत्स्यात्सानुकूल्यं परस्य च ।**

( २६ ) यथा वेण्याम्—कृपं प्रति 'अश्वत्थामा—त्वमपि तावद्राज्ञः पार्श्ववर्त्ती भव । कृपः—वाञ्छाम्यहमद्य प्रतिकर्तुम्—' इत्यादि ।

**( २७ ) अभिमानः स एव स्यात्—**

लोकवृत्तान्तमेव किमिति दर्शयति—सतीमपीति । जनो लोकः ज्ञातिकुलकसंश्रयां पित्रादिगृहमात्रस्थायिनीम् भर्तृमतीं सधवास्त्रियं जीवद्भर्तृकामित्यर्थः, सतीं साध्वीमपि अपिर्विरोधे, अन्यथा उपपतियुक्तां विशङ्कते व्यभिचारित्वेनाशङ्कत इत्यर्थः, अत अस्माद्धेतोः स्वबन्धुभिः पित्राद्यात्मीयजनैः प्रिया मनोहारिणी अप्रिया अमनोहरा वा उपयमितुरिति शेषः, प्रकृष्टो मदो यस्याः सा प्रमदा तरुणी परिणेतुः उपयमितुः पत्युरित्यर्थः, समीपे सन्निधेऽवस्थायिनुमिति शेषः इष्यते अभिलष्यते । तथाचायमेव लोकवृत्तान्तः । वंशस्थं छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

अत्र शार्ङ्गरवेण किमिदमुपन्यस्तमिति राज्ञः प्रतिकूलोक्तिखण्डनेन "आः कथमिदम्" इत्यादि वाक्यत्रयेण तदिदानीमापन्नसत्त्वेयं गृह्यतां सहधर्माचरणाय" इति स्वोक्तार्थस्य उपलम्भरूपेणानेकधाप्रतिपादनादर्थविशेषणम् ( २०६ पृ० ) ।

( २३ ) प्रोत्साहनाख्यमलङ्कारं निरूपयति—प्रोत्साहनमिति । उत्साहगिरा उत्साहजनकवचनेन कस्यापि जनस्य योजनं कर्माविशेषे योजनं नियोजनं प्रवर्त्तनमित्यर्थः प्रोत्साह्यते अनेनेति प्रोत्साहनं नाम नाट्यालङ्कारः ।

( २४ ) उदाहरति—कालरात्रीति । ताड़कानामराक्षसीं हन्तुं श्रीरामं प्रति विश्वामित्रस्य उक्तिरियम् । कालरात्रिवत् काल्याः कालरात्रिमूर्त्तिवत् कराला भीमा इयं ताड़का स्त्री इति कृत्वा किं विचिकित्ससि वध्या न वेति संशयाश्रयो भवसि अथवा घृणीभवसीत्यर्थः । तत्तस्माद्धेतोः हे तात ! श्रीराम ! प्रेमद्योतकसम्बोधनमिदम्, जगत्त्रितयं भुवनत्रयं त्रातुं रक्षितुं ताड़कां राक्षसीं ताडय मारय ।

अत्र ताडकाहनने श्रीरामस्य नियोजनात्प्रोत्साहनम् ।

( २५ ) साहाय्याख्यमलङ्कारं दर्शयति—साहाय्यमिति । सङ्कटे विपत्तौ परस्य यच्च आनुकूल्यम् अनुकूलाचरणं तत् साहाय्यं नाम नाट्यालङ्कारः ।

( २६ ) उदाहरति—यथेति । पार्श्ववर्त्ती (क) ।

अत्र युद्धसङ्कटे कृपस्य दुर्योधनसहाय्ये प्रवृत्तत्वात् साहाय्यम् ।

( २७ ) अभिमानाख्यमलङ्कारं निरूपयति—अभिमान इति । वाक्यात् योऽभिमानः प्रतीयते सोऽभिमानोऽङ्कार एव अभिमानो नाम नाट्यालङ्कारः ।

(क) सम्प्रत्ययं पाठो नोपलभ्यते ।

( २८ ) यथा तत्रैव—'दुर्योधनः—

मातः किमप्यसदृशं कृपणं वचस्ते—' इत्यादि ।

( २९ )......................प्रश्रयादनुवर्तनम् ॥ २०८ ॥

अनुवृत्तिर्—

( ३० ) यथा शाकुन्तले—'राजा-( शकुन्तलां प्रति ) अयि ! तपो वर्धते । अनसूया—दाणिं अदिधिविसेसलाहेण' इत्यादि ।

( ३१ ) भूतकार्याख्यानमुत्कीर्तनं मतम् ।

( ३२ ) यथा बालरामायणे—

अत्रासीत्फणिपाशबन्धनविधिः शक्त्या भवद्देवरे

गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः । इत्यादि ।

( २८ ) उदाहरति—तत्रैवेति । वेण्यामेवेत्यर्थः । मातरिति । पाण्डवेभ्यो राज्यं दातुं गान्धार्या उक्ते दुर्योधनस्याभिमानमूलोक्तिरियम् ।

अत्रावशिष्टपद्यांशस्तु—

सुक्षत्रिया क्व भवती क्व च दीनतैषा ।

निर्वत्सले सुतशतस्य विपत्तिमेतां

त्वं नानुचिन्तयसि रक्षसि मामयोग्यम् ॥ इति ।

अत्र मातरित्याक्षेपेण दुर्योधनस्याभिधानादभिमानः ।

( २९ ) अनुवृत्त्याख्यमलङ्कारं निरूपयति-प्रश्रयादिति । प्रश्रयो विनयस्तस्मात् अनुवर्त्तनं प्रीणनम् प्रत्युत्तरादिना सत्कार इत्यर्थः, अनुवृत्तिर्नाम नाट्यालङ्कारः ।

( ३० ) उदाहरति—यथेति । अयीति-कोमलामन्त्रणे । तपो वर्द्धते ? निर्विघ्नेन तपो विद्यते ननु ? इत्यर्थः । राजा पृष्टे लज्जयाधोमुखी प्रत्युत्तरमदानां दृष्ट्वा प्रत्युत्तरयति अनसूया—दाणिमिति । "इदानीमतिथिविशेषलाभेन" इति संस्कृतम् । विशिष्टोऽतिथिरिति अतिथिविशेषस्तल्लाभेन प्राप्त्या भवल्लाभेनेति भावः,"तपो वर्द्धते"इति पूर्वेणान्वयः।

अत्र राज्ञोऽनसूयायाश्च परस्परमनुवर्त्तनसूचनादनुवृत्तिः ।

( ३१ ) उत्कीर्त्तनाख्यमलङ्कारं निरूपयति—भूतेति । भूतकार्यस्य पूर्ववृत्तान्तस्य आख्यानं कथनम् उत्कीर्त्तनं नाम नाट्यालङ्कारः । नच पूर्वसिद्धार्थकथनात्मकं यत् निरुक्तिरूपं नाट्यलक्षणमुक्तं तद्भेद इति वाच्यम्, तत्र स्वकृतिरूपस्य पूर्वसिद्धार्थस्य "निहताशेषकौरव्य" इत्यादिना कथनमत्र तु स्वपरसाधारणकृतातीतवृत्तान्तस्येति भेदात् ।

( ३२ ) उदाहरति—यथेति । अत्रासीदिति । अत्रोत्तरार्द्धन्तु—

दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं लम्भितः

केनाप्यत्र मृगाक्षि ! राक्षसपतेः कृत्ता च कण्ठाटवी ॥ इति ।

पुष्पकेणागमने रणस्थलं सीतां दर्शयतः श्रीरामस्योक्तिरियम् । हे मृगाक्षि ! मृगलोचने सीते ! अत्र स्थाने फणिपाशबन्धनविधिः आवयोरिन्द्रजित्कर्त्तृकं नागपाशबन्धनमासीत्, अत्र च भवद्देवरे लक्ष्मणे देवरत्वकथनमनुरागोत्पादनाय रावणेन शक्त्या वक्षसि गाढं ताडिते प्रहारिते सति द्रोणाद्रिः गन्धमादनाद्रिः हनुमता आहृतः आनीय

( ३३ ) **याच्ञा तु क्वापि याच्ञा या स्वयं दूतमुखेन वा ॥ २०६ ॥**

यथा—

( ३४ ) अद्यापि देहि वैदेहीं दयालुस्त्वयि राघवः ।
शिरोभिः कन्दुकक्रीडां किं कारयसि वानरान् ॥

( ३५ ) **परिहार इति प्रोक्तः कृतानुचितमार्जनम् ।**

यथा—

( ३६ ) प्राणप्रयाणदुःखार्त उक्तवानस्म्यनक्षरम् ।
तत्क्षमस्व विभो ! किं च सुग्रीवस्ते समर्पितः ॥

( ३७ ) **अवधीरितकर्तव्यकथनं तु निवेदनम् ॥ २१० ॥**

( ३८ ) यथा **राघवाभ्युदये**—'**लक्ष्मणः**-आर्य ! समुद्राभ्यर्थनया गन्तुमुद्यतोऽसि तत्किमेतत् ।'

---

**दत्तः**, दिव्यैः अलौकिकैः लक्ष्मणशरैः इन्द्रजित् लोकान्तरं लम्भितः प्रापितः, अत्र **राक्षसपते रावणस्य कण्ठाटवी केनाऽपि कृत्ता मया छिन्नेत्यर्थः** ।

**अत्र सीतां प्रति नागपाशबन्धनादीनां भूतकार्याणां श्रीरामेणाख्यानादुत्कीर्तनम्** ।

( ३३ ) **याच्ञारूपमलङ्कारं निरूपयति** -याच्ञेति । **स्वयमात्मनादूतमुखेन चारमुखेन वा क्वापि कुत्रापि** जने याच्ञा यस्य कस्यापि **वस्तुनोऽभ्यर्थना सा तु याच्ञा नामालङ्कारः** ।

**तत्र स्वयं याचनं यथा—"भो लङ्केश्वर ! दीयतां जनकजा रामः स्वयं याचते" इत्यादि** ।

( ३४ ) **दूतमुखेन याच्ञामुदाहरति**—अद्यापीति । **रावणं प्रति अङ्गदस्योक्तिरियम्** । **अद्यापि इदानीमपि वैदेहीं जनकात्मजां देहि प्रयच्छ राघवः श्रीरामः त्वयि दयालुर्भवत्विति शेषः, शिरोभिः रामबाणैः पातितैर्दशभिः स्वमस्तकैः वानरान् कपीन् कन्दुकक्रीडां किं कारयसि । सीताया असर्पणे शिरसां रामेण छिन्नत्वात्कपयो मुण्डान्यादाय कन्दुकवत् क्रीडयिष्यन्तीति त्वरितमेव राघवाय सीतां प्रयच्छेति भावः** ।

**अत्राङ्गदमुखेन प्रार्थनाविधानाद् याच्ञा** ।

( ३५ ) **परिहाररूपमलङ्कारं निरूपयति**—परिहार इति । **कृतं विहितं यदनुचितं कर्म तस्य मार्जनं तज्जन्यापराधक्षमापनम् अनुचितस्य परिहरणात् परिहार इति नाम नाट्यालङ्कारः प्रोक्तः** ।

( ३६ ) **उदाहरति**—प्राणप्रयाणेति । **श्रीरामं प्रति म्रियमाणस्य बालिन उक्तिरियम्** । **प्राणप्रयाणे तव प्रहारात् प्राणगमनसमये यद्दुःखं व्यथा तेन आर्तः पीडितः सन् यत् अनक्षरम् त्वया "तपस्वि चाण्डाल" इत्याद्यनुचितवचनम् उक्तवानस्मि, हे विभो श्रीराम ! तत् अनुचितं कर्म क्षमस्व सहस्व, किञ्च अपि च सुग्रीवो ममानुजन्मा ते तुभ्यं समर्पितः सेवार्थं दत्तः** ।

**अत्र पूर्वकृतकटुवचनरूपानुचितकर्मणो मार्जनात् परिहारः** ।

( ३७ ) **निवेदनाख्यमलङ्कारं निरूपयति**—अवधीरितेति । **अवधीरितस्य पूर्वमवज्ञातस्य विषयस्य कर्त्तव्यकथनं विधेयत्वेन बोधनं निवेदनं नाम नाट्यालङ्कारो भवेत्** ।

( ३८ ) **उदाहरति**—यथेति । समुद्राभ्यर्थनया **सागरप्रार्थनया । एतत् व्यापारान्तरविधानेन परावर्त्तनं किम् ? तत्रैव गन्तुमुचितमित्याशयः** ।

**( ३९ ) प्रवर्तनं तु कार्यस्य यत्स्यात्साधुप्रवर्तनम् ।**

( ४० ) यथा वेण्याम्—'राजा—कञ्चुकिन् ! देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य भीमसेनस्य विजयमङ्गलाय प्रवर्त्यन्तां तत्रोचिताः समारम्भाः ।'

**( ४१ ) आख्यानं पूर्ववृत्तोक्तिः—**

( ४२ ) यथा तत्रैव—

'देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः—' इत्यादि ।

**( ४३ )..................युक्तिरर्थावधारणम् ॥ २११ ॥**

यथा तत्रैव—

( ४४ ) यदि समरमपास्य नास्ति मृत्योर्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः किमिति मुधा मलिनं यशः कुरुध्वम् ॥

अत्र पूर्वमवधीरितस्य सागरसमीपे गमनस्य विधेयत्वबोधनान्निवेदनम् ।

( ३९ ) प्रवर्त्तनाख्यमलङ्कारं निरूपयति—प्रवर्त्तनन्त्विति । कार्यस्य यस्य कस्यचित् कर्मणः सम्बन्धि यत् साधु मङ्गलस्य प्रवर्त्तनं समारम्भः, तत्तु प्रवर्त्तनं नाम नाट्यालङ्कारः स्यात् ।

( ४० ) उदाहरति—यथेति । राजा युधिष्ठिरः । देवस्य भगवतः देवकीनन्दनस्य देवकीपुत्रस्य श्रीकृष्णस्येत्यर्थः बहुमानात् अतिसम्माननीयत्वात्, एतदादेशमन्यथा कर्त्तुं न युक्तमिति भावः । विजयमङ्गलाय शत्रुविजयरूपमङ्गलाय, तदुपचिताः मङ्गल योग्याः समारम्भाः मङ्गलकलशस्थापनादिव्यापाराः प्रवर्त्त्यन्तां क्रियन्ताम् ।

अत्र माङ्गलिककर्मणः साधुसमारम्भात् प्रवर्त्तनम् ।

( ४१ ) आख्यानरूपमलङ्कारं निरूपयति—आख्यानमिति । पूर्ववृत्तस्य व्यतीतवृत्तान्तस्य उक्तिः कथनम् आख्यानं नाम नाट्यालङ्कारः । पूर्ववृत्तोक्तिरत्र क्रोधमूलकत्वेन विशेषणीयम् तेन भूतकार्याख्यानरूपात् उत्कीर्त्तनालङ्कारात् भेदः ।

( ४२ ) उदाहरति—यथेति । देशः सोऽयमिति । केशेषु प्रहृत्य समाहितस्य मध्ये समरं द्रोणस्य मारणे क्रुद्धस्याश्वत्थाम्न उक्तिरियम् ।

अवशिष्टपादत्रयं तु—

क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रौणायनिः क्रोधनः ॥ इति ।

अत्र अश्वत्थाम्नः क्रोधात् परशुरामकृतवृत्तान्तस्य कथनादाख्यानम् ।

( ४३ ) युक्तिरूपमलङ्कारं निरूपयति—युक्तिरिति । अर्थस्य प्रयोजनस्य अवधारणं कर्त्तव्यत्वनिश्चयो निश्चयपक्षयोगाद् युक्तिर्नाम नाट्यालङ्कारः ।

( ४४ ) उदाहरति—यदि समरमपास्येति । द्रोणस्य मरणेन पलायमानान् वीरान् प्रति अश्वत्थाम्न उक्तिरियम् । समरं सङ्ग्रामम् अपास्य परित्यज्य गच्छतो युष्मानिति शेषः, यदि मृत्योर्मरणाद् भयं नास्ति तदा इतः सङ्ग्रामात् अन्यतः अन्यत्र प्रयातुं प्रस्थातुं युक्तम् । अथ तदसत्वपक्षे जन्तोः प्राणिनः मरणं मृत्युः अवश्यमेव नूनमेव, इति हेतोः

( ४५ ) प्रहर्षः प्रमदाधिक्यं—

( ४६ ) यथा शाकुन्तले—राजा-'तत्किमिदानीमात्मानं पूर्णमनोरथं नाभिनन्दामि ।'

( ४७ )..............शिक्षा स्यादुपदेशनम् ।

( ४८ ) यथा तत्रैव—'सहि, ण जुत्तं अस्समवासिणो जणस्स अकिदसक्कारं अदिधिविसेसं उज्झिअ सच्छन्ददो गमनम् ।'

( ४९ ) एषां च लक्षणनाट्यालङ्काराणां सामान्यत एकरूपत्वेऽपि भेदेन व्यपदेशो गड्डलिकाप्रवाहेण ।

---

मुधा वृथा यशः कीर्त्तिं किं कथं मलिनं पलायमानापमानेन मलीमसं कुरुध्वं सम्पादयध्वम् । पूर्वसञ्चितयशः पालनार्थमपि सङ्ग्रामे परावर्तध्वमिति भावः । पुष्पिताग्राच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ( १८९ पृ० )

अत्र मरणनिश्चयप्रदर्शनेन सङ्ग्रामस्यावश्यकर्त्तव्यत्वनिश्चयात् युक्तिः ।

( ४५ ) प्रहर्षाख्यमलङ्कारं निरूपयति—प्रहर्ष इति । प्रमदस्य आनन्दस्य आधिक्यं तारुण्यावस्था प्रहर्षो नाम नाट्यालङ्कारो भवेत् ।

( ४६ ) उदाहरति—यथेति । दुष्यन्तो हि मारीचप्रदत्तरक्षाकाण्डं मातापितरौ आत्मानं च वर्जयित्वा न कोऽपि गृहीतुमर्हति यदि गृह्णीयात्तदा सर्पो भूत्वा स तं दशेदिति श्रुत्वा रक्षाकाण्डस्य विकाराभावेन ममायमौरस एवेति निश्चित्य सहर्षं स्वगतमाह—तत्किमिदानीमिति । तत् सर्वविधसन्देहोच्छेदात्, पूर्णं स्त्रीपुत्रप्राप्त्या सफलं मनोरथमभिलषितम् आत्मानं नाभिनन्दामि लक्षीकृत्य नानन्दितो भवामि, नूनमेवाभिलषितं प्राप्य अभिनन्दामीत्यर्थः । अत्र काकुः ।

अत्र राज्ञः स्त्रीपुत्रप्राप्त्या प्रमदातिशयात् प्रहर्षः ।

( ४७ ) उपदेशनरूपमलङ्कारं निरूपयति—शिक्षेति । शिक्षा शिक्षादानम् उपदेशनं नाम नाट्यालङ्कारः स्यात् ।

( ४८ ) उदाहरति—यथेति । सहीति । "सखि ? न युक्तमाश्रमवासिनो जनस्य अकृतसत्कारमतिथिविशेषमुज्झित्वा स्वच्छन्दतो गमनम्" इति संस्कृतम् । आश्रमस्थं दुष्यन्तमभिलक्ष्य शकुन्तलाया अनुरूपोऽयं वर इति प्रतिपादयति, लज्जया ततोऽन्यत्र गन्तुकामां शकुन्तलाम्प्रति अनसूयाया उक्तिरियम् । सखि ! शकुन्तले ? अकृतः अविहितः सत्कारः भक्ष्यपेयसमर्पणादिभिः पूजा यस्य तथोक्तम्, अतिथिविशेषम् अभ्यागतरूपं राजानम् उज्झित्वा विहाय स्वच्छन्दतः स्वाभिप्रायानुसारेण गमनं प्रस्थानं पलायनमित्यर्थः, आश्रमवासिनः तपस्विमात्रस्य न युक्तं न सङ्गतम् । साभिलाषमेनं हृदयवल्लभमनाहृत्य स्वेच्छया पलायनं ते नोचितमित्याशयः ।

अत्र शकुन्तलायै शिक्षादानादुपदेशनम् ।

( ४९ ) ननु भूषणादीनि यानि नाट्यलक्षणानि अभिहितानि तेषाम्, आशीरादयो नाट्यालङ्काराश्च ये उक्तास्तेषाञ्च नाट्यभूषणहेतुत्वरूपसामान्यधर्मयोगादभिन्नत्वेनैव व्यपदेशस्य युक्तत्वे भिन्नत्वेनोपादानमकिञ्चित्करमित्याशयेनाह— एषां चेति । लक्षणानि भूषणादीनि प्रागुक्तानि नाट्यालङ्काराश्च आशीरादयस्तेषां तथोक्तानाम् सामान्यतो

( ५० ) एषु च केषांचिद्गुणालङ्कारभावसंध्यङ्गविशेषान्तर्भावेऽपि नाटके प्रयत्नतः कर्त्तव्यत्वात्तद्विशेषोक्तिः ।

( ५१ ) एतानि च —

( ५२ ) पञ्चसन्धि चतुर्वृत्ति चतुःषष्ट्यङ्गसंयुतम् ।
षड्विंशल्लक्षणोपेतमलङ्कारोपशोभितम् ॥
महारसं महाभोगमुदात्तरचनान्वितम् ।
महापुरुषसत्कारं साध्वाचारं जनप्रियम् ॥

नाट्यभूषणहेतुत्वरूपसामान्यधर्मयोगात् । एकरूपत्वेऽपि लक्षणत्वालङ्कारत्वयोर्विनिगमकाभावात् लक्षणानामप्यलङ्कारत्वम् अलङ्काराणामपि लक्षणत्वम् इत्येवम् अभिन्नत्वरूपसम्भवेऽपीत्यर्थः भेदेन एतानि लक्षणानि, एते अलङ्काराः इत्येवं भेदेनेत्यर्थः। व्यपदेशो व्यवहारः । गड्डलिकाप्रवाहेणेति । यथा गड्डरिका (नदी) एका अपरां तां चेतरानुगच्छति तासां गतानुगतमात्रेण भेदः तथा लक्षणनाट्यालङ्कारयोरपि अनादिसिद्धो निर्मलो व्यवहारस्तदनुसारेणेत्यर्थः। एतेन ग्रन्थकर्त्रा वस्तुतोऽनयोरभेद एवेति ध्वनितम् ।

( ६० ) नन्वेवमपि केषाञ्चिल्लक्षणनाट्यालङ्काराणां गुणे अलङ्कारे चान्तर्भावसम्भवात्कथं पार्थक्येन तदुक्तिरित्याशङ्कां समाधत्ते—एषु चेति । लक्षणनाट्यालङ्कारेष्वित्यर्थः। केषाञ्चित् भूषणादीनां लक्षणानाम् आशीरादीनां नाट्यालङ्कारादीनाञ्चेत्यर्थः। गुणालङ्कारेति । तथा च भूषणस्य लक्षणस्य वक्ष्यमाणप्रसादादिगुणेषु तत्तदलङ्कारेषु च, शोभायाः श्लेषे, विशेषणस्य विशेषोक्त्यलङ्कारे चान्तर्भावयितुं शक्नोति । एवमाशीरादीनां नाट्यालङ्काराणामाशीराद्यलङ्कारेषु, तथा युक्त्यादीनां युक्त्यादिसन्ध्यङ्गेषु चान्तर्भावयितुं शक्नोतीत्यादिविचारणीयम् । नाटके इति नाटकपदमभिनेयमात्रोपलक्षणम् । प्रयत्नतः कर्त्तव्यत्वादिति । कर्त्तव्यता च तत्तत्प्रसङ्गौचित्यानुसारेण यथा योग्यमेव विशेषोक्तिः पृथगुक्तिः न तु सर्वत्रैव सर्वेषामित्यनुसन्धेयम् ।

अत्रेदम्बोध्यम्—सति हि रसानुकूलत्वे यथा काव्ये गुणालङ्कारभावानां सन्ध्यङ्गविशेषाणाञ्च स्वेच्छयोपन्यासस्तथा । नाट्यलक्षण-नाट्यालङ्काराणामदर्शनात्तेषां पार्थक्येनैव प्रतिपादनमिति ।

( ६१ ) एतानीति । एतानि लक्षणादीनि नाटकेऽवश्यं कर्त्तव्यान्येव इत्युत्तरेण सम्बन्धः ।

( ६२ ) सुकविना तु एतत् सकलविशिष्टमपि नाटकं कर्त्तव्यमिति मुनिनोक्तत्वात् तेन सर्वमिदं कर्त्तव्यमित्यत आह—पञ्चसन्धीत्यादि कुर्यात्तु नाटकमित्यन्तम् । पञ्चसन्धयो मुखसन्ध्याद्याः प्रागुक्ताः पञ्च यस्मिन् तत् तथोक्तं नाटकमि यस्य विशेषणम् , कौशिक्याद्यश्चतस्रो वृत्तयो यस्मिन् तत् तथोक्तम् , चतुःषष्ट्यङ्गानि च सन्धीनां प्रागुक्तानि तैः संयुतम् , षट्त्रिंशल्लक्षणैर्भूषणादिभिरुपेतम् संयुक्तम् , अलङ्कारैस्त्रयस्त्रिंशद्भिराशीरादिभिरुपशोभितम् , महान् शृङ्गारो वीरो वा यस्मिन् तत् तथोक्तम् , महान् भोगो भावादिर्विलासादिर्वा यस्मिन् तत् तथोक्तम् , उदात्तया उत्तमया रचनया अन्वितं रचनाया उदात्तत्वं विलासद्व्यर्यादियुक्तम् , महापुरुषस्य धीरोदात्तनायकस्य सत्कारो गुणवर्णनं यस्मि तत् तथोक्तम् , साधुरनिन्दित आचारो वैदिकं कर्म यस्मिन् तत्

सुश्लिष्टसन्धियोगं च सुप्रयोगं सुखाश्रयम् ।
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम् ॥

(५३) इति मुनिनोक्तत्वान्नाटकेऽवश्यं कर्तव्यान्येव ।

(५४) वीथ्यङ्गानि वक्ष्यन्ते ।

(५५) लास्याङ्गान्याह—

**गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका ॥ २१२ ॥**
**प्रच्छेदकस्त्रिगूढं च सैन्धवाख्यं द्विगूढकम् ।**
**उत्तमोत्तमकं चान्यदुक्तप्रत्युक्तमेव च ॥ २१३ ॥**
**लास्ये दशविधं ह्येतदङ्गमुक्तं मनीषिभिः ।**

तत्र—

**(५६) तन्त्रीभाण्डं पुरस्कृत्योपविष्टस्यासने पुरः ॥ २१४ ॥**

---

तथोक्तम्, जनानां प्रियम्, सुश्लिष्टः सुसङ्गतः सन्धीनां मुखादीनां योगः सम्बन्धो यस्मिन् तत् तथोक्तम्, शोभनः प्रयोगोऽभिनयो यस्मिन् तत् तथोक्तम्, सुखस्य आश्रयस्थानं सुखजनकमित्यर्थः, मृदूनां सुकुमाराणामापातमात्रेण प्रतीतिरूपाणां शब्दानां पदानामतिपातः क्रमिकातिक्रमक अवस्थितिर्यस्मिन् तत् तादृशञ्च नाटकं कविः कुर्यात्। मृदुशब्दानां सन्निवेशस्य परमावश्यकत्वं दर्शितं मुनिना। तथाहि—

चेक्रीयते प्रभृतिभिर्विकृतैश्च शब्दै-
र्युक्ता न भान्ति ललिता भरतप्रयोगाः।
यज्ञक्रियेव शरवर्मधरैर्धृताक्तै-
र्वेश्या द्विजैरिव कमण्डलुदण्डहस्तैः ॥ इति।

नाटकस्य वैशिष्ट्यमपि तत्रैव—

न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
न तत्कर्म न सा योगो नाटके यन्न दृश्यते ॥ इति।

(५३) इतीति। मुनिना महर्षिणा भरतेनेत्यर्थः। अवश्यं कर्तव्यान्येवेति। तथा च मुनिना सन्ध्यङ्गनाट्यलक्षणनाट्यालङ्काराणां स्पष्टं पार्थक्येनाभिहितत्वात् सन्ध्यङ्गविशेषाणाञ्च नावश्यकत्वमिति पूर्वमेव प्रतिपादितत्वात् नाट्यलक्षण–नाट्यालङ्काराणान्तु तदनभिहितत्वात् तेषामवश्यकर्त्तव्यतेति तन्मतानुसारिणो ममापि नाप्रामाण्यमिति सन्दर्भाशयः।

(५४) "त्रयस्त्रिंशत्प्रयोज्यानि वीथ्यङ्गानि त्रयोदश" इत्युक्तत्वात् त्रयस्त्रिंशदलङ्काशेषस्यनन्तरं वीथ्यङ्गानि वक्तव्यत्वे प्राप्ते वीथिरूपकनाटकविशेषस्य—विशिष्य दर्शितत्वात् दर्शयिष्यमाणतदवसरे वीथ्यङ्गानि वक्ष्यन्ते इति दर्शयति—वीथ्यङ्गानीति।

(५५) दशलास्याङ्गान्यभिधातुमाह—लास्याङ्गानीति। गेयपदमिति। मनीषिभिः बुद्धिमद्भिः एतद् गेयपदादिकं लास्ये दशविधमङ्गमुक्तम्।

(५६) तत्र गेयपदस्वरूपं लास्याङ्गं लक्षयति—तन्त्रीभाण्डमिति। तन्त्रीभाण्डं तन्त्र्याश्रयं वीणावाद्यं पुरस्कृत्य गानोपयोगित्वेनाग्रे स्थापयित्वा प्रधानीकृत्येत्यर्थः। पुरो देवताभि-

शुद्धं गानं गेयपदं—

यथा—गौरीगृहे वीणां वादयन्ती मलयवती—

उत्फुल्लकमलकेसरपरागगौरद्युते ! मम हि गौरि ! ।

अभिवाञ्छितं प्रसिध्यतु भगवति ! युष्मत्प्रसादेन ॥

( ५८ )......................स्थितपाठ्यं तदुच्यते ।

मदनोत्तापिता यत्र पठति प्राकृतं स्थिता ॥ २१५ ॥

( ५९ ) अभिनवगुप्तपादास्त्वाहुः 'उपलक्षणं चैतत् । क्रोधोद्भ्रान्तस्यापि प्राकृतपठनं स्थितपाठ्यम्' इति ।

( ६० ) निखिलातोद्यरहितं शोकचिन्तान्वितावला ।

अप्रसाधितगात्रं यदासीनामीनमेव तत् ॥ २१६ ॥

---

म्मुखस्थायिनि आसने विष्टरे उपविष्टस्य स्थितस्य जनस्य शुद्धं निर्दोषं शुष्कमिति पाठे अनुकरणीयमित्यर्थः, गानं नृत्यहीनगानम्, गेयं गानयोग्यं पदं यत्र तद् गेयपदं नाम लास्याङ्गं भवेत् ।

उक्तञ्च महर्षिणाऽपि—

आसनेषूपविष्टैर्यत्तन्त्रीभाण्डोपबृंहितम् ।

गायनैर्गीयते शुष्कं तद्गेयपदमुच्यते ॥ इति ।

( ५७ ) उदाहरति—यथेति । गौरीगृहे पार्वतीप्रासादे 'स्थिता' इति शेषः । मलयवती गायति इति शेषः । उत्फुल्लेति । उत्फुल्लं विकसितं यत् कमलं पद्मं तस्य यः केसरपरागः किञ्जल्कधूलिस्तद्वत् गौरा गौरवर्णा द्युतिः कान्तिर्यस्यास्तत्सम्बुद्धौ रूपम्, हे गौरि ! अम्बिके !, हे भगवति ? सकलैश्वर्यसम्पन्ने ! युष्मत्प्रसादेन भवदनुकम्पया मम अभिवाञ्छितम् अभिलषितं प्रसिध्यतु सिद्धिर्भवतु ।

( ५८ ) स्थितिपाठ्यरूपं लास्याङ्गं लक्षयति—स्थितिपाठ्यमिति । यत्र मदनोत्तापिता कामेनातीव सन्तापिता स्त्री स्थिता सती प्राकृतं प्राकृतभाषां पठति स्फुटमुच्चारयति तत् स्थितिपाठ्यं नाम लास्याङ्गमुच्यते । विक्रमोर्वश्यां चतुर्थेऽङ्के—चित्रलेखा ( प्रदेशान्तरे द्विपदिकया दिशोऽवलोक्य—)

(क) सहअरि दुक्खालिद्धअ सरवर अमहिसिणिद्धं ।

वाहो-वग्गिअ-णअणअं तम्मइ हंसी जुअलअं ॥ इति ।

( ५९ ) अत्र नाट्यशास्त्रव्याख्यातॄणामाशयमुपपादयति—अभिनवेति । उपलक्षणमिति । ऊह्यमुदाहरणम् ।

( ६० ) आसीनरूपं लास्याङ्गं लक्षयति—निखिलातोद्येति । शोकचिन्ताभ्याम् अन्विता युक्ता अबला नायिका आसीना उपविष्टा सती निखिलेन समग्रेण आतोद्येन मृदङ्गादिवाद्येन रहितम्, तथा अप्रसाधितम् अनलङ्कृतं गात्रं शरीरं यस्मिन् गेये तत्, एतद्द्वयं क्रियाविशेषणम् यद् गायति तदेव आसीनया गीतत्वात् आसीनं नाम 'लास्याङ्गमुच्यते'

---

(क) सहचरी दुःखालीढं सरोवरे स्निग्धम् ।

अविरलबाष्पजलार्द्रं ताम्यति हंसीयुगलम् ॥ इति संस्कृतम् ।

( ६१ ) आतोद्यमिश्रितं गेयं छन्दांसि विविधानि च ।
स्त्रीपुंसयोर्विपर्यासचेष्टितं पुष्पगण्डिका ॥ २१७ ॥
( ६२ ) अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना ।
वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मतः ॥ २१८ ॥
( ६३ ) स्त्रीवेषधारिणां पुंसां नाट्यं श्लक्ष्णं त्रिगूढकम् ।

---

इत्यस्य पूर्वेणापकर्षः । एवमग्रेऽपि तथा च भरतः—

आसीनमासनस्थस्य सर्वतोऽप्यविवर्जितम् ।
अप्रसारितगात्रं च चिन्ताशोकान्वितं च तत् ॥ इति ।

उदाहरणं यथा शाकुन्तले—

(क) तुज्झण आणे हिअअं मह उण मअणो दिवा वि रत्तिं वि ।
णिग्घिण ! तवइ वलीअं तुइ वुत्तमणो रहाइं अङ्गाइं ॥ इति ।

( ६१ ) पुष्पगण्डिकाख्यं लास्याङ्गं लक्षयति आतोद्येति । आतोद्येन मृदङ्गादिवाद्येन मिश्रितं मिलितं गेयं गानम्, तथा विविधानि छन्दांसि गद्यपद्यानि च, तथा स्त्रीपुंसयोः विपर्यासेन व्यत्यासेन चेष्टितम् अभिनयो यस्मिन् गेये तत् तथोक्तम् । स्त्रियाः पुंसश्चेष्टित पुंसस्त्रीचेष्टितमित्यर्थः । एतत् सर्वं पुष्पगण्डकावन्मनोहरत्वात् पुष्पगण्डिकानाम लास्याङ्गमुच्यते ।

उक्तं च महर्षिणाऽपि—

नृत्तं तु द्विविधं यत्र गीतमातोद्यमेव च ।
स्त्रियः पुंवच्च चेष्टन्ते सा ज्ञेया पुष्पगण्डिका ॥ इति ।

तथा च तन्मते उदाहरणं यथा—विक्रमोर्वश्यामेव-राजा—

(ख) हिअआहि अपि अदुक्खओ सरवरए धुअपक्खओ ।
वाहो-वग्गिअ-णअणओ तम्मइ हंसजुअणो ॥ इति ।

( ६२ ) प्रच्छेदकाख्यं लास्याङ्गं लक्षयति -अन्यासक्तमिति । पतिं स्वामिनम् अन्यस्यां नायिकायाम् आसक्तम् अनुरक्तं मत्वा, प्रेम्णः स्वप्रणयस्य विच्छेदेन विश्लेषेण यो मन्युः शोकः तेन तथोक्तेन, वीणापुरस्सरं वीणावादनपूर्वकं स्त्रिया भार्याया यद् गानं तत् प्रेमप्रच्छेदकत्वात् प्रच्छेदको नाम लास्याङ्गं मतः ।

भरतस्तु—

प्रच्छेदकः स विज्ञेयो यत्र चन्द्रातपाहताः ।
स्त्रियः प्रियेषु सज्जन्ते ह्यपि विप्रियकारिषु ॥ इत्याह ।

अस्योदाहरणमप्यूह्यम् ।

( ६३ ) त्रिगूढकाख्यं लास्याङ्गं लक्षयति—स्त्रीवेशेति । स्त्रीवेशधारिणां पुंसां श्लक्ष्णं मनोहरं नाट्यं स्त्रीत्वेनाभिनयः, तत् त्रीणि वाग्वेशव्यवहाराणि गूढानि यस्मिन् तत् त्रिगूढकाख्यं नाम लास्याङ्गं भवेत् ।

---

(क) तव न जाने हृदयं मम पुनर्मदनो दिवाऽपि रात्रिरपि ।
निर्घृण ! तपति बलीयांस्त्वयि वृत्तमनोरथान्यङ्गानि ॥ इति संस्कृतम् ।

(ख) हृदयाहितप्रियदुःखः सरोवरे धुतपक्षः ।
बाष्पावल्गितनयनस्ताम्यति हंसयुवा ॥ इति संस्कृतम् ।

( ६४ ) यथा मालत्याम्— 'मकरन्दः—एषोऽस्मि मालती संवृत्तः ।'

( ६५ ) कश्चन भ्रष्टसंकेतः सुव्यक्तकरणान्वितः ॥ २१९ ॥
प्राकृतं वचनं वक्ति यत्र तत्सैन्धवं मतम् ।

( ६६ ) करणं वीणादिक्रिया ।

( ६७ ) चतुरस्रपदं गीतं मुखप्रतिमुखान्वितम् ॥ २२० ॥
द्विगूढं रसभावाढ्यम् ।

( ६८ ) ··················उत्तमोत्तमकं पुनः ।
कोपप्रसादजमधिक्षेपयुक्तं रसोत्तरम् ॥ २२१ ॥

मुनिनाऽप्युक्तम्—

अनिष्ठुरश्लक्ष्णपद समवृत्तैरलङ्कृतम् ।
नाट्यं पुरुषभावाढ्यं त्रिगूढकमुदाहृतम् ॥ इति ।

( ६४ ) उदाहरति—यथेति । मालत्या मालतीमाधव इत्यर्थः । मकरन्द इति । तेन हि मालतीप्रतारणाय लवङ्गिकावेशस्य नन्दनप्रतारणाय मालतीवेशस्य च धारणेन मनोहराभिनयात् त्रिगूढकम् ।

( ६५ ) सैन्धवाख्यं लास्याङ्गं लक्षयति—कश्चनेति । भ्रष्टः सङ्केतस्थाने नायिकाया अनागमनेन नष्टः सङ्केतो यस्य सः तथोक्तः, तथा सुव्यक्तेन सुस्पष्टेन करणेन वीणादिवादनकर्मणा अन्वितो युक्तो यः सः तथोक्तः, प्रायिकं चैतत् । कश्चन पुरुषो यत्र प्राकृतं वचनं वक्ति तत् सैन्धवेनाश्वेनेव चञ्चलेन पुरुषेण प्रयुक्तत्वात् सैन्धवं नाम लास्याङ्गं विदुः ।

यथा स्वप्नवासवदत्ते—राजा······
श्रुतिसुखनिनदे कथं नु देव्याः······इत्यादि ।

यथा वा विक्रमोर्वश्याम्—"राजा कइ तुए सिक्खिदमेदं गइलालस ! सा तुए दिट्ठा जहणभरालसा" इति ।

( ६६ ) करणपदं व्याचष्टे—करणमिति । वीणादिक्रिया वीणादिवादनकर्म । एतेन क्रियते यत्तत्करणमिति भावसाधन एव करणशब्दोऽत्र ग्रन्थकृता प्रदर्शितः ।

( ६७ ) द्विगूढाख्यं लास्याङ्गं लक्षयति—चतुरस्रपदमिति । चतुरस्राणि विदग्धमनोहराणि पदानि यस्मिन् तत् तथोक्तम्, यद्वा चतुरस्रपद पूर्णसप्तस्वर भरतादिप्रसिद्धं यस्मिन् तत्, मुखेन मुखसन्धिना प्रतिमुखसन्धिना वा अन्वितम् उभयोर्मध्ये केनापि सहितम् तथा रसभावाभ्याम् आढ्यमन्वितम्, द्वौ रसभावौ गूढौ प्रतीयमानत्वात् गुप्तौ यत्र तत् द्विगूढं नाम लास्याङ्गं विदुरित्यर्थः ।

यथा शाकुन्तले—

"खण चुम्बिताइं भमरेहिं सुउमार केसरसिहाइं ।
ओदंस अन्ति दअमाण पमदाओ सिरीसकुसुमाइं ॥ इति

( ६८ ) उत्तमोत्तमकं लास्याङ्गं लक्षयति—उत्तमोत्तमकमिति । कोपेन प्रसादेन च जातं कोपप्रसादजं कोपात् प्रसादाद्वा उत्पन्नमित्यर्थः, अधिक्षेपेण अवमानेन युक्तं संयुक्तम्, तथा रस उत्तरः उत्कृष्टः यस्मिन् तत्तादृशम्, कदाचित्कोपज अधिक्षेपयुक्तम्, कदाचित् प्रसादजत्वात् रसोत्तरमित्यर्थः, उत्तमादप्युत्तमित्युत्तमोत्तमं नाम लास्याङ्गं विदुः ।

( ६९ ) हावहेलान्वितं चित्रश्लोकबन्धमनोहरम् ।
उक्तिप्रत्युक्तिसंयुक्तं सोपालम्भमलीकवत् ॥ २२२ ॥
विलासान्वितगीतार्थमुक्तप्रत्युक्तमुच्यते ।

स्पष्टान्युदाहरणानि ।

( ७० ) एतदेव यदा सर्वैः पताकास्थानकैर्युतम् ॥ २२३ ॥
अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ।

एतदेव नाटकम् । यथा— बालरामायणम् ।

( ७१ ) अथ प्रकरणम्—

( ७२ ) भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम् ॥ २२४ ॥

अत्र "कोपप्रसादजम्" इत्यादिविशेषणपञ्चकमनुपक्तस्य गीतस्य विशेषणं बोध्यम् । यथा विक्रमोर्वश्याम्,—राजा ( सक्रोधम् ) इत्याद्यग्रे—

हिअ आहिं ओप अद्दुक्खओ सरवरए धुअ पक्खओ ।
वाहो वग्गिअ गअणओ नम्मइ हंसजुअलओ ॥ इति ।

( ६९ ) उक्तप्रत्युक्ताख्य लास्याङ्गं लक्षयति—हावहेलेति । हावहेलाभ्यां पूर्वलक्षिताभ्यामन्वितम्, हेलाभिन्नोऽत्र हावो गोवलीवर्दन्यायात् हेलाबाहुल्यार्थम्, चित्रेण श्लोकबन्धेन मनोहरम्, उक्तिप्रत्युक्तिसंयुतम्, सोपालम्भं सभर्त्सनम्, अलीकवत् असत्यवद् भासमानम्, तथा विलासेनान्वितो गीतार्थो यस्मिंस्तत्तथोक्तम् उक्तिप्रत्युक्तिरूपत्वात् उक्तप्रत्युक्तं नाम लास्याङ्गमुच्यते ।

( ७० ) नाटकप्रकरणात् महानाटकाख्यं नाटकप्रभेदं निरूपयति—एतदेवेति । नाटकमेवेत्यर्थः, यदा सर्वैः समग्रैः—

सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्तितम् ॥

इत्यादिभिरुक्तैश्चतुर्भिः पताकास्थानकैः दशभिरङ्कैश्च युतं भवेत्, तदा धीरा बुद्धिमन्तो जनाः तत् महानाटकमूचिरे । एवं च पताकाचतुष्टययुक्तत्वे सति दशाङ्कयुक्तनाटकत्वमेव महानाटकत्वमिति लक्षणं फलितम् ।

( ७१ ) नाटकप्रकरणभाणादयो ये रूपकोपरूपकप्रभेदास्तत्र साङ्गोपाङ्गनाटकलक्षणमभिधाय उद्देशक्रमात् प्रकरणाख्यं द्वितीयरूपकं निरूपयितुमाह—अथ प्रकरणमिति । नाटकलक्षणानन्तरं प्रकरणं निरूप्यते इत्यर्थः ।

( ७२ ) भवेदिति । प्रकर्षेण क्रियते कल्प्यते नेता फलं वस्तु वा व्यस्तसमस्ततयाऽत्रेति प्रकरणं तस्मिन् प्रकरणे तत्संज्ञके दृश्यकाव्ये वृत्तं तन्नाट्यवर्णनीयनायकचरितम्, लौकिकं लोकमात्रप्रसिद्धं मर्त्यलोकसम्भवयोग्यं न तु मर्त्यलोकासम्भवदिव्ययोग्यमित्यर्थः, अत एव कविकल्पितं स्वप्रतिभामात्रेण निर्मितं न तु नाटकवत् पुराणादिप्रसिद्धम् भवेत् ।

तथाचोक्तं महर्षिणा—

यत्र कविरात्मबुध्या वस्तु शरीरं नायकं चैव ।
औत्पत्तिकं प्रकुरुते प्रकरणमिति तद्बुधैर्ज्ञेयम् ॥ इति ।

**श्रृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ।**
**सापायधर्मकामार्थपरो धीरप्रशान्तकः ॥ २२५ ॥**

( ७३ ) विप्रनायकं यथा **मृच्छकटिकम्** । अमात्यनायकं **मालतीमाधवम्** । वणिङ्नायकं **पुष्पभूषितम्** ।

**( ७४ ) नायिका कुलजा कापि वेश्या कापि द्वयं क्वचित् ।**
**तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः ॥ २२६ ॥**
**कितवद्यूतकारादिविटचेटकसंकुलः ।**

( ७५ ) कुलस्त्री **पुष्पभूषिते** । वेश्या तु **रङ्गवृत्ते** ! द्वे अपि **मृच्छकटिके** ।

---

श्रृङ्गारो रसोऽङ्गी मुख्यो भवेत् न तु नाटकवत् वीररसोऽप्यङ्गी भवेत् । नायकस्तु विप्रो ब्राह्मणवर्णः अमात्यो ब्राह्मणातिरिक्तोऽपि राजसचिवः, अथवा वणिक् वैश्यः, सापाया विचारशालिनो ये धर्मकामार्थास्तत्परस्तेष्वासक्तः, न तु मुक्तितत्परः, धर्मस्य स्वर्गसाधनत्वेन, कामस्य पुत्रपश्वादिविषयकत्वेन, अर्थस्य भोगसाधनत्वेन सापायत्वं बोध्यम् । तथा धीरप्रशान्तकः "सामान्यगुणैर्भूयान् द्विजातिको धीरप्रशान्तः स्यात्" इति पूर्वलक्षितधीरप्रशान्तलक्षणयुतो भवेत् । तथा च कविकल्पितलौकिकवृत्तान्तजन्यत्वे सति विनाशशालिधर्मकामार्थतत्पर-धीरप्रशान्तकविप्रामात्यवणिगन्यतमनायकवच्छृङ्गाररसप्रधानदृश्यकाव्यत्वं प्रकरणत्वमिति सामान्यलक्षणं फलितम् ।

अत्र सापायपदोपादानात् प्रकरणे धर्मादीनामपाय उपन्यसनीय एवेति बोधितम् ।

( ७३ ) उदाहरति—विप्रेति । अमात्यनायकमित्यमात्यपदं तत्पुत्रस्योपलक्षणं तेन माधवस्यामात्यपुत्रत्वेऽपि न क्षतिः । एवं च मूलेऽप्युपलक्षणं बोध्यम् । पुष्पभूषितमिति प्रकरणविशेषः ।

( ७४ ) अथ प्रकरणभेदं दर्शयति -नायिकेति । कापि कुत्रापि प्रकरणे कुलजा कुलस्त्रीनायिका कापि वेश्या वेशो भृतिः सोऽस्या जीवनमिति वेश्या तद्विशेषो गणिका यदुक्तम्—

आभिरभ्यर्थिता वेश्या रूपशीलगुणान्विता ।
लभते गणिकाशब्दं स्थानं च जनसंसदि ॥ इति ।

नायिका, क्वचिच्च द्वयं कुलजावेश्ये द्वे अपि नायिके उपलभ्यते इति शेषः । तथा चैनमेव परिष्कृत्योक्तं काव्येन्दुप्रकाशे—

शुद्धं धूर्तः मिश्रमिति भेदात्तत्त्रिविधं पुनः ।
कुलस्त्रीनायिका शुद्धं गणिकानायिकापरम् ॥
प्राधान्यमुभयार्यत्र मिश्रं प्रकरणं विदुः ॥ इति ।

अनयोर्भाषाविषये तु मन्दारमरन्दे-

तत्र वेश्या प्राकृतं तु कुलजा संस्कृतं वदेत् । इति ।

तेन नायिकाभेदेन तस्य प्रकरणस्य त्रयो भेदाः प्रकारा भवन्ति । तत्र तेषु भेदेषु मध्ये तृतीयको भेदः उभयनायिकावत् प्रकरणमित्यर्थः, कितवो धूर्त्तः द्यूतकारादयः तथा विटश्चेटश्च पूर्वलक्षितः तैः सङ्कुलो व्याप्तः ।

( ७५ ) उदाहरति—कुलस्त्रीति । कुलजैव पुष्पभूषिते, वेश्यैव रङ्गदत्ते इत्यर्थः । (तरङ्गदत्त) इति पाठान्तरम् ।

अस्य नाटकप्रकृतित्वाच्छेषं नाटकवत् ।

अथ भाणः--

( ७६ ) भाणः स्याद्धूर्तचरितो नानावस्थान्तरात्मकः ॥ २२७ ॥
एकाङ्क एक एवात्र निपुणः पण्डितो विटः ।
रङ्गे प्रकाशयेत्स्वेनानुभूतमितरेण वा ॥ २२८ ॥
सम्बोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितैः ।
सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यवर्णनैः ॥ २२९ ॥
तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती ।
मुखनिर्वहणे संधी लास्याङ्गानि दशापि च ॥ २३० ॥

( ७७ ) अत्राकाशभाषितरूपपरवचनमपि स्वयमेवानुवदन्नुत्तरप्रत्युत्तरे कुर्यात् । शृङ्गारवीररसौ च सौभाग्यशौर्यवर्णनया सूचयेत् । प्रायेण भारती । क्वापि कौशिक्यपि वृत्तिर्भवति । लास्याङ्गानि गेयपदादीनि । उदाहरणं लीलामधुकरः ।

अथ व्यायोगः—

( ७८ ) ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः ।

---

अस्येति । अस्य प्रकरणस्य । नाटकप्रकृतित्वादिति । "यत्र समग्राङ्गोपदेशः सा प्रकृतिः" इति जैमिनोक्तलक्षणेन नाटके सर्वाङ्गोपदेशात् प्रकृतित्वेन तत एवातिदेशविधानात् प्रकरणादौ सन्ध्यङ्गनाटकलक्षणादिकमवशिष्टं नाटकवदेव ज्ञेयमित्यर्थः । तथा चोक्तं प्रागेव—

विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम् । इति ।

( ७६ ) भाणाख्यं रूपकं निरूपयति—भाण इति । धूर्ताश्चौरा द्यूतकारादयस्तेषां चरितं यत्र स तथोक्तः, नाना बहुप्रकारम् अवस्थान्तरम् आत्मा स्वरूपं यस्य सः तथोक्तः, निरुक्तप्रारम्भादिपञ्चविधावस्थातिरिक्तावस्थालाभायान्तरपदम् , एक एव अङ्कः परिच्छेदो यत्र स तथोक्तो रूपकविशेषः, भण्यते व्योमोक्त्या नायकेन स्वपरवृत्तं प्रकाश्यत इति भाणः स्यात् । अत्र भाणे एक एव निपुणः कर्मकुशलः पण्डा तीक्ष्णा बुद्धिर्यस्यासौ पण्डितश्च विटः तारकादित्वादितच् । स्वेन आत्मना अनुभूतम् इतरेण परेण वा जनेन अनुभूतं वृत्तान्तं स्वयं तु केनापि विधिना बुध्वा रङ्गे नाट्यशालायां प्रकाशयेत् । तथा आकाशभाषितैः पूर्वोक्तस्वरूपैः सम्बोधनेन द्वारा उक्तिप्रत्युक्ती कुर्यात् । शौर्यसौभाग्ययोर्वर्णनैः वीरशृङ्गारो रसौ सूचयेत् शौर्यवर्णनैर्वीरं दम्पत्योः सौभाग्यवर्णनैश्च शृङ्गारं सूचयेदित्यर्थः, तथा तत्र भाणे इतिवृत्तं वर्णनीयं वस्तु उत्पाद्यम् प्रकरणवत् कविभिः कल्पनीयम् , न तु नाटकादिवत् पुराणादिप्रसिद्धम् । तथा प्रायेण प्रभूततया भारती पूर्वोक्तस्वरूपा वृत्तिः भवेत् तेन सात्त्वतीप्रभृतीनां क्वाचित्कत्वं सूचयति । मुखनिर्वहणे च सन्धी स्याताम् भवेताम् तथा दशापि लास्याङ्गानि स्युः । अवशिष्टं नाटकवदेव बोध्यम् ।

( ७७ ) व्याचष्टे—अत्रेति । लीलामधुकरो भाणाख्यरूपकविशेषः ।

( ७८ ) व्यायोगाख्यं रूपकं निरूपयति—ख्यातेतिवृत्तेति । ख्यात पुराणेतिहासादिषु प्रसिद्धम् इतिवृत्तं वर्णनीयं वस्तु यत्र सः तथोक्तः, स्वल्पैः स्त्रीजनैः संयुतः, गर्भविमर्शौ

हीनो गर्भविमर्शाभ्यां नरैर्बहुभिराश्रितः ॥ २३१ ॥
एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः ।
कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः ॥ २३२ ॥
राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः ।
हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः ॥ २३३ ॥

( ७९ ) यथा सौगन्धिकाहरणम् ।

अथ समवकारः—

( ८० ) वृत्तं समवकारे तु ख्यातं देवासुराश्रयम् ।
संधयो निर्विमर्शास्तु त्रयोऽङ्कास्तत्र चादिमे ॥ २३४ ॥
सन्धी द्वावन्त्ययोस्तद्वदेक एको भवेत्पुनः ।
नायका द्वादशोदात्ताः प्रख्याता देवमानवाः ॥ २३५ ॥
फलं पृथक्पृथक्तेषां वीरमुख्योऽखिलो रसः ।
वृत्तयो मन्दकैशिक्यो नात्र बिन्दुप्रवेशकौ ॥ २३६ ॥
वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश ।

---

तन्नामकौ तृतीयचतुर्थसन्धी ताभ्यां हीनः, बहुभिरनेकैर्नरैराश्रितः, एकः अङ्को यत्र सः तथोक्तः, न स्त्रीनिमित्तः समरोदयः सङ्ग्रामारम्भो यत्र सः तथोक्तः यथा परशुरामेण पितृवधकोपात् सहस्रार्जुनवधः कृत इति दशरूपके तथा कौशिकीवृत्तिरहितश्च रूपकविशेषः, विशेषेण आसमन्तात् युज्यन्ते कार्यार्थं संरभन्तेऽनेके पुरुषा यत्रासौ व्यायोगो नाम भवेत् । तत्र व्यायोगे नायकः प्रख्यातः प्रसिद्धो भवेत, स नायकः राजर्षिः क्षत्रियः, अथवा दिव्यो दिविभवः, स्वर्गीयो देवताविशेष इत्यर्थः, धीरोद्धतश्च प्रागुक्तस्वरूपो भवेत् । तथा हास्यशृङ्गारशान्तेभ्य इतरे रसा अत्र व्यायोगे अङ्गिनो मुख्या स्युः ।

( ७९ ) उदाहरति यथेति । सौगन्धिकाहरणं व्यायोगाख्यरूपकविशेषः ।

( ८० ) समवकाराख्यं रूपकं निरूपयति—वृत्तमिति सङ्गतैरवकीर्णाश्चार्थाः त्रिवर्गोपायैः पूर्वप्रसिद्धैरेव क्रियते निबध्यते यत्र सः समवकारस्तत्र तु देवासुराश्रयं देवासुरसम्बन्धि ख्यातं पुराणादीतिहासादिपु प्रसिद्धं च वृत्तं वृत्तान्तो भवेत् । तत्र च समवकारे निर्विमर्शा विमर्शाख्यतुरीयसन्धिरहिताश्चत्वारः सन्धयस्त्रयश्चाङ्काः कविभिर्निवद्धव्या इति शेषः । आदिमे प्रथमाङ्के मुखप्रतिमुखाख्यौ द्वौ सन्धी निवद्धव्यौ अन्त्ययोर्द्वितीयतृतीयाङ्कयोः पुनः एक एकः सन्धिर्भवेत्, द्वितीयाङ्के गर्भसन्धिस्तृतीयाङ्के च निर्वहणसन्धिर्भवेदित्यर्थः । उदात्ता धीरोदात्तस्वरूपाः प्रख्याताः प्रसिद्धाः देवमानवा दिव्यादिव्याद्वादशनायका भवेयुः । तेषाञ्च नायकानां फलं प्रत्येकं पृथक् पृथक् भवेत्, यथा समुद्रमन्थने वासुदेवादीनां लक्ष्म्यादिलाभ इति दशरूपककाराः । वीरमुख्यो वीररसप्रधानो यत्र सः तथोक्तोऽखिलः सर्व एव रसो भवेत् । मन्दा स्वल्पा कौशिकीवृत्तिर्यत्र ता अखिला एव भारत्याद्यो वृत्तयो भवेयुः । अत्र समवकारे बिन्दुप्रकाशकौ पूर्वाभिहितस्वरूपौ न कर्तव्याविति शेषः । तत्र च समवकारे यथालाभं लाभमनतिक्रम्य त्रयोदश वीथ्यङ्गानि

गायत्र्युष्णिङ्मुखान्यत्र छन्दांसि विविधानि च ॥ २३७ ॥
त्रिशृङ्गारस्त्रिकपटः कार्यश्चायं त्रिविद्रवः ।
वस्तु द्वादशनालीभिर्निष्पाद्यं प्रथमाङ्कगम् ॥ २३८ ॥
द्वितीयेऽङ्के चतसृभिर्द्वाभ्यामङ्के तृतीयके ।

( ८१ ) नालिका घटिकाद्वयमुच्यते । बिन्दुप्रवेशकौ च नाटकोक्तावपि नेह विधातव्यौ ।

तत्र—

( ८२ ) धर्मार्थकामैस्त्रिविधः शृङ्गारः, कपटः पुनः ॥ २३९ ॥
स्वाभाविकः कृत्रिमश्च दैवजो, विद्रवः पुनः ।
अचेतनैश्चेतनैश्च चेतनाचेतनैः कृतः ॥ २४० ॥

( ८३ ) तत्र शास्त्राविरोधेन कृतो धर्मशृङ्गारः । अर्थलाभार्थकल्पितोऽर्थशृङ्गारः । प्रहसनशृङ्गारः कामशृङ्गारः । तत्र कामशृङ्गार प्रथमाङ्क एव । अन्ययोस्तु न नियम इत्याहुः ।

---

वक्ष्यमाणानि भवेयुः । षडक्षरा गायत्री सप्ताक्षरा चोष्णिक् ते मुखे आरम्भे येषां तानि तथाविधानि विविधानि अनेकप्रकाराणि छन्दांसि अत्र समवकारे कविभिः कर्त्तव्यानि । अयमग्रे प्रतिपाद्यमानः प्रकारः त्रिशृङ्गारः, त्रिकपटः त्रिविद्रवश्च कविभिःकर्त्तव्यः । प्रथमाङ्कगं प्रथमाङ्कबोधनीयं वस्तु विषयं द्वादशनाडीभिर्द्वादशघटिकाभिः घटिकाद्वयात्मकनाडीद्वादशकैरष्टचत्वारिंशद्दण्डैर्निष्पाद्यं पात्रैः कार्यमित्यर्थः, द्वितीयेऽङ्के वस्तु त्रिसृभिर्घटिकाभिः निष्पाद्यम्, तृतीयके चाङ्के वस्तु द्वाभ्यां घटिकाभ्यां निष्पाद्यम्, नाटकप्रकृतत्वा देव विद्रवलाभे प्रकारत्रयस्यावश्यकत्वार्थमियं पुनरुक्तिः ।

( ८१ ) विवृणोति—नालिकेति । घटिकाद्वयं दण्डद्वयमित्यर्थः । नेह विधातव्याविति । "विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्" इत्युक्तत्वात् अनुक्तधर्मवद् बिन्दुप्रवेशकयोरपि लाभसम्भवादृतस्तौ न कर्त्तव्याविस्यर्थः ।

( ८२ ) तत्र शृङ्गारादिकं ग्रन्थकृत् स्वयमेव कारिकयाह—धर्मार्थेति । धर्मशृङ्गारः, अर्थशृङ्गारः, कामशृङ्गारश्चेति त्रिविधस्त्रिप्रकारः शृङ्गारः । त्रिकपटत्वं व्याख्यातुं कपटत्रैविध्यं दर्शयति—कपटं पुनरिति । स्वाभाविकः प्राकृतिकः, कृत्रिमः क्रियया निर्वृत्तः, दैवाज्जातो दैवजश्चेति त्रिविधः कपट इत्यर्थः । त्रिविद्रवं व्याख्यातुमाह—विद्रवश्चेति । कौतुकेन प्रतारणादिविशिष्टो विद्रवः स च पुनः अचेतनैः काष्ठपुत्तलिकादिभिः कृतः चेतनैः प्रहसनप्रकारैः कृतः, चेतनाचेतनैश्चेतनत्वेऽपि प्रकृष्टचेतनारहितैः गजपश्वादिभिस्तदनुपदं वक्ष्यति—गजादिभिरिति ।

( ८३ ) धर्मशृङ्गारादिकं विवृणोति—तत्रेति । शास्त्रस्य 'ऋतौ भार्यामुपेयादिति', "ऋतुकालाभिगामी स्यात् स्वधर्मनिरतः सदा" इत्यादि च श्रुतिस्मृतिप्रतिपादितविधेः अविरोधेन विरोधाभावेन विषयमुपभुञ्जानेनेत्यर्थः कृतः ऋतुसमयस्वदारगमनरूपः, तथा च निषिद्धकाले निषिद्धयोषिति च कृतः शृङ्गारः शास्त्रविरुद्धस्तद्रहितेन विहितः शृङ्गारो धर्मशृङ्गार इत्यर्थः । अर्थलाभार्थकल्पितः शृङ्गारो गणिकाभिः प्रहसनाय हास्यशृङ्गारः प्रहसनशृङ्गारः । स च हास्यार्णवादौ द्रष्टव्यः । प्रथमाङ्क एवेति । अत्र दशरूपककाराः—"प्रथ-

( ८४ ) चेतनाचेतना गजादयः ।

( ८५ ) समवकीर्यन्ते वहवोऽर्था अस्मिन्निति समवकारः । यथा-समुद्रमथनम्

अथ डिमः—

( ८६ ) मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।
उपरागैश्च भूयिष्ठो डिमः ख्यातेतिवृत्तकः ॥ २५१ ॥
अङ्गी रौद्ररसस्तत्र सर्वेऽङ्गानि रसाः पुनः ।
चत्वारोऽङ्का मता नेह विष्कम्भकप्रवेशकौ ॥ २५२ ॥
नायका देवगन्धर्वयक्षरक्षोमहोरगाः ।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ॥ २५३ ॥
वृत्तयः कौशिकीहीना निर्विमर्शाश्च सन्धयः ।

इश्च यथासङ्ख्यं कपटाः । तथा नगरोपरोधयुद्धवाताग्न्यादिविद्रवाणां मध्ये एकैको विद्रवः कार्यः । धर्मार्थकामशृङ्गाराणामेकैकः शृङ्गारः प्रत्यङ्कमेव विधातव्यः” इति नियममाहुः ।

मन्दारमरन्दे तु—

अङ्कास्त्रयस्तत्र चाद्ये मुखप्रतिमुखौ तथा ।
वस्तुस्वभावदैवारिकृताः स्युः कपटास्त्रयः ॥
कथामपि निबध्नीयात्तथा द्वादशनालिकाम् ।
द्वितीयेऽङ्केऽपि चतुर्नालिकावधिकां कथाम् ।
पुररोधरणाग्न्यादिनिमित्ता विद्रवास्त्रयः ।
तृतीयेऽङ्के निबद्धव्या कथा चापि द्विनालिका ।
धर्मार्थकामानुगुणास्तिस्रः शृङ्गाररीतयः ॥ इति विशेषो दर्शितः ।

( ८४ ) चेतनाचेतनेति । यद्यपि यत्र चेतनत्वं तत्र नाचेतनत्वं यत्राचेतनत्वं न तत्र चेतनत्वमित्युभयोर्विरुद्धत्वेऽपि सामान्यचैतन्यवत्त्वाद् गजादीनां पशूनां चेतनत्वम्, मानवादिवत्प्रकृष्टप्रज्ञाविशेषचैतन्याभावादचेतनत्वमिति विरुद्धयोरपि धर्मयोरेकत्र सम्भवादाह—गजादय इति ।

( ८५ ) समवकारपदस्य योगरूढत्वमुपपादयति—समवकीर्यन्त इति । समवकीर्यन्ते कविभिर्निबध्यन्त इत्यर्थः । समवपूर्वकात् करोतेः “अकर्त्तरि च कारके संज्ञायाम्” इति पा० सूत्रेण घञ् प्रत्ययः ।

( ८६ ) डिमसंज्ञकं रूपकं निरूपयति—मायेन्द्रेति । मायया इन्द्रजालेन संग्रामेण क्रोधेन वा उद्भ्रान्ता व्यग्रहृदया आदिपदात् विक्षिप्तादयश्च तेषां चेष्टितैर्व्यवहारैः, उपरागैः सूर्यचन्द्रग्रहणैश्च भूयिष्ठो बहुलः येन निर्घातोल्कापातादयो ग्राह्याः तथा ख्यातं प्रसिद्धम् इतिवृत्तं वस्तु यत्र स तथोक्तो रूपकविशेषः डिमसङ्घात इति नायकसङ्घातात्मकत्वात् डिमो विप्लव इत्यर्थः तद्योगादपि डिमः स्यात् । तत्र डिमे रौद्ररसोऽङ्गी अन्ये सर्व पुनः रसा अङ्गानि चत्वारोऽङ्का मताः किन्तु इह डिमे विष्कम्भकप्रवेशकौ न भवेताम्, चूलिकाऽङ्कावताराङ्कमुखानि तु भवेयुरेव । देवगन्धर्वयक्षरक्षोमहोरगाः, भूतप्रेतपिशाचाद्या अत्यन्तमुद्धता अतीवोत्कटप्रकृतयः षोडशनायकाः स्युः । कौशिकीहीना कौशिकीरहिता भारत्याद्याः सर्वा एव वृत्तयः स्युः । निर्विमर्शाः विमर्शाख्यचतुर्थसन्धि-

दीप्ताः स्युः षड्रसाः शान्तहास्यशृङ्गारवर्जिताः ॥ २५४ ॥

( ८७ ) अत्रोदाहरणं च 'त्रिपुरदाहः' इति महर्षिः ।

अथेहामृगः—

( ८८ ) ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्तितः ।
मुखप्रतिमुखे संधी तत्र निर्वहणं तथा ॥ २५५ ॥
नरदिव्यावनियमौ नायकप्रतिनायकौ ।
ख्यातौ धीरोद्धतावन्यो गूढभावादयुक्तकृत् ॥ २५६ ॥
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।
शृङ्गाराभासमप्यस्य किञ्चित्किञ्चित्प्रदर्शयेत् ॥ २५७ ॥
पताकानायका दिव्या मर्त्या वापि दशोद्धताः ।
युद्धमानीय संरम्भं परं व्याजान्निवर्तते ॥ २५८ ॥
महात्मानो वधप्राप्ता अपि वध्याः स्युरत्र नो ।

रहिताः सर्वाः सन्धयश्च स्युः । शान्तहास्यशृङ्गारवर्जिताः षट् दीप्ताः विभावादिसामग्रीबलेन झटिति प्रतीयमानाः रसाः स्युः । शेषं प्रस्तावनादि नाटकवदेव ज्ञेयम् ।

( ८७ ) अत्रेति । महर्षिर्नाट्यशास्त्रप्रणेता भरतः । तेन हि एतद्रूपकं त्रिपुरदाहेतिवृत्तस्य तुल्यत्वं दर्शितं तथाहि—

इदं त्रिपुरदाहे तु लक्षणं ब्रह्मणोदितम् ।
ततस्त्रिपुरदाहश्च डिमसंज्ञः प्रयोजितः ॥ इति ।

( ८८ ) ईहामृगाख्यं रूपकं निरूपयति—ईहामृग इति । मिश्रं ख्याताख्यातं वृत्तं वृत्तान्तो यत्र सः तथोक्तः चत्वारोऽङ्का यस्मिन् सः तथोक्तो रूपकविशेष ईहामृगः प्रकीर्तितः । व्युत्पत्तिलभ्योऽर्थो विवरणे स्पष्टः । तत्र ईहामृगे मुखप्रतिमुखे सन्धी भवेताम् , तथा निर्वहणं च सन्धिर्भवेत् । अनियमौ नियमरहितौ नरौ वा दिव्यौ वा नरदिव्यौ वा नायकप्रतिनायकौ भवेताम् । एवञ्च नरो नायकः दिव्यश्च प्रतिनायकः, तथा नरप्रतिनायकः दिव्यश्च नायकोऽत्र भवितुं शक्नोतीति स्फुटार्थः । तयोराद्यो धीरः, अन्त्य उद्धतः स च गूढभावात् प्रच्छन्नभावात् अयुक्तकृत् अयुक्तकार्यकारी । स्वस्य रमणमनिच्छन्तीं दिव्यस्त्रियं दिव्याङ्गनाम् अपहारेण बलात्कारेण आदिपदाच्छलेन च इच्छतः सुरतं कामयमानस्य अस्य प्रतिनायकस्य किञ्चित् किञ्चिच्छृङ्गाराभासमपि कविः प्रदर्शयेत् उपवर्णयेत् । दिव्या दिविभवा मर्त्या मनुष्या वा उद्धतस्वभावा उत्कटप्रकृतयः दश पताकानायकाः "व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते" इत्युक्तपताकाख्यार्थप्रकृतिसंयुक्ता भवेयुः । तथा च नायकप्रतिनायकौ द्वौ पताकानायका दश इति मिलित्वा दिव्यमर्त्या द्वादशनायका भवेयुरित्यर्थः । परं प्रतिनायकबलम् संरम्भं क्रोधम् आनीय प्रापय्य स्थितस्य नायकस्य व्याजात् कार्यान्तरच्छलेन युद्धं निवर्त्तते निवर्तयेदिति पाठे तु परं युद्धस्थानमानीय संरम्भं निवर्त्तयेदित्यर्थ इति वागीशाः । अत्र ईहामृगे महात्मानो लोकाः वधप्राप्ता वधयोग्या अपि नो वध्याः स्युः । तेषां वधः पुराणादिषु ख्यातोऽपि वधानर्हत्वात् कविभिर्न वर्ण्य-

एकाङ्को देव एवात्र नेतेत्याहुः परे पुनः ॥ २४९ ॥
दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे ।

मिश्रं ख्याताख्यातम् । अन्यः प्रतिनायकः ।

( ८९ ) पताकानायकास्तु नायकप्रतिनायकयोर्मिलिता दश । नायको मृगवदलभ्यां नायिकामत्र ईहते वाञ्छतीतीहामृगः । यथा—कुसुमशेखरविजयादिः ।

अथाङ्कः—

( ९० ) उत्सृष्टिकाङ्क एकाङ्को नेतारः प्राकृता नराः ॥ २५० ॥
रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम् ।
प्रख्यातमितिवृत्तं च कविर्बुद्ध्या प्रपञ्चयेत् ॥ २५१ ॥
भाणवत्संधिवृत्त्यङ्गान्यस्मिञ्जयपराजयौ ।
युद्धं च वाचा कर्तव्यं निर्वेदवचनं बहु ॥ २५२ ॥

( ९१ ) इमं च केचित् नाटकाद्यन्तःपात्यङ्कपरिच्छेदार्थमुत्सृष्टिकाङ्कनामानम् आहुः ।

---

नीय इत्यर्थः । अन्यमतं दर्शयितुमाह—एकाऽङ्क इति । एक अङ्को यत्र स एकाङ्कः, अत्र ईहामृगे देव एव नेता नायक इति पुनः परे आहुः । तदितरे च दिव्यस्त्रीहेतुकं युद्धं नायकाश्च षट् इत्याहुरिति पूर्वेण सम्बन्धः ।

( ८९ ) कारिकार्थं विवृणोति—मिश्रमिति । पताकानायकं विवृणोति—पताकानायका इति । नायकप्रतिनायकयोरेव सम्बन्धिनः पताकास्था नायका मिलिता दश न पुनरनयोरेकतरस्यैव दशेत्यर्थः । ईहामृगव्युत्पत्तिं दर्शयति—नायको मृगवदिति । अलभ्यां दुष्प्राप्यत्वेनाप्राप्याम् । तथा चास्मिन्नर्थे ईहामृगशब्दः पृषोदरादित्वात् साधनीयः ।

( ९० ) उत्सृष्टिकाङ्काख्यं रूपकं निरूपयति—उत्सृष्टिकाऽङ्क इति । उत्सृष्टिकाङ्क इत्यङ्कस्यैव केषांचिन्मते नामान्तरम्, एतच्च विवरण एवाऽनुपदं स्पष्टीभविष्यति । एकः अङ्को यत्र सः तथोक्तः, अत्र उत्सृष्टिकाङ्के प्राकृताः नातिकोविदा असाधारणा इति यावत्, न पुनरत्यन्तकोविदा इत्यर्थः, नरा बहवो मनुष्या नेतारो नायकाः स्युः । स्थायी स्थिरतरः समाप्तिपर्यन्तमुपलभ्यमान इत्यर्थः, करुणो रसः बहुस्त्रीणां परिदेवितं विलापश्च स्यात् । प्रख्यातं पुराणेहासादिषु प्रसिद्धम् क्वचिदप्रख्यातमपि इतिवृत्तं वृत्तान्तं बुद्ध्या स्वकीयोहापोहेन यथासम्भव कविः प्रपञ्चयेत् बहुली कुर्यात् । उक्तं च महर्षिणा—

प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात् ।
दिव्यपुरुषैर्वियुक्तः शेषैरन्यैर्भवेत् पुंभिः ॥ इति ॥

भाणे यथा मुखनिर्वहणे सन्धी प्रायेण भारती वृत्तिः क्वाचित्की कौशिकी दशापि लास्याङ्गानि तथात्राङ्केऽपित्यर्थः । भाणे मुखनिर्वहणाख्यमेव सन्धिद्वयं न तु मुखप्रतिमुखे सन्धी, तथा चात्र भाणे यथा मुखप्रतिमुखाख्यं सन्धिद्वयमिति व्याचक्षाणाः परास्ताः । अस्मिन्नङ्के नायकप्रतिनायकयोः जयपराजयौ वर्णनीयौ । वाचा च युद्धं सङ्ग्रामं कर्त्तव्यं न त्वायुधादिनेत्यर्थः, बहु भूयिष्ठं निर्वेदवचनं स्वतिरस्कारबोधकं वाक्यञ्च कविभिर्वर्णनीयम् ।

( ९१ ) उत्सृष्टिकाङ्कपदार्थव्याख्यानपूर्वकं मतान्तरद्वयं व्याख्यातुमाह—इमञ्चेति । ममाभिमतमङ्कनामानं रूपकविशेषञ्चेत्यर्थः । नाटकादीनामन्तः पातिनः अन्तर्गता ये

( ९२ ) अन्ये तु— उत्क्रान्ता विलोमरूपा सृष्टिर्यत्रेत्युत्सृष्टिकाङ्कः । यथा—शर्मिष्ठाययातिः ।

अथ वीथी—

( ९३ ) वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते ।
आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः ॥ २५३ ॥
सूचयेद्भूरि शृङ्गारं किञ्चिदन्यान्रसान्प्रति ।
मुखनिर्वहणे संधी अर्थप्रकृतयोऽखिलाः ॥ २५४ ॥

( ९४ ) कश्चिदुत्तमो मध्यमोऽधमो वा । शृङ्गारबहुलत्वाच्चास्याः कौशिकीवृत्तिबहुलत्वम् ।

( ९५ ) अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिणः ।
उद्घात्य (त) कावलगिते प्रपञ्चस्त्रिगतं छलम् ॥ २५५ ॥
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृद (मार्द) वानि च तानि तु ॥ २५६ ॥

अङ्कास्तेषां परिच्छेदार्थं निषेधार्थम् उद्धृता उत्थिता नाटकाद्यङ्कात् पृथग् रूपा सृष्टी रचना यस्य स उत्सृष्टिकः स चासावङ्कश्चेति तत्संज्ञकम् ।

नाटकान्तरे द्वित्र्याद्यङ्का अस्य चैकाङ्कत्वेन अङ्कान्तरोत्सङ्गात् अमुम् उत्सृष्टाङ्कनामानं केचिदाहुरित्यर्थः ।

( ९२ ) अन्ये तु वक्ष्यमाणवीथ्यामपि एकाङ्कसत्त्वात् तस्या अपि उत्सृष्टिकाङ्कत्वापत्तेः । अतस्तत्पदार्थमन्यथाहुस्तद्दर्शयति—अन्ये तु इति । विलोमरूपा प्रतिमुखसन्ध्याद्यभावेन विलोमप्रकारा सृष्टिर्यस्य स उत्सृष्टिकः स चासावङ्कश्चेति उत्सृष्टिकाङ्क इत्यर्थः अत्र मतेऽपि "नाटकाद्यन्तः पात्यङ्कपरिच्छेदार्थम् उत्सृष्टिकाङ्क" इत्याहुरित्यनुषङ्गो विधेयः ।

मूलकृन्मते तु नामतुल्येऽपि स्वरूपवैषम्यान्नाटकाद्यङ्कनिवृत्तिरिति पृथगेवाङ्कोऽयमिति ध्येयम् ।

( ९३ ) वीथ्याख्यं रूपकं निरूपयति—वीथ्यामिति । वीथ्यामेकोऽङ्को भवेत् । अत्र वीथ्या एकोऽद्वितीय यः कश्चन नायकः कल्प्यते कल्पयित्वा वर्ण्यते । उक्तरूपप्रकारैः आकाशभाषितैः चित्रां विस्मयां प्रत्युक्तिमाश्रितः अवलम्बितः सन् नटः शृङ्गारं भूरिप्रचुरम् अन्यान् रसानपि किञ्चित् सूचयेत् प्रकाशयेत् । मुखनिर्वहणे सन्धी स्याताम् । अर्थप्रकृतयः "बीजं बिन्दुः पताका च प्रकरी कार्यमेव च" इति याः पञ्चप्रकृतयस्ता अखिला अपि अत्र स्युरित्यर्थः ।

( ९४ ) विवृणोति—कश्चिदिति । उत्तमाद्यन्यतरो नायक इत्यर्थः ।

कौशिक्या वृत्तेरत्रानुक्तत्वेऽपि भूरिशृङ्गारवत्त्वात् तल्लाभ इति दर्शयति—शृङ्गारबहुलत्वादिति ।

( ९५ ) वीथ्यास्त्रयोदशाङ्गानि भवन्तीति दर्शयति—अस्या इति । अस्या वीथ्याः मनीषिणः नाट्यवेत्तारः त्रयोदश अङ्गानि निर्दिशन्ति । तानि त्रयोदशाङ्गानि तु उद्घात्यकम्, अवलगितम् , प्रपञ्चः, त्रिगतम् , छलम् , वाक्केलिः, अधिबलम् , गण्डम् , अवस्यन्दितम् , नालिका, असत्प्रलापः, व्याहारः, मृदवञ्चेति ।

( ६६ ) तत्रोद्घात्य (त) कावलगिते प्रस्तावनाप्रस्तावे सोदाहरणे लक्षिते ।
( ६७ ) मिथो वाक्यमसद्भूतं प्रपञ्चो हास्यकृन्मतः ।
( ६८ ) यथा विक्रमोर्वश्याम्—वलभीस्थविदूषकचेट्योरन्योन्यवचनम् ।

नाट्यदर्पणे तु विशेषः—"भारतीवृत्तिवर्त्तीनि वीथ्यङ्गानि त्रयोदश" । इति ।

( ९६ ) तत्रेति । प्रस्तावनाप्रस्ताव इति ।

पदानि त्वगतार्थानि तदर्थगतये नराः ।
योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते ॥

इत्युद्घात्यकलक्षणस्य

यत्रैकत्र समावेशात् कार्यमन्यत् प्रसाध्यते ।
प्रयोगे सति तज्ज्ञेयं नाम्नाऽवगलितं बुधैः ॥

इति अवगलितलक्षणस्य च प्रस्तावनाप्रस्तावे उक्तत्वात् ।

( ९७ ) प्रपञ्चाख्यमङ्गं निरूपयति—मिथ इति । मिथोऽन्योऽन्यम् , असद्भूतं मिथ्यास्वरूपम् अत एव हास्यकृत् वाक्यम् अन्योऽन्यं प्रपञ्चनात् प्रपञ्चो नाम वीथ्यङ्गं मतः ।

( ९८ ) उदाहरति—यथेति । वलभी उपरिस्थगृहावस्थितकाष्ठविशेषः । अत्र रूपकत्वसाधर्म्याद् भिन्नाङ्गानामप्यत्रापेक्षितत्वेन त्रोटकस्वरूपाया अपि विक्रमोर्वश्या वीथ्यामुदाहरणं नासमञ्जसमिति बोध्यम् । नाट्यदर्पणकारस्य किञ्चिद् विशेषेण लक्षणं तदुदाहरणं च—"प्रपञ्चः संस्तवं हास्यं मिथो मिथ्यैकलाभकृत्" इति । यथा रत्नावल्याम्—राजा-कदलीगृहे चित्रगतां सागरिकामवलोकयन् सुसङ्गताया दर्शने फलकं प्रच्छाद्य तामाह—"सुसङ्गते ! कथमिहस्थो भवत्या ज्ञातः ? "सुसङ्गता (क)भट्टा ! न केवलं तुवं, समं चित्तफलएण सव्वो वुत्तंतो मए जाणिदो ता गदुय देवीए निवेदयिस्सं ।

वसन्तकः ( अपवार्य ) (ख) भो ! स व्वं सम्भवी यदि । मुहरा खु एसा गब्भदासी । ता किं चि दइय परिदोसेहिणं ।

राजा—( सुसङ्गताया अलकान् प्रमार्जयन् ) सुसङ्गते ! क्रीड़ामात्रमेवैतत् । तथापि नाकरेण त्वया देवा खेदयितव्या इदं च ते पारितोषिकम् ( इति कर्णाभरणं ददाति )

सुसङ्गता ( प्रणम्य सस्मितम् ) (ग)भट्टा । पसादो मे कण्णाभरणेण ।" इत्यादि ।

अत्र राजसुसङ्गतयोर्मिथो देव्यै निवेदयिष्यामि इति हास्यम् । "भट्टापसादो" इति स्तवसहितमेकस्य राज्ञः सागरिकासङ्गमलाभकारणमसद्भूतत्वात् प्रपञ्चः सुसङ्गताकर्णाभरणलाभस्तु मुख्यसाध्यं प्रत्यनुपयोगित्वान्न विवक्षितः ।

केचित्तु—असद्भूतेन पारदार्यादिनैपुण्यादिना योऽन्योऽन्यस्तवो हास्यहेतुस्तं प्रपञ्चमाहुः—

---

( क ) भर्त्तः ! न केवलं त्वम् , समं चित्रफलकेन सर्वो वृत्तान्तो मया ज्ञातः तद्गत्वा देव्यै निवेदयिष्यामि । इति संस्कृतम् ।

( ख ) भोः ! सर्वं सम्भाव्यते ! मुखरा खल्वेषा गर्भदासी । तत् किञ्चिद्दत्वा परितोषय एताम् । इति संस्कृतम् ।

( ग ) भर्त्तः ! प्रसादो मे कर्णाभरणेन ।

( ९९ ) त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः ॥ २५७ ॥

(१००) यथा तत्रैव-राजा—

सर्वक्षितिभृतां नाथ !, दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन्मया विरहिता त्वया ॥

( नेपथ्ये तत्रैव प्रतिशब्दः ) राजा कथं दृष्टेत्याह ।

( १ ) अत्र प्रश्नवाक्यमेवोत्तरत्वेन योजितम् । नटादित्रितयविषयमेवेदमिति कश्चित् ।

यथा —

(क)रंडा चंडा दिक्खिदा धम्मदारा मज्जं मंसं खज्जए पिज्जए वा ।
भिक्खा भोज्जं चम्म खंडं च सेज्जा कोलो धम्मो कस्स नो भादि रम्भो ॥

( ९९ ) त्रिगताख्यं वीथ्यङ्गं निरूपयति—त्रिगतमिति । श्रुतिसाम्यतः श्रूयमाणशब्दद्वयसाम्यात् न तु वस्तुराशयादिति भावः । तयोर्वस्तुत एकार्थत्वेऽपि अनेकार्थयोरेकभिन्नार्थयोर्योजनं श्रोत्राकल्पनं त्रिषु वक्तृश्रोत्रभिनेतृषु गतं तत्सम्बन्धेन स्थितं त्रिगतं नाम वीथ्यङ्गं स्यात् ।

( १०० ) उदाहरति—यथेति । तत्रैव विक्रमोर्वश्यामेवेत्यर्थः । सर्वक्षितीति । इदं हिमालयस्य सम्बोधनम् । प्रश्नपक्षे हे सर्वक्षितिभृतां नाथ ! सर्वशैलानां श्रेष्ठ ! अस्मिन् रम्ये मनोहरे वनान्ते विपिनैकदेशे मया विरहिता सर्वाङ्गसुन्दरी सर्वाङ्गमनोहरा अनेन रूपातिशयो व्यज्यते, रामा कापि अनिर्वचनीया रमणी उर्वशीत्यर्थः त्वया दृष्टा ? इति काकोक्तिः । उत्तरपक्षे हे सर्वक्षितिभृतां नाथ ! सर्वभूपतीनां श्रेष्ठ ! अस्मिन् रम्ये वनान्ते सर्वाङ्गसुन्दरी रामा मया दृष्टाऽवलोकिता । नेपथ्य इति । तत्रैव हिमालय एव प्रतिशब्दः सर्वक्षितिभृतामित्यादेः समग्रः प्रतिध्वनिः सञ्जात इति शेषः । तच्च श्रुत्वा राजा अब्रवीदित्यर्थः ।

( १ ) अत्रास्मिन् वनान्ते त्वया दृष्टेति प्रश्ने त्वया विरहिता मया दृष्टेति प्रतिशब्दार्थस्यैवोत्तरत्वेन राज्ञा योजनात् दर्शनोत्तरणशब्दयोरेकार्थत्वेऽपि दर्शितरीत्या प्रश्नोत्तरभावेन योजनादनेकार्थता तदेव विवृणोति—अत्र प्रश्नेति । नटनटीसूत्रधारत्रयप्रयोज्यत्वेनास्य त्रिगत्वमिति दशरूपककारा मन्यन्ते, तन्मतस्यास्वरसतां प्रकाशयितुमुत्थापयति—नटादीति । आदिपदेन नटीसूत्रधारौ ग्राह्यौ । एवं च नटादित्रितयं विषयो यस्य तत्तथोक्तम् । कश्चिदिति । तथा चोक्तं तैः—

श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं त्विह ।
नटादित्रितयालापः पूर्वरङ्गे तदिष्यते ॥ इति ।

अत्र राजस्वरूपस्य मूलवक्तुः सामाजिकरूपस्य श्रोतुश्च परित्यागे कारणाभाव एव इत्यस्वरसबीजम् यद्वा शब्दोऽव्यक्त ध्वनिमात्रं तत्साम्येनानेकार्थयोजनं त्रिगतम् । यथा—इन्दुलेखायां वीथ्याम्—राजा वयस्य !

( क ) रण्डाश्चण्डा दीक्षिता धर्मदारा मद्य मांसं खाद्यते पीयते वा ।
भिक्षा भोज्यं चर्मखण्डं च शय्या कौलो धर्मः कस्य नो भाति रम्यः ॥

इति संस्कृतम् ।

( २ ) प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य च्छलनाच्छलम् ।
( ३ ) यथा वेण्याम्–भीमार्जुनौ—

कर्ता द्यूतच्छलानां, जतुमयशरणोद्दीपनः सोऽभिमानी
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम् ।
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः
क्वाऽऽस्ते दुर्योधनोऽसौ कथयत, न रुषा द्रष्टुमभ्यागतौ स्वः ॥

( ४ ) अन्ये त्वाहुश्छलं किञ्चित्कार्यमुद्दिश्य कस्यचित् ॥ २५८ ॥
उदीर्यते यद्वचनं वञ्चनाहास्यरोषकृत् ।

---

किं नु कलहंसनादो मधुरो मधुपायिनां नु झङ्कारः ।
हृदयगृहदेवतायास्तस्या नु सनूपुरश्चरण इति ॥ इति

( २ ) छलाख्यं वीथ्यङ्गं निरूपयति—प्रियाभैरिति । प्रियाभैः प्रियतुल्यैः वस्तुतस्तु अप्रियैर्वाक्यैः विलोभ्य स्वाभिलषितविषये लुब्धं विधाय छलना वञ्चना छलं नाम वीथ्यङ्गं भवेत् ।

( ३ ) उदाहरति यथेति । वेणीसंहारे "पञ्चमेऽङ्के" इति शेषः । कर्त्तेति । पलायितुं दुर्योधनमन्विष्यतो भीमार्जुनयोर्वाक्यमिदम् । द्यूतम् अक्षैः क्रीडा तद्रूपाणि छलानि वञ्चनानि तेषां तथोक्तानां कर्त्ता, जतुमयशरणस्य लाक्षामयगृहस्य उद्दीपनः प्रज्वालनहेतुः, लाक्षागृहे निवसतां पाण्डवानां ज्वलनार्थं तद्गृहं पुरोचनद्वारा दुर्योधनः प्रददाह स प्रसिद्धः अभिमानी अहङ्कारी राजा, दुःशासनादेरनुजशतस्य गुरुः शासिता, अङ्गराजस्य कर्णस्य मित्रं सुहृदम् , कृष्णायाः द्रौपद्याः केशोत्तरीययोः केशाम्बरयोः व्यपनयने पृथक्करणे पटुः समर्थः पाण्डवाश्च यस्य दासाः. असौ दुर्योधनः क्वाऽऽस्ते क्व वर्त्तते इति यूयं वदत "भोः समन्तपञ्चकसञ्चारिण इति शेषः । एषा कोपेन द्रष्टुं न अभ्यागतौ सम्प्राप्तौ स्वः भवावः अस्तेर्लटि वसि "अश्नसोरल्लोप" इत्यल्लोपः आवामिति शेषः किन्तु बन्धुप्रीत्यैव द्रष्टुमभ्यागतौ स्व इत्यर्थः । अत्र श्रवणमात्रतः प्रभावबोधनात् प्रियतुल्यैः, वस्तुतस्तु अपराधद्योतनादप्रियैर्वचनैः दुर्योधनं विलोभ्य "द्रष्टुमभ्यागतौ स्व" इत्यनेन छलनात् छलम् ।

( ४ ) अन्य इति । कस्यचित् किञ्चित्कार्यं प्रयोजनमुद्दिश्य वञ्चना हास्यरोषकृत् यद्वचनं वाक्यम् उदीर्यते अभिधीयते तच्छलं नाम वीथ्यङ्गमिति अन्ये आहुः ।

उदाहरणं यथा—

(क) कस्स वा न होइ रोसो दट्ठुण पिआ ए सव्वणं अहरम् ।
सभमर पउमग्घाइरि वारियवामे ! सहसु एणहिं ॥

एतद्वचः सख्या भर्तृप्रत्यायनप्रयोजनेनोक्तं विदग्धजनस्य हास्यं श्वसुरादेर्वञ्चना सपत्न्या रोषं जनयतीति ।

---

(क) कस्य न वा भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् । सभ्रमरपद्माघ्रायिणि ! वारितवामे ! सहस्वेदानीम् इति संस्कृतम् ॥

( ५ ) वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितो भवेत् ॥ ३५६ ॥

( ६ ) द्वित्रीत्युपलक्षणम् । यथा—

( ७ ) भिक्षो ! मांसनिषेवणं प्रकुरुषे किं तेन मद्यं विना

मद्यं चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह ।

वेश्याऽप्यर्थरुचिः कुतस्तव धनं द्यूतेन चौर्येण वा

चौर्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य कान्या गतिः ॥

( ८ ) केचित्—'प्रक्रान्तवाक्यस्य साकाङ्क्षस्यैव निवृत्तिर्वाक्केलि' इत्याहुः । अन्ये 'अनेकस्य प्रश्नस्यैकमुत्तरम् ।'

( ९ ) अन्योन्यवाक्याधिक्योक्तिः स्पर्धयाधिबलं मतम् ।

( ५ ) वाक्केलिरूपं वीथ्यङ्गं निरूपयति —वाक्केलिरिति । द्वे वा तिस्रो वा प्रत्युक्तयो द्वित्रिप्रत्युक्तयः प्रत्युत्तराः ताभ्यो द्वित्रिप्रयुक्तितः, समासप्रत्ययानामनित्यत्वादत्र डच् प्रत्ययाभावो बोध्यः । हास्यसम्बन्धो वाचाकेलिर्वाक्केलिर्नाम वीथ्यङ्गं भवेत् ।

( ६ ) द्वित्रीति । उपलक्षणं स्वबोधकत्वे सति स्वेतरबोधकत्वरूपम्, तेनानेकस्येत्यर्थः ।

( ७ ) उदाहरति भिक्षो ! इति ।

परिहासाय मांसं भक्षयन्तं भिक्षुं प्रति "भिक्षो" ! इत्यादिगृहिणः प्रश्नः, "किं तेन" इति भिक्षोःप्रत्युत्तरम् । तथा "मद्यं चापि" इत्यादिकं गृहिणः, "प्रियमहो वाराङ्गनाभि"रित्यादिकं भिक्षोः । अत्राधिकस्याप्यकार्यस्य विद्यमानत्वे अल्पकार्यप्रश्नात् "अहो" इत्यभिहितम् । "एवं वेश्याप्यर्थरुचि" रित्यादिकं गृहिणः अर्थे केवले धने रुचिरभिलाषो यस्याः सा तादृशी वेश्याऽपि 'भुज्यते' इति शेषः । "द्यूतेनेत्यादिकं भिक्षोः । चौर्यद्यूते"त्यादि गृहिणः, "नष्टस्ये"त्यादिकं भिक्षोः प्रत्युक्तिः ।

अत्र चतुष्प्रयुक्ते हास्यसम्बन्धेन वाक्केलिः ।

( ८ ) वाक्केलिलक्षणे प्रकारान्तरेण लक्षयतां मतमुपस्थापयति केचिदिति । 'साकाङ्क्षस्यैव निराकांक्षबोधकक्रियापदाद्यभावादाकाङ्क्षासहितस्यैव, प्रक्रान्तवाक्यस्य प्रस्तुतवचनस्य निवृत्तिर्वाक्केलिः ।

यथोत्तरचरिते–वासन्ती—

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।

इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां तामेव शान्तमथवा किमतः परेण ॥

अन्ये चानेकस्य प्रश्नस्यैकमुत्तरं वाक्केलिरित्याहुः—

तत्र द्वयोः प्रश्नयोरेकमुत्तरम् । यथा—

नदीनां मेघविगमे का शोभा प्रतिभासते ।

बाह्यान्तरा विजेतव्या के नाम कृतिनाऽरयः ॥ इति ।

अत्रारय इत्येकत्र रयाभावोऽपरत्र शत्रव इत्येकमुत्तरम् । एवं बहूनामप्यूहनीयम् ।

( ९ ) अधिबलाख्यं वीथ्यङ्गं निरूपयति–अन्योऽन्येति । स्पर्धया गर्वेण अन्योन्यवाक्यैः मिथोवचनैः आधिक्योक्तिः अन्योन्यप्राधान्यकथनं बलमधिकृत्य जातम् अधिबलं नाम वीथ्यङ्गं मतम् ।

( १० ) यथा मम प्रभावत्याम्—वज्रनाभः —

( अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया ।
लीलयोन्मूलयाम्येष भुवनद्वयमद्य वः ॥ )

प्रद्युम्नः—अरेरे ! असुरापसद ! अलममुना बहुप्रलापेन । मम खलु—

अद्य प्रचण्डभुजदण्डसमर्पितोरु-
कोदण्डनिर्गलितकाण्डसमूहपातैः ।
आस्तां समस्तदितिजक्षतजोक्षितेयं
क्षोणिः क्षणेन पिशिताशनलोभनीया ॥

( ११ ) गण्डं प्रस्तुतसंबन्धि भिन्नार्थं सत्वरं वचः ॥ २९० ॥

( १२ ) यथा वेण्याम्-राजा—

अध्यासितुं तव चिराज्जघनस्थलस्य
पर्याप्तमेव करभोरु ! ममोरुयुग्मम् ॥

अनन्तरम् ( प्रविश्य ) कञ्चुकी—देव ! भग्नं भग्नम्-इत्यादि ।

---

( १० ) उदाहरति—यथेति । वज्रनाभस्तदाख्यो दैत्यविशेषः "आह" इति शेषः । अस्य वक्ष इति । प्राग्व्याख्यातमेतत् । अद्य प्रचण्डेति । प्रचण्डे अतिकराले भुजदण्डे समर्पितात् संस्थापितात् उरुकोदण्डात् विशालधनुषात् निर्गलितानां निःसृतानां काण्डानां शराणां समूहस्य पातैः पतनैः इयं क्षोणी वसुन्धरा समस्तानां समग्राणां दितिजानां दैत्यानां क्षतजैः प्रहारजैः उक्षिताः सिक्ता सती पिशिताशनानां मांसभक्षिणां शृगालादीनां जम्बूकादीनां लोभनीया लोभोत्पादिका आस्तां भवतु । वसन्ततिलकाच्छन्दस्तल्लक्षणन्तूक्तं प्राक् (१२३ पृ०) ।

अत्र स्पर्द्धया मिथोवचनैः अन्योन्याधिक्यकथनात् अधिवलम् ।

यथा च वेणीसंहारे-अर्जुनः—

सकलरिपुजयाशा यत्र बद्धासुतैस्ते तृणमिव परिभूतो यस्य गर्वेण लोकः ।
रणशिरसि निहन्ता तस्य राधासुतस्य प्रणमति पितरौ वां मध्यमः पाण्डुपुत्रः ॥

इत्युपक्रमे राजा-अरे ! नाहं भवानिव विकत्थनाप्रगल्भः । किन्तु—

द्रक्ष्यन्ति न चिरात् सुप्तं बान्धवास्त्वां रणाङ्गणे ।
मद्गदाभिन्नवक्षोऽस्थिवेणिकाभङ्गभीषणाम् ॥

इत्यन्तेन भीमदुर्योधनयोरन्योन्यवाक्यस्य अन्योन्याधिक्यात् अधिवलम् ।

( ११ ) गण्डाख्यं वीथ्यङ्गं निरूपयति—गण्डमिति । प्रस्तुतसम्बन्धि प्रस्तुतार्थसम्बद्धं भिन्नार्थं पृथगर्थबोधकं सत्वरं त्वरासहितं वचो वचनं त्वरया गण्डतो निःसृताद् गण्डं नाम वीथ्यङ्गं मतम् ।

( १२ ) उदाहरति—यथेति । राजा दुर्योधनः । अध्यासितुमिति । एतत्पूर्वार्द्धं तु—

लोलांशुकस्य पवनाकुलितांशुकान्तं त्वद्दृष्टि हारि मम लोचनबान्धवस्य । इति ।

हे करभोरु ! इति भानुमत्याः सम्बोधनम् । मम ऊरुयुग्मं जङ्घाद्वयं तव जघनस्थलस्य सम्बन्धे तदुपरीत्यर्थः चिराद्ध्यासितुं सुरतायावस्थातुं (भावे तुमुन् योगात् षष्ठी-) पर्याप्तमेव समर्थमेव । अनन्तरम् ऊरुयुग्ममिति कथनान्तरमित्यर्थः ।

( १३ ) अत्र रथकेतनभङ्गार्थे वचनमूरुभङ्गार्थे सम्बन्धे सम्बद्धम् ।

( १४ ) व्याख्यानं स्वरसोक्तस्यान्यथावस्यन्दितं भवेत् ।

( १५ ) यथा छलितरामे—सीता-जाद ! काल्लं क्खु उओज्झाए गन्तव्वम्, तहिं सो राआ विणएण पणयिदव्वो । लवः—अथ किमावाभ्यां राजोपजीविभ्या भवितव्यम् । सीता-जाद ! सो क्खु तुम्हाणं पिदा । लवः-किमावयो रघुपतिः पिता । सीता-( साशङ्कम्- ) मा अण्णधा सङ्कद्धम् । ण क्खु तुम्हाणम् सअलाए ज्जेव पुहवीएत्ति ।

( १३ ) लक्ष्ये लक्षणं संयोजयितुमाह—अत्रेति । वचनं "भग्न भग्न"मिति वाक्यमित्यर्थः । सम्बद्धे "ममोरुयुग्म"मित्यनेन प्रस्तुते इत्यर्थः । एवञ्चात्र "भग्नं भग्न"मिति वचनस्य प्रस्तुतोरुभङ्गरूपार्थसम्बद्धत्वात् रथकेतनभङ्गरूपभिन्नार्थबोधकत्वात् स्वरायुक्तत्वाच्च गण्डमिति वाक्यार्थः ।

यथा चोत्तरचरिते-रामः—

इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयोरसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥

( प्रविश्य ) प्रतीहारी-(क)देव ! उअत्थिदो । रामः—अयि ! कः ? प्रतीहारी-(ख) देवस्स आसण्णपरिचारओ दुम्मुहो ।" इति अत्राकस्मात् प्रतीहारीवचनस्यान्याभिप्रायप्रयुक्तस्य प्रस्तुतरामवचसा संयुज्यमानत्वेन भिन्नार्थबोधकत्वाद् गण्डः ।

( १४ ) अवस्यन्दिताख्यं वीथ्यङ्गं निरूपयति-व्याख्यानमिति । स्वरसेन स्वाभिप्रायार्थबोधेच्छया उक्तस्य वाक्यस्येति शेषः । अन्यथा व्याख्यानम्, अन्यप्रकारार्थविधानम् अवस्यन्दितमर्थान्तरे परिणमितमिति अवस्यन्दितं नाम वीथ्यङ्गं भवेत् ।

( १५ ) उदाहरति—यथेति । जादेति । "जात ! कल्यं खलु अयोध्यायां गन्तव्यम्, तत्र स राजा विनयेन पणायितव्यः"(इति संस्कृतम्) पणायितव्यः व्यवहर्त्तव्य इत्यर्थः । "जात ! स युष्माकं पिता" इति संस्कृतम् साशङ्कमिति । वाल्मीकिनिषेधात् आशङ्का । मा अण्णधा इति ।"मा अन्यथा शङ्कध्वम्, न खलु युष्माकम्, सकलाया एव पृथिव्याः।" इति संस्कृतम् । पृथिव्या इत्यस्य पृथिवीस्थलोकस्येत्यर्थः ।

अत्र 'जाद ! सो तुम्हाणं पिदा" इत्यनेन रामो युवयोरेव कुशलवयोः पितेति स्वाभिप्रायार्थबोधेच्छयैव सीतयाभिहितत्वेन वाल्मीकाशङ्कया "सकलायाः पृथिव्याः" इत्यन्यथाव्याख्यानात् अवस्यन्दितम् ।

यथा च वेणीसंहारे—

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्त्तराष्ट्राः कालवशान्मेदिनी पृष्ठे ॥

अत्र स्वाभिप्रायार्थबोधनेच्छया शरद्वर्णनाय हंसवर्णनं सूत्रधारेणोक्तस्य एतत् पारिपार्श्विकेन धृतराष्ट्रसुतानां दुर्योधनादीनाममङ्गलार्थकथनेन अन्यथा व्याख्यानादवस्यन्दितम् ।

( क ) देव ! उपस्थितः । ( ख ) देवस्यासन्नपरिचारको दुर्मुखः । इति संस्कृतम् ।

( १६ ) प्रहेलिकैव हास्येन युक्ता भवति नालिका ॥ २६१ ॥

( १७ ) संवरणकार्युत्तरं प्रहेलिका ।

( १८ ) यथा रत्नावल्याम्—सुसङ्गता—सहि जस्स किदे तुमं आअदा सो इद ज्जेव चिट्ठदि । सागरिका—कस्स किदे अहं आअदा । सुसङ्गता–णं क्खु चित्तफलअस्स ।

( १९ ) अत्र त्वं राज्ञः कृते आगतेत्यर्थः संवृत्तः ।

( २० ) असत्प्रलापो यद्वाक्यमसंबद्धं तथोत्तरम् ।

अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं वचः ॥ २६२ ॥

( २१ ) तत्राद्यं यथा मम प्रभावत्याम्–प्रद्युम्नः–( सहकारवल्लीमवलोक्य सानन्दम्– ) अहो कथमिहैव—

---

( १६ ) नालिकाख्यं वीथ्यङ्गं निरूपयति—प्रहेलिकेति । हास्येन युक्ता प्रहेलिकैव नालिकावद्दुर्बुद्धावाशुप्रवेशा नालिका नाम वीथ्यङ्गं भवति ।

( १७ ) संवरणकारीति । संवरणं स्फुटीकृतप्रायस्य अर्थस्य अन्यथा करणेन पुनरावरणं गोपनं करोतीति तत्तथोक्तम् उत्तरं प्रत्युक्तिः । अवस्यन्दिताङ्गे संवरणरूपस्य सत्त्वेऽप्यत्र हास्ययुक्तत्वमिति विशेषः ।

( १८ ) उदाहरति—यथेति । सागरिका चित्रफलकार्थमागता कदलीगृहे वत्सराजं दृष्ट्वा बहिः स्थिता सुसंगतयोच्यते । सहि जस्सेति । "सखि ! यस्य कृते त्वमागता स इत एव तिष्ठति । कस्य कृते अहमागता ! ननु चित्रफलकस्य ।" इति संस्कृतम् ।

( १९ ) लक्ष्ये लक्षणं सङ्गमयितुमाह—अत्रेति । इत्यर्थः पूर्ववाक्येन स्पष्टीकृतप्राय इति शेषः । संवृतः "ननु चित्रफलकस्य" इत्यनेनान्यथाविधानात् पुनरावृत्तः । केचित्तु हास्यहेतुनोपेतां निगूढार्थरूपामेव प्रहेलिकां नालिकां मन्यन्ते । यथा मुद्राराक्षसे—चरः हं हो बह्मण ! मा कुप्प । किं पि तुह उअज्झाओ जाणादि । किं पि अह्मारिसा जणा जाणन्ति । शिष्यः–किमस्मदुपाध्यायस्य सर्वज्ञत्वमपहर्तुमिच्छसि । चरः–यदि देउवज्झाओ सव्वं जाणादि ता जाणादु दाव कस्स चन्दो अणभिप्पेदो त्ति । शिष्यः–किमनेन ज्ञातेन भवति ( इत्युपक्रमे ) चाणक्यः—चन्द्रगुप्तादपरक्तान् पुरुषाञ्जानामि" ।

अत्र चरशिष्ययोर्हास्यहेतुत्वेनोपेताया निगूढार्थरूपाया एव प्रहेलिकात्वान्नालिका ।

( २० ) त्रिविधमसत्प्रलापाख्यं वीथ्यङ्गं निरूपयति–असदिति ।

यद्वाक्यम् असम्बद्धं पूर्वापरसम्बन्धरहितम् , तथा यदुत्तरम् असम्बद्धं पूर्वापरसम्बन्धरहितम् , तथा अगृह्णतोऽपि आकर्ण्याऽप्यननुगच्छतोऽपि मूर्खस्य पुरः समक्षे यत् हितं वचश्च तत् असत्प्रलापो नाम वीथ्यङ्गं भवेत् । एवञ्चैतस्य त्रैविध्यं स्पष्टमेव ।

( २१ ) उदाहर्तुमाह—तत्रेति । तत्र तेषु त्रिष्वसत्प्रलापेषु मध्ये । आद्योऽसत्प्रलाप इति शेषः । यथेति । सहकारवल्लीम् चूतलतामित्यर्थः । अलिकुलेति । चूतलतिकायां प्रभावती भ्रमादियमुक्तिः । अलिकुले भ्रमरपुञ्जेन मञ्जुला मनोहराः केशा यस्याः सा तथोक्ता, अलिकुलमेव मञ्जुकेशा यस्याः सा तादृशी च । परिमलो गन्धो बहुलो यस्याः सा, तथोक्ता एकत्र गन्धद्रव्यव्यपदेशात् अन्यत्र कुसुमविकासादित्याशयः । रस·

अलिकुलमञ्जुलकेशी परिमलबहला रसावहा तन्वी ।
किसलयपेशलपाणिः कोकिलकलभाषिणी प्रियतमा मे ॥

( २२ ) एवमसंबद्धोत्तरेऽपि । तृतीयं यथा वेण्यां दुर्योधनं प्रति गान्धारीवाक्यम् ।

मनुरागमावहति उत्पादयति रसं दुग्धमावहति दधातीति च सा तथोक्ता तन्वी कृशा किसलयमिव पल्लवमिव "पल्लवोऽस्त्री किसलयम्" इत्यमरः, पेशलो मनोहरः पाणिः करो यस्याः सा, किसलयमेव पेशलः पाणिर्यस्याः सा च, कोकिलवत् कलं मधुराऽव्यक्तं भाषते, कोकिलैरेव कलं भाषते इति च सा तादृशी मे मम प्रियतमा प्रभावती ।

अत्र व्यङ्ग्य एव द्वितीयार्थः । तेन प्रभावतीवर्णनवाक्यस्य पूर्वापरस्थितचूतलतिकासम्बन्धाभावात् असत्प्रलापः ।

( २२ ) एवमसम्बद्धोत्तरेऽपीति । यथा---तातस्त--

द्विजः शाखायुक्तस्त्वयि कृतकथः कोकिल इति
त्वयाख्येयं मन्दे मयि विरहिघाते कियदघम् ।
इति प्रश्ने वायोर्मुकुलपुलका चूतलतिका
ध्रुवं धत्ते मौलिं न खलु कियदित्युत्तरयति ॥

अत्र हि वातधूतमौलिकायां चूतलतिकायां मन्दवायोः कतिपापप्रश्ने मौलिधूननेन पापभावोत्तरारोपः वायोः प्रश्नप्रकारः पूर्वार्द्धार्थः ।

पूर्वप्राप्तपापव्यवस्थके जने एव तादृशप्रश्नौचित्यादिह—द्विज इति । शाखायुक्तविटपस्थितो द्विजः पक्षी, कोकिल एव द्रुपदामन्त्रस्य ऋषिः कोकिलनामवेदशाखायुक्तो द्विजः स त्वयि कृतकथः इत्यतस्त्वया मन्दे वेदरहित इदमप्याख्येयम् । विरहिवधे कियत्पापमिति प्रश्नः । मन्दवायोः कामोद्दीपकत्वेन विरहिहन्तृत्वात् अयं प्रश्नः । व्यवस्थाकथने हर्षोत्पुलकः" इत्याह ।

यथा वा रत्नावल्यां द्वितीयेऽङ्के (क)सहि को एसो तुए आलिहिदो" इति सुसङ्गतया पृष्टायाः सागरिकायाः (ख) भअवं अणंगो इत्युत्तरवाक्ये ।

तृतीयमुदाहरति—तृतीयमिति । अथवा प्रदीयतां दाशरथाय मैथिलीति रावणं प्रति विभीषणस्य वाक्यम् । केचित्तु—परमार्थतो हितमुपकारि यद्वचनम् अविवेचकत्वमहितत्वेन नैवाऽवबुध्यतेऽविवेचकैर्मूर्खैश्च तद् ।तौ प्रति असतोऽसाधुभूतस्य प्रलपनमसत्प्रलाप इत्याहुः ।

तत्राविवेचकं प्रति यथा रामाभ्युदये द्वितीयेऽङ्के—रावणः-प्रायशः श्रुतमेव भवद्भिर्यथा कलत्रमात्रसाधनोऽसौ तापसस्तदपहार एव तावन्निरूप्यताम् । नच कलत्रापहरणादृते पुरुषस्यापरं परिभवस्थानमस्ति । तत्र मारीचेन साहायकं क्रियमाणमिच्छामि । मारीचः—स्वामिन् ! जीवतो रामस्य परिभव इत्यशक्यमेतत् । न खलु तापस इति तमवज्ञातुमर्हति देवः । अन्यदेव वस्त्वन्तरं किमपि तत् ।

रावणः—( सक्रोधम् ) आः किं नाम वस्त्वन्तरं तत् ? मूढ !

युवत्यैव क्षत्रबन्धोः परिभवमसमं जीवतः कर्त्तुमिच्छन्
माया साहायके त्वं निपुणतर इति प्रार्थये नासमर्थः।

( क ) 'सखि ! क एष त्वया आलिखितः" इति संस्कृतम् ।
( ख ) "भगवान् अनङ्गः" इति संस्कृतम् ।

( २३ ) व्याहारो यत्परस्यार्थे हास्यक्षोभकरं वचः ।

( २४ ) यथा मालविकाग्निमित्रे—( लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति ) विदूषकः-मा दाव उवदेससुद्धा गमिस्ससि । ( इत्युपक्रमेण ) दासः-( विदूषकं प्रति- ) आर्य ! उच्यतां यस्त्वया क्रमभेदो लक्षितः। विदूषकः-पढमं बम्हणपूआ भोदि । सा इमाए लङ्घिदा । ( मालविका स्मयते ) इत्यादिना नायकस्य विशुद्धनायिकादर्शनप्रयुक्तेन हासलोभकारिणा वचसा व्याहारः ।

यच्चान्यत् तत्र वज्रप्रहतिमसृणित स्फारकेयूरभाजः
सज्ञास्त्रैलोक्यलक्ष्मीहठहरणसहा बाहवो रावणस्य ॥

अत्र मारीचवचनं परमार्थतो हितमपि रावणेन नावगतम् ।

मूर्खं प्रति यथा मनोरमावत्सराजे वत्सराजाभ्युदयाशंसी रुमण्वान् पाञ्चालमुच्छेत्तुकामः तस्य कृतकभृत्यतां श्रितो विश्वासोत्पादनार्थं वत्सराजान्तःपुरमादीप्य योगन्धरायणप्रमुखानाह—

कौशाम्बी मम हस्त एव परया शक्त्या मया स्वीकृतः
पाञ्चालाधिपतिः प्रभुः स भवतां न ज्ञायते क्वाधुना ? ।
नन्वादीपित एष मोहितपरानीकेन लावाणको
देवी सम्प्रति रक्ष्यतामयमहं प्राप्तो रुमण्वान् स्वयम् ॥

एतच्च परमार्थतः पाञ्चालोच्छेदपरं यौगन्धरायणेनावबुद्धम् । वासवदत्तया सम्भ्रकनाम्ना यौगन्धरायणानुचरेण च मौर्ख्यान्नावगतम् ।

( २३ ) व्याहाररूपकं वीथ्यङ्गं निरूपयति—व्याहार इति परस्यार्थे नायकादेर्निमित्ते यत् हास्यक्षोभकरं वचः तत् व्याह्रियते आदीयत इति व्याहारो नाम वीथ्यङ्गं भवेत् ।

( २४ ) उदाहरति—यथेति । लास्यप्रयोगावसाने नृत्यसमाप्तौ । मादाव इति । "मा तावदुपदेशमुग्धा गमिष्यसि" इति संस्कृतम् । उपदेशः शास्त्रोपदेशः तद्विसंमुग्धा तर्करुद्धकारिणी भूत्वा इति शेषः । क्रमभेदः कर्त्तव्यपौर्वापर्यव्यतिक्रमः । पढममिति । "प्रथम ब्राह्मणपूजा भवति, सा अनया लङ्घिता" इति संस्कृतम् । स्मयत इति । ईषद्धास्यं विदधातीत्यर्थः । नायकस्याग्निमित्रस्य विशुद्धनायिकादर्शनाय प्रयुक्तमभिहितं तेन तथोक्तेन । वचसा विदूषकस्य परवचनेन ।

भावि दृष्ट्याऽप्ययं व्यवहारो यथा रत्नावल्यां द्वितीयेऽङ्के-

उद्दामोत्कलिकां विपाण्डुररुचिं प्रारब्धजृम्भां क्षणादा-
यासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युतिमुखं देव्याः करिष्याम्यहम् ॥"

अत्र राज्ञा वासवदत्तां प्रति भाव्यर्थदर्शनं हास्येनोक्तम् ।

अन्ये तु वर्त्तमानप्रत्यक्षार्थवाचकं हास्यलेशकरं वचो व्याहारमिच्छन्ति । यथा—मृच्छकट्यां विदूषको गणिकाया वसन्तसेनाया गृहं प्रविशन् वसन्तसेनाया मातरं दृष्ट्वा पृच्छति—"का एषा बन्धुला ? चेटी-एसा अज्जु आए जणणी अत्तिजा । विदूषकः-यदि मरे तालिआलसहस्सस्सपअत्तिका । अथ किं एदं पवेसिअ दुवार सोहा निम्मविदा !

( २५ ) दोषा गुणा गुणा दोषा यत्र स्युर्मृद ( मार्द ) वं हि तत् २६३॥
क्रमेण यथा—
( २६ ) प्रिय ! जीवितताक्रौर्यं निःस्नेहत्वं कृतघ्नता ।
भूयस्त्वद्दर्शनादेव ममैते गुणतां गताः ॥
( २७ ) तस्यास्तद्रूपसौन्दर्यं भूषितं यौवनश्रिया ।
सुखैकायतन जातं दुःखायैव ममाधुना ॥

आदु उक्खं दावणपवेसिदा ? चेटी–अज्ज ! मा एत्तिअं अन्ने क्खु अत्तिका चाउत्थ गुण वा घोयदि । विदूषकः–भयवं चाउत्थय ! मंपि वमणं अणुकंपेति ।" इति ।

( २५ ) मृदवाख्यं वीथ्यङ्गं निरूपयति—दोषा इति । यत्र दोषा गुणा गुणाश्च दोषाः स्युः तत् सूरिरिदं मार्दवं संज्ञापूर्वकविधेरनित्यत्वादृद्ध्यभावः नाम वीथ्यङ्गं भवेत् ।

( २६ ) तत्र क दोषा गुणा भवन्तीति उदाहरति—प्रियेति । प्रियतमविश्लेषे कथञ्चित् पुनर्मिलनाशया जीवनं धारयन्त्याः कस्याश्चिन्नायिकायाः समागते प्रिये तं प्रत्युक्तिरियम् । हे प्रिय ! जिविततता तव वियोगेऽपि मम जीवनधारणं क्रौर्यं काठिन्यम् , अन्यथा तथाविधवियोगजनितक्लेशात् जीवनं निःसरेदेवेत्याशयः । एवं तव वियोगे मम जीविततता निःस्नेहत्वं प्रीतिराहित्यम् , अन्यथा स्नेहातिशये सति तथाविध वियोगेन जीवनं कथं तिष्ठेन्नूनं मरणमेव स्यादिति भावः । किञ्च तव वियोगे मम जीवितत्वेव कृतघ्नता, स्मृत्युत्पादकत्वेन तव क्लेशोत्पादनात् उपकारिणः प्रत्यपकारस्यैव कृतघ्नता, स्वरूपत्वादित्याशयः । भूयः पुनस्त्वद्दर्शनादेव तव दर्शनं लब्ध्वैव एते मम जीवनक्रौर्यादयो गुणतां गताः प्राप्ताः । एवञ्च तथाविधक्रौर्यनिःस्नेहत्वयोः स्थित्यैवाधुना मम जीवनवत्त्वात् तव सङ्गमजन्यसुखप्राप्तिः, तथाविधकृतघ्नत्वादेव च त्वमधुना गत इति तदाशयः ।

अत्र क्रौर्यादयो दोषा गुणा जाता इति मृदवम् ।

( २७ ) अथ गुणा दोषा भवन्तीति उदाहरति—तस्या इति । कस्यचिद्विरहिणो नायकस्योक्तिरियम् । यौवनश्रिया तारुण्यकान्त्या भूषितम् अलङ्कृतं तस्या नायिकायाः रूपसौन्दर्यं तद्रूपलावण्यं तदा सङ्गमकाले मम सुखैकायतनम् आनन्दस्यैकमात्रकारणं जातम् अधुना विरहकाले तु दुःखायैव सततं स्मृत्युत्पादनेन क्लेशजननादिति भावः ।

अत्र यौवनश्रीप्रभृतयो गुणा दोषा जाता इति मृदवम् । यथा च वेणीसंहारे द्वितीयेऽङ्के–

जयद्रथमाता – जाद ! ते खु बंधुवधामरिसुदी । विदको वा समरे अणवेक्खियसरीरा परिकमिस्संति । राजा—( सोपहासम् ) एवमेतत् । सर्वजनप्रसिद्धमेवामर्षित्वं पाण्डवानाम् । पश्य—

हस्ताकृष्टविलोलकेशवसना दुःशासनेनाज्ञया
पाञ्चाली मम राजचक्रपुरतो गौर्गौरिति व्याहृता ।
तस्मिन्नम्ब ! स किं न गाण्डिवधरो नासीत् पृथानन्दनो
यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत् ? ॥"

अत्र धनुर्धरत्वादयो गुणा दोषा जाता ।

दोषस्य गुणीकरणं यथा तत्रैव कञ्चुकिना सह विवादे दुर्योधनः–सूक्ष्ममिदं कस्यापि

( २८ ) एतानि चाङ्गानि नाटकादिषु सम्भवन्त्यपि वीथ्यामवश्यं विधेयानि स्पष्टतया नाटकादिषु विनिविष्टान्यपीहोदाहृतानि ।

( २९ ) वीथीव नानारसानां चात्र मालारूपतया स्थितत्वाद्वीथीयम् । यथा—मालविका ।

गुणः साक्षान् महानल्पः स्वयमन्येन वा कृतः ।
करोति महतीं प्रीतिमपकारोऽपकारिणाम् ॥

येनाद्य द्रोण-कर्ण-जयद्रथादिनिहतमभिमन्युमुपश्रुत्योच्छ्वसितमिव नश्चेतसा"

अत्र क्षत्रधर्मं परित्यज्याभिमन्युर्निहित इत्ययं दोषः स्वप्रीतिहेतुत्वेन गुणीकृतः ।

उभयमेकत्र यथा—

सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः
सर्वत्रैव जनापवादचकितास्तिष्ठन्ति दुःखं सदा ।
अव्युत्पन्नमतिः कृतेन न सता नैवासताऽव्याकुलो
युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः ॥

अत्र सत्त्व गुणोऽपि दोषत्वं गतः, प्राकृतत्वं तु दोषोऽपि गुणतां गतः ।

( २८ ) ननु वीथ्यङ्गानां नाटकाङ्गतया "योज्यान्यत्र यथालाभं वीथ्यङ्गानीतराण्यपि" इत्युक्त्या नाटक एव वक्तुं युक्तम् तथा सति "विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्" इत्युक्तत्वेनैवातिदेशात् वीथ्यामपि वीथ्यङ्गप्राप्तेः कथं नाटकनिरूपणप्रस्तावेऽनभिधायात्र वीथ्यङ्गानि प्रतिपाद्यन्त इत्यत आह—एतानीति । एतानि उद्घात्यकादीनि वीथ्यङ्गानि । विधेयानि कर्त्तव्यानि इति हेतोरिति शेषः । विनिविष्टान्यपि "योज्यान्यत्र यथालाभम्" इत्यनेन विनिवेशयितुं प्रतिपादितान्यपि । इह वीथ्यामित्यर्थः । एवञ्चात्र वीथ्यङ्गोक्तेरयमभिप्रायः—अत्र कीर्त्तनात्तेषामावश्यकत्वम् अन्यत्र नाटकादौ चानियतत्वमिति ।

( २९ ) वीथीपदस्य व्युत्पत्तिमुपपादयति—वीथ्यामिवेति । वीथ्यां वृक्षादिपंक्त्यां वृक्षादीनामिवेत्यर्थः । अत्र रूपकविशेषे नानारसानां मालारूपतयावस्थितत्वादियं वीथीत्यन्वयः । वीथीनामकं रूपकमित्यर्थः ।

अत्र दशरूपककृता त्वित्थमुक्तम्—

चित्रे यत्रोक्तिप्रत्युक्ती स्यातामाकाशभाषितैः ।
कथञ्चिद्वाऽप्यनेकार्थसूचनं वीथिका च सा ॥

यथा बालरामायणे—"( आकाशे कर्णं दत्वा ) किं ब्रूथ ? विलक्षणेन सता कर्णाटेन्तेन निर्मर्यादमिदमुदितम् , यदुताखण्डप्रसरा हि पुरुषकाराः कर्णाटानाम् । तथाहि—अहमेष हरिष्यामि परिणेतुः पुरोऽपि ताम् । नारीपरिभवं सोढुं दाक्षिणात्या न शिक्षिता ॥

(अञ्जलिं बध्वा) तदिदं मयाऽपि निवेद्यते यदि हि परिणयामि—

अपि द्वीपान्तरादेष हृतां प्रत्याहरामि ताम् । कलत्रहरणे पुंसां कियदर्णवलङ्घनम् ॥

इति······( सहर्षम् ) अनुकूलं हि दैवं सर्वस्मै स्वस्ति करोति यत् प्रस्तुतसंवादी देवादेशः ।···इति ।

यथा वा अनर्घराघवे( आकाशे कर्णं दत्वा ) किं ब्रूथ ? वैदेशिको भवान् असमग्रपात्र-

अथ प्रहसनम्—

( ३० ) भाणवत्सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम् ।
भवेत्प्रहसनं वृत्तं निन्द्यानां कविकल्पितम् ॥ २६४ ॥
अत्र नारभटी, नापि विष्कम्भकप्रवेशकौ ।
अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा ॥ २६५ ॥
तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः ।
एको यत्र भवेद्धृष्टो हास्यं तच्छुद्धमुच्यते ॥

---

कथमीदृशे कर्मणि प्रगल्भते ? ( विहस्य सप्रश्रयमञ्जलिं बद्ध्वा ) हन्त ! भोः किमेव-मुदीर्यते ? भवद्विधानामाशासिनीवृत्तिरेव मे पात्राणि संभ्रमयिष्यन्ति । यतः—

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥

( पुनराकाशे कर्णं दत्त्वा किं ब्रूथ ? तर्हि प्रहितेयमस्माभिः पत्रिका । इति ( प्रविश्य-नटः पत्रिकां ददाति सूत्रधारो गृहीत्वा वाचयति )'......इति ।

( ३० ) प्रहसनं निरूपयति—भाणवदिति । भाणवत् भाणाख्यरूपके यथा मुखनिर्व-हणे सन्धी नानासन्ध्यङ्गानि, दशलास्याङ्गानि, एकोऽङ्कस्तथात्रापि मुखनिर्वहणाभ्यां सन्धिभ्यां यथासम्भव सन्ध्यङ्गैर्लास्याङ्गैः एकाङ्केन च विनिर्मितम् , कविकल्पितं न तु पुराणेतिहासप्रसिद्धं निन्द्यानां निन्दनीयानां लोकानां वृत्तं वृत्तान्तं प्रकृष्टं हसत्य नेनेति प्रहसनं नाम रूपकं भवेत् । अत्र विशेषोऽभिहितो मुनिना—

लोकोपचारयुक्ता या वार्त्ता यश्च दम्भसंयोगः ।
तत्प्रहसनेषु योज्यं पूर्वोक्तविवादसंयुक्तम् ॥ इति ।

अत्र प्रहसने आरभटीवृत्तिर्न भवेत् , तथा विष्कम्भकप्रवेशकावपि न भवेताम् । तथा प्रहसने हास्यरसः अङ्गी मुख्यः । अत्र वार्थे वा शब्दस्तथा च वीथ्यङ्गानाञ्च स्थितिरव-स्थानं न भवेत् ।

तपस्वीति । अत्र प्रहसने तपस्विनः यतिकृच्छ्रचान्द्रायणसन्तपनादिव्रतानुष्ठानविधा यिनः भगवन्तो तत्त्वविदः तत्प्रभृतिषु मध्ये एकः कश्चिन्नायको भवेत् अस्य च भेदत्र यम् , शुद्धं सङ्कीर्णं विकृतमिति च तत्राद्यं शुद्धं लक्षयति—एक इति । यत्र धृष्टः पूर्वाभि-हितस्वरूपो नायको भवेत् तत् हास्यं हास्यविषयीभूतं प्रहसनं शुद्धमुच्यते तस्य केवलं धृष्टनायक विषयत्वादिति भावः ।

दशरूपके तु—

भवेत्प्रहसनं यत्र हास्याधानाय धृष्टता ।
विरुद्धैर्वेषवाक्केलिचेष्टितैर्वा प्रसादनम् ।

यथा मृच्छकटिके—अविद अविद भो ! चिरसंगीदो वासणेण सुक्खनपोक्खर-णालाइं विअमे बुभुक्खाए मिलाणाइं अङ्गाइं ता जाव गेहं गदुअ जाणामि अत्थि किं पि कुटुंबिणीए उववादिदं ण वेत्ति" । इत्युक्तम् ।

यथा कन्दर्पकेलिः ।

**( ३१ ) आश्रित्य कञ्चन जनं संकीर्णमिति तद्विदुः ॥ २६६ ॥**

यथा—धूर्तचरितम् ।

**( ३२ ) वृत्तं बहूनां धृष्टानां सङ्कीर्णं केचिदूचिरे ।**
**तत्पुनर्भवति द्व्यङ्कमथवैकाङ्कनिर्मितम् ॥ २६७ ॥**

यथा—लटकमेलकादिः ।

मुनिस्त्वाह—

( ३३ ) वेश्याचेटनपुंसकविटधूर्ता बन्धकी च यत्र स्युः ।
अविकृतवेषपरिच्छदचेष्टितकरणं तु सङ्कीर्णम् ॥ इति ।

**( ३४ ) विकृतं तु विदुर्यत्र षण्ढकञ्चुकितापसाः ।**
**भुजङ्गचारणभटप्रभृतेर्वेषवाग्युताः ॥ २६८ ॥**

( ३५ ) इदं तु सङ्कीर्णेनैव गतार्थमिति मुनिना पृथङ्नोक्तम् ।

अथोपरूपकाणि । तत्र—

**( ३६ ) नाटिका क्लृप्तवृत्ता स्यात्स्त्रीप्राया चतुरङ्किका ।**

---

( ३१ ) सङ्कीर्णं लक्षयति—आश्रित्य इति । कञ्चन धृष्टभिन्नं जनं नायकमाश्रित्य यत् प्रहसनं भवति तत्सङ्कीर्णमिति विदुः । अनिश्चितनायकैः सङ्कीर्णत्वात् सङ्कीर्णम् ।

( ३२ ) केषाञ्चिन्मतेन सङ्कीर्णं प्रदर्शयति—वृत्तमिति । केचित् बहूनां धृष्टानां नायकानां वृत्तं वृत्तान्तं यत्र तत् सङ्कीर्णं नाम प्रहसनमूचिरे कथितवन्तः । तत्तथाविधं सङ्कीर्णं प्रहसनं पुनर्द्व्यङ्कम्, अङ्कद्वययुक्तम् अथवा एकाङ्केन विनिर्मितं कविना रचितं भवति । लटकमेलकादिरिति । लटको दुर्जन इत्युणादिसूत्रविवरणे उज्ज्वलदत्त आह । तथा च लटकानां मेलका यत्र तत लटकमेलकं नाम प्रहसनम् ।

( ३३ ) वेश्याचेटेति । यत्र प्रहसने वेश्यादयो वर्णनीयाः स्युः तथा यत्र अविकृतानां प्राकृतानां वेशानां परिच्छदानां चेष्टितानामाचरणानाञ्च करणमनुकरणं स्यात् तत् प्रहसनं सङ्कीर्णम् ।

( ३४ ) विकृतं निरूपयति—विकृतन्त्विति । यत्र षण्डः क्लीवः कञ्चुकी वारवाणधारी तापसश्च ते तथोक्ताः, भुजङ्गो विटः, "भुजङ्गो विटसर्पयोः" इत्यमरः, चारणो नटः, भटो योद्धा, प्रभृतिपदात् राजभृत्यादयश्च तेषां वेशवाग्भिः परिच्छदभाषाभिर्युताः सन्तः अभिनयन्ति तत्तु विकृतरूपप्रयुक्ताभिनयात्मकत्वाद्विकृतं नाम प्रहसनं विदुः ।

( ३५ ) ननु विकृताख्यप्रहसनस्य सर्वैरेवाङ्गीकृतत्वेन कथं महर्षिणा भरतेन नाभिहितमित्यत आह—इदन्त्विति । विकृतं प्रहसनन्त्वित्यर्थः । गतार्थं लब्धविषयम् । वेश्याचेटेत्यादि भरतकारिकायां विटाद्यभिनयमात्रेणैव सङ्कीर्णत्वप्राप्तेरित्याशयादिति भावः ।

( ३६ ) नाटिकां निरूपयति—नाटिकेति । क्लृप्तं कविनैव कल्पितं वृत्तं वृत्तान्तो यस्याः सा तथोक्ता कविकल्पितनायकचरित्रेत्यर्थः ।

स्त्रीप्राया नटी बहुला, चत्वारोऽङ्का यस्यां सा तथोक्ता, नाटिका स्यात् । तत्र नाटि-

प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः ॥ २६९ ॥
स्यादन्तःपुरसम्बद्धा सङ्गीतव्यापृताथवा ।
नवानुरागा कन्यात्र नायिका नृपवंशजा ॥ २७० ॥
सम्प्रवर्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः ।
देवी भवेत्पुनर्ज्येष्ठा प्रगल्भा नृपवंशजा ॥ २७१ ॥
पदे पदे मानवती तद्वशः सङ्गमो द्वयोः ।
वृत्तिः स्यात्कौशिकी स्वल्पविमर्शाः संधयः पुनः ॥ २७२ ॥

( ३७ ) द्वयोर्नायिकानायकयोः । यथा—रत्नावली—विद्धशालभञ्जिकादिः ।

अथ त्रोटकम्—

( ३८ ) सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम् ।
त्रोटकं नाम तत्प्राहुः प्रत्यङ्कं सविदूषकम् ॥ २७३ ॥

( ३९ ) प्रत्यङ्कसविदूषकत्वादत्र शृङ्गारोऽङ्गी । सप्ताङ्कं यथा–स्तम्भितरम्भम् । पञ्चाङ्कं यथा—विक्रमोर्वशी ।

अथ गोष्ठी—

( ४० ) प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलंकृता ।

---

कायां प्रख्यातो लोके प्रसिद्धः धीरललितस्तल्लक्षणान्वितो नृपो नायकः स्यात् । तथा अन्तःपुर एव सम्बद्धा आबद्धा, अथवा सङ्गीते बाह्येऽपि नृत्यगीतवाद्यादौ व्यापृता अनुरक्ताः, नवानुरागा नृपवंशजा राजकुलोत्पन्ना कन्या अत्र नाटिकायां नायिका स्यात् । नेता नायकः देव्याः पट्टराज्यास्त्रासेन भयेन शङ्कितो भीतः सन् अस्यां नायिकारूपायां कन्यायां सम्प्रवर्तेत व्यवहारं कुर्यात् । देवी सा च पट्टराज्ञी प्रगल्भा पूर्वोक्तस्वरूपा नृपवंशजा राजकुलोत्पन्ना ज्येष्ठा नायिकातोऽधिकावस्थाका पदे पदे मानवती उक्तलक्षणो मानस्तद्वती च भवेत् । द्वयोर्नायकयोः सङ्गमः तद्वशः पट्टराज्या आयत्तः । कौशिकी-वृत्तिः स्यात्, स्वल्प अत्यल्पः विमर्शः विमर्शसन्धिर्यत्र ते तथोक्ताः पुनर्मुखादयश्च-त्वार सन्धयः स्युः ।

( ३७ ) कारिकां सुगमयितुं 'द्वयो'रित्यस्यार्थं दर्शयति–द्वयोरिति । द्वयोर्नायकना-यिकयोरित्येकशेषोऽन्वयः ।

( ३८ ) त्रोटकं निरूपयति–सप्ताष्टेति । सप्त अष्टौ नव पञ्च वा अङ्का यत्र तत्तथोक्तम्, दिव्यमानुषसंश्रयं दिव्यादिव्योभयचरित्रविषयम्, तथा प्रत्यङ्कं सर्वाङ्केषु विदूषकेण सहितं सविदूषकं यद्रूपकं तत् त्रोटयति स्वोत्कर्षेण रूपकान्तरं लघूकरोतीति त्रोटकं नाम प्राहुः । ननु "प्रत्यङ्कं सविदूषकम्" इत्यनेन सर्वस्मिन्नेवाङ्के विदूषकस्यावश्य म्भावित्वात् विक्रमोर्वश्याः प्रथमचतुर्थाङ्कयोस्तदसत्त्वेनाव्याप्तिरिति चेत्? नैवम् तथा सति स्पष्टप्रतिपत्तये "प्रत्यङ्कं सविदूषकम्" इत्यस्य स्थाने 'सर्वाङ्के सविदूषकम्' इत्यस्यैव वक्तव्यत्वे तथानभिधानात् क्वापि विदूषकाभावेऽपि त्रोटकत्वस्याचतत्त्वेनाभ्यु पगमात् तथा च तत्र नाव्याप्तिरिति भावः ।

( ३९ ) प्रत्यङ्कमित्यादिना बोधनीयमर्थान्तरमुपपादयति—प्रत्यङ्कमिति । विदूष-कस्य शृङ्गारिनायकसहायत्वादित्याशयः । अष्टाङ्कं नवमाङ्कञ्चान्यतोऽनुसन्धेयम् ।

( ४० ) गोष्ठीं निरूपयति—प्राकृतैरिति । प्राकृतैः नातिविदग्धैः साधारणशिक्षितै-

नोदात्तवचना गोष्ठी कौशिकीवृत्तिशालिनी ॥ २७४ ॥
हीना गर्भविमर्शाभ्यां पञ्चषड्योषिदन्विता ।
कामशृङ्गारसंयुक्ता स्यादेकाङ्कविनिर्मिता ॥ २७५ ॥
( ४१ ) यथा—रैवतमन्दनिका ।

अथ सट्टकम्—

( ४२ ) सट्टकं प्राकृताशेषपाठ्यं स्यादप्रवेशकम् ।
न च विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतो रसः ॥ २७६ ॥
अङ्का जवनिकाख्याः स्युः स्यादन्यन्नाटिकासमम् ।
( ४३ ) यथा—कर्पूरमञ्जरी ।

अथ नाट्यरासकम्—

( ४४ ) नाट्यरासकमेकाङ्कं बहुताललयस्थिति ॥ २७७ ॥
उदात्तनायकं तद्वत्पीठमर्दोपनायकम् ।
हास्योऽङ्ग्यत्र सशृङ्गारो नारी वासकसज्जिका ॥ २७८ ॥

रिति यावत् , नवभिर्दशभिर्वा पुंभिर्नायकैरलङ्कृता शोभिता, नातिविदग्धनायकपात्रादेव न विद्यते उदात्तं संस्कृतं वचनं वाक्यं यत्र सा तथोक्ता, नैकधेत्यादिवत् समासेऽपि नकारस्य विद्यमानत्वमवगन्तव्यम् । कौशकीवृत्तिशालिनी, तेन कामशृङ्गारेण पूर्वदर्शितस्वरूपेण संयुक्ता सहिता, गर्भविमर्शाभ्यां सन्धिभ्यां हीना शून्या, पञ्चभिषड्भिर्वा योषिद्भिर्नायिकाभिरन्विता युक्ता डट्प्रत्ययस्यानित्यत्वाद्रूपसिद्धिर्बोध्या तथा एकेन अङ्केन विनिर्म्मिता रचिता, दशानामेव पुंसां सभारूपत्वेन गोष्ठीत्वात् गोष्ठी स्यात् ।

( ४१ ) उदाहरति–यथेति । स्पष्टम् ।

( ४२ ) सट्टकं निरूपयति—सट्टकमिति । प्राकृतं संस्कृतातिरिक्तम् अशेषं समग्रं पाठ्यं श्लोकादिकं यत्र तत्तथोक्तम् , न विद्यते प्रवेशकः प्रागुक्तो लक्षणो यत्र तत्तथोक्तमुपरूपकं स्यात् । सट्टकशब्दश्चात्रार्थे गोमण्डलादिवद्रूढिर्बोध्यः । अत्र सट्टके विष्कम्भकश्च प्रागुक्तलक्षणो न स्यात् , किन्तु प्रचुरोऽधिकः अद्भुतो रसः स्यात । अङ्का जवनिकाख्याः स्युः यत्राङ्कस्तत्र जवनिकाशब्दो व्यवहार्यः । अन्यत् अङ्कसंख्यादिकं नाटिकासमं स्यात् नाटिकायां यथा तथात्रापीत्यर्थः

( ४३ ) उदाहरति–यथेति । स्पष्टम् ।

( ४४ ) नाट्यरासकं निरूपयति–नाट्यरासकमिति । एकोऽङ्को यत्र तत्तथोक्तम् , बहूनाम् अनेकविधानां ताललयानां स्थितिर्यत्र तत्तथोक्तम् , "तालः कालक्रियामानं लयः साम्यम्" इत्यमरः । उदात्तो धीरोदात्तो नायको यस्मिन् तत्तथोक्तम् , तद्वत् तथा पीठमर्दः पूर्वोक्तस्वरूपः उपनायको यत्र तत्तथोक्तम् , तथाविधमुपरूपकं नाट्यमभिनयं रासयति सामाजिकेभ्यो रोचयतीति नाट्यरासकं स्यात् । अत्र नाट्यरासके शृङ्गारेण सहितः सशृङ्गारो हास्यो रसः अङ्गी मुख्यः । वासकसज्जिका वासकसज्जानामपूर्वोक्तस्वरूपा नारी नायिका ।

मुखनिर्वहणे संधी लास्याङ्गानि दशापि च ।
केचित्प्रतिमुखं संधिमिह नेच्छन्ति केवलम् ॥ २७९ ॥

( ४५ ) तत्र संधिद्वयवती यथा-नर्मवती । संधिचतुष्टयवती यथा-विलासवती ।

अथ प्रस्थानकम्—

( ४६ ) प्रस्थाने नायको दासो हीनः स्यादुपनायकः ।
दासी च नायिका वृत्तिः कौशिकी भारती तथा ॥ २८० ॥
सुरापानसमायोगादुद्दिष्टार्थस्य संहृतिः ।
अङ्कौ द्वौ लयतालादिर्विलासो बहुलस्तथा ॥ २८१ ॥

( ४७ ) यथा - शृङ्गारतिलकम् ।

अथोल्लाप्यम्—

( ४८ ) उदात्तनायकं दिव्यवृत्तमेकाङ्कभूषितम् ।
शिल्पकाङ्गैर्युतं हास्यशृङ्गारकरुणै रसैः ॥ २८२ ॥
उल्लाप्यं बहुसंग्राममस्त्रगीतमनोहरम् ।
चतस्रो नायिकास्तत्र त्रयोऽङ्का इति केचन ॥ २८३ ॥

शिल्पकाङ्गानि वक्ष्यमाणानि । यथा-देवीमहादेवम् ।

---

मुखं निर्वहणञ्च ते द्वे अपि सन्धी भवेताम् । दशापि च लास्याङ्गानि भवेयुः । केचित् इह नाट्यरासके केवलं प्रतिमुखं सन्धिं नेच्छन्ति नाभिलपन्ति तद्व्यतिरिक्तांश्चतुरः सन्धींस्तु इच्छन्त्येवेत्यर्थः ।

( ४५ ) सन्धिद्वययुक्तं सन्धिचतुष्टययुक्तञ्च यथाक्रममुदाहर्तुमाह-तत्रेति । स्पष्टम् ।

( ४६ ) प्रस्थानरूपमुपरूपकं निरूपयति-प्रस्थान इति । प्रतिष्ठन्ते रसाधिक्येनानुधावन्ति सामाजिकानां चेतांसि यत्र तत् प्रस्थानं नामोपरूपकविशेषः तत्र दासो भृत्यो नायकः, हीनो दासादपि अधमजातिरुप नायकः स्यात् । नायिका च दासी । कौशिकी तथा भारती च वृत्तिः । सुरापानसमायोगात् मदिरापानसम्बन्धाश्रयणं विधाय कविना उद्दिष्टार्थस्य प्रस्तुतविषयस्य संहृतिः समापनं विधेयेति शेषः । द्वावङ्कौ लयतालादिः तथा बहुलोऽधिको विलासः पूर्वोक्तस्वरूपश्च स्यात् ।

( ४७ ) उदाहरति—यथेति । शृङ्गारतिलकमिति । स्पष्टम् । निरुक्तलक्षणानाक्रान्तत्वान्नेदं कालिदासकृतमिति सुधियो विभावयन्तु ।

( ४८ ) उल्लाप्यरूपमुपरूपकं निरूपयति—उदात्तनायकमिति । उदात्तो धीरोदात्तो नायको यस्मिन् तत्तथोक्तम्, दिव्यवृत्तं स्वर्गीयनायकोचितवृत्तान्तं यत्र तत्तथोक्तम्, एकाङ्केन भूषितम् अलङ्कृतम्, शिल्पकाङ्गैर्वक्ष्यमाणैराशंसनादिभिः सर्वविशत्या युतं सहितम्, हास्यशृङ्गार-करुणैश्च युतं संयुक्तम्, बहवोऽनेका सङ्ग्रामा युद्धा यत्र तत्तथोक्तम् । तथा—

उत्तरोत्तररूपं यत् प्रस्तुतार्थपरिष्कृतम् ।
अन्तर्जवनिकं गीतमस्त्रगीतं तदुच्यते ॥

इत्युक्तलक्षणेनास्त्रगीतेन मनोहरं सुन्दरं रूपकम् उल्लाप्यं भवेत् । तत्र उल्लाप्ये चतस्रो नायिकाः भवेयुः । केचन तु तत्रोल्लाप्ये त्रयोऽङ्का इत्याहुः ।

अथ काव्यम्—

( ४९ ) काव्यमारभटीहीनमेकाङ्कं हास्यसंकुलम् ।
खण्डमात्राद्विपदिकाभग्नतालैरलंकृतम् ॥ २८४ ॥
वर्णमात्राछड्डलिकायुतं शृङ्गारभाषितम् ।
नेता स्त्री चाप्युदात्तात्र संधी आद्यौ तथान्तिमः ॥ २८५ ॥

( ५० ) यथा—यादवोदयम् ।

अथ प्रेङ्खणम्—

( ५१ ) गर्भावमर्शरहितं प्रेङ्खणं हीननायकम् ।
असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम् ॥ २८६ ॥
नियुद्धसम्फेटयुतं सर्ववृत्तिसमाश्रितम् ।
नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना ॥ २८७ ॥

( ५२ ) यथा—वालिवधम् ।

अथ रासकम्

( ५३ ) रासकं पञ्चपात्रं स्यान्मुखनिर्वहणान्वितम् ।

---

( ४९ ) काव्यरूपमुपरूपकं निरूपयति—काव्यमिति । आरभटया पूर्वोक्तस्वरूपया वृत्त्या हीनं रहितम्, एकोऽङ्को यस्मिन् तत्तथोक्तम्, हास्येन हास्यरसेन सङ्कुलं व्याप्तम्, खण्डमात्रा, द्विपदिका, भग्नतालानि गीतप्रभेदाः महर्षिणोक्तास्तैरलङ्कृतं भूषितम्, वर्णमात्राछड्डलिके छन्दोविशेषौ ताभ्यां युक्तम्, शृङ्गारेण रसेन भाषितं यत्र तत् शृङ्गारसूचकमित्यर्थः तथोक्तञ्चोपरूपकं कवेः कर्मेति काव्यं भवेत् । अत्र काव्ये नेता नायकः उदात्तो धीरोदात्तः स्त्री नायिका च उदात्ता धीरोदात्ता तथा आद्यौ मुखप्रतिमुखनामानौ सन्धी तथान्तिमो निर्वहणञ्च सन्धिः स्यात् ।

( ५० ) उदाहरति—यथेति । स्पष्टम् ।

( ५१ ) प्रेङ्खणरूपमुपरूपकं निरूपयति—गर्भावमर्शेति । गर्भो गर्भसन्धिः ।

अवमर्शो विमर्शाख्यसन्धिस्तथा च गर्भविमर्शाभ्यां सन्धिभ्यां रहितं शून्यम्, हीनो नीचो नायको यत्र तत्तथोक्तम्, न विद्यते सूत्रधारो यत्र तत्तथोक्तम्, एक एवाङ्को यत्र तत् तथोक्तम्, नियुद्धेन द्वन्द्वयुद्धेन सम्फेटेन रोषभाषणेन च युतम्, तथा सर्वाभिश्चतसृभिः कौशिक्यादिभिर्वृत्तिभिः समाश्रितं संयुक्तम् उपरूपकं प्रेङ्खते रसानुभवामोदेन चित्तमान्दोल्यते अनेनेति प्रेङ्खणं स्यात् । ननु सूत्रधाररहितं चेन्नान्दी तदा केन पाठ्या प्ररोचना वा केन विधेयेत्यत आह—नेपथ्येति । असूत्रधारत्वादेव नान्दी तथा प्ररोचना तत्र नेपथ्ये केनचिन्नटेन गीयते पठ्यते । प्ररोचना च भारत्यावृत्तेरङ्गविशेषः । तथा च सा कविपरिषदादीनां प्रशंसया सहृदयानामुन्मुखीकरणम् । एवञ्च नेपथ्यस्थेन येन केनापि नटेन नान्दी पाठ्या प्ररोचना च विधेयेति भावः ।

( ५२ ) उदाहरति—यथेति । स्पष्टम् ।

( ५३ ) रासकरूपमुपरूपकं निरूपयति—रासकमिति । पञ्चपात्राणि पुरुषा यत्र तत्-

भाषाविभाषाभूयिष्ठं भारतीकौशिकीयुतम् ॥ २८८ ॥
असूत्रधारमेकाङ्कं सवीथ्यङ्गं कलान्वितम् ।
श्लिष्टनान्दीयुतं ख्यातनायिकं मूर्खनायकम् ॥ २८९ ॥
उदात्तभावविन्याससंश्रितं चोत्तरोत्तरम् ।
इह प्रतिमुखं संधिमपि केचित्प्रचक्षते ॥ २९० ॥

( ५४ ) यथा—मेनकाहितम् ।

अथ संलापकम्—

( ५५ ) संलापकेऽङ्काश्चत्वारस्त्रयो वा नायकः पुनः ।
पाषण्डः स्याद्रसस्तत्र शृङ्गारकरुणेतरः ॥ २९१ ॥
भवेयुः पुरसंरोधच्छलसंग्रामविद्रवाः ।
न तत्र वृत्तिर्भवति भारती न च कौशिकी ॥ २९२ ॥

( ५६ ) यथा—मायाकापालिकम् ।

अथ श्रीगदितम्—

( ५७ ) प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम् ।

थोक्तम्, मुखनिर्वहणाभ्यामाद्यन्ताभ्यां सन्धिभ्याम् अन्वितम् संयुक्तम्, भाषाविभाषे भूयिष्ठे बहुले यत्र तत्तथोक्तम् । यथा चाह भाषार्णवे—

भाषा मध्यमपात्राणां नाटकादौ विशेषतः । महाराष्ट्री सौरसेनीत्युक्ता भाषा द्विधा बुधैः ॥
हीनैर्भाष्या विभाषा स्यात् सा च सप्तविधा स्मृता ।
प्राच्यावन्ती मागधी च शाकारी च तथा परा ।
चाण्डाली शावरी चैव तथाभीरीति भेदतः ॥ इति ।

तथा भारत्या कौशिक्या च वृत्त्या युतम्, असूत्रधारम्, एकाङ्कम्, वीथ्यङ्गैः पूर्वोक्तैः सहितं सवीथ्यङ्गम् कलाभिर्नृत्यगीतादिचतुःषष्टिप्रकाराभिः पूर्वदर्शिताभिरन्वितम्, श्लिष्टया द्व्यर्थप्रतिपादिन्या नान्द्या युतम्, ख्याता प्रसिद्धा नायिका यस्मिन् तत्तथोक्तम्, मूर्खो नायको यत्र तत् तथोक्तम्, तथा उत्तरोत्तरं क्रमेण उदात्तभावस्य नायकमहत्त्वस्य विन्यासेन वर्णनेन संश्रितं सयुक्तञ्च रासयति सामाजिकेभ्य आत्मानं प्रीणयतीति रासकं नामोपरूपकं स्यात् । इह रासके केचित् प्रतिमुखं सन्धिमपि प्रचक्षते वदन्ति ।

( ५४ ) उदाहरति—यथेति । स्पष्टम् ।

( ५५ ) संलापकाख्यमुपरूपकं निरूपयति—संलापक इति । संलापयति रसविशेषवत्तया आत्मानमभ्यापयतीति संलापकस्तत्रोपरूपके चत्वारस्त्रयो वा अङ्का भवेयुः, नायकः पुनः पाषण्डो धर्मद्रोही भवेत् । तथा तत्र संलापके शृङ्गारकरुणाभ्यामितरो भिन्नः रसो भवेत् । पुरसंरोधो नगरावरोधः, "प्रियाभैरप्रियैर्वाक्यैर्विलोभ्यच्छलनाच्छलम्" इत्युक्तस्वरूपं छलम्, सङ्ग्रामः समरः, "शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः" इत्युक्तस्वरूपो विद्रवश्च भवेयुः । तत्र संलापके भारतीवृत्तिर्न भवति तथा कौशिकीवृत्तिश्च न भवति ।

( ५६ ) उदाहरति—यथेति । स्पष्टम् ।

( ५७ ) श्रीगदिताख्यमुपरूपकं निरूपयति—प्रख्यातेति । प्रख्यातवृत्तं प्रसिद्धवृ-

प्रसिद्धनायिकं गर्भविमर्शाभ्यां विवर्जितम् ॥ २९३ ॥
भारतीवृत्तिबहुलं श्रीतिशब्देन संकुलम् ।
मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम् ॥ २९४ ॥

यथा—क्रीडारसातलम् ।

( ५८ ) श्रीरासीना श्रीगदिते गायेत्किंचित्पठेदपि ।
एकाङ्को भारतीप्राय इति केचित्प्रचक्षते ॥ २९५ ॥

( ५९ ) ऊह्यमुदाहरणम् ।

अथ शिल्पकम्—

( ६० ) चत्वारः शिल्पकेऽङ्काः स्युश्चतस्रो वृत्तयस्तथा ।
अशान्तहास्याश्च रसा नायको ब्राह्मणो मतः ॥ २९६ ॥
वर्णनात्र श्मशानादेर्हीनः स्यादुपनायकः ।
सप्तविंशतिरङ्गानि भवन्त्येतस्य तानि तु ॥ २९७ ॥
आशंसातर्कसंदेहतापोद्वेगप्रसक्तयः ।
प्रयत्नग्रथनोत्कण्ठावहित्थाप्रतिपत्तयः ॥ २९८ ॥
विलासालस्यबाष्पाणि प्रहर्षाश्वासमूढताः ।
साधनानुगमोच्छ्वासविस्मयप्राप्तयस्तथा ॥ २९९ ॥

तान्तः प्रख्यातः प्रसिद्धः धीरोदात्तो नायको यस्मिन् तत्तथोक्तम् , प्रसिद्धनायिका यत्र तत्तथोक्तम् , गर्भविमर्शाभ्यां सन्धिभ्यां विवर्जितं रहितम् , भारतीवृत्तिरेव बहुला अधिका यस्मिन् तत्तथोक्तम् , तथा "श्री" इति शब्देन संकुलं बहुलम् , उपरूपकं विद्वद्भिः श्रिया श्रीशब्देन गदितमिति श्रीगदितं नाम मतम् ।

( ५८ ) अन्यमतेन श्रीगदितलक्षणं निरूपयति—श्रीरासीनेति । श्रीगदिते उपरूपके आसीना स्थिता श्रीर्लक्ष्मीवेशधारिणी नटी किञ्चिदपि गायेत् किञ्चिदपि पठेच्च । तथा तत्र भारतीवृत्तिप्राय एकाङ्क एव भवेत् इति केचित् प्रचक्षते कथयन्ति ।

( ५९ ) उदाहरति—यथेति । स्पष्टम् ।

( ६० ) शिल्पकाख्यमुपरूपकं निरूपयति—चत्वार इति शिल्पके नृत्यादिशिल्पमुख्यत्वादेव तत्संज्ञके उपरूपके चत्वारोऽङ्काः, तथा कौशिक्यादयश्चतस्र एव वृत्तयः, अशान्तहास्याः शान्तहास्यरहिता रसाश्च स्युः । अत्र शिल्पके ब्राह्मणो नायकः, स च "असति विशेषाभिधाने सामान्यस्य न्याय्यत्वात्" इति नियमेन सामान्यतया धीरप्रशान्तलक्षण इति ज्ञेयम् । श्मशानस्य आदिपदात् शवमहारण्यादेर्वर्णना, हीनो नीचजातीय उपनायकश्च स्यात् । एतस्य शिल्पकस्य सप्तविंशति (२७) रङ्गानि भवन्ति तानि तु आशंसादीनि चमत्कृत्यन्तानि बोध्यानीति शेषः । तथा हि-( १ ) आशंसा, ( २ ) तर्कः, ( ३ ) सन्देहः, ( ४ ) तापः, ( ५ ) उद्वेगः, ( ६ ) प्रसक्तिरनुरक्तिः, ( ७ ) प्रयत्नः, ( ८ ) ग्रथनम् , ( ९ ) उत्कण्ठा, ( १० ) अवहित्था आकृतिगोपनम् , ( ११ ) प्रतिपत्तिः क्रियार्थावगमः, ( १२ ) विलासः, ( १३ ) आलस्यम् , ( १४ ) वाष्पम् , ( १५ ) प्रहर्षः, ( १६ ) आश्वासः धैर्य्यप्रदानम् , ( १७ ) मूढता, ( १८ ) साधनानुगम इष्टसाध-

लाभविस्मृतिसंफेटा वैशारद्यं प्रबोधनम् ।
चमत्कृतिश्चेत्यमीषां स्पष्टत्वाल्लक्ष्म नोच्यते ॥ ३०० ॥

( ६१ ) संफेटग्रथनयोः पूर्वमुक्तत्वादेव लक्ष्म सिद्धम् ।

( ६२ ) यथा—कनकावतीमाधवः ।

अथ विलासिका—

( ६३ ) शृङ्गारबहुलैकाङ्का दशलास्याङ्गसंयुता ।
विदूषकविटाभ्यां च पीठमर्देन भूषिता ॥ ३०१ ॥
हीना गर्भविमर्शाभ्यां संधिभ्यां हीननायका ।
स्वल्पवृत्ता सुनेपथ्या विख्याता सा विलासिका ॥ ३०२ ॥

( ६४ ) केचित्तु तत्र विलासिकास्थाने विनायिकेति पठन्ति । तस्यास्तु 'दुर्मल्लि-कायामन्तर्भावः' इत्यन्ये ।

अथ दुर्मल्लिका—

( ६५ ) दुर्मल्ली चतुरङ्का स्यात्कौशिकीभारतीयुता ।
अगर्भा नागरनरा न्यूननायकभूषिता ॥ ३०३ ॥
त्रिनालिः प्रथमोऽङ्कोऽस्यां विटक्रीडामयो भवेत् ।

नपदार्थबोधः, ( १९ ) उच्छ्वासः, ( २० ) विस्मयः, ( २१ ) प्राप्तिः आनन्दागम, ( २२ ) लाभो वस्त्वन्तरप्राप्तिः, ( २३ ) विस्मृतिः ( २४ ) संम्फेटो रोषभाषणम्, ( २५ ) वैशारद्यं नैपुण्यम्, ( २६ ) प्रबोधनम्, ( २७ ) चमत्कृतिश्च, अमीषामङ्गानां स्पष्टत्वात् प्रायेण लब्धलक्षणतया प्रख्याततया च स्फुटत्वात् लक्ष्म लक्षणं "चिह्नं लक्ष्म च लक्षणम्" इत्यमरः, नोच्यते नाभिधीयते ।

( ६१ ) सम्फेटादेरस्पष्टतार्थतां निराकरोति—सम्फेटेत्यादि । स्पष्टम् ।

( ६२ ) निरुक्तलक्षणं शिल्पकमुदाहरति—यथेति । स्पष्टम् ।

( ६३ ) विलासिकाख्यमुपरूपकं निरूपयति—शृङ्गारबहुलेति । शृङ्गारो बहुलो यत्र सा तादृशी, एक एवाङ्को यस्यां सा तादृशी, दशभिर्लास्याङ्गैः संयुता, विदूषकविटाभ्यां पीठमर्देन च भूषिता शोभिता, गर्भविमर्शाभ्यां सन्धिभ्यां हीना वर्जिता, हीनो रहितो नायको यस्यां सा तादृशी, स्वल्पं वृत्तं श्लोक उपाख्यानं वा यत्र सा तादृशी, शोभनो नेपथ्यो वेशरचना यत्र सा तथोक्ता, विशेषेण लासयति सामाजिकेभ्यः कामयतीति विलासिका सा विख्याता ।

( ६४ ) मतान्तरमुपन्यस्यति - केचित्त्विति । तस्या विलासिकायाः । अन्यत्सुगमम् ।

( ६५ ) दुर्म्मल्लिकाख्यमुपरूपकं निरूपयति—दुर्मल्लीति । दुष्टा सुन्दरत्वेन हीना मल्ली मल्लिकापुष्पमपि यस्याः सा तथोक्ता, चत्वारोऽङ्का यत्र सा तथोक्ता । तत्र च कौशिकी तथा भारती च वृत्तिः स्यात्, अगर्भा गर्भसन्धिवर्जिता, नागराः सर्वविषयकु-शलाः नराः पात्राणि यस्यां सा तथोक्ता, तथा अन्यूनेन अनीचेन नायकेन भूषिता शो-भिता दुर्मल्ली दुर्मल्लिका स्यात् । अस्यां दुर्मल्लिकायां प्रथमोऽङ्कः त्रिनालिः 'नालिका घटिकाद्वयम्' इति प्रागेवाभिहितम्, तथा च त्रिभिर्नालीभिर्घटिकाभिर्मुहूर्तरिति

पञ्चनालिर्द्वितीयोऽङ्को विदूषकविलासवान् ॥ ३०४ ॥
षण्णालिकस्तृतीयस्तु पीठमर्दविलासवान् ।
चतुर्थो दशनालिः स्यादङ्कः क्रीडितनागरः ॥ ३०५ ॥

( ६६ ) यथा—बिन्दुमती ।

अथ प्रकरणिका—

( ६७ ) नाटिकैव प्रकरणी सार्थवाहादिनायका ।
समानवंशजा नेतुर्भवेद्यत्र च नायिका ॥ ३०६ ॥

( ६८ ) मृग्यमुदाहरणम् ।

अथ हल्लीशः—

( ६९ ) हल्लीश एक एवाङ्कः सप्ताष्टौ दश वा स्त्रियः ।
वागुदात्तैकपुरुषः कौशिकीवृत्तिरुज्ज्वला ।
मुखान्तिमौ तथा संधी बहुतालयस्थितिः ॥ ३०७ ॥

( ७० ) यथा केलिरैवतकम् ।

अथ भाणिका—

( ७१ ) भाणिका श्लक्ष्णनेपथ्या मुखनिर्वहणान्विता ।

---

यावत् निष्पादितेतिवृत्त इति परमार्थः । विटस्य धूर्तस्य क्रीडामयश्चरितोऽधिकश्च भवेत् द्वितीयोऽङ्कः पञ्चनालिः पञ्चमुहूर्तनिष्पादितेतिवृत्तः विदूषकस्य विलासवान् व्यवहारवांश्च भवेत् । तृतीयस्त्वङ्कः षण्णालिकः षड्भिर्मुहूर्तैर्निष्पादितेतिवृत्तः तथा पीठमर्दस्य विलासवान् व्यवहारवांश्च भवेत् । चतुर्थोऽङ्कः दशमुहूर्तसम्पादितेतिवृत्तः, तथा क्रीडितश्चरितोऽधिको नायको यत्र स तथोक्तश्च भवेत् ।

( ६६ ) उदाहरति—यथेति । स्पष्टम् ।

( ६७ ) प्रकरणिकाख्यमुपरूपकं निरूपयति—नाटिकैवेति । सार्थवाहो वणिक् आदिपदेन पुरोहितामात्यौ च यद्वा सार्थवाहाः पथिकाः, आदिपदात् प्रवासिनश्च नायका यस्यां सा नाटिकैव नाटिकालक्षणाक्रान्तैव प्रकरणी भवेत् । यत्र च प्रकरणिकायां नायिकानेतुर्नायकस्य समानवंशजा समानकुलजाता भवेत् ।

( ६८ ) प्रायो ह्यस्योदाहरणं दुर्लभमित्यत आह—मृग्यमिति । स्पष्टम् ।

( ६९ ) हल्लीशाख्यमुपरूपकं निरूपयति—हल्लीश इति । हल्लीशे हल्लीशसंज्ञके उपरूपके, एक एवाङ्कः, सप्त अष्टौ वा अथवा दश स्त्रियः, उदात्ता उत्तमा संस्कृतरूपा शौरसेनी च वाक्, एकपुरुष एकनटः, उज्ज्वला कौशिकीवृत्तिः, मुखान्तिमौ मुखनिर्वहणसंज्ञकौ सन्धी, बहूनाम् अनेकविधानां ताललयानां स्थितिश्च स्यात् । अस्मिन्नर्थे हल्लीशशब्दो रूढिर्ज्ञेयः ।

( ७० ) उदाहरति—यथेति । स्पष्टम् ।

( ७१ ) भाणिकाख्यमुपरूपकं निरूपयति—भाणिकेति । भाणिका श्लक्ष्णं सूक्ष्मं नेपथ्यं वस्त्रादिवेशरचना यस्यां सा तथोक्ता, मुखनिर्वहणाभ्याम् आद्यन्ताभ्यां सन्धि-

कौशिकीभारतीवृत्तियुक्तैकाङ्कविनिर्मिता ॥ ३०८ ॥
उदात्तनायिका मन्दनायकात्राङ्गसप्तकम् ।
उपन्यासोऽथ विन्यासो विबोधः साध्वसं तथा ॥ ३०९ ॥
समर्पणं निवृत्तिश्च संहार इति सप्तमः ।
उपन्यासः प्रसङ्गेन भवेत्कार्यस्य कीर्तनम् ॥ ३१० ॥
निर्वेदवाक्यव्युत्पत्तिर्विन्यास इति स स्मृतः ।
भ्रान्तिनाशो विबोधः स्यान्मिथ्याख्यानं तु साध्वसम् ॥
सोपालम्भवचः कोपपीडयेह समर्पणम् ।
निदर्शनस्योपन्यासो निवृत्तिरिति कथ्यते ॥ ३१२ ॥
संहार इति च प्राहुर्यत्कार्यस्य समापनम् ।

( ७२ ) स्पष्टान्युदाहरणानि । यथा—कामदत्ता ।

( ७३ ) एतेषां सर्वेषां नाटकप्रकृतित्वेऽपि यथौचित्यं यथालाभं नाटकोक्तविशेषपरिग्रहः । यत्र च नाटकोक्तस्यापि पुनरुपादानं तत्र तत्सद्भावस्य नियमः ।

( ७४ ) अथ श्रव्यकाव्यानि ।

भ्यामन्विता संयुता, कौशिकीभारतीभ्यां वृत्तिभ्यां युक्ता, एकाङ्केनैव विनिर्मिता रचिता उदात्ता उत्तमा नायिका यत्र सा तथोक्ता, मन्दो नीचो नायको यत्र सा तथोक्ता च स्यात् । अत्र भाणिकायाम् अङ्गानां सप्तकं भवेत् । तथा हि उपन्यासः, विन्यासः, विबोधः, साध्वसम्, समर्पणम्, निवृत्तिः, संहारश्च, । यथोद्देशेन लक्षयति—उपन्यास इति । प्रसङ्गेन कार्यस्य कीर्तनमुपन्यासो नामाङ्गं भवेत् । निर्वेदवाक्यस्य पूर्वोक्तलक्षणनिर्वेदद्योतकवचनस्य व्युत्पत्तिर्विशेषोत्पत्तिः प्रपञ्चनमित्यर्थः स प्रसिद्धो विख्यातो विन्यासः । भ्रान्तिनाशो भ्रमध्वंसो विबोधो नामाङ्गं स्यात् मिथ्या असत्यम् आख्यानं वल्गनन्तु साध्वसं नामाङ्गं स्यात् । इह भाणिकायां कोपपीडया अमर्षबाधया सोपालम्भवचो निन्दासहितं वचनं समर्पणं नामाङ्गं कथ्यते । निदर्शनस्य उदाहरणस्य उपन्यास उपस्थापनम् निवृत्तिरिति नामाङ्गं कथ्यते अभिधीयते । कार्यस्य कर्त्तव्यस्य यत् समापनं समाप्तिः तत् संहार इति नाम चाङ्गं प्राहुः ।

( ७२ ) स्पष्टानीति । उपन्यासविन्यासादीनां भाणिकाङ्गानामित्यर्थः ।

( ७३ ) एतेषामिति । नाटकविकृतिरूपाणां प्रकरणादीनां रूपकाणां नाटिकादीनामुपरूपकाणाञ्चेत्यर्थः । नाटकप्रकृतिकत्वेऽपि सर्वेषामेव तदीयानां धर्माणां नाटकप्रकृतित्वेनातिदेशात् गतार्थत्वेऽपि । यथालाभं यथायोग्यम् । नाटकोक्तविशेषे परिग्रह इति विग्रहः । तथा च भाणिकोक्तकार्यस्य नाटकान्तरेऽपि दातव्यमित्युक्तम् । एवञ्च प्रकरणे नान्दीप्रस्तावनादीनां ग्रहणम्, सामान्येन विशेषबाधाया अन्याय्यत्वाच्च न प्रसिद्धेतिवृत्तग्रहणमिति भावः । तत्सद्भावस्य नियम इति । तत्रावश्यकतारूपनियम इत्यर्थः । यथा वीथ्यां वीथ्यङ्गानाम् ।

( ७४ ) "दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्" इति पूर्वमभिहितम्, तत्र सपरिकरं दृश्यकाव्यमभिधायावसरप्राप्तया श्रव्यमभिधातुमाह—अथेति । दृश्यकाव्यनिरूपणानन्तरम् श्रव्यकाव्यानि निरूप्यन्त इति शेषः ।

( ७५ ) श्रव्यं श्रोतव्यमात्रं तत्पद्यगद्यमयं द्विधा ॥ ३१३ ॥

तत्र पद्यमयान्याह—

( ७६ ) छन्दोबद्धपदं पद्यं तेन मुक्तेन मुक्तकम् ।
द्वाभ्यां तु युग्मकं सांदानतिकं त्रिभिरिष्यते ॥ ३१४ ॥
कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम् ।

तत्र मुक्तकं यथा मम—

( ७७ ) 'सान्द्रानन्दमनन्तमव्ययमजं यद्योगिनोऽपि क्षणं
साक्षात्कर्तुमुपासते प्रतिमुहुर्ध्यानैकतानाः परम् ।
धन्यास्ता मधुरापुरीयुवतयस्तद्ब्रह्म याः कौतुका-
दालिङ्गन्ति समालपन्ति शतधाकर्षन्ति चुम्बन्ति च ॥'

---

( ७५ ) श्रव्यं लक्षयति—श्रव्यमिति । श्रोतव्यमात्रं केवलश्रवणयोग्यं श्रव्यं काव्यम् । मात्रपदनिवेशेन दृश्यकाव्येषु वाचिकांशमादाय श्रवणयोग्यत्वस्य विद्यमानत्वेऽपि आङ्गिकाद्यंशेषु दर्शनयोग्यत्वस्यापि विद्यमानत्वात् नातिव्याप्तिः । तत् प्रभेदद्वयं निरूपयति—तदिति । तत् श्रव्यकाव्यं द्विधा द्विप्रकारकं पद्यमयं गद्यमयञ्चेति ।

( ७६ ) तत्र पद्यमयं काव्यं निरूपयति—छन्दोबद्धपदमिति । छन्दो गायत्र्यादिस्तच्च छन्दः शास्त्रप्रसिद्धलक्षणम्, तेन छन्दसा बद्धानि नियन्त्रितानि पदानि सुप्तिङन्तरूपाणि यत्र तत्तथोक्तं काव्यं पद्यमिति, एतच्च पद्यसामान्यलक्षणम् । तेन पद्येन समाप्तिबोधकक्रियान्वये—पद्यान्तरनिरपेक्षेण एकेन मुक्तकम्, मुक्तमेव मुक्तकम् संज्ञायां कन् । तेनेत्यभेदे तृतीया पद्याभिन्नं मुक्तमित्यर्थः । द्वाभ्यां समाप्तिबोधकक्रियान्वये परस्परैकवाक्यतापन्नाभ्यां पद्याभ्यां युग्मकं युग्ममेव युग्मकम् अत्रापि संज्ञायां कन्, एवमग्रेऽपि । त्रिभिः समाप्तिबोधकक्रियान्वये परस्परैकवाक्यतापन्नैः पद्यैः सन्दानं सम्मेलनमस्य सञ्जातमिति सान्दानतिकमिष्यते सान्दानतिकस्यैव चान्यत्र विशेषकमिति तिलकमिति च संज्ञान्तरद्वयमुपलभ्यते । चतुर्भिः समाप्तिबोधकक्रियान्वये परस्परैकवाक्यतापन्नैः पद्यैः कलापकं मतम् । पञ्चभिः समाप्तिबोधकक्रियान्वये परस्परैकवाक्यतापन्नैः पद्यैः कुलकं मतम् । पञ्चभिरिति तदन्यूनसंख्याव्यवच्छेदार्थम् । तेन शिशुपालवधादौ दशादिभिः पद्यैः कुलकं संगच्छत इत्याद्यूहनीयम् ।

तदुक्तम्—द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम् ।
कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतम् ॥ इति ।

( ७७ ) मुक्तकमुदाहरति—सान्द्रानन्दमिति । प्रतिमुहुः सर्वदैव ध्यानैकतानाः ध्यानमात्राविष्टाः योगिनः क्षणमपि साक्षात्कर्तुं प्रत्यक्षीकर्तुं यत् सान्द्रानन्दं निविडानन्दस्वरूपम्, अनन्तमपारम्, अव्ययं शाश्वतं नाशरहितमित्यर्थः, अजं जन्महीनम्, परं प्रकृष्टं ब्रह्म उपासते, तद् ब्रह्म या मधुरा ( मथुरा ) पुरीयुवतयः, कौतुकात् शतधा आलिङ्गन्ति आश्लिषन्ति समालपन्ति विहारार्थं कर्षन्ति चुम्बन्ति च ता मधुरा (मथुरा) पुरीयुवतयो धन्याः, योगिवृन्दापेक्षयाऽप्यधिककालसाक्षात्कारादित्याशयः । मधुराशब्दस्य मधुपुर्यभिधायकत्वं मधुसूदनसरस्वतिना उक्तम्—

युग्मकं यथा मम—

( ७८ ) 'किं करोषि करोपान्ते कान्ते ! गण्डस्थलीमिमाम् ।
प्रणयप्रवणे कान्तेऽनैकान्ते नोचिताः क्रुधः ॥
इति यावत्कुरङ्गाक्षीं वक्तुमीहामहे वयम् ।
तावदाविरभूच्चूते मधुरो मधुपध्वनिः ॥'

( ७९ ) एवमन्यान्यपि ।

---

काञ्ची ते धनयोगसम्पदमितो जाता विशालाकृति-
र्यावन्तो मथुरा ध्वनिं विदधती पश्चादयोध्याभवत् ।
मायाद्वारवतो शिवाधिवसतिः सा काशिका दृश्यते
तच्चित्रं न वदामि माधव ! यतस्त्वां सा सदा संश्रिता ॥ इति ।

अत्र "धन्या भवन्ती"ति समाप्तिसूचकक्रियान्वये पद्यान्तरापेक्षाया अभावात् परस्परैकवाक्यतापन्नत्वेन मुक्तकत्वम् ।

( ७८ ) मानिन्या मानभङ्गप्रकारं सख्यौ कथयन् युग्मकमुदाहरति—किं करोषीति । हे कान्ते ! प्रियतमे ! करोपान्ते पाणितले, इमां गण्डस्थलीं कपोलस्थलीं किं किमर्थं करोषि स्थापयसि ? प्रणयप्रवणे तव प्रीत्यर्थमुत्कण्ठिते, अनैकान्ते अव्यभिचारिणि त्वदेकमात्रप्रिये इत्यर्थः, कान्ते वल्लभे क्रुधः क्रोधा न उचिता न युक्ताः, इति अनेन प्रकारेण कुरङ्गाक्षीं मृगलोचनां वक्तुं यावद् वयम् ईहामहे चेष्टामहे तावदेव चूते आम्रवृक्षे मधुरो गम्भीरो मधुपध्वनिः । भ्रमररवः आविरभूत् । तेन तन्मानभङ्गः अयत्नेन सहसैव सञ्जात इति भावः ।

अत्र प्रथमश्लोकार्थस्य द्वितीयश्लोके "आविरभूत्" इति समाप्तिबोधकक्रियान्वये इतिपदेन पद्ययोः परस्परैकवाक्यतापन्नत्वेन सङ्घटनात् युग्मकत्वम् ।

( ७९ ) एवमिति । अन्यत्रापि सान्दानतिकादावपि एवमुदाहरणं ज्ञेयमिति शेषः ।

तत्र सान्दानतिकं यथा—

रुरुदिषा वदनाम्बुरुहश्रियः सुतनु ! सत्यमलङ्करणाय ते ।
तदपि सम्प्रति सन्निहिते मधावधिगमं धिगमङ्गलमश्रुणः ॥
त्यजति कष्टमसावचिरादसून् विरहवेदनयेत्यघशङ्किभिः ।
प्रियतया गदितास्त्वयि बान्धवैरवितथा वितथाः सखि ! मा गिरः ॥
न खलु दूरगतोऽप्यतिवर्त्तते महमसाविति बन्धुतयोदितैः ।
प्रणयिणो निशमय्य वधूर्बहिः स्वरमृतैरमृतैरिव निर्ववौ ॥

कुलकं यथा—किरातार्जुनीये—तृतीयसर्गे "ततः शरच्चन्द्र" इत्यारभ्य "मुनिमावभाषे" इत्यन्तम् । यद्वा—

तात यूयं यमश्रायं दिश नायेन दक्षिणाम् । विप्रावैस्तोयविश्रावं तर्जयन्तो महोदधेः ॥
उन्नायानधिगच्छन्तः प्रद्रावैर्वसुधाभृताम् । वनाभिलावान् कुर्वन्तः स्वेच्छया चारुविक्रमाः ॥
सदोद्गारसुगन्धीनां फलानामलमाशिताः । उत्कारेषु च धान्यानामनभीष्टपरिग्रहाः ॥
संस्तावमिव शृण्वन्तश्छन्दोगानां महाध्वरे । संजितं मधुलेहानां पुष्पप्रस्तारशायिनाम् ॥
आलोचयन्तो विस्तारमम्भसां दक्षिणोदधेः । स्वादयन्तः फलरसं मुष्टिसंग्राहपीडितम् ॥

एवं षड्भिः सप्तभिरष्टभिर्नवभिर्दशभिर्वा कुलकं भवतीत्याकरस्तत्तदुदाहरणानि

( ८० ) सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः ॥ ३१५ ॥
सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः ।
एकवंशभवा भूपाः कुलजा बहवोऽपि वा ॥ ३१६ ॥
शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते ।
अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसंधयः ॥ ३१७ ॥
इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम् ।
चत्वारस्तस्य वर्गाः स्युस्तेष्वेकं च फलं भवेत् ॥ ३१८ ॥

धीधनैः स्वयमवगन्तव्यानि। कलापकं यथा—शिशुपालवधे द्वितीयसर्गे "ततः सपत्नापनय" ········ इत्यारभ्य "जगाद वदनच्छद्मपर्य्यन्तपातिनः" इत्यन्तम् । यद्वा—तत्रैव 'न खलु' वयममुष्य दानयोग्याः" इत्यादि ।

( ८० ) महाकाव्यलक्षणं निरूपयति—सर्गबन्ध इति। सर्गरवान्तरार्थवर्णनैरुपलक्षितो बन्धः रसवत्पद्यकदम्बविन्यासः विन्यस्तरसवत्पद्यकदम्ब इत्यर्थः, महाकाव्यम् ।

अत्र विशेषः—

शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रं च भेदतः । चतुष्प्रकारः प्रसरः सतां सारस्वतो मतः॥
शास्त्रं काव्यविदः प्राहुः सर्वकाव्याङ्गलक्षणम् । काव्यं विशिष्टशब्दार्थसाहित्यसदलंकृति ॥
शास्त्रकाव्यं चतुर्वर्गप्रायं सर्वोपदेशकृत् । भट्टिभौमककाव्यादि काव्यशास्त्रं प्रचक्षते ॥
शास्त्रं कुर्य्यात् प्रयत्नेन प्रसन्नार्थमनुष्टुभा । येन सर्वोपकाराय याति सुस्पष्टसेतुताम् ॥
काव्ये रसानुसारेण वर्णनानुगुणेन च । कुर्वीत सर्ववृत्तानां विनियोगं विभागवित् ॥
शास्त्रकाव्येऽतिदीर्घाणां वृत्तानां न प्रयोजनम्। शास्त्रकाव्येऽपि वृत्तानि रसायत्तानि काव्यवित्
पुराणप्रतिबिम्बेषु प्रसन्नोपायवर्त्मसु । उपदेशप्रधानेषु कुर्य्यात्सर्वेष्वनुष्टुभम् ॥

नानावृत्तविशेषास्तु कवेः शस्तस्य शासनात् ।
यान्ति प्रभोरिवात्यन्तमयोग्या अपि योग्यताम् ॥ इति ।

तत्र महाकाव्ये । धीरोदात्तगुणान्वितः, सुरो देवताप्रकृतिः एक एकमात्रो नायकः । यथा शिशुपालवधे—श्रीकृष्णः, कुमारसम्भवे—कार्त्तिकेयो वा । वा अथवा धीरोदात्तगुणान्वितः सद्वंशः सत्कुलीन एकः क्षत्रियो नायकः यथा—नैषधे नलः । अपिना क्षत्रियेतरजातिरपि तथाविधो नायको भवितुं शक्नोतीति द्योतितम् । वा अथवा एकवंशभवा एककुलोत्पन्ना कुलजा कुलीना बहवोऽनेका अपि धीरोदात्तगुणान्विता भूपाः क्षत्रिया नायका भवितुं शक्नुवन्ति । यथा रघुवंशे—दिलीपादयः । शृङ्गारवीरशान्तानां मध्ये एक एकतमः । अङ्गी मुख्यः । तत्र—नैषधे शृङ्गारः, शिशुपालवधे—वीरः, महाभारते—शान्तः । शृङ्गारवीरशान्तानामित्यत्र बहुवचनमुपलक्षणम्, तेन करुणस्यापि सङ्ग्रहः, ततश्च करुणप्रधानस्य रामायणस्य महाकाव्यत्वमक्षतम् । नाट्यसन्धयो मुखप्रतिमुखगर्भविमर्शनिर्वहणाख्याः पञ्चापि। इतिहासोद्भवं महाभारतादिप्रसिद्धम्। वृत्तं वृत्तान्तः। अन्यदितिहासोद्भवातिरिक्तं लोकप्रसिद्धमित्यर्थः सज्जनाश्रयं शिष्टपुरुषाचरणविषयं वृत्तम् । तस्य महाकाव्यस्य सम्बन्धिनश्चत्वारो वर्गाः धर्मार्थकाममोक्षा वर्णनीया इति शेषः। तेषु चतुर्वर्गेषु मध्ये एकं यत् किञ्चित् फलं प्रधानप्रयोजनं भवेत्, न पुनः द्वौ वा त्रयो वेति भावः ।

आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा।
क्वचिन्निन्दा खलादीनां सतां च गुणकीर्तनम् ॥ ३१९ ॥
एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः।
नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह ॥ ३२० ॥
नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते।
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् ॥ ३२१ ॥
संध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः।
प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः ॥ ३२२ ॥
संभोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः।
रणप्रयाणोपयममन्त्रपुत्रोदयादयः ॥ ३२३ ॥
वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह।

आदौ आरम्भे नमस्क्रिया नमस्कारः, यथा रघुवंशे। आशीर्यथा—मुद्राराक्षसादौ। वस्तुनिर्देशो वर्णनीयनायकस्य नाम्ना निर्देशः यथा—किरातार्जुनीये शिशुपालवधादौ च। क्वचिन्महाकाव्ये। खलानां पिशुनादीनां, यथा - धर्मशर्माभ्युदयादौ। अनेन खलादीनां निन्दायाः सतां गुणकीर्तनस्य चोत्कर्षमात्राधायकत्वं न पुनर्महाकाव्यलक्षणेऽवश्यकर्तव्यत्वमिति सूचितम् अत एव क्वचिदनयोरसद्भावेऽपि न महाकाव्यत्वव्याघात इति ध्येयम्। एकवृत्तमयैः एकजातीयपद्यैः एकप्रकारकच्छन्दोबद्धैरित्यर्थः, अवसाने सर्गान्ते अन्यानि वृत्तानिच्छन्दांसि येषां तैस्तथोक्तैः पद्यैर्विशिष्टाः, नातिस्वल्पाः पञ्चविंशतिपद्येनान्यूनाः। तथा च भट्टिकाव्ये सप्तविंशतिपद्यघटितेऽपि न क्षतिः। नातिदीर्घाः शतत्रयाधिकपद्यरहिता इत्यर्थः। अष्टाधिका अष्टान्यूनाः। इह महाकाव्ये कविना विधातव्या इत्यर्थः। क्वापि महाकाव्ये कश्चन सर्गो नानावृत्तमयः अनेकविधच्छन्दोनिबद्धपद्यकदम्बसंयुतो दृश्यते। यथा शिशुपालवधे—चतुर्थः सर्गः, किरातार्जुनीये-पञ्चमः। तथा च महाकाव्ये यत्र क्वचन एकमात्र एव स्वेच्छयैतादृशः सर्गः कविना निर्मातव्य इति मूलकृदभिप्रायः। सर्गान्ते अवसाने भाविनोऽव्यवहितोत्तरवर्त्तिनः सर्गस्य कथाया उपाख्यानस्य सूचनं भवेत्। सन्ध्येत्यादिसागरान्तं स्पष्टम्। सम्भोगविप्रलम्भौ शृङ्गारौ वीरादिरसप्रधानेऽपि महाकाव्ये वर्णनीयावित्यर्थः, एतादृशार्थाकरणे एतदुक्तः सार्थक्यं न स्यादिति मन्तव्यम्। मुनिर्नारदादिः। अध्वरो यज्ञः रणः सङ्ग्रामः, प्रयाणं केवलयात्रा, उपयमो विवाहः, मन्त्र उपायचतुष्टयमन्त्रणा, पुत्रस्य उदयो जन्म अपत्यमात्रार्थं उपलक्षणञ्चैतत्। आदिपदात् नृपामात्यसेनापतिप्रभृतयश्च। अमी साङ्गोपाङ्गा विवरणोक्ताः यद्वा सन्ध्यासूर्येन्द्वादयः पुत्रजन्मान्ताः तत्र सन्ध्याङ्गम्—चक्रवाकविरहः, वासराङ्गम्—जलकेल्यादिः, रजन्यङ्गम्—मधुपानादिः, उपाङ्गं तत्रैव परिहासादयः कामिन्याभिसारिकादयश्च यथायोगं यथासम्भवं (क) वर्णनीयाः। एतेन येन केनाप्यङ्गेन हीन

(क) अथ प्रसङ्गात् येषां पदार्थानां वर्णनाय ये ये विषया अवश्यमेवाश्रयणीयास्ते ते विशिष्य प्रकृतोपयोगित्वेन प्रदर्श्यन्ते। तत्रावश्यमाश्रयणीयाः—
नृपे कीर्त्तिप्रतापाज्ञादुष्टशास्ति विवेकिताः। धर्म्मप्रयाण-सङ्ग्राम-शास्त्राभ्यास-नयक्षमाः॥

प्रजारागोऽरिशैलादिवासोऽरिपुरशून्यता । औदार्य्यधैर्य्यगाम्भीर्य्यैश्वर्य्यशौर्य्योच्चमादयः ॥
मद्दः श्रीदातशक्याद्या गुणौघा रूपवर्णवर्णनम् ।

देव्यां सौभाग्य–लावण्यशीलशृङ्गारमन्मथाः । त्रपा–चातुर्य्यदाक्षिण्य-प्रेममानव्रतादयः ॥
वेणी–धम्मिल्ल–सीमन्त–भाल–श्रवणनासिकाः । कपोलाधर–नेत्र–भ्रू–कटाक्ष–रद–कन्धराः ॥
गण्डबाहु–करोरोजनाभिमध्यवलित्रयम् । रोमालिश्रोणि–जङ्घोरु–पादयुग्मनखक्रमाः ॥
महामात्ये नयः शास्त्रं धैर्य्यं बुद्धिर्गभीरता । शक्तिः शास्त्रमलोभत्वं जनरागो विवेकिता ॥
मन्त्री भक्ते शुचिः शूरोऽनुद्धतो बुद्धिमान् क्षमी । आन्वीक्षिक्यादिकुशलः परिच्छेदी सुदेशजः ॥
पुरोहिते हितो वेदस्मृतिज्ञः सत्यवाक्शुचिः । ब्रह्मण्यो विमलाचारः प्रतिकर्त्तापदामृजुः ॥
कुमारे शस्त्रशास्त्रश्रीकलाबलगुणोच्छ्रयाः । बाह्यालीखुरलीराजभक्तिः सुभगतोदयः ॥
सेनापतौ जिताया सः स्वामिभक्तः सुधीरभीः । देशे रत्नखनि–द्रव्य–पण्य–धान्याकरोद्भवाः ॥
दुर्गग्रामजनाधिक्यनदीमातृकतादयः । अभ्याः सो वाहने शस्त्रे शास्त्रे च विजयो रणे ॥
ग्रामे धान्यलता–वृक्ष–सरसी–पशुपुष्टयः । क्षेत्ररक्षक केदार–ग्रामेयीमुग्धविभ्रमाः ॥
पुरेऽट्ट–परिखा–वप्र–प्रतोली–तोरणध्वजाः । प्रासादा–ध्व–प्रपा–राम–वापी–वेश्या–सती–खरी ॥
सरस्यम्भो–लहर्य्यम्भो–गजाद्यम्बुज–षट्पदाः । हंसचक्रादयस्तीरोद्यान–स्त्रीपान्थकेलयः ॥
अब्धौ द्वीपाद्रि–रत्नोर्मि–पोत–यादोजलप्लवाः । विष्णुः कुल्यागमश्चन्द्राद्वृद्धिरौर्वोऽब्दपूरणम् ॥
सरित्यम्बुधि–यायित्वं वीच्योजलगजादयः । पद्मानि षट्पदा हंसचक्राद्याः कूलशाखिनः ॥
उद्याने सारणिः सर्वफलपुष्पलताद्रुमाः । पिकालिकेकिहंसाद्याः क्रीडावाप्यध्वगस्थितिः ॥
शैलेमेघौषधी धातुवंशकिन्नर–निर्झराः । शृङ्ग–पाद–गुहा–रत्न–वन–जीवाद्युपत्यकाः ॥
अरण्येऽहि वराहेभयूथसिंहादयो द्रुमाः । शुककाककपोताद्या झिल्लभल्लदवाद्रयः ॥
आश्रमेऽतिथिपूजैणविश्रामो हिंस्रशान्तता । यज्ञभूमोमुनिसुताद्रुसेकोवल्कलद्रुमाः ॥
मन्त्रे पञ्चाङ्गनाशक्तिः षाड्गुण्योपायसिद्धयः । उपायाश्चिन्तनीयाश्च स्थैर्य्योन्नत्यादिसूक्तयः ॥
दूते स्वस्वामि–तेजःश्रीविक्रमौन्नत्यकृद्वचः । शत्रुक्षोभकरीचेष्टा धार्ष्ट्यंदाक्ष्यमभीरुता ॥

युद्धे तु वर्म्मवलचार–रजोसितूर्य्य–निश्वाननादशर–मण्डप–रक्तनद्यः ।
छिन्नातपत्ररथचामरकेतुकुम्भीमुक्ताः सुरावृतभटाः सुरपुष्पवृष्टिः ॥

प्रयाणे भेरिनिस्वानभूकम्पवल्गधूलयः । करभोक्षध्वजच्छत्रवणिक्–शकटवेशराः ॥
मृगयायां श्वसञ्चारी वागुरानीलवेषता । भटढक्कामृगत्रासः सिंहयुद्धं त्वरागतिः ॥
अश्वे वेगित्वमौन्नत्यं तेजः सल्लक्षणस्थितिः । खुरोत्खातरजोरूपं जातिर्गतिविचित्रता ॥
गजे सद्धस्त्रयोधित्वमुच्चत्वं कर्णचापलम् । अरिव्यूहविभेदित्वं कुम्भमुक्तामदालिनः ॥
सुरभौ दोला–कोकिल–मारुत–सूर्य्य–गति–तरुदलोद्भेदाः । जातीतरपुष्पचयाम्रमञ्जरीभ्रमरझङ्काराः ॥
ग्रीष्मे पाटलमल्लीतापःशरःपथिकशोषवातोल्काः । सक्तुप्रपा–प्रपास्त्रीमृगतृष्णाम्रादिफलपाकाः ॥

वर्षासु मेघहलिकेतकनिम्नगानां झञ्झानिलस्य शिखिजातिक स्वकानाम् ।
प्रीतिश्च हंसगमनं नलिनीलतानां पत्रोद्भवोऽर्कलतिकादलपातनाद्याः ॥
शरदि सूर्य्यसुधाकरपाटवं विमलताम्भसि हंसवृषस्मयाः ।
कमलशारदसैकतविस्तृतिः सुशिखिपक्षमदापगमादयः ॥

हेमन्ते रजनीदैर्घ्यं नलिनीकुमुमक्षतिः । दिनाल्पत्वं हिमप्रौढिबकानन्दयवोद्भवाः ॥
शिशिरे वेणुकुन्दाब्जदाहः शिखिरतोत्सवाः ।
सूर्य्येऽरुणतारविमणिचक्राम्बुजमथिकलोचनप्रीतिः । तारेन्दुदीपकौषधिघूकतमश्चौरकुमुदकुद्याक्षतिः ॥

**कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ॥ ३२४ ॥**
**नामास्य सर्गोपादेयकथया सर्गनाम तु ।**

( ८१ ) संध्यङ्गानि यथालाभमत्र विधेयानि 'अवसानेऽन्यवृत्तकैः' इति बहुवचनमविवक्षितम् । साङ्गोपाङ्गा इति जलकेलिमधुपानादयः । यथा—रघुवंश-शिशुपालवध-नैषधादि । यथा वा मम—राघवविलासादि ।

**( ८२ ) अस्मिन्नार्षे पुनः सर्गा भवन्त्याख्यानसंज्ञकाः ॥ ३२५ ॥**

मपि काव्यं न दुष्टमिति भावः । वृत्तस्य वर्णनीयचरित्रस्य । नाम्ना इत्थंभेदे तृतीया । तेन कवेर्नाम्ना कविनामकानुपूर्वीकमित्यर्थः । अस्य महाकाव्यस्य नाम कथनीयम् । अन्यत्राप्येवमेव । तत्र कविनामकं महाकाव्यं माघभारविप्रभृतिः । वृत्तनामकं कुमारसम्भवकीचकवधादि । नायकनामकं रघुप्रभृति । अस्य वंशचरितशब्दपर्य्यन्तव्यपदेशे तु वृत्तनामत्वं बोध्यम् । इतरनामकं भट्टिप्रभृति । सर्गस्य नाम तु सर्गे उपादेया वर्णनीया या कथा उपाख्यानं तया तथोक्तया वक्तव्यम् । यथा "सन्ध्यावर्णनं नामदशमः सर्गः । " इति । यथा च गीतगोविन्दे प्रथमद्वितीयादिसर्गाणां सामोद दामोदर अक्लेश केशवादि नाम्ना व्यवहारः ।

( ८१ ) ननु नाटकसन्धीनामत्र विधेयत्वे तदङ्गानामपि विधेयत्वमस्ति न वेत्याशङ्क्य समाधत्ते—सन्ध्यङ्गानीति । यथालाभं यथायोग्यं विधेयानि कर्त्तव्यानि तथा च नाटक एव सन्ध्यङ्गानामावश्यकत्वेन नियमो नात्र तथेति भावः । बहुवचनमविवक्षितमिति । अवसाने एकस्याप्यन्यवृत्तिकस्य दृष्टत्वान्न दोष इति भावः । रघुवंशेत्यादि । तत्र प्रतिनायकस्य नाम्ना शिशुपालवध इति ।

( ८२ ) महाकाव्ये विशेषं प्रतिपादयति—अस्मिन्निति । ऋषेरिदमित्यार्षं तस्मिन्नार्षे ऋषिप्रणीते पुनरस्मिन् महाकाव्ये सर्गा आख्यानसंज्ञका शिष्यं प्रति गुरूणामाख्यानशास्त्रकथने याः संज्ञा अध्यायरूपास्तादृशसंज्ञका भवन्तीत्यर्थः । एतच्च साम्प्रदायिकमेवेति बोध्यम् ।

चन्द्रे कलङ्क—चक्राम्बुजमानविरहितमोहानिरोऽज्ज्वलत्वम् ।
जलधिजननेत्रकैरवचकोरनन्दाश्मदम्पतिप्रीतिः ॥
**विवाहे** मङ्गलस्नानं भूषणं कामिनीरपः । वेदीसङ्गीतनादेक्षालाजाहोमद्विजादयः ॥
**विरहे** जागरश्वासनिशादैर्घ्यकृशाङ्गताः । मन्तापचिन्तामालिन्यमौनरक्ताक्षतादयः ॥
**स्वयंवरे** सतीपूजावाद्यघोषनृपागमाः । राजपुत्र्या नृपाकारान्वयचेष्टाप्रकाशनम् ॥
**सुरापाने** गतिवचः स्खलनं नयनभ्रमः । लज्जामानच्युतिश्चित्तभ्रमरक्ताक्षतादयः ॥
**पुष्पावचये** पुष्पावचयः पुष्पार्पणेऽर्थिता दयिते । मालार्थं गोत्रस्खलनेर्ष्याविक्रोक्तिसम्भ्रमाश्लेषाः ॥
**जलकेलौ** जलक्षोभश्चक्रहंसापसर्पणम् । पत्रग्लानिः पयोबिन्दुदृगरागो भूषणच्युतिः ॥
**सुरते** स्वेदकणिकाशीत्कारोभूषणच्युतिः । मञ्जीरकङ्कणारावनखदन्तक्षतादयः ॥
**प्रातः** कोकाम्बुजोत्कर्षो **मध्याह्ने** तापसंप्लवः । **सायं** सूर्य्यद्विलौहित्यं चक्रपद्मादिविप्लवः ।
**अन्धकारे**ऽपि सान्द्रत्वं विश्वलोपसमर्थता । आकस्मिकसमारम्भो निःशङ्कमभिसारिकाः ॥
इत्थमेते वर्णनीयाः प्रबन्धेषु यथोचितम् । इति ।

( ८३ ) अस्मिन्महाकाव्ये । यथा— महाभारतम् ।

( ८४ ) प्राकृतैर्निर्मिते तस्मिन्सर्गा आश्वाससंज्ञकाः ।
छन्दसा स्कन्धकेनैतत्क्वचिद्गलितकैरपि ॥ ३२६ ॥

यथा— सेतुबन्धः । यथा वा मम—कुवलयाश्वचरितम् ।

( ८५ ) अपभ्रंशनिबद्धेऽस्मिन्सर्गाः कुडवकाभिधाः ।
तथापभ्रंशयोग्यानि च्छन्दांसि विविधान्यपि ॥ ३२७ ॥

यथा—कर्णपराक्रमः ।

( ८६ ) भाषाविभाषानियमात्काव्यं सर्गसमुज्झितम् ।
एकार्थप्रवणैः पद्यैः संधिसामग्र्यवर्जितम् ॥ ३२८ ॥

( ८७ ) यथा—भिक्षाटनम्, आर्याविलासश्च ।

( ८८ ) खण्डकाव्यं भवेत्काव्यस्यैकदेशानुसारि च ।

( ८९ ) यथा—मेघदूतादि ।

---

( ८३ ) विवृणोति—अस्मिन्निति । उदाहरति—यथेति । महाभारते गद्यसत्त्वेऽपि पद्यप्राचुर्येणैव महाकाव्यत्वव्यवहारः । एवं मार्कण्डेयविष्णुपुराणादावपि ज्ञेयम् ।

( ८४ ) पुनस्तत्र विशेषं दर्शयति—प्राकृतैरिति । प्राकृतैः प्राकृतसंज्ञाभिर्भाषाभिनिर्मिते रचिते तस्मिन् महाकाव्ये सर्गा आश्वाससंज्ञका भवन्ति । एतत्प्राकृतरचितं महाकाव्यं क्वचिद्भागे स्कन्धकेन तत्संज्ञकेन च्छन्दसा, क्वचिद्भागे च गलितकानि तत्संज्ञकानि छन्दोविशेषास्तैरपि निर्मातव्यमिति शेषः ।

( ८५ ) अन्यदपि विशेषं दर्शयति—अपभ्रंशेति । अपभ्रंशेन तन्नामिकया भाषया निबन्धः ग्रथनं यस्य तथोक्ते अस्मिन् महाकाव्ये सर्गाः कुडवकाभिधाः कुडवकनामानो भवन्ति । तथा अपभ्रंशयोग्यानि विविधान्यपि अनेकान्यपि च्छन्दांसि भवन्ति ।

( ८६ ) काव्यं निरूपयति—भाषाविभाषेति । भाषा संस्कृतादिः, विभाषा अपभ्रंशादिः तयोर्नियमात् "भाषया संस्कृतेनारब्धे संस्कृतेनैव विधातव्यम्, विभाषया अपभ्रंशादिविकृतभाषयारब्धे तथाविधभाषयैव विधातव्यम्" एवं नियमात् कविना विधेयमित्यर्थः । सर्गसमुज्झितम् अध्यायरहितम्, एकार्थप्रवणैः एकवाक्यतापन्नैः पद्यैर्निर्मातव्यमिति शेषः, तथा सन्धीनां मुखादिपञ्चकानां सामग्र्येण समुदायेन वर्जितं यावत्सन्धिरहितमित्यर्थः, सरसं वाक्यकदम्बं काव्यं भवेत् ।

( ८७ ) उदाहरति—यथेति । स्पष्टम् ।

( ८८ ) खण्डकाव्यं निरूपयति—खण्डकाव्यमिति । कारिकायां चकारपदोपन्यासात् काव्यस्य पूर्वाभिहितस्य महाकाव्यस्येत्यर्थः, एकादेशानुसारि यत्किञ्चिल्लक्षणहीनम् एकांशानुरूपमित्यर्थः, संस्कृतपद्यैर्निर्मितकाव्यं खण्डकाव्यं भवेत् । एकदेशानुसारीत्युक्त्या महावाक्यभावेन परस्परैकवाक्यतामिति तथा भाषानियमोऽप्यत्र नास्तीति च गम्यते । तेन कोषे चातिव्याप्तिर्नेति बोध्यम् ।

( ८९ ) उदाहरति—यथेति । आदिपदाद् ऋतुसंहारनलोदयप्रभृतीनां मम वैमात्रेयमातामहचरणानां वाणीशशर्मणां चकोरदूतस्य च परिग्रहः । अत्रैव भेदे यत्किञ्चिल्लक्षणा-

( ९० ) कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः ॥ ३२९ ॥
व्रज्याक्रमेण रचितः स एवातिमनोरमः ।

सजातीयानामेकत्र संनिवेशो व्रज्या । यथा—मुक्तावल्यादिः ।

अथ गद्यकाव्यानि । तत्र गद्यम्—

( ९१ ) वृत्तगन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ॥ ३३० ॥
भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्विधम् ।
आद्यं समासरहितं वृत्तभागयुतं परम् ॥ ३३१ ॥
अन्यद्दीर्घसमासाढ्यं तुर्यं चाल्पसमासकम् ।

( ९२ ) मुक्तकं यथा—'गुरुर्वचसि पृथुरुरसि–' इत्यादि ।

( ९३ ) वृत्तगन्धि यथा मम—'समरकण्डूलनिबिडभुजदण्डकुण्डलीकृतकोदण्डशिञ्जिनीटंकारोज्जागरितवैरिनगर–' इत्यादि ।

( ९४ ) अत्र 'कुण्डलीकृतकोदण्ड–' इत्यनुष्टुब्वृत्तस्य पादः, 'समरकण्डूल'

---

कान्तानामन्येषामपि देवद्विजराजस्तुतिमात्रप्रवणानां काव्यकानामन्तर्भावो बोध्यः ।

( ९० ) कोषं निरूपयति—कोष इति । अन्योन्यानपेक्षकः परस्परापेक्षानिरपेक्षकः, श्लोकसमूहस्तु रत्नसदृशश्लोककदम्बधारणात् कोषः । व्रज्याक्रमेण अकारादिहकारान्ताद्यक्षरश्लोकसंघातक्रमेण रचित एव स कोषः अतिमनोरमः स्यात् । इदञ्च प्रशंसामात्रमेवेति बोध्यम् । तथा च व्रज्याघटित एकः प्रकारस्तद्व्यतिरिक्तो द्वितीय इति द्विविधः कोषः । तत्राद्यस्योदाहरणम् आर्यासप्तशत्यादयः । द्वितीयस्य सुभाषितावलिप्रभृतय इति ।

( ९१ ) अथ गद्यकाव्यं निरूपयति—वृत्तगन्ध इति । वृत्तस्य छन्दसः गन्धेन लवेनापि उज्झितं रहितं श्रव्यकाव्यं गद्यमिति, गद्यसामान्यलक्षणम् । तच्चातुर्विध्यं दर्शयति—मुक्तकमिति । मुक्तकम्, वृत्तिगन्धि, उत्कलिकाप्रायम्, चूर्णकञ्चेति चतुर्विधं भवेत् । समासरहितं सर्वथा समासशून्यं गद्यं समासेन मुक्तमिति मुक्तकम् । संज्ञायां कन् । वृत्तस्य छन्दसः भागेन किञ्चिदंशेन युतं गद्यं परं वृत्तस्य गन्धो लवोऽस्यास्तीति वृत्तगन्धि । दीर्घेण अनेकपदवृत्तिना समासेन आढ्यं युक्तं गद्यम् अन्यत्—उच्चारणसमये उच्चावचतरङ्गतुल्यमिति उत्कलिकाप्रायम् । अल्पसमासकं द्वित्रिमात्रपदनिष्ठसमासयुतं गद्यम् दीर्घसमासाभावेन चूर्णस्य बिन्दोरिव अल्पमात्रे विश्रामाच्चूर्णकम् । अत्रापि संज्ञायां कन् बोध्यः ।

( ९२ ) मुक्तकमुदाहर्तुमाह—मुक्तकमिति । अत्र पदेषु क्वापि समासाभावान्मुक्तकम् ।

( ९३ ) वृत्तगन्ध्युदाहर्तुमाह—वृत्तगन्धीति । समरोत्साहेन कण्डूलाभ्यां खर्जिताभ्यां निबिडाभ्यां दृढाभ्यां भुजदण्डाभ्यां कुण्डलीकृतं समन्तमाकर्षितं यत् कोदण्डं धनुः तस्य शिञ्जिन्या गुणस्य टङ्कारेण ध्वनिशब्देन उज्जागरिताः स्वापत उत्थापिताः वैरिनगरस्थिताः भूताः ग्रामीणा येन तत्सम्बुद्धौ रूपम् ।

( ९४ ) लक्षणे लक्षणं संयोजयति—अत्रेति । प्रथमाक्षरद्वयेन समेति वर्णद्वयेन रहितो [illegible] । तस्यैव पश्चाद्वर्तमानस्य अनुष्टुप् छन्द स एव । तथा च "[illegible]

इति च प्रथमाक्षरद्वयरहितस्तस्यैव पादः ।

( ९५ ) उत्कलिकाप्रायं यथा ममैव—'अणिसविसुमरणिसिदसरविसरविद-लिदसमरपरिगदपवरपरबल-' इत्यादि ।

( ९६ ) चूर्णकं यथा मम—'गुणरत्नसागर ! जगदेकनागर ! कामिनीमदन ! जनरञ्जन !' इत्यादि ।

**( ९७ ) (क) कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् ॥ ३३२ ॥**
**क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ।**
**आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् ॥ ३३३ ॥**

यथा—कादम्बर्यादिः ।

**( ९८ ) आख्यायिका कथावत्स्यात्कवेर्वंशानुकीर्तनम् ।**

इत्येवं रूपः पथ्यावक्त्रस्य प्रथमः पाद इव सञ्जायते ।

( ९५ ) उत्कलिकाप्रायमुदाहर्त्तुमाह—उत्कलिकाप्रायमिति । अणिसेति । "अनिश-विसृ-मर-निशित-शर-विसर-विदलित-समर-परिगतप्रवर-परबल" इति संस्कृतम् । अनिश-मविश्रान्तं विसृमराणां प्रसराणां निशितानां तीक्ष्णानां शराणां बाणानां विसरणेन पातेन विदलिता आमर्दिता समरपरिगता युद्धोपस्थिताः प्रवराः श्रेष्ठाश्च यत्र तादृशं परबलं शत्रु सैन्यं यस्मात् तत्सम्बुद्धौ रूपम् ।

अत्र दीर्घसमासादुत्कलिकाप्रायत्वम् ।

( ९६ ) चूर्णकमुदाहर्त्तुमाह—चूर्णकमिति । गुणरत्नसागरेत्यादिरेफान्तं नामद्वयं नान्तञ्च सम्बोधनद्वयमल्पसमासत्वाच्चूर्णकम् ।

( ९७ ) गद्यकाव्यप्रभेदयोः कथाख्यायिकयोर्विशेषं दर्शयति—कथायामिति । अत्र रसपदेन मुख्यत्वात् शृङ्गाररसस्यैव परिग्रहः। तेन कथायां कथानामकगद्यकाव्ये सरसं शृङ्गा-ररसप्रसप्रधानं वस्तु उपाख्यानं गद्यैरेव निर्म्मितं विरचितं भवेत् । अत्र कथायां क्वचि-द्भागे आर्या आर्याख्यच्छन्दोनिबद्धं पद्यं भवेत् । क्वचिद्भागे वक्त्रापवक्त्रके छन्दो विशेषौ तयोर्निबद्धं पद्यं भवेत् । इदन्त्वनिश्चितम् । तथा आदौ प्रथमत एव पद्यैः श्लोकैः देवतादीनां नमस्कारः प्रणामः, तथा खलस्य दुष्टस्य आदिपदात् सतश्च वृत्तकीर्त्तनं चरित्रवर्णनं भवेत् । पद्यैरित्युभयत्र सम्बध्यते । सिंहावलोकनन्यायादत्रापि "कवेर्वंशानुकीर्त्तनम्" इत्युत्तरकारिकातोऽपकर्षः । तथासत्येव कादम्बर्या उदाहरणदानं सङ्गच्छते नान्यथेति विभावनीयम् ।

( ९८ ) आख्यायिकां लक्षयति—आख्यायिकेति । "आख्यायिका कथावत्स्यात्" इत्यु क्त्या आख्यायिकायामपि कथावत् पद्यैर्नमस्कारखलवृत्तकीर्त्तनसरसवस्तुवर्णनञ्च भवेत् ।

---

( क ) अत्र तु—

श्लोकैर्वंशं तु संक्षेपात् कविर्यत्र प्रशंसति ।
मुख्यार्थस्यावताराय भवेद्यत्र कथान्तरम् ।
परिच्छेदो न यत्र स्याद्भस्यादालम्भकः क्वचित् ।
सा कथानाम तद्गर्भे निबध्नीयाच्चतुष्पदीम् । इति लक्षणान्तरम् ।

अस्यामन्यकवीनां च वृत्तं पद्यं क्वचित्क्वचित् ॥ ३३४ ॥
कथांशानां व्यवच्छेद आश्वास इति बध्यते ।
आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् ॥ ३३५ ॥
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम् ।

( ९९ ) यथा—हर्षचरितादिः ।

(१००) 'अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात् ।' इति दण्डयाचार्यवचनात्केचित् 'आख्यायिका नायकेनैव निबद्धव्या' इत्याहुः तदयुक्तम् ।

( १ ) आख्यानादयश्च कथाख्यायिकयोरेवान्तर्भावान्न पृथगुक्ताः । यदुक्तं दण्डिनैव—

'अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः ।' इति ।

एषामुदाहरणम् पञ्चतन्त्रादि ।

( २ ) अथ गद्यपद्यमयानि —

---

कवेः स्वकुलस्यानुकीर्त्तनञ्च स्यात् । अस्यामाख्यायिकायाम् अन्यकवीनां वृत्तम् उपाख्यानम्, क्वचित् क्वचित् पद्यञ्च स्यात् । कथांशानाम् इतिवृत्तैकभागानां व्यवच्छेदः परिच्छेद आश्वास इत्यभिधया बध्यते कविना विरच्यते । तदन्ते उच्छ्वासापलम्भादत्राश्वासपदमुपलक्षणं बोध्यम् । आर्यावक्त्रापवक्त्राणां तत्संज्ञकानां छन्दसां येन केनचित् छन्दसा आश्वासस्य परिच्छेदस्य मुखे प्रारम्भे अन्यापदेशेन अपरविषयवर्णनव्याजेन भाव्यर्थस्य वक्ष्यमाणविषयस्य सूचनं भवेत् ।

( ९९ ) उदाहरति—यथेति । आदिपदात् रामचरितादीनां परिग्रहः । किन्तु तत्र आदौ कविवंशवर्णनं खलादिवृत्तकीर्तनादिकञ्च करालकलिकालप्रभावेण नेदानीन्तने समुपलभ्यते । तत्रान्यकवेः रचनान्तरसंस्थापितत्वेनाधिकतरमाख्यायिकावैलक्षण्यं परिदृश्यते इत्यलमनुसरणेन ।

( १०० ) अन्यमतं निरसितुमुपस्थापयति—अपि त्वनियम इति । केचित् "आख्यायिका नायकेनैव निबद्धव्या ( निबद्धव्या उच्चरितव्या ) इत्याहुः तदयुक्तम्—"अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात्" इति दण्डयाचार्यवचनादित्यन्वयः । एवञ्च तत्र आख्यायिकायाम् अन्यैर्नायकातिरिक्तैरपि पात्रैः उदीरणात् तत्तदुपाख्यानोच्चारणात् तत्तदुपाख्यानोच्चारणावलोकनादित्यर्थः अनियमोऽपि "आख्यायिका नायकेनैव निबद्धव्या" इति नियमाभावोऽपि तु दृष्ट अवलोकित इत्यर्थः ।

( १ ) ननु आख्यानादिरूपाणां काव्यान्तराणां लक्षणानि कथं नोच्यत इत्यत आह—आख्यानादय इति । एषामाख्यानादीनामित्यर्थः । यदुक्तं दण्डिनैवेति । यतो दण्डिनैवोक्तम्—"अत्रैवान्तः"— इत्यादीत्यर्थः ।

( २ ) चम्पूसंज्ञकं श्रव्यकाव्यमभिधातुमुपक्रमते—अथेति । गद्यरूपात्मकपद्यरूपात्मकद्विविधश्रव्यकाव्यप्रतिपादनानन्तरम्, गद्यपद्यमयानि गद्यपद्योभयात्मकानि श्रव्यकाव्यानि प्रतिपाद्यन्त इति शेषः ।

( ३ ) गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ॥ ३३६ ॥

( ४ ) यथा —देशराजचरितम् ।

( ५ ) गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते ।

( ६ ) यथा —विरुदमणिमाला ।

( ७ ) करम्भकं तु भाषाभिर्विविधाभिर्विनिर्मितम् ॥ ३३७ ॥

यथा मम—षोडशभाषामयी प्रशस्तिरत्नावली । ( ८ ) (क) एवमन्येऽपि भेदा

( ३ ) चम्पूसंज्ञकं काव्यान्तरं लक्षयति—गद्यपद्यमयमिति । गद्यपद्यमयं गद्यपद्योभयात्मकं काव्यं चमत्कृत्य पुनाति सामाजिकानिति चम्पूरिति नाम्ना कविभिरभिधीयते कथ्यते ।

काव्यञ्चात्र समग्रलक्षणाक्रान्तमेव बोध्यम् । अन्यथा लक्षणसंकोचे तु काव्यभेदवद्त्राप्युपादेयतातारतम्यं भवेत् । कथांशविच्छेदास्तूच्छ्वासाभिधेयास्तवकाभिधेया वा भवन्तीत्यवधेयम् ।

( ४ ) उदाहरति—यथेति । यथा वा नलचम्प्वादि ।

( ५ ) विरुदसंज्ञकं काव्यं लक्षयति—गद्यपद्यमयीति । गद्यपद्यमयी गद्यपद्योभयात्मिका राज्ञः स्तुतिर्गुणवर्णना विशेषेण आनन्दश्रुणा रोदिति श्रोतृगणमिति "इगुपधज्ञाप्रीकिरः कः" इत्यनेनेगुपधत्वात्कः, तत्सम्बन्धादिदं विरुदं नाम काव्यमुच्यते कविभिरभिधीयते ।

( ६ ) उदाहरति—यथेति । विरुदमणिमाला प्रबन्धविशेषः ।

( ७ ) करम्भकाख्यं काव्यं लक्षयति—करम्भकन्त्विति । विविधाभिरनेकाभिर्भाषाभिर्विनिर्मितं विरचितं काव्यन्तु "करम्भकं कर्कसारम्" इति हारावल्युक्त्या दधिमिश्रितसक्तुः करम्भकं तद्वत् सामाजिकहृदये प्रीत्युत्पादनादिदं करम्भकमुच्यते कविभिरभिधीयते ।

( ८ ) नन्वन्येऽप्युदाहरण – चक्रवालकादयो ग्रन्थान्तरोक्ता भेदा कथं नात्राभिहितमित्याशङ्कायामाह—एवमन्येऽपीति । अन्येऽपि उदाहरण—चक्रवालकभोगावली-विरुदावली–तारावली-विषावली-रत्नावली–पञ्चाननावलीति नामानोऽन्यत्र प्रतिपादिता अपि भेदाः श्रव्यकाव्यविशेषाः उद्देशमात्रप्रसिद्धत्वात् नाममात्रेण ख्यातत्वात्, एवं च तेषां नाम्नैव भिन्नत्वं न तु यथार्थतः, तेन उक्तानां भेदानाम् अनतिक्रमात् उक्तेष्वेषु भेदेषु मध्ये यत्र क्वाऽप्यन्तर्भावयितुं शक्यत्वादित्यर्थः, न पृथग् लक्षिताः पार्थक्येन तत्स्वरूपं न प्रदर्शिता इति ।

(क) द्विप्रकारः प्रायेण कविकर्मणः परिपाको भवतीति मान्या वदन्ति ।

तथा च—

अर्थगम्भीरिमापाकः स द्वेधा कविसम्मतः । द्राक्षापाको नारिकेलपाकश्चप्रस्फुटान्तरौ ॥

द्राक्षापाकः स कथितो बहिरन्तः स्फुरद्रसः । स नारिकेलपाकः स्यादन्तर्गूढरसोदयः ॥ इति ।

इति "लक्ष्मी" टिप्पण्यां षष्ठः परिच्छेदः ।

उद्देशमात्रप्रसिद्धत्वादुक्तभेदानतिक्रमाच्च न पृथग्लक्षिताः ॥*

इति साहित्यदर्पणे दृश्यश्रव्यकाव्यनिरूपणो नाम षष्ठः परिच्छेदः ।

अथ प्रसङ्गात्तेषामुदाहरण-चक्रवालकादीनां लक्षणानि प्रतिपादयामः—

**येन केनापि तालेन गद्यपद्यसमन्वितम् । जयेत्युपक्रमं मालिन्यादिप्रासविचित्रितम् ॥**

तदुदाहरणं **नाम्ना विभक्त्यष्टाङ्गसंयुतम् ॥**

**सम्बोधनविभक्त्या यत् प्रचुरं पद्यपूर्वकम् । विमुक्तपुनराकृष्टशब्दं स्या**[illegible]**म् ॥**

**आद्यन्तपद्यसंयुक्ता संस्कृतप्राकृतात्मिका । अष्टभिर्वा चतुर्भिर्वा वाक्यैः स्कन्धसमन्विता ॥**

**प्रतिस्कन्धं भिन्नवाक्यरीतिर्देवनृपोचिता । सर्वतो देवशब्दादिरेषा** [illegible]**मता ॥**

**वर्ण्यमानाङ्कविरुदवर्णनप्रचुरोज्ज्वला । वाक्याडम्बरसंयुक्ता कथिता** [illegible] **॥**

**ताराणां संख्यया पद्यैर्युक्ता** तारावली **मता । विश्वेषां संख्यया पद्यैर्युक्ता** [illegible] **मता ॥**

**रत्नानां संख्यया पद्यैर्युक्ता** रत्नावली **मता । पद्यैश्च पञ्चभिर्युक्ता प्रोक्ता** [illegible] **। इति ।**

**तथाचैवमादयो भेदा उक्तेष्वन्तर्भाव्या इति परमार्थः ।**

*( अत्र मूलकारिका = २३७ पूर्वाभिः सह ६४६ उदाहरणश्लोकाः=११४ पूर्वैः सह २२१ )

इति वत्सकुलावतंस-वैयाकरणकेसरि—**श्रीबदरिनाथ**शर्मात्मज-दैवज्ञशिरोमणि-
**श्रीलोकनाथा**त्मज-साहित्यव्याकरणाचार्य-ठक्कुरोपनामक-**श्रीकृष्ण-
मोहन**शास्त्रिविरचितायां "लक्ष्मी" नामिकायां
साहित्यदर्पणटीकायां षष्ठः परिच्छेदः ।

॥ श्रीः ॥

→ काशी-संस्कृत-सीरिज-ग्रन्थमाला ←

१४५

अलङ्कारविभागे ( ६ ) षष्ठं पुष्पम् ।

॥ श्रीः ॥

श्रीमद्विश्वनाथकविराजप्रणीतः

# साहित्यदर्पणः

( सप्तमादिदशमपरिच्छेदान्तो द्वितीयो भागः )

काशीस्थविश्वनाथमन्दिराध्यक्षसंस्थापितश्रीभवानीशङ्करसंस्कृतमहा-

विद्यालयप्रधानाध्यापकव्याकरणसाहित्याचार्यमीमांसाशास्त्रि-

श्रीकृष्णमोहनशास्त्रिणा सटिप्पण—'लक्ष्मी'

नामकटीकया विभूषितः

सम्पादितश्च



प्रकाशकः

जयकृष्णदास हरिदास गुप्तः,

चौखम्बा संस्कृत सीरिज आफिस

बनारस सिटी ।

संवत् २००५ ] [ ई० १९४८

THE

# KASHI SANSKRIT SERIES

# 145

( Alaṅkāra Section No. 6 )

THE

# SĀHITYADARPAṆA

OF

**S'ri Vis'vanatha Kaviraja**

( Chapter VII-X Called Part II )

*Edited with*

**The LAKSHMI Sanskrit Commentary and Notes,**

BY

SĀHITYĀCHĀRYA

**PT. SRI KRISHNA MOHAN THAKUR.**




PUBLISHED BY

JAYA KRISHNA DAS HARI DAS GUPTA

*The Chowkhambā Sanskrit Series Office.*

BANARAS.

1948

# अत्र किञ्चिद्वक्तव्यम्

अयि गीर्वाणवाणीसमुपासकाः सहृदयाः !

परमकारुणिकस्य श्रीविश्वनाथस्य प्रसादात् श्रीमतां पुरतः साहित्यदर्पणस्य मुद्रणं सञ्जातम् । तत्र विपठिषूणामन्तेवासिनामुपकाराय भागद्वयेन सम्पादितोऽयं ग्रन्थः । तत्रैक आदितः षष्ठपरिच्छेदान्तः प्रथमो भागः, अपरश्च सप्तमादि-दशमपरिच्छेदान्तो-द्वितीयो भागः । एतद्ग्रन्थमाहात्म्यं कविसमयादिकञ्च परमोपयोगिविषयं पूर्वभाग एव विस्तरेण निरूपितमतस्तद्विषये न किञ्चिद्वक्तव्यमस्ति । सम्प्रति हि विषयानुक्र-मणिकादिना परिष्कृत्य द्वितीयभागोऽयं प्रकाशितः । ग्रन्थस्यास्य पूर्वभाग एव कवि-कुलचक्रचूडामणीनां शिष्योपशिष्यैरहमहमिकयोपगीयमानानां जगत्प्रसृतयशसां तत्र-भवतां परमश्रद्धेयानामस्मत्साहित्यगुरुवराणां श्रीयुतताराचरणभट्टाचार्यमहोदयानां सम्मतिपत्रम्, विद्वद्धौरेयाणां विविधविद्याविद्योतितान्तःकरणानां झोपाहश्रीभूप-नारायणशर्ममहाशयानां प्रशस्तिपञ्चकञ्च प्रकाशितम् ।

अत्र खलु विभिन्नदेशीयानि साहित्यदर्पणस्य मुद्रितानि पञ्च पुस्तकान्यवलोक्य यथामति विविच्य सहायतासम्पादनार्थे भरतसूत्र-ध्वन्यालोक-रसगङ्गाधर-काव्यप्रकाश-कुवलयानन्द-मन्दारमरन्द-नाट्यदर्पणादीन् बहून् ग्रन्थान् समीचीनतया पर्यालोच्य क्वचित्तदाशयाः क्वचिच्च परमोपयोगितयाऽऽनुपूर्वीका विषया आकलय्य तत्र तत्र टीकायां टिप्पण्याञ्च सन्निवेशिताः । यथास्थलं तन्नामान्यपि तत्र तत्रोपन्यस्तान्येवेति पृथक्कृत्य सूचीपत्रे न सङ्कलितानि । संशोधनाय कृतेऽपि विशेषप्रयत्ने मदीयदृ-ष्टिदोषवशात् मुद्राकरप्रमादाच्च यो भ्रमः सञ्जातस्तं संशोध्य व्यवहरन्तु श्रीमन्त इति सविनयं भृशं प्रार्थये । अत्रादितो मुद्रणे यान्यक्षराणि प्रारब्धानि तानि तथैवातिविस्तरभयान्न सम्पादितानीति न विस्मयितव्यम् । यदीदानीं माम-कीना 'लक्ष्मी'रियं प्रेक्षावतामन्तेवासिनां बहुमानास्पदानान्तदध्यापकानाञ्चोपकाराय भवेत्तदैव मे वास्तविकपरिश्रमः सफलः स्यादिति सञ्जानन्तु श्रीमन्त इति शम् ।

मातृनवमी }
वै० २००५ }

विनीतः—
श्रीकृष्णमोहन शर्मा

# सप्तमादिदशमपरिच्छेदान्तर्गतश्लोकानाम् अकाराद्यनुक्रमणिका ।

॥ इति ॥

---

# सप्तमादिदशमपरिच्छेदान्तान्तर्गतविषयाणां सूचीपत्रम्

## विषयानुक्रमणिका।

॥ इति ॥

# सप्तमादिदशमपरिच्छेदान्तर्गतमूलस्थ-स्थूलविषयाणामनुक्रमणिका



## साहित्यदर्पणस्योदाहरणसङ्ख्याः कारिकासङ्ख्याश्च।

| | उ० | का० | | उ० | का० |
|---|---|---|---|---|---|
| सप्तमपरिच्छेदे— | १३६ | ३२ | नवमपरिच्छेदे— | ३ | ५ |
| अष्टमपरिच्छेदे— | ८ | १६ | दशमपरिच्छेदे— | १०० | २५६ |

# सप्तमः परिच्छेदः ।

( १ ) इह हि प्रथमतः काव्ये दोषगुणरीत्यलंकाराणामवस्थितिक्रमो दर्शितः । संप्रति के त इत्यपेक्षायामुद्देशक्रमप्राप्तानां दोषाणां स्वरूपमाह—

( २ ) रसापकर्षका दोषास्—

---

( १ ) एवं धर्मिणि काव्ये सप्रभेदे निरूपिते ततो दोषगुणादीनामपि निरूपयितव्ये तेषु च दोषस्य प्राधान्यात् "स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्" इति न्यायेन सति दोषे गुणादेरप्यकिञ्चित्करत्वात् । सति तु दोषाभावे गुणादिकं विनापि किञ्चिदाह्लादसम्भवात् "अदोषतैव विगुणस्य गुणः" इति न्यायात् । तत्र यद्यपि "दोषास्तस्यापकर्षकाः" इत्यनेनैव दोषस्वरूपे निरूपिते पुनः "रसापकर्षका दोषाः" इत्युक्त्या पौनरुक्त्यापत्तिरित्याशङ्कां निराकर्त्तुमुत्थापयति—इह हीति । इह अस्मिन् निरूप्यमाणे काव्ये प्रथमतः प्राक् प्रथमपरिच्छेदे इत्यर्थः । काव्ये काव्यलक्षणे । दोषगुणरीत्यलङ्काराणामिति । रीतेश्छन्दानुरोधेन पश्चान्निर्देशेऽपि वक्ष्यमाणयुक्त्या अलङ्कारनिरूपणात्प्रागेव तां निरूपयिष्यतीति तस्या अलङ्कारात्प्रागिह निर्देशः । अवस्थितेः क्रमः प्रकारः दर्शितः "दोषास्तस्यापकर्षकाः" इत्युक्त्या अपकर्षकत्वेन दोषाणां प्रकारो दर्शितः "उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः" इत्युक्त्या च गुणादीनामुत्कर्षकत्वेनावस्थितिप्रकारो दर्शित इत्यर्थः । के कीदृशाः ते ? दोषाः, इत्यपेक्षायामाकाङ्क्षायाम् , उद्देशक्रमप्राप्तानां नाममात्रेण वस्तुसङ्कीर्त्तनमुद्देशः तेनैव क्रमेणोपस्थितानाम् ।

स्वरूपम्—स्वमसाधारणं रूपम् इतरव्यावर्त्तको धर्म्मः लक्षणमित्यर्थः । तथाच "वाक्यं रसात्मकं काव्यम्" इत्यतोऽनन्तरमेव "दोषास्तस्यापकर्षकाः" इत्यनेन दोषाणामुद्दिष्टत्वात् सप्रभेदकाव्यस्वरूपबोधोत्तरमेव दोषस्वरूपबोधेच्छाया उत्पद्यमानतया अत्रैव दोषलक्षणविधानं युज्यत इति ग्रन्थकर्त्तुरभिप्रायः । अनेनात्रोपोद्घातसङ्गतिरपि ध्वनिता । एवञ्च "दोषास्तस्यापकर्षकाः" इति हि काव्ये दोषाणामवस्थितिक्रमबोधनपरम् , "रसापकर्षका दोषाः" इति तु दोषाणां सामान्यलक्षणपरमिति न पौनरुक्त्यं भवतीति सुधीभिराकलनीयम् ।

( २ ) दोषाणां सामान्यलक्षणं निरूपयति—रसापकर्षका इति । अत्रापि रसशब्देन रस्यते आस्वाद्यते इति व्युत्पत्त्या रसाभासादिरप्युपसंगृह्यते । नन्वेवं नीरसेषु न कश्चिद्दोषः स्यात् अपकर्षणीयस्य रसस्याभावादिति चेत्? मैवम्, तत्राविलम्बितचमत्कारिवाक्यार्थप्रतीतिविघातका एव हेयत्वेन ग्रहणात् रसवति तु सर्व एव दोषा हेयत्वेनोपादानात् । तेनात्र रसपदं नीरसस्थले अविलम्बितचमत्कारिवाक्यार्थस्य चोपलक्षणम् । तथा च रसरसाभास-भाव-भावाभास-सन्धि-शबलताद्यन्यतमरूपं काव्यस्यात्मानम् अविलम्बितचमत्कारिवाक्यार्थञ्च अपकर्षयन्ति साक्षात् परम्परया वा स्वप्रतीतिप्रतिबन्धद्वारा निकर्षयन्तीति रसापकर्षका आस्वादविघ्नहेतवः काव्यवृत्तिधर्मविशेषा दोषा इत्यर्थः । एवञ्च साक्षात् परम्परया वा रसादीनां साधुतया प्रतीतिप्रतिबन्धककाव्यधर्मत्वं दोषत्वमिति दोषसामान्यलक्षणम् । बधिरत्वादिपुरुषधर्मेष्वतिव्याप्तिवा-

( ३ ) अस्यार्थः प्रागेव स्फुटीकृतः ।

रणाय काव्यधर्मत्वमिति, रसादीनां साधुतया प्रतीतिस्तु यथासमयं चमत्कारित्वेन प्रतीतिरेव, तत्प्रतिबन्धकत्वञ्च कदाचिच्चमत्कारित्वहननात् कदाचित् समयविलम्बजननात् कदाचित् सर्वथैव बाधाच्चेति ज्ञेयम् । तत्र साक्षाद् यथा—"चन्द्रमण्डलमालोक्य शृङ्गारे मग्नमन्तरम्" । अत्र रसस्य स्वशब्दोपात्तत्वेन स्वशब्दवाच्यत्वदोषस्य सत्त्वात् रसस्य चमत्कारितामुपहत्य अचमत्कारितया रसप्रतीतिमवरोधयति । परम्परया यथा—"कार्त्तार्थ्यं यातु तन्वङ्गी कदाऽनङ्गवशंवदा" इत्यादौ दुःश्रवत्वादयो दोषाः शब्दद्वारा परम्परासम्बन्धेन रसस्य चमत्कारितामुपहत्य अचमत्कारितया रसप्रतीतिमवरोधयन्ति । समयविलम्बजननात् तत्प्रतीतिप्रतिबन्धकत्वं यथा—"क्षीरोदजा वसति जन्मभुवः प्रसन्नाः" इत्यादौ क्लिष्टत्वादेः । सर्वथैव रसादीनां साधुतया प्रतीतिप्रतिबन्धकत्वं यथा—"कुञ्जं हन्ति कृशोदरी" इत्यादावसमर्थत्वादेरिति संक्षेपः । प्रदीपकारादयोऽप्येवमेवातिस्फुटतया विशदेनाहुः । तथाहि—"उद्देश्यप्रतीतिविघातलक्षणो दोष" इति दोषसामान्यलक्षणम् । उद्देश्या च प्रतीतिः रसवत्यविलम्बितानपकृष्टरसविषया च । नीरसे तु अविलम्बिताचमत्कारिणी चार्थविषया । तथा च तादृशप्रतीतिविघातकत्वं सर्वेषामविशिष्टम् । यतो दुष्टेषु क्वचित् रसस्याप्रतीतिरेव, क्वचित्प्रतीयमानस्यापकर्षः, क्वचिद्विलम्बः ।

एवं नीरसे क्वचिदर्थस्य मुख्यभूतस्याप्रतीतिरेव क्वचिद्विलम्बेन प्रतीतिः, क्वचिदचमत्कारितेत्यनुभवसिद्धमित्युद्देश्यप्रतीत्यनुत्पादो व्यक्त एव । तद्विघातकता च कस्यचित् साक्षात् यथा—रसदोषाणां स्वशब्दवाच्यत्वादीनाम् । रसापकर्षकाणामपि तेषां प्रकृष्टरसव्यञ्जकत्वाभावोऽस्त्येव । कस्यचित् परम्परया यथा—शब्दार्थवर्णरचनादोषाणाम् । तेष्वपि कस्यचिदर्थोपस्थितेरभावात् यथा—असमर्थत्वादेः । कस्यचित्तद्विलम्बात् यथा—निहतार्थत्वादेः । कस्यचिद्वाक्यार्थबोधाभावात् यथा—च्युतिसंस्कृत्यादेः । कस्यचित्तत्र विलम्बात् यथा—क्लिष्टत्वादेः । कस्यचित् सहृदयवैमुख्यव्यग्रताद्यापादनेन यथा—निरर्थकत्वादेः । कस्यचिद्विरोध्युपस्थापनेन विपरीतार्थोपस्थापनेन वा यथा—अमतपरार्थविरुद्धमतिकृत्त्वादेरित्याद्यूह्यम् । विघातकत्वञ्च कस्यचित् ज्ञातस्य यथा—व्याहतत्वादेः । यस्य पूर्वमुत्कर्षापकर्षौ वर्णितौ तस्याग्रे तद्वैपरीत्यं चेद् व्याहतः । कस्यचित् स्वरूपसत एव यथा—निहतार्थत्वादेः । स चायं द्विविधः—नित्योऽनित्यश्च । तत्रानुकरणादन्येन प्रकारेण समाधातुमशक्यो नित्यः, यथा—च्युतिसंस्कृत्यादिः । अन्यादृशस्त्वनित्यः, यथा—अप्रयुक्तादिः तस्य श्लेषादावदोषत्वादिति बोध्यम् । अथवा सर्वदैव हेयो नित्यः, यथा—च्युतिसंस्कृत्यादिः । तदन्यस्त्वनित्यः, यथा—शृङ्गारादौ हेयमपि श्रुतिकटु रौद्रादावुपादेयमेवेति ।"

( ३ ) नन्वेतल्लक्षणं श्रुतिदुष्टापुष्टार्थत्वादावव्याप्तं तस्य शब्दार्थदोषत्वेन रसापकर्षकत्वादित्यत आह—अस्यार्थं इति । प्रागेव प्रथमपरिच्छेद एव "दोषास्तस्यापकर्षकाः" इत्यस्य व्याख्यानावसरे विवरणावेवेत्यर्थः । तत्र श्रुतिदुष्टत्वादीनां शब्दद्वारा, अपुष्टार्थत्वादीनाम् अर्थद्वारा, रसभावादिस्वशब्दवाच्यत्वादीनाञ्च साक्षात् रसापकर्षकत्वमित्यर्थः । तथा च श्रुतिदुष्टत्वादेः साक्षात् रसापकर्षकत्वाभावेऽपि शब्दार्थापकर्षद्वारेण ( परम्परया ) रसापकर्षकत्वान्नाव्याप्तिरिति भावः ।

( ४ ) तद्विशेषानाह—

( ५ ) ......................ते पुनः पञ्चधा मताः ।
पदे तदंशे वाक्येऽर्थे संभवन्ति रसेऽपि यत् ॥ १ ॥

स्पष्टम् ।

( ४ ) तद्विशेषानिति । तेषां दोषाणां विशेषान् विभागानित्यर्थः ।

( ५ ) तत्र नित्यानित्यस्वरूपेण द्विविधोऽप्ययं दोषस्त्रिविधः—शब्ददोषोऽर्थदोषो-रसदोषश्चेति । वाक्यार्थबोधात्प्राक् प्रतीयमानाः शब्दगाः, ततः परं प्रतीयमानाः पर-म्परया रसापकर्षका अर्थगाः, तादृशाः साक्षाद्रसापकर्षका रसगाः । तत्र शब्दार्थरसानां यथापूर्वमुपस्थितिः प्राथमिकीति तत्क्रमेणैव दोषभेदा निरूपणीया इति शब्ददोषाणां प्राथम्यम् । शब्दस्तु त्रिधा-पदं तदेकदेशो वाक्यञ्च, एवञ्च तदाश्रितः शब्ददोषोऽपि त्रिविधः । तत्र पदानां वाक्यघटकत्वेन प्राथम्यात् प्रथमं तद्दोषं निरूपयितुं साकल्येन सङ्कलयन्नाह—ते पुनरिति । ते पुनर्दोषाः पञ्चधा मताः । यत् यस्मात् पदे पदांशे वाक्ये, अर्थे रसेऽपि च सम्भवन्ति, ते दोषा पदतदंशादिपञ्चके स्थिता यस्माद्वाक्यार्थभूतस्या-स्वादस्यापकर्षकारणानि तस्मात् पञ्चप्रकारा इत्यर्थः ।"अग्रे स्थायिसञ्चारिणोरपि" इत्य-स्य वक्ष्यमाणत्वात् अत्रापि रसपदं विभावादीनां रसाभासादीनाञ्चोपलक्षणमवगन्त-व्यम् । पञ्चधेतिपदं तद्गुणसंविज्ञानबहुव्रीहिस्फोरणार्थम् । अथवा अलङ्कारदोषाणामा-तिरेक्यव्यवच्छेदाय, तेषामेष्वन्तर्भावो वक्ष्यते ।

तत्र पददोषत्वञ्च सति सम्भवे स्वानेकदेशपदवृत्तित्वे सति एकमात्रपदप्रयोज्यदोष-त्वम् । स्वपदं पदपरम् । यथा—"कार्त्तार्थ्यं यातु तन्वङ्गी कदाऽनङ्गवशंवदा" इति । अत्र हि सम्भवसत्त्वेन "र्त्ता" "र्थ्यम्" इति पदोभयदेशनिष्ठत्वात् "कार्त्तार्थ्यम्" इत्येकमात्र-पदप्रयोज्यत्वाच्च दुःश्रवत्वं नाम पददोषः ।

"आयान्तं वल्लभं दृष्ट्वा द्राक् दृषण गृहं गता ।"

इत्यादौ "द्राक्" इत्यत्र स्वरान्तराभावादनेकदेशासम्भवेऽपि पदगतदुःश्रवत्वदो-षाऽव्याप्तिवारणार्थम् , तथा "तद्गच्छ सिद्ध्यै कुरु देवकार्य्यम्" इत्यादौ पदांशगतदुःश्र-वत्वदोषे "द्ध्यै" इत्यंशस्यदोषस्य एकदेशनिष्ठत्वेनानेकदेशनिष्ठत्वाभावादतिव्याप्तिवा-रणार्थञ्च लक्षणे सत्यन्तदलोपादानम् ।

"स्मरार्त्यन्धः कदा लप्स्ये कार्त्तार्थ्यं विरहे तव" ।

इत्यादावनेकपदप्रयोज्यवाक्यदोषेऽतिव्याप्तिवारणाय "एकमात्रपदप्रयोज्यदोषत्वम्" इत्यत्र "एकमात्रे"ति विशेषणोपादानम् । पदांशदोषत्वञ्च पददोषभिन्नत्वे सति पदगत-किंयदंशप्रयोज्यदोषत्वम् । यथा—"पाणिः पल्लवपेलवः" इति । अत्र पेलवपदस्य पेल इत्यंशेन अण्डकोशार्थप्रतीत्या पदांशगतोऽश्लीलत्वं दोषः । "कार्त्तार्थ्यम्" इत्यादौ पदांशदोषातिप्रसक्तिवारणाय सत्यन्तपदोपादानम् ,

वाक्यदोषत्वञ्च—वाक्यघटकानेकपदप्रयोज्यदोषत्वम् । "स्मरार्त्यन्धः कदा लप्स्ये का-र्त्तार्थ्यं विरहे तव" इत्यादौ "स्मरार्त्यन्धः" "कार्त्तार्थ्यम्" इति वाक्यघटकानेकपदप्र-योज्यत्वात् वाक्यदोषत्वम् ।

अर्थदोषत्वञ्च—अर्थप्रयोज्यदोषत्वम् । अत्र शक्यलक्ष्यव्यङ्ग्यस्त्रिविधोऽप्यर्थो ग्राह्यः । केवलं रसदोषाणां पृथगुक्तत्वात् रसाद्यतिरिक्तव्यङ्ग्यस्य ग्रहणमिति विशेषः । यथा—

तत्र—

( ६ ) दुःश्रवत्रिविधाश्लीलानुचितार्थाप्रयुक्तताः ।
ग्राम्याप्रतीतसंदिग्धनेयार्थनिहतार्थताः ॥ २ ॥
अवाचकत्वं क्लिष्टत्वं विरुद्धमतिकारिता ।
अविमृष्टविधेयांशभावश्च पदवाक्ययोः ॥ ३ ॥
दोषाः केचिद्भवन्त्येषु पदांशेऽपि पदे परे ।
निरर्थकासमर्थत्वे च्युतसंस्कारता तथा ॥ ४ ॥

"विलोकय वितते व्योम्नि विधुं मुञ्च रुषं प्रिये ? ।"

इत्यादौ विततपदार्थप्रयोज्यत्वादेवार्थदोषत्वम् ।

रसदोषत्वञ्च—रसवृत्तिदोषत्वम् । यथा—"रसो मयि समुत्पन्नः तां दृष्ट्वा मृगलोचनाम्" इत्यादौ रसादिशब्दप्रयोज्यो दोषो रसादावेव तिष्ठतीति रसदोषत्वम् ।

( ६ ) दोषविशेषाणां पदगतत्वादिकमुपपादयन् संख्यया निर्दिशति—दुःश्रव इति । अत्र द्वन्द्वोत्तरस्य भावप्रत्ययस्य प्रत्येकमभिसम्बन्धः "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" इति न्यायात् । तेन (१)दुःश्रवता, त्रिविधा (२)अश्लीलता (३)अनुचितार्थता (४)अप्रयुक्तता (५)ग्राम्यता (६)अप्रतीतता (७)सन्दिग्धता (८)नेयार्थता (९)निहतार्थता, इति लभ्यते (१०)अवाचकत्वम् (११)क्लिष्टत्वम् , विरुद्धां मतिं कारयतीति विरुद्धमतिकारी तस्य भावः (१२)विरुद्धमतिकारिता, अविमृष्टः प्राधान्येनानुक्तः ( गुणीभूतः ) विधेयांशो मुख्यभागो यत्र तस्य भावः (१३)अविमृष्टविधेयांशता विधेयाविमर्श इत्यर्थः ।

एते दुःश्रवत्वाद्यविमृष्टविधेयांशभावान्ता त्रयोदशदोषा पदवाक्ययोरुभयोरेव पदे वाक्ये च भवन्तीत्युक्तेण सम्बन्धः । एषु मध्ये केचिद्दोषाः पदांशेऽपि भवन्तीति सम्बन्धः । तथा च दुःश्रवता, अश्लीलता, निहतार्थता अवाचकता, नेयार्थता चेत्यादयो दोषाः पदांशेऽपि भवितुं शक्नुवन्तीत्यर्थः । निरर्थकासमर्थयोर्भावौ ते तादृशे । एवञ्च(१४) निरर्थकता (१५)असमर्थता, तथा (१६)च्युतिसंस्कारता चेति परे अन्ये दोषत्रयं पदे केवलपद एव भवन्ति न तु वाक्ये, तद्बीजं तत्तत् प्रस्तावे वक्ष्यामः ।

ननु दुःश्रवादिपदानां लक्षणपरत्वे विभागपरत्वाभावात् लक्ष्यानुपस्थितौ कथं लक्षणवाक्यत्वनिर्वाहः लक्षणवाक्यस्य लक्ष्यलक्षणसम्बन्धबोधकत्वात् । तथा च विभागवाक्याल्लक्ष्योपस्थितावेव हि विशेषलक्षणाकाङ्क्षायां लक्षणकथनयोग्यत्वम् , विभागपरत्वे तु लक्षणानुक्तेर्न्यूनतेति चेत्? मैवम् , दुःश्रवादिपदेभ्यो रूढियोगाभ्यामुभयार्थोपस्थितौ लक्ष्यलक्षणयोरुभयोरपि प्रत्ययः । तत्र रूढ्यर्थो लक्ष्यः दुःखेन श्रूयत इति दुरुपपदाद् "ईषद्दुःसुषु" इत्यादिना खल् , 'दुःश्रव' इत्यादिरूपो योगार्थो लक्षणम्-यथा "घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः" इति गौतमीये (१।१।२०) इन्द्रियलक्षणसूत्रे रूढ्यर्थो लक्ष्यः जिघ्रतीति घ्राणमित्यादिरूपो योगार्थो लक्षणमिति । वस्तुतस्तु-दुःश्रवादिपस्य आवृत्त्या एकस्य ( रूढस्य ) लक्ष्यपरत्वम् , अपरस्य ( यौगिकस्य ) लक्षणपरत्वमिति सुगमः पन्थाः ।

( ७ ) परुषवर्णतया श्रुतिदुःखावहत्वं दुःश्रवत्वम् ।

यथा—

( ८ ) 'कार्त्तार्थ्यं यातु तन्वङ्गी कदाऽनङ्गवशंवदा ॥'

अत्रेदम्विचारणीयम्—पदानां वाक्यघटकत्वेन प्राथम्यात् प्रथमं तद्दोषनिरूपणं कृतं ग्रन्थकृता । तत्र च पदैकदेशस्य पदापेक्षयापि प्राथम्यम् । नच पदांशः पदनिरूप्यः प्रकृतित्वप्रत्ययत्वादिना भानात्, तस्मात् तद्दोषनिरूपणस्यैव प्राथम्यं भवतीति चेत् ? सत्यम्—उपदेशे हि तावत् प्राथम्यादिविचारणा, अतिदेशस्तूपदेशानन्तरमेव, नच पदैकदेशे दोषोपदेशः, अतिदेशेनैव तल्लाभे लाघवात् । नच पदैकदेश एवास्तूपदेशः पदे त्वतिदेश इति वाच्यम्, पदैकदेशावृत्तीनामपि केषाञ्चित् पदवृत्तित्वेन तद् पदेषूपदेश-स्यावश्यकत्वादिति ।

( ७ ) यथाक्रमेण लक्षणानि प्रतिपिपादयिषुः प्रथमं दुःश्रवत्वलक्षणं प्रतिपादयति— परुषवर्णतयेति । परुषवर्णतया पदस्य कर्कशाक्षरतया श्रुतिदुःखावहत्वं श्रोत्रावच्छेदेन दुःख-जनकत्वं दुःश्रवत्वम् । अस्य व्युत्पत्तिः प्रागेव निरूपिता । "परुषवर्णत्वं मुख्यार्थापक-र्षकत्वे सति ओजोव्यञ्जकवर्णत्वम्" एतच्च व्यक्तीभविष्यति गुणपरिच्छेदे । वीरादिष्व-दुष्टतया तदतिप्रसङ्गवारणाय सत्यन्तम्, वीरादिषु मुख्योत्कर्षकत्वेनास्यादोषत्वात् । तथा च वीरवीभत्सरौद्रान् रसान् विहाय इति बोध्यम् । अत एवायमनित्यो दोषः । स्व-यमपि वक्ष्यति "वक्तरि क्रोधसंयुक्ते" इति ।

( ८ ) प्रथमं पदगतं दुःश्रवत्वदोषमुदाहरति–कार्त्तार्थ्यमिति ।

"कान्तवक्षसि संस्थाप्य करिकुम्भोपमौ कुचौ" इति मद्विरचितपूर्वार्द्धम् ।

अत्र चोदाहृतानामसमग्रपद्यानां यथास्थलं तत्पूर्त्तिर्मया विधास्यते ।

ग्रन्थकृत एतत्प्रकरणीयोदाहरणन्तु–काव्यप्रकाशोदाहरणानुरूपम् ।

तथा हि तत्र—"अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।

आलिङ्गितः स तन्वङ्ग्या कार्त्तार्थ्यं लभते कदा ॥" इति ।

अनङ्गवशंवदा कामाधीना इयं तन्वङ्गी कृशाङ्गी कदा कार्त्तार्थ्यं कृतार्थस्य भावः कार्त्तार्थ्यमिति ष्यञ् प्रत्ययः, कृतार्थतामित्यर्थः यातु प्रियसंगमात् प्राप्नोतु ॥

तत्र तथयो रेफयोर्योगेन श्रुतिदुःखदायि पारुष्यम्, तत्प्रयुक्तत्वेन प्रकृतरसव्यञ्जक-वर्णाभावात् रसास्वादेन सुखानुभवमभिलषतः श्रोतुः श्रवणमात्रेणैव दुःखोत्पादना-द्वैमुख्यापादनेन रसप्रकर्षस्य विघटनाद्दुःश्रवत्वम् । एवञ्च किं पुनरस्य दूषकताबीजमिति जिज्ञासायाम्–नोद्वेगजनकत्वं तत्त्वम्, तथा सति रौद्रादावपि दोषत्वप्रसङ्गात् किन्तु स्वायत्ते शब्दप्रयोगे कर्णोपतापकशब्दप्रयोगेण श्रोतुरुद्वेगो रसापकर्षायेति स एव तद्बी-जमिति फलितम् । अत एव प्रतिकूलवर्णादस्य भेदः तस्य कर्णोपतापाहेतुत्वात् । अत एव चानुकरणे वैयाकरणादौ वक्तरि श्रोतरि वा रौद्रादौ रसे व्यङ्ग्ये नीरसे च काव्येऽस्य दोषत्वाभावः । तथा च रसाद्यपकर्षकत्वेन श्रोतुरुद्वेगजनकत्वं दुःश्रवत्वमिति लक्षणं पर्य्यव-सितम् । नन्वेवमपि "कार्त्तार्थ्यम्" इति पदांशपारुष्यमेव न तु पदपारुष्यमिति चेत् ? वाक्यघटकद्वित्र्यादिपदपारुष्यप्रयुक्तवाक्यदुःश्रवत्ववत्पदघटकद्वित्र्यादिवर्णपारुष्यप्रयुक्तपदत्व-स्यैव लक्षणत्वाऽभ्युपगमात् ।

( ९ ) अश्लीलत्वं व्रीडाजुगुप्सामङ्गलव्यञ्जकत्वात्त्रिविधम् ।

क्रमेणोदाहरणम्—

( १० ) 'हसारिविजये राजन्साधनं सुमहत्तव ॥'

( ११ ) 'प्रससार शनैर्वायुर्विनाशे तन्वि ! ते तदा ॥'

( ९ ) द्वितीयं पदगतमश्लीलत्वदोषं लक्षयन् तत्त्रैविध्यमपि दर्शयति-अश्लीलत्वमिति । श्रियं सभ्यवशीकरणसम्पत्तिं लाति गृह्णातीति "आतोऽनुपसर्गे कः" इति कः । कपिलकादिपाठात् श्रीशब्दगतरेफस्य असभ्यार्थान्तरव्यञ्जकत्वमित्यर्थः, "लक्ष्मीवान् लक्ष्मणः श्लीलः श्रीमान्" इत्यमरः । व्रीडा लज्जा जुगुप्सा घृणा अमङ्गलं मङ्गलविरोधि "असुराः" इत्यादाविव नञो विरोधार्थकत्वात् व्यञ्जकत्वमिह जनकत्वमेव । तच्चाश्लीलत्वं त्रिविधं त्रिप्रकारत्वं न तु वस्तुनि त्रित्वमित्यर्थः । तथा च व्रीडाव्यञ्जकम् , जुगुप्साव्यञ्जकम् अमङ्गलव्यञ्जकञ्चेति । सामान्यलक्षणन्तु-व्रीडाजुगुप्साऽमङ्गलान्यतमव्यञ्जकशब्दत्वमश्लीलत्वम् । भाषानिबन्धनाश्लीलत्वं देशविशेष एव, संस्कृतनिबन्धनं तु सर्वदेशसाधारणमिति विशेषः । अयमप्यनित्यो दोषः "सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः" इत्यभिधीयमानत्वात् ।

( १० ) द्वितीयं पदगतं व्रीडाव्यञ्जकत्वरूपमश्लीलत्वदोषमुदाहरति-हसारिविजय इति ।

'तेनाधुना त्वया लब्धं चक्रवर्तित्वमञ्जसा' । इतिमद्रचितोत्तरार्द्धम् ।

हे राजन् ! हसानाम् अहङ्कारिणाम् अरीणां रिपूणां विजये तव सुमहत् साधनं सैन्यम् अस्तीति शेषः । साधनं सैन्यं पुरुषलिङ्गञ्च,

"साधनं मृतसंस्कारे सैन्ये सिद्धौषधे गतौ ।
निर्वर्त्तनोपायमेढ्रदापनेऽनुगमे धने" ॥ इति मेदिनी ।

अत्र साध्यते रिपवः सुरतञ्चानेनेति साधनमिति व्युत्पत्त्यानेकार्थस्यापि साधनशब्दस्य प्राकरणिकत्वात् सैन्यमर्थो वाच्यः विशालशिश्नरूपस्त्वर्थो व्यङ्ग्यः श्रोतॄणां वीडाजनको न तु व्रीडाव्यञ्जकस्तदप्रतीतेः, तथा च सहृदयानां सहसैव लज्जासङ्कोचसम्पादनात् राजविषयकरतिभावस्य प्रकर्षप्रतिबन्धकत्वेन अश्लीलत्वम् एवञ्च अश्लीलार्थोपस्थित्या श्रोतुवमुख्यमत्र दूषकताबीजम् ।

( ११ ) पदगतयोर्जुगुप्साव्यञ्जकाश्लीलव्यञ्जकयोरुभयोरेकोदाहरणेनैव दर्शयति—प्रससारेति ।

"कामार्त्तस्त्वां यदोद्याने सुरतार्थमहङ्कृतः" इति मद्रचितपूर्वार्द्धम् ।

विरहोत्तरं नायिकां प्राप्य नायकस्योक्तिरियम् ।

हे तन्वि ! कृशाङ्गि ! तदा ते तव विनाशे जनावलोकनत्रासात् पलायनकाल इत्यर्थः । मम दुःखोत्पादनाय वायुः समीरणः शनैः मन्दं प्रससार प्रवहति स्म ।

अत्र प्रथमपादे "प्रससार" इति क्रियायाः कर्त्तृतयाऽन्वितो वायुशब्दः अपानवायुव्यञ्जनया घृणारूपजुगुप्साजनकः, दुःखकाले शनैः प्रसृतवायोरपानवायुत्वप्रतीतेः, तेन श्रोतुर्जुगुप्साजननेन रसप्रकर्षप्रतिबन्धकत्वादश्लीलत्वम् , द्वितीयपादे तु अदर्शने प्रयुक्ता विनाशशब्दः प्रसिद्धत्वात् मृत्युव्यञ्जकतया अमङ्गलाशङ्काजननेन श्रोतुर्वैमुख्योत्पादनात् शृङ्गारस्य प्रकर्षप्रतिबन्धकत्वेनाश्लीलत्वम् ।

( १२ ) अत्र साधन-वायु-विनाश-शब्दा अश्लीलाः ।

( १३ ) 'शूरा अमरतां यान्ति पशुभूता रणाध्वरे ॥

एवञ्च दूषकताबीजन्तु-अनुभवसिद्धरसापकर्षकाश्लीलार्थोपस्थितिः । नीरसे तु चमत्कारापकर्षकत्वं तस्याः । अथवा तादृशार्थोपस्थित्या श्रोतुर्वैमुख्यं तद्बीजम् , असभ्यार्थोपस्थितिर्हि श्रोत्रियसमूहे चाण्डालगमनमिव वैरस्यमापादयति ।

अत एव शमकथायाम्—

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे । क्लेदिनि स्त्रीव्रणे शक्तिरकृमेः कस्य जायते ॥

अत्र दोषत्वाभावः, तादृशार्थोपस्थितेः शमपोषकत्वात् एवं कामशास्त्रस्थितौ "करिहस्तेन संबाधे" इति वक्ष्यमाणोदाहरणे च न दोषत्वम् वैमुख्याभावात् । शिवलिङ्ग-भगिनी-ब्रह्माण्डादिशब्देषु तु समुन्नीतगुप्तलक्षितेषु असभ्यार्थानुपस्थितेर्नायं दोषः । अविनीतानादिप्रयोगयोगित्वे सति भगवदादिसम्बन्धित्वं समुन्नीतत्वम् । शिवलिङ्गशब्दस्य जगदन्तर्यामि भगवति प्रसिद्धे व्रीडाद्यप्रतीतिरेव । अविनीतादिप्रयोगयोगित्वे सति रूढ्यर्थातिरिक्ताश्लीलार्थस्य योगेनोपस्थापकत्वं गुप्तत्वम् । यथा-भगिनीति ।

अत्र हि रूढ्यर्थस्य झटित्युपस्थित्या तद्भावनया योगार्थस्य तिरोधानम् । ग्राम्यस्मृतिजनैकदेशत्वं लक्षितत्वम् । ब्रह्माण्डादिपदं हि समुदायरूढ्या झटिति सभ्यमर्थमेवोपस्थापयति न त्ववयवेनासभ्यस्येति न दोष इत्यन्यत्र विस्तरः ।

अत्र प्रकृतोदाहरणानि—

"साधनं सुमहद्यस्य यन्नान्यस्यावलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥
लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित्केशरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन ददता वायुं स्थिता तत्र सा
भ्रान्त्या धूर्ततयाऽथवा नतिमृते तेनानिशं चुम्बिता ॥
मृदुपवनविभिन्नो मत्प्रियाया विनाशात्
घनरुचिरकलापो निःसपत्नोऽद्यजातः ।
इति विगलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेषबर्हीं ॥"

इति काव्यप्रकाशोदाहरणानां दूष्यांशः समादाय समुपात्तानि ।

उदाहरणान्तरं यथा—

कुहूकुहूस्वरेणैव मधुरेण निरन्तरम् । मनो हरन्नयं चूते कामं कूजति कोकिलः ॥
विभाते गृहमागम्य विष्ठिते शयनोपरि । व्यजनादाशु तन्वङ्गी तोषयामास सादरम् ॥
मुदं सुमनसो यान्ति रमां वमन्ति दुर्जनाः । इति राजेन्द्र ! पश्यामि तव जाते महोदये ॥

अत्र यथाक्रमं-चूत-विष्ठित-वमनशब्दा अश्लीलाः ।

( १२ ) ननूक्तोदाहरणेषु के शब्दा दोषं बोधयन्तीत्यत आह—अत्रेति । स्पष्टीकृतञ्चैतदुपरिष्टात् ।

( १३ ) तृतीयं पदगतमनुचितार्थत्वदोषमुदाहरति—शूरा इति । तत्र अनुचितो विवक्षितार्थतिरस्कारकधर्मव्यञ्जकोऽर्थो यस्य तस्य भावः । तथा च उपश्लोक्यमानतिरस्कारव्यञ्जकार्थत्वमनुचितार्थत्वमिति लक्षणम् ।

( १४ ) अत्र पशुपदं कातर्यमभिव्यनक्तीत्यनुचितार्थत्वम् ।

( १५ ) अप्रयुक्तत्वं तथाप्रसिद्धावपि कविभिरनादृतत्वम् । यथा—

अन्यत्र तु—

व्यनक्ति निन्दां स्तोत्रे यत् पदं स्तोतव्यनिन्द्ययोः ।
तात्पर्य्यागोचरीभूते तत्स्यादनुचितार्थकम् ॥"

"तात्पर्य्यागोचरीभूते" इति विशेषणोपादानं व्याजस्तुतिनिवारणाय तत्र निन्दास्तुत्योरतात्पर्य्यविषयत्वादिति ।

इदञ्च क्वचिद्वाच्यार्थदोषप्रतिपादकत्वेन, क्वचिदर्थासम्भवेन, क्वचिदसत्समर्थकत्वेन तत्राद्यस्योदाहरणं-शूरा इति । "अमरत्वं यथा प्राप्ता योगिभिर्विमलाशयैः" ॥ इति मदुत्तरार्द्धम् । शूरा वीरा रणाध्वरे युद्धयज्ञे "रणः कोणे क्वणे पुंसि समरे पुनपुंसकम्" । इति, "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" ॥ इति च मेदिनी। पशुभूताश्छागादिपशव इव "पशुर्मृगादौ छगले प्रथमे च पुमानयम्" इति रभसः । भिन्नग्रीवाः सन्तः अमरतां देवत्वम् "अमरा निर्जरा देवाः" इत्यमरः, यान्ति प्रयान्ति प्रतिपद्यन्ते इति यावत् ।

तथा चोक्तम्—"द्वाविमौ पुरुषव्याघ्रौ सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखे हतः ॥"

( १४ ) अत्र 'पशुभूता' इत्यनुचितार्थत्वम्, कातरत्वाभिव्यक्त्या वर्णनीयस्य शौर्य्यस्य तिरस्कारात् । तदेव दर्शयति-अत्रेति । अत्र शौर्य्यं प्रतिपाद्ये पदान्तरानपेक्षमेव पशुपदं कातरतामभिव्यनक्ति पशुपदार्थं कातरताया दर्शनात् । विरुद्धमतिकृत्तु पदान्तरसापेक्षं तथेति तस्माद्भेदः । दूषकताबीजञ्च विवक्षितार्थस्य शौर्य्यादेरपकर्षस्योपस्थितिः ।

अत्रापि च—

"तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ॥"

इति काव्यप्रकाशोदाहरणांशः ग्रन्थकृता संगृहीतः ।

द्वितीयं यथा—

"प्रज्वलज्जलधारावन्निपतन्ति शरास्तव ।"

इत्यादौ अप्रज्वलन्त्यां जलधारायां प्रज्वलनबोधकत्वादनुचितार्थत्वम् ।

तृतीयं यथा—

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसामतीव ॥

इत्यादौ असद्भूतेऽपि अन्धकारभये द्वितीयार्धस्य तत्समर्थकत्वबोधनादनुचितार्थत्वम् । ग्रन्थकृदप्यनयोरनुचितार्थत्वं वक्ष्यति ।

( १५ ) चतुर्थमप्रयुक्तत्वं पददोषमुदाहरिष्यन्नप्रयुक्तपदं व्याचष्टे—अप्रयुक्तत्वमिति । तथा प्रयुज्यमानतावच्छेदकरूपेण प्रसिद्धावपि कोषादिसिद्धमपि कविभिः पण्डितैः अनादृतत्वम् अनादरेण अपरिगृहीतत्वम् । कविभिरिति व्याकरणस्याऽप्युपलक्षणम्, तेन व्याकरणनिषिद्धस्य "घृधातोः घृतवर्मघृणाभ्योऽन्यत्र प्रयोगस्य, वचिरन्तिपरो न प्रयुज्यते" इत्यस्य च सङ्ग्रहः । एवञ्च लडहादीनां प्राकृतादिशब्दानां संस्कृतकाव्यनिवेशेऽयमेव दोष इति बोध्यम् । तथा च—

( १६ ) ............... 'भाति पद्मः सरोवरे ॥'
( १७ ) अत्र पद्मशब्दः पुंलिङ्गः ।
( १८ ) ग्राम्यत्वं यथा—
( १९ ) .....................'कटिस्ते हरते मनः ॥'

---

"पदं तथा समाम्नातमपि व्याकरणादिभिः ।
कव्यनादरपात्रं यदप्रयुक्तं तदुच्यते ॥१"

नच निहितार्थेन सङ्करः अनेकार्थत्वाभावात् । नाऽप्यवाचकेन तात्पर्यविषयधर्मप्रकारकप्रतीतेर्जनकत्वात् । अग्रे "स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते" इति वक्ष्यमाणत्वादयञ्चानित्यो दोषः ।

( १६ ) उदाहरति—भातीति ।

रविकिरणेन संम्भिन्नः शाद्वलैः परिवेष्टितः ।
भ्रमरध्वनिना युक्तो भाति पद्मः सरोवरे ॥ अत्र मत्पूरितपादत्रयम् ।

( १७ ) लक्ष्ये लक्षणं सङ्गमयितुमुत्थापयति—अत्रेति । पुल्लिङ्गः पद्मशब्दोऽप्रयुक्ततादोषमापादयतीति वाक्यशेषः । पुल्लिङ्गः पद्मशब्दः अमरकोशे प्रथमकाण्डे त्रयोदशवर्गे "वा पुंसि पद्मम्' इति प्रसिद्धिसत्त्वेऽपि कविभिः क्वाप्यप्रयुक्तत्वेनानादृतत्वात् तत्प्रयोगस्य प्रयोजनानुसन्धानव्यग्रतया सामाजिकानां रसस्य विलम्बनप्रतीतेः प्रकर्षप्रतिबन्धक इत्याशयः । अत्र दूषकताबीजमपि तादृशकविसमयलङ्घने प्रयोजनानुसन्धानव्यग्रतया मुख्यार्थप्रतीतिविलम्बः, यमकादिप्रयोजनसत्त्वे तु नायं दोषः, अन्यत्राप्रयुज्यमानस्यापि तदर्थं कविभिः प्रयोगस्य दर्शनेन व्यग्रताभावात् । एवञ्च "पद्मान् हि मे प्रावृषि खञ्जरीटान्" इति नैषधे दोष एव ।

तथान्यदप्युदाहरणं यथा रघुवंशे द्वितीयसर्गे—

"अथैकधेनोरपराधचण्डाद्गुरोः कृशानुप्रतिमाद्बिभेषि ।
शक्योऽस्य मन्युर्भविता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः ॥

अत्र स्पर्शयतेतिपदं "स्पृश संस्पर्शने" इति धातुपाठाद्दानार्थकत्वाभावेऽपि "विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्" इत्यमरे दानार्थकत्वेन प्रसिद्धिसत्त्वेऽपि सर्वत्र तदनुपलम्भनादप्रयुक्तमेव ।

( १८ ) पञ्चमं पदगतग्राम्यतादोषं निरूपयितुमाह—ग्राम्यत्वमिति । लक्षणन्तु आपामरसर्वलोकप्रसिद्धत्वम् । अप्रयुक्तत्वन्तु शास्त्रसिद्धत्वान्न तथेति भेदः । अश्लीले देशभाषानिबन्धनमपि लज्जादायित्वम् , अत्र तु संस्कृतनिबन्धनमेवेति विशेषः ।

"ग्राम्यत्वमधमोक्तिषु" इति वक्ष्यमाणत्वात् अधमप्रयोगे ग्राम्यताया एव योग्यत्वादनित्योऽयं दोषः ।

तथा च—

"लोकमात्रप्रसिद्धं यत्पदं तद्ग्राम्यमुच्यते ।"

( १९ ) उदाहरति—कटिरिति ।

"राकाविभावरीकान्तसंक्रान्तद्युति ! ते मुखम् ।
तपनीयशिलाशोभा कटिस्ते हरते मनः ॥"

इति काव्यप्रकाशस्थसम्पूर्णपद्यम् ।

( २० ) अत्र कटिशब्दो ग्राम्यः।

( २१ ) अप्रतीतत्वमेकदेशमात्रप्रसिद्धत्वम्। यथा—

( २२ ) ························'योगेन दलिताशयः॥'

( २३ ) अत्र योगशास्त्र एव वासनार्थे आशयशब्दः।

( २० ) लक्ष्ये लक्षणं योजयितुमाह—अत्रेति। कटिशब्दो ग्राम्य इति कटिपदं ग्राम्यतादोषमावहतीत्यर्थः। अयम्भावः—श्रोणीनितम्बादिकमेव विदग्धैः प्रयुज्यते कटिपदन्त्वविदग्धमात्रप्रयोज्यमिति ग्राम्यम्।

इदमत्र बोध्यम्—पदं त्रिविधं भवति ग्राम्यं नागरमुपनागरञ्च। तत्र ग्राम्यन्तूक्तमेव विदग्धमात्रप्रसिद्धं नागरम्, ग्राम्यकक्षातिक्रान्तमप्राप्तनागरभावमुपनागरम्, नागरोपनागरौ विहाय ग्राम्यशब्दप्रयोगेण वक्तुरवैदग्ध्योन्नयनात् श्रोतुवमुख्यं दूषकताबीजम्। अत एव विदूषकादावधमे वक्तरि न दोषत्वम्, तस्य तथैवौचित्येन वैरस्याभावात्।

( २१ ) षष्ठं पदगतदोषं निरूपयति—अप्रतीतत्वमिति। प्रति प्रतिशास्त्रे इतं ज्ञातं प्रतीतम्, न प्रतीतमप्रतीतं—

"नञभावे निषेधे च स्वरूपार्थेऽप्यतिक्रमे। ईषदर्थे च सादृश्ये तद्विरुद्धतदर्थयोः"

इति मेदिन्युक्तदिशा नञोऽल्पार्थकत्वेन शब्दानुशासनातिरिक्तशास्त्रमात्रप्रसिद्धमित्यर्थः, एकदेशमात्रे प्रसिद्धं न पुनः सर्वत्रेति यावत् अत एवाप्रयुक्ताद्भेदः।

उक्तञ्च—"शास्त्रमात्रप्रसिद्धं यदप्रतीतं तदुच्यते"।

अयञ्चाप्यनित्यो दोषः "गुणः स्यादप्रतीतत्वं ज्ञत्वञ्चेद्वक्तृवाच्ययोः।" इत्यस्य वक्ष्यमाणत्वात्।

( २२ ) उदाहरति—योगेनेति।

"गङ्गाम्भसा पूतगात्रो योगेन दलिताशयः।

निष्काम्यं कर्म कुर्वाणो जीवन्मुक्तो विभाव्यते" इति मत्पूरितांशत्रयम्।

योगेन प्रकृतिपुरुषयोर्भेदचिन्तनेन चित्तवृत्तिनिरोधेनेत्यर्थः, दलितः खण्डितः आशयो वासना संसारनिदानं मिथ्याज्ञानजन्यः संस्कारविशेष इति यावत् यस्य स तथोक्तः।

( २३ ) लक्ष्ये लक्षणं संयोजयितुमाह—अत्रेति। योगशास्त्र एव पातञ्जलयोगदर्शनादावेव वासनार्थे आशयशब्दः अस्तीति शेषः। वासना चात्र संसारनिदानं मिथ्याज्ञानजन्यः संस्कारविशेष एव स चैवंभूत आशयशब्दः (क)"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" (१।२४) इति पातञ्जलसूत्रात् योगशास्त्र एव प्रसिद्धो नान्यत्रेति भावः। एवञ्च दूषकताबीजन्तु तच्छास्त्रानभिज्ञस्य तादृशार्थानुपस्थितिः; अत एव यत्र तच्छास्त्राभिज्ञ एव प्रतिपाद्यः स्वयमेव वा परामर्शस्तत्र न दोषः प्रत्युत व्युत्पत्तिसूचकतया गुणत्वम्। अत्र—

'सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः।
विधीयमानमप्येतन्न भवेत् कर्मबन्धनम्"

इति काव्यप्रकाशोदाहरणांशमादायोद्धृतम्।

(क) क्लेशा अविद्यादयः, कर्माणि सुकृतदुष्कृतानि तत्फलं विपाकः, आशयो वासना तैरपरामृष्टः त्रिष्वपि कालेषु अस्पृष्टः अन्येभ्यः पुरुषेभ्यो विशिष्यत इति पुरुषविशेष ईश्वर इति तदर्थः।

( २४ ) 'आशीः परम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥'

( २५ ) अत्र वन्द्यामिति किं बन्दीभूतायामुत वन्दनीयामिति संदेहः ।

( २६ ) नेयार्थत्वं रूढिप्रयोजनाभावादशक्तिकृतं लक्ष्यार्थप्रकाशनम् ।

यथा—

( २७ ) 'कमले चरणाघातं मुखं सुमुखि ! तेऽकरोत् ।

---

( २४ ) सप्तमं पदगतमसन्दिग्धत्वमुदाहरति-आशीरिति । तल्लक्षणन्तु—"सन्दिग्धं तत्तु तात्पर्य्यसंशयो यत्र जायते ।" तथा च वक्तृतात्पर्य्यसन्देहविषयीभूतार्थद्वयोपस्थापकत्वं सन्दिग्धत्वम् ।

अयमप्यनित्यो दोषः "सन्दिग्धत्वं तथा व्याजस्तुतिपर्य्यवसायि चेत्" इति वक्ष्यमाणत्वात् ।

"आलिङ्गितस्तत्रभवान् सम्पराये जयश्रिया !" इति काव्यप्रकाशे पूर्वार्द्धम् । सम्पराये युद्धे जयश्रिया आलिङ्गितः तत्रभवान् पूज्यः त्वं वन्द्यां वन्दनीयाम् ( नमस्याम् ) आशीः परम्परां जितशत्रुप्रयुक्तामाशीर्वादपङ्क्तिं कर्णे कृत्वा आकर्ण्य कृपां कुरु विधेहीत्यर्थः 'आलिङ्गित' इत्यनेनानायासजयं द्योतयति ।

( २५ ) लक्ष्ये लक्षणं योजयितुमाह—अत्रेति । वन्द्यामिति

'रलयोर्डलयोश्चैव शसयोर्बवयोस्तथा ।

वदन्त्येषाञ्च सावर्ण्यमलङ्कारविदो जनाः ॥' इत्यभियोक्तया बवयोरभेदात्, बन्दीभूतायां युद्धे हठहृतमहिलायाञ्जने । वन्दनीयां नमस्यां चारुत्वेन प्रशंसनीयामित्यर्थः। सन्देहो वक्तृतात्पर्य्यसंशयः बवयोरबुद्धिमूलकः सन्दिग्धतादोषञ्जनयतीति शेषः । तथा च प्रकरणादिनियमाभावात् बन्दीजनस्य वक्तृत्वे कृपाया अधिकरणे सप्तम्येकवचनान्तस्य बन्दीशब्दस्य वन्द्यामिति रूपं भवति तत्राशीः परम्परां कर्णे कृत्वा बन्द्यां हठहृतमहिलायां कृपां कुरु इति सम्बन्धः, किञ्चित्प्रार्थिनो जनस्य वक्तृत्वे तु आशीः परम्परामित्यस्य विशेषणत्वेन ण्यत्प्रत्ययान्तवन्दधातुसिद्धस्य वन्द्याशब्दस्य द्वितीयैकवचने वन्द्यामिति रूपं भवति तथा च तत्र वन्द्यां नमस्याम् आशीः परम्परां कर्णे कृत्वेति सम्बन्धः । एवञ्च वन्द्यामित्यानुपूर्व्या उभयसाधारणत्वेन विनगमनाविरहादर्थद्वयस्मृतौ सन्देहेन श्रोतुरेकतरनिर्णयव्यग्रतया शाब्दबोधविलम्बेन राजविषयकरतिभावबोधस्य विलम्बेन प्रतीतेर्दोषत्वम् । दूषकताबीजञ्च उद्देश्यनिश्चयाभाव इति बोध्यम् ।

( २६ ) अष्टमं पदगतं नेयार्थत्वं निरूपयति-नेयार्थत्वमिति । नेयो न्यायराहित्येन कवेः स्वेच्छया कल्पनीयोऽर्थो यस्य तस्य भावस्तत्त्वम्, रूढिप्रयोजनाभावात् निरूढलक्षणायाः कारणभूतयोः रूढिप्रयोजनयोरसत्त्वाद्धेतोः असक्तिकृतं कवेरसामर्थ्यमात्रेण प्रयुक्तं न तु रूढिप्रयोजनयोरन्यतरेण प्रयुक्तिमित्यर्थः । रूढिं प्रयोजनं वा विना शक्यसम्बन्धमात्रेणाशक्यार्थोपस्थापनमिति यावत् । तथा च नेयत्वं नाम

निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत्
क्रियन्ते साम्प्रतं काश्चित्काश्चिन्नैव त्वशक्तितः ॥

इत्यादिभट्टवार्त्तिकेन, अरुणाधिकरणे रूढिप्रयोजनाभ्यां विना निषिद्धा या लक्षणा तद्विषयत्वम् । अयं खलु नित्यो दोषः प्रतिप्रसवाभावेन सर्वदैव हेयत्वात् ।

( २७ ) उदाहरति—कमल इति ।

( २८ ) अत्र चरणाघातेन निर्जितत्वं लक्ष्यम् ।

( २९ ) निहतार्थत्वमुभयार्थस्य शब्दस्याप्रसिद्धेऽर्थे प्रयोगः । यथा—

सुहृद्दर्शनसंप्राप्तानन्दोद्गारशोभने । इतिमत्पूरितपूर्वार्द्धम् ।

हे सुमुखि ! सुन्दरवदने ! ते तव मुखं ( कर्त्त ) कमले पद्मे चरणाघातं ( कर्म ) पादप्रहारमकरोत् ।

( २८ ) लक्ष्ये लक्षणं योजयितुमाह—अत्रेति । चरणाघातेन चरणाघातपदेन वाक्येऽपि लक्षणास्वीकारात् निर्जितत्वं मुखकर्त्तृकं पद्मस्य विजितत्वम्, लक्ष्यं लक्ष्यार्थो नेयार्थत्वं दोषमापादयतीति शेषः । मुखस्य चरणासम्भवात्तदाघातस्याऽप्यसम्भवेन मुख्यार्थस्य प्रतीत्यभावः स्वजन्यचरणाघातपराभवः स्वजन्यवृत्तिपराभवत्ववत्वं मुख्य-लक्ष्ययोः सम्बन्धः । एवञ्चात्र रूढिप्रयोजनातिरिक्तनिश्चयेन कवेः शक्त्यभावनिश्चयः । ततो लक्ष्योपस्थितिः ततः शाब्दप्रतीतिरिति तद्विलम्बेनैव रसप्रतीतिविलम्ब इति दोषः । तथा च लक्षणाजन्यबोधे रूढिप्रयोजनान्यतरज्ञानस्य हेतुत्वेन प्रकृते तदभावाद्वृत्त्यभावेनार्थानुपस्थितिरेवात्र दूषकताबीजम्, अत एवाप्रयुक्ताद्भेदः । नन्वत्र निर्जितत्वातिशय एव कथं न प्रयोजनम्, दर्शितं हि स्थाने स्थाने लक्ष्यार्थातिशयः प्रयोजनमिति चेत् ? मैवम्, अत्र हि लक्षणाजन्यबोधानन्तरं सादृश्यप्रतीतिरेवानुभवसिद्धा न तु निर्जितत्वातिशयप्रतीतिः तात्पर्य्याभावात् मुख्यलक्ष्ययोरुपदर्शितसम्बन्धसम्भवाच्च । नच सादृश्यप्रतीतिरेव प्रयोजनमिति वाच्यम् । वक्त्र्यादिवैशिष्ट्यसहितयाऽर्थव्यञ्जनयैव तस्य जननात् । लक्षणाप्रयोजनस्य तु लक्षणामूलव्यञ्जनाजन्यत्वनियमात्, सादृश्यस्य च लक्ष्यार्थतद्वृत्तिधर्मान्यतरसम्बन्धत्वाभावात् प्रयोजनस्य तदन्यतरवृत्तित्वनियमादिति वागीशा आहुः । केचित्तु—

"स्वसङ्केतप्रक्लृप्तार्थं नेयार्थमिति कथ्यते ।"

इति भोजदेवोक्तिरेव युक्तियुक्तम्, नेयार्थं इति पदेनापि तथैव प्रतीतेरिति वदन्ति । उदाहरणान्तरं यथा—

> नवकुमुदवनश्रीहासकेलिप्रसङ्गा—
>
> दधिकरुचिरशोभामप्युषां जागरित्वा ।
>
> अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः
>
> शिशयिषुरिव पाण्डुम्लानमात्मानमिन्दुः ॥

अत्र "स्रस्तहस्ते"ति पदस्य नेयार्थत्वम् ।

( २९ ) नवमं पदगतं निहतार्थत्वं निरूपयति—निहितार्थत्वमिति । उभयार्थस्य यत्किञ्चिदर्थद्वयप्रतिपादकस्य निहितः प्रसिद्धेनाविवक्षितेनार्थेनाप्रसिद्धतया व्यवहितो विवक्षितार्थो यस्य तस्य भावस्तत्त्वम् । तथा च—

"प्रसिद्धेनाऽप्रसिद्धोऽर्थो यस्यार्थेन विधीयते ।
तत्पदं व्यर्थमुदितं निहतार्थं प्रचक्षते ॥"

लक्षणया प्रयुक्ते त्वसतिप्रयोजने नेयार्थत्वं दोषः सति तु प्रयोजनेऽदोष एवं । श्लेषयमकादिव्यतिरिक्तस्थले गूढेऽप्यर्थे क्वचित्प्रयोगाच्चाप्रयुक्तसङ्करः । अप्रयुक्तस्य तु श्लेषयमकादिनिर्वाहार्थमेव प्रयोग इति ततो भेदः । एवञ्चानियोऽयं दोषः "स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्ते"ति वक्ष्यमाणत्वात् ।

( ३० ) 'यमुनाशम्बरमम्बरं व्यतानीत् ॥'

( ३१ ) शम्बरशब्दो दैत्ये प्रसिद्धः, इह तु जले निहतार्थः ।

( ३२ ) 'गीतेषु कर्णमादत्ते ।'

( ३३ ) अत्राङ्-पूर्वो दाञ्-धातुर्दानार्थेऽवाचकः ।

( ३० ) उदाहरति—यमुनेति ।

"नवनीरदकान्तिनाम्बुकेलिप्रहतानां व्रजसुन्दरीकुचानाम् ।
मदपुञ्जभरेण मोदमानं यमुनाशम्बरमम्बरं व्यतानीत् ॥"

इति समस्तपद्यम् ।

यमुनाशम्बरं यमुनाजलम् अम्बरम् आकाशं व्यतानीत् व्याप्नवत् ।

( ३१ ) लक्ष्ये लक्षणं योजयितुमाह—शम्बरशब्द इति । दैत्ये प्रद्युम्नेन घातिते दैत्यविशेषे । जले जलविषये निहतार्थः प्रसिद्धेनाविवक्षितेन दैत्यार्थेन अप्रसिद्धतया व्यवहितो विवक्षितोऽर्थः तिरोहितार्थं इति यावत् । अत एव निहतार्थताञ्जनयतीत्यर्थः । अत्र प्रसिद्धस्यैव दैत्यार्थस्य द्रागुपस्थित्या विवक्षितस्य जलार्थस्य विलम्बेनोपस्थितिर्दूषकताबीजम् । तथा च प्रसिद्धेनाप्रसिद्धस्य व्यवहितत्वादप्रतीत्या यमुनाविषयरतिभावबोधस्यैवाप्रतीतेर्दोषः । नच नपुंसकलिङ्गरूपव्यक्तिविशेषात् जलस्यैवोपस्थितिरिति वाच्यम्, तुल्यप्रसिद्धिकस्थले एव तस्य नियन्त्रितत्वात् । अत्र तु प्रसिद्धिवशात् लिङ्गानुसन्धानेऽपि पदमात्रेणैव प्रथमतः तदुपस्थित्यवलम्बनात् लिङ्गस्यान्वयस्य च बोधात्तु पश्चादेव जलप्रतीतेः ।

( ३२ ) दशमं पदगतमवाचकत्वदोषमुदाहरति—गीतेष्विति । विवक्षितधर्मविशिष्टस्य विवक्षितधर्मिणः क्वापि न वाचकत्वमवाचकत्वमिति लक्षणम् ।

तथा च—

तात्पर्यविषयीभूतवस्तुधर्मप्रकाशिका ।
यतो न जायते बुद्धिः पदं तत्स्यादवाचकम् ॥

नन्वेवमसमर्थेऽतिव्याप्तिरिति चेत्? नैवम्, तस्य क्वचिच्छक्तिस्वीकारात् । नेयार्थत्वे यथाकथञ्चिल्लक्षणया विवक्षितार्थवाचकत्वात्, निहितार्थत्वे च अप्रसिद्धस्यापि विवक्षितार्थस्य वाचकत्वसम्भावनान्नातिव्याप्तिः । अत एवायं सर्वदैव हेयत्वात् नित्यो दोषः ।

"व्रजोपवनतः शश्वत्समागतस्वरेष्वियम् ।
गीतेषु कर्णमादत्ते गोपिका ध्यानतत्परा ॥" अत्र मद्रचितांशद्वयम् ।

( ३३ ) लक्ष्ये लक्षणं योजयितुमाह—अत्रेति । दाधातोर्दाने शक्तिरूपसामर्थ्यसत्त्वेऽपि "आ" इत्युपसर्गेण ग्रहणे एव, शक्तेर्नियमितत्वात् । 'उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते' इति न्यायात् । आङ्पूर्वो दाधातुर्दानार्थे अर्पणीयार्थविषये अवाचकः वाचकताशक्तिहीनः अभिधाशक्तिरहित इति यावत् । अत एव "आदत्ते" इति पदमवाचकत्वदोषञ्जनयति विवक्षितार्थाप्रतीत्या रसप्रतीतेरेवाभावादित्याशयः । तथा च दूषकताबीजन्तु विवक्षितार्थानुपस्थितिरेव ।

( ३४ ) यथा वा—

'दिनं मे त्वयि संप्राप्ते ध्वान्तच्छन्नापि यामिनी ॥'

( ३५ ) अत्र दिनमिति प्रकाशमयार्थेऽवाचकम् ।

( ३६ ) क्लिष्टत्वमर्थप्रतीतेर्व्यवहितत्वम्, यथा—

( ३७ ) 'क्षीरोदजावसतिजन्मभुवः प्रसन्नाः ॥'

( ३८ ) अत्र क्षीरोदजा लक्ष्मीस्तस्या वसतिः पद्मं तस्य जन्मभुवो जलानि ।

( ३४ ) ननु "दा"धातोर्दानार्थे अभिधासत्त्वेन कथमवाचकत्वमिति चेत्? मैवम्, 'डुदाञ् दाने' इत्युपदेशात् धात्वर्थप्रतिबन्धकोपसर्गरहित "दा"धातोरेव दानेऽभिधास्वीकारात् । वस्तुत उपसर्गसत्वेऽपि "पद्यमारचयति" इत्यादिवत् सम्यगर्थो भविष्यतीत्यरुचेराह—यथा वेति ।

'तमोऽन्वहं त्वद्विरहे ह्यासीन्नाथ ! व्याप्नवत्' । इति मत्पूर्वंक्तिम् ।

मे मम दिनं प्रकाशमयमित्यर्थः ।

( ३५ ) लक्ष्ये लक्षणं योजयितुमाह—अत्रेति । दिनमिति । सूर्य्यस्योदयास्तमयनपर्य्यन्ततद्व्यवच्छिन्नयामचतुष्टयकालविशेष एव दिनशब्दवाच्यत्वादिति भावः । शृङ्गाररसप्रतीतिविलम्बनं दूषकताबीजम् । अत्र—

हा ! धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा

तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितम् ।

किं कुर्मः कुशले सदैव विधुरो धाता न चेत्तत्कथं

तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥

इति 'काव्यप्रकाशोदाहरणमुपजीव्यम् ।

तत्रापि "दिनमिति प्रकाशमयमित्यर्थेऽवाचकम्" इत्युक्तम् ।

( ३६ ) एकादशं पदगतं क्लिष्टत्वदोषं निरूपयति—क्लिष्टत्वमिति । अर्थप्रतीतेर्व्यवहितत्वमिति । अर्थस्य विवक्षितस्यान्वितविशेषस्यार्थस्य प्रतीतिः प्रतिपत्तिस्तस्या व्यवहितत्वं विलम्बितत्वमित्यर्थः । आकाङ्क्षासत्तितात्पर्य्यज्ञानरूपकारणविलम्बेन विलम्बात्स्वार्थबोधजनकत्वमिति यावत् । निहतार्थादौ तु शक्यतावच्छेदकरूपेण प्रकृतपदार्थोपस्थितिरेव व्यवहिता इह तु शक्यतावच्छेदकस्य प्रकृताप्रकृतसाधारण्यात्तेन रूपेणोपस्थितावप्यन्वितविशेषानुपस्थितिमात्रमिति ततो भेदः । अयञ्च नित्यो दोषः अनुकरणं विना समाधानानुपन्यासेन सर्वदैव हेयत्वात् ।

( ३७ ) व्यवधानञ्च द्विधा । क्वचिदन्वितान्वयवशेन विशेषाप्रतीतौ कालिकव्यवधानम् । क्वचित्तु अनासत्तिरूपं व्यवधानम् । तत्राद्यं पदगतमुदाहरति—क्षीरोदजेति ।

ताः काप्यहो ! घनघटा विलयं प्रयाता

ज्योत्स्नाश्चिराय मुदिताश्च विलासशीलाः ।

क्षीरोदजा वसति जन्मभुवः प्रसन्ना

मद्यानुरञ्जयति भास्वति दक्षिणाशाम् ॥

इत्यत्र पद्यसमुदायः ।

( ३८ ) अर्थनिर्देशपूर्वकं लक्ष्ये लक्षणं योजयति—अत्रेति । अर्थप्रतीतेर्व्यवधानादेव

( ३९ ) 'भूतयेऽस्तु भवानीशः ॥'

( ४० ) अत्र भवानीशशब्दो भवान्याः पत्यन्तरप्रतीतिकारित्वाद्विरुद्धमतिकृत् ।

विलम्बेन रसादेः प्रतीत्या तत्प्रकर्षप्रतिबन्धकत्वाद्दोषः । एवञ्च दूषकताबीजं विवक्षित-विशिष्टार्थप्रतीतिविलम्बः । प्रहेलिकायां यमकादौ च चित्रोद्देश्यत्वेन प्रतीतिविलम्बस्येष्टत्वाददोषत्वम् । मत्तोक्त्यादौ गुणत्वमपि तदौचित्यात् । तथा चानित्योऽयं दोषः । असत्तिरूपं व्यवधानं तु वाक्यदोषे धम्मिल्लस्येत्यत्रोदाहरिष्यति ।

( ३९ ) द्वादशं पदगतं विरुद्धमतिकारित्वदोषमुदाहरति—भूतय इति । तल्लक्षणन्तु-प्रकृतार्थज्ञानप्रतिबन्धकीभूताप्रकृतार्थज्ञानजनकत्वम् । विरुद्धस्य मतिं विरुद्धां वा मतिं करोतीति विरुद्धमतिकृत् तस्य भावः । अनुचितार्थाश्लीलनिहतार्थानां न परस्परप्रति-बन्धकतेति तद्व्युदासः । अमतपरार्थश्च व्यङ्ग्यरसयोरेव विरोधे इति न तत्सङ्करः । अयञ्च नित्यो दोषः समाधानाभावात् ।

ब्रह्मादिभिः स्तूयमानो भक्ताभीष्टफलप्रदः ।
भूतयेऽस्तु भवानीशो जगतां चन्द्रशेखरः ॥

अत्र मद्रचितांशत्रयम् ।

( ४० ) लक्ष्ये लक्षणं योजयति—अत्र भवानीति । अयम्भावः—भवेति वक्तव्ये भवानीश इत्युक्तम्, भवानीशब्दः भवस्य महादेवस्य पत्नीत्यर्थे "पुंयोगादाख्यायाम्" इतिपाणिनिसूत्रेण भवशब्दान्ङीप्रत्यये "इन्द्रवरुणभवशर्व" इत्यादिना आनुगागमे च कृते सिद्ध इति भवानीशशब्दः 'चैत्रस्य पत्न्या पतिः' इतिवत् भवान्याः पत्यन्तरे प्रतीतिमुपस्थापयति । एवञ्च आराध्याया देव्या एवं प्रतीतिरातङ्कावसंविधायिनीति मति-र्विरुद्धेति तेन श्रोतुवमनस्येन देवविषयकरतिभावप्रकर्षबोधप्रतिबन्धकत्वाद्दोषः । केचित्तु भवानीशब्देन पार्वतीत्वप्रकारक एव बोधो जन्यते अन्यथा भवानीशब्देन "अपर्णा पार्वतीदुर्गेत्यादि 'शिवाभवानीरुद्राणी' इत्यादीनां पर्य्यायत्वेन कोशे उपलम्भात् योगस्य पङ्कजादिपदेष्विव साधुत्वार्थत्वात् "अविदितविभवो भवानीपतेः" इति महाकविप्रयो-गाच्च भवानीशब्दः पार्वतीत्वविशिष्टे रूढ एवेति न तत्र दोष इत्याहुः । तदोदाहरणान्तरं काव्यप्रकाशे—

"गौरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।
सविधे निरहङ्कारः पायाद्वः सोऽम्बिकारमणः ॥"

अत्र "अम्बिकारमण" इति विरुद्धां धियमुपस्थापयति । तथाहि अम्बिकापदस्य "मृडानी चण्डिकाऽम्बिका" इत्यमरकोशात् गौरीव "अम्बा माता" इत्यमरकोशात् अम्बैवाम्बिकेति व्युत्पत्त्या च माताऽप्यर्थः प्रतीयते, अत एव "अम्बिकापार्वतीमात्रो-र्धृतराष्ट्रस्य मातरि" इत्यनेकार्थकोशः । एवं रमणपदस्य प्रीतिकर इव जाररूपोऽन्यो-ऽप्यर्थोऽस्ति । तथा च "अम्बिकारमण" इत्यस्य गौरीपतिरित्यर्थ इव मातृपतिरित्य-र्थोऽपि गम्यत इति विरुद्धमतिकृत्त्वमित्याशयः ।

दूषकताबीजञ्च विवक्षितार्थतिरस्कारार्थोपस्थितिः । अम्बिकापदस्य मातृवाचकत्वे नृसिंहपुराणम्—

"शक्तित्वाल्लोकमातृत्वादम्बिका त्वं भविष्यसि" इति ।

( ४१ )विधेयस्य विमर्शाभावेन गुणीभूतत्वम् **अविमृष्टविधेयांशत्वम्**। यथा-
( ४२ ) 'स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥' ( ११ पृ. )
( ४३ ) अत्र वृथात्वं विधेयम्, तच्च समासे गुणीभावादनुवाद्यत्वप्रतीतिकृत् ।

भूतयेऽस्त्विति उदाहरणं ग्रन्थकृतः—

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मन-
स्तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः
तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः
स्कन्दः स्कन्द इव प्रियोऽहमथवा शिष्यः कथं विस्मृतः ।''

इति काव्यप्रकाशोदाहरणमुपजीव्यम् ।

इदञ्च विरुद्धमतिकृदनेकधा । तत्र क्वचित्समासान्तरविग्रहेण, क्वचिन्नामपदयोः समासे विरुद्धार्थनिरूढपदघटनया, क्वचिद्विवक्षितविशेषपरत्वे पदवैयर्थ्यप्रसङ्गेनाविवक्षितविशेषपरत्वग्रहेण, क्वचित्समासैक्येऽपि समस्यमानपदयोर्द्व्यर्थकतया भवति । तत्र तृतीयस्योदाहरणं दत्तमेवान्यस्यान्यतोऽनुसन्धेयम् ।

( ४१ ) अथोद्देशं पदगताविमृष्टविधेयांशभावं निरूपयति—विधेयस्यांशस्येति । विधेयस्यांशस्य प्रधानस्य भागस्य विमर्शाभावेन प्राधान्येनानिर्दिष्टतया गुणीभूतत्वम् अप्रधानीभूतत्वम् । प्राधान्यञ्चात्र विधेयताप्रतीतियोग्यत्वम्, तदुक्तं तन्त्रवार्त्तिके—

''यच्छब्दयोगः प्राथम्यं सिद्धत्वं चाप्यनूद्यता ।
तच्छब्दयोग औत्तर्य्यं साध्यत्वञ्च विधेयता ।'' इति

तथा चोद्देश्यविधेययोः पृथक्पदाभ्यामुपस्थितिर्न तु समासप्रविष्टत्वमित्यवगन्तव्यम् । इदमत्रोद्देश्यविधेयभावविषये बोध्यम्—यच्छब्दप्रतिपाद्यं सिद्धत्वेन प्रतीयमानमुद्देश्यम्' तदादिशब्दप्रतिपाद्यमुद्देश्यसम्बन्धितया अपूर्वबोधविषयीभूतं विधेयं यथा— ''यः क्रियावान् स पण्डितः'' इत्यादौ क्रियावन्तमुद्दिश्याभेदेन पण्डितः स्वरूपसम्बन्धेन पण्डितत्वं वा विधीयते । यद्यपि यत्तच्छब्दौ सर्वत्र न प्रयुज्येते तथापि गम्येते ताविति

अयथावद्विनिर्देशो विधेयांशस्य यत्र तत् ।
अविमृष्टविधेयांशमलङ्कारविदो विदुः ॥

इत्युक्त्या च अविमृष्टविधेयांश एव विधेयाविमर्श इत्युच्यते । पदार्थानां मध्ये विधेयांशस्योपादेयत्वेन प्राधान्यात्तस्य च तथात्वेनानिर्देशोविधेयाविमर्श इत्यर्थः । अयञ्च नित्यो दोषः प्रतिप्रसवाभावेन सर्वदैव हेयत्वात् । अत्रेदम्बोध्यम्-अस्य हि क्वचित् समासेन विधेयांशस्य प्रधानस्याप्रधानेन निर्देशः क्वचिदुद्देश्यविधेययोः पौर्वापर्य्यविपर्य्ययेण निर्देशः, तत्राद्ये पददोषत्वं द्वितीये वाक्यदोषत्वमिति ।

( ४२ ) तत्र तत्पुरुषसमासगतविधेयाविमर्शमुदाहरति—स्वर्गग्रामटिकेति । समग्रपद्यन्तु पूर्वमेव ( ११ पृष्ठे ) प्रदर्शितं व्याख्यातञ्च ।

( ४३ ) उक्तोदाहरणे लक्षणं योजयितुमाह—अत्रेति । विधेयम्—उच्छूनत्वं वृथा' इति तत्र तत्पुरुषसमासे प्रायेणोत्तरपदस्यैव प्राधान्यात् वृथेति पूर्वपदस्य विधेयस्य गुणीभूतत्वादुच्छूनत्वांशे विशेषणीभूतत्वात् प्राधान्येनानिर्देशात् अनुवाद्यत्वप्रतीतिकृत् तस्यैवोद्देश्यत्वबोधजनकम् । अयम्भावः—यदुद्देश्यविधेयताशालिबोधे विधेयवाचक-

यथा वा—

( ४४ ) 'रक्षांस्यपि पुरः स्थातुमलं रामानुजस्य मे ॥'

( ४५ ) अत्र रामस्येति वाच्यम् । यथा वा—

( ४६ ) 'आसमुद्रक्षितीशानाम् ॥'

( ४७ ) अत्रासमुद्रमिति वाच्यम् ।

---

प्राग्वर्त्युद्देश्यवाचकपदजन्योपस्थितिः कारणमित्यमित्याशयवता—

"अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् ।
न ह्यलब्धास्पदं किञ्चित्कुत्रचित् प्रतितिष्ठति ॥"

इति वृद्धवचनेन अनुवाद्यविधेययोःपौर्वापर्य्यभावस्य नियमितत्वात् । अत एव सर्वत्र "इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयोः" इत्येव 'पर्वतो वह्निमान्' इत्येव चेष्यते न व्यत्ययेन । प्रकृते उच्छूनत्वमात्रस्यानुवाद उचितो न तु वृथात्वविशेषितस्य । तथा च विधेयत्वेन विवक्षितं वृथात्वं समासे गुणीभूतमिति दोषः । किञ्चोद्देश्यं विधेयञ्च यदि पृथक्पदाभ्यामुपतिष्ठते तदा प्राप्तमुद्दिश्याप्राप्तं विधीयते पर्वतो वह्निमान् इतिवत्, न तु समासे । अन्यथा 'वह्निमत्पर्वत' इत्यभिधानापत्तेः ।

( ४४ ) विषयव्याप्तये उदाहरणान्तरं दर्शयति—रक्षांसीति ।

'दर्शनत्रासदायीनि कठोराक्रकराणि च' इति मद्रचितपूर्वार्द्धम् ।

लक्ष्मणस्योक्तिरियम् । रामानुजस्य मेऽपि पुरः रक्षांसि स्थातुमलं समर्थानि । शिरश्चालनकाङ्क्षा पुरः स्थातुं नाऽलमेवेत्यर्थः ।

( ४५ ) उक्तोदाहरणे विधेयाविमर्शत्वमुपपादयितुमाह—अत्रेति । वाच्यं वक्तुं योग्यम् । अयम्भावः—विविधदुर्जयराक्षसमारणेन राम एव राक्षसविनाशकत्वेनातिप्रसिद्धः । तेन हि प्रकृते रामस्य योऽनुजस्तस्यापि मम पुरतो राक्षसाः स्थातुमलं समर्थाः ? इति हि रामसम्बन्धादेव साऽहङ्कारं वक्तुर्लक्ष्मणस्याशयः । तत्र "रामानुजस्य" इति समासविधानान्नेष्टसिद्धिर्भवति, भवति तु "रामस्य" सविभक्तिपदोपन्यासात् । तथा च रामसम्बन्धबोधिकायाः षष्ठ्यास्तत्पुरुषे लोपात् रामसम्बन्धस्य विधेयस्याविमर्शः, षष्ठीसत्त्वे तु न दोष इति भावः ।

( ४६ ) अस्यैवोदारणान्तरं दर्शयति—आसमुद्रेति ।

"सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।
आसमुद्रक्षितीशानाम् आनाकरथवर्त्मनाम्" इति रघु० प्रथमसर्गे ।

( ४७ ) दोषं समर्थयति—अत्रेति । आसमुद्रमिति । समासरहितमेव पदं वाच्यं वक्तुं योग्यमित्यर्थः ।

अत्रायमभिप्रायः—रघुवंशीयानामधिकारः समुद्रेष्वप्यासीदिति वक्तुराशयः, स तु "आसमुद्रक्षितीशानाम्" इति समासोक्त्या नोपपद्यते, आसमुद्रं समुद्रपर्य्यन्तं या क्षितिस्तस्या ईश इति बोधेन क्षितिमात्रस्यैवेशत्वबोधनात् । असमस्तपदेन आसमुद्रं क्षितीशानाम्, इत्युक्ते हि समुद्रेष्वपि तेषामधिकारत्वं स्पष्ट एवावगम्यते इति । तेनाधिकारत्वान्वये प्रधानीभूतसमुद्रस्यापि विधेयस्य समासे गुणीभावात् विधेयाविमर्श इति ।

( ४८ ) यथा वा—

'यत्र ते पतति सुभ्रु ! कटाक्षः षष्ठबाण इव पञ्चशरस्य ॥'

( ४९ ) अत्र षष्ठ इवेत्युत्प्रेक्ष्यम् ।

( ५० ) यथा वा—

'अमुक्ता भवता नाथ ! मुहूर्त्तमपि सा पुरा ॥'

( ५१ ) अत्रामुक्तेत्यत्र 'नञः प्रसज्यप्रतिषेधत्वमिति विधेयत्वमेवोचितम् ।

( ४८ ) कर्मधारये उद्देश्यान्वितविधेयस्य विमर्शमुदाहरति—यथा वा इति । 'यत्र त' इति ।

"तेन भेदितमनः परतन्त्रस्त्वत्किङ्करत्वमुपैति स एव ।" इति मद्रचितोत्तरार्द्धम् ।

हे सुभ्रु ! पञ्चशरस्य कामस्य षष्ठवाण इव ते तव कटाक्षः वक्रदृष्टिः यत्र पतति ।

( ४९ ) अत्रापि दोषं प्रदर्शयितुमाह – अत्रेति । इत्युत्प्रेक्षितुं योग्यम् । अयमाशयः— न खलु कामस्य वाणमात्रस्यैवासम्भवः, किन्तु पञ्चवाणत्वात् षष्ठस्यैव वाणस्यासम्भवः। तेन तदीयवाणगतषष्ठत्वमेवोत्प्रेक्ष्यतया विधेयम्, तस्य "षष्ठवाण इव" इत्यभिधाने नोपपन्नं भवति, षष्ठत्वस्य विधेयस्य तत्पुरुषसमासे गुणीभूतत्वेन इवार्थसम्बन्धासमर्थत्वात् उक्तसमासे चोत्तरपदार्थस्यैव मुख्यत्वेन षष्ठत्वविशिष्टवाणत्वस्यैव तदन्वयसम्भवात्, स चाभिधातुर्नेष्ट इति ।

ननूक्तोदाहरणेषु वक्तुरभिमतसम्बन्धानुपपत्त्याग्रेऽभिधीयमानाभवन्मतसम्बन्धदोष एवेति चेत् ? मैवम्, अन्वयसम्भवेऽपि उद्देश्यविधेयभावानवगमादभिमतसम्बन्धानुपपत्तौ अविमृष्टविधेयांशः, पदार्थयोरन्वयस्यैवासम्भवेनाभिमतसम्बन्धानुपपत्तौ तु अभवन्मतसम्बन्धतेति भेदात् ।

( ५० ) अभवन्मतसम्बन्धतादोषसन्देहागोचरीभूतनञ्समासगताविमृष्टविधेयांशस्य शुद्धोदाहरणमुपपादयितुमाह—यथा वेति ।

"साम्प्रतं या परित्यक्ता हन्त ! नाकमुपाश्रिता" ! इति मद्रचितपूर्वार्द्धम् ।

( ५१ ) अत्रासमासेन नञा निषेधो विधेयः 'न मुक्ता' इति समासविधाने तु गुणीभूतत्वान्निषेधस्य विधेयत्वाप्रतीत्याविमृष्टविधेयांशत्वं दोषः । दूषकताबीजन्तु विवक्षितविधेयतानुपपत्तिः । तदेवोपपादयति—अत्रेति । प्रसज्यप्रतिषेधत्वमिति । प्रतियोगिनमसमासेन प्रसज्य प्रसक्तीकृत्य प्रतिषेधत्वं क्रियान्वयत्वादत्यन्ताभावत्वमित्यर्थः । तथा च मोचनाभावस्य एवात्रविधेयत्वात् असमासेनैव तथात्वं बोधयितुमुचितमित्यत आह— विधेयत्वमेवोचितमिति । समासे तु तद्भिन्नत्वस्यैव प्रतीत्या पर्य्युदासत्वमेव तत्र तु विधेयस्य प्रतिषेधो न प्रतीयते इत्यतस्तस्याविमर्श इति भावः । अत्र—

"आनन्दसिन्धुरतिचापलशालिचित्तसन्दाननैकसदनं क्षणमप्यमुक्ता ।
या सर्वदैव भवता तदुदन्तचिन्ता तान्तिन्तनोति तव सम्प्रति धिग्धिगस्मान् ॥"

इति काव्यप्रकाशोदाहरणमुपजीव्यम् ।

उदाहरणान्तरं यथा—

अपण्डितास्ते पुरुषा मता मे ये स्त्रीषु च श्रीषु च विश्वसन्ति ।
श्रियो हि कुर्वन्ति तथैव नार्यो भुजङ्गकन्यापरिसर्पणानि ॥

यदाहुः—

( ५२ ) 'अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥'

यथा—

( ५३ ) 'नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः ॥'

( ५४ ) उक्तोदाहरणे तु तत्पुरुषसमासे गुणीभावे नञः पर्युदासतया निषेधस्य विधेयतयानवगमः।

( ५५ ) यदाहुः—

'प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता। .

---

अत्र "ते पण्डिता न मता" इति विवक्षितं तच्च नञः समासगतत्वाद्गुणीभूतमित्यविमृष्टविधेयांशत्वम्।

( ९२ ) असमास एव नञर्थस्य विधेयत्वरूपं प्राधान्यं प्रतियोगिनस्त्वप्राधान्यं, तादृशस्थले नञः प्रसज्यप्रतिषेधत्वमित्यत्र प्राचीनसंवादं दर्शयति—अप्राधान्यमिति। यत्र वाक्ये विधेर्नञतिरिक्तपदार्थस्य भावस्य प्रतियोगिन इत्यर्थः, अप्राधान्यं नञर्थापेक्षया अप्रधानता प्रतीतिः, उद्देश्यतया अमुख्यत्वमित्यर्थः, प्रतिषेधे नञर्थे च प्रधानता, असमासवशादपरपदार्थापेक्षत्वेन विधेयतया प्रधानता प्रतीतिः, तत्र असौ नञ् प्रसज्यप्रतिषेधः अत्यन्ताभावज्ञापक इत्यर्थः। फलितार्थं दर्शयति—क्रिययेति। न पचतीत्यादौ आख्यातक्रियया सह समासाभावदर्शनात् क्रिययेत्यनेन असमास एव लक्ष्यते, तथा च यत्र वाक्ये असमासे नञ् असौ नञ् प्रसज्यप्रतिषेध इत्यर्थः।

( ९३ ) प्रसज्यप्रतिषेधार्थकनञ उदाहरणं दर्शयति—नवजलधर इति। विक्रमोर्वश्याम्—

"सुरधनुरिदं दूराकृष्टं, न तस्य शरासनम्।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥"

इति शिष्टं पादत्रयम्।

गन्धर्वेणोर्वश्यां हृतायां पुरूरवसस्तद्विरहे नवजलधरादौ निशाचरत्वादिप्रतीतिवर्णनमिदम्। अयमाकाशे दृश्यमानो नवजलधर एव सन्नद्धः पवनेन स्तूपीकृतः किन्तु दृप्तनिशाचरः कश्चिद्गर्वितराक्षसो न भवति। अयं नवजलधरत्वाभाववानित्यर्थः। तथा चात्र नञः क्रियासाहित्याभावेऽप्यसमासात् प्रसज्यप्रतिषेधता।

( ९४ ) अमुक्तेत्यत्र मुक्तक्रियया नञः साहित्येऽपि असमासाभावात् न प्रसज्यप्रतिषेधतेति दर्शयति—उक्तोदाहरण इति। उक्तोदाहरणे अमुक्तेत्यादौ। तत्पुरुषसमासे नञ्तत्पुरुषसमास इत्यर्थः। पर्युदासतया पर्युदासत्ववदनुवाद्यत्वप्रतीतिकारितया गुणीभावेन पर्युदासवत्प्रतीयमानतया निषेधस्य प्रसज्यप्रतिषेधस्य विधेयतया प्राधान्येन अनवगमः स्पष्टतयाप्रतीतिः। तथा च मुख्यस्यामुख्यत्वेनोपन्यासादविमृष्टविधेयांश इति भावः।

( ९५ ) पर्युदासस्यैवाप्रधानत्वेनानुवाद्यत्वमुपपादयति—यदाहुरिति। प्रधानत्वमिति।

पर्युदासः स विज्ञेयो, यत्रोत्तरपदेन नञ् ॥'

तेन—

( ५६ ) 'जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥'

( ५७ ) अत्रात्रस्ततााद्यनूद्यात्मगोपनाद्येव विधेयमिति नञः पर्युदासतया गुणीभावो युक्तः ।

( ५८ ) ननु 'अश्राद्धभोजी ब्राह्मणः' 'असूर्यपश्या राजदाराः' इत्यादिवत् 'अमुक्त्वा' इत्यत्रापि प्रसज्यप्रतिषेधो भवतीति चेत् ?

( ५९ ) न । अत्रापि यदि भोजनादिरूपक्रियांशेन नञः संबन्धः स्यात्तदैव तत्र

यत्र वाक्ये विधेर्नञ् भिन्नपदार्थस्य प्रधानत्वमुत्तरपदप्रधानतत्पुरुषवशाद् विशेष्यत्वम्, विधेयप्रतियोगिभूताभावस्य प्रतिषेधे नञोऽप्रधानता समासवशात् अप्रतीयमानविधेयतारूपाप्रधानता इत्यर्थः, तत्र स नञ् पर्य्युदास अन्योन्याभावबोधको विज्ञेयः शब्दस्वभावादिति भावः । अत्रापि फलितार्थं दर्शयति—यत्रोत्तरपद इति । पदञ्चात्र स्थानपरम् । प्रतियोगिपदोत्तरस्थाने यत्र नञ् इत्यर्थे यत्रोत्तरपदे, अर्थात् असमासेन पर्य्युदासो विज्ञेय इत्यर्थः, न पचतीत्यत्र उत्तरत्र नञसत्त्वात्तु न पर्य्युदास इति भावः ।

( ५६ ) अस्योदाहरणं दर्शयति—जुगोपेति । रघुकाव्ये प्रथमसर्गे दिलीपवर्णनमिदम् । स दिलीपः अत्रस्तः निर्भीकः सन्नेव आत्मानं शरीरं जुगोप ररक्ष "त्रस्ता भीरुभीरुकभीलुकाः" इत्यमरः । न पुनरन्य इव आसावस्थायामेव "आत्मानं सततं गोपायीत" इति श्रुतेरित्याशयः । अनातुर अरोगी सन्नेव धर्मं भेजे कर्त्तव्यत्वेन सिषेवे न पुनरपर इव रोगाद्युपशमाभिलाषयेत्यभिप्रायः । अगृध्नुः तृष्णाशून्यः सन्नेव "गृध्नस्तु गर्धनः लुब्धोऽभिलाषुकस्तृष्णक्" इत्यमरः, अर्थात् करस्वरूपधनानि आददे प्रजाभ्यः स्वीकृतवान् न पुनरन्य इव लोभभावेनेति भावः । असक्तः तत्पररहितः सन्नेव सुखम् अन्वभूत् सुखानुभवञ्चक्रे न पुनरितर इवासक्तहृदय एवेत्याशयः ।

( ५७ ) अत्र पर्य्युदासे गुणीभूतो निषेधोऽनुवाद्यो न तु विधेयस्तदाह—अत्रात्रस्तेत्यादि । त्रस्ताभिन्नत्वादि अनूद्य कविना उद्देश्यतावच्छेदकीकृत्य आत्मगोपनाद्येव विधेयं विहितमिति शेषः । गुणभावो युक्त इति तत्पुरुषसमासेनाप्रधानीभावः । तथा चात्रापि नाविमृष्टविधेयांशः ।

( ५८ ) ननु(क)अश्राद्धभोजी(ख) असूर्यपश्या इत्यत्र समासेऽपि प्रसज्यप्रतिषेधरूपयोः श्राद्धभोजनाभावसूर्य्यदर्शनाभावयोः प्रतीतिदर्शनात् तद्दृष्टान्तेन अमुक्त्वेत्यत्रापि भोजनाभावरूपस्य प्रतिषेधस्य विधेयस्य सम्भवात्कुतो विधेयाविमर्शप्रसक्तिरित्याशङ्कते-नन्विति ।

( ५९ ) समाधत्ते—नेति । अत्रापि न केवलम् "अमुक्त्वा इत्यत्र "अश्राद्धभोजी" असू-

( क ) न श्राद्धं भुङ्क्ते इति वाक्यं विभज्य नञः श्राद्धशब्देनासमर्थसमासं विधाय अश्राद्धशब्दे उपपदे णिनिर्विधातव्यः, न तु णिन्यन्तेन समासः कर्त्तव्यः ।

( ख ) सूर्यं न पश्यन्तीति विग्रहः । आदिशब्देनापुनर्गेया लोका इति बोध्यम् ।

प्रसज्यप्रतिषेधत्वं वक्तुं शक्यम् । न च तथा । विशेष्यतया प्रधानेन तद्भोज्यार्थेन कर्त्रंशेनैव नञः संबन्धात् ।

( ६० ) यदाहुः—

'श्राद्धभोजनशीलो हि यतः कर्ता प्रतीयते ।
न तद्भोजनमात्रं तु कर्तरीनेर्विधानतः ॥' इति ।

( ६१ ) 'अभुक्त्वा' इत्यत्र तु क्रिययैव सह संबन्ध इति दोष एव ।

---

र्य्यं पश्या', इत्यनयोरपि । भोजनादीत्यादिपदात् दर्शनस्य परिग्रहः । क्रियान्वयिन एव प्रसज्यप्रतिषेधत्वनियमः "क्रियया सह यत्र नञ्" इति वचनात् अश्राद्धेत्यनयोरपि यदि भोजनदर्शनक्रिययोर्नञर्थस्य सम्बन्धः स्यात्तदैव तथात्वापादनं सम्भवति, किन्तु तयोः सम्बन्ध एव तत्र नेति ध्वनयन्नाह—न च तथेति। तर्हि कुत्रान्वय इत्यत आह—विशेष्यतयेति। भुजिदृशोः कर्त्तरि विहिताभ्यां कृत्प्रत्ययाभ्यां भोजिरूपकर्त्रंशेन च सहैव नञो नञर्थस्य सम्बन्धात् । भोज्यार्थेनेत्युपलक्षणं तेन दर्शनकर्त्रंशेनेत्यस्यापि सङ्ग्रहः । इदमत्रावधेयम्—अश्राद्धभोजीत्यादौ अस्ति भागद्वयम्—विशेषणत्वादप्रधानभूता भोजनादिक्रिया, विशेष्यत्वात्प्रधानभूतस्तत्कर्त्ता च । तत्र नञः सम्बन्धसंशये "अव्यक्तं प्रधानगामि" इति न्यायात् प्रधानभूतेन कर्त्रा साकमेव नञः सम्बन्ध इति क्रियेतरपदार्थसम्बन्धित्वात् पर्य्युदासत्वमेव । केचित्तु दृशिना सह सम्बद्धस्यापि नञः सूर्य्येण सह गमकत्वात्समास इति वदन्ति । तन्मते प्रसज्यप्रतिषेधत्वमेवायाति ।

( ६० ) कृत्प्रत्यये कर्त्र्युपस्थानात् "श्राद्धभोजी" इत्यत्र भोजनकर्त्तव प्रतीयते इत्यत्राचार्य्यसम्मतिमाह—यदाहुरिति । श्राद्धभोजनेति । अत्र हि शब्दोऽवधारणे सम्बन्धश्चास्य कर्त्तेत्यनेन । एवञ्च ते गम्यमाने सुबन्त उपपदे धातोर्णिनिप्रत्ययो भवतीत्यर्थकेन "व्रते" इत्यनेन कर्त्तरि णिनिप्रत्ययविधानात् श्राद्धभोजनशीलः कर्त्तेव प्रतीयते "यस्मिन्नर्थे यो यत्र जातः स तदर्थाभिधायी" इति न्यायादितिभावः, तु किन्तु तद्भोजनमात्रं केवलं श्राद्धभोजनं न प्रतीयते, अतो मुख्यतया कर्त्रैव साकं नञोऽन्वयः इति शेषः । दर्शनकर्त्तारो राजदारा अपि प्रतीयन्ते इत्यपि ज्ञेयम् । तथा च तयोरपि श्राद्धभोजिभिन्नसूर्य्यदर्शकभिन्नत्वम् इत्येवं पर्य्युदास एवेत्यर्थः ।

( ६१ ) समासस्थतन्नञ्दृष्टान्तेनापि अभुक्तेत्यत्र समास्थनञःपर्य्युदासत्वमेव सिध्यतीति मनसि निधाय अभुक्तेत्यत्र भोजीत्यतः किञ्चिन्मात्रं वैलक्षण्यं दर्शयति—अभुक्तेति। तु अभोजीत्यत्र समास्थकर्तृसम्बन्धः, अभुक्तेत्यत्र तु नञः क्रिययैव सम्बन्धः भवत्कर्तृकमोचनाभावप्रतीतिबोधस्यानुभवसिद्धत्वादिति भावः, अन्यथा मूर्द्धस्तमपीत्यस्यान्वयो न स्यात् । दोष एव अविमृष्टविधेयांशदोष एव प्रधानस्य नञर्थस्य समासेनाप्रधानतया निर्देशादित्यभिप्रायः । एतन्मते समस्यमानपदार्थैकदेशे नञर्थसम्बन्धेऽपि समासाङ्गीकारः । दूषकताबीजन्तु रसादिप्रतीतिविलम्बनमेव । यदि पुनः क्त्वप्रत्ययार्थस्य कर्मणोऽन्वयापत्त्या क्रियया सह नञर्थस्यान्वयमस्वीकृत्य मोचनकर्मणैवान्वयोऽङ्गीक्रियते तदा पुनरयम् "अब्राह्मणः" इतिवदत्रापि मोचनकर्मपदस्यैव विधेयत्वं भवितव्यम्, एवञ्च नञः समस्ततया न स्पष्टप्रतीतिरित्यविमृष्टविधेयांशत्वमेवेति बोध्यम् ।

( ६२ ) एते च क्लिष्टत्वादयः समासगता एव पददोषाः ।

( ६३ ) वाक्ये दुःश्रवत्वं यथा—

( ६४ ) 'स्मरार्त्यन्धः कदा लप्स्ये कार्तार्थ्यं विरहे तव ॥'

( ६२ ) व्यवस्थापयति—एते चेति । आदिपदेन विरुद्धमतिकारित्वविधेयाविमर्श- योर्ग्रहणम्, तथा च क्लिष्टत्वविरुद्धमतिकारित्वविधेयाविमर्शास्त्रय इत्यर्थः । समासगता एवे- ति न तु असमासेऽपि पददोषा इत्यर्थः । अन्वितान्वयाधीनक्लिष्टत्वस्य समासं विना पद- गतत्वासम्भवात् । अनासत्त्यधीनक्लिष्टत्वे तु समासस्य एवासम्भवात् पदगतत्वं नास्ति । विरुद्धमतिकारित्वस्य पदार्थान्तरान्वयेनैव दुष्टत्वात् विधेयाविमर्शस्य चानुवाद्यविधेया- र्थकपदद्वयघटितत्वाद् वा समासं विना पदत्वासम्भवात् ।

अत्रेदं बोध्यम्—क्लिष्टत्वादिदोषत्रयं पदान्तरसाहित्येनैव सम्भवति । तथा च तयोः पदयोः समासस्तदैव समासेनैकपद्यात् पददोषता असमासे वाक्यदोषत्वमेव । इतरेषां दुःश्रवत्वादीनां समासेऽसमासे च पददोषत्वम्, द्वितीयपदनैरपेक्ष्येणैव दुष्टत्वात् । अत एव काव्यप्रकाशकृता-"अथ समासगतमेव दुष्टमिति सम्बन्धः, अन्यत् केवलं समास- गतं च" इत्यभिधाय क्लिष्टत्वादीनुदाहृत्य च दुःश्रवादिषु समासगतमपि—

"सा दूरे च सुधासान्द्रतरङ्गितविलोचना । बर्हिनिर्ह्रादनार्होऽयं कालश्च समुपागतः ॥"

अत्र "बर्हिनिर्ह्रादनार्हः" इति पदं समासादेकपद्यमित्युदाहृतम् । तदनुसारिणस्तर्क- वागीशा अपि "विना समासं तेषामसम्भवात्" इत्याहुः । एवञ्च" विना समासं तेषाम- सम्भवात्" रामचरणोक्तं हेयमित्यभिदधतां मतमेव हेयमित्यस्मद्गुरुचरणाः ।

( ६३ ) पदघटितत्वाद्वाक्यस्य पददोषज्ञानोत्तरमेव वाक्यदोषाकाङ्क्षोदयात् "पदे पदांशे वाक्येऽर्थे" इत्युक्तक्रममतिक्रम्य प्रथमं वाक्यदोषमेव दर्शयति—वाक्य इति । अत्र केचित्तु—विशिष्टैकतात्पर्यैकपदसमूहो वाक्यम्, तदपेक्षदोषत्वमेव वाक्यदोष- त्वम्, तदपेक्षत्वञ्च केषाञ्चिदात्मलाभाय केषाञ्चिच्च स्वोत्कर्षाय । तथा हि ये केवला वाक्यदोषा येऽपि च विधेयाविमर्शादयो वाक्यगतास्ते वाक्य एव सम्भवन्तीत्यात्मला- भाय वाक्यमपेक्षन्ते । ये पुनः दुःश्रवत्वादयः पददोषा अपि वाक्यघटकद्वित्र्यादिपदगत- त्वेनातिशयदोषतामापद्यन्ते ते स्वोत्कर्षलाभायैव वाक्यसापेक्षा इति । च्युतसंस्कारा- समर्थयोः स्वत एवातिशयदोषयोर्नवाक्यघटकपदद्वयादिगतत्वेन कोऽपि विशेषः, निरर्थकपदस्य वाक्यघटकत्वमेव नास्तीति नैषां वाक्यदोषत्वम् । एकस्य विवक्षितार्था- वाचकपदस्य प्रसिद्धार्थमादायापि कथञ्चित् वाक्यार्थबोधोपपत्तिः सम्भवतीति नावचक- त्वदोषस्य स्वत एवातिशय इति पदद्वयादिगतत्वेनातिशयितो वाक्यदोषोऽयमिति यथा कथञ्चिद्विभजनीयम्' इत्याहुः ।

( ६४ ) स्मरार्त्यन्ध इति ।

"मनोहारिणि' ! पद्माक्षि ! ममान्तःसुखदायिनि ! । इति मद्रचितपूर्वार्द्धम् ।

स्मरार्त्या कामपीडया अन्धः दिग्विदिक्संज्ञारहितः अहं तव विरहे वियोगे कदा कार्तार्थ्यं त्वत्सङ्गमप्राप्त्या कृतार्थतां लप्स्ये प्राप्स्यामि ।

अत्र "स्मरार्त्यन्ध" "कार्तार्थ्यम्" इति पदद्वयस्यैव परुषवर्णघटितत्वेन श्रुतिदुःख- जनकत्वाद्वाक्यगतदुःश्रवत्वम् ।

( ६५ ) कृतप्रवृत्तिरन्यार्थे कविर्वान्तं समश्नुते ॥

( ६६ ) अत्र जुगुप्साव्यञ्जिकाऽश्लीलता ।

( ६९ ) वाक्यगतं जुगुप्साश्लीलदोषं दर्शयति—कृतप्रवृत्तिरिति ।

"उच्छिष्टभोजनं प्राप्य कृतार्थं स्वं हि मन्यते" । इति मद्रचितपूर्वार्धम् ।

अन्यार्थे अन्यकविनिबद्धार्थे शब्दे च कृता विहिता प्रवृत्तिर्ग्रहणेच्छा येन स तथोक्तः, कविः वान्तम् अन्योद्गमितं समश्नुते ग्रहीतुं प्रयतते अन्योद्गमितग्रहणाभिलाषी श्वेव निन्दास्पदो जायत इत्यर्थः ।

( ६६ ) लक्ष्ये लक्षणं संयोजयितुमाह—अत्रेति । प्रवृत्तिशब्दस्य पुरीषव्यञ्जनात् वान्तशब्दस्य च उद्गमनवाचकत्वादिति भावः । प्रवृत्तिशब्दस्य जुगुप्साव्यञ्जकत्वं विज्ञप्रियादयः । यदि च प्रवृत्तिपदस्य तादृक् प्रसिद्धं जुगुप्साव्यञ्जकत्वं नाभ्युपेयते "वान्तं समश्नुते" इत्यत्र वान्तपदस्य जुगुप्साव्यञ्जकत्वेऽपि "समश्नुते" इत्यस्य तथात्वाभावात्कथं वाक्यदोषत्वमिति विभाव्यते तदा—

"तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्त्तनम् ॥"

इति काव्यप्रकाशोदाहरणमेवोदाहर्त्तव्यम् ।

अत्र हि वान्तोत्सर्गशब्दौ छर्दितपुरीषार्थकतया जुगुप्सां प्रयच्छत इति वाक्यगतजुगुप्साव्यञ्जकाश्लीलत्वम् ।

व्रीडाव्यञ्जकमश्लीलं वाक्यं यथा तत्रैव—

"भूपतेरुपसर्पन्ती कम्पना वामलोचना । तत्तत्प्रहरणोत्साहवती मोहनमादधौ ॥"

कस्यचिद्राज्ञः सेनावर्णनेयम् । अत्रोपसर्पन्ती रतोद्यता रिरंसोद्योगवती कम्पयतीति कम्पना कम्पजनिका स्वदर्शनेन सात्त्विकभावेन पुंसः कम्पयुक्तान् करोतीति भावः । यद्वा शङ्कया स्वयमेव कम्पयुक्ता तादृशी वामलोचना सुन्दरनयना नायिका तत्तत्प्रहरणे कामशास्त्रप्रसिद्धे स्वजङ्घनेन पुरुषजघनताडने उत्साहवती सती भूपतेः मोहनं निधुवनविलासातिशयम् आदधौ कृतवतीत्यर्थान्तरं व्यज्यते एवञ्च विवक्षितवाक्यार्थप्रतीतिदशायामर्थान्तरव्यञ्जनेन व्रीडादायित्वादुपसर्पन्तीत्यादिशब्दा दुष्टा इति भावः । एवमन्यत्रापि ।

"विद्यामभ्यसतो रात्रावेति या भवतः प्रिया । वनिता गुह्यकेशानां कथं ते पेलवं धनम् ॥"

अत्रोत्तरार्द्धे वनितायाः गुह्ये गुप्तदेशे ये केशास्तेषां तथा पेलस्य अण्डकोषस्य बन्धनमित्यर्थस्यापि च प्रतीत्या दोषः ।

वाक्यगतममङ्गलाश्लीलत्वं यथा काव्यप्रकाशे—

पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे ।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥

पति गृहे प्राप्तशोकायाः कस्याश्चिदुक्तिरियम् । अत्र विवक्षितार्थबोधकाले तां पितृवसतिं श्मशानं व्रजामि यत्र श्मशाने पावकान्वये अग्निसम्बन्धे मे मम हृदयम् अशेषितशोकशल्यकं भस्मरूपं भवतीत्यर्थान्तरव्यञ्जनेन पितृवसतिपावकान्वयशब्दौ जनकवेश्मपवित्रकारिवाचकावप्यमङ्गलार्थकत्वादश्लीलाविति बोध्यम् ।

एवमन्यदप्युदाहरणं यथा—

"प्रवासयति या कान्तं वसन्ते गृहसंस्थितम् । विनाशपथदानेन पिशाची सा न चाङ्गना ॥"

( ६७ ) 'उद्यत्कमललौहित्यैर्वक्राभिर्भूषिता तनुः ॥'

( ६८ ) अत्र कमललौहित्यं पद्मरागः, वक्राभिर्वामाभिः, **इति नेयार्थता ।**

( ६९ ) 'धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥'

( ७० ) अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति संबन्धः क्लिष्टः ।

( ७१ ) 'न्यक्कारो ह्ययमेव मे यत' ( ११ पृ. ) इति ।

---

अत्र संस्थितविनाशपदाभ्यां मरणार्थस्य विशाचीपदेन च प्रेतार्थस्य प्रकाशनाद्दोषः

( ६७ ) सङ्क्षेपायान्यान्दोषाननुपेक्ष्य वाक्यगतनेयार्थत्वमुदाहरति—उद्यदिति । वक्राभिः वामाभिः स्त्रीभिः कर्त्रीभिः उद्यद्भिर्दीप्यमानैः कमललौहित्यैः पद्मरागमणिभिः करणभूतैः तनुः शरीरं भूषिता मण्डिता ।

अत्र हि उत्पूर्वस्येणधातोरुदयगिरिशिखरारोहणमुख्यार्थस्य पद्मरागे बाधात् तज्जन्यप्रकाशे लक्षणा । रूढसत्त्वेऽपि पद्मरागप्रकाशस्योदयाजन्यत्वात् मुख्यार्थयोगाभावान्नेयार्थत्वम् ।

( ६८ ) अन्यदपि नेयार्थत्वं समर्थयितुमुपपादयति—अत्रेति । पद्मरागपदस्य परिवृत्त्यसहत्वात् कमलपदस्य एकपर्य्यायतासम्बन्धेन पद्मशब्दे, लौहित्यपदस्यापि एकपर्य्यायतासम्बन्धेन रागशब्दे, वक्रापदस्य च तत्सम्बन्धेन वामाशब्दे लक्षणा । तत्र यथा द्विरेफपदेन बहुव्रीहिलक्षणयोपस्थापिताद्रेफद्वययुक्तभ्रमरपदादभिधयैव भृङ्गोपस्थितिः रूढेस्तत्र सत्त्वात् । प्रकृते तु लक्षितैः पद्मादिभिः पदैरभिधया पद्मरागवामानामुपस्थितिसत्त्वेऽपि रूढिप्रयोजनाभावान्नेयार्थत्वम् । केचिदिमां लक्षितलक्षणामाहुः । नच लक्षणाद्वयाभावात् कथमियं लक्षितलक्षणेति वाच्यम् , यत्र लक्षिताच्छब्दादर्थाभिधानं तत्रैव लक्षितलक्षणायाः स्वीकारात् ।

( ६९ ) वाक्यगतं क्लिष्टत्वमुदाहरति—धम्मिल्लस्येति । कुरङ्गशावस्य हरिणशिशोः 'पृथुकः शावकः शिशुः" इत्यमरः, अक्षिणी इव अक्षिणी लोचने यस्यास्तस्याः तथोक्तायाः, अपूर्वस्य विलक्षणस्य बन्धस्य बन्धनस्य व्युत्पत्तिः विशिष्टा उत्पत्तिः सम्बन्धो यत्र तथोक्तस्य धम्मिल्लस्य संयतकेशपाशस्य "धम्मिल्लः संयताः कचाः "इत्यमरः, तथा च संयता मौक्तिकदामादिबद्धाः कचाः केशसमूहः धम्मिल्ल इत्युच्यते "जुट्टी" इति मिथिलाभाषायाम् । शोभां प्रेक्ष्य अवलोक्य कस्य पुरुषस्य मानसं चित्तं ( कर्तृ ) निकामम् अतिशयेन न रज्यति न हृष्यति अनुरक्तं न भवतीत्यर्थः अपि तु सर्वस्यैव रज्यतीत्यर्थः ।

( ७० ) अत्र व्यवहितान्वयात् क्लिष्टत्वमिति दर्शयितुमाह—अत्रेति । "कुरङ्गशावाक्ष्याः धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यति" इति सम्बन्धे प्रतीतिव्यवधानम् । तथा चान्योन्यान्वयिपदानामत्यन्तदूरस्थितत्वात् विशेषानुसन्धानेनैव तेषामन्योन्यमन्वयो बोध्यत इति तद्विलम्बात् रसस्यापि विलम्बेनैव प्रतीतेः प्रकर्षप्रतिबन्धकत्वेन क्लिष्टत्वं दोषः । अनेकपदगतत्वाद्वाक्यगतत्वमिति भावः ।

( ७१ ) वाक्यगतमविमृष्टविधेयांशत्वमुदाहरति—न्यक्कार इति । एतच्च पूर्वं व्याख्यातमेव ।

( ७२ ) अत्र चायमेव न्यक्कार इति न्यक्कारस्य विधेयत्वं विवक्षितम् । तच्च शब्दरचनावैपरीत्येन गुणीभूतम् ।

( ७३ ) रचना च पदद्वयस्य विपरीतेति वाक्यदोषः ।

( ७४ ) 'आनन्दयति ते नेत्रे योऽसौ सुभ्रु ! समागतः ॥'

( ७५ ) इत्यादिषु 'यत्तदोर्नित्यसंबन्धः' इति न्यायादुपक्रान्तस्य यच्छब्दस्य निराकाङ्क्षत्वप्रतिपत्तये तच्छब्दसमानार्थतया प्रतिपाद्यमाना इदमेतददः शब्दा विधेया एव भवितुं युक्ताः । अत्र तु यच्छब्दनिकटस्थतया अनुवाद्यत्वप्रतीतिकृत् ।

---

( ७२ ) अस्मोक्तदोषं समर्थयितुमाह—अत्र चेति । विधेयत्वं विवक्षितमिति । तस्यवानन्तरप्रतीतिविषयत्वादिति भावः । तच्च न्यक्कारगतविधेयत्वञ्च, शब्दरचनावैपरीत्येन विधेयवाचकपदस्य उद्देश्यवाचकात् पूर्वनिर्देशेनेत्यर्थः गुणीभूतम् अप्रधानीभूतम् । 'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेदि'ति नियमादिति भावः । अत एव 'वह्निमान् पर्वत' इति न प्रयुज्यते ।

( ७३ ) ननु विधेयपदस्य पूर्वनिपातेन दोषे पददोषत्वमेवोचितमिति कथं वाक्यदोषत्वमित्यत आह—रचना चेति । पदद्वयस्य "अयं न्यक्कारः" इत्यत्र इदम्पदस्य न्यक्कारपदस्य चेत्यर्थः । रचना विन्यासः । तथाचानेकपदप्रयुक्तत्वाद्वाक्यगतदोषत्वमिति भावः । उद्देश्यविधेयभावस्तुप्राक् ( ६५६ पृ० ) निरूपित एव । ननु "न्यक्कारोऽयमित्यत्रोद्देश्यविधेयभावानुपपत्तिरर्थयोरेव तथा चार्थयोरेव वैपरीत्येन प्रत्ययादर्थस्यैवायं दोषो न वाक्यस्येति चेत् ? नैवम्, रचनायाः शब्दधर्मत्वेन तदन्वयव्यतिरेकानुविधानात्तद्दोषताया एव स्वीकारात् विवक्षितार्थस्य प्रकृतेऽदुष्टत्वाच्चेति भावः ।

( ७४ ) अयं दोषो विधेयानुवाद्ययोरपि सम्भवतीत्यभिप्रायेणोदाहरणान्तरं दर्शयति—आनन्दयतीति ।

'लावण्यादिसमायुक्तः पूर्णचन्द्रनिभाननः' । इति मद्रचितपूर्वार्द्धम् ।

य आनन्दयति असौ समागत इति सम्बन्धः ।

( ७५ ) उक्तोदाहरणे दोषं प्रतिपादयितुमाह—इत्यादिष्विति । यत्तदोर्यच्छब्दतच्छब्दयोः नित्यसम्बन्धः मिथोऽपेक्षितस्वरूपः सम्बन्धो नियत इत्यर्थः । उपक्रान्तस्य प्रस्तुतस्य उद्देश्यत्वेन कथितस्येत्यर्थः । निराकाङ्क्षत्वप्रतिपत्तये आकाङ्क्षापूरणाय तच्छब्दसमानार्थतया तच्छब्दवत्प्रस्तुतपदार्थोपस्थापकतया प्रतिपाद्यमाना अभिधीयमानाः विधेया एव विधेयप्रतिपादका एव न तूद्देश्यप्रतिपादका इति एवकारार्थः । अत्र तु 'आनन्दति' इत्युदाहरणे 'योऽसौ' इत्यत्र तु । अनुवाद्यत्वप्रतीतिकृत् उद्देश्यताज्ञानजनकः' 'अदः शब्द' इति शेषः । तथाहि 'य आनन्दयति असावागतः' इति यच्छब्दार्थानुवादेन तच्छब्दार्थपरामर्शकतया असावित्यस्य विधेयपरामर्शकत्वमभिमतम् तच्च न सम्भवति यच्छब्दसान्निध्येन प्रतिपाद्यमानस्यादसादेर्यच्छब्दार्थगतप्रसिद्धिप्रत्यायकतया अनुवाद्यकोटिप्रविष्टार्थकत्वात् । उक्तन्यायेन च यच्छब्दः स्वार्थपरामर्शकतच्छब्दाद्यभावात् साकाङ्क्ष एवावतिष्ठते । एवञ्च विधेयवाक्यस्यासम्पूर्णतया उद्देश्यविधेयभावाप्रतीतिरित्यविमृष्टविधेयांशत्वदोषः । अत्र—

"अपाङ्गसंसर्गि तरङ्गितं दृशोर्भ्रुवोररालान्तविलासि वेल्लितम् ।

( ७६ ) तच्छब्दस्यापि यच्छब्दनिकटस्थितस्य प्रसिद्धपरामर्शित्वमात्रम् । यथा-

( ७७ ) 'यः स ते नयनानन्दकरः सुभ्रु ! स आगतः ॥'

( ७८ ) यच्छब्दव्यवधानेन स्थितास्तु निराकाङ्क्षत्वमवगमयन्ति । यथा—

( ७९ ) 'आनन्दयति ते नेत्रे योऽधुनाऽसौ समागतः ॥'

( ८० ) एवमिदमादिशब्दोपादानेऽपि ।

---

विसारि रोमाञ्चकञ्चुकं तनोस्तनोति योऽसौ सुभगे ! तवागतः ॥"

इति काव्यप्रकाशोदाहरणमुपजीव्यम् ।

( ७६ ) अधुनाविमृष्टविधेयांशस्य प्रसङ्गाप्रसङ्गोपपादनाय शब्दरचनाप्रकारविशेषेणैव अर्थविशेषस्यावगम इत्युपपादयितुमाह—तच्छब्दस्यापीति । न केवलमुदाहृते अदःशब्दस्य तच्छब्दस्यापीत्यर्थः । तच्छब्दपदञ्चात्र इदमेतच्छब्दयोरप्युपलक्षणम् । प्रसिद्धपरामर्शित्वमात्रं केवलप्रसिद्धार्थबोधकत्वमेव न तु विधेयत्वबोधनेन निराकाङ्क्षत्वबोधप्रतिपादकत्वम् । तदुक्तम्—

ख्यातार्थमनुभूतार्थं प्रक्रान्तार्थञ्च तत्पदम् ।
यत्पदापेक्षयाहीनं न विधेयत्वबोधकृत् ॥ इति ।

( ७७ ) उदाहरति—यः स इति ।

रमस्व स्वेच्छया तेन सह शक्रेण शचीव त्वम् । इति मद्रचितपूर्वार्द्धम् ।

अत्र यच्छब्दसमीपस्थितस्य स इत्यस्य प्रसिद्धार्थबोधकत्वम्, द्वितीयस्य "स" इत्यस्य विधेयबोधकत्वम् । एवञ्चात्र उद्देश्यविधेयप्रतिपादकयोर्यच्छब्दतच्छब्दयोर्यथानियमस्थितित्वान्नाविमृष्टविधेयांशत्वदोषः ।

यत्र तु प्रसिद्धादिपरामर्शिनोऽपि तच्छब्दस्य यत्पदेन सम्बन्धः सम्भवति तत्र विधेयत्वप्रतीतिकारित्वमेव । क्रमेण यथा—

करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः ।
पश्यन्ति सूक्ष्ममतयः सा जयति सरस्वती देवी ॥
यदङ्गलावण्यमनङ्गभङ्गदं यदाननं निन्दति बिम्बमैन्दवम् ।
मम क्षणं मुञ्चति मानसं न या विहाय तां हन्त ! न शान्तिरस्ति मे ॥
"रसैः कथा यस्य सुधावधीरिणी नलः स भूजानिरभूद्गुणाद्भुतः ॥"

इत्यादौ उद्देश्यविधेयबोधकयोर्यच्छब्दतच्छब्दयोर्यथानियमस्थितत्वान्न विधेयाविमर्शः ।

( ७८ ) यच्छब्देति । स्थिता इदमेतददः शब्दाः इत्यनुषङ्गः । निराकाङ्क्षत्वं यच्छब्दस्येति शेषः अवगमयन्ति । तथासति तेषां विधेयत्वं स्फुटमवगम्यते इत्यतस्तत्तो नाविमर्श इति भावः ।

( ७९ ) एतादृशस्थलमुदाहरति—आनन्दयतीति । अधुना यः समागतः, असौ ते नेत्रे आनन्दयतीति सम्बन्धः । एवञ्चात्र य इत्यतः असौ इत्यस्य अधुनापदेन व्यवहितत्वात् असावित्यदः शब्देन य इति यच्छब्दस्य निराकाङ्क्षत्वं बोधितम् । विधेयप्रत्यायकस्य असावित्यस्यानन्तरमेव स्थितत्वादत्रापि न विधेयाविमर्श इति बोध्यम् ।

( ८० ) एवमिति । इदमादिशब्दोपादानेऽपि उदाहार्यमिति शेषः । आदिपदेनैतच्छब्दस्य परामर्शः । तत्र इदं शब्दोपादाने प्रकृतोदाहरण एव तच्छब्दं निःसृत्य तथादः

( ८१ ) यत्र च यत्तदोरेकस्यार्थत्वं संभवति, तत्रैकस्योपादानेऽपि निराकाङ्क्षत्व-प्रतीतिरिति न क्षतिः ।

( ८२ ) तथाहि यच्छब्दस्योत्तरवाक्यगतत्वेनोपादाने सामर्थ्यात् पूर्ववाक्ये-तच्छब्दस्यार्थत्वम् । यथा—

( ८३ ) 'आत्मा जानाति यत्पापम् ॥'

( ८४ ) एवम्—

'यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च—'

---

शब्दश्च निरुत्योदाहार्यम्—यथा—

"योऽयं ते नयनानन्दकरः सुभ्रु ! । स आगत" इति ।
"आनन्दयति ते नेत्रे योऽधुनायमुपागतः" ।

एवमेतच्छब्दोपादानेऽप्युदाहरणीयम् ।

( ८१ ) "यत्तदोरि"ति न्यायेन हि द्वयोरुपादाने एव एषविचारः । एकस्यैवोपादाने तु नायं विचार इत्यत आह—यत्र चेति यत्तदोरिति । एकस्य एकतरस्य । आर्थत्वं पदानुपादानेऽपि तस्यार्थवशाल्लभ्यत्वमित्यर्थः । न क्षतिरिति । विधेयत्वाप्रतीतिरूपा क्षतिर्नास्तीत्यर्थः ।

( ८२ ) उक्तमर्थं समर्थयितुमाह—तथाहीति । उपादाने साक्षादुक्तौ सामर्थ्यात् परस्परापेक्षितत्वरूपसम्बन्धस्य नैयत्यात् । आर्थत्वं पदानुपादानेऽपि तस्यार्थवशाल्लभ्यत्वम् ।

( ८३ ) एतादृशं स्थलमुदाहरति—आत्मेति । स्वनिष्ठं यत्पापमस्ति तदात्मा जानातीत्यर्थः ।

अत्र वान्यत्र जन्मनि ।
प्रत्यक्षं वा परोक्षं वा स्वल्पं वा भूरि वा कृतम् ॥ इत्यवशिष्टपादत्रयम् ।

अत्र पूर्ववाक्ये तच्छब्दस्यानुपादानेऽपि तदर्थवशेन लभ्यत्वादुत्तरवाक्यगतयच्छब्दस्य निराकाङ्क्षत्वम् ।

( ८४ ) यच्छब्दस्य श्लोकान्तररूपोत्तरवाक्यगतत्वेनोपादानेऽपि श्लोकान्तरीय-तच्छब्दस्यार्थत्वं प्रतिपादयितुमाह—एवमिति । यं सर्वशैला इति । "पृथूपदिष्टं दुदुहुर्धरित्रीम्" इति चरमपादः ।

दोहदक्षे दोहनकुशले मेरौ सुमेरुपर्वते दोग्धरि दोहनकर्त्तरि स्थिते वर्त्तमाने सति सर्वशैलाः यं हिमालयं वत्सं परिकल्प्य कल्पयित्वा पृथुना राज्ञा उपदिष्टां धरित्रीं वसुन्धरा भास्वन्ति तेजोवन्ति रत्नानि मणीन् । उत्कृष्टान् अन्यान् पदार्थान् वा । 'रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्" इति मेदिनी । महौषधीश्च दुदुहुः । "दुह्याच् पचे"त्यादिना दुहिर्द्विकर्मकः । कुमारसम्भवप्रथमसर्गे पद्यमिदम् । उपजातिश्छन्दस्तल्लक्षणञ्चोक्तं प्राक् ।। इत्यादौ उत्तरवाक्ये यच्छब्दस्यावस्थानात् "अस्त्युत्तरस्यां दिशि देवतात्मा" इत्यारम्भ एव "स अस्ति" इति तच्छब्दस्यार्थत्वम् । नचात्र कथमुत्तरस्थत्वमिति वाच्यम् ,. कुलकत्वेन तत्पूर्ववाक्यार्थतत्पदेन सहा-

( ८५ ) इत्यादावपि ।

( ८६ ) तच्छब्दस्य प्रक्रान्तप्रसिद्धानुभूतार्थत्वे यच्छब्दस्यार्थत्वम् ।

क्रमेण यथा—

( ८७ ) 'स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ॥'

( ८८ ) 'स वः शशिकलामौलिस्तादात्म्यायोपकल्पताम् ॥'

( ८९ ) 'तामिन्दुसुन्दरमुखीं हृदि चिन्तयामि ॥'

---

न्वयात् तद्वाक्योत्तरवाक्यस्थत्वात् । उत्तरवाक्यस्थयत्पदस्य पूर्ववाक्यस्थतत्पदेन शाब्दः सम्बन्धोऽपि यथा—"अन्यास्ता गुणरत्नरोहणभुवः" इत्यादि । एवं पूर्ववाक्यस्थयत्पदस्योत्तरवाक्ये प्रतीयमानतत्पदापेक्षा यथा—

यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम् ।
विपर्ययेन्द्रियार्थार्थं विषमत्त्यमृतं त्यजेत् ॥ इति ।

( ८५ ) इत्यादावपीति । इत्यादावपि तच्छब्दस्यार्थत्वमिति पूर्वेण सम्बन्धः ।

( ८६ ) यत्तदोर्नित्यसाकाङ्क्षत्वेन यच्छब्दोपादानेन तच्छब्दस्यार्थत्वं प्रदर्श्य तच्छब्दमात्रोपादानेन यच्छब्दस्यार्थत्वं प्रसङ्गाद्दर्शयति—तच्छब्दस्येति । प्रक्रान्तः पूर्वप्रतीतिविषयः प्रसिद्धो लोकविख्यातः अनुभूतः स्वयमनुभवविषयीकृतश्च अर्थो विषयो यस्य तस्य भावस्तस्मिंस्तथाभूते सति आर्थत्वं पदानुपादानेऽपि तस्यार्थवशाल्लभ्यत्वम् तच्छब्दस्य पूर्वप्रतीतिवाचित्वे प्रसिद्धार्थवाचित्वे स्वयमनुभूतार्थवाचित्वे च यच्छब्दस्यार्थवशाल्लभ्यत्वमिति सारार्थः ।

( ८७ ) तत्र प्रथमं तच्छब्दस्य प्रक्रान्तार्थवाचित्वे यच्छब्दनिरपेक्षत्वमुदाहरति—स हत्वेति । रघुवंशमहाकाव्ये द्वादशसर्गे पद्यमिदम् । स प्रक्रान्तो वीरो रामः वालिनं हत्वा सुग्रीवेणैव चिरकाङ्क्षिते चिराभिलषिते तस्य वालिनः पदे स्थाने राजत्वे इत्यर्थः धातोर्हन् प्रभृतेः स्थाने आदेशं वधादिकमिव सुग्रीवं संन्यवेशयत् नियुक्तवान् । धातोः कार्यं यथा आदेशेन क्रियते तथा वालिकार्यं सुग्रीवेण कर्त्तव्यमित्यर्थः ।

अत्र "स" इति तच्छब्दः प्रक्रान्तरामरूपार्थवाचित्वात् यच्छब्दोपादानं नापेक्षते । आक्षेपे बीजन्तु व्युत्पत्तिवैचित्र्यं पदस्वभावो वा । एवञ्च प्रक्रान्तार्थकेन तच्छब्देन यः सुग्रीवप्रियकारीति यच्छब्दाक्षेपादन्वयबोध इति बोध्यम् । एवं "स राज्यं गुरुणा दत्तम्" इति तत्रैव चतुर्थसर्गेऽपि बोध्यम् ।

( ८८ ) तच्छब्दस्य प्रसिद्धार्थवाचित्वे यच्छब्दनिरपेक्षत्वमुदाहरति—स व इति ।

अनादिरचलः शान्तः सर्वानन्दविधायकः । इति मत्पूरितपूर्वार्द्धम् ।

यो लोके पूज्यते स प्रसिद्धः शशिनः कलामौलौ यस्य स चन्द्रशेखरः शिव इत्यर्थः वो युष्माकं तादात्म्याय सायुज्यमोक्षाय उपकल्पतां प्रभवतु ।

अत्र 'स' इति तच्छब्दः प्रसिद्धार्थवाचित्वाद् यच्छब्दाक्षेपात्तदन्वयबोध इति यच्छब्दं नापेक्षते ।

( ८९ ) तच्छब्दस्य स्वयमनुभूतार्थवाचित्वे यच्छब्दापेक्षा नेति दर्शयति—तामिन्द्विति ।

( ९० ) यत्र च यच्छब्दनिकटस्थितानामपीदमादिशब्दानां भिन्नलिङ्गविभक्तित्वं तत्रापि निराकाङ्क्षत्वमेव । क्रमेण यथा—

( ९१ ) 'विभाति मृगशावाक्षी येदं भुवनभूषणम् ॥'

( ९२ ) 'इन्दुर्विभाति यस्तेन दग्धाः पथिकयोषितः ॥'

( ९३ ) क्वचिदनुपात्तयोर्द्वयोरपि सामर्थ्यादवगमः । यथा—

( ९४ ) 'न मे शमयिता कोऽपि भारस्येत्युर्वि ! मा शुचः ।

भ्रूभङ्गया विदितसर्वहृदिस्थभावां,
वाग्भिः सुधामिव मनः परितोषयन्तीम् ।
आलिङ्गनेन परमं सुखमादधानाम्'—इति मत्पूरितपादत्रयम् ॥

अत्र तामिति तच्छब्दस्य स्वयमनुभूतार्थवाचित्वात् न यच्छब्दमपेक्षते ।

( ९० ) पूर्वं "तच्छब्दस्यापि यच्छब्दनिकटस्थितस्य प्रसिद्धपरामर्शित्वमात्रम्" "एवमिदमादिशब्दोपादानेऽपि" इत्येताभ्यां यच्छब्दसमीपवर्त्तिनां तदिदमेतददः शब्दानां केवलं प्रसिद्धपरामर्शित्वमेव न त्वाकाङ्क्षानिवर्त्तकत्वमपीत्युक्तम्, अधुना तद्विपरीतमुपपादयति—यत्र चेति । आदिपदेन तदेतददःशब्दानां परिग्रहः । निराकाङ्क्षत्वमेव यच्छब्दाकाङ्क्षानिवर्त्तकत्वमेव ।

( ९१ ) यच्छब्दसमीपवर्त्तिनः भिन्नलिङ्गस्य इदंशब्दस्य यच्छब्दाकाङ्क्षानिवर्त्तकत्वमुदाहरति—विभातीति ।

"सर्वाङ्गसुन्दरी श्यामा साक्षाद्रतिरिवापरा ।" इति मद्रचितपूर्वार्द्धम् ।

या भुवनभूषणमित्यर्थः ।

अत्र य आधारस्तदधिकरणमित्यत्रेव इदं पदे विधेयस्य भूषणस्य लिङ्गम् । तथा च "भुवनभूषणम्" इति प्रक्रंस्यमानलिङ्गभागितया इदमिति नपुंसकलिङ्गः इदंशब्दः या इत्यस्य स्त्रीत्वेन भिन्नलिङ्गत्वादाकाङ्क्षां निवर्त्तयति ।

( ९२ ) यच्छब्दसमीपवर्त्तिनः भिन्नविभक्तिकस्य तच्छब्दस्य यच्छब्दाकाङ्क्षानिवर्त्तकत्वमुदाहरति—इन्दुरिति ।

"मृगलाञ्छनयुक्तोऽपि सर्वानन्दविधायकः ।" इति मत्पूरितपूर्वार्द्धम् ।

य इन्दुः शशी विभाति तेन इन्दुना पथिकानां प्रवासिनां योषितो वनिताः दग्धास्तापिताः ।

अत्र "यः" इति प्रथमान्तयच्छब्दस्य तेनेति तच्छब्दस्य तृतीयैकवचनत्वेन भिन्नविभक्तिकत्वादाकाङ्क्षां निवर्त्तयति ।

एवमपिकारान्वितस्यापि तदादेर्निराकाङ्क्षत्वमेव । यथा—

"शीतांशुरपि यः सोऽपि दग्धवान् पथिकाङ्गनाः" इति ।

एवमेतददः शब्दयोरप्युदाहार्य्यम् ।

( ९३ ) क्वचिदिति । अनुपात्तयोः वाक्ये अप्रयुक्तयोः, द्वयोरपि उपात्तवस्तुविषयत्वेनोपकल्पितयोर्यच्छब्दतदाद्यन्यतमशब्दयोः सामर्थ्यात् आकाङ्क्षातः अवगमोऽवबोधः सम्पद्यते ।

( ९४ ) उदाहरति—न मे इति । कंसभारादूनामुर्वीं प्रति ब्रह्मण आश्वासवाक्यमिदम् ।

नन्दस्य भवने कोऽपि बालोऽस्त्यद्भुतपौरुषः ॥'

( ६५ ) अत्र योऽस्ति, स ते भारस्य शमयितेति बुध्यते ।

( ९६ ) 'यद्यद्विरहदुःखं मे तत्को वाऽपहरिष्यति ॥'

इत्यत्रैको यच्छब्दः साकाङ्क्ष इति न वाच्यम् ।

( ६७ ) तथाहि—यद्यदित्यनेन केनचिद्रूपेण स्थितं सर्वात्मकं वस्तु विवक्षितम् । तथाभूतस्य तस्य तच्छब्देन परामर्शः ।

---

हे उर्वि ! पृथिवि ! मे मम भारस्य शमयिता कंसादीनां हननेन शान्तयिता कोऽपि जनो नास्ति एवं मा शुचः शोकं मा कुरु। यतो हि नन्दस्य तन्नामकस्य गोपवरस्य भवने अद्भुतपौरुषः विस्मयावहपराक्रमः कोऽपि बालः शिशुरस्ति ।

( ६५ ) लक्ष्यं योजयितुमाह—अत्रेति । बुध्यते वक्तुराकाङ्क्षावशादिति भावः । इदञ्च द्वयोरनुपादानोदाहरणतया न समीचीनमुदाहृतम्, तच्छब्दार्थावगमं विनापि यथोक्त-बालकसत्त्वस्य यत इत्युत्तरवाक्यगततया हेतुत्वावगमात् उत्तरवाक्यगतयच्छब्दस्य तच्छब्दानपेक्षणाच्च । किन्तु—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥

इति यो भवभूतेरहङ्कारश्लोकः काव्यप्रकाशकृता यत्तदोर्द्वयोरनुपादाने उदाहृतं तदेवो-दाहरणं बोध्यम् ।

तत्र उत्पत्स्यमानस्य धामणो विशेष्यानिश्चितत्वात् यत्तदर्थो सामान्यत एव य उत्प-त्स्यते तं प्रति यत्न इत्युक्तौचित्यादिति केचिद्वदन्ति ।

( ९६ ) ननु यत्र पूर्ववाक्ये यत्पदद्वयं तत्र कथमेकपदेन निराकाङ्क्षत्वप्रतीतिः, तत्र तत्पदद्वयस्यैव वक्तुं योग्यत्वात् यथा—"यं यं कामयते कामं तं तं प्राप्नोति मानवः" इत्याशङ्कायामाह—यद्यदिति ।

"तपत्यहर्निशं चित्तं क्वाऽपि न स्वस्थतां व्रजे ॥" इति मत्पूरितपूर्वार्द्धम् ।

इत्यत्रेति । एकेन तच्छब्देन एकस्यैव यच्छब्दस्याकाङ्क्षापूरणात् । शङ्कितुरत्रायमाशयः—यदि यच्छब्दस्य नियतमेव तच्छब्दसाकाङ्क्षतां तदा कथमत्र श्लोके निराकाङ्क्षतानिर्वाहः । अत्र हि एकेन तत्पदेन एकस्य यत्पदस्य निराकाङ्क्षत्वेऽपि द्वितीयस्य यत्पदस्य साकाङ्क्ष-त्वमस्त्येव तथा च विधेयाविमर्शत्वं दुर्वारमेव स्यादिति । समाधत्ते—न वाच्यमिति ।

( ९७ ) उपपादयति—तथाहीति । सर्वात्मकं वस्तु विरहदुःखत्वेन सामान्येन सर्वं विरहदुःखमित्यर्थः, विवक्षितं वक्त्रेति शेषः । तथाभूतस्य सर्वात्मकस्य विरहदुःखत्वाव-च्छिन्नस्येत्यर्थः । तस्य दुःखरूपवस्तुनः तच्छब्देन एकेनैवेत्यर्थः बुद्धिविषयतावच्छेद-कावच्छिन्ने तदादीनां शक्तेरिति भावः । परामर्श आकाङ्क्षापूरकत्वेन सम्बन्धः । अत एव "यो यः शस्त्रं बिभर्ति" इति वक्ष्यमाणोदाहरणे यच्छब्दाष्टके तस्य तस्येति द्विरेव तच्छब्दोक्तिः । एवं—

"स श्लाघ्यः स गुणी धन्यः स शूरः स च पण्डितः।

( ९८ ) एवमन्येषामपि वाक्यगतत्वेनोदाहरणं बोध्यम् ।

स कुलीनः स विक्रान्तो यस्त्वया देवि ! वीक्षितः ॥''

इत्यादौ नाना तत्पदपरामृष्टस्यैकेनैव यत्पदेन प्रतीतिरिति बोध्यम् । ।समाधातुरत्रा- यमाशयः—यत्पदद्वयेन अनुभूताननुभूतत्वरूपाभ्यां परामृष्टस्य सकलस्य सर्वप्रकार- कदुःखस्यैकेनैव तत्पदेन दुःखत्वेन रूपेण परामर्शोपपत्तेर्न द्वितीयतत्पदापेक्षा 'यत्तद्भ्यामे- करूपेणैव परामर्श' इति नियमे प्रमाणाभावात् । तथा च ''यत्पदार्थस्तत्पदेन परामृ- श्यते'' इत्येव नियमो न तु यावन्तो यच्छब्दास्तावन्तस्तच्छब्दा एवश्चात्र न विधे- याविमर्शशङ्केति । तथा च ''यः स ते नयनानन्दकरः'' इत्यत्रोद्देश्यविधेयभावोवि- वक्षितः, न च स प्रतीयते 'योऽसौ प्रसिद्ध' इत्येवप्रतीतेरिति दोष एवेत्यवधेयम् । इदं सर्वं मूलकारोक्तदिशेति बोध्यम् । वस्तुतस्तु—यद्यदिति न पदद्वयम्, किन्तु नित्यवीप्सयोः इति सूत्रेण वीप्सायां यदो द्वित्वापन्नोऽयमादेशः तथाचादेशिनेकेन यत्पदेन तत्पदेन च द्वाभ्यामप्येकेनैव रूपेण दुःखपरामर्शः । आदेशस्तु साकल्येनान्वये तात्पर्यग्राहक इति यत्पदीयेनैव तेन सम्बन्धप्रतीत्युपपत्तौ न तत्पदेऽपि वीप्साद्योतको द्वित्वापन्न आदेशः । यत्र हि यत्पदप्राधम्यं तत्र तत्पद एवादेशो न यत्पदे यथा—

''क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न सन्तोषतः
सोढा दुःसहवातशीततपनक्लेशा न तप्तं तपः ।
ध्यातं वित्तमहर्निशं न च पुनर्विष्णोः पदं शाश्वतं
तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितम्'' ॥ इति ।

यत्र तु तत्पदेऽपि वीप्सा तत्र न यत्पदेऽप्यादेशः किन्तूभाभ्यां रूपद्वयेन सर्वोपस्था- पनमिति । यथा रघुकाव्ये ६ सर्गे—

''सञ्चारिणीदीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥

अत्र नरेन्द्रकन्यया क्रमेण व्यतीतानां क्रमेणैव वैवर्ण्यप्राप्तिरिति पृथक्पृथग्रूपेणैव पृथक्पदाभ्यां बोधः । एवं—

''यां यां प्रियः प्रैक्षत कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव''इति माघ० का ३ स० ।

इत्यादावपि । इदं क्रमभेदविवक्षायाम् । तद्भेदविवक्षाविरहेऽपि तथा प्रयोगे तु एकत्रादेशो व्यर्थ एव । यथा—

''यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः'' इत्यादौ ।

क्वचित्सर्वात्मकतया उपस्थापकस्य एकस्यैव यच्छब्दस्य तच्छब्देनाकाङ्क्षापूरणम् । यथा नैषधे—

''तद्' विदधे तथा तथा दमयन्त्याः सविधे तव स्तवम् ।
हृदये निहितस्तया भवान् अपि नेन्द्रेण यथापनीयते'' ॥

अन्यत्र च—''ते ते सत्पुरुषाः परार्थघटकाः स्वार्थस्य बाधेन ये'' इत्यादौ ।

( ९८ ) एवमिति । तत्र वाक्यगतमनुचितार्थत्वं यथा काव्यप्रकाशे—

''कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो ! ।

शश्वद्गोत्स्खलगौरस्फुटविकटसर्वाङ्गसुभगा
तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥

राजानं प्रति कवेरुक्तिरियम् ।

अत्र कुविन्दशब्दो रूढ्या तन्तुवायार्थकः "तन्तुवायः कुविन्दः स्यात्" इत्यमरः । तथा च प्राकरणिके राजरूपेऽर्थे तदन्वययोग्ये चार्थे तत्तच्छब्दानामभिधया नियमनात्तन्तुवायरूपोऽर्थस्तदन्वययोग्यश्चार्थौ व्यञ्जनया गम्यते । एवञ्च राज्ञोऽनुचितं तन्तुवायौपम्यं वाक्यमश्लीलम्यमिति राज्ञो निन्दाप्रत्यायनादनुचितार्थत्वम् ।

वाक्यगता अप्रयुक्तता यथा तत्रैव—

"स रातु वो दुश्च्यवनो भावुकानां परम्पराम् ।
अनेडमूकताद्यैश्च द्यतु दोषैरसम्मतान् ॥"

अत्र आदादिको 'रा' धातुर्दाने, दुश्च्यवनशब्दः "संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः" इत्यमरकोशादिन्द्रे, भावुकशब्दो "भविकं भव्य कुशल" मित्याद्यमरकोशादेव मङ्गले, अनेडमूकशब्दयोः—

'अनेडमूक उद्दिष्टः शठे वाक्श्रुतिवर्जिते ।
त्रिलिङ्गोऽनेडमूकः स्याच्छठे वाक्श्रुतिवर्जिते" ॥

इति मेदिनीरभसकोशाभ्यां बधिरे दैवादिकदोधातोश्च खण्डने प्रसिद्धिसत्त्वेऽपि कविभिरनादृतत्वादप्रयुक्तता ।

वाक्यगतं ग्राम्यत्वं यथा तत्रैव—

"ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ॥"

गल्लः कपोलः भल्लं सम्यक् ।

अत्र गल्लभल्लमानुषखादनपानशब्दाः गण्डादिषु विदग्धैर्न प्रयुज्यन्ते किन्तु कपोलादय एव तथाप्रतिपादनात् गल्लादयो ग्राम्याः। अनेकपदगतत्वाद्वाक्यगतत्वम् ।

वाक्यगतमप्रतीतत्वं यथा तत्रैव—

"तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः ।
दृढभूमिः प्रियप्राप्तो यत्नः सफलितः सखे ! ॥"

अत्रेदं बोध्यम्—योगिनस्तावत्त्रिविधा भवन्ति मृदूपायो मध्योपायोऽधिमात्रोपायश्च । ते च प्रत्येकं मृदुसंवेगो मध्यसंवेगस्तीव्रसंवेगश्चेति त्रिविधा एवं नव भेदा भवन्ति । तेष्वधिमात्रोपायस्तीव्रसंवेगो योगी सिद्ध इत्युच्यते । तथा चात्राधिमात्रोपायतीव्रसंवेगभूमिशब्दानां योगशास्त्रमात्रप्रसिद्धत्वेनानेकवाक्यगतत्वादप्रतीतत्वं दोषः ।

वाक्यगतं सन्धिग्धत्वं यथा तत्रैव—

"सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥"

अत्र सुर-कम्पन-मार्गण-भूतिशब्दाः प्रकरणनियमाभावात् किं देव-सेना-शरसम्पदर्थाः, किं वा मद्य-सञ्चलन-पर्य्यटन-भस्मार्था इति सन्देहात्सन्दिग्धत्वम् । नेयार्थत्वन्तु मूलकृतैव "उद्यत्कमललौहित्यैः" इत्यादिना उदाहृतम् ।

वाक्यगतं निहतार्थत्वं यथा तत्रैव—

( ९९ ) पदांशे दुःश्रवत्वं यथा—

'तद्गच्छ सिद्धयै कुरु देवकार्यम् ॥'

( १०० ) 'धातुमत्तां गिरिर्धत्ते ॥'

---

सायकसहायबाहोर्मकरध्वजनियमितक्षमाधिपतेः ।
अब्जरुचिभास्वरस्ते भातितरामवनिप ! श्लोकः ॥

राज्ञः प्रशंसेयम् । अत्र सायकः "शरे खड्गे च सायकः" सायकः शरखड्गयोः "इत्यमरविश्वकोशाभ्यां खड्गः शरश्च, मकरध्वजः समुद्रः मदनश्च, क्षमा भूमिः शान्तिश्च, अब्जश्चन्द्रः अब्जं पद्मञ्च श्लोको यशः पद्यं च । तथा च सायकमकरध्वजक्षमा अब्जश्लोकशब्दानां शरमदनशान्तिपद्मपद्येषु प्रसिद्धिबाहुल्यात् द्वितीयार्थेन प्रकृतार्थतिरोधानमिति निहतार्थत्वमिति भावः ।

वाक्यगतमवाचकत्वं यथा—

नमन्नृपतिमण्डलीमुकुटचन्द्रिकादुर्दिन—
स्फुरच्चरणपल्लवप्रतिपदोक्तदोः सम्पदः ।
अनेन समुजेतरां तुरगमेधमुक्तश्रम—
त्तुरङ्गखुरचन्द्रकप्रकरदन्तुरा मेदिनी ॥

अत्र चन्द्रिकाशब्दः किरणसामान्ये, दुर्दिनशब्दश्छन्नमात्रे, स्फुरच्छब्दश्चरणसमृद्धाववाचकः । क्लिष्टत्वविधेयाविमर्शौ तु वाक्यगतौ मूलकृतैवोदाहृतौ ।

वाक्यगतं विरुद्धमतिकारित्वं यथा काव्यप्रकाशे—

श्रितक्षमारक्तभुवः शिवालिङ्गितमूर्त्तयः ।
विग्रहक्षपणेनाद्य शेरते ते गतासुखाः ॥

सामोपायलब्धसिद्धीनां राज्ञां वर्णनमिदम् । श्रिता आश्रिता क्षमा शान्तिर्भूमिश्च यैस्ते तथाभूताः, गतासुखा गतदुःखाः, पक्षे गतानि असवः प्राणाः खानि इन्द्रियाणि च येषान्ते तथोक्ता इत्यादि ।

अत्र क्षमादिगुणयुक्ताः सुखमासते इति विवक्षिते हता इति विरुद्धोऽर्थः प्रतीयते ।

( ९९ ) इत्थं वाक्यदोषमभिधायोद्देश्यक्रमप्राप्तान् पदांशदोषान्निरूपयति—पदांश इति । तद्गच्छेति ।

..........................अर्थोऽयमर्थान्तरभाव्य एव ।

अपेक्षते प्रत्ययमुत्तमं त्वां बीजाङ्कुरः प्रागुदयादिवाम्भः । इत्यवशिष्टं पादत्रयम् ।

कुमारसम्भवतृतीयसर्गे कामं प्रति इन्द्रस्योक्तिरियम् । अत्र सिद्धयै लब्ध्यै इत्युभयोश्चतुर्थ्यन्तपदयोर्मध्ये "द्धयै ब्ध्यै" इत्यंशौ परुषवर्णतया श्रुतिदुःखावहौ । प्रार्थनेऽतिमधुरभाषणस्यैवौचित्येन तद्विरहाद्दूषकत्वमित्यवधेयम् ।

( १०० ) "दुःश्रव-त्रिविधाश्लीले" त्यादिकारिकायां गणनामात्रपरत्वेन यथास्थितपाठस्याकिञ्चित्करत्वात्तमतिक्रम्य स्वेच्छयोदाहरन् प्रथमं निहितार्थत्वमुदाहरति—धातुमत्तेति ।

रत्नं रत्नाकरोधत्ते साधुश्च समतां तथा । इति मत्पूरितपादत्रयम् ।

( १ ) अत्र मत्ताशब्दः क्षीबार्थे निहतः ।

( २ ) 'वर्ण्यते किं महासेनो विजेयो यस्य तारकः ॥'

( ३ ) अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः ।

( ४ ) 'पाणिः पल्लवपेलवः ॥'

( ५ ) पेलवशब्दस्याद्याक्षरे अश्लीले ।

---

गिरिः पर्वतः धातवः सिन्दूरगैरिकादयः । "धातुर्वातादिशब्दादिगैरिकादिषु" इति यादवः । धातवश्चोक्ताः—

सुवर्णरौप्यताम्राणि हरितालं मनः शिला ।
गैरिकाञ्जनकासीसलोहवङ्गाः सहिङ्गुलाः ॥
गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवाः ।

तेऽस्य सन्तीति धातुमान् नित्ययोगे मतुप् धातुमतो भावो धातुमत्ता तां धत्ते बिभर्ति ।

( १ ) उक्तोदाहरणे दोषं समर्थयति—अत्रेति । क्षीवा उन्मत्तारूपार्थे निहितः "मत्ते शौण्डोत्कटक्षीवाः" इत्यमरेण स्थापित अनुशिष्ट इत्यर्थः । तथा च धातुमतो भावो धातुमत्तेत्यत्र मत्ताशब्दः पदैकदेशः क्षीवायाम् ( उन्मत्तायाम् ) प्रसिद्ध इति तेन मत्त्व-र्थस्तिरोधीयते इति निहितार्थत्वम् । अत्र—

यश्चाप्सरो विभ्रममण्डनानां सम्पादयित्रीं शिखरैर्बिभर्ति ।
बलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम् ॥

इति काव्यप्रकाशोदाहरणमुपजीव्यम् ।

( २ ) पदांशगतमवाचकत्वमुदाहरति—वर्ण्यत इति ।

प्रचण्डोद्दण्डसंहारप्रसिद्धः शक्तिधारकः ।" इति मद्रचितपूर्वार्द्धम् ।

( ३ ) दोषमुपपादयति—अत्रेति । विजेय इति । "अर्हे कृत्यतृचश्च" इति सूत्रेण "जिजये" इत्यस्मादर्हार्थे "अचो यत्" इति सूत्रेण विहितः कृत्यसंज्ञो यत्प्रत्ययो भूत-त्वरूपे क्तप्रत्ययार्थेऽवाचकः । तथा च कृत्यप्रत्ययानां कालसामान्ये विधानात् क्तप्रत्यये अतीतरूपकालविशेषेऽवाचकत्वम् । यत्प्रत्ययमात्रगतत्वेन पदांशगतोऽयं दोषः ।

अत्रापि—

चापाचार्यस्त्रिपुरविजयी कार्त्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥

इति काव्यप्रकाशोदाहरणमुपजीव्यम् ।

( ४ ) व्रीडादायिनं पदांशगतमश्लीलत्वमुदाहरति—पाणिरिति ।

चन्द्रवन्मुखलावण्यं मृगीव नयने तथा ।
पिकवद्वचनन्तस्याः·················॥ इति मत्पूरिपूरितपादत्रयम् ।

पल्लवपेलवः पल्लववत् पेलवः कोमलः । "पल्लवोऽस्त्री किसलयम्" । इत्यमरः ।

( ५ ) दोषं स्पष्टीकर्तुमाह—पेलवेति । आद्याक्षरे "पेल" इति प्रथमाक्षरद्वयम् । तथा

( ६ ) 'संग्रामे निहताः शूरा वचो बाणत्वमागताः ॥'

( ७ ) अत्र वचः शब्दस्य गीः शब्दवाचकत्वे **नेयार्थत्वम्** । तथा तत्रैव बाणस्थाने शरेति पाठे । अत्र पदद्वयमपि न परिवृत्तिसहम् ।

---

च "अण्डको वृषणः पेलम्" इति हेमचन्द्रोक्तेः लाटभाषायां वृषणरूपगुह्याङ्गस्मारकतया व्रीडाव्यञ्जकत्वादश्लीलत्वम् । एवञ्च पेलवशब्दस्य प्रयोगमात्र एवायं दोष इत्यवधेयम् । अत्रापि—

"अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः ।
परमार्थतः सहृदयं वहति पुनः कालकूटघटितमिव ॥"

इति काव्यप्रकाशोदाहरणं शरणम् ।

पदांशगतं जुगुप्साव्यञ्जकमश्लीलत्वं यथा तत्रैव—

यः पूयते सुरसरिन्मुखतीर्थसार्थस्नानेन शास्त्रपरिशीलनकीलनेन ।
सौजन्यमान्यजनिरूर्जितमूर्जितानां सोऽयं दृशोः पतति कस्यचिदेव पुंसः ॥

अत्र "पूयते" इति पदैकदेशस्य पूयेत्यक्षरद्वयस्य विकृतरुधिररूपपूयव्यञ्जकतया जुगुप्सादायीत्यश्लीलः । पदैकदेशत्वेन शक्तिविरहाद्व्यञ्जकत्वं बोध्यम् । पदांशगतममङ्गलव्यञ्जकमश्लीलत्वं यथा तत्रैव—

"विनयप्रणयैककेतनं सततं योऽभवदङ्ग ! तादृशः ।
कथमद्य स तद्वदीक्ष्यतां तदभिप्रेतपदं समागतः ॥"

अत्र अभिप्रेतशब्दस्य अन्तिमाक्षरद्वयम् "प्रेत" इति मृतबोधकमित्यश्लीलत्वम् । एवञ्च शाकुन्तले षष्ठेऽङ्के–"वयस्य अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतं लिखितुं विस्मृतमस्माभिः" इत्यत्राप्ययमेव दोषो ज्ञेयः ।

( ६ ) पदांशगतं नेयार्थत्वमुदाहरति—संग्राम इति ।

'देशस्वातन्त्र्यलाभाय शत्रुसम्मुखयोधिनः ।' इति मद्रचितपूर्वार्द्धम् ।

वचो वाणः गीर्वाणत्वं देवत्वमिति यावत्, आगताः सम्प्राप्ताः ।

( ७ ) दोषं समर्थयति—अत्रेति । वचो वाणशब्दात् गीर्वाणे विवक्षितः नच तत्र समर्थः "गीर्वाणा दानवारयः" इत्यमरेण गीर्वाणशब्दयोरेव समस्तयोस्तदर्थरूढिः न तु तत्पर्यायान्तराणाम् । अत एव गीःशरादिशब्दोऽपि तत्रासमर्थः पर्यायपरिवृत्त्यसहत्वात् । तस्माद्वचः शब्देन स्वशक्यनिरूपितवाचकत्वसम्बन्धेन गीः शब्द एव लक्ष्यते । नच शब्दलक्षणायां रूढिः प्रयोजनं वा । तद्विना कविना वचःशब्देन गीरूपलक्ष्यार्थप्रकाशनाद् वचोवाणत्वपदैकदेशगतत्वाच्च पदांशगतं नेयार्थत्वम् ।

अत्र खलु न केवलं पूर्वपदं यावदुत्तरपदमपि पर्यायपरिवर्त्तनं न क्षमते पङ्कजादिवत्, तदेतत्सकलमभिप्रेत्याह—अत्रेति गीःशब्दवाचकत्वे । गीःशब्दरूपलक्ष्यार्थोपस्थापकत्वे अभिप्रेते इत्यर्थः । तत्रैव गीर्वाणशब्द एव । शरेति पाठ इति । "गीःशरत्वमुपागताः" इति प्रयोगेऽपि तथा उक्तदिशा पदांशगतं नेयार्थत्वमस्त्येव । पदद्वयं गीर्वाणशब्दे गीःपदं वाणपदञ्च न परिवृत्तिसहं श्रुतशब्दपरित्यागेन तद्वाचकशब्दान्तरप्रवेशेऽपि पङ्कजादिवद् देवतारूपार्थबोधकमिति भावः ।

( ८ ) जलध्यादौ तूत्तरपदम् , वाडवानलादौ पूर्वपदम् ।

( ९ ) एवमन्येऽपि यथासंभवं पदांशदोषा ज्ञेयाः ।

( ८ ) नन्वेवं तर्हि कुत्रोत्तरपदमेव कुत्र वा पूर्वपदमेव पर्य्यायपरिवर्त्तनं न क्षमत इत्यत आह—जलध्यादाविति । उत्तरपदम् शेषभागः धिप्रभृत्यंशः न परिवृत्तिसहमित्यनुषङ्गः, जलधरजलपात्रादिशब्देन पयोध्यप्रतीतेः । वाडवेत्यादि । पूर्वपदं वाडवादिभागः अत्रापि न परिवृत्तिसहमित्यनुषङ्गः अश्वानलेत्यादिना वाडवाग्नेरप्रतीतेः । प्रथमादिपदेन जलधरादीनां द्वितीयादिपदेन च सरोजादीनां परिग्रहः । तेष्वपि उदकधरादिशब्देन हि मेघाद्यप्रतीतेः । एवञ्च जलध्यादौ पयोधिरितिरीत्या पूर्वपदपरिवर्त्तनेऽपि वाडवानलादौ वाडवाग्निरितिरीत्योत्तरपदपरिवर्त्तनेऽपि न दोष इत्यवधेयम् । वचोवाणशब्दे लक्षणायां कवेस्तात्पर्य्याभावाचकत्वं तदभावे त्ववाचकत्वमेवेत्यपि ज्ञेयम् । तथा चोक्तमरिसिंहेन—

जलदादिषु पूर्वपदे सरोजमुख्येषु चोत्तरपदेषु ।
सरपतिसमेषु चोभयपदेषु पर्य्यायपरिवृत्तिः ॥
इति परिवृत्तिसहा ये योगास्ते यौगिकाः शब्दाः ।
परिवृत्त्यसहा ये तु मिश्रा गीर्वाणतुल्यास्ते ॥

योगरूढिमन्तो गीर्वाणादिमिश्रशब्दाः परिवृत्तिं न सहन्ते इत्यर्थः । अत्र वचोवाणेत्युदाहरणम्

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोवाणैस्तेजो यस्य विभाव्यते ॥

इत्येतदनुरूपम् । वचोवाणाः गीर्वाणा बवयोरभेदात् । एवञ्च

"जलधौ वसते रत्नं कुत्रचित्तुरगानलः"

इत्यादिषु वचोवाणत्वमित्यादिवदेव नेयार्थत्वं दोष इत्यवगन्तव्यम् ।

( ९ ) एवमिति । तत्र पदांशगतमनुचितार्थत्वं यथा—

'अङ्गकल्पतरुर्दत्ते फलं विज्ञस्तुतङ्गवान्' ।

अत्र कल्पतरुपदस्य कल्प इति भागः हे अङ्गकल्प ? इति सम्बोधनं व्यञ्जयतीत्यनुचितार्थत्वम् ।

पदांशगतमप्रयुक्तं यथा—

"एषोऽधिकवया बन्ध्या पुपुत्रीयिषति ध्रुवम् ।"

अत्र "पुपु" इति द्विवचनस्य व्याकरणप्रसिद्धत्वेऽपि कविभिरनादृतत्वादप्रयुक्तत्वम् ।

पदांशगतं ग्राम्यत्वं यथा—'कुरुते जम्बुको नीरे कूर्मस्यैव नखादनम्' ।

अत्र नखभक्षणमित्यर्थे प्रयुक्तस्य नखादनमिति पदस्य खादनमित्यंशो ग्राम्यः ।

आदावञ्जनपुञ्जलिप्तवपुषां श्यामानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम् ।
सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥

अत्रैकस्याः कामिन्या दृशां बहुत्वासम्भवादनर्थकत्वं दोषः ।

पदांशगतं सन्दिग्धत्वं यथा काव्यप्रकाशे—

( १० ) निरर्थकत्वादीनां त्रयाणां च पदमात्रगतत्वेनैव लक्ष्ये संभवः । क्रमतो यथा—

( ११ ) 'मुञ्च मानं हि मानिनि ॥'

( १२ ) अत्र हिशब्दो वृत्तपूरणमात्रप्रयोजनः ।

( १३ ) कुञ्जं हन्ति कृशोदरी ।

---

कस्मिन् कर्मणि सामर्थ्यमस्य नोत्तपतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥

अत्र चरेत्येकदेशः आढ्यो भूतपूर्वः "आढ्यचरः" इति वत् "भूतपूर्वे चरट्" सूत्रविहितश्चरट् प्रत्ययो वा कुरुषु चरतीति "कुरुचरः" इतिवत् 'चरेष्टः इति सूत्रविहितप्रत्ययान्तश्चरधातुर्वेति सन्देहात् पूर्वं साधुरिति वा साधुषु चरतीति वा अर्थ इति प्रकरणाद्यभावात् वक्तृतात्पर्य्यसन्देहः ।

पदांशगतं विरुद्धमतिकारित्वं यथा—

'भवान् कल्पतरुप्रायो दत्ते परमसत्फलम् ।'

अत्र परमसदितिपदस्य अवशिष्टाक्षरद्वयम् । "असत्" इति विरुद्धां मतिं करोतीति विरुद्धमतिकारित्वम् ।

"दोषाः केचिद्भवन्त्येषु पदांशेऽपि" इत्यत्र केचिदिति पदोपादानेन तथात्र विवरणे "यथासम्भवम्" इति प्रयुक्तया च अप्रतीतत्वक्लिष्टत्वयोस्तु पदांशगतत्वं न सम्भवतीति सूचितम् ।

( १० ) "पदे परे" इति कारिकांशं प्रतिपादयितुमाह—निरर्थकत्वादीनामिति । आदिपदेनासमर्थत्वच्युतसंस्कारत्वयोर्ग्रहणम् । पदमात्रगतत्वेनैव वाक्यगतत्वेनापि लक्ष्येऽसम्भवः । तथाविधदोषावहं हि को नाम मूढः पुनः पुनरभिदध्यात् । सम्भव इति । अत एव कारिकायां परे पद एव" इत्यभिहितमिति भावः ।

( ११ ) तत्र निरर्थकत्वमुदाहरति—मुञ्चेति । निरर्थकम् अविवक्षितार्थकमित्यर्थः । तल्लक्षणन्तु वृत्तिन्यूनतापरिहारमात्रप्रयोजनकत्वम् ।अत एव वाक्यालङ्कारभूतं-यमकादिनिर्वाहकं खल्वादिपदमदुष्टम् ।

मात्रपदेन समुच्चयार्थकचादिष्वुदासः । कवेः शक्तिहीनत्वबोधनद्वारा प्रयोजनानुसन्धानव्यग्रतया श्रोतुर्वैमनस्यापादनेन रसप्रकर्षं प्रतिबन्धकत्वाद्दोषत्वमस्य बोध्यम् । प्रतिप्रसवाभावेन सर्वदैव हेयत्वादयं नित्यो दोषः ।

रश्मिना पूर्णचन्द्रोऽद्य तथा च मलयाऽनिलः ।
प्रेम्णा त्वां सेवते पश्य ................. ॥ इति मत्पूरितपादत्रयम् ।

( १२ ) दोषं समर्थयति—अत्रेति । वृत्तिपूरणमात्रप्रयोजनः "च ह वै पादपूरणे" इत्यादिना तत्प्रयोजनकत्वेनोक्त इत्यर्थः । अत एवार्थस्याविवक्षितत्वान्निरर्थकत्वदोष इति भावः । ननु "हि हेतावधारणे" इत्यमरात् हि शब्दोऽत्र हेत्वर्थे स्यादिति चेत् ? मैवम् अनन्वयात्, नच मय्येवेत्यवधारणे, अनुनयस्यापकर्षापत्तेः । नच क्रियान्वयि तत्, लोटा निर्देश्येऽवधारणायोगात् ।

( १३ ) असमर्थत्वं दर्शयति—कुञ्जमिति । असमर्थमित्यत्र "तत्सादृश्यमभावश्च" इत्युक्तवचनात् नञ् अल्पार्थकः । तेन यत्तत् परिपठितमपि प्रकृतस्थले विवक्षितार्थसा-

( १४ ) अत्र हन्तीति गमनार्थे पठितमपि न तत्र समर्थम् ।

( १५ ) 'गाण्डीवी कनकशिलानिभं भुजाभ्या-
माजघ्ने विषमविलोचनस्य वक्षः ॥'

मर्थ्यरहितमित्यर्थः । तथा च यत्किञ्चित् सहकारिसत्वेन विवक्षितार्थप्रत्यायनाशक्तत्वं लक्षणं फलितम् । विवक्षितार्थाप्रत्यायकतया च रसस्यैव प्रतीतिप्रतिबन्धकत्वादस्य दोषत्वम् । अत्र स्वरूपायोग्यत्वेनार्थानुपस्थितिर्दूषकताबीजमिति नित्यदोषोऽयम् । अत्रार्थानुपस्थितिसत्वादेव न निहितार्थसङ्करः, तत्र विलम्बेन प्रकृतार्थोपस्थितेः । नाप्यवाचकसङ्करः तस्य यत्किञ्चित्सहकारिसत्वेऽप्यबोधकत्वात् ।

सङ्केतीकृत्य स्वप्राणवल्लभं रहसि स्थितम् ।
तत्कालं वीक्ष्य साशङ्कं कुर्वं हन्ति कृशोदरी ॥ अत्र मत्पूरितपादत्रयम् ।

( १४ ) दोषं दर्शयितुमाह—अत्रेति । पठितमपि धातुपाठे "हन हिंसागत्योः" इत्यनेनेति शेषः । हन्तिः तत्र गमनार्थे न समर्थ तत्प्रत्यायने स्वरूपायोग्य इत्यर्थः । शक्तिसत्वेऽपि ( क ) जङ्घापद्धतिरित्यादौ प्रत्ययविशेषोपपदविशेषसहकारेणैव गतिस्मारणसमर्थं न स्वत इति भावः । अत्र हन्तेः पदैकदेशत्वेऽपि प्रकृतिगतत्वात् पददोषता ।

अत्र—"तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः ।
सुरस्रोतस्विनीमेष हन्ति सम्प्रति सादरम् ॥"

इति काव्यप्रकाशोदाहरणमुपजीव्यम् ।

उदाहरणान्तरं यथा—

कान्ते ! जलनिधौ मग्नश्चन्द्रस्त्वन्मुखनिर्जितः ।
चकोराः शरणं तेऽद्य धेहि वा जहि वा प्रिये ! ॥

अत्र—"डुधाञ् धारणपोषणयोः" इत्युक्तदिशा पोषणार्थकत्वेन पठितमप्यसमर्थम् ।

( १५ ) च्युतसंस्कारत्वमुदाहरति—गाण्डीवीति । च्युतः स्खलितः संस्कारः संस्कृतिः व्याकरणलक्षणानुगमो यत्र तस्य भावस्तत्त्वम् । तथा च संस्कृतभाषाव्याकरणवच्छौरसेन्यादिप्राकृतभाषाव्याकरणस्यापि सत्वात् यद्भाषासंस्कारकव्याकरणलक्षणविरुद्धो यः सः तद्भाषायां च्युतसंस्कार इति भावः । तत्तद्देशीयभाषारूपन्तु न लक्षणविरुद्धं किन्तु तद्विषय एव, एवञ्च तत्र च्युतसंस्कृतिर्न दोष इत्यवधेयम् । अत्र हि कवेः व्याकरणज्ञानहीनत्वप्रतिपादनद्वारासाधुत्वज्ञानेन तद्वाक्ये श्रोतुर्वैमनस्यापादनेन रसप्रकर्षप्रतिबन्धकत्वाद् दोषत्वम् । सर्वथा प्रतिप्रसवाभावेन सर्वदैव हेयत्वादयन्तुमहादोषः सर्वथा नित्य एवेति बोध्यम् ।

"उन्मज्जन्मकर इवामरापगाया वेगेन प्रतिमुखमेत्य बाणनद्याः" । इति किरातार्जुनीयसप्तदशसर्गे एतत्पूर्वार्द्धम् ।

गाण्डीवी अर्जुनः भुजाभ्यां बाहुभ्यां कनकशिलानिभं सुवर्णमयप्रस्तरसदृशं विषमविलोचनस्य त्रिनेत्रस्य किरातमूर्त्तेः महादेवस्य वक्ष आजघ्ने आहतवान् ।

( क ) जङ्घन्यते कुटिलं गच्छतीति जङ्घा यङ्लुगन्तात्पचाद्यच् "आगमशास्त्रमनित्यम्" इति नुन् । पादाभ्यां हन्यते गम्यते इति-पद्धतिर्मार्गः हन् धातोः क्तिन् प्रत्ययः "हिमकाषिहतिषु च" इत्यनेन पादस्य पद्भावः ।

( १६ ) 'आङो यमहनः', 'स्वाङ्गकर्मकाच्च' इत्यनुशासनबलादाङ्पूर्वस्य हनः स्वाङ्गकर्मकस्यैवात्मनेपदं नियमितम् । इह तु तल्लङ्घितमिति व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्वम् ।

( १७ ) नन्वत्र 'आजघ्ने' इति पदस्य स्वतो न दुष्टता, अपि तु पदान्तरापेक्षयैव इत्यस्य वाक्यदोषता ? मैवम्, तथाहि गुणदोषालंकाराणां शब्दार्थगतत्वेन व्यवस्थितेस्तदन्वयव्यतिरेकानुविधायित्वं हेतुः ।

( १८ ) इह तु दोषस्य 'आजघ्ने' इति पदमात्रस्यैवान्वयव्यतिरेकानुविधायित्वम्, पदान्तराणां परिवर्तनेऽपि तस्य तादवस्थ्यादिति पददोषत्वमेव ।

( १९ ) तथा यथेहात्मनेपदस्य परिवृत्तावपि न पददोषः, तथा हन्प्रकृतेरपीति न पदांशदोषः ।

( १६ ) अत्र दोषं दर्शयति—आङ इति । तल्लङ्घितमिति । अपराङ्गकर्मकस्य तस्यात्मनेपदविधानादनुशासनमन्यथाकृतमिति भावः । न च कनकशिलानिभं स्वर्णमयप्रस्तरसदृशं श्यामरूपं स्ववक्ष एवाजघ्ने इत्यर्थ इति वाच्यम्, न च वाच्यम्, रणे समुद्यतानां वीराणां स्ववक्षस आहननादर्शनात् तत्प्रागेव हि गर्वद्योतनार्थं तत्करणदर्शनात् ।

( १७ ) "आजघ्ने" इत्यस्य वाक्यदोषत्वमाशङ्कते—नन्विति । स्वतो न दुष्टेति । स्वाङ्गकर्मत्वे कर्मणि च आत्मनेपदस्य साधुत्वादित्याशयः । पदान्तरापेक्षयैव विषमविलोचनस्य वक्ष इति पराङ्ग वाचकपदान्तराकाङ्क्षयैव वाक्यदोषता वाक्यघटकानेकपदप्रयोज्यत्वदित्याशयः । न वाक्यदोषत्वमिति साधयितुं समाधत्ते—मैवमिति । गुणदोषेति । श्लेषप्रसादादयो दशगुणाः परोक्तास्तेषामेव शब्दार्थगतत्वम् स्वमते तु माधुर्यौजः प्रसादाख्यास्त्रय एव गुणास्ते तु रसवृत्तय एवेति बोध्यम् । व्यवस्थितेः शाब्दत्वार्थत्वनियमस्य तयोः शब्दार्थयोः अन्वयव्यतिरेकानुविधायित्वम् (क) अन्वयव्यतिरेकानुसारित्वम् । एवञ्च यत्र तत्तच्छब्दोपालम्भे तेषां गुणादीनामुपलम्भः तदनुपलम्भे च तेषामप्यनुपलम्भः तत्र गुणादीनां शाब्दत्वम् । आर्थत्वमपि तेषामेवमेव ।

( १८ ) नन्वेतेन किं जातमिति जिज्ञासायाम् "आजघ्ने" इति पदस्य पदमात्रगमित्वमेवद्दोष इति तदाह—इह त्विति । गाण्डीवीत्यादिपद्य इत्यर्थः ।

पदमात्रस्यैव न पुनः साकाङ्क्षपदान्तरस्येत्यर्थः । तथा च "आजघ्ने" इति पदोपलम्भे च्युतसंस्कारतादोषोपलम्भः तत्पदानुपलम्भे च तद्दोषानुपलम्भः । पदान्तराणां परिवर्त्तनेऽपि विषमविलोचनस्य वक्ष इत्यस्य स्थाने त्रिनेत्रस्योरः इति पाठे कृतेऽपि । तस्य च्युतसंस्कारतादोषस्य तादवस्थ्यात् "आजघ्ने" इति पदस्य दुष्टता तादवस्थ्यमिति भावः, पदमात्रस्यैवेत्याद्युक्तिं प्रति हेतुरयम् । इति हेतोः पददोष एव न पुनर्वाक्यदोष इत्यर्थः । एवञ्च पदान्तरपरिवर्त्तनेऽपि तद्दोषस्य तादवस्थ्येन व्यतिरेकव्यभिचाराद्वाक्यव्यापकत्वाभावेन वाक्यदोषो भवितुं नार्हतीति भावः ।

( १९ ) नन्वेवन्तर्हि "आजघ्ने" इत्यत्रात्मनेपदस्य विद्यमानत्वे च्युतसंस्कारतादोषस्य विद्यमानत्वम्, तदविद्यमाने च तदविद्यमानत्वमिति आत्मनेपदस्यैव उक्तदोषं

(क) तत्सत्वे तत्सत्ता अन्वयः, तदभावे तदभावो व्यतिरेकः ।

( २० ) एवं 'पद्मः' इत्यत्राप्रयुक्तस्य पदगतत्वं बोध्यम् ।

( २१ ) एवं प्राकृतादिव्याकरणलक्षणहानावपि च्युतसंस्कारत्वमूह्यम् ।

( २२ ) इह तु शब्दानां सर्वथा प्रयोगाभावेऽसमर्थत्वम् । विरलप्रयोगे निहतार्थत्वम् ।

प्रति अन्वयव्यतिरेकानुविधायित्वेन कारणत्वात् अयं च्युतसंस्कारतादोषः पदांशगत एव किन्न स्यादित्यत आह—तथेति । परिवृत्तावपि आत्मनेपदं विहाय 'आजघान' इति परस्मैपदपाठेऽपि तथा हन्प्रकृतेरपि "प्रजहार" इति पाठेन हन्प्रकृतेः परिवृत्तावपि पददोषो नेत्यर्थः । प्रकृतिप्रत्ययमेलनेन दोषत्वात् पददोष एव न पदांशदोष इत्यर्थः । अत्रायमभिप्रायः—"आजघ्ने" इत्यत्रात्मनेपदस्य विद्यमानत्वे हन्प्रकृतिविद्यमाने च च्युतसंस्कारतादोषविद्यमानत्वम्, तयोरविद्यमानत्वे च तदविद्यमानत्वमिति प्रकृतिप्रत्ययोभयांशस्यैव अन्वयव्यतिरेकाभ्यां दोषघटकत्वात् प्रकृतिप्रत्ययोभयांशस्यैव च पदरूपत्वादयं पददोष एव ।

"वर्ण्यते किं महासेनो विजेयो यस्य तारकः" इत्यादौ तु कृत्प्रत्ययविद्यमानत्वेऽवाचकत्वस्य विद्यमानत्वं तदविद्यमानत्वे च तदविद्यमानत्वमिति पदैकदेशस्यैव दोषघटकत्वात् पदांशदोष एव । तथा च अन्वयव्यतिरेकानुसारेण गुणदोषालङ्काराणां वाक्यव्यापित्वे वाक्यगतत्वम्, केवलपदव्यापित्वे पदगतत्वम्, केवलपदांशव्यापित्वे च पदांशगतत्वमित्यालङ्कारिकाणां सिद्धान्तः ।

( २० ) उक्तदिशान्यत्राप्यप्रयुक्तत्वादौ पदमात्रगतत्वं दर्शयति—एवं "पद्मः" इत्यत्रापीति । अप्रयुक्तस्य अप्रयुक्तत्वदोषस्येत्यर्थः तथा च "भाति पद्मः सरोवरः" इत्यत्र पद्मशब्दस्य विद्यमानत्वे ततः पुल्लिङ्गस्य विद्यमानत्वे च अप्रयुक्तत्वदोषविद्यमानत्वम्, तयोरविद्यमानत्वे च तदविद्यमानत्वमिति प्रकृतिप्रत्ययोभयांशस्यैव दोषघटकत्वादत्राप्रयुक्तत्वस्य पदगतत्वमेवेति भावः । इदमुपलक्षणम्-तेन "आदत्ते" इत्यवाचकपदस्य श्रुतिकटुपदादेरपि उक्तदिशा पदगतत्वमित्यवधेयम् ।

वस्तुतस्तु नायमेकान्ततः पुल्लिङ्गेऽप्रयुक्तः । तथा च गोवर्धनः—

"वटितपलाशकपाटं दिशि दिशि सुखिनो हि शेरते पद्माः ।
उज्जागरेणकैरवकतिशक्त्या रक्षितुं लक्ष्मीः ॥"

तस्मात्—

"यथाऽयं दारुणाचारः सर्वदैव विभाव्यते ।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा ॥"

इति काव्यप्रकाशोदाहरणमेवानुकूलमिति केचित् ।

( २१ ) एवं संस्कृतभाषाव्याकरणस्य च्युतसंस्कारतादोषमभिधाय शौरसेन्यादिप्राकृतभाषाव्याकरणस्यापि च्युतसंस्कारतादोषमभिधातुमाह—एवमिति । ऊह्यमिति । तथा च 'करी अदि' इति प्रयोक्तव्ये 'करी अन्दे' इति प्रयोगे "सर्वत्रात्मनेपदस्य परस्मैपदम्" इति प्राकृतव्याकरणसूत्रविरुद्धत्वाच्च्युतसंस्कारत्वमित्यर्थः ।

( २२ ) इदानीं दर्शितस्वस्वलक्षणानुसारेणैव उक्तदोषाणां परस्परभेदसम्भवेऽपि कतिपयस्य लक्षणविशेषेणैक्यमाशङ्क्य प्रथममसमर्थत्वनिहितार्थत्वयोरैक्यं खण्डयति—

( २३ ) निहतार्थत्वमनेकार्थशब्दविषयम् ।

( २४ ) अप्रतीतत्वं त्वेकार्थस्यापि शब्दस्य सार्वत्रिकप्रयोगविरहः । अप्रयुक्तत्वमेकार्थशब्दविषयम् ।

( २५ ) असमर्थत्वमनेकार्थशब्दविषयम् । असमर्थत्वे हन्त्यादयोऽपि गमनार्थे पठिताः । अवाचकत्वे दिनादयः प्रकाशमयाद्यर्थे, न तथेति परस्परभेदः ।

( २६ ) एवं पददोषसजातीया वाक्यदोषा उक्ताः, संप्रति तद्विजातीया उच्यन्ते ।

---

इह शब्दानामिति । शब्दानामसमर्थादिशब्दानां परस्परं भेद इत्यन्वयः । शब्दानामित्यत्र दुष्ट-दुष्टशब्दानामित्यर्थः । सर्वथा स्वार्थप्रधानतया सर्वप्रकारेणेत्यर्थः । प्रयोगाभाव इति । जह्वापद्धतिरित्येतन्निष्ठसहकारिविशेषणं विनेति शेषः । प्रयोगाभावश्च यत्र ज्ञापकं नास्ति तत्रैव, ज्ञापकसत्त्वे तु प्रयोगोऽस्त्येव तेन "हन् हिंसागत्योः" इति पाठेन हन्धातोर्गत्यर्थप्रधानतया ज्ञापकसत्त्वेन गच्छतीत्यर्थे हन्तीति सर्वत्रैव प्रयोगाभावात् "कुञ्जं हन्ति कृशोदरी" इत्यादावसमर्थत्वम्, निहितार्थत्वं विरलप्रयोगे "अकालसन्ध्यामिव धातुमत्ताम्" इत्यादिरूपश्लेषादावल्पप्रयोगे ।

( २३ ) सकलश्रोतृषु विवक्षितार्थबोधस्याविशेषेण निहितार्थाप्रतीतत्वयोरभेदे लब्धे तयोर्भेदं दर्शयितुमाह—निहतार्थत्वमिति । अनेकार्थशब्दविषयमिति । तत्र "धातुमत्तां गिरिधत्ते" इत्यादौ मत्ताशब्दस्य क्षीव-तत्सत्तारूपावर्थावित्यनेकार्थत्वम् । "योगेन दलिताशयः" इत्यादावप्रतीतत्वे तु आशयशब्दस्य वासनारूप एकार्थ एव, योगशास्त्रातिरिक्तेऽन्यत्र तत्प्रयोगविरहश्चेति बोध्यम् ।

( २४ ) असमर्थत्वावाचकत्वयोर्भेदमाह—अप्रयुक्तत्वमिति । "भाति पद्मः सरोवरे" इत्यत्राप्रयुक्तत्वे पद्मशब्दस्य कमलरूप एक एवार्थः, "कुञ्जं हन्ति कृशोदरी" इत्यत्रासमर्थत्वे तु हन्धातोः "हन् हिंसागत्योः" इति धातुपाठात् हिंसागतिरूपौ द्वावर्थौ इत्यूह्यम् ।

( २५ ) विवक्षितार्थप्रत्यायकत्वेन असमर्थत्वावाचकत्वयोरभेदे लब्धे भेदं दर्शयितुमाह—असमर्थत्वमिति । अपिशब्दस्य भिन्नक्रमत्वाभ्युपगमेन गमनार्थं इत्यनेन सम्बन्धः तेन गमनार्थेऽपीत्यर्थः । न तथा कोशकृद्भिरमरादिभिः पठिता इत्यर्थः । तथा च तदर्थे विद्यमानेऽपि सहायकाभावात् तत्प्रत्यायनाक्षमत्वमसमर्थत्वम् । यथा "कुञ्जं हन्ति कृशोदरी" इत्यत्र धातुपाठात् गत्यर्थे विद्यमानेऽपि पादादिसहायकाभावात्तदर्थप्रत्यायनासमर्थत्वेन असमर्थत्वम् । अवाचकत्वन्तु-तदर्थाविद्यमानत्वेन तत्प्रत्यायनासमर्थत्वम् । यथा—"दिनं मे त्वयि सम्प्राप्ते ध्वान्तच्छन्नापि यामिनी" इत्यत्र दिनपदस्य प्रकाशमयार्थाविद्यमानत्वेन तत्प्रत्यायनासमर्थत्वादवाचकत्वमित्यभिप्रायः । एवम् अनुचितार्थविरुद्धमतिकारित्वयोरशक्यार्थशक्यार्थविषयत्वेन भेदोऽवगन्तव्यः ।

( २६ ) इदानीमुक्तषोडशदोषभिन्नान् त्रयोविंशतिवाक्यदोषान् वक्तुमाह—एवमिति । तद्विजातीया पददोषविजातीया वाक्यदोषा इत्यर्थः । पदे यो दोषः वाक्येऽपि तादृशदोषस्य विद्यमानत्वात् तत्सजातीयता तदवृत्तेस्तद्विजातीयता । तथा च—पदे प्रसक्त्या वाक्ये प्रसक्तत्वं पददोषसजातीयवाक्यदोषत्वम्, पदेऽप्रसक्त्या वाक्यमात्रे प्रसक्तत्वं पददोषविजातीयवाक्यदोषत्वमिति ।

( २७ ) वर्णानां प्रतिकूलत्वं, लुप्ताहतविसर्गते ।
अधिकन्यूनकथितपदताहतवृत्तता ॥ ५ ॥
पतत्प्रकर्षता, संधौ विश्लेषाश्लीलकष्टताः ।
अर्धान्तरैकपदता समाप्तपुनरात्तता ॥ ६ ॥
अभवन्मतसंबन्धाक्रमामतपरार्थताः ।
वाच्यस्यानभिधानं च भग्नप्रक्रमता तथा ॥ ७ ॥
त्यागः प्रसिद्धेरस्थाने न्यासः पदसमासयोः ।
संकीर्णता गर्भितता दोषाः स्युर्वाक्यमात्रगाः ॥ ८ ॥

( २८ ) वर्णानां रसानुगुण्यविपरीतत्वं प्रतिकूलत्वम् । यथा मम—

( २७ ) वर्णानां प्रतिकूलत्वमिति । वर्णानां प्रतिकूलत्वं प्रतिकूलवर्णता, लुप्ता आहताश्च ( ओत्वं प्राप्ताश्च ) विसर्गा ययोस्ते लुप्ताहतविसर्गे वाक्ये तयोर्भावौ लुप्ताहतविसर्गते । अत्र "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" इति न्यायेन लुप्तविसर्गता आहतविसर्गता चेति दोषद्वयम् । विसर्गपदेनात्र न बिन्दुद्वयात्मकः किन्तु लक्षणया विसर्गस्थानीयो रेफो ग्राह्यः तेन व्याकरणप्रक्रियोपपत्तिरिति । अधिकानि न्यूनानि कथितानि च येषां वाक्यानां तेषां भावास्तादृशाः । अधिकपदता, न्यूनपदता, कथितपदता चेति दोषत्रयम् । हतं वृत्तं छन्दः यत्र वाक्ये तस्य भावो हतवृत्तता । पतन् च्यवन् प्रकर्षो यत्र वाक्ये तस्य भावः पतत्प्रकर्षता । सन्धौ विषये विश्लेषस्य अश्लीलकष्टे च तास्तादृशाः, सन्धिविश्लेषः, सन्ध्यश्लीलता, सन्धिकष्टता च दोषत्रयम् । अर्धान्ते द्वितीयस्मिन्नर्धे एकं पदं यत्र वाक्ये तस्य भावः सा अर्धान्तरैकपदता । समाप्तं सम्पूर्णमपि पुनरात्तं स्वीकृतमारब्धं वाक्यमिति तस्य भावः सा समाप्तपुनरात्तता । अभवन्नुपपद्यमानः मतः अभिलषितः सम्बन्धः अन्वयो यत्र तदभवन्मतसम्बन्धं वाक्यम्, न विद्यते क्रमो यत्र तदक्रमं वाक्यम्, अपुत्रमितिवत्समासः, अमतः अनभिलषितः परो द्वितीयः अर्थो यस्य तदमतपरार्थं वाक्यञ्च तेषां भावास्तादृशा, अभवन्मतसम्बन्धता, अक्रमता, अमतपरार्थता चेति दोषत्रयम् । वाच्यस्य प्रतिपाद्यमानस्य अनभिधानम् अकथनम् वाच्यानभिधानम् । भग्नः अन्यप्रकारेण द्वितीयादिप्रयोगात्नष्टः प्रक्रम उपक्रमो यत्र तद्भग्नप्रक्रमं वाक्यं तस्य भावो भग्नप्रक्रमता प्रसिद्धित्यागः । अस्थाने अनुपयुक्तस्थाने पदसमासयोर्न्यासः संस्थापनम् । तथा च अस्थानस्थपदता अस्थानस्थ समासता चेति दोषद्वयम् । सङ्कीर्णता, गर्भितता च । एते त्रयोविंशतिर्दोषाः वाक्यमात्रगाः केवलवाक्यगता एव स्युरित्यर्थः । प्रतिकूलवर्णत्वादिकं वाक्ये एव न तु पदादिष्वपीति भावः । यद्यप्येकस्मिन्नपि पदे टकारादेः विद्यमानत्वे प्रतिकूलवर्णत्वं प्रसज्यते तथापि वाक्यगतत्वेनैव रसानुकूल्यप्रातिकूल्ययोरनुभवसिद्धत्वाद्वाक्यदोषत्वमिति बोध्यम् । प्रतिकूलवर्णत्वादीनां स्वरूपं परस्परभेदश्च तत्तदुदाहरणावसरे मतभेदेन स्पष्टीभविष्यतीत्यवधेयम् ।

( २८ ) तत्र प्रतिकूलत्वं लक्षयति—वर्णानामिति । रसानुगुणत्वं वर्णानाम् अष्टमपरिच्छेदे वक्ष्यते । तद्विपरीतत्वमात्वाद्रोद्बोधप्रतिबन्धकत्वम् । वर्णानां प्रतिकूलत्वं प्रतिकूल-

( २९ ) 'ओवट्टइ उल्लट्टइ सअणे कहिंवि मोट्टाअइ णो परिहट्टइ। (?)
हिअएण फिट्टइ लज्जाइ खुट्टइ दिहीए सा ॥' (?)

( ३० ) अत्र टकाराः शृङ्गाररसपरिपन्थिनः केवलं शक्तिप्रदर्शनाय निबद्धाः।

( ३१ ) एषां चैकद्वित्रिचतुः प्रयोगे न तादृग्रसभङ्ग इति न दोषः।

( ३२ ) 'गता निशा इमा बाले।'

---

वर्णितेत्यर्थः। तथा चास्य प्रकृतरसविरोधिरसगतगुणव्यञ्जकत्वेन तत्प्रतीतिप्रतिबन्धकत्वाद्दोषत्वम्। स्वव्यङ्ग्यस्यैव विरोधत्वेन प्रतिप्रसवासम्भवादसौ दोषो नित्यः। न च दुःश्रवत्वेन सहास्य साङ्कर्यमिति वाच्यम् उपधेयसांकर्य्येऽपि उपाध्योरसांकर्य्यात्। तथा हि तत्र प्रकृतरसव्यञ्जकवर्णाभावाद्रसोद्बोधरूपं कार्य्यं न जायते अत्र तु प्रकृतरसप्रतिबन्धकैर्वर्णैः प्रतिबध्यते इत्यनयोरेकत्र व्यञ्जकवर्णाभावात् कारणाभावप्रयुक्तकार्य्याभाववत्वम् अपरत्र प्रतिकूलवर्णसद्भावात् प्रतिबद्धकार्य्यकत्वमिति। केचित्तु तत्र परुषवर्णमात्रं दुष्टम् इह तु सुकुमारा अपि वर्णा रौद्रादौ दुष्यन्तीति ततोऽस्य भेद इति व्यापयन्ति।

( २९ ) शृङ्गारे प्रतिकूलवर्णत्वमुदाहरति—ओ वट्टई इति।

"उद्वर्त्तयति उल्लोटयति शयने कह्यंपि मोट्टायति।

नो परिघट्टयति हृदयेन स्फेटयति लज्जया खट्टयति धृतेः सा" ॥ इति संस्कृतम्।

कस्याश्चिद्विप्रलम्भवर्णनेयम्। सा युवतिः शयने शय्यायां स्थिता कस्मिन्नपि काले उद्वर्त्तयति देहमुत्तानीकरोति, कस्मिन्नपि काले उल्लोटयति देहपार्श्वपरिवर्त्तनं करोति कस्मिन्नपि काले मोट्टायति प्रागुक्तलक्षणं मोट्टयितं करोति कस्मिन्नपि काले नो परिघट्टयति देहं न सञ्चालयति कस्मिन्नपि काले हृदयेन चेतसा स्फेटयति स्वप्राणं हिनस्ति मत्तमभिलषतीत्यर्थः, कस्मिन्नपि काले लज्जया त्रपया धृतेर्धैर्य्यात् ल्यब्लोपे पञ्चमी तेन धैर्य्यमालम्ब्येत्यर्थः, खट्टयति कुण्ठिता भवति। आकारनिश्चयमन्तरेण छन्दोभेदस्यानिश्चये प्राकृतव्याकरणाशक्त्यापि संशोधयितुमयुक्तमेतदधुना।

( ३० ) दोषं समर्थयितुमाह—अत्रेति। शृङ्गारे टवर्गः प्रतिकूलः "टठडान् विने"ति अष्टमे वक्ष्यमाणत्वात्। शृङ्गाररसपरिपन्थिनः\शृङ्गारविरुद्धवीरबीभत्सरौद्रगतौजोगुणव्यञ्जकत्वेन शृङ्गारप्रकर्षबोधप्रतिबन्धकाः। एवञ्च शृङ्गाररसानुसारेण कोमलवर्णोच्चारणे कर्त्तव्ये तद्विपरीतटकोरोच्चारणात्प्रतिकूलवर्णत्वं वाक्यदोष इति।

( ३१ ) निष्कर्षार्थं दर्शयति—एषाञ्चेति। एषां प्रतिकूलवर्णानां तादृग् वर्णप्रतिकूलत्वनिबन्धनो रसभङ्गः रसप्रकर्षबोधप्रतिबन्धः। दुःश्रवत्वनिबन्धनस्तु विद्यत एव। तथा च "निर्वर्ण्य पत्युर्मुखम्" इत्यत्र रेफयुक्तस्य वर्णत्रयस्य सद्भावेऽपि नायं दोषः। यदि चोक्तोदाहरणे दुःश्रवत्वस्यापि सद्भावाद्दुःश्रवत्वमेवाभ्युपेयते तदोदाहरणान्तरं बोध्यम्। यथा—

वृन्दारकप्रकरमद्य करोम्यशङ्कमानन्दयामि मुनिवृन्दममन्दमङ्ग!।

भङ्क्त्वा भुजङ्गमगणस्य भयं न यामि त्वामन्तकातिथिमसन्तमहं विधाय ॥

रावणं प्रति श्रीरामचन्द्रस्योक्तिरियम्। अत्र वीरे रसे माधुर्य्यव्यञ्जकमृदवो वर्णाः प्रतिकूलाः ओजस्विनि रसे विकटवर्णत्वस्य दीर्घसमासत्वस्य चानुगुण्यात्।

( ३२ ) लुप्तविसर्गत्वमुदाहरति—गता इति। तल्लक्षणन्तु लुप्तबहुविसर्गत्वम्, तेन

( ३३ ) अत्र लुप्तविसर्गाः ।

( ३४ ) आहता ओत्वं प्राप्ता विसर्गा यत्र । यथा—

'धीरो वरो नरो याति ।'

( ३५ ) 'पल्लवाकृतिरक्तोष्ठी ।'

एकद्विमात्रविसर्गलोपे नायं दोषः, लुप्तबहुविसर्गत्वेन बन्धशैथिल्यम्, बन्धशैथिल्येन च सहृदयोद्वेगः बन्धस्य गाढत्वे यथा चमत्कारो न तथा शैथिल्ये इति सहृदयानुभवात्—श्रोतुर्वैमुख्यापादनमिव भवतीति रसप्रकर्षप्रतिबन्धकत्वात् दोषत्वम् । प्रतिप्रसवाभावात् अयमपि नित्यो दोषः ।

"गता निशा इमा बाले ! त्वल्लावण्यसमीहया ।

अधुना यदि संलब्धा तत्साफल्यं कुरु द्रुतम् ॥" इति मद्रचितांशत्रयम् ।

( ३३ ) दोषं दर्शयितुमाह—अत्रेति । लुप्तविसर्गा वाक्यस्य दोषं घटयन्तीति शेषः । "गता निशा इमा बाले" इत्यत्र सकारस्य ससजुषो रुः ' इत्यनेन रुत्वे" भोभगोअघोऽपूर्वस्य योऽशि" इत्यनेन यत्वे "हलि सर्वेषाम्" "लोपः शाकल्यस्य" इत्याभ्यां यलोपे च सति विसर्गस्य लोपात् अदर्शनात् लुप्तविसर्गत्वम् । एवं विसर्गबहुत्वे दुःश्रवत्वं दोषो यथा—

"स्मरः खरः खलः कान्तः कायः कोपधनः कृशः ।

च्युतो मानोऽधिको रागो मोहो जातोऽसवो गतः ॥"

तदुक्तं कुन्तकेन—

"अत्राल्लुप्तविसर्गान्तैः पदैःप्रोतैः परस्परम् । ह्रस्वैः संयोगपूर्वैश्च लावण्यमतिरिच्यते ॥'

भोजदेवस्त्वत्र असमस्तता नाम दोष इत्याह । यमके तु नायं दोषः, तथा हि नलोदयकाव्ये द्वितीयसर्गे—"पिकोऽपि कोपिकोपिको वियोगिनीरभर्त्सयत् ।

वचांसि भङ्गमाकपञ्जितानि तानि तानि ताः ॥ इति ।

( ३४ ) आहतविसर्गतापदं व्युत्पादयति—आहतेति । यत्र वाक्ये, तदाहतविसर्गं तस्य भाव आहतविसर्गता ओत्वञ्चात्र "आद्गुणः" इति सूत्रेण । तथा च ओत्वप्राप्तबहुविसर्गत्वमाहतविसर्गतेति लक्षणं फलितम् । दूषकताबीजन्तु प्राग्वदेव बोध्यम् । नित्यत्वादिकमपि तथैव । उदाहरति—धीर—इति ।

धीरो वरो नरो याति शुभ्रवस्त्रविभूषितः ।

सौन्दर्येण स्वभावेन मोहयन्निव मानसम् ॥ इति मत्पूरितांशत्रयम् ।

( ३५ ) अधिकपदतामुदाहरति—पल्लवेति । तल्लक्षणन्तु अनुपयुक्तपदवत्त्वमधिकपदत्वमिति । निरर्थकत्वन्तु पदगतः अयन्तु वाक्यगत इति द्वयोर्भेदः । अनुपयुक्तपदस्य सामञ्जस्यानुसन्धानेन व्यग्रतया विलम्बात् विलम्बेनैव रसप्रतीत्या वैमुख्यापादनादस्य दोषत्वम् । "गुणः क्वाप्यधिकं पदम्" इति वक्ष्यमाणत्वादनित्योऽयं दोषः । स्वरूपकथनार्थं प्रस्तुतानुपयोगिनोऽप्यर्थस्य विवक्षायामपुष्टार्थत्वम्, प्रयोजनाभावात्तदर्थाविवक्षायामपि तत्पदाभिधानेऽधिकपदत्वमित्यनयोर्भेदः ।

पल्लवाकृतिरक्तोष्ठी शरच्चन्द्रनिभानना ।

श्यामा हरिणशावाक्षी सन्ततं हृदि तिष्ठति ॥ इति मत्पूरितांशत्रयम् ।

पल्लवाकृती किसलयतुल्यौ रक्तौ ओष्ठौ यस्याः सा तादृशी ।

( ३६ ) अत्राकृतिपदमधिकम् ।

( ३७ ) एवम्—

'सदाशिवं नौमि पिनाकपाणिम् ।'

( ३८ ) इति विशेषणमधिकम् ।

( ३९ ) 'कुर्यां हरस्यापि पिनाकपाणेः' इति ।

( ४० ) अत्र तु पिनाकपाणिपदं विशेषप्रतिपत्त्यर्थमुपात्तमिति युक्तमेव ।

( ४१ ) यथा वा—

'वाचमुवाच कौत्सः ।'

( ४२ ) अत्र वाचमित्यधिकम् । उवाचेत्यनेनैव गतार्थत्वात् ।

---

( ३६ ) अत्र दोषं दर्शयति—अत्रेति । आकृतिपदासत्त्वेऽपि शिलापुत्रस्य शरीरमितिवत् पल्लवाकृतेः पल्लवानतिरिक्तत्वात् "पल्लवमिव रक्तौ ओष्ठौ यस्याः सा-पल्लवरक्तोष्ठी" इति बहुव्रीहिसमासेनैव तदर्थबोधोपपत्तेराकृतिपदमनुपयुक्तार्थमिति भावः ।

( ३७ ) प्रकारान्तरेणोदाहर्तुमाह—एवमिति ।

सदा प्रसन्नं जगतां शरण्यं ज्ञानप्रदं पूज्यगणे वरेण्यम् ।
सदैकरूपं प्रकृतेः परं तं सदाशिवं नौमि पिनाकपाणिम् ॥
अत्र मत्पूरितपूर्वपादत्रयम् ।

( ३८ ) अत्र दोषं समर्थयति—इतीति । विशेषणं पिनाकपाणिपदम् । अधिकमिति । तस्य स्तुतियोग्यताया अननुकूलत्वादिति भावः ।

( ३९ ) विशेषणस्य सार्थकस्थले तु नायं दोष इति प्रतिपादयितुमुदाहरति—कुर्य्यामिति ।
तव प्रसादात् कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्य्यां हरस्यापि पिनाकपाणेर्धैर्य्यच्युतिं के मम धन्विनोऽन्ये ॥
इति कुमारसम्भवे समस्तम् ।

( ४० ) अत्र दोषं समर्थयितुमाह—अत्रेति । विशेषप्रतिपत्त्यर्थं हरस्य दुर्जयत्वबोधार्थम् उपात्तं कविना उपन्यस्तम् । युक्तमेवेति । तादृशदुर्जयस्यापि पिनाकपाणेः धैर्य्यच्युतिकरणादात्मनः शौर्य्यातिशयत्वप्रतिपादनादिति भावः ।

( ४१ ) न केवलं समास एव पदाधिक्यं किन्त्वसमासेऽपीत्युदाहरणान्तरमाह—यथा वेति ।

"अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतिमना महर्षिः
स्पृशन् करेणानतपूर्वकायं संप्रस्थितो वाचमुवाच कौत्सः ॥"
रघुवंशपञ्चमसर्गे श्लोकसमुदायः ।

( ४२ ) दोषं दर्शयितुमाह—अत्रेति । गतार्थत्वात् श्रोतृभिर्ज्ञातविषयत्वात् परिभाषणार्थकवचधातोरेव वचनोच्चारणार्थत्वात् तथा च वाचमित्यस्य प्रयोगोऽनुपयुक्त एव प्रत्युतार्थान्तरकल्पनाकर इति भावः । अत्र वागीशाः—वाचमिति प्रतीकमामादाय यथा—"देवं यजति" "गन्धं जिघ्रति" इत्यादौ संभेदेनान्यतरवैयर्थ्यमिति न्यायेन यजादेः पूजाग्रहणमात्रार्थता, तथात्रापि वचधातोरुच्चारणमात्रार्थत्वम्, न तु वचनोच्चारणार्थत्वम् ।

( ४३ ) क्वचित्तु विशेषणदानार्थं तत्प्रयोगो युज्यते । यथा—

'उवाच मधुरां वाचम्' इति ।

( ४४ ) केचित्त्वाहुः—यत्र विशेषणस्यापि क्रियाविशेषणत्वं संभवति तत्रापि तत्प्रयोगो न घटते । यथा—

( ४५ ) 'उवाच मधुरं धीमान्' इति ।

( ४६ ) 'यदि मय्यर्पिता दृष्टिः किं ममेन्द्रतया तदा ।'

---

अन्यथा पौनरुक्त्यं स्यात् । एवञ्च तादृशकल्पनमेवात्र शाब्दबोधविलम्बकृदिति दोषत्वमस्य" इत्याहुः ।

( ४३ ) विशेषणार्थं तत्प्रयोगे तु नायं दोष इत्यभिधातुमाह—क्वचित्त्विति । क्वचित् स्थल इत्यर्थः । तत्प्रयोग इति । वच्धातोः कर्मतया वागादेः प्रयोगः ।

उवाच मधुरां वाचं मनः प्रह्लादयन् मम ।

सर्वत्र विदिताचारो लोकशिक्षणतत्परः ॥ अत्र मत्पूरितांशत्रयम् ।

अत्र मधुरामिति विशेषणदानार्थं वाचमित्यस्य प्रयोगो युक्त इति नात्राधिकपदत्वं दोष इत्याशयः ।

( ४४ ) एतच्च काव्यप्रकाशकृता दूषितं तद्दर्शयितुमाह—केचित्त्विति । विशेषणस्यापि कर्मविशेषणत्वेनाभिप्रेतस्यापि । तत्प्रयोगः क्रियासादृश्यार्थककर्मपदप्रयोगो न घटते न युज्यते । कर्म्मविशेषणार्थस्य क्रियाविशेषणेनैव लाभात् क्रिययैव च तथाविधकर्मार्थप्रत्यायनादावश्यकत्वाभावेन अधिकपदत्वप्रसङ्गादिति तेषामभिप्रायः । परे तु—वाचः प्रयोगस्तु उपपत्त्यन्तरासत्त्वाद्युज्यत एव किन्तु विशेषणदानार्थं तत्प्रयोग इत्युक्तिविशेषणस्य क्रियाविशेषणसम्भवोक्त्या दूषिता न तु वाचमित्यस्य प्रयोगः । "ऊचे वचस्तापसकुञ्जरेण" "नृपमूचे वचनं वृकोदरः" "जगाद वाक्यं गिरिराजपुत्री" इत्यादिबहुप्रयाग दर्शनात्तत्प्रयोगस्य तत्सम्मतत्वादेव । तदुपपत्तिस्तु वचेर्द्विधा व्युत्पत्तिः-कण्ठताल्वाद्यभिघातः तज्जन्यं वचनञ्चार्थः । तत्र वचनार्थकतया प्रयोगे वाचमिति न प्रयुज्यते, कण्ठताल्वाद्यभिघातार्थकतया प्रयोगे तु तत्कर्मभूतस्य वाचमित्यस्य युज्यत एव प्रयोग इति । यच्च वाचमित्यधिकमित्युक्तं तदपि युक्तम्, वच् धातोर्वचनार्थकत्वे वाचमित्यस्य पुनरुक्तत्वादेव ( पुनरुक्तभाव एव ) अधिकपदत्वदोषप्रसक्तेः । यथा-पल्लवाकृतिरक्तोष्ठ्येत्याहुः ।

( ४५ ) उक्तदिशा तन्मतीयं निर्दुष्टमुदाहरणमाह—उवाचेति । पूर्वोक्तमेवात्रापि-पादपूरणमवगन्तव्यम् । एतेन "उवाच मधुरां वाचम्" इत्यत्रापि अधिकपदतैवेति तेषां सिद्धान्त इति ध्येयम् । उवाचमधुरामिति उवाच मधुरमित्युदाहरणयोः प्रतीतिवैषम्य प्रतिपादनेन ग्रन्थकृता अस्वरसः सूचितः ।

( ४६ ) न्यूनपदत्वमुदाहरति—यदीति । न्यूनमुपादेयमप्यनुपात्तं पदं वाचकपदं यत्र तत्तथोक्तम् । तथा च उपादेयवाचकपदहीनवाक्यत्वं न्यूनपदत्वमिति लक्षणं फलितम् । वाचकेतिविशेषणाद्व्याख्यानभिधानेनातिव्याप्तिः तस्य द्योतकपदानभिधानस्वरूपत्वात् । अत्र पदज्ञानविरहकृता विवक्षितप्रतिपत्तिश्च दूषकताबीजम्, अतो झटित्याक्षेपतस्तल्लाभेऽदोषत्वम् । यथा "मा भवन्तमनलः पवनो वा" इत्यादौ मधाक्षीदमाङ्क्षी-

( ४७ ) अत्र त्वयेति पदं न्यूनम् ।
( ४८ ) 'रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन् ।'
( ४९ ) अत्र लीलाशब्दः पुनरुक्तः ।

---

दिति प्रसिद्धक्रियाया झटित्याक्षेपतो लाभः । यथा वा "निधानगर्भामिव सागराम्बराम्" ( रघुवंशे तृतीयसर्गे ) इत्यादावव्यभिचारिविशेषणेन पृथिव्या झटिति आक्षेपतो लाभ इति बोध्यम् । अत एवायमनित्यो दोषः, वक्ष्यति स्वयमेव "उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः" इति । केचित्तु-अध्याहारपूरणीयपदं न्यूनपदम्, द्योतकस्य वाच्यानभिधाने त्वध्याहारस्यैवासम्भवात् नातिव्याप्तिः । तथाहि—

व्यतिक्रमलवं कं मे वीक्ष्य वामाक्षि ! कुप्यसि ।
विकसत्पद्मसदृशे ह्यभावव्यक्तिकेऽधुना । इति मत्पूरितपूर्वार्द्धम् ।

इत्यत्र व्यतिक्रमलवयोः समाससत्त्वेऽप्यध्याहार्य्यापिकारेणापि व्यतिक्रमीयस्थलभागसमुच्चयस्यासम्भवात्, किन्तु वस्त्वन्तरस्यैव समुच्चयादित्याहुः—तन्न,

गुणशतमपि दोषः कश्चिदेकोऽतिवृद्धः
क्षपयति यदि नान्यस्तद्विरोधी गुणोऽस्ति ।

इत्यादौ गुणशतयोः समासत्वेऽप्यधिकारेणैकद्वयादिगुणसमुच्चयदर्शनात् ।

( ४७ ) दोषमुद्घाटयितुमाह—अत्रेति । प्रथमे पादे त्वयेतिपदम् अर्पितेति क्रियायाः कर्त्तृभूतम्, कर्त्तृपदमन्तरेण क्रियायाः साकाङ्क्षत्वादिति भावः ।

( ४८ ) कथितपदत्वमुदाहरति—रतिलीलेति । कथितपदं यस्मिन् वाक्ये तस्य भाव इति विग्रहः । तल्लक्षणन्तु प्रयोजनशून्यत्वे सति समानार्थकसमानानुपूर्वीकपदवत्त्वम् । "उदेति सविता ताम्रस्ताम्र एवास्तमेति च" "स सुरभिं सुरभिम्, इत्यादौ एतद्वारणाय सत्यन्तपदोपादानम् । तत्र हि तेनैव शब्देन पुनरुपादानेऽनुवादत्वेन झटिति प्रयोजनजिज्ञासायां व्यञ्जनयास्तमयोदयादावेकरूपतावगमः प्रयोजनमस्ति । पुनरुक्तत्वञ्च शब्देन अवगतत्वे सति पुनस्तद्वाचकेन पर्य्यायान्तरेण विभिन्नानुपूर्वीकत्वेनेति यावत् प्रतिपादितम्, अत्र तु तस्यैव पदस्योपादानमिति भेदः । अत्र चैकस्यैवार्थस्यैकशब्देन द्विरुपादाने किमिदं पदं नानार्थत्वेनार्थान्तरबोधकम् उत तस्यैवार्थस्य प्रतिपादनमिति प्रतिसन्धानप्रसङ्गे कवेरशक्त्युन्नयनेनोपभुक्तभोगवत श्रोतुर्वैमुख्यं दूषकताबीजमनुसन्धेयम् । अतो लाटानुप्रासादावदोषत्वम् अशक्त्यनुन्नयनात् । तथा च "कथितञ्च पदं पुनः" इति वक्ष्यमाणत्वात् अयमप्यनित्यो दोषः ।

"दक्षिणादिक्समुद्भूतो विरहिप्राणशोषकः ।" इति मत्पूरितपूर्वार्द्धम् ।

लीलया क्रीडया सहितं सलीलं वहन् अनिलो वायुः रतिलीलाश्रमं सम्भोगकेलिजनितपरिश्रमम्, भिन्ते नाशयति ।

( ४९ ) दोषमभिधातुमुत्थापयति—अत्रेति । पुनरुक्तः । रतिलीलेत्यत्र सलीलमित्यत्र च द्विवारमभिहितः अत एव कथितपदत्वमित्याशयः । यद्यप्यस्य पददोषत्वमपि सम्भवति तथाप्येकपदस्य द्विरुपादानादेव वाक्यदोषत्वमित्यवधेयम् । केचित्तु एकस्यैव पदस्य द्वितीयवारोपादानं पिष्टपेषणवदचमत्कारीत्याहुस्तन्न अनवीकृतत्वसांकर्य्यापत्तेः ।

( ५० ) एवम्—

'जक्षुर्विसं धृतविकासिबिसप्रसूनाः ।'

( ५१ ) अत्र बिसशब्दस्य धृतपरिस्फुटप्रसूना इति सर्वनाम्नैव परामर्शो युक्तः ।

(५२) हतवृत्तम्—लक्षणानुसरणेऽप्यश्रव्यम्, रसाननुगुणम्, अप्राप्तगुरुभावान्तलघु च । क्रमेण यथा—

(५३) 'हन्त' सततमेतस्या हृदयं भिन्ते मनोभवः कुपितः' ।

( ५० ) प्रकारान्तरेणोदाहरणं दर्शयति—एवमिति ।

"सस्नुः पयः पपुरनेनिजुरम्बराणि जक्षुर्विसं धृतविकाशिविसप्रसूनाः ।

सैन्याः प्रियामनुपभोगनिरर्थकत्व-दोषप्रवादममृजन्नगनिम्नगानाम् ।"

शिशुपालवधपञ्चमसर्गे समस्तम् ।

धृतानि धारितानि विकाशीनि प्रस्फुटन्ति विसप्रसूनानि कमलानि यैस्ते तथोक्ताः "सैन्याः विसं मृणालं "मृणालं विसमब्जादि" इत्यमरः, जक्षुर्भक्षयामासुः ।

अत्र विसशब्दस्य द्वितीयवारोपादानात् कथितपदत्वम् ।

( ५१ ) तद्दोषं स्पष्टयति—अत्रेति । सर्वनाम्नैव द्वात्रिंशत्सर्वनामान्तःपातितच्छब्देनैव परामर्शः उपस्थितिः तथासति पुनर्विसशब्दानुपादानान्न कथितपदत्वं दोष इति भावः ।

( ५२ ) हतवृत्ततामुदाहर्तुं हतपदार्थत्रैविध्येन त्रिविधं हतवृत्तमिति दर्शयति-हतवृत्तमिति । "मारिते कुत्सिते हतम्" इति कोशात् हतं निन्दितं वृत्तं छन्द' यत्र वाक्ये तत् हतवृत्तम् । सामान्यलक्षणं हतवृत्ततायास्तु छन्दोगतदोषवत्वं हतवृत्तत्वम् । छन्दो वैरूप्येण श्रोतुर्वैमुख्यापादनात् रसप्रकर्षप्रतिबन्धकत्वेनास्य दोषत्वम् । तथा च प्रतिप्रसवासम्भवेन सर्वदैव हेयत्वादयं दोषो नित्य एव । तत्र प्रथमविधं हतपदार्थमाह—लक्षणानुसरणेऽपीति । लक्षणं गुर्वादिनियामकं पिङ्गलमुनिकालिदासादिप्रणीतं शास्त्रम् तथा च तत्तच्छन्दसः पूर्णलक्षणानुगमेऽपि छन्दः अश्रव्यम् अश्रुतिमधुरम् अपिना तदननुसरणं समुच्चीयते अन्यथाछन्दोभङ्गेऽदुष्टकाव्यत्वापत्तिः स्यात् । द्वितीयहतपदार्थमाह—रसानन्विति । रसस्य प्रकृतरसादेः अननुगुणम् प्रतिकूलम् प्रकृतरसाननुकूलमित्यर्थः । तृतीयविधं हतपदार्थमाह—अप्राप्तेति । "वा पदान्ते" इति छन्दःशास्त्रेण लघोरपि पादान्ते गुरुत्वमतिदिश्यते तत्र प्राप्नोति तत्कार्य्यं न भवतीत्यर्थः। तथा च "वा पदान्ते" इत्युक्तेः अप्राप्तो गुरुभावो गुरुत्वं येन तथाभूतो वर्णः, अन्ते पादस्यान्तिमे देशे लघुर्लघुवर्णो यस्य यत्र वेतिबहुव्रीहिगर्भो बहुव्रीहिः, तत्तथोक्तञ्च वाक्यं हतवृत्तमित्यनेन सम्बन्धः ।

( ५३ ) तत्र प्रथमस्य "लक्षणानुसरणेऽप्यश्रव्यम्" इत्यस्योदाहरणं दर्शयति—हन्तसततमेतस्या इति । कुपितः मनोभवो मदनः एतस्या नायिकाया हृदयं सततम् अजस्रं भिन्ते द्वैधीकरोति पीडयतीत्यर्थः ।

अत्र—यस्याः पादे प्रथमे द्वादशमात्रा तथा तृतीयेऽपि ।

अष्टादशद्वितीये चतुर्थके पञ्चदश साऽर्या ॥

( ५४ ) 'अयि ! मयि मानिनि ! मा कुरु मानम्' ।
( ५५ ) इदं वृत्तं हास्यरसस्यैवाऽनुकूलम् ।
( ५६ ) 'विकसित-सहकार-भार-हारि-परिमल एष समागतो वसन्तः' ।

इति छन्दः शास्त्रोक्ताऽर्यालक्षणानुसरणेऽपि 'श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्' इत्यादिना अनुष्टुभ् इव लक्षितः सहसा प्रथमपादे बोधो भवति, पश्चाच्च द्वितीयपादे आर्याप्रकाशोपस्थितिरिति वैषम्याद्भग्नत्वेन हतवृत्तत्वम् ।

(५४) द्वितीयस्य रसाननुगुणमित्यस्योदाहरणमाह—अयि ! मयि मानिनीति ।

वितर मृगाक्षि ! निजाधरपानम् ।

जीवतु दयितजनो हरिरेषः प्रतिहतविरहजदुःखविशेषः ॥ इत्यवशिष्टपादत्रयम् ।

(५५) अत्र दोषं समर्थयति—इदमिति । वृत्तं—

प्रतिपदयमकितषोडशमात्रा नवमगुरुत्वविभूषितगात्रा ।
पज्झटिकाया एष विवेकः क्वापि न मध्यगुरुर्गण एकः ॥

इत्युक्तलक्षणः पज्झटिकानामच्छन्दः हास्यरसस्यैव अनुकूलम् अनुगुणम् न पुनरत्र शृङ्गाररसस्येति वृत्तवैषम्यात् हतवृत्तत्वम्, तथा च इदं वृत्तं हास्यरसोचितं प्रकृत-शृङ्गाररसाननुगुणम् यतोऽत्र शृङ्गारे निबद्धमतो दोष इति भावः । अत्रानुकूल्यप्रातिकूल्यञ्च श्रोतुरेव हृदयसम्वेद्य इति बोध्यम् । अत्रेदम्बोध्यम्—करुणे मन्दाक्रान्तापुष्पिताग्रादीनामेवानुगुणत्वम्, शृङ्गारादौ पृथ्वीस्रग्धरादीनाम्, वीरादौ शिखरिणीशार्दूलविक्रीडितादीनामानुगुण्यम्, हास्ये च दोधकस्य पज्झटिकादेश्च प्रतिपदविच्छेदित्वेनानुगुण्यमिति ।

अन्यत्र रसाऽनुगुण्यमित्थम्—

"आरम्भे सर्गबन्धस्य कथाविस्तरसङ्ग्रहे । शमोपदेशवृत्तान्ते सन्तः शंसन्त्यनुष्टुभम् ।
शृङ्गारालम्बनोदारनायिकारूपवर्णनम् । वसन्तादि तदङ्गं च सच्छायामुपजातिभिः ॥
रथोद्धताविभावेषु भव्या चन्द्रोदयादिषु । षाड्गुण्यप्रगुणानीतिर्वंशस्थेन विराजते ॥
वसन्ततिलकं भाति सङ्करे वीररौद्रयोः । कुर्य्यात्सर्गस्य पर्य्यन्ते मालिनीं द्रुततालवत् ॥
उपपन्नपरिच्छेदकाले शिखरिणी वरा । औदार्य्यरूपचौरौचित्यविचारे हरिणी मता ॥
साक्षेपक्रोधधिक्कारे परं पृथ्वी भरक्षमा । प्रावृट् प्रवासव्यसने मन्दाक्रान्ता विराजते ॥
शौर्य्यस्तवे नृपादीनां शार्दूलक्रीडितं मतम् । सावेगपवनादीनां वर्णने स्रग्धरा वरा ॥
दोधकतोटककुर्कुटयुक्तं मुक्तकमेव विराजति सूक्तम् ।
निर्विषयस्तु रसादिषु तेषां निर्नियमश्च सदा विनियोगः ॥" इति ।

अत एव सरस्वतीकण्ठाभरणकर्त्ता भोजराज आह—

येषु श्रुतेषु चित्तस्य वैराग्यं न च हृद्यता ।
तानि वर्ज्यानि वृत्तानि प्रसिद्धिप्रच्युतानि च ॥ इति ।

(५६) तृतीयमप्राप्तगुरुभावान्तलघुवृत्तम् । यस्मिन् वृत्ते पादान्त्यलघोर्गुरुकार्याक्षमत्वन्तदुदाहरति—विकसितेति । विकसितः पुष्पितो यः सहकारभारोऽतिसौरभसूतविशेषसमूहः तस्य हारी मनोहरो यः परिमलो गन्धः "विमर्दोत्थे परिमलो गन्धे जनमनोहरे" इत्यमरः, यत्र स तथोक्तः, एव वसन्तः ऋतुविशेषः समागतः ।

( ५७ ) यत्पादान्ते लघोरपि गुरुभाव उक्तः, तत्सर्वत्र द्वितीयचतुर्थपादविषयम्। प्रथमतृतीयपादविषयन्तु वसन्ततिलकादेरेव ।

"अयुजि नयुगरेफतो यकारः" इत्यादिना प्रथमतृतीयपादयोरन्तिमाक्षरस्य यगणान्तिमत्वेन गुरुत्वावश्यकत्वात् प्रकृते "वा पादान्ते" इति छन्दःशास्त्रेण पादान्तस्य गुरुत्वाच्छन्दोभङ्गाभावेऽपि प्रथमपादान्तवर्त्तिन इकारस्य लघोर्गुरुकार्यकरणाक्षमत्वं बन्धशैथिल्यात्, बन्धशैथिल्यमेव दूषकताबीजम् एवञ्च हतवृत्तत्वम् ।

( २७ ) ननु "हारि" इत्यत्र ह्रस्वस्यापि प्रथमपादान्तवर्त्तिन इकारस्य पादान्तगततया विकल्पेन गुरुत्वप्राप्तेः उक्तलक्षणस्य समन्वयेऽपि कथं हतवृत्तत्वमित्यत आह— यत्पादान्त इति । उक्तः "वा पादान्ते" इत्यनेन छन्दःशास्त्रकारैरिति शेषः, कालिदासोऽपि श्रुतबोधे—

संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसम्मिश्रम् ।
विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन ॥ इत्याह ।

सर्वत्र सर्वेषु छन्दःसु । वसन्ततिलकादेरेव । आदिशब्देन इन्द्रवज्रोपेन्द्रवज्रा मालिनी-प्रहर्षिणी-शार्दूलविक्रीडितप्रभृतीनां परिग्रहः । एषां हि प्रथमतृतीयपादयोरपि चरमवर्णस्य लघुत्वेन उदाहृतवन्न श्रुतिशैथिल्यं दृश्यते अतस्तत्र लघुवर्णप्रयोगेऽपि न हतवृत्तत्वम् । येषां किन्त्वार्या-पज्झटिकातोटक-पुष्पिताग्रादीनां प्रथमतृतीयपादयोश्चरमवर्णस्य लघुत्वेन उदाहृतवत् श्रुतिशैथिल्यं दृश्यते तेषां तत्प्रयोगे हतवृत्तत्वमेव । तथा चेह प्रथमपादान्तस्य गुरुत्वाप्राप्तेर्दोष एवेत्यवधेयम् ।

केचित्तु—"आदिपदेन इन्द्रवज्रोपेन्द्रवज्रयोः संग्रहः" इतीच्छन्ति तन्न विचारसहम्, अन्येषामपि छन्दसां महाकवीनामुदाहरणे प्रथमतृतीयपादयोश्चरमलघुत्वस्य बहुलप्रयोगात् । तथा हि—

द्रव्यं लब्धं द्यूतेनैव दारा मित्रं द्यूतेनैव । दत्तं भुक्तं द्यूतेनैव सर्वं नष्टं द्यूतेनैव ॥

इति मृच्छकटिकाद्वितीयाङ्के प्रथमतृतीयचरणयोश्चरमाक्षरस्य लघुत्वम् ।

तथा तत्रैव दशमाङ्के १३ शपद्ये । प्रथमतृतीययोरुभयोरेव चरमवर्णस्य लघुत्वम्, ऋतुसंहारे—प्रथमसर्गे २४ पद्ये मालिन्यां तृतीयचरणान्तिमवर्णस्य लघुत्वम्, यथा—

विकचनवकुसुम्भस्वच्छसिन्दूरभासा प्रबलपवनवेगोद्भूतवेगेन तूर्णम् ।
तटविटपलताग्रालिङ्गनव्याकुलेन दिशि दिशि परिदग्धा भूमयः पावकेन ॥ इति ।

प्रहर्षिण्यां तृतीचरणान्तिमवर्णस्य लघुत्वं, महावीरचरिते षष्ठेऽङ्के १४ शपद्ये—यथा—

उत्पुष्पाद्गलधूमनिस्फुटप्रसर्पत् प्रत्यग्रक्षतजझरीनिवृत्तपाद्यः ।
हर्षाश्रुप्रचुरमधुविस्मितस्फुटश्रि-वक्त्राब्जार्चितचरणः शिवः प्रमाणम् ॥ इति ।

शार्दूलविक्रीडिते तृतीयपादान्तिमवर्णस्य लघुत्वम् कातन्त्रपरिशिष्टविवृतौ यथा—

"मोक्षाशक्तिधरः कुमारनिपुणो वस्त्राणि बिभ्रत्तव
शम्भो ! किं भवितेति चिन्तितवती पायादसौ पार्वती" ॥ इति ।

अस्यैव प्रथमचरणान्तिमाक्षरस्य लघुत्वं नैषधे द्वादशसर्गे । यथा—

अस्मिन् दिग्विजयोद्यते पतिरयं मे स्तादिति ध्यायति
कम्पं सात्त्विकभावमञ्चति रिपुक्षौणीन्द्रदाराधरा ।

( ५८ ) अत्र "प्रमुदितसौरभ आगतो वसन्तः" इति पाठो युक्तः ।

( ५९ ) यथा वा—

( ६० ) "अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भारा खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलात्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च" ॥

---

अस्यैवाभिमुखं निपत्य समरे यास्यद्भिरूर्ध्वं निजः
पन्था भास्वति दृश्यते विलमयः प्रत्यर्थिभिः पार्थिवः ॥ इति ।

इत्थमन्यतोऽप्यनुसन्धेयम् ।

( ५८ ) युक्तं पाठमुपदेष्टुमाह-अत्रेति । प्रमुदितसौरभ इति । प्रमुदितेत्यत्र "मुद हर्षे" इति भौवादिकाद्धातोः "आदिकर्मणि क्तः कर्त्तरि च" इत्यनेन कर्त्तरि क्तः मासं प्रमितः प्रतिपच्चन्द्र इति वाक्यवत् । तथा च हारि च प्रमुदितः प्रमोदं कर्त्तुमारब्धवच्च यत् सौरभं सौगन्ध्यं तद्यत्र स तथोक्त इत्यर्थः । एवं पाठे तु प्रात्पूर्वस्य "हारि" इति ह्रस्वस्य इकारस्य "संयुक्ताद्यं दीर्घम्" इति न्यायेन संयोगात्प्राग्वर्तिनो लघोरपि वर्णस्य गुरुत्वलाभेन बन्धदार्ढ्यान्न हतवृत्तत्वं दोष इति भावः ।

अत्र—

विकसितसहकारतारहारिपरिमळगुञ्जितपुञ्जितद्विरेफः
नवकिसलयचारुचामरश्रीर्हरतिमुनेरपि मानसं वसन्तः ॥

इति काव्यप्रकाशोदाहरणमुपजीव्यम् ।

( ५९ ) इत्थं पुष्पिताग्रावृत्ते उदाहृत्य शार्दूलविक्रीडितेऽप्युदाहरति —यथा वेति । अथवा न केवलं प्रथमतृतीयपादयोरेवायं दोषः किन्त्वन्ययोरपि, तत्र चतुर्थपादे उदाहरति-यथा वेति । यद्वा "यत्पादान्ते लघोरपि" इत्यादिना यदभिहितं तत्सर्वमेव निष्प्रमाणम्, ननु महाकविप्रबन्धेष्वेवं दृष्टमिति चेत् ? नैवम्, तद्व्यभिचारस्यापि उदाहृतपद्येषु दर्शनात् । अपि च "विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन" इति छन्दःशास्त्रनियमस्य हि सामान्येन सर्वत्रैव प्रवृत्त्या प्रकृतेऽपि चरमचरणस्यैकारस्य, तन्नियमप्रवृत्तौ तद्वर्णस्य गुरुत्वसिद्धे हतवृत्तस्य प्रसक्तिरेव नास्तीत्यतः प्रकारान्तरेणान्योदाहरणे हतवृत्तत्वं समर्थयितुमाह—यथा वेति ।

(६०) अन्यास्ता इति । कस्यचिद्राज्ञो वर्णनमिदम् । स एष युवा विधिना स्रष्टकर्त्रा यः पदार्थैः सृष्ट उत्पादितः ताः तदन्तर्गताः गुणाः सौन्दर्यादय एव रत्नानि तेषां सम्बन्धिन्यो रोहणस्य रत्नोत्पत्तिहेतुभूतपर्वतविशेषस्य भुवो भूमय अन्या भिन्ना साधारणविलक्षणा इत्यर्थः । सा मृत् समवायिकारणरूपः पार्थिवो भागः तद्देहोपादानभूता मृत्तिकेत्यर्थः, अन्यैव भिन्नैव साधारणमृत्तिकाविलक्षणैवेत्यर्थः, परं धन्या तत्सम्बन्धप्राप्तेरिति भावः । वचनविपरिणामादिदं भुवोऽपि विशेषणमिति बोध्यम् । एवं ते खलु सम्भाराः जलाद्युपकरणानि इतरकारणकलापभूतसामग्रीरूपा इत्यर्थः । अन्य एव भिन्ना भिन्ना एव साधारणविलक्षणा एवेत्यर्थः । "धन्या" इति अत्रापि सम्बध्यते । स कः, यत्र यूनि दृष्टे सति, मूढमनसाम् एकत्र भयेन अपरत्र कामावेगेन च कर्तव्याकर्तव्यज्ञा-

( ६१ ) अत्र "वस्त्राणि च" इति वन्धस्य श्लथत्वश्रुतिः। "वस्त्राण्यपि" इति पाठे तु दार्ढ्यमिति न दोषः।
( ६२ ) 'इदमप्राप्तगुरुभावान्तलघु' इति काव्यप्रकाशकारः।
( ६३ ) वस्तुतस्तु 'लक्षणाऽनुसरणेऽप्यश्रव्यम्' इत्यन्ये।

मशून्यात्मनाम्, श्रीमन्तश्च ते कान्तिजुषः युद्धारम्भकालीनशोभायुक्ताश्च तेषाम्, श्रीमत्यश्च ताः कान्तिजुषश्च स्वाभाविककान्तियुक्ताः तासाम्, द्विषां शत्रूणां करतलात् अस्त्राणि शस्त्राणि पतन्ति, क्षीणाश्च नितम्बस्थलात् कटिप्रदेशात् वस्त्राणि च पतन्ति। महाशूरोऽतिसुन्दरश्चैष युवेति भावः। यैश्च यैश्च याभिश्च ययेति पुल्लिङ्गस्त्रीलिङ्गयच्छब्दैकशेषः। शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तमेव ( ९८ पृ० )।

(६१) अत्र च हतवृत्तत्वमुपपादयितुमाह—अत्रेति। बन्धस्य लघ्वक्षरेण निर्मितचरमांशस्य श्लथत्वश्रुतिः, लघ्वक्षरप्रकृत्योपान्ते संयोगश्रवणाभावेन च शैथिल्यश्रवणम्। तथा शार्दूलविक्रीडिते छन्दसि चरमवर्णस्य गुरुत्वनियमेन ह्रस्वश्रवणावश्यकत्वात् प्रकृते तदभावात् हतवृत्तत्वमित्याशयः।

तथा सति युक्तं पाठमुपदिशति-वस्त्राण्यपीति। दार्ढ्यमिति। उपान्ते संयोगवर्णोपिलम्भात् ह्रस्वश्रुतिः इति हेतोर्न दोषो न हतवृत्तत्वम्। अगुरोरपि संयोगात्परतया बन्धदार्ढ्येन स्वरवृद्धौ लघुरपि गुरुकार्यकारी संपद्यत इति न दोष इति भावः। एवमन्यत्र द्वितीयपादेऽप्यूह्यम्।

(६२) काव्यप्रकाशकृन्मतं प्रमाणयति-इदमिति। "इदमप्राप्ते" त्यादिपाठोपलम्भात् अप्राप्तगुरुभावान्तलघुस्थले अस्योदाहरणदानाच्च इति काव्यप्रकाशकारः स्वीक्रियते इत्यर्थः।

(६३) ये खलु केवलं लक्षणानुसरणेऽप्यश्रव्यत्वरूपमेव भेदं मन्यमानाः हतवृत्तत्वस्य अपरभेदद्वयं न स्वीकुर्वन्ति तन्मतं दर्शयितुमाह-वस्तुतस्त्विति। इदमत्रानुसन्धेयम्-'यत्पादान्ते लघोरपि गुरुभाव' इत्यादिनियमकथनमयुक्तम्, एतादृशनियमे बीजाभावात्। "वा पादान्ते" "विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन" इति सामान्यशास्त्रस्य हेतुं विना सङ्कोचकल्पनाप्रसङ्गात्। उक्तनियमाभ्युपगमे हि "वस्त्राणि च" इत्यत्र स्वस्यैव हतवृत्तत्वदोषदानासङ्गतत्वापत्तेः, तथा काव्यप्रकाशकारमतेन दुर्निवारविरोधप्रसक्तेश्च, तस्मात् "यत्पादादान्ते" इत्यादिकथनं प्रायिकत्वेन केवलप्रदर्शनपरम्। सर्वास्वेव वृत्तिषु सर्वेषामेव चरणानां चरमलघुवर्णस्य विकल्पेन गुरुत्वमेव। एवञ्च सति वर्णविशेषप्रकृत्याश्लथत्वश्रवणे हतवृत्तत्वं दोषः दार्ढ्यश्रवणे तु नायं दोष इति पूर्वापरग्रन्थपर्यालोचनया निर्विवादोऽयं राद्धान्तः। तथा च "भारहारि" "वस्त्राणि च" इत्युभयत्र बन्धदार्ढ्याभावेन शैथिल्यश्रवणादेव हतवृत्तत्वं दोष इत्यवधेयम्।

काव्यप्रकाशकारस्तु लक्षणानुसरणेऽपि वर्णवृत्ते यतिभङ्गादश्रव्यत्वोदाहरणमाह—

अमृतममृतं कः सन्देहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम्।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत् स्वादु स्यात्प्रियादशनच्छदात्॥

अत्र हरिणीच्छन्दसि प्रतिपादं षष्ठाक्षरे यतिरुचिता चतुर्थे तु पादे "हा" इति षष्ठाक्षरे परपदानुसन्धानापेक्षत्वेन यतिभङ्गादश्रव्यत्वम्।

"वदतु मधुरं यस्यादन्यत् प्रियादशनच्छदात्" इति तु युक्तः पाठः।

एवं लक्षणानुसरणेऽपि मात्रावृत्ते स्थानविशेषे गणविशेषायोगात् (क) अश्रव्यत्वम् तत्रैव—"जं परिहरिउँ" इति बोध्यम्।

---

(क) अश्रव्यत्वमिति। इह प्रसङ्गात् केषाञ्चन छन्दसां श्रव्यत्वाश्रव्यत्वबोधाय केचन नियमा उपस्थाप्यन्ते—

समासैर्लघुवृत्तानामसमासैर्महीयसाम्। शोभा भवति भव्यानामुपयोगवशेन वा॥

अनुष्टुप्छन्दसां भेदे कैश्चित्सामान्यलक्षणम्। यदुक्तं पञ्चमं कुर्य्यात् लघु षष्ठं तथा गुरु॥

तत्राप्यनियमो दृष्टः प्रबन्धे महतामपि। तस्मादव्यभिचारेण श्रव्यतैव गरीयसी॥

यथा कालिदासप्रतिपादिते—"तदन्ये शुद्धिमति" इत्यादौ।

उपजातिविकल्पानां सिद्धो यद्यपि सङ्करः। तथापि प्रथमं कुर्य्यात् पूर्वपादाक्षरं लघु॥

"यथा—अस्त्युत्तरस्याम्" इत्यत्र कुमारसम्भवे।

अक्षरैस्त्र्यक्षरैरेवच्छेदैराभाति दोधकम्। अतोऽल्पैरधिकैर्वापि यतिं तालमिवोज्झति॥

शत्रन्ताक्षरसंयोगैः किञ्चित्कार्कश्यकारिभिः। अन्ते विसर्जनीयैश्च शालिनी याति दीप्तिताम्॥

विसर्गयुक्तैः पादान्तैर्विराजति रथोद्धता। कलापरिचयैर्जाता लटभेव प्रगल्भताम्॥

साकाराद्यैर्विसर्गान्तैः सर्वपादैः सविभ्रमा। स्वागता स्वागता भाति कविकर्मविलासिनी॥

द्रुततालनयैरेव व्यक्तं रूक्षाक्षरैः पदैः। प्रनर्त्तयति यच्चित्तं तत्तोटकमभीप्सितम्॥

असमस्तपदैः पादसन्धिविच्छेदसुन्दरम्। सर्वपादैर्विसर्गान्तैर्वंशस्थं यात्यनर्घताम्॥

प्रारम्भे द्रुतविन्यासे पर्य्यन्तेषु विलम्बितम्। विच्छित्तया सर्वपादानां भाति द्रुतविलम्बितम्॥

आकारमन्थरैः प्रायः पादे पादेऽक्षरैस्त्रिभिः। शेषाक्षरैर्द्रुततरैः प्रहर्षाय प्रहर्षिणी॥

वसन्ततिलकास्याग्रे साकारे प्रथमाक्षरे। ओजसा जायते कान्तिः सविकासविलासिनी॥

यथा—

कण्ठश्रियं कुवलयस्तवकाभिरामदामानुकारिविकटच्छविकालकूटम्।
बिभ्रत्सुखानि दिशतादुपहारपीतधूपोत्थधूममलिनामिव धूर्जटिर्वः॥

इति रत्नाकरस्योक्तौ।

"अकारेऽपि कृतं पूर्वं बन्धेऽल्पपदपेशले। वसन्ततिलकं धत्ते निर्ग्रन्थिरमणीयताम्॥

विसर्गहीनपर्य्यन्ता मालिनी न विराजते। चमरीछिन्नपुच्छेव बल्लीवालूनपल्लवा॥

द्वितीयार्धे समस्ताभ्यां पादाभ्यां मालिनी वरा। प्रथमार्धे समस्ताभ्यां पादाभ्यामवरा मता॥

प्रथमं द्व्यक्षरैश्छेदैस्ततस्त्रिचतुरक्षरैः। पञ्चाक्षरैश्चपर्य्यन्ते नर्कुटं याति चारुताम्।

यथा—नवशतपत्रपत्रमद्भुताभ्रजलश्चरणश्चलकलहंस-नूपुरवरध्वनिना मुखरः।

महिषमहासुरस्य शिरसि प्रसभं निहितः कनकमहीधरेन्द्रगुरुता कथमम्ब गतः॥' इति वीरदेवस्योक्तौ।

"असमासैः पदैर्भाति पृथ्वीपृथ्वीपृथक्स्थितैः। समासग्रन्थिभिः सैव याति संकोचखर्वताम्"॥

यथा रसगङ्गाधरे—

स्मृतापि तरुणातपं करुणया हरन्ती नृणाम् अभङ्गुरतनुत्विषां वलयिता शतैर्विद्युताम्।

कलिन्दगिरिनन्दिनी-तटसुरद्रुमालम्बिनी मदीयमतिचुम्बिनी भवतु कापि कादम्बिनी॥

( ६४ ) प्रोज्ज्वलज्ज्वलनज्वाला-विकटोरुसटाच्छटः ।
श्वासक्षिप्तकुलक्ष्माभृत् पातु वो नरकेशरी ॥

( ६५ ) अत्र क्रमेणानुप्रासः पतितः ।

(६४) पतत्प्रकर्षत्वमुदाहरति—प्रोज्ज्वलदिति । पतन् ह्रसन् प्रकर्षः क्रमिकोत्कर्षो यत्र वाक्ये स तथोक्तः तथा च क्रमिकप्रकर्षहीनत्वं तल्लक्षणं बोध्यम् ।

उक्तं च—

पतत्प्रकर्षं तद्वाक्यं बन्धादावुत्तरोत्तरम् ।
पूर्वानुसारतः कोऽपि निष्कर्षो यत्र जायते ॥

क्रमिकप्रकर्षह्रासेन कवेरशक्त्युन्नयनात् श्रोतुः प्रमोदस्यापि ह्रासेन रसप्रकर्षप्रतिबन्धकत्वादस्य दोषत्वम् । "पतत्प्रकर्षता तथा" इति प्रतिप्रसवस्य वक्ष्यमाणत्वात् अनित्योऽयं दोष इत्यवधेयम् । प्रोज्ज्वलत उद्दीप्यमानस्य ज्वलनस्य अग्नेः ज्वाला शिखेव विकटा भयङ्करा उर्वी च गुर्वी महतीति यावत् सटाच्छटा सिंहशिरोरुहसमूहो यस्य स तथोक्तः । तथा श्वासेन निश्वासपवनेन क्षिप्ता दूरं प्रापिता कुलक्ष्माभृतः कुलशैला येन स तथोक्तः, नरकेशरी नरसिंहरूपी भगवान् वो युष्मान् पातु अवतु ।

(६५) दोषं दर्शयितुमाह—अत्रेति । तथा च प्रथमचरणे संयुक्ताज्वर्णत्रयेण घटितोऽनुप्रासोऽत्यन्तमुत्कृष्टः, द्वितीयचरणे असंयुक्तटकारत्रयेणैवेति तदपेक्षया किञ्चिदपकृष्टः, तृतीयचरणे तु संयुक्तक्षकारद्वयेन संयुत इति द्वितीयादपकृष्टः, चतुर्थचरणे च पुनः मृदुवर्णरेफद्वयेन संयुत इति सर्वापेक्षया अपकृष्ट इति भावः । अत्र चतुर्थचरणस्य शैथिल्येनाऽपि निष्कर्षो ज्ञेयः ।

---

पृथ्वी साकारगम्भीरैरोजःसर्जिभिरक्षरैः । समासग्रन्थियुक्तापि याति प्रत्युतदीर्घताम् ॥
त्वरा तरलविच्छेदैर्विभाति हरिणी पदैः । मन्थरैर्ग्रन्थिबद्धेव याति निस्पन्दसंज्ञताम् ॥
त्रिषु पादेषु विश्रान्तविलासैर्ललितापदैः । अन्ते तरङ्गितगतिर्हरिणी हारिणीतराम् ॥
शिखरिण्याः समारोहात् सहजैवौजसस्थितिः । सैव लुप्तविसर्गान्तैः प्रयात्यन्तमुन्नतिम् ॥
शिखरिण्याः पदैश्छिन्नैः स्वरूपं परिहीयते । मुक्तालताया निःसूत्रमुक्तैर्मुक्ता फलैरिव ॥
मन्थराक्रान्तविस्रब्धैश्चतुर्भिः प्रथमाक्षरैः । मध्ये षट्केऽतिचतुरे मन्दाक्रान्ता विराजते" ॥
यथा—"ब्रह्मावर्त्तंजनपदमधः" । इत्यादि ।
साकारप्राचरैः पादपर्य्यन्तैः सविसर्गकैः । शार्दूलक्रीडितं धत्ते तेजो जीवितमूर्जितम् ॥
विसर्जनीयस्योत्वेन पदैर्निम्नोन्नतैरिव । शार्दूलक्रीडितं याति पाठे सायासतामिव ॥
विच्छिन्नपादं पूर्वार्धे द्वितीयार्धे समासवत् । शार्दूलक्रीडितं भाति विपरीतमतोऽधमम् ॥
आद्यन्तयोर्गुणोत्कर्षकान्त्या सर्वातिशायिनोः । शार्दूलक्रीडितं धत्ते मध्ये तद्गौरवोन्नतिम् ॥
यथा—"गाहन्तां महिषाः" इत्यादि ।
आद्यन्ताकारविरहात् पर्य्यन्ते चाविसर्गतः । शार्दूलक्रीडितं स्वस्य रूपं नैवोपलभ्यते ॥
यथा—"यत्वन्नेत्रसमानकान्ति" इत्यादि ।
सुकुमाररसस्यात्ररचायै वृत्तमुद्धतम् । वाक्पाकेनैव गलितं कवितानीतमल्पताम् ॥
आकारगुरुयुक्तादिपर्य्यन्तान्तविसर्गिणी । असंस्यूतविरामा च राजते स्रग्धरातराम् ॥
आद्यन्ताकारविरहाद्बन्धदोषः स्फुटोऽपि यः । अविलुप्तैर्विसर्गान्तैः स्रग्धरायां समीहते ॥
इति टिप्पण्यामपि स्पष्टमेव इतो विशेषजिज्ञासाभिराकरे द्रष्टव्यम् ।

( ६६ ) 'दलिते उत्पले एते अक्षिणी अमलाङ्गि ! ते'।

( ६७ ) एवं विधसन्धिविश्लेषस्य असकृत् प्रयोग एव दोषः। अनुशासनमुल्लङ्घ्य वृत्तभङ्गभयमात्रेण सन्धिविश्लेषस्य तु सकृदपि। यथा—

( ६८ ) "वासवाशामुखे भाति इन्दुश्चन्दनबिन्दुवत्।"

(६६) सन्धिविश्लेषोदाहरणं दर्शयति—दलिते इति। सन्धिरत्र संहितारूपः, संहिता च स्वारसिकार्धमात्राकालव्यवधानेनोच्चारणम्। विशब्दोऽत्र वैरूप्यार्थकः विश्लेषस्तु प्राप्तस्य संहिताकार्यस्याभावः तथा च सन्धिविहीनत्वमेव सन्धिविश्लेष इति तल्लक्षणम्। विश्लेषो हि द्विविधः—

"सन्धिरेकपदे नित्ये नित्यो धातूपसर्गयोः।
नित्यः समासे द्रष्टव्यः अन्यत्र तु विभाषया"।

इति वचनादैच्छिकः आनुशासनिकश्चेति। "अन्यत्र" इत्यस्य वाक्ये इत्यर्थः। अत एव पाठान्तरं दृश्यते।

"संहितैकपदे नित्या नित्या धातूपसर्गयोः।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते॥"

वाक्ये तु संहिता विवक्षां वक्तुरिच्छामपेक्षते। विवक्षाधीनेत्यर्थः, क्वचिद्भवति क्वचिच्च न भवतीति यावत् अत एव—

"मनसश्चेन्द्रियाणाञ्च ऐकाग्र्यं परमं तपः।"

इत्यादौ संहिताकार्यं दृश्यते न दृश्यते चेति ज्ञेयम्। आनुशासनिकश्च प्रगृह्यहेतुकोऽसिद्धिहेतुकश्चेति विविधोऽयं विश्लेषः। तेष्वाद्यः सकृदपि विद्यमानो दोषाय इच्छानिबन्धनत्वेनाशक्तिमूलकतया प्रथमत एव सहृदयोद्वेजकत्वात्। अन्त्येन तु असकृदेव विद्यमानो दोषाय आनुशासनिकत्वेनाशक्त्युन्नायकतया बन्धशैथिल्येनैव हि तस्य दोषत्वम्, तच्चासकृत् प्रयोग एव। प्रतिप्रसवाभावात् नित्योऽयं दोषः। हे अमलाङ्गि! ते तव एते अक्षिणी लोचने, दलिते विकसिते उत्पले नीलोत्पलद्वन्द्वस्वरूपे।

अत्र "ईदूदेद्द्विवचनं प्रगृह्यम्" इति सूत्रेण द्विवचनस्य प्रगृह्यसंज्ञा तस्य च प्रगृह्यसंज्ञकस्य "प्लुतप्रगृह्या अचि नित्यम्" इति पा० सूत्रेण प्रकृतभावविधानात् प्रगृह्यहेतुकानुशासनिको विश्लेषोऽसकृदेव दोष इति।

(६७) अत्रानुभवसिद्धां व्यवस्थां दर्शयति—एवंविधेति। एवंविधप्रगृह्यादिहेतुकस्येत्यर्थः। तत्र प्रगृह्यहेतुकोऽनुशासनिकविश्लेषस्तूदाहृत एव, असिद्धिहेतुकानुशासनिकविश्लेषो यथा—तत उदित उदारहारहारिद्युतिरुच्चैरुदयाचलादिवेन्दुः।

निजवंश उदात्तकान्तकान्तिर्बत मुक्तामणिवच्चकास्त्यनर्घः॥ इत्यादावबलोकनीयः।

अत्र "तत उदित" इत्यत्र "उदितहार" इत्यत्र "निज वंश उदात्त" इत्यत्र च "लोपः शाकल्यस्य" इति पा० सूत्रेण विहितस्यापि लोपस्य "आद्गुणः" इति सूत्रेण विहितं गुणं प्रति "पूर्वत्रासिद्धम्" इति सूत्रेणासिद्धिविधानादसिद्धिहेतुक आनुशासनिको विश्लेषः। अस्य बन्धशैथिल्यमेव दूषकताबीजमित्युक्तमेव। सकृदपि सकृत्प्रयोगेऽपि दोष इत्यनुषङ्गो विधेयः।

(६८) ऐच्छिकविश्लेषमुदाहरति—वासवाशामुखे इति।

( ६९ ) 'चलण्डामरचेष्टितः' इति ।
( ७० ) अत्र सन्धौ जुगुप्साव्यञ्जकमश्लीलत्वम् ।
( ७१ ) 'उर्व्यसावत्र तर्वालीमर्वन्ते चार्ववस्थितिः' ।

वासवाशामुखे पूर्वदिशि ऊर्ध्वभागे इन्दुश्चन्द्रमाः चन्दनबिन्दुवत् भाति शोभते । अधुनापि किरणान्तरितपरांशतया कतिपयांशस्यैव विकाशादित्याशयः । अत्र "भाति इन्दुः" इत्यत्र सवर्णदीर्घरूपसन्धिप्राप्तावपि इच्छया तदविधानात् ऐच्छिकसन्धिविश्लेषः सकृदपि दोषः । नचैवं च्युतिसंस्कृतित्वमिति वाच्यम्, सन्धेरिच्छाविकल्पस्य "अन्यत्र तु विभाषया" इति व्याकरणानुशासनात् ।

(६९) सन्ध्यश्लीलत्वमुदाहरति—चलण्डामरेति ।

"वेगादुड्डीयगगने चलण्डामरचेष्टितः ।
अयमुत्पतते पत्री ततोऽत्रैव रुचिङ्कुरु ।" इति काव्यप्रकाशे समस्तम् ।

सन्धिनैव जाता अश्लीलता सन्ध्यश्लीलता । पदांशगताश्लीलत्वस्य सन्धिजत्वाभावात्ततोऽस्य भेदः । अश्लीलवाचकपदश्रवणेन लज्जाजननद्वाराश्रोतुर्वैमुख्यापादनात् रसप्रकर्षप्रतिबन्धकादस्य दोषत्वम् । "सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः" इति सामान्याश्लीलत्वस्यैव गुणत्वेन वक्ष्यमाणत्वादनित्योऽयं दोषः । वेगादुड्डीयेति । नायकाधिष्ठितं सङ्केतस्थानं बोधयन्त्या दूत्या उक्तिरियम् । चलन् गच्छन्, डामरम् उद्भटं चेष्टितं कार्यं यस्य स तथोक्तः । डामरं डमरुवाद्यं तद्वच्चेष्टितं यस्येत्यर्थः इत्यन्ये ।

(७०) दोषं समर्थयितुमाह—अत्रेति । सन्धौ सति । तथा च "चलन् डामरचेष्टितः" इत्यत्र सन्निकर्षरूपसन्धिनिष्पन्नस्य चलण्डामरपदस्य अन्तःपाति लण्डापदं प्रगाढदीर्घाकारपुरीषव्यञ्जनात् जुगुप्साव्यञ्जकत्वम् । काशीदेशभाषायां लण्डापदेन शिश्नस्याभिधानात् लण्डेति जुगुप्साव्यञ्जकः ।

अत्र चलन्निति डामरेतिपदद्वयावलम्बाद्वाक्यदोषत्वम् । व्रीडाव्यञ्जकसन्ध्यश्लीलता यथा—अत्रैव पद्ये "रुचिं कुरु" इत्यत्र सन्निकर्षरूपसन्धिनिष्पन्नस्य "रुचिङ्कुरु" इति पदस्य अन्तःपाति "चिङ्कु" इति पदं लाटदेशभाषायां योन्यग्राभिधानात् व्रीडाव्यञ्जकसन्ध्यश्लीलत्वम् । अत्र रुचिमिति कुर्विति पदद्वयावलम्बनाद्वाक्यदोषत्वम् । अमङ्गलव्यञ्जकं सन्ध्यश्लीलत्वं यथा—"भजते ध्रुवममृतं खलु साधको जनः ।" अत्र ध्रुवं निश्चितं अमृतं सत्यं भजत इत्यत्र सन्निकर्षरूपसन्धिनिष्पन्नस्य ध्रुवममृतपदस्य अन्तःपाति मृतमिति पदम् अमङ्गलं व्यञ्जयति । अत्र ध्रुवमिति अमृतमितिपदद्वयावलम्बनाद्वाक्यदोषत्वम् ।

(७१) सन्धिकष्टत्वमुदाहरति—उर्व्यसाविति । सन्धिविधानेनैव जातं कष्टत्वं सन्धिकष्टत्वम् । नच पदांशगतं कष्टत्वं सन्धिजमित्यतस्तस्माद्भेदावगमात् सन्धिवशेनार्थबोधविलम्बात् रसबोधस्यापि विलम्बेन रसप्रकर्षप्रतिबन्धकत्वादस्य दोषत्वम् । "वैयाकरणमुख्ये तु" इतिवक्ष्यमाणेन प्रतिप्रसवादयमप्यनित्यो दोषः ।

"नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक्" । इत्युत्तरार्द्धम् काव्यप्रकाशे ।

अध्वगं प्रति कस्यचिदुपदेशवचनमिदम् । अत्र अस्मिन् मरोः मरुदेशस्य अन्ते प्रान्तप्रदेशे चारुः सुन्दरा अवस्थितिरवस्थानं यस्याः सा तथोक्ता । मरौ वृक्षदौर्लभ्याच्चारुत्वम् ।

( ७२ ) अत्र सन्धौ कष्टत्वम् ।

( ७३ ) 'इन्दुर्विभाति कर्पूरगौरैर्धवलयन् करैः ।
जगन्मा कुरु तन्वङ्गि ! मानं पादानते प्रिये ॥'

( ७४ ) अत्र जगदिति प्रथमार्द्धे पठितुमुचितम् ।

( ७५ ) "नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः ।
पतन्ति शशिनः पादा भासयन्तः क्षमातलम् ॥"

---

यद्वा चारूणां सुन्दराणां पक्ष्यादीनामवस्थितिर्यस्यां तथाभूता, उर्वी महती असौ दृश्यमाना तरूणाम् आलीवृक्षाणां पङ्क्तिः विद्यत इति शेषः ।

( ७२ ) अत्र दोषं दर्शयति—अत्रेति । सन्धौ सति कष्टत्वम् अर्थबोधे अतिकष्टत्वरूपं क्लिष्टत्वम् अतः सन्धिकष्टत्वदोष इत्यभिप्रायः । अत्र तरुश्रेण्या विशेषणविशेष्यभावेनान्वयाद्वाक्यदोषता ।

( ७३ ) अर्द्धान्तरैकपदत्वमुदाहरति—इन्दुर्विभातीति । अर्थान्तरे अन्यवाक्यघटितपद्यार्धे एकमेव पदं यस्य वाक्यस्य । अत्र षष्ठ्यर्थो घटकत्वम्, तथा च यद्घटकमेकमेव पदम् अन्यवाक्यघटितपद्यार्धे विद्यते तत्त्वम् । परिष्कृतलक्षणन्तु—स्वावस्थानार्धोत्तरार्धेऽपन्यस्तैकमात्रपदवद्वाक्यत्वमर्धान्तरैकपदत्वम् । मात्रपदसन्निवेशादर्धान्तरे अनेकपदविद्यमानत्वे नायं दोष इत्यवधेयम् । पूर्वार्धावस्थितवाक्यस्यैकस्मिन् पदे उत्तरार्द्धोपन्यस्ते तदनुसन्धाने विलम्बोपस्थित्या विलम्बेनैव रसबोध इत्यस्य दोषत्वम् । प्रतिप्रसवाभावान्नित्योऽयं दोषः । अयञ्च द्विविधः—पूर्वार्द्धवाक्यघटकैकपदस्य उत्तरार्द्धे पाठादेकः, उत्तरार्धवाक्यघटकैकपदस्य च पूर्वार्द्धे पाठादपरः । गद्ये पूर्वार्द्धोत्तरार्द्धनियमाभावात् नायं दोष इति बोध्यम् ।

तत्राद्यभेदे उदाहरति—इन्दुर्विभातीति । इन्दुश्चन्द्रः कर्पूरवत् गौरैः स्वच्छैः करैः किरणैः जगत् संसारं धवलयन् श्वेतीकुर्वन् सन् विभाति शोभते अत एव हे तन्वङ्गि ! कृशाङ्गि ! पादानते पादपतिते प्रिये मयि मानं मा कुरु नायमुपेक्षार्हः समयोऽतो मानं मा विधेहीत्यर्थः । अत्र पूर्वार्द्धवाक्यघटकीभूतस्य "जगत्" इत्येकमात्रपदस्य उत्तरार्द्ध पाठादर्द्धान्तरैकपदत्वम् । द्वितीयं यथा—

"वक्षःस्थलं मुकुन्दस्य कौस्तुभाङ्कं कपर्दिनः ।
चूडालो भालचन्द्रेण जटाजूटश्च पातु वः ॥"

अत्र उत्तरार्द्धगतवाक्यघटकीभूतस्य "कपर्दिनः" इत्येकपदस्य उत्तरार्द्धे एव पाठो युक्तः तथाविधानाद्दोषः ।

( ७४ ) यादृशपाठेन दोषो न भवेत्तथोपदिशति—अत्रेति । तथा पाठे नायं दोष इति भावः ।

( ७५ ) समाप्तपुनरात्तत्वमुदाहरति—नाशयन्त इति समाप्तपुनरात्तत्वं नाम क्रियाकारकान्वयेन समाप्तेऽपि वाक्ये विशेषाभिरसां विना पुनस्तद्वाक्यान्वयिपदाभिधानं यत्र वाक्ये तदिति केचित् । वैयाकरणास्तु क्रियाकारकभावेनान्वयबोधसकलपदोक्तानन्तरं तद्घटकयत्किञ्चित्पदान्वयिविशेषेणोपादानं तत्समाप्तपुनरात्तत्वमिति मन्यन्ते ।

( ७६ ) अत्र चतुर्थपादो वाक्यसमाप्तावपि पुनरुपात्तः ।

( ७७ ) अभवन्मतसम्बन्धो यथा—

( ७८ ) "या जयश्रीर्मनोजस्य यया जगदलङ्कृतम् ।
यामेणाक्षीं विना प्राणा विफला मे कुतोऽद्य सा" ॥

( ७९ ) अत्र यच्छब्दनिर्दिष्टानां वाक्यानां परस्परनिरपेक्षत्वात् तदेकान्तः

---

परे तु-समाप्तं जनितविवक्षितान्वयबोधकं सत् तदन्वयिशब्दोपादानेन पुनरुपात्तं पुनरनुसन्धानविषय इत्यर्थः । वाक्ये समाप्ते पुनस्तदन्वयिशब्दोपादानं यत्रेति तात्पर्यम् इत्याहुः ।

"अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनाली वालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन् कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥" इत्यादौ,

"अद्यापि स्तनवेपथुं जनयति श्वासप्रमाणाधिकः" इत्यादौ च न दोषत्वम् । आद्ये अयं पदार्थस्य सन्दिग्धतया कुत्राप्यपर्यवसितत्वेन न क्रियान्वय इति वक्ष्यमाणविशेषणैर्विशेष्यसमर्पणे युगपदेवान्वयबोधात् । अन्त्ये कुतो वेपथुरितिहेत्वाकाङ्क्षाया अनिवृत्तेः प्रमाणाधिकत्वान्वयं विना विवक्षितान्वयबोधस्यैवाभावात् । एवम् "उअ णिच्चल-णिप्पन्दा" इत्यादावप्यनुसन्धेयम् । समासस्य पुनरात्तत्वे पुनरप्याकाङ्क्षोदयेन तत्सम्बन्धिपदानुसन्धानविलम्बाच्छाब्दबोधविलम्बनमत्र दूषकताबीजम् । विवक्षितेति विशेषणात्—"समासपुनरात्तत्वं न दोषो न गुणः क्वचित्" इति वक्ष्यमाणेन क्वचित्प्रतिप्रसवादनित्योऽयं दोषः । लक्षणे "तन्वयि" इत्यस्य तद्वाक्ये अन्वयो यस्य तेनान्वयो यस्येति चेत्यर्थः । तेन विशेषणस्य विशेष्यस्य च सङ्ग्रहः । तत्राद्योदाहरणं—नाशयन्त इति । शशिनश्चन्द्रमसः पादा रश्मयः घनध्वान्तं गाढान्धकारं नाशयन्तः अपनुदन्तः, वियोगिन विरहिणो जनान् तापयन्तः खेदयन्तः, क्ष्मातलं पृथ्वीतलं भासयन्तो द्योतयन्तश्च सन्तः पतन्ति ।

( ७६ ) अत्र दोषं दर्शयति—अत्रेति । चतुर्थपादः चतुर्थपादगतं "भासयन्त" इति पदम् । पुनरात्त इति । तथा च "शशिनः पादाः पतन्ति" इत्यनेन वाक्यसमाप्तावपि पुनस्तत्पादस्य कर्तुः "भासयन्त" इति विशेषणाभिधानम्, नच तत्र विशेषणादन्यत्प्रयोजनमस्तीतिसमाप्तपुनरात्तत्वमिति । एवमन्यदप्युदाहार्य्यम् ।

( ७७ ) अभवन्मतसम्बन्धत्वमुदाहर्तुमाह- अभवन्मतसम्बन्ध इति । अस्य व्युत्पत्तिः पूर्वमेव प्रतिपादिता । लक्षणन्तु—पदविशेषस्य इष्टान्वयानुपपत्तिमद्वाक्यत्वमभवन्मतसम्बन्धत्वमिति । वक्तुरिष्टान्वयानुपपत्त्या श्रोतुर्मुख्योत्पादनेन रसप्रकर्षप्रतिबन्धकत्वाद्दोषत्वमस्य । प्रतिप्रसवासम्भवान्नित्य एवायं दोषः । अभवन्मतसम्बन्धत्वञ्च क्वचिद्विभक्तिभेदनिबन्धनम्, क्वचिन्न्यूनतादिनिबन्धनम्, क्वचित्समासाच्छन्नतयामतसम्बन्धाभावनिबन्धनम् ।

( ७८ ) तत्राद्यमुदाहरति—या जयश्रीरिति । या मनोजस्य मदनस्य जयश्रीर्विजयलक्ष्मीः, यया जगत् अलङ्कृतं शोभितम्, याम् एणाक्षीं मृगनयनां विना मे मम प्राणा विफला निरर्थकाः, अद्य सा कुतः क्व विद्यते ? ।

( ७९ ) अत्र या एणाक्षी मनोजस्य जयश्रीः यया एणाक्ष्या जगदलङ्कृतम् इत्येवमेणाक्षीविशेष्यकोऽन्वयः कवेरभिप्रेतः स च न सम्भवति-द्वितीयान्तपदार्थं-या ययेति

पातिना एणाक्षीशब्देन अन्येषां सम्बन्धः कवेरभिमतो नोपपद्यत एव ।

(८०) "यां विनामी वृथा प्राणा एणाक्षी सा कुतोऽद्यमे" ।

(८१) इति तच्छब्दनिर्दिष्टवाक्यान्तःपातित्वेऽपि यच्छब्दनिर्दिष्टवाक्यैः सम्बन्धो घटते ।

यथा वा—

(८२) 'ईक्षसे यत्कटाक्षेण तदा धन्वी मनोभुवः ।'

(८३) अत्र यदित्यस्य तदेत्यनेन सम्बन्धो न घटते ।

(८४) 'ईक्षसे चेत्' इति तु युक्तः पाठः । यथा वा—

---

प्रथमान्ततृतीयान्तयत्पदार्थयोः अभेदेन विशेष्यभावाव्युत्पत्तेरिति प्रतिपादयितुमाह—अत्रेति । ननु या ययेत्यनयोर्न एणाक्ष्यामन्वयः किन्तु या ययेत्यनयोरेव परस्परमन्वय इत्यत आह—यच्छब्देति । यच्छब्देन निर्दिष्टानां चिह्नितानाम् । परस्परनिरपेक्षत्वात् अन्योन्याकाङ्क्षारहितत्वात् । नोपपद्यत एवेत्येतत्प्रति हेतुरयम् । तथा च एणाक्ष्यामेव साकाङ्क्षत्वात् तद्विशेष्यक एव या ययेत्यनयोरर्थान्वयः कवेरभिमतः स च न सम्भवतीत्याह—तदेकान्तः पातिनेति । तेषु वाक्येषु मध्ये एकस्य वाक्यस्य अन्तःपातिना अन्तर्भूतेन एणाक्षीशब्देनेत्यर्थः । अन्येषां वाक्यानाम् । तथा च य उक्तरूपः सम्बन्धः कवेरभिप्रेतः स तु वाक्यानां परस्परसम्बन्धरहितत्वात् एणाक्षीमितिद्वितीयाविभक्त्यध्यासाच्च न युज्यत इत्यभवन्मतसम्बन्धत्वदोष इत्याशयः । नच एणाक्षीमितिपदस्य विभक्तिव्यत्ययेन या ययेत्यनयोरन्वय इति वाच्यम्, अव्यत्ययेन प्रथममन्वितस्यैव व्यत्ययव्युत्पत्तेः । अत्र तु पश्चादेव 'याम्' इत्यस्याध्यत्ययत्वेनान्वयः ।

(८०) यदि तु तच्छब्दार्थस्य विशेष्यतया एणाक्षीशब्दः प्रयुज्यते तदाऽदोष इति प्रतिपादयति—यां विनेति ।

(८१) इतीति । तच्छब्दनिर्दिष्टवाक्यान्तःपातित्वे उक्तदिशा एणाक्षीशब्दस्य तच्छब्दान्वितवाक्यान्तर्गतत्वे तु सति । सम्बन्धो घटते इति । तथा च "यत्तदोर्नित्यसम्बन्धः" इति न्यायेनान्योन्यसापेक्षत्वात् सर्वयच्छब्दानामेव तच्छब्दविशेष्यभूतपदार्थस्य विशेष्यत्वसम्भवादितिभावः । एवञ्च परिवर्त्तितपाठे न दोष इत्याशयः । नच तथापि भिन्नविभक्तिकयत्तत्पदार्थयोः कथमभेदान्वय इति वाच्यम्, तत्पदार्थान्वितविशेष्यस्य यत्पदार्थेऽन्वये समानविभक्तिकत्वनियमाभावात् । यथा "यत्र धूमः स देशो वह्निमान्" इत्यत्र तत्पदार्थान्वितस्य प्रथमान्तपदार्थस्य देशस्य सप्तम्यन्तयत्पदार्थेऽन्वयः ।

(८२) न्यूनतानिबन्धनं यथा वेत्युदाहरति—ईक्षसे इति ।

यद् यदा त्वं कटाक्षेण वक्रदृष्ट्या ईक्षसे लोकम् अवलोकयसि, तदा तं प्रति मनोभवः कन्दर्पो धन्वी धनुर्धारी भवति ।

(८३) अत्र यदित्यस्य तदेत्यनेन सम्बन्धो विवक्षितः स च न सम्भवति यच्छब्दस्य प्रथमान्तत्वात् कालार्थकसप्तम्यन्तेन सह विभिन्नविभक्तिकत्वात् तदेवोपपादयितुमाह—अत्रेति । सम्बन्धो न घटत इति । तत्पदाभावात्, तथा च 'न्यूनतानिबन्धनं दोष इति भावः ।

(८४) ननु तर्हि तदर्थं कीदृशः पाठो विधेय अत आह—ईक्षसे चेदिति । चेदित्यस्य यदर्थकत्वेन तदेत्यनेनान्वयलाभस्य सुलभत्वादित्याशयः । तथा च यदि कटाक्षेण

( ८५ ) 'ज्योत्स्नाचयः पयः पूरस्तारकाः कैरवाणि च ।
राजति व्योमकासाररराजहंसः सुधाकरः ॥'

( ८६ ) अत्र व्योमकासारशब्दस्य समासे गुणीभावात्तदर्थस्य न सर्वैः संयोगः।

( ८७ ) विधेयाविमर्शे यदेवाविमृष्टं तदेव दुष्टम् । इह तु प्रधानस्य कासार-पदार्थस्य प्राधान्येनाऽप्रतीतेः सर्वोऽपि पयःपूरादिशब्दार्थस्तदङ्गतया न प्रतीयत इति सर्ववाक्यार्थविरोधाऽवभास इत्युभयोर्भेदः ।

ईक्षते तदा तेन कटाक्षेण मनोभवो धन्वीत्यर्थः, एवञ्च न दोषः । नच न्यूनपदस्याऽप्यत्रै-वान्तर्भावः, क्वचिन्न्यूनपदेऽपि— अध्याहारादिनाभिमतसम्बन्धसम्भवे विलम्बादेर-दुष्टत्वसम्भवात् ।

( ८५ ) समासाच्छन्नतया अभिमतसम्बन्धाभावो यथा वेत्युदाहरति—ज्योत्स्ना-चय इति । ज्योत्स्नानां कौमुदीनां चयः पुञ्ज एव पयःपूरो जलराशिः, तारका नक्षत्राण्येव कैरवाणि कुमुदानि च तथा सुधाकरः शशी एव, व्योमो नभ एव कासारः सरोवर-स्तस्य राजहंसः कलहंसः "राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे" इति (हैममेदिन्यौ) "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः ।

( ८६ ) अत्र वाक्यत्रय एव व्योमकासारशब्दस्य सम्बन्धः कवेरभिमतः स तावत् समभिव्याहाररूपाकाङ्क्षाविरहान्न घटते इति दर्शयति—अत्रेति । गुणीभूतत्वादिति । व्योमकासारे राजहंस इत्येवं समासे तत्पुरुषे उत्तरपदार्थस्य विशेष्यत्वात् व्योमकासार-शब्दार्थस्य विशेषणीभाव एव गुणीभावः तस्मात् तदर्थस्य व्योमकासारशब्दाभिधेयस्य सर्वैः ज्योत्स्नाचयरूपपयःपूराभिः सह संयोगः विशेषणीभावेन सम्बन्धो न सम्भवतीति शेषः । तथा च वाक्यत्रयेऽभिमतस्य व्योमकासारशब्दसम्बन्धस्योपपत्तिर्न भवति इतर-विशेषणत्वेनोपस्थितस्यापरत्र विशेषणत्वेनान्वयस्याव्युत्पन्नत्वात् समासे एकार्थीभावाङ्गी-कारेण अर्थोपस्थितिरेवेतरविशेषणतयेतिसमासप्रविष्टस्यान्येन सहाकांक्षाविरहात् एवञ्च— समासाच्छन्नत्वेन भवत्येवाभवन्मतसम्बन्धत्वम् । "राजति व्योम्नि सरसि" इति पाठे तु नाय दोषः । "रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः" इत्यादौ तु नायं दोषः नामनामिनोरभेदस्य सत्त्वेनेष्टयोगसम्पत्तेः । नामनामिनोरभेदश्च वैयाकरणसिद्धान्तलघु-मञ्जूषायां जिज्ञासुभिः द्रष्टव्यम् ।

( ८७ ) ननु तर्हि विधेयाविमर्शेन सहाभेदापत्तिरित्याशङ्कां समाधातुं भेदं दर्शयति—विधेयाविमर्श इति । यदेव पदम् अविमृष्टम् अप्राधान्येनोपनिबद्धम् । विधेयाविमर्शेऽ-न्वयबोधो जायत एव किन्तु विधेयस्य विधेयत्वाप्रतीत्या यदेव विधेयमविमृष्टं तदेव दुष्टमित्यर्थः । प्रकृते तु निराकाङ्क्षत्वेनान्वयाऽसम्भवादन्वयप्रतियोगिसमस्तमेव दुष्ट-मित्याशयेनाह—इह त्विति । सर्ववाक्यार्थेति । सर्वेषां वाक्यानामर्थस्य विरोधावभासः निराकाङ्क्षत्वे प्रतीतिरित्यर्थः । एवञ्चात्र साङ्गरूपकमलङ्कारः । अत एव व्योम्नि कासा-रत्वारोपो मुख्यः ज्योत्स्नाचयपयःपूरत्वाद्यारोपस्तु तत्साधकतया तदङ्गमित्यवश्यमभ्यु-पेयम्, किन्तु कासारपदार्थस्य तत्पुरुषसमासेन गौणीकृतत्वात् तदङ्गतयान्यपदार्थानां न प्रतीतिः "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्" इति न्यायेन मुख्येतरा-णामन्योन्याङ्गाङ्गिभावानभ्युपगमादित्यभिप्रायः । वाक्यगतविधेयाविमर्शेन सहाभे-

( ८८ ) 'अनेन च्छिन्दता मातुः कण्ठं परशुना तव ।
बद्धस्पर्द्धः कृपाणोऽयं लज्जते मम भार्गव ! ॥'

( ८९ ) अत्र 'भार्गवनिन्दायां प्रयुक्तस्य मातृकण्ठच्छेदनकर्त्तृत्वस्य परशुना सम्बन्धो न युक्तः' इति प्राच्याः ।

( ९० ) 'परशुनिन्दामुखेन भार्गवनिन्दाधिक्यमेव वैदग्ध्यं द्योतयति' इत्याधुनिकाः ।

---

दापत्तिस्तु न शङ्कनीयः तथाविधदोषाणां पदद्वयादिवृत्तित्वेनैव वाक्यवृत्तित्वस्य सङ्केतितत्वात्, उक्तदिशाऽस्य सर्ववाक्यवृत्तित्वस्य स्वीकारात् ।

( ८८ ) वाच्यार्थे विवक्षितस्य व्यङ्ग्यार्थयोगस्यासम्भवेऽपि क्वचिदयं दोष इति काव्यप्रकाशकृन्मतं दूषयितुमुदाहरणं दर्शयति—अनेनेति । युयुत्सुं परशुरामं प्रति रावणस्योक्तिरियम् । हे भार्गव परशुराम ! मातुः रेणुकानामकजनन्याः कण्ठं छिन्दता कर्त्तयता अनेन तव परशुना कुठारेण सह बद्धस्पर्द्धः आरब्धवैरः कृपाणस्तरवारिः मम लज्जते । "मम कृपाणोऽयं लज्जते" इतिभङ्ग्या एवंविधगुरुतरपातकनिन्द्यकारिणा त्वया सह स्पर्द्धितुमहं लज्जे त्वत्पापसंक्रामकत्वसम्भवादिति भावः ।
अत्र हि रावणस्य भार्गवेण सह युद्धमनभिलषितमिति तदुपेक्षा वाक्यार्थः ।

( ८९ ) अत्र काव्यप्रकाशकारमतं दर्शयति—अत्रेति । भार्गवनिन्दायां प्रतिपाद्यमानायामित्यर्थः । मातृकण्ठच्छेदनस्य मातृकण्ठच्छेदनकर्त्तृत्वस्य—सम्बन्धो न युक्त इति । परशौ छेदनस्य करणत्वमेव न तु कर्त्तृत्वम् । तथा च छिन्दतेतिविशेषणे अचेतने परशौ करणत्वातिरिक्तरूपस्य कर्तृत्वस्य स्थातुमसम्भवात् कवेरभिलषितोऽपि परशौ कर्त्तृत्वसम्बन्धो न घटते इत्यभवन्मतसम्बद्धत्वदोष एवेत्याशयः । प्राच्याः काव्यप्रकाशकारादयः ।

( ९० ) अत्रार्थे स्वसम्मतिं दर्शयति—परशिवति । परशोर्निन्दामुखेन निन्दाद्वारा । भार्गवस्याधिकनिन्दा कर्त्री । वैदग्ध्यं कविरचनानैपुण्यम् । आधुनिका नव्याः । तथा च "स्थाली पचती"तिवत् करणभूतेऽपि परशौ कर्त्तृत्वारोपः, तेन हि आरोपितेनापि स्त्रीवधकर्त्तृत्वेन अचेतनस्यापि परशोर्निन्दा सम्भाव्यते तव तु चेतनस्य मुख्येनैव मातृवधकर्त्तृत्वेन च सुतराम्, का कथा निन्दायामिति निन्दाधिक्यमनुसन्धेयम् । एवञ्च परशौ कर्त्तृत्वसम्बन्धः सम्भवत्येवेति नाभवन्मतसम्बन्धत्वदोष इत्याधुनिकानामभिप्रायः ।

परे तु—अस्त्रस्य निन्द्यत्वेऽपि अस्त्रिणोऽनिन्द्यत्वात्, निन्दितशस्त्रं विना शस्त्रान्तरेणापि भार्गवेण सह युद्धसम्भवात् परशुनिन्दामुखेन भार्गवनिन्देत्यभिधातुमशक्यम् । तथा हि—परशोरचेतनस्याकर्त्तृत्वेन स्वतोऽनिन्द्यत्वात् धीरोद्धतस्य रावणस्य परशुरामस्य परिहार्य्यत्वमेव समीहितं तद्धि साक्षान्निन्दया यथा सुकरं न तथा परम्परयेति दोषस्य दुरुद्धरत्वाच्चेति वदन्ति ।

एतदतिरिक्तेऽपि क्वचिदाकाङ्क्षाविरहनिबन्धनम्, क्वचिद्व्युत्पत्तिविरोधनिबन्धनं चायं दोषो भवतीति तदुदाहरणं क्रमेण काव्यप्रकाशे—यथा—

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत् समासादितम् ।

( ६१ ) अक्रमता यथा—

( ६२ ) समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम् ।
शरदि हंसरवाः परुषीकृताः स्वरमयूरमयूरमणीयताम् ॥

कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्त्तिरतुला कीर्त्या च लोकत्रयम् ॥ इति

अत्र हि प्रथमार्धवाक्यार्थे उत्तरार्धार्थस्य सम्बन्धो विवक्षितः स च नोपपद्यते, आकर्णनक्रियायां कोदण्डादिप्रातिपदिकार्थानां प्रत्येकं कर्मतया अन्वये "कर्मणि द्वितीया" इति सूत्रेण 'कोदण्डं शरान्" इति द्वितीयाया भवितुं युक्तत्वात्, 'तथा च दोष एव।

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्त्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥

अत्र "ससम्बन्धिनां निजस्वात्मादिपदार्थानां प्रधानक्रियान्वयिकारकपदार्थे एवान्वयः" इति व्युत्पत्त्या—

निजपदार्थस्य दण्डपादे एवान्वयः स्यात् न तु भवान्याम्, भवान्यामन्वयस्तु विवक्षित इत्यभवन्मतसम्बन्धत्वम् ।

( ९१ ) अक्रमत्वमुदाहर्त्तुमाह—अक्रमतेति । अविद्यमानः क्रमो यस्मिन् वाक्ये स तस्य भावः । यत्पदानन्तरं—यत्पदोपादानमुचितं ततोऽन्यत्र तदुपादानं यत्र तद् क्रममित्यर्थः । तथा च यस्य यदव्यवहितपूर्वत्वनियमेन यदव्यवहितपरत्वनियमेन वा विवक्षितार्थानुभावकत्वं तस्य तत्परिहारेणान्यत्र विद्यमानत्वमक्रमत्वमिति तल्लक्षणं फलितम् । एवञ्चायं दोषोऽन्वयविषयः । पदसंन्निवेशरूपरचनायाः प्रस्तुतार्थाप्रत्यायकत्वेऽक्रमत्वम्, प्रत्यायकत्वेऽप्यनौचित्येऽस्थानस्थपदता, यद्वा अस्थाने(क)अव्ययपदप्रयोगे अक्रमता अस्थाने अनव्ययपदप्रयोगे तु अस्थानस्थपदता, अर्थक्रमस्यानौचित्ये दुष्क्रमत्वम् उपक्रमोक्तक्रमस्योपसंहारे भङ्गे प्रक्रमभङ्ग इत्येतेषां भेद इत्यन्यत्र स्पष्टम् । अक्रमस्थितपदानुसन्धानविलम्बेन रसप्रतीतिविलम्बादस्य दोषत्वम् । प्रतिप्रसवाभावान्नित्यदोषोऽयम् ।

( ९२ ) उदाहरणमाह—समय एवेति । शिशुपालवधषष्ठसर्गे शरदृतुवर्णनमिदम् । शरीरिणां देहिनां बलाबलं प्रबलदुर्बलभावं समय एव काल एव करोति विदधाति इति इत्थं प्रणिगदन्त इव कथयन्त इव शरदि शरत्समये हंसानां कादम्बानां रवा नादाः परुषीकृताः दुःश्रवीकृताः स्वराः कण्ठशब्दा येषां ते तादृशा मयूरा यस्मिन् कर्मणि तद्यथास्यात्तथा रमणीयतां मनोज्ञताम् अयुः प्राप्तवन्तः ।

तथा च प्रावृषि मयूराणां मदात्ययाद्रमणीयस्वरा भवन्ति, शरदि च परुषस्वरा स्वम्पद्यन्ते किन्तु तत्समय एव परुषस्वराणां राजहंसानां शरदि प्रमोदोद्रेकान्मधुरस्वरा जायन्त इति सर्वेषां प्राणिनां बलवृद्धिं बलह्रासञ्च समय एव करोति न तु कारणान्तरं

( क ) "स्वरादिनिपातमव्ययम्" इत्यनुशासनेन स्वरादीनां चादीनां निपातानाञ्चाव्ययसंज्ञा विधीयते ।

( ९३ ) अत्र परामृश्यमानवाक्यानन्तरमेवेतिशब्दोपयोगो युज्यते, न तु 'प्रणिगदन्त' इत्यनन्तरम् ।

( ९४ ) एवम्—

( ९५ ) 'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥'

( ९६ ) अत्र त्वमित्यनन्तरमेव चकारो युक्तः ।

---

तत्रोपपद्यत इत्युपदिशन्तो हंसाः प्रावृषि मधुरस्वरतयाऽभिलषितानपि मयूरान् परुषस्वरान् स्वस्य च तत्काले परुषस्वरतयाऽभिलषितानपि मधुरस्वरानालक्षयन्तो तदुभयेषां सम्पद्विनियमय इव कारयन्तो रमणीयतां प्राप्तवन्त इति परमार्थः ।

( ९३ ) दोषं दर्शयितुमाह—अत्रेति । परामृश्यमानवाक्यानन्तरमेव, परामृश्यमानं वाक्यं बलाबलमितिवचनं तस्मात्परमेव ।

अत्र "समय एव शरीरिणां बलाबलं,करोति इति प्राणिगदन्त इव" इति वक्तुं युक्तम्, एवञ्च सति इतिशब्दस्य अव्यवहितपूर्वपरामर्शकत्वं भवति । तथा च नैष दोष इति भावः ।

केचित्तु—शरीरिणामपि बलाबलमित्यन्वये क्लिष्टत्वमिति प्रतिपादयन्ति ।

( ९४ ) नच 'अयम्' इत्यादिपदे एव दोषः किन्तु चादिपदेष्वपीत्याशयेन प्रकारान्तरेणोदाहर्त्तुमाह—एवमिति ।

( ९५ ) द्वयं गतमिति । कुमारसम्भवकाव्ये पञ्चमसर्गे शिवप्राप्त्यर्थं तपस्यन्तीं पार्वतीं प्रति ब्रह्मचारिरूपधारिणः शिवस्य स्वनिन्दावाक्यमिदम्। हे पार्वति ! कपालिन अस्थिविशेषधारिणः शिवस्य 'कपालोऽस्त्री शिरोऽस्थिनस्याद्घटादेः शकले व्रजे" इति मेदिनी । समागमप्रार्थनया प्राप्तिकामनया ( हेतुभूतया ) सम्प्रति अधुना तवैवं निश्चये सति द्वयं शोचनीयतां शोच्यत्वं गर्हत्वमितियावत् गतं प्राप्तम् । किन्तद्द्वयमित्याह—कला चेति । सा प्रागेव शिवशिरोगतत्वेन प्रसिद्धा कान्तिमती नित्यमेव शोभावती नित्ययोगे मतुप्, कलावतश्चन्द्रस्य कला षोडशभागैकभागश्च, अस्य दृश्यमानस्य लोकस्य संसारस्य नेत्रकौमुदी आह्लादकतया नेत्रयोश्चन्द्रिकारूपा त्वञ्च । एतावत्कालं कपालिनोऽयोग्यस्य सङ्गादेका चन्द्रकलैव शोच्या आसीत् सम्प्रति तु त्वमप्यपरेति द्वयं शोच्यमितिसमुदायार्थः । अत्र गतमिति भूतकालनिर्देशेनावश्यभाव्यत्वं व्यज्यते । "कपालिनः नेत्रकौमुदी" इत्येताभ्यां च शोचनीयत्वस्य युक्तता द्योत्यते । वंशस्थं वृत्तम्, लक्षणन्तूक्तमेव प्राक् ।

( ९६ ) अत्र दोषं दर्शयितुमुत्थापयति—अत्रेति । अत्र हि लोकस्य चेति चकारस्त्वंपदानन्तरं युक्तः, त्वं पदार्थस्यैव शोच्यतायां समुच्चयस्य व्यञ्जनीयत्वात् लोकपदार्थे समुच्चयाभावादिति भावः । एवञ्च "जगद्दृशस्त्वञ्च विशुद्धचन्द्रिका" इति पाठक्रमो युक्तस्तदभावादक्रमत्वम् । चादीनां व्यवहितेन सम्बन्धो नेष्ट इत्युक्तं महिमभट्टेन—

"अत एव व्यवहितैर्बुधा नेच्छन्ति चादिभिः ।
सम्बन्धं ते हि स्वां शक्तिमुपदध्युरनन्तरे ॥" इति ।

( ९७ ) अमतपरार्थता यथा—

( ९८ ) 'राममन्मथशरेण ताडिता-' ( २३० पृ. ) इत्यादि।

( ९९ ) अत्र शृङ्गाररसस्य व्यञ्जको द्वितीयोऽर्थः प्रकृतरसविरोधित्वाद-निष्टः।

( १०० ) वाच्यस्यानभिधानं यथा—

( १ ) 'व्यतिक्रमलवं कं मे वीक्ष्य वामाक्षि ! कुप्यसि।'

---

( ९७ ) अमतपरार्थत्वमुदाहर्त्तुमाह—अमतेति। अमतः प्रकृतविरुद्धः प्राकरणिकरस-विरुद्धरसव्यञ्जक इति यावत्। प्रदीपादिष्वपि अमतत्वं च—

"ज्ञेयौ शृंगारबीभत्सौ तथा वीरभयानकौ। रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः॥"

इत्युक्तदिशा प्रकृतरसविरुद्धरसव्यञ्जकत्वमिति।

परः श्लेषादिना प्रतीयमानो द्वितीयार्थो यत्र वाक्ये यस्य वाक्यस्य वा तत्तथोक्तम्, तस्य भावस्तत्त्वम्। एवञ्च प्राकरणिकरसविरुद्धरसव्यञ्जकप्रतीयमानद्वितीयार्थबोधकवाक्य-त्वममतपरार्थत्वमिति लक्षणं फलितम्।

प्रतीयमानेन प्राकरणिकरसापकर्षकत्वमस्य दूषकताबीजम्। अत्र परार्थो "दुर्गाल-ङ्घित"इ यादौ प्राकरणिकराजरूपादर्थात् द्वितीयोऽप्राकरणिको गौरीबल्लभरूपो व्यङ्ग्यार्थ-स्तद्वत् प्रकृतोदाहरणे प्राकरणिकताटकारूपादर्थात् द्वितीयोऽभिसारिकारूपो व्यङ्ग्यार्थ एव स एव तु विरुद्धरसव्यञ्जको न तु वाच्यार्थ इति प्रतिकूलविभावादिग्रहादस्य भेदः। विरुद्धमतिकृदादिभ्यो भेदस्तु प्रागेव निरूपितः। प्रतिप्रसवाभावेनायमपि नित्य एव दोषो नीरसे स्वात्मलाभस्यैवाभावात् इत्यवधेयम्।

( ९८ ) उदाहरणमाह—राममन्मथेति। व्याख्यातमेवदमितः प्राक् (२३० पृष्ठे)

( ९९ ) अत्र दोषं दर्शयितुमाह—अत्रेति। प्रकृतस्य बीभत्सरसस्य विरोधित्वात् तद्विरोधिशृङ्गाररसव्यञ्जकत्वात् विरोधश्च "आद्यः करुणबीभत्सरौद्रवीरभयानकैः" इत्यु-क्तदिशा प्रतिपादित एव।

( १०० ) वाच्यस्यानभिधानमुदाहर्त्तुमाह—वाच्यस्येति। वाच्यमित्यत्र "कृत्याश्च" इति सूत्रेणावश्यके ण्यत्प्रत्ययः। वाच्यशब्दश्चात्र शब्दपरो न त्वर्थपरः अर्थपरत्वे सति वाक्यदोषत्वानापत्तेः, तथा च वाच्यं वाचकपदातिरिक्तम् ( क ) अवश्यवक्तव्यं द्योतकं तस्य उच्चारणेनाध्याहारेण च अनभिधानम् अनुक्तं यत्र वाक्ये तत्तथोक्तमित्यर्थः। अवश्यवक्तव्यस्यानुक्तत्वात्तदनुसन्धानविलम्बेन रसप्रतीतिविलम्बात् दोषत्वमस्य। अयञ्च नित्यदोष एव प्रतिप्रसवाभावात्। "उक्तावानन्दमग्नादेः" इत्यादिना न्यूनपदतायाः प्रतिप्रसवेन समानविषयत्वादस्याप्यनित्यत्वमिति केचित् तन्न ग्रन्थकृतैतयोर्विभक्तविषय-त्वस्य प्रतिपादनात्। प्रदीपकृताऽपि नित्यत्वस्यैवाभिहितत्वाच्च।

( १ ) दोषश्चायम् अप्याद्युपसर्गाणां द्योतकानां न्यूनत्वे विभक्तिन्यूनत्वे च भवति। तत्राद्यमुदाहरति—व्यतिक्रमलवमिति।

'बिम्बोष्ठि ! तव पार्श्वेऽहं नित्यं सेवकवत्स्थितः।' इतिसम्पूरितपूर्वार्द्धम्।

---

( क ) केचिदप्यादेर्वाचकत्वं मन्यन्ते तदा तु स्वातन्त्र्येणाप्रयोज्यं वाचकपदातिरिक्तमित्यनेन विवक्षितमिति बोध्यम्।

( २ ) अत्र व्यतिक्रमलवमपीत्यपिरवश्यं वक्तव्यो नोक्तः ।

( ३ ) न्यूनपदत्वे वाचकपदस्यैव न्यूनता विवक्षिता। अपेस्तु न तथात्वमित्य-नयोर्भेदः ।

( ४ ) एवमन्यत्रापि।

हे वामाक्षि सुनयने! मे मम व्यतिक्रमलवं प्रीतिहेतुक्रियाव्यतिक्रमस्याल्पभाव-मपि कं कञ्चित् वीक्ष्य अवलोक्य कुप्यसि क्रोधयुक्ताऽसीति काकोक्तिः।

( २ ) दोषमभिधातुमाह—अत्रेति। अवश्यं वक्तव्य इति। अन्यथा अभिप्रेतार्थला-भासम्भवादिति भावः। अत्रेदं चिन्तनीयम्—किं शब्दः प्रश्ने विरोधे आक्षेपे च वर्त्तते। कोऽयमाश्चर्यं? तवेति, का तव कान्ता कस्य पुत्रः न ते कान्ता न ते पुत्र इत्यर्थः। क्वचिदज्ञातविशेषेऽपि यथा—"कश्चित् कान्ताविरहगुरुणे" ति। अत्राज्ञातत्वाक्षेपवचनः किंशब्दः। तथा च व्यतिक्रमस्य लवमपि कं वीक्ष्य कुप्यसि किमुत भूमानमिति विवक्षि-ऽतोर्थः। "कं व्यतिक्रमलवं वीक्ष्येत्युक्ते "यादृग्जातीयस्य प्रतिषेधो विधेरपि तादृग्जातीयस्य" इति न्यायाद् व्यतिक्रमभूमाऽस्तीत्यवगम्यते। उक्तेऽप्यपिशब्दे समासनिर्देशे दोषस्य तादवस्थ्यमेव। तथा हि समासे एकार्थीभावाऽभ्युपगमात् नरसिंहादिवत् व्यतिक्र-मलव एक एव पदार्थः सम्पद्यते, ततः परं श्रूयमाणोऽपिशब्दो यथा राजपुरुषोऽप्यत्र नास्तीत्युक्ते अन्यदीयपुरुष एवं समुच्चीयते नच राजसम्बन्धी हस्त्यादिस्तथैव तदितरमेव पदार्थमाक्षिपति अतोऽत्रोच्चारणेनाध्याहारेणावश्यंवाच्यस्यानभिधानम्। व्यतिक्रमस्य लवमपि इति असमासनिर्देशे तु लवशब्दात्परं श्रूयमाणोऽपि भूयांसमाक्षिपति। तथा सति यथा राज्ञः पुरुषोऽप्यत्र न विद्यते इत्युक्ते समुच्चितो हस्त्यादिःराज्ञैव सम्बध्यते तथैव प्रकृतेऽपि श्रुतेन सम्बन्धिना व्यतिक्रमेणैव सम्बध्यते एवञ्च न दोष इति।

अत्र—

"त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः।
कमपराधलवं मम पश्यसि त्यजसि मानिनि! दासजनं यतः॥"

इति काव्यप्रकाशोदाहरणमुपजीव्यम्।

एवमेव "याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा" इति।

अत्र मोघाऽपिलब्धकामापीत्यप्यर्थद्वयमवश्यं वक्तव्यं किन्तु तदनुपादानाद् वाच्यान-भिधानम्।

( ३ ) ननु न्यूनपदत्ववाच्यानभिधानयोः समानविषयत्वात् न्यूनपदत्वस्य स्वी-कारेणैवास्यापि गतार्थत्वात् किमिति पृथङ् निरूप्यत इति तयोर्विषयभेदं दर्शयति-न्यून-पदत्वे इति। वाचकपदस्यैव न तु द्योतकस्याध्याहारस्यापि न्यूनपदत्वमित्यर्थः। तत्र द्योतकाद्यसम्भवादिति भावः। अपेरपिशब्दस्य तु न तथात्वं न वाचकत्वम् उपसर्गत्वेन द्योतकत्वादध्याहारस्य सम्भावाच्च।

अपि च न्यूनपदत्वे न्यूनपदसद्भावमात्रेण दोषाभावः। अत्र तु ङसन्तं पदं पृथक्कृत्य "व्यतिक्रमस्य लवमपि" इति पदनिवेशनेन इत्यनयोर्भेदः।

( ४ ) एवमिति। अन्यत्रापि अन्यविधद्योतकपदाभावस्थलेऽपि एवं वाच्यानभिधा-नमूह्यमित्यर्थः। यथा—"नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः" इति।

अत्र "न तु" इति तुशब्दोऽवश्यं वाच्य इति तदनभिधानाद्दोषः।

( ५ ) यथा वा—

( ६ ) 'चरणानतकान्तायास्तन्वि । कोपस्तथापि ते ॥'

( A ) अत्र चरणानतकान्तासीति वाच्यम् ।

( B ) भग्नप्रक्रमता यथा—

( ७ ) 'एवमुक्तो मन्त्रिमुख्यैः रावणः प्रत्यभाषत ॥'

( ८ ) अत्र वचधातुना प्रक्रान्तं प्रतिवचनमपि तेनैव वक्तुमुचितम् । तेन 'रावणः प्रत्यवोचत' इति पाठो युक्तः ।

---

( ९ ) विभक्तिन्यूनत्वे उदाहर्त्तुमाह—यथा वेति ।

चरणेति । "बोधिताऽपि च सख्या त्वं स्तुताऽपि बहुशस्तथा" । इति मत्पूरितांशः ।

हे तन्वि कृशाङ्गि ! चरणे पादे आनतः पतितः कान्तो यस्याः तथोक्तायाः ते तव तथापि कोपः क्रोधः । अत्र तथापीतितच्छब्दार्थः पूर्वोक्तं कमप्यर्थमाचष्टे इति पृथग्वाक्यसम्पादयित्री "चरणानतकान्ताऽसि" इति प्रथमाविभक्तिरवश्यं वाच्या तदभावाद्वाच्यानभिधानं दोषः ।

( A ) तथापीत्यनेन किमप्यपेक्षणीयं भवतीति दर्शयति—अत्रेति । वाच्यमवश्यंवक्तव्यम् । अन्यथा तथापीत्यस्यान्वयः कथमपि न सम्भवतीत्याशयः ।

ननु चैवमपि तथापीत्यस्याभिमतसम्बन्धानुपपत्तेरभवन्मतसम्बन्धदोषतादोष एवायमिति वाच्यम् अभवन्मतपदसन्निवेशेन समाधानत्वे अभवन्मतसम्बन्धतादोषः, अभवन्मतवाक्यसन्निवेशेन समाधानत्वे तु वाच्यानभिधानदोष इति भेदाभ्युपगमेन क्षत्यभावात् । पूर्वत्रापेक्ष्याहारात्तदनुसन्धानेन विलम्बात् रसप्रतीतिविलम्ब उत्तरत्र तु तथापीत्यनन्वयनात्तद्विलम्बेन रसप्रतीतिविलम्ब इत्युन्नेयम् ।

( B ) भग्नप्रक्रमत्वमुदाहर्त्तुमाह—भग्नप्रक्रमतेति । भग्नो विच्छिन्नः प्रक्रमः प्रस्तावः ( उपक्रमः ) यत्र वाक्ये तस्य भावः सा तथोक्ता । प्रक्रमशब्दस्य पूर्वप्रक्रान्तपरत्वे "उदन्वच्छिन्ना भूः स च पतिरपां योजनशतम्" इत्यादौ वक्ष्यमाणोदाहरणे अपांपतिरितिपदे प्रक्रमभङ्गो न स्यादतः प्रस्तावः प्रक्रमपदार्थतयोक्त इति बोध्यम् । एवञ्च "येन रूपेणोपक्रमस्तेनैवोपसंहारः" इति नियमस्य भङ्गो भग्नप्रक्रमत्वमिति । अयमेव दोषः प्रक्रमभङ्ग इति व्यपदिश्यते । प्रस्तावश्च द्वेधा शब्दतोऽर्थतश्च तत्राद्यम्—"एवमुक्तो मन्त्रिमुख्यैः" इत्यादौ द्वितीयम्—"अकलिततपः" इत्यादौ ज्ञेयम् । दूषकताबीजमप्यन्ते निरूपयिष्यते । प्रतिपत्त्यभावाभावाश्रित्य एवायं दोषः ।

(७) भग्नप्रक्रमत्वञ्च प्रकृतिपर्यायादिविषयत्वादनेकधाव्यवस्थितम् । तत्र धातुरूपप्रकृतेर्भग्नप्रक्रमत्वमुदाहरति—एवमुक्त इति ।

(८) 'वधमेवाहमाकाङ्क्षे जानक्या न समर्पणम्' । इति मत्पूर्वार्द्धम् ।

अत्रोदाहरणे 'एवमुक्त' इति वचिरूपायाः प्रकृतेः प्रस्तावे "प्रत्यभाषत" इति भाषरूपायाः प्रकृतेः प्रयोग इति प्रकृतिभग्नक्रमत्वम् ।

तदेवाह—अत्रेति । प्रक्रान्तम् 'उक्त' इति पदमितिशेषः । प्रतिवचनं प्रतिवचनबोधकं पदम् । तेनैव वचधातुनैव न तु प्रत्यभाषत इति भाषधातोरिति प्रकृतेः भग्नक्रमत्वमित्यर्थः । ननु तर्हि कीदृशः पाठो युक्त इति जिज्ञासायामाह—रावण इति । युक्त इति ।

( ९ ) एवं च सति न कथितपदत्वदोषः। तस्योद्देश्यप्रतिनिर्देश्यव्यतिरिक्तवि-षयकत्वात्।

( १० ) इह हि वचनप्रतिवचनयोरुद्देश्यप्रतिनिर्देशत्वम्।

अयम्भावः—भिन्नाभ्यां शब्दाभ्यामुपस्थापितं भिन्नवद्भवति।

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते"।

इतिभर्तृहरिप्रोक्तन्यायेन शाब्दबोधात्मके ज्ञाने शब्दस्यापि विशेषणतया भानात्, तेन च प्रकृतस्थले भिन्नशब्दाभ्यां वचाप्रकृतिभ्यामुपस्थित एकोऽप्यर्थो भिन्नवद्भवति। अत 'उक्त' इति पदेन वचनस्योपादानेऽपि न प्रतिवचनत्वेन प्रतीतिः। तदुपपत्तये 'प्रत्य-वोचत' इति कृते तु प्रतिवचनस्य स्पष्टैव प्रतीतिरिति। अत्राहुः—"ननु पर्यायशब्दानां शक्यतावच्छेदकैक्यनियमात् कथमन्यत्वेन प्रतीतिरिति चेत्? उच्यते यन्मते शाब्द-बोधे शब्दोऽपि भासते तन्मतेनेदम्। तथाहि 'अस्माच्छब्दादयमर्थो बोद्धव्य' इत्याका-रकशक्तिग्रहविषयत्वाच्छब्दस्य विशेषणादिपदार्थवत्तस्याप्युपस्थितिः पदान्तरोपादाने च तदुपस्थित्या प्रतीत्यन्यथात्वं स्फुटमेव, उक्तं च "न सोऽस्ति प्रत्ययो लोके इति मतान्त-रेऽपि पर्यायपदाभ्यामुपस्थापितोऽर्थोऽभिन्नोऽपि शक्ततावच्छेदकमहिम्ना भिन्न इव प्रतीयते इति बोध्यम्" इति। "यत्र तु सर्वनाम्ना परामर्शस्तत्र तेषां बुद्धिविषये शक्ति-स्वीकारात्पूर्वपदावच्छिन्नस्यैव प्रतिपादनान्नायं दोषः। नच सर्वनामपदावच्छिन्नत्वे-नापि भानाद्भेदः विशिष्टस्य तदवच्छिन्नतया भानेऽपि पूर्वरूपाप्रच्यवात्" इति।

(९) ननु "नैकं पदं द्विः प्रयोज्यं प्रायेण" इति वामनाचार्यवचनविरोधात् वच-प्रकृतेरभिन्नार्थकत्वेनैकानुपूर्वीकत्वेन च कथितपदत्वेन गतार्थत्वाच्चेत्याशङ्कां विषयभेदेन विरोधो नास्तीति समाधत्ते—एवञ्चेति। तस्य कथितपदत्वस्य उद्देश्येति। उद्देश्यः प्राक्प्रत्यायित एव प्रतिनिर्देश्यः पुनः प्रत्याय्यो यत्र विषये स तथोक्तः तस्माद्व्यति-रिक्तो भिन्नो विषयः स्थलं यस्य तस्य भावः तस्मात्। उद्देश्यप्रतिनिर्देश्यकादतिरिक्तं हि एकपदद्विःप्रयोगनिषेधस्य विषयः। तथा च कथितपदत्वदोषस्यापि पूर्वापरयोरभेद-त्वप्रतिपत्तये यत्र प्राङ्निर्दिष्टस्यार्थस्य तेन शब्देन तेन च रूपेण पुनर्निर्देश्यावश्यकत्वं तदतिरिक्तस्थल एव तस्य प्रसक्तिः। यथा—

"रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन्"

इत्यादौ प्राङ्निर्दिष्टस्य लीलार्थस्य तेन शब्देन तेन च रूपेण पुनर्निर्देश्यावश्यक-त्वाभावेन पुनरुक्त्या रसापकर्षजननाद् भवति दोषत्वम्। प्रकृते तथा रसापकर्षजनना-भावात् प्रत्युताभेदज्ञापनार्थं पुनरुक्तेरुत्कर्षस्यैव जननान्न दोष इति भावः। उद्देश्यप्रति-निर्देश्यभावे हि कथितपदत्व गुण एव, तदुक्तम्—

"प्रतिक्रमस्यान्यथाभावे स एव तु महान् गुणः" इति

स एव कथितपदत्वदोष एवेत्यर्थः। एवमर्थान्तरसङ्क्रमितवाच्यलाटानुप्रासयोरपीति बोध्यम्।

(१०) तदेव स्पष्टयति—इह हीति। हि तथाहि इह "एवमुक्तो मन्त्रिमुख्यो रावणः प्रत्यवोचत" इत्यत्र। एवञ्च यादृशभावेन मन्त्रिमुख्ये रावण उक्तः, तादृशभावेनैव राव-

( ११ ) यथा—

( १२ ) 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च ॥'

( १३ ) इत्यत्र हि यदि पदान्तरेण स एवार्थः प्रतिपाद्यते तदान्योऽर्थ इव प्रतिभासमानः प्रतीतिं स्थगयति ।

( १४ ) यथा वा—

( १५ ) 'ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥'

( १६ ) अत्र 'अस्मै' इतीदमा प्रक्रान्तस्य तेनैव तत्समानाभ्यामेतददःश-

---

ब्दोऽपि तत्प्रत्युक्तवानिति वचनप्रतिवचनयोरुक्तिप्रत्युक्त्योरभेदप्रत्यायनादुद्देश्यप्रतिनिर्देश्यत्वमित्यर्थः । तथाच न कथितपदत्वेन गतार्थत्वमित्याशयः ।

(११) उक्तमेवार्थं द्रढीकर्तुं दृष्टान्तत्वेन काव्यप्रकाशद्यतप्रसिद्धप्रमाणोदाहरणेन स्पष्टयति—यथेति ।

(१२) उदेतीति ।

"सम्पत्तौ च विपत्तौ च महतामेकरूपता" इत्युत्तरार्द्धं तत्रैव ।

(१३) एवंविधस्थले प्रत्युत पदान्तरप्रतिपाद्यमान एव दोषो भवतीत्युपपादयितुमाह—इत्यत्रेति । पदान्तरेण रक्तशब्देन स एवार्थस्ताम्ररूप एवार्थः प्रतिपाद्यते बोध्यते । अन्योऽर्थं इव अर्थान्तरेणेव प्रतिभासमानः बुद्धौ द्योतमानः । प्रतीतिमैक्यज्ञानं स्थगयति तिरोधत्ते । अयमाशयः—उद्देश्यप्रतिनिर्देश्यभावे द्विःप्रयोगावश्यकत्वमेव अन्यथात्रैव रक्तादिशब्दो यदि क्रियेत तदा पदान्तरप्रतिपाद्यमानः स एवार्थो "न सोऽस्ति प्रत्ययो लोके" इत्युक्तन्यायेन शब्दस्यापि विशेषणतया शाब्दबोधे भानात् ऐक्यमिव प्रतीयमानः अभेदप्रतीतिं तिरोदधीत तेनैव शब्देन पुनरभिधाने तु अनुवादत्वेन झटिति प्रयोजनजिज्ञासयोदयास्तमयादौ एकरूपतावगमो व्यञ्जनया झटिति अन्यथा विलम्बेनेति । तथा चोद्दिष्टप्रतिनिर्देश्यरूपतया कथितपदत्वाख्यदोषानवताराद्यथात्र प्रक्रान्तमेव ताम्रपदं प्रयुज्यते तथा दर्शितस्थलेऽपि "प्रत्यवोचत" इत्येकविधमेव प्रक्रान्तं शब्दद्वयं प्रयोक्तुं युक्तमिति ।

इदञ्चापि—यत्र खलु सर्वनाम्ना परामर्शासम्भवस्तत्रैव प्रागुक्तपदमुपादेयम् । यत्र तु सर्वनाम्ना तत्सम्भवस्तत्र तदेवेति न विस्मर्तव्यम् । अन्यथाभेदार्थप्रतीत्यनुपपत्तेः ।

(१४) प्रातिपदिकात्मकसर्वनामरूपप्रकृतेः भग्नप्रक्रमत्वमुदाहरति—यथावेति ।

(१५) ते हिमालयमिति । कुमारसम्भवकाव्ये षष्ठसर्गे पद्यमिदम् । ते मरीच्यादयः सप्तर्षयो मुनयः हिमालयं नगेन्द्रम् आमन्त्र्य "वयमधुना गच्छाम" इत्यापृच्छ्य पुनः शूलिनं महादेवं प्रेक्ष्य साक्षात्कृत्य च अस्मै शूलिने अर्थं पार्वतीदानरूपं सिद्धं निष्पन्नीकृतं वा सिद्धमर्थं गौरीविवाहरूपं प्रयोजनं निवेद्य कथयित्वा तेन शूलिना विसृष्टा आज्ञप्ताः सन्तः खं गगनं "नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम्" इत्यमरः, उद्ययुरुत्पेतुरित्यर्थः ।

(१६) अत्रेदंशब्दस्य सर्वनाम्नः भग्नप्रक्रमत्वमुपपादयितुमाह—अत्रेति । इदमा इदं-

ब्दाभ्यां वा परामर्शो युक्तो न तच्छब्देन।

(१७) यथा वा—

(१८) 'उदन्वच्छिन्ना भूः स च पतिरपां योजनशतम्।'

(१९) अत्र 'मिता भूः पत्यापां स च पतिरपाम्' इति युक्तः पाठः।

(२०) एवम्—

शब्देन परामर्शः सम्बन्धः तेनैव इदमैव इदंशब्देनैव। तत्समानाभ्याम् इदंशब्दसमानार्थाभ्याम्। ननु "उदन्वच्छिन्नाऽभूत्" इत्यत्र पर्य्यायान्तरप्रयोगेण यथा प्रक्रमभङ्गस्तथा इदंसमानार्थकैतददःशब्दाभ्यां परामर्शेऽपि पर्य्यायान्तरप्रयोगेण भग्नप्रक्रमत्वमिति तदुदाहरणौचित्यमेवेति चेत्? सत्यम्, अत एव एतददःशब्दाभ्यां परामर्शपक्षे वापदेनानास्थां सूचयति ग्रन्थकारः। तदुक्तिस्तु दोषलघुत्वप्रतिपादनार्था। अत एव को युक्तः पाठ इत्याकाङ्क्षायां काव्यप्रकाशकार आह—"अनेन विसृष्टाः इति तु वाच्यम्" इति। तद्व्याचक्षाणाः प्रदीपकारा आह—"अत्रास्मै इतीदमः प्रक्रमात्तद्विसृष्टा इत्यत्राप्यनेन विसृष्टा इत्येव वक्तव्यम्, नच तदिमोरर्थाभेद इदमः प्रस्तुतप्रत्यक्षपरामर्शकत्वात्" इति। इदमः पूर्वानुभूतपुरोवर्त्तिविषयवाचकत्वं तदस्तु स्वप्रत्यक्षपूर्वानुभूतपरामर्शकत्वम् अन्यथानयोः पर्य्यातापत्तिः स्यादिति तदाशयः। अत एव प्राहुः—"तदिमोः सर्वनामत्वाविशेषेऽपि पूर्वानुभूतपुरोवर्त्तिविषयत्वान्नैकरूपतेति"। तथाच अर्थभेदस्य प्रामाणिकत्वादिदमोपक्रम्य तदा स्मरणात् "किं हिमालयेन आहोस्वित् शूलिना विसृष्टाः" इत्यनिर्णयात्प्रतीतिस्थगनम्।

(१७) (क) पर्य्यायस्य भग्नप्रक्रमत्वं दर्शयितुमाह—यथा वेति।

(१८) उदन्वदिति।

सदा पान्थः पूषा गगनपरिमाणं गणयति।
इतिप्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः।
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते॥ इत्यवशिष्टं पादत्रयम्।

भूः पृथिवी उदन्वता सिन्धुना उदकानि सन्त्यस्मिन्निति विग्रहे "उदन्वानुदधौ च" इति पा० सूत्रेण मत्वन्तो निपातितः, 'उदन्वानुदधिः सिन्धुः" इत्यमरः, छिन्ना परिच्छिन्ना, स च अपांपतिरुदन्वान् (समुद्रः) योजनशतं चतुः शतं व्यापीत्यर्थः "स्याद्योजनं क्रोशचतुष्टयेन" इति पाटीगणिते।

अत्र उदन्वदित्यनेन प्रक्रम्य पुनः पर्य्यायीभूतप्रकृत्यन्तरपदस्य अपांपतिरित्यस्य प्रयुक्तत्वाद्भग्नप्रक्रमत्वमित्यभिप्रायः।

(१९) युक्तं पाठमुपदेष्टुमाह—अत्रेति। भूः पृथिवी अपांपत्या सिन्धुना मिता परिच्छिन्ना स च अपांपतिः योजनशतमित्युक्तेन सम्बन्धः। अत्र च अपांपतिरिति प्रक्रान्तस्य पुनरपांपतिरित्यनेनैव परामर्शान्न भग्नप्रक्रमत्वम्, न वा कथितपदत्वम् उद्देश्यप्रतिनिर्देश्यविषयत्वादितिभावः।

(२०) प्रत्ययस्य प्रत्ययभेदेन भग्नप्रक्रमत्वमुदाहर्तुमाह—एवमिति।

(क) पर्य्यायत्वं च समानप्रवृत्तिनिमित्तकत्वे सति भिन्नानुपूर्वीकत्वम्।

( २१ ) 'यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥'

( २२ ) अत्र 'सुखमीहितुम्' इत्युचितम् ।

( २३ ) अत्राद्ययोः प्रकृतिविषयः प्रक्रमभेदः । तृतीये पर्यायविषयः, चतुर्थे प्रत्ययविषयः ।

( २४ ) एवमन्यत्रापि ।

(२१) यशोऽधिगन्तुमिति । किरातार्जुनीये तृतीयसर्गेऽर्जुनं प्रति द्रौपद्या उक्तिरियम् । अत्र "युधिष्ठिरं प्रति द्रौपद्या उक्तिरियम्" इति विश्वप्रियाद्युक्तिस्तु चिन्त्यैव । यशोऽधिगन्तुमित्यादीनां "निरुत्सुकाना"मित्यत्र सम्बन्धः । यशः कीर्त्ति "यशः कीर्त्तिः समज्या च "इत्यमरः, अधिगन्तुं लब्धुम्, सुखस्य लब्धुमिच्छा तया वा, मनुष्येषु संख्यां मनुष्यमध्येषु गणनाम् अतिवर्त्तितुम् अतिक्रम्यावस्थातुं वा मनुष्यदुर्लभमुत्कर्षं प्राप्तुमितियावत् निरुत्सुकानाम् उत्कण्ठारहितचित्तानाम् । अथ च अभियोगभाजां तदनुकूलयत्नवतां सिद्धिः प्रागुक्तयशःप्रभृतिनिष्पत्तिः समुत्सुका अत्यन्तमुत्कण्ठिता कान्तेव अङ्कम् उत्सङ्गम् "उत्सङ्गचिह्नयोरङ्कः" इत्यमरः, उपैति स्वयमागच्छतीत्यर्थः । उपेन्द्रवज्रा छन्दः "उपेन्द्रवज्रा यदि तौ जगौ गः" इतिलक्षणात् ।

अत्र तुमुन्प्रत्ययस्य प्रक्रमे "लिप्सायां" इति सन्प्रत्ययस्योपादानात् प्रत्ययभेदेन भग्नप्रक्रमत्वम् । तुमुन्प्रत्ययेन क्रियायाः प्राधान्यावगमः फलत्वप्रतीतिश्च न तु सन्प्रत्ययेनेत्येकरूपताप्रतीतिस्थगनमितिभावः ।

(२२) युक्तं पाठमुपदेष्टुमाह—अत्रेति । सुखम् ईहितुं लब्धुमित्येवार्थः । उचितं युक्तम् । तथाचैतादृशे पाठे एकविधतुमुन्प्रत्ययेन प्रक्रियायाः प्राधान्यावगमाच्च भग्नप्रक्रमत्वमित्यभिप्रायः ।

(२३) दर्शितोदाहरणानां विशेषमभिधातुमुत्थापयति—अत्रेति । आद्ययोः "एवमुक्तो मन्त्रिमुख्यैः" "ते हिमालयमामन्त्र्य" इत्येतयोः । तृतीये "उदन्वच्छिन्नाभूत्" इत्यादौ । "पर्य्यायविषय एकपर्य्यायेऽपि प्रकृतिविषय इत्यर्थः । उदन्वदपांपतिशब्दयोः पर्य्यायभेदाभावात् यथाश्रुतमूले न सम्यक्, समानप्रवृत्तिनिमित्तकत्वे सति भिन्नानुपूर्वीकत्वं पर्य्यायत्वमितिलक्षणात् । चतुर्थे "यशोऽधिगन्तुम्" इत्यत्र ।

(२४) एवमिति । अन्यत्र कारकोपसर्गवचनादिष्वपि एवमूह्यमित्यर्थः ।

तत्र कारकविषयो यथा शाकुन्तले—

"गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यताम् ।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः ॥

अत्र "गाहन्ताम्" इति कर्त्तृकारकवाचकतिङःप्रक्रमे "क्रियताम्" इति कर्मकारकवाचकस्योपादानात्कारकभङ्गक्रमः । "विश्रब्धः कुरुतां वराहनिवहो मुस्ताक्षतिः पल्वले" इति पठितुं युक्तम् । एवञ्च नात्मनेपदभग्नक्रमोऽपि । उपसर्गविषयो यथा—

"चपला चपलात्वेव नापत्सु विकलो भवेत् ।
विपत्सु धीरता यस्य भाजनं स हि सम्पदः ॥"

( २५ ) प्रसिद्धित्यागो यथा—

अत्र आपत्स्वित्यत्र आङुपसर्गोपक्रमस्य विपत्स्वित्यत्र वेरुपादानाद् भङ्गक्रमः। किराते द्वितीयसर्गे उपसर्गपर्य्याययोः प्रक्रमभङ्गम् एकस्मिन्नेव पद्ये यथा—

"विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥"

अत्र विपद इत्यत्र व्युपसर्गमुपक्रम्य आपदुपेतमित्यत्र आङ उपादानादुपसर्गस्य भङ्गक्रमः। तथा लघुतेत्युपक्रम्य अगरीयानितिपर्य्यायान्तरोपादानात्पर्य्यायस्य भङ्गप्रक्रमश्च। तेन—

"विपदोऽभिभवन्त्यविक्रमं तदभिभवः कुरुते निरायतिम् ।
लघुतां भजते निरायतिर्लघुतावान्न पदं नृपश्रियः ॥"

इति पठितुं युक्तम् ।

वचनस्य भग्नक्रमो यथा माघकाव्ये पञ्चदशसर्गे—

"काचित्कीर्णारजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मी
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत्कम्पमानाः ।
प्रस्थाने पार्थिवानामशिवमितिपुरो भावि नार्य्यः शशंसुः ॥

अत्र काचिदित्येकवचनमुपक्रम्य काश्चिदितिबहुवचनोपादानाद्वचनस्य भङ्गक्रमः। तेन—"काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभानिःश्रीकाः"। "कम्पमानाः" इत्यत्र कम्पमापुः इति च पठितुं युक्तम्। अन्यथा "अनुविदधौ दधिरे" इत्यादिक्रियाप्रधानं तिङन्तमुपक्रम्य द्रव्यप्रधानस्य "कम्पमानाः" इत्यस्य शानजन्तस्य नाम्न उपादानादाख्यातभङ्गक्रमः स्यादिति भावः।

अर्थतोपक्रमस्य भङ्गक्रमो यथा वीरचरिते द्वितीयेऽङ्के—

"अकलिततपस्तेजोवीर्य्यप्रथिम्नि यशोनिधा
ववितथमदाध्माते रोषान्मुनावभिगच्छति ।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात्पाणिः पादोपसंग्रहणाय च ॥"

अत्र प्रथमद्वितीयपादार्थौ यथाक्रमं पादग्रहणबाणाकर्षणयोर्हेतू इति तन्निर्देशक्रमेणैव "पादोपसङ्ग्रहणाय च अभिनवधनुर्विद्यादर्पक्षयाय च" इति निर्देशो युक्तः तदन्यथात्वेन भग्नक्रमः।

अत्र सर्वत्र दूषकताबीजम् एकरूपप्रसृतायाः प्रतीतेः स्थगनमुपघातो वा। यदुक्तम्—

"प्रक्रमस्यान्यथात्वेन प्रतीतौ प्रस्खलद्गतौ ।
ह्लादः स्फुरन्ननास्वादी यत्र ग्लानत्वमश्नुते ॥
दोषः प्रक्रमभेदाख्यः शब्दानौचित्यभूश्च सः ।"

अत एव नित्यदोषोऽयम्। स्पष्टञ्चेदं प्रदीपादौ। एवं लिङ्गादिष्वप्यूहनीयम्।

(२५) प्रसिद्धित्यागं निरूपयितुमाह—प्रसिद्धीति । मञ्जीरादिष्वित्यादिरूपा प्रसिद्धिः तस्य त्यागो यत्र स तथोक्तः तथा च सम्बन्धविशेषे प्रसिद्धार्थकस्य शब्दस्य तादृशसम्बन्धिनि अप्रयोगस्तत्त्वमिति फलितं भवति। एवं सति अप्रसिद्धशब्दप्रयोगा·

( २६ ) 'घोरो वारिमुचां रवः ।'

( २७ ) अत्र मेघानां गर्जितमेव प्रसिद्धम् ।

यदाहुः—

( २८ ) 'मञ्जीरादिषु रणितप्रायं (क) पक्षिषु च कूजितप्रभृति ।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम् ॥' इत्यादि ।

( २९ ) अस्थानस्थपदता यथा—

दर्थप्रतीतिविलम्बेन रसप्रतीतेरपि विलम्बाद्दोषत्वमस्य । अयं हि नित्यो दोषः प्रतिप्रसवाभावेन सर्वदैव हेयत्वात् ।

(२६) उदाहरणं दर्शयति—घोर इति ।

घोरो वारिमुचां रवोऽयमुदितः प्राणेश ! विष्वङ्मुहु—
हार्दिन्यो निपतन्त्यमी'च'तिमिरं व्याप्तं, च नाध्वा पुरः ।
मार्गो वाऽपि वने तदत्र शरणं कुञ्जो नचाऽन्यत् प्रभो !
बालाऽहं, नच हा भवानपि भृशं प्रौढो नच ज्ञः पथाम् ॥ इति समस्तम् ।

वारि जलं मुञ्चन्ति ये ते तथोक्तास्तेषां मेघानामित्यर्थः ।

(२७) दोषं प्रदर्शयति—अत्रेति । मेघानां शब्दे सम्बन्धविशेषे गर्जितमेव गर्जितादिशब्द एव न तु रवः ततो मण्डूकादिप्रभव एव प्रतीतेः ततश्च प्रसिद्धित्यागोनाम दोष इति भावः ।

(२८) सम्बन्धविशेष एव शब्दविशेषाणां प्रयोग इत्यत्र रुद्रटोक्तकाव्यप्रकाशधृतसंवादं दर्शयति—मञ्जीरादिष्विति । मञ्जीरादिषु नूपुरादिषु सम्बन्धिषु एवमुत्तरत्रापि रणितप्रायं रणितप्रभृति प्रसिद्धमिति शेषः । एवमग्रेऽपि सर्वत्र शेषोऽवगन्तव्यः । आदिपदेन रसनाघण्टाभ्रमरादीनां ग्रहणम् । प्रायपदमपि प्रभृत्यर्थकम् तेन क्वणितशिञ्जितगुञ्जितादीनां ग्रहणम् । तथाच मञ्जीरादिषु शब्देषु रणितादिशब्दः प्रयोक्तव्य इत्यर्थः पक्षिषु च कूजितप्रभृति प्रसिद्धम् । चेन मण्डूकादीनां ग्रहणम् । प्रभृतिपदेन रववासितादीनां ग्रहणम् । तथाच—पक्ष्यादिषु शब्देषु कूजितादिशब्दः प्रयोक्तव्य इत्यर्थः । सुरते सम्भोगे स्तनितमणितादिप्रसिद्धम् । आदिपदेन भणितादीनां ग्रहणम् । ननु सुरत एव स्तनितस्य प्रसिद्धत्वे "स्तनितं गर्जितं मेघनिर्घोषे रसितादि च" इत्यमरविरोध इति चेत् ? सत्यम्, सुरत एव स्तनितादिकं चमत्काराय न त्वन्यत्रेति कविप्रयोगनियमेन विरोधाभावात् । मेघादिषु गर्जितप्रमुखं प्रसिद्धम् आदिपदेन सिंहहस्त्यादीनां ग्रहणम्, प्रमुखपदेन ध्वन्यादीनां ग्रहणम् । एवम् अश्वेषु हेषितादि प्रयोक्तव्यः ।

अत्र—

"महाप्रलयमारुतक्षुभितपुष्करावर्त्तकप्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥

इति काव्यप्रकाशोदाहरणं तन्नूकृतम् ।

(२९) अस्थानस्थपदत्वमुदाहर्त्तुमाह—अस्थानस्थेति । अस्थाने अनुपयुक्तस्थाने यादृशस्थानसत्त्व एव यत्पदस्य वाचकता तद्भिन्नस्थाने इति यावत्, पदं यत्र वाक्ये तस्य भावः सा । तथाच अनुपयुक्तस्थाने वाचकपदप्रयोगवत्त्वं लक्षणं फलितम् । अक्रमतायां द्योतकपदप्रयोगः अत्र तु वाचकपदप्रयोग इत्युभयोर्भेदः ।

(क) "पक्षिषु तु" पाठान्तरम् ।

( ३० ) 'तीर्थे तदीये गजसेतुबन्धात्प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।
अयत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः ॥'

( ३१ ) अत्र तदीयपदात्पूर्वं गङ्गामित्यस्य पाठो युक्तः ।

( ३२ ) एवम्—'हितान्न यः संशृणुते स किं प्रभुः ॥'

( ३३ ) अत्र संशृणुत इत्यतः पूर्वं नञः स्थितिरुचिता ।

( ३४ ) अत्र च पदमात्रस्यास्थाने निवेशेऽपि सर्वमेव वाक्यं विवक्षितार्थप्रत्यायने मन्थरमिति वाक्यदोषता ।

---

उद्योतादौ तु—"अस्थानस्थत्वं यथाश्रुतानुपूर्व्या विवक्षितस्वार्थानुभावकत्वे सति स्वसाकाङ्क्षस्थानादव्यवहितस्थानप्रयुक्तत्वम् । सत्यन्तेन सङ्कीर्णगर्भिताक्रमाणां व्युदासः तेषु तदानुपूर्व्या विवक्षितार्थाबोधात्" इति ।

अन्वयोपयोगिस्थानानुसन्धानविलम्बेन रसप्रतीतेर्विलम्बाद्दोषत्वमस्य । प्रतिप्रसवाभावादयमपि नित्यो दोषः ।

(३०) उदाहरणमाह—तीर्थे तदीये इति । रघुवंशमहाकाव्ये षोडशसर्गे कुशराज्ञो वर्णनमिदम् । तदीये गङ्गासम्बन्धिनि तीर्थे जलावतरणप्रदेशे राजसेतुबन्धात् हस्तिनिकरेण कञ्चित् सेतुबन्धं निर्माय ल्यब्लोपे पञ्चमी प्रतीपगां प्रतिकूलगामिनीं गङ्गाम् उत्तरत उत्तीर्य्य व्रजतः गच्छतः, अस्य कुशनृपतेः सम्बन्धे नभोलङ्घनाय गगनातिक्रमणाय लोलाश्चपलाः पक्षाः छन्दाः "गरुत्पक्षच्छदाः पत्रम्" इत्यमरः, येषां ते तथोक्ता हंसा अयत्नेनैव अनुद्योगेनैव बालव्यजनीबभूवुः चामरीभूताः, सेतुबन्धेन जलवृद्ध्या प्रावृट्कालबुद्ध्या उत्तरदिशि मानसरोवरगमनार्थं हंसा उड्डीना इति भावः ।

अत्र तदीयेतितच्छब्दस्य पूर्वपरामर्शित्वेन परवर्त्तिन्या गङ्गाया परामर्शासम्भवाद् स्थानस्थपदतादोषः ।

(३१) युक्तं पाठमुपदिशति—अत्रेति । युक्त इति । तथा चैवं पाठे पूर्ववर्त्तिन्या गङ्गायास्तच्छब्दे भवति परामर्श इति नोक्तदोषः ।

(३२) प्रकारान्तरेणोदाहरणं दर्शयितुमाह—एवमिति । हितान्न य इति ।

"स किंसखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः ।
सदानुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः ॥" इति श्लोकसमुदायः ।

किरातार्जुनीये तृतीयसर्गे युधिष्ठिरं प्रति वनेचरस्योक्तिरियम् । यः प्रभुः स्वामी हितात् जनात् हितं पथ्यं न संशृणुते स किं प्रभुः कुत्सितस्वामीत्यर्थः ।

अत्र क्रियान्वयिनो नञः क्रियासन्निहित एव पाठः कार्य्यः तथाकरणादस्थानस्थपदतादोषः ।

(३३) एतदेव प्रतिपादयति—अत्रेति । उचितेति । अन्यथा "हितान्न" इति पदम् "अहितात्" इति भ्रान्तिमिव प्रतिपादयतीति भावः ।

(३४) ननूक्तोदाहरणादौ पदमात्रस्यास्थानस्थितिरितिपददोष एव कथमस्य वाक्यदोषत्वमित्यत आह—अत्र चेति । किञ्चेति चार्थः । पदमात्रस्य केवलपदस्य । सर्वमेव अवयवसमुदायान्वितमेव । "सर्वा औदुम्बरी शाखा वेष्टयितव्या" इतिवत् सर्वपदम् अवयवसमुदायपरमिति बोध्यम् । मन्थरं विलम्बजनकम् ।

( ३५ ) एवमन्यत्रापि ।

( ३६ ) इह केऽप्याहुः—'पदशब्देन वाचकमेव प्रायशो निगद्यते, न च नञो वाचकता, निर्विवादास्स्वातन्त्र्येणार्थबोधनविरहात्' इति । यथा—'द्वयं गतम्-' ( ७०५ पृ. ) इत्यादौ त्वमित्यनन्तरं चकारानुपादानादक्रमता तथात्रापीति ।

( ३७ ) अस्थानस्थसमासता यथा—

( ३८ ) 'अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।

---

(३५) एवमिति । अन्यत्रापि एवं वाक्यव्यापकत्वेन वाक्यदोषता उन्नेयेत्यर्थः । यथा—

"प्रियेण संग्रथ्य विपक्षसन्निधावुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद् विजहौ जटाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुषु॥" इत्यत्र

(३६) "हिताश्च यः" इति अक्रमदोषोदाहरणमिति केषाञ्चिन्मतं दर्शयति—इह केऽप्याहुरिति । पदशब्देन अपदस्थपदेत्यत्र द्वितीयपदशब्देनेत्यर्थः । वाचक एवेति । घटपदं पटपदमित्यादिप्रयोगदर्शनात् नञपदं चपदं वापदं वा प्रयोगादर्शनाच्चेति भावः । नञो वाचकता । प्रतियोगिपदयोगं विना नञोऽप्रयोगात् न तत्र वाचकतेत्यर्थः । स्वातन्त्र्येण पदान्तरसमभिव्याहारं विना अर्थबोधनविरहात् अर्थबोधकत्वाभावात् । इति शब्दो हेतौ । शक्तिमद्ग्रहणमात्रस्यैव नैयायिकैः पदव्यवहारात् प्रायश इत्यभिहितम् । अक्रमतेति । अक्रमत्वं दोष इत्यर्थः । अत्रापि "हिताश्च यः संशृणुते स किं प्रभुः" इत्यत्रापि तथा च इत्यनन्तरं नञोऽनुपादानादक्रमत्वं दोष एवेत्यर्थः । तथाचास्थानस्थपदस्योदाहरणमेतन्मतेऽपि "तीर्थे तदीये"(क) इत्येव द्योतकपदस्यास्थाने प्रयोग एव अक्रमतायाः स्वीकृतत्वेन प्रकृते तदीयपदस्य वाचकत्वेन अक्रमताया असम्भवात् ।

अत्र केचित्—"अक्रमतादोषे तु नास्ति प्रयोगनियमः केवलं रचनाविशेषेण तस्य दोषत्वात् । अस्थानस्थपदे तु प्रयोगनियमोऽस्तीति ततो भेदः । अव्यवधानेनैव यत्राभिमतप्रतीतिसामर्थ्यं तदेवास्य विषयः अन्यः पुनरितरस्य" इति ।

(३७) अस्थानस्थसमासगतदोषं दर्शयति-अस्थानस्थेति । यद्रसव्यञ्जको यः समासस्तद्रसव्यञ्जकस्थानमपहाय स्थानान्तरे तत्समासपातोऽस्थानस्थसमासत्वम् । एवञ्च तत्समासस्य स्थानान्तरे सत्त्वेन स्वपोषणीयरसस्य पुष्टीकरणादेवास्य दोषत्वम् । प्रतिप्रसवाभावादयमपि दोषो नित्य एवेत्यवधेयम् ।

( ३८ ) अद्यापीति । सायंकाले पर्युषितकुमुदकोरकाञ्चित्स्सरतां श्रेणीभूताळीनां वर्णनमिदम् । एष मानः प्रणयेर्ष्यासमुद्भवः, स्तनावेव शैलौ उन्नतत्वात् कठिनत्वाच्च पर्वतौ तद्रूपेण दुर्गेण विषमे अनाक्रमणीये यद्वा स्तनलक्षणशैलदुर्गाभ्यां विषमे अगम्ये सीमन्तिनीनां रमणीनां हृदि चेतसि अद्यापि इदानीमपि स्थातुं वाञ्छति अभिलषति

---

(क) मल्लिनाथस्तु—"तदीये वैन्ध्ये" इति व्याचख्यौ । युक्तं चैतत् विन्ध्यस्य प्रक्रान्तत्वात् तच्छब्दस्य प्रस्तुतपरामर्शित्वाच्च । तथासति—

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तः कपोलस्थलम् ।
पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितह्रीणया प्रोन्मृष्टः करपल्लवेन कुटिला ताम्रच्छविः पातु वः ॥

इत्युदाहरणं बोध्यमिति केचित् ।

प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणा-
स्फुल्लत्कैरवकोषनिःसरदलिश्रेणीकृपाणं शशी ॥'

( ३९ ) अत्र कोपिन उक्तौ समासो न कृतः, कवेरुक्तौ कृतः ।

( ४० ) वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशः सङ्कीर्णत्वम् । यथा—

( ४१ ) 'चन्द्रं मुञ्च कुरङ्गाक्षि ! पश्य मानं नभोऽङ्गने ।'

---

अतएव मां धिक् निन्द्यम् अन्यदा त्विदमाश्रित्य तिष्ठतु किन्तु ममोदयेऽपि, इत्यस्मात् क्रोधादिव आलोहितो रक्तपूर्णः क्रोधेन रक्तिमोदयादितिभावः । स्त्रीसम्बन्धेनास्मानं रक्ततोऽपि मानरूपस्य शत्रोरास्कन्दनात् धिगित्युक्तिः । असौ दृश्यमानः शशी चन्द्रः, प्रोद्यन्त उदयमाना दूरतरे देशे प्रसारिताश्च कराः किरणाः हस्ताश्च यस्य तथाभूतः सन्, तत्क्षणात् फुल्लतां विकसतां कुमुदानां कैरवाणां कुड्मलान्येव कोशाः खड्गपिधानानि "कोशोऽस्त्री कुड्मले पात्रे दिव्यखड्गपिधानके" इत्यमरः, तेभ्यश्च निःसरन्ती बहिर्गच्छन्ती या अलीनां भ्रमराणां श्रेणी पंक्तिः सैव कृपाणः लम्बमानत्वात् कृष्णवर्णत्वाच्च करवालिका तं कर्षति निष्कासयति ।

अत्र शशिनो नायकत्वं मानस्य प्रतिनायकत्वं विवक्षितं कवीनां कामचारात् एवञ्च कान्तो यथा जारं निहन्तुं खड्गमाकर्षति तथा शशी मानं निहन्तुं खड्गमाकर्षतीति भावः । शार्दूलविक्रीडितं छन्दः, लक्षणमुक्तं प्रागेव (१९८) पृष्ठे ।

( ३९ ) दोषं समर्थयितुमाह—अत्रेति । कोपिनः मानं प्रति क्रुद्धस्य शशिनः कविनिबद्धवक्तुरित्यर्थः उक्तौ अथापीत्यादिधिक्शब्दपर्य्यन्ते पूर्वार्द्धे, कवेरुक्तौ उत्तरार्द्धे । अत्रायमभिप्रायः—ओजोगुणव्यञ्जकः खलु दीर्घसमासः ओजो गुणश्च रौद्ररसादावेव कविना निबद्धव्यः अत्र पूर्वार्द्धरौद्ररसश्च क्रुद्धस्य शशिन एवोक्तौ तत्रैव दीर्घसमासस्यौचित्यम्, परंतु न कृतः । उत्तरार्द्धे तु दीर्घसमासः कृतः स च निष्प्रयोजनः कवेरुक्तौ ओजोगुणव्यञ्जकदीर्घसमासस्याप्रयोजकत्वादित्यस्थानस्थसमासत्वम् । प्रतिकूलवर्णत्वेऽस्यान्तर्भाव इति तु न शङ्क्यम् समासस्यावर्णरूपत्वात् रसाननुगुणवर्णबहुलवाक्यत्वस्यैव प्रतिकूलवर्णपदार्थत्वादितिभावः । एवञ्च माधुर्य्यवच्छृङ्गारादिरसप्रधानपद्ये दीर्घसमासेऽप्ययमेव दोषो ज्ञेयः नाप्यत्र पतत्प्रकर्षता प्रथमप्रवृत्तस्य प्रकर्षस्याग्रे त्यागे हि तत्सम्भवः अत्र तु तद्वैपरीत्यम् । किञ्च उभयत्रोचितस्यैव प्रकर्षस्याभावे तत्सम्भवः, अत्र त्वेकतरत्रैव समासौचित्यमिति स्पष्टं प्रदीपादौ ।

( ४० ) सङ्कीर्णत्वदोषं निरूपयति—वाक्यान्तरेति । सङ्कीर्णत्वं नाम भिन्नभिन्नवाक्यार्थान्वितपदानां तत्तदर्थ निराकाङ्क्षवाक्यघटकत्वम्, मिश्रितत्वमिति यावत् वाक्यैकवाक्यतया महावाक्यस्यैकत्वेऽपि "मुञ्च चन्द्र" मित्यादावयं दोषः । केचित्तु वाक्यान्तरं क्रियान्तरान्वितमित्यर्थः तेनैकक्रियान्विते "घटमानय पटं च" इत्यत्र पटान्वितानयनपदसङ्करेऽपि क्रियैक्यान्न दोषप्रसङ्ग इत्याहुः । दूषकताबीजन्तु-तत्तदन्वयिपदानुसन्धानविलम्बेन रसप्रतीतिविलम्ब एव । प्रतिप्रसवाभावादयमपि दोषो नित्य इति बोध्यम् ।

( ४१ ) उदाहरति—चन्द्रमिति ।

'मनोरमं भजस्वाद्य कान्तं पादानते स्थितम्' इति मद्रचितांशः ।

( ४२ ) अत्र नभोऽङ्गने चन्द्रं पश्य मानं मुञ्चेति युक्तम् ।
( ४३ ) 'क्लिष्टत्वमेकवाक्यविषयम्' इत्यस्माद्भिन्नम् ।
( ४४ ) वाक्यान्तरे वाक्यान्तरानुप्रवेशो गर्भितता । यथा—
( ४५ ) 'रमणे चरणप्रान्ते प्रणतिप्रवणेऽधुना ।
वदामि सखि ! ते तत्त्वं कदाचिन्नोचिताः क्रुधः ॥'
( ४६ ) अर्थदोषानाह—

( ४२ ) दोषं दर्शयति—अत्रेति । मुञ्चेति । इदञ्च वाक्यद्वयम् परस्परपदसङ्कीर्णम् युक्तं पठनमिति शेषः । एवञ्च सति नोक्तदोष इति भावः ।

(४३) नन्वत्रापि अन्वयव्यवधानेनार्थावगतेरपि व्यवधानात् क्लिष्टत्वदोष एवान्तर्भावो भवत्वित्याशङ्कायामाह—क्लिष्टत्वमिति । क्लिष्टत्वमेकवाक्यविषयम् सङ्कीर्णत्वन्त्वनेकवाक्यविषयम् इतिहेतोः क्लिष्टत्वम् अस्मात् सङ्कीर्णत्वदोषाद् भिन्नमतिरिक्तमित्यर्थः, तेनात्रानेकवाक्येन क्लिष्टत्वदोष इत्याशयः । "बाले ! नाथ ! विमुञ्च मानिनि ! रुषं रोषान्मया किं कृतम्" इत्यादौ तु बाले ! शृणु नाथ ! वद इत्येवं तयोरध्याहृतक्रियापदेनैकवाक्यतया प्रतीतेः सङ्कीर्णत्वदोषशङ्कापि नेत्यवधेयम् ।

( ४४ ) गर्भिततादोषं निरूपयति—वाक्यान्तर इति । गर्भः अभ्यन्तरगतं वाक्यमस्य सञ्जात इति गर्भितं वाक्यं तारकादित्वादितच् तस्य भावो गर्भितता । वाक्यञ्चात्र क्वचित्स्वभावत एवैकम् क्वचित्तु हेतुहेतुमद्भावेन वाक्यैकवाक्यतया एकीभूतम् । एवञ्च द्विविधं गर्भितमिति फलितम् । अत्रापि हि वाक्यन्तरे वाक्यान्तरानुप्रवेशेनान्वियिपदानुसन्धानविलम्बेन रसप्रतीतिविलम्बाद्दोषत्वम् । "गर्भितत्वं गुणः क्वापि" इतिवक्ष्यमाणेन क्वचित् प्रतिप्रसवात् अयमनित्यो दोषः ।

( ४५ ) तत्रायमुदाहरति—रमण इति । रमणे कान्ते चरणप्रान्ते तव पदसन्निधौ प्रणतिप्रवणे प्रणामपरायणे सति क्रुधस्तव कोपाः कदाचिदपि नोचिताः, अधुना प्रणतिसमये सुतरां नोचिताः, हे सखि ! ते तव सन्निधौ तत्त्व वास्तवाविकस्वरूपत्वं वदामि । "तत्त्वं परमात्मनि । वाद्यभेदे स्वरूपे च" इति हैमः ।

अत्र "वदामि सखि ! ते तत्त्वम्" इति वाक्यान्तरं "रमणे चरणप्रान्ते प्रणतिप्रवणेऽधुना कदाचित् क्रुधो नोचिताः "इतिवाक्यमध्ये प्रवेशाद् गर्भितत्वं दोषः ।

अत्रार्धयोस्तु परावृत्तौ न दोषः यथा—

"वदामि सखि ! ते तत्त्वं नो विधेया कदाचन ।
रमणे चरणप्रान्ते प्रणतिप्रवणेऽधुना ॥" इति ।

द्वितीयं यथा—लग्नं रागावृताङ्ग्या" इत्यादौ ।

अत्र 'तस्मादोऽयं न किञ्चिद्गणयति तेन भूयेभ्यो दत्ताऽस्मि' इति वाक्यैकवाक्यमध्ये "विदितं तेऽस्तु" इति वाक्यान्तरं प्रविष्टमिति गर्भितत्वम् ।

( ४६ ) इत्थं वाक्यदोषान्निरूप्येदानीमुद्देश्यक्रमप्राप्तान् त्रयोविंशतिमर्थदोषान्निरूपयितुमुत्थापयति—अर्थेति । सामान्यलक्षणन्तु अन्वयव्यतिरेकप्रतिपादकतया अर्थप्रयोज्यदोषत्वमर्थदोषत्वमिति बोध्यम् । शक्य-लक्ष्य-व्यङ्ग्यरूपत्रिविधोऽप्यत्रार्थो ज्ञेयः ।

( ४७ ) अपुष्टदुष्क्रमग्राम्यव्याहताश्लीलकष्टताः ।
अनवीकृतनिर्हेतुप्रकाशितविरुद्धताः ॥ ९ ॥
संदिग्धपुनरुक्तत्वे ख्यातिविद्याविरुद्धते ।
साकाङ्क्षता सहचरभिन्नताऽस्थानयुक्तता ॥ १० ॥
अविशेषे विशेषश्चानियमे नियमस्तथा ।
तयोर्विपर्ययौ विध्यनुवादायुक्तते तथा ॥ ११ ॥
निर्मुक्तपुनरुक्तत्वमर्थदोषाः प्रकीर्तिताः ।
( ४८ ) तद्विपर्ययो विशेषेऽविशेषो नियमेऽनियमः ।
( ४९ ) अत्रापुष्टत्वं मुख्यानुपकारित्वम् । यथा—
( ५० ) 'विलोक्य वितते व्योम्नि विधुं मुञ्च रुषं प्रिये ! ।'

( ४७ ) अपुष्टेति । अत्रापि "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" इति न्यायेन द्वन्द्वान्ते श्रूयमाणतल्प्रत्ययस्य सर्वत्र सम्बन्धः । तेन अपुष्टता, दुष्क्रमता ग्राम्यता, व्याहतता, अश्लीलता, कष्टता, अनवीकृतता, निर्हेतुता, प्रकाशितः द्योतितो विरुद्धः प्रतिकूलोऽर्थो यत्र तस्य भावः सा तादृशी, सन्दिग्धता, पुनरुक्तता, ख्यातिविरुद्धता साकाङ्क्षता, सहचरभिन्नता, अस्थानयुक्तता, अविशेषे विशेषः तथानियमे नियमश्च तयोरविशेषविशेषानियमनियमयोः विपर्ययौ विशेषाविशेषनियमानियमौ तौ च विशेषे अविशेषः नियमे अनियमश्चेति, विध्ययुक्तता, अनुवादायुक्तता, तथा निर्मुक्तपुनरुक्तता चेति त्रयोविंशतिविधा अर्थदोषाः प्रकीर्तिताः । एतेषां स्वरूपं विशेषतस्तत्तदुदाहरणावसरे व्यक्तीभविष्यति ।

( ४८ ) एतेषु तद्विपर्ययपदस्यात्यन्तास्फुटत्वात्तमेव विवृणोति—तद्विपर्यय इति ।

( ४९ ) उद्देश्यक्रमेणैतान् सोदाहरणं यथासम्भवं निरूपयन् प्रथममपुष्टार्थत्वं निरूपयति—अत्रेति । त्रयोविंशतिषु दोषेषु मध्य इत्यर्थः । मुख्यानुपकारित्वम् प्रकृतप्रतिपाद्यानुपयोगित्वम् । दूषकताबीजन्त्वत्र मुख्यानुपयोगिनोऽर्थस्य संस्थितिहेत्वनुसन्धानविलम्बेन रसप्रतीतिविलम्बः । यद्वा अशक्यन्नयनेन श्रोतुर्वैमुख्यम् । अतएव

सकलां सकलां लक्ष्मीं बिभ्रद्भिभ्रद्भिभा विभाः ।
रुचिरो रुचिरो विष्णू राजन् राजन् महामहान् ॥

इत्यादि यमकादावदोषता तत्रालङ्कारान्तरारम्भेणाशक्त्यनुन्नयनात् । कर्णावतंसादिपदे च विशेषद्योतकतया तदुपादानं नाशक्त्युन्नायकमित्यदुष्टत्वम् । अत एव विशेषणदानार्थं विशेष्यप्रयोगेऽपि दोषाभावः । एवञ्चास्यानित्यत्वमिति बोध्यम् ।

( ५० ) अपुष्टोऽर्थश्च द्विविधः, अन्यलभ्यत्वादनुपयोगाच्च तदाह भोजराजः—

"व्यर्थमाहुर्गतार्थं यत् यच्च स्यान्निष्प्रयोजनम्" इति ।

तत्र द्वितीयविधस्योदाहरणं दर्शयति—विलोक्य इति ।

'आवयोस्तु विरोधो न शोभते हि कथञ्चन' । इति मद्रचितोत्तरार्द्धम् ।

हे प्रिये ! वितते दीर्घे व्योम्नि आकाशे विधुं चन्द्रं विलोक्य दृष्ट्वा रुषं मानं मुञ्च त्यज ।

( ५१ ) अत्र विततशब्दो मानत्यागं प्रति न किञ्चिदुपकुरुते ।

( ५२ ) अधिकपदत्वे पदार्थान्वयप्रतीतेः समकालमेव बाधप्रतिभासः, इह तु पश्चादिति विशेषः ।

( ५३ ) दुष्क्रमता यथा—

( ५४ ) 'देहि मे वाजिनं राजन् ! गजेन्द्रं वा मदालसम् ।'

( ५५ ) अत्र गजेन्द्रस्य प्रथमं याचनमुचितम् ।

---

लक्ष्ये लक्षणं सङ्गमयितुमाह—अत्रेति । वितते शब्दे स्वार्थबोधद्वारेति शेषः । न किञ्चिदुपकुरुत इति । अतएवापुष्टतादोष इत्याशयः । एतच्चोपलक्षणम्, तथा च स्मरोद्दीपकतया प्रसिद्धस्य चन्द्रस्य दर्शनमेव मुख्यार्थमानत्यागोपयोगि न तु तस्य मानत्यागानुपयोगि श्यामवृत्तित्वरूपार्थोऽपीति व्योम्नीतिपदमप्यपुष्टमेव ।

( ५२ ) नन्वेवं पदद्वयस्यात्राधिक्येनाधिकपदत्वमेवात्र दोषः अलमपुष्टत्वस्य दोषत्वस्वीकारेणेत्यधिकपदादस्य भेदं दर्शयति—अधिकेति । पल्लवाकृतिरक्तोष्ठीत्यत्र हि आकृतिशब्दस्य निष्प्रयोजनस्वरूपो बाधो पदार्थाऽन्वयबोधसमकालमेव प्रतिभासते । पश्चात् पदार्थान्वयशेषप्रतीतेः परम् विशेषः भेदः । एवं पुनरुक्तिरपि नेति । अत्र सचेतसां प्रतीतिरेव प्रमाणमिति भावः ।

( ५३ ) द्वितीयं दुष्क्रमतादोषं दर्शयति—दुष्क्रमतेति । दुष्टः अनुचितः क्रमो यत्र स दुष्क्रमः । दुष्टत्वञ्च क्रमस्य लोकशास्त्रविरुद्धत्वम् । केचित्तु-

प्राग्वाच्य उच्यते पश्चात् पश्चाद्वाच्योऽथवाऽग्रतः ।
कविना शक्तिवैकल्याद्योऽर्थस्तं दुष्क्रमं विदुः ॥" इति लक्षयन्ति ।

अत्रापि दूषकताबीजं यथाक्रममर्थानुसन्धानविलम्बेन रसादिप्रतीतिविलम्बनमेव । प्रतिप्रसवाभावादयमपि नित्य एव दोषः ।

( ५४ ) क्रमस्य लोकविरुद्धत्वमाद्यमुदाहरति—देहीति ।

'क्रियया मयि प्रसन्नोऽसि तर्हि याचे तवाऽन्तिके ।" इति मद्रचितपूर्वार्द्धम् ।

( ५५ ) लक्ष्ये लक्षणं योजयति—अत्रेति । उचितमिति । गजेन्द्रस्यैव ह्यमूल्यत्वादित्याशयः । लोके हि बहुमूल्यमेव वस्तु प्रथमं याच्यते तत्रासम्मतिसम्भावनायां न्यूनमूल्यं वस्तु याच्यत इति नियमः ।

अत्र हि गुरुदानशक्तौ राज्ञि न्यूनमूल्यस्यैव वाजिनः प्रथमं याचनान्नियमलङ्घनेन क्रमस्य दूषितत्वाद्दुष्क्रमत्वमिति ज्ञेयम् । नचायं शब्ददोषः मुख्यानुपकारकयोरर्थधर्मत्वात् यत्र हस्तिनामेव सुलभत्वं तत्र भेदमुदाहरणमित्यवधेयम् ।

अत्र—

भूपालरत्न ! निर्दैन्यप्रदानप्रथितोत्सव !
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥"

इत्येतदुपजीव्यम् ।

एतादृशो क्रमस्य शास्त्रविरुद्धत्वमप्यूह्यम् । यथा—
कारयित्वा क्षौरं ग्रामवृद्धो मङ्क्त्वा भुक्त्वा च ।
नक्षत्रं तिथिवारौ ज्यौतिषिकं प्रष्टुं चलितः ॥" इति स०

( ५६ ) 'स्वपिहि त्वं समीपे मे स्वपिम्येवाधुना प्रिय ! ।'

( ५७ ) अत्रार्थो ग्राम्यः ।

( ५८ ) कस्यचित्प्रागुत्कर्षमपकर्षं वाभिधाय पश्चात्तदन्यप्रतिपादनं व्याहतत्वम् ।

---

अत्र नक्षत्रादिज्ञानपूर्वकं चौरस्य शास्त्रेण ( धर्मशास्त्रेण ) विधानादयं क्रमः शास्त्रविरुद्धः ।

( ५६ ) ग्राम्यताया उदाहरणं दर्शयति—स्वपिहीति । ग्राम्यः ग्रामसंभवः अविदग्धोक्तिप्रतिपादितो रिरंसादिः । तदुक्तम्—

स ग्राम्योऽर्थो रिरंसादिः पामरैर्यत्र कथ्यते ।
वैदग्ध्यवक्रिमत्वं हित्वैव वनितादिषु ॥ इति ।

तथा च अर्थस्य वक्तुरविदग्धताप्रतिपादकत्वमेव ग्राम्यत्वमितिफलितम् । ग्राम्यत्वेन निकृष्टार्थस्य बोधमात्रेणैव सहृदयहृदयवैमुख्योत्पादनादश्लीलवत् रसप्रकर्षप्रतिबन्धकत्वमेव दूषकताबीजम् । "ग्राम्यत्वमधमोक्तिषु" इति सामान्यतः प्रतिपादनेन विदूषकाद्युक्तौ तथैवौचित्येन वैरस्याभावादनित्योऽयं दोषः ।

'त्वद्वियोगाऽभितप्ताऽहं प्रार्थयामि पुनः पुनः' । इतिमद्रचितोत्तरार्द्धम् ।

रन्तुमिच्छन्त्या नायिकाया नायकं प्रत्युक्तिरियम् ।

( ५७ ) दोषं समर्थयितुमाह—अत्रेति । अर्थः "स्वपिहि स्वपिमि" इति पदयोर्वाच्यम्, ग्राम्यो वैदग्धीराहित्येनोक्त इत्यर्थः । तथाचैतादृशोक्तिकवलितो विभावादिरूपोऽर्थो न रसाय पर्य्याप्यते मृष्टमिव बीजमङ्कुरायेति भावः । अत्रार्थस्यैव दोषो न शब्दस्य परिवृत्तिसहत्वादित्यवधेयम् ।

"स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैति ते ।
तदपि साम्प्रतमाहरकूर्परं त्वरितमूरुमुदञ्चय कुञ्चितम् ॥"

इत्युपजीव्यमत्रानुसन्धेयम् ।

"रिरंसादिः" इत्यादिपदप्रतिपाद्यस्योदाहरणान्तु—

"गोरपत्यं बलीवर्दो घासमत्ति मुखेन सः ।
मूत्रं मुञ्चति शिश्नेन अपानेन तु गोमयम् ।" इति ज्ञेयम् ।

( ५८ ) व्याहतत्वं निरूपयति—कस्यचिदिति । कस्यचिद्वस्तुनः प्रागुत्कर्षमभिधाय पश्चादपकर्षप्रतिपादनम् किं वा प्रागपकर्षमभिधाय पश्चादुत्कर्षप्रतिपादनं व्याहतत्वमित्यर्थः । तथाचोक्तं प्रदीपे—

"उत्कर्षो वापकर्षो वा प्राग्यस्यैव निगद्यते ।
तस्यैवाथ तदन्यश्चेद् व्याहतोऽर्थस्तदा भवेत् ॥"

इत्युपलक्षितविरुद्धत्ववानिति । पूर्वापरयोरन्योन्यविरोधेन अन्योन्यस्यैव व्याहन्यमानत्वात् व्याहतत्वमितिनाम, अत एव श्रोतुः कुत्रापि प्रत्ययाभावेन वाक्यार्थाप्रतीतौ वैमुख्योत्पादनेन रसप्रकर्षप्रतिबन्धकत्वं दूषकताबीजम् । समाधानासम्भवान्नित्योऽयं दोषः । वस्तुतस्तु प्रमत्तोन्मत्तबालकानामुक्तौ तु नाभवन्मतयोगादिदोषः तेषां सम्बन्धस्यानुद्देश्यत्वात् प्रत्युतोन्मादादिव्यञ्जकत्वाद्गुणत्वैवेति सारवेदिनो वदन्ति ।

यथा—

( ५९ ) 'हरन्ति हृदयं यूनां न नवेन्दुकलादयः ।
वीक्ष्यते यैरियं तन्वी लोकलोचनचन्द्रिका ॥'

( ६० ) अत्र येषामिन्दुकला नानन्दहेतुस्तेषामेवानन्दाय तन्व्याश्चन्द्रिकात्वारोपः ।

( ६१ ) 'हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथाशु जायते पातो न तथा पुनरुन्नतिः ॥'

( ५९ ) प्रागपकर्षमभिधाय पश्चादपकर्षप्रतिपादनमुदाहरति—हरन्तीति । नवेन्दुकलादयो नूतनोदितचन्द्रकलाप्रभृतयः आदिपदेन चन्द्रिकापद्मादिपरिग्रहः यूनां तरुणानां हृदयं न हरन्ति, यैर्युवभिः लोकलोचनयोः लोकनयनयोः चन्द्रिका आह्लादिका इयं तन्वी कृशाङ्गी वीक्ष्यते अवलोक्यते ।

( ६० ) दोषमुद्घाटयति—अत्रेति । नानन्दहेतुरिति । हृदयाहरणादित्यभिप्रायः । तथा च नवेन्दुकलादयो हृदयं न हरन्तीत्यनेनेन्दुकलायाः प्रागपकर्षाभिधानं पश्चान्नायिकाया उत्कर्षार्थं चन्द्रकलाकिरणरूपचन्द्रिकात्वमारोपितमिति व्याघातः ।

इदञ्च—

"जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥"

इत्येतदुपजीव्यम् ।

उत्कर्षं पुरस्कृत्य पश्चादकर्षप्रतिपादनस्योदाहरणं यथा—

कान्ते ! तव मुखाम्भोजं सुतरां हृदयङ्गमम् ।
जितानि येन पद्मानि वसन्ति सलिले सदा ॥

अत्र मुखे पद्मत्वारोपणेनोत्कर्षप्रतिपादनम् , पश्चान्मुखेन पराभवादपकर्षप्रतिपादनम् ।

( ६१ ) अश्लीलत्वमुदाहरति—हन्तुमेवेति । अर्थस्य व्रीडाजुगुप्सामङ्गलान्यतमप्रत्यायकत्वमश्लीलत्वम् । व्रीडाप्रत्यायकतया सङ्कोचोत्पादनेन जुगुप्साप्रत्यायकतया विरागजननेन अमङ्गलप्रत्यायकतया चोद्वेगविधानेन रसप्रकर्षप्रतिबन्धकत्वं दूषकताबीजम् । सामान्यतया "सुरतारम्भगोष्ठ्यादा" वित्यादिना वक्ष्यमाणेन प्रतिप्रसवादयमप्यनित्यो दोष इत्यवधेयम् ।

तत्र व्रीडाव्यञ्जकत्वस्योदाहरणं–हन्तुमिति । विवेचनारहितस्य योद्धुर्वर्णनमिदम् । हन्तुमेव शत्रुं मारयितुमेव प्रवृत्तस्य उद्यतस्य विवरैषिणः तच्छिद्राभिलाषिणः सतः स्तब्धस्य आत्मन्युत्कर्षाभिधानेनान्यानवधीरयतः दुष्टजनस्य यथा आशु द्रुतं पातः शत्रोराक्रमणदभिभवो जायते तथा शीघ्रं पुनरुन्नतिर्जयो न जायते

प्रतीयमानार्थस्तु—हन्तुमेव सुरतक्रियारूपयोनिताडनकर्तुमेव प्रवृत्तस्य आरभमाणस्य स्तब्धस्य निष्क्रियोन्नतस्य दृढरूपेण दण्डायमानस्येत्यर्थः विवरैषिणः स्त्रीवराङ्गमध्यान्वेषिणः दुष्टलिङ्गस्य यथा आशु पातः स्त्युत्तरं नम्रता जायते तथा आशु पुनरुन्नतिः पुनरप्युद्गमो न जायते । उभयत्रापि तत्तन्नीतिबोधरहितत्वमेव शब्दो व्यञ्जयति ।

( ६२ ) अत्रार्थोऽश्लीलः ।

( ६३ ) 'वर्षत्येतदहर्पतिर्न तु घनो धामस्थमच्छं पयः
सत्यं सा सवितुः सुता सुरसरित्पूरो यया प्लावितः ।
व्यासस्योक्तिषु विश्वसित्यपि न कः श्रद्धा न कस्य श्रुतौ
न प्रत्येति तथापि मुग्धहरिणी भास्वन्मरीचिष्वपः ॥'

( ६२ ) दोषं स्फुटीकर्त्तुमाह—अत्रेति । अर्थः द्वितीयोऽर्थः अश्लीलः लिङ्गद्योतकत्वादितिभावः । तथाच प्रकरणाद्विशेषबोधोऽवगम्यते द्वितीयार्थस्त्वर्थवशादेवेत्यर्थदोषत्वमस्येति बोध्यम् ।

पदान्तरप्रतिपादितोऽप्ययमथाऽश्लील एवेतिपदवाक्याश्लीलतोऽस्य भेदः । तत्र साधनादिपदानामेवाश्लीलता सेनादिपदैस्तदर्थप्रतिपादनेऽश्लीलत्वाभावात् ।

अर्थगता जुगुप्साव्यञ्जकाश्लीलता यथा—

"अनन्तकृमिसङ्कीर्णं दृष्ट्वैव वमिकारणम् । स्रवत् पर्युषितं गूथं क्षुधा विशति कुक्करी"

अर्थगतामङ्गलव्यञ्जकाश्लीलता यथा मम—

'प्रस्थितं कान्तमन्वीक्ष्य यासमये विरहातुरा । असहाया स्वभवने बाष्पं मुञ्चति संस्थिता॥

अत्र विदेशगमनार्थे प्रयुक्तेनापि प्रस्थितपदेन निधनार्थस्यापि प्रतीतेरर्थगतामङ्गलाव्यञ्जकाश्लीलता ।

( ६३ ) कष्टत्वदोषोदाहरणं दर्शयति—वर्षत्येतदिति । क्लिष्टत्वाद्यभावेऽपि कष्टगम्यार्थत्वं तत्त्वम् । तद्बीजन्तु तात्पर्य्यार्थस्य दुर्ज्ञेयतया तज्ज्ञानविलम्बेनैव रसप्रतीतिप्रकर्षविलम्बनम् । "वैयाकरणमुख्ये तु" इत्यादिना क्वचित् प्रतिप्रसवस्याभिधेयमानत्वादयमनित्यो दोषः ।

कामुक एवान्यस्यै कामिन्यै धनसम्पदादिकं वितरतीति जानन्त्या अपि कस्याश्चिन्नायिकायाः कान्तदूतीः प्रति अन्यापदेशेन सोल्लुण्ठनोक्तिरियम् । अहर्पतिः सूर्य्यः धामस्थं चन्द्रमण्डलस्थितम्, अच्छं निर्म्मलम्, स्वहस्तेन एतद्दृश्यमानं पयो जलं वर्षति न तु घनो मेघो वर्षतीतिसम्बन्धः घनस्य जलाधारमात्ररूपत्वादिति भावः । "आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः" इति श्रुतेः ।

तथा यया सुरसरितो गङ्गायाः पूरः प्रवाहः प्लावितः परिवर्द्धितः सा यमुना सवितुः सूर्य्यस्य सुता इति सत्यम्, आदित्येन जलवर्षणात् तज्जलस्यैव च यमुनारूपेण परिणतत्वादिति भावः ।

तथाच विष्णुपुराणम्—

सूर्य्यस्य पत्नीसंज्ञाभूत् तनया विश्वकर्म्मणः ।
मनुर्यमो यमी चैव तदपत्यानि वै मुने ! ॥

यमी यमुना । कथमेतन्निश्चितमत आह—व्यासस्योक्तिष्विति । वृष्टियमुनयोः सूर्य्यप्रभवत्वं न खलु केनचिदनाप्तेनोक्तं किन्तु व्यासेन पराशरसुतेन श्रुत्या वेदापरपर्य्यायनाम्ना च तथाच तस्योक्तिषु—

"विवस्वानष्टभिर्मासैरादायापो रसात्मिकाः ।
वर्षत्यम्बु ततस्तस्मादन्नादप्यखिलं जगत् ॥

( ६४ ) अत्र यस्मात्सूर्याद्वृष्टेर्यमुनायाश्च प्रभवस्तस्मात्तयोर्जलमपि सूर्यप्रभवम्। ततश्च सूर्यमरीचीनां जलप्रत्ययहेतुत्वमुचितम्। तथापि मृगी भ्रान्तत्वात्तत्र जलप्रत्ययं न करोति। अयं प्रस्तुतोऽप्यर्थो दुर्बोधः, दूरे चास्मत्प्रस्तुतार्थबोध इति कष्टार्थत्वम्।

( ६५ ) 'सदा चरति खे भानुः सदा वहति मारुतः।
सदा धत्ते भुवं शेषः सदा धीरोऽविकत्थनः॥'

---

विवस्वानंशुभिस्तीक्ष्णैरादाय जगतो जलम्।
सोमं पुष्यत्यथेन्दुश्च वायुनाडीमयैर्दिवि॥
नाडीभिः सिञ्चतेऽभ्रेषु धूमाग्न्यनिलमूर्तिषु।
न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि तान्यतः॥
अभ्रस्थाः प्रपतन्त्यापो वायुना समुदीरिताः।
संस्कारं काल-जनितं मैत्रमासाद्य निर्मलाः॥

इत्यादिपुराणात्मकवाक्येषु को न विश्वसिति? अपि तु सर्व एव विश्वसतीत्यर्थः। कस्य वा जनस्य श्रुतौ "आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः" इत्यादि—श्रुतिवाक्ये श्रद्धा विश्वासो नास्ति अपि तु सर्वस्यैवास्तीत्यर्थः।

सूर्यरश्मीनां जलप्रत्ययहेतुत्वस्योचितत्वेऽपि तथापि सुखहरिणी बुद्धिरहिता मृगी, मुग्धेति जलप्रत्ययाभावे हेतुः। भास्वन्मरीचिषु सूर्यरश्मिषु अपो जलानि सन्तीति शेषः न प्रत्येति विश्वासं न विदधाति। "धामस्थमस्तं पयः" इत्यनेन पयसः सूर्यरश्मिवृत्तितया श्वासश्रुतिभ्यां बोधितत्वेन तथा प्रत्ययौचित्यादिति भावः।

अत्राप्राकरणिकसूर्यकर्तृकवर्षणादिप्रतिपादनात् प्राकरणिकानां कामुककर्तृकधना- दीनां प्रतीतेरप्रस्तुतप्रशंसानामालङ्कारः कवेरभिलषितः।

( ६४ ) अत्र विवक्षितार्थस्य कष्टबोध्यत्वमुपपादयति—अत्रेति। यस्माद्धेतोः प्रभव उत्पत्तिः। तस्माद्धेतोः। तयोः वृष्टेर्यमुनायाश्चेत्यर्थः। सूर्यप्रभवं सूर्यादुत्पन्नम्। वृष्टेर्यमुनायाश्च 'जलाभिन्नत्वादित्याशयः। षष्ठीसप्तम्योरर्थे प्रत्ययभिन्नत्वात् सूर्यमरीचीनामित्यस्य सूर्यकिरणेष्वित्यर्थः, जलप्रत्ययहेतुत्वं पयो विद्यत इति विश्वास- जनकत्वम्। उचितमिति। जलस्य तद्धामस्थत्वेनोक्तत्वादिति भावः। मरीच्वधिकरणेषु यमुनाजलस्य सूर्यप्रसवत्वदर्शनात् पिपासया यमुनायामेव प्रवर्तते न तत्र जलप्रत्ययः मरीचिषु तत्सत्याम्बुभ्रमान्न प्रत्येत्येतत्प्रदर्शनार्थमयमप्रस्तुतोऽर्थ इति। अप्रस्तुतोऽर्थो वर्षतीत्यादिना साक्षादुक्तोऽपीत्यर्थः। दुर्बोध इति। अनेकविधशास्त्रयुक्तिजन्यजनकभावा- दिप्रतिपादितत्वादित्याशयः। अस्मात् साक्षाद्वाक्येन प्रतिपादितादपि अप्रस्तुतार्थात्, प्रस्तुतार्थबोधप्राकरणिकार्थप्रतीतिः दूरे अत्यन्तान्तर्हित इत्यर्थः, वाक्येनाप्रतिपादना- दिति भावः। इति हेतोः। तथाच विवक्षितोऽर्थः शब्दान्तरैः कथञ्चिद्योजितोऽपि क्लेशेनैव प्रतीयते इत्यर्थ एवायं दुष्टः। क्लिष्टत्वादिकं तु शब्ददोषः पदान्तरेणार्थस्या- नायासेनैव प्रतिपत्तेरित्यवधेयम्।

( ६५ ) अनवीकृतत्वमुदाहरति—सदेति। अनवीकृतः भङ्ग्यन्तरेण प्रकारान्तरेण यन्नवत्वं तन्न प्रापितः। यत्र एकभङ्गिनिर्दिष्टोऽनेकार्थः सोऽनवीकृतार्थस्तस्य भावस्तत्त्वम् तथाच बहुशः प्रतिपादनायार्थस्य भङ्गीं परावृत्तिं विना एकयैव भङ्ग्या प्रतिपाद्यत्वं तत्त्व-

( ६६ ) अत्र सदेत्यनवीकृतत्वम् ।

( ६७ ) अत्रास्य पदस्य पर्यायान्तरेणोपादानेऽपि यदि नान्यद्विच्छित्यन्त तदास्य दोषस्य सद्भाव इति कथितपदत्वाद्भेदः ।

( ६८ ) नवीकृतत्वं यथा—

( ६९ ) 'भानुः सकृद्युक्ततुरङ्ग एव रात्रिंदिवं गन्धवहः प्रयाति ।
बिभर्ति शेषः सततं धरित्रीं षष्ठांशवृत्तेरपि धर्म एषः ॥' इति ।

---

मितिफलितम् । अत्र पिष्टपेषणन्यायेन एकप्रकारकार्थश्रवणेन सहृदयोद्वेजकत्वं दूषकताबीजम्, प्रतिप्रसवाभावान्नित्योऽयं दोषः ।

भानुः सूर्यः सदा सर्वदा खे आकाशे चरति परिभ्रमति, मारुतः पवनः सदा वहति, शेषः फणीश्वरः सदा भुवं महीं धत्ते धारयति, धीरो मनुष्योऽपि अविकत्थन अनात्मश्लाघाकरो भवतीति शेषः ।

(६६)अत्र दोषं समर्थयितुमाह—अत्रेति । सदेत्यनवीकृतत्वं सर्वेष्वर्थेषु सदेत्येकैवभङ्गि भङ्ग्यन्तराभावान्न नवीकृतत्व दोष इत्यर्थः ।

( ६७ ) नन्वेकविधशब्दस्य बहुश उपादानात् कथितपदे एवान्तर्भविष्यतीति कथितपदत्वादस्य को भेद इत्यत आह—अत्रेति । अस्य अनवीकृतार्थबोधकस्य पदस्य सदाशब्दस्य, पर्य्यायान्तरेण सर्वदाऽजस्रादिरूपेण भिन्नधर्मप्रकारेण, उपादानेऽपि अपिना तच्छब्दोपादाने च । अन्यत् पूर्वपदविभक्तिसमासादिप्रतिपादितातिरिक्त विच्छित्यन्त विभक्तिसमासादिप्रतिपादितार्थविशेषः चमत्कारिताविशेषो न जायत इति भावः । अनवीकृतत्वस्य सद्भावो विद्यमानत्वं स्यादेव, तत्र हि न पुनः कथितपदत्वस्यापि सद्भावः, उक्तविच्छित्तिविशेषपदसद्भाव एव तत्सद्भावनियमादितिभावः। यत्तदादिपदानामसकृत् प्रयोगेऽपि कथितपदत्वं न शङ्कनीयम्, तदर्थानां शब्दान्तरेण प्रतिपादयितुमशक्यत्वात् । यथा "ते देशास्ते जनपदाः" इत्यादौ "स किसखा" इत्यादौ च शब्दान्तरेण विवक्षितोऽर्थः प्रतिपादयितुं न शक्यते, तस्मात् "सदा चरति" इत्यादौ कथितपदत्वं सम्भवत्येव; किन्तु—

सदा चरति खे भानुर्नित्यं वहति मारुतः ।
धत्ते क्ष्मां सर्वदा शेषोऽजस्रं धीरोऽविकत्थनः ॥"

इतिपाठे न कथितपदत्वम् । अनवीकृतत्वं भविष्यत्येव अन्यविच्छित्तिविशेषाभावादित्यवधेयम् । अतएव च एकप्रकारकार्थाभिधानेऽनवीकृतत्वम्, भिन्नधर्मप्रकारकार्थाभिधाने तु नवीकृतत्वमिति अर्थदोषताऽस्य ।

( ६८ ) नवीकृतत्वप्रतीतिं विना अनवीकृतत्वप्रतीतिर्न भवितुं शक्यत इति नवीकृतत्वमुदाहर्तुमाह—नवीकृतत्वमिति । भङ्ग्यन्तरेण भिन्नधर्मप्रकारकार्थाभिधानमित्यर्थः ।

( ६९ ) उदाहरति—भानुरिति । अभिज्ञानशाकुन्तले पञ्चमाऽङ्के कञ्चुकिन उक्तिरियम् । भानुः सूर्यः सकृत्-जीवने एकवारमेव युक्ता जगद्भ्रमणाय रथे नियमिताः तुरङ्गा अश्वा येन स तादृश एव, सूर्यस्तुरङ्गान् रथे योजयित्वा निरन्तरं गच्छन् कदाचिदपि तुरङ्गमोचनपूर्वकं न विश्राम्यतीत्यभिप्रायः । एतेनाऽस्य राज्ञोऽपि पुनस्तुरङ्गमयोजनेऽपि विश्रा-

( ७० ) 'गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमपि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र ! त्वामहमपि यतः स्वस्ति भवते ॥'

न्तिर्नास्तीति व्यज्यते। तथा गन्धवहो वायुरपि रात्रिन्दिवम् अहर्निशमेव "अचतुरसुचतुर" इत्यादिना पा० सूत्रेण समासान्तोऽच्प्रत्ययः, प्रयाति प्रवहति न तु कदापि क्षणमपि ततो विरमतीतिभावः। गन्धपदोपादानेन भारवहनपूर्वकगमनं प्रतीयते, तथात्यन्तमविश्रान्तिश्च रात्रिन्दिवमितिपदेन च ध्वन्यते। तथा शेषः फणीश्वर अनन्तनागः सततं सर्वदैव धरित्रीं पृथिवीं बिभर्त्ति धारयति न तु कदाचिदपि तां शिरसोऽवतार्य्य विश्रान्तिं प्राप्नोतीत्याशयः। षष्ठांशः प्रजोत्पादितद्रव्यजातानां षष्ठो भागः स एव वृत्तिः जीवनोपायो यस्य तस्य तथाविधस्यापि राज्ञोऽपीत्यर्थः। एष निरन्तरपरिश्रमरूपः धर्मः नियमः। एवञ्च राज्ञोऽविश्रामस्यानिवार्य्यत्वात् कण्वशिष्यागमनमावेदयितुं शक्ष्यामीतिकञ्चुकिन आशयः।

अत्र राज्ञः सूर्य्याद्युपमया तेजस्वित्वं लोकोपजीव्यत्वं स्थैर्य्यं च व्यज्यते।

अत्र "सकृत् सततं रात्रिन्दिवम्" इतिभङ्गिभेदेन प्रकारभेदेनोक्तः। वाच्यार्थबोधकाले भिन्नभिन्नप्रकारेण बोधान्नवीकृतत्वं दोष इति बोध्यम्।

( ७० ) निर्हेतुत्वमुदाहरति – गृहीतमिति। निष्क्रान्तो हेतुर्यस्मात् स निर्हेतुः अनुपात्तहेतुकोऽर्थ इत्यर्थः। आकाङ्क्षितहेतुरहितत्वमेव तत्त्वमिति फलितोऽर्थः। हेतोराकाङ्क्षासत्वेऽपि तदनुक्तत्वेन तदनुसन्धानविलम्बात् रसप्रतीतिविलम्बो दूषकताबीजम्। निर्हेतुता तु ख्यातेऽर्थे" इत्यादिवक्ष्यमाणेन प्रतिप्रसवाद्नित्योऽयं दोषः।

वेणीसंहारनाटके तृतीयेऽङ्के द्रोणाचार्य्ये हते शोकाविष्टस्याश्वत्थाम्नः स्वशस्त्रं प्रत्युक्तिरियम्। हेशस्त्र ! येन मत्पित्रा द्रोणाचार्य्येण परिभवभयात् क्षात्रकृततिरस्कारभयात् नोचितमपि ब्राह्मणस्य शस्त्रधारणनिषेधादसङ्गतमपि नोचितमिति "नैकधा" "नारायणः" इत्यादिवत् नशब्देन सह "सह सुपा" इत्यनेन समासः, त्वं शस्त्रं गृहीतम् अङ्गीकृतम् आसीः। तथा यस्य मत्पितुर्द्रोणाचार्य्यस्य प्रभावात् सामर्थ्यात् कश्चिदपि जनस्तव विषयो लक्ष्यो नाभूत्, इति न खलु अपि तु सर्वोऽपि देवो वा मनुष्यो वा युयुत्सुर्विषयोऽभूदिति तवं न कश्चित्तिरस्कार आसीदितिभावः। "द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः" इति न्यायात्। तेनापि मत्पित्रा सुतशोकात् सुतस्य मम अलीकमरणश्रवणजनितशोकात् त्वं शस्त्रं परित्यक्तम् उज्झितम् अपि तु किन्तु न भयात् परित्यक्तम्। अतो हेतोः अहमपि त्वां शस्त्रं विमोक्ष्ये परित्यक्ष्यामि। क्वेत्याकाङ्क्षायामाह—यत इति। यतः यत्र भवते स्वस्ति मङ्गलं तत्रेत्यर्थः। "स्वस्ति स्यान्मङ्गले पुण्येऽप्याशंकायामपि क्वचित्" इति मेदिनी। यच्छोकात् तेन धनुस्त्यक्तस्तच्छोकात् स्वस्यापि धनुस्त्याग उचित इति भावः। शिखरिणीछन्दः, लक्षणन्तूक्तमेव प्राक्।

पुरा किल सङ्ग्रामे अश्वत्थाम्नि गजे हते "अश्वत्थामा हतः" इति युधिष्ठिरेणोक्तं निशम्य द्रोणाचार्य्यः सुतमरणं सम्भाव्य शोकात् स्वशस्त्रं परित्यक्तवान्, अनन्तरं धृष्टद्युम्नेन मारितस्ततः पितृशोकादश्वत्थामापि स्वशस्त्रं त्यजन्नासीदिति महाभारतीया कथात्रानुसन्धेया।

( ७१ ) अत्र द्वितीयशस्त्रमोचने हेतुर्नोक्त इति निर्हेतुत्वम् ।

( ७२ ) 'कुमारस्ते नराधीश ! श्रियं समधिगच्छतु ॥'

( ७३ ) अत्र 'त्वं म्रियस्व' इति विरुद्धार्थप्रकाशनात्प्रकाशितविरुद्धत्वम् ।

( ७४ ) 'अचला अबला वा स्युः सेव्या ब्रूत मनीषिणः ? ।'

( ७५ ) अत्र प्रकरणाभावाच्छान्तशृङ्गारिणोः को वक्तेति निश्चयाभावात्संदिग्धत्वम् ।

---

( ७१ ) दोषमुद्घाटयितुमाह—अत्रेति । द्वितीयशस्त्रमोचने अश्वत्थाम्नः स्वशस्त्रपरित्यागे । तथाच यथा द्रोणाचार्यकर्तृकशस्त्रपरित्यागे "सुतशोकात्" इतिहेतुरुक्ता तथा "पितृशोकात्" इतिहेतुरवश्यं वक्तव्यः स नोक्त इति दोष इति भावः ।

( ७२ ) प्रकाशितविरुद्धतामुदाहरति—कुमार इति । प्रकाशितो व्यञ्जितो विरुद्धः विवक्षितार्थस्य प्रतिकूलोऽर्थो येन वाक्यार्थेन स तथोक्तः । तथाच प्रतिपादितविवक्षितार्थविरोधिव्यञ्जकार्थकत्वं प्रकाशितविरुद्धत्वम् । विवक्षितार्थप्रतिकूलप्रकाशेन श्रोतुरुद्वेगजननात् रसप्रकर्षप्रतिबन्धकत्वं दूषकताबीजम् । समाधानाभावान्नित्योऽयं दोषः ।

"समस्तगुणसम्पन्नः समर्थो राज्यपालने ।" इति मद्रचितपूर्वार्द्धम् ।

कुमारः पुत्रः श्रियम् इतोऽपि ज्ञानसम्पत्तिं समधिगच्छतु सम्यक्तया प्राप्नोतु ।

( ७३ ) अत्र दोषं समर्थयति—अत्रेति । अयम्भावः—"श्रियं समधिगच्छतु" इत्यत्र राज्यलक्ष्मीं सम्प्राप्नोतु इत्यर्थोऽपि प्रतीयते । तथाच पितृमरणानन्तरमेव पुत्रस्य श्रीलाभः जीवति पितरि तदसम्भवात् 'त्वं म्रियस्व अनन्तरमयं कुमारो राज्यश्रियं समधिगच्छतु इतिविवक्षितार्थप्रतिकूलमपि प्रकाशते इति अनुचितार्थे पदेन विरुद्धार्थव्यञ्जनमत्र तु अर्थेनेति ततो भेदः । सहचरभिन्नेऽपि तथैव । विरुद्धमतिकृद्दोषे शब्दस्योभयार्थता अत्र न तथा तत्र शब्दशक्तिमूलाविरुद्धाप्रतीतिः अत्रार्थसामर्थ्यनिबन्धनेति स्पष्टं भेदः ।

( ७४ ) सन्दिग्धतादोषमुदाहरति—अचला इति । संदिग्धः सन्देहविषयीभूतोऽर्थो यत्र तस्य भावः । तथाच सन्देहविषयीभूतार्थत्वं सन्दिग्धत्वम् । सन्दिग्धविषये कश्चनैकपक्षनिर्णयाय हेत्वनुसन्धानविलम्बेन रसप्रतीतिविलम्बनं दूषकताबीजम् ।

"सन्दिग्धत्वं तथा व्याजस्तुतिपर्य्यवसायि चेत्" इति वक्ष्यमाणेन प्रतिप्रसवादनित्योऽयं दोषः ।

"अन्यत्कर्माणि सन्त्यज्य निश्चलेन हृदा मया ।" इतिमद्रचितपूर्वार्द्धम् ।

हे मनीषिणो बुद्धिमन्तः ! मया अचलाः परमेश्वराराधनाय पर्वताः अबलाः सुरतसम्भोगाय वनिता वा सेव्याः सेवनीयाः स्युरिति संशये यूयं ब्रूत कथयत ।

( ७५ ) दोषं समर्थयितुमाह—अत्रेति । प्रकरणाभावात् वक्तुः पूर्वं प्रस्तुतत्वाभावात् । निश्चयाभावादिति । अबला वा इति वा पदस्य अबलासम्बन्धे अबलास्ववहेलनाप्रकाशेन शान्तो वक्ता भवितुमर्हति, एवमचला वा इति वापदस्याचलासम्बन्धे अचलेष्ववहेलनाप्रकाशेन शृङ्गारी वक्ता भवितुमर्हतीतिवक्तृनिश्चयाभावादिति भावः ।

अत्राबलाया अचलाया वा सेव्यत्वं व्यञ्जनया प्रतिपिपादयिषितम् , तद्विरुद्धद्वयोपस्थित्या द्वितीयेन सन्दिह्यते प्रकरणाभावात् तेन दोष, इति सन्दर्भाशयः ।

"वन्द्याम्" इत्यादौ (पृ० ६९३) द्वितीयासप्तम्यन्तत्वाभ्यां पदे एव सन्देहः, अत्र तु

( ७६ ) 'सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥'

( ७७ ) अत्र द्वितीयार्धं व्यतिरेकेण द्वितीयपादस्यैवार्थ इति पुनरुक्तता ।

अर्थे एवेति पदसन्दिग्धत्वाद्भेदः ।

इदञ्च—

"मात्सर्य्यमुत्सार्य्य विचार्य्य कार्यमार्याः समर्थ्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणामुतस्मरस्मेरविलासिनीनाम् ॥

इति प्रकाशोदाहरणस्य निष्पीडनम् ।

उदाहरणान्तरं यथा—

'आयुर्नश्यति पश्यतां, प्रतिदिनं याति क्षयं यौवनं
प्रत्यायान्ति गताः पुनर्न दिवसा नाऽव्यासतेऽमी क्षणम् ।
यावज्जीवमुदकंवृद्धिरुदिता कर्त्तव्यतां कर्मणां
किं कुर्यां ? किमु वा सुखाय ? कुह वा स्वान्तं प्रमोदेत वा" ॥

अत्र प्रकरणाभावात् वक्तुः शान्तत्वं शृङ्गारित्वं वेति निर्णेतुमशक्यम् ।

( ७६ ) केनचिच्छब्देन प्रतिपादितार्थस्य पुनस्तद्वाचकेनैव पर्य्यायान्तरेण प्रतिपादनं पुनरुक्तता । द्वितीयवारप्रतिपादनहेत्वनुसन्धानविलम्बेन रसप्रतीतिविलम्बनं दूषकताबीजम् । "धनुर्ज्यादिषु शब्देषु" इत्यादिना प्रतिप्रसवस्य वक्ष्यमाणत्वादयमप्यनित्यो दोषः । अत्रापि पूर्ववत् शाब्दत्वार्थत्वभेदेनैव प्रागुक्तकथितपदत्वदोषाद् भेदः । मानान्तरेण प्रतीतस्यार्थस्य पदेन पुनः प्रतिपादने अपुष्टत्वम्, अत्र तु न तथेति भेदः । केचित्तु अत्र लक्षणे प्रयोजनं विनेत्यपि विशेषणं देयम् अतएव कर्णावतंसादिषु प्रयोजनं विनेत्यंशाभावान्न पौनरुक्त्यमिति वदन्ति तदापातरमणीयम्, तथासति अनित्यदोषत्वमस्य न स्यात् प्रयोजनस्थले पुनरुक्तत्वस्यैवाभावप्रसङ्गात् । स चायं द्विविधः पदार्थवाक्यार्थभेदात् । तयोरन्त्यमुदाहरति—सहसेति । किरातार्जुनीयतृतीयसर्गे भीमसेनं प्रति युधिष्ठिरस्योक्तिरियम् । सहसा अविचार्य्य क्रियां यत्किञ्चिदपि कार्य्यं न विदधीत नानुतिष्ठेत । येन अविवेकः अविमृश्यकारिता, परमापदां महाविपत्तीनां पदं स्थानम् आपज्जनक इत्यर्थः । अनेककारणस्य कार्य्यव्यापकत्वादविमृश्यकारिताया आपद्व्यापकत्वं दर्शितम् । ईदृशान्वयव्याप्त्या लभ्यां व्यतिरेकव्याप्तिं दर्शयति—वृणुते हीति । विमृश्यकारिता अविमृश्यकारितारूपस्य व्यापकस्य व्यतिरेकस्तस्यापद्रूपव्याप्याभावरूपाणां सम्पदां व्याप्यतामाह—गुणलुब्धा इति । तथाहि गुणलुब्धा गुणपक्षपातिन्यः सम्पदः, विमृश्यकारिणं विचार्यकार्य्यकर्त्तारं जनम्, स्वयमात्मनैव वृणुते अवलम्बन्ते यत्र विमृश्य कारिता तत्र सम्पद् इत्यर्थः न तत्र व्यापारापेक्षेति भावः ।

( ७६ ) दोषं स्पष्टयितुमाह—अत्रेति । द्वितीयार्धव्यतिरेकेण द्वितीयार्धं द्वितीयार्धार्थस्तल्लब्धव्यतिरेकव्याप्त्या द्वितीयपादस्यैव अविवेक इत्यादिद्वितीयपादलब्धान्वयव्याप्तेरेवेत्यर्थः अन्वयव्याप्तेरेव पर्य्यवसितो व्यतिरेकव्याप्तिः अर्थो विद्यत इति शेषः ।

तथाच यथा "अज्ञानी क्लेशवान्" इत्युक्ते "ज्ञानी सुखवान्" इति स्वभावत एव प्रतीयते तथा "अविवेकः परमापदां पदम्" इत्युक्ते "विवेकी सम्पदां परं पदम्" इति

( ७८ ) प्रसिद्धिविरुद्धता यथा—

'ततश्चचार समरे शितशूलधरो हरिः ॥'

( ७९ ) अत्र हरेः शूलं लोकेऽप्रसिद्धम् ।

( ८० ) यथा वा—

'पादाघातादशोकस्ते सञ्जाताङ्कुरकण्टकः ।'

( ८१ ) अत्र पादाघातादशोकेषु पुष्पमेव जायत इति प्रसिद्धं न त्वङ्कुर इति

स्वभावत एव व्यतिरेकव्याप्त्यावगम्यते । तथापि "श्रृणुते" इत्यादिना पुनस्तस्यैवार्थस्य प्रत्यायनात्पुनरुक्ततेतिभावः ।

आद्योदाहरणं यथा—

"कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिनामयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥

"अरेरेऽर्जुनार्जुन ! सात्यके ! सात्यके ! न युक्त ईदृशो मत्तातस्य सुतशोकभ्रान्त्या न्यस्तशस्त्रस्य दिवमुपगच्छतः केशाकर्षणरूपः पराभवः। अपि च" इत्युपक्रम्य पितृवधामर्षितस्याश्वत्थाम्न उक्तिरियम् ।

अत्रार्जुनार्जुनेति सम्बोध्य यैर्भवद्भिरित्यनेन परामृश्य तेषामित्यनेन परामर्शादर्जुनस्यापि प्राप्तेः सभीमकिरीटिनामिति किरीटिपदार्थः पुनरुक्तः ।

( ७८ ) ख्यातिविरुद्धतामुदाहर्तुमाह—प्रसिद्धीति । ख्यातिरिति प्रसिद्धिरितिपर्य्यायान्तरमेव नार्थान्तरमिति "ख्यातिविद्याविरुद्धते" इत्यनेन कारिकोक्तेन सहास्य विरोधाभावः। ख्यातिविद्यापदाभ्यां विरुद्धपदस्य प्रत्येकमन्वयः "द्वन्द्वान्ते श्रूयमाणं पदम्" इतिन्यायात् । तथाच ख्यातिविरुद्धो विद्याविरुद्धश्चेति। तत्र प्रसिद्धिविरुद्धो नाम यत्रार्थे न प्रसिद्धिः स प्रसिद्धिविरुद्धः । विरोधादर्थाप्रतीतिरेव दूषकताबीजम् । "कवीनां समये ख्याते" इत्यादिना वक्ष्यमाणेन प्रतिप्रसवस्य सम्भवादनित्योऽयं दोषः । स च द्विविधः लोकप्रसिद्धिविरुद्धः कविप्रसिद्धिविरुद्धश्च। तत्र लोकप्रसिद्धिविरुद्धमर्थमुदाहरति—ततश्चचार इति ।

'अन्तःक्रोधेन सन्दीप्तो ददाह सुरघातकान्' । इति मद्रचितोत्तरार्द्धम् । हरिः श्रीकृष्णः ।

( ७९ ) दोषं समर्थयति—अत्रेति । लोके कविलोके । किन्तु महादेवस्यैव प्रसिद्धमितिभावः ।

( ८० ) कविप्रसिद्धिविरुद्धमर्थमुदाहर्तुमाह—यथा वेति । पादेति ।

'उन्मत्त इव सन्दीप्तः पथिकान्हन्ति साम्प्रतम्' । इति मत्पूरितोत्तरार्द्धम् ।

हे प्रिये ! तव पादाघातात् पादप्रहारात् अशोको वृक्षः सञ्जातम् उत्पन्नम् अङ्कुरः कलिकाप्ररोह एव कण्टकं यत्र स तादृशः ।

( ८१ ) दोषमुपपादयितुमाह—अत्रेति । अशोकेषु वृक्षेषु । कवीनां समयेन रचनानियमेन या ख्यातिः प्रसिद्धिस्तद्विरुद्धता । नच "कुसुमं कृतदोहदं त्वया" इतिकालिदासकाव्ये दोहदस्यापि वर्णनात् कथमङ्कुरो न प्रसिद्ध इति वाच्यम् "कवीनां सत्यर्थेऽपि प्रसिद्धिरसत्येऽपि प्रसिद्धिः" इति अङ्कुरस्य केनाऽपि कविनाऽवर्णनाद्दोष इत्यर्थः । यद्यपि

कविसमयख्यातिविरुद्धता ।

( ८२ ) 'अधरे करजक्षतं मृगाक्ष्याः ।'

( ८३ ) अत्र शृङ्गार ( काम ) शास्त्रविरुद्धत्वाद्विद्याविरुद्धता ।

( ८४ ) एवमन्यशास्त्रविरुद्धत्वमपि ।

---

पुष्पोद्गमेन नवाङ्कुरोद्गमोऽपि स्यादेवेति न बाधस्तथापि तथा कविवर्णनाविरहेण तद्विरुद्धः । कविप्रसिद्धिश्चान्यत्र—

"स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति वकुलः सीधुगण्डूषसेकात्
पादाघातादशोकस्तिलककुरवकौ वीक्षणालिङ्गनाभ्याम् ।
मन्दारो नर्मवाक्यात् पटुमधुसहनाच्चम्पको वक्त्रवाता-
च्चूतो गीतान्नमेरुर्विकसति च पुरो नर्त्तनात्कर्णिकारः ॥ इति

स्वयं च वक्ष्यति—"पादाघातादशोकं विकसति वकुलं योषितामास्य मद्यैः" इति ।
लोकविरुद्धस्यापि कविप्रसिद्धत्वेन विरुद्धत्वाभावो यथा—

सुसितवसनालङ्कारायां कदाचन कौमुदी
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनुभवतः कीर्त्तिः केनाऽप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः ॥
राजानं प्रति कवेरुक्तिरियम् ।

अत्र कीर्त्तेर्धवलतागुणाश्रयत्वरूपं मूर्त्तत्वं ज्योत्स्नावत् प्रकाशकता च लोकविरुद्धे अपि कविसमयसिद्धेत्यदोषः ।

( ८२ ) विद्याविरुद्धतामुदाहरति—अधर इति । अत्र विद्यापदेन शास्त्रमुच्यते तथाच व्याकरणेतरशास्त्रविरुद्धत्वं विद्याविरुद्धत्वम् । व्याकरणशास्त्रोक्तनियमराहित्ये च्युतसंस्करताया एवोक्तत्वाद् व्याकरणेतरेति । विरुद्धार्थप्रतीत्या सत्यत्वज्ञानेन रसप्रतीतेरेव प्रतिबन्धात् सहृदयहृदयवैरस्यं दूषकताबीजम् । अस्य च हास्यरसोपयोगित्वेन गुणत्वादनित्यत्वमवगन्तव्यम् ।

'अधरे करजक्षतं मृगाक्ष्या नयने सङ्कुचिते कचाश्च विक्षिप्ताः ।
कर्णाभरणाञ्चापि त्रुटितं कथयन्त्येते साम्प्रतिकमाश्लेषम् ॥" इति मद्रचितांशत्रयम् ।

मृगाक्ष्याः मृगनयनायाः, अधरे ओष्ठे करजक्षतम् नखाघाताङ्कितम् । 'करजं स्याद् व्याघ्रनखे करञ्जनखयोः पुमान्' इति गोपालः ।

( ८३ ) दोषमुपपादयितुमाह—अत्रेति । कामशास्त्रविरुद्धत्वात् वात्स्यायनमुन्यादिप्रणीतशास्त्रविरुद्धत्वात् अधरे करजक्षतस्येत्यर्थः । तथाच—

नखक्षतस्य स्थानानि कक्षौ वक्षस्तथा गलः ।
पार्श्वौ जघनमूरू च स्तनगण्डललाटिकाः ॥"

इतिवात्स्यायनोक्तस्थानभिन्नत्वात्कामशास्त्रविरुद्धत्वमितिभावः ।

उद्योतकारा अपि—
"कक्षाकरोरुजघनस्तनपृष्ठपार्श्वहृत्कन्धरासु नखराः खरवेगयोः स्युः ।
अप्यन्ययोर्नवरते कलहे च शान्ते पुष्पोद्गमे प्रवसने विरहे च योज्याः ॥ इत्याहुः ।

( ८४ ) एवमिति । उदाहरणमूहनीयमिति शेषः । तत्र धर्मशास्त्रविरुद्धत्वं यथा—

( ८५ ) 'ऐशस्य धनुषो भङ्गं क्षत्रस्य च समुन्नतिम् ।
स्त्रीरत्नं च कथं नाम मृष्यते भार्गवोऽधुना ॥'

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः ।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥ इति ।

अत्र निमित्तं विना रात्रौ स्नानं धर्मशास्त्रेण निषिद्धमिति तद्विरुद्धोऽयमर्थः । तदुक्तं स्मृतिशास्त्रे—

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु । स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च ॥

तथा शातातपोऽपि—

स्नानं दानं तथा श्राद्धमनन्तं राहुदर्शने । आसुरीरात्रिरन्यत्र तस्मात्तां परिवर्जयेत् ॥

अर्थशास्त्रविरुद्धत्वं यथा—

कामोपभोगसाकल्यफलो राज्ञां महीजयः ।
अहङ्कारेण जीयन्ते द्विषन्तः किं नयश्रिया ॥ इति ।

अत्र महीजयस्य फलत्वेन कामोपभोगानां गर्गभार्गवादिप्रणीतार्थशास्त्रैरननुमतत्वात् शत्रुजये चाहङ्कारस्यानिमित्तत्वादर्थशास्त्रविरुद्धत्वम् ।

विद्याविरुद्धत्वमित्यत्र विद्येत्युपलक्षणम् । अत एव भोजराजा आहुः—देशविरुद्धत्वं यथा—

सुराष्ट्रेष्वस्ति नगरी मथुरा नाम विश्रुता ।
आक्षोटनारिकेराढ्या यदुपान्ताद्रिभूमयः ॥

अत्र सुराष्ट्रेषु मथुरानाम तत्पर्यन्ताद्रिभूमिषु चाक्षोटनारिकेराणामभावात् "देशोऽद्रिवनराष्ट्रादिः" इत्ययं देशकृतं प्रत्यक्षविरुद्धत्वम् ।

कालविरुद्धत्वं यथा—

पद्मिनीनक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती । मधुरुत्फुल्लनिचुलो निदाघो मेघनिस्वनः ॥

मधुर्वसन्तः । निचुलो जलवेतसः । निदाघो ग्रीष्मसमयः ।

अत्र पद्मिन्या नक्तं कुमुद्वत्या अह्नि मधौ निचुलानां विकसितत्वाभावात् निदाघस्य चामेघदुर्दिनत्वात् "कालो नक्तं दिनर्त्तवः" इतिकालकृतश्चेदं प्रत्यक्षविरुद्धत्वम् ।

प्रतिज्ञाविरुद्धत्वं यथा—

यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता ।
माता च मम वन्ध्यासीत् स्मरामोऽनुपमो भवान् ॥

अत्र स्वयं वक्तुरेव "यावज्जीवमहं मौनी" इत्यादिपदानामभिहितत्वेन प्रतीतिविरोधात् प्रतिज्ञाविरुद्धत्वम् ।

एवम्—

एष वन्ध्या सुतो याति खपुष्पकृतशेखरः ।
मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः ॥

इत्यादावपि यथासम्भवविरुद्धत्वमवगन्तव्यम् ।

( ८९ ) साकाङ्क्षतामुदाहरति—ऐशस्येति । आकाङ्क्षया सह वर्त्तत इति साकाङ्क्षस्तस्य भावः । तत्त्वञ्च अनुपात्तार्थाकाङ्क्षाविषयार्थकत्वम् । निर्हेतुभेदस्तु तदवसरे एवाभिहितः असत्यभावात् अन्वयाभावे साकाङ्क्षत्वम् अध्याहृतेनार्थेन यत्रान्वयोपपत्तिस्तत्र न्यूनपदत्वमिति ततोऽस्य भेदः । आकाङ्क्षितार्थाप्रतिपादनेन विवक्षितार्थाप्रतीतौ रसप्रतीतेः सुतरामभावात् सहृदयहृदयवैमुख्यं दूषकताबीजम् । प्रतिप्रसवस्या·

( ८६ ) अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षता ।

( ८७ ) 'सज्जनो दुर्गतौ मग्नः कामिनी गलितस्तनी ।

खलः पूज्यः समज्यायां तापाय मम चेतसः ॥'

( ८८ ) अत्र सज्जनः कामिनी च शोभनौ तत्सहचरः खलोऽशोभन इति सहचरभिन्नत्वम् ।

---

सम्भवादनित्योऽयं दोषः । भार्गवः परशुरामः अधुना ऐशस्य हरसम्बन्धिनो धनुषो भङ्गम्, त्रस्य क्षत्रियजातेः समुन्नतिञ्च, स्त्रीरत्नं जानकीञ्च उपेक्षितुं कथं नाम मृष्यते कथं सहते अपि तु कथं न द्वेष्टीत्यर्थः ।

( ८६ ) दोषं दर्शयति—अत्रेति । स्त्रीरत्नमिति । स्त्रीरत्नशब्दस्यार्थं इत्यर्थः । ननु द्वेष्ययोग्य एवमुक्तिः सम्भवति स्त्रीरत्नञ्च दुष्कुलादपि न द्वेष्ययोग्यम् इत्यतस्तदुपेक्षायां द्वेष्ययोग्यतायामाकाङ्क्षेत्यत आह—उपेक्षितुमिति । आकाङ्क्षति मृष्यते इति पदस्यार्थ इति शेषः । अन्यथा उपादेयस्य स्त्रीरत्नस्यामर्षायोग्यत्वे कथं "कथं मृष्यते" इत्यनेन द्वेषार्थकेनान्वयः स्यात् । तथाच मृष्यत इति पदस्यार्थोऽनुपपद्यमानः स्वोपपत्तये अनुपात्तस्य उपेक्षितुमितिपदस्यार्थमाकाङ्क्षतीति साकाङ्क्षत्वं दोष इति भावः ।

अत्र "रावणः" इत्येव पाठो युक्तः न भार्गव इति तस्य जितेन्द्रियस्य स्त्रीरत्नोपेक्षायां द्वेषाभावेन मृष्यत इत्यस्याकाङ्क्षाभावात् ।

( ८७ ) सहचरभिन्नतामुदाहर्त्तुमाह—सज्जन इति । सहचरेषु समभिव्याहृतेषु सहचरेभ्यः समभिव्याहृतेभ्यो वा भिन्नो विजातीयः । विजातीयत्वं चोत्कृष्टापकृष्टत्वाभ्याम् तथाच उत्कृष्टैः सह निकृष्टस्य निकृष्टैः सह उत्कृष्टस्य चैकान्वयित्वेन निर्देशस्तत्त्वम् । 'सज्जनो दुर्जनं ज्ञात्वा पश्यति' इत्यादौ कारकभेदाद्भिन्नान्वयित्वेन निर्देशादयं दोष इत्यत उक्तम्—एकान्वयित्वेनेति । "उत्कृष्टैरुत्कृष्टं मृष्यते" इति बुद्धेर्निकृष्टानुप्रवेशेन विच्छेदो-दूषकताबीजम् । प्रतिप्रसवाभावादयमपि नित्यो दोषः । तत्रोत्कृष्टस्य निकृष्टेनोदाहरणमिदम् ।

समज्यायां सभायाम् ।

( ८८ ) दोषमुपपादयति—अत्रेति । कामिनीशोभना स्वरूपेणैव न तु गलितस्तनत्वेनेत्यवधेयम् ।

निकृष्टस्योत्कृष्टेन यथा—

दुष्टसङ्गेन दौःशील्यं व्यसनेन तथा विपत् ।

अपथ्यचर्य्यया व्याधिर्विद्याभ्यासेन वर्धते ॥

अत्र दौःशील्यविपद्व्याधयो हेयत्वान्निकृष्टाः, विद्योपादेयत्वादुत्कृष्टेति सहचरभिन्नत्वम् ।

क्वचिदुत्कृष्टापकृष्टयोरेकत्रनिर्देशो यथा—

श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा ।

निशा शशाङ्केन धृतिः समाधिना नयेन चालङ्क्रियते नरेन्द्रता ॥

अत्र श्रुतबुद्ध्यादिभ्य उत्कृष्टेभ्य सहचरेभ्यो व्यसनमूर्खतयोर्निकृष्टतया सहचरभिन्नत्वम् ।

( ८६ ) 'आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥'

( ९० ) अत्र न रावण इत्येतावतैव समाप्यम् ।

( ८९ ) अस्थानस्थयुक्तत्वमुदाहरति—आज्ञेति । अनुपयुक्तस्थाने समापितवाक्यार्थत्वमस्थानयुक्तत्वम् । तच्च द्विविधम्-वाक्यार्थस्य समापनोपयोगे चाधिक्यम् अधिकोपयोगे समापनम्, तदुक्तम्—

"युक्ताधिक्ये विसर्गः स्यादाधिक्यं च समापने ।
अर्थे प्रकल्पिते यत्र सोऽस्थाने स्यात्समुज्झितः ॥" इति ।

तत्राद्ये आधिक्यकारणानुसन्धानविलम्बेन रसप्रतीतिविलम्बः, द्वितीये तु आधिक्यत्वेऽपि तदभावात् रसप्रतीतेरपूर्णत्वमितिदूषकताबीजम् । समाधानाभावादयमप्यनित्यो दोषः ।

तत्राद्योदाहरणमाज्ञेति । बालरामायणे प्रथमेऽङ्के "आश्चर्यम् एकोऽपि गरीयान् दोषः समग्रमपि गुणग्रामं दूषयति तथाहि" इत्युपक्रम्य जनकं प्रति तत्पुरोहितस्य शतानन्दस्योक्तिरियम् । यस्य रावणस्याज्ञा शक्रस्य देवेन्द्रस्य शिखामणेः मुकुटमणेः प्रणयिनी प्रेयसी मणिरिव तदाज्ञाऽपि शिखायां शक्रेण धार्यत इत्यर्थः । प्रणयिनीत्वेनारोपणाद्दम्पत्योरविच्छेदं बोधयति तथा शास्त्राण्येव नवं नूतनं चक्षुर्नेत्रम्, शास्त्रदृश्यैव कर्मकरणादितिभावः । शास्त्राणि चक्षुरितिबहुवचनैकवचनाभ्यां सर्वशास्त्रविषयैकसमूहालम्बनज्ञानं व्यञ्जयति । चक्षुर्नूतनत्वेन विषयज्ञानाधिक्यमभ्रान्तत्वं च प्रकटयति । तथा भूतानां समग्रप्राणिनां पत्यौ पिनाकिनि महेशे भक्तिः । एतेन सम्पदैश्वर्यप्रजाभोगित्वं सूचयति सम्पदादीनां शिवसेवाफलत्वेनोक्तत्वात् । तेन धनवत्त्वमपि वरगुणो लभ्यते । तथा लङ्केतिनाम दिव्यापुरी पदं निवासस्थानम् । तथा द्रुहिणस्य ब्रह्मणोऽन्वये कुले उत्पत्तिर्जन्म च । तत्तस्मात् अहो ! ईदृक् उक्तगुणगणसंयुतो वरो न लभ्यते दुर्लभ इत्यर्थः ।

"माता वरयते वित्तं पिता वरयते कुलम् ।
कन्या वरयते रूपं मिष्टान्नमितरे जनाः ॥"

मिष्टान्नं जनप्रियम् । तदा अस्मै सीता दीयतामित्यत आह—स्याच्चेदिति । एतानि सर्वाण्येवोत्कर्षहेतवः सन्त्येव चेद् यदि एष रावणो न स्यात् दुर्वृत्तत्वेन ख्यातनामा रावयति पादाजननेन लोकान् आक्रन्दयतीति तथाभूतश्च यदि न स्यादित्यर्थः । तदास्मै सीता दातव्यैव स्यादिति भावः । सर्वत्र सर्वस्मिन्नेव जनेषु सर्वे गुणाः क्व नु पुनर्जनपदे सन्ति ! अपि तु न क्वापीत्यर्थः तथाच सर्वेषां दोषमिश्रिता एव गुणा इत्यर्थः । रावण एव सर्वगुणशालितयोत्कृष्टः स्यात् । जगदाक्रन्दकारित्वेन तु बलवता दोषेणायमुपेक्षणीय इत्याशयः' । शार्दूलविक्रीडितं छन्दः, तल्लक्षणन्तूक्तं पूर्वमेव ( १६८ पृ० )

( ९० ) दोषं समर्थयति—अत्रेति । समाप्यं वाक्यमिति शेषः । तथाचात्र रावणपदेनैव अर्थान्तरसङ्क्रमिततया सर्वोद्वेजकत्वमुपस्थापयता नायं वरयोग्यः इति विवक्षितोऽर्थः पर्यवस्यति । अतोऽत्रैव वाक्यसमापनमुचितम् । यत्तु क्व नु पुनरित्यादिदोषस-

( ६१ ) 'हीरकाणां निधेरस्य सिन्धोः किं वर्णयामहे ।'

( ६२ ) अत्र रत्नानां निधेरित्यविशेष एव वाच्यः ।

( ६३ ) 'आवर्त एव नाभिस्ते नेत्रे नीलसरोरुहे ।
भङ्गाश्च वलयस्तेन त्वं लावण्याम्बुवापिका ॥'

( A ) अत्रावर्त एवेति नियमो न वाच्यः ।

---

अर्थनं तद्विवक्षितार्थस्य प्रातिकूल्यमावहति । ईप्सितस्यैव दोषसमर्थनं युक्तं न तु जिहासितस्येति भावः । एवञ्च क्व नु पुनरित्यादेरयोग्यसमर्थकवाक्यस्याभिधानादस्थानस्थयुक्तत्वमिति भावः ।

नच समाप्तपुनरात्तत्वम्, तत्र विशेषणस्योपादानात् इह तु विशेषस्येति, अधिकपदत्वे प्रतीतिसमकालमेवाधिक्यप्रतीतिः इह तु पश्चादिति ताभ्यां सहास्य भेदः । नच प्रकाशितविरुद्धान्तर्भावः स्थानविशेषयोगमनपेक्ष्य तस्य प्रवृत्तेः, अत्र तात्पर्यविरुद्धस्याभिधानाच्च ।

द्वितीयं यथा—

मातुलो माधवो यस्य पिता यस्य धनञ्जयः ।
स शेते समरे श्रीमानभिमन्युर्महाबलः ॥

अत्र "नियतिः केन बाध्यते" इत्यधिकं वक्तुमुचितम् ।

( ६१ ) अविशेषे विशेषं दर्शयति—हीरकाणामिति । सामान्ये वक्तव्ये विशेषकथनम् अविशेषे विशेषः । विवक्षितार्थप्रतीतिविलम्बेन रसप्रतीतेर्विलम्बनं दूषकताबीजम् । समाधानासम्भवादयमपि नित्यो दोषः ।

"वैकुण्ठञ्च परित्यज्य यत्र स्वपिति वै हरिः ।" इति मद्रचितोत्तरार्द्धम् ।

( ६२ ) दोषं दर्शयति—अत्रेति । अविशेषः सामान्यम् । एवञ्च सति दोषाभाव इति भावः ।

रत्ननिधेरितिसामान्ये वक्तव्ये हीरकनिधेरिति विशेषस्योक्तौ अविशेषे विशेषोक्तिरिति दोषः । तदा कीदृक्पाठो विधेय अत आह—अत्र रत्नानामिति ।

( ६३ ) अनियमे नियममुदाहरति—आवर्त्त इति । अनियमेन वक्तव्ये नियमाभिधानमनियमे नियमः । अनियमे नियमकथनप्रयोजनानुसन्धानविलम्बेन रसप्रतीतिविलम्बनं दूषकताबीजम् । समाधानासम्भवादयमपि नित्यो दोषः ।

हे प्रियतमे! ते तव नाभिः आवर्त्तः अम्भसां भ्रमिरेव नेत्रे लोचनद्वयं नीलसरोरुहे नीलकमलद्वयम्, वलयस्त्रिवल्यश्च तरङ्गा भङ्गाः, तेन कारणेन त्वं लावण्याम्बुनो वापिका दीर्घिका ।

( A ) अत्र नाभ्यादिषु आवर्त्तादयो रूप्यत्वेन विधेयास्तत्र नाभिरेवावर्त्त इति करणे आवर्त्तरूपणायोग्यस्य अन्यतरस्य व्यावर्त्तनार्थमेवकारो दातव्यः । एवम् "आवर्त्त एव" इति करणे तु नाभ्यां रूपणायोग्यवापीधर्मान्तरभावेन व्यावर्त्तनीयाभावात्तादृशनियमार्थक एवकारो न युक्त इति दर्शयति—अत्रेति । नियमो नियमार्थक एवशब्दः । न वाच्यः फलाभावादितिभावः । नच नाभिरित्येवं नाभिपदोत्तरमुचितस्यैवकारस्यावर्त्तोत्तरपातादस्थानस्थपदत्वं शङ्क्यम्, नियमोक्तित्वेन विशेषात् तद्भेदस्य तत्र निवेशनीयत्वात् ।

( ६४ ) 'यान्ति नीलनिचोलिन्यो रजनीष्वभिसारिकाः ।'
( ६५ ) अत्र तमिस्रास्विति रजनीविशेषो वाच्यः ।
( ६६ ) 'आपातसुरसे भोगे निमग्नाः किं न कुर्वते ।'
( ६७ ) अत्र आपातमेवेति नियमो वाच्यः ।
( ६८ ) ननु वाच्यस्यानभिधाने 'व्यतिक्रमलवम्-इत्यादावपेरभावः, इह चैवकारस्येति कोऽनयोर्भेदः । अत्राह—'नियमस्य वचनमेव पृथग्भूतं

उदाहरणान्तरं यथा—

वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते ! तेऽम्बुपानाभिलाषः ॥

अत्र शोण एवेति नियमो न वाच्यः, तथाऽऽरोपे नियमासम्भवात्

( ६४ ) विशेषविशेषमुदाहरति—यान्तीति । विशेषे वक्तव्ये सामान्येनाभिधानं विशेषेऽविशेषः । अनुपपत्तिबोधेन रसप्रतीतिप्रतिबन्धो दूषकताबीजम् । अयमपि दोषो नित्यः प्रतिप्रसवाभावात् ।

"अन्येनालक्ष्यसञ्चारा निःशब्दीकृतभूषणाः ।" इति मत्पूर्वार्द्धम् ।

नीलनिचोलिन्यः अन्धकारे यथा कोऽपि द्रष्टुं न शक्नुयात् तदर्थं परिहितनीलप्रच्छद-पटाः अभिसारिकाः पूर्वोक्तस्वरूपा नायिका रजनीषु यान्ति गच्छन्ति ।

( ६५ ) दोषमुपपादयितुमाह—अत्रेति । तमिस्रासु अन्धकारयुक्तरात्रिषु । "तमिस्रा तामसी रात्रिः" इत्यमरः । वाच्य इति । एवंसति अन्धकारतुल्यस्वरूपतया नीलप्रच्छद-पटानां लोकैरदृश्यतया प्रच्छन्नेनैव गमनमुपपद्यत इति नोक्तदोष इति भावः । रजनीष्वि-तिसामान्याभिधाने तु ज्योत्स्नायुक्तरात्रीणामपि प्राप्तेः तासु नीलप्रच्छदपटानां सौल-भ्येन दृश्यतया प्रच्छन्नगमनानुपपत्तिरितिकवेरभिमताप्रतीतेरुक्तदोष एवेत्यवधेयम् ।

( ६६ ) नियमे अनियमं दर्शयति—आपातेति । नियमो निश्चयस्तेन वक्तव्ये अनि-यमेनाभिधानं नियमे अनियमः । विवक्षितार्थप्रतीतिविलम्बेन रसप्रतीतिविलम्बो दूषक-ताबीजम् । समाधानासम्भवादयमपि नित्य एव दोषः ।

"नास्ति लोकः पर इति मत्वा हृदि निरन्तरम् ।" इति मद्रचितपूर्वार्द्धम् ।

आपातसुरसे प्रथमत एव सुखदायिनि भोगे विषयोपभोगे निमग्ना एकान्तमासक्ता-जना किं न कुर्वते अकार्यमेव कुर्वत एवेत्यर्थः ।

( ६७ ) दोषमुपपादयति—अत्रेति । आपात एव उपस्थितिमात्रमेव । वाच्य इति । सर्वकालसुरसत्वे तन्निमज्जनं नाकार्यम्, अतः सर्वकालव्यावर्त्तनाय आपातत एवेति नि-यमो वाच्य इत्यर्थः । तथासति विवक्षितार्थप्रतीतेर्न दोष इति भावः ।

( ६८ ) वाच्यानभिधानान्नियमे अनियमस्य भेदं निरूपयितुं शङ्कते—नन्विति । इह चैवकारस्येत्यत्राभाव इत्यन्वयः । आह कश्चिदिति शेषः । अवचनमनभिधानमेव पृथग्भूतं विशेषभूतं सत् नियमपरिवृत्तेः नियमेऽनियमसंज्ञकदोषस्य । तथाच नियमद्यो-तकपदानभिधाने नियमेऽनियमः, तदितरद्योतकपदानभिधाने तु वाच्यानभिधानमिति

नियमपरिवृत्तेर्विषयः' इति । तन्न । तथा सत्यपि द्वयोः शब्दार्थदोषतायां नियामकाभावात् ।

( ९९ ) तत्का गतिरिति चेत् ? 'व्यतिक्रमलवम्' इत्यादौ शब्दोच्चारणानन्तरमेव दोषप्रतिभासः । इह त्वर्थप्रत्ययानन्तरमिति भेदः ।

(१००) एवं च शब्दपरिवृत्तिसहत्वासहत्वाभ्यां पूर्वैराहतोऽपि शब्दार्थदोषविभाग एवं पर्यवस्यति—यो दोषः शब्दपरिवृत्त्यसहः स शब्ददोष एव । यश्च पदार्थान्वयप्रतीतिपूर्वंबोध्यः सोऽपि शब्ददोषः । यश्चार्थप्रतीत्यनन्तरं बोध्यः सोऽर्थाश्रय इति ।

---

सामान्यविशेषभावेनोभयोर्भेद इति तदाशयः । खण्डयति–तन्नेति । द्वयो र्वाच्यानभिधादोषः नियमानियमदोषयोरित्यर्थः । शब्दार्थदोषतायामिति । वाच्यानभिधानस्य शब्ददोषत्वे नियमानियमदोषस्य चार्थदोषत्वे इत्यर्थः । नियामकाभावात् द्वयोरपि शब्दाभावसम्बद्धतया शब्ददोषत्वस्यैव भवितुं शक्यत्वेन नियमानियमदोषस्य अर्थदोषत्वे निर्णयकाभावादित्यर्थः ।

( ९९ ) तदिति । का गतिरनयोर्भेदप्रतिपादने कः सिद्धान्तः । समाधत्ते—व्यतिक्रमलवमिति । शब्दोच्चारणानन्तरमेव व्यतिक्रमस्य लवमपि इत्येवमाकाङ्क्षया उच्चारणानन्तरमेव दोषप्रतिभासः दोषप्रतीतिः, इह तु आपातसुरस इत्यादिनियमानियमे । अर्थप्रत्ययानन्तरमिति । आपातसुरसत्वं प्रथमं प्रतीयत एव तदनन्तरमेव सर्वदा सुरसत्वव्यावृत्तिरित्यर्थप्रतिसन्धानमित्यर्थः । भेद इति । एवञ्चोभयोःशब्दार्थदोषतायामपि नियामकोपपत्तिरित्याशयः ।

( १०० ) अनुभावाच्चेदमभिहितम् । परमार्थतस्तु क्वचित् क्वचिच्छब्दार्थदोषतायां शास्त्रकर्तुरिच्छैव नियामिका अन्यथा वाक्यगतविधेयाविमर्श दुष्क्रमे च द्वयोः शब्दरचनावैपरीत्याधीनत्वेऽपि एकः शब्ददोषोऽपरोऽर्थदोष इत्यत्र का विनिगमना ! इत्थं स्वयमभिहितः शब्दार्थदोषतानियकोऽपि क्वचिद्व्यभिचरति, अप्रयुक्तत्वादिशब्ददोषाणामर्थप्रतीत्यनन्तरमेवावगमात्, कष्टार्थत्वरूपार्थदोषस्य प्रथममर्थानवगमाच्छब्द एवार्थबोधक इतिज्ञानोदयाच्छब्दप्रतीत्यनन्तरमेवावगमाच्च । अतः प्राचीनैरुक्तो नियामकः क्वचिच्चास्मदभिहिते नियामक इति द्विविध एव नियामक इत्युपपादयितुमाह—एवञ्चेति । तथाचास्मन्मते शब्दार्थयोः प्रतीत्यानन्तर्येण शब्दार्थदोषविभागस्य सिद्धान्ते चेत्यर्थः । शब्दपरिवृत्तिसहत्वासहत्वाभ्यां शब्दपरिवर्त्तने दोषस्य वर्त्तमानत्वावर्त्तमानत्वाभ्यामित्यर्थः । पूर्वैः प्राचीनैः । एवञ्च दोषाणामन्वयव्यतिरेकानुसारित्वात् यो यो दोषस्तत्तच्छब्दपरिवर्त्तनेऽपि केवलमर्थमवलम्ब्य वर्त्तते स सोऽर्थदोषः, यो यस्तु दोषः केवलं शब्दावलम्बिततया तत्तच्छब्दपरिवर्त्तनेऽपि न स्थीयते स स शब्ददोषः इति प्राचामभिप्रायः । एवं पर्य्यवस्यति युक्त्या वक्ष्यमाणविधिना परिणमत इत्यर्थः । वक्ष्यमाणविधिरेव दर्शयति—यो दोष इति । शब्दपरिवृत्त्यसहः अर्थसाम्ये इतिशेषः । शब्ददोष एव यथा "पल्लवाकृतिरक्तोष्ठी" इत्यत्र पल्लवाकारेतिकरणेऽपि शब्ददोष एवेत्यर्थः । निरर्थकश्रुतिकट्वादिवर्णानां त्वर्थसाम्याभावान्नैतन्नियमविषयत्वं किन्तु शब्दोच्चारणानन्तरप्रतीयमानरूपत्वोक्तनियमविषयत्वमेव । पदार्थान्वयेति । पदानां येऽर्थास्तेषामन्वयप्रतीतेः मिथःसम्बन्धज्ञानात् पूर्वं बोध्यः, तत्तच्छब्दश्रवणानन्तरमेवज्ञानगम्य

( १ ) एवं चानियमपरिवृत्तित्वादेरप्यधिकपदत्वाद्भेदो बोद्धव्यः ।

( २ ) अमतपरार्थत्वे तु 'राममन्मथशरेण–' इत्यादौ नियमेन वाक्यव्यापित्वाभिप्रायाद्वाक्यदोषता ।

( ३ ) अश्लीलत्वादौ तु न नियमेन वाक्यव्यापित्वम् ।

( ४ ) 'आनन्दितस्वपक्षोऽसौ परपक्षान्हनिष्यति ॥'

( ५ ) अत्र परपक्षं हत्वा स्वपक्षमानन्दयिष्यतीति विधेयम् ।

---

इत्यर्थः । यथा न्यूनाधिकपदत्वादौ । एवं हन्तीत्यस्यासमर्थेऽपि पूर्वोक्त एव नियमः तमेव स्वोक्तनियममुपपादयति—यश्चार्थेति । अर्थाश्रयइति । स्वप्रतीत्यनन्तरमेवावगम्यमानतया केवलार्थघटितत्वादितिभावः । इतीति । इत्यनेन विधिना पर्य्यवस्यतीति पूर्वेण सम्बन्धः ।

( १ ) अनियमपरिवृत्यादेरर्थदोषताऽधिकपदत्वादेः शब्ददोषतेत्यत्राप्यस्मदभिहितभेदकादेव भेदो बोध्य इति दर्शयितुमाह—एवञ्चेति । किञ्चेति चार्थः । एवमनेन विधिना । अनियमपरिवृत्तित्वम् अनियमे नियमः, आदिपदादपुष्टत्वास्थानयुक्तत्वादेः परिग्रहः । द्वितीयादिपदान्न्यूनपदत्वसमाप्तपुनरात्तत्वादेर्ग्रहणम् । एवञ्च अनियमे नियमादावर्थप्रतीत्यनन्तरमेव दोषप्रतिभासः अधिकपदत्वे तु शब्दश्रवणानन्तरमेवेत्यादिरूपो भेदोऽवगन्तव्यः ।

( २ ) नन्वेवममतपरार्थत्वादावर्थप्रतीत्यनन्तरमेव दोषप्रतिभासादर्थदोषत्वमेव स्यात् तत्कथं वाक्यदोषमध्ये परिगणनमित्यत आह–अमतेति । "राममन्मथशरेण" इत्यादाविरयनन्तरार्थप्रतीत्यनन्तरबोध्यत्वेऽपीतिशेषः । नियमेन अवश्यम्भावेन वाक्यव्यापित्वाभिमतसमस्तपद्यरूपवाक्यान्वयव्यतिरेकानुविधायित्वात् तथाच अमतपरार्थता वास्तविकोऽर्थदोष एवेत्यवधेयम् ।

( ३ ) अथैवं "हन्तुमेव प्रवृत्तस्य" इत्यादावपि अश्लीलार्थस्य वाक्यव्यापित्वाद्वाक्यदोषत्वमेवोचितं तत्कथमर्थदोषत्वमित्यत आह–अश्लीलत्वादाविति । अर्थाश्लीलत्वादावित्यर्थः । नियमेन अवश्यम्भावेन । हन्तुमेवेत्यादौ क्वचिदवाक्यव्यापित्वेऽपि क्वचिद् विवरैषिण इत्यादौ पदनिष्ठत्वेऽपि सम्भवान्न वाक्यदोषता किन्त्वर्थगत एवाश्लीलतादोष इति भावः । एवम् "अकाले प्रस्थितं कान्तम्" इत्यादौ केवलप्रस्थितपद एवामङ्गलरूपाश्लीलत्वसत्त्वात् वाक्यव्यापित्वाभावेनार्थगताश्लीलत्वं दोषः ।

( ४ ) विध्ययुक्ततां दर्शयति–आनन्देति । विधेयतात्पर्य्याप्त्ययोग्ये तात्पर्य्यार्पणत्वं तत्त्वम् । विधिरत्र समापिका क्रिया । विवक्षितार्थस्यानिर्वाह एव दूषकताबीजम् । समाधानासम्भवादयमपि नित्यो दोषः ।

मोदितास्तिकसन्दोहः कल्कीव नतु नास्तिकान् । इत्यवशिष्टपादः ।

अत्र परपक्षहननस्वपक्षानन्दयोरुभयोर्विधेयत्वेऽपि परपक्षहननानन्तरमेव स्वपक्षानन्दजननस्येष्टतया, आनन्दनक्रियायामेव तात्पर्य्याप्त्यौचित्ये परपक्षहननक्रियायां तत्करणाद्विध्ययुक्तता । अथैवं विधेयाविमर्शेन सहास्य को भेद इति चेत् ? तत्र युक्तस्यैव विधिः परंत्वविमर्शमात्रम् । अत्र तु अयुक्तस्यैव विधिरिति भेदः । यद्वा शब्दश्रवणानन्तरमेव विधेयाविमर्शबोधः, अत्र तु अर्थबोधानन्तरमेवेतिभेदः ।

( ५ ) अत्रेति । विधेयं विधातुं योग्यमित्यर्थः । एवं सति नोक्तदोष इति भावः ।

( ६ ) 'चण्डीशचूडाभरण ! चन्द्र ! लोकतमोपह ! ।
विरहिप्राणहरण ! कदर्थय न मां वृथा ॥'
( ७ ) अत्र विरहिण उक्तौ तृतीयपादस्यार्थो नानुवाद्यः ।
( ८ ) 'लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किंचिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिति गतेवाम्बुधिं कीर्तिः ॥

( ६ ) अनुवादायुक्ततां दर्शयति—चण्डीशेति । अनुवादायुक्तः अयुक्तानुवाद इत्यर्थः । अयुक्तत्वं चात्र विध्यननुगुणत्वम् । अनुवादश्च सिद्धस्यैव कथनम् । विधिविरुद्धत्वमेव दूषकताबीजम् । अयमपि नित्यो दोषः । पाठपरिवर्तनमन्तरेण समाधानासम्भवात् ।

चन्द्रं प्रति विरहिण्या उक्तिरियम् । हेचण्डीशचूडाभरण ! चण्डीशस्य पार्वतीपतेः चूडाभरणः शिखालङ्कारस्तत्सम्बोधने रूपम् हे चन्द्र ! हेलोकतमोपह संसारान्धकारनिवारक ! हेविरहिप्राणहरण वियोगिप्राणापहारक ! मां विरहिणीं वृथा न कदर्थय कामोद्दीपनेनानर्थकं नोत्पीडय ।

अत्र विरहिण्या नायिकायाः स्वकदर्थननिवारणप्रार्थनायां विरहिप्राणहरणत्वेन अनुवादो न युक्तः विरहिविरोधित्वेन तत्कदर्थननिवारणायोगात् । प्रकरणानुसन्धानेनानुवादायुक्तताप्रतीतिरित्यर्थं दोषतेत्यवधेयम् ।

( ७ ) अतएव समाधानमुपपादयितुमाह—अत्रेति । तृतीयपादस्यार्थं इति । प्रथमविशेषणद्वयेन तु महत्त्वं ख्याप्यते किन्तु विरहिप्राणहरण इति तृतीयपादगतसम्बोधनस्यार्थं इत्य :। नानुवाद्यो न चन्द्रविशेषणत्वेनोपन्यसनीयः। एवञ्च "विरहिप्राणहरण" इत्यस्य स्थाने "संसारानन्ददातः" इत्युक्तौ तु नायं दोष इति भावः ।

( ८ ) निर्मुक्तपुनरुक्तत्वदोषं दर्शयति—लग्नमिति । आदौ निर्मुक्तः समाप्तः पश्चात् पुनरुक्तः पुनः प्रतिपादितः तस्य भावः । कारकस्य क्रियान्वयेन समाप्तावपि पुनस्तत्कारकोपादानं निर्मुक्तपुनरुक्तत्वम् । ननु समाप्तपुनरात्तत्वात्को भेद इति चेत् ? विशेषणमात्रेण पुनरुपादानं समाप्तपुनरात्तता, विशेष्यीभूतकारकान्तरेण पुनरुपादाने तु निर्मुक्तपुनरुक्ततेति भेदः । लोके हि त्यक्तस्य भक्ष्यादेः पुनरुपादानं वैरस्यमावहति तद्वदत्र सहृदयहृदयवैमुख्यं दूषकताबीजम् । अयमपि नित्यो दोषः प्रतिप्रसवाभावात् । राज्ञः प्रशंसेयम् । रागो रुधिरलौहित्यम् तेन आवृतं लिप्तम् अङ्गं विशिष्टलोहरेखाविशेषो यस्याः अन्यत्र रागोऽनुरागस्तेन आवृतानि व्याप्तानि अङ्गानि अवयवा यस्यास्तथाभूतया ययैव असियष्ट्या कृपाण्या अत्र स्त्रीलिङ्गेन नायिकात्वारोपो बोध्यस्तेन असियष्टिवत् कयाचित् स्वैरिण्या चेत्यर्थः, इह संग्रामे अरीणां शत्रूणां कण्ठे सुदृढं यथास्यात्तथा लग्नं शिरःकर्त्तनाय अन्यत्र आलिङ्गनाय च संसक्तम् । तथा या चासियष्टिरेव या च नायिका इह सङ्ग्रामे मातङ्गानां हस्तिनामुपरि स्वयमेव गत्वा खण्डनाय पतन्ती संसजन्ती सती परपुरुषः शत्रुभटैः दृष्टा अन्यत्र मातङ्गानां चाण्डालानामुपरि "मातङ्गः श्वपचे गजे" इति मेदिनी, स्वयमेव गत्वा रमणाय पतन्ती परपुरुषैः उदासीनजनैः रुत्कृष्टजनैर्वा दृष्टा । तेनोदासीनाद्विजनोपलम्भान्मिथ्यात्वनिरासः । तत्सक्तः तस्यामसियष्ट्यां स्वैरिण्यां नायिकायां च संसक्तः, सम्बद्धोऽनुरक्तश्च अयं स्वजामाता मम स्वामी

( ९ ) अत्र विदितं तेऽस्त्वित्यनेन समर्पितमपि वचनं तेनेत्यादिना पुनरुपात्तम् ।

अथ रसदोषानाह—

( १० ) रसस्योक्तिः स्वशब्देन स्थायिसंचारिणोरपि ॥ १२ ॥
परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः ।
आक्षेपः कल्पितः कृच्छ्रादनुभावविभावयोः ॥ १३ ॥
अकाण्डे प्रथनच्छेदौ तथा दीप्तिः पुनः पुनः ।
अङ्गिनोऽननुसंधानमनङ्गस्य च कीर्तनम् ॥ १४ ॥

---

राजा, किञ्चित् मत्सुखादिकं न गणयति न विचारयति । अपि च तेन राज्ञा भृत्येभ्यः स्वसेवकेभ्योऽहं दत्तास्मि इति ते तव मत्पितुः समुद्रस्य विदितमवगतमस्तु । अनन्तरञ्च स्वदुहितुः क्लेशनाशाय यद्विधेयं भवति तद्विधेयमिति भावः । श्रियः समुद्रोत्पन्नायाः लक्ष्म्याः नियोगात् "मत्पितर्य्येवं निवेदय" इत्येवं रूपात् शासनात् इति पूर्वोक्तं गदितुं तत्सन्देशं वक्तुमिव यस्य कीर्त्तिः श्रीसहचरी च अम्बुधिं समुद्रं गता प्राप्ता ।

अत्र भङ्गिविशेषशौर्य्यदातृत्वयशसामुत्कर्षो वर्णितः । व्याजस्तुतिरलङ्कारः । स्रग्धराच्छन्दः ।

( ९ ) दोषं समर्थयितुमाह-अत्रेति । तेनेत्यादिना "तेन दत्ताऽस्मि भृत्येभ्य" इत्यनेन तथा च "न किञ्चिद्गणयति" इत्यन्तेन कर्मकारकेण विदिक्रियान्वये समाप्तेऽपि भृत्येभ्य इत्यादिना पुनः कर्तृकर्मकारकाद्यभिधानमिति निर्मुक्तपुनरुक्तत्वं दोष इति भावः ।

( १० ) रसदोषान्निर्दिशति—रसस्येति । स्वशब्देन स्वस्य रसस्य शृङ्गारादेर्वा शब्दस्तद्वाचकस्तेन तद्द्वारेत्यर्थः, उक्तिः कथनं वाच्यतेति यावत् दोष इत्यन्वयः, स्थायिसञ्चारिणोः स्थायी च सञ्चारी चेति तयोस्तथोक्तयोर्भावयोरपि स्वशब्देनोक्तिरित्यन्वयः । तथाच रसस्य रसशब्देन शृङ्गारादिशब्देन वा स्थायिभावस्य स्थायिभावशब्देन रत्यादिशब्देन वा सञ्चारिभावस्य सञ्चारिशब्देन निर्वेदादिशब्देन वोपादाने त्रयो दोषा इत्यर्थः । वाच्यत्वाभिसन्धानेन शब्दप्रयोग एवायं दोषः, तदनभिसन्धानेन तु न दोषः । यथा—

"शृङ्गारः सखि ! मूर्त्तिमानिव मधौ मुग्धो हरिः क्रीडति" इत्यादौ ।

अन्वयव्यतिरेकाभ्यामनुभावादिद्वारैवोपस्थितिः चमत्कारिणी न तु स्वशब्देनेत्याशयः । अत्रेदम्बोध्यम्—रसस्य आस्वादात्मकस्य सम्यवृत्तितया अवाच्यतया च रसशब्देनात्र आस्वाद्यमानोऽनुभावादिसंवलितः स्थायिभाव उच्यते, रसादिशब्दस्य "रस्यते आस्वाद्यते" इतिव्युत्पत्त्या तत्रैव शक्तेः । एवञ्च निर्विशेषस्थायिभावस्य स्वशब्दवाच्यत्वेऽयं दोषः । रत्यादिपदानां केवलरत्यादावेव शक्तेरिति नाभेद इति । परिपन्थिनः प्रतिकूलस्य विरुद्धस्वभावस्येतियावत् रसस्य अङ्गम् अङ्गस्वरूपो यो विभावादिस्तस्य परिग्रह उपादानम् । कृच्छ्रात् कष्टानुसन्धेयप्रकरणपर्य्यालोचनया अनुभावविभावयोः आक्षेपः प्रतीतिः कल्पितः । अकाण्डे काण्डादवसराद्भिन्नस्तत्र अनुचितकाल इत्यर्थः । रसस्य प्रथनं विस्तारः तथा छेदो भङ्गकरणं च अन्तरे त्याग इत्यर्थः । तथा रसस्य पुनः पुनर्दीप्तिः प्रकाशनम् । अङ्गिनः प्रधानरसस्य अननुसन्धानम् अप्रकाशनम् । अनङ्गस्य प्रकृतानुपकारिणः

अतिविस्तृतिरङ्गस्य प्रकृतीनां विपर्ययः।
अर्थानौचित्यमन्यच्च दोषा रसगता मताः।

( ११ ) रसस्य स्वशब्दो रसशब्दः श्रृङ्गारादिशब्दश्च। क्रमेण यथा—
( १२ ) 'तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः कोऽप्यजायत।'

रसस्य कीर्त्तनञ्च। अङ्गस्य अङ्गरूपरसस्य अतिविस्तृतिः अत्यन्तं विस्तारः। अस्य अङ्गिप्रकर्षकत्वे पुनरदोषता यथाह दण्डी—

"वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि।
तज्जयान्नायकोत्कर्षकथनं च धिनोति नः॥" इति।

प्रकृतीनां धीरोदात्तादीनां नायकादीनां तत्स्वभावानाञ्च विपर्ययो व्यत्ययो व्यतिक्रम्य वर्णनमिति यावत् इदमेकमनौचित्यम् अर्थानौचित्यम् अर्थानां पदार्थानाम् अनौचित्यम् औचित्यस्याभावः। अन्यत् प्रकृतिविपर्ययभिन्नञ्चेति दोषा रसगता मताः। तेन रसस्य स्वशब्दवाच्यत्वम्, स्थायिनः स्वशब्दवाच्यत्वम्, सञ्चारिणः स्वशब्दवाच्यत्वम्, परिपन्थिरसाङ्गग्रहणम्, कष्टाक्षिप्तानुभावत्वम्, कष्टाक्षिप्तविभावत्वम्, अकाण्डे रसप्रथनम्, अकाण्डे रसच्छेदः, पुनः, पुना रसोद्दीप्तिः अङ्गिरसाननुसन्धानम्, अनङ्गरसकीर्त्तनम्, अङ्गरसातिविस्तृतिः, प्रकृतिविपर्ययः, अर्थानौचित्यञ्चेतिनामतश्चतुर्दश १४ रसदोषा अवगन्तव्याः।

(११) स्वशब्देनेतिपदं व्याचिख्यासुरुत्थापयति—रसस्येति। स्वस्य रसस्य बोधकः शब्दः स्वशब्दः स च विशेषानभिधानात् विनगमनाविरहेण सामान्यरसबोधको विशेषरसबोधकश्चेत्युभयमप्युपादेयमित्याशयेनाह—स्वशब्दो रसशब्दश्चेति। तथाच रसस्य स्वशब्दवाच्यत्वं नाम रसशब्देन श्रृङ्गारादिशब्देन वा रसस्योपस्थाप्यत्वम् स्थायिसञ्चारिणोरपि स्वशब्दवाच्यत्व एवमेव लक्षणमवगन्तव्यम्। सूक्ष्मवस्त्राच्छादितः कामिनीकुचकलश इव व्यञ्जनावृत्तिबोध्यः किञ्चिद्भ्रमेणैव प्रतीयमानो रसो विलक्षणपरमानन्दं जनयति, स्वच्छालोकान्तःपाति निर्मुक्तातिस्फुटः स इव साक्षादभिधीयमानो विना परिश्रमं प्रतीयमानो रसश्चमत्कारिताशून्य इव प्रतीयत इति रसप्रकर्षप्रतिबन्धकत्वमत्रदूषकताबीजम्। स्थायिसञ्चारिणोः स्वशब्दवाच्यत्वेऽप्येवमेवानुसन्धेयम्। प्रतिप्रसवासम्भवादनित्य एवायं दोषः, स्थायिनः स्वशब्दवाच्यत्वदोषोऽपि तथा।

(१२) तत्र रसस्य सामान्यतो रसशब्देन वाच्यत्वं दोषमुदाहरति—तामिति। सम्पूरितास्य पूर्वार्द्धं यथा—

"पीयूषवर्षिणीं शश्वत् साक्षाद्रतिमिवाधुना"।

न अस्माकम्, कोऽपि विलक्षणः प्रतिपादयितुमशक्यः।

अत्र द्वितीयपादे रसशब्दोपादानात् रसस्य सामान्यतःस्वशब्दवाच्यतादोषः। यद्यपि रसपदोपात्ततत्तद्रसाक्षिप्तस्वविभावानुभावव्यभिचारिभिर्व्यज्यते रसः तथापि रसपदवाच्यत्वाद् आस्वादापकर्ष इति भावः। अत्र विकारः कोऽप्यजायत इति पाठे तु न दोषः।

"तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकिताम्।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः॥"

इतिप्रकाशोदाहरणस्य निष्पीडनम्।

( १३ ) 'चन्द्रमण्डलमालोक्य शृङ्गारे मग्नमन्तरम् ।'

स्थायिभावस्य स्वशब्दवाच्यं यथा—

( १४ ) 'अजायत रतिस्तस्यास्त्वयि लोचनगोचरे ।'

---

( १३ ) रसस्य विशेषतः शृङ्गारशब्देन वाच्यत्वं दोषमुदाहरति—चन्द्रेति । अस्य पूर्वार्द्धं यथा—

"भावगम्भीरहसितं चकोरप्रियदर्शनम्" इति ।

आलोक्य..."स्थितवतो मम" इति शेषः । आन्तरम् अन्तःकरणम् । शृङ्गारे तत्संज्ञके रसे तत्प्रवाह इति यावत् ।

अत्र रसस्य विशेषतः शृङ्गारशब्दोपादानात् स्वशब्दवाच्यत्वम् । यद्यपि शृङ्गारपदोपात्तसम्भोगशृङ्गाररसाक्षिप्तस्वविभावानुभावव्यभिचारिभिर्व्यज्यते रसस्तथापि शृङ्गारशब्दवाच्यत्वादपकर्ष इति भावः । द्वावप्यनित्यौ दोषौ, विभावादिनाप्रतीतस्यानुवादे तदसम्भवात् । अत एव—

स्थविरमहितादेशाद्दूरं प्रयातुमुपस्थितं
　　कथमपि बलात्प्राणेशानं निरोद्धुमनीश्वरा ।
चकितचकितं भूयो भूयो निरीक्ष्य वतावला
　　रहसि कमपि ध्याना नीतं रसं पिबतिस्म सा ॥
धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
　　रूपे देवोऽप्ययमनुपमो दत्तपत्रः स्मरस्य ।
जातं दैवात्सदृशमनयोः सङ्गतं यत्तदेतत्
　　शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥

इत्यादौ "रसशृङ्गारा" दिशब्दैः रसस्य स्वशब्दवाच्यत्वं सङ्गच्छते ।

"आलोक्य कोमलकपोलतलाभिषिक्त-
　　व्यक्तानुरागसुभगामभिराममूर्त्तिम् ।
पश्यैष बाल्यमतिवृत्य विवर्त्तमान—
　　शृङ्गारसीमनि तरङ्गितमातनोति ॥

इतिप्रकाशोदाहरणोपजीव्यम् ।

( १४ ) अजायत इति । मत्पूरितपूर्वार्द्धं यथा—

"मनोभवविनोदार्थमागतेऽमृतवर्षिणि ।

त्वयि सुन्दर इति शेषः । लोचनगोचरे दृष्टे सतीत्यर्थः । तस्या मम सख्या इत्यर्थः । रतिरनुरागः ।

अत्र रतिशब्दोपादानात् शृङ्गारस्थायिभावस्य स्वशब्दवाच्यत्वम् ।

शोकस्थायिभावस्य स्वशब्दवाच्यत्वं यथा—

एकत्र हन्त ! विरुवन्ति सुहृज्जनास्ते निघ्नन्ति तांश्च यमदस्युभटाः परत्र ।
अन्तःस्वदुष्कृतफलेन पचन्ति तप्तास्तान् पश्यतोऽपि हृदयं न भिनत्ति शोकः ॥
एवमन्यस्थायिभावेऽप्यूह्यम् ।

( १५ ) व्यभिचारिणः स्वशब्दवाच्यत्वं यथा—
'जाता लज्जावती मुग्धा प्रियस्य परिचुम्बने ।'

( १६ ) अत्र प्रथमे पादे 'आसीन्मुकुलिताक्षी सा' इति लज्जाया अनुभावमुखेन कथने युक्तः पाठः ।

---

परिहसतु दुरात्मा दुर्गतिर्वा वृणोतु
परिभवतु निकामं यश्च कश्चिज्जनो वा ।
छुरतु कुलिशपाणिर्हन्तु मां वा कृतान्त—
स्तदपि जयतु सोऽन्तः स्थाय्यनन्यः प्रसादः ॥

इत्यत्र पुनः स्थायीतिप्रसादविशेषणतया प्रतीयते इति नात्र दोष इति ज्ञेयम् ।

( १५ ) व्यभिचारिणो व्यभिचारिभावस्य । जातेति । मत्पूरितपूर्वार्द्धं यथा—
बुभुक्षिताऽपि सुचिरादुत्थिताऽपि क्वचिद्गृहे ।" मुग्धाऽप्राप्तयौवना नायिका प्रियस्य प्रियसम्बन्धिन इत्यर्थः । अधरस्येति शेषः । परिचुम्बने क्रियमाणे सतीति शेषः ।

अत्र लज्जाशब्दोपादानाद्व्यभिचारिभावस्य स्वशब्दवाच्यत्वम् । "क्वचिदुक्तौ स्वशब्देन न दोषो व्यभिचारिणः" इतिवक्ष्यमाणप्रतिप्रसवादयमप्यनित्यो दोषः ।

( १६ ) समाधानमुपपादयति—अत्रेति । अत्र उदाहृते वाक्ये । अनुभावमुखेन मुकुलिताक्षत्वरूपानुभावद्वारा । तत्समयेऽक्षिसङ्कोचस्य लज्जाजन्यतया तदनुभावत्वमित्यवधेयम् ।

अत्र पुत्रः—व्यभिचारिणो हि स्वस्वानुभावव्यक्ता एव सहृदयानामास्वाद्याः । इह च यत्रैकत्र व्यभिचारिणामनुभावमुखेन वर्णनं स्वशब्देन स्वभिधानं तत्र न रसादिमात्रदोषः, किन्तु अधिकपदाख्यो वाक्यदोषोऽपि । यथा—

'लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता' इति ।

व्रीडादिशब्दोपादानाद्दोषत्वं यथा—
सव्रीडा(क)दयिताऽऽनने सकरुणा मातङ्गचर्माम्बरे

---

( क ) अत्र प्रदीपकारास्तु—अत्र व्रीडादयो व्यभिचारिभावाः स्वशब्देनोपात्ताः । न च स्वशब्देनोपात्तेषु व्यभिचार्यादिष्वास्वादसम्भवोऽनुभूयते, किन्तु अनुभावादिमुखेनैव व्यक्तेषु तस्मादास्वादानुपपत्तिर्दोषबीजमितिसम्प्रदायः । तत्रेदमालोचनीयम्—एतावता शब्दवाच्यतया दोषत्वमेव तावद् दुर्लभम् दूरे पार्थक्येन दूरतरे साक्षात्, तथाहि—अनुभावादीनामुपस्थितावियं रसप्रतिबन्धकताऽभिमता, तदनुपस्थितौ वा, अन्त्ये कारणाभावादेवास्वादाभावो न तु वाच्यत्वकृतः सत्येव कारणचक्रे कार्यानुत्पादस्य प्रतिबन्धकता व्यवस्थापकत्वात्, तथा च न्यूनपदत्वमनभिहितवाच्यता वा दोषः, न त्वियम् । आद्येऽनुभावादित एव रसव्यक्तिरिति किं तच्छब्देनेति वैयर्थ्यमात्रं दोषः । वयन्त्वालोचयामः—अनुभावादीनामुपस्थितावेव भावा ( भावरसा ) दीनां शब्दवाच्यतयाऽऽस्वादोपघातः प्रतीयत इति तस्याः पृथग्दोषत्वम्, अतएवौत्सुक्यादीनां शब्दवाच्यता न दोषः तत्रास्वादविघाताप्रतीतेः । नच वाच्यमेवानुभावोपादानेऽपि किमिति नोदाहृतमिति, तदुपादानस्थले भावादि(व्यभिचारिरसस्थायिभाव)शब्दानां वैयर्थ्यमपीत्यसङ्कराभिप्रायेण तथोदाहरणात्, उदाहृते त्वनुभावाक्षेपकतया वैयर्थ्याभावात् । न चैवमुक्तोदाहरणविरोधस्तत्रानुभावाद्यनुपादानादिति वाच्यम्—

( १७ ) 'मानं मा कुरु तन्वङ्गि ! ज्ञात्वा यौवनमस्थिरम् ।'

( १८ ) अत्र यौवनास्थैर्यनिवेदनं शृङ्गाररसस्य परिपन्थिनः शान्तरसस्याङ्गं

---

सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुताऽवलोकनविधौ दीना कपालोदरे
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः ॥

एवमन्यत्राऽप्यूह्यम् ।

( १७ ) एवं रसादीनां स्वशब्दवाच्यत्वमुदाहृत्य परिपन्थिरसाङ्गविभावपरिग्रहमुदाहरति—मानमिति ।

मत्पूरितपूर्वार्द्धन्तु—

"संसारे न स्थिरं किञ्चित् किं पुनः परिणाम्यदः ।"

हे तन्वङ्गि । अस्थिरं चंचलम् । मानम् अभिमानम् । मा नैव ।

(१८) दोषमुपपादयति—अत्रेति । अत्र उदाहृतपद्ये, यौवनस्य ताहृण्यस्य अस्थैर्य्य चञ्चलत्वं तन्निवेदनम् । परिपन्थिनो विरोधिनः ।

"शान्तस्तु वीरशृङ्गाररौद्रहास्य-भयानकैः" इतिपूर्वोक्तन्यायात्

अङ्गम् अङ्गभूतम् च पुनः शान्तस्य शान्तरसस्य एव न पुनः शृङ्गाररसस्य । विभाव उद्दीपनविभावः । न युक्त इति । अत्रायमभिप्रायः—निर्वेदस्थायिनि शान्त एव यौवनादीनामस्थायित्वनिवेदनपुरस्सरमभिमानपरित्यागौचित्यकथनं युज्यते । शृङ्गारश्च शान्तश्चात्यन्तभिन्नस्वरूपौ इति परिपन्थिरसाङ्गभूतविभावस्य परिग्रहः । अमतपरार्थत्वादस्य भेदः प्रागेव प्रदर्शितः, एवञ्च—

"त्यजत मानमलं बत । विग्रहैर्न पुनरेति गतं चतुरं वयः ।
परभृताभिरितीव निवेदिते स्मरमतेऽरमतेष्टसखी जनः ॥"

इति रघौ यौवनास्थैर्य्यकथनं न दोष इति सुधीभिर्विवेचनीयम् । विभावादेरित्यादिपदादनुभावसञ्चारिणौ । तत्र प्रतिकूलानुभावपरिग्रहो यथा—

'सुरतोत्सुकमालोक्य मृगाक्षी पथिकं पथि ।
निर्म्मुक्तसर्वविषया प्रययौ विपिनान्तरम् ॥'

अत्र निर्म्मुक्तसर्वविषयतया वनगमनं शान्तरसानुभावः शृगाररसस्य प्रकृतस्य विच्छेद इति दोषः । इन्धनाद्यानयनव्याजेन सम्भोगार्थवनगमनं यद्युच्यते तदा न शान्तानुभावग्रह इति न दोषः । एवं व्यभिचारिणोऽपि । उदाहरणान्तरं यथा

प्रसादे वर्तस्व, प्रकटय मुदं सन्त्यज रुषं
प्रिये शुष्यत्यङ्गान्यमृतमिव सिञ्चतु वचः ।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे ! प्रत्येतुं प्रभवति यतः कालहरिणः ॥

---

दैवादहमत्र तया चपलायतनेत्रया वियुक्तश्च ।
अविरलविलोलजलदः कालःसमुपागतश्चायम् ॥

इत्यादाविवाक्षेपेण तेषां प्रतीतेः । नहि व्रीडादिशब्दैः प्रतिपादिता व्रीडादय आस्वाद्यतामिव स्वानुभावाद्याक्षेपकतामप्यास्वादयितुमक्षमाः व्रीडाभावात्' इत्याहुः ।

शान्तस्यैव च विभाव इति श्रृङ्गारे तत्परिग्रहो न युक्तः ।

( १९ ) 'धवलयति शिशिररोचिषि भुवनतलं लोकलोचनानन्दे ।
ईषत्क्षिप्तकटाक्षा स्मेरमुखी सा निरीक्ष्यतां तन्वी ॥'

( २० ) अत्र रसस्योद्दीपनालम्बनविभावानुभावपर्यवसायिनौ स्थिताविति-कष्टकल्पना ।

( २१ ) 'परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्तते च भूयः ।

---

अत्र प्रकृते श्रृङ्गारे तत्परिपन्थिनः शान्तस्य कालनित्यनिवेदनमुद्दीपनविभावस्तन्निवेदिते निर्वेदो भावश्च परिगृहीत इति परिपन्थिन उपस्थितौ प्रकृतचमत्कारापमूलः परिपन्थिरसाङ्गपरिग्रहो दोषः ।

(१९) कष्टाक्षिप्तानुभावत्वमुदाहरति—धवलयतीति ।

अत्र नामक्रमेणैव स्वरूपं दूषकताबीजञ्चावगन्तव्यम् । समाधानासम्भवान्नित्य एवायं दोषः ।

लोकानां लोचनानि नेत्राणि आनन्दयतीति तस्मिंस्तथोक्ते 'लोकस्तु भुवने जने' इत्यमरः । पचाद्यच् । शिशिरं शीतलं तापापनोदकतया दाहप्रतिद्वन्द्विभूतमित्यर्थः रोचिः रश्मिर्यस्य तस्मिन् तथोक्ते चन्द्रमसीत्यर्थः । भुवनतलं संसारं धवलयति श्वेतं कुर्वति सति ईषत् किञ्चित् क्षिप्ताः कटाक्षाःत्वां प्रति वक्रदृष्टिर्यया सा, स्मेरं सस्मितं मुखं यस्याः सा तादृशी च या पूर्वं तवानेकानुनयेनाप्यनपनेयमाना आसीत् सा दुर्निरीक्ष्या, तन्वी कृशाङ्गी निरीक्ष्यतां दृश्यताम् साम्प्रतं चन्द्रावलोकनेनेय क्रमेण कृशायमाना जायत इत्यनुभूयतामिति भावः ।

दोषमुपपादयितुमाह—अत्रेति । रसस्य श्रृङ्गाररसस्येत्यर्थः उद्दीपनविभावः चन्द्रनिरीक्षणादिः आलम्बनविभावस्तादृशीनायिका चेति तौ तथोक्तौ अनुभावपर्य्यवसायिनौ अनुभावं नायककर्तृकनायिकानिरीक्षणजन्यमानभङ्गसनाथीकृताह्लादं पर्य्यवसाययतः प्रकरणाद्यनुसन्धानसापेक्षतया विलम्बेनावगमयतः तौ । एवञ्चात्र नायककर्तृकनायिकानिरीक्षणजन्यमानभङ्गसनाथीकृताह्लादरूपोऽनुभावः वचनेन नोक्तस्तथापि चन्द्रादिरुद्दीपनविभावेन नायिकारूपालम्बनविभावेन च सम्भाव्यतया बोद्धव्य इति कष्टेन कल्पना आक्षेपसमर्थनम् । अत्रेदम्बोध्यम् सेतिप्रकान्तपरामर्शिना तच्छब्देन यदि तयोस्तादृशप्रकरणमासूचितं स्यात्तदा प्रत्येतुं शक्यते इत्यनुभावानां कल्पना क्लिष्टा । यतः सत्स्वपि विभावेषु अनुभावं विना स्थायिनो न प्रतिपत्तिः कार्य्येण हि अविनाभावबलात्झटिति कारणमाक्षिप्यते न तु कारणेन कार्य्यम् ईषत्क्षिप्तेत्यादि रूपवर्णनं न त्वनुभावः । वस्तुतोऽत्र नायकनिष्ठ एव श्रृङ्गारो व्यञ्जनीयः नच नायकनिष्ठः कश्चिदनुभाव उपात्तः न वा विभावेन झटित्याक्षेप इति भवति क्लिष्टकल्पना ।

अत्र वागीशास्तु—"नायकस्य श्रृंगारित्वनिश्चायकाभाव इत्यनुभावस्य नायिकायां चक्षुः प्रसारणस्य कष्टकल्पनयाऽऽक्षेपः । नायकस्याश्रृङ्गारित्वे दर्शनाभावस्यापि सम्भवात्तादृशसमये तादृशनायिकायां मुनेरपि प्रायो मनःक्षोभो भवतीत्यौत्सर्गिकमेव चक्षुःप्रसारणमिति कष्टकल्पना" इत्याहुः ।

( २१ ) कष्टाक्षिप्तविभावत्वमुदाहरति—परिहरतीति । अत्रापि नामक्रमेणैव स्वरूपं

इति बत विषमा दशास्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥'

( २२ ) अत्र रतिपरिहारादीनां करुणादावपि संभवात्कामिनीरूपो विभावः कृच्छ्रादाक्षेप्यः ।

( २३ ) अकाण्डे प्रथनं यथा—वेणीसंहारे द्वितीयेऽङ्के प्रवर्तमानानेकवीरसंक्षयेऽकाले दुर्योधनस्य भानुमत्या सह शृङ्गारप्रथनम् ।

( २४ ) छेदो यथा-वीरचरिते राघवभार्गवयोर्धाराधिरूढेऽन्योन्यसंरम्भे कङ्कण-

---

दूषकताबीजञ्चानुसन्धेयम् । प्रतिप्रसवाभावादयमपि नित्यो दोषः । दुर्लभायां काञ्चिन्नायिकायामत्यन्तासक्तस्य सख्युः सख्यन्तरकर्तृकावस्थावर्णनमिदम् । अयं सखा रतिं वस्तुनि स्पृहां परिहरति दूरीकरोति, मतिं बुद्धिं लुनीते, छिनत्ति-धैर्यविधायिनीं बुद्धिमपि जहाति । स्खलिततरामत्यन्तमेव वाक्यस्खलनं विदधाति भूयो मुहुर्मुहुः परिवर्त्तते शय्यां पार्श्वपरिवर्त्तनं च विदधाति । बतेति खेदे । 'खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत" इत्यमरः । इति इत्थं विषमा कठिना दशा विरहावस्था ( कर्त्री ) अस्य सख्युः देहं शरीरं ( कर्म ) प्रसभं बलात्कारेण परिभवति क्लेशं जनयति अत्र अस्मिन् विषये वयं किं कुर्मः न कश्चिदुपायः स्फुरतीत्यर्थः ।

( २२ ) दोषं दर्शयितुमाह—अत्रेति । अत्र अस्मिन्नुदाहृते पद्ये । रतिपरिहारादीनाम् अनुभावादीनामितिभावः । करुणादाविति । आदिपदेन भयानकबीभत्सयोः विषयवैराग्यजनकशान्तरसस्य च परिग्रहः तथाच संशयेनैकस्यापि न निश्चय इति भावः । विभाव आलम्बनात्मके विप्रलम्भशृङ्गारविभावः, कृच्छ्रात् प्रकरणाद्यनुसन्धानरूपभूतात् क्लेशात् आक्षेप्यः कल्पनीयः । तथाच नायकनिष्ठविप्रलम्भशृङ्गारस्य आलम्बनविभावो कामिनीरूपस्तु न वर्णितः वर्णितानां च रतिपरिहाराद्यनुभावानां रसान्तरे सम्भवात् प्रकरणाद्यनुसन्धानेन कष्टेन कल्पनीय इति भवति दोष इति भावः ।

( २३ ) अकाण्डे रसप्रथनमुदाहरति—अकाण्ड इति । विरोधिरसमध्ये प्राधान्येन रसविशेषस्य विपुलतया वर्णनम् अकाण्डे रसप्रथनम् । एवञ्च गौणत्वेन विरोधिरसप्रथने न दोषः । वक्ष्यति च स्वयमेव— 'विरोधिनोऽपि स्मरणे" इत्यादि । विरोधिरसयोः समासे उभयत आकृष्यमाणेन चमत्कारित्वस्य नाश एव दूषकताबीजम् । विरोधिरसानिवेशेन समाधानासम्भवात् नित्य एवायं दोषः । वेणीसंहारे तदाख्ये नाटके इति शेषः प्रवर्त्तमानो विद्यमान अनेकेषां वीराणां भीष्मादीनां सङ्क्षयो यत्र तथोक्ते । अतएव अकालेऽनवसरे दुर्य्योधनस्य भानुमत्या तन्नाम्न्या राज्या शृङ्गारस्य प्रथनं विपुलतया वर्णनम् । तथा च तदा वीरस्य करुणस्य वाऽवसरो न शृङ्गारादेः न ह्युत्साहशोकवासनानिरुद्धे प्रतिपत्तृचेतसि शृङ्गारादिः पदमपि लभते सुतरामास्वाद इति दोष इति भावः ।

( २४ ) अकाण्डे रसच्छेदमुदाहरति—छेद इति । पुष्टिं विना सहसैव रसविश्लेषः अकाण्डे रसच्छेदः । रसविश्लेषात्तच्चमत्कृतेरपि विश्लेषो दूषकताबीजम् पुष्टिविधानमन्तरा समाधानासम्भवादयमपि नित्य एव दोषः । वीरचरिते तदाख्ये नाटके । राघवभार्गवयोः श्रीरामपरशुरामयोः । धाराधिरूढे धारावाहिनि अविच्छिन्नप्रसरतया प्रवृत्ते इति यावत् । वीररसे युद्धोत्साहे । कङ्कणमोचनाय कङ्कणयोस्तद्रूपयोर्ववाहिकरक्षासूत्रयोः मोचनं तस्मै तत्कर्त्तुम् । इति अस्यां राघवस्योक्तौ भासमानायामिति शेषः । अकाण्डे हि तथाभिधानं

मोचनाय गच्छामीति राघवस्योक्तिः ।

( २५ ) पुनः पुनर्दीप्तिर्यथा—कुमारसंभवे रतिविलापे ।

( २६ ) अङ्गिनोऽननुसंधानं यथा—रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः ।

( २७ ) अनङ्गस्य कीर्तनं यथा—कर्पूरमञ्जर्यां राजनायिकयोः स्वयं कृतं

---

व्याजेन निर्गमनं प्रतिपादयन्ती श्रीरामस्य कातरतायां परिणमतीतिनायके श्रीरामे वीररसो नास्वाद्येत इति दोषः तादृशे हि समाजे तथाचरणमशक्तिसन्देहापादकत्वाद्-कीर्तिपर्यवसायीतिभावः । यद्यपीदानीन्तनपुस्तके हस्तलिखिते च "कङ्कणमोचनाय गच्छामि" इति पाठो न दृश्यते तथाप्यार्थिकः फलतीत्यवधेयम् ।

( २५ ) पुनः पुनारसोद्दीप्तिमुदाहरति—पुनरिति । यस्य कस्यापि स्वसामग्रीलब्ध-परिपोषस्य रसस्य विच्छिद्य विच्छिद्य पुनः पोषणं पुनः पुनर्दीप्तिः ।
अत्रैकस्यैव पुनःपुनरास्वादः सहृदयानां वैरस्यायेति दूषकताबीजम् । तदुक्तं ध्वनिकृता- 'उपयुक्तो हि रसः स्वसामग्रीलब्धपरिपोषः पुनः पुनः परामृश्यमानः परिम्लानकुसुम-कल्पः कल्प्यते । परिपाकं गतस्यापि पौनः पुन्येन दीपनं रसस्य स्याद्विरोधाय" इति इयं पुनः पुनर्दीप्तिस्तु अङ्गरसादीनामेव न त्वङ्गिनः, अङ्गिनस्तु सा महाभारतादौ शान्तादेरिव न वैरस्यमावहतीतिबोध्यम् । अतएव नित्य एवायं दोषः । अपि चायं दोषः प्रबन्ध एव तद्दर्शयति—कुमारसम्भव इत्यादि तल्लक्षणन्तूक्तमेव रतिविलापे रतिविलाप-प्रस्तावे ।

अत्र "अथ मोहपरायणा सती" त्यादिना दीप्तिमानीतोऽपि करुणः—

" अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्धजा समदुःखामिव कुर्वती स्थलीम्"

इत्यादिना पुनर्दीप्तिं नीतः । अथ च वसन्तदर्शनेन विच्छिन्नः पुनरपि ' समवेक्ष्य सा भृशम्" इत्यादिना उद्दीपित इति बोध्यम् ।

( २६ ) अथाङ्गिनोऽननुसंहितत्वं दोषमुदाहरति—अङ्गिन इत्यादिना । अङ्गिनोऽननु-सन्धानं प्रधानपात्रानिर्देशेन प्रधानरसस्यानुद्बोधनम् । अकाण्डे रसच्छेदे हि आलम्बन-निर्देशे सत्यपि सहसा रसविश्लेषः, अत्र तु आलम्बनानिर्देशेन रसविश्लेष इत्यनयोर्भेदः। प्रधानपात्रानुसन्धानाधीना शृङ्गाररसधारा तदननुसन्धाने विरतास्यादितिदूषकताबीज-म् । प्रतिप्रसवाभावादयमपि नित्यो दोषः । रत्नावल्याम् तन्नामकनाटिकायामित्यर्थः । बाभ्रव्यागमने बाभ्रव्यस्य तन्नामकस्य सिंहलेश्वरकञ्चुकिनः आगमनं तस्मिन् । सागरि-काया रत्नावल्याः । विस्मृतिः विजयवर्मवृत्तान्तश्रवणासक्तहृदयेन राज्ञा वत्सराजेन सागरिकाया नाममात्रस्याप्यग्रहणाद्विस्मृतिः । तेन नाटिकाप्रतिपाद्यशृङ्गाररसो विच्छिन्न प्राय इति दोषः ।

( २७ ) अनङ्गस्य कीर्त्तनमुदाहरति—अनङ्गस्येति । अनङ्गस्य कीर्त्तनं प्रधानरसानुप-कारिणो रसस्योद्बोधनम् । तत्समये अयमपि नित्य एव दोषः । कर्पूरमञ्जर्यां तत्संज्ञके राजशेखरकृते सट्टके । राजनायिकयोर्श्चपलाविभ्रमलेखयोः । षष्ठीयं सम्बन्धसामान्यविव-क्षायाम् प्रशंसनम् । "जह किलणिवेदिदं बन्दिही" त्यादिनाविदूषकोक्तिपर्यन्तेन सन्द-

वसन्तस्य वर्णनमनादृत्य बन्दिवर्णितस्य प्रशंसनम् ।

( २८ ) अङ्गस्यातिविस्तृतिर्यथा—किराते सुराङ्गनाविलासादिः ।

( २९ ) प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्चेति । तेषां धीरोदात्तादिता । तेषामप्युत्तमाधममध्यमत्वम् । तेषु च यो यथाभूतस्तस्यायथावर्णने प्रकृतिविपर्ययो दोषः ।

( ३० ) यथा—धीरोदात्तस्य रामस्य धीरोद्धतवच्छद्मना वालिवधः । यथा वा—कुमारसंभवे उत्तमदेवतयोः पार्वतीपरमेश्वरयोः संभोगशृङ्गारवर्णनम् । 'इदं पित्रोः संभोगवर्णनमिवात्यन्तमनुचितम्' इत्याहुः ।

---

भेण बन्दिवर्णितस्य वसन्तस्य प्रशंसनम् । तच्च प्रकृतरसानुपकारित्वादयुक्तम् । एतदेव दूषकताबीजम् ।

( २८ ) अङ्गस्येति । अङ्गभूतरसस्यातिवैपुल्येनोद्बोधनम् अङ्गस्यातिविस्तृतिः । अनेन हि प्रधानो रसस्तिरोहित इव भवतीति दूषकताबीजम् । अयमपि नित्यो दोषः प्रतिप्रसवाभावात् । किराते किरातार्जुनीयनामके काव्ये तथा च तत् वीररसप्रधानं काव्यम्, शृङ्गारादयश्चाङ्गरसा न तु तेषां प्राधान्यम् किन्तु सप्तमसर्गादारभ्य दशमसर्गपर्यन्तं चतुर्ष्वपि सर्गेषु सुराङ्गनाविलासादिवर्णनविस्तरेण वीरो रसस्तिरोहित इव भवतीत्यनुचित एवेति दोषः ।

( २९ ) प्रकृतिविपर्ययं व्याख्यातुं तत्प्रतियोगिभूताः प्रकृतीराह—प्रकृतय इति ।

प्रक्रियते प्रकर्षेण रस उद्बोध्यते आभिरिति प्रकृतयो नायकादयः । ताश्च त्रिविधा भवन्तीत्याह—दिव्या इति । दिवि स्वर्गे भवाः दिव्याः दैवतैकरूपाः देवासुरयक्षगन्धर्वराक्षसादयः, अदिव्या मानुषैकरूपा दुष्मन्तादयः । दिव्यादिव्याः—दिव्या अपि मानुषरूपेणावतीर्णा अदिव्याभिमानिनः श्रीरामादयः । तेषां दिव्यादिनायकानां धीरोदात्तादिता धीरोदात्त "अविकत्थनः क्षमावान्" इत्याद्युक्तस्वरूपो नायकविशेष आदौ येषां तेषां भावस्तत्ता आदिपदेन धीरोद्धतादीनां परिग्रहः । तेषामपि धीरोदात्तादीनाम् उत्तमाधममध्यमत्वमपि प्रकृतिः । तथा च प्रकृतिपदमत्र स्वभावार्थकोऽपीति व्यञ्जितम्

"प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः" इति मेदिनी ।

अधुना प्रकृतिविपर्ययं निरूपयति तेष्विति । तथाभूतः प्रसिद्ध इति शेषः । अयथावर्णने अतद्रूपत्वेन निरूपणे प्रकृतिविपर्ययः विपर्यासः । तथा सति काव्यस्यायथार्थत्वबोधेन श्रोतॄणां वैमुख्यापादनं दूषकताबीजम् । तत्तद्वर्णनपरिवर्त्तनमन्तरा समाधानासम्भवादयमप्यनित्य एव दोषः ।

( ३० ) उदाहरति—यथेति । पित्रोरिति । अत्र "पिता मात्रा" इत्यनेन विकल्पेनैकशेषः मातापित्रोरित्यर्थः । उत्तमदेवतयोः शृङ्गाररसवर्णनमनुचितमिति यदुक्तं तत्रायमभिप्रायः—ये ये शृङ्गारव्यञ्जका रहस्यार्थाः पित्रोर्वर्णनमनुचितास्ते न वर्णनीयाः । अन्यथा रघुवंशे रावणवधानन्तरं स्वराज्यमभिनिवृत्तस्य रामचन्द्रस्य सीतासम्वादवर्णनं तादृशं वान्यन्महाकविनिबद्धत्वमनुचितं स्यात् । अनुचितमेव सकलमहाकवीनां प्रबन्धेषु तथा तथा वर्णनमसमञ्जसं स्यादिति । परन्तु—

( ३१ ) अन्यदनौचित्यं देशकालादीनामन्यथा यद्वर्णनम्। तथा सति हि काव्यस्यासत्यताप्रतिभासेन विनेयानामुन्मुखीकारासंभवः।

'यत्तत्रानुचितं किञ्चिन्नायकस्य रसस्य वा। विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत्॥'

यथा छद्मना वालिवधो मायुराजेन उदात्तराघवे नाटके परित्यक्तः। वीरचरितनाटके भवभूतिना तु रावणसौहार्दाद् रामवधार्थमागतो वाली रामेण हत इत्यन्यथा कृतः।

दिव्यादीनामनुचितवर्णनं प्रकृतिविपर्यय इत्युक्तं किन्तु तज्ज्ञेयनायोचितं वर्णनीयमभिधीयते—

'रतिस्तथैव हासश्च शोक आश्चर्यमेव च। दिव्यानामुचितं वर्ण्यमदिव्योत्तमनेतृवत्॥
किन्तु सम्भोगशृङ्गारो वर्ण्यो नोत्तमदेवयोः। सद्यः फलप्रदक्रोधो भ्रुकुट्यादिविवर्जितः॥
उत्साहः स्वर्गपातालगत्यब्धिलङ्घनादिषु। दिव्यानामेव नेतॄणां वर्ण्यते ह्युचितं बुधैः॥
ख्यातं लोकपुराणादौ यच्चान्यस्यादबाधितम्। वर्णनीयमदिव्यानामन्येषां तूभयं बुधैः॥
पूज्यादौ तु तत्र भवन् भगवन्निति चोच्यते। भट्टारकेति राजादौ परमेशेति चोच्यते॥
इत्याद्युचितमेतेषां विरुद्धं दूषणं भवेत्।

अन्येषां दिव्यादिव्यानामुभयं दिव्यसाधर्म्यमदिव्यसाधर्म्यं चोचितमित्यर्थः। यथा—अर्जुनस्य स्वः पातालादिलङ्घनोत्साहः भ्रुकुट्यादिरहितः क्रोधश्च।

( ३१ ) अर्थानौचित्यमुदाहर्त्तुं तत्स्वरूपं विवृणोति—अन्यदित्यादिना। अन्यत् तदितिशेषः अनौचित्यम् अर्थानामिति शेषः। देशोऽद्रिवनराष्ट्रादिः। कालो रात्रिदिनर्तवः तेषाम् अन्यथा वर्णनं विपरीतधर्मवर्णनम्। तत्र देशानौचित्यं क्रमेण यथा—

कलिङ्गवनसम्भूता मृगप्राया मतङ्गजाः।
चोलाः कालागुरुश्यामाः कावेरीतीरभूमयः॥

अत्र मलये कर्पूरवृक्षस्य, कलिङ्गवने हस्त्युत्पत्तेः, चोलेषु कालागुरूणामसम्भवाद्देशानौचित्यम्।

पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती।
मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः।
श्रव्यहंसगिरो वर्षाः शरदो मत्तवाहणः।
हेमन्तो निर्म्मलादित्यः शिशिरश्लाघ्यचन्दनः।

देशकालादीत्यादिपदेन लोकजातिवयःप्रभृतीनां परिग्रहः।

"चराचराणां भूतानां प्रवृत्तिर्लोक संज्ञिता"। तदनौचित्य यथा—

आधूतकेशरो हस्ती तिग्मश्रृ स्तुरङ्गमः।
गुरुसारोऽयमेरण्डो निःसारः खदिरद्रुमः॥ इति।

एवं नायिकायाः पादप्रहारादिः, नायकस्य कोपः, बालाया धाष्टर्यम्, प्रौढाया वेश्यायाश्चातिलज्जा प्रतिनायकस्य अन्वयत्वमित्याद्यप्यूह्यम्। तथाचाह—

वंशवीर्य्यश्रुतादीनि वर्णयित्वा रिपोरपि।
तज्जयान्नायकोत्कर्षकथनं हि धिनोति नः॥ इति।

एवमेव देवतानामवयवानां शिर आरभ्य वर्णनम्। तेषां शिरआराध्यत्वे पादारब्धवर्णनमेवेष्यते। मनुष्याणां न पादारब्धवर्णनं तेषां शिर आरभ्य वर्णनस्यैवेष्टेः। तथाच

( ३२ ) एभ्यः पृथगलङ्कारदोषाणां नैव संभवः ॥ १५ ॥

( ३३ ) एभ्य उक्तदोषेभ्यः । तथाहि—उपमायामसादृश्यासंभवयोरुपमानस्य जातिप्रमाणगतन्यूनत्वाधिकत्वयोरर्थान्तरन्यासे उत्प्रेक्षितार्थसमर्थने चानुचितार्थत्वम् । क्रमेण यथा—

( ३४ ) 'ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम् ।'

---

प्रतिपादितदिशैव सकलमनौचित्यं रसभङ्गकारणं सुकविभिः प्रयत्नेन परिहार्य्यम् । यदुक्तं ध्वनिकृता—

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् । औचित्योपनिबन्धस्तु रसस्योपनिषत् परा ॥

अनौचित्यस्य न केवलं रसापकर्षकत्वं दूषकताबीजम्, काव्यस्य प्रवृत्तिनिवृत्युपदेशपरत्वव्याघातकत्वमपीत्यत आह—तथासतीति । अतद्रूपेण वर्णने सतीत्यर्थः । असत्यता प्रतिभासेन मिथ्यात्वज्ञानेन विनेयानां धर्मादिजिज्ञासूनाम् । उन्मुखीकारासम्भवः काव्याध्ययनप्रवृत्त्यसम्भवः, एवञ्च रसप्रतीतिरेव न स्यादिति भावः । एतेषां परित्यागं विना, समाधानासम्भवादयमपि नित्य एव दोषः । नन्वर्थानौचित्यं दोषः प्रकृतिविपर्य्यय एवेति चेन्मैवम् प्रकृतिविपर्य्ययभिन्नस्थल एवैतस्यावताराङ्गीकारात् । तस्य च प्रकृतीनां वैपरीत्यमात्रमूलकत्वात् । वस्तुतस्तु सर्वेऽप्यमी दोषा अनौचित्यमूलनिबन्धना एवेत्यवधेयम् ।

( ३२ ) ननु सरस्वतीकण्ठाभरणे भोजराजादिभिः—

"हीनोपमं भवेच्चान्यदधिकोपममेव च । असदृशोपमञ्चान्यदधिकोपममेव च ॥"

इत्यादिना परम्परया काव्यात्मभूतरसापकर्षकत्वेन केषाञ्चिदलङ्कारदोषाणामप्युपन्यासात् प्रधानतो दोषाणां षड्विधत्वसम्भवात्कथं "ते पुनः पञ्चधा मताः" इतिपञ्चविधत्वमात्रमित्याशङ्क्य यथायथमेतेष्वन्तर्भाव्यास्त इत्याह—एभ्य इति । निरुक्तकाव्यदोषेभ्य इत्यर्थः । पृथगभिन्नानाम् । नैव सम्भव इति "अथ ते कथं पृथगुच्येरन्" इति शेषः । तथाचोक्तदोषेष्वेव हीनोपमादीनामन्तर्भावसम्भवात् तथात्वेन षड्विधत्वकल्पनं गौरवान्नेहोपन्यस्तमितिभावः ।

( ३३ ) कारिकोक्तम् 'एभ्यः' इति पदं विवृणोति—एभ्य इति । अथ सरस्वतीकण्ठाभरणोक्तालङ्कारदोषाणां स्वोक्तदोषेष्वन्तर्भावप्रकारमुपपादयितुमाह—तथाहीति । उपमायाम् उपमालङ्कारे, असादृश्ये साधारणधर्माप्रसिद्ध्या सादृश्यशून्यत्वे, असम्भवे तथाविधोपमानप्रसिद्ध्यभावे च' तथा तत्रैवोपमालङ्कारे उपमानस्य येन सादृश्यमनुमीयते तस्य जातिगतन्यूनत्वे प्रमाणगतन्यूनत्वे जातिगताधिकत्वे प्रमाणगताधिकत्वे च अनुचितार्थत्वमनुचितार्थत्वदोषः च पुनः अर्थान्तरन्यासे तदाख्येऽलङ्कारे उत्प्रेक्षितार्थस्य समर्थनम् अयुक्तत्वेऽपि यथाकथञ्चित् यत्र युक्तत्वसम्भावनं तत्र अनुचितार्थत्वमेव दोषः पर्य्यवस्यतीत्यर्थः । तथासति असदृशोपमाद्यलङ्कारदोषाणां स्वीकरणं व्यर्थमेवेत्याशयः ।

( ३४ ) तत्रोपमायामसादृश्ये अनुचितार्थत्वमुदाहरणेन दर्शयति—ग्रथ्नामीति ।

विततः प्रथिता अर्थरश्मयः किरणा इव यस्य तं तथोक्तम्, काव्यं शशीव तं तथोक्तम्, ग्रथ्नामि आनुपूर्व्या निवेशयामीत्यर्थः । अत्रायमाशयः—काव्यं शशीवेत्युपमितसमासः न तु "काव्यमेव शशी"तिरूपकसमासोऽयम्, रूपकस्यापि सादृश्यमूलकतया

( ३५ ) 'प्रज्वलज्जलधारावन्निपतन्ति शरास्तव ।'
( ३६ ) 'चण्डाल इव राजाऽसौ संग्रामेऽधिकसाहसः ।'
( ३७ ) 'कर्पूरखण्ड इव राजति चन्द्रबिम्बम् ।'
( ३८ ) 'हरवन्नीलकण्ठोऽयं विराजति शिखावलः ।'

तत्राप्ययं दोषो भवितुं शक्यते "प्रथनामि" इतिबाधकोपस्थानात्, एवञ्च "नचात्र रूपकसम्भवोऽपीति वाच्यम्, तस्यापि सादृश्यमूलकत्वेन तत्रापि तद्दोषतादवस्थ्यात्" इति रामचरणोक्तमसदित्युक्तिरेव केषाञ्चिदसदिति बोध्यम्। अत्र काव्यशशिनोरर्थरश्म्योश्च कश्चित् साधारणधर्मो न प्रसिद्धः, यद्यपि काव्यशशिनोराह्लादकत्वरूपे कधर्मस्यास्ति सम्भवस्तथापथर्थरश्म्योर्न तादृशो धर्मः सम्भवतीति साधर्म्यप्रतीत्यभावेनासादृश्यरूपमनुचितार्थत्वम्।

( ३५ ) उपमायां तादृशोपमानपदार्थासम्भवे अनुचितार्थत्वमुदाहरति-प्रज्वलदिति ।

'संछिन्ना रिपवस्तत्र सद्यः प्राणांश्च तत्यजुः' इति मद्रचितोत्तरार्द्धम् ।

प्रज्वलन्त्योऽमी जलधारास्ताभिस्तुल्यम् ।

अत्र वह्निकर्म्मणः प्रज्वलनस्य जलेऽसम्भवात् तद्विशिष्टतया तद्धाराणामप्यसम्भव इत्युपमानपदार्थासम्भवादुपमायामनुचितार्थत्वम् ।

नन्वत्राभूतोपमा स्यादितिचेत्? नैवम्, सम्भावनयाऽपि यत्रोपमानप्रसिद्धिस्तत्रैवाभूतोपमात्वात्। यथा—

सर्वपद्मप्रभासारः समाहृत इव क्वचित्। त्वदाननं विभातीति तामभूतोपमां विदुः॥

इत्यत्र दण्डिना क्वचित् पदेन स्रष्टुर्विधेः क्वचित् सर्वपद्मप्रभाहरणसम्भावनां प्रदर्श्य तादृशोपमानेनाऽभूतोपमा प्रदर्शिता। अतएव "बालप्रवालविटपप्रभवा लतेव" इत्यत्रापि वटादिविटपे लतादर्शनात् प्रवालविटपे लतां सम्भाव्य तदुपमा कृता। प्रकृते तु जले ज्वलनस्य सर्वथा बाधात् प्रज्वलज्जलधारायाः सम्भावनाशक्यत्वात्।

( ३६ ) उपमायामुपमानस्य जातिगतन्यूनत्वे अनुचितार्थत्वमाह—चण्डाल इति ।

'यत्र भीताः पलायन्ते म्रियन्ते वा विपक्षिणः ।' इति मद्रचितोत्तरार्द्धम् ।

चण्डालो हिंस्राधमः। अधिकं साहसं दुष्करकर्म यस्य स तथोक्तः।

अत्र राजरूपोपमेयभूतक्षत्रियजात्यपेक्षया चाण्डालरूपोपमानजातेर्न्यूनत्वेन दुष्करकर्मकारित्वमतिनीचत्वञ्चोपमेयस्य व्यञ्जयतीत्यनुचितार्थत्वम् ।

( ३७ ) उपमायामुपमानस्य प्रमाणगतन्यूनत्वे अनुचितार्थत्वं दर्शयति—कर्पूरेति ।

शुभ्रांशुजालप्रसरेण दिवाकरोत्थं तापं प्रशाम्य सुखमत्यधिकं प्रयच्छन्-
नक्षत्रमण्डलविशोभितमन्तरिक्षे कर्पूरखण्ड इव राजति चन्द्रबिम्बम् ॥

अत्रोपमेयभूतचन्द्रबिम्बप्रमाणापेक्षया उपमानभूतकर्पूरखण्डप्रमाणगतन्यूनत्वं चन्द्रबिम्बस्यातिक्षुद्रत्वं व्यञ्जयतीत्युपमायामनुचितार्थत्वम् ।

( ३८ ) उपमायामुपमानस्य जातिगताधिक्ये अनुचितार्थत्वं दर्शयति—हरवदिति ।

'वाहनः कार्तिकेयस्य नृत्यकर्मविचक्षणः ।' इति मत्पूरितपूर्वार्द्धम् ।

हरवत् महादेववत्तुल्यम्, नीलः कण्ठो यस्य स नीलकण्ठः, अयं शिखावलो मयूरः, विराजति शोभते ।

अत्रोपमेयभूतविहङ्गमजातीयमयूरापेक्षया उपमानभूतदेवजातीयहरस्य जात्या आधिक्यं सादृश्यं विश्लेषयति ।

( ३९ ) 'स्तनावद्रिसमानौ ते ।'

( ४० ) 'दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसामतीव ॥'

( ४१ ) एवमादिषूत्प्रेक्षितार्थस्य संभूततयैव प्रतिभासनं स्वरूपमित्यनुचितमेव तत्समर्थनम् ।

( ४२ ) यमकस्य पादत्रयगतस्याप्रयुक्तत्वं दोषः । यथा--

( ४३ ) 'सहसाभिजनैः स्निग्धैः सह सा कुञ्जमन्दिरम् ।
उदिते रजनीनाथे सहसा याति सुन्दरी ॥'

---

( ३९ ) उपमायामुपमानस्य प्रमाणगताधिकत्वे अनुचितार्थत्वमुदाहरति-स्तनाविति ।
स्तनावद्रिसमानौ ते मुखं चन्द्रेण सन्निभः ।
बाहू मृणालसदृशौ पाणी पल्लववत्स्फुटम् ॥ इति मद्रचितांशत्रयम् ।

ते तव स्तनौ अद्रिभ्यां समानौ सदृशौ तद्वद्विपुलाविति यावत् ।

अत्रोपमेयभूतस्तनयोरतिमहत्त्वव्यञ्जनाय उपमानभूतपरिमाणतोऽधिक्यत्वेनोपादानात् प्रमाणगताधिकत्वं पूर्ववदेव सादृश्यं विश्लेषयतीत्यनुचितार्थत्वम् ।

( ४० ) उत्प्रेक्षायामुत्प्रेक्षितार्थसमर्थने अनुचितार्थत्वमाह—दिवाकरादिति । कुमारसम्भवे प्रथमसर्गे हिमालयवर्णनमिदम् । यो हिमाद्रिः दिवा दिवसे दिवाकरात् सूर्य्यात् भीतं त्रस्तमिव अतएव गुहासु कन्दरासु लीनं लुक्कायितम् अन्धकारं तमसं रक्षति त्रायते, स अस्तीतिपूर्वेण सम्बन्धः । ननु क्षुद्रसंरक्षणमयुक्तमित्याशङ्कयार्थान्तरेण समर्थयति—क्षुद्रेऽपीति । नूनं निश्चितं शरणं प्रपन्ने प्राप्ते क्षुद्रे नीचेऽपि उच्चैरुन्नतं शिरो येषां तेषां महात्मनामित्यर्थः, अतीव अत्यन्तं ममत्वं ममायमित्यभिमानो जायत इति शेषः । दिवाकरादित्यत्र "भीत्रार्थानां भयहेतुः" इत्यनेन पञ्चमी । ममत्वमित्यत्र ममेतिविभक्तिरूपकमात्मीयार्थकमव्ययम्, तस्माद्भावे त्वप्रत्ययः । अतीवेतिनिपातसमुदायोऽत्यन्तार्थे । अत्र पद्ये उपजातिश्छन्दस्तल्लक्षणन्तूक्तमेव प्राक् ।

( ४१ ) उक्तोदाहरणे अनुचितार्थत्वं प्रदर्शयति—एवमिति । उत्प्रेक्षितार्थस्य अचेतनान्धकारत्रासस्य असम्भूततया सम्भावनाविषये वस्तुन्यवृत्तितया प्रतिभासमानं प्रकाशनं ज्ञानमिति यावत् स्वरूपं स्वभावः, इति हेतोः तस्य उत्प्रेक्षितार्थस्य समर्थनम् अर्थान्तरन्यासेन दार्ढ्यं विधानं यथार्थतया प्रतिपादनमनुचितमेव असद्भूते वस्तुनि तदसम्भवादिति भावः । अतएवोक्तोदाहरणे अनुचितार्थदोष इत्यभिप्रायः ।

( ४२ ) यमकालङ्कारस्य पादत्रयवृत्तित्वेऽप्रयुक्तत्वेऽन्तर्भावमुपपादयति—यमकस्येत्यादिना । यमकस्य तदाख्यशब्दालङ्कारस्य पादत्रयमात्रवृत्तित्वस्य अप्रयुक्तत्वं नाम दोषः ।

"यमकं तु विधातव्यं न कदाचिदपि त्रिपात्"

इत्युक्तनयेन यमकस्य पादत्रयवृत्तित्वे प्रयोगानर्हत्वेन कविभिर्नाद्रियत इति तत्त्वम्

( ४३ ) सहसेति । सा सुन्दरी नायिका रजनीनाथे निशाकरे उदिते उदयं प्राप्ते सति स्निग्धैरात्मानं प्रति स्नेहतत्परैः अभिजनैः सह स्वकुलालङ्कारैः सह सखीजनैः सहेत्यर्थः ।

"भवेदभिजनः ख्यातौ जनभूम्यां कुलध्वजे" इति मेदिनी ।

हसेन हास्येन सहेति सहसा स्मयमाना सतीतिभावः, सहसाऽविचार्य्य वेगेन वा

( ४४ ) उत्प्रेक्षायां यथाशब्दस्योत्प्रेक्षाद्योतकत्वेऽवाचकत्वम् । यथा—

( ४५ ) 'एष मूर्तो यथा धर्मः क्षितिपो रक्षति क्षितिम् ।'

( ४६ ) एवमनुप्रासे वृत्तिविरुद्धस्य प्रतिकूलवर्णत्वम् । यथा—

( ४७ ) 'ओवट्टइ उल्लट्टइ—' इत्यादौ ।

( ४८ ) उपमायां च साधारणधर्मस्याधिकन्यूनत्वयोरधिकपदत्वं न्यूनपदत्वं च । क्रमेणोदाहरणम्—

( ४९ ) 'नयनज्योतिषा भाति शंभुर्भूतिसितद्युतिः ।
विद्युतेव शरन्मेघो नीलवारिदखण्डधृक् ॥'

---

कुञ्जमन्दिरं लतादिपिहितस्थानरूपं गृहं याति गच्छति ।

अत्र तृतीयपादे सहसेति पदासत्त्वेन यमकाभावात् एवंविधत्रिपादगतयमकस्य "यमकं तु" इत्यादिना शास्त्रनिषेधेन तत्प्रयोगानर्हत्वादप्रयुक्तत्वं दोषः ।

(४४) उत्प्रेक्षणाबोधकेनापि यथाशब्देन यत्रोत्प्रेक्षणं तदाऽवाचकत्वस्यैव सम्भव इत्युपपादयति—उत्प्रेक्षायामिति । उत्प्रेक्षायां तदाख्येऽलङ्कारे । यथाशब्दस्य सादृश्यमात्रव्यञ्जकस्य यथेति निपातशब्दस्येत्यर्थः । अवाचकत्वमिति । यथाशब्दस्य सादृश्यमात्राभिधायकत्वेन ध्रुवमिवादिशब्दवत् सम्भावनार्थाभिधायकत्वाभावादित्याशयः ।

( ४५ ) उदाहरति—एष इति ।

'इमाः प्रजा ममैवेति मन्वानो विजितेन्द्रियः' । इति मद्रचितपूर्वार्द्धम् ।

क्षितिपो राजा । क्षितिं पृथिवीम् । मूर्तो धृतशरीरः । यथा ध्रुवम् । धर्मः पुण्यं तस्य मूर्त्यभावात्तदुत्प्रेक्षा न तु धर्मरूपदेवतोपमा, तदा मूर्त्तत्वविशेषणवैयर्थ्यापातात् ।

अत्र यथाशब्दस्य "व वा यथा तथैवैवं साम्ये" इत्यनेन सादृश्यमात्रबोधकत्वं न तु सम्भावनबोधकत्वम् "ध्रुवमिव नूनमवैमि शङ्के मन्ये जाने" इत्यादीनामेव सम्भावनबोधकत्वादिति यथाशब्देन सम्भावनेऽवाचकत्वं स्पष्टमेव । उक्तञ्च "सम्भावनं ध्रुवेवादय एव शब्दा न तु यथाशब्दोऽपि, केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं पर्य्याप्तत्वात्" इति ।

( ४६ ) अनुप्रासस्य वृत्तिविरुद्धस्य प्रतिकूलवर्णत्वेऽन्तर्भावमुपपादयितुमाह—एवमिति । अनुप्रासस्य तन्नामकशब्दालङ्कारस्य । वृत्तिविरुद्धस्य तद्रसगतगुणव्यञ्जक प्रतिकूलवर्णोपन्यासस्य, प्रतिकूलवर्णत्वं तदाख्यो दोष इत्यर्थः ।

( ४७ ) उदाहरणमाह—ओवट्टइ इति । प्राग्व्याख्यातमिदम् ।

अत्र टकारानेकविन्यासस्य प्रकृतशृङ्गाररसगतगुणव्यञ्जकचकारादि प्रतिकूलवर्णोपन्यासेन विरोधिवीररसगतौजोगुणव्यञ्जकत्वात् प्रतिकूलवर्णत्वम् ।

( ४८ ) उपमायां साधारणधर्मस्याधिक्यन्यूनत्वाभ्यामधिकन्यूनपदत्वे एवेति दर्शयति—उपमायामिति । किञ्चेति चार्थः । साधारणधर्मस्य उपमानोपमेयोभयवृत्तिसमानधर्मस्य । अधिकन्यूनत्वयोः अधिकत्वे न्यूनत्वे चेत्यर्थः । तथा च उपमेयेऽनिर्दिष्टधर्मसमानधर्मस्योपमाने निर्देशोऽधिकपदत्वम् , उपमेये निर्दिष्टधर्मसमानधर्मस्योपमानेऽनुपादानं न्यूनपदत्वमितिभावः ।

( ४९ ) तत्राद्यमुदाहरति—नयनेति । भूत्या भस्मना सिता स्वच्छा द्युतिः कान्ति-

( ५० ) अत्र भगवतो नीलकण्ठत्वस्याप्रतिपादनाच्चतुर्थपादोऽधिकः ।

( ५१ ) 'कमलालिङ्गितस्तारहारहारी मुरं द्विषन् ।
विद्युद्विभूषितो नीलजीमूत इव राजते ॥'

( ५२ ) अत्रोपमानस्य सबलाकत्वं वाच्यम् ।

( ५३ ) अस्यामेवोपमानोपमेययोर्लिङ्गवचनभेदस्य कालपुरुषविध्यादिभेदस्य च भग्नप्रक्रमत्वम् । क्रमेणोदाहरणम्—

---

र्थस्य स तथोक्तः, शम्भुर्महादेवः, नीलवारिदखण्डधृक् नीलमेघांशधारी शरन्मेघः शरत्कालीनो मेघो विद्युतेव सौदामनीव नयनज्योतिषा भाललोचनतेजसा ( करणेन ) भाति शोभते ।

( ५० ) दोषमुपपादयितुमाह—अत्रेति । भगवतः शम्भोः अप्रतिपादनात् विशेषणविधया अकथनात् चतुर्थपादः "नीलवारिदखण्डधृक्" इति चतुर्थपादः । अयमाशयः—

अत्र शम्भुरुपमेयः, शरन्मेघ उपमानम् . नयनज्योतिर्विद्युत् , भूतिसितत्वशारदीयजलधशुभ्रत्वयोश्च समानधर्मयोरस्त्येव निर्देशः, किन्तु शम्भोरुपमेयस्य नीलकण्ठत्वानुपादानात्तत्समानधर्मनीलवारिदखण्डेत्यादेरुपादाने शरन्मेघे आधिक्यमिति । समानधर्म एवायं नियमः धर्मान्तरोपादाने तु नाधिक्यम् , यथात्रैव "नभो मण्डलमध्यम" इति चतुर्थपादविधाने । यद्वा द्वितीयपादे "नीलकण्ठसितद्युतिः" इति करणेऽपि नाधिकपदत्वमिति विभावनीयम् ।

नन्वत्र नीलकण्ठत्वस्य शम्भुविशेषणतयानुपादान्न्यूनपदत्वमपि सम्भाव्यते इति चेत् ? वक्ष्यमाणस्य उक्तानुसारित्वनियमेन उक्ते नीलकण्ठपदाप्रतिपादनात् , वक्ष्यमाणोऽपि 'नीलवारिदखण्डधृक्" इत्यप्रतिपादनस्यैवौचित्यात् तथैव चाधिकपदत्वस्य समुचितत्वात् । एवमेवाग्रेऽपि नाधिकपदत्वमित्यनुसन्धेयम् ।

( ५१ ) द्वितीयमुदाहरति—कमलेति । कमलया लक्ष्म्या आलिङ्गित आश्लेषितः, तथा तारः केवलं मुक्ताभिः सुन्दरोऽसौ हारस्तेन हारी हारवान् मनोहरश्चेति वा, मुरं तन्नामकमसुरं द्विषन् "न लोकाव्ययषष्ठीखलर्थतृनाम्" इति षष्ठी निषेधः । श्रीकृष्ण इत्यर्थः । विद्युता सौदामिन्या विभूषितोऽलङ्कृतो नीलजीमूतो श्याममेघ इव राजते शोभते ।

( ५२ ) दोषमुपपादयति—अत्रेति । अत्र उदाहृते पद्ये उपमानस्य नीलजीमूतस्य, बलाकया बकपक्षिपंक्त्या सहेति सबलाकस्तस्य भावः, तारहारोपमानरूपतया बकपङ्क्तिवद्वियुक्तत्वमित्यर्थः । वाच्यं कथनीयम् , किन्तु नीलजीमूतविशेषणतया तन्नोक्तमितिन्यूनपदत्वम् । "विद्युद्युतो वलकावान् राजते नीलमेघवत्" इत्युक्ते तु नोक्त दोष इत्यवधेयम्

( ५३ ) उपमायामुपमानोपमेययोर्भिन्नलिङ्गवचनकालपुरुषविध्यादित्वदोषा भग्नप्रक्रमत्वेऽन्तर्भवन्ति न त्वतिरिक्ता इत्युपपादयति—अस्यामिति । अस्यामेव उपमायामेव । लिङ्गं पुंस्त्वादि वचनम् एकवचनादि भेदः पार्थक्यम् कालो वर्त्तमानादिः । पुरुषः प्रथमपुरुषादिः विधिर्विधिप्रतिपादकलिङ्विभक्तिः । आदिपदाद्विभक्त्यन्तराणि च । तेषां भेदः पार्थक्यमपि । तथा च यल्लिङ्गेन एकद्व्यादि यद्वचनेन चोपमेयोक्त्युपक्रम उपमान-

( ५४ ) 'सुधेव विमलश्चन्द्रः ।'

( ५५ ) 'ज्योत्स्ना इव सिता कीर्तिः ।'

( ५६ ) 'काप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेषयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥'

( ५७ ) अत्र तथाभूतचित्राचन्द्रमसोः शोभा न खल्वासीत् । अपि तु सर्वदापि भवति ।

( ५८ ) लतेव राजसे तन्वि ! ।''

स्यापि तल्लिङ्गकत्वेन तद्वचनेन चोक्तिराकाङ्क्षिता तथात्वानुक्तौ भग्नप्रक्रमत्वमित्यर्थः एवं वर्त्तमानादिकालादिभेदस्य चाकाङ्क्षितरूपेणानभिधानाद्भग्नप्रक्रमत्वमित्यर्थः समुन्नेयः

( ५४ ) तत्रोपमायामुपमानोपमेययोर्लिङ्गभेदे भग्नप्रक्रमत्वं दर्शयति—सुधेवेति ।

……………………शारदोऽमृतवर्षकः ।
यं दृष्ट्वा हर्षमापन्नाः कुमुदिन्यः सरोवरे ॥ इतिमद्रचितांशत्रयम् ।

अत्र विमल इति साधारणो धर्मः, स च केवलमुपमेये न तूपमानेऽस्य पुंस्त्वविशेषात्, तथा च सुधेत्युपमानपदं स्त्रीलिङ्गेनोपक्रम्य चन्द्र इत्युपमेयपदे च पुल्लिङ्गप्रतिपादनेन क्रमभङ्गेन साकाङ्क्षत्वात्तत्र च विमल इति साधारणधर्म्मवाचकपदस्य—

"या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः ।
प्रायस्ता एव कर्त्तव्याः समानार्थे विशेषणे ॥"

इति नियमेन लिङ्गव्यत्ययावश्यकत्वेन तदकरणाद्भग्नप्रक्रमत्वम् ।

( ५५ ) उपमायामुपमानोपमेययोर्वचनभेदे भग्नप्रक्रमत्वं दर्शयति—ज्योत्स्ना इति ।

………… ……कान्तिस्ते श्रीरिवाद्भुता ।
प्रतापस्ते राजेन्द्र ! दृश्यते सूर्यसन्निभः ॥ इतिमत्पादत्रयम् ।

ज्योत्स्नाश्चन्द्रकान्तयः । "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः ।

अत्र ज्योत्स्ना इति बहुवचनोपमानपदमुपक्रम्य कीर्त्तिरित्युपमेयपदे चैकवचनप्रतिपादनात्तत्र च सितेतिसाधारणधर्म्मस्य वचनव्यत्ययावश्यकत्वाद्भग्नप्रक्रमत्वम्

( ५६ ) उपमायामुपमानोपमेययोः कालभेदे भग्नप्रक्रमत्वं दर्शयति—कापीति । रघुवंशप्रथमसर्गे पुत्रलिप्सया वशिष्ठाश्रमं गच्छतोः सुदक्षिणादिलीपयोः वर्णनेयम् । व्रजतोः गुर्वाश्रमं गच्छतोः, शुद्धवेशयोः पवित्रपरिधानयोः तयोः सुदक्षिणादिलीपयोः योगे एकत्र प्रस्थानसमये हिमनिर्म्मुक्तयोः हेमन्तसमयातिक्रान्तयोः चित्राचन्द्रमसोः चित्रानक्षत्रचन्द्रयोरिव काऽपि विलक्षणा प्रतिपादयितुमशक्या अभिख्या शोभा "अभिख्या नामशोभयोः" इत्यमरः, आसीत् ।

( ५७ ) उक्तोदाहरणे प्रक्रमभङ्गं समर्थयितुमाह—अत्रेति । तथाभूतचित्राचन्द्रमसोर्हिमनिर्म्मुक्तयोश्चित्राचन्द्रमसोः । सर्वदापि हेमन्तसमयानन्तरं प्रतिवर्षेऽपि । एवञ्च आसीदित्यतीतकालेनोपमेयमुपक्रम्य तथाभूतचित्राचन्द्रमसोर्योगस्य प्रतिवर्षेऽप्यवश्यम्भावितया तत्रातीतकालसम्बन्धस्यानुपपत्त्या अस्तीतिप्रतिपादनावश्यकत्वाद्भग्नप्रक्रमत्वम् ।

( ५८ ) उपमायामुपमानोपमेययोः पुरुषभेदे भग्नप्रक्रमत्वं दर्शयति—लतेवेति ।

…………………सुमनस्मितहारिणी ।
गुञ्जन्मधुकरव्रातशोभितानन्ददायिनी ॥ इति मद्रचितांशत्रयम्

( ५६ ) अत्र लता राजते, त्वं तु राजसे ।

( ६० ) 'चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथा ।'

( ६१ )अत्र मार्कण्डेयमुनिर्जीवत्येव, न खल्वेतदस्य 'जीवतु' इत्यनेन विधेयम् ।

( ६२ ) इह तु यत्र लिङ्गवचनभेदेऽपि न साधारणधर्मस्यान्यथाभावस्तत्र न दोषः क्रमेणोदाहरणम्—

( ६३ ) "मुखं चन्द्र इवाभाति ।"

( ५९ ) उक्तोदाहरणे दोषं समर्थयति—अत्रेति । लतेत्युपमानपदस्य संज्ञात्वात् "राजते" इति प्रथमपुरुषः उपक्रमितव्यः, त्वमित्युपमेयपदस्य च युष्मच्छब्दत्वात् "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः" इत्यनेन मध्यमपुरुषो विधातव्यः इति प्रक्रमभङ्गाद्भग्नप्रक्रमत्वमितिभावः ।

( ६० ) उपमायामुपमानोपमेययोर्विधिभेदे भग्नप्रक्रमत्वमुदाहरति—चिरमिति । 'शास्त्राचाररतो धीमान् कान्त्या परमया युतः ।' इति मत्पूरितपादांशः ।

( ६१ ) उक्तोदाहरणे दोषं समर्थयति--अत्रेति । जीवत्येवेति । अश्वत्थामादीनामष्टानाञ्चिरञ्जीवित्वस्य प्रसिद्धत्वादितिभावः । एतत् चिरजीवित्वम् , अस्य मार्कण्डेयस्य जीवतु इत्यनेन न विधेयम् । अत्रायमभिप्रायः—"अप्राप्तप्रापणं हि विधिः" । ततश्च मार्कण्डेयमुनेश्चिरं जीवित्वस्य शास्त्रत एवोपलम्भात् तत्र तद्विधेरसम्भवात् "यथा मार्कण्डेय मुनिश्चिरं जीवति तथा ते सूनुश्चिरं जीवतु" नूनमित्थं वाच्यम्, तथासति जीवतीत्युपक्रम्य जीवत्वित्यस्य वाच्यतया प्रक्रमभङ्गाद्भग्नप्रक्रमत्वम् ।

तर्कवागीशस्तु विधिभेदस्योदाहरणमेवमाह—

> "चमूरियं दूरविमुक्तभङ्गा गङ्गेव मे योधमनुप्रयातु ।
> ययारिसज्जाविभटाः प्रकामं नश्यन्त्यधर्मा इव खेदसङ्गाः ॥"

अत्र गङ्गा प्रयाति, चमूः प्रयातु इति प्रक्रान्तविधिभङ्गः ।

( ६२ ) लिङ्गवचनभेदे साधारणधर्मस्य निर्दिष्टरूपेणोभयत्रानन्वयो दोषबीजम् । यदि तु निर्दिष्टरूपेणैवोभयत्रान्वयसम्भवस्तदा न दोष इत्युपपादयितुमुपक्रमते–इहेति । उपमागतदोषप्रस्ताव इत्यर्थः । यत्र यस्मिन्नुदाहरणे । लिङ्गवचनभेदेऽपि लिङ्गं च वचनं चेति तयोर्भेदस्तस्मिन् उपमानोपमेयप्रतिपादकपदयोरितिशेषः, साधारणधर्मस्य उपमानोपमेयोभयनिष्ठधर्मप्रतिपादकपदस्य, न अन्यथाभावः, एककालोभयसम्बन्धेऽपि न स्वरूपवैषम्यम् । न दोषो भग्नप्रक्रमत्वदोषः । एवंविधस्थले सर्वसामञ्जस्येन प्रतिपत्तॄणां वैमुख्याभावेन दोषत्वसामान्यस्यैवाप्रसङ्गात् रसापकर्षद्वारैव हि प्रतिपत्तॄणां वैमुख्योत्पादनेन दोषत्वस्य दर्शनादितिभावः । तथाचोक्तं दण्डिनैव—

> न लिङ्गवचने भिन्ने न हीनाधिकतापि वा ।
> उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥ इति ।

( ६३ ) लिङ्गभेदेऽपि भग्नप्रक्रमत्वस्यादोषत्वं दर्शयति—मुखमिति ।

> ........................पाणिः पल्लववत्तव ।
> जलजे इव नयने ते करिकुम्भोपमौ कुचौ ॥

इति मद्रचितांशत्रयम् ।

( ६४ ) "तद्वेशोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥"

( ६५ ) पूर्वोदाहरणेषु उपमानोपमेययोरेकस्यैव साधारणधर्म्मेणान्वयसिद्धेः प्रक्रान्तस्यार्थस्य स्फुटोऽनिर्वाहः ।

( ६६ ) एवमनुप्रासे वैफल्यस्यापुष्टार्थत्वम् । यथा—

( ६७ ) "अनणुरणन्मणिमेखलमविरलशिञ्जानमञ्जुमञ्जीरम् ।

---

अत्रोपमेयोपमानयोर्मुखचन्द्रयोः क्लीवपुंस्त्वलिङ्गभेदेन प्रक्रमभङ्गेऽपि आभातीत्यस्य उभयत्र सम्बन्धेऽपि क्रियात्वेन स्वरूपभङ्गाभावान्न भग्नप्रक्रमत्वम् ।

( ६४ ) वचनभेदेऽपि भग्नप्रक्रमत्वस्यादोषत्वं दर्शयति—तद्वेश इति । मधुरताभृतः माधुर्य्यपूर्णः माधुर्य्यवन्तश्च, अन्याभिः स्त्रीभिर्नायिकाभिः अन्यासां नायिकानां वेशैरित्यर्थः, असदृशः अतुल्यः अतुल्याश्च, तदीयास्तन्नायिकासम्बन्धिनो विभ्रमा विलासा इव, तस्या नायिकायाः वेशो भूषणाम्बरादिधारणपरिपाटी, परामनिर्वचनीयां शोभां दधते धारयति धारयन्ति स्म च ।

अत्र "तद्वेश" इत्यनेन सम्बन्धे असदृश इत्यत्र सोपपददृश्धातोः टक्प्रत्ययान्तत्वेन, मधुरताभृत इत्यत्र च क्तप्रत्ययान्तत्वेन अकारान्तत्वादेकवचनम्, दधते इति च "दध धारणे" आत्मनेपदी तस्माल्लटः प्रथमपुरुषैकवचनम् । एवं विभ्रमा इत्यनेन सम्बन्धे असदृशो मधुरताभृत इत्युभयत्रापि क्विप् प्रत्ययान्तत्वेन व्यञ्जनान्तत्वाद्बहुवचनम्, दधते इति च "डुधाञ् धारणपोषणयोः" अस्माल्लटः प्रथमपुरुषबहुवचनम् ।

एवञ्चोमेयोपमानयोर्वचनभेदेन प्रक्रमभङ्गेऽपि असदृशादिपदानां स्वरूपप्रच्यवाभावान्न भग्नप्रक्रमत्वम् । एवमेव—

"ब्रह्मणेव जगदद्य मयेदं सृज्यते ननु नवं किमनेन ।"

इत्यादौ पुरुषभेदे, "आसीत् । गङ्गाप्रवाह इव भगीरथपथप्रवृत्तः ।" इत्यादौ गङ्गाप्रवाहः इदानीमपि भगीरथपथप्रवृत्तः, स तु आसीदेवेति कालभेदे वा अनुगमस्योभयथाप्युपपत्तेर्दोषाभावात् इत्यवधेयम् ।

( ६५ ) अनयोरुदाहरणयोः पूर्वोदाहरणापेक्षया वैलक्षण्यं दर्शयितुं पूर्वोदाहरणेषु भग्नप्रक्रमत्वं दर्शयति—पूर्वेति । पूर्वोदाहरणेषु "नयनज्योतिषा······इत्यारभ्य "मार्कण्डेयमुनिर्यथा" इत्यन्तेपूदाहरणेष्वित्यर्थः । उपमानोपमेययोर्मध्य इति शेषः एकस्यैकतरस्योपमानस्योपमेयस्य वेति भावः । साधारणधर्म्मेण साधारणधर्म्मबोधकपदेन । प्रक्रान्तस्य पूर्वप्रतिपादितस्य स्फुटः स्पष्टोऽनिर्वाहः उपमानेनान्वयस्यानुपपत्तिः । अयोग्यत्वादितिभावः । लिङ्गपरिवर्त्तनादिना योग्यसामानाधिकरण्योपपादने प्रथमोत्थापिताकाङ्क्षाऽविषयीकृतेन प्रकारेण पुनरनभिधानाद्भग्नप्रक्रमत्वमितिभावः । अत्रोभयान्वयाभिप्रायेण प्रयुक्तस्यैकतरान्वयसम्भवेऽभवन्मतयोगत्वमिति केचित् ।

( ६६ ) अथानुप्रासस्य वैफल्यमपुष्टार्थत्वेऽन्तर्भावयितुमाह—एवमिति । अनुप्रासे तन्नामकालङ्कारे । वैफल्यस्यानुप्रासार्थमुपात्तस्य विशेषणवैयर्थ्यस्य । तथा च प्रकृतरसाद्युत्कर्षानाधायकत्वादपुष्टार्थत्वम् । अनुप्रासपदमत्र शब्दालङ्कारमात्रस्योपलक्षणम् ।

( ६७ ) उदाहरणमाह—अनणुरिति । सविलासं गच्छन्तीं वेश्यामवलोक्य शान्तस्य पुरुषस्योक्तिरियम् । हे अरुणचरणे अरुणे रक्तेऽलक्तकरञ्जिततया स्वभावेन वा कोकनद-

परिसरणमरुणचरणे ! रणरणकमकारणं कुरुते ॥"

( ६८ ) एवं समासोक्तौ साधारणविशेषणवशात्परार्थस्य प्रतीतावपि पुनस्तस्य शब्देनोपादानस्याप्रस्तुतप्रशंसायां व्यञ्जनयैव प्रस्तुतार्थावगतेः शब्देन तदभिधानस्य च पुनरुक्तत्वम् । क्रमेणोदाहरणम्—

( ६९ ) 'अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।
निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥'

सदृशे चरणे पादौ यस्यास्तत्सम्बुद्धौ तथोक्ते, अनणु नितान्तं रणन्ती शब्दं कुर्वन्ती मणीनां मेखला काञ्ची यत्र तत्तथोक्तम्, तथा अविरलं निरन्तरं यथा स्यात्तथा शिञ्जानौ अव्यक्तं शब्दं कुर्वन्तौ मञ्जु मनोहरौ मञ्जीरौ नूपुरौ यत्र तत् तथोक्तम् । शिञ्जानमिति "शिजि अव्यक्ते शब्दे" तस्माच्छानचि रूपम्, "मनोज्ञं मञ्जु मञ्जुलम्" इत्यमरः, "मञ्जीरोऽस्त्री सनूपुरः" इति रभसः, परिसरणं तव परिभ्रमणं (कर्तृ) अकारणं निरर्थकं रणरणककामचिन्तां कुरुते जनयति, निस्पृहस्य मम तवाभिलाषपूरणासम्भवादिदं रणरणकरणमनर्थकमेवेत्याशयः । आर्याछन्दः, तल्लक्षणन्तूक्तमेव ।

अत्र वक्तुः शान्तत्वेन कामोद्दीपकपरिसरणविशेषणानामनण्वादीनामपुष्टार्थत्वं केवलमनुप्रासार्थमेव तदुपादानम्, मणिमेखलादीनां मृदुरणनमेव कामोद्दीपनं जनयति न तु दीर्घं रणनमित्यत्र परिसरणं प्रति न किञ्चिदुपकुरुते । प्रकृतशान्तरसाद्यनुपकारित्वादपुष्टार्थत्वम् ।

( ६८ ) अथ समासोक्त्यप्रस्तुतप्रशंसयोः सम्भवतो दोषस्य पुनरुक्ततायामन्तर्भावमुपपादयति—एवमिति । समासोक्तौ तदाख्यालङ्कारे । साधरणमुपमानानुपयोगि यद्विशेषणं तद्वशात् तदानुकूल्यात् । परार्थस्य संयोगाद्यनियन्त्रितस्यार्थस्य । तस्य प्रतीयमानस्य पदार्थस्य, शब्देन तदभिधायकपदेन । एवमप्रस्तुतप्रशंसायां तदाख्यालङ्कारे, व्यञ्जनयैव न तु तदतिरिक्तया वृत्त्या प्रस्तुतस्योपमेयस्य अर्थस्य वस्तुनः अवगतौ बोधे तामनादृत्येति यावत् "षष्ठी चानादरे" इति सप्तमी, शब्देन प्रस्तुतार्थे गृहीतशक्तिकेन पदेन, तस्य प्रस्तुतार्थस्याभिधानं तस्य तथोक्तस्य । अयमाशयः—प्राकरणिककथनेनाऽप्राकरणिकव्यञ्जनं समासोक्तिः, अप्राकरणिककथनेन प्राकरणिकव्यञ्जनमप्रस्तुतप्रशंसा । अस्मिन्नलङ्कारद्वयेऽप्राकरणिकप्राकरणिकार्थयोः व्यङ्ग्यत्वेऽपि शब्देन तदुपादानेऽनयोः पुनरुक्तत्वे एवान्तर्भावः ।

( ६९ ) तत्र समासोक्तौ पुनरुक्तत्वमुदाहरति—अनुरागेति । शिशुपालवधनवमसर्गे सूर्यास्तवर्णनमिदम् । अपरा पश्चिमाऽसौ दिगेव गणिका वेश्या "वारस्त्री गणिका वेश्या" इत्यमरः, अनुरागो रक्तिमा प्रेम च सोऽस्यास्तीति तं तादृशम् अस्तमनकालीनरक्तवर्णम् अथ च प्रेमवन्तमपि, लोचनयोः सुखं सुखयतीति सुखम्, शान्तत्वाद्रमणीयत्वाद्वा सुखजनकमितिभावः, अतापकरं सन्तापाजनकनकं वपुः शरीरं दधतं धारयन्तम्, अपेता नष्टा वसवो रश्मयो यस्य, अपेतं वसु धनं यस्य वा तं निर्धनं वा "देवभेदे नले रश्मौ वसू रत्ने धने वसु" इत्यमरः, रविं सूर्यं कामिनं वा, वियदाकाशमेवालयो गृहं तस्मात्, यद्वा—वियद्वदाकाशवत् ( शून्यो जनसञ्चाररहित अत एव सम्भोगार्हः ) आलयस्तस्मात्, निरकासयत् द्वीपान्तरं प्रापितवती बहिष्कृतवती च । धनाभिलाषिणी-

( ७० ) अत्रापरदिगित्येतावतैव तस्या गणिकात्वं प्रतीयते ।

( ७१ ) 'आहूतेषु विहङ्गमेषु मशको नायान्पुरो वार्यते ।
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां धुरम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक्सामान्यमचेतसं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥'

( ७२ ) अत्राचेतसः प्रभोरभिधानमनुचितम् ।

---

वेश्या निर्गुणमपि धनिनं भजन्ति, धनमादाय तमेव परित्यजन्ति हठाच्च गृहान्निष्काशयन्ति चेति व्यञ्जितम् । प्रमिताक्षराछन्दः "प्रमिताक्षरा सजससैरुदिता" इति तल्लक्षणात् ।

( ७० ) दोषं समर्थयितुमाह—अत्रेति । इत्येतावता पदन्यासेनेति शेषः । तस्या अपरदिशः । गणिकात्वं वेश्यास्वरूपत्वम् । प्रतीयत इति । अयम्भावः—अत्र श्लिष्टविशेषणवशादनुरागवतो लोचनसुखजनकवपुष्मतो नायकस्य धनेन रहितत्वात् स्वगृहरूपालयाद् वेश्यया निष्काशनं व्यञ्जनया प्रतीयते । तत्र च निर्धननायकस्य यथा श्लिष्टविशेषणमहिम्ना व्यङ्ग्यत्वं तथा वेश्याया अपि व्यङ्ग्यत्वमेवोचितम् , वाच्यत्वे तु पुनरुक्तिरेव भवत्यतो दोष इति भावः ।

( ७१ ) अप्रस्तुतप्रशंसायां पुनरुक्तिं दर्शयति—आहूतेष्विति । भट्टोल्लकशतकस्थपद्यमिदम् । राजमण्डलेषु कृताह्वानेषु तत्र कदाचिदग्रे कदाचिच्च मध्ये कोऽपि क्षुद्रभूस्वामी समागतस्तन्निन्दार्थमुक्तिरियम् । विहायसा आकाशमार्गेण गच्छन्ति ये ते विहङ्गमाः हंसकोकिलादयः विहायसुपपदाद्गमेः खचि विहायसो विहादेशे खचो डिखविकल्पे मुमि कृते रूपम् । तेषु आहूतेषु कृताह्वानेषु सत्स्वित्यर्थः, विहङ्गमन्यो मशकोऽपि मक्षिकापेक्षयाऽप्यतिक्षुद्रः कीटविशेषोऽपि पुरोऽग्रत एव आयान् आगच्छन् सन् न केनापि वार्यते निषिध्यते । तृणमणिः तृणप्रायोमणिः तृणानां वा मणिराकर्षकतया रत्नभूतः प्रस्तरविशेषः यथा लोहस्याकर्षको लोहमणिरित्यभिधीयते तथैव तृणानामाकर्षकस्तृणमणिरिति ज्ञेयम्, मणीनां वास्तविकरत्नानां मरकतादीनां मध्ये वा धुरि अग्रे वा वसन् तिष्ठन् धुरं मणीनामेव भारं धत्ते धारयति सो हि न केनाऽपि निःसार्यत इति भावः । तथा तेजस्विनामपि प्रतापशालिनामपि चन्द्रतारादीनामित्यर्थः, मध्ये खद्योतो ज्योतिरिङ्गणनामकीटविशेषोऽपि प्रचलितुं गन्तुं न प्रकम्पते न त्रस्यति । तेजस्वित्वेन भेदाभावात् किं पुनस्तन्मध्ये गमने भयमिति निःशङ्कं तथा प्रतिपद्यत इति भावः । अतएव नामृष्टं नालोचितं तत्त्वान्तरं स्वरूपतारतम्यं येन तं तथोक्तम् , प्रभुं क्षुद्रभूस्वामिनमिव अचेतसं सदसद्विवेचनारूपचेतनारहितं सामान्यं समानधर्मत्वं क्षुद्रं मशकादिकमित्यर्थः धिक् सदसद्विवेचनारूपचेतनारहितत्वादेव निन्दामीत्यर्थः ।

( ७२ ) उक्तोदाहरणे दोषमुपपादयति—अत्रेति । अचेतसः सदसद्विवेचनारूपचेतनारहितस्य । अभिधानं सदसद्विवेचनारूपचेतनत्वेन कीर्त्तनम् । अनुचितमिति । अप्राकरणिकानां मशकादीनामभिधानवशादेव क्षुद्रतया अचेतसः प्रभोः व्यञ्जनया प्रतीतेरिति भावः । अत एवात्र व्यञ्जनया बोधितस्यापि पुनः शब्देन तदभिधानात्पुनरुक्तत्वम् ।

( ७३ ) एवमनुप्रासे प्रसिद्ध्यभावस्य ख्यातविरुद्धत्वम् । यथा—

( ७४ 'चक्राधिष्ठिततां चक्री गोत्रं गोत्रभिदुच्छ्रितम् ।
वृषं वृषभकेतुश्च प्रायच्छदस्य भूभुजः ॥'

( ७५ ) उक्तदोषाणां च क्वचिददोषत्वं क्वचिद्गुणत्वमित्याह—

**( ७६ ) वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते ।**
**रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत् ॥ १६ ॥**

( ७७ ) एषु चास्वादस्वरूपविशेषात्मकतया मुख्यगुणप्रकर्षोपकारित्वाद्गुणा इति व्यपदेशो भाक्तः । क्रमेण यथा—

( ७३ ) अनुप्रासे प्रसिद्ध्यभावस्य ख्यातविरुद्धतायामन्तर्भावं दर्शयति—एवमिति । प्रसिद्ध्यभावस्य अनुप्रासितपदार्थयोर्विवक्षितेऽन्वये लोकतः शास्त्रतो वा ख्यातिविरहस्य अत्राऽप्यनुप्रासपदं शब्दालङ्कारमात्रोपलक्षणम् ।

( ७४ ) उदाहरति—चक्राधिष्ठिततामिति । यस्य भूभुजो राज्ञः चक्रं सुदर्शनमस्यास्तीति चक्री विष्णुरित्यर्थः, चक्रे राज्यचक्रेऽधिष्ठितस्तस्य भावः तत्ता तां मण्डलाधिकारित्वमित्यर्थः गोत्रं पर्वतं भिनत्ति कुलिशेनेति गोत्रभृदिन्द्रः "गोत्रः शैले गोत्रं कुलाख्ययोः" इति मेदिनी, उच्छ्रितमुन्नतम् , गोत्रं कुलम् , वृषभः केतुर्ध्वजो यस्य स तादृशो महेश्वर इत्यर्थः, "केतुर्ना रुक् पताकाविग्रहोत्पातेषु लक्षणे" इति मेदिनी । वृषं धर्म्मम् , प्रायच्छत् प्रदत्तवान् ।

अत्र चक्र प्रभृतिपदानि केवलमनुप्रासानुरोधेनैव प्रतिपादितानि, न तु विष्णोश्चक्रवर्त्तित्वदानम् , इन्द्रस्योन्नतकुलदानम् , शिवस्य धर्म्मदानम् , पुराणेतिहासादिषु वा प्रसिद्धमिति ख्यातिविरुद्धत्वम् ।

( ७५ ) निरुक्तदोषाणां क्वचिदनित्यत्वमुपपादयितुं प्रतिप्रसवं दर्शयति—उक्तदोषाणामिति । उक्तदोषाणां दुःश्रवत्वादीनाञ्च मध्ये केषाञ्चिदित्यर्थः । क्वचिदिति । यत्र कस्मिंश्चिद्वक्त्रादिवैशिष्ट्ये रसादीनामपकर्षकत्वं प्रकर्षकत्वं च नास्ति तत्र अदोषत्वं दोषत्वगुणत्वोभयशून्यत्वमित्यर्थः । यत्र च तादृशे रसादीनामपकर्षकत्वं नास्ति प्रत्युत प्रकर्षकत्वमेव तत्र गुणत्वमित्यर्थः ।

( ७६ ) तत्र दोषोद्देशक्रमेण यथासम्भवं तान् दर्शयति—वक्तरीति । वक्तरि क्रोधसंयुक्ते कुपिते सति तस्य तस्य पदस्य वाक्यस्य वा दुःश्रवत्वं क्रोधोऽत्र रौद्ररसतामनापद्यमानो विवक्षितः तस्य पृथगुक्तत्वात् । वाच्यप्रतिपाद्येऽर्थे समुद्धते प्रचण्डे भीषणे सतीति यावत् तद्वर्णनात्मकस्य पदस्य वाक्यस्य वा दुःश्रवत्व रौद्रादिरसरहितेऽपि गुणो भवेत् । किन्त्वर्थे स्थिति । रौद्रादौ रसे आदिना वीर-वीभत्स-भयानकानां परिग्रहः, तत्प्रतिपादकवाक्यगतं दुःश्रवत्वम् अत्यन्तमेव गुणो भवेदित्यर्थः ।

( ७७ ) ननु माधुर्यादय एव गुणास्तत्कथं दुःश्रवत्वादेर्गुणत्वमत आह—एषु चेति । यद्वा—गुणानां रसधर्म्मत्वं त्रिविधत्वं च वक्ष्यति दुःश्रवत्वादीनां शब्दवृत्तित्वेन तदुभयाभावात्कथं गुणत्वमत आह—एषु चेति । एषु गुणतया विवक्षियमाणेषु दुःश्रवत्वादिषु दोषेषु । आस्वाद्यन्त इत्यास्वादा रसभावादयस्तेषां स्वरूपविशेषः साधर्म्यविशेष आत्मा येषां मुख्यगुणानां तेषां भावस्तत्ता तया, मुख्यगुणा माधुर्यादयस्तैः कृतो यः प्रकर्षो

( ७८ ) 'तद्विच्छेदकृशस्य कण्ठलुठितप्राणस्य मे निर्दयं
क्रूरः पञ्चशरः शरैरतिशितैर्भिन्दन्मनो निर्भरम् ।
शंभोर्भूतकृपाविधेयमनसः प्रोद्दामनेत्रानल-
ज्वालाजालकरालितः पुनरसावास्तां समस्तात्मना ॥'

( ७९ ) अत्र शृङ्गारे कुपितो वक्ता ।

( ८० ) 'मूर्धन्याधूयमानध्वनदमरधुनीलोलकल्लोलजालो-
द्भूताम्भःक्षोददम्भात्प्रसभमभिनभःक्षिप्तनक्षत्रलक्षम् ।

---

रसाद्युत्कर्षस्तमुपकरोतीति तस्य भावस्तत्त्वं तस्मात्, गुण इति व्यपदेशः संज्ञा भाक्तो गौणः । अत्रेदम्बोध्यम्—काव्यस्यात्मा रसस्तदपकर्षकत्वाभावे दुःश्रवत्वादेरदुष्टत्वमात्रम्, अनपकर्षकत्वे सति प्रकर्षकत्वे पुनर्गुणत्वम्, इति भाक्तमेतत्, साक्षाद्गुणत्वस्य रस-धर्म्मभूतेषु माधुर्य्यादिष्वेवोपलम्भात् । माधुर्य्यादयो हि साक्षाद्रसधर्म्मभूता, दुःश्रव-त्वादयस्तु परम्परासम्बन्धेन तदुपकारितयेति ।

( ७८ ) तत्र क्रोधसंयुक्ते वक्तरि दुःश्रवत्वस्य गुणत्वमुदाहरति—तद्विच्छेदेति । तस्याः प्राणप्रियायाः विच्छेदेन विरहेण कृशस्य, कण्ठे लुठिता निरुद्धा प्राणा यस्य तादृशस्य मे मम मनः, अतिशितैः अत्यन्तं तीक्ष्णैः शरैर्बाणैः, निर्दयं दयारहितम्, निर्म्भरमत्यन्तं च यथास्यात्तथा भिन्दन् विध्यन् न तु निघ्नन्, निहननानन्तरं तथाविधक्लेशस्या सम्भवात्, अत एव क्रूरः नृशंसस्वभावः असौ पञ्चशरः कन्दर्पः, पुनरपि समस्तात्मना सर्वप्रकारेण, भूतेष्वस्मादृशेषु प्राणिषु या कृपाऽनुकम्पा तस्या विधेयं वशीभूतं मनो यस्य तथोक्तस्य "विधेयो विनयग्राही वचने स्थित आश्रवः" इत्यमरः । शम्भोः शिवस्य प्रोद्दाम अत्यन्तं प्रचण्डः यन्नेत्रानलो भाललोचनवह्निस्तस्य ज्वालानां शिखानां जालेन समूहेन करालितो दग्धत्वेन भीषणीकृत आस्तां भवतु । यद्यपि प्राक् शम्भोर्नेत्राग्निना भौतिकं शरीरं दग्धम्, इदानीं तस्य लिङ्गशरीरमपि दह्यतामिति भावः । शार्दूलवि-क्रीडितं छन्दस्तल्लक्षणन्तूक्तमेव (१५८) पृ० प्राक् ।

( ७९ ) दोषमुपपादयति—अत्रेति । उदाहृतपद्ये इत्यर्थः । प्रियाविरहे अनङ्गं प्रति क्रोधस्य मनः क्षोभमात्ररूपतया वास्तविकत्वाभावेनास्वाद्यमानत्वेऽपि प्राकरणिकतया प्रधानत्वेन रतेरास्वाद्यमानत्वाच्छृङ्गारत्वमेव न तु रौद्रत्वमिति ध्वनयन्नाह—शृङ्गार इति । कुपितो वक्त्रेति । तथा च वक्तरि क्रोधसंयुक्ते रौद्ररसप्राप्त्या ओजोगुणस्यावश्यंभावित्वे विकटवर्णनावश्यकत्वात्, प्रकृते तु "विच्छेद" कण्ठलुठितादौ विद्यमानच्छकारठकारादि-वर्णात्मको दुःश्रवत्वदोषः प्रत्युत गुणतामेवासादयतीति भावः ।

( ८० ) उद्धते वाच्ये दुःश्रवत्वस्य गुणत्वमुदाहरति—मूर्द्धेति । मूर्ध्नि शिरसि व्या-धूयमाना शरीरसञ्चालनेनात्यन्तं कम्पमाना अत एव ध्वनन्ती शब्दायमाना या अमर-धुनी गङ्गा तस्या लोलं चञ्चलं यत् कल्लोलजालं महातरङ्गसमूहस्तस्मादुद्भूता उत्क्षिप्ता ये अम्भः क्षोदाः जलबिन्दवस्तेषां दम्भात् व्याजात् अभिनभो नभसि विभक्त्यर्थेऽव्य-यीभावः, प्रसभं हठात् क्षिप्तं विकीर्णं नक्षत्रलक्षं तारासमूहो यत्र तत्तादृशम् । उद्धूर्वं

ऊर्ध्वन्यस्ताङ्घ्रिदण्डभ्रमिभररभसोद्यन्नभस्वत्प्रवेग-
भ्रान्तब्रह्माण्डखण्डं प्रवितरतु शिवं शांभवं ताण्डवं वः ॥'

( ८१ ) अत्रोद्धतताण्डवं वाच्यम् । इमे पद्ये मम ।

( ८२ ) रौद्रादिरसस्य एतद्द्वितयापेक्षयापि दुःश्रवत्वमत्यन्तं गुणः । यथा—
'उत्कृत्योत्कृत्य कृत्तिम्—' इत्यादि । ( २९७ पृ. )

---

न्यस्तः प्रक्षिप्तो योऽङ्घ्रिदण्डश्चरणरूपो दण्डस्तस्य भ्रमिभरेण भ्रमणातिशयेन यो रभसो वेगस्तेनोद्यन्नुत्पद्यमानो यो नभस्वान् वायुस्तस्य प्रवेगेण भ्रान्तं कुलालचक्रवत् भ्रमण-विषयतामापन्नं ब्रह्माण्डखण्डं यत्र तत्तथोक्तञ्च, शम्भोरिदं शाम्भवं शम्भुसम्बन्धि ताण्डवम् उद्धतनृत्यं ( कर्तृ ) वो युष्माकं शिवं मङ्गलं (कर्म) प्रवितरतु समर्पयतु । शार्दू-लविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्रागेव (१९८) पृ०

( ८१ ) दोषमुपपादयति—अत्रेति । उद्धतताण्डवमतीवभीषणनृत्यं वाच्यम् अभि-धेयविषयः । ताण्डवस्य लोकसंहारहेतुभूतत्वादुद्धतत्वम् । तथा च ताण्डवे ओजस्विनि वाच्ये ओजोगुणप्रकाशका दीर्घसमासविकटवर्णा अनुगुणाः, तत "मूर्द्धन्याधूयमानध्व-नत्" इत्यादौ विद्यमानो विकटशब्दात्मको दुःश्रवत्वदोषो गुण एव पर्य्यवस्यति रसा-नुकूलत्वादिति भावः ।

( ८२ ) ननु रौद्रादौ दुःश्रवत्वस्य कुत्र गुणत्वातिशय इत्याशङ्कां मनसि निधायाह—रौद्रादीति । एतद्द्वितयापेक्षया कुपितवक्त्रुदाहरणीयोद्धतवाच्योदाहरणीयदुःश्रवत्वापे-क्षया । अत्यन्तं गुण इति । "क्रोधादेः स्थायित्वेन रसोत्कर्षात्" इति शेषः । उत्कृत्योत्कृत्य इति व्याख्यातपूर्वमिदं पद्यम् (२९७) पृ० बीभत्सो रस इति । अतोऽत्र जुगुप्सास्था-यिकत्वादोजो गुणान्विताया रचनाया रसोत्कर्षकत्वाद्दुःश्रवत्वदोषस्य गुणत्वातिशय इति भावः ।

रौद्रे दुःश्रवत्वं यथा—

स्फुटविकटचपेटाघातनेनायमष्टौ सपदि कुलगिरीन् वा खण्डशश्चूर्णयित्वा ।
प्रलयमरुदुदारस्फीत्कृतो धूतवातः प्रसृतिभिरथपारावारमुत्प्रेक्षयामि ॥

अत्र क्रोधस्यास्वाद्यमानतया वक्तुः क्रुद्धतया च दुःश्रवत्वस्य गुणत्वातिशयः ।

वीररसे यथा पूर्वोदाहृतपद्ये—"भो लङ्केश्वर ! दीयतां जनकजा" इत्यादौ "धनुर्ज्या-बन्ध" इत्यत्र ।

भयानकरसे—यथा—"अशक्नुवन् सोढुमधीरलोचनः" इत्यादौ "विश्यदिवसानि" इत्यत्र ।

अत्रेदम्बोध्यम्—सर्वथास्वादरहिते काव्याभासे दुःश्रवत्वादीनां न दोषत्वम्, न वा गुणत्वम् । धर्म्मिणां दोषगुणानां तत्राप्रवेशात् ।

अत एव—

"शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लासयन् यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणा निघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम्"

इत्यादौ काव्यत्वाभासादेव दोषगुणत्वाभास इति ।

अत्र बीभत्सो रसः ।

**( ८३ ) सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः ।**

तथा पुनरिति गुण एव । यथा—

( ८४ ) 'करिहस्तेन संबाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन्ध्वजः पुंसः साधनान्तर्विराजते ॥'

( ८५ ) अत्र हि सुरतारम्भगोष्ठ्याम् ।
'ताम्बूलदानविधिना विसृजेद्वयस्यां
द्व्यर्थैःपदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रस्थितिः ।

---

( ८३ ) अश्लीलत्वदोषस्य प्रतिप्रसवमाह—सुरतेति । तथा सुरतस्यारम्भ उद्योगस्तदर्थं या गोष्ठी संलापः साऽऽदौ यत्र तत्र तथोक्ते, आदिपदात् शमकथाप्रभृतीनां परिग्रहः । "गोष्ठी सभासंलापयोः" इति मेदिनी । पुनः अश्लीलत्वं गुण इति पूर्वतोऽनुषृत्तम् । अधमोक्तौ ग्राम्यत्वस्येव तत्र तत्र रसप्रकर्षस्यैवोत्पादकत्वादितिभावः ।

( ८४ ) तत्र त्रिविधेष्वश्लीलेषु व्रीडाव्यञ्जकस्याश्लीलस्य वाक्यगतस्य गुणत्वमुदाहरति—करिहस्तेनेति । वालिकायाः सुरतोपायस्य द्व्यर्थपदेन सूचनमिदम् । तथाहि पुंसो वीरस्य, ध्वजः पताका,

"ध्वजः पूर्वदिशो गृहे ।
शिश्ने चिह्ने पताकायां खट्वाङ्गे शौण्डिकेऽपि च" इति हैमः ।

सम्बाधे नराश्वादिभिः संकटे "सम्बाधः संकटे भगे" इति विश्वः । करिणां हस्तिनां हस्तेन शुण्डादण्डेन विलोडिते सावकाशे कृते साधनस्य सैन्यस्य अन्तर्मध्ये प्रविश्य इतस्ततो गच्छन् सन् विराजते । वालिकासुरतोपायश्चापि व्यक्तो भवति । तथाहि सम्बाधे संकुचिते साधनस्य मदनमन्दिरस्य स्त्रीवराङ्गस्य योनेरित्यर्थः, अन्तर्मध्ये, करिहस्तेन—

तर्जन्यनामिके युक्ते मध्यमास्याद्बहिष्कृता । करिहस्तः समुद्दिष्टः कामशास्त्रविशारदैः ॥

इत्युक्तदिशा कठिनयोनिशैथिल्यापादकेन बहिष्कृतमध्यमाङ्गुलीकेन तर्जन्यनामिकासंयोगेन, प्रविश्य विलोडिते विकासिते क्लेदिते वा उपसर्पन् गतागतं कुर्वन् पुंसः पुरुषस्य ध्वजो लिङ्गं विराजते ।

अत्रैतस्य व्रीडाव्यञ्जकाश्लीलत्वदोषस्य सहसा श्रोतुरपि सुरतोद्दीपकतया प्रकृतरसप्रकर्षोत्पादकत्वाद् गुणत्वम् । एवमन्यत्राप्युदाहरणं ज्ञेयम् ।

( ८५ ) ननु रमणविषयकाश्लीलतामात्रे कवीनां कथं द्व्यर्थपदोपादनमित्यत आह—अत्रेति । सुरतारम्भगोष्ठ्यां सुरतोद्योगसंलापमात्रे विषयसप्तमीयम् । द्व्यर्थैः प्रकाशनीयाप्रकाशनीयार्थकैः, पदैः, रहस्यवस्तु गोपनीयमर्थम्, पिशुनयेत् व्यञ्जयेत् न पुनः स्फुटमभिदध्यादित्यर्थः । कामशास्त्रस्थितिः कामशास्त्रस्य नीतिः अतो गुणः । अत एव "हन्तुमेव प्रवृत्तस्य" इत्यादावपि द्व्यर्थपदोपादनमिति ज्ञेयम् । नचोक्तदिशाऽत्र प्रतिऽसव एवाभ्युपेयतामिति वाच्यम् 'यथाशु जायते पातः" इत्यनेन तत्र सुरतारम्भाभावस्यैव बोधितत्वात् ।

( ८६ ) आदिशब्दाच्छ्रमकथाप्रभृतिषु बोद्धव्यम् ।

( ८७ ) **स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते ॥ १७ ॥**

यथा—

( ८८ ) 'पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतं गहनम् ।
हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत ॥'

( ८६ ) कारिकायामादिपदस्य सार्थकत्वमुपपादयितुमुत्थापयति—आदिशब्दादिति । अत्रापि प्रभृतिपदात् अमङ्गलाभिप्रायवद्वक्तृविद्विष्टपात्रकथादेः परिग्रहः ।

तत्र शमकथास्वपि अश्लीलत्वस्य गुणत्वं यथा—

'उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे । क्लेदिनि स्त्रीव्रणे सक्तिरक्रमेः कस्य जायते ॥'

अत्र वैराग्योत्पादकतया जुगुप्साव्यञ्जकाश्लीलत्वं गुण एव ।

वक्तुरमङ्गलाभिप्रायवदश्लीलत्वं गुणो यथा—

"निर्वाणवैरदहनाः" इति । ( ४६३ पृ० )

अत्र कुरूणां भाव्यमङ्गलकाश्लीलत्वं नटेन छद्मनोक्तया चमत्कारित्वातिशयव्यञ्जनाद् गुण एव ।

एवम्—

"सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्त्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥"

इत्यादावप्यमङ्गलव्यञ्जकाश्लीलत्वस्य गुणत्वमूहनीयम् ।

विद्विष्टपात्रकथायां यथा दुर्गामाहात्म्ये सप्तसत्याम्—"केचिन्नष्टा महाहवात्" । अत्र पलायनार्थं प्रयुक्तेन नष्टपदेन विद्विष्टानामेव राक्षसानां मरणव्यञ्जनात्तादृशामङ्गलव्यञ्जकाश्लीलत्वं गुण एव ।

( ८७ ) निहतार्थत्वाप्रयुक्तत्वयोः प्रतिप्रसवमुपदिशति—स्यातामिति । श्लेषस्तावत् श्लेषसमासोक्त्याद्यलङ्कारेषु ध्वनिषु च अनेकार्थज्ञापनमात्रम् । आदिपदात् यमकादिश्च तस्मिंस्तथोक्ते, निहतार्थाप्रयुक्तते निहतार्थमप्रयुक्तार्थञ्चैतौ दोषौ अदोषौ परित्यक्तदुष्टताकौ स्यातां नापि दोषौ नापि गुणौ भवेतामित्यर्थः । तथाहि च तत्र तत्र तेषां दोषत्वस्वीकारेण परिहरणीयत्वे श्लेषादिरलङ्कारो ध्वनिः तत्तद्यमकादिश्च प्रायेण न युज्यत एवेत्यकामेनापि तेषामदोषत्वम्, चमत्कारितान्तरोत्पादनाभावाच्च अगुणत्वमिति भावः।

( ८८ ) तत्र निहितार्थत्वाप्रयुक्तत्वयोर्द्वयोरदोषत्वे श्लेषे एकमुदाहरणं दर्शयति—पर्वतभेदीति । त्रिविक्रमस्य पद्यमिदम् । पर्वतं क्रौञ्चनामकाद्रिं भिनत्ति परशुरामरूपेण छेदयतीति स चा सौ पवित्रश्चेति तं तथोक्तम्, यद्वा पर्वतभेदीन्द्रस्तस्य पविर्वज्रं तस्मात्त्रायते गोकुलं रक्षतीति तं तथोक्तम् , नरकस्य तदाख्यस्यासुरस्य जैत्रं जयशीलम् , बहुमतं सर्वैरादृतम् , गहनं सर्वैर्दुर्ज्ञेयस्वरूपञ्च हरिं विष्णुमिव, पर्वतान् भिनत्ति पक्षकर्त्तनात्तेषां हृदयं छेदयतीति पर्वतभेदी, यः पविर्वज्रः सं त्रायते स्वकरेण पालयति दधातीति यावत् स पर्वतभेदिपवित्रस्तं तथोक्तम् , "कुलिशं भिदुरं पविः" इत्यमरः, जैत्रं जयशीलम् "जैत्रस्तु जेता" इत्यमरः, नरकस्य स्वानुकम्पनीयमनुष्यमात्रस्य बहुमतं भृशं पूजितम् , गहनं दुर्जयञ्च, हरिमिन्द्रमिव "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु"

( ८९ ) अत्रेन्द्रपक्षे पविप्रशब्दो निहतार्थः । सिंहपक्षे मतङ्गशब्दो मातङ्गार्थेऽप्रयुक्तः ।

( ९० ) गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद्वक्तृवाच्ययोः ।

यथा—

( ९१ ) 'त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् ।
त्वद्दर्शनमुदासीनं त्वामेव पुरुषं विदुः ॥'

---

इत्यमरः। अस्मिन्पक्षे नरकस्येत्यत्रानुकम्पायां कन्प्रत्ययो ज्ञेयः। पर्वतस्य भेदश्छेदो गुहेतियावत् आश्रयत्वेनास्यास्तीति सोऽसौ पवित्रस्तं पविं दिशां स्वाधिष्ठितं देशमितियावत्, त्रायते दुर्गम्यतादिविधानेन रक्षतीति पवित्रः "दिक् तु स्त्रियां दिशा दान्ती ककुब्देववधूः पविः" इति शब्दार्णवः, चण्डिकाया वाहनत्वात् पूतस्वभावो वा तं तथोक्तम्, यद्वा "मृगाणाञ्च मृगेन्द्रोऽहम्" इति स्मरणात्पवित्रत्वमवगन्तव्यम्, नरकस्य मनुष्यमात्रस्य जैत्रं जयशीलम्, बहवो मतङ्गा हस्तिनः तान् हन्तीति तं तथोक्तं हरिमिव सिंहमिव। अस्मिन् पक्षे नरकस्येत्यत्राल्पार्थे कप्रत्ययो जातावेकवचनञ्च। पर्वतान् वृक्षान् भिनत्त्युन्मूलयतीत्येवं शीलं तत्तादृशम् "पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः। देवमुन्यन्तरे शैले" इति मेदिनी यद्वा पर्वतभेदि हिमालयविदारि-गोमुखाख्यहिमालयशिखरं भित्त्वा निःसृतमित्यर्थः, पवित्रं पावनम्, नरकस्य पापजन्ययातनायाः जैत्रं जयशीलं नाशकमित्यर्थः, बहुमतं पृथिव्यां धार्मिकमनुष्यैरत्यादृतम्, गहनं दुर्विगाह्यम्, पतत् भूमाववतरत् सुरसरिद् गङ्गा तस्य अम्भो जलं तथोक्तम्, भो मुमुक्षवो लोका इति शेषः, नमत प्रणमत। आर्याछन्दस्तल्लक्षणन्तूक्तं प्रागेव।

( ९८ ) अदोषत्वमुपपादयति—अत्रेति। अत्रोदाहृतपद्ये। निहितः प्रसिद्धतया पावनरूपेणार्थेन उपस्थितौ प्रतिहतः अर्थौ वज्रधारिरूपार्थौ यस्य स तथोक्तः। पवित्रशब्दस्य पूतार्थे प्रसिद्धतया पविना त्रायते इति वज्रधारिरूपे इन्द्रेऽर्थे तु निहतार्थ इत्यर्थः। अत एवास्मिन् पक्षे निहतार्थत्वदोष इत्याशयः। अप्रयुक्त इति। मतङ्गशब्दस्य मातङ्गार्थे लक्षणया प्रसिद्धत्वेऽपि कविभिरनादृतत्वादप्रयुक्तत्वं दोष इत्याशयः।

प्रकृते तु श्लिष्टपदोपादानेन कवेरर्थद्वये तात्पर्याददोषाविति भावः। नचात्र हरिमिवेत्यत्राऽनवीकृतत्वं कथितपदत्वं वा दोष इति वाच्यम्, एकपदवाच्यानेकेषां दृष्टान्तानां वैचित्र्यविशेषस्वाभावकत्वेनाऽदोषत्वात्।

ध्वनौ यथा—"भुक्तिमुक्तिकृदेकान्त—" इत्यादौ (३६०) पृ० अत्र मुक्तिशब्दो निर्वाणे प्रसिद्धः विरहक्लेशत्यागे तु निहतार्थ इति।

( ९० ) अप्रतीतार्थस्य गुणत्वमुपपादयति—गुण इति। चेद्यदि वक्तृवाच्ययोर्वक्तुर्बोद्धव्यस्य च ज्ञत्वं तत्तच्छब्दस्य सङ्केताभिज्ञत्वं स्यात्, तदा प्रतीतत्वम् अप्रतीतार्थत्वं नाम दोषो गुण एव स्यात्। प्रतीतिस्थगनस्य दोषबीजतया विज्ञे तदभावादिति भावः।

( ९१ ) उदाहरति—त्वामिति। कुमारसम्भवे द्वितीयसर्गे तारकासुरेण पीडितानां देवानां ब्रह्मस्तुतिरियम् (हे देव) पुरुषार्था धर्मार्थकाममोक्षास्तान् प्रवर्तयति उत्पादयतीति तां तथोक्ताम्, प्रकृतिं प्रधानम्, "प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे" इति यादवः, त्वां भवन्तम्, आमनन्ति कथयन्ति महात्मान इति शेषः। तथा त्वामेव तद्दर्शिनं तां प्रकृतिं पश्यति साक्षित्वेनावलोकते इत्येवं शीलस्तं तादृशम्, उदासीनं

( ९२ ) स्वयं वापि परामर्शे—

( ९३ ) अप्रतीतत्वं गुण इत्यनुषज्यते । यथा—

( ९४ ) 'युक्तः कलाभिस्तमसां विवृद्ध्यै क्षीणश्च ताभिः क्षतये च एषाम् ।
शुद्धं निरालम्बपदावलम्बं तमात्मचन्द्रं परिशीलयामि ॥'

---

सर्वत्रासङ्गं समस्तकार्योत्पादने स्वार्थत्वाभावादितिभावः, पुरुषं सर्वकर्तृपुरुषं कूटस्थं चित्स्वरूपमित्यर्थः, विदुर्विदन्ति । तथाच श्रुतिः—

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते"………इत्यादि ।

अत्र "सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः"……"नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः" गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति" "द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः" "असङ्गो ह्ययं पुरुषः" । "क्षेत्रज्ञ आत्मा पुरुषः" इत्यादि प्रकृतिपुरुषयोरभेदव्यपदेशः सांख्यमतेन, वेदान्तिमतेन तु–"प्रकृतिश्च दृष्टान्तानुपरोधात्" इत्युक्तदिशा ब्रह्मणः प्रकृतित्वमेवेति । अत्र च प्रकृत्यादीनामर्थानां सांख्ययोगदर्शनयोरेव प्रसिद्धत्वेन तदनभिज्ञवक्तृबोद्धव्यपक्षेऽप्रतीतार्थावपि देवानां ब्रह्मणश्चाभिज्ञतया प्रतीतत्वाच्चाप्रतीतत्वं प्रत्युत गुणत्वमेव । अयम्भावः—एकदेशमात्रप्रसिद्धत्वेन तदनभिज्ञस्य वक्तृबोद्धव्यस्य च प्रतीत्यभावादेव अप्रतीतस्य दोषत्वं वाच्यम्, किन्त्विदानीं वक्तृबोद्धव्यस्य चाभिज्ञतया तदर्थप्रतीतौ सत्यां कथमप्रतीतत्वं कथं वा तस्य दोषत्वं भविष्यति अपि तु कथमपि न प्रत्युत गम्भीरविषयतया चमत्कारपोषकत्वाद्गुणत्वमेवेति ।

( ९२ ) अप्रतीतार्थत्वस्य प्रकारान्तरेण प्रतिप्रसवं दर्शयति—स्वयमिति । स्वयमात्मना वा परामर्शे पर्यालोचने । अप्रतीतत्वं गुण इति पूर्वतोऽनुषङ्गः । तथाच अभिज्ञस्य वक्तुः स्वगतत्वेन पर्यालोचनेऽपि अप्रतीतार्थो गुण एवेत्यर्थः ।

( ९३ ) अत्र "अप्रतीतत्वं गुणः" इत्यस्यासत्त्वेऽर्थो न सम्भवतीतिपूर्वकारिकातोऽनुवृत्तमितिदर्शयति—अप्रतीतत्वमिति । स्पष्टम् ।

( ९४ ) उदाहरति—युक्त इति । वेदान्तनिष्ठस्योक्तिरियम् । य आत्मा तमसामज्ञानानां तत्प्रधानानामविद्याकार्य्याणामितियावत्, विवृद्ध्यै विशेषेण वृद्ध्ये, कलाभिः रजःसत्त्वतमोगुणरूपाभिर्मायाविभूतिभिः पृथिव्यादिभिः स्वजनितांशैर्युक्तो भवति विराट्स्वरूपेण परिणतो भवति, तथा य आत्मा एषां तमसां क्षतये तिरोभावाय नाशायेत्यर्थः, ताभिः कलाभिः क्षीणो विहीनो निर्गुणश्चेत्यर्थः भवति परब्रह्मरूपेणावतिष्ठते । चन्द्रपक्षे तु तमसामन्धकाराणां विवृद्ध्यै इत्यर्थो ज्ञेयः यावद्राश्रितमःसत्त्वादिदमुक्तम् ।

कलाभिः तत्प्रकाशपादकैर्ज्योतिर्विशेषैः षोडशभागैः, क्षीणः कार्य्याक्षमत्वेन नष्टप्रभावो भवति, पुनरेषां तमसां क्षतये नाशाय ताभिः कलाभिर्युक्तश्च भवतीत्यर्थः । दिवसे हि चन्द्रः क्षीणकल इव जायते, तदाचान्धकाराणामभाव इति सर्वजनवेद्यम् । निरालम्बपदंशिरःस्थाधोमुखकमलकर्णिकामध्यं तत्र स्वस्मिन् अन्यत्राकाश इत्यर्थः, अवलम्बः आश्रयो यस्य तं तथोक्तम्, तम्, आत्मा परमात्मा चन्द्र इव तं तथोक्तम्, शुद्धं शुभ्रप्रकाशं परिशीलयामि सर्वदा चिन्तयामि । उपजातिश्छन्दस्तल्लक्षणन्तूक्तमेव ।

( ९५ ) कथितं च पदं पुनः ॥ १८ ॥

विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि ।

दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने ॥ १९ ॥

अर्थान्तरसंक्रमितवाच्ये हर्षेऽवधारणे ।

( ९६ ) गुण इत्येव । यथा—

'उदेति सविता ताम्रः—' इत्यादि ।

( ९७ ) अत्र विहितानुवादः ।

( ९८ ) 'हन्त हन्त गतः कान्तो वसन्ते सखि नागतः ।'

---

अत्र शारीरकभाष्यादौ स्थितानां "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतम्" "पुरुष एवेदं सर्वम्" "तदैक्षत बहुस्यां प्रजायेय" "तस्माद्वा एतस्मादात्मनः आकाशः संभूतः" "अविनाशी वारेऽयमात्मा द्रष्टव्यः श्रोतव्यो मन्तव्यश्च" इत्यादीनामर्थानामनभिज्ञैरन्यैःप्रतीतत्वाभावेन दोषोऽपि अभिज्ञस्य वक्तः स्वस्य परामर्शकत्वाद्गुण एव ।

( ९५ ) कथितपदत्वप्रतिप्रसवं दर्शयति—कथितमिति । किञ्चेति चार्थः । विहितस्यानुवाद्यत्वे उद्देश्यस्य प्रतिनिर्देश्ये, क्रुधि क्रोधे, दैन्ये दीनतयोक्तौ, लाटानुप्रासे तत्संज्ञके शब्दालङ्कारे, अनुकम्पायां दयायां व्यञ्जनीयायाम्, प्रसादने प्रसन्नताऽऽपादने अर्थान्तरसङ्क्रमितवाच्ये तत्संज्ञके ध्वनौ, हर्षे प्रमोदे अवधारणे अयोगव्यवच्छेदेऽन्ययोगव्यवच्छेदे च । तथाच विहितानुवाद्यत्वादिष्वेकादशस्थलेषु कथितं पदं कथितपदत्वसंज्ञको दोषः पुनर्गुण एव । गुण इति पूर्वतोऽनुषज्यते । गुणत्वकारणन्तु उदाहरण एवानुपदं स्फुटीभविष्यति । तथा चोक्तम्—"विषादे विस्मये हर्षे दैन्ये कोपेऽवधारणे ।

प्रसादनेऽनुकम्पायां द्विस्त्रिरुक्तं न दुष्यति ॥" इति ।

( ९६ ) पूर्वतोऽनुषञ्जितं गुणपदमिति दर्शयति—गुण इति ।

( ९७ ) गुणत्वमुपपादयितुमाह—अत्रेति । विहितानुवाद उद्देश्यप्रतिनिर्देश्यत्वम् । एवम् उदयसवितुरुद्देशे विहितस्य ताम्रत्वस्य अस्तमयसवितुरुद्देशेनाऽपि विधेयतया प्रतिनिर्देशरूपोऽनुवाद इत्यर्थः । तथा च उद्देश्यप्रतिनिर्देश्यस्थले उक्तपदप्रयोगादर्थान्तरप्रतीत्यभावेन झटित्येव शाब्दबोधात् अविलम्बेनैव रसप्रतीतेरित्यत्र कथितपदत्वस्य गुणत्वम् । पदान्तरेणोपादाने तु भिन्नत्वेनावभासात् प्रतीतिविलम्बे दोष इति भावः । "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" इतिन्यायेनोपस्थितशब्दस्यापि विशेषणतया भानाङ्गीकारात् ।

एवं—"जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।

गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥"

इत्यत्र कारणमालाऽलङ्कारे विहिताऽनुवाद्यत्वे कथितपदत्वं गुणः ।

( ९८ ) विषादमुदाहरति—हन्त इति । "हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः" इत्यमरः ।

'प्राप्तेऽपि विरहिप्राणनिष्काशनसमुद्यते' । इति मत्पादांशः ।

हन्त ! हन्त ! कष्टं कष्टम्, गतः परदेशमितिशेषः । वसन्ते प्राप्तेऽपीतिशेषः ।

( ९९ ) अत्र विषादः।

(१००) 'चित्रं चित्रमनाकाशे कथं सुमुखि ! चन्द्रमाः।'

( १ ) अत्र विस्मयः।

( २ ) 'सुनयने नयने निधेहि' इति।

( ३ ) अत्र लाटानुप्रासः।

( ४ ) 'नयने तस्यैव नयने च।'

इत्यादावर्थान्तरसंक्रमितवाच्यो ध्वनिः।

( ५ ) एवमन्यत्रापि।

---

( ९९ ) अत्रेति। विषाद इति। अतोऽस्यातिशयव्यञ्जकत्वादूगुणत्वमिति शेषः। तथा च हन्त हन्तेति पदद्वयेन कथितपदत्वदोषो विषादाधिक्यव्यञ्जनाद्गुण इति भावः।

(१००) विस्मयमुदाहरति—चित्रमिति।

"शोभते परिपूर्णोऽयं स्वभासा दीपयन् दिशः।" इति मुद्राचितांशः। कस्यापि विदग्धस्य प्रियां प्रति तन्मुखं चन्द्राभेदेन वर्णयत उक्तिरियम्। चित्रं चित्रमाश्चर्यमाश्चर्यम्। आकाशाद्बहिरूद्भमनाकाश तत्रानाकाशे।

( १ ) अत्रेति। विस्मयः। तथाच चित्रचित्रमितिशब्दद्वयेन कथितपदत्वं विस्मयाधिक्यव्यञ्जनाद्गुणः।

( २ ) लाटानुप्रासे कथितपदत्वस्य गुणत्वमुदाहरति—सुनयने इति। अत्र मत्पूरितन्त्वेवम्—

कल्याणि ! पादयुगलं शरणं त्वदीयं
ज्ञात्वैव हन्त ! तव सन्निधिमागताऽहम्।
चेत्त्वं दयां न कुरुषे हतके जनेऽस्मिन्
शीघ्रं मनाक् सुनयने ! नयने निधेहि॥

( ३ ) अत्रेति। लाटानुप्रासे कथितं पदमुपकारकं भवति अन्यथा तन्न्यासमन्तरा तस्य वैचित्र्यानुदयात्तेन "नयने नयने" इति शब्दद्वयेन वैचित्र्यविशेषद्योतनात् कथितपदत्वं गुणः।

( ४ ) अर्थान्तरसङ्क्रमितवाच्यध्वनौ कथितपदत्वस्य गुणत्वमुदाहरति-नयने इति। अत्रापि "नयने नयने" इति शब्दद्वयेन कथितपदत्वम् अर्थान्तरसङ्क्रमितवाच्यध्वनिघ्नुत्तितया चमत्कारविशेषाधायकत्वाद्गुणः।

( ५ ) क्रोधादौ कथितपदत्वस्य गुणत्वमवबोधितमपि कथं नोदाहृतमित्यत आह—एवमिति। अन्यत्र क्रोधादावेवमूह्यमित्यर्थः। तत्र क्रोधे यथा—

यातु यातु किमनेन तिष्ठता मुञ्च मुञ्च सखि ! सादरं वचः।
पामरीवदनलोलुपो युवा नैष वेत्ति कुलजाधरासवम्॥

अत्र "यातु यातु" इति पदद्वयेन समभिव्याहृतपदार्थस्यायोगव्यवच्छेदो लक्ष्यते क्रोधातिशयश्च व्यज्यतेऽतो गुणः।

दैन्ये यथा—

"देहि देहि नृपमेव तु चित्तम्"। अत्र देहि देहीतिपदद्वयेन दानप्रयुक्तिपौनःपुन्यं

(६) संदिग्धत्वं तथा व्याजस्तुतिपर्यवसायि चेत् ॥ २० ॥

गुण इत्येव । यथा—

(७) 'पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥'

लक्षयति दैन्यातिशयश्च व्यज्यतेऽतः कथितपदत्वं गुणः ।

अनुकम्पायां यथा—

आश्रममृगोऽयं नहन्तव्यो न हन्तव्यः ।"

अत्राश्रममृगेऽनुकम्पातिशयव्यञ्जनात्कथितपदत्वं गुणः ।

प्रसादने यथा—

मातर्मातर्नमस्ते दह दह जडतां देहि बुद्धिं प्रशस्ताम् ।

अत्रानुनयातिव्यञ्जनात् कथितपदत्वं गुणः ।

हर्षे यथा—

कथय कथय दूत ! क्वागतो रामभद्रो नवजलदगभीरस्निग्धभव्योदितश्रीः ।
क्व ननु स स सुमित्रानन्दनो लक्ष्मणो वा सुविमलपरिपूर्णप्रस्फुरत्सोमसौम्यः ॥

अत्र कथय कथय इतिपदद्वयेन हर्षाभिव्यद्योतनात् कथितपदत्वं गुणः ।

अयोगव्यवच्छेदे यथा—

'हन्ति हन्ति रिपुं वीरः । अत्र कथितपदत्वं गुणः ।

अन्ययोगव्यवच्छेदे यथा—

तद्वञ्चनाहितमतिर्बहुचाटुगर्भं कार्योन्मुखः खलु जनः कृतकं ब्रवीति ।
तत्साधवो ननु विदन्ति विदन्ति किन्तु कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥

अत्र "विदन्तीति द्वितीयपदं साधव एव विदन्तीत्यन्ययोगव्यवच्छेदः । तत्र कथित-पदत्वं गुण एव ।

वस्तुतस्तु विषादादिकथनं वीप्सामात्रोपलक्षणार्थम् । अतएव—

पीत्वा पीत्वा सुरभिमदिरामादरात्कान्तदत्तां
कण्ठं यस्य प्रसितुरभसाद्वाहुपाशद्वयेन ।
वक्त्रं दन्तव्रणाकिणकलङ्काङ्कुलं कारयेन्दुं
मत्तानां तु व्रजति घुणतां दातुरापत्प्रदत्वम् ॥

याहि याहि सुमुखि ! प्रिय धाम त्राहि कान्तमशरीरशराधेः ।
बन्धुरेव विपदः प्रतिकारे सन्दधाति सुतरामुपयोगम् ॥

इत्यादौ पीत्वा पीत्वेति याहि याहीत्यादिकं कथितपदत्वमपि गुण एव ।

(६) सन्दिग्धत्वस्य गुणत्वमुपपादयितुमाह—सन्दिग्धत्वमिति । संदिग्धत्वं नाम दोषः, तथा गुण एव । चेद् यदि व्याजस्तुतिपर्यवसायि छद्मस्तुतिपरिणतं स्यात् ।

(७) उदाहरति—पृथुकार्तस्वरेति । राजानं प्रति दरिद्रस्योक्तिरियम् । हे देव राजन् ! सम्प्रति यावद्भवता न दीयते तावदिति शेषः, आवयोः सदनं गृहं समं समानम् , ततो धनलाभानन्तरं तु मद्गृहं न सममिति सम्प्रतिपदेन व्यज्यते । श्लिष्ट-विशेषणैः साम्यमेवोपपादयति—पृथ्वित्यादिना । राजसदनपक्षे—पृथूनि विशालानि कार्त-स्वरस्य सुवर्णस्य पात्राणि भाजनानि यत्र तत्तथोक्तम् । "रुक्मं कार्तस्वरं जाम्बूनद-

( ८ ) वैयाकरणमुख्ये तु प्रतिपाद्येऽथ वक्तरि ।
कष्टत्वं दुःश्रवत्वं वा—

गुण इत्येव । यथा—

( ९ ) 'दीधीवेवीट्समः कश्चिद्गुणवृद्ध्योरभाजनम् ।
क्विप्प्रत्ययनिभः कश्चिद्यत्र सन्निहिते न ते ॥'

---

मष्टापदोऽस्त्रियाम्" इत्यमरः । तथा भूषिता रत्नादिभिरलङ्कृता निःशेषाः समग्राः परिचारकजनाः सेवका यत्र तत्तथोक्तम्, तथा विलसन्तीभिः शोभमानाभिः करेणुभिः हस्तिनीभिः गहनं सङ्कीर्णं दुर्गममित्यर्थः । "करेणुर्गजयोषायां स्त्रियां पुंसि मतङ्गजे" इति मेदिनी । दरिद्रसदनपक्षे तु—पृथुकानां शिशूनां "पृथुकः शावकः शिशुः" इत्यमरः, आर्त्तस्वरस्य भोज्याभावात् क्षुत्पीडिततया कातरध्वनेः, पात्रं स्थानम्, भुवि पृथिव्याम् ( मृत्तिकायाम् ) उषिता आसनाद्यभावात् स्थिताः निःशेषाः सकलाः परिजनाः परिवारजनाः पुत्रकलत्रादयः यस्मिंस्तत्तथोक्तम् । विलेषु वबयोः सावर्ण्यमित्यालङ्कारिकास्तेन बिलेषु गर्त्तेषु सीदन्ति अवतिष्ठन्ते ये ते विलसत्काः मूषकाः, कुत्सायां स्वार्थे वा कन्प्रत्ययः, तेषां रेणुभिस्तदुत्क्षिप्तधूलिभिः, यद्वा सन्तीति सन्तः सन्त एव सत्का बिलेषु सत्काः वर्त्तमाना ये रेणवस्तैर्गहनम् । अथवा बिले सत् वर्त्तमानं कं जलं रेणुश्च ताभ्यां गहनं सङ्कीर्णमित्यर्थः । आर्य्या छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

अत्र पृथुकार्त्तस्वरपात्रादीनि विशेषणानि "पृथूनि कार्त्तस्वरस्य पात्राणि यत्र तत्" इत्याद्यर्थकानि किं वा पृथुकानामार्त्तस्वरस्य पात्रम्" इत्याद्यर्थकानि इत्यादि सन्देहात् सन्दिग्धत्वदोषः । एवं सत्यप्यत्रोक्तविशेषणानां योग्यतया तत्तत्पक्षानुकूलार्थनिश्चयात् राज्ञो व्याजस्तुतिपर्य्यवसायितया सन्दिग्धत्वं गुण एव ।

( ८ ) कष्टत्वदुःश्रवत्वयोः गुणत्वमुपपादयति—वैयाकरणेति । व्याकरणमधीयते विदन्ति वेति वैयाकरणाः तेषां मुख्यो मुखमादिर्यस्य तस्मिन् वैयाकरणादिके जने प्रतिपाद्ये बोद्धव्ये श्रोतरीत्यर्थः । अथवा वक्तरि, सति सप्तमीयम्, कष्टत्वं दुःश्रवत्वं वा दोषो गुण एव । वैयाकरणत्वं चात्र न व्याकरणगाढ़ज्ञानवत्त्वमात्रम् "सोऽध्यैष्ट वेदान्" इत्यत्र तादृशभट्टिकारवक्तृके श्रुतिकटुत्वदोषत्वानुपपत्तेः किन्तु स्ववैयाकरणत्वप्रतिपिपादयिषया प्रयुक्तत्वम् । तथाच वैयाकरणे श्रोतरि नादुष्टं गुणो वा किन्तु वैयाकरणे श्रोतरि तद्वैयाकरणप्रतिपिपादयिषया प्रयुक्तत्वमेव । ध्वनितञ्चेदं सर्वं श्रोतरीतिपदं परित्यज्य "प्रतिपाद्ये" इति प्रतिपादयता मूलकृतैव । एवं "वैयाकरणे वक्तरि" इत्यस्य स्ववैयाकरणत्वप्रतिपिपादयिषौ वक्तरीत्यर्थः । मुख्यपदेन शुष्क—स्मार्त्त—तार्किकादीनां ग्रहणम् ।

( ९ ) उदाहरति—दीधीति । अस्मिन् ग्रामे कीदृशा जना निवसन्तीति पृष्टवन्तं प्रति कस्यापि वैयाकरणस्योत्तरमिदम् । कश्चित् पुरुषः दीधीवेवीट्समः "दीधीङ् दीप्तिदेवनयोः" 'वेवीङ् वेतिना तुल्ये" इति धातुद्वयम् इडिति आगमः तैः समस्तुल्य इत्यर्थः । साम्यमेवोपपादयितुमाह—गुणवृद्ध्योरिति । यतो गुणस्य दयादाक्षिण्यादेः वृद्धेरभ्युदयस्य च अभाजनम् अनाश्रयः । धातुपक्षे "अदेङ् गुणः" इति सूत्रपरिभाषितो गुणः, "वृद्धिरेचि" इति सूत्रपरिभाषिता वृद्धिः तयोरभाजनम् "दीधीवेवीटाम्" इति सूत्रेण गुणवृद्धिनिषेधात् । यथा-आदीध्यन्, आवेव्यनमित्यत्र गुणनिषेधः, आदीध्यकः, आवेव्यक

( १० ) अत्रार्थः कष्टः । वैयाकरणश्च वक्ता ।

( ११ ) एवमस्य प्रतिपाद्यत्वेऽपि ।

( १२ ) 'अत्रास्मार्षमुपाध्यायं त्वामहं न कदाचन !'

अत्र दुःश्रवत्वम् । वैयाकरणो वाच्यः ।

( १३ ) एवमस्य वक्तृत्वेऽपि ।

ग्राम्यत्वमधमोक्तिषु ॥ २१ ॥

---

इत्यत्र वृद्धिनिषेधः, भवितेत्यादौ इडागमस्य गुणनिषेध इति ज्ञेयम् । नैतावती पराकाष्ठा किन्तु कश्चित् पुरुषः क्विप् प्रत्ययेन निभः सदृशः सर्वतःप्राप्तलोप इत्यर्थः । क्विप्प्रत्ययोऽपि सर्वतःप्राप्तलोपः "हलन्त्यम्" इतिसूत्रेण पकारस्य "लशक्वतद्धिते" इति ककारस्य "उपदेशेऽजनुनासिक" इतीकारस्य "वेरपृक्तस्य" इति वकारस्य लोपविधानादिति भावः । यत्र यस्मिन् पुरुषे सन्निहिते निकटे सति ते गुणवृद्धी अन्यस्यापि न भवतः । क्विप्प्रत्ययेऽपि सन्निहिते परतो वर्त्तिनि गुणवृद्धी न भवतः "क्ङिति च" इतिसूत्रेण निषेधादिति भावः । यथा जिट् भिदित्यादौ "पुगन्तलघूपधस्य च" इतिसूत्रप्राप्तस्य गुणस्य निषेधः मृट् इत्यत्र "मृजेर्वृद्धि" रितिसूत्रप्राप्ताया वृद्धेर्निषेधोऽवगन्तव्यः ।

( १० ) गुणत्वमुपपादयति—अत्रेति । कष्टः साधारणपुरुषपक्षे कष्टगम्यः तत्तद्व्याकरणसूत्रानुसन्धानसापेक्षत्वादिति भावः । वैयाकरणश्च वक्तेति । तथाच विलम्बेनार्थप्रतीतावपि वक्तुः तत्तत्सूत्राणां सततमेव स्मृत्युदिततया व्याकरणव्युत्पत्त्यतिशयप्रतीतेः, कष्टप्रत्येयत्वगम्यत्वाभावाच्च गुणत्वं दोषत्वाभावश्चेत्याशयः ।

( ११ ) प्रतिपाद्यत्व उदाहरणमूह्यमिति दर्शयितुमाह—एवमिति । अस्य वैयाकरणादेः प्रतिपाद्यत्वे बोधनीयत्वे । अपि उदाहार्यमिति शेषः । अत्र वागीशाः—

"आत्मनेपदसंयोगि यजिकर्त्ता गुरुर्भवान्" ( इत्यत्र ) आत्मनः स्वर्गार्थं यागं करोषीत्यर्थः कष्टः, ( गुण एव ) इत्याहुः ।

( १२ ) वैयाकरणे बोधनीयत्वे दुःश्रवत्वस्य गुणत्वं दर्शयति—अत्रेति ।

अत्र अस्मिन् विषये । कदाचन कदाऽपि । अस्मार्षं ( सादरयात् ) स्मृतवान् । त्वत्साहाय्यमन्तरेणैव मया सर्वमुत्तरितमिति भावः । अस्मार्षमित्यत्र दुःश्रवत्वम् । ननु तर्हि सर्वत्रैवं स्यादत आह—वैयाकरण इति । वाच्यो बोधनीयः । प्रकाशकारास्तु—

यदा त्वामहमद्राक्षं पदविद्याविशारदम् ।
उपाध्यायं तदास्मार्षं समस्प्राक्षं च सम्मदम् ॥

इत्यत्र वक्तृबोध्ययोरुभयोरपि वैयाकरणत्वेन कष्टत्वं दुःश्रवत्वं च गुण इत्याहुः ।

( १३ ) वक्तृत्वेऽप्यस्योदाहरणान्तरमूह्यमित्यत आह—एवमिति अस्य वैयाकरणादेः । अपि दुःश्रवत्वं गुण ऊह्य इति शेषः ।

यथा भट्टिकाव्ये—

"सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनताप्सीत् सममंस्त बन्धून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥"

अत्र वैयाकरणस्य वक्तृत्वेन दुःश्रवत्वं गुणः ।

( १४ ) गुण इत्येव । यथा मम—

( १५ ) 'एसो ससहरबिम्बो दीसइ हेअङ्गवीणपिण्डो व्व ।
एदे अस्ससमोहा पडन्ति आसासु दुद्धधार व्व ॥'

इयं विदूषकोक्तिः ।

( १६ ) निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छति ।

यथा—

( १७ ) 'संप्रति संध्यासमयश्चक्रद्वन्द्वानि विघटयति ।'

---

शुष्कतार्किकवक्तृत्वे कष्टत्वं गुणो यथा—

न्यायानुमानविगुणं कुयशस्ते महीपते ! ।
हेत्वाभासवदुद्भाव्यं विदुषो याति निग्रहम् ॥

अत्र पञ्चावयवन्यायप्रयोगे दुष्टहेतुप्रयोगे वादिनिग्रहकर इत्यर्थः। एतदनभिज्ञानां कष्टस्तदभिज्ञानां तु गुण एव एवं "साध्यं निश्चितमन्वयेन" इत्यादावपि कष्टत्वं गुण इत्यनुसन्धेयम् ।

( १४ ) ग्राम्यत्वस्य गुणत्वमुपपादयितुमाह-ग्राम्यत्वमिति । अधमानाम् अशिक्षितजनानामुक्तयस्तासु । ग्राम्यत्वं नाम दोषो गुण एवेत्यर्थः ।

( १५ ) उदाहरति-एसो इति ।

एषशशधरबिम्बो दृश्यते हैयङ्गवीनपिण्ड इव ।
एते चांशुसमूहाः पतन्त्याशासु दुग्धधारा इव ॥

इति संस्कृतम् । हैयङ्गवीनपिण्डः पूर्वदिनोत्पन्नदुग्धनिष्पन्नघृतपिण्डः, तथा च "तत्तु हैयङ्गवीनं यद् ह्यो गोदोहोद्भवं घृतम्" इत्यमरः । अंशुसमूहाः शशधरस्यैव किरणजालानि । आशासु दिशासु "दिशस्तुः ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः । आर्याछन्दोलक्षणमुक्तमेव ।

अत्र दुग्धधाराशब्दो ग्राम्यः । तथाच विदूषकस्याधमपात्रत्वेन तत्प्रयोगे शिशोरर्धस्फुटवचनमिव योग्यत्वात् कमपि कौतूलं जनयतीत्यस्य गुणत्वमित्यवगन्तव्यम् । एवं "मुग्धा दुग्धधिया" इत्यादावनुप्रासविशेषादौ च ग्राम्यत्वस्यादोषत्वमित्यवधेयम् ।

( १६ ) निर्हेतुताया गुणत्वमुपपादयितुमाह—निर्हेतुतेति । ख्यातेऽर्थे-लोकप्रसिद्धेविषये निर्हेतुता नाम दोषस्तु नैव दोषतां गच्छति दुष्टतां न प्राप्नोतीत्यर्थः । चमत्कारातिशयाजननाद्गुणतामपि नैव गच्छतीत्यपि ज्ञेयम् ।

( १७ ) उदाहरति–सम्प्रतीति सन्ध्यासमयः चक्रद्वन्द्वानि चक्रवाकपक्षियुगलानिविघटयति परस्परं वियोजयति ।

अत्र सन्ध्यासमयस्य सपत्नीक–चक्रवाकपक्षिणां परस्परवियोजकत्वं लोकप्रसिद्धमिति तत्र हेत्वपेक्षाया अभावान्न निर्हेतुतादोष इति ज्ञेयम् । एवमेव—

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥

अत्र रात्रौ चन्द्रगताया लक्ष्म्याः पद्मगुणानुपभोगे पद्मसंकोचो हेतुः, दिवा च पद्माश्रिताया लक्ष्म्याश्चन्द्रगुणानुपभोगे चन्द्रस्य निष्प्रभत्वं हेतुः, ते च लोकेऽतिप्रसिद्धे रेवा

( १८ ) कवीनां समये ख्याते गुणः ख्यातविरुद्धता ॥ २२ ॥

( १९ ) कविसमयख्यातानि च—

( २० ) मालिन्यं व्योम्नि पापे, यशसि धवलता वर्ण्यते हासकीर्त्योः
रक्तौ च क्रोधरागौ, सरिदुदधिगतं पङ्कजेन्दीवरादि ।
तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसङ्घो
ज्योत्स्ना पेया चकोरैर्जलधरसमये मानसं यान्ति हंसाः ॥ २३ ॥

( २१ ) पादाघातादशोको विकसति बकुलो योषितामास्यमद्यै-
र्यूनामङ्गेषु हाराः, स्फुटति च हृदयं विप्रयोगस्य तापैः ।
मौर्वी रोलम्बमाला धनुरथ विशिखाः कौसुमाः पुष्पकेतो-
र्भिन्नं स्यादस्य बाणैर्युवजनहृदयं स्त्रीकटाक्षेण तद्वत् ॥ २४ ॥

---

वगम्येते इति न तदुपादानापेक्षेति न निर्हेतुतादोषः इत्याद्यूह्यम् ।

( १८ ) ख्यातिविरुद्धताया गुणत्वमुपपादयितुमाह—कवीनामिति । ख्याते प्रसिद्धे कवीनां समये सम्प्रदाये ख्यातिविरुद्धता नाम प्रागुक्तदोषो गुण एव स्यात् ।

( १९ ) ननु कानि कविसमयख्यातानीत्याशङ्कायामाह—कविसमयेति । प्रतिपाद्यन्ते इति शेषः ।

( २० ) दर्शयति—मालिन्यमिति । निराकारतया सामान्यत एव रूपरहितेऽपि व्योम्नि आकाशे पापेऽधर्मे च मालिन्यं मलिनता कृष्णवर्णत्वमिति यावत् वर्ण्यते कविभिरितिशेषः । एवंविधवर्णनमेव कविसमय इत्याशयः । एवमुत्तरत्रापि । यशसि हासकीर्त्योः हासे कीर्तौ च धवलता स्वच्छत्वं वर्ण्यते "यशः कीर्त्तिः समज्या च" इत्यमराभिधानेन यशः कीर्त्योरनर्थान्तरेऽपि "खड्गादिप्रभवा कीर्त्तिर्विद्यादिप्रभवं यशः" इति निमित्तभेदेन भेदाऽभ्युपगमादत्र यशः कीर्त्योः पृथगुपन्यासो बोध्यः । क्रोधरागौ क्रोधोऽनुरागश्चेत्येतद्द्वयम् , रक्तौ रक्तवर्णौ वर्ण्येते ।

पङ्कजं श्वेतकमलम् , इन्दीवरं नीलकमलं तदादि, आदिपदेन कुमुदशैवालरत्नादिकञ्च, सरित्सु नदीषु उदधिषु समुद्रेषु च गतं सञ्जातं वर्ण्यते । अखिलेऽपि सर्वस्मिन् विशिष्टत्वेनानिर्दिष्टेऽपि तोयाधारे जलाशये मरालो हंसस्तदादिश्चक्रवाकादिः पक्षिसङ्घः प्रसरति सञ्चरति चेति वर्ण्यते । चकोरैः प्रसिद्धैः पक्षिभिः ज्योत्स्नाचन्द्रकान्तिः पेया पातव्येति वर्ण्यते । जलधरसमये वर्षाकाले हंसा मानसं तदाख्यं सरोवरविशेषं यान्ति गच्छन्तीति तथात्वेन वर्ण्यते ।

( २१ ) पादाघातादिति । योषितां स्त्रीणां पादाघातात् पादहननात् अशोकम् अशोकं पुष्पं विकसति स्फुटतीति वर्ण्यते । योषिताम् आस्यमद्यैर्गण्डूषपातैर्मद्यैः वकुलं केसरपुष्पं विकसति इति वर्ण्यते । यूनां युवतीनां यूनां च अङ्गेषु कण्ठवक्षःस्थलेषु हारो मुक्तामाला वर्ण्यन्ते । यूनां हृदयञ्च विप्रयोगस्य प्रियतमविश्लेषैः तापैः सन्तापैः स्फुटति विदीर्णं भवति इति वर्ण्यते । पुष्पकेतोः कन्दर्पस्य मौर्वी धनुषो गुणः रोलम्बमाला भ्रमरपंक्तिर्वर्ण्यते । 'रोलम्बो मधुपो भृङ्गः" इति धनदः, पुष्पकेतोरेव धनुः कौसुमं कुसुममयं वर्ण्यते । अथ पुष्पकेतोर्विशिखाः शरा अपि कौसुमाः पुष्पसम्बन्धिनो

(२२) अह्न्यम्भोजं, निशायां विकसति कुमुदं, चन्द्रिका शुक्लपक्षे
मेघध्वानेषु नृत्यं भवति च शिखिनां नाप्यशोके फलं स्यात् ।
न स्याज्जाती वसन्ते, न च कुसुमफले गन्धसारद्रुमाणा-
मित्याद्युन्नेयमन्यत्कविसमय(क)गतं सत्कवीनां प्रबन्धे ॥२५॥

वर्ण्यन्ते । अस्य पुष्पकेतोः वाणैः तद्वत् तथा स्त्रीकटाक्षेण तत्पातैरितिभावः युवजनहृदयं यूनां हृदयं भिन्नं स्फुटितं विदीर्णमितियावत् स्यात् तथा वर्ण्यते इति शेषः ।

(२२) अह्न्यम्भोजमिति। द्वयोरेव द्वयोर्विकासदर्शनेऽपि अह्नि दिवा अम्भोजं कमलम् निशायाञ्च कुमुदं विकसति इति वर्ण्यते । चन्द्रिका शुक्लपक्ष एव न तु कृष्णपक्षे इति वर्ण्यते । अन्यत्र सम्भवेऽपि मेघध्वनिषु मेघगर्जितेषु सत्स्वेव शिखिनां मयूराणां नृत्यं भवतीति च वर्ण्यते । अशोके वृक्षे फलं फलसद्भावो नापि स्यात्, वसन्ते जाती मालती न स्यात् विकसितत्वेन वर्ण्यमानेतिशेषः । गन्धसारद्रुमाणां चन्दनवृक्षाणां कुसुमफले च न स्याताम् सर्वत्र कविवर्णनायामिति शेषः । इत्यादिकविसमयख्यातमिति शेषः । उन्नेयम् समुन्नेयम् । अन्यत् कविसमय(क)गतं कवीनां सम्प्रदायनिर्दिष्टं वर्णनं सत्क-

(क) कविसमयः कविसम्प्रदायः । स च चतुर्विधः, तथा हि—

"सतोऽपि चानिबन्धः स्यादसतोऽपि निबन्धनम् । नियमेन निबन्धश्च विकल्पेन निबन्धनम् ॥
एवं कवीनां समयश्चतुर्धा परिकीर्त्तितः ।

वस्तुनः सतोऽनिबन्धनं यथा—

"अयने चन्द्रिकासम्पत् पक्षयोः शुक्लकृष्णयोः । वसन्ते मालतीपुष्पं कामिदन्तेषु रक्तता ॥
फलपुष्पे चन्दने च फलं चाशोकपादपे । दिवा विकासः कुमुदे वर्षाकाले च मल्लिका ॥
नारीणां श्यामता प्रातः स्तनयोर्यच्च वा ह्रिये । न वर्णयेत्सतोऽप्येतान् प्रबन्धेषु कदाचन" ॥

अथासतो वस्तुनो निबन्धनं यथा—

"हंसे कीर्त्तौ च शुभ्रत्वं दार्ढ्यं दुष्कीर्त्तिपापयोः । अञ्जलिग्राह्यताकुम्भपूर्य्यत्वं शशिदीधितेः ॥
रत्नानि यत्र तत्रादौ कमलानि नदीष्वपि । मन्दाकिन्यां जले भादिहंसाः सर्वजलाशये ॥
ज्योत्स्नापानं चकोराणां प्रतापे रक्तोष्णते । ध्वान्तस्य मुष्टिग्राह्यत्वं लेपनं सूचिभेद्यता ॥
विश्लेषः कोकयो रात्र्यां रक्तत्वं क्रोधरागयोः । कान्तामध्येऽप्यदृश्यत्वं समुद्राणां चतुर्थता ॥

नियमेन निबन्धनं यथा—

"बहुकालस्थितस्यापि शिवचन्द्रस्य बालता । मनुष्या मौलितो वर्ण्या देवाश्चरणतस्तथा ॥
भूर्जत्वग्घिमवत्येव मलयेष्वेव चन्दनम् । रक्तत्व रत्नबन्धूकबिम्बाम्भोजविवस्वताम् ॥
कृष्णत्वं केशकामालिपिककाकपयोमुचाम् । सामान्यशौक्ल्यं छत्राभ्रः पताका पुष्पवाससाम् ॥
वसन्त एव वर्ण्यं स्यात् परपुष्टस्य कूजितम् । वर्षास्वेव मयूराणां रुतं नित्यं च वर्णयेत् ॥
लज्जाकोपायशोनाशरोषाक्रन्दास्यकृष्णताः । रागपाण्डुरता दैन्यविषपानतपोजपाः ॥
दुःखद्वेषाभिचार्य्यासहनोद्ग्रीविकादयः । वर्णनीयाजितस्यैते पराभवसमुद्भवाः ॥

विकल्पेन निबन्धनं यथा—

कमलासम्पदोः कृष्णहरितोर्नागसर्पयोः । पीतलोहितयोः स्वर्णपरागाग्निशिखादिषु ॥
चन्द्रे शशैणयोः कामध्वजे मकरमत्स्ययोः । दानवासुरदैत्यानामैक्यमेवाभिसंहितम् ।

( २३ ) एषामुदाहरणान्याकरेषु स्पष्टानि ।

वीनां महाकवीनां कालिदासप्रभृतीनां प्रबन्धे उन्नेयमिति पूर्वेण सम्बन्धः । तेन सौधादेर्मेघाद्युपरिपर्य्यन्तगामित्वमत्युच्चत्वद्योतनाय वर्ण्यन्ते तथा यशःकीर्त्योर्धवलतावद् तद्विपरीतत्वेन दुर्यशोदुष्कीर्त्योर्मालिन्यञ्च वर्ण्यते ।

तत्र दिङ्मात्रं दुर्यशसि मालिन्यमुदाह्रियते यथा—

"अमानि तत्तेन निजा यशोयुगं द्विफालबद्धाश्चिकुराः शिरः स्थिताः ।" इति ।

अन्ये तु—

स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति बकुलः सीधुगण्डूषसेकात्
पादाघातादशोकस्तिलककुरवकौ वीक्षणालिङ्गनाभ्याम् ।
मन्दारो नर्मवाक्यात् पटुमृदुहसनाच्चम्पको वक्त्रवाता-
च्चूतो गीतान्नमेरुर्विकसति च पुरो नर्त्तनात्कर्णिकारः ॥ इत्थमाहुः ।

( २३ ) ननु क्व एषामुदारणानि दृष्टानीत्याशङ्कायामाह—एषामिति । आकरेषु सत्कवीनां प्रबन्धेषु । तत्र कानिचित् दिङ्मात्रं तावदुदाह्रियते—

"कलङ्कमालिन्यमिषेण चन्द्रमा दधात्यघं पान्थवधूवधोद्भवम्" ।
"हनूमदाद्यैर्यशसा मया पुनः द्विषां हसैर्दूतपथः सितीकृतः" ॥
'नलः सितच्छत्रितकीर्त्तिमण्डलः' । "शोणं वीक्ष्य मुखम्" ।
"चुकूज कूले कलहंसमण्डली" मानसोत्काः········ ॥

अन्यच्च—

"भुवनानि निबध्नीयात्त्रीणि सप्त चतुर्दश । चतस्रोऽष्टौ दशदिशश्चतुरः सप्त चाम्बुधीन् ॥
अष्टादश स्मृता विद्याश्चरत्नश्च चतुर्दश । ये स्थले ते जले जीवा भिन्दन्त्यर्कं रणे मृताः ॥
महत्त्वमादौ सर्गान्ते सूक्ष्मता जगतामपि । शैलादिभिर्मियते शक्रचापभः शतधनूपरि ॥
नाम तत्तदुपाधौ स्याच्छङ्करो वृषवाहनः । चिह्नत्वे च वृषाङ्कोऽयं ध्वजे सत्त्वाद् वृषध्वजः ॥
शूली न सर्पी गिरिशः शशी न हरिणी विधुः । इन्दुमौलिर्महादेवो गङ्गामौलिर्न तु क्वचित् ।

अपि च—

श्वेतानि चन्द्र—शङ्खाश्व—शम्भु—भार्गव—नारदाः । हलीशेषादिशक्रेभौ सिंहसौधशरद्घनाः ॥
सूर्य्येन्दुकान्त—निर्म्मोक—मन्दार—द्रु—हिमादयः । हिमहासमृणालानि स्वर्गङ्गेभरदाभ्रकम् ॥
सिकतामृतलोध्राणि गुणकैरवशर्कराः । नीलानि कृष्ण—चन्द्राङ्क—व्यास—राम—धनञ्जयाः ॥
शनिर्द्रुपदजा काली राजपट्टविदूरजम् । वियाकाशकुहूशस्त्रागुरुपापतमो निशाः ॥
रसावद्भुतश्शृङ्गारौ मदता पिच्छराहवः । सीरि चीरं यमो रक्षः कण्ठः खञ्जनकेकिनोः ॥
कृत्या छाया गजाङ्गारखलान्तः करणादयः । शोणानिच्छत्रधर्मश्च त्रेतारौद्ररसस्तथा ॥
चकोरकोकिलापारावतनेत्रं कपेर्मुखम् । तेजः सारससमस्तं च भौमकुङ्कुमतक्षकाः ॥
जिह्वेन्द्रगोपखद्योतविद्युत्कुञ्जरबिन्दवः । पीतानि दीपजीवेन्द्रगरुडेश्वरद्रुजटाः ॥
महावीररसस्वर्णकपिद्यापररोचनाः । किञ्जल्क—चक्रवाक्याद्या हरितालमनः शिलाः ॥
धूम्राणि रजोलूताकरभो गृहगोधिका । कपोतमूषकौ दुर्गाकाककाठस्वरादयः ॥
"हरिताः सूर्य्यतुरगा बुधो मरकतादयः" । एवं कवीनां समयो दिङ्मात्रमिह कीर्त्तितः ॥
विस्तररत्नाकरग्रन्थेष्ववलोकनीयः ।

( २४ ) धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः ।
आरूढत्वादिबोधाय—

यथा—

( २५ ) 'पूरिते रोदसी ध्वानैर्धनुर्ज्यास्फालनोद्भवैः ।'

( २६ ) अत्र ज्याशब्देनापि गतार्थत्वे धनुःशब्देन ज्याया धनुष्यायत्तीकरणं बोध्यते ।

( २७ ) आदिशब्दात्—भाति कर्णावतंसस्ते ।'

---

सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः" ।

"तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ?" ।

वकुलं विचकास योषिताम् "आमुक्तमुक्तालतमस्य वक्षः" इति माघे, "अलिपङ्क्तिरनेकशस्त्वया गुणकृत्ये धनुषो नियोजिता इति कुमारसम्भवे । "तव कुसुमशरत्वं शीतरश्मित्वमिन्दोः" इति शाकुन्तले ।

"कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव" ।

"शुक्लं हि पक्षं समुपैति चन्द्रिका"...इत्यादि ।

( २४ ) पुनरुक्ततादोषस्यादुष्टतां प्रतिपादयितुमाह–धनुरिति । धनुर्ज्यादिषु शब्देषु विद्यमाना धनुरादयः शब्दास्तु आरूढत्वादिबोधाय आरूढत्वप्रतीतये धनुरादिषु योजितत्वाद्यवगमायेत्यर्थः प्रयोक्तव्या इत्यग्रिमेण सम्बन्धः । अतः पुनरुक्तत्वमुदुष्टतां प्रतिपद्यते इति भावः ।

( २५ ) उदाहरति—पूरिते इति ।

धनुषि आरोपिता या ज्या मौर्वी तस्या आस्फालनं तदेवोद्भव उत्पत्तिस्थानं येषां तस्माद्वोद्भवन्तीति तादृशैः, रोदसी द्यावाभूमी "भूद्यावौ रोदस्यौ रोदसी च ते" इत्यमरः ।

( २६ ) अदोषत्वमुपपादयति—अत्रेति । ज्याशब्देन ज्यापदप्रयोगमात्रेणेतिभावः । गतार्थत्वे प्राप्तधनुर्गुणार्थत्वे धनुष इति शेषः, धनुःशब्देनेति तृतीयेयं सहार्थे, तथाच धनुःशब्देन सह प्रयुक्तेन ज्याशब्देनेत्यर्थः, । ज्याया मौर्व्याः, आयत्तीकरणं विस्तृतीकरणम् । अयम्भावः—"मौर्वी ज्या शिञ्जनी गुणः" इत्यमरकोशात् ज्याशब्देनैव धनुर्गुणोक्तावपि धनुशब्दप्रयोगो ज्यायान् आरूढत्वप्रतीतये । तत्प्रतीतौ च वर्णनोत्कर्ष इति न पुनरुक्तत्वादिदोष इति । यत्र तु आरूढत्वप्रतीतिरूपं प्रयोजनं नास्ति तत्र न धनुःशब्दोपादानम्, किन्तु केवलज्याशब्दोपादानमेव । यथा—

ज्याबन्धनिष्पन्दभुजेन यस्य विनिःश्वसद्वक्त्रपरम्परेण ।
कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमा प्रसादात् ॥

अत्रारूढत्वप्रतीतिरूपप्रयोजनाभावाद्धनुःशब्दानुपादानमिति भावः ।

( २७ ) कारिकायामादिशब्दार्थस्य सार्थकतां दर्शयति—आदिशब्दादिति । भातीति–

.................... सौन्दर्यं परिवर्धयन् ।
जडवस्त्वपि क्वचिल्लोके चेतनं न्यक्करोति हि ॥ इति मत्पूरितांशः ।

अत्र स्वगुणैरिति शेषः ।

अत्र कर्णस्थितत्वबोधनाय कर्णशब्दः । एवं श्रवणकुण्डलशिरः शेखरप्रभृतिः ।

एवं निरुपपदो मालाशब्दः पुष्पस्रजमेवाभिधत्त इति स्थितावपि 'पुष्पमालाविभाति ते ।' अत्र पुष्पशब्द उत्कृष्टपुष्पवृद्ध्यै ।

( २८ ) एवं 'मुक्ताहार' इत्यत्र मुक्ताशब्देनान्यरत्नामिश्रितत्वम् ।

( २९ ) प्रयोक्तव्याः स्थिता अमी ॥

ते तव कान्तायाः, कर्णेऽवतंसः कर्णावतंसः कर्णे निहितस्तदलङ्कारः । कर्णस्थितत्वबोधनाय कर्णस्थितत्वं बोधयितुम् । कर्णशब्द इति "प्रयुक्त इति स्थाने" इति शेषः । तथाच "पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे" इत्यमरकोशात् अवतंसशब्देनैव कर्णभूषणे लब्धे कर्णस्थितत्वप्रतीतये कर्णशब्द इत्यर्थः । ईदृशस्थले कर्णस्थित्यादिरूपाधिकार्थं प्रतिपत्त्यर्थं कर्णशब्द उपादीयत इति भावः । नचैवं कर्णस्थितलक्षणायामपि कर्णस्थितकर्णभूषा इति बोधनेनैव पुनरुक्तिरिति वाच्यम्, अवतंसपदस्य कर्णयोग्यभूषार्थकत्वेन कर्णस्थितकर्णयोग्यभूषा इति पुनरुक्त्यभावात् । तथा कुण्डलशेखरशब्दाभ्यामेव कर्णभूषणशिरोभूषणयोर्लाभावपि तत्र तत्र स्थितत्वबोधनाय श्रवणशिरः शब्दाविति भावः । प्रभृतिपदेन नेत्राञ्जनादेर्ग्रहणम् एवं मयूरकेकाकरिकलभगजबृंहिताश्वहेषाशैलोपत्यकादिशब्देषु बोध्यम् । सर्वत्र लक्षणा एव स्वीकार्य्या । एवमिति । निरुपपदं निर्गतमुपपदं यस्य तथोक्तः विशेषणरहित इत्यर्थः । पुष्पस्रजमेवाभिधत्ते इति । "माल्यं मालास्रजौ मूर्ध्नि" इत्यमरेण तत्रैव भूरिप्रयोगादिति भावः । पुष्पमालेति । उत्कृष्टपुष्पवृद्ध्यै इति उत्कृष्टानि यानि पुष्पाणि तेषां वृद्धिराधिक्यं तस्यै तां व्यञ्जयितुमिति यावत् । तथाच मालाशब्दो यद्यपि पुष्पस्यैव स्रजि शक्तस्तथापि न पुष्पपदमपुष्टार्थं लक्षणयोत्कृष्टत्वप्रतिपादनादितिभावः ।

ननु मालाशब्दस्य पुष्पस्रङ्मात्रशक्तत्वमित्यसमीचीनं रत्नमालावर्णमालेत्यादिप्रयोगदर्शनादिति चेत् ? निरुपपदस्य तथात्वेन दोषाभावात् ।

( २८ ) कारिकायां द्वितीयादिपदार्थस्य सार्थकतामुपपादयितुमाह—तृतीय एवमिति । हारशब्देनैव "हारो मुक्तावलौ" इति विश्वकोशात्, "मुक्ता ग्रैवेयकं हारः" इति कोशाच्च मुक्तामयहारप्रतीतावपि पुनरधिकेन मुक्ताशब्देनेत्यर्थः । अन्यरत्नामिश्रितत्वं पद्मरागादिरत्नान्तरामिश्रितत्वं प्रत्याय्यते, तस्मात्तस्यादुष्टत्वमितिशेषः । एतेन आरूढत्वादीत्यादिशब्देन अमिश्रितत्वादिग्रहणमिति द्योतितम् । एवं मरकतशिलेत्यादौ शिलापदं विस्तीर्णत्वप्रतिपादनायेति बोध्यम् । तथाच—"सकीचकैर्मारुतपूर्णरन्ध्रैः" इत्यादौ "कीचका वेणवस्ते स्युः ये स्वनन्त्यानिलोद्धताः" इत्यमराभिधानेन मारुतपूर्णरन्ध्रैरित्यादिदुष्टमेवेति सूचितम् ।

( २९ ) नन्वेवं माभूत्पुनरुक्तत्वं दोषः सर्वत्रैवंविधतात्पर्य्यसत्त्वादित्याशङ्क्य समाधत्ते—प्रयोक्तव्या इति । अमी पुनरुक्तत्वावहाः । स्थिताः महाकाव्येषु इति शेषः । प्रयोक्तव्या इति । येषां पुनरुक्तत्वावहत्वेऽपि प्रयोगो बहुधा बहुत्र दृश्यते त एव प्रयोक्तव्या नान्य इत्यर्थः ।

( ३० ) धनुर्ज्यादयः सत्काव्यस्थिता एव निबद्धव्याः, न त्वस्थिता जघनकाञ्ची-करकङ्कणादयः ।

( ३१ ) उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः ।

यथा—

( ३२ ) 'गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥'

( ३० ) उक्तार्थं विवृणोति—धनुर्ज्यादय इति । शब्दा इति शेषः । यतः सत्काव्य-स्थिता महाकाव्यनिबन्धान्तर्गता एव अतो निबद्धव्या उपन्यसनीयाः । नियमव्यव-च्छेद्यं दर्शयति—न त्विति । अस्थिता अविद्यमानाः सत्काव्येष्विति शेषः । तथाच महा-कविप्रबन्धस्थितेष्वेव कर्णावतंसादिपदेषु उक्तप्रकारेण समर्थनम् । महाकविप्रयुक्ते-नान्यैः प्रयोज्यानि जघनकाञ्चीत्यादिपदानि प्रयुक्तानि पौनरुक्त्यमेवावहन्ति कविभि-रप्रयुक्तत्वात्, अतो रूढितोऽनादिलक्षणायामेव प्रयोजनाभावो न दोष इति । एवञ्च सति "उत्क्षिप्तं करकङ्कणद्वयमिदम्" इत्यादौ पुनरुक्तत्वदोष एवेति भावः ।

( ३१ ) न्यूनपदताया गुणत्वं दर्शयितुमाह—उक्ताविति । आनन्दे आनन्दप्रवाहे मग्नो निमग्नवत् स्थित आदिर्यत्र तस्य तथोक्तस्य, आदिपदेन शोकदुःखमग्नादेश्च उक्तौ न्यूनपदतानाम दोषो गुण एव स्यात् । आनन्दादिभिर्निमग्नतया अन्वयिपदाभिधाने प्रमादव्यञ्जनद्वारा आनन्दादीनामत्यन्ताधिक्यद्योतनादिति भावः ।

( ३२ ) उदाहरति—गाढेति । अमरुशतके शृङ्गाररसातिरेकसीमानं प्राप्तस्य कस्य-चिन्नायकस्य सुरतान्ते रतिश्रमनिमग्नां प्रेयसीमनेकधोल्लिख्य वितर्कोऽयम् । गाढा-लिङ्गनेन दृढपरिरम्भणेन वामनीकृतौ खर्वीकृतौ कठोरत्वाद्वा किञ्चिन्नमितौ कुचौ यस्याः अनेन पीनोच्चकुचत्वं व्यञ्जितम् । 'खर्वो ह्रस्वश्च वामनः" इत्यमरः सा चासौ प्रोद्भिन्ना अत्यन्तमङ्कुरिता रोमोद्गमा रोमाञ्चो यस्याः सा चेतिपरपदस्य विशेष्यत्ववि-वक्षया कर्म्मधारये पूर्वपदस्य पुंवद्भावः । गाढालिङ्गनवामनीकृतकुचयोः प्रोद्भिन्नो रोमो द्गमो यस्या इति समासो नोचितः कुचे रोमोद्गमस्यासम्भवात् । तथा सान्द्रः प्रियतम-सम्बन्धेन निविडो यः स्नेहरसः आनन्दस्तस्यातिरेक आधिक्यं तेन विगलन्निपतत् श्रीमतः सुन्दरात् नितम्बात् कटिपश्चाद्भागात् अम्बरं वस्त्रं यस्याः सा तादृशी । हे मानद ! मानमभिमानं द्यति खण्डयति, मानं सम्मानं ददातीति वा तत्सम्बुद्धौ हे मान खण्डक ! सन्मानदायक ! च मा मां मा नैव आयासय इति शेषः । माम् अति अत्यन्तं मा पीडय इति शेषः । अनुक्तिस्तु रसातिशयद्योतनाय । अलमेतावदेव पर्य्याप्तम् इति क्षामाणि कृशानि न्यूनानि अस्फुटानि वा अक्षराणि यस्मिन् कर्मणि तद्यथास्यात्तथा उल्लापिनी अभिभाषिणी एवंभूता प्रेयसी सुप्ता किं नु स्थिरतया वर्त्तमानत्वादिति भावः । सुप्तेत्यादयो नायकवितर्काः मृता नु किम् ? सुप्तत्वेऽपि श्वासः अस्याश्च तदभा-वादिति भावः । मे मम मनसि लीना "किन्नु" इति पूर्वतोऽनुपञ्जनीयम् मृतत्वेऽपि

( ३३ ) अत्र पीडयेति न्यूनम् ।

( ३४ ) **क्वचिन्न दोषो न गुणः—**

( ३५ ) न्यूनपदत्वमित्येव । यथा—

( ३६ ) 'तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥'

बहिरनुभवः स्यादिति किं जतुकाष्ठन्यायेनैक्यं गतेतिभावः । ननु तादृशोऽपि पदार्थः पृथक्कर्तुं शक्यते इत्यत आह—विलीनेति । किं नु विलीना नीरक्षीरन्यायेन सर्वथा मनः सारूप्यं गतेतिभावः । यद्वा—विलीना क्षारे जले लवणवन्मिश्रीभावं गतेतिभावः । सर्वत्र वितर्के नु शब्दो ज्ञेयः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तमेव प्राक् (१५८) पृ०

( ३३ ) अत्रेति । पीडयेति पदमितिशेषः । उपलक्षणमेतत् । आयासयेति पदमपि न्यूनमिति बोध्यम् । तथाच "मा मा" इत्यतः पुरः "आयासय माऽतिमाम्" इत्यतः परं च 'पीडय' इति पदञ्च न्यूनमपि न दुष्टम् , झटित्यध्याहारेण प्रतीतेः स्फुटत्वात् , प्रत्युत गुणः हर्षसंमोहातिशयप्रत्यायकत्वेन रसातिरेकव्यञ्जकत्वात् ।

शोकदुःखमग्ने न्यूनपदत्वस्य गुणत्वं यथा—

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां तामेव शान्तमथवा किमिहोत्तरेण ॥

इत्यत्र "त्यक्तवानसि" इति क्रियापदस्यानुपात्तत्वेन न्यूनमपि अशक्यवक्तव्यत्वेन शोकातिशयपोषकत्वाद् गुणभूततां गतम् ।

( ३४ ) न्यूनपदत्वस्य दोषाभावमात्रत्वं दर्शयति—क्वचिदित्यादिना ।

क्वचित् रसानपकर्षकत्वपुरस्कृतरसानुत्कर्षकत्वस्थले । न्यूनपदत्वमिति पूर्वतोऽनुषञ्जनीयम् । न दोषो न वा गुण इत्यर्थः । दोषत्वं त्यक्त्वाऽपि गुणत्वमप्राप्त इति भावः । अनयोर्युक्तिस्तु विवरण एव स्पष्टीकृता ।

( ३५ ) कारिकां सङ्गमयितुमध्याहार्य्यमुपपादयति—न्यूनेति । स्पष्टम् ।

( ३६ ) उदाहरति—तिष्ठेदिति । विक्रमोर्वशीये चतुर्थेऽङ्के उर्वशीतिरोधाने सति विरहिणः पुरूरवस उक्तिरियम् । सा उर्वशी कोपवशाद् मां प्रति कुतश्चित् प्रणयकोपात् प्रभावेण अन्तर्धानकरणविद्यया देवशक्त्या वा पिहिता अन्तर्हिता' सती अत्रैव कुत्रचित्" इति शेषः, तिष्ठेत् ? इति काकुः, एवमन्यत्रापि पिहितेत्यत्र "वष्टिभागुरिरल्लोपम्" इति वचनेनापरेकारलोपः । एतदनन्तरं "नैतद्युक्तं यतः" इति शेषः पूरणीयः । यतो यस्मात्कारणात् सा उर्वशी दीर्घं चिरकालं न कुप्यति । तथाच कोपेनाऽन्तर्हिताऽपि चिरकालस्थायिकोपाभावेन क्षणात्परमेव पुनरागच्छेदिति भावः । स्वर्गशब्दो हि सुष्ठु अर्ज्यते इति स्वर्गः, 'अर्ज अर्जने" इति भौवादिकादर्जधातोः "अकर्त्तरि च कारके संज्ञायाम्" इति सूत्रेण कर्मघञा, सुष्ठु ऋज्यतेऽस्मिन्निति स्वर्गः "ऋजु गतिस्थानार्जनोपार्जनेषु" इति भौवादिकात् ऋजधातोः "हलश्च" इति सूत्रेणाधिकरणघञा वा निष्पन्नः अतो हि स्वर्गायेत्यत्र, ' क्रियार्थोपपदस्य कर्मणि स्थानिनः" इति सूत्रेण कर्मणि चतुर्थी बोध्या ।

(३७) अत्र प्रभावपिहितेति भवेदितीत्यनन्तरं 'नैतद्यतः' इति पदानि न्यूनानि ।

(३८) एषां पदानां न्यूनतायामप्येतद्वाक्यव्यङ्ग्यस्य वितर्काख्यव्यभिचारिभावस्योत्कर्षाकरणान्न गुणः । 'दीर्घं न से'त्यादिवाक्यजन्यया च प्रतिपत्त्या तिष्ठेदित्यादिवाक्यप्रतिपत्तेर्बाधः स्फुटमेवावभासत इति न दोषः ।

(३९) गुणः क्वाऽप्यधिकं पदम् ॥ २७ ॥

---

तथाच किं स्वगीय स्वर्गं गन्तुम् उत्पतिता ऊर्ध्वगमनानुकूलव्यापारवती भवेत् एतदुत्तरं "नैतदपि युक्तं यतः" इति शेषः पूरणीयः । एतदपि न यतो यस्मात् कारणात् अस्या उर्वश्या मनः पुनः मयि मद्विषये भावेन स्नेहेन आर्द्रं सरसम् अतश्चिरविरहं स्वतो न कुर्य्यादिति भावः । ननु तर्हि किमसुरैरपहृतेत्यत आह—तामिति । मे मम पुरोवर्त्तिनीम् अग्रतो विद्यमानां च तां प्रियाम् उर्वशीम्, हर्त्तुम् अपहर्त्तुं विबुधानां देवानां द्विषः शत्रव असुरा अपि न शक्ता न समर्थास्तेषां तथाविधसाहसबलयोरसत्त्वादित्याशयः, किमुतान्ये अथ च सा नयनयोर्लोचनयोरत्यन्तमेव अगोचरम् अविषयत्वं याता गतेति कोऽयं विधिः प्रकारो दैवं वा "वर्त्तत" इति शेषः । "विधिर्ब्रह्मविधानयोः । विधिवाक्ये च दैवे च प्रकारे कालकल्पयोः" इति कोशः । शार्दूलविक्रीडितं छन्दः तल्लक्षणन्तूक्तं प्रागेव (१५८) पृ० ।

(३७) नन्वत्र कानि पदानि न्यूनानीतिजिज्ञासायां तानि दर्शयन् तेषाञ्च लक्ष्यसङ्गत्यर्थं गुणदोषाभावमुपपादयति—अत्रेति । इत्यस्य पश्चादिति शेषः । अस्य पदस्येति शेषः । अनन्तरं पश्चात् । इति त्रीण्येव पदानि न्यूनानीत्यर्थः । अत्र प्रदीपः—पिहितेत्यनन्तरं "नैतद्युज्यते यतः" इत्येतैः पदैर्न्यूनम्, एवं द्वितीयपादेऽपि ।

नचात्र गुणत्वं विशेषबुद्धेरनुत्पादात् । नाऽपि दोषत्वं तद्व्यतिरेकेणाऽपि 'दीर्घं न सा कुप्यति" इत्यादिप्रतीत्या "तिष्ठेत् कोपवशात्" इत्यादिप्रतीतीनां बाध्यत्वावगमात् इति ।

(३८) ननु गुणदोषयोर्मध्ये प्रागगुणत्वोपपादानस्येव अगुणत्वादोषत्वयोर्मध्येऽपि प्रागगुणत्वोपादानस्यैव युक्तत्वात् प्रथममगुणत्वमनन्तरञ्चादोषत्वं दर्शयितुमाह—एषामिति । ननु तर्हि कारिकायामप्येवमेव कथं नोक्तमिति चेत्? तत्रत्यपाठक्रमस्य केवलं वृत्तिपूरणोपन्यस्तत्वेनाकिञ्चित्करत्वात् ।

एषां न "एतद् यतः" इति त्रयाणामित्यर्थः । एतद् वाक्यव्यङ्ग्यस्येति एतद्वाक्यं "तिष्ठेदि"त्यादि तद्व्यङ्ग्यस्य उत्कर्षाकरणात् उत्कर्षो रसस्फूर्त्तिस्तस्याकरणं तस्मात्, किं रुद्धः प्रियया" इत्यादौ "करतले विन्यस्य वक्त्राम्बुजम्" इत्यनेनेव केनचित्पदान्तरेण रसोत्कर्षाजननादित्यर्थः । न गुणो गुणस्वरूपत्वं नेत्यर्थः । तर्हि दोषत्वमेवाभ्युपेयतामत आह—दीर्घं न सेति । प्रतिपत्त्या प्रतीत्या द्वारा । वाक्यप्रतिपत्तेः वाक्यजन्यप्रतीतेः बाधो निरासः । स्फुटमनायासं सुसिद्धम् न दोषो न दुष्टत्वम् । एवञ्च "नैतद्यतः" इति पदत्रयबोध्यः तिष्ठेदित्यादिवाक्यार्थप्रतिपत्तिनिरासः, 'दीर्घं न सा कुप्यति' इति वाक्यजन्येनैव बोधेन तदन्यथानुपपत्त्या स्फुटं बोधित इति न दोष इति भावः ।

(३९) अधिकपदत्वस्य गुणत्वं क्वचित्सम्भवतीत्याह—गुण इति । क्वापि यत्र

यथा —

( ४० ) 'आचरति दुर्जनो यत्सहसा मनसोऽप्यगोचरानर्थान्।
तत्र न जाने जाने स्पृशति मनः किं तु नैव निष्ठुरताम् ॥'

( ४१ ) अत्र 'न न जाने' इत्ययोगव्यवच्छेदे ।

( ४२ ) द्वितीये 'जाने' इत्यनेन नाहमेव जाने इत्यन्ययोगव्यवच्छेदाद्विच्छित्तिविशेषः ।

---

विशेषप्रतिपत्तिस्तत्र अवधारणस्थल इति यावत् अधिकं पदम् अधिकपदत्वं नाम दोषो गुण एव ।

( ४१ ) उदाहरति—आचरतीति । दुर्जनः खलः सहसैव यत् मनसोऽपि किं पुनर्वचस इति शेषः, अगोचरान् अविषयान् परोक्षानित्यर्थः, अर्थान् कार्य्याणि आचरति अनुतिष्ठति, तत् न जाने इति न अपि तु जाने एव । एवं जाने अहमेव जाने इत्यर्थः। नन्वेवं तर्हि कथं न तत्प्रतीकारं करोषीत्यत आह—स्पृशतीति । किन्तु मम मनो नैव निष्ठुरतां कठोरत्वं स्पृशति दुष्टजनहृदयवत् क्रूरतां भजते । आर्य्याछन्दस्तल्लक्षणं तूक्तं प्रागेव ।

( ४१ ) द्विविधं तावदवधारणम्—अयोगव्यवच्छेदः अन्ययोगव्यवच्छेदश्चेति । प्रकृते तु द्वयोरेवावस्थानाद्गुणत्वमिति यथाक्रमं दर्शयति—अत्रेति । अत्र "प्रथमे" इति शेषः । अयोगस्य स्वस्मिन् दुर्जनापकारविषयकज्ञानासम्बन्धस्य व्यवच्छेदान्निराकरणात् विच्छित्तिविशेषो बोधविशेषरूपाभङ्गिः चमत्कारातिशय इत्यर्थः। एवञ्च 'जाने' इत्यनेनैव बोधोपपत्तौ नञ्द्वयाधिक्योपादानादधिकपदत्वप्राप्तावपि "द्वौ नञौ प्रकृतमर्थं सातिशयं बोधयतः" इतिन्यायेन उक्तविधचमत्कारातिशयबोधनात् प्रत्युत गुणत्वमेवेत्याशयः।

( ४२ ) ननु यदि न जाने इति न, अपि तु जाने इत्यर्थस्वीकारे द्वितीयेन 'जाने' इति पदेनैव अयोगव्यवच्छेद इति चेत्? मैवमित्याह—द्वितीये इति । द्वितीये अवधारणभेदे इत्यर्थः । अन्यस्मिन् मद्भिन्ने जने यो योगः दुर्जनापकारविषयकज्ञानसम्बन्धस्तस्य व्यवच्छेदो निराकरणं तस्मात् विच्छित्तिविशेषो बोधविशेषरूपाभङ्गिः चमत्कारातिशय इत्यर्थः । एवञ्च "न न जाने" इत्यनेनैवानान्ययोगव्यवच्छेदबोधनात् द्वितीयेन "जाने" इत्यनेन तु अन्ययोगव्यवच्छेदस्यैव अहमेव जाने न त्वन्यं ज्ञापयामि इत्यस्य बोधनं भवतीत्याशयः । अतएवाधिकपदत्वसम्भवेऽपि गुणत्वमेवेत्यवगन्तव्यम् ।

नन्वत्र कथमधिकपदत्वम्? द्वितीयेन "जाने" इति पदेन "अहमेव जाने न त्वन्यं ज्ञापयामि" इत्यर्थस्य विवक्षितत्वात्पदस्याविवक्षितार्थत्व एवाधिकपदत्वस्वीकारादिति चेत्? मैवम्—"गुणः क्वाप्यधिकं पदम्" इत्यत्र आपाततः इत्यादिः । तथाच आपाततो यदधिकपदं तत् क्वापि गुणो भवतीत्यर्थादुक्तशङ्काया अनवतारात् । अन्यथा कथं पापस्य पुण्यत्वमिव दोषस्य गुणत्वं स्यादिति विचारणीयम् । नचैवमपि 'न न जाने जाने इति एकानुपूर्वीकशब्दानामसकृत्प्रतिपादनेन कथितपदत्वं शङ्क्यम्? आनुपूर्वीभेदाभावेऽप्यर्थभेदोपलम्भात् अभिन्नार्थैकानुपूर्वीकशब्दानामसकृत्प्रतिपादने एव कथितपदत्वाभ्युपगमात् । किन्त्वेतादृशस्थले "कथितञ्च पदं पुनः" इत्युक्त्या कथितपदत्वमपि गुण एवेति ध्येयम् ।

( ४३ ) समाप्तपुनरात्तत्वं न दोषो न गुणः क्वचित् ।

( ४४ ) यथा—'अन्यास्ता गुणरत्न-' इत्यादि ( ६६३ पृ. ) ।

अत्र प्रथमार्धेन वाक्यसमाप्तावपि द्वितीयार्धवाक्यं पुनरुपात्तम् ।

( ४५ ) एवं च विशेषणमात्रस्य पुनरुपादाने समाप्तपुनरात्तत्वं न वाक्यान्तरस्येति विशेयम् ।

---

अत्र तर्कवागीशास्तु अस्य शुद्धोदाहरणं तु—

"याहि माधव याहि केशव ! मा वद कैतववादम् ।
तामनुसर सरसीरुहलोचन या तव हरति विषादम् ॥"

अत्र माधवकेशवसरसीरुहलोचनपदानामन्यतमेनैवान्वयोपपत्तौ सर्वेषामुपादानमर्थान्तरबोधकत्वाद् गुण एव तथा हि-माधवपदेन लक्ष्मीपतित्वेऽपि तव वैदग्ध्यं नास्तीति, केशवपदेन वीरत्वेऽपि तव रतिसामर्थ्यं नास्तीति, सरसीरुहलोचनपदेन विलक्षणचक्षुःसत्त्वेऽपि मम रूपलावण्यातिशयं न पश्यसीतिव्यज्यते । यथा वा—

"कुर्य्यां हरस्यापि पिनाकपाणेः धैर्य्यच्युतिं के मम धन्विनोऽन्ये"

अत्र पिनाकपाणेरपीत्यनेनैव प्रकृतान्वयोपपत्तौ हरस्येत्यधिकमपि हरस्यैव पिनाकसम्बन्धेन दुर्जयत्वमिति व्यञ्जकत्वाद् गुणत्वम् ।

' नायं भिक्षुर्वरयुवतिमार्गी तितिक्षुर्धनुष्मान्
राज्ञः पुत्रो नहि नहि जटाजूटभारं दधानः ।
नायं व्याधो नवगुणधरः पश्य कस्मादकस्मात्
पुण्येऽरण्ये नवजलधरश्यामलः कोऽयमेति ॥"

अत्र द्वितीयस्य नहीतिनिपातसमुदायस्य वाचकत्वाभावेन कथितपदस्य न विषयः । किं त्वधिकोऽपि राजपुत्रस्य जटाधारणमत्यन्तासम्भवीति व्यञ्जकत्वाद् गुण एव इत्याहुः"

( ४३ ) समाप्तपुनरात्तत्वस्य प्रतिप्रसवं दर्शयति—समाप्तेति । क्वचित् अन्वयस्य समाप्तावपि वाक्यान्तरेण पुनरुपादानस्थले समाप्तपुनरात्तत्वं नाम न दोषो न वा गुणो भवेत् ।

( ४४ ) उदाहरति-यथेति । "अन्यास्ता" इति व्याख्यातपूर्वमेतत् । द्वितीयार्द्धवाक्यं श्रीमत्कान्तीत्यादि पुनरुपात्तं यदित्यनेन पूर्ववाक्यसाकाङ्क्षतया पुनर्गृहीतम् । अतएव पूर्वोक्तविशिष्टलक्षणाभावे तद्दोषप्राप्तौ प्रतिप्रसव इत्यवधेयम् । एवञ्चात्र पूर्ववाक्यसाकाङ्क्षोत्तरवाक्येन रसापकर्षाभावान्न दोषत्वम्, चमत्कारातिशयानाधायकत्वाच्च न गुणत्वमित्यवगन्तव्यम् ।

( ४५ ) निष्कर्षमुपपादयति—एवञ्चेति । 'अन्यास्ता" इत्यादौ वाक्यान्तरेण पुनरुपात्तत्वात् समाप्तपुनरात्तत्वदोषाभावे चेत्यर्थः । विशेषणमात्रस्य इत्यत्रानाकाङ्क्षितस्येति बोध्यः । एतच्चोपलक्षणम्, तेन कर्तृकर्मादीनामन्येषां पदानामपि वाक्यसमाप्तावुक्तौ समाप्तपुनरात्तत्वम् । वाक्यान्तरस्य पुनरुपात्तत्वे तु न समाप्तपुनरात्तत्वमित्यर्थः ।

तथाचाहुर्भट्टाः—

स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥ इति ।

( ४६ ) गर्भितत्वं गुणः क्वापि—

यथा—

( ४७ ) 'दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मात्प्रादुरभूत्कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥'

( ४८ ) अत्र वदन्त एवेत्यादि वाक्यं वाक्यान्तरप्रवेशात् चमत्कारातिशयं पुष्णाति ।

( ४९ ) पतत्प्रकर्षता तथा ॥ २८ ॥

( ५० ) तथेति क्वचित् गुणः । यथा—'चञ्चद्भुज-' इत्यादि ( ४९४ पृ. ) ।

अत्र चतुर्थपादे सुकुमारार्थतया शब्दाडम्बरत्यागो गुणः ।

( ४६ ) गर्भितत्वस्य गुणत्वं दर्शयति—गर्भितत्वमिति । क्वापि चमत्काराधायकस्थले गर्भितत्वं नाम प्रागुक्तदोषो गुण एव ।

( ४७ ) उदाहरति-दिङ्मातङ्गेति । प्रभाकरगुरोः पद्यमिदम् । दिङ्मातङ्गा दिग्गजास्तेषां घटाः समूहास्तया विभक्ताः परिच्छिन्नाश्चत्वार आघाटाः सीमानो यस्याः सा तथोक्ता मही पृथिवी साध्यते स्ववशीक्रियते, सिद्धाऽपि समस्तराजगणविजयेन स्ववशीभूताऽपि सा मही इति वदन्तः कथयन्त एव हि वयम् अद्भुतरसेन रोमाञ्चिता जाता इति यूयं पश्यत अवलोकयत नात्र किञ्चिदपरोक्षमिति भावः । विप्राय ब्राह्मणाय कश्यपायेतिभावः, प्रतिपाद्यते प्रदीयते । अपरम् इतरदितोऽधिकं किं वाच्यमिति शेषः । यस्मादिदं कथाद्भुतम् उक्तवृत्तान्तरूपमाश्चर्यं प्रादुरभूत् यत्र यस्मिन्नेव न त्वन्यस्मिन् अस्तं गतम् यस्मात्परं वीरो दाता च न भूतो न वर्त्तमानो न भविष्यन्निति चेत्यर्थः। तस्मै रामाय जमदग्निनन्दनाय परशुरामाय नमः। शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्रागेव ( १९८ पृ० ) ।

( ४८ ) ननु किं वाक्यमिह गर्भितं गुण अत आह—अत्रेति । वाक्यान्तरप्रवेशात् "सिद्धा साऽपि विप्राय प्रतिपाद्यते" इति वाक्यन्तः प्रवेशस्तस्मात् । अत्रत्यदानवीररसस्य चमत्कारातिशयं पुष्णाति वक्तुः स्वस्य विस्मयातिशयप्रकाशनेन प्रकाशयति ।

( ४९ ) पतत्प्रकर्षतायाः गुणत्वमुपपादयति-पतत्प्रकर्षतेति । पतत्प्रकर्षता नाम दोषः तथा गुण इत्यर्थः ।

( ५० ) तथेति। क्वचिदिति। यत्र पद्यांशे सुकुमारार्थत्वं तत्रेत्यर्थः। उदाहरति-यथेति। चञ्चद्भुजेति । व्याख्यातपूर्वमेतत्पद्यम् (४९४पृ०) चतुर्थपादे "उत्तंसयिष्यति कचांस्तव देवि ! भीमः" इत्यत्रान्तिमचरणे, सुकुमारार्थतया द्रौपदीकेशोत्तंसनरूपार्थस्यानुद्धतत्वेन सुकुमारत्वं च वर्णानामसमासतयेतिबोध्यम् । गुण इति । शब्दकोमलतया अर्थस्यापि कोमलतयावगमादित्याशयः । तथाचाभिधेयस्यानुद्धतत्वेन तथा पतत्प्रकर्षो युक्त इत्यस्यादुष्टत्वम्, देव्यां च सौकुमार्य्यप्रकाशनस्यात्यन्तमुचितत्वेन चास्यगुणत्वमिति तत्त्वम् ।

( ५१ ) क्वचिदुक्तौ स्वशब्देन न दोषो व्यभिचारिणः ।
अनुभावविभावाभ्यां रचना यत्र नोचिता ॥ २६ ॥

( ५२ ) यत्रानुभावविभावमुखेन प्रतिपादने विशदप्रतीतिर्नास्ति, यत्र च विभावानुभावकृतपुष्टिराहित्यमेवानुगुणं तत्र व्यभिचारिणः स्वशब्देनोक्तौ न दोषः। यथा—

( ५३ ) 'औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥'

( ५१ ) अथ यथासम्भवं शब्दार्थदोषाणामदोषत्वं गुणत्वं चोपपाद्येदानीं रसदोषाणां विषयविशेषे यथायथमदोषत्वं गुणत्वं चोपपादयति—क्वचिदिति । क्वचित् व्यभिचारिणः सञ्चारिभावस्य न तु रसस्थायिनोरपीति भावः । स्वशब्देनोक्तौ न दोषः, व्यभिचारिणः स्वशब्दवाच्यत्वं नाम न दोषो भवति गुणोऽपि न भवतीत्यर्थः । क्वचिदिति क्वेत्याह—अनुभावेति । यत्र स्थले अनुभावविभावाभ्यां केवलानुभावविभावप्रतिपादकैः शब्दैरित्यर्थः, रचना व्यञ्जनं नोचिता अभिप्रेतार्थप्रतिपादनासम्भवात् न सम्भावना तत्रेति शेषः । एवञ्च येषां व्यभिचारिणां नासाधारणानुभावादिसम्भवस्त एवशब्देनोपादेया न त्वन्येऽपीति भावः ।

( ५२ ) विवृणोति—यत्रेति । अनुभावविभावमुखेन केवलानुभावप्रतिपादकशब्दद्वारा केवलविभावप्रतिपादकशब्दद्वारा वेतिभावः । व्यभिचारिण इति शेषः । प्रतिपादने व्यञ्जने विशदप्रतीतिर्नास्ति सचेतसां स्फुटाऽवभासो न स्यादित्यर्थः । विभावानुभावकृतपरिपुष्टिराहित्यं विभावानुभावाभ्यां कृता या पुष्टिस्तस्या राहित्यम् , अनुगुणं रसादिप्रतीतेरनुकूलम् ।

( ५३ ) द्वयोरेकमेवोदाहरणं दर्शयति—औत्सुक्येनेति । रत्नावलीनाटिकायां प्रथमेऽङ्के मङ्गलाचरणरूपं पद्यमिदम् । नवेऽभिनवे सङ्गमे पत्या सह नवसङ्गमं प्रति औत्सुक्येन दयितसमीपगमने उत्कण्ठया कृता त्वरा सहसा गमनारम्भो यया सा तथोक्ता । त्वराया रोषभयादितोऽपि सम्भवेन भयादुत्कण्ठातो वेतिसंशयान्न निर्णय इति औत्सुक्येनेत्युक्तम् । तथा सहभुवा सहजया स्वाभाविक्येति यावत् नवोढात्वादिति भावः । ह्रिया लज्जया व्यावर्त्तमाना पुनः पुनर्निवर्त्तमाना व्यावर्त्तनस्य कोपादिनाऽपि सम्भवात् ह्रियेत्युक्तम् । बन्धुवधूजनस्य ( प्रमदाजनस्य सखीजनस्य ) कुवेरादिदेवानामङ्गनाजनस्येति भावः । तस्तैस्तत्कालोचितैरिति शेषः, वचनैः "लज्जां मुञ्च" "गृहं प्रविश" इत्यादिवाक्यैः पुनरपि आभिमुख्यं वासगृहगमनाय साम्मुख्यम् , नीता प्रापिता । तथा अग्रे सम्मुखदेशे कान्तं दिगम्बरं व्याघ्रचर्माम्बरं त्र्यक्षं कपर्दिनमित्यादिविशेषणविशेषितं शङ्करमितियावत् दृष्ट्वा आत्तः प्राप्तः साध्वसरसो भयरसो यया तथाभूता, हसता हासश्च विश्वासोत्पादनायेति बोध्यम् । हरेण शिवेन श्लिष्टा आलिङ्गिता, तेन च संरोहत्पुलका उद्गच्छद्रोमाञ्चा प्रियकरस्पर्शेन सात्त्विकभावोदयादिति भावः । तादृशी गौरी वो युष्माकं कल्याणाय मङ्गलाय अस्तु भूयात् । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तमेव प्राक् (१६८ पृ०)

( ५४ ) अत्रौत्सुक्यस्य त्वरारूपानुभावमुखेन प्रतिपादने संगमे न झटिति प्रतीतिः, त्वराया भयादिनापि संभवात् । ह्रियोऽनुभावस्य च व्यावर्तमानस्य कोपादिनापि संभवात् ।

( ५५ ) साध्वसहासयोस्तु विभावादिपरिपोषस्य प्रकृतरसप्रतिकूलप्रायत्वादित्येषां स्वशब्दाभिधानमेव न्याय्यम् ।

**( ५६ ) संचार्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः ।**

( ५७ ) यथा—'क्वाकार्यं शशलक्ष्मणः क्व च कुलम्–' इत्यादि ( २२१ पृ. )

( ५४ ) उक्तपद्ये औत्सुक्य-ह्री-साध्वस-हासाश्चत्वारो व्यभिचारिभावाः । तत्र "निर्वेदावेगदैन्य" इत्यादिना औत्सुक्यह्रियौ परिगणिते 'शृङ्गारवीरयोर्हासः" इत्यादिना च व्यभिचारिभावत्वेन साध्वसहासावपि गृहीतौ । सर्वे च तेऽत्र स्वशब्दैरभिहिता इति "रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि" इति पूर्वोक्तनियमेन औत्सुक्यादयश्चत्वारोऽपि व्यभिचारिणः स्वशब्दोक्तिदोषाः प्राप्तास्तत्समाधानायोपायमुपपादयितुमाह- अत्रेति । त्वरारूपः ( सहसा प्रसरणादिरूपः ) अनुभावस्तन्मुखेन तद्द्वारा प्रतिपादने व्यञ्जने सङ्गमे हरेण सह सङ्गमविषये, औत्सुक्यस्य न झटिति प्रतीतिः। भयादिना इत्यादिपदेन हर्षादीनां परिग्रहः । ह्रियोऽनुभावस्य लज्जाकार्य्यस्य, व्यावर्त्तनस्य निवर्त्तनस्य च न झटिति तत्प्रतीतिः व्यावर्त्तनस्य कोपादिनापि सम्भवादित्यर्थः । अत्रादिपदेन भयादीनां ग्रहणम् । तथाच त्वरारूपानुभावख्यरोपभयादितोऽपि सम्भवेन भयादौत्सुक्याद्वेति संशयात्तस्यौत्सुक्यव्यञ्जनाक्षमत्वेन औत्सुक्यस्य स्वपदेनोपादानं न दोषः ।

( ५५ ) विभावानुभावकृतपुष्टिराहित्यमुपपादयति—साध्वसहासयोरिति । साध्वसं भयं हासश्च हास्यहेतुश्चेतोविकासः स्थायिभावलक्षणे उपपादितः । तद्द्वयञ्च भयानकहास्यरसयोः स्थायिभावावपि गौरीमहेशयोः शृङ्गारेऽत्र व्यभिचारिभावौ तयोः स्वस्वविभावादिना परिपोषस्य प्रकृतशृङ्गाररसप्रतिकूलप्रायत्वादित्यर्थः । विभावादीत्यादिपदात् अनुभावस्य ग्रहणम् । तथाहि कम्पस्तावत् गौरीसाध्वसस्यानुभावः महेशहासश्चोद्दीपनविभावस्ततश्च साध्वसहासावनुपादाय यदि सकम्पा क्रियते तदा तदङ्गसर्पदर्शनाद् भयेन आर्द्रगजचर्मकपालदर्शनात् जुगुप्सया च शृङ्गारप्रतिकूलाभ्यां तत्कम्पसम्भवात् न शृङ्गारव्यभिचारिणोः साध्वसहासयोरेव व्यञ्जना स्यात् भयजुगुप्सयोश्च व्यञ्जनासम्भवात् इति एतेभ्यो हेतुभ्यः, एषाम् औत्सुक्यह्रीसाध्वसहास्याख्यव्यभिचारिभावानां स्वशब्देनाभिधानमित्यर्थः । साध्वसहासयोरपि व्यञ्जनसम्भवात् नात्यन्तं प्रातिकूल्यमित्यतः प्रायत्वादित्युक्तमिति भावुकाः ।

( ५६ ) "परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः" इत्यस्य प्रतिप्रसवं दर्शयति—सञ्चार्यादेरिति । विरुद्धस्य प्रकृतरसपरिपन्थिरसाङ्गभूतस्य सञ्चार्यादेः व्यभिचारिभावादेः, आदिपदेन विभावानुभावग्रहणम् । बाध्यत्वेन प्रतिरुद्धस्वजन्यरसपरिपुष्टिकत्वेन वचः कथनं गुणः ।

( ५७ ) उदाहरति—यथेति । क्काकार्य्यमिति । व्याख्यातपूर्वमेतत ( ३२३ पृ० ) ।

( ५८ ) अत्र प्रशमाङ्गानां वितर्कमतिशङ्काधृतीनामभिलाषाङ्गौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारः पर्यन्ते चिन्ताप्रधानमास्वादप्रकर्षमाविर्भावयति ।

**( ५९ ) विरोधिनोऽपि स्मरणे साम्येन वचनेऽपि वा ॥ ३० ॥**
**भवेद्विरोधो नान्योन्यमङ्गिन्यङ्गत्वमाप्तयोः ।**

( ६० ) क्रमेण यथा—'अयं स रशनोत्कर्षी-' इत्यादि (३८२ पृ०) ।

( ६१ ) अत्रालम्बनविच्छेदे रतेररसात्मतया स्मर्यमाणानां तदङ्गानां शोकोद्दी·

---

( ५८ ) नन्विह कस्य कस्य केन केन बाध्यत्वेन कथनमित्याशङ्कायामाह—अत्रेति । प्रशमाङ्गानां शान्तरसानुकूलानाम् । अभिलाषाङ्गैः शृङ्गाररसानुकूलैः या औत्सुक्य-स्मृति-दैन्यचिन्तास्ताभिः तिरस्कारः स्वजन्यरसपरिपोषोपमर्दनम् अप्रधानीकरणमित्यर्थः। ननु वितर्कादीनामिव औत्सुक्यादीनामपि बाध्यत्वमस्तीति कथं विप्रलम्भस्य परिपुष्टिरत आह—पर्य्यन्ते इति । पर्य्यन्ते शेषे विश्रान्तौ सत्यामित्यर्थः । चिन्तैव प्रधानमबाधितत्वेन मुख्यं कारणं यत्र तादृशम् , आस्वादप्रकर्षं विप्रलम्भशृङ्गारपरिपोषम् आविर्भावयति प्रकटयति अत एवास्य गुणत्वमिति भावः । अत्र "कः खलु युवा धन्योऽधरं धास्यति" इति पर्य्यवसाने चिन्ताया एव धारावाहित्वात् मुख्यत्वमिति ज्ञेयम् ।

एवं—"सत्यं मनोरमाः रामाः सत्यं रम्या विभूतयः ।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥"

इत्यत्र पूर्वार्द्धे शृङ्गारस्य, उत्तरार्द्धे शान्तस्य विभावः । अनयोर्विरोधेऽपि पूर्वार्द्धस्य बाध्यतयोक्तत्वान्न दोषत्वम् , अपि तूत्तरार्द्धस्य परिपोषादुगुणत्वम् । अनुभावानां बाध्यत्वेनोक्तौ गुणत्वन्तूह्यम् ।

पाण्डुक्षामं वदनं हृदयं सरसं तवालसञ्च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि ! हृदन्तः ॥

इत्यत्र तु पाण्डुत्वादीनां राजयक्ष्मादिरोगानुभावकतया करुणरसोचिततया च विरुद्धत्वेऽपि विप्रलम्भशृङ्गारे समावेशात् अङ्गभावप्राप्त्या दोषत्वाभावो वक्तुं न शक्यते। तेषामुभयसाधारण्याद्विरोधस्यैवासिद्धेः ।

( ५९ ) विरुद्धरसयोः संपर्कौ दोष एव तदुक्तम्—

"प्रत्यनीकौ रसौ द्वौ द्वौ तत्सम्पर्कं विवर्ज्जयेत्" इति ।

तयोर्विषयविभागवशेन प्रतिप्रसवमाह—विरोधिनोऽपीति । विरोधिनो विरुद्धस्य रसस्याङ्गस्य सञ्चार्य्यादेः स्मरणे पूर्वानुभूतस्यातीतस्य व्यञ्जनया बोधे, साम्येन वचने सादृश्येन कथने सादृश्यप्रदर्शनार्थं गृहीत इत्यर्थः, तथा अङ्गिनि कस्मिंश्चिद् रसे भावादौ वा मुख्यत्वेन स्थिते सति तस्य अङ्गत्वमाप्तयोर्लब्धयोः कयोश्चिद्विरोधिनो रसयोः, अन्योऽन्यं मिथो विरोधो नाम दोषो न भवेत् , किन्तु यथासम्भवं गुण एव स्यादिति भावः । आप्तयोरिति द्विवचनं बहूनामुपलक्षणम् ।

( ६० ) उदाहरति—क्रमेण यथेति । "अयं स" इति व्याख्यातपूर्वमेतत् गुणीभूतव्यङ्ग्योदाहरणे (३८२ पृ०) । अत्र विरुद्धस्यापि शृङ्गारस्य स्मर्य्यमाणतया करुणेन संपर्को न दोषः ।

( ६१ ) ननु तदानीमपि रतिरस्ति तस्या रसत्वप्राप्तिर्निर्बाधैवेति कथं शृङ्गारस्य

पकतया करुणानुकूलता ।

( ६२ ) 'सरागया स्रुतघनघर्मतोयया कराहतिध्वनितपृथूरुपीठया ।
मुहुर्मुहुर्दशनविलङ्घितोष्ठया रुषा नृपाः प्रियतमयेव भेजिरे ॥'

( ६३ ) अत्र संभोगशृङ्गारो वर्णनीयवीरव्यभिचारिणः क्रोधस्यानुभावसाम्येन विवक्षितः ।

( ६४ ) 'एकं ध्याननिमीलनान्मुकुलितप्रायं द्वितीयं पुनः

---

स्मर्य्यमाणत्वमत आह—अत्रेति । आलम्बनस्य शृङ्गाररसस्य पत्युर्भूरिश्रवसः विच्छेदेन मरणाच्चिरविरहेण रतेः शृङ्गाररसस्थायिभावस्य अरसात्मतया तदार्जितनानुभावाद्य-भावेन शृङ्गाररसरूपेणापरिणततया ध्वनिप्रस्तावे "अत्र शृङ्गारः करुणस्याङ्गम्" इति यदुक्तं तत्र शृङ्गारपदं तदीयस्थायिभावपरम्, तथा रसरूपेण परिणतिस्थले विरोध एवेति च ज्ञेयम् । स्मर्य्यमाणानामिति । एतेन शृङ्गारस्यापि स्मरणमिति व्यक्तीकृतम् । तदङ्गानां रत्यङ्गानामनुभावानां रसनोत्कर्षणादीनाम्, शोकोद्दीपकतया चिरविरहे सति प्रियजनकृतोपकारस्मरणस्यात्यन्तशोकोद्दीपकतया प्राकृतिकत्वादितिभावः । करुणानु-कूलता प्रक्रान्तकरुणरसस्य पोषणजनकतेति ज्ञायमानः शृङ्गारकरुणयोर्विरोधः प्रत्युत गुण एव परिणमित इति भावः ।

( ६२ ) साम्येन वचने विरोधाभावमुपपादयितुं दर्शयति—सरागयेति । शिशुपालवधे सप्तदशसर्गे पद्यमिदम् । सरागया "रक्तौ च क्रोधरागौ" इति कविसम्प्रदायसिद्धान्तात् रुषः सरागत्वोपपत्तौ मुखलौहित्ययुक्तयेत्यर्थः, अन्यत्र प्रियतमत्वेन सानुरागया च, स्रुतानि स्वावेगात् सत्त्वोद्रेकाच्च स्तरितानि घनानि सान्द्राणि घर्म्मतोयानि तापव्यञ्जक-जलानि यस्यां यस्याश्च तया तादृश्याक्रोधोद्रेके सुरतान्ते श्रमेण च स्वेदोद्गमः स्वत सिद्धः ) करस्य आहत्या आघातेन ध्वनितं शब्दितं पृथु विशालम् ऊरुपीठम् ऊरुदेशो यस्यां यस्याश्च तया तादृश्या ( क्रोधे सति वीरैरूरुः पीठं च, सुरतोत्सुकाभिरूरुश्चाह-न्यते इति स्वभावः कामशास्त्रे च प्रसिद्धम् ) मुहुर्मुहुर्वारम्वारं दशनैर्दन्तैर्विलङ्घितो निपीड़ित ओष्ठो यस्यां यस्याश्च तया तादृश्या, रुषा क्रोधेन प्रियतमयेव नृपाः शिशु-पालपक्षीया राजानः ( कर्म्म, ) भेजिरे प्रपेदिरे ।

( ६३ ) उदाहृतपद्ये विरोधपरिहारं दर्शयति—अत्रेति । वीरे वीररसे व्यभिचारिणः सञ्चारिभावस्य क्रोधस्य अनुभावस्य कार्य्यस्य साम्येन सादृश्येन विवक्षितः कविनेति-शेषः । यथा कामिनः सानुरागां व्यक्तीकृतमान्मथविकारां प्रियतमामत्यन्तोपादेयतया अनुरागातिशयात् स्वीकुर्वन्ति तथात्र राजानः व्यक्तीकृतस्वलक्षणां रुषं स्वीचक्रुः, इत्यर्थबोधात् सरागादिसाधारणानुभावरूपयोरङ्गयोः साम्यविवक्षया अङ्गिनोरपि वीर-शृङ्गारयोः साम्यं विवक्षितम्, अतः शृङ्गाररसोऽत्र उपमानत्वेन वीररसस्याङ्गम् । एवञ्च-तयो रसयोरेकत्र समावेशो न दोषाय मिथ उपमर्द्योपमर्दकभावादिति भावः । अत्र वीर-व्यभिचारिण इत्युक्त्या उत्साहस्यैव स्थायिभावत्वाद्वीर एव रसः क्रोधस्तु तस्यैव व्यभि-चारीभाव इति व्यञ्जनेन क्रोधस्य स्थायिभावत्वाभावाद्रुषेत्यनेन तदभिहितत्वेऽपि न स्थायिनः स्वशब्दोक्तिदोषो न वा रौद्रो रस इति ध्वनितम् ।

( ६४ ) एकस्मिन्नङ्गिनि भावे अङ्गत्वमासानां रसानां मिथो विरोधाभावमुपपादयि-

पार्वत्या वदनाम्बुजस्तनभरे संभोगभावालसम् ।
अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं
शंभोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥'

( ६५ ) अत्र शान्तशृङ्गाररौद्ररसपरिपुष्टा भगवद्विषया रतिः । यथा वा—

( ६६ ) 'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः,
कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ॥'

तुमुदाहरति—एकमिति । एकं नेत्रमिति शेषः, ध्यानेन निमीलनम् इन्द्रियाणां स्वस्वव्यापारासमर्थीकरणं तस्मात् तं प्राप्य मुकुलितप्रायं मुद्रितपद्माकारम् , द्वितीयं पुनर्नेत्रमिति शेषः, पार्वत्यास्तदाख्यायाः स्वप्रेयस्या वदनाम्बुजं मुखकमलं च स्तनभरः स्तनयोर्विशालता च इत्यनयोः समाहारः तत्र तथोक्त, सम्भोगभावेन चुम्बनमर्दनाद्यालिङ्गनाभिप्रायेण अलसं निश्चलम् अन्यत् तृतीयं नेत्रमितिभावः, दूरमत्यन्तं दूरे वा विकृष्टः स्वप्रहाराय पूर्णमाकृष्टः चापो धनुर्येन तस्मिन् मदने क्रोधः स एवानलोऽग्निस्तेनोद्दीपितम् उज्ज्वलितम् अत एव समाधिसमये भिन्नरसं विभिन्नप्रकाररसत्रयव्यञ्जकं, शम्भोः शङ्करस्य नेत्रत्रयं वो युष्मान् पातु रक्षतात् ।

( ६५ ) विरोधाभावं दर्शयति—अत्रेति । प्रथमे पादे शान्तः, द्वितीये शृङ्गारः, तृतीये च रौद्रो रसः । तथा चात्र भगवद्विषयरतिभावे कवेस्तात्पर्य्यात् स एव प्रधानम् । उपश्लोक्यमानस्य महात्म्यवर्णनायुक्तेति तत्र शान्तशृङ्गाररौद्ररसानां वर्णनमुपकारायेति शान्तादयो रसास्तत्राङ्गतां प्राप्ता इति, एवञ्चैककार्य्यव्यग्राणां राज्ञः सेनापतीनामिव सामन्तानामिव वा स्वभावतो विरुद्धानामपि अङ्गभूतरसानां सम्भाव्यमानो मिथो विरोधो मिथः सम्बन्धाभावादसम्पन्न इति न दोषः सम्भवतीतिभावः ।

( ६६ ) इत्थमङ्गिनि विरोधिनां साक्षादविरोधं दर्शयित्वा परम्परयाऽप्यङ्गत्वमाप्तयोः रसयोर्न विरोध इति दर्शयितुमाह—क्षिप्त इति । अमरुशतके पद्यमिदम् । साश्रूणि एकत्र शोकादपरत्र ईर्ष्यामानात् जलसहितानि नेत्रोत्पलानि यासां ताभिः त्रिपुरयुवतिभिः त्रिपुरशब्दोऽत्र "तात्स्थ्यात्ताच्छब्द्यम्" इति न्यायेन त्रिपुरस्थासुरपरः 'मञ्चा हसन्ति, ग्रामः पलायतः गिरिर्दह्यते' इत्यादिवत् । तथा च त्रयाणां पुराणां समाहारस्त्रिपुरं त्रिपुरस्थाश्च तेऽसुराश्चेति त्रिपुरासुरास्तेषां युवतिभिः कामिनीभिरित्यर्थः, यः शाम्भवः शम्भुसम्बन्धी ( सम्बन्धश्चात्र नियोज्यनियोजकभावः ) शम्भुनोदित इतियावत् , शराग्निः वाणाग्निः, आर्द्रापराधः तत्कालकृतापराधः कामीपतिरिव हस्तावलग्नः दाहार्थं मानभञ्जनार्थञ्च हस्तेषु संसक्तः सन्नेव क्षिप्तो दूरमपसारितः तिरस्कृत इति यावत्, प्रसभमभिहतोऽपि बलात्ताडितोऽपि अंशुकान्तं वस्त्रप्रान्तम् आददानो गृह्णन् , दाहार्थं चुम्बनार्थञ्च केशेषु गृह्णन् सन्नेव अपास्तो दूरीकृतः, चरणनिपतितः सन्नपि सम्भ्रमेण भयेन आदरेण च न ईक्षितो नावलोकितः "सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति मेदिनी । आलिङ्गन् व्याप्नुवन् आश्लिष्यंश्च सन्नेव अवधूतो दूरापसरणेन निराकृत इत्यर्थः । स शम्भोरयं शाम्भवः शराग्निः वो युष्माकं दुरितं पापं

( ६७ ) अत्र कविगता भगवद्विषया रतिः प्रधानम् । तस्याः परिपोषकतया भगवतस्त्रिपुरध्वंसं प्रत्युत्साहस्यापरिपुष्टतया रसपदवीमप्राप्ततया भावमात्रस्य करुणोऽङ्गम् । तस्य च कामीवेनिरसाद्यद्भावादायातः शृङ्गारः ।

( ६८ ) एवं चाविश्रान्तिधामतया करुणस्याप्यङ्गतैवेति द्वयोरपि करुणशृङ्गा-

---

दहतु भस्मीकरोतु । स्रग्धराच्छन्दस्तल्लक्षणन्तूक्तमेव प्राक् ।

अत्र पुरा किल तारकासुरस्य सुताः तारकाक्षः कमलाक्षो विद्युन्माली चेति त्रयोऽसुराः पितामहाल्लब्धवराः बलाढ्याः मयासुरेण निर्मितेषु काञ्चनं रौप्यं कार्ष्णायसञ्चेति त्रिविधेषु पुरेषु यथाक्रमं सपरिवारा वासं चक्रुः । तांश्चासुरान् शम्भुः शराग्निना ददाहेति महाभारतीया कर्णपर्वस्था कथानुसन्धेया ।

( ६७ ) विरोधाभावं दर्शयति अत्रेति । कविगता कविनिष्ठा भगवद्विषया शम्भुगोचरा रतिरनुरागः प्रधानम्, तस्या भगवद्विषयरतेरेव विश्रामस्थानत्वादिति भावः । भगवदुत्साहस्त्रिपुरं प्रत्याग्नेयास्त्रप्रयोगाद्व्यङ्ग्यः, स च तन्महत्त्वसूचकत्वेन तद्विषयरतिभावस्याधिक्यरूपपुष्टिकारक इत्याह—परिपोषकतयेति । अवस्थितस्येति शेषः, उत्साहो रतिभावस्याङ्गम्, तस्योत्साहस्य करुणोऽङ्गमित्यन्वयः । ननु उत्साहो वीररसस्थायिभावः स चात्र व्यङ्ग्य इत्यतो वीररस एवात्र प्रधानम्, तत्कथं रतिभावस्य प्राधान्यमभिहितमित्यत आह—उत्साहस्यापरिपुष्टतयेति । तस्योत्साहस्य साकाङ्क्षवाक्यव्यङ्ग्यत्वेन दहत्विति-निराकाङ्क्षवाक्यव्यञ्जकविभावाङ्गत्वेनाऽप्रधानरूपया अपरिपुष्टतया । अयं हि रसपदवीमप्राप्ततां प्रति हेतुः । रसपदवी वीररसत्वम् । अप्राप्ततयेति च भावमात्रत्वं प्रति हेतुः । अप्राप्ततया अनाप्ततया भावमात्रस्य केवलस्थायिभावरूपेण विद्यमानस्य उत्साहस्येति पूर्वेण सम्बन्धः । "उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते" इति नियमोक्तेरित्याशयः । करुण इति त्रिपुरयुवतीनां शोच्यावस्थाव्यङ्ग्यः करुण इत्यर्थः । अङ्गमिति । भगवदुत्साहेन एव तासां शोच्यावस्थाप्रापणात् तद्व्यङ्ग्यः करुणः तत्पुष्टिकारकोऽङ्गमित्यर्थः । तस्य च करुणस्य सम्बन्धे । तस्याङ्गता च उपमानोपमेयप्रकर्षणात्-तदेवोपपादयति-साम्यबलादिति । प्राग्यथा कामुक आचरतिस्म तथाद्यशराग्निरिति साम्यबलात् कामिसादृश्यप्रभावात्, आयातः स्मृतिविषयतां प्राप्तः । शृङ्गारः ईर्ष्यामानाख्यविप्रलम्भः अङ्गमित्यनुषज्य सम्बन्धः । स्मर्यमाणापूर्वावस्थाया रतेः करुणस्थायिभावः स्त्रीशोकोद्दीपकतयाऽङ्गत्वमित्याशयः ।

( ६८ ) इत्थं भगवदुत्साहपुष्टस्य भगवद्विषयकविभावस्य परम्परया करुणशृङ्गारौ विरोधिस्वरूपावपि अविरुद्धौ इति दर्शयति-एवञ्चेति । यद्यत्र स्त्रीशोकस्य वाच्येनानुभावेनाश्रुणा व्यङ्ग्येनोद्दीपनविभावेन झटित्याक्षेपलभ्येन म्रियमाणपत्यालम्बनविभावेन परिपुष्टिरिति करुणस्य प्रधानत्वमेव । तदा कथमङ्गत्वमित्यत आह—एवञ्चेति साम्यबलात् शृङ्गारस्यागतत्वे चेत्यर्थः । अविश्रान्तिधामतया साकाङ्क्षतया आश्रयतया अङ्गिसाकाङ्क्षतयेति यावत् । करुणस्याङ्गिनः सम्बन्धे शृङ्गारस्याङ्गतैवेत्यर्थः, शृङ्गारस्य करुणोपजीवित्वादित्याशयः । भगवदुत्साहस्तु अङ्गमपि भावस्याविरोधित्वात् तद्विरोधो न दूषित इत्यवधेयम् । भगवतः शम्भोरुत्साहेन त्रिपुरध्वंसं प्रति विलोत्कर्षणापरिपुष्टो

रयोर्भगवदुत्साहपरिपुष्टतद्विषयरतिभावास्वादप्रकर्षकतया यौगपद्यसम्भवादङ्गत्वेन न विरोधः ।

( ६६ ) ननु समूहालम्बनात्मकपूर्णघनानन्दरूपस्य रसस्य तादृशेनेतररसेन

---

यस्तद्विषयरतिभावः कवेः शम्भुविषयकानुरागाख्यो भावः स एव आस्वादः रसप्राय-स्तस्य प्रकर्षतया पुष्टिकरत्वगत्वेनोत्कर्षाधायकतया, यौगपद्यसम्भवात् एककाले सद्भावात् । इत्यङ्गत्वेन द्वयोः श्रृङ्गारकरुणयोर्न विरोध इत्यन्वयः । एवञ्चात्र कवेः भगवद्विषया रतिः प्रधानम्, भगवदुत्साहस्तु तदङ्गम्, तस्याऽप्युत्साहस्य करुणोऽङ्गम्, तस्यापि पुनः करुणस्य श्रृङ्गारश्चाङ्गमितिपरम्परया अङ्गत्वमालयोरपि परस्परविरोधिनोः करुण-श्रृङ्गारयोरङ्गत्वादेव न विरोध इति तत्त्वम् । यद्वा-त्रिपुरयुवतीनां पूर्वं प्राणेश्वरा हस्तधारणादिना प्रसादनपरा आसंस्तासामेवेदानीं शम्भुशरस्तत्कर्मणैव तादृशीं दुर्दशां जनयतीतिश्रृङ्गारेण परिपोषितःकविकरुण एव शरजन्यभगवद्दुष्टनिग्रहोत्साहोद्भावनकविगतां भगवद्विषयां रतिं जनयित्वा तामेव सामाजिकानामास्वादकन्दतामुपनयतीति करुण-श्रृङ्गारयोरेवाङ्गत्वमित्यादिविवृतौ स्पष्टम् । अत्रेदमप्यनुसन्धेयम्—पदैः सकलार्थोपस्थितौ खले कपोतन्यायेन विशेष्यविशेषणं तत्रापि विशेषान्तरमितिरीत्या शाब्द-बोधे सति व्यङ्ग्यबोधेऽपीयं रीतिरनुसरणीया । तथाच प्रकृते भगवदुत्साहस्तत्र करुण-स्तत्रापि श्रृङ्गारो व्यञ्जनया एकदेवाङ्गितयाऽवगम्यते इत्युक्त्या अवान्तरवाक्यार्थबोध-क्रमेण शाब्दबोधपक्षे व्यङ्ग्यार्थबोधस्यापि तद्रीतित्वेन विशिष्टवैशिष्ट्यमितिरीत्या श्रृङ्गा-रविशिष्टकरुणबोधे सति करुणविशिष्टभगवदुत्साहबोधः तदनन्तरं भगवदुत्साहविशिष्ट-भावबोधः क्रमाज्जायते इति भवति परम्परया प्रधानस्य करुणश्रृङ्गारावङ्गमिति स्पष्टं सर्वं वागीशग्रन्थे । नन्वेवमपि "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात्" इति न्यायेन करुणश्रृङ्गारयोः परस्परमत्राङ्गाङ्गिभावो भवितुं न शक्यत इति चेत् ?

"गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्त्तते" ॥

गुणोऽङ्गं विशेषणमित्यर्थं अप्रधानमिति यावत् । "गुणस्त्वावृत्तिशब्दादिज्येन्द्रियाप्रधानतन्तुषु" इति वैजयन्ती । कृत आत्मनः स्वस्य संस्कारोऽन्येन परिपुष्टिर्यस्य तादृशः सन् प्रधानमङ्गिनं प्रतिपद्यते प्राप्नोति तथा आत्मसंस्कारेण प्रधानस्याङ्गिनः भूयसि महति उपकारे वर्त्तत इति न्यायार्थः । अनेन न्यायेनापवादत्वात् । अतः "प्रकल्प्य चापवाद-विषयं तत उत्सर्गोऽभिनिविशते" इति न्यायेनापवादविषयं परित्यज्योत्सर्गस्य प्रवृत्ते-र्यत्र द्वयोरप्यङ्गयोः प्रधाने साक्षादङ्गत्वं तत्रैव गुणानां चेतिन्यायस्य प्रवृत्तिः । अत्र तु श्रृङ्गारस्य परम्परया प्रधानेऽङ्गत्वमित्यप्रवृत्तेः ।

( ६९ ) ननु यदि रसानां परस्परविरोधः स्यात् यद्वा अङ्गाङ्गिभावः स्यात्तदा तत्परिहारे वक्तव्यः स्यात् किन्तु नत्वेतत्प्रकारद्वयमपि तेषां सम्भवति ततश्च तद्दोषत्व-स्याप्यसम्भवात्तत्प्रतिप्रसवोऽनुचित इत्याशङ्कते-नन्विति । समूहः "प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत्" इत्युक्त्या विभावानुभावव्यभिचारिस्थायिभावज्ञानानां समष्टिरेव आलम्बनमुपजीवनं यस्य तादृश आत्मा स्वरूपं यस्य स चासौ पूर्णः अखण्डः सानन्दा-न्तरेणासम्मिश्रः घनः सान्द्रश्च आनन्दः स्वरूपं यस्य स चेति तस्य तादृशस्य । तादृशेन समूहालम्बनात्मकपूर्णघनानन्दस्वरूपेण, इतररसेन रसान्तरेण । असम्भावनायां हेतुं

कथं विरोधः संभावनीयः । एकवाक्ये निवेशप्रादुर्भावयोर्यौगपद्यविरहेण परस्परोपमर्दकत्वानुपपत्तेः ।

( ७० ) नाप्यङ्गाङ्गिभावः द्वयोरपि पूर्णतया स्वातन्त्र्येण विश्रान्तेः ।

( ७१ ) सत्यमुक्तम् । अत एवात्र प्रधानेतरेषु रसेषु स्वातन्त्र्यविश्रामराहित्यात्पूर्णरसभावमात्राच्च विलक्षणतया संचारिरसनाम्ना व्यपदेशः प्राच्यानाम् ।

( ७२ ) अस्मत्पितामहानुजकविपण्डितमुख्यश्रीचण्डीदासपादानां तु खण्डरसनाम्ना । यदाहुः—

---

प्रदर्शयति—एकवाक्ये इति । एकस्मिन् वाक्ये यो निवेशो व्यञ्जकतासम्बन्धेन वृत्तिः स च प्रादुर्भाव उत्पत्तिस्तयोस्तादृशयोःयौगपद्यविरहेण एककालीनत्वाभावेन परस्परोपमर्दकत्वानुपपत्तेः उपमर्दकत्वाभावात् परस्परपरिपोषकप्रतिबन्धकत्वासङ्गतेः । एवञ्च विरोधो नाम परस्परबाध्यबाधकत्वम्, तच्चैकस्मिन्नेव काले एकस्मिन्नेव च स्थाने वृत्तीनामुत्पन्नानां वा सम्भवति । रसानाञ्च ज्ञानानन्दरूपस्वरूपत्वात् क्षणिकत्वेन "अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते" इति सिद्धान्तेन च एकस्मिन्नेव वाक्ये एककालवृत्त्युत्पत्त्योरसम्भवान्नोक्तविरोधसम्भवः "राम मन्मथ"इत्यादौ बीभत्सशृङ्गारयोर्न यौगपद्यसम्भवः किन्त्वभिधेयबोधानन्तरं बीभत्सस्य व्यङ्ग्यबोधानन्तरं शृङ्गारस्येतिक्रमेणैवेति नानुपपत्तिः ।

( ७० ) एवमेव रसानां परस्पराङ्गाङ्गिभावस्यैवासम्भवेन तद्दोषत्वस्याप्यसम्भवात् तत्प्रसवोऽपि व्यर्थं एवेत्याशङ्कते—नापीति । अङ्गाङ्गिभावः अङ्गत्वमेकस्य अपरस्याङ्गित्वम् उपकार्योपकारित्वमित्यर्थः रसानामिति शेषः । द्वयोरपीति । शृङ्गारकरुणयोर्विरोधिनोरित्यर्थः । द्विशब्दोऽत्र बहूनामुपलक्षणम् । पूर्णतया अखण्डतया स्वातन्त्र्येण स्वस्वमुख्यभावेन विश्रान्तेः वृत्तेः । एवञ्च मुख्यमङ्गि अमुख्यञ्चाङ्गम्, तेन मुख्यामुख्ययोरेव मिथ उपकार्योपकारित्वे अङ्गाङ्गिभावो भवति । प्रकृते तु द्वयोरेव मुख्यत्वात् कथमङ्गाङ्गिभावः, कथञ्च तेन तद्विरोधपरिहार इति भावः ।

( ७१ ) उक्ताशङ्कामभ्युपेत्य समाधत्ते—सत्यमिति । सत्यमित्यर्धाङ्गीकारे । अतएव उक्तानिर्वाहादेव, अत्र अनेकरसानामेकत्र वृत्तिविषये प्रधानो हि रसः वाक्यार्थाकाङ्क्षापूर्तिपर्यन्तस्थायी भवति, अप्रधानस्तु वाक्यार्थाकाङ्क्षापूर्तिपूर्वमेव विश्रान्तः । तथाच प्रधानेतरेषु मुख्यातिरिक्तव्यङ्ग्येष्वित्यर्थः । स्वातन्त्र्यविश्रामराहित्यात् स्वस्वमुख्यभावेन वृत्त्यभावात् विलक्षणतयेत्यत्रायं हेतुः । पूर्णरसभावमात्रात् केवलमुख्यरसत्वमपेक्ष्य विलक्षणतया आपाततः स्वसामग्रीपरिपुष्टतया, मात्रपदोपादानं हि अङ्गरसेषु केवलपूर्णत्वांश एव वैलक्षण्यम्, न पुनः समूहालम्बनत्वघनानन्दत्वांशयोरपीति द्योतयितुम् । व्यपदेशो व्यवहारः । प्राच्यानां पूर्वेषाम् । अत्रायमाशयः—प्राचीनानां यथा व्यभिचारिभावः जलबुद्बुद इव प्रादुर्भूतः सन् स्थायिभावमुपकृत्य जलबुद्बुद इव च पुनस्तिरोहितो भवतीति स्थायिन उपकाराय सञ्चरणात् सञ्चारिभाव इति व्यवह्रियते तथा अङ्गरसोऽपि उद्भूतः सन् प्रधानरसमुपकृत्य तत्पूर्वमेव विश्रान्तो भवतीति मुख्यरसस्योपकाराय सञ्चारणात् सञ्चारिरस इति व्यवह्रियते ।

( ७२ ) अस्मदिति । खण्डरसनाम्ना प्रधानेतरेषु रसेषु व्यपदेश इति । तथाच

( ७३ ) 'अङ्गं बाध्योऽथ संसर्गी यद्यङ्गी स्याद्रसान्तरे ।
नास्वाद्यते समग्रं तत्ततः खण्डरसः स्मृतः ॥' इति ।

( ७४ ) ननु 'आद्यः करुणबीभत्सरौद्रवीरभयानकैः' इत्युक्तनयेन विरोधिनोर्वीरशृङ्गारयोः कथमेकत्र—

( ७५ ) 'कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरस्फारोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यञ्शृण्वन्रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥'

इत्यादौ समावेशः ।

प्राचां मतेन यः सञ्चारिरसः इति व्यपदेशस्तस्यैव खण्डरस इति पुनरर्वाचामिति भावः । एवञ्च पूर्णरसयोर्विरोधासम्भवेऽपि खण्डरसपूर्णरसयोस्तद्विरोधादिसम्भव इत्याशयः ।

( ७३ ) चण्डीदासोक्तं खण्डरसव्यपदेशे योगार्थवशात् संवादमाह—अङ्गमिति । अङ्गी प्रधानोऽपि रसः रसान्तरे अन्यस्मिन् रसे यद्यङ्गम् उपकारकतया अप्रधानम् अथवा बाध्यो विरोध्यऽपि स्मरणादिवशाल्लब्धसमावेशः स्यात् यदि वा संसर्गी अविरोधितया प्रधानानुपकारितया च स्वातन्त्र्येण संमिलितः स्यात् तदा समग्रं पूर्णं यथास्यात्तथा नास्वाद्यते नानुभूयते पार्यन्तिकप्रतीतिविषय एव समग्रास्वाद इति भावः । अतः खण्डरसः स्मृतः । इत्थञ्च पार्यन्तिकप्रतीतिविषयस्य बाधकत्वम् अतथाभूतस्य च बाध्यत्वं खण्डरसत्वं च इत्यभिहितं भवति । तथाच रसस्य रसान्तरेण साक्षाद्विरोधाभावात् यत्र विरोधोऽनुभूयते तत्र रसस्य सञ्चारित्वं खण्डत्वं वाऽङ्गीकृत्य तथा व्यपदेशो बोध्य इति सन्दर्भाशयः । तत्र अङ्गं यथा—"एकं ध्याननिमीलनात्" इत्यादौ शान्तिरसादिकं भगवद्विषयकरतेरङ्गम् । बाध्यो यथा—"अयं स रसनोत्कर्षी" इत्यादौ शृङ्गारः करुणस्य । संसर्गी यथा—'कपोले जानक्या" इत्यादौ शृङ्गारो वीरस्य । त एते शान्तादय प्राच्यमते सञ्चारिरसाः, अर्वाचीनमते तु खण्डरसा इत्यवधेयम् ।

( ७४ ) ननु केवलस्मरणदावेव विरुद्धयोः समावेशः प्रतिप्रसूतः किन्तु "कपोले जानक्याः" इत्यत्र विरुद्धयोः शृङ्गारवीररसयोस्तदभावात् कथं सन्निवेश इत्याशयेनाह—नन्विति । आद्यः शृङ्गाररसः करुणबीभत्सरौद्रभयानकैः, "विरोधभाक्" इति शेषः । एकत्र एकवाक्यरूपे । अस्य चोपरितनेन "इत्यादौ समावेशः" इत्यनेन सम्बन्धः ।

( ७५ ) कपोल इति । कदाचिद्दण्डकारण्ये निवसतः श्रीरामचन्द्रस्येहितवर्णनमिदम् । रघूणां रघुवंशीयानां राज्ञां परिवृढः प्रधानाध्यक्षो रामः "प्रभुः परिवृढोऽधिपः" इत्यमरः । करिकलभस्य हस्तिशावकस्य दन्तोऽभिनवोद्गतो दशनाङ्कुरस्तस्य द्युतिः कान्तिस्तां मुष्णाति चोरयतीति तस्मिंस्तथोक्ते अत्यन्त निर्मले इत्यर्थः, कपोले कपोलावच्छेदे स्मरेण कामोद्रेकेण स्मेरः प्रकाशमानः स्फारोड्डमरोऽत्युत्कटः पुलको रोमाञ्चो यस्मिंस्तत्ताद्दशम् । कपोले किञ्चित् पाण्डुत्वेन निर्मलत्वेन वा करिकलभदन्त्योपमा । जानक्याः सीतायाः वक्त्रकमलं मुखपद्मम् आत्मन इति शेषः, मुहुर्वारम्वारं पश्यन् अवलोकयन्, इतश्च रजनिचरसेनायाः खरदूषणादिसङ्घस्य कलकलं कोलाहलम् । शृण्वन् सन् जटाजूटस्य जटासमूहस्य ग्रन्थिं द्रढयति—सङ्ग्रामोद्योगाय दृढभावेन बध्नाति । शिखरिणीछन्दस्तल्लक्षणमुक्तमेव प्राक् ।

( ७६ ) अत्रोच्यते—इह खलु रसानां विरोधितायाः अविरोधितायाश्च त्रिधा व्यवस्था। कयोश्चिदालम्बनैक्येन, कयोश्चिदाश्रयैक्येन, कयोश्चिन्नैरन्तर्येणेति।

( ७७ ) तत्र वीरशृङ्गारयोरालम्बनैक्येन विरोधः।

( ७८ ) तथा हास्यरौद्रबीभत्सैः संभोगस्य।

( ७९ ) वीरकरुणरौद्रादिभिर्विप्रलम्भस्य।

( ८० ) ( आलम्बनैक्येन ) आश्रयैक्येन च वीरभयानकयोः।

( ८१ ) नैरन्तर्यविभावैक्याभ्यां शान्तशृङ्गारयोः।

( ८२ ) त्रिधाऽयंविरोधो वीरस्याद्भुतरौद्राभ्याम्। शृङ्गारस्याद्भुतेन भयानकस्य बीभत्सेनेति।

---

अत्र शृङ्गारे जानकी आलम्बनविभावः, तदीयताटङ्कलोल उद्दीपनविभावः, तद्वक्त्रकमलदर्शनमनुभावः, रतिश्च स्थायीभावः। वीरे तु रजनीचरसेना आलम्बनविभावः, तदीयकलकलविधानमुद्दीपनविभावः, जटाजूटग्रन्थिदृढीकरणमनुभावः, उत्साहश्च स्थायीभावः तथा चेमौ परस्परमत्यन्तमनङ्गताङ्गापन्नौ स्वातन्त्र्येणोपलभ्येते तत्कथमेकत्रानयोः समावेश इति शङ्कितुराशयः।

( ७६ ) स्वतन्त्रयोरनेकयोरेकावलम्बनकत्वे एव विरोधः। प्रकृते जानक्यालम्बनकः शृङ्गारो रजनीचरालम्बनकस्तु वीररस इत्यविरोध इत्याशयेन समाधत्ते—अत्रोच्यत इति। उच्यते सिद्धान्त इति शेषः। इह एवं मीमांसाव्यतिकरसमये इति भावः। रसानां शृङ्गारादीनाम्, व्यवस्था नियमः। कथमित्याशङ्क्य यथाक्रमं निरूपयति—कयोश्चिदिति। आलम्बनैक्येन विरोधोऽविरोधश्चेति शेषः। एवमुत्तरत्रापि। आश्रयैक्येन नायकैक्येन। नैरन्तर्य्येण अव्यवधानेन।

( ७७ ) तत्र यस्य येन सह विरोधस्तं दर्शयति—तत्रेति। तेष्वपि विरोधिरसेषु मध्ये इत्यर्थः। वीरशृङ्गारयोर्वीरसम्भोगयोः। आलम्बनैक्येन एकावलम्बनत्वे एव नान्यथा एकस्मिन्नालम्बने एककालोत्साहरत्योरसम्भवादितिभावः।

( ७८ ) तथेति। तथा आलम्बनैक्येन। सम्भोगस्य सम्भोगशृङ्गारस्य। विरोध इति शेषः। सम्भोगकाले हासक्रोधजुगुप्सानामुदयासम्भवादितिभावः। विप्रलम्भकाले हाससम्भवात्तद्व्युदासाय सम्भोगस्येत्यभिहितम्।

( ७९ ) वीरेति। आदिपदेन भयानकबीभत्सयोः परिग्रहः, विप्रलम्भस्य शृङ्गारस्य आलम्बनैक्येन विरोध इति पूर्वतोऽनुषञ्जनीयम्। एकस्मिन्नेवालम्बने अनुरागकाले उत्साह-शोक-भय-जुगुप्सानामनुदयादित्याशयः।

( ८० ) आलम्बनेति। वीरभयानकयोः विरोध इति शेषः। एकस्मिन्नेव समये एकं प्रति एकस्य उत्साहभययोरुत्पत्त्यभावादित्याशयः।

( ८१ ) नैरन्तर्येति। नैरन्तर्य्यविभावैक्याभ्याम् अव्यवधानेन आलम्बनैक्येन चेत्यर्थः। शमरत्योर्नैकट्ये एकस्मिन्नेव चालम्बने उत्पत्त्योरनुदयादितिभावः। शान्तशृङ्गारयोराश्रयैक्येनापि विरोध इत्यवधेयम्।

( ८२ ) एवं यस्य येन विरोधस्तं प्रदर्श्याविरोधं प्रदर्शयितुमुपक्रमते-त्रिधाऽपीति। आलम्बनैक्येन आश्रयैक्येन नैरन्तर्य्येण चेत्यर्थः। वीरस्य अद्भुतरौद्राभ्यामविरोध एक-

( ८३ ) तेनात्र वीरशृङ्गारयोर्भिन्नालम्बनत्वान्न विरोधः।

( ८४ ) एवं च वीरस्य नायकनिष्ठत्वेन भयानकस्य प्रतिनायकनिष्ठत्वेन निबन्धे भिन्नाश्रयत्वे न विरोधः।

( ८५ ) यच्च नागानन्दे ऽशमाश्रयस्यापि जीमूतवाहनस्य मलयवत्यनुरागो दर्शितः, तत्र 'अहो गीतमहो वादित्रम्' इत्यद्भुतस्यान्तरा निवेशनान्नैरन्तर्याभावान्न शान्तशृङ्गारयोर्विरोधः।

---

स्मिन्काले समावेशसम्भवः, एकस्यैव पुरुषस्य एकस्मिन्नेव पुरुषे यथाक्रमम् उत्साह-विस्मय-क्रोधानामुत्पत्तिसम्भवादित्यभिप्रायः। शृङ्गारस्य अद्भुतेन सहाविरोधः, एकस्यैव नायकस्य एकस्यामेव नायिकायामेककाल एवानुरागरूपादिजनितरतिविस्मययोगसमावेशसम्भवादितिभावः। भयानकस्य बीभत्सेन सहाविरोधः, एकस्यैव एकदैव एकस्मिन्नेव पिशाचादौ भयजुगुप्सयोरुत्पत्तिदर्शनादित्याशयः।

( ८३ ) एवंसति वीरशृङ्गारयोरालम्बनभेदेनाविरोधं दर्शयति—तेनेति। उक्तनियमानां युक्तियुक्तत्वेन च।

अत्र "कपोले जानक्याः" इत्युक्तपद्ये। भिन्नालम्बनत्वादिति। तथाच वीरे रजनिचरसेना उत्साहस्यालम्बनम्। शृङ्गारे जानकी रतेरालम्बनमिति भिन्नालम्बनद्वये उत्साहरत्योः यथाक्रममुत्पत्तौ बाधकाभावादित्याशयः।

( ८४ ) आश्रयैक्येन वीरभयानकयोर्विरोध इति प्रतिपादितम् अधुना आश्रयभेदेन तु तयोर्विरोधो नेति प्रदर्शयितुमुत्थापयति—एवञ्चेति। वीरभयानकयोराश्रयैक्येनैव विरोधस्य युक्तत्वे चेत्यर्थः। वीरस्य वीररसनिष्ठोत्साहस्य। भयानकस्य भयानकनिष्ठभयस्य। भिन्नाश्रयत्वे सति। दिङ्मात्रं यथा—

> प्रौढामादाय भीतिं मनसि सरभसं प्राप्य लोकापकीर्तिम्
> नैवास्तोकाऽप्यपेक्षाऽक्रियत पथि पथि प्राक्तनासु प्रियासु।
> श्रीमन्निःशङ्कभानोः समरपरिसरक्षीमनि सीमसेना-
> निःशाणध्वानशङ्काकुलमपसरतां पञ्चगौडेश्वरेण॥

अत्र वीरभयानकयोरेकाश्रयाभावान्न विरोधः। अन्यत्राऽप्येवंविधविषये विरोधोऽवगन्तव्यः।

( ८५ ) ननु शान्तशृङ्गारयोर्नैरन्तर्येण विरोध इति चेत्? कथं नागानन्दनाटके एकस्यैव नायकस्य जीमूतवाहनस्य तथानिबद्धमित्यत आह—यच्चेति। प्रशमाश्रयस्यापि शान्तरसनिष्ठशमगुणवतोऽपि। मलयवत्यनुरागः मलयवत्यामनुरागः। वादित्रं वाद्यम्। अद्भुतस्य अद्भुतरसस्य अन्तरा मध्ये शान्तशृङ्गारयोरिति शेषः रसतामनापन्नोऽद्भुतः "अहो" शब्दवाच्योऽपि अन्तरास्थितो नैरन्तर्यविघटक इति भावः।

तथाचोक्तं ध्वनिकृता—

> एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान्।
> रसान्तरव्यवधिना रसो व्यङ्ग्यः सुमेधसा॥

अत्रेदमप्यनुसन्धेयम्—शान्तशृङ्गारयोर्नैरन्तर्ये विरोधिनोर्न परं प्रबन्धे यावदेकस्मिन्नपि वाक्ये विरोधः।

( ८६ ) एवमन्यदपि ज्ञेयम् ।

( ८७ ) 'पाण्डुक्षामं वदनम्–' इत्यादौ (२६१, पृ.) च पाण्डुतादीनामनुभावः करुणविप्रलम्भेऽपीति न विरोधः ।

( ८८ ) अनुकारे च सर्वेषां दोषाणां नैव दोषता ॥ ३१ ॥

( ८९ ) सर्वेषां दुःश्रवत्वप्रभृतीनाम् । यथा—

( ९० ) 'एष दुश्च्यवनं नौमीत्यादि जल्पति कश्चन ।'

( ९१ ) अत्र दुश्च्यवनशब्दोऽप्रयुक्तः ।'

यथा—

"भूरेणुदिग्धान्नवपारिजातमालारजोवासितबाहुमध्याः ।
गाढं शिवाभिः परिरभ्यमाणान् सुराङ्गनाश्लिष्टभुजान्तरालाः ॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः ॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानान् ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन्" ॥

अत्र बीभत्सशृङ्गारयोर्वीररसस्यान्तरा निवेशान्न विरोधः, अन्येषामपि रसानां परिहारप्रकाराः सत्कविप्रबन्धेष्वेवमेवानुसन्धेयाः ।

( ८६ ) एवमिति । अन्यदप्यविरोधित्वम् । यथा शृङ्गारस्य नायकत्वे प्रतिनायकघटकत्वे वीरस्य च प्रतिनायकनिष्ठत्वे न विरोध इत्यादि ।

( ८७ ) ननु करुणशृङ्गारयोर्विरोधेन सन्निबन्धे—

'परिपन्थि रसाङ्गस्य विभावादेः परिग्रहः' ।

इत्यनेन दोषोऽभिहितः तत्कथं "पाण्डु क्षामम्" इत्यादौ करुणरसानुभाववदनपाण्डुतादीनां तेनैव रूपेण शृङ्गाररसप्रधाने मालतीमाधवे सन्निवेशः ? अङ्गिनोर्विरोधे तदङ्गानामपि विरोधौचित्यादित्यत आह—पाण्डु क्षाममिति । अनुभावोऽनुभावत्वेत्यर्थः । न केवलं करुणे करुणविप्रलम्भेऽपीत्यर्थः । एतेन विरुद्धरसीयासाधारणाङ्गपरिग्रह एव दोषो न तु साधारणाङ्गपरिग्रह इति ध्वनितम् ।

( ८८ ) सर्वेषां दोषाणामेकममोघं प्रतिप्रसवोपायं प्रदर्शयति—अनुकार इति । अनुकारे अनुकरणे केनाप्यभिहितस्य शब्दस्य अनुरूपमेव पुनरुक्तावित्यर्थः, सर्वेषां निर्दिष्टानिर्दिष्टप्रतिप्रसवानां दुःश्रवत्वादीनां दोषाणां नैव दोषता नापि गुणतेत्यपि ज्ञेयम् । अत्र रसादीनामसम्भवेन तदुत्कर्षापकर्षयोरुभयोरेवासम्भवादितिभावः । तथा च अनुकार्यशब्दादौ नित्यदोषानित्यदोषत्वम्, अनुकरणशब्दादावदोषत्वमितिव्यवस्थेत्यवगन्तव्यम् ।

( ८९ ) सर्वेषामितिकारिकोक्तपदं विवृणोति—सर्वेषामिति ।

( ९० ) उदाहरति—एष इति ।

एष अहमितिशेषः, दुश्च्यवनमिन्द्रम्, नौमि स्तौमि इत्यादि ( कर्म )

( ९१ ) अत्रेति । इन्द्रार्थे कोशादौ प्रसिद्धोऽपि दुःश्च्यवनशब्दः कविभिरनादृतत्वात्सम्भाव्यमानोऽप्यप्रयुक्तत्वादोषः । अत्रानुकरणनिष्ठत्वाददोष एवेत्याशयः । अप्रयुक्त इत्युपलक्षणम्, तेन दुःश्रवत्वच्युतसंस्कारत्वयोरपि परिग्रहः ।

( १२ ) अन्येषामपि दोषाणामित्थौचित्यान्मनीषिभिः ।

( क ) अदोषता च गुणता ज्ञेया चानुभयात्मता ॥ ३२ ॥

( १३ ) अनुभयात्मता अदोषगुणता ।

इति साहित्यदर्पणे दोषनिरूपणो नाम सप्तमः परिच्छेदः ।

क्रमेण यथा—मृगचक्षुषमद्राक्षीदित्यादिकथयत्ययम् ।

अत्राद्राक्षीदितिपदस्य दुःश्रवत्वेन सम्भाव्यमानत्वेऽपि अनुकरणवृत्तित्वाददोषत्वम् । च्युतसंस्कारस्यादोषत्वं यथा—

पश्यैष च गवित्याह सुत्रामाणं यजेति च । इमे च वागीशस्य ।

अत्र प्रथमपादे गोशब्दस्य निर्विभक्तिकतया च्युतसंस्कारत्वम् । द्वितीयपादे इन्द्रार्थ "सुत्रामा गोत्रभिद्वज्री" इत्यमरेण प्रसिद्धत्वेऽपि कविभिरनादृतत्वादप्रयुक्तत्वात्सम्भाव्यमानोऽपि अप्रयुक्ततादोषः अनुकरणवृत्तित्वाददोषः ।

( १२ ) अन्येषामपीति । इति एवम्, औचित्यात् युक्त्यनुसारात्, मनीषिभिः बुद्धिमद्भिः अन्येषामपि दोषाणां दोषत्वेन पूर्वमुक्तानाम् अदोषता कुत्रापि विद्यमानदोषत्ववैपरीत्येनैव गुणता, कुत्रापि स्वभावत एव गुणता, कुत्रापि च अनुभयात्मता दोषत्वगुणत्वोभयातिरिक्तता ज्ञेया सर्वत्र हि औचित्यानुसारादेव दोषगुणादीनां व्यवस्थितेरित्याशयः ।

तत्र विद्यमानदोषत्ववैपरीत्येन गुणता यथा—

'देवत्रासकरे युद्धे रावणे समुपागते । माधवः शूलमादायागच्छत्त्वरितं जवात्' ॥

अत्र हरेः पाणौ चक्रस्यैव प्रसिद्धत्वेन शूलग्रहणस्याप्रसिद्धत्वेन विद्यमानोऽपि ख्यातिविरुद्धतादोषस्तद्युद्धस्य सङ्कुलतादिप्रकाशनेन प्रत्युत गुण एव ।

स्वभावत एव दोषस्य गुणता यथा शिशुपालवधे—

ब्रजतः क्व तात ! वजसीतिपरिचयगतार्थमस्फुटम् ।

धैर्यमभितदुदितं शिशुना जननीनिभर्त्सनविवृद्धमन्युना ॥

अत्र वजसीति अवाचकत्वदोषयुक्तो न भवितुमर्हति 'वज व्रज गतौ' इति वजधातोरपि गमनार्थे पाठोपलम्भात्, तथापि व्रजसीति रेफसहितोच्चारणासमर्थेन बालकेन तत्स्थलेएव 'व्रजसी'त्यभिहितत्वात्सम्भाव्यमानोऽवाचकत्वदोषः बालकस्यास्पष्टवाक्यताद्योतनेन चमत्कारातिशयापादनात् स्वभावत एव गुणः । अनुभयात्मता यथा—

प्रहेलिकाक्रियाकर्मकर्तृगुप्त्यादौ कष्टार्थतायाः । तत्र प्रहेलिकायां कष्टार्थत्वस्यानुभयात्मत्वं यथा—तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः ।

गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः ॥

अत्र कटिप्रदेशस्थितपूर्णो घटः शब्दं करोति इत्येतावन्मात्रार्थबोधने न दोषत्वं नापि गुणत्वम् । क्रिया गुप्तिर्यथा—

पाण्डवानां सभामध्येदुर्योधनमुपागतः । तस्मै गाश्च हिरण्यञ्च सर्वाण्याभरणानि च ।

अत्र "अदु" रिति क्रिया गुप्ता ।

( १३ ) अनुभयात्मतां स्पष्टयितुं विवृणोति—अनुभयेति ।

'अत्र मूलकारिकाः=३२ । पूर्वाभिः सह' ६७८ । उदाहरणानि=१६६ । पूर्वैः सह ४८७ ।

इति वत्सकुलावतंस–वैयाकरणकेसरि–'वदरिनाथ' शर्मात्मज–दैवज्ञशिरोमणि श्रीलोकनाथात्मज–साहित्यव्याकरणाचार्य–ठक्कुरोनामक–श्रीकृष्णमोहनशास्त्रिविरचितायां "लक्ष्मी"नामिकायां साहित्यदर्पणटीकायां सप्तमः परिच्छेदः ।

(क) केचित्त्वत्रादोषतादीनाम् "औत्सुक्येन" इत्याद्युदाहरणमाहुः । इति टिप्पण्यां सप्तमः ।

# अष्टमः परिच्छेदः ।

( १ ) गुणानाह—

( २ ) रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा ।

गुणाः—

( ३ ) यथा खल्वङ्गित्वमाप्तस्यात्मन उत्कर्षहेतुत्वाच्छौर्यादयो गुणशब्दवाच्याः, तथा काव्येऽङ्गित्वमाप्तस्य रसस्य धर्माः स्वरूपविशेषा माधुर्यादयोऽपि स्वसमर्पक-पदसंदर्भस्य काव्यव्यपदेशस्यौपयिकानुगुण्यभाज इत्यर्थः ।

( १ ) एवं काव्यत्वापकर्षकदोषाखिलस्य "उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः" इत्युद्देशक्रमप्राप्तगुणस्वरूपनिरूपणमारभते—गुणानाहेति । गुणान् रजस्तमःसत्त्वानति-रिक्तस्वरूपान् माधुर्यौजःप्रसादाभिधेयान् काव्यात्मभूतरसनिष्ठान् धर्मविशेषान् आहेत्य-र्थः । प्रसङ्गसङ्गत्या सामान्यतो गुणान् लक्षयति—रसस्येत्यादिनेतिभावः ।

( २ ) रसस्येति । यथा लोके इति शेषः. अङ्गित्वमाप्तस्य शरीरित्वं प्राप्तस्य आत्मन इति शेषः शौर्यं ज्ञानविशेषः आदिपदेनौदार्यादीनां परिग्रहः, तथाच पुरुषोत्कर्षकत्वेन शौर्यादयो गुणा आत्मनश्चेतनस्यैव धर्माः नाऽचेतनशरीरस्य धर्मा यथा, तथा अङ्गित्व-माप्तस्य शब्दार्थादिसमुदायमध्ये मुख्यत्वं प्राप्तस्य रसस्य न तु रसवदाद्यलङ्कारवदङ्गतां प्राप्तस्येत्यर्थः धर्माः साक्षात्तदाश्रितास्ते गुणा उच्यन्ते इत्यर्थः । आत्मधर्म एवेव गुणव्यव हारो मुख्यः, सत्यपि शरीरसौन्दर्यादौ शौर्यपाण्डित्यादिरहिते निर्गुणत्वव्यवहारात् । अ-ङ्गित्वमाप्तस्येत्यनेन काव्यम् अङ्गम् रसोऽङ्गी इत्येव बोध्यते न स्वङ्गिपदादङ्गरसव्यावृत्तिस्तत्र-त्राऽपि माधुर्याद्यनुभवात । रसपदस्यात्राऽपि रस्यते आस्वाद्यते इति व्युत्पत्त्या भावाद-योऽपि गृह्यन्ते तेष्वपि गुणाऽङ्गीकारात् । दोषव्यवच्छेदाय धर्मा इत्युक्तम् । एवञ्च स्थिरत्वे-सति रसादीनां साक्षादुत्कर्षजनकधर्मत्वं गुणत्वमितिसामान्यलक्षणं फलितम् । सत्यन्तद-लोपादानात् अस्थिरेषु रसवदाद्यलङ्कारेषु नातिव्याप्तिः, साक्षात्पदोपादानेन परम्परयो-त्कर्षजनिकासु रीतिषु तदुभयोपादानाच्छब्दार्थालङ्कारेषु च नातिव्याप्तिः । रसादीना-मुत्कर्षजनकत्वाभावाच्च नाऽपि रसत्वादावतिप्रसङ्गः । एतेन स्पष्टमेव गुणानां रसध-र्मत्वं प्रतिपादितं भवति ।

उक्तञ्च काव्यप्रकाशकृताऽपि—

"ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥" इति ।

(३) कारिकां विवृणोति—यथेत्यादिना । यथा खल्वित्यतोऽनन्तरं 'लोके' इति शेषः अङ्गिशब्दश्लेषात् अङ्गित्वमित्यस्य उपमाने उपमेये च सम्बन्धः । तत्रोपमाने सम्बन्धं दर्शयति—अङ्गित्वमाप्तस्य आत्मन इति । मुख्यत्वं प्राप्तस्य देहिन इत्यर्थः । उत्कर्षहेतुत्वा-दिति । उत्कर्षणमुत्कर्षोऽतिशयस्तस्य हेतुः कारणं तस्य भावः तस्मात् । "हेतुर्ना कारणं बीजम्" इत्यमरः । शौर्यादय इति । शौर्यं शूरधर्म आदौ येषां ते तथोक्ताः शौर्यौदार्यौ-जस्वित्वादय इत्यर्थः धर्मा इति शेषः । गुणशब्दवाच्या गुणा इत्यभिधया प्रतिपाद्याः । अङ्गित्वमित्यस्योपमेये सम्बन्धं दर्शयति—अङ्गित्वमाप्तस्य रसस्येति । ननु रसस्य अखण्डास्वा

( ४ ) यथा चैषां रसमात्रस्य धर्मत्वं तथा दर्शितमेव ।

दसहोदरत्वेन तस्य सगुणत्वं कथमितिचेत् ? अत आह—धर्माः साक्षात्समवायसम्बन्धेन तदाश्रिता इत्यर्थः । स्वरूपविशेषा इति । स्वमात्मा रूप्यते इतरव्यावृत्ततया बोध्यते अनेनेति स्वरूपमसाधारणं लक्षणं तद्विशेषास्तत्प्रकारभूता इत्यर्थः । यथा "गन्धवती पृथ्वी" इत्यत्र गन्धवत्त्वं पृथिव्या असाधारणं तथेति भावः । माधुर्यादयो माधुर्यौजःप्रसादश्चेति त्रय एव गुणा इति शेषः । माधुर्यादीनामन्वयव्यतिरेकाभ्यां काव्यस्योत्कर्षहेतुत्वाद् गुणव्यवहारौपयिकं धर्मान्तरं दर्शयति—रससमर्पकेति । एवं रसस्तस्य समर्पको व्यञ्जको यः पदसन्दर्भः पदसमूहः तद्व्यञ्जकवाक्यमित्यर्थः, तस्य यः काव्यव्यपदेशः काव्यव्यवहारस्तस्य औपयिकमुपायभूतमुपयोगीतियावत् यदानुगुण्यं स्वाश्रयिणा रसेन सह काव्ये स्थितिरूपं तद्भाजः न्यायानुगतानुकूलत्वकर्त्तारः रसव्यञ्जकवाक्यस्य काव्यसंज्ञायाः प्रयोजका इतियावत् 'गुणशब्दवाच्याः' इति पूर्वेण सम्बन्धः । नीरसस्य काव्यशब्दवाच्यत्वाभावात् तत्र लाक्षणिकमेव काव्यपदमित्यवधेयम् । यद्यपि वर्णैरेव गुणा व्यज्यन्ते न पदैरितिपदसमूहस्य गुणसमर्पकता नास्ति तथापि पदसमूहघटकवर्णैस्तत्समर्पणात् पदसमूहस्यापि तत्समर्पकत्वं युक्तम् । आनुगुण्यप्रदर्शनेन गुणपदार्थौ विवृतः । इदञ्च काव्यप्रकाशकृन्मतमाश्रित्यैवाभिहितम् तन्मते हि "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वाऽपि" इति काव्यलक्षणेन गुणानामपि काव्यत्वप्रयोजकतया काव्यसंज्ञाया अपि प्रयोजकत्वात् । ग्रन्थकृन्मते तु वाक्यं रसात्मकं काव्यमितिलक्षणात् रसादीनामेव काव्यत्वप्रयोजकतया गुणानां तत्प्रयोजकत्वाभावेन काव्यसंज्ञाया अपि प्रयोजकत्वाभाव एवेत्यवगन्तव्यम् ।

( ४ ) ननु वामनेन—"काव्यशोभायाः कर्त्तारो धर्मा गुणाः" इति सूत्रयित्वा ये खलु शब्दार्थयोर्धर्माः काव्यशोभां कुर्वन्ति ते गुणाः" इत्यनेन गुणानां शब्दार्थधर्मत्वस्योक्तत्वात् तथैव काव्यप्रकाशकृताऽप्युक्तत्वाच्च भवदुक्तं केवलरसधर्मत्वं कथं सिध्यतीत्यत आह—यथा चेति । एषां गुणानामित्यर्थः । मात्रपदेन शब्दार्थयोर्व्यवच्छेदः । दर्शितमेव काव्यप्रकाशकृत्काव्यलक्षणनिराकरणप्रकरणे प्रथमपरिच्छेदे अस्माभिरित्यर्थः ।

यद्यपि "मधुरा वर्णाः" इति लोकव्यवहारेण गुणस्य वर्णधर्मत्वं भवति न तु रसधर्मत्वं तथापि औपचारिकं वर्णधर्मत्वमादाय "मधुरा वर्णाः" इति व्यवहरो ह्यभियुक्तानाम्, व्यवहारं पश्यतामदूरदर्शिनां तु वास्तविकं वर्णधर्मत्वं मत्वा "मधुरा वर्णाः" इति व्यवहारो नैतावता गुणस्य वर्णधर्मत्वसिद्धिरिति ।

अत्रेदं तत्त्वम्—विततकारस्य सुकुमारवर्णानां चान्यवैलक्षण्येन व्यञ्जकत्वप्रतिपत्तये यथा "यजमानः प्रस्तरः" इत्यत्र प्रस्तरस्य हविरासादनादिद्वारा यागसाधनत्वात् यजमानस्य साक्षाद्यज्ञसाधनत्वसाम्यात् प्रस्तरे यजमानत्वोपचारस्तथा अस्यायमाकार एव शूरः एते वर्णा एव मधुरा इत्यादिकश्चिदभियुक्तानां व्यवहारः तमपश्यतामनभिज्ञानां विततकारस्यैव शूरत्वं सुकुमारवर्णादीनामेव माधुर्यादिमन्यमानानां व्यवहारः नैतावता गुणस्य वर्णधर्मत्वमिति ।

अत्राहुः प्रदीपकाराः—"ननु शौर्यादेरात्मवृत्तित्वात् माधुर्यादीनां रसवृत्तित्वव्यवस्थितावेवं स्यात् सैव त्वसिद्धा, रसवृत्तित्वं वर्णवृत्तित्वं वेत्यत्र विनिगमकाभावादिति चेत् ? नैवम्, भवत्येव विनिगमकाभावो यदि त्वया वर्णमात्राश्रयाः गुणाः स्वीकर्त्तुं शक्यन्ते न

**( ५ ) माधुर्यमोजोऽथ प्रसाद इति ते त्रिधा ॥ १ ॥**

ते गुणाः । तत्र—

**( ६ ) चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते ।**

( ७ ) यत्तु-केनचिदुक्तम्—'माधुर्यं द्रुतिकारणम्' इति तन्न, द्रवीभावस्यास्वादस्वरूपाह्लादाभिन्नत्वेन कार्यत्वाभावात् ।

---

एवम् "मधुरा रचना" इति व्यवहारात् अविशेषेण रचनायामपि तदभ्युपगमप्रसङ्गात्, तथाचास्मन्मते गुणस्य रसैकधर्मत्वे लाघवम् त्वन्मते वर्णरचनोभयवृत्तित्वे गौरवमिति ।

( ५ ) तान् गुणान् विभजते—माधुर्यमिति । ते गुणाः माधुर्यं मधुरस्य भावः तदभिधेय इत्यर्थः, ओजस्तदभिधेयः, प्रसादस्तदभिधेय इत्यर्थः त्रिधा त्रिप्रकारा । ननु माधुर्यमित्यादिभिस्त्रिभिः शब्दैर्गणनादेव त्रिविधत्वे लब्धे पुनस्त्रिधेत्यभिधानं किमर्थमिति चेत्? वामनोक्त—

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥

इतिदशविधानां तथा भोजराजोक्तचतुर्विंशतिविधानामधिकसंख्याव्यवच्छेदाय । एतेषामनङ्गीकारे बीजं तु—सामाजिकानां नवरसजन्यास्तिस्रोऽवस्थाः द्रुतिर्विस्तारो विकासश्चेति । तत्र चित्तस्य शृङ्गारकरुणशान्तेभ्यो द्रुतिः वीररौद्रबीभत्सेभ्यो विस्तारस्तस्य हास्याद्भुतभयानकेभ्यो विकास इति । विकासश्च हास्ये वदनस्य अद्भुते नयनस्य भयानके द्रुतापसरणरूपो गमनस्य, स च क्वचिद् द्रुत्या क्वचिद्विस्तारेण च युक्तः विभाववैचित्र्यात् । प्रसादस्तु सर्वेषामाधिक्यकारीत्यवस्थात्रयरूपकार्यवैचित्र्यनियामकतया कारणत्रयमेव कल्प्यते कारणवैचित्र्येण त्रयाणामेव स्फुटमुपलम्भात् अवान्तरगुणानामङ्गाङ्गिभाववैचित्र्येणानन्त्यादस्फुटत्वाच्चेति स्पष्टञ्चेदं नागेशीये ।

( ६ ) तत्र माधुर्यं निरूपयति—चित्तद्रवीभावेति । द्रवीभूयत इति द्रवीभावः, तन्मयः, अद्रवस्य द्रव इवावस्थानं द्रवी, अभूततद्भावे च्विः स्वार्थे मयट् चित्तस्य द्रवीभावमयः सहृदयहृदयस्य गलितप्रायस्वरूपः ह्लादः दुःखाशवलितानन्दविशेषो मधुरस्य रसस्य भाव इति व्युत्पत्त्या माधुर्यं नाम गुण उच्यते तत्त्वविद्भिरिति शेषः । ननु रसोऽप्यानन्दविशेष एवेति तत्रातिव्याप्तिरिति चेत्? अस्य तदंशरूपत्वेन तद्धर्मत्वाभ्युपगमात् ।

( ७ ) ननु चित्तद्रवीभावेत्यादिना चित्तद्रवीभाव एव माधुर्यमित्यभिहितं भवति, किन्तु-

"आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ।"

इति काव्यप्रकाशोक्तेन चित्तद्रवीभावकारणमेव माधुर्यमित्यवगम्यते, तथा च परस्परं विरुद्ध्यत इति तदुक्तिं निरसितुमुत्थापयति—यत्त्विति । केनचित् काव्यप्रकाशकृता । अत्र च द्रुतिः शौर्यक्रोधाद्याहितविक्षेपपरित्यागेन । चित्तस्यार्द्रताख्यो नेत्राम्बुपुलकादिसाक्षिको वृत्तिविशेषः तत्कारणं च सुखविशेषवृत्तिरूपाह्लादगतवैजात्यम् , तदेव माधुर्यम् । विभावादिचर्वणाजन्यवृत्त्यानन्दांशे भग्नावरणकत्वप्रकाशसुखस्यैव रसत्वात् करुणविप्रलम्भशान्तेषु विजातीया या तत्कारणह्लादाऽपि विजातीय एव तेषां सर्वेषां

( ८ ) द्रवीभावश्च स्वाभाविकानाविष्टत्वात्मककाठिन्यमन्युक्रोधादिकृतदीप्तत्व-विस्मयहासाद्युपहितविक्षेपपरित्यागेन रत्याद्याकारानुविद्धानन्दोद्बोधेन सहृदयचित्ता-र्द्रप्रायत्वम् ।

---

च माधुर्य्यत्वेन व्यवहार इति तदाशयः । तथा च द्रुतिकारणमित्यस्य द्रवीभावस्य जनकमित्यर्थः । तन्निरस्यति—तन्नेति । द्रुतिद्रवीभावशब्दयोरभिन्नार्थत्वादाह—द्रवीभाव-स्येति । आस्वादनमास्वादो रसानुभवः स एव स्वरूपं लक्षणं यस्य सोऽसावाह्लादो दुःखाशवलितानन्दानुभवः, तस्य अभिन्नत्वेन एकत्वेन तत्कार्य्यत्वाभावात् माधुर्य्यजन्य-त्वाभावात् । अत्र ग्रन्थकर्त्तुरयमभिप्रायः—चित्तस्य, द्रवीभावाह्लादयोर्भेदस्याप्रतीयमान-त्वादभिन्नत्वमेव वाच्यम् , आह्लादकत्वं चाह्लाद एव माधुर्य्यञ्च तत्स्वरूपतयैव निरू-पितमिति सर्वेषामेवाभेदात् माधुर्य्यं द्रुतिकारणं कथं भवितुमर्हति जन्यत्वजनकत्व-योर्विभिन्नाधिकरणस्यैव दृष्टचरत्वादित्यतः समीचीनमेवाभिहितं "चित्तद्रवीभाव-मय" इति ।

एतच्च निरसनं द्रवीभावाह्लादयोरभेदमभ्युपेत्यैव, तन्मते द्रवीभावश्चित्तवृत्ति-राह्लाद आत्मवृत्तिरित्यनयोरभेद एव नास्ति किन्तु आह्लादस्येन माधुर्य्येण चित्तस्य द्रवीभावो रागमाधुर्य्येणेव जन्यत एवेति । उक्तं चात्र रसगङ्गाधरकारैरपि "शृङ्गारकरुण-शान्तानां माधुर्य्यवत्वेन द्रुतिकारणत्वं प्रातिस्विकरूपेण कारणत्वकल्पनापेक्षया लघुभूत-मिति तु न वाच्यं परेण मधुरतरादिगुणानां पृथग्द्रुततरत्वादिकार्य्यतारतम्यप्रयोजक-तयाऽभ्युपगमेन माधुर्य्यवत्वेन कारणताया गडुभूतत्वात् इत्थं च प्रातिस्विकरूपेणैव कारणत्वे लाघवम्" इति ।

( ८ ) ननु द्रवीभावस्य आस्वादस्वरूपाह्लादैकत्वाभ्युपगमे पूर्वोक्तदिशैव रसमाधुर्य्य-योरप्यैक्यमेव न पुनर्माधुर्य्यस्य रसधर्मत्वमित्यत आह—द्रवीभावश्चेति । स्वाभाविकं सर्वेषां स्वभावसिद्धं यदनाविष्टत्वं गूढविषयसञ्चाराक्षमत्वमेव आत्मा स्वरूपं यस्य स तादृशः, एतच्च विक्षेपविशेषणं बोध्यम् । काठिन्यं कोमलत्वाभावः, मन्युः शोको दैन्यं वा क्रोधः कुतश्चित् सञ्जातपूर्व एव कोपः आदिशब्दात् भयजुगुप्सादयश्च तैः कृतं यत् दीप्तत्वं चित्तस्य दग्धप्रायत्वं तेन विस्मयेन अदृष्टश्रुतपूर्वदर्शनरूपाश्चर्य्येण हासेन आदि-पदादावेगादिना च उपहित उपस्थापितो जनितो यो विक्षेपो विषयान्तराग्राहित्वं तस्य परित्यागेन, रतेरनुरागस्य आदिपदात् माधुर्य्याश्रययोः करुणशान्तयोः स्थायिभावशोक-शमयोश्च आकारैः स्वरूपैः अनुविद्धः सम्वलितः य आनन्दस्तस्य उद्बोधेन आविर्भावेन, सहृदयानां काव्यार्थभावनापरिपक्वान्तःकरणानां चित्तस्य आर्द्रप्रायत्वं प्रायेण विगलित-स्वरूपेणावस्थानम् ।

एवञ्च शृङ्गारकरुणशान्तरसोद्बोधानन्तरं जायमानो रत्याद्यविषयकः सहृदयहृदय-द्रवीभावात्मकसम्बन्धान्तरानुपस्थापिताह्लादसन्दोह एव माधुर्य्यपदवाच्यः, तस्य च जनकतासम्बन्धेन रससम्बन्धितया रसधर्मत्वमपि निर्बाधमितिभावः । एतत्सिद्धा-न्तस्तु—आह्लादस्य मनोवृत्तित्वस्वीकार एव सम्भवतीत्यवधेयम्, अन्यथा द्रुत्याह्ला-दयोरभेदोक्त्यनुपपत्तेः ।

केचित्तु—"रतिशोकप्रशमेषु गुर्जर्य्यादिरागवृत्तिरिव कश्चिदेको धर्मोऽस्ति स एव

( ९ ) तच्च—

**( १० ) संभोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात् ॥ २ ॥**

( ११ ) संभोगादिशब्दा उपलक्षणानि । तेन संभोगाभासादिष्वप्येतस्य स्थितिर्ज्ञेया ।

---

माधुर्य्यं येन सामाजिकानां चित्तं द्रवीभवति रत्यादीनां रसरूपतया परिणामेन तस्य रसवृत्तित्वम्" इति तन्न विचारसहम्, तत्र तादृशधर्मसत्त्वे प्रमाणाभावात्। नच द्रुतिरूपकार्य्यान्यथानुपपत्त्या तत्कल्पनमिति वाच्यम्, तस्य रसस्वभावेनैव सिद्धत्वात् तदर्थं धर्मान्तरकल्पनानौचित्यात् गुर्जर्य्यादौ तु प्रत्यक्षसिद्ध एव तादृशधर्मः। एतच्च विवृतौ स्पष्टम्। यत्तु भामहेन—

"श्रव्यं नातिसमस्तार्थशब्दं मधुरमिष्यते"

इतिलक्षणेन शब्दवृत्तिमाधुर्य्यमुक्तम्, तत्र पेशलम्, श्रव्यत्वं श्रवणानुद्वेजकत्वम्, तस्यौजःप्रसादयोरपि सत्त्वेनातिव्याप्तेः। ओजसि "यो यः शस्त्रं बिभर्ति" इत्यादौ क्रोधादिकृतं दीप्तत्वमेवावगम्यते न माधुर्य्यम्, प्रसादे "सूचीमुखेन सकृदेव" इत्यादौ माधुर्य्यनियतवर्णाभावेन न तदभिव्यक्तिः ततो न शब्दाश्रयमाधुर्य्यमिति स्वीकरणीयम्।

( ९ ) अथ माधुर्य्यस्य विषयान् दर्शयितुमाह—तच्चेति । तन्निरुक्तलक्षणं माधुर्य्यञ्चेत्यर्थः।

( १० ) सम्भोग इति । सम्भोगे नायिकानायकयोः परस्परं संयोगविशेषालम्बनके शृङ्गारे, करुणे शोकप्रधाने रसे, विप्रलम्भे सम्भोगप्रतिद्वन्द्वे शृङ्गारे रसे, शान्ते वैराग्यापरपर्य्यायनिर्वेदस्थायिभावके रसे, क्रमात् पूर्वपूर्वापेक्षया अधिकमतिशयान्वितं माधुर्य्यम् अस्तीति शेषः। तथा च सम्भोगापेक्षया करुणे करुणापेक्षया विप्रलम्भे तदपेक्षया पुनः शान्तेऽतिशयान्वितमुत्कर्षवन्माधुर्य्यमित्यर्थः। केचित्तु—"करुण" इति विप्रलम्भविशेषणम्, तेन करुणावदश्रुपातातिनिमित्तभूते विप्रलम्भे इति तु पार्थक्येन करुणे विप्रलम्भे चेत्याचक्षते तदापातरमणीयम् "अश्रुपातादयस्तद्वत्द्रुतत्वाच्चेतसो मताः" इत्यनेन करुणेऽपि चित्तद्रवीभावस्याभ्युपगमेन माधुर्य्याङ्गीकारात्। "अपसारय घनसारम्" इत्यादौ विप्रलम्भान्तरेऽपि माधुर्य्यस्य स्फुटमुपलम्भाच्च।

अत्रेदमवधेयम्—शृङ्गारस्तावद्रतिप्रधानः सम्भोगो विप्रलम्भश्चेति द्विविधः। तत्र सम्भोगे विषयरागौत्कट्येन विषयेष्वलंप्रत्ययाभावात् निर्वेदासत्त्वेन न करुणादिवत् द्रवीभावः अत एवात्र नाश्रुपातलेशोऽपि करुणादौ तु तथाभावात् तथाहि—करुणसञ्चारिणो निर्वेदस्य विषयेष्वलं प्रत्ययहेतुत्वात् प्रतिबन्धकविषयरागोच्छेदकत्वादतिशयं द्रवीभावः तत्स्थायिशोकापेक्षया विप्रलम्भस्थायिरतेः कोमलतया करुणे प्रियनाशेन सङ्गमाशानिवृत्तौ चित्तविक्षेपस्य निर्वेदविरोधिनः सम्भवेन विप्रलम्भे सङ्गमाशासत्त्वेन प्रियालाभाद्विषयान्तररागस्य सर्वथोच्छेदेन निर्वेददार्ढ्यात् तदपेक्षया विप्रलम्भेऽधिकं द्रवीभावः शान्ते च निर्वेदस्य स्थायितया सर्वात्मना विषयनिवृत्तौ निर्भरमात्मसुखालम्बनमित्यधिकं द्रवीभावः। एवञ्च स्पष्टमेवाधिकं पूर्वपूर्वापेक्षया तारतम्यं किञ्चित्कोमलकोमलकोमलतरकोमलतमभेदेन द्रवीभावे तारतम्यादिति।

( ११ ) कारिकायां सम्भोगादिशब्दैस्तदाभासा अर्थोऽप्यवगन्तव्य इति बोधयितु-

( १२ ) मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान्विना ।
रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः ॥ ३ ॥
अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा ।

माह—सम्भोगेति । सम्भोग आदौ येषां ( करुणविप्रलम्भशान्तानाम् ) ते सम्भोगादय एव शब्दास्ते तथोक्ताः, उपलक्षणानि उपलक्ष्यन्तेऽन्योऽप्यर्थोऽनेनेत्युपलक्षणम् , उपलक्षणत्वं च स्वस्य स्वसम्बन्धिप्रकाशकत्वे सत्यजहत्स्वार्थवृत्त्याबोधकत्वम् । तद्वीजन्तु सम्भोगादौ माधुर्यगुणः तत्तुल्यप्राये तदाभासादौ किं न स्यादित्याकाङ्क्षैव । तेन सम्भोगादिशब्दानामुपलक्षणत्वस्वीकारेणेत्यर्थः । सम्भोगाभास आदौ येषां (करुणाभासतत्तद्भावाभासादीनाम्) तेषु तादृशेषु । एतस्य माधुर्यस्य ।

( १२ ) ननु माधुर्यादीनां रसधर्मत्वे कथं तत्त्ववेदिनां मधुरः शब्दो मधुरोऽर्थ इति शब्दार्थयोर्मधुरादिव्यवहारः इत्याशङ्काम्—आत्मगुणानां शौर्यादीनां स्थूलशरीर इव रसवृत्तीनां माधुर्यौजःप्रसादाख्यानां गुणानां व्यञ्जकेषु सुकुमारादिवर्णेषु अर्थेषु रचनासु च गौणप्रयोगादितिसमाधाय माधुर्यव्यञ्जकान् गुणानेव दर्शयति—मूर्ध्नीति । मूर्ध्नि शिरसि अग्रभाग इति यावत् वर्गाणां कु-चु-टु-तु-पूनाम् अन्त्यवर्णेन ङ-ञ-ण-न-मरूपशेषाक्षरेण ।

"वर्णो द्विजादिशुक्लादियशोगुणकथासु च ।
स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेखने ॥" इति मेदिनी,

युक्ता मिलिताः, ट-ठ-ड-ढान् विना टकार-ठकार-डकार-ढकारान् (दुःश्रवत्वावहत्वान् ) विहाय अपरे ककारादयो मकारान्ताः स्पर्शा वर्गा अङ्क-शङ्ख-सङ्ग-सङ्घ इत्यादिरूपाः शब्दा इत्यर्थः । तथा लघू लघुप्रयत्नेनोच्चार्यौ वर्णान्तरेणासम्बद्धावित्यर्थः रणौ रेफमूर्धन्य-णकारौ च तस्य माधुर्यगुणस्य व्यक्तौ व्यञ्जने कारणतां तन्निमित्तमितियावत् माधुर्यव्यञ्जननिमित्तमित्यर्थः गता प्रदर्शिता एव वर्णा माधुर्यगुणव्यञ्जका इत्यर्थः । अत्र च वर्णास्त्रिविधाः-विहिताविहितनिषिद्धभेदात् । लघ्वन्तरितौ रणौ मूर्द्धस्थितनिजवर्गान्त्यगताः स्पर्शाश्च विहिताः, टवर्गा निषिद्धाः, अन्ये अविहिताः, निषिद्धानां बाहुल्येनोपादानं तु दोष इति भावः । यद्यपि ट-ठ-ड-ढातिरिक्तानां सर्वेषामेव वर्गान्तर्गतानां वर्णानां स्वीकारेण मूर्धन्य-णकारस्यापि स्वीकार आपाततः सङ्गच्छते तथापि ट-ठ-ड-ढसाहचर्येण तेषां निषेधेनास्यापि निषेधो माभूदित्यतः पुनर्णकारोपादानम् । केचित्तु-रेफोपादानस्यावश्यमपेक्षितत्वात् वर्गान्तर्गतत्वाभावेन तदुपादानासम्भवेन रेफस्य पुनरुपादानम् । तत्त्वविदस्तु—

अपसारय घनसारं कुरु हारं दूर एव किं वलयैः ।
अलमलमालि ! मृणालैरिति वदति दिवानिशं बाला ॥

इत्यादौ शरामपि माधुर्यव्यञ्जकत्वदर्शनात् न केवलं वर्गवर्णानामेव माधुर्यव्यञ्जकत्वं किन्तु अन्येषामपि ट-ठ-ड-ढातिरिक्तानामितिव्यञ्जनार्थं रेफोपादनमिति समालोचयन्ति ।

अवृत्तिः सर्वथासमासरहिता वा अथवा अल्पवृत्तिरल्पसमासविशिष्टा द्वित्रिचतुःपदकृतेत्यर्थः मधुरा दुःश्रवणवर्णाघटितत्वेन मृदुलपदघटितानुप्रासादिभी रुचिरा रचना

यथा—

( १३ ) 'अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः ।
जनयन्ति मुहुर्यूनामन्तः संतापसंततिम् ॥'

यथा वा मम—

( १४ ) 'लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलय-
न्समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् ।
मरुन्मन्दं मन्दं दलितमरविन्दं तरलय-
न्रजोवृन्दं विन्दन्किरति मकरन्दं दिशि दिशि ॥'

समाहितेन चेतसा समुद्भाविता सचेतसः कविशिरोमणेः कृतिश्च, तथा तनूव्यक्तौ कारणतां गता माधुर्यगुणव्यञ्जिका इत्यर्थः । उक्तं चात्र रसगङ्गाधरकृताऽपि—"तत्र टवर्गवर्जितानां वर्गाणां प्रथमतृतीयैः शर्भिरन्तैश्च घटिता नैकट्येन प्रयुक्तैरनुस्वारपरसवर्णैः शुद्धानुनासिकैश्च शोभिता वक्ष्यमाणैः सामान्यतो विशेषतश्च निषिद्धैः संयोगाद्यरचुम्बिता अवृत्तिर्मृदुवृत्तिर्वा रचनाऽऽनुपूर्व्यात्मिका माधुर्यस्य व्यञ्जिका द्वितीयचतुर्थास्तु वर्गा गुणस्यास्य नानुकूला, नापि प्रतिकूला, दूरतया सन्निवेशिताश्चेत्, नैकट्येन तु प्रतिकूला अपि भवन्ति यदि तदायत्तोऽनुप्रासः" इति ।

( १३ ) वर्गान्त्यवर्णसम्बद्धवर्णानां माधुर्यव्यञ्जकतामुदाहरति—अनङ्गेति । कस्यापि दुर्भगस्य मित्रं प्रति सखीं प्रति वा कस्याश्चित्प्रेयस्याः सङ्गमाभावेनान्तः सन्ताप निवारणाय सखेदोक्तिरियम् । अनङ्गस्य महेश्वरस्य कोपानलेन भस्मीभूतत्वात् करचरणादिशरीरविहीनस्य कन्दर्पस्य "कन्दर्पो दर्पकोऽनङ्गः" इत्यमरः, मङ्गलभुवो माङ्गलिकजन्मस्थानानि तस्याः प्रसिद्धायाः रुचिरहावभावशालिन्याः प्रियतमायाः अपाङ्गस्य नेत्रप्रान्तस्य "अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च" इति विश्वः, भङ्गयः—

"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः"

इतिरीत्या व्यापाराः "व्याजच्छलनिभे भङ्गिर्वैदग्धीतनमीलिका" इति रभसः, यूनां तरुणानाम् अन्तरन्तःकरणे मुहुः सन्तापसन्तति कामोत्तापधारां जनयन्ति उत्पादयन्ति ।

अत्र प्रथमार्द्धे कवर्गान्तिमवर्णैरग्रभागस्थितैर्ङकारैः सह सम्बद्धात्तद्वर्गीयगकाराः, द्वितीयार्द्धे तवर्गान्तिमवर्णैरग्रभागस्थितैर्नकारैः सह सम्बद्धात्तद्वर्गीयतकाराश्च माधुर्यगुणं व्यञ्जयन्ति, वृत्तिश्चात्राल्पा ।

( १४ ) अवृत्तावल्पवृत्तौ चैकस्मिन्नेवोदाहरणे उक्तविधवर्गान्तरवर्णानां माधुर्यव्यञ्जकत्वं दर्शयति—लतेति । गुञ्जन् शब्दं कुर्वन् मदवान् मदमत्तश्च अलिपुञ्जो मधुकरसमूहो यत्र तं तथोक्तम्, लताकुञ्जं यूथीमाधवीप्रभृतिवल्लीविशेषगुच्छावष्टम्भविशेषम् चपलयन् चपलीकुर्वन् सञ्चालयन्नित्यर्थः, अङ्गं विहारपरायणानां शरीरं समालिङ्गन् संस्पृशन् तेन सह परिष्वङ्गं कुर्वन्निति भावः, अनङ्गं मदनं द्रुततरमतिशीघ्रं प्रबलयन् प्रकृष्टबलवन्तं कुर्वन् वर्द्धयन्निति यावत्, स्वेनैव दलितं विकासितम् अरविन्दं कमलम् जातावेकवचनं तेन कमलवनमित्यर्थः, मन्दं मन्दं न तु शीघ्रम्, यथा न विनश्येत् सुरभिश्च प्राप्येत तथा शनैः शनैरित्यर्थः, तरलयन् सञ्चालयन्, तथा रजोवृन्दं सुरभितपुष्पान्तर्गतपरागसमूहं विन्दन् गृह्णन् मरुत् वायुः दिशि दिशि प्रतिदिशं मकरन्दं पुष्परसं "मक-

(१५) ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते ॥ ४ ॥
घोरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु ।

(१६) अस्यौजसः । अत्रापि वीरादिशब्दा उपलक्षणानि । तेन वीराभासादावप्यस्यावस्थितिः ।

---

रन्दः पुष्परसः" इत्यमरः, किरति विक्षिपति । अत्र शिखरिणीच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

अत्र प्रथमे पादे मकारजकाराः द्वितीये ङकारगकाराः, तृतीयचतुर्थयोः नकारदकाराः, माधुर्यं गुणं व्यञ्जयन्ति । प्रथमे चतुर्थे च पादे अल्पावृत्तिः द्वितीये तृतीये पादेऽवृत्तिरेव ।

अवृत्तौ पार्थक्येन माधुर्यव्यञ्जकत्वं यथा—

मुद्रितामिन्दुमालोक्य पद्मिनीं पश्य सुन्दरि ! ।
हन्त ! कान्तस्य विच्छेदे मधुरोऽपि न रोचते ॥"

असमासे च पार्थक्येन यथा—

"मानं विमुञ्च कल्याणि ! दासं मामनुकम्पय ।
विजहीहि रुषो रागमधरस्य च कम्पनम् ॥"

लघु-र-णयोरुदाहरणं यथा—"अनुरणन्मणिमेखलम्" इत्यादि । मधुरा रचना यथा नवधे—

"चलत्कलङ्कृत्य महारयं हयं स वाहवाहोचितवेशपेशलः ।
प्रमोदनिष्पन्दतराक्षिपक्ष्मभिर्व्यलोकि लोकैर्नगरालयैर्नृपः ॥"

अत्र हि श्रवणमात्रेणार्थप्रतीत्यभावान्न प्रसादगुणः शङ्कनीयः । टवर्गान्तवर्णैनाग्रभागस्थिताष्ट-ठ-ड-ढास्तु माधुर्यं न व्यञ्जयन्ति यथा—

"वण्टने कुण्ठमध्यस्य पिण्डीकृत्योभयोर्वसु ।
वक्त्रं सण्ढौकमानेन किं पुनर्मिश्रितं त्वया" ॥

(१५) अथोद्देशक्रमप्राप्तमोजो गुणं निरूपयति—ओज इति । चित्तस्य सामाजिकानामिति शेषः, विस्तारो वीरादिरसास्वादसमये द्रवीभावप्रतिकूलो विस्मयविशेषो वृत्तिविशेषो वा स एव रूपं स्वरूपं यस्य तत्तथोक्तम्, दीप्तत्वं जायमानविस्मयवशादुज्ज्वलत्वप्रायम्, ओजो नाम गुण उच्यते, स्पष्टा चात्र व्युत्पत्तिः । एतेन यद्यपि "दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थितिः" इति काव्यप्रकाशलक्षणं दूषितं भवति वीरादिभ्य एव जायमानदीप्तत्वस्यैव ओजःस्वीकारेणोपपत्तौ तज्जनकधर्मान्तरकल्पने मानाभावात्, तथापि आयुर्घृतमितिवदत्रापि दीप्तत्वजनकमित्येवार्थः । तथाच रसवृत्तिना ओजसा चित्तस्य विस्ताररूपं दीप्तत्वं जन्यत इत्यर्थः । विस्तारस्त्वत्र कल्पे चित्तस्य उष्णप्रायत्वकारकः आत्मसंयोगविशेषः, यथाश्रुते तु चित्तवृत्तेः दीप्तत्वस्य रसवृत्तित्वानुपपत्तेः । अस्य ओजोगुणस्य तु वीर-बीभत्स-रौद्रेषु क्रमेण पूर्वपूर्वापेक्षया आधिक्यमतिशयः तथाच वीरापेक्षया बीभत्से, तदपेक्षया च रौद्रे रसे ओजस आधिक्यमित्यर्थः ।

(१६) विवृणोति—अस्येति । अस्येतिपदस्य ओजस इत्यर्थोऽवगन्तव्य इति । अत्रापि यथा "सम्भोगे" इति कारिकांशे सम्भोगादिशब्दानामुपलक्षकत्वं तथाऽत्रापि कारिकारिकांशे इत्यर्थः । तेन वीरादिशब्दानामुपलक्षणात्मकत्वस्वीकारेण । वीराभास आदौ येषां वीरशान्त्यादीनां तेषु तथोक्तेषु । अवस्थितिः स्थितिसम्भवः । स्निग्धस्यापि सामाजिकचित्तस्य द्रेष्यविषयसम्पर्केण दीप्तत्वमुष्णता जायते । तत्र वीरस्य द्वेष्यनिग्रहे

( १७ ) वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ ॥ ५ ॥
उपर्यधो द्वयोर्वा सरेफौ टठडढैः सह ।
शकारश्च षकारश्च तस्य व्यञ्जकतां गताः ॥ ६ ॥
तथा समासो बहुलो घटनौद्धत्यशालिनी ।

जिगीषामात्रम् , बीभत्से तु जुगुप्सितविषयेऽत्यन्तं त्यागेच्छा रौद्रे त्वपकारिणि वधावधिकः प्रयास इति क्रमेण दीप्त्याधिक्यमिति भावः स्पष्टञ्चेदं प्रदीपादौ । एवञ्च पारिशेष्यात् उक्तेतरेषु हास्यभयानकाद्भुतेषु उभयोरेव माधुर्य्यौजसोः समावेश इति फलितम् । तत्र हास्यादीनां शृङ्गाराङ्गविभावप्रभवत्वे माधुर्य्यं प्रधानम् , वीराद्यङ्गविभावादिप्रभवत्वे तु ओजः प्रधानम् । हास्ये सर्वदैव प्रकृष्टं माधुर्य्यं स्वल्पमोजः भयाकेऽद्भुते च ओजः प्रधानं स्वल्पं माधुर्यमिति चण्डीदासप्रभृतयः ।

( १७ ) अथौजोगुणव्यञ्जकवर्णादीन्निरूपयति—वर्गस्येति । वर्गस्य कु-चु-टु-तु-पुवर्गाणां मध्ये यस्य कस्यापि सजातीयस्य विजातीयस्य वा विन्यासो भवेत्तस्यैकतमस्येत्यर्थः, आद्यः प्रथमो वर्णः ( क-च-ट-त-परूपः ) तृतीयः तृतीयो वर्णः ( ग-ज-ड-द-बरूपः ) ताभ्यां तथोक्ताभ्यां सहेतिशेषः तदन्तिमौ तयोरन्तिमावनन्त्यौ कु-चु-टु-तु-पुवर्गाणां मध्ये कस्यापि वर्गस्याद्यतृतीयवर्णयोरन्त्यौ ( द्वितीयचतुर्थौ ) खफछठथघझढधभेष्वन्यतमौ वर्णावित्यर्थः, युक्तौ संयुक्तौ सङ्गतौ सम्पृक्तौ वा वर्णौ तस्य व्यञ्जकतां गतौ यथा-पुच्छबद्धेत्यादि यथा च-द्राक् खनति, द्राग् घर्षति, द्राक् फलति, द्राग् धावति इत्यादि । आद्यतृतीययोस्तदन्तिमयोश्च नैकवर्गीयत्वनियमः किन्तु भिन्नवर्गीययोरपि तथात्वं बोध्यमिति केचित् तेन कफ्ल इव केच्छापि गघ्न इव गेच्छापि बोध्या कटुत्वसाम्यात् । अत्र चानुक्तेऽपि तुल्ययोर्योगोऽपि काव्यप्रकाशकृदुक्तो ग्राह्यः कटुत्वाविशेषात् तेन क्क ग्ग ज्ज इत्यादीनामपि परिग्रहः । उपर्यधः इत्यादि । तथा उपरि शिरोभागे यथा—तर्कोदर्कोर्जितोक्तिरित्यत्र, अधोऽधोभागे यथा क्षिप्रेत्यत्र, वा पक्षान्तरसम्भवे तु द्वयोरुपर्य्यधश्चेत्यर्थः, यथा—पुनरार्द्रं इत्यत्र, सरेफौ रेफेण रकारेण सह विद्यमानौ तौ च-वर्गस्याद्यतृतीयौ द्वितीयचतुर्थौ वा प्रतिपाद्यमानौ शकारसकारौ वाऽन्यावेव यथातथं बोद्धव्यौ । माधुर्य्यगुणे ट-ठ-ड-ढा निषिद्धा इह तु नेत्याह—ट-ठ-ड-ढैः सहेति । तथाच टकार-ठकार-डकार-ढकारामाधुर्य्यतिरोधायका संयुक्ता असंयुक्ता वा ओजोगुणव्यञ्जका इत्यर्थः । यथा—अट्टहासः, विसंष्ठुलः, गड्डुलिका, शण्ढः । शकटः, कमठः, डिम्भः, मूढ इत्यत्र । वर्णान्तरेणाऽसंयुक्तोऽपि तालव्यः शकारश्च मूर्धन्यषकारश्च इमे तस्य ओजोगुणस्य व्यञ्जकतां गताः प्राप्ताः व्यञ्जका इति मता इति भावः। शषयोस्तालुमूर्धाक्रोच्चारणप्रयत्नगौरवेण दृढप्राणतेति तयोः सङ्ग्रहः कृतः। दन्त्यस्य सकारस्य तु बाह्यदन्तगतत्वेन प्रयत्नलाघवमिति तत्परित्यागः कृत इत्यवधेयम् यथा—

अस्वादितद्विरदशोणितशोणशोभः । "वर्षति शीर्षमेघः"

तथा समासो बहुलः ओजोव्यञ्जकवर्णघटितसमासाधिक्यम् , अजोव्यञ्जकः । समासबहुलेति-पाठेति घटनाविशेषणम् , तथाच औद्धत्यशालिनी उत्कटाक्षरबहुला उत्कटार्थप्रतिपादिका च द्वितीयप्रकारसङ्ग्रहार्थं तदुपादानं युक्तम् , अत एव—

"आपतन्तममुं दूरीधूरीकृतपराक्रमः ।
बलोऽवलोकयामास मातङ्गमिव केसरी ।।"

( १८ ) यथा—'चञ्चद्भुज-' इत्यादि ( ४९४ पृ. )

( १९ ) चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ॥ ७ ॥
स प्रसादः समस्तेषु रसेषु रचनासु च ।

इत्याद्यावोजोव्यञ्जकत्वमुपपन्नम् ।

'अनवरतनयनजललवनिपतनपरिपीतहरिणमदतिलकम् ।
करतलनिषण्णमबले वदनमिदं कं न तापयति ॥"

इत्यादौ च न दोषः ।

वागीशास्तु—"वस्तुतस्तु माधुर्यव्यञ्जकातिरिक्ता वर्णान्तरसंयुक्ता द्वित्रा अन्येऽपि वर्णाः ओजोव्यञ्जकाः । यथा—

"समरे भाति संरम्भादुद्यद्दिनकरद्युतिः । हुताशकुण्डसंकाशलोचनो नृपपुङ्गवः ॥"

अत्र द्वितीयपादे संयुक्तवर्णत्रयमोजोव्यञ्जकम् ।

ओजोव्यञ्जकाक्षरघटितबहुतरपदसमासस्ताहशाक्षरसन्दोहघटितोबन्धश्च ओजोऽतिशयव्यञ्जकौ । यथा—

दीप्तवह्निचयोद्दीप्तनेत्रापोतद्विषद्बलः । चण्डध्वानपरिध्वस्तहस्तिदानोऽस्त्यसौ युधि ॥
उद्यद्दिनकरवक्त्रः प्रज्ज्वलज्ज्वलनेक्षणः । भार्गवो नृपवर्गस्य मृत्युरेव धुरि स्थितः ॥ "इत्याहुः।

अत्रायं सारः—ख-घ-छ-झ-ठ-ढ-थ-ध-फ-भेत्येते वर्णाः क-ग-च-ज-ट-ड-त-द-प-बेत्येतैर्युक्ताः उपरिभागादधस्तादुभयत्रैव रकारालिङ्गिता वर्णाष्ट-ठ-ढ-सहितौ रकारेण वा संसक्तौ शकारषकारौ समासबाहुल्यं दुःश्रवत्वजनिका घटना चौजसोऽभिव्यक्तेः कारणभूता । दुःश्रवत्वञ्च घटनायाः सामीप्येन अनेकस्थले वो संयुक्तानां वर्णानां निवेशात् संहितादिना समासादिना वा वैरूप्यसम्पादनाज्जिह्वामूलीयोपध्मानीययोश्च सम्बन्धात् सञ्जायत इति रसगङ्गाधरादौ स्पष्टम् ।

( १८ ) उदाहरणान्तरं दर्शयितुमाह—यथेति । "चञ्चद्भुज" इति । व्याख्यातमिदं षष्ठपरिच्छेदे ( ४९४ पृ० ) अत्र "द्भु" इति "द्ध" इति च तृतीयवर्गयुक्तश्चतुर्थो वर्णः, "अमित" इति अतः सरेफो वर्णः "ण्ड" इति संयुक्तो णकारः "शो" शो इति ताळव्यशकारो अन्ये च संयुक्ता ओजोव्यञ्जका इत्याशयः । यथा वा हनुमन्नाटकेऽष्टमेऽङ्के—

"मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत्फलमिह नगरीरक्षणे यत् प्रयासः ॥"

वानरैरावेष्टितां नगरीमवलोक्यतस्तद्रक्षणं कर्त्तुमक्षमतः कुपितस्य लङ्केश्वरस्योक्तिरियम् । अत्र मूर्ध्नामिति उत्सर्पिदर्पेति चोपरिभागे रेफेण संयुक्तः, अव्रीत्यधः संयुक्तः उद्वृत्तेति कृत्तेति च तकारस्य तकारेणैव संयोगः ईशपिशुनशब्दयोः शकारः दोष्णामिति षकारः समासदैर्घ्यं सङ्घटनौद्धत्यं च स्फुटमेव ।

( १९ ) एवमुद्देशक्रमेण माधुर्यौजौ प्रतिपाद्य समस्तकाव्यजीवनभूतप्रसादं स्वरूपतः प्रतिपादयति—चित्तमिति । अनलः पावकः "कृशानुः पावकोऽनलः" इत्यमरः शुष्कं यदिन्धनं तत्तथोक्तमिव तत्रैवाग्नेः झटित्युत्पत्तिसम्भवात् अत्र शुष्केन्धनमिवानल इति सामान्येनैव प्रतिपादनम् , विशेषेण तु जलौघो विमलं वसनमिव इति प्रति

( २० ) व्याप्नोति, आविष्करोति ।

( २१ ) शब्दास्तद्व्यञ्जका अर्थबोधकाः श्रुतिमात्रतः ॥ ८ ॥

यथा—

( २२ ) 'सूचीमुखेन सकृदेव कृतव्रणस्त्वं
मुक्ताकलाप ! लुठसि स्तनयोः प्रियायाः ।

---

पादयितुमुचितम् , तथा च अग्निर्यथा शुष्कमिन्धनं झटित्येव प्रसरति आर्द्रेन्धनेऽग्नेरप्रसरात् , जलौघो यथा विमलं वसनं झटित्येव व्याप्नोति मलिनवसने जलस्याप्रसरात् तद्वदित्यर्थः । उक्तं च काव्यप्रकाशकृतापि "शुष्केन्धनाग्निवत् स्वच्छजलवत्सहसैव यः" इति, यदा वीररौद्रादिषु चित्तं व्याप्नोति तदा शुष्केन्धनाग्निवत् यदा शृङ्गारकरुणादिषु तदा स्वच्छजलवदिति तद्व्याख्यातारः । 'यो गुणः' अत्र येन हि रसश्चित्तं व्याप्नोतीति प्रतिपादयितव्ये करणभूतस्याऽपि गुणस्य य इति प्रतिपादनं स्वातन्त्र्यविवक्षया, अन्यथा रसमात्रधर्मत्वेऽपि वक्ष्यमाणेन विधिना रचनामात्रेऽव्यवस्थानं न स्यादित्यवधेयम् । क्षिप्रं त्वरितं व्याप्नोति आविष्टं करोति समग्रेण सम्बध्नाति च स प्रसादयति स्वसौन्दर्यद्वारा विषयान्तरसम्बन्धपरित्यागेन चित्तं प्रसन्नं करोतीति स प्रसादो नाम गुण उच्यते इति पूर्वस्मात् मण्डूकप्लुत्यानुवर्त्तनीयः स च प्रसादगुणः समस्तेषु शृङ्गारादिरूपेषु रसेषु आधाराधेयत्वसम्बन्धेन समस्तासु रचनासु असमासेषु अल्पसमासेषु वा पदयोजनासु व्यङ्ग्यव्यञ्जकत्वसम्बन्धेन सम्भवतीति शेषः । यद्यपि शब्दार्थयोरपि व्यञ्जकत्वमनुपदं वक्ष्यति तथापि रचनायाः प्रसादेऽसाधारण्यम् , प्रसिद्धशब्दार्थयोरपि प्रसादाव्यञ्जकत्वादित्याशयः । शृङ्गारकरुणादिषु तु स्वच्छजलवदिति तदर्थः ।

उक्तं च ध्वनिकृताऽपि—

"समर्पकत्वं काव्यस्य यत्तु सर्वान् रसान् प्रति ।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ॥" इति ।

( २० ) अनलपक्षे व्यापनं संयोगानुकूलव्यापारः स्पष्टमेवेति रसादिपक्षे तदर्थं स्फोरयति व्याप्नोतीति । पदस्येति शेषः । आविष्करोति व्यासङ्गनिवर्त्तनेन विमलं करोतीत्यर्थः । एतेन चमत्कारातिशयः सूचितः ।

नन्वस्य समस्तास्वेव रचनासु सम्भवस्वीकारे मधुरायाम् असमासाल्पसमासरचनायां माधुर्यगुणेन सह साङ्कर्यापत्तिरित्यत आह—शब्दा इति । श्रुतिमात्रतः येन शब्देन समासेन वा रचनया वा श्रवणमात्रेण अर्थबोधकाः शब्दाः तस्य प्रसादगुणस्य व्यञ्जकाः । एवञ्च असमासाल्पसमासस्थले कोमलशब्दव्यङ्ग्यत्वे प्रसादगुणः, श्रुतिमाधुर्ये सति अकोमलशब्दव्यङ्ग्यत्वे माधुर्यं गुणः, विकटार्थबोधकशब्दव्यङ्ग्यत्वे च ओजो गुण इति व्यञ्जकभेदाद्भेदेन न परस्परं साङ्कर्यापत्तिरिति बोध्यम् ।

( २२ ) उदाहरति—सूचीमुखेनेति । श्रीकृष्णानन्दनिर्मिते सहृदयानन्दे द्वितीयेऽङ्के प्रियायाः स्तनन्यस्तं मुक्ताहारं परोक्षमपि भावोपनीतं सम्बोध्य विरहिण उक्तिरियम् । हे मुक्ताकलाप हारान्तर्गतमुक्तासमूह ! सूच्या मुखेन अग्रभागेन सकृदेकवारमेव न तु पुनरपि कृतव्रणः कृतच्छिद्रस्त्वं तत एव निश्चलसम्प्रत्ययवशाय इत्याशयः प्रियायाः यत्र

वाणैः स्मरस्य शतशो विनिकृत्तमर्मा
स्वप्नेऽपि तां कथमहं न विलोकयामि ॥'

( २३ ) एषां शब्दगुणत्वं च गुणवृत्त्योच्यते बुधैः ।
( २४ ) 'शरीरस्य शौर्यादिगुणयोग इव इति शेषः ।
( २५ ) श्लेषः समाधिरौदार्यं प्रसाद इति ये पुनः ॥ ८ ॥
गुणाश्चिरन्तनैरुक्ता ओजस्यन्तर्भवन्ति ते ।

क्वचन वर्तमानायाः स्तनयोर्लुठसि न त्ववलोकनाद्येव करोषि, पुनरहन्तु स्मरस्य स्मरणमात्रेण प्रभवतो मनसिजस्य वाणैः शिलीमुखैर्न तु सूच्यादिभिरेव शतशोऽनेकशतावृत्त्या विनिकृत्तमर्मा छिन्नमर्मग्रन्थिः कृतहृदयच्छिद्र इत्यर्थः एवंभूतोऽपि सन् स्वप्नेऽपि तां प्रियां यस्याः स्तनोपरि यत्र क्वापि नितरां वर्तसे न त्वस्यां कथं न विलोकयामि को नाम मदीयः प्रत्यवायः प्रतिबन्धको येन स्वप्नेऽपि तदवलोकनमात्रसौभाग्यमपि निरुद्धमिति यदि च कृतच्छिद्रत्वमेव प्रियाप्राप्तिहेतुस्तदा त्वत्तो बहुधैव कृतच्छिद्रोऽहं त्वमिव प्रियां कथं न लभे इत्यहो महदाश्चर्यभूतं विधेर्नियमस्वरूपमिति निगर्लितोऽर्थः । वसन्ततिलकाछन्दस्तल्लक्षणन्तूक्तं प्राक् ।

अत्र श्रुतिमात्रत एवार्थप्रतिपादकशब्दव्यङ्ग्यत्वेन झटित्येव चित्तव्यापनात् प्रसादगुणः ।

( २३ ) ननु "रसस्याङ्गित्वमाप्तस्य धर्माः" इत्यनेन गुणानां रसधर्मत्वस्वीकारे 'ये खलु शब्दार्थयोर्धर्माः काव्यशोभां कुर्वन्ति ते गुणाः" इति वामनादिप्राचीनसम्मतशब्दार्थधर्मत्वमेषां कथमुपपद्यत इत्यत आह—एषामिति । अत्र शब्दपदमर्थस्याऽप्युपलक्षकम् । किञ्चेति चार्थः । बुधैर्वामनादिभिर्विद्वद्भिः कर्तृभिः, गुणवृत्त्या उपचारेण ( लक्षणावृत्तिवत् ) स्वाश्रयरसादिव्यञ्जकत्वरूपपरम्परासम्बन्धेनेत्यर्थः, एषां माधुर्यादिगुणानां शब्दगुणत्वं शब्दार्थधर्मत्वमुच्यते न तु पुनः साक्षादेव शब्दार्थधर्मत्वं स्वीक्रियते, गुणानां रसाद्यास्वादाभिन्नतया रसादिधर्मत्वस्यैव परमार्थतया तेषां साक्षात्सम्बन्धासम्भवाच्च शब्दार्थधर्मत्वं वास्तविकमित्याशयः ।

( २४ ) नचायमुपचारोऽदृष्टचर इत्याशयेनाह—शरीरस्येति । शौर्यादिगुणयोग इति । शौर्यौदार्यतेजःप्रभृतीनां गुणानां योगः सम्बन्ध इत्यर्थः । इति शेषः इति अध्याहृत्य कारिकया संयोक्तव्य इत्याशयः । तथाच शौर्यादयो गुणाः साक्षादात्ममात्रधर्मा अपि स्वाश्रयाश्रयित्वरूपपरम्परासम्बन्धेन शरीरेऽप्युपकल्प्यन्ते व्यवह्रियन्ते च तथा माधुर्यादयो गुणाः साक्षाद् रसादिमात्रवर्तिनोऽपि स्वाश्रयरसादिव्यञ्जकतारूपपरम्परासम्बन्धेन शब्दार्थधर्मत्वेनोपकल्प्यन्ते व्यवह्रियन्ते चेति परमार्थः । ननु गुणानां रसवृत्तित्वस्य निरुक्तपरम्परासम्बन्धस्य च कल्पने गौरवमतः शब्दार्थवृत्तित्वमेवैषां कल्पयितुमुचितमिति चेत् ? नैवम् क्वचिन्नीरसे काव्ये गुणाभिव्यञ्जकशब्दार्थयोः सम्भवेऽपि माधुर्यादेरनुपलम्भात् , क्वचित्पुनर्गुणाभिव्यञ्जकशब्दार्थवत्त्वाभावेऽपि रसत्वेनैव तदुपलम्भोपपत्तेः रसान्वयव्यतिरेकानुविधायित्वेन रसवृत्तित्वकल्पनस्यैवोचितत्वादिति स्पष्टं विवरणादौ ।

( २५ ) ननु श्लेषादयो दश शब्दगुणा ओज आदयो दशार्थगुणा वामनादिभिरुक्ताः भवद्भिस्तु त्रय एव माधुर्यादयो गुणाः कथमङ्गीकृता इत्यतस्तान् यथासम्भवस्वोक्तगुणव्यञ्जकदोषाभावालङ्कारगुणीभूतं व्यङ्ग्येष्वन्तर्भावयितुं प्रथमं शब्दगुणान् श्लोक-

( २६ ) ओजसि भक्त्या ओजःपदवाच्ये शब्द(अर्थ)धर्मविशेषे ।

( २७ ) तत्र श्लेषो बहूनामपि पदानामेकपदवद्भासनात्मा । यथा—

( २८ ) 'उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धताः
सर्वाः पर्वतकंदरोदरभुवः कुर्वन्प्रतिध्वानिनीः ।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथायं तथा
प्रायप्रेंखदसंख्यशंखधवला वेलेयमुद्गच्छति ॥'

गुणत्रयअकदोषाभावयोरन्तर्भावयति—श्लेष इति । चिरन्तनैः प्राचीनैर्वामनादिभिरिति यावत्, श्लेषः समाधिः, औदार्य्यं प्रसाद इति नामभियें शब्दगता इति शेषः पुनर्गुणा उक्तास्ते शब्दगता गुणा अस्मत्सम्मते ओजसि तत्पदवाच्ये गुणे अन्तर्भवन्ति गतार्था भवन्ति ।

( २६ ) ननु ओजःपदस्य चित्तविस्ताररूपदीप्तत्व एव शक्तेः शब्दधर्माणां श्लेषादीनां कथं तत्रान्तर्भाव इत्यत आह—ओजसीति । भक्त्या गुणवृत्त्या उपादानलक्षणयेति यावत्, ओजःपदेन वाच्ये प्रतिपाद्ये शब्दस्य धर्मविशेषो बन्धगाढत्वरूपस्तत्र तथोक्ते शब्द-धर्मविशेषे । अतोऽत्र उपादानलक्षणया ओजःपदेन शब्दधर्मविशेषस्य बोधनात् तत्र च शब्दधर्माणां श्लेषादीनामन्तर्भावसम्भवान्नोक्तशङ्काऽवकाश इति भावः । यत्तु सिद्धा-न्तवागीशेन शब्दार्थधर्मविशेषे इति पाठमुररीकृत्य "ओजः शब्देन शब्दार्थधर्मविशेषस्य बोधनात्" इत्युक्तम्, तत्रार्थपदं चिन्त्यमेव अर्थधर्मे प्रौढत्वरूप ओजसि शब्दश्लेषादीना-मन्तर्भावयितुमशक्यत्वात् ।

( २७ ) अथ यथातथं श्लेषादीनामोजस्यन्तर्भावं प्रतिपिपादयिषुः वामनादिमते श्लेषं निरूपयति—तत्रेति । तेषु श्लेषादिषु मध्ये । एकपदवत् एकपदस्येव भासनात्मा अलक्षितसन्धिकतया गम्यता सन्ध्यादिवशादनेकपदानामुच्चारणकालभेदः स्पष्टं न प्रतीयत इत्यर्थः । केचित्तु एकपदवदित्यस्य समासाभावादिति व्याचक्षते तन्न युक्तम्, वामनोपदर्शितस्य असमासत्वेऽपि "अस्त्युत्तरस्यां दिशि देवतात्मा" इति श्लेषोदाहर-णस्यासङ्गत्यापत्तेः "तडित्कपिलमाकाशम्" इत्यादौ श्लेषप्रत्युदाहरणस्य चासङ्गत्या-पत्तेः । अपि च—

"अस्ति भयमस्ति कौतुकमस्ति च मन्दादरमस्ति चोत्कण्ठा ।
बालानां प्रणयिजने भावः कोऽप्येष नैकरसः ॥"

इति प्राचीनान्तरप्रदर्शितोदाहरणस्यासङ्ग्रहापत्तेश्च । एकेन पदेन अन्यस्य पदस्य ऐक्यभावेन श्लेषणात् श्लेष इति समाख्या । उक्तं च वामनेन—

"यत्रैकपदवद्भावः पदानां भूयसामपि । अनालक्षितसन्धीनां स श्लेषः परमो गुणः ॥"

( २८ ) उदाहरति—उन्मज्जदिति । प्रलयकालीनसमुद्रपूरारम्भवर्णनमिदम् । उन्म-ज्जतां जलमध्यादुत्तिष्ठतां जलकुञ्जरेन्द्राणां जलसञ्चारिहस्तिश्रेष्ठानां मकरेन्द्राणामिति यावत्, यद्वा—उन्मज्जतां जलकुञ्जरेन्द्राणां कुञ्जरेन्द्ररूपसाडम्बरजलानामिति यावत् रभसेन वेगेन वा य आस्फाल आस्फालनं जलाभिघातजन्यशब्दविशेषः, पक्षे रभसेन हर्षेण य आस्फाल उत्थानव्यापारातिशयस्तस्यानुबन्धेन परम्परया ( आरम्भेण ) उद्धता उन्नताः पक्षे उद्धताः, सर्वाः पर्वतानां कन्दरास्तासामुदराणि मध्यप्रदेशास्तेषां भुवः स्थ-

( २६ ) अयं बन्धवैकट्यात्मकत्वादोज एव ।

( ३० ) समाधिरारोहावरोहक्रमः । आरोह उत्कर्षः, अवरोहोऽपकर्षः, तयोः क्रमो वैरस्यतानावहो विन्यासः । यथा—'चञ्चद्भुज-' इत्यादि ( ४६४ पृ० ) । अत्र पादत्रये क्रमेण बन्धस्य गाढता । चतुर्थपादे त्वपकर्षः । तस्यापि च तीव्रप्रयत्नोच्चार्यतया ओजस्विता ।

---

लानि इति तास्तथोक्ताः गुहाभ्यन्तरभूमीरित्यर्थः, प्रतिध्वाननीः प्रतिशब्दान्विताः पक्षे प्रतिध्वाननीः शब्दनिरुद्धाः जलशब्देन निःशब्दाः कुर्वन् कुर्वतीश्च, श्रुतेः पन्थाः कर्णविवरस्य उन्माथी विदारो श्रुतीनां वेदानां पथां चोन्माथी विदारिणी "श्रुतिः श्रोत्रे तथाऽऽम्नाये वार्त्तायां श्रोत्रकर्मणि" इति विश्वः, तथा उच्चैर्विशालः अयमनुभूयमानो ध्वनिर्यथा उच्चरति उत्तिष्ठति प्रायेण बाहुल्येन प्रेङ्खद्भिः प्रचलद्भिः असंख्यैः शङ्खैः धवला शुभ्रीकृता इयं वेला पूरारम्भेण विकृतसमुद्रजलम्, "अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि" इत्यमरः, उद्गच्छति तीरे उत्तिष्ठति । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्रागेव (१६८पृ०)

अत्र "उन्मज्जज्जल" प्रेङ्खदसंख्य इति बहूनां पदानां सहसा लक्षितसन्धिकतया एकैकपदवदवगम्यमानत्वात् वामनादिमते श्लेषो नाम शब्दगुणः ।

( २९ ) अस्य ओजसि गतार्थत्वं प्रदर्शयति—अयमिति । अयम् उदाहृतपद्यस्थे वामनादिमतसिद्धः श्लेषो नाम शब्दगुणः बन्धस्य गुम्फस्य सन्दर्भस्य वा यद्वैकट्यं विकटत्वं तदेवात्मा स्वरूपं यस्य तत्त्वात् बन्धवैकट्यात्मकत्वात् । बहुतरसन्धिवशेन संयुक्तवर्णादिघटिततया गुरुप्रयत्नोच्चार्यत्वेन प्रगाढरचनारूपत्वादित्यर्थः । ओज एवेति । "बन्धगाढमात्रत्वमोज" इति स्वेनैव निरूपितत्वान्नात्रास्माकं वक्तव्यान्तरमित्यावेदयितुमेवकारोपादानमित्यवधेयम् ।

( ३० ) वामनादिमते समाधिं निरूपयति—समाधिरिति । "आरोहावरोहक्रमः समाधिः" ३।१।१३ तथा च तदीयपद्यम्—

"आरोहन्त्यवरोहन्ति क्रमेण यतयो हि यत् ।
समाधिर्नाम स गुणस्तेन पूता सरस्वती ॥"

उक्तस्वरूपं विवृणोति—आरोह इति । उत्कर्षः गाढबन्धत्वम् अपकर्षो बन्धशैथिल्यम्, वैरस्यतानावहो विरसस्य नीरसस्य भावो वैरस्यं तस्य तानः सन्तानस्तद्वहस्तदप्रापकः सामाजिकानां विरक्त्यजनक इति यावत् वस्तुतस्तु "वैरस्यानवहः" इत्येव पाठः समीचीनः । विन्यासः पदानां निवेशः तथाच उत्कर्षमध्ये अपकर्षोपादाने अपकर्षमध्ये चोत्कर्षोपादाने च वैरस्यं यत्र न भवति स समाधिरित्यर्थः । उदाहरति—यथेति । पादत्रय इति । प्राथमिक इति शेषः बन्धस्य गाढता दीर्घसमासात स एव चोत्कर्षः । चतुर्थपाद इति "उत्तंसयिष्यति कचांस्तव देवि ! भीमः" इत्यत्र दीर्घसमासाभावोऽपकर्षो बन्धशैथिल्यम्, स चात्र द्रौपद्याश्वासनरूपेण क्रोधाभावेन दीर्घसमासाभावः योग्यस्थाने विन्यासाद् वैरस्यानावहः अत एवात्र पतत्प्रकर्षकत्वमपि गुणः । ननु चतुर्थपादस्य बन्धशैथिल्येऽपि कथं तस्यौजस्यन्तर्भाव इत्यत आह—तस्यापीति । चतुर्थपादस्यापीत्यर्थः, तीव्रप्रयत्नोच्चार्यतया "उत्तंसयिष्यती"ति पदस्येति शेषः । ओजस्विता ओजोगुणवत्ता । पादत्रये तु बन्धगाढत्वं स्पष्टमेव । अत्रेदम्बोध्यम्—पद्यस्य पादे पादे आरोहाव

( ३१ ) उदारता विकटत्वलक्षणा। विकटत्वं पदानां नृत्यत्प्रायत्वम्।

( ३२ ) सुचरणविनिविष्टैर्नूपुरैर्नर्तकीनां
झणिति रणितमासीत्तत्र चित्रं कलं च।

( ३३ ) अत्र च तन्मतानुसारेण रसानुसंधानमन्तरेणैव शब्दप्रौढोक्तिमात्रेणौजः।

( ३४ ) प्रसाद ओजोमिश्रितशैथिल्यात्मा। यथा—

रोहक्रमः सम्भवितुमर्हतीति तत्रारोहपूर्वोऽवरोहः, अवरोहपूर्व आरोहश्चेति द्विविधः। क्रमेण यथा—

निरानन्दः कौन्दे मधुनि, विधुरो बालबकुले
न साले मालम्बो, लवमति लवङ्गे न रमते।
प्रियङ्गौ नासङ्गं रचयति, न चूते विरमति
स्मरल्लक्ष्मीलीलाकमलमधुपानं मधुकरः॥

अत्र लवङ्ग इति लघुप्रयत्नोच्चारणेनावरोहः। द्वितीयं यथा—"अयमुदयति मुद्राभञ्जनः पद्मिनीनाम्" इत्यादि लाटीरीत्युदाहरणे।

( ३१ ) वामनादिमते औदार्यगुणं निरूपयति—उदारतेति। विकटत्वलक्षणा विकटत्वस्वरूपा रचना उदारता औदार्यं नाम गुणः, पदानां नृत्यप्रायत्वरूपोदारत्वेन उदारतेति नाम। ननु विकटत्वं यदि गाढत्वं तदा तन्मतसिद्धौजसा सहैतस्य साङ्कर्यापत्तिरित्यत आह—विकटत्वञ्चेति। नृत्यप्रायत्वम् अनुभवैकगम्यं वक्तुमशक्यम्। उदाहरण एव स्पष्टीभविष्यति। उक्तं च वामनेन "विकटत्वमुदारता" ३।१।२२ यन्वयस्य विकटत्वं यद् सावुदारता, यस्मिन् सति नृत्यन्तीव पदानि" इति।

( ३२ ) उदाहरति—सुचरणेति। पद्यार्द्धमिदं वामनरचित एव काव्यालङ्कारसूत्रे। तत्र नृत्यशालायां नर्त्तकीनां नर्त्तनकारिणीनां स्त्रियामितिशेषः, सुचरणयोः सुन्दरयोः पादयोः, विनिविष्टैः लग्नैः सङ्गतैरिति यावत् नूपुरैः पादाङ्गदैः प्रसिद्धैराभूषणैः झणितीत्यव्यक्तशब्दानुकरणम् झणि इति इत्थं चित्रमाश्चर्यं कलं मधुरं स्फुटञ्च रणितंच निरासीत्। मालिनीच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव।

( ३३ ) ननु अत्र लघुरेफशकारादय समासाः शृङ्गारीयमाधुर्य—व्यञ्जकास्तर्हि वीरादिरसाभावादोज एव नास्ति तद्व्यञ्जके एतदीयबन्धगाढत्वे औदार्यगुणस्य कथमन्तर्भावः सम्भवतीत्यत आह—अत्र चेति। तन्मतानुसारेणेति। ये वामनादयो गुणानां शब्दार्थधर्मत्वमेव वदन्ति तन्मतानुसारेणेत्यर्थः शब्दप्रौढोक्तिमात्रेण केवलबन्धगाढतयैव ओजः ओजो गुण अस्माभिरपि स्वीक्रियते इति शेषः। तथाच तन्मतेन शृङ्गारानुगुणेऽपि तात्कालरसानुसन्धानात् प्रागेव शब्दानां नृत्यप्रायत्वरूपप्रौढोक्तिमात्रज्ञानात् व्यज्यमाने ओजस्यस्मदुक्ते औदार्यस्यान्तर्भाव इत्याशयः। यदुक्तं वामनेन—

"पदन्यासस्य गाढत्वं वदन्त्योजः कवीश्वराः।
अनेनाऽधिष्ठिताः प्रायः शब्दाः श्रोत्ररसायनम्॥

( ३४ ) अथ प्रसादस्याऽपि गुणस्यौजस्यन्तर्भावं विवक्षुः वामनादिमते प्रसादस्वरूपं निरूपयति—प्रसाद इति। ओजसा—गाढत्वेन मिश्रितमुपसर्जनीभूतं यच्छैथिल्यं बन्धगाढत्वाभावस्तदेवात्मा स्वरूपं यस्य स तथोक्तो बन्धः। यस्मिन् बन्धे क्वचिद् प्रगाढता

( ३५ ) 'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदात् पाण्डवीनां चमूनाम्' ( ५१५ पृ. ) इति ।

( ३६ ) माधुर्यव्यञ्जकत्वं यदसमासस्य दर्शितम् ॥ १० ॥
पृथक्पदत्वं माधुर्यं तेनैवाङ्गीकृतं पुनः ।

( ३७ ) यथा—'श्वासान्मुञ्चति–' इत्यादि ( २०३ पृ० ) ।

( ३८ ) अर्थव्यक्तेः प्रसादाख्यगुणेनैव परिग्रहः ॥ ११ ॥
अर्थव्यक्तिः पदानां हि झटित्यर्थसमर्पणम् ।

---

कश्चिच्च शिथिलता स तथोक्तो बन्धः सम्यानां मनः प्रसादनात् प्रसादो नाम गुण इत्यर्थः । उक्तं च वामनेन—

'श्लथत्वमोजसा मिश्रं प्रसादं च प्रचक्षते ।
अनेन न विना सत्यं स्वदते काव्यपद्धतिः ॥

समाधौ श्लोके तत्पादे वा ओजःप्रसादयोरन्यतरस्य पुनरुन्मज्जनं नास्ति अत्र तूभयोर्निमज्जनोन्मज्जनक्रमेण संपर्कः । तदुक्तं वामनेन–"सम्पृक्तः खल्वोजःप्रसादौ नदीवेणिकावदूहहृतः" इति ।

( ३५ ) उदाहरति—यो य इति । षष्ठपरिच्छेदे उदाहरणोदाहरणावसरे व्याख्यातमिदम् ( ५१५ पृ० )

अत्र "यो य" इति शैथिल्यम् . शस्त्रमित्योजः, मद इत्यन्ते बन्धस्य गाढत्वादोजः "पाण्डवीनां चमूनाम्" इत्यत्र पुनः शैथिल्यम् , "यो य" इति शैथिल्यम , गोत्रे इत्योजः पुनः शैथिल्यमिति वामनादिसम्मतः प्रसादः । सोऽपि च गाढबन्धांशे स्वसम्मते ओजसि शिथिलबन्धांशे तु प्रसादे अन्तर्भूत एवेत्यभिप्रायः । इत्थञ्चोक्तकारिकायामोजःपदेन प्रसादस्यापि परिग्रहो बोध्यः ।

( ३६ ) अधुना पृथक्पदत्वलक्षणस्य वामनादिसम्मतमाधुर्य्यगुणस्य स्वकीयासमासस्थलीयमाधुर्य्यगुणे गतार्थत्वमुपपादयितुमाह—माधुर्य्येति । असमासस्य समासाभावस्य माधुर्य्यव्यञ्जकत्वं यदस्माभिर्दर्शितम् "अवृत्तिरल्पवृत्तिर्वा" इत्यनेनेतिशेषः, तेनैव पृथक्पदानि यस्य स पृथक्पदस्तस्य भावस्तत्त्वम् , दीर्घसमासाभावरूपमित्यर्थः वामनादिसम्मतं माधुर्य्यमस्माभिरपि पुनरङ्गीकृतम् । अस्मन्मते असमासस्थलीयमाधुर्य्यगुण एव वामनादिसम्मतशब्दगतमाधुर्य्यगुणस्य गतार्थत्वमिति भावः । उक्तं च वामनेन–"बन्धे पृथक्पदत्वं च माधुर्य्यमुदितं बुधैः" ।

( ३७ ) उदाहरति—यथेति । श्वासानिति । इत्यादीति उदाहरणमितिशेषः । तृतीयपरिच्छेदे तपनोदाहरणप्रकारणे ( २०३ पृ० ) व्याख्यातमिदम्

अत्र स्वम्मार्गमिति "भुजाबल्लरीम्" इति प्राणसमानेत्यादीनां समाससत्त्वेऽपि पृथकपदत्वस्य दीर्घसमासराहित्ये तात्पर्य्यम् । यद्वा समासशून्यांशमादायैव लक्षणसङ्गतिः । अथवा–( १६८ पृ० )

"बाले नाथ ! विमुञ्च मानिनि रुषं रोषान्मया किं कृतम्"

इत्युदाहरणम् ।

( ३८ ) वामनादिसम्मतार्थव्यक्तिसंज्ञकशब्दगतगुणस्य स्वसंम्मते प्रसादगुणे गता-

( ३९ ) स्पष्टमुदाहरणम् ।
( ४० ) ग्राम्यदुःश्रवतात्यागात्कान्तिश्च सुकुमारता ॥ १२ ॥
( ४१ ) अङ्गीकृतेति संबन्धः ।
( ४२ ) तच्च हालिकादिपदविन्यासवैपरीत्येनालौकिकशोभाशालित्वम् ।

र्थत्वमुपपादयति–अर्थव्यक्तेरिति । अस्माकं प्रसादाख्यगुणेन प्रसादगुणव्यञ्जकेनैव अर्थव्यक्तेः परिग्रहः, एकतरस्वीकारेऽन्यस्याऽपि स्वतः स्वीकारात् । तेषामर्थव्यक्तिर्नाम गुणः अस्माकं प्रसादगुण एव गतार्थ इत्यर्थः, हि यतः पदानां झटिति त्वरितम् अर्थस्य समर्पणं बोध एव तन्मते अर्थस्य व्यक्तिबुद्धौ स्पष्टोपस्थितिरित्यर्थव्यक्तिर्नाम । उक्तं च वामनेन—

पश्चादिव गतिर्वाचः पुरस्तादिव वस्तुनः ।
यत्रार्थव्यक्तिहेतुत्वात् सोऽर्थव्यक्तिः स्मृतो गुणः ॥

( ३९ ) उदाहर्त्तुं प्रवृत्त आह–स्पष्टमिति । "सूचीमुखेन सकृदेव कृतव्रणस्त्वम्" इति प्रसादोदाहरणेनैतदुदाहरणस्य सहैक्यत्वादिति नोदाह्रियत इत्याशयः । यथा वा—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

( ४० ) वामनादीनां कान्तिसुकुमारत्वाख्ययोरपि गुणयोः स्वसम्मते दोषाभावत्वमात्रमङ्गीकुर्वन्नाह—ग्राम्येति । ग्राम्यदुःश्रवयोर्भावौ ग्राम्यदुःश्रवते तयोस्त्यागात् परिहारात्। तथाच ग्राम्यताया दोषत्वाऽभ्युपगमेन तत्परित्यागद्योतनात् कान्तिः, दुःश्रवतायाश्च दोषत्वाऽभ्युपगमेन तत्परिहारस्यापि व्यञ्जनात् सुकुमारता चास्माभिः स्वीकृतेत्यर्थः ।

( ४१ ) अङ्गीति । अङ्गीकृतेतिपदस्येति शेषः । सम्बन्ध इति । "तेनैवाङ्गीकृतं पुनः" इत्यतो विभक्तिविपरिणामेनानुषङ्ग इत्यर्थः ।

( ४२ ) कथमेवमितितत्स्वरूपं दर्शयति—कान्तिरिति । औज्ज्वल्यं विवृणोति-तच्चेति । आदिपदात्प्राकृतनरमात्रग्रहणम् । हालिकादिप्रयुज्यमानानां पदानां भल्लगल्लादिशब्दानां हालिकादिसाधारणबोधजनकानां "शुष्को वृक्षस्तिष्ठत्यग्रे" इत्यादीनां च विन्यासः प्रयोगस्तस्य वैपरीत्यं परिहार इति यावत्तेन तथोक्तेन भावेन अलौकिकाः क्षुद्रलोकासम्भवा या शोभा पदसौन्दर्यं तच्छालित्वम् अलौकिकशोभारसालङ्कारादिकृतवैचित्र्यं तद्वत्त्वमित्यर्थः । तथा च ग्राम्यत्वाभावे सति रसालङ्कारादिवैचित्र्यं कान्तिरितिपर्य्यवसितम् । न तु ग्राम्यत्वत्यागमात्रेणैवौज्ज्वल्यम् अन्यथा—

"चित्रभानुरयमुज्ज्वलकान्तिः शेखरे लसति भूमिधरस्य" ।

इत्यादावपि कान्तिः स्यात् । सत्यन्तदलोपादन्तु-

"कन्ये कामयमानं मां न त्वं कामयसे कथम्"

इत्यादौ ग्राम्यत्वरतिश्शृङ्गाररसानुप्रासालङ्कारसत्वेऽपि कान्तिवारणायेतिविवृतिकारादयः । यदि तु ग्राम्यत्वाभावेनैव शोभाविशेषो जन्यत इत्यभ्युपेयते तदा यथाश्रुतमपि साधु । भोजदेवस्तु "औज्ज्वल्यं कान्तिः" ३।१।२९ इति वामनसूत्रानुसारेणैव—

'यदुज्ज्वलत्वं बन्धस्य काव्ये सा कान्तिरुच्यते' इत्याह ।

पण्डितराजोऽपि-'अविदग्धवैदिकादिप्रयोगयोग्यानां पदानां परिहारेण प्रयोज्यमानेषु पदेषु लोकोत्तरशोभात्वमौज्ज्वल्यं कान्तिः' इत्याह ।

( ४३ ) सुकुमारता अपारुष्यम् ।

( ४४ ) अनयोरुदाहरणे स्पष्टे ।

( ४५ ) क्वचिद्दोषस्तु समता मार्गभेदस्वरूपिणी ।
अन्यथोक्तगुणेष्वस्या अन्तःपातो यथायथम् ॥ १३ ॥

( ४६ ) मसृणेन विकटेन वा मार्गेणोपक्रान्तस्य संदर्भस्य तेनैव परिनिष्ठानं मार्गभेदः ।

( ४३ ) भोजदेवादिमते सुकुमारतां निरूपयति—सुकुमारतेति । अपारुष्यं बन्धस्य रूक्षवर्णशून्यत्वम्, यदुक्तं भोजदेवेन—"अनिष्ठुराक्षरप्रायं सुकुमारमिति स्मृतम्" ।

( ४४ ) ग्राम्यत्वपरिहारमात्रेण कान्तेर्दुःश्रवत्वपरिहारमात्रेण पुनः सौकुमार्यस्यातभूतत्वान्नोदाहार्य्यं इत्यभिप्रेत्याह—अनयोरिति । कान्तिसौकुमार्ययोरित्यर्थः । उदाहरणे स्पष्ट इति । क्रमेण यथा—

"ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः"

अत्र भल्लगल्लमानुषशब्दा ग्राम्यास्तत्परिहारेण तु कान्तिः—

"ताम्बूलभृतगण्डोऽयं भद्रं जल्पति मानवः"

यद्वा—"मध्यस्ते हरते मनः" "कार्त्तार्थ्यं यातु तन्वङ्गी कदानङ्गवशंवदा"

अत्र कार्त्तार्थ्यमितिदुःश्रवत्वं तत्परिहारेण सुकुमारता यथा—"आनन्दमियमायातु कदा कामवशंवदा" । उक्तविधपरिष्कृतलक्षणोदाहरणे यथा—

"स्वान्तं तन्वि ! तवानुरागमृदुलं हन्त्याशु मेऽमन्मथ-
स्त्वच्चित्तं तु विरागरूक्षमकृती वेद्धुं न शक्नोत्यसौ ।
याचे त्वामिदमेव तच्छृणु पुनः क्रूराय तस्मै न तद्
भ्रूचापं सखि ! नासिकां सुनिशितं नालीकमप्यात्मनः ॥
शैलम्बावलिकूजितं बहुजितं कान्ते तवानुग्रहा
न्नैवामी गणिता वनप्रियवधूसंबाधटङ्का मया ।
नाशङ्के मलयानिलाश्च विधोराराधनं भावये
वामायां त्वयि यावदद्य दयिते ! तानि प्रतीपानि मे ॥

( ४५ ) वामनादिसम्मतसमताख्यगुणस्यापि स्वमते व्यवस्थापयति—क्वचिदिति । मार्गभेदस्वरूपिणी उपक्रमोपसंहारयोरेकविधबन्धात्मकः समताख्यगुणः, क्वचित्तु सुकुमारबन्धमध्ये उद्धतार्थोपस्थितौ प्रौढबन्धमध्ये सुकुमारोपस्थितौ चेत्यर्थः प्रतिकूलवर्णत्वसंज्ञकदोष एव । अन्यथा प्रक्रान्तमार्गयोग्यार्थानुपस्थितौ तादृशवैषम्याभावस्थले इति यावत् अस्याः समताया उक्तगुणेषु प्राचीनोक्तमाधुर्य्यसौकुमार्य्याजःसु यथायथं यथासम्भवं सुकुमारमार्गभेदस्य माधुर्य्यसौकुमार्य्ययोः प्रौढमार्गभेदस्य त्वोजसीत्यर्थः । अन्तःपातोऽन्तर्भावः सम्भाव्यतामितिशेषः ।

( ४६ ) मार्गभेदशब्दं व्याचष्टे—मसृणेनेति । मसृणेन सुकुमारेण माधुर्य्याधायकेनेति यावत्—"मसृणोऽकर्कशे स्निग्धे त्रिषु मायां तु योषिति" इति विश्वः । विकटेन उद्भटेन ओजोऽनुगुणेनेतियावत् । मार्गेण बन्धप्रकारेण उपक्रान्तस्य आरब्धसन्दर्भस्य महाकाव्यविशेषस्य वा इदञ्चोपलक्षणन्तेन वाक्यैकस्यापि संग्रहः, तेनैव उपक्रान्तेनैव परिनिष्ठानं समापनम् । तदुक्तं वामनेन—

( ४७ ) स च क्वचिद्दोषः ।
( ४८ ) तथाहि--
( ४९ ) 'अव्यूढाङ्गमरूढपाणिजठराभोगं च बिभ्रद्वपुः
पारीन्द्रः शिशुरेष पाणिपुटके संमातु किं तावता ।
उद्यद्दुर्धरगन्धसिन्धुरशतप्रोद्दामदानार्णव-
स्रोतःशोषणरोषणात्पुनरितः कल्पाग्निरल्पायते ॥'
( ५० ) अत्रोद्धतेऽर्थे वाच्ये सुकुमारबन्धत्यागो गुण एव ।
( ५१ ) अनेवंविधस्थाने माधुर्यादावेवान्तःपातः । यथा--

प्रतिपादं प्रतिश्लोकमेकमार्गपरिग्रहः ।
दुर्बन्धो दुर्विभावश्च समतेति मतो गुणः ॥

( ४७ ) स चेति । मार्गाभेदरूपः वामनादिसम्मतः समतानामकगुणश्चेत्यर्थः ।

( ४८ ) एकपद्येनैव उभयोरेव दोषगुणयोरुदाहरणमुपपादयितुमाह—तथाहीति ।

( ४९ ) अव्यूढाङ्गमिति । सिंहशिशुं लालयन्तं कमप्यवलोक्य तद्व्याजेन तदुपमस्य कस्यापि लाल्यमानस्य भाविनी दशा वर्णनयम् । अव्यूढानि अचिरजातत्वादपरिणतानि अङ्गानि करचरणादीनि यस्य तत् अपेतशैथिल्याङ्गमित्यर्थः अरूढोऽनिष्पन्नः पाणिजठरयो-र्हस्तोदरयोराभोगा विस्तारा यस्य तत्तथोक्तञ्च वपुः शरीरं बिभ्रत् धारयन् एष शिशुः पारी-न्द्रः सिंहः "कण्ठीरवस्तु पारीन्द्रः केशरी गजमोहनः (मर्द्दनः)" इतिहारावली, पाणिपुटके मानवस्य हस्तप्रसृतौ सम्मातु मानं प्राप्नोतु अवस्थातुं योग्यो भवत्वित्यर्थः, तावता अस्य "क्षुद्रशरीरकत्वेन किं न्यूनम् अपि तु न, उद्यन्नुद्गच्छन् अस्य स्रोत इत्यनेन सम्ब-न्धः, दुर्धरः परैरधृष्यो गन्धो येषां ते ये सिन्धुरा गजास्तेषां शतं तस्य यत्प्रोद्दाम विशालं दानार्णवस्रोतं मदजलसागरप्रवाहस्तस्य शोषणं भयोत्पादनद्वारा शुष्कतोत्पादक रोषणं क्रोधो यस्य तस्मात् तादृशात् गन्धसिन्धुरा गन्धहस्तिनस्ते च—

यस्योग्रमदगन्धेन हस्तिनो भयविह्वलाः ।
दूरादेव पलायन्ते गन्धहस्ती स उच्यते ॥

इत्युक्तस्वरूपा एव । इतः शिशुपारीन्द्रात् कल्पाग्निः पुनः प्रलयकालीनवह्निरपि अल्पायते तुच्छः प्रतीयते । अयं स्वरूपेण क्षुद्रोऽपि बले सुमहानेवेत्याशयः । शार्दूल-विक्रीडितंछन्दस्तल्लक्षणन्तूक्तं प्रागेव( १९८ पृ० )

( ५० ) अत्र प्रथमार्द्धे अचिरोत्पन्नसिंहशिशोर्वर्णनीयतया सुकुमार एवार्थः किन्तु समतागुणत्वोपपत्तये कविना सर्वत्रोत्कटो बन्धः कृत इति प्रथमार्द्धे प्रतिकूलवर्णता-रूपदोष एवेत्याभिप्रायः । तृतीयचरणे तु-उद्भटार्थसद्भावात् उद्भटबन्धात्मिका सा समता गुण एवेति दर्शयति—अत्रेति । अस्मिन् पद्य इत्यर्थः । उद्धतेऽर्थे तृतीयचरणगत इति शेषः, प्रचण्डकोपस्य वर्णनीयत्वादित्याभिप्रायः । सुकुमारबन्धत्यागः कोमलरचनाविधानम् , गुण एव अर्थस्योद्भटत्वव्यञ्जकत्वादिति भावः ।

( ५१ ) पुनर्न यत्र तत्र का गतिरित्याह—अनेवमिति । यत्र वर्णनीयविशेषानुरोधेन प्रक्रान्तमार्गत्यागो नास्ति तत्रेत्यर्थः । माधुर्यादावित्यत्रादिपदेन स्वसम्मतौजो ग्रहणम् , माधुर्यव्यञ्जक ललितबन्धे ओजोव्यञ्जक उद्धतबन्धे वेत्यर्थः । अन्तः पातः बोद्धव्य इति शेषः ।

( ५२ ) 'लताकुञ्जं गुञ्जन्–' इत्यादि ( ८०२ पृ. ) ।

( ५३ ) ओजः प्रसादो माधुर्यं सौकुमार्यमुदारता ।
तदभावस्य दोषत्वात्स्वीकृता अर्थगा गुणाः ॥ १४ ॥

( ५४ ) ओजः साभिप्रायत्वरूपम् । प्रसादोऽर्थवैमल्यम् । माधुर्यमुक्तिवैचित्र्यम् । सौकुमार्यमपारुष्यम् । उदारता अग्राम्यत्वम् ।

( ५५ ) एषां पञ्चानामप्यर्थगुणानां यथाक्रममपुष्टार्थाधिकपदानवीकृतामङ्गलरूपाश्लीलग्राम्याणां निराकरणेनैवाङ्गीकारः ।

( ५६ ) स्पष्टान्युदाहरणानि ।

( ५२ ) लतेति । अत्र अर्थस्यापि सुकोमलतया आद्योपान्तसुकुमारबन्धात्मिका समता, स्वसम्मतमाधुर्यगुण एव गतार्थेत्याशयः । आदिपदात् "चञ्चद्भुज" इत्यादीनां ग्रहणम् ।

( ५३ ) एवं दश शब्दगुणान् दूषयित्वा इदानीमोजःप्रभृतीनां प्राचीनैरङ्गीकृतानामपि दशविधार्थगुणानां दोषाभावादिभिरङ्गीकारमगुणत्वं च यथायथं दर्शयति—ओज इति । ओजः, प्रसादः, माधुर्य्यम्, सौकुमार्य्यम्, उदारता च एते पञ्च अर्थगा अर्थगताः प्राचीनसम्मता गुणाः, तेषामोजःप्रसादमाधुर्य्यसौकुमार्य्यौदार्य्याणामभावसद्भावस्तस्य दोषत्वात् दोषरूपत्वात् स्वीकृता अङ्गीकृता अस्माभिरितिशेषः ।

अत्रेदम्बोध्यम्—दोषास्त्वनुपादेयाः गुणास्तूपादेया इति तत्र ओजःप्रभृतीनामविद्यमानत्वस्य दोषत्वस्वीकारेण तस्यानुपादेयत्वसूचनात् उपादेयस्य गुणत्वं ग्राह्यत्वञ्च सूचितमेवेति । अन्यत्राऽप्येवमेवाभिप्रायोऽवगन्तव्यः ।

( ५४ ) अर्थप्रौढिरोज इति वामनसूत्रम् । सा च पञ्चविधा—

पदार्थे वाक्यरचना वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥

तत्राद्यप्रकारचतुष्टयस्य वैचित्र्यमात्रावहत्वेन गुणत्वाभावमग्रे "क्वचित्" इत्यादिना प्रतिपादयिष्यति, पञ्चमप्रकारन्तु दोषाभावत्वेन गुणतया स्वीकुर्वन्नाह—ओज इति । साभिप्रायत्वरूपं विशेषणपदार्थस्य प्रकृतोपकारकत्वेन वक्तुरभिप्रेतत्वम्, एतेनास्मिन् ओजसि ओजोऽन्तरेभ्यो विशेषोऽयमितिध्वनितम् । अर्थस्य वैमल्यं नैर्मल्यम् अपेक्षितार्थमात्रपरिग्रह इति यावत्, उक्तिवैचित्र्यं विचित्रयोक्त्या तस्यैवार्थस्य पुनः समर्पणम् तच्च नवीकृतत्वरूपमितियावत् । अपारुष्यं परुषेऽप्यर्थे वक्तव्येऽपरुषरूपेणाभिधानम्, अग्राम्यत्वं पामराद्यशिक्षितजनैरप्रयुज्यमानत्वम् ।

( ५५ ) एषामिति । एषामोजःप्रभृतीनां पञ्चानामपि न त्वेकस्य द्वयोस्त्रयाणां चतुर्णामेव वा, यथाक्रममनुद्देशक्रमपूर्वकम् । अपुष्टार्थादीनां दोषाणां निराकरणेन परिहारेणैव न तु रसोत्कर्षापेक्षणेन । उक्तं च प्रदीपादावपि—"साभिप्रायत्वरूपमोजः अपुष्टार्थत्वरूपदोषाभावपर्य्यवसन्नम्, एवं प्रसादोऽपि अधिकपदत्वरूपदोषपरित्यागादेवान्यथासिद्धिसंनिधिः, माधुर्य्यं तु अनवीकृतत्वरूपदोषाभावरूपम् । यच्च पुनः सौकुमार्य्यं तदपि अमाङ्गल्यरूपाश्लीलत्वपरित्यागेनैव सिद्ध्यति, उदारता तु ग्राम्यत्वरूपदोषाभाव एवेति"।

( ५६ ) स्पष्टान्युदाहरणानीति । तत्रापुष्टार्थस्य निराकरणेन स्वमते ओजसः स्वीकारो जातः यथा—

( ५७ ) अर्थव्यक्तिः स्वभावोक्त्यालंकारेण तथा पुनः ।
रसध्वनिगुणीभूतव्यङ्ग्यानां कान्तिनामकः ॥ १५ ॥

सुन्दरि ! समुदितमेतत्तववदनमवेत्य सुधाकरः सततम् ।
गगने कुत्रापि सम्प्रति वसतिमुपेतुं गवेषयते ॥

अत्र सततसन्ततपदयोरन्यतरोपादानेन तथा गगनपदानुपादानेऽपि रसोत्कर्षस्य तथैव सम्भवादपुष्टार्थत्वम् । यदि च तत्रैव—

सुन्दरि ! समुदितमेतत्तव वदनमवेत्य सुधाकरो हन्त !
झटिति क्वापि विलीनः सम्प्रति भवितुं गवेषयते ।

इत्येवं पाठः स्यात्तदा विशेषणार्थस्य प्रत्युपकारित्वेन नापुष्टार्थत्वदोषः । प्रत्युत साभिप्रायत्वरूपः वामनादिसम्मत ओजो गुण एव ।

अधिकपदनिराकरणेन प्रसादस्य स्वीकार उपपन्नः । यथा—"कुर्य्यां हरस्यापि पिनाकपाणेः" अत्र पिनाकपाणिपदेन हरस्याजेयत्वज्ञापनात् "सदाशिवं नौमि पिनाकपाणिम्" इत्यादिवन्नाधिकपदत्वं दोषः किन्तु अर्थनैर्मल्यरूपः प्रसादगुण एव ।

अनवीकृतपदपरिहारेण माधुर्य्यस्य स्वीकारः सञ्जातः । यथा—"भानुः सकृद्युक्ततुरङ्ग एव" इत्यादि । अत्र नवीकृतत्वात् "सदा चरति खे भानुः" इत्यादिवन्नानवीकृतत्वदोषः किन्तु उक्तिवैचित्र्यरूपो माधुर्य्यं गुण एव ।

अमङ्गलरूपाश्लीलार्थपरिहारेण सौकुमार्य्यस्य स्वीकारः सम्पन्नः । यथा—

"सरसीव कीर्त्तिशेषं गतवति भुवि विक्रमादित्ये"

अत्र मरणे कीर्त्तिशेषशब्दस्याभिधानेन मृतिपदानभिधानान्नामङ्गलरूपाश्लीलात्वं दोषः किन्तु वैपरीत्येन अपारुष्यरूपः सौकुमार्य्यगुण एव ।

ग्राम्यार्थपरिहारेण च उदारतायाः स्वीकार आयातः । यथा—

त्वदधरमधुरिममोहित एष न विन्दति तथाविधं स्वदितम् ।
दयिते ! भुवनतलेऽस्मिञ्जीवितमद्य त्वमेव दीनस्य ॥

अत्र ग्राम्यार्थनिराकरणेन,

अधरसुधासवमुग्धं चुम्बनदानेन मोदमानय माम् ।
सुकृतिनि हास्यति ह्ययं निजजीवितमन्यथा सपदि ॥

इत्यादिवन्न ग्राम्यतादोषः प्रत्युत उदारता गुण एव ।

यथा वा—

"कन्ये कामयमानं मां न त्वं कामयसे कथम्"

अत्र ग्राम्यार्थपरित्यागात्—

कामं कन्दर्पचण्डालो मयि वामाक्षि ! निर्दयः ।
रतिमन्तिमदेहत्वात्त्वयि निर्मत्सरः किमु ॥

इत्यादिवन्न ग्राम्यत्वं दोषः प्रत्युत गुण एव ।

( ५७ ) अथार्थव्यक्तिं कान्तिं चान्तर्भावयितुमुत्थापयति—अर्थव्यक्तिरिति । स्वभावोक्त्यलङ्कारेण स्वभावोक्तिनामकालङ्कारस्वीकारेण तथा यथादोषपरिहारादिनाऽन्ये गुणा इति शेषः, अर्थव्यक्तिर्नाम प्राचीनसम्मतोऽर्थगुणः पुनरङ्गीकृत इति शेषः । एवं रसस्य

( A ) अङ्गीकृत इति संबन्धः । अर्थव्यक्तिर्वस्तुस्वभावस्फुटत्वम् । कान्ति-दीप्तरसत्वम् ।

( ५८ ) स्पष्टे उदाहरणे ।

( ५९ ) श्लेषो विचित्रतामात्रमदोषः समता परम् ।

( ६० ) श्लेषः क्रमकौटिल्यानुल्बणत्वोपपत्तितोनरूपघटनात्मा ।

ध्वनिगुणीभूतव्यङ्ग्याभ्यां तयोः स्वीकृताभ्यां कान्तिर्नाम कोऽपि प्राचामर्थगुणः अङ्गीकृतः । स्वपदस्य प्रत्येकं सम्बन्धः । तस्यैतदभिन्नत्वात्कल्पनान्तरवैयर्थ्यमित्याशयः ।

( ५८ ) "अङ्गीकृत" इत्यध्याहारमन्तरा कारिकाया वाक्यत्वानुदयं समीक्ष्याह-अङ्गीकृत इति । पदस्येतिशेषः सम्बन्धः "तेनैवाङ्गीकृतं पुनः" इति कारिकातोऽनुषङ्ग इत्यर्थः । अत्रापि च विभक्तिविपरिणामेनैवैकत्र "अङ्गीकृता" इति अपरत्र "अङ्गीकृत" इत्यस्य च सम्बन्ध स्वीकरणीयः । वस्तुस्वभावस्फुटत्वमिति । वस्तुनः पदार्थस्य खगादेः स्वभावानां स्वरूपाणां स्फुटत्वं साकल्येन स्पष्टप्रतीयमानत्वम् । दीप्तरसत्वं स्फुटप्रतीयमानरसत्वम्, यदाह भोजदेवः—"अर्थव्यक्तिः स्वरूपस्य साक्षात् कथनमुच्यते । कान्तिर्दीप्तरसत्वं स्यात् ।"वामनोऽपि—"वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः ।३।२।१४, "दीप्तरसत्वं कान्तिः" ।३।२।१५॥

( ५८ ) स्पष्ट इति । तत्रार्थव्यक्तेरुदाहरणं यथा नैषधे—

अथावलम्ब्य क्षणमेकपादिकां तदा निदद्रावुपपल्वलं खगः ।
स तिर्यगावर्तितकन्धरः शिरः पिधाय पक्षेण रतिक्लमालसः ॥

अत्र स्वभावोक्त्यलङ्कारेणैव अर्थव्यक्तिरूपो गुणः प्राप्तः ।

यथा वा शाकुन्तले प्रथमेऽङ्के—"ग्रीवाभङ्गाभिरामम्" इत्यादि ।

कान्तेर्यथा—

प्रेयान् सायमपाकृतः स शपथं पादानतः कान्तया
त्रिचाण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।
तावत्प्रत्युतपाणिसम्पुटमिलन्नीवी नितम्बे धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥

अत्र शृङ्गाररसध्वनिनैव कान्तिरूपो गुणः सम्पन्नः । "अयं स रसनोत्कर्षी" इत्यादौ तु रसस्य गुणीभूतव्यङ्ग्यत्वेन कान्तिरूपो गुण इति सुधीभिराकलनीयम् ।

( ५९ ) इदानीं प्राचीनाभिमतयोः श्लेषसमतानामकगुणयोरगुणत्वं बोधयितुमाह—श्लेष इति । श्लेषो नाम प्राचीनाभिमतो गुणः विचित्रतामात्रं कवेर्वैदग्ध्यप्रतिपादनाद्वैचित्र्यमात्रमेव न पुनर्वस्तुत एव गुणः मात्रपदेन गुणत्वव्यवच्छेदो ध्वनितः अनन्यसाधारणरसोपकारित्वातिशयविरहात् तथाप्रतिसन्धानेन प्रत्युतास्वादस्य प्रतीतेर्विलम्बाच्चेत्याशयः । तथा समता नाम प्राचीनाभिमतो गुणः परं केवलम् अदोष एव न पुनर्गुण इत्यर्थः । "परः श्रेष्ठारि दूरान्योत्तरे क्लीवं तु केवले" इति मेदिनी ।

( ६० ) प्राचीनाभिमतं श्लेषं निरूपयति—श्लेष इति । क्रमकौ टिल्यानुल्बणत्वोपपत्तीनां योगः सम्बन्धः स एव रूपं यस्याः सेति सा च घटना चेति, सैवात्मा स्वरूपं यस्य स तथोक्तः श्लेषः । यदाह वामनः—"घटना श्लेषः" ३।२।४। उक्तलक्षणं स्वयमेव

( ६१ ) तत्र क्रमः क्रियासंततिः, विदग्धचेष्टितं कौटिल्यम्, अप्रसिद्धवर्णनाविरहोऽनुल्वणत्वम्, उपपादकयुक्तिविन्यास उपपत्तिः एषां योगः संमेलनं स एव रूपं यस्या घटनायास्तद्रूपः श्लेषो वैचित्र्यमात्रम्। अनन्यसाधारणरसोपकारित्वातिशयविरहादिति भावः। यथा--

'दृष्ट्वैकासनसंस्थिते प्रियतमे-' इत्यादि ( ११५ पृ० )।

अत्र दर्शनादयः क्रियाः, उभयसमर्थनरूपं कौटिल्यम्, लोकसंव्यवहाररूपमनुल्वणत्वम्, एकासनसंस्थिते' 'पश्चादुपेत्य' 'नयने पिधाय' 'ईषद्वक्रितकंधरः' इति चोपपादकानि, एषां योगः।

( ६२ ) अनेन च वाच्योपपत्तिग्रहणव्यग्रतया रसत्वादौ व्यवहितप्राय इत्यस्यागुणता।

व्याचष्टे—तत्रेति। क्रमः क्रमपदार्थः क्रियाणां व्यापाराणां सन्ततिः परम्परोत्तरं विन्यासः, कौटिल्यं तत्पदार्थः विदग्धचेष्टितं निपुणव्यवहारः, अनुल्वणत्वं तत्पदवाच्यः अप्रसिद्धवर्णनाया विरह अभावः, उपपत्तिस्तत्पदवाच्यः उपपादकानि उक्तविषयसमर्थनकारीणि तेषां युक्तयः सङ्घटनोपायास्तासां विन्यासः स्थापनम्, वैचित्र्यमात्रमित्यत्र मात्रपदेन गुणत्वव्यवच्छेदे हेतुं दर्शयति—अनन्येति। अनन्यसाधारणम् अन्यैरतुल्यम् यत् रसोपकारित्वमुत्कर्षत्वं तदतिशयविरहाद् रसव्यञ्जकवाक्यस्य काव्यव्यवहारोपयोगित्वेन तद्भावाद् असाधारणभावेनैव यो रसमुपकरोति स एव गुण इति भावः।

उदाहरति-"दृष्ट्वैकासनसंस्थिते" इति। व्याख्यातमिदं तृतीयपरिच्छेदे (१७० पृ०)

( ६१ ) वैचित्र्यमुपपादयितुमुन्भावयति—अत्रेति। आदिपदेन पश्चादुपगमनपिधानादीनां ग्रहणम्। उभयसमर्थनं जेष्ठाकनिष्ठयोश्चुम्बननयनपिधानाभ्याम् अनुरञ्जनं वञ्चनञ्च तदेव रूपं यस्य तत्तथोक्तम, कौटिल्यं विदग्धचेष्टितापरपर्य्यायं लोकव्यवहाररूपम् अन्यत्रापि लोकानां तथाभूतप्रसिद्धव्यवहारात्मकम्, भवति हि लोके पश्चादुपेत्य नयनपिधानम्। उपपादकानि तादृशानुरञ्जनवञ्चनयोः सङ्घटनकारकाणि एषां क्रमादीनां योगः उपकार्य्युपकार्य्यत्वाभ्यामवस्थानरूपं सम्मेलनम् प्राचीनाभिमतश्लेषो नाम गुणः सञ्जात इति शेषः। प्रदीपादौ तु—"क्रमकौटिल्यमतिक्रमः, तस्यानुल्वणत्वमस्फुटता तत्रोपपत्तिर्युक्तिस्तस्याः योगः सम्बन्धस्तद्रूपा या घटना रचना तदात्मा तद्रूपः श्लेष इत्यर्थः। यथा "दृष्ट्वैकासने इति। अत्र पिहितनयनामतिक्रम्यान्यस्याश्चुम्बनादतिक्रमः, तस्यास्फुटत्वमनया तदज्ञानात् तत्रोपपत्तिः एवंप्रकारेण अनया तु न ज्ञातमिति"

( ६२ ) निरुक्तश्लेषेऽस्यादोषत्वमेवाप्रसक्तं कुतोऽगुणत्वमित्युपपादयति-अनेन चेति। निरुक्तश्लेषेण चेत्यर्थः। अस्य तु व्यवहितप्राय इत्युत्तरेणान्वयः। व्यवहितप्रायत्वं प्रति हेतुं दर्शयति—वाच्योपपत्तीति। वाच्यस्य नयनपिधानाद्यभिधीयमानस्यार्थस्य उपपत्तिग्रहणे उपपादकयुक्त्यनुसन्धाने व्यग्रतया श्रोतुर्व्याकुलतया व्यवहितप्रायः व्यवहिततुल्यः "प्रायश्चानशने मृत्यौ प्रायो बाहुल्यतुल्ययोः" इतिहेतोरस्य श्लेषस्य अगुणता न गुणत्वं नापि दोषत्वमित्यर्थः। रसोत्कर्षानुत्पादान्न गुणता वास्तविकव्यवधानानुत्पादनाद्दोषतेतिकेचित्। वस्तुतस्तु—अनन्यसाधारणरसोपकारित्वातिशयविरहात् तथाप्रतिसंधानेन

( ६३ ) समता च प्रक्रान्तप्रकृतिप्रत्ययाविपर्यासेनार्थस्य विसंवादिताविच्छेदः । स च प्रक्रमभङ्गरूपविरह एव ।

( ६४ ) स्पष्टमुदाहरणम् ।

( ६५ ) न गुणत्वं समाधेश्च—

( ६६ ) समाधिश्चायोन्यन्यच्छायायोनिरूपद्विविधार्थदृष्टिरूपः । तत्रायोनिरर्थो यथा—

( ६७ ) 'सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्धि नारङ्गकम् ।

---

प्रत्युतास्वादस्य प्रतीतेर्विलम्बाच्च दोषात्मकत्वमेव । उक्तं च तर्कवागीशैरपि "व्यवहित-प्रायो विलम्बेनोत्पादितः । अस्य श्लेषस्य । अगुणत्वं गुणविरोधित्वम्, दोषत्वमिति-यावत्" इति अतएव केनचित् कविना "कवितास्वादवेलायां शब्दव्युत्पत्तिचिन्तनम्, नीवीमोक्षणसमये वस्त्रमूल्यविचारवत्" इत्युपहसितम् । श्लेषोऽपि विचित्रतामात्रमिति-काव्यप्रकाशं व्याचक्षाणा अप्याहुः "कवेश्चातुर्यमात्रं न गुणः रसोपकाराभावात् चुम्बन-रूपसम्भोगोपकारेऽपि छले एव चमत्कारातिशयात् इति ।

( ६३ ) प्राचीनाभिमतं समताख्यगुणं प्रदर्श्य स्वमते तस्य गुणत्वमपवदति—सम-तेति । प्रकृतिः प्रत्ययोत्पत्तिनिमित्तभूतः शब्दविशेषः, प्रत्ययस्तु प्रकृतिं निमित्तीकृत्य विधीयमानः शब्दविशेषः, तथाच प्रक्रान्तयोः प्रथममभिहितयोः प्रकृतिप्रत्यययोः अविप-र्यासेन विपरीतविन्यासाभावेन, अर्थस्य वाच्यस्य वर्णनीयवस्तुन इत्यर्थः विसंवादिताया वैषम्येण प्रतीयमानताया विच्छेदः अभावः । यादृशैः प्रकृतिप्रत्ययादिभिः प्रक्रमः तादृशै-रेव तैः समापनं समतेत्यर्थः । उक्तं च वामनेन—"अवैषम्यं समता ३।१।१२। भोजराजेना-ऽपि—अवैषम्यं क्रमवतां समत्वमिति कीर्त्तितम्" इति स च प्राचीनाभिमतसमताख्य-गुणः स्वमते प्रक्रमभङ्गरूपदोषस्य विरहः अभाव एव न पुनः कश्चिदतिरिक्तो गुणः तावता रसोपकारित्वासम्भवादित्यर्थः । प्रक्रमभङ्गे न केवलं रस एव हीयते किन्तु कविरपीति कः खल्वनुन्मत्तोऽन्यस्य प्रस्तावेऽन्यदभिदध्यादिति न गुणत्वमस्येति बोध्यम् ।

( ६४ ) स्पष्टमिति । "उदेति सविता ताम्रः" इत्याद्युदाहरणं स्पष्टमित्यर्थः ।

( ६५ ) प्राचीनाभिमतस्य समाधेर्गुणत्वं निषेधति—नेति । समाधेश्च प्राचीनाभि-मतस्य समाधिनामकार्थगतगुणस्यापि च अस्मन्मते न गुणत्वम् ।

( ६६ ) विभागप्रदर्शनगर्भं समाधिस्वरूपं निर्दिशंस्तस्य दोषाभावमात्रत्वमुपपाद-यति—समाधिश्चेति । "अर्थदृष्टिः समाधिः" ३ । २ । ७ अर्थो द्विविधः "अयोनिरन्य-च्छायायोनिर्वा" ३ । २ । ८ । अयोन्यन्यच्छाययोः योनिरूपस्य द्विविधस्यार्थस्य दृष्टि-दर्शनं समाधिः समाधिनामको गुण इति तदर्थः । तत्रायोनिरर्थः कविसम्प्रदायपरिशीलि-तपद्धतिमन्तरेण स्वबुद्धिविभवमात्रप्रादुर्भावित उपमानोपमेयभावादिरूपः । न विद्यते योनिः प्रसिद्धिरूपं हेतुर्यस्य स तथोक्त इति व्युत्पत्तिः अन्यच्छायायोन्यर्थस्तु प्राक्तनकवि परम्परा व्यवहृतः किञ्चिद् भङ्ग्यन्तरेण वर्णितः, अन्येषु काव्येषु या च्छाया प्रतिबिम्बं सैव योनिः कारणं यस्य स इति व्युत्पत्तिः ।

( ६७ ) द्विविधयोरप्यर्थयोः क्रमेणोदाहरणमुपपादयति—तत्रेति । सद्य इति । सद्यो मुण्डितं कृतक्षौरं यत् मत्तहूणस्य मद्यपानोन्मत्तपाश्चात्यदेशोद्भवातिगौरयवनविशेषस्य

अन्यच्छायायोनिर्यथा—

( ६८ ) 'निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि ।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी ॥'

( ६९ ) अत्र नीलोत्पलनयनयोरतिप्रसिद्धं सादृश्यं विच्छित्तिविशेषेण निबद्धम् ।

( ७० ) अस्य चासाधारणशोभानाधायकत्वान्न गुणत्वम्, किंतु काव्यशरीरमात्रनिर्वर्तकत्वम् ।

( ७१ ) 'चन्द्रम्' इत्येकस्मिन्पदार्थे वक्तव्ये 'अत्रेर्नयनसमुत्थं ज्योतिः' इति वाक्यवचनम् । क्वचित् 'निदाघशीतलहिमकालोष्णसुकुमारशरीरावयवा योषित्' इति इति वाक्यार्थे वक्तव्ये 'वरवर्णिनी' इति पदाभिधानम् । क्वचिदेकस्य वाक्यार्थस्य किंचिद्विशेषनिवेशादनेकैर्वाक्यैरभिधानमित्येवंरूपो व्यासः । क्वचिद्बहुवाक्यप्रतिपाद्यस्यैकवाक्येनाभिधानमित्येवंरूपः समासश्च, इत्येवमादीनामन्यैरुक्तानां न गुणत्वमुचितम्, अपि तु वैचित्र्यमात्रावहत्वम् ।

---

चिबुकम् ओष्ठाधोभागः "अधस्तादधरोष्ठस्य चिबुः स्याच्चिबुकं तथा" इति निगमः, तस्य प्रस्पर्द्धि नारङ्गं पक्वनारङ्गकम् ।

अत्र नारङ्गकस्य मसृणचिबुकेन सहोपमानोपमेयभावो न केनापि प्राक्तनकविना प्रदर्शितः केवलमेतत्कविनैव स्वबुध्या प्रादुर्भावित इत्ययोनिरर्थः ।

( ६८ ) निजनयनेति । अम्बुनि जले निजनयनयोः प्रतिबिम्बानि अनेकत्र प्रतिच्छायाभासास्तैः तथोक्तैः, प्रतारिता वञ्चिता जले पतितेषु निजनयनप्रतिबिम्बेषु नीलोत्पलबुद्ध्या तानि त्रोटितुकामा तेषाञ्च केवलप्रतिबिम्बत्वेन त्रोटितुमशक्यत्वात् प्रतारणा सञ्जातेत्यर्थः । कापि कुसुमानि लुनाति छिनत्तीति कुसुमलावी कर्मण्यण् तदन्तत्वाट्टिड्ढेति ङीप् मालाकाराङ्गनेत्यर्थः, वास्तविकेऽपि नीलोत्पले करमर्पयितुं विमृशति विचारयति ।

( ६९ ) कथासङ्गतिमुपपादयितुमाह—अत्रेति । अतिप्रसिद्धं काव्यान्तरेषु बहुशः समुपलम्भादिति भावः । नन्वेवं तर्हि कथमत्र पुनर्वर्णितमित्यत आह—विच्छित्तीति । विच्छित्तिविशेषेण वैचित्र्यविशेषाधायकत्वेन । तथाचार्थान्तरबोधेनातिप्रसिद्धमपि सादृश्यमत्र विन्यासविलक्षणवैचित्र्येण नूतनमिव सम्पद्यतेतिभावः ।

( ७० ) अधुना समाधेरगुणत्वं दर्शयति—अस्येति । अस्य समाधेश्च असाधारणशोभाया रसादीनामनुपममनोहरत्वस्य अनाधायकत्वादनुत्पादकत्वात् । काव्यशरीरमात्रस्य अर्थात्मककेवलकाव्यशरीरस्य निर्वर्त्तकत्वं निर्वाहकत्वम् । अयम्भावः—लोकशास्त्रकाव्यादिदर्शनजन्यनिपुणताया: काव्यहेतुतया अर्थदर्शनाभावे काव्यशरीरमेव न निष्पद्यत इत्यर्थदृष्टेः काव्यशरीरमात्रनिर्वाहकत्वमेव न तु पुत्रे पितुरिव गुणत्वमिति ।

( ७१ ) एवं वामनादिप्राचीनाभिमतान् दशविधार्थगुणानपि निरस्य सिंहावलोकनन्यायेन—

पदार्थे वाक्यरचना वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥ इत्यत्र

पञ्चमप्रभेदस्यैव पूर्वमपुष्टार्थत्वनिराकरणेन गतार्थत्वेऽपि पुनरोजसश्चतुर्णां भेदानां कादाचित्कीं गुणत्वं स्यादित्याशङ्कां परिजिहीर्षुराह—क्वचिदिति । रघुवंशादाविस्यर्थः, पञ्चप्रकारेषु ओजःसु यथाक्रममुदाहरति—चन्द्रमिति । वाक्यवचनं वाक्योक्तिः यथा रघुवंशे द्वि० २ सर्गे ७५ पद्ये-"अथ नयनसमुत्थं ज्योतिरत्रेः" इति । परमेष्ठिनः कश्चित् सुतोऽत्रिस्तस्य नयनाच्चन्द्र उत्पन्न इति पौराणिकीकथानुसन्धेया । क्वचिदुक्तादौ-निदाघे ग्रीष्मकाले शीतला हिमकाले चोष्णाः सुकुमाराश्च शरीरावयवा यस्याः सा तथोक्ता ।

पद्यं यथा—

सद्यो निदाघपरितापविघातभूमिः शैत्यं निवर्त्तयितुमभ्युदिता च नित्यम् ।
श्यामा शिरीषमृदुलावयवा मनोज्ञा किं मां कदापि सुभगं न विधास्यतीयम् ॥

वाक्यार्थे न तु पदार्थे । वरवर्णिनीति । तथाच रुद्रः—

शीतकाले भवेदुष्णा उष्णकाले च शीतला
सुकुमारशरीरा च सा ज्ञेया वरवर्णिनी ॥

यथा "समागता सा वरवर्णनीयम्" ।

यथा वा "कान्तार्थिनी सङ्केतस्थानं गच्छति" इति वाक्यार्थे—

"अभिसारिका" इति पदाभिधानम् ।

यथा वा—

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदम् ॥

इति वाक्यार्थे—"स्वर्गः" इति पदाभिधानम् । तृतीयामुदाहर्त्तुमाह—क्वचिदिति । किञ्चिद्विशेषेण भेदेन सन्निवेशस्तस्मात् । यथा राजा—

अयाचितः सुखं दत्ते याचितश्च न यच्छति ।
सर्वस्वञ्चापि हरते विधिरुच्छृङ्खलो नृणाम् ॥ इत्यत्र ।

यथा वा—

"असौ नानाकारो भवति सुखदुःखव्यतिकरः
सुखं वा दुःखं वा भवति न भवत्येव च ततः ।
पुनस्तस्मादूर्ध्वं भवति सुखदुःखं किमपि तत्
पुनस्तस्मादूर्ध्वं भवति नच दुःखं नच सुखम् ॥

अत्र येन संसारिणा यथाविधं कर्म कृतं तदनुसारेणैव विविधत्वमाश्रितः सुखदुःखभोगः क्रियते । यदि कुतश्चित् "तत्त्वमसि" इत्यादिवाक्यात् जीवब्रह्मणोरैक्यप्रतीत्यात्मसाक्षात्कारः स्यात्तदैवास्य प्रवाहस्य शान्तिरित्येवं विवक्षितमिति वैचित्र्येणानेकवाक्येन प्रतिपादनम् ।

एवं नैषधेऽपि २ सर्गे दमन्त्युदरस्य कृशत्वरूपवाक्यार्थस्य मेरुदण्डनिम्नताहेमकाञ्चीरूपविशेषाशयेन "उदरं नत" उदरं परिमाति मुष्टिना" इत्यादिपद्यद्वयेनानेकवाक्येनाभिधानम् । चतुर्थीमुदाहर्त्तुमाह-क्वचिदिति । यथा—

"ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्" इत्यादि ।

अत्र ते 'हिमालयमामन्त्र्य' इत्यादिना एकेनैव वाक्येन नानावाक्यार्थीभूतस्यामन्त्रणादेरुक्तिः । एकवाक्ये बहुवाक्यार्थनिबन्धात् समास इति भावः । यथा वा—

राज्यं परित्यज्य पितुर्नियोगाद् वनं प्रपद्याशु मुनीन् विलोक्य ।
तैरर्थितो दूषणमेव हत्वा ददौ सुराज्ये शरणागताभ्याम् ॥

**( ७२ ) तेन नार्थगुणाः पृथक् ॥ १६ ॥**

( ७३ ) तेनोक्तप्रकारेण । अर्थगुणा ओजःप्रभृतयः प्रोक्ताः ।

( ७४ ) इति साहित्यदर्पणे गुणविवेचनो नामाष्टमः परिच्छेदः ।

अत्र बहुवाक्यप्रतिपाद्यस्य रामायणसर्वस्वभूतत्वात् पूर्वोक्तेनैकवाक्येनाभिधानम् । इत्येवमादानामिति आदिपदेन भोजराजप्रतिपादितानेकगुणानां परिग्रहः । अन्यैर्वामन-भोजराजादिभिरित्यर्थः । उक्तानां गुणत्वेन कल्पितानाम् । गुणत्वं नोचितमिति । रस-व्यञ्जकवाक्यस्य काव्यव्यपदेशोऽयोगित्वाभावादितिभावः ।

ननु शब्दार्थशोभाधायकत्वेनैव ओजः प्रभृतीनां गुणत्वं स्वीकरणीयमितिचेत् ? मैवम्, तेषां ये दोषाभावपर्य्यवसन्नास्तत्राव्याप्तेः । दोषाभावस्यापकर्षप्रयोजकदोषविघटकत्वमात्रेणैवोत्कर्षाधायकत्वाऽसम्भवादलङ्कारेऽतिव्याप्तेः नहि तादृशगुणालङ्कारजन्यशोभायां किञ्चिद्वैलक्षण्यमस्ति येन गुणेभ्योऽलङ्काराणां व्यावृत्तिः क्रियत इति स्पष्टं विवरणादौ ।

( ७२ ) गुणनिरूपणप्रकरणमुपसंहरति—तेनेति । तेन उक्तविधिना अर्थगुणा वामनभोजराजाद्युक्ताः अर्थगता गुणा न पृथक् नातिरिक्ताः । अपि तु अस्मन्मतगुणदोषाभावरसध्वनिगुणीभूतव्यङ्ग्यालङ्कारेष्वेव गतार्था इति तत्त्वम् ।

अतएवाहुरत्र ममज्ञाः—

( क ) राजा भोजो गुणानाह विंशतिं चतुरश्च यान् ।
वामनो दश तान् वाग्मी भट्टस्त्रीनेव भामहः ॥” इत्याहुः ।

( ७३ ) विवृणोति—तेनेति । प्रोक्ता इति पूर्वमभिहिताः ।

( ७४ ) इतीति । गुणविवेचन इति गुणानां विवेचनं विवेको यत्र यस्माद्वा सः । परिच्छेदः समाप्त इति शेषः ।

( अत्र मूलकारिकाः १६ पूर्वाभिः सह ६९४ उदाहरणानि ८ पूर्वैः सह ४९९ ) ।

इति वत्सकुलावतंस-वैयाकरणकेसरि-बदरिनाथशर्मात्मज-दैवज्ञशिरोमणि-ठक्कुरोपनामक-श्रीलोकनाथशर्मात्मज-साहित्यव्याकरणाचार्य-श्रीकृष्णमोहनशास्त्रि-विरचितायां 'लक्ष्मी' नामिकायां साहित्यदर्पणटीकायामष्टमः परिच्छेदः ।

---

( क ) श्लेषः[1] प्रसादः[2] समता[3] माधुर्यं[4] सुकुमारता[5] ।
अर्थव्यक्तिस्[6]तथा कान्तिर्[7]उदारत्वम्[8]उदात्तता[9] ॥
ओजस्[10]तथाऽन्यदौर्जित्यं[11] प्रेयानथ[12] सुशब्दता[13] ।
तद्वत्समाधिः[14] सौक्ष्म्यं[15] च गाम्भीर्यम्[16]अथ विस्तरः[17] ॥
सङ्क्षेपः[18] सम्मितत्वञ्च[19] भाविकत्वं[20] गतिस्[21]तथा ।
रीतिर्[22]उक्तिस्[23]तथा प्रौढिः[24]........................ ॥

इति चतुर्विंशतयः शब्दार्थगुणा भोजराजनिरूपिता अवगन्तव्याः । ओजः[1]प्रसाद[2]श्लेष[3]समता[4]माधि[5]माधुर्य[6]सौकुमार्यो[7]दारता[8]ऽर्थव्यक्ति[9]कान्तयो[10] बन्धगुणाः ॥ ३।१।४ इति वामनेन शब्दार्थगता दशगुणा अवगन्तव्याः । माधुर्यादयस्त्रय एव भामहादयः ।

इति 'लक्ष्मी' टिप्पण्यामष्टमः परिच्छेदः ।

# नवमः परिच्छेदः ।

( १ ) अथोद्देशक्रमप्राप्तमलंकारनिरूपणं बहुवक्तव्यत्वेनोल्लङ्घ्य रीतिमाह—

( २ ) पदसंघटना रीतिरङ्गसंस्थाविशेषवत् ।

उपकर्त्री रसादीनां—

( ३ ) रसादीनामर्थाच्छब्दार्थशरीरस्य काव्यस्यात्मभूतानाम् ।

---

( १ ) ननु "उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः" इत्युक्तरीत्या गुणनिरूपणानन्तरमुद्देशक्रमेणालङ्कारनिरूपणं कथं न कृतमित्याशङ्कां निराकर्त्तुं तत्कारणं प्रदर्शयितुमुत्थापयति-अथेति । अथ गुणनिरूपणानन्तरम्, उद्देशक्रमेण "उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः" इति नामकीर्त्तनक्रमेण प्राप्तमपि जिज्ञासितमपि अलङ्कारनिरूपणम्, बहवो वक्तव्याः प्रतिपादनीया विषया यत्र तत्त्वेन रीतिनिरूपणस्याल्पविषयत्वेन च हेतुनेतिशेषः, उल्लङ्घ्य प्रतिपादनमुपेक्ष्य उपेक्षणं च सूचीकटाहन्यायेन, रीतिमाह निरूपयति मूलकार इति शेषः । अयम्भावः—यथा तत्र प्रतिज्ञातपूर्वमपि कटाहनिर्म्माणं नाल्पसमयसाध्यमिति कश्चित्कालमुल्लङ्घ्याप्रतिज्ञातपूर्वमपि सूचीनिर्माणमदीर्घकालसाध्यमिति जानानस्तत्र प्रवर्त्तते तथाऽलङ्काराणां बहुवक्तव्यविषयत्वेन तेषां प्रतिपादनमपि न झटिति साध्यमितितत्परित्यज्य किञ्चित्प्रतिपादनीयविषयां प्रथमं रीतिमेव निरूपयतीति । वस्तुतस्तु-रीतेर्गुणघटितत्वेनैव गुणनिरूपणानन्तरं तन्निरूपणस्यौचितमित्यवगन्तव्यम् । गुणनिरूपणानन्तरं तदभिव्यञ्जकतया रीतेर्जिज्ञासितत्वात् प्रसङ्गसङ्गतिरत्रेतिविभावनीयम् ।

( २ ) रीतेर्लक्षणं निरूपयति—पदसङ्घटनेति । अङ्गसंस्थाविशेषवत् शरीरे यथास्थाने विलक्षणमुखाद्यवयवसन्निवेशविशेषवत् शब्दार्थशरीरे काव्ये यथास्थाने पदानां पदविशेषाणां माधुर्य्यादिगुणव्यञ्जकवर्णादिरूपाणामित्यर्थः सङ्घटना सन्निवेशः रीतिस्तत्पदवाच्या, रीयते ज्ञायते गुणविशेषोऽनयेति रीतिः, ये गत्यर्थास्ते ज्ञानार्थका अपीति "रीङ् गतौ" वित्यस्माद्धातोः "स्त्रियां क्तिन्" इतिपाणिनिसूत्रेण करणे क्तिन् रीतिः, प्रथा, व्यवहारः, इत्यनर्थान्तरम् ।

ननु पदसङ्घटनाविशेषस्य काव्यातिरिक्तेऽपि "गोरपत्यं बलीवर्दो घासमत्ति मुखेन सः" इत्यादावपि सत्वेनातिव्याप्तिरित्यत आह—उपकर्त्रीति । रस आदौ येषां तेषां तथोक्तानाम्, चन्द्रशेखर इत्यादिवत्सप्तम्यन्तेन व्यधिकरणबहुव्रीहिः । आदिपदेन रसाभासादीनां परिग्रहः । उपकर्त्री स्वाश्रयव्यङ्ग्यरसादिवृत्तिगुणव्यञ्जकतया परम्परया रसादीनां परिपोषिकेत्यर्थः । एतेन रसाद्यभावस्थले रीतीनामप्यभाव इति द्योतयता तासामनित्यत्वं द्योतितम् । अत्रेदम्बोध्यम्—यथाऽङ्गसंस्थाविशेषोऽङ्गिनं शरीरमुत्कर्षयंस्तदन्तर्य्यामिनं शरीरिणमप्युत्कर्षयन्ति तथा गुणाभिव्यञ्जकपदवर्णसमासादिसङ्घटनात्मिका रीतिः शब्दार्थशरीरं काव्यमुत्कर्षयन्ती तदात्मभूतं रसादिकमप्युत्कर्षयति । एवञ्च रसाद्युपकारकः गुणाभिव्यञ्जकपदादिविन्यासो रीतिरितिलक्षणं फलितम् ।

( ३ ) स्वाभिप्रेतस्य वास्तविकत्वप्रतिपादनाय "रीतिरात्मा काव्यस्य" इति वामनमते दोषप्रदानेऽप्यत्र स्मारयन् निरुक्तकारिकागतं रसादीनाम् इति पदं विवृणोति—रसादीनामिति । तर्कवागीशास्त्वत्रेत्थमवतारयन्ति—'ननु रीतेः साक्षादेव शब्द-

(४) सा पुनः स्याच्चतुर्विधा ॥ १ ॥
वैदर्भी चाथ गौडी च पाञ्चाली लाटिका तथा ।

स्योत्कर्षाभिधायकत्वं निरुक्तं परम्परया तु रसादीनामित्युपपन्नम्, तथापि तस्याः काव्योत्कर्षाधायकत्वमनुपपन्नमित्यत आह—रसादीनामिति । अर्थात् युक्त्या सम्भावना-विषयत्वात् शब्दार्थाविव शरीरं यस्य तस्य, आत्मभूतानाम् आत्मस्वरूपाणामित्यर्थः। एवञ्च वामनमते विशिष्टपदरचना रीतिः इति रीतेर्लक्षणम् । तेन च पदं नाम शब्दविशेषः शब्दश्च काव्यस्य शरीरमेव "तस्माच्छरीरमेव कथमात्मा भवितुं शक्नोतीतिरीतिरा-त्मा काव्यस्येति" वामनमतमसमीचीनमेवेत्यवगन्तव्यम् । नन्वेवं कस्तदात्मेतिचेत् ? रसादय इति गृहाण । नचात्मन एकत्वेन नित्यत्वश्रवणाद्रसादीमनेकत्वेन तदात्मत्वीका-रेऽनित्यत्वप्रसङ्ग इति वाच्यम्, उपाधिवशाद्भेदेऽवगम्यमानेऽपि स्वरूपतस्तत्र तस्या-नुपलम्भात् स्वरूपतश्च "रस्यतेऽऽस्वाद्यत" इतिनिर्वचनबलाच्चमत्कारविशेषात्मैव प्रती-तस्यैवास्वादात्मकत्वस्फुरणात् ।

(४) रीतेर्विभागं दर्शयति—सेति । सा रीतिः पुनश्चतुर्विधा स्यात्—वैदर्भी, गौडी, पाञ्चाली लाटी, चेति । तत्र विदर्भाणां विदर्भदेशोत्पन्नानां महाकवीनामियमिति वैदर्भी "शेषे" इति पाणिनिसूत्रेण अण् "टिड्ढेति" सूत्रेण ङीप् । गौडानां गौडदेशोत्पन्नानां महाकवीनामियमिति गौडी । पाञ्चालानां पाञ्चालदेशोत्पन्नानां महाकवीनामियमिति पाञ्चाली । लाटानां लाटदेशोत्पन्नानां महाकवीनामियमितिलाटी, लाटिकेत्यत्र तु छन्दः-पूरणार्थः संज्ञायां कन् प्रत्ययः। रीतिविषये बहवो विप्रतिपत्तयः सन्ति तथाहि—

दण्डिमतेन—

अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् ।
तत्र वैदर्भगौडीयौ वर्ण्यते प्रस्फुटान्तरौ ॥

इत्यनेन, द्विप्रकारा वामनमतेन "वैदर्भी गौडी पाञ्चाली १।२।९।" इत्यनेन त्रिविधा रीतिः । केशवमतेन—

तत्तद्रसोपकारिण्यस्तत्तद्देशसमुद्भवाः ।
पद्येषु रीतयो गौडी वैदर्भी मागधी तथा ॥

इत्यनेन त्रिप्रकारा । तत्र मागध्येव पाञ्चाली । मम्मटमतेन च—

माधुर्य्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।
ओजःप्रकाशकैस्तैस्तु परुषा कोमला परैः ॥
केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः ।

इत्यनेन च त्रिविधा ।

रुद्रटरीत्याचतुर्विधा-पाञ्चाली लाटीया गौडीया वैदर्भी चेति ।

भोजराजमतेन तु—

वैदर्भी चाथ पाञ्चाली गौडी चावन्तिका तथा ।
लाटीया मागधी चेति षोढा रीतिर्निगद्यते ॥

एवं स्थिते यथाबुद्धि यथासम्भावनं वा रीतिसंख्याव्यवस्थेत्यवगम्यते। परन्तु वामनेन हि समस्तवैदर्भ्यादिगुणाया उदाहरणम् "गाहन्ताम्" इति प्रदत्तम् । तत्र गाहन्तामिति-कर्तृकारकवाचकतिङः प्रक्रमे क्रियतामिति-कर्मकारकवाचकोपादानाद्भग्नप्रक्रमत्वस्य

( ५ ) सा रीतिः । तत्र—

( ६ ) माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका ॥ २ ॥
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ।

( ७ ) यथा—'अनङ्गमङ्गलभुवः-' इत्यादि ( ८०२ पृ० )

( ८ ) रुद्रटस्त्वाह—

---

स्पष्टमुपलब्ध्या कथं गुणत्वमिति संशये तन्न निर्वाहाय तुरीया काऽपि स्वीकरणीया सा च लाटीसंज्ञिका । ध्वनितञ्चेदं 'विशिष्टा पदरचना रीतिः १।२।७विशेषश्च क इति विशेषो गुणात्मा १।२।८ इति सूत्रयता तेनैव । आवन्तिकाऽपि—

अन्तराले तु पाञ्चाली वैदर्भ्यौ याऽवतिष्ठते ।
साऽऽवन्तिका समस्तैः स्याद्द्वित्रैस्त्रिचतुरैः पदैः ॥

इत्युक्तस्वरूपा लाट्यभिन्नैव । यद्यपि मम्मटरीत्या स्वरूपतश्चतुर्विधा रीतिर्नोपपद्यते तथापि शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः" लाटजनवल्लभत्वाच्च लाटानुप्रासः इत्युक्तरीत्या लाटानुप्रासानुबन्धिनी लाटीरीतिरिति स्पष्टमन्यत्र । मिथिलोत्कलवङ्गदेशोत्पन्नकवीनां रीतयस्तु यथासम्भवमेतास्वेवान्तर्भूता इति ताः पृथग् न गणितास्तथापि "मैथिली "औत्कली" "वङ्गीया" इत्यादिसंज्ञां परित्यज्य वैदर्भ्यादिसंज्ञाविधाने कारणन्तु तत्तद्रीतेः तत्तद्देशे प्रथमोत्पत्तिः प्राचुर्यं वेत्यवगम्यते ।

( ५ ) सन्देहनिराकरणाय कारिकास्थं सेति पदं विवृणोति—सेति । तत्र तासु रीतिषु मध्य इत्यर्थः ।

( ६ ) वैदर्भीं निरूपयति—माधुर्येति । माधुर्यस्य तत्संज्ञकस्य गुणस्य व्यञ्जकैर्वर्णैः मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान्विना । रणौ लघू चेतिनिर्दिष्टैर्वर्णैरित्यर्थः, ललितात्मिका शब्दतोऽर्थतश्च सुकुमारबन्धात्मिका, अवृत्तिः सर्वथा समासरहिता, अल्पवृत्तिः द्वित्रिमात्रपदघटितसमासविशिष्टा वा रचना वैदर्भी तदाख्या रीतिः इष्यते कविभिरितिशेषः ।

नव्यास्त्विमामित्थं लक्षयन्ति—

एभिर्विशेषवचनैः सामान्यैरपि च दूषणै रहिता ।
माधुर्यभारभङ्गुरसुन्दरपदवर्णविन्यासा ।
व्युत्पत्तिमुद्गिरन्ती निर्मातुर्या प्रसादयुता ।
तां विबुधा वैदर्भीं वदन्ति वृत्तिं गृहीतपरिपाकाम् ॥" इति ।

कवयस्त्वेतां पुनरेवं स्तुवन्ति—

सति वक्तरि सत्यर्थे सति शब्दानुशासने ।
अस्ति तन्न विना येन परिस्रवति वाङ्मधु ॥

तद्रीत्यात्मकं वस्तु वैदर्भीपदवाच्यमित्यर्थः ।

उदाहरति—यथेति । अनङ्गेति । व्याख्यातमिदमितः पूर्वम् (८०२ पृ० )

अत्र माधुर्यगुणव्यञ्जकवर्णद्वारा अनङ्गेत्यादिपदत्रयमात्रघटितसमासविशिष्टा सुकुमारार्थकपदयोजनया वैदर्भीरीतिः ।

( ८ ) रुद्रटस्त्विति । रुद्रटः काव्यालङ्कारकर्ता कविविशेषः ।

असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी ।
वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुविधेया ॥

( ९ ) अत्र दशगुणास्तन्मतोक्ताः श्लेषादयः ।

( १० ) ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः ॥ ३ ॥
समासबहुला गौडी —

( ११ ) यथा—'चञ्चद्भुज—' इत्यादि ( ४६४ पृ० )

असमस्तेति । असमस्ता सर्वथा समासशून्या, एकमसहायं समस्ता समासयुक्तं पदं यत्र सा तथोक्ता, श्लेषादिभिः शब्दनिष्ठत्वेनाभिमतैर्दशभिर्गुणैर्युक्ता, कादिवर्गाणां द्वितीया वर्णा चवर्गा इत्यर्थः बहुला प्रभूता यस्यां सा तथोक्ता, तथा स्वल्पो लघुः प्राण उच्चारणप्रयत्नो येषां तादृशानि अक्षराणि यस्यां सा तथोक्ता, वैदर्भी रीतिः सुविधेया सुष्ठुभावेन निबद्धव्या ।

अथ तन्मतेनोदाहरणं यथा—

यावन्निरञ्जनमजं पुरुषं जरन्तं सञ्चिन्तयामि सकले जगति स्फुरन्तम् ।
तावद्बलात्स्फुरति हन्त ! हृदन्तरे मे गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जुः ॥

अत्र हि चवर्ग्यजकारस्यैव प्रायेण स्वाम्येन सम्बन्धः । "अनङ्गमङ्गल" इत्यादयस्तु स्वल्पप्राणाक्षरेतिरीत्या ज्ञेयम् । वस्तुतस्तु क्वाचित्कोदाहरणत्वेन प्रायो लक्ष्यासम्भव एव अतश्चेदं लक्षणं न हृदयग्राहीतिग्रन्थकृतामाशयः । परन्तु वस्तुस्थितौ रुद्रटग्रन्थे चैतस्य चर्चापि नास्तीतिप्रक्षिप्तरूपेणैवायं पाठ इति समालोचयन्ति विमर्शकाः ।

( ९ ) काव्यप्रकाशकृन्मते स्वमते च माधुर्यादिगुणत्रयाधिकगुणाभावादाह—अत्रेति निरुक्तस्थल इत्यर्थः ।

( १० ) वैदर्भीस्वरूपं प्रदर्श्य क्रमप्राप्तं गौडीं लक्षयति—ओज इति । ओजःप्रकाशकैरोजोगुणसूचकैः ।

वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ ।
उपर्यधो द्वयोर्वा सरेफौ टठडढैः सह ॥

सकारषकारश्चेत्युक्तरूपैरित्यर्थः वर्णैः पुनराडम्बर उद्भटो बन्धः पदयोजना गौडी, तथा समासबहुला ओजोव्यञ्जकवर्णासत्त्वेऽपि केवलबहुतरपदवृत्तिसमासविशिष्टा रचना च गौडी संज्ञिका रीतिरिति द्विविधमेव गौडीस्वरूपमवगन्तव्यम् । एवञ्चाध्याहृतरचनेत्यस्य विशेषणतया समासबहुलेतिपदस्य स्त्रीत्वेन निर्देशः साधु सङ्गच्छते, द्विविधलक्षणास्वीकारे अनेकसमासविशिष्टकेवलौजःप्रकाशकवर्णरचनास्थले ओजोव्यञ्जकवर्णशून्यकेवलाधिकसमासस्थले च केवलरीतेरेवाप्रवेशः स्यात् यदि चैकलक्षणपरकत्वमेवाभिप्रेयेत तदा बन्ध इत्यस्य विशेषणतया समासबहुलेतिस्त्रीलिङ्गनिर्देशानुपपत्तिर्दुर्वारैवेतिविभावनीयम् । तत्र ओजोव्यञ्जकवर्णरचनास्थले वीरादीरसानामेव स्थितिनियमः, तेष्वेव ओजोगुणस्य नीर्णीतत्त्वात् । बहुतरसमासस्थले तु रसनियमो न कोऽपि वर्त्तते सर्वेष्वपि रसेषु बहुतरसमासस्य सम्भवात् ।

( ११ ) उदाहरति—यथेति । चञ्चद्भुजेति । अत्र ओजोव्यञ्जकवर्णरचनाद्वारा आडम्बरबन्धस्य विद्यमानत्वात् बहुतरसमासस्यापि विद्यमानत्वाच्च प्रदर्शितस्य द्विविधस्य

( १२ ) पुरुषोत्तमस्त्वाह—

( १३ ) 'बहुतरसमासयुक्ता सुमहाप्राणाक्षरा च गौडीया ।
रीतिरनुप्रासमहिमपरतन्त्रा स्तोकवाक्या च ॥'

( १४ ) वर्णैः शेषैः पुनर्द्वयोः ।
समस्तपञ्चषपदो बन्धः पाञ्चालिका मता ॥ ४ ॥

लक्षणस्य समन्वयः । यथा वा—

'दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत—
टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक् पर्यस्तकपालसम्पुटमिलद्ब्रह्माण्डभाण्डोदर—
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥'

अत्रापि द्विविधलक्षणस्य सङ्गतिः स्पष्टैव ।

बहुतरसमासाभावेऽपि ओजोव्यञ्जकवर्णैः केवलाडम्बररचनाया विद्यमानत्वेनैव गौडी यथा—

निजौजसोज्जासयितुं जगद्द्रुहामुपाजहीथा न महीतलं यदि ।
समाहितैरप्यनिरूपितस्ततः पदं दृशः स्याः कथमीश ! मादृशाम् ॥

'विकचकमलगन्धैरन्धयन् भृङ्गमालाः सुरभितमकरन्दं मन्दमावाति वातः ।
प्रमदमदनमाद्यद्यौवनोद्दामरामारमणरभसखेदस्वेदविच्छेददक्षः ॥'

अत्र पूर्वार्द्धे वैदर्भी रीतिः । उत्तरार्द्धं तु ओजोव्यञ्जकवर्णरचनाभावेऽपि केवलाधिकसमाससद्भावादेव गौडीरीतिः ।

( १२ ) मतान्तरं दर्शयितुमाह—पुरुषोत्तम इति । एतन्नामकः कश्चनालङ्कारिक इत्यर्थः ।

( १३ ) बहुतरेति । बहुतरसमासयुक्ता दीर्घसमासघटितबन्धा, सुमहानतिगुरुः प्राणो येषां तादृशान्यक्षराणि वर्णा यस्यां सा, स्वल्पप्राणव्यतिरिक्तवर्ग्यद्वितीयचतुर्थवर्णैः शषसहैश्च सहितेत्यर्थः, अनुप्रासस्य वक्ष्यमाणशब्दालङ्कारविशेषस्य महिमा आधिक्यं तस्य परतन्त्रा अधीना तद्विशिष्टेत्यर्थः, तथा स्तोकं परिमितम् अनेकसमासत्वेन वाक्यं "वाक्यं स्याद्योग्यते"त्यादिस्वरूपं यस्या सा तथोक्ता च रीतिर्गौडीया गौडी । अथैतन्मते चोदाहरणं यथा—

निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः ।
सीमानः प्रदरोदरेषु विरलस्वल्पाम्भसो या स्वयं
तृष्यद्भिःप्रतिसूर्यकैरजगरस्वेदद्रवः पीयते ॥ इत्यादि ।

अनुप्रासाभावस्थले अनेकवाक्यस्थले चातिप्रसक्त्येदमपि लक्षणमसमीचीनमेवेत्यभिप्रायः ।

( १४ ) अथ पाञ्चालीं लक्षयति—वर्णैरिति । द्वयोर्वैदर्भीगौड्यो रीत्योः शेषैर्भिन्नैः वैदर्भीगौड्योर्व्यञ्जकवर्णव्यतिरिक्तैः प्रसादमात्रव्यञ्जकैरित्यर्थः, वर्णैः पुनः, समस्तानि समासवन्ति पञ्च वा षड् वा परिमाणमेषामिति पञ्चषाणि पदानि यस्मिन् तादृशो बन्धो गुम्फः पाञ्चालिका पाञ्चाली नाम रीतिर्मता । अत्र स्वार्थे कप्रत्ययो न तु टिकण् एवं सति "अत इनि ठना"वितीनिप्रत्ययः स्यात् ।

( १५ ) द्वयोर्वैदर्भीगौड्योः ¹।

यथा—

( १६ ) 'मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया ।
मधु राङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥'

( १७ ) भोजस्त्वाह—

( १८ ) 'समस्तपञ्चषपदामोजःकान्तिसमन्विताम् ।
मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः ॥'

---

( १५ ) कारिकास्थं द्वयोरितिपदं विवृणोति—द्वयोरिति।

( १६ ) मधुरयेति । शिशुपालवधे षष्ठसर्गे वसन्तवर्णनेयम् । मधुरया प्रियया मनोहरयेति-वागीशाः, 'मधुरस्तु रसे विषे । मधुरं रसवत्स्वादु प्रियेषु मधुरोऽन्यवत्' इति विश्वः, मधुना वसन्तेन बोधिता प्रकाशिता प्रकाशितकुसुमेत्यर्थः, या माधवी वासन्ती तस्या मधुसमृद्धया मकरन्दसम्पदा समेधिता सम्यग्वर्धिता मेधा धारणावती बुद्धिर्यस्याः सा तया, धारणा च बुद्धेः स्वरमाधुर्यरूपा बोध्या । तथा उन्मादयतीत्युन्मादः स चासौ ध्वनिरिति तं बिभर्तीति उन्मदध्वनिभृत् तया उत्कृष्टहर्षजनकशब्दकारिण्येत्यर्थः, मधुकराङ्गनया भ्रमर्या, मुहुः पुनः पुनः, निभृताक्षरमव्यक्तवर्णं यथास्यात्तथा उज्जगे उत्कृष्टगानं चक्रे ।

अत्र क्वचित्समासाभावः प्रथमार्द्धे च समासदैर्घ्यम्, क्वचित्पुनः, माधुर्यगुणव्यञ्जका वर्णा क्वचित्पुनर्नापि । न च ओजोगुणव्यञ्जका वर्णा इति पाञ्चाली रीतिः । द्रुतविलम्बितछन्दस्तल्लक्षणं तु प्रागेव निरूपितम् ।

( १७ ) अत्रार्थे भोजराजसम्मतिं दूषयितुमाह—भोजस्त्विति । भोजः स्वनामधन्यः स्वरस्वतीकण्ठाभरणरचयिता महाराजः ।

( १८ ) समस्तेति । कवयो रीतिस्वरूपज्ञातारः, समस्तानि समासवन्ति पञ्च वा षड् वा परिमाणमेषामितिपञ्चषाणि पदानि यस्यां ताम् ओजःकान्तिभ्यां स्वसम्मताभ्यां गुणाभ्यां समन्वितां युक्ताम् , मधुरां माधुर्यव्यञ्जकवर्णघटिताम्, सुकुमारां कोमलवर्णयुक्ताम्, पाञ्चालीं तन्नामिकां रीतिं विदुः । केचित्तु—

"आश्लिष्टश्लथभावां च पुराणच्छायमाश्रिताम्" ।

इति पूर्वार्द्धे पाठभेदं कल्पयन्ति तदविचारितरमणीयम्, इदान्तनीन्तनोपलब्धे "निर्णयसागर"स्थपुस्तके प्राचीनपाठस्यैव स्थितत्वेन तद्भेदकल्पनाया अन्याय्यत्वात् । तत्पुस्तके चैतदुदाहरणम्—

गात्राविघातदलिताङ्गदजर्जराणां गण्डस्थलीलुलितकुण्डलताडितानाम् ।
क्षोभस्फुरन्मुकुटकोटिविघट्टितानां नादोऽभवज्झणझणामुखरो मणीनाम् ॥

उदाहृत्य "सेयं कान्त्यभावादाश्लिष्टश्लथपुराणच्छाया माधुर्यसौकुमार्यवती समस्तपदा पाञ्चालीरीतिः" इत्यभिहितं महाराजैः । स्पष्टमुदाहरन्तु—

दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं नखानां पाण्डित्यं प्रकटयतु कस्मिन् मृगपतिः॥ इति

( १९ ) लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरे स्थिता ।

यथा—

( २० ) 'अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्द-
न्कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥'

( २१ ) कश्चिदाह—

इयमसौ तरकायतलोचना गुरुसमुन्नतपीनपयोधरा ।
पृथुनितम्बभरालसगामिनी प्रियतमा युवजीवितहारिणी ॥

इति वा समुचितम् ।

प्रदर्शितलक्षणे ओजःकान्तिसमुच्चिताभ्यामेव समन्विताभ्यामित्यर्थकत्वे मधुरयेत्युदाहरणे ओजसोऽसद्भावादव्याप्तेर्नेदं निर्दुष्टं लक्षणम् । ओजसा कान्त्या वा समन्विताभित्यर्थस्वीकारे तु यत्रौजोगुणसमन्वितत्वं तत्र सुकुमारत्वस्य गगनकुसुमायमानत्वाल्लक्षणार्थस्यैव समुपपत्तिर्न स्यादितिग्रन्थकृतामभिप्रायः ।

( १९ ) लाटीं निरूपयति--लाटीति । वैदर्भीपाञ्चाल्यो रीत्योः अन्तरे मध्ये

"अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च" इत्यमरः ।

स्थितारीतिस्तु लाटी । वैदर्भीपाञ्चाल्योर्लक्षणाक्रान्ता लाटीरीतिरित्यर्थः ।

( २० ) उदाहरति--अयमिति । पुरोवर्त्तिदिवाकरोदयवर्णनेयम् । पद्मिनीनां कमलवनानां कमलिनीनां वा 'पद्मिनी पद्मसङ्घाते स्त्रीविशेषे सरोऽम्बुजे" इति मेदनी मुद्राभञ्जनः सङ्कोचनाशकः प्रकाशक इत्यर्थः, उदयगिरेरुदयाचलस्य या वनाली वनश्रेणी " वीथ्यालिरावलिः पंक्तिः श्रेणी लेखास्तु राजयः" इत्यमरः, तस्या बालमन्दारपुष्पं नवविकसितसुरद्रुमविशेषस्य पुष्पम् , अरुणवर्ण इत्यर्थः,

पञ्चते देवतरवो मन्दारः पारिजातकः । सन्तानःकल्पवृक्षश्च पुंसि वा हरिचन्दनम् , इत्यमरः

विरहेण रात्रौ परस्परं विच्छेदेन विधुरं विकलं यत् कोकद्वन्द्वं चक्रवाकमिथुनं तस्य बन्धुः पुनः परस्परसंगसम्पादकत्वेन मित्रम् , रात्रौ हि चक्रवाकमिथुनं परस्परं वियुक्तं सूर्य्योदये संयुक्तं भवतीतिप्रसिद्धिः । सूर्य्यमालोक्य परस्परं संयुक्तं भवतीतिबन्धुत्वम् । तथा कुपितस्य क्रुद्धस्य कपेर्वानरस्य कपोलक्रोडवत् कपोलमध्यभागवत् ताम्रः रक्तवर्णः, कपीनां गण्डः स्वभावत एव रक्तः कोपे त्वत्यन्तरक्त इतिसूचयि कुपितेतितुं कपिविशेषणम् , अयं सूर्य्यः विशेषणानां योग्यताबलादयमित्यनेन सूर्य्यः परामृश्यते, तमांसि अन्धकाराः, विभिन्दन् नाशयन् पर्वतान् पविरिवेतिशेषः, उदयति उदयते अनुदात्तेत्वप्रयुक्तमात्मनेपदमनित्यमित्यवधेयम् । मालिनीच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

अत्र मसृणानां 'ञ' 'न्द' 'न्द्व' 'न्धु' 'न्द' इत्येतेषां वर्णानां अल्पसमासघटितानां पदानां च सत्त्वाद्वैदर्भीमिश्रिता पाञ्चालीति लाटीरीतिः ।

( २१ ) अत्र मतान्तरं दर्शयितमाह—कश्चिदिति । आलङ्कारिक इति शेषः ।

( २२ ) 'मृदुपदसमाससुभगा युक्तैर्वर्णैर्न चातिभूयिष्ठा ।
उचितविशेषणपूरितवस्तुन्यासा भवेल्लाटी ॥'

( २३ ) अन्ये त्वाहुः—

( २४ ) 'गौडी डम्बरबद्धा स्याद्वैदर्भी ललितक्रमा ।
पाञ्चाली मिश्रभावेन लाटी तु मृदुभिः पदैः ॥'

( २५ ) **क्वचित्तु वक्त्राद्यौचित्यादन्यथा रचनादयः ॥ ५ ॥**

( २६ ) वाक्त्रादीत्यादिशब्दाद्वाच्यप्रबन्धौ । रचनादीत्यादिशब्दाद्वृत्तिवर्णौ । तत्र वक्त्रौचित्याद्यथा—

( २२ ) मृदुपदेति । मृदूनां मसृणानामेव पदानां समासेन सुभगा मनोहरा, युक्तैः संयुक्तवर्णैः अतिभूयिष्ठा अत्यधिका नचानेकसंयुक्तवर्णैर्विशिष्टेत्यर्थः, उचितैः प्रकृतोपयुक्तैः विशेषणैः पूरितस्य परिपुष्टात्मनो वस्तुनो वर्णनीयस्य न्यासो निर्देशो यस्यां सा तथोक्ता घटना लाटीरीतिर्भवेत् ।

मृदुपदानामेव समासस्यावश्यम्भावित्वे सर्वमतसिद्ध "अयमुदयति" इत्युदाहरणस्थले "कोकद्वन्द्व" कपोलक्रोडा" इत्यत्र द्वयोरपि प्रगाढपदानां समासादव्याप्तिरिति नैतल्लक्षणं साध्वित्यभिप्रायः ।

( २३ ) अथ चतसृणामपि रीतीनां त्वरितमेव स्वरूपावबोधायाभीप्सितार्थमुपस्थापयति—अन्ये त्विति । अन्ये आलङ्कारिका इति शेषः ।

( २४ ) गौडीति । डम्बर उद्भटो बन्धो रचना यस्यां सा तथोक्ता रीतिः गौडी स्यात्, ललितो मधुरः क्रमो बन्धो यस्यां सा तादृशी रीतिर्वैदर्भी स्यात्, मिश्रभावेन गौडीवैदर्भ्योः सम्पर्केण सम्पन्ना रीतिः पाञ्चाली स्यात्, तथा मृदुभिरेव पदैस्तु संयुता रीतिर्लाटी स्यात् । यदा वैदर्भीरीतिप्रक्रान्तप्रबन्धमध्ये—कुपितो वक्ता उद्धतो वाच्यो भवति—तदा प्रक्रान्तरीतिं परित्यज्य—गौडीरीतिरनुसरणीयेति तेषामाशयः ।

परन्त्वीदृशलक्षणस्वीकारेऽपि उद्भटप्रयोगरहितसमासमात्रबाहुल्यस्थले गौडी न स्यात्, वैदर्भी पाञ्चाली च समासे तद्रहिते वा स्यादितिसंशयः, मृदुभिरेव केवलपदैर्लाटीस्वीकारे सर्ववादिसिद्धयदाहरणे 'अयमुदयति' इत्याद्युदाहरणे "कोकद्वन्द्वबन्धु" कपोलक्रोड" इत्युभयोः प्रगाढपदसद्भावाल्लाटी न स्यात्तस्मादिदमपि लक्षणमसमञ्जसमेवेत्याशयः ।

( २५ ) क्वचिद्वक्तृवाच्यप्रबन्धवशाद् प्रकृतिविपरीता अपि रचनादयो विधेया इत्युपपादयितुमाह—क्वचिदिति । क्वचित्तु कस्मिंश्चित्स्थले तु वक्त्रादीनां वक्तृप्रभृतीनाम् औचित्यात् प्रकृत्यनुसारेण समुचितत्वात् अन्यथा योग्यविपरीता अपि रचनादयो रीतिप्रभृतयः स्युः । एवं सति न प्रतिकूलवर्णत्वं दोष इत्याशयः ।

( २६ ) कारिकास्थाद्यशब्दाभ्यां ग्राह्यान् ग्राहयति—वक्त्रादीति । वाच्यो वर्णनीयप्रबन्धो महाकाव्यनाटकादिः । वृत्तिः समासः, वर्णश्चाक्षरम् उभयत्र ग्राह्याविति शेषः

( २७ ) 'मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥'

( २८ ) अत्र वाच्यक्रोधाद्य(न)भिव्यञ्जकत्वेऽपि भीमसेनवक्तृत्वेनोद्धता रचनादयः ।

---

( २७ ) उदाहरति—मन्थायस्तार्णवेति । वेणीसंहारनाटके प्रथमेऽङ्के रणस्थाने दुन्दुभिध्वनिमाकर्ण्य भीमसेनस्य प्रश्नोक्तिरियम् । मन्थो मन्थनदण्डस्तेन आयस्तं दूरमुत्क्षिप्तं यत् अर्णवाम्भः समुद्रजलं तेन प्लुतं पूर्णं यत् कुहरं गुहा तत्र चलतो भ्रमतो मन्दरगिरेर्यो ध्वानः शब्दः तद्वत् धीरो गम्भीरः, गर्जन्तो ये प्रलयकालीना घना मेघास्तेषां घटाः समूहास्तासाम् अन्योन्यं परस्परं यः संघट्टः सङ्घर्षः स इव चण्डः प्रचण्डः भयङ्कर इत्यर्थः, तथा कृष्णाया द्रौपद्याः "कृष्णा स्याद्द्रौपदी नीली कणा द्राक्षासु योषिति" इति मेदिनी क्रोधस्य य अग्रदूतः भविष्यदर्थस्य प्रथमावेदकः, यद्वा अग्रः प्रधानो दूतः ।

अग्रं पुरस्तादुपरि परिमाणे पलस्य च ।
आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम्"
अधिके च प्रधाने च प्रथमे चाभिधेयवत्" इतिमेदिनी,

तथा कुरुकुलस्य दुर्योधनादेः निधनार्थं मृत्यवे उत्पातनिर्घातवातः औत्पत्तिकनिर्घातवायुशब्दस्वरूपः, मेघवातयोः सङ्घट्टजो ध्वनिरशुभसूचको निर्घात उच्यते । उक्तं च—

यदाऽन्तरिक्षे बलवान् मारुतो मरुता हतः ।
पतत्यधः स निर्घातो जायते वायुसम्भवः ॥

तथा कोणो वादनदण्डः, 'कोणो वीणादिवादनम्' इत्यमरः

कोणो वाद्यप्रभेदे स्याद्वीणादीनां च वादने ।

एकदेशे गृहादीनामस्त्रेऽपि लगुडेऽपि च" इति मेदिनी च, तदाघातेषु तत्ताडनेषु सत्सु, अथवा—

"भेरीशतसहस्राणि ढक्काशतशतानि च ।
एकदा यत्र हन्यन्ते कोणाघातः स उच्यते ॥"

इति भरतमुनिपरिभाषितेषु शब्देषु सत्सु, तथा योऽस्मत्सिंहनादस्तस्य यत् प्रतिरसितं प्रतिध्वनिस्तत्सखः तन्मित्रं तत्तुल्य इत्यर्थः । अयं दुन्दुभिः दुन्दुभिशब्दः केन अतिबलशालिना ताडनेनोत्पादितः, अतएव मन्दरध्वानसिंहनादप्रतिरसिताभ्यां तुल्यत्वमुपपन्नम् । स्रग्धराच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

( २८ ) वक्त्रौचित्यमुपपादयति—अत्रेति । वाच्यस्य अर्थस्य प्रश्नरूपस्येतितात्पर्यम्, क्रोधादीत्यादिपदेनोत्साहजुगुप्सयोरपि परिग्रहः । भीमसेनेति । एतेन भीमसेनस्योद्धतप्रकृतित्वं व्यञ्जितम् । रचनादय इत्यादिपदेन दीर्घसमासमहाप्राणप्रयत्नवर्णानां संग्रहः अयम्भावः—अत्र वाच्यस्य प्रश्नरूपत्वेन न क्रोधादिदीप्तरसव्यञ्जकत्वम् । प्रश्न-

( २९ ) वाच्यौचित्याद्यथोदाहृते 'मूर्धव्याधूयमान—' इत्यादौ ।

( ३० ) प्रबन्धौचित्याद्यथा नाटकादौ रौद्रेऽप्यभिनयप्रतिकूलत्वेन न दीर्घसमासादयः ।

( ३१ ) एवमाख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः ।

न्धश्च नाटकात्माभिनयबोधनीयार्थक इति दीर्घसमासत्वं प्रतिकूलम्, दीर्घसमासेनार्थप्रतिपत्तौ विलम्बात् अभिनयेन झटिति बोधनासम्भवाच्च, क्रोधाभावेन तद्व्यञ्जकदीर्घसमासादेरनौचित्याच्च; तथापि वक्ता भीमसेन इति वक्तुरौद्धत्यद्योतनाय उद्धता रचनेति । यदि चोक्तोदाहरणे तथाविधपदस्य उद्धतत्वेनैव वाच्योद्धतत्वादुद्धतरचनादयो युज्यन्ते, अलमुद्धतप्रकृतिकभीमसेनवक्तृत्वकल्पनयेतिचेत् ? "भो लङ्केश्वर ! दीयतां जनकजा रामः स्वयं याचते" इत्यादिकमेव विशुद्धोदाहरणम् । अत्र हि वाच्यस्योत्साहद्योतकत्वेऽपि मृदुप्रकृतिकरामवक्तृत्वेन मृदुला रचनादयः ।

( २९ ) क्वचित्तु वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादय इति दर्शयितुमाह—वाच्यौचित्यादिति (क) 'मूर्द्धव्याधूयमान' इत्यत्र हि ताण्डवं वाच्यम्, तदपि शम्भोः, इति तस्य स्वतो लोकसंहारकर्तृत्वादुद्धतत्वम्, तथाच मृदुप्रकृतिकसूत्रधारवक्तृत्वेऽपि तादृशताण्डवस्योद्धतत्वेन उद्धतवाच्यत्वादुद्धता रचनादयः ।

यथा वा—

> प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयापवात—
> त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।
> कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजं ।
> झाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥

छलितरामनाम्नि नाटके पद्यमिदम् ।

अत्र वक्ता वैतालिकः प्रबन्धश्चाभिनयात्मक इति दीर्घसमासोद्धतरचनादयो यद्यपि नोचिताः, तथापि वाच्यस्य कुम्भकर्णोत्तमाङ्गस्य भीमत्वेनौजस्वितया औद्धत्यादौद्धत्यव्यञ्जनयोद्धता रचनादय इति स्पष्टं प्रदीपादौ ।

( ३० ) प्रबन्धमात्रस्य क्वचिदौचित्यं प्रधानमिति दर्शयति—प्रबन्धेति । नाटकादावित्यादिपदेन प्रकरणादीनां परिग्रहः । रौद्रेऽपीति । शृङ्गारादिमृदुलरसेषु का कथा उद्धते रौद्रेऽपीत्यर्थः । अभिनयस्य शरीरव्यापारादिभिर्दृश्यपदार्थज्ञापकस्य प्रतिकूलत्वं विलम्बकत्वं तेन । दीर्घसमासादयः रौद्रानुरूपा अपीतिशेषः । न निबध्यन्ते कविभिरितिशेषः । एतच्च गद्यपरमेव पद्ये दीर्घसमासादावपि प्रबन्धप्रतिकूलत्वासम्भवात् । एतेन उत्तररामचरितादौ गद्ये दीर्घसमासादयः प्रतिकूलवर्णताख्यदोषग्रस्ता एवेतिव्यञ्जितम् ।

( ३१ ) उक्तन्यायमन्यत्राऽपि दर्शयति—एवमिति । आख्यायिकायाम् आख्यायिका च प्रबन्धविशेषः-बाणभट्टादिकृतो हर्षचरितादिः । तल्लक्षणन्तूक्तं प्रागेव "आख्यायिकाकथावत् स्यात्" इत्यादिना ( ६१३ पृ० ) । मसृणवर्णः मृदुलवर्णः, आदिपदात् यथासम्भवसंयुक्तवर्णमाधुर्यप्रतिपादकवर्णादीर्घसमासाभावानां परिग्रहः । अयम्भावः—आख्या-

---

( क ) अयञ्च श्लोको दुःश्रवत्वस्य गुणत्वकथनाऽवसरे सप्तम परिच्छेदे (पृ०) समस्तो ज्ञेयः ।

इति, लक्ष्मी' टिप्पण्यां नवम ।

( ३२ ) कथायां रौद्रेऽपि नात्यन्तमुद्धताः । एवमन्यदपि ज्ञेयम् ।

( ३४ ) इति साहित्यदर्पणे रीतिविवेचनो नाम नवमः परिच्छेदः ।

यिकायां हि शृङ्गारेऽपि व्यङ्ग्येऽनुद्धतेऽपि वक्तरि नातिमृदुला वर्णादयः प्रत्युत विकटबन्धवत्त्वेनैव शोभावत्त्वम्, आख्यायिकायां गद्यप्राधान्यात् गद्ये च विकटवर्णस्यैवाभ्यर्हितत्वात् । विप्रलम्भकरुणयोस्तु तस्यामपि न दीर्घसमासादि तयोरतिसौकुमार्यादिति स्पष्टमन्यत्र । उक्तं च ध्वनिकृताऽपि--

रसबद्धोक्तमौचित्यं भाति सर्वत्र संश्रिता ।
रचना विषयापेक्षं तत्तु किञ्चिद्विभेदवत् ॥

उदाहरणं यथा दशकुमारचरिते--"किञ्चिद्विकसिदिन्दीवरकह्लारकैरवराजीवराजि" इत्यादि । एतच्च कदाचित्सम्भवपरत्वेन प्रदर्शनमात्रम् अनेकत्रैतद्व्यभिचारस्योपलम्भात् । एवमग्रेऽपि ।

( ३२ ) कथायामिति । उद्धता वर्णा इति शेषः । कथाप्रबन्धस्य गद्यमयत्वेऽपि शृङ्गाररसमयत्वाद्रौद्रादिरसप्रवेशेऽपि नात्यन्तमुद्धतरचनादयो विधेया वर्णनीयस्य सुखप्रतिपत्तेरेवोद्देश्यत्वादित्याशयः । उदाहरणं यथा कादम्बर्याम्--'निशितत्रिशूलदारितान्धकमहासुर' इत्यादि ।

( ३३ ) एवमिति । यत्र केवलशृङ्गारिनायकस्तस्य कृत्रिमक्रोधे रौद्रेऽपि नात्यन्तमुद्धता वर्णाः । यथा शाकुन्तले--

कः पौरवे वसुमतीं शासति शासतरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥

एवं मुक्तकादौचित्यमनुसरणीयम् । तत्र मुक्तकेषु कवेः रसवत्त्वाभिनिवेशित्वे रसाश्रयमौचित्यं, यथा-"शून्यं वासगृहम्" इत्यादौ ( ३१ पृ० ) । रसाभिनिवेशित्वाभावे तु कामचारः । संदानितकादिषु काव्यपरिसमाप्तेर्यतो नैकट्याभावः अतो दीर्घमध्यसमासताऽपि तत्र कार्य्या, प्रबन्धगतेषु पुनस्तेषु प्रबन्धोचिता एव रचनादय इत्यादिज्ञेयमिति प्रदीपादिषु स्पष्टम् ।

( ३४ ) प्रकरणमुपसहरन्नाह--इतीति । रीतिविवेचनं रीतीनां पदसङ्घटनविशेषरूपाणां वैदर्भीप्रभृतीनां विवेचनं यत्र स तादृशः ।

( अत्र मूलकारिकाः=५ पूर्वाभिः सह ३९१ उदाहरणानि=२ पूर्वैः सह ४९८ )

इति वत्सकुलावतंस-वैयाकरणकेसरि-बदरिनाथशर्मात्मज-दैवज्ञशिरोमणि-ठक्कुरोपनामक श्रीलोकनाथशर्म्मात्मज-साहित्यव्याकरणाचार्य-श्रीकृष्णमोहनशास्त्रि-विरचितायां 'लक्ष्मी' नामिकायां साहित्यदर्पणटीकायां नवमः परिच्छेदः

# दशमः परिच्छेदः ।

(१) अथावसरप्राप्तानलंकारानाह—

(२) शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः ।
रसादीनुपकुर्वन्तोऽलंकारास्तेऽङ्गदादिवत् ॥ १ ॥

---

(१) अधुनाऽलङ्कारनिरूपणे अवसरसङ्गतिमुपपादयति—अथेति । अत्राथशब्दस्य 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्येष्वथो अथ'' इत्यमरादनेकार्थत्वेऽपि अलङ्कारनिरूपणरूपकार्यान्तरारम्भे, अत्यन्तगहनस्य तस्य मङ्गलार्थं वा न त्वानन्तर्य्यार्थे, तथासति रीतिनिरूपणानन्तर्य्यरूपप्रतिपादनक्रमेणैव लब्धतया तद्द्योतनाय पुनरथशब्दोपादानस्य निरर्थकत्वं स्यात् । निरूपणोचितसमयोऽवसरः, तथाच "उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः" इत्युद्देश्यक्रमेण गुणनिरूपणानन्तरं प्राप्तमप्यलङ्कारनिरूपणं "सूचीकटाहन्यायेन" त्यक्त्वा रीतिनिरूपणे च कृतेऽपि प्राप्तो योऽवसरस्तेन प्राप्तान् अवसरसङ्गत्या निरूपयितुं युक्तान् अलङ्कारानाह प्रतिपादयति सामान्यविशेषाभ्यां मूलकार इति शेषः ।

तर्कवागीशास्तु—"प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तिरवसरः" प्रकृते सूचीकटाहन्यायेन प्रथमं रीतिनिरूपणजिज्ञासा जाता अस्यैवोद्देश्यक्रमप्राप्तालङ्कारनिरूपणप्रतिबन्धिका तन्निवृत्तावलङ्कारनिरूपणजिज्ञासा जायत इति भावः" इत्याहुः ।

(२) सामान्यलक्षणेऽज्ञाते तद्विशेषलक्षणज्ञानस्याऽप्यनुदयादादावलङ्काराणां सामान्यलक्षणं दर्शयति—शब्दार्थयोरिति । रसादिधर्मस्वरूपाणां रसवदाद्यलङ्काराणामपि वक्ष्यमाणत्वेनात्र शब्दार्थयोरित्युपलक्षणं ज्ञेयम् । अस्थिरा काव्येष्वनियतवृत्तयः शब्देऽर्थे वा सत्व एव अलङ्कारात्मकतद्धमरपि वर्त्तितव्यमिति नियमरहिता इत्यर्थः, एतेन निरलङ्कारमपि काव्यमस्तीतिसूचितम् । तथा परम्परया शब्दार्थधर्माणां गुणानां च वारणमिति च सूचितम् । धर्म्मा अनुप्रासोपमादयो न तु गुणास्तेषामस्थिरत्वाभावात् शोभां काव्यस्य सौन्दर्य्यम् अतिशाययन्ति अतिशयेन न जनयन्तीति शोभातिशायिनः काव्यसौन्दर्य्यातिशयप्रयोजका इत्यर्थः, तेन वाच्यत्वप्रमेयत्वादीनामतद्रूपाणां नालङ्कारत्वम्, रीतेः शब्दशोभाजनकत्वेऽपि गुणालङ्कारवच्छोभातिशयजनकत्वं नास्तीति न तत्रातिव्याप्तिः । रसादीनित्यादिपदेन रसाभास-भाव-भावाभास-सन्धिशवलतानां परिग्रहो बोध्यः । एवंच यत्र—

तरङ्गनिकरोन्नीततरुणीगणसङ्कुला । सरिद्वहतिकल्लोलवाहव्याहततीरभूः ॥

इत्यादौ रसानुसन्धानराहित्यम्, तत्रोक्तिवैचित्र्यमात्रप्रयोजकरूपकानुप्रासालङ्कारपदप्रयोगे गौण एवेत्यवधेयम् । उपकुर्वन्त उत्कर्षयन्तः । अलङ्क्रियते भूष्यते काव्यमेभिरित्यलङ्काराः, करणव्युत्पत्त्या निष्पन्नोऽयमलङ्कारः । साहित्यशास्त्रापरपर्य्यायोऽलङ्कारशब्दस्तु भावसाधन इत्युभयोर्भेदः । लौकिकदृष्टान्तमाह—अङ्गदादिवदिति । अङ्गदं केयूरम् आदिपदात् हारादीनां परिग्रहः । तथाचात्र परस्परमन्वयस्तु—अस्थिराः शोभातिशायिनो रसादीनुपकुर्वन्तः शब्दार्थयोर्ये धर्मास्ते अङ्गदादिवदलङ्कारा इति । एवञ्च—साक्षात् परम्परया वा रसाद्युत्कर्षजनकत्वे सति अनियतशोभातिशायिकाव्यधर्म्मत्वमलङ्कारत्वम् । रसवदाद्यलङ्काराणां साक्षादेव रसाद्युत्कर्षजनकत्वम्, अनुप्रासोपमादीनां च स्वाश्रयव्यङ्ग्यत्वरूपपरम्परासम्बन्धेन रसाद्युत्कर्षजनकत्वम् । काव्यशब्देनात्र स्वशरी-

( ३ ) यथा अङ्गदादयः शरीरशोभातिशायिनः शरीरिणमुपकुर्वन्ति, तथानुप्रासोपमादयः शब्दार्थशोभातिशायिनो रसादेरुपकारकाः ।

( ४ ) अलङ्कारा अस्थिरा इति नैषां गुणवदावश्यकी स्थितिः ।

---

रभूतौ शब्दार्थौ स्वात्मभूता रसादयश्चेति समूह एव प्रतिपाद्यते इति सर्वत्र लक्षणसमन्वयः । सत्यन्तदलानुपादाने महाकविकालिदासादिरचितरवादिरूपकाव्यधर्मेष्वतिप्रसङ्गः स्यादतस्तदुपादानम् । अनियतविशेषणोपादानेन गुणेषु नातिव्याप्तिः, यस्य कस्यापि गुणस्य तत्रावश्यम्भाव्यत्वेनानियतत्वाभावात् । शोभातिशायिविशेषणादानेन च रीतिषु नातिव्याप्तिः, रीतीनां शब्दशोभामात्रजनकत्वमेव न तु शोभातिशयजनकत्वमित्यवगन्तव्यम् ।

केचित्तु--अलङ्कारस्य लक्षणत्रयं विदधते तथाहि--रसोपकारकत्वे सति तदवृत्तित्वम् । तथात्वे सति रसानियतस्थितिकत्वम्, अनियमेन रसोपकारकत्वं चेति वदन्ति । कुवलयानन्दचन्द्रिकायां तु--अलङ्कारत्वं च रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयितासम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम् । अनुप्रासादिविशिष्टशब्दज्ञानादुपमादिविशिष्टार्थज्ञानाच्च चमत्कारोदयात्तेषु लक्षणसमन्वयः । शब्दार्थयोर्ज्ञाननिष्ठचमत्कृतिजनकतायां विषयितयावच्छेदकत्वे तद्विशेषणीभूतानुप्रासोपमादेस्तन्निष्ठावच्छेदकतावच्छेदकत्वात् । रसवदाद्यलङ्कारसङ्ग्रहाय व्यङ्ग्योपमादिवारणाय च भेदद्वयगर्भसत्यन्तोपादानम् ।

( ३ ) कारिकास्थानामन्यशब्दानां सौलभ्यमभिप्रेत्य केवलमङ्गदादिवदितिसादृश्यमात्रं विवृणोति--यथेति । शरीरस्य शोभातिशायिनः शोभातिशयोत्पादकाः, शरीरिणं तच्छरीरगततदन्तर्यामिनम्, उपकुर्वन्ति सन्तोषजननेनानुकूलयन्ति । अनुप्रासादयः शब्दालङ्काराः शब्दशोभाम् उपमादयश्चार्थालङ्कारा अर्थशोभामतिशाययन्तीत्युभयकोटिप्रदर्शनाय द्वयोर्ग्रहणम् । उपकारका उत्कर्षयितारः । ये धर्माः । अत्रेदं रहस्यम्--यथात्मनः स्यावलम्बनमात्मा शरीरं पुनरन्यत् तथा काव्यत्वस्यालम्बनं रसः वाक्यं पुनस्तदन्यत् । तत्र यत्र रसस्य संभवस्तत्र तमुपकुर्वन्ति यत्र तस्यासम्भवस्तत्रोक्तिवैचित्र्यमात्रावहाः । यथा अङ्गदहारादयः कामिनीनां सौन्दर्य्यसत्वे एव तदङ्गानामुत्कर्षकाः कुरूपाङ्गे तु दृष्टिवैचित्र्यमात्रहेतवस्तथेति । क्वचित्तु--सन्तमपि रसं नोपकुर्वन्ति यथा अति सुकुमारनायिकाङ्गे ग्रामीणालङ्काराः ।

( ४ ) अस्थिरा इत्यस्य व्यावृत्तिं दर्शयति--अस्थिरा इति । एषाम् अनियतस्थितिकानामलङ्कारत्वेन स्वीकृतानां शब्दार्थधर्माणाम् । गुणवद् गुणानामिव आवश्यकी निश्चिता । एवञ्च रसादिमति शब्दे अर्थे च यस्य कस्यापि गुणस्य निश्चितव विद्यमानत्वम्, नच तथालङ्काराणाम्, तेषां कादाचित्कत्वादिति गुणा एव अस्थिरा इत्यनेन निवर्त्यन्त इत्याशयः । वस्तुतस्तु रीतीनां गुणव्यञ्जकवर्णादिघटितत्वादस्थिरत्वेनालङ्कारत्वप्रसक्तौ तद्वारणाय "शोभातिशायिन" इत्यस्य विलक्षणवैचित्र्याधायकत्वमितितदर्थकरणम्, अवश्यं तेनैव गुणानामपि वारणसंम्भवादस्थिरा इति विशेषणमनुपादेयमेवेत्यवधेयमिति-तर्कवागीशाः ।

तदेवं गुणालङ्कारयोर्भेदे व्यवस्थिते यद्भट्टोद्भटादिभिः "समवायवृत्त्या शौर्य्यादयः संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेदः ओजःप्रभृतीनामनुप्रासोपमादीनां

( ५ ) शब्दार्थयोः प्रथमं शब्दस्य बुद्धिविषयत्वाच्छब्दालंकारेषु वक्तव्येषु शब्दार्थालंकारस्यापि पुनरुक्तवदाभासस्य चिरन्तनैः शब्दालंकारमध्ये लक्षितत्वात्प्रथमं तमेवाह—

चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डरिकाप्रवाहेणैवैषां भेद इत्युक्तमयुक्तम्। तेषामयमभिप्रायः—लौकिका गुणालङ्काराः शौर्य्यादिहारादयः समवेतत्वसंयुक्तसम्बन्धेन तिष्ठन्तीति तेषां भेदोऽस्तु काव्ये पुनरलौकिकानां गुणालङ्काराणां माधुर्य्यानुप्रासोपमादीनामेकेनैव समवायसम्बन्धेनाऽवस्थितिरिति भेदोऽनुपपन्नः तस्मादलौकिकयोर्गुणालङ्कारयोर्भेदाभिधानं गड्डलिकाप्रवाहन्यायेन। गड्डरं मेषमनुगच्छतीति गड्डरिका मेषानुगतमेषपंक्तिस्तस्याः प्रवाहन्यायेन यथा काचिदेका मेषी केनचिद्धेतुना पुरो गच्छति अन्यास्तु विनैव निमित्तविचारं तामनुगच्छन्ति अग्रिमायाः कूपादिपाते सति इतरा अपि कूपादौ पतन्ति च तथा केनापि प्राक्तनेनालङ्कारिकेण गुणालङ्कारौ कयाचिद्भ्रान्त्या भिन्नत्वेनोक्तौ अन्ये आधुनिकास्तु विनैव हेतुविचारं तदनुसारेण तद्भेदं वदन्तीति तदसमञ्जसमेवेति अवधेयमिति प्रदीपोद्योतादौ स्पष्टम्।

यत्तु वामनेन गुणालङ्कारयोर्लक्षणमित्थमुक्तम् "काव्यशोभायाः कर्त्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः" इति तदयुक्तम्—यतः समस्तैर्गुणैः काव्यव्यवहार उत कतिपयैः? यदि समस्तैस्तत्कथमसमस्तगुणा गौडी पाञ्चाली च रीतिः काव्यस्यात्मा—अयम्भावः—वामनेन हि रीतिरात्मा काव्यस्य सा च पदसङ्घटनात्मिका त्रिविधा वैदर्भी गौडी पाञ्चाली च सर्वगुणव्यञ्जकवर्णवती वैदर्भी प्रसादौजोव्यञ्जकवर्णवती गौडी माधुर्य्यप्रसादवद्वर्णयुता पाञ्चाली रीतिधर्माः गुणाः शब्दार्थोभयरूपं काव्यं शोभयन्ति शब्दार्थाश्रया अलङ्कारास्तच्छोभाया अतिशयं कुर्वन्तीत्युक्तम्। तत्र वैदर्भ्यां माधुर्य्यस्य प्रसादस्य च सत्त्वेन सम्भोगशृङ्गारादौ लेशत ओजःसत्त्वेऽपि क्षत्यभावेन सैव काव्यस्यात्मा स्यात् न तु गौडी पाञ्चाली च तत्र माधुर्य्याद्यभावेन समस्तगुणाभावाच्छोभाया अनुत्पत्तेः शोभाहीने च काव्यत्वस्यैवाभावादिति स्पष्टमन्यत्र।

अथ यदि कतिपयैस्ततः—

'अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः।'

इत्यादावोजःप्रभृतिषु गुणेषु सत्सु काव्यव्यवहारप्रसङ्गः। न ह्यस्मन्मत इव वामनमतेऽपि तद्व्यवहारेऽलङ्कारापेक्षा वामनेन गुणमात्रेणैव काव्यव्यवहारस्वीकारादिति भावः।

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी। अस्या रदच्छदरसो न्यक्करोति सुधारसम्॥

इत्यादौ विशेषोक्तिव्यतिरेकौ पूर्वार्द्धोत्तरार्द्धयोस्तल्लक्षितौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्त्तकौ तस्मादुभयमप्यसमीचीनमेव।

( ६ ) (क) शब्दालङ्कारनिरूपणस्य प्राथमिकत्वे युक्तिमुपपादयन् तत्रापि शब्दार्थोभ-

टि० ( क ) शब्दालङ्काराश्च षट्। तदुक्तं काव्यप्रकाशसङ्केते सोमेश्वरेण—

"वक्रोक्तिरप्यनुप्रासो यमकं श्लेषचित्रके। पुनरुक्तवदाभासः शब्दालंकृतयस्तु षट्"

सरस्वतीतीर्थस्तु—

"पठन्ति शब्दालङ्कारान् बहूनन्यान्मनीषिणः। परिवृत्तिसहिष्णुत्वान्न ते शब्दैकभागिनः॥" इत्याह।

( ६ ) आपाततो यदर्थस्य पौनरुक्त्येन भासनम् ।
पुनरुक्तवदाभासः स भिन्नाकारशब्दगः ॥ २ ॥

( ७ ) भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः ।
जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः ॥

यालङ्कारूपस्य पुनरुक्तवदाभासस्य प्राथम्येन लक्षणविधाने युक्तिमुपपादयति—शब्दार्थयोरिति । शब्दार्थयोर्मध्ये प्रथमार्थबोधात्पूर्वम् । शब्दप्रतिपत्त्यनन्तरमेव तत्सङ्केतग्रहद्वारा अर्थस्यावगम्यमानत्वादित्याशयः । वक्ष्यमाणेषु निरूपणयोग्येषु । शब्दार्थालङ्कारस्य शब्दार्थोभयालङ्कारस्य शब्दार्थोभयशक्तिमूलध्वनेरिव पश्चान्निरूपणीयस्येतिशेषः । चिरन्तनैः प्राचीनैराचार्य्यैरितिशेषः । शब्दालङ्कारा अनुप्रासादयस्तेषां मध्ये । लक्षितत्वात् "अलङ्कारसर्वस्वादिषु" 'आमुखावभासनं पुनरुक्तवदाभासः" इत्यादिना कृतलक्षणकत्वादित्यर्थः चिरन्तनानां रीतिमनुसृत्यैव पुनरुक्तवदाभासस्य सूचीकटाहन्यायेन प्रथमं लक्षणमभिहितम्, अन्यथा अस्योभयालङ्कारत्वात् काव्यप्रकाशकृद्वदुभयालङ्कारान्तर्मध्य एव लक्षणं युक्तं स्यादित्याशयः ।

( ६ ) आपतत इति । आपाततः श्रवणमात्रेणैव झटिति निर्धारणात् न तु तात्पर्य्यालोचनात् परमपीतिभावः, अर्थस्य अभिधेयस्य यत्पौनरुक्त्येन पुनरुक्ततया भासनं प्रतीतिः, भिन्नाकारशब्दगः भिन्नो विजातीयः आकारः स्वरूपं यस्य सोऽसौ शब्दस्तं गच्छतीति तथोक्तः, गमेर्डः, सः पुनरुक्तवदाभासो नाम अलङ्कार उच्यत इति शेषः । एतेन अर्थान्तरसङ्क्रमितवाच्ये "कदली कदली" "यस्य मित्राणि मित्राणि" इत्यादौ एतस्यावस्थानाभावः सूचितः । परे तु भिन्नाकारशब्दग इत्यनेन "स सुरभि सुरभि" "नयने तस्यैव नयने च" इति यमकलाटानुप्रासयोरभिन्नाकारशब्दगत्वान्नातिव्याप्तिरित्याहुः । एवं च विभिन्नरूपयोर्वस्तुनो भिन्नार्थकयोरपि शब्दयोरापाततः एकार्थकतया प्रतीतिः पुनरुक्तवदाभास इत्यर्थः । पुनरुक्तस्येव पुनरुक्तवत् आभासो ज्ञानमितिपुनरुक्तवदाभासपदव्युत्पत्तिर्ज्ञेया ।

( ७ ) स चायं द्विविधः शब्दनिष्ठः शब्दार्थनिष्ठश्च, तत्रापि शब्दनिष्ठः अभङ्गशब्दनिष्ठः, सभङ्गशब्दनिष्ठश्च तत्र शब्दस्य अभङ्गे प्रथममुदाहरति—भुजङ्गेति । भुजङ्गावेव कुण्डले तेऽस्य स्तः इति तथोक्तः । यद्वा भुजङ्गाभ्यां कुण्डली—कर्णाभरणवान् कङ्कणवान् वेति तादृशः, 'कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि च' इति मेदिनी, व्यक्तः प्रकाशितः, शशिनश्चन्द्रमस इव शुभ्राः श्वेता अंशवः किरणा यस्य तस्येव कर्पूरस्येव शीता गावो रश्मिर्यस्य स तथोक्तश्चन्द्रः, 'कर्पूरश्चन्द्रसंज्ञकः' इत्यमरः, 'गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्' इति मेदिनी, तथा चेतोहरो मनोहरः, शिवो महेश्वरः, सदा अपायाद्विघ्नात् न केवलं मामेव जगन्त्यपि सर्वाणि विश्वान्यपि अव्यात् रक्ष्यात् इत्याशीर्लिङ्रूपम् ।

अत्र हि 'भुजङ्गकुण्डलीतिसर्पार्थकयोः शब्दयोः, शशिशुभ्रांशुशीतगुरितिचन्द्रार्थकानां शब्दानाम्, हरशिवयोः महादेवार्थकयोः शब्दयोः, पायादव्यादितिरक्षणार्थकक्रिययोश्च

एतेषां शब्दालङ्काराणामपि अर्थातिशयाधानद्वारेणैव रसोपकारकत्वम् । शब्दानां परिवृत्त्यसहत्वमात्रेण शब्दालङ्कारव्यपदेश इत्यग्रे स्फुटीभविष्यति ।

( ८ ) अत्र भुजङ्गकुण्डल्यादिशब्दानामापातमात्रेण सर्पाद्यर्थतया पौनरुक्त्य-प्रतिभासनम् । पर्यवसाने तु भुजङ्गरूपं कुण्डलं विद्यते यस्येत्याद्यन्यार्थत्वम् ।

( ९ ) पायादव्यात्' इत्यत्र क्रियागतोऽयमलङ्कारः, 'पायात्' इत्यस्य 'अपायात्' इत्यत्र पर्यवसानात् ।

( १० ) भुजङ्गकुण्डली' इति शब्दयोः प्रथमस्यैव परिवृत्तिसहत्वम् । 'हरः शिवः' इति द्वितीयस्यैव । 'शशिशुभ्रांशु' इति द्वयोरपि । 'भाति सदानत्यागः' इति न द्वयोरपि । इति शब्दपरिवृत्तिसहत्वासहत्वाभ्यामस्योभयालङ्कारत्वम् ।

---

श्रुतिमात्रेणैव तत्तदर्थस्य पुनरुक्तत्वेन प्रतीतेः पर्य्यवसाने तु उक्तव्याख्यानरूपभिन्नत्वेन पुनरुक्तवदाभासः ।

( ८ ) प्रदर्शितोदाहरणे लक्षणं संयोजयति—अत्रेति । प्रथमादिशब्देन "शशिशुभ्रांशुशीतगु-हरशिव" शब्दानाम् द्वितीयादिशब्देन च चन्द्राद्यर्थानां परिग्रहः । आपातमात्रेण श्रुतावुपस्थितमात्रेण । सर्पाद्यर्थकतया सर्पचन्द्रमहेश्वरार्थकतया । पौनरुक्त्यप्रतिभासनं पुनरुक्ततायाः प्रतीतिः । पर्य्यवसाने निश्चयावसरे तु अर्थानुसन्धानसमये इत्यर्थः । तृतीयादिशब्देन कर्पूराद्यन्यार्थानां परिग्रहो बोध्यः ।

( ९ ) "भिन्नाकारशब्दगः" इत्यत्र शब्दपदस्य सामान्यरूपेणैव प्रवृत्तया अर्थप्रत्यायकशब्दमात्रपरत्वादाह—पायादिति । क्रियागतः क्रियाबोधकशब्दार्थनिरूपितः । क्रियागतत्वेऽपि कथमनयोरर्थभेद इत्याशङ्कायामाह—पायादिति "अपायात्" इत्यस्येति । 'सदा' इत्यत्र सन्धिनाकारश्लेषाङ्गीकारादिति शेषः । पर्य्यवसानात् अन्ततस्तात्पर्य्यावधारणात्, अन्यार्थत्वमितिपूर्वतोऽनुषञ्जनीयम् ।

( १० ) अस्योभयालङ्कारत्वं कथमित्युपपादयति—भुजङ्गकुण्डलीति । भुजङ्गकुण्डलीतिशब्दयो"र्मध्ये" इति शेषः, प्रथमस्यैव भुजङ्गशब्दस्यैव न तु कुण्डलीतिशब्दस्य एवेन तद्व्युदासः । परिवृत्तिसहत्वं सर्पार्थकपर्य्यायशब्दोपादानेऽपि प्रकृतोपयोगित्वम् ।

इदमत्रानुसन्धेयम्—

शब्दार्थयोर्नित्यसम्बन्धतया सर्वत्रैव सर्वेषामेव शाब्दत्वार्थत्वसाङ्कर्य्यत्वापत्तिवारणाय गुणदोषालङ्काराणां शाब्दत्वस्य आर्थत्वस्य शब्दार्थोभयरूपत्वस्य च अन्वयव्यतिरेकाभ्यामेव तद्व्यवस्था । एवं च "भुजङ्गकुण्डली" इत्यत्र भुजङ्गशब्दस्थाने सर्पशब्दस्थापितेऽपि पुनरुक्तवदाभासस्य स्थितिः स्यादेव, सर्पातिरिक्तार्थकसुवर्णादिशब्दनिक्षेपे तु न तस्य प्राप्तिरपि तथाच सर्परूपार्थोपलम्भे पुनरुक्तवदाभासस्य विद्यमानत्वम्, सर्परूपार्थाविद्यमाने तु पुनरुक्तवदाभासाविद्यमानत्वम् इत्यन्वयव्यतिरेकाभ्यां भुजङ्ग इत्यत्र पुनरुक्तवदाभासस्य आर्थत्वम् । कुण्डलीशब्दस्य स्थाने सर्पेतरार्थकभूषणादिशब्दस्थापिते सर्पार्थकपन्नगशब्दनिहिते, वा एकत्र आपाततोऽपि पौनरुक्त्याऽवभासमानाभावेन अपरत्र पर्य्यवसानेऽप्यर्थभेदाभावेन पुनरुक्तवदाभासस्य सम्भव एव नेत्यतःकुण्डलीतिशब्दस्य न परिवृत्तिसहत्वम् ।

अत्र कुण्डलिशब्दस्य विद्यमानत्वे पुनरुक्तवदाभासस्य विद्यमानत्वम्, तदविद्यमाने तु पुनरुक्तवदाभासस्याविद्यमानत्वमितिकुण्डलीत्यंशे पुनरुक्तवदाभासस्य शाब्दत्वम् । तेन चास्य शब्दार्थोभयसंवलितत्वादुभयालङ्कारत्वम् । एवमग्रेऽप्यनुसन्धेयम् ।

## ( ११ ) अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत् ।

द्वितीयस्यैव शिवशब्दस्यैव, परिवृत्तिसहत्वमिति पूर्वत एवानुषञ्जनीयम्, न तु हर इति प्रथमस्यापीत्यर्थः। अत एव हर इत्यत्रार्थत्वम्, शिव इत्यत्र शाब्दत्वमित्यभिप्रायः। द्वयोः शशिशुभ्रांशुशब्दयोः अपिशब्दाच्छीतगुशब्दस्य तृतीयस्यापि परिवृत्तिसहत्वमित्यनुषङ्गेन सम्बन्धः, तेन द्वितीयपादे केवलमार्थत्वमितिभावः । एवं शब्दार्थोभयनिष्ठोदाहरणप्रदर्शनेनैवान्यान्यपि पृथक्पृथगुदाहरणानि बोध्यानीत्याशयेनाह—भातीति । द्वयोरपि दानत्यागशब्दयोर्न परिवृत्तिसहत्वमित्यन्वयः। एतेनात्र केवलं शाब्दत्वमेवेत्याशयः । इति हेतोः शब्दानां परिवृत्तेःपरिवर्त्तनस्य सहत्वमसहत्वञ्च ताभ्यां तथोक्ताभ्याम् । अस्य पुनरुक्तवदाभासस्य, उभयालङ्कारत्वं शब्दार्थोभयालङ्कारत्वम् ।

भातीति समग्रश्लोको यथा काव्यप्रकाशे—

"अरिवधदेहशरीरः सहसारथिसूततुरगपादातः ।
भाति सदानत्यागः स्थिरतायामवनितलतिलकः॥" ॥

अस्यार्थः—सहसा शीघ्रमेव रथिभिः रथारोहिभिः सुष्ठु उताः सम्बद्धाः तुरगा अश्वाः पादाताः पदातिकाश्च यस्य स तथोक्तः, अरीणां शत्रूणां वधदा विनाशिनी ईहा चेष्टा येषां तादृशा ये शरिणः शरयुक्ता योधास्तान् ईरयति प्रेरयतीति अरिवधदेहशरीरः, स्थिरतायाम् अगः पर्वततुल्य इत्यर्थः तथा अवनितलको भूतलभूषणभूतो राजा भवान् सदा सर्वस्मिन् समये नत्या नम्रभावेन अथवा सदानत्या सतां विषये आनत्या अतिनम्रभावेन सन्तोषोत्पादनेन वा, यद्वा सदा सर्वदा अनत्या क्षुद्रेषु अनम्रतया विद्यमानः सन् भाति शोभते । आर्याच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

अत्र देहशरीरशब्दयोः सारथिसूतशब्दयोः दानत्यागशब्दयोश्चापाततोऽर्थस्य पौनरुक्त्येन प्रतीतेः, अन्ततस्तात्पर्य्यालोचने तु व्याख्यातरूपभेदात् पुनरुक्तवदाभासः। अत्रेदं तत्त्वम्—देहशरीर इति द्वावपि शब्दौ सार्थकौ सभङ्गौ च। सारथिसूत इति द्वयोराद्यो निरर्थकः अन्त्यश्च सार्थकः उभावपि सभङ्गौ। दानत्याग इति उभावपि निरर्थकौ सभङ्गौ चेति। शब्दस्य सार्थकत्वं च विवक्षितार्थकत्वम्, निरर्थकत्वं तु विवक्षितार्थाभाववत्त्वमित्यन्यत्र विस्तरः। यथा वा—

"अम्बरेण गगने संवृतं जीवनैः शिरसि वारिभिः श्रितम् ।
भोगिभिश्च भुजगैर्विभूषितं शङ्करं शुभकरं भजामहे ॥"

विस्तरभयादर्थो नेह कृतः।

(११) एवमल्पप्रभेदं पुनरुक्तवदाभासमुपपाद्य शब्दालङ्कारेष्वतिप्रसिद्धतया रसानुगुण्यतया च प्रथममनुप्रासमेव सामान्येनोपपादयति—अनुप्रास इति । स्वरस्याचः प्रत्याहारस्य न तु निषादादेः, वैषम्ये विजातीयत्वे सत्यपि अपिना साम्ये सत्यपि च ।

"अपि सम्भावनाप्रश्नशङ्कागर्हासमुच्चये ।
तथा युक्तपदार्थे च कामचारक्रियासु च ॥" इति विश्वः,

यत् शब्दसाम्यं शब्दपदं व्यञ्जनपरं तथा च व्यञ्जनवर्णमात्रसादृश्यमित्यर्थः सोऽनुप्रासस्तदाख्यः शब्दालङ्कारः। साम्यं चात्र समानश्रुतिमत्त्वम् । लक्षणं यमकादभेदं चानुपदमेव वृत्तौ स्फुटीभविष्यति ।

( १२ ) स्वरमात्रसादृश्यं तु वैचित्र्याभावान्न गणितम् ।
( १३ ) रसाद्यनुगतत्वेन प्रकर्षेण न्यासोऽनुप्रासः ।
( १४ ) छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा ॥ ३ ॥

(१२) ननु कारिकायां "वैषम्येऽपि स्वरस्य" इत्युक्तत्वात् शब्दपदेन केवलं व्यञ्जनमेव स्वीकृतम्, किन्तु स्वरमात्रसाम्यमपि कथं न स्वीकृतमत आह—स्वरमात्रेति। स्वरमात्रमेव सादृश्यन्तु "हरिविष्णु" इत्यादिषु यथेकारेण केवलस्वरसाम्यन्तु न गणितम् अनुप्रासत्वेन न लक्षितम्। स्वरेण सादृश्यं न नितान्तमपेक्षितं वर्त्तते तदन्तराऽपि शब्दसादृश्यमात्रे वैचित्र्येण तत्सम्भवाद्व्यञ्जनसाम्याभावे केवलस्वरसाम्यं नानुप्रासः, वैचित्र्याभावात् सर्वत्र वैचित्र्यस्यैवालङ्काराभ्युपगमादित्याशयः। तस्मान्न तत्रानुप्रास इत्यवधेयम्।

( १३ ) अनुप्रासपदस्य योगार्थमुपपादयति—रसाद्यनुगतत्वेनेति। अनुशब्दोऽनुगमार्थकः प्रशब्दः प्रकर्षार्थकः आसशब्दो न्यासार्थकः, अनुगमनमनं रसादेः, आदिपदेन रसाभासादीनां परिग्रहः। तथा च रसाद्यनुगतत्वेन प्रकृतरसव्यञ्जनवर्णसम्बन्धित्वेन, प्रकृतरसानुकूलेन प्रकर्षेण, अनतिव्यवहिततया चमत्कृत्याधायको न्यासः आवृत्तिः। एवञ्च—स्वरस्य वैषम्ये वा अनतिव्यवहितत्वेन चमत्कृत्याधायिका प्रकृतरसव्यञ्जकसदृशवर्णावृत्तिरनुप्रास इति लक्षणं फलितम्। तत्र एकतालव्यादिव्यञ्जनावृत्तौ श्रुत्यनुप्रास एकविधाकृतिमद्व्यञ्जनावृत्तौ तु अन्येऽनुप्रासा इति सर्वत्र लक्षणसमन्वयः। परन्तु यथा अन्त्यानुप्रासलाटानुप्रासयोः स्वरसाम्यस्यैवावश्यकत्वम्, न तथान्येषामितिबोध्यम्। स्वरस्य 'वैषम्य' इत्यनेन "कावेरी वारी"त्यादेरेतद्बाह्यत्वम् 'साम्य' इत्युक्त्या च "दर्दुरदुरध्यवसायम्" इत्यादौ दुरशब्दसाम्ये स्वरसाम्येऽप्यनुप्रासत्वम्। नचैवं स्वरव्यञ्जनयोरुभयोरेव साम्येऽस्य लक्षणस्य "नवपलाशपलाशवनं पुरः" इत्यादि यमकेऽपि प्रसक्तावतिव्याप्तिरितिवाच्यम् यमकस्यापवादत्वेन तदतिरिक्तस्थल एवानुप्रासाङ्गीकारात् "प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते" इति न्यायात् तत्रानुप्रास उत्सर्गः यमकन्त्वपवादः। "नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता" इत्यादौ नकाररेफयुक्तदकारयोर्दूरावस्थानादनतिव्यवहितत्वाभावेन अनुप्रासाभावबुद्धिर्न विधेया संस्कारविच्छेदाभावात्। यदुक्तम्—पूर्वानुभवसंस्कारबोधनीयेत्यदूरते"ति।

( १४ ) अनुप्रासो द्विविधः-निरर्थकसार्थकभेदात्। तत्राद्यश्छेकानुप्रासो वृत्त्यनुप्रासः श्रुत्यनुप्रासोऽन्त्यानुप्रासश्चेतिचतुर्विधः। तौ च क्रमादुपपादनीयावितिप्रथमं प्रथममुपपादयति—छेक इति। व्यञ्जनसङ्घस्य व्यञ्जनानां हलंवर्णानां सङ्घः समूहस्तस्य तथोक्तस्य, सकृदेकवारमात्रम् अनेकधा अनेकप्रकारेण स्वरूपेण क्रमेण चेति प्रकारद्वयेनेतियावत्, साम्यं सादृश्यं छेकश्छेकनामाऽनुप्रासः व्यञ्जनसङ्घत्वमत्र एकव्यञ्जनभिन्नत्वमात्रं तेन द्वयोस्त्र्यादीनां च तथात्वम्। तथा च एकक्रमेण विद्यमानानां बहुतरव्यञ्जनवर्णानामेकविधाकृतिमत्स्वरूपमेकवारमात्रसाम्यं छेकानुप्रास इत्यर्थः। "धूतचूतप्रसून" इत्यत्र केवलतकारद्वयस्य साम्ये वृत्त्यनुप्रासविषयेऽतिव्याप्तिवारणाय बहुतरेत्युपादानम्।

एकैकस्य दलस्य मध्ये वर्णान्तरव्यवधाने तु साम्ये सत्यपि नायमलङ्कारः। अत एव "मुनिर्जयति योगीन्द्रो जकं सिन्धोः पपौ च यः"

( १५ ) छेकश्छेकानुप्रासः ।
( १६ ) अनेकधेति स्वरूपतः क्रमतश्च ।
( १७ ) रसः सर इत्यादेः क्रमभेदेन सादृश्यं नास्यालङ्कारस्य विषयः ।
( १८ ) उदाहरणं मम तातपादानाम्—
( १९ ) 'आदाय बकुलगन्धानन्धीकुर्वन्पदे पदे भ्रमरान् ।
अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः ॥'
( २० ) अत्र गन्धानन्धीतिसंयुक्तयोः, कावेरीवारीत्यसंयुक्तयोः, पावनः पवन इति व्यञ्जनानां बहूनां सकृदावृत्तिः ।

---

इत्यत्र "जयो" "जेयः" इत्यत्र छुत्यनुप्रास एव । "प्रखर सरति पदुमं याह लब्धुं तवेष्टम्" इत्यत्र तु स्वरूपतः क्रमतश्च साम्यमिति भवत्युदाहरणम् ।

( १५ ) कठिनांशं विवृणोति—छेक इति । एतेन सत्यभामाशब्दस्य सत्या इतिवत् छेकानुप्रासशब्दस्य छेक इत्येकदेश एव कारिकायां गृहीतः । छेकानुप्रासशब्दस्यैव लोके प्रसिद्धत्वादित्याशयो व्यञ्जितः ।

( १६ ) अनेकधेति । अनेकधा इति इत्यस्य स्वरूपत एकविधस्वरूपेण क्रमतः एकविधपौर्वापर्यक्रमेणेत्यर्थः उभयत्र तृतीयान्तात्तस्प्रत्ययः ।

( १७ ) तत्र एकविधस्वरूपसादृश्यस्यैव लक्ष्यतया तद्व्यावृत्त्यसंम्भवात् क्रमत इत्यस्य व्यावृत्तिं दर्शयितुमाह—रस इति "रसः सरः" इत्यादेः शब्दस्येतिशेषः । क्रमभेदेन न तु क्रमेण न वा स्वरूपभेदेनाऽपीत्यर्थः । सादृश्यं केवलैकविधस्वरूपत्वेन साम्यम् । यत्तदिति शेषः । अस्य छेकानुप्रासस्य न विषयो न स्थानम् । तथा च तद्वारणायैव क्रमतश्चेत्युक्तमितिभावः ।

( १८ ) लक्षणमुपपाद्य लक्ष्यमुपपादयितुमुपक्रमते—उदाहरणमिति । ताताः पितरश्चन्द्रशेखराः त एव पादाः पूज्यास्तेषाम् । गौरवातिशयव्यञ्जनाय बहुवचनेनोपन्यासः । स्वकुलपरम्पराया एव च कवित्वसुप्रसिद्धिमभिव्यञ्जयितुमिदमुक्तम् ।

( १९ ) आदायेति । कावेर्याख्यस्तन्नामिकाया नद्यो वारिणा तज्जलसंस्पर्शेन पावयति पवित्रतां नयति स्वसेविनमितिपावनः पवित्रतासम्पादकः, अयं स्पर्शवत्तया प्रत्याख्यातुमशक्यः पवनो वायुः बकुलानां "मौलसरी"तिप्रसिद्धसुरभितकुसुमविशेषाणां गन्धान् आदाय गृहीत्वा पदे पदे स्थाने स्थाने भ्रमरान् भ्रमन्ति मधुनि लुब्धतयेतिभ्रमरा मधुपास्तान् अन्धीकुर्वन् तद्गन्धप्रापणेन तन्मधुपानलोभोत्पादनादन्धानिव मुग्धान् कुर्वन् मन्देषु मन्द इति मन्दमन्दं यथास्यात्तथा "न निर्धारणे" इति षष्ठ्या एव समासनिषेधात्सप्तम्यन्तेन समासो ज्ञेयः । एति आगच्छति । आर्य्याच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

( २० ) उदाहृते लक्षणं सङ्गमयितुमाह—अत्रेति । संयोगयोः नृधृइत्येतयोर्नकारसंयुक्तयोर्धकारयोः । असंयुक्तयोः वेरिवारिपदयोः । बहूनाम् असंयुक्तानामितिशेषः । व्यञ्जनानां हलाम् । सकृदेकवारमात्रम् आवृत्तिः पुनरुच्चारणं छेकानुप्रासः ।

अत्र संयुक्तासंयुक्तयोरित्युपपादयता संयोगासंयोगयोरपेक्षाशून्येन केवलव्यञ्जनसामान्यस्यैव प्रदर्शितसाम्येऽलङ्कारोऽयं भवतीतिसूचितम् । ननु "पदे पदे" 'मन्दमन्दम्'

( २१ ) छेको विदग्धस्तत्प्रयोज्यत्वादेष च्छेकानुप्रासः ।

**( २२ ) अनेकस्यैकधा साम्यमसकृद्वाप्यनेकधा ।**

**एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ॥ ४ ॥**

( २३ ) एकधा स्वरूपत एव, न तु क्रमतोऽपि । अनेकधा स्वरूपतः क्रमतश्च । सकृदपीत्यपिशब्दादसकृदपि । उदाहरणम्—

---

इति द्विरुक्तपदेषु प्रदर्शितसादृश्यसद्भावे कथन्नायमलंकारः प्रदर्शित इति चेत् ? वैचित्र्याधायकत्वाभावात् ।

( २१ ) छेकानुप्रासपदस्य व्युत्पत्तिमुपपादयितुमाह—छेक इति । विदग्धश्चतुरः । यद्वा छेकाः नीडस्थाः पक्षिणस्तेषां प्रायो द्विर्भाषितं भवति तेन छेकभाषितोपलक्षितोऽनुप्रासश्छेकानुप्रासः । "छेकस्त्रिषु विदग्धेषु गृहासक्तमृगाण्डजे" इति रभसः । एवं च छेकपदं तत्प्रयोज्ये लाक्षणिकम् । वृत्त्यनुप्रासस्य विदग्धप्रयोज्यत्वेऽपि तत्र रूढ्यभावात् न छेकपदप्रयोगः । अयमनुप्रासः—

सजातीयाव्यवहितवर्णा द्वित्राद्यो यदि ।
आवर्त्तन्ते तदा केचिच्छेकानुप्रासमूचिरे ॥"

इत्युक्तदिशा सजातीयाव्यवहितद्वित्रादिवर्णानामप्यावर्त्तने संभवतीति वदन्ति ।

( २२ ) वृत्त्यनुप्रासं निरूपयति—अनेकस्येति । अस्य पञ्चविधानि लक्षणानि तानि तत्र प्रथमम्—अनेकस्य नैको वर्णान्तरेण संयुक्तः इत्यनेकस्तस्य तादृशस्य संयुक्तस्य व्यञ्जनवर्णस्येत्यर्थः, एकधा स्वरूपत एव सकृत् साम्यं वृत्त्यनुप्रास इत्येकं लक्षणम् । अनेकस्य इत्युक्त्या स्वरे च साम्यावश्यकत्वं निरस्तम् छेकानुप्रासेऽतिप्रसक्तिवारणाय एकधेत्युक्तिः । अनेकस्य व्यञ्जनवर्णस्य एकधा स्वरूपत एव असकृद्वा साम्यं वृत्त्यनुप्रास इति द्वितीयं लक्षणम् अत्र हि छेकानुप्रासेऽतिप्रसङ्गवारणाय 'एकधा' असकृदित्युभयो रुपादानम् । सकृदसकृदित्यनयोर्मध्ये कस्यापि प्रथमपादेऽनुक्तत्वात् सामान्येनैव तदुभयोर्लाभ इत्यवधेयम् । वा अथवा अनेकस्य व्यञ्जनवर्णस्य अनेकधा स्वरूपतः क्रमतश्च असकृत् साम्यं वृत्त्यनुप्रास इति तृतीयं लक्षणम् । अत्रापिना पूर्वतः अनेकस्येत्यनुषङ्गः छेकानुप्रासातिप्रसक्तिवारणायैवासकृदित्युपादानम् । एकस्य व्यञ्जनस्य सकृत् साम्यं वृत्त्यनुप्रास इति तुरीयं लक्षणम् । अत्राऽप्यपिना असकृदित्यनुषङ्गो विधेयस्तेन एकस्य व्यञ्जनस्य असकृत् साम्यं च वृत्त्यनुप्रास इति पञ्चमं लक्षणम्भवति । छेकानुप्रासेऽतिप्रसङ्गवारणायैवानयोरेकस्येत्युक्तिः । तदेवं समुदायेन पञ्चविधो वृत्त्यनुप्रासः । अत्र व्युत्पत्तिश्च वृत्तौ रीतावनुप्रासो वृत्त्यनुप्रासः वृत्तिश्च मधुरादिरसानुगुणनियतकोमलशब्दविशेषमतो रसविषयो व्यापारो व्यञ्जनाख्य इत्येके । माधुर्यादिव्यञ्जकसुकुमारादिवर्णगतत्वेन मधुरादिरसोपकारकः शब्दस्य सङ्घटनाख्यो रीत्यात्मा व्यापारविशेष इत्यपरे । स्पष्टीभविष्यति विवरणेऽग्रे ।

(२३) कारिकोक्तपदानां दुरूहमर्थं विवृणोति—एकधेति । एकधा इत्यस्येति शेषः । स्वरूपत इति स्वस्यरूपं प्रतिकृतिस्तस्मात् । क्रमत उद्देश्यानुपूर्व्या । अपिशब्दाद्-पठितादितिशेषः ।

( २४ ) 'उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ।
नीयन्ते पथिकैः कथंकथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥'

( २५ ) अत्र 'रसोल्लासैरमी' इति रसयोरेकधैव साम्यम्, न तु तेनैव क्रमेणापि द्वितीये पादे, कलयोरसकृत्तेनैव क्रमेण च । प्रथमे एकस्य मकारस्य सकृत्, धकारस्य चासकृत् ।

( २६ ) रसविषयव्यापारवती वर्णरचनावृत्तिः, तदनुगतत्वेन प्रकर्षेण न्यसनाद्वृत्त्यनुप्रासः ।

---

( २४ ) एकपद्येनैवोक्तपञ्चविधवृत्त्यनुप्रासानामुदाहरणं दर्शयति—उन्मीलदिति । गीतगोविन्दे वसन्तवर्णनमिदम् । ध्याने प्रियतमायाश्चिन्तनेऽवधानं चित्तैकाग्रता तेन क्षणं प्राप्तः प्राणसमाया दयितायाः समागमरसेन सम्भोगरसेन उल्लासः प्राचुर्येणानन्दोद्गमो यैस्तैः पथिकैः प्रवासिभिः कामिजनैः, ( कर्तृ ) उन्मीलतः प्राचुर्येणोत्पद्यमानस्य मधुनः पुष्परसस्य गन्धेन सौरभेण लुब्धा ये मधुपा मधुपानशीला भ्रमरास्तैर्व्याधूतेषु ( स्वपातवशेन ) समाकम्पितेषु चूताङ्कुरेषु आम्रदलनूतनप्ररोहेषु तन्निकटेष्वित्यर्थः, क्रीडतां खेलया सञ्चरतां कोकिलानां काकलीभिः सूक्ष्मध्वनिभिः कलकलैः प्रौढशब्दैः, उद्गीर्णाः प्रवासित्वेनोत्पादिताः कर्णेषु ज्वराः सन्तापा, येषु ते अमी वसन्तसम्बन्धिनो वासरा दिवसाः (कर्म) कथंकथमपि महताक्लेशेन नीयन्ते व्यतीयन्ते । शार्दूलविक्रीडितंच्छन्दस्तल्लक्षणन्तूक्तंप्रागेव ( १२८ पृ० )

( २५ ) उक्तोदाहरणे लक्षणानि संयोजयितुमाह—अत्रेति । इति इत्यत्र अंश इति शेषः, रसयो रेफदन्त्यसकारयोः, एकधैव स्वरूपत एव साम्यं सकृत् सादृश्यम्, न तु पुनः, तेन निर्दिष्टेन, अपि तयो पुनर्वैपरीत्येन न्यासादिति शेषः । 'रसो' इत्यत्र रेफस्य प्राग्वर्त्तित्वात् "सर" इत्यत्र तु तस्योत्तरवर्त्तित्वादित्याशयः । तेन चात्र प्रथमलक्षणसमन्वयः । प्रथमलक्षणसमन्वयायैव हि पद्यस्य चरमांशमादाय प्रदर्शनारम्भ इत्यवगन्तव्यम् । "वासराः" इत्यस्य "सराः" इतिभागमादाय "रसो" इत्यनेन सहैव एकधैवासकृत्साम्यात् द्वितीयलक्षणस्य समन्वयोऽवगन्तव्यः । कलयोः ककारलकारयोः तेनैव क्रमेण येनानुपूर्व्येण निर्दिष्टाविति शेषः चकारात् स्वरूपेण च असकृत् साम्यं तौल्यम् । एवञ्च तृतीयलक्षणसमन्वयः स्पष्टः । प्रथमे पादे इत्यनुषङ्गः, सकृदेकवारं साम्यमित्यनुषङ्गः, अतएव तुरीयलक्षणसमन्वय इत्याशयः । एकस्य धकारस्य च असकृत् साम्यमित्यत्रापि पूर्वतोऽनुषञ्जनीयम् । एवञ्च पञ्चमलक्षणसमन्वय इत्यभिप्रायः । समासमेत्यत्र तु अनेकधानेकस्य सकृत्वाच्छेक एवेत्यतस्तन्न प्रदर्शितम् । एवमुद्गीर्णकर्ण "उन्मीलन्मधु" इत्यत्र "न्मे"त्यस्य सकृत् सकृत् साम्यात् छेकानुप्रास एव । केचित्तु समासमेत्यत्र यमकमेवेच्छन्ति ।

(२६) वृत्त्यनुप्रासशब्दस्य योगव्युत्पत्तिलभ्यमर्थं दर्शयति—विषयेति । रस एव विषयो यस्य तादृशोऽसौ व्यापारो व्यञ्जनरूपः क्रियाविशेष इति रसविषयकव्यापारः सोऽस्यामस्तीति तादृशी वर्णरचना वर्णसङ्घटना वृत्तिः इति व्यपदिश्यत इति शेषः । वृत्तिश्च-

( २७ ) उच्चार्यत्वाद्यदेकत्र स्थाने तालुरदादिके ।
साहश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते ॥ ५ ॥

उदाहरणम्—

( २८ ) 'दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥'

त्रिविधा उपनागरिका, परुषा, कोमला, च । तदुक्तं काव्यप्रकाशकारैः—

माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।
ओजः प्रकाशकैस्तैस्तु परुषा कोमला परैः ॥ परैः शेषैः ।

केचित्तु—शेषैर्वर्णैर्यथायोगं ग्रथितां कोमलाख्यया ।
ग्राम्यां वृत्तिं प्रशंसन्ति काव्ये निष्णातबुद्धयः ॥"

इत्युक्तलक्षणां कोमलां ग्राम्यां वदन्ति । एतास्तिस्रो वृत्तयो वैदर्भीगौडीपाञ्चालीसंज्ञकरीतित्वेन पूर्वमुपपादिता इति ग्रन्थकृतात्र न प्रदर्शिताः । तदनुगतत्वेन तस्या वृत्तेरनुगतत्वमानुकूल्यं तेन तद्रूपेणेत्यर्थः । प्रकर्षेणातिशयेन न्यसनात्स्थापनादभिधानादित्यर्थः वृत्त्यनुप्रासः इति व्यपदेशः सङ्गच्छत इति शेषः ।

अत्र पुत्रास्तु—रसविषयेति प्रतीकमादाय रसविषयः व्यापारो वृत्तिः । वृत्यतेऽनया रसव्यञ्जनया शब्द इति व्युत्पत्त्या । तेन तद्वती, उक्तरीत्या शृङ्गारादिरसौपयिककोमलपरुषमध्यमवर्णारब्धा वापि रचनावृत्तिरुपचारादितिभावः । तदनुगतत्वेन तया वृत्त्योपलक्षितत्वेन" इत्याहुः ।

( २७ ) श्रुत्यनुप्रासं लक्षयति—उच्चार्यत्वादिति । तालु जिह्वेन्द्रियाधिष्ठानम् । रदा दन्ताः । आदिपदेन ओष्ठ-मूर्ध-कण्ठानां परिग्रहः । एवञ्च तालुरदादिके एकत्र एकस्मिन् स्थाने उच्चार्यत्वात् उच्चार्यत्वं पुरस्कृत्य व्यञ्जनस्यैव व्यञ्जनवर्णस्यैव न तु स्वरस्यापि यत् सादृश्यं सवर्णत्वं, तत् श्रुत्यनुप्रास उच्यते । अत्र एकस्थानोच्चार्यत्वरूपसादृश्योपादानात् एकविधाकृतिमत्त्वरूपस्वरूपापेक्षा नास्तीतिव्यञ्जितम् ।

अत्रायमाशयः—स्वरूपतः सादृश्याभावेऽपि ताल्वाद्येकस्थानवशात् यस्य व्यञ्जनस्यैव येन व्यञ्जनेन सादृश्यं सम्भवेत्तस्य स्वरूपतोऽसदृशस्यैव सकृदसकृद्वा स्थापने श्रुत्यनुप्रासः, एवं केवलव्यञ्जनवर्णस्य स्वरूपतः सादृश्याभावेऽपि ताल्वादिस्थानैक्यवशात् सादृश्ये श्रुत्यनुप्रासः । ताल्वादिना सादृश्यं च "तुल्यास्य प्रयत्नं सवर्णम्" इत्यनेन पाणिनिसूत्रेणेति स्पष्टमन्यत्र ।

( २८ ) उदाहरणं यथेतिशेषः । दृशेति । राजशेखरकृतायां विद्धशालभञ्जिकायां पद्यमिदम् । या वामलोचना वामे सुन्दरे लोचने नयने यासां तादृशा महेश्वरस्य तृतीयनेत्रेण दग्धं भस्मसात्कृतम्, मनसिजं कामदेवं दृशैव दृष्ट्यैव न तु साधनान्तरेण जीवयन्ति सचेतनतां नयन्ति, अत एव विरूपाक्षस्य विषमलोचनस्य महेश्वरस्य जयिनीः पराजयकारिणीः ता वामलोचना महिलाः स्तुमः प्रशंसामः ।

अत्र च यो हि महेश्वरेण नेत्ररूपेणोपायेन दग्धं प्रापितस्तस्य कामदेवस्य दग्धकारणभूतेनैव तेन नेत्ररूपेणोपायेन महेश्वरं जेतुमिच्छुभिर्वामलोचनाभिर्जीवनरूपस्य तद्विपरीतस्य कार्यस्य विधानाद्व्याघातः । विरूपाक्षनेत्रवामलोचनानेत्रयोर्यद्यपि नैक्यम्, तथापि नेत्रयोरेकजातीयत्वेन व्याघात एवेत्यनुसन्धेयम् ।

( २६ ) अत्र जीवयन्ति' इति, 'याः' इति, 'जयिनीः' इति । अत्र जकारयकारयोरेकत्र स्थाने तालावुच्चार्यत्वात्सादृश्यम् ।

( ३० ) एवं दन्त्यकण्ठ्यानामप्युदाहार्यम् ।

( ३१ ) एष च सहृदयानामतीव श्रुतिसुखावहत्वाच्छ्रुत्यनुप्रासः ।

---

( २९ ) उक्तोदाहरणे लक्षणं सङ्गमयति—अत्रेति । तालाविति । "इचुयशानां तालु" इति तालुरूपे स्थान इति भावः । उच्चार्य्यत्वात् हेतोरितिशेषः, सादृश्यं सावर्ण्यम्, अतएवात्र श्रुत्यनुप्रास इति शेषः ।

( ३० ) अन्यत्राऽप्येवमुदाहर्त्तव्यमित्याह—एवमिति । यथाऽस्य तालुस्थानीयं तथा दन्त्यकण्ठ्यानामपि सावर्ण्यं इति शेषः । उदाहार्य्यमुदाहरणमन्यदन्वेषणीयमिति भावः । दन्त्यकण्ठमानामिति । बहुवचनोपादानादोष्ठमूर्धन्यानामपि परिग्रहः ।

तत्र दन्त्यानां नैषधे यथा—

> तदहं विदधे तथा तथा दमयन्त्याः सविधे तवस्तवम् ।
> हृदये निहितस्तया भवान् अपि नेन्द्रेण यथापनीयते ॥

अत्र "लृतुलसानां दन्ताः" इति नयेन त य द भ न—सकाराणामेकदन्तस्थानोच्चार्य्यतया सादृश्यात् श्रुत्यनुप्रासः ।

कण्ठस्थानां शिशुपालवधे यथा—

> हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः ।
> शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥

अत्र "अकुहविसर्जनीयानां कण्ठः" इत्यनुशासनेन ह–घ–क गकाराणामेककण्ठस्थानोच्चार्यतया सादृश्यात् श्रुत्यनुप्रासः ।

ओष्ठ्यानामुद्भटसागरे यथा—

> पिनाक-फणि-बालेन्दु-भस्म-मन्दाकिनीयुता । तथापि भव ! ते मूर्त्तिरपवर्गफलप्रदा ॥

अत्र "उपूपध्मानीयानामोष्ठौ" इत्यनुशासनेन प-फ-ब-भ-मकाराणामेकोष्ठस्थानोच्चार्य्यतया सादृश्यात् श्रुत्यनुप्रासः ।

मूर्धन्ययोः यथा—

> अद्याऽप्युन्मदयातुधानतरुणीचञ्चत्कराऽस्फालन-
> व्यावल्गन्नृकपालतालरणितैर्नृत्यत्पिशाचाङ्गनाः ।
> उद्गायन्ति यशांसि यस्य विततैर्नादैः प्रचण्डानिल-
> प्रक्षुभ्यत्करिकुम्भकूटकुहरव्यक्तै रणक्षोणयः ॥

अत्र "ऋटुरषाणां मूर्धा" इति नियमात् "रणी इत्यत्र मूर्धन्ययो रणयोरेकस्थानोच्चार्य्यतया साम्यात् श्रुत्यनुप्रासः । "लृतुलसानां दन्ताः" इत्यनुशासनाच्च "तु धामतः" इत्यत्र दन्त्यैकस्थानोच्चर्यतया सादृश्यात् दन्त्योदाहरणमपि ।

( ३१ ) अधुना श्रुत्यनुप्रासपदस्य योगव्युत्पत्तिलभ्यमर्थमुपपादयति—एष चेति । एषोऽलङ्कारः । सहृदयानां सचेतसां काव्यार्थभावनापरिपक्वतामितियावत् । अतीव अत्यन्तम् । श्रुत्योः श्रवणयोर्यत् सुखमानन्दस्तस्य आवहत्वात् आधायकत्वात् । श्रुत्यनुप्रास इत्यालङ्कारिकैर्गीयते इति शेषः ।

( ३२ ) व्यञ्जनं चेद्यथावस्थं सहाद्येन स्वरेण तु ।
आवर्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत् ॥ ६ ॥

( ३३ ) यथावस्थमिति यथासंभवमनुस्वारविसर्गस्वरयुक्ताक्षरविशिष्टम् ।

( ३४ ) एष च प्रायेण पादस्य पदस्य चान्ते प्रयोज्यः । पादान्तगो यथा मम-

( ३५ ) केशः काशस्तबकविकाशः कायः प्रकटितकरभविलासः ।
चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम् ॥

(३२) अथ चतुर्थमन्त्यानुप्रासं निरूपयति—व्यञ्जनमिति । अवस्थामाद्योच्चारितव्यञ्जनावस्थामनतिक्रम्य स्थितमिति यथावस्थं यथार्थेऽव्ययीभावः, व्यञ्जनम् , चेद् यदि आद्येन प्राथमिकेन आद्योच्चारितव्यञ्जनप्राग्वर्तिस्वरसादृश्यरूपेण स्वरेण अचा सह आवर्त्यते पुनः पठ्यते तर्हि अन्तेऽवसाने भवोऽन्त्यस्तत्र योजयितुं योक्तुमर्हमिति तादृशात्मिमित्तादेव अन्त्योऽसावनुप्रासः अन्त्यानुप्रास इति व्यपदेश इत्यभिप्रायः । अत्र यथावस्थमित्युक्त्या प्रथमोच्चारितव्यञ्जनोत्तरवर्त्ति स्वरमात्रस्यैव ग्रहणं बोध्यम् , न तु तत्पूर्वं स्वरोऽपि तस्य तत्पूर्वव्यञ्जनावस्थारूपतयैव प्रसिद्धत्वादित्याशयेनाह-आद्येन स्वरेण सहेति । अस्य च प्राचीनोक्तालङ्कारेभ्यः पृथगनुभवसिद्धश्चमत्कारविशेष इति पृथगलङ्कारत्वम् ।

(३३) कारिकायाः कठिनांशं व्याचिख्यासुः यथावस्थपदस्यार्थं दर्शयति—यथेति । अनुस्वारविसर्गस्वराणामन्यतमसम्भवो यथासम्भवपदार्थः । अनुस्वारश्च स्वराश्रयेणोच्चार्यमाणो बिन्दुरेखया व्यज्यमानोऽनुनासिको वर्णविशेषः विसर्गस्तु स्वरमाश्रित्य बिन्दुद्वयात्मकः । तथा च अनुस्वारविसर्गौ व्यञ्जनात् पूर्वस्थायिनौ परस्थायिनौ च स्वरस्तु व्यञ्जनात्परस्थायितयैव, संयुक्ताक्षरं यस्मिन् समुदितवर्णः, तैर्विशिष्टमिति परोच्चारणीयव्यञ्जनविशेषणम् ।

(३४) अन्त्ययोज्यत्वं विवृणोति—एष चेति । अन्त्यानुप्रास इत्यर्थः । प्रायेण आधिक्येन पादस्य पद्यचतुर्थांशस्य, अन्ते क्वचित् पदस्य अन्ते चेत्यर्थः । प्रायेण इत्यनेन पज्झटिकाछन्दःस्वेवाऽस्य सम्भवो नानुष्टुबादाविति सूचितमिति केचिद्वदन्ति ।

(३५) उदाहरति-केश इति वार्धक्यदुःखेनातिनिर्विण्णस्य विषयत्यागमनिच्छतोजरत उक्तिरियम् । केशः काशस्य काशकुसुमस्य स्तवको विकासोन्मुखकलिका तद्वत् विकाशः प्रकाशो यस्य स तथाभूतः, काशस्तवको हि श्वेतो भवतीति तेनोपमानत्वम् , तथा च पक्वतया अतीव श्वेतवर्णः सञ्जात इत्यर्थः, कायः शरीरम् , प्रकटितः स्फुटीकृतः करभस्य हस्तिशिशोः विलासवद्विलासो भङ्गी येन स तादृशः, कुब्जतया शोभमान इति तात्पर्यम् , तथा चक्षुः दग्धो भस्मीभूतो यो वराटकः कपर्दकस्तत्कल्पं तत्सदृशम् , दग्धवराटकवन्निर्ज्योतिष्कमित्याशयः "वराटकः पद्मबीजकोशे रज्जौ कपर्दके" इति कोशः, तथापि चेतश्चित्तं ( कर्तृ ) अनल्पं विशालं कामं विषयासक्तिं न त्यजति मुञ्चति इति महदाश्चर्यमितिभावः । पज्झटिकाच्छन्दस्तल्लक्षणन्तु—

प्रतिपदयमकितषोडशमात्रा नवमगुरुत्वविभूषितगात्रा ।
पज्झटिका पुनरत्र विवेकः क्वापि न मध्य गुरुर्गण एकः ॥

अत्र यथासम्भवमित्युक्त्वा संयुक्ताक्षररहितः प्रथमपादान्तगत "आस" इत्यंशः

पदान्तगो यथा—

( ३६ ) 'मन्दं हसन्तः पुलकं वहन्तः' इत्यादि ।

( ३७ ) शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्यमात्रतः ।

लाटानुप्रास इत्युक्तो—

द्वितीयपादान्ते, तृतीयपादान्तगतश्च "अलम्" इत्यंशश्चतुर्थपादान्ते पुनरुच्चारित इति ककारस्थितेनाकारेण, खकारस्थितेनाकारेण ककारस्थितेनाकारेण नकारस्थितेनाकारेण च आद्यस्वरेण सह यथावस्थितव्यञ्जनस्य पुनः पठनादन्त्यानुप्रासः । तथा निर्विण्णस्वरूपे निमित्ते उक्तेऽपि कामपरित्यागरूपस्य कार्यस्योत्पत्त्यभावादुक्तेर्विशेषोक्तिः, एवं तारुण्य-रूपनिमित्ताभावे उक्तेऽपि कामापरित्यागरूपकार्यानुक्तोविभावना, यदपि तदपीतिशब्द-योरनुपादानात्तयोर्व्यङ्ग्यत्वमात्रम् । तथाच प्रकृते विरुद्धधर्मयोस्तयोः क इति सन्देहात्त-न्मूलकः सन्देहसङ्करालङ्कार इत्यपि बोध्यम् ।

प्रायेणेत्युक्तया क्वचिदन्त्ययोरस्वराभावेऽप्ययमनुप्रासोऽवलोक्यते यथा—

"धृताधीता गीता श्रुतिभिरवगीताखिलगुणा
गुणातीता भीताऽभयकृदविनीताऽपि च यदा ।
नतिप्रीता पीताम्बरसुपरिणीताऽमरवधू
कृशा पीता स्फीता मकरुचिपरीता विजयताम् ॥"

(३६) मन्दमिति । अत्र "हसन्तः" इति पदान्तगतः "अंशः" "वहन्तः" इति पद-स्यान्ते पुनः पाठत इति अन्त्यानुप्रासः ।

यथा वा स्तुतिकुसुमाञ्जलौ—

"सारासारविदः सतां भयभिदः प्रह्वोपतापच्छिदः
कारुण्यार्द्रहृदः प्रपन्नसुहृदः स्फारीभवत्संविदः ।
त्राताशेषविशः प्रकाशितदिशः कीर्त्या महीनिर्विशः
कर्षन्तीश निशः प्रसक्तमुहृशस्त्वत्पादपीठस्पृशः ॥"

पूर्वस्वरविनाकृतस्याप्यन्त्यव्यञ्जनस्यावृत्तिर्दृश्यते यथा—

"पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम् ।
इह संसारे खलु दुस्तारे कृपया पारे पाहि मुरारे ॥"

(३७) पञ्चमं लाटानुप्रासं निरूपयति—शब्दार्थयोरिति । तात्पर्यमात्रतस्तात्पर्यवि-षयीभूतादन्वयमात्रादेव भेदे वक्तुः केवलाभिप्रेतसम्बन्धभेदेनैव शब्दार्थयोर्भेदे सतीत्यर्थः शब्दः प्रातिपदिकं पदं च अर्थो वाच्यः तयोः शब्दार्थयोरुभयोरेव यत् पौनरुक्त्यं पुनः कथ-नम् , स लाटानुप्रास इत्युक्तो मनीषिभिरितिशेषः । अत्र—

"स्मेरराजीवनयने ! लोचने किं निमीलिते ।"

इत्यादावर्थमात्रस्य पौनरुक्त्ये शब्दस्य च तदभावे अतिप्रसङ्गवारणाय शब्दोपादा-नम् , "नवपलाशपलाशवनं पुरः" इत्यादौ शब्दमात्रस्य पौनरुक्त्ये अर्थस्य च तदभावे यमके अतिप्रसङ्गवारणायार्थेति । अर्थस्य पौनरुक्त्यं तु पूर्वपदार्थविशेषणविशेष्याभ्यां सहोत्तरपदार्थविशेषणविशेष्ययोरैक्ये सम्भवति । अत एव—

"अनेन संवृते सुमुखि ! व्योम्नि विभाति चन्द्रमाः" इत्यादौ विशेषणयोर्भेदान्नाय-मनुप्रासः ।

उदाहरणम्—

( ३८ ) स्मेरराजीवनयने नयने किं निमीलिते ।
पश्य निर्जितकंदर्पं कंदर्पवशगं प्रियम् ॥

( ३९ ) अत्र विभक्त्यर्थस्य पौनरुक्त्येऽपि मुख्यतरस्य प्रातिपदिकांशयोस्तयधर्मिरूपस्य भिन्नार्थत्वाल्लाटानुप्रासत्वमेव ।

---

"वपुः कान्तं वचः कान्तं मनस्तु परुषं तव"

इत्यादौ च विशेष्ययोर्भेदाच्चायमनुप्रासः ।

"यातु यातु किमनेन तिष्ठतु मुञ्च मुञ्च सखि ! सादरं वचः"

"चित्रं चित्रमनाकाशे कथं सुमुखि ! चन्द्रमाः" ।

इत्यादौ च क्रोधादिव्यञ्जके शब्दार्थयोरुभयोरेव पौनरुक्त्ये तात्पर्यमात्रतोऽपि भेदाभावस्थले लाटानुप्रासप्रसक्तस्तद्वारणाय-भेदे तात्पर्यमात्रत इत्युक्तम् ।

( ३८ ) अयञ्च पदगस्तदंशगतश्चेति द्विविधः । तत्राऽऽद्यः अनेकपदगत एकपदगतश्चेति द्विविधः, अन्त्यः पुनः समासासमासगतः, एकसमासगतो विभिन्नसमासगतश्चेति त्रिविधः, तदेवं पञ्चविधः । उक्तं च काव्यप्रकाशकृता—

पदानां स पदस्यापि वृत्तावन्यत्र तत्र वा । नाम्नः स वृत्त्यवृत्त्योश्च तदेवं पञ्चधा मतः ॥

तत्र समासासमासगतत्वे उदाहरति—स्मेरराजीवेति । नायकं दृष्ट्वा क्रोधान्निमीलिताक्षीं मानिनीं प्रति सख्या उक्तिरियम् । स्मेरे प्रफुल्ले ये राजीवे कमले ते इव नयने यस्याः तत्सम्बुद्धौ तादृशे !

"स्मेरं विकसिते किञ्चिद्धास्ययुक्ते च वाच्यवत्" इति श्रीधरः

"बिसप्रसूनराजीव पुष्कराम्भोरुहाणि च" इत्यमरः,

नयने लोचनद्वयं किं निमीलिते मानवशान्मुद्रिते ? स्मेरराजीवनयनाया नयनस्मेरत्वमेव युक्तम्, न तु तदभावः तस्मात्–यथा तवेदं स्मेरराजीवनयनत्वमुपपद्येत तथा त्वया विधातव्यमित्याशयः । नयनोन्मीलनस्यापि साफल्यं दर्शयति—निर्जितकन्दर्पं निर्जितो रूपेण विजितः कन्दर्पो मदनो येन ( स्वसौन्दर्येण ) तं तादृशं पतिं कन्दर्पवशगं कामेन वशीकृतं पश्य अवलोकय अतो मानं परित्यज्यैनं चरितार्थयेतिभावः ।

अत्र "नयने नयने" शब्दार्थयोः "कन्दर्पं कन्दर्पं" इतिशब्दार्थयोश्च पौनरुक्त्यात् प्रथमे सम्बोधनविषयत्व-कर्मत्वरूपसम्बन्धभेदात् उत्तरात्र च कर्मत्वसम्बन्धित्वरूपसम्बन्धभेदाच्च लाटानुप्रासः ।

( ३९ ) ननूक्तोदाहरणे नयन-कन्दर्पप्रातिपदिकयोः पुनरुक्तिसत्त्वेऽपि तदुभयनिष्ठविभक्त्यर्थानां भेदेन पौनरुक्त्यमात्रात् कथमस्य लक्षणस्य विषय अत आह—अत्रेति ।

अत्र "स्मेरराजीवनयने नयने" "कन्दर्पं कन्दर्पं" इत्यंशयोरित्यर्थः । मुख्यतरस्य अतिशयेन मुख्यस्य विभक्त्यर्थापेक्षया प्रथमोपस्थितिकत्वेन स्वातन्त्र्येण च मुख्यतरस्येत्यर्थः । प्रातिपदिकस्य "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" १।२।४५ 'कृत्तद्धितसमासाश्च' १।२।४६ इत्युक्तदिशा प्रकृते स्मेरराजीवनयन इत्यस्य "निर्जितकन्दर्पम्" इत्यस्य चांशोऽवयवः "नयन" "कन्दर्पम्" इत्यात्मकं तेन बोध्य उपस्थाप्यो यो धर्मिरूपः तत्तद्विभक्त्यर्थरूपधर्मशाली नेत्रादिकरूपार्थस्तस्य अभिन्नार्थत्वात् भेदाभावात् लाटानुप्रासत्वमेव ।

( ४० ) 'नयने तस्यैव नयने च ।' ( १५५ पृ० )

अत्र द्वितीयनयनशब्दो भाग्यवत्त्वादिगुणविशिष्टत्वरूपतात्पर्यमात्रेण भिन्नार्थः ।

( ४१ ) यथा वा—

'यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिरतस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥'

अत्र प्राप्नुवतोऽलङ्कारस्येत्यर्थः । अत्र एवपदोपादानेन यमकव्यवच्छेदः । तथाचोक्तस्थले नयने इत्यादेः स्वरव्यञ्जनसंहतेः तेनैव क्रमेण पुनरुक्तावपि दर्शितदिशा मुख्यस्य प्रातिपदिकार्थस्याभिन्नार्थत्वात्र यमकत्वमपीतिभावः ।

(४०) नन्वर्थान्तरसंक्रमितवाच्यध्वनौ "कदली कदली" इत्यादावापाततः शब्दार्थयोः पौनरुक्त्यावभासनेऽपि पर्यवसाने वक्तृतात्पर्यविषयविशेषणान्तरप्रतीत्या भिन्नार्थत्वाभावेन तत्राऽप्ययमेवास्तामित्यत आह—नयन इति । तस्यैव तादृशसुभगस्यैव नयने नेत्रद्वयम् , न पुनः नयने भाग्यवत्त्वादिगुणविशिष्टे इति तदर्थः । अत्र उदाहरणे, द्वितीयो द्वितीयवारं पठितोऽसौनयनशब्दः यत्र स तथोक्तः स्वार्थऽसम्भवन् इति शेषः भाग्यवत्त्वादिगुणा एव विशिष्टत्वे विशेषणं तद्रूपेण तात्पर्यमात्रेण, भिन्न अर्थः प्रातिपदिकार्थो यस्य स तादृशः । तथा च "स्मेरराजीवनयने नयने" इत्यादावुभयोरेव नयनादिपदार्थयोः प्रातिपदिकांशयोस्त्वधर्मिकरूपस्य भेदाभावतया पौनरुक्त्येऽपि तात्पर्यमात्रे भेदाल्लाटानुप्रासः । प्रकृते "नयने तस्यैव नयने च" इत्यत्र तु प्रथमनयनशब्दस्य नेत्ररूप एवार्थः द्वितीयनयनशब्दः स्वार्थेऽसम्भवंल्लक्षणया भाग्यवत्त्वादिगुणविशिष्ट एव नेत्ररूपोऽर्थं इति प्रातिपदिकार्थयोरेव भेदेन पौनरुक्त्याभावान्न लाटानुप्रासः किन्तु अर्थान्तरसङ्क्रमितवाच्यध्वनिमात्रमित्यभिप्रायः । अत एव हि कथितपदत्वदोषप्रतिप्रसवे लाटानुप्रासोऽर्थान्तरसङ्क्रमितवाच्यध्वनिश्च—

"दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने । अर्थान्तरसङ्क्रमितवाच्ये हर्षऽवधारणे"

इत्यनेन पृथगेवोक्तः ।

( ४१ ) अनेकपदपौनरुक्त्ये उदाहरति—यथा वेति । यस्य नेति । यस्य कामिनः सविधे समीपे—

"समीपे निकटासन्नसन्निकृष्टसनीडवत् । सदेशाभ्याससविधसमर्यादसवेशवत्" इत्यमरः,

दयिता प्रियतमा नास्ति तस्य तथाविधजनस्य सम्बन्धे तुहिनं हिमं दीधितिषु किरणेषु यस्य स तादृशः "भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिःस्त्रियाम्" इत्यमरः, दवदहनो दावाग्निः विरहोद्दीपकतया तद्वदेवातिशयसन्तापजनको भवतीत्याशयः । समुच्चेयाभावात् चोऽत्र त्वर्थं । यस्य तु कामिनः सविधे निकटे दयिता प्रियतमा अस्ति, तस्य दयितया अनुगृहीतस्य जनस्य तु सम्बन्धे, दवदहनो दावाग्निरपि तुहिनदीधितिश्चन्द्रो भवति तत्सान्निध्येन सर्वपदार्थेष्वेव तस्य शैत्यानुभवो भवतीतिभावः । एवञ्च "तुहिनदीधितिर्दवदहनः" "दवदहनस्तुहिनदीधितिः" इत्युभयमपि रूपकमितिफलितम् । प्रदीपकारादयस्तूपमामेवाङ्गीकुर्वन्ति । आर्य्याच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

अत्र सविधे दयितेत्यादीनामनेकानां पदानां तात्पर्य्यमात्रभेदेन पुनरुक्तिरित्यनेकप-

( ४२ ) अत्रानेकपदानां पौनरुक्त्यम् ।

( ४३ ) एष च प्रायेण लाटजनप्रियत्वाल्लाटानुप्रासः ।

इगतो लाटानुप्रासः । तात्पर्यभेदश्चात्र पूर्वार्द्धे तुहिनदीधितौ दवदहनत्वं विधेयम् उत्तरार्द्धे तु दवदहने तुहिनदीधितित्वं विधेयमित्युद्देश्यविधेयभावविपर्यासेन शाब्दबोधरूपान्वयभेदादित्यवधेयम् ।

अत्र लक्षणया यथाक्रमं तापकरत्वस्य शीतलत्वस्य च विधेयत्वं नेह विवक्षितम् अन्यथा भिन्नार्थकत्वापत्त्या लाटानुप्रासो न स्यादतः पूर्वार्धे दवदहनस्यैव उत्तरार्द्ध तुहिनदीधितेरेव च विधेयतया आरोपणमिति । लाटानुप्रासादौ उद्देश्यविधेययोर्वैपरीत्येनोपन्यासो न दोषायेतिबोध्यम् ।

( ४२ ) लक्ष्ये लक्षणं योजयितुमाह—अत्रेति । अनेकपदानां "सविधे ......स्तस्थे" स्येतेषामनेकेषां पदानामित्यर्थः । पौनरुक्त्यमिति । सति तात्पर्यभेदेऽर्थैक्यादितिशेषः । इदञ्चोपलक्षणं तेन प्रदर्शितसम्बन्धभेदश्च अतश्चात्र लाटानुप्रास इति भावः । ननु स्वरव्यञ्जनसंहतेस्तेनैव क्रमेणावृत्तिसद्भावाद्यमकमेवेति चेत् ? नैवम्, प्रातिपदिकार्थपार्थक्य एव यमकस्वीकारेण प्रकृते प्रातिपदिकार्थानां पार्थक्याभावात् ।

एकपदपौनरुक्त्ये यथा—

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः । सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ॥

अत्र 'सुधाकर' इत्यस्यैकस्य विभक्तिसहितस्य पदस्य तदर्थस्य च तात्पर्यमात्रभेदेन पौनरुक्त्यमिति एकपदतो लाटानुप्रासः । अत्र च प्रथमसुधाकरपदस्य विधेयपरत्वम्, द्वितीयस्योद्देश्यत्वपरत्वमितितात्पर्यभेदः ।

भेदत्रयमप्येकेनैव पद्येन यथा—

सितकरकररुचिरविभा विभाकराकारधरणिधरकीर्त्तिः ।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ॥

अत्र करकरेत्येकसमासः, विभाविभेति भिन्नौ समासौ कमलाकमलेति पूर्वस्य समास उत्तरस्यासमास इति भवति त्रयाणामुदाहरणम् । तदेवं पञ्चानामप्युदाहरणं सञ्जातम् । काव्यप्रकाशस्य "पदानां सः" इति कारिकायां वृत्तिपदेन कृत्तद्धितैकशेषसनाद्यन्तधातुरूपाः पञ्चापि वृत्तय उपलक्ष्यन्ते । अत एव—

चन्द्रायते शुक्लरुचाऽपि हंसो हंसायते चारुगतेन कान्ता ।
कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः ॥ इत्यादेः सङ्ग्रहः ।

केचित्तु "मधुनि मधुकर ! त्वं रङ्गमङ्गीकरोषि" इत्यादौ नामैकदेशस्य पौनरुक्त्येऽप्यमुमभिलषन्ति । अन्ये तु कारिकागतनामपदस्योपलक्षणं स्वीकृत्य—

जित्वा विश्वं भवानत्र विहरत्यवरोधनैः । विहरत्यप्सरोभिस्ते रिपुवर्गो दिवं गतः ॥

इत्याद्यप्युदाहरन्ति ।

( ४३ ) अधुना लाटानुप्रासशब्दस्य योगव्युत्पत्तिकत्वमर्थं दर्शयति—एष चेति । लाटस्तन्नामा देशविशेषस्तत्स्थो यो जनः कविस्तद्वल्लभत्वात् तत्प्रियत्वादित्यर्थः ।

"लाटो देशविशेषे स्याद्वस्त्रे वस्त्रे तु न द्वयोः" इति श्रीकण्ठः ।

( ४४ )　ऽनुप्रासः पञ्चधा ततः ॥ ७ ॥

( ४५ ) स्पष्टम् ।

( ४६ ) सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।

क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥ ८ ॥

---

( ४४ ) एवं सप्रभेदमनुप्रासमुक्त्वा तद्भेदसङ्कलनं दर्शयति—अनुप्रास इति । ततश्छेकादिभेदात्, पञ्चधा छेकानुप्रास(१)वृत्त्यनुप्रास(२)श्रुत्यनुप्रास(३)अन्त्यानुप्रास(४)लाटानुप्रास(५)भेदैः पञ्चप्रकारक इत्यर्थः । "चरमप्रकारद्वयं पदानुप्रास" इत्यन्ये । अयं चान्यैरुभयालङ्कारतयाऽपि शब्दविशेषान्वयव्यतिरेकानुविधायित्वाद् ग्रन्थकृता शब्दालङ्कारमध्ये गृहीतः" इति तर्कवागीशाः ।

( ४५ ) नात्र किञ्चिद्व्याख्यातव्यमिति दर्शयति—स्पष्टमिति ।

( ४६ ) अनुप्रासानन्तरं लोके यमकस्य प्रसिद्धत्वेन अधुना तमेव निरूपयति—सत्यर्थ इति । अ वाच्यार्थे स्थिते सति, पृथग् भिन्नः अर्थः प्रकृतिप्रतिपाद्यो वाच्ये यस्यास्तस्याः तादृशायाः, स्वरसहिते व्यञ्जने स्वरसहितानि वा व्यञ्जनानि तयोस्तेषां वा संहतिः समुदाय इति तस्याः तथोक्तायाः शाकपार्थिवादित्वान्मध्यमपदलोपि समासः । स्वराश्च व्यञ्जनानि च तेषां संहतिस्तस्या इति द्वन्द्वसमासस्तु न "द्वन्द्वान्ते श्रूयमाणं प्रत्येकमभिसम्बध्यते" इति न्यायेन संहतिपदस्य प्रत्येकं सम्बन्धापत्त्या स्वरसंहतेःव्यञ्जनसंहतेः" इत्यर्थापत्तेः । येन क्रमेण प्रथमं स्वरव्यञ्जनसमूह उक्तस्तेनैव क्रमेण न तु विपरीतेन आवृत्तिः पुनरुच्चारणम्, यमकं नामालङ्कारः । यमौ द्वौ समानजातिकौ तत्प्रतिकृति यमकम् "इवे प्रतिकृतौ" इति पाणिनिसूत्रेण कन्प्रत्ययः, यद्वा यमयति श्रुतिमधुरतया सचेतसां हृदयमानन्दे स्वरव्यञ्जनसंहतिक्रमनिवेश्यत्वेन नियमयतीति यमकम् "ण्वुल्तृचौ" इतिपाणिनिसूत्रेण ण्वुल्प्रत्ययः । अत्र "सत्यर्थे" "क्रमेण तेनैव" इत्यस्य चाभिप्रायं स्वयमेव स्फुटीकरिष्यति । "लाटानुप्रासेऽतिव्याप्तिवारणाय "पृथगर्थायाः" इत्यभिधानम् । तथा च अभिन्नार्थायाः स्वरव्यञ्जनसंहतेः पुनरुक्तौ लाटानुप्रासः, अयन्तु विभिन्नार्थाया इति परस्परभेदः । एवञ्च समानार्थकत्वाभाववत्समानानुपूर्वीकस्वरसंवलितव्यञ्जनसंहत्यावृत्तिर्यमकमितिलक्षणमवगन्तव्यम् । अत्र संहतिरनेकत्वम्, तच्च एकमात्रव्यञ्जनेन सह एकमात्रस्वरस्य संयोजनेनापि सम्भवति । अत एव—

नानाकारेण कान्ताभ्रूराराधितमनोभुवा । विविक्तेन विलासेन ततक्ष हृदयं मम ॥

इति वामनाभिमतवर्णयमकस्थले,

"एकं कूपे नयनमपरं सम्मुखे खेलयन्ती मामुद्दिश्य प्रतिकृतिमपि स्वां किमप्याकलय्ती । तत्पीनोरसिजयुगलं कुम्भमभ्युद्धरन्ती शिवाकृतस्मितशुचिमुखी प्राविशन्मानसं मे ॥"

इत्यादौ चाऽव्याप्तिर्नेत्यवधेयम् । नचान्त्यानुप्रासोदाहरणे—

"केशाः काशस्तबकविकाशाः कायः प्रकटितकरभविलासः"

इत्यादौ "भासः" इत्यंशमाश्रित्यैतल्लक्षणस्यापि प्रवृत्तावतिव्याप्तिरितिवाच्यम्, सामान्यविशेषन्यायमाश्रित्य दोषाभावात् तथाहि—अन्त्यानुप्रासस्य केवलपदपादान्तनिश्चिततया विशेषत्वेनैतस्य तदनिश्चयतया सामान्यत्वेन एतल्लक्षणस्य अन्त्यानुप्रासेत

( ४७ ) अत्र द्वयोरपि पदयोः क्वचित्सार्थकत्वं क्वचिन्निरर्थकत्वम् । क्वचिदेकस्य सार्थकत्वमपरस्य निरर्थकत्वम् । अत उक्तम्—'सत्यर्थे' इति ।

( ४८ ) 'तेनैव क्रमेण' इति दमो मोद इत्यादेर्विविक्तविषयत्वं सूचितम् ।

( ४९ ) एतच्च पादपादार्द्धश्लोकावृत्तित्वेन पादाद्यावृत्तेश्चानेकविधतया प्रभूतभभेदम् ।

---

रविषयकत्वकल्पनादितिभावः । छेकानुप्रासयमकयोरेकाश्रयानुप्रवेशरूप सङ्करोऽवश्यं स्वीकरणीय एव तथाहि छेकानुप्रासोदाहरणे "पावनः पवनः" इत्यत्र "वनः" इत्यंशमाश्रित्य यमकप्रवेशस्योपायशतेनापि परिहर्तुमशक्यत्वेनोपायान्तराभावात् । अयञ्चालङ्कार एकस्मिन् पादे द्वयोर्वा पादयोः चतुर्ष्वपि वा पादेषु प्रयोक्तव्यम्, न तु पादत्रये—

"यमकं तु विधातव्यं न कदाचिदपि त्रिपात्" इति निषेधात् ।

अत एव यमकस्य पादत्रयगतस्याप्रयुक्तत्वं दोष इत्युक्तं ग्रन्थकृता दोषपरिच्छेदे।।

( ४७ ) कारिकास्थ'सत्यर्थे'इत्यस्याशयमाह–अत्रेति । अस्मिन् यमक इत्यर्थः । क्वचित् "सुषमया समया दिवमञ्चति" "नगजानगजा दयिता दयिता" इत्यादावित्यर्थः, द्वयोर्यस्यावृत्तिर्विधीयते यच्चावर्त्त्यते तयोरुभयोराद्यस्यान्त्यस्य चेत्यर्थः । पदयोः स्वरसंवलितव्यञ्जनसंहतिविशेषयोरित्यर्थः । सार्थकत्वे पृथगर्थत्वमावश्यकमितिबोध्यम् । क्वचित् "शमरतेऽमरतेजसि पार्थिवे" "विजयते जयतेपि तशात्रवम्" "विजितामरतामरसेक्षणा" "रमिसुं रमिसुं" इत्यादावित्यर्थः । पुनरितिशेषः । निरर्थकत्वम् अत्रापि "द्वयोरपि पदयोः" इत्यनुषङ्गः । अत्रापि पर्यालोचने तु समुदायस्य सार्थकत्वमावश्यकमेवाभ्युपेयम्, सर्वथा निरर्थकानामप्रयोगात् । क्वचित् "भवता भवतापभीतोऽहम्" "समुदितं मुदितं भुवि तत् पुरम्" इत्यादावित्यर्थः । एकस्य तयोर्द्वयोरेकतरस्याद्यस्यान्तिमस्य वेत्यर्थः । अपरस्य तद्भिन्नस्येत्यर्थः । अतोऽस्माद्धेतोः ।

( ४८ ) "दमो मोदः" "सरो रस" इत्यादौ स्वरव्यञ्जनसाम्यात् क्रमभेदादतिव्याप्तिरित्यतः क्रमेण तेनैवावृत्तेरित्यस्य फलं दर्शयितुमाह—तेनैवेति । तेनैव पूर्वयैव क्रमेण पृथगर्थायाः स्वरव्यञ्जनसंहतेरावृत्तिर्यमकमितिशेषः । इत्युक्तत्वेनेत्यर्थः । दम इन्द्रियजयः । मोद आह्लादः । इत्यादेः स्थलस्येतिशेषः ।

अत्रादिपदेन "सरो रसः" इत्यादेः परिग्रहः । विविक्तविषयत्वं पृथग्विषयत्वम्, यमकेतरालङ्कारकपयत्वमितियावत् । एवञ्च "दमो मोदः" इत्यादौ स्वरूपमात्रसाम्यात् प्रथमप्रकारो वृत्त्यनुप्रास एव न तु यमकमितिभावार्थः ।

(४९) यमकानां प्रभूततमभेदतया साकल्येन उपपादयितुमशक्यत्वात् काव्यप्रकाशकृद्भोजराजप्रभृतयोऽपि स्वस्वप्रबन्धे काव्यान्तर्गतगडुभूतत्वेन कियतः प्रकारानेव प्रदर्शितवन्त इति प्राचीनसरणिमवलम्ब्य विरतिरेव श्रेयसीत्याशयेनाह—एतच्चेति, यमकञ्चेत्यर्थः । पादपादार्द्धश्लोकावृत्तित्वेन पादावृत्तिरूपत्वेन पादार्द्धावृत्तिरूपत्वेन श्लोकावृत्तिरूपत्वेन चेत्यर्थः । पादाद्यावृत्तेश्च आदिना पादमध्यान्त्यावयवादेः परिग्रहः । एवञ्च केवलपादस्य पुनरुच्चारणात् केवलपादार्द्धस्य पुनरुच्चारणात् केवलश्लोकस्य श्लोकार्द्धस्य च पुनरुच्चारणात्, एवं पादस्य आद्यमध्यान्त्यावयवादीनां पुनरुच्चारणाच्च

अनेकविधतया अनेकप्रकारैरेव स्थिततया (क) प्रभूततमभेदम् अतिप्रचुरप्रकारमिति· सरलार्थः ।

---

(क) अत्रकाव्यप्रकाशोक्तदिशा यमकभेदा उपपाद्यते तथाहि यमकं तावद् द्विविधम्—पादवृत्ति, तद्भागवृत्ति चेति । पादश्च पद्यचतुर्थांशः । तत्र पादवृत्तियमकस्य एकादश भेदा भवन्ति

(१) प्रथमः पादो द्वितीये यम्यते (आवर्त्यते बध्यते वा रच्यते वा) तदा मुखं नाम यमकम् ।

यथा—दर्पकान्तकविराजमानयाऽदर्पकान्त-कविराज-मानया ।
त्वत्प्रसादविधिलब्धया धिया साधवो दधति वैबुधीं धुरम् ॥

(२) प्रथमस्तृतीये पादे यम्यते चेत्तदा संदंशो नाम यमकम् ।

यथा—सन्नारीभरणोमायमाराध्य विधुशेखरम् ।
सन्नारीभरणोऽमायस्ततस्त्वं पृथिवीं जय ॥

(३) प्रथमश्चतुर्थपादे यम्यते चेत्तदा आवृत्तिर्नाम यमकम् ।

यथा—मुदारताडी समराजिराऽजितः प्रवृद्धतेजाः प्रथमो धनुष्मताम् ।
भवान् विभर्त्तीह नगश्च मेदिनी मुदार-ताडीसमराजिराजितः ॥

(४) द्वितीयः पादश्चेत्तृतीये पादे यम्यते तदा गर्भो नाम यमकम् ।

यथा—आख्यास्यते समजुषा भवतः प्रसादादामोदराजि-तरु-चारुचिरं जनेन ।
दामोदरा जितरुचा रुचिरञ्जनेन कीर्णं तृणेन मृदुना वनमार्त्तवेन ॥

(५) द्वितीयः पादश्चतुर्थे चेद्यम्यते तदा संदष्टकं नाम यमकम् ।

यथा—"शारदीमिव नदीं प्रसादिनीमुच्च-कैरव-सरोजराजिताम् ।
स्तोतुमेष मम मूर्त्तिरैश्वरीमुच्चकैरवसरोऽजराजिताम् ॥"

(६) तृतीयः पादश्चेत्पादे यम्यते तदा पुच्छं नाम यमकम् ।

यथा—"उत्तुङ्गमातङ्गकुलाकुले यो व्यजेष्ट शत्रून् समरे सदैव ।
ससारमानीय महारिचक्रं ससारमानी यमहारि चक्रम् ॥"

(७) प्रथमः पादो द्वितीये तृतीये चतुर्थेऽपि पादे चेद्यम्यते तदा पङ्क्तिर्नाम यमकम् ।

यथा—"तनुशङ्करवैरसमायतया तनु शंकरवैरसमायतया ।
तनु शं करवै रसमायतया तनुशं कर वैरसमायतया ॥"

'यमकं तु विधातव्यं न कदाचिदपि त्रिपात्' इति नियमात् एकस्यापरपादद्वयगतत्वेन भेदो नं कृत इत्यसङ्कीर्णं पादगतं यमकं सप्तविधमेव । तदुक्तम्—"पादत्रययमकं तु न चमत्कारकारि अतो न प्रयुक्तमित्येकैकपादावृत्तौ शुद्धा एते सप्तभेदाः । सङ्कीर्णन्तु पादगतं चतुर्विधं भवति ।" तत्र (८) प्रथमः पादो द्वितीये पादे तृतीयः पादश्चतुर्थे पादे चेद्यम्यते तदा मुखपुच्छयोः संयोगात् युग्मकं नाम यमकम् ।

यथा—"विनायमेनो नयता सुखादिना विना यमेनोनयता सुखादिना ।
महाजनोऽदीयत मानसादरं महाजवोदी यतमानसादरम् ॥"

इत्यर्थाभ्यासं विना पादद्वयावृत्तौ द्वयमितिभावः ।

(९) प्रथमः पादश्चतुर्थे पादे द्वितीयः पादस्तृतीये पादे चेद्यम्यते तदा आवृत्तिगर्भयोर्योगात् परिवृत्तिर्नाम यमकम् ।

( ५० ) दिङ्मात्रमुदाह्रियते—

( ५१ ) 'नवपलाश-पलाशवनं पुरः स्फुटपराग-परागत-पङ्कजम् ।
मृदुल-तान्त-लतान्तमलोकयत्स सुरभिं सुरभिं सुमनोभरैः ॥'

( ५० ) यमकभेदानां प्रभूततरत्वेन सर्वोदाहरणासक्तेर्यथाशक्ति उदाह्रियत इत्याशयेनाह—दिङ्मात्रमिति । एवञ्च एकभेदमात्रं पदावृत्तिमात्रमित्यर्थः ।

( ५१ ) नवपलाशेति । शिशुपालवधमहाकाव्ये षष्ठसर्गे वसन्तवर्णनेयम् । स श्रीकृष्णः पुरः पुरतः नवानि नूतनानि पलाशानि पत्राणि यत्र तत्तथोक्तम्, पलाशवनं किंशुकारण्यं यत्र तादृशम्, 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्' इति 'पलाशे किंशुकः पर्णो वातपोथः' इति चामरः, स्फुटानि विकसितानि परागैः सुगन्धाश्रितैः रजोभिः परागतानि संवद्धानि व्याप्तानीतियावत् ''परागः सुमनोरजः'' इत्यमरः, पङ्कजानि कमलानि

यथा—''मुदा रताऽसौ रमणी यता यां स्मरस्यदोलं कु-रुतेन वोढा ।
स्मरस्यदोऽलंकुरुतेऽनवोढामुदारतासौ रमणीयतायाम् ॥''

इमे द्वे एकदेकपादमात्रावृत्तिरूपे एकदानेकपादावृत्तिरूपे पादजे द्वे समुद्गकम् , महायमकञ्च ।
तत्र (१०) अर्धावृत्तिः समुद्गकं नाम यमकम् ।

यथा—''कलि-तमोहनमारव-राजितं स्मरहरं शिखिचन्द्रकला-ऽऽञ्चितम् ।
कलितमोहन-मारव-राऽजितं स्मरहरं शिखिचन्द्रकलाञ्चितम् ॥''

(११) श्लोकावृत्तिर्महायमकम् ।

यथा—''स त्वारम्भरतोऽवश्यमवलं विततारवम् ।
सर्वदा रणमानैषीदवानलसमस्थितः ॥''
सत्वारम्भरतोऽवश्यमवलम्बिततारवम् ।
सर्वदारणमानैषी दवानलसमस्थितः ॥''

अर्धस्य पादद्वयात्मकतया श्लोकस्य पादचतुष्टयात्मकतया च एते अपि पादगते । तेन पादगतमेकादश यमकम् । पादभागवृत्तियमकस्य बहवो भेदा भवन्ति । त आकरेषु द्रष्टव्याः एषूदाहरणानि कानिचित् प्रदर्श्यन्ते । तत्र एकस्मिन्नेव पादे आदिभागे यमने आद्यन्तिकं यमकम् ।

यथा—''यदानतोऽयदानतो न यात्ययं न यात्ययम् ।
शिवेहितां शिवे हितां स्मरामितां स्मरामि ताम् ॥''

प्रथमपादाद्यभागस्य द्वितीयादिपादानामन्ताद्यभागेषु यमने पूर्वार्धे आद्यन्तिकम् , उत्तरार्द्धे आद्यन्तिकमन्तादिकं चेति तेषां समुच्चयः ।

यथा—''सरस्वति प्रसादं मे स्थितिं चित्तसरस्वति ।
सर स्वति कुरु क्षेत्रकुरुक्षेत्रसरस्वति ॥''

अत्र प्रथमपाद्यार्धभागो द्वितीयपादान्त्यार्धभागेन तृतीयपाद्यार्धभागश्चतुर्थपादान्त्यार्धभागेन तृतीयपादार्धान्त्यभागश्चतुर्थपादाद्यार्धभागेन यमनात् पूर्वार्धे आद्यन्तिकम् उत्तरार्द्धे आद्यन्तिकमन्तादिकञ्चेतिसमुच्चयः । अनियतस्थानावृत्तिरूपयमकसमुच्चय—

यथा—''मधुपराजिपराजितमानिनी जनमनः सुमनः सुरभिश्रियम् ।
अभृत वारितवारिजविप्लवं स्फुरितताम्रतताम्रवणं जगत् ॥''

अन्येषामुदाहरणानि तत्र तत्र महाकविप्रयोगेषु गवेषणीयानि । विस्तरभयाद्विरम्यते ।

( ५२ ) अत्र पदावृत्तिः 'पलाशपलाश' इति,

( ५३ ) 'सुरभिं सुरभिं' इत्यत्र च द्वयोः सार्थकत्वम् । 'लतान्तलतान्त' इत्यत्र प्रथमस्य निरर्थकत्वम् । 'परागपराग' इत्यत्र द्वितीयस्य ।

( ५४ ) एवमन्यत्राऽप्युदाहार्यम् ।

( ५५ ) 'यमकादौ भवेदैक्यं डलोर्बवोर्लरोस्तथा ।'

इत्युक्तनयात् 'भुजलतां जडतामबलाजनः' इत्यत्र न यमकत्वहानिः,

---

यत्र तम्, मृदुलाः सुकुमारा अत एव तान्ताः आतपेन ग्लाना लतान्ता लताप्रान्तभागा यस्मिन् तम्, तथाः सुमनसां पुष्पाणां भरा अतिशया समृद्धय इति यावत् तैः पुष्पप्रचुरैरित्यर्थः "स्त्रियां सुमनसो भूम्नि पुष्पे"इति व्याडिः, 'अथातिशयो भरः" इत्यमरः,सुरभिं वसन्तकालम् ,

"सुरभिश्चम्पके स्वर्गे जातीफलवसन्तयोः । सुगन्धौ च मनोज्ञे च वाच्यवत्"इति विश्वः, अवलोकयत् अपश्यत् ।

अथात्र अर्थान्तरन्तु—अन्योऽपि पुरोऽग्रतः नवपलाशपलाशो वनं वसतिर्यस्य तं वानप्रस्थत्वात् , "वनं निवासे गहने" इति कोशः, स्फुटं परागः प्रसिद्धिर्यस्य तथोक्तम्, परागतम् अपगतं पङ्कजं पापादिप्रभवं दुःखादि यस्य तादृशम् "पङ्कं कर्दमपापयोः" इति कोशः मृदुला सुकुमारा तान्ता तपश्चरणक्लान्ता लता योषित् यस्य तादृशम्, सुमनोभरैः पण्डितसमूहैः सुरभिं विख्यातम्, तं सुरभिं सज्जनम् अपश्यत् "विख्याते च वसन्ते च सुगन्धौ सज्जनेऽपि च । चैत्रमासे च सुरभिः" इति कोशः । द्रुतविलम्बितच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

( ५२ ) उक्तोदाहरणे पदावृत्तिमुपपादयति—अत्रेति । 'पलाशपलाश' 'इत्यादिरूपेणेत्यर्थः, पदावृत्तिः पदस्य पादांशस्यावृत्तिः तत्प्रभेदं यमकमिति यावत् तथा च "पलाशपलाश" इति "परागपराग" इति "लतान्तलतान्त" इति "सुरभिं सुरभिम्" इति यद्वा "रभिंसु रभिंसु" इति च एकैकपदानामेव वारद्वयमुच्चारणात् पदयमकमित्याशयः ।

( ५३ ) "द्वयोरपि पदयोः क्वचित्सार्थकत्वम्' इत्यादिकं यदुक्तं तदधुनोपपादयति—सुरभिमिति । द्वयोरिति । आद्यान्तयोः पादांशयोरित्यर्थः । सार्थकत्वमिति । एकस्य वसन्तसमयाभिधायकत्वात् अन्यस्य सुगन्धिवाचकत्वादित्याशयः । एवमेव च पृथगर्थकत्वमप्यवगन्तव्यम् । प्रथमस्य प्राथमिकस्य । निरर्थकत्वमिति । मृदुलशब्दस्य लकारमाश्रित्यैव "लतान्त" इति प्रथमरूपसिद्धेः, तद्रूपेण च तेन कस्यचिदप्यर्थस्य ज्ञापयितुमक्षमत्वादित्यभिप्रायः। द्वितीयलतान्तशब्दस्य तु सार्थकत्वमेव । द्वितीयस्येति । निरर्थकत्वमितिपूर्वतोऽनुषञ्जनीयम् । तथाच परागतशब्दस्य तकारं विहाय "पराग" इति द्वितीयरूपसिद्धेः, तद्रूपेण च तेनापि कस्यचिदप्यर्थस्य ज्ञापयितुमक्षमत्वादितिभावः । प्रथमपरागशब्दस्य तु तत्रापि सार्थकत्वमेवेत्यवधेयम् । "रभिंसु रभिंसु" इत्यत्र तु द्वयोरेव निरर्थकत्वमित्युपपादितमेव ।

( ५४ ) एवमिति । अन्यत्र पादावृत्तौ । उदाहरणानि च यथासम्भवं टिप्पणीतोऽनुसन्धेयानि ।

( ५५ ) ननु—"अनुभवत्यवदोलमृतूत्सवं पटुरपि प्रियकण्ठजिघृक्षया ।

अनवरतानरणुवरिग्रहे भुजलतां जडतामबलाजनः ॥"

( ५६ ) अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद्यदि ।
अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा ॥ ९ ॥

इत्यादौ यमकं कथं सम्भवेत् तथैवावृत्यभावादित्याशङ्क्य तत्र वर्णयोर्भेदेऽपि पारिभाषिकमभेदं स्वीकृत्य यमकमभ्युपेयमितिदर्शयितुमाह—यमकादाविति । आदिशब्देन श्लेषानुप्रासादीनां परिग्रहः । डलोर्डकारलकारयोः बवोर्वर्गीयबकारान्तस्थवकारयोः, तथा लरोः लकाररेफयोश्च ऐक्यं वस्तुतः स्वरूपादिभेदेऽपि समानात्मकम् अभेद इतिया-वत् भवेत् । इत्युक्तनयात् नीतेः । इत्यत्र कालिदासीये काव्ये १ सर्गे ४६ पद्ये इत्यर्थः। समस्तपद्यमुपरिष्टान्निर्दिष्टम् । न यमकत्वहानिः "जलतां जवताम्" इत्यत्र कपिलकादित्वात् लत्वाभावपक्षे लकारडकारयोः, तथासबिन्दुकाबिन्दकयोश्च भेदसत्त्वेऽपि श्रुतिसाम्यान्न यमकत्वहानिरित्यर्थः ।

श्लेषे डकारलकारयोरैक्यं यथा—

"त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ ।
अयन्तु युवयोर्भेदः स जडात्मा पटुर्भवान् ॥"
"तृष्णापहारी विमलो द्विजावासो जनप्रियः ।
ह्रदः पद्माकरः किन्तु बुधस्त्वं स जडाशयः ॥

एवमन्यत्र ।

अत्र विशेषोऽन्यत्रोपलभ्यते तद्यथा—

"यमकादौ भवेदैक्यं डलयोरलयोर्बवोः ।
शषयोर्नणयोश्चान्ते सविसर्गाविसर्गयोः ॥
सबिन्दुकाबिन्दुकयोः स्यादभेदप्रकल्पनम् ॥"

( ५६ ) "वक्रोक्तिं निरूपयति—अन्यस्येति । अन्यस्य स्वभिन्नस्य प्रथमवक्तुः,अन्यार्थकं स्वतात्पर्य्यभिन्नार्थबोधकं वाक्यम्, अन्यः प्रथमश्रोता जनो यदि श्लेषेण शब्दबोध्यार्थान्तरेण काक्वा ध्वनिविकारेण वा अन्यथा वक्तुस्तात्पर्य्यभिन्नार्थकत्वेन योजयेत् सङ्गमयेत्, तदा सा वक्रोक्तिर्नामालङ्कारः । एकेनान्यतात्पर्य्येण उक्तं यद्वाक्यम् अन्येन यदि अन्यतात्पर्यार्थकत्वेन कल्पितं तदा वक्रोक्तियोगाद्वक्रोक्तिरित्यर्थः। ततः श्लेषवशात् काकुवशाच्च सा द्विधा द्विविधा । अत्र योजयेदित्यन्तं सामान्यलक्षणम्, "श्लेषेण काक्वा वा" इति योजनाहेतुकथनमुखेन विशेषलक्षणद्वयम्, "सा वक्रोक्तिस्ततो द्विधा" इति लक्ष्यविशेषकथनं विभाग इति ज्ञेयम् । अन्येनेत्युक्त्या वक्ष्यमाणापह्नुतौ नातिव्याप्तिः अपह्नुतौ स्वोक्तेः स्वयमेवान्यथाकरणात् । श्लेषेणेत्यस्य शब्दबोध्यार्थान्तरेणेत्यर्थकरणेन

"मञ्चः क्रोशति किमहो प्रयासि नय मां पराहृत्य ।
किं कातरतयैवं मुञ्चति मञ्चः किमालपति ॥"

इत्यादौ मुख्यया नवाभिसारिकया पुरुषे लक्षणया प्रयुक्तं मञ्चपदं दूत्या मुख्यार्थाभिप्रायेण योजितमिति अस्य न भेदान्तरत्वम् ।

श्लेषैवोत्थापिततया श्लेषस्यायमपवाद इत्यवगन्तव्यम् । अत्रप्रदीपकारास्तु— "इयञ्च न वाकोवाक्यमात्रे किन्तु स्वतोऽन्यस्येनोक्तस्यान्यथायोजनमात्रे न्यायसाम्यात् । यथा—

( ५७ ) द्विधेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च । क्रमेणोदाहरणम्—
( ५८ ) 'के यूयं स्थल एव संप्रति वयं प्रश्नो विशेषाश्रयः
किं ब्रूते विहगः स वा फणिपतिर्यत्रास्ति सुप्तो हरिः ।
वामा यूयमहो विडम्बरसिकः कीदृक्स्मरो वर्तते
येनास्मासु विवेकशून्यमनसः पुंस्वेव योषिद्भ्रमः ॥'

---

"कृष्णो वैरिविमर्दने हरिपदप्रीत्यर्जने त्वर्जुनः
पीतः पङ्कजलोचनाभिरभितो नेत्राञ्चलैश्चञ्चलैः ।
रक्तः सज्जनसङ्गमेषु करणश्रेणीमणे श्रीधर
स्थाने वर्णचतुष्टयस्य भुवने भर्ता भवान् गीयते ॥"

अत्र वर्णचतुष्टयस्य भर्ता श्रीधर इति सार्वलौकिकं वाक्यमन्वयाश्लेषादिनास्माभिः समर्थितम् ।" इत्याहुः । अत एव च नैषधीये चतुर्थसर्गे—

"किमसुभिर्ग्लपितैर्जड ! मन्यसे मयि निमज्जतु भीमसुतामनः ।
मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां वबुधः स्मरः ॥"

अत्र मनश्चन्द्रे निलीयते" इति श्रुतौ ग्रहरूपचन्द्रप्रतिपादनेच्छया अभिहितस्य चन्द्रपदस्य दमयन्त्या नलमुखचन्द्रपरत्वेन योजनात् वक्रोक्तिरेव । एतेन उक्तिप्रत्युक्तिस्थल एवायमलङ्कार इति ब्रुवाणाः परास्ताः कारिकयापि तन्मात्राप्रतिपादनादितिधीधनैरेव विभावनीयम् ।

सेयं वक्रोक्तिर्भामहेनैवं स्तूयते—

"सैषा सर्वत्र वक्रोक्तिरस्फुटार्था विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥"

अत एव च "वक्रोक्तिः काव्यजीवितम्" इत्युक्तम् ।

(५७) कारिकां सुगमयितुमाह—द्विधेति । श्लेषस्यापि पदभङ्गाभङ्गाभ्यां द्वैविध्येन श्लेषवक्रोक्तिरपि द्विधा ज्ञेया । अत्र च तत्तच्छब्दानां परिवृत्त्यसहत्वेन शब्दस्यैव चमत्काराधायकतया चास्य शब्दालङ्कारत्वमित्यभिप्रायः ।

(५८) तत्र तां द्विविधामपि श्लेषवक्रोक्तिमेकत्रस्थल एव दर्शयति—के यूयमिति । कैश्चिदभ्यागतैः, सह कस्यचिदुक्तिप्रत्युक्तिरूपोऽयं श्लोकः । अभ्यागतान् दृष्ट्वा "ननु के यूयम्" पुरस्थिता भवन्तः के इति प्रथमवक्तुर्जिज्ञासा अत्र किमःजिज्ञासायामेव शक्तत्वेन "के" इति पदं प्रश्नार्थं प्रयुक्तम्, "मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः" इत्यमरोक्तदिशा जलार्थक-"क" शब्दस्य सप्तम्यैकवचने "के" इत्यस्य जले इत्यर्थं कल्पयित्वा तत्र च प्रश्नार्थकत्वं प्रतिपाद्य प्रथमश्रोतृणामुत्तरम्—"स्थल एव सम्प्रति वयम्" इति । तत्र विरक्तः स्वतात्पर्यमेवावगमाय प्रथमवक्ता पुनः प्रतिपादयति—"प्रश्नो विशेषाश्रयः" इति । विशेषो व्यक्तिराश्रयो विषयो यस्य तथाविधः प्रश्नः, युष्मद्व्यक्तिजिज्ञासा विषयको मम प्रश्न इति तात्पर्य्यम् । प्रथमश्रोतारस्तु—विशेषाश्रयपदस्यापि "नगौको वाजिविकिरविविष्किरपतत्रिय" "शेषोऽनन्तो वासुकिस्तु" इति चामरोक्तदिशा विश्च पक्षी शेषश्चानन्तश्चेति तावाश्रयोऽधिष्ठानं यस्य सः इति सभङ्गश्लेषेण वक्तुस्तात्पर्य्यभिन्नार्थं कल्पयित्वा प्रत्युत्तरयन्ति—किं ब्रूत इति । विहायसा आकाशमार्गेण गच्छतीति विहगो यः कोपि पक्षी विह उपपदात् गमेर्डः, यत्र च हरिर्नारायणः

( ५९ ) अत्र विशेषपदस्य 'विः पक्षी' 'शेषो नागः' इत्यर्थद्वययोग्यत्वात्सभङ्ग-श्लेषः । अन्यत्र त्वभङ्गः ।

( ६० ) 'काले कोकिलवाचाले सहकारमनोहरे ।

कृतागसः परित्यागात्तस्याश्चेतो न दूयते ॥'

---

सुप्तोऽस्ति स फणपतिर्नागराजोऽनन्तो वा, अनयोर्विषये मम प्रश्न इति किं भवान् ब्रूते अभिधत्ते ? पृच्छतीत्यर्थः । एवं वाक्छलेन कदर्थितः प्रथमवक्ता श्रोतारमाक्षिपति—यूयं वामाः मम प्रश्नस्य वाक्छलेन कदर्थयित्वा यथावदुत्तरदाने प्रतिकूलाः ।

वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे ।

पयोधरे हरे कामे विद्याद्वाममपि स्त्रियाम्" इति विश्वः ।

अत्रापि वामाशब्दस्य योषिद्रूपमर्थं कल्पयित्वा प्रथमश्रोतार प्रत्युत्तरयन्ति—अहो इत्यादि । अहो आश्चर्यं खलु भवान् विडम्बरसिकः प्रतारणाचतुरः समवलोक्यत इतिशेषः । कीदृक् च भवतः स्मरो मन्मथावेगो वर्त्तते, येन स्मरविडम्बनेन विवेकशून्य-मनसः वक्तव्यावक्तव्यरूपज्ञानरहितचित्तस्य भवत इति शेषः अस्मासु पुंस्वेव पुंव्यक्ति-केषु विषयेऽपि एवकारोऽप्यर्थकोऽत्र योषिद्भ्रमः स्त्रीभ्रान्तिः सञ्जात इति शेषः । शार्दूल-विक्रीडितंछन्दस्तल्लक्षणन्तूक्तं प्रागेव (१२८पृ०) ।

(५९) उक्तोदाहरणे श्लेषपदभङ्गाभङ्गत्वञ्चोपपादयितुमाह—अत्रेति । इतीत्थं पदभङ्ग-द्वारा, अर्थद्वयस्य योगात् सम्बन्धात् पूर्वोक्तामरोक्तेरितिभावः । सभङ्गश्लेषः भङ्गो वि-भागस्तेन सह वर्त्तते इति सभङ्गः सोऽसौ श्लेषः । अभङ्गः श्लेष इति शेषः । सभङ्गश्ले-षस्य शुद्धोदाहरणं तु काव्यप्रकाशे यथा—

नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो

वामानां प्रियमादधाति हितकृन्नैवाबलानां भवान् ।

युक्तं किं हितकर्त्तनं ननु बलाभावप्रसिद्धात्मनः

सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः ॥

अत्र नारीणामितिपदे अबलानामितिपदे च सभङ्गश्लेषः, नारीतिसमुदायस्य अब-लेतिसमुदायस्य च स्त्रियां रूढत्वात् यद्यपि वामादिपदे न भङ्गस्तेन न केवलं सभङ्गश्ले-षोदाहरणं तथापि नारीणामितिपदभङ्गमुपजीव्यप्रवृत्तानां श्लेषान्तराणां स एव मूल-मिति तेनैव व्यवहार इति तद्व्याख्यातारः ।

अभङ्गपदश्लेषेण वक्रोक्तिर्यथा तत्रैव—

अहो केनेदृशी बुद्धिर्दारुणा तव निर्म्मिता ।

त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥

अत्र दारुणा क्रूरा काष्ठेनेत्युभयार्थपक्षेऽपि दारुणेतिपदस्य न भङ्गः इत्यभङ्गपदश्ले-षेण वक्रोक्तिरियम् ।

(६०) एवं श्लेषमूलां वक्रोक्तिमुदाहृत्य काकुमूलां वक्रोक्तिमुदाहरति—काले इति । क्रोधान्नायिकया परित्यक्तस्य कृतागसो नायकस्य आश्वासजनकसखी प्रत्युक्तिरियम् । कोकिलापिकाः वाचाला अविरलध्वनिकारिणो यत्र तस्मिन् सहकारेण अतिसौरभा-ख्येन आम्रमुकुलप्रकटनेन "सहकारोऽतिसौरभः" इत्यमरः, मनोहरे काले वसन्तसमये,

( ६१ ) अत्र कयाचित्सख्या निषेधार्थे नियुक्तो नञ् अन्यथा काक्वा दूयत एवेति विध्यर्थे घटितः।

( ६२ ) शब्दैरेकविधैरेव भाषासु विविधास्वपि।
वाक्यं यत्र भवेत्सोऽयं भाषासम इतीष्यते ॥ १० ॥

यथा मम—

( ६३ ) 'मञ्जुलमणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे।
विरसासि केलिकीरे किमालि! धीरे च गन्धसारसमीरे! ॥'

कृतमागोऽपराधः सपत्नीपरिष्वङ्गरूपो येन तस्य प्रियस्येति शेषः "आगोऽपराधो मन्तुश्च" इत्यमरः, परित्यागात् परित्यागविधानात् तं परित्यज्यावस्थानादिति भावः, तस्याः प्रियायाः चेतश्चित्तं न दूयते कामतापेन न परितप्यते अपि तु परितप्यत एवेति काकुः।

( ६१ ) उक्तोदाहरणे अर्थान्तरस्य अन्यथा योजनोपपादनद्वारा वक्रोक्तिं प्रदर्शयितुमाह—अत्रेति। निषेधार्थे अभावार्थे, नियुक्तः प्रयुक्तः। काक्वा "तस्याश्चेतो न दूयत" इति ध्वनिविकारेण। विध्यर्थे भावार्थे घटितो योजितः। तथा च न दूयते इति निषेधार्थकतया न प्रयुक्तो नञ् अपि तु दूयत एवेति विध्यर्थकतया काक्वा योजितः। ननु पूर्वं द्वितीयपरिच्छेदे आर्थीव्यञ्जनानिरूपणावसरे "वक्तृबोद्धव्यकाकूनाम्" इत्यादिना काकुवैशिष्ट्ये आर्थीव्यञ्जना स्वीकृता, तथैव चात्रार्थान्तरावबोध इति काकुवक्रोक्तेरर्थालङ्कारत्वमेव युक्तमिति चेत्? मैवम्, वक्रोक्तियुक्तायाः काकोः शब्दधर्मत्वात् वक्रोक्तेरलङ्कारस्यापि शब्दधर्मत्वेन शब्दालङ्कारस्यैव युक्तत्वात्।

( ६२ ) भाषासममलङ्कारं लक्षयति—शब्दैरिति। एकविधैरेव शब्दैः, विविधास्वपि संस्कृतप्राकृताद्यनेकतयाऽनेकप्रकारास्वपि भाषासु विषये यत्र यत् वाक्यं भवेत्, सः अयं भाषासु समस्तुल्यस्तुल्यरूप एव शब्दो यत्र तथाविधो भाषासम इति नाम अलङ्कार इष्यते अभिलष्यते आलङ्कारिकैरिति शेषः। सर्वभाषासु तुल्यरूपत्वादेवायं शब्दालङ्कारः।

अत्र भाषाद्वयात्मकभाषाश्लेषेऽतिव्याप्तिवारणाय 'विविधासु भाषासु' इत्यभिधानम्। एवञ्च एकविधैरेव शब्दैरनेकविधभाषासु वाक्योपपत्तिस्थले भाषासमः, द्विभाषामात्रे वाक्योपपत्तिस्थले तु भाषाश्लेष इत्यनयोर्भेदः। एष च श्लेषालङ्कारविशेष इति यदुक्तं चण्डीदासपण्डितैस्तदसङ्गतमेव अर्थद्वयाभावात्।

( ६३ ) मञ्जुलेति। मानवशात्त्यक्तसकलव्यापारां स्वसखीं प्रति सख्या वचनमिदम्। हे आलि सखि! कलेन कोकिलादीनां मधुरध्वनिना गम्भीरे मनोहरे, मञ्जुलो मनोरमोऽसौ मणिमञ्जीरो नूपुरस्तत्र तथोक्ते, "मनोज्ञं मञ्जुमञ्जुलम्। 'रक्तं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च' मञ्जीरो नूपुरस्त्रियाम्, इति चामरः, विहारसरसीतीरे केलिसरोवरतटे, केलिकीरे क्रीडोपकरणीभूतशुके, धीरे मन्दमन्दसञ्चारिणि गन्धसारसमीरे चन्दनवायौ च, किं कथं विरसा विरक्तानुरागा असि।

अत्र स्कन्धकं छन्दस्तल्लक्षणन्तु—

"स्कन्धकमिति तद् कथितं यत्र चतुष्कलगणाष्टकेनार्धं स्यात्।
तत्तुल्यमग्रिमदलं भवति चतुःषष्टिमात्रकशरीरमिदम्॥"

अत्र एकविधैरेव शब्दैः संस्कृतप्राकृतादिविविधभाषासु वाक्योपपत्तेः भाषासमः।

( ६४ ) एष श्लोकः संस्कृत-प्राकृत-सौरसेनी-प्राच्यावन्तीनागरापभ्रंशेष्वेकविध एव।

( ६५ ) 'सरसं कइणा कव्वम्' इत्यादौ तु 'सरसम्' इत्यत्र संस्कृतप्राकृतयोः साम्येऽपि वाक्यगतत्वाभावे वैचित्र्याभावान्नायमलङ्कारः ।

( ६६ ) श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते ।

---

( ६४ ) कथं भाषासमत्वमित्युपपादयति—एष इति । श्लोकः श्लोकात्मकं वाक्यम् ।

( ६५ ) ननु कारिकायां "वाक्यं यत्र भवेत्" इति व्यापकवचनापेक्षया "पदं यत्र भवेत्" इत्येव कथं नोपात्तमितिजिज्ञासायां तत्फलमुपपादयति-सरसमिति । "सरसं कवेः काव्यम्" इति संस्कृतम् ।

"सरसं कइणा कव्वं पअडि अपि उ ससार सव्वस्स ।
तह जह यिच्चं मुद्धिअं सुखिनं पेअं मुहं तेत्थि ॥" इति समस्तम् ।

संस्कृतप्राकृतयोरित्युपलक्षणत्वेन शौरसेन्यादीनां परिग्रहः । साम्येऽपि एकविधपदत्वेऽपि । वाक्यं "सरसं कइण कव्वम्" इति, तद्गतत्वाभावे सतीत्यर्थः । वैचित्र्येति । वैचित्र्य एवालङ्कारत्वाभ्युपगमान्नात्रायमलङ्कार इत्यर्थः । एवञ्च वैचित्र्यबोधनार्थमेव व्यापकवचनं वाक्यमित्युपात्तमित्यवधेयम् ।

( ६६ ) श्लेषं निरूपयति—श्लिष्टैरिति । श्लिष्टैः अनेकेनार्थेन सम्मिलितैः वाच्यतासम्बन्धेन संश्लिष्टैः एकोच्चारणेनैव युगपदनेकार्थबोधकैरितियावत्, पदैः सुप्तिङन्तैः अनेके येऽर्थास्तेषामभिधानमभिधयोपस्थानं यत्र तस्मिन् तथोक्ते सतीतिशेषः, श्लेषस्तन्नामकः शब्दालङ्कार इष्यते कविभिरितिशेषः । पदैरिति बहुवचनमतन्त्रम्, तेनैकस्मिन्नपि पदे अनेकार्थानां मिथः संश्लेषणात् श्लेषः ।

'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति नियमाङ्गीकर्त्तॄणां मतेन एकानुपूर्वीकत्वेऽपि तत्तदर्थनिरूपितवृत्तिभेदाच्छब्दभेद इत्यर्थकेन "अर्थभेदेन शब्दभेदः" इतिनयेन भिन्नाः शब्दाः, इन्द्रशत्रुप्रभृतीनां भिन्नसमासानां श्लेषे उदात्तानुदात्तादिस्वरभेदे भेदग्रहो दुरपह्नव इति शङ्कानिराकरणाय "काव्यमार्गे स्वरो न गण्यते "इति नयस्तेन च युगपदुच्चारणविषयतया यत् श्लिष्यन्ति भिन्नं स्वरूपमपह्नवते एकवृन्तगतफलद्वयन्यायेन यत्रार्थद्वयप्रतीतिः स श्लेषः । एवञ्चैकोच्चारणापह्नुतभेदकभिन्नार्थकसदृशनानाशब्दवत्त्वं श्लेष इति फलितम् ।"सकृदुच्चरित" इतिनियमानङ्गीकर्त्तॄणां मते एकदा गृहीतनानातात्पर्यकः शब्द एव श्लेष इत्यपि सुवचम् । नच "दुर्गालङ्घित" इत्यादाविवात्रापि अर्थान्तरे व्यञ्जनैवास्त्वितिवाच्यम्, प्रकरणादीनां तुल्यत्वेनैकत्राभिधानियन्त्रणाभावात । तस्मान्नानार्थेषु श्लिष्टेषु यत्रानेकत्र तात्पर्यग्राहकं युगपदवतरति नावतरति वा तत्र श्लेषः । यत्र तु क्रमेण तत्र आवृत्तिः सा च पुनरनुसन्धानं यथा "अवा भज्यन्तां भुज्यन्तां दीव्यन्ताम्" इति अत्रान्वयिपदार्थभेदाद्द्वोदरावृत्त्यैव बोधः उच्चारणं तु तन्त्रेणैव । यत्र त्वेकत्रैव तत्र व्यञ्जनेतिव्यवस्थितिः । नानार्थेषु श्लिष्टेषु यत्रानेकत्र प्रकरणादिकं युगपदवतरति तत्रैव श्लेष इति तु न वाच्यम्, अनेकत्र प्रकरणाद्यनवतारे "योऽसकृत परगोत्राणाम्" इत्यादौ श्लेषानापत्तेरित्यनुसन्धेयम् । एवञ्च तर्कवागीशैः सकृदुच्चरितेतिन्यायमवतारयद्भिर्यदुक्तमत्र तत्समीचीनमेव यत्तु न्यायमेनं श्लेषेतरविषयत्वेन प्रकल्प्य तर्कवागीशमतं नादरणीयमित्यभिहितं तत्र तत्समाधानमेव नादरणीयम् उक्तयुक्तेः, प्रदीपादौ स्पष्टमुपलम्भाच्च ।

(६७) वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि ॥ ११ ॥
श्लेषाद्विभक्तिवचनभाषाणामष्टधा च सः ।

क्रमेणोदाहरणम्—

(६८) 'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥'

(६७) प्राचीनमतानुसारेण श्लेषं विभजते—वर्णेति । वर्णौ प्रत्ययार्थातिरिक्तयत्किञ्चिदक्षरविशेषौ प्रत्ययौ विभक्तिभिन्नौ प्रत्याययति अर्थं बोधयतीति प्रत्ययः प्रत्ययसंज्ञकः एवञ्च प्रत्ययाधिकारपठितत्वे सति अर्थबोधकत्वं तत्त्वम्, प्रत्ययपदमत्र गोबलीवर्दन्यायेन विभक्तिभिन्नपरम् अन्यथा "विभक्ति ··"इति पृथगुपादानमनर्थकं स्यात्, लिङ्गे पुंस्त्वस्त्रीत्वरूपे पुंस्त्वनपुंसकत्वरूपे स्त्रीत्वनपुंसकत्वरूपे वा प्रकृत्योः प्रत्ययविधानोद्देश्यतावच्छेदकाक्रान्तयोः प्रत्ययविधानावधिभूतयोर्वा, पदयोः सुबन्तयोस्तिङन्तयोस्तदुभयोर्वा, विभक्ती सुब्द्वयं तिङ्द्वयं तदुभयं वा वचने एकवचनद्विवचनबहुवचनानां मध्ये यत् किञ्चित् द्वयम्, भाषे—

"संस्कृतप्राकृतमागधपिशाचभाषाश्च शौरसेनी च ।
षष्ठोऽत्र भूरिभेदो देशविशेषादपभ्रंशः ॥"

इति षड्विधासु मध्ये यत्किञ्चिद्भाषाद्वयञ्च तासामपि च श्लेषात् एकत्र सम्मेलनेनानेकार्थप्रतिपादनात् स श्लेष अष्टधा । तथाच (१) वर्णश्लेषः (२) प्रत्ययश्लेषः (३) लिङ्गश्लेषः (४) प्रकृतिश्लेषः (५) पदश्लेषः (६) विभक्तिश्लेषः (७) वचनश्लेषः (८) भाषाश्लेषश्चेति । तत्र च पदश्लेषस्य सर्वत्र प्रसक्तावपि यत्र यत् श्लेषेण वैचित्र्यातिशयो जायते तत्संज्ञयैव तद्व्यपदेशोऽभ्युपगन्तव्यः ।

रुद्रटस्तु वर्णादिश्लेषाणां प्रत्येकं लक्षणमित्थमभिहितवान्—

"यत्र विभक्तिप्रत्ययवर्णवशादेकरूपमापतति । वर्णानां विविधानां वर्णश्लेषः स विज्ञेयः
यत्र प्रकृतिप्रत्ययसमुदायानां भवत्यनेकेषाम् । सारूप्यं प्रत्ययतः स ज्ञेयः प्रत्ययश्लेषः ॥
स्त्रीपुंनपुंसकानां शब्दानां भवति यत्र सारूप्यम् । कृत्तद्धितत्वसमासैर्लिङ्गश्लेषः स विज्ञेयः॥
सिद्ध्यति यत्रानन्यैः सारूप्यं प्रत्ययागमोपपदैः ।
प्रकृतीनां विविधानां प्रकृतिश्लेषः स विज्ञेयः ॥
यस्मिन् विभक्तियोगः समासयोगश्च जायते विविधः ।
पदभङ्गेषु विभक्तो विज्ञेयोऽसौ पदश्लेषः ॥
सारूप्यं यत्र सुपां तिङां तथा सर्वथा मिथो भवति ।
सोऽत्र विभक्तिश्लेषो वचनश्लेषस्तु वचनानाम् ॥
यस्मिन्नुच्चार्यन्ते सुव्यक्तविविक्तभाषाणि ।
वाक्यानि यावदर्थं भाषाश्लेषः स विज्ञेयः ॥"

(६८) वर्णश्लेषमुदाहरति—प्रतिकूलतामिति । शिशुपालवधे नवमसर्गे सूर्यास्तवर्णनमिदम् । विधौ भाग्ये चन्द्रे च "भाग्यं स्त्रीनियतिर्विधिः" "विधुः सुधांशुः शुभ्रांशुः" इति चामरः, प्रतिकूलतां प्रतिद्वन्द्विवदताभिमतार्थोपस्थापकत्वं विरुद्धफलभागित्वञ्च उदयरूपफलभागित्वमितियावत्, उपगते प्राप्ते सति, बहूनि साधनानि फलनिष्पादनोपाया यस्य तस्य भावस्तत्ता तथोक्ता बहुविधत्युपायशालित्वमपीत्यर्थः, हि निश्चितम्,

( ६९ ) अत्र 'विधौ' इति विधु-विधिशब्दयोरुकारेकारयोरौकाररूपत्वाच्छ्लेषः ।

( ७० ) 'किरणा हरिणाङ्कस्य दक्षिणश्च समीरणः ।
कान्तोत्सङ्गजुषां नूनं सर्व एव सुधाकिरः ॥'

( ७१ ) अत्र 'सुधाकिरः' इति क्विप्-क-प्रत्यययोः ।

( ७२ ) किं चात्र बहुवचनैकवचनयोरैकरूप्याद्वचनश्लेषोऽपि ।

---

विफलत्वम् अकिञ्चित्सहायकत्वम्, एति प्राप्नोति । अर्थद्वयमपि श्लेषेण समर्थयति—अवलम्बनायेति । पतिष्यत उन्नतपदात् भ्रश्यतः उदयादस्तं गमिष्यत सौभाग्याद्दौर्भाग्यं गमिष्यत इति यावत् दिनभर्त्तुः सूर्य्यस्य तत्त्वेनाध्यक्षस्यापि वा कस्यापि पुंसः, कराणां रश्मीनां हस्तानाञ्च सहस्रमपि", करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः" इति मेदिनी, अवलम्बनाय आकाशे आश्रयणाय अस्तमयविघातायेतियावत्, नाभूत् उपायो नाभवत् । अयमाशयः—पतिष्यतः पुंसः करद्वयमपि पतनविघाताय भवति तस्य तु—किं पुनः करसहस्रमप्यवलम्बनाय, नाभूदितिश्लेषः । नचैवमपि विधोरुदये सूर्य्यस्यास्तमितत्ववर्णनं एव तात्पर्य्यं तदा "विफलत्वमेति बहुसाधनता" इति द्वितीयपादार्थस्य सङ्गतिः कथमितिवाच्यम्, कविना विधोः (चन्द्रमसः) प्रतिकूलतयोपस्थित्या सूर्य्यास्तस्य वर्णितत्वात् । विधोः (चन्द्रमसः) प्रतिकूलतायां विधीयमानं निखिलं विपरीतं भवति सम्पच्च विपद्यतीति दैवज्ञराद्धान्तः । प्रकृते च विधोः ( चन्द्रमसः ) प्रतिकूलता उदयपदप्राप्तिरेवेत्यवधेयम् । वैतालीयं छन्दः, तल्लक्षणन्तूक्तं प्रागेव ।

( ६९ ) उक्तोदाहरणे वर्णश्लेषमुपपादयति—अत्रेति । उकारेकारयोः विजातीययोरपीतिशेषः औकाररूपत्वात् औकाररूपप्राप्तेः श्लेषे मेलनेन विधिविधुशब्दार्थद्वयस्यापि वाच्यत्वम् । तथाच विधिविधुशब्दयोर्विजातीययोरपीकारोकारयोः "अच्च घेः" इति पाणिनिसूत्रेण ङौ परे तुल्यरूपत्वम्, तस्मात् विधाविति शब्दे औकारमाहात्म्येनाभिन्नप्रयत्नोच्चार्यत्वमिति विधिविधुशब्दप्रतिपाद्यार्थद्वयोरपि तयोर्वचित्र्यातिशयजननात् वर्णयोः श्लेषः । विधाविप्यादेशिनि भेदेऽपि आदेशमादाय साहश्यं बोध्यम् ।

( ७० ) एवं वर्णमात्रश्लेषं दर्शयित्वा प्रत्यययोर्वचनयोश्चैकत्रैव श्लेषं दर्शयति—"किरणा" इति । हरिणाङ्कस्य मृगचिह्नस्य चन्द्रमस इति यावत् "एणाङ्कः मृगाङ्कः कलानिधिः" इत्यमरः, किरणा रश्मयः, दक्षिणो दक्षिणाया दिश आगत समीरणो वायुश्च, "समीरणः स्यात् पवने पथिके च फणिज्जके" इति मेदिनी, एवं सर्वं एव, कान्तानां प्रेयसां प्रेयसीनां वा उत्सङ्गान् क्रोडान् जुषन्तीति तेषां प्रेयसां तासां प्रेयसीनां वा, नूनं निश्चितम्, सुधामसृतं किरतीति वा अमृतवर्षकः अमृतवर्षिका च । श्लोकश्छन्दः (२२पृ०) ।

(७१) प्रत्यययोर्वचनयोश्च युगपत् श्लेषमुपपादयति-अत्रेति उक्तोदाहरणे इत्यर्थः । क्विप्-क-प्रत्यययोः श्लेष इति पूर्वतोऽनुषञ्जनीयम् । अथ च "किरणा" इत्यनेन सम्बन्धाय सुधां किरन्तीति सुधाकिरः 'कॄ विक्षेपे' इत्यस्मात् 'अन्येभ्योऽपि दृश्यते' इति पा० सूत्रेण क्विप् "ऋत इद्धातोः" इत्यनेनेत्वे सति प्रथमाया बहुवचने रूपम् । "समीरणः" इत्यनेन सम्बन्धाय तु सुधां किरतीति सुधाकिरः तस्मादेव कॄधातोः 'इगुपधज्ञाप्रीकिरः कः' इति पाणिनिसूत्रेण कप्रत्ययान्तात् प्रथमाया एकवचने रूपमित्याशयः ।

(७२) किञ्चेति । अपि चेत्यर्थः । अत्र "सर्वं एव" इत्यत्र सुधाकिर इत्यत्र च ।

( ७३ ) 'विकसन्नेत्रनीलाब्जे तथा तन्व्याः स्तनद्वयी ।
तव दत्तां सदामोदं लसत्तरलहारिणी ॥'

( ७४ ) अत्र नपुंसकस्त्रीलिङ्गयोः श्लेषो वचनश्लेषोऽपि ।

( ७५ ) 'अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ॥'

यद्यपि "कान्तोत्सङ्गजुषाम्" इत्यत्रस्त्रीपुंल्लिङ्गयोः समानरूपत्वात् लिङ्गश्लेषस्तथापि क्विप्-क्प्रत्यययोः श्लेषस्यैव चमत्कारातिशयाधायकत्वात् प्रत्ययश्लेषत्वेनैव व्यवहार इति भावः ।

उदाहरणान्तरं यथा—

"रजनिरमणमौलेः पादपद्मावलोकक्षणसमयपराप्ता पूर्वसम्पत्सहस्रम् ।
प्रथमनिवहमध्ये जातु चित्त्वप्रसादादहमुचितरुचिः स्यान्नन्दिता सा तथा मे॥

अत्र स्यान्नन्दितेति स्याम् स्यादिति उत्तमपुरुषप्रथमपुरुषयोस्तुल्यं रूपमिति तयोः श्लेषः । तस्य च पृथगनुक्तेः प्रत्ययश्लेषान्तर्भावः । तथा नन्दितेति तृच्तलोस्तुल्यं रूपमिति तृच्तलोः कृत्तद्धितप्रत्यययोः श्लेषः इतिस्पष्टमन्यत्र ।

(७३) क्रमप्राप्तं लिङ्गश्लेषमुदाहरति—विकसदिति । तन्वी कृशाङ्गी तस्याः, अत्र लसत्तरलहारिणी" इति पदं 'विकसन्नेत्रनीलाब्जे' इत्यस्य विशेषणे सति लसन्ती प्रकाशमाने तरले चञ्चले हारिणी मनोज्ञे चेति द्वयोर्द्वयोः पदयोर्यथाक्रमं कर्मधारयः । ततश्च नपुंसकलिङ्गस्य प्रथमाविभक्तेर्द्विवचनम् । स्तनद्वयीत्यस्य विशेषणे सति तु लसन् शोभमानः तरलो हारमध्यगो मणिर्यस्य स तादृशो हारो मुक्तामाला अस्यास्तीति लसत्तरलहारिणी एकवचनान्तं स्त्रीलिङ्गम् । 'तरलो हारमध्यगः' इत्यमरः । नचात्र"न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः" इत्यनेन निषेधात् कथम् इन्प्रत्यय इति वाच्यम् , अत्र प्रशंसार्थे इन्विधानात् तत्र बहुव्रीहिणा तदर्थस्याप्रतिपादनेन तन्निषेधाप्राप्तेः । विकसन्ती द्योतयन्ती नेत्रे लोचने एव नीलाब्जे नीलकमलयुगलम् , तथा स्तनद्वयी कुचयुगलञ्च, सदा तव आमोदम् आनन्दं दत्तां दधातां दद्याच्च आशिषि लोट् । दा धातोरुभयपदित्वेन विकसदित्यादिना सम्बन्धसमये दत्तामिति आशिषि लोटः परस्मैपदद्विवचनम् , स्तनद्वयीत्यनेन सम्बन्धसमये तु दत्तामिति दाधातोरेव आशिषि लोटः आत्मनेपदस्यैकवचनमित्यवगन्तव्यम् ।

(७४) अत्रेति । उक्तोदाहरणे दर्शितदिशा 'लसत्तरलहारिणीत्यत्र' नपुंसकस्त्रीलिङ्गयोः श्लेषः वचनश्लेषोऽपीति । न केवलं लिङ्गश्लेषमात्रं किन्तु वचनयोर्द्विवचनैकवचनयोरपि श्लेषः । तथा च ददातेः परस्मैपदे लोटो द्विवचनान्तत्वम् , आत्मनेपदे पुनरेकवचनान्तत्वमिति तथा लसत्तरलहारिणीत्यत्र विकसदित्यादेः स्तनद्वयीत्यस्य च विशेषणत्वे द्विवचनैकवचनान्तत्वमितिभावः । तर्कवागीशास्तु—"क्षपिना णिन् प्रत्ययस्य इन् प्रत्ययस्य च श्लेषः" इत्याहुः । लिङ्गश्लेषत्वेन व्यवहारस्तु तस्यैव वैचित्र्यातिशयोत्पादनादिस्याशयः । वचनश्लेषं विना लिङ्गश्लेषस्तु "हरिस्तथाम चावतुत्" इति । अत्र हरिस्तन्नाम्नो लिङ्गभेदेऽपि अवतुदित्येकरूप्यम् वचनं तु अभिन्नम् ।

( ७५ ) प्रकृतिश्लेषमुदाहरति-अयमिति । राजपुत्रे जाते जन्मग्रहान् जानन् ज्योति-

( ७६ ) अत्र 'वक्ष्यति' इति वहि-वच्योः, 'सामर्थ्यकृत्' इति कृन्तति-करोत्योः प्रकृत्योः ।

( ७७ ) 'पृथुकार्तस्वरपात्रम्–' इत्यादि ( ७६८ पृ. ) ।

( ७८ ) अत्र पदभङ्गे विभक्तिसमासयोरपि वैलक्षण्यात्पदश्लेषः, न तु प्रकृतिश्लेषः ।

---

विद् उक्तिरियम् । अयं नृपात्मजो राजपुत्रः हृदि स्वचेतसि ज्ञेषु विद्वत्समाजेषु च "ज्ञो ब्रह्मबुधविद्वत्सु" इति मेदिनी, सर्वाणि अखिलानि व्याकरणादीनि शास्त्राणि ( कर्म ) वक्ष्यति प्रापयिष्यति कथयिष्यति चेति यथाक्रममर्थः । तथा अमित्राणां शत्रूणां मित्राणां स्वसुहृदां च सामर्थ्यं कृन्तति करोतीति च सामर्थ्यकृत् प्रभावेण सामर्थ्यच्छेत्ता साहाय्येन सामर्थ्यकारकश्च भविष्यतीतिशेषः । अत्रापि यथाक्रममर्थः ।

( ७६ ) श्लेषमुपपादयति—अत्रेति । वहिवच्योः प्रकृत्योरित्युत्तरेण सम्बन्धः । प्रकृत्योः श्लेष इति पूर्वतोऽनुषङ्गः । कृन्ततिकरोत्योः "कृतीछेदने" "डुकृञ्करणे" इकश्तिपो धातुनिर्देशे" इति तिपा निर्देशे तथा च कृद्रूपाया कृरूपायाश्चेत्यर्थः । एवञ्चात्र "हृदि" इत्यनेन सम्बन्धे "वक्ष्यति" इति "वह प्रापणे" इति प्रापणार्थकवहधातोर्लृटि स्ये तिपि "कुहोश्चुः" इति पा. सू. चुत्वे आदेशप्रत्यययोरितिपाणिनिसूत्रेण षत्वे प्रयोगः, "ज्ञेषु" इत्यनेन सम्बन्धे तु "वक्ष्यति" इति "वच परिभाषणे" इत्यस्माद्धातोः लृट् स्यतौ प्रयोगः।

तथा अमित्राणामित्यनेन सम्बन्धे सामर्थ्यकृत् इति उक्तार्थे सामर्थ्ये कर्मण्युपपदे कृतेः क्विपि तलोपे तुकि प्रयोगः, मित्राणामित्यनेन सम्बन्धे तु सामर्थ्ये कर्मण्युपपद एव कृञः क्विपि तुकि प्रयोगः । अथ च पुनर्विशेषः पूर्वत्र तिङ्प्रत्ययस्य, परत्र कृत्प्रत्ययस्य माहात्म्यम् । तथाचात्र पदापेक्षया प्रकृतिश्लेषस्यैव वैचित्र्यातिशयोत्पादनात् प्रकृतिश्लेषत्वेनैव व्यवहार इत्याशयः ।

( ७७ ) पदश्लेषमुदाहरति—पृथुकार्तेति । व्याख्यातमिदं दोषपरिच्छेदे सन्दिग्धत्वस्य क्वचिददोषत्वकथनप्रस्तावे (७६८ पृ०) ।

अत्र पृथुकार्त्तस्वरादिपदानामेव श्लेषेण वैचित्र्यातिशयोत्पादनात पदश्लेषत्वेनैव व्यवहारः ।

( ७८ ) ननु पृथुकार्त्तस्वरेत्यादौ पृथु कार्त्तस्वरः पृथुक आर्त्तस्वरादिशब्दानां प्रातिपदिकरूपप्रकृतिश्लेषोऽपि सम्भवितुमर्हति तत्कथं न प्रकृतिश्लेष इत्यत आह—अत्रेति । पदानां भङ्गे अर्थबोधनाय समस्तपदस्य पार्थक्ये, तथाच 'पृथुकार्त्तस्वर' इत्यादौ 'पृथु-कार्त्तस्वर' इत्यादिरूपेण "पृथुक आर्त्तस्वर" इत्यादिरूपेण च पदानां विश्लेषणे इत्यर्थः, राजपक्षे "पृथूनि कार्त्तस्वरपात्राणि यत्रे"त्येवं क्रमेण, याचकपक्षे—"पृथुकानामार्त्तस्वरस्य पात्र" मित्यादिक्रमेण च न केवलं पदानामेव वैलक्षण्यात् किन्तु बहुव्रीह्यादिसमासघटकप्रथमादिविभक्तेः बहुव्रीह्यादिसमासयोश्चापि वैलक्षण्यात् वैषम्यात् । यद्यपि न्यूनाधिकेत्यादिलक्षणवशादेव प्रकृतिश्लेषतो भेदसिद्धिस्तथापि प्रकारान्तरेणापि तत्सिद्धिर्दर्शिता । एवञ्च पदश्लेषो हि यथासम्भवपदभङ्गे विभक्तिसमासयोर्वैलक्षण्ये च ज्ञेयः, प्रकृतिश्लेषस्तु तद्वैलक्षण्ये एवेत्यनयोर्भेद इत्यभिप्रायः ।

( ७९ ) एवञ्च—

( ८० ) 'नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः ।
सदृशे वनवृद्धानां कमलानां तदीक्षणे ॥'

( ८१ ) अत्र लुब्धशिलीमुखादिशब्दानां श्लिष्टत्वेऽपि विभक्तेरभेदात्प्रकृतिश्लेषः । अन्यथा सर्वत्र पदश्लेषप्रसङ्गः ।

( ८२ ) 'सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः ।
नयोपकारसांमुख्यमायासि तनुवर्तनम् ॥'

---

क्वचित्पदभङ्गाभावेऽपि प्रकृतिविभक्तिवैलक्षण्येन पदश्लेषो यथा—

"यस्य चेतः प्रियालोके तस्य स्मरकदर्थनम् ।"

अत्र यसो दैवादिकस्य तसश्च लोण्मध्यमपुरुषैकवचने यस्य तस्येति यत्तदोः षष्ठ्येकवचनेऽपि वैलक्षण्यात् पदश्लेषः ।

( ७९ ) यथासम्भवं पदविभक्तिसमासवैलक्षण्य एव पदश्लेषः अन्यथा प्रकृतिश्लेष इति सिद्धे आह—एवञ्चेति । निर्दिष्टक्रमेण पदश्लेषस्वीकारे चेत्यर्थः ।

( ८० ) तन्मात्रावैलक्षण्ये प्रकृतिश्लेषमेवेत्युदाहरति—नीतानामिति । कस्याश्चिन्नायिकाया लोचनवर्णनेयम् । भूरयो बहुलाः शिलीमुखा बाणा येषां तैः तथोक्तैः, "अलिबाणौ शिलीमुखौ" इत्यमरः, लुब्धैर्व्याधैः "लुब्ध आकाङ्क्षिणि व्याधे" इति हैमः, आकुलीभावं भयव्यग्रत्वं नीतानां प्रापितानाम्, वने कानने "वने सलिलकानने" इत्यमरः, वृद्धानां वृद्धिं प्राप्तानां, कमलानां मृगाणां मृगलोचनानामित्यर्थः, "कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे । मृगभेदे तु कमलः" इति मेदिनी, सदृशे समाने समानसुन्दर इत्यर्थः तस्या नायिकाया ईक्षणे लोचनयुगलम्, विद्यत इति शेषः । पक्षान्तरे तु लुब्धैः सौरभे लोभं प्राप्तैः भूरिशिलीमुखैर्बहुभिर्भ्रमरैः आकुलीभावं व्याप्ततां नीतानां प्रापितानाम्, वने सलिले वृद्धानां वृद्धिं प्राप्तानां, कमलानां जलजानां, पद्मानामितियावत्, सदृशे तस्या नायिकाया ईक्षणे लोचनयुगलम् ।

( ८१ ) अत्रेति । आदिपदेन वनकमलशब्दयोः परिग्रहः । श्लिष्टत्वेऽपि नानार्थकतया सम्बद्धत्वेऽपीत्यर्थः । विभक्तेः समासस्य चेतिशेषः । अभेदात् वैलक्षण्याभावात् । प्रकृतीनां लुब्धादिरूपाणां श्लेषः । अन्यथा विभक्त्यादीनामभेदस्थलेऽपि पदश्लेषस्वीकारे सर्वत्र वर्णश्लेषस्थलमात्रे पदश्लेषप्रसङ्गः । एवञ्च पदश्लेषासङ्कीर्णं प्रकृतिश्लेषोदाहरणं न स्यादिति प्राचां प्रकारान्तरेण प्रकृतिश्लेषस्वीकारोच्छेदप्रसङ्गः स्यादितिभावः ।

( ८२ ) विभक्तिश्लेषोदाहरणं दर्शयति—सर्वस्वमिति । शिवं प्रति तद्भक्तस्य पुत्रं प्रति चौरस्य चोक्तिरियम् । तत्राद्यपक्षे—हे हर ! शम्भो त्वं सर्वस्य लोकस्य सर्वस्वं सर्वं च तत् स्वं धनमैश्वर्यमितियावत्

"स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः,

ईशावास्यमिदं सर्वं यत् किञ्चिज्जगत्यां जगत्" इति श्रुतिः तस्मात् त्वयैव प्रापणीयत्वेन सर्वदैवोपास्य इति भावः, तथा त्वं सर्वस्य त्वद्भक्तजनस्य भवस्य संसारस्य जन्ममरणरूपस्याविच्छिन्नतया प्रवाहस्य छेदो मुक्तिप्रदानेन ततो निवर्त्तनमुद्धारो वा तत्परस्त-

( ८३ ) अत्र 'हर' इति पक्षे शिवसंबोधनमिति सुप्। पक्षे' हृधातोस्तिङिति विभक्तेः। एवं 'भव' इत्यादौ।

( ८४ ) अस्य च भेदस्य प्रत्ययश्लेषेणापि गतार्थत्वे प्रत्ययान्तरासाध्यसुबन्ततिङन्तगतत्वेन विच्छित्तिविशेषाश्रयणात्पृथगुक्तिः।

( ८५ ) 'महदे सुरसंधं मे तमव समासङ्गमागमाहरणे।
हर बहुसरणं तं चित्तमोहमवसर उमे सहसा॥'

---

त्परायणः "आमुक्तेः संसार" इति नियमान् मोक्षप्रदानेन जन्मादिबन्धदूरीकरणपरायण इत्यर्थः, तथा त्वं नयेन नीतेरुपदेशेन य उपकारो दुःखत्राणं तस्मिन् साम्मुख्यमानुकूल्यं यस्य तत्तथोक्तम्, तदनुवर्त्तनं शङ्कराचार्य्यादिदेहधारणम् आयासि प्राप्नोषीत्यर्थः। उद्योतकारास्तु—"छेदतत्परे बन्धच्छेदपरो भव उपकारसाम्मुख्यं नय प्रापय आयासोऽस्यास्तीति आयासि वर्त्तनं तपश्चर्य्यादियोगिजीवितं तनु विस्तारय सर्वस्वादिकं हृत्वा तपः कारय येन मोक्षः स्यादितितात्पर्य्यार्थः इत्याहुः। परे तु—

"यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम्।
यन्मदः पुरुषः स्तब्धो लोकं मां चावमन्यते॥"

इति न्यायेन सर्वस्वाद्यपहारादिनानुग्रहं कुर्वित्याहुः। पक्षान्तरे तु-हे पुत्र! त्वं सर्वस्य जनस्य सर्वस्वं ग्रामहिरण्यादिकं समस्तमेव धनं हर अपहर चोरयेत्यर्थः, तत्र कश्चिद्यदि प्रतिबन्धको भवेत्तदा तस्य छेदे भित्तेरङ्गप्रत्यङ्गादेश्च कर्त्तने ध्वनिना मारणे तत्परः प्रवृत्तो भव, तथा आयासि परेषाम् आयासदायकं क्लेशकारकं वर्त्तनं जीविकां तनु विस्तारय यद्वा आयासि परिश्रमविशिष्टम्, तनुवर्त्तनं सन्धिद्वारादिना अन्यगेहे शरीरप्रवेशनम्, उपकारसाम्मुख्यं प्रत्युपकारकरणं नय अपनय वा परधनप्राप्तिरूपोपकाराय उपयोगितां नय प्रापय, परकीयवित्तानयनाय सन्धिद्वारेण भित्तिरन्ध्रादिना वा तद्गेहे स्वदेहं प्रवेशय इत्यर्थः।

( ८३ ) अत्रेति। 'हर' इति रूपमिति शेषः पक्षे एकस्मिन्निति शेषः। इति सुबिति। अस्माद्धेतोस्तदन्तर्गता "सुर्भविभक्तिरित्यर्थः। पक्षे अपरस्मिन्निति शेषः। हृधातोरिति हरणार्थकात् हृञ्धातोः, परस्माद्विधीयमानाया इति शेषः। तिङिति विभक्तेरिति। लिडन्तर्गतायाः लोटि सिपो विभक्तेः श्लेष इत्यर्थः। एवं यथाऽत्र सुप्तिङोः श्लेषस्तथा भव वेत्यत्रापीत्याशयेनाह—एवमिति। आदिपदेन नय आयासि तनु इत्येतेषां परिग्रहः। तथा च भवेत्यस्य शिवपक्षे सम्बोधनत्वेन चौरपक्षे क्रियापदत्वेन च सुप्तिङ्विभक्तित्वम्। एवमन्ययोरपि स्वयमेवोहनीयम्।

( ८४ ) ननु सुप्तिङो विभक्तेरपि प्रत्ययत्वेन प्रत्ययश्लेषेणैव विभक्तिश्लेषस्यापि गतार्थत्वेऽलंविभक्तिश्लेषेणेत्यत आह—अस्य चेति। भेदस्य विभक्तिश्लेषरूपप्रकारस्य, प्रत्ययश्लेषेणापीत्यपिभिन्नक्रमे प्रत्ययश्लेषेण गतार्थत्वेऽन्तर्भूतत्वेऽपीत्यर्थः। प्रत्ययान्तरेण क्रियादिना असाध्यमनिष्पाद्यं यत् सुबन्तं तिङन्तञ्च हरादिपदं तद्गतत्वेन तदन्तर्वर्त्तित्वेन, विच्छित्तिविशेषाश्रयणात् वैचित्र्यविशेषालम्बनात् कृत्तद्धितान्तस्य स्वादिव्यतिरेकेण प्रयोगाभावात् प्रत्ययान्तरसाध्यत्वम्, सुप्तिङन्तस्य तु न तथात्वमितिविशेषः। "आयासि" इत्यत्र प्रकृतिविभ वैलक्षण्येन पदश्लेषोऽपि" इति तर्कवागीशाः।

( ८५ ) भाषाश्लेषोदाहरणमाह—महदे इति। आनन्दवर्धनप्रणीते देवीशतके भक्त-

( ८६ ) अत्र संस्कृतमहाराष्ट्र्योः ।

द्वयस्य प्रत्युक्तिरियम् । अत्र संस्कृतार्थे यथा—महमुत्सवं ददातीति तत्सम्बुद्धौ तथोक्ते, 'मह उद्धव उत्सवः' इत्यमरः, हे उत्सवद इत्यर्थः, हे उमे गौरि ! सुराणां देवानामपि सन्धा सन्धानं सम्यग्ज्ञानमितियावत् यस्मात्तथाभूतम्, यद्वा सुरैः देवैः सन्धा सन्धिः मिलनमितियावत् यस्मात्तथाभूतम्, आगमाहरणे वेदविद्योपार्जने मे मम तं प्रसिद्धं समासक्तं संसक्तिम् अव रक्ष, तथा अवसरे मोहापचयोचितसमये बहुसरणं बहु अनेकधा सरणं प्रसरणं यस्य तथाभूतम्, बहुविषयगामिनमित्यर्थः, यद्वा बहु वारम्वारं सरणं संसारो यस्मादित्यर्थः, तं प्रसिद्धं चित्तमोहं सहसा झटिति हर अपनय । प्राकृतार्थपक्षे तु—

मह देसु रसम् धम्मे तमवसम् आसम् गमागमा हरणे
हरबहु सरणं तम् चित्तमोहम् अवसरउ मे सहसा ॥ इति च्छेदः ।
"मम देहि रसं धर्म्मे तमोवशाम् आशां गमागमात् हर नः ।
हरवधु ! शरणं त्वं चित्तमोहम् अपसरतु मे सहसा ॥" इति संस्कृतम्

चित्तमोहमित्यत्र मोहशब्दस्य गुणवाचकत्वात "क्लीवे गुणगाः" इतिप्राकृतसूत्रेण नपुंसकत्वमितिमर्मज्ञाः । हे हरवधु गौरि ! धर्म्मे पुण्ये कर्मणि ममरसं प्रीतिं देहि प्रयच्छ। "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इत्यमरः, नः अस्मत्सम्बन्धिनीं गमो गमनं मरणमितियावत् आगमः आगमनं पुनर्जन्मेतियावत् यस्मिंस्तादृशात् संसारात्, तमोवशां तमोगुणयुक्ताम् अज्ञानजनितामित्यर्थः आशां पार्थिवसुखेच्छां हर अपनय । त्वं मे मम शरणं रक्षयित्री भवसीतिशेषः "शरणं गृहरक्षित्रोः" इत्यमरः, सहसा शीघ्रं चित्तमोहम् अपसरतु दूरीकरोतु । जवनविपुला च्छन्दस्तल्लक्षणन्तूक्तमेव ।

( ८६ ) अत्रेति । संस्कृतमहाराष्ट्र्योः भाषयोरितिशेषः, संस्कृतप्राकृतभाषयोरित्यर्थः । श्लेष इत्यनुषञ्जनीयम् । उत्कृष्टं प्राकृतं महाराष्ट्रीतिव्यपदिश्यते । तदाह दण्डी—

"महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः ।
सागरः सूक्तिरत्नानां सेतुबन्धादियन्मयम् ॥" इति । न तु—
"भक्तिं विना वशनोहे वीण्यानें वा मृदङ्गनादानें ।
कल्न्यादानफलातें केवीं पावे मृदङ्गनादानें ॥"

इत्यादिमहाराष्ट्रजनसुप्रसिद्धगाथेतिबोध्यम् । भाषासमलक्षणे "भाषासु विविधास्वपि" इत्युक्तत्वात् एकप्रकारकैरेव शब्दैरनेकभाषासु वाक्योपपत्तिस्थले भाषासमः, भाषाद्वयमात्रे वाक्योपपत्तिस्थले तु भाषाश्लेष इति त्वभिहितमेव । अत्र तर्कवागीशेन तु "भाषासमे तु भाषाणामैकरूप्यमेव न त्वर्थभेदः इह त्वर्थभेदोऽपी"त्युक्तम् ।

अत्रेदम्बोध्यम्—संस्कृतप्राकृतमागध्यादिभेदेन षड्विधा भाषा इति तु दर्शितं श्लेषविभागस्थले । तत्र संस्कृतप्राकृतयोरुदाहरणं ग्रन्थकृतैव दर्शितमिदानीं काव्यालङ्कारप्रतिपादितान्युदाहरणानि प्रदर्श्यन्ते यथाक्रमम् ।

तत्र संस्कृतमागध्योः यथा—

(क) "कुललालिलावलोले शलिलेशे शालशालिलवशूले ।
कमलाशवलालिवलेऽमाले दिशमन्तकेऽविशमे ॥"

(क) क्लिष्टत्वादुदाहरणानामर्थाः लिख्यन्ते—

कुररालिरावरोलं सलिलं तत्सारसालिरवशूरम् ।
कमलासवकालिवरं मारयति शाम्यतो विषमम् ॥" इति मागधीच्छाया

संस्कृतपैशाच्योर्यथा—

(ख) "कमनेकतमादानं सुरतनरजतुच्छलं तदासीनम् ।
अप्पतिमानं खमते सोऽगनिकानं नरं जेतुम् ॥
कामे कृतामोदानां सुवर्णरजतोच्छलद्‌दासीनाम् ।
अप्रतिमानं क्षमते स गणिकानां न रञ्जयितुम् ॥ इति पैशाचीच्छाया ।

संस्कृतशूरसेन्योर्यथा—

(ग) "तोदीतदिगगणमदोऽकलहं स सदा बलं विदन्तरिदम् ।
आरदमेहावसरं सासदमारं मदाचारम् ॥"

---

कूलानि लालयन्ति पोषयन्त्येवं शीलास्तेषां कुललालिनां सतां लावे छेदने लोलो लम्पटस्तस्मिंस्तथोक्ते, शलन्तीतिशलाः सोद्योगा ते सन्ति यस्मिन् देशे स शली खङ्गयोधी तं लिशति अल्पीकरोतीति शलिलेशस्तस्मिंस्तथोक्ते, शालैः गृहैः शालन्ते शोभन्ते ये तॉंल्लुनाति छिनत्तीति शालशालिलवः स चासौ शूलं चेति क्लेशोत्पादकत्वात् तथाभूते,

कमलाया लक्ष्म्या शवा मृतसदृशा दरिद्रा इति यावत् तेषु ललति विलसतीत्येवं शीलं बलं यस्य स तस्मिंस्तथोक्ते, मलनं मालः तदभावोऽमालस्तत्रानिवार्ये इत्यर्थः ( मलधारणे ) अन्तके मृत्यौ सति स वासुदेवे विषये या दिक् पन्थास्तां दिशमविशं प्रविष्टोऽस्मि इति 'संस्कृतवाक्यार्थः । मागधस्तु—'कुरराणां पक्षिविशेषाणां या आलिः श्रेणी तद्रावैः रोलः कलकलो यत्र तत्तथाभूतम्, सारसालिरवेण सारसपङ्क्तिक्रन्दनविधानेन शूरं तद्वियोगिमारणसमर्थम्, कमलानां पद्मानाम् आसवो मकरन्दस्तं ये लान्ति गृह्णन्तीत्येवंभूता येऽलिनो भ्रमरास्तैर्वरम्, विषमं विरहिजनदुःखावहं तत्सलिलं शाम्यत शमजुषोऽपि मारयति । शरदि तादृशं सलिलं विलोक्य मुनयोऽपि क्षुभ्यन्तीतिनिष्कर्षः ।'' शरत्कालिकं सलिलं विलोकयतः पान्थस्योक्तिरियम् ।

इह च वर्णादिगतत्वेन अष्टविधत्वं श्लेषस्यासमीचीनमितिचण्डीदासपण्डितराघवानन्दप्रभृतीनां मतम् । तत्तु अष्टविधोदाहरणेषु परस्परं भेदस्योपलम्भादसमीचीनमितिकथनमेवासमीचीनमितिमन्तव्यम् ।

(ख) कमनेकेति । हे सुरतन निधुवनपुरुष ! सुरतातिरिक्तविषये न ते कुशलतेतिसम्बोधनाशयः, खवच्छून्या मतिर्बुद्धिर्यस्य तत्सम्बुद्धौ, यस्त्वया श्लाघ्यते स पुरुषः कं नरमनेकतमानि आदानानि यस्मात्तत् तथोक्तं तत् प्रसिद्धं छलं माया (कर्म) आसीनमाश्रितम्, अप्पतेर्वरुणस्येव मानीऽभिमानी यस्य तम्, अगा निश्चला निकाना दीप्तिर्यस्य तम् , नरं जेतुम् भजतु गच्छतु अहो न तादृशः पुरुषो यं स जेष्यतीति संस्कृतवाक्यार्थः, पौरुषस्तवनार्थमुक्तिः । पैशाचस्तु—स पुरुषो रञ्जयितुं स्वप्रीणनाय कामे कामविषये कृत आमोदो यासां तासां सुवर्णरजताभ्यामुच्छलन्त्यो दास्यो यासां तादृशीनां गणिकानाम् अप्रतिमानं न क्षमते न सहते । वेश्यासङ्गेन खिन्नस्य कस्यचिदुक्तिरियम् ।

(ग) तोदीति । 'तुदति परानिति तोदी, देशनं दिगुपदेशस्तया सह वर्त्तत इति सदिक्, न गणेन सहायेन मदो यस्य सः, सदित्, सदा सर्वदैव अकलहं परिभूतत्वान्निर्वैरम्,

( ८७ ) पुनस्त्रिधा सभङ्गोऽथाभङ्गस्तदुभयात्मकः ॥ १२ ॥

( ८८ ) एतद्भेदत्रयं चोक्तभेदाष्टके यथासम्भवं ज्ञेयम् ।

---

ततो दृश्यते गगनमदः कलहंसशतावलम्बितान्तरितम् ।
आरतमेघावसरं शाश्वतमारं गतासारम् ॥ इति शूरसेनीच्छाया ।

संस्कृतापभ्रंशयोर्यथा—

(घ) "धीरागच्छदुमे हतमुद्वर वारिदःसु ।
अभ्रमदप्प्रसराहरणुविकिरणातेजःसु ॥
धीरा 'गच्छतु' मेघतमो दुर्धरवार्षिकदस्यु ।
अभ्रमदप्रसराहरणं रविकिरणास्ते यस्य ॥ इत्यपभ्रंशच्छाया ।

(८७) एवं वर्णादिगतत्वेनाष्टविधं श्लेषमुपपाद्य पुनः प्रकारान्तरेण त्रैविध्यमुपपादयति—पुनरिति । सभङ्गः शब्द(पद)विश्लेषणसम्पन्नः, अभङ्गः शब्द(पद)सादृश्ये सति अनेकार्थप्रतिपादनमात्रेण निष्पन्नः, तदुभयात्मकः सभङ्गाभङ्गोभयस्वरूपः, अष्टविधोऽयमलङ्कारः पुनस्त्रिधा भवतीत्यर्थः, सभङ्गाभङ्गोभयात्मको हि—वाक्ये क्वचिदंशे सभङ्गः क्वचिदंशे चाभङ्ग इत्येवंरूपो ज्ञेयः । अत्रेदम्बोध्यम्–पदश्लेष—विभक्तिश्लेष–भाषाश्लेषा एतत्त्रिप्रकारा एव सम्भवन्ति, एतदतिरिक्तवर्णश्लेषादयस्तु पञ्च केवलाभङ्गरूपा एव । अत एव वर्णश्लेषादयः पञ्च, पदश्लेष—विभक्तिश्लेष-भाषाश्लेषाश्च प्रत्येकं त्रय इति समुदायेन चतुर्दशविधाः श्लेषा भवन्ति ।" इति

(८८) एतदिति । यथासम्भवमिति । पृथुकार्त्तस्वरपात्रम्" "महदे सुरसन्धम्मे"

---

अतएव दमेहाया उपशमव्यापारस्य अवसरो यस्य तत्, तथा अस्यन्ते क्षिप्यन्ते इत्यासा बाणास्तान् घ्नन्तीत्यासदा धनुर्धरास्तैः सह वर्तत इति सासदम्, गदाभिः सारमिति गदासारम्, इदमारमरिसर्कं बलम् अन्तर्मध्ये आर ससार" । इति संस्कृतवाक्यार्थः । रणस्थस्य कस्यापि वर्णनमिदम् । शौरसेनस्तु–आरतो विरतो मेघानामवसरो यत्र तत्, शाश्वतो निरन्तरं मारो मदनो यत्र तत्, गत आसारो धारासम्पातो यत्र तत्, कलहंसशतेनावलम्बितमन्तरितं चेति तादृशम् । अदो गगनम्, ततो वर्षापगमानन्तरं दृश्यते । शरदि आकाशवर्णनमिदम् ।

(घ) धीरेति । गङ्गाव्यसनं दर्शयन्त्या गौरीसख्या गौरीं प्रत्युक्तिरियम् । हे उमे गौरि ! अवेरिव गड्डरिकाया इव किरणं विक्षेपणं निर्वासनं यस्याः तादृशी, हता मुद् हर्षो यस्याः सा, अणुः कृशा अभ्रे आकाशे माद्यति यः स तथाभूतोऽपां प्रसरो जलप्रसारो यस्याः सा अभ्रमदप्रसरा गङ्गा अहर्दिवसमपि उद्धृता धरा पृथिवी प्रलयापन्निमग्ना यस्मात्तच्च यद्वारि समुद्रजलञ्च तदेव सद्मो गृहं येषां तेषां तेजःसु वड़वानलतेजःस्वित्यर्थः, अगच्छत् अपतत् हरनिर्वासनदुःखिता सती गङ्गात्मानं वड़वानलेऽन्वीचकारेति धीरा सपत्न्याः व्यसनेन स्वस्था भव इति संस्कृतवाक्यार्थः । "हे धीराः दुर्धरा वार्षिका दस्यवो यत्र तथाभूतं तन्मेघतम इति गच्छतु अपसरतु, यस्य मेघतमसः ते न भ्रमं ददातीत्यभ्रमदः प्रसरो येषां तथाविधा रविकिरणा हरणं हर्त्तारः" । इत्यपभ्रंशवाक्यार्थः । गौर्याः पुरस्ताद्धरसमरवर्णनमिदम् ।

एवं प्राकृतमागध्यादीनामप्युदाहरणान्यवगन्तव्यानि ।

( ८६ ) यथा वा—

( ९० ) 'येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥'

इत्यादौ च सभङ्गश्लेषमात्रम्, "प्रतिकूलताम्" "किरणा" "सर्व एव सुधाकिरः" "नीतानामाकुलीभावम्" इत्यादौ चाभङ्गश्लेषमात्रम्, "सर्वस्वं हर सर्वस्य" इत्यादौ सभङ्गाभङ्गोभयात्मकः ।

(८९) एकत्रैव शिष्यानुसन्धानसौकर्यार्थं तद्द्वितयमुदाहर्तुमाह-यथा वेति ।

(९०) येनेति । सुभाषितावल्यां चन्द्रकस्य कवेः हरिहरोभयद्वारैवाशीर्वादात्मकपद्यमिदम् । तत्र हरिपक्षे अभवेन न विद्यते भवो जन्म यस्य तेन तथोक्तेन न भवः संसारो यस्मात्तेन वा "भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः" इति मेदिनी, येन माधवेन, अनः शकटं तत्र निलीनः शकटासुर इति यावत्, ध्वस्तं चरणोद्घट्टनेन पातितम्, "क्लीबेऽनः शकटोऽस्त्री स्यात्" इत्यमरः "अनः क्लीबं जले शोके मातृस्यन्दनयोरपि" इति विश्वः, पुरा किल बाल्ये श्रीकृष्णः शकटरूपधारिणं शकटासुरं पादघातेन पातयामासेति पौराणिकी कथात्रानुसन्धेया । बलिजित् कपटेन विरोचनसुतं बलिनामानं दैत्यं जयतीति बलिजित् बलिजयनशीलः, स्वस्य कायो देहः पुरा अमृतपरिवेषणावसरे स्त्रीकृतो मोहिनीमूर्त्या स्त्रीरूपतां प्रापितः, अमृतार्थं विवदमानानां देवासुराणाममृतपरिवेषणाय मायया भगवता विष्णुना मोहिनीरूपं धृतमिति पौराणिकी वार्त्ता । यश्च उद्वृत्तस्य दृप्तस्य भुजङ्गस्य कालियसर्पस्य हन्ता यद्वा उद्धतस्योद्धतस्वभावस्य भुजङ्गस्य भुजङ्गरूपधारिणः अघासुरस्य हन्ता, अरेरिदम् आरं शत्रुसम्बन्धिबलं सैन्यं याति आक्रमितुं गच्छतीति आरबलयः, यद्वा रवाणां शब्दानां ( नाम्नां ) लयो यत्र स तथोक्तः नामरूपात्मकजगतो ब्रह्मणि लय इति वेदान्तविदनुमतम्, यश्च अगं गोवर्धनपर्वतं गां पृथिवीञ्च अधारयत् धृतवान् श्रीकृष्णवराहरूपतया करेण दंष्ट्राङ्कुरेण चेत्यर्थः अमरा देवाश्च यस्य शशिनं चन्द्रं मथ्नाति पीडयतीति शशिमथ् राहुस्तस्य शिरो हरतितस्मिन्नेवामृतपरिवेषणे चक्रेण छिनत्तीति शशिमच्छिरोहर इति स्तुत्यं स्तवनीयं नाम नामधेयम् आहुः कथयन्ति स्वयम् आत्मनैव निजकूटव्यवहारेणैव अन्धकानां यादवानां क्षयं निवासं द्वारकारूपं गृहं कृतवान् "क्षयो गेहे च कल्पान्तेऽपचये रुजि" इति हैमः, सर्वदा सर्वाभीष्टदाता, स मायाः लक्ष्म्या धवः पतिर्हरिः त्वां पायात् रक्षतु "इन्दिरा लोकमाता मा" "धवः पतिः प्रियो भर्त्ता" इति चामरः हरपक्षे तु—ध्वस्तो विनाशितो मनोभवः कन्दर्पो येन तेन तथोक्तेन, येन हरेण, पुरा त्रिपुरनामकदैत्यवधकाले बलिजितो वामनरूपेण बलिदैत्यविजयिनो विष्णोरपि कायः शरीरम् अस्त्रीकृतो बाणरूपतां प्रापितः । उक्तं च महिम्नः स्तोत्रे पुष्पदन्तेन—

"रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति ।" इति

पुरा किल तारकासुरस्य सुताः तारकाक्षः कमलाक्षो विद्युन्माली चेति त्रयोसुरः

( ६१ ) अत्र 'येन-' इत्यादौ सभङ्गश्लेषः। 'अन्धक-' इत्यादावभङ्गः। अनयोश्चैकत्र संभवात्सभङ्गाभङ्गात्मको ग्रन्थगौरवभयात्पृथङ्नोदाहृतः।

( ६२ ) इह केचिदाहुः—'सभङ्गश्लेष एव शब्दश्लेषविषयः। यत्रोदात्तादिस्वरभेदाद्भिन्नप्रयत्नोच्चार्यत्वेन भिन्नयोः शब्दयोर्जतुकाष्ठन्यायेन श्लेषः। अभङ्गस्त्वर्थश्लेष एव। यत्र स्वराभेदादभिन्नप्रयत्नोच्चार्यतया शब्दाभेदादर्थयोरेकवृन्तगतफलद्वयन्यायेन श्लेषः। यो हि यदाश्रितः स तदलंकार एव। अलङ्कार्यालङ्कारभावस्य लोकवदाश्रयाश्रयिभावेनोपपत्तिः' इति।

---

पितामहाज्ञयाऽधवराः बलाढ्याः मयासुरेण निर्मितेषु काञ्चनं रौप्यं कार्ष्णायसं चेति त्रिविधेषु पुरेषु यथाक्रमं सपरिवाराः तस्थुः। तांश्चासुरान् शम्भुः शराग्निना ददाह तत्र विष्णुः बाणरूपतां प्राप्तवानिति पौराणिकी वार्ताऽत्राप्यनुसन्धेया।

यश्च उद्वृत्ता उत्कर्षेण वर्त्तमाना भुजङ्गा वासुक्यादय एव हारा वलयानि च यस्य स तादृशः, यश्च गङ्गां भागीरथीम् उत्तमाङ्गे अधारयत्, अमरा देवाश्च यस्य शशी अस्यास्तीति शशिमत् शिर उत्तमाङ्गं यस्य स शशिमच्छिराः स चासौ हरश्चेति शशिमच्छिरो हरः इति इत्थं स्तुत्यं स्तवनीयं नाम नामधेयम् आहुः, अन्धकक्षयकरः अन्धकनामकदैत्यस्य क्षयो नाशस्तत्कर्त्ता स उमायाः पार्वत्या धवः पतिः महेश्वरः स्वयं सर्वदा सर्वकाले त्वां पायात् अव्यात्।

( ९१ ) उक्तत्रैविध्यश्लेषं सङ्गमयितुमाह—अत्रेति। प्रथमादिपदेन "उद्वृत्त" इत्यादीनां परिग्रहः। द्वितीयादिपदेन शशिमच्छिरो हर" इत्यस्य परिग्रहः। अनयोः सभङ्गाभङ्गयोः एकत्र एकस्मिन्नुदाहरणे। ननु स्पष्टप्रतिपत्त्यर्थं पृथगेव कथं नोदाहृत अत आह—ग्रन्थेति। नोदाहृत अस्माभिरितिशेषः। यद्यप्यत्र विष्णुपक्षे शशिमत्पदस्य राहावप्रयुक्तत्वम्, क्षयपदस्य गृहे निहितार्थत्वं च तथापि न दोषः श्लेषनिर्वाहकत्वात् वैचित्र्यातिशयजननेन प्रतिबन्धकाभावादित्यनुसन्धेयम्।

( ९२ ) सम्प्रति सभङ्ग एव शब्दश्लेषविषयः, अभङ्गस्त्वर्थश्लेष इति स्वीकुर्वताम् अलङ्कारसर्वस्वकारादीनां मतमनूद्य दूषयितुमुत्थापयति—इहेति। अस्मिन् सभङ्गाभङ्गयोः शब्दार्थालङ्कारतामीमांसावसरे इत्यर्थः। केचित् अलङ्कारसर्वस्वकारादयः। आहुरित्यस्य दूरस्थेनोपपत्तेरितीतिशब्देन सम्बन्धः। यत्र यस्मिन् सभङ्गश्लेषे उदात्तादिस्वरभेदात् उदात्तः "उच्चैरुदात्तः" १।२।२९ इति पाणिनीयसूत्रप्रतिपादितस्वरूपः स्वर आदिर्येषां तेषां भेदात् आदिपदात् अनुदात्तस्वरितानुनासिकादीनां काकुभेदानां चोपसङ्ग्रहः। भिन्नौ विजातीयौ बाह्याभ्यान्तरप्रयत्नभेदेन भिन्नौ यौ प्रयत्नौ ताभ्यामुच्चार्यौ तयोर्भावस्तत्त्वं तेन तथोक्तेन, एकप्रयत्नोच्चारणे एकविधस्वरस्यैव सम्भवात् विजातीयस्वरस्थले भिन्नप्रयत्ने उच्चारणं नावश्यकमितिभावः। भिन्नयोर्विजातीययोरित्यर्थः, अपीतिशेषः। जतु लाक्षा काष्ठञ्च तत् संसक्तं दारु तयोर्न्यायेन तुलनया। तथाच जतुसंयोगात् पूर्वं काष्ठं स्थितम्, पश्चात् जतुसंयोगेन जतुकाष्ठयोर्यथाश्लेषस्तथा भिन्नप्रयत्नोच्चार्यतया भिन्नयोः शब्दयोः श्लेषः सभङ्गः स च शब्दविषयाच्छब्दश्लेष इति।
अर्थयोः स्वरूपतोभिन्नयोरिव एकत्रोत्पत्तिस्थानतया सोदरयोरिव कविप्रतिभोट्टङ्कनमहिम्नाऽभिन्नतयाऽवगम्यमानयोरित्यर्थः। एकस्मिन्वृन्ते प्रसवस्थाने गतं स्थितं यत्फलद्वयं

( ९३ ) तदन्ये न क्षमन्ते।

तथाहि—अत्र ध्वनिगुणीभूतव्यङ्ग्यदोषगुणालङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेरन्वयव्यतिरेकानुविधायित्वेन नियम इति।

---

तस्य न्यायेन तुलनया। "वृन्तं प्रसवबन्धनम्" इत्यमरः, एकस्मिन्वृन्ते यथा फलद्वय वर्त्तते तथा एकस्मिन् शब्दे अर्थद्वयमितिशब्दस्य भेदाभावादभङ्गः श्लेषः। अयञ्चार्थाश्रयत्वादर्थालङ्कार इति तदाशयः। नन्वेतादृशव्यवस्थायां किं बीजमिति तद्दर्शयति—यो हीति। अलङ्क्रियतेऽनेनेतिकरणसाधनः शब्दः। एवञ्च अलङ्कार्य्यालङ्करणभावस्य अलङ्कार्य्यालङ्करणयोरित्यर्थः। लोकवत् लौकिकालङ्कार्य्यालङ्कारवत्, आश्रयाश्रयिभावेन आधाराधेयभावेन उपपत्तिः शब्दार्थश्लेषयोः निष्पत्तिः।

अत्रायमाशयः—लोके अलङ्कारः कटककुण्डलादिर्यत्र हस्ताद्यवयवे वर्त्तते सोऽवयवोऽलङ्कार्य्यः, तदवयवस्य तु सोऽलङ्कारः, एव योऽलङ्कारो यदाश्रयः स तदलङ्कारः यथा वलयो हस्तस्य कुण्डलं कर्णस्येत्यादि। तद्वत् केवलशब्दाश्रितः सभङ्गश्लेष इति व्यपदिश्यते, केवलार्थाश्रितः अभङ्गश्लेषस्तु अर्थश्लेष इत्यभिधीयते। तथा च सभङ्गाभङ्गोभयात्मकोदाहरणे "येन ध्वस्ते"त्यादौ ध्वस्तमनोभवेनेत्यादौ शब्दश्लेषः "अन्धकक्षयकरः" इत्यादौ च अर्थश्लेष इति।

( ९३ ) तदिति। तत् उक्तप्रकारं पूर्वेषां मतम् अन्ये काव्यप्रकाशकारादयोऽभियुक्ता इत्यर्थः। न मन्यन्ते न स्वीकुर्वन्ति। कुतो न मन्यन्ते इत्यत्र हेतुं प्रदर्शयति—तथाहीति। अत्र अलङ्कारशास्त्रे। शब्दार्थगतत्वेन शब्दगतत्वेन अर्थगतत्वेन शब्दार्थोभयगतत्वेन चेत्यर्थः व्यवस्थितेर्व्यवस्थायाः अन्वयव्यतिरेकयोरनुविधायित्वेन अनुकूलत्वेन नियमो निर्णयः। तथा च तत्सत्त्वे तत्सत्ता अन्वयः यथा दण्डचक्रादिसत्त्वे घटोत्पत्तिसत्त्वमित्यन्वयः, तदभावे तदभावश्च व्यतिरेकः यथा—दण्डचक्राद्यभावे घटोत्पत्त्यभावो व्यतिरेक इति। तेन यत्र तत्तच्छब्दसत्त्वे ध्वन्यादिसत्ता तदभावे च तदभावः, तत्र ध्वन्यादीनां शब्दगतत्वम्, इतरथा तु अर्थगतत्वम्। अयमत्र काव्यप्रकाशकारादीनां सिद्धान्तः—शब्दार्थयोर्मध्ये शब्देऽर्थे वा सति ये ध्वनिगुणीभूतव्यङ्ग्यदोषगुणालङ्काराः सन्ति असति च न सन्ति ते तदधीनस्वरूपतया तदीया इति व्यवस्थाप्यन्ते एतन्मूलकमेव तच्छब्दमनुपादाय तच्छब्दसमानार्थकशब्दोपादानेऽपि सम्भवासम्भवाभ्यां शब्दार्थगतत्वव्यवस्थितिः, इति प्राचां प्रवादः। एवञ्च यथा ध्वनिगुणीभूतव्यङ्ग्यदुःश्रवत्वादयो दोषाः ओज आद्यपरनामानो वामनाद्युक्ता गाढत्वादयो गुणाः अनुप्रासादयश्चालङ्काराः तत्तच्छब्दे सति सन्ति असति च न सन्ति चेतिशब्दगता इत्युच्यन्ते। तथा च अपुष्टार्थत्वादयो दोषा, ओज आद्यपरनामानो वामनाद्युक्ताः प्रौढिप्रभृतयो गुणाः, उपमादयश्चालङ्काराः सति तस्मिन्नर्थे सन्ति असति च तस्मिन् न सन्ति च तत्तच्छब्दपरिवर्त्तनमपि सहन्त इत्यर्थगता इति नियम्यन्ते, यथा उभयश्लेषोदाहरणतया निर्णीतेऽपि "येनध्वस्त···" इत्यादौ परार्द्धगत "अन्धका" दिशब्द इव पूर्वार्द्धगतेऽपि "ध्वस्तमनोभवे"त्यादौ तत्तच्छब्दे सति असति च श्लेषस्य सत्त्वमसत्त्वमिति शब्दाधीनस्वरूपत्वाविशेषेण शब्दश्लेष एवेति।

( ९४ ) न च 'अन्धकक्षय-' इत्यादौ शब्दाभेदः, 'अर्थभेदेन शब्दभेदः' इति दर्शनात् ।

( ९५ ) किं चात्र शब्दस्यैव मुख्यतया वैचित्र्यबोधोपायत्वेन कविप्रतिभयोट्टङ्कनाच्छब्दालङ्कारत्वमेव ।

( ९६ ) विसदृशशब्दद्वयस्य बन्धे चैवंविधस्य वैचित्र्याभावाद् वैचित्र्यस्यैव चालङ्कारत्वात् ।

( ९४ ) ननु यथा भवद्भिरन्वयव्यतिरेकाभ्यां श्लेषादीनां शब्दगतत्वमर्थगतत्वञ्च निर्णीयते, तथा अस्माभिरपि शब्दभेदाभेदाभ्यां तेषां निर्णयिष्यते, तथासति नास्मन्मते कापि विप्रतिपत्तिरित्यस्मन्मतपरित्यागे किं बीजमित्यत आह—नचेति । शब्दाभेद इति वक्तव्य इतिशेषः । दर्शनादिति "यावन्त एवमर्थाः स्युः शब्दास्तावन्त एव हि" इति मीमांसकाद्युक्तमूलकादित्यर्थः । एवञ्च मीमांसकमतविरोध एव भवन्मतपरित्यागे बीजमिति भावः । तेन च प्रकृते विष्णुपक्षे यादवार्थकत्वात् शिवपक्षे दैत्यविशेषार्थकत्वात् अर्थभेदेन अन्धकशब्दस्यापि भेदादशब्दभावित्वेन "अन्धकक्षयकरः" इत्यादावप्यकामेनापि भवता शब्दश्लेषत्वमेवाङ्गीकरणीयमिति समाधानाभिप्रायः ।

(९५) शाब्दिकमूर्धन्यानाममरसिंहादीनां मते "एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ" इत्युक्त्या "अर्थभेदेऽपि न शब्दभेदः" इत्येव निर्णीतं वर्त्तते इति तदनुयायिनामालङ्कारिकाणामपि तन्मतानुसरणस्यैवौचित्येन "अर्थभेदेन शब्दभेदः" इति मीमांसकमतविरोधेऽप्युपेक्षणीयत्वात् "अन्धकक्षयकरः" इत्यादावर्थश्लेष एव स्वीकरणीय इत्याशयेनाह—किञ्चेति । यद्वा न केवलमस्मन्मत एव शब्दालङ्कारत्वं तत्र किन्तु येप्याहुः "योयदाश्रितः स तदलङ्कार" इति तन्मतेऽप्यत्र वैचित्र्यस्य शब्दनिष्ठत्वाच्छब्दालङ्कारत्वमित्यत आह—किञ्चेति । अत्र अभङ्गश्लेषस्थले "अन्धकक्षयकरः" इत्यादावित्यर्थः । शब्दस्यैव "अन्धक" इत्यादिशब्दमात्रस्यैव न त्वर्थस्य । मुख्यतया प्राधान्येन । वैचित्र्यं चमत्कारोऽलङ्काराद्यनन्यस्थितिहेतुः तादृशशब्दाभावे वैचित्र्याभावादितिभावः । कवेः प्रतिभया नवनवोन्मेषशालिन्या प्रज्ञया उट्टङ्कनात् उल्लेखनात् प्रकाशनादितियावत् शब्दस्यैवेति पूर्वेण सम्बन्धः । शब्दालङ्कारत्वमेवेति । "अन्धकक्षय" इत्यादौ 'अन्धक' इत्यादिशब्दजातस्यैव चमत्कारः तदसत्वे तदसत्वात् तस्मात् वैचित्र्यस्य शब्दाधीनतया प्रकृते शब्दालङ्कारत्वमेव न त्वर्थालङ्कारत्वं "गौणमुख्ययोर्मुख्ये कार्य सम्प्रत्ययः" इतिन्यायादितिभावः ।

(९६) ननु शब्दार्थयोर्मध्ये यथा शब्दस्य मुख्यत्वेन कविप्रतिभोट्टङ्कनेन च शब्दालङ्कारत्वमित्युच्यते तथार्थस्यापि वाच्यत्वेन मुख्यत्वात् कविप्रतिभयैवोट्टङ्कनाच्च विनगमनाविरहादुक्तस्थले अर्थालङ्कारत्वमेव कथं न स्यादित्याह—विसदृशेति । अपिचेति चार्थः । विसदृशमसमानश्रुतिकम् , विसदृशशब्दद्वयस्य बन्धे "यादवध्वंसकरः" "अन्धकक्षयकरः" इत्यादिरूपासमानशब्दद्वयस्य रचनायाम् । एवंविधस्य एतादृशस्य अन्धकक्षय" इत्यादिसदृशशब्दद्वयबन्धगतस्येतियावत् । ननु वैचित्र्यस्याभाव एवास्तु का क्षतिरित्याह—वैचित्र्यस्यैवेति । अलङ्कारत्वात् अलङ्कारनियामकत्वात् । एवञ्चोक्तदिशा अर्थयोर्मुख्यत्वस्वीकारेऽपि वैचित्र्याभावान्नार्थालङ्कारत्वमित्याशयः ।

( ९७ ) अर्थमुखप्रेक्षितया चार्थालङ्कारत्वेऽनुप्रासादीनामपि रसादिपरत्वेनार्थमुखप्रेक्षितयार्थालङ्कारत्वप्रसङ्गः ।

( ९८ ) शब्दस्याभिन्नप्रयत्नोच्चार्यत्वेनार्थालङ्कारत्वे 'प्रतिकूलतामुपगते हि विधौ' इत्यादौ शब्दभेदेऽप्यर्थालङ्कारत्वं तथापि प्रसज्यत इत्युभयत्रापि शब्दालङ्कारत्वमेव ।

( ९९ ) यत्र तु शब्दपरिवर्तनेऽपि न श्लेषत्वखण्डना, तत्र—

(१००) 'स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥'

इत्यादावर्थश्लेषः ।

(९७) ननु सभङ्गस्थले अर्थानुसन्धानापेक्षाभावेन मेलनमात्रेणैव शब्दालङ्कारत्वं भवतु, अभङ्गस्थले तु अर्थानुसन्धानापेक्षत्वेन अर्थालङ्कारत्वमेव युक्तमित्यत आह—अर्थमुखेति । अत्रापि अपिचेति चार्थः । अर्थस्य मुखं लक्षणया तद्वत् स्वरूपप्रत्यायकं चिह्नं तत्प्रेक्षितुं शीलमस्यास्तीति तस्य भावस्तत्ता तया तथोक्तया किञ्चिन्मात्रार्थानुसन्धानसापेक्षत्वेनेत्यर्थः । तथाच अभङ्गस्थलेऽपि न सर्वथैवार्थानुसन्धानसापेक्षत्वं किन्तु निरर्थकानामप्रयोगात्तावन्मात्रेणैवार्थानुसन्धानसापेक्षत्वम् , तथापि च शब्दश्लेषणमेव श्लेषप्रयोजकमितिभावः । अर्थालङ्कारत्वे अर्थालङ्कारत्वस्वीकारे । अनुप्रासादीनां शब्दालङ्काराणामितिशेषः, आदिपदेन केवलयमकादिशब्दालङ्कारपरिग्रहः । रसादिपरत्वेन रसाद्युत्कर्षोत्पादनाय प्रयुक्तत्वेन । अत्रापिपदेन रसाभासभावादीनां ग्रहणम् । अर्थमुखप्रेक्षितया तथैव किञ्चिन्मात्रार्थानुसन्धानसापेक्षतया । अर्थानुसन्धानाभावे रसादेरेवासम्भवेन तदुत्कर्षस्याप्यसम्भवादित्यभिप्रायः । ।

( ९८ ) अथ पुनः सिंहावलोकनन्यायेन "स्वराभेदादभिन्नप्रयत्नोच्चार्यतया शब्दार्थयोरेकवृन्तगतफलद्वय" न्यायेन श्लेष इति परमतं दूषयितुमाह—शब्दस्येति । अर्थालङ्कारत्वे अर्थालङ्कारत्वस्वीकारे । शब्दभेदेऽपीति । प्रतिकूलतामित्यादौ "विधौ" इत्यत्र समासाभावेन स्वराभेदादभिन्नप्रयत्नेनैव शब्दद्वयोच्चारणादर्थद्वयप्रतीतिरितिभावः । तथापि मत इति शेषः, यद्यप्यत्र "केचित्" इत्युपक्रम्य तेषां "युष्माकम्" इत्येव वक्तुं युक्तम् , तथापि प्रतिवादित्वमुद्दिश्यैकवचनमित्यवधेयम् । इति हेतोः । उभयत्रापि "येन ध्वस्त" इत्यादौ सभङ्गस्थले "अन्धकक्षय" इत्यादावभङ्गस्थलेऽपीत्यर्थः । तस्मात् "स्वराभेदात" इत्यादि यदुक्तं तन्न सम्यगित्याशयः ।

( ९९ ) नन्वेवं श्लेषस्यार्थालङ्कारत्वोच्छेदः सर्वत्रशब्दश्लेषस्यैव सम्भवादत आह— यत्र त्विति । श्लेषत्वस्य खण्डना भङ्गो व्याघात इति यावत् । अत्र श्लिष्यतीतिश्लेषस्तस्य भावस्तत्वं श्लेषत्वमिति न तु श्लेषणं श्लेषस्तस्य भावस्तत्वं भावाद्भावप्रत्ययस्यानावश्यकत्वात् ।

(१००) अर्थश्लेषमुदाहरति—स्तोकेनेति । तुलाकोटिः सुवर्णादिगौरवप्रकर्षाप्रकर्षसूचिका सूचिका शिखरशलाका, खलश्च, स्तोकेन अल्पभारदानेन अल्पद्रव्यदानेन च उन्नतिम् ऊर्ध्वगमनम् अहङ्कारञ्च आयाति प्राप्नोति । स्तोकेन पुनरल्पभारापगमनेन अल्पद्रव्यनाशेन च अधोगतिम् अधोगमनं दर्पभ्रंशं च अधोगतिम् अधःपतनं पादपतनञ्चेत्यन्ये आयाति प्राप्नोति अत एव अहो आश्चर्यम् । तुलाकोटेः वक्तृस्वरूपस्य

( १ ) अस्य चालङ्कारान्तरविविक्तविषयतया असंभवाद्विद्यमानेष्वलङ्कारान्तरेष्वपवादत्वेन तद्बाधकतया तत्प्रतिभोत्पत्तिहेतुत्वमिति केचित् ।

---

खलस्य दुर्जनस्य च सुसदृशी तुल्या वृत्तिर्वर्त्तनम् आवरणमितियावत् ।

अत्र स्तोकादिपदपरिवर्त्तनेन "अल्पेनोद्रेकमाप्नोति अल्पेनाप्नोत्यधःस्थितिम्" इत्यादिरीत्या अल्पादिपदोपादानेऽपि उक्तविध्यर्थसत्त्वे श्लेषसत्त्वात् उक्तविध्यर्थाभावे च श्लेषाभावात् न श्लेषभङ्ग इत्यर्थश्लेष एवेत्यभिप्रायः ।

अत्रेदम्बोध्यम्–ग्रन्थकृता हि 'शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम्' इत्यग्रेऽर्थश्लेषलक्षणमभिधाय "स्वभावादेकार्थैरिति शब्दश्लेषाद्व्यवच्छेदः" इति विवृतम्, तेन स्वभावादनेकार्थैः शब्दैरनेकार्थप्रतिपादने शब्दश्लेषः, स्वभावादेकार्थैः शब्दैरनेकार्थप्रतिपादने तु अर्थश्लेषः, "अनेकार्थैः शब्दैरनेकार्थप्रतिपादने शब्दश्लेषः एकार्थैः शब्दैरनेकार्थाभिधाने तु अर्थश्लेष" इति परमते, इत्येतदेव ग्रन्थकर्त्तुरभिप्रेतोऽवगम्यते तेन "केचित्" इत्यनेन "तदन्ये न मन्यन्ते" इत्यनेन चोभयोर्मतं नाभिप्रेतोऽस्येत्यवधेयम् । अतश्च सभङ्गस्थले शब्दश्लेष इति पूर्वमताश्रयणम्, अभङ्गस्थले न अनेकार्थैः शब्दैरनेकार्थप्रतिपादने शब्दश्लेषः एकार्थैः शब्दैरनेकार्थप्रतिपादने तु अर्थश्लेष इति परमताश्रयणम् । एतेन "तदन्ये न मन्यन्ते" इत्यस्य काव्यप्रकाशकारादयस्तदनुयायिनो वयञ्च इत्यर्थं कुर्वाणाः परास्ताः ।

(१) इदानीं श्लेषस्यालङ्कारान्तरासङ्कीर्णविषयाभावात् अलङ्कारान्तरस्य च श्लेषासङ्कीर्णविषयसत्त्वात् सामान्यमलङ्कारान्तरमपवादत्वेन बाधित्वा श्लेष एवायमलङ्कारः अलङ्कारान्तरं तु तत्सङ्कीर्णं तद्ग्राहकमेवेति ये मन्यन्ते तेषां पक्षमुपन्यस्य दूषयितुम् अन्यालङ्काराभावस्थल एव श्लेषव्यपदेश इति समर्थयितुमुत्थापयति—अस्येति । श्लेषस्येत्यर्थः ।

अलङ्कारान्तरेभ्यो विविक्तोऽपरामृष्टो विभिन्नो विषयो यस्य तस्य भावस्तत्ता तस्यास्तथोक्तायाः असम्भवात् यत्र यत्र श्लेषो वर्त्तते तत्र तत्रान्यस्यापि कस्याऽप्यलङ्कारस्य सम्भवादित्यर्थः । विद्यमानेषु स्वस्वविषयविशेषमहिम्नाऽपरित्याज्येषु । अपवादत्वेन विशेषरूपत्वेन तेषां सामान्यरूपाणामलङ्कारान्तराणां बाधकतया कारणेन, तेषामलङ्कारान्तराणां या प्रतिभा आभानमात्रं तस्या उत्पत्तेः हेतुत्वं जनकत्वम्, केचित् तस्य अलङ्कारान्तरस्य प्रतिभाबुद्धिस्थितं ज्ञानमात्रं न तु स्वस्मिन् विश्रान्तिधामतया चमत्कारित्वं सा उत्पत्तिहेतुरस्येति विग्रहमाहुः । अत्रायं सरलार्थः—"बहुव्यापकं सामान्यमल्पव्यापको विशेषः" इतिन्यायात् यत्र यत्रान्येषामलङ्काराणां सम्भवस्तत्र तत्रैव श्लेषस्य सम्भवः न पुनरन्यालङ्कारविविक्तविषयेण श्लेषोऽवतिष्ठत इति सर्वथैवालङ्कारान्तरविमुक्तविषयासम्भवेन श्लेषस्यैवासम्भवात्, एवंसति स्पष्टमेव श्लेषो विशेषरूपतया अपवादरूपः, अलङ्कारान्तराणि तु सामान्यरूपतया उत्सर्गरूपाणि ततश्च "सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्" इति न्यायात् श्लेषस्तावदलङ्कारान्तराणां बाधकः "येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति" इतिन्यायादपि श्लेषोऽलङ्कारान्तराणां बाधकः तेनैकत्र विद्यमानानप्यन्यालङ्कारान् बाधित्वा श्लेष एव प्रथमं व्यवहारपदं लभते किन्त्वन्यान्यालङ्काराणां प्रतीतिः श्लेषप्रतीतिप्रतिपाद्येति । केचिदपसिद्धान्ततयोपेक्षणीयवाक्या वामनादय इत्यर्थः ।

( २ ) इत्थमत्र विचार्यते—समासोक्त्यप्रस्तुतप्रशंसादौ द्वितीयार्थस्यानभिधेयतया नास्य गन्धोऽपि ।

( ३ ) 'विद्वन्मानसहंस–' इत्यादौ श्लेषगर्भे रूपकेऽपि मानसशब्दस्य चित्तसरोरूपोभयार्थत्वेऽपि रूपकेण श्लेषो बाध्यते । सरोरूपस्यैवार्थस्य विश्रान्तिधामतया प्राधान्यात्, श्लेषे ह्यर्थद्वयस्यापि समकक्षत्वम् ।

---

(२) उक्तस्वमतोपपत्तये तैर्यद्विचारितं तदपि निरसितुमाह—इत्थमिति । अत्र प्रदर्शितश्लेषविषये स्वमते, इत्थं वक्ष्यमाणप्रकारम्, विचार्यते विचारः क्रियते तैरेवेतिशेषः । समासोक्त्यप्रस्तुतप्रशंसादाविति । तत्र पूर्वपक्षिणां मते समासोक्तिर्यथा—

"उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥"

अप्रस्तुतप्रशंसा यथा—

"एणालं सम्भ्रमेण त्यज गवय ! भयं सैरिभ ! स्वैरमास्व
क्षौमं मा यास्तरक्षो ! विहर गिरिदरीं स्वेच्छयैवाच्छभल्ल ! ।
पारीन्द्रः पारदृश्वा निखिलवनभुवः केवलं मोदतेऽसौ
माद्यत्कुम्भीन्द्रकुम्भस्थलगलितघनस्थूलमुक्ताफलौघैः ॥"

आदिपदेन पर्य्यायोक्ति-आर्थपरिसंख्या-विद्याभासादीनां परिग्रहः । द्वितीयार्थः प्रकृताप्रकृतस्य वा यथा नायकव्यवहारादेः अनभिधेयतया अभिधया वृत्त्या अप्रतिपाद्यतया केवलव्यञ्जनागम्यतयेत्यर्थः अभिधायाः प्रकृतिबोधनेन विरमादित्याशयः । अस्य श्लेषस्य गन्धो लेशोऽपि न प्राप्तिरेव नास्तीत्यर्थः अर्थद्वयस्याभिधेयत्व एव श्लेषालङ्कारस्य नियमादितिभावः । एवञ्च समासोक्त्यादिव्यञ्जनाबोध्यालङ्कारविषये श्लेषालङ्कारस्य सम्भव एव नेति बोध्यम् ।

(३) ननु श्लिष्टपरम्परितरूपके अर्थद्वयस्यैवाभिधेयतया श्लेष आस्तामित्याह—विद्वदिति । समस्तपद्यमिदं यथा काव्यप्रकाशे—

"विद्वन्मानसहंस ! वैरिकमलासङ्कोचदीप्तद्युते !
दुर्गामार्गणनीललोहित ! समित्स्वीकारवैश्वानर ! ।
सत्यप्रीतिविधानदक्ष ! विजयप्राग्भावभीम ! प्रभो !
साम्राज्यं वरवीर ! वत्सरशतं वैरिञ्चमुच्चैः क्रिया ॥"

विदुषां मनीषिणां मानसं चित्तमेव मानसं मानसाख्यसरोविशेषस्तस्य हंसो हंसस्वरूपः इति राज्ञः सम्बोधनम्, अत्र रूपकस्य श्लेषबाधकत्वे हेतुं दर्शयति—सरोरूपस्येति । सरोरूपस्यैव न तु चित्तरूपस्यापि, अर्थस्य मानसपदार्थस्येत्यर्थः, विश्रान्तेः प्रतीतिपर्य्यवसानस्य धामास्पदमिति तस्य भावस्तत्ता तया तथोक्त्या रूपकप्रतीतिपर्य्यवसानास्पदतयेत्यर्थः । प्राधान्यादिति । प्राधान्ये हेतुमाह—श्लेषे हीति । समकक्षत्वं परस्परनिरपेक्षतया प्रधानत्वम्, तथा च विदुषां चित्ते हंसस्य सञ्चरणासम्भवात् हंसेन सह मानसस्य सम्बन्धोपपत्तये चित्ते सरोवरत्वारोप आवश्यक एव स चारोप एव रूपकं प्रतीतिपर्य्यवसानास्पदत्वेन प्रबलम्, श्लेषस्तु प्राक्प्रतीतिविषयत्वेनोद्देश्यत्वात् दुर्बल एवेति रूपकेण श्लेषो बाध्यते । तथा दर्शितदिशा चित्तरूपार्थस्य दुर्बलतया द्वयोरव्य-

( ४ ) 'संनिहितबालान्धकारा भास्वन्मूर्तिश्च' इत्यादौ विरोधाभासेऽपि विरुद्धार्थस्य प्रतिभातमात्रस्य प्ररोहाभावान्न श्लेषः ।

( ५ ) एवं पुनरुक्तवदाभासेऽपि ।

( ६ ) तेन 'येन ध्वस्त-' इत्यादौ प्राकरणिकयोः, 'नीतानाम्-' इत्यादावप्राकरणिकयोरेकधर्माभिसंबन्धात्तुल्ययोगितायाम् ,

---

र्थयोः परस्परनिरपेक्षतया प्रधानत्वाभावात् स्वतोऽपि श्लेषप्रवेशो नेति नात्रापि श्लेषप्रसक्तिरितिभावः ।

( ४ ) ननु द्वयोरप्यर्थयोः समकक्षत्व एव श्लेषाभ्युपगमे श्लिष्टविरोधाभासालङ्कारे अर्थद्वयस्यैव समकक्षतया श्लेष एव जायतामित्याक्षेपे तत्रापि न श्लेषप्रसक्तिरिति दर्शयति—सन्निहितेति । सन्निहितः समीपवर्त्ती बालः अन्धकारो यस्याः सा तादृशी भास्वतः सूर्यस्य मूर्त्तिरिति विरोधः । सन्निहितो दैवेन अवस्थापितो बालः केशः अन्धकार इव अत्यन्तकृष्णवर्ण इवेत्यर्थः यस्याः सा तादृशी, तथा भास्वती लावण्येन देदीप्यमाना मूर्त्तिः शरीरं यस्याः सा तादृशी चेति विरोधपरिहारः । अत्र श्लेषालङ्कारप्रसक्तिबीजमाह—विरुद्धार्थस्येति । सूर्यसन्निधौ अन्धकारस्थितिरूपस्येत्यर्थः, प्रतिभातमात्रस्य शब्दशक्तिमहिम्ना आपाततो बुद्ध्युपस्थितमात्रस्य प्ररोहाभावात् अयोग्यत्वेन शब्दानुभवाभावात् न श्लेषः । नहि अन्धकारसन्निहितसूर्यमूर्त्तिर्नाधिका न वाऽन्धकारसान्निध्यं सूर्यबिम्बस्य इति बाधस्यापि उपस्थितिमात्रेण एव विरोधाभासालङ्कारताश्लेषस्य तु श्लिष्टार्थस्य सम्बन्धे सत्येव अलङ्कारतेति विरोधाभासवत् श्लेषाभासालङ्कारतानभ्युपगमेन विरुद्धार्थस्य असम्भवात् प्ररोहाभावेन अनेकार्थस्यैवाभावात् श्लेषालङ्कारप्रसक्तिरेव नेतिभावः ।

( ५ ) अथ तर्हि पुनरुक्तवदाभासे विरोधाभासवदसम्भवत्वाभावेन श्लेष एवास्तामत आह—एवमिति । यथा विरोधाभासे द्वितीयार्थस्य प्रतिभातमात्रस्य प्ररोहाभावान्न श्लेषस्तथेत्यर्थः । पुनरुक्तवदाभासेऽपि न सम्भवतीति शेषः । तथा च "भुजङ्गकुण्डली" इत्यादौ सर्परूपार्थस्य प्रतिभातमात्रस्य पुनरुक्तत्वबोधेनैव प्ररोहाभावात् प्राग्वदेव श्लेषो नेत्याशयः । एतेन प्रदर्शितेषु समासोक्त्यप्रस्तुतप्रशंसारूपकादिषु न श्लेषत्वेन व्यवहार इति सन्दर्भाभिप्रायो ज्ञेयः ।

( ६ ) ननु तर्हि केऽलङ्काराः श्लेषबाध्या इति जिज्ञासायामाह—तेनेति । समासोक्त्यप्रस्तुतप्रशंसादौ श्लेषस्य प्रसङ्गाभावादेव बाध्यत्वासम्भवेनेत्यर्थः । प्राकरणिकयोः प्रकरणप्राप्तयोर्द्वयोरपि हरिहररूपयोरर्थयोरित्यर्थः, एकधर्माभिसम्बन्धादित्यग्रेण सम्बन्धः पायादित्येकरक्षणक्रियायां कर्तृत्वसम्बन्धेन सम्बन्धादित्यर्थः ।

अप्राकरणिकयोः पद्ममृगविशेषरूपयोरुपमानत्वेनाप्रस्तुतयोरर्थयोरित्यर्थः, एकधर्माभिसम्बन्धात् एको धर्मो गुणक्रियाद्यन्यतमरूपस्तस्याभिसम्बन्धः संयोगस्तस्मात्तथोक्तात् , पूर्वत्र पालनरूपैकक्रियासम्बन्धात् उत्तरत्र पुनराकुलीभावादिरूपगुणसम्बन्धादित्यर्थः, तुल्ययोगितायाम्—

"पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् ।
एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥"

इतिवक्ष्यमाणेऽलङ्कारविशेषे "विद्यमानायामपि" इत्यग्रिमेण सम्बन्धः ।

( ७ ) 'स्वेच्छोपजातविषयोऽपि न याति वक्तुं
देहीति मार्गणशतैश्च ददाति दुःखम् ।
मोहात्समुत्क्षिपति जीवनमप्यकाण्डे
कष्टं प्रसूनविशिखः प्रभुरल्पबुद्धिः ॥'

( ८ ) इत्यादौ च प्राकरणिकाप्राकरणिकयोरेकधर्माभिसंबन्धाद्दीपके,

( ९ ) 'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव' ।

(७) स्वेच्छोपजातेति । अपराधिक्रमेण दण्डितस्य कस्यचिद्दुर्मतिराजसेवकस्योक्तिरियम् । स्वेच्छया स्वाभिलाषामात्रानुसारेण उपजाता उपपन्ना विषया उपभोगसाधनद्रव्याणि यस्य स तथोक्तोऽपि प्रभुः देहीति ददस्वेति वचनं न याति न प्राप्नोति एतादृशवाग् वक्ता न भवतीत्यर्थः, यद्वा न याति विषयान्नानुभवतीत्यर्थः गत्यर्थानां ज्ञानार्थत्वात् । मार्गणशतैः स्वसेवकद्वारापरधनान्वेषणरूपमार्गणशतैः अर्थात् ईदृशपदातिशतैः दुःखं ददाति देहीत्यनुक्त्वापि पदातिद्वारा सर्वस्वं हृत्वा दुःखं ददातीत्यर्थः, अभिकारस्त्वादेहीत्युक्त्वापि सर्वस्वं ग्रहीतुं सामर्थ्यसत्वेऽपि अल्पबुद्धित्वात्तथा न विदधातीत्यर्थः, यद्वा मार्गणशतैर्याचकसमूहैर्देहीतिवक्तुमर्थात्तेभ्यो दुःखं ददाति महाबुद्धिस्तु देहीतिवचनं विनैव याचकेभ्यो धनं ददातीत्याशयः । मोहात् अपराधभ्रमात् अकाण्डे असमये हठादेवेत्यर्थः जीवनं प्रजाजनस्येतिशेषः समुत्क्षिपति विनाशयति अत एव प्रसूनविशिखः अल्पबुद्धिः प्रभुः कामश्च कष्टं जनानामत्यन्तकष्टजनकः । कामपक्षे तु—स्वेच्छया स्वाभिलाषामात्रेणैव उपजातः समुत्पन्नः विषयो लक्ष्यं यस्य स तथाभूतः अनायासेन सर्वलोकोपरिप्राप्ताधिकारोऽपीत्यर्थः, अत एव कमपि जनं वक्तुं न याति "त्वं मे लक्ष्यो भव" इत्यभिधातुं न गच्छति तथा देहीति शरीरीति वक्तुं न याति न प्राप्नोति देहाभावेन देहीतिवाग्विषयो न भवतीत्यर्थः, मार्गणशतैः शरसमूहैः दुःखं ददाति सम्भवद्बहुलक्ष्योऽपि कस्मैचिदेव मार्गणशतैः दुःखातिशयं ददातीत्यर्थः लक्ष्येषु विभज्य यदि शरान् क्षिपेत्तदा एकस्य वेधने शरशतासम्भवाद्दुःखातिशयो न भवतीत्याशयः । मोहात् मोहम् उत्पाद्य अकाण्डे असमये जीवनं कामिजनस्यैतिशेषः समुत्क्षिपति संहरति । अत एव प्रसूनानि पुष्पाण्येव विशिखा बाणा यस्य स तथोक्तः काम इत्यर्थः कष्टं जनानां कष्टातिशयोत्पादकः । वसन्ततिलकं छन्दः तल्लक्षणञ्चोक्तं प्रागेव ( १६३ पृ० )

(८) इत्यादाविति । प्राकरणिकाप्राकरणिकयोः उपमेयत्वोपमानत्वाभ्यां प्रस्तुताप्रस्तुतयोः प्रभु-कामयोः एकधर्माभिसम्बन्धात् स्वेच्छोपजातविषयत्वादिरूपैकगुणसम्बन्धात् दीपके "विद्यमानायामपि" इतिवक्ष्यमाणस्य लिङ्गव्यत्ययेन विद्यमानेन सम्बन्धः । वक्ष्यति च "प्रस्तुताप्रस्तुतयोर्दीपकन्तु निगद्यते" इति ।

(९) सकलेति ।

"नक्षत्राधिकृतत्वं दधति करा यस्य सर्वत्र" इत्युत्तरार्द्धम् ।

एतत् पुरं सम्प्रति वर्त्तमानसमये सुधांशुबिम्बं चन्द्रमण्डलमिव, कलकलेन सह वर्त्तते इति सकलकलं कोलाहलसहितम् , अन्यत्र तु सकलाः समग्राः कलाः षोडशो भागा यत्र तत्तथोक्तञ्च जातम् ।

( १० ) इत्यादौ चोपमायां विद्यमानायामपि श्लेषस्यैतद्विषयपरिहारेणासंभवाद् एषां च श्लेषविषयपरिहारेणापि स्थितेरेतद्विषये श्लेषस्य प्राधान्येन चमत्कारित्वप्रतीतेश्च श्लेषेणैव व्यपदेशो भवितुं युक्तः, अन्यथा तद्व्यपदेशस्य सर्वथाभावप्रसङ्गाच्चेति ।

( ११ ) अत्रोच्यते—न तावत्परमार्थतः श्लेषस्यालङ्कारान्तराविविक्तविषयता 'येन ध्वस्त-' इत्यादिना विविक्तविषयत्वात् ।

( १२ ) न चात्र तुल्ययोगिता, तस्याश्च द्वयोरप्यर्थयोर्वाच्यत्वनियमाभावात् । अत्र च माधवोमाधवयोरेकस्य वाच्यत्वनियमे परस्य व्यङ्ग्यत्वं स्यात् ।

---

(१०) इत्यादाविति । उपमाया 'साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमाद्वयोः" इतिवक्ष्यमाणलक्षणेऽलङ्कारविशेषे । एतेषां तुल्ययोगिताद्यलङ्काराणां विषया उदाहरणानि तेषां परिहारेण परित्यागेन असम्भवात् उदाहरणाभावेन समावेशाप्राप्तेः । अनेन श्लेषस्य विशेषरूपत्वेनापवादत्वं ध्वनितम् । एषां तुल्ययोगिताद्यलङ्काराणाञ्च श्लेषविषयपरिहारेणापि श्लेषोदाहरणपरित्यागेनापि स्थितेः समावेशसम्भवात् । अनेन तुल्ययोगिताद्यलङ्काराणां सामान्यरूपत्वेनोत्सर्गत्वं सूचितम् । एतेषां तुल्ययोगितादीनां विषये उदाहरणे प्राधान्येन प्राबल्येन एषु श्लेषालङ्कारस्यैवौचित्ये हेतुमाह—चमत्कारित्वातिशयेति । व्यपदेशः "अयं श्लेषालङ्कारः" इत्येवमभिधानम् । अन्यथा तुल्ययोगित्वादीनां श्लिष्टत्ववत्तानभ्युपगमे तद्व्यपदेशस्य श्लेषसंज्ञायाः अभावप्रसङ्गात् सर्वत्रैव प्राधान्यभावेन श्लेषाङ्गीकारस्य वैयर्थ्यापत्तेरित्यर्थः । ननु कथं तदभावप्रसङ्गः "प्रतिकूलतामुपगते हि विधौ" इत्यादिष्वेव तत्सत्त्वादितिवाच्यम् , तत्रापि विधेः प्रतिकूलतोपगमनस्य बहुलाधनतावैफल्यहेतुत्वेन हेत्वलङ्कारसत्त्वात् इतिपदं परमतविचारसमाप्तिसूचनार्थम्

अनेन च यदि तुल्ययोगिताद्युदाहरणे श्लेषसत्त्वे श्लेषस्यैव प्राधान्यम् , तदभावे तु तुल्ययोगिताद्यभिधयेति तेषां मते निष्कर्ष आयाति ।

तदयमत्र परमतसङ्कलितोऽर्थः—समासोक्त्यादौ द्वितीयार्थस्य केवलव्यञ्जनागम्यत्वात् श्लेष एव न रूपकादौ श्लेषः सन्नपि रूपकादेरेव प्राधान्यात् तेन बाध्यते, तुल्ययोगितादौ तु अपवादत्वेन श्लेष एवेति ।

( ११ ) एतन्मते दोषं प्रदर्शयन् स्वसिद्धान्तं प्रदर्शयितुमाह—अत्रोच्यत इति । अत्र अस्मिन् "अस्य च" इत्यादिना प्रदर्शिते पूर्वपक्षे, उच्यते तन्मते दोषः स्वसिद्धान्तश्च प्रतिपाद्यते इतिभावः । परमार्थतो वस्तुतः । अलङ्कारान्तरेभ्योऽविविक्तोऽभिन्नो विषयो यस्य तस्य भावस्तत्ता, अलङ्कारान्तराणामपि यदेवोदाहरणं श्लेषस्यापि तदेवोदाहरणमिति नेत्यर्थः । अलङ्कारान्तरविविक्तविषयत्वमुपपादयितुमुत्थापयति—येन ध्वस्त इति । इत्यादिना उदाहरणेन, विविक्तविषयत्वात् अलङ्कारान्तरपृथक्कृतविषयत्वात् । तथा च "येनध्वस्त" इत्यादौ अलङ्कारान्तरा न वर्त्तन्ते श्लेषस्तु वर्त्तत एवेति अलङ्कारान्तरविविक्तविषयतायाः सम्भवात्—"अस्य चालङ्कारान्तरविविक्तविषयताया असम्भवात्" इतियत्प्रतिपादितं तदापातरमणीयमित्याशयः ।

( १२ ) ननु "येन ध्वस्त" इत्यादौ प्राकरणिकाप्राकरणिकयोर्माधवोमाधवयोः

( १३ ) किञ्च—तुल्ययोगितायामप्येकस्यैव धर्मस्यानेकधर्मिसंबन्धितया प्रतीतिः । इह त्वनेकेषां धर्मिणां पृथक्पृथग्धर्मसंबन्धतया ।

( १४ ) 'सकलकलम्-' इत्यादौ च नोपमाप्रतिभोत्पत्तिहेतुः श्लेषः । पूर्णोपमाया निर्विषयत्वापत्तेः 'कमलमिव मुखं मनोज्ञमेतत्' इत्याद्यस्ति पूर्णोपमाया विषय इति चेत् ? न-यदि 'सकल-' इत्यादौ शब्दश्लेषतया नोपमा तत्किमपराद्धं 'मनोज्ञम्' इत्यादावर्थश्लेषेण ।

पापादित्येकरक्षणक्रियायां कर्तृत्वसम्बन्धेनाभिसम्बन्धात् तुल्ययोगिताऽप्यस्तीति कथमिह तस्य विविक्तविषयत्वमित्यत आह—नचेति । तस्यास्तुल्ययोगितायाः सम्बन्धे । इदञ्चोपलक्षणं तेन दीपकस्यापि सङ्ग्रहः ।

वाच्यत्वनियमाभावादिति । एकस्य वाच्यत्वनियमात् अन्यस्य चावाच्यत्वनियमादित्यर्थः, "येन ध्वस्त" इत्यादौ तु अर्थद्वयस्यापि वाच्यत्वादेव न तुल्ययोगितेत्याशयः । ननु येनेत्यादौ कथं न अर्थद्वयस्यापि वाच्यत्वं पर्य्यायेणोभयत्राप्यभिधासम्भवादत आह—अत्र हीति । एकस्य माधवोमाधवान्यतरपदार्थस्येत्यर्थः । व्यङ्ग्यत्वं स्यादिति । एवञ्च सति श्लेष एव न स्यात्, श्लेषे हि—अर्थद्वयस्यापि वाच्यत्वनियमादितिभावः ।

( १३ ) ननु माधवोमाधवयोः द्वयोरपि तुल्यविभक्तिविषयत्वेन प्राकरणिकत्वमेवेत्यतो द्वयोर्वाच्यत्वेनापि तुल्ययोगितैव भवतु तत्रार्थद्वयस्यापि वाच्यत्वनियमाभावे प्रमाणाभावादत आह—किञ्चेति । एकस्यैव न त्वनेकेषाम्, धर्मस्य गुणक्रियान्यतररूपस्य । अनेकधर्मसम्बद्धतायां अनेकाश्रयसंयुक्ततया । इह तु "येन ध्वस्त" इत्यादौ तु । अनेकेषामित्र बहुवचनमभिविवक्षितम्, माधवोमाधवयोरित्यर्थः । पृथग् पृथग् धर्मैः श्लिष्टैकशब्दस्य पृथगर्थैः अनोमनोभवादिरूपैः सम्बद्धतयेत्यस्य प्रतीतिरितिपूर्वेण सम्बन्धः । एवञ्च "येन ध्वस्त" इत्यादौ नीतानामित्यादौ च यत्तुल्ययोगिताप्रदर्शनं प्राक् कृतं तत्परकीयमतप्रदर्शनं कृतमिति परमार्थतस्तु तद्द्वये श्लेष एव तुल्ययोगितारहित इत्यवगन्तव्यम् । यदि च अनेकेषामित्यत्र बहुवचनं नाविवक्षितं तदा अनेकेषां धर्मिणां पृथक् पृथक् धर्मसम्बद्धश्चेत्थम्—बालकश्रीकृष्णरूपधर्मिणः शकटत्वरूपधर्म्मेण योगाश्रितशिवरूपधर्म्मिणः ध्वस्तमनोभवत्वरूपधर्म्मेण विष्णुरूपधर्म्मिणश्च मोहिनीस्त्रीकरणरूपधर्म्मेण त्रिपुरविजयशिवरूपधर्म्मिणः अस्त्रीकरणरूपधर्म्मेण, इत्यादिरूपेण अनेकेषां धर्म्मिणां पृथक् पृथक् धर्मसम्बद्धतया प्रतीतेः "येन ध्वस्त" इत्यादौ न कथङ्कारमपि तुल्ययोगिता, किन्तु श्लेषमात्रमेवेत्याशयं मर्म्मज्ञाः प्रतिपादयन्ति एवं "स्वेच्छोपजातविषयोऽपि" इत्यादावपि स्वेच्छोपजातविषयत्वाद्यनेकेषां धर्म्मिणां भिन्न-भिन्न धर्म्मसंयुक्ततया प्रतीतेर्न दीपकम्, किन्तु श्लेषमात्रमेवेत्यपि व्यञ्जितं भवतीति वेदितव्यम् ।

( १४ ) तथा "सकलकल"मित्यादौ चोपमायास्य विद्यमानत्वेऽपि अपवादत्वेन श्लेषस्यैव प्राधान्येन व्यपदेशो भवितुं युक्त इत्युक्तं तत्रोपमैवालङ्कारो न श्लेष इत्युपपादयितुमुत्थापयति—सकलकलमिति । उपमा प्रतिभा उपमाज्ञानं सैव उत्पत्तिहेतुर्नोत्पत्तिहेतुर्यस्य स श्लेषस्तादृशो न उपमाज्ञानज्ञाप्यः श्लेषो नेत्यर्थः । उपमाश्लेषज्ञापिकैव । अत्र श्लेष एव त्वलङ्कार इति नेतिभावः एतेन श्लिष्टधर्मसाधर्म्या उपमा एवालङ्कार इतिप्रतिपादितं भवति । तत्रोपमां बाधित्वा श्लेषस्यैवालङ्कारत्वेऽनिष्टोत्पत्ति

( १५ ) 'स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ, किन्तु ।
आश्रित्य शब्दमात्रं सामान्यमिहापि संभवतः ॥'

( १६ ) इति रुद्रटोक्तदिशा गुणक्रियासाम्यवच्छब्दसाम्यस्याप्युपमाप्रयोजकत्वात् ।

( १७ ) ननु गुणक्रियासाम्यस्यैवोपमाप्रयोजकता युक्ता, तत्र साधर्म्यस्य वास्तवत्वात् । शब्दसाम्यस्य तु न तथा, तत्र साधर्म्यस्यावास्तवत्वात् । ततश्च पूर्णोपमाया अन्यथानुपपत्त्या गुणक्रियासाम्यस्यैवार्थश्लेषविषयतया परित्यागे पूर्णोपमाविषयतायुक्ता, न तु 'सकल-' इत्यादौ शब्दसाम्यस्यैवेति चेत्? न-'साधर्म्यमुपमा' इत्येवाविशिष्टस्योपमालक्षणस्य शब्दसाम्याद्व्यावृत्तेरभावात् ।

---

दर्शयति—पूर्णोपमाया इति । निर्विषयत्वापत्तेरिति । उपमानोपमेयसाधारणधर्मवादिचतुर्णाम् उपादाने हि पूर्णोपमा भवति । अत्राऽम्बुरुमेयं पुरम्, उपमानं चन्द्रबिम्बम्, सकलकलरूपमुभयान्वितार्थकत्वेन साधर्म्यम्, इवशब्दोऽप्यस्तीति पूर्णोपमा, तद्बाधयित्वाऽत्र श्लेषस्यैवालङ्कारत्वे श्लेषं विना पूर्णोपमाया असम्भवात् पूर्णोपमाङ्गीकारस्य व्यर्थापत्तेरित्यर्थः । ननु श्लेषरहितगुणसाधर्म्योपमैव पूर्णोपमा, तद्वान् विषय एव पूर्णोपमाया विषयः स्यादित्याशङ्कते—कमलमिवेति । अस्तीति । अत्र शङ्कितुरयमाशयः—उपमाद्यसङ्कीर्णस्य श्लेषस्यासम्भवात् उपमादीनाञ्च श्लेषं विनापि सम्भवात् सामान्यविशेषन्यायेन श्लेषस्यैवोपमादिबाधकत्वमिति । अत्रोदाहरणेऽर्थश्लेष एवालङ्कारः मनोज्ञत्वस्योपमानोपमेययोः कमलमुखयोर्भेदेन भिन्नतया श्लिष्टत्वात्, यत्र तु न साधारणधर्मोपादानं तत्र श्लेषाभावादुपमैवालङ्कार इति ।

इत्यादावित्यत्रादिपदेन—

देव ! त्वमेव पातालमाशानां त्वं निबन्धनम् । त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥

इति काव्यप्रकाशोदाहरणादेर्ग्रहणं बोध्यम् । उपमाद्यलङ्कारे प्रतिबन्धकमाह—यदीति । श्लेषो द्विविधः शब्दश्लेषोऽर्थश्लेषश्च । यदि सकलकलमित्यत्रोपमां बाधित्वा श्लेष एवालङ्कारस्तदा कमलमिव मुखमित्यादावप्युपमां बाधित्वा अर्थश्लेषालङ्कारः प्राप्नोति तत् किमपराद्धमिति । शब्दश्लेषेणोपमा बाधितः स्यात् अर्थश्लेषेण तु न, यतः-मनोज्ञत्वादिधर्माणामुभयत्रान्वयरूपश्लिष्टत्वात्, तस्मात्पूर्णोपमया निर्विषयत्वमेवेतिभावः ।

( १२ ) इवशब्दसद्भावादुपमाया एव तत्रानुभविकत्वे तु सकलकलमित्यादावपि शब्दसाम्यस्यादनुभूयमानोपमैवेत्याशयेनात्र स्वमते वृद्धसंवादं रुद्रटोक्तमपि प्रमाणयति—स्फुटमर्थेति । एतौ उपमासमुच्चयौ स्फुटं निश्चितम् अर्थालङ्कारौ अर्थप्रयोज्यतया अर्थालङ्कारत्वेन सर्वैरपि निश्चितमवगम्यमावनापीत्यर्थः । किन्तु तथापि सामान्यमुभयगतसाधारणधर्मबोधकम्, शब्दमात्रं केवलं शब्दमाश्रित्य इह शब्दालङ्कारमध्येऽपि सम्भवतः प्रसजतः,

(१६) इतीति । रुद्रटः काव्यालङ्कारकर्ता तेनोक्ताऽसौ दिक् मार्गदर्शनं तया रुद्रटोक्तप्रकारेणेत्यर्थः । गुणक्रियासाम्यवत् गुणक्रिययोः साम्यस्येव, शब्दसाम्यस्यापि केवलशब्दरूपसाधारणधर्मसमानताया अपि, उपमाप्रयोजकत्वात् उपमासाधकत्वेनाङ्गीकारात् । "कमलमिव" इत्यादाविव "सकलकलम्" इत्यादावपि पूर्णोपमैव न तूपमाप्रतिभोत्पत्तिहेतुः श्लेष इतिशेषः ।

(१७) पूर्वपक्षी पुनः शङ्कते—नन्विति । गुणक्रियासाम्यस्यैव न तु शब्दसाम्यस्ये

( १८ ) यदि च शब्दसाम्ये साधर्म्यमवास्तवत्वान्नोपमाप्रयोजकम् , तदा कथं 'विद्वन्मानस-' इत्यादावाधारभूते चित्तादौ सरोवराद्यारोपो राजादेर्हंसाद्यारोपप्रयोजकः ।

---

त्यर्थः, उपमाप्रयोजकता उपमानिर्वाहकता, युक्ता सङ्गता, तत्र हेतुमाह-तत्रेति । गुणक्रियासाम्यप्रयुक्तोपमायाम् , वास्तवत्वात् उपमानोपमेयरूपवस्तुनः समवेतत्वात् । एवञ्च साधर्म्यं नाम "तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वम्" "कमलमिव मुखं मनोज्ञम्" इत्यादौ कमलवृत्तिसौन्दर्यधर्मात्मकधर्मवत्स्वरूपं मुखे वास्तवमेव सन्तिष्ठते इत्यभिप्रायः । न तथा नोपमा प्रयोजकता युक्तेतिशेषः । तत्र शब्दसाम्यप्रयुक्तोपमायाम् , साधर्म्यस्य शब्दरूपसामान्यस्य धर्मस्य अवास्तवत्वात् उपमानोपमेयरूपवस्तुनोरसमवेतत्वात् । तथाहि "सकलकलम्" इत्यादौ तात्पर्यविषयीभूतमुक्तप्रकारं किमपि चन्द्रबिम्बसाधर्म्यं नगरे नास्त्येवेत्यभिप्रायः ।

ततश्च गुणक्रियासाम्यमात्रस्योपमाप्रयोजकतेतिस्वीकारात् शब्दसाम्यस्योपमा प्रयोजकत्वास्वीकाराच्च । अन्यथा शब्दसाम्यस्याप्युपमाप्रयोजकत्वमितिस्वीकारे, अनुपपत्तेरुपपत्तेरसम्भवात् शब्दसाम्ये सादृश्यस्यावास्तवत्वाच्च शब्दसाम्ये उपमा पूर्णेतिहेतोरितिभावः । एतेन पूर्णोपमाया अर्थश्लेषापवादकत्वमुक्तम् । गुणक्रियासाम्यस्यैव न तु शब्दसाम्यस्य, पूर्णोपमाविषयता युक्तेत्यग्रिमेण सम्बन्धः । अर्थश्लेषस्य स्वविषयतायाः परित्यागे सतीत्यर्थः । तथाच सामान्यस्य विशेषातिपरकत्वनियमेन "कमलमिव मुखं मनोज्ञम्" इत्यादिकं स्वयोग्यमपि विषयं परित्यज्य सामान्यरूपे अर्थश्लेषे "प्रवर्त्तयन् क्रियाः साध्वीः" इत्यादौ वक्ष्यमाणोदाहरणे पूर्णोपमाया विषयाभावे विद्यमाने सति विशेषरूपा पूर्णोपमा "कमलमिव" इत्यादौ सञ्जायते इत्यर्थः । शब्दसाम्यस्यैवेति । पूर्णोपमाविषयतायुक्तेति पूर्वेण सम्बन्धः । अविशिष्टस्य वास्तवरूपविशेषरहितस्य उपमालक्षणस्य काव्यप्रकाशाद्युक्तस्य । तथा च येन केनापि सम्बन्धेनोपमानोपमेयवृत्तिधर्म उपमा न तु समवायसम्बन्धेनेतिनियमः । एवं सति शब्दस्योपस्थाप्यत्वसम्बन्धेनोपमानोपमेयवृत्तित्वेनोपमाप्रयोजकत्वं निर्विवादमित्याशयः । शब्दसाम्यस्य व्यावृत्तेरसम्भवादितिप्रमाणाभावेन "सकलकलम्" इत्यादिकं शब्दसाम्योदाहरणं परिहृत्य अन्यत्र नियमनासम्भवादित्यर्थः ।

(१८) ननु उक्तनियमे शब्दसाम्यस्य अवास्तवत्वमेव प्रमाणमत आह—यदि चेति । "विद्वन्मानसहंस" इत्यादाविति । उपमानोपमेययोरभेदप्रतिपत्तिरूपस्य साधर्म्यस्य अवास्तवत्वेऽपीतिशेषः । आधारभूते उपमेयत्वेन विषयरूपे । चित्रादौ मानसपदवाच्यादौ अत्र सरोवरपदं सरोवरत्वपरम् । राजादेः राजपदवाच्यादेः । एवं हंसपदमपि हंसत्वपरम् । तत्तदारोपरूपः श्लिष्टपरम्परितरूपकालङ्कारोऽत्र कथमित्याशङ्कार्थः । एवञ्च शब्दसाम्ये साधर्म्यस्यावास्तवाद् यथा "सकलकलम्" इत्यादौ नोपमाप्रयोजकम् , तथा श्लिष्टपरम्परितरूपकमपि "विद्वन्मानसहंस" इत्यादौ न स्यात् साधर्म्यवत्त्वेन उपमानोपमेययोरभेदज्ञानस्यैव रूपकालङ्कारत्वात् तत्साधर्म्यस्य च "विद्वन्मानसहंस" इत्यादावपि अवास्तवत्वेन तुल्यन्यायादित्यभिप्रायः ।

( १९ ) किञ्च–यदि वास्तवसाम्य एवोपमाङ्गीकार्या, तदा कथं त्वयापि 'सकलकलम्–' इत्यादौ बाध्यभूतोपमाङ्गीक्रियते ?

( २० ) किञ्च–अत्र श्लेषस्यैव साम्यनिर्वाहकता, न तु साम्यस्य श्लेषनिर्वाहकता, श्लेषबन्धतः प्रथमं साम्यस्यासंभवात्, इत्युपमाया एवाङ्गित्वेन व्यपदेशो ज्यायान् 'प्रधानेन हि व्यपदेशा भवन्ति' इति न्यायात् ।

( २१ ) ननु शब्दालङ्कारविषयेऽङ्गाङ्गिभावसङ्करो नाङ्गीक्रियते तत्कथमत्र श्लेषोपमयोरङ्गाङ्गिभावः सङ्कर इति चेत् ? न–अर्थानुसंधानविरहिण्यनुप्रासादावेव तथानङ्गीकारात् ।

(१९) ननु श्लिष्टपदनिबन्धनपरम्परितरूपकान्यथानुपपत्त्या तत्रावास्तवसाम्यस्य प्रयोजकत्वं कल्पनीयम्, न तूपमायामित्याशङ्कायामाह—किञ्चेति । वास्तवसाम्य एव गुणक्रियासाम्यरूपे वास्तवे सादृश्ये एव न तु शब्दसाम्यरूपेऽवास्तवे सादृश्ये इत्यर्थः अङ्गीकार्या स्वीकार्यत्वेनाभिमता त्वयेतिशेषः । बाध्यभूता शब्दश्लेषेण बाधनीयरूपा । उपमाया असम्भवे उपमाया बाध्यतावादिनस्तव स्ववचनविरोध इत्यर्थः तथा च "सकलकलम्" इत्यादौ साधर्म्यस्य अवास्तवत्वेन उपमाप्रयोजकत्वाभावात्तस्याः प्राप्तिरेव नास्ति, तथापि कथं वादिना त्वया शब्दश्लेषेण उपमाया बाध्यत्वादित्याशयेन 'श्लेषेणैव व्यपदेशो भवितुं युक्त' इत्युक्तमितिभावः ।

(२०) 'श्लेषस्यालङ्कारान्तरप्रतिभोत्पत्तिहेतुत्वेन तेनैव व्यपदेश' इति यदुक्तं तद्दूषयितुम् अत्रोपमायाः श्लेषप्रतिभोत्पत्तिहेतुत्वेनाङ्गित्वं श्लेषस्य तदङ्गत्वमितियुक्त्यन्तरेणाऽपि द्रढयितुमाह—किञ्चेति । श्लेषस्यैव श्लिष्टपदस्यैवेत्यर्थः । साम्यनिर्वाहकता उपमाघटकसाम्यनिर्वाहकता । श्लेषबन्धतः प्रथमं "सकलकलम्" इत्यनेकार्थकशब्दयोजनायाः पूर्वम् । एवञ्च अन्यथासिद्धिशून्यत्वे सति नियतपूर्ववृत्तित्वस्य कारणत्वाभ्युपगमेन साम्यनिर्वाहं प्रति श्लेषस्यैव कारणत्वमित्याशयः । उपमायाः पूर्णोपमाया एव अङ्गित्वेन साध्यतया उद्देश्यत्वात् मुख्यत्वेन व्यपदेशः अत्र पूर्णोपमालङ्कार इत्येवं नामनिर्देशः ज्यायान् श्रेयान् युक्त इत्यर्थः । तथा च श्लेषस्य प्रथमोपस्थितत्वेऽपि साधनत्वेन गौणतया तेन व्यपदेशो नोचित इतिभावः । अत्रैतावत्सन्दर्भविचारनिष्कर्षस्तु-वामनादिमते "सकलकलम्" इत्यादौ अत्र श्लेषोऽलङ्कारः, अत्र श्लेषोपमालङ्कारः इत्येव-व्यपदेशः, काव्यप्रकाशकृद्ग्रन्थकृतोर्मते तु "अत्र पूर्णोपमालङ्कारः" इत्येव व्यपदेश इति व्यपदेशभेद एव समायाति ।

(२१) श्लेषोपमयोरङ्गाङ्गिभावसङ्करेऽनुपपत्तिं दर्शयितुं शङ्कते—नन्विति । अङ्गाङ्गिभावश्च निर्वाहकनिर्वाह्यभावः । तस्य सङ्करः "अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वे तु सङ्करः" इत्युक्तप्रकारः । नाङ्गीक्रियते–सङ्करस्यार्थालङ्कारमात्रविषयत्वादितिशेषः । अत्र "सकलकलम्" इत्यादौ । अर्थानुसन्धानविरहिणि अर्थावधारणापेक्षाशून्ये शब्दावृत्तिमात्रसापेक्षे इत्यर्थः अर्थालङ्कारैः शून्ये इति यावत् । अनुप्रासादावेव न तु श्लेषादौ । अनुप्रासादावित्यत्रादिपदेन यमकभाषासमयोः परिग्रहः । तथानङ्गीकारात् अङ्गाङ्गिभावसङ्करानभ्युपगमात् । अर्थाननुसन्धानात् शब्दालङ्कारेष्वनुप्रासादीनां परस्परसापेक्षत्वेनाङ्गाङ्गिभावसङ्करो भवता नाङ्गीक्रियते । श्लेषोपमयोस्तु अर्थानुसन्धानात् सापेक्षत्वेन परस्प-

( २२ ) एवं दीपकादावपि ज्ञेयम् ।

( २३ ) 'सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥'

( २४ ) अत्र शरद्वर्णनया प्रकरणेन धार्तराष्ट्रादिशब्दानां हंसाद्यर्थाभिधाने नियमनाद् दुर्योधनादिरूपोऽर्थः शब्दशक्तिमूलो वस्तुध्वनिः ।

---

रापेक्षासम्भवान्निर्वाह्यनिर्वाहकभावस्यावश्यंभावाच्च कथं वा न स्वीक्रियते इतिभावः।

(२२) एवमिति । एवमुक्तप्रकारेण उपमाभिधायकन्यायो दीपकादावपि । आदिपदेन तुल्ययोगितादीनां परिग्रहः । तथाच यथा "सकलकलम्" इत्यादौ शब्दश्लेषस्य विद्यमानत्वेऽपि मुख्यत्वात् पूर्णोपमाया अङ्गित्वम् अस्य चाङ्गत्वेन व्यपदेशः "प्राधान्येन व्यपदेशा भवन्ति" इतिन्यायात् , तथा "स्वेच्छोपजातविषयोऽपि" इत्यादौ शब्दश्लेषस्य विद्यमानत्वेऽपि मुख्यत्वात् दीपकस्यैवाङ्गित्वम् अस्य चाङ्गत्वेन व्यपदेशः तुल्यन्यायात् । एवं "स्तोकेनोन्नतिमायाति" इत्यादौ च अर्थश्लेषस्य विद्यमानत्वेऽपि मुख्यत्वात् तुल्ययोगिताया अङ्गित्वेन अस्य चाङ्गत्वेन व्यपदेश इति सरलार्थः ।

(२३) इत्थं सकलकलमित्यत्रोपमैव न श्लेष इति साधिते "सत्पक्षाः" इत्यादौ केचिदुपमाध्वनिं केचिच्च श्लेषमङ्गीकुर्वन्ति तन्मतद्वयमपि दूषयितुमाह—"सत्पक्षा" इति । वेणीसंहारनाटकप्रस्तावनायां सूत्रधारस्योक्तिरियम् । सन्त उत्तमाः पक्षाः पत्राणि येषां ते तथोक्ताः, मधुरा मनोहरा गिरः शब्दा येषां ते तादृशाः, प्रसाधिता अलङ्कृता आशा दिशो यैस्ते, तथा मदेन शरत्कालकृतचित्तविशेषेण उद्धता उत्कटा आरम्भा विहारादिव्यापाराः येषां ते तादृशाश्च धार्तराष्ट्राः कृष्णवर्णचञ्चूचरणा हंसविशेषाः 'धार्तराष्ट्राः सितेतरैः' रित्यमरः कालवशात् कालः सूत्रधारानुज्ञातसङ्गीतानुरागितया शरत्समयस्तस्य वश इच्छा तस्मात् कालेच्छामनुरुध्येत्यर्थः, ल्यब्लोपपञ्चमीयम् , मेदिन्या मानससरोवरसम्बन्धिन्याः पृथिव्याः पृष्ठे निपतन्ति "जलधरसमये मानसं यान्ति हंसाः" इतिकविसमयात् जलधरसमयप्राप्तमानससरोवरादागत्य पृथिव्यां सञ्चरन्तीत्यर्थः। अत्र धृतराष्ट्रपुत्राणाममङ्गले वक्तुस्तात्पर्यम् । तेन द्वितीयार्थस्तु—सन्तो विद्यमानाः पक्षा भीष्मद्रोणादयः सहाया येषां ते मधुरगिरः कान्तवाचः, प्रसाधिताशा वशीकृतसर्वदिशः यद्वा प्रकृष्टं साधिता आशाः स्वेच्छाविषया यैस्ते,, प्रसाधिता धृता आशा जयेच्छा यैस्ते इति वा, मदेन अहङ्कारेण उद्धता विकटा आरम्भा युद्धाद्याडम्बरा येषां ते तथोक्ताः, धृतराष्ट्रस्य राज्ञोऽपत्यानि पुमांस इति धार्तराष्ट्रा दुर्योधनादयः कालवशात् मृत्युकालवशात् मेदिनीपृष्ठे पृथिव्यां निपतन्ति अवलुठन्ति ।

अत्र केचित् "हिममुक्तचन्द्ररुचिरः" इत्यत्रोपमाध्वनिरिव धार्तराष्ट्राः धृतराष्ट्रपुत्रा इव धार्तराष्ट्रा हंसा निपतन्तीत्युपमाध्वनिरित्याहुः । केचिच्च "नीतानामाकुलीभावम्" इत्यत्र प्रकृतिश्लेष इव द्वितीयार्थस्यापि प्रकृतप्रबन्धाभिधेयत्वेन प्रतिपादनात्प्रकृतिश्लेष एवेत्याहुः ।

( २४ ) तत्र स्वाभिप्रायं दर्शयति—अत्रेति । शरद्वर्णनया शरद्वर्णनारूपेण, अभेदे तृतीया । धार्तराष्ट्रादिशब्दानामिति । अत्र सत्पक्षादिशब्दानामितिवक्तव्येऽप्येतद्वचनमेतत्प्राधान्यं दर्शयितुम् । अत्रादिपदेन पक्षादिपदानां परिग्रहः । हंसाद्यर्थानामभिधानम-

( २५ ) इह च प्रकृतप्रबन्धाभिधेयस्य द्वितीयार्थस्य सूच्यतयैव विवक्षितत्वादुपमानोपमेयभावो न विवक्षित इति नोपमाध्वनिर्न वा श्लेष इति सर्वमवदातम् ।

( २६ ) (क)पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते ।

( २७ ) आदिशब्दात्खड्ग-मुरज-चक्र-गोमूत्रिकादयः ।

---

भिधया प्रतिपादनं तत्र । तथाह्युक्तम् "सूत्रधारः—( सवैलक्ष्यस्मितम् ) मारिष ! शरत्समयवर्णनाशंसया हंसा धार्त्तराष्ट्रा व्यवह्रियन्ते, तत्किम् शान्तं पापम्" " इति । अत्राप्यादिपदेन पत्राद्यर्थानां परिग्रहः । नियन्त्रणाद् "संयोगो विप्रयोगश्च" इत्याद्युक्तदिशा नियन्त्रणात् । शब्दानामनेकार्थानां सत्पक्षादिपदानामनेकार्थोपस्थापनसामर्थ्यरूपाऽभिधेति सैव मूलं यस्य सः तथोक्तः अभिधामेवाश्रित्य व्यञ्जनायाः प्रवृत्तेः । वस्तुध्वनिरिति ।"पन्थिअ ण एत्थ सत्थरमत्थि" इत्यादि चतुर्थपरिच्छेदोदाहृतवत् वस्तुनः "दुर्योधनादयो म्रियन्ते" इत्यर्थस्य ध्वनिरितिभावः ।

( २८ ) प्रदर्शितमतद्वयं दूषयति—इह चेति । किञ्चेति चार्थः । इह "सत्पक्षा मधुरगिर" इत्यत्र । प्रकृतः "शान्तं पापम्" "प्रतिहतममङ्गलम्" इत्यादिपारिपार्श्वकाद्युक्तरीत्या दुर्योधनादिपतनमभिधातुं प्रस्तुतोऽसौ प्रबन्धः "सत्पक्षा"'"इत्यादिग्रन्थ इति तस्याभिधेयस्तद्द्वाराऽभिधया वाच्यस्तस्य तथोक्तस्य । द्वितीयार्थस्य दुर्योधनादिपतनरूपस्य, सूच्यतयैव चमत्कारातिशयार्थमवश्यव्यङ्ग्यतयैव, न तु हंसोपमानत्वेनेत्येवकारार्थः । तदेवोपपादयति—उपमेय इति । न विवक्षित इति । सर्वत्रैव आवश्यकभावेनोपमेयं प्रतिपादयता कविना उपमेयस्य केवलं दृढत्वमुपपादयितुमनावश्यकभावेनैव उपमानं प्रदर्श्यते । अत्र तु चमत्कारातिशयप्रतिपादनाय द्वितीयार्थस्य दुर्योधनादिपतनरूपस्य अवश्यम्भावेनैव सूचयितुमिष्टत्वादुपमानत्वं न विवक्षितम्, तदविवक्षया च द्वयोरप्युपमानोपमेयभाव एव न विवक्षित इत्याशयः । न वा श्लेष इति । प्रकरणनियमेन उभयार्थस्य वाच्यत्वाभावादितिभावः । सर्वमवदातमिति । अखिलं निर्दोषमित्यर्थः ।

एवञ्च प्रकरणादिनियमाभावादर्थद्वयस्यापि वाच्यत्वे श्लेषः, यथोदाहृते-"येनध्वस्त" इत्यादौ एकस्यार्थस्य वाच्यत्वे तदन्यस्य तु प्रतीयमानत्वम् । उभयोश्चोपमानोपमेयभावसद्भावे उपमाध्वनिः यथा "दुर्गालङ्घित" "सकलकलम्" इत्यादौ, तदसद्भावे तु शब्दशक्तिमूलवस्तुध्वनिः यथा "पथिअ ण एत्थि" "सत्पक्षा" इत्यादावितिबोध्यम् ।

( २६ ) सम्प्रति रसानुपकारकमपि कविभिस्तेषु तेषु शक्तिप्रदर्शनार्थमुपनिबद्धत्वात् प्राच्यैरलङ्कारमध्ये लक्षितं चित्रं निरूपयति—पद्मेति । वर्णानां शब्दस्वरूपाणामकाराद्यक्षराणाम्, भूम्यादौ उट्टङ्कितानामित्यर्थः, पद्माद्याकारहेतुत्वे पद्मप्रभृतिस्वरूपसम्पादकत्वे चित्रं नामालङ्कार उच्यते, भूम्यादौ पद्मादिस्वरूपसम्पादको वर्णविन्यासश्चित्रालङ्कार इति निष्कृष्टोऽर्थः । यद्यपि शब्दात्मकानामाकाशगुणानां वर्णानां पद्माद्याकारहेतुता नास्ति तथापि तद्व्यञ्जकानां भूम्यादौ लिप्यात्मकानां वर्णानां तथात्वेन तेषु तथात्वमुपचर्यत इत्यवधेयम् । अस्य चालङ्कारतायां तथाविधनैपुण्यादिसंस्कारवशेन विस्मयावेशो यथाकथञ्चिद्बीजमितिलोचनकाराः । चित्रसम्पाद्यतयाऽस्य चित्रमिति नाम ।

( २७ ) "पद्माद्याकार" इत्यत्रादिपदाद्बोध्यं निर्दिशति—आदिशब्दादिति । खड्गेत्यादि । खड्गः करवालः शस्त्रविशेषः, मुरजो मृदङ्गो वाद्यविशेषः, चक्रं प्रसिद्धम्, गोमु-

---

( क ) "सन्निवेशविशेषेण शक्तिमात्रप्रकाशकाः" । इत्युत्तरार्द्धं केचित् पठन्ति ।

( २८ ) अस्य च तथाविधलिपिसंनिवेशविशेषवशेन चमत्कारविधायिनामपि वर्णानां तथाविधश्रोत्राकाशसमवायविशेषवशेन चमत्कारविधायिभिर्वर्णैरभेदेनोपचाराच्छब्दालङ्कारत्वम् ।

( २९ ) तत्र पद्मबन्धो यथा मम—

( ३० ) 'मारमा सुषमा चारु-रुचा मारवधूत्तमा ।
मात्तधूर्ततमावासा सा वामा मेऽस्तु मा रमा ॥'

त्रिका गोमूत्रधारा आदिपदेन बन्धादीनां ग्रहणम् । तदुक्तम् अग्निपुराणे—

"अनेकधावृत्तिवर्णविन्यासैः शिल्पकल्पना ।
तत्तत्प्रसिद्धवस्तूनां बन्ध इत्यभिधीयते ॥"

अस्यानेकविधत्वमपि तत्रैवोक्तम्—

"बाणबाणासनव्योमखङ्गमुद्गरशक्तयः ।
मृदङ्गपद्मशृङ्गाटदम्भोलिमुशलाङ्कुशाः ॥
पदं रथस्य नागस्य पुष्करिण्यसिपात्रिका ।
एते बन्धास्तथा चान्येऽप्येवं ज्ञेयाः स्वयं बुधैः ॥"

( २८ ) ननु भूम्यादौ पद्मादिस्वरूपसम्पादकवर्णविन्यासस्य चित्रालङ्कारत्वाभ्युपगमे शब्दरूपत्वाभावेन शब्दालङ्कारत्वाभावात् शब्दालङ्कारप्रस्तावे तत्स्वरूपोपपादनं कथमित्याशङ्कां निराकरोति-अस्य चेति । चित्रालङ्कारस्य चेत्यर्थः। तथाविधः पद्मादिसदृशो यो लिपिसन्निवेशविशेषो भूम्यादौ चित्ररचनाविशेषः तस्य वशेन प्रभावेण पद्माद्याकारतया लिपिरचनामहिम्नेत्यर्थः, चमत्कारविधायिनं वक्तृविस्मयकारिणामपि वर्णानां चित्ररूपाणामित्यर्थः तथाविधः पद्मादिसदृशो यः श्रोत्राकाशसमवायविशेषः कर्णरन्ध्रसम्बन्धविशेषस्तद्वशेन चमत्कारविधायिभिः श्रोतृविस्मयकारिभिः वर्णैः शब्दात्मकैः सह अभेदन तादात्म्येन उपचारात् व्यवहारात् । एवञ्च पद्माद्याकारलिपिसन्निवेशविशेषमवलोक्य वक्त्रा ये वर्णा उच्चार्य्यन्ते तैरेव श्रोतॄणां श्रोत्रे पद्माद्याकारा वर्णा जन्यमानाः कमपि चमत्कारमादधतीव तेषाञ्च कार्य्यकारणयोरभेदेनोपचाराज्जन्यानामपि वर्णानां चित्रालङ्काव्यपदेशभाक्त्वं सङ्गच्छत इति भावः ।

( २९ ) अथोदाहर्तुमुपक्रमते—तत्रेति । तत्र तेषु पद्मादिस्वरूपभेदेन बहुविधेषु चित्रालङ्कारेषु मध्य इत्यर्थः। पद्मबन्धः पद्मवद्बन्धो वर्णरचना, पद्मस्वरूपसम्पादको वर्णविन्यास इत्यर्थः। एवमन्यत्रापि ।

( ३० ) मारमेति । मारस्य कामस्य मा लक्ष्मीः सेव सुषमा परमाशोभा यस्याः सा, यद्वा मा नेव रमासुषमा लक्ष्म्या अप्युत्कृष्टाऽपि शोभा यस्याः सा लक्ष्म्या अप्युत्कृष्टत्वं यच्छोभापेक्षया न तादृशीतिभावः ।

अथवा "मारमे"ति "असुषमे"ति पदच्छेदः, मां लक्ष्मीं रमयति विनोदयति विड म्बनास्पदमादधातीतियावत् तथा, न सुषमा यदपेक्षया सा स्वयमेव परममुत्कृष्टेत्यर्थः, अत एव चारु मनोरमाया रुक्कान्तिस्तया मनोहरकान्त्येत्यर्थः, मारस्य कामस्य वधू रतिस्तस्या उत्तमा रतेरप्युत्कृष्टेत्यर्थः, अथवा "अमारवधूत्तमा" इतिपदच्छेदः, न मारवधूत्तमा यदपेक्षया तादृशी, धूर्तश्चासौ तमो राहुस्तस्यावासः सङ्ग इति धूर्त्ततमा-

( ३१ ) एषोऽष्टदलपद्मबन्धो दिग्दलेषु निर्गमप्रवेशाभ्यां श्लिष्टवर्णः, किन्तु विदिग्दलेष्वन्यथा, कर्णिकाक्षरं तु श्लिष्टमेव ।

वासः सा नैव आत्तो गृहीतो धूर्त्ततमावासो यया सा तथा सौन्दर्य सत्यपि वञ्चकस्य राहोः कवलनावसरो यया न दत्तस्तादृशीतिभावः "तमस्तु राहुः स्वर्भानु" इत्यमरः, यद्वा माचधूर्त्ततमा अगृहीतधूर्त्ततमगृहा, सा प्रसिद्धा, वामा मनोरमा प्रिया, मे ममास्तु किन्तु रमा लक्ष्मीः मास्तु । ननु कुत एवमितिजिज्ञासायां वामाविशेषणानि व्यतिरेकेण रमापरत्वेन योज्यानि । तथाहि–मारं मृत्युं मिमीते कथयतीति मारमा लक्ष्म्या योगवियोगयोः प्राणात्यय इति वेदान्तिनः, अतएव न सुषमा परमाशोभा यस्याः सा तादृशी, एवंसति सर्वैः लोकैः कथमुपास्यत अत आह—चार्विति चारु इति क्रियाविशेषणम् । मारस्य कन्दर्पस्य वधू रतिः तदपेक्षया उत्तमा, अथवा तत एव अचारुरुचा निन्दितशोभया, मारस्य मृत्योर्भयभार्यायाः वधूः स्नुषा यातनेत्यर्थः तस्या उत्तमा उत्कृष्टेति मरवधूत्तमा "मारोऽनङ्गे मृतौ विघ्ने" इति गोपालः, "वधूः पत्न्यां स्नुषाभार्य्योः" इति हैमः, भागवतेऽपि—

"दुरुक्तौ कलिराधत्त भयं मृत्युञ्च सत्तम ! ।
तयोश्च मिथुनं जज्ञे यातना निरयस्तथा ॥"

तथा च यदपेक्षया यातानाऽपि नेतिभावः, मा नात्ता गृहीतेति मात्ताऽतन्नेत्यर्थः सा चासौ धूर्त्ततमाया इव धूर्त्ततमवद् आवासो निवासस्थानं यस्याः सा । यदि च कस्यचित् स्वेष्टदेवता सविधे आत्मानं प्रति लक्ष्मीदेव्याः स्वानुकूल्यादाभ्यर्थनेतिविभाव्यते तदाऽयमर्थः—माया लक्ष्म्या रमणात् मारमो विष्णुस्तस्य असुसमा प्राणसमा यद्वा मारस्य कामस्य मा माता "मा च मातरि माने च" इति रभसः, सुषमा परमसुन्दरी, "सुषमं साधुशोभनम्" इत्यमरः, चारुरुचा मारवध्वा कामपत्न्यार तीदेवीतोऽपि उत्तमा श्रेष्ठा तथा मा आत्तो गृहीतो धूर्त्ततमस्य अत्यन्तदुष्टजनस्य आवासो निकेतनं यया सा तादृशी, सा प्रसिद्धा, रमा लक्ष्मीर्देवी मे वामा वक्रा मा अस्तु कदापि प्रतिकूला न भवत्वित्यर्थः ।

(३१) अस्य स्वरूपं प्रतिपादयति—एष इति । अष्टभिर्दलैः पर्णैः पद्मस्वरूपसम्पादको वर्णविन्यासः । "दलं पर्णं छदः पुमान्" इत्यमरः । तद्विन्यासपाठयोर्विधिप्र दर्शयति—दिगिति । श्लिष्टवर्णः अनुलोमप्रतिलोमपाठेनैकरूपाक्षरः । अन्यथा क्वचित्प्रवेशः क्वचिन्निर्गम इत्यपि श्लिष्टवर्णा एव । कर्णिकाक्षरं "मा" इति । अत्राष्टसु दिक्षु विततं अष्टदलं पद्मं लेख्यम् । कर्णिकायां "मा" शब्दं विन्यस्य "रमा" इत्यस्याक्षरद्वयं तत्र दिग्दले लिखित्वा, सु "स" इति अक्षरद्वयं विदिग्दलेन प्रवेश्य "चारु" इत्यक्षराभ्यामितरदिग्दलेन निर्गमप्रवेशौ, तदनन्तरं विदिग्दले 'रव' इति अक्षरद्वयं दत्वा तदनन्तरदिग्दले "धूर्त्त" इत्यक्षरद्वयेन प्रविश्य पुनः कर्णिकाक्षरात्प्रभृति तेनैव निर्गम्य "तमा" इत्यक्षरद्वयेन, पुनस्तदनन्तरविदिग्दले प्रविश्य तदनु दिग्दले "वासा" इत्यक्षरद्वयेन निर्गमप्रवेशौ । तदितरदिग्दले "मेऽस्तु" इत्यक्षरद्वयेन निर्गत्य पुनः प्राक् निर्गम्य दिग्दले "मार" इत्यक्षरद्वयेन प्रविश्य कर्णिकाङ्कतां गते "मा" इत्यत्र विश्रान्तिः । तदुक्तम्—

"वर्णद्वयेन चैकैकं दलभूतदलाष्टकम् ।
सर्वोत्तराद्यवर्णेन पद्मं स्यात्कृतकर्णिकम् ॥" इति ।

( ३२ ) एवं खड्गबन्धादिकमप्यूह्यम् ।

अस्य च विशेषलक्षणं सरस्वतीकण्ठाभरणे—

"कर्णिकायां न्यसेदेकं द्वे द्वे दिक्षु विदिक्षु च ।
प्रवेशनिर्गमौ दिक्षु कुर्य्यादष्टदलाम्बुजे ॥",

सुखपूर्वकं बोधनाय तत्र तत्र तत्तच्चित्राकारोऽपि लिख्यतेऽस्माभिः ।
तत्रोदाहृतपद्मबन्धचित्रं यथा—




दिङ्मात्रमुदाहृतमेतत्पद्मबन्धम् । चमत्कारातिशायित्वे प्रकारान्तरेणापि पद्मबन्धादिकं भवतीत्यवधेयम् । तत्स्वरूपं सरस्वतीकण्ठाभरणादितो ज्ञेयम् ।

(३२) एवमिति । यथा पद्मबन्धस्तथेत्यर्थः । खड्गबन्धादिकमित्यत्रादिपदेन मुरजादीनां परिग्रहः । ऊह्यमिति । काव्यप्रकाशसरस्वतीकण्ठाभरणादिलक्षणग्रन्थेष्वितिशेषः ।

यथा—"मारारिशक्ररामेभमुखैरासाररंहसा ।
सारारब्धस्तवानित्यं तदार्तिहरणक्षमा ॥
माता नतानां संघट्टः श्रिया बाधितसंभ्रमा ।
मान्याथ सीमा रामाणां शं मे दिश्यादुमादिजा ॥"

सविस्तरं पद्मव्याख्यानं काव्यप्रकाशादावेवानुसन्धेयम् । अनेन श्लोकद्वयेन खड्गबन्धः प्रस्तूयते तत्र-मुष्टेरुपर्य्यधः शाखाद्वयम् । उपरि शाखाचतुष्पथे प्राथमिकमाकारं विन्यस्य तिर्य्यगधःक्रमेण "रारि" इत्यादि 'ह' कारान्तांश्चतुर्दशवर्णान्न्यसेदित्येकाधारा । ततः खड्गशिखायां सा इति श्लिष्टम् । ततःतिर्यगूर्ध्वक्रमेण "रारब्ध" इत्यादिवर्णचतुर्दशकं विन्यस्यापरां धारां कुर्य्यात्, इत्येषा पट्टिका 'मा' कारः पूर्वं 'मा' कारं प्रविष्टः । एवमग्रेऽपि तत्रैव प्रविष्टं कल्पयित्वा दक्षिणशाखायां 'ता' इत्यादिवर्णसप्तकं विन्यस्य वामशाखायां तिर्यग्विलोमेन "श्रि" कारादिवर्णसप्तकं लिखेत् । "मा" कारचतुष्पथे प्राथमिक "मा" कारं प्रविष्टः । ततस्तमेव 'मा' कारमारभ्याधोऽधो 'न्याथसी' इतित्रयोवर्णा मुष्टौ लेख्याः । ततोऽधश्चतुष्पथमध्ये तदन्तिम 'मा' कारं विन्यस्य तद्दक्षि-

णशाखायां "रामाणां शं" इति चतुरो वर्णान् विन्यसेत् । ततो वामशाखायां विलोमेन "मे दिश्याद्दु" इतिचतुरो वर्णाँल्लिखेत् । 'मा' कारोऽत्रचतुष्पथस्थ "मा" कारं प्रविष्टः । ततो मुष्टे रघत्सरुके "दिमा" इतिवर्णद्वयं लेख्यमितिखड्गनिष्पत्तिः । स्पष्टञ्चैतद्विवृतौ ।

सचित्रखड्गमुसलबन्धौ यथा—

मायाविनं महाहावा रसायातं लसद्भुजा ।
जातलीला यथासारवाचं मद्दिष मावधीः ॥



चापबन्धो यथा—

माममीदा शरण्या मुत्सुदैवारुक्प्रदा च धीः ।
धीरा पविन्ना सन्त्रासात्त्रासीष्टा मातरारम ॥



बाणबन्धो यथा—

माननापरुषं लोकदेवीं सद्मसन्नम ! ।
मनसा सादरं गत्वा सर्वदा दास्यसङ्गतम् ॥

शूलबन्धो यथा—

मामुषो राजस स्वासूँल्लोककूटदेशदेवताम् ।
तां शिवावासिनां सिद्धाध्यासितां हि स्तुतां स्तुहि ॥



शक्तिबन्धो यथा—

माहिषाख्य रणेऽन्यानु सानु नानेयमत्र हि ।
हिमातङ्कादिवामुं च कं कम्पिनमुपण्लुतम् ॥

सचित्रं

६ शक्तिबन्धः ।



हलबन्धो यथा—

मातङ्गानङ्कविचिनामुना पादं तमुद्यतम् ।
तङ्गयित्वा शिरस्यस्य निपात्याहन्ति रंहसा ॥

सचित्रं

७ हलबन्धः



* खड्गादिसप्तभिरेवबन्धैरष्टमो महाचक्रबन्धो जायते—
चक्रबन्धलक्षणं यथा सरस्वतीकण्ठाभरणे—

पुरः पुरो लिखेत्पादानत्र त्रीन् षडरीकृतान् ।
तुर्यं तु भ्रमयेन्नेमौ नामाङ्कश्चक्रसंविधिः ॥

पुरः पुरो लिखित्वान्याग्रे लिखेद्यथा षडराः सम्पद्यन्ते । सकलानि पूर्वोदाहरणान्येवोदाहरणानि वेदितव्यानि ।

सचित्रं
८ चक्रबन्धः



उदाहरणान्तरं यथा—
"सत्वंमानविशिष्टमाजिरभसादालम्ब्यभव्यःपुरो लब्धाधक्षयशुद्धिरुद्धरतरश्रीवत्सभूमिर्मुदा ।
मुक्त्वाकाममपास्तभीः परमृगव्याधः सनादं हरे रेकौघैः समकालमभ्रमुदयीरोपैस्तदा तस्तरे ॥

* चक्रबन्धोदाहरणान्तरं यथा—
"सानन्दं देवदैत्यद्विजभुजगमुखैः प्राणिभिः सेव्यमाना
नाशं तापं नयन्ती शरदि शशिकलां श्यामयन्ती स्वभासा ।
सा सद्यः सादरारे सकलनगदधीशेन संयुक्तहारा
सा ध्वस्ताशेषपापा सलिलनिधिसुता सन्ततं पातु युष्मान् ।

मुरजबन्धः—

अत्र पाद चतुष्केऽपि क्रमशः परिलेखिते । श्लोकपादक्रमेण स्याद्रेखासु मुरजश्रयी ॥

अयम्भावः—पंक्तिचतुष्टयेन लिखितस्य पादचतुष्टयस्याधःक्रमेण यथाक्रमं प्रथम-द्वितीयतृतीयचतुर्थानूर्ध्वंक्रमेण पञ्चम-षष्ठ-सप्तमाष्टमान् वर्णान् गृहीत्वा प्रथमः पादः। द्वितीयात्प्रथमं प्रथमाद्द्वितीयतृतीयौ द्वितीयाच्चतुर्थपञ्चमौ प्रथमात्षष्ठसप्तमौ द्वितीयादष्टमं गृहीत्वा द्वितीयःपादः । तृतीयात्प्रथमं तुर्य्याद्द्वितीयतृतीयौ तृतीयात्तुर्यपञ्चमौ तुर्य्यात्षष्ठसप्तमौ तृतीयादष्टमं गृहीत्वा तृतीयः पादः । पादचतुष्टयस्योर्ध्वंक्रमेण प्रथम-द्वितीय-तृतीयचतुर्थानधःक्रमेण पञ्चम-षष्ठ-सप्तमाष्टमान् गृहीत्वा चतुर्थः पादः पाठ्य इत्येवंक्रमेण मुरजसिद्धिः ।

मुरजबन्धोदाहरणं यथा—

सासे नागमनारम्भे रसेनासीद नारता । तारनादजना मत्तधीरनागमनामया ॥

उदाहरणान्तरं यथा—

"सरला बहुलारम्भतरलालिवलारवा । वारलाबहुलामन्दकरलाबहुलामला ॥"

सचित्रं

१० मुरजबन्धः



गोमूत्रिकाबन्धः—

वर्णानामेकमात्रत्वं यद्येकान्तरकर्धयोः । गोमूत्रिकेति तत्प्राहुर्दुष्करं तद्विदो विदुः ॥

षोडशकोष्ठद्वये पङ्क्तिद्वयेऽर्धद्वय क्रमेण विलिख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिः ।

उदाहरणं यथा—

प्र वृ त्ते वि ल स द्धा नं सा ध ने ऽप्य वि षा दि भिः ।
व वृ षे वि क से दूदा नं यु ध मा प्य वि षा णि भिः ॥

तच्चित्रं यथा—

| प्र | वृ | त्ते | वि | ल | स | ध्वा | नं | मा | ध | न | प्य | वि | षा | दि | भिः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| व | बृ | षे | वि | क | स | द्दा | नं | यु | ध | मा | प्य | वि | षा | णि | भिः |

( ३३ ) काव्यान्तर्गडुभूततया तु नेह प्रपञ्च्यते ।

( ३४ ) **रसस्य परिपन्थित्वान्नालङ्कारः प्रहेलिका ॥ १३ ॥**

**उक्तिवैचित्र्यमात्रं सा च्युतदत्ताक्षरादिका ।**

( ३५ ) च्युताक्षरा दत्ताक्षरा च्युतदत्ताक्षरा च । उदाहरणम्—

(३३) ननु महाकविभिर्भोजराजादिभिरस्य लक्षणोदाहरणाभ्यां बाहुल्येनैव प्रपञ्चितत्वात्कथमत्रापि न तथैव प्रतिपाद्यत इति जिज्ञासायामाह—काव्यान्तरिति । काव्यान्तर्मध्ये गडुर्ग्रन्थिरित्यभियुक्ताः गडुभूतया ग्रन्थिरूपतया यथेक्षुचर्वणदशायां ग्रन्थी रसव्यवधायकस्तथैव काव्ये ग्रन्थिरूपत्वेनात्यन्तकठिनत्वान्नीरसतया चित्रालङ्कार इति तात्पर्यम् , तेन इह साहित्यदर्पणे न प्रपञ्च्यते लक्षणोदाहरणाभ्यां विस्तरतो नोपन्यस्यते ।

उक्तञ्च ध्वनिकृताऽपि—

"यमकादिनिबन्धेषु पृथग्यत्नोऽस्य जायते ।
शक्तस्यापि रसाङ्गत्वं तस्मादेषां न विद्यते ॥"

(३४) ननु व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात् ।
यत्र बाह्यार्थसम्बन्धः कथ्यते सा प्रहेलिका ॥
प्रहेलिका सकृत्प्रश्नः साऽपि षोढ़ाच्युताक्षरा ।
दत्ताक्षरोऽभयं मुष्टिर्बिन्दुमत्यर्थवत्यपि ॥
क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे ।
पराव्यामोहने चाऽपि सोऽपयोगाः प्रहेलिकाः ॥

इति सप्रभेद सरस्वतीकण्ठाभरणकृल्लक्षणात्,"प्रहेलिकातु सा ज्ञेया वचःसंवृतकारि यत्" इत्यादि प्राचीनानान्तरलक्षणकरणाच्च प्रहेलिकाया अलङ्कारतया तल्लक्षणस्यावश्यं वक्तव्यत्वात्कथमत्रोपेक्षितमित्याकाङ्क्षायामाह—रसस्येति । रसस्य काव्यात्मभूतचमत्कारस्य परिपन्थित्वात् आस्वादविलम्बोत्पादकत्वे विरोधित्वात् प्रहेलिका प्रहेलयति सूचयति भावं न तु स्वरूपमिति या सा तथोक्ता, नालङ्कारः प्रत्युत तथा दोषलक्षणाक्रान्ततया त्याज्येति शेषः । ननु तर्हि प्राचीनैः कथमलङ्कारप्रकरणे प्रहेलिका प्रपञ्चितेत्यत आह—च्युतेति । च्युतं च दत्तं चेति, च्युतदत्ते चेति च्युतदत्तानि तथा भूतान्यक्षराणि यत्र स आदौ यस्याः सा तादृशीत्यर्थः । उक्तिवैचित्र्यमात्रं केवलोक्तिगतक्रीडा मात्रप्रयोजिकेत्यर्थः । तथा चाहुः—

मात्राबिन्दुच्युतके प्रहेलिकाकारकक्रियागूढे ।
प्रश्नोत्तरादिचान्यक्रीडामात्रोपयोगमिदम् ॥

एवञ्च रसास्वादविलम्बोत्पादकतया दोषत्वस्यैव सम्भवेऽपि उक्तिवैचित्र्यमादायैव प्राचां सरस्वतीकण्ठाभरणकृदादीनां तत्रालङ्कारपदप्रयोगः, स च पुनर्गौण एव । परे तु उक्तिवैचित्र्यमात्रमित्यनेन वैचित्र्यमलङ्कार इत्यलङ्कारसामान्यलक्षणाक्रान्तत्वात् उक्त्यलङ्कार एव स इत्यर्थं इत्याहुः ।

(३५) अत्रादिपदग्राह्यं प्रदर्शयति—च्युतेति । च्युताक्षरा अयुक्तैकाक्षरा दत्ताक्षरा दत्ताधिकैकाक्षरा, च्युतदत्ताक्षरा एकाक्षरं च्यावयित्वा तत्स्थाने दत्तापराक्षरा । सरस्व-

( ३६ ) 'कूजन्ति कोकिलाः साले यौवने फुल्लमम्बुजम् ।
किं करोतु कुरङ्गाक्षी वदनेन निपीडिता ॥'

( ३७ ) अत्र 'रसाले' इति वक्तव्ये 'साले' इति 'र' च्युतः । 'वने' इत्यत्र 'यौवने' इति 'यौ' दत्तः । 'वदनेन' इत्यत्र 'मदनेन' इति 'म' च्युतः 'व' दत्तः ।

( ३८ ) आदिशब्दात्क्रियाकारकगुप्त्यादयः ।

( ३९ ) तत्र क्रियागुप्तिर्यथा—

( ४० ) 'पाण्डवानां सभामध्ये दुर्योधन उपागतः ।
तस्मै गां च सुवर्णं च सर्वाण्याभरणानि च ॥'

( ४१ ) अत्र 'दुर्योधनः' इत्यत्र 'अदुर्योऽधनः' इति । 'अदुः' इति क्रियागुप्तिः।

( ४२ ) एवमन्यत्रापि ।

---

तीकण्ठाभरणकृत्तु षाड्विध्यमाह तत्तूपपादितमेवाऽस्त्युपरिष्टात् । एतद्भिन्ना अपि अन्तःप्रश्न-बहिःप्रश्न-बहिरन्तःप्रश्न-जातिप्रश्नपृष्टप्रश्न उत्तरप्रश्नप्रभृतयोऽपि प्रहेलिका। क्रीडामात्रोपयोगिन एवेत्यवगन्तव्याः ।

(३६) च्युताक्षरादिभेदत्रयस्य एकमुदाहरणं दर्शयति—कूजन्तीति । सहचरीं प्रति कस्याश्चिन्नायिकाया उक्तिरियम् । अत्र यथाश्रुते अर्थसम्भवेऽपि अनुपयुक्तकथनरूपत्वेन च्युतदत्ताक्षरत्वे एव तात्पर्यात् प्रहेलिकात्वम् । तत्र यथाश्रुतेऽर्थो यथा-कोकिलाः साले शालवृक्षे कूजन्ति, नारीणां यौवने अम्बुजं फुल्लम् , निपीड़िता कुरङ्गाक्षी वदने निपीडिता किं करोतु इति । परन्तु अनुपयुक्तकथनमेतत् । च्युतदत्ताक्षरत्वे तु भवत्येव उपयुक्तत्वम् । यथा—कोकिलाः साले रसाले कूजन्ति "कुहू" इतिकलमुद्गिरन्ति, यौवने वने जले च अम्बुजं कमलं फुल्लं विकसितम् , वदनेन मदनेन निपीड़िता कुरङ्गाक्षी मृगनयना स नायिका स्वामिवियोगात् सम्प्रति किं करोतु इति कथयेत्याशयः ।

( ३७ ) उक्तोदाहरणे च्युतदत्ताक्षराणि दर्शयति—अत्रेति । साले इति । इत्येवोक्तमितिशेषः । च्युतो वर्णः इति शेषः । एवमन्यत्र ।

( ३८ ) पुनरपि आदिपदेन ग्राह्यान् दर्शयति—आदिशब्दादिति । अत्राऽप्यादिपदेन सम्बोधनगुप्त्यादेः परिग्रहो बोध्यः ।

(३९) उदाहर्तुमाह—तत्रेति ।

( ४० ) पाण्डवानामिति । युधिष्ठिरकृतराजसूययज्ञान्ते दानवर्णनेयम् । पाण्डवानां युधिष्ठिरादीनां पाण्डुतनयानामित्यर्थः, सभाया मध्ये य अधनोऽकिञ्चन उपागतः सम्प्राप्तः आसीत् तस्मै गां हिरण्य सुवर्णं च सर्वाणि सर्वप्रकाराणि आभरणानि भूषणानि च अदुर्दत्तवन्तः दानाध्यक्षाः कर्णादय इति शेषः ।

( ४१ ) अत्र कथं क्रियागुप्तिरवगम्यते इत्युपपादयति । अत्रेति । एवञ्च श्रवणमात्रेण "दुर्योधन " इत्यनेन धृतराष्ट्रज्येष्ठपुत्रस्यैव बोधात् क्रियागुप्तिरित्यभिप्रायः ।

( ४२ ) एवमिति । अन्यत्र-कारक-गुप्त्यादावपीत्थमेवोदाहरणमूह्यमित्यर्थः । यथा उक्तोदाहरण एव दुर्योधन उपगतः इत्यत्र योऽधन उपागत इति कर्तृकारकगुप्तिः ।

( ४१ ) अथावसरप्राप्तेष्वर्थालङ्कारेषु सादृश्यमूलेषु लक्षितव्येषु तेषामप्युपजीव्यत्वेन प्राधान्यात्प्रथममुपमामाह—

---

यथा वा कारकगुप्त्युदाहरणम्—

"षड्जसम्वादिमापन्नैः स्वरैः श्रुतिमनोहरैः ।
गिरिशृङ्गस्थितं सर्वं मयूरं जयति ध्रुवम् ॥"

अत्र मयूरं जयति इत्यत्र लुप्तः कर्त्ता सिद्धान्ते—तु मयुस्तुरङ्गवदनो गिरिशृङ्गस्थितं सर्वं जनं रञ्जयतीत्यर्थः ।

सम्बोधनगुप्तिर्यथा—

ब्राह्मणेभ्यो नदीतीरे वस्त्राण्याभरणानि च ।
ददाति गां हिरण्यं च वसुधां च द्रुतं व्रज ॥

अत्र ब्राह्मणेतिसम्बोधनं कारकगुप्तिरपि । 'इभ्य' इतिकर्त्तृपदम्, सम्प्रदानभ्रमजनकत्वाद्गुप्तम् । इतोऽधिकन्तु सरस्वतीकण्ठाभरण-काव्यालङ्कारादौ बोध्यम् ।

(४१) इदानीं शब्दालङ्कारनिरूपणानन्तरमर्थालङ्काराणां निरूपणे सङ्गतिं तत्रापि चोपमाया एव प्राथम्येन निरूपणे युक्तिञ्चोपपादयितुमुपक्रमते—अथेति। अथशब्दोऽत्र न शब्दालङ्कारनिरूपणानन्तर्य्यप्रतिपादनपरस्तस्याभिधानक्रमेणैव प्राप्तेरतस्तत्सार्थक्योपपत्तये अथेत्यस्यार्थालङ्कारनिरूपणारम्भे इत्यर्थः, अवसरप्राप्तेषु अवसरसंगत्या निरूपणयोग्येषु—

[1]उपमा[2]नन्वयश्चैव[3]मुपमेयोपमा ततः। [4]स्मरणं [5]रूपकं चैव [6]परिणामस्ततः परम् ॥
[7]सन्देहो [8]भ्रान्तिमानेव[9]मुल्लेखो [10]वाप्यपह्नुतिः । [11]निश्चयश्चैव[12]मुत्प्रेक्षा[13]ऽतिशयोक्तिरनन्तरम् ।
[14]तुल्ययोगिस्समुद्दिष्टं [15]दीपकं तदनन्तरम् । [16]प्रतिवस्तूपमा प्रोक्ता [17]दृष्टान्तश्च [18]निदर्शना ॥
[19]व्यतिरेकः [20]सहोक्तिश्च [21]समासोक्तिरतः परम् । स्यातां [22]परिकर[23]श्लेषा[24]वप्रस्तुतप्रशंसनम् ॥
[25]व्याजस्तुतिरथो दिष्टं [26]पर्य्यायोक्तमतः परम् । भवे[27]दर्थान्तरन्यासः [28]काव्यलिङ्गा[29]नुमानके॥
[30]हेतुर्वाऽप्य[31]नुकूलं स्या[32]दाक्षेपश्च [33]विभावना । [34]विशेषोक्ति[35]विरोधा[36]वसङ्गति[37]र्विषमं [38]समम् ॥
[39]विचित्र[40]मधिका[41]न्योऽ[42]न्ये विशेषो [43]व्याहतिस्तथा । [44]हेतुमाला भवे[45]न्मालादीपकै[46]कावली पुनः॥
[47]सारश्चैव [48]यथासंख्यं [49]पर्य्याय[50]परिवर्त्तने । [51]परिसंख्यो[52]त्तरं चैव[53]मर्थापत्ति[54]र्विकल्पनम् ॥
[55]समुच्चय[56]समाधी वा [57]प्रत्यनीकं [58]प्रतीपकम् । [59]मीलितं चापि [60]सामान्यं [61]तद्गुणो[62]ऽतद्गुणस्तथा॥
[63]सूक्ष्मं [64]व्याजोक्तिरुद्दिष्टा [65]स्वभावोक्तिश्च [66]भाविकम् । [67]उदात्तं [68]रसवत्[69]प्रेय[70]ऊर्जस्वि च [71]समाहितम्
[72]भावोदयो [73]भावसन्धि[74]र्भावशावल्यमीरितम् । [75]संसृष्टिः [76]सङ्करश्चेति नामतोऽत्र प्रकीर्त्तिताः॥

इति यथाक्रमं वक्ष्यमाणेषु अर्थालङ्कारेषु लक्षितव्येष्वित्युत्तरेण सम्बन्धः । प्राधान्यादिति । चमत्कारविशेषाधायकत्वेन प्रचुरतया चेत्याशयः । प्राधान्यादित्यनन्तरं प्रथममित्यस्य पाठो ज्ञेयः । एतच्च "सादृश्यमूलेषु प्रथमं लक्षितव्येषु" इत्येतत्प्रत्येव निमित्तम् । सादृश्यमूलेषु सादृश्यप्रतिभोत्थापितेष्वनन्वयादिषु लक्षितव्येषु कथ्यादिभिर्नि-

रूपणीयेषु सत्सु, तेषामपि सादृश्यमूलानामलङ्काराणामपि, उपजीव्यत्वेन प्राधान्याद्- व्यापकत्वेन उपमालङ्कारमाह उपमालङ्कारं निरूपयतीत्यर्थः । अनन्वादयोऽलङ्काराः सर्वेऽपि प्रायः सादृश्यमूलाः, किन्तु केऽपि साक्षात् केऽपि पुनः परम्परया प्रकारान्तरेण वा, तत्रान्वयोपमेयोपमानादन्वयः साक्षात् स्मरणादयः प्रकारान्तरेण । अत्र—

"अलङ्कारशिरोरत्नं सर्वस्वं काव्यसम्पदाम् ।
उपमा कविवंशस्य मातैवेति मतिर्मम ॥

इतिराजशेखरोक्त्या "उपमैवानेकप्रकारवैचित्र्येण अनेकालङ्कारबीजभूतेति प्रथमं निर्दिष्टा" इत्यलङ्कारसर्वस्वकारोक्त्या—

"उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदात् ।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः ॥"

इत्याद्युक्तदिशा च "मुखं मुखमिव" "चन्द्र इव मुखं मुखमिव चन्द्रः" "चन्द्रं दृष्ट्वा मुखं स्मरामि" "मुखमेव चन्द्रः" 'मुखचन्द्रेण तापः शाम्यति" "किमिदं मुखमुताहो चन्द्र" "चन्द्र इति चकोरास्त्वन्मुखमनुधावन्ति" "चन्द्र इति चकोरा कमलमिति चञ्चरीकास्त्वन्मुखे रज्यन्ति" "चन्द्रोऽयं न मुखम्" "नूनं चन्द्रः" "चन्द्रोऽयम्" "मुखेन चन्द्रकमले निर्जिते" "निशा चन्द्रस्त्वन्मुखञ्च हृष्यति" "त्वन्मुख एवाहं रञ्यामि चन्द्र एव चकोरो रज्यते" "दिवि चन्द्रो भुवि त्वन्मुखम्" "मुखं चन्द्रश्रियं बिभर्ति" "निष्कलङ्कं मुखं चन्द्रादतिरिच्यते" "त्वन्मुखेन समं चन्द्रो निशासु हृष्यति" "मुखस्य पुरतश्चन्द्रो निष्प्रभः" "मुखं नेत्राङ्ककमनीयं" "स्मितज्योत्स्ना हारि" इत्यनन्वयोपमेयोपमा-प्रतीप-स्मरण-रूपक-परिणाम-सन्देह-भ्रान्तिमादुल्लेखापह्नवोत्प्रेक्षातिशयोक्तितुल्ययोगितादीपकप्रतिवस्तूपमादृष्टान्तनिदर्शनाव्यतिरेकसहोक्त्यप्रस्तुतप्रशंसा-समासोक्त्यादीनां विविधभूमिकामासादयन्ती कविकर्मरङ्गनृत्यन्ती उपमानर्त्तकी सहृदय-हृदयमनुरञ्जयन्तीत्येका सर्वेष्वर्थालङ्कारेषु मूलभूतेतितत्प्रथमनिरूपणे बीजमनुसन्धेयम् ।

एवञ्च अर्थालङ्काराणां प्राधान्येन (क)वास्तवादिचातुर्विध्यमुद्दिश्य तल्लक्षणानि भेदांश्चोपपादयन्तो रुद्रटादयः परास्ताः ।

---

(क) यथाहुराचार्यरुद्रटाः—

"अर्थस्यालङ्कारा वास्तवमौपम्यमतिशयः श्लेषः ।
एषामेव विशेषा अन्ये तु भवन्ति निःशेषाः ॥"
तत्र—वास्तवमितितज्ज्ञेयं क्रियते वस्तुस्वरूपकथनं यत् ।
पुष्टार्थमविपरीतं निरूपमनतिशयमश्लेषम् ॥ ख० ।
सम्यत् प्रतिपादयितुं स्वरूपतो वस्तु तत्समानमिति ।
वस्त्वन्तरमभिदध्याद्वक्ता यस्मिंस्तदौपम्यम् ॥ ख० ।
यत्रार्थधर्मनियमःप्रसिद्धबाधाद्विपर्य्ययं याति ।
कश्चित्क्वचिदतिलोके स स्यादित्यतिशयस्तस्य ॥ ख० ।
यत्रैकमनेकार्थैर्वाक्यं रचितं पदैरनेकस्मिन् ।
अर्थे कुरुते निश्चयमर्थश्लेषः स विज्ञेयः ॥ ख० ।

एषां भेदास्तु तद्ग्रन्थ एवावलोकनीयाः ।

( ४४ ) साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः ॥ १४ ॥

( ४४ ) साम्यमिति । वाक्यस्य ऐक्ये एकत्वे सति, द्वयोरुपमानोपमेयभावेन प्रसिद्धयोः अवैधर्म्यं तात्पर्यविषयीभूतविरुद्धधर्मोक्तिशून्यम्, वाच्यम् अभिधया प्रतिपाद्यम् इवादिभिः शब्दैः, क्यङादिभिः प्रत्ययैः उपमितादिभिः समासैर्वा स्फुटमभिधेयमित्यर्थः, समयोः साधारणधर्मसम्बन्धवतोर्भावः साम्यं साधारणधर्मसम्बन्धरूपसादृश्यम् उपमा तन्नामाऽर्थालङ्कारः । अत्र वाक्यैक्य इत्यस्य साकाङ्क्षवाक्यगतत्वे तात्पर्यम् अत एव—

"मुखं तव तथा भाति यथा राजति चन्द्रमाः"

इत्यादावुभयवाक्यत्वेऽपि वाक्यद्वयस्यापि साकाङ्क्षत्वान्नाव्याप्तिः । नापि "मतिरिव कमला कमलेव मतिः" इत्यादावुपमेयोपमायामतिव्याप्तिः तत्रोभयोरपि वाक्ययोः परस्पराकाङ्क्षारहितत्वात् । एवञ्च—तात्पर्यविषयीभूतविरुद्धधर्मोक्तिरहितत्वे सति इवाद्यभिधेयसाकाङ्क्षवाक्यगतोभयसादृश्यत्वमुपमात्वमिति सामान्यलक्षणं फलितम् ।

ननु लक्षणेन साम्यत्वस्वीकारात् "विधवति मुखाब्ज"मित्यादौ वक्ष्यमाणोदाहरणे साम्यस्य वाच्यत्वाभावादव्याप्तिरितिचेत् ? "दध्यावय" इत्यादौ लुप्तस्याम्विभक्त्यादेः प्रतिसन्धानात् कर्मतादेरिव लुप्तप्रत्ययप्रतिसन्धानात् साम्यस्य वाच्यताऽभ्युपगमात्, समासस्यैवोपमावाचकत्वस्वीकाराच्च लक्षणसमन्वयः । उक्तञ्च दण्डिना सादृश्यवाचकप्रकरणे—

"समासश्च बहुव्रीहिः शशाङ्कवदनादिषु" इति ।

येन कर्मधारयस्यापि बोधः । ननु तथापि सादृश्यवाचकसमासस्य सत्त्वे—

"क्विप् समासगता द्वेधा धर्मवादिविलोपने"

इतिवक्ष्यमाणमसङ्गतमितिचेत् ? न समासस्य सादृश्यवाचकत्वमनङ्गीकुर्वतां प्राचां मतानुसारेणैव तत्प्रकारस्य प्रणेष्यमाणत्वात् । एवं—

"वदनं मृगशावाक्ष्याः सुधाकरमनोहरम्"

इत्यौपम्यवाचकस्य लोपे यदुदाहृतं तदपि प्राचीनमतानुसारेणैव वेदितव्यम् । एतन्मते प्रथमं धर्मलोपस्य द्वितीयं पूर्णाया उदाहरणं बोध्यम् । ननु तथापि "मुखमस्या विधुं द्वेष्टि" "सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्द्धिनारङ्गकम्" इत्यादावव्याप्तिः साम्यस्य वाच्यत्वाभावात् । नच "स्पर्द्धते जयति द्वेष्टि" इत्यादिदण्डिदर्शनात्तत्रापि साम्यस्य वाच्यत्वमितिवाच्यम्, तस्य साम्यव्यञ्जकपरत्वेनोपपत्तौ साम्यवाचकत्वकल्पनाया अन्याय्यत्वात्, अत्रोच्यते- द्वेषस्पर्द्धयोश्चेतनधर्मत्वेन मुखनारङ्गकयोरसम्भवादुपमायां पर्यवसानेन तादृशस्थले निदर्शनालङ्कारस्यैव स्वीकारादिति स्पष्टं विवृतौ । तथा द्वयोरिति उभयोरितिचानेकोपलक्षणम् । अत एव

"हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत"

इत्यादौ बहूनां सादृश्ये सत्यपि नाव्याप्तिः । "मृदनुरूपं भाण्डम्" इत्यादौ चोपमानोपमेयभावाभावात् वैचित्र्याभावाच्च नातिव्याप्तिः ।

लक्षणान्तराण्यपि शास्त्रान्तरेषु दृश्यते । तथाहि—"अथात उपमा यदतत्तत्सदृशमिति गार्ग्यस्तदासां कर्म" नि० ३. १३.

भरतनाट्यशास्त्रे—

"यत्किञ्चित्काव्यबन्धेषु सादृश्येनोपमीयते ।
उपमा नाम सा ज्ञेया गुणाकृतिसमाश्रया ॥"

भामहः—"विरुद्धेनोपमानेन देशकालक्रियादिभिः ।
उपमेयस्य यत्साम्यं गुणलेशेन सोपमा ॥"

उद्भटः—"यच्चेतो हारि साधर्म्यमुपमानोपमेययोः ।
मिथो विभिन्नकालादिशब्दयोरुपमा तु तत् ॥"

चन्द्रालोके—"उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ।"

अत्रेदमनुसन्धेयम्—उपमास्थले उपमानमुपमेयं साधारणो धर्मः उपमा वाचकश्चेति चत्वारः पदार्था अपेक्ष्यन्ते । तत्र साधारणधर्मत्वेन प्रसिद्धः पदार्थः उपमानम्, तद्धर्मवत्तया वर्णनीयः पदार्थं उपमेयम्, केचित्तु—अधिकरणगुणवत्तया सम्भाव्यमानमुपमानम्, निकृष्टगुणवत्तया सम्भाव्यमानमुपमेयमित्याहुः। सादृश्यप्रतियोग्युपमानम्, सादृश्यानुयोग्युपमेयमित्यन्ये । उपमाने उपमेये च संगतो धर्मः साधारणो धर्म इत्यभिधीयते । यस्य धर्मस्य सम्बन्धाद् येन सह यदुपमीयते स साधारणो धर्मः तदुपमानं तच्चोपमेयमितिपरमार्थः । यथा "कमलमिव मुखं मनोज्ञम्" इत्यादौ मनोज्ञत्वधर्मसम्बन्धात्तद्वत्तया प्रसिद्धेन कमलेन सह मुखमुपमीयते इति मनोज्ञत्वं साधारणो धर्मः कमलमुपमानम्, मुखमुपमेयमित्युपमालङ्कारोऽयम् ।

अत्र सर्वत्र इवादिपदादेरिव यथादिपदादपि साधर्म्याद्यवगतेः पर्य्यायपरिवृत्तिसहत्वादुपमादेरर्थालङ्कारत्वमिति स्पष्टं प्रकाशविवृत्तौ (क) ।

---

(क) प्रसङ्गाच्चोपमाघटकसादृश्यस्य प्रतियोग्यनुयोगिनौ निबध्येते—

चन्द्रकलाम्बुजदामशिरीषं विद्युत्ताराकनकलता च ।
दमनककाञ्चनयष्टी दीपः सर्वैरेभिर्योषा वर्ण्या ॥

रोचनास्वर्णविद्युद्भिर्हरिद्राभिर्वराटकैः । चम्पकैर्हेमकेतक्या वर्ण्यते तत्तनोर्द्युतिः ॥

वराटकः अभिनवपद्मबीजम् ।

"वेत्रत्वचा तुल्यरुचां वधूनां कर्णान्तितो गण्डतलागतानि ।
भृङ्गाः सलीलं यदि नापतिष्यन् को वेदयिष्यन्नवपङ्कजानि ॥"

"काश्मीरगौरवपुषामभिसारिकाणाम्" इत्यादिप्रयोगदर्शनात्तत्सादृश्यमप्यवगन्तव्यम् ।

तमः शैवालजीमूतबर्हभ्रमरचामरैः । यमुनीवीचिनीलाश्मनीलाम्भोजैः समः कचः ॥

ललाटमर्धचन्द्रेण हेमपट्टिकया तथा । वल्लीस्मरधनुर्वीचिभृङ्गालीपल्लवैर्भ्रुवौ ॥

चन्द्रादर्शौ कपोलस्य मुखस्येन्द्वब्जदर्पणाः । तिलप्रसूनं नासायाः कण्ठः कम्बोः समः स्मृतः ॥

श्रीहर्षस्तु "कामतूणीकृत्यनासावर्ण्यते" इत्याह "नासावंशो मृगीदृशाम्" इति "नासा नाली तिलोपमा" इति च विशेषोऽवगन्तव्यः ।

'मृगतल्लोचनाम्भोजतत्पत्त्रझषखञ्जनैः । नेत्रं चकोरतन्नेत्रकेतकालिस्मराशुगैः ॥'

प्रवालबिम्बबन्धूकपल्लवैरधरोष्ठकौ । वर्ण्यौ माधुर्य्यमाश्रित्य यावन्मधुरवस्तुभिः ॥

मुक्तामाणिक्यनारङ्गदाड़िमीकुन्दकोरकैः । ताराभिश्च रदा, वाणी हंसालिशुककिन्नरैः ॥

वेणुकोकिलवीणाभिर्माधुर्य्यैर्मधुरैः सह ।
बाहुर्बिसेन विद्युद्वल्लिमृणालैः, करस्तु पद्मेन ॥
पल्लवविद्रुमकाभ्यां, चन्द्रकलाकुन्दकोरकैश्च नखाः ।
"पूगाब्जतरकोरकबिल्वतालगुच्छेभकुम्भाचलकुम्भचक्रैः ।
सौवीरजम्बीरकबीजपूरसमुद्गझोलङ्गफलैरुरोजः ॥"

( ४५ ) रूपकादिषु साम्यस्य व्यङ्ग्यत्वम् ,
( ४६ ) व्यतिरेके च वैधर्म्यस्याप्युक्तिः,

(४५) वाच्यादिपदचतुष्टयस्य सार्थकत्वं क्रमेण दर्शयति—रूपकादिष्विति। आदिपदेन परिणामप्रतिवस्तूपमादीनां परिग्रहः। व्यङ्ग्यत्वमिति न तु वाच्यत्वमितिशेषः। "इत्य-स्याभेद" इत्युत्तरेणान्वयः एवमग्रेऽपि तथा च "मुखं चन्द्रः" इत्यभेदप्रत्ययानन्तरं "मुखं चन्द्रसादृश्यवत्" इति व्यञ्जनया सादृश्यप्रतीतिरिति तद्व्यावृत्यर्थमेव वाच्य-मितिविशेषणमुपात्तमितिभावः। एवञ्च लक्षणावाच्यसाम्यस्थलेऽपि उपमैवेति ग्रन्थ-कर्त्तुराशयो ज्ञेयः। यथा "सरसिजप्रत्यर्थिपाणिद्वयम्" अत्र प्रत्यर्थिशब्देन सदृशं लक्ष्यते इत्यर्वाचीना वदन्ति।

(४६) अवैधर्म्यमित्यस्य व्यवच्छेद्यं दर्शयति-व्यतिरेके चेति। व्यतिरेके तदाख्येऽलङ्कारे वैधर्म्यस्यापि न तु केवलं साधर्म्यस्येतिशेषः। तथा च "अकलङ्कि मुखं तस्या न कलङ्की यथा विधुः" इत्याद्येकवाक्यगतव्यतिरेकालङ्कारोदाहरणे, वैधर्म्यस्य अकलङ्कित्वकलङ्कित्व-रूपस्याऽप्युक्तिरिति तत्रापि व्याप्तिनिरासार्थम् अवैधर्म्यमितिविशेषणोपादानमिति भावः

पर्वतसदृशमपि केचिद्वर्णयन्ति।

नाभी रसातलावर्त्तह्रदकूपनदादिभिः। वली तटिन्या तद्रूपैः पृष्ठं काञ्चनपट्टकैः॥

तद्रूपैस्तदनुकारिपाशादिभिः।

सूच्यग्रतलशून्याणुवेदिसिंहादिभिः समः। मुष्टिग्राह्यो भवेन्मध्यो जघनं पुलिनोपमम्॥

मध्यस्यातिसूक्ष्मत्वात्तत्प्राधान्येनोपमानता। तेनैव "सदसत्संशयगोचरोदरि" इति "परमाणु-मध्याः" इति च वर्णयन्ति।

पीठप्रसारभूचक्रैर्नितम्बःपरिवर्ण्यते। ऊरुस्तु हस्तिहस्तेन कदल्या करभेण च॥

चरणः पल्लवाम्भोजस्थलपद्मप्रवालकैः। पूर्णेन्दुनाङ्कुष्ठनखो गमनं हंसहस्तिवत्॥

कटाक्षो यमुनावीचि भृङ्गावलिविषामृतैः। ज्योत्स्नेन्दुपुष्पपीयूषफेनकैरववद्धसः॥

"मुक्ताफलं वा स्फुटविद्रुमस्थम्" इति कालिदासप्रयोगान्मुक्ताप्यत्र संख्यातव्या।

दर्शनं वमदब्जादिः श्वासस्तु सुरभिः शनैः। हंससारसशब्दाभ्यां वर्ण्यते नूपुरध्वनिः॥

पुंसामत्यन्तपीनत्वमुच्चतादीर्घबाहुता। युगार्गलभुजङ्गेन्द्रदण्डस्तम्भेभहस्तकैः॥

बाहुर्वक्षः कपाटेन शिलापट्टेन वर्ण्यते। अंसे विपुलता मध्ये कार्श्यमुन्नतता पदे॥

स्तनयोरिव योषाणामत्यन्तस्वच्छता हृदि। कान्तिप्रयोजकं यावत्तावत्तद्वत्प्रवर्ण्यते॥

प्रतापोऽर्काग्निवज्राद्यैः कीर्त्तिश्चन्द्रादिशुभ्रकैः। करे पद्मोर्ध्वरेखादि पदेच्छत्रध्वजादिकम्॥

गमनं हस्तिसिंहाभ्यां कार्कश्यं च भुजादिषु॥

इतोऽधिकन्तु तत्तद्वर्णनानियामकमहाकविप्रयोगानुसारेणैव समुन्नेयम्।

उक्तञ्च—"अपारे काव्यसंसारे कविरेकः प्रजापतिः।
यथास्मै रोचते विश्वं तथेदं परिवर्त्यते॥ इत्यादि।

अपि च—कवीनां घटनान्यैव चराचरविलक्षणा।
अकर्त्तुमन्यथाकर्त्तुं कर्त्तुं या क्षमते जगत्॥ इति।

( ४७ ) उपमेयोपमायां वाक्यद्वयम्,

( ४८ ) अनन्वये त्वेकस्यैव साम्योक्तिरित्यस्या भेदः ।

**( ४९ ) सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च ।**
**उपमेयं चोपमानं भवेद्वाच्यम्—**

( ५० ) सा उपमा । साधारणधर्मो द्वयोः सादृश्यहेतू गुणक्रिये मनोज्ञत्वादि ।

नचात्र साम्यस्य वाच्यत्वेऽपि तस्य नञा मुखे सम्बन्धाभावबोधादुभयसम्बन्धित्वाभावेन कथमत्रोपमाप्रसक्तिरितिवाच्यम्, मुखे चन्द्रसाधर्म्यबाधाऽसम्भवेन नञा मुखस्योत्कर्षातिशयप्रतीतिमात्रे तात्पर्य्यादिति तर्कवागीशाः ।

( ४७ ) वाक्यैक्य इत्यस्य व्यवच्छेद्यमाह—उपमेयोपमायामिति । "कमलेव मतिर्मतिरिव कमला" इत्यादावित्यर्थः । अत्र श्रीमत्यो रत्योः परस्परमनाकांक्षं सादृश्यं, 'कमलेव मतिः, "मतिरिव कमला" इति वाक्यद्वयेन प्रतिपाद्यते । अत्रोपमेयोपमापदं रसनोपमाया अप्युपलक्षणम् । तथा च रसनोपमायाम्-"चन्द्रायते शुक्लरुचाऽपि हंसः" "हंसायते चारुगतेन कान्ता" इत्यत्रोभयोर्वाक्ययोः परस्पराकाङ्क्षारहितत्वेनानेकवाक्यम् । एवञ्च वाक्यैक्य इति प्रतिपादनात् उपमेयोपमायां रसनोपमायाञ्च साम्यस्य परस्पराकाङ्क्षारहितत्वेनानेकवाक्यगतत्वादुपमालक्षणस्य नातिप्रसक्तिरित्याशयः ।

एतद्विशेषणत्रयोपादानेन "साधर्म्यमुपमाभेदे" इति काव्यप्रकाशकृल्लक्षणेऽस्वरसः सूचित इत्यवधेयम् ।

( ४८ ) द्वयोरित्यस्य साफल्यं दर्शयति—अनन्वये इति । तथा च "राजीवमिव राजीवम्" इत्यादौ केवलैकपदार्थस्य साम्ये अनन्वयालङ्कारोदाहरणे अतिप्रसक्तिवारणाय द्वयोरित्युक्तमितिभावः । ननु घट इव पटं द्रव्यम्, "अस्थीव धवलं यशः" इत्यादेरप्युपमात्वं स्यादितिचेत्? सत्यम् किन्तु वचित्र्यविशेषानाधायकत्वात्तस्यामलङ्कारव्यपदेशाभावाऽवगमात् ।

इतीति । इति अनेन प्रकारेण अस्या निरुक्तलक्षणाया उपमाया भेदो रूपकादिभ्यो व्यवच्छेदः ।

( ४९ ) पूर्णालुप्ताभेदेन प्रधानत उपमा द्विधेतिप्रतिपादयन् प्रथमं पूर्णां प्रतिपादयति—सेति । यदि सामान्यधर्म उपमानोपमेयोभयगतलक्षणीयत्वेनाभिमतधर्मविशेषबोधकपदम्, औपम्यवाचि सादृश्यवाचकं पदञ्च प्रयुक्तं स्यादित्यर्थः, तथा उपमेयमुपमानञ्च वाच्यमभिधयाप्रतिपाद्यं भवेत् तदा सा उपमा पूर्णा पूर्णोपमा स्यादित्यर्थः सर्वांशयुक्तत्वादितिभावः ।

( ५० ) यथाक्रमं सेत्यादिपदं विवृणोति—सेति । साधारणेति । सामान्यसाधारणद्वयोः तुल्यतया सामान्यधर्मस्थाने साधारणधर्म इति प्रयोगेऽपि दोषाभावो ज्ञेयः । द्वयोरुपमानोपमेयत्वेन प्रसिद्धयोः पदार्थयोः सादृश्यस्य हेतू घटिके । सादृश्यत्वं तद्भिन्नत्वे सति तद्गतभूयो धर्मवत्त्वम्, स च धर्मः सादृश्यघटक एव बनमिव भनिरवस्येत्याशयः । गुणश्च क्रिया चेतिगुणक्रिये उपलक्षणं चैतत् तेन एक विधशब्दोपस्थाप्यत्वमपि साधारणधर्म इति बोध्यम् ।

मनोज्ञत्वादीत्यत्र आदिपदेन भाति—प्रभृतिक्रियाया एतथाविधशाब्दधर्मस्य च

( ५१ ) औपम्यवाचकमिवादि । उपमेयं मुखादि । उपमानं चन्द्रादि ।

इयं पुनः ॥ १५ ॥

श्रौती यथेववाशब्दा इवार्थो वा वतिर्यदि ।

आर्थी तुल्यसमानाद्यास्तुल्यार्थो यत्र वा वतिः ॥ १६ ॥

( ५२ ) यथेववादयः शब्दा उपमानानन्तरप्रयुक्ततुल्यादिपदसाधारणा अपि

---

परिग्रहः, क्रमेण यथा—"कमलमिव मुखं मनोज्ञम्" इत्यादौ मनोज्ञत्वादि गुणः साधारणधर्मः, मुखं चन्द्र इवाभाति" इत्यादौ भातीत्यादि क्रिया साधारणधर्मः, सकलकलमित्यादौ सकलकलमित्येकावयशब्दोपस्थाप्यस्वरूपः स्वरूपविशेषः साधारणधर्मः ।

औपम्येति । औपम्यवाचकं सादृश्यवाचकं पदञ्चेत्यर्थः । निपातानां द्योतकत्वेऽपि वाचकत्वाङ्गीकारः साम्यस्य वाच्यत्वविवक्षास्फुटीकरणार्थः । यद्वा अव्ययानामप्यन्विताभिधानस्वीकाराद्वाचकोपपत्तिरित्यवधेयम् । आदिपदेन वदादिप्रत्ययादीनां परिग्रहो बोध्यः ।—औपम्यवाचका इवादयो दण्डिना काव्यादर्शे निरूपिताः ।

उपमेयमिति । उपमातुं समानतया प्रत्याययितुं योग्यं यत्तदुपमेयं सादृश्याश्रयः पदार्थः, यस्योदाहरणमाह—मुखादीति । "चन्द्रवन्मुखम्" इत्यादौ मुखादिकमित्यर्थः । उपमीयते समानतया प्रत्याय्यते येन तदुपमानम् सादृश्यस्य निश्चितसम्बन्धीपदार्थः । तत्रोदाहरणमाह—चन्द्रादीति । "चन्द्रवन्मुखम्" इत्यादौ चन्द्रादिकमित्यर्थः । उपमेयोपमानयोः प्रसिद्धयोरेव ग्रहणं बोध्यम् । अत एवाहुः—

"यदायमुपमानांशो लोकतः सिद्धिमृच्छति ।
तदोपमैव येनेवशब्दसादृश्यवाचकः ॥
यदा पुनरयं लोकादसिद्धः कविकल्पितः ।
तदोत्प्रेक्षैव येनेवशब्द-सम्भावनापरः ॥" इति ।

( ५१ ) पूर्णोपमाया एव श्रौत्यार्थीभेदेन द्वैविध्यं विभजते—इयं पुनरिति । इयं पुनः निरुक्तलक्षणा पूर्णोपमा, यदि यथाशब्दः इवशब्दः "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इति विश्वकोशात् उपमार्थको वा शब्दः बहुवचनेन इवार्थकनिपातवशब्दश्च इवार्थो वतिः प्रत्ययो वा विद्यते तदा श्रौतीत्युच्यते श्रूयते इतिश्रुतिः शब्दः, तया साक्षादेवोपलभ्यमानोपमानोपमेयसम्बन्धा श्रौती । इवार्थकनिपात"व" शब्दस्य ग्रहणे—

"पङ्कजदलानि व समुत्स्फुरन्ति तासां सुनेत्रयुग्मानि" ।

इत्यादौ पूर्णोमात्वम् ।

"मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम" ।

इत्यादौ तूत्प्रेक्षैव उपमेयोपमानभावाप्रसिद्धेः । एवं "शात्रवं व पपुर्यशः" इतिकालिदासप्रयोगोऽपि सङ्गच्छते "शात्रवं च" इति चघटितपाठे तादृशचमत्कारानुपपत्तेरितिबोध्यम् । यत्र तु तुल्यः समानः, आद्यपदात् समसदृशादयः शब्दाश्च विद्यन्ते, तुल्यार्थो वतिः प्रत्ययो वा विद्यते तत्रार्थीत्यभिधीयते पदार्थानुसन्धानापेक्षया प्रतीयमानोभयसम्बन्धवत्त्वादित्याशयः । तथा च श्रौत्युपमायां श्रुतिमात्रेण सादृश्यप्रतीतिः, अत्र तु अर्थानुसन्धानेनैव तत्प्रतीतिरिति निष्कर्षो ज्ञेयः ।

(५२) ननु सादृश्यबोधने यथादयस्तुल्यादयश्च शब्दाः समानरूपा एव तत्कथं

श्रुतिमात्रेणोपमानोपमेयगतसादृश्यलक्षणसंबन्धं बोधयन्तीति तत्सद्भावे श्रौत्युपमा ।

( ५३ ) एव 'तत्र तस्येव' इत्यनेनेवार्थे विहितस्य वतेरुपादाने ।

( ५४ ) तुल्यादयस्तु–'कमलेन तुल्यं मुखम्' इत्यादावुपमेय एव । 'कमलं मुखस्य तुल्यम्' इत्यादावुपमान एव । 'कमलं मुखं च तुल्यम्' इत्यादावुभयत्रापि विश्राम्य-न्तीत्यर्थानुसंधानादेव साम्यं प्रतिपादयन्तीति तत्सद्भावे आर्थी ।

---

तत्तच्छब्दमात्रमाश्रित्यैवोक्तद्विविधभेदविभाग इत्यत आह—यथेवेति । आदिना व इत्यस्य ग्रहणम् । उपमानानन्तरं उपमानवाचकपदानन्तरं प्रयुक्तानि विन्यस्तानि यानि तुल्यादिपदानि तेषां साधारणास्तदुपमानोपमेयगतसादृश्यबोधने समाना अपि, श्रुतिमा-त्रेण स्वोपलब्धिमात्रेण उपमानोपमेयगतं सादृश्यलक्षणं साम्यस्वरूपं सम्बन्धं बोधयन्ति शब्दशक्तिमहिम्ना ज्ञापयन्ति, इति हेतोः तेषां यथेववादिशब्दानां सद्भावे प्रयोगे ।

अमुमेवार्थं विशदेनाहुर्विवृतिकारा–यद्यपि यथादयः शब्दा उपमानवाचकात्परं प्रयुज्य-मानस्य तुल्यादिपदस्य साधारणास्तदुपमानोपमेयगतसाधर्म्यबोधकाः, तथापि श्रुतिमा-त्रेण स्वोपलब्धिमात्रेण न तु पदार्थानुसन्धानापेक्षया उपमानोपमेयवृत्ति साधर्म्यं बोध-यन्तीतिहेतोस्तेषां यथादिशब्दानां सद्भावे प्रयोगे श्रौती उपमेत्यर्थः । अव्ययानामन्विता-भिधानस्वीकारात् यथा "घटो न पटः" इत्यादौ नञ् पदं पदार्थोपस्थितिमन्तरेणैव पदार्थो-पस्थितेः प्रागेव समभिव्याहृतपदार्थयोरन्वितं भेदं बोधयति तथा "कमलमिव मुखम्" इत्यादाविवादिपदमपि श्रवणमात्रेण समभिव्याहृतपदार्थयोरन्वितं साधर्म्यं बोधयति । अन्विताभिधानवादिमते ह्यखण्डवाक्यस्याखण्डवाक्यार्थे शक्तिरेकातिरिक्ता कल्प्यते, प्रथमं तयैव वाक्यार्थबोधो जायते पश्चादेव शक्त्या लक्षणया वा प्रत्येकपदार्थोपस्थितिरिति-भावः । अव्ययानामभिहितान्वयाङ्गीकारेऽपि अव्ययातिरिक्तनामार्थयोरभेदातिरिक्तसम्बन्धेन साक्षादन्वयास्वीकाराद्व्ययार्थस्य नामार्थेन साक्षादेवान्वयः संभवतीत्यव्ययपदेनोपमा-नोपमेयभावेऽपि साधारणधर्मसम्बन्धोपस्थापनेन विभक्त्यर्थप्रतिसन्धानापेक्षेति बोध्यम् ।

( ५३ ) 'चन्द्रवद् दृशि ते सुधा' इत्यादावप्येषैवेति दर्शयितुमुपपादयति—एवमिति । "तत्र तस्येव" ५।१।११६ इति पाणिनिसूत्रम् । तत्रेति सप्तमीसमर्थात्तस्येति षष्ठीसमर्थाच्च इवार्थे वतिप्रत्ययो भवतीति तदर्थः । सप्तमीसमर्थाद्यथा—"मथुरावत्पाटलिपुत्रे प्राकारः" मथुरावदित्यस्य मथुरायामिवेत्यर्थः प्राकाराद्याधेयापेक्षाधिकरणविहितसप्तम्यान्ताद्वति-प्रत्ययः मथुरायां यादृशः प्राकारस्तेन तुल्यः पाटलिपुत्रे प्राकार इत्यर्थः । षष्ठीसमर्थाद्य-था—मथुरावत् पाटलिपुत्रस्य विस्तारः, मथुराया इवेत्यर्थः मथुरावदितिविग्रहः । मथुरासम्बन्धिविस्तारापेक्षसम्बन्धविहितषष्ठ्यन्ताद्वतिः । मथुरासम्बन्धिविस्ताराभिन्नः पाटलिपुत्रसम्बन्धी विस्तार इत्यर्थः । वतेरिति । वतेः वतिप्रत्ययस्य उपादाने श्रौती उप-मेति पूर्वेण सम्बन्धः । तथाच "पद्मवत्त्वन्मुखे कान्ते ! भान्ति...चन्द्रवत्त्वन्मुखस्यापि सुषमा सुभगा सदा" इत्यादौ च क्रमेण सप्तम्यन्तात् पद्मशब्दात् षष्ठ्यन्ताच्चन्द्रशब्दाच्च विहितौ वतिप्रत्ययौ पद्म इव चन्द्रस्येवेत्यर्थं प्रत्याययत इति भावः ।

( ५४ ) इदानीमार्थीमुपमामुपपादयति—तुल्यादयस्त्विति । "शब्दाः" इत्यनुषञ्जनी-यम् । आदिपदात् समान-सदृश-हसति-प्रत्यर्थिप्रभृतिपदानां परिग्रहः । कमलेनेति षष्ठ्यर्थतृतीया, षष्ठ्यर्थश्चात्र वाप्याः जलमितिवदाधेयत्वम्, तस्य च तुल्यपदार्थैकदेशे

( ५५ ) एवं 'तेन तुल्यम्'—इत्यादिना तुल्यार्थे विहितस्य वतेरुपादाने ।

सादृश्ये सम्बन्धः। तथा च कमलवृत्तिसादृश्याश्रयो मुखमिति बोधः। उपमेये मुख एव विश्राम्यन्तीत्युत्तरेण सम्बन्धः,स्वार्थं प्रत्याययन्तीति तदर्थः। तुल्यमिति मुखमिति समानविभक्तिकत्वादिति भावः। एवकारो हि उपमानव्यवच्छेदार्थः। एवं च "तुल्यादिपदानामनन्वयत्वान्वितामिधानस्वीकारेणार्थबोधात्प्राक् पदार्थोपस्थितिमात्रं जनयित्वा उपमेय एव विश्रान्तिः पश्चात्तूपमानपदार्थानुसन्धानेन तात्पर्यानुसन्धानेन चोपमानस्य सादृश्योपमानप्रतीतिरिति" विवृतिकारा वदन्ति। "मुखस्येत्यत्रापि पूर्ववदेवाधेयतासम्बन्धे षष्ठी। उपमाने एव कमल एव तुल्यादयः शब्दा विश्राम्यन्ति" इति सम्बन्धः नचात्र कमलशब्दतुल्यशब्दयोः समानविभक्तिकत्वात् मुखमुपमानं कमलञ्चोपमेयमेवेति कथं कमलस्योपमाने विश्रान्तिरितिवाच्यम्, मुखकमलयोः समभिव्याहारस्थले कमलस्योपमान एव प्रसिद्धत्वात्। विषयविशेषे तुल्यादिशब्दानामपि षष्ठ्यर्थानुसन्धानं विनाऽप्युभयसम्बन्धिसादृश्यवाचकत्वमाह—कमलं मुखं चेति। विश्राम्यन्तीति। समानविभक्तिकत्वाद्विशेष्यत्वाबोधनेन प्राधान्यं बोधयन्तीत्यर्थः। अर्थानुसन्धानादेव षष्ठ्याद्यर्थानुसन्धानमाश्रित्यैव साम्यम् उपमेयत्वबोधकं विशेष्यीभूतं सादृश्यमित्यर्थः। तेषां तुल्यादिशब्दानां सद्भावे प्रयोगे आर्थीत्युपमेति सम्बन्धः। अयमाशयः—उपमानोपमेययोः साधारणधर्मसम्बन्धरूपाया उपमायाः शाब्दबोधविषयत्वं श्रौतत्वम्, उपमानोपमेययोः साधारणधर्मसम्बन्धरूपायाश्च तस्या आर्थबोधविषयत्वमार्थत्वम्। अत एव श्रौत्यां तस्यां यथेवादीनामुपलब्ध्यनन्तरमेवोपमानोपमेययोः साधारणधर्मसम्बन्धाऽवगमः। आर्थ्यां पुनः षष्ठ्याद्यर्थानुसन्धानोत्तरम् इति।

(५६) "मधुरः सुधावदधरः" इत्यादावव्ययतया एवार्थ्याः विद्यमानत्वमिति दर्शयितुमाह–एवमिति। आदिपदेन "तेन तुल्यं क्रिया चेद्वतिः"५।१।१५ इतिपाणिनिसूत्रेणेत्यर्थः। सूत्रे तुल्यमिति सामान्ये नपुंसकम्, प्रथमान्तञ्च उदाहरणेऽप्येवम् अध्ययनादिव्यापारविशेषणत्वात्। क्रियेतिसन्निहितत्वात्समानविभक्तिकत्वात्प्राधान्याच्च प्रत्ययार्थविशेषणम्। तथाच तृतीयासमर्थात्तुल्यमित्यर्थे वतिः प्रत्ययो भवति यत्तुल्यं क्रिया चेत् सा भवतीत्यर्थः। प्रकृत्यर्थविशेषणं तु न ब्राह्मणसादृश्यस्याध्ययनेऽभावात् ब्राह्मणादिशब्दानां लक्षणया तत्कर्तृकाध्ययनपरत्वेन क्रियोपमानत्वयोग्यार्थकत्वेऽपि तत्र तृतीयान्तार्थान्वयेन सत्त्वरूपतया क्रियात्वासंभवात्। एवञ्च उपमेयस्य क्रियात्वे उपमानवाचकात्तृतीयान्तात्तुल्यमित्यर्थे वतिप्रत्ययो भवतीतिभावः। यथा 'ब्राह्मणवदधीते क्षत्रियः' ब्राह्मणेन तुल्यं ब्राह्मणवदितिविग्रहः। सौष्ठवादिश्चात्र साधारणो धर्मः। तथासति ब्राह्मणकर्तृकाध्ययनतुल्यं क्षत्रियकर्तृकं वर्त्तमानकालिकमध्ययनमिति शाब्दबोधः।

भामहोऽप्याह—

> वतिनाऽपि क्रियासाम्यं तद्वदेवाभिधीयते।
> द्विजातिवदधीतेऽसौ गुरुवच्चानुशास्ति नः॥ इति।

सूत्रे क्रिया चेदित्युक्त्या क्रियातुल्यत्व एवास्य वतेः साधुत्वम्, "तत्र तस्येव" इतिविहितस्य तु गुणजात्यादिनापि तुल्यत्वे साधुत्वमित्यवगन्तव्यम्। तेन "चैत्रेण तुल्यः कृशः" इति गुणतुल्ये वाक्यमेव न तु वतिः। परं "चन्द्रवन्मुखम्" इत्यादौ भवतिक्रियामध्याहृत्य चन्द्रभवनसदृशं मुखभवनमित्येव वाच्योऽर्थः, चन्द्रमुखयोः सादृश्यं तु

( ५६ ) द्वे तद्धिते समासेऽथ वाक्ये—
द्वे श्रौती आर्थी च । उदाहरणम्—
( ५७ ) 'सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ ।
हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले ! ॥'
( ५८ ) अत्र क्रमेण त्रिविधा श्रौती ।

व्यञ्जनयैवेति बोध्यम् । वतेरिति : वतिप्रत्ययस्य उपादाने आर्थी उपमेतिपूर्वेण सम्बन्धः । काव्यप्रकाशकृताऽप्येवमेवोक्तम् ।

(५६) एवं द्विविधाया अस्याः प्रत्येकं तद्धितसमासवाक्यगतत्वेन त्रैविध्यमुपादयिष्यन् षड्विधत्वमाह—द्वे इति । द्वे पूर्वोक्ते पूर्णोपमे श्रौत्यार्थीभेदेन द्विविधापि पूर्णोपमेत्यर्थः, प्रत्येकमेव तद्धिते वत्कल्पादियोगे समासे अथ तथा वाक्ये च सम्भवत इत्यर्थः ।

(५७) सौरभमिति । हे बाले ! तव मुखस्य सौरभं सौगन्ध्यम् अम्भोरुहं कमलं तस्येव, स्तनौ कुचौ कुम्भाविव कलशाविव पीनौ पुष्टौ । एवं यथा शरदिन्दुः शरच्चन्द्रः हृदयं चित्तं मदयति तथा तव वदनं मुखं (कर्तृ) हृदयं मदयति आनन्दयति ।

(५८) अत्रेति । तथा च प्रथमवाक्ये अम्भोरुहम् उपमानम्, मुखस्येत्युपमेयम्, सौरभं साधारणो धर्मः वतिप्रत्ययश्चौपम्यवाचीति पूर्णोपमायाः सामान्यलक्षणसङ्गतिः । "अम्भोरुहवत्" इत्यत्र "तत्र तस्येव" इतिषष्ठ्यन्तादिवार्थे वतिप्रत्ययविधानात् तद्धितगता श्रौती अम्भोरुहपदस्य मुखसम्बन्धिसौरभलक्षकत्वेन अम्भोरुहसम्बन्धिसौरभसदृशं मुखसम्बन्धिसौरभमिति शाब्दबोधः । तत अम्भोरुहमुखसम्बन्धिनोः सौरभयोः सादृश्यमूलकाभेदाध्यवसायेनाभिन्नधर्ममूला अम्भोरुहमुखयोरुपमाप्रतीतिः ।

द्वितीयवाक्ये—कुम्भावित्युपमानम्, स्तनावित्युपमेयम्, पीनत्वादिः साधारणो धर्मः, इवशब्दः उपमाप्रतिपादकः "कुम्भाविव" इत्यत्र "इवेन समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च" इति वार्त्तिकेन समासाश्रयणात् समासगता श्रौती पूर्णोपमा । (कुम्भसादृश्यप्रयोजकपीनत्वादिधर्मवन्तौ स्तनाविति शाब्दबोधः। द्वितीयार्द्धे-शरदिन्दुरुपमानम्, वदनमुपमेयम्, मादनं साधारणो धर्मः, यथेत्युपमावाचकः शब्दः अत्र "यथाऽसादृश्ये" २।१।७ इतिपाणिनिसूत्रेणासादृश्ये एव समासस्योपपत्तौ सादृश्ये च समासस्याप्रतिपादनाद् वाक्यगतैव श्रौती पूर्णोपमा । अत्र यत्तच्छब्दप्रकृतिकप्रकारवाचिथाल्प्रत्ययान्तयथादिशब्दयोगे यद्धर्मवान् शरदिन्दुस्तद्धर्मवद्वदनमित्युभयविशेष्यके वाक्यार्थबोधः, ततो यत्तद्भ्यां धर्मैक्यबोधात् सादृश्यं फलति हृदयमादनलक्षणोऽनुगामी साधारणो धर्म इति परमार्थः । नन्वेवमपि पूर्वार्द्धयोः प्रथमद्वितीययोरपि वाक्यत्वेन वाक्यगतया श्रौत्या पूर्णोपमया तद्धितगतसमासगतयोस्तयोः साङ्कर्यापत्तिः, नच तयोः क्रियाभावाद्वाक्यत्वाभाव इति वाच्यम्, क्रियाया अध्याहारं विना आकाङ्क्षाशान्त्यभावेन अन्वयसमाप्त्यसम्भवादवश्यं क्रियाया अध्याहर्त्तव्यत्वात् क्रियाया अध्याहारं विना वाक्यगतत्वे "चकितमृगलोचनाभ्याम्" इत्यादिवक्ष्यमाणोदाहरणत्वासम्भवादिति चेत्? मैवम्, एवंप्रकारेण वाक्यगतत्वस्य सर्वत्रोपलम्भात् सामान्यपरत्वेन तद्धितगत-समासगतयोर्विशेषरूपत्वेनापवादरूपतया बाधकत्वाभ्युपगमात् । यथा वा—

"सुकुमारत्वमरुणता दृशोर्वशीकारकारणत्वं च ।
भातीह मत्तकाशिनि ! पाणियुगे तामरसवत्ते ॥"

( ५९ ) 'मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः ।
चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः ॥'

( ६० ) अत्र क्रमेण त्रिविधा आर्थी ।

अत्र "तामरसवत्" इत्यत्र सप्तम्यर्थे वतिरिति तद्धितगता श्रौती पूर्णोपमा ।

"अत्यायतैर्नियमकारिभिरुद्धतानां दिव्यैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो लक्ष्मीविलासभवनैर्भुवनं बभार ॥"

अत्र भुजैरित्यस्य इवेन समासात् समासगता श्रौती पूर्णोपमा ।

"इतीरितैर्नैषधसूनृतामृतैर्विदर्भजन्मा भृशमुल्ललास सा ।
ऋतोरधिश्रीः शिशिरानुजन्मना पिकस्वरैर्दूरविकस्वरैर्यथा ॥"

अत्र यथाशब्दस्यासमस्तत्वाद्वाक्यगता श्रौती पूर्णोपमा ।

(५९) मधुर इति । तस्याः मनसा विषयीक्रियमाणायास्तरुण्याः, अधरः सुधावन्मधुरः पाणिर्हस्तः पल्लवतुल्यो नवपत्रसमान अतिपेलवः अत्यन्तं कोमलः "पेलवं विरलं मृदु" इति गोपालः, तथा लोचने नयने च चकितमृगस्य भीतहरिणस्य लोचनाभ्यां सदृशी चपले चञ्चले चकितेत्यादौ "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" २।३।७२ इति पा० सू० तृतीया ।

(६०) अत्रेति । अत्र प्रथमवाक्ये सुधा उपमानम् , अधर उपमेयम् , माधुर्यं साधारणो धर्मः, तथा च अधरः सुधातुल्यमेव मधुरतया आस्वाद्यते इत्यर्थविवक्षया "तेन तुल्यं क्रिया चेद्वतिः" इत्यनेन तृतीयान्तात्तुल्यार्थे वतिप्रत्ययविधानात् तद्धितगता आर्थी पूर्णोपमा । सुधावदित्यत्र सुधया तुल्यमितिविग्रहस्तत्र निरूपितत्वं तृतीयार्थः तस्य च तुल्यतायामन्वयात् सुधानिरूपिततुल्यताश्रयाभिन्न इति तन्निरूपिततुल्यता च माधुर्येणेतिसुधानिरूपितमाधुर्यप्रयोज्यतुल्यतावदभिन्नोऽधर इति बोधः । तुल्यताप्रयोजकं माधुर्यं तदर्थानुसन्धानोत्तरं मनसा व्यञ्जनया वा ज्ञायते इत्यार्थीत्वम् । द्वितीयवाक्ये— पल्लव उपमानम् , पाणिरित्युपमेयम् , अतिपेशलत्वं साधारणो धर्मः तुल्यपदमुपमाबोधकम् , "पल्लवतुल्यः" इत्युपमानोपमाबोधकयोः समासत्वात्समासगता आर्थी पूर्णोपमा । द्वितीयार्धे चकितहरिणलोचने उपमानम् , लोचने उपमेयम् , चपलत्वं साधारणो धर्मः, सदृशी इत्युपमाबोधकः, तथाच द्वितीयार्धस्य वाक्यत्वात् चकितमृगलोचनाभ्यामित्यत्र समासे सत्यपि सदृशी इत्यनेन समासाभावाद्वाक्यगतैव आर्थी पूर्णोपमा । पूर्ववाक्ययोरत्रापि सामान्यविशेषन्यायेन न वाक्यगता आर्थी पूर्णोपमेत्यालोचनीयम् । ननु अम्भोजस्येव मुखं सौरभमित्यादौ साधारणधर्मस्योपमानसम्बन्धित्वबोधे षष्ठ्यर्थानुसन्धानस्यापेक्षणीयतया श्रौतीत्वं कथमितिचेत् ? मैवम् , नामार्थनिपातयोरन्वयबोधे विभक्त्यर्थानुसन्धानस्यातन्त्रतया तत्र षष्ठ्याविशेषणविभक्तेरिव प्रयोगसाधुत्वमात्रार्थकत्वात् । अन्यथा "चन्द्रादिव मुखात्तस्या निरगाति कथामृतम्" इत्यादौ सम्बन्धबोधकविभक्त्यभावादुपमानसम्बन्धबोधो न स्यादितिविवृतिकाराः । यथाक्रममुदाहरणान्तरं यथा—

"उन्नतिमानतिकठिनः समुदितनखमालाऽयम् ।
बाले ! पयोधरस्तव कनकाचलवद्गरीवर्त्ति ॥"

अत्र कनकाचलवदिति तद्धितगता आर्थी पूर्णोपमा ।

( ६१ ) पूर्णा षडेव तत् ।

( ६२ ) स्पष्टम् ।

( ६३ ) लुप्ता सामान्यधर्मादेरेकस्य यदि वा द्वयोः ॥ १७ ॥
त्रयाणां वानुपादाने श्रौत्यार्थी सापि पूर्ववत् ।

सा लुप्ता । तद्भेदमाह—

( ६४ ) पूर्णावद्धर्मलोपे सा विना श्रौतीं तु तद्धिते ॥ १८ ॥

( ६५ ) सा लुप्तोपमा धर्मस्य साधारणगुणक्रियारूपस्य लोपे पूर्णावदिति पूर्वोक्तरीत्या षट्प्रकारा, किं त्वत्र तद्धिते श्रौत्या असंभवात्पञ्चप्रकारा । उदाहरणम्—

"अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर ! न कस्य ॥"

अत्र सदृशपदस्य समस्तत्वात्समासगता आर्थी पूर्णोपमा ।

"चकितहरिणलोललोचनायाः क्रुधितरुणारुणतारहारि कान्ति ।
सरसिजमिदमाननं च तस्याः सममिति चेतसि सम्मदं विधत्ते ॥"

अत्रासमस्तत्वाद्वाक्यगता आर्थी पूर्णोपमा ।

(६१) बोधसौकर्य्यार्थं सङ्कलयति—पूर्णेति । तत् तस्मात् उक्तप्रकारभेदप्रतिपादनादित्यर्थः, पूर्णा पूर्णोपमा षडेव षड्विधैव । ते च भेदा अनुपदमेवोक्ताः समुन्नेयाः ।

(६२) स्पष्टमिति । वाक्यमिदमतिसरलमित्यर्थः । अतो न किञ्चिद्विवृतमितिभावः ।

(६३) एवं षड्विधां पूर्णां निरूप्य इदानीमेकोनविंशतिविधां लुप्तां निरूपयन्नादौ-द्वैविध्यमुपपादयति—लुप्तेति सामान्यधर्मादेरिति । निर्धारणार्थे षष्ठी द्वन्द्वः सामासिकस्य चेतिवत् । आदिपदेन उपमानस्य उपमेयस्य औपम्यवाचकेवादिपदानां च परिग्रहः । एवञ्च सामान्यधर्मादेर्मध्ये यस्य कस्यचिदेकस्य साधारणस्य तद्वाचकस्योपमानस्योपमेयस्य वेत्यर्थः । यदि वा अथवा ययोः कयोश्चित् द्वयोः साधारणधर्मतद्वाचकयोः साधारणधर्मोपमानयोः साधारणधर्मवाचकोपमयोः, किं वा येषां केषाञ्चित्त्रयाणां साधारणधर्मतद्वाचकोपमानानाम् अनुपादाने साक्षादप्रतिपादने लुप्ता लुप्तोपमा भवति । सामान्यधर्मादीनां मध्ये यस्य कस्याप्यनुपादानरूपलोपादेवास्या लुप्तोपमेति नाम । सापि लुप्तोपमापि पूर्ववत् पूर्णोपमावत् श्रौती आर्थी चेति प्रथमतो द्विप्रकारेत्यर्थः ।

(६४) "लुप्ता सामान्यधर्मादे" रितिकारिकायां धर्मस्य प्रथमोपादानात् धर्मलोप एव लुप्तोपमां प्रथमं सभेदं निरूपयति—पूर्णावदिति । सा लुप्तोपमा धर्मलोपे साधारणधर्मस्य साक्षादनभिधाने सति तद्धिते श्रौतीं विना तु श्रौतीरूपभेदं परित्यज्य तु पूर्णावत् पूर्णोपमा तुल्यसंख्यफलप्रदा भवति, पूर्णा यथा श्रौत्यार्थी चेति भिद्यमाना तद्धितसमासवाक्यगतत्वभेदैस्त्रिधा भिन्ना षड्विधा तथेह केवलं श्रौतीवर्जनेनास्याः पञ्चविधात्वं भवतीतिभावः ।

(६५) तदेव विवृणोति—सेति । साधारणो गुणो मनोज्ञत्वादिः क्रिया पुनर्भातीत्यादिः तदात्मकस्य तस्य तथोक्तस्य । पूर्वोक्तरीत्या षट्प्रकारेति । प्रागुक्तदिशा श्रौत्यार्थीभेदेन षड्विधा भवितुं योग्यापीत्यर्थः । अत्र साधारणधर्मलोपे सति । असम्भवादिति ।

( ६६ ) 'मुखमिन्दुर्यथा, पाणिः पल्लवेन समः प्रिये ! ।
वाचः सुधा इवोष्ठस्ते बिम्बतुल्यो, मनोऽश्मवत् ॥'

( ६७ ) आधारकर्मविहिते द्विविधे च क्यचि, क्यङि ।
कर्मकर्त्रोर्णमुलि च, स्यादेवं पञ्चधा पुनः ॥ १६ ॥

अत्रायमाशयः—"तत्र तस्येव" इत्यनेन सप्तम्यन्तात् षष्ठ्यन्ताच्च वतिप्रत्ययो विधीयते, तत्र यंकञ्चित् साधारणधर्ममाश्रित्यैव षष्ठी सप्तमी विभक्तिः। तथा च साधारणधर्मानभिधाने षष्ठी सप्तम्योश्चासम्भवात् तदन्त एव प्राप्तस्य वतिप्रत्ययस्याप्यसम्भवेन साधारणधर्मलोपे श्रौत्या असम्भव एव। एवञ्च "सौरभमम्भोरुहवन्मुखस्य" इत्यत्र सौरभरूपसाधारणधर्मानुपादाने न षष्ठी विभक्तिर्नापि तदन्ते वतिप्रत्ययः सम्भवितुमर्हतीति। अत एवाह—पञ्चप्रकारेति। तथाहि लुप्तोपमेयं साधारणधर्मलोपे समासगता वाक्यगता चेति द्विधा श्रौती, तद्धित-समास-वाक्यगतत्वेन त्रिविधा चार्थीति सङ्कलनया पञ्चविधेत्यर्थः।

(६६) मुखमिति। हे प्रिये ! इन्दुर्यथा तथेतिशेषः ते तव मुखम् आनन्दयतीतिशेषः, पल्लवेन किशलयेन नूतनपत्रेणेतियावत्, समस्तुल्यः तव पाणिः कोमल इतिशेषः, सुधा इव तव वाचो मधुरा इतिशेषः, बिम्बतुल्यः बिम्बफलसदृशः तव ओष्ठ अधरः रक्तवर्ण इतिशेषः, अश्मना प्रस्तरेण तुल्यम् अश्मवत् तव मनः कठिनमितिशेषः।

अत्र "मुखमिन्दुर्यथे" त्यत्र यथाशब्दस्य प्रतिपादनेऽपि तेन समासाभावात् आनन्दयतीतिक्रियारूपसाधारणधर्मस्यानुपादानाद्वाक्यगता श्रौती धर्मलुप्तोपमा। "पाणिः पल्लवेन सम" इत्यत्र, समशब्दस्य प्रतिपादनेऽपि तेन समासाभावात् कोमल इति गुणरूपसाधारणधर्मस्य चानुपादानात् वाक्यगता आर्थी धर्मलुप्तोपमा। "वाचः सुधा इव" इत्यत्र इवशब्दप्रतिपादनात्तेन च सह पूर्वोक्तन्यायेन समासात् मधुरा इति साधारणधर्मस्यानुपादानाच्च समासगता श्रौती धर्मलुप्तोपमा। 'ओष्ठस्ते बिम्बतुल्यः" इत्यत्र तुल्यशब्दप्रतिपादनात् रक्तवर्ण इति साधारणधर्मस्य चाप्रतिपादनात् बिम्बपदेन सह तुल्यपदस्य समासाच्च समासगता श्रौती धर्मलुप्तोपमा। "मनोऽश्मव" दित्यत्र तृतीयान्तादश्मशब्दात् तुल्यार्थे "तेन तुल्य" मिति वतिप्रत्ययकरणात् कठिनमिति साधारणधर्मस्य चाप्रतिपादनात् तद्धितगता आर्थी धर्मलुप्तोपमा।

अत्र पञ्चस्थलेष्वपि वाक्यगतधर्मलुप्तोपमात्वप्रसक्तेः पूर्वोक्तसामान्यविशेषन्यायेनैव वारणीयः। प्रत्येकमुदाहरणान्तरं विस्तरभयान्नेह प्रतिपादितम्।

(६७) पुनःधर्मलुप्तोपमाया एवान्यान् पञ्च भेदानुपपादयति—आधारेति। आधारकर्मविहिते आधारोऽधिकरणं स च कर्म च ताभ्यां विहितस्तस्मिन् अधिकरणात् कर्मणश्च परस्तात् विहिते इत्यर्थः, क्यचि क्यच्प्रत्यये अस्यैव 'यिन्' इति नामान्तरम्, द्विविधे लुप्तोपमे अधिकरणकारकाद्विहिते क्यचि एकविधा कर्मकारकाद्विहिते क्यचि च एकविधेति समुदायेन मेलने एकस्मिन् क्यच्येव द्विविधे लुप्तोपमे इत्यर्थः। यद्वा आधारकर्मविहिते द्विविधे क्यचि द्विविधा लुप्तोपमा इति सम्बन्धः। क्यङि कर्तुर्विहिते इति शेषः अस्यैव आर्थोति नामान्तरम्। तथा च कर्तुर्विहिते क्यङ्प्रत्यये एकविधा, कर्मकर्त्रोः कर्मणि कर्तरि चेत्यर्थः विहिते इति शेषः, तथासति कर्मकर्त्रोरुपपदयोः सतोर्वि-

( ६८ ) 'धर्मलोपे लुप्ता' इत्यनुषज्यते ।

( ६९ ) क्यच् क्यङ्-णमुलः कलापमते इन्-आयि णमः । क्रमेणोदाहरणम्—

( ७० ) अन्तःपुरीयसि रणेषु, सुतीयसि त्वं
　　पौरं जनं, तव सदा रमणीयते श्रीः ।
　दृष्टः प्रियाभिरमृतद्युतिदर्शमिन्द्र-
　　संचारमत्र भुवि संचरसि क्षितीश ! ॥'

---

द्विते णमुलि कर्मणि णमुलि कर्त्तरि णमुलि च प्रत्येकमेकैकरूपतया द्विविधा एवमित्थमेकत्रीभूय साधारणधर्मलोपे लुप्तोपमा मिलित्वा पुनः पञ्चधा पञ्चप्रकारा स्यादित्यर्थः ।

(६८) धर्मलोप इति । आकाङ्क्षापूरणाय "पूर्णावद्धर्मलोपे" अनुपदोक्तकारिकातो "धर्मलोपे" "सा" तत्पदवाच्य "लुप्ता" इति च अनुषज्यते अनुषङ्गः क्रियते । एवं सत्येवाकाङ्क्षाशान्तेरित्याशयः ।

(६९) अलङ्कारशास्त्रस्य सर्वशाब्दिकैरादृतत्वाद् पाणिनीयमतेन क्यजादीन् निरूप्याथ तेषामेव कलापमतानुसारेण नामान्तरं निरूपयितुमुत्थापयति—क्यजिति । कलापमते कलापव्याकरणसिद्धान्ते इनादिणमइत्यभिधीयन्ते इति शेषः कलापव्याकरणस्यैव "कातन्त्रम्" इतिसंज्ञान्तरम् ।

उक्तं च—अधुना स्वल्पतन्त्रत्वात् कातन्त्राख्यं भविष्यति ।
　　तद्वाहनकलापस्य नाम्ना कालापकं तथा ॥

( ७० ) एकश्लोकेनैव निरुक्तपञ्चविधधर्मलुप्तोपमायाः यथाक्रममुदाहरणं दर्शयति—अन्तः पुरीयसीति । हे क्षितीश पृथ्वीपते ! त्वं रणेषु युद्धेषु प्रतिपक्षितयोपस्थितेषु वीरजनेष्वितियावत् अन्तःपुरीयसि अन्तःपुरेष्विवाचरसि अन्तःपुरस्थाबलाजन इव सुखं विहरसीत्यर्थः । अत्र अन्तःपुरेष्विवाचरसि" इति विग्रहे "उपमानादाचारे" ३।१।१० इति सूत्रस्थेन "अधिकरणाच्चे" इति वार्त्तिकेनोपमानवाचकादन्तःपुरेत्यधिकरणपदादाचारार्थं क्यच् । कलापमतेऽपि "उपमानादाचारे" इतिसूत्रस्थेन "आधारादपि स्यात्" इत्युक्त्या यिन् ।

पौरं जनं सुतीयसि सुतं पुत्रमिवाचरसि प्रकृतिमण्डलं सुततुल्यं मन्यसे इत्यर्थः । अत्रापि "उपमानादाचारे" ३।१।१० इति सूत्रेणोपमानवाचकात् सुतमिति कर्मपदादाचारेऽर्थे क्यच् कलापमतेऽप्यनेनैव यिन् प्रत्ययः ।

श्रीः सम्पद्राज्यलक्ष्मीः सदा तव रमणीयते रमणी वनितेवाचरति वनितेव सुखभोगं ददातीत्यर्थः । अत्र "कर्त्तुः क्यङ् सलोपश्च" ३।१।११ इति सूत्रेणोपमानवाचकात् रमणीतिकर्तृपदादाचारेऽर्थे क्यङो ङित्वादात्मनेपदम् । कलापमते "कर्त्तुरायि सलोपश्च" इत्यनेनायिः ।

प्रियाभिरमृतद्युतिरिव दर्शनमिति अमृतद्युतिदर्शं दृष्टः चन्द्रवल्लोचनाह्लादजनकत्वेनानुभूत इत्यर्थः । अमृतद्युतिदर्शमित्यत्र "कृन्मेजन्तः" १।१।३९ इत्यनेनाव्ययसंज्ञाविधानादव्ययत्वम्, "उपमाने कर्मणि च" ३।४।४५ इतिसूत्रेणोपमानवाचके अमृतद्युतिमितिकर्मण्युपपदे दृशधातोर्भावे णमुल् । "यस्माण्णमुलुक्तः स एव धातुरनुप्रयोक्तव्यः" इत्यर्थकेन "कषादिषु यथाविध्यनुप्रयोगः" ३।४।४६ इतिसूत्रेण दृष्ट इति दृश्धातो'

( ७१ ) अत्र 'अन्तःपुरीयसि' इत्यत्र सुखविहारास्पदत्वस्य, 'सुतीयसि' इत्यत्र स्नेहनिर्भरत्वस्य च साधारणधर्मस्य लोपः ।

( ७२ ) एवमन्यत्र ।

( ७३ ) इह च यथादितुल्यादिविरहाच्छ्रौत्यादिविशेषचिन्ता नास्ति ।

( ७४ ) इदं च केचिदौपम्यप्रतिपादकस्यैवादेर्लोपे उदाहरन्ति, तदयुक्तम् ; क्यङादेरपि तदर्थविहितत्वेनौपम्यप्रतिपादकत्वात् ।

---

रेवानुप्रयोगः । कलापमते "कर्मणि चोपमाने" इतिसूत्रेण णम् । तथा अत्र भुवि पृथिव्याम् इन्द्र इव सञ्चरणमितीन्द्रसञ्चारं सञ्चरसि ऐश्वर्य्याधिक्यात् स्वर्गाधिष्ठाता इन्द्र इवाप्रतिहतं सञ्चरसीत्यर्थः । अत्रापि उक्तसूत्रेण चकारानुवर्त्तिते उपमानवाचके इन्द्र इति कर्त्तर्युपपदे संपूर्वकाच्चरतेर्भावे णमुल् । स च णमुल् "तुमर्थे सेऽसेनकसेकसेन" इत्यादिसूत्रभाष्यगतेन "अव्ययकृतो भावे भवन्ति" इतिवाक्येन भाव एव भवति । कलापमते च भावे णम् ।

(७१) ननु कस्मिन्नंशे को धर्मो लुप्तो येन तेषु विशेषा भवेयुरित्यत आह—अत्रेति । सुखविहारास्पदत्वस्य "अन्तःपुरीयसि रणेषु" इत्यत्र अनायाससञ्चरणाश्रयत्वरूपस्य साधारणधर्मस्य लोप इत्युत्तरेण सम्बन्धः । द्वयोरपि उपमानोपमेयभूतयो रणान्तःपुरयोस्तादृशधर्मस्य विद्यमानत्वादित्याशयः । एवमग्रेऽपि । स्नेहनिर्भरत्वस्य "पौरं जनं सुतीयसि" इत्यत्र प्रेमाधिक्याधारत्वस्य ।

(७२) एवमिति । अन्यत्र "रमणीयते श्रीः" इत्यादित्रिषु प्रयोगेष्वपि एवमूह्यमित्यर्थः । एवञ्च "रमणीयते श्रीः" इत्यत्र सुखोपभोगसाधकत्वस्य अत्यन्ताधीनत्वस्य वा, "अमृतद्युतिदर्शम्" इत्यत्र लोचनाह्लादजनकत्वस्य, "इन्द्रसञ्चारम्" इत्यत्र अप्रतिहतसञ्चरणस्य विभवातिशयत्वस्य च साधारणधर्मस्य लोपः ।

(७३) ननूक्तानां पञ्चानामेव पुनः श्रौत्यार्थीत्वात् द्वैविध्येन मिलित्वा समुदायेन दशविधत्वे कथं केवलं पञ्चधेत्येवोक्तमित्यत आह—इह चेति । केवलक्यजादिप्रत्ययघटित "अन्तःपुरीयसि" इति लुप्तोपमयाऽन्चेत्यर्थः । आदिपदेन आर्थ्याः परिग्रहः, श्रौत्यादिविशेषचिन्ता श्रौतीयमार्थीयमिति विभज्य प्रदर्शनविचारः, नास्ति अनतिप्रयोजनीयत्वादिविशेषः । वस्तुतस्तु श्रुतिमात्रेण सादृश्यव्यञ्जकानां यथादिशब्दानामभावात् श्रौतीरूपभेदचिन्ता नास्ति । एवमर्थानुसन्धानेन सादृश्यबोधकानां तुल्यादिशब्दानामभावात् आर्थीरूपभेदश्चिन्तापि नास्तीत्याशयः । श्रुतिः शब्दस्तेन साक्षात्प्रतीयमाना श्रौती तदितरा आर्थीत्याश्रयणे त्वस्या आर्थीत्वमक्षतमेवेत्यवधेयम् ।

(७४) ननु "वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि । कर्मकर्त्रोर्णमुलि", इति काव्यप्रकाशोक्तदिशा वाचकलुप्तैवाभिधातुं योग्या तत्कथं पुनर्धर्मलुप्तेत्यभिहितमित्याशङ्कां निराकर्त्तुं काव्यप्रकाशकृन्मतं च दूषयितुमाह—इदञ्चेति । "अन्तःपुरीयसि रणेषु" इत्यादितुल्यं चेत्यर्थः । काव्यप्रकाशे—

"पौरं सुतीयति जनं समराङ्गणेऽसाव-
न्तःपुरीयति विचित्रचरित्रचञ्चुः ।
नारीयते समरसीम्नि कृपाणपाणे-
रालोक्य तस्य चरितानि सपत्नसेना ॥

( ७५ ) ननु क्यङादिषु सम्यगौपम्यप्रतीतिर्नास्ति प्रत्ययत्वेनास्वतन्त्रत्वाद् इवादिप्रयोगाभावाच्चेति न वाच्यम्, कल्पबादावपि तथाप्रसङ्गात्।

( ७६ ) न च कल्पबादीनामिवादितुल्यतयौपम्यस्य वाचकत्वम्, क्यङादीनां तु द्योतकत्वम्; इवादीनामपि वाचकत्वे निश्चयाभावात्।

---

इत्युदाहरणम्। केचित् काव्यप्रकाशकारादयः। लोपे अनभिधाने। दूषयति-तदयुक्तमिति युक्तिसङ्गतं नेत्यर्थः। कुत इति हेतुं प्रदर्शयति—क्यङादेरिति। आदिपदेन क्यच्णमुलोः परिग्रहः तदर्थंविहितत्वेन इवार्थविहितत्वेन औपम्यप्रतिपादकत्वात् सादृश्यप्रतिपादनात् यथा आर्थ्यां पूर्णोपमायां समादियोगे न वाचकत्वम्, तथैवात्रापि तदर्थे वस्तुतः तत्स्थाने विहितस्य क्यजादेर्योगात् 'यो यत्र प्रत्ययो जात' इतिन्यायादितिभावः।

( ७५ ) उक्तत्वमते शङ्कते—नन्विति। क्यङादिषु प्रत्ययेषु सत्स्वितिशेषः। औपम्यप्रतीतिः सादृश्यस्य प्रत्ययः। प्रत्ययत्वेन क्यजादेरितिशेषः। अस्वतन्त्रत्वात् स्वार्थस्यापि बोधने अस्वाधीनत्वात् प्रकृतिप्रत्ययौ सहार्थं ब्रूतः" इतिनयेन प्रकृतिसाहाय्येनैव स्वार्थस्यापि बोधनादितिभावः। न वाच्यमिति। यत्र यत्रेवादिः तत्र तत्र सादृश्यस्य सम्यक् प्रतीतिः यत्र नैवं तत्र नैवम् यथा क्यजादीनां योगे तस्मादत्रौपम्यबोधकाभावस्य स्फुटत्वात् वाचकलुप्तात्वमेव न वाच्यमितिभावः। कुत एतदत आह—कल्पबादाविति। आदिपदेन देश्यादीनां परिग्रहः। तथाप्रसङ्गात् सम्यगौपम्यप्रतीत्यभावापत्तेः। अयम्भावः—"ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" ५।३।६७ इति पा० सूत्रेण विहितस्य पकारेत्संज्ञककल्पप्प्रत्ययस्य कलापमते अदन्तकल्पप्रत्ययस्य "विषकल्पं मनः" इत्यादिसामानाधिकरण्येन निर्देशादीषदसमाप्तिविशिष्टो धर्मो अर्थः, ईषदसाप्तिश्च किञ्चिन्न्यूनसकलधर्मसम्बन्धरूपोपमेव एवञ्च इवादेर्लोप इति वक्तुं नोचितम्, किन्तु तत्र धर्मलोप एव वक्तुं युक्तत्वात्। अतएव "इन्द्रकल्पं नृपः सोऽयम्" इत्यादावुपमात्वमक्षतमेव।

(७६) आपातत आशङ्कते—नचेति। इवादितुल्यतयेति।

"कल्पदेशीयदेश्यादिप्रख्यप्रतिनिधी अपि"

इतिसादृश्यवाचकशब्दप्रदर्शनप्रस्तावे दण्डयुक्तेरित्याशयः। क्यङादीनामित्यादिपदेन क्यच्णमुलोः परिग्रहः। द्योतकत्वमिति वाच्यमितिशेषः तस्य नचेत्यनेन पूर्वेण सम्बन्धः। क्यङादीनामिवाद्यर्थे विधानाभावात्, किन्तु आचाराद्यर्थे विधानेन केवलोपमानपदसमभिव्याहारादौपम्यस्य द्योतकत्वमितिभावः। ननु "कमलमिव मुखम्" इत्यादावुपमालक्षणाव्याप्तिभयेन इवादेरुपमावाचकत्वं स्वीकार्यमेवेत्यत आह—इवादीनामपीति। निश्चयाभावादिति। अन्यथा हि द्योतका न तु वाचका इतिवैयाकरणनयेन सिद्धान्तानैक्यात्; तथाहि वैयाकरणनये इवादीनां द्योतकत्वमेव न वाचकत्वम् निपातत्वादुपसर्गवत्। अतएव

"शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव"

इत्यादावुस्रादिपदस्योस्रसदृशपरत्वेनोस्रसदृशैःशरैरितिशरविशेषणतया तृतीयादिसङ्गतिः। वाचकत्वे तूस्रपदोत्तर तृतीया न सङ्गच्छते उस्राणामुद्धरणक्रियां प्रति लक्षणत्वाभावात् इवार्थसादृश्यान्वयित्वेन करणीभूतशरविशेषणत्वविरहाच्चेतिवैयाकरणभूषणसारे स्पष्टम्। उक्तं च वाक्यपदीये—

( ७७ ) वाचकत्वे वा 'समुदितं पदं वाचकम्' 'प्रकृतिप्रत्ययौ स्वस्वार्थबोधकौ' इति च मतद्वयेऽपि वत्यादिक्यङाद्योः साम्यमेवेति ।

( ७८ ) यच्च केचिदाहुः—'वत्यादय इवाद्यर्थेऽनुशिष्यन्ते, क्यङादयस्त्वाचाराद्यर्थे' इति, तदपि न; न खलु क्यङादय आचारमात्रार्थाः अपि तु सादृश्याचारार्था इति ।

---

"चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः ।
प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते ॥

( अत्र ) एते हि चादयः केवला न प्रयुज्यन्ते ततो वाचका न भवन्तीति बोद्धव्यम् । इति हेलाराजस्तद्व्याख्याता ।

( ७७ ) ननु यदि इवादीनामौपम्यवाचकत्ववादिमताश्रयणं भवतामपीष्टं तदा "कमलमिव मुखम्" इत्यादावुपमालक्षणस्याव्याप्तिः, "औपम्यवाचकमिवादि" स्वाभिहितेन विरोधश्चेत्यत आह—वाचकत्वे वेति । आलङ्कारिकैरिवादितुल्यत्वेन कल्पवादेरुपमावाचकत्वाङ्गीकारे वेत्यर्थः । समुदितं प्रकृतिप्रत्ययाभ्यां मिलितं तत्स्वरूपं पदम्, युगपदेवोभयार्थबोधको न तु प्रकृतिमात्रं प्रत्ययमात्रं वा वाचकमित्यर्थः । उक्तं च वाक्यपदीये—

"पदे न वर्णा विद्यन्ते वाक्येष्ववयवा न च ।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥

"मुख्यं वाचकत्वं तु कल्पनया बोधिते समुदायरूपे पदे वाक्ये वा लोकानां तत एवार्थबोधात्" इति च ।

स्वस्वार्थबोधकौ स्वस्वार्थप्रतिपादकौ । उक्तं च—

प्रकृतिप्रत्ययौ ब्रूतः प्रत्ययार्थं सहेति यत् । भेदेनैवाभिधानेऽपि प्राधान्येन तदुच्यते ॥
पाकं हि पचिरेवाह कर्त्तारं प्रत्ययोऽस्य कः। पाकयुक्तः पुनः कर्त्ता वाच्यो नैकस्य कस्यचित्॥ इति

वत्यादिक्यङाद्योःसाम्यमेवेति । अयमभिप्रायः—यदि वत्यादीनां वाचकत्वाङ्गीकारः तदा क्यङादीनामपि वाचकत्वम् । यदा तेषां न वाचकत्वं तदैषामपीति । सर्वैरेव वतिकल्पवादिसद्भावे औपम्यवाचकसद्भावाङ्गीकरात् प्रत्ययत्वेन तत्सदृशैः क्यङादिभिः किमपराद्धं यदेषां सद्भावे औपम्यवाचकता लोपः स्यादिति ।

( ७८ ) इदानीं काव्यप्रकाशमतानुयायिनां चण्डीदासप्रभृतीनां मतं खण्डयितुमाह—यच्चेति । अनुशिष्यन्ते "तत्र तस्येव" इत्याद्यनुशासनेन नियम्यन्ते । एवञ्च "यो यत्र प्रत्ययो जातः" इति न्यायेन वत्यादीनामिवार्थे विधानात् सादृश्यवाचकत्वम्, क्यङादीनां तु आचारार्थं विधानादाचारार्थवाचकत्वम् । तेन क्यङादिप्रत्ययोदाहरणे सादृश्यबोधकलोपाभिधानमेव युक्तमिति तेषामभिप्रायः । आचारमात्रार्था आचारस्यैव बोधकाः। सादृश्याचारार्थाः सादृश्यार्थान्विताचारार्थबोधकाः। अयम्भावः—"कर्त्तुः क्यङ्सलोपश्च" इत्यत्र "उपमानादाचारे" इत्यत उपमानपदमनुवर्त्तते तेनेवार्थसादृश्यादपि बोधे सादृश्याचारार्थं क्यङिति । अतएव रमणीवाचरति सुतमिवाचरति इत्येवमाद्यर्थे 'रमणीयते' 'सुतीयते' इत्यादौ नृपतौ सम्प्रद्राज्यलक्ष्म्या रमणीसदृशाचरणस्य प्रकृतिमण्डले च राज्ञः सुतसदृशाचरणस्य प्रतीतेः क्यङादीनां सादृश्याचरणमर्थः प्रतीयते न तु तत्राचरणमेवार्थः । एवञ्च काव्यप्रकाशकारोक्तं कथञ्चिदुप्यनिर्वाह्यमेवेत्यवधेयम् । रसगङ्गाधरकृताऽप्येवमेवोक्तम् ।

( ७६ ) तदेवं धर्मलोपे दशप्रकारा लुप्ता ।

( ८० ) उपमानानुपादाने द्विधा वाक्यसमासयोः ।

उदाहरणम्—

( ८१ ) 'तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यम् ।

अत्र मुखनयनप्रतिनिधिवस्त्वन्तरयोर्गम्यमानत्वादुपमानलोपः ।

( ८२ ) अत्रैव च 'मुखेन सदृशम्' इत्यत्र 'मुखं यथेदं', 'नयनतुल्यम्' इत्यत्र

( ७९ ) धर्मलोपे लुप्तोपमां समापयन् साकल्येन तत्सङ्कलयति—तदेवमिति । दशप्रकारेति । श्रौती धर्मलुप्ता आर्थी धर्मलुप्ता च । तत्राद्या समासगता वाक्यगता चेति द्विविधा, अन्या पुनः तद्धितसमासवाक्यगतत्वेन त्रिविधा साकल्येन पुनः पञ्चभेदा धर्मलुप्तायाः । तथा आधारक्यचि, कर्मक्यचि, कर्त्तरि क ङि, कर्मणि णमुलि कर्त्तृ णमुलि च, इत्येवमन्या धर्मलुप्तायाः साकल्येन स्पष्टमेव दशविधभेदा इति भावः ।

( ८० ) धर्मलोपे लुप्तोपमामुक्त्वा सम्प्रति उपमानोपमेययोरुपमानस्यैव प्राथम्येनोपस्थितत्वात्तल्लोप एव लुप्तोपमां दर्शयति—उपमानेति । उपमानस्य उपमानवाचकपदस्य अनुपादाने अप्रयुक्तत्वे वाक्यसमासयोः वाक्यगतत्वेन समासगतत्वेन च पुनर्द्विधा द्विविधा लुप्तोपमेति पूर्वतोऽनुषङ्गः । अत्रेदम्बोध्यम्—उपमानपदाप्रयुक्तत्वे तदुत्तरप्रयोज्यानां श्रौतीबोधकानामिवादिपदानां प्रयोगासम्भवात् श्रौतीभेदसाधारणस्यैवासम्भवः । "चन्द्रमिव मुखम्" इत्यत्र चन्द्रपदं विना केवलम् "इव मुखम्" इत्यस्य प्रयोगो न सम्भवति । एवमुपमानपदाप्रयुक्तत्वेनैव तदुत्तरमात्रकर्त्तव्यवतिप्रत्ययादीनामसम्भवादार्थ्यामपि तद्धितगतभेदस्यासम्भव एवेति अवशिष्टत्वादुपमानाप्रयुक्तत्वे आर्थ्यां वाक्यमात्रगतत्वेन समासगतत्वेन च लुप्तोपमा द्विविधेति ।

( ८१ ) तस्या इति । "त्रैलोक्येऽपि न सदृशी काचिद्वरवर्णिनी चास्ते ।" इति सम्पूरितोत्तरार्द्धम् ।

अत्र "नास्ते" इत्येतत्पर्य्यन्तवाक्ये उपमानाप्रयुक्तत्वात् वाक्यगता लुप्तोपमा । तथा 'नवा नयनतुल्यम्' इत्यत्र तु तुल्यपदेन समासात् उपमानाप्रतिपादनाच्च समासगता लुप्तोपमा ।

नन्वत्र मुखनयनयोर्विभक्तिभिन्नत्वेनोपमानत्वमेवेति चेत्? सर्वत्र सहृदयसमाजे चन्द्रपद्मयोरुपमानत्वेन मुखनयनयोस्तु तदुपमेयत्वेनातिप्रसिद्धत्वात् । नचैवं प्रतीपालङ्कारे कथं वैपरीत्यकल्पनेतिवाच्यम् कविप्रौढिवशादेव तथाकल्पनात् अत्र तु तथा विधप्रौढेरप्यसत्त्वात् ।

नन्वनुपादानं नाम उपलभ्यमानस्य पदार्थस्याप्रतिपादनं तेनात्र मुखसदृशरम्यस्य नयनतुल्यरम्यस्य चोपमानभूतपदार्थस्य गगनपुष्पादिवदत्यन्तमेवानुपलभ्यमानत्वे तयोरनुपादानासम्भवात् तदुदाहरणमिदमसङ्गतमित्यत आह—अत्रेति । मुखनयनयोः प्रतिनिधिनी उपमानत्वेन तुल्ये ये वस्त्वन्तरे चन्द्रपद्मरूपावन्यपदार्थौ तयोर्गम्यमानत्वात् सर्वथा उपलभ्यमानत्वेन व्यञ्जनयावगम्यमानत्वात् उपमानयोस्तयोर्लोप अनुपादानं भवितुमर्हतीतिशेषः, एवंसति न काचित् क्षतिरित्याशयः ।

( ८२ ) ननु "तस्या मुखं यथेदं रम्यं नास्ते" इत्येवं श्रौतीत्वेऽप्यस्याः सम्भवेन

'दृगिव' इति पाठे श्रौत्यपि संभवतीति। अनयोर्भेदयोः प्रत्येकं श्रौत्यार्थीत्वभेदेन चतुर्विधत्वसंभवेऽपि प्राचीनानां रीत्या द्विप्रकारत्वमेवोक्तम्।

**( ८३ ) औपम्यवाचिनो लोपे समासे क्विपि च द्विधा ॥ २० ॥**

क्रमेणोदाहरणम्—

( ८४ ) 'वदनं मृगशावाक्ष्याः सुधाकरमनोहरम्।'

( ८५ ) 'गर्दभति श्रुतिपरुषं व्यक्तं निनदन्महात्मनां पुरतः।'

( ८६ ) अत्र 'गर्दभति' इत्यत्रौपम्यवाचिनः क्विपो लोपः।

---

चतुर्विधत्वसम्भवात् कथमस्य द्विविधत्वमेवेत्यत आह—अत्रैवेति। श्रौत्यपीति अपिना आर्थी तु तथासम्भवत्येवेत्याशयः। अनयोः वाक्यसमासगतयोर्द्वयोः। प्राचीनानां काव्यप्रकाशकारादीनाम्। अयमाशयः—

"तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यम्"

इत्यत्र यथा वाक्यगता समासगता चेति द्विविधोपमानलुप्तार्थी, तथा

"तस्या मुखं यथेदं रम्यं नास्ते न वा तादृगिव"

इति पाठपरिवर्त्तने वाक्यगता समासगता च सैवार्थीति चातुर्विध्येन द्वैविध्यकथनं प्राचीनानामनुरोधात्।

( ८३ ) वाचकलुप्तां दर्शयति—औपम्येति। औपम्यवाचिनः सादृश्यप्रतिपादकस्य इवादिपदस्य तुल्यादिपदस्य च लोपे अप्रतिपादने समासे क्विपि प्रत्यये च द्विधा द्विविधा लुप्तोपमेत्यत्राप्यनुषङ्गः। इदमत्रापि बोध्यम्—इवादिपदासत्त्वे श्रौती साधारण्यैवासम्भवः तुल्यादिपदासत्त्वे च तुल्यार्थकवतिप्रत्ययासम्भवेन तद्धितगताया आर्थ्या अप्यसम्भवः अपवादरूपायाः समासगतायाः प्राप्त्या च वाक्यगताया आर्थ्या अप्यप्राप्तिरित्यवशिष्टत्वात् आर्थी समासगतैकविधा, क्विप्प्रत्ययगता चैकविधेति सम्मेलनेन औपम्यवाचिनो लोपे लुप्तोपमा द्विविधेति।

( ८४ ) वदनमिति। "क्रमेण समावृक करिकुम्भोपमौ कुचौ" इतिमत्पूरितोत्तरार्द्धम्। मृगस्य शावो बालस्तस्याक्षिणीव अक्षिणी नयने यस्यास्तस्याः हरिणशिशुसदृशचञ्चलनयनाया इत्यर्थः, वदनं मुखं सुधाकरमनोहरम् चन्द्रवन्मनोज्ञम्। अत्र सुधाकर इव मनोहरमितिविग्रहे "उपमानानि सामान्यवचनैः २।१।५५ इत्यनेन कर्मधारयसमासादौपम्यवाचिनो लोपे समासगता लुप्तोपमा। अत्रेदमवगन्तव्यम्—कर्मधारयसमासे पूर्वपदं तत्सदृशे लाक्षणिकमिति बोधयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यते तस्य च लोपो न भवति समासेनैवोपमाविधानात् "उक्तार्थानामप्रयोगः" इतिन्यायेन प्रयोगाभावाल्लोपव्यवहार इति।

(८५) गर्दभतीति "शुनवत्यन्यगृहेषु पादं न्यस्यन् बुभुक्षितो नित्यम्" इतिमत्पूरितोत्तरार्द्धम्। महात्मनां महनीयचरितानां सुमतीनां राजानाञ्च पुरतःसमीपे व्यक्तं स्फुटं श्रुतिपरुषं श्रवणकर्कशं यथास्यात्तथा निनदन् शब्दं कुर्वन् गर्दभति गर्दभ इवाचरति। आर्य्यागीतिश्छन्दः।

( ८६ ) अत्रेति। "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्य" इति वार्त्तिकेनोपमानवाचकाद् गर्दभपदादाचारेऽर्थे क्विप्प्रत्ययस्तस्य सर्वापहारि वलोपविधानात् क्विपो लोपः।

( ८७ ) न चेहोपमेयस्यापि लोपः, 'निनदन्' इत्यनेनैव निर्देशात् ।

( ८८ ) द्विधा समासे वाक्ये च लोपे धर्मोपमानयोः ।

( ८९ ) 'तस्या मुखेन' इत्यादौ 'रम्यम्' इति स्थाने 'लोके' इति पाठेऽनयो-रुदाहरणम् ।

( ९० ) क्विप्समासगता द्वेधा धर्मेवादिविलोपने ॥ २१ ॥

उदाहरणम्—

( ९१ ) 'विधवति मुखाब्जमस्याः'

साधारणधर्मस्य तु नात्र लोपः 'निनदन्' इतिपदोपादानात् । एवञ्चात्र गर्दभ उपमानम् निनदन् कर्त्ता उपमेयम्, परुषनिनदनं च साधारणो धर्मः केवलमौपम्यवाचकस्य क्विपो लोपेन क्विप्वाचकलुप्तोपमेयम् ।

( ८७ ) ननूपमेयस्याप्यत्र लोप इत्यत आह—नचेहेति । लोप इतिवाच्यमिति शेषः अनिर्देशादित्याशयः । निर्देशात उपमेयस्यापि प्रतिपादनात् । विशेषणोपादेनेनैव विशेष्यस्यापि प्राप्तत्वादितिभावः । ननु विशेषणमात्रनिर्देशेनैव विशेष्यस्याप्युपस्थितिस्वीकारे "तस्या मुखेन सदृशं रम्यं नास्ते" इत्यत्रापि रम्यमितिविशेषणेन तद्विशेष्योपस्थितेरपि उपस्थितया उपमानप्रतिपादनप्राप्तेः उपमानानुपादाने "तस्या मुखेन" इत्याद्युदाहरणमसङ्गतमितिचेत्? सत्यम् "गर्दभति" इत्युदाहरणे "व्यक्तम्" इत्यत्र "सोऽयम्" इति पठित्वा उपमेयस्योपादेयत्वादित्यन्यत्र विस्तरः ।

( ८८ ) एवं धर्मलोपे दश उपमानानुपादाने च द्वे, औपम्यवाचिलोपे च द्वे मिलित्वा चतुर्दशविधामेकलोपामुपमामभिधाय सम्प्रति द्विलोपां तामुपपादयति—द्विधेति । धर्मः साधारणधर्मः उपमानञ्च अनयोर्लोपे युगपदुभयोरेवाप्रयोगे समासे वाक्ये च द्विधा द्विविधा लुप्तोपमेत्यनुषङ्गः । अत्रापि पूर्वोक्तेरेवावशिष्टत्वात् समासगता वाक्यगता चेति द्विविधेत्युन्नेयम् ।

( ८९ ) उदाहरणान्तरगवेषणखेदापनोदाय उदाहृतमेव किञ्चित् परिवर्त्तनं विधायोदाहरति—तस्या इति । "तस्या मुखेन सदृशं लोके नास्ते" इति पाठे रम्यमिति साधारणधर्माप्रतिपादनात् उपमानाप्रतिपादनाच्च वाक्यगता अत्रत्या लुप्तोपमा । "न वा नयनतुल्यम्" इत्यत्र पाठापरिवर्त्तने रम्यमित्यनुषञ्जनीयसाधारणधर्माप्रतिपादनात् तुल्यपदेन समासाच्च समासगता अत्रत्या लुप्तोपमेत्याशयः । नचैवं पाठकल्पने प्रागुपपादितया सहास्याः साङ्कर्यापत्तिः शङ्क्या, तस्या उपमानमात्राप्रतिपादन एव सत्त्वात् अस्यास्तु धर्मोपमानयोर्द्वयोरेवाप्रतिपादने सत्त्वात् ।

( ९० ) क्विविति । धर्मः साधारणधर्मः, इवादिः सादृश्यवाचकः, अनयोरुभयोरेव विलोपने युगपदनभिधाने क्विप्प्रत्ययगता समासगता चेति द्वेधा पुनर्द्विविधा लुप्तोपमेत्यनुषञ्जनीयम् । सम्भवपरादेवात्रापि क्विप्रत्ययगतत्वं भिन्नं गृह्यते पूर्वोक्तयुक्तेः अवशिष्टत्वाच्च श्रौत्यार्थीमध्ये केवलसमासगत्वमित्यभिधीयत इत्यवगन्तव्यम् ।

( ९१ ) वधवतीति । "विधवति मुखाब्जमस्याः कलयति लोचने तन्व्याः ।
हस्तोयति मन्दगमनात् तदिदं युवजनमोहं विधत्ते ॥
अत्र मत्पूरितांशत्रयम् ।

( ९२ ) अत्र 'विधवति' इति मनोहरत्व-क्विप्प्रत्यययोर्लोपः।

( ९३ ) 'मुखाब्जम्' इति च समासगा।

( ९४ ) केचित्त्वत्रापि प्रत्ययलोपमाहुः।

( ९५ ) उपमेयस्य लोपे तु स्यादेका प्रत्यये क्यचि।

यथा—

( ९६ ) 'अरातिविक्रमालोकविकस्वरविलोचनः।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति॥'

---

( ९२ ) उदाहरणं संयोजयति—अत्रेति। विधुरिव आचरति विधवति विधुसदृशो भवति। मनोहरत्वरूपस्य साधारणधर्मस्य तद्वाचकस्य च क्विप्प्रत्ययस्य च लोपः।तथाहि विधुमुखयोः साधारणो धर्मो मनोहरत्वं तस्य चाभिधानमेव नेति लोपसदृशत्वाल्लोपः, "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इतिवार्त्तिकेन सादृश्यप्रतिपादकस्य विहितस्यापि क्विप्प्रत्ययस्य "वेरपृक्तस्य" ६।१।६७ इत्यादिना सर्वापहारी लोपः। कलापमते तु "कर्त्तुरायिः सलोपश्च" इत्यनेन विहितस्य आयिप्रत्ययस्य "आयिलोपश्च विज्ञेयः" इत्यनेन लोपः।

( ९३ ) मुखाब्जमिति। "मुखमब्जमिव" इतिविग्रहे "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" २।१।५६ इत्यनेन कर्मधारयसमासः। अयं समासः उपमानोपमेययोः समानलिङ्गत्व एव भवति विभिन्नलिङ्गत्वे मयूरव्यंसकादित्वात् समासः स च रूपकरूपः। एतेन मुखमेवाब्जमिति मयूरव्यंसकादित्वात्समासो न भवतीति वदन्तः परास्ताः। एवञ्चात्र मनोहरत्वरूपसाधारणधर्मलोपात् सादृश्यवाचकेवादिलोपाच्च समासगता लुप्तोपमेयमित्यर्थः।

( ९४ ) परमतेन समाधत्ते—केचिदिति। अत्रापीति पूर्वोदाहरणे गर्दभतीत्यत्रैव न किन्तु विधवतीत्यत्रापीत्यर्थः क्विप्प्रत्ययलोपात् प्रत्ययलोपमाहुः। एषामयमाशयः—अत्र क्विप्प्रत्यय एव तुल्याचाररूपसाधारणप्रतिपादकः तस्य च सर्वापहारी लोपः तेनानुषक्तो धर्मलोपो न तु सादृश्यवाचकलोप इति। केचिदित्यनेनास्वरसः सूचितस्तद्वीजन्तु—प्रत्ययत्वमात्रेण प्रत्ययस्याभिधानमनभिधानं वा उपमाया अप्रयोजकमेव सादृश्यप्रतिपादनाभावात्। सादृश्याभिधायिप्रत्ययलोपप्रतिपादेन तु स्वपक्षनिक्षेप एवेति।

( ९५ ) इत्थं द्विलुप्ताश्चतस्र एकलुप्ताश्चतुर्दशोक्ता इत्यष्टादशाभिधाय पुनरेकलुप्तामेकामुपपादयति—उपमेयस्येति। उपमेयस्य लोपे अनभिधाने अप्रयोगे तु इति यावत्, क्यचि प्रत्यये, कलापमते यिनि, एका एकविधा लुप्तोपमा स्यात् "लुप्तोपमे"त्यस्यानुषङ्गः पूर्ववदेव।

अत्रेदं रहस्यम्-"इह च यथादितुल्यादिविरहात् श्रौत्यादिविशेषचिन्ता नास्ति"इति पूर्वोक्तदिशा क्यजादौ षड्विधत्वसम्भावनाया एवासम्भवात् तदपूर्वैकैकविधेति। केचित्तु—श्रौत्यतिरिक्ताया एवार्थीत्वस्वीकारात् अर्थानुसन्धानेनैव सादृश्यप्रतीतेश्च इयमपि लुप्तोपमा आर्थीविशेष एवेत्याहुः।

( ९६ ) अरातीति। अरातीनां शत्रूणां विक्रमस्य पराक्रमस्य आलोके दर्शने सति

( ९७ ) अत्र 'सहस्रायुधमिवात्मानमाचरति' इति वाक्ये उपमेयस्यात्मनो लोपः

( ९८ ) न चेहौपम्यवाचकलोप उक्तादेव न्यायात् ।

( ९९ ) अत्र केचिदाहुः-'सहस्रायुधेन सह वर्तत इति ससहस्रायुधः स इवाचरतीति वाक्यात्ससहस्रायुधीयतीति पदसिद्धौ विशेष्यस्य शब्दानुपात्तत्वादिहोपमेयलोपः' इति, तन्न विचारसहम् ; कर्तरि क्यचोऽनुशासनविरुद्धत्वात् ।

(१००) धर्मोपमेयलोपेऽन्या—

यथा—

( १ ) 'यशसि प्रसरति भवतः क्षीरोदीयन्ति सागराः सर्वे ।'

यद्वा आलोकेन दर्शनेन विकस्वरे मद्गेऽपि शत्रवो विक्रम दर्शयन्तीतिसाश्चर्यमुद्रं विलोचने विशालनयने यस्य तादृशः "आलोकौ दर्शनोद्योतौ" इति नानार्थकोऽमरः, तथा कृपाणेन खड्गेन उग्र उद्भटो भयावहो वा दोर्दण्डो दण्डसदृशो बाहुर्यस्य तथाभूतः स वीरो राजा सहस्रायुधीयति सहस्रमायुधानि यस्य स सहस्रायुधः कार्त्तवीर्यार्जुनस्तमिवात्मानमाचरति । एवञ्च यथा तं दुर्जयं मन्यते तथात्मानमपीति भावः । तथा अभिमानप्रयोजनन्तु निःशङ्कं शत्रुषु प्रविश्यैककृपाणेनैव सहस्रसंख्यकायुधसम्पाद्यस्य सम्पादनम् अतएवात्र वीररसप्रकर्ष इति विभावनीयम् ।

( ९७ ) नन्वरातीत्यादौ "स" इति तत्पदोपादानेनैवोपमेयस्याभिधानादुपमेयलोपे चेदमुदाहरणं नोचितमत आह—अत्रेति । इतिवाक्य इति । अयम्भावः—"उपमानादाचारे" ३।१।१० इत्यनेनोपमानवाचकात् सहस्रायुधमितिकर्मपदादाचारार्थे क्यच् । आचारोऽत्र दुर्जयत्वादिरूपः एवञ्च सहस्रायुधांशे उपमेयभूतस्यात्मनोलोपमाश्रित्यैव उदाहरणञ्चेदमितिभावः, साधारणधर्मस्याप्यत्र लोपस्तु न शङ्क्यः पूर्वार्धेनैव तदुपादानात् ।

( ९८ ) ननु प्रकाशकारेणात्र धर्मवाचकलुप्तात्वमभिहितं तत्किमुच्यत इति। चेदत आह—नचेहेति । इह सहस्रायुधीयत्यत्र, औपम्यवाचकस्य इवादेर्लोप इति वक्तव्यमितिशेषः, उक्तादेव न्यायादिति। उक्तन्यायश्च क्यजादेः सादृश्यबोधकत्वव्यवस्थापनात्मैव तच्च "इदञ्च केचित्" इत्यादिनोक्तमितिभावः ।

( ९९ ) पुनरपि प्रकारान्तरेणोक्तोदाहरणे उपमेयलोपवादिनां मतं निराकर्तुमाह—अत्रेति । ससहस्रायुध इत्यत्र "सहस्य सः संज्ञायाम्" ६।३।७८ इत्यनेन सादेशः । स सहस्रायुध इत्यर्थः । पदसिद्धौ सत्याम् , विशेष्यस्य ससहस्रायुधीयतीतिक्रियायाः कर्तुः, शब्दानुपात्तत्वात् केनचिच्छब्देन साक्षादनभिधानात् । उपमेयलोपः विशेष्यस्यैवोपमेयभूतत्वादित्याशयः । खण्डयति—तन्नेति । कर्तरि कर्तृपदे स्वाव्यवहितप्राग्वर्त्तित्वे सति कर्तृकारकादित्यर्थः, क्यचः कलापमते यिन , अनुशासनविरुद्धत्वात् अनुशासनस्याभावादित्यर्थः,तथा च 'उपमानादाचारे' ३।१।१० इतिशास्त्रेण कर्मण्येवोपपदे नाम्नि क्यचोऽनुशासनात् कर्त्रुपपदे तदनुशासनाभावात् विरोधस्य स्पष्टत्वादितिभावः ।

(१००) धर्मेति । धर्मः साधारणधर्मः उपमेयश्च, अनयोर्लोपे युगपदनभिधाने अन्या उपमेयलुप्तातो भिन्ना एकविधा लुप्तोपमा स्यादित्यनुषञ्जनीयम् । पूर्वोक्तयुक्त्यैवात्राप्येकविधेतिबोध्यम् ।

( १ ) यशसीति । प्रसरति सर्वतो व्याप्नुवति सर्वे क्षीरोदातिरिक्ताः, क्षीरोदीयन्ति

( २ ) अत्र क्षीरोदमिवात्मानमाचरन्तीत्युपमेय आत्मा साधारणधर्मः शुक्लता च लुप्तौ ।

( ३ ) त्रिलोपे च समासगा ॥ २२ ॥

यथा—

( ४ ) 'राजते मृगलोचना ।'

( ५ ) अत्र मृगस्य लोचने इव चञ्चले लोचने यस्या इति समासे उपमाप्रतिपादक-साधारणधर्मोपमानानां लोपः ।

( ६ ) तेनोपमाया भेदाः स्युः सप्तविंशतिसंख्यकाः ।

---

क्षीरादमिवात्मानमाचरन्ति । आर्या गीतिश्छन्दः ।

( २ ) अत्रेति । क्षीरोदं क्षीरसमुद्रम् । उपमेय इति अत्रापि क्षीरोदांशे आत्मन उपमेयत्वमित्यवधेयम् ।

( ३ ) सम्प्रति इवाद्युपमानोपमेयसाधारणधर्माणां मध्ये यथासम्भवं लोपे लुप्तोपमां दर्शयति—त्रिलोप इति । त्रिलोपे धर्मोपमानेवादीनामनभिधाने समासगा समासगता अन्या एवंविधा लुप्तोपमा स्यादित्यनुषञ्जनीयम् । धर्मोपमानादीनां त्रयाणामनभिधाने समासं विना अन्यत्रासम्भवादियमप्येकविधैवेत्यवधेयम् ।

( ४ ) राजत इति ।

चन्द्रकान्तिमानेयं श्यामा बिम्बफलाधरा । मनोहरा प्रिया साध्वी राजते मृगलोचना ॥

इति मत्पूरितपादत्रयम् ।

( ५ ) अत्रेति । उपमाप्रतिपादक उपमावाचक इवशब्दः साधारणधर्मश्चञ्चलत्वम्, उपमानञ्चालोचनपदम्, एषां लोपोऽनभिधानम्, मत एवात्र त्रिलोपे समासगा लुप्तोपमेत्याशयः । अत्रेदम्बोध्यम्—"मृगलोचना" इत्यत्र मृगशब्देन यदि लक्षणया तल्लोचने विवक्ष्येते तर्हि नेदमुदाहरणं धर्मवाचकोपमानलुप्तायाः मृगस्यैवोपमानभूतत्वात् तस्य च लोपाप्राप्तेः । यदा तु मृगलोचने इव चञ्चले लोचने यस्याः सेति विग्रहः क्रियते तदा "अनेकमन्यपदार्थे" २।२।२४ इति पा० सूत्रभाष्यस्थेन ( सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च ) इति वार्त्तिकेन "मृगलोचने" इत्युपमानप्रतिपादकस्य "लोचने" इत्यस्य बहुव्रीहौ मृगपदोत्तरपदभूतस्य "लोचने"इत्यस्य धर्मस्यालोपे उपमेयभूतस्य द्वितीयस्य 'लोचने' इत्यस्य चाविशेषात्सम्भवति चेदमुदाहरणम् । एवञ्च "मृगलोचना" इत्युत्तरपदभूतस्य "लोचने" त्युपमानस्य इवेत्यौपम्यप्रतिपादकस्य चञ्चलत्वरूपस्य साधारणधर्मस्यानभिधानमिति त्रिलोपे समासगेयम् । यद्यप्यत्र लोचनपदस्यैवोपमानप्रतिपादकत्वं तथाप्यवयवधर्मेण समुदायस्य व्यपदेशान्मृगलोचनपदस्योपमानपूर्वपदत्वमवगन्तव्यम् ।

( ६ ) उपमाप्रकरणं समापयन्नधुना साकल्येनोपमायाः सङ्कलनं दर्शयति—तेनेति । उक्तप्रकारभेदप्रपञ्चेनेत्यर्थः । विश्लेषणं विधाय भेदानां सप्तविंशतिसंख्यकत्वमुपपादयति—पूर्णेति । एकविंशतिविधेति । अयञ्च प्रायोवादः । तथाहि—"कोकिल इवालपति कोकिलालापिनी" इत्यत्र "कर्त्तर्युपमाने" इति णिनिप्रत्यये, "आह्लादिवदनं तस्याः शरद्राका शशाङ्कति" इत्यत्र आचारक्विपि "पशुः पुरुषः सोऽयं यः स्वहितं नैव जानाति"

( ७ ) पूर्णा षड्विधा लुप्ता चैकविंशतिविधेति मिलित्वा सप्तविंशतिप्रकारोपमा ।

इत्यत्र चञ्चातृणपुरुष इवेत्यस्मिन्नर्थे "इवे प्रतिकृतौ" इति पा० सूत्रेण कन्प्रत्यये पदान्तरेण प्रतिपादिते समाने धर्मेऽपि वाचकलुप्ता सम्भवति ।

"यच्चोराणामस्य च समागमो यच्च तैर्वधोऽस्य कृतः ।
उपनतमेतदकस्मादासीद्धल काकतालीयम् ।"

इत्यत्र काकतालशब्दौ वृत्तिविषये काकतालसमवेतक्रियावर्त्तिनौ । तेन काकागमनमिव तालपतनमिव काकतालमितीवार्थे "समासाच्च तद्विषयात्" इति ज्ञापकात्सुप्सुपेतिसमासः । उभयत्रोपमेयं क्रमेण देवदत्तागमनं चोरसमागमश्च । तेन देवदत्तचोरसमागमः काकतालसमागमसदृशः । ततः "काकतालमिव काकतालीयम्" इतिद्वितीयस्मिन्निवार्थे 'समासाच्च तद्विषयात्' इति पा० सूत्रेण छः ततश्च पतता तालफलेन यथा काकस्य वध एवं समागतैश्चौरैर्देवदत्तस्य वध इति रहस्यम् ।

यदाह भगवान् भाष्यकारः—एवं तर्हि द्वाविवार्थौ काकागमनमिव तालपतनमिव काकतालं काकतालमिव काकतालीयम्" इति । विवृतञ्चैतत् भाष्यप्रदीपकृता कैयटेन—"तत्र काकागमनं" देवदत्तागमनस्योपमानम्, तालपतनं दस्यूपनिपातस्य । तालेन तु यः काकस्य वधः स देवदत्तस्य दस्युना वधस्योपमानमिति । अकस्मादुपनतत्वं च साधारणो धर्मः । तदुक्तं वृत्तिकृता—"अतर्कितोपनतं चित्रीकरणमुच्यते" इति । एवञ्चात्र काकागमनतालपतनसमागमरूपस्य पतत्तालकृतकाकवधरूपस्य चोपमानस्यानभिधानात्प्रत्ययार्थोपमायामुपमानलोपः समासार्थोपमायां वाचकोपमानलोपोऽवगन्तव्यः। इतोऽधिकजिज्ञासुभिः चित्रमीमांसारसगङ्गाधरादाववलोकनीयम् ।

(७) पूर्णेति । सप्तविंशतिप्रकारोपमेति । तथाहि—

| | | नामानि । | उदाहरणानि । |
|---|---|---|---|
| पूर्णोपमा ६ | श्रौती ३ | तद्धितगता १ | सौरभमम्भोरुहवन् । |
| | | समासगता १ | कुम्भाविव स्तनौ पीनौ । |
| | | वाक्यगता १ | हृदयं मदयति वदनमित्यादि । |
| | आर्थी ३ | तद्धितगता १ | मधुरः सुधावदधरः । |
| | | समासगता १ | पल्लवतुल्योऽतिपेलवः पाणिः । |
| | | वाक्यगता १ | चकितमृगलोचनाभ्यामित्यादि । |
| लुप्तोपमा २१ — साधारणधर्मलोपे | श्रौती २ | समासगता १ | वाचः सुधा इव । |
| | | वाक्यगता १ | मुखमिन्दुर्यथा । |
| | आर्थी ३ | तद्धितगता १ | मनोऽश्मवत् । |
| | | समासगता १ | ओष्ठस्ते बिम्बतुल्यः । |
| | | वाक्यगता १ | पाणिः पल्लवेन समः । |
| प्रत्यये ५ | क्यचि २ | आधारात्क्यचि १ | अन्तः पुरीयसि । |
| | | कर्मणः क्यचि १ | पौरं जनं सुतीयसि । |
| | क्यङि १ | कर्त्तुः क्यङि १ | ओऽस्तव रमणीयते । |
| | णमुलि २ | कर्मणि णमुलि १ | अमृतद्युति दर्श दृष्टः । |
| | | कर्त्तरि णमुलि १ | इन्द्रसञ्चारं सञ्चरसि । |

( ८ ) एषु चोपमाभेदेषु मध्येऽलुप्तसाधारणधर्मेषु भेदेषु विशेषः प्रतिपाद्यते—

**( ९ ) एकरूपः क्वचित्क्वापि भिन्नः साधारणो गुणः ॥ २३ ॥**
**भिन्ने बिम्बानुबिम्बत्वं शब्दमात्रेण वा भिदा ।**

| | | |
|---|---|---|
| उपमानलोपे २— | वाक्यगता १ | तस्यामुखेन सदृशं रम्यं नास्ते |
| | समासगता १ | न वा नयनतुल्यं रम्यमास्ते |
| इवादिलोपे २— | समासगा १ | सुधाकरमनोहरं वदनम् |
| | क्विप्प्रत्ययगता १ | गर्दभति श्रुतिपरुषमित्यादि । |
| साधारणधर्म उपमानञ्च अनयोर्द्वयोर्लोपे २— | समासगता १ | लोके न वा नयनतुल्यमास्ते । |
| | वाक्यगता १ | तस्या मुखेन सदृशं रम्यं लोके नास्ते । |
| साधारणधर्मौपम्यवाचकयोर्द्वयोर्लोपे २— | क्विप्प्रत्ययगता १ | विधवति मुखाब्जमस्याः । |
| | समासगता १ | मुखाब्जमस्याः । |
| उपमेयलोपे क्यचि १— | कर्मणः क्यचि १ | विकस्वरविलोचनः स सहस्रायुधीयति । |
| साधरणधर्मोपयोरनयोर्द्वयोर्लोपे १— | कर्मणः क्यचि १ | क्षीरोदीयन्ति सागराः । |
| उपमानम्, इवादिसाधारणधर्मश्च सर्वेषामेषां लोपे१ | समासगता १ | राजते मृगलोचना । |
| २७ | २७ | |

अयञ्चोपमाविभागो न सर्वैः स्वीकृतः। तथाचोक्तमप्पयदीक्षितेन चित्रमीमांसायाम्—"एवमयं पूर्णालुप्ताविभागो वाक्यसमासप्रत्ययगोचरतया शब्दशास्त्रव्युत्पत्तिकौशलप्रदर्शनमात्रप्रयोजनो नालीवालङ्कारशास्त्रे व्युत्पाद्यतामर्हति । न वा लुप्तानामयं सामस्त्येन विभाग" इति।

( ८ ) एवञ्च लुप्तसामान्यधर्मत्वेन अलुप्तसामान्यधर्मत्वेन च सर्वा एवोपमा द्विप्रकारा भवितुं शक्नुवन्ति तत्राह—एषु चेति । सप्तविंशतिसंख्याकेषु चेत्यर्थः ।

( ९ ) एकरूप इति । साधारणो गुणः सामान्यो धर्मः क्वचित् कुत्रापि एकरूप एकविधो न पुनः परमार्थत एवैक इति भावः, क्वापि क्वचित् भिन्नः परमार्थतः प्रकारतश्चानेकविधः, तथाच वस्तुतो भिन्नयोरप्युपमानोपमेययोर्यो हि साधारणो धर्मः स गुणरूपः क्रियारूपश्चेति द्विविधोऽपि क्वचिद् नानाव्यक्तिषु जातिवदेकविधः क्वचित्त्वनेकविध इति परमार्थः । ननु भिन्नत्वे तस्य साधारणधर्मत्वमेव न सम्भवितुमर्हति उपमानोपमेययोरुभयवृत्तित्वासम्भवादत आह—भिन्न इति । भिन्ने नैकविधे साधारणधर्मे बिम्बानुबिम्बत्वं बिम्बस्य सादृश्यस्य अनुबिम्बत्वं प्रणिधानगम्यत्वम्, वस्तुतो भिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्याद्भिन्नयोः पृथगुपादानं बिम्बप्रतिबिम्बभावः । उक्तञ्च—"अतएवात्र बिम्बप्रतिबिम्बव्यपदेशः । लोके हि दर्पणादौ बिम्बात्प्रतिबिम्बस्य भेदेऽपि मदीयमेवात्र वदनं सङ्क्रान्तमित्यभेदेनाभिमन्यते । अन्यथा हि प्रतिबिम्ब-

( १० ) तत्र एकरूपे यथा उदाहृतम्-'मधुरः सुधावदधरः-' इत्यादि।

बिम्बप्रतिबिम्बत्वे यथा—

( ११ ) 'भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥'

( १२ ) अत्र 'श्मश्रुलैः' इत्यस्य 'सरघाव्याप्तैः' इति दृष्टान्तवत्प्रतिबिम्बनम् ।

शब्दमात्रेण भिन्नत्वे यथा—

( १३ ) 'स्मेरं विधाय नयनं विकसितमिव नीलमुत्पलं मयि सा ।
कथयामास कृशाङ्गी मनोगतं निखिलमाकूतम् ॥'

( १४ ) अत्रैके एव स्मेरत्वविकसितत्वे प्रतिवस्तूपमावच्छब्देन निर्दिष्टे ।

---

दर्शने कृशोऽहं स्थूलोऽहमित्याद्यभिमानो नोदियात्, भूषणविन्यासादौ च नायिका नाद्रियेरन् इति । एकधर्मस्यैकशब्देनोपादानं प्रायेण क्वचित् शब्दभेदेनाप्युपादानं सम्भवतीत्याह—शब्दमात्रेण वेति । वा अथवा शब्दमात्रेण केवलेन शब्देनैव भिदा भेदः। मात्रपदेन तात्पर्यस्य व्यवच्छेदः । तथाच वस्तुतो भिन्नत्वेऽपि सादृश्यत्वेन अभिन्नत्वात् शब्दमात्रेण भिन्नत्वेऽपि वस्तुतोऽभिन्नत्वाच्च साधारणधर्मत्वोपपत्तिरित्याशयः ।

( १० ) एकरूप इति । साधारणे धर्मे इति शेषः । अत्रायम्भावः—उपमानोपमेययोः सुधाधरयोर्मधुरत्वम् । तत्र सुधायां मधुरत्वं हि सुस्वादत्वेन सर्वप्रियत्वम्, अधरे तु चुम्बनसुखजनकत्वेन केवलकामिजनप्रियत्वमिति प्रियत्वरूपः प्रकार एक एव, परमार्थतः स्वादांशे तु भिन्न एवेति । साधारणगुणस्यैकरूपत्वे ह्युदाहरणम् । क्रियाया एकरूपत्वे तु मम—

हस्तिनीव शनैर्याति मृगीवेयञ्च पश्यति । वक्ति वाणी कोकिलेव सर्वान्मोहयति क्षणात्॥

( ११ ) एवं धर्मैक्यमुदाहृत्य धर्मानैक्यमुदाहरति—भल्लेति । रघुवंशचतुर्थसर्गस्थपद्यमिदम् । स रघुः, भल्लेन तत्संज्ञकबाणविशेषेण अपवर्जितैः स्कन्धान्निपातितैः, श्मश्रु मुखाग्रवर्त्ति रोमसमूहः स एषामस्तीति तैः तथोक्तैः, सिध्मादित्वाल्लच्, तेषां पारसीकानां यवनानां शिरोभिर्मस्तकैः, सरघाभिर्मधुमक्षिकाभिर्व्याप्ताः पूर्णास्तैः तादृशैः "सरघा मधुमक्षिका" इत्यमरः, क्षौद्रं मधु तस्य पटला उत्पत्तिस्थानविशेषास्तैरिव महीं पृथिवीम्, तस्तार आच्छादयामास ।

( १२ ) बिम्बानुबिम्बत्वमुपपादयति—अत्रेति । सरघाव्याप्तैरिति । अभिधाने इति शेषः । प्रतिबिम्बनं सदृशीकरणम् । एवञ्च यथा सरघाभिः क्षौद्राणां कृष्णवर्णत्वं तथा श्मश्रुभिः शिरसां कृष्णवर्णत्वमिति प्रणिधानेनैवोभयोः सादृश्यं प्रतीयमानमित्याशयः ।

( १३ ) स्मेरमिति । सख्युः सविधे कस्यचिज्जनस्य स्वप्रियनायिकायाः वर्णनेयम् । सा कृशाङ्गी विकसितं प्रस्फुटितं नीलोत्पलं कुवलयमिव मयि नयनं दृष्टिं स्मेरं विस्फारितं विधाय मनोगतं मनसि स्थितं निखिलं सर्वम् आकूतम् आवेदनीयमर्थं कथयामास कथनवत् सूचयामास । आर्याछन्दः ।

( १४ ) शब्दमात्रं भेदमुपपादयति—अत्रेति । एके एव उभयोरपि विस्फाररूपत्वातात्पर्यतोऽभिन्ने एव। अत्र।एके इति संख्यार्थकादेकशब्दाद् द्विवचनाऽसम्भवा(दयं पाठो

( १५ ) एकदेशविवर्तिन्युपमा वाच्यत्वगम्यते ॥ २४ ॥
भवेतां यत्र साम्यस्य—(क)

यथा—

( १६ ) 'नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः।
पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥'

( १७ ) अत्रोत्पलादीनां नेत्रादीनां सादृश्यं वाच्यं सरःश्रीणां चाङ्गनासाम्यं गम्यम्।

---

न युक्त इति विवृतिकारा वदन्ति। केचित्तु—"द्वयं गतं सम्प्रति शोचनीयताम्" इत्यादौ द्वित्वविशिष्टयोः पार्वतीचन्द्रकलयोरेकविधशोच्यत्वार्थकत्वात् "द्वयम्" इत्येकवचनाद्युपपत्तिवत्, एकविस्फाररूपपदार्थस्य स्मेरमिति विकसितमिति च शब्दद्वयोपस्थाप्यत्वयोर्द्वित्वात् 'एके' इति द्विवचनोपपत्तिरिति समादधते। प्रतिवस्तूपमावत् प्रतिवस्तूपमायामिव शब्दभेदेन निर्दिष्टे स्मेरमिति विकसितमिति च भिन्नशब्दाभ्यामुक्ते।

( १५ ) एवं शुद्धारूपमामुपपाद्यास्या एव प्रकारान्तरेण काव्यप्रकाशकारादिभिरस्वीकृतमपि युक्तियुक्तत्वात्-भेदावतारमुपपादयितुकामः एकदेशविवर्त्तिन्याख्यं भेदं तावदुपपादयति—एकेति। यत्र यस्मिन् स्थले साम्यस्य सादृश्यस्य वाच्यत्वगम्यते भवेताम् अभिधाबोध्यत्वं व्यञ्जनाबोध्यत्वं च स्यात् वाच्यत्वव्यङ्ग्यत्वोभयसाङ्कर्यं भवेदिति तात्पर्यम् तत्र एकदेशविवर्त्तिनी नामोपमा भवेत्। "साम्यं वाच्य"मिति लक्षितोपमैव साम्यस्य वाच्यत्वगम्यत्वमात्रेणैकदेशविवर्तिनीति गीयते यत्र देशे साम्यस्य वाच्यत्वं तत्रास्याः सर्वात्मनाऽलङ्करणात् अन्यत्र गम्यमानतयेति स्पष्टमेकदेशविवर्त्तनशीलत्वम्, अतएवैकदेशविवर्त्तिन्युपमेत्यन्वर्थं नाम। एकदेशविवर्त्तिरूपकेण सहास्य भेदस्तु तन्निरूपणावसरे एव स्फुटीभविष्यति।

( १६ ) नेत्रैरिवेति। शरद्वर्णनमिदम्। सरसां जलाशयानां श्रियः सम्पदः, नेत्रैरिव उत्पलैः कुवलयैः, मुखैरिव पद्मैः, स्तनैरिव स्फुरद्भिरिति शेषः चक्रवाकैः पक्षिभिश्च पदे पदे स्थाने स्थाने विभान्तिस्म। अत्र समाप्तपुनरात्तत्वं दोषः तृतीयपादस्थेन विभान्ति इत्यनेनैव वाक्यसमाप्तावपि चतुर्थपादेन पुनरुत्थापनात्।

( १७ ) लक्ष्ये लक्षणं संयोजयितुमाह—अत्रेति। नेत्रादीनां नेत्रादिभिः साधर्म्यमित्यर्थः। वाच्यमिति। सर्वत्र इवशब्दोपलम्भादिति भावः। गम्यं व्यञ्जनतया प्रतीयमानम्, 'सरःश्रिय' इत्यत्र इवशब्दासत्त्वादित्याशयः। तथाचात्र नेत्रादीन्युपमानानि, उत्पलादीन्युपमेयानि, अध्याहृतस्फुरत्पदगम्यः साधारणो धर्मः तद्वाचक इवशब्दश्चेत्येषां विद्यमानत्वादुपमैवात्र "अङ्गना इव सरःश्रियः" इति शब्दानुपात्तमपि सादृश्यं बोधयन्ती विव-

---

( क ) अत्र नव्यास्तु—'इयमपि रूपकवत् केवलनिरवयवा, मालारूपनिरवयवा, समस्तवस्तुविषयसावयवा, केवलश्लिष्टपरम्परिता, मालारूपपरम्परिता, केवलशुद्धपरम्परिता, मालारूपशुद्धपरम्परिता चेत्यष्टधा'। उदाहृतञ्च तत्रैव—

"मकरप्रतिमैर्महाभटैः कविभी रत्नसमैः समन्वितः।
कवितामृतकीर्त्तिचन्द्रयोस्त्वमिहोर्वीरमणासि कारणम्॥"

(१८) कथिता रसनोपमा ।
यथोर्ध्वमुपमेयस्य यदि स्यादुपमानता ॥ २५ ॥

यथा—

(१९) 'चन्द्रायते शुक्लरुचापि हंसो हंसायते चारुगतेन कान्ता ।
कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः ॥'

यते । ननूपमेयत्वेन प्रसिद्धानां नेत्रादीनामुपमानत्वेन प्रतिपादनमसङ्गतमिति चेत् ? सत्यम्, उपमानोपमेयभावस्यानियतत्वाऽभ्युपगमात् । अत एव—

"आदिमध्यान्तरहितं दशाहीनं पुरातनम् ।
अद्वितीयमहं वन्दे मद्वस्त्रसदृशं हरिम् ॥"

इत्यादौ भगवतोऽप्युपमेयत्वप्रतिपादनेऽप्युपमा सङ्गच्छत इति । क्वचित् रूपकवत् समस्तवस्तुविषयाप्युपमा दृश्यते । यथा—

"ब्रह्माण्डं भुवनायते त्वदुदरे लोकेश ! लोकः स्फुर
ज्ज्ञानाचेतनकल्पनाशवलितः साक्षात् वितानायते ।
तन्मध्येऽपि तवामरायल इयं भूमण्डलालम्बिनी
हारक्षीरपटीरसोदररुचिः स्वर्गौकसामापगाः ॥"

अत्र भवनस्याङ्गिनो वितानाद्यङ्गसहितस्य उपमानत्वेन समस्तवस्तुविषयता ।

(१८) प्रकारान्तरेणास्या एव भेदान्तरं दर्शयति—कथितेति । ऊर्ध्वमनतिक्रम्य यथोर्ध्वम्, ऊर्ध्वक्रमेण "शास्त्रे वृक्षवद्व्यवहारः" इतिन्यायात् परपरमित्यर्थः, उपमेयस्य प्रथमवाक्ये यदुपमेयं तस्य यदि परवाक्ये उपमानता स्यात् तदा सा रसनोपमा कथिता । यथा खलु काञ्चीत्यपरनामधेयायां रसनायां पूर्वत्वमधिगतायाः क्षुद्रघण्टिकायाः परग्रथनावसरे परत्वं तथैवोपमायां पूर्वमधिगतस्योपमेयस्य परेणोपमेयेन सादृश्योद्भावनावसरे परपरप्राप्तिरिति रसनावद्विन्यासाद्रसनोपमेति नाम ।

(१९) चन्द्रायत इति । कदाचित् शरत्समये निरुपद्रवावसरे हंससन्निहितं स्वच्छजलं सरोवरं गतवर्ती काञ्चिन्नायिकामवलोक्य कस्यचन विदग्धस्योक्तिरियम् । इह स्वच्छसरोवरे हंसः जातावेकवचनम्, शुक्लरुचापि न केवलं शान्तमूर्त्तितया किन्तु शुभ्रकान्त्यापि चन्द्रायते चन्द्र इवाचरति "कर्तुः क्यङ् सलोपश्च" ३।१।११ इति क्यङ् एवमुत्तरत्रापि । कान्ता कमनीयाङ्गी नायिका चारुगतेन सुन्दरगमनेन हंसायते हंस इवाचरति । वारि जलम्, स्पर्शसुखेन आनन्दविधायिना स्पर्शेन अत्र राजदन्तादित्वात् सुखशब्दस्य परनिपातः, कान्तायते सा कान्तेवाचरति । विहाय आकाशञ्च "पुंस्याकाशविहायसी" इत्यमरः, स्वच्छतया निर्मलतया वारीयते तद्वारीवाचरति । इन्द्रवज्रा छन्दस्तल्लक्षणन्तु प्रागुक्तम् ।

अत्र चन्द्रः प्रथममुपमानं तदपेक्षया उपमेयभूतस्य हंसस्य कान्तापेक्षया उपमानत्वम्, कान्तायाश्च वार्यपेक्षया उपमानत्वम्, वारिणश्च विहायोऽपेक्षया उपमानत्वमिति परस्पराश्रयणेन रसनोपमत्वाल्लक्षणसमन्वयः । एषैव क्वचित् साधारणधर्मस्य भेदे क्वचिदभेदे च सम्भवति । तत्र शुक्लरुगादिसाधारणधर्मभेदे चेदमुदाहरणम् । साधारणधर्मस्याभेदे तु यथा विवृतिकृतोक्तम्—

( २० ) मालोपमा यदेकस्योपमानं बहु दृश्यते ।

यथा—

( २१ ) 'वारिजेनेव सरसी शशिनेव निशीथिनी ।
यौवनेनेव वनिता नयेन श्रीर्मनोहरा ॥'

( २२ ) क्वचिदुपमानोपमेययोरपि प्रकृतत्वं दृश्यते—

( २३ ) 'हंसश्चन्द्र इवाभाति जलं व्योमतलं यथा ।
विमलाः कुमुदानीव तारकाः शरदागमे ॥'

---

"महीभृतो वदान्यस्य भारतीवामला मतिः । चेष्टामतिरिव स्वच्छा चेष्टेव गुणसन्ततिः ॥'

अत्र स्वच्छत्वं शब्दमात्रेण भिन्न एक एव साधारणधर्मः । क्वचित् साधारणधर्मानुपादानेऽपीयं सम्भवति, यथा रघुवंशे—

"आकारसदृशः प्राज्ञः प्रज्ञया सदृशागमः । आगमैः सदृशारम्भ आरम्भसदृशोदयः ॥"

केषांचिन्मतेन तद्धितसमासवाक्यगतत्वेन त्रिविधेयम् । तत्राद्योदाहरणं मूल एव । द्वितीयोदाहरणं "महीभृत" इति । तृतीयोदाहरणं यथा—

"यथा वाक्यं सतां गृह्यं यथा गृह्यं तथेहितम् ।
यथेहितं विशुद्धं च यशः शश्वत् स्वभावतः ॥" इति ।

( २० ) एकत्रानेकोपमायाः सत्त्वे वैचित्र्यवैलक्षण्येन भेदान्तरं लक्षयति—मालोपमेति । एकस्य उपमेयस्य यद् बहु एकाधिकमित्यर्थः, उपमानं दृश्यते तन्मालोपमा स्यात् यथा काचिन्माला सजातीयैरेव विजातीयैरेव सजातीयविजातीयोभयविधैरेव वा पुष्पैर्निर्मीयते तथा बहुभिर्बहुविधैरेव चोपमानैर्निर्मीयमाणमालासादृश्यान्मालोपमेति नाम ।

( २१ ) इयमपि साधारणधर्मभेदाभेदेन द्विविधा तत्र द्वितीयोदाहरणमाह—वारिजेनेवेति । नयेन नीतिप्रयोगेण श्री राज्यलक्ष्मीः, वारिजेन कमलेन सरसी जलाशय इव, शशिना निशीथिनी रात्रिरिव "निशा निशीथिनी रात्रिः" इत्यमरः, यौवनेन तारुण्येन वनिता कान्तेव च मनोहरा भवति । अत्र मनोहरत्वमेको धर्मः । तथाचोपमेयभूतायाः श्रियाः सरसी-निशीथिनी-वनितारूपानेकोपमानत्वाल्लक्षणसमन्वयः ।

आद्योदाहरणं यथा—

'ज्योत्स्नेव नयनानन्दः सुधेव मदकारणम् । प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥'

अत्र नेत्रानन्दजननादयोऽनेकाः साधारणधर्माः ।

लक्षणे बह्वित्यस्यैकाधिकपरत्वविवक्षणात् केवलोपमानद्वयसत्त्वेऽपि मालोपमैव । यथा कुमारसम्भवे—

तां हंसमालाः शरदीव गङ्गां महौषधीं नक्तमिवात्मभासः ।
स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः ॥

अत्र क्रियायाः साधारणधर्मत्वम् ।

( २२ ) उपमेयस्य प्रकृतत्वमुपमानस्याप्रकृतत्वं प्रायिकमित्याशयेनाह—क्वचिदिति । प्रकृतत्वं वर्णनीयस्योत्कर्षाधायकत्वेनाकाङ्क्षितत्वम् । एवञ्च उपमेयस्यैव प्रकृतत्वम्, नोपमानस्येतिनियमकथनं प्राचां प्रायिकमेवेत्यवधेयम् ।

( २३ ) हंस इति । शरदागमे शरदः प्रारम्भे, हंसश्चन्द्र इव आभाति शुद्धवर्णत्वेन

( २४ ) 'अस्य राज्ञो गृहे भान्ति भूपानां ता विभूतयः ।
पुरन्दरस्य भवने कल्पवृक्षभवा इव ॥'

( २५ ) अत्रोपमेयभूतविभूतिभिः 'कल्पवृक्षभवा इव' इत्युपमानभूता विभूतय आक्षिप्यन्त इत्याक्षेपोपमा । अत्रैव 'गृहे' इत्यस्य 'भवने' इत्यनेन प्रतिनिर्देशात्प्रतिनिर्देश्योपमा ।

( २६ ) इत्यादयश्च न लक्षिताः । एवंविधवैचित्र्यस्य सहस्रधा दर्शनात् ।

( २७ ) **उपमानोपमेयत्वमेकस्यैव त्वनन्वयः ॥ २६ ॥**

---

प्रकाशते, व्योमतलं व्योम यथा अत्र तलं स्वरूपप्रतिपादकः, तथैव जलमित्यर्थः, तथा तारका नक्षत्राणि कुमुदानीव विमला भवन्ति ।

अत्र हंसादय इव चन्द्रादयोऽपि वर्णनीयशरत्समयस्योत्कर्षाधायकत्वेनाकाङ्क्षिताः । तथा "सुधेव विमलश्चन्द्रः" इत्यादिवत् "विमलाः कुमुदानीव तारकाः" इत्यत्र लिङ्गभेदे भग्नप्रक्रमत्वं दोषः । एवं स्थितावपि दोषाणामलङ्कारप्रतिबन्धकत्वाभावेन न कापि क्षतिरिति विभावनीयम् । वस्तुतस्तु "विमलाः" इत्यस्य स्थाने "स्फुरन्ति" इतिपाठेन भिन्नलिङ्गत्वेऽपि अन्वयोपपत्तेरयमेव पाठो रमणीयः ।

( २४ ) प्राचीनाभिमताक्षेपोपमादीनुपमाभेदान् वैचित्र्याततयाधायकत्वेनोपेक्षमाण आह—अस्येति । अस्य राज्ञो महीपतेः गृहे सदने भूपानामन्येषां क्षितिपतीनां ताः स्वयमर्पिताः विभूतयः सम्पत्तयः, पुरन्दरस्य देवेन्द्रस्य भवने गृहे, कल्पवृक्षभवा विभूतय इव शोभन्ते । यथा इन्द्रस्य भवने यथेच्छ सम्पदः सृजतां कल्पवृक्षाणां सम्पाद्याः सम्पदः सर्वतः शोभन्ते तथाऽस्य नृपतेगृहेऽपि कामं समर्पयमाणानां वश्यानां नृपतीनां विभूतय इति भावः ।

(२५) अत्र प्राचीनाभिमतेनालङ्कारान्तरं साधयति—अत्रेति । उपमेयभूतविभूतिभिः प्रकृतराजभवनविद्यमानसम्पद्भिः । आक्षिप्यन्ते शब्दानुपात्ता अपि अर्थजनयावगम्यन्ते, इति हेतोः आक्षेपोपमानामोपमा भेदः । प्रतिनिर्देश्याद्युपमानत्वेन प्रत्यवस्थापितत्वात् प्रतिनिर्देश्योपमानामोपमाभेद इत्याशयः ।

(२६) सम्प्रत्येतादृशभेदान्तरलक्षणविधानमयुक्तमित्यभिप्रायेणाह—इत्यादयश्चेति । उपमा भेदा इतिशेषः । न लक्षिता लक्षणादिभिर्न प्रतिपादिताः । सहस्रधा असंख्यविधैरित्यर्थः । एवञ्च यथा प्रतिपादितातिरिक्तभेदास्तैर्न कथिताः, तथा तत्प्रतिपादिताक्षेपोपमादिभिर्भेदोऽस्माभिर्न कथितास्ते तु स्वयमेवोह्या इत्यभिप्रायः । तथाहि—
"चन्द्रबिम्बादिव विषं चन्दनादिव पावकः । परुषा वागितो वक्त्रान्निःसरेन्मतिन्मणे?॥"

इत्यादौ असम्भावितोपमा । एवमुत्पाद्योपमा—उपपादकोपमा—उभयोपमा—समुच्चितोपमाद्य ऊहनीया ।

(२७) एवं सपरिकरमुपमां लक्षयित्वा अनन्वयं नामालङ्कारं लक्षयति—उपमानेति । एकस्यैव तु वर्णनीयस्य वस्तुन उपमानोपमेयत्वं युगपदेव उपमानत्वमुपमेयत्वं च कल्पितञ्चेत् तदा न विद्यते अन्वय उपमानान्तरेण सत्तासम्बन्धो यत्रेतिव्युत्पत्त्या अनन्वयो नामालङ्कारः स्यात् । एतादृशव्युत्पत्तौ बीजन्तु—उपमेयत्वं नाम उपमानभिन्नत्वे सति

( २८ ) अर्थादेकवाक्ये ।

यथा—

( २९ ) 'राजीवमिव राजीवं, जलं जलमिवाजनि ।
चन्द्रश्चन्द्र इवातन्द्रः, शरत्समुदयोद्यमे ॥'

( ३० ) अत्र राजीवादीनामनन्यसदृशत्वप्रतिपादनार्थमुपमानोपमेयभावो वैवक्षिकः ।

( ३१ ) 'राजीवमिव पाथोजम्' इति चास्य लाटानुप्रासाद्विविक्तो विषयः ।

( ३२ ) किन्त्वत्रौचित्यादेकशब्दप्रयोग एव श्रेयान् । तदुक्तम्—

---

उपमानगतसम्भाव्यमानानेकधर्मवत्त्वम्, तेनोभयत्राप्युभयभेदस्यावश्यम्भावित्वादेकत्रैव वस्तुनि युगपदुपमानत्वोपमेयत्वयोः सत्तासम्बन्धोऽसम्भव एवेति ।

( २८ ) नन्वेतल्लक्षणस्य "चन्द्रायते शुक्लरुचापि हंसः" इत्यादौ एकस्यैव हंसादेश्चन्द्राद्यपेक्षयोपमेयत्वं कान्ताद्यपेक्षया चोपमानत्वमिति रसनोपमायाम्, तथा "कमलेव मतिर्मतिरिव कमला" इत्यादावपि एकस्यैव मत्यादेरुपमेयत्वमुपमानत्वञ्चेति वक्ष्यमाणोपमेयोपमायाञ्चातिव्याप्तिरित्यत आह—अर्थादिति । पारिशेष्यादित्यर्थः । तथाच रसनोपमायां "यथोर्ध्वम्" इत्यनेन, उपमानोपमायां पर्यायेण-इत्यनेनानेकवाक्यलम्भेन तत्रैव संभवात् तयोरनेकवाक्यमेव विषयः, अस्य तु एकवाक्ये अनेकवाक्ये चोभयत्र सम्भवात्पारिशेष्यात् एकवाक्यमेव विषयः कल्प्यत इति भावः । नचोपमेयोपमायां "द्वयोः" इत्यभिधानात्कथमव्याप्तिरिति वाच्यम्, तत्र प्रत्येकपदार्थस्यापि पर्यायेणोपमानोपमेयसम्भवात् ।

( २९ ) राजीवमिति । शरदः समयस्य समुदयेन समुल्लासेन उद्यमे प्रवृत्तौ आविर्भावे सति, राजीवं कमलं राजीवमिव कमलमिव अतन्द्रं वर्षापङ्कादिजनितमालिन्यरहितम् अजनि; जलं जलमिव अतन्द्रं पङ्कादिमलशून्यम् अजनि; तथा चन्द्रश्चचन्द्र इव अतन्द्रो मेघाच्छादनरूपमलरहितः अजनि जातः ।

अत्रैकैकस्यापि राजीवादेः उपमानोपमेयत्वादनन्वयः ।

( ३० ) ननूक्तदिशा उपमानोपमेययोर्मिथो भेदस्यावश्यम्भावित्वेन कथमेकत्रैवासावुपमानोपमेयभावः सम्भवतीत्याशङ्कायामाह—अत्रेति । वैवक्षिकः कविना आरोप्य विवक्षयैव प्रतिपादितो न तु पुनःपरमार्थत एव स इत्याशयः ।

( ३१ ) ननु लाटानुप्रासविषयातिरिक्तेणास्य विषयो न सम्भवतीतिप्रकृतोदाहरणे लाटानुप्रासस्यापि सम्भावादनयोर्नियतसाङ्कर्यापत्तिः स्यादत आह—राजीवमिति । पाथो जलं तस्माज्जायत इति पाथोजं कमलमित्यर्थः । अस्य अनन्वयालङ्कारस्य लाटानुप्रासात् लाटानुप्रासविषयात् विविक्तोऽतिरिक्तः । एवञ्चोक्तोदाहरणे न लाटानुप्रासप्रसक्तिः शब्दस्य पौनरुक्त्यभावात्, द्वयोरेव शब्दयोः वाच्यस्य एकपद्मरूपवस्तुनस्तु उपमानोपमेयत्वाच्च अनन्वयप्रसक्तिर्वर्त्तत एवेति विषयभेदोपलम्भान्नानयोर्नियतसाङ्कर्यापत्तिरितितत्त्वम् ।

( ३२ ) अथैवं तर्हि 'राजीवमिव पाथोजम्" इतिवत् क्वापि स्थले भिन्नशब्दप्रयोगोऽनन्वयस्य कथन्नोपलभ्यत अत आह—किन्त्विति । अत्र अनन्वये । उचितत्वादिति । एवञ्च शब्दयोरभेदोपपत्तिस्थल एव केवलश्रवणेनैकस्योपमानोपमेयभावप्रतीतिरुपपद्यते,

( ३३ ) ( क ) 'अनन्वये च शब्दैक्यमौचित्यादानुषङ्गिकम् ।
अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकम् ॥' इति ।
( ३४ ) पर्यायेण द्वयोरेतदुपमेयोपमा मता ।

शब्दभेदोपपत्तिस्थले तु अर्थज्ञानादनन्तरमेवोपमानोपमेयभावप्रतीतिरिति उचितत्वमित्याशयः । एकशब्दप्रयोगः एकविधशब्दप्रयोगः अभिन्नानुपूर्वीकशब्दद्वयस्य रचनेति यावत् । श्रेयान् अतिप्रशस्तो न तु नियतः । ननु किमत्र नियामकमत आह—तदुक्तमिति । तत् तथा उक्तं प्राचीनैरितिशेषः ।

( ३३ ) अनन्वयेति । अनन्वये अलङ्कारे च औचित्यात् उपदर्शितनिमित्तेन सङ्गतत्वात् शब्दैक्यं शब्दयोरैक्यमभिन्नानुपूर्वीकत्वम् आनुषङ्गिकम् अनुषङ्गतः प्राप्तमनियतमितियावत्, "राजीवमिव" इत्यादौ सावकाशत्वसम्भवादित्याशयः । अस्मिंस्तु लाटानुप्रासे तु साक्षादेव स्वयमेव प्रयोजकम् अलङ्कारत्वाधायकम् अन्यथा लाटानुप्रासासम्भवादितिभावः । अथैवं "राजीमिव राजीवम्" इत्यादौ शब्दाभेदे अनन्वयोदाहरणे लाटानुप्राससाङ्कर्यवारणमशक्यमेवेतिचेत् ? मैवम्, इवाद्यौपम्यवाचकोपलम्भे अनन्वयः, तदनुपलम्भे तु लाटानुप्रास इत्यनयोर्भेदस्य प्रतिपादयितुं शक्यत्वात् ।

( ३४ ) उपमेयोपमानामालङ्कारं लक्षयति—पर्यायेणेति । द्वयोः पदार्थयोः पर्यायेण व्यत्यासेन परिवर्त्तनेनेतियावत्, एतदुपमानोपमेयत्वम् उपमेयोपमानामालङ्कारो मता कथिता एवञ्च पूर्वस्मिन् वाक्ये यदुपमानं भवेत् तच्चेदुत्तरस्मिन् वाक्ये उपमेयं भवेत्, एवं पूर्वस्मिन् वाक्ये यदुपमेयं भवेत् तच्चेदुत्तरस्मिन् वाक्ये उपमानं भवेत् तदा पूर्ववाक्यस्थेन उपमानोत्तरवाक्ये उपमेयेन सता निष्पादिता उपमेतिव्युत्पत्त्या उपमेयोपमा नामालङ्कारः स्यादितिनिष्कर्षः । एतच्च "विपर्यास उपमेयोपमा तयोः" इतिसूत्रयता "विपर्यास" इत्यस्य परिवृत्तिरित्यर्थं विवृण्वता च काव्यप्रकाशकृताप्युक्तम् । पूर्ववाक्योक्तसाधारणधर्ममेव साधारणधर्मीकृत्य पूर्ववाक्योक्तेन उपमेयेन पूर्ववाक्योक्तस्योपमानस्य उपमा उपमेयोपमा तथा चोपमानान्तरव्यवच्छेदफलक उपमानोपमेययोर्विप-

---

( क ) अनन्वयश्चायं पूर्णो लुप्तश्चेति द्विविधः । पूर्णस्तूपमावत् षड्विधोऽपि सम्भवति । यथा—

"गङ्गा इवा यथा गङ्गा गङ्गा गङ्गेव पावनी । हरिणा सदृशो बन्धुर्हरितुल्यः परो हरिः ॥
गुरुवद्गुरुराराध्यो गुरुवद्गौरवं गुरोः ।"

लुप्तेष्वपि धर्मलुप्तः पञ्चविधोऽपि सम्भवति प्रागुक्ते सार्धपद्ये ।

"गङ्गा राजन् यथा गङ्गा गङ्गा गङ्गेव सर्वदा । हरिणा सदृशो विष्णुर्विष्णुतुल्यः सदा हरिः ॥
गुरुवद्गुरुरास्तेऽस्मिन्मण्डले गुरुवद्गुरोः ।"

इतिपदान्तरदाने तथा वाचकलुप्तः ।

"रामायणस्तु श्रीरामः सीतासीतामनोहरा । ममान्तः करणे नित्यं विहरेतां जगद्गुरू ॥"

इत्यत्र क्यङ्समासयोः । एवम्—"लङ्कापुरादतितरां कुपितः फणीव निर्गत्य जातु पृतनापतिभिः परीतः । क्रुद्धं रणे सपदि दाशरथिदशास्यः संरब्धदाशरथिदर्शमहो ददर्श ॥" अत्र संरब्धदाशरथिरिव दृश्यत इति कर्मणि णमुल् । एवं कर्त्तृणमुलादावप्यूह्यम् ।

( ३५ ) एतदुपमानोपमेयत्वम् । अर्थाद्वाक्यद्वये ।

यथा—

( ३६ ) 'कमलेव मतिर्मतिरिव कमला, तनुरिव विभा विभेव तनुः ।
धरणीव धृतिर्धृतिरिव धरणी, सततं विभाति वत यस्य ॥'

( ३७ ) अत्रास्य राज्ञः श्रीबुद्ध्यादिसदृशं नान्यदस्तीत्यभिप्रायः ।

---

र्यास इति उपमेयोपमालक्षणमिति तद्व्याख्यातारः । "मुखं तव तथा भाति यथा राजति चन्द्रमाः" इत्यादावुपमानोपमेयभावपरिवर्त्तनस्थलेऽतिव्याप्तिवारणायात्र 'पर्यायेण' इत्युपादानम् । "चन्द्रायते शुक्लरुचापि हंसः" इत्यादौ रसनोपमायां वाक्यद्वयोपलम्भात् , हंस इत्यादेरुपमेयोपमानभावपरिवर्त्तनोपलम्भाच्च तत्रातिव्याप्तिवारणाय द्वयोरित्युपादानम् ।

'मुखं शशीव कान्ताया दिवसे मामतोषयत् । रात्रौ तोषयते सोऽयं शशीमुखमिवाधुना ॥'

इत्यादौ व्यवहितपरिवर्त्तने नायमलङ्कारः किन्तूपमाद्वयमेव उपमानोपमेयभावस्य "सन्निहिते बुद्धिरन्तरङ्गा" इतिन्यायात् ।

( ३५ ) एतदिति । स्पष्टम् । अर्थादिति । योग्यत्वादित्यर्थः । एकवाक्ये द्वयोरुपमानोपमेयभावपरिवृत्तेरसम्भवादित्याशयः । वाक्यद्वयमत्र शाब्दमार्थं वा, तेन "रामरावणमिथस्तुल्यौ" इत्यादौ नाव्याप्तिः तत्रापि रामो रावणतुल्य रावणो रामतुल्य इति वाक्यार्थभेदप्रतीतेः । 'वाक्यद्वये' इत्यनन्वयव्यच्छेदः । ननु वाक्यद्वये एव परिवृत्तिसम्भवे सति "मुखमिव चन्द्रः" इत्यत्रोपमेयोपमाया अभावात् कोऽलङ्कारः स्यादितिचेत् ? तत्र निन्दाभिव्यक्तौ प्रतीपालङ्कार इतिप्रदीपादौ स्पष्टम् ।

( ३६ ) कमलेवेति । अत्र वतेति हर्षे । "वत खेदेऽनुकम्पायां हर्षे सम्बोधनेऽद्भुते इत्यजयः । यस्य नृपतेः सततं निरन्तरम् कमलेव राजलक्ष्मीरिव मतिर्बुद्धिः, सा मतिरिव च सा कमला, राजलक्ष्मीर्यथा असामान्या बुद्धिरपि तथैव असामान्येत्यर्थः । तनुरिव विभा शरीरमिव कान्तिः सा विभेव च सा तनुः शरीरं यथा असामान्यम् कान्तिरपि तथैव असामान्येत्यर्थः । धरणीव धृतिः अधीनीकृता पृथ्वीव धैर्यम् , सा धृतिरिव च सा धरणी धरणी यथा असामान्या धर्यमतिः तथैवासामान्येत्यर्थः । विभाति शोभते । गीतिश्छन्दः तल्लक्षणं चोक्तं प्रागेव । अत्र प्रथमार्धे पूर्वस्मिन् वाक्ये कमलाया उपमानत्वं मतेश्चोपमेयत्वम् , उत्तरवाक्ये तु तस्याः कमलाया उपमेयत्वं मतेश्चोपमानत्वम्, द्वितीयपादे पूर्वस्मिन् वाक्ये तनोरुपमानत्वं विभाया उपमेयत्वम् उत्तरवाक्ये तु तस्यैव तनोरुपमेयत्वं विभायाश्चोपमानत्वमित्याद्युपमानोपमेयभावपरिवर्त्तनादुपमेयोपमानलक्षणसङ्गतिः ।

( ३७ ) अत्र कवयितुरेतादृशोपमानोपमेयभावपरिवृत्तावाशयं दर्शयति—अत्रेति । आदिपदेन तनुविभादीनां परिग्रहः ।

अत्रेदम्बोध्यम्—उपमेयोपमा चेयं तावत् उक्तधर्मा व्यक्तधर्मा च । तत्रोक्तधर्मा अनुगाम्यादिधर्मैरनेकधा । धर्मस्यानुगामित्वे "कमलेव मतिः" इत्युदाहरणम् , इह स्पृहणीयत्वं प्रचितत्वं विस्तृतत्वं च साधारणधर्माः । धर्मस्य विम्बप्रतिबिम्बभावापन्नत्वे यथा—

( ३८ ) सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते ॥ २७ ॥

यथा—

( ३९ ) 'अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमञ्जुलम् ।
स्मरामि वदनं तस्याश्चारु चञ्चललोचनम् ॥'

---

रमणीयस्तवकयुता विलसितवक्षोजयुगलशालिन्यः ।
लतिका इव ता वनिता वनिता इव रेजिरे लतिकाः ॥

अत्र रमणीयत्वविलसितत्वाभ्यां विशेषणाभ्यां युतत्वशालित्वाभ्यां विशेष्याभ्यां परस्परं वस्तुप्रतिवस्तुभावमापन्नाभ्यां संपुटितः स्तबकस्तनरूपः परस्परं बिम्बप्रतिबिम्बभावापन्नो धर्मः ।

व्यस्तधर्मा प्रकृताप्रकृतविषयः यथा—

गिरिरिव गजराजोऽयं गजराज इवोच्चकैर्विभाति गिरिः ।
निर्झर इव मदधारा मदधारेवास्य निर्झरः स्रवति ॥

इतोऽधिकं विशेषजिज्ञासुभी रसगङ्गाधरादावलोकनीयम् ।

( ३८ ) वाच्यसादृश्यघटितानलङ्कारान् प्रतिपाद्य सम्प्रति व्यङ्ग्यसादृश्यघटितानलङ्कारान् प्रतिपादयितुं तत्रान्यान्यालङ्कारवृत्तिव्यङ्ग्यसादृश्यापेक्षया स्मरणालङ्कारवृत्तिव्यङ्ग्यसादृश्यस्य स्फुटावगम्यमानत्वेन मुख्यत्वात्तमेव स्मरणालङ्कारं प्राथम्येन लक्षयति—सदृशेति । सदृशस्य समानगुणाकारादेर्वस्तुन अनुभवात् दर्शनादिप्रत्यक्षादुत्पद्यमाना, वस्तुनः पूर्वानुभूतपदार्थस्य स्मृतिः स्मरणं नामालङ्कार उच्यते आलङ्कारिकैरितिशेषः । अत्र विवृतिकाराः—सदृशानुभवस्य स्मृतिं प्रति संस्कारोद्बोधकत्वेन कारणत्वम्, संस्कारस्तु वस्त्वनुभवादुत्पन्नः । सदृशेति सम्बन्धिज्ञानादिजन्यस्मृतिवारणाय । तेन—

भवदभिमतवस्तून्याकिरन्त्याः समन्तात्
सरसिजदलतल्पं मर्मरं कल्पयन्त्याः ।
हतकरुण ! वयस्या जीवनोपायमस्याः
स्मरणमविरलं ते हन्त ! सम्पादयन्ति ॥

इत्यादौ सम्बन्धिज्ञानजन्यस्मरणस्य नालङ्कारत्वम् ॥ इत्याहुः ।

( ३९ ) अरविन्दमिति । खेलन्तौ समीपे मध्ये वा क्रीडन्तौ खञ्जनौ पक्षिविशेषौ ताभ्यां मञ्जुलं सुन्दरम्, इदमरविन्दं पद्मं वीक्ष्य अवलोक्य, अहम्, चञ्चले चपले लोचने यत्र तत्तथोक्तम्, चारुस्वभावसुन्दरम्, तस्याः कामिन्या वदनं मुखं स्मरामि ।

अत्र खेलत्खञ्जनश्चञ्चललोचनतुल्यः अरविन्दश्च स्वभावत एव वदनतुल्यमिति सर्वथैव वदनतुल्यस्य अरविन्दस्य दर्शनादुत्पद्यमानायास्तादृशवदनस्मृतेः स्मरणालङ्कारः । एतज्जन्मनि जन्मान्तरे वाऽनुभूतस्य संस्कारजन्यत्वेनेदं द्विधा-तत्राद्यमुदाहृतम् अन्त्योदाहरणन्तु—दिव्यानामपि कृतविस्मयं पुरस्तादम्भस्तः स्फुरदरविन्दचारुहस्ताम् ।
उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्तीमस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥

अत्र कस्याश्चिदरविन्दहस्ताया अम्भस उपायान्त्या वल्लभाया अवलोकनेन लक्ष्मीस्मरणपूर्वकं पूर्वकृतसमुद्रमन्थनसंस्कारोद्बोधात्स्मरणम् ।

( ४० ) 'मयि सकपटम्-' (२३६ पृ.) इत्यादौ च स्मृतेः सादृश्यानुभवं विनो- त्थापितत्वान्नायमलङ्कारः ।

( ४१ ) राघवानन्दमहापात्रास्तु-वैसादृश्यात्स्मृतिमपि स्मरणालङ्कारमिच्छ- न्ति । तत्रोदाहरणं तेषामेव यथा—

( ४२ ) 'शिरीषमृद्वी गिरिषु प्रपेदे यदा यदा दुःखशतानि सीता ।
तदा तदास्याः सदनेषु सौख्यलक्षाणि दध्यौ गलदस्रु रामः ॥'

( ४३ ) रूपकं रूपितारोपाद्वि ( पो वि ) षये निरपह्नवे ।

( ४० ) ननु—

सदृशज्ञानचिन्ताद्यैर्भ्रूसमुन्नमनादिकृत् । स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते ॥

इतिपूर्वोक्तस्वरूपा वस्तुस्मृतिरेव सामान्यतः स्मरणालङ्कारः प्रतिपाद्यताम्, किं स्मृतेः सदृशानुभवादितिहेतूपपादनेनात आह—मयीति । स्मृत्याख्यव्यभिचारि- भावस्योदाहरणे व्याख्यातमिदम् । उत्थापितत्वात् चिन्ताजन्यसंस्कारेणाविष्कृतत्वात् । अयं स्मरणनामा । एवञ्चास्माकं मते संस्कारोद्बोधनद्वारा सदृशवस्तुबोधोत्पन्ना स्मृति- रेव स्मरणालङ्कारः, न तु चिन्ताद्युत्पन्ना स्मृतिरपि । अत एव स्मृतेः सदृशानुभवादिति- हेतूपपादनमितिभावः ।

( ४१ ) एवं स्वमतमुपपाद्यानभिलषितं मतमुपपादयति—राघवानन्देति । वैसादृश्यात् विरुद्धानुभवात् जायमानमितिशेषः, । तेषामेव राघवानन्दमहापात्राणामेव ।

( ४२ ) शिरीषमृद्वीति । शिरीषमृद्वी शिरीषपुष्पवत् कोमलशरीरा सीता, गिरिषु, पर्वतप्रदेशेषु यदा यदा यस्मिन् यस्मिन् समये दुःखशतानि अनेकशःक्लेशानि प्रपेदे प्राप्त- वती तदा तदा रामः सदनेषु राजधानीस्थभवनेषु अस्याः सीतायाः सौख्यलक्षाणि सर्वव्यापारेषु अगणितानन्दानि गलन्ति निःसरन्ति अस्रूणि नेत्रबिन्दवो यत्र कर्मणि तद्यथास्यात्तथा दध्यौ स्मृतवान् ।

अत्र विसदृशानां दुःखशतानां प्रतीतेः तत्प्रातिकूल्यसम्बन्धेन सम्बन्धिनामसंख्यसु- खानां स्मृतेर्वैचित्र्योपलम्भाच्च स्मरणालङ्कार इति राघवानन्दमहापात्राणामभिप्रायः ।

( ४३ ) रूपकालङ्कारं निरूपयति—रूपकमिति । प्रकृतगोपनमपह्नवः, निरस्त अपह्नवो यस्य तथोक्ते, विषये उपमानेन साधर्म्यमभिन्नतया प्रतिपाद्यमानस्यापि यस्योपमेयस्य प्रकृतत्वे गोपनाभावादनपह्नवस्तादृशे उपमेये सतीत्यर्थः, रूपितस्याभिन्नतया कथितस्य उपमानस्यारोप आरोपणम्, यद्वा रूपितस्य निरूपितस्य रूपकघटकत्वेन निश्चितस्य उप- मानाभेदस्य उपमानपदार्थतादात्म्यस्येतियावत्, आरोपः सादृश्यातिशयमहिम्ना पूर्व- प्रतिपादितया सारोपाख्यलक्षणया आरोपणं रूपकम्, रूपयत्युपमानोपमेययोरभेदमध्य- वसाययति कल्पयितुमपि वास्तवमिवावगमयतीति तादृशं तन्नामालङ्कारः । यथावस्थिते उपमेये उपमानस्याभेदारोपो रूपकालङ्कार इति परमार्थः । रूपकमिति कारकमिति- वन्नित्यनपुंसकलिङ्गः शब्द इत्यवधेयम् ।

अत्रेदमनुसन्धेयम्—"मुखचन्द्रः प्रकाशते" इत्यादौ "कान्तःप्रियतमाया मुखचन्द्रं चुम्बति" इत्यादौ च उपमारूपकं वा रूपकमुपमा वेतिमीमांसायाम् "मुखचन्द्रः" इत्यादौ समासस्थले रूपके मुखमेव चन्द्र इति विग्रहे "मयूरव्यंसकादयश्च" इत्यनेन

( ४४ ) 'रूपित—' इति परिणामाद् व्यवच्छेदः।
( ४५ ) एतच्च तत्प्रस्तावे विवेचयिष्यामः।
( ४६ ) निरपह्नवे' इत्यपह्नुतिव्यवच्छेदार्थम्।

रूपककर्मधारयसमासः। उपमायान्तु 'मुखं चन्द्र इवे''तिविग्रहे "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इत्यनेन उपमितकर्मधारयसमासः। तत्र रूपके आरोप्यमाणत्वेन विशेष्यतया उपमानपदार्थं एवोपमेयमन्तर्हृत्य क्रियायां सम्बध्नाति। उपमायान्तु आरोपभावेन वर्णनामुखोद्देश्यत्वेन च विशेष्यतया उपमेयपदार्थं एवोपमानमन्तर्हृत्य क्रियया सम्बध्यते। एवञ्च "मुखचन्द्र" इत्यादौ प्रकाशस्य दीप्तिरूपतया चन्द्रे सम्भवात् मुखे चासम्भवात् प्रकाशत इति पदम् उपमाया बाधकं रूपकस्य च साधकमिति रूपकमेव। "कान्तः प्रियतमायाः" इत्यादौ चुम्बनस्य वदनसंयोगरूपतया मुखे सम्भवात् चुम्बतीतिपदं रूपकस्य बाधकमुपमायाः साधकमित्युपमैव। एवं "विकसितं मुखपद्मम्" इत्यादौ विकसितत्वरूपसाधारणधर्मप्रयोगेण "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इत्यनेनोपमितसमासासंभवात् विकसितमितिपदमुपमाया बाधकमेवेत्यवशिष्टत्वात् रूपकमेव। "रमणीयं मुखपद्मम्" इत्यादौ तु मुखस्य पद्मस्य च रमणीयत्वसम्भवेन उभयोरपि साधकबाधकाभावादुपमारूपकयोः सन्देहसङ्कर एव। व्यक्तीभविष्यति चैतत्किञ्चिदुपरिष्टाद् वृत्तावपि। निगीर्याध्यवसानरूपायामतिशयोक्तौ उपमेयस्य नोपमेयगतधर्मवत्तया उपस्थितिरिति ततो भेदः। परिणामापह्नुत्योर्भेदो वृत्तावेव। एतञ्च गौणसारोपा लक्षणासम्भवस्थले रूपकम्, गौणसाध्यवसाना लक्षणास्थले त्वतिशयोक्तिरितिफलितम्। अत एव द्वितीयपरिच्छेदे "विषयस्यानिगीर्णस्य" इतिकारिकावृत्तौ "इयमेव रूपालङ्कारस्य बीजम्" इत्यभिहितम्। रूपके लक्षणा नेति मतं तु प्रागेव तत्रैव खण्डितमेव, एवं निदर्शनायामुपमेयस्य सत्त्वेऽपि आरोपस्यारूपितत्वात्ततो भेदः। भ्रान्तिमति भ्रान्तेरुत्थानावसरे एव विषयापह्नव इति भेदः। उत्प्रेक्षायामपि नारोपः, किन्तु अभेदेन तथासम्भावनमितिव्यवच्छेदः। लोष्टः पाषाणः" इत्यभेदे नालङ्कारत्वप्रसङ्गः वैचित्र्याभावात्।

( ४४ ) रूपितपदव्यवच्छेद्यं दर्शयति—रूपितेति। परिणामात् परिणामनामालङ्कारात् व्यवच्छेदो रूपकस्य व्यावृत्तिः। तथा च उपमेये आरोप्यमाणस्य उमापनाभेदस्य प्रकृतोपयोगित्वे परिणामः, उपमेये उपमानाभेदमात्रस्यारोप एव रूपकं न तु प्रकृतोपयोगित्वमपीत्यनयोर्भेद इति सिध्यति। एतच्च वृत्तावपि परस्तात् स्फुटीभविष्यति।

( ४५ ) ननु रूपकपरिणामयोर्भेदः स्पष्टं विवृत्या प्रतिपाद्यतां येन परिणामाद्व्यवच्छेदावबोधोऽनायासेन सेत्स्यतीत्यत आह—एतच्चेति। रूपकपरिणामयोर्लक्षणद्वयमित्यर्थः। तत्प्रस्तावे परिणामप्रकरणे। तथाच सम्प्रत्यपि परिणामलक्षणस्यानभिगततया तद्भेदप्रदर्शनमसम्भवमेवेति तत्प्रस्ताव एवानयोर्भेदं प्रतिपादयिष्यत इत्यभिप्रायः।

( ४६ ) "निरपह्नव" इतिपदस्य व्यावृत्तिमुपपादयति—निरपह्नव इति रूपकविशेषणमितिशेषः, अपह्नुतिस्तन्नामा वक्ष्यमाणोऽलङ्कारस्तद्व्यवच्छेदार्थं तद्भेदाय कारिकायामुक्तमितिशेषः। तथा च उपमेयागोपनेन उपमेये उपमानस्याभेदारोपो रूपकम्, उपमेयगोपनेन तु उपमेये उपमानस्याभेदारोपोऽपह्नुतिरिति स्फुटमनयोरपि भेदः।

( ४७ ) तत्परम्परितं साङ्गं निरङ्गमिति च त्रिधा ॥ २८ ॥

( ४८ ) तद्रूपकम् ।

( ४९ ) तत्र—

( ५० ) यत्र कस्यचिदारोपः परारोपणकारणम् ।
तत्परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम् ॥ २९ ॥
प्रत्येकं केवलं मालारूपं चेति चतुर्विधम् ।

( ५१ ) तत्र श्लिष्टशब्दनिबन्धनं केवलपरम्परितं यथा—

( ५२ ) 'आहवे जगदुद्दण्ड ! राजमण्डलराहवे ।
श्रीनृसिंहमहीपाल ! स्वस्त्यस्तु तव बाहवे ॥'

---

( ४७ ) अस्य प्रथमं भेदत्रयमुपपादयति—तदिति । तद् रूपकसामान्यम् । परम्परा कार्यकारणभावानुपूर्वी सञ्जाता अस्येति परम्परितम्, तारकादित्वादितच् । अङ्गैः समप्रोपपादकैः सहेति साङ्गम्, निरङ्गम् एकेनाप्युपपादकेन रहितम् । त्रिधेति । अन्यभेदानामेतदन्तःपातित्वादिति भावः ।

( ४८ ) तत्पदं विवृणोति—तदिति । स्पष्टम् ।

( ४९ ) तत्रेति । तेषु त्रिप्रकारेषु रूपकेषु मध्ये इत्यर्थः ।

( ५० ) परम्परितं निरूपयन् तद्भेदानाह—यत्रेति । यत्र रूपके गृह्यमाणे कस्यचित् कस्यचिदेकस्य आरोपः, परमन्यद् यदारोपणं तस्य कारणं निमित्तभूतं भवति, तत्तत्र परम्परितं तद्वाच्यं रूपकं बोध्यमिति शेषः । तथा च रूपकत्वे सति आरोपान्तरनिमित्तभूत आरोपः परम्परितमिति लक्षणं फलितम् । तत्परम्परितस्य द्वैविध्यं प्रथमं दर्शयति—श्लिष्टेति । श्लिष्टं श्लेषानुगृहीतम्, अश्लिष्टं श्लेषाननुगृहीतम्, निबध्यते उपपाद्यते अनेनेति निबन्धनमुपपादकम्, तथा च श्लिष्टाश्लिष्टौ शब्दौ निबन्धने उपपादकौ यस्य तत्तादृशम् । एवञ्च श्लिष्टशब्दनिबन्धनम्, अश्लिष्टशब्दनिबन्धनञ्चेति प्रथमं द्विविधम् । तयोश्च प्रत्येकम् एकैकमेव केवलमेकमात्रभूतम्, मालारूपमनेकभूतञ्चेति सङ्कलनेन चतुर्विधं चतुष्प्रकारकं परम्परितरूपकमित्यर्थः ।

( ५१ ) क्रमादुदाहर्तुंकाम आह—तत्रेति । तत्र तेषु चतुर्षु भेदेषु मध्ये इत्यर्थः ।

( ५२ ) आहव इति । राजस्तुतिरियम् । हे श्रीनृसिंहमहीपाल ! जगति उत्कृष्टं दण्डं सैन्यं यस्य तत्सम्बुद्धौ हे जगदुद्दण्ड ! "दण्डो यमे मानभेदे लगुडे दमसैन्ययोः" इति विश्वः, "जगदुद्दण्डराजमण्डलराहवे" इति समस्तपाठस्तु साधीयान्, तथासति आहवे सङ्ग्रामे "आहवः सङ्गरे यज्ञे" इति हैमः, जगति संसारे ये उद्दण्डा निरङ्कुशाः कुलागममर्यादातिक्रमिणः स्वपराक्रमगर्वेणान्यं तुच्छं मन्यमाना ये राजानस्तेषां मण्डलं समूह एव राजमण्डलं चन्द्रबिम्बं तस्य राहवे तत्तिरस्कारकत्वाद्विमर्दनाच्च राहुस्वरूपभूताय, "राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात्" इति मेदिनी "स्यान्मण्डलं द्वादशराजके च बिम्बे च कदम्बके च" इति विश्वः, तव बाहवे हस्ताय स्वस्ति कल्याणमस्तु

अत्र "हवे हवे" इति यमकस्य पादत्रयगतत्वात् "न यमकं कविन्निप्रपतत्" इति

( ५३ ) अत्र राजमण्डलं नृपसमूह एव चन्द्रबिम्बमित्यारोपो राजबाहौ राहुत्वारोपे निमित्तम् ।

( ५४ ) मालारूपं यथा—

( ५५ ) 'पद्मोदयदिनाधीशः सदागतिसमीरणः ।
भूभृदावलिदम्भोलिरेक एव भवान्भुवि ॥'

( ५६ ) अत्र पद्माया उदय एव पद्मानामुदयः, सतामागतिरेव सदागमनम्, भूभृतो राजान एव पर्वता इत्याद्यारोपो राज्ञः सूर्यत्वाद्यारोपनिमित्तम् ।

---

नियमविरोधानभ्युपगमेन "सहसालिजनैः स्निग्धैः" इत्यादिवत्प्रयुक्तत्वं दोषोऽपि बोध्यः।

( ५३ ) उदाहरणे लक्षणं संयोजयितुमाह—अत्रेति । "चन्द्रबिम्ब"मित्यारोपः "चन्द्रबिम्ब" मित्यभेदेन प्रतिपादनम् । राज्ञो वर्णनीयमहिम्नो नृपतेर्बाहुस्तस्य राजबाहोः । निमित्तं कारणम् । तथा च राजसमूहे चन्द्रबिम्बत्वारोपं विना वर्णनीयराजबाहौ राहुत्वारोपः साम्याभावान्न सम्भवितुमर्हतीति पूर्वारोपः उत्तरारोपं प्रति निमित्तम्, राजमण्डलेतिश्लिष्टशब्दोपपाद्यश्च पूर्वारोपः कार्यकारणभावश्चैकमात्र इत्यतः श्लिष्टशब्दनिबन्धनं केवलपरम्परितमित्यभिप्रायः ।

( ५४ ) मालेति । श्लिष्टशब्दनिबन्धनमिति परम्परितमितिचात्राप्यनुषज्यते ।

( ५५ ) पद्मोदयेति । कस्यचिद्राज्ञः स्तुतिपरमिदम् । हेराजन्! भुवि भवान् एक एव, पद्मायाः लक्ष्म्याः सम्पत्तेरितियावत् उदय उन्नतिरेव पद्मानां कमलानामुदयो विकासस्तत्र दिनाधीशः अहर्पतिः सूर्य इत्यर्थः । एको दिनपतिरेव यथा पद्मविकासं सम्पादयति, एको भवान् तथैव भूतलेऽसाधारणसम्पत्तिवृद्धिं सम्पादयतीतिभावः । "लक्ष्मीः पद्मालया पद्मा" "वा पुंसि पद्मम्" इति चामरः । सतां साधुजनानाम् आगतिरागमनमेव सदा सर्वदा गतिर्गमनं तत्र समीरणो वायुः "समीरणः स्यात्पवने पथिके च फणिज्जके" इति मेदिनी । 'श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः" इत्यमरप्रामाण्यात् वायुर्यथा सर्वदा गमनं विधत्ते भवान् तथैव दानसत्काराभ्यां साधुजनानयनं करोतीत्यभिप्रायः । तथा भूभृता अनुज्झितमदाः प्रतिपक्षिणो नृपतय एव भूभृतः पर्वतास्तेषामावली पंक्ती दम्भोलिर्वज्रः, यथा देवराजस्य वज्रः पर्वतानुच्छेदितवान् तथा भवानपि प्रतिपक्षिणो नृपतीन् उच्छेदितवानित्याशयः । "भूभृन्नरेन्द्रे शैले च" इति विश्वः । तथा च भवान् लक्ष्मीसञ्चयने पद्मविकासने सूर्य इव, सज्जनानां दानसत्काराभ्यां सङ्ग्रहणे सदा सञ्चरणशीलो वायुरिव, पर्वतानां भेदने वज्रमिव उन्मत्तानां विपक्षिणां समूलोन्मूलने भवानेव भुवनतले विदित इति समुदितोऽर्थः ।

( ५६ ) उक्तार्थमेव दर्शयति—अत्रेति । आदिशब्दस्य चत्वारोऽर्थाः । उक्तञ्च—

"सामीप्येऽथ व्यवस्थायां प्रकारेऽवयवे तथा ।
चतुर्ष्वर्थेषु मेधावी आदिशब्दं तु लक्षयेत् ॥"

एवञ्चात्र प्रथमादिशब्दः प्रकारार्थे । द्वितीयादिशब्दस्तु समुदायावयवार्थे । तेन समीरणत्वदम्भोलित्वयोः परिग्रहः । अत्र पूर्वपूर्वारोपः उत्तरोत्तरारोपं प्रति कारणमिति परम्परितत्वम्, पद्मोदय-सदागतिभूभृच्छब्दाः श्लिष्टा इति श्लिष्टशब्दनिबन्धनत्वम्, कार्यकारणभावाश्च त्रयाणां पद्मोदयादीनामिति मालारूपत्वञ्च बोध्यम् ।

( ५७ ) अश्लिष्टशब्दनिबन्धनं केवलं यथा—

( ५८ ) 'पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः।
त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः ॥'

( ५९ ) अत्र त्रैलोक्यस्य मण्डपत्वारोपो हरिबाहूनां स्तम्भत्वारोपे निमित्तम्।

( ६० ) मालारूपं यथा—

( ६१ ) 'मनोजराजस्य सितातपत्रं श्रीखण्डचित्रं हरिदङ्गनायाः।
विराजते व्योमसरःसरोजं कर्पूरपूरप्रभमिन्दुबिम्बम् ॥'

( ६२ ) अत्र मनोजादे राजत्वाद्यारोपश्चन्द्रबिम्बस्य सितातपत्रत्वाद्यारोपे निमित्तम्।

( ६३ ) 'तत्र च राजभुजादीनां राहुत्वाद्यारोपो राजमण्डलादीनां चन्द्रमण्डलत्वाद्यारोपे निमित्तम्' इति केचित्।

---

( ५७ ) एवं श्लेषनिबन्धनं परम्परितमुदाहृत्याश्लेषनिबन्धनमप्युदाहर्तुमुपक्रमते—अश्लिष्टेति।

( ५८ ) पान्त्विति। जलदश्यामाः मेघवत् कृष्णवर्णाः, शार्ङ्गज्यायाः शृङ्गरचितधनुषो गुणस्य आघातेन आहननेन कर्कशाः कठिनाः, तथा त्रैलोक्यं लोकत्रयमेव मण्डप भवनविशेषस्तस्य स्तम्भा अजस्त्र धारणात् तत्स्वरूपभूताः, चत्वारो हरेर्बाहवो हस्ताः, वो युष्मान् पान्तु रक्षन्तु।

( ५९ ) अत्र परम्परितत्वमुपपादयन् रूपकस्य केवलत्वमुपपादयितुमाह—अत्रेति। निमित्तमिति। तेनात्रत्यरूपकस्य परम्परितत्वम्, कोऽपि शब्दो न श्लिष्ट इत्यश्लिष्टशब्दनिबन्धनत्वम्, तथा कार्यकारणभाव एकमात्र इति केवलत्वञ्चेत्याशयः।

( ६० ) तथाविधमेव मालारूपमुदाहर्तुमाह—मालेति।
अत्रापि अश्लिष्टशब्दनिबन्धनमिति परम्परितमिति च सम्बध्यते।

( ६१ ) मनोजराजस्येति। मनोजः कामदेव एव राजा सर्वत्राप्रतिहतप्रभावाद्भूपतिस्तस्य तथोक्तस्य, सितं श्वेतं च तदातपत्रं छत्रमिति सितातपत्रम्, हरित् स्वाधिष्ठितदिगेव अङ्गना लिङ्गसादृश्यात् पत्नी तस्या तथोक्तायाः,श्रीखण्डं चन्दनं तस्य चित्रं तिलकं तत्स्वरूपभूतम्, श्वेतवर्तुलत्वादितिभावः, तथा व्योम आकाशमेव सरो निर्मलत्वात् तडागस्तस्य सरोजं कमलम् आनन्ददसुन्दरवर्तुलत्वादित्यभिप्रायः; कर्पूरस्य पूरप्रभं स्तूपसदृशम्, इन्दुबिम्ब चन्द्रमण्डलं विराजते। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः। तल्लक्षणन्तु प्रागेव ( १९९ पृ० ) प्रतिपादितम्।

( ६२ ) लक्ष्ये लक्षणं सङ्गमयितुमाह—अत्रेति। प्रथमादिशब्देन हरिद्व्योम्नोः, द्वितीयादिशब्देन अङ्गनात्वसरस्त्वयोः, तृतीयादिशब्देन च श्रीखण्डचित्रत्वसरोजत्वयोः परिग्रहः। निमित्तमिति। तेनात्रत्यरूपकस्यापि परम्परितत्वम्, मनोजादीनां श्लिष्टत्वाभावादश्लिष्टशब्दनिबन्धनत्वम्, कार्यकारणभावाश्च त्रयाणामिति मालारूपत्वञ्च बोध्यमितिभावः।

( ६३ ) "आहवे" इत्यादिपरम्परितप्रस्तावे केषाञ्चित् रूपकादीनां मते आरोपणेषु

( ६४ ) अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत् ॥ ३० ॥
समस्तवस्तुविषयमेकदेशविवर्ति च ।

तत्र—

( ६५ ) आरोप्याणामशेषाणां शाब्दत्वे प्रथमं मतम् ॥ ३१ ॥

( ६६ ) प्रथमं समस्तवस्तुविषयम् । यथा—

---

स्वोपपादितकार्यकारणभाववैपरीत्यं दर्शयति–तत्र चेति । तेषु "आहवे जगदुद्दण्ड" इत्याद्युदाहृतेषु समग्रपद्येषु चेत्यर्थः । अत्रापि राजभुजादीत्यत्रादिशब्देन "पद्मोदये दिनाधीशः" इत्यादिषु भजादीनाम्, राहुत्वाद्यारोप इत्यत्रादिशब्देन दिनाधीशत्वादीनाम्, राजमण्डलादीनामित्यत्रादिशब्देन पद्मायाः उदयादीनाम्, चन्द्रमण्डलत्वाद्यारोप इत्यत्रादिशब्देन पद्मानामुदयत्वादीनां परिग्रहः केचिदिति । रूपककाद्य इत्यर्थः। उक्तञ्च अलङ्कारसर्वस्वे यथा—'त्वमेव हंस इत्यारोपणपूर्वको मानसमेव मानसमित्याद्यारोपः" इति । तत्र समुद्रबन्धव्याख्याने 'ज्ञप्त्यपेक्षया हंसत्वारोपं मानसत्वारोपे निमित्तं ब्रुवतो मङ्खुकस्य उत्पत्त्यपेक्षया मानसत्वाद्यारोपं हंसत्वारोपे निमित्तमिति वदतः काव्यप्रकाशकारस्य च न विरोधः । एतन्मतास्वीकारेऽस्वरसतावीजानि तु—कारणीभूतारोपाणां कारणतयैव पूर्वबोधौचित्येऽपि पाठक्रमेणान्यबोधविषयीकरणम्, अन्यबोधसमर्थानाञ्च कार्यभूतारोपाणां पूर्वबोधविषयीकरणम्, राजमण्डलादिषु च एकानुपूर्वीकशब्दवाच्यत्वरूपसाम्यस्य विद्यमानत्वात् सुसङ्गम एव, राजसमूहादौ चन्द्रबिम्बत्वाद्यारोपः साम्याभावाद्दुःसङ्गमं राजभुजादौ राहुत्वाद्यारोपं सङ्गमयितुमर्हति न त्वेतद्वैपरीत्यमपि कार्यकारणयोः कारणस्यैव सुसङ्गमतया सिद्धत्वावश्यकत्वादिति ।

( ६४ ) द्विप्रभेदसहितं साङ्गरूपकस्वरूपमुपपादयति—अङ्गिन इति । साङ्गस्य आकाङ्क्षिताङ्गसहितस्य अङ्गिनो मुख्यस्य उपमानस्य यदि रूपणं तथैव साङ्गे उपमेये अभेदारोपणं भवेत्, तदा तदेव साङ्गं रूपकम्, साङ्गोपमेये साङ्गोपमानस्याभेदारोपः साङ्गसंज्ञकं रूपकमित्यर्थः । साङ्गत्वमेकैकरूपसमुदायः एकस्मिन् रूपके द्वितीयस्याङ्गत्वेनारोपस्याव-स्थानात् । सावयवमित्यस्यैव संज्ञान्तरं साङ्गमिति। तच्च द्विविधम्–एकं समस्तवस्तुविषयम्, अपरञ्च एकदेशविवर्त्तीति । तत्र समस्तान्येव सकलान्येव (अङ्गाङ्गि)समुदाय एव वस्तूनि आरोप्यमाणानि विषयाः शाब्दत्वादाश्रया यस्य तत् समस्तवस्तुविषयम्, एकदेशे ( रूपकसमुदायस्यावयविनः ) अवयवे कस्मिंश्चिद्रूपके विशेषेण शब्दमुखेन स्फुटतया वर्त्तनात् प्रकाशनादित्यर्थः । यद्वा एकस्मिन् देशे एकस्मिन्नंशे विवर्तनात् विशेषेण वर्त्तनात् अर्थात् आरोप्यमाणस्य सर्वत्र वाच्यत्वं एकांशे प्रतीयमानस्वरूपस्य विशेषस्य सत्त्वात् एकदेशविवर्त्ति इत्यन्वर्थं नाम भवति ।

( ६५ ) समस्तवस्तुविषयं निरूपयति—आरोप्याणामिति । अशेषाणां समग्राणामेव आरोप्यमाणानां भेदाभावेन निरूपणीयानाम् उपमेयानामुपमानानाञ्च शाब्दत्वे शब्दप्रतिपाद्यत्वे न पुनः कस्यचिदर्थ्यत्वे इत्यभिप्रायः, प्रथमं समस्तवस्तुविषयं नाम रूपकं मतम् । तदुक्तम्—"समस्तवस्तुविषयं श्रौता आरोपिता यदा" इति ।

( ६६ ) कारिकोक्तं प्रथमपदार्थं विवृणोति—प्रथममिति ।

( ६७ ) 'रावणावग्रहक्लान्तमिति वागमृतेन सा ।
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे ॥'

( ६८ ) अत्र कृष्णस्य मेघत्वारोपे वागादीनाममृतत्वादिकमारोपितम् ।

( ६९ ) यत्र कस्यचिदार्थत्वमेकदेशविवर्ति तत् ।

( ७० ) कस्यचिदारोप्यमाणस्य । यथा—

( ७१ ) 'लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम् ।
लोकलोचनरोलम्बकदम्बैः कैर्न पीयते ? ॥'

---

( ६७ ) रावणेति । रघुवंशे दशमसर्गे पद्यमिदम् । सः कृष्णो विष्णुरेव मेघो वारिवाहः श्यामरूपत्वाद्दयावर्षित्वाच्चेतिभावः, इति एवं पूर्वोक्तप्रकारा वागुपदेशवाक्यमेव अमृतम् आर्द्रविधायित्वात्तदभिन्नं जलं तेन, रावणो लङ्काधिपतिरेव अवग्रहो रूक्षत्वात् वृष्टिप्रतिबन्धको ग्रहः तेन क्लान्तं म्लानं मलिनच्छायमितियावत् तत्ताहशम्, "वृष्टिवर्षं तद्विघातेऽवग्रहावग्रहौ समौ" इत्यमरः, मरुत् देवगण एव शस्यं श्रीह्यादिकं तत्ताहशम्, अभिवृष्य अभिषिच्य प्रीणयित्वा वा तिरोदधे अन्तर्दधे ।

( ६८ ) लक्षणं संयोजयितुमाह—अत्रेति । मेघत्वारोपे विधेये सत्येव वागादीनां तदङ्गानामित्यर्थः । अमृतत्वादिकमारोपितमिति । अतोऽस्य साङ्गत्वमितिभावः । इदमत्रानुसन्धेयम्—वर्षणक्रियायामङ्गाङ्गिभावपदार्था यावन्त एव अपेक्षिताः, यथार्थं तावन्त एवात्र सन्ति । तथा हि यथा-कर्त्ता करणं कर्म चेति, अत्र च स्वातन्त्र्येण कर्त्तृत्वात् उपमेयभूतः कृष्णः उपमानभूतो मेघश्चाङ्गी, तदुपपाद्यत्वात् तत्सम्पाद्यवर्षणविधायकत्वाच्च वागमृतादीनि तु अङ्गानि तेषाञ्च समेषामेव शब्दोपात्तत्वमिति । अपि च कारिकायां सूत्रस्वरूपत्वादत्र 'आरोप्यमाणानाम्' इतिबहुवचनमविवक्षितम् "सूत्रे लिङ्गं संख्या कालश्चातन्त्राणि" इति न्यायात्, तेन—

"दन्तांशुके शराळीभिरतस्या भाति मुखाम्बुजम्"

इत्यत्र केवलाङ्गालिङ्गितपरूपणेऽपि साङ्गरूपकमेव ।

( ६९ ) एकदेशविवर्त्तिसाङ्गरूपकं निरूपयति—यत्रेति । यत्र रूपणे कस्यचित् आरोप्यमाणस्य उपमानभेदस्य आर्थत्ववशलभ्यत्वम् । कस्यचिदित्यनेनान्येषां शाब्दत्वमेवावश्यकत्वमितिद्योतितम् । तद्रूपणम् एकदेशविवर्त्तिसंज्ञकं साङ्गं रूपकं मतमित्यनुषञ्जनीयम् । एतच्च स्पष्टीकृतं पण्डितराजेन—यत्र क्वचिदवयवे शब्दोपात्तमारोप्यमाणं क्वचिच्चार्थसामर्थ्याक्षिप्तं तदेकदेशे शब्दानुपात्तविषयिकेऽवयवरूपके विवर्त्तनात् स्वस्वरूपगोपनेनान्यथात्वेन वर्तनादेकदेशविवर्त्ति इति ।

( ७० ) सन्देहनिराकरणाय कस्यचिदितिपदं विवृणोति—कस्यचिदिति ।

( ७१ ) उदाहरति—लावण्यमिति । कैः, लोकानां मनुष्याणां लोचनानि नेत्राण्येव रोलम्बा भ्रमरास्तेषां कदम्बैः पुञ्जैः "इन्दिन्दिरस्तु रोलम्बश्चञ्चरीको मधुव्रतः" इति हारावली, लावण्यान्येव मधूनि मकरन्दास्तैः पूर्णम्, हास्येन कालप्रभावेण च प्रफुल्लम्, "विकासी तु विकस्वरः" इत्यमरः, अस्या रमण्याः आस्यं मुखं न पीयते सादरं नावलोक्यते अपि तु सर्वैरेव पीयत इत्यर्थः, अत्यन्तमनोहरत्वादित्याशयः ।

( ७२ ) अत्र लावण्यादौ मधुत्वाद्यारोपः शाब्दः, मुखस्य पद्मत्वारोप आर्थः।

( ७३ ) न चेयमेकदेशविवर्तिन्युपमा विकस्वरत्वधर्मस्यारोप्यमाणे पद्मे मुख्यतया वर्तमानात् मुखे चोपचरितत्वात्।

( ७४ ) निरङ्गं केवलस्यैव रूपणं तदपि द्विधा ॥ ३२ ॥

मालाकेवलरूपत्वात्—

( ७२ ) शाब्दमार्थं चारोपं विभज्योपपादयति—अत्रेति। लावण्यादावित्यत्रादिशब्देन लोचनस्य मधुत्वाद्यारोप इत्यत्रादिशब्देन च रोलम्बत्वस्य परिग्रहः। आर्थो विकस्वरपदप्रयोगतात्पर्यगम्यः। साङ्गत्वञ्चात्रापि प्राग्वदेवोपपादनीयम्।

( ७३ ) ननु "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति सूत्रेण लावण्यानि मधूनिव लोकलोचनानि रोलम्बा इव इत्युपमितसमासविधानेन तत्र तत्र सादृश्यस्य वाच्यत्वात् मुखे पद्मसादृश्यस्य च प्रतीयमानत्वादेकदेशविवर्त्तिन्युपमैवाङ्गीक्रियतामलमेकदेशविवर्त्तिरूपकाङ्गीकारेणात आह—न चेयमिति।

उत्तरयति—विकस्वरत्वेत्यादिना। आरोप्यमाणे उपमानत्वेनारोपविषयीभूते। मुख्यतया अभिधावाच्यतया। उपचरितत्वात् लक्षणया आरोपितत्वात्। यद्वा मुख्यतया साक्षात्सम्बन्धेन मुखे उपचरितत्वादिति पद्मतुल्ये मुखे स्वाश्रयसादृश्यसम्बन्धेनेत्येवं परम्परासम्बन्धरूपत्वादित्यर्थः।

अत्रायमभिप्रायः—विकस्वरत्वं तावत् प्रफुल्लत्वम्, तच्च प्रकाशसंकोचस्वभावे पद्म एव मुख्यतया भवितुं शक्नोति, न पुनः सर्वदैव एकरूपे मुखे। तथासति मुख्यार्थत्वस्य सम्भवे लक्षणाया अनुपयोगात् "मुखचन्द्रः प्रकाशते" इत्यादिवदेवात्र विकस्वरमितिपदमेवोपमाया बाधकं रूपकस्य च साधकमिति एकदेशविवर्त्ति रूपकमेवेति। "नेत्रैरिवोत्पलैः पद्मैः" इत्यादौ तु इवादिवाचकस्य विद्यमानत्वेनारोपाभावादेव नैकदेशविवर्त्ति रूपकमित्यवधेयम्। यदि च "लावण्यमधुभिः" इत्युदाहरणे "विकस्वरम्" इत्यत्र "मनोहरम्" इति पाठपरिवर्त्तनं विधीयते चेत्तदा साधकबाधकप्रमाणाभावात् "मुखचन्द्रं पश्यति" इत्यादिवदेव एकदेशविवर्त्तिन्युपमारूपकयोः सन्देहसङ्कर एवेति विभावनीयम्।

अपि च सादृश्यस्यांशतोऽभिधेयत्वे अंशतश्च प्रतीयमानत्वे एकदेशविवर्त्तिन्युपमा, सादृश्यस्य सर्वत्रैव प्रतीयमानत्वे तु एकदेशविवर्त्तिरूपकमित्यनयोर्भेदः। उक्तं च ग्रन्थकृतैव पूर्वमुपमालक्षणस्थवाच्यपदव्यावृत्तिप्रदर्शनावसरे "रूपकादिषु साम्यस्य व्यङ्ग्यत्वम्" इति।

केचित्तु—"रूपजलाचलनयना नाभ्यावर्त्ता कचावलिभुजङ्गा।
मज्जन्ति यत्र सन्तः सेयं तरुणी तरङ्गिणी विषमा॥"

इत्युदाहरन्ति। अत्र हि रूपादौ जलादेरारोपस्य शाब्दत्वेऽपि नयने मीनत्वारोपस्यार्थत्वम्।

( ७४ ) एवं साङ्गं सप्रभेदं रूपकमुपपाद्य निरङ्गं सप्रभेदमुपपादयति—निरङ्गमिति। केवलस्यैव अङ्गिन एव न तु साङ्गस्य उपमानस्य रूपणं निरङ्गं उपमेये अभेदारोपणं निरङ्गं निर्गताङ्गानि यत्र तत्तथोक्तम्। एवञ्च निरङ्गे उपमेये निरङ्गस्यैवोपमानस्याभे-

( ७५ ) तत्र मालारूपं निरङ्गं यथा—

( ७६ ) 'निर्माणकौशलं धातुश्चन्द्रिका लोलचक्षुषाम् ।
क्रीडागृहमनङ्गस्य सेयमिन्दीवरेक्षणा ॥'

( ७७ ) केवलं यथा—

( ७८ ) 'दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि ! नात्र दूये ।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै-
र्यद्भिद्यते मृदु पदं ननु सा व्यथा मे ॥'

दारोपो निरङ्गमित्यन्वर्थं नाम रूपकमित्यर्थः । तदपि निरङ्गरूपकमपि मालाकेवलरूपत्वादित्यस्य "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते" इतिन्यायात् मालारूपत्वादनेकारोपयुक्तत्वात् केवलरूपत्वादेकमात्रारोपयुक्तत्वाच्चेत्यर्थः । द्विधाभिद्यमानं सद्द्विप्रकारकमित्यर्थः ।

( ७५ ) यथाक्रममुदाहर्तुमाह—तत्रेति । तत्र तयोर्मालाकेवलरूपयोर्निरङ्गयो रूपकयोर्मध्य इत्यर्थः ।

( ७६ ) निर्माणेति । सा पूर्वावलोकिता इयं प्रत्यक्षा इन्दीवरं नीलोत्पलं तद्वत् ईक्षणे लोचने यस्याः सा तादृशी, धातुः सृष्टिकर्तुर्ब्रह्मणः निर्माणकौशलं वराङ्गनासृष्टेश्चरमनैपुण्यरूपा । लोकचक्षुषां मनुष्यलोचनानां चन्द्रिका कौमुदी आह्लादकत्वेन तथाभूतेतिभावः तथा अनङ्गस्य मदनस्य क्रीडागृहं विहारभवनरूपा केवलावलोकनेनैवात्यन्तकामोद्दीपिकेतिभावः ।

अत्रैकस्यामेव इन्दीवरेक्षणायामेव न तु तदङ्गे उपमेये निर्माणकौशलादीनां निरङ्गाणामेव त्रयाणामुपमानानामारोपात् मालारूपं निरङ्गं रूपकम्, इन्दीवरेक्षणायाः सौन्दर्यातिशयं ध्वनयितुमत्रारोपणम् । निर्माणकौशलस्योपमानत्वानभ्युपगमे तु आरोपद्वयस्याप्यनेकत्वान्मालारूपत्वमस्त्येवेतिबोध्यम् ।

( ७७ ) केवलमिति । निरङ्गं रूपकमित्यनुषज्यते ।

( ७८ ) दासे इति । मानिनीं प्रियां प्रसादयितुं तत्पादपतितस्य तयैव च पादप्रहृतस्य नायकस्य तां प्रत्येव सानुनयोक्तिरियम् ।

हे सुन्दरि ! कृतमागोऽपराधो येन तथोक्ते कृतागसि दासे विहितापराधे किङ्कर इत्यर्थः, प्रभूणाम् अधीश्वराणां पादप्रहार उचितो न्याय्य एव भवति इति हेतोः अत्रास्मिन् पादप्रहारे अहं न दूये खिद्यामि व्यथितो न भवामीत्यर्थः, तत्कथं व्यथित इव लक्ष्यसे अत आह—उद्यदिति । यत् यस्मात्कारणात् उद्यन्तः केवलतवपादस्पर्शनैवोत्पद्यमानाः कठोराः कठिना ये पुलकाङ्कुरा अङ्कुरवत् क्षुद्रक्षुद्ररोमोद्गमा एव कण्टकास्तेषामग्रैः पुरोभागैः तव मृदु कोमलं पदं चरणतलं भिद्यते छिद्यते ननु सा सैव, नन्वित्यवधारणे; मे मम व्यथा वेदना ।

अत्र पुलकाङ्कुरस्य एव न तु तदङ्गे एकस्मिन्नुपमेये कण्टकरूपस्यैव निरङ्गस्यैकस्य उपमानस्य केवलाभेदारोपात् केवलरूपं निरङ्गं रूपकम् । परम्परितादिषु रूपकेषु परस्परभेदस्त्वित्थमत्रालोचनीयम् । तथाहि—एकस्यारोपस्य कार्यकारणभावेन अन्यारोपसा-

( ७९ ) तेनाष्टौ रूपके भिदाः ।

( ८० ) 'चिरन्तनैरुक्ता' इति शेषः ।

( ८१ ) क्वचित्परम्परितमप्येकदेशविवर्ति यथा—

( ८२ ) 'खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य ॥'

---

पेक्षत्वे परम्परितम्, अङ्गाङ्गिभावेन अन्यारोपसापेक्षत्वे साङ्गम्, सर्वथैवान्यारोपसापेक्षत्वे च निरङ्गं रूपकमिति ।

( ७९ ) सम्प्रति शुद्धरूपकभेदप्रतिपादनमुपसंहरन् साकल्येन तद्गणनमुपपादयति—तेनेति । उक्तविधभेदसमूहसम्भवेनेत्यर्थः, रूपके शुद्धरूपकालङ्कारे अष्टौ भिदाः अष्टप्रकाराः।

( ८० ) अध्याहार्यं सूचयति—चिरन्तनैरिति । अत्रेदम्बोध्यम्—रूपकं तावत्त्रिविधम्—परम्परितं साङ्गं निरङ्गञ्चेति । तत्र परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनतया द्विविधं सत्प्रत्येकं केवलं मालारूपं चेति चतुर्विधमितिसाङ्गं समस्तवस्तुविषयम्, एकदेशविवर्त्तिचेति द्विविधम्, निरङ्गमपि केवलं मालारूपञ्चेति द्विविधमिति सङ्कलनेनाष्टौ रूपकभेदाः ।

सोदाहरणपूर्वकं सौकर्याय प्रदर्श्यंते—

| | | नामानि | उदाहरणानि |
|---|---|---|---|
| परम्परितम् ४ | श्लिष्टशब्दनिबन्धनम् | केवलम् | १ "आहवे जगदुद्दण्डेत्यादि" |
| | | मालारूपम् | १ "पद्मोदयदिनाधीश"—इत्यादि |
| | अश्लिष्टशब्दनिबन्धनम् | केवलम् | १ "पान्तु वो जलदश्यामाः"—इत्यादि |
| | | मालारूपम् | १ "मनोजराजस्य" इत्यादि |
| साङ्गम् २ | समस्तवस्तुविषयम् | | १ "रावणावग्रहक्लान्तम्"—इत्यादि |
| | एकदेशविवर्त्ति | | १ "लावण्यमधुभिः पूर्णम्"—इत्यादि |
| निरङ्गम् २ | मालारूपम् | | १ 'निर्माणकौशलं धातुः"—इत्यादि |
| | केवलरूपम् | | १ "दासे कृतागस" इत्यादि |

( ८१ ) क्वचिदिति । न साङ्गमात्रमेव रूपकमेकदेशविवर्त्ति किन्तु परम्परितमप्येकदेशविवर्त्ति भवतीत्यर्थः । कस्यचिदारोपस्य परम्परितेऽप्यार्थत्वसम्भवादित्याशयः । नचैवमुक्तपरम्परितस्य चतुर्भेदाधिकं सङ्कलनेन स्यादितिवाच्यम्, प्राचीनैरुक्तपरम्परितस्य केवलचतुष्टयभेदस्यैवाभ्युपगमेनास्य तेष्वेवान्तर्भावात् ।

( ८२ ) खड्ग इति । एतत्पादत्रयी तु—

पर्यङ्को राजलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गो—
भग्नप्रत्यर्थिवंशोल्वणविजयकरिस्त्यानदानाम्बुपट्टः
सङ्ग्रामत्रासताम्यन्मुरलपतियशो हंसनीलाम्बुवाहः ॥ इति ।

( ८३ ) अत्रार्थः क्ष्मायां महिषीत्वारोपः खड्गे सौविदल्लत्वारोपे निमित्तम् ।
( ८४ ) अस्य भेदस्य पूर्ववन्मालारोपत्वेऽप्युदाहरणं मृग्यम् ।
( ८५ ) दृश्यन्ते क्वचिदारोप्याः श्लिष्टाः साङ्गेऽपि रूपके ॥ ३३ ॥
( ८६ ) तत्रैकदेशविवर्ति श्लिष्टं यथा मम—
( ८७ ) करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य ।
विकसितकुमुदेक्षणां विचुम्बत्ययममरेशदिशो मुखं सुधांशुः ॥

मालवा नामा आखण्डल इन्द्रस्तस्य मालवाखण्डलस्य "आखण्डलः सहस्राक्षः" इत्यमरः, क्ष्मायाः पट्टराज्ञीरूपायाः पृथिव्याः सौविदल्लः अन्तःपुरपालकः कञ्चुकीस्वरूपः, अन्तःपुरपालककञ्चुकिसंज्ञकवृद्धब्राह्मणेन पट्टराज्या इव खड्गेन पृथिव्यास्त्राणादित्याशयः । "सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते" इत्यमरः । खड्गस्तरवारिः समिति सङ्ग्रामाङ्गणे विजयते सर्वोत्कर्षेण वर्त्तते । स्रग्धराच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ( पृष्ठ २१९ )

( ८३ ) उक्तोदाहरणे एकदेशविवर्त्ति परम्परितरूपकमुपपादयति—अत्रेति । आर्थः अर्थवशलभ्यः । सौविदल्लोऽन्तःपुरे स्त्रीणां रक्षायै नियुक्तो भवति क्ष्मायाश्च स्त्रीत्वमन्तरा सौविदल्लत्वासम्भव इति तदुपपादयितुमार्थ आरोपस्तत्र स्वीक्रियते । स च क्ष्मायां महिष्यामिव राजभोग्यत्वसादृश्यमूलकः, अन्यथासम्भवादितिभावः । इदञ्च रूपकमश्लिष्टशब्दनिबन्धनं निरङ्ग्ञ्च ।

अत्रैव यदि—

"खड्गः क्ष्मा सौविदल्लो जयति परिचरन्नुत्करो मालवस्य"

इति पाठपरिवर्त्तनं विधीयते चेत्तर्हि परम्परितश्लिष्टसाङ्गैकदेशविवर्त्तिरूपकयोरेकाश्रयानुप्रवेशरूपः सङ्कर एवेति विभावनीयम् ।

( ८४ ) अस्येति । एकदेशविवर्त्तिपरम्परितरूपकप्रकारस्येत्यर्थः । मृग्यं लक्ष्यमन्वेष्यम् । यथा—

"अस्ति स्वस्त्ययनं श्रियः सुचरितं द्राघीयसः श्रेयसः
सौन्दर्यस्य रसायनं निरवधेः शीलस्य लीलायितम् ।
विद्यानामधिदैवतं निरवधेः शौर्यस्य विस्फूर्जितं
श्रीभानुश्चिकलिङ्गमत्तलपदं गङ्गान्वये भूपतिः ।

अत्र श्रीप्रभृतीनां प्राणिविशेषत्वारोपः आर्थः स्वस्त्ययनारोपे निमित्तम् ।

अत्र 'मालरूपत्वेऽप्युदाहरणं मृग्यम्' इत्यपपाठ इति वदन्त उपेक्षणीया एव ।

( ८५ ) एतावता परम्परितरूपके एकदेशविवर्त्तिरूपासाङ्गरूपकच्छायामुपपाद्य सम्प्रति साङ्गरूपकेऽपि श्लिष्टशब्दनिबन्धनत्वरूपां परम्परितरूपकच्छायामुपपादयितुमाह—दृश्यन्ते इति । साङ्गेऽपि न परम्परितरूपकमात्रे एव किन्तु साङ्गे रूपकेऽपीत्यर्थः, क्वचित् आरोप्या आरोपणीयोपमानप्रतिपादकाः शब्दाः श्लिष्टाः श्लेषमूला अनेकार्था दृश्यन्ते । तेन लक्षणादेर्लक्ष्यानुसारित्वादिदमपि स्वीकरणीयमेवेति ग्रन्थकर्त्तुराशयः ।

( ८६ ) उदाहर्तुमुपक्रमते—तत्रेति । साङ्गेषु श्लिष्टेषु रूपकेषु मध्य इत्यर्थः ।

( ८७ ) करमुदयेति । चन्द्रोदयवर्णनमिदम् । अयं सुधांशुश्चन्द्रः, अमरेशदिशः इन्द्रा-

( ८८ ) समस्तवस्तुविषयं यथा—अत्रैव 'विचुम्बति–' इत्यादौ 'चुचुम्बे हरिदबलामुखमिन्दुनायकेन' इति पाठे ।

( ८९ ) न चात्र श्लिष्टपरम्परितम् । अत्र हि 'भूभृदावलिदम्भोलिः–' (९३३) इत्यादौ राजादौ पर्वतत्वाद्यारोपं विना वर्णनीयस्य राजादेर्दम्भोलितादिरूपणं सर्वथैव सादृश्याभावादसङ्गतम् ।

( ९० ) तर्हि कथं 'पद्मोदयदिनाधीशः–' इत्यादौ परम्परितम्, राजादेः सूर्यादिना सादृश्यस्य तेजस्वितादिहेतुकस्य संभवादिति न वाच्यम्; तथा हि—राजा-

---

धिष्ठताया दिशः प्राच्यास्तद्रूपाया नायिकाया इति यावत्, गलितं स्वोदयादेव स्थानाच्च्युतं तमःपटलम् अन्धकारसमूह एव अंशुकं वसनं यस्मात्तथोक्ते उदयमहीधर उदयाचल एवोन्नतपीवरत्वात् स्तनस्तस्याग्रे उर्ध्वभागे, करं किरणमेव करं हस्तम्, "बलिहस्तांशवः कराः" इत्यमरः, निवेश्य स्थापयित्वा, विकसितानि स्वोदयेन प्रमोदेन च प्रकाशितानि यानि कुमुदानि तान्येव ईक्षणानि लोचनानि यत्र तत्तथोक्तम्, मुखमाद्यभाग एव मुखमाननम्, विचुम्बति स्पृशति विशेषेण स्वमुखेन संयोजयति च । पुष्पिताग्राछन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

अत्र नायकरूपसुधांशुरङ्गी तमःपटलांशुकगलनादीनि च तदङ्गतया प्रतिपिपादयिषितानीति साङ्गरूपकत्वम्, तथा तमःपटले अंशुकत्वाद्यारोपाणां शाब्दानाम्, अमरेशदिशि नायिकात्वारोपस्य सुधांशौ नायिकात्वारोपस्य चार्थत्वादेकदेशविवर्त्तित्वम्, करमुखयोः श्लिष्टत्वात् श्लिष्टशब्दनिबन्धनत्वम् । एवञ्च श्लिष्टशब्दनिबन्धनमेकदेशविवर्त्तिरूपं साङ्गरूपकमितिभावः ।

( ८८ ) "दृश्यन्ते क्वचिदारोप्याः श्लिष्टाः साङ्गेऽपि रूपके"

इत्यत्र "साङ्गेऽपि रूपके" इति साङ्गरूपकसामान्यप्रतिपादनात् तदन्तःपातिद्वयोरपि भेदयोः श्लिष्टशब्दनिबन्धनसमर्थत्वे एकदेशविवर्त्तिरूपं तत्प्रतिपाद्य समस्तवस्तुविषयमप्युदाहर्त्तुकाम आह—समस्तवस्तुविषयेति । अत्रैव "करमुदय" इत्याद्युदाहरण एव । "विचुम्बति इत्यादावंश इत्यर्थः । एवञ्च—

"विकसितकुमुदेक्षणं चुचुम्बे हरिदबलामुखमिन्दुनायकेन ।"

इत्येवं क्रमेणोत्तरार्द्धपाठकल्पन इत्यर्थः । एतादृशपाठे हि पूर्वोक्तनिमित्ततः सकलारोपस्य शब्दमात्रत्वात् श्लिष्टशब्दनिबन्धनं समस्तवस्तुविषयं साङ्गरूपकमलङ्कारो भवेदितिभावः ।

( ८९ ) करादिशब्दस्य श्लिष्टत्वेन श्लिष्टपरम्परितशङ्कामुत्थाप्य निराकरोति—नचेति । अत्र "करमुदय" इत्याद्युदाहृतपद्ये महीधरादौ स्तनत्वाद्यारोपं प्रति किरणादौ हस्तत्वाद्यारोपस्य कथमपि हेतुत्वात् श्लिष्टपरम्परितं रूपकमिति नच वाच्यमित्यर्थः । तत्र हेतुमाह—हीति । हि यतः । तत्र श्लिष्टपरम्परिते राजादौ प्रतिपक्षिनृपादौ । दम्भोलितादिरूपणं वज्रत्वादीनामारोपः । सादृश्यासम्भवात् वज्रादिना साकं वर्णनीयस्य राजादेरित्यर्थः । असङ्गतमिति । अत्र तु न तथा महीधरादेः स्तनादिना सादृश्यस्य पीनत्वोच्चत्वादिना सुव्यक्तत्वादितिशेषः ।

( ९० ) ननु यदि सादृश्यासत्त्वे एव परम्परितरूपकं तदा "पद्मोदयदिनाधीश",

देस्तेजस्वितादिहेतुकं सुव्यक्तं सादृश्यं न तु प्रकृते विवक्षितम्, पद्मोदयादेरेव द्वयोः साधारणधर्मतया विवक्षितत्वात्।

( ९१ ) इह तु महीधरादेः स्तनादिना सादृश्यं पीनोत्तुङ्गत्वादिना सुव्यक्तमेव—इति न श्लिष्टपरम्परितम्।

( ९२ ) क्वचित्समासाभावेऽपि रूपकं दृश्यते—

( ९३ ) 'मुखं तव कुरङ्गाक्षि ! सरोजमिति नान्यथा ॥'

---

इत्यादावव्याप्तिरित्याक्षिपति—तहींति। परम्परितश्लिष्टपरम्परितमित्यर्थः। अव्याप्तिमुपपादयति—राजादेरिति। तेजस्वितेत्यादिशब्देन सर्वाभिभावितादेः परिग्रहः। सूर्यादिनेति सहार्थेयं तृतीया। सम्भवादिति। तथा च तेजस्वितादिहेतुकसादृश्येनैव राजादौ सूर्यत्वादीनामारोपस्य संयुक्ततया निमित्तान्तरापेक्षाभावादुभयारोपणं मिथः कार्यकारणभावाभावेन कथं "पद्मोदय" इत्यादौ परम्परितरूपकमित्याक्षेप्तुराशयः। राजादेः सूर्यादिनेतिशेषः। प्रकृते पद्मोदयदिनाधीश" इत्यादौ। तत् सादृश्यमित्यर्थः। विवक्षितमिति। एवंसति मिथः संस्रवाभावेन पद्मोदयपदप्रयोगस्य उन्मत्तप्रलपितत्वापत्तेरित्याशयः। पद्मोदयादेरेव पद्मोदयादिपदार्थस्यैव न तु तेजस्वितादेरित्यर्थः। द्वयोः रूप्यरूपकयोः राजदिनाधीशयोः। साधारणधर्मतयेति अभेदार्थे तृतीया। विवक्षितत्वादिति। अत्रायम्भावः—दिनाधीशो यथा प्रकाशविधानेन पद्मानामभ्युदयं विधत्ते वर्णनीयो राजापि तथैव प्रतिपक्षान् पराजित्य तद्द्रव्यादिग्रहणेन पद्मायाः अभ्युदयं सम्पादयति' इत्येव हि कवयित्रा विवक्षितोऽर्थः। अत एव च पद्मोदय एव द्वयोः रूप्यरूपकयोः राजदिनाधीशयोः साधारणधर्मः। एवं देवेन्द्रस्य दम्भोलिर्यथा पर्वतानुच्छेदितवान्, वर्णनीयो राजापि तथैव प्रतिपक्षान् उच्छेदयति, इत्येव च कवयित्रा विवक्षितोऽर्थः। अत एव च भूभृदुच्छेदनमेव द्वयो राजदम्भोल्योः साधारणधर्मः। तथा च पूर्वारोपमन्तरा परारोपो भवितुं नार्हतीत्यारोपाणामेव मिथः कार्यकारणभावसद्भावात् "भूभृदावलिदम्भोलिः" पद्मोदयदिनाधीशः" इति द्वयोरपि श्लिष्टपरम्परितत्वे न काप्यनुपपत्तिरित्यवधेयम्।

( ९१ ) सन्दर्भशेषमुपपादयति—इह त्विति। "करमुदयमहीधरस्तनाग्रे" इत्यादिपद्ये त्वित्यर्थः। पीनोत्तुङ्गत्वादिनेत्यत्राभेदार्थे तृतीया। सुव्यक्तमेवेतीति। एवञ्च तथाविधे सादृश्यमेव महीधरादौ स्तनत्वाद्यारोपमवगमयतीति किरणादौ हस्तत्वाद्यारोपस्य तन्निमित्ततयापेक्षैव नास्तीति श्लिष्टपरम्परितं रूपकमित्यर्थः। तथा च यत्र आरोपो विवक्षितसादृश्यासम्भवेनान्यमारोपमपेक्षते तत्र परम्परितम्, यत्र तु स्वोत्पत्तौ केवलसादृश्यमपेक्षते तत्र साङ्गं रूपकमिति ध्वनितम्।

( ९२ ) सम्प्रति रूपकस्य स्थलविशेषेषु काचित्कमुपलम्भं दर्शयितुमाह—क्वचिदिति। सर्वत्रैव प्रायेण समाससत्त्वे रूपकं दृश्यते क्वचिदुदाहरिष्यमाणे समासाभावेऽपि रूपकं दृश्यते इत्यर्थः। एतेन "व्यस्तं समस्तं व्यस्तसमस्तञ्च" ति रूपकस्य त्रैविध्यं प्रदर्शयतो दण्ड्यादेः व्यस्तसमस्तयोः सामान्यतः प्रतिपादनमाक्षिप्तमित्यवगन्तव्यम्।

( ९३ ) मुखमिति। "कुड्मलाग्रसमा दन्ता ओष्ठौ विफलं यथा" इतिसत्पूर्वोक्तरार्द्धम्।

( ९४ ) क्वचिद्वैयधिकरण्येऽपि यथा—

( ९५ ) 'विदधे मधुपश्रेणीमिह भ्रूलतया विधिः ॥'

( ९६ ) क्वचिद्वैधर्म्येऽपि—

( ९७ ) 'सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुण-
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा ।
यैरेषापि दुराशया कलियुगे राजावली सेविता
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत्कौशलम् ॥'

अत्र समासाभावेऽपि मुखे सरोजत्वारोपात् निरङ्गं केवलं रूपकम् ।

( ९४ ) एवं सामानाधिकरण्ये उदाहृत्य वैयधिकरण्येऽप्युदाहर्तुमाह—क्वचिदिति । विभिन्नमधिकरणं व्यधिकरणं तस्य भावो वैयधिकरण्यं भिन्नविभक्तिकत्वमित्यर्थः तत्रापि रूपकं दृश्यत इति शेषः । अत एवोक्तमत्र विवृतिकारेण "भ्रूलतयेत्यभेदे तृतीया अन्यथा तादात्म्यारोपो न स्यात्" इति ।

( ९५ ) विदधे इति । विधिः सृष्टिनिर्माता इह नायिकायां वदनपङ्कजे भ्रूलतया मधुपश्रेणीं भ्रमरपङ्क्तिं विदधे निर्मितवान् । अत्रापि व्यधिकरणपदोपस्थाप्यायां भ्रूलतायां मधुपश्रेणीत्वारोपात् निरङ्गं केवलं रूपकम् ।

( ९६ ) वैधर्म्येऽपि रूपकसद्भावमुपपादयितुमाह—क्वचिदिति । वैधर्म्ये विरुद्धधर्मसद्भावेऽपि रूपकं दृश्यते इत्यनुषज्यते । तथा चात्र रूप्यरूपकयोर्विरुद्धधर्मो नार्थः, किन्तु निर्दिष्टं यत्साधर्म्यं तदभाववत्त्वमेवात्र वैधर्म्यमित्यवधेयम् ।

( ९७ ) सौजन्येति । सौजन्यं सुजनता एव अम्बु जलं तस्य मरुस्थली मरुप्रदेशः निर्जलदेश इति यावत् यथा मरुस्थली जलरहिता तथैव राजावल्यपि सौजन्यहीनेति-भावः । सुचरितान्येव शोभनाचरणान्येव आलेख्यानि लेखनीयानि चित्राणि येषां तेषां द्युभित्तिः आकाशरूपं कुड्यम्, यथा आकाशे चित्राणि न सम्भवितुमर्हन्ति तथैव राजावल्यामपि सुचरितानि नावलोक्यन्त इत्यभिप्रायः । गुणाः दयादाक्षिण्यादय एव ज्योत्स्नाश्चन्द्रिकास्तासु कृष्णचतुर्दशी कृष्णपक्षीया चतुर्दशी यथा कृष्णचतुर्दश्यां चन्द्रिकाया अभावस्तथा राजावल्यामपि दयादाक्षिण्यगुणानामभावोऽवलोक्यते इति भावः । अत्रामावास्येत्यनभिधाय चतुर्दशीपदोपादानं राजावल्यां मनुष्यस्वभावेन कदाचिद्गुणाः किञ्चित्समुत्पद्यन्ते एव न तु तिष्ठन्तीति व्यञ्जनाय । सरलतायाः अकुटिलतायाः योगः सम्बन्धस्तत्र सरलताव्यवहारे इत्यर्थः, श्वपुच्छच्छटा कुक्कुरपुच्छाकृतिरूपा, कुक्कुरपुच्छ इव राजावल्यां सरलताया गन्धोऽपि नास्तीत्याशयः । एषा इत्थंभूतापि कलियुगे राजावली कलियुगीयराजपरम्परा, दुराशया दुरभिप्राया दुष्टधनलाभलिप्सया वा यैर्जनैः सेविता, तेषां जनानां भक्तिमात्रसुलभे केवलयापि भक्त्या प्राप्ये मात्रपदेनोपकरणान्तरस्यानावश्यकत्वं व्यञ्जयति, शूलिनि महादेवे षष्ठ्यर्थे सप्तमी तेन महादेवस्येत्यर्थः सेवा आराधनं कियत् कौशलं न किञ्चिदपीत्यर्थः । अत एव तादृशराजावलीसेवनं परित्यज्य शूलिसेवनमेवैहिकामुष्मिकेष्टफललाभाय विधानमेव युक्तमितिभावः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणञ्चोक्तं प्रागेव ( १९८ पृ० ) ।

( ९८ ) इदं मम ।
( ९९ ) अत्र च केषांचिद्रूपकाणां शब्दश्लेषमूलत्वेऽपि रूपकविशेषत्वादर्थालङ्कारमध्ये गणनम् ।
( १०० ) एवं वक्ष्यमाणालङ्कारेषु बोध्यम् ।
( १ ) अधिकारूढवैशिष्ट्यं रूपकं यत्तदेव तत् ।

अत्र मरुस्थल्यां जलस्य, द्युमित्तौ चित्रस्य, कृष्णचतुर्दश्यां चन्द्रिकायाः, श्वपुच्छे च सरलतायाः, सम्भवितुमशक्यत्वात् मरुस्थल्यादिषु जलादीनां वैधर्म्यमवगन्तव्यम् । अत एव पूर्वं विशेषणत्रये अश्लिष्टशब्दनिबन्धनं मालारूपं परम्परितरूपकम् । चरमविशेषणे तु निरङ्गं केवलं रूपकम् ।

( ९८ ) स्वीयमेव पद्यमित्युपपादयति— इदमिति ।

( ९९ ) ननु श्लिष्टपरम्परितोदाहृतानां "राजमण्डलराहवे" इत्यादीनां श्लिष्टशब्दनिबन्धनानां साङ्गरूपकोदाहृतानां "करमुदयमहीधरस्तनाग्रे" इत्यादीनाञ्च शब्दश्लेषयुक्तत्वेन शब्दालङ्कारान्तर्गत एवाभिधातुमुचितं तत्कथमर्थालङ्कारेषु निरूपितमत आह—अत्र चेति । अत्र एषु लक्षितेषु रूपकेषु मध्ये इत्यर्थः । रूपकविशेषत्वात् रूपकप्राधान्यात् अर्थमूलाया रूपकप्रधानताया विद्यमानत्वादित्यर्थः । तथा च श्लेषस्येव रूपकस्यापि शब्दालङ्कारत्वमर्थालङ्कारत्वञ्चोभयमपि सम्भवितुमर्हति तथापि श्लेषे शाब्दत्वार्थत्वोभयप्राधान्यस्यैकरूपत्वात् इह तु न्यूनाधिकत्वेन वैपरीत्यात् भेदे "प्राधान्येन व्यपदेशा भवन्ति" इति न्यायेन रूपकस्यार्थालङ्कारत्वमिति भावः । एतेन श्लिष्टपरम्परितरूपकादौ शब्दार्थोभयालङ्कारत्वमेव युक्तमिति ध्वनितम् ।

(१००) न केवलं रूपक एवोक्तन्यायः किन्त्वन्यत्रापीति दर्शयति—एवमिति । वक्ष्यमाणेषु श्लेषमूलकेषु अपह्नुतिव्यतिरेकाद्यलङ्कारेष्वित्यर्थः । सरस्वतीकण्ठाभरणकारास्त्वमीषामुभयालङ्कारत्वेनैव परिसंख्या कृता, तथाहि—

"शब्देभ्यो यः पदार्थेभ्य उपमादिः प्रतीयते ।
विशिष्टोऽर्थः कवीनां ता उभयालङ्क्रियाः प्रियाः ॥
उपमारूपकं साम्यं संशयोक्तिरपह्नुतिः ।
समाध्युक्तिः समासोक्तिरुत्प्रेक्षाप्रस्तुतस्तुतिः ॥
सतुल्ययोगितोल्लेखः ससहोक्तिः समुच्चयः ।
साक्षेपोऽर्थान्तरन्यासः सविशेषा परिष्कृतिः ॥
दीपकक्रमपर्यायातिशयश्लेषभाविकाः ।
संसृष्टिरितिनिर्दिष्टास्ताश्चतुर्विंशतिर्बुधैः ॥" इति ।

उपमापदमत्र पूर्णोपमाबोधकमितिबोध्यम् ।

( १ ) पुनः प्रभेदान्तरमुक्तभेदादिविलक्षणम् अधिकारूढवैशिष्ट्यं नाम रूपकमलङ्कारं निरूपयति—अधिकेति । यद्रूपकम् अधिकमत्यर्थम् आरूढं वैशिष्ट्यं विशेषणं चमत्कारित्वरूपं विलक्षणत्वमितियावत् यत्र तत्तथोक्तं भवति, तद्रूपकं तदेव अधिकारूढवैशिष्ट्यनामकमेव भवतीत्यर्थः ।

उपमेये उपमाने वा विद्यमानमविद्यमानमपि यं कञ्चिद्धर्ममारोप्य आरोपरूपण एव वैशिष्ट्यमिदमत्यर्थमारूढं भवतीतिविभावनीयम् ।

( २ ) तदेवाधिकारूढवैशिष्ट्यसंज्ञकम् । यथा मम—

( ३ ) 'इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः
सुधाधाराधारश्चिरपरिणतं बिम्बमधरः ।
इमे नेत्रे रात्रिन्दिवमधिकशोभे कुवलये
तनुर्लावण्यानां जलधिरवगाहे सुखतरः ॥'

( ४ ) अत्र कलङ्कराहित्यादिनाधिकं वैशिष्ट्यम् ।

---

( २ ) कारिकास्थकाठिन्यांशं विवृणोति—तदेवेति । स्पष्टम् ।

( ३ ) इदमिति । कस्याश्चित्कामिन्या वर्णनमिदम् । इदं दृश्यमानं कामिन्या वक्त्रं मुखम्, विरहितकलङ्कः कलङ्कादिकल्विषरहितः साक्षात् समीपप्रत्यक्षगोचरः शशधरश्चन्द्रः । सुधाधारायाः पीयूषप्रवाहस्य आधारः स्थानम् अधर ओष्ठः, चिरपरिणतं चिरेण परिणतं फलत्वेनोद्भूतम् परिपक्वमित्यर्थः बिम्बं बिम्बफलम्, सुधाधाराधार इति बिम्बस्य विशेषणमवगन्तव्यम् । इमे पुरोऽवलोक्यमाने नेत्रे लोचने,रात्रिन्दिवम् अहर्निशमेव निरन्तरमेवेतियावत् अधिका शोभा ययोस्तथोक्ते कुवलये नीलोत्पलद्वयम् । तथा तनुः शरीरम् अवगाहे अवगाहने उपचारेणोपभोगमात्रे सुखतर अत्यन्तं सुखदायी लावण्यानां जलधिः समुद्रः । 'अवगाहे सुखतर' इत्यनेन लवणोदधिर्मकरतरङ्गलवणादिसद्भावादवगाहकानां सुखावहो न भवतीति सूचितम् । शिखरिणीच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ( १८४ पृ० ) ।

( ४ ) वैशिष्ट्याधिक्यमुपपादयति—अत्रेति । आदिशब्देन सुधाधारत्वादेः परिग्रहः ।

तथा च शशधरे उपमाने विद्यमानमपि कलङ्कमारोप्य वक्त्रे तस्यारोपः, अधरे चोपमेयेऽविद्यमानमपि सुधाधारत्वधर्ममवरोप्य, तथोत्पत्तेर्वहोः कालादनन्तरमेव परिपक्वयोग्ये उपमाने बिम्बेऽविद्यमानमपि चिरपरिणतत्वधर्मञ्चावरोप्य तत्र तस्यारोपः । तथा रात्रावेवाधिकशोभे उपमाने कुवलयेऽविद्यमानमपि रात्रिन्दिवमधिकशोभत्वधर्ममवरोप्य नेत्रे तस्यारोपः । इत्थमेव जलधावुपमानेऽविद्यमानमपि लावण्यसम्बन्धमवरोप्य शरीरे तस्यारोपः ।

इदञ्च ध्वन्यमानमपि दृश्यते । तत्र शब्दशक्तिमूलं यथा—

"अविरलविगलद्दानोदकधारासारसिक्तधरणितलः ।
धनदाग्रमहितमूर्त्तिर्देव! त्वं सार्वभौमोऽसि ॥"

अत्र हि सार्वभौमशब्दश्चक्रवर्त्यर्थतया नियमितोऽपि राज्ञि "असि" इत्यनेन दिग्गजविशेषारोपमेव बोधयति ।

अर्थशक्तिमूलं यथा—

"तिमिरं हरन्ति हरितां पुरःस्थितं तिरयन्ति तापमथ तापशालिनाम् ।
वदनत्विषस्तव चकोरलोचने! परिमुद्रयन्ति सरसीरुहश्रियः ॥"

अत्र वदनस्य चन्द्रतिमिरहरणाद्यर्थमात्रमूलम्,

सरस्वती कण्ठाभरणकारास्तु रशनारूपकं नामालङ्कारान्तरं मन्यन्ते । तथाहि "परम्पराथ रशना मालारूपकरूपकम् " इति तल्लक्षणम्,

( ५ ) विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि ॥ ३४ ॥
परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधा ।

( ६ ) आरोप्यमाणस्यारोपविषयात्मतया परिणमनात्परिणामः ।

यथा—

( ७ ) 'स्मितेनोपायनं दूरादागतस्य कृतं मम ।
स्तनोपपीडमाश्लेषः कृ(त)तो द्यूते पणस्तया ॥'

---

किशलयकरैर्लतानां करकमलैर्मृगदृशां जगज्जयति ।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥

इति चोदाहरणम् । प्रकाशकृता तु "इत्यादिरशनारूपकं न वैचित्र्यवदिति न लक्षितम्" इति प्रतिपादयतेदं नाङ्गीकृतम् । विषयेऽस्मिन् ग्रन्थकारस्यापि मौनावलम्बनादनीप्सित-मेवेत्यवलोकनीयम् ।

( ५ ) रूपकालङ्कारं निरूप्य तत्साजात्येन परिणामालङ्कारं लक्षयति—विषयात्मतये-ति । आरोप्ये आरोपणीये उपमाने इति यावत् , विषयात्मतया आरोपविषयाभेदेन उपमेयतादात्म्येन कारणेन, प्रकृतार्थः प्रस्तुतं प्रयोजनं तस्योपयोगिसाधनं तस्मिंस्त-थाभूते सति तथा च प्रस्तुतप्रयोजनसाधनत्वेन प्रसिद्धिरेव प्रकृतार्थोपयोगित्वम् तस्मिन् सतीत्यर्थः परिणामो नामालङ्कारो भवेत् । एवञ्च प्रस्तुतप्रयोजनसाधनोपयोगितया उपमानाभेदारोपः परिणाम इति फलितः । स च तुल्यं समानमधिकरणं यस्य स तथोक्तः समानविभक्तिक इत्यर्थः, अतुल्यमसमानमधिकरणं यस्य स तथोक्तो व्यधिकरण इत्यर्थः, इत्येवं प्रकारेण द्विधा । तथा च उपमानोपमेययोः समानविभक्तिकत्वं तुल्याधि-करणत्वम् , तयोरेवासमानविभक्तिकत्वञ्च अतुल्याधिकरणत्वम् । अस्य रूपकाद्भेदस्तु तत्रैव निरूपितः स्फुटीभविष्यति चाग्रेऽनुपदमेव वृत्तावपि ।

( ६ ) परिणामस्यान्वर्थं नाम दर्शयति—आरोप्यमाणस्येति । आरोप्यमाणस्य उप-मानस्य आरोपविषयात्मतया उपमेयरूपत्वेन परिणमनात् परिणतबुद्धिविषयीकरणात् बुद्धेः परिणामश्चानाहार्यत्वे सति धारावाहिकत्वमित्यवगन्तव्यम् ।

( ७ ) सौकर्यायैकत्रैवोदाहरणे तद्भेदद्वयमुदाहरति—स्मितेनेति । सखायं प्रति कस्य-चित्स्वप्रियतमायाः सौजन्यवर्णनेयम् । तया सौन्दर्यादिना प्रसिद्धतया प्रियतमया स्मितेन मृदुहसितेन,तृतीयाऽत्राभेदे, दूरात् आगतस्य प्राप्तस्य मम उपायनमुपहारः कृतम् , तथा द्यूते अक्षक्रीडायाम् ; स्तनाभ्यामुपपीडयेतिस्तनोपपीडम् क्रियाविशेषणमिदम् 'सप्तम्यां चोपपीडरुधकर्षः' इति पाणिनीयसूत्रेण णमुल् । आश्लेषः आलिङ्गनदानम् , पणः कृतः । दूरदेशादागताय प्रियाय स्वबन्धुजनैः काञ्चिदुपायनं प्रदीयते, उपायनं नाम मण्यादि-मिष्टान्नादिकं च प्रीत्यर्थं दीयमानं द्रव्यम् । अक्षक्रीडायां च यः कोऽपि पणः स्थाप्यते इति च लौकिकव्यवहारः एवञ्च दूरात्संप्राप्ते मयि प्रियतमया मृदुहासरूपमेव तदुपा-यनं मह्यं समर्पितम् , तथा "अक्षक्रीडायां मया पराजिते स्तनोपपीडमालिङ्गनमेव समर्पयितव्यम्" इत्यभिधाय अक्षक्रीडायां स्तनोपपीडालिङ्गनरूप एव पणः स्थापित इति निष्कर्षितोऽर्थः ।

अतश्चात्रोपमेयभूते स्मिते उपमानभूतोपायनतादात्म्यारोपस्य प्रस्तुतनायकयापनो

( ८ ) अन्यत्रोपायनपणौ वसनाभरणादिभावेनोपयुज्येते । अत्र तु नायकसंभावनद्यूतयोः स्मिताश्लेषरूपतया ।

( ९ ) प्रथमार्द्धे वैयधिकरण्येन प्रयोगः, द्वितीये सामानाधिकरण्येन ।

( १० ) रूपके 'मुखचन्द्रं पश्यामि' इत्यादावारोप्यमाणचन्द्रादेरुपरञ्जकतामात्रम्, न तु प्रकृते दर्शनादावुपयोगः; इह तूपायनादेर्विषयेण तादात्म्यं प्रकृते च नायकसंभावनादावुपयोगः । अत एव रूपके आरोप्यस्यावच्छेदकत्वमात्रेणान्वयः, अत्र तु तादात्म्येन ।

---

पकारकत्वात्, उपमेयभूते तथाविधश्लेषे च उपमानभूतपणतादात्म्यारोपस्य च प्रस्तुताक्षक्रीडोपकारकत्वाच्च परिणामालङ्कारलक्षणसङ्गतिः । "कृत" इत्यस्य स्थाने "तत" इत्येव पाठः साधीयान् अन्यथा कथितपदत्वदोषप्रसङ्गादिति तर्कवागीशाः ।

( ८ ) उक्तोदाहरणे लक्षणं संयोजयितुमाह—अन्यत्रेति । उक्तोदाहरणातिरिक्तस्थले इत्यर्थः उपायनपणौ उपायनसमर्पणं पणनिधानं च वसनाभरणादिभावेन वस्त्रालङ्कारादिरूपत्वेन उपयुज्येते सम्भावनद्यूतयोः साधनोपयोगिनौ ( हेतू ) भवतः । अत्र तु "स्मितेनोपायनं दूरात्" इत्यादौ तु नायकसम्भावनद्यूतयोः नायकयाचनाक्षक्रीडयोः स्मिताश्लेषरूपतया स्मिताश्लेषतादात्म्येन, "उपयुज्येते" इति पूर्वेण सम्बन्धः, उपयोगित्वेन प्रतीयेते इति तदर्थः । तथा च उपायनपणौ यथायथं स्मिताश्लेषतादात्म्येन प्रस्तुतयोर्नायकयाचनाक्षक्रीडयोः साधनोपयोगिनौ भूताविति निष्कृष्टोऽर्थः, तेनैवोक्तलक्षणसमन्वय इत्यभिप्रायः

( ९ ) ननु क्व तुल्याधिकरणोऽयं परिणामः क्व वा अतुल्याधिकरण इति जिज्ञासायामाह—प्रथमार्धेति । वैयधिकरण्येनेति । "स्मितेनोपायनम्" इत्युपमेयोपमानयोर्मिथो विभिन्नविभक्तिकत्वेनेत्यर्थः । द्वितीये उत्तरार्द्धे इत्यर्थः । सामानाधिकरण्येनेति । "आश्लेषः पणः" इत्युपमेयोपमानयोर्मिथः समानविभक्तिकत्वेन "प्रयोग" इति पूर्वेण सम्बन्धः । तस्माद्यथाक्रमव्यधिकरणः समानाधिकरणश्चात्र परिणाम इत्याशयः ।

यथा वा पार्थक्येन—

"अपारे संसारे विषयविषवारण्यसरणौ मम भ्रामं भ्रामं विगलितविरामं जडमतेः ! परिश्रान्तस्यायं तरणितनयानीरनिलयः समन्तात्सन्तापं हरिनवतमालस्तिरयतु ॥"

अत्र हि उपमानभूतस्य तमालस्य उपमेयभूतभगवदात्मतयैव संसारतापनिवर्तनक्षमत्वोपपत्तिरिति समानविभक्तिकत्वात्परिणामः ।

( १० ) सम्प्रति रूपकपरिणामयोः परस्परं भेदमुपपादयति—रूपक इति । आरोप्यमाणो मुखेन सह तादात्म्यारोपे उपमानभूतोऽसौ चन्द्रादिस्तस्य तादृशस्य, उपरञ्जकतामात्रम् उपमेयोत्कृष्टताद्योतकत्वमात्रम् न त प्रकृते 'मुखचन्द्रं पश्यामि' इत्यादौ तदात्म्यारोपात् मुखादौ केवलसौन्दर्यव्यञ्जकत्वमितियावत् । मात्रपदेनोपमेयतया परिणमनस्य व्यवच्छेदः । दर्शनादौ उपमानस्योपमेयतया परिणतत्वावगमके दर्शनादिक्रियाश्रयत्वे उपयोग उपयोगित्वम्, मुखादौ चन्द्रादितादात्म्यारोपं विनापि दर्शनसम्भवादित्याशयः ।

एवं रूपके उपमानोपमेययोस्तादात्म्यारोपेऽपि उपमेयत उपमाने उत्कर्षस्थितिमुप-

( ११ ) 'दासे कृतागसि-' ( ९३८ पृ. ) इत्यादौ रूपकमेव, न तु परिणामः। आरोप्यमाणकण्टकस्य पादभेदनकार्यस्याप्रस्तुतत्वात्।

( १२ ) न खलु तत्कस्यचिदपि प्रस्तुतकार्यस्य घटनार्थमनुसन्धीयते।

( १३ ) अयमपि रूपकवदधिकारूढवैशिष्ट्यो दृश्यते। यथा—

पाद्यं परिणामे तद्वैपरीत्यमुपपादयति—इहेति। "स्मितेन" इत्यादौ परिणामस्थले तु। विषयेण स्मिताश्लेषरूपोपमेयेन सहेत्यर्थः, तादात्म्यं तत्तया परिणतत्वम् अभिन्नत्व मितियावत्। प्रकृते चेत्यत्र चकारस्योपयोगश्चेति सम्बन्धः। प्रकृते प्रस्तुते उपमेयरूपे, नायकसम्भावनादौ नायकयाचनादक्रीडयोः, उपयोगश्च साधनोपयोगित्वञ्च। एवमुभ- योर्भेदमुपपाद्यापि बोधसाकर्याय फलितं प्रदर्शयति—अत एवेति। रूपक इत्यादुक्तयुक्ते- रेवेत्यर्थः। आरोप्यस्य उपमानस्य चन्द्रादिपदार्थस्य अवच्छेदकमात्रेण इतरनिवर्तकत्व- मात्रेण, अन्वय उपमेयभूतमुखादौ तादात्म्यसम्बन्धः, अत्र तु परिणामे तु तादात्म्येन प्रस्तुतविषयसाधनोपयोगितया अभिन्नत्वेन, अन्वय इत्यनेनान्वयः।

अत्र सन्दर्भस्यायमभिप्रायः—"मुखचन्द्रं पश्यामि" इत्यादौ रूपकालङ्कार आरोपविषय- भूतोपमेयमुखादौ साधर्म्यवशात्तादात्म्येनारोप्यमाणोऽपि चन्द्रादिरुपमानपदार्थः पर- मार्थत एवाभिन्नो नावगम्यते किन्तु निन्दितमुखादिनिवर्त्तकतया मनोज्ञादिविशेषणव- देव प्रतीयते, 'स्मितेनोपायनम्' इत्यादौ परिणामालङ्कारे तु स्मितोपायनादिरुभयपदा- र्थ एव तादात्म्येनारोपवशात् नायकयाचनादिरूपैककार्यविधायित्वाच्च परमार्थत एवा- भिन्न इवावगम्यते इति।

( ११ ) नन्वेवं "दासे कृतागसि" इत्यादौ पुलकाङ्कुरे उपमानभूतस्य कण्टकस्य प्रकृतपादभेदनरूपकार्यसाधनत्वात् परिणामालङ्कारस्यैव भवितुं युक्तत्वेनास्य रूपको- दाहरणत्वं कथं सङ्गच्छत इत्यत आह—दासे इति। आरोप्यमाणकण्टकस्य उपमानभूत- कण्टकस्य यत्पादभेदनकार्यं तस्याप्रस्तुतत्वात् प्रस्तुतातिरिक्तत्वात्। मानिन्या मानना- शाय नायकानुनयस्यैव तत्र प्रस्तुतत्वादितिभावः।

( १२ ) ननु प्रस्तुतघटकस्यापि कार्यस्योपचारेण प्रस्तुतत्वोपपत्तौ पादभेदनस्यापि प्रस्तुतत्वं स्वीक्रियतां कानुपपत्तिरित्यत आह—न खल्विति। तत् कण्टकानां पादभेदन- कार्यम्। अविशकलस्य घटनार्थमित्युत्तरेण सम्बन्धः। तथा च घटनार्थमपि उपपादना- र्थमपि सञ्जातमिति न खल्वनुसन्धीयते अनुसन्धायापि नैव प्रतीयते। तथाहि प्रस्तु- तकार्यमनुनयः तद्घटकं तु पादपतनमेतादृग्वचनं च पादभेदनं तु वैपरीत्येन दुःखोत्पा- दकत्वादनुनयबाधकमेवेति पादभेदनस्य प्रस्तुतघटकत्वेनापि अप्रस्तुतत्वमित्याशयः। एवम्—

शिष्यतां निधुवनोपदेशिनः शङ्करस्य रहसि प्रपन्नया।
शिक्षितं सुरतनैपुणं तया यदेव गुरुदक्षिणीकृतम्॥

इत्यत्रापि गुरुदक्षिणायाः सुरतनैपुण्येन परिणामात् परिणामालङ्कार एवेत्यवधेयम्।

( १३ ) अस्य भेदान्तरमुपपादयति—अयमपीति। परिणामोऽपीत्यर्थः। अस्यापि भेदद्वैवाधिकारूढवैशिष्ट्यलक्षणमवगन्तव्यम्।

( १४ ) 'वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥'

( १५ ) अत्र प्रदीपानामौषध्यात्मतया प्रकृते सुरतोपयोगिन्यन्धकारनाशे उपयोगोऽतैलपूरत्वेनाधिकारूढवैशिष्ट्यम् ।

**( १६ ) संदेहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः ॥ ३५ ॥**
**शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा ।**

( १४ ) वने चराणामिति । कुमारसम्भवे प्रथमसर्गे हिमालयवर्णनमिदम् । यत्र यस्मिन् हिमालये रजन्यां निशायाम्, दर्यः कन्दरा एव गृहास्तेषामुत्सङ्गा उत्सङ्गया अभ्यन्तरभागास्तेषु निषक्ताः संलग्ना भासो दीप्तयो यासां ताः तथोक्ता "दरी तु कन्दरो वाऽस्त्री" इत्यमरः, ओषधयो लताविशेषाः, वनितासखानां सपत्नीकानां वनेचराणां वनवासिनां किरातानां न तैलपूरो यत्र तादृशा, तैलं विनैव ज्वलनशीलाः सुरतप्रदीपा रमणसाधकदीपा भवन्ति एवं रूपः स हिमालय अस्ति इति पूर्वेण सम्बन्धः । उपेन्द्रवज्राच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

( १५ ) अत्र प्रदीपीभावस्य प्रकृतार्थोपयोगित्वं दर्शयति—अत्रेति । प्रकृते सुरतोपयोग्यन्धकारनाशे प्रदीपानामौषध्यात्मतया उपयोग इत्यन्वयः । सुरतोपयोगिनि सुरतावावश्यके । प्रदीपानाम् ओषधिषु तादात्म्येनारोप्यमाणानामित्यर्थः, ओषध्यात्मतया ओषधिस्वरूपतया कारणेन, उपयोगस्तत्साधनोपयोगित्वम्, तेनैवात्र परिणामोऽलङ्कार इति भावः । नच सुरतमेव शाब्दं प्रकृतं नान्धकारनाशः तस्याऽशाब्दत्वादितिवाच्यम्, सुरतोपयोगित्वेन तस्यापि प्रकृतत्वात् । ननु तथाप्यधिकारूढवैशिष्ट्यत्वं कथमित्याशङ्कायामाह—अतैलेति । आरोप्यमाणे प्रदीपे विद्यमानमपि तैलपूरत्वधर्ममारोप्य तस्यारोपादित्याशयः ।

अयञ्च पूर्ववद् ध्वन्यमानोऽपि दृश्यते तत्र शब्दशक्तिमूलो यथा—

पान्थ ! मन्दमते ! किं वा सन्तापमनुविन्दसि ।
पयोधरं समाशास्व येन शान्तिमवाप्नुयाः ॥

अत्र पयोधरशब्दमूलः पयोधरे पयोधरतया तापसमनकार्यकारित्वेन शब्दशक्तिमूलध्वनिः ।

अर्थशक्तिमूलो यथा—

"इन्दुना परसौन्दर्यसिन्धुना बन्धुना विना ।
ममायं विषमस्तापः केन वा शमयिष्यते ॥"

अत्र प्रतिपादयितुः प्रेयस्या विरहितत्वेन प्रेयसीवदनाभेदेनेन्दुरभिव्यज्यते इत्यर्थशक्तिमूलध्वनिः ।

( १६ ) उपमानोपमेययोः प्रस्तावात्सम्प्रति उपमानसंशययुक्तं सन्देहालङ्कारं निरूपयति—सन्देह इति । प्रकृते उपमेये प्रतिभया विलक्षणया बुद्ध्योपचारात्तामुपगय कवेरुद्भूतया प्रौढोक्त्या उत्थित उत्थापित इति केवलकविप्रौढोक्तिसिद्धो न तु वस्तुस्वभावसिद्ध इत्यर्थः, अन्यस्य उपमानस्य संशयसन्देहनामालङ्कारः "परिणामो भवेत्" इत्यतो भवेदित्यनुवर्तनीयम् । संशयश्चात्रोभयस्मिन् पक्षे तुल्यरूपो ग्राह्यः तेन सम्भावनाया

( १७ ) यत्र संशय एव पर्यवसानं स शुद्धः । यथा—

( १८ ) 'किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी
वेलाप्रोच्छलितस्य किं लहरिका लावण्यवारांनिधेः ।
उद्गाढोत्कलिकावतां स्वसमयोपन्यासविश्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः ॥'

अपि संशयविशेषरूपतया नोत्प्रेक्षालङ्कारे सन्देहालङ्कारत्वप्रसङ्गः संभावनाया एकस्मिन् पक्षे आधिक्येन उभयत्र तुल्यरूपत्वाभावात् । उपमेये उपमानस्य संशय इति प्रतिपादनेन सादृश्यमूलकत्वमपेक्षितम् अत एव—

'इतो गता सा क्व गता न जाने गेहं गता मे हृदयं गता वा ।'

इत्यत्र नायमलङ्कारः संशयस्य सादृश्यमूलकत्वाभावात् अस्य प्रेममात्राधिक्यत्वेऽपि वर्णनीयाधिक्यत्वाभावाच्च असद्विषयेऽपि कस्यचित्प्रेमसम्भवात् । यद्यपि काव्यप्रकाशकृता "ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः" इत्युक्तं तथा दण्डिनापि—

अनन्वयससन्देहौ उपमास्वेव दर्शितौ ।

इति चोक्तं तथापि सन्देहस्य संज्ञान्तरं तत्, सन्देह इति संज्ञा तु "उपमानोपमेय संशयः सन्देहः" इति वामनसूत्रदर्शनादवगम्यते । असौ सन्देहः शुद्धः आदावन्ते मध्ये च संशय एव प्रतिभया कथ्यमानो यत्र स्यात् स शुद्धसन्देहः, तथा यत्रादावन्ते च संशयो निश्चयो गर्भे मध्ये यस्य स तादृशो द्वितीयो निश्चयगर्भः सन्देहः, यत्रादौ मध्ये च संशयो निश्चयाऽन्तेऽवसाने यस्य स तादृशस्तृतीयो निश्चयान्तसन्देह इति एवं त्रिधा त्रिप्रकारकः सन्देह इत्यर्थः ।

( १७ ) शुद्धसंशयं निरूपयति—यत्रेति । यत्र संशये आदौ मध्ये चान्ते च संशये सत्येव, पर्यवसानं वाक्यपरिसमाप्तिः । शुद्धः विशेषणरहितः केवल इत्यर्थः ।

( १८ ) किमिति । काञ्चित्कामिनीमवलोक्य कस्यचिदुक्तिरियम् । इयं पुरोऽवलोक्यमाना रमणी तारुण्यं यौवनमेव तरुस्तस्य, रसभरेण रसातिशयेन जलसेकेन कतोद्भेदात् उद्भिन्ना उद्गता, अन्यत्र शृङ्गाररस एव रसो जलं तस्य भरेणातिशयेन उद्भिन्ना पूर्णा नवा अभिनवा अम्लाना वा वल्लरी मञ्जरी किम् ? तरुणीयं तारुण्योच्चासीमामारूढेत्यर्थः । वेलासु तटप्रदेशेषु प्रोच्छलितस्य पूरातिरेकादत्यन्तमुद्गतस्य लावण्यवारांनिधेः लावण्यसमुद्रस्य लहरिका लहरी तरङ्ग इति यावत् किम् ? अत्यन्तलावण्ययुतेयमितिभावः । अथवा अत्युत्कटा या उत्कलिका कान्तोत्सङ्गमायोत्कण्ठा सा एषामस्तीति तेषां तादृशानां कामुकानां सम्बन्धे स्वसमयस्य स्वसिद्धान्तस्य स्वाचारस्य वा उपन्यासे ज्ञापने विश्रम्भिणः प्रणयिन अभिलाषिण इति तात्पर्यम् ।

'समयाः सपथाचारकालसिद्धान्तसंविदः' इत्यमरः ।

'विश्रम्भः केलिकलहे विश्वासे प्रणयेऽपि च' इति मेदिनी ।

शृङ्गारिणो देवस्य प्रशस्तशृङ्गारिकामदेवस्य साक्षात् मूर्त्तिमती उपदेशस्य सूचिका यष्टिर्दण्डः किम् ? यथा विद्यालये यस्याः कस्या अपि विद्याया उपदेष्टारः चपलचित्तबालताडनाय यष्टिप्रदर्शनेन बालशिष्यान् प्रवर्तयति तथा कामदेवोऽपि अस्याःप्रदर्शनेन

( १९ ) यत्रादावन्ते च संशय एव मध्ये निश्चयः स निश्चयमध्यः ।

यथा—

( २० ) 'अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति पुनः
समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥'

( २१ ) अत्र मध्ये मार्तण्डाद्यभावनिश्चयः, राजनिश्चये द्वितीयसंशयोत्थानासंभवात् ।

---

स्वसिद्धान्ते कामुकान् प्रवर्त्तयतीत्याशयः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्रागेव ( १६८ पृ० ) ।

अत्र उपमेयभूतायां कामिन्यामुपमानभूतानां तथाविधवल्लर्यादीनां संशयादन्ततोऽपि निश्चयाभावात् तथात्वेनैव हि वाक्यपर्यवसानात् शुद्धसन्देहालङ्कारः। यथा वा—

'किमिन्दुः ? किं पद्मं ? किमु मुकुरबिम्बं ? किमु मुखम् ,?
किमब्जे ? किं मीनौ ? किमु मदनबाणौ ? किमु दृशौ ? ।
खगौ वा ? गुच्छौ वा ? कनककलशौ वा ? किमु कुचौ ?
तडिद्वा ? तारा वा ? ललितलतिका ? वा किमबला ? ॥

अत्राप्येकस्यामेवोपमाभूतायामबलायामुपमानभूतानामिन्द्वादीनां संशयात् तस्मिन्नेव च वाक्यसमाप्तेः शुद्धसन्देहः ।

( १९ ) निश्चयगर्भसन्देहमभिधातुमुपक्रमते—यत्रेति । "वामेन कर्णेन शृणोति" इत्यभिहितेऽर्थतो दक्षिणेन कर्णेन न शृणोतीत्यवगम्यते तद्वत् "निश्चयगर्भ" इत्यभिहितेऽर्थत आदावन्ते च संशय इत्यवगम्यते इति द्योतयन्नाह—आदावित्यादि । मध्यार्थको गर्भशब्दस्तदाह—निश्चयमध्य इति ।

( २० ) अयमिति । राजानं प्रशंसतः कस्यचिदुक्तिरियम् । अयं पुरतोऽवलोक्यमानः पदार्थः मार्त्तण्डः किम् ? भूलोकगतः सूर्यः, किम् ? इति संशयः । स प्रसिद्धो मार्त्तण्डः सप्तभिस्तुरगैरश्वैः युतो युक्तः "सर्वं वाक्यं सावधारणं भवति" इतिन्यायेन सप्तभिरेवाश्वयुक्तः, अयन्त्वसंख्यतुरगयुक्तत्वान्नायं मार्त्तण्ड इति पुनर्निश्चयः । तर्हि कृशानुः अग्निः किम् ? इति संशयः । एष कृशानुः सर्वा दिशो नियतं यथास्यात्तथा न प्रसरति न गच्छति किन्तु वाय्वभिमुखामेव दिशं प्रसरति, अयन्तु सर्वा एव दिशः प्रसरतीति न कृशानुरपीति पुनर्निश्चयः । तर्हि साक्षात् दृग्गोचरतां प्राप्तः कृतान्तो यमः किम् ? इति संशयः । असौ सः कृतान्तो महिषवाहनः, अयन्तु कदाचिदपि महिषं नारोहति किन्तु अश्वमारोहतीति न कृतान्तोऽपि; कः पुनरयमित्याशयः। हे राजन् ! आजौ सङ्ग्रामे "आजौ स्त्री समभूमौ सङ्ग्राम" इति मेदिनी, समालोक्य सम्यक् दृष्ट्वा प्रतिभटाः प्रतिपक्षिसैनिकाः, चिरं बहुकालं यथास्यात्तथा इति एवं विधान् विकल्पान् विविधसंशयान् विदधति कुर्वन्ति । शिखरिणीछन्दः तल्लक्षणन्तूक्तं प्रागेव ( १८४ पृ० ) ।

अत्रोपमेयभूते राजनि उपमानभूतानां मार्त्तण्डादीनां संशयात् आदावन्ते च तस्य [illegible]त्वान्मध्ये च प्रदर्शितरीत्या निश्चयात् निश्चयगर्भः सन्देहालङ्कारः ।

[illegible] ) कथमयं निश्चयगर्भ इति [illegible]त्वयमुपपादयति · अत्रेति । उत्कोशहणे इत्यर्थः ।

( २१ ) यत्रादौ संशयोऽन्ते च निश्चयः स निश्चयान्तः । यथा—

( २३ ) 'किं तावत्सरसि सरोजमेतदारा-
दाहोस्विन्मुखमवभासते तरुण्याः ।
संशय्य क्षणमिति निश्चिकाय कश्चि-
द्विब्बोकैर्बकसहवासिनां परोक्षैः ॥'

---

मार्त्तण्डादीनामभावस्य अन्योन्याभावस्य निश्चय अनुमानेन निर्णयः। ननु राज-निश्चयः किं न स्यादत आह—राजनिश्चयेति । द्वितीयोऽसौ संशयस्तस्योत्थानं तस्यास-म्भवः तस्मात् तथोक्तेः। अयम्भावः—त्वामिति कुम्भलोपस्याप्यस्य राज्ञः अनुमानेन निश्चये कृशानुः किमिति द्वितीयसंशयोत्पत्त्यसम्भवात् सामग्रीवैकल्यादिति। नचासं-ख्यतुरगयुक्तत्वादिना राज्ञो मर्त्तण्डाद्युपमानेभ्यः आधिक्योक्तेर्व्यतिरेकालङ्कार इति वाच्यम्, प्रथमतः सन्देहप्रतीत्यनन्तरं च वैधर्म्योपन्यासेन व्यतिरेकप्रतीतावप्युपजी-व्यत्वात् संशयचमत्कृतावपर्यवसानात् संदेहानुयायितया व्यतिरेकस्य सन्देहालङ्कारेणैव व्यपदेशौचित्यात् ।

( २२ ) निश्चयान्तं लक्षयति—यत्रादाविति । स्पष्टम् ।

( २३ ) किं तावदिति । शिशुपालवधे अष्टमे सर्गे पद्यमिदम् । सरसि जलाशये आरात् दूरे "आराद्दूरसमीपयोः" इत्यमरः, एतत् अवलोक्यमानम्, किं तावत् सरोजं कमलम्? आहो अथवा "आहो उताहो किमुत विकल्पे किं किमूत च" इत्यमरः, स्वित् किम् 'स्वित्प्रश्ने च वितर्के च" इत्यमरः, तरुण्याः कस्याश्चिद् नवयौवनायाः, मुखं वदनम् अवभासते राजते? इति इत्थं क्षणं क्षणावधि संशय्य सन्देहं विधाय कश्चित् कृष्णसह-चरः, बकसहवासिनां बकपक्षिभिः सह निवसतां सरसिजानामितिभावः। विब्बोकान-भिज्ञत्वातिशयबोधनाय कमलानाम् बकसहवासित्वेनोपन्यासः । परोक्षैरिन्द्रियागोचरैः अज्ञातैरितियावत् विब्बोकैः "विब्बोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः" इत्युक्तलक्षण-बोधकैः तद्गतैः स्त्रीणां भावविशेषैरित्यर्थः, निश्चिकाय निश्चयं कृतवान् "इदं तरुण्या मुख-मेव" इति निश्चयेन ज्ञातवानितिभावः । प्रहर्षिणीछन्दः तल्लक्षणन्तूक्तं प्रागेव (११८पृ०)।

अत्र उपमेये तरुण्या वदने आदावुपमानस्य कमलस्य संशयादन्ते च तद्वदनत्वेन निश्चयान्निश्चयान्तः सन्देहालङ्कारः ।

अयं लक्ष्यो व्यङ्ग्योऽपि च सम्भवति तत्र लक्ष्यो यथा—

"साम्राज्यलक्ष्मीरियमृष्यकेतोः सौन्दर्यसृष्टेरधिदेवता वा ।
रामस्य रामामवलोक्य लोकैरितिस्म दोलाऽऽरुह्ये तदानीम् ॥"

अत्र एकदा साम्राज्यलक्ष्मीरित्यूह्यते, अथ तं पक्षं परित्यज्य सौन्दर्याधिदेवतेति वित-र्क्यते इत्युभयकोट्यालम्बनतया दोलासादृश्यात् संशयोऽत्र दोलाशब्देन लक्ष्यते ।

अयं व्यङ्ग्यो यथा—

"तीरे तरुण्या वदनं सहासं नीरे सरोजं च मिलद्विकासम् ।
आलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धालिकिशोरमाला ॥"

अत्र पुरोवर्त्तिवदनसरोजरूपं व्यक्तिद्वयमवलोक्य "अभेदसम्बन्धेन इदं पद्मम्? अथवा इदम्" इत्याकारात् पद्मरूपे एकस्मिन् धर्मिणि 'इदं वा इदं वा' इति उभयकोटि

( २४ ) अप्रतिभोत्थापिते तु 'स्थाणुर्वा पुरुषो वा' इत्यादिसंशये नायमलङ्कारः।

( २५ ) 'मध्यं तव सरोजाक्षि ! पयोधरभरार्दितम् ।
अस्ति नास्तीति संदेहः कस्य चित्ते न भासते ॥'

( २६ ) अत्रातिशयोक्तिरेव, उपमेये उपमानसंशयस्यैवैतदलङ्कारविषयत्वात् ।

---

प्रकारत्वात् संशयः । इदमिदं चैत्यस्याऽशब्दबोध्यत्वाच्च व्यङ्ग्यत्वम् ।

संशयश्चायं क्वचिदनाहार्यः, क्वचिदाहार्यः । यत्र हि कविना परनिष्ठः संशयो निबध्यते प्रायस्तत्रानाहार्यः, यत्र च स्वगत एव तत्राहार्यः । तत्राद्यो यथा—"किं तारुण्यतरोरियम्" इत्यादौ संशयानस्य निश्चयाभावात् । "अयं मार्त्तण्डः" इत्यादौ पुनरन्यत्र वक्तुस्तत्त्वज्ञत्वात् । "किमिन्दुः" इत्यादावपि अनाहार्य एव ।

क्वचित्परनिष्ठोऽपि कविना निबध्यमान आहार्यो भवति । यथा—

"गगनादुदितो गभस्तिमानुतवायं शिशिरो हिमावसुः ।
मुनिरेवमरुन्धतीपतिः सकलज्ञः समशेत राघवे ॥"

अत्र मुनेर्वशिष्ठस्य सर्वज्ञत्वेनोपात्तस्य संशय आहार्य एव ।

परम्परितोऽप्ययं सम्भवति । यथा—

"विद्वद्दैन्यतमस्विमूर्त्तिरथवा वैरीन्द्रवंशाटवी
दावाग्निः किमसौ महोज्ज्वलयशः शीतांशुदुग्धाम्बुधिः ।
किं वानङ्गभुजङ्गदष्टवनिताजीवातुरेवं नृणां
केषामेष नराधिपो न जनयत्यल्पेतराः कल्पनाः ॥"

अत्र वैरीन्द्रवंशस्य कृते दवाग्निः, अथवा दुग्धाम्बुधिरित्यादिप्रकारकः संशयः । दारिद्र्यादिषु तमस्त्वादेरारोपो राज्ञि सूर्यत्वाद्यारोपस्य निमित्तं तेन परम्परितत्वम् ।

( २४ ) लक्षणे प्रतिभोत्थित इति विशेषणेन व्यावृत्तिं प्रदर्शयति—अप्रतीति । अप्रतिभया कविप्रौढोक्तिरहितेन वस्तुस्वभावमात्रेणेत्यर्थः, उत्थापिते उत्पादिते । ननु यथात्र संशयो न प्रतिभोत्थितः, तथोभयोरुपमानोपमेयभावस्याप्यभावो वर्त्तत इति द्व्यङ्गविकलत्वादुदाहरणमिदमसङ्गतमिति चेत् ? मैवम्, स्थाणुपुरुषयोः तुल्यस्वरूपत्वेन उपमानोपमेयभावस्य विद्यमानत्वात् तन्मूलकेनैव संशयस्योत्थापनात् अन्यथा संशयानुपपत्तेः । नचैवमप्युक्तोदाहरणे वैचित्र्याभावादलङ्कारसामान्यलक्षणस्यैवानागमनात् कथमयमलङ्कार इति वाच्यम्, तद्वैचित्र्यसत्ताबोधनार्थमेव विशेषणोपादानात् ।

( २५ ) नन्वेवं प्रतिभोत्थित इत्यस्य सार्थकत्वेऽपि "प्रकृतेऽन्यस्य" इत्यस्य किं प्रयोजनमत आह—मध्यमिति । सरोजं नीलोत्पलमिव अक्षिणी लोचने यस्याः तत्सम्बुद्धौ हे सरोजाक्षि ! पयोधरभरेण वक्षोजभारेण अर्दितं पीडितं तव मध्यमुदरदेशः, अस्ति विद्यते, नास्ति न विद्यते इति वा सन्देहः संशयः, कस्य जनस्य चित्ते स्वान्ते न भासते न प्रकाशते अपि तु सर्वस्यैव स्वान्ते भासत इत्यर्थः । अत्यन्तकृशत्वादिति भावः ।

( २६ ) अत्रेति । चित्ते तादृशसंशयप्रकाशनासम्बन्धेऽपि तत्सम्बन्धप्रतिपादनादसम्बन्धे सम्बन्धरूपा अतिशयोक्तिरेव न तु सन्देह इत्यर्थः । कुत इत्यत आह—उपमेय इति । एतदलङ्कारविषयत्वात् सन्देहालङ्कारजीवातुत्वात् । एवञ्च प्रकृतपदेन उपमेयस्य अन्यपदेन चोपमानस्य परिग्रह इत्यभिप्रायः

( २७ ) साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान्प्रतिभोत्थितः ॥ ३६ ॥

यथा—

( २८ ) 'मुग्धा दुग्धधिया गवां विदधते कुम्भानधो बल्लवाः
कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि ।
कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया
सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका ॥'

---

( २७ ) ननूक्तसन्देहालङ्कारवदन्यालङ्कारोऽयथार्थस्वरूपोऽस्ति न वेतिविचिकित्सायां भ्रमस्वरूपं भ्रान्तिमदलङ्कारं लक्षयति—साम्यादिति । साम्यात् सादृश्यवशात् अतस्मिन् तदभाववति वस्तुनि प्रतिभोत्थिता केवलकविप्रौढोक्तिसिद्धा तद्बुद्धिस्तद्वस्तुप्रकारकं ज्ञानम् , भ्रान्तिरस्यास्तीति भ्रान्तिमान् नाम अलङ्कारो भवेदित्यनुषज्यते । अत्र भ्रान्तिमात्रमलङ्कारः भ्रान्तिमानलङ्कार इतिव्यपदेशस्त्वौपचारिकः । तथा चोक्तम्—

"प्रमात्रान्तरधीर्भ्रान्तिरूपा यस्मिन्ननूद्यते ।
स भ्रान्तिमान् इति ख्यातोऽलङ्कारे त्वौपचारिकः ॥"

तथा च प्रतिभोत्थितत्वे सति सादृश्यमूलकः अतस्मिंस्तद्बुद्धिर्भ्रमो भ्रान्तिमानिति फलितम् । प्रतिभोत्थित इत्युपादानेन "रङ्गे रजतम्" इत्यादेर्मर्मप्रहारकृतचित्तविक्षेपविरहादिकृतोन्मादादिजन्यभ्रान्तेश्च नालङ्कारत्वम् सादृश्यप्रयोज्यत्वाभावात् । अत एव—

"दामोदरकराघातविह्वलीकृतचेतसा । दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्थलम्" ॥

इत्यादौ नायमलङ्कार इत्यन्यत्र स्पष्टम् । एतत्प्रयोजनमनुपदमेव वृत्तावपि वक्ष्यति ।

नच रूपकेऽतिशयोक्तौ चातिव्याप्तिरितिवाच्यम्, आरोपाध्यवसायभ्रमैःपरस्परं भेदात् । तथाहि—एकस्मिन्नन्यस्य आरोपस्थले रूपकम्, एकस्मिन्नन्यस्य अध्यवसायस्थले अतिशयोक्तिः, एकस्मिन्नन्यस्य भ्रमस्थले भ्रान्तिमान् । संशये तु नातिव्याप्तिः तत्र पक्षद्वयेऽनिश्चितबुद्ध्याकारोदयात् ।

( २८ ) मुग्धा इति । मुग्धा अप्रौढा बल्लवा गोपाः, दुग्धधिया तत्र चन्द्रिकापतनात्, दुग्धमिदमितिभ्रमेण गवामधः गवां स्तनतले कुम्भान् दोहनपात्राणि विदधते स्थापयन्ति । मुग्धाः कान्ता नार्योऽपि कैरवशङ्कया चन्द्रिकापतनात् कुमुदमितिभ्रमेण "सिते कुमुदकैरवे" इत्यमरः, कुवलयं नीलाब्जम्

"श्यामं शितिकण्ठनीलं कुवलयमिन्दीवरं च नीलाब्जम्" इति नाममाला,

कर्णे श्रवणे कुर्वन्ति स्थापयन्ति । तथा मुग्धा शबरी भिल्ली चन्द्रिकापतनादेव मुक्ताफलाशङ्कया मुक्ताफलप्राप्तुमिच्छया, कर्कन्धूफलं बदरीफलम् उच्चिनोति सञ्चिनुते । अत एव सान्द्रा निविडा सर्वतोवाढं व्याप्तेतियावत् , चन्द्रमसश्चन्द्रिका विधोर्ज्योत्स्ना, कस्य जनस्य चित्तभ्रमं न कुरुते ? अपि तु सर्वस्यैव करोतीतिभावः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक् ( १२८ पृ० ) ।

अत्र चन्द्रिकायां दुग्धस्य, कुवलये कुमुदस्य, बदरीफले च मुक्ताफलस्य बोधात् भ्रान्तिमानलङ्कारः ।

( २९ ) अस्वरसोत्थापिता भ्रान्तिर्नायमलङ्कारः। यथा--'शुक्तिकायां रजतम्' इति।

( ३० ) न चासादृश्यमूला। यथा--

( ३१ ) 'संगमविरहविकल्पे वरमिह विरहो न संगमस्तस्याः।
सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे॥'

( २९ ) एवमुदाहरणं प्रदर्श्य "प्रतिभोत्थित" इत्यस्य सार्थक्यं दर्शयति-अस्वरसेति। अस्वरसेन अस्वेच्छया कवेरनभिलाषयेत्यर्थः, उत्थापिता वस्तुस्वभावेनैव जनिता। अयं भ्रान्तिमान्। इति वाक्ये। नहि शुक्तिकायां जातापि रजतबुद्धिरलङ्कारतामवगमयति। नन्वयं यथा न प्रतिभोत्थितस्तथा उपमानोपमेयभावोऽपि नास्तीति तदङ्गविकलत्वान्नेदमुदाहरणमितिचेत्? शुक्तिरजतयोः चाकचिक्यविशेषेणैव सादृश्यावगमात्। नचैवमित्थंभूतविषये वैचित्र्याभावात्सामान्यलक्षणस्यैवाप्रवृत्त्या कथं भ्रान्तिमानितिवाच्यम्, पूर्ववदेवात्रापि वैचित्र्यविशेषसत्तावश्यकताप्रत्यायनार्थमेव तद्विशेषणोपादानात्।

( ३० ) नन्वेवं भवतु प्रतिभोत्थित इत्यस्य सार्थक्यं साम्यादित्यस्य किं प्रयोजनमत आह—नचेति। असादृश्यमूलाभ्रान्तिश्च इति, नायमलङ्कार पूर्वतोऽनुषज्य वाक्यार्थो वर्णनीयः।

( ३१ ) सङ्गमेति। सखायं प्रति विरहिणः कस्यचित्सखेदोक्तिरियम्। तस्या मनसाविषयीक्रियमाणायाः प्रियतमायाः, सङ्गमविरहयोः संयोगविश्लेषयोः, विकल्पे एकतरस्य श्रेष्ठत्वविवेचने कर्तव्ये सति, विरह एव वरं न पुनः सङ्गम इत्येव विचारणीयमित्याशयः। विरहस्य श्रेष्ठत्वे हेतुमाह—सङ्ग इति। सङ्गे संयोगे प्रियतमा तथा प्रत्यक्षविषयीभूता एकैव, किन्तु विरहे विश्लेषे त्रिभुवनं त्रैलोक्यमपि तन्मयं प्रियतमामयं भवति, अतो विरहस्यैव श्रेष्ठत्वमिति भावः। आर्याछन्दः तल्लक्षणन्तूक्तं प्राक्।

अत्र विरहावस्थायामतिशयभावनावशात् त्रिभुवनस्थेषु निखिलेष्वेव वस्तुषु केवलकविप्रौढोक्तिसिद्धे प्रियतमाभ्रमे विद्यमानेऽपि न सादृश्यमूलकत्वमित्यतो न भ्रान्तिमानलङ्कार इति भावः।

एवञ्च लोभादिना भ्रमेऽपि नायं भ्रान्तिमानलङ्कारो यथा—

"जगद्धनमयं लुब्धाः कामुकाः कामिनीमयम्।
नारायणमयं धीराः पश्यन्ति परमार्थिनः॥"

नचात्र धनभेदेऽपि धनाभेदाध्यवसायरूपातिशयोक्तिरेवेतिवाच्यम्, अतिशयोक्तिघटकाध्यवसायस्य आहार्यत्वे एव तथात्वात्। अत्र तु प्रथमे चिन्तारूपव्यभिचारिभावध्वनिः, द्वितीये शृङ्गारध्वनिः, तृतीये भावध्वनिरेव।

ध्वन्यमानोऽयं यथा—

"कनकद्रवकान्तिकान्तया मिलितं राममुदीक्ष्य कान्तया।
परिफुल्लपतत्रपल्लवैर्मुमुदे चातकपोतकैर्वने॥"

अत्र चकोराणां मेघदर्शने प्रमोदस्वाभाव्यात् केवलरामदर्शनेन प्रमोदप्रतिपादने भगवतो रामस्य मेघसादृश्यस्य प्रसिद्धत्वात् तद्दर्शने तद्दर्शनज्ञानस्यार्थिकत्वाद्भ्रान्तिः प्रतीयते।

( ३२ ) क्वचिद्भेदाद्ग्रहीतॄणां विषयाणां तथा क्वचित् ।
एकस्यानेकधोल्लेखो यः स उल्लेख उच्यते ॥ ३७ ॥

क्रमेणोदाहरणम्--

( ३३ ) 'प्रिय इति गोपवधूभिः शिशुरिति वृद्धैरधीश इति देवैः ।
नारायण इति भक्तैर्ब्रह्मेत्यग्राहि योगिभिर्देवः ॥'

( ३४ ) अत्रैकस्यापि भगवतस्तत्तद्गुणयोगादनेकत्वोल्लेखे गोपवधूप्रभृतीनां रुच्यादयो यथायोगं प्रयोजकाः । यदाहुः--

( ३५ ) 'यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते ।
आभासोऽप्यर्थ एकस्मिन्ननुसंधानसाधितः ॥'

---

( ३२ ) भ्रान्तिमदलङ्कारप्रतिपादनानन्तरं प्रायेण तदनुयायितया उल्लेखालङ्कारं प्रतिपादयति--क्वचिदिति । क्वचित् यत्र तत्र स्थले ग्रहीतॄणां प्रतिपत्तॄणां भेदात् अनैक्यात्, क्वचिद्वा विषयाणां ग्राह्याणां प्रतिपाद्यानां व्यावर्त्तकधर्मादीनामितियावत् तथा भेदात् अनैक्यात, एकस्य यस्य कस्यचिद्वस्तुनः य अनेकधा विविधप्रकारेण उल्लेखोऽवधारणं स उल्लेखस्तन्नामाऽलङ्कारः । क्वचिदित्यनेन देवदत्तं देवदत्तापतिम्, देवदत्तिः पितरम्, दैवदत्तिजं पितामहं मनुते इत्यादेर्व्यावृत्तिः ।

( ३३ ) तत्र ग्रहीतृभेदेनोदाहरति--प्रिय इति देवः श्रीकृष्णः गोपवधूभिर्गोपिकाभिः प्रियः कान्त इति, वृद्धैः पुरातनैर्नन्दाद्यैर्वसुदेवाद्यैर्वा शिशुर्बालक इति, देवैर्महेन्द्रादिभिः अधीशोऽधिपतिरिति, भक्तैः प्रेमिभिरुद्धवनारदादिभिर्नारायण इति, "आपो हि नाराः" तदयनस्तत्स्थो नारायणः जलशायी इत्यर्थः, योगिभिः कपिलगर्गप्रभृतिभिर्ब्रह्म परमात्मेति अग्राहि अबोधि । जलशायिरूपनीरूपत्वेन भेदान्नारायणब्रह्मणो भेदः । आर्याछन्दस्तल्लक्षणमुक्तं प्राक् ( १८६पृ० ) ।

अत्र गोपवध्वादिग्रहीतृभेदादेकस्य श्रीकृष्णस्य प्रियत्वादिना विविधप्रकारेणोल्लेखात्प्रकृतलक्षणसङ्गतिः ।

( ३४ ) नन्वेकस्यानेकरूपेणोल्लेखे किं प्रयोजकं सर्वेषां ग्रहीतॄणां वा किमित्येकरूपेणोल्लेखो न भवतीत्यत आह--अत्रेति ।

उक्तोदाहरणे इत्यर्थः । भगवतः श्रीकृष्णस्य तत्तद्गुणयोगात् तस्य तस्य प्रियत्वशिशुत्वादेर्गुणस्य धर्मस्य सम्बन्धात् । गोपवधूप्रभृतीत्यत्र प्रभृतिपदेन वृद्धादेः परिग्रहः । रुचिरभिलाषम्, आदिपदेन वक्ष्यमाणकारिकोक्तार्थित्वव्युत्पत्त्योः परिग्रहः । यथायोगं यथासम्भवम् । प्रयोजकाः कारणानि । तथाच भगवति श्रीकृष्णे यावद्गुणस्य विद्यमानत्वेऽपि गोपवधूप्रभृतीनां रुच्यादिभेदेन विविधप्रकारेणैवोल्लेखो न त्वेकरूपेण रुच्यादीनामन्यतमस्य कारणस्य सर्वथाविद्यमानत्वादित्याशयः । उक्तार्थे प्राचां सम्मतिं दर्शयति--यदाहुरिति ।

( ३५ ) यथारुचीति । रुचिमभिलाषमनतिक्रम्य, अर्थित्वमर्थः प्रयोजनापेक्षाऽस्तीति तस्य भावस्तत्त्वं, तदनतिक्रम्य यथारुचि प्रयोजनापेक्षित्वमित्यर्थः, व्युत्पत्तिर्भावनां तामनतिक्रम्य "यथाऽसादृश्ये" इति पाःसूत्रेणाव्ययीभावः । तथा एकस्मिन्नपि किं पुनरनेकविधे अर्थे विषये यथारुचि इच्छानुसारेण, यथार्थित्वं प्रयोजनानुसारेण, यथाव्युत्पत्ति

( १६ ) अत्र भगवतः प्रियत्वादीनां वास्तवत्वाद् ग्रहीतृभेदाच्च न मालारूपकम्,

भावनानुसारेण च अनुसन्धानसाचिवः विविधभावनात्वेनोत्पादितः आभासो ज्ञानविशेषः, भिद्यते भिन्नभिन्नो भवति तथाच एकस्मिन्नपि विषये व्यक्तिभेदेन विभिन्नप्रकारकभावनोत्पत्तौ तत्तद्विशेषणज्ञानविशेषसहकृतं रुच्यादिकं कारणमितिभावः। एवञ्च यथा एकस्मिन्नपि पुरुषे तत्पत्न्या रुच्यनुसारेण भावनया प्रिय इति ज्ञानम्, सुहृदः प्रयोजनानुसारेण भावनया सखेतिज्ञानम्, दुष्टचेतसः अवधारणानुसारेण भावनया दुष्ट इति ज्ञानम्, तथा एकस्मिन्नेव श्रीकृष्णे गोपिकादीनां नन्दादीनां च रुच्यनुसारेण भावनया प्रिय इति शिशुरिति च ज्ञानम्, महेन्द्रादीनां देवानाम् उद्धवादीनां भक्तानाञ्च प्रयोजनानुसारेण भावनया अधीश इति नारायण इति च ज्ञानम्, योगिनां तु अवधारणानुसारेण भावनया ब्रह्मेतिज्ञानमित्यभिप्रायः।

( १६ ) ननु "मुखं चन्द्रः" इत्यत्र मुखे चन्द्रत्वारोपवत् प्रिय इत्यादौ षड्विकारादिशून्ये श्रीकृष्णे प्रियत्वाद्यनेकारोपात् मालारूपकस्य, यद्वा परमार्थतो गुणक्रियाशून्ये तात्त्विके ब्रह्मस्वरूपे श्रीकृष्णे गोपिकादीनां प्रीत्युत्पादकत्वस्य, जगद्वृद्धे नन्दादीनां शिशुत्वस्य, देवानामधीपतित्वस्य देवकीनन्दने भक्तानां नारायणत्वस्य मनुष्यस्वरूपे योगिनां ब्रह्मत्वस्य च भ्रमाद् भ्रान्तिमतोऽलङ्कारस्य च स्वीकारेणैवेष्टसिद्धौ कथं सर्वमतासिद्ध उल्लेखाख्यालङ्कारोऽत्र स्वीक्रियत इत्यत आह—अत्रेति। वास्तवत्वात् अनारोपितत्वात्, ग्रहीतृभेदात् प्रतिपत्तॄणां नानात्वात् एतच्चोभयमुभयं प्रत्येव कारणमिति ज्ञेयम्। तथाच पृथिव्या भारोद्धरणाय जन्मादिषड्विकाराश्रये श्रीकृष्णे गोपिकाद्यपेक्षया सर्वेषामेव प्रियत्वादीनां धर्माणां सर्वथा यथार्थत्वेनारोपात् सादृश्यजनितभ्रान्तेरसत्वात् प्रतिपत्तृभेदाच्च न मालारूपकं नापि भ्रान्तिमदलङ्कारो भवितुमर्हति, न हि कोऽपि यथार्थत एव मुखे चन्द्रत्वारोपः चन्द्रत्वभ्रमो वा विधत्ते न वा "मुखं चन्द्रः" इत्यादौ मुखे चन्द्रत्वारोपप्रत्यये 'रङ्गे रजतम्" इत्यादौ च रङ्गे रजतत्वप्रकारकभ्रमप्रत्यये वा प्रतिपत्तृभेदः सम्भवितुमर्हतीतिभावः। एतेन—

"पिता प्रजानां शमनो रिपूणां वनीकपानाममरद्रुमश्च।
कविः कवीनां सुहृदां सुधांशुः सतां गुरुर्भूमिपतिः प्रतीतः॥"

"यमः खलु महीभृतां हुतवहोऽसि तन्वीभृतां
सतां प्रति युधिष्ठिरो धनपतिर्धनाकाङ्क्षिणाम्।
गृहं शरणमिच्छतां कुटिलकोटिभिर्निर्मितं
त्वमेक इह भूतले बहुविधो विधात्रा कृतः॥"

इत्यादौ पितृत्वादीनां यमत्वादीनां च प्रकाराणाम् वास्तवत्वेऽपि प्रतिपत्तृभेदादेव न मालारूपकमितिसूचितं भवतीत्यवगन्तव्यम्।

"कपोले मार्जारः पय इति कराँल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान् बिसमिति करी सङ्कलयति।
रतान्ते तल्पस्थान् हरति वनिताऽप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति॥

इत्यादौ तत्तद्रूपतायाः सादृश्यमूलकत्वात् कराणां च विभिन्नत्वात्तेषु जात्यभिप्रायेणैकत्वारोपेऽपि शुभ्रत्वैक्येन भेदमूलकताया अनुपपत्तेश्च भ्रान्तिमानेवेतिबोध्यम्

( ३७ ) न च भ्रान्तिमान्, न चायमभेदे भेद इत्येवंरूपातिशयोक्तिः। तथाहि- 'अन्यदेवाङ्गलावण्यम्-' इत्यादौ लावण्यादेर्विषयस्य पृथक्त्वेनाध्यवसानम्। न चेह भगवति गोपवधूप्रभृतिभिः प्रियत्वाद्यध्यवसीयते प्रियत्वादेर्भगवति तत्काले तात्त्विकत्वात्।

( ३८ ) केचिदाहुः--"अयमलङ्कारो नियमेनालङ्कारान्तरविच्छित्तिमूलः। उक्तोदाहरणे च शिशुत्वादीनां नियमनाभिप्रायात्प्रियत्वादीनां भिन्नत्वाध्यवसाय इत्यतिशयोक्तिरस्ति, तत्सद्भावेऽपि ग्रहीतृभेदेन नानात्वप्रतीतिरूपो विच्छित्तिविशेष उल्लेखाख्यभिन्नालङ्कारप्रयोजकः।

( ३९ ) श्रीकण्ठजनपदवर्णने—'वज्रपञ्जरमिति शरणागतैः, अम्बरविवरमिति

( ३७ ) नन्वेवं सति अभेदे श्रीकृष्णे प्रियत्वशिशुत्वादिरूपभेदाध्यवसायेनातिशयोक्तावन्तर्भाव्यतामलमतिरिक्तेनेत्याशङ्कायामाह—नचेति। एवंरूपातिशयोक्तिर्न च वाच्यमित्यर्थः। कुत इत्याह—तत्र हीति। हि यतः, तत्र अभेदे भेदरूपायामतिशयोक्तावित्यर्थः। अन्यदेवेत्यस्य व्याख्यानमतिशयोक्तिप्रकरण एव स्फुटीभविष्यति। लावण्यादेस्तत्तद्रूपस्य। पृथक्त्वेन सामान्यलावण्यादिभ्यो भिन्नत्वेन अध्यवसानं निश्चित्य प्रतिपादनम्। इह उक्तोदाहरणे। भगवति श्रीकृष्णे। तत्काले श्रीकृष्णगोपिकादीनां सत्ताकाले, तात्त्विकत्वात् वास्तविकत्वात्। तत्र निश्चितसत्ताकस्य विषयस्यारोपवदध्यवसायस्यापि संभावनायाः वक्तुमशक्यत्वादिति भावः।

( ३८ ) अलङ्कारान्तरासङ्करात् तन्निमूल एव नियमेनायमलङ्कार इति केचिदाहुः तदुपपादयति—केचिदिति। अयमुल्लेखाख्यः, नियमेनाव्यभिचारेण अलङ्कारान्तरविच्छित्तिः अन्यालङ्कारकृतचमत्कारविशेष एव मूलं कारणं यस्य स तादृशः अलङ्कारान्तरबीजभूतचमत्कारविशेषमादायैवायमलङ्कारो जायते न पुनः स्वत इत्याशयः। उक्तोदाहरणे "प्रिय" इत्यादौ चेत्यर्थः, शिशुत्वादीनामित्यत्रादिपदेन "प्रियत्वादीनां परिग्रहः। नियमाभिप्रायात् श्रीकृष्णो गोपिकानां सविधे प्रिय एव, नन्दादीनां सविधे च शिशुरेवेत्यादिनियमाभिप्रायेण प्रतिपादनात्, प्रियत्वादेः सकाशात् शिशुत्वादीनां भिन्नत्वस्य अनेकत्वस्य अध्यवसाय इति अस्मात्कारणात् अभेदे भेदाध्यवसायमूला अतिशयोक्तिर्वर्तत इत्यर्थः। नन्वेवमतिशयोक्तिरेव स्वीक्रियतां किमनेनेत्यत आह— तत्सद्भावेऽपि चेति। तादृशातिशयोक्तेर्विद्यमानत्वेऽपि चेत्यर्थः। ग्रहीतृभेदेन प्रतिपत्तृपार्थक्येन। विच्छित्तिविशेषः अन्यविधचमत्कारविशेषः। उल्लेखाख्येन भिन्नः सङ्कीर्णोऽसावलङ्कारोऽतिशयोक्त्यलङ्कारस्तस्य प्रयोजको बोधकः। अत्र केचिदित्युक्त्याऽस्वरसः सूचितस्तद्बीजन्तु—"नचेह भगवति" इत्याद्युक्तिरेवेत्यवधेयम्।

( ३९ ) यदि स्वयं प्रतिपत्तृभेदेन भेदेऽतिशयोक्तिसद्भाव एव स्यात्तदाऽतिशयोक्तिप्रकारविशेष एव स्यात् नच तथा अलङ्कारान्तरेऽपि सम्भवादित्याह—श्रीकण्ठेति। बाणभट्टकृतहर्षचरिते श्रीकण्ठाख्यो यो जनपदस्तद्वर्णने क्रियमाणे स्थाण्वीश्वराख्य जनपदस्य वर्णनप्रसङ्गः तृतीय उच्छ्वासे इति भावः। शरणागतैः शत्रुभयेनागत्य रक्षत्वेनाश्रितैः वज्रमिन्द्रायुधं तदेव पञ्जरं तदेव निलीय वस्तुं योग्यं स्थानमिति

वातिकैः' इत्यादिरतिशयोक्तेर्विविक्तो विषयः । इह च रूपकालङ्कारयोगः ।"

(४०) वस्तुतस्तु—'अम्बरविवरम्—'इत्यादौ भ्रान्तिमन्तमेवेच्छन्ति न रूपकम्, भेदप्रतीतिपुरःसरस्यैवारोपस्य गौणीमूलरूपकादिप्रयोजकत्वात् ।

(४१) यदाहुः शारीरकमीमांसाभाष्यव्याख्याने श्रीवाचस्पतिमिश्राः-'अपि च

---

शम्, अमोघ वेनाप्रतिहतत्वेन स्थानस्य वज्रपञ्जरत्वेन प्रतिपादनम् अनेन शत्रूणां तत्र प्रवेशासम्भव इति सूचितम्, वातिकैः वातप्रभृतैः देवयोनिविशेषैः, यद्वा सङ्कीर्णस्थानस्थिततया वात एषामस्तीति अर्श आदित्वादच्, तैः, वातरोगविशिष्टैर्जनैः, अम्बरविवरम् आकाशस्य गुहारूपं स्थानम्, स्वेच्छानुसारेण यत्र तत्रापि सञ्चरणसम्भवादित्याशयः । अमन्यतेत्येवमुत्तरक्रियया सम्बन्धः । विविक्त अतिरिक्तः कस्याप्यध्यवसायस्यासत्त्वादिति भावः । नन्वेवं सति "नियमेनालङ्कारान्तरविच्छित्तिमूल" इत्युक्तव्यभिचार इत्यत आह—इह चेति । वज्रपञ्जरमित्यादौ चेत्यर्थः । रूपकालङ्कारयोगः तत्र जनपदे वज्रपञ्जरत्वाम्बरविवरत्वयोरारोपादिति भावः । एवञ्च वज्रपञ्जरमित्यादिस्थले रूपकजनितचमत्कारविशेषमूल एवोल्लेखालङ्कार इति तेषामभिप्रायः ।

(४०) उक्तोदाहरणे रूपकसम्बन्धं स्वीकुर्वन्नाह—वस्तुतस्त्विति । यद्यपि केचित्तथा प्राहुः किन्तु सिद्धान्तनये नेति भावः । आदिशब्देन वज्रपञ्जरमित्यस्य परिग्रहः । अत्राम्बरविवरमिति दर्शनेन तदानीन्तनहर्षचरितादिपुस्तके प्राय एतस्यैव पूर्वं पाठस्ततो वज्रपञ्जरमित्यस्येत्यवगम्यते । भ्रान्तिमन्तं भ्रान्तिमदलङ्कारम्, इच्छन्ति तत्त्वज्ञा इति शेषः । न रूपकमिति । रूपकालङ्कारयोग इति तु केषाञ्चिन्मतानुसारेणोक्तमित्याशयः । कथं न रूपकमित्यत आह—भेदेति । भेदप्रतीतिपुरःसरस्यैव न त्वभेदप्रतीतिपुरस्सरस्य ।

गौणी सादृश्यसम्बन्धयुता सारोपालक्षणैव मूलं यस्य तथोक्तस्य रूपकादेः । आदिपदेन 'मुग्धा दुग्धधिया" इत्यादौ मिथ्याज्ञानस्य कविप्रौढोक्तिसिद्धत्वेन कविना वस्त्वादिनिष्ठत्वेन सत्यत्वेनोपनिबद्धत्वादपह्नुत्यादेः परिग्रह इति लोचनकारमतम् । परे तु परिणामादेर्ग्रहणमित्याहुः । प्रयोजकत्वात् तादात्म्येन तत्स्वरूपत्वात् । एवञ्च "मुखं चन्द्रः" इत्यादौ प्रथममुभयोरेव मुखचन्द्रयोः साक्षादभिधानेन परस्परं पार्थक्यप्रतीतिः, किन्तु 'मुखं चन्द्र' एवेत्यारोपतादात्म्येन रूपकं बोधयति तन्मूलन्तु मुखरूपविषयस्य अनिगीर्णस्वरूपतया सादृश्यवशया सारोपाख्यगौणीलक्षणैव । प्रकृते तु जनपदरूपविषयस्य समीपे साक्षाच्छब्देनाप्रतिपादनात् परस्परं भेदावगमो न, तथैव च तस्य निगीर्णस्वरूपतया जनपदरूपमूलभूतायाः सारोपाख्यगौणीलक्षणाया असम्भवात् न रूपकम्, परञ्च "मुग्धा दुग्धधिया" इत्यादिवत् जनपदे अम्बरविवरादिभ्रमाद् भ्रान्तिमदलङ्कार एवेत्याशयः ।

(४१) गौण्या लक्षणाया भेदप्रतीतिपुरस्सरत्वे प्राचीनसम्वादमाह—यदाहुरिति । ब्रह्मसूत्राणां श्रीशङ्कराचार्यभगवत्पादैः कृतं भाष्यं शारीरकभाष्यं तस्य व्याख्या तत्र तादृशे "अथातो ब्रह्मजिज्ञासा" इति प्रथमसूत्रस्य भाष्यव्याख्यानावसरे इति भावः, श्रीवाचस्पतिमिश्राः तद्भाष्यविवृतिभामतीकाराः "परशब्द अन्यवाचकः शब्दः, यथा—"एतत्तैलम्" इत्यादौ तिलभवस्नेहवाचकस्तैलशब्द इति भावः, परत्र अन्यस्मिन्नथ एत-

पर शब्दः परत्र लक्ष्यमाणगुणयोगेन वर्तते इति । यत्र प्रयोक्तृप्रतिपत्त्रोः संप्रतिपत्तिः स गौणः, स च भेदप्रत्ययपुरःसरः' इति ।

( ४२ ) इह तु वार्तिकानां श्रीकण्ठजनपदवर्णने भ्रान्तिकृत एवाम्बरविवराद्यारोप इति ।

( ४३ ) अत्रैव च 'तपोवनमिति मुनिभिः कामायतनमिति वेश्याभिः' इत्यादौ परिणामालङ्कारयोगः ।

( ४४ ) 'गाम्भीर्येण समुद्रोऽसि गौरवेणासि पर्वतः ।'

( ४५ ) इत्यादौ चानेकधोल्लेखे गाम्भीर्यादिविषयभेदः प्रयोजकः । अत्र च रूपकयोगः ।

---

त्पदवाच्ये सार्षपादिस्नेहे इति भावः लक्ष्यमाण उभयोः साधारणधर्मतया ज्ञायमानो यो गुणो धर्मस्तस्य योगेन सम्बन्धेन, यथा लक्ष्यमाणो गुणो घृतादिभिन्नद्रवत्वरूपस्तस्य योगेन वर्त्तते उपस्थापकतासम्बन्धेनेत्याशयः । यत्र यस्मिन् शब्दव्यापारे सति प्रयोक्तसम्प्रतिपत्त्रोः, एतत्तैलमित्यादेरुच्चारिता प्रयोक्ता तद्वाक्यार्थाभिज्ञः प्रतिपत्ता चेति तयोः सम्प्रतिपत्तिः साधारणधर्मस्य तुल्यमेव सम्यग् ज्ञानमुत्पद्यते स गौणो गौणीलक्षणाविषयः शब्दव्यापार इत्यर्थः । तथा च गौणीलक्षणा हि सादृश्यमूला भवति, सादृश्यं च भेदे सत्येवेति एतत्तैलमित्यादौ तैलादिशब्दा एतदादिषु लक्ष्यमाणगुणसम्बन्धेन विद्यन्ते, तादृशी च सम्प्रतिपत्तिस्तत्तद्वक्तृबोध्योरवतिष्ठते । यथा वा "गौर्वाहीक" इत्यादौ प्रथमतो गोवाहीकयोः परस्परं पार्थक्यप्रतीतिः, किन्तु गोशब्दो जाड्यमान्द्यतिछन्मूत्रपुरीषत्वसाधारणधर्मयोगेन वाहीकार्थे वर्त्तते तत्र च वक्तृश्रोत्रोस्तादृशसाधारणधर्मज्ञानं तुल्यमेवोत्पद्यते इति ।

( ४२ ) सम्प्रति कोऽलङ्कार अम्बरविवरमित्यादाविति निश्चाययितुं भ्रान्तिमदलङ्कारमेवेति द्रढयति—इह त्विति । भ्रान्तिकृत एव स्वेच्छया सञ्चरणसमानत्वाद्भ्रमोत्पादित एव अम्बरविवराद्यारोप अम्बरविवराद्यभेदाध्यवसायः । अत्र भ्रान्तिमतोऽलङ्कारत्वेऽपि नालङ्कारान्तरचमत्कारविशेषत्वं हीयत इति प्रकृते न काचित् क्षतिः ।

( ४३ ) क्वचिदुदाहृते वैपरीत्यमुपपादयति—अत्रैव चेति । हर्षचरिते श्रीकण्ठजनपदवर्णनप्रस्ताव एव चेत्यर्थः । परिणामालङ्कारयोग इति । आरोप्यमाणयोस्तपोवनकामायतनत्वयोः प्रस्तुततपस्याकामोपभोगनिष्पादनोपयोगित्वादित्यभिप्रायः ।

( ४४ ) एवं ग्रहीतृभेदेनोल्लेखमुदाहृत्य विषयभेदेन तदुदाहरति—गाम्भीर्येणेति । अस्योत्तरार्द्धन्तु—

"कामदत्वाच्च लोकानामसि त्वं कल्पपादपः ।" इति ।

( ४५ ) इत्यादाविति । अनेकधा उल्लेखे एकस्यैव नृपतेः समुद्रादिविविधप्रकारेण ग्रहणे गाम्भीर्यादिविषयाणां समुद्रत्वाद्यारोपप्रयोजकधर्माणां भेदः पार्थक्यम्, प्रयोजक उल्लेखाख्यालङ्कारस्येति शेषः । रूपकयोग इति । नृपतौ समुद्रत्वाद्यारोपस्य भेदावगमपुरस्सरेण सारोपाख्यगौणीरूपलक्षणामूलकत्वेन चेत्याशयः । लक्षणायाः सारोपात्वं गौणीरूपत्वं च अतीत्यनेनोपस्थापितस्य नृपतेः यथाक्रममनिगीर्णस्वरूपत्वेन गाम्भीर्यादिसादृश्यसम्बन्धत्वेन चेत्यनुसन्धेयम् ।

( ४६ ) 'गुरुर्वचसि, पृथुरुरसि, अर्जुनो यशसि—' इत्यादिषु चास्य रूपकादिविक्तो विषय इति ।

( ४७ ) अत्र हि श्लेषमूलातिशयोक्तियोगः ।

---

( ४६ ) नन्वेवं "गुरुर्वचसि" इत्यादावपि किं रूपकमेवेत्यत आह—गुरुर्वचसीति । उपदेश्यरूपे वचसि विषये गुरुरुपदेष्टा इत्यर्थः, श्लेषाच्च बृहस्पतिरित्यर्थः । उरसि उरोऽवच्छेदेन पृथुर्विशालः श्लेषाच्च पृथूराजा । यशसीत्यत्र तृतीयार्थे सप्तमी । यशसा अर्जुनो धवल इत्यर्थः श्लेषाच्च पाण्डवोऽर्जुनः कार्त्तवीर्यार्जुनो वा । अस्योल्लेखस्य रूपकात् रूपकालङ्कारविषयात् विविक्तः पृथग्भूतो विषयः स्थलम् ।

'त्वं भवान्' इत्यनयोरेकतरस्याप्यनुक्तिरूपत्वेन विषयनिगरणस्वरूपतया रूपकमूलभूतसारोपाख्यलक्षणा एवासम्भवात्तस्माद्रूपकासङ्कीर्ण एवास्य विषयः ।

( ४७ ) ननु किं रूपकादतिरिक्तो न कोऽप्यन्योऽलङ्कार इत्याह—अत्रेति । हि तथा हि, अत्र गुरुरित्यादौ । श्लेषमूलेति । गुरुरुपदेष्टैव गुरुर्बृहस्पतिरितिभेदेऽप्यभेदाध्यवसायात् श्लेषमूलातिशयोक्तिरित्यर्थः । यदि तु त्वं भवानित्यनयोरेकतरस्य निर्देशस्तदा रूपकमेव तत्रानिगीर्णत्वरूपत्वेन रूपकमूलभूतसारोपाख्यलक्षणायाः सम्भवात् ।

नच "दुर्गालङ्घितविग्रहः" इत्यादिवदुपमाध्वनिरयमितिवाच्यम्, तत्र विशेष्यस्य श्लिष्टोमाबल्लभपदस्यैवात्र विशेष्यपदाभावात्, त्वंपदसत्त्वेऽपि रूपकमेव नोपमाध्वनिस्तत्र श्लिष्टत्वाभावात् । एवञ्च विषयभेदेनोल्लेखालङ्कारोदाहरणे नियमेनान्यालङ्कारयोग इति स्वरयाऽपि मतमित्यभिव्यक्तं भवति ।

अयञ्चानेकविधस्तत्र, एकग्रहीतृकोटिकोऽनेकविषयभेदेनैकस्यानेकोल्लेखः शुद्धो यथा—

"दीनव्राते दयार्द्रा निखिलरिपुकुले निर्दया किञ्च मूढ्री
　　काव्यालापेषु तर्कप्रतिवचनविधौ कर्कशत्वं दधाना ।
लुब्धा धर्मेष्वलुब्धा वसुनि परविपद्दर्शने कांदिशीका
　　राजन्नाजन्मरम्या स्फुरति बहुविधा तावकी चित्तवृत्तिः ॥"

अत्र दीनव्रातादीनां विषयाणामनेकत्वाच्चित्तवृत्तेरनेकविधत्वम् ।

तत्रैवाश्रयभेदेनानेकधोल्लेखो यथा—

"सुहृदःपुण्यसत्तेषु दयमानाश्च दुःखिषु ।
सत्सु हृष्टा उदासीनाः खलेषु कति पण्डिताः ? ॥" इति ।

तत्रैव सामानाधिकरण्येन भेदेनैकस्यानेकोल्लेखो यथा—

"योगिनो योगिनां मध्ये भोगिनोऽपि च भोगिनाम् ।
विदुषामपि विद्वांसः पिशुनाः कैर्विनिश्चिताः ॥"

एवमनेकग्रहीतृकोटिकः स्वरूपोल्लेखो यथा—

"आत्मा भूमैव तत्त्वज्ञः कर्त्तैवेति च कर्मठैः ।
देहादिसङ्ग एवान्यैः सर्वैरुल्लिख्यतेऽद्भुतम् ॥"

तत्रैव हेतूल्लेखो यथा—

"केचित्त्यागैकनिष्ठत्वात्परे त्वैश्वर्यवत्त्वतः । एके तु संशयोच्छेदादेव साधूनभजन्त्यलम् ॥

तत्रैव फलोल्लेखो यथा—

( ४८ ) प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः ।

"यतयो भोक्तुमेवेति पातुमेवेति भीरवः ।
प्रकटः कर्त्तुमेवेति कमिषास्त्वां गुरो विदुः ॥ एवं षट् प्रकाराः ।

अयं ध्वन्यमानो यथा—

"अनवरतापाः कृतकोटिपापा गदैकशीर्णा भवदुःखजीर्णाः ।
विलोक्य गङ्गां विचलत्तरङ्गाममी समस्ताः सुखिनो भवन्ति ॥"

अत्र पूर्वार्धोक्तानां चतुर्णां विलोकनकर्त्तॄणां सुखित्वोक्त्या क्रमेण तापपापरोगभव-नाशकत्वप्रकाराणि ग्रहाण्याक्षिप्यन्ते । अयं च शुद्धस्योल्लेखस्य ध्वनिः ।

सङ्कीर्णस्य यथा—

"स्मयमानाननां तत्र तां विलोक्य विलासिनीम् ।
चकोराश्चञ्चरीकाश्च मुदं परतरां ययुः ॥

अत्र ध्वन्यमानया एकैकग्रहणरूपया भ्रान्त्या तदुभयसमुदायात्मा उल्लेखः सङ्कीर्णः।

( ४८ ) उपमानोपमेयघटितालङ्कारप्रतिपादनस्य प्रक्रान्तत्वात् प्रकारान्तरेण तद्घटितापह्नुत्यलङ्कारं प्रतिपादयति—प्रकृतमिति । प्रकृतं वर्णनप्रक्रान्तम् उपमेयमित्यर्थः प्रतिषिध्य शब्दतोऽर्थतो वा असत्यतया व्यवस्थाप्य, अन्यस्य अप्रकृतस्य उपमानस्येत्यर्थः स्थापनं सत्यतया साधनम् आहार्यनिश्चयविषयीकरणमितियावत् अपह्नुतिर्नामालङ्कारः स्यात् । प्रतिषिध्येत्यत्र क्त्वाप्रत्ययार्थः पूर्वकालिकत्वमविवक्षितम्, तेन पूर्वं पश्चाद्वा उपमेयस्वरूपप्रतिषेधसहितमुपमेयस्योपमानतारूपव्यवस्थापनमपह्नुतिरितिफलितम् । प्रतिषिध्यन्तेन रूपकव्यवच्छेदस्तत्र प्रकृतनिषेधाभावात् । प्रकृतं प्रतिषिध्येतावन्मात्रोक्तौ वक्ष्यमाणे आक्षेपालङ्कारेऽतिव्याप्तिस्तद्वारणाय—अन्यस्थापनमिति । सन्देहे संशयः, अत्र तु निश्चय इत्युभयोर्भेदः । प्रकृतमित्यजहत्स्वार्थलक्षणयान्योपलक्षणम् , तथा सति किञ्चिदपह्नुत्य कस्यचित्प्रदर्शनमित्येतावन्मात्रं लक्षणम् । एतच्च "केसेसु वलामोडिअ" इत्याद्युदाहरणे चतुर्थोल्लासे काव्यप्रकाशकृता स्पष्टमुक्तम् , तथाहि—"स्वयं न पलाय्य गतास्तद्वैरिण अपि तु ततः पराभवं सम्भाव्य तान् कन्दरान्त्यजन्तीत्यपह्नुतिर्व्यज्यते " इति । यद्युपमानोपमेयभावसत्त्व एवापह्नुतिस्तदात्रोपमानोपमेयाभावादपह्नुतेः प्राप्तिरेव नास्तीति तदसङ्गत्यापत्तेः । एवञ्च "नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्" इत्यादावुपमाननिषेधेऽपि अपह्नुतिरेव, ग्रन्थकृदपि गोपनीयमित्यादिनाग्रे स्वयं वक्ष्यति । उक्तञ्च दण्डिनापि—

"अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम् ।
न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणां यतः ॥" इति ।
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥" इत्यादावपि—

न रूपकं किन्त्वपह्नुतिस्थलेऽपि मुखत्वनिषेधे चन्द्रारोपदार्ढ्यसम्पादकताया वक्तुं शक्यत्वेनानुभवसिद्धत्वेन चापह्नुतिमात्रस्योच्छेदापत्तेः । यदि च प्रतिषेधपूर्वकारोपे विच्छित्तिविशेषस्यानुभवसिद्धत्वादलङ्कारान्तरत्वं तदा प्रकृतेऽपि तुल्यम् । स्थापनमित्यस्य "आहार्यनिश्चयविषयीकरणम्" इत्यर्थकरणेन-

"न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे ।"

( ४९ ) इयं द्विधा । क्वचिदपह्नवपूर्वक आरोपः, क्वचिदारोपपूर्वकोऽपह्नव इति । क्रमेणोदाहरणम्—

( ५० ) 'नेदं नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गाः ।
नायं शशी कुण्डलितः फणीन्द्रो नासौ कलङ्कः शयितो मुरारिः ॥'

---

इत्यादावनाहार्यं नातिव्याप्तिः । तथा वियोगिजनवाक्ये "नायं चन्द्रोऽपि तु मार्तण्डः" इत्यादौ तेषां तज्ज्ञानस्य दोषविशेषजन्यत्वेनानाहार्यत्वात् ।

"नायं चन्द्रोऽरविन्दं वा मुखं वेदं मृगीदृशः ।"

इत्यत्र च नैषा निश्चयविषयत्वाभावात् । अत्र कविप्रौढोक्तिसिद्धे विच्छित्तिविशेष एवायमित्यपि बोध्यम् । अत एव—

"इमं जडं न मनुजं वेद्मि गामेव केवलम् ।"

इत्यादौ नालङ्कारत्वप्रसङ्गः ।

( ४९ ) कारिकायां प्रतिषिध्येत्यत्र क्त्वाप्रत्ययार्थः पूर्वकालिकत्वमविवक्षितमित्याशयेनैव विभजते—इयं द्विधेति । क्वचित् कस्याञ्चिदपह्नुत्याम्, अपह्नवपूर्वक आरोप उपमेयप्रतिषेधपूर्वकमुपमानस्थापनम् । क्वचित् कस्याञ्चिदपह्नुतौ, आरोपपूर्वकोऽपह्नव उपमानस्थापनपूर्वक उपमेयप्रतिषेधः ।

( ५० ) तत्रापह्नवपूर्वकारोपे उदाहरणं दर्शयति—नेदमिति । गगने पूर्णचन्द्रं दृष्ट्वा कस्यचिदुक्तिरियम् । इदम् अवलोक्यमानं नभोमण्डलम् गगनमण्डलं न, किन्तु अम्बुराशिः क्षीरसमुद्र एव तुल्यादेव विशालत्वादतिस्वच्छत्वाच्चेत्याशयः । ननु ताराणां प्रत्यक्षोपलम्भात् कथं समुद्र इत्युच्यत अत आह—नैताश्चेति । एताः पुरोऽवलोक्यमानाश्च तारा नक्षत्राणि न, किन्तु नवफेनभङ्गा अभिनवसमुद्रफेनखण्डाः समानादेव किञ्चिच्छुभ्रत्वादित्यभिप्रायः । नन्वत्र चन्द्रस्य स्थितत्वात् कथं समुद्र इति लोकानां प्रत्ययो भवेदत आह—नायमिति । अयं दृश्यमानः पदार्थः शशी चन्द्रो न, अपि तु कुण्डलितः कुण्डलाकारेणावस्थितः मण्डलीकृतवपुरित्यर्थः, फणीन्द्रः मुरारेरेव शय्याभूतः शेषनागः, एकाकारादेव श्वेतत्वाद्गोलाकारत्वाच्चेतिभावः । ननु यदि कुण्डलाकारेण शेष एव तर्हि तन्मध्ये कलङ्कः कथम्भवेदत आह— नासाविति । असौ तन्मध्येऽवलोक्यमानः श्यामवर्णः पदार्थः कलङ्कश्चन्द्रगतं मृगचिह्नं न, किन्तु शयितः शयानो मुरारिर्लक्ष्मीपतिर्भगवान् तुल्यश्यामरूपत्वात्सम्भवपरत्वाच्चेतिभावः । इन्द्रवज्राछन्दः तल्लक्षणान्तूक्तमेव । तथा च उच्छलत्फेने क्षीरसमुद्रे शेषशायिविष्णोरिव तारासङ्कुलिते गगनमण्डले लाञ्छनश्रियं धारयंश्चन्द्रमा इत्युपमालङ्कारो व्यज्यते ।

अत्र नभोमण्डलाद्युपमेयप्रतिषेधपूर्वकाम्बुराश्याद्युपमानस्थापनादपह्नुतिरलङ्कारः । साक्षान्नञ्चतुष्टयोपादानेन शाब्द एव प्रकृतिप्रतिषेध इति बोध्यम् । यदि मण्डलाद्युपमेयप्रतिषेधे अम्बुराश्याद्यनेकोपमानस्थापनेन मालारूपापह्नुतिरिति विभाव्यते तदा—

"अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये !
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनि रमणीगाढमुरसि ॥"

इत्यपह्नवपूर्वकारोपे शुद्धोदाहरणमवगन्तव्यम् ।

( ५१ ) 'एतद्विभाति चरमाचलचूडचुम्बि
हिण्डीर-पिण्ड-रुचि-शीतमरीचिबिम्बम् ।
उज्ज्वालितस्य रजनीं मदनानलस्य
धूमं दधत्प्रकटलाञ्छनकैतवेन ॥'

इदं पद्यं मम ।

( ५२ ) एवम्—

( ५३ ) 'विराजति व्योमवपुःपयोधिस्तारामयास्तत्र च फेनभङ्गाः,

( ५४ ) इत्याद्याकारेण च प्रकृतनिषेधो बोध्यः ।

( ५१ ) आरोपपूर्वकापह्नवे उदाहरणं दर्शयति—एतदिति । चरमाचलस्यास्ताचलस्य चूडस्चूडाशिखरमितियावत् तं चुम्बतीत्येवं शीलम् , हिण्डीराः फेनाः तेषां पिण्डं तस्य रुचिरिव रुचिःकान्तिर्यस्य तथाहृशम् "हिण्डीरोऽब्धिकफः फेनः" इत्यमरः, एतत् अवलोक्यमानम्, शीताः शीतलाः मरीचयो रश्मयो यस्य ( चन्द्रस्य ) तस्य बिम्बं मण्डलम् , प्रकटं यत् लाञ्छनं लक्ष्म तस्य कैतवेन व्याजेन रजनीं रात्रिं व्याप्य विधिना उज्ज्वालितस्य निर्वापितस्य मदनानलस्य कामरूपस्याग्नेः धूमं दधत् धारयत् सत् विभाति प्रकाशते । निर्भरस्वकान्तसम्भोगेन रजन्यां मदनानलनिर्वाणाद् धूमोद्गमः । वसन्ततिलकं छन्दस्तल्लक्षणन्तूक्तमेव ( १९३ पृ० ) ।

अत्र प्रथमं धूमरूपोपमानमारोप्यानन्तरं लाञ्छनरूपोपमेयापह्नवादपह्नुतिः । साऽऽरोपस्य केवलत्वात्केवलरूपा कैतवेनेत्युक्तेर्नञोऽनभिधानाच्चार्थत एव प्रकृतप्रतिषेध इत्यवधेयम् ।

एवम् आरोपपूर्वकापह्नवेऽर्थतः प्रकृतप्रतिषेधे मालारूपापह्नुतेरुदाहरणमूह्यम् ।'

( ५२ ) भङ्ग्यन्तेणार्थत एव प्रकृतिप्रतिषेधे उदाहरणान्तरं दर्शयितुमुपक्रमते—एवमिति ।

( ५३ ) विराजतीति । एतदुत्तरार्द्धन्तु—
"फणीश्वरोऽयं द्विजराजमूर्त्तिर्नवाम्बुदश्रीर्न तु तस्य लक्ष्म" ।

व्योम आकाशं तदेव वपुः शरीरं यस्य तथोक्तः, पयोधिः क्षीरोदो विराजति प्रकाशते, तत्र तथाविधे च पयोधौ तारामया ऋक्षाकाराः फेनभङ्गा फेनखण्डा उपलभ्यन्त इतिशेषः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः तल्लक्षणन्तूक्तमेव ( १२२ पृ० ) ।

( ५४ ) इतीति । इत्याद्याकारेण एवमादिभङ्ग्यन्तरेण । तथाच उक्तोदाहरणे वपुःपदप्रयोगेण मयट्प्रत्ययकरणे उपमेययोर्व्योमतारयोर्गोपने वक्तुरभिप्रायात् उपमानयोः पयोधिफेनभङ्गयोः स्थापनाच्चापह्नुतिः । नञोऽनुपादानादर्थत एव प्रकृतप्रतिषेध इति पूर्ववदेवावधेयम् । नचात्ररूपकं शङ्क्यम्, तत्र "विषये निरपह्नवे" इत्युपादानात् ।

कुवलयानन्दकारास्तु—षड्विधत्वेनापह्नुतिमिच्छन्ति । तथाहि—

"शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः ।
नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम् ॥
स एव युक्तिपूर्वश्चेदुच्यते हेत्वपह्नुतिः ।
नेन्दुस्तीव्रो, न निश्यर्कः सिन्धोरौर्वोऽयमुत्थितः ॥

अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सः ।
नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम् ॥
भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे ।
तापं करोति सोत्कम्पं ज्वरः किं न सखि ? स्मरः ॥
छेकापह्नुतिरन्यस्य शङ्कातस्तस्य निह्नवे ।
प्रजल्पन्मत्पदे लग्नः, कान्तः किं ? नहि नूपुरः ॥
कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतेः पदैः ।
निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ॥

वर्णनीये वस्तुनि तत्सदृशधर्मारोपफलकस्तदीयधर्मनिह्नवः कविप्रतिभोत्प्रेक्षितधर्मान्तरस्यापि निह्नवः शुद्धापह्नुतिः । यथा—सुधांशौ व्योमगङ्गासरोरुहत्वारोपफलकस्तदीयधर्मस्य सुधांशुत्वस्यापह्नवः । (२) शुद्धापह्नवलक्षण एवानुक्तनिमित्त इत्यस्य स्थाने उक्तनिमित्त इत्युक्तौ हेत्वपह्नुतिः । यथा इन्दावेव तीव्रत्वनैशत्वहेतुभ्यामिन्दुत्वार्कत्वापह्नव और्वत्वारोपार्थः । (३) यत्र कचिद्वस्तुनि तदीयधर्मं निह्नवोऽन्यत्र वर्णनीये वस्तुनि तद्धर्मारोपार्थः सा पर्यस्तापह्नुतिः । यथा—सुधांशौ सुधांशुत्वापह्नवो वर्णनीये मुखे तदारोपार्थः । (४) भ्रान्तिवारके तत्त्वाख्याने सति भ्रान्तापह्नुतिः । यथा—तापं करोतीति स्मरवृत्तान्ते कथिते तस्य ज्वरसाधारण्याद् ऋजुबुध्या सख्या ज्वरः किमिति पृष्टे, न सखि ! स्मर इति तत्त्वोक्त्या भ्रान्तिवारणं कृतम् । (५) कस्यचित् कञ्चित्प्रति रहस्योक्तावन्येन श्रुतायां स्वोक्तेस्तात्पर्यान्तरवर्णनेन तथ्यनिह्नवे छेकापह्नुतिः, यथा नायिकया नर्मसखीं प्रति प्रजल्पन्मत्पदे लग्न इति स्वनायकवृत्तान्ते निगद्यमाने तदाकर्ण्य कान्तः किमिति शङ्कितवतीमन्यां प्रति नहि नूपुर इति निह्नवः । (६) कैतवेन व्याजेन अपह्नुतिः कैतवापह्नुतिः । यथा असत्यत्वाभिधायिना कैतवपदेन नेमे कान्ताकटाक्षाः किन्तु स्मरनाराचा इत्यपह्नवो व्यज्यते ।

अथ ध्वन्यमाना यथैषा—

"दयिते रदनत्विषां मिषादयितेऽमी विलसन्ति केसराः ।
अपि चालकवेषधारिणो मकरन्दस्पृहयालवोऽलयः ॥"

अत्र नैता रदनत्विष अपि तु किञ्जल्कपरम्पराः । नचैते अलकाः किन्तु अलयः, इति पूर्वोत्तरार्द्धाभ्यामपह्नुतिद्वयं स्फुटम्, तेन च "न त्वं नारी अपि तु कमलिनी" इति तृतीयापह्नुतिः व्यञ्जनव्यापारेण प्राधान्येन प्रतिपाद्यते । तुल्ययोगिता तु गुणतया स्थिता ।

चित्रमीमांसाकारास्तु—

"त्वदालेख्ये कौतूहलतरलतन्वी विरचिते
विधायैका चक्रं रचयति सुपर्णीसुतमपि ।
अपि स्विद्यत्पाणिस्त्वरितमपमृज्यैतदपरा
करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति ॥"

इत्यादावपह्नुतिध्वनिमङ्गीकुर्वन्ति, तदापातरमणीयमिति नव्या वदन्ति; विस्तरस्तु रसगङ्गाधरे द्रष्टव्यः । प्रकाशकारोद्योतकारादीनां मते त्वत्रापि ध्वनिरितिविचारणीयम् ।

( ५५ ) गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन ॥ ३८ ॥
यदि श्लेषेणान्यथा वान्यथयेत्साप्यपह्नुतिः ।

श्लेषेण यथा—

( ५६ ) 'काले वारिधराणामपतितया नैव शक्यते स्थातुम् ।
उत्कण्ठितासि तरले ! नहि नहि सखि ! पिच्छिलः पन्थाः ॥'

( ५७ ) अत्र 'अपतितया' इत्यत्र पतिं विनेत्युक्त्वा पश्चात्पतनाभावेन इत्यन्यथा कृतम् । अश्लेषेण यथा—

( ५८ ) 'इह पुरोऽनिलकम्पितविग्रहा मिलति का न वनस्पतिना लता ।
स्मरसि किं सखि ! कान्तरतोत्सवं नहि घनागमरीतिरुदाहृता ॥'

---

( ५५ ) उपमेयनिषेधोपमानस्थापनयोरसत्त्वेऽप्यपह्नुतिरलङ्कारो भवतीति तामुपपादयति—गोपनीयमिति । यः कोऽपि वक्ता गोपनीयं लज्जादिना अप्रकाश्यम् , कमपि अर्थं प्रयोजनम् , कथञ्चन केनापि प्रकारेण व्यञ्जनयेत्यर्थः द्योतयित्वा प्रकाशयित्वा, यदि श्लेषेण, अन्यथा प्रकारान्तरेणाश्लेषेणेतियावत् अन्यथयेत् अभिप्रायान्तरेण सङ्गमयेत् द्योतितातिरिक्तरूपं कुर्यादित्यर्थः, तदा सापि अपह्नुतिर्नामालङ्कारो भवेत् ; स्वेनैव प्रकाशितप्रयोजनस्य स्वेनैव पुनरपह्नवात् ।

( ५६ ) एवञ्चैषा द्विविधा, तत्राद्या श्लेषरूपा तावदुदाहरति—काले इति । वर्षासमये सख्या सह मार्गे व्रजन्त्याः कस्याश्चिद्वियोगिन्या उक्तिरियम् । वारिधराणां मेघानां काले अस्मिन् वर्षाकाले इत्यर्थः, न पतिर्मदनज्वालाप्रशमितृतया रक्षको यस्यास्तस्या भावस्तत्ता तया अपतितया हेतुना, मया स्थातुमवस्थातुं नैव शक्यते वारिधराणां कालस्यात्यन्तकामोद्दीपकत्वेन पतिशून्यतया स्थातुमशक्यमितिभावः । अन्यत्र तु अपतितया मार्गेऽस्मिन् गमनकाले अस्खलिततया मया स्थातुं न शक्यते मार्गस्य पिच्छिलत्वादित्याशयः । एवं प्रस्फुटमर्थं बुद्ध्वा तत्सखी पृच्छति हे तरले चञ्चले ! पातिव्रत्यतो भ्रश्यमानहृदय इत्यर्थः, किं परसङ्गस्य उत्कण्ठितासि अभिलाषिण्यसि, एवमवगतायाः सख्याः प्रश्नानन्तरं तदन्यथयति—नहि नहीति । हे सखि नहि नहि कामुकनिमित्तं नैव खलु उत्कण्ठितास्मीत्यर्थः, तर्हि कथमेवमुक्तेत्यत आह—पिच्छिल इति । पन्थाः आवयोरयं गमनमार्गः पिच्छलः जलपातेन चिक्कणः । अतोऽवश्यं स्खलनसम्भवादेवमभिहितमितिभावः । आर्याछन्दः ।

( ५७ ) उक्तोदाहरणे लक्षणं संयोजयितुमाह—अत्रेति । इत्युक्त्वा उक्तिवत्स्फुटं व्यञ्जयित्वेत्यर्थः । तथाच न समीपे वर्त्तते पतिर्यस्याः सा अपतिः ( नञोऽस्त्यर्थानां वाच्यो वाचोत्तरपदलोपः) इत्यनेनात्रोत्तरपदलोपः । सपूर्वस्य पतिशब्दान्तस्य वैकल्पिक नत्वविधानेन तदभावपक्षे रूपमिदं बोध्यम् ।

"सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् ।
नागरिकः किमु मिलितो नहि नहि सखि ! हैमनः पवनः ॥"

इत्याधिकमुदाहरणमत्र केचित् पठन्ति ।

( ५८ ) द्वितीयोदाहरणमाह—इह पुर इति । वर्षासमये सहचारिण्या सह वियोगिन्या उक्तिप्रत्युक्तिरूपमिदम् । इह अस्मिन् वर्षाकाले अनिलेन पवनेन कम्पित

( ५९ ) वक्रोक्तौ परोक्तेरन्यथाकारः, इह तु स्वोक्तेरेवेति भेदः ।
( ६० ) गोपनकृता गोपनीयस्यापि प्रथममभिहितत्वाच्च व्याजोक्तेः ।
( ६१ ) अन्यन्निषिध्य प्रकृतस्थापनं निश्चयः पुनः ॥ ३६ ॥

आन्दोलितो विग्रहो देहो यस्याः सा तथोक्ता का नाम लता, वनस्पतिना वृक्षेण सह, पुरोऽग्रतः सम्मुखत इत्यर्थः न मिलति न संयुज्यते अपि तु सर्वैव संयुज्यत इत्यर्थः । "वनस्पतिर्वृक्षमात्रे" इति विश्वः, मदनाविर्भावेण कम्पाभिधेयसात्त्विकभावयुता का नाम वनिता प्रियेण सह न संयुज्यत इति च व्यज्यते । इत्युदीर्यमाणां श्रुत्वा सखी पृच्छति—स्मरसीति । हे सखि ! किं कान्तस्य स्वामिनः रतोत्सवं सुरतजन्यानन्दं स्मरसि लतावृक्षयोः संयोगमेनमवलोक्येतिभावः । इत्यवगतं स्वमर्थं विज्ञाय तद्गोपय-नाह—नहीति । कान्तरतोत्सवं न हि स्मरामि यद्यपि त्वया शङ्क्यते तदपि नेत्यर्थः । तर्हि कथमेवमभिहितमत आह—घनेति । घनागमस्य वर्षाकालस्य रीतिरवस्था उदाहृता कथिता । द्रुतविलम्बितं छन्दः ।

अत्र प्रथमार्द्धेन स्वयमेव व्यञ्जितस्य कान्तसुरतोत्सवस्मरणस्य अश्लेषेण घनागमे-त्यादिना पुनः स्वयमेवान्यथाविधानाद्द्वितीयापह्नुतिः।

( ५९ ) ननु प्रथमोदाहरणे अन्यार्थकपदसन्दर्भस्य श्लेषेणान्यथाकरणात् पूर्वप्रति-पादितया वक्रोक्त्या सह साङ्कर्यमापद्येतेत्यत आह—वक्रोक्ताविति । वक्रोक्तौ "के यूयं स्थल एव" इत्यादौ । अन्यथाकारः परकर्तृकमन्यथाविधानम् । इह द्वितीयापह्नुताविर्त्यर्थः । भेद इति । अत एव वक्रोक्तिलक्षणे "अन्ये"तिपदद्वयस्योक्तिः, अत्र तु समानकर्तृकयोः पूर्वकाले क्त्वा" इति क्त्वाप्रत्ययो विहितः ।

( ६० ) ननु "काले वारिधराणाम्" इत्युदाहरणे "इह पुरोऽनिलकम्पितविग्रहा" इत्युदाहरणे च—

"व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः ।"

इति वक्ष्यमाणलक्षणस्य व्याजोक्त्यलङ्कारस्य प्रसङ्गः स्यात् प्रथमे उद्भिन्नस्य पति-विहीनतयेत्यर्थस्य द्वितीये कान्तरतोत्सवस्य च "नहि नहि सखि" इत्यादिना "नहि घनागम इत्यादिना च व्याजेन गोपनादत आह—गोपनकृतेति । गोपनकृता गोपनविधा-यिना वक्त्रा गोपनीयस्यापि पतिविहीनेतयेत्यर्थस्य कान्तरतोत्सवस्मरणस्य च । अभि-हितत्वात् स्फुटं व्यञ्जितत्वाद् व्याजोक्तेर्भेद इति पूर्वेणानुषङ्गः । तथाच गोपनीयार्थो वक्त्रा प्रथमं नाभिधीयते, यथा—

"पृथुना जलकुम्भेन श्रमोऽयं श्वासकृन्मम ।
विश्राम्यामि क्षणं तस्मात् वयस्ये ! तव सन्निधौ ॥"

इत्यत्र जलाहरणस्य मार्गे उपपतिसम्भोगजन्यः श्रमो वक्त्र्या प्रथममनुक्तोऽपि सखि-प्रतीतिभिया निगूहितः, इह तु असावुच्यत एवेतिस्फुटमनयोर्भेदः ।

( ६१ ) ननु यथा प्रकृतं निषिध्याप्रकृतस्थापनेनापह्नुतिर्भवति तथैव अन्यन्निषिध्य प्रकृतस्थापनेन कश्चिदन्योऽलङ्कारो भवति न वेतिजिज्ञासायां प्राचीनासम्मतमपि युक्ति-युक्तत्वात् प्रसिद्धान्यालङ्कारतो भिन्नत्वाच्च निश्चयनामानमभिनवं कञ्चनालङ्कारं निरूप-यति—अन्यदिति । अत्रापह्नुतिभिन्नक्रमव्यञ्जनार्थः पुनः पदप्रयोग इत्यवगन्तव्यम् ।

( ६२ ) निश्चयाख्योऽयमलङ्कारः । अन्यदित्यारोप्यमाणम् ।

यथा मम —

( ६३ ) 'वदनमिदं न सरोजं नयने नेन्दीवरे एते ।
इह सविधे मुग्धदृशो भ्रमर ! मुदा किं परिभ्रमसि ॥

( ६४ ) यथा वा—

( ६५ ) 'हृदि विसलताहारो, नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे, न सा गरलद्युतिः ।
मलयजरजो, नेदं भस्म, प्रियारहिते मयि
प्रहर न हरभ्रान्त्यानङ्ग !, क्रुधा किमु धावसि ॥'

अन्यत् वर्णनीयाद्भिन्नं प्रकान्तं वस्तु उपमानमित्यर्थः निषिध्य असत्यतया व्यवस्थाप्य प्रकृतस्य वर्णनप्रक्रान्तस्य उपमेयस्येतितात्पर्यम् स्थापनं सत्यतया विन्यासः निश्चयाख्योऽलङ्कारः स्यात् । प्रकृतस्य निश्चयादस्य निश्चय इत्येवं नाम । अत्रापि निषिध्येत्यत्र क्त्वाप्रत्ययार्थः पूर्वकालिकत्वमविवक्षितम् । तेन पूर्ववदेवायमपि प्रकृतस्थापनपूर्वकोऽन्यनिषेधः, अन्यनिषेधपूर्वकं प्रकृतस्थापनञ्चेति द्विप्रकारक एव ।

( ६२ ) ननु निश्चयसंज्ञकालङ्कारस्य क्वापि प्राचीनाङ्कारग्रन्थेष्वनुपलम्भात् भवदभिहितलक्षणे को नाम निश्चय इत्याशङ्कायामाह—निश्चयाख्योऽयमलङ्कार इति । अभिनव इति शेषः । अलङ्कारोपक्रमे कथनादित्याशयः । सन्देहायाकरणाय अन्यत्पदं व्याचष्टे-अन्यदिति । आरोप्यमाणं सादृश्यातिशयेन आरोपविषयतां नीयमानमुपमानमित्यर्थः ।

( ६३ ) तत्र प्रकृतस्थापनपूर्वकान्यनिषेधे उदाहरणं दर्शयति—वदनमिति । रमणीमुखान्तिके परिभ्रमन्तं कञ्चिन्मधुकरं दृष्ट्वा कस्यचिद् विदग्धस्योक्तिरियम् । हे भ्रमर मधुकर ! इदम् अवलोक्यमानं वस्तु वदनं मुखम्, किन्तु सरोजं तव पानयोग्यमधुविशिष्टं कमलं न, तथा एते पुरोऽवलोक्यमाने वस्तुनी नयने लोचनयुगलम् इन्दीवरे नीलकमले न, अतएव मुग्धदृशः सुन्दरलोचनायाः अस्या रमण्याः इह वदननयनसम्बन्धिनि सविधे अन्तिके किं कथं मुदा हर्षेण परिभ्रमसि वदननयनयोः कमलत्वनीलोत्पलत्वाभावेन तव पानयोग्यमध्वसत्वादित्यभिप्रायः ।

अत्र रमण्याः उपमेयभूतवदननयनस्थापनपूर्वकादुपमानभूतसरोजेन्दीवरनिषेधान्निश्चयः ।

एवम्—

"नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः ।"

इत्यादावप्ययमलङ्कारो बोध्यः ।

( ६४ ) ननु भवद्भिः स्वकल्पितमेव लक्षणं लक्ष्यं च निर्माय स्थापयितुं प्रयत्यते किन्तु प्राचीनाङ्कारकृद्भिरनुल्लेखात्कथमेतस्य प्रामाण्यं स्यादित्यतोऽत्र दृढत्वप्रतिपत्तये प्राचीनोदाहरणं दर्शयितुमाह—यथा वेति ।

( ६५ ) उदाहरति—हृदीति । कामपीडितस्य कस्यचिद्विरहिणः सखेदोक्तिरियम् । हे अनङ्ग मन्मथ ! अयं मम हृदि वक्षःस्थले विसलताहारो मृणालतन्तुनिर्मितो हारः, किन्तु भुजङ्गमनायकः विससदृशस्वच्छरूपः शिवहृदिस्थितः फणिराजो वासुकिर्न, कण्ठे

( ६६ ) नायं निश्चयान्तः संदेहः, तत्र संशयनिश्चययोरेकाश्रयत्वेनावस्थानात् । अत्र तु भ्रमरादेः संशयो नायकादेर्निश्चयः ।

( ६७ ) किञ्च न भ्रमरादेरपि संशयः एककोटयधिके ज्ञाने, तथा समीपागमनासंभवात् ।

( ६८ ) तर्हि भ्रान्तिमानस्तु, अस्तु नाम भ्रमरादेर्भ्रान्तिः । न चेह तस्याश्चमत्कारविधायित्वम् , अपि तु तथाविधनायकाद्युक्तेरेवेति सहृदयसंवेद्यम् ।

गलप्रदेशे विरहतापशान्त्यर्थं कुवलयदलश्रेणी नीलकमलपत्रपंक्तिः, किन्तु सा प्रसिद्धा गरलद्युतिः हालाहलविषस्य श्यामरूपा दीप्तिर्न सा तु शिवस्यैव कण्ठस्थिता; तथा इदं शरीरेऽवलोक्यमानं मलयजरजः मलयगिरिसम्भूतश्वेतचन्दनधूलिः, किन्तु शिवस्य शरीरस्थं भस्म न अतो न शिवरूपतेत्यर्थः, अत एव प्रियया रहिते वियुक्ते विरहिणीत्यर्थः मयि हरभ्रान्त्या स्वदाहकशिवभ्रमेण न प्रहरस्व बाणैर्न ताडय । तथा हरत्वाभावान्मां प्रति क्रुधा कोपेन किमु कथं प्रहर्तुं धावसि ताडनाय उद्यतोऽसीत्यर्थः । हरिणीछन्दस्तल्लक्षणन्तूक्तमेव ( १६९ पृ० ) ।

अत्रापि उपमेयभूतबिसलतादिस्थापनपूर्वकादुपमानभूतभुजङ्गमनायकादिनिषेधान्निश्चयाख्योऽलङ्कारः ।

( ६६ ) सम्प्रति अस्य प्रसिद्धान्यालङ्कारातिरिक्तत्वमुपपादयितुं सम्भाव्यमानेष्वन्यालङ्कारेषु सन्देहालङ्कारस्यैव प्राथम्यात् प्रथमं तदतिरिक्तत्वमेवोपपादयति—नहीति ।

अयमभिनवो निश्चितो निश्चयाख्योऽलङ्कारः । "वदनमिदं न सरोजम्" इत्यादौ निश्चयस्य विद्यमानत्वात् मध्ये निश्चयस्य विद्यमानत्वाच्च शुद्धनिश्चयगर्भरूपयोः सन्देहालङ्कारभेदयोः सम्भवाभावादाह—निश्चयान्तः सन्देह इति । मुखे मधुकरस्य कमलसंशयं वक्तुश्च मुखनिश्चयमादाय निश्चयान्तसन्देहालङ्कारो नहीत्यर्थः । तत्र सन्देहालङ्कारे । एकाश्रयत्वेन एकात्मवृत्तित्वेन अवस्थानात् अवस्थाननियमात् । अत्र तु" वदनमिदं न सरोजम्" इत्यादौ तु । तथाचात्र संशयनिश्चययोः सामानाधिकरण्येनावस्थानाभावान्न निश्चयान्तः सन्देह इत्यभिप्रायः ।

( ६७ ) ननु संशयनिश्चययोः निश्चयान्तसन्देहालङ्कारे सामानाधिकरण्येनावस्थाननियमे मानाभावात् "वदनमिदम्" इत्यादावुक्तालङ्कारत्वोपगमेनैव निर्वाहेऽतिरिक्तनिश्चयालङ्कारो नाङ्गीकरणीय इत्यत आह—किञ्चेति । कथञ्चिदपि वक्तृनायकादेर्न संशयः परन्तु भ्रमरादेरपि न संशय इत्यर्थः । आदिशब्देन अनङ्गकविप्रभृतीनां परिग्रहः । एककोटयधिके कोटिद्वयावगाहिनि वदनसरोजोभयविषयके ज्ञाने, तथा समीपगमनासम्भवात् वदननयनयोरत्यन्तसमीपे तस्य भ्रमरस्य गमनसम्भवाभावात्; तथाच न खलु "इदं वदनं सरोजं वा" इति सन्दिहानो मधुपानेच्छुर्भ्रमरस्तस्यात्यन्तनिकटं प्राप्नोति, नच "अत्यन्तपिपासुः कश्चित् मृगमरीचिकासु जलं मरीचिका वा" इति संशयानस्तत्समीपमुपैति अभिलषितमनोरथलाभनिश्चयाभावेन गमनप्रयासाङ्गीकारसम्भवाभावात् , परन्तु सरोजमेवेदमित्यादिसन्देहवशेनैव तत्समीपे तस्य गमनाङ्गीकारसम्भवादित्याशयः ।

( ६८ ) नन्वेवमपि वदने "सरोजमेवेदम्" इत्यादिभ्रमरादिभ्रान्तेरङ्गीकाराद्भ्रान्तिमानलङ्कार एवास्तामित्याशङ्कते—तर्हीति । वदनादौ भ्रमरादीनां सरोजादिभ्रान्तेरेव

( ६९ ) किञ्चाविवक्षितेऽपि भ्रमरादेः पतनादौ भ्रान्तौ वा नायिकाचाटूक्त्यादि-रूपेणैव संभवति तथाविधोक्तिः ।

( ७० ) न च रूपकध्वनिरयम्, मुखस्य कमलत्वेनानिर्धारणात् ।

( ७१ ) न चापह्नुतिः, प्रस्तुतस्यानिषेधादितिपृथगेवायमलङ्कारश्चिरन्तनोक्तालङ्कारेभ्यः ।

---

स्वीकार इत्यर्थः । भ्रान्तिमानस्त्विति । भ्रान्तेर्निश्चयरूपत्वाद्भ्रमरादेस्तदन्तिकगमनसम्भवाच्चेतिभावः । समाधत्ते—अस्त्विति । नाम यथेष्टम् । एवं केवलभ्रान्तिमत्त्वेनात्र भ्रान्तिमदलङ्कार इत्याह—नचेति । इह भ्रमरादावित्यर्थः, तस्या भ्रान्तेः, चमत्कारविधायित्वं वैचित्र्यधायकत्वम्, अपि तु किन्तु तथाविधा वदनमिदमित्यादिरूपा या वक्तृनायकाद्युक्तिस्तस्या एव चमत्कारविधायित्वमितिपूर्वतः सम्बध्यते । नायिकातुष्टिकरत्वात् कुतूहलसूचकत्वाच्चेतिभावः । अतएव तादृशभ्रान्तिमाश्रित्य भ्रान्तिमदलङ्कारो भवितुं नार्हति चमत्कारविधायिन एवालङ्कारत्वस्वीकारादित्याशयः ।

( ६९ ) ननु सन्देहभ्रान्तिं विना तथाविधोक्तेरसम्भव एव । एवञ्चास्य भ्रान्तिमूलकत्वं निश्चितम्, तथाच प्रकृते सैव चमत्कारविधायिनी तथाविधोक्तिस्तु भ्रमव्यञ्जिकैवेत्यत आह—किञ्चेति । अविवक्षितेऽपि नायकेनेति शेषः । भ्रमरादेरित्यादिशब्देन द्वितीयपद्योक्तानङ्गादेः परिग्रहः । पतनादौ वदनोपरि पतने आदिशब्देन तदनङ्गकृतप्रहारादेः परिग्रहः । भ्रान्तौ वेति अविवक्षितायामित्यनेनान्वितम् । नायिकायाश्चाट्वादिः प्रियभाषणादिस्तद्रूपेण अत्रादिशब्देन स्ववेदनातिशयप्रकाशादीनां परिग्रहः । तथाविधा "वदनमिदम्" इत्यादिरूपा हृदि विलसिताहारः" इत्यादिरूपा च उक्तिनिश्चयः । तथाच नायिकाया वदननयनयोः सरोजेन्दीवरसमानत्वबोधकतया अत्यन्ततुष्टिकरत्वात् "वदनमिदं न सरोजम्" इत्यादिरूपा, स्वीयकामवेदनाधिक्यबोधकत्वाच्च "हृदि विलसिताहार" इत्यादिरूपा चोक्तिः सम्भवितुमर्हतीति तदीयचमत्कारस्यावश्यम्भावात् निश्चयालङ्कारोऽपि नूनमेव स्यादितिभावः ।

( ७० ) नन्वेवं सन्देहाद्यलङ्काराणामसम्भवेऽपि वदनादौ सरोजत्वाद्यारोपाणां व्यञ्जनयाऽवगमाद् रूपकध्वनिरेवायमित्यङ्गीक्रियतामत आह—नचेति । रूपकध्वन्यभावे हेतुं दर्शयति—मुखस्येति । कमलत्वेन उपलक्षणेन विरहिणो हरत्वेन चेत्यर्थः, अनिर्द्धारणादनिर्णयात् । तथाच रूपके "मुखकमलम्" इत्यादौ बोद्धारो मुखादीन् पद्मादिरूपत्वेन निश्चिन्वन्ति, अत्र तु तन्निश्चयो दूर एव तिष्ठतु प्रत्युत न सरोजमित्यादिप्रतिपादनात् सरोजाद्यतिरिक्तत्वेनैव वदनादीन् निश्चिन्वन्तीति न रूपकलेशोऽपीतिभावः ।

( ७१ ) ननु तर्हि सरोजादिनिषेधेन वदनादिस्थापनादपह्नुत्यलङ्कार एवास्तामित्यत आह—पुनर्नचेति । प्रस्तुतस्य प्रक्रान्तस्य उपमेयस्येतितात्पर्यम् । तथाच अपह्नुत्यलङ्कारे उपमेयस्यैव निषेधनिश्चयात् अत्र तु उपमानस्यैव निषेधादुपमेयस्य च निषेधाभावादपह्नुत्यलङ्कारस्य सम्भवो नेति भावः । पृथक् भिन्नः, अयं निश्चयाख्योऽभिनवोक्तः चिरन्तनाः प्राचीनाः काव्यप्रकाशकारादयः ।

अत्र चिरन्तनेतिप्रतीकमुपादाय तातः—

( ७१ ) शुक्तिकायां रजतधिया पतति पुरुषे शुक्तिकेयं न रजतमिति कस्यचिदुक्तिर्नायमलङ्कारो वैचित्र्याभावात् ।

( ७३ ) भवेत्संभावनोत्प्रेक्षा प्रकृतस्य परात्मना ।

"न केवलमयमलङ्कारः किन्तु—

"दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥"

इत्येकसंख्यालङ्कारः ।

"एकं विष्णुं द्वे तदीये च नेत्रे त्रींस्तान् देवान् दोश्चतुष्कं च विष्णोः ।
पञ्चेशास्यो न्यग्निभूषण्मुखानि सप्तार्चिष्कं नौमि साष्टाङ्गपातम् ॥"

इतिक्रमिकसंख्यालङ्कारः । अन्येऽपि वैचित्र्यावहा अलङ्कारा अनुक्ता अपि स्वयमूह्याः" इत्याह ।

( ७२ ) प्रायशः सर्वेषामेवालङ्काराणामाहार्यारोपबुद्धिविषयत्व एवालङ्कारान्तरत्वं न तु वास्तविकत्व इत्याशयेनाह—शुक्तिकायामिति । रजतधिया रजतमिदमिति भ्रमेण । पतति तल्लाभाय गच्छति सतीत्यर्थः । अयं निश्चयाख्यः । वैचित्र्याभावात् वैचित्र्यस्यैवालङ्कारत्वादितिभावः ।

( ७३ ) एवं प्रकृतस्थापनस्वरूपं निश्चयालङ्कारमुपपाद्य निश्चयस्वरूपालङ्कारान्तरे जिज्ञासोदयात् यथा कथञ्चिन्निश्चयस्वरूपमुत्प्रेक्षालङ्कारमुपपादयति—भवेदिति । प्रकृतस्य सम्भविनो वर्णनीयस्य उपमेयस्येत्यर्थः, परः सदृशतयोपकल्पितः अर्थात् असम्भवीयोऽर्थस्तदात्मना तास्वरूपेण सम्भावना उत्प्रेक्षा उत् ऊर्ध्वं गता प्रेक्षा दृष्टिः प्रतिभा च यस्यां सोत्प्रेक्षा । यं कञ्चित्पदार्थं विसम्भावयतः प्रेक्षा हि प्रायेणोक्तरूपा भवतीत्यत एतादृशी नामव्युत्पत्तिः । अत्र सम्भावना च उत्कटैककोटिकःसंशयः, संशये हि कोटिद्वयं वर्तते यथा—"अयं स्थाणुः पुरुषो वा" इत्यादावेका कोटिः स्थाणोर्विधानरूपा, अपरा च "पुरुषो वा" इति पुरुषस्य पुनर्विधानरूपा । "अयं पुरुषो न वा" इत्यादौ च प्रथमा कोटिः पुरुषस्य विधानरूपा, द्वितीया पुनः "न वा" इति पुरुषस्य निषेधरूपा । यस्मिन् संशये कोटिद्वयमध्ये एकस्याः कोटेः उत्कटत्वं ( निश्चितप्रायत्वं न तु निश्चयः ) सैव ( आद्या ) संशयस्य कोटिः सम्भावनापदव्यपदेश्या, यथा—प्रायेण पुरुषोऽयं भवेदितिसादृश्यात् उपमेयस्य वर्णनीयस्य उपमानत्वेन सम्भावना । तथा च उपमेयस्योपमानतया निश्चितप्राया सम्भावनोत्प्रेक्षेतिफलितम् । दोलायमानाया अपरस्याः कोटेर्निश्चितप्रायत्वेन निरासः । अत्र च संशयस्योत्कटैककोटिकतया सन्देहालङ्कारे नातिव्याप्तिः । रूपकभ्रान्तिमदतिशयोक्तिषु आरोपभ्रमाध्यवसायानां निश्चयरूपत्वात् संशयपदेन वारणम् । उपमायामुपमानपदार्थस्य वास्तविकतया निरुक्तसम्भावनाया अभाव एव, अत्र तूपमानपदार्थस्य अवास्तविकतया तथाविधसम्भावनाया विद्यमानत्वमेवेतिभेदः । उपमानं च क्वचित्सम्भवि, क्वचित्प्रौढोक्तिसिद्धम् । आद्यं यथा—"गुप्ता गुप्ताङ्गुलिभिश्चास्य सम्भवसवा इव" । अत्र प्रसवपदार्थः सम्भवत्येव । द्वितीयं यथा—"ऊढः कुम्भकदशः" इत्यादौ । अत्र सुरतेच्छारूपस्मरस्य कनकमयविजयस्तम्भः शशविषाणवदलीकः प्रौढोक्त्यैव सिद्धः । अलङ्काराणां चमत्कारमूलत्वेन प्रतिभाजुत्थापिताया वास्तविकत्व-

( ७४ ) वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता ॥ ४० ॥
वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः ।
जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपि ॥ ४१ ॥
तदष्टधापि प्रत्येकं भावाभावाभिमानतः ।
गुणक्रियास्वरूपत्वान्निमित्तस्य पुनश्च ताः ॥ ४२ ॥
द्वात्रिंशद्विधतां यान्ति—

म्भावनाया रमणीयसाधारणधर्ममूलायाः सम्भावनायाश्च चमत्काराजनकतया अलङ्कारत्वाभावेन—

"प्रायः पतेद्‌द्यौः शकलीभवेदुर्वी सहाचलैरम्बुधिभिः स्खलेद्वा ।
नूनं ज्वलिष्यन्ति दिशः समस्ता यद्द्रौपदी रोदिति हा ! हतेति ॥"
"वदनकमलेन बाले ! स्मितसुषमा लेशमावहसि यदा ।
जगदिह तदैव जाने दशार्धबाणेन विजितमिति ॥"

इत्यादौ नोत्प्रेक्षात्वप्रसङ्गः । रमणीयसाधारणधर्मनिबन्धना प्रतिभोत्थापितैव हि सम्भावना चमत्करोतीति सैवालङ्कारः ।

( ७४ ) अस्या विभक्तविभागबाहुल्येन षट्‌पञ्चाशदुत्तरैकशतविधतां पर्यवस्थापयितुं प्रथमं द्वैविध्यमुपपादयति—वाच्येति । वाच्या इवादिवाचकपदनिबन्धनात् झटिति प्रत्येया शाब्दीत्यर्थः, प्रतीयमाना वाचकपदविरहेण वाच्यार्थपर्यालोचनानुसन्धेया आर्थीत्यर्थः, इत्येवं सा निरुक्तलक्षणोत्प्रेक्षा प्रथमं द्विविधा मता । ननु का वाच्या का च प्रतीयमाना ? इत्याशङ्कायामाह—वाच्येवादिप्रयोग इति । इवादीत्यादिपदेन नूनं ध्रुवमित्यादेः परिग्रहः । तथाच इवादीनां वक्ष्यमाणानां वाचकानां पदानां प्रयोगे वाच्या स्यात्, इवादीनामप्रयोगे वाचकपदाभावे पुनः परा प्रतीयमाना स्यादित्यर्थः । प्रतीयमाना चात्र न व्यङ्ग्यरूपा तथासति वक्ष्यमाणोदाहरणे "मल्लिकासदृशभरित" इत्यादावुत्प्रेक्षाध्वनित्वापत्तेः, किन्तु अध्याह्रियमाणा इत्येवार्थः । ननु किमर्थं प्रथममित्युक्तमित्यत आह—यद् यस्मात्कारणात् द्वयोरपि द्विविधयोरपि वाच्यप्रतीयमानोत्प्रेक्षाभेदयोर्विषये जातिः एकधर्मवन्नानाधर्मवाचकोपमेयोऽर्थः, गुणः सामानाधिकरण्येन सिद्धतानिर्देश्यो धर्मः, क्रिया साध्यताकारनिर्देश्यो धर्मः, द्रव्यं शब्दग्राहिकया निर्देश्यो धर्मः, इत्येतच्चतुष्टयमितिशेषः, उत्प्रेक्ष्यमुत्प्रेक्षणीयं सम्भावनीयं सम्भवति, तत्तस्मात् एतावता समुदायेनोत्प्रेक्षा अष्टधा अष्टप्रकारा स्यात्, जात्यादिचतुष्कोत्प्रेक्षाणां च द्वैगुण्येनाष्टानां सम्भवात् । अपि च तेषामष्टानामेव भेदानां भावस्य जात्यादिचतुष्कस्य प्रत्येकमभावाभिमानतोऽभावोत्प्रेक्षणादपि द्विधा सम्भवति । एवञ्च जात्यादिभावोत्प्रेक्षाष्टकं तदभावोत्प्रेक्षाष्टकञ्चेति समुदायेन षोडशप्रकारा उत्प्रेक्षाः षोडशत्वानुक्ता अपि पर्यवसिताः । पुनरपि तद्द्वैगुण्यमुपपादयति—गुणक्रियेति ताश्च पुनः षोडशप्रकारा उत्प्रेक्षाः, निमित्तस्य उत्प्रेक्षणकारणस्य गुणक्रियास्वरूपत्वात् गुणस्वरूपत्वात् क्रियास्वरूपत्वाच्च प्रत्येकप्रकारस्यैव द्विप्रकारकत्वेन समुदायेन द्वात्रिंशद्विधतां यान्ति सम्पद्यन्ते । इत्थञ्च उत्प्रेक्षा तावद् द्विविधा, वाच्या प्रतीयमाना चेति । इवादिप्रयोगे वाच्या तेषामप्रयोगे पुनःप्रतीयमाना । एवं द्विविधाऽप्येषा जातिगुणक्रियाद्रव्याणामप्रकृतानामध्यवसेयतया प्रत्येकं

( ७५ ) तत्र वाच्योत्प्रेक्षायामुदाहरणं दिङ्मात्रं यथा—

( ७६ ) 'ऊरुः कुरङ्गकदृशश्चञ्चलचेलाञ्चलो भाति ।
सपताकः कनकमयो विजयस्तम्भः स्मरस्येव ॥'

( ७७ ) अत्र विजयस्तम्भस्य बहुवाचकत्वाज्जात्युत्प्रेक्षा ।

( ७८ ) 'ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः ।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥'

चातुर्विध्येनाष्टविधा, अष्टविधाऽपि प्रत्येकं भावाभावाभिमाने च द्विविधा सती षोडशप्रकारा, तादृश्यपि निमित्तस्य जातिक्रियास्वरूपत्वेन च द्विधा भिद्यमाना द्वात्रिंशद्विधेति सरलार्थः ।

( ७९ ) एवं द्वात्रिंशद्विधाया एतस्याः पृथगुदाहरणप्रदर्शने ग्रन्थगौरवभयमाशङ्क्याह—तत्रेति । तासु द्वात्रिंशद्विधासु उत्प्रेक्षासु मध्य इत्यर्थः । दिङ्मात्रमेकैकमात्रमित्यर्थः ।

( ७६ ) ऊरुरिति । अल्पः कुरङ्गो मृग इति कुरङ्गकस्तस्य दृशौ नयने इव दृशौ यस्यास्तस्याः, बालमृगनयनाया इत्यर्थः अल्पार्थे कप्रत्ययः चञ्चलं वायुवेगेन चलाचलीभूतं चेलाञ्चलं वस्त्रैकदेशो यस्य स तथोक्त ऊरुः, स पताकः पताकासहितः कनकमयः सुवर्णनिर्मितः स्मरस्य मदनस्य विजयस्तम्भ इव भाति शोभते, मदनोद्दीपकत्वादित्याशयः । विजयिना शत्रून् विजित्य तद्देशे स्वसर्वजेतृत्वसूचनाय समारोपितो यः स्तम्भविशेषः स विजयस्तम्भ इत्युच्यते । आर्याछन्दस्तल्लक्षणन्तूक्तमेव

( ७७ ) कथमियं जात्युत्प्रेक्षेति दर्शयति —अत्रेति । विजयस्तम्भस्य विजयस्तम्भपदस्य बहुवाचकत्वात् बहुव्यक्तिवाचकत्वात् जात्युत्प्रेक्षा जातिविषयकोत्प्रेक्षालङ्कारः, विजयस्तम्भत्वजातिविशिष्ट-स्मर-सम्बन्धिविजयस्तम्भोत्प्रेक्षणादित्याशयः । अत्रेदम्बोध्यम्—ऊरुरुपमेयं विजयस्तम्भश्चोपमानम्, तथा स्मरस्यैव केवलसुरताभिलाषरूपत्वाच्छरीरत्वे मिथ्यात्वेन तद्विजयस्तम्भस्यापि मिथ्यात्वमेवेति उपमानपदार्थस्य अयथार्थत्वम्, इवशब्दप्रयोगाच्चेयं वाच्या, विजयस्तम्भश्च भावपदार्थ इति भावोत्प्रेक्षणाद्भावाभिमानिन्येषा, उत्प्रेक्षानिमित्तं च नायिकोरोःसौन्दर्यं गुणश्च । अत्रेवशब्दस्योपमोपकारकत्वं तु न शङ्क्यम्,—

"मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥"

इत्यादिदण्डयुक्तदिशेवास्य सम्भावनावाचकत्वस्याऽप्यक्षतत्वात् । अत एव "इवादिप्रयोग" इत्याद्युक्तं ग्रन्थकृता । एवमन्यत्राप्यनुसन्धेयम् ।

( ७८ ) वाच्यगुणोत्प्रेक्षामुदाहरति—ज्ञाने इति । रघुवंशे प्रथमसर्गे दिलीपवर्णनेयम् । तस्य दिलीपस्य ज्ञाने समस्तविषयकबोधशक्तौ सत्यपि मौनम् अनावश्यके विषये तूष्णीम्भावावलम्बनम्, न पुनर्वाचालत्वमत्रापि बहुवक्तृतेतितात्पर्यम्, यद्वा ज्ञाने शास्त्रादिज्ञाने सत्यपि मौनं जल्पवितण्डाराहित्यम् "ज्ञाने"इत्यादौ सत्यर्थे सप्तमी । शक्तौ सामर्थ्ये सत्यपि क्षमा पराभवानर्हस्यापराधसहिष्णुता, तथा त्यागे दाने सत्यपि श्लाघाविपर्ययः आत्मप्रशंसोत्सुकत्वाभावः आसीदितिशेषः । इत्येवं तस्य दिलीपस्य

( ७९ ) अत्र सप्रसवत्वं गुणः ।

( ८० ) 'गङ्गाम्भसि सुरत्राण ! तव निःशाननिस्वनः ।
स्नातीवारिवधूवर्गगर्भपातनपातकी ॥'

( ८१ ) अत्र स्नातीति क्रिया ।

( ८२ ) 'मुखमेणीदृशो भाति पूर्णचन्द्र इवापरः ।'

( ८३ ) अत्र चन्द्र इत्येकव्यक्तिवाचकत्वाद्द्रव्यशब्दः ।

---

गुणा मौनादयः गुणानुबन्धित्वात् ज्ञानादिगुणानुयायित्वात् समान एकस्मादेवोदरा-दुत्पन्नतया सदृशः प्रसवो योनिबहिर्भावो येषां ते सप्रसवाः सहोदरा इव आसन्निति शेषः, तथैवोपकारादिसम्पादनादिति भावः ।

( ७९ ) अत्र पूर्वतो वैलक्षण्यमुपपादयति—अत्रेति । इवशब्दप्रयोगादियं वाच्या । बहुव्रीहिसमासानन्तरं विहितस्यापि भावप्रत्ययस्य मत्वर्थीयप्रत्ययादिव सम्बन्धिसम्ब-न्धान्यतरबोधकताया व्युत्पत्तिसिद्धत्वेनात्रापि सप्रसवत्वपदस्य प्रसवरूपसम्बन्धिबोधक-त्वात् प्रसवस्य च भ्रूणोदरयोर्विभागरूपत्वात् विभागस्य च—

"अथ गुणा रूपं रसो गन्धस्ततः परम् ।
स्पर्शः संख्या परिमितिः संयोगश्च विभागकः" ॥

इत्युक्तदिशा गुणतया गणनादिति भावः । सप्रसवत्वं गुण इति तदुत्प्रेक्षणादत्र गुणो-त्प्रेक्षेत्याशयः । ज्ञानादीनां मौनादिजनकत्वे प्रसवसम्भावना, ज्ञानादिसत्त्व एव मौना-दीनां गुणत्वमितिज्ञानादीनां मौनादिप्रयोजकत्वमवगन्तव्यम् । अतएवाभिहितम्— "गुणा गुणानुबन्धित्वादिति । शक्यतावच्छेदकमाश्रित्य गुणोत्प्रेक्षायामुदाहरणञ्चेदम् । शक्यार्थमाश्रित्य गुणोत्प्रेक्षाया उदाहरणन्तु "विरहेषदुःखादिव बद्धमौनम्" इति । अत्र दुःखमेव गुणः ।

( ८० ) इत्थं वाच्यगुणोत्प्रेक्षोदाहरणं प्रदर्श्य वाच्यक्रियोत्प्रेक्षोदाहरणं प्रदर्शयति— गङ्गाम्भसीति । श्रीकृष्णप्रतापप्रशंसावर्णनमिदम् । सुराणां त्राता तत्सम्बुद्धौ हे सुरत्राण दैत्यसंहारेण देवपालक ! अरिवधूवर्गस्य वैरिस्त्रीसमूहस्य गर्भपातेन भयोत्पादनद्वारा गर्भपातविधानेन पातकमस्यास्तीति स तथोक्तः तव भवतः निर्याणस्य वैरिनगराक्रम-णाय प्रयाणस्य निस्वनस्तत्कालीनदुन्दुभिप्रभृतिशब्दः, गङ्गाम्भसि गङ्गाजले स्नातीव तत्पातकापनोदायेति भावः । पातकी जनो गङ्गास्नानं करोति शब्दोऽपि तादृगिति तदीयगङ्गाजलसम्बन्धे स्नानसम्भावना ।

( ८१ ) अत्र क्रियोत्प्रेक्षां निर्दिशति—अत्रेति । निर्याणशब्दस्य गङ्गापर्यन्तगामित्वं स्नानक्रियाकर्तृत्वेनोत्प्रेक्षितेति क्रियोत्प्रेक्षेत्यर्थः । स्नानक्रियाया अपि भावपदार्थत्वात् भावा-भिमानिनीयं क्रियोत्प्रेक्षा, इवशब्दप्रयोगाच्च वाच्या ।

( ८२ ) अथ द्रव्योत्प्रेक्षामुदाहरति—मुखमेणीदृश इति ।
'अधरः पल्लवतुल्यो नासिका तिलपुष्पवत्' ॥ इति मदुत्तरार्द्धम् ।
एणीदृशो हरिणलोचने एव दृशौ यस्यास्तस्या एणीदृशः ।

( ८३ ) द्रव्यं निर्दिशति—अत्रेति । एकव्यक्तिवाचित्वात् केवलैकव्यक्तिवाचित्वेन नानाव्यक्तिनियतजातिवाचित्वाभावादित्यर्थः । द्रव्यशब्द इति । चन्द्रादेर्द्रव्यत्वाद्द्र-

( ८४ ) एते भावाभिमाने ।

( ८५ ) अभावाभिमाने यथा--

( ८६ ) 'कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ॥'

( ८७ ) अत्रापश्यन्ताविति क्रियाया अभावः ।

( ८८ ) एवमन्यत् ।

---

त्प्रेक्षेयम् । चन्द्रादेर्भावपदार्थत्वाद्भावाभिमानिनी इवप्रयोगाच्च वाच्या ।

( ८४ ) इत्थं जात्याद्युत्प्रेक्षां समुपपाद्य भावाभिमानित्वेन विशिनष्टि—एते इति । एते दर्शितप्रकारोत्प्रेक्षाप्रकारा इत्यर्थः भावाभिमाने भावपदार्थसम्भावनायाम्, बोद्धव्या इति शेषः, तेषां भावस्वरूपत्वादित्याशयः ।

( ८५ ) अभावाभिमानेनोत्प्रेक्षामुदाहर्त्तुमाह—अभावाभिमान इति । जाति-गुण-क्रिया-द्रव्याणामभावसम्भावनायामित्यर्थः ।

( ८६ ) तत्र क्रियाभावोत्प्रेक्षामुदाहरति—कपोलेति । स्वामिनोऽन्तिके तद्वियोगिन्याः कामपि दशामवलोकयतः कस्यचिदुक्तिरियम् । अस्या आलोच्यमानाया रमण्याः कपोलफलकौ गण्डदेशौ, तथाविधौ तथाऽनुभूतमनोहरौ भूत्वापि अन्योन्यं परस्परम् अपश्यन्ताविव नासिकोन्नतत्वेन व्यवधानादनवलोकयन्ताविव विद्यमानौ ईदृक्षामेवंविधां क्षामतां कृशतां गतौ प्राप्तौ । पूर्वं संयोगे स्फीतत्वादुभौ परस्परं ददृशतुः, सम्प्रति पुनर्वियोगे कार्श्यातिशयात्तयोरवनतत्वेन नासिकायाश्चोन्नतत्वेन व्यवधानाद्दर्शनाभावः सम्भवति अन्योरदर्शने अन्यत्रान्तरस्य कृशताया अवश्यम्भावादितिभावः । इत्येतदेव कष्टं क्लेशमित्यर्थः ।

( ८७ ) क्रियोत्प्रेक्षामुपपादयति—अत्रेति । क्रियाया दर्शनक्रियाया अभाव उत्प्रेक्षित इति शेषः । कपोलफलकयोरचेतनत्वेन दर्शकत्वासम्भवेऽपि दर्शनमुत्प्रेक्षितम्, इवपदप्रयोगाद्वाच्या, दर्शनस्याभावरूपत्वादभावाभिमानिनी ।

( ८८ ) उदाहरणान्तरविषये आह—एवमिति । अन्यत्—जाति-गुण-द्रव्याणां प्रत्येकमभावाभिमाने उदाहरणम् एवमूहनीयमित्यर्थः ।

तत्र जातेरभावाभिमाने यथा—

"न सन्ध्यां कुरुते भास्वान् द्विजत्वाभावतः किमु ।"

इत्यत्रातपक्लान्तोक्तौ सन्ध्याकरणहेतौ मन्दगमने प्रकृतेऽप्रकृतश्लिष्टसन्ध्यापदार्थाकरणहेतुत्वेन द्विजत्वजात्यभाव उत्प्रेक्षितः । सन्ध्याकरणञ्च उत्प्रेक्षाहेतुरुक्तः ।

अनुक्तहेतुका जात्यभावोत्प्रेक्षा यथा—

"आगच्छन्नेव पुरुषो न विप्र इति लक्ष्यते ।"

अत्र तु विप्रत्वव्यञ्जकसंस्थानाभावो हेतुरनुक्तः । उक्तदिशाऽन्यत्रापि हेतूक्त्यनुक्ती बोध्ये ।

"कीर्त्तिस्ते श्रीमतो दूरं प्रयाताऽनादृतेव किम् ?" ।

इत्यत्र कीर्त्तिरनादरो गुण उत्प्रेक्षितः । तत्सपत्नीत्वेन अभ्यासित्वं श्रीमत्त्वं हेतुरुक्तः ।

"अस्तं जगाम रजनी सदृशेन्दु मृतेरिव ।"

( ८९ ) निमित्तस्य गुणक्रियारूपत्वे यथा—'गङ्गाम्भसि' इत्यादौ स्नातीवेत्युत्प्रेक्षानिमित्तं पातकित्वं गुणः। 'अपश्यन्तौ-' इत्यादौ क्षामतागमनरूपं निमित्तं क्रिया।

( ९० ) एवमन्यत्।

प्रतीयमानोत्प्रेक्षा यथा—

( ९१ ) 'तन्वङ्गयाः स्तनयुग्मेन मुखं न प्रकटीकृतम्।
हाराय गुणिने स्थानं न दत्तमिति लज्जया ॥'

( ९२ ) अत्र लज्जयेवेति इवाद्यभावात्प्रतीयमानोत्प्रेक्षा।

---

इत्यत्र द्रव्यस्य इन्दोरभाव उत्प्रेक्षितः। रजन्यस्तगमनं तद्धेतुरुक्तः। यथा वा—

"मन्मथस्याभावमिव स्वरूपातं तव मन्महे।
समुद्र दयासिन्धो! नानार्थाऽभासतर्षणात् ॥

इत्यत्र मन्मथस्य द्रव्यत्वात् तस्य विरोधित्वेन निमित्तेनाभावतादात्म्येनोत्प्रेक्षितः। स्पष्टञ्चेदं विज्ञप्रियादौ।

( ८९ ) इत्थं जात्यादिचतुष्कानां भावाभिमाने भेदचतुष्कम्, अभावाभिमाने च तेषां भेदचतुष्कमित्यष्टौ वाच्योत्प्रेक्षाया भेदाञ्जुपपाद्य सम्प्रति प्रत्येकतस्तेषामेव गुणनिमित्तकत्वेन क्रियानिमित्तकत्वेन च प्रत्येकत एव पुनर्द्वौ द्वौ भेदावुपपादयितुमाह—निमित्तस्येति। गुणक्रियारूपत्वे क्रमात् गुणरूपत्वे क्रियारूपत्वे चेत्यर्थः। पातकित्वं नाम पापजननयोग्यत्वं तच्च पतनकारणत्वात् पापमेवादृष्टरूपम्, पापञ्च "अदृष्टं शब्द एव च" "धर्माधर्मावदृष्टं स्यात्" इत्याद्युक्तदिशा गुणविशेष एव। तस्य च पापस्य ज्ञानसम्बन्धेन गङ्गास्नानक्रियायां निमित्तत्वादितिभावः। क्षामतेति। कृशताप्राप्तिकारणकत्वादेव "अपश्यन्ताविव" इत्युत्प्रेक्षणादितिभावः।

( ९० ) उदाहरणान्तरं दर्शयितुमाह—एवमिति। अन्यत् वाच्योत्प्रेक्षाया गुणनिमित्तकं क्रियानिमित्तकञ्चातिरिक्तमुदाहरणम्, एवमूहनीयमित्यर्थः। यथा—

"उत्सुकेव हसत्येषा ज्योत्स्नामिन्दोः कुमुद्वती ।"

इत्यत्रोत्सुकत्वोत्प्रेक्षायाम् इन्दुज्योत्स्ना गुणः। "ऊरुः कुरङ्गकदृशः" इत्याद्युक्तोदाहरणे च ऊरोरूपं गुणः, "ज्ञाने मौनम्" इत्यादौ गुणान्तरोत्पादनरूपा क्रिया। "मुखमेणीदृशः" इत्यादौ मनोहरत्वाद्यतिशयरूपो गुणः स चानभिहित एव। एवमन्यत्रापि स्वयमूहनीयम्।

( ९१ ) एवं वाच्यां दिङ्मात्रमुदाहृत्य प्रतीयमानोत्प्रेक्षामुदाहरति—तन्वङ्ग्या इति। तन्वङ्ग्याः स्वभावत एव कृशाङ्ग्या अस्याः प्रियतमायाः स्तनयुग्मेन पयोधरयुगलेन गुणिने सूत्रग्रथिताय अन्यत्र विद्यादयादाक्षिण्यादिगुणशालिने हाराय स्थानं न दत्तं नितान्तसान्द्रसन्निवेशादवस्थानप्रदेशो न दत्त इति हेतोर्लज्जयेव मुखम् आननम् चूचुकापरपर्यायम् अग्रभागद्वयञ्च न प्रकटीकृतं विकासितं जनसमाजे न दर्शितमित्यर्थः एकत्रोपशितया लज्जया। अन्यत्र तु वस्तुभूतत्वेनेतिभावः। अन्योऽपि विद्यादिगुणशालिने पुरुषाय कुतोऽपि हेतोः स्थानमप्रदाय लज्जया जनसमाजे मुखं न प्रकटयति।

( ९२ ) लक्ष्ये लक्षणं योजयति—अत्रेति। आदिपदेन मन्ये शङ्के, ध्रुवं, नूनं, प्राय, मवैमि, ऊहे, तर्कयामि, जाने, उत्प्रेक्षे, इत्याद्युत्प्रेक्षावाचकान्तराणां परिग्रहः। प्रतीयमानो-

( ९३ ) एवमन्यत् ।

( ९४ ) ननु ध्वनिनिरूपणप्रस्तावेऽलङ्काराणां सर्वेषामपि व्यङ्ग्यत्वं भवतीत्युक्तम् । संप्रति पुनर्विशिष्य कथमुत्प्रेक्षायाः प्रतीयमानत्वम् । उच्यते-व्यङ्ग्योत्प्रेक्षायाम्—

( ९५ ) महिलासहस्स-' (३५१पृ.) इत्यादावुत्प्रेक्षणं विनापि वाक्यविश्रान्तिः। इह तु स्तनयोर्लज्जाया असंभवाल्लज्जयेवेत्युत्प्रेक्षयैवेति व्यङ्ग्यप्रतीयमानोत्प्रेक्षयोर्भेदः।

---

त्प्रेक्षेति । सा च लज्जाया गुणविशेषत्वाद्भावरूपत्वान्निमित्तरूपत्वाच्च )निमित्तभूतगुणोत्प्रेक्षणरूपा भावाभिमानिनी ।

( ९३ ) उदाहरणान्तरविषये आह—एवमिति । अत्र दिङ्मात्रं प्रतीमानायां गुण रूपहेतूत्प्रेक्षायां यथा—

"विक्रीय दिङ्मत्तमुखेन बाला मालाकृतः कैरवकोरकाणि ।
विक्रेतुकामा विकचाम्बुजानि चेलाञ्चलेनाननमावृणोति ॥"

इत्यत्राम्बुजविक्रयेच्छाया मुखावरणहेतुत्वाभावात् इवाद्यभावात् विक्रेतुकामेवेति गुणरूपहेतूत्प्रेक्षणाच्च प्रतीयमाना गुणोत्प्रेक्षा, तदैव मुखचन्द्रादर्शनात् पद्मनिमीलनस्य वारणमितिभावः । एवमन्यदुदाहरणं स्वयमूह्यम् ।

( ९४ ) ननु "तन्वङ्ग्याः स्तनयुग्मेन" इत्यादावुत्प्रेक्षालङ्कारध्वनेः स्वीकारेणैवेष्टसिद्धावलमभिनवोत्प्रेक्षायाः प्रतीयमाननामकभेदसामान्यस्वीकारेणेत्याशङ्कामुत्थापयति— नन्विति । उक्तमिति । "वस्तु वाऽलङ्कृतिर्वाऽपि" इत्यादिना ध्वनिनिरूपणावसरे इति शेषः। उच्यते युक्तियुक्तसिद्धान्तः प्रतिपाद्यत इत्यर्थः । व्यङ्ग्योत्प्रेक्षायाम् काव्यस्य ध्वनित्वप्रयोजकस्य व्यङ्ग्यभूतस्योत्प्रेक्षायाम् उत्प्रेक्षालङ्कारध्वनावित्यर्थः, "इत्यादावुत्प्रेक्षणं विनाऽपि वाक्यविश्रान्ति" रित्युत्तरेणास्या सम्बन्धः ।

( ९५ ) महिलेति । चतुर्थपरिच्छेदे ध्वनिनिरूपणावसरेऽनूदितं तत्रैव व्याख्यातञ्चावलोकनीयम् (३९१ पृ०) । नायकस्यानेकनायिकानुरागात् कृशीभवन्त्यास्तत्पत्न्या अवस्थां तस्मिन् आवेदयन्त्यास्तत्सख्या उक्तिरियम् । अत्र अमान्तीवेति। अभावाभिमानि-प्रतीयमानक्रियोत्प्रेक्षाध्वनिरित्यवधेयम्। तथा विशेषोक्तिध्वनिरप्यस्तीत्यपि तत्रैवोपपादितः।

इत्यादाविति । उत्प्रेक्षणम् "अमान्तीव" इति सम्भावनाम् । वाक्यविश्रान्तिः वाक्यसमाप्तिः सम्भवतीतिशेषः, अमान्तीतिपदस्य "तव हृदयानुरागपात्रतामप्राप्य" इत्यर्थेनाभिधेये विश्रान्तेस्तत्र कस्यापि विप्रतिपत्तेरदर्शनादितिभावः । इह तु "तन्वङ्ग्याः स्तनयुग्मेन" इत्यादौ प्रकृतोदाहरणे त्वित्यर्थः । असम्भवादिति । स्तनयोश्चेतनत्वाभावादित्याशयः। उत्प्रेक्षयैवेति । उत्प्रेक्षावाचकेवादिपदाध्याहारकल्पनयैवेत्यर्थः, वाक्यविश्रान्तिरितिपूर्वेणैव सम्बन्धः, व्यङ्ग्यप्रतीयमानोत्प्रेक्षयोरुत्प्रेक्षाध्वनिप्रतीयमानोत्प्रेक्षयोरित्यर्थः। एवञ्च यत्रोत्प्रेक्षणं विनापि अन्वयोपपत्तिस्तत्रोत्प्रेक्षाध्वनिः, यत्र तूत्प्रेक्षणं विना अन्वयानुपपत्तिस्तत्र प्रतीयमानोत्प्रेक्षेति पार्थक्यात् उत्प्रेक्षाध्वनेरतिरिक्तं प्रतीयमानोत्प्रेक्षासामान्यमकामेनाऽप्यवश्यं स्वीकर्त्तव्यम् , एवञ्च यत्कैश्चित् "महिलासहस्से" त्यादिप्रतीयमानोत्प्रेक्षायामुदाहृतं तदापातरमणीयमितिविभावनीयम् ।

( ९६ ) अत्र वाच्योत्प्रेक्षायाः षोडशसु भेदेषु मध्ये विशेषमाह—

( ९७ ) तत्र वाच्याभिदाः पुनः ।

विना द्रव्यं त्रिधा सर्वाः स्वरूपफलहेतुगाः ॥ ४३ ॥

( ९८ ) यत्रोक्तेषु वाच्यप्रतीयमानोत्प्रेक्षयोर्भेदेषु मध्ये ये वाच्योत्प्रेक्षायाः षोडश भेदास्तेषु च जात्यादीनां त्रयाणां ये द्वादश भेदास्तेषां प्रत्येकं स्वरूपफलहेतुगतत्वेन द्वादशभेदतया षट्त्रिंशद्भेदाः ।

( ९९ ) द्रव्यस्य स्वरूपोत्प्रेक्षणमेव संभवतीति चत्वार इति मिलित्वा चत्वारिंशद्भेदाः ।

( १०० ) अत्र स्वरूपोत्प्रेक्षा यथा पूर्वोदाहरणेषु ,'स्मरस्य विजयस्तम्भ' इति ।
'सप्रसवा इव' इत्यादयो जातिगुणस्वरूपगाः । फलोत्प्रेक्षा यथा—

( ९६ ) वाच्योत्प्रेक्षाया भेदान्तरं दर्शयितुमुपक्रमते—अत्रेति । स्पष्टम् ।

( ९७ ) अत्रापि विशेषं दर्शयति—तत्रेति । तत्र तेषु वाच्योत्प्रेक्षाप्रतीयमानोत्प्रेक्षयोर्द्वात्रिंशद्भेदेषु मध्ये इत्यर्थः। द्रव्यं द्रव्यमूलकवाच्योत्प्रेक्षां विना अन्याः सर्वा वाच्याभिदा वाच्योत्प्रेक्षाभेदाः जातिगुणक्रियामूला द्वादशप्रकारा इत्यर्थः स्वरूप-फल हेतुगाः सत्यः, पुनस्त्रिधास्त्रिविधा भवन्ति । स्वरूपञ्च फलञ्च हेतुश्च गच्छन्ति ये ते तादृशाः स्वरूपगा फलगा हेतुगाः । स्वरूपेति प्रतीकमादाय तर्कवागीशः—"तादर्थ्यचतुर्थ्यन्तेन तुमुनन्तेन वा पदेन यत्रोत्प्रेक्षा सा फलोत्प्रेक्षा, हेतुविभक्त्यन्तपदेनोत्प्रेक्षा हेतूत्प्रेक्षा, ताभ्यामितरा स्वरूपोत्प्रेक्षा" इत्याह । फलहेतुभावेन द्रव्यसम्भावनायाश्च चमत्कारातिशयाजनकत्वाद्द्रव्योत्प्रेक्षाया अपि जातिगुण-क्रियोत्प्रेक्षाणामिव फलहेत्वात्मना भेदान्तरभागित्वम्, अतएव विवृतौ केवलं स्वरूपेण द्रव्योत्प्रेक्षाया भेदान्तरभागित्वमुक्तम् ।

( ९८ ) कारिकार्थं स्पष्टयति—यत्रेति । त्रयाणां जातिगुण-क्रियारूप-पदार्थानामित्यर्थः । द्वादश भेदा इति । एकैकचतुष्कस्य त्रैगुण्यात् द्वादशत्वमवगन्तव्यम् । षट्त्रिंशद्भेदा इति । द्वादशत्रयस्य मेलनात् षट्त्रिंशत्त्वम् ।

( ९९ ) "विना द्रव्यम्" इत्यस्य हेतुगर्भतात्पर्यमभिव्यनक्ति—द्रव्यस्येति । स्वरूपोत्प्रेक्षणमेव, न तु फलत्वेन हेतुत्वेन वा उत्प्रेक्षणम् इत्येवकारार्थः तत्र चमत्कारातिशयासम्भवादिति भावः ।

इदञ्च केवलवाच्योत्प्रेक्षायामेव नियतम् । प्रतीयमानोत्प्रेक्षायान्तु स्वरूपोत्प्रेक्षणमेव भवितुं न शक्नोति किन्तु फलोत्प्रेक्षणहेतूत्प्रेक्षणं च भवितुं शक्नोत्येव, चमत्कारातिशयसम्भवात् "प्रतीयमाना भेदाश्च प्रत्येकं फलहेतुगाः" इति प्रतिपादयिष्यमाणत्वात् "स्वरूपोत्प्रेक्षाऽप्यत्र न भवति" इति वक्ष्यमाणत्वाच्च । चत्वारिंशदिति । द्रव्योत्प्रेक्षाचतुष्कस्य षट्त्रिंशत्साहित्यादिति भावः ।

( १०० ) तत्र जातिगुणयोः स्वरूपोत्प्रेक्षाद्वयं पूर्वोक्तमेव दर्शयति—अत्रेति । पूर्वोदाहरणेषु "ऊरुः कुरङ्गकदृशः" इत्यादिषु । आदिपदेन "स्नातीव", "पूर्णचन्द्र इवापरः" इत्यनयोः परिग्रहः । एवं सति "जातिगुणस्वरूपगा" इत्यत्र जातिगुणादिस्वरूपगा इत्यर्थो विधातव्यः । तथा च "स्मरस्य विजयस्तम्भः" इत्यत्र जातिस्वरूपोत्प्रेक्षा, "सप्रसवा" इत्यत्र गुणस्वरूपोत्प्रेक्षा चेति स्पष्टोऽर्थः प्रतिफलति ।

( १ ) 'रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः ।
विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम् ॥'

( २ ) अत्राख्यातुमिति भूप्रवेशस्य फलं क्रियारूपमुत्प्रेक्षितम् ।

हेतूत्प्रेक्षा यथा—

( ३ ) 'सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥'

( ४ ) अत्र दुःखरूपो गुणो हेतुत्वेनोत्प्रेक्षितः ।

( ५ ) एवमन्यत् ।

( १ ) इत्थं स्वरूपोत्प्रेक्षाया द्रव्येऽपि सम्भवादादिपदग्राह्याभ्यां सह जात्यादिचतुर्ष्वेवोपपाद्य, फलोत्प्रेक्षां हेतूत्प्रेक्षाञ्च द्रव्यं त्यक्त्वा जात्यादित्रिषूपपादयितुं क्रियागामिनीं फलोत्प्रेक्षामाह—रावणस्यापीति । रघुवंशे द्वादशसर्गे पद्यमिदम् । रामेण दशरथापत्येन अस्तः आहतः "असु क्षेपणे" इत्यस्मात् क्तः, आशुगो बाणः "आशुगौ वायुविशिखौ" इत्यमरः, रावणस्य लङ्कापतेः निशाचरराजस्य हृदयम् उरो भित्त्वा विदीर्यापि, उरगेभ्यः पातालवासिभ्यः पन्नगेभ्यः "उरगः पन्नगो भोगी" इत्यमरः, प्रियं "रावणो युष्माकं कन्यापहर्त्ता मयाद्य निहितः" इति रावणवधरूपं प्रीतिकरं वृत्तान्तम्, आख्यातुं कथयितुमिव भुवं "भित्त्वा" इति पूर्वतोऽनुषञ्जनीयम्, विवेश प्रविवेश । अनेन रामबाणस्य वीर्यातिशयो व्यञ्जितः ।

( २ ) उत्प्रेक्षितं फलं दर्शयति—अत्रेति । उत्प्रेक्षितमिति । आख्यानक्रियारूपं प्रवेशस्य फलं सम्भावितमित्यर्थः । तुमर्थेच्छाविषयस्य फलत्वप्रतीतेः ।

( ३ ) एवं क्रियोत्प्रेक्षामुदाहृत्य हेतूत्प्रेक्षामुदाहरति—सैषेति । रघुवंशे त्रयोदशसर्गे रावणं निहत्य पुष्पकेणागच्छतः श्रीरामस्य सीतां प्रति तन्नूपुरलाभदेशप्रदर्शनपरं वचनमिदम् । प्रिये ! इत्यध्याहार्यम् । एषा पुरोऽवलोक्यमाना सा स्थली स्थानम्, यत्र स्थल्याम्, त्वां सीतां विचिन्वता अन्वेषयता मया, उर्व्यां भूमौ भ्रष्टं तव पादारविन्दादेव विच्युतम्, एकम् ( विशिष्य ज्ञापनार्थमिदम् ) नूपुरं तदाख्याभरणम्, तव चरणारविन्दात् पादसरोरुहाद् यो विश्लेषो वियोगस्तेन यद् दुःखं तस्मादिव हेतोः, बद्धं दृढप्रतिज्ञं गृहीतं मौनं तूष्णीं भवनं येन तादृशम्, निश्शब्दमितियावत्, अदृश्यत अवलोकितम् । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः तल्लक्षणन्तूक्तमेवप्राक् (१६५पृ० ) ।

( ४ ) उत्प्रेक्षितमर्थं दर्शयति—अत्रेति । हेतुत्वेन बद्धमौनत्वस्येत्यर्थः । उत्प्रेक्षितः सीताचरणासम्बन्धः सीताचरणविश्लेषदुःखत्वेन सम्भावित इत्यर्थः ।

( ५ ) उदाहरणान्तरविषय आह—एवमन्यदिति । क्रियोत्प्रेक्षायाः फलगामित्वमेवोक्तं न हेतुगामित्वम्, गुणोत्प्रेक्षाया हेतुगामित्वमेवोक्तं न तु फलगामित्वम्, जात्युत्प्रेक्षायास्त्वनेकगामित्वमप्युक्तम्, एवंरीत्या तदूह्यमित्यर्थः ।

तत्र क्रियोत्प्रेक्षाया हेतुगत्वं यथा—

"यशस्तव महीपाल ! मार्जनादिव निर्मलम्"

इत्यत्र नैर्मल्यहेतुत्वेन मार्जनक्रियोत्प्रेक्षिता ।

( ६ ) उक्त्यनुक्त्योर्निमित्तस्य द्विधा तत्र स्वरूपगाः।

( ७ ) तेषु चत्वारिंशत्संख्याकेषु भेदेषु मध्ये ये स्वरूपगायाः षोडश भेदास्ते

गुणस्य फलगामित्वं यथा—

"सदा कीर्त्तिमुखं पद्मं पुण्यार्थमिव तिष्ठति।"

अत्र पुण्यं गुणश्च फलत्वेनोत्प्रेक्षितम्। यथा वा—

"उन्मेषं यो मम न सहते जातवैरीनिशाया-

मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः।

नीतः शान्तिं प्रसभमनया वक्त्रकान्तेति हर्षा-

ल्लग्ना मन्ये ललिततनु! ते पादयोः पद्मलक्ष्मीः॥

अत्र पादसंयोगात्मको गुणो हर्षफलत्वेनोत्प्रेक्षितः।

जात्युत्प्रेक्षायाः फलगामित्वं यथा—

"कामुकस्य रतौ वामा कन्दर्पशरपीडिता। नखक्षतकृतं दुःखं सुखत्वायेव वाञ्छति॥"

अत्र नित्याया अपि सुखत्वजातेर्दुःखे आरोप्यत्वरूपवाञ्छायाः फलत्वमुत्प्रेक्षितम्।

जात्युत्प्रेक्षाया हेतुगामित्वं यथा—

"राहुग्रस्तोऽपि शीतांशुर्द्विजत्वादिव पुण्यकृत्।"

अत्र पुण्यजननत्वेन द्विजत्वजातिरुत्प्रेक्षिता। यद्यपि—

"कोकयूनोर्मनोदुःखं चन्द्रादिव समुत्थितम्।"

इत्यादिषु द्रव्योत्प्रेक्षाया अपि हेतुगामित्वं सम्भवति तथापि विरलत्वात् चमत्कारविशेषानाधायकत्वाच्च तदसम्भवो दर्शितः।

केचित्तु—जात्यादेरिव द्रव्यस्यापि स्वरूपादिकृतं भेदत्रयमिच्छन्ति। तन्मते स्वरूपोत्प्रेक्षा यथा—

"पातालमेतन्नयनोत्सवेन विलोक्य शून्यं शशलाञ्छनेन।

इहाङ्गनाभिः स्वमुखच्छलेन कृताऽम्बरे चन्द्रमयीव सृष्टिः"॥

अत्र "चन्द्रमयीवे" ति चन्द्रस्यैकत्वेन द्रव्योत्प्रेक्षा।

फलोत्प्रेक्षा यथा—

"मध्ये सलिलमादित्यसम्मुखं धूलिधूसराः। कुमुदिन्यस्तपस्यन्ति चन्द्रायेव दिने दिने॥"

अत्र "चन्द्रायेवे"ति तादर्थ्ये चतुर्थी।

हेतूत्प्रेक्षा यथा—

"जयति शिशिरतायाः कारणं सा हिमांशोस्त्रिपुरहरकिरीटादापतन्ती द्युसिन्धुः।

सततसहनिवासी क्षीरसिन्धोः प्रसूतो हिमकर इव हेतुः शैत्यशैत्यस्य यस्याः॥"

अत्र हिमकरो हेतुत्वेनोत्प्रेक्षितः।

( ६ ) तत्रापि स्वरूपोत्प्रेक्षाया भेदान्तरं दर्शयति—उक्तीति। तत्र प्रागुक्तासु उत्प्रेक्षासु मध्ये स्वरूगा स्वरूपोत्प्रेक्षाः, निमित्तस्य स्वस्वकारणस्य गुणक्रियारूपस्य प्रयोजनस्येत्यर्थः, उक्त्यनुक्त्योः उक्तावनुक्तौ चेत्यर्थः, द्विधा पुनर्द्विप्रकारा भवन्तीतिशेषः।

( ७ ) एतदेव व्याचष्टे—तेष्विति। षोडशभेदा इति। जातेर्भावाभिमाने एकः अभावाभिमाने चैकः, उभयोरपि प्रत्येकं गुणनिमित्तकत्वात् क्रियानिमित्तकत्वाच्च पुनर्द्विप्रकार-

उत्प्रेक्षानिमित्तस्योपादानानुपादानाभ्यां द्वात्रिंशद्भेदा इति मिलित्वा षट्पञ्चाशद्भेदा वाच्योत्प्रेक्षायाः।

(८) तत्र निमित्तस्योपादानं यथा पूर्वोदाहृते 'स्नातीव' इत्युत्प्रेक्षायां निमित्तं पातकित्वमुपात्तम्। अनुपादाने यथा—'चन्द्र इवापरः' इत्यत्र तथाविधसौन्दर्याद्यतिशयो नोपात्तः।

(९) हेतुफलयोस्तु नियमेन निमित्तस्योपादानमेव, तथाहि—'विश्लेषदुःखादिव' इत्यत्र यन्निमित्तं बद्धमौनत्वम् 'आख्यातुमिव' इत्यत्र च भूप्रवेशस्तयोरनुपादानेऽसंगतमेव वाक्यं स्यात्।

(१०) प्रतीयमानायाः षोडशसु भेदेषु विशेषमाह—

---

कत्वेन चत्वारः, एवं गुणस्य क्रियायाश्च चत्वारः, द्रव्यस्य च चत्वार इति समुदायेन स्वरूपोत्प्रेक्षाः षोडशप्रकारा इत्यर्थः। पूर्वोपदर्शितचत्वारिंशद्भेदेभ्यः स्वरूपोत्प्रेक्षाणां निष्काशने चतुर्विंशतिभेदा अवशिष्यन्त इत्यवगन्तव्यम्। उपादानानुपादानाभ्यामिति। उपादानघटिताश्च षोडश चत्वारिंशद्गणनाप्रविष्टा एव, अनुपादानघटिता षोडशमात्रवृत्तिर्बोध्या। तथाच पुनः षोडशानां स्वरूपोत्प्रेक्षाणां निमित्तस्योपादानेन अनुपादानेन च प्रत्येकं द्विप्रकारकत्वाद् द्वात्रिंशद्भेदा इति भावः। नच निमित्तस्यानुपादाने कथं तद् द्वैविध्यघटितं षोडशत्वम् अष्टत्वस्यैवौचित्यादिति वाच्यम्, क्वचिन्निमित्तभूतक्रिययैव तस्या अनुक्तिः, क्वचित्तादृशस्य गुणस्यानुक्तिः, एवञ्चानुक्तावपि द्वैविध्यसम्भवात्। मिलित्वेति। अनुक्तनिमित्तकषोडशभिः सह मिलित्वेत्यर्थः। षट्पञ्चाशद्भेदा इति। द्वात्रिंशद्भेदानां चतुर्विंशतिभेदैः सह मेलने समुदायेन षट्पञ्चाशद्भेदा जायन्त इति भावः।

(८) दिङ्मात्रमुदाहरणं दर्शयति—तत्रेति। तथाविधो मुखचन्द्रोभयगत इत्यर्थः। आदिशब्देनाह्लादकत्वादेः परिग्रहः।

(९) नन्वेवं हेतुफलोत्प्रेक्षास्वपि निमित्तस्योक्तावनुक्तत्वे षट्त्रिंशद्भेदाः कुतो नेष्यत आह—हेतुफलयोस्त्विति। हेतूत्प्रेक्षायां फलोत्प्रेक्षायां चेत्यर्थः। जातावेकवचनम्। नियमेन अवश्यम्भावेन। तत्र हेतूत्प्रेक्षायां फलमेव निमित्तम्, फलोत्प्रेक्षायां हेतुरेवेत्यवधेयम्। "येन विना यन्न भवति तत्तस्य निमित्तम्" इतिलक्षणात् हेतूत्प्रेक्षायामुत्प्रेक्षमाणस्य फलरूपस्य निमित्तस्य फलोत्प्रेक्षायां तु हेतुरूपस्य चावश्यं वाच्यत्वादित्यवधेयम्। तदेवोपपादयति—तथाहीति। 'विश्लेषदुःखादिव' इत्यत्र हेतूत्प्रेक्षायामिति शेषः। निमित्तमुत्प्रेक्षणकारणीभूतं यद्बद्धमौनत्वमित्यर्थः। 'आख्यातुमिव' इत्यत्र फलोत्प्रेक्षायामिति शेषः। भूप्रवेश इति। यन्निमित्तमितिपूर्वतोऽनुषज्यते तत्र यच्छब्दस्य लिङ्गव्यत्ययोऽवगन्तव्यः, तथाच आख्यातुमिवेत्युत्प्रेक्षणनिमित्तीभूतो यश्च भूप्रवेश इत्यर्थः। तयोर्बद्धमौनत्वपातालप्रवेशरूपयोर्निमित्तयोरित्यर्थः अनुपादानेऽनुक्तौ। सति सप्तमीयम्। असङ्गतमेवेति। अयमाशयः—"त्वच्चरणारविन्दविश्लेषदुःखादिव अदृश्यत" इत्यस्य केवलस्य "आशुगः उरगेभ्यः प्रियमाख्यातुमिव" इत्यस्य च केवलस्याभिधाने जिज्ञासितपदासत्त्वेन वाक्यमभिप्रेतार्थप्रत्यायनाक्षममेव भवेदिति।

(१०) एवं वाच्योत्प्रेक्षां निरूप्य प्रतीयमानोत्प्रेक्षां विशिष्य निरूपयति—प्रतीयमानाया इति। षोडशस्विति। जात्यादिचतुष्कोत्प्रेक्षाणां भावाभावविषयकत्वेन द्विचत्वार इ-

( ११ ) प्रतीयमानाभेदाश्च प्रत्येकं फलहेतुगाः ॥ ४४ ॥

यथोदाहृते 'तन्वङ्ग्याः स्तनयुग्मेन' इत्यत्र लज्जयेवेति हेतुरुत्प्रेक्षितः ।

( १२ ) अस्यामपि निमित्तस्यानुपादानं न संभवति । इवाद्यनुपादाने निमित्तस्य चाकीर्तने उत्प्रेक्षणस्य प्रमातुर्निश्चेतुमशक्यत्वात् ।

( १३ ) स्वरूपोत्प्रेक्षाप्यत्र न भवति । धर्मान्तरतादात्म्यनिबन्धनायामस्यामिवाद्यप्रयोगे विशेषणयोगे सत्यतिशयोक्तेरभ्युपगमात् ।

---

त्यष्टौ भेदाः, तेषाञ्च पुनर्गुणक्रियानिमित्तवशात् प्रत्येकमेव द्विप्रकारकत्वेन प्रतीयमानोत्प्रेक्षाया अपि मौलिकाः षोडशभेदा इति प्रागेव दर्शितमवगन्तव्यम् । विशेषं भेदम् ।

( ११ ) तानपि भेदान् पुनर्विभज्य दर्शयति—प्रतीयमानेति । प्रतीयमानायाः प्रतीयमानोत्प्रेक्षाया उक्ता षोडशभेदाश्च प्रत्येकं भेदं भेदं प्रति फलहेतुगाः फलगता हेतुगताश्च द्विधा भिद्यमानाः सन्तो मिलित्वा द्वात्रिंशद्भेदा सम्पद्यन्त इत्यर्थः, न तु स्वरूपेणेत्यग्रे वक्ष्यति । तत्र प्रतीयमानोत्प्रेक्षा फलगताथा यथा—"रावणस्यापि" इत्यादौ "उरगेभ्यः किल प्रियम्" इतिपाठे परिवर्त्तने । तथाच इवाद्यनुक्तत्वात् प्रतीयमानता आख्यातुमिवेतिफलोत्प्रेक्षणाच्च फलगता । यथा वा—

"राहुणा ग्रस्यते पूर्णः पान्थः हिंसः कलानिधिः ।
दीनेष्वार्येण मार्गेण वर्त्तितव्यं सुखोषितुम् ॥"

अत्रापि इवाद्यनुक्तत्वात् प्रतीयमानता सुखोषितुमिति ग्रसनस्य च फलमितिफलोत्प्रेक्षणात्फलगता ।

(A) प्रतीयमानोत्प्रेक्षा हेतुगता स्वयमुदाहरति—यथेति । स्पष्टम् ।

( १२ ) ननु निमित्तानुपादानकृता परपोड़शवृद्धिः कथं प्रदर्श्यत इत्यत आह—अस्यामिति । फलहेतुगतत्वे वाच्योत्प्रेक्षायामिव अस्यां प्रतीयमानोत्प्रेक्षायामपीत्यर्थः । तदसम्भवे हेतुमुपपादयति—इवाद्यनुपादान इति । उत्प्रेक्षणस्य सम्भावनायाः । सम्बन्धसामान्यविवक्षयेयं षष्ठी । प्रमातुर्बोद्धुः श्रोतुरितियावत् । तथाच "तन्वङ्ग्याः" इत्यादौ हाराय स्थानादानं लज्जोत्प्रेक्षाया हेतुः, तत्र—

तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम् ।
हाराय गुणिने स्थानं पीवरेण नचार्पितम् ॥

इति पाठे लज्जाहेत्वदर्शनाल्लज्जोत्प्रेक्षा प्रमात्रा निश्चेतुं न शक्यत इत्यर्थः । तदनिश्चयेऽचेतनस्य स्तनयुग्मस्य लज्जासम्भवात् तदन्वयो बाधित एव स्यादितिभावः । नच बाधवशादुत्प्रेक्षानिश्चयो जायतामितिवाच्यम्, हेत्वभावे कुतो लज्जेत्याकाङ्क्षासत्त्वेनानिश्चयासम्भवात् ।

( १३ ) नन्वनया कारिकया अस्या हेतुफलगामित्वमेवोक्तम्, स्वरूपगामित्वेनान्यप्रभेदवृद्धिश्च कुतो नोपपादितेत्याकाङ्क्षायामाह—स्वरूपोत्प्रेक्षाऽपीति । अत्र प्रतीयमानोत्प्रेक्षायाम् । तदसम्भवमुपपादयति—धर्मान्तरेति । धर्मान्तरमन्यो धर्मः उपमानभूतापरविशेष्यपदार्थः तेन तस्य वा यत्तादात्म्यम् उपमेयभूतविशेष्येण सहाभेदस्तदेव निबन्धनं कारणं यस्यास्तस्यां तथाभूतायाम् । इदन्तु अतिशयोक्तेः स्वीकरणं प्रति हेतुभूतं विशेषणम् । 'धर्म्यन्तरतदात्म्यनिबन्धनाया' मितिपाठान्तरं स्पष्टार्थम् । अस्यामुत्प्रेक्षायाम् ।

( १४ ) यथा—'अयं राजापरः पाकशासनः' इति ।

( १५ ) (क) (विशेषणाभावे च रूपकस्य, यथा-"राजा पाकशासनः" इति ।) तदेवं द्वात्रिंशत्प्रकारा प्रतीयमानोत्प्रेक्षा ।

**( १६ ) उक्त्यनुक्त्योः प्रस्तुतस्य प्रत्येकं ता अपि द्विधा ।**

विशेषणयोगे असम्भवार्थकविशेषणपदसमभिव्याहारे उत्प्रेक्षणीयचन्द्रादेरपरत्वादि-विशेषणोपादाने इत्यर्थः । अतिशयोक्तेस्तदाख्यालङ्कारस्य । अभ्युपगमात् स्वीकारात् । एवञ्च उपमानोपमेययोस्तादात्म्यप्रतिपत्तिनिबन्धना रूपकोत्प्रेक्षातिशयोक्तयस्त्रय एवा-लङ्कृतयः, तत्र इवाद्यनुपादाने असम्भवविशेषणानुपादाने च केवलारोपप्रतीते रूपकमेव, संशयविशेषात्मिकायाः सम्भावनाया वाचकानामिवादीनामुपादाने असम्भवविशेषणोपा-दाने च सम्भावनाया एव प्रतीतेरुत्प्रेक्षैव, तथाविधसम्भावनावाचकानामिवादीनामनुपा-दाने असम्भवविशेषणोपादाने च सिद्धरूपत्वेन निश्चयात्मकाध्यवसायस्यैव प्रतीतेरति-शयोक्तिरेवेति नैषां स्वस्वलक्षणाव्याप्त्यतिव्याप्तीतिभावः ।

( १४ ) तथाविधस्थले अतिशयोक्तिं दर्शयितुमाह—यथेति । अपरो द्वितीयः । पाक-शासन इन्द्रः "इन्द्रो मरुत्वान् मघवा विडौजाः पाकशासनः" इत्यमरः । अत्र राजेत्यु-पमेयम्, पाकशासन इत्युपमानम्, द्वितीयस्य पाकशासनस्यानुपलम्भात् "अपर" इति चासम्भवं विशेषणम् । तथाचात्र सम्भावनावाचकानामिवादिपदानामनुपादानात् असम्भवविशेषणोपादानाच्च अध्यवसायस्यैवावगमादतिशयोक्तिरेवेत्याशयः ।

( १५ ) असम्भवविशेषणाद्यनुपादाने रूपकमिति दर्शयति—विशेषणाभाव इति । असम्भवविशेषणानुपादाने चकारादिवाद्यनुपादाने च रूपकस्य अभ्युपगमादितिपूर्वोक्तेन सम्बन्धः । तत्र तूक्तादेव हेतोः केवलारोपप्रतीतेः रूपकमेवेतिभावः । इत्थञ्च इवाद्यनुपा-दाने सम्भवपरविशेषणोपादानेऽपि च रूपकमेव, यथा "अयं राजा पाकशासनः" "राजा सर्वातिशायी पाकशासनः" इति । द्वात्रिंशत्प्रकारा इति । यथा उक्तप्रकारास्तथा दर्शिताः । वाच्योत्प्रेक्षाया मेलने त्वष्टाशीतिप्रकारा भवन्तीत्यवधेयम् ।

( १६ ) अष्टाशीतिप्रकारयोर्वाच्यप्रतीयमानयोरुभयोरपि समस्तानेव भेदान् पुनरपि द्वैविध्येन प्रदर्शयति—उक्त्यनुक्त्योरिति । ताः पूर्वोक्ता अष्टाशीतिविधाः उत्प्रेक्षाः प्रत्येक-मेव, प्रस्तुतस्य प्राकरणिकस्य उपमेयस्येत्यर्थः, उक्त्यनुक्त्यो उपादानानुपादानयोः सम्भवन्तीति द्विधा पुनर्द्विप्रकारा भवन्तीत्यर्थः । एवञ्च षट्पञ्चाशत्प्रकारा वाच्योत्प्रेक्षाः द्वात्रिंशत्प्रकाराश्च प्रतीयमानोत्प्रेक्षा इति समुदायेन अष्टाशीतिप्रकारा उत्प्रेक्षाः, पुनश्च प्रस्तुतस्य उपादानानुपादानाभ्यां द्विप्रकारकत्वेन मिलित्वा रसनगविधुमिताः ( एकशत-षट्सप्ततिप्रकाराः) सञ्जाता इति निष्कृष्टोऽर्थः । एतेन "सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्" इत्यनेनास्या एकविधमेव प्रतिपादनं काव्यप्रकाशकृत अननुमतमितिध्वनितम् । अत्र "ता" इत्यनेन समीपवर्त्तिनीनां प्रतीयमानोत्प्रेक्षाणामेव ग्रहणं तु न शङ्क्यम्, "ता उत्प्रेक्षा" इतिविवरणेन समान्योत्प्रेक्षाया एव प्रतिपादनात् "ऊरुः कुरङ्गकदृशः" इति-वाच्योत्प्रेक्षाया उदाहरणमिधानाच्च ।

(क) अयं कुण्डलितः पाठः क्वचिन्नोपलभ्यते ।

( १७ ) ता उत्प्रेक्षाः । उक्तौ यथा—'ऊरुः कुरङ्गकदृशः-' इति । अनुक्तौ यथा मम प्रभावत्याम्—'प्रद्युम्नः—इह हि संप्रति दिगन्तरमाच्छादयता तिमिरपटलेन-

( १८ ) घटितमिवाञ्जनपुञ्जैः पूरितमिव मृगमदक्षोदैः ।
ततमिव तमालतरुभिर्वृतमिव नीलांशुकैर्भुवनम् ॥'

( १९ ) अत्राञ्जनेन घटितत्वादेरुत्प्रेक्षणीयस्य विषयव्याप्तत्वं नोपात्तम् ।

( २० ) यथा वा—

( २१ ) 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।

( २२ ) अत्र तमसो लेपनस्य व्यापनरूपो विषयो नोपात्तः । अञ्जनवर्षणस्य तमः संपातः ।

( २३ ) अनयोरुत्प्रेक्षानिमित्तं च तमसोऽतिबहुलत्वं धारारूपेणाधः संयोगश्च यथासंख्यम् ।

---

( १७ ) कारिकायाः सन्देहांशं परिहर्तुं तत्पदं विवृणोति—ता इति । उक्ताविति । प्रस्तुतस्येतिशेषः । ऊरुरिति । अत्रोरुर्विजयस्तम्भत्वेनोत्प्रेक्षित इत्यूरुरुपमेयभूतः, एतस्य चोक्तत्वात् उक्तप्रस्तुतेयमुत्प्रेक्षा । अनुक्ताविति । अत्रापि प्रस्तुतस्येतिशेषः । इह अस्मिन् युद्धप्रदेशे । आच्छादयता तिरोदधानेन, तिमिरपटलेन अन्धकारसमूहेन कारणेनेत्यर्थः ।

( १८ ) घटितमिवेति । भुवनं जगन्मण्डलम् , अञ्जनस्य कज्जलस्य पुञ्जैः समूहैः, "अञ्जनं कज्जले चाक्तौ सौवीरे च रसाञ्जने" इति मेदिनी । घटितं निर्मितमिव मृगमदक्षोदैः कस्तूरीचूर्णैः "चूर्णं क्षोद"इत्यमरः, पूरितं पूर्णमिव, तमालतरुभिस्तमालद्रुमैः ततं व्याप्तमिव, तथा नीलांशुकैः नीलवर्णवस्त्रैः वृतम् आवृतमिव । अत्रोपगीतिश्छन्दः ।

( १९ ) लक्ष्यं सङ्गमयति—अत्रेति । अस्मिन्नुदाहृते पद्ये इत्यर्थः । उत्प्रेक्षणीयस्य अञ्जनघटितत्वादेरित्यनेन सम्बन्धः उपमानभूतस्येत्यर्थः । विषयः प्रस्तुतमुपमेयमित्यर्थः यद्व्याप्तत्वं व्याप्तिः तमस इति शेषः तन्न उपात्तं कथितम् । तथाचोक्तोदाहरणे तिमिरपटलेन भुवनव्यापनरूपमुपमेयं नाभिहितमितिनिकृष्टोऽर्थः ।

( २० ) ननु शिष्टजनैरनादृतमभिनवं भवत्कृतमिदमुदाहरणं प्रमाणत्वेन कथमुपेयादित्याक्षेपे परकीयपद्यमप्युदाहर्तुमाह—यथा वेति ।

( २१ ) प्राचीनोदाहरणं दर्शयति—लिम्पतीवेति ।

"असत्पुरुषसेवेव दृष्टिर्विफलतां गता ।"

इति मृच्छकटिकप्रकरणे उत्तरार्द्धम् । तमोऽन्धकारः ( कर्तृ पदम् ) अङ्गानि गात्राणि लिम्पति लिप्तानि करोतीव, नभ आकाशम् , अञ्जनं कज्जलं वर्षति वर्षणं करोतीव, ।

( २२ ) अत्रेति । लेपनस्य उपमानस्य व्यापनरूपः सर्वगात्रेषु सान्द्रसम्बन्धरूपः, प्रस्तुतमुपमेयमितियावत् । अञ्जनवर्षणस्य च उपमानस्य तमःसम्पातः अन्धकारपतनरूपो विषयः प्रस्तुतमुपमेयम् , नोपात्त इति पूर्वेणान्वयः । सम्पातश्चाधःसंयोगहेतुपतनक्रियैव ग्राह्यो न त्वधःसंयोगः । अतोऽत्र निमित्तत्वेन वक्ष्यमाणाधःसंयोगस्य भेदः ॥

( २३ ) अनयोरनुक्तं निमित्तं दर्शयति—अनयोरिति । "लिम्पतीव" वर्षतीव "इत्युभयोरित्यर्थः । यथासङ्ख्यं यथाक्रमम्—"लिम्पतीव तमोऽङ्गानि" इत्यत्रोत्प्रेक्षानिमित्तं

( २४ ) केचित्तु—'अलेपनकर्तृभूतमपि तमो लेपनकर्तृत्वेनोत्प्रेक्षितं व्यापनं च निमित्तम्, एवं नभोऽपि वर्षणक्रियाकर्तृत्वेन इत्याहुः ।

---

तमसोऽतिबहुलत्वम्, अत्यधिकत्वात्सान्द्रभावेन अङ्गसंयोगः, एवं सति साधारणधर्मत्वमुपपन्नम् । "वर्षतीवाञ्जनं नभः" इत्यत्र च तमसो धारारूपेण अनिरुद्धभावेन अधःसंयोग इत्यर्थः । तथाच क्रियास्वरूपोत्प्रेक्षैवेयमित्यवधेयम् । अत्रेदम्बोध्यम्—"लिम्पति वर्षति" इत्याख्याताभ्यां 'गौरयम्" इत्यत्र वाहीकवत् साध्यवसानलक्षणया उपमानस्य तमसोऽञ्जनस्य च उपमेयव्यापनमधःप्रसरणञ्चोपतिष्ठते । तथाच तमःकर्तृकमङ्गकर्मकव्यापनम्, नभःकर्तृकाञ्जनकर्मकमधःप्रसारणञ्चेति तमसो व्यापनेन निमित्तेन तमसो भूतलपर्यन्तं गाढनीलिमप्रसरणेन निमित्तेन च लेपनवर्षणरूपाभ्यां सम्भावितम् । अथवा, अचेतनस्य तमसो व्यापनात्मकविषयो लेपनत्वेन अधःसम्पातो वर्षणत्वेन च सम्भावितः । विषयानुपादानं तूभयत्रैव । अत्र तमसो व्यापनेन निमित्तेन लेपनकर्तृतादात्म्योत्प्रेक्षा नभसो भूपर्यन्तं गाढनीलिमव्याप्तत्वेन निमित्तत्वेनाञ्जनवर्षणकर्तृतादात्म्योत्प्रेक्षा चेत्युत्प्रेक्षाद्वयमुक्तविषयमेवास्तु इति तु नोपपादनीयम्, लिम्पति-वर्षतीत्याख्यातयोः कर्तृवाचकत्वेऽपि "भावप्रधानमाख्यातम्" इति निरुक्तस्मृतेर्धात्वर्थक्रियाया एव प्राधान्येन तदुपसर्जनत्वेनान्वितस्य कर्तुरुत्प्रेक्षणीयतया अन्यत्रान्वयासम्भवादिति स्पष्टं कुवलयानन्दादौ । आख्यातं तिङन्तम्, एतदर्थापेक्षया भावो धात्वर्थः 'क्रियाप्रधानम्' इत्युक्तस्मृतेरर्थः । आख्यातार्थस्य कर्तुः क्रियोपसर्जनत्वेनान्यत्रान्वयासम्भवादेवास्योपमायामुपमानतयान्वयो दण्डिना काव्यादर्शे निराकृतः । तथाहि—

> "कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे ।
> स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितुम् ॥" इति ।

अयमाशयः—एकत्रान्वितस्यान्यत्रान्वितत्वं युज्यत एव, परमेकत्र विशेषणतयान्वितस्य अन्यत्रापि विशेषतयैवान्वयो न युज्यत इति । प्रकृते तु स्वव्यापारे विशेषणतयान्वितस्य कर्तुरुपमानत्वस्वीकारे उपमेये तमस्यपि विशेषणत्वेन अन्वितत्वं स्वीकर्तव्यमित्ययुक्तम् । तथाचोक्तं दीधितिकारैरपि-"इतरेतरविशेषणत्वेनोपस्थितस्याप्यन्यत्र विशेषणत्वेनान्वयायोगात्" इति । तस्मान्नात्र कर्तुरप्युपमानत्वमित्यवधेयम् । इदञ्चोदाहरणम्—

> "तमः खलु चलं नीलं परापरविभागवत् ।
> प्रसिद्धधर्मवैधर्म्यान्नवभ्यो भेत्तुमर्हति ॥
> तथा—तमस्तमालवर्णाभं चलतीतिप्रतीयते ।
> रूपवत्त्वात् क्रियावत्त्वात् द्रव्यं तु दशमं तमः ॥"

इत्यनेनान्धकारस्य दशमद्रव्यत्ववादिमतमभ्युपेत्योक्तमितिबोध्यम् । अन्धकारस्य तेजःसामान्याभावरूपत्ववादिमते तु तस्य 'गुणादिर्निर्गुणक्रियः" इत्युक्त्या गुणे गुणानङ्गीकारेण संयोगासम्भवात् ।

( २४ ) केचित्त्वत्र कर्तृस्वरूपद्रव्योत्प्रेक्षामाहुस्तद्दर्शयति—केचित्त्विति । अलङ्कारसर्वस्वकारादयः इत्याहुरित्युत्तरेण सम्बन्धः । अलेपनकर्तृभूतमपीति । तैलादिवत्तमसश्चिक्कणत्वाभावेन तत्कर्तृकलेपनासम्भवादित्याशयः । लेपनकर्तृत्वेनोत्प्रेक्षितं लिम्पतीत्यतः कर्तृताभिधानात्तस्य च सामानाधिकरण्येन तद्गतताप्रत्ययादित्यभिसन्धिः ।

( २५ ) **अलङ्कारान्तरोत्था सा वैचित्र्यमधिकं भजेत् ॥ ४५ ॥**

( २६ ) तत्र सापह्नवोत्प्रेक्षा यथा मम—

( २७ ) अश्रुच्छलेन सुदृशो हुतपावकधूमकलुषाक्ष्याः ।
अप्राप्य मानमङ्गे विगलति लावण्यवारिपूर इव ॥'

( २८ ) श्लेषहेतुगा यथा—

( २९ ) 'मुक्तोत्करः संकटशुक्तिमध्याद्विनिर्गतः सारसलोचनायाः ।
जानीमहेऽस्याः कमनीयकम्बुग्रीवाधिवासाद्गुणवत्त्वमाप ॥'

---

व्यापनं तमसोऽखिलाङ्गसम्बन्धः। एवं नभोऽपीति। निष्क्रियत्वादसम्भवाच्च अञ्जनवर्षण-कर्तृभूतमपि नभ इत्यर्थः। अञ्जनवर्षणक्रियाकर्तृत्वेनेत्यस्य उत्प्रेक्षितमितिपूर्वतोऽनुषज्य-सम्बन्धो विधेयः। एवञ्च तेषां मते कर्तृस्वरूपद्वयोत्प्रेक्षेत्यवगतं भवति। केचिदित्यनेना-स्वरसं सूचयति, क्रियोत्तरमिवकारात्तमसो नभसोर्वास्तवत्वेनानुत्प्रेक्षणीयत्वाच्च। किञ्च क्रियायाः प्रतीतिपर्यवस्थानत्वात्तस्या एव विशेष्यत्वेन शाब्दबोधे प्राधान्यमिति लेपनवर्षणयोरुत्प्रेक्षणस्यैव युक्तत्वात् क्रियोत्प्रेक्षैव। प्रकाशकृताऽपि "व्यापनादिलेप-नादिरूपतया सम्भावितम्" इत्यभिधाय क्रियोत्प्रेक्षैव स्वाभिमतेति ध्वनितम्। तर्कवागी-शस्तु "नभसोऽञ्जनवर्षणकर्तृत्वेन सम्भावनायां प्रकृतस्योपमेयस्य तमसो बोधो दुर्घट इत्यस्वरसः केचिदित्यनेन सूचितः" इत्युक्तवान्।

( २५ ) अस्यां चमत्कारातिशयाधानायोपायं दर्शयति—अलङ्कारेति। सा दर्शितस-मस्तप्रकारोत्प्रेक्षा अलङ्कारान्तरोत्था अलङ्कारान्तरमाश्रित्य निष्पन्ना सती अधिकं वैचित्र्यं विच्छित्तिम्, भजेत् समाश्रयेत्। तथाच यद्यस्याश्चमत्कारातिशयोऽभिमतस्तर्हि अल-ङ्कारान्तरेणैनां संयोजयेदिति निर्गलितोऽर्थः।

( २६ ) उदाहर्तुमाह—तत्रेति। तत्र तेषु उत्प्रेक्षालङ्कारेषु मध्ये, अपह्नवेन अपह्नुत्य-लङ्कारेण सहेति सापह्नवा अपह्नुत्यलङ्कारमूलेत्यर्थः।

( २७ ) उदाहरति—अश्रुच्छलेनेति। सपत्नीके पत्यौ जुह्वति तत्समीपवर्तिन्या नायि-काया अश्रुनिर्गमनमवलोक्य कस्यचिदुक्तिरियम्। हुतः कृतहोमो यः पावकस्तस्य धूम-स्तेन कलुषे आविले अक्षिणी लोचने यस्यास्तस्याः तथोक्तायाः, सुदृशः सुलोचनायाः, अश्रुच्छलेन लोचनजलमिषेण, लावण्यवारिणः पूरः प्रवाहः।

"पूरो जलप्रवाहे स्याद्व्रणसंशुद्धिखाद्ययोः" इतिमेदिनी, शरीरे "अङ्कं गात्रे...त्रि-ष्वङ्कवति चान्तिके" इति च मेदिनी,

अङ्के मानमियत्ताम् अवस्थितिस्थानमित्यन्ये, अप्राप्य अलब्ध्वेव विगलति प्रस्रवति। उपगीतिश्छन्दः।

अत्र प्रस्तुतमश्रु कैतवार्थकच्छलशब्दोपादानेन प्रतिषिध्य उपमानभूतलावण्यवारिपूर-स्थापनादपह्नुतिः, तन्मूला चेयं क्रियोत्प्रेक्षा चमत्कारातिशयाधायिनीति विभावनीयम्।

( २८ ) इत्थमपह्नुतिमूलामुदाहृत्य श्लेषहेतुमयमूलामुदाहर्तुमाह—श्लेषेति। श्लेष एव हेतुरुत्थापकस्तं गच्छतीति श्लेषहेतुं गच्छतीतिवा तादृशी। श्लेषहेतुमूलेत्यर्थः। उत्प्रेक्षेति पूर्वतोऽनुषञ्जनीयम्।

( २९ ) मुक्तोत्कर इति। काञ्चिन्नायिकामवलोक्य कस्यचिदुक्तिरियम्। सङ्कटं स्वल्प-

( ३० ) अत्र गुणवत्त्वे श्लेषः कम्बुग्रीवाधिवासादिवेति हेतूत्प्रेक्षाया हेतुः ।
( ३१ ) अत्र 'जानीमहे' इत्युत्प्रेक्षावाचकम् ।
( ३२ ) एवं ( क ) मन्ये शंके ध्रुवं प्रायो नूनमित्येवमादयः ।

परिपूर्णत्वादवकाशरहितं सङ्कीर्णमितियावत् यत् शुक्तिमध्यं शुक्तेरभ्यन्तरदेशस्तस्मात् तदध्युष्येतिभावः, विनिर्गतः अन्यत्र कारागारमनुभूय निस्तीर्णप्रत्यवायक्लेशः, मुक्तानां मौक्तिकानाम् इत्करः पुञ्जः, सारसे कमले इव लोचने नयने यस्यास्तस्या अस्याः पुरो दृश्यमानाया रमण्याः ( अत्राङ्गान्तरैकपदत्वम् ) कमनीया मनोहरा या कम्बुग्रीवा शङ्खतुल्यो गण्डदेशस्तस्यामधिवासात् निवासात् गुणवत्त्वं तन्तुवत्त्वम् अन्यत्र उत्कृष्टस्थानेऽधिवासादुत्कर्षप्रयोजकधर्मयोगित्वञ्च आप प्राप्तवान् इति जानीमहे वयं सम्भावयाम इत्यर्थः । अस्थानस्थितिदुःखोत्तीर्णस्य गुणवत्स्थानवासादिव गुणवत्त्वप्राप्तिरित्याशयः । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ( १५९ पृ० ) ।

( ३० ) लक्ष्यं संयोजयति—अत्रेति । गुणवत्त्वे गुणवत्त्वमितिपदमित्याशयः, श्लेषः "गुणो माव्यामप्रधाने······"

"त्यागशौर्यादिसत्त्वादिसंख्यावृत्तिरज्जुषु" इति मेदिनीकोशाद्गुणपदस्यानेकार्थवाचितया च तन्तुवत्त्वोत्कर्षवत्त्वरूपार्थद्वययोग इत्यर्थः । हेतुरिति । तन्तोर्वास्तववत्त्वान्न तत्प्राप्तिहेतूत्प्रेक्षा सम्भवतीत्यतो गुणपदश्लेषादुत्कर्षविशेषप्राप्तिहेतूत्प्रेक्षा तस्या एवोत्थापकत्वादित्यतः श्लेषनिर्वाह्या इयमुत्प्रेक्षा । कम्बुग्रीवाधिवासादिवेत्यत्र चेति शेषकरणात् हेतुमूलाऽपीत्यतस्तदुभयमूलेयमुत्प्रेक्षेतिभावः । तथाच हारस्य ( मुक्तोत्करस्य ) गुण ( तन्तु ) वत्त्वप्राप्तौ स्वभावत एव सिद्धम्, अथापि उत्कर्षाश्रयवशाद् गुणशालित्वं भवतीति बोधयितुं श्लेषमुपजीव्य गुणवत्त्वमुत्प्रेक्षितमितिश्लेषमूलात्वमस्याः । तत्र च हेतुर्वासादिति पञ्चम्याभिहितः, शुक्तिमध्यापेक्षया कम्बुग्रीवाया महत्त्वात्तत्राधिवासस्य गुणवत्त्वलाभे च हेतुत्वं न्याय्यमेवोत्प्रेक्ष्यमाणम् ।

( ३१ ) नन्वत्रोत्प्रेक्षामहे इत्यादेरसत्त्वात् कथमियमुत्प्रेक्षेत्याशङ्क्य समाधत्ते—अत्रेति । अतएवात्र वाच्योत्प्रेक्षा इति भावः ।

( ३२ ) न केवलमेतदेवेत्याह—एवमिति । जानीमहे इतिवत् उत्प्रेक्षावाचकाः शब्दा इत्यर्थः । मन्ये इति । इत्येवमादय इत्यादय इत्यर्थः । उत्प्रेक्षावाचका ज्ञेया इति शेषः । अत्रादिपदात् खलु-किमु-किम्-प्रभृतीनां परिग्रहो बोध्यः । इवशब्दस्योत्प्रेक्षावाचकत्वं प्रसिद्धमिति नाभिहितम् । "मन्ये" इत्यादि तु बहुषु पुस्तकेषु कारिकारूपेण पठितमितिग्रन्थकर्तुर्नात्र सम्मतिरित्यवधेयम् । काव्यादर्शे दण्डिना हि "मन्ये" इत्यादिपदचतुष्टयेनोक्तम् । तथाहि—

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥ इति ।

तत्र "खलु-किमु-किम्" इत्येतेषां दिङ्मात्रमुदाहरणं प्रदर्श्यते—

रुचयोऽस्तमितस्य भास्वतः स्खलिता यत्ननिरालयाः खलु ।
अभिसायमतो विलेपनापणकाश्मीरजपण्यवीथयः ॥"

(क) 'मन्ये' इत्यादिकन्तु कचित् पुस्तके कारिका रूपेण पठितम्, किन्तु वृत्तिपाठ एवोचित इति मान्या वदन्ति । अस्माभिरपि तथैवाङ्गीकृतम् ।

( ३३ ) क्वचिदुपमोपक्रमोत्प्रेक्षा यथा—

( ३४ ) 'पारेजलं नीरनिधेरपश्यन्मुरारिरानीलपलाशराशीः ।
वनावलीरुत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवलाभाः ॥'

( ३५ ) इत्यत्राभाशब्दस्योपमावाचकत्वादुपक्रमे उपमा । पर्यवसाने तु जलधितीरे शैवालस्थितेः संभावनानुपपत्तौ संभावनोत्थापनमित्युत्प्रेक्षा ।

---

पृथुवर्त्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया ।
विधिरेकक्रचक्रचारिणं किमु निर्मित्सति मान्मथं रथम् ॥
वलिप्रसूनावलिभूमिहस्तैः सञ्चारयन्ती भजतां सुदूरम् ।
विक्रीय कैवल्यममुष्य मूल्यं तापं हरन्ती किमियं करोति ॥

गङ्गावर्णनेयम् ।

( ३३ ) उपमामूलामुदाहर्तुमाह—क्वचिदिति । उपमा उपक्रमे प्रारम्भे ( मूलत्वेन स्थिता ) यस्याः सा तादृशी उत्प्रेक्षा ।

( ३४ ) पारेजलमिति । शिशुपालवधे तृतीयसर्गे पद्यमिदम् । मुरारिः श्रीकृष्णः नीरनिधेः समुद्रस्य पारेजलं जलस्य पारे तीरे "पारे मध्ये षष्ठ्या वा" २।१।१८ इत्यव्ययीभावः, तत्सम्बन्धात्पारशब्दस्य निपातनादेदन्तत्वम् । आ समन्तान्नीला गाढनीलवर्णाः पलाशानां पत्राणां राशयः पुञ्जा यासां ताः तादृशाः, "पत्रं पलाशं छदनम्" इत्यमरः, उत्कलिकासहस्रेण तरङ्गसमूहेन प्रतिक्षणं क्षणे क्षणे उत्कूलिताः कूलं प्रापिता ये शैवालाः शैवालानि तेषामाभेव आभा यासां ताः तथोक्ताः,

'कथितोत्कलिकोत्कण्ठा हेलासलिलवीचिषु, इति मेदिनी,

"ऊर्मिरुत्कलिकोल्लोलकल्लोललहरिस्तथा" इति हलायुधोऽपि

"जलनीलीतिशैवालंशैवालः" इत्यमरः ।

उत्कूलिता इति "तत्करोति तदाचष्टे" इतिण्यन्तात् उत्कूलशब्दात् कर्मणि क्तः । वनानाम् आवलीः पङ्क्तीः अपश्यत् अवलोकयत् । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ( १५९ पृ० ) ।

( ३५ ) अत्रोपमाया एवोत्प्रेक्षामुपपादयति—इत्यत्राभाशब्दस्येति । शैवलस्य आभेव आभा यासामिति बहुव्रीहिसमासवशादुपमाप्रतिपादकस्येत्यर्थः । अनेन उपमोपक्रमो दर्शितः । ततस्तस्या उपमाया उत्प्रेक्षां दर्शयति—पर्यवसाने त्वति । "शैवलाभा" इत्यनेनैवोपमापर्यवसानसम्भवे उत्कूलत्वकथनमनुपयुक्तमत उत्कूलितशैवलाभा इवेतिपर्यवसाने उत्प्रेक्षेत्यग्रिमेण सम्बन्धः । तादृशोत्प्रेक्षाया उत्थानमुपपादयति—जलधितीर इति । वनान्तर उत्कूलितशैवलानामसम्भवात्तत्र न तत्सम्भावनोत्थानम्, जलधितीरे शैवालस्थितेः सम्भवस्योपपत्तेरनुपपत्त्यभावात् सम्भावनोत्थानमुत्कूलितशैवलसम्भावनाया उत्थानमाविर्भाव इत्यर्थः । ततस्तदाभा इवेत्युत्प्रेक्षेत्याशयेनाह—उत्प्रेक्षेति । तत्सम्भावनोत्थानाभावे उत्कूलितविशेषणवैयर्थ्यमितिभावः । एवञ्च उत्प्रेक्षाया उपक्रान्तोपक्रमाविषयत्वादुपमानिष्पाद्येयमुत्प्रेक्षेत्याशयः । ननु जलाशयप्रदेशे प्रायः शैवलः सम्भवति न तु समुद्रस्य प्रदेशे, अत्र च दूरवर्त्तिनोऽवलोकनेन सुमुद्रजलस्य प्राकृतिको नीलिमैव शैवलत्वेनावधार्यते, अतोऽवधारणेयं भ्रान्तिरूपेतिचेत्? मैवम्, प्रकृते शैवलस्य जली-

( ३६ ) एवं विरहवर्णने—'केयूरायितमङ्गदैः—' इत्यत्र 'विकासिनीलोत्पलति-स्म कर्णे मृगायताक्ष्याः कुटिलः कटाक्षः' इत्यादौ च ज्ञेयम् ।

( ३७ ) भ्रान्तिमदलङ्कारे 'मुग्धा दुग्धधिया—' इत्यादौ भ्रान्तानां बल्लवादीनां विषयस्य चन्द्रिकादेर्ज्ञानमेव नास्ति, तदुपनिबन्धनस्य कविनैव कृतत्वात् । इह तु संभावनाकर्तुर्विषयस्यापि ज्ञानमिति द्वयोर्भेदः ।

---

यत्वेन अन्यजलाशयवत् समुद्रस्यापि जलाशयत्वेनात्र तत्सम्भवो भवेदिति नास्या भ्रान्तिरूपत्वम्, किन्तूक्तेनात्प्रेक्षाया उपस्कारकत्वमेवेत्याशयात् ।

( ३६ ) अन्यस्थलेऽप्येवमेवमूह्यमिति दर्शयति—एवमिति । विरहवर्णने उपक्रमे इति शेषः । अङ्गदैः कटकैः केयूरायितं भुजगमध्यभागधारणीयकेयूरैः कङ्कणैरिवाचरितम् । विरहकार्श्यादङ्गदैः केयूरस्थानं प्राप्तमित्यर्थः । अस्य पादत्रयन्तु—

प्रयास्यन्तं प्रियं श्रुत्वा गोविन्दं व्रज योषिताम् ।
तत्क्षणाज्जातमौनानाम्—इति

अत्रायप्रत्ययस्योपमावाचकतया उपक्रमे प्राप्तोपमायाः प्रतीतावपि पर्यवसाने भुज-मध्यभागे अङ्गदानां स्थितेरसम्भवात् सम्भावनाया आविर्भावादुत्प्रेक्षेतिभावः । श्रौत्यु-पमोत्प्रेक्षां प्रदर्श्य आर्थ्युपमोत्प्रेक्षां प्रदर्शयति—विकासीति ।

"नासाऽग्रमुक्तामधरप्रसारिरोचिर्निनायेव च विद्रुमाभाम्" ।

इत्युत्तरार्द्धम् ।

मृगस्येव आयते दीर्घे लोचने नयने यस्याः तस्याः तथोक्तायाः, कुटिलो वक्रः कटाक्षो दृष्टिपातः, कर्णे, विकासि नीलोत्पलति विकसनशीलं नीलकमलमिव आचरतिस्म । उपजातिश्छन्दस्तल्लक्षणन्तूक्तं (१६९ पृ०) ।

अत्रापि क्विप्प्रत्ययस्योपमावाचकत्वेन क्विपो लोपादार्थीलुप्तोपमाया उपक्रमे प्रतीता-वपि, कर्णे कटाक्षावस्थितेरसम्भवात्तत्वेन सम्भावनाया उत्थानेनोत्प्रेक्षेत्यभिप्रायः ।

अस्याः क्वचिन्मालारूपात्वमपि दृश्यते यथा—

द्विनेत्र इव वासवः करयुगो विवस्वानिव
　　द्वितीय इव चन्द्रमाः श्रितवपुर्मनोभूरिव ।
नराकृतिरिवाम्बुधिर्गुरुरिव क्षमामागतो
　　नुतो निखिलभूसुरैर्जयति कोऽपि भूमीपतिः ॥ इति ।

( ३७ ) ननु "ऊरुः कुरङ्गकदृशः" इत्यादौ नायकादौ स्मरविजयस्तम्भादिभ्रमात्-भ्रान्तिमानलङ्कारः कथं न स्वीक्रियत इत्यत आह—भ्रान्तिमदिति । भ्रान्तानां भ्रमयुता-नाम् । विषयस्य उपमेयभूतस्य । चन्द्रिकादेरित्यत्रादिपदेन चन्द्रिकाशबलितकुवलयादेः परिग्रहः । ज्ञानमेव नास्ति चन्द्रिकात्वेनेतिशेषः, शुक्तिकादौ रजतत्वादिभ्रान्तिमतः शुक्ति-कादिज्ञानवदित्याशयः, चन्द्रिकात्वेन ज्ञाने तु दुग्धधिया गवामधः कुम्भदानानुपपत्तेः । ननु "न कस्य कुरुते चित्तभ्रमं चन्द्रिका" इत्युक्तितश्चन्द्रिकात्वेन ज्ञानमस्तीत्यत आह—तदुपनिबन्धनस्येति । तस्य चन्द्रिकाद्यज्ञानस्योपनिबन्धनं वर्णनम् । कृतत्वात् दर्शित-त्वात् । तथाच कव्युक्त्या श्रोतॄणां बल्लवादीनां न चन्द्रिकात्वेन ज्ञानमितिभावः । उत्प्रे-क्षायामस्यां यद्वैलक्षण्यन्तदुपपादयति—इह त्विति । इह तु उत्प्रेक्षायान्तु । सम्भावनाक-

( ३८ ) संदेहे तु समकक्षतया कोटिद्वयस्य प्रतीतिः, इह तूत्कटा संभाव्यभूतैक-
कोटिः ।

( ३९ ) अतिशयोक्तौ विषयिणः प्रतीतस्य पर्यवसानेऽसत्यता प्रतीयते, इह तु
प्रतीतिकाल एवेति भेदः ।

( ४० ) रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु ।
पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण ॥'

---

मुत्प्रेक्षकस्य कवेस्तदुपनिबद्धजनस्य वा विषयस्यापि उपमेयभूतस्य "ऊरुः कुरङ्गकदृशः"
इत्यादावूर्वादेर्न केवलं विषयिण उपमानभूतस्य स्मरविजयस्तम्भादेरित्यर्थः । द्वयोर्भ्रा-
न्तिमदलङ्कारोत्प्रेक्षालङ्कारयोः । अत्रायमाशयः—शुक्तिकां दृष्ट्वा 'रजतमिदम्" इतिज्ञान-
रूपे भ्रमे शुक्तिका नाऽवभासते किन्तु केवलं रजतमेवाऽवभासते, भ्रमस्य निश्चयरूपतया
एकमात्रविषयकत्वात् । "स्थाणुः पुरुषो वा" इत्यत्र स्थाणुपुरुषोभयरूपतया संशयवि-
षयीभूतं पदार्थं दूरतो दृष्ट्वा कस्मादपि हेतोः "सम्भावये स्थाणुरेवायम्" इति ज्ञाना-
त्मिकायां सम्भावनायान्तु 'स्थाणुर्हि कथञ्चिदपि निश्चितरूपत्वेनावभासते, पुरुषस्तु
अनिश्चितरूपत्वेनैव, सम्भावनायाः संशयविशेषरूपत्वेन नानाविषयकत्वात् । इत्थञ्च
भ्रमसम्भावनयोर्व्यतिरेकेण यत्र वाक्यगृहीतस्य पुरुषस्य भ्रमस्तत्र भ्रान्तिमानलङ्कारः,
यत्र तु सम्भावना तत्रोत्प्रेक्षालङ्कार इति ।

( ३८ ) ननु यदि सम्भावनायाः संशयविशेषरूपत्वं तर्हि 'ऊरुः कुरङ्गकदृशः" इत्या-
दौ सन्देहालङ्कार एव स्वीक्रियतामित्यत आह—सन्देहे त्विति ।

"किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी" इत्यादौ त्वित्यर्थः ।

समकक्षतया समानावस्थाकत्वेन, अभेदे तृतीया, कोटिद्वयस्य विषयद्वयस्य उपमा-
नोपमेययोरित्यर्थः । इह तु अत्रोत्प्रेक्षायान्तु, उत्कटा किञ्चिन्निश्चितप्राया, सम्भाव्यभूता
उत्प्रेक्षणीया अनिर्धारितस्वरूपेतियावत् , एका कोटिः एकोविषयः, इति द्वयोर्भेद इति-
शेषः । तथाचोक्तदिशा सन्देहोत्प्रेक्षयोर्व्यतिरेकात् "ऊरुः" इत्यादौ स्मरविजयस्तम्भादि-
रूपे एकविषय एव उत्कटावगमाच्च उत्प्रेक्षैवेत्याशयः ।

( ३९ ) अथैवमपि अध्यवसायस्य सम्भावनारूपत्वेनोक्तोदाहरणादावतिशयोक्ति-
रेवास्तामित्यत आह—अतिशयोक्ताविति । "कथमुपरि कलापिनः कलापाः" इत्यादावि-
त्यर्थः । विषयिण उपमानस्य, प्रतीतस्य अन्वयज्ञानसमये यथार्थतया ज्ञातस्य सतः,
पर्यवसाने शाब्दबोधादनन्तरम् असत्यता अयथार्थता प्रतीयते साक्षादयथार्थत्वबोध-
कानामिवादिपदानामन्वयानुपपत्तेरसत्त्वात् , किन्तु पर्यालोचनेन असम्भवज्ञानादि-
त्याशयः । इह तु अत्रोत्प्रेक्षायान्तु तत्प्रतीतिकाल एव अन्वयज्ञानसमय एव "विषयिणः
असत्यता प्रतीयत इति पूर्वेण सम्बन्धः, वाच्योत्प्रेक्षायां साक्षादयथार्थत्वबोधकानामिवा-
दिपदानां प्रतीयमानोत्प्रेक्षायान्तु अन्वयानुपपत्तेनानुपलम्भादितिभावः । इत्थञ्चान्वयव्य-
तिरेकात् "ऊरु" रित्यादौ शाब्दबोधसमकाल एव स्मरविजयस्तम्भादेरयथार्थत्वावगमा-
दुत्प्रेक्षैवेत्यवधेयम् ।

( ४० ) उत्प्रेक्षालङ्कारस्यैव विषये क्वचिदुदाहरणे सन्देहालङ्कारम् अलङ्कारसर्वस्व-
कारादयः प्राहुः तद्दूषयितुमुदाहरति—रञ्जितेति । किरातार्जुनीये नवमसर्गे गाढतमो वर्ण-

( ४१ ) इत्यत्र यत्तर्वादौ तिमिराक्रान्तता रञ्जनादिरूपेण संदिह्यत इति संदेहालङ्कार इति केचिदाहुः, तत्र–एकविषये समानबलतयानेककोटिस्फुरणस्यैव संदेहत्वात् । इह तु तर्वादिव्याप्तेः प्रतिसंबन्धिभेदो व्यापनादेर्निगरणेन रञ्जनादेः स्फुरणं च ।

( ४२ ) अन्ये तु— 'अनेकत्वनिर्धारणरूपविच्छित्त्याश्रयत्वेनैककोट्यधिकेऽपि भिन्नोऽयं संदेहप्रकारः' इति वदन्ति स्म; तदप्ययुक्तम् – निगीर्णस्वरूपस्यान्यतादात्म्यप्रतीतिर्हि संभावना, तस्याश्चात्र स्फुटतया सद्भावात् नुशब्देन चेवशब्दवत्तस्या द्योतनादुत्प्रेक्षैवेयं भवितुं युक्ता, अलमदृष्टसंदेहप्रकारकल्पनया ।

---

नमिदम् । तिमिरेण अन्धकारेण, विविधा अनेकप्रकाराः तरुशैलास्तरवः शैला इवेति, तरव एव शैला इति वा तरुभिरुपलक्षिताः शैला इति वा, उच्चनीचाद्यनेकप्रकारा वृक्षपर्वता इत्यर्थः रञ्जिता नु कृष्णवर्णीकृताः किम् ? गगनमाकाशं नामितं नु अधःपातितं किम् ? अथवा स्थगितं नु आच्छादितं किम् ? धरित्री पृथ्वी विषमेषु उच्चनीचप्रदेशेषु पूरिता नु पूरणेन समीकृता किम् ? ककुभो दिशश्च "दिशस्तु ककुभः काष्ठाः" इत्यमरः, संहृता नु एकत्र सङ्कुचिताः किम् ? । स्वागता छन्दस्तल्लक्षणन्तु—"स्वागता नो भगौ गू" इति ।

( ४१ ) अत्र परमतेन सन्देहालङ्कारं दर्शयति—इत्यत्रेति । यत् आहुरित्युत्तरेण सम्बन्धः । तिमिराक्रान्तता अन्धकाराच्छादितता, रञ्जनादिरूपेण "अयं मार्त्तण्डः किम्" इत्यादौ राजा मार्त्तण्डादिरूपेणेवेत्यर्थः । केचित् अलङ्कारसर्वस्वकारादयः । दूषयति—तन्नेति । तत्र युक्तिं दर्शयति—एकविषय इति । एकस्मिन् विषये उपमेये समानबलतया उपमानतुल्यकक्षतया, अनेककोटिकस्फुरणस्यैव अनेकपक्षकावगाहिज्ञानस्यैव सन्देहत्वात् सन्देहपदार्थत्वात् । इह उत्प्रेक्षायामित्यर्थः तर्वादिव्याप्तेः तरुशैलादौ तिमिरकर्तृकव्यापनस्य प्रतिसम्बन्धिषु तरुशैलगगनदिक्प्रत्येकसम्बन्धिपदार्थेषु भेदो रञ्जनाद्येकैकरूपेणैव भिन्नत्वम् , न तु ज्ञानस्य क्वाप्यनेककोटिकत्वम् । तथा च –एकविषयकानेककोटिकावगाहिज्ञानत्वाभावात् नायं सन्देह एवेतिभावः । नन्विदं तमसा तरुशैलादिव्यापनं न तु रञ्जनमित्याद्यनेककोटिकज्ञानरूपा अनेक एवामी सन्देहा इति सन्देहालङ्कार एवेत्यत आह—व्यापनादेरिति । विषयस्य, अत्रादिपदमुदाहरणान्तरविवक्षया । निगरणेन अन्तःकरणेन अनुक्तिवशादपलापेनेत्यर्थः । रञ्जनादेरिति । अत्रादिपदेन नामनादेः परिग्रहः । स्फुरणं प्रकाशो ज्ञानमितियावत् । सन्देहे विषयविषय्युभयकोटिकतुल्यभावेनैव प्रतीतिरिति नियमात् एकस्य विषयस्य निगरणम् , अपरस्य विषयिणः स्फुरणमित्येवं वैषम्यमेव न भवति, अत्र तु न तथेति न सन्देहः किन्तु सम्भावनमेवेतिभावः ।

( ४२ ) अत्र मतान्तरं दूषयितुं तन्मतं दर्शयति—अन्ये त्विति । अस्य "वदन्ति" इत्यग्रिमेणान्वयः । अन्ये "रञ्जिता नु विविधा" इत्यादौ सन्देहविशेषमङ्गीकुर्वन्त एकदेशिन इत्यर्थः । अनेकत्वेन रञ्जननामनाद्यनेकप्रकारेण निर्धारणरूपा ज्ञानात्मिका या विच्छित्तिश्चमत्कारः तस्या आश्रय आधारस्तस्य भावस्तत्त्वं तेन हेतुना अलङ्कारावश्यकतां प्रति अयं हेतुरित्यवगन्तव्यम् । एककोट्यधिकोऽपीति । भावप्रधानो निर्देशः । एककोटेरेककत्वेऽपीत्यर्थः भिन्नो द्वितीयः सामान्यसन्देहाद्विजातीयः सन्देहविशेष इत्यर्थः ।

( ४३ ) 'यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते
तदाचष्टे लोकः शशक इति नो मां प्रति तथा ।
अहं त्विन्दुं मन्ये,त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम् ॥'

तेषामयमाशयः—तुल्यभावेनोभयकोटिकं ज्ञानमेव सामान्यसंशयः, यत्रायमेवैक इति न निर्धारणं भवेत्, तत्कृतां विच्छित्तिमादायानेककोट्यवगाहिज्ञानं तत्सन्देहविशेषः, इति "रञ्जिता नु" इत्यादौ ज्ञानस्य रञ्जनादिपक्षे प्रबलत्वात् व्यापनादिपक्षे दुर्बलत्वात् सामान्यसंशयो न भवति किन्तु रञ्जिता एव नामितमेवेत्येवमेकस्य निर्धारणस्यासत्त्वात् रञ्जननामनाद्यनेककोटिकस्य ज्ञानस्य च सद्भावात् सन्देहविशेष एव वचम इति । नात्र सन्देहः किन्तूत्प्रेक्षैवेति व्यवस्थापयितुं दूषयति—तदयुक्तमिति। निगीर्णस्वरूपस्य येन केनापि विधिना प्रधानीकृतस्वरूपस्य विषयस्य ( उपमेयस्य ) अन्यतादात्म्यप्रतीतिः विषय्यभेदज्ञानम् । सम्भावनेति अयं हि उत्प्रेक्षाघटिकायाः सम्भावनायाः स्वरूपप्रत्यायनम् ; सामान्यसम्भावनायाः स्वरूपं तु प्रागेवोक्तम् । तस्याः सम्भावनायाः, स्फुटतया सद्भावात् स्पष्टरूपेणोपलम्भात् । तथाच "रञ्जिता नु" इत्यादौ विषयरूपं तिमिरकर्तृकव्यापनम् अनुपात्तत्वान्निगीर्णस्वरूपम् , विषयिरूपं रञ्जनादिकन्तु शब्देनोपात्तत्वात् प्रधानम् , उभयोश्च तादात्म्यप्रतीतिरूपा सम्भावना स्फुटमेवानुभववेद्येत्याशयः । नन्वेवं निगरणसत्त्वादतिशयोक्तित्वप्रसक्तिरित्यत आह—नुशब्देन चेवशब्दवदिति । नुशब्देन उत्प्रेक्षावाचकत्वेनाभिमतेनेति शेषः । तस्याः सम्भावनायाः, द्योतनादुद्बोधनात् । इयम् "रञ्जिता नु" इत्यादौ सन्देहोपस्कारकत्वेन भवन्मताप्रतीतिरित्यर्थः । एतेनातिशयोक्तिव्युदासः सूचितः । अदृष्टः परैः क्वाप्यनवलोकितः, अनालोचित इति भावः ( अत एवान्यथाऽसिद्धान्ततः ) यः सन्देहप्रकारः एककोटेर्ज्ञानस्य प्राबल्येऽपि निर्धारणाभावादेव विजातीयः सन्देहविशेषस्तस्य कल्पनया अलम् क्लृप्तेनैव साधारणसन्देहेनोपपत्तौ अभिनवकल्पनाया अनावश्यकत्वाद्गौरवाच्चेत्यभिप्रायः ।

( ४३ ) 'यदेतच्चन्द्रान्तः" इत्यादिपद्ये उत्प्रेक्षावाचकनिवेशमात्रेणोत्प्रेक्षैवेति सरस्वतीकण्ठाभरणकारमतं निरसितुमाह—यदेतदिति । कस्यचिद्राज्ञः स्तुतिरियम् । चन्द्रस्य अन्तश्चन्द्रमण्डलस्य मध्ये यत् एतद् दृश्यमानं मलिनं वस्तु, जलदलवलीलां क्षुद्रमेघखण्डशोभाम्, वितनुते विस्तारयति, लोको जनः "लोकस्तु भुवने जने" इत्यमरः, तद् वस्तु शशकः शशसंज्ञः प्राणिविशेष इति आचष्टे ब्रवीति मां प्रति तु तथाकथनं नो अन्यजनं प्रति तत्प्रतीतिर्भवतु मां प्रति तु न भवति तथाप्रतीतिः मम तथात्वाभावनिश्चयादित्यर्थः । ननु तर्हि तव कीदृशो निश्चय इत्यत आह—अहन्त्विति । अहन्तु इन्दुं चन्द्रम् , तव अरीणां शत्रूणां विरहेण वियोगवेदनया आक्रान्ता अभिभूता पराजिता इति यावत् यास्तरुण्यः ( त्वया रणे विनाशितानां शत्रूणां या रमण्यः ) तासां कटाक्षा एव उल्का रेखाकारास्तेजोविशेषास्तासां पातेन पतनेन यो व्रणः क्षतं तस्य यः किणश्चिह्नः स एव च कलङ्को लाञ्छनं तेन अङ्किता चिह्निता तनुः शरीरं यस्य तं तथोक्तम् , मन्ये मनसि सम्भावयामि । शिखरिणीच्छन्दस्तल्लक्षणं चोक्तं प्रागेव ( १८४ पृ० )।

( ४४ ) इत्यत्र 'मन्ये' शब्दप्रयोगेऽप्युक्तरूपायाः संभावनाया अप्रतीतेर्वितर्कमात्रं नासावपह्नवोत्प्रेक्षा ।

( ४४ ) तात्पर्यमुपपादयति-इत्यत्रेति । 'मन्ये' शब्दप्रयोगेऽपि 'मन्ये' इति क्रियापदस्य प्रयोगे कृतेऽपि, उक्तरूपायाः "निगीर्णस्वरूपस्य अन्यतादात्म्यप्रतीतिर्हि सम्भावना" इति पूर्वोदितायाः । अप्रतीतेः प्रतीत्यभावात्, उक्तोदाहरणे शशकतथाविधकिणकलङ्कयोर्विषयविषयि ( उपमेयोपमान ) भावाभावात्, निगीर्णस्वरूपस्य विषयस्य विषयिणा सह तादात्म्यप्रतीतिरेव सम्भावनापदार्थत्वादितिभावः । वितर्कमात्रं केवलो वितर्को नाम व्यभिचारीत्याशयः । ननु यदेतत्पदाभ्यां बोध्यं वस्त्वपह्नुत्यान्यारोपादपह्नुतिमूला स्पष्टैवेयमिति चेदत्राह—नासावपह्नवोत्प्रेक्षेति । असौ अपह्नवोत्प्रेक्षा अपह्नुतिमूलोत्प्रेक्षा न । तथाच यदेतदित्यनेन किमपि अनिर्दिष्टस्वरूपं वस्तु प्रस्तुतत्वेनाभिमतं तस्यैव शशकरूपत्वेन प्रतिषिध्य तथाविधकलङ्करूपत्वेन स्थापनेऽपि शशकतथाविधकिणकलङ्कयोर्विषयविषयि ( उपमेयोपमान ) भावाभावात् नापह्नुतेः प्रसङ्गः सम्भावनाया असत्त्वाच्च नोत्प्रेक्षाया इत्यभिप्रायः । किन्तु वितर्को नाम व्यभिचारिभावो राजविषयकरतिभावस्याङ्गमिति रसवदलङ्कार एवेतिसुधीभिर्विभावनीयम् ।

बोधसौकर्यायोत्प्रेक्षाभेदः सङ्कलय्यते—

वाच्यप्रतीयमानत्वेन प्रथमं भेदद्वयम् । तत्र—

- वाच्याः—११२
  - स्वरूपगताः—३२
    - जातेः— भावाभिमाने अभावाभिमाने चैवैकमिति द्वौ; प्रत्येकमेवानयोश्च गुणनिमित्तकत्वेन, क्रियानिमित्तकत्वेन च द्वैविध्याच्चत्वारः ।
    - गुणस्य दर्शितक्रमेण ........................ ४
    - क्रियायाः ,, ,, ........................ ४
    - द्रव्यस्य ,, ,, ........................ ४
    - १६
    - षोडशानामेषाञ्च निमित्तस्य उपादानात् अनुपादानाच्च द्वैविध्येन द्वात्रिंशद्भेदाः—३२ ।
  - फलगताः—१२
    - द्रव्यस्य फलोत्प्रेक्षाया अभावात्—
    - जातेः—भावाभिमानादिदर्शितक्रमेण ...... ४
    - गुणस्य— ,, ,, ...... ४
    - क्रियायाः— ,, ,, ...... ४
    - १२
  - हेतुगताः—१२
    - द्रव्यस्य हेतूत्प्रेक्षाया अप्यभावात्त्रिष्वेव,
    - जातेः—भावाभिमानादिना दर्शितक्रमेण ... ४
    - गुणस्य— ,, ,, ... ४
    - क्रियायाः— ,, ,, ... ४
    - १२
  - ५६

## ( ४५ ) सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते ॥

षट्पञ्चाशत्प्रकाराणाञ्चैषां प्रत्येकमेव प्रस्तुतस्य प्रतिपादनया अप्रतिपादनया च पुनर्द्वैविध्यात् द्वादशाधिकशतप्रकारा जायन्ते—११२।

प्रतीयमाना—६४

- फलगताः—१६ — प्रतीयमानायां स्वरूपोत्प्रेक्षाया अभावात्फलहेतुगतत्वमेव तत्राद्यः
  - जातेः—भावाभिमानादिदर्शितक्रमेण ……४
  - गुणस्य— ,, ,, ……४
  - क्रियायाः— ,, ,, ……४
  - द्रव्यस्य— ,, ,, ……४
  - १६
- हेतुगताः—१६
  - जातेः-भावाभिमानादिना दर्शितक्रमेण …४
  - गुणस्य— ,, ,, …४
  - क्रियायाः— ,, ,, …४
  - द्रव्यस्य— ,, ,, …४
  - १६

द्वात्रिंशत्प्रकाराणाञ्चैषां प्रत्येकमेव प्राग्वत् प्रस्तुतस्य प्रतिपादनया अप्रतिपादनया च पुनर्द्वैविध्यात् चतुःषष्टिप्रकारा जायन्ते।

सङ्कलितेन—१७६

( ४५ ) इत्थमुक्तसम्भावनारूपामुत्प्रेक्षां लक्षयित्वा सम्प्रति किञ्चित्तत्सम्भावनातिरिक्तरूपामेवातिशयोक्तिं लक्षयति—सिद्धत्व इति। अध्यवसायस्य सत्ये वस्तुनि असत्यात्मना निरुक्तसम्भावनाया एव सिद्धत्वे निश्चयरूपत्वेन सम्पत्तौ कविरचनाचातुर्येण संशयांशे अन्तर्भूत इव निश्चयमात्ररूपत्वेन परिणतत्वे सतीतियावत्, अतिशयोऽतिशयिता प्रसिद्धिमतिक्रान्ता उक्तिरतिशयोक्तिर्नामालङ्कारो निगद्यते।' तथाचोक्तम्—

> विवक्षा या विशेषस्य लोकसीमातिवर्तिनी।
> असावतिशयोक्तिः स्यादलङ्कारोत्तमा यथा॥

इत्थं च सत्यस्य असत्यात्मना निश्चयरूपा सम्भावनातिशयोक्तिरिति लक्षणमायातम्। सत्यस्य निगीर्णस्वरूपस्य। निश्चयरूपत्वं हि सम्भावनायाः शाब्दबोधकाल एवातस्तदनन्तरमसत्यत्वावगमेऽपि न क्षतिः। सम्भावना चात्र साध्यवसानाख्यलक्षणयैव सञ्जायत इति बोध्यम्। अतएव रूपके नातिव्याप्तिः तस्य सारोपाख्यलक्षणामूलकत्वात्। वाच्योत्प्रेक्षायामिवादिपदसत्त्वात् प्रतीयमानोत्प्रेक्षायाञ्च अन्वयानुपपत्तेः संशयात्मिका सम्भावना, अत्र तु इवादिपदासत्त्वादन्वयोपपत्तेश्च निश्चयात्मिका सम्भावनेत्युत्प्रेक्षायां नातिव्याप्तिः। निश्चयान्तसन्देहालङ्कारे प्रथमं संशयोपलम्भः अत्र तु सर्वदैव कविरचनाचातुर्येण संशयानुपलम्भ इति न निश्चयान्तसन्देहालङ्कारेऽप्यतिप्रसक्तिः। भ्रान्तिमदलङ्कारे भ्रमस्य एककोटिकतया भ्रान्तानां सत्यपदार्थस्य ज्ञानं भवत्येव न, अत्र तु सम्भावनाया द्विकोटिकत्वेन सम्भावयितुः, सत्यासत्ययोर्द्वयोरेव पदार्थयोर्ज्ञानं भवतीति न तत्राप्यतिव्याप्तिरितिबोध्यम्।

( ४६ ) विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः ।

( ४७ ) अस्य चोत्प्रेक्षायां विषयिणोऽनिश्चितत्वेन निर्देशात्साध्यत्वम्, इह तु निश्चितत्वेनैव प्रतीतिरिति सिद्धत्वम् ।

( ४८ ) विषयनिगरणं चोत्प्रेक्षायां विषयस्याधःकारणमात्रेण, इहापि मुखं द्वितीयश्चन्द्र इत्यादौ ।

( ४६ ) अध्यवसायपदार्थं दर्शयति—विषयनिगरणेनेति । यत्र अध्यवसीयते आरोप्यते स विषयः सत्यं वस्त्वित्यर्थः तस्य निगरणेन स्वरूपप्रकटनाभावेन अधःकारणेनेत्यर्थः, यथाकथञ्चिद्गुणीभूतविधानेनेतियावत् यः खल्वध्यवसीयते स विषयी असत्यं वस्त्वित्यर्थः, तस्य अभेदप्रतिपत्तिः अभेदस्य सम्भावना अध्यवसायः, निगीर्णरूपेण सत्यवस्तुना सह असत्यवस्तुनः अभेदस्तादात्म्यज्ञानमध्यवसायपदवाच्योऽर्थ इति भावः। केचित्तु—निगरणञ्चाधःकरणं तदप्यविस्पष्टार्थमतो विशेषार्थकशब्दं विना व्यञ्जनयैव विषयनिषेधबुद्धिरधःकरणम् । तत्र सर्वविधावतिशयोक्तौ । अपह्नुतिनिश्चयालङ्कारयोर्निषेधार्थकशब्द एवास्ति इत्यतो न तत्र निषेधव्यञ्जना । रूपके तु चन्द्रतादात्म्येनैव मुखप्रतीतिर्न तु मुखनिषेधप्रतीतिः । अपह्नुतेर्व्यङ्ग्यत्वे तु नासावलङ्कारः किन्तु तद्ध्वनिः तत्रालङ्कारपदप्रयोगस्तु ब्राह्मणश्रमणन्यायादौपचारिक एव, किन्तु अपह्नुतिध्वनौ अपह्नुतावेवातिव्याप्तिरिति अतिशयोक्तौ तु अन्यपूर्वकेऽन्यतादात्म्यारोप इत्यनयोर्भेद इति वदन्ति ।

अलङ्कारसर्वस्वकारास्तु—"अध्यवसायो द्विविधः साध्यः सिद्धश्चेति । साध्यो यत्र विषयिणोऽसत्यतया प्रतीतिः, असत्यत्वं च विषयिगतस्य धर्मस्य विषय उपनिबन्धे विषयिसम्भवित्वेन विषयासम्भवित्वेन च प्रतीतिः । धर्मो गुणक्रियारूपः, तस्य सम्भवासम्भवप्रतीतौ सम्भवाश्रयस्य तत्रापरमार्थतयाऽसत्यत्वं प्रतीयते इतरस्य तु परमार्थतया सत्यत्वम् ; यस्यासत्यत्वं तस्य सत्यत्वप्रतीतावध्यवसायः साध्यः, अतश्च व्यापारप्राधान्यम् । सिद्धो यत्र विषयिणो वस्तुतोऽसत्यस्यापि सत्यतया प्रतीतिः, सत्यत्वञ्च पूर्वकस्य असत्यत्वनिमित्तस्याभावात्, अतश्चाध्यवसितप्राधान्यम्" इत्याहुः ।

( ४७ ) 'सिद्धत्व' इत्यस्य व्यावृत्त्युपपादनपूर्वकेण उत्प्रेक्षालङ्कारत अस्या भेदान्तरमुपपादयति—अस्य चेति । विषयिण असत्यवस्तुनः ( उपमेयस्य ) अनिश्चितत्वेन संशयविशेषरूपसम्भावनावाचकानामिवादिपदानां विद्यमानत्वात् सन्देहविषयीभूतत्वेन, निर्देशात् प्रतिपादनात् साध्यत्वं प्रमाणादिना सम्पाद्यत्वम् । इह तु अतिशयोक्तौ तु निश्चितत्वेनैव प्रतीतिः 'विषयिणः' इत्यनुषज्यते । इति अस्मात्कारणात् सिद्धत्वं प्रमाणाद्यनपेक्ष्यैव स्वयं सम्पन्नत्वम् । तथा च यथा कश्चित् लोके दूरेण पुरुषाकारं वस्त्ववलोक्य अयं पुरुषो न वेति सन्दिहानेन, अथाक्रमं हस्तवादाद्यवलोकनेन अयं पुरुष एवेतितादात्म्यबुद्धिः पूर्वमनिष्पन्ना निष्पाद्यते, परन्तु शुक्तिकां दृष्ट्वा "रजतमिदम्" इति निर्णये तु तादात्म्यबुद्धिर्निष्पन्नैवेति तस्या हेत्वपेक्षा न तथैवात्रापीत्याशयः। इत्थञ्च उत्प्रेक्षातिशयोक्त्यलङ्कारयोः तादात्म्यबुद्धेः साध्यत्वसिद्धत्वाभ्यां कश्चनोक्तभिन्नो भेदान्तरोऽपि बोधितः।

( ४८ ) ननु यदि उत्प्रेक्षायां विषयनिगरणं भवेत्तदैव तद्वारणाय सिद्धत्वविशेषणं युक्तं स्यात् नच तथा, तत्र विषयनिगरणाभावात् एवञ्चातिप्रसक्तिवारणाय सिद्धत्ववि-

( ४९ ) यदाहुः—
( ५० ) 'विषयस्यानुपादानेऽप्युपादानेऽपि सूरयः ।
अधःकरणमात्रेण निगीर्णत्वं प्रचक्षते ॥' इति ।
( ५१ ) भेदेऽप्यभेदः संबन्धेऽसंबन्धस्तद्विपर्ययौ ॥ ४६ ॥
पौर्वापर्यात्ययः कार्यहेत्वोः सा पञ्चधा ततः ।

शेषणमयुक्तमेवेत्यत आह—विषयनिगरणञ्चेति । विषयस्य सत्यपदार्थस्य अधःकरणमात्रेण केवलगुणीभूतविधानेन। तृतीया चेयमभेदे। एवञ्चोत्प्रेक्षायां विषयस्याधःकरणरूपं विषयनिगरणम्, इह अतिशयोक्तावपि च "मुखं द्वितीयश्चन्द्रः" इत्यादौ वर्त्तत एवेत्यर्थः। तथा च तुल्यविषयत्वेनोत्प्रेक्षायामतिप्रसक्तिसम्भवात्तद्वारणाय "सिद्धत्व" विशेषणमुपादेयमेवेत्याशयः। मतान्तरेण विशेषार्थकं शब्दं विना व्यञ्जनयैव विषयनिषेधबुद्धिरधःकरणमित्यधःकरणपदार्थं निरुक्तेऽपि सिद्धत्वविशेषणमुपादेयमेव। तथाहि उत्प्रेक्षायां विषयतावच्छेदककोटेः क्वचिदनुक्तिवशात् क्वचिदुक्तायां अपि अनुत्कटत्ववशान्निषेधव्यञ्जना। यथा–

"गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ।"

इत्यत्र गर्भवहिर्भावरूपप्रसवकोटया उत्कटाया अनुत्कटाया गुणानुबन्धकोटया उक्ताया एव निषेधव्यञ्जना। "गङ्गाम्भसि इनातीव" इत्यादौ त्वनुक्ताया गङ्गासम्बन्धिकोटेर्निषेधव्यञ्जना। "मुखं द्वितीयश्चन्द्रः" इत्यादौ अतिशयोक्तिविशेषेऽपि न तदसम्भवः। द्वितीयचन्द्रोक्तिवशादेव मुखत्वकोटिनिषेधव्यञ्जना, द्वितीयचन्द्राभावान्नेदं मुखमयमेव द्वितीयश्चन्द्र इति प्रतीतेः। द्वितीपदाभावे तु नेदृशीनिषेधप्रतीतिरिति तत्र रूपकमेवेति स्पष्टं विज्ञप्रियादौ।

( ४९ ) विषयनिगरणस्य विषयाधःकरणमात्रत्वस्वीकारं प्राचां सम्वादेन द्रढयितुमाह—यदाहुरिति।

( ५० ) विषयस्येति। सूरयः कृतिनः विद्वांस इत्यर्थः। "धीमान् सूरिः कृती" इत्यमरः। विषयस्य सत्यवस्तुनः अनुपादाने शब्देनाप्रतिपादनेऽपि उपादाने शब्देन प्रतिपादनेऽपि वा सति, अधःकरणमात्रेण विषयस्य केवलेन गुणीभूतविधानेनैव प्राग्वदिहाप्यभेदे तृतीयाऽवगन्तव्या, निगीर्णत्वं विषयस्य निगरणं प्रचक्षते ब्रुवते।

( ५१ ) सम्प्रत्यस्याः पञ्चविधत्वं प्रदर्शयति—भेद इति। भेदेऽपि सत्यादसत्यार्थस्यातिरिक्तत्वेऽपि अभेदः तदनतिरिक्तत्वेन सम्भावना सत्यस्य पदार्थस्य सम्बन्धेऽपि असम्बन्धः असम्बन्धसम्भावना तयोर्भेदेऽप्यभेदस्य सम्बन्धेऽप्यसम्बन्धस्य च विपर्ययौ विपरीतौ अर्थात् अभेदेऽपि भेदसम्भावना, असम्बन्धेऽपि सम्बन्धसम्भावना तथा कार्यहेत्वोः कार्यकारणयोः पौर्वापर्यात्ययः पौर्वापर्ययोः पूर्ववर्त्तित्वपरवर्त्तित्वयोरत्यय उल्लङ्घनम्। अत्र यथासङ्ख्यक्रमेण नान्वयः किन्तु आसत्तिक्रमेणैवेत्यवधेयम्। एवञ्च कारणस्य पूर्ववर्त्तित्वं कार्यस्य परवर्त्तित्वं निश्चितमेव, तत्र यदि कारणात् कार्यस्य पूर्ववर्त्तित्वसम्भावना तत्तुल्यसमयस्थायित्वसम्भावना वा भवेत् तदेत्यर्थः. ततस्तस्माद्धेतोः सा अतिशयोक्तिः पञ्चधा पञ्चविधा भवेत्। एवञ्च भेदे अभेदः, अभेदे भेदः, सम्बन्धे असम्बन्धः, असम्बन्धे सम्बन्धः कार्यकारणयोः पौर्वापर्यव्यत्यासश्चेति पञ्चविधातिशयोक्तिः फलिता।

( ५२ ) तद्विपर्ययौ अभेदे भेदः, असंबन्धे संबन्धः । सा अतिशयोक्तिः ।
( ५३ ) अत्र भेदेऽभेदो यथा मम—
( ५४ ) 'कथमुपरि कलापिनः कलापो विलसति तस्य तलेऽष्टमीन्दुखण्डम् ।
कुवलययुगलं ततो विलोलं तिलकुसुमं तदधः प्रवालमस्मात् ॥'

अत्र कुवलयानन्दकारास्त्वेवं लक्षणोदाहरणान्याहुः—
रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः। पश्य, नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः॥
यद्यपह्नुतिगर्भत्वं सैव सापह्नवा मता। त्वत्सूक्तिषु सुधा राजन् ! भ्रान्ताः पश्यन्ति तां विधौ॥
भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनम् ।अन्यदेवास्य गाम्भीर्यमन्यद्धैर्यं महीपतेः ॥३॥
सम्बन्धातिशयोक्तिः स्यादयोगे योगकल्पनम्। सौधाग्राणि पुरस्यास्य स्पृशन्ति रविमण्डलम्
योगेऽप्ययोगोऽसम्बन्धातिशयोक्तिरितीर्यते ।त्वयि दातरि राजेन्द्र ! स्वद्रुमान्नाद्रियामहे॥
अक्रमातिशयोक्तिः स्यात्सहत्वे हेतुकार्ययोः। आलिङ्गन्ति समं देव ! ज्यां शराश्च पराश्च ते॥
चपलातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे। यास्यामीत्युदिते तन्व्या वलयोऽभवदूर्मिका ॥७॥
अत्यन्तातिशयोक्तिस्तु पौर्वापर्यव्यतिक्रमे।अग्रे मानो गतः पश्चादनुनीता प्रियेण सा ॥८॥
एतेषां व्याख्यानादिकं तत एवावगन्तव्यम् ।

इयञ्चातिशयोक्तिर्वेदे तथा स्मृतावपि—
द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरेकः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥

( ५२ ) कारिकायाः कठिनांशं स्फोरयति—तद्विपर्ययाविति । स्पष्टम् ।
( ५३ ) उदाहर्त्तुमुपक्रमते—अत्रेति । एषु पञ्चसु भेदेषु मध्य इत्यर्थः ।
( ५४ ) कथमुपरीति । कस्याश्चित् कामिन्याः केशादिवर्णनेयम् । उपरि शिरसि कलापो बर्हमस्यास्तीति कलापी तस्य मयूरस्येत्यर्थः, कलापो बर्हं कथम्? अस्याश्च कथमुपरिभागशिरसीतिमहदाश्चर्यमित्याशयः । तस्य कलापस्य तले अधो भागे अष्टम्यास्तिथेरिन्दुश्चन्द्रस्तस्य खण्डम् अर्धपूर्णचन्द्रस्य खण्डमित्यर्थः, विलसति शोभते कथम् ? अर्द्धश्चन्द्रो महेश्वरस्य ललाटदेशे दृष्टिचरः अथ कथं बर्हस्याधोभाग ? इति महदाश्चर्यमितिभावः । ततस्तस्याष्टमीन्दुखण्डस्य "तले" इति पूर्वतोऽनुषञ्जनीयम्, विलोलं विशेषेण चञ्चलं कुवलययुगलम् इन्दीवरद्वयम्

"श्यामं शितिकण्ठनीलं कुवलयमिन्दीवरञ्च नीलाब्जम्" इति नाममाला,

विलसति कथम् ? नीलकमलं सरोवरजले दृष्टचरम् अथ कथं चन्द्रखण्डस्याधोभाग इति महदाश्चर्यमित्याशयः । यस्य च कुवलययुगलस्य च अधोऽधस्तात् कुवलययुगलस्याधोभाग इत्यर्थः तिलकुसुमं तिलपुष्पं विलसति कथम्? तिलपुष्पं हि प्रायस्तिलद्रुमोपरि दृष्टचरम् अथ कथं कुवलयस्याधोभाग इति महदाश्चर्यमितिभावः । अस्मात् तिलकुसुमात् अधश्च प्रवालं विद्रुमो नवपल्लवो वा विलसति कथम् ? तिलकुसुमस्याधोभागे वृन्तस्यैव दृष्टचरत्वम् अथ कथं प्रवालमिति महदाश्चर्यमितिभावः। "प्रवालो विद्रुमे वीणादण्डेऽभिनवपल्लवे" इतिहैमः, पुष्पिताग्राच्छन्दस्तल्लक्षणञ्चोक्तं प्रागेव ( १८९ पृ० ) ।

( ५५ ) अत्र कान्ताकेशपाशादेर्मयूरकलापादिभिरभेदेनाध्यवसायः ।

( ५६ ) यथा वा—

( ५७ ) 'विश्लेषदुःखादिव बद्धमौनम्' । अत्र चेतनगतमौनित्वमन्यत्, अचेतनगतं चान्यदिति द्वयोर्भेदेऽप्यभेदः ।

( ५८ ) एवम्—

( ५९ ) 'सहाधरदलेनास्या यौवने रागभाक्प्रियः ।'

---

( ५५ ) लक्ष्ये लक्षणं संयोजयितुमाह-अत्रेति । कान्ताकेशपाशादेरित्यत्रादिपदेन ललाटलोचननासिकाधराणां परिग्रहः । मयूरकलापादिभिरित्यत्रादिपदेन अष्टमीन्दुखण्डकुवलयतिलकुसुमप्रवालानां परिग्रहः । सहार्थे चेयं तृतीया । अभेदेनेति । तृतीयेयमभेदार्थे । अत्र कामिन्याः केशपाशादिरूपेणैव प्रत्यक्षदृष्टचरत्वेन केशपाशादय एव सत्यभूताः, कलापादिरूपेण तु प्रत्यक्षदृष्टचरत्वाभावेन ते पुनरसत्यभूता इति केशपाशादीनां कलापादिरूपेणाध्यवसानाल्लक्षणसमन्वयः ।

अध्यवसाय इति । तथा च कलापित्वे प्रशस्तकेशा कामिनी, कलापत्वेन केशपाशः, अष्टमीन्दुखण्डत्वेन ललाटम्, कुवलययुगलत्वेन लोचनद्वन्द्वम्, तिलकुसुमत्वेन नासिका प्रवालत्वेनाधरश्चाध्यवसितः, केशपशादिभ्यः कलापादीनां परस्परं भेदेऽपि सादृश्यातिशयेनाभेदाध्यवसायाद्भेदे अभेदाध्यवसायरूपातिशयोक्तिरिति चावधेयम् । अत्रारोपविषयाणां केशपशादीनामनुपादानादेव निषेधव्यञ्जनरूपाधःकरणम् । एवमुत्तरोत्तरमपि विषयानुपादाने बोध्यम् । विषयोपादाने तु रूपकमेवेति वदन्ति ।

( ५६ ) इत्थं सादृश्यनिबन्धनाभेदारोपातिशयोक्तिमुदाहृत्य एकशब्दप्रतिपाद्यत्वनिबन्धनाभेदारोपामतिशयोक्तिमुदाहरति —यथा वेति । ( यद्वा ) स्वनिर्मितपद्यस्याप्रामाण्यशङ्कयारुचिं मन्वानः प्राचीनोदाहरणमुदाहर्तुमाह—यथा वेति ।

( ५७ ) विश्लेषदुःखादिति । व्याख्यातपूर्वमिदम् । अत्र युगपद्वृत्तिद्वयस्य स्वार्थोपस्थापकत्वस्वीकारेण शक्यलक्ष्ययोरेकदैवैकशब्दोपस्थाप्यत्वमित्याशयेनाह-अत्रेति । अत्र परस्परात्यन्तभेदसूचनाय अन्यशब्दद्वयोपादानम् । अन्यत्सर्वं सुगमम् । तथाच मनुष्यात्मकचेतनगतमौनित्वं हि वस्तुतोऽवचनत्वम्, नूपुराद्यचेतनगतं तद्धि शब्दमात्रशून्यत्वयोश्चोभयोर्भेदेऽपि ध्वन्याभावरूपमितियावत् । आद्ये शक्तिर्द्वितीये लक्षणा श्लेषेण युगपद्वृत्तिद्वयं ताभ्यामेकदैवोपस्थाप्यते ततश्चोभयोर्भेदेऽपि अभेदाध्यवसायादतिशयोक्तिरित्याशयः ।

( ५८ ) एवं शक्तिलक्षणोभयोपपादिताश्लेषेणोदाहरणं प्रदर्श्य केवलशक्त्युपपादितश्लेषेणाऽप्युदाहरणं प्रदर्शयितुमाह—एवमिति ।

( ५९ ) सहाधरेति ।

"समुन्नतं कुम्भद्वन्द्वं वीक्ष्य जातः स्मरार्दितः" । इतिमत्पूरितोत्तरार्द्धम् ।

प्रियः कान्तः, यौवने तारुण्ये अस्याः कान्ताया अधर ओष्ठमेव दलं पल्लवं तेन सह रागं लौहित्यं रक्तं च भजते इति रागभाक्, यथायथाऽधरदलं लौहित्यं सञ्जातं तथा तथा कान्तोऽपि तस्यां रक्तो जात इति भावः ।

( ६० ) अत्राधरस्य रागो लौहित्यम् , प्रियस्य रागः प्रेम, द्वयोरभेदः।

( ६१ ) अभेदे भेदो यथा—

( ६२ ) 'अन्यदेवाङ्गलावण्यमन्याः सौरभसंपदः।
तस्याः पद्मपलाशाक्ष्याः सरसत्वमलौकिकम् ॥'

( ६३ ) संबन्धेऽसंबन्धो यथा—

( ६४ ) 'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।

( ६० ) लक्ष्यं संयोजयति—अत्रेति। द्वयोरभेद इति। रागपदश्लेषादितिशेषः। तथा च लौहित्यप्रेम्णोर्भेदेऽपि शक्तिप्रतिपाद्यरागपदश्लेषेण प्रिये सत्यस्य प्रेमात्मकरागस्य प्रिये असत्येन लौहित्यलक्षणरागरूपेण सम्भावनया अभेदाध्यवसायादतिशयोक्तिरितिभावः।

( ६१ ) अभेदे भेदातिशयोक्तिमुदाहर्त्तुमाह—अभेद इति।

( ६२ ) उदाहरति—अन्यदेवेति। तस्याः पद्मपलाशाक्ष्याः पद्मपत्रसदृशायतसुन्दरनयनाया नायिकायाः अङ्गलावण्यं शरीरसौन्दर्यविशेषः अन्यत् साधारणनायिकालावण्यतो भिन्नम् अलौकिकमित्यर्थः, सौरभसम्पदः अङ्गानां सौरभसम्पत्तयः, अन्याः साधारणविलक्षणा अलौकिका इत्यर्थः, रसोऽनुरागस्तेन सह वर्त्तते इति तस्या भावस्तत्त्वम् अलौकिकं मर्त्यलोकातिक्रान्तमेव एवकारः पूर्वतोऽनुषञ्जनीयः।

अत्र अन्यनायिकासु यादृशं लावण्यादिकं तस्यां नायिकायामपि तादृशमेव लावण्यादिकमितिलावण्याद्यभेदेऽपि असाधारणलावण्याद्यात्मना भेदाध्यवसायादतिशयोक्तिरित्याशयः। 'सौरभसम्पद' इत्यत्र तु भेदेऽभेदातिशयोक्तिः, माधुर्यादिगुणसमूहस्य सौरभसम्पत्तेर्भिन्नत्वेऽपि अभिन्नत्वेनाध्यवसानात्।

यथा वा—

मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्त्तिमान्
गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः।
मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनाम्,
वृष्णीनां परदेवतेतिविदितो रङ्गं गतः साग्रजः॥

अत्रैक एव भगवान् श्रीकृष्णः तेषां तेषां तत्तद्रूपेण नानात्वेन विदित इति विषयभेदेन योग्यतावशादभेदे भेदातिशयादतिशयोक्तिः।

( ६३ ) सम्बन्धेऽप्यसम्बन्धमुदाहरति—सम्बन्ध इति।

( ६४ ) अस्याः सर्गविधाविति। विक्रमोर्वशीयत्रोटके प्रथमेऽङ्के उर्वशीं प्रकृत्य पुरूरवसो वितर्कोऽयम्। अत्र "नु प्रश्नेऽनुनयेऽतीतार्थे विकल्पवितर्कयोः" इतिहेमचन्द्रकोशात् पूर्वार्धे नुशब्दा वितर्कार्थाः। अस्याः सुन्दर्या उर्वश्याः, सर्गविधौ सृष्टिकार्ये निर्मितिसम्पादन इत्यर्थः कान्तिप्रदः सौन्दर्यदायकः चन्द्रो नु किं प्रजापतिः सृष्टिकर्त्ता अभूत्? अपूर्वकान्तेश्चन्द्रत एव सम्भवात् कथमन्यथैवंविधा कान्तिर्भवेदितिभावः। किं वा शृङ्गार एव एकः प्रधानो रसो यस्मात्तादृशः स्वयं साक्षात् मदनः कामदेवो नु किम् प्रजापतिरभूत्? शृङ्गारोद्दीपकरूपलावण्यादेस्तत्र एव सम्भवात् कथ-

वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥'

( ६५ ) अत्र पुराणप्रजापतिनिर्माणसंबन्धेऽप्यसंबन्धः ।

मन्यथैयमेवंविधा शृङ्गारोद्दीपनी स्यादित्यभिप्रायः । अथवा पुष्पाकरो बसन्त इत्यर्थः, अत्रैव पुष्पाणां विकासातिशयात्, न मा लक्ष्मीरित्यमा "इन्दिरा लोकमाता मा" इत्यमरः, "मास्त्री पद्मालयायां स्यात्" इति मेदिनी च अमाम् अलक्ष्मीं दुर्भगत्वादिदोषं स्यत्येकपदं हरतीति तादृशः, "षोऽन्तकर्मणि" अस्मात् "आतोऽनुपसर्गे कः" इत्यनेन कः; सुभगत्वातिशयस्यान्यथासम्भवादित्याशयः । बसन्तस्य पुष्पाणामिवाङ्गानां सौभगभाजनत्वविधानं कविनिबद्धवक्तृप्रौढोक्तिसिद्धम् । एतेन अङ्गानां पुष्पाणामिव सौकुमार्याद्यतिशयमपि व्यञ्जितम् ।

तथाच अस्याः कान्तिश्चन्द्रप्रजापतिनिर्मिता, शृङ्गाररसिकत्वं साक्षान्मदनप्रजापतिनिर्मितम्, न त्वन्यप्रजापतिनिर्मितमितिनिष्कर्षः । ननु कथमनेकप्रजापतिकर्तृकमस्या निर्माणमुपपाद्यते ? प्रसिद्धब्रह्मणैव तद्विधातुं शक्यत्वादित्यत आह—वेदाभ्यासजड इति । वेदानाम् अभ्यासेन पुनः पुनराम्रेडनेन तत्तात्पर्यपर्यालोचनेन वा जडः कुण्ठितधीः कर्मान्तरानर्ह इत्यर्थः, अतएव विषयेभ्यो भोग्यपदार्थेभ्यो वनितादिभ्यो व्यावृत्तं निवृत्तं कौतूहलं कौतुकम् औत्सुक्यमितियावत् यस्य स तादृशः, पुराणो वृद्धो जरठ इति यावत् मुनिर्मननशीलो ब्रह्मेत्यर्थः इदं मनोहरं रूपं स्वरूपं निर्मातुंस्रष्टुं कथं नु प्रभवेत् शक्नुयात् कथमपि समर्थो नैव भवेदित्यर्थः । अतश्चन्द्रादिकर्तृकत्वमेवास्याः सर्गविधानं न तु प्रसिद्धप्रजापतिकर्तृकम्, नहि गुणानभिज्ञो गुणवन्तं निर्मातुं शक्नोतीतिभावः ।

अत्र—

नारायणणोरुं निर्भिद्य सम्भूता वरवर्णिनी ।
ऐलस्य दयिता देवी योषिद्रत्नं किमुर्वशी ? ॥

इति हरिवंशवचनात्, 'ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री" इत्यादिविक्रमोर्वशीयसन्दर्भाच्च—"मुनि"पदस्य नारायण इत्यर्थकरणं सर्वथापातरमणीयम् वेदाभ्यासजडत्वादेरुपपत्त्यभावात् नारायणस्य मुनित्वेऽपि पुराणत्वाभावात् उत्पादकत्वेऽपि निर्मातृत्वाभावाच्च, प्रकृते मुनिनिष्ठनिर्मातृत्वव्यवच्छेदस्यैव विवक्षितत्वेन "ब्रह्मा" इत्येवार्थः न तु नारायण इत्यवधेयम् । अतएव प्रजापतिपदस्वारस्यमपि । अतएव चामरेण प्रजापतिपर्यायपरिगणनावसरे 'ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः" इतिग्रन्थेन पितामह इति नाम परिगणितम् । एतेन कुसुमप्रतिमोक्तमप्यनुपादेयमेवेति । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्रागेव ( १९८ पृ० ) ।

( ६५ ) लक्ष्यं समर्थयति—अत्रेति । उदाहृते पद्य इत्यर्थः, पुराणो दक्षाद्यपेक्षया प्राचीनोऽसौ प्रजापतिस्तस्य निर्माणं कृतिस्तस्य सम्बन्धस्तस्मिन् तथोक्ते पुराणप्रजापतिकर्तृकनिर्माणस्य सम्बन्धे इत्याशयः । तथाच सकलजगत्सृष्टिकर्तृकत्वेन प्रजापतेः जगदन्तःपातितयोर्वश्याश्च सृज्यसर्जकत्वेन सम्बन्धः तस्य च वेदाभ्यासजडत्वादिना तादृशसर्जनासम्भवोपपादनेनासम्बन्धो दर्शित इति स्फुट एवायं सम्बन्धेऽप्यसम्बन्धः । काव्यप्रकाशकृता तु भेदानुक्तौ सन्देहालङ्कारे इदमुदाहृतमपि युक्तियुक्तमेव । तथाहि—

असंबन्धे संबन्धो यथा—

( ६६ ) 'यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम् ।
तदोपमीयते तस्या वदनं चारुलोचनम् ॥'

( ६७ ) अत्र यद्यर्थबलादाहृतेन संबन्धेन संभावनया संबन्धः ।

( ६८ ) कार्यकारणयोः पौर्वापर्यविपर्ययश्च द्विधा भवति । कारणात्प्रथमं कार्यस्य भावे द्वयोः समकालत्वे च । क्रमेण यथा—

"अस्याः सृष्टौ यः प्रजापतिः ( निर्माता ) अभूत् स किं चन्द्रः किं वा मदनः किं वा वसन्त इति प्रजापतिधर्मिकश्चन्द्रत्वादिरूपविरुद्धनानाभावकोटिकः संशयः । एवञ्चात्रोपमेयभूतस्य प्रजापतेरुपमानभूतस्य चन्द्रादेर्वा कस्यापि वैधर्म्यं नोक्तमिति भेदानुक्तौ सन्देहालङ्कारः । वेदाभ्यासजड इत्यादिना जाड्यादेर्धर्मस्योक्तावपि जाड्यादेर्न भेदकधर्मत्वम्, तस्योपमानोपमेयान्यतरधर्मत्वाभावात् । परं तु जाड्याद्यो हि ब्रह्मणः चतुर्मुखस्य सृष्टिकर्तृत्वं निराकुर्वन्तश्चन्द्रादीनां सृष्टिकर्तृत्वसंशयमेव पुष्णन्ति । प्रसिद्धः सृष्टिकर्ता ब्रह्मा वेदाभ्यासजड इति स नास्याः सृष्टिकर्तृतया सम्भवति अतएव सन्दिह्यते अस्याः सृष्टिकर्ता कः चन्द्रो वा मदनो वा वसन्तो वेति सन्देह एव वर्त्तत इति पूर्वार्द्धे सन्देहालङ्कार उत्तरार्द्धे चातिशयोक्तिरित्यनयोरेकाश्रयानुप्रवेशरूपः सङ्कर एवेतिहृदयम् । शुद्धोदाहरणन्तु—

पीयूषयूषकल्पामल्पामपि ते गिरं निपीतवताम् ।
तोषाय कल्पते नो योषाधरबिम्बमधुरिमोद्रेकः ॥

अत्र तोषसम्बन्धेऽप्यसम्बन्धः ।

( ६६ ) असम्बन्धे सम्बन्धमुदाहरति—यदीति । यदि इन्दोश्चन्द्रस्य मण्डले बिम्बे इन्दीवरद्वयं नीलकमलयुगलं सक्तं कुतोऽपि कारणात् संश्लिष्टं स्यात्, तदा चारुणी मनोहरे लोचने नयने यत्र तत्तथोक्तं तस्याः कामिन्या वदनं मुखम् उपमीयते तेन इन्दुमण्डलेनोपमाविषयीक्रियते नान्यथेतिभावः ।

( ६७ ) नन्विन्दीवरद्वयस्य इन्दुमण्डले संश्लिष्टप्रतीतेरभावस्य सर्वदैवोपलम्भात् कथं तत्र सम्बन्धः येनासम्बन्धे सम्बन्धाध्यवसायस्योदाहरणमिदं भविष्यतीत्यत आह—अत्रेति । यद्यर्थबलात् "यदी"त्यस्यार्थसामर्थ्यात्, आहृतेन आरोपितेन, सम्बन्धेन संश्लिष्टत्वसम्बन्धेन, सम्भावनया अध्यवसायेन उभयत्राभेदे तृतीया, सम्बन्धः कल्प्यते इति शेषः । एवञ्च इन्दुमण्डले सत्यस्य इन्दीवरासंश्लिष्टत्वस्य असत्येन संश्लिष्टत्वरूपेणाध्यवसायादसम्बन्धे सम्बन्धरूपातिशयोक्तिः । केचित्तु—कल्पितोपमामेनामेव स्वीकुर्वन्ति तन्मते चेदमुदाहरणम्—

धीरध्वनिभिरलं ते नीरद ! मे मासिको गर्भः ।
उन्मदवारणबुद्ध्या मध्ये जठरं समुच्छलति ॥

अत्र सिंह्या मेघं प्रत्युक्तौ मासिकगर्भस्य समुच्छलनासम्बन्धेऽपि शौर्यातिशायिका समुच्छलनसम्बन्धाध्यवसायादतिशयोक्तिः ।

( ६८ ) कार्यकारणयोः पौर्वापर्यात्ययमुदाहर्तुं कप्रथमं विभागमाह—कार्यकारणयोरिति । कारणात् कारणप्रादुर्भावात्, प्रथमं पूर्वम्, भावे आविर्भावे जायमाने इत्यर्थः

( ६९ ) 'प्रागेव हरिणाक्षीणां चित्तमुत्कलिकाकुलम् ।
पश्चादुद्भिन्नबकुलरसालमुकुलश्रियः ॥'

( ७० ) 'सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यं मण्डलं च महीक्षिताम् ॥'

---

द्वयोः कार्यकारणयोः, समकालत्वेन च एककालिकत्वेन भावे इति पूर्वेण सम्बन्धः । यद्यपि कार्यकारणयोः पौर्वापर्यविपर्ययस्य द्विप्रकारकत्वाभ्युपगमेऽस्याः साकल्येन षट्प्रकारकत्वमायाति ततश्च "सा पञ्चधा" इतिप्रतिज्ञाभङ्गस्तथापि प्राचीनमतानुरोधेन कार्यकारणयोः पौर्वापर्यविपर्ययत्वात्मना एकप्रकारकत्वस्यैव ग्रहणमित्यवधेयम् ।

( ६९ ) तत्र कारणात्पूर्वं कार्यस्य भावे उदाहरति—प्रागेवेति । हरिणाक्षीणां मृगलोचनानां कामिनीनां चित्तम् , प्राक् प्रथममेव उत्कलिकया उत्कण्ठया सुरतेच्छयेतियावत् आकुलं विह्वलं जातमितिशेषः,

"कथितोत्कलिकोत्कण्ठाहेलासलिलवीचिषु" इतिमेदिनी ।

पश्चात्तदनन्तरं तु उद्भिन्नानां विकसितानाम्, वकुलरसालयोः वकुलाम्रयोः मुकुलानां कुड्मलानां श्रियः शोभाः जाता इति शेषः ।

वकुलरसालयोः विकसितमुकुलदर्शनानन्तरं कामिनीनां हृदये रिरंसा समुत्पद्यते । अतोऽत्र तादृशमुकुलश्रीदर्शनमेव पूर्वभावित्वेन उत्कण्ठायाः कारणम् कार्यञ्च तदुत्कण्ठा तस्याश्च परभावित्वमेव हि सत्यरूपम् , ततः सत्यरूपायाः परभाविन्यास्तदुत्कण्ठायाः कविप्रौढोक्तिवशादेव असत्येन पूर्वभावित्वेनाध्यवसायात्स्पष्टमेव कारणात्पूर्वं कार्यस्य वर्णनं जातमिति कार्यकारणयोः पौर्वापर्यविपर्ययरूपा अतिशयोक्तिः ।

एवं कारणस्य परभावित्वेनाध्यवसाये स्वयमेवोदाहरणीयम् ।

( ७० ) कार्यकारणयोः समकालोद्भवे उदाहरणं दर्शयति—सममेवेति । रघुवंशे चतुर्थसर्गे रघोः राज्यप्राप्तिवर्णनपद्यमिदम् । द्विरदो गजराजस्तद्वत् गन्तुं शीलमस्यास्तीति तेन द्विरदगामिना सलीलमन्दगमनशीलेनेत्यर्थः, तेन रघुणा, पित्र्यं पितृतो लब्धम् , सिंहासनं राजासनम् , महीक्षितां राज्ञाम् ,

'राज्ञि राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः" इत्यमरः,

मण्डलं च देशः समुदायो वा "मण्डलं देशबिम्बयोः । भुजङ्गभेदे परिधौ शुनि द्वादशराजके" इतिकोशः, एतद्द्वयम् , सममेकदैव समाक्रान्तं सम्यगारह्य गृहीतं जित्वा वशीकृतञ्च । पार्थिवा हि पैत्रियकं सिंहासनमादायैव क्रमशस्तद्बलेन अन्यसामन्तराष्ट्र जित्वा वशीकुर्वन्तीति पैत्रियकसिंहासनादानस्य कारणत्वेन पूर्वभावित्वम् अन्यसामन्तराष्ट्रवशीकरणस्य च कार्यत्वेन परभावित्वमेव सत्यरूपम् । ततस्तु तयोः पूर्वापरभावित्वेनैव सत्यरूपयोः कविप्रौढोक्तिवशादसत्येनैककालभावित्वेनाध्यवसायादत्र कार्यकारणयोः पौर्वापर्यविपर्ययरूपा अतिशयोक्तिरितिभावः ।

"धुनोति चासिं तनुते च कीर्त्तिम्" इत्यादौ

वक्ष्यमाणसमुच्चयालङ्कारोऽपि कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्तिमूलक एवेति तत्प्रकरणे वृत्तौ स्वयमेव प्रदर्शयिष्यति । तथाच तद्वदत्र समुच्चयो न शङ्क्यः विरूपशब्दाभ्यामेव क्रियाऽनैक्ये तत्स्वीकारात् ।

( ७१ ) इह केचिदाहुः—'केशपाशादिगतो लौकिकोऽतिशयोऽलौकिकत्वेनाध्यवसीयते । केशपाशादीनां कलापादिभिरध्यवसाये 'अन्यदेवाङ्गलावण्यम्' इत्यादिप्रकारेष्वव्याप्तिर्लक्षणस्य' इति ।

( ७१ ) अत्रालङ्कारसर्वस्वकारा हि काव्यप्रकाशकृदुक्ताभेदे भेदरूपातिशयोक्त्युदाहरणस्य "कमलमनम्भसि" इत्यादेः अभेदे भेदरूपायामतिशयोक्तावव्याप्तिमाहुरिति स्वकीयोदाहरणेऽपि तमाक्षेपं मन्यमानस्तन्मतमुत्थाप्य दूषयितुमाह—इह केचिदिति । (क) अलङ्कारसर्वस्वकादयः । केशपाशादिगत इति । भेदे अभेदाध्यवसायरूपायाम् "कथमुपरि कलापिनः कलापः" इत्यादिपद्ये केशपाशादिगत इत्यर्थः, आदिपदेन नेत्रादीनां परिग्रहः । लौकिकः तत्तन्नायिकालोकप्रसिद्धः. अतिशयः लम्बितात्वमसृणत्वाद्युत्कर्षः, अलौकिकत्वेन कविप्रतिभासमर्पितेन स्वर्गीयत्वेनेत्यर्थः । इत्थञ्चात्रापि अभेदे भेदाध्यवसायरूपैवातिशयोक्तिर्न तु भेदे अभेदाध्यवसायरूपा । अत्र च भेदे अभेदाध्यवसायाभ्युपगमेऽऽपत्तिमुद्भावयति—केशपाशादीनामिति । कलापादिभिः सह, आदिपदेन कुवलयादीनां परिग्रहः, अभेदाध्यवसाये अभेदप्रत्यायने अभिमते इत्यर्थः । अन्यदेवाङ्गलावण्यमित्यादिष्विति आदिपदेन "अन्यत्ललावण्यमन्यैव च कापि वर्त्तनच्छाया" इतिकाव्यप्रकाशकृदुक्ताभेदे भेदाध्यवसायादेः परिग्रहः । लक्षणस्येति अभेदे भेदाध्यवसायस्थले "सिद्धत्वेऽध्यवसायस्यातिशयोक्तिरित्युक्तस्य अतिशयोक्तिस्वरूपस्येत्यर्थः ।

अव्याप्तिरिति । तेषामयमभावः—"अन्यदेवाङ्गलावण्यम् इत्यादौ तन्नायिकालावण्यादिषु अन्यनायिकालावण्यादीनां भेदस्यैव विद्यमानत्वेन अभेदासत्त्वात् अभेद एव भेदाध्यवसायरूपत्वाभावात् । प्रत्युत लौकिकत्वेन भेदाभावे तन्नायिकालावण्यादौ अलौकिक-

(क) तत्र हि "एषु पञ्चसु भेदेषु भेदे अभेदादिवचनं लोकातिक्रान्तगोचरम् । अत्र चातिशयाख्यं यत् फलं प्रयोजकत्वान्निमित्तं तत्राभेदाध्यवसायः । तथाहि—

"कमलमनम्भसि, कमले च कुवलये, तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥"

इत्यादौ वदनादीनां कमलाद्यैर्भेदेऽपि वास्तवं ( लौकिकम् ) सौन्दर्यम् ( अतिशयितत्वम् ) कविसमर्पितेन सौन्दर्येण ( अतिशयितत्वेन ) अभेदेनाध्यवसितं भेदेऽभेदवचनस्य निमित्तम् । तत्र च सिद्धोऽध्यवसाय इत्यध्यवसितप्राधान्यम् , न तु वदनादीनां कमलादिभिरभेदाध्यवशायो योजनीयः अभेदे भेद इत्यादिषु प्रकारेष्वव्याप्तेः तत्र हि—

"अण्णं लडहत्तणअं, अण्णा वि अंका वि वत्तणच्छाआ ।
सामा सामण्णपआवइणो रेहव्वि अण होई ॥"
( अन्यत् सौकुमार्यम्, अन्यैव च काऽपि वर्तनच्छाया ।
श्यामासामान्यप्रजापतेरेखैव च न भवति ) इतिच्छाया ।

इत्यादौ सातिशयं सुकुमारत्वं निमित्तभूतमभेदेनाध्यवसितम् , एवमन्यत्रापि ज्ञेयम् , तदभिप्रायेणैवाध्यवसितप्राधान्यमिति । एतद्व्याख्यायां जयरथास्तु—"यावता ह्यध्यवसितप्राधान्यमस्या लक्षणं तच्च धर्मिणामस्तु धर्माणां वा को विशेषः ? येनाव्याप्तिः स्यात्, प्रत्युत धर्मयोरभेदाध्यवसायाभ्युपगमे उपमादीनामतिशयोक्तिप्रसङ्गः स्यात् , तत्रापि धर्मणामेव भेदेऽभेदविवक्षणात् एवं च विजातीयत्वेन भेदे धर्मयोरव्याप्तिः प्रसज्यत इत्यलमसङ्गतग्रन्थार्थोदीरणेन" इत्याहुः ।

( ७२ ) तन्न,—तत्रापि ह्यन्यदङ्गलावण्यमन्यत्वेनाध्यवसीयते ।

( ७३ ) तथाहि 'अन्यदेव' इति स्थाने 'अन्यदिव' इति पाठेऽध्यवसायस्यासाध्यत्वमेवेत्युत्प्रेक्षाङ्गीक्रियते । 'प्रागेव हरिणाक्षीणाम्—' इत्यत्र बकुलादिश्रीणां प्रथमभावितापि पश्चाद्भावित्वेनाध्यवसिता, अत एवात्रापीवशब्दप्रयोगे उत्प्रेक्षा ।

( ७४ ) एवमन्यत्र ।

त्वेनातिरिक्तानां लावण्यादीनामध्यवसाये तु लक्षणसमन्वयो भवत्येव । इत्थञ्च भेदे अभेदाध्यवसायोदाहरणे च लौकिकत्वालौकिकत्वाभ्यामेव भेदाभेदयोः स्वीकारस्य युक्तत्वात् "कथमुपरि" इत्यादावपि तथैव अभेदे भेदाध्यवसायरूपाया एवातिशयोक्तेः स्वीकारो युक्त इति ।

( ७२ ) तन्मतं दूषयति—तन्नेति । हि यतः, तत्रापि अभेदे भेदाध्यवसायरूपायाम् "अन्यदेवाङ्गलावण्यम्" इत्यादावपि । अन्यत् अन्यनायिकासाधारणम् । अन्यत्वेन अन्यनायिकासाधारणत्वेन केवलतन्नायिकावृत्तित्वेनेत्यर्थः । तथाच प्रकृतोदाहरणे अभेदे भेदाध्यवसायरूपातिशयोक्तेर्लक्षणसमन्वयान्नाव्याप्तिरित्याशयः ।

( ७३ ) तदेव प्रकारान्तरेणोपपादयति—तथाहीति । अध्यवसायस्य अभेदप्रत्ययनस्य असाध्यत्वम् अनुद्भावनीयत्वमेव इति अस्माद्धेतोः । पश्चाद्भावित्वेनेति । एवं चित्तोत्कलिकायाः पश्चाद्भावितापि पूर्वभावित्वेनाध्यवसितेतिज्ञेयम् । इवशब्दप्रयोग इति । प्रागिव, पश्चादिव" इत्थमिवशब्दप्रयोग इत्यर्थः । समाधातुरयमाशयः—सर्वसिद्धान्तेन उत्प्रेक्षातिशयोक्त्योस्तुल्य एव विषयः, अतएवोक्तदिशा यत्र यत्र इवशब्दप्रयोगस्तत्र तत्र सर्वसिद्धान्तेन उत्प्रेक्षाऽपि भवत्येव । तेन "अन्यदेव" इत्यादौ "अन्यदिव" इति पाठे अस्मन्मते "असाधारणमिव" इत्याद्यर्थकत्वेनेव त्वन्मतेऽपि "अलौकिकमिव" इत्याद्यर्थकत्वेन उत्प्रेक्षा स्यादेव, परन्तु "उपरि कलापिनः कलाप इव" इतिपाठे" अलौकिक इव" इत्यर्थोपस्थितेरभावादुत्प्रेक्षातिशयोक्त्योर्विषयभेदः स्यादितिसर्वसिद्धान्तसिद्धोऽनयोस्तुल्यविषयापलापः स्यादितित्वन्मताभ्युपगमे महाननर्थः सम्पद्येतेति ।

( ७४ ) इत्थमेवान्यत्राऽप्यूहनीयमित्युपदिशति—एवमिति । एवम् उक्तदिशा अन्यत्राप्युत्प्रेक्षा ज्ञातव्या इत्यर्थः । तथाहि—"अस्याः सर्गविधौ प्रजापतिरभून्मन्ये विधुः कान्तिदः" इति पाठे उत्प्रेक्षा, एवं "सममेव समाक्रान्तम्" इत्यत्रापि "सममिव" इति पाठे उत्प्रेक्षैव ।

ध्वन्यमानेयं यथा—

देव ! त्वद्दर्शनादेव क्षीयन्ते पुण्यराशयः । किंचादर्शनतः पापमशेषमपि नश्यति ॥

अत्र पुण्यपापयोः सुखदुःखभोगमात्रनाश्यतया दर्शनादर्शनाभ्यां तज्जन्यसुखदुःखयोः राश्यशेषशब्दाभ्यां च जन्मशतोपभोग्ययोस्तयोरेवाक्षेपादुभिमाभ्यां पूर्वयोरध्यवसायो व्यज्यते ।

गजत्रातेति वृद्धाभिः श्रीकान्त इति यौवतैः ।
यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकम् ॥

इत्यत्राध्यवसानाभावान्नायमलङ्कारः । ननु तर्हि कोऽलङ्कारोऽत्राङ्गीक्रियते इति चेत् ? न कोऽपि किन्तु तेषां तेषां तथाज्ञानानि भगवद्विषयकभावे उद्दीपनानि भवन्ती-

( ७५ ) पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् ॥ ४७ ॥
एकधर्माभिसंबन्धः स्यात्तदा तुल्ययोगिता ।

त्यभ्युपगमात् । नच सर्वोऽप्युद्दीपनप्रपञ्चोऽलङ्कारेष्वेवेतिवाच्यम्, तत्र नियमाभावात् । एवम्—

अकृशं कुचयोः कृशं वलग्ने विपुलं चक्षुषि विस्तृतं नितम्बे ।
अधरेऽरुणमाविरस्तु चित्ते करुणाशालिकपालिभागधेयम् ॥

इति पद्येऽपि नायमलङ्कार इत्यवधेयम् ।

( ७६ ) अथ सादृश्यमूलकालङ्कारनिरूपणस्य प्रकरणत्वात्, ध्वनिपरिच्छेदे "यो दीपकतुल्ययोगितादिषु उपमाद्यलङ्कारो व्यङ्ग्यः" इत्युक्तत्वात्सादृश्यवत्तयैवानुभवाच्च विशेषातिदिष्टया चातिशयोक्त्या तद्बाधाया असम्भवेनोभयोर्मध्ये प्रथमं तुल्ययोगितालङ्कारं लक्षयति—पदानामिति । यदा प्रस्तुतानां प्रकरणप्राप्तानां पदार्थानाम्, वा अथवा अन्येषामप्रस्तुतानाम् अप्रकरणप्राप्तानामित्यर्थः, पदार्थानामेकधर्माभिसम्बन्धः एकधर्मेणान्वयो भवेत् तदा तुल्ययोगिता तदाख्योऽलङ्कारः स्यात् । अत्र "वा" शब्दः प्रस्तुतानामप्रस्तुतानां व्यवच्छेदकः । तथाच यदि प्रस्तुतैरेव पदार्थैः सह प्रस्तुतानामेव पदार्थानाम् एकेन धर्मेण गुणरूपेण क्रियारूपेण कर्तृत्वेन कर्मत्वेन करणतादिरूपेण वा अभिसम्बन्धः, अथवा यदि अप्रस्तुतैरेव पदार्थैः सह अप्रस्तुतानामेव पदार्थानां तादृगेव एकधर्माभिसम्बन्धो भवेत्तदा तुल्ययोगितेतिसरलार्थः । अत्र तुल्यश्चासौ योगः सम्बन्धश्च अन्वयश्च तुल्ययोगः एकधर्मान्वय इत्यर्थः, सोऽस्ति येषां ते तुल्ययोगिनस्तेषां भावस्तुल्ययोगितेतिव्युत्पत्तिः । औपम्यं चात्र व्यङ्ग्यम्, तत्प्रयोजकसमानधर्मोपादानात् इवादिवाचकाभावाच्च धर्मवाचकपदैस्तत्तद्रूपेण धर्मभानेऽपि सादृश्यत्वरूपेणाभानात् । उक्तञ्च प्रतापरुद्रकृतापि—

प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः ।
औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥ इति ।

कारिकायाः सूत्ररूपत्वेन "सूत्रे लिङ्गवचनमतन्त्रम्" इति नियमोक्त्या पदार्थानामित्यत्र बहुवचनमविवक्षितम्, द्वयोर्धर्मैक्येनाऽप्यन्वयेऽस्याः सम्भवात् । अतएव

"सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च" ।

इत्यादौ कुवलयानन्दकारोक्ततुल्ययोगितालङ्कारसिद्धिः ।
अतएव च—

प्रिये ! विषादं विजहीहि वाचं प्रिये सरागं वदति प्रियायाः ।
वारामुदारा विजगाल धारा विलोचनाभ्यां मनसश्च मानः ॥ इति

रसगङ्गाधरकृत उदाहरणञ्च सङ्गच्छते ।

अत्र मानिन्या वर्ण्यत्वात् तदीयत्वेन प्रस्तुतयोः कर्त्रोरश्रुमानयोर्विगलनक्रियैकधर्माभिसम्बन्धेनोपात्तेतितुल्ययोगितालङ्कारः । नचास्यामलङ्कृतौ सादृश्यस्य व्यङ्ग्यत्वेन व्यङ्ग्योपमयैव गतार्थः स्यादितिवाच्यम्, तावन्मात्रकृतचमत्काराभावात् । एकधर्मान्वयकृतस्यापि विद्यमानत्वात् व्यज्यमानस्यापि सादृश्यस्यासुन्दरसाधारणधर्मकत्वेनासुन्दरत्वात् । दीपके अप्रस्तुतेन सह प्रस्तुतस्य प्रस्तुतेन वा सहाप्रस्तुतस्य पदार्थस्य सादृश्यवाचकवैधर्म्ययोरभावे सत्येकधर्माभिसम्बन्धः, अत्र च प्रस्तुतैः सह प्रस्तुतानामप्रस्तुतैः सह चाप्रस्तुतानामेकधर्माभिसम्बन्ध इति परस्परं भेदः ।

( ७६ ) अन्येषामप्रस्तुतानाम् । धर्मो गुणक्रियारूपः । उदाहरणम्—

( ७७ ) 'अनुलेपनानि कुसुमान्यबलाः कृतमन्यवः पतिषु दीपदशाः ।
समयेन तेन सुचिरं शयितप्रतिबोधितस्मरमबोधिषत ॥'

( ७८ ) अत्र संध्यावर्णनस्य प्रस्तुतत्वात्प्रस्तुतानामनुलेपनादीनामेकबोधनक्रियाभिसंबन्धः ।

( ७९ ) 'तदङ्गमार्दवं द्रष्टुः कस्य चित्ते न भासते ।
मालतीशशभृल्लेखाकदलीनां कठोरता ॥'

( ७६ ) कठिनांशं स्पष्टयति—अन्येषामिति । इत्यस्य इति शेषः । अप्रस्तुतानाम् इत्यर्थ इति शेषः । गुणक्रियारूप इति । गुणक्रिये रूपं यस्य तादृशः । इदञ्चोपलक्षणम् । तेन कर्त्रादीनामपि परिग्रहः ।

( ७७ ) तत्र प्रस्तुतैः सह प्रस्तुतानामेकक्रियासम्बन्धे उदाहरणमाह—अनुलेपनानीति । शिशुपालवधे नवमसर्गे सन्ध्यावर्णनपद्यमिदम् । तेन समयेन सन्ध्याकालेन, अनुलेपनानि अङ्गरागद्रव्याणि, कुसुमानि शुक्लपुष्पाणि, पतिषु स्वामिजनेषु कृतमन्यवः कृतप्रणयकोपाः, अबला नायिकाः तथा दीपदशा दीपवर्तिकाश्च सुचिरम् अतिचिरकालपर्यन्तम्, शयितः प्रथमं सुप्तो निवृत्तव्यापारः पश्चात् प्रतिबोधितो जागरितः प्रवृत्तव्यापारः स्मरः कामदेवो यत्र तद् यथास्यात्तथा क्रियाविशेषणञ्चेदम्, अबोधिषत क्रीडार्थं बोधयामासुरित्यर्थः । प्रमिताक्षराच्छन्दस्तल्लक्षणन्तु-"प्रमिताक्षरा सजससैरुदिता" इति ।

( ७८ ) लक्ष्यं सङ्गमयति—अत्रेति । स्पष्टोऽर्थः । अयमाशयः-सायङ्कालस्य कामोद्दीपकत्वेन प्रस्तुतत्वात् अनुलेपनादीनामपि कामोद्दीपकत्वेन मानभञ्जनसाधनत्वात् प्रस्तुत्वामत्येतषां "शयितप्रतिबोधितस्मरम्" इतिक्रियाविशेषणेन "अबोधिषत" इति बोधनार्थैकक्रिययाभिसम्बन्धात्तुल्ययोगितालङ्कार इति ।

एकगुणरूपधर्माभिसम्बन्धा प्रस्तुता तुल्ययोगिता यथा—

"न्यञ्चति वयसि प्रथमे, समुदञ्चति किञ्च तरुणिमनि सुदृशः ।
उल्लसति कापि शोभा वचसां च दृशां विभ्रमाणाञ्च ॥

अत्र स्मराक्रान्तत्वेन तारुण्यस्येव वचनादीनामपि प्रस्तुतत्वात् शोभारूपेणैकेन गुणेनाभिसम्बन्धात्तुल्ययोगिता ।

( ७९ ) अप्रस्तुतानामेकगुणाभिसम्बन्ध उदाहरणमाह—तदङ्गमार्दवमिति । तस्या अङ्गानां मार्दवं सौकुमार्यं द्रष्टुः साधुवस्त्ववलोकयितुः कस्य लोकस्य चित्ते, मालती जातीकुसुम शशभृल्लेखा चन्द्रलेखा कदली रम्भा तासां तथोक्तानाम्, मालतीपदञ्चात्र कोकनदेन्दीवरामप्युपलक्षकम्, कठोरता कठिनत्वं न भासत इत्यर्थः ।

द्रष्टुरित्यत्र तृनः कृदन्तत्वात् "कर्तृकर्मणोः कृति" इति षष्ठी तु न शङ्कनीया न लोकाव्यय"तितान्निषेधात् ।

तथाच नायिकाया अङ्गमात्रापेक्षया मालत्यादीनां न सौकुमार्यमिति वाच्योऽर्थः । प्रतीयमानस्तु नायिकाया दर्शनापेक्षया मालत्याः, हस्तपादलोचनाद्यपेक्षया कोकनदादीनां वदनापेक्षया शशाङ्कलाञ्छितत्वेन दूषितस्य चन्द्रस्य, जङ्घापेक्षया कदल्याश्च न किञ्चिदपि सौकुमार्यं प्रत्युतात्यन्तं कठिनत्वमेव, मालत्यादिविद्यमानत्वेऽपि नायकस्य तां विना रक्षयावहत्वात् प्रत्युत कामानलसन्दीपकत्वादिति ।

( ८० ) इत्यत्र मालत्यादीनामप्रस्तुतानां कठोरतारूपैकगुणसंबन्धः ।

( ८१ ) एवम्—

( ८२ ) 'दानं वित्ताहतं वाचः कीर्तिधर्मौ तथायुषः ।
परोपकरणं कायादसारात्सारमाहरेत् ॥'

( ८३ ) अत्र दानादीनां कर्मभूतानां सारतारूपैकगुणसंबन्ध एकाहरणक्रियासंबन्धः ।

( ८० ) लक्ष्ये लक्षणं योजयति—इत्यत्रेति । अप्रस्तुतानामिति । नायिकावर्णनस्यैव प्रस्तुत्वात् मालत्यादीनान्तूपमानत्वेनाप्रस्तुतत्वादितिभावः । कठोरतारूपैकेन गुणेन सम्बन्धः अधिकरणतासम्बन्धेनान्वय इत्यर्थः ।

( ८१ ) गुणक्रिययोरेकैकाभिसम्बन्धे पृथक् पृथगुदाहरणं प्रदर्श्य सम्प्रति ताभ्यां द्वाभ्यामेवैकत्र युगपदभिसम्बन्धे उदाहरणं प्रदर्शयितुमाह—एवमिति ।

( ८२ ) उदाहरति—दानमिति असारात् दानायोगित्वरूपकिञ्चिदुत्कर्षांशविशिष्टात् वित्तात् धनात् सारं तदुत्कर्षांशप्रयोज्य दानम् आहरेत् उद्धरेत् । बुद्धिमान् जन इति शेषः, एवमग्रेऽपि । यद्यसारादित्यत्र अभावार्थकनञोयोगे सर्वथा साररहितादित्यर्थः स्यात् तदा तेन सारमाहरेदित्यस्य सम्बन्धो न स्यात् सर्वथा निःसारपदार्थतः साराहरणासम्भवादतः ईषदर्थेऽत्र नञिति बोध्यम् । एवमन्यत्राप्यनुसन्धेयम् । वाच इत्यस्य विशेषणोपपत्तये असारादित्यस्य असाराया इति कल्पनीयम् । तथाच असाराया वाचो वाक्यात् सारम् ऋतं सत्यम्, आहरेत् सञ्चिनुयात्, असारादायुषो जीवनात् कीर्तिधर्मौ कीर्तिरूपं धर्मरूपञ्च सारौ आहरेत्, तथा असारात् कायात् शरीरात् पुनः सारं तत्त्वं परोपकरणं परोपकारम् आहरेत् ।

( ८३ ) लक्ष्यं समर्थयति—अत्रेति । कर्मभूतानाम् "आहरे"दितिक्रियाया इति शेषः, सारतारूपैकेन गुणेन सम्बन्धे अधिकरणत्वसम्बन्धेनान्वये सतीत्यर्थः, एकया आहरणक्रियया सम्बन्धः कर्मत्वसम्बन्धेनान्वयः । असारादित्यत्रेषदर्थकनञः स्वीकारात् असारतारूपैकगुणसम्बन्धश्च ज्ञेयः । एवञ्च प्रतिबन्धकाभावाद् युगपदेकधर्माभिसम्बन्धेऽपि तुल्ययोगिता भवत्येवेतिव्यञ्जितम् । अत्र च पुरुषस्येतिकर्त्तव्यतायां प्रस्तूयमानायां दानादीनामितिकर्त्तव्यतात्वेन प्रस्तुतत्वमित्यपि ज्ञातव्यम् ।

अप्रस्तुतानां गुणक्रिययोर्युगपदेवैकधर्माभिसम्बन्धे यथा—

न्यञ्चति बाल्यसुदृशः समुदञ्चति गण्डसीम्नि पाण्डिमनि ।
धवलीभवत्यनुदिनं लवनीकनकं कलानिधिश्चायम् ॥

अत्र नायिकाया गण्डयोः पाण्डिमोदये प्रस्तुतेऽप्रस्तुतानां धवलयादीनां धवलीभवनरूपैकगुणविशिष्टक्रियायां युगपदेवाभिसम्बन्धः । "चैत्रो मैत्रश्च गच्छतः" इत्यादौ चैत्रमैत्रयोरेकगमनक्रियाभिसम्बन्धेऽपि नायमलङ्कारः वैचित्र्याभावात् तद्विनालङ्कारानभ्युपगमात् ।

श्लेषानुप्राणितापीयं दृश्यते यथा—

"प्रदीयते परा भूतिर्मित्रशात्रवयोस्त्वया ।"

अत्र पराभूतिशब्दस्य नानार्थकत्वेन पराभूतिप्रदानक्रियारूपैकधर्माभिसम्बन्धः ।

( ८४ ) अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते ॥ ४८ ॥
अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ।

अर्थान्तरन्यासानुगतापि यथा—

"दूरीकरोति कुमतिं विमलीकरोति चेतश्चिरन्तनमघं चुलुकीकरोति ।
भूतेषु किञ्च करुणां बहुलीकरोति सङ्गः सतां किमु न मङ्गलमातनोति ॥"

अत्र कारकतुल्ययोगितानेकासां क्रियाणामेकत्राभिसम्बन्धादर्थान्तरन्यासानुगता ।
रसनारूपाऽपि समुपलभ्यते यथा—

'दधीचिवलिकर्णेषु हिमहेमाचलाब्धिषु । अदातृत्वमधैर्यञ्च दृष्टे भवति भासते ॥'
ध्वन्यमाना यथा—

"अये ! लीलाभग्नत्रिपुरहरकोदण्डमहिमन् ! कथा यत्रोदञ्चत्यतुलबलधैर्यस्य भवतः ।
अयं को वा तत्र प्रसृमरफणाकोणनिहित-क्षितिः शेषः श्रीमान् कमठकुलचूडामणिरपि॥'

अत्र 'को वा" इत्यनेन वाच्यलक्ष्यव्यतिरिक्तस्यागणनीयत्वस्य शेषकमठाभ्यामप्रस्तुताभ्यां सम्बन्धः प्रतीयते ।

( ८४ ) उक्तयुक्तेः शेषं दीपकालङ्कारं निरूपयति—अप्रस्तुतेति । सूत्रे लिङ्गवचनमतन्त्रम्" इतिनियमस्योक्तत्वात् अप्रस्तुतप्रस्तुतयोरित्यत्र द्विवचनमविवक्षितम्, तेन अप्रस्तुतप्रस्तुतानामित्यपि लभ्यते, 'यदा भवेदेकधर्माभिसम्बन्धः तदा" इत्यस्य पूर्वकारिकातोऽनुषङ्गो विधेयः । तथा च अप्रस्तुतानां प्रस्तुतानां च सम्मिलितानां यदा एकधर्माभिसम्बन्धः स्यात्तदा तु दीपकं नामालङ्कारो निगद्यते । धर्मश्चात्रापि गुणक्रियान्यतररूप एव बोध्यः । अत्र "तु" इतिनिपाताव्ययस्यानेकार्थत्वेन सादृश्यवाचकवैधर्म्ययोरसत्त्वे सतीतिविशेषणञ्च प्रतीयते । सादृश्यस्य व्यङ्गत्वं तुल्ययोगितायामिवात्रापि । तथाच—अप्रस्तुतैः सह प्रस्तुतानां प्रस्तुतैर्वा अप्रस्तुतानां पदार्थानां सादृश्यवाचकवैधर्म्ययोरसत्त्वे सत्येकधर्माभिसम्बन्धो दीपकमितिलक्षणं फलितम् । अतएव तुल्ययोगिताया नातिव्याप्तिः तत्र प्रस्तुतैः सह प्रस्तुतानामप्रस्तुतैः सह चाप्रस्तुतानामेकधर्माभिसम्बन्धात् । सत्यन्तदलघटक"सादृश्यवाचके"त्युक्त्या "कमलमिव मुखं मनोज्ञम्" इत्यादौ अप्रस्तुतप्रस्तुतयोः कमलमुखयोर्मनोज्ञत्वरूपैकगुणसम्बन्धेऽपि सादृश्यवाचकस्य इवशब्दस्य विद्यमानत्वान्नातिव्याप्तिः, एवं "पौरं जनं सुतीयसि' इत्यत्र सादृश्यवाचकक्यच्प्रत्ययस्य विद्यमानत्वेऽपि नातिव्याप्तिः । एवमेव—

त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ ।
अयं तु युवयोर्भेदः स जडात्मा पटुर्भवान् ॥

इत्यादौ वैधर्म्यस्यापि विद्यमानत्वान्नातिव्याप्तिः ।

द्वितीयं लक्षणान्तरं दर्शयति—अथेति । अथवेत्यर्थः । चेद् यदि, अनेकासु क्रियासु विद्यमानासु इति शेषः । क्रिया चात्र तिङन्तादिवाच्या सत्त्वभूता गृह्यते असत्त्वभूतायाश्चोपमानत्वाभावः सनूविधायके "धातोः कर्मणःसमानकर्तृकादिच्छायां वा" ३।१।१७ इति पा० सूत्रभाष्ये "न वै तिङन्तेनोपमानमस्ति" इतिग्रन्थेन प्रतिपादितः ।

एवं—कर्ता कर्म च करणं सम्प्रदानं तथैव च ।
अपादानाधिकरणमित्याहुः कारकाणि षट् ॥

इत्युक्तेषु षट्सु कारकेष्वेकतममित्यर्थः, कारकं स्यात्, तदपि दीपकमेव निगद्यते

क्रमेणोदाहरणम्—

( ८५ ) 'बलावलेपादधुनापि पूर्ववत्-
प्रबाध्यते तेन जगज्जिगीषुणा ।
सतीव योषित्प्रकृतिः सुनिश्चला
पुमांसमभ्येति भवान्तरेष्वपि ॥'

( ८६ ) अत्र प्रस्तुतायाः सुनिश्चलायाः प्रकृतेरप्रस्तुतायाश्च योषित एकानुगमन-क्रियासंबन्धः ।

---

इति शेषः । एवञ्च एकस्थस्यैव सर्ववाक्यप्रकाशकत्वेन दीपसाम्याद्दीपकमित्यर्थः । दीपयति अप्रस्तुतमपि पदार्थं बुद्धौ प्रकाशयति ( सुन्दरीकोति ) इति व्युत्पत्तिः । "दीपी दीप्तौ" इतिदिवादिगणपठिताद्दीपधातोर्णिजन्तात्-"ण्वुल्तृचौ" पा० ३।१।१३३ इतिसूत्रेण कर्त्तरि ण्वुल्प्रत्ययः युवोरनाकौ ७।१।१ इति पा० सूत्रेणाकादेशे रूपम् । यद्यच् प्रत्ययः सम्भाव्यते तदा दीप इव दीपकम् 'संज्ञायां कन्' ५।३।९७ इति पा० सूत्रेण संज्ञायां कन् । सादृश्यं च प्रस्तुताप्रस्तुतप्रकाशकत्वेनेति बोध्यम् ।

( ८५ ) तत्राद्यमुदाहरति—बलावलेपादिति । शिशुपालवधस्य प्रथमसर्गे पद्यमिदम् । जिगीषुणा जेतुमिच्छुना नित्योत्साहवतेतियावत्, तेन शिशुपालेन बलस्य स्वसामर्थ्यविशेषस्य अवलेपात् गर्वात् बलगर्वं प्राप्येत्यर्थः अधुनापि अस्मिन् जन्मन्यपि पूर्ववत् पूर्वपूर्वजन्मनीव जगत् संसारं प्रबाध्यते नितरां पीडयते । ननु कथमेवंविधं करोतीत्यत आह—सतीवेति । सती साध्वी—

"पतिं या नाभिचरति मनोवाक्कायसंयता ।
सा भर्त्तुर्लोकमाप्नोति सद्भिः साध्वीति चोच्यते ॥"

इत्यादि प्रासङ्गमाहात्म्यात्पतिव्रतेति यावत् । योषित् स्त्रीव निश्चला सुस्थिरा प्रकृतिः स्वभावश्च भवान्तरेषु अन्यजन्मस्वपि किं पुनस्तस्मिन्नेव जन्मनीत्याशयः, पुमांसं पुरुषम् अभ्येति प्राप्नोति । वंशस्थं छन्दस्तल्लक्षणन्तूक्तं प्राक ( २०६ पृ० ) ।

( ८६ ) उदाहरणसङ्गतिमुपपादयति-अत्रेति । प्रस्तुताया इति । शिशुपालवधस्य प्रस्तुतत्वेनैव तत्प्रकृतेरपि प्रस्तुतत्वमिति बोध्यम् ।

अत्र प्रस्तुतैकत्वमिवाप्रस्तुतैकत्वमपि । प्रस्तुताप्रस्तुतानां बहुत्वे पुनरिदमेव यथा—

( क ) "किवणाणं धणं णाआणं फणमणी केसराइँ सीहाणं ।
कुलवालिआणं त्थणआ कुत्तो छिप्पंति अमुआणं ॥"

अत्र वर्णनीयत्वेन प्रस्तुतानां कुलवधूस्तनानां स्पर्शेन क्रियैकरूपधर्मान्वयित्वेन कृपणधनादीनां वर्णनादप्रस्तुतत्वमितिक्रियादीपकालङ्कारोऽयम् ।

संस्कृते उदाहरणं यथा—

---

( क ) "कृपणानां धनं, नागानां फणमणिः, केसराः सिंहानाम् ।
कुलबालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम् ॥

इति संस्कृतम् ।

( ८७ ) 'दूरं समागतवति त्वयि जीवनाथे
भिन्ना मनोभवशरेण तपस्विनी सा।
उत्तिष्ठति स्वपिति वासगृहं त्वदीय-
मायाति याति हसति श्वसिति क्षणेन ॥'

( ८८ ) इदं मम। अत्रैकस्या नायिकाया उत्थानाद्यनेकक्रियासंबन्धः।

---

"भूष्यन्ते प्रमदवनानि बालपुष्पैः, कामिन्यो मधुमदमांसलैर्विलासैः।
( क ) ब्रह्माणः श्रुतिगदितैः क्रियाकलापैः राजानो विरलितवैरिभिः प्रतापैः ॥"
अत्र प्रतापकर्तृकराजकर्मकभूषणक्रियारूपैकधर्माभिसम्बन्धात् बालपुष्पादिप्रमदवनादीनां वर्णनमप्रस्तुतमिति क्रियादीपकम्।

धर्मस्य गुणक्रियान्यतरत्वेनास्य द्वैविध्याभ्युपगमादन्त्योदाहरणं प्रदर्शितम्। अथाद्यं यथा—

"मृतस्य लिप्सा कृपणस्य दित्सा विमार्गगायाश्च रुचिः स्वकान्ते।
सर्पस्य शान्तिः कुटिलस्य मैत्री विधातृसृष्टौ नहि दृष्टपूर्वा ॥"

अत्र कुटिलस्य मैत्र्या असम्भवत्वे प्रस्तुते मृतलिप्सादेरुपमानभूतस्योपादानमिति कुटिलमैत्री प्रस्तुता, मृतलिप्सादिरप्रस्तुता, अभावो गुणश्च, तथाचाभावगुणरूपैकधर्माभिसम्बन्धात् गुणदीपकालङ्कारोऽयम्।

यत्त्वत्र— "श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपङ्क्तिभिः।
भुवश्च सुकुमाराभिर्नवशाद्वलराजिभिः ॥"

इत्युदाहृतम्, तन्न तत्र प्रावृष उपक्रमे जीमूतपङ्क्तीनामिव शाद्वलराजीनामपि प्रस्तुतत्वात् तुल्ययोगिताया एव स्वीकारस्य युक्तत्वात्।

( ८७ ) द्वितीयं कारकदीपकमुदाहरति—दूरमिति। कस्याश्चिन्नायिकाया नायकं प्रति तद्दूत्या विरहावस्थावर्णनमिदम्। जीवनाथे प्राणेश्वरे प्राणेभ्योऽतिप्रिये त्वयि, दूरमविहितं समागतवति आगच्छति सति, सा तपस्विनी त्वदेकाश्रया दुःखिता तव प्रियेत्यर्थः, मनोभवशरेण कामबाणेन तत्प्रहारेणेत्यर्थः भिन्ना विदीर्णा सती, क्षणेन उत्तिष्ठति त्वामागच्छन्तमिव सम्भाव्य दण्डायमाना भवति, क्षणेन स्वपिति त्वत्सङ्गाभिमृतेव शेते, क्षणेन त्वदीयं वासगृहं निवासभवनम् आयाति कदाचिन्निलीय मत्प्रतारणार्थं मात्र स्थित इत्यवलोकयितुमागच्छतीत्यर्थः, क्षणेनैव याति त्वां तत्रानासाद्य ततो निवासभवनाद्बहिर्गच्छतीत्यर्थः, क्षणेन त्वत्समागमं स्मृत्वेव हसति, क्षणेन च श्वसिति तव वस्तुतो दूरं प्रयाणमवधार्य उच्छ्वासं प्रकाशयति। वसन्ततिलकं छन्दस्तल्लक्षणमुक्तं प्रागेव ( १९३ पृ० )।

( ८८ ) उक्तपद्यमन्यदीयं नेति प्रकाशयितुमाह—इदं ममेति। लक्ष्ये लक्षणं योजयति—अत्रेति। अयम्भावः—अत्रोत्थानादीनां सर्वासां क्रियाणां तत्पदप्रतिपाद्या नायिकैवेकं कर्तृकारकमितिकारकदीपकम्। नन्वत्र नायिकाया विरहावस्थाया एव वर्णनीयत्वेन तत्राखिलानामेव क्रियाणां प्रस्तुतत्वादप्रस्तुतप्रस्तुतयोरभावात् कथं लक्षणसमन्वय इति

---

( क ) ब्रह्माण इति। ब्राह्मणा इत्यर्थः।
"ब्रह्म तत्त्वं तपो वेदे न द्वयोः पुंसि वेधसि। ऋत्विग्योगभिदोर्विप्र" इति मेदिनी।

( ८९ ) अत्र च गुणक्रिययोरादिमध्यावसानसद्भावेन त्रैविध्यं न लक्षितम् । तथाविधवैचित्र्यस्य सर्वत्रापि सहस्रधासंभवात् ।

चेत् ? सत्यम्, नायकागमनालिङ्गनादीनां सम्भाव्यमानानां परस्परं विजातीयत्वेनैकस्याः क्रियायाः प्रस्तुतात्वम् अन्यस्याश्च तस्या अप्रस्तुतात्वमित्यङ्गीकारेणोक्तदोषाभावात् । यथा वा—

"वसु दातुं यशो धातुं विधातुमरिमर्दनम् ।
त्रातुं च मादृशान् राजन् ! अतीव निपुणो भवान् ॥"

अत्र कस्यचिज्जीविकारहितस्य दीनस्योक्तौ वसुदानस्वत्राणरूपयोः प्रस्तुतयोः क्रिययोः, अरिमर्दनयशोधानयोश्चाप्रस्तुतयोरेकस्य नृपरूपकारकस्याभिसम्बन्धः ।

"सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ।
सैव क्रियासु बह्वीषु कारकस्येतिदीपकम् ॥"

इति काव्यप्रकाशकृल्लक्षणेन च दीपकस्य द्वैविध्यमेवायाति । यत्तु रसगङ्गाधरकृता "खिद्यति कूणति वेल्लति" इत्यादि प्रकाशकृतः कारकदीपकोदाहरणं खण्डयित्वा तुल्ययोगितायामेव दीपकमन्तर्भावितम्, तथाहि तुल्ययोगितातो दीपकं न पृथग्भावमर्हति, धर्मसकृद्वृत्तिमूलाया विच्छित्तेरुभयत्राविशेषात् । प्रस्तुताप्रस्तुतत्वादिविशेषस्य चावान्तरभेदसाधकत्वेऽपि अलङ्कारतायामसाधकत्वात् अन्यथा श्लेषस्य तद्भेदयोरपि भिन्नालङ्कारत्वापत्तेः, तस्मात् प्रस्तुतानामेवाप्रस्तुतानामेव प्रस्तुताप्रस्तुतानां चैकधर्मान्वय इति तुल्ययोगताया एव त्रयो भेदाः वक्तुमुचिताः । एवञ्च प्राचीनानां तुल्ययोगितातो दीपकस्य पृथगलङ्कारतामाचक्षाणां दुराग्रहमात्रमितितदाशयः । परन्त्वापातरमणीयञ्चैतत्,—

"नानाऽधिकरणस्थानां शब्दानां सम्प्रदीपकः ।
एकवाक्येन संयोगो यस्तु दीपकमुच्यते ॥"

यथा—

"सरांसि हंसैः कुसुमैश्च वृक्षा मत्तैर्द्विरेफैश्च सरोरुहाणि ।
गोष्ठीभिरुद्यानवनानि चैव यस्मिन्नशून्यानि सदा क्रियन्ते ॥"

इति लक्षणोदाहरणेन भगवता भरतमुनिना दीपकालङ्कारस्य स्वीकारात् । तत्रैव तुल्ययोगिताया अन्तर्भावस्तु न शक्यः, अन्वर्थताया उच्छेदप्रसङ्गात् दीपकं हि दीप इवेत्यर्थकम्, दीपस्य चाभेदेन सर्वेषां प्रकाशकत्वम्, नचैतत्तुल्ययोगितायाः, तुल्यानां योगितेत्यन्वर्थताया हानिप्रसङ्गादिति ।

( ८९ ) दण्डाद्युक्तावान्तरप्रकारान् दूषयितुमुत्थापयति-अत्र चेति । तथाचाचार्यदण्डी—

"जातिक्रियागुणद्रव्यवाचिनैकत्र वर्त्तिना ।
सर्ववाक्योपचारश्चेत्तमाहुर्दीपकं, यथा ॥" इति

आचार्यरुद्रटोऽपि—

"आदौ मध्येऽन्ते वा वाक्ये तत्संस्थितं च दीपयति ।
वाक्यार्थानितिभूयस्त्रिधैतदेवं भवेत्षोढा ॥"

इत्यादिलक्षणमभिधायोदाहरणान्याह—

न भाति रमणीयोऽपि वैराग्येण विना यतिः ।
वैदुष्येण विना विप्रो नरलोकस्त्वया विना ॥

लावण्येन प्रमदा मदातिरेकेण वारणाधिपतिः ।
भाति विभवेन भवकान् राजन् ! भवता च वसुमतीवलयम् ॥
आखण्डलेन नाकः कुण्डलिकुलकुण्डलेन पातालम् ।
नरमण्डन ! रिपुखण्डन ! भवता भूमण्डलं विभातितराम् ॥

एषु धर्मस्यादिमध्यान्तगतत्वम् । सहस्रधासम्भवादिति । तथा चैतेष्वतिशयविच्छित्तेरभावाद्विच्छित्त्यतिशयस्यैवालङ्कारत्वेन सर्वत्र स्वीकारादितिभावः । एवमेव यदपि—

'अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरेव च । दीपकस्थान एवेष्टमलङ्कारत्रयं यथा ॥'

इत्यावृत्तिगणोक्तमाश्रित्य कुवलयानन्दे—

'त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम् ।'

इतिलक्षणमभिधाय—

'वर्षत्यम्बुदमालेयं वर्षत्येषा च शर्वरी । उन्मीलन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः ॥
माद्यन्ति चातकास्तृप्ता माद्यन्ति च शिखावलाः ॥'

इत्युदाहृतम् । अत्र क्रमेण शब्दस्यार्थस्योभयोरावृत्तिरिति तदपि न, धर्मस्य सकृदुपादानाभावात्, प्रस्तुताप्रस्तुतोभयावृत्तित्वाच्च । प्रकाशानुसारिणस्तु एषु वाचकलुप्तोपमैव प्राहुः ।

विम्बप्रतिविम्बभावेनाऽप्येतत्सम्भवति यथा—

'शीलभारवती कान्ता पुष्पभारवती लता । अर्थभारवती वाणी भजते कामपि श्रियम् ॥
लता कुसुमभारेण शीलभारेण सुन्दरी । कविता चार्थभारेण श्रयते कामपि श्रियम् ॥'

वाण्यादिषु यस्याः कस्याश्चन प्रस्तुतत्वे प्रस्तुता उपमेयभूता, तदतिरिक्तयोः कान्तालतायोश्चोपमानत्वम्, एतद्विशेषणीभूतस्यार्थादेस्तु विम्बत्वम्, शीलादेश्च प्रतीविम्बत्वम् । एवमेव "लताकुसुमे" त्यत्रापि विम्बप्रतिविम्बभाव उपपादनीयः ।

काव्यप्रकाशकृता तु मालादीपकमप्यङ्गीकृतम् । तथाहि तल्लक्षणं तत्र—

'मालादीपकमाद्यं चेद्यथोत्तरगुणावहम्' इति ।

पूर्वेण पूर्वेण वस्तुना उत्तरमुत्तरं चेदुपक्रियते तन्मालादीपकमित्यर्थः । उदाहरणं यथा—

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्त्तिरतुला कीर्त्या च लोकत्रयम् ।

अत्र कोदण्डेन अरिशिर आसादयता शरा उपक्रियन्ते, शरैरपि भूमण्डलं प्रापयद्भिररिशिर उपक्रियते, शिरसापि त्वन्नायकं त्वां लम्भयता भूमण्डलम्, भूमण्डलेन च कीर्त्तिं प्रापयता नृपतिः, नृपेणापि त्रैलोक्यं व्यापयता कीर्त्तिरिति पूर्वपूर्वेभ्यः परपरस्योपकारः । एकस्या आसादनक्रियाया सर्वत्र सम्बन्धान्मालादीपकम् । एवमेव –

आस्वादेन रसो रसेन कविता काव्येन वाणी तया
लोकान्तःकरणानुरागरसिकः सभ्यः सभा चामुना ।
दारिद्र्यानलदह्यमानजगतीपीयूषधाराधर !
क्षोणीनाथ ! तया भवांश्च भवता भूमण्डलं भासते ॥

इत्यादावपि समुन्नेयम् ।

( ६० ) प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः ॥ ४६ ॥
एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ।

यथा—

( ९१ ) 'धन्यासि वैदर्भि ! गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति ॥'

( ९० ) अथ सादृश्यमूलकालङ्काराभिधानस्य प्रस्तुतत्वात् अन्यविधसादृश्यमूलकं प्रतिवस्तूपमालङ्कारं लक्षयति—प्रतिवस्तूपमेति । यत्र यस्मिन् काव्ये गम्यं प्रतीयमानं न पुनर्वाच्यमित्यर्थः साम्यं सादृश्यं यत्र ( प्रतिपाद्यमानं ) तयोस्तथोक्तयोः, सादृश्यञ्चोपमानोपमेयत्वम् , तथाच प्रतीयमानोपमानोपमेयभावयोरितिफलितोऽर्थः वाक्ययोर्वाक्यार्थयोः उपमानोपमेयसम्बन्धिनोरित्यर्थः, उपमानगतञ्चैकं वाक्यम् उपमेयगतञ्चापरं वाक्यमितिवाक्यार्थद्वयमत्रावधार्यम् , एकोऽपि अपृथग्भूतोऽपि अभिन्नोऽपीतियावत् , सामान्य उपमानोपमेयोभयगतसाधारणः, धर्मो गुणक्रिया वा पृथग् भिन्नतया निर्दिश्यते अभिन्नार्थकभिन्नानुपूर्वीकशब्देन प्रतिबोध्यते सा प्रतिवस्तु प्रतिपदार्थम् उपमा सादृश्यं प्रतीयमाना इति शेषः, इति यादृशी तद्व्यपदेश्योऽयमलङ्कारो भवेदित्यर्थः ।

अत्र पूर्ववदेव वाक्ययोरित्यत्र द्विवचनमनेकोपलक्षकं मालानुरोधात् । तेन वाक्यार्थयोर्वाक्यार्थानां वा उपमानिष्पादकस्यैकस्यापि धर्मस्य विभिन्नशब्दोपात्तत्वं प्रतिवस्तूपमेति फलितम् ।

एवञ्च "पद्मं मनोज्ञं रुचिरः शशाङ्कः" इत्यादौ एकस्यैव धर्मस्य पृथग्निर्देशेऽपि वाक्यार्थयोरुपमानोपमेयभावप्रत्ययाभावान्नातिव्याप्तिः ।

'प्रकाशते मुखं तस्याश्चन्द्रमा इव दीप्यते' ।

इत्यादौ च साम्यप्रतीत्यभावान्नातिप्रसङ्गः । नचात्र प्रागुक्तदिशैकवाक्यत्वमेव अन्यथा भिन्नवाक्ये उपमाप्राप्त्यभावेन प्रतिवस्तूपमाया एवासम्भवापत्तेरितिवाच्यम् अत्र 'गम्य' इत्युपादानादेव तत्र तथाकल्पनात् ।

"मुखं तव तथा भाति यथा राजति चन्द्रमाः"

इत्यादौ वाच्यसाम्ये गम्येत्युक्तत्वान्नातिव्याप्तिः । एकोऽपीत्युक्त्यानेकधर्मे दृष्टान्ते नातिप्रसक्तिः । पृथगित्युक्त्या च न कथितपदत्वदोषः । अत्र साधारणधर्मस्य वस्तुप्रतिवस्तुभावेन निर्देशाद् वाक्यार्थयोः स्वस्वार्थे निरपेक्षत्वाच्च निदर्शनायां नातिव्याप्तिः तत्र साधारणधर्मस्यानिर्देशाद्वाक्यार्थयोः स्वस्वार्थे सापेक्षत्वाच्च ।

"आपद्गतः खलु महाशयचक्रवर्त्ती विस्तारयत्यकृतपूर्वमुदारभावम्
कालागुरुर्दहनमध्यगतः समन्ताल्लोकोत्तरं परिमलं प्रकटीकरोति ॥"

इत्यत्रापद्गतत्वदहनमध्यगतत्वयोर्बिम्बप्रतिबिम्बभावेऽपि उपमानोपमेयवृत्तिधर्मो वस्तु प्रतिवस्तुभावापन्न एवेत्यतः प्रतिवस्तूपमैवालङ्कारः ।

( ९१ ) उदाहरति—धन्यासीति । नैषधीयचरिते तृतीयसर्गे दमयन्तीं प्रति हंसस्योक्तिरियम् । हे वैदर्भि ! विदर्भराजनन्दिनि दमयन्ति ! त्वं धन्यासि प्रशंसनीयासि, यया त्वया, उदारैर्महनीयैर्गुणैः सौन्दर्यादिभिः, नैषधो निषधाधिपतिर्नलोऽपि समाकृष्यत

( ६२ ) अत्र समाकर्षणमुत्तरलीकरणं च क्रियैकैव पौनरुक्त्यनिरासाय भिन्नवाचकतया निर्दिष्टा।

( ६३ ) इयञ्च मालयापि दृश्यते यथा—

( ६४ ) 'विमल एव रविर्विशदः शशी प्रकृतिशोभन एव हि दर्पणः।
शिवगिरिः शिवहाससहोदरः सहजसुन्दर एव हि सज्जनः॥'

( ६५ ) अत्र विमलविशदादिरर्थत एक एव। वैधर्म्येण यथा—

स्ववशं प्रापितः, अपिना नलस्य गभीरतातिशयत्वेन 'समाकृष्यत" इति क्रियायाः कर्मत्वायोग्यत्वं सूचयति। तथाच चन्द्रिकायाः ज्योत्स्नायाः "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः, इत अस्मादुच्यमानादपेक्षयाऽधिकेत्यर्थः, का खलु स्तुतिः प्रशंसा न काऽपीतिशेषः, यत् अब्धिं गभीरतया प्रख्यातं समुद्रमपि उत्तरलीकरोति समाकर्षति चञ्चलं करोतीतियावत् इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः, तल्लक्षणन्तूक्तं प्रागेव ( १२९ पृ० )।

( ९२ ) लक्ष्ये लक्षणं योजयति—अत्रेति। एकैवेति। नैषधस्य समाकर्षणमपि कामाविर्भावनेन चञ्चलीकरणम्, उत्तरलीकरणमपि पूराविर्भावनेन तच्चञ्चलीकरणमेवेत्याशयः। पौनरुक्त्यनिरासाय कथितपदत्वदोषनिराकरणाय, भिन्नवाचकतया विभिन्नवाचकशब्देन। पूर्वमेव दमयन्तीचन्द्रिकयोर्नैषधसमुद्रयोश्चोपमेयोपमानयोः साम्यं स्फुटं प्रतीयमानमित्यपि विभावनीयम्। तथाच समुद्रोत्तरलीकरणमिव नैषसमाकर्षणमित्युपमा प्रतीयमानाऽपि वाक्यद्वयगतत्वेन व्यङ्ग्योपमान्तरतो व्यवच्छेद्यो भवतीतिफलितम्।

( ९३ ) मालारूपाऽप्ययं भवतीत्युपदेष्टुमाह—इयञ्चेति। प्रतिवस्तूपमा चेत्यर्थः। मालयापि एकत्रानेकत्वेनाऽपीत्याशयः। मालयेत्यभिधानादेव कारिकायां "वाक्ययोः" इत्यत्र द्विवचनमनेकोपलक्षकमित्युक्तं पूर्वमेव।

( ९४ ) उदाहरति—विमल एवेति। रविः सूर्यो विमल एव तेजोमयतया स्वच्छप्रकाश एवेतिप्रसिद्धम्, शशी चन्द्रो विशद एव तेजोमयतयैव विपुलसुप्रकाश एव, एवेतिपूर्वतोऽनुवर्त्तनीयम्। दर्पणो मुकुरोऽपि "दर्पणो मुकुरादर्शौ" इत्यमरः, प्रकृत्या स्वभावेन शोभन एव हि अत्यन्तस्वच्छतया अत्यन्तरमणीय एव; शिवगिरिः कैलाशपर्वतः शिवस्य शङ्करस्य यो हासो हास्यं तस्य सहोदरः सजन्मा एव तत्तुल्यत्वेन स्वच्छ एवेत्याशयः तथा सज्जनोऽपि सहज आजन्मसिद्धः सुन्दरः पवित्रान्तःकरणः एव। अत्र "यः कौमारहरः स एव हि वरः" इत्यादाविव एव हीतिपदद्वयमत्यन्तं नियमं सूचयति, परन्तु शिवपदस्य द्विरभिधानात् कथितपदत्वं दोषः। द्रुतविलम्बितं छन्दस्तल्लक्षणन्तूक्तं प्रागेव।

( ९५ ) नन्वत्र प्रतिवाक्यं धर्मभेद एवेति कथमयमलङ्कार इत्यत आह—अत्रेति। विमलविशदादिर्विमलविशदादिपदप्रतिपाद्यो धर्मः, अर्थतस्तात्पर्यात्, एक एव अनतिरिक्त एव तथा च विमलादिपदानां भिन्नार्थवाचकत्वेऽपि पर्यवसाने तात्पर्यवलात् स्वच्छस्वरूपस्यैकस्यैवार्थस्य बोधकत्वमितिभावः। किन्तु कथितपदत्वदोषनिराकरणाय पृथक्पृथक्पदेन निर्दिष्ट इति वाक्यशेषः। अत्रापि रविशशीप्रभृतीनां साम्य स्फुटमेव प्रतीयमानमितिबोध्यम्।

( ९६ ) 'चकोर्य एव चतुराश्चन्द्रिकापानकर्मणि ।
विनावन्तीर्न निपुणाः सुदृशो रतनर्मणि ॥'

( ९७ ) दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ॥ ५० ॥

( ९६ ) इत्थं साधर्म्येणैनामुदाहृत्य वैधर्म्येऽप्यस्याः सम्भव इति बोधयन्नुदाहरति-चकोर्य इति । बालरामायणस्थपद्यमिदम् । चन्द्रिकायाः कौमुद्यास्तद्वृत्तिजलबिन्दूनामित्यर्थः, पानकर्मणि पानकर्मविषये विषयसप्तमीयम्, चकोर्यस्तदाख्याः पक्षिविशेषा एव चतुरा निपुणाः। तथा च अवन्ती अवन्ति (उज्जयिनी) देशोद्भवाः नारीर्विना अन्याः सुदृशो नायिकाः विनापदञ्चात्रान्यार्थकम् , रतनर्मणि सुरतक्रीडायाम् "क्रीडा खेला च नर्म च" इत्यमरः, निपुणा न भवन्ति केवलमावन्त्य एव निपुणा इत्यर्थः तथा च यथाऽवन्त्य एव सुरतकेलिविषये निपुणास्तथा चकोर्यश्चन्द्रिकापानकर्मणि निपुणा इतिभावः ।
अत्र चातुर्यरूपो नैपुण्यरूपश्च धर्मः अभिन्न एव किन्तु कथितपदत्वदोषनिराकरणाय केवलं पृथक्पदेन निर्दिष्टः । तत्र च निषेधार्थकनञः सत्त्वात् नैपुण्ये चातुर्यवैपरीत्यं समुत्पन्नमितिवैधर्म्यम् । यद्वा अवन्त्य एव सुदृशो रतिनर्मणि निपुणा इत्येवंरूपे वैधर्म्यविपर्यये साधर्म्यपर्यवसानम्, चकोराणामावन्तीनाञ्च साम्यं स्फुटं प्रतीयमानमितिप्रतिवस्तूपमा ।

यथा वा—
"प्रतापरुद्र एवैकः पटीयान् जनरञ्जने ।
चन्द्रादृते क्षमो नान्यश्चकोरपरितोषणे ॥"

अत्र चन्द्रेण यथा चकोरपरितोषः क्रियते तथा प्रतापरुद्रेण जनरञ्जनं क्रियत इतिवैधर्म्येणौपम्यं प्रतीयत इति प्रतिवस्तूपमा ।

कुवलयानन्दकारास्तु—
"विद्वानेव हि जानाति विद्वज्जनपरिश्रमम् ।
न हि बन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥"
"यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् ।
न हि कस्तूरिकामोदः शपथेन विभाव्यते ॥"

इति वैधर्म्योदाहरणमुदाहरन्ति ।

( ९७ ) दृष्टान्तालङ्कारस्यापि प्रकृतसमर्थकत्वेन प्रतिवस्तूपमालक्षणानन्तरं दृष्टान्तालंकारं लक्षयति—दृष्टान्त इति । प्रतिवस्तूपमाभेदव्यञ्जनार्थमत्र 'तु' पदोपादानम् । धर्मस्य सदृशस्यैव न तु पुनः प्रतिवस्तूपमावदनतिरिक्तस्येत्यर्थः, वस्तुनः सामान्यधर्मस्य प्रतिबिम्बनं प्रतिबिम्बभावेन स्थापनं प्रस्तुतसमर्थनाय प्रणिधानगम्यसाम्यकतया विभिन्नवाक्येनोपपादनमित्यर्थः, प्रतिबिम्बनमिति भावे ल्युट्, दृष्टो ज्ञातप्रामाण्यकोऽन्तो दार्ष्टान्तिकवाक्यार्थनिश्चयसमर्थनीये समर्थकस्वरूपं सादृश्यमितियावत् यत्र स दृष्टान्त अत एव तदाख्यया प्रसिद्धोऽलङ्कारः स्यात् । अत्रापि पूर्वतो "वाक्ययो" रित्यनुवर्तते, वाक्यद्वयस्येति तदर्थः । उपमानोपमेययोरिति शेषः । तथा च यत्रोपमानोपमेयवाक्ययोः सतोस्तदुभयवर्तिनः समानधर्मिणः तात्पर्यगम्यसाम्यकतया विभिन्नवाक्येनोपादानं

( ६८ ) सधर्मस्येति प्रतिवस्तूपमाव्यवच्छेदः ।

( ६९ ) अयमपि साधर्म्यवैधर्म्याभ्यां द्विधा । क्रमेणोदाहरणम्—

(१००) 'अविदितगुणापि सत्कविभणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलापि हि हरति दृशं मालतीमाला ॥'

---

दृष्टान्त इति लक्षणं फलितम् । समानत्वञ्चात्र (क) समर्थ्यसमर्थकयोर्द्वयोरेव व्यापकत्वेन वा सजातीयत्वमवगन्तव्यम् । निदर्शनायामर्थान्तरन्यासे च नातिव्याप्तिः तत्र कदाचित् समर्थ्यस्य व्यापकत्वं सामान्यत्वं समर्थकस्य तु व्याप्यत्वं ( विशेषत्वम् ) कदाचिद्वा समर्थ्यस्य व्याप्यत्वं समर्थकस्य तु व्यापकत्वमित्यभ्युपगमात् ।

"मुखं तव तथा भाति यथा राजति चन्द्रमाः"

इत्यादौ वाच्यसाम्यायामुपमायामतिप्रसङ्गवारणाय तात्पर्यलभ्यसाम्यकतयेत्युक्तम् । एवं "मल्लापवर्जितैस्तेषाम्" इत्यादौ इवपदस्य विद्यमानत्वेन साम्यस्य वाच्यतया तात्पर्यलभ्यत्वाभावान्नातिव्याप्तिरित्यपि बोध्यम् ।

"मुखं भाति विधुर्व्योम्नि भाति भाग्येन साम्प्रतम्"

इत्यादावेकतात्पर्यलभ्यसाम्ये दीपकेऽतिप्रसक्तिवारणाय वाक्यान्तरेणेत्याभिधानम् ।

( ९८ ) ननु प्रतिविम्बनमित्यनेनैवेष्टसिद्धौ सधर्मस्येतिपदोपादानस्य किं प्रयोजनमत आह—सधर्मस्येति । सधर्मस्य उपमानोपमेयवर्त्तिनः साधारणधर्मस्येत्यर्थः, इति अनेन विशेषणेनेत्यर्थः, प्रतिवस्तूपमाया व्यवच्छेदो भेदः । तथाच तत्र उपमेयोपमानयोः ( समर्थ्यसमर्थकयोः ) निरुक्तदिशा एक एव धर्मः, अत्र तु सदृशत्वेन पृथगेव धर्मः, तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्य सदृशपदार्थत्वादित्याशयः ।

( ९९ ) प्रतिवस्तूपमावदस्यापि भेदमुपपादयति—अयमपीति । दृष्टान्तोऽपीत्यर्थः ।

( १०० ) तत्र प्रथमं साधर्म्ये उदाहरति—अविदितेति । स्वप्नवासवदत्तायाः पद्यमिदम् । सतां श्रेष्ठानां कवीनां भणितिर्वचनम् , न विदिता ज्ञाता गुणा माधुर्यादयो यस्याः सा तथोक्ता अपि किं पुनर्विदितगुणेतिशेषः, कर्णेषु श्रोतॄणामितिशेषः, मधुनो धाराम् उपचारात् रमणीयतातिशयं वमति उद्गिरति प्रकटयतीतितात्पर्यम् । तथाहि मालतीमाला मालतीपुष्पस्रक् अनधिगतोऽप्राप्तः परिमलः सौरभविशेषो यस्याः सा तथोक्ताऽपि "विमर्दोत्थे परिमलो गन्धे जनमनोहरे" इत्यमरः, दृशं नयनं हरति स्ववशं नयति । आर्याच्छन्दस्तल्लक्षणं चोक्तं प्रागेव ।

अत्र द्वितीयार्द्धे दृग्हरणरूपधर्मेण तुल्यधर्मितया मालतीमालया वाक्येन प्रतिपादनात् , तया च मालतीमालया सह पूर्वार्द्धवाक्यगतसत्कविभणितेः साम्यस्याभिधायकाभावात् तात्पर्यवशेनैव प्रतीयमानत्वाच्च दृष्टान्तः । वमनहरणयोर्द्वयोरेव भाववस्तुतया स्फुटं साधर्म्यम् । एवञ्च पूर्वार्द्धं समर्थनीयम् उत्तरार्धञ्च समर्थकमिति द्वयमपि विशेषरूपमेवेत्यवधेयम् ।

---

( क ) युक्त्युपपादनद्वारा विभिन्नवाक्येन यद्वाक्यं स्थिरीक्रियते तत् समर्थ्यं वाक्यम् , युक्त्युपादनद्वारा यच्च वाक्यं विभिन्नवाक्यं स्थिरीकरोति तत् समर्थकं वाक्यम् । ( व्याप्यव्यापकभावः सामान्यविशेषभावः ) ।

( १ ) 'त्वयि दृष्टे कुरङ्गाक्ष्याः स्रंसते मदनव्यथा ।
दृष्टानुदयभाजीन्दौ ग्लानिः कुमुदसंहतेः ॥'

( २ ) 'वसन्तलेखैकनिबद्धभावं परासु कान्तासु मनः कुतो नः ।
प्रफुल्लमल्लीमधुलम्पटः किं मधुव्रतः काङ्क्षति वल्लिमन्याम् ॥'

( ३ ) इदं पद्यं मम ।

( ४ ) अत्र 'मनः कुतो नः' इत्यस्य 'काङ्क्षति वल्लिमन्याम्' इत्यस्य चैक-रूपतयैव पर्यवसानात्प्रतिवस्तूपमैव ।

---

( १ ) इत्थं साधर्म्येणोदाहरणं प्रदर्श्य वैधर्म्येण प्रदर्शयति—त्वयीति । कान्तं प्रति कान्तादूत्या उक्तिरियम् । त्वयि कान्ते दृष्टे सति, कुरङ्गाक्ष्याः मृगलोचनायास्तव प्रियतमाया इत्यर्थः, मदनव्यथा कामपीडा त्वद्विरहमूलेतिशेषः, स्रंसते भ्रश्यति विनश्यतीतियावत् । तथाच इन्दौ चन्द्रे अनुदयभाजि अस्तं सेवमाने सति उदयमप्राप्तवति सतीत्यर्थः, कुमुदानां नक्तं प्रस्फुटितानां पद्मानां संहतेः पुञ्जस्य ग्लानिः प्रस्फुटनाभावः सङ्कोच इति यावत् दृष्टा अत्रापि कान्तदर्शनेन प्रस्फुटतया समानधर्मिणः कुमुदपुञ्जस्योत्तरार्द्धवाक्येन प्रतिपादनात् , तेन च कुमुदपुञ्जेन सह कुरङ्गाक्ष्याः सादृश्यस्याभिधायकाभावात् तात्पर्यवशेनैव प्रतीयमानत्वाच्च दृष्टान्तः । पूर्वार्द्धे मदनव्यथाया नाश उत्तरार्द्धे तु सङ्कोच इत्यसत्त्वसत्त्वाभ्यां द्वयोर्वैधर्म्यम् । एवञ्च प्रागवदेव द्वयमपि विशेष एवेत्यवधेयम् । नच वैधर्म्यव्यङ्ग्यप्रतिवस्तूपमातोऽस्याः को भेद इति वाच्यम् , तत्र वैधर्म्यं धर्मान्तरगतम् अत्र तूपमानगतम् , तथाच तत्र वैधर्म्येणैव व्यञ्जना, अत्र तूभयगताभ्यां साधर्म्यवैधर्म्याभ्यां व्यञ्जनेतिभेदात् ।

अत्र समर्थ्यसमर्थकयोर्विशेषरूपत्व एव "अविदित" "त्वयि दृष्टे" इत्युभयमुदाहरणमवगन्तव्यम् । समर्थ्यसमर्थकयोः साधर्म्यवैधर्म्ययोरुदाहरणे स्वयमूहनीये ।

(२) इत्थं द्विविधं दृष्टान्तमुदाहृत्य स्थलविशेषे दृष्टान्तप्रतिवस्तूपमयोः संशयनिराकरणायोदाहरति—वसन्तलेखैकेति। राज्ञ उक्तिरियम् । वसन्तलेखायां तदाख्यायां स्ववेश्यायाम् एको मुख्यो भावोऽनुरागो यस्य तथोक्तम् , न अस्माकं मनश्चित्तम्, परा सुवसन्तलेखातिरिक्तासु कान्तासु रमणीषु विषये कुतः कथं गच्छति ? अपि तु कथमपि नेत्यर्थः । तथाहि-प्रफुल्लता प्रस्फुटा या मल्ली मल्लिकाकुसुमं तस्य मधु रसः तत्र मधुपाने इत्यर्थः लम्पट समासक्तचित्तः, मधुव्रतो भ्रमरः, किम् अन्यां वल्लिं लतां "वल्ली तु व्रततिर्लता" इत्यमरः, काङ्क्षति ? अपि तु कथमपि नेत्यर्थः । उपेन्द्रवज्राच्छन्दस्तल्लक्षणन्तूक्तम् ।

( ३ ) अन्यदीयपद्यमाशङ्कमान आह—इदं पद्यं ममेति ।

( ४ ) नचात्रोदाहरणे एकत्राभाव एवोक्तार्थापत्तिद्वयेन वाक्यार्थनिश्चयात् प्रतिवस्तूपमालङ्कार उताहो मनोगमन-मधुव्रताकाङ्क्षयोर्धर्मयोः सादृश्यात् पार्थक्याच्च दृष्टान्तालङ्कार इति संशयं निराकर्तुमाह—अत्रेति । "मनः कुतो नः" इत्यस्य "वाक्यस्ये" ति शेषः । "काङ्क्षति वल्लिमन्याम्" इत्यस्य "वाक्यस्ये" तिशेषः । एकरूपतयैव "स्वरूपतो भेदेऽपीतिशेषः । पर्यवसानात् निश्चयात् । प्रतिवस्तूपमैव "न तु दृष्टान्त" इति शेषः। तथा च तथाविधपरनायिकाविषयकमनोगमनाकाङ्क्षयोः प्रतियोगिनोस्तात्पर्येऽन्वि-

( ५ ) इह तु कर्णे मधुधारावमनस्य नेत्रहरणस्य च साम्यमेव, न त्वैकरूप्यम् ।

( ६ ) अत्र समर्थ्यसमर्थकवाक्ययोः सामान्यविशेषभावोऽर्थान्तरन्यासः । प्रतिवस्तूपमादृष्टान्तयोस्तु न तथेति भेदः ।

( ७ ) संभवन्वस्तुसंबन्धोऽसंभवन् वापि कुत्रचित् ।
यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना ।। ५१ ।।

च्यमाणे ऐक्यात्तदभावयोरप्यैक्यमेव स्वीक्रियते लाघवादितिभावः । इत्थञ्च प्रतिवस्तूपमायां धर्मपदं शक्तिमत्पदार्थस्योपलक्षकमित्यवगन्तव्यम् ।

( ५ ) दृष्टान्ते धर्मस्य सादृश्यमेव न त्वैक्यमित्युपपादयति-इह त्विति "अविदितगुणापि" इत्यादौ त्वित्यर्थः। कर्णे जातावेकवचनम् । साम्यमेवेति । प्रेमोत्पादकस्य साधारणधर्मस्य कर्णावच्छेदेन दृगवच्छेदेन चात्मनि विद्यमानत्वादितिभावः । एतद्व्यवच्छेद्यं दर्शयति न त्वैकरूप्यमिति । न त्वनतिरिक्तधर्मत्वं यथार्थत एव क्रियाकारकयोर्भिन्नत्वादित्यभिप्रायः।

( ६ ) अर्थान्तरन्यासाद् द्वयोः प्रतिवस्तूपमादृष्टान्तयोर्भेदमुपपादयति—अत्रेति । समर्थ्यसमर्थकवाक्ययोः समर्थनीयसमर्थकयोर्वाक्ययोः पूर्वापरवाक्ययोरितियावत् । अर्थान्तरन्यास "इति बोध्यम्" इति शेषः । प्रतिवस्तूपमादृष्टान्तयोस्तु "समर्थ्यसमर्थकवाक्ययोःसामान्यविशेषभाव इति पूर्वतोऽनुवर्तनीयम् । न तथा "यथाऽर्थान्तरन्यास" इति शेषः, इति अर्थान्तरन्यासादितिशेषः, भेद "इति बोध्यमितिशेषः । तथाचार्थान्तरन्यासे समर्थ्यवाक्यस्य सामान्यत्वं ( व्यापकत्वम् ) अन्यस्य विशेषत्वं ( व्याप्यत्वम् ) अथवा समर्थकवाक्यस्य सामान्यत्वम् अन्यस्य तु विशेषत्वमावश्यकम्, एवमेव प्रतिवस्तूपमादृष्टान्तयोरप्युभयोर्वाक्ययोः परस्परं समर्थ्यसमर्थकभावो यद्यपि विद्यत एव किन्तु अर्थान्तरन्यासवत् वाक्यद्वयमध्ये एकस्य समान्यत्वम् अपरस्य विशेषत्वम् अथवा एकस्य विशेषत्वम् अपरस्य सामान्यत्वं न विद्यते, उभयोरपि वाक्ययोः सामान्यस्य विशेषत्वमेव स्वीकारादित्याशयः ।

( ७ ) सादृश्यमूलकालङ्कारस्य प्रकृतत्वात्तन्मूलकमेव निदर्शनालङ्कारं निरूपयति सम्भवन्निति । यत्र काव्ये वस्तुसम्बन्धः वाक्यार्थयोः पदार्थयोर्वान्वयः, धर्मधर्मिभावः इत्यर्थः कुत्रचित् सम्भवन् कस्या अपि विप्रतिपत्तेरभावादुपपद्यमानः वा अथवा कुत्रचिदप्यसम्भवन् बाधप्रतिभासात् अनुपपद्यमानः सन् यत्र तत् बिम्बानुबिम्बत्वं बिम्बप्रतिबिम्बभावं सादृश्यमितियावत् बोधयेत् व्यञ्जनावृत्त्या निरूपयेत् न तु अभिधया न वा लक्षयेदित्यर्थः सा निदर्शयति निश्चयेन सादृश्यम् ( उपमानोपमेयभावं बोधयतीति निदर्शना नाम अलङ्कारः । निदर्शनेति निपूर्वकाद्दृशेर्ण्यन्तात्स्त्रियां भावे युच् । तथाच उपमानोपमेयभावकल्पनायां पर्यवसितो वाक्यार्थो वा निदर्शनेतिनिष्कर्षः।

इयं च सम्भवद्वस्तुसम्बन्धा, असम्भवद्वस्तुसम्बन्धा चेति द्विविधा ।

तत्र सम्भवद्वस्तुसम्बन्धरूपायां निदर्शनायां वाक्ययोः सामान्यविशेषभावः, दृष्टान्ते तु न तथेति ततो भेदः । यद्यपि अर्थान्तरन्यासेऽपि वाक्ययोः सामान्यविशेषभाव इत्यभेदः प्रतीयते तथापि तत्र द्वितीयवाक्यं पूर्ववाक्यसमर्थकः, अत्र तु न तथेति ततोऽपि भेद एव । असम्भवद्वस्तुसम्बन्धरूपायां निदर्शनायान्तु वाक्यार्थोपपत्त्यभावः, दृष्टान्तार्थान्तरन्यासयोस्तु वाक्यार्थोपपत्तिर्भवत्येवेति परस्परं भेदः प्रकान्तरेण त्वन्यथाभेदोऽपि स्वयं वक्ष्यति ।

तत्र संभवद्वस्तुसंबन्धनिदर्शना यथा—

( ८ ) 'कोऽत्र भूमिवलये जनान्मुधा तापयन्सुचिरमेति संपदम् ।
वेदयन्निति दिनेन भानुमानाससाद चरमाचलं ततः ॥'

( ९ ) अत्र रवेरीदृशार्थवेदनक्रियायां वक्तृत्वेनान्वयः संभवत्येव । ईदृशार्थज्ञापनसमर्थचरमाचलप्राप्तिरूपधर्मवत्त्वात् । स च रवेरस्ताचलगमनस्य परितापिनां विपत्प्राप्तेश्च बिम्बप्रतिबिम्बभावं बोधयति । असंभवद्वस्तुनिदर्शना त्वेकवाक्यानेकवाक्यगतत्वेन द्विविधा । तत्रैकवाक्यगा यथा—

( १० ) 'कलयति कुवलयमालाललितं कुटिलः कटाक्षविक्षेपः ।
अधरः किसलयलीलामाननमस्याः कलानिधेर्विलासम् ॥'

( ११ ) अत्रान्यस्य धर्मं कथमन्यो वहत्विति कटाक्षविक्षेपादीनां कुवलय-

---

( ८ ) क्रमादुदाहरणं दर्शयति—कोऽत्रेति । अत्र अस्मिन् भूमिवलये क्षोणीमण्डले कः किंस्वरूपः किंनामा जनः, मुधा व्यर्थं जनान् प्राणिनः तापयन् सन्तापं जनयन् सन् सुचिरं चिरकालं सम्पदम् अभ्युदयम् एति प्राप्नोति न कोऽपीत्यर्थः । भानुमान् रश्मिमान् तेजस्वी सूर्य इत्यर्थः "भानू रश्मिदिवाकरौ" इत्यमरः, दिनेन दिनद्वारा अपवर्गे तृतीया इति वेदयन् ज्ञापयन्, चरमाचलम् अस्ताचलम्, आससाद प्राप्तवान् । रथोद्धताच्छन्दस्तल्लक्षणन्तूक्तं प्रागेव ।

( ९ ) उक्तोदाहरणे लक्षणं योजयति—अत्रेति । उदाहृते पद्य इत्यर्थः, ईदृशार्थस्य "कोऽत्रे"त्यादिपादद्वयात्मकः "कोऽपि जनो व्यर्थं जनान् तापयन् चिरकालं सम्पदं नाप्नोति" इत्यर्थस्य वेदनक्रियायां ज्ञापनक्रियायाम् । अन्वयः सम्बन्धः । अन्वयस्यावश्यम्भावे हेतुमुपपादयति-ईदृशार्थज्ञापनेत्यादिना । ईदृशार्थस्य उक्तपादद्वयात्मकवाक्यतात्पर्यार्थस्य ज्ञापनं वेदनं तत्र समर्थो योग्यो यश्चरमाचलप्राप्तिरूपो धर्मस्तद्वत्त्वात् रवेरित्यर्थः, स च ईदृशार्थवेदनक्रियायां सम्भवन् कर्तृत्वेनान्वयश्च, रवे रविसम्बन्धिनः । परितापिनां परितापकारिणाम् बिम्बप्रतिबिम्बभावं सादृश्यम् उपमानोपमेयभावमितियावत् । एवञ्च "यथा रविरुदयं प्राप्यात्यन्तं तेजसा प्रकाशमानोऽपि निरर्थकमन्यान् तापयन्नस्तं याति, तथाऽन्येऽपि अन्यान्निरर्थकं क्लेशयन्तो विपदं लभन्ते" इति सादृश्यम् ( उपमानोपमेयभावम् ) सोऽन्वयो व्यञ्जयतीत्यर्थः ।

( १० ) एकवाक्यगतामसम्भवद्वस्तुनिदर्शनामुदाहरति—कलयतीति । कस्याश्चिन्नायिकाया वर्णनमिदम् । अस्या नायिकायाः, कुटिलो वक्रः, कटाक्षविक्षेपः नेत्रप्रान्तेन दृष्टिपातः, कुवलयानि नीलाम्बुजानि तेषां माला पंक्तिस्तस्या ललितं सौन्दर्यम्, यद्वा ललितं विलासः "लड् विलासे" अस्माद्भावे क्तप्रत्यये लडयोरभेदाल्लेन निर्देशश्च, अधर ओष्ठकिसलयस्य पल्लवस्य "पल्लवोऽस्त्री किसलयम्" इत्यमरः, लीलां विलासम्, तथा आननं मुखं कलानिधेश्चन्द्रस्य विलासं शोभां कलयति रचयति दधातीत्यर्थः । गीतिश्छन्दस्तल्लक्षणं तूक्तं प्रागेव ।

( ११ ) अत्र सम्बन्धासम्भवमुपपादयन् लक्षणं सङ्गमयति—अत्रेति । कलनं प्रति "अन्यस्य धर्मं कथमन्यो वहतु" इति प्रतिबन्धस्य प्रदर्शनम् । कटाक्षविक्षेपादीनां कर्तृ-

मालादिगतललितादीनां कलनमसंभवात्तल्ललितादिसदृशं ललितादिकमवगमयत्कटाक्षविक्षेपादेः कुवलमालादेश्च बिम्बप्रतिबिम्बभावं बोधयति ।

( १२ ) यथा वा—

'प्रयाणे तव राजेन्द्र ! मुक्ता वैरिमृगीदृशाम् ।
राजहंसगतिः पद्भ्यामाननेन शशिद्युतिः ॥'

( १३ ) अत्र पादाभ्यामसंबद्धराजहंसगतेस्त्यागोऽनुपपन्न इति तयोस्तत्संबन्धः कल्प्यते, स चासंभवन्राजहंसगतिमिव गतिं बोधयति । अनेकवाक्यगा यथा—

( १४ ) 'इदं किलाव्याजमनोहरं वपुस्तपः क्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति ॥'

णाम्, ललितादीनां कर्मणाम्, एकत्र कर्तरि द्वितीये च कर्मणि षष्ठी । कलनं धारणम्, असम्भवत् अनुपपद्यमानं सत्, अवगमयत् ज्ञापयत् सत् । बिम्बप्रतिबिम्बभावं सादृश्यम् उपमानोपमेयभावमितियावत् बोधयति ज्ञापयति ।

केचित्तु एकवाक्यगतत्वे इत्थमुदाहरन्ति—

"त्वामन्तरात्मनि लसन्तमनन्तमज्ञा-
स्तीर्थेषु हन्त ! मदनान्तक ! शोधयन्तः ।
विस्मृत्य चैव तटमध्यपरिस्फुरन्तं
चिन्तामणिं शिशिरजःसु गवेषयन्ति ।"

अत्र शोधयन्त इति, गवेषयन्तीति द्वयोरर्थयोरेकवाक्यत्वादेकवाक्यगतत्वम् ।

( १२ ) भाव उदाहरणमुपपाद्य सम्प्रत्यभावेऽप्युदाहरणमुपपादयितुमाह—यथा वेति । प्रयाण इति । हे राजेन्द्र ! तव प्रयाणे विजययात्रायां सत्याम्, वैरिणां शत्रूणां या मृगीदृशः स्त्रियस्तासां पद्भ्यां चरणाभ्यां राजहंसगतिः 'राजहंसास्तु ते चञ्चुचरणैर्लोहिताः सिताः" इत्यमरः, तथा आननेन मुखेन शशिनश्चन्द्रस्य द्युतिः कान्तिः, मुक्ता परित्यक्ता । त्वामायान्तमाकर्ण्यैव त्रासेन शत्रुस्त्रीणां सलीलं स्थिरेण गमनं मुखोज्ज्वलत्वञ्च विलीनमितिभावः ।

( १३ ) उदाहृतमर्थमुपपादयति—अत्रेति । उक्तोदाहरणे इत्यर्थः, पादाभ्यां "वैरिमृगीदृशाम्" इति शेषः, असम्बद्धाऽनुपपन्ना अन्यधर्मस्य अन्यत्रासम्भवात् असौ राजहंसगतिस्तस्याः । अनुपपन्नः असम्भवः युक्त्याऽसिद्ध इत्यर्थः, इति हेतुना तयोः पादयोः तत्सम्बन्धो वैरिमृगीदृशां राजहंसगतिसम्बन्धः कल्प्यते कल्पयितुं शक्यते, स च वैरिमृगीदृशां पादयोः राजहंसगतिसम्बन्धश्चेत्यर्थः, असम्भवन् अन्यधर्मस्य अन्यत्र सम्बन्धासम्भवादितिभावः। एवम् आननेन शशिद्युतेस्त्यागोऽनुपपन्न इति तयोस्तत्सम्बन्धः कल्प्यते स चासम्भवन् शशिद्युतिमिव द्युतिमवगमयति" इत्यपि बोध्यम् ।

( १४ ) अनेकवाक्यगतामसम्भवद्वस्तुनिदर्शनामुदाहरति—इदमिति । शकुन्तलायां प्रथमेऽङ्के पद्यमिदम् । तपस्विनीमिव विपिने शकुन्तलामवलोक्य "असाधुदर्शी खलु भवान् कण्वः" इत्युक्तं समर्थयमानस्य दुष्यन्तस्योक्तिरियमिति वेदितव्यम् । व्याख्यातपूर्वञ्च ( १६९ पृ० ) ।

( १५ ) अत्र यत्तच्छब्दनिर्दिष्टवाक्यार्थयोरभेदेनान्वयोऽनुपपद्यमानस्तादृशवपुस्तपःक्षमत्वसाधनेच्छा नीलोत्पलपत्रधारया शमीलताछेदनेच्छेवेति बिम्बप्रतिबिम्बभावे पर्यवस्यति ।

( १६ ) यथा वा —

( १७ ) 'जन्मेदं वन्ध्यतां नीतं भवभोगोपलिप्सया ।
काचमूल्येन विक्रीतो हन्त ! चिन्तामणिर्मया ॥'

( १८ ) अत्र भवभोगलोभेन जन्मनो व्यर्थतानयनं काचमूल्येन चिन्तामणिविक्रय इवेति पर्यवसानम् ।

( १५ ) लक्ष्यं समर्थयति—अत्रेति । यत्तच्छब्दनिर्दिष्टवाक्यार्थयोः पूर्वार्धोत्तरार्धगतवाक्यद्वयान्तःपातिनोः तपःपरतासाधक-शमीलताछेदकरूपयोरुपमेयोपमानभूतयोऋषितक्षकविशेषयोः यः सः पदयोरित्यर्थः, अभेदेन अभिन्नत्वेन, अन्वयः सम्बन्धः, अनुपपद्यमान असम्भवन्, नीलोत्पलपत्रधारया शमीलताच्छेदनोद्योगस्याविधानात् कण्वऋषेरनुन्मत्तत्वादित्याशयः । तादृशमव्याजं यद्वपुस्तस्य तादृशवपुषः शकुन्तलाया अत्यन्तमृदुशरीरस्य । तपःक्षमत्वमित्यत्र त्वप्रत्ययः स्वार्थेऽवगन्तव्यः । शमीलताच्छेदनेच्छेव अयुक्तेति शेषः । बिम्बप्रतिबिम्बभावे सादृश्ये उपमानोपमेयभाव इत्यर्थः । अनेकवाक्यार्थगतत्वमेतस्या यत्तत्पदयोरनेकत्वादित्यवधेयम् । केचित्तु—

न केवलं यत्तदोर्द्वयोः शाब्दत्वे वाक्यनिदर्शनं किन्त्वेकस्यार्थत्वेऽपि यथा—

"शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥"

एवमेव—

"मृतानामपि जन्तूनां श्राद्धं चेत्तृप्तिकारणम् ।
निर्वाणस्य प्रदीपस्य स्नेहः संवर्द्धयेच्छिखाम् ॥"

"यश्चकारविवरं शिलाघने ताडकोरसि स रामसायकः ।
अप्रविष्टविषयस्य रक्षसां द्वारतामगमदन्तकस्य तत् ॥"

इत्यादावपि निदर्शनां वदन्ति ।

( १६ ) पुनरपि असम्भवद्वस्तुसम्भवनिदर्शनां प्रकारान्तरेणोदाहर्तुमाह—यथा वेति ।

( १७ ) उदाहरति—जन्मेदमिति । शान्तिशतके वीतरागस्योक्तिरियम् । मया भवः संसारस्तत्र यो भोगो विषयानन्दस्तस्योपलिप्सया लोभेन, इदं जन्म वन्ध्यतां निष्फलतां नीतं प्रापितम् । हन्त ! खेदे

"हन्त ! हर्षेऽनुकम्पायां विषादेऽपि" इत्यमरः,

काचमूल्येन चिन्तामणिस्तदाख्यो मनोरथपूरको दुष्प्राप्यमहामूल्यरत्नविशेषो विक्रीतो विक्रयः कृतः ।

( १८ ) समर्थयति—अत्रेति । व्यर्थतानयनं निष्फलत्वप्रापणम् । अत्र प्रतिपादयितुः काचमूल्येन चिन्तामणिविक्रयस्य विधानात् 'विक्रीत' इति विक्रयसम्बन्धो दुष्कर इत्यवधेयम् । यद्वा अयमपि विशेषः—"इदं किलाव्याज०" इत्यत्र यद्वाक्यार्थस्य तद्वाक्यार्थस्य च विद्यमानत्वेनानेकवाक्यगतत्वम् , अत्र पुनर्यत्तदोरसत्त्वेऽपि पूर्वार्धपरार्धयोर्वाक्ययोरेवानैक्यमिति ।

( १६ ) एवम्—

( २० ) 'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥'

( २१ ) अत्र मन्मत्या सूर्यवंशवर्णनमुडुपेन सागरतरणमिवेति पर्यवसानम् ।

( २२ ) इयं च क्वचिदुपमेयवृत्तस्योपमानेऽसंभवेऽपि भवति । यथा—

( २३ ) 'योऽनुभूतः कुरङ्गाक्ष्यास्तस्या मधुरिमाधरे ।
समास्वादि स मृद्वीकारसे रसविशारदैः ॥'

( २४ ) अत्र प्रकृतस्याधरस्य मधुरिमधर्मस्य द्राक्षारसेऽसंभवात्पूर्ववत्साम्ये पर्यवसानम्।

( २५ ) मालारूपापि यथा मम—

( १९ ) प्रतिपादितस्याविपरीत्येनासम्भवद्वस्तुसम्बन्धतामुपपादयितुमाह-एवमिति

( २० ) तत्र प्रसिद्धोदाहरणमाह—क्व सूर्येति । रघुवंशे प्रथमसर्गे स्वकीयमौद्धत्यमप· हर्तुकामस्य कालिदासस्योक्तिरियम् । सूर्यः प्रभवः उत्पत्तिस्थानं यस्य तादृशो वंशः कुलं क्व कुत्र, अल्पविषया स्तोकमात्रविषयावगाहिनी मतिर्बुद्धिर्मम क्व कुत्र द्वौ क्वौ महदन्तरं सूचयतः । तथाच मोहात् अज्ञानात् उडुपेन चर्मावनद्धवंशपात्रेण "चर्मावनद्धमुडुपं प्लवः काष्ठकरण्डवत्" इति सज्जनः, क्षुद्रनौकयेत्यर्थः, दुस्तरं सागरं तितीर्षुः तरितुमिच्छुरस्मि।

( २१ ) समर्थयति-अत्रेति । अयम्भावः—सूर्यवंशीयरघुवंशस्यात्यन्तबहुलतया सर्वथा तत्संख्यातुमपि न सम्भवति, तत्पुनः तस्य मामकीनयाऽनया कोमलया मत्या वर्णन· मत्यन्तमसम्भवमित्येवं प्रस्तूय ' तितीर्षु" रित्यादिप्रस्तुतम् , द्वयोश्च मिथोऽसम्बद्धत्वमेव उडुपेन सागरतरणमिव मन्मत्या सूर्यवंशीयवर्णनसम्भवमितीदृशं सादृश्यं बोधयतीति ज्ञेयम् ।

( २२ ) इत्थं भेदद्वयमुदाहृत्य भेदान्तरमुदाहर्त्तुमाह—इयञ्चेति । असम्भवद्वस्तुसम्ब· न्धनिदर्शना चेत्यर्थः । उपमेयवृत्तस्य उपमेये स्थितस्य धर्मस्येत्यर्थः ।

( २३ ) योऽनुभूत इति । तस्याः कुरङ्गाक्ष्या मृगलोचनायाः कान्तायाः अधरे ओष्ठे यो मधुरिमा माधुर्यम् , अनुभूतः रसविशारदैः रसास्वादाभिज्ञैः स मधुरिमा मृद्वीकारसे द्राक्षारसे समास्वादि सम्यगनुभूतः।

"मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च" इत्यमरः ।

( २४ ) उदाहृतमर्थं समर्थयति—अत्रेति । प्रकृतस्य प्रस्तुतत्त्वेन उपमेयस्य, अधरस्य "तत्सम्बन्धिनः" इति शेषः, यो मधुरिमधर्मस्तस्य, द्राक्षारसेऽप्रस्तुते उपमाने, असम्भ· वात् स्थित्यसम्बन्धात् अन्यधर्मस्य अन्यत्र स्थातुमशक्यत्वादित्याशयः । पूर्ववत् पूर्वमुदाहृते पद्य इव, साम्ये उपमानोपमेयभावकल्पने । पर्यवसानमिति । तथाच मृद्वीका· रसे सः अधरमधुरिमेति अभेदान्वयः अनुपपद्यमानः अधरमधुरिमेव मधुरिमेति उपमानो- पमेयभावं बोधयतीत्यभिप्रायः । उपमेयवृत्तस्यैव तूपमेयेऽसम्भवे नेयं, किन्तूपमैव यथा—

"लोचनं पङ्कजद्वेषि चन्द्रमःस्पर्द्धिते मुखम्" इति ।

अत्र द्वेषस्पर्द्धयोश्चेतनविशेषधर्मत्वान्मुखनेत्रयोरनुपपद्यमानत्वादुपमायां पर्यवसानम्।

( २५ ) प्रकारान्तरं दर्शयितुमाह—मालारूपाऽपीति । एकस्मिन्नुदाहरणे अनेकाऽपि असम्भवद्वस्तुसम्बन्धा निदर्शनेत्यर्थः ।

( २६ ) 'क्षिपसि शुकं वृषदंशकवदने मृगमर्पयसि मृगादनरदने ।
वितरसि तुरगं महिषविषाणे निदधच्चेतो भोगविताने ॥'

( २७ ) इह बिम्बप्रतिबिम्बताक्षेपं विना वाक्यार्थापर्यवसानम् । दृष्टान्ते तु पर्यवसितेन वाक्यार्थेन सामर्थ्याद्बिम्बप्रतिबिम्बताप्रत्यायनम् ।

( २८ ) नापीयमर्थापत्तिः । तत्र 'हारोऽयं हरिणाक्षीणाम्—' इत्यादौ सादृश्यपर्यवसानाभावात् ।

( २६ ) क्षिपसीति । भोगासक्तपुरुषं प्रति शान्तपुरुषस्योक्तिरियम् । हे पुरुष ! भोगविताने सांसारिकसुखभोगप्रपञ्चे, चेतश्चित्तं निदधत् स्थापयन् त्वम्, वृषदंशकस्य बिडालस्य "वृषदंशक आखुभुक्" इत्यमरः, वदने मुखे शुकं तदाख्यं पक्षिणं क्षिपसि अर्पयसि; मृगादनस्य मृगभक्षकस्य तरक्ष्वाख्यपशुविशेषस्य "तरक्षुस्तु मृगादनः" इत्यमरः, रदने दन्ते मृगं हरिणम् अर्पयसि क्षिपसि; तथा महिषस्य विषाणे शृङ्गे तुरगम् अश्वं वितरसि ददासि । पञ्चमटिकाच्छन्दस्तल्लक्षणन्तु प्रागेवोक्तम् ।

अत्र वैषयिकसुखानुभवसंताने चित्तं स्थापयन् पुरुषो न खलु वृषदंशकवदनादौ शुकमर्पयतीति कर्तॄणां तादात्म्येनान्वयोऽनुपपद्यमानः वैषयिकसुखानुभवसंताने चित्तस्थापनं वृषदंशकवदनादौ शुकक्षेपादिकमिव अनर्थकारणमिति उपमानोपमेयभावमवगमयतीत्यसम्भवद्वस्तुसम्बन्धा निदर्शना । तस्य चोपमानोपमेयभावबोधनस्य नानात्वात् सा मालारूपात्र निदर्शना ।

( २७ ) ननु प्रस्तुताप्रस्तुतयोरुपमानोपमेयभावस्य तात्पर्यगम्यत्वं दृष्टान्तेऽपि स्वीस्वीकारात्ततोऽस्याः को भेद इत्यत आह—इहेति । असम्भवद्वस्तुसम्बन्धरूपायां निदर्शनायामित्यर्थः । बिम्बं प्रस्तुतमुपमेयं वैषयिकसुखोपभोगेषु चित्तनिधानरूपम् , प्रतिबिम्बं प्रस्तुतमुपमानं मृगादनवदनादिषु शुकक्षेपादिकं च तयोर्भावस्तत्ता तस्या आक्षेपः कल्पनया स्वीकारस्तं तादृशं विना, वाक्यार्थस्योदाहृतपद्यरूपवाक्यप्रणिधानस्य अपर्यवसानमनुपपद्यमानत्वादपरिसमाप्तिः पर्यवसितेन उपपद्यमानत्वात् स्वयमेव परिसमाप्तेन । वाक्यार्थेन तदभिन्नादितियावत् तृतीयेयमभेदे । सामर्थ्यात् योग्यत्वात्, बिम्बप्रतिबिम्बताप्रत्यायनम् उपमानोपमेयभावबोधनम् । तथाच सम्भवद्वस्तुसम्बन्धरूपायां स्वतः स्थित्यसम्भववशात् बिम्बप्रतिबिम्बभावकल्पनयैव वाक्यार्थः सङ्गच्छते, दृष्टान्ते तु असम्भवाभावात् स्वयं सम्भाव्यमानेनैव वाक्यार्थेन योग्यतया बिम्बप्रतिबिम्बभावकल्पनेतिबिम्बप्रतिबिम्बभावकल्पनायाः पौर्वापर्येणैवानयोर्भेद इति तात्पर्यम् । सम्भवद्वस्तुसम्बन्धरूपनिदर्शनाया दृष्टान्तेन सह भेदस्तु पूर्वमेवोपपादितः ।

( २८ ) नन्वेवं वाक्यार्थोपपत्त्यभाववशेनैव उपमानोपमेयभावरूपस्यार्थस्य आपतनादर्थापत्तिरेव स्वीक्रियतामित्याशङ्क्याह—नापीति । इयं निदर्शना अर्थापत्तिरपि नेत्यन्वयः । हेतुमुपपादयति—तत्रेति । तस्यामर्थापत्तावित्यर्थः । "हारोऽयं हरिणाक्षीणाम् इत्यादावित्यत्रादिपदेन—

"लुठति स्तनमण्डले । मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः ॥"

इत्यस्य ग्रहणम् । सादृश्यपर्यवसानाभावात् अस्माकं स्तनमण्डले सुतरां लुठनमुचितमित्यस्यैव पर्यवसानेन सादृश्यपर्यवसानाभावादित्यर्थः । अत्र तु सादृश्यपर्यव-

( २९ ) आधिक्यमुपमेयस्योपमानान्न्यूनताथ वा ।
व्यतिरेकः—

( ३० ) स च—

( ३१ ) एक उक्तेऽनुक्ते हेतौ पुनस्त्रिधा ॥ ५२ ॥
चतुर्विधोऽपि साम्यस्य बोधनाच्छब्दतोऽर्थतः ।
आक्षेपाच्च द्वादशधा श्लेषेऽपीति त्रिरष्टधा ॥ ५३ ॥
प्रत्येकं स्यान्मिलित्वाष्टचत्वारिंशद्विधः पुनः ।

सानादिति वाक्यशेषः । एवञ्च सादृश्येतरार्थस्य आपतने अर्थापत्तिः, सादृश्यरूपार्थस्य आपतने तु निदर्शनेति स्पष्ट भेद इति भावः ।

( २९ ) प्राकरणिकसादृश्यप्रयुक्तमेव व्यतिरेकालङ्कारं निरूपयति—आधिक्यमिति । उपमानात् उपमानापेक्षया उपमानञ्चात्र प्रसिद्धमेव ग्राह्यम्, उपमेयस्य आधिक्यं गुणविशेषकृत उत्कर्षः, अथवा उपमानादुपमेयस्यन्यूनत्वाम्यूनत्वम् अपकर्ष इति यावत् व्यतिरेको विशेषेणातिरिच्यते उपमानादुपमेयं वैषम्येणावगम्यते येन स तथोक्तस्तन्नामालङ्कारो भवेत् ।

तथा च उपमानोपमेययोर्वैषम्यं ( वैधर्म्यं ) व्यतिरेक इति लक्षणं फलितम् ।

वैषम्यञ्च उपमानापेक्षया उपमेयस्य आधिक्येन न्यूनत्वेन वा भवतीत्यवधेयम् । उत्कर्षापकर्षभावश्च न रूपके, न वोपमायां, नापि परिणामादाविति विभावनीयम् ।

नन्वस्यालङ्कारस्य वैधर्म्यमूलकत्वेन साधर्म्यमूलाया उपमाया प्रतिकूलत्वात् कथमुपमामूलकत्वम्, नच मास्तु उपमामूलकत्वमिति वाच्यम्, सर्वालङ्कारिकमते व्यतिरेकस्य सादृश्यमूलकत्वस्यैव स्वीकारेण सिद्धान्तभङ्गप्रसङ्गादितिचेत्? सत्यम्, यद्गुणपुरस्कारेण यस्य यत्सादृश्यनिषेध उत्कर्षपर्यवसायी तस्य तद्गुणपुरस्कारेण तत्सादृश्याप्रतिष्ठानेऽपि गुणान्तरेण सादृश्यप्रत्ययस्य दुर्वारत्वात् । यदि च तत्सादृश्यसामान्यनिषेधो विवक्षितः स्यात् गुणविशेषपुरस्कारोऽनर्थकः स्यात्, "धनेनायमस्मादधिकः" इत्यभिहिते विद्यया रूपेण कुलेन च सम इति सर्वजनीनप्रत्ययात् । ननु तर्हि वैधर्म्यमूलोऽयमलङ्कार इति व्यपदेशो न स्यादितिचेत्? मैवम्, अत्र प्रतीयमानमपि सादृश्यं गुणान्तरकृतनिषेधोत्थापितेनोत्कर्षेण हतप्रभमिव बन्दीकृतमिव न चमत्कारविशेषमाधातुं प्रभवतीति तस्मात् वैधर्म्यप्रत्ययोऽत्रावश्यं तिष्ठतीति वैधर्म्यमूलकत्वेन स्वीकारे क्षतेरभावात् । एवञ्चात्र उपमानादुपमेयस्य येन केनापि प्रकारेणोत्कर्षः येन केनापि प्रकारेणापकर्ष इति व्याचक्षाणां सिद्धान्तवागीशानां मतमनुपादेयमेव । अतएव "उपमानादुपमेयस्य गुणविशेषवत्त्वेनोत्कर्षो व्यतिरेकः" इति नव्यादीनां लक्षणं सङ्गच्छते ।

उक्तलक्षणेन व्यतिरेकहेतुस्तावद्द्विविधः—उपमानापेक्षया उपमेयस्याधिक्ये एकः, उपमानापेक्षया उपमेयस्य न्यूनतायाञ्चापर इति फलति ।

( ३० ) द्विविधहेतुयुतमपि व्यतिरेकं विभजितुमाह—स चेति । उक्तदिशा द्विविधहेतुयुतो व्यतिरेकश्चेत्यर्थः ।

( ३१ ) विभजते—एक इति । हेतौ उपमानादुपमेयस्याधिक्यसाधके उपमानादुपमेयस्य न्यूनत्वसाधके वा उक्ते अभिहिते सति एक एकविधः, तथा हेतौ उपमेयादुपेय-

( ३२ ) उपमेयस्योपमानादाधिक्ये हेतुरुपमेयगतमुत्कर्षकारणमुपमानगतं निकर्षकारणं च ।

( ३३ ) तयोर्द्वयोरप्युक्तावेकः प्रत्येकं समुदायेन वानुक्तौ त्रिविध इति चतुर्विधेऽप्यस्मिन्नुपमानोपमेयत्वस्य निवेदनं शब्देन अर्थेन आक्षेपेण चेति द्वादशप्रकारोऽपि श्लेषे अपिशब्दादश्लेषेऽपीति चतुर्विंशतिप्रकारः ।

( ३४ ) उपमानान्न्यूनतायामप्यनयैव भङ्ग्या चतुर्विंशतिप्रकारतेति मिलित्वा अष्टचत्वारिंशत्प्रकारो व्यतिरेकः ।

उदाहरणम्—

( ३५ ) 'अकलङ्कं मुखं तस्या न कलङ्की विधुर्यथा ।'

( ३६ ) अत्रोपमेयगतमकलङ्कत्वमुपमानगतं च कलङ्कित्वं हेतुद्वयमप्युक्तम् ,

---

स्याधिक्यन्यूनत्वसाधके वा अनुक्ते अनभिहिते त्रिधा आधिक्यसाधकमात्रस्य न्यूनत्वसाधकमात्रस्य वा एतयोर्द्वयोर्वा अनुक्तौ त्रिप्रकारा इत्यर्थः । एवञ्च हेतोरुक्तत्वसम्पन्नेन एकविधेन सह हेतोरनुक्तत्वरूपसम्पन्नस्य त्रिविधस्य संयोजने चतुर्विधोऽपि स व्यतिरेकः साम्यस्य सादृश्यस्य उपमानोपमेयभावस्येत्यर्थः शब्दतः इवादिशब्दात्, अर्थतः तुल्यसदृशादिशब्दानामर्थवशात् आक्षेपात् व्यञ्जनावशाच्च बोधनात् ज्ञापनात् इवादेः प्रयोगे शब्देन साम्यबोधनात्, तुल्यादेश्च प्रयोगे आर्थेन, जयत्यादेश्च प्रयोगे आक्षेपेण बोधनादित्यर्थः, द्वादशधा द्वादशविधाः, चतुर्णां त्रिभिर्गुणने द्वादशोपपत्तेः । स च द्वादशविधश्लेषे अपिशब्दादश्लेषे च सम्भवतीति पुनर्द्वैविध्येन त्रिरष्टधा चतुर्विंशतिविधः अष्टानां त्रिभिर्गुणने चतुर्विंशत्युपपत्तेः । उपमानादुपमेयस्याधिक्ये चैते चतुर्विंशतिप्रकाराः, उपमानादुपमेयस्य न्यूनत्वे उक्ते एकः अनुक्ते त्रिधेति चतुर्विधोऽपि पूर्ववदेव चतुर्विंशतिप्रकारा इति, तेन च प्रत्येकं व्यतिरेकस्य भेदयोरेकैकमपेक्ष्य मिलित्वा चतुर्विंशतिविधानामुपमेयाधिक्यनिबन्धनव्यतिरेकाणां तावतामेवोपमेयन्यूनत्वनिबन्धनव्यतिरेकाणां चैकत्र व्यतिरेकाभिन्नत्वेनाकलनादितिभावः, अष्टचत्वारिंशद्विधः स्यात् चतुर्विंशतेर्द्वैगुण्ये अष्टचत्वारिंशदुपपत्तेः ।

( ३२ ) कारिकार्थं विवृणोति—उपमेयस्येति । निकर्षकारणञ्च अपकर्षसाधकञ्च ।

( ३३ ) तयोरिति । प्रत्येकमिति । केवलोपमेयगताधिक्यसाधकस्य केवलोपमानगतन्यूनत्वसाधकस्य वेत्यर्थः । समुदायेन तयोर्द्वयोर्वा इत्याशयः । अस्मिन् व्यतिरेकसामान्ये ( निवेदनं ज्ञापनम् ) अर्थेन तुल्यसदृशादिशब्दानामर्थेन । आक्षेपेण व्यञ्जनया ।

( ३४ ) उपमानादिति । उपमेयस्येति शेषः । भङ्ग्या दिशा । ननु द्वयोरपि हेत्वोरनुक्तौ कथमुपमेयाधिक्यमिति चेत् ।

''इन्दीवरपलाशाक्ष्यास्तस्या नाम्बुजवद्गुणाः ।''

इत्यत्र नाम्बुजवदित्यनेन बोधितस्य अम्बुजाभावस्यैवोत्कर्षपर्यवसायितयाधिक्यरूपत्वात् ।

( ३५ ) उदाहरति—अकलङ्कमिति ।

तस्या नायिकाया कलङ्की विधुर्यथा मुखं तथा न किन्तु ततोऽधिकम्, यत अकलङ्कं मालिन्यांशशून्यम् ।

( ३६ ) अनेकान् भेदानत्रैवोपपादयितुमाह—अत्रेति । उपमेयगतं मुखनिष्ठम्,

यथाशब्दप्रतिपादनाच्च शाब्दमौपम्यम् ।

( ३७ ) अत्रैव 'न कलङ्किविधूपमम्' इति पाठ आर्थम् ।

( ३८ ) 'जयतीन्दुं कलङ्किनम्' इति पाठे त्विवादिवत्तुल्यादिपदविरहादाक्षिप्तम् ।

( ३९ ) अत्रैवाकलङ्कपदत्यागे उपमेयगतोत्कर्षकारणानुक्तिः । कलङ्किपदत्यागे चोपमानगतनिकर्षकारणानुक्तिः । द्वयोरनुक्तौ द्वयोरनुक्तिः । श्लेषे यथा—

( ४० ) 'अतिगाढगुणायाश्च नाब्जवद्भङ्गुरा गुणाः'

( ४१ ) अत्रेवार्थे वतिरिति शाब्दमौपम्यम् । उत्कर्षनिकर्षकारणयोर्द्वयोरप्युक्तिः ।

---

उपमानगतं विधुनिष्ठम् । हेतुद्वयं मुखोत्कर्षस्य विधुनिकर्षस्य च यथा सङ्ख्यं साधक-द्वयम् । इत्यसावुपमेयाधिक्यहेतुको व्यतिरेकः । यथाशब्देन प्रतिपादनात् कथनात्, साम्यस्येति शेषः, शाब्दं शब्दप्रतिपाद्यम् । उपमाप्रस्तावेऽस्य युक्तिरुपपादिता । अयञ्च श्लेषं विनैवेत्यवधेयम् ।

( ३७ ) विस्तरभियोदाहृतमेव पाठान्तरेणोदाहरणमाह—अत्रैवेति । "अकलङ्कं मुखं तस्या' इत्यादावेवेत्यर्थः । पाठे परिवृत्ते इति शेषः । आर्थम् अर्थवशादुपकल्प्यम् औप-म्यमिति पूर्वेण सम्बन्धः । अस्या युक्तिरपि उपमाप्रस्ताव उपपादिता ।

( ३८ ) जयतीति । इवादिवत् शाब्दौपम्याभिधायकस्य इवादिशब्दस्येव, तुल्यादि-पदविरहात् आर्थौपम्याभिधायकतुल्यादिशब्दस्याभावात् आक्षिप्तं व्यङ्ग्यम् औपम्य-मितिपूर्वेण सम्बन्धः ।

एवञ्च जयश्चात्र स्वाधीनविधानम्, तेन मुखकर्तृकचन्द्राधीनविधानस्यासम्भवात् जयत्यर्थबलेन व्यञ्जनाया औपम्यमाक्षिप्यत इत्याशयः ।

( ३९ ) इत्थं हेतोरुक्तावुदाहरणं प्रदर्श्य सम्प्रति संक्षेपेणैव हेतोरनुक्तावप्युदाहरणं दर्शयितुमाह—अत्रैवेति । अकलङ्कपदत्यागे—

"शोभते च मुखं तस्या न कलङ्की विधुर्यथा"

इति पाठे इत्यर्थः । उपमेयगताधिक्यसाधकस्य अकलङ्कत्वस्य अनुक्तिरनभिधानमि-त्येकप्रकारः । कलङ्किपदत्यागे "अकलङ्कं मुखं तस्याः शोभां नैति विधुर्यथा" इत्येवंपाठे-इत्यर्थः उपमानगतस्य विधिनिष्ठन्यूनत्वसाधकस्य कलङ्कित्वस्य अनुक्तिरनभिधानमिति द्वितीयः प्रकारः, द्वयोरुपमेयगताधिक्यसाधकाकलङ्कपदस्योपमानगतन्यूनत्वसाधककलङ्कि-पदस्य चेत्यर्थः, अनुक्तौ अनुपादाने "मनोहरं मुखं तस्याः शोभां नैति विधुर्यथा" इत्येवं पाठे इत्यर्थः, द्वयोरकलङ्कपदकलङ्किपदयोरनुक्तिरनुपादानमिति तृतीयः प्रकारः । अत्र चैवंरीत्या पाठेऽपि उपमेयभूतमुखस्योत्कर्षः उपमानभूतविधुसादृश्यप्रतिषेधादेव प्रतीयते इत्यवधेयम् ।

( ४० ) एवमश्लेष उदाहृत्य श्लेषेऽप्युदाहरति—अतिगाढेति ।

अत्यन्तं गाढा दृढाश्चिरस्थायिन इत्यर्थः, गुणाः सौन्दर्यानुरागादयः तन्तुविशेषा वा यस्यास्तस्या नायिकाया गुणास्त एव सौन्दर्यानुरागादयः तन्तुविशेषा वा "अब्जं कमलं तस्येव "अब्जं पद्मं विभावब्जम्" इति गोपालः, न भङ्गुरा न क्षयशीलाः ।

( ४१ ) समर्थयति—अत्रेति । उत्कर्षनिकर्षकारणयोः उपमेयभूतनायिकानिष्ठाधि-

गुणशब्दः श्लिष्टः ।

( ४२ ) अन्ये भेदाः पूर्ववदूह्याः ।

( ४३ ) एतानि चोपमेयस्योपमानादाधिक्ये उदाहरणानि ।

( ४४ ) न्यूनत्वे दिङ्मात्रं यथा—

( ४५ ) 'क्षीणः क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते सत्यम् ।
विरम प्रसीद सुन्दरि ! यौवनमनिवर्ति यातं तु ॥'

( ४६ ) अत्रोपमेयभूतयौवनास्थैर्यस्याधिक्यम् । तेनात्र 'उपमानादुपमेयस्याधिक्ये

क्यसाधकोपमानभूतनायिकानिष्ठन्यूनत्वसाधकातिगाढगुणत्वभङ्गुरत्वयोरुक्तेरित्यर्थः ।

( ४२ ) श्लेषे शाब्दमौपम्यमुपपाद्यार्थौपम्याद्युदाहरणमुपपादयितुमाह—अन्ये इति । आर्थाविशेषौपम्ये हेत्वनुक्तिनिबन्धनाश्चत्वारश्चेत्यर्थः । ऊह्याः स्वयमूहनीयाः । ते हि क्रमेण यथा—"अब्जवत्" इत्यत्र तुल्यार्थे वतिप्रत्यये आर्थौपम्यम् ,

"जयत्येषा गाढगुणाः प्रस्खलद्गुणमम्बुजम्"

इति पाठे इवादितुल्यादिपदासत्त्वादौपम्यमाक्षिप्तम् ( व्यङ्ग्यम् ) ।

"कुरङ्गायतनेत्राया नाब्जतुल्यस्खलद्गुणाः"

"इति पाठे उपमेयगताधिक्यहेत्वनुक्तिः,

"अतिगाढगुणायाश्च नाब्जतुल्यगुणाः किल"

इति पाठे उपमानगतन्यूनत्वहेत्वनुक्तिः ।

"चन्द्रमुख्याः कुरङ्गाक्ष्यास्तन्वङ्ग्या नाब्जवद्गुणाः"

इति पाठे च उपमानोपमेयनिष्ठयोराधिक्यन्यूनत्वहेत्वोर्द्वयोरप्यनुक्तिरितिविभाव- नीयम् ।

( ४३ ) एवमुदाहृत्य कस्यैतान्युदाहरणानीति बोधयितुमाह—एतानीति । उदाहर- णानि बोध्यानीति शेषः ।

( ४४ ) उपमेयादुपमानस्याधिक्यमुदाहर्तुमाह—न्यूनत्वे इति । उपमेयस्योपमाना- दितिशेषः । दिङ्मात्रमेकप्रकारमात्रमित्यर्थः । प्रकारान्तरोदाहरणानि तु स्वयमुन्नेया- नीति भावः ।

( ४५ ) क्षीणः क्षीणोऽपीति । काव्यालङ्कारे पद्यमिदम् । मानिनां प्रति प्रियहितका- रिणाः कस्यचित्सुहृद उक्तिरियम् । हे सुन्दरि ! शशी चन्द्रः कृष्णपक्षे सत्यं निश्चितमेव क्षीणः क्षीणोऽपि अत्यन्तकृशोऽपि पुनः शुक्लपक्षे भूयो भूयः पुनः पुनः अभिवर्धते, किन्तु यातं गतं यौवनं तु अनिवर्ति अपरावृत्तिशीलम् अतो हेतोः विरमनादिति शेषः मानं मुञ्चेत्यर्थः प्रसीद प्रसन्ना च भव, केवलं मानमोचनं नात्रोद्देश्यमित्याशयः । आर्याच्छन्द- स्तल्लक्षणन्तूक्तं प्राक् ।

अत्रोपमानभूतस्य शशिनः क्षयेऽपि पुनर्वृद्धिरित्याधिक्यम् , उपमेयभूतस्य यौवनस्य तु न पुनरावर्त्तनमितिन्यूनत्वम् इत्युपमेयापेक्षयोपमानस्योत्कर्षरूपो व्यतिरेकालङ्कार इति ग्रन्थकृतामाशयः । तथा चात्र द्वयोरप्याधिक्यन्यूनत्वकारणयोः पुनः पुनर्वृद्धिर- पुनर्वृद्ध्योरुक्तिः । तदनुक्तौ तु त्रैविध्यम् , अन्यप्रकारान्तरादिकञ्च स्वयमुदाहरणीयम् ।

( ४६ ) प्राचा अलङ्कारसर्वस्वकृता हि व्यतिरेकलक्षणम्—"उपमानादुपमेयस्याधिक्ये

विपर्यये वा व्यतिरेकः' इति केषांचिल्लक्षणे 'विपर्यये वेतिपदमनर्थकम्' इति यत्केचिदाहुः।

( ४७ ) तन्न विचारसहम्। तथाहि—अत्राधिकन्यूनत्वे सत्त्वासत्त्वे एव विवक्षिते। अत्र च चन्द्रापेक्षया यौवनस्यासत्त्वं स्फुटमेव ।

( ४८ ) अस्तु वात्रोदाहरणे यथाकथंचिद्गतिः ।

( ४९ ) 'हनूमदाद्यैर्यशसा, मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः ।'

---

विपर्यये वा व्यतिरेकइति व्यथाापि तदनुसारेणैवात्र व्यतिरेकलक्षणं ग्रन्थकृताऽपि विहितम्। तत्रालङ्कारसर्वस्वकृतामुपरि अलङ्कारकौस्तुभकृता यद्दूषणं दत्तं तत्स्वकीयलक्षणेऽप्यापद्यत इति तामलङ्कारकौस्तुभकृदुक्तिं निरसितुमुत्थापयति—मत्रोपमेयभूतेति। अत्र "क्षीणः क्षीणोऽपि" इत्याद्युपमेयभूतं यद्यौवनं तस्यास्थैर्यम् उपमानभूतचन्द्रापेक्षया न्यूनत्वावसायि चाञ्चल्यं तस्य आधिक्यमुत्कर्षः यौवनास्थैर्यस्य चिरकालस्थायित्वात्, चन्द्रास्थैर्यस्य तु कतिपयदिनमात्रवर्तित्वादितिभावः। तेन उपमानादुपमेयस्योत्कर्षमात्रोक्तावेव क्वापि दोषाप्रसक्त्या, अत्र व्यतिरेकप्रकरणे। विपर्यये अनाधिक्ये न्यूनत्वे इति यावत्। केषाञ्चित् अलङ्कारसर्वस्वकाराणाम्। अनर्थकमनुपयुक्तम् उपमानाधिक्ये उपमेयन्यूनत्वे व्यतिरेकस्यैवानङ्गीकारादित्याशयः। केचित् अलङ्कारकौस्तुभकाराः।

( ४७ ) निराकरोति—तन्नेति। विचारसहं वितर्कभारधारणयोग्यम्। असमीचीनत्वेन दुर्बलत्वादित्याशयः। अत्र व्यतिरेकलक्षणे, अधिकन्यूनत्वे उत्कर्षापकर्षे उपमानोपमेययोरितिशेषः, सत्त्वासत्त्वे एव स्थैर्यास्थैर्ये एव विवक्षिते अलङ्कारसर्वस्वकृता तदनुसारिणा मया चेति शेषः। नन्वेवमपि उक्तोदाहरणे सत्त्वासत्त्वयोः किमस्तीतिजिज्ञासायामाह—अत्र चेति। "क्षीणः क्षीण" इत्यादौ चेत्यर्थः। चन्द्रापेक्षयोपमानापेक्षया, यौवनस्योपमेयस्य असत्त्वमस्थैर्यम्, स्फुटमेव अपुनर्वृद्धिनाशशालित्वादित्यभिप्रायः।

( ४८ ) ननु विवक्षायां नियमाभावेन यथा भवद्भिश्चन्द्रयौवनयोः सादृश्यं विवक्षितं तथा नास्ति किन्तु तत्क्षययोः, तत्र चन्द्रक्षयस्य स्वबाध्यतयाधिक्यम्, मानप्रसादानुगुणतया प्रकृतवाक्यार्थानुगुणत्वात्। तथाचात्रायं हि समुदितोऽर्थः—चन्द्रो हि पुनः पुनरागमनेन लोके सुलभः अतो न तादृशमाहात्म्यशाली, इदं पुनर्यौवनमपुनरागमनेनातिदुर्लभमिति मानादिभिरन्तरायैः परमचतुरया भवत्या मुधा गमयितुं न युक्तम्" इति अन्यथा चन्द्रस्यैवाधिक्ये "किमित्यस्य क्षुद्रस्य यौवनस्यार्थे मया मानाद्विरंस्यते गच्छतु नाम यौवनम् इति विपरीतेनार्थेन प्राकरणिकार्थस्यापुष्टतापत्तेस्तस्मादत्रोपमानस्याधिक्ये व्यतिरेकालङ्कार इत्ययुक्तमित्याशयेनोदाहरणान्तरं प्रदर्शयितुमाह—अस्तु वेति। अत्रोदाहरणे "क्षीणः क्षीणोऽपि" इत्यादौ यथाकथञ्चित् यौवनास्थैर्यरूपेणोत्कर्षविवक्षया गतिर्निर्वाहः लक्षणसमन्वयोपायः।

( ४९ ) हनूमदाद्यैरिति। नैषधनवमसर्गे दमयन्तीं प्रति देवदूतभूतस्य नलस्य दौत्यफलासिद्ध्या विषादोक्तिरियम्। अस्य पूर्वार्धन्तु—

"स्वनाम यन्नाम मुधाभ्यधामहं महेन्द्रकार्यं महदेतदुज्झितम्" इति।

हनूमदाद्यैर्हनूमत्प्रभृतिभिर्दूतैः दूतपथो दौत्यविषयः यशसा स्वस्वामिनो यथाभिम·

( ५० ) इत्यादिषु का गतिरिति सुष्ठूक्तं 'न्यूनताथवा' इति ।

---

तार्थानुष्ठानजन्यया प्रशंसया सितीकृत उज्ज्वलीकृतः, मया पुनर्दूतेन ह्रिषां ह्रसैः शत्रूणां ह्रास्यैर्न तु यशसेतिशेषः स दूतपथः सितीकृत इत्यर्थः । वंशस्थं छन्दस्तल्लक्षणं चोक्तं प्राक् ( २०६ पृ० ) ।

( ५० ) इत्यादिष्विति । का गतिर्व्यतिरेकसद्भावस्य क उपायः ? । तथा च दूतपथस्य हनूमदाद्युपमानापेक्षया उपमेयभूतस्य नलस्य न्यूनत्वप्रतीतेरेव व्यतिरेकवाच्यत्वात् तस्य च "विपर्यये वा" इति कथनमन्तरा न सम्भवतीत्याशयः । इति हेतोः "न्यूनताऽथवा" इति सुष्ठूक्तम् औचित्येन समीचीनं प्रतिपादितम्, "विपर्यये वा" इत्युक्तानुसारादिति· भावः । तथा चाहुरत्र तर्कवागीशा अपि—

अत्र प्रभुप्रयोजननिष्पादकत्वेन हनूमदादेरुपमानस्योत्कृष्टत्वं तद्व्यतिरेकेणोपमेयस्य नलस्यापकृष्टत्वं च प्रतीयते । अत्र दूतयोरुपमानोपमेयभावविवक्षणेऽपि उपमानस्यैवा· धिक्यं न तूपमेयस्येति । परे तु—यदि नलमहीपतेः स्वनिन्दया कथनिर्वेदातिशयरूप· प्रकृतवाक्यार्थे दूतगतन्यूनताया एवानुगुणत्वेनाधिक्यरूपत्वामितिविभाव्यते तदा "न्यून· ताऽथवे"ति लक्षणे न निवेशनीयम् । अतएव प्रकाशकृतः 'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः' इति लक्षणं सङ्गच्छते । उपमानापेक्षया उपमेयस्य गुणविशेषकृत उत्कर्षो व्यतिरेको न तूपमानस्योत्कर्ष इति तदाशयः ।

एतेन—

"रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै·
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे ! मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक ! केवलमहं धात्रा सशोकः कृतः ॥"

अत्र सशोकत्वेनाशोकापेक्षयापकर्षः पर्यवस्यति" इति यदुक्तं तदपास्तम् । सशोक· त्वेन तद्भिन्नचेतनत्वसहृदयत्वादिभिर्गुणाधिक्यस्यैव सत्त्वात् । तथा—

"न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः ।
तथापि जितमेवासीदमुया भुवनत्रयम् ॥"

इत्यादावपि कठोरतीक्ष्णास्त्ररहितस्य भुवनत्रयजये उत्कर्षातिशयप्राप्त्याभावरूप· विशेषणस्याप्याधिक्यमात्रसंपादकत्वान्न दोषः । एवम्—

"पादाहतं यदुत्थाय मूर्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥"

इत्यादावपि नोपमानादुपमेयाधिक्यमित्यनुसन्धेयम् । यदि तु न्यूनत्वमपि व्यतिरेक इत्याग्रहस्तदेदमुदाहार्यम्—

"जगत्त्रयत्राणधृतव्रतस्य क्षमातलं केवलमेव रक्षन् ।
कथं समारोहसि हन्त ! राजन् ! सहस्रनेत्रस्य तुलां द्विनेत्रः ॥"

अत्र धर्मद्वयेनैव न्यूनोऽसि धर्मान्तरेण तु तुल्य इति प्रतिकृतचमत्कारातिशयादल· ङ्कारता । एवञ्च लक्षणे न्यूनत्वमप्येवं जातीयो देय इति नव्याः ।

मालाप्रतिवस्तूपमावत् मालाव्यतिरेकोऽपि सम्भवति। तस्यापि भेदाः पूर्ववदेवोह्याः। दिङ्मात्रमुदाह्रियते यथा—

"हरवन्न विषमदृष्टिर्हरिवन्न विभो! विधूतविततवृषः।
रविवन्न चातिदुःसहकरतापितभूः कदाचिदसि॥"

अत्र राजा उपमेयः, हरादिरुपमानम्, विषमादयः शब्दाः श्लिष्टा विषमदृष्टित्वमपकर्षहेतुरुक्तः, समदृष्टित्वमुत्कर्षहेतुरनुक्तः हरवदित्यादौ तुल्यार्थे विहितस्य वतिप्रत्ययस्य सत्त्वादार्थसाम्यम्। एकस्यैवोपमेयस्य बहूपमानापेक्षया आधिक्यवर्णनान्मालारूपतेत्युद्योतादौ स्पष्टम्।

अलङ्कारोत्थापितोऽप्ययं संभवति। यथा—

"ईश्वरेण समो ब्रह्मा पिता साक्षान्महेश्वरः।
पार्वत्या सदृशी लक्ष्मीर्माता मातुः समा भुवि॥
पिताऽस्य काष्ठसदृशः स्वयं पावकसन्निभः॥"

अत्र त्रिषु पद्यार्धेषु चरमेष्वष्टाक्षरेषु यथाक्रमं गृहीताः रूपकम्, अनन्वयः, उपमा चेति श्लेषातिरिक्तालङ्कारा उपमेयाऽधिक्यस्य हेतवः, प्रथमेष्वष्टाक्षरेषूपात्ता उपमाश्च उपमानन्यूनत्वस्य हेतवः। तथा सादृश्यनिषेधसम्बद्धोऽभेदसम्बद्धश्चाप्ययं यथाक्रमेण—

"अरुणमपि विद्रुमद्रुं मृदुलतरं चापि किसलयं बाले?।
अधरीकरोति नितरां तवाधरो मधुरिमातिशयात्॥"

"निष्कलङ्क! निरातङ्क! चतुःषष्टिकलाधर!।
सदापूर्ण! महीप! त्वं चन्द्रोऽसीति मृषा वचः॥"

अत्राद्ये "अरुणोऽपि विद्रुमद्रुमः तवाधरसदृशो नास्ती"ति-सादृश्यनिषेधसम्बद्धो व्यतिरेकः। द्वितीये हि चन्द्रस्तु सकलङ्कः उपरागे सातङ्कः षोडशकलः सदा न पूर्ण इति, अत एव तद्धर्मरहितचन्द्राभिन्नत्वमिति अभेदसम्बद्धोऽयं व्यतिरेकः।

सुबोधाय ग्रन्थकृद्दर्शितदिशा व्यतिरेकभेदसङ्कलनं विधीयते—

- उपमानादुपमेयस्योत्कर्षे २४
  - श्लेषे १२
    - शाब्दौपम्ये — ४
      - उपमेयगताधिक्यहेतुः उपमानगतन्यूनत्वहेतुश्च अनयोर्द्वयोरेवोपादाने १
      - केवलोपमेयगताधिक्यहेत्वनुपादाने १
      - केवलोपमानगताधिक्यहेत्वनुपादाने १
      - तयोर्द्वयोरेवानुपादाने १
    - आर्थौपम्ये दर्शितदिशा ४
    - आक्षिप्तौपम्ये दर्शितदिशा ४
  - अश्लेषे १२
    - शाब्दौपम्ये दर्शितदिशा ४
    - आर्थौपम्ये दर्शितदिशा ४
    - आक्षिप्तौपम्ये दर्शितदिशा ४

**( ५१ ) सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः ॥ ५४ ॥**
**सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत् ।**

- उपमानादुपमेयस्य न्यूनत्वे २४
  - श्लेषे १२
    - शाब्दौपम्ये — ४
      - उपमानगताधिक्यहेतुरुपमेयगतन्यूनत्वहेतुरनयोर्द्वयोरेवानुपादाने ……… १
      - केवलोपमानगताधिक्यहेत्वनुपादाने ……… १
      - केवलोपमेयगतन्यूनत्वहेत्वनुपादाने १
      - तयोर्द्वयोरेवानुपादाने …… १
    - आर्थौपम्ये ……… दर्शितदिशा ……… ४
    - आक्षिप्तौपम्ये ……… दर्शितदिशा ……… ४
  - अश्लेषे १२
    - शाब्दौपम्ये ……… दर्शितदिशा ……… ४
    - आर्थौपम्ये ……… दर्शितदिशा ……… ४
    - आक्षिप्तौपम्ये ……… दर्शितदिशा ……… ४

४८

( ५१ ) कथमपि प्रकृतसादृश्यमूलकत्वादेव सहोक्त्यलङ्कारं लक्षयति—सहार्थस्येति । अत्र यत्रेतिपदं यदार्थकमव्ययम् । यदा अतिशयोक्तिः भेदे अभेदाध्यवसायमूला कार्यकारणयोः पौर्वापर्यविपर्ययरूपा चातिशयोक्तिरित्यर्थः मूलभूता चमत्कारविशेषाधायकतया प्रयोजिका भवेत्, तदा सहार्थस्य साहित्यार्थकस्य शब्दस्य साकं सार्धं समं सजुरित्याद्यन्यतमस्य पदस्येति यावत् बलात् सामर्थ्यात् एकं पदम् द्वयोः पदार्थयोः यत्र यद्वाचकं लक्षणया अन्वयि भवेत्, सा सहोक्तिर्नाम अलङ्कारोत् भवे ।

एवञ्च—मूलभूतातिशयोक्तेर्विद्यमानत्वे सति सहार्थकशब्दप्रयोज्य एकपदार्थस्यानेकपदार्थे सम्बन्धः सहोक्तिरितिलक्षणं फलितम् । 'लक्ष्मणेन समं रामः काननं गहनं ययौ" इत्यादावतिव्याप्तिवारणाय सत्यन्तदलोपादानम् । एतच्चवृत्तावपि स्फुटीभविष्यति । "सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्" इति काव्यप्रकाशकृल्लक्षणमेतेनाननुमतं भवतीतिध्वनितम् । यदि चोक्तस्थले विच्छित्तिविशेषाभावेनालङ्कारसामान्यलक्षणस्यैवाप्रवृत्तेः विशेषलक्षणस्यापि प्रवृत्त्यसम्भवादतिव्याप्त्यसम्भव एवेति विभाव्यते तदा स्वरूपमात्रप्रतिपादनार्थमेव सत्यन्तदलोपादानम् "कमलमिव मुखं मनोज्ञम्" इत्यत्र एकमनोज्ञत्वपदार्थस्य कमले मुखे च सम्बन्धेऽपि अतिव्याप्तिवारणाय सहार्थकशब्दप्रयोज्य' इत्युपादानम् । सह सहार्थकस्य उक्तिः सहोक्तिरित्यन्वर्थेयं संज्ञा ।

अत्र सहशब्दार्थः साहित्यम् तच्चैकजातीयैककालिकक्रियाद्यन्वयित्वसमनियतम् । यथा "पुत्रेण सहागतः पिता" इति ।

अत्र "आगत" इतिपदं पितापुत्ररूपोभयान्वय्यागमनबोधकम् । पुत्रप्रतियोगिकसाहित्यवान् पिता आगत इतिशाब्दबोधः । पुत्रवृत्त्यागमनसमानकालिकसमानदेशागमनवान् पितेतिमानसो बोधः । अत्र तृतीयान्तस्य "पुत्रेण" इत्यस्य विशेषणतया

( ५२ ) अतिशयोक्तिरप्यत्राभेदाध्यवसायमूला कार्यकारणपौर्वापर्यविपर्ययरूपा च । अभेदाध्यवसायमूलापि श्लेषभित्तिकान्यथा च । क्रमेणोदाहरणम्—

( ५३ ) 'सहाधरदलेनास्या यौवने रागभाक्प्रियः ।'

( ५४ ) अत्र रागपदे श्लेषः ।

---

गुणत्वम् प्रथमान्तस्य विशेष्यतया प्रधानत्वम् । एवञ्च प्रथमान्ते आगमनस्य शाब्दोऽन्वयः, तृतीयान्ते तु तस्य सहार्थसामर्थ्यादार्थः । तथा च यत्र "सह युक्तेऽप्रधाने" २।३।१९ इति पा० सूत्रेण सहार्थयोगेऽप्रधाने तृतीया विहिता तत्रैवायमलङ्कारः गुणप्रधानभावावच्छिन्नयोः शाब्दार्थमर्यादयो एकधर्मसम्बन्धस्य तत्रैवोपस्थितेः। वक्ष्यमाणे समुच्चये तूभयत्र प्राधान्यम्,एकान्वये च शाब्द एवेति ततो भेदः । "चैत्रमैत्रैः सह गच्छत।" इत्यादावपि तथैवेति नास्य विषयः । "चैत्रमैत्रौ गच्छत" इत्यादौ तु शब्दशक्त्यैवोभयाभिधानमिति तत्रापि नास्य विषयः । एतेन—

शशिना च निशा निशया च शशी शशिना निशया च विभाति नभः ।
पयसा कमलं कमलेन पयः पयसा कमलेन विभाति सरः ॥

इत्यादौ कुतो नायमलङ्कार इति शङ्का परास्ता, शशिनेत्यादेर्हि "हेतौ" २।३।२३ इतिसूत्रेण "पुण्येन दृष्टो हरिः" इत्यादिवत् हेत्वर्थे तृतीयाविधानात्। एवञ्च कोऽत्रालङ्कार इतिजिज्ञासायां वक्ष्यमाणान्योन्याख्यालङ्कारस्यैव स्वीकर्तुमुचितत्वात् अतएव कुवलयानन्देऽन्योन्यालङ्कारस्योदाहरणम्—

"त्रियामा शशिना भाति शशी भाति त्रियामया।"

इति दत्तमित्यवधेयम् । स्पष्टञ्चेदमुद्योतवामनीयादिषु ।

नन्वेतावतावता "पुत्रेण सहागतः पिता" इत्यादावयमलङ्कारः स्यादेवेतिचेत् ! सर्वत्र विच्छित्तिविशेषस्यैवालङ्कारत्वाभ्युपगमादित्युक्तं मुहुर्मुहुरस्माभिः । विच्छित्तिविशेषश्चास्या श्लेषाश्रयकाभेदाध्यवसानात्मकेन केवलाभेदाध्यवसानेन वातिशयेन भवतीत्यदोषः ।

( ५२ ) लक्षणे अतिशयोक्तिपदमतिशयोक्तिविशेषपरमेव तथैव सम्भवात्, न तु अतिशयोक्तिसामान्यपरम् असम्भवादितिसूचयितुमाह—अतिशयोक्तिरिति । अभेदाध्यवसायमूला भेदे अभेदाध्यवसायरूपा श्लेषभित्तिका भित्तिराश्रयः श्लेषाश्रितेत्यर्थः श्लेषप्रतिपन्नभेदमूलेतितात्पर्यम्, अन्यथा अश्लेषभित्तिका सम्बन्धिभेदाद्वगतभेदमूलेत्यर्थः।

( ५३ ) तत्र श्लेषप्रतिपन्नभेदे अभेदाध्यवयरूपातिशयोक्तिमूलां सहोक्तिमुदाहरति—सहाधरेति । अस्य पूरणं व्याख्यानञ्च पूर्वमेवोपपादितम् । सहशब्दयोगे अधरदलेनेत्यत्र तृतीया, रागभाक् इतिपदं वस्तु वा अधरप्रिययोरन्वयिरागभजनबोधकम्, यौवन इति सतिसप्तम्याः समानकालीनत्वमर्थः एवञ्च अधरदलप्रतियोगिकयौवनसमानकालीनसाहित्यशाली प्रियो रागभाक् इति शाब्दबोधः । अत्र तृतीयान्तस्य विशेषणतया गुणत्वम्, प्रथमान्तस्य विशेष्यतया प्रधानत्वम् तथाच प्रथमान्ते रागभजनस्य शाब्दः तृतीयान्ते सहार्थसामर्थ्यादार्थः ।

( ५४ ) उदाहरणार्थं दर्शयति—अत्रेति । अधरदलस्य रागो लौहित्यम्, प्रियस्य रागश्च अनुरागः प्रेम इतियावत्, इति रागपदे श्लेषः । तेन लौहित्यानुरागयोर्भेदेऽपि

( ५५ ) 'सह कुमुदकदम्बैः काममुल्लासयन्तः
सह घनतिमिरौघैर्धैर्यमुत्सारयन्तः ।
सह सरसिजषण्डैः स्वान्तमामीलयन्तः
प्रतिदिशममृतांशोरंशवः सञ्चरन्ति ॥'

( ५६ ) इदं मम ।

( ५७ ) अत्रोल्लासादीनां संबन्धिभेदादेव भेदः, न तु श्लिष्टतया ।

( ५८ ) 'सममेव नराधिपेन सा गुरुसंमोहविलुप्तचेतना ।
अगमत् सह तैलबिन्दुना ननु दीपार्चिरिव क्षितेस्तलम् ॥'

---

अभेदाध्यवसायादतिशयोक्तिः तद्वशात् सहशब्दार्थवशाच्च एकरागभाक्पदस्यार्थः अधर-दलेन न प्रियेण च सह सम्बन्ध्यत इति श्लेषप्रतिपन्नभेदे अभेदाध्यवसायरूपातिशयो-क्तिमूला सहोक्तिः । यथा—

बहु मन्यामहे राजन् वयं भवतः कृतिम् ।
विपद्भिः सह दीयन्ते सम्पदो भवता यतः ॥"

अत्र हि "दीयन्त" इति श्लिष्टम् ।

( ५५ ) एवं श्लेषप्रतिपन्नभेदमूलामुदाहृत्य सम्बन्धिभेदादवगतभेदमूलामुदाहरति—सहकुमुदकदम्बैरिति । कुमुदानां रात्रिविकसनशालिनां कमलानां कदम्बानि समूहास्तैः कैरवपुञ्जैरित्यर्थः सह कामं कन्दर्पम् उल्लासयन्तो विकाशयन्तो वर्धयन्तश्च, घनाः सान्द्रा ये तिमिरौघा अन्धकारपुञ्जास्तैः सह धैर्यम् चित्तस्थिरताम् उत्सारयन्तः सम्ब-न्धाभावं विनाशं वा नयन्तः, तथा सरसिजषण्डैः पङ्कजसमूहैः "अब्जादिकदम्बे षण्डम स्त्रियाम्" इत्यमरः, सह स्वान्तं हृदयं "स्वान्तं हृन्मानसं मनः" इत्यमरः, आमील यन्तः सङ्कोचयन्तः कामवेगेन विषयान्तरादाकर्षयन्तो वा अमृतांशोरंशाश्चन्द्रस्य रश्मयः प्रतिदिशं सर्वासु दिक्षु सञ्चरन्ति प्रसरन्ति । मालिनीच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

( ५६ ) पद्यस्य अन्यदीयत्वं निरसितुमाह—इदमिति ।

( ५७ ) ननु प्रकृतोदाहरणे उल्लासादीनामभेदारोपं दर्शयितुं भेदं दर्शयति—अत्रेति । उल्लासादीनामित्यत्रादिपदेन उत्सरणामीलनयोः परिग्रहः सम्बन्धिभेदात् कुमुदकदम्बकामादिभेदात् । एवकारव्यवच्छेद्यं दर्शयति—न त्विति । श्लिष्टतया रागपद-वत्श्लेषेण । कुमुदकदम्बानामुल्लासो विकासः, कामस्योल्लासस्तु पुनर्वर्धनम्, इति सम्बन्धिभेदेन उल्लासयोर्भेदऽपि विकास इव वर्धनमिति एकपदोपस्थाप्यत्वरूपसादृ-श्येन अभेदाध्यवसायादतिशयोक्तिः, तद्वशात् सहशब्दार्थवशाच्च एक एवोल्लासपदस्या-र्थः कुमुदकदम्बैः कामेन च सह सम्बध्यत इति सम्बन्धिभेदादवगतभेदमूलाऽतिशयोक्ति-रूपा सहोक्तिः । एवं तिमिरौघानामुत्सारणं तद्देशे सम्बन्धाभावः, धैर्यस्योत्सारणन्तु विनाशः सरसिजषण्डानामामीलनं सङ्कोचः, स्वान्तस्यामीलनन्तु विषयान्तरादाक-र्षणम् । अन्यत्सर्वं पूर्ववदेवोह्यम् ।

( ५८ ) एवमभेदाध्यवसायमूलामुदाहृत्य कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिश-योक्तिमूलां द्वितीयां सहोक्तिमुदाहरति—सममेवेति । रघुवंशे अष्टमसर्गे पद्यमिदम् । सा

( ५९ ) इयं च मालयापि संभवति। यथोदाहृते 'सह कुमुदकदम्बैः—' इत्यादौ।

( ६० ) 'लक्ष्मणेन समं रामः काननं गहनं ययौ।'

इत्यादौ चातिशयोक्तिमूलाभावान्नायमलङ्कारः।

**( ६१ ) विनोक्तिर्यद्विनान्येन नासाध्वन्यदसाधु वा ॥ ५५ ॥**

( ६२ ) नासाधु अशोभनं न भवति। एवं च यद्यपि शोभनत्व एव पर्यवसानं तथाप्यशोभनत्वाभावमुखेन शोभनवचनस्यायमभिप्रायो यत्कस्यचिद्दर्शनीयस्याशोभनत्वं तत्परसंनिधेरेव दोषः। तस्य पुनः स्वभावतः शोभनत्वमेवेति।

---

इन्दुमती गुरुर्महानसौ सम्मोहो मूर्च्छा तया विलुप्ता चेतना चैतन्यं यस्याः सा तथाभूता सती, तैलबिन्दुना सह तनुदीपार्चिः अल्पदीपशिखेव, नराधिपेन राज्ञा अजेन सममेव एकदैव क्षितेस्तलं पृथ्वीतलम् अगमत् पतितवतीत्यर्थः। वैतालीयं छन्दस्तल्लक्षणञ्चोक्तं प्राक्।

अत्र इन्दुमतीपातः कारणं नराधिपपातः कार्यम्, इन्दुमतीपतनमवलोक्यैव नराधिपस्य पतनात् इति तयोः समकालत्वकथनरूपः पौर्वापर्यविपर्ययः। तेन कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्तिः तद्वशात् सहशब्दार्थवशाच्च एक एवागमदिति पदस्यार्थः इन्दुमत्या नराधिपेन च सह सम्बध्यत इति सहोक्तिः।

( ५९ ) इत्थं द्वितीयामपि सहोक्तिमुदाहृत्यास्या सम्भवन्तं काव्यप्रकाशाद्यनुदाहृतमपि भेदमुदाहर्त्तुमाह--इयञ्चेति। सहोक्तिश्चेत्यर्थः, मालयापि एकत्र बहुत्वेनापि। इत्यादाविति। आदिपदेन सरस्वतीतीर्थोक्तोदाहरणपरिग्रहः। तद्यथा--

"उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्धं मुखैर्नामितं
भूपानां जनकस्य संशयधिया साकं समास्फालितम्।
वैदेह्या मनसा समं तदधुना कृष्टं, ततो भार्गव-
प्रौढाहङ्कृति(क)कन्दलेन च समं भग्नं तदैशं धनुः॥" इति।

( ६० ) "मूलभूतातिशयोक्तिर्यदाभवेत्" इत्यस्य व्यवच्छेद्यमाह--लक्ष्मणेनेति। अत्र यद्वक्तव्यं तत्पूर्वमेवोपपादितम्।

( ६१ ) अथोक्तिशब्दान्तसादृश्यात प्रायेण यथाकथञ्चित् सादृश्यावगमाच्च सहोक्तेरनन्तरं विनोक्तिं निरूपयति—विनोक्तिरिति। अन्यद्वस्तु अन्येन विना यत् असाधु अशोभनं न प्रतिपद्यते किन्तु शोभनम्, वा अथवा अन्यद्वस्तु अन्येन विना यत् असाधु अशोभनं प्रतिपद्यते सा विनोक्तिः। तथाचैकस्य अन्यस्य अशोभनत्वाभावः शोभनत्वाभावो वा प्रतिपाद्यते सा विनोक्तिरित्यर्थः। विनाशब्दार्थस्योक्तिर्विनोक्तिरित्यन्वर्थेयं संज्ञा। इयं च न केवलं विनाशब्दस्य सद्भाव एव भवतीति नियमः किन्तु विनाशब्दार्थवाचकमात्रस्य। अतएव नञ्-निर्-वि-अन्तरेण-ऋते-रहित-विकलेत्यादिप्रयोगेऽपि विनोक्तिरेव।

( ६२ ) दुर्बोधतां परिजिहीर्षुः "नासाधु" इति दुर्बोधं पदं विवृणोति-नासाध्विति। नासाधु "इत्यस्ये" ति शेषः। भवति इत्यर्थं इति शेषः। अस्य भावार्थमुपपादयति—एवञ्चेति। यद्यपि "नासाध्वित्यस्ये" ति शेषः। एव न त्वशोभनत्व इति शेषः। पर्यव

यथा—

( ६३ ) 'विना जलदकालेन चन्द्रो निस्तन्द्रतां गतः ।
विना ग्रीष्मोष्मणा मञ्जुर्वनराजिरजायत ॥'

( ६४ ) असाध्वशोभनं यथा—

( ६५ ) 'अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम् ।
का दिनश्रीर्विनार्केण का निशा शशिना विना ॥'

---

सानम् "अभावस्य तु योऽभावो भाव एवाऽवशिष्यते" इति न्यायात् "द्वौ नञौ प्रकृतार्थमवगमयतः" इति न्यायाच्च अन्ततोऽवस्थानम् । तेन "नासाधु" इत्यत्र "साधु" इत्येव प्रतिपादयितुं युक्तमितिभावः । अशोभनत्वाभावमुखेन "न असाधु किन्तु साधु" इत्यसाधुत्वप्रतिषेधद्वारा शोभनवचनस्य "साधु" इति प्रतिपादनस्य । वर्णनीयस्य प्रस्तुतपदार्थस्य । तत्परस्य वर्णनीयेतरवस्तुनः सन्निधेः संयोगादेव दोषो दोषमध्ये गणनम्, पुनः किन्तु तस्य वर्णनीयवस्तुनः, शोभनत्वं साधुत्वम् इतीत्यस्य "अयमभिप्रायः" इत्यनेन सम्बन्धः । तथाच विनार्थकं पदं प्रयोज्य यस्य साधुत्वं प्रतिपाद्यते तस्य स्वाभाविकं साधुत्वमेव, यस्य विनार्थकेन पदेन सन्निधानं निषिध्यते तस्य तत्कृतमेवासाधुत्वमितिभावः ।

अतएव—

दुःखदत्वं विना पापमविद्यामोहमन्तरा । विना दुःखं च निरयः साधुः कस्य न सम्मतः॥

अत्र दुःखदत्वादिं विना पापादित्यस्यैवानभिप्रेतत्वान्नायमलङ्कारः ।

( ६३ ) तत्र अशोभनत्वाभावे उदाहरणं दर्शयति—विनेति । जलदकालेन वर्षाकालेन विना चन्द्रो निस्तन्द्रतां निरालस्यमुपचारादुज्ज्वलप्रकाशत्वम् शोभनत्वमितियावत् गतः प्राप्तः । ग्रीष्मोष्मणा ग्रीष्मकालीनघर्मेण विना वनानां राजिः पङ्क्तिः, मञ्जुः मनोहरा "मनोज्ञं मञ्जु मञ्जुलम्" इत्यमरः, अजायत ।

तथाच-प्रकृतत एव शोभनस्य चन्द्रस्य यदशोभनत्वं वर्षाकालेन कृतं तद्वर्षाकालनिवृत्त्या निवृत्तमिति चन्द्रस्य तत् शोभनत्वं पुनः प्रत्यावृत्तम् । तथा प्रकृतत एव मनोहराया वनराजेर्ग्रीष्मघर्मेण यदमनोहरत्वं विहितम्, तद्ग्रीष्मघर्मस्य निवृत्त्या निवृत्तमिति वनराजेरपि तत्प्राकृतिकं मनोहरत्वं पुनरप्यापन्नमित्याशयः । जलदकालेनेत्यादौ विनायोगे "पृथग्विनानानाभिस्तृतीयाऽन्यतरस्यामिति । २।३।३२ इत्यनेन तृतीयाऽवगन्तव्या ।

अत्र वर्षाकालस्य ग्रीष्मघर्मस्य चाभावे चन्द्रस्य वनराजेश्च अशोभनत्वाभावाद्विनोक्तिः । द्वयोरुपमानोपमेयभावस्य च व्यञ्जनयावगमः । यद्यपि ग्रीष्मघर्माभावे वनराजेस्तु शोभनत्वं भवत्येव तथाप्युक्ताशयेन दोषाभावात् ।

( ६४ ) असाध्विति । एवमशोभनत्वाभावे विनोक्तिमुदाहृत्य शोभनत्वाभावे उदाहर्त्तुमाह—असाध्विति । असाध्वित्यस्य विवरणं दर्शयति—अशोभनमिति । एतेन द्वैविध्यं विनोक्तेरिति दर्शितम् ।

( ६५ ) उदाहरणं दर्शयति—अनुयान्त्येति । वनवाससमये सीतां प्रति अनसूयावाक्यमिदम् । हेसीते ! जनातीतं सर्वलोकोत्तरचरित्रम्, कान्तं स्वामिनं श्रीरामचन्द्रम्,

( ६६ ) 'निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् ।
उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन ॥'

( ६७ ) अत्र परस्परविनोक्तिभङ्गया चमत्कारातिशयः ।

( ६८ ) विनाशब्दप्रयोगाभावेऽपि विनार्थविवक्षायां विनोक्तिरेवेयम् ।

( ६९ ) एवं सहोक्तिरपि सहशब्दप्रयोगाभावेऽपि सहार्थविवक्षायां भवतीति बोध्यम् ।

---

अनुयान्त्या अनुव्रजन्त्या त्वया, साधु समीचीनमेव कृतं विहितम् । तथा च अर्केण दिवाकरेण विना दिनस्य श्रीः शोभा का कीदृशी अकिञ्चित्करा अशोभनैवेत्यर्थः, तथा शशिना चन्द्रेण विना निशा रात्रिः का अकिञ्चित्करा अशोभनैवेत्यर्थः । एवञ्च पतिमन्तरा योषितो व्यर्थत्वमेवेति सूचयति ।

अत्र अर्केण विना दिनश्रियः चन्द्रेण विना रात्रेश्च शोभनत्वाभावाद्विनोक्तिः । तथा दिनश्रिया निशया च सह सीताया भेदेनोपमानोपमेयभावस्तु व्यज्यते ।

( ६६ ) अथ विनार्थकनञःसत्त्वे शोभनत्वाभावे उदाहरणं दर्शयति—निरर्थकमिति । विद्याधरराजकन्ययोरुक्तिप्रत्युक्तिरियम् । नलिन्याः कमलिन्याः जन्म उत्पत्तिः निरर्थकं व्यर्थं गतं व्यतीतम्, यया कमलिन्या तुहिनांशुबिम्बं चन्द्रमण्डलं न दृष्टम्, चन्द्रोदयसमये निशि स्वस्य मुद्रितत्वात् स्वविकसनसमये दिवसे च चन्द्रोदयाभावादित्याशयः । इति पूर्वार्द्धं विद्याधरस्योक्तिः । इन्दोश्चन्द्रस्यापि उत्पत्तिर्जन्म निष्फलैव व्यर्थमेव, येन इन्दुना विनिद्रा विकाशवती नलिनी सा कमलिनी न दृष्टा, कमलिनी प्रस्फुटनसमये दिवसे स्वस्य उदयाभावात् स्वस्य उदयसमये निशि च कमलिन्याः प्रस्फुटनाभावादितिभावः । उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिश्छन्दः, तल्लक्षणन्तूक्तं प्राक् ( १९३ पृ० ) ।

अत्र चन्द्रमण्डलदर्शनमन्तरेण कमलिन्या अशोभनत्वात् विकसितकमलिनीदर्शनमन्तरेण चन्द्रस्याप्यशोभनत्वाच्च विनोक्तिः । कमलिनीचन्द्रमसोर्जन्मव्यर्थसाम्यञ्चात्र व्यज्यते ।

( ६७ ) अत्र विनाशब्दानुपादाने वैलक्षण्यमुपपादयति—अत्रेति । परस्परविनोक्तिभङ्ग्या कमलिनीचन्द्रमसोरन्योन्यविनाशब्दाऽनुपादानेऽपि नञुपादानादेव तदुपादानविधिना । चमत्कारातिशय इति । तथाच यथा चन्द्रबिम्बदर्शनं विना कमलिन्या जन्म निरर्थकम्, तथा विकसितकमलिनीदर्शनं विना चन्द्रस्यापि जन्म निष्फलमिति परस्परजन्मनिरर्थकत्वाभिधानद्वारा चमत्कारातिशय इत्याशयः ।

( ६८ ) ननु भवतु नाम चमत्कारातिशयस्तथापि विनाशब्दानुपादानात्कथमियं विनोक्तिरित्याशङ्कायामाह—विनाशब्देति । विनाशब्दप्रयोगाभावेऽपि विनाशब्दानुपादानेऽपीत्यर्थः । एतेन विनार्थकशब्दमात्रस्यैवोपादाने विनोक्तिरितिग्रन्थकर्त्तुराशयः ।

एवं— "वनश्रियं वसन्तेन ज्योत्स्नया तुहिनद्युतिम् ।
कान्तया शून्यमालोक्य कस्य चेतो न दूयते ॥"

इत्यत्र "न दूयते" इत्यनेनाशोभनत्वमुक्तप्रायमिति विनार्थकनञुपादानेऽपीयमेव ।

( ६९ ) उक्तमर्थमन्यत्राप्यतिदिशति—एवमिति । सहोक्तिरपि तृतीयामात्रबलादित्यर्थः । अत एव—

( ६० ) समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः ।
व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ॥ ५६ ॥

प्राणैश्च कोशैर्द्विषतां नरेन्द्र ! सौर्व्याः समाकृष्टिमुदाहरन्ति ।
टङ्कारपूर्त्या सुहृदां जनानां प्रमोदपूर्त्तिं च तव प्रतिज्ञाः ॥

इत्यादौ सहशब्दानुपादानेऽपि सहार्थविवक्षया तृतीयाविधानात्सहोक्तिरेव ।

अलङ्कारभाष्यकारस्तु—

"नियसम्बन्धानामसम्बन्धवचनं विनोक्तिः"

इतिलक्षणमभिधाय तत्र—

मृणालमन्दानिलचन्दनानामुशीरशैवालकुशेशयानाम्
वियोगदूरीकृतचेतनाया विनैव शैत्यं भवति प्रतीतिः ॥

इत्युदाहरणं प्रदर्श्य च

"अत्र शैत्यस्याविनाभावेऽपि विनाभावो निबद्धः" इत्याह ।

अथास्याध्वनिः यथा—

"विशालाभ्यामाभ्यां किमिह नयनाभ्यां फलमसौ
न याभ्यामालीढा परमरमणीया तव तनुः ।
अयं तु न्यक्कारः श्रवणयुगलस्य त्रिपथगे !
यदन्तर्नायातस्तव लहरिलीलाकलकलः ॥"

अत्र त्वद्दर्शनं विना नयनयोः, त्वल्लहरिकोलाहलश्रवणं विना श्रवणयोश्चारमणीयत्वं फलप्रश्नधिक्काराभ्यां व्यज्यते ।

( ७० ) सादृश्यप्रयुक्तत्वादुक्तिशब्दान्ततातौल्याच्च विनोक्तिं लक्षयित्वा सम्प्रति समासोक्तिं लक्षयति—समासोक्तिरिति । यत्रेत्यव्ययं य इत्यर्थे, समैः प्रस्तुताप्रस्तुतसाधारणैः, कार्यं कर्म, लिङ्गं पुं-स्त्री-नपुंसकत्वव्यञ्जकचिह्नम्, विशेषणं भेदकधर्मश्च तैस्तथोक्तैः तद्द्वारेतिभावः, प्रस्तुते प्राकरणिके वस्तुनि, अन्यस्य अप्राकरणिकस्य वस्तुनः पदार्थस्य यः व्यवह्रियते विशेषेण प्रतीयतेऽनेनेति व्यवहारोऽवस्थाविशेषस्तस्य समारोपः सम्यगारोपोऽभेदप्रत्यायनम्, सा समासोक्तिः समासेन एकोच्चारणरूपसङ्क्षेपेण उक्तिः प्राकरणिकाप्रकाणिकयोरभेदप्रत्यायिकानिदर्शनेति तथाप्रसिद्धेतिव्युत्पत्तिः ।

तथाच समान-कार्य-लिङ्ग-विशेषणान्यतमद्वारा प्राकरणिकपदार्थे अप्राकरणिकपदार्थस्य व्यवहारसमारोपः समासोक्तिरिति सङ्क्षिप्तोऽर्थः । अन्यालङ्कारेण सहास्या भेदस्तु स्वयमेव वृत्तौ स्पष्टीभविष्यति ।

अत्र विवृतिकारास्तु—समासोक्तिरितिप्रतीकमुपादाय समैः प्रस्तुताप्रस्तुतसाधारणैः । यत्रेत्यव्ययं य इत्यर्थे । लिङ्गं स्त्रीत्वादि । व्यवह्रियते विशेषेण प्रतीयतेऽनेनेति व्यवहारोऽवस्थाभेदः । "इह तु स्वावस्थासमारोपेण" इत्यादिवक्ष्यमाणस्वरसाद् अत्र व्यवहारसमारोपे कृतप्रकृतविशेषाधानस्यानुभवसिद्धतया व्यवहारः । अथवा "तत्त्वमौपम्ये यत्प्रतीयते" इतिप्राचीनोक्तानुसारेण च व्यवहारसमानरूपैव समासोक्तिरनेनाङ्गीकृता, न तु "परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः" इति काव्यप्रकाशलक्षणानुसारेण प्रकृतवाचिना श्लिष्टविशेषणबलादप्रकृतव्यञ्जनरूपद्वितीयार्थस्योपमानत्वानङ्गीकारेणासङ्गतिप्रसङ्गात् । अन्यस्याप्रस्तुतस्य समासेन सकृदुच्चारणरूपसङ्क्षेपेणावस्थाद्वयप्रतीतिः समासोक्तिरिति-

( ७१ ) अत्र समेन कार्येण प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपः । यथा—

( ७२ ) 'व्याधूय यद्वसनमम्बुजलोचनाया
वक्षोजयोः कनककुम्भविलासभाजोः ।
आलिङ्गसि प्रसभमङ्गमशेषमस्या
धन्यस्त्वमेव मलयाचलगन्धवाह ! ॥'

( ७३ ) अत्र गन्धवाहे हठकामुकव्यवहारसमारोपः ।

---

संज्ञाव्युत्पत्तिरवधेया । यद्वा समस्य कायादेरासेन उपन्यासेन उक्तिरप्रस्तुतावस्थाव्यञ्जनम्" इत्याहुः ।

( ७१ ) इत्थं चेयं त्रिविधा चतुर्विधा वा भवति । तथाहि समकार्यमूला, समलिङ्गमूला, समभेदकधर्ममूलेति त्रिविधा । यदि च 'कार्यलिङ्गविशेषणैरित्यस्य" कार्यं च लिङ्गं च विशेषणं चेति कार्यलिङ्गविशेषणानि तानि च तानि चेति तैस्तथोक्तैः" इत्येकशेषमत्र स्वीक्रियते तदा कार्यलिङ्गविशेषणमूला चेति चतुर्विधा । तत्र कार्यसाम्येनामुमुदाहर्तुमाह—अत्रेति ।

( ७२ ) उदाहरति—व्याधूयेति । पवनेनोड्डीयमानवसनां काञ्चित्तरुणीं नायिकामवलोक्य पवनं स्तुवतः कस्यचिन्नायकस्योक्तिरियम् । हे मलयाचलगन्धवाह दक्षिणपवन ! अस्याः पुरोऽवलोक्यमानायाः अम्बुजलोचनायाः कमलनयनायास्तरुण्याः कनककुम्भयोः स्वर्णघटितकलशयोः विलासं शोभां भजेत इति ययोस्तथोक्तयो "भजो ण्विः" इति ण्विः । वक्षोजयोः वक्षसि जातयोः स्तनयोरित्यर्थः, वसनं वस्त्रं प्रसभं हठात् व्याधूय विशेषेण कम्पयित्वा दूरीकृत्येतियावत्, यत् अशेषं सर्वम् अङ्गं गात्रम् आलिङ्गसि; अतस्त्वमेव न त्वन्य इति शेषः, धन्यः कृतार्थः; एवंरूपाया एवंविधालिङ्गनप्राप्तिः पुण्यातिशयेनैव भवतीतिभावः । वसन्ततिलकं छन्दस्तल्लक्षणन्तूक्तं प्राक् ( १९३ पृ० ) ।

( ७३ ) लक्ष्यं समर्थयति—अत्रेति । गन्धवाहे प्राकरणिके पवने, हठकामुकस्य अप्राकरणिकस्य बलपूर्वकतरुणीसङ्गमशीलस्य पुरुषस्य व्यवहारसमारोपः अवस्थाविशेषस्य सम्यगारोपः, "नायिकायाः स्तनवस्त्रापसरणपूर्वकालिङ्गनरूपकार्यस्य प्राकरणिकाप्राकरणिकोभयसम्बन्धित्वसाधारण्यादितिशेषः, अतएवात्र समासोक्तिरितिभावः ।

अत्र विवृतिकारास्तु "यदि पुनर्नायिकायास्तादृशालिङ्गनमप्राप्नुवतः कस्यचिदात्मनोऽधन्यत्वनिवेदनमेतत् स्यात्तदा वायोरप्रकृतत्वान्नेयं समासोक्तिः, किंतु "धन्याः खलु वने वाता,—" इत्यादिवक्ष्यमाणवद्वैधर्म्येणाप्रस्तुतप्रशंसैव अहमधन्य इति प्रस्तुतस्य गम्यत्वात् । एवञ्च—

"नवा लता गन्धवहेन चुम्बिता करम्बिताङ्गी मकरन्दसीकरैः"

इत्याद्युदाहरणमस्या अवगन्तव्यम् । अत्र वायोर्वर्णनीयत्वेन प्रकृतस्तत्र चुम्बनरूपकार्यसाम्येन श्रृङ्गारिस्वरूपनायकावस्थासमारोपश्चारुत्वमावहति इति वदन्ति । तत्र सिद्धान्तवागीशाः खण्डयन्ति तन्न विचारसहम् । उक्ताभिप्रायस्य ग्रन्थकर्त्तुरनभिमतत्वे तु युक्तमेवोदाहरणम्, तस्याऽप्यनुमतित्वे तु विवृतिकारोक्तिः सम्यगेवेति विवेचनीयं भावकैः ।

लिङ्गसाम्येन यथा—

( ७४ ) 'असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः ।
अनाक्रम्य जगत्कृत्स्नं नो संध्यां भजते रविः ॥'

( ७५ ) अत्र पुंस्त्रीलिङ्गमात्रेण रविसंध्ययोर्नायकनायिकाव्यवहारः ।

( ७६ ) विशेषणसाम्यं तु श्लिष्टतया, साधारण्येन, औपम्यगर्भत्वेन च त्रिधा । तत्र श्लिष्टतया यथा मम—

( ७७ ) 'विकसितमुखीं रागासङ्गाद्गलत्तिमिरावृतिं
दिनकरकरस्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः ।
जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः
श्रयति हरितं हन्त ! प्राचेतसीं तुहिनद्युतिः ॥'

यथा वा—

"देव ! त्वां परितस्तुवन्तु कवयो लोभेन किं तावता
स्तव्यस्त्वं भविताऽसि यस्य तरुणश्चापप्रतापोऽधुना ।
क्रोडान्तः कुरुतेतरां वसुमतीमाशाः समालिङ्गति
द्यां चुम्बत्यमरावतीं च सहसा गच्छत्यगम्यामपि ॥"

अत्र राज्ञ दुराचारित्वव्यवहारहेतुः परार्द्धोक्तकार्यसाधारण्यम् ।

( ७४ ) द्वितीयां लिङ्गसाधारण्यमूलामुदाहरति—असमाप्तेति । राजतरङ्गिण्यां पद्यमिदम् । न समाप्ता पूर्णा जिगीषा जेतुमिच्छा यस्य तादृशस्य मनस्विनो नीतिज्ञस्य जनस्य का नाम स्त्रीचिन्ता स्त्रीविषयिणी चिन्ता अपि तु कापि नेत्यर्थः । यथाच रविः सूर्यः कृत्स्नं समस्तं "विश्वमशेषं कृत्स्नं समस्तनिखिलानि निःशेषम्" इत्यमरः, जगत् संसारम् अनाक्रम्य अनतिक्रम्य सन्ध्यां सायंसन्ध्यां नो न भजते सेवते ।

( ७५ ) लक्ष्यं समर्थयति—अत्रेति । पुंस्त्रीलिङ्गमात्रेण रवेः पुंस्त्वेन सन्ध्यायाः स्त्रीत्वेन चेत्यर्थः रविसन्ध्ययोः प्राकरणिकपूर्वार्धसमर्थकत्वेन प्राकरणिकयोरित्यर्थः, नायकनायिकयोरप्राकरणिकयोः पुरुषविशेषस्त्रीविशेषयोः व्यवहारः यथाक्रमेण व्यवहारसमारोप इति समासोक्तिरित्याशयः । यद्यप्यत्र जिगीषुरेव प्रस्तुततयोपमेयभूतो रविरप्रस्तुतस्तथापि व्यङ्ग्यनायिकापेक्षया वाच्यो रविरापेक्षिकः प्रस्तुत इत्यवधेयम् ।

( ७६ ) विशेषणसाम्यस्य त्रैविध्यं प्रतिपादयति—विशेषणेति । श्लिष्टतया विशेषणपदस्य श्लेषवशादुभयार्थप्रतिपादकतया, साधारण्येन विशेषणपदस्य श्लेषभिन्नत्वेऽपि तदभिधेयस्य प्रकृताप्रकृतोभयगतत्वेन, औपम्यगर्भत्वेन विशेषणस्यान्तर्निविष्टसाम्यकत्वेन । अत्र स्वमते श्लिष्टतया साधारण्येनेति चेति द्वैविध्यमेव त्रिधेत्यभिधानं तु मतान्तरमाश्रित्येत्यवगन्तव्यम् । एतच्चोपरिष्टात् स्पष्टीभविष्यति ।

( ७७ ) तत्राद्यमुदाहरति—विकसितेति । प्रभातवर्णनमिदम् । तुहिनद्युतिश्चन्द्रः, पुरोऽग्रतः, रागस्य किरणरक्तिम्न सुरतेच्छायाश्च आसङ्गात् उपस्थितेर्हेतोः, विकसितं सप्रकाशं प्रसन्नं च मुखमेकदेशो वदनं च यस्यास्तां तथोक्ताम्, तथा गलन्ती नश्यन्ती संवलन्ती च तिमिरावृतिरन्धकारकृतावरणं तिमिरवत् श्यामवर्णा आवृतिर्वसनञ्च यस्या-

( ७८ ) अत्र मुखरागादिशब्दानां श्लिष्टता।

( ७९ ) अत्रैव हि 'तिमिरावृतिम्' इत्यत्र 'तिमिरांशुकम्' इति पाठे एकदेशस्य रूपणेऽपि समासोक्तिरेव, न त्वेकदेशविवर्ति रूपकम्; तत्र हि तिमिरांशुकयो रूप्यरूपकभावो द्वयोरावरकत्वेन स्फुटसादृश्यतया परसाचिव्यमनपेक्ष्यापि स्वमात्रविश्रान्त इति न समासोक्तिबुद्धिं व्याहन्तुमीशः।

( ८० ) यत्र तु रूप्यरूपकयोः सादृश्यमस्फुटं तत्रैकदेशान्तररूपणं विना तदसंगतं स्यादित्यशाब्दमप्येकदेशान्तररूपणमार्थमपेक्षत एवेति तत्रैकदेशविवर्तिरूपकमेव। यथा—

रक्तां तथोक्ताम्, ऐन्द्रीं पूर्वां दिशम्, दिनकरस्य सूर्यस्य नायकान्तरस्य च करेण किरणेन पाणिना च स्पृष्टां संयुक्तां धृतां च, निरीक्ष्य अवलोक्य, भृशमत्यन्तम् कलुषं कलङ्कितत्तयेर्ष्याकषायिततया च मलिनम् आन्तरं मध्यदेशश्चित्तं च यस्य तथोक्तः, तथा जरठा पक्वा लवली फलविशेषः तद्वत् पाण्डुः छाया कान्तिर्यस्य स तथोक्तः सन्, एकत्र प्रभातवशात् अन्यत्र वियोगादित्याशयः, हन्त! खेदे "हन्त हर्षेऽनुकम्पायां विषादेऽपि" इत्यमरः, प्राचेतसो पश्चिमां हरितं दिशं "दिशस्तु ककुभः काष्ठा आशाश्च हरिताश्च ताः" इत्यमरः, श्रयति भजते। स्वाक्रान्तां दिशं विरोधिनाक्रान्तामवलोक्य दुःखेन पाण्डुरः सन् दिगन्तरमाश्रयतीतिवाक्यार्थाभिप्रायः। हरिणीप्लुतं छन्दस्तल्लक्षणं चोक्तं प्राक्।

( ७८ ) समासोक्तिमुपपादयति—अत्रेति। तथाच प्रभातवर्णनायाः प्राकरणिकत्वात् तदङ्गत्वेन प्राकरणिकायां प्राच्यां दिशि मुखरागादिश्लिष्टविशेषणसादृश्यादप्राकरणिकायाः कुलटाया नायिकाया व्यवहारसमारोपः, तथैव प्राकरणिकयोर्दिनकरतुहिनद्युत्योः श्लिष्टविशेषणसादृश्यादप्राकरणिकयोरुभयोरुपनायकयोर्व्यवहारसमारोपश्चेतिसमासोक्तिरितिभावः।

( ७९ ) अस्या एकदेशविवर्त्तिरूपकतः को भेद इत्युपपादयितुमुत्थापयति—अत्रैवेति। "विकसिते"त्यादिपद्य एवेत्यर्थः। तिमिरावृतिमित्यत्र "अंशे" इति शेषः। तिमिरांशुकमितिपाठे "परिवर्त्तिते" इति शेषः। रूपणेऽपि तिमिररूपे उपमेये अंशुकरूपस्योपमानस्यारोपेऽपीत्यर्थः। न त्वेकदेशविवर्त्तिरूपकमिति। ऐन्द्रीप्रधाननायिकानिरूपणं व्यङ्ग्यम्। तद्धर्मरूपस्यांशुकरूपस्यैकदेशस्य तिमिररूपस्य वाच्यत्वेन तत्प्रसक्तिर्बोध्या। तदभावे हेतुमुपपादयति—अत्रेति। तत्र तिमिरांशुकामितिस्थाने, रूप्यमारोपविषयस्तिमिरम् रूपकमारोप्यमाणमशुकं च तयोर्भाव इति तथोक्तः, आरोपस्थलीय उपमेयोपमानभाव इतियावत्, द्वयोस्तिमिरांशुकरूपयो रूप्यरूपकयोः आवरकत्वेन आच्छादकत्वरूपव्यापकधर्मेण स्फुटसादृश्यतया मुखचन्द्रयोरिवेत्यर्थः, परसाचिव्यम् ऐन्द्र्यां नायिकाया रूपणानुसन्धानानुकूल्यम् स्वमात्रे केवले तिमिरांशुकयोः रूप्यरूपकत्वरूपे स्वस्मिन् विश्रान्त उपक्षीणः अवस्थितः स्वत इति हेतोः समासोक्तिबुद्धिं समासोक्त्यलङ्कारप्रतीतिं व्याहन्तुम् एकदेशविवर्त्तिरूपकानश्रयप्रतिपादनेन बाधितुं न ईशो न समर्थः। शाब्दबोधेन रूपकवृत्त्यारोपस्यापेक्षाभावादितिभावः।

( ८० ) यत्रेति। रूप्यरूपकयोः आरोपस्थलीययोरुपमेयोपमानयोः (लावण्यमधुनोः)। एकदेशान्तररूपणं कुत्रचिदेकभागे आरोपम्। तत् वाक्यम् असङ्गतम् अनुपपन्नार्थकम्

( ८१ ) 'जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअं ।
रससंमुही वि सहसा परम्मुही होइ रिउसेणा ॥'

( ८२ ) अत्र रणान्तःपुरयोः सादृश्यमस्फुटमेव ।

( ८३ ) क्वचिच्च यत्र स्फुटसादृश्यानामपि बहूनां रूपणं शाब्दमेकदेशस्य चार्थं तत्रैकदेशविवर्ति रूपकमेव । रूपकप्रतीतेर्व्यापितया समासोक्तिप्रतीतितिरोधायकत्वात् ।

---

अशाब्दमपि शब्देनाबोधितमपि आर्थम् अर्थवशाल्लभ्यम् एकदेशान्तररूपणं कुत्रचिदेकभागे आरोपम् । रूपकमेवेति । एवंविधस्थले शाब्दबोधेन रूपकमूल्यारोपापेक्षायाः परमावश्यकत्वादितिभावः ।

( ८१ ) तादृशस्थलमेवोदाहरति—जस्सेति ।

यस्य रणान्तः पुरके करे कुर्वाणस्य मण्डलाग्रलताम् ।
रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥ इति संस्कृतम् ।

कस्यचिद्राज्ञः स्तुतिरियम् । रणः सङ्ग्राम एवान्तःपुरं तत्र, मण्डलाग्रः खड्ग एव लता ताम्, कांचिन्नायिकां च ।

"कौक्षेयको मण्डलाग्रः करवालःकृपाणवत्" इत्यमरः,

करे पाणौ कुर्वाणस्य धारयतः, यस्य राज्ञः, रसेन सङ्ग्रामोत्साहेन सुरतानुरागेण च सम्मुखी अभिमुखगामिनी अपि रिपुसेना शत्रुबलम्, अन्या नायका च, सहसा तत्क्षणात् पराङ्मुखी विमुखगामिनी भवति भयात् मानाच्चेतिभावः ।

( ८२ ) उदाहरणसङ्गमनाय रूपकहेतुमुपपादयति—अत्रेति । अस्फुटमेवेति । रणस्य भयप्रदस्थानत्वेन अन्तःपुरस्य च भोगविलासदेशत्वेन चात्यन्तवैलक्षण्यादित्याशयः । अत्र चापाततः समासोक्तेः गम्यमानत्वेऽपि औपम्यास्फुटत्वेन शब्दार्थयोरनपेक्षितत्वेनैकदेशविवर्त्तिरूपकमेव । तथाहि प्रकृतराजनि अप्रकृतनायकस्य व्यवहारसमारोपः, तथा प्रकृतायां मण्डलाग्रलतायामप्रकृताया एकस्या रिपुसेनायाश्चान्यस्या नायिकाया लिङ्गसादृश्याद् व्यवहारसमारोपश्चेति किं समासोक्तिराहोस्वित् रणे अन्तःपुरत्वारोपणं शाब्दः, राजनि नायकत्वारोपणं मण्डलाग्रलतारिपुसेनयोर्नायिकाद्वयत्वारोपणं च आर्थमिति "यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तत्" इत्युक्तदिशैकदेशविवर्त्तिरूपकमिति संशये, रणान्तःपुरयोरस्फुटसाम्यतया विचार्य साम्यकल्पनया रणे अन्तःपुरत्वारोपणं विना वाक्यार्थानुपपत्तिरिति तदारोपणस्य परमावश्यकतया एकदेशविवर्त्तिरूपकमेवेति तात्पर्यम् ।

( ८३ ) ननूक्तोदाहरणेऽस्फुटसादृश्यानां शाब्दरूपणाधिक्यमुपलभ्यते, तत् किं स्फुटसादृश्यानां शाब्दरूपणाधिक्ये रूपणं सर्वथैव न सम्भवतीत्याकाङ्क्षायां क्वचित् सम्भवतीत्युपपादयति—क्वचिच्चेति । बहूनाम् अधिकस्येत्यर्थः । व्यापितयेतिहेतोर्विशेषाभावात् । रूपणम् आरोपः, शाब्दं शब्दबोध्यम्, आर्थम् अर्थवशात् प्राप्यम् । तत्र "लावण्यमधुभिः पूर्णम्" इत्यादौ व्यापितया अधिकस्थानवर्त्तितया । अयमाशयः—यत्र स्फुटसादृश्यानां शाब्दरूपणाधिक्यत्वेऽपि विशेष्यपदार्थस्य न शाब्दं रूपणं तत्र समासोक्तिः, यत्र च विशेष्यपदार्थस्य शाब्दं रूपणं तत्रैकदेशान्तररूपणस्यार्थवशाल्लभ्यत्वेऽपि

( ८४ ) नन्वस्ति रणान्तःपुरयोरपि सुखसंचारतया स्फुटं सादृश्यमिति चेत्, सत्यमुक्तम्; अस्त्येव; किंतु वाक्यार्थपर्यालोचनसापेक्षम्, न खलु निरपेक्षम्। मुखचन्द्रादेर्मनोहरत्वादिवद्रणान्तःपुरयोः स्वतः सुखसञ्चारत्वाभावात्।

( ८५ ) साधारण्येन यथा—

( ८६ ) 'निसर्गसौरभोद्भ्रान्तभृङ्गसंगीतशालिनी।
उदिते वासराधीशे स्मेराजनि सरोजिनी॥'

( ८७ ) अत्र निसर्गेत्यादिविशेषणसाम्यात्सरोजिन्यां नायिकाव्यवहारप्रतीतौ स्त्रीमात्रगामिनः स्मेरत्वधर्मस्य समारोपः कारणम्। तेन विना विशेषणसाम्यमात्रेण-

---

स्फुटसादृश्यानामन्येषामाक्षिकयात् शाब्दत्वेन रूपकमेव। तथाऽस्फुटसादृश्यानां शाब्द-रूपणाधिक्यत्वेन विशेष्यपदार्थस्य शाब्दरूपणानालिङ्गितत्वे रूपकमिति।

( ८४ ) "विकसितमुखीम्" इत्यादौ "तिमिरांशुकाम्" इति पाठपरिवर्त्तनेऽपि सादृश्यस्य स्फुटतया समासोक्तिः यथा स्वीकृता तथैव "जस्स रणन्तेउरए" इत्यादावपि सादृश्यस्य स्फुटत्वात् समासोक्तिः कथं नेत्याशङ्कते—नन्विति। सुखे नसञ्चारो गतिर्यत्र तस्य भावस्तया सुखसंचरणदेशत्वरूपसामान्यधर्मस्य स्फुटतयेत्यर्थः, एकत्र स्वस्य महावीरत्वेन विपक्षिभिरवरोद्धुमसमर्थत्वात् अन्यत्र स्वात्मनो विलासस्थानत्वादित्यभिप्रायः। स्फुटसादृश्यमिति "रणन्ते उरए" इत्यत्रेतिशेषः, अतश्चात्रापि समासोक्तिरेवाङ्गीकरणीयेति-पूर्वपक्षिग्रन्थाशयः। समाधत्ते—सत्यमिति। सत्यमित्यर्द्धाङ्गीकारे। अस्त्येव स्फुटसादृश्यमितिशेषः। वाक्यार्थस्य "जस्स रणन्ते उरए" इत्यादिसमस्तवाक्यार्थस्य पर्यालोचने अनुसन्धाने सापेक्षं तदुत्तरमेव प्रतिपाद्यम्, न खलु निरपेक्षं तमिरांशुकामितिवत् तथा-विधसमस्तवाक्यार्थपर्यालोचनात् प्रागेव यत् खलु प्रतिपाद्यं तत् सादृश्यस्य स्फुटत्वमित्यर्थः, रिपुसेनाया विमुखीभवनं यावद्बोधाभावे रणे सुखविहारबोधासम्भवादित्याशयः। मुखचन्द्रादेर्मनोहरत्वादिवत् "मुखचन्द्रः" इत्यादौ मनोहरत्वादिरूपसाम्यवत्। स्वतः स्वतन्त्रतः सुखसञ्चारत्वाभावात् रणे यस्य कस्यापि सुखविहारत्वाभावेन रणान्तःपुरयोर्द्वयोरेव तदभावात्।

इत्थञ्च यत्रारोपस्थलीययोरुपमानोपमेययोः अस्फुटसादृश्यम्, यत्र बहूनामारोपः शाब्दः एकदेशस्यारोपश्चार्थः तत्रैकदेशविवर्त्तिरूपकम्। यत्र तु स्फुटसादृश्यं यत्र वा बहूनामारोपो न, तत्र समासोक्तिरितिविषयभेदोऽवगन्तव्यः।

( ८५ ) साधारण्ये च विशेषणसाम्ये समासोक्तिमुदाहर्त्तुमाह—साधारण्येनेति। विशेषणसाम्ये तस्य प्राकरणिकाप्राणिकोभयगतत्वेनेत्यर्थः।

( ८६ ) उदाहरति—निसर्गेति। प्रभातवर्णनमिदम्। निसर्गसौरभेण स्वभावसिद्धसौगन्ध्येन उद्भ्रान्ता अत्यन्तं मत्ततां नीता ये भृङ्गा भ्रमरास्तेषां सङ्गीतं झङ्कारशब्दरूपं मनोहरगानं तद्वद्वा सङ्गीतं तेन शालते शोभत इत्येवंशीला तादृशी सरोजिनी कमलिनी तत्स्वरूपा नायिका च, वासराधीशे दिनाधिपे ( सूर्ये ) स्वकान्ते च उदिते उदयाचलं याते उपस्थिते च सति, स्मेरा प्रस्फुटा प्रमोदेन सहास्यमुखी च अजनि जाता। अत्र दर्शितदिशा निसर्गेतिविशेषणान्नायिकाऽऽपतति।

( ८७ ) उक्तोदाहरणे प्राकरणिकरविकमलिनीवृत्तान्तमात्रप्रत्यायकत्वेनापि तद्रूप-

नायिकाव्यवहारप्रतीतेरसंभवात् ।

( ८८ ) औपम्यगर्भत्वं पुनस्त्रिधा संभवति, उपमारूपसङ्करगर्भत्वात् ।

( ८९ ) तत्रोपमागर्भत्वे यथा—

( ९० ) 'दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी ।
केशपाशालिवृन्देन सुवेषा हरिणेक्षणा ॥'

( ९१ ) अत्र सुवेषत्ववशात्प्रथमं दन्तप्रभाः पुष्पाणीवेत्युपमागर्भत्वेन समासः । अनन्तरं च दन्तप्रभासदृशैः पुष्पैश्चितेत्यादिसमासान्तराश्रयेण समानविशेषणमाहात्म्याद्धरिणेक्षणायां लताव्यवहारप्रतीतिः ।

---

पत्तेरित्यत्रत्तत्प्रत्यायकत्वनियतं स्मेरेतिविशेषणमेवेति तदुपपादयति—अत्रेति । उदाहृतपद्य इत्यर्थः, निसर्गेत्यादिविशेषणसाम्यात् "निसर्गसौरभोद्भ्रान्तभृङ्गसङ्गीतशालिनी" "इति विशेषणस्य प्राकरणिकाप्राकरणिकयोरुभयोरेव साम्यात् कमलिनीनायिकयोर्विद्यमानत्वेन सादृश्यादित्यर्थः । सादृश्यमिदं कमलिन्यां नायिकाव्यवहारप्रतीतिं प्रति प्रधानं निमित्तमित्यवधेयम् । हेत्वर्थे पञ्चमी चात्रात एव समुपपद्यते । ननु श्लिष्टविशेषणस्य द्व्यर्थवाचकपदप्रयोगसामर्थ्यात् भवतु नामार्थान्तरप्रतिपादकत्वं तेन चास्तां समासोक्तिप्रत्ययः, अश्लिष्टस्य स्मेरेतिसाधारणविशेषणस्य कथं कमलिन्यां प्रतीतिः तस्या हास्यसम्भवाभावादत आह—स्त्रीमात्रेति । स्त्रीमात्रगामिनः कमलिन्यामसम्भवात् केवलस्त्रीवर्त्तिनः मात्रपदं कमलिन्या व्यवच्छेदार्थम् । समारोपः कमलिन्यामित्यर्थः, कारणं कमलिन्यां नायिकाव्यवहारप्रतीतिं प्रति सहकारिकारणमित्यर्थः । तेन कमलिन्यां स्मेरत्वधर्मसमारोपेण विना, "स्मेराजनि" इत्यत्र "स्फुटाजनि" इति पाठपरिवर्त्तने इत्यर्थः, विशेषणसाम्यमात्रेण केवलनिसर्गेत्यादिरूपविशेषणसादृश्येन । असम्भवादिति । "स्फुटाजनि" इति पाठपरिवर्त्तने केवलकमलिनीगामिना स्फुटत्वधर्मेण निसर्गेत्यादिविषयविषय्युभयसाधारणविशेषणस्यापि केवलकमलिनीगामितयाभिधीयमानत्वादितिभावः । एवञ्चात्र निसर्गेत्यादानामेकार्थकत्वेनैव साधारण्येन साम्यम्, "विकसितमुखीम्" इत्यादौ तु विशेषणानां द्व्यर्थकतयैव साधारण्येन साम्यमितिपरस्परं भेदः ।

( ८८ ) अन्यदीयमौपम्यगर्भत्वमसङ्गतमित्युपपादयितुं तत्र तावत्तस्य त्रैविध्यमाह—औपम्येति । औपम्यं सादृश्यं गर्भेऽन्तर्यस्य ( विशेषणसाम्यस्य ) तस्य भावस्तत्त्वम् । उपमा च रूपकं च सङ्कर उपमारूपकयोः सन्दिग्धत्वं चेति ते गर्भे येषां तेषां भावस्तत्त्वं तस्मात्, उपमागर्भत्वात्, रूपकगर्भत्वात्, उपमारूपकयोः सन्देहसङ्करगर्भत्वाच्चेत्यर्थः ।

( ८९ ) तत्र तेषु मध्ये उपमागर्भत्वे "सति विशेषणसाम्यात् समासोक्ति" रिति शेषः।

( ९० ) तद्दर्शयति—दन्तप्रभेति । दन्तप्रभाः ताः पुष्पाणीव पक्षे दन्तप्रभा इव पुष्पाणि तैश्चिता व्याप्ता, पाणिः पल्लवं किशलयमिव पक्षे पाणिरिव पल्लव इति तेन शोभते इत्येवंशीला तादृशी, तथा केशपाशः अलिवृन्दं भ्रमरपुञ्ज इव पक्षे केशपाश इव अलिवृन्दं तेन विशिष्टेत्यर्थः, सुवेशा रुचिरनेपथ्या हरिणेक्षणा मृगनयना राजते इतिशेषः

( ९१ ) अत्रौपम्यगर्भत्वं विशदीकृत्य दर्शयति—अत्रेति । सुवेशत्ववशात् सुवेशेतिपदस्य उपमोपपादकत्वादित्यर्थः । तथाच मृगनयनाया नायिकाया पुष्पेण पल्लवेन च

( ९२ ) रूपकगर्भत्वे यथा—'लावण्यमधुभिः पूर्णम्-' इत्यादि ।

( ९३ ) सङ्करगर्भत्वे यथा–'दन्तप्रभापुष्प–' इत्यादि। 'सुवेषा' इत्यत्र 'परीता' इति पाठे ह्युपमारूपकसाधकाभावात्सङ्करसमाश्रयणम् । समासान्तरं पूर्ववत् । समासान्तरमहिम्ना लताप्रतीतिः ।

सुवेशत्वोपपद्यमानेऽपि अलिवृन्देन सुवेशत्वानुपपत्तेः, "केशपाशालिवृन्देन" इत्यत्र 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' २।१।५६ इत्युपमितसमासो विधेय एव तत्साहचर्यात् पुष्पपल्लवपदेऽप्युपमितसमास इतिभावः । नच दन्तप्रभैव पुष्पमित्यादिरीत्या रूपकमेवेतिवाच्यम्, उक्तसूत्रेण साधारणधर्माऽप्रयोगे रूपकसमासबाधादुपमितसमासस्यैव व्यवस्थापनात् । दन्तप्रभासदृशैरिति तु केवलमर्थप्रदर्शनमेतत् "दन्तप्रभा इव पुष्पाणि" इति विग्रहवाक्यानि तानि तु पूर्वमुपपादितान्येव समासान्तराश्रयेण लताव्यवहारारोपपक्षे तद्भिन्नोपमितसमासस्य विधानेन । लताव्यवहारस्तद्धल्लास्यादिः । इति परमसमभिप्रेत्योक्तम् ।

( ९२ ) इत्थमौपम्यगर्भितमुदाहृतं रूपकगर्भितविशेषणसाम्यत्वे समासोक्तिमुदाहर्तुमाह—रूपकेति । रूपकगर्भत्वे रूपकसमासगर्भत्वे "विशेषणसाम्यस्य समासोक्तिरिति" शेषः । तथाच लावण्यान्येव मधूनि तैः, कोकलोचनान्येव रोलम्बा भ्रमरास्तेषां कदम्बैरिति "मयूरव्यंसकादयश्च"तिसूत्रेण रूपकसमासः । इत्थञ्च लावण्यमधुभिरितिलोकलोचनरोलम्बकदम्बैरिति च विशेषणसादृश्यात्समासोक्तिरित्यपि मतान्तरमेव । नच एकदेशविवर्त्तिरूपकोदाहरणमेव प्रागुक्तं तत्कथमत्र समासोक्तिरितिवाच्यम्, साम्प्रदायिकमते एकदेशविवर्त्तिरूपकस्थले सर्वत्र व्यङ्ग्यरूप्यांशे समासोक्तित्वाङ्गीकारात् । अत्र साधारणधर्माप्रयोगेऽपि नोपमितसमासः मधुतुल्यलावण्यस्य पानासम्भवात्, रूपकत्वे तु सम्भवत्येव मधुनः पानम् । नचास्यैवात्र पानमुक्तं तस्य चोभयथापि पानासम्भव इति वाच्यम्, 'सविशेषणौ विधिनिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाधे" इतिन्यान्मधुन्येव चान्वयादिति स्पष्टं विज्ञप्रियादिषु । ग्रन्थकृतस्तु मुखे पद्मस्वरूपस्यैवारोपेण व्यवहारसमारोपाभावादत्र न समासोक्तिरित्यभिप्रायः । किञ्च औपम्यगर्भविशेषणोत्थापितत्वसामान्यमेव समासोक्तेरविषय इत्यभिप्रेतम् । व्यक्तीकरिष्यति चैतत्प्रस्ताव एव 'औपम्यगर्भविशेषणोत्थापितत्वं नास्या विषय इति विशेषणसाम्ये श्लिष्टविशेषणोत्थापिता साधारणविशेषणोत्थापिता चेति द्विधा' इत्यनेन । अतएव "लावण्यमधुभिः" इत्यादौ मुखे पद्मस्वरूपस्यैवारोपात् लावण्यमधुनोश्चञ्चलत्वादिना लोचनरोलम्बयोश्च श्यामलत्वादिना स्फुटसाम्येऽपि विविधयोरारोपणाच्च एकदेशविवर्त्तिरूपकमेवेतिग्रन्थकर्त्तुः स्वसिद्धान्तः । "द्वितीयस्तु स्वाभिप्राय प्रकार एकदेशविवर्त्तिरूपकविषय एव" इत्यनुपदमेवोक्त्या स्पष्टीकृतः । अतएव "लावण्यमधुभिः" इत्याद्युदाहरणमेव एकदेशविवर्त्तिरूपकलक्ष्यत्वेनोपपादितम् ।

( ९३ ) उपमारूपकगर्भत्वे उदाहर्तुमाह—सङ्करेति । सङ्कर उपमारूपकयोः सन्दिग्धत्वं गर्भे यस्य तस्य भावस्तत्त्वं तस्मिन् सति "विशेषणसाम्यस्य समासोक्तिरितिशेषः । नन्विदमौपम्यमात्रगर्भत्वे उदाहृतं तत्कथं पुनरौपम्यरूपकोभयगर्भत्वे चोदाहरणं प्रदर्शितं इत्याशङ्कायामाह—सुवेशेति । परीता व्याप्तेत्यर्थः । उपमारूपकसाधकाभावात् उपमारूपकयोरन्यतरस्य निष्पादकाभावादित्यर्थः ।

( ९४ ) एषु च येषां मते उपमासङ्करयोरेकदेशविवर्तिता नास्ति तन्मते आद्य-तृतीययोः समासोक्तिः ।

( ९५ ) द्वितीयस्तु प्रकार एकदेशविवर्तिरूपकविषय एव ।

( ९६ ) पर्यालोचने त्वाद्ये प्रकारे एकदेशविवर्तिन्युपमैवाङ्गीकर्तुमुचिता । अन्यथा—

तथाच 'सुवेशा' इत्यत्र परीतेति पाठपरिवर्त्तने उपमितसमास "उपमितं व्याघ्रादिभि" रित्यदिना, रूपकसमासश्च मयूरव्यंसकादित्वादिति द्विविधसमासमपि सम्भवितुम-र्हति प्रतिबन्धकाभावात् । "केशपाशालिवृन्देन" इत्यत्र च "केशपाशः अलिवृन्दमिव" इत्युमितसमासः, अलिवृन्दतुल्यकेशपाशेन नायिकाया व्याप्तत्वसम्भवात् "केशपाशः अलिवृन्दमिव" इतिरूपकसमासोऽपि केशपाशरूपेणालिवृन्देन लताया व्याप्तत्वसम्भ-वादित्युपमारूपकयोरन्यतरस्य साधकाभाव एवेतिभावः । सङ्करसमाश्रयणम् उपमारूप-कयोः सन्देहसङ्कराङ्गीकारः । नच सामान्यधर्माप्रयोगवशादुपमा रूपकं बाधत इति वाच्यम्, रूपकस्य सम्भवे तथारूपकाऽबाधात् । समासान्तरं "दन्तप्रभा इव पुष्पाणि" इत्याद्युत्तरपदार्थप्रधानरूपः समास इत्यर्थः, पूर्ववत् पूर्वं यथा "दन्तप्रभा" इत्यादौ "सुवेशा" इतिपाठे समासद्वैविध्यमुपपादितं तद्वत् । नन्वेवं तर्हि हरिणेक्षणार्थां तथात्वा-रोपः कथं सेत्स्यतीत्यत आह—समासान्तरेति । समासान्तरस्य रूपकानुयोगिनः समा-सस्य महिमा सार्थक्यान्वेषणं तेन । लताप्रतीतिरिति । एवञ्च आद्यपादत्रये उपमितस-सेन सादृश्यस्याभिधीयमानत्वात् लतासादृश्यस्य च प्रतीयमानत्वात् एकदेशविवर्त्ति-न्युपमेयम् आहोस्वित् दन्तप्रभादौ पुष्पत्वाद्यारोपस्य शाब्दत्वात् हरिणेक्षणार्थः । लता-त्वारोपस्य च आर्थत्वादेकदेशविवर्त्तिरूपकम् ? इत्येवमुपमारूपकयोः सन्देहसङ्करः तथोपमारूपकसन्देहसङ्करगर्भकदन्तप्रभापुष्पचितेत्यादिविशेषणसादृश्यात् समासोक्ति-रित्यपि च साम्प्रदायिकमतम् ।

( ९४ ) उक्तमतमसङ्गतमिति दर्शयति—एषु चेति । "दन्तप्रभा" इत्यादिपूदाहृतेषु त्रिषु विशेषणसाम्येषु मध्य इत्यर्थः । मते सिद्धान्ते उपमासङ्करयोः उपमाया उपमा-रूपकयोः सन्देहसङ्करस्य चेत्यर्थः । एकदेशविवर्त्तिता नास्ति उपमा रूपकं तदुभयं वा एकदेशविवर्त्तित्वेन न विद्यते इत्याशयः । आद्यतृतीययोः प्रथमतृतीययोरुदाहरणयोः, सुवेशेतिपाठयुते "दन्तप्रभा" इत्यादौ आद्योदाहरणे, परीतेतिपाठयुते ,"दन्तप्रभा" इत्यादावेवतृतायोदाहरणे चेत्यर्थः एतेन उपमासङ्करयोरेकदेशविवर्त्तित्वोपलम्भे तु तयोरेव स्वीकरणं युक्तमितिध्वनितम् । एतच्च स्पष्टीभविष्यत्यनुपदमेव मूले ।

( ९५ ) सम्प्रति यथाक्रमं स्वसिद्धान्तं दर्शयति—द्वितीयस्त्वति । रूपकगर्भित-स्वरूपस्तु ' लावण्यमधुभिः पूर्णम्" इत्यादिरूपमित्यर्थः । एकदेशविवर्त्तिरूपकविषय ए-वेति । मुखे पद्मस्वरूपस्यैवारोपेण पद्मव्यवहारारोपाभावात् समासोक्तेरनुपपत्तेरिति दर्शितदिशा स्वसिद्धान्ते एकदेशविवर्त्तिरूपकस्य विद्यमानत्वाच्चेत्याशयः ।

( ९६ ) प्रथमतृतीययोरपि तद्दर्शितां समासोक्ति क्रमशो दूषयितुमाह—पर्यालोचने त्विति । परितः सिद्धान्तत्वेन विचारे त्वित्यर्थः । आद्ये प्रकारे "दन्तप्रभा" इत्यादौ सुवे-शेति पाठयुते प्रथमप्रकार इत्यर्थः । उपमैवेत्येवकारेण समासोक्तेर्व्यवच्छेदः । अन्यथा प्रकृते तदनङ्गीकारात् ।

( ९७ ) 'ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् ।
प्रमोदयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार ॥'

( ९८ ) इत्यत्र कथं शरदि नायिकाव्यवहारप्रतीतिः, नायिकापयोधरेणार्द्रनखक्षताभशक्रचापधारणासंभवात् ।

( ९९ ) ननु 'आर्द्रनखक्षताभम्' इत्यत्र स्थितमप्युपमानत्वं वस्तुपर्यालोचनया ऐन्द्रे धनुषि संचारणीयम् ।

( १०० ) यथा—'दध्ना जुहोति' इत्यादौ हवनस्यान्यथासिद्धेर्दध्नि संचार्यते विधिः ।

---

( ९७ ) ऐन्द्रमिति । शरत्समयवर्णनमिदम् । पाण्डु सकलजलवर्षणतया शुभ्रः अन्यत्र दुग्धसम्भृततया शुभ्रपीतः, असौ पयोधरो मेघ अन्यत्र कुचस्तेन 'पाण्डुः कुन्ती पतौ सिते" इति हैमः, "हरिणः पाण्डुरः पाण्डु" रित्यमरः, "पयोधरः कोषकारे नारिकेले स्तनेऽपि च । कशेरुमेघयोः पुंसि" इतिमेदिनी, आर्द्रनखक्षताभं नूतननखक्षतसादृश्यम्, ऐन्द्रमिन्द्रसम्बन्धि धनुश्चापम्, दधाना धारयन्ती शरत् शरत्समयः काचित् स्वैरिणी च सकलङ्कं शशचिह्नविशेषसमन्वितं परस्त्रीगमनादपवाददूषितञ्च इन्दुं, चन्द्रम् उपनायकञ्च प्रमोदयन्ती स्वच्छीं विदधती स्वसङ्गमेन आह्लादयन्ती च सती, रवेः सूर्यस्य स्वामिनश्चापि, अधिकं तापं तीक्ष्णतां मनस्तापञ्च चकार । अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दस्तल्लक्षणं चोक्तं प्राक् ( ११९ पृ० ) ।

अत्र पाण्डुपयोधरेण आर्द्रनखक्षताभम् ऐन्द्रं धनुर्दधानेत्याद्युपमागर्भविशेषणसादृश्येन शरदि नायिकाव्यवहारसमारोपात् समासोक्तिरिति साम्प्रदायिकमतम् । ऐन्द्रे धनुषि नखक्षतौपम्यं मेघे कुचौपम्यञ्च शाब्दम्, शरदि नायिकौपम्यम् इन्दावुपनायकौपम्यं रवौ स्वाम्यौपम्यञ्च प्रतीयमानमित्येकदेशविवर्त्तिन्युपमेति च मूलकर्त्तुरभिप्रायो बोध्यः ।

( ९८ ) तत्र साम्प्रदायिकमतं निरसितुमाह–इत्यत्रेति । नायिकाया भूमौ विद्यमानाया इत्याशयः, तद्वदिव पयोधरः कुचस्तेन "शरद्" इति शेषः । असम्भवादिति । यत्र विशेषणस्य सम्भवपरत्वमवगम्यते तत्रैव व्यवहारसमारोपः कर्त्तुं शक्यः अन्यथा शशेऽपि शृङ्गव्यवहारसमारोपः स्यादित्यतः भूमौ विद्यमानाया नायिकाया कुचेन दूराकाशे विद्यमानस्य आर्द्रनखक्षताभैन्द्रधनुषः धारणासम्भवेन "पाण्डुपयोधरेण आर्द्रनखक्षताभमैन्द्रं धनुर्दधाना" इति विशेषणस्य नायिकापक्षे नितरामेवासम्भवात् शरदि तद्व्यवहारसमारोपस्यैवासम्भवेन समासोक्तेः कथमुपपत्तिर्भवेत् । अतएव नायिकामिव शरदं स्वीकृत्य ऐन्द्रे धनुषि नखक्षतसादृश्यं मेघे कुचसादृश्यञ्च शाब्दम्, शरदि नायिकासादृश्यम् इन्दावुपनायकासादृश्यम् रवौ स्वामिसादृश्यञ्च प्रतीयमानमित्यकामेनाप्येकदेशविवर्त्तिन्युपमास्वीकर्त्तव्यतायां "दन्तप्रभापुष्पचिते" त्यत्राप्येकदेशविवर्त्तिन्युपमैव स्वीकरणीयेति ग्रन्थकृतामाशयः ।

( ९९ ) प्रतिपक्ष्याशयमाशङ्कते—नन्विति । वस्तुनोऽभिप्रेतार्थस्य पर्यालोचना तात्पर्यान्वेषणं तया । सञ्चारणीयं "याचितमण्डन" न्यायेनार्पणीयम् ।

(१००) उक्तार्थं प्रतिपक्ष्येव मीमांसकसिद्धान्तसिद्धं दृष्टान्तेन स्पष्टयति—यथेति ।

( १ ) एवं चेन्द्रचापाभमार्द्रनखक्षतं दधानेति प्रतीतिर्भविष्यतीति चेत् ?

( २ ) न, एवंविधनिर्वाहे कष्टसृष्टिकल्पनादेकदेशविवर्त्युपमाङ्गीकारस्यैव ज्यायस्त्वात् ।

इत्यादौ "आगमवाक्ये" इतिशेषः, हवनस्य होमस्य, अन्यथासिद्धेः "अग्निहोत्रं जुहोति" इत्यागमान्तरोत्पत्तिविधिनैव प्राप्तेः । दध्नि दधिपदे । सञ्चार्यते उपक्रम्यते, विधिरप्राप्तप्रापकत्वरूपविधिशक्तिः । अत्रायमाशयः—अग्निहोत्रप्रकरणे "अग्निहोत्रं जुहोति" 'सायं प्रातर्जुहोति" "दध्ना जुहोति" इत्यादयो बहवो विधयः उपलभ्यन्ते । तत्र अग्निहोत्रसंज्ञकहवनस्य "अग्निहोत्रं जुहोति" इत्युत्पत्तिविधिनैव लब्धतया "दध्ना जुहोति" इत्यनेन पुनस्तदंशे विधानं न युज्यते विधेरप्राप्तप्रापकत्वरूपत्वात् । अतश्च "दध्ना जुहोति" इति विधौ जुहोतीत्यत्रोपलभ्यमानं विधित्वं दध्नि अदग्धदहनन्यायेन याचितमण्डनमिव सञ्चार्यते । तथा चोक्तं पार्थसारथिमिश्रेण—इत्थं च "दध्ना जुहोति" इत्यस्य होमानुवादमात्रे पर्यवसानं भवति । उक्तं च कुमारिलभट्टपादैः—

"सर्वत्राख्यातसम्बन्धे श्रूयमाणे पदान्तरे ।
विधिशक्त्युपसङ्क्रान्ते स्याद्धातोरनुवादता ॥"

"यथाख्याते स्थिता विधिशक्तिः धात्वर्थस्यान्यथासिद्धत्वे तत्रानुपयोगिनी अदग्धदहनन्यायेन पदार्थान्तरस्य विधेयतायामुपयोगं लभमाना पदान्तरे सञ्चार्यते तथात्रापीतिभावः" इति तर्कवागीशाः । एवञ्च "शेषः परार्थत्वात्" इति जै० ३।१।२। सूत्रेण दध्नो होमरूपपरार्थतया शेषत्वेन तदङ्गत्वात् "दध्ना अग्नि होत्रं जुहोति" इति विधिः पर्यवस्यति ।

( १ ) फलितमवगमयति—एवञ्चेति । आर्द्रनखक्षताभमित्यत्र विद्यमानत्वस्याप्युपमानत्वस्य ऐन्द्रे धनुषि याचितमण्डनन्यायेन सञ्चारणीयत्व चेत्यर्थः । दधाना नायिकेति शेषः । तथाच ऐन्द्रधनुः सदृशार्द्रनखक्षतं धारयन्तीत्येवंरूपेण फलितस्य विशेषणस्य नायिकापक्षेऽपि भवितु शक्यत्वात् समासोक्तिरव्याहतैवेति प्रतिपक्षिणामभिप्रायः । "ऐन्द्र"मित्यादौ कथ शरदि नायिकाव्यवहारप्रतीतिरितित्युत्तरितं भवतीतिबोध्यम् । चेत् "समाधत्ते" इति शेषः ।

( २ ) एतदपि निरस्यति—नेति । एवं नैवं समाधेयमित्यर्थः । तत्र हेतुमुपपादयति—एवंविधेति । एवंविधेन आगमवाक्यवत् काव्ये भवितुमशक्यत्वेन अन्यत्र विद्यमानस्यार्थस्य अन्यत्र सञ्चारणव्यापारेण निर्वाहे समासोक्तिसाधने कष्टायाः सृष्टिः समाधानं तस्याः कल्पनं प्रणयनं दुराग्रहेण समर्थनमितियावत् , तस्मात् तदपेक्षयेत्यर्थः । ज्यायस्त्वात् श्रेष्ठत्वात् । अयमाशयः—समनन्तरोक्तप्रकारेण दध्नो हवनविधिसञ्चारणवत् इन्द्रधनुषि चौपम्यसञ्चारणमनुक्तम् । शब्दानां हि प्रधानक्रियानिवर्त्तकस्वक्रियाभिसम्बन्धात् साध्यायमानता न्यायसिद्धा अतएव दध्नि विधिसञ्चारणम् आर्द्रनखक्षताभमित्यत्रार्द्रनखक्षतसम्बन्धात् आभाशब्दस्यार्थस्यौपम्यस्य च तत्परित्यागेन सम्बद्धे इन्द्रधनुषि सञ्चारणे दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्यनिर्वाहः, यथाकथञ्चिन्निर्वाहे वा कष्टसृष्टिकल्पना स्यादित्यनायाससिद्धत्वेनैकदेशविवर्तिन्युपमास्वीकारस्यैव ज्यायस्त्वमुपमागर्भसमासोक्तिर्नास्त्येवेति ।

( ३ ) अस्तु वात्र यथाकथंचित्समासोक्तिः । 'नेत्रैरिवोत्पलैः पद्मैः–' इत्यादौ ( ९२१ पृ. ) चान्यगत्यसंभवात् ।

( ४ ) किं चोपमायां व्यवहारप्रतीतेरभावात्कथं तदुपजीविकायाः समासोक्तेः प्रवेशः ।

( ५ ) यदाहुः—

( ३ ) ननु "धर्मिकल्पनातो धर्मकल्पनायां लाघवम्" इति नयेनैकदेशविवर्त्ति-न्युपमाकल्पनापेक्षयोपमेयस्योपमानत्वकल्पनं लघुरित्यत आह—अस्तु वेति । अत्र "ऐन्द्रं धनु"रित्यादौ । यथाकथञ्चित् कष्टेन धर्मसञ्चारकल्पनया ।

नेत्रैरिवोत्पलैरिति ।

"नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरः श्रियः ।
पदे पदे विभान्तिस्म चक्रवाकैः स्तनैरिव ॥"

इति पूर्वोक्तोदाहरणे इत्यर्थः। अन्यगत्यसम्भवात् एकदेशविवर्त्तिन्युपमास्वीकारं विना अन्योपायासम्भवादित्यर्थः । नच पूर्वोक्तदिशोत्पलादावुपमानत्वं सञ्चार्यतामितिवाच्यम्, "आर्द्रनखक्षताभ"मित्यत्रार्थ्या उपमाया अर्थवशेनैव कल्प्यमानत्वात् इह तु श्रौत्यास्त-दसम्भवादित्याशयः ।

( ४ ) ननु उत्पलैरिव नेत्रैरित्युपमानोपमेयभाववैपरीत्येनात्रापि सरःश्रीषु नायि-काव्यवहारसमारोपेण "दन्तप्रभा पुष्पचिता" इत्यादिवदेव समासोक्तिः कथं न स्यादि-त्यत आह—किञ्चेति । अन्योऽप्यत्र समासोक्तेरनभ्युपगमे हेतुरित्याशयः । उपमायाम् इवादिपदैः साक्षादेवाभिहितायामित्यर्थः । अभावात् असम्भवात् । तदुपजीविकाया सा व्यवहारप्रतीतिरेवोपजीविकोपकारिका यस्यास्तस्याःतादृश्याः । प्रवेशोऽन्तर्भावः । तथाच "नेत्रैरिवोत्पलै"रित्यादौ पूर्वापरयोरिवपदैरौपम्यस्यैव ज्ञापिततया सन्दंशपति-तन्यायेन साहचर्येण च मध्यपातिसरःश्रीषु अध्याहरणीयनायिकौपम्यप्रतीतेरेवानुभव-सिद्धत्वम्, तेनैव श्रोतुराकाङ्क्षानिवृत्तेः न त्वत्र नायिकाव्यवहारप्रतीतिर्भवति । औप-म्यव्यवहारयोश्च नितरामेव वैलक्षण्यम् । तेन "नेत्रैरिवोत्पलैः" इत्यादावगत्यैकदेश-विवर्त्तिन्युपमास्वीकारे 'ऐन्द्रं धनु' रित्यादावपि तत्स्वीकरणमेवोचितमित्याशयः ।

यत्पुनरुक्तं राघवानन्दैः—सरःश्रीनिष्ठं लिङ्गसाम्यं समासोक्तिप्रयोजकमिति, तन्न विचारसहम्, व्यवहारप्रतीतिसाधकाभावात् । लिङ्गसाम्यमात्रेण समासोक्तिप्रतीतौ "वी-क्ष्यते सखि ! शुभ्रांशुः" इत्यादावप्यतिप्रसङ्गात् । किन्तु प्रस्तुतमपेक्ष्यैव समासोक्तिः क्रियते इति स्वयमनन्तरमेवोक्तम्, तत्कथं भवन्मतेऽपि लिङ्गसाम्ये समासोक्तिप्रतीति-रितिचेत् ? समानकार्यलिङ्गविशेषणानां लक्ष्येषु द्वयोस्त्रयाणां वा सद्भावे प्राधान्येन व्यव-हाराभ्युपगमात् । यच्चोक्तं तैरेव "नेत्रैरिवोत्पलैः" इत्यादावुत्प्रेक्षाऽपि तदत्यन्तमनुचि-तम्, हेत्वभावेऽध्यवसानस्यानुत्थानात् । किञ्चैवं "मुखेन कमलेनेव विभाति हरिणे-क्षणा" इत्यादावपि हरिणेक्षणायां पद्मिनीव्यवहारसमारोपेण समासोक्त्युत्प्रेक्षयोः समावेशः स्यादिति स्पष्टं लोचने ।

( ५ ) ननु समासोक्तौ मुख्यत्वेन व्यवहारप्रतीतिस्वीकारे किं बीजमित्याशङ्क्य तत्र प्राचीनसंवादमाह—यदाहुरिति ।

( ६ ) 'व्यवहारोऽथवा तत्त्वमौपम्ये यत्प्रतीयते ।
तन्नौपम्यं समासोक्तिरेकदेशोपमा स्फुटा ॥'

( ७ ) एवञ्चोपमारूपकयोरेकदेशविवर्तिताङ्गीकारे तन्मूलसङ्करेऽपि समासोक्तेरप्रवेशो न्यायसिद्ध एव,

( ८ ) तेनौपम्यगर्भविशेषणोत्थापितत्वं नास्या विषय इति विशेषणसाम्ये श्लिष्टविशेषणोत्थापिता साधारणविशेषणोत्थापिता चेति द्विधा । कार्यलिङ्गयोस्तुल्यत्वे च द्विविधेति चतुःप्रकारा समासोक्तिः ।

( ९ ) सर्वत्रैवात्र व्यवहारसमारोपः कारणम् । स च क्वचिल्लौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपः, शास्त्रीये वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपः, लौकिके वा शास्त्रीयवस्तुव्यवहारसमारोपः, शास्त्रीये वा लौकिकवस्तुव्यवहारसमारोप इति चतुर्धा ।

---

( ६ ) व्यवहार इति । यत् यस्मात् कारणात् औपम्ये सादृश्यगर्भविशेषणस्थले व्यवहारः व्यवहारारोपात्मकसाधर्म्यम्, अथवा तत् तत्त्वं स्वरूपं स्वरूपारोपात्मकसाधर्म्यम् "तत्त्वप्रतीतौ समासोक्तिमन्ये स्वीकुर्वन्ति तन्मतानुसारेणैव "अथवा तत्त्व"मित्युक्तम् इति विवृतिकाराः । प्रतीयते व्यज्यते, तदौपम्यं न समासोक्तिः किन्तु एकदेशोपमा एकदेशविवर्तिन्युपमा स्फुटा अनुभवसिद्धा । अत्र एकदेशोपमेतिपदम् एकदेशरूपकस्याऽप्युपलक्षणम्, तत्त्वमितिकथनात् तुल्यन्यायाच्च । एवञ्चैतन्मतेऽपि "लावण्यमधुभिः पूर्णम्" इत्यादौ एकदेशविवर्त्तिरूपकमेवेत्यवधेयम् ।

अलङ्कारसर्वस्वकृताऽप्युक्तम्—नेत्रैरिवोत्पलैरित्यादौ सरःश्रिया नायिकात्वप्रतीतिर्न समासोक्त्या विशेषणसाम्याभावात् । तस्मान्नायिकाऽत्र उपमानत्वेन प्रतीयते, न तु सरःश्रीधर्मत्वेन नायिकात्वप्रतीतिरित्येकदेशविवर्त्तिन्युपमैवोपास्येति" ।

( ७ ) एकदेशविवर्त्तिन्युपमायामेकदेशविवर्त्तिरूपके च तुल्यन्यायादुभयत्रैव समासोक्त्यप्रवेशे तदुभयसङ्करस्थलेऽपि समासोक्तिर्नास्तीति भङ्गीत उक्तमप्यर्थं पुनरपि विशदयति—एवञ्चेति । उक्तविधस्वसिद्धान्तस्य प्राचीनमतानुसारित्वेऽपि चेत्यर्थः । तन्मूलसङ्करेऽपि एकदेशविवर्त्तितामूलकोपमारूपकसङ्करे चेत्यर्थः । अप्रवेशोऽसम्भवो न्यायसिद्ध एव उपमायां रूपके उपमारूपकसङ्करे च व्यवहारप्रतीतेरभावादित्येवं प्रमाणसिद्ध एव ।

( ८ ) सम्प्रत्युपसंहरति—तेनेति । दर्शितदिशा "दन्तप्रभे" त्यादाविव त्रिषूदाहरणेषु समासोक्तेरसम्भवेनेत्यर्थः । औपम्यगर्भविशेषणोत्थापितत्वं विशेषणसाम्यस्यौपम्यगर्भत्वमित्यर्थः । अस्याः समासोक्तेः । इति हेतोः । द्विधा न तु त्रिधेति शेषः । तुल्यत्वे सादृश्ये च सम्भवतीतिशेषः । चतुष्प्रकारा समासोक्तिरिति । एतेन "औपम्यगर्भत्वेन" इत्यभिधाय ततश्च "औपम्यगर्भत्वं पुनस्त्रिधा" इत्यनेन विभागः, यथाक्रमं "दन्तप्रभा" इत्याद्युदाहरणत्रयञ्च साम्प्रदायिकमत एवेति ध्वनितम् ।

( ९ ) समासोक्तौ व्यवहारसमारोप एव हेतुरित्युपपादयति—सर्वत्रेति । सर्वप्रभेदादिष्वित्यर्थः । अत्र आसु समासोक्तिषु व्यवहारसमारोप एव अप्रस्तुतस्येतिशेषः, कारणम्,

( १० ) तत्र लौकिकवस्त्वपि रसादिभेदादनेकविधम् । शास्त्रीयमपि तर्कायुर्वेद-ज्योतिःशास्त्रप्रसिद्धतयेति बहुप्रकारा समासोक्तिः । दिङ्मात्रं यथा—'व्याधूय यद्वसनम्-' इत्यादौ लौकिके वस्तुनि लौकिकस्य हठकामुकव्यवहारादेः समारोपः ।

( ११ ) 'यैरेकरूपमखिलास्वपि वृत्तिषु त्वां
पश्यद्भिरव्ययमसंख्यतया प्रवृत्तम् ।
लोपः कृतः किल परत्वजुषो विभक्ते-
स्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये ॥'

( १२ ) अत्रागमशास्त्रप्रसिद्धे वस्तुनि व्याकरणप्रसिद्धवस्तुव्यवहारसमारोपः ।

---

न तु स्वरूपसमारोपः सहृदयप्रतीतिर्वेत्याशयः । स चाप्रस्तुतव्यवहारसमारोपश्च । लौकिके अमुष्मिल्लोक एव प्रत्यक्षादियोग्ये । शास्त्रीये विद्याव्युत्पत्तिविशेषगम्ये न तु साधारणप्रत्यक्षादियोग्ये । अन्यत्राप्येवमेवानुसन्धेयम् । चतुर्द्धेति । एवञ्च पूर्वोक्तानां चतुर्णां भेदानां प्रत्येक एव लौकिक इत्यादिप्रदर्शितदिशा चतुष्प्रकारत्वात्साकल्येन मुख्यतः षोडशप्रकारा समासोक्तिः फलिता भवतीत्यवधेयम् ।

( १० ) सम्प्रति प्रकारान्तरेणानेकविधत्वमुपपादयति—तत्रेति । तेषु चतुष्प्रकारेषु मध्य इत्यर्थः । रसाः शृङ्गारादयः, आदिशब्दाद्घटपटादीनि वस्तूनि च तेषां भेदात् हठकामुकव्यवहारादेरित्यत्रादिपदेन साम्प्रदायिकमतसिद्धस्य स्वरूपस्य ग्रहणम् ।

( ११ ) लौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपे "व्याधूय यद्वसन" मित्युदाहृत्य सम्प्रति शास्त्रीये वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपमुदाहरति—यैरेकरूपमिति । परमेश्वरं प्रति कस्यचिदुक्तिरियम् । हे परमात्मन् ! ( इदमध्याहार्यम् ) अखिलास्वपि वृत्तिषु संसारस्य सृष्टिस्थितिप्रलयादिषु सर्वास्ववस्थासु समस्तासु पदार्थान्वयेषु च एकरूपम् अपरिणामित्वादद्वितीयम् अन्यत्र विकाररहित्यात्तदर्थे संख्याराहित्यम्, अव्ययम् अविनाशिनम्, अन्यत्र अव्ययसंज्ञकस्वरादिनिपातविशेषम्, असंख्यतया अनन्तेन संख्यातुमशक्यतया प्रवृत्तं विद्यमानम्, अन्यत्र संख्याविशेषप्रतिपादकतया प्रवृत्तम्, त्वां भवन्तम्, पश्यद्भिर्जानद्भिः, यैर्जनैः परत्वजुष उत्कर्षभाजस्तव विभक्तेर्विभागस्य विभागकरणस्येत्यर्थः अन्यत्र तु परवर्त्तिन्या विभक्तेः स्वादेः किल इति निश्चयेन लोपो निरास उच्छेद इत्यर्थः कृतः तैर्जनैः ध्रुवं तव लक्षणं विशिष्टज्ञानं स्वरूपनिश्चयमितितात्पर्यम्, अन्यत्र सूत्रं च कृतमित्यहं मन्ये । ध्रुवमितिभावप्रधाननिर्देशः । अव्ययप्रतीतिश्चात्र श्लिष्टविशेषणसामर्थ्यादधिकाराच्च । वसन्ततिलकं छन्दस्तल्लक्षणं तूक्तं प्राक् ( १९३ पृ० ) ।

( १२ ) लक्ष्यं समर्थयति—अत्रेति । आगमशास्त्रं वेदः तत्प्रसिद्धे अध्यात्मशास्त्रप्रथिते इत्यर्थः । आगमानां शास्त्रत्वेऽपि ततो विभज्य प्रतिपादनं तेषामपौरुषेयत्वेन वैलक्षण्यबोधनार्थम् । वस्तुनि परमात्मरूपे ।

तथाच भगवती श्रुतिः—

"अशब्दमस्पर्शमरूपमव्ययं तथा रसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥"

( १३ ) एवमन्यत्र ।

भगवद्गीतायाम्—

"अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते"

ब्रह्मसूत्रशाङ्करभाष्यभामत्याम्—

"कार्यरूपेण नानात्वमभेदः कारणात्मना ।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥"

इति कार्यरूपेण "असंख्यतया प्रवृत्तम्" इत्युक्तम् । यद्वा सांख्यमतेन । तथा चोक्तं सांख्यकारिकायाम्—

"जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥"

व्याकरणप्रसिद्धेति । व्याकरणप्रसिद्धं वस्तु अव्ययरूपम्, तथाच सूत्रम् "स्वरादिनिपातमव्ययम्" पा० १।१।३७। आथर्वणश्रुतिश्च—

'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥'

तद्वद् व्यवहारसमारोपश्च शब्दात्मकत्वरूपेण, परमात्मनि तदारोपस्यापि शब्दब्रह्मात्मकत्वादिति बोध्यम् ।

( १३ ) एवमिति । अन्यत्र लौकिके शास्त्रीयस्य शास्त्रीये वा लौकिकस्य व्यवहारस्य समारोप एवमूह्यमित्यर्थः ।

तत्र लौकिके शास्त्रीयव्यवहारसमारोपो यथा—

"सीमानं न जगाम यन्नयनयोर्नान्येन यत्सङ्गतं
न स्पृष्टं वचसा कदाचिदपि यद्दृष्टोपमानं न यत् ।
अर्थादापतितं न यन्न च स यत्तत् किञ्चिदेणीदृशो
लावण्यं जयति प्रमाणरहितं चेतश्चमत्कारि तत् ॥"

अत्र लावण्ये लौकिके प्रत्यक्षानुमानोपमानार्थापत्त्यभावशब्दरूपषट्प्रमाणादिमीमांसाशास्त्रप्रसिद्धवस्तुसमारोपः ।

"गण्डान्ते मददन्तिनां प्रहरतः क्ष्मामण्डले वैधृते
रक्षामाचरतः सदा विदधतो लाटेषु यात्रोत्सवम् ।
पूर्वामत्यजतः स्थितिं शुभकरीमासेव्यमानस्य ते
वर्ण्यन्ते विजयश्रियः किमिव न श्रेयस्विनां मङ्गलम् ॥"

अत्र ज्योतिश्शास्त्रप्रसिद्धवस्तुसमारोपः ।

शास्त्रीये लौकिकव्यवहारसमारोपो यथा—

कृत्वा सूत्रैः सुगूढार्थैः प्रकृतेः प्रत्ययं परम् । आगमान् भावयन् भाति वैयाकरणपुङ्गवः ॥

अत्र व्याकरणशास्त्रे राजव्यवहारस्य समारोपः ।

रसगङ्गाधरकारास्त्वत्र विशेषमत्र प्रतिपादयन्ति । तथाहि—

स्थितेऽपि सूर्ये पद्मिन्यो वर्तन्ते मधुपैः सह ।
अस्तं गते तु सुतरां स्त्रीणां कः प्रत्ययो भुवि ॥

अत्र समर्थ्यत्वेन स्थितार्थान्तरन्यासानुगुण्यमाधत्ते ।

( १४ ) रूपकेऽप्रकृतमात्मस्वरूपसंनिवेशेन प्रकृतस्य रूपमवच्छादयति । इह तु स्वावस्थासमारोपेणावच्छादितस्वरूपमेव तं पूर्वावस्थातो विशेषयति ।

( १५ ) अत एवात्र व्यवहारसमारोपो न तु स्वरूपसमारोप इत्याहुः ।

( १६ ) उपमाध्वनौ श्लेषे च विशेष्यस्यापि साम्यम् , इह तु विशेषणमात्रस्य ।

( १७ ) अप्रस्तुतप्रशंसायां प्रस्तुतस्य गम्यत्वम् , इह त्वप्रस्तुतस्येति भेदः ।

---

उत्तमानामपि स्त्रीणां विश्वासो नैव विद्यते ।
राजप्रियाः कैरविण्यो रमन्ते मधुपैः सह ॥

इह ( क ) समर्थकत्वेन ।

व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीतामाकर्ण्य स्तुतिमुदयत्रपातिरेकात् ।
आभूमीतलनतकन्धराणि मन्ये रण्येऽस्मिन्नवनिरुहां कुटुम्बकानि ॥

अत्र हि परकृतनिजस्तुत्याकर्णनकन्धरानमनादिविशेषणसाम्योत्थापितया समासोक्त्या सज्जनव्यवहाराभिन्नतया स्थित एव तरुव्यवहारे भूशाखासम्बन्धाभेदाध्यवसितमस्तकभूतलनमननिमित्तोत्थापिता त्रपारूपहेतूत्प्रेक्षा सम्भवति । अन्यथा कितवकृतग्रीवानमनस्यापि त्रपोत्थापकतापत्तेः । इत्युत्प्रेक्षानुगुणा समासोक्तिः । एवम्—

'राज्याभिषेकमाज्ञाय शम्बरासुरवैरिणः । सुधाभिर्जगतीमध्यं लिम्पतीव सुधाकरः ॥'

इत्यत्रापि स्वामिसेवकव्यवहारमूला सुधालेपनोत्प्रेक्षा । अमुयैव दिशा अचेतनव्यवहारे प्रकृते चेतनव्यवहारसम्बन्धिस्वरूप-हेतु-फलोत्प्रेक्षायाम् , चेतनव्यवहारे प्रकृते चाचेतनव्यवहारसम्बन्धिस्वरूप-हेतु-फलोत्प्रेक्षायां च समासोक्तिरेव मूलम्" । इति ।

( १४ ) सम्प्रति अलङ्कारान्तरादस्या भेदं दर्शयति—रूपक इति । एकदेशविवर्तिरूपक इत्यर्थः । अप्रकृतमप्रस्तुतम् उपमानरूपं वस्त्वित्यर्थः । इदञ्च कर्तृपदम् , आत्मस्वरूपसन्निवेशेन उपमेये आत्मस्वरूपारोपणेन, प्रकृतस्य प्रस्तुतस्योपमेयस्य रूपं स्वरूपम् अवच्छादयति अपह्नवविषयीकरोति उपमेयं गोपनीकृत्य स्वयमेव क्रियादौ मुख्यत्वेन संबध्नातीत्यर्थः । यथा "लावण्यमधुभिः पूर्णम्" इत्यादौ । इह तु समासोक्तौ तु अत्रापि अप्रकृतमितिपूर्वतोऽनुषज्यते स्वावस्थासमारोपेण अप्रस्तुतसाधर्म्यारोपेण अवच्छादितं रूपकवदेव अपह्नवविषयीकृतं स्वरूपं यस्य तत्तादृशमेव तं प्रकृतपदार्थम् , पूर्वावस्थातः अप्रस्तुतसाधर्म्यारोपात्प्राग्भवावस्थापेक्षया विशेषयति उत्कृष्टत्वेन ज्ञापयतीतिस्वमतम् ।

( १९ ) तृतीयमतं दर्शयति—अतएवेति । अत्र समासोक्तौ । अत्र "वदन्ती" त्यनेन स्वरूपस्य व्याख्यानाभावादेतत्कथनस्यास्फुटतयास्वरसो व्यञ्जितः ।

( १६ ) उपमाध्वनितोऽस्या भेदमुपपादयति—उपमाध्वनाविति । "हिममुक्तचन्द्ररुचिरः" इत्यादिप्रदर्शितोपमाध्वनावित्यर्थः । श्लेषे "प्रवर्त्तयन् क्रियाः साध्वीः" इत्यादिनिरूपयिष्यमाणेऽपि च विशेषस्यापीत्यपिना विशेषणस्य तु स्फुटमेवेति बोध्यते । इह मस्यां समासोक्तौ तु विशेषणमात्रकेवलविशेषणस्य साम्यमिति पूर्वतोऽन्वेति । प्रतीयते इतिशेषः ।

( १७ ) अथाप्रस्तुतप्रशंसातो भेदमुपपादयति—अप्रस्तुतेति । प्रस्तुतस्योपमेयस्य

---

( क ) "राजप्रियाः" इत्यादिः समासोक्तिः उत्तमानामित्यादेः समान्यस्य समर्थिकेति अर्थान्तरन्यासानुगुण्यमाधत्ते इत्यर्थः ।

( १८ ) उक्तैर्विशेषणैः साभिप्रायैः परिकरो मतः ।

गम्यत्वं व्यङ्ग्यत्वम् । अप्रस्तुतप्रशंसायामप्रस्तुतवर्णनामुखेन प्रस्तुतप्रतीतिर्युक्ता मूलमन्तरेणऽप्रस्तुतवर्णनासम्बन्धप्रलापप्रायत्वात् । इह तु समासोक्तौ तु अप्रस्तुतस्योपमानस्य गम्यत्वमितिसम्बन्धः । तथा चेह विशेषणानां वर्णनीयार्थप्रतिपादनेन प्रकरणेन नियमितेऽपि द्वितीयार्थप्रतीतेरनुभवसिद्धेरितिभावः ।

( १८ ) समासोक्तिप्रयोजकसमुदायमध्ये विशेषणस्य प्राधान्यात्तत्प्रयोजितमेव परिकरालङ्कारं निरूपयति—उक्तिरिति । साभिप्रायैः प्रकृतार्थपरिपोषणाभिप्रायेण प्रयुक्तैः प्रकृतार्थोपकारकचमत्कारिव्यङ्ग्यताशालिभिरित्यर्थः, अतएवास्य हेत्वलङ्काराद्वैलक्षण्यम्, तत्र व्यङ्ग्यस्यानावश्यकत्वात्, इह तु प्रकृतार्थोपपादकस्य व्यङ्ग्यस्यावश्यकत्वमिति । (क)विशेषणैः, उक्तिविषयविशेषप्रतिपादनं परिकरस्तदाख्योऽलङ्कारो मतः। परिकरः परिकरणमुपस्करणं विशेषणव्यङ्ग्यार्थेन वाक्यार्थस्योपस्करणात् परिकर इत्यन्वर्थेयं संज्ञा । केचित्तु—"परिकरोति प्रकृतार्थमुपकरोतीति परिकरः साभिप्रायशब्दः सोऽस्मिन्नस्तीति परिकरः, मत्वर्थीयोऽच्प्रत्ययः, भूषणार्थत्वाभावात् "संपरिभ्यां करोतौ भूषणे" ६।१।१३७ इति सूत्रेण विहितः सुडागमो नेत्याहुः । अत्र "विशेषणै" रितिबहुवचनमविवक्षितम्, तेनैकस्मिन्नपि प्रकृतार्थोपकारकचमत्कारिताव्यञ्जके विशेषणेऽयं सम्भवति । यद्यप्यत्र "यद्यप्यपुष्टार्थस्य दोषत्वाभिधानात्तन्निराकरणेन पुष्टार्थस्य स्वीकारः कृतस्तथाऽप्येकनिष्ठत्वेन, बहूनां विशेषणानामेवोपन्यासे वैचित्र्यमित्यलङ्कारमध्ये गणितः" इतिकाव्यप्रकाशकृदुक्तरीत्या बहुवचनं विवक्षितमेवाभाति तथापि "वयं त्वालोचयमः—तादृशैकविशेषणोपन्यासेऽप्यलङ्कारत्वमुचितम्, अपुष्टार्थत्वविरहस्य निविशेषणतयाऽप्युपपत्तेरनुभवसिद्धत्वाभावाद्वैचित्र्यस्य चानुभवसिद्धत्वात्" यथा—

अयि ! लावण्यजलाशय ! तस्या हा हन्त ! मीननयनायाः ।
दूरस्थे त्वयि किं वा कथयामो विस्तरेणालम् ॥

इत्यादौ" इतिप्रदीपकारोक्तयाऽविवक्षाया एव युक्तत्वमिति विचारणीयम् । उक्तोदाहरणे "लावण्यजलाशय" इति "मीननयनायाः" इति च विशेषणं साभिप्रायम् । तथा चायम्भावः—यथा नित्ये सन्ध्यावन्दनादौ दोषाभावस्याङ्गवैकल्येऽपि सिद्धौ साङ्गत्करणं फलातिशयायैव तथा दोषाभावस्य विशेषणानुपादानेऽपि सम्भवेन साभिप्रायैकविशेषणनिबन्ध-

(क) अत्र विशेषणैरिति विशेष्यस्याप्युपलक्षणम् । तेन साभिप्राये विशेष्येऽप्ययम् । तेन परिकराङ्कुरालङ्कारोऽप्ययदीक्षितकृतोऽत्रैवान्तर्भवति, तथाहि कुवलयानन्दे—

"साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः । चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥" इति

अत्र चतुर्भुज इति देवविशेष्यं पुरुषार्थचतुष्टयदानसामर्थ्याभिप्रायगर्भमितिपरिकरा एवान्तर्भावसम्भवात्तद्भिन्नं परिकराङ्कुरालङ्कारास्वीकरणेन क्षत्यभावात् । प्रकृतोदाहरणे चतुर्भुज इत्यस्य देवविशेष्यत्वस्वीकार एव महाभारते शान्तिपर्वणि विष्णोर्दिव्यसहस्रनामस्तोत्रे "चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ।" इतिग्र चतुर्थेभुज इति चत्वारिंशदधिकशततम(१४०)नामत्वेन गण्यते । किञ्च चतुर्भुजशब्दस्य "चक्रपाणिश्चतुर्भुज" इत्यमरकोशे "वैकुण्ठो जलशायनश्चतुर्भुजश्च" इतिहलायुधकोशे च विष्णुनामत्वेनोपलम्भः । एवञ्च प्रकृते देव इति विशेषणमेव विशेष्यविशेष्यविशेषणभावे कामचारादित्यवधेयम् ।

( १६ ) यथा—

'अङ्गराज ! सेनापते ! द्रोणोपहासिन् ! कर्ण !, रक्षैनं भीमाद्दुःशासनम् ।'

मश्चमत्कारो दुरपह्नव एवेति । किञ्च "सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः" इत्यत्र सुधांशुकलितोत्तंस इति विशेषणाभावेऽपि तापहरणसामर्थ्यस्य सामर्थ्यातिशयेनाप्युपपत्तेस्तद्विशेषणानुपादानेऽपि न क्षतिरतत्र तद्विशेषणोपादानमधिकचमत्कारायैवेतिबोध्यम्" स्पष्टञ्चैतत्प्रदीपोद्योतयोः। नन्वेवंप्रकारेण प्रकाशप्रदीपयोर्विरोधे किं न्याय्यमितिचेत् ! अत्रोच्यते "यथोत्तरं मुनीनां प्रामाण्यम्" इतिन्यायेन प्रदीपकारोक्तसिद्धान्तस्यैवानुसरणीयत्वम्। मुनित्वमनयोः कथमितिचेत् ? "नानृषिः कवि" रितिवचनात्। एवञ्च "अत एवात्र विशेषणैरिति बहुत्वं विवक्षितमिति" यदुक्तं तदापातरमणीयमिति सुधीभिर्विभावनीयम्। तथासति भिन्नभिन्नप्रकृतार्थपरिपोषणाभिप्रायेण एकानेकविशेषणप्रयोगः परिकर इतिलक्षणं फलितम्। अस्यालङ्कारत्वाऽभ्युपगमे प्राचां सम्मतिरुक्तैव। काव्यलिङ्गे पदार्थवाक्यार्थावेव हेतुभावं भजते अत्र तु पदार्थवाक्यार्थबलात् प्रतीयमानोऽर्थो वाच्योपकारतां भजत इत्यनयोर्भेदः।

( १६ ) उदाहरति—यथेति। वेणीसंहारनाटके भीमेन हन्यमानं दुःशासनं परित्रातुमसमर्थं कर्णं प्रति तत्कृताचार्योपहासामर्षितस्य अश्वत्थाम्न उक्तिरियम्। हे अङ्गराज ! अङ्गस्य दुर्योधनसमर्पितस्य देशविशेषस्य राजेति तत्सम्बुद्धौ रूपम्। एतेन भवान् असाधारणो लोको न तु पामरः अङ्गदेशस्याधीशत्वेन महाप्रभाववतस्ते दुर्बलरक्षणं नितरां समुचितम्। तथाचोक्तम्—

"विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय।
खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥"

तदकरणात्त्वपाममभिव्यनक्ति। नन्वेवमपि तटस्थस्यान्यरक्षणे न किमपि प्रयोजनमित्यत आह—सेनापत इति। मां परित्यज्य दुर्योधनेन सेनापतीकृतस्य तव सेनान्तर्वर्तिन एव विशेषतश्च तद्भ्रातुर्दुःशासनस्यैव सर्वथा परित्राणमेवोचितमित्याशयः। ननुवशकोऽस्म्यहमत्र परित्रातुमित्यत आह—द्रोणोपहासिन्निति। नास्ति शक्तिश्चेत्तर्हि पार्थेन निहन्यमानं जयद्रथं परित्रातुमसमर्थवन्तं मत्पितरं द्रोणाचार्यमुपहसितवानसीतिभावः। एनं दुर्योधनस्य भ्रातरं युवराजपदारूढमित्यर्थः। अत्राङ्गराजेत्यादिविशेषणत्रयाणां पृथक्पृथगाशयेन प्रयोगात्परिकरः। अत्र च विशेषोऽन्यत्र समुपलभ्यते। तथाहि—"अयं च वाच्यसिद्ध्यङ्गव्यङ्ग्यगर्भत्वेनोपस्कारकव्यङ्ग्यगर्भत्वेन द्विधा भवन् व्यङ्ग्यस्य वाच्यायमानत्वतद्विपर्ययाभ्यां चतुर्धा। आद्यो यथा—

"विहाय संसारमहामरुस्थलीमलीकदेहादिमिलन्मरीचिकाम्।
कृपातरङ्गाकुलमन्मनोमृगो विगाढुमीश ! त्वयि गाढमीहते ॥"

अत्र गाहनसिद्ध्यङ्गं कृपेत्यादेः समुद्ररूपं व्यङ्ग्यं वाच्यायमानम्। द्वितीयो यथा—

"खर्वीकृतेन्द्रगर्व ! त्वरया चक्रेण भिन्नक्रमुख !
लीलात्तकोलमूर्ते ! मामुद्धर्तुं कथं न शक्तोऽसि ? ॥"

तृतीयो यथा—

"मदकामविमोहमत्सरा रिपवस्त्वत्पुर एव तावकम्।
धृतशार्ङ्गगदारिनन्दक ! प्रतिकर्षन्ति कथं न वीक्षसे ॥"

( २० ) शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम् ॥ ५७ ॥

( २१ ) 'स्वभावादेकार्थैः' इति शब्दश्लेषाद् व्यवच्छेदः ।

( २२ ) 'वाचनम्' इति च ध्वनेः । उदाहरणम्—

अत्र गोवर्धनगजेन्द्रवसुन्धराणामुद्धारो वाच्यतास्पर्शशून्य एवोपालम्भसिद्ध्यङ्गम् । अत्र "धृतशार्ङ्गगदारिमन्दकेति । चतुर्थस्तु,

"मन्त्रैर्मीलितमौषधैर्मुकुलितं त्रस्तं सुराणां गणैः
स्रस्तं सान्द्रसुधारसैर्विदलितं गारुत्मतग्रावभिः ।
वीचिक्षालितकालियाहितपदे स्वर्लोककल्लोलिनि
त्वं तापं तिरयाधुना भवभयव्यालावलीढात्मनः ॥"

अत्र "वीचिक्षालितकालियाहितपदे" इति ।

( २० ) समासोक्तिप्रयोजकविशेषणशेषे श्लेषस्याप्युपस्थितत्वात्तस्य च शब्दार्थभेदेन द्विविधत्वेऽपि शब्दश्लेषस्य पूर्वमेव निरूपितत्वात्संप्रत्यवशिष्टमर्थश्लेषं निरूपयति—शब्दैरिति । स्वभावं स्वत एव प्रवृत्तं व्यापारं स्वाभाविकीमभिधाशक्तिमाश्रित्येतिस्वभावात्, एकः अर्थोऽभिधेयमात्रं येषां तैः अभिधया एकमात्रार्थवाचकैरित्यर्थः ।

अत्र "स्वभावादित्यर्थपदस्याभिधेयपरत्वमात्ररूपतात्पर्यग्राहकत्वम्, अन्यथा एकार्थैरित्ययोग्यं सर्वेषामेव शब्दानां वाच्यलक्ष्यव्यङ्ग्यरूपनानार्थसम्भवात्" इतितर्कवागीशाः । शब्दैः, अनेकार्थस्य वाचनं यथाशक्ति रूढया एकार्थस्य सङ्केतादिना च द्वितीयार्थस्य कथनम्, श्लेषः, अर्थालङ्कारान्तःपातित्वादर्थश्लेषाख्योऽलङ्कारो मत इति पूर्वतोऽनुषञ्जनीयः । अत्रापिशब्दैरिति बहुवचनमविवक्षितम् तादृशैकशब्दप्रयोगस्थलेऽपि एवंविधवैचित्र्यसम्भवात् । तथाच "अर्थभेदेन शब्दभेदः" इति नियमेन स्वभावत एकार्थस्यैवान्वयबोधसमर्थानां शब्दानां यत्रालङ्कारे विद्यमाने रुढ्यादिना द्वितीयार्थः प्रकरणादेरनियमेन ज्ञायते सोऽर्थश्लेष इत्यर्थः । नन्वेकार्थप्रतिपादकानां कथमनेकार्थो वाच्यः स्यादिति चेत्? तथाविधाकारैरन्यैः शब्दैः सह श्लिष्टत्वात् । एवं तर्हि शब्दालङ्कारत्वे किं प्रतिबन्धकमिति चेत्? शब्दपरिवृत्तिसहत्वस्यैव तत्त्वात् । अत एवाहुः प्रदीपकाराः—"परिवृत्तिसहानामेव शब्दानामेकवृन्तगतफलद्वयन्यायेन यत्रानेकार्थप्रतिपादकता सोऽर्थश्लेष" इति । इत्थञ्च परिवृत्तिसहैरभिधया एकमात्रार्थबोधक'श्लिष्टशब्दैः प्रकरणादिनियमाभावादनेकार्थप्रतिपादकत्वमर्थश्लेष इति लक्षणं फलितम् ।

( २१ ) शब्दश्लेषादस्य भेदं निर्दिशति—स्वभावादिति । व्यवच्छेदः अस्य व्यावृत्तिः। तथाच यत्र स्वभावतः अनेकार्थकाः शब्दाः परिवृत्तिसहाः सन्त एवानेकार्थप्रतिपादका भवन्ति स शब्दश्लेषः, यत्र तु स्वभावत एकार्थकाः शब्दाः परिवृत्तिसहाः सन्त एव शक्तिवैचित्र्यादनेकार्थप्रतिपादका भवन्ति सोऽर्थश्लेष इति परस्परं भेद इति पूर्वमेव प्रतिपादितम् ।

( २२ ) नन्वेवमपि अनेकार्थवाचनमित्यत्रानेकार्थबोधनमित्येव कथं नोच्यत इत्यत आह—वाचनमिति । ध्वनेर्व्यवच्छेद इति पूर्वेण सम्बन्धः । तथाच एकस्मिन्नर्थे प्रकरणादिना नियन्त्रिते व्यञ्जनावृत्त्या परोऽर्थो यत्रावगम्यते तत्र ध्वनिर्भवति यथा "राज-

( २३ ) 'प्रवर्तयन्क्रियाः साध्वीर्मालिन्यं हरितां हरन् ।
महसा भूयसा दीप्तो विराजति विभाकरः ॥'

( २४ ) अत्र प्रकरणादिनियमाभावाद् द्वावपि राजसूर्यौ वाच्यौ ।

---

रयुमापवल्लभः" इत्यादौ । एकार्थशब्दमूलश्चायं पुनः श्लेष इत्यतोऽत्र प्रकरणादिनियन्त्रणाभावादपरार्थस्याप्यभिधयैवैकवृन्तगतफलद्वयन्यायेन प्रतीतेर्व्यञ्जनया प्रतीत्यभावात् अनेकार्थशब्दानामेव हि प्रकरणादिना नियन्त्रणस्य स्वीकारात् । एवञ्च द्वितीयार्थस्य व्यञ्जनया प्रतिपादने ध्वनिः, अभिधयैव प्रतिपादने तु अर्थश्लेष इति स्फुटमनयोर्भेद इति सरलार्थः ।

( २३ ) उदाहरणं दर्शयति-प्रवर्त्तयन्निति । राजस्तुतिरियम् । विभां नीत्या राज्यस्य प्रकाशं ख्यातिम् उन्नतिं करोतीति विभाकरस्तन्नामकराजविशेषः, सूर्यश्च "भास्कराहस्करब्रध्नप्रभाकरविभाकराः" इत्यमरः, साध्वीः साधारणहितकरत्वेन शोभनाः क्रिया ब्राह्मणादिवर्णक्रियाः, सूर्यपक्षे अग्निहोत्रादिसत्कर्माणि प्रवर्त्तयन् राज्यमध्ये सम्पादयन् पक्षे स्वोदयेन आरम्भयन् , तदुक्तं विष्णुपुराणे--
"सत्कर्मयोग्यो न जनो नैवापः शुद्धिकारणम् । यस्मिन्ननुदिते तस्मै नमो देवाय भास्वते॥
स्पृष्टो यदंशुभिर्लोकः क्रियायोग्योऽभिजायते। पवित्रताकारणाय तस्मै शुद्धात्मने नमः॥"

हरितां दिशां लक्षणया सर्वदिग्वर्त्तिजनानामित्यर्थः, मालिन्यं दारिद्र्यवशात् कुवेषत्वम् , यद्वा दिग्वर्त्तिदस्युजनानामुद्दण्डत्वादिरूपम् , पक्षे हरितां मालिन्यं दिक्ष्वन्धकारकृतमलिनताम्, हरन् अन्नवस्त्रदानादिना व्यपनुदन् , पक्षे अन्धकारापहरणेन अपहरन् , तथा भूयसा अतिविपुलेन महसा प्रभावेण पक्षे जाज्वल्यमानेन तेजसा, दीप्तः सर्वत्र द्योतमानः सन् पक्षे ज्वलितः सन् विराजति विभाति पक्षे व्योम्नि प्रकाशते ।

( २४ ) लक्ष्ये लक्षणं सङ्गमयति--अत्रेति । प्रकरणादिनियमाभावात् प्रवर्त्तयन् इत्यादिषु वाक्येषु प्रवर्त्तयन्नित्यादीनां शब्दानामभिधायाः संयोगाद्यैः पूर्वोक्तैर्नियन्त्रणाभावात् अनेकार्थस्य वाच्यतया पर्यायपरिवृत्तिसहतया च, द्वावपि राजसूर्यौ वाच्यौ अभिधया प्रतिपाद्यावित्यर्थः, अतोऽत्रोपमाध्वनिशङ्का न विधेया । ननु विभाकर इत्यंशे परिवृत्त्यसहतया शब्दश्लेष एव स्यादिति चेत् ? एतदंशे परिवृत्त्यसहत्वेन शब्दश्लेऽपि प्रवर्त्तयन्नित्यादिषु बहुष्वर्थश्लेषादुदाहरणमितिविभावनीयम्। यदि च भास्कराहस्करेत्यामरकोशप्रामाण्येन विभाकरशब्दः सूर्यस्य वाचक "एकादशेऽहनि पिता नाम कुर्यात् द्व्यक्षरं चतुरक्षरं वा" इतिस्मृत्या विभाकर इति पित्र्यादिविहितं राज्ञो नामेतिराजनि विभाकरशब्दस्य च साम्प्रतिकः सङ्केतः तेन च विभाकरशब्दो राज्ञोऽपि वाचक एव । तदा विभाकरशब्दः शक्त्या सूर्यं दर्शितयोगेव राजानं बोधयतीत्येतदंशेऽप्यर्थश्लेषः प्रभाकरादिपर्यायशब्देन परिवृत्तिसहत्वात् । यदि त्वत्र संयोगाद्यैः पूर्वोक्तैः प्रकरणादिभिः अभिधाया नियन्त्रणे राजा प्रकृतो रविरप्रकृतस्तदा "दुर्गालङ्घितविग्रह"इत्यादाविव द्वितीयार्थस्य ध्वनिरेव । इत्थं च नेदमुदाहरणम् , किन्तु--

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो ! सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥

इति शब्दश्लेषप्रकरणीयभङ्ग्यन्तरेण मूलकृदुक्तमेवेत्यवगन्तव्यम् ।

( २५ ) क्वचिद्विशेषः सामान्यात्सामान्यं वा विशेषतः ।
कार्यान्निमित्तं कार्यं च हेतोरथ समात्समम् ॥ ५८ ॥
अप्रस्तुतात्प्रस्तुतं चेद्गम्यते पञ्चधा ततः ।
अप्रस्तुतप्रशंसा स्याद्—

( २६ ) ननु वाच्यस्य प्रस्तुतस्याभिधानेनाप्रस्तुतस्य गम्यत्वे समासोक्तिरभिहिता सम्प्रति तद्वैपरीत्येन अप्रस्तुताभिधानेन प्रस्तुतस्य गम्यत्वेऽलङ्कारान्तरः सैव वेतिजिज्ञासायान्तत्राप्रस्तुतप्रशंसालङ्कारो भवतीति तां निरूपयति—क्वचिदिति । एतच्च वाक्यपञ्चकेऽप्यन्वेति । अप्रस्तुतादिति सामान्यादित्यादिपञ्चकस्य विशेषणम् । प्रस्तुतमिति यथायथं लिङ्गविपरिणामाविपरिणामाभ्यां विशेष इत्यादिपञ्चकस्य विशेषणमिति तर्कवागीशाः । तथाच अप्रस्तुतात् अप्रस्तुतप्रतिपादनात् प्रस्तुतं चेद् गम्यते प्रतीयते ततस्तदा अप्रस्तुतप्रशंसा तन्नामालङ्कारः । एवञ्च अप्रस्तुतप्रतिपादनाद् प्रस्तुतप्रतीतिरप्रस्तुतप्रशंसेतिसामान्यलक्षणं पर्य्यवसितम् । अप्रस्तुतस्य पदार्थस्य प्रशंसा प्रकृष्टप्रतिपादनवत् व्यञ्जनावृत्या स्फुटा वर्णना न तु स्तुतिः सा अप्रस्तुतप्रशंसेतिव्युत्पत्तिः, प्रशंसायाः स्तुतिरूपत्वे—

"धिक् तालस्योन्नततां यस्यच्छायापि नोपकाराय"

इत्यादावव्याप्त्यापत्तेः ।
अस्या अप्यन्यालङ्कारादिभ्यो भेदः स्वयमेव वृत्तौ प्रतिपादयिष्यति ।

प्रस्तुतव्यञ्जनं प्रस्तुताप्रस्तुतयोरसम्बन्धे सति न सम्भवतीति तत्सम्बन्धप्रदर्शनमुखेन तामप्रस्तुतप्रशंसां सलक्षणां पञ्चधा विभजते—विशेष इत्यादिना । तथाच क्वचिद् अप्रस्तुतात् सामान्यात् प्रस्तुतो विशेषश्चेद् गम्यते क्वचिद्वा अप्रस्तुतात् विशेषतो विशेषात् प्रस्तुतं सामान्यं चेद् गम्यते, अथवा क्वचित् अप्रस्तुतात् कार्यात् प्रस्तुतं निमित्तं हेतुश्चेद् गम्यते, क्वचिच्च अप्रस्तुताद् हेतोर्निमित्तात् प्रस्तुतं कार्यञ्चेद्गम्यते, क्वचिच्च अप्रस्तुतात् समात् सदृशरूपात्पदार्थात् प्रस्तुतं समं सदृशरूपं पदार्थं चेद् गम्यते ततस्तदा पञ्चधा पञ्चविधा अप्रस्तुतप्रशंसा स्यात् ।

सामान्यादिना गणने पञ्चविधत्वोपपत्तावपि पुनः (क, पञ्चधेतिकथनम् अधिकसंख्याव्यवच्छेदार्थम् ।

( क ) एतेन कुवलयानन्दकारैर्यदुक्तं तदपास्तम् । तैर्हि "न ह्यप्रस्तुतप्रशंसायां प्रस्तुताप्रस्तुतयोः पञ्चविध एव सम्बन्ध इति नियन्तुं शक्यते सम्बन्धान्तरेष्वपि तद्दर्शनात् । यथा—

"तापत्रयौषधवरस्य तव स्मितस्य　　निःश्वासमन्दमरुता निवुसीकृतस्य ।
एते कडङ्करचया इव विप्रकीर्णा　　जैवातृकस्य किरणा जगति भ्रमन्ति ॥

अत्र ह्यप्रस्तुतानां चन्द्रकिरणानां भगवन्मन्दस्मितरूपदिव्यौषधीधान्यविशेषकडङ्करचयत्वोत्प्रेक्षणेन भगवन्मन्दस्मितस्य तत्सारतारूपः कोऽप्युत्कर्षः प्रतीयते । नच धान्यकडङ्करचययोः कार्यकारणभावादिसम्बन्धोऽस्ति अतः सहोत्पत्यादिकमपि सम्बन्धान्तरमाश्रयणीयमेव । एवमुपमानोपमेयावाश्रित्य तत्र कविकल्पितकार्यकारणभावनिबन्धने अप्रस्तुतप्रशंसे दर्शिते । ततोऽन्यत्रापि दृश्यते । यथा—

कालिन्दि ! ब्रूहि कुम्भोद्भव ! जलधिरहं नाम गृह्णासि कस्मा-
च्छत्रोर्मे, नर्मदाहं त्वमपि वदसि मे नाम कस्मात्सपत्न्याः ।

क्रमेणोदाहरणम्—

( २६ ) 'पादाहतं यदुत्थाय मूर्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः ॥'

( २७ ) अत्रास्मदपेक्षया रजोऽपि वरमिति विशेषे प्रस्तुते सामान्यमभिहितम् ।

( २६ ) तत्राप्रस्तुतसामान्यप्रतिपादनात् प्रस्तुतविशेषगम्यत्वे उदाहरणं दर्शयति—पादाहतमिति । माघकाव्ये शिशुपालं प्रति प्रयाणाभिमुखीकरणाय श्रीकृष्णं प्रति सभार्यां बलदेवस्योक्तिरियम् । यत् रजः भूमिधूलिः, पादेन चरणेन आहतं ताडितं सत्, उत्थाय उद्गतं भूत्वा मूर्द्धानम् आहन्तुरेव मस्तकम्, अधिरोहति अधितिष्ठति, तद् रजो धूलिः अचेतनमपीति शेषः, अपमानेऽवज्ञायां सत्यामपि, स्वस्मादेव अप्रतिकारेच्छोरेव देहिनश्चेतनात् तदपेक्षयेतियावत्, वरं श्रेष्ठं अभिमतं च । "देवादृवृते वरः श्रेष्ठे त्रिषु क्लीवं मनाक् प्रिये" इत्यमरः ।

( २७ ) लक्ष्यं समर्थयति—अत्रेति । शिशुपालेनावहेलनां विहितस्यापि यदुवंशिनस्तत्प्रतीकारानभिमतामुपक्रम्य "पादाहतम्" इत्यादेः कथनात् विशेषभूतस्य यदुवंशिनः प्रस्तुतत्वम्, देहिसामान्यस्य चाप्रस्तुतत्वमितिबोध्यम् । तथाचाप्रस्तुतदेहिसामान्यात् प्रस्तुतस्य देहिविशेषभूत-यदुवंशिनोऽवगमादप्रस्तुतप्रशंसा । एवमेवान्यत्राऽप्यनुसन्धेयम् । एतद्व्याख्याकृता मल्लिनाथेन तु प्रस्तुतं देहिनमपेक्ष्य अप्रस्तुतस्य रजस आधिक्यप्र-

---

मालिन्यं तर्हि कस्मादनुभवसि, मिलत्कज्जलैर्मालवीनां
नेत्राम्भोभिः, किमासां समजनि, कुपितः कुन्तलः क्षोणिपालः ॥

अत्र किमासां समजनीतिमालवीनां तथा रोदनस्य निमित्ते पृष्टे तत्प्रियमरणरूपनिमित्तमनाख्याय कुपितः कुन्तलक्षोणिपाल इति तत्कारणमभिहितमिति कारणनिबन्धना । मालवान्प्रति प्रस्थितेन कुन्तलेश्वरेण किं ते निर्जिता इति पृष्टे तदव्यानन्तरभाविजलधिनिमर्दाप्रश्नोत्तररूपं कार्यमभिहितमित्यत्रैव कार्यनिबन्धनापि । पूर्वस्यां प्रश्नः शाब्दः, उत्तरस्यामार्थः" इति तत्र प्रतिपादितम् ।

अत्र समाधानकुशला इत्थं समादधते । तथाहि—स्मितत्वङ्कुरचययोः कार्यत्वादिसम्बन्धाभावेऽप्यभेदाध्यवसायविषयीभूतदिव्यधान्येन सह वङ्कुरचयस्यावयवावयविभावस्य विद्यमानत्वेन कार्यत्वसम्बन्धो विद्यत एव । एवं द्वितीयदोषस्यऽप्यनवकाशः 'तथाहि—तत्र किमुभयोरेकत्र दर्शनेन प्रत्येकं तत्प्रयोजकत्वानुपपत्तिरिति विवक्षितम्, आहोस्वित् कारणकारणस्य कार्यकार्यस्य च निर्देशात् कार्यत्वकारणत्वाभाव इति । तत्र नाद्यः, क्वचित्प्रत्येकपुरस्कारेण तद्दर्शनादुभयोः प्रत्येकप्रयोजकत्वे स्थिते क्वचिदुभयसमावेशस्यादोषत्वात् न्यूनत्वानापादकत्वाच्च । तत्राप्येकस्यामेवाप्रस्तुतप्रशंसायां द्वयोः सम्बन्धयोरप्रयोजकत्वाच्च सम्बन्धनिबन्धनयोर्द्वयोरप्रस्तुतप्रशंसयोरेकत्र निबन्धमात्रेण तदातिरेक्याभावाच्च न वा द्वितीयः—कार्यकारणपदयोः प्रयोज्यप्रयोजकसाधारणतया विवक्षितत्वात् । एवंच मालवीरोदनकारणीभूततत्प्रियमरणकारणकुन्तलेशकारणमात्रोक्तौ तत्प्रस्थानकार्यविजयकार्यप्रश्नादिमात्रोक्तौ च तस्यानपायादित्यलं बहुनेति ।

काव्यप्रकाशकृताऽपि पञ्चप्रकारामेवैनाम्,—

"कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति । तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा" ॥
इति सूत्रयता स्पष्टीकृतम् । अन्यविधानां तत्रैवान्तर्भावाभ्युपगमात् ।

( २८ ) 'स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥'

( २९ ) अत्रेश्वरेच्छया क्वचिदहितकारिणोऽपि हितकारित्वं हितकारिणोऽप्यहितकारित्वमिति सामान्ये प्रस्तुते विशेषोऽभिहितः । एवं चात्राप्रस्तुतप्रशंसामूलोऽर्थान्तरन्यासः ।

---

भिधानाद्व्यतिरेक उक्तः, तेनोभयोः सङ्कीर्णमेवेदमुदाहरणम् । असङ्कीर्णोदाहरणन्तु—
सुहृद्वधूबाष्पजलप्रमार्जनं करोति वैरप्रतियातनेन ।
स एव पूज्यः स पुमान् स नीतिमान् सुजीवितं तस्य स भाजनं श्रियः॥
श्रीकृष्णेन नरकासुरे विनाशिते तन्मित्रं शाल्वं प्रति तत्सचिवस्योक्तिरियम् । अत्र "कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं प्रशमयसि तत् त्वमेव श्लाघ्यः" इति विशेषे प्रस्तुते सामान्यमभिहितमित्यप्रस्तुतप्रशंसा ।

( २८ ) अप्रस्तुतविशेषप्रतिपादनात् प्रस्तुतसामान्यगम्यत्वे उदाहरति—स्रगियमिति। रघुवंशे अष्टमसर्गे नारदीयपारिजातस्रक्स्पर्शमात्रेण इन्दुमतीप्राणनिर्गमे तत्स्रजं हृदि निधाय तद्भर्तुरजस्य विलापोऽयम् । इयं स्रक् पुष्पमाला यदि जीवितापहा इन्दुमत्याः प्राणहन्त्री भवेत् तदा ममापि हृदये वक्षसि निहिता मया स्वयं स्ववक्षसि स्थापिता सती किं कथं न मामजं हन्ति हिनस्ति? अतो नेयं जीवितापहेत्याशयः । नन्वेवं कथमिन्दुमतीमहृतवती? इत्यत आह—विषमपीति । ईश्वरस्य कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुं सर्वसमर्थस्य परमेश्वरस्य स्वेच्छया स्वाभिलाषया विषमपि किं पुनरमृतम , क्वचिदमृतं भवेत , क्वचिद्वा अमृतं पीयूषमपि विषं गरलं भवेत् । ईश्वरेच्छावशादेव पुष्पमालास्पर्शेनापि इन्दुमती जीवितापहा, न पुनः पुष्पमालाया एव स्वाभाविकी जीवितापहननशक्तिरित्याशयः । वैतालीयं छन्दस्तल्लक्षणं चोक्तं प्राक् ।

( २९ ) लक्ष्यार्थमुपपादयन् लक्ष्यं समर्थयति—अत्रेति । क्वचित मादृशे, अहितकारिणोऽपि इन्दुमत्याः प्राणनाशकत्वेन पुष्पमालारूपस्य वस्तुनोऽपीत्यर्थः, हितकारित्वं प्राणान् हन्तुमप्रवृत्तत्वम् , हितकारिणो मद्विधस्य प्राणनाशकस्यापि अहितकारित्वम् इन्दुमत्याः प्राणनाशकत्वं भवतीति शेषः। सामान्ये अहितकारि हितकारिसाधारणे, प्रस्तुते प्रयोगायाभिमतत्वेन उपस्थिते, विशेषोऽमृतविषयोर्विषीमृतीभवनम् । सामान्यस्यैव प्रस्तुतत्वनिश्चयोऽत्रौचित्यादेवेत्यवगन्तव्यम् । अर्थान्तरन्यासालङ्कारस्यात्रानयाऽप्रस्तुतप्रशंसया निष्पाद्यत्वादनयोरत्रानुग्राह्यानुग्राहकभावरूपसङ्कर इति दर्शयति—एवञ्चेति । अप्रस्तुताद्विशेषात् प्रस्तुतसामान्यस्यावगतेः अप्रस्तुतप्रशंसया सामान्यस्य निष्पादितत्वे चेत्यर्थः । अर्थान्तरन्यासः पूर्ववाक्यार्थस्योत्तरवाक्यार्थं समर्थनात् सामान्येन विशेषसमर्थनरूपोऽपि ज्ञेय इत्यभिप्रायः । इत्थञ्चानयोरङ्गाङ्गिभावेन सङ्कीर्णत्वात्सङ्करोदाहरणमिदम् । इत्थम्—

'मणिलुठति पादेषु काचः शिरसि धार्यते । यथैवास्ति तथैवास्तु काचः काचो मणिर्मणिः॥
इत्यत्र दृष्टान्तेनास्याः सङ्कीर्णोदाहरणं बोध्यम् । असङ्कीर्णोदाहरणन्तु—
एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त सजडः शृण्वन्यदस्मादपि ।

( ३० ) दृष्टान्ते प्रख्यातमेव वस्तु प्रतिबिम्बत्वेनोपादीयते । इह तु विषामृतयोरमृतविषीभावस्याप्रसिद्धेर्न तस्य सद्भावः ।

( ३१ ) 'इन्दुर्लिप्त इवाञ्जनेन, जडिता दृष्टिर्मृगीणामिव,
प्रम्लानारुणिमेव विद्रुमदलं, श्यामेव हेमप्रभा ।
कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त ! शिखिनां बर्हाः सगर्हा इव ॥'

---

अङ्कुरयत्र प्रघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्राद्वीयगतो ममेत्यनुदिनं निद्राति नान्तःशुचा ॥

भल्लटशतके कस्यचिन्मूर्खस्योदन्तं कुतश्चिदाकर्ण्य विस्मयेन नुवन्तं कंचित्प्रति कस्यचिदुक्तिरियम्'।

अत्र जडविशेषस्य वारिकणे मुक्ताधीनत्वरूपाप्रस्तुतविशेषस्याभिधानात् जडानामयोग्यस्थाने एव ममत्वसम्भावना भवतीतिप्रस्तुतसामान्यावगतेऽप्रस्तुतप्रशंसेयम् ।

( ३० ) ननु प्रकृतोदाहरणे व्यञ्जनयैव सामान्यस्यावगमो भवति तस्याश्चाभिधासापेक्षत्वात्पूर्वमेव निरपेक्षया प्राथम्येनोपस्थितया प्रबलया अभिधया विशेषस्यैव बोधितत्वात् सामान्यविशेषभावाभावेनार्थान्तरस्य स्वीकर्तुमशक्यत्वेन बिम्बप्रतिबिम्बत्वसद्भावाद् दृष्टान्त एवायं सम्भवितुमर्हतीति तत्कथमर्थान्तरन्यासेन साङ्कर्यं प्रदर्शितमित्यत आह—दृष्टान्त इति । प्रख्यातमेव प्रसिद्धमेव न त्वप्रसिद्धम् । प्रतिबिम्बत्वेन उपमानत्वेन । इह तु 'सगियम्' इत्यादौ तु अप्रसिद्धेः प्रख्यातत्वाभाव । तस्य दृष्टान्तस्य । सद्भावः प्राप्तिः । इत्थञ्चावशिष्टत्वात् व्यञ्जनावृत्या सामान्यस्यावगमे सति सामान्यविशेषभावस्य विद्यमानत्वादर्थान्तरन्यास एवेत्याशयः ।

( ३१ ) अथाप्रस्तुतकार्यप्रतिपादनात्प्रस्तुतकारणावगम्यत्वे प्रदर्शयति—इन्दुर्लिप्त इति । महानाटकस्थमिदं पद्यम् । जानक्याः सौन्दर्यमाश्रित्य कस्यचिदुक्तिरियम् । सीतायाः जानक्याः पुरतः पुरस्तात् सन्निधावित्यर्थः, इन्दुश्चन्द्रः अञ्जनेन कज्जलेन लिप्तो रञ्जित इव शोभत इति शेषः, अग्रेऽप्येवमेवानुसन्धेयम् । मृगीणां हरिणीनां दृष्टिः प्रेक्षणम् , जडिता स्तब्धा इव विद्रुमदलं प्रवालखण्डम् , प्रकर्षेण म्लानो मलिनीभूत अरुणिमा रक्तिमा यस्य तत्तादृशमिव हेमप्रभा स्वर्णशोभा श्यामा कृष्णत्वस्वरूपेव, कोकिलानां पिकानां वध्वस्तासां कण्ठेषु ध्वन्युद्भूतस्थानेषु च कलया लेशेन कार्कश्यं कर्कशत्वमिव प्रस्तुतं दैवेन रचितम् , हन्तेति हर्षे । शिखिनां मयूराणां बर्हाः पिच्छानि "बर्हं पिच्छे दलेऽस्त्रियाम्" इति मेदनी, सगर्हाः निन्दिता इव । तथाच सीताया वदनसौन्दर्यस्य पुरस्ताद् इन्दोः स्वरूपमञ्जनलिप्तेव, सीताया दृष्टिच्छवेः पुरस्ताच्च मृगीणां दृष्टिर्जडितेव, सीताया अधरच्छवेः पुरस्ताच्च विद्रुमखण्डच्छविः प्रम्लानेव, सीताया गात्रकान्तेः पुरस्तात्स्वर्णकान्तिः श्यामेव, सीताया वाचो माधुर्यात् पुरस्ताच्च कोकिलानां कण्ठध्वनिः कर्कश इव, सीतायाः केशशोभायाः पुरस्ताच्च बर्हाणि निन्दितानीव जातानीतिभावः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणं चोक्तं प्राक् ( १२८पृ० ) ।

( ३२ ) अत्र संभाव्यमानेभ्य इन्द्वादिगताञ्जनलिप्तत्वादिभ्यः कार्येभ्यो वदनादिगतसौन्द र्यविशेषरूपं प्रस्तुतं कारणं प्रतीयते ।

( ३३ ) गच्छामीति मयोक्तया मृगदृशा निःश्वासमुद्रेकिणं
त्यक्त्वा तिर्यगवेक्ष्य बाष्पकलुषेणैकेन मां चक्षुषा ।
अद्य प्रेम मदर्पितं प्रियसखीवृन्दे त्वया बध्यता-
मित्थं स्नेहविवर्धितो मृगशिशुः सोत्प्रासमाभाषितः ॥'

( ३४ ) अत्र कस्यचिदगमनरूपे कार्ये कारणमभिहितम् ।

---

( ३२ ) लक्ष्यं सङ्गमयति—अत्रेति । उक्तोदाहरण इत्यर्थः, सम्भाव्यमानेभ्य उत्प्रेक्षाविषयीक्रियमाणेभ्यः, इन्द्वादिगताञ्जनलिप्तत्वादिभ्य इत्यत्रादिपदाभ्यां दृष्ट्यादेर्जडितत्वादेश्च परिग्रहः । कार्येभ्य अप्रस्तुतेभ्य इति शेषः । वदनादिगतसौन्दर्यविशेषरूपं "सीतायाः" इति शेषः । अत्रायमाशयः—सीतायाः सौन्दर्यातिशयमाश्रित्यैव केनाऽप्येतच्छ्लोकस्योक्तत्वात्, तन्मुखादिगतः सौन्दर्यातिशय एवेह प्रस्तुतः, तदीयसौन्दर्यातिशयवशादेव हि इन्द्वादिष्वञ्जनलिप्तत्वादिसम्भावनाः समुत्पन्ना इति तासां कार्यत्वमप्रस्तुतत्वञ्च; तस्याः सौन्दर्यातिशयस्य च हेतुत्वं प्रस्तुतत्वञ्चेति । इत्थञ्चाप्रस्तुतप्रशंसेयमुत्प्रेक्षामूलेत्यवधेयम् ।

( ३३ ) अप्रस्तुतकारणप्रतिपादनात् प्रस्तुतकार्यावगम्यत्वे उदाहरति—गच्छामीति । विदेशं गन्तुमुद्यन्तं सुहृदं प्रति "गमनान्निवृत्तोऽसि किम्" इति मित्रेण पृष्टो वियापुर्गमननिवृत्तिहेतुं स्वप्रियावृत्तान्तं वर्णयति । अयमर्थः—"अहं गच्छामि" इति मया उक्तया विदेशप्रस्थानायानुमतिं प्रार्थितया मृगदृशा कुरङ्गलोचनया मत्प्रियया, उद्रेकिणं दीर्घविषादोद्रेकबोधकम्, निःश्वासं त्यक्त्वा, बाष्पेन सहसैवोत्पन्नाश्रुजलेन कलुषं तेन आविलं मलिनमितियावत्, "कलुषोऽनच्छ आविलः" इत्यमरः, एकेन चक्षुषा मां तिर्यक् वक्रम् अवेक्ष्य दृष्ट्वा, हे मृगशिशो ! त्वया मयि अर्पितम् एतावत्कालपर्यन्तं स्थापितम्, प्रेम स्नेहः ( कर्म ), अद्य प्रियाः प्रीतिपात्रभूताः सख्यः प्रेम्णा गृहीता अन्या नायिकास्तासां वृन्दं समूहस्तत्र बध्यतां स्थाप्यताम्, इत्थमनेन प्रकारेण, स्नेहविवर्धितः प्रेम्णा परिपोषितः, मृगशिशुः हरिणशावकः, सोत्प्रासं सूक्ष्महासयुक्तम्, आभाषितः कथितः । प्रियायाः जीविते सति वैदेशिकानां मिलनं सम्भवति अहन्त्वितः परं प्रियवियोगेन कथमपि न जीविष्यामि किन्तु मरिष्याम्येवेतिमृगशिशुः हास्येन प्रतारितेत्यभिप्रायः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणञ्चोक्तं प्राक् ( १९८ पृ० ) ।

( ३४ ) लक्ष्यार्थं प्रदर्शयति—अत्रेति । कस्यचित् स्वप्रियायाश्चेष्टितं वर्णयतः, अगमनरूपे "गमनान्निवृत्तोऽसि किम्" इति गमननिवृत्तिरूपे कार्ये "प्रस्तुते तदनभिधाय" इति शेषः, कारणं प्रियाया मरणाभिप्रायरूपमप्रस्तुतं निमित्तम्, अभिहितम् "अद्य प्रेम" इत्यादिनोक्तमित्यर्थः । तथाच गन्तुं तत्परस्याप्यगमनं प्रति प्रियाया मरणाभिप्रायसूचकवाक्यमेव कारणमितिप्रस्तुतस्य गमनाभावस्य कार्यत्वम्, अप्रस्तुतस्य तथाविधवाक्यस्य च हेतुत्वमितिभावः । इत्थञ्च तथाविधवाक्यप्रतिपादनादेव गमनाभावो जात इत्यवगमादप्रस्तुतप्रशंसेत्यवगन्तव्यम् ।

( ३५ ) तुल्ये प्रस्तुते तुल्याभिधाने च द्विधा श्लेषमूला सादृश्यमात्रमूला च । श्लेषमूलाऽपि समासोक्तिवद्विशेषणमात्रस्य श्लेषे श्लेषवद्विशेष्यस्यापि श्लेषे भवतीति द्विधा । क्रमेण यथा—

( ३६ ) 'सहकारः सदामोदो वसन्तश्रीसमन्वितः ।
समुज्ज्वलरुचिः श्रीमान्प्रभूतोत्कलिकाकुलः ॥'

( ३७ ) अत्र विशेषणमात्रश्लेषवशादप्रस्तुतात्सहकारात्कस्यचित्प्रस्तुतस्य नायकस्य प्रतीतिः ।

( ३८ ) 'पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि
यायाद्यदि प्रणयने न महानपि स्यात् ।

---

( ३५ ) सम्प्रति अप्रस्तुतात्समात् प्रस्तुतस्य समस्य गम्यमानत्वे उदाहर्त्तुं तद्विभागमाह—तुल्य इति । तुल्ये समे पदार्थे । तुल्यस्य अप्रस्तुतस्य पदार्थस्याभिधानं प्रतिपादनं तत्रेत्यर्थः । द्विधा "अप्रस्तुतप्रशंसे"ति शेषः । तदेव स्पष्टयति—श्लेषमूलेति । श्लेषमात्रं मूलेत्यत्र मात्रपदं श्लेषव्यवच्छेदार्थम् । विशेषणमात्रस्य श्लेष इत्यत्र मात्रपदं विशेष्यव्यवच्छेदार्थम् । विशेष्यस्यापीत्यपिपदात् विशेषणस्यापीत्यर्थः । इत्थञ्च समात् समप्रतीतौ सादृश्यमात्रमूलत्वे एकप्रकारा श्लेषमूलत्वे च द्विप्रकारेति साकल्येन त्रिप्रकारेत्यवधेयम् ।

( ३६ ) विशेषणमात्रश्लेषे उदाहरति—सहकार इति । भाविवरस्वरूपं पृच्छन्तीं सहचरीं प्रति चूतद्रुमवर्णनव्याजेन सरसख्या वरवर्णनमिदम् । सदा सन्नामोदः कुसुमविकासात् सौरभ खेदाभावादानन्दश्च यस्य स सदामोदः, "आमोदः सोऽतिनिर्हारी" ति..."प्रमोदामोदसम्मदा" इति चामरः, वसन्तस्य वसन्तसमयस्य श्रीः स्वभावात्प्रादुर्भूताभिनवकिशलयादिशोभा तया समन्वितः, पक्षे वसन्त इव श्रिया प्राकृतिकसौन्दर्येण समन्वितो युक्तः वसन्तकालोचितवेशशाली वा,

श्रीर्वेश(ष)रचना शोभा भारतीसरलद्रुमे ।
लक्ष्म्यां त्रिवर्गसम्पत्तौ वेशोपकरणे मतौ ॥ इति विश्वमेदिन्यौ;

अतएव समुज्ज्वला मनोरमा रुचिः सर्वप्रकारा कान्तिर्यस्य सः, पक्षे तु समुज्ज्वले सम्यकश्रृङ्गारे रुचिरभिलाषो यस्य सः, "श्रृङ्गारः शुचिरुज्ज्वलः" इत्यमरः, 'उज्ज्वलस्तु विकासिनि । "श्रृङ्गारे विशदे दीप्तेऽपि" इति हैमश्च, श्रीमान् कुसुमसम्पत्तिमान् धनसम्पत्तिमांश्च; तथा प्रभूताः प्रचुराः उत्कलिकाः उत्पन्नकोरकास्ताभिः आकुलो व्याप्तः प्रभूता वा उत्कण्ठा कान्तासम्भोगविषयिणी अभिलाषा तया आकुल अधीरश्च "उत्कण्ठोत्कलिके समे" इत्यमरः, सहकार आम्रविशेषवृक्षः, "सहकारोऽतिसौरभः" इत्यमरः ।

( ३७ ) लक्ष्यार्थमुपपादयति—अत्रेति । सहकार इति विशेष्यस्य तु न श्लेष इति मात्रपदेन सूचितम् , कस्यचित् उक्तविशेषणवतः । नच समासोक्तिप्रसङ्गः नायकस्य गम्यत्वेऽपि तद्व्यवहारसमारोपानुदयात् ।

( ३८ ) विशेष्यस्यापि श्लेषे उदाहरति—पुंस्त्वादिति । भल्लटकविकृते भल्लटशतके सपत्नापहृतं राज्यमुद्धर्तुं कञ्चिन्नृपमुद्दिश्य जयतस्तन्मन्त्रिणा उक्तिरियम् । यदि पुंस्त्वात्

अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक्प्रकटिता पुरुषोत्तमेन ॥'

( ३८ ) अत्र पुरुषोत्तमपदेन विशेष्येणापि श्लिष्टेन प्रचुरप्रसिद्ध्या प्रथमं विष्णुरेव बोध्यते । तेन वर्णनीयः कश्चित्पुरुषः प्रतीयते ।

पुरुषाचिह्नादपि प्रविचलेत् चलनं प्राप्नुयात् मोहिनीरूपमङ्गीकृत्य दैत्यगणादमृतहरणेन जगतो रक्षणादितिभावः । अधः पातालमपि यदि यायात् गच्छेत् पृथ्वीरक्षणाय कूर्मस्वरूपेण पातालगमनादितिभावः । जलप्लुतां पृथ्वीमुद्धर्तुं वराहमूर्त्या च पातालगमनादित्यभिप्रायः । प्रणयने याचननिमित्तं यदि न महान् महत्त्वरहितो लघुरपि स्यात् , बलिसकाशाद् वामनत्वं प्राप्य विश्वसंरक्षणादित्याशयः । न महानिति "नैकधा" "नारायणः" इत्यादिवत् नशब्देन सह समासः । तदपि तथापि विश्वं संसारं सर्वलोकमितियावत् अभ्युद्धरेत् दैत्याधिकारात् प्रलयजलधिजलाच्च रक्षेत् इति ईदृशो इयं दिक् मार्गः यद्वा दिक् प्रकारः नीतिरितितात्पर्यम् , केनापि अनिर्वचनीयेन पुरुषोत्तमेन विष्णुना प्रकटिता प्रकाशिता दर्शितेत्यर्थः । अत्र "उत्तमः पुरुषस्त्वन्यः"
'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥'

इत्युक्तदिशोत्तमः पुरुषः पुरुषोत्तम इति व्युत्पन्नोऽयं 'हरिर्यज्ञेशः पुरुषोत्तमः स्मृतः" इत्यभिजनोक्त्या विष्णुमेवाभिधत्ते; इत्यप्रस्तुतविष्णुपक्षेऽर्थोऽभिहितः । प्रस्तुतराजपक्षे तु पुंस्त्वात् पौरुषादपि शौर्यादपि यदि प्रविचलेत् तद्विहीनो भवेत् , यद्यधः संपद्भ्रंशेन निकृष्टत्वमपि यायात् प्राप्नुयात् , प्रणयने याचने यदि न महान् महत्त्वशून्योऽपि भवेत् तदपि तथापि सपत्नापहृतं विश्वं स्वराज्यम् अभ्युद्धरेत् शत्रुहस्ताद्रक्षेत् , ईदृशी इयं दिक् केनापि अन्येन पुरुषोत्तमेन पुरुषूत्तमः पुरुषोत्तम इति व्युत्पन्नशब्देन ।

"परोपकरणं नित्यं यतन्ते ये नरोत्तमाः" इत्युक्तदिशा पुरुषश्रेष्ठेनेत्यर्थः प्रकटिता प्रकाशितेत्यर्थः । जगदुपकृतये सर्वमपि यदि स्वमहत्त्वं नश्येत्तथापि न ततो विरज्येतेति भवतापि तादृशभावेन स्वराज्यमुद्धियतामित्याशयः ।

वसन्ततिलकाच्छन्दस्तल्लक्षणं चोक्तं प्राक् (१९३ पृ०) ।

( ३९ ) उदाहृतमर्थमुपपादयति—अत्रेति । विशेष्येणापि न केवलं पुंस्त्वादिना विशेषणेनैव किन्तु पुरुषोत्तमेनेतिविशेष्येणाऽपीत्यर्थः । प्रचुरप्रसिद्ध्या भूरिप्रयोगेणातिप्रसिद्ध्या वा । विष्णुरेव "अप्रस्तुत" इति शेषः, बोध्यते अभिधीयते । वर्णनीयो वर्णनोपक्रमेण प्रस्तुतः । अत्र प्रकृतस्यैव राज्ञो व्यङ्ग्यत्वं न तूपमानस्येति नोपमाध्वनित्वम् । ननु प्रकरणेन राजरूपः प्रस्तुतोऽर्थ एव प्रथमं प्रतीयते ततः कथमत्राप्रस्तुतप्रशंसा अप्रस्तुतार्थस्य प्रथमतः प्रतीयमानत्वे एवाप्रस्तुतप्रशंसायाः सम्भवादितिचेत् ? अत्रोच्यते पुरुषोत्तमादिशब्दानां सत्पुरुषादिरूपे प्रस्तुतेऽर्थे यौगिकीशक्तिरिति प्रकरणादिसहितामपि तां बाधित्वा अभिधाशक्तिर्नारायणादिरूपमप्रस्तुतमेवार्थं प्रथममेव प्रत्याययति ततश्चाप्रस्तुतात् प्रस्तुतार्थबोध इति । यत्र तूभयस्मिन्नेवाभिधावृत्तेः सम्भवस्तत्रैव प्रकरणादिर्नियामकम् , यत्र पुनरेकस्मिन् अभिधा अपरस्मिन् यौगिकी शक्तिस्तत्राभिधैव बलवती प्रकरणादिसहितामपि अपरां यौगिकीं शक्तिं बाधते "अवयवशक्तेः समुदायशक्तिर्बलीयसी" इति न्यायात् । अतएव नात्र श्लेषोऽपि उभयार्थस्यानभिधेयत्वात् प्रकरणाद्यनियमाभावाच्चेति स्पष्टं विवरणादिषु ।

सादृश्यमात्रमूला यथा—

( ४० ) 'एकः कपोतपोतः शतशः श्येनाः क्षुधाभिधावन्ति ।
अम्बरमावृतिशून्यं हरहर शरणं विधेः करुणा ॥'

( ४१ ) कपोतादप्रस्तुतात्कश्चित्प्रस्तुतः प्रतीयते । इयं च क्वचिद्वैधर्म्येणाऽपि भवति ।

( ४२ ) 'धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः ।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः ॥'

( ४३ ) अत्र वाता धन्या अहमधन्य इति वैधर्म्येण प्रस्तुतः प्रतीयते ।

( ४४ ) वाच्यस्य संभवासंभवोभयरूपतया त्रिप्रकारेयम् ।

---

यथा वा—

"पुरा सरसि मानसे विकचसारसालिस्खलत्
परागसुरभीकृते पयसि यस्य यातं वयः ।
स पल्वलजलेऽधुना मिलदनेकभेकाकुले
मरालकुलनायकः कथय रे कथं वर्तताम् ॥" इति ।

( ४० ) इत्थं द्विविधां श्लेषमूलामुदाहृत्य सादृश्यमात्रमूलामुदाहरति—एक इति । अनेकदस्युभिरभिभूतमेकाकिनं कमपि बालकमवलोक्य कस्यचित्सहृदयस्योक्तिरियम् । एकोऽसहायः 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा" इत्यमरः । कपोतपोतः पारावतशिशुः, इतश्च शतशोऽनेकशतसंख्याकाः, श्येना मांसभक्षिणस्तदाख्याः पक्षिविशेषाः, क्षुधा बुभुक्षया अभिधावन्ति खादयितुमितिशेषः । ननु विहायसः कस्मिंश्चिद्भागे पलाय्य स्वात्मानं रक्ष्यतामित्यत आह—अम्बरमिति । अम्बरमाकाशम्, आवृतिशून्यम् आवरणशून्यम्, अतः पलायनसम्भावनापि नावलोक्यत इत्याशयः । हर हर कष्ट कष्टम् इदमव्ययम्, विधेःपरमात्मनः करुणा दयैव शरणं रक्षित्री। आर्याच्छन्दस्तल्लक्षणं चोक्तं प्राक् ।

( ४१ ) लक्ष्यं सङ्गमयति—अत्रेति । अप्रस्तुतात् 'अभिधीयमानादि"तिशेषः । कश्चित् बहुभिर्दस्युभिः पीड्यमानः शरणमिच्छुः असहायो बालक इत्यर्थः । प्रतीयते व्यञ्जनावृत्त्या ज्ञायते ।

( ४२ ) एवं साधर्म्येणोदाहृत्य वैधर्म्येणोदाहरति—धन्या इति । वनप्रेषितरामशोकाकुलस्य दशरथस्योक्तिरियमिति केचित् । कह्लाराणां सौगन्धिकानां स्वभावशीतलानां जलरुहविशेषाणां स्पर्शः संयोगस्तेन शीतलाः, "सौगन्धिकं तु कह्लारम्" इत्यमरः, वने वाता वन्यपवनाः खलु धन्याः ये वाता अनिवारिताः केनाऽप्यप्रतिषेधिताः सन्तः इन्दीवरं नीलोत्पलं तद्वत् श्यामं श्यामलं रामं स्पृशन्ति उपलक्षणेन सेवन्ते ।

( ४३ ) लक्ष्यं समर्थयति—अत्रेति । वैधर्म्येण धन्यत्वापेक्षयाधन्यत्वरूप धर्म्यं विशिष्टस्य कथनेनेत्यर्थः । प्रस्तुत इति । रामवियोगेन शोकाकुलमधन्यमात्मानमुपलक्ष्य दशरथस्याभिधानादित्याशयः । इत्थञ्च अप्रस्तुतात् समात् प्रस्तुतस्य समस्य गम्यमानत्वरूपेयमप्रस्तुतप्रशंसेतिज्ञेयम् ।

( ४४ ) उक्तसर्वविधाया अप्रस्तुतप्रशंसायाः पुनरपि भेदान्तरं व्यवस्थापयति—वाच्यस्येति । वाच्यस्याभिधेयार्थस्य, सम्भवोऽसम्भव उभयं चेति तानि रूपाणि यस्या-

( ४५ ) तत्र संभवे उक्तोदाहरणान्येव ।

( ४६ ) असंभवे यथा—

( ४७ ) 'कोकिलोऽहं भवान्काकः समानः कालिमावयोः ।
अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः ॥'

( ४८ ) अत्र काककोकिलयोर्वाकोवाक्यं प्रस्तुतताध्यारोपणं विनासंभवि ।

( ४९ ) उभयरूपत्वे यथा—

( ५० ) 'अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः ।
कथं कमलनालस्य मा भूवन्भङ्गुरा गुणाः ॥'

---

स्तस्या भावस्तत्ता तया । त्रिप्रकारेति । तथा च उक्तिसम्भवरूपत्वेन एकविधा, उक्त्यसम्भवरूपत्वेन अन्यविधा, उक्तेः सम्भवासम्भवोभयरूपत्वेन चान्यविधा, इति त्रिविधेतिसरलार्थः ।

( ४५ ) तत्रेति । त्रिषु वाच्यस्य सम्भवादिषु मध्य इत्यर्थः । सम्भवे पुरुषवक्तृकत्वादेव वाच्यार्थस्योक्तिसम्भवस्थल इत्यर्थः, उक्तोदाहरणानि "पादाहतम्" इत्यादिपूर्वोक्तान्युदाहरणानीत्यर्थः ।

( ४६ ) असम्भव इति । वाच्यार्थोक्तेरिति शेषः ।

( ४७ ) कोकिल इति । स्वसदृशतया स्पर्द्धमानं प्रति कस्यचिदुक्तिरियम् । अहं कोकिलस्तद्वत् स्वगुणरमणीयः, भवांश्च काकस्तद्वत् स्वदोषप्रसिद्ध एवभूतेऽपि आवयोः कोकिलायितकाकायितयोः कालिमा कृष्णवर्णत्वं समानस्तुल्य एव, पुनः किन्तु काकलीकोविदा मम मधुरास्फुटसूक्ष्मशब्दाभिज्ञाः,

'काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे' इत्यमरः,

अन्तरम् अत्यन्तकर्कशशब्दवता भवता सह मम भेदं, कथयिष्यन्ति प्रतिपादयिष्यन्ति, नितान्तमधुरशब्दवता मया सार्धम् अत्यन्तकर्कशशब्दवतस्तव महदेवान्तरमिति कुतो मत्सदृशत्वे तव स्पर्द्धेत्याशयः ।

( ४८ ) अत्राप्रस्तुतात् कोकिलकाकरूपसादृश्योभयात् प्रस्तुतस्य उत्तमाधमपुरुषरूपासादृश्योभयस्यावगमादप्रस्तुतप्रशंसा स्फुटैवेति केवलमेतदुक्तेरसम्भवत्वमुपपादयितुमाह—अत्रेति । वाक्यं च प्रतिवाक्यं चेत्यनयोः समाहारो वाकोवाक्यम् उक्तिप्रत्युक्ती पृषोदरादित्वात् साधु । तदुक्तं भोजराजेन—

'उक्तिप्रत्युक्तिमद्वाक्यं वाकोवाक्यं विदुर्बुधाः। द्वयोर्बहूनामपि वा स्तद्विच्छन्ति बहूनामपि सङ्गमे'॥

प्रस्तुतस्य एतदुक्तियोग्यस्य पुरुषस्य अध्यारोपणम् अप्रस्तुते वक्तरि कोकिले अभेदाध्यवसानम् । असम्भवि सम्भवं न, कोकिलपक्षिमात्रस्य एवंविधोक्तियोग्यत्वाभावात् मत्कारामावाच्चेतिभावः ।

( ४९ ) उभयरूपत्वे उदाहर्तुमाह—उभयेति । उभयरूपत्वे वाच्यार्थस्य सम्भवासम्भवोभयविधत्वे इत्यर्थः ।

( ५० ) उदाहरति—अन्तरिति । कस्यचिदापत्तिहेतुं बोधयत उक्तिरियम् । अन्तर्मध्यभागे भूयांसि अनेकानि छिद्राणि रन्ध्राणि कुटुम्बदुश्चरितप्रभृतयो दोषाश्च विद्यन्ते "छिद्रं विवररन्ध्रवत् । गर्त्ते दोषे" इति हैमः । बहिर्देशे च बहवः कण्टकास्तीक्ष्णाग्रा

( ५१ ) अत्र प्रस्तुतस्य कस्यचिदध्यारोपणं विना कमलनालान्तश्छिद्राणां गुणभङ्गुरीकरणे हेतुत्वमसंभवि । अन्येषां तु संभवीत्युभयरूपत्वम् ।

( ५२ ) अस्याश्च समासोक्तिवद् व्यवहारसमारोपप्राणत्वाच्छब्दशक्तिमूलाद्वस्तु-ध्वनेर्भेदः ।

---

अङ्गविशेषाः क्षुद्रशत्रवश्च विद्यन्ते "कण्टकः क्षुद्रशत्रौ च द्रुमाङ्गे रोम्णि मस्करे" इति गोपालः । अत एव कमलनालस्य कमलाधःस्थदण्डस्य गुणाः अन्तर्गतसूत्राणि त्यागशौ-र्यादिसत्त्वादिगुणजनितकीर्त्तयश्च

'गुणो मौर्व्यामप्रधाने रूपादौ सूत्र इन्द्रिये। त्यागशौर्यादिसत्त्वादिसन्ध्यावृत्तिषु रज्जुषु' ॥

शुक्लादावपि बुद्ध्यां च इति मेदिनी, कथं भङ्गुराश्छेदनशीला मा भूवन् न भवेयुः, अपि तु भवेयुरेवेत्यर्थः ।

( ५१ ) उदाहृतमर्थं समर्थयति—अत्रेति । प्रस्तुतस्य दुर्दैवहतकस्य, कस्यचित् कुटुम्बसुदुश्चिन्ताविशेषवतः पुरुषस्य अध्यारोपणं कमलनाले अभेदाध्यवसानम् । कम-लनालान्तश्छिद्राणां कमलाधःस्थदण्डवर्त्तिनां छिद्राणाम्, गुणभङ्गुरीकरणे मध्यभागस्थ-सूत्रछेदने हेतुत्वम् अभिप्रायादेव प्राप्तं निमित्तत्वम् , असम्भवि असम्भवम् , छिद्राणां केवलशून्यरूपत्वेन क्रियारहितत्वेन गुणभङ्गीकरणे सामर्थ्याभावादित्याशयः । अन्येषां कण्टकानान्तु, सम्भवि गुणच्छेदने निमित्तत्वं सम्भवपरम्, प्रस्तुतस्य अध्यारोपणं विनाऽ-पीतिशेषः । पुरुषादिव्यापारेण मध्यवर्त्तिसूत्राणां बहिष्करणादिना समर्थत्वादित्यभिप्रायः । तथा चाहुरलङ्कारसर्वस्वकाराः—"अत्र वाक्येऽर्थे कण्टकानां भङ्गीकरणे हेतुत्वं सम्भवि, छिद्रा-णां तु असम्भवि इत्युभयविधत्वम् , प्रस्तुतस्य तात्पर्येण प्रतीतेस्तदध्यारोपात्तत्र सङ्गतमे-वैतदिति नासमीचीनं किञ्चित्" इति ।

अत्रापि च पूर्ववदेव अप्रस्तुतात् तुल्यात् कमलनालात् प्रस्तुतस्य कस्यचित् तुल्य-स्यावगमादप्रस्तुतप्रशंसा स्पष्टैवेति केवलं वाच्यार्थस्य सम्भवासम्भवोभयरूपत्वमेव दर्शितमित्यवधेयम् ।

( ५२ ) सम्प्रति सुमतिवेद्यमस्या ध्वनेरलङ्काराच्च भेदं दर्शयति – अस्याश्चेति । श्ले-षमूलसमाप्रस्तुतप्रशंसायाश्चेत्यर्थः । व्यवहारस्य व्यापारस्य समारोपः स एव प्राणो जीवनं स्वरूपं यस्यास्तस्या भावस्तत्त्वं तस्मात्, व्यवहारसमारोपयुक्तत्वादित्यर्थः । तथाच "भुक्तिमुक्तिकृदेकान्त" इत्यादौ "सदागम" इत्यत्र सच्छास्त्रे न सत आगमनरूपस्या-र्थस्य व्यवहारः समारोप्यते किन्तु रहस्यगोपनार्थमेव द्व्यर्थपदप्रयोगः, "सहकारः सदा-मोदः" इत्यादौ तु व्यवहारसमारोपप्रतीतिरस्तीत्यस्याः शब्दशक्तिमूलाद् वस्तुध्वनेर्भेदः । अत्र तात्पर्यं विवृतं तर्कवागीशैः—"समासोक्तौ यथा श्लिष्टशब्दप्रयोगमात्रेण व्यवहारो न प्रतीयते किन्तु विशेषणसाम्यमनुसन्धानेनापि, तथात्रापि विशेषणसाम्यानुसन्धान-मप्यपेक्षितम् , शब्दशक्तिमूलवस्तुध्वनौ तु तन्नापेक्षितमिति ततोऽस्या भेद इति भावः" इति । शब्दशक्तिमूलादित्युपलक्षणम् । "दृष्टि हे प्रतिवेशिनि" इत्यादावपि यद्यपि नख-क्षतगोपनं व्यङ्ग्यं तदपि वक्त्र्या उद्देश्यत्वेन प्रस्तुतम् , वाच्यार्थोऽप्रस्तुतस्तत्राप्येवमस्याः प्रसक्तिरेवं समाधानं च बोध्यमिति विज्ञप्रिवादयः ।

( ५३ ) उपमाध्वनावप्रस्तुतस्य व्यङ्ग्यत्वम् ।
( ५४ ) एवं समासोक्तावपि ।
( ५५ ) श्लेषे तु द्वयोरपि वाच्यत्वम् ।

( ५३ ) नन्वेवमपि व्यवहारसमारोपप्रतीतिरुपमाध्वनौ भवतीति तत्रास्याः प्रसक्तिः स्यादित्यत आह—उपमेति । अप्रस्तुतस्य "हिममुक्तचन्द्ररुचिरः" इत्यादौ वसन्तादेर्व्यङ्ग्यत्वम् , अत्र तु "सहकारः सदामोदः" इत्यादौ अप्रस्तुतस्य वाच्यत्वं प्रस्तुतस्य नायकादेरेव व्यङ्ग्यत्वमिति नास्यास्तत्र प्रसक्तिरितिभावः ।

( ५४ ) ननु मास्तूपमाध्वनावस्याः प्रसक्तिः किन्तु समासोक्तौ व्यवहारसमारोपप्राणत्वात्तत्र कथं नास्याः प्रसक्तिरित्यत आह—एवमिति । समासोक्तावप्येवम् उपमाध्वनवदेव प्रस्तुतस्य वाच्यत्वमप्रस्तुतस्य व्यङ्ग्यत्वमित्यर्थः । उक्तञ्च पूर्वमेव समासोक्तिप्रस्तावान्ते—'अप्रस्तुतप्रशंसायामप्रस्तुतस्य गम्यत्वम् , इह तु प्रस्तुतस्य' इति ।

( ५५ ) अथ तर्हि श्लेषेऽपि व्यवहारप्रतीतेः सत्त्वात्तत्रास्याःप्रसक्तौ साङ्कर्यं स्यादित्यत आह—श्लेषेऽपीति । चार्थेऽत्रापिर्वर्त्तते । द्वयोरपि प्रस्तुताप्रस्तुतयोः, वाच्यत्वम् , "श्लिष्टैः पदैरनेकार्थाभिधाने" इत्युक्तेः "श्लेषोऽनेकार्थवाचनम्" इत्युक्तेश्च अभिधयैव प्रतिपाद्यत्वं निश्चितमितिशेषः, अत्र तु प्रस्तुतस्य प्रतीयमानत्वमेव निश्चितमिति श्लेषेऽपि नास्याः प्रसक्तिरिति श्लेषोपमाध्वनिसमासोक्तिषु अस्याः प्रसक्त्यभावात् भवति परस्परं भेदः । श्लेषे तु व्यवहारप्रतीतिरपि स्फुटा नेत्यप्यवगन्तव्यम् ।

बोधसौकर्याय अस्या भेदा सङ्कल्प्यन्ते—

वाच्यस्य सम्भवरूपत्वे—
- अप्रस्तुतात् सामन्यात् प्रस्तुतावगम्यत्वे—"पादाहतम्"···१
- अप्रस्तुताद्विशेषात् प्रस्तुतसामान्यावगम्यत्वे—"सुगियम्"···१
- अप्रस्तुतात् कार्यात् प्रस्तुतकारणावगम्यत्वे—"इन्दुर्लिप्त"···१
- अप्रस्तुतात् कारणात् प्रस्तुतकार्यावगम्यत्वे—"गच्छामीति"···१
- सादृश्यमात्रमूलत्वे अप्रस्तुतात् तुल्यात्-प्रस्तुततुल्यावगम्यत्वे— "एकःकपोतः"···१
- विशेषणमात्रश्लेषे अप्रस्तुतात् तुल्यात्-प्रस्तुततुल्यावगम्यत्वे— "सहकारः"···१
- विशेष्यविशेषणोभयश्लेषे अप्रस्तुतात् तुल्यात्-प्रस्तुततुल्यावगम्यत्वे— "पुंस्त्वादपि"···१

वाच्यस्यासम्भवरूपत्वे—दर्शितोक्तप्रकारा एव सप्त·········"कोकिलोऽहम्" इत्यादि—७

वाच्यस्य सम्भवासम्भवोभयरूपत्वे—
दर्शितोक्तप्रकारा एव सप्त·················"अन्तश्छिद्राणि" ७

समुदायेन—२१

ननु साधर्म्यवैधर्म्याभ्यां सर्वेषां द्वैविध्यात्तद् भेदः कथं न भणित इति चेत् ? वैधर्म्योदाहरणस्य काचित्कत्वात् । अथापि मूले "पञ्चधा" इत्युक्तिः कथमितिचेत् ? प्राधान्याभिप्रायेणेति गृहाण ।

( ५६ ) उक्ता व्याजस्तुतिः पुनः ॥ ५६ ॥

निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयोः।

( ५७ ) निन्दया स्तुतेर्गम्यत्वे व्याजेन स्तुतिरिति व्युत्पत्त्या व्याजस्तुतिः। स्तुत्या निन्दाया गम्यत्वे व्याजरूपा स्तुतिः। क्रमेण यथा—

( ५६ ) व्यङ्ग्यहेतुकवैचित्र्यसारूप्यादप्रस्तुतप्रशंसानन्तरं व्याजस्तुतिनामालङ्कारं निरूपयति—उक्तेति। वाच्याभ्यामिति। यद्यपि वक्ष्यमाणोदाहरणयोर्निन्दास्तुत्योरेकस्यापि वाच्यत्वं तथापि निन्दास्तुतिप्रयोजकार्थाभ्यां वाच्याभ्यामित्यर्थ इत्यन्ये, निन्दास्तुतिभ्यां निन्दाप्रशंसाभ्यां स्तुतिनिन्दयोर्यथाक्रमेण प्रशंसानिन्दयोः गम्यत्वे व्यङ्ग्यत्वे पुनः, व्याजस्तुतिर्नाम अलङ्कृतिरुक्ता तथाच—

वाच्यया निन्दया प्रशंसाया गम्यत्वे, वाच्यया प्रशंसया निन्दाया गम्यत्वे वा व्याजस्तुतिरितिपर्यवसितोऽर्थः।

( ५७ ) ननु निन्दाव्याजेन स्तुतिः स्यादेव व्याजस्तुतिः, स्तुतिव्याजेन निन्दा तु व्याजनिन्दैव स्यात् तत्कथं व्याजस्तुतिरिति पक्षद्वयेऽपि व्याजस्तुतिपदस्य यथासंख्येन योगार्थं दर्शयति—निन्दयेति। व्याजेन निन्दाच्छलेन स्तुतिर्यथार्थप्रशंसा, व्याजरूपा छलरूपा। अत्र स्तुतिनिन्दयोः सामान्यविशेषकार्यकारणतुल्यभावादप्रस्तुतप्रशंसातोऽस्या भेदः।

अत्र च रसगङ्गाधरकारा इत्थं वदन्ति—'इयं च व्याजस्तुतिर्यस्यैव स्तुतिनिन्दे प्रथममुपक्रम्येते तस्यैव चेन्निन्दास्तुत्योः पर्यवसानं भवेत्तदा भवति। वैयधिकरण्ये तु न, इति प्राचामलङ्कारशास्त्रप्रवर्त्तकानां समयः। अतएव यत्र शब्देनाभिधीयमाना स्तुतिर्निन्दा वा बाधितस्वरूपा निन्दायां स्तुतौ च स्वसमर्पणेन पर्यवस्यतीति तैस्तत्र तत्र स्वग्रन्थेषूपनिबद्धम्। एवञ्च—

'परोपसर्पणानन्तचिन्तानलशिखाशतैः। अचुम्बितान्तःकरणाः साधु जीवन्ति पादपाः॥'

इत्यादिषु सांसारिकजननिन्दापर्यवसायिन्यामपि पादपस्तुतौ न व्याजस्तुतित्वम्, प्रथमप्रतीयमानस्तुतेरबाधितत्वात्। एवं निन्दया स्तुतेर्गम्यत्वेऽपि। तथा अन्यस्य स्तुत्या अन्यस्तुतौ, अन्यनिन्दया वान्यनिन्दायां गम्यमानायां नास्यालङ्कृतेर्विषयः पूर्वोक्तादेव हेतोः। यथा—

'ये त्वां ध्यायन्ति सततं त एव कृतिनां वराः। मुधा गतं पुराराते! भवदन्यधियां जनुः॥'

अत्र पूर्वोत्तरार्द्धगताभ्यां ध्यातृस्तुतिनिन्दाभ्यां ध्येयस्तुतिनिन्दयोरवगमः। एवं स्थिते कुवलयानन्दकर्त्रा स्तुतिनिन्दाभ्यां वैयधिकरण्येन निन्दास्तुत्योः स्तुतिनिन्दयोर्वाऽवगमे प्रकारचतुष्टयं व्याजस्तुतेर्यदधिकमुक्तं तदपास्तम्। यदि तु प्राचीनसङ्केतसेतुं निर्भिद्य स्वरुचिरमणीया सरणिराद्रियते तदा निवेश्यन्तां सर्वेऽपि व्यङ्ग्यप्रकारा गुणीभूतव्यङ्ग्यप्रकारा वा अलङ्कारोदरेषु। निवेश्यतां वा व्याजस्तुतिरपि योगार्थालीढत्वादप्रस्तुतप्रशंसायाम्। निरस्यतां च कार्यकारणादिविषयकत्वदुराग्रहस्तस्या इति बहुव्याकुलीस्यात्। एवं तर्हि पूर्वोक्तं प्रकारचतुष्टयं कुत्रान्तर्भवतु इति चेत्? व्यङ्ग्यभेदेष्विति गृहाण, नहि व्यङ्ग्यभेदाः सर्वेऽप्यपरिमिता अलङ्कारप्रकारगोष्पदे अन्तर्भावयितुं शक्यन्ते' इति।

( ५८ ) 'स्तनयुगमुक्ताभरणा कण्टककलिताङ्गयष्टयो देव ! ।
त्वयि कुपितेऽपि प्रागिव विश्वस्ता द्विट्स्त्रियो जाताः ॥'

इदं मम ।

( ५९ ) 'व्याजस्तुतिस्तव पयोद ! मयोदितेयं
यज्जीवनाय जगतस्तव जीवनानि ।

---

केचित्तु—व्याजस्तुतिवद्व्याजनिन्दाऽप्यलङ्कृतिर्भवतीत्याहुः । तथाहि—

निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते ।
विधे ! स निन्द्यो यस्ते प्रागेकमेवाऽहरच्छिरः ॥

अत्र हरनिन्दया परिणामतापसंस्कारदुःखमयं जगद् विदधतो विधेर्निन्दाभिव्यक्तिरिति ।

( ५८ ) निन्दया प्रशंसाया गम्यत्वे उदाहरति—स्तनयुगेति । व्याजेन कस्यचिद्राज्ञः स्तुतिरियम् । तथाच—हे देव राजन् ! त्वयि कुपितेऽपि क्रुद्धेऽपि सति, द्विषां शत्रूणां स्त्रियः, स्तनयुगेषु मुक्ताभरणानि मौक्तिकगुम्फितभूषणानि यासांस्तास्तथोक्ताः, तथा कण्टकैस्त्रासेनैव सञ्जातै रोमाञ्चैः पतिसम्भोगानुभवजन्यैः सात्त्विकभावविशेषैः कलिता व्याप्ता अङ्गयष्टयो देहलता यासां तास्तथोक्ताश्च सत्यः, अतएव प्राक् कोपात् पूर्वमेव विश्वस्ता अयमस्माकं न क्लेशदा इति निःशङ्का जाता इति वाच्योऽर्थ इति राज्ञो निन्दा । अथ त्वयि कुपित एव स्तनयुगैर्मुक्तानि आभरणानि भूषणानि यासां तास्तथोक्ताः, कण्टकैः पलायनकाले तीक्ष्णाग्रवृक्षावयवैः कलिताः खण्डिता अङ्गयष्टयो यासां तास्तथोक्ताः, प्रागिव पतिमरणात् पूर्वमेव, विश्वस्ता विधवाः "विश्वस्ता विधवा समे" इत्यमरः, द्विट्स्त्रियो जाताः । एतेन स्तुतिरभिव्यक्ता । आर्याच्छन्दस्तल्लक्षणञ्चोक्तं प्राक् ।

अत्र स्त्रीणां व्यथोत्पादकत्वेनापाततो राज्ञो निन्दा, पर्यवसाने तु शत्रुनाशकत्वेन तस्य स्तुतिरवगम्यत इति व्याजेन स्तवनाद्व्याजस्तुतिः ।

अत्र श्लेषव्याख्यानेनोभयपक्षस्यासम्बद्धत्वप्रतीतेः स्पष्टत्वात्तर्कवागीशमतनिराकरणं सिद्धान्तवागीशस्य सर्वथा हेयमेव प्रतिभाति पूर्वकालेदानींकालयोः साम्यद्योतनायैव हि पक्षद्वयस्यावश्यकत्वात् "प्रागिव" इति स्पष्टमुक्तत्वात् । प्राचीनटीकाकृद्भिरेवमेव व्याख्यातत्वाच्च ।

( ५९ ) प्रशंसया निन्दाया गम्यत्वे दर्शयति—व्याजेति । हे पयोद जलधर ! जगतः संसारिपुरुषस्य जीवनाय प्राणत्राणाय तव जीवनानि प्राणधारणजलानि,

"जीवनं सलिले प्राणधारणायां च जीविते" इति गोपालः,

यत् सम्भवन्तीतिशेषः इयं सा मया तव व्याजस्तुतिः मिथ्यारूपा स्तुतिः प्रशंसा उदिता कथिता, इतोऽधिकस्तुतिसत्त्वे इयं न स्तुतिरपि तु स्तुतिरेवेत्यर्थः । संसारिपुरुषप्राणत्राणस्य नद्यादिजलेनाऽपि भवितुं शक्यत्वादितिभावः । अधिकां स्तुतिमाह—स्तोत्रन्त्विति । तु किन्तु हे घन पयोद ! इदं महत्ते तव स्तोत्रं स्तुतिः ; यत् पथिकान् वियोगिनः पुरुषान् निहत्य वियोगव्यथाया अनेकधोत्पादनेन व्यापाद्य, धर्मराजस्य धर्मानुसारेण जीवानां नियन्तुर्यमस्य ।

"धर्मराजः पितृपतिः समवर्ती परेतराट्" इत्यमरः,

स्तोत्रं तु ते महदिदं घन ! धर्मराज-
साहाय्यमर्जयसि यत्पथिकान्निहत्य ॥'

( ६० ) पर्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते ॥ ६० ॥

साहाय्यं तेषां व्यापादनेनैव सहायताम् अर्जयसि सम्पादयसि । वसन्ततिलकाच्छन्द-स्तल्लक्षणं चोक्तं प्राक् ( १२३ पृ० ) ।

अत्र धर्मराजसाहाय्यविधानेन आपातमात्रमेव गम्यमानया प्रशंसयैव अनपराधि-वियोगिहननजनितनिन्दायाः प्रतीयमानतया व्याजरूपस्तवनाद्व्याजस्तुतिः ।

"अत्र स्तुतेर्वाच्यत्वेऽपि स्तुतिप्रयोजकार्थपरतया यत् स्तुतिपदं व्याख्यातं तदुदा-हरणान्तरसङ्ग्रहाय । यथा—

"दानात्प्रशंसां प्राप्तोऽसि कर्णेदानीं तु सङ्गरात् ।
अपक्रम्य यशो दत्वाऽश्वये प्राप्तस्ततोऽधिकाम्" ॥ इति ।

कर्णं प्रति अश्वत्थाम्न उक्तौ स्तुतेरवाच्यतेऽत्ति विज्ञप्रियादयः । समासोक्त्यप्रस्तुत-प्रशंसार्थान्तरन्याससङ्कीर्णाप्येषा दृश्यते । यथा—

"देव ! त्वां परितः स्तुवन्तु कवयो लोभेन, किं तावता
स्तव्यस्त्वं भवितासि यस्य तरुणश्चापप्रतापोऽधुना ।
क्रोडान्तः कुरुतेतरां वसुमतीमाशाः समालिङ्गति
द्यां चुम्बत्यमरावतीं च सहसा गच्छत्यगम्यामपि ॥"

अत्र चापप्रतापस्य समासोक्त्या विटधौरेयव्यवहाराश्रयत्वप्रतीतिः, तन्मूला च निन्दा स्तुतौ पर्यवस्यति । ननु कथमत्र व्याजस्तुतिः ? वाच्याभ्यामेव निन्दास्तुतिभ्यां स्तुतिनिन्दयोर्गम्यत्वे तस्या अभ्युपगमात् । न ह्यत्र चापप्रतापस्य केवलस्य केवलवसु-मत्याद्यालिङ्गनं वाच्यभूतं निन्दास्पदं भवति । समासोक्तौ त्वाविर्भूतो विटव्यवहारो निन्दास्पदमपि न वाच्यः, अपि तु गम्य इति चेत् ? वाच्यार्थाभ्यामामुखे गम्यमानाभ्या-मित्यप्यर्थं गृहाण इति केचित् । अन्ये तु गम्यया निन्दया गम्यायाः प्रशंसाया व्याज-स्तुत्युपस्कारकत्वमेव न, व्याजस्तुतिर्हि वाच्यार्थेह विवक्षिता न तु प्रतीयमाना।" इति । स्पष्टं रसगङ्गाधरे । एवमन्यत्राप्यूह्यम् ।

( ६० ) व्याजस्तुतौ प्रतीयमानार्थस्य प्रस्तुतत्वात् प्रतीयमानार्थविशेषमाश्रित्यैव पर्यायोक्तं नामालङ्कारं लक्षयति—पर्यायोक्तमिति । यदा भङ्ग्या येन रूपेण विवक्षितोऽ-र्थस्तदतिरिक्तप्रकारो भङ्गी तया चमत्कारनिपुणविच्छित्त्यन्तराश्रयेणेत्यर्थः, गम्यमेव प्रतीयमानमेव वस्तु, अभिधीयते अभिधेयवत् स्फुटं प्रतीयते कार्यादिद्वारेणेत्यर्थः, तदा तत् पर्यायेण प्रकारान्तरेणोक्तम् अभिहितं व्यङ्ग्यं पर्यायोक्तं नामालङ्कार उक्त इति पूर्वतो लिङ्गव्यत्ययेनानुषञ्जनीयः । तथाच-पर्यायेण चमत्कारनिपुणविच्छित्यन्तराश्रयेण व्यङ्ग्य-स्यार्थस्य स्फुटप्रतिपादनं पर्यायोक्तमितिफलितम् । "पर्यायोक्ते प्रकारे स्यान्निर्माणेऽव-सरे क्रमे" इति विश्वः । विशेषरूपत्वेनापवादरूपा व्याजस्तुतिरस्य बाधिकेति केचित् ।

अत्रेदम्बोध्यम्—

अस्यां हि गम्यस्य येनाकारेण गम्यता तदतिरिक्ताकारेण वाच्यता । तेन पर्यायेण भङ्ग्यन्तरेणोक्तमभिहितं व्यङ्ग्यं यत्र तदितिव्युत्पत्त्या लब्धं लक्षणमसङ्गतमिति नाशङ्क-

( ६१ ) उदाहरणम्—

( ६२ ) 'स्पृष्टास्ता नन्दने शच्याः केशसंभोगलालिताः ।
सावज्ञं पारिजातस्य मञ्जर्यो यस्य सैनिकैः ॥'

नीयम्, एकस्यैवार्थस्य प्रकारभेदेन व्यङ्ग्यत्ववाच्यत्वयोरविरोधात् । यथा यावककुसुम्भजपाकुसुमादिरूपाणां रक्तत्वादिना वाच्यत्वेऽपि तत्तद्वैजात्यरूपेण प्रत्यक्षत्वमेव न तु वाच्यत्वम्, तथेहापीति मम्मटभट्टानामाशयः ।

अत्रालङ्कारसर्वस्वकाराः—"यदेव गम्यत्वं तस्याभिधाने पर्यायोक्तम् । गम्यस्य सतः कथमभिधानमिति चेत् ? गम्यापेक्षया प्रकारान्तरेणाभिधानस्याभावात्, नहि तस्यैव तयैव विच्छित्त्या गम्यत्वं वाच्यत्वं च भवति अतः कार्यमुखद्वारेणाभिधानम्" इत्याहुः । तेषामयमाशयः—

चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य ।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम् ॥

इतिप्राचीनोदाहरणे राहुशिरश्छेदकारीतिव्यङ्ग्यं राहुवधूजनसम्बन्धिचुम्बनमात्रावशिष्टरतोत्सवनिर्मातृत्वेन रूपेण प्रकारान्तरेणाभिधीयत इत्यस्यापि विवेचने क्रियमाणे राहुशिरश्छेदकर्तृत्वरूपो धर्मः स्वसमानाधिकरणेन तादृशरूपान्तरेण साक्षादुपात्तेन गम्यत इत्येव पर्यवस्यति । भगवतस्तु पूर्वप्रक्रान्तत्वात् यच्छब्देनाभिहितत्वाच्च न व्यङ्ग्यत्वम् अतःकार्यादिमुखेन कारणाभिधानं पर्यायोक्तमिति, तन्न विचारसहम्—लक्षणे व्यङ्ग्यमगूढं वाच्याद्चारु चेति । अतएव प्रकृतोदाहरणे भगवान् वासुदेवो राहुशिरश्छेदकारित्वरूपेण स्वसाधारणधर्मेण व्यङ्ग्यस्ततोऽपि चारुतरेण राहुवधूचुम्बनमात्रशेषकारित्वेन रूपान्तरेणाभिहितः केनचिद् रूपेण व्यञ्जनया लभ्यस्यार्थस्य ततोऽपि चारुतरेण रूपेण वाच्यत्वान्न ध्वनित्वम् । यद्यपि भगवतः पूर्वप्रक्रान्तत्वाद्यच्छब्देनाभिधानाच्च न व्यङ्ग्यत्वं तथापि व्यङ्ग्यतावच्छेदकरूपेण वाच्यत्वाभावाद्व्यङ्ग्यत्वमेव । एवञ्च प्रकारभेदाद् व्यङ्ग्यस्यैवाभिधाविषयत्वं युक्तम् । नच प्राप्ताप्राप्तविवेकन्यायेन धर्मांशे एव व्यङ्ग्यत्वं धर्म्यंशे नेतिवाच्यम्, धर्मिणः स्वरूपतोऽवाच्यत्वात् । यदि धर्मी कस्यचिद्वाच्यः स्यात् स्यादपि तथा औपाधिकभेदेन घटाकाशादिषु भेदप्रतीतिवत् तत्तद्धर्मरूपोपाधिभेदेन धर्मिणोऽपि भेदेन तस्याऽपि व्यङ्ग्यत्वाच्च ।

'यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता । मदेनैरावणमुखे मानेन हृदये हरेः ॥'

इतिकाव्यप्रकाशोदाहरणविरोधाच्च ।

यत्तु—पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम् ।
शुकं भोजयितुं यामि युवाभ्यामास्यतामिह ॥

अत्र नायिकां नायकेन सङ्गमय्य शुकभोजनव्याजेन निर्गच्छन्त्या सख्या तत्स्वाच्छन्द्यरूपमिष्टसाधनं पर्यायोक्तमिति तत्तु ध्वनिमर्यादां नातिशेते । एवञ्च—

"आनायि देशः कतमस्त्वयाद्य वसन्तमुक्तस्य दशां वनस्य" ।

इत्यत्राप्ययमेव देशोऽलङ्कृतोऽस्य इति स्पष्टमाकरे ।

( ६१ ) उदाहर्त्तुकाम आह—उदाहरणमिति । यथेतिशेषः ।

( ६२ ) दर्शयति—स्पृष्टास्ता इति । मेण्ठकवेर्हयग्रीववधस्य पद्यमिदम् । यस्य हयग्रीवस्य तदाख्यदैत्यराजस्य, सैनिकैः सेनास्थितैः शूरैः, शच्या इन्द्राण्याः, केशसम्भोगाय

( ६३ ) अत्र हयग्रीवेण स्वर्गो विजित इति प्रस्तुतमेव गम्यं कारणं वैचित्र्यविशेषप्रतिपत्तये सैन्यस्य पारिजातमञ्जरीसावज्ञस्पर्शनरूपकार्यद्वारेणाभिहितम् ।

( ६४ ) न चेदं कार्यात्कारणप्रतीतिरूपाप्रस्तुतप्रशंसा, तत्र कार्यस्याप्रस्तुतत्वात् ; इह तु वर्णनीयस्य प्रभावातिशयबोधकत्वेन कार्यमिति कारणवत्प्रस्तुतम् ।

( ६५ ) एवञ्च—

( ६६ ) 'अनेन पर्यासयताश्रुबिन्दून्मुक्ताफलस्थूलतमान्स्तनेषु ।
प्रत्यर्पिताः शत्रुविलासिनीनामाक्षेपसूत्रेण विनैव हाराः ॥'

( ६७ ) अत्र वर्णनीयस्य राज्ञो गम्यभूतशत्रुमारणरूपकारणवत्कार्यभूतं तथाविधशत्रुस्त्रीक्रन्दनजलमपि प्रभावातिशयबोधकत्वेन वर्णनार्हमिति पर्यायोक्तमेव ।

---

केशपाशे भूषणपरिधानाय लालिता उद्यानपालकैः सयत्नं पालिताः, पारिजातस्य कल्पवृक्षस्य ताः प्रसिद्धा मञ्जर्यः, नन्दने तदाख्ये विपिने, सावज्ञम् अवज्ञया सहितं स्पृष्टाः, स हयग्रीवः प्रस्तूयत इति पूर्वेण सम्बन्धः ।

( ६३ ) भङ्ग्यन्तरेणाभिधानं सप्रयोजनं दर्शयति—अत्रेति । गम्यं पूर्वप्रस्तावपर्यालोचनेनैव व्यङ्ग्यम् । कारणमिति । स्वर्गविजयमन्तरा सैनिकैः सावज्ञपारिजातमञ्जरीस्पर्शनासम्भवात्, तद्विजये च तत्सम्भवात् सावज्ञपारिजातमञ्जरीस्पर्शनं प्रति स्वर्गविजयस्यैव हेतुत्वमितिभावः । वैचित्र्यविशेषस्येति अप्रस्तुतप्रशंसासमासोक्तिचमत्कारातिशयस्य प्रतिपत्तिर्ज्ञानं तस्यै तथोक्तये । सैन्यस्य हयग्रीवयोद्धसमूहस्य । अभिहितं स्पष्टं बोधितमित्यर्थः ।

( ६४ ) नन्वेवं कार्यात् कारणप्रतीतिरूपाप्रस्तुतप्रशंसैवास्तामलमलङ्कारान्तरणेत्यत आह—नचेति । इदं "स्पृष्टास्ता नन्दने शच्याः" इत्याद्युदाहरणे कारणं बोधयितु कार्याभिधानम्, अप्रस्तुतप्रशंसेति नच वाच्यमित्यर्थः । तदभावे हेतुमुपन्यस्यति—तत्रेति । कारणात् कारणप्रतीतिरूपायामप्रस्तुतप्रशंसायामित्यर्थः । अप्रस्तुतत्वादप्रस्तुतत्वनिश्चयात् तथैव तल्लक्षणविधानादित्याशयः । इह तु "स्पृष्टास्ताः—" इत्यादौ तु वर्णनीयस्य प्रस्तुतस्य हयग्रीवस्य । कार्यमपि सावज्ञपारिजातमञ्जरीस्पर्शमपि, कारणवत् स्वर्गविजयवत् प्रस्तुतम् , स्वर्गविजयप्रत्यायनेनैव सावज्ञपारिजातमञ्जरीस्पर्शादिरूपदुराचारस्यापि प्रतीयमानत्वादित्यभिप्रायः, एवञ्चोक्तोदाहरणे प्रस्तुतादेव प्रस्तुतान्तरावगमादप्रस्तुतप्रशंसाया अभावेनातिरिक्तं पर्यायोक्तमेवेतिभावः ।

( ६५ ) सम्प्रति पद्यान्तरेऽपि प्रस्तुतकार्येण प्रस्तुतकारणप्रतीतेरलङ्कारं प्रदर्शयति—एवञ्चेति । उक्तदिशा "स्पृष्टास्ताः" इत्यादौ पर्यायोक्ते चेत्यर्थः ।

( ६६ ) तादृशपद्यान्तरमाह—अनेनेति । रघुवंशे षष्ठसर्गे पतिंवरामिन्दुमतीं प्रति धात्र्या उक्तिरियम् । अनेन अङ्गदेशाधिपतिना शत्रुविलासिनीनां शत्रुस्त्रीणां स्तनेषु, मुक्ताफलेभ्यः स्थूलतमाः अत्यन्तं पीवरास्तान्, अश्रुबिन्दून्, पर्यासयता पातयता सता, आक्षेपसूत्रेण ग्रथनसूत्रेण विनैव हाराः प्रत्यर्पिता अश्रुबिन्दव एव हाराः कृता इत्यर्थः । अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दस्तल्लक्षणं चोक्तं प्राक् ( १५५ पृ० ) ।

( ६७ ) उक्तोदाहरणे पर्यायोक्तसद्भावमुपपादयति—अत्रेति । वर्णनीयस्य प्रस्तुतवर्णनस्य, राज्ञोऽङ्गदेशाधिपतेः, गम्यभूतं व्यञ्जनावृत्त्या प्रतीयमानरूपं यत् शत्रुमारणरूपं

( ६८ ) 'राजन्राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते ।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥'

( ६९ ) अत्र प्रस्थानोद्यतं भवन्तं श्रुत्वा सहसैवारयः पलायिता इति कारणं प्रस्तुतम् । 'कार्यमपि वर्णनार्हत्वेन प्रस्तुतम्' इति केचित् ।

( ७० ) अन्ये तु—'राजशुकवृत्तान्तेन कोऽपि प्रस्तुतप्रभावो बोध्यत इत्यप्रस्तुतप्रशंसैव' इत्याहुः ।

कारणं तद्वत् । कार्यभूतमिति । शत्रुमारणादेव तत्स्त्रीक्रन्दनजलं प्रादुर्भूतमितिशत्रुमारणस्य कारणत्वम् , तत्क्रन्दनजलस्य च तत्कार्यत्वमित्यवधेयम् । प्रभावातिशयोऽङ्गदेशाधिपतेः पराक्रमातिशयस्तद् बोधकं तस्य भावस्तत्त्वं तेन तथोक्तेन अस्य "राज्ञ" इति पूर्वेणाऽन्वयः । वर्णनार्हं प्रस्तुतमितिशेषः । इति हेतोः पर्यायोक्तमेव न त्वप्रस्तुतप्रशंसेतिभावः । उक्तोदाहरणेनाऽपि प्रस्तुतादेव प्रस्तुतप्रतीतौ पर्यायोक्तम् , अप्रस्तुतादेव च प्रस्तुतप्रतीतौ अप्रस्तुतप्रशंसेतिस्फुटमुभयोर्भेद इति ग्रन्थकर्त्तुराशयः ।

( ६८ ) अप्रस्तुतकार्येण प्रस्तुतकारणव्यङ्ग्यरूपाया अप्रस्तुतप्रशंसाया उदाहरणं "राजन् राजसुता" इत्यादिकं काव्यप्रकाशकृता दत्तम् , तत्रापि कार्यस्य प्रस्तुतत्वे पर्यायोक्तमेवेति नव्या वदन्तीति सन्दिग्धस्थलं तद्दर्शयति – राजन्निति । शत्रुजयोद्यतं राजानं प्रति तदमात्यस्योक्तिरियम् । हे देव ! तव अरिभवने त्वदागमनभिया शून्यीकृते प्रतिनृपतिमन्दिरे अध्वगैः पथिकैः पञ्जरात् पक्ष्यादिबन्धनागारात् पिञ्जरात् मुक्तः प्रस्थापितः, राजशुकः प्रतिनृपतिशुकः शून्यवलभौ जनहीनोपरिगृहसौधे स्थित इति शेषः ।

"शुद्धान्ते वलभीचन्द्रशाले सौधोर्ध्ववेश्मनि" इति रभसः,

चित्रस्थान् पटे भित्तौ वा आलेख्यगतान् राजादीनितिशेषः अवलोक्य एकैकं एकमेकं प्रति इत्थमनेन प्रकारेण आभाषते आलपति । इत्थं कथमितिजिज्ञासायामाह— राजन्नित्यादि । हे राजन् नाथ ! राजसुता मां शुकं न पाठयति श्रीकृष्णचरितादिकमितिशेषः, देव्यो राज्ञ्योऽपि तूष्णीं स्थिता मौनमाश्रिता न मां पाठयन्तीत्यर्थः, हे कुब्जे मत्परिपोषिके कुब्जनारि ! ( इति तथाविधाया भोजिकायाः सम्बोधनम् ) मां शुकं भोजय, अद्यापि इदानीमपि कुमारा राजपुत्रा एव सचिवा मन्त्रिणो भवद्द्वयस्यास्तैः किं न भुज्यते इति तेषां भोजनसमये शुकस्यापि भोजनलाभादितिभावः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणं चोक्तं प्राक् ( १९८ पृ० ) ।

( ६९ ) अत्र पर्यायोक्तमप्रस्तुतप्रशंसां च मतभेदेनोपपादयति—अत्रेति । प्रस्थानोद्यतं शत्रुजयोद्यतम् । कारणं तत्पलायनरूपम् , तेनैव तथाभूतशुकाभाषणस्योत्पन्नत्वादित्याशयः । कार्यमपि तथाभूतशुकाभाषणमपि । केचिदर्वाचीनाः । इत्थञ्चैतेषां मते शत्रुपलायनरूपप्रस्तुतकारणस्य कार्यंशुकभाषणं प्रस्तुतमेवेतिपर्यायोक्तमेवेतिबोध्यम् ।

( ७० ) काव्यप्रकाशकृदभिप्रायमाह—अन्ये त्विति । राजशुकवृत्तान्तेन राजन्नित्यादिशुकभाषणरूपेण प्रस्तुतस्य प्रतिपक्षिराज्ञः कोऽपि प्रभावो विद्यत इति बोध्यते प्रत्याय्यते वक्त्रेतिशेषः । झटित्येव पलायनादित्याशयः । तथाच प्रतिपक्षिराजपलायनरूप-

( ७१ ) (क) सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।
कार्यं च कारणेनेदं कार्येण च समर्थ्यते ॥ ६१ ॥
साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ।

क्रमेणोदाहरणम्—

( ७२ ) 'बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ।
संभूयाम्भोधिमभ्येति महानद्या नगापगा ॥'

---

कारणस्याप्रस्तुतराजशुकाभाषणरूपकार्येणावगमादप्रस्तुतप्रशंसेति प्रकाशकृतामभिप्रायः । तथाच काव्यप्रकाशे—"प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गता इति कारणे प्रस्तुते कार्यमुक्तम्" इति । वस्तुतस्तु—एकतरस्य नैयत्येनानुक्तत्वात् उभयथा-युक्तेरेव सम्भवाच्च पर्यायोक्ताप्रस्तुतप्रशंसयोः सन्देहसङ्कर एवेत्यवधेयम् ।

( ७१ ) ननु कार्यकारणभावावगमस्थले यथा पर्यायोक्तालङ्कारो भवति तद्वदन्यो-ऽलङ्कारो भवति न वेतिजिज्ञासायां कार्यकारणभावे अर्थान्तरन्यासं प्रतिपादयन् सामा-न्यत एव तं प्रतिपादयति— सामान्यमिति । प्रतिपादितार्थसमर्थनमर्थान्तरन्यास इति हि तल्लक्षणम् , प्रतिपादितार्थसमर्थनञ्च द्वयोरंशयोरेकतरस्मिन्नंशे असम्भवत्वादिनिरा-करणद्वारा प्रकृतार्थस्य सम्भवपरेणार्थेन निश्चयीकरणम् । अष्टविधश्चायमिति दर्शयति— सामान्यमिति । तत्र सामान्यत्वम्—व्यापकधर्मावच्छिन्नत्वम् , विशेषत्वम्—व्याप्य-धर्मावच्छिन्नत्वम् , यद्वा—समर्थ्यसमर्थकद्वयगतधर्मवत्त्वं सामान्यत्वम् , समर्थ्यसमर्थक-योरन्यतरगतधर्मवत्त्वं विशेषत्वम् । ज्ञाप्यनिष्पाद्येतरसमर्थ्यरूपसाध्यत्वं कार्यत्वम् , ज्ञापकनिष्पादकातिरिक्तसमर्थकरूपहेतुत्वं कारणत्वम् । समर्थ्यसमर्थकयोः प्रतिपिपादयि-षितसमानधर्मवत्त्वं साधर्म्यम् , उक्तविधविरुद्धधर्मवत्त्वञ्च वैधर्म्यम् । एतद्द्वयञ्च सम-र्थ्यते सोपपत्तीक्रियते निःसन्देहप्रत्यायनेन प्रतिवारमेव सम्बध्यते । इत्थञ्च—

साधर्म्येण वैधर्म्येण वा यदि विशेषेण सामान्यं समर्थ्यते, तद्वदेव तेन सामान्येन वा विशेषः समर्थ्यते, तद्वदेव कारणेन च कार्यं समर्थ्यते, तद्वदेव कार्येण च इदं कारणं समर्थ्यते; ततस्तदा तेषां चतुर्विधानामपि समर्थनानां साधर्म्येण, साधर्म्यप्रकारकज्ञानेन इतरेण वैधर्म्येण वैधर्म्यप्रकारकज्ञानेन च सम्भवात् पुनर्द्वैविध्येन सङ्कलने मिलित्वा अष्ट-धा अष्टप्रकारः अर्थान्तरन्यासः कथितः, अनुपपद्यमानतया प्रस्तुतार्थं समर्थयितुं प्रस्तुता-तिरिक्तार्थस्य न्यासः स्थापनमित्यस्य व्युत्पत्तिर्ज्ञेया । दृष्टान्तादिभिः सहास्य भेदस्तु पूर्वमेव तत्र तत्र प्रतिपादित एव, काव्यलिङ्गादिभिर्भेदस्तु तत्र तत्रैव प्रतिपादयिष्यते काव्यालङ्गेनैव गतार्थत्वं मन्यमानेन मम्मटेन तु—कार्यकारणभावे अर्थान्तरन्यासं ना-ङ्गीकृतम् कारणस्य जनकहेतुत्वात् कार्यस्य च ज्ञापकहेतुत्वात् । ग्रन्थकृता तु तत्प्रकरण एव तद्दूषितमित्यस्माभिरपि तत्रैव विवेचयिष्यते ।

( ७२ ) तत्र विशेषेण सामान्यसमर्थनं साधर्म्येणाह—बृहत्सहाय इति । शिशुपाल-वधद्वितीयसर्गे मन्त्रविचारणायामुद्धवस्योक्तिरियम् । क्षोदीयान् अतिशयक्षुद्रोऽपि जनः,

---

( क ) कुवलयानन्दकारास्तु इतोऽग्रे—विकस्वरः, प्रौढोक्तिः, सम्भावना, मिथ्याध्यवसितिः, ललितम् , प्रहर्षणम् , विषादनम् , उल्लासः, अवज्ञा, अनुज्ञा, लेशः, मुद्रा, रत्नावली, इति त्रयो-दशाऽलङ्कारान् प्राहुः; तत्र विचारसहम् अतिशयोक्त्यर्थान्तरन्यासादिषु गतार्थत्वात् । तत्प्रकारस्तु विस्तरभयान्नेहोपन्यस्तः ।

( ७३ ) अत्र द्वितीयार्धगतेन विशेषरूपेणार्थेन प्रथमार्धगतः सामान्योऽर्थः सोपपत्तिकः क्रियते ।

( ७४ ) 'यावदर्थपदां वाचमेवमादाय माधवः ।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥'

( ७५ ) 'पृथ्वि ! स्थिरा भव भुजङ्गम ! धारयैनां
त्वं कूर्मराज ! तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः ! कुरुत तत्त्रितये दिधीर्षां
देवः करोति हरकार्मुकमाततज्यम् ॥'

बृहन्तः सहाया यस्य स तादृशः सन्, कार्यान्तं कार्यस्य पारं गच्छति प्राप्नोति अतिकठिनमपि कार्यमनायासेन साधयतीत्यर्थः । तथा हि—नगापगा पर्वतनदी महानद्या गङ्गायमुनाद्यन्यतमया सम्भूय मिलित्वा अम्भोधिं समुद्रम् अभ्येति प्राप्नोति । नद्या नगसम्बन्धदर्शनेन जलाधिक्याभावोऽवगम्यते तेन च नितान्तक्षुद्रत्वम् । अनुष्टुप्छन्दस्तल्लक्षणन्तूक्तं पूर्वमेव ।

( ७३ ) उक्तोदाहरणे लक्षणं संयोजयितुमाह—अत्रेति । द्वितीयार्धगतेन द्वितीयवाक्यार्थसङ्गतेन विशेषरूपेण नगापगादिरूपेण अर्थेन महानदीमेलनप्रयुक्तसमुद्रप्राप्तिरूपमहत्कार्यसाधनत्वप्रतिपत्तिविषयेण प्रथमार्धगतः प्रथमवाक्यार्थगतः, सामान्यः क्षोदीयादिः, सोपपत्तिकः सयुक्तिकः । एवञ्च 'क्षोदीयानपि बृहत्सहायः सन् कार्यान्तं गच्छति' इति क्व दृष्टमिति जिज्ञासायां 'नगापगा महानद्या सम्भूय अम्भोधिमभ्येति' इति सम्भवद्दृष्टान्तोपपादनद्वारा एकस्मिन् स्थले दृष्टः, अन्यत्राऽपि सम्भवतीतिन्यायेन प्रथमवाक्यार्थसामान्यस्य असम्भवताद्यपाकरणादित्याशयः । साधर्म्यञ्चाऽप्यत्र—समर्थ्यगतकार्यान्तप्राप्तेः समर्थकगतसमुद्रप्राप्तेश्च तुल्यत्वेनैव बोध्यम् ।

( ७४ ) सामान्येन विशेषसमर्थने साधर्म्येण उदाहरति—यावदिति । शिशुपालवध एव द्वितीयसर्गे पद्यमिदम् । माधवः माया लक्ष्म्या धवः पतिः श्रीकृष्णः, 'धवः प्रियः पतिर्भर्ता' इत्यमरः एवम् इत्थमुक्तरूपाम्, यावानर्थ इति यावदर्थम् अर्थपरिमितानीत्यर्थः, पदानि यस्यां तां तथोक्ताम्, 'वाचं वाणीम् आदाय गृहीत्वा अभिधायेत्यर्थः, विरराम तूष्णींबभूव, महीयांसः अतिमहान्तो जनाः प्रकृत्या स्वभावेनैव 'प्रकृतिर्गुणसाम्ये स्यादमात्यादि स्वभावयोः' इति विश्वः, मितभाषिणः स्वल्पवादिनो भवन्ति । पूर्वोक्तं छन्दः ।

अत्र पूर्वार्धगतो माधवादिरर्थो विशेषः, द्वितीयार्धगतो महीयःप्रभृतिरर्थस्तु सामान्यः, अभिधेयमात्रमभिधाय विरामः मितभाषित्वञ्च तुल्य एव धर्मः इति साधर्म्यम्, एवञ्च सामान्येन साधर्म्येण विशेषसमर्थनरूपोऽर्थान्तरन्यासः ।

( ७५ ) कारणेन कार्यसमर्थनं साधर्म्येणोदाहरति—पृथ्वीति । बालरामायणमहानाटके श्रीरामेण हरधनुर्भङ्गसमये पृथ्व्यादीनामस्थैर्यादिकं वितर्कयतो लक्ष्मणस्योक्तिरियम् ।

हे पृथ्वि पृथिवि ! त्वं स्थिरा दृढ़निश्चला भव, येन शेषनागशिरसो न पतेरित्याशयः, हे भुजङ्गम शेषनाग ! त्वम् एनां पृथ्वीं धारय निश्चलमवलम्बस्व यथा तव शिरसो नेयं भूः पतेदित्याशयः । हे कूर्मराज कच्छपराज ! त्वं तदिदं द्वितयं पृथ्वीभुजङ्गमयोरितिशेषः

( ७६ ) अत्र कारणभूतं हरकार्मुकाततज्यीकरणं पृथिवीस्थैर्यादेः कार्यस्य समर्थकम् ।

( ७७ ) 'सहसा विदधीत न क्रियाम्' इत्यादौ ( ७२८ पृ. ) संपद्वरणं कार्यं सहसा विधानाभावस्य विमृश्यकारित्वरूपस्य कारणस्य समर्थकम् ।

( ७८ ) एतानि साधर्म्ये उदाहरणानि । वैधर्म्ये यथा—

---

दधीथाः निश्चलं धारयेथाः अन्यथोभौ पतिष्यत इति भावः । हे दिक्कुञ्जराः ऐरावतादयो दिग्गजाः ! यूयमपि तत्त्रितये पृथ्वी-भुजङ्गम-कूर्मराजेतित्रये द्विधीर्षां धर्त्तुमिच्छां निश्चलभारणव्यापारमित्यर्थः कुरुत विधत्त अन्यथा सर्वं एवैते स्वस्थानात् स्खलेयुरित्याशयः । लक्ष्मणः कथमेवमुपदिशतीत्यत आह—आर्यः

'कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स तु आर्य इति स्मृतः ॥

इत्युक्तलक्षणः समादरणीयो रामचन्द्र इत्यर्थः, हरस्य शिवस्य कार्मुकं धनुः, आतता आरूढा ज्या मौर्वी यस्य तत्तादृशं करोति विधत्ते । अन्यथा तु आततज्यीकरणे यावान् भारो भवेत्तेन सर्वेषामस्थैर्यं स्यादित्याशयः । वसन्ततिलकंछन्दस्तल्लक्षणन्तूक्तं प्रागेव ( १२३ पृ० ) ।

( ७६ ) लक्षणं संयोजयति—अत्रेति । आततज्यीकरणं गुणयोगानुकूलव्यापारः, पृथ्वीस्थैर्यादेः उपदिश्यमानातिशयनिश्चलस्थैर्यादेरित्यर्थः । उक्तरूपस्य स्थैर्यादेश्च पूर्वमनुत्पन्नत्वात् हरकार्मुकाततज्यीकरणेनैवोत्पत्तेः मिथः कार्यकारणभाव उपपद्यत एवेति न काचन विप्रतिपत्तिः । कार्यकारणयोरुत्पत्त्युत्पादनयोग्यत्वरूपं साधर्म्यम् । समर्थकम् उपपादकम्, तुरीयपादस्य लक्ष्मणोक्त्यभावे पृथ्व्यादीनामसावधानत्वेन स्खलनादिसम्भवादित्यभिप्रायः ।

नन्वत्र पृथ्वीस्थैर्यादेः कथमाततज्यीकरणस्य कार्यत्वमस्थैर्यादेरेव तत्कार्यत्वादिति चेत् ? मैवम्, अस्थैर्यादिसम्भावनया विशेषस्थैर्यधारणादेस्तत्कार्यत्वाभ्युपगमे नादोषात् । नचैवमाततज्यीकरणात्पूर्वभूतस्य विशेषस्थैर्यादेस्तत्रापि कथं कार्यत्वमिति वाच्यम्, तज्ज्ञानकार्यत्वे च नान्दीमुखस्य विवाहनिमित्तकत्ववत् तत्कार्यत्वोपचारात् । स्पष्टञ्चैतद्विज्ञप्रियादौ ।

( ७७ ) कार्येण कारणस्य समर्थनं साधर्म्येणोदाहरति—सहसेति । व्याख्यातमिदम् ( ७२८ पृ० ) । सम्पद्वरणं सम्पत्प्राप्तिरूपम् । विमृश्यकारित्वरूपस्य विचारपूर्वककार्यविधानस्य । समर्थकं सयुक्तिकताप्रतिपादकम् । साधर्म्यञ्चात्र सम्पत्प्राप्ति-विमृश्यकारित्वरूपयोः कार्यकारणयोरुत्पत्त्युत्पादनयोग्यत्वरूपं बोध्यम् । अयम्भावः—संसारे यः खलु विचार्य कार्यं सम्पादयति तस्य लक्ष्मीरतुला भवत्यतो विमृश्यकारित्वं सम्पज्जनकमिति निश्चीयते ततश्च विमृश्यकारित्वं कारणम्, सम्पत्प्राप्तिश्च कार्यम् । तथाच 'वृणते हि' इत्याद्युत्तरार्द्धवाक्यार्थभूतं विमृश्यकारित्वरूपं कारणं समर्थयति, प्रवृत्तिं कुर्वतो जनस्य सम्पत्प्राप्तेरभिलषितत्वादिति ।

( ७८ ) साधर्म्यनिबन्धनोदाहरणान्युक्तान्येवेति स्पष्टयति—एतानीति । तत्र तत्र यथा साधर्म्यं तथोपपादितमेव ।

( ७६ ) 'इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः ॥'

( ८० ) अत्र सामान्यं विशेषस्य समर्थकम् ।

( ८१ ) 'सहसा विदधीत–' इत्यत्र सहसा विधानाभावस्यापत्प्रदत्वं विरुद्धं कार्यं समर्थकम् ।

( ८२ ) एवमन्यत् ।

---

( ७९ ) विशेषेण सामान्यस्य समर्थनं वैधर्म्येणानुदाहृत्य सामान्येन विशेषसमर्थनमेव वैधर्म्येणाह—इत्थमिति । कुमारसम्भवद्वितीयसर्गे ब्रह्माणं प्रति सुरगुरोस्तारकासुरदौरात्म्यनिवेदनमिदम् । इत्थम् उक्तप्रकारेण आराध्यमानोऽपि उपास्यमानोऽपि किंपुनरुपेक्ष्यमाण इति शेषः, तारकासुरः, भुवनत्रयं त्रिभुवनं चतुर्दशभुवनं वा न त्वस्माकमेव भुवनं क्लिश्नाति दुःखाकरोति । तथाहि—दुर्जनः खलः प्रत्यपकारेण परापकारप्रतिक्रिययैव शाम्येत् अपकाराभिवतत शान्तो भवेत् न पुनरुपकारेण । अनुष्टुप् छन्दः ।

( ८० ) उक्तलक्ष्ये लक्षणं संयोजयितुमाह—अत्रेति । सामान्यं दुर्जनाद्युत्तरार्द्धवाक्यार्थरूपमित्यर्थः तारकादिपूर्ववाक्यार्थोपपादकत्वेन व्यापकत्वादित्याशयः । विशेषस्य तारकादिपूर्ववाक्यार्थस्योत्तरार्द्धवाक्यार्थोपपन्नत्वेन व्याप्यत्वादिति भावः । आराध्यमानो यो भवति तस्य सर्वत्रानुकूलप्रदर्शनादत्र तद्विरुद्धत्वाचरणेन वैधर्म्यमित्यवगन्तव्यम् ।

( ८१ ) इत्थं कारणेन कार्यसमर्थनं वैधर्म्येणानुदाहृत्य कार्येण कारणसमर्थनं वैधर्म्येणाह—सहसेति । सहसाविधानाभावस्य विमृश्यकारित्वरूपस्य कारणस्य आपत्प्रदत्वं विपत्त्युत्पादनं विरुद्धं विमृश्यकारित्वरूपकारणाद्विपरीतम् । अयम्भावः—यथा

"अधर्मेणैधते तावत् ततो भद्राणि पश्यति ।
ततः सपत्नाञ्जयति समूलश्च विनश्यति ॥"

इत्याद्युक्तदिशा अधर्मो दुःखजनकः, तेन सुखकारणन्तु धर्म इति समर्थनं भवति तथैवात्र अविमृश्यकारित्वजन्यविपत्प्राप्तिरिति सम्पत्साधनीभूतविमृश्यकारित्वस्य सयुक्तिकताप्रतिपादनमेव विधत्त इति ।

( ८२ ) एवमन्यदिति । अन्यत् विशेषेण सामान्यसमर्थनं कारणेन कार्यसमर्थनं वैधर्म्येणानुदाहृतम् एवं सामान्येन विशेषसमर्थनं कार्येण कारणसमर्थनमिव ऊह्यमिति शेषः । तत्र विशेषेण सामान्यसमर्थनं वैधर्म्येण यथा—

"गुणानामेव दौरात्म्याद्धुरि धूर्यो न युज्यते ।
असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ॥"

अत्र धुरि नियुज्यमानधूर्यप्राणी सामान्यम्; अनियुज्यमानप्राणिविशेषेण गलिगलादियुज्यमानत्ववैधर्म्येण सुखस्वापेन धूर्यविरुद्धधर्मेण गलित्वेन च समर्थितम् । यद्वा—कारणेन कार्यसमर्थनं वैधर्म्येण यथा—

"बहिरेव चिरादिनात्यये विलसत्येष तुषारदीधितिः ।
भज सम्पदमत्र सन्ततं ननु सन्तापमितः प्रसूयते ॥"

अत्र 'सन्तापमितः प्रसूयते' इत्यनेन सूर्यस्य सन्तापजनने कारणत्वम्, तच्च 'इनादन्यः शान्त्युपपादक' इति वैधर्म्येण तुषारदीधितेः ( शशिनः ) सम्पद्रूपकार्यस्योत्पत्तिः समर्थ्यते । एवम्—

(८३) हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते ॥ ८२ ॥

(८४) तत्र वाक्यार्थता यथा—

(८५) 'यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं

मेघैरन्तरितः प्रिये ! तव मुखच्छायानुकारी शशी ।

---

"स विजिग्ये रणे सर्वान् राक्षसेन्द्रो बलोद्धतः। रामबाणकटुत्वादमनास्वाद्य हि तादृशः॥"

इत्यादौ बोध्यम् ।

(८३) उक्तालङ्कारे हेतोः प्रस्तावात् हेतुघटितमेव काव्यलिङ्गनामालङ्कारं प्रतिपादयति—हेतोरिति । हेतोः यं कञ्चिदर्थं प्रति ज्ञापकसमर्थकेतरनिष्पादककारणस्य वाक्यपदार्थत्वे वाक्यञ्च पदानि चेति वाक्यपदानि तान्यर्थाः प्रयोजनभूतानि यस्य तस्य भावस्तस्मिन् तथोक्ते व्यञ्जनया समस्तवाक्यबोध्यत्वे पदबोध्यत्वे वा काव्यलिङ्गं तन्नामालङ्कारो निगद्यते । । तथाच वाक्यार्थरूपस्यैकपदार्थरूपस्यानेकपदार्थरूपस्य च हेतोरभिधानं काव्यलिङ्गमित्यभिधीयत इत्यर्थः, एवञ्च अर्थविशेषं प्रति वाक्यार्थः पदार्थो वा यदि हेतुर्भवेत्तदाऽयमलङ्कार इति निष्कर्षः । एतेन हेतोर्वाक्यपदार्थता एकपदार्थता अनेकपदार्थता चेति त्रैविध्यं फलितम् । वाक्यपदयोर्लक्षणञ्च प्रागेवोक्तम् । लिङ्गमत्र वैचित्र्यविशेषभूतं निष्पादकरूपं कारणमेव न तु तर्कशास्त्राभिमतम् अत एव तद्व्यावृत्त्यर्थं काव्यपदमिति विभावनीयम् । अत एव च 'दण्डेन घटः' इत्यादौ नायमलङ्कारः वैचित्र्याभावात् ।

हेतुस्वरूपञ्चोक्तं गोवर्धनेन—

"न्यायोऽनुमानं हेतुश्च लिङ्गं युक्तिः समर्थकः" इति ।

अग्निपुराणेऽपि—

"सिषाधयिषितार्थस्य हेतुर्भवति साधकः । कारको ज्ञापकश्चेति द्विधा सोऽप्युपदिश्यते॥" इति।

अयमलङ्कार एव हेत्वलङ्कारेणाभिधीयते । अत एव कारणमालाऽलङ्कारे वृत्तौ प्रकाशकृतोक्तम्—पूर्वोक्तकाव्यलिङ्गमेव हेतुः (हेत्वलङ्कार इति) अस्यानुमानादर्थान्तरन्यासाच्च भेदस्तु स्वयमेवाग्रे वक्ष्यति । साभिप्रायपदार्थविन्यसनरूपात्परिकरादस्य को भेद इति चेत् ? तत्र पदार्थवाक्यार्थबलाद्व्यज्यमानोऽर्थो वाच्योपकारकर्ता भजते, अत्र पदार्थवाक्यार्थावेव हेतुभावं भजत इत्यन्यत्र स्पष्टम् ।

(८४) क्रमादुदाहर्तुमाह—तत्रेति । तत्र तयोर्द्विप्रकारयोर्मध्ये वाक्यार्थता यथा वाक्यार्थरूपस्य हेतोरभिधानमुदाहरतीत्यर्थः ।

(८५) यत्त्वन्नेत्रेति । हनुमन्नाटकेऽतिप्रसिद्धचम्पूकाव्ये सीतापहरणानन्तरं भावनोपनीतां तां सम्बोध्य वर्षासमये तद्विरहव्याकुलस्य श्रीरामस्योक्तिरियम् । हे प्रिये सीते ! यत् इन्दीवरं नीलोत्पलं त्वन्नेत्रसमानकान्ति तव लोचनतुल्यशोभि, तत् सलिले जले 'सलिलं कमलं जलम्' इत्यमरः, मग्नं मज्जितम् ; सुतरामिन्दीवरावलोकनेनाऽपि तव लोचनावलोकनानन्दो न भवतीत्यभिप्रायः । तव सीतायाः ; मुखस्य वदनस्यच्छाया कान्तिमनुकरोतीति स तथोक्तः 'छाया सूर्यप्रिया कान्तिः' इत्यमरः, शशी चन्द्रोऽपि मेघैः वारिवाहैः अन्तरित आच्छादितः , अतश्शशिनं विलोक्याऽपि तव मुखावलोकनसुखं न जायत इति भावः । तथा येऽपि तव गमनानुकारिणो गमना-

येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥'

( ८६ ) अत्र चतुर्थपादे पादत्रयवाक्यानि हेतवः ।

( ८७ ) पदार्थता यथा मम—

( ८८ ) ( 'त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् ।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥' )

( ८९ ) अत्र द्वितीयार्धे प्रथमार्धमेकपदं हेतुः ।

( ९० ) अनेकपदं यथा मम—

( ९१ ) ( 'पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीम् ।
देव ! त्रिपथगात्मानं गोपयत्युग्रमूर्धनि ॥' )

---

नुसारिणी गतिर्येषां ते तादृशा आसन्, तेऽपि राजहंसाः कलहंसाः 'राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे' इति हैममेदिन्यौ, गता गमिताः 'जलधरसमये मानसं यान्ति हंसाः' इत्युक्तनयेन मानससरोवरं प्रापिता इत्यर्थः, तथा च राजहंसगमनावलोकनेनाऽपि तव गतिदर्शनहर्षो न लभ्यत इत्याशयः । अतएव दैवेन भाग्येन, मे मम, तव सादृश्येन अङ्गप्रत्यङ्गतुल्यवस्त्ववलोकनेनेत्यर्थः यो विनोदो वियोगजनितसन्तापनिवर्त्तनं 'तन्मात्रमपि न क्षम्यते न सह्यते । यद्वा—नीलोत्पलचन्द्रहंसगतिषु त्वन्मुखादिसादृश्यावलोकनेन कथञ्चिद्धैर्यमाप्नुयादपि किन्तु वर्षासमयागमनाद् दुर्दैवहतकेन नीलोत्पलं जले मज्जितम् अन्तर्भावितमित्यर्थः, तथा चन्द्रं मेघान्तरितम्, राजहंसाश्च मानसं प्रापिता इति त्वद्विरहः सर्वथाऽसह्य एवेति सरलार्थः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणान्तूक्तं प्राक् ( १९८ पृ० ) ।

( ८६ ) लक्ष्ये लक्षणं सङ्गमयितुमाह—अत्रेति । चतुर्थपादे त्वत्सादृश्येत्यादिचतुर्थपादात्मकवाक्यार्थं प्रति पादत्रयवाक्यानि 'यस्त्वन्नेत्र... इत्यारभ्य 'गता' इत्यन्ताः पूर्वपादत्रयात्मकवाक्यार्थाः, हेतवः कारणानि । पूर्ववाक्यत्रयार्थान् विहायान्तिमवाक्यार्थोत्पत्तेरभावादिति भावः ।

( ८७ ) हेतोरेकपदार्थतायामुदाहर्तुमाह—पदार्थतेति । पदार्थता हेतोः पदप्रतिपाद्यतेत्यर्थः।

( ८८ ) त्वद्वाजीति । इदं पद्यं ( ३६६ पृ० ) व्याख्यातम् ।

( ८९ ) लक्षणं सङ्गमयति—अत्रेति । द्वितीयार्द्धे 'न धत्ते' इत्याद्युत्तरार्द्धगत भूरिभारं प्रति प्रथमार्द्धे 'त्वद्वाजि' इत्यादिप्रथमार्द्धरूपम् एकपदम् उपचारादेकपदस्यार्थः कविप्रौढोक्तिसिद्धतथाविधपङ्किलत्वाभिधेय इति यावत् हेतुः तस्य कारणं निष्पादक इत्यर्थः । समस्तमेव प्रथमार्द्धं सम्पूर्णतया एकमात्रमेव पदमित्यवधेयम् । उदाहरणान्तरं यथा—

"वदनाम्बुसहालोकनिन्दितेन्दुप्रभाभराम् । त्वामवेक्ष्य मनोजस्य को युवा न वशंवदः ॥"

अत्र पूर्वार्द्धस्यैकपदार्थस्यार्थ उत्तरार्द्धार्थे हेतुः ।

( ९० ) हेतोरनेकपदार्थतामुदाहर्तुमाह—अनेकेति । अनेकपदम् अनेकपदार्थतेत्यर्थः।

( ९१ ) पश्यन्तीति । पद्यमिदं ( ३११ पृ० ) व्याख्यातपूर्वम् । अत्र आत्मगोपनं प्रति असंख्यपथगामिति त्रिपथगेति च द्विपदरूपानेकपदार्थो हेतुः । उदाहरणान्तरं यथा—

( ९२ ) इह केचिद् वाक्यार्थगतेन काव्यलिङ्गेनैव गतार्थतया कार्यकारणभावेऽर्थान्तरन्यासं नाद्रियन्ते, तदयुक्तम्, तथा ह्यत्र हेतुस्त्रिधा भवति— ज्ञापको निष्पादकः समर्थकश्चेति ।

( ९३ ) तत्र ज्ञापकोऽनुमानस्य विषयः, निष्पादकः काव्यलिङ्गस्य, समर्थकोऽर्थान्तरन्यासस्य, इति पृथगेव कार्यकारणभावेऽर्थान्तरन्यासः काव्यलिङ्गात् ।

( ९४ ) तथाहि—'यत्वन्नेत्र-' इत्यादौ चतुर्थपादवाक्यम्, अन्यथा साकाङ्क्षतयासमञ्जसमेव स्यात् इति पादत्रयगतवाक्यं निष्पादकत्वेनापेक्षते ।

( ९५ ) 'सहसा विदधीत-' इत्यादौ तु—( ७१८ पृ० ) ।

( ९६ ) 'परापकारनिरतैर्दुर्जनैः सह सङ्गतिः ।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥'

---

'अपाङ्गान्तनटन्नेत्रं वीक्ष्यमाणा मनागपि । अनङ्गसचिवाः कान्ता हरन्ति जगतां मनः ॥'

( ९२ ) कार्यकारणभावेऽर्थान्तरन्यासमनभ्युपगतस्य काव्यप्रकाशकारादेर्मतं निराकर्त्तुमुत्थापयति—इहेति । इह काव्यलिङ्गोदाहरणप्रस्तावे, केचित् काव्यप्रकाशकारादयः वाक्यार्थगतेन पदार्थगतेन काव्यलिङ्गेनार्थान्तरन्याससम्भवात् केवलवाक्यार्थहेतुकेन काव्यलिङ्गेनैव एतन्नामकालङ्कारेणैव गतार्थतया सम्पन्नप्रयोजनकतया "पृथ्वि स्थिरा भव" इत्यादौ कारणेन कार्यस्य "सहसा विदधीत" इत्यादौ कार्येण कारणस्य वा समर्थकस्य परैरङ्गीकृतस्यार्थान्तरन्यासस्य तथाविधकाव्यलिङ्गेनैव सिद्धतयेत्यर्थः । नाद्रियन्ते नाङ्गीकुर्वन्ति, किन्तु काव्यलिङ्गमेवेति शेषः । तदयुक्तं तन्न समीचीनम् । उपपादयति—तथाहीति । 'उपपाद्यते' इति शेषः । अत्र अर्थालङ्कारप्रकरणे अनुमानकाव्यलिङ्गार्थान्तरन्यासात्मकालङ्कारत्रये । ज्ञापकः अनुमितिरूपज्ञानोत्पादकः, निष्पादकः नियतस्वसाकाङ्क्षस्योपपादकः, समर्थकः सर्वथैव स्वनिराकाङ्क्षस्य असम्भवताद्यपाकरणेन केवलनियतसम्भवतापोषकः ।

( ९३ ) उक्तहेतुषु कः कस्य विषय इति जिज्ञासायामाह—तत्रेति । ज्ञापकोऽनुमानस्य विषयः, अनुमितिरूपज्ञानोत्पादकत्वात्, निष्पादकः काव्यलिङ्गस्य 'विषय' इत्यस्यात्र सम्बन्धः, नियतस्वसाकाङ्क्षस्योपपादकत्वात् ; 'समर्थकोऽर्थान्तरन्यासस्य 'विषय' इत्यस्यात्रापि सम्बन्धः, सर्वथैव स्वनिराकाङ्क्षस्यासम्भवताद्यपाकरणेन केवलनियतसम्भवतापोषकत्वात् ।

( ९४ ) उपपादितमर्थं समर्थयति—तथाहीति । चतुर्थपादवाक्यं तुरीयचरणवाक्यार्थः, अन्यथा पूर्वचरणत्रयगतवाक्यार्थत्रयानुपादाने, साकाङ्क्षतया कारणापेक्षित्वेन असमञ्जसम् अपर्यवसितसम्बन्धत्वेनायुक्तम् । पादत्रयगतवाक्यं पूर्वचरणत्रयवाक्यार्थम्, निष्पादकत्वेन स्वोपपादकत्वेन अत एवोक्तपद्ये काव्यलिङ्गमित्याशयः ।

( ९५ ) नचार्थान्तरन्यासोदाहरणेषु 'सहसा विदधीत' इत्यादिषु काव्यलिङ्गमिति दर्शयति—सहसेति । इत्यादौ तु 'उपदेशमात्रेणाऽपि' इत्युत्तरेण सम्बन्धः ।

( ९६ ) परापकारेति । परापकारेषु अन्यापकृतिषु निरतैः तत्परः दुर्जनैः खलैः सह कदाचनाऽपि सङ्गतिः सम्मेलनं न विधेया न कर्त्तव्या इति भवतः सन्निधौ तत्त्वं सत्यकथां वदामि कथयामि ।

( ९७ ) इत्यादिवदुपदेशमात्रेणापि निराकाङ्क्षतया स्वतोऽपि गतार्थं सहसा विधानाभावं संपद्वरणं सोपपत्तिकमेव करोतीति पृथगेव कार्यकारणभावेऽर्थान्तरन्यासः काव्यलिङ्गात् ।

( ९८ ) 'न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ।
त्वद्वाजिराजिनिर्धूतधूलिभिः पङ्किला हि सा ॥'

( ९९ ) इत्यत्र हिशब्दोपादानेन पङ्किलत्वादितिवद्धेतुत्वस्य स्फुटतया नायमलङ्कारः, वैचित्र्यस्यैवालङ्कारत्वात् ।

**(१००) अनुमानं तु विच्छित्या ज्ञानं साध्यस्य साधनात् ।**

---

( ९७ ) इत्यादिवदिति । उपदेशमात्रेणापि केवलोपदेशेनापि निराकाङ्क्षतया निरपेक्षतया स्वतोऽपि हेतूक्तिं विनापि गतार्थं नियतप्रतिपादितस्वार्थम्, सहसाविधानाभावं 'सहसा विदधीत न क्रियाम्' इति वाक्यार्थभूतम्, सम्पद्वरणं ( कर्त्तृ ) 'वृणुते हि' इत्यादिवाक्यार्थभूता सम्पद्ग्राम इत्यर्थः, सोपपत्तिकमेव सयुक्तिकमेव नियतमेवेति यावत् करोति, न तु 'यत्त्वन्नेत्र' इत्यादिवत् सहसाविधानाभावमुपपादयतीत्यर्थः । इति हेतुना पृथगेव कारणभेदादतिरिक्त एव । एवञ्च यत्र समर्थकहेतुस्तत्रार्थान्तरन्यासः, यत्र तु निष्पादको हेतुस्तत्र काव्यलिङ्गमिति निष्कर्ष आयातः । यदि च समर्थकहेतुस्थले काव्यलिङ्गं स्यात्तदा सामान्यविशेषभावस्थलेऽपि काव्यलिङ्गेनैव निर्वाहे सिद्धेऽर्थान्तरन्याससामान्यालङ्कारस्य किमपि प्रयोजनं न स्यात् ।

केचित्तु—प्रसङ्गोऽयं काव्यप्रकाशकृद्विषयमनादृत्यैव लिखितः तन्मते हि प्रश्नस्यैव ज्ञापको हेतुर्न हेत्वलङ्कारः, तत्रोत्तरालङ्कारेणानाघ्रातत्वात् । अन्यत्र तु जनको ज्ञापकश्च हेतुर्हेत्वलङ्कार एव' इति वदन्ति ।

( ९८ ) यत्रोत्पादकहेतोर्हेतुत्वेनोपन्यासस्तत्र वैचित्र्याभावान्नायमलङ्कार इति दर्शयितुं प्रदर्शितमेव पद्यं किञ्चित्परिवर्त्य पुनः प्रदर्शयति—न धत्त इति । राज्ञः स्तुतिरियमिति पूर्वं प्रतिपादितमेव । हरो महादेवः, भूरिभारभिया नितान्तभारत्रासेन शिरसा मूर्ध्ना गङ्गां भागीरथीं न धत्ते । गङ्गाया भूरिभारः कुत इत्यत आह—त्वदिति । हि यस्मात्, सा गङ्गा तव वाजिराजिभिः घोटकपङ्क्तिभिः निर्धूता उत्तोलिता या धूलयो रेणवस्ताभिः पङ्किला पङ्कवती ।

( ९९ ) इत्यत्रेति । हिशब्दोपादानेन हेतुताबोधक—"हि"शब्दग्रहणेन । स्फुटतया पञ्चमीविभक्तेरिव "हि"पदस्य हेत्वर्थत्वस्पष्टतया 'हि हेताववधारणे' इत्यमरकोशप्रामाण्यादित्याशयः ।

( १०० ) हेतुप्रस्तावात्तत्प्रयुक्तमेवानुमानालङ्कारं निरूपयति—अनुमानमिति । तुपदं काव्यलिङ्गपार्थक्यप्रतिपादनार्थम् । काव्यलिङ्गे हि प्रदर्शितरीत्या हेतुर्निष्पादकः, अत्र तु ज्ञापक इति स्फुटं पार्थक्यम् । विच्छित्या कविप्रतिभोत्थापितेन वैचित्र्यविशेषेण, साध्यते वह्न्यादिरनेनेति साधनं व्याप्त्यादिविशिष्टहेतुज्ञानं तस्मात् धूमादेः, साधयितुं योग्यं साध्यं वह्न्यादिः तस्य व्यापकस्येत्यर्थः, ज्ञानं परामर्शात्मकावगमः अनुमानं तन्नामालङ्कारः 'निगद्यते' इति पूर्वकारिकातोऽनुवर्त्याम्वयो विधेयः । नन्वनुमाने पक्षसाध्यहेतुदृष्टान्तादेः सत्त्वम् अत्र तु साध्यसाधनयोरेवोपन्यासात्कथमनुमानमिति चेत् ? सत्यम्,

यथा—

( १ ) 'जानीमहेऽस्या हृदि सारसाक्ष्या विराजतेऽन्तः प्रियवक्त्रचन्द्रः ।
तत्कान्तिजालैः प्रसृतैस्तदङ्गेष्वापाण्डुता कुड्मलताक्षिपद्मे ।।'

( २ ) अत्र रूपकवशाद्विच्छित्तिः ।

( ३ ) यथा वा--

साधनपदेन पक्षधर्मत्वेनान्वयित्वेन व्यतिरेकित्वेन च त्रिरूपो हेतुरत्राभिधीयते । तत्र पक्षे हेतोर्वृत्तित्वं पक्षधर्मत्वम्, यथा—'पर्वतो वह्निमान् धूमात्' इत्यादौ पर्वतादिः पक्षः निश्चितसाध्यवति महानसादौ सपक्षे हेतोर्वृत्तित्वम् अन्वयित्वम्, निश्चितसाध्याभाववति ह्रदादौ विपक्षे हेतोरवृत्तित्वं व्यतिरेकित्वम्, इत्थञ्च साध्यसाधनपदोपादानादेव पक्षादिकं समस्तमुपपन्नमिति न काऽप्यनुपपत्तिः । एवं सति कविप्रतिभोत्थापितत्वे सति साधनज्ञानजन्यं साध्यज्ञानमनुमानमिति सरलार्थः 'पर्वतो वह्निमान् धूमात्' इत्यादाव-लङ्कारत्वप्रसक्तिवारणाय सत्यन्तदलोपादानम् ।

अत्रोद्योतकारास्तु—"अत्रानुमानमित्यत्र भावे ल्युट्, तेन जायमानानुमितिरत्रालङ्कारः। सा च मन्ये-शङ्के-अवैमि-जाने-इत्यादिवाचकोपादाने वाच्या । यत्र लिङ्गलिङ्गिनोः सत्त्वं तत्र तेषामनुमितिबोधकत्वम्, अत्र सादृश्यादिनिमित्तसद्भावस्तत्र तेषामुत्प्रेक्षा-बोधकत्वम्,। 'वक्ति कथयति' इत्यादिलक्षकशब्दोपादाने लक्ष्या, उभयानुपादाने साध्य-साधनाभ्यां तदाक्षेपे प्रतीयमानेति बोध्यम्" इत्याहुः ।

( १ ) उदाहरति—जानीमह इति । विघूर्णनेत्रां काञ्चिद्वियोगिनीं वीक्ष्य स्वसखायं प्रति कस्यचिदुक्तिरियम् । अस्याः पुरोऽवलोक्यमानायाः सारसाक्ष्याः कमलनयनाया रमण्याः, हृदि अन्तः हृदयमध्ये प्रियस्य कान्तस्य वक्त्रं वदनमेव चन्द्रः शशी विराजते प्रकाशते इयं वल्लभस्य मुखचन्द्रं स्मरतीत्यर्थः, इति जानीमहे अनुमिनुमः तत् तस्मात् विराजनात् प्रसृतैः सर्वत्र विस्तीर्णैः, तस्य प्रियमुखचन्द्रस्य कान्तिजालैः किरणसमूहैः अङ्गेषु अस्याः शरीरेषु, आपाण्डुता समन्ततः स्फुरितत्वम्, तथा अक्षिपद्मे नेत्रकमले कुड्मलता मुकुलितता 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः, समुत्पन्नेत्यपि 'जानीमहे' इति सम्बन्धः। सूर्यकिरणैः पद्मानां विकासः, चन्द्रकिरणैस्तत्कुड्मलतेति विभावनीयम् । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दस्तल्लक्षणमुक्तं प्राक् ( १२९ पृ० ) ।

( २ ) अत्र विच्छित्तिमुपपादयति—अत्रेति । रूपकवशात् "प्रियवक्त्रचन्द्रः" इति निरङ्गकेवलरूपकालङ्कारसंसर्गबलात्, विच्छित्तिः अलङ्कारत्वोपस्कारकश्चमत्कारवि-शेषः । ननु प्रियवक्त्रं चन्द्र इवेत्युपमितसमासेन लुप्तोपमा कथन्नेति चेत्? मैवम्, 'विराजते' इति ज्योत्स्नाप्रसारार्थकक्रियया रूपकस्यैवोपपादकत्वात् । अत्र रूपकेत्यपह्नु-त्युत्प्रेक्षयोरप्युपलक्षकम् । तथा चाङ्गपाण्डुत्वांशेऽपह्नुतिः, वियोगजन्यपाण्डुतायां चन्द्रप्र-काशजन्यपाण्डुतायाः स्मृतिजन्याक्षिपद्मसङ्कोचे च चन्द्रप्रकाशजन्यसङ्कोचस्य सम्भाव-नात् 'जानीमहे' इति वाचकोपलम्भाच्च वाच्योत्प्रेक्षा च । एवञ्च 'इयमन्तः प्रियवक्त्र-चन्द्रवती तत्कान्त्यधीनपाण्डुदेहसङ्कुचितनेत्रपद्मवत्वात्' इति बोधादनुमानालङ्कारः।

( ३ ) न केवलमलङ्कारान्तराश्रयेणैव विच्छित्तिरेतदलङ्कारप्रयोजिका, किन्तु वि-च्छित्त्यन्तरेणापीत्युदाहरणान्तरं दर्शयितुमाह—यथा वेति ।

( ४ ) 'यत्र पतत्यबलानां दृष्टिर्निशिताः पतन्ति तत्र शराः ।
तच्चापरोपितशरो धावत्यासां पुरः स्मरो मन्ये ॥'

( ५ ) अत्र कविप्रौढोक्तिवशाद्विच्छित्तिः ।

( ६ ) उत्प्रेक्षायामनिश्चिततया प्रतीतिः, इह तु निश्चिततयेत्युभयोर्भेदः ।

( ७ ) **अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह ॥ ६३ ॥**

यथा मम—

( ८ ) 'तारुण्यस्य विलासः—' इत्यत्र ( १९४ पृ. ) वशीकरणहेतुर्नायिकावशीकरणत्वेनोक्ता ।

---

( ४ ) यत्रेति । यत्र यस्मिन् ( यूनि ) अबलानां कामिनीनां दृष्टिः कटाक्षः पतति सञ्चरति, तत्र तस्मिन् ( यून्येव ) निशितास्तीक्ष्णाः उन्मादकत्वेन सोढुमशक्या इति यावत्, शरा बाणाः कामदेवस्येति शेषः, पतन्ति गच्छन्ति तान् विध्यन्तीत्यर्थः । तत्तस्माद्धेतोः स्मरः कामदेवः, चापे धनुषि रोपितः स्थापितः शरः येन स तथाविधः सन्, आसामबलानां पुरः अग्रतः धावति इति मन्ये सम्भावयामि । आर्याच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

( ५ ) अत्रेति । कवेः प्रौढोक्तिवशात् हठपूर्वकासम्भवाभिधानवशात् विच्छित्तिश्चमत्कारविशेषः । अत्र हि—'अबलाः चापरोपितशरस्मरपुरस्सराः स्वीयदृष्टिपातविशिष्टदिक्पतन्निमित्तशरकत्वात्' इति बोधादनुमानालङ्कारः ।

( ६ ) नन्वत्रोत्प्रेक्षालङ्कार एव किं न स्यादित्यत आह—उत्प्रेक्षायामिति । अनिश्चिततया अनियमिततया, प्रतीतिः सम्भावनाया इति शेषः । इह अनुमाने तु निश्चिततया नियमिततया प्रतीतिः सम्भावनाया इति शेषः । तथाचोत्प्रेक्षायां सम्भावनायाः संशयविशेषत्वेन अत्र तु तस्या निश्चयरूपत्वेनैव प्रतीतिरिति स्फुटं भेदः ।

अस्य स्वार्थपरार्थाभ्यां भेदद्वयमामनन्ति मान्याः । तत्र यत्र मयाऽयमनुमितोऽर्थ इति स्वपरामर्शनिश्चयः तत्स्वार्थम्, यत्र परेणाप्रतीतस्यार्थस्य प्रत्यायनं तत्परार्थमिति । तत्र स्वार्थमुदाहृतम्, परार्थञ्च—

"तदस्ति तेषां तमसि प्रसर्पिणां निशाचरत्वं यदि पारमार्थिकम् ।
ततः प्रिये ! सन्निहितेऽत्र वासरे कथन्नु तत् सञ्चरणं भविष्यति ॥"

इदमुदाहरन्ति ।

( ७ ) हेतुप्रकरणादेव हेत्वलङ्कारं निरूपयति—अभेदेनेति । हेतुमता कार्येण सह हेतोः कारणस्य अभेदेन अनतिरिक्तस्वरूपेण अभिधा कथनं हेतुः कारणं तन्नामालङ्कारो 'निगद्यते' इत्यनुवर्तते । कार्यकारणयोस्तादात्म्यप्रतिपादनमेव हेतुर्नामालङ्कार इति निष्कर्षः । नन्वत्र हेतुहेतुमतोरभेदेनाभिधाने हेत्वलङ्कार एव कथम् ? हेतुमदलङ्कारस्यापि सम्भवादिति चेत् ? सत्यम्, प्राधान्येन हेत्वलङ्कारस्यैवाङ्गीकारात् ।

( ८ ) उदाहरति—तारुण्येति । व्याख्यातपूर्वमिदम् ( १९४ पृ० ) । लक्षणसमन्वयं दर्शयति—अत्रेति । वशीकरणस्य आत्मसात्करणस्य हेतुः कारणीभूता नायिका प्रकरणेन प्राप्ता सुन्दरी, वशीकरणत्वेन वशीकरणरूपकार्यस्य तादात्म्येन, उक्ता कविनेति

( ९ ) विलासह्रासयोस्तत्त्वाध्यवसायमूलोऽयमलङ्कारः ।

( १० ) अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत् ।

यथा--

शेषः । प्राकरणिकनायिकापदोत्तरगतप्रथमाविभक्तेः 'वशीकरणम्' इत्यत्र प्रथमाविभक्तेश्च सामानाधिकरण्येनाभिन्नार्थकत्वादित्यभिप्रायः ।

( ९ ) ननु वशीकरणकार्यं प्रति लक्षणया तत्कारणप्रतीतिरेव, न त्वभेदप्रतीतिस्तत्कथमयमलङ्कार इत्यत आह—विलासह्रासयोस्त्विति । 'तारुण्यस्य विलासः समधिकलावण्यसम्पदो ह्रासः' इत्युक्तदिशा तारुण्यसम्बन्धिविलासस्य समधिकलावण्यसम्पत्सम्बन्धिनो ह्रासस्य चेत्यर्थः । अध्यवसायमूलः आहार्याभेदप्रतीतिमूलकः ।

केचित्तु—शुद्धसाध्यवसानलक्षणया धर्मधर्मिणोरेकत्वाध्यवसायेऽप्यतिशयोक्तिमेवाङ्गीकुर्वन्ति, तथाहि—

"कर्णावलम्बितकदम्बमञ्जरीकेशरारुणकपोलमण्डलम् ।
निर्मलं निगमवागगोचरं नीलिमानमवलोकयामहे ॥"

इत्यत्र नीलिमपदस्य तदाश्रये शुद्धसाध्यवसानलक्षणया नीलिमाभेदप्रतीतिरिति । एवं हेतुफलयोरभेदाध्यवसायेऽप्येषा । यथा—

"वित्रासनं समरसीमनि शात्रवाणामाजीवनं विबुधपर्षदिकोविदानाम् ।
संमोहनं सुरतसंसदि कामिनीनां रूपं तदीयमवलोकयतोऽद्भुतं मे ॥"

अत्र वित्रासनादिपदस्य तद्धेतौ शुद्धसाध्यवसाना ।

भट्टोद्भटास्तु—

"हेतुमता सह हेतोरभिधानमभेदतो हेतुः ।"

इति हेत्वलङ्कारलक्षणं प्रतिपादयन्ति । गौणसारोपसाध्यवसानयोः रूपकप्रथमातिशयोक्तिवत् कार्यकारणभावसम्बन्धनिबन्धनशुद्धसारोपसाध्यवसानयोर्हेत्वलङ्कारप्रयोजकत्वमिति कार्यकारणसम्बन्धनिबन्धनशुद्धसारोपासाध्यवसानामूलोऽयमलङ्कार इति तदाशयं विवृण्वते च कुशलाः । परन्तु काव्यप्रकाशकाराः—गौणत्वे एव ( सादृश्याख्यसम्बन्धसत्त्वे एव ) वैचित्र्यादलङ्कारत्वम्, आयुर्घृतमित्यादिरूपस्यास्य कार्यवाचकपदेन कारणाभिधाने वैचित्र्याभावेनालङ्कारत्वस्यैवाभाव इति मन्यन्ते । ननु हेतोरनलङ्कारत्वे-

"अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः ।
रम्योऽयमेति सम्प्रति लोकोत्कण्ठाकरः कालः ॥"

इत्यादौ प्राचां भामहादीनां काव्यरूपत्वप्रतिपादनं विरुध्यतेऽलङ्कारत्वाभावादिति चेत् ? नैवम्, उक्तहेत्वलङ्कारवत्तया नास्य प्राचां काव्यत्वस्वीकारः किन्तु अनुप्रासमाहात्म्येनैव, तस्मात् हेतुरिति नाम काव्यलिङ्गस्यैवेति समर्थयन्ति ।

( १० ) प्रकरणाद्धेतुघटितमेवानुकूलं नामालङ्कारं लक्षयति—अनुकूलमिति । प्रातिकूल्यं प्रतिकूलत्वाचरणं चेद् यदि अनुकूलमभिमतमनुबध्नाति यत् तत् तादृशं व्यञ्जनया प्रतीयमानानुकूलजनकमित्यर्थः स्यात्, तदा अनुकूलम् एतन्नामालङ्कारो 'निगद्यते' इति पूर्वतोऽनुवर्तते । तथाच—प्रतिकूलत्वाचरणानुकूलोत्पत्तिप्रतीतिरनुकूलमिति लक्षणसारः ।

( ११ ) 'कुपितासि यदा तन्वि ! निधाय करजक्षतम् ।
बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा ॥'

( १२ ) अस्य च विच्छित्तिविशेषस्य सर्वालङ्कारविलक्षणत्वेन स्फुरणात्पृथगलङ्कारत्वमेव न्याय्यम् ।

( १३ ) **वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये ॥ ६४ ॥
निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा ।**

( १४ ) तत्र वक्ष्यमाणविषये क्वचित्सर्वस्यापि सामान्यतः सूचितस्य निषेधः क्वचिदंशोक्तावंशान्तरे निषेध इति द्वौ भेदौ । उक्तविषये च क्वचिद्वस्तुस्वरूपस्य निषेधः, क्वचिद्वस्तुकथनस्येति द्वौ, इत्याक्षेपस्य चत्वारो भेदाः । क्रमेण यथा—

---

( ११ ) उदाहरति—कुपितेति । प्रणयकोपवतीं प्रति तत्सहचारिण्याः सकुतूहलोक्तिरियम् । हे तन्वि कृशाङ्गि ! यदा यदि त्वं कुपितासि कान्तं प्रति क्रुद्धासि, तदा करजक्षतं नखक्षतं निधाय अर्पणं विधाय, भुजपाशाभ्यां बाहुरूपाभ्यां पाशाभ्याम् अस्य कान्तस्य कण्ठं कम्बु दृढं गाढं बधान बद्धं विधेहि ।

अत्र नखक्षतस्य भुजपाशविधायककण्ठबन्धनस्य च स्वरूपतः क्लेशदत्वेनाहिताचरणत्वमेव, परन्तु नायकपक्षे कामाविर्भावकतया आश्लेषरूपेण परिणततया चोभाभ्यां सुखोत्पत्तेरानुकूल्योत्पादनमेवेत्यनुकूलालङ्कारः । एवञ्चात्रानुकूलपदार्थस्य व्यङ्ग्यत्वमेव । क्वचित् तस्य वाच्यत्वमपि यथा—

"अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥"

अत्राभिमतपदस्येष्टपदत्वं वाच्यम् ।

( १२ ) ननु प्राचीनैरलङ्कारमेनं नाङ्गीकृतं तर्हि भवद्भिः कथमत्राभिहितमित्याशङ्कायामाह—अस्येति । विच्छित्तिविशेषस्य चमत्कारविशेषस्य । स्फुरणात् अवगमात् । न्याय्यमुचितम् ।

( १३ ) न केवलमनुकूलालङ्कार एव प्रतिपादितातिरिक्तविशेषप्रतिपत्तिः किन्त्वलङ्कारान्तरेऽपीत्यत आक्षेपालङ्कारं निरूपयति—वस्तुन इति । वक्तुमिष्टस्य प्राकरणिकत्वात् वचनार्हस्य अवचनानर्हस्य वा वस्तुनो विषयस्य, वक्ष्यमाणविषयेऽशक्यवक्तव्यत्वम् उक्तविषयेऽतिप्रसिद्धत्वं च विशेषस्तस्य प्रतिपत्तये बोधाय निषेधाभासः शब्दशक्त्या निषेधोऽर्थशक्त्या विधानम् आक्षेपो नामालङ्कारो निगद्यते' इति पूर्वतोऽनुवर्तते । आक्षेपणं विवक्षितार्थस्य भर्त्सनमाक्षेप इति व्युत्पत्तिः । स चाक्षेपः प्रथमं द्विविधः—वक्ष्यमाणगो वक्ष्यमाणविषयगतः उक्तग उक्तविषयगतश्चेति ।

( १४ ) एवं द्विप्रकारकयोरपि प्रत्येकमेवान्तर्भेदद्वयसम्भवात् चतुष्प्रकारत्वमुपपादयितुमाह—अत्रेति । तत्र तयोर्भेदयोर्मध्ये वक्ष्यमाणविषये प्रतिपाद्यमानविषये क्वचित् कस्मिंश्चिल्लक्ष्ये सर्वस्य समुदितांशस्य सामान्यतः साधारणभावेन न तु स्फुटत इत्यर्थः, सूचितस्य बोधितस्य निषेधः अभिधाननिषेधः । क्वचित् कस्मिंश्चिल्लक्ष्ये अंशोक्तौ अंशेन कथने अंशान्तरेऽन्यस्मिन् भागे उक्तिविषयांशातिरिक्तेऽशे इति यावत् । एवञ्च वक्ष्यमाणविषयगतोऽयं द्विविधः, तत्र सामान्यतः सूचितस्य सर्वस्य निषेधात्मा, अंशेनो-

( १५ ) 'स्मरशरशतविधुराया भणामि सख्याः कृते किमपि ।
त्वमिह विश्रम्य सखे ! निर्दयहृदयस्य किं वदाम्यथवा ॥'

( १६ ) अत्र सख्या विरहस्य सामान्यतः सूचितस्य वक्ष्यमाणविषये निषेधः ।

( १७ ) 'तव विरहे हरिणाक्षी निरीक्ष्य नवमालिकां दलिताम् ।
हन्त ! नितान्तमिदानीम् आः किं हतजल्पितैरथवा ॥'

( १८ ) 'अत्र मरिष्यतीत्यंशो नोक्तः ।

( १९ ) 'बालअ ! णाहं दूती तुअ पिओसि त्ति ण मह वावारो ।
सा मरइ तुज्झ अअसो एअं धम्मक्खरं भणिमो ॥'

क्तावंशान्तरे निषेधात्मा चेति फलितम् । वक्तव्यरूपस्य वक्तव्यादेः । वस्तुकथनस्य विषयाभिधानस्य । एवञ्च—उक्तविषयगतोऽप्ययं द्विविधः-वस्तुनिषेधात्मा वस्तुकथननिषेधात्मा चेति फलितम् । तथा च समुदितेन स्पष्टं चतुर्विध इति विचारणीयम् ।

( १५ ) तत्र सामान्यतः सूचितस्य सर्वस्य निषेधात्मतामुदाहरति—स्मरेति । नायिकाया, विरहावस्थां नायके कथयितुमभिलषन्त्यास्तत्प्रेषितायाः सख्या उक्तिरियम् । हे सखे ! सखीपतित्वेनैतत्सम्बोधनम् । स्मरस्य कामदेवस्य शरशतेन शरशतपातेन विधुराया विह्वलीकृतायाः कामदेवानेकबाणप्रहारेण विकलीकृताया इत्याशयः "वैकल्येऽपि च विश्लेषे विधुरं विकलं त्रिपु" इति त्रिकाण्डशेषः, सख्याः सहचारिण्याः कृते निमित्ते किमपि किञ्चित् भणामि कथयामि, अतः त्वं क्षणकालम् इह स्थाने विश्रम्य उपविश्य विश्रामं विधेहीत्यर्थः अथवा निर्दयहृदयस्य निष्करुणान्तःकरणस्य ( कर्मणि सम्बन्धमात्रविवक्षया षष्ठी ) तव भवतः समीपे किं वदामि कथयेयम् अपि तु किमपि वक्तुमशक्यमित्यर्थः । अत्रोद्गीतिश्छन्दस्तल्लक्षणञ्चोक्तं प्राक् ।

( १६ ) लक्ष्यं समर्थयति—अत्रेति । सख्याः सहचरीसम्बन्धिनः विरहस्य वियोगावस्थायाः सामान्यतः सूचितस्य "स्मरशरशतविधुरायाः" इति केवलविशेषणेनैव व्यञ्जितस्य न तु "विरहिण्याः" इति स्फुटतया कथितस्येत्यर्थः, वक्ष्यमाणे वस्तुनि विशेषेऽशक्यवक्तव्यस्वरूपवैलक्षण्ये निषेधः मरणावधिरूपविशेषावगमाय "किं वदामि" वचनेन निषेधाभास इत्याक्षेपः । निषेधाभासवशादेव तस्या वश्यमरणरूपविशेषप्रतिपत्तिरित्याकलनीयम् ।

( १७ ) अंशेनोक्तावंशान्तरे निषेधात्मतामुदाहरति—तवेति । नायकसविधे नायिकादूत्याः कथनमिदम् । हरिणाक्षी मृगनयना तव तदेकाधारस्य भवतः प्रेयसीत्यर्थः, तव विरहे साक्षिध्याभावे सति, नवमालिकां तन्नामकं कुसुमम् , दलितां विकसिताम् , निरीक्ष्य अवलोक्य, हन्त कष्टम् , इदानीं सम्प्रति, नितान्तमत्यन्तमेव कामवेदनां सहत इत्याशयः । 'आः' इति व्यथासूचकम् , मृतप्रायेति शेषः । अथवा हतजल्पितैः अनर्थकवचनैः किम् ? अपि तु न किमपि प्रयोजनमित्यर्थः । उपगीतिश्छन्दस्तल्लक्षणन्तूक्तमेव ।

( १८ ) उदाहरणं सङ्गमयितुमाह—अत्रेति 'विरह' इत्याद्यंशः स्फुट एव प्रतिपादितः किन्तु अवश्यवक्तव्यत्वादिरूपविशेषावगमाय विवक्षितो 'मरिष्यति' इत्यंशो नाभिहितः । तथा च "किं हतजल्पितैः" इत्यनेन निषेधाभासादाक्षेपः ।

( १९ ) वस्तुनिषेधात्मतामुदाहरति—'बालअ !' इति । नायकान्तिके दूतीरूपेण

( २० ) अत्र दूतीत्वस्य वस्तुनो निषेधः ।

( २१ ) 'विरहे तव तन्वङ्गी कथं क्षपयतु क्षपाम् ।

दारुणव्यवसायस्य पुरस्ते भणितेन किम् ? ॥'

( २२ ) अत्र कथनस्योक्तस्यैव निषेधः ।

( २३ ) प्रथमोदाहरणे सख्या अवश्यम्भाविमरणमिति विशेषः प्रतीयते । द्वितीयेऽशक्यवक्तव्यत्वादि, तृतीये दूतीत्वे यथार्थवादित्वम्, चतुर्थे दुःखस्यातिशयः ।

( २४ ) न चायं विहितनिषेधः, अत्र निषेधस्याभासत्वात् ।

---

प्राप्य नायिकासहचारिण्याः कथनमिदम् ।

बालक ! नाहं दूतीः तस्याः प्रियोऽसि इति न मम व्यापारः ।

सा म्रियते तव अयशः एतत् धर्माक्षरं भणामः ॥ इति संस्कृतम् ।

हे बालक शिशुवत् प्रेमावस्थाविदग्ध ! अहं दूती समाचारादिप्रापिका न नैवास्मि अतो हिताभिलाषिण्या मम वचनं सर्वथा मन्तव्यमित्याशयः । तस्याः तव प्रियायाः त्वं प्रियोऽसि इति हेतोर्न मम व्यापारः तवानुनयोद्यमविधानम् । नन्वेवं किमर्थमेवं वदसीत्यत आह—सेति । सा मदेकाश्रया प्रिया म्रियते प्राणांस्त्यजति असह्यकामपीडयेत्यभिप्रायः, तेन तव अयशः तन्मरणे सति निन्दा स्यात्, एतत् धर्माक्षरं नीतियुक्तवचनं भणामो ब्रूमः । आर्याच्छन्दः ।

( २० ) अत्रेति । विवक्षितविषये सख्याः स्वस्य सत्यवादित्वरूपविशेषबोधाय दूतीत्वस्य 'दूत्या मिथ्यावादित्वम्' इति प्रसिद्धदूतीस्वरूपस्य वस्तुनो निषेधः 'नाहं दूत्यन्तरवन्मिथ्यावादिनी' इत्येवंरूप इत्यर्थः, तेनाक्षेपः ।

( २१ ) वस्तुकथननिषेधात्मतामुदाहरति—विरह इति । नायकान्तिके नायिकासख्याः कथनमिदम् । तन्वङ्गी क्षीणशरीरा 'तव विरहे विश्लेषे कथं केन विधिना क्षपां रात्रिं क्षपयतु व्यपनयतु, दारुणव्यवसायस्य परप्राणान्तकारकत्वेन वियोगात्मकभयङ्करकर्मणः, ते तव पुर अग्रे भणितेन तत्स्थितिप्रतिपादनेन किं फलम् अपि तु न किमपीत्यर्थः ।

( २२ ) अत्रेति । विवक्षिते नायिकावियोगविषये क्लेशातिशयरूपविशेषावगमाय, कथनस्यैव विवक्षितविषयकाभिधानस्यैव निषेधः, 'भणितेन किम्' इत्यनेनेति शेषः, अत एवाक्षेप इत्याशयः ।

( २३ ) इत्थं चतुर्भेदानुदाहृत्य तत्र यथाक्रमं बोद्धव्यविशेषमुपपादयितुमाह—प्रथमेति । प्रथमोदाहरणे "स्मरशरशत" इत्यादौ । विशेषः 'अवश्यवक्तव्य' इति शेषः । द्वितीये 'तव विरहे' इत्यादौ अशक्यवक्तव्यत्वादि 'मरिष्यति' इत्येवं वस्तु प्रतीयते इति पूर्वेण सम्बन्धः । एवमग्रयोरपि । तृतीये "बालअ ! णाहं" इत्यादौ दूतीत्वे सत्यपि इति शेषः यथार्थवादित्वं विशेषः प्रतीयते । चतुर्थे "विरहे तव" इत्यादौ वियोगिन्या दुःखस्य क्लेशस्यातिशयो विशेषः। नायिकाया नायकविरहे रात्र्यपगमं दुष्करमित्यतिप्रसिद्धत्वरूपः 'प्रतीयते' इति शेषः ।

( २४ ) ननु "कर्तव्यं प्रत्यहं स्नानं न तु रात्रौ कदाचन" इत्यत्र विहितप्रत्यहस्नानस्य रात्रौ निषेधवत् विधिनिषेध एव किं न स्यात्, एवञ्च कथमलङ्कारत्वमित्याशङ्क्तेनचेति । अयं "स्मरशरत" इत्यादौ व्यज्यमानः विहितनिषेधः 'येन चमत्कृतिर्न स्यात्

**( २५ ) अनिष्टस्य तथार्थस्य विध्याभासः परो मतः ॥ ६५ ॥**

( २६ ) तथेति पूर्ववद्विशेषप्रतिपत्तये । यथा—

( २७ ) 'गच्छ गच्छसि चेत् कान्त ! पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥'

---

इति शेषः । विहितनिषेधोदाहरणं यथा —

"बाणेन हत्वा मृगमस्य मात्रा निवार्यतां दक्षिणमारुतस्य ।
इत्यर्थनीयः शबराधिराजः श्रीखण्डपृथ्वीधरकन्दरस्थः ॥"

"यद्वा मृषा तिष्ठतु दैन्यमेतन्नेच्छन्ति वैरं मरुता किराताः ।
केलिप्रसङ्गे शबराङ्गनानां स हि श्रमग्लानिमपाकरोति ॥"

अत्र प्रथमश्लोकोक्तस्य द्वितीयपादेन निषेधो यथार्थ एव । एवञ्च प्रकृते किमिति दर्शयति—अत्रेति । उक्तोदाहरणेषु "किं वदामि" इत्यादिना व्यज्यमानस्येति भावः आभासत्वात् आभासमात्ररूपत्वात्, तथैव प्रतीतेरिति भावः । नचैवं निषेधविधिना साङ्कर्यं स्यादितिवाच्यम् ,

यथा—"क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥"
मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥
अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥"

इह हि पद्यद्वयोक्तस्य निषेधस्य तृतीयपद्येन विधाने निषेधस्याभासता एव न तु साङ्कर्यं तथैव प्रकृतेऽपि साङ्कर्याभावात् ।

( २५ ) उक्तालङ्कारं प्रकारान्तरेण लक्षयति—अनिष्टस्येति । अनिष्टस्य अनभिमतस्य अर्थस्य विषयस्य तथा पूर्ववत् विशेषप्रतिपत्तये विध्याभासः विधेराभासो न तु वास्तविकत्वम् , परः कथितादन्यः अन्यविधः आक्षेपस्तन्नामालङ्कारो मतः । अस्मिन् कल्पे आक्षेपो निषेध्येऽप्यर्थे विधेः समर्पणम् इति व्युत्पत्तिः, एवञ्च स्फुटमनयो र्विध्याभासः । उक्तञ्चालङ्कारसर्वस्वकृताऽपि—"यथेष्टस्येष्टत्वादेव निषेधोऽनुपपन्नः, एव मनिष्टस्य अनिष्टत्वादेव विधानं नोपपद्यते, तत्क्रियमाणं प्रस्खलद्रूपत्वात् विध्याभासे पर्यवस्यति" इति ।

( २६ ) तथेत्यस्य दुर्बोधतां निराकरोति—तथेति । विशेषप्रतिपत्तये वैलक्षण्येन बोधनायेत्यर्थः ।

( २७ ) उदाहरति—गच्छेति । प्रवासाय सम्मतिं याचयन्तं प्रियं प्रति प्रियाया उक्तिरियम् । हे कान्त हे प्रिय ! चेद् यदि ( त्वं विदेशं ) गच्छसि व्रजसि ( तदा ) गच्छ व्रज, ते तव पन्थानो मार्गाः शिवाः कल्याणमयाः सन्तु भवन्तु । किन्तु भवान् यत्र गतः प्राप्तः स्यादिति शेषः मम मन्दभागिन्या अपि तत्र एव नान्यत्रेति भावः, जन्म उत्पत्तिः भूयात् । तथा च तव गते वियोगक्लेशेन मम प्राणवियोगोऽवश्यं भविष्यति, तथा तदनन्तरं—

( २८ ) अत्रानिष्टत्वाद्गमनस्य विधिः प्रस्खलद्रूपो निषेधे पर्यवस्यति ।

( २९ ) विशेषश्च गमनस्यात्यन्तपरिहार्यत्वरूपः प्रतीयते ।

( ३० ) **विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते।**
**उक्तानुक्तनिमित्तत्वाद्द्विधा सा परिकीर्तिता ॥ ६६ ॥**

( ३१ ) विना कारणमुपनिबध्यमानोऽपि कार्योदयः किंचिदन्यत्कारणमपेक्ष्यैव भवितुं युक्तः । तच्च कारणान्तरं क्वचिदुक्तं क्वचिदनुक्तमिति द्विधा । यथा—

"यं यंवापि स्मरन् भावं त्यज्यन्ते कलेवरम्। तं तमेवैति कौन्तेय! सदा तद्भावभावितः"

इत्युक्तदिशा पुनर्जन्म तव विरहव्यथाया निवारणार्थं तव समीप एव भूयादित्या· त्मानं प्रत्याशीःशंसनम् ।

( २८ ) अत्र विध्याभासः कथमित्युपपादयति—अत्रेति । अनिष्टत्वात् अनभिमत· त्वात् , गमनस्य गच्छेत्यनुज्ञाया इत्याशयः, विधिः गच्छेतिगमनविधिः, प्रस्खलद्रूपः नितरामसम्भवन् , निषेधे 'भवता कथमपि न गन्तव्यम् अन्यथा मरणमवश्यम्भावि' इत्येवंप्रतिषेधप्रकाशने, पर्यवस्यति परिणमति ।

( २९ ) विशेषप्रतिपत्तिरत्र कीदृशीत्युपपादयति—विशेषश्चेति । गमनस्य प्रवासे प्रियगमनस्य, अत्यन्तपरिहार्यत्वरूपः सर्वथैव परित्याज्यत्वरूपः, प्रतीयतेऽवगम्यते स्वजीवनस्य सर्वथैवाभिलषितत्वात् गमनपरित्यागे च तत्स्थितिसम्भवादित्याशयः ।

केचित्तु— यातु यातु किमनेन तिष्ठता मुञ्च मुञ्च सखि ! सादरं वचः ।
खण्डिताधरकलङ्कितश्रियं शक्नुमो न नयनैर्निरीक्षितुम् ॥

इत्युदाहरन्ति तन्न समीचीनम् उक्तोदाहरणवन्नेदम् । अत्र तथाविधापराधसमये नायिकाया निषेधाभासस्याल्पमेधसामपि बुद्ध्यनारोहात् ।

( ३० ) कारणयुक्तालङ्कारस्यैवेह प्रकरणत्वात् विरोधाश्रयत्वेन चाक्षेपालङ्कारेण तद्बा· धाया असम्भवाद्भावसम्बन्धेन कारणयुक्तमेव विभावनालङ्कारं लक्षयति—विभावनेति । हेतुं मुख्यकारणं विना,यत् कार्यस्य उत्पत्तिः जननम् उच्यते प्रतिपाद्यते, स विभाव्यते मुख्यकारणं विना विशेषेण कारणं चिन्त्यते यस्यामिति व्युत्पत्त्या विभावनानामालङ्कारः उच्यते इत्येव सम्बन्धः । एवञ्च मुख्यकारणासत्त्वे कार्यजननप्रतीतिर्विभावनेति फलि· तोऽर्थः । सा विभावना उक्तनिमित्तत्वात् प्रतिपादितामुख्यहेतुत्वात् , अनुक्तनिमित्त· त्वात् अकथितामुख्यहेतुत्वाच्च द्विधा द्विविधा परिकीर्त्तिता कथिता ।

( ३१ ) ननु कारणासत्त्वे कार्योदयः कथमित्याशङ्कां निराकरोति—विनेति । उप· निबध्यमानः प्रतिपाद्यमानः । कारणं विना यद्यपि न किमपि कार्यं समुत्पद्यते तथापि प्रसिद्धं कारणं विना यदि कविः स्वप्रतिभोन्मेषेण कार्योदयं बोधयेत् तदाऽयमलङ्कारः अन्यथा कस्यापि कारणस्याभावे कार्यत्वमेव न स्यादित्याशयः । कारणान्तरम् अप्रसिद्ध· निमित्तम् । नचात्र कारणाभावे कार्योत्पत्तौ स्फुरितस्य विरोधस्य प्रसिद्धातिरिक्तेन कार· णेन परिहाराद्विरोधाभास एवायमिति वाच्यम्, तत्रोभयोरेव परस्परं बाध्यतया प्रतीतिः, अत्र तु कारणाभावेन कार्यमेव बाध्यतया प्रतीयते न तु कार्येण प्रमाणनिश्चितः कारणाभावोऽपि तेनोक्तदोषाभावात् । उक्तञ्चालङ्कारसर्वस्वकृता—

कारणस्य विरोधेन बाध्यमानः फलोदयः ।

( ३२ ) 'अनायासकृशं मध्यमशङ्कतरले दृशौ ।
अभूषणमनोहारि वपुर्वयसि सुभ्रुवः ॥'

( ३३ ) अत्र वयोरूपनिमित्तमुक्तम् ।

( ३४ ) अत्रैव 'वपुर्भाति मृगीदृशः' इति पाठेऽनुक्तम् ।

( ३५ ) **सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधा ।**

तथेत्युक्तानुक्तनिमित्तत्वात् । तत्रोक्तनिमित्ता यथा—

( ३६ ) 'धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः ।
प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः ॥'

---

विभावनायामाभाति विरोधोऽन्योन्यबाधनम् ॥ इति ।

कारणाभावश्चात्र क्वचिन्नञादिना साक्षात् प्रतिपाद्यते, क्वचिच्च कारणविरोधिनः प्रतिपादनेन परम्परयेत्यवधेयम् ।

( ३२ ) तत्रोक्तकारणे उदाहरति—अनायासेति । काञ्चित्तरुणीमवलोक्य कस्यचन विदग्धस्योक्तिरियम् । वयसि यौवनसमये 'वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्' इति मेदिनी, सुन्दरे भ्रुवौ यस्यास्तस्या नवयौवनायाः, मध्ये कटिभागः, अनायास परिश्रमरहितमपि कृशं क्षीणं 'जातम्' इति शेषः । दृशौ नयने अशङ्के शङ्कारहिते तथापि तरले चञ्चले, तथा वपुः शरीरम्, अभूषणमलङ्काररहीनं तथापि मनोहारि मनोरमणीयं जातमित्यत्रापि शेषः ।

( ३३ ) अत्रोक्तं निमित्तं सूचयति—अत्रेति । वयोरूपं यौवनरूपं निमित्तं कृशत्वादीनाममुख्यं हेतुरुक्तम् । कृशत्वे आयासस्य, दृशोस्तरलत्वे शङ्कायाः, वपुर्मनोहारित्वे भूषणस्य च मुख्यं ( प्रसिद्धं ) निमित्तम् । एवञ्चायासादीनामसत्त्वेऽपि कृशत्वादीनां कार्याणां जननाद्विभावनालङ्कारः अयाणामिहोपनिबन्धनान्मालारूपेयम् । केवलरूपा यथा-

'अदवधि विलासभवनं यौवनमुदियाय चन्द्रवदनायाः ।
दहनं विनैव तदवधि यूनां हृदयानि दह्यन्ते' ॥

अत्र यौवनरूपनिमित्तत्वमुक्तमितिविभावना ।

( ३४ ) अनुक्तहेतावुदाहरणमाह—अत्रैवेति । उक्तलक्ष्य एवेत्यर्थः । पाठे अन्तिमपादस्थाने इति शेषः । अनुक्तं निमित्तमिति पूर्वेण सम्बन्धः । अत्र कृशत्वादिकं कार्यम्प्रति अनुक्तमपि वयोरूपं कारणं योग्यत्वादवगम्यते ।

( ३५ ) हेतुप्रस्तावाद्विभावनाविरुद्धत्वाच्च विभावनाप्रतिपादनानन्तरं हेतुयुक्तमेव विशेषोक्त्यलङ्कारं लक्षयति—सतीति । हेतौ मुख्यकारणे, सति उपलभ्यमाने, फलाभावः कार्यानुदयो विशेषोक्तिर्नामालङ्कार 'उच्यते' इति पूर्वतोऽनुवर्तते । एवञ्च—मुख्यकारणोपलम्भेऽपि कार्यानुदयबोधो विशेषोक्तिरिति सरलार्थः । इत्थंभूतापीयं तथा पूर्ववदुक्तनिमित्तत्वात् अनुक्तनिमित्तत्वाच्च द्विधा द्विविधा परिकीर्तिता । विशेषेण निमित्तविशेषेण अमुख्यहेतूपपादनेनेत्यर्थः उक्तिः कार्योदयप्रतिपादनमिति व्युत्पत्तिः ।

( ३६ ) उक्तनिमित्ते उदाहरणं दर्शयति—धनिन इति । महान् असौ महिमा तेन शालन्त इत्येवंशीलास्तादृशास्ते पुरुषाः धनिनः सन्तोऽपि निरुन्मादा उन्मादरहिताः,

( ३७ ) अत्र महामहिमशालित्वं निमित्तमुक्तम् ।

( ३८ ) अत्रैव चतुर्थपादे 'कियन्तः सन्ति भूतले' इति पाठे त्वनुक्तम् ।

( ३९ ) अचिन्त्यनिमित्तत्वं चानुक्तनिमित्तस्यैव भेद इति पृथङ् नोक्तम् । यथा-

( ४० ) 'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥'

( ४१ ) अत्र तनुहरणेनापि बलाहरणे निमित्तमचिन्त्यम् ।

( ४२ ) इह च कार्याभावः कार्यविरुद्धसद्भावमुखेनापि निबद्धयते । विभावना-यामपि कारणाभावः कारणविरुद्धसद्भावमुखेन ।

---

युवानः तरुणाः सन्तोऽपि न चञ्चलाः न चञ्चलप्रकृतयः, तथा प्रभवः प्रभुत्वयुक्ताः सन्तोऽपि अप्रमत्ताः प्रमादरहिता इत्यर्थः । अत्रोन्मादं प्रति मुख्यहेतुः धनित्वम्, चाञ्चल्यं प्रति मुख्यहेतुः युवत्वम्, प्रमादं प्रति मुख्यहेतुः प्रभुत्वमित्येवंरूपेऽपि उन्मादादिराहित्यप्रतिपादनेन तत्कार्याभावानुदयाद्विशेषोक्तिः ।

( ३७ ) लक्ष्यं सङ्गमयति—अत्रेति । महामहिमशालित्वरूपनिमित्तवशादेव उन्मादादयो नोत्पन्ना इत्याशयः ।

( ३८ ) अनुक्तनिमित्ते उदाहरणं दर्शयितुमाह—अत्रैवेति । धनिन इत्युदाहरण एवेत्यर्थः । अनुक्तम्, निमित्तमिति पूर्वेण सम्बन्धः । अत्रापि तादृशनिमित्तयोग्यता-बलादवगम्यते ।

( ३९ ) ननु प्रकाशकृता—"अनुक्तनिमित्ता, उक्तनिमित्ता, अचिन्त्यनिमित्ता च" इति प्रदर्शनेन त्रैविध्यमुक्तम्, अलङ्कारसर्वस्वकृताऽप्येमेव प्रतिपादितं तत्कथमत्र द्वैविध्यमेवोक्तमित्याशङ्कां परिहरति—अचिन्त्येति । अनुक्तनिमित्तस्यैव भेद इति । तथाचानुक्तनिमित्त एवाचिन्त्यनिमित्तस्यान्तर्भावेन मया त्रैविध्यं पृथग् न दर्शितमित्याशयः ।

( ४० ) प्रकाशकृदचिन्त्यनिमित्तोदाहरणं दर्शयति—स इति । एकः

"एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।
साधारणे समानेऽल्पे संख्यायाञ्च प्रयुज्यते ॥"

इत्युक्तदिशा असहाय इत्यर्थः, स कुसुमायुधः मदनः कुसुमेत्यनेन शस्त्रस्य निःसारत्वं सूचितम् । त्रीणि जगन्ति स्वर्गमर्त्यपातालरूपादि भुवनानि जयति, यस्य मदनस्य तनुं शरीरं हरता दाहेन नाशयता शम्भुना महेशेन बलं सामर्थ्यं न हृतं न नाशितम् ।

( ४१ ) लक्ष्यं संयोजयति—अत्रेति । तनुहरणेऽपि बलविनाशं प्रति देहविनाशरूपे हेतौ विद्यमानेऽपि, बलस्य अहरणे विनाशाभावविषये निमित्तं हेतुः अचिन्त्यं विचार्यं-पित्वापि प्राप्तुमशक्यम् । तथाचास्य भेदस्यानुक्तनिमित्त एवान्तर्भावात् त्रैविध्यं न मया स्वीक्रियत इति भावः ।

केचित्तु—प्रकरणादिना ज्ञातस्य निमित्तस्यावचनेऽनुक्तनिमित्ता, अज्ञातस्य निमित्तस्यावचने चैषेति भेदमुपकल्प्य त्रैविध्यमेवेच्छन्ति ।

( ४२ ) अस्मिन्नलङ्कारे विच्छित्त्यन्तरेण बन्धं प्रतिपादयन् विभावनालङ्कारे कारणाभावस्य तथा बन्धमनुषङ्गतः प्रतिपादयति—इह चेति । विशेषोक्तौ चेत्यर्थः । कार्याभावः फलाभावः, कार्यस्य फलस्य यद् विरुद्धं विपरीतं ( कारणं ) तस्य सद्भावो विद्य-

( ४३ ) एवं च 'यः कौमारहरः' ( २१ पृ० ) इत्यादेरुत्कण्ठाकारणविरुद्धस्य निबन्धनाद्विभावना । 'यः कौमार-' इत्यादेः कारणस्य च कार्यविरुद्धाया उत्कण्ठाया निबन्धनाद्विशेषोक्तिः, एवं चात्र विभावनाविशेषोक्त्योः सङ्करः ।

( ४४ ) शुद्धोदाहरणं तु मृग्यम् ।

---

मानत्वं तस्य मुखं प्रतिपादनद्वारं तेनापि, किं पुनरन्यथेति शेषः, निबध्यते आलङ्कारिकैरिति शेषः ।

तथा विभावनायामपि विभावनालङ्कारेऽपि कारणाभावः हेतोरभावः 'विभावना विना हेतुम्" इत्यनेनोक्त इत्यर्थः, कारणस्य हेतोः यद्विरुद्धं विपरीतं ( कार्यम् ), तस्य सद्भावो विद्यमानत्वं तस्य मुखं प्रतिपादनद्वारं तेनापि निबध्यते इति पूर्वेण सम्बन्धः।

( ४३ ) नन्वेतेन प्रकृते किमायातमित्यत आह—एवञ्चेति । दर्शितोभयरूपनिबन्धनस्यालङ्कारिकप्रकृतत्वे चेत्यर्थः । इत्यादेः इत्यादिप्रतिपादितस्य, उत्कण्ठायास्तद्रूपस्य कार्यस्य कारणे निजान्तिके नायकाद्यवर्तमानत्वं तस्य विरुद्धं नायकादिवर्त्तमानत्वं तस्य तथोक्तस्य, निबन्धनात् कविना प्रतिपादितत्वात् विभावना एतन्नामालङ्कारो भवितुं योग्य इत्याशयः । इत्यादेः इत्यादिप्रतिपादितस्य , कारणस्य निजान्तिकनायकादिवर्तमानत्वस्य , कार्यम् उत्कण्ठाया अभावरूपम् , तद्विरुद्धाया विपरीताया उत्कण्ठाया उत्कण्ठोपलम्भस्य, निबन्धनात् 'चेतः समुत्कण्ठते' इत्यनेन कविना प्रतिपादितत्वात् विशेषोक्तिश्च भवितुं योग्येति भावः । एवञ्च दर्शितदिशा विभावनाविशेषोक्त्योरुभयोरेव सम्भवे च, अत्र "यः कौमारहरः" इत्यादिपद्ये सङ्करः किं विभावना किं वा विशेषोक्तिरिति सन्देहसङ्कर इत्यर्थः । अत एवोक्तोदाहरणे प्रथमपरिच्छेदे एवंविधसन्देहसङ्करालङ्कारस्य स्फुटं विद्यमानत्वेनास्फुटालङ्कारत्वमत्रेतिप्रतिपादनं प्राचामसमञ्जसमेवेत्याशयः ।

वस्तुतस्तु—'हरो वर' इत्याद्यनुप्रासस्य स्फुटत्वेऽपि प्रकृतश्रृङ्गाररसप्रतिकूलवर्णघटितत्वेन नालङ्कारत्वम् । यच्चोक्तदिशा सन्देहसङ्करस्तदपि न स्फुटम् , कार्यकारणयोरभावकथनस्यार्थिकस्य विद्यमानत्वेऽपि तद्वाचकनञादिनानुपात्तत्वात् । यदि चेतोऽनुत्कण्ठितं नेत्युच्येत तदा विशेषोक्तेः स्फुटत्वं स्यादिति केचित् ।

( ४४ ) ननु यदि 'यः कौमारहरः' इत्यादौ सन्देहसङ्कर एवाभ्युपेयते तर्हि विभावनाविशेषोक्त्युदाहृतयोः 'अनायासकृशं मध्यम्' 'धनिनोऽपि निरुन्मादाः'' इत्याद्योरपि सङ्करापत्तिः स्यात् , तथाहि—यथाक्रमं पूर्वोदाहरणे विभावनालङ्कारे अनायासे परिश्रमाभावः, तत्फलञ्च स्थूलत्वम् , तद्विपरीतञ्च कृशत्वमिति परस्परं स्थूलत्वविपरीतकृशत्वस्योपलम्भद्वारा स्थूलत्वरूपफलाभावस्योक्तत्वाद्विशेषोक्तिः, एवं विशेषोक्त्युदाहरणे निरुन्मादत्वं प्रति हेतुः अधनित्वम्, तद्विपरीतञ्च धनित्वमिति परस्परम् अधनित्वविपरीतधनित्वस्योपलम्भद्वारा अधनित्वरूपहेत्वभावस्योक्तत्वाद्विभावनेति मन्वान आह—शुद्धोदाहरणन्त्विति । निरुक्तलक्षणयोरेतयोः पृथक् पृथगुदाहरणन्त्वित्यर्थः । मृग्यं गवेषणीयम् । तद् यथा—

> कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने ।
> नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥

अत्र दाहकार्यतया शक्तेरभावोऽशक्तिविपरीतशक्त्युपलम्भद्वारा उक्त इति विशेषोक्तिः । एवं विभावनालङ्कारस्याप्युदाहरणं मृग्यम् ।

( ४५ ) जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः ॥ ६७ ॥
क्रिया क्रियाद्रव्याभ्यां यद्द्रव्यं द्रव्येण वा मिथः ।
विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः ॥ ६८ ॥

क्रमेण यथा—

( ४६ ) 'तव विरहे मलयमरुद्दवानलः शशिरुचोऽपि सोष्माणः ।
हृदयमलिरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः ॥'

( ४७ ) 'संततमुसलासङ्गाद्बहुतरगृहकर्मघटनया नृपते ! ।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥'

---

( ४५ ) कार्यकारणयोः यथाक्रमं बाध्यत्वप्रतीतौ विभावनाविशेषोक्त्यलङ्कारानुपपाद्याथ द्वयोर्मिथो बाध्यत्वप्रतीतौ सभेदं विरोधाभासालङ्कारं निरूपयति—जातिरित्यादिना। "विरुद्धमिव भासेत" इत्युपादानेन विरुद्धार्थप्रतिपादकस्य पदादेरवसानेऽर्थान्तरपरत्वादिना वस्तुतो विरोधाभावेऽपि आपाततो विरुद्धत्वप्रतीतिर्विरोधाभास इति लक्षणं ज्ञेयम् । विरुद्धत्वञ्चात्र अतस्मिंस्तद्धर्मोपनिबन्धः । यथा प्रथमोदाहरणे "तव विरहे" इत्यादौ दवानलातिरिक्ते मलयमरुति दवानलत्वोपनिबन्धः । तथा चादावेव विरुद्धत्वेन प्रतीयते पर्यवसाने तु तत्परिहारसम्भवस्यावश्यंभावित्वादित्यवधेयम् ।

अत्र विरुद्धमितिपदस्य लिङ्गव्यत्ययेन सर्वत्र सम्बन्धो ज्ञेयः । तथाहि चतुर्भिः चतुः संख्याकैः जात्याद्यैः जाति-गुण-क्रिया-द्रव्यैः सह सहार्थयं तृतीया, मिथः अन्योन्यं यत् जातिः विरुद्धा इव भासेत द्योतेत, इमे चत्वारो विरोधाः । त्रिभिः गुणादिभिः गुणक्रियाद्रव्यैः सह मिथो यद् गुणो विरुद्ध इव भासेत, इमे त्रयो विरोधाः । क्रियाद्रव्याभ्यां सह मिथो यत् क्रिया विरुद्धेव भासेत, इमौ द्वौ विरोधौ। तथा द्रव्येण वा सह मिथो यद् द्रव्यं विरुद्धमिव भासेत, अयमेको विरोधः । असौ, दशाकृतिः दशविधः, विरोधः विरोधाभास 'उच्यते' इत्यनुवर्तते । न्यूनाधिकसंख्याव्यवच्छेदाय दशपदोपादानम् । विरोधपदेनाप्ययमलङ्कारोऽवगम्यते 'सत्या भामा' इतिवत् 'नामैकदेशे नामग्रहणम्' इति न्यायात् ।

( ४६ ) जात्यादिभिश्चतुर्भिर्विरोधे उदाहरणं दर्शयति—तवेति । स्वामिनं प्रति वियोगिनीदूत्या उक्तिरियम् । हे नायक ! तव भवतः विरहे वियोगे सति अस्याः त्वदेकावलम्बिन्याः प्रियायाः सम्बन्धे मलयमरुत् मलयाचलपवनोऽपि चन्दनसौरभयुक्ततया शीतलोऽपि वायुरित्यर्थः, दवानलः दावाग्निः तद्वत्सन्तापोत्पादकत्वात् । शशिरुचोऽपि स्वभावशीतलाश्चन्द्रकान्तय अपि सोष्माणः उष्णाः सन्तापदायकत्वात् । अलिरुतमपि सुमनोहरो भ्रमरझङ्कारोऽपि हृदयं भिन्ते विदारयति अत्यन्तोद्दीपकत्वात् । तथा नलिनीदलमपि सुशीतलं कमलिनीपत्रमपि निदाघरविः आतपकालीनसूर्यः, तद्वदेव सन्तापकत्वात् । अत्र यादृशो विरोधस्तत्समाधानञ्च अनुपदमेव वृत्तौ स्वयं वक्ष्यति ।

( ४७ ) गुणेन सह गुणस्य विरोधे उदाहरति—सन्ततेति । कस्यचिद्राज्ञः स्तुतिरियम् । हे नृपते नरनाथ ! सन्ततं निरन्तरं यो मुसलासङ्गः तण्डुलादिसम्पादनाय ऊर्ध्वाधःपातसमये मुसलस्य घर्षणं तस्मात्कारणात् , तथा बहुतराणाम् अनेकानां गृहकर्मणां गृहोचितलेपनादीनां घटनया निर्माणया करणेन हेतुना, कठिनाः कठोरं प्राप्ताः, द्विजपत्नीनां

( ४८ ) 'अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥'

( ४९ ) 'वल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुषः ।
राकाविभावरीजानिर्विषज्वालाकुलोऽभवत् ॥'

( ५० ) ( नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् ।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे ॥ )

( ५१ ) 'त्वद्वाजि' इत्यादि, ( ३११ पृ० ) ।

ब्राह्मणीनाम् करा हस्ततलानि, भवति सति यथेष्टं निरन्तरं सम्प्रदातृत्वेन प्रसिद्धे त्वयि राजनि जाते सति, सरोजसुकुमाराः कमलवत् अत्यन्तं कोमलाः जाता इति शेषः, भवद्भिस्तथा निरन्तरं ब्राह्मणेभ्यः प्रदीयते यथा तद्धनेन स्वस्त्रीणां गृहोचितकर्त्तव्यानि ब्राह्मणा दासीभिरेव सम्पादयन्तीत्याशयः । अत्रोपगीतिश्छन्दस्तल्लक्षणञ्चोक्तं प्राक् ।

अत्र कठिनत्वसौकुमार्यगुणयोर्विरोधः, समयभेदेन कार्यनिष्पत्त्या तत्परिहारः ।

( ४८ ) क्रियया सह गुणस्य विरोधं दर्शयति—अजस्येति । रघुवंशमहाकाव्ये दशमसर्गे ईश्वरं प्रति देवानां स्तुतिरियम् । हे परमेश्वर ! अजस्य नित्यत्वात् जन्मादिषड्भावरहितस्यापि मत्स्यकूर्मादिरूपेण स्वेच्छया जन्म उत्पत्तिं गृह्णतः उपाददतः स्वीकुर्वत इत्यर्थः, निरीहस्य कर्मशून्यत्वात् निरस्तचेष्टस्यापि हतद्विषः विनाशितभक्तरिपोः, तथा जागरूकस्य चैतन्यरूपत्वेन सततं जागरितस्यापि स्वपतः प्रलयसमये निद्रां प्राप्तवतः, तव भवतः परमेश्वरस्य को जनो याथार्थ्यं सत्यं स्वरूपं वेद जानाति, अपि तु न कोऽपीत्यर्थः । अत्रत्य विरोधपरिहारौ वृत्तावेवानुपदं स्फुटीभविष्यतः ।

( ४९ ) द्रव्येण सह गुणस्य विरोधं दर्शयति—वल्लभेति । वियोगिन्या वर्णनमिदम् । वल्लभस्य प्रियतमस्य उत्सङ्गः क्रोडम् उपचारात्तत्सामीप्यं तस्य सङ्गः सम्पर्कस्तेन विना प्रियतमविश्लेषेणेत्यर्थः, हरिणचक्षुषः मृगनयनाया नायिकायाः, राकाविभावरी पूर्णिमारात्रिः जाया पत्नी यस्य स पूर्णचन्द्र इति भावः विषज्वालया गरलज्वालया आकुलः व्याप्त अभवत् ।

अत्र पूर्णचन्द्रो द्रव्यम्, तस्यानेकव्यक्तिवाच्यित्वाभावात् तादात्म्येन विषज्वालाकुलत्वञ्च गुण इत्यनयोर्विरोधः, विरहदशायामवस्थावैचित्र्यात्तत्परिहारः ।

( ५० ) क्रियया सह क्रियाया विरोधे उदाहरति—नयनेति । कांश्चित् परमरमणीयां कामिनीं वीक्ष्य तामभिलषतः कस्यचित् कामिनः स्वं प्रत्युक्तिरियम् । पद्यमिदं (३२२पृ०) व्याख्यातपूर्वम् ।

अत्र मदयति दुनोतीति सुखजनन-दुःखजननरूपयोः क्रिययोर्विरोधः दर्शनप्राप्त्या मदयति भोगासङ्गेन च दुनोतीति कारणभेदात्परिहारः ।

( ५१ ) क्रियाया द्रव्येण सह विरोधे उदाहरति—त्वद्वाजीति । इत्यादि लक्ष्यमिति शेषः । एतद् व्याख्यानं ( ३११पृ० ) द्रष्टव्यम् ।

अत्रापि विरोधपरिहारौ वृत्तावेवावलोकनीयौ ।

( ५२ ) 'वल्लभोत्सङ्ग'–इत्यादिश्लोके चतुर्थपादे 'मध्यंदिनदिनाधिपः' इति पाठे द्रव्ययोर्विरोधः ।

( ५३ ) अत्र 'तव विरह–' इत्यादौ पवनादीनां बहुव्यक्तिवाचकत्वाज्जातिशब्दानां दवानलोष्महृदयभेदनसूर्यैर्जातिगुणक्रियाद्रव्यरूपैरन्योन्यं विरोधो मुखत आभासते, विरहहेतुकत्वात्समाधानम् ।

( ५४ ) 'अजस्य–' इत्यादावजत्वादिगुणस्य जन्मग्रहणादिक्रियया विरोधः । भगवतः प्रभावस्यातिशायित्वात्तु समाधानम् ।

---

( ५२ ) द्रव्यस्य द्रव्येण सह विरोधे दर्शयति—वल्लभेति । मध्यन्दिनस्य मध्याह्नसमयस्य अधिपः सूर्यः, तद्वत् सन्तापदायित्वादित्यभिप्रायः । अत्र चन्द्रसूर्ययोरनेकव्यक्तिवाचित्वाभावाद् द्रव्यत्वम्, भिन्नद्रव्यत्वादेव चोभयोरभेदप्रतिपादनाद्विरोधः, वियोगे चन्द्रस्य सन्तापदायित्वेन तथा प्रतीतिर्युक्तवेति तत्परिहारः ।

( ५३ ) सम्प्रति प्रदर्शितोदाहरणेषु यथासम्भवं विरोधपरिहारौ यथाक्रममुपपादयितुमुत्थापयति—अत्रेति । उदाहृतमध्ये इत्यर्थः । पवनादीनां पवनादिवाचकानाम् आदिपदेन शशिरुच्यलिरुतनलिनीदलपदानां परिग्रहः, एषां सर्वेषां बहुव्यक्तिवाचकत्वात् अनेकव्यक्त्यभिधायकत्वेन तच्छकयतावच्छेदकानां समवायसम्बन्धेन तत्र तत्रोपलम्भसम्भवेन च 'नित्यत्वे सत्यनेकसमवेतत्वम्' इति लक्षणाक्रान्तत्वादित्यर्थः, जातिशब्दानां जातिविशिष्टग्राहकपदानाम्, दवानलोष्म-हृदयभेदन-सूर्यैः दवानलत्वोष्मत्वहृदयभेदनसूर्यैः यथासङ्ख्यं जातिगुणक्रियाद्रव्यरूपैः । मुखत आपाततः आभासते प्रतीयते । तथाहि—दवानलत्वमलयपवनत्वजात्योर्विरोधः, न चात्र रूपकं स्यादिति वाच्यम्, दाहकत्वशीतलत्वधर्मव्याप्ययोर्जात्योर्विरोधस्यैव प्रथमं स्फुरणात् । एवं शशिरुचित्वजातेश्च सोष्मत्वगुणविरोधः । नचात्रातिशयोक्तिः ? वियोगिजनस्य शशिरुक्प्रभृतिषु सोष्मत्वादिप्रतीतेः सत्यरूपत्वात् । हृदयमित्यत्रालिरुतत्वजातेर्भेदेन क्रियया विरोधः । एवं नलिनीदलमपीत्यत्र नलिनीदलत्वजातेर्निदाघवारिणा द्रव्येण सह तादात्म्येन विरोधः, अत्रापि विरुद्धधर्मव्याप्यत्वाद्विरोधस्यैव प्रथमतः स्फुरणात् अविकारेण विरोधनाच्च न रूपकम्, रवेरुष्मत्वव्याप्यता तु तादात्म्येन । रवीणां द्वादशत्वेऽपि नात्र जातिविरोधः, निदाघीयविशेषणादृतुषट्कप्रवर्त्तकरवेरेवात्र रविपदार्थत्वात् तस्य त्वेकत्वात् । विरहेति । विरहहेतुकत्वात् मलयमरुदादेर्विरहिणीनां सन्तापकत्वेन समाधानं तत्र दवानलत्वाद्यारोपेण तद्विरोधभञ्जनम्, प्रियतमविश्लेषावस्थायां हि स्नेहभाजां कामजनकं सफलं वस्त्वेव कामवेदनामुत्पादयतीति एवंविधपदार्थानामन्यविधप्रतीतेः सम्भवपरत्वेन न कोऽपि विरोध इत्यभिप्रायः । अन्यत्राऽप्येवमेवावगन्तव्यम् ।

( ५४ ) दुर्बोधं लक्ष्यसमन्वयं विज्ञायैकमुपेक्ष्य दर्शयति—अजस्येति । अजत्वादीत्यत्रादिपदेन निरीहत्वजागरूकत्वयोः, जन्मग्रहणादीत्यत्रादिपदेन शत्रुहनन-स्वपनयो परिग्रहः । नन्वजत्वे जन्माभाव एव तर्हि कथमस्य गुणत्वमिति चेत् ? मैवम्, जाति क्रियाभिन्नानां विशेषणानामपि गुणत्वाभ्युपगमात् । भगवतः भगवत्सम्बन्धिनः प्रभावस्य माहात्म्यस्य अतिशयितत्वात् सातिशयत्वेन अबोध्यत्वात् । समाधानम् अवि-

( ५५ ) 'त्वद्वाजि-' इत्यादौ 'हरोऽपि शिरसा गङ्गां न धत्ते' इति विरोधः। 'त्वद्वाजि-' इत्यादिकविप्रौढोक्त्या तु समाधानम्।

( ५६ ) स्पष्टमन्यत्।

( ५७ ) विभावनायां कारणाभावेनोपनिबध्यमानत्वात्कार्यमेव बाध्यत्वेन प्रतीयते, विशेषोक्तौ च कार्याभावेन कारणमेव; इह त्वन्योन्यं द्वयोरपि बाध्यत्वमिति भेदः।

---

रोधः। एवञ्चास्माभिर्यत्सम्भाव्यते तत्तत्र नारायणे माहात्म्यातिशयेन सम्भवतीति तथाविधविरुद्धधर्मप्रवेशोऽपि सम्भवत्येवेत्याशयः। अन्यत्राऽप्येवमेवावधार्यम्।

( ५५ ) त्वद्वाजीति। अनेकव्यक्तिवाचित्वाभावेन हरो द्रव्यम्, तस्य च शिरसा गङ्गाधरत्वं निश्चितम्, तथा च तदभावप्रतिपादनेन गङ्गाधरणकर्त्तरि तदधारणकर्त्तृनिर्देशस्य प्रतीतेः क्रियाया द्रव्येण सह विरोधः स्फुटः। कविप्रौढ्येति। कविभिः स्वप्रतिभावाग्विच्छित्तिप्राप्त्यर्थं हठपूर्वकमसत्यमपि प्रतिपाद्यत इति तत्रोपलभ्यमानो विरोधोऽसत्यत्वात्परमार्थतोऽविरोध एवेति भावः। अन्यत्राऽप्येवमेवावगन्तव्यम्।

( ५६ ) यत्र विरोधपरिहारो न प्रदर्शितो तदर्थं प्रतिपादयति—स्पष्टमिति। अन्यत् गुणस्य गुणेन सह विरोधोदाहरणे 'सन्ततमुसलासङ्गात्' इत्यादौ गुणस्य द्रव्येण सह विरोधोदाहरणे "वल्लभोत्सङ्गसङ्गेन" इत्यादौ च विरोधपरिहारो स्पष्टं स्फुटम् अतो नेहोपन्यस्यत इति भावः।

( ५७ ) विभावनाविशेषोक्त्योरपि कारणाभावे कार्यसत्त्वयोः कार्याभावकारणसत्त्वयोश्च विरोधत्वेन प्रतीयमानत्वात् तत्राप्ययमलङ्कारः स्यादतस्तत एनं विशेषयितुमुत्थापयति—विभावनायामिति। उपनिबध्यमानत्वात् प्रतिपाद्यमानत्वात्। कार्यमेव न तु कारणमित्येवपदार्थः तस्य च प्रतिपाद्यमानत्वाभावादितिभावः। एवमग्रेऽपि। बाध्यत्वेन विरुद्धत्वेन उत्पत्त्यसमर्थत्वेनेत्यर्थः। कार्याभावेन कारणस्योपनिबध्यमानत्वादिति शेषः। कारणमेव न तु कार्यमित्येवपदार्थः 'बाध्यत्वेन प्रतीयते' इति पूर्वेण सम्बन्धः। इह तु विरोधाभासापरपर्याये विरोधालङ्कारे तु अन्योन्यं मिथः द्वयोरपि कार्यकारणयोस्तदतिरिक्तयोर्वा वस्तुनोः, बाध्यत्वं विरुद्धत्वं 'प्रतीयते' इति पूर्वेण सम्बन्धः।

अथ बोधसौकर्यायास्यालङ्कारस्य सोदाहरणं भेदाः प्रदर्श्यन्ते—

| भेदाः। | | उदाहरणानि। |
|---|---|---|
| ( १ ) जात्या सह जातेर्विरोधः | ... | "तव विरहे" इत्यत्र 'मलयमरुद्दवानलः'। |
| ( २ ) ,, ,, गुणस्य विरोधः | ... | ,, ,, ,, एवं 'शशिरुचोऽपि सोष्माणः'। |
| ( ३ ) ,, ,, क्रियाया ,, | ... | ,, ,, ,, 'हृदयमक्लिष्टमपि भिन्ते'। |
| ( ४ ) ,, ,, द्रव्यस्य ,, | ... | ,, ,, ,, 'नलिनीदलमपि निदाघरविः'। |
| ( ५ ) गुणेन सह गुणस्य ,, | ... | सन्ततेत्यत्र 'कठिनकराः सुकुमाराः'। |
| ( ६ ) ,, ,, क्रियाया ,, | ... | 'अजस्य गृह्णतोजन्म'। |

( ५८ ) कार्यकारणयोर्भिन्नदेशतायामसङ्गतिः ।

यथा—

( ५९ ) 'सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतम् ॥'

| | | | | |
|---|---|---|---|---|
| ( ७ ) ,, | ,, द्रव्यस्य | ,, | ··· | वल्लभोत्सङ्गेत्यत्र 'राकाविभावरीजानि-विषज्वालाकुलः' । |
| ( ८ ) क्रियया ,, | क्रियाया | ,, | ··· | नयनयुगेत्यत्र 'रूपमिदं हृदयं मदयति दुनोति च' । |
| ( ९ ) ,, | ,, द्रव्यस्य | ,, | ··· | त्वद्वाजिराजीत्यत्र 'हरोऽपि शिरसा गङ्गां न धत्ते' । |
| ( १० ) द्रव्येण ,, | ,, | ,, | ··· | वल्लभोत्सङ्गेत्यत्रैव 'राकाविभावरीजानि मध्यन्दिनदिनाधिपः' । |

( ९८ ) विरोधप्रकरणाद्विरोधविशेषयुक्तमेवासङ्गत्यलङ्कारं लक्षयति—कार्येति कार्यकारणयोः फलनिमित्तयोः भिन्नदेशतायां वैयधिकरण्ये सति, असङ्गतिः तन्नामालङ्कार 'उच्यत' इति पूर्वतोऽनुवर्तते । कार्यकारणयोर्हि सामानाधिकरण्यनियमः सर्वत्र दृष्टः, यथा—'पर्वतस्थो वह्निः पर्वतस्थमेव धूमं जनयति न तु महानसीयो वह्निः पर्वतदेशे धूमं जनयति' इति । एवञ्चात्र तु कार्यकारणयोर्वैयधिकरण्येन स्थितेरेवासङ्गत्या असङ्गतिरित्यभिधीयते । अत्र च भिन्नदेशतायामत्यन्तेति विशेषणमवश्यमेव देयम् , अन्यथा 'दष्टो भुजङ्गेन पदेऽक्षिणि घूर्णते" इत्यत्र भिन्नदेशत्वेनातिव्याप्तिः स्यात् , तदुपादाने तु पदाक्ष्णोरत्यन्तभिन्नदेशत्वाभावेन दोषाप्रसक्तेरिति केचित् । नच कार्यकारणयोरत्यन्तवैयधिकरण्ये यद्ययमलङ्कारस्तर्हि 'दण्डो ह्यरण्येऽस्ति गृहे घटश्च' इत्यादावप्ययं स्यादितिवाच्यम्, तत्र वैचित्र्याभावेनालङ्कारत्वाभावात् । अतिशयोक्तौ कार्यकारणयोः पौर्वापर्यविपर्ययः, अत्र तु कार्यकारणयोर्वैयधिकरण्यमिति भेदः । विरोधेन सहास्या भेदस्तु वृत्तावेव स्फुटीभविष्यति ।

( ९९ ) उदाहरति—सेति । काञ्चिद्रमणीं वीक्ष्य तामभिलषतो वयस्यं प्रत्येत्य कस्यचित् सखिन्नस्य कामिन अमरुशतके उक्तिरियम् । हे वयस्य ! सा दृष्टपूर्वा रमणी, बाला बाल्यधर्ममृदुत्ववती, किन्तु वयम् 'अस्मदो द्वयोश्च १।२।५९ पा० सूत्रेणैकत्वे विवक्षिते बहुवचनादहमित्यर्थः, अग्रेऽप्येवमेव बोध्यम् । अप्रगल्भमनसः न प्रगल्भं कार्याकार्यावधारणक्षमं मनश्चित्तं येषां ते तथोक्ताः, तत्समये किमप्यभिधातुमसमर्थत्वादित्याशयः । सा स्त्री, वयन्तु कातराः सभयचेतसः तत्समीपे अनुनयादितत्परत्वादितिभावः । सा बाला, पीनं पुष्टञ्च तत् उन्नतिमत् उच्चत्वयुक्तञ्चेति तत् तथोक्तं पयोधरयुगं कुचद्वन्द्वं धत्ते धारयति, किन्तु वयं सखेदाः सखिन्नाः, तदप्राप्तेरितितात्पर्यम् । तथा सा रमणी, गुरुणा पृथुलेन जघनस्थलेन नितम्बभरेण आक्रान्ता, किन्तु वयं न गन्तुं शक्ताः, तत्परित्यागाय सर्वदैव चेतसोऽनभिकषित्वादित्यभिप्रायः । अतएव अन्य-

( ६० ) अस्याश्चापवादकत्वादेकदेशस्थयोर्विरोधे विरोधालङ्कारः ।

( ६१ ) गुणौ क्रिये वा चेत्स्यातां विरुद्धे हेतुकार्ययोः ॥ ६९ ॥
यद्वारब्धस्य वैफल्यमनर्थस्य च सम्भवः ।
विरूपयोः संघटना या च तद्विषमं मतम् ॥ ७० ॥

क्रमेण यथा—

( ६२ ) 'सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते ॥'

---

जनाश्रितैः मन्यजनावलम्बिभिः दोषैः बालत्वादिभिः वयम् अपटवः अकर्मण्याः कर्त्तव्यकर्मासमर्था जाताः स्म इत्यद्भुतं विचित्रम् । शार्दूलविक्रीडितं छन्दस्तल्लक्षणञ्चोक्तं प्राक्

अत्र कारणीभूतानां बालत्वप्रभृतीनां बालिकावृत्तित्वात् तत्कार्यभूतानामप्रगल्भमनस्त्वप्रभृतीनाञ्च तत्कामिवृत्तित्वादसङ्गतिः ।

( ६० ) ननु कार्यकारणयोरेकत्रानवस्थानस्वरूपो विरोधालङ्कार एवोक्तोदाहरणेऽपि वर्तत इति तदलङ्कारोदाहरणमेव मन्यतामलमधिकालङ्कारस्वीकारेणेत्यत आह—अस्याश्चेति । असङ्गतेरित्यर्थः । अपवादो विशेषः तस्य भावस्तस्मात् कार्यकारणवैयधिकरण्यभावप्रयुक्तविषयकतया विशेषत्वेन बाधकत्वात् , एकदेशस्थयोः एकाधिकरणवृत्तित्वयोः कार्यकारणयोरितिशेषः । अयमाशयः—व्यधिकरणयोर्यत्रैकाधिकरण्येन विरोधप्रतिसन्धानं स विरोधालङ्कारः, यत्र तु समनाधिकरणयोर्वैयधिकरण्येन विरोधप्रतिसन्धानं सासङ्गतिरलङ्कारः । नचैवं विषयैक्य एवोत्सर्गापवादभावस्य सम्भवेन प्रकृते विषयभेदादुत्सर्गापवादभावो न स्यादिति वाच्यम् , विरोधालङ्कारस्य हि विरोधसामान्यं विषयः, असङ्गतेश्च केवलकार्यकारणवैयधिकरण्यप्रयुक्तो विरोधविशेष इति समानविषयत्वस्योत्सर्गापवादभावस्य च सम्भवादिति ।

( ६१ ) प्रस्तुतविरोधविषयमाश्रित्यैव विषमालङ्कारं निरूपयति—गुणाविति । अत्र 'विरुद्धे' इति विभक्तिविपरिणामेनान्वयः कार्यः । हेतुकार्ययोः फलनिमित्तयोः गुणौ यत् विरुद्धौ स्यातां क्रिये वा यद्विरुद्धे स्यातामिति सम्बन्धः । एवञ्च कार्यगुणो यत् कारणविरुद्धः स्यात् , अयमेको विषमः । अथवा कार्यवृत्तिक्रिया यत् कारणवृत्तिक्रियातः विरुद्धा स्यात् , अयं द्वितीयो विषमः । वा अथवा आरब्धस्य कार्यस्य वैफल्यम् उद्देश्यफलाभावः, प्रत्युतानर्थस्य अनभिलषितस्य च सम्भव उत्पत्तिः स्यात् अयं तृतीयो विषमः । या च विरूपयोः परस्परसम्बन्धायोग्ययोः पदार्थयोः सङ्घटना सम्मेलना, इति तुरीयो विषमं तन्नामालङ्कारो मतम् । ननु काव्यप्रकाशकृदादयो विषम इति पुल्लिङ्गत्वेनैवाहुरित्यत्र कथं नपुंसकेन निर्देश इति चेत् ? विषमशब्दस्य वाच्यलिङ्गत्वेन दोषाभावात् । उक्तदिशा गुणादीनां वैषम्यादेव विषम इति नामास्य बोध्यम् ।

कार्यकारणगतत्वेन भिन्नदेशस्थयोर्विरोध एवायमलङ्कार अतो न विरोधाभासः एकदेशस्थयोर्विरोध एव तत्स्वीकारात् । यद्यपि "विरूपयोः सङ्घटना" इत्यनेनैव गुणगुणयोः क्रिययोर्वा विरुद्धत्वेनान्तर्भूतत्वात्पृथगुपन्यासो व्यर्थ इवाभाति तथापि तत्र तत्र वैचित्र्यस्य पार्थक्येनोपलम्भात्तदुपन्यासो युक्त एवेत्यवधेयम् ।

( ६२ ) तत्र प्रथमं विषममुदाहरति—सद्य इति । पञ्चगुप्तनिर्मिते नवसाहसाङ्क-

( ६३ ) अत्र कारणरूपासिलतायाः 'कारणगुणा हि कार्यगुणमारभन्ते' इति स्थितेर्विरुद्धा शुक्लयशस उत्पत्तिः ।

( ६४ ) 'आनन्दममन्दमिमं कुवलयदललोचने ! ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥'

( ६५ ) अत्रानन्दजनकस्त्रीरूपकारणात्तापजनकविरहोत्पत्तिः ।

( ६६ ) 'अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया ।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः ॥'

---

चरिते पद्यमिदम् । रणे रणे प्रतिसङ्ग्रामम्, तमालवनीला तापिच्छपत्रवत् नीलवर्णा कृपाणलेखा खड्गलता, तद्रूपा कापि नायिकेति भावः । यस्य राज्ञः करस्पर्शं हस्तसंयोगम् अवाप्य लब्ध्वा शरदिन्दुवत् शरत्कालीनचन्द्रवत् पाण्डु श्वेतरूपम्, त्रिलोक्याभरणं त्रिभुवनभूषणरूपं यशस्तद्रूपं पुत्रम्, प्रसूते जनयति, एतदेव चित्रम् अद्भुतम् । कालस्कन्धस्तमालः स्यात्तापिच्छोऽपीत्यमरः, "तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे" इति मेदिनी च । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

( ६३ ) उक्तोदाहरणे कारणासिलताकार्ययशसो नीलत्वपाण्डुत्वे विपरीतेति दर्शयति—अत्रेति । आरभन्ते जनयन्ति । स्थितेर्नियमस्य । शुक्लयशस उत्पत्तिः उत्पद्यमानयशःशुक्लमितिपर्यवसितार्थः । तथा च कृपाणलेखयैव यश उत्पादनात् कारणरूपकृपाणलेखायां नीलगुणदर्शनेन कार्यरूपे यशस्यपि "कारणगुणा" इति न्यायेन नीलगुणस्यैवोचितत्वात्तद्विपरीतस्य शुक्लगुणस्योत्पत्त्या कार्यकारणगतगुणयोः प्राथमिकविरोधस्य स्पष्टत्वाद्विषमालङ्कारः । यद्यप्युक्तनियमः समवायिकारणकार्ययोरेव तथापि तद्दर्शनात्कविना अन्यत्रापि तन्नियममध्यवसितम् ।

( ६४ ) द्वितीयं विषममुदाहरति—आनन्दमिति । रुद्रटालङ्कारे नायिकां प्रति नायकस्योक्तिरियम्—कुवलयस्य नीलकमलस्य दले पत्रे तद्वल्लोचने नयने यस्याः तत्सम्बुद्धौ हे कुवलयदललोचने ! त्वम् इमं मया सम्प्रत्यनुभूयमानम् अमन्दम् अधिकम् आनन्दम् आश्लेषादिना हर्षं ददासि जनयसि ( सम्प्रति ) त्वयैव जनितः पितृगृहगमनादिना उत्पादितः विरहो वियोगः, मे मम शरीरं तापयतितराम् अत्यन्तं सन्तापमुत्पादयति एतदत्यद्भुतमेवेत्याशयः । आर्याच्छन्दस्तल्लक्षणञ्चोक्तं प्राक् ।

( ६५ ) लक्ष्यं संयोजयति—अत्रेति । तापजनकविरहोत्पत्तिः स्वोत्पाद्यविरहजन्यतापक्रियोत्पत्तिः । तथा च नायिकातज्जन्यविरहयोः "विरहस्त्वयैव जनितः" इत्युक्त्या कारणकार्ययोरानन्ददानतापनक्रिये च विरुद्धे, 'कारणगुणा' इति न्यायानुसरणस्यावश्यकत्वादित्याशयः । एवञ्च कार्यकारणवृत्तिक्रिययोर्विरोधो द्वितीयविषमालङ्कारः । न चात्रासङ्गतिर्विरोधो वेति वाच्यम्, विरोधे विरोधिनोः सामानाधिकरण्यस्य असङ्गतौ कार्यकारणयोर्वैयधिकरण्यस्य चमत्कारप्रयोजकता, अत्र तु कार्यकारणवृत्तिविजातीयक्रियागुणयोगस्य चमत्कारितेति विशेषात् ।

( ६६ ) तृतीयं विषममुदाहरति—अयमिति । कस्यचिद्विफलाभिलाषिण उक्तिरियम् । अयम्, अम्भोधिः समुद्रः रत्नाकरः रत्नोत्पत्तिस्थानम्, इति विज्ञाय धनाशया द्रव्यप्राप्तीच्छया असेवि तत्प्रान्ते भ्रमणादिना सेवितो मयेति शेषः । किन्तु धनं धन-

( ६७ ) अत्र केवलं काङ्क्षितधनलाभो नाभूत् , प्रत्युत क्षारवारिभिर्वदनपूरणम् ।

( ६८ ) 'क्व वनं तरुवल्कभूषणं नृपलक्ष्मीः क्व महेन्द्रवन्दिता ।
नियतं प्रतिकूलवर्तिनो वत धातुश्चरितं सुदुःसहम् ॥'

( ६९ ) अत्र वनराज्यश्रियोर्विरूपयोः संघटना । इदं मम ।

( ७० ) यथा वा—

( ७१ ) 'विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥'

---

प्राप्तिः दूरे अस्तु तिष्ठतु, प्रत्युत क्षारवारिभिः लवणमिश्रितसलिलैः वदनम् आननम् अपूरि पूर्णं कृतं तेनेति शेषः, हन्त ! कीदृशी दुर्गतिरियमापन्नेत्याशयः ।

( ६७ ) उदाहृतमर्थमुपपादयति—अत्रेति । एवकारार्थेऽत्र केवलशब्दः तस्य चाभूत्क्रियायामन्वयः कार्यः । अयमाशयः—धनलाभेच्छया रत्नाकरस्य सेवनमारब्धम् , तत्र दैववशेनाभिमतफलाभावेन न केवलं वैफल्यं जातं, किन्तु क्षारवारिभिर्मुखपूरणादनिष्टं फलञ्च जातमिति आरब्धवैफल्ये अनर्थसम्भवे च तृतीयो विषमालङ्कारः ।

( ६८ ) चतुर्थमुदाहरति—क्वेति । वनं प्रयाते श्रीरामे दशरथस्य कौशल्याया वा परिदेवनमिदम् । तरूणां वृक्षाणां वल्कं वल्कलं तदेव भूषणमलङ्कारो यत्र तत्तथोक्तम् , वनं विपिनं क्व, तथा महेन्द्रवन्दिता सुराधिपेनापि पूजिता, नृपलक्ष्मीः राज्यश्रीः क्व, क्वौ क्वावत्र महदन्तरं सूचयतः । वत कष्टम् , प्रतिकूलवर्त्तिनः प्रतिकूलतया स्थितवतः धातुः सृष्टिकर्त्तुः चरितं चरित्रं नियतं निश्चितमेव सुदुःसहम् अत्यन्तं दुःसहम् । राज्यलक्ष्म्युपभोगाय प्राप्तसमयस्य श्रीरामस्यातर्कितमेव तथाविधवनवासाश्रयणादित्याशयः । वैतालीयं छन्दस्तल्लक्षणन्तूक्तमेव ।

( ६९ ) लक्ष्यं संयोजयति—अत्रेति । सङ्घटना एकत्रपद एव सम्मेलनम् अतस्तुरीयो विषमालङ्कारः । इदञ्च स्वकीयमिति दर्शयति—इदमिति ।

( ७० ) उदाहरणान्तरं दर्शयितुमाह—यथा वेति ।

( ७१ ) विपुलेनेति । माघकाव्यस्य त्रयोदशे सर्गे पद्यमिदम् । युगक्षये प्रलयसमये सागरे समुद्रे शेते इति सागरशयस्तस्य विष्णोः ( श्रीकृष्णस्य ) विपुलेन विस्तृतेन कुक्षिणा उदरेण ( कर्त्रा ) (क) भुवनानि चतुर्दश जगन्ति ( कर्माणि ) पपिरे पीतानि जग्रसिरे ; स पुनः सोऽपि श्रीकृष्णः, एकतमया कयाचित् पुरस्त्रिया नगरकामिन्या ( कर्त्र्या ) मदविभ्रमेण मदनमदजनितहावविशेषेण असकलया असमस्तया दृशा चक्षुषा ( कारणभूतया ) चक्षुरेककोणमात्रेणेत्यर्थः, पपे पीतः सादरं दृष्ट

---

(क) भूः भुवः स्वः महः जनः तपः सत्यमित्यते सप्त उपरितना लोकाः, अतलं वितलं सुतलं तलातलं महातलं रसातलं पातालमित्येते सप्त अधस्तना लोकाः । उक्तञ्चाग्निपुराणे—

"चतुर्दशविधं ह्येतद्भूतवृन्दं सुकीर्त्तितम् । भूर्भुवःस्वर्महश्चैव जनश्च तप एव च ॥
सत्यलोकश्च सप्तैते लोकास्तु परिकीर्तिताः । अतलं वितलञ्चैव सुतलञ्च रसातलम् ।
महातलं रसातलं पातालं सप्तमं स्मृतम् ॥" इति ।

श्रीमद्भागवते पञ्चमस्कन्धे त्रयोविंशत्यध्यायेऽप्येवमेति द्रष्टव्यम् ।

**( ७२ ) समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः ।**

यथा—

( ७३ ) 'शशिनमुपगतेयं कौमुदी मेघमुक्तं जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥'

**( ७४ ) विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत् ॥ ७१ ॥**

इत्यर्थः । मञ्जुभाषिणीच्छन्दस्तल्लक्षणन्तु—"सजसा जगौ भवति मञ्जुभाषिणी" इति ।

अत्र यदेकावयवभूते कुक्षौ सर्वजगत्स्थित्या भगवानतिविपुलः, तस्यैव च कस्याश्चित्पुरस्त्रियाश्चक्षुः कोणमात्रेऽतिक्षुद्रे स्थित्या विषमालङ्कारः ।

( ७२ ) विरूपयोः सङ्घटनायां विषमालङ्कारं लक्षयित्वा अनुरूपयोः स्वङ्घटनायां समालङ्कारं लक्षयति—सममिति । आनुरूप्येण अन्योन्यसदृशरूपत्वेन निमित्तेन, योग्यस्य वस्तुनः उचितपदार्थेन सह उचितपदार्थान्तरसम्बन्धस्य श्लाघा प्रशंसनम्, समा मा मानं ज्ञानं यत्र तत् समं नाम अलङ्करणं स्यात् । विषमशब्दवदयमपि वाच्यलिङ्ग एव ज्ञेयः ।

( ७३ ) सद्योगेऽसद्योगे चेदं भवतीति द्विविधम् । तत्राद्योदाहरणमाह—शशिनमिति । रघुवंशे षष्ठसर्गे इन्दुमत्या स्वयंवरमण्डपे समगुणयोः अन्योऽन्यानुरूपसौन्दर्यगुणयोः योगेन सम्बन्धेन प्रीतिर्हर्षः येषां ते तादृशाः व्यधिकरणबहुव्रीहिः, पौरा नागरिकाः, इयम् इन्दुमती मेघमुक्तं मेघावरणशून्यं शशिनं चन्द्रम् उपगता प्राप्ता कौमुदी चन्द्रिका तत्सदृशीत्यर्थः; तथा अनुरूपम् आत्मतुल्यम् ( अजम् ) जलनिधिं सागरम्, अवतीर्णा प्रविष्टा जह्नुकन्या गङ्गा तत्तुल्येत्याशयः, इति अनेन प्रकारेण नृपाणाम् इन्दुमतीमुपलब्धुमुपगतानाम्, अथ च तामलब्धावतामजविपक्षिणामपरेषां राज्ञाम्, श्रवणकटु दुःश्रवत्वम्, एकवाक्यम् अभिन्नवाक्यम्, विवव्रुः कथयामासुः । मालिनीच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ( १६७ पृ० )

अत्र अन्योऽन्यसदृशरूपत्वेन निमित्तेन अजेन सह इन्दुमत्याः प्रशंसनात् समालङ्कारः ।

द्वितीयोदाहरणं काव्यप्रकाशे यथा—

'चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया यच्चैतस्याः कवलन-कला-कोविदः काकलोकः ॥'

अत्र काकयोग्ये निम्बफले काकस्यैव सम्बन्ध इति सम्बन्धस्य प्रशंसनात् विषमालङ्कारः ।

( ७४ ) विरोधस्य प्राकरणिकत्वात् तद्घटितमेव विचित्रालङ्कारं निरूपयति—विचित्रमिति । नचात्र समालङ्कारेण तद्बाधः शङ्क्यः, तस्य विशेषातिदिष्टत्वात् । चेद् यदि विरुद्धस्य अनिष्टफलकस्य कर्मणः कृतिर्विधानम्, इष्टफलाय अभिमतफलप्राप्तये सम्पद्यते इति शेषः, तदा तद् विचित्रं नामालङ्कारः स्यात् इति पूर्वतोऽनुवर्तते । प्रकाशकृतालङ्कारमिमं विषमेनैव गतार्थं मन्यमानेन नाङ्गीकृतम्, तदाशयं विविण्वतोद्योतकृता—इष्टसिद्ध्यर्थमिष्टैषिणा क्रियमाणमिष्टविपरीतयत्नाचरणमपि विषममेवेत्युक्तम् । विषमे-विरूपस्य कार्यस्य स्वयमेवोत्पत्तिः, इह च तन्निष्पत्तये कृतिरित्यनयोर्भेद इत्यवधेयम् । एवं विरोधाभसेऽपि ।

यथा--

( ७५ ) 'प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥'

( ७६ ) **आश्रयाश्रयिणोरेकस्याधिक्येऽधिकमुच्यते ।**

आश्रयाधिक्ये यथा--

( ७७ ) 'किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र ।
अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि ॥'

आश्रिताधिक्ये यथा--

( ७८ ) 'युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥'

---

( ७५ ) प्रणमतीति । उन्नतिहेतोः अभ्युदयं लब्धुं प्रणमति स्वामिनिकटे प्रकर्षेणा- वनतो भवति सेवक इति शेषः । इत्थमग्रेऽपि । जीवितहेतोः वेतनप्राप्त्यादिना जीव- नरक्षानिमित्तम्, प्राणान् विमुञ्चति सङ्ग्रामादौ परित्यजति, तथा सुखहेतोः सुख- लाभाशया दुःखीयति इतस्ततो धावनाय अशक्यमपि च कर्त्तुं दुःखमिच्छति । अत एव सेवकात् किङ्करात् अन्यः को मूढः अपि तु न कोऽपीत्यर्थः । आर्याच्छन्दस्तल्लक्षण- ञ्चोक्तं प्राक् ।

अत्र अभ्युदयाद्यभिमतफलप्राप्त्यर्थं तद्विरुद्धावनतादिविधानाद्विचित्रालङ्कारः ।

( ७६ ) इत्थं समस्तवैरूप्ये विचित्रालङ्कारं निरूप्य किञ्चिद्वैरूप्येऽधिकालङ्कारं निरूपयति—आश्रयेति । आश्रयाश्रयिणोः आधाराधेययोर्मध्ये एकस्य आश्रयस्य आश्र- यिणो वा आधिक्ये बहुलत्वे सति अधिकं तन्नामालङ्कार उच्यते कविभिरिति शेषः । एवञ्च आश्रयाधिक्यनिबन्धनमाश्रित्याधिक्यनिबन्धनं चेति द्विप्रकारकमेतदितिफलितम् । केचित्तु—'वस्तुतः तनुत्वेऽपि यदेकस्याधिक्यं तदधिकमुच्यते' इति लक्षयन्ति, तन्न—

"द्यौरत्र क्वचिदाश्रिता प्रविततं पातालमत्र क्वचित्
क्वाप्यत्रैव धराधराधरजला धारावलिर्वर्तते ।
स्फीतस्फीतमहो नभः कियदिदं यस्येत्थमेवं विधै-
र्दूरे पूरणमस्तु शून्यमिति यन्नामाऽपि नास्तं गतम् ॥"

इत्यादावव्याप्तेः । अत्र हि नभसो न तनुत्वम् । अस्य चाधाराधेयरूपविलक्षणा- श्रयतया अपवादत्वेन विषमालङ्कारबाधकता ज्ञेयेति तातः । यत्र विच्छित्तिविशेषस्त- त्रैवायम् अत एव "विस्तृतपरिस्तरणे बालः स्वपिति" इत्यादौ नेत्युन्नेयम् ।

( ७७ ) आद्यमधिकमुदाहरति—किमिति । अस्य वारिधेः क्षीरसमुद्रस्य अधिकं महिमानं महत्त्वं किं ब्रूमः; यत्र क्षीरसमुद्रे हरिर्विष्णुः, कुक्षौ उदरे भुवनानि भूर्भुवः स्वर्लोकान्, निक्षिप्य संस्थाप्य, अज्ञात एव 'क्व वर्तते' इति जलजन्तुभिरविदित एव शेते स्वपिति प्रलयसमये इति शेषः । आर्याच्छन्दः ।

अत्राश्रयिभूतहर्यपेक्षया आश्रयभूतक्षीरसमुद्रस्याधिक्यादधिकालङ्कारः ।

( ७८ ) द्वितीयमधिकमुदाहरति—युगान्तेति । माघकाव्यप्रथमसर्गे नारदागमने

( ७९ ) अन्योन्यमुभयोरेकक्रियायाः कारणं मिथः ॥ ७२ ॥

( ८० ) 'त्वया सा शोभते तन्वी तया त्वमपि शोभसे ।
रजन्या शोभते चन्द्रश्चन्द्रेणापि निशीथिनी ॥'

( ८१ ) यदाधेयमनाधारमेकं चानेकगोचरम् ।
किंचित्प्रकुर्वतः कार्यमशक्यस्येतरस्य वा ॥ ७३ ॥
कार्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः ।

श्रीकृष्णमुदां वर्णनमिदम् । युगान्तकाले प्रलयसमये प्रतिसंहृताः स्वोदरं प्रवेशिता आत्मानः समस्ता जीवा येन, यद्वा प्रतिसंहृतः सूक्ष्मीकृतः आत्मा शरीरं येन तस्य, कैटभद्विषः श्रीकृष्णस्य, यस्यां तनौ शरीरे जगन्ति भुवनानि सविकाशं सावकाशमसम्बाधमितियावत् यथा स्यात्तथा ( क्रिया विशेषणमेतत् ) आसत अविद्यन्तः तत्र तस्यां तनौ तपोधनस्य नारदस्य आभ्यागमसम्भवा आगमनजन्याः मुदः प्रीतयः न ममुः नावकाशं प्रापुरित्यर्थः । वंशस्थं छन्दस्तल्लक्षणन्तूक्तं प्राक् ( २०६ पृ० ) ।

अत्राश्रयिभूतहरिशरीरापेक्षया आश्रयभूतानां प्रीतीनामाधिक्यादधिकालङ्कारः । एतत्पद्यव्याख्यात्रा मल्लिनाथस्तु सम्बन्धासम्बन्धरूपा अतिशयोक्तिरित्याह । एवञ्चातिशयोक्त्युत्थापितोऽयमधिकालङ्कार इति परस्परमङ्गाङ्गिभावेन सङ्कर इति सारविदो वदन्ति ।

( ७९ ) यथा आश्रयाश्रयिणोरेकस्याधिक्येऽधिकालङ्कारः तथा उभयघटितं कश्चिदलङ्कारः सम्भवितुमर्हति न वेत्याकाङ्क्षायामन्योन्यालङ्कारं निरूपयति—अन्योन्यमिति । उभयोः कर्तृभूतयोर्द्वयोर्वस्तुनोः एकस्याः क्रियायाः, मिथः अन्योन्यं करणं सम्पादनम्, 'विच्छित्तिविशेषेण' इति शेषः, अन्योन्यं तन्नामाऽलङ्कारः 'उच्यते' इत्यनुवर्तते । अन्योन्यलक्षणञ्चोक्तमन्यत्र—

"तदन्योऽन्यं मिथो यत्रोत्पाद्योत्पादकता भवेत्" इति ।

"मिथः"पदमित्यभिधानेन 'दुदोह गां स यज्ञाय सस्याय मघवा दिवम्' इत्यादौ मिथः करणाभावान्नातिव्याप्तिः । यत्र च क्रियापदं न तत्र तु अध्याहारेणैव कार्यं भवतीति तत्रापि नाव्याप्तिः । यथा—क्षपया रुचिरश्चन्द्रश्चन्द्रेण रुचिरा क्षपा ।

अत्र रुचिरभवनक्रियाया मिथः करणम् ।

( ८० ) उदाहरति—त्वयेति । दम्पत्योर्गुणवर्णनमिदम् । हे सखे ! सा तन्वी कृशशरीरा त्वया कान्तेन शोभते, त्वमपि तया तन्व्या कान्तया शोभसे । तथा च चन्द्रो रजन्या रात्र्या शोभते, निशीथिनी सा रजन्यपि चन्द्रेण शशिना शोभते ।

अत्र दम्पत्योश्चन्द्ररजन्योश्च एकशोभनक्रियायाः मिथःकरणादन्योन्यालङ्कारः ।

एवमेव—

शशिना च निशा निशया च शशी शशिना निशया च विभाति नभः ।
पयसा कमलं कमलेन पयः पयसा कमलेन विभाति सरः ॥

इत्यादावप्ययमेवालङ्कारो ज्ञेयः ।

( ८१ ) आधाराधेययोरधिकालङ्कारे प्रस्तावात्तद्घटितं विशेषालङ्कारं निरूपयति—यदिति । न च मध्येऽन्योन्यालङ्कारनिरूपणेन आधाराधेयोर्विच्छेदः ? तस्य विशेषानिर्दि-

क्रमेण यथा—

( ८२ ) 'दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम्।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ।'

( ८३ ) कानने 'सरिदुद्देशे गिरीणामपि कंदरे ।
पश्यन्त्यन्तकसंकाशं त्वामेकं रिपवः पुरः ॥'

त्त्वेन सत्यभावात् । अनाधारम् आश्रयरहितम् आधेयम् आश्रयं यत् अभिधीयते स एको विशेषः । एकञ्च वस्तु अनेकगोचरम् एककाले अनेकविषयम्, तथाच एकं वस्तु युगपदनेकगोचरं प्रतिपाद्येत तदा द्वितीयो विशेषः । युगपदिति पर्यायनिवारणाय, तत्र क्रमेणैकस्यानेकसम्बन्धः, अत्र तु एकदैवैकस्य वस्तुनोऽनेकसम्बन्धत्वस्य विवक्षितत्वमित्यवधेयम् । तथा किञ्चित् किमपि अनिर्दिष्टमित्यर्थः कार्यं प्रकुर्वतः साधयतो जनस्य सम्बन्धे अशक्यस्य दुःसाध्यस्य इतरस्य विधातुं शक्यस्य वा कार्यस्य दैवात् भाग्यात् करणं सम्पादनम्, प्रतिपाद्येत स तृतीयो विशेषः । ततस्तस्मात् त्रिविधस्वरूपात् विशेषोऽलङ्कारान्तरेभ्यो विलक्षण इति व्युत्पत्त्या तन्नामालङ्कारस्त्रिविधस्त्रिप्रकार 'उच्यते' इति पूर्वत्रतोऽनुवर्तते ।

( ८२ ) तत्रानाधाराधेये उदाहरणमाह—दिवमिति । दिवं स्वर्गम् उपयातानां गतानामपि येषां कवीनाम् अनल्पाः बहवो गुणगणाः विच्छित्तिमाधुर्यादिगुणसमुदायाः यासु तथाभूताः गिरः काव्यरूपा वाण्यः, आकल्पं कल्पपर्यन्तं प्रलयकालं यावदित्यर्थः 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि' इत्यमरः, जगन्ति भुवनानि ( कर्म ) रमयन्ति रञ्जयन्ति, ते कवयः काव्यकर्त्तारः 'कविः काव्यकरे सूरौ कविर्वाल्मीकिशुक्रयोः' इति विश्वः, कथमिव न वन्द्या न पूजनीयाः ? अपि तु वन्द्या एवेत्यर्थः । आर्याच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

अत्र निर्मातृत्वेन आधारभूतानां कवीनामसत्त्वेऽपि आधेयभूतानां तद्गिरामवस्थितिवर्णनात् प्रथमो विशेषालङ्कारः ।

यथा वा—

अये ! राजन्नाकर्णय कुतुकमाकर्णनयन !
त्वदाधारा कीर्त्तिर्वसति किल मौलौ दशदिशाम् ।
त्वदेकालम्बोऽयं गुणगणकदम्बो गुणनिधे !
मुखेषु प्रौढानां विलसति कवीनामविरतम् ॥ इति ।

( ८३ ) एकस्यानेकविषयत्वे उदाहरति—कानन इति । कस्यचिद्राज्ञः स्तुतिरियम् । रिपवः शत्रवः, कानने वने, सरितां नदीनाम् उद्देश उत्कृष्टो देशस्तत्र, गिरीणां पर्वतानां कन्दरेऽपि गुहाप्रदेशेऽपि, पुरः अग्रतः अन्तकसङ्काशं यमराजसदृशम्, एकमेव त्वां पश्यन्ति अवलोकयन्ति । भवद्रिपव एवंविधा भयव्याकुला सञ्जाताः, यथा तत्तत्प्रदेशं समाश्रिता अपि साशङ्कं निजसन्निधावेव एकस्मिन् काले एव च यमराजसदृशं भवन्तमवलोकयन्तीत्याशयः ।

अत्र एकस्य राज्ञः एकस्मिन् काल एव काननाद्यनेकस्थानस्थितत्वात् द्वितीयो विशेषालङ्कारः ।

( ८४ ) 'गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥'

( ८५ ) **व्याघातः स तु केनापि वस्तु येन यथा कृतम् ॥ ७४ ॥**
**तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा ।**

यथा—

( ८६ ) 'दृशा दग्धं मनसिजम्–' इत्यादि ( ८८४ पृ० ) ।

( ८७ ) **सौकर्येण च कार्यस्य विरुद्धं क्रियते यदि ॥ ७५ ॥**

( ८८ ) व्याघात इत्येव ।

---

( ८४ ) अशक्यस्य कार्यस्य दैवात्करणं यत्र तदुदाहरति—गृहिणीति । रघुवंशे अष्टमे सर्गे इन्दुमतीमरणे तामनुचिन्तयतो राज्ञोऽजस्य विलापोऽयम् । हे इन्दुमुखि ! त्वं मे मम गृहिणी पत्नी, त्वमेव सचिवः ( हितोपदेशात् ) मन्त्री, त्वमेव मिथो रहसि 'मिथोऽन्योऽन्यं रहस्यपि' इत्यमरः, सखी नर्मसहचरी, तथा त्वमेव ललिते मृदुले कलाविधौ नृत्यगीतादिकलानुष्ठाने प्रियशिष्या प्रेमास्पदतया शिक्षणीया; अतस्त्वामेतत्समुदितरूपां भवतीं हरता अपहरता, अतएव च करुणाविमुखेन निर्दयेन मृत्युना यमेन 'मृत्युर्ना मरणे यमे' इति मेदिनी, मे मम किं न हृतम्, इति त्वं वद, अपि तु एकेन प्रयत्नेन सर्वमेव हृतमित्याशयः । अपरवक्त्रं छन्दः तल्लक्षणन्तु—'अयुजि ननरला गुरुः समे अमपरवक्त्रमिदं ततो जरौ' इति ।

अत्र इन्दुमतीहरणरूपमेकं कार्यं कुर्वता यमेन तेनैवैकदैव गृहिण्यादिकं सर्वं दैवतः कारणात् हृतमिति दुःसाध्यस्य कार्यान्तरस्य सम्पादनमिति तृतीयो विषमालङ्कारः । अस्मिन्नेव भेदे शक्योदाहरणन्तु काव्यप्रकाशादावुन्नेयम् ।

( ८५ ) विशेषालङ्कारस्य तृतीयभेदे अन्यकरणस्योत्थानात् प्रकृते अन्यथा करणयुक्तं विशेषालङ्कारं लक्षयति—व्याघातेति । केनापि केनचित् कर्त्रा येन उपायेन द्वारा, यत् वस्तु यथाकृतं यत्प्रकारं साधितम्, अन्यः कर्ता चेद् यदि तेनैव उपायेन तज्जातीयेनैवोपायेन, तत् वस्तु अन्यथा प्रकारान्तरेण कुरुते साध्यते; तदा हि स परकरणेन पूर्वकरणस्य व्याघातात् व्याघातो नाम अलङ्कार 'उच्यते' इति पूर्वतोऽनुवर्त्तते ।

( ८६ ) उदाहरति—दृशेति । ( ८८४ पृ० ) व्याख्यातपूर्वमिदम् ।

अत्र महेश्वरेण दृशा दाहितस्य कामस्य वामलोचनाभिश्च दृशैव तं पुनरुज्जीवित इति व्याघातः ।

( ८७ ) उक्तालङ्कारमेव प्रकारान्तरेण निरूपयति—सौकर्येणेति । कार्यस्य प्रतिवक्त्रभिमतवस्तुनः, सौकर्येण वक्त्रभिमतवस्त्वपेक्षया सुकरतया अनायासेनेति यावत् कारणेन, यदि विरुद्धं वक्त्रभिम ' प्रतिकूलं क्रियते स्फुटं क्रियते लक्षणया क्रियमाणं प्रतिवक्त्रा वर्ण्यते इत्यर्थः, तदापि व्याघात 'उच्यत' इति सम्बन्धः । एकमेव कारणमाश्रित्य स्वसौकर्येण कारणेन प्रतिवक्ता यदि वक्तृमताद्विरुद्धं प्रकटयति तदा सोऽपि व्याघात इति निष्कर्षः ।

( ८८ ) कारिकायां जिज्ञासानिवृत्तये अध्याहर्त्तव्यपदं निर्दिशति—व्याघात इत्येवेति ।

( ८९ ) 'इहैव त्वं तिष्ठ द्रुतमहमहोभिः कतिपयैः
समागन्ता कान्ते ! मृदुरसि न चायाससहना ।
मृदुत्वं मे हेतुः सुभग ! भवता गन्तुमधिकं
न मृद्वी सोढा यद्विरहकृतमायासमसमम् ॥'

( ९० ) अत्र नायकेन नायिकाया मृदुत्वं सहगमनाभावहेतुत्वेनोक्तम् । नायिकया च प्रत्युत सहगमने ततोऽपि सौकर्येण हेतुतयोपन्यस्तम् ।

**( ९१ ) परं परं प्रति यदा पूर्वपूर्वस्य हेतुता ।**
**तदा कारणमाला स्यात्—**

( ८९ ) उदाहरति—इहैवेति । विदेशं जिगमिषुणा पत्या सह जिगमिषुं पत्नीं प्रति पूर्वार्द्धेन नायकस्य उत्तरार्द्धेन पत्न्याश्चोक्तिप्रत्युक्तिरूपं पद्यमिदम् । हे कान्ते प्रिये ! त्वम् इहैव अस्मिन्नेव भवने तिष्ठ न मया सह गच्छ, अहं कतिपयैरेव अहोभिर्वासरैः समागन्ता समागमिष्यामि भविष्यदर्थे तृन् शीघ्रं प्रत्यावृत्य त्वया सङ्गमिष्यामीत्यभिप्रायः । ननु भवता सह गमने का हानिरित्यत आह—त्वं मृदुः कोमलाङ्गी असि, अत एव आयाससहना विदेशगमनक्लेशसहनयोग्या न च नहीत्यर्थः, इति प्रवत्स्यता पतिनोक्तौ नायिका आह—हे सुभग भार्याप्रिय ! मे मम मृदुत्वं भवता त्वया सह गन्तुमेव अधिकम् अतिशयितं यथास्यात्तथा हेतुः कारणं भवति, अत्राधिकमित्यस्य नपुंसकत्वमध्याहर्त्तव्यं भवतिक्रियाविशेषणत्वादेवेत्यवधेयम्, यद् यस्मात् मृद्वी कोमलाङ्गी अहं विरहकृतं भवद्विश्लेषजनितम् असमं विषमं भयङ्करमिति यावत्, आयासं कष्टं न सोढा न सोढुं शक्ता । शिखरिणीच्छन्दस्तल्लक्षणञ्चोक्तं प्राक् ।

( ९० ) लक्ष्यं संयोजयितुं निर्दिशति—अत्रेति । प्रत्युत वैपरीत्येन । ततोऽपि सहगमनाभावादपि भवने स्थितेरपि सौकर्येण वियोगक्लेशसहनापेक्षया सह प्रस्थानक्लेशसहनस्य सुलभत्वेन कारणेन, हेतुतया सह प्रस्थानं प्रति कारणत्वेन उपन्यस्तम् उपनिबद्धमभिहितं तन्मृदुत्वमिति सम्बन्धः । एवञ्च स्फुट एवात्रविधो व्याघातालङ्कार इत्याशयः।

उदाहरणान्तरं यथा—

"विमुञ्चसि यदि प्रियां प्रियतमेति मां मन्दिरे
तदा सह नयस्व मां प्रणययन्त्रणायन्त्रितः ।
अथ प्रकृतिभीरुरित्यखिलभीतिरक्षाक्षमात्
जातु भुजमण्डलादवहितो बहिर्भावय ॥"

वनं प्रति गन्तुमुद्यतं श्रीरामं प्रति वैदेह्या उक्तिरियम् ।

( ९१ ) पूर्वव्याघातस्वरूपे उपायपर्यायकारणस्य प्रदर्शनात् कारणघटितमेव कारणमालालङ्कारं लक्षयति—परमिति । यदा परं परम् उत्तरम् उत्तरं पदार्थं प्रति पूर्वपूर्वस्य पदार्थस्य हेतुता कारणत्वं चेत् तदा कारणानां माला पंक्तिरिति व्युत्पत्त्या कारणमाला नामालङ्कारः स्यात् । उपलक्षणञ्चैतत्—यथापूर्वं परपरस्य कारणत्वेऽप्ययमित्यपि बोध्यम् ।

यथा—भवन्ति नरकाः पापात् पापं दारिद्र्यसम्भवम् ।
दारिद्र्यमप्रदानेन तस्माद्दानपरो भव ॥ इति ।

यथा—

( ९२ ) 'श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात् ।
लोकानुरागो विनयान्न किं लोकानुरागतः ॥'

( ९३ ) तन्मालादीपकं पुनः ॥ ७६ ॥
धर्मिणामेकधर्मेण संबन्धो यद्यथोत्तरम् ।

यथा—

( ९४ ) 'त्वयि संगरसंप्राप्ते धनुषासादिताः शराः ।
शरैररिशिरस्तेन भूस्तया त्वं त्वया यशः ॥'

( ९५ ) अत्रासादनक्रिया धर्मः ।

( ९२ ) उदाहरति—श्रुतमिति । कृतधियाम् अध्ययनेन निपुणताभावितात्मनां विदुषाम्, सङ्गात् संसर्गात् हेतोः, श्रुतं शास्त्रं तच्छ्रवणया तज्ज्ञानं जायते जनस्येति शेषः । एवमग्रेऽपि । श्रुतात् शास्त्रज्ञानात् विनयः अनुद्धतत्वं जायते, विनयात् लोकानुरागः स्वस्मिन् प्रेम जायते, तस्माच्च लोकानुरागात् किं न जायते ? अपि तु वित्तादिकं सकलमेव जायते इत्यर्थः ।

अत्र विनयादिकं परं परं प्रति श्रुतादेः पूर्वपूर्वस्य कारणतया कारणमालालङ्कारः । अपि च वक्ष्यमाणमालादीपकालङ्कारोऽपि जायते इत्येकक्रियायामुत्तरोत्तरस्यान्वयादेकाश्रयानुप्रवेशरूपः सङ्करालङ्कारः । एवम्—

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥
स्वर्गापवर्गौ खलु दानलक्ष्मीर्दानं प्रसूते विपुला समृद्धिः ।
समृद्धिमल्पेतरभागधेयं भाग्यं च शम्भो ! तव पादभक्तिः ॥

इत्यादावयमलङ्कार इति बोध्यम् ।

( ९३ ) कारणालङ्कारे मालाप्रकरणनिर्देशान्मालादीपकालङ्कारं निरूपयति—तदिति । अनेकानां धर्मिणाम् एकधर्मेण गुणरूपेण क्रियारूपेण वा सह, यत् यथोत्तरम् उत्तरम् उत्तरं वस्तु प्रति सम्बन्धः । अत्र वीप्सायां यथाशब्दः, तत् पुनः मालादीपकं मालायां यथा बहूनां कुसुमानामवस्थानं, तथा बहूनां धर्मिणामवस्थानं माला तस्या दीप इव धर्मैक्येन प्रकाशनमिति तादृशं तन्नामालङ्कारः स्यादिति पूर्वतोऽनुवर्तते ।

( ९४ ) अनेकानां धर्मिणां क्रियारूपैकधर्मसम्बन्धे उदाहरणं दर्शयति—त्वयीति । कस्यचिद्राज्ञः स्तुतिरियम् । हे राजन् ! त्वयि सङ्गरं युद्धं सम्प्राप्ते याते सति, तव धनुषा शरा बाणा आसादिता लब्धाः । इत्थमग्रेऽपि क्रियाया लिङ्गविभक्तिविपरिणामेन सम्बन्धो ज्ञेयः । एवञ्च शरैस्तवैव इषुभिः, अरीणां शिर आसादितम्, तेन अरिशिरसा भूर्भवमासादिता, तया भुवा त्वमासादितः, त्वया भवता च यश आसादितम् ।

( ९५ ) लक्ष्यं समर्थयति—अत्रेति । आसादनक्रिया धर्मः, शरादिभिर्यथोत्तरं कर्मत्वेनान्वयान्मालादीपकम् । यथा वा—

आस्वादेन रसो रसेन कविता काव्येन वाणी तया
लोकान्तःकरणानुरागरसिकः सभ्यः, सभा चामुना ।

( ९६ ) पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम् ॥ ८९ ॥
स्थाप्यतेऽपोह्यते वा चेत्स्यात्तदैकावली द्विधा ॥

क्रमेणोदाहरणम्—

( ९७ ) 'सरो विकसिताम्भोजमम्भोजं भृङ्गसंगतम् ।
भृङ्गा यत्र ससंगीताः संगीतं सस्मरोदयम् ॥'

( ९८ ) 'न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः ॥'

---

दारिद्र्यानलदह्यमानजगतीपीयूषधाराधर
क्षोणीनाथ ! तदा भवांश्च भवता भूमण्डलं भासते ॥

अत्र भासनधर्मेण सम्बन्धः । एवमन्यदपि ।

( ९६ ) क्रमिकप्रस्तावात् क्रमिकविशेषणयुक्तैकावलीनामालङ्कारं लक्षयति—पूर्वमिति । चेद् यदि पूर्वं पूर्वं विशेष्यं प्रति परं परम् उत्तरमुत्तरं विशेषणत्वरूपेण विशेष्यं स्थाप्यते विधीयते अपोह्यते निषिध्यते वा, तदा (क) स्थापनापोहनात्मकतया इति शेषः, द्विधा द्विप्रकारा एकरूपेण विशेषणत्वेन विशेष्यत्वेन विहितानामपोहितानां वाऽऽवली श्रेणिस्तादृशी, एकावली, तन्नामालङ्कारः । अत्र विशेषणत्वेनेत्युपलक्षणम्, तेन विशेष्यतयेत्यपि बोध्यम् । उदाहरिष्यति ग्रन्थकृता स्वयमेव ।

धर्मेण बुद्धिस्तव देव ! शुद्धा बुद्ध्या निबद्धा सहसैव लक्ष्मीः ।
लक्ष्म्या च तुष्टा भुवि सर्वलोका लोकेषु नीता भुवनेषु कीर्त्तिः ॥

अत्रोत्तरमुत्तरं विशेषणं पूर्वंपूर्वं प्रति विशेष्यम् ।

( ९७ ) तत्र स्थापने उदाहरति—सर इति । शरत्समयवर्णनमिदम् । यत्र शरत्समये, सरस्तडागः विकसिताम्भोजं प्रस्फुटितपद्मं भवतीति शेषः, एवमुत्तरत्र । अम्भोजं तत्कमलञ्च भृङ्गसङ्गतं भ्रमरयुक्तम् । ते भृङ्गाश्च ससङ्गीताः सङ्गीतपराः, तत्सङ्गीतञ्च पुनः, स्मरोदयेन कामोल्लासकत्वेन सहेति सस्मरोदयं कामप्राकट्यजनकमित्यर्थः ।

अत्राम्भोजादीनि उत्तरोत्तरत्र विशेष्याणि पूर्वंपूर्वत्र विशेषणात्मना स्थापितानीति एकावल्यलङ्कारः । यथा वा—

पुराणि यस्यां सवराङ्गनानि वराङ्गनारूपपरिष्कृताङ्ग्यः ।
रूपं समुन्मीलितसद्विलासमास्त्रं विलासाः कुसुमायुधस्य ॥ इति ।

अत्र पूर्वंपूर्वस्मिन् उत्तरोत्तरस्य विशेषणतया बाहुल्येन विधानम् ।

( ९८ ) अपोहने उदाहरणमाह—नेति । भट्टिकाव्ये द्वितीयसर्गे पद्यमिदम् । यत् सुचारुपङ्कजम् अत्यन्तरमणीयकमलं न तत् जलं प्रशस्तं जलं नेत्यर्थः, एवमुत्तरत्रापि यत् न विद्यते लीनाः मधुपानाय स्थिराः षट्पदा भ्रमरा यत्र तादृशं तत् पङ्कजं न, यः कलं मञ्जुलं गुञ्जितं मत्तभ्रमरशब्दः यत्र तादृशो न असौ षट्पदो न ; यत् मनः न जहार आचकर्ष तत् गुञ्जितं नेत्यर्थः । वंशस्थं छन्दः ।

---

(क) स्थापकत्वञ्च—स्वसम्बन्धेन विशेष्यतावच्छेदकनियामकत्वम् । अपोहकत्वञ्च—स्वव्यतिरेकेण विशेष्यतावच्छेदकव्यतिरेकबुद्धिजनकत्वम् ।

( ९९ ) क्वचिद्विशेष्यमपि यथोत्तरं विशेषणतया स्थापितमपोहितं च दृश्यते ।

यथा—

(१००) 'वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु ।
कमलेषु पतन्त्यलयः करोति संगीतमलिषु पदम् ॥'

( १ ) एवमपोहनेऽपि ।

( २ ) उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते ॥ ७८ ॥

---

अत्र जलादिकं पूर्वपूर्वं विशेष्यं प्रति पङ्कजाद्युत्तरोत्तरविशेष्यस्य विशेषणत्वेन निषेधनादेकावली । नचात्र सुचारु पङ्कजं विना जलं न रमणीयमिति विनोक्तिध्वनिरेव युक्तः तत्कृतवैचित्र्यस्यैव विद्यमानत्वादिति वाच्यम्, वाच्यार्थकृतस्य वैचित्र्यस्यापलपितुमशक्यत्वात् ।

( ९९ ) अथोक्तविरुद्धलक्षणमुमलङ्कारं सङ्ग्राहयितुमुपपादयति—क्वचिदिति । विशेष्यमपि पूर्वं पूर्वम्, यथोत्तरम् उत्तरम् उत्तरं प्रति । अपोहितं निराकृतम् । अस्मिन् पूर्वतो भेदः स्पष्ट एव । एवंविधैकावल्यलङ्कारोऽत्यन्तविरल इति पार्थक्येन कथनात्समापतति ।

(१००) वाप्य इति । शरत्समयवर्णनमिदम् । वाप्यस्तडागाः, विमला स्वच्छजला भवन्ति, 'अस्मिन् शरत्समय' इति शेषः । एवमग्रेऽपि । तासु वापीषु दीर्घिकासु च कमलानि पङ्कजानि स्फुटन्ति विकसन्ति, तेषु कमलेषु च अलयो भ्रमराः पतन्ति, तेषु अलिषु च सङ्गीतं सुन्दरं गानं ( कर्तृ ) पदम् अधिकारं करोति, अलयो गायन्तीत्यर्थः । आर्याच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

अत्र कमलाद्युत्तरोत्तरविशेष्यं प्रति वाप्यादिकं पूर्वपूर्वं विशेष्यं विशेषणतया उपन्यस्तमित्येकावली ।

( १ ) एतद्दिग्दर्शनमित्यभिप्रायेणाह—एवमिति । अपोहनेऽपि एवमूह्यमित्यर्थः । यथा—
'पुण्यक्षेत्रं न सर्वत्र पुण्यक्षेत्रे न नास्तिकाः । नास्तिकेषु न धर्मोऽस्ति न धर्मं दुःखहेतुता ॥'
अत्रोत्तरोत्तरं विशेषणभूता पूर्वपूर्वं पुण्यक्षेत्रादयो विशेष्यतया निषिद्धाः ।

( २ ) क्रमिकप्रस्तावात् क्रमिकोत्कर्षयुक्तं सारालङ्कारं लक्षयति—उत्तरोत्तरमिति । उत्तरोत्तरं यथास्यात्तथा वस्तुनः विशेष्यपदार्थस्य उत्कर्षो ज्यायस्त्वम्, सार उत्तम इत्यर्थान्तरं न भवति । अत एव सारत्वयुक्तत्वात् सारः तन्नामालङ्कार उच्यते अभिधीयते । अलङ्कारसर्वस्वकृतातूदारनाम्ना व्यपदिष्टम् ।

मालादीपकालङ्कारे यस्य कस्यचित् गुणरूपस्य क्रियारूपस्य वा धर्मस्य परंपरमन्वयः, अत्र तूत्कर्षरूपगुणमात्रस्येति विशेषरूपत्वेनेति भेदः ।

उत्कर्षश्चात्र श्लाघ्यगुणानामश्लाघ्यगुणानाञ्च । तत्राद्यो मूल एवोदाहृतः । अन्त्यो यथा—तृणाल्लघुतरस्तूलस्तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ मामयं याचयिष्यति ॥

स्पष्टञ्चेदमुक्तोदाहरणादौ । अत्र तूलः पिचुसंज्ञकः, 'अथ पिचुस्तूलः' इत्यमरः अत्र वागीशाः—

यथा—

( ३ ) 'राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥'

( ४ ) यथासंख्यमनूद्देश उद्दिष्टानां क्रमेण यत् ।

'केचित्त—'आश्लोकसमापनमुत्तरोत्तरोत्कर्षेणायमलङ्कारो भवति तथात्व एव वैचित्र्यविशेषप्रतीतेः इत्याहुः, तन्न —

लोकस्रजि द्यौर्दिवि चादितेया अप्यादितेयेषु महान् बिभेदः ।
किं कर्तुमर्थीयति सोऽपि रागाज्जागर्ति कश्चा किमतः परा ते ॥

इत्यादौ श्लोकार्धसमाप्ति पर्यन्तमुत्कर्षसत्त्वेनाप्यस्यालङ्कारस्य सम्भवात् इति वदन्ति ।

( ३ ) राज्य इति । रुद्रटालङ्कारे पद्यमिदम् । राज्ये वसुधा पृथिवी सारं सारा श्रेष्ठा उत्कृष्टेत्यर्थः स्वच्छन्दं पर्यटनसम्भवात् । अत्र सारमिति सामान्ये नपुंसकम्, मृदु पचतीतिवत् । अत एव 'वृद्धिरादैच्' १।१।१ इति पा० सूत्रे 'शक्यं चान्नेन समासादिभिरपि क्षुत्प्रति हन्तुम्" इति महाभाष्यम् ।

"सारो बले स्थिरांशे च मज्ज्ञि न पुंसि जले धने
न्याय्यं क्लीबं त्रिषु वरे"··········इति मेदिनी ।
"सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु" इत्यमरः ।

वसुधायां पृथिव्यामपि पुरं नगरं सारं श्रेष्ठम् उत्कृष्टमित्यर्थः, सुन्दरत्वात्पर्यटनाह्लादात्यन्तमनुकूलत्वाच्च । पुरेऽपि च सौधं सुधालिप्तप्रसादं सारं श्रेष्ठम्, दर्शनेऽत्यन्तरमणीयत्वात्सुखावासस्थानत्वाच्च । सौधेऽपि तल्पं शय्या सारम्, तस्य सुखप्रदायित्वात् । तल्पेऽपि अनङ्गस्य मदनस्य सर्वस्वं सर्वस्वरूपा वराङ्गना उत्तमस्त्री सारा भोगसुखजनकानां मध्ये परमानन्दरूपत्वादित्याशयः । आर्याछन्दस्तल्लक्षणमुक्तं प्राक् ।

अत्र पूर्वपूर्वापेक्षया वसुधादीनां वस्तूनां यथोत्तरमुत्कर्षात्सारोऽलङ्कारः । वेदेऽप्ययमलङ्कारो दृश्यते यथा—

'महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥"

( ४ ) क्रमिकप्रकरणादेव क्रमिकप्रतिपादनयुतं यथासंख्यालङ्कारं लक्षयति—यथासङ्ख्यमिति । उद्दिष्टानां प्रथमं निर्दिष्टानां पदार्थानां क्रमेण उद्देश्यानुपूर्व्येण प्रथमस्य प्रथमेन द्वितीयस्य द्वितीयेन तृतीयस्य तृतीयेनेत्येवमित्यर्थः, यत् अनूद्देशः पश्चान्निर्देशः तत् सङ्ख्यामनतिक्रम्य स्थितमिति यथासङ्ख्यं तन्नामालङ्कार 'उच्यते' इति पूर्वतोऽनुवर्तते । तथाच येन क्रमेण यावत्सङ्ख्याका ये प्रथममुद्दिष्टास्तेनैवक्रमेण पश्चादपि तेषां तावत्सङ्ख्याकेषु पदार्थेषु सम्बन्धो यथासङ्ख्यनामालङ्कार इति निष्कर्षः । यद्यपि कविप्रतिभानिर्मितत्वस्यालङ्कारताजीवातोर्लेशतोऽभावादस्य नालङ्कारत्वम्, तथापि एकत्र पद्ये बहूनां क्रमान्वये वैचित्र्यादलङ्कारत्वेनोक्त इत्युद्योते स्पष्टम् ।

अत्र बहूनामित्यत्र बहुत्वमविवक्षितम्, तेन—

'ददर्श कृष्णं रामं च व्रजे गोदोहनं गतौ ।
पीतनीलाम्बरधरौ शारदम्बुरुहेक्षणौ ॥"

इत्यादावप्ययमेव ।

यथा—

( ५ ) 'उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु
　　क्रीडाकाननमाविशन्ति वलयक्वाणैः समुत्रासय ।
इत्थं वञ्जुलदक्षिणानिलकुहूकण्ठेषु साङ्केतिक-
　　व्याहाराः सुभग ! त्वदीयविरहे तस्याः सखीनां मिथः ॥'

**( ६ ) क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात् ॥ ७६ ॥**
**भवति क्रियते वा चेत्तदा पर्याय इष्यते ।**

---

( ५ ) उदाहरति—उन्मीलन्तीति । नायके नायिकाविरहकालीनान् तत्सखीनां साङ्केतिकव्यवहारान् कथयन्त्या नायिकादूत्या उक्तिरियम् । हे सुभग स्त्रीप्रिय ! त्वदीयविरहे तव वियोगे तस्या मृतप्रायत्वेन त्वद्वियोगेन वा हतभागाया तव प्रियतमायाः सखीनां सहचरीणां मिथः अन्योन्यम् इत्थम् एवम्भूताः, वञ्जुला वकुलाः (अशोकमुकुलाः) 'वञ्जुलः पुंसि तिनिशे वेतसाशोकयोरपि' इति मेदिनी, दक्षिणानिलश्चन्दन सुगन्धितो वायुः, कुहूकण्ठाः कोकिलाश्च तेषु विषयसप्तमीयम् , साङ्केतिकव्यवहारा इङ्गितमात्रेण वाक्यानि प्रचलन्तीति शेषः । तथाच उन्मीलन्ति प्रफुल्लन्ति वञ्जुला इति शेषः इत्थमेकयोक्तम् ; ततः नखैः कराग्रैः लुनीहि छिन्धि तत् पुष्पाणि इति शेषः, इति द्वितीयोक्तम् ; एषामवलोकनेनैषा यथा मदनार्पिता न लभेतेत्याशयः। वहति वाति दक्षिणानिल इति शेषः, इति तृतीययोक्तम् ; क्षौमाञ्चलेन पट्टवस्त्रैकभागेन आवृणु प्रतिवधान तमिति शेषः, अन्यथाऽस्य स्पर्शेन निधनत्वं प्राप्स्यतीत्यभिप्रायः, इति चतुर्थ्या उक्तम् ; क्रीडाकाननं खेलार्थं निर्मितमुद्यानम् आविशन्ति प्रविशन्ति 'कोकिला' इति शेषः, इति पञ्चम्योक्तम् ; वलयानां हस्ताभूषणानां क्वाणैः शब्दैः समुत्रासय त्रासयित्वा अपसारय तान् कोकिलानिति शेषः, यदि तेषां कल श्रोष्यति तदा विपत्स्यत इति भावः, इति षष्ठ्योक्तम् । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक् ( १९८ पृ० ) ।

अत्र उन्मीलन्तीत्यादीनामुद्दिष्टानां क्रमश एव लुनीहीत्यादीनां पश्चादुक्तेर्यथासङ्ख्यालङ्कारः ।

( ६ ) क्रमिकप्रस्तावात् क्रमघटितमेव पर्यायालङ्कारं निरूपयति-क्वचिदित्यादिना । क्वचित् कुत्रापि एकं वस्तु, क्रमात् क्रमशो न तु यौगपद्येन, अनेकस्मिन् स्थाने चेद् यदि भवति स्वयमेव स्थितं भवति, वा अथवा अन्येन क्रियते अवस्थितं विधीयते; क्वचिच्च अनेकं वस्तु, क्रमादेकगम् एकस्मिन् स्थाने अवस्थितं चेद् भवति अथवा अन्येन क्रियते; तदा पर्यायः क्रम एव तद्युक्तत्वात् पर्यायो नामालङ्कारः इष्यते स्वीक्रियते । क्रमादिति कथनेन समुच्चयस्तथा द्वितीयप्रभेदो विशेषश्च व्यवच्छिद्यते । तथा चायम्—एकस्य वस्तुन अनेकस्मिन् स्थाने स्वयमेवावस्थितभवने एकः, अनेकस्य वस्तुनः स्वयमेवैकस्थानस्थभवने द्वितीयः, एकस्यानेकस्मिन् विधाने तृतीयः,-अनेकस्य एकत्रविधाने चतुर्थं इत्येवं चतुर्विधः पर्यायः ।

क्रमेण यथा—

( ७ ) 'स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः।
वलीषु तस्याः स्खलिताः प्रपेदिरे क्रमेण नाभिं प्रथमोदबिन्दवः॥'

( ८ ) 'विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः।
वृककाकशिवास्तत्र धावन्त्यरिपुरे तव॥'

( ९ ) 'विसृष्टरागादधरान्निवर्तितः स्तनाङ्गरागादरुणाच्च कन्दुकात्।
कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः॥'

( ७ ) तत्राद्योदाहरणं दर्शयति—स्थिता इति। कुमारसम्भवे पञ्चमसर्गे 'महेश्वर एव मे पाणिं गृह्णातु' इति सङ्कल्प्य तपस्यन्त्याः पार्वत्याः समाधौ घर्मान्ते कदाचिद् निपततां नवमेघजलबिन्दूनां पतनक्रमवर्णनपूर्वकं समाधिसौन्दर्यबोधिका कवेरुक्तिरियम्। प्रथमाः प्रथमं निपतिताः उदबिन्दवः मेघजलबिन्दवः न तु उदधाराः, तस्याः पार्वत्याः पक्ष्मसु नयनलोमसु क्षणं न तु दीर्घकालं स्थिताः विद्यमानाः सन्तः, परञ्च ताडितो निपतनेन पीडितः अधरो यैस्ते तथोक्ताः सन्तः अधरे निपतन्त इत्यर्थः, अनन्तरञ्च पयोधरयोः कुचयोः उत्सेधे उच्चत्वे तत्र निपातेन पतनेन चूर्णिताः विशृङ्खलिताः सन्तः, ततश्च वलीषु उदरपार्श्वस्थत्रिरेखासु स्खलिताः स्खलनं प्राप्ताश्च सन्तः, तदनन्तरञ्च चिरेण बहोः समयात् बहुवरोधकत्वादित्याशयः। नाभिं प्रपेदिरे प्रापुः प्रविविशुरित्यर्थः।

अत्र च 'स्थिता' इत्यनेन नयनलोम्नामतिसान्द्रत्वम्, 'क्षणम्' इत्यनेन तेषां कोमलत्वञ्च, 'ताडिताधरा' इत्यनेन अधरमृदुत्वम्, 'पयोधर'—इत्यादिना कुचयोः काठिन्यम्, 'वलीषु तेषां स्खलनपातोक्त्या वलीनां निम्नोन्नतत्वम्, 'चिरेण' इति च बहुकालेन प्रापणात् वलीनां व्यासः, नाभौ प्रवेशोक्त्या तस्यातिगम्भीरत्वञ्च व्यज्यते। एतेन—

नासाग्रन्यस्तनयनः संवृतास्यः सुनिश्चलः।
ध्यायीत मनसा देवगुरो विष्टभ्य चासनः॥'

इति समाहितानामवस्थोक्तरीत्या घर्मतप्तशरीरोपरि सुखपातजन्यसम्भ्रमहेतावपि अविहता भगवत्याः समाध्यवस्था च प्रदर्शिता भवति। वंशस्थं छन्दस्तल्लक्षणमुक्तं प्राक्।

अत्र वृष्टिविन्दुरूपैकवस्तुनः क्रमशः पक्ष्मादावनेकस्मिन् स्थाने स्वयमेवावस्थितिदर्शनात्पर्यायः। यद्यत्र प्रतिपदमर्थवत्वात् परिकरालङ्कारोऽपीति विभाव्यते तदोभयोरेकाश्रयानुप्रवेशरूपः सङ्कर एवेति भावुकाः।

( ८ ) अथ द्वितीयं पर्यायमुदाहरति—विचरन्तीति। राज्ञः प्रशंसेयम्। हे राजन्! यत्र तव अरिपुरे शत्रुनगरे, श्रोण्यो नितम्बाः तस्या भरेण भारेण अलसा मन्दगमनाः विलासिन्यः रिपुस्त्रियः विचरन्ति अमितवरयः भूतसामीप्ये वर्तमानत्वम्, तत्र शत्रुनगरे इदानीं वृका व्याघ्राः काकाः करटाः शिवाः जम्बुकाः एषां द्वन्द्वः धावन्ति त्वरितं सञ्चरन्ति। शत्रूणां भवता विनाशितत्वात् तन्नगरं सम्प्रति वनीभूतमिति भावः।

अत्रानेकरूपाणां शत्रुरमणीनां वृकादीनाञ्च एकत्र शत्रुनगरे यथाक्रममवस्थानात् पर्यायः।

( ९ ) अथ तृतीयं पर्यायमुदाहरति—विसृष्टेति। इदमपि कुमारकुमारसम्भवे पञ्च-

( १० ) 'ययोरारोपितस्तारो हारस्तेऽरिवधूजनैः ।
निधीयन्ते तयोः स्थूलाः स्तनयोरश्रुबिन्दवः ॥'

( ११ ) एषु च क्वचिदाधारः संहतरूपोऽसंहतरूपश्च । क्वचिदाधेयमपि ।

( १२ ) यथा—'स्थिताः क्षणम्–' इत्यत्रोदबिन्दवः पद्ममादावसंहतरूप आधारे क्रमेणाभवन् । 'विचरन्ति–' इत्यत्राधेयभूता वृकादयः संहतरूपारिपुरे क्रमेणाभवन् ।

---

प्रसर्गे पार्वत्यास्तपस्यारम्भवर्णनम् । तया पार्वत्या, विसृष्टः तपः प्रतिकूलत्वात् परित्यक्तः रागः ताम्बूलचर्वणादिना रञ्जनं यस्य तस्मात् तथाविधात्, अधरात् अधरोष्ठात् निवर्तितः प्रत्यावर्तितः, स्तनयोः कुचयोः अङ्गरागात् कुङ्कुमाद्यङ्गरागद्रव्यलिम्पनात् निवर्तितः तथा अरुणात् प्रकृत्या रक्तवर्णात् कन्दुकात् गेन्दुकाच्च निवर्तितः करः स्वीयपाणिः सम्प्रति कुशाङ्कुराणाम् अतिलघुबर्हीणाम् आदानेन तपस्यार्थं संग्रहणेन परिक्षता अङ्गुलयः करशाखा यस्य तादृशः, इत्थम् अक्षसूत्राणां रुद्राक्षमालारूपतन्तूनां प्रणयी प्रेमी कृतो विहितः । वंशस्थं छन्दस्तल्लक्षणञ्चोक्तं प्राक् ।

अत्र एकस्य करस्य अधरे, स्तनयोः, कन्दुके, कुशाङ्कुरे, अक्षसूत्रे च यथाक्रमं विधानात् पर्यायः ।

( १० ) अथ तृतीयमुदाहरति—ययोरिति । राज्ञः स्तुतिरियम् । हे राजन् ! ते तव अरिवधूजनैः रिपुनारीलोकैः पतिसद्भावे इति शेषः, ययोः स्तनयोः कुचयोः तारः शुद्धमौक्तिकः 'तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके' इति विश्वः हारः मुक्तामाला, आरोपितः परिहितः, सम्प्रति तयोः स्तनयोः, स्थूलाः पृथुलाः अश्रुबिन्दवः नेत्रजलबिन्दवः निधीयन्ते स्थाप्यन्ते, भवतैव तासां पत्यादीनां हननादित्यभिप्रायः ।

अत्रैकस्मिन् स्तनयुगले हाराद्यनेकानां विधानात् पर्यायः ।

( ११ ) ननु 'एकमनेकस्मिन्' इति लक्षणस्य, 'अनेकञ्चैकगम्' इति लक्षणस्य च यथाक्रमोदाहृतेषु 'स्थिताः क्षणम्' इत्यादौ मेघबिन्दूनामनेकत्वेन 'विचरन्ति' इत्यादौ वाटिकातडागादिभेदेन शत्रुनगरस्य बहुत्वात्, 'ययोः' इत्यादिषु स्तनयोर्युगलत्वेन बहुत्वात् कथं सङ्गतिरित्यत आह—एषु चेति । उदाहृतमध्येषु चेत्यर्थः । संहतरूपः समुदितरूपः अनेकोऽपि मिलितत्वेनैकरूप इत्यर्थः, असंहतरूपः असंयुक्तरूपः एकावयववृत्तित्वेऽपि असंयुक्तरूपत्वेनानेकरूप इत्यर्थः । क्वचित् क्वचित् आधेयस्यापि संहतरूपत्वेन असंहतरूपत्वेन च द्वैविध्यमिति दर्शयति—क्वचिदिति । स्पष्टम् ।

( १२ ) उक्तरीत्या सर्वत्र लक्षणसमन्वय इत्युपपादयितुमाह—यथेति । इत्यत्र उदाहृतपूर्वे पद्ये उदबिन्दवः संहतरूपा आधेया इति शेषः । असंहतरूपे मिथोऽसंयुक्तरूपे । एतेन आधेयभूतानां मेघबिन्दूनां संयुक्तरूपत्वेनैकत्वं पद्माद्याधाराणाञ्चानेकत्वमिति व्यञ्जितम् । एवञ्च 'एकमनेकस्मिन्' इति लक्षणं 'स्थिताः क्षणम्' इत्यादौ संहतमेवेत्यवधेयम् । आधेयानामसंहतत्वं तु—

पूर्वं पूर्वं यदा स्याक्षीन्नृपकन्या पतिंवरा । परं परं तदा तस्यां विशेषादाकुलो नृपः ॥

इत्यत्र बोध्यम् । अनेकेषामाधेयानामेकत्राधारे संहतत्वं दर्शयति—विचरन्तीति । वृकादयः असंहतरूपाः अत एव ते अनेका इति भावः । संहतरूपारिपुरे वाटिका तडागादिनाभेदेऽपि प्रतोल्यादिना संहतरूपत्वेनाभिन्नत्वात् एकरूपे शत्रुनगरे इत्यर्थः । एव

( १३ ) एवमन्यत् ।

( १४ ) अत्र चैकस्यानेकत्र क्रमेणैव वृत्तेर्विशेषालङ्काराद् भेदः । विनिमयाभावात्परिवृत्तेः ।

**( १५ ) परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत् ॥ ८० ॥**

क्रमेणोदाहरणम्—

( १६ ) 'दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम ।
मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः ॥'

( १७ ) अत्र प्रथमेऽर्धे समेन, द्वितीयेऽर्धे न्यूनेन ।

'अनेकञ्चैकगम्' इति द्वितीयलक्षणं 'विचरन्ति' इत्यादौ सङ्गच्छत एवेत्याशयः ।

( १३ ) एवमिति । 'ययोरारोपित' इत्यादौ असंयुक्तरूपा नेत्रबिन्दव आधेयभूता इति ते बहुविधाः, स्तनद्वयञ्च आधारभूतं मिथः संयुक्तरूपमित्येकरूपमेव तत् । अत अत्रापि 'अनेकञ्चैकगम्' इति लक्षणं सङ्गच्छत एवेति भावः । विसृष्टरागेत्यादौ तु प्रथमलक्षणसमन्वयो ज्ञेयः ।

( १४ ) मन्वस्यालङ्कारस्य प्रथमभेदो यः "एकमनेकस्मिन्" इत्युक्तस्वरूपस्तस्य 'एकञ्चानेकगोचरम्' इति द्वितीयभेदविशेषालङ्कारेण सह किं पार्थक्यम् ? इत्याकाङ्क्षायामाह—अत्र चेति । आद्यभेदपर्याये चेत्यर्थः । वृत्तेः विद्यमानत्वात् , विशेषालङ्कारात् यौगपद्येनैकस्यानेकत्रवृत्तिमुपजीव्य निरूपिताद्विशेषनामकालङ्कारादित्यर्थः । ननु परिवृत्यलङ्कारेण सहास्य को भेद इत्यत आह—विनिमयेति एकवस्तुत्यागोपाधिकान्यवस्तुग्रहणं विनिमयः, तस्य अभावात् असत्त्वात् परिवृत्तेस्तदाख्यादलङ्काराद् 'भेदः' इति पूर्वेण सम्बन्धः । तथा च घटपटयोः स्थानपरिवर्तनमिवैकानेकयोर्वृत्तितायाः परिवर्तनरूपस्यैव पर्यायसामान्यत्वेनोक्तविनिमयाभावान्न परिवृत्तिसाङ्कर्यमित्याशयः ।

( १५ ) दर्शितदिशा परिवृत्तिप्रकरणस्योत्थापनात् परिवृत्यलङ्कारमेव लक्षयति—परिवृत्तिरिति । विनिमयो नाम एकवस्तुत्यागोपाधिकान्यवस्तुग्रहणम् इत्यभिहितमेव । समानि तुल्यानि न्यूनानि हीनानि अधिकान्युत्तमानि चेति तैः तथोक्तैः । तथा च समं परित्यज्य समोपादानरूपः, अधिकं परित्यज्य न्यूनोपादानरूपः, न्यूनं परित्यज्य अधिकोपादानरूपश्च विनिमयः परिवर्तनं परिवृत्तिरिति व्युत्पत्त्या परिवृत्तिर्नामालङ्कारो भवेत् । अत एवायं त्रिप्रकार इति फलितोऽर्थः ।

( १६ ) समेन न्यूनेन च विनिमये उदाहरणं दर्शयति—दत्त्वेति । काञ्चिद्रमणीं वीक्ष्य सखायं प्रति कस्यचिदुक्तिरियम् । एणाक्षी मृगनयना सा नायिका, कटाक्षं कुटिलदृष्टिं दत्त्वा, मम हृदयं मनोवृत्तिं जग्राह आददौ । तु किन्तु मया हृदयं मनो दत्त्वा मदनज्वरः कामजनितः सन्तापः गृहीत आत्तः ।

( १७ ) लक्षणं संयोजयति—अत्रेति । समेन तुल्यपदार्थोपादानेन विनिमय इति शेषः, कुटिलदृष्टिः-अन्तःकरणवृत्त्योरिन्द्रियगतत्वेन तुल्यत्वादित्याशयः । न्यूनेन न्यूनपदार्थोपादानेन विनिमय इति शेषः, मनोवृत्त्यपेक्षया कामसन्तापस्य क्लेशकरत्वेन हीनत्वादित्यभिप्रायः । उदाहरणान्तरं यथा—

( १८ ) 'तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना ।
येन जर्जरकलेवरव्ययात्क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥'

( १९ ) अत्राधिक्येन ।

( २० ) प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत् ।
तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ॥ ८१ ॥

परिसंख्या—

---

किमहं कथयामि योषितामधरं बिम्बफलं समर्प्य याः ।
सुरसानि हरन्ति हन्त ! हा विदुषां पुण्यफलानि सत्वरम् ॥

अत्र न्यूनेनाधरेणोत्तमस्य पुण्यफलस्य विनिमयः ।

( १८ ) अधिके विनिमये उदाहरति—तस्येति । श्रीरामचन्द्रस्योक्तिरियम् । प्रवयसः अतिवृद्धस्य, स्वर्गिणः स्वर्गं गतस्य, तस्य जटायुषस्तन्नाम्नो गृध्रराजस्य निमित्ते किमिव अधुना मद्दत्तपितृगत्या दानानन्तरमित्याशयः, शोच्यते शोकः क्रियते न किमपि शोच्यत इति भावः । येन जटायुषा जर्जरं जराजीर्णं यत् कलेवरं शरीरं तस्य व्ययः सीतारक्षणार्थं रावणेन विनाशनं तस्मात् तादृशात् इन्दुकिरणोज्ज्वलं चन्द्ररश्मिवत्स्वच्छं यशः क्रीतं गृहीतम् । रथोद्धताच्छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

( १९ ) लक्ष्यं संयोजयति—अत्रेति । आधिक्येन अधिकपदार्थोपादानेन विनिमय इति शेषः । जीर्णशरीरापेक्षया यशस आधिक्यादिति भावः ।

( २० ) परिसंख्यालङ्कारं निरूपयति—प्रश्नादिति । प्रश्नात् कस्यचिद्बुबोधयिषितमादाय, अप्रश्नतो वापि कस्यचिद्बुबोधयिषितमनादाय वा, कथितात् केनचिद्विचार्य प्रतिपादितात् वस्तुनः पदार्थात् , चेद् यदि शाब्दः शब्दप्रतिपाद्यः, अथवा आर्थः अर्थपर्यालोचनया बोध्यः, तथाविधस्य प्रतिपादिततुल्यस्य, अन्यस्य वस्तुनः, व्यपोहः निषेधो भवेत् , तदा परिसंख्या इतरवर्जनबुद्धिरिति व्युत्पत्त्या तन्नामालङ्कारो भवेत् । एवञ्च प्रश्नपूर्वकप्रतिपादनादप्रश्नपूर्वकप्रतिपादनाच्चेयं द्विप्रकारा तयोश्च प्रत्येकमेव शाब्दत्वार्थत्वभेदेन पुनर्द्विप्रकारेति मिलित्वा चतुष्प्रकारा परिसंख्या । परिशब्दोऽत्र वर्जनार्थकः "परेर्वर्जने" ८।१।५ इति पाणिनीयस्मृतेः, संख्या बुद्धिः "यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते" इति श्रीमद्भगवद्गीतावचनात् , तेन वर्जनबुद्धिः परिसंख्येत्यन्वर्थेयं संज्ञा । यत्र च विच्छित्तिविशेषस्तत्रैवायमलङ्कारः, तेन ( क ) "पञ्च पञ्चनखा भक्ष्याः" इत्यादिशास्त्रीयपरिसंख्यायां नालङ्कारत्वम् ।

---

( क ) पञ्च पञ्चनखा भक्ष्या धर्मतः परिकीर्त्तिताः ।
गोधा कूर्मः शशः खड्गी शल्यकश्चेति ते स्मृताः ॥ इति समस्तम् ।

इदञ्च वाक्यं न पञ्चनखभक्षणपरम् , तस्य रागत एव प्राप्तत्वात् । अत एवापूर्वविधिरपि नायम् 'स्वर्गकामो यजेत' इत्यादौ प्रमाणान्तरेणाप्राप्तप्रापकस्यैवापूर्वविधित्वस्वीकारात् । नियमविधिरपि नायम् , 'व्रीहीनवहन्ति' इत्यत्र पक्षे प्राप्तप्रापकविधेरेव नियमविधित्वाभ्युपगमेन प्रकृते पञ्चनखापञ्चनखभक्षणयोरुभयोरपि युगपत्प्राप्त्या पक्षे प्राप्त्यभावात् , एवञ्च वाक्यमिदमपञ्चनखभक्षणनिवृत्तिपरमिति परिसंख्याविधिरेव उभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसंख्याविधिरि·

क्रमेणोदाहरणम्—

( २१ ) 'किं भूषणं सुदृढमत्र यशो न रत्नं किं कार्यमार्यचरितं सुकृतं न दोषः।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं जानाति कस्त्वदपरः सदसद्विवेकम्॥'

( २२ ) अत्र व्यवच्छेद्यं रत्नादि शाब्दम्।

( २३ ) 'किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः।
को ध्येयो भगवान्विष्णुः किं काम्यं परमं पदम्॥'

( २१ ) तत्र प्रश्नपूर्वकप्रतिपादने शाब्दाः परिसंख्याया उदाहरणं दर्शयति—किमिति अत्र लोके सुदृढम् अविनाशि, भूषणम् अलङ्कारः किम्? इति कस्यचित् प्रश्ने—यश एव कीर्तिरेव सुदृढं भूषणं किन्तु रत्नं माणिक्यादि न भूषणमिति शेषः, तस्य विनाशित्वादिति कस्यचित्प्रतिपादनम्, आर्यचरितं मन्वादिशिष्टजनसेवितं किं नाम कार्यं कर्तव्यम्? इति कस्यचित्प्रश्ने—"सुकृतं पुण्यकर्म, न तु दोषो व्यभिचारादिपापम्" इति कस्यचित्प्रतिपादनम्। अप्रतिहतं व्यवधानेऽपि ग्राहकं चक्षुः किम्? इति कस्यचित्प्रश्ने "धिषणा बुद्धिः किन्तु नेत्रं न" तस्य कुड्यादिना व्यवहितत्वादित्यभिप्रायः; इति कस्यचित् प्रतिपादनम्, इत्यभिमतोत्तरं श्रुत्वा प्रश्नकर्ता प्रतिपादयितारं प्रशंसावचनमाह—जानातीति। त्वदपरः त्वदन्यः कः सदसद्विवेकम् उत्कृष्टनिकृष्टपार्थक्यम् जानाति, अपि तु न कोऽपीत्यर्थः। वसन्ततिलका छन्दः।

( २२ ) लक्ष्यं सङ्गमयितुमाह—अत्रेति। व्यवच्छेद्यं निषेध्यम्। शाब्दं 'न रत्नम्' इत्यादिशब्दगम्यम्। अत एवात्र प्रश्नपूर्वकप्रतिपादने शाब्दीपरिसंख्यालङ्कार इत्याशयः।

( २३ ) प्रश्नपूर्वकप्रतिपादने आर्थ्याः परिसंख्याया उदाहरणमाह—किमिति। कयोश्चिद्विवेकिनोरुक्तिप्रत्युक्तिरियम्। सदा अहर्निशं किं नाम कार्यम् आराध्यं कायेन वाचा मनसेन्द्रियैर्वा सम्यगनुष्ठेयम्? इति प्रश्ने—पुण्यं सुकृतमेव आराध्यम्, न पुनः पापम्, तस्य नरकसाधनत्वात् इत्युत्तरम्, एवमग्रेऽपि। कश्च सेव्य? इति प्रश्ने—सदागमः सतां महात्मनाम् आगमः सम्मेलनम्, यद्वा साधुशास्त्रं वेदादिकमेव सेव्यः, न पुनरसत्समागमः तस्य पापसाधनत्वात्। को ध्येयः? इति प्रश्ने—भगवान् भगं माहात्म्यमस्यास्तीति भगवान् विष्णुः ध्येयः, न पुनर्धनम्, तस्य भयप्रमादादिसाधनत्वात्।

भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु।
माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षे च ना रवौ॥ इति विश्वमेदिन्यौ।

अन्यत्र तु—

वदन्ति तत्तत्त्वविदो तत्त्वं यज्ज्ञानमद्वयम्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते॥ इति।

त्युक्तत्वात्, अत एव काव्यप्रकाशकृता "परिसंख्यायामन्यव्यपोहे एव तात्पर्यम्, उत्तरालङ्कारे तु वाच्ये एव विश्रान्तिः" इत्युक्तम्। उक्तञ्च पार्थसारथिमिश्रेणापि—

'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥ इति।'

नचैवमपि रागतः प्राप्तस्य पञ्चनखभक्षणस्य वारणं कथं स्यादिति वाच्यम्?

यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम्। तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः॥

इति मनुवचनेन मांससामान्यभक्षणनिषेधपरत्वादिति दिक्।

( २४ ) अत्र व्यवच्छेद्यं पापाद्यार्थम्, अनयोः प्रश्नपूर्वकत्वम् ।

अप्रश्नपूर्वकत्वे यथा—

( २५ ) 'भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे ।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥'

( २६ ) 'बलमार्तभयोपशान्तये विदुषां संमतये बहु श्रुतम् ।
वसु तस्य न केवलं विभोर्गुणवत्तापि परप्रयोजनम् ॥'

( २७ ) श्लेषमूलत्वे चास्य वैचित्र्यविशेषो यथा—

'यस्मिंश्च राजनि जितजगति पालयति महीं चित्रकर्मसु वर्णसङ्कराश्चापेषु गुणच्छेदः—' इत्यादि ।

---

किं काम्यम् अभिलषणीयम्? इति प्रश्ने—परमं 'तद्विष्णोः परमं पदᳪ सदा पश्यन्ति सूरयः' इत्याद्युक्तमुत्कृष्टं पदं स्थानमेव काम्यं न पुनः राजादिकं वैषयिकं पदम्, तस्यानित्यत्वात् । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः ।

( २४ ) लक्ष्यं संयोजयति—अत्रेति । पापादीत्यत्रादिपदेन दुःसङ्गपरस्त्रीक्षुद्रसुखानां परिग्रहः । आर्थम् अर्थवशेन गम्यम् । तेनात्र प्रश्नपूर्वकप्रतिपादने आर्थी परिसंख्येत्याशयः । एवं प्रश्नपूर्वकत्वेनोदाहृत्य प्रदर्श्यान्यथोदाहरणं प्रदर्शयितुमाह—अनयोरिति । स्पष्टम् ।

( २५ ) भक्तिरिति । प्राय आधिक्येनैव महतां महात्मनाम्, भवे महादेवे "व्योमकेशो भवो भीमः" इत्यमरः, भक्तिः प्रेम परिदृश्यते, न पुनर्विभवे सम्पत्तौ, शास्त्रे वेदादौ व्यसनम् अनुशीलनं परिदृश्यते, न तु युवतिरेव कामास्त्रं तत्र । तथा यशस्येव चिन्ता तत्प्राप्त्युपायचिन्तनं परिदृश्यते, न पुनर्वपुषि शरीरे तद्रक्षणे एवेतितात्पर्यम् । आर्याच्छन्दः ।

अत्र अप्रश्नपूर्वकप्रतिपादने नञ्त्रयस्योपादानात् विभवाद्यन्यार्थं निषेधः शाब्द इति शाब्दी परिसंख्यालङ्कारः ।

( २६ ) बलमिति । रघुवंशस्याष्टमे सर्गे पद्यमिदम् । तस्य दशरथस्य बलं सैन्यम्, आर्त्तानां पीडितानां भयस्य त्रासस्य उपशान्तये निवृत्तये 'आसीत्' इति शेषः, एवमग्रेऽपि; न पुन. परपीडनाय । बहु अधिकं श्रुतं शास्त्रज्ञानम्, विदुषां मनीषिणां सम्मतये सम्यगुपकाराय, न तु विवादायेत्याशयः । तथा केवलं वसु, वित्तमेवान्यप्रयोजनमिति न, किन्तु गुणवत्तापि विद्यादिशीलत्वमपि अन्यप्रयोजनैव, न तु स्वार्थेत्याशयः । वैतालीयं छन्दः ।

अत्र प्रश्नपूर्वकप्रतिपादनाभावादेव 'आर्त्तभयोपशान्तये बलम्' इत्यादिप्रतिपादनात् 'न तु परपीडनाय बलम्' इत्यादिरूपोऽन्यार्थनिषेधः अर्थतः प्रतीयते इत्यार्थी परिसंख्यालङ्कारः ।

( २७ ) अस्य श्लेषमूलकत्वे वैचित्र्यविशेषत्वं भवतीति दर्शयितुमुत्थापयति—श्लेषेति । अस्य परिसंख्यालङ्कारस्य । उदाहरति—यस्मिंश्चेत्यादि । बाणभट्टविरचिते कादम्बरीपूर्वार्द्धे शूद्रकराज्ञो वर्णनमिदम् । जितं वशीकृतं जगत् संसारो येन तथोक्ते, यस्मिंश्च राजनि शूद्रकनृपतौ, महीं भूमिं पालयति रक्षयति सति, चित्रकर्मसु आलेख्यक्रियासु वर्णाः रक्तपीतादयः तेषां सङ्कराः परस्परं बन्धाः आसन्निति शेषः, न पुनर्मानवेषु ब्राह्मणादिस्त्रीपुरुषदोषतः सङ्कराः अन्येभ्योऽन्योत्पत्तय इत्यर्थः । चापेषु धनुःषु गुण-

( २८ ) उत्तरं प्रश्नस्योत्तरादुन्नयो यदि ।
यच्चासकृदसंभाव्यं सत्यपि प्रश्न उत्तरम् ॥ ८२ ॥

यथा मम—

( २९ ) 'वीक्षितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः ।
अहमेकाकिनी बाला तवेह वसतिः कुतः ॥'

( ३० ) अनेन पथिकस्य वसतियाचनं प्रतीयते ।

( ३१ ) 'का विसमा देव्वगई, किं लद्धव्वं जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं, किं दुग्गेज्झं खलो लोओ ॥'

---

च्छेदाः । उपाकृतस्य सङ्ग्रामादौ त्रुटनम् , न पुनर्लोकेषु गुणच्छेदाः वचनमाधुर्यादि-गुणविच्छेदा आसन् । वाक्यद्वयमिदं तत्र मिथो व्यवहितं वर्तत इत्यवगन्तव्यम् ।

अत्र उक्तविधान्यार्थनिषेधः अर्थतः प्रतीयत इत्यार्थी परिसंख्यालङ्कारः ।

( २८ ) एकस्याभिहितेऽपरस्यावगमात् प्रकरणेन तद्रूपमुत्तरालङ्कारं प्रतिपादयति—उत्तरमिति । द्वितीयार्द्धे 'प्रश्ने सत्यपि' इत्युक्तत्वात् प्रथमार्द्धे 'प्रश्ने असत्यपि' इत्युन्नेयम् । एवं द्वितीयार्द्धे एकप्रश्ने तथाविधविच्छित्तेरसम्भवात् अधिकतरप्रश्ने सतीत्य प्यवगन्तव्यम् । एवञ्च प्रश्ने असत्यपि उत्तरात् प्रतिवचनात् ।

उत्तरं प्रतिवाक्ये स्यादूर्ध्वोदीच्योत्तमेऽन्यवत् ।
उत्तरस्तु विराटस्य तनये दिशि चोत्तरा ॥ इति विश्वः ।

यदि प्रश्नस्य पूर्ववाक्यस्य उन्नयः कल्पनम् अनुमानेन ज्ञानमिति यावत् स्यात् , तदा उत्तरयुक्तत्वादेव उत्तरं तन्नामालङ्कारो भवेत् 'अयञ्च प्रथम उत्तरालङ्कारः' । तथा अनेकतरप्रश्ने सत्यपि असम्भाव्यं सर्वैरेव सम्भावयितुमशक्यं दुर्ज्ञेयमिति यावत् , यच्च असकृत् अनेकवारम् उत्तरं प्रतिवचनम् , तदपि उत्तरं तन्नामालङ्कारो भवेत् 'अयञ्च द्वितीय उत्तरालङ्कारः' । तदेवं द्विविधोऽयमलङ्कारः । अत्रासकृदिति विच्छित्तिपुष्टयर्थं वचनम् , अत एव—

'किमिति कृशासि कृशोदरि ! किं तव परकीयवृत्तान्तैः' ?

इत्यादावुत्तरस्याभिप्रायगर्भत्वे सकृदुपादानेऽपि चमत्कारस्य सत्त्वादयमलङ्कारः । अत्र प्रश्नेन प्रतीकारासामर्थ्यं व्यङ्ग्यम् , उत्तरेण स्वस्य पातिव्रत्यं व्यङ्ग्यम् ।

( २९ ) तत्र प्रथमभेदोदाहरणं प्रदर्शयति—वीक्षितुमिति । रन्तुमिच्छन्त्याः कस्याश्चिद्रमण्या उक्तिरियम् । श्वश्रूः स्वामिमाता वीक्षितुम् अवलोकयितुं गतागतं ज्ञातुमिति यावत् , न क्षमा न समर्था अन्धेत्यर्थः, अतो न कापि तस्या भीतिरिति भावः । स्वामी मम पतिः, दूरतरं नितान्तं दूरं देशमित्यर्थः, गतः प्राप्तः, अतस्तस्याकस्मात् प्रत्यागमनसम्भावना नास्तीत्यभिप्रायः, अहञ्च एकाकिनी असहाया बाला अस्मीति शेषः । अत एव इह मम भवने कुतः कथं तव पथिकस्य वसतिः वासः सङ्गच्छते ? अपि तु कुतोऽपि नेत्यर्थः । अत्र स्थित्वा स्वच्छन्दं रमस्वेति च ध्वन्यते ।

( ३० ) अत्र प्रश्नोन्नयं दर्शयति—अनेनेति । अनेन वीक्षितुमित्यादिना उत्तरेणेत्यर्थः । वसतियाचनम् 'अहमत्रावस्थातुं कामये' इति वासभूमिप्राप्तिप्रश्नमित्यर्थः, प्रतीयते कल्प्यते । तेनात्र उत्तरालङ्कार इत्याशयः ।

( ३१ ) द्वितीयभेदोदाहरणं दर्शयति—का इति ।

( ३२ ) अत्रान्यव्यपोहे तात्पर्याभावात्परिसंख्यातो भेदः ।
( ३३ ) न चेदमनुमानम् , साध्यसाधनयोर्द्वयोर्निर्देश एव तस्याङ्गीकारात् ।
( ३४ ) न च काव्यलिङ्गम् , उत्तरस्य प्रश्नं प्रत्यजनकत्वात् ।
( ३५ ) दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते ।

का विषमा ? दैवगतिः किं लब्धव्यं ? जनो गुणग्राही ।
किं सौख्यं ? सुकलत्रं किं दुर्ग्राह्यं ? खलो लोकः ॥ इति संस्कृतम् ।

का विषमा प्रतिकूला ? दैवगतिः प्रारब्धभोगः, किं नाम वस्तु लब्धव्यं यत्नेनोपार्जनीयम् ? गुणग्राही जनो लोको लब्धव्य इति शेषः, किं सौख्यं सुखसाधनम् ? सुकलत्रम् उत्तमभार्या 'दुर्गस्थाने नृपादीनां कलत्रं श्रोणिभार्ययोः' इति रभसः, किं नाम दुर्ग्राह्यं वशीकर्त्तुमशक्यम् ? खं छिद्रं लाति आदत्ते गृह्णातीति खलो दुष्टो लोको जनः, 'खलः कल्के भुवि स्थाने क्रूरे कर्णे जपेऽधमे' इति हैममेदिन्यौ, 'लोकस्तु भुवने जने' इत्यमरः । गाथाच्छन्दः ।

अत्र अनेकतरेषु प्रश्नेषु सामान्यस्याविचारणीयानेकतरोत्तरदानादुत्तरालङ्कारः ।

( ३२ ) अत्रालङ्कारान्तरतो भेदमुपपादयितुमाह—अत्रेति । अन्यव्यपोहे वस्त्वन्तरनिराकरणे तात्पर्याभावात् उत्तरविधातुरभिलाषाया अभावात् । भेदो भिन्नत्वम् । एवञ्चार्थपरिसंख्यालङ्कारे 'किमाराध्यम्' इति प्रश्ने 'पुण्यम्' इत्युत्तरविधातुः 'न तु पापम्' इत्यन्यनिषेध अभिलषित एव, उक्तोदाहरणे तु का विषमा इति ? प्रश्ने 'दैवगतिः' इत्युत्तरविधातुस्तु तावन्मात्रमेवाभिलषितम् , 'न तु मानवचरित्रादिगतिः' इत्यन्यनिषेध इति स्फुटं भेद इत्याशयः ।

( ३३ ) नन्वेवमपि 'वीक्षितुं न क्षमा' इत्यादौ तथाविधप्रतिवचनेन पथिकवसतिप्रश्नस्य कल्पनात् ।तथाविधव्यङ्ग्यार्थविद्यमानत्वेन वैचित्र्यवशाच्चानुमानालङ्कार एव स्वीक्रियतामलं प्रथमभेदोत्तरालङ्कारेणेत्यत आह—नचेति । साध्यसाधनयोः लिङ्गिलिङ्गयोः निर्देश एव अभिहित एव । एवञ्चोक्तोदाहरणे तथाविधपथिकप्रश्नस्यानभिहितत्वान्नानुमानमिति भावः ।

( ३४ ) ननूत्तरेण प्रश्नं कल्पयञ्चेत्तर्हि हेतुताया उत्तरवाक्ये व्यङ्ग्यत्वेन वाक्यार्थहेतुकं काव्यलिङ्गालङ्कारमेवाभ्युपेयताम् , अलमुत्तरालङ्काराङ्गीकारेणेत्यत आह—नचेति । उत्तरस्य प्रतिवचनस्य प्रश्नं प्रश्नवाक्यं प्रति अजनकत्वात् हेतुत्वाभावात् । एवञ्च तथाविधप्रश्नप्रतीतिं प्रत्येव 'वीक्षितुम्' इत्यादिवाक्यार्थानां कारणत्वम्, न तु तथाविधप्रश्नं प्रति, तेन न काव्यलिङ्गमपीतिभावः । किञ्च निष्पाद्यस्यात्रानभिधानान्न काव्यलिङ्गप्रसक्तिः, निष्पाद्यनिष्पादकयोर्द्वयोरभिधान एव तत्स्वीकारादित्यवधेयम् ।

( ३५ ) एकस्य कथनेऽन्यस्यापि प्रस्तुतत्वात् तल्लक्षणामेवार्थापत्तिमलङ्कारं निरूपयति—दण्डेति । दण्डापूपिकया तन्नामकन्यायेनअन्यस्य अर्थस्य अनुक्तापरार्थस्य आगमो व्यञ्जना तदर्थस्य आपत्तिः आपतनमुपस्थितिरिति यावत् अर्थापत्तिर्नामालङ्कार इष्यते । अत्र दण्डापूपिकेत्यत्र दण्डापूपयोर्भावः दण्डापूपिका 'द्वन्द्वमनोज्ञादिभ्यश्च' ५।१।१३३ पा० सूत्रेण वुञ् , पृषोदरादित्वाद् वृद्ध्यभाव इति केचित् । अपरे तु दण्डापूपौ विद्येते यस्यां नीतौ सा दण्डापूपिका 'अत इनि ठनौ' इति पा० सूत्रेण ठन् । अन्ये तु दण्डापूपाविव दण्डापूपिकेति 'इवे प्रतिकृतौ' इति पा० सूत्रेण कन् भवतीति प्रतिपादयन्ति । एतत्स्वरूपन्तु स्वयमेव वृत्तौ प्रतिपादयिष्यति ।

( ३६ ) 'मूषिकेण दण्डो भक्षित' इत्यनेन तत्सहचरितमपूपभक्षणमर्थादायातं भवतीति नियतसमानन्यायादर्थान्तरमापततीत्येष न्यायो दण्डापूपिका ।

( ३७ ) अत्र च क्वचित्प्राकरणिकादर्थादप्राकरणिकस्यार्थस्यापतनं क्वचिदप्राकरणिकार्थात्प्राकरणिकार्थस्येति द्वौ भेदौ । क्रमेणोदाहरणम्--

( ३८ ) 'हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले ।
मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः ॥'

( ३६ ) दण्डापूपिकास्वरूपमुपपादयति—मूषिकेणेति । दण्डोऽत्र तत्तत्स्थलीतोऽपूपस्याकर्षणदण्डः, अपूपः पिष्टकम्, तद्दण्डभक्षणं तत्पिष्टकसम्बन्धात् । इत्यनेन एवंविधेन वाक्येन तत्सहचरितं दण्डभक्षणं सहसम्पन्नम्, अपूपभक्षणं मूषिककर्त्तृकमेव पिष्टकादनम्, अर्थात् तात्पर्यतः आयातं ज्ञातम्, इति नियतसमानन्यायात् एवं निर्धारितसमानयुक्तिवशात् । आपतति अर्थतः उपस्थितं भवति न तु शब्दतः प्रतिपाद्यते न्यायो नयः ।

'मूषिकेण दण्डो भक्षितः' अस्य प्राकरणिकमितिवृत्तमित्थं समालोचयन्ति कुशलाः—कस्मिंश्चिद्गृहे काचित् रात्रौ स्वामिनं भोजयित्वा स्वयमपि चोपभुज्यत च्छेषानि पिष्टकानि भर्त्तुः सन्निधावेव दण्डोपरि पात्रे निधाय सुप्ता, भर्त्ताऽपि सुप्तः । प्रत्यूषे तु पिष्टकरहितं भक्षितैकभागं दण्डमवलोकयता स्वामिना पृष्टा सा आहस्म 'मूषिकेण दण्डो भक्षित इति, एतदाकर्ण्य पतिना इत्थं ज्ञातं यत्, 'येन मूषिकेण दण्डो भक्षितस्तेनैव पिष्टकमपि भक्षितम्' तयोः सहसम्पन्नत्वात् दण्डभक्षणापेक्षया पिष्टकभोजनस्य सुकरत्वादभिलषितत्वाच्च । अत एव एकस्य सिद्धिज्ञाने तत्तुल्यस्यापरस्य सिद्धिज्ञानं दण्डापूपिकेति अस्यां चार्थान्तरं लोकेऽविद्यमानमपि कविना स्वप्रतिभया कल्पयित्वा यथापाद्यते तदालङ्कारत्वम्, तेन—

'उदुम्बरफलानीव ब्रह्माण्डान्यत्ति यः सदा ।
वैसगर्वापहः कालस्तस्य के मशका वयम् ॥' इत्यादौ नायमलङ्कारः ।

( ३७ ) अस्या भेदद्वयमिति दर्शयति—अत्रेति । प्राकरणिकत्वात् प्रकृतत्वात्, अर्थात् वस्तुनः, एवमग्रेऽपि । आपतनम् आगमनम् उपस्थितिरिति यावत् । प्राकरणिकस्यार्थस्य आपतनमिति पूर्वेण सम्बन्धः ।

( ३८ ) भेदद्वयमध्ये आद्योदाहरणं दर्शयति—हारोऽयमिति । स्वकीयदोषाभावमुपपादयितुं कश्चित् सखायं प्रति तरुणीकुचकुम्भाश्लेषतत्परस्य कस्यचित् कामिन उक्तिरियम् । अयं हारः मुक्तापुञ्जभूतभूषणम्, हरिणाक्षीणां मृगनयनानां रमणीनां स्तनमण्डले कुचयुग्मे लुठति अवज्ञात इव पतितो भवति, मुक्तानां मौक्तिकानां निर्वाणपदमुपगतानां जनानाञ्च इयम् अवस्था दशा, चेत्तर्हीतिशेषः, तत्र स्मरकिङ्करा कामदेवाधीना वयं के ? अपि तु केऽपि नेत्यर्थः ।

अत्र वर्णनीयत्वेन मुक्तानां प्राकरणिकत्वम्, अवर्णनीयत्वेनास्मत्पदवाच्यामुक्तानाञ्चाप्राकरणिकत्वम् । एवञ्च निर्वाणपदमुपगतानां निवृत्तसंसारदुःखानाम् अत्यन्तविरागतया तरुणीस्तनमण्डले अवलुण्ठनं नितरां दुर्घटमेव, तन्निष्पत्तौ सत्याम्, अमुक्तानां कामकिङ्कराणां रागाम्बुधिनिमज्जतामस्माकं तत्रावलुण्ठनं सुतरामेव सुघटमिति प्राकरणिकस्यार्थस्य आगमनाल्लक्षणसमन्वयः । अत्र मुक्तामुक्तयोस्तुल्यत्वन्तु पुरुषस्वरूपसाधारणधर्मेणेति ज्ञेयम् ।

( ३९ ) 'विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिणाम् ॥'

( ४० ) अत्र च समानन्यायस्य श्लेषमूलत्वे वैचित्र्यविशेषो यथोदाहृते–'हारोऽयम्–' इत्यादौ ।

( ४१ ) न चेदमनुमानम् । समानन्यायस्य संबन्धरूपत्वाभावात् ।

( ४२ ) विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयु(य)तः ॥ ८३ ॥

( ४३ ) यथा—'नमयन्तु शिरांसि धनूंषि वा कर्णपूरीक्रियन्तामाशा मौर्व्यो वा ।'

( ३९ ) द्वितीयभेदोदाहरणं निर्दिशति—विललापेति । रघुवंशकाव्ये अष्टमे सर्गे पद्यमिदम् । सः अजो नाम राजेन्द्रः, सहजामपि स्वभावसिद्धामपि धीरतां धैर्यम् अपहाय परित्यज्य, बाष्पेण नयनजलोद्गमेन गद्गदम् अस्फुटं यथा स्यात्तथा विललाप रुरोद । तथा च अभितप्तं समन्तात्सन्तप्तम् अयो लौहमपि मार्दवं मृदुलतां भजते समाश्रयति, शरीरिषु प्रकृतित एव मृदुलेषु वपुःषु मृदुत्वप्राप्ते, कैव कथा ? अपि तु कापि प्रत्युत्तरवार्त्ता नास्तीत्यर्थः । तथा च यदि सन्तप्तं लौहमपि द्रवति, तर्हि अज इन्दुमत्या विरहेण सन्तप्तस्तथाविधः सञ्जात इति किमाश्चर्यमिति सारार्थः । वैतालीयं छन्दः ।

अत्र शरीरिषु मृदुत्वप्रापणं वर्णनीयत्वेन प्राकरणिकम्, अयसो मृदुत्वप्रापणन्तु वर्णनीयत्वाभावेन अप्राकरणिकम् । तथा च अप्राकरणिकत्वात् अयसो मृदुत्वप्रापणरूपतात्पर्यतः प्राकरणिकस्य शरीरिमृदुत्वप्रापणरूपस्यार्थस्य आगमनादर्थापत्तिः । अत्र अयःशरीरिणोस्तुल्यत्वन्तु सन्तप्तत्वरूपसाधारणधर्मेणेति ज्ञेयम् ।

( ४० ) फलितमर्थं निर्दिशति—अत्र चेति । अर्थापत्तिस्थले चेत्यर्थः । समानन्यायस्य प्रदाघातदण्डापूपिकासंज्ञकन्यायस्य । उदाहरति—यथेति । इत्यादाविति । मुक्तानामित्यत्र श्लेष इति शेषः ।

( ४१ ) ननूक्तोदाहरणादावनुमानालङ्कार एव किन्न स्यादित्याकाङ्क्षायामाह—नचेति । इदम् अर्थापत्तिरूपम् अनुमानम् अनुमानसाध्यं ज्ञानं न चेत्यर्थः । सम्बन्धिरूपत्वाभावात् व्याप्तिरूपत्वाभावादित्यर्थः । तथा च एकसिद्धौ तत्तुल्यान्यसिद्धिज्ञानं समानन्याय इति सिद्धान्तेन प्रकृते हेतुसाध्ययोः सामानाधिकरण्यरूपव्याप्तेरभावान्नानुमानमिति भावः । यथा वा—

निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ! ।
अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥ इति ।

( ४२ ) प्रदर्शितप्रस्तावादेव विकल्पं निरूपयति—विकल्प इति । चातुरी कवेर्नैपुण्यं वचित्र्यमिति यावत् तया युतः युक्तः, तुल्यबलयोः तुल्यकक्षयोः पदार्थयोः विरोधो विप्रतिपत्तिः विरुद्धौ कल्पौ पक्षौ यत्रेति व्युत्पत्त्या विकल्पः तन्नामालङ्कारः 'इष्यते' इति क्रियापदमनुवर्त्तते ।

( ४३ ) उदाहरति—यथेति । नम्यन्तामिति । कमपि रिपुं प्रति राजदूतोक्तिरियम् । शिरांसि मस्तकानि नम्यन्तां पराजयस्यावश्यम्भावित्वेन मम स्वामिनोऽग्तिके अवनतीक्रियताम्, वा अथवा धनूंषि चापा नम्यन्तां यदि शक्तिरस्ति तर्हि समराय आकु-

( ४४ ) अत्र शिरसां धनुषां च नमनयोः संधिविग्रहोपलक्षणत्वात् , संधिविग्रहयोश्चैकदा कर्तुमशक्यत्वाद्विरोधः ।

( ४५ ) स चैकपक्षाश्रयणपर्यवसानः ।

( ४६ ) तुल्यबलत्वं चात्र धनुःशिरोनमनयोर्द्वयोरपि स्पर्धया संभाव्यमानत्वात् ।

( ४७ ) चातुर्यं चात्रौपम्यगर्भत्वेन ।

( ४८ ) एवं 'कर्णपूरीक्रियन्ताम्' इत्यत्रापि ।

( ४९ ) एवं—

'युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः' ।

---

क्रियन्ताम् । आज्ञा ममादेशवचनानि, कर्णपूरीक्रियन्तां निश्चिताकर्णनेन कर्णालङ्कारीक्रियन्तां पराजयाङ्गीकारेण धार्यन्तामित्यर्थः, वा किं वा शक्तिर्विद्यते चेत् मौर्व्यो धनुर्ज्याः कर्णपूरीक्रियन्तां सङ्ग्रामार्थं आकर्णान्तगामीक्रियन्ताम् ।

( ४४ ) शिरो धनुर्नमनयोः विरोधः कथमित्युपपादयति—अत्रेति । सन्धिविग्रहयोरुपलक्षणत्वादित्यत्र उपलक्षणं परिचायकम् , तथा च सन्धिपरिचायकत्वात् विग्रहपरिचायकत्वाच्चेत्यर्थः, अन्यथा तयोर्निष्फलत्वादिति भावः ।

( ४५ ) ननु तद्विरोधपरिहारस्तर्हि कथमित्यत आह—स चेति । विरोधश्चेत्यर्थः । एकपक्षस्य शिरोधनुर्नमनयोरेकतरस्य पक्षस्य सन्धेर्विग्रहस्य कस्यचित्पक्षस्येत्यर्थः, आश्रयणेन अवलम्बनेन पर्यवसानं समाप्तिर्यस्य स तथाभूतः, तथाच तयोरेकपक्षावलम्बनस्य वक्तुरिष्टत्वात्तत्परिहार इति भावः ।

( ४६ ) ननु शिरोधनुर्नमनयोस्तुल्यबलत्वं कथमिति जिज्ञासायामाह—तुल्येति । स्पर्द्धया अहङ्कारेण, वक्तुरिति शेषः, सम्भवपरत्वात् । तथाच स्वाशक्तित्वज्ञानेन रिपूणां शिरोनमनम् , स्वाधिकशक्तित्वज्ञानेन धनुर्नमनं वा एतद्द्वयमपि वक्तुः स्पर्द्धया सम्भाव्यते; अतएवेह द्वयोः सम्भवपरत्वमेव तुल्यबलत्वमिति भावः ।

( ४७ ) अथैवमपि वैचित्र्यं कथमित्यत आह—चातुर्यमिति । कविप्रतिभानिबन्धनविच्छित्तिरित्यर्थः । औपम्यगर्भत्वे 'धनूंषीव शिरांसि नम्यन्ता'मिति वैचित्र्यविशेषशालित्वेन, तृतीयेयमभेदे । तथाच शिरोनमनस्यैव गर्वेण प्रस्तूयमानत्वेन उपमेयत्वम् , धनुर्नमनस्य तूपमानत्वम् । अत एव येन प्रकारेण शक्तिमन्तो धनूंषि अवनमयन्ति तेन प्रकारेणैव क्षीणशक्तिका भवन्तः शिरांसि अवनमयन्त्विति औपम्यगर्भाशयवशेन विच्छित्तिरित्याशयः ।

( ४८ ) एवमिति । इत्यत्रापि ऊहनीयमिति शेषः । पूर्ववदेव सर्वमित्यालोचनीयम् ।

( ४९ ) इत्थमुदाहरणं सङ्गमय्यान्यत्राऽप्येवं सङ्गमनीयमित्याशयेनाह—एवमिति । तत्र श्लेषयुक्तविच्छित्त्युदाहरणं दर्शयति—युष्माकमिति । ग्रन्थान्तरेऽस्य पूर्वपादत्रयन्तु—

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीतेति तत्प्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती, इति ।

हरेः मधुसूदनस्य, नेत्रे लोचनद्वयं तनुर्देहो वा, युष्माकं भक्तानां भवार्तिशमनं जगत्सम्बन्धिक्लेशापगमं 'कुरुताम्' इत्यत्र 'नेत्रे' इत्यस्यान्वये सति कुरुतामिति लोटः

( ५० ) अत्र श्लेषावष्टम्भेन चारुत्वम् ।

( ५१ ) 'दीयतामर्जितं वित्तं देवाय ब्राह्मणाय वा' ।

( A ) इत्यत्र चातुर्याभावान्नायमलङ्कारः ।

( ५२ ) समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके ।
खलेकपोतिकान्यायात्तत्करः स्यात्परोऽपि चेत् ॥ ८४ ॥
गुणौ क्रिये वा युगपत्स्यातां यद्वा गुणक्रिये ।

परस्मैपदस्य प्रथमपुरुषद्विवचने रूपम् , तनोरित्यस्य यथान्वयस्तर्हि कोटः आत्मनेपदस्य प्रथमपुरुषैकवचने रूपमित्यवधेयम् ।

( ५० ) लक्ष्यं संयोजयति—अत्रेति । श्लेषस्य अवष्टम्भेन अवलम्बनेन, चारुत्वं विच्छित्तिः । तथा तनुनेत्रयोः भवार्त्तिशमनसाधनत्वसमत्वेन तुल्यबलत्वम् , तयोरेकतरेण भवार्त्तिशमनस्य कृतत्वे अपरस्य करणासम्भवाद् विरोधः, एकतराश्रयणेन तत्परिहार इति बोध्यः ।

उदाहरणान्तरं यथा—

पतत्यविरतं वारि नृत्यन्ति शिखिनो मुदा ।
अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥

अत्र विप्रलम्भशृङ्गारानुगुण्येन चारुत्वम् । एवमेव—

प्राणानर्पय सीतां वा गृध्रांस्तर्पय वा द्विजान् ।
यमं भजस्व रामं वा यथेच्छसि तथा चर ॥

इत्यत्रौपम्यगर्भ्येन चारुत्वमवगन्तव्यम् ।

( ५१ ) 'चातुरीयुत' इत्यनेन व्यावृत्तिं दर्शयति—दीयतामिति ।

'परत्रेह च कल्याणं तेनैव भवति ध्रुवम्' इतिमद्रचितोत्तरार्द्धम् ।

( A ) इत्यत्रेति । चातुर्याभावात् चातुर्य्यनिबन्धनचारुत्वाभावात् । एवञ्च देवब्राह्मणयोरुत्तमपात्रत्वेन तुल्यबलत्वम् , एकस्मै दाने दत्ते अन्यस्मै तदसम्भवाद्विरोधः, एकस्मा एव दानमभिमतमिति तत्परिहारः ।

( ५२ ) विरुद्धयोरेककालेनैव प्रतिपादने यथा विकल्पालङ्कारः तथा अविरुद्धानामेककालेनैव प्रतिपादने कोऽलङ्कार इति जिज्ञासायां कारणादियौगपद्ये समुच्चयालङ्कारं लक्षयति—समुच्चय इति ।

तथा च कार्यस्य प्रस्तुतार्थस्य एकस्मिन् साधके कारणे सति चेत् यदि (क) खले धान्यादिमर्द्दनस्थानविशेषे कपोतिकान्यायात् कपोता इवेति कपोतिका सैव न्यायो नीतिस्तस्मात् , 'इवे प्रतिकृतौ' ५।३।९६ इति पा० सूत्रेण कन् । धान्यादिमर्द्दनस्थाने यथा कपोतानां युगपत् भक्षणरूपैककार्यार्थं पतनं तथेत्याशयः । एतन्न्यायस्वरूपश्चोक्तं जगदीशभट्टाचार्येण—

'वृद्धा युवानः शिशवः कपोताः खले यथाऽमी युगपत्पतन्ति ।
तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति' ॥ इति ।

परोऽपि पदार्थः, तत्करः तत्कार्यसिद्धिकरः स्यात् ; तदा अयं समुच्चय अभिहितानां

( क ) भाषायां 'खरिहान' 'खरहान' च इति कथ्यते ।

यथा मम—

( ५३ ) 'हंहो धीरसमीर ! हन्त जननं ते चन्दनक्ष्माभृतो
दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः ।
प्रत्यङ्गं दहसीति मे त्वमपि चेदुद्दामदावाग्निव-
न्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः ॥'

( ५४ ) अत्र दाहे एकस्मिंश्चन्दनक्ष्माभृज्जन्मरूपे कारणे सत्यपि दाक्षिण्यादीनां हेत्वन्तराणामुपादानम् ।

( ५५ ) अत्र सर्वेषामपि हेतूनां शोभनत्वात्सद्योगः अत्रैव चतुर्थपादे मत्ता-दीनामशोभनानां योगादसद्योगः ।

कारणादीनां परस्परान्वये परस्परानुकर्षं इति व्युत्पत्त्या समुच्चयः तन्नामालङ्कारः स्यात् । अयमेकविधः । यद्वा अथवा युगपत् एककालम्, गुणौ यत् किञ्चिद् गुणद्वयं, क्रिये यत्किञ्चित् क्रियाद्वयम्, वा अथवा गुण एकः क्रिया चैकेति गुणक्रिये चेत् युगपत् स्याताम्, तदाऽप्ययं समुच्चयः स्यात् । तदेवं चतुर्विधोऽप्ययं सद्योगेऽसद्योगे सदसद्योगे चेति त्रिधा भिन्नो द्वादशप्रकार इत्यवधेयम् । काव्यलिङ्गे हेतुत्वमात्रं विवक्षितम्, समाध्यलङ्कारे एकेन हेतुना कार्यनिष्पाद्यमाने आगन्तुकेनापरेण कार्यस्य सौकर्यकरणं विवक्षितम् अत्र तु बहूनां कार्यकारणसमानां साहित्यं विवक्षितमिति परस्परमेषां भेद इत्यन्यत्र स्पष्टम् ।

( ९३ ) तत्र प्रथमभेदोदाहरणं दर्शयति—हंहो इति । कोकिल रवश्रवणेनाति सन्तप्तस्य कस्यचिद्वियोगिनो दक्षिणानिलं प्रत्युक्तिरियम् । 'हं हो' इति विस्मयार्थक-मव्ययम्, हन्तेति विषादे । हे धीरसमीर धीरवायो ! ते तव चन्दनक्ष्माभृतः चन्दन-प्रधानमलयपर्वतात् जननं जन्म, दाक्षिण्यं दक्षिणाशाभवत्वं परसन्तोषकत्वञ्च जगति उत्तरं विलक्षणम् अलौकिकमिति भावः, गोदावर्या नद्या वारिभिः सलिलैः सह परिचयः सर्वतः सङ्गः, ईदृशोऽपि त्वञ्चेत् उद्दामा प्रचण्डाऽसौ दावाग्निर्दावानलस्तद्वत् मे मम प्रत्यङ्गं सर्वाङ्गं दहसि; तदा मत्तः प्रमादमुपगतः, मलिनात्मको मलिनस्वभावः मलिनवर्णश्च, वनचरः सततमरण्यचारी असभ्यश्च कोकिलः पिकः, किं वक्ष्यते पञ्चमस्वरेण सन्तापने किं वक्तुं शक्य इत्यर्थः; यदि भवादृशानामुत्तमानामियं दशा यत्परपीडनं भवति तदा अधमा यद्यत्पीडयन्ति तत्र का निन्दा भवेदिति निष्कर्षः। शार्दूलविक्रीडितं छन्दस्तल्लक्षणा-ञ्चोक्तम् ( १९८ पृ० ) ।

( ९४ ) प्रथमलक्षणं संयोजयति—अत्रेति । दाहे दक्षिणानिलतः दाहासम्भवेऽपि वियोगित्वादेव दहनरूपे कार्ये । दाक्षिण्यादीनामित्यत्रादिपदेन गोदावरीवारिपरिचय-श्रीस्त्वयोर्ग्रहणम् । हेत्वन्तराणाम् अन्येषां दाहजनकानाम् । विषमाद्यलङ्कारा अप्यत्र सन्तीति विभावनीयम् ।

( ९५ ) कथं सद्योग इति दर्शयति—अत्रेति । पूर्वोद्ध इत्यर्थः, सर्वेषां चन्दनक्ष्मा-भृज्जन्मादीनाम् । मत्तादीनां मत्तत्वादीनामित्यर्थः, अशोभनानां 'सर्वेषां हेतूनाम्' इति पूर्वेणान्वयः ।

सदसद्योगो यथा—

( ५६ ) 'शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे ॥'

( ५७ ) इह केचिदाहुः—'शशिप्रभृतीनां शोभनत्वं खलस्याशोभनत्वं चेति सदसद्योगः' इति ।

( ५८ ) अन्ये तु—'शशिप्रभृतीनां स्वतः शोभनत्वं धूसरत्वादीनां त्वशोभनत्वमिति सदसद्योगः ।' अत्र हि शशिप्रभृतिषु धूसरत्वादेरत्यन्तमनुचितत्वमिति विच्छित्तिविशेषस्यैव चमत्कारविधायित्वम् ।

( ५६ ) अथावशिष्टं सदसद्योगमुदाहरति—शशीति । भर्तृहरिकृते नीतिशतके पद्यमिदम् । शशी चन्द्रः, दिवसेन दिनारम्भेण धूसरो निस्तेजाः । कामिनी कान्ता गलितं नष्टं यौवनं तारुण्यं यस्याः सा तादृशी । सरः तड़ागः विगतानि निरस्तानि वारिजानि पद्मानि यस्मात्तथोक्तम् । शोभना आकृतिर्नासिकाद्यङ्गनिवेशपूर्विकाऽङ्गरमणीयता यस्य तस्य अनक्षरं विद्याहीनं मुखं वदनं मूकत्वमित्यर्थः । धनपरायणः धनलुब्धः प्रभुः राजा । सज्जनः सततं निरन्तरं दुर्गतः दरिद्रः 'निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः' इत्यमरः । खं छिद्रं लाति गृह्णातीति खलो दुष्ट इत्यर्थः, नृपाङ्गनगतः राजप्रासादप्रसिद्धः । एतानि सप्त मे मम मनसि बाणाग्राणि ।

'क्ष्वेडाशङ्कुशरे शल्यं ना श्वाविन्मदनद्रुमे' इति रभसः ।
'शल्यं तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडेषुतोमरे' ।
मदनद्रुश्वाविधोर्ना ················इति मेदिनी च ।

पृथ्वीच्छन्दस्तल्लक्षणन्तु—'पृथ्वी जसौ जसौ यलौग् वसुनवकौ' इति । अत्र दिवसधूसरशशिरूपे मनोदुःखहेतौ सत्येव गलितयौवनादिविशिष्टं कामिन्यादिकमपि मनोदुःखहेतुत्वेनोपात्तमिति समुच्चयः ।

( ५७ ) सदसद्योगमुपपादयितुमुत्थापयति—इहेति । शशिप्रभृतीनां चन्द्रादीनाम् । इति एवं सदसद्योगः शोभनाशोभनमेलनम् । इत्थमग्रेऽपि ।

( ५८ ) अलङ्कारसर्वस्वकाराभिप्रायं स्पष्टयति—अन्ये त्विति । स्वतः स्वभावतः दिवसधूसरत्वाद्यसत्त्वे इत्यर्थः । इति शोभनाशोभनात्मनां कारणानां योगादिति शेषः ।

ननु शशिप्रभृतीनां शोभनत्वं, खलस्य चाशोभनत्वमित्येवं सदसद्योगः कथं नाभ्युपेयत इत्यत आह—अत्रेति । हि यस्मात् । धूसरत्वादेरित्यत्रादिपदेन गलितयौवनत्वविगतवारिजत्वानक्षरत्वधनपरायणत्वसततदुर्गतत्वरूपाणां विशेषधर्माणां परिग्रहः । अनुचितत्वम् अशोभनत्वम् । तथाहि—उज्ज्वलमूर्त्तेस्तस्य दिवसधूसरत्वमनुचितम् । एवं गलितयौवनाया कामवत्त्वं कामिन्या गलितयौवनत्वं वा अनुचितम् । एवं सरसो वारिशून्यत्वम्, शोभनाकृतेर्मूर्खस्य विद्यया शून्यत्वम्, तथा प्रभोर्धनपरायणत्वं धनपरायणजनस्य प्रभुत्वं वा, सज्जनस्य सततदुर्गतत्वं सततदुर्गतस्य सज्जनत्वं वा, नृपाङ्गन-

( ५९ ) 'मनसि सप्तशल्यानि मे' इति सप्तानामपि शल्यत्वेनोपसंहारश्च। 'नृपाङ्गनगतः खलः' इति तु क्रमभेदाद्दुष्टत्वमावहति सर्वत्र विशेष्यस्यैव शोभनत्वे प्रक्रमादिति।

( ६० ) इह च खलेकपोतवत्सर्वेषां कारणानां साहित्येनावतारः। समाध्यलङ्कारे त्वेककार्यं प्रति साधके समग्रेऽप्यन्यस्य काकतालीयन्यायेनापतनमिति भेदः।

( ६१ ) 'अरुणे च तरुणि नयने तव मलिनं च प्रियस्य मुखम्।
मुखमानतं च सखि ते ज्वलितश्चास्यान्तरे स्मरज्वलनः ॥'

गतस्य खलत्वं, खलस्य नृपाङ्गनगतत्वं वा अनुचितमित्यर्थः। इति इत्थं यो विच्छित्तिविशेषः चारुत्वातिरेक इत्यर्थः, तस्यैव चमत्कारविधायित्वम्, न पुनः केचिदित्यादिनाभिहितसदसद्योगस्य चमत्कारविधायित्वमिति एवकारपदार्थः।

( ५९ ) नन्वेकपद्यमध्यान्तःपातितत्वरूपेण यथाकथञ्चित् सदसद्योग एव कथं न स्यादित्यत आह—मनसीति। अपि चेति चार्थः, उपसंहारः समाप्तिः, अस्य चाग्रिम 'आवहति' इति क्रियायां कर्तृत्वेन सम्बन्धः। प्रस्तुतक्रमस्य विशेष्यस्य अन्यत्र सर्वत्र शोभनत्वं विशेषणस्य चाशोभनत्वमित्यस्य प्रस्तुतमार्गस्य भेदः पार्थक्यं तस्मात् दुष्टत्वं भग्नप्रक्रमत्वदोषम् आवहति त्वदीयसिद्धान्ते जनयति; तथा च 'नृपाङ्गनगतः खलः', इत्यत्र नृपाङ्गनगतत्वेन शोभनत्वं खलत्वेन तु अशोभनत्वमितिरीत्या सदसद्रूपतासमर्थनेऽपि तस्मिन्नंशे नायमलङ्कारः, किन्तु तत्र स्वतोऽशोभनस्य खलस्य पाठात् प्रक्रमभङ्गदोष एवेतिभावः। सर्वत्र 'शशी दिवसधूसरः' इत्यादौ विशेष्यस्यैव न पुनर्धूसरत्वादिविशेषणस्येत्यर्थः। प्रक्रमात् 'अतः—नृपाङ्गनमसद्युतमिति पाठोऽदुष्ट इति शेषः'। अस्मत्सिद्धान्ते तु विशेष्यविशेषणयोरेव सदसतोर्योगत्वेन सदसद्योग इति प्रतिपादनात् धूसरत्वादिविशेषणानामपि समस्तविचाराधीनत्वात् शश्यादौ धूसराद्ययुक्तविशेषणानामेव प्रस्तुते खले 'नृपाङ्गनगतः' इत्ययुक्तविशेषणेनैव समापनात् कथञ्चिदपि न भग्नप्रक्रमत्वदोषावसरः, नापि पाठभेदकल्पनञ्चेत्यलङ्कारसर्वस्वकारा आहुरिति पूर्वेण सम्बन्धः। अत्र पूर्वं केचिदित्यनेनोक्तम् अन्ये तु इत्यादिना खण्डनमेव कृतम्, अस्मिन् पक्षे च दोषमपि न प्रदर्शितं ग्रन्थकृताऽतोऽलङ्कारसर्वस्वकृन्मतमेव स्वमतमित्यवगम्यते।

( ६० ) एककारणादेव सुकरे कार्ये दैवात् कारणान्तराऽऽपतनरूपात् समाध्यलङ्कारादस्य को भेद इति दर्शयितुमाह—इह चेति। कारणसमुच्चये इत्यर्थः। साहित्येन मिलितत्वेन अवतार उपस्थितिः। साधके कारणे समग्रेऽपि पर्याप्तेऽपि अन्यस्य साधकान्तरस्य (क)काकतालीयन्यायेन अप्रतिसंहतत्वेन आपतनम् उपस्थापनम्। तथा च यत्र कार्यविशेषं मिलितान्येव कारणानि जनयन्ति स समुच्चयस्य विषयः, यत्र तु एकस्मिन् कारणे फलसाधनायानुष्ठीयमाने दैवादुत्पन्नेन कारणान्तरेण तत्फलस्य सुकरत्वं स समाधिरिति भावः। स्पष्टञ्चैतद्विवरणे।

( ६१ ) गुणयोः क्रिययोश्च साहित्ये द्वितीयतृतीयभेदौ समुच्चयौ लाघवायैकत्रैव

( क ) अयं न्यायः—संयोगवशेन यत्कार्यं सम्पद्यते तत्रैव। काक उड्डीनः तालफलमपि पतितम्, तत्र कथयन्ति जनाः—काकेन तालफलं पातितमिति, इदमेवन्यायस्वरूपम्।

( ६२ ) अत्राद्येऽर्थे गुणयोर्यौगपद्यम्, द्वितीये क्रिययोः ।

( ६३ ) उभयोर्यौगपद्ये यथा—

( ६४ ) 'कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः ।
पतितं च महीपतीन्द्र ! तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥'

( ६५ ) 'धुनोति चासिं तनुते च कीर्तिम् ।'

दर्शयति—अरुणे इति । प्रथायकोपवर्ती प्रति तत्सख्याः कथनमिदम् । हे तरुणि ! तव नयने लोचनयुगलम्, अरुणे रक्ते जाते इति शेषः' प्रियस्य स्वकान्तस्य च मुखं मलिनं विच्छायं जातम् । तथा हे सखि ! ते तव मुखम् आननम् अवनम्रीभूतञ्च, अस्य तव कान्तस्य अन्तरे हृदये स्मरज्वलनः कामाग्निः ज्वलितश्च । अत्र साहित्यद्योतनाय चत्वारश्चकाराः । उद्गीतिश्छन्दः ।

( ६२ ) लक्ष्यं संयोजति—अत्रेति । गुणयोः अरुणत्वमलिनत्वयोः यौगपद्यं साहित्यम् । द्वितीये 'अर्द्धे' इति पूर्वेण सम्बन्धः, क्रिययोः आनमनज्वलनयोः यौगपद्यमिति पूर्वतोऽनुवर्तते । अत एवात्र प्रथमार्द्धे गुणसमुच्चयः, उत्तरार्द्धे तु क्रियासमुच्चय इत्याशयः । द्विवचनञ्चात्राविवक्षितम्, तेन—

प्रादुर्भवति पयोदे कज्जलमलिनं बभूव नभः ।
रक्तं च पथिकहृदयं कपोलपाली मृगीदृशः पाण्डुः ॥

इत्यादौ बहूनामपि मलिनत्वरक्तत्वपाण्डुत्वगुणानां समुच्चयस्य । तथा—

उदितं मण्डलमिन्दोः रुदितं सद्यो वियोगिवर्गेण ।
मुदितं च सकलललनाचूडामणिशासनेन मदनेन ॥

इत्यादौ बहूनामुदयनरोदनमोदनरूपाणां क्रियाणां समुच्चयस्य च सङ्ग्रहः ।

( ६३ ) गुणयोः क्रिययोश्च वैयधिकरण्येन यौगपद्यं प्रदर्श्य सम्प्रति वैयधिकरण्येनैव गुणक्रिययोः यौगपद्यमेकोदाहरणेनैव दर्शयितुमाह—उभयोरिति । उभयोः गुणक्रिययोरित्यर्थः, यौगपद्ये समुच्चय इति शेषः ।

( ६४ ) कलुषञ्चेति । राजस्तुतिरियम् । महीपतीनां राज्ञामिन्द्रस्तत्सम्बुद्धौ हे महीपतीन्द्र राजाधिराजेत्यर्थः, सितपङ्केरुहसोदरा स्वभावतः श्वेतकमलतुल्या श्रीः शोभा यस्य तत्तथाविधं तव चक्षुर्नेत्रम्, अहितेषु शत्रुषु विषये, अकस्मात् दैवात् कलुषं कषायं क्रोधादीषद्रक्तमित्यर्थः । तेषां शत्रूणां वपुषि शरीरे आपदां विपत्तीनां कटाक्षैः वक्रदृष्टिभिः ( कर्तृभिः ) प्रस्फुटं स्पष्टं यथा स्यात्तथा पतितञ्च आपद्भिरुपनतञ्चेत्यर्थः । मालभारिणीछन्दस्तल्लक्षणन्तु—'विषमे ससजा गुरू अनोजे सभरायश्च तु मालभारणीयम्' इति ।

अत्र कलुषत्वं गुणः पतनञ्च क्रियेत्युभयोर्यौगपद्यं चकारद्वयगम्यमिति समुच्चयालङ्कारः ।

( ६५ ) रुद्रटस्तु वैयधिकरण्ये एव ( आश्रयभेदे एव ) समुच्चय इत्याह तन्मतं दूषयितुमुत्थापयति—धुनोतीति । अस्य मत्पूरितपादत्रयं समस्तं पद्यं यथा—

भृत्यादिवर्गैश्च पराभवं स्वं श्रुत्वा च शत्रोर्बलनाशनाय ।
धुनोति चासिं तनुते च कीर्तिं राज्यञ्च प्राप्नोति विजित्य सर्वम् ॥

( ६६ ) इत्यादावेकाविकरणेऽप्येष दृश्यते ।

( ६७ ) न चात्र दीपकम् , एते हि गुणक्रियायौगपद्ये समुच्चयप्रकारा नियमेन कार्यकारणकालनियमविपर्ययरूपातिशयोक्तिमूलाः, दीपकस्य चातिशयोक्तिमूलत्वाभावः ।

( ६८ ) **समाधिः सुकरे कार्ये दैवाद्वस्त्वन्तरागमात् ॥ ८५ ॥**

यथा—

( ६९ ) मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥'

---

इयमपि राजस्तुतिरेव । अयं राजा असिं खड्गं धुनोति कम्पयति च कीर्तिं तनुते करोति च । धनुःसञ्चालनं तथा शत्रुविजयेन कीर्त्तिविस्तारं च द्वयं युगपदेव सम्पादयतीत्यर्थः ।

( ६६ ) इत्यादाविति । एष गुणक्रिययोः समुच्चयः तस्माद्दृष्टमतमसमीचीनमेवेति ध्वनितम् । एतेन गुणक्रिययोः समुच्चयस्य वैयधिकरण्य एवाधिक्यम् , सामानाधिकरण्ये तु क्वाचित्कमिति च ध्वनितम् ।

( ६७ ) ननु 'धुनोति चासिम्' इत्युदाहणे एकस्मिन् कर्तृकारकेऽनेकक्रियासम्बन्धादनेकक्रियास्वेककारकरूपदीपकालङ्कारोऽपि कथन्न ? न च 'अथ कारकमेकं स्यादनेकासु क्रियासु चेत्' इत्यत्र ।बहुवचनोपादानेनात्र तत्प्रसक्तिरिति वाच्यम् , तस्य विवक्षितत्वाभावात् । एवञ्च दीपकस्यापि प्रसक्तौ सङ्करः स्यादित्याशङ्क्य निषिध्यति—नचेत्यादिना । अत्र 'धुनोति चासिम्' इत्यादौ । एते उदाहृतस्वरूपाः, हि यतः, गुणक्रियाश्च गुणाः याश्चेति गुणक्रियास्तासां यौगपद्यं साहित्यं तस्मिन् तथोक्ते गुणक्रियायौगपद्ये । समुच्चयप्रकारा समुच्चयभेदाः नियमेन चमत्कारविशेषाधायावश्यम्भावेन, कार्यकारणयोः साध्यसाधकयोः यः कालनियमः पौर्वापर्यं कारणस्य प्राग्वर्त्तित्वं कार्यस्य च तदुत्तरवर्त्तित्वमित्येवं नियम इत्यर्थः,तस्य विपर्यये विरुद्धे रूपं यस्याः सा एवम्भूता अतिशयोक्तिः मूलं येषां ते तादृशाः । एवञ्च उक्तस्थले कीर्तिविस्तारं प्रति असिकम्पनस्य कारणत्वात् उभयोः पौर्वापर्यस्य विद्यमानत्वेऽपि यौगपद्यविवक्षणादतिशयोक्तिस्तन्मूलकत्वाच्च क्रियासमुच्चयालङ्कार एवेति भावः । एवञ्चोक्तरूपातिशयोक्त्युपलम्भे क्रियासमुच्चयः, तदनुपलम्भे तु दीपकमिति स्फुटमुभयोः पार्थक्यम् ।

( ६८ ) समुच्चयस्वरूपे विविधहेतुप्रस्तावः तदुक्तमेव समाध्यलङ्कारं निरूपयति—समाधिरिति । दैवात् अकस्मात् , वस्त्वन्तरस्य हेत्वन्तरस्य आगमात् आपतनाद्धेतोः कार्ये सुकरे अनायाससाध्ये सति, सम्यक् आधिः आधानम् उत्पादनमितिव्युत्पत्त्या समाधिर्नाम अलङ्कारः स्यादिति शेषः । तथा च एककारणजन्यकार्यस्य आकस्मिकहेत्वन्तरसमवधानाहितं सौकर्यं समाधिरित्यर्थः । सौकर्यञ्च कार्यस्यानायासेन निष्पत्त्या साङ्गनिष्पत्त्या चेति बोध्यम् ।

( ६९ ) मानमिति । काव्यादर्शे द्वितीयपरिच्छेदे दण्डिना पठितं पद्यमिदम् । कश्चित् स्वप्रियाया मानभङ्गप्रकारं सुहृदं प्रति वर्णयति—अस्या, मानिन्याः प्रियायाः, मानं

(७०) प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि ।
तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः ॥ ८६ ॥

(७१) तस्यैवेति रिपोरेव । यथा मम—

(७२) 'मध्येन तनुमध्या मे मध्यं जितवतीत्ययम् ।
इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः ॥'

'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये' इत्युक्तलक्षणं निराकर्त्तुं खण्डयितुं तस्याः पादयोः पतिष्यतो मे मम उपकाराय, दिष्ट्या भाग्येन इदं प्रतिपादितस्वरूपं घनस्य मेघस्य गर्जितं गर्जनम् उदीर्णम् उद्भूतम् उत्पन्नमित्यर्थः । मानिन्याः पादयोः पतनमपि मानभङ्गस्य हेतुः, तदुक्तम्:—

'साम भेदं च दानं च नत्युपेक्षे रसान्तरम् ।
तद्भङ्गाय पतिः कुर्यात् षडुपायानिति क्रमात्' ॥ इति ।

एवञ्च पादपतनमात्रेण तस्या माननिराकरणमसम्भव एवासीत्, किन्तु घनगर्जनाकर्णनात् तस्या मदनाधीनत्वेनासौ सुलभः सञ्जात इत्यभिप्रायः ।

अत एवात्र पादपतनरूपहेतुना आरब्धस्य मानापगमरूपकार्यस्य आकस्मिकघनगर्जितरूपहेत्वन्तरयोगेन सुकरत्वात्समाधिरलङ्कारः ।

(७०) स्वाभिलषितकार्यस्य दुष्करत्वे यथा समाधिस्तद्वदेव कोऽप्यन्योऽलङ्कारो भवेन्न वेति जिज्ञासायां प्रत्यनीकालङ्कारं लक्षयति–प्रत्यनीकेति । रिपोः प्रतिपक्षिणः प्रतीकारे प्रत्यपकारे अशक्तेन दुष्करतया असमर्थेन जनेन कृत इति शेषः, तदीयस्य प्रतिपक्ष्युपभुक्तस्य वस्तुनः तिरस्कारः तिरस्करणम्, यदि तस्यैव प्रतिपक्षिण एव उत्कर्षसाधकः स्तुतिपर्यवसायको भवेत्, तदा प्रत्यनीकं (क) प्रत्यनीकनामालङ्कारः स्यादिति शेषः ।

उक्तञ्चान्येनाऽप्येतल्लक्षणम्—

'बलिनः प्रतिपक्षस्य प्रतीकारे सुदुष्करे । यस्तदीयतिरस्कारः प्रत्यनीकं तदुच्यते' ॥ इति

(७१) तस्यैवेत्यस्य विवरणं रिपोः प्रतिपक्षिण एवेति ।

(७२) मध्येनेति । तनु कृशं मध्यम् उदरं यस्याः सा तनुमध्या नायिका, मे मम सिंहस्य मध्यम् उदरम् (कर्म) मध्येन कृशोदरेण सिंहोदरापेक्षया नायिकायां उदरस्य कृशताधिक्येन जितवती; इत्यस्माद्धेतोः, अयं हरिः सिंहः अस्या नायिकायाः प्रतिकाराक्षमः कुचावेव कुम्भौ तयोर्निभौ तत्तुल्यौ नायिकारूपस्य रिपोरेवौपम्येनोत्कर्षप्रत्यायकावित्यर्थः इभकुम्भौ हस्तिगण्डौ भिनत्ति नखराघातेन विदारयति ।

(क) प्रत्यनीकमित्यत्र प्रतिशब्दः 'प्रतिः प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः' इत्यमरेण 'प्रतिः प्रतिनिधिप्रतिदानयोः १।४।९२ इति पा० स्मृत्या च प्रतिनिध्यर्थः, 'अनीकोऽस्त्री रणे सैन्ये' इति मेदिन्युक्त्या च अनीकं सैन्यम् । तथा च प्रत्यनीकशब्देन सैन्यप्रतिनिधिरित्यभिधीयते, तत्सादृश्याच्च प्रस्तुतार्थे लाक्षणिकप्रयोग. । एवञ्च प्रत्यनीकमिति लाक्षणिकमलङ्कारनामेति फलितम् । अत्र अनीकात् प्रतीतिविग्रहे 'अपदिशम्' इतिवत् 'अव्ययं विभक्ति' २।१।६ इति पा० सूत्रे अव्ययमिति योगविभागेन अव्ययीभावसमासः । अथवा 'भूतपूर्वे' इतिवत् 'सुपा' २।१।४ इति पा० सूत्रेण सुप्सुप्समासो ज्ञेयः ।

( ७३ ) प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम् ।
निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते ॥ ८७ ॥

क्रमेण यथा—

( ७४ ) 'यस्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरम्—' इत्यादि (५८३ पृ०) ।

( ७५ ) 'तद्वक्त्रं यदि, मुद्रिता शशिकथा; हा हेम सा चेद्द्युतिः;
तच्चक्षुर्यदि; हारितं कुवलयैः; स्तच्चेत्स्मितं, का सुधा ? ।

---

अत्र सिंहमध्यविजयित्वात्प्रस्तुतनायिका सिंहरिपुः, सिंहश्च साक्षात् प्रमद्वारूपत्वेन तन्नायिकाया प्रत्यपकर्तुमसमर्थः अतो रिपुसम्बन्धित्वेन इभकुम्भौ भिनत्ति तद्भेदनञ्च नायिकायाः कुचकुम्भस्तुतिसाधकत्वेन तस्या अपि स्तुतिसाधकमेवेति प्रत्यनीकालङ्कारः ।

तथा इभकुम्भयोः स्तनकुम्भस्योपमानत्वेन लोके प्रसिद्धत्वम् , अत्र च कुचकुम्भनिभा-विस्यनेनोपमेयत्वप्रतिपादनादनुपदवक्ष्यमाणप्रतीपालङ्कारश्चेत्युभयोरेकाश्रयानुप्रवेशरूपः सङ्करालङ्कारः ।

उदाहरणान्तरं यथा—

रे रे मनो मम मनोभवशातनस्य पादाम्बुजद्वयमनारतमानमन्तम् ।
किं मां निपातयसि संसृतिगर्तमध्ये नैतावता तव गमिष्यति पुत्रशोकः ॥ इति ।

( ७३ ) 'मध्येने' त्यस्योत्तरार्द्धं प्रतीपालङ्कारापातात्तत्प्रकरणमादाय प्रतीपालङ्कारं निरूपयति—प्रसिद्धस्येति । प्रसिद्धस्य प्रख्यातस्य उपमानस्य सादृश्यप्रतियोगित्वेन लोके प्रसिद्धिमुपगतस्य वस्तुनः, उपमेयत्वप्रकल्पनं सादृश्यानुयोगित्वप्रकल्पनम् , वा अथवा तथाविधोपमानस्यैव निष्फलत्वाभिधानं व्यर्थत्वप्रतिपादनं प्रतीपमिति प्रतीप-नामालङ्कारः कथ्यते प्रतिपाद्यते ।

प्रतिगच्छन्ति आपो यस्मिन्निति प्रतीपं निम्नोन्नतस्थलम् , तत्सादृश्यात्पूर्ववदेवा-लङ्कारे लक्षणा । 'ऋक्पूरब्धूःपथामानक्षे' ५।४।७४ इति पा० सूत्रेण समासान्तोऽप्रत्ययः, 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' ६।३।९७ इति पा० सूत्रेण ईदादेशः । प्राञ्चोऽपि प्रतीपादयः शब्दा गौणा एवेत्याहुः ।

अयञ्च प्रसिद्धोपमानस्योपमेयत्वकल्पनेनैकः, उपमानस्य निष्फलत्वाभिधानेन द्वितीय इति द्विविध इत्यवगन्तव्यम् ।

( ७४ ) तत्राद्योदाहरणं दर्शयति—यस्त्वन्नेत्र इति । ( १०७८ पृ० ) व्याख्यातमि-दम् । अत्र क्रमशः नेत्रमुखगत्युपमानत्वेन प्रसिद्धानाम् इन्दीवर-शशि-राजहंसगतीनां तत्तदुपमेयत्वाभिधानात् प्रतीपालङ्कारः । मालारूपोऽयम् , केवलरूपस्तु 'इभकुम्भा' विस्युदाहरण एव ज्ञेयः ।

( ७५ ) अथ द्वितीयभेदोदाहरणं दर्शयति—तद्वक्त्रमिति । हनुमन्नाटके सीतां ध्या-यतो रावणस्योक्तिरियम् । यदि तस्याः सीताया वक्त्रं मुखं 'विद्यते' इति शेषः । एवमुत्त-रत्र । तदा शशिकथा चन्द्रोत्कर्षप्रख्यापिका चर्चा मुद्रिता सङ्कुचिता नष्टेति यावत् ; सा सीतासम्बन्धिनी यदिशरीरशोभा चेद्विद्यते, तदा हेम सुवर्णं हा शोभाविषये चिन्त्यमि-त्यर्थः । तस्याः चक्षुर्विद्यते, तदा कुवलयैः नीलोत्पलैः हारितं पराजितम् । तत् सीता-

धिक्कन्दर्पधनुः, भ्रुवौ यदि च ते, किं वा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविमुखः सर्गक्रमो वेधसः ॥'

( ७६ ) अत्र वक्त्रादिभिरेव चन्द्रादीनां शोभातिवहनात्तेषां निष्फलत्वम् ।

**( ७७ ) उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः ।**
**कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे ॥ ८५ ॥**

यथा—

( ७८ ) 'अहमेव गुरुः सुदारुणानामिति हालाहल ! तात ! मा स्म दृप्यः ।
ननु सन्ति भवादृशानि भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥'

( ७९ ) अत्र प्रथमपादेनोत्कर्षातिशय उक्तः । तदनुक्तौ तु नायमलङ्कारः ।
यथा—'ब्राह्मणो वदति' इत्यादि ।

सम्बन्धि स्मितं मन्दहसितं चेद् विद्यते, तदा का नाम सुधा अमृतम् अपि तु कापि नेत्यर्थः, 'पीयूषममृतं सुधा' इत्यमरः । तथा यदि ते सीतासम्बन्धिन्यौ भ्रुवौ भ्रुकुटिद्वयं विद्येते, तदा कन्दर्पधनुः कामचापः धिक् गर्हामीत्यर्थः । वा अथवा बहु अधिकं किं ब्रूमहे कथयामः, यत् वेधसो ब्रह्मणः सर्गक्रमः सृष्टिप्रणाली पुनरुक्तवस्तुन एकविधापरपदार्थरचनात् विमुखः विपरीतो भवति, तत् सत्यं यथार्थम् , एष सृष्टिनियमः यदेकविधं पदार्थद्वयं प्रजापतिर्न सृजतीति स यथार्थं एवेत्यर्थः, शशिप्रभृतिभ्यस्तन्मुखादीनामतिश्रेष्ठत्वेन एकविधत्वाभावादित्याशयः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक् ।

( ७६ ) लक्ष्यं संयोजयति—अत्रेति । शोभातिवहनात् शशिप्रभृतिशोभातिरेकेण धारणात् , तेषां शशिप्रभृतीनाम् , निष्फलत्वं व्यर्थत्वं ध्वनितमिति शेषः ।

( ७७ ) नायं द्विविध एव किन्तु येन वस्तुना असाधारणगुणसम्बन्धादुपमानत्वमपि पूर्वं चानुभूतं तस्य वस्तुनः उपमानत्वकल्पनायामपि प्रतीपालङ्कारो भवतीति काव्यप्रकाशकृता उक्तम्, तदेव लक्षयति—उक्त्वेति । अपि चेति चार्थः । अत्युत्कृष्टस्य अत्यन्तप्रधानस्य, वस्तुनो विषयस्य अत्यन्तमुत्कर्षम् अत्युत्कृष्टत्वम् उक्त्वा कथयित्वा, उपमानत्वे कल्पिते स्थापितेऽपि 'तदपकर्षप्रत्यायनम्' इति शेषः, केचित् आलङ्कारिकाः प्रतीपं प्रतीपालङ्कारम् ऊचिरे कथयामासुः ।

( ७८ ) अहमिति । खलपरिगृहीतस्य कस्यचित्कथनमिदम् । तातेत्युपहाससम्बोधनम् , अथवा 'तातोऽनुकम्प्ये जनके' इति विश्वकोषात् सानुकम्पसम्बोधनम् । हे तात ! हे हालाहल उत्कटविष 'गोनास गोनसौ हालाहलं हालाहलं विषम्' इति त्रिकाण्डशेषः । अहमेव सुदारुणानां महाभयङ्कराणां मध्ये 'दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्' इत्यमरः, गुरुः श्रेष्ठ इति त्वं मा स्म दृप्यः गर्वं मा कृथाः । तत्र कारणं दर्शयति—नन्वित्यादिना । ननु यतः हे हालाहल ! अस्मिन् भुवने लोके दुर्जनानां खलानां वचनानि वाक्यानि भवानिव दृश्यन्त इति भवादृशानि भवदुपमेयानि भूयः पुनः अथवा बहु यथा स्यात्तथा सन्ति, तेन स्वस्याद्वितीयत्वं मत्वा तथाविधाहङ्कारोऽयुक्त इत्याशयः । मालभारिणी छन्दस्तल्लक्षणन्तूक्तम् ।

( ७९ ) लक्ष्यं सङ्गमयति—अत्रेति । उक्तोदाहरण इत्यर्थः । उत्कर्षातिशयः हालाहल-

(८०) मीलितं वस्तुनो गुप्तिः केनचित्तुल्यलक्ष्मणा ।

(८१) अत्र समानलक्षणं वस्तु किञ्चिदागन्तुकम् । क्रमेण यथा—

(८२ 'लक्ष्मीवक्षोजकस्तूरीलक्ष्म वक्षःस्थले हरेः ।
ग्रस्तं नालक्षि भारत्या भासा नीलोत्पलाभया ॥'

(८३) अत्र भगवतः श्यामा कान्तिः सहजा ।

---

स्यात्युत्कटदुःखकारणत्वेनानौपम्योक्तिम् लोऽतिशय इत्यर्थः । दुःखकारणेऽत्यन्तमुत्कृष्टस्य हालाहलस्य 'सुदारुणानां गुरुः' इत्यनेन अतीवोत्कृष्टत्वमभिधाय 'भवादृशानि' इत्यनेन उपमानत्वप्रत्यायनादुक्तालङ्कारः । तदनुक्तौ उत्कर्षातिशयानभिधाने । ब्रह्मेव प्रजापतिरिव । अत्र चोपमैव न तु प्रतीपालङ्कारः, उपमानभूतस्य ब्रह्मणः उत्कर्षातिशयाप्रतिपादनादस्तिभावः ।

(८०) पदार्थस्य प्रतिरूपत्वे यथा प्रतीपालङ्कारस्तथा अनुरूपत्वे सति मीलितालङ्कारो भवतीति दर्शयति—मीलितमिति । तुल्यं समानं लक्ष्म चिह्नं यस्य तेन सदृशरूपेणेत्यर्थः 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः, केनचित् पदार्थेन, वस्तुनः अनुरूपस्यवन्तरस्य गुप्तिः गोपनम् अलक्षितत्वमिति यावत् मीलितं तन्नामालङ्कारो भवेत । मीलितमिति भावे क्तः, एवं च मीलितं यत्किञ्चिद्वस्तु वस्त्वन्तरेण गुप्तमित्यन्वर्थेयं संज्ञा । तथा च समानचिह्नयोरपि वस्तुनोरेकस्य स्वभावतः प्रबलतया तेन यदि अन्यस्य गोपनम् (अन्तर्भावनम् अनुद्भवः अलक्षितम्) भवेत् तदा मीलितमिति फलितम् । व्याजोक्त्यलङ्कारे वस्तुस्वभावजनितं न गोपनं किन्तु कथञ्चिदुद्भिन्नं वस्तु कश्चित् गोपयितुं यतते, अत्र तु वस्तु नोद्भिन्नं तस्यापि च गोपनं भवतीति ततो भेदः । नचाप नुतावतिव्याप्तिः स्यादिति वाच्यम्, उपमानोपमेयाभावात् । वस्तुतस्तु अपह्नुतौ निषेधसहितं व्यवस्थापनम् अत्र तु न तथेति स्पष्टं भेदः ।

(८१) अस्य द्वैविध्यमुपपादयति—अत्रेति । तुल्यलक्ष्मपदार्थमाह—समानलक्षणमिति । सहजं स्वाभाविकमित्यर्थः, आगन्तुकम् औपाधिकमित्यर्थः कारणविशेषसम्पर्कजनितमिति यावत् । तेनायं द्विप्रकारक इत्याशयः ।

अत एवाहुः काव्यप्रकाशकारा अपि—

'समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते ।
निजेनागन्तुना वाऽपि तन्मीलितमिति स्मृतम्' ॥ इति ।

(८२) तत्र प्रथमभेदोदाहरणं दर्शयति—लक्ष्मीति । हरेर्नारायणस्य वक्षःस्थले उरःस्थले, लक्ष्म्या वक्षोजौ कुचौ तयोः (आश्लेषसमये समर्पितम्) कस्तूरीलक्ष्म कस्तूरीचिह्नम्, (कर्म) नीलोत्पलस्य नीलपद्मस्य आभेवाभा यस्याः तया तादृश्या भासा हरेरेव देहकान्त्या, ग्रस्तं कवलितं गोपितमिति यावत, अत एव भारत्या लक्ष्मीसपत्नीरूपया सरस्वत्या, न अलक्षि तत्कस्तूरीचिह्नं नावलोकितम् । तेन सरस्वत्या मानो न विहित इत्याशयः ।

(८३) लक्ष्यं सङ्गमयति—अत्रेति । भगवतो नारायणस्य । कान्तिश्छविः । अत्र सहजो गुण उत्कृष्टः, कस्तूरीगतश्यामगुणस्तदपेक्षया अपकृष्टः, द्वयोः सादृश्यं तुल्यम् । तया च तुल्यरूपया शरीरकान्त्या श्यामकस्तूरीचिह्नस्य गोपनात् मीलितमिति भावः ।

(८४) 'सदैव शोणोपलकुण्डलस्य यस्यां मयूखैररुणीकृतानि ।
कोपोपरक्तान्यपि कामिनीनां मुखानि शङ्कां विदधुर्न यूनाम् ॥'

(८५) अत्र माणिक्यकुण्डलस्यारुणिमा मुखे आगन्तुकः ।

(८६) **सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः ॥ ८६ ॥**

यथा--

(८७) 'मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्चिताः ।
अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः ॥'

(८८) मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानम् । इह तूभयोस्तुल्यगुणतया भेदाग्रहः ।

प्रकाशकृता तु इदमुदाहृतम्—
'अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥'

अत्र प्रसिद्ध्या बलिष्ठेन लीलारूपपदार्थेन ( कर्त्रा ) स्वाभाविकसाधारणदृक्तरलतादिरूपचिह्नद्वारा मदरूपः पदार्थः ( कर्म ) गोपित इति मीलितालङ्कारः ।

( ८४ ) द्वितीयभेदमुदाहरति—सदैवेति । कस्याश्चिन्नगर्या वर्णनमिदम् । यस्यां नगर्याम्, शोणा रक्ता उपला रत्नानि येषु तथाविधानि यानि कुण्डलानि कर्णभूषणानि तेषां मयूखैः कान्तिभिः, सदैव सर्वस्मिन् काल एव अरुणीकृतानि रक्तिमानं प्रापितानि मानिनीनां मानवतीनां कामिनीनां मुखानि वदनानि कोपेन प्रणयक्रोधेन उपरक्तान्यपि रक्तप्रभत्वं गतान्यपि यूनां तरुणानां शङ्कां भयं न विदधुः चक्रुः, तथाविधकुण्डलकिरणविहित एवायं शोणिमेति तरुणानां निर्णयादित्याशयः। उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिश्छन्दः।

( ८५ ) लक्ष्यं सङ्गमयति—अत्रेति । अरुणिमा रक्तिमा । अत्र कुण्डलादागन्तुको राग उत्कृष्टः, तदपेक्षया कोपजनितरागः अपकृष्टः, सादृश्यं च द्वयोः तुल्यम् । तथा च तुल्यरूपया आगन्तुककुण्डलरागेण कोपजनितरागस्य गोपनात् मीलितमित्याशयः ।

( ८६ ) उक्तालङ्कारे गुणसाम्यप्रकरणोत्थानात् गुणसाम्ययुक्तमेव सामान्यं निरूपयति—सामान्यमिति । सदृशैः तुल्यैः गुणैः, प्रकृतस्य प्राधान्येन वर्णनीयस्य पदार्थस्य अन्यतादात्म्यम् अप्राधान्येन वर्णनीयपदार्थैक्यं सामान्यं तन्नामालङ्कारो भवेत् । सदृशगुणद्वारा प्रकृताप्रकृतपदार्थयोर्मेलनात् तयोरुभयोरपि एकतया प्रतीतौ सामान्यमिति फलितोऽर्थः । समानयोर्भावः सामान्यमिति व्युत्पत्तिः ।

( ८७ ) मल्लिकेति । मल्लिकाभिः तृणशून्यपुष्पैः आचिता भूषिता धम्मिल्लाः संयतकेशाः यासां ताः तथोक्ताः, 'तृणशून्यं तु मल्लिका' इत्यमरः तथा चारुभिः शुभ्रातिशयितत्वेन सुन्दरैः चन्दनैः चर्चिताः कृताङ्गलेपाः, अत एव अविभाव्या ज्योत्स्नातुल्यरूपत्वात् जनैः ज्योत्स्नातादात्म्येन तर्कयितुमयोग्याः, अभिसारिकाः प्रियसम्मिलनेच्छया सङ्केतस्थानगन्त्र्यः पूर्वोक्तस्वरूपा नायिकाविशेषाः, चन्द्रिकासु ज्योत्स्नासु 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः, सुखम् आनन्दपूर्वकं यथास्यात्तथा यान्ति व्रजन्ति ।

अत्र तुल्यशुभ्रगुणद्वारा प्राधान्येन वर्णनीयाया नायिकायाः अप्राधान्यायाः ज्योत्स्नायाश्च ऐकात्म्यावगमात् सामान्यालङ्कारः ।

( ८८ ) मीलितालङ्कारादस्य को भेद इति दर्शयति—मीलिते इति । समानरूपेण

**( ८९ ) तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः ।**

यथा—

( ९० ) 'जगाद वदनच्छद्मपद्मपर्यन्तपातिनः ।
नयन्मधुलिहः श्वैत्यमुदग्रदशनांशुभिः ॥'

( ९१ ) मीलिते प्रकृतस्य वस्तुनो वस्त्वन्तरेणाच्छादनम् । इह तु वस्त्वन्तरगुणेनाक्रान्तता प्रतीयत इति भेदः ।

**( ९२ ) तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुणः ॥ ९० ॥**

वस्तुना वस्त्वन्तरस्य गुप्तिरूपे मीलिते इत्यर्थः । तिरोधानं गोपनम् । इह तु सामान्यालङ्कारे तु उभयोः प्रस्तुताप्रस्तुतयोः । भेदाग्रहः भिन्नत्वेन अवगमाभावः इति भेदः । नच भ्रान्तिमता सङ्करः, तत्र स्मर्यमाणस्य आरोपः अत्र अनुभूयमानस्येति विशेषात् । रूपकप्रथमातिशयोक्त्योश्च उपमेयस्य उपमानतया प्रतीतिः, अत्र तु एकरूपतया प्रतीतिरिति ततोऽपि भेदो ज्ञेयः ।

( ८९ ) गुणप्रकरणात् गुणयुक्तमेव तद्गुणालङ्कारं लक्षयति—तद्गुण इति ।"गुणोऽप्रधाने रूपादौ मौर्व्यां सूत्रे वृकोदरे" इति कोशात् गुणशब्दोऽत्र रूपवाची बोध्यः । तथा च स्वगुणत्यागात् स्वरूपत्यागं विधाय, ल्यब्लोपे पञ्चमीयम् , अत्युत्कृष्टगुणस्य अत्यन्तोत्कर्षं स्वरूपस्य ग्रहः ग्रहणम्, तस्य उत्कृष्टगुणस्य गुणो यत्रेति व्युत्पत्त्या तद्गुणः तन्नामालङ्कारः ।

( ९० ) जगादेति । शिशुपालवधे द्वितीयसर्गे इन्द्रप्रस्थं शिशुपालं प्रति वा गन्तव्यमिति मन्त्रणायां श्रीकृष्णे उक्ते सति श्रीबलभद्र आहेति तत्र कविवर्णनेयम् । उदग्रा उन्नता ये दशना दन्तास्तेषाम्, अंशुभिः श्वेतमयूखैः, वदन मुखमेव छद्म कपट यस्य तथाविधं यत् पद्मं कमल तस्य पर्यन्तः प्रान्तभागः तत्र पतितुं शील येषां तान् मुखकमललोलुपानित्यर्थः, मधुलिहः भ्रमरान् श्वैत्यं शुभ्ररूपतां नयन् प्रापयन् सन् ( द्विकर्मकोऽयं धातुः ) जगाद उवाच ।

अत्र मधुलिड्भिः स्वीयश्यामरूपं त्यक्त्वा तदपेक्षया अत्यन्तोत्कर्षशुभ्ररूपग्रहणात्तद्गुणालङ्कारः ।

( ९१ ) नन्वस्यालङ्कारस्यापि उत्कृष्टगुणेन निकृष्टगुणस्य गोपनरूपात् मीलितालङ्कारात् को भेद इति जिज्ञासायामाह—मीलिते इति । वस्त्वन्तरेण समानोत्कृष्टगुणेन आच्छादनं तिरोधानम् , इह तु तद्गुणालङ्कारे तु वस्त्वन्तरगुणेन असमानेनेत्यभावः, आक्रान्तता अभिभूतता । सामान्यस्वगुणत्यागाभावः, अत्र तु तत्त्याग इति भेदः । भ्रान्तिमति स्मर्यमाणस्यारोपः अत्र च गृह्यमाणस्येति भेदः, भ्रान्तेर्निबन्धनाभावादपि भेदो ज्ञेयः ।

( ९२ ) तद्गुणविरुद्धमतद्गुणं लक्षयति—तद्रूपेति । "हेतौ सामीप्यादिरूपेऽन्यगुणग्रहणरूपे कारणे सत्यपि विद्यमानेऽपि, तद्रूपस्य तद्गुणस्य अननुहारः ग्रहणाभावस्तु तस्याधिकगुणस्यास्मिन् गुणा न सन्तीति व्युत्पत्त्या अतद्गुणः तन्नामालङ्कारो भवेत् ।

यथा—

( ९३ ) 'हन्त ! सान्द्रेण रागेण भृतेऽपि हृदये मम ।

गुणगौर ! निषण्णोऽपि कथं नाम न रज्यसि ॥'

( ९४ ) यथा वा—

( ९५ ) 'गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।

राजहंस ! तव सैव शुभ्रता चीयते न च न चापचीयते ॥'

( ९६ ) पूर्वत्रातिरक्तहृदयसंपर्कात् प्राप्तवदपि गुणगौरशब्दवाच्यस्य नायकस्य रक्तत्वं न निष्पन्नम्, उत्तरत्राप्रस्तुतप्रशंसायां विद्यमानायामपि गङ्गायमुनापेक्षया प्रकृतस्य हंसस्य गङ्गायमुनयोः संपर्केऽपि न तद्रूपता ।

( ९३ ) प्रस्तुतेन प्रस्तुतगुणग्रहणे, प्रस्तुतेन अप्रस्तुतगुणाग्रहणे चायं भवति, तत्राद्योदाहरणं दर्शयति—हन्तेति । वल्लभं प्रति कस्याश्चिदुक्तिरियम् । हन्तेति खेदे । गुणैः विद्याविनयादिगुणजकीर्त्या गौरः शुद्धस्तत्सम्बुद्धौ हे गुणगौर ! सान्द्रेण निबिडेन रागेण अनुरागरूपरक्तिम्ना भृतेऽपि सुसम्पन्नेऽपि मम हृदये चेतसि निषण्णोऽपि उपविष्टोऽपि त्वं कथं नाम न रज्यसि अनुरक्तो न भवसि नापि रक्तवर्णो भवसि चेत्यर्थः ।

अत्र रागसुसम्पन्नहृदयनिषण्णरूपे हेतौ सत्यपि तद्रक्तत्वाग्रहणात् अतद्गुणालङ्कारः ।

( ९४ ) द्वितीयभेदोदाहरणं दर्शयितुमाह—यथा वेति ।

( ९५ ) गाङ्गमिति । गणिकागृहे तपस्विगृहे च भिक्षयन्तं कञ्चन साधुं प्रति कस्यचिद्विदग्धस्योक्तिरियम् । हंसानां राजा राजहंसः 'राजदन्तादिषु परम्' २।२।३१ इति पाणिनीयसूत्रे राजदन्तादिषु पाठात् हंसशब्दस्य परनिपातः, तत्सम्बुद्धौ हे राजहंस पक्षिविशेष ! "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः, गङ्गाया इदं गाङ्गम् गङ्गासम्बन्धि अम्बु सलिलम्, सितं शुभ्रवर्णं यमुनाया इदं यामुनं यमुनासम्बन्धि, अम्बु सलिलञ्च कज्जलाभं कज्जलसदृशं कृष्णवर्णम्, उभयत्र गङ्गायमुनयोः सितासितम्बुनीत्यर्थः प्रयागतीर्थ इति तात्पर्यम्, मज्जतः स्नानं विदधतः तव सैव पूर्वैव शुभ्रता शरीरस्वच्छता न च चीयते गङ्गाजलसम्पर्केण न च वर्धते न च अपचीयते श्यामयमुनाम्बुसम्पर्केण न च ह्रसति एतन्महदाश्चर्यमित्याशयः । रथोद्धताच्छन्दः, तल्लक्षणन्तु 'रात्परैर्नलगै रथोद्धता' इति ।

( ९६ ) उभयोदाहरणे लक्षणं सङ्गमयति—पूर्वत्रेति । 'हन्त ! सान्द्रेण' इत्यादौ पूर्वस्मिन्नुदाहरण इत्यर्थः, अतिरिक्तम् अत्यन्तमनुरक्तम्, यद्वा अत्यन्तं शोणवर्णं यत् हृदयं तस्य सम्पर्कः सम्बन्धः तस्मात्, प्राप्तवदपि लब्धमुचितमपि, गुणगौरवाच्यस्य गुणगौरवपदाभिधेयस्य । न निष्पन्नं न जातम्, तेन अतद्गुणालङ्कार इत्याशयः । इत्थमत्र प्रस्तुतेन नायकस्य प्रस्तुतस्य हृदयस्य गुणाग्रहणं दर्शयित्वा प्रस्तुताऽप्रस्तुतगुणग्रहणरूपफलाभावमुत्तरपद्ये दर्शयति—उत्तरत्रेति 'गाङ्गमम्बु' इत्यादावुत्तरस्मिन्नुदाहरण इत्यर्थः, यद्यपि राजहंसोऽप्यप्रस्तुतस्तथापि सम्बोध्यत्वेऽपि पुरुषान्तरेणापेक्षिकं तस्य प्रस्तुत्वमिति दर्शयन्नाह—अप्रस्तुतप्रशंसायामिति ! गङ्गायमुनयोः गङ्गायमुनासम्बन्ध्यम्बुनोः न तद्रूपता तयार्गङ्गायमुनासम्बन्ध्यम्बुनोः रूपं तदिव रूपं यस्य तस्य भावः तत्ता न शुभ्ररूपता न वा श्यामरूपतेत्यर्थः ।

( ९७ ) अत्र च गुणाग्रहणरूपविच्छित्तिविशेषाश्रयाद्विशेषोक्तेर्भेदः, वर्णान्तरोत्पत्त्यभावाच्च विषमात् ।

( ९८ ) **संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा ।**
**कयापि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते ॥ ९१ ॥**

( ९९ ) सूक्ष्मः स्थूलमतिभिरसंलक्ष्यः । अत्राकारेण यथा—

( १०० ) 'वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥'

---

( ९७ ) नन्वेवमपि हेतौ सति फलाभावरूपा विशेषोक्तिरेव किं न स्यादित्याशङ्कायामाह—अत्र चेति । अतद्गुणे चेत्यर्थः । अत्र त्वर्थे चो बोध्यः । गुणस्याग्रहणं तद्रूपो यो विच्छित्तिविशेषश्चमत्कारातिशयस्तस्य आश्रयात् अवलम्बनात् । तथा च विशेषोक्तौ सामान्यत एव फलाभावः, इह तु गुणाग्रहणरूपफलाभावरूपो वैचित्र्यविशेष इति स्पष्टं भेद इत्याशयः ।

ननु कार्यस्य कारणगुणविरोधिवशात् कार्यस्य कारणगुणाग्रहणं विषमालङ्कारेऽप्यस्ति, प्रकृते 'हन्त ! सान्द्रेण' इत्यादौ रागादिरूपस्य गुणस्य नायके सम्पर्काभावरूपकार्यसत्त्वेनातद्गुणस्य विषमालङ्कारत्वाविशेष एवेत्यत आह—वर्णान्तरेति । वर्णान्तरस्य रक्तविरोध्यन्यगुणस्य उत्पत्त्यभावात् अजननात्—विषमात् तन्नामकालङ्कारात् 'भेद' इति पूर्वतोऽनुवर्तते । विषमे कारणगुणेभ्यः कार्यगतविरुद्धगुणोक्तिः, अत्र च गुणोत्पत्त्यभाव एव; तथाचोक्तोदाहरणे नायकगतो रक्तविरोधिगौरो गुणो नोत्पन्नः किन्तु स्थित एवेत्यनयोर्विशेष इति भावः ।

आधुनिकास्तु—उभयत्रापि विषमालङ्कारप्राप्तिरेव नास्ति, नायकं राजहंसं प्रति नार्यंकाहृदस्य गङ्गायमुनाम्बुनोश्च हेतुत्वाभावात्, निषण्णादिक्रियायाः कार्यत्वेन तद्गतोऽपि कार्यत्वस्वीकारस्यानुचितत्वादिति वदन्ति ।

( ९८ ) इत्थं गुणयुक्तालङ्कारान् प्रतिपाद्य सम्प्रति दुरूहार्थयुक्तानलङ्कारान् प्रतिपादयितुं तत्र मुख्यतः प्रथमं सूक्ष्मालङ्कारं निरूपयति—संलक्षित इत्यादिना । पूर्वप्रसङ्गभेदसूचनार्थं च तुशब्दोपादानम् । यदर्थकोऽव्ययो यत्रशब्दः । एवञ्च आकारेण रूपादेरन्यथात्वमाकारः चेष्टाविशेषस्तेन, इङ्गितेन नेत्रभङ्ग्यादिरूपक्रियाविशेषेण वा संलक्षितः सम्यग्ज्ञातः, सूक्ष्मः सहृदयेतरज्ञानज्ञेयः कुशाग्रबुद्धिभिर्वेद्य इत्यर्थः अर्थो विषयः, कयापि भङ्ग्या विदग्धाचरणेन यत्र यत् सूच्यते सम्यग्ज्ञातवता पुरुषेण अन्यस्मै बोध्यते तत् सूक्ष्मज्ञानज्ञेयत्वादेव सूक्ष्मं तन्नामालङ्कार उच्यते अभिधीयते ।

( ९९ ) सूक्ष्मपदार्थं दर्शयति—सूक्ष्म इत्यादिना । स्पष्टम् । अत्र अनयोर्भेदयोर्मध्य इत्यर्थः ।

( १०० ) आकारेण संलक्षितस्य सूचनमुदाहरति—वक्त्रस्यन्दीति । कापि विदग्धा वयस्या सखी, तन्व्याः क्षीणाङ्ग्याः अन्यस्याः वयस्यायाः वक्त्रात् नायिकामुखात् स्यन्दिनः प्रस्रवणशीला ये स्वेदबिन्दवः विपरीतसुरतजन्यघर्मबिन्दवः तेषां प्रबन्धैः धाराभिः, कण्ठे गलदेशे कुङ्कुमं केशरं काश्मीरदेशोत्पन्नसुगन्धिद्रव्यमित्यर्थः, भिन्नं भेदं प्राप्तं दृष्ट्वा, स्मित्वा मन्दहास्यं विधाय, पुंस्त्वं पुरुषायितं रात्रौ तस्या एव वय-

(१) अत्र कयाचित्कुङ्कुमभेदेन संलक्षितं कस्याश्चित्पुरुषायितं पाणौ पुरुषचिह्न-खड्गलेखालिखनेन सूचितम् । इङ्गितेन यथा—

(२) सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥

(३) अत्र विटस्य भ्रूविक्षेपादिना लक्षितः सङ्केतकालाभिप्रायो रजनीकालभाविना पद्मनिमीलनेन प्रकाशितः ।

(४) व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः ।

यथा—

(५) 'शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥'

स्थाया विपरीतसुरते उपर्यारोहणमित्यर्थः व्यञ्जयन्ती प्रकाशयन्ती सती पाणौ तस्य-स्याया एव हस्ततले खड्गलेखां खड्गाकारां रेखां लिलेख लिखितवती । स्त्रीणां हस्तेऽ-लङ्कारार्थं चन्दनादिभिर्लतापत्रावल्यादिलिखनं सम्प्रदायसिद्धमपि तत्परित्यज्य तस्याः पुरुषायितं द्योतयितुं पुरुषहस्ते लेखनीयां खड्गलेखां चित्रयामासेति भावः । प्रसिद्धरतौ शयानाया नायिकाया मुखमण्डलात् प्रसृतानां स्वेदजलानां पृष्ठदेश एव गमनम् कण्ठे तेषां गमनं तु विपरीतरतावेवेति वक्त्रस्यन्दीत्यादेस्तात्पर्यमिति भावुकाः । शालिनीच्छन्द-स्तल्लक्षणन्तु—'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति ।

(१) लक्ष्यं संयोजयति—अत्रेति । कयाचित् सख्या, कुङ्कुमभेदेन तद्रूपस्वरूपेण । पुरुषायितं पुरुषवद्व्यवहृतम् । पुरुषचिह्नं पुरुषेणैव खड्गधारणात् पुरुषत्वबोधको यो खड्गस्तस्य लेखा रेखा तस्या लिखनेन यावकादिभिश्चित्रणेनेत्यर्थः । अत्र कुशलाः—'य-द्यप्यत्र स्वेदविशेषपुरुषायितयोः साध्यसाधनयोरेकधर्मिगतत्वेनोपादानादनुमानमेवा-लङ्कारो भवितुमर्हति तथापि स्ववैदग्ध्यप्रतिपिपादयिषयान्यस्मै सूक्ष्मार्थमुखेनैव चम-त्कार इति स एवालङ्कारः, अनुमानन्तु तदनुग्राहकमित्यन्यदेतत्' इति ।

(२) इङ्गितात् संलक्षितस्य सूचनमुदाहरति—सङ्केतेति । (८९ पृ०)व्याख्यातमिदम् ।

(३) लक्ष्यं सङ्गमयति—अत्रेति । विटस्य जाररूपधूर्तनायकस्य भ्रूक्षेपादिना चेष्टिते-नेत्यर्थः । सङ्केतकालाभिप्रायः सुरतसमयजिज्ञासेत्यर्थः । पद्मनिमीलनेन पद्मसङ्कोचेन प्रकाशितः स्वयं ज्ञातत्वेन विटाय सूचितः । यद्वा प्रकाशित उपनायकाशयं ज्ञात्वा तस्मै रजनीरूपः सुरतसमयो बोधित इत्यर्थः ।

(४) सूक्ष्मालङ्कारे 'कयापि सूच्यते भङ्ग्या' इत्युक्तौ व्याजरूपाया भङ्ग्याः उत्था-पनात् व्याजयुक्तमेव व्याजोक्त्यलङ्कारं निरूपयति—व्याजोक्तिरिति । उद्भिन्नस्यापि कार्य-द्वारा प्रकटितस्यापि, वस्तुनः विषयस्य व्याजात् प्रकटसमर्थहेतुप्रतिपादनरूपकपटात् गोपनं निगूहनं व्याजेनोक्तिर्यत्रेतिव्युत्पत्त्या व्याजोक्तिः तन्नामालङ्कार 'उच्यते' इत्यनु-वर्तते । असत्यहेतुप्रस्थापनेन कार्यस्य सत्यहेतुनिगूहनं व्याजोक्तिरित्यर्थः ।

(५) उदाहरति—शैलेन्द्रेति । भवानीशङ्करयोर्वैवाहिकेतिवृत्तवर्णनं प्रकृत्य कस्य-

( ६ ) नेयं प्रथमापह्नुतिः, अपह्नवकारिणो विषयस्यानभिधानात्। द्वितीयापह्नुतेर्भेदश्च तत्प्रस्तावे दर्शितः।

चिदाशीःशंसनमिदम्। शैलेन्द्रेण हिमाद्रिणा प्रतिपाद्यमाना आदीयमाना या गिरिजा पार्वती तस्या हस्तस्य उपगूढेन सम्बन्धेन उल्लसन्त आविर्भवन्तः ये रोमाञ्चादयः मदनोद्रेकात् पुलककम्पादयः तैः विसंष्ठुलः व्यग्रहस्तः यः अखिलः सम्पूर्णः विधिव्यासङ्गः वैवाहिकेतिकर्त्तव्यतारूपव्यापारः तस्य भङ्गेन भङ्गभयेन आकुलश्चकितः 'आः' इति शैत्यजनितव्यथाबोधकं पदम्। तुहिनाचलस्य हिमालयस्य करयोः हस्तयोः शैत्यं कन्यादानकाले स्पर्शेन शीतलत्वम् इति ऊचिवान् कथितवान्; तथा शैलान्तःपुरैः हिमालयावरोधनारीजनैः मातृमण्डलेन—

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।
वाराही च तथेन्द्राणी चामुण्डाः सप्त मातरः॥

इति परिभाषितब्राह्म्यादिसमूहेन गणैः देववृन्दैः नन्द्यादिभिश्च वा सस्मितं मन्दहासपूर्वं यथास्यात्तथा दृष्टः सन्, शिवः शम्भुः वः युष्मान् अवतात् रक्षतात्। शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं ( १५८ पृ० )।

अत्र तुहिनाचलहस्तस्पर्शेनैवायं मम रोमाञ्चादिर्भाव इति प्रकटयता महेश्वरेण रोमाञ्चादिकार्यनिष्पत्तिं प्रति शैत्यस्पर्शरूपासत्यहेतूपस्थापनेन मदनाविर्भावरूपहेतोर्निगूहनाद् व्याजोक्तिरलङ्कारः। यद्वा—'आः शैत्यं तुहिनाचलस्य करयोः' इति प्रकटसमर्थहेतुप्रतिपादनरूपकपटं विदधता महेश्वरेण 'शीतलस्पर्शोत्पन्न एवायं मम रोमाञ्चादिसात्त्विकभावः' इति प्रकटयता तथाविधरोमाञ्चादिकार्यद्वारा द्योतितस्यापि मदनाविर्भावरूपहेतोः निगूहनं विहितमिति भवति व्याजोक्तिः।

( ६ ) ननु प्रस्तुतहेतुगोपनेनाप्रस्तुतहेतूद्भावनरूपापह्नुतिः प्रागुदर्शिता तया सहास्याः को भेद इत्याशङ्कायामाह—नेयमिति। इयं व्याजोक्तिः प्रथमा प्रस्तुतहेतुनिषेधपूर्वकाप्रस्तुतहेतूद्भावनरूपा न, तत्र हेतुमुपपादयति—अपह्नवेति। अपह्नवकारिणः प्रस्तुतहेतुगोपनविधायिनः शिवस्य विधातुः विषयस्य प्रस्तुतहेतोः अनभिधानात्। तथा च अपह्नुतौ प्रस्तुतं गोपयित्वा अप्रस्तुतं स्थाप्यते, अत्र तु गोपनमकृत्वैव लिङ्गादिना प्रकटितस्य विषयस्य गोपनमित्यनयोर्भेदः। ननु मास्तु प्रथमापह्नुतिः किन्तु रोमाञ्चादिकार्येणैव मदनाविर्भावरूपहेतुं प्रकटयित्वा शैत्यस्पर्शरूपहेतूपस्थापनेन तदन्यथा विधानात्—'गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन। यदि श्लेषेणान्यथा वान्यथयेत्साप्यपह्नुतिः॥'

इत्युक्तलक्षणया द्वितीयापह्नुत्या को भेदः स्यादित्यत आह—द्वितीयेति। तत्प्रस्तावे द्वितीयापह्नुतिप्रसङ्गे दर्शितः 'गोपनकृता गोपनीयस्यापि प्रथममभिहितत्वाच्च व्याजोक्तेः' इत्यनेनेति शेषः। तथा च गोपनकृता गोपनीयं प्रथमं प्रतिपाद्यते, अत्र तु न तथेति स्फुटमनयोर्भेद इत्याशयः।

अस्याः 'गूढोक्तिर्विवृतोक्तिर्युक्तिर्लोकोक्तिश्छेकोक्तिर्वक्रोक्ति' रिति षड्भेदाः प्रतिपादयन्ति कुवलयानन्दकाराः,लक्षयन्ति च यथाक्रमम्—

'गूढोक्तिरन्योद्देश्यं चेद्यदन्यं प्रति कथ्यते।
वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः। इत्यादिना,

( ७ ) स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम् ॥ ९२ ॥

( ८ ) दुरूहयोः कविमात्रवेद्ययोः अर्थस्य डिम्भादेः स्वयोस्तदेकाश्रययोश्चेष्टास्वरूपयोः । यथा मम—

( ९ ) 'लाङ्गूलेनाभिहत्य क्षितितलमसकृद्दारयन्नग्रपद्भ्या-
मात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन्विक्रमेण ।
स्फूर्जद्धुंकारघोषः प्रतिदिशमखिलान्द्रावयन्नेष जन्तू-
न्कोपाविष्टः प्रविष्टः प्रतिवनमरुणोच्छूनचक्षुस्तरक्षुः ॥'

तन्न विचारसहम्; गूढोक्तेर्ध्वनिविषयत्वेन पृथगलङ्कारस्वीकारे गौरवात् । विवृतोक्तेरपि नालङ्कारत्वं केवलगुणीभूतव्यङ्ग्यत्वात्, युक्तेस्तु व्याजोक्तावेवान्तर्भावः उक्तिपदेन व्यापारमात्रस्य विवक्षितत्वात्, उपस्कारकत्वाभावेन लोकोक्तिछेकोक्त्योरपि नालङ्कारत्वम्, वक्रोक्तिरेव केवला स्वीकरणीया सा च शब्दालङ्कारनिरूपणप्रस्तावे लक्षितैव ।

( ७ ) दुरूहार्थप्रकरणत्वात् तद्युक्तमेव स्वभावोक्त्यलङ्कारं लक्षयति—स्वभावोक्तिरिति । नच मध्यपतितव्याजोक्त्यलङ्कारेण प्रकरणबाध इति वाच्यम्, विशेषातिदिष्टेन तेन तद्बाधाया अभावात् । दुरूहार्थयोः विशेषचातुर्यबोध्यत्वेन पामरजनैरज्ञेययोः केवलसहृदयसंवेद्ययोरित्यर्थः, अर्थस्य डिम्भादेः स्वक्रियारूपयोः तत्तद्गतस्वाभाविकमात्रचेष्टाकारयोः वर्णनं निरूपणं स्वभावस्योक्तिर्यत्रेति व्युत्पत्त्या स्वभावोक्तिः तन्नामालङ्कारः 'उच्यते' इत्यनुवर्तते । तथा च यस्य कस्यचिद् दुरूहवस्तुनोऽसाधारणधर्मवर्णनं स्वभावोक्त्यलङ्कार इति फलितम् । अत्र दुरूहेतिविशेषणोपादानेन—

'गोरपत्यं बलीवर्दो घासमत्ति मुखेन सः । मूत्रं मुञ्चति शिश्नेन अपानेन तु गोमयम् ॥'

इत्यत्र पामरजनज्ञानगम्यत्वेन बलीवर्दगतस्वाभाविकचेष्टाक्रिययोर्वर्णनेऽपि नालङ्कारत्वप्रसक्तिः, असाधारणस्वभाववर्णनस्य लोकसिद्धत्वेऽपि प्रतिभामात्रवेद्यत्वादलौकिकवद्भातीति भवत्यलङ्कार इति तत्त्वम् ।

( ८ ) काठिन्यांशमपाकर्तुं विवृणोति—दुरूहयोरिति । कविमात्रवेद्ययोः, अत्र मात्रपदेन साधारणपामरजनबुद्धिवेद्यत्वनिरासः । डिम्भः शिशुः, 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' इत्यमरः आदिपदेन युवति-मुग्ध-कातरतिर्यग्भ्रान्तहीनपात्रादिपरिग्रहः ।

( ९ ) लाङ्गूलेनेति । कोपाविष्टः कुपितः, अत एव अरुणे शोणवर्णे अथ च उच्छूने स्फीते चक्षुषी लोचने यस्य स तादृशः, एष तरक्षुः व्याघ्रविशेषः 'तरक्षुस्तु मृगादनः' इत्यमरः, लाङ्गूलेन पुच्छेन 'पुच्छोऽस्त्रीलूमलाङ्गूले' इत्यमरः, क्षितितलं भुवम् अभिहत्य ताडयित्वा अग्रपद्भ्यां चरणाग्राभ्याम् असकृत् मुहुर्मुहुः दारयन् भूतलमेव भिन्दन् विलिखन्नित्यर्थः, आत्मन्येव स्वशरीर एव अवलीय लीनो भूत्वा सङ्कुचद्वपुर्भूत्वेत्यर्थः, अथ अनन्तरं विक्रमेण द्रुतं त्वरितं गगनम् आकाशं प्रोत्पतन् उद्गच्छन् स्फूर्जन् वर्द्धमानः हुङ्कारघोषः यस्य स तादृशः, भयङ्करं हुङ्कारं विदधदित्यर्थः, प्रतिदिशं चतुर्दिक्षु अखिलान् समग्रान् जन्तून् मृगकुक्कुरछागादिप्राणिवर्गान् द्रावयन् भयोत्पादनेन सवेगं सञ्चालयन् प्रतिवनं वनं वनं प्रविष्टः । शार्दूलविक्रीडितं छन्दः ।

अत्र कोपाविष्टस्य तरक्षोः स्वाभाविकक्रियारूपयोर्वर्णनात् तादृशयोश्च तयोरन्यत्र

( १० ) अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः ।
यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥ ९३ ॥

यथा—

( ११ ) 'मुनिर्जयति योगीन्द्रो महात्मा कुम्भसंभवः ।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥'

यथा वा—

---

सम्भवाभावेन केवलं तन्मात्रगतत्वात् स्वभावोक्तिः । अत्र पशोः स्वभाववर्णना, शिशोः स्वभाववर्णना यथा—

'करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् ।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ॥'

तर्कवागीशाः–वर्णसंस्थानवर्णनायामपि स्वभावोक्तिमुदाहरन्ति, तत्र वर्णवर्णना यथा—'तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः । त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरःशुकाः॥ संस्थानवर्णना यथा—

'पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव ।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रा
नास्तामेतद्व्रजति स पशुर्दूरमेह्येहि यामः ॥'

अत्र विपुलपुच्छखुरचतुष्टयदीर्घग्रीवा अश्वस्यैव संस्थानानि' । इति ।

( १० ) प्रस्तुतदुरूहार्थयुक्तमेव भाविकालङ्कारं निरूपयति—अद्भुतस्येति । अद्भुतस्य आश्चर्यस्य, भूतस्य पूर्वकालजातस्य, अथवा भविष्यतः उत्तरकालभाविनः पदार्थस्य वस्तुनः, यत् प्रत्यक्षायमाणत्वं रचनानैपुण्येन प्रत्यक्षवद्भासमानत्वं तत् भावेन कवेराशयविशेषेण संसृष्टमिति व्युत्पत्त्या भाविकं तन्नामालङ्करणम् उदाहृतम् अभिहितम्, काव्यविद्भिरिति शेषः । पदार्थस्य प्रतिपादितत्रैविध्येन भाविकमपि त्रिविधमित्यवधेयम् ।

( ११ ) तत्र प्रथमोदाहरणं दर्शयति—मुनिरिति । योगिनां चित्तवृत्तिनिरोधिनाम् इन्द्रः श्रेष्ठः महात्मा कुम्भः सम्भवः उत्पत्तिस्थानं यस्य स तादृश (क)अगस्त्य इत्यर्थः जयति सर्वोत्कर्षेण वर्तते, येन मुनिना एकचुलुके एकस्मिन् प्रसृतौ दिव्यौ तौ जगदाधारकत्वेन ख्यातौ नरनारायणौ मत्स्यकच्छपौ मीनकूर्मौ दृष्टौ योगबलेन अवलोकितौ समुद्रपानसमये इति शेषः । समुद्रस्यैकचुलुकविधाने तत्र स्थितयोर्भगवतोर्मत्स्यकच्छपयोरप्येतदन्तर्गतत्वं द्रष्टव्यमित्यवधेयम् ।

अत्र स्वस्य चुलुकमात्रस्थान एव अतिविपुलभगवदवतारमत्स्यकच्छपयोर्योगबलेनावलोकिततया आश्चर्यस्य महर्षेः कुम्भयोनेः जयतीति वर्तमानसमयोपन्यासेन श्रवणार्थिनां प्रत्यक्षायमाणत्वाद् भाविकम् ।

( A ) अतीतानागतयोः प्रत्यक्षायमाणत्वे द्वितीयतृतीयभेदावेकोदाहरणप्रदर्शनेनैवाह—यथा वेति ।

---

( क ) अत्यन्तसुन्दरीमुर्वशीमवलोक्य उन्मथितेन्द्रियाभ्यां मित्रावरुणाभ्यां कुम्भे वीर्यं सिक्तं तत एतस्य जन्मेति पौराणिकी कथाऽनुसन्धेया ।

( १२ ) 'आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् ॥

( १३ ) न चायं प्रसादाख्यो गुणः, भूतभाविनोः प्रत्यक्षायमाणत्वे तस्याहेतुत्वात् ।

( १४ ) न चाद्भुतो रसः, विस्मयं प्रत्यस्य हेतुत्वात् ।

( १५ ) न चातिशयोक्तिरलङ्कारः, अध्यवसायाभावात् ।

( १६ ) न च भ्रान्तिमान्, भूतभाविनोर्भूतभावितयैव प्रकाशनात् ।

---

( १२ ) आसीदिति । अप्राप्तयौवनां कामपि कन्यां निरीक्ष्य कस्यचन कथनमिदम् । अत्र अनयोर्लोचनयोः यत् अञ्जनं कज्जलम्, आसीत् इत्यतीताञ्जनयुक्ते तव लोचने नेत्रे पश्यामि साक्षात्करोमीत्यर्थः 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरेणात्रेतिपदं प्रकारार्थकं न तु हेत्वर्थकमिति बोध्यम् । यद्यत्र हेत्वर्थकत्वं स्यात्तदा 'आसीदिति हेतोः पश्यामि' इत्यन्वयेऽतीतस्य ( भूतस्य ) अञ्जनस्य लौकिकसाक्षात्कारविषयत्वमुपपादितं न स्यात् । तथा भावी भविष्यत् भूषणानाम् अलङ्काराणां संभारः समूहः यत्र तथाभूतां ; भाविभूषणसम्भारसहितामित्यर्थः, तव आकृतिं स्वरूपं साक्षात्कुर्वे अवलोकयामीत्यर्थः । अञ्जनभूषणादिकं विनापि तव स्वरूपवैलक्षण्येनैव शोभातिशयात्तेषां वैयर्थ्यमित्याशयः ।

अत्राद्यचरणयोर्भूतस्याऽप्यञ्जनस्य पश्यामीतिवर्तमानोपन्यासात् द्वितीयचरणयोरपि भूषणसम्भारस्य साक्षात्कुर्वे इति वर्त्तमानोपन्यासेन च प्रत्यक्षायमाणतया भाविकं नामालङ्कारः ।

क्वचित् भूतत्वानिर्देशं विनाप्येष दृश्यते यथा —
'अहं विलोकयेऽद्यापि युद्ध्यन्तेऽत्र सुरासुराः' इत्यादौ ।

( १३ ) ननु प्रत्यक्षायोग्ययोरपि भूतभाविनोः ( अतीतानागतयोः ) प्रत्यक्षायमाणत्वं प्रति प्रतिपादितरूपसुखगम्यपदप्रयोग एव प्रयोजकः तथासति प्रसादगुण एवान्तर्भाव्यतामलं पृथगलङ्कारस्वीकारेणेत्यत आह—नचेति । अयं प्रत्यक्षीक्रियमाणः विच्छित्तिविशेषः प्रसादाख्यः प्रसादसंज्ञको गुण इति न च वाच्यमित्यर्थः । इत्यमग्रेऽपि। तस्य प्रसादाख्यगुणस्य । रसादिसाहाय्यं प्रत्येव तस्य कारणत्वादित्यभिप्रायः ।

( १४ ) नन्वेवं विस्मयहेतुत्वमभ्युपेत्य अद्भुतस्यानुभूयमानत्वस्थलेऽद्भुतरस एव स्वीक्रियतामित्यत आह—नचेति । विस्मयं चमत्कारं प्रति अस्य अद्भुतरसस्य हेतुत्वात् श्रवणार्थिनां विस्मकारकत्वात् 'मुनिर्जयति' इत्यादौ तु हेतुत्वाभावादित्याशयः ।

( १५ ) अथैवं प्रत्यक्षासम्बन्धेऽपि तत्सम्बन्धवर्णनात् भूतादिवस्त्वसम्बन्धेऽपि तत्सम्बन्धवर्णानाच्च असम्बन्धे सम्बन्धरूपातिशयोक्त्यैव गतार्थो भवतु किमतिरिक्तालङ्काराभ्युपगमगौरवेणेत्यत आह—नचेति । अध्यवसायस्य तादात्म्यप्रतिपत्तेरभावात् अतिशयबोधमात्रेण तदीयप्रकारान्तरकल्पनानौचित्यादितिभावः ।

( १६ ) ननु प्रत्यक्षायोग्ययोरपि भूतभाविनोः प्रत्यक्षवत्प्रतीत्या भ्रान्तिरेवेति भ्रान्तिमानलङ्कार एव जायतामित्यत आह—नचेति । भूतेति । तथा चात्र भ्रान्तिलक्ष-

( १७ ) न च स्वभावोक्तिः, तस्य लौकिकवस्तुगतसूक्ष्मधर्मस्वभावस्यैव यथावद्वर्णनं स्वरूपम् ; अस्य तु वस्तुनः प्रत्यक्षायमाणत्वरूपो विच्छित्तिविशेषोऽस्तीति ।

( १८ ) यदि पुनर्वस्तुनः क्वचित्स्वभावोक्तावप्यस्या विच्छित्तेः संभवस्तदोभयोः सङ्करः ।

( १९ ) 'अनातपत्रोऽप्ययमत्र लक्ष्यते सितातपत्रैरिव सर्वतो वृतः ।
अचामरोऽप्येष सदैव वीज्यते विलासबालव्यजनेन कोऽप्ययम् ॥'

( २० ) अत्र प्रत्यक्षायमाणस्यैव वर्णनान्नायमलङ्कारः, वर्णनावशेन प्रत्यक्षायमाणत्वस्यैव सरूपत्वात् ।

णस्य 'अतस्मिंस्तद्बुद्धिर्भ्रान्ति' रित्युक्तरूपस्यैवाभावेन भ्रान्तिमानलङ्कारस्वीकर्त्तुमशक्यत्वात् । प्रत्यक्षायमाणमितिप्रतिपादनेन तात्त्विकप्रत्यक्षाभावस्य व्यञ्जितत्वाच्चेत्याशयः ।

( १७ ) ननु तर्हि दुरूहयोः अगस्त्यस्य कुमार्याश्च क्रियारूपयोः प्रतिपादनात् स्वभावोक्त्यलङ्कार एव कथं न स्वीक्रियते इत्यत आह—नचेति । तस्य स्वभावोक्त्यलङ्कारस्य, लौकिकं वस्तु डिम्भादि तद्गतः सूक्ष्मः असाधारणज्ञानमात्रज्ञेयो यो धर्मरूपः स्वभावः तस्यैव न तु प्रत्यक्षायमाणत्वस्येति एवपदस्यार्थः । अस्य भाविकस्य तु वस्तुनः अद्भुतस्य अतीतानागतस्य वा वर्णनीयपदार्थस्य । विच्छित्तिविशेषः स्वभावोक्त्यलङ्कारचमत्कारापेक्षया अतिरिक्तरूपचमत्कारः, इति हेतोः नच स्वभावोक्तिस्तन्नामालङ्कार इत्यर्थः । एवञ्च विच्छित्तिभिन्नत्वादेवालङ्कारभेद इत्यववेयम् ।

( १८ ) ननु यत्र स्वभावोक्त्यलङ्कारचमत्कारः भाविकालङ्कारचमत्कारश्च द्वावपि विद्येते तत्र किं स्वभावोक्त्यलङ्कारःकिंवा भाविकालङ्कारः स्वीकरणीय इति विचिकित्सायामाह—यदि पुनरिति । अस्या भाविकसम्बन्धिन्याः । उभयोः स्वभावोक्तिभाविकयोः, सङ्करः स्वातन्त्र्येणैव स्थितिरूपः । उदाहरणं यथा शाकुन्तले प्रथमेऽङ्के—

'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
शष्पैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥'

अत्र मृगस्य तत्कालिकतन्मात्रगतक्रियारूपयोर्वर्णनात् स्वभावोक्तिः, तादृशत्वेनाद्भुतरूपस्य तस्य मृगस्य प्रत्यक्षायमाणत्वाच्च भाविकमित्युभयोरङ्गाङ्गिभावेनैकाश्रयानुप्रवेशरूपसङ्कर इति कुशला आचक्षते ।

( १९ ) अलङ्कारसर्वस्वकृतोदाहृतं दूषयितुमुत्थापयति—अनातपत्र इति । राजवर्णनमिदम् । अयं राजा अनातपत्रोऽपि छत्ररहितोऽपि, सर्वतः सर्वदिक्षु सितातपत्रैः श्वेतच्छत्रैः वृतः वेष्टित इव लक्ष्यते वीक्ष्यते इत्यर्थः दीप्यमानश्रीकत्वात् । एवम् अचामरोऽपि बालव्यजनविहीनोऽपि एष राजा सदैव वीज्यत इव विलासहेतुकव्यजनेन वीज्यमान इव 'लक्ष्यते' इति पूर्वतोऽनुवर्तते, शीतलाङ्गत्वात् कीर्त्तिराशिविस्ताराद्वा अतः अयं कोऽपि अलौकिकगुणशालीपुरुष इत्यर्थः । वंशस्थं छन्दः ।

( २० ) अत्र कथं नायमलङ्कार इति दर्शयितुमाह—अत्रेति । प्रत्यक्षायमाणस्यैव

( २१ ) यत्पुनरप्रत्यक्षायमाणस्यापि वर्णने प्रत्यक्षायमाणत्वं तत्रायमलङ्कारो भवितुं युक्तः, यथोदाहृते 'आसीदञ्जनम्'—इत्यादौ ।

( २२ ) **लोकातिशयसंपत्तिवर्णनोदात्तमुच्यते ।**
**यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत् ॥ ९४ ॥**

क्रमेणोदाहरणम्—

( २३ ) 'अधःकृताम्भोधरमण्डलानां यस्यां शशाङ्कोपलकुट्टिमानाम् ।
ज्योत्स्नानिपातात्क्षरतां पयोभिः केलीवनं वृद्धिमुरीकरोति ॥'

---

श्वेतच्छत्रकर्तृकाच्छादनस्य विलासबालव्यजनङ्कारकव्यजनस्य च उभयोरुत्प्रेक्षिततया सम्भावनावशेनैव प्रत्यक्षवद्व्यवहरत इत्यर्थः । भूतभाविपदार्थस्य प्रत्यक्षायमाणत्वव्यावृत्तये एवकारः । अयं भाविकसंज्ञकः । तदेव स्पष्टयति—प्रत्येति । भाविकस्येत्यर्थः । एवञ्च यत्र उत्प्रेक्षेतरकविप्रतिभानैपुण्येन अद्भुतादेः प्रत्यक्षायमाणत्वम्, तत्रैव भाविकालङ्कारः, न तूत्प्रेक्षात्मकसम्भावनायामपि एवं सति सर्वत्रैव सम्भवप्रसङ्गेन सर्वत्र भाविकस्यैव प्रसक्तेः । अत एव 'अनातपत्रः' इत्यादिस्थले उत्प्रेक्षात्मकसम्भावनया श्वेतच्छत्रकर्तृकाच्छादनादेः प्रत्यक्षायमाणत्वान्न भाविकप्रसक्तिरित्यभिप्राय इति कुशलाः ।

( २१ ) नन्वेवम् 'आसीदञ्जनम्' इत्याद्युदाहरणेऽपि प्रत्यक्षायमाणस्यैव वर्णनात् भाविकालङ्कारः कथमित्यत आह—यत्पुनरिति । अयं भाविकसंज्ञकः । एवञ्च यत्र प्रत्यक्षायमाणत्वं तत्रैवायं भाविक इति नैव सिद्धान्तः किन्तु यत्र उत्प्रेक्षेतरकविप्रतिभानपुण्येन प्रत्यक्षायमाणत्वं तत्रैव भाविकाभ्युपगम इति स्वीकारेण प्रकृते क्षत्यभावात् ।

( २२ ) अथ सभेदमुदात्तालङ्कारं लक्षयति—लोकातीत्यादिना । लोकान् भुवनान् अतिशेते अतिक्रामतीति लोकातिशया लोके असम्भवेत्यर्थः सा चाऽसौ सम्पत्तिः धनसमृद्धिः तस्या वर्णना व्यञ्जनया ज्ञापनम् उदात्तं तन्नामालङ्कारः उच्यते 'आलङ्कारिकै'रिति शेषः । वा अथवा यदपि महतां महाप्रभावाणां चरितं महत्त्वप्रतिपादकसाधर्म्यम्, प्रस्तुतस्य प्रकृतवर्णनीयस्य अङ्गं सम्पादकं भवेत् तदपि उदात्तमुच्यते इति पूर्वेण सम्बन्धः, तेनेदं द्विप्रकारकम्—अलौकिकं सम्पत्तिवर्णनम्, प्रकृतवर्णनीयसम्पादकञ्चेति । उत्कर्षेण आदीयते गृह्यत इत्युदात्तम्, कर्मणि क्तप्रत्ययः 'अच उपसर्गात्तः' ७।४।४७ इति पा० सूत्रेण तादेशः ।

( २३ ) तत्राद्योदाहरणं दर्शयति—अध इति । नगर्या वर्णनमिदम् । यस्यां नगर्यां केलीवनं तथाविधगृहसमीपवर्तिक्रीडार्थं निर्मितमुद्यानं ( कर्तृ ) अधःकृतं नीचे स्थापितम् अम्भोधरमण्डलं मेघसमुदायः यैस्तथोक्तानाम्, ज्योत्स्नायाः चन्द्रिकाया निपातात् स्खलनात् क्षरतां सलिलं निर्गमयताम्, शशाङ्कोपलकुट्टिमानां चन्द्रकान्तमणिरचितोर्ध्वभूमीनां पयोभिः प्रपतितसलिलैः वृद्धिं पुष्टिम् ऊरीकरोति स्वीकरोति लभत इत्यर्थः । चन्द्ररश्मिसंयोगे चन्द्रकान्तमणितः सलिलं द्रवतीति ख्यातिः । सलिलेन उद्यानादिवृद्धिस्तु सर्वानुभवसिद्धा । उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिश्छन्दः ।

एकोऽपि चन्द्रकान्तमणिः लोकेऽत्यन्तदुष्प्राप्य एव, किन्तु तत्र नगर्यां तु सैरेव भवनस्योर्ध्वभूमयो बद्धेति लोकासम्भवसम्पत्तिवर्णनादत्र उदात्तालङ्कारः ।

( २४ ) 'नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा ।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान्पुरुषोऽधिशेते' ॥

( २५ ) **रसभावौ तदाभासौ भावस्य प्रशमस्तथा ।**
**गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा ॥ ६५ ॥**
**रसवत्प्रेय ऊर्जस्वि समाहितमिति क्रमात् ।**

( २६ ) तदाभासौ रसाभासो भावाभासश्च ।

उदाहरणान्तरं यथा—

'मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु भोजनृपतेस्तत् त्यागलीलायितम् ।'

अत्र विद्वद्भवनस्थलोकातिशायि समृद्धिवर्णनादुदात्तालङ्कारः ।

( २४ ) द्वितीयभेदमुदाहरति—नाभीति । रघुवंशत्रयोदशसर्गे समुद्रवर्णनेयम् । नाभितः प्रभिन्नं जातम् अम्भोरुहं कमलमेव आसनं विष्टरं यस्य तेन तथोक्तेन, प्रथमेन जगदाद्येन धात्रा प्रजापतिना संस्तूयमानः, युगान्ते प्रलयसमये उचिता योग्या योगनिद्रा यस्य स तथोक्तः पुरि शेते इति पुरुषः नारायण इत्यर्थः, लोकान् संहृत्य स्वस्मिन्नुपसंहारं विधाय अमुं समुद्रम् अधिशेते अधिकृत्य स्वपिति ।

अत्र प्रस्तुतवर्णनीयसमुद्रवर्णनस्य नारायणचरितवर्णनमङ्गमिति उदात्तालङ्कारः ।

( २५ ) इयता प्रबन्धेन शब्दयुक्तानर्थयुक्तांश्चालङ्कारान् प्रतिपाद्य सम्प्रति रसादियुक्तानपि तान् प्रतिपादयितुं तत्र मुख्यतया चतुर्विधं रसवदाद्यलङ्कारं प्रतिपादयति—रसभावाविति । अत्र रसभावादयः सर्वेऽपि तृतीयपरिच्छेदे प्रतिपादिता अवलोकनीयाः । रसो भावश्चेति तौ रसभावौ, तयोः ( रसभावयोः ) आभासौ तदाभासौ, तथा भावस्य प्रशमः शान्तिश्च, एते यदा गुणीभूतत्वं रसान्तरादीनामुत्कर्षाधायकत्वेनाङ्गत्वम् , न्यग्भूतचमत्कारत्वमित्यर्थः आयान्ति प्राप्नुवन्ति, तदा रसवत् , प्रेयः, ऊर्जस्वि, समाहितञ्चेति संज्ञाभिश्चतुःसंख्याकाः अलङ्कृतय अलङ्काराः क्रमात् जायन्त इत्यर्थः । एवञ्च यत्र एको रसः इतरस्य रसस्य भावादेर्वा अङ्गत्वं तत्र रसवत् , यत्र एको भावः इतरस्य भावस्य रसादेर्वा अङ्गत्वं तत्र प्रेयः, यत्र रसाभासो भावाभासो वा रसस्य भावादेर्वा अङ्गत्वं तत्र ऊर्जस्वि, यत्र च भावस्य प्रशमः रसस्य भावादेर्वा अङ्गत्वं तत्र समाहितम्, इति निष्कर्षः

तदुक्तम्—

"प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥" इति ।

रसवदादयः शब्दा उक्तेष्वर्थेषु नित्यनपुंसका एव । नचैवम् 'अलङ्कृतयः' इति विशेषणानुपपत्तिः 'अपत्यं सुता' इत्यादिवद्व्यवहारे बाधकाभावात् ।

( २६ ) काठिन्याशां परिहरन्नाह—तदाभासाविति । स्पष्टम् ।

( २७ ) तत्र रसयोगाद्रसवदलङ्कारो यथा—'अयं स रसनोत्कर्षी—' इत्यादि [ ३८२ पृ. ] । अत्र शृङ्गारः करुणस्याङ्गम् ।

( २८ ) एवमन्यत्रापि ।

( २९ ) प्रकृष्टप्रियत्वात्प्रेयः । यथा मम—

( ३० ) 'आमीलितालसविवर्तिततारकाक्षीं
मत्कण्ठबन्धनदरश्लथबाहुवल्लीम् ।
प्रस्वेदवारिकणिकाचितगण्डबिम्बां
संस्मृत्य तामनिशमेति न शान्तिमन्तः ॥'

( ३१ ) अत्र संभोगशृङ्गारः स्मरणाख्यभावस्याङ्गम् । स च विप्रलम्भस्य ।

( २७ ) रसवदादिपदानां व्युत्पत्त्युपपादनपूर्वकं यथाक्रममुदाहरणान्युपपादयितुमुत्थापयति—तत्रेति । चतुर्विधेषु रसवदादिषु अलङ्कारेषु मध्ये इत्यर्थः । रसयोगात् रसशालितया । तथा च रसः अस्यास्तीति विग्रहे—

'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः॥'

इत्युक्त्या प्राशस्त्ये मतुप् । प्राशस्त्यञ्च रसस्य अन्यरसेन पौष्कल्यापादनमित्यवगन्तव्यम् । 'अयं स' इत्यादेर्व्याख्यानं शृङ्गारः करुणस्याङ्गमिति च ( ३८२ पृ० ) चतुर्थपरिच्छेदे स्फुटतया प्रतिपादितमिति तत्र द्रष्टव्यम् ।

( २८ ) नायमत्रैवेति नियम इत्यभिप्रायेणाह—एवमिति । अन्यत्रापि रसान्तरस्य रसान्तराङ्गत्वे भावाङ्गत्वेऽपि च एवं यथा शृङ्गारः करुणस्याङ्गम्, तथैवोदाहरणं ज्ञेयमित्यर्थः । एवञ्च शृङ्गारः करुणस्याङ्ग यथा पूर्वोदाहृत एव 'क्षिप्तो हस्तावलग्नः' इत्यादौ (७८७ पृ०) सप्तमपरिच्छेदे । शान्तशृङ्गाररौद्ररसा भगवद्विषयकरतिभावस्याङ्गानि यथा—'एकं ध्याननिमीलितात्' इत्यादौ ( ७८६ पृ० ) उक्तपरिच्छेदे । एवमन्यदप्युदाहार्यम् ।

( २९ ) प्रियशब्दात् प्रकृष्टार्थे इयसुन् प्रत्यये सति प्रेयःशब्दो निष्पन्न इति प्रेयःशब्दार्थमाह—प्रकृष्टेति । प्रकृष्टं रसान्तराङ्गत्वेऽपि रसान्तराङ्गत्वेनोत्कृष्टं यत्प्रियत्वं तस्मात् तथोक्तात् । तथा च प्रकृष्टप्रियत्वादेव भावस्य रसाङ्गत्वे प्रेयोऽलङ्कार इत्याशयः ।

( ३० ) आमीलितेति । कान्ताया रत्युत्तरावस्थां स्मृत्वा चिन्तयतो विरहिणः सखायं प्रति उक्तिरियम् । आमीलिते रतिप्रशमात् ईषत् सङ्कुचिते अथ च अलसं मन्दं यथा स्यात्तथा विवर्त्तिते सञ्चालिते तारके कनीनिके ययोस्ते तथोक्ते अक्षिणी लोचनद्वयं यस्यास्ताम् ; मम ( प्रेयसः ) कण्ठबन्धने कण्ठाश्लेषे दरश्लथा ईषदलसा बाहुवल्ली भुजरूपा लता यस्यास्ताम् ; सुरतखेदेन निद्रावेशादित्याशयः; तथा प्रस्वेदवारिकणिकाभिः रतिखेदात् समुद्भूतघर्मजलबिन्दुभिः आचितौ व्याप्तौ गण्डबिम्बौ कपोलयुगलं यस्यास्ताम् ; तां रत्युत्तरावस्थां प्रियतमां संस्मृत्य चिन्तयित्वा तिष्ठतो मम अन्तः अन्तःकरणं (कर्त्तृ) अनिशं रात्रिन्दिवं शान्तिं न धृतिं न लभते । वसन्ततिलकाच्छन्दः ।

( ३१ ) लक्ष्यं सङ्गमयति—अत्रेति । उदाहृतपद्ये इत्यर्थः । अङ्गं पौष्कल्यापादकम् । स च स्मरणनामा भावश्च, विप्रलम्भस्य विदेशात्मकविप्रलम्भशृङ्गारस्य 'अङ्गम्' इति पूर्वेण सम्बन्धः । इत्यञ्च भावस्य रसाङ्गतया प्रेयोऽलङ्कार इति भावः । अत्र स्मरणस्य

( ३२ ) ऊर्जो बलम्, अनौचित्यप्रवृत्तौ तदत्रास्तीत्यूर्जस्वि । यथा—

( ३३ ) 'वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः ।
त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्वते रतिम् ॥'

( ३४ ) अत्र शृङ्गाराभासो राजविषयकरतिभावस्याङ्गम् ।

( ३५ ) एवं भावाभासोऽपि ।

वाच्यत्वेन गुणीभूतव्यङ्ग्यत्वाभावेऽपि गुणीभूतवाच्यस्याप्यलङ्कारत्वमभ्युपेत्येदमुक्तमित्यवधेयम् । तथा च स्मरणस्य वाच्यत्वेन तस्य विप्रलम्भशृङ्गारस्याङ्गोक्त्यनुपपत्त्या स्मरणपदं स्मरणव्यङ्ग्यचिन्तापरं बोध्यम् । अत्र रसवदलङ्कारोऽपि सम्भोगशृङ्गारस्य स्मरणाख्यभावस्याङ्गत्वात्, अत एव उभयोरङ्गाङ्गिभावेन सङ्कारालङ्कार इति बोध्यम् ।

असङ्कीर्णोदाहरणन्तु—

'अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमञ्जुलम् । स्मरामि वदनं तस्याश्चारुचञ्चललोचनम् ॥'

अत्र विप्रलम्भशृङ्गारस्य स्मरणाख्यभावोऽङ्गमिति प्रेयोऽलङ्कारः ।

( ३२ ) ऊर्जस्विपदार्थं व्याकुर्वाण आह—ऊर्ज इति । बलमिति । 'ऊर्जः कार्त्तिके बले' इति हैमः । अनौचित्येन शास्त्रीयनियमस्वाभाविकनियमादिविपरीतत्वेन प्रवृत्तौ विद्यमाने 'रसभावयोः' इति शेषः । एवञ्च—

'अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः'

इत्युक्तस्वरूपेण रसभावयोराभासत्वमुपपादितम् । तदत्रास्तीति प्रतिपादनन्तु केवलमर्थप्रदर्शनाय, 'तदस्यास्त्यस्मिन्निति मतुप्' इति पाणिनीयानुशासनेन सप्तम्यन्तात्मत्वर्थीयप्रत्ययाभावात् । ऊर्ज अस्यास्तीतिविग्रहे निपातनाद्विनिः । वैचित्र्यकारित्वे ऊर्जस्वि बलवत् इति तस्यार्थः।

( ३३ ) वने इति । राज्ञः प्रशंसेयम् । हे राजन् ! वने अरण्ये पुलिन्दाः वनेचरा किरातविशेषाः अखिलाः स्वोचिताः सर्वाः कला नृत्यगीतादयः तासु आसक्ता आसक्ततया निपुणा अपि निजस्त्रियः स्वनार्यः परिहृत्य परित्यज्य, तव भवतो वैरिणो रिपवस्तेषां वनितानां स्त्रीणां वृन्दे समूहे रतिं सम्भोगव्यापारं कुर्वते विदधते ।

( ३४ ) लक्ष्यं सङ्गमयति—अत्रेति । शृङ्गाराभासः परोढाविषयत्वादित्याशयः ।

( ३५ ) द्वितीयोदाहरणविषये आह—एवमिति । भावाभासोऽपि भावाभासस्याङ्गत्वेऽपि एवमूह्यमित्यर्थः । यथा—

किं ब्रूमस्ते महाराज ! माहात्म्यमन्यदुर्लभम्
स्तुवन्ति शत्रवस्त्वां हि कुड्मलीकृतपाणयः ॥

अत्र शत्रुप्रशंसया 'भावाभासो लज्जादिके तु वेश्यादिविषये स्यात्' इति पूर्वप्रतिपादितस्वरूपात् तदीयरतिभावाभासो राजविषयकरतिभावस्याङ्गम् रसाभासभावाभासयोर्भावाङ्गतयाम् अस्मट्टीकायामेव चतुर्थपरिच्छेदे ( ३८३ पृ० ) 'बन्दीकृत्य नृप ! द्विषाम्' इत्यवलोकनीयम् ।

अत्र पूर्वार्द्धे सैनिकगतः शृङ्गारोऽननुरक्तस्त्रीविषयकतया परस्त्रीविषयकतया च प्रवृत्त इत्याभासः, उत्तरार्द्धे पुनः प्रत्यर्थिगतो रतिरूपो भावः प्रस्तुतराजरूपशत्रुविषयकत्वेना-

( ३६ ) समाहितं परिहारः । यथा—

( ३७ ) 'अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
दहशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥'

( ३८ ) अत्र मदाख्यभावस्य प्रशमो राजविषयरतिभावस्याङ्गम् ।

( ३९ ) **भावस्य चोदये संधौ मिश्रत्वे च तदाख्यकाः ॥ ६६ ॥**

( ४० ) तदाख्यका भावोदयभावसंधिभावशबलनामानोऽलङ्काराः । क्रमेणोदाहरणम्—

( ४१ ) 'मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः ।
श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम् ॥'

---

हार्थतया प्रवृत्त इत्याभासः; इत्थमत्र शृङ्गाराभासः भावाभासश्च कविगतराजविषयकरतिभावस्याङ्गमिति ।

( ३६ ) समाहितपदं व्याकरोति—समाहितमिति । परिहारः प्रशमः समापनमिति तात्पर्यम् । परिहारप्रशमावभिन्नार्थाविति व्याख्यातारः ।

( ३७ ) अविरलेति । राज्ञः प्रशंसेयम् । हे राजन् ! तव वैरिणां शत्रूणाम् , अविरलं निरन्तरं यानि करवालानां खड्गानां कम्पनानि सञ्चारणानि तैः तथोक्तैः, भ्रुकुटीकरणकैः तर्जनैः तव पक्षमाश्रित्य 'छिन्धि भिन्धि' इत्यादिवाक्यरूपैः भर्त्सनैः गर्जनैः हुङ्कारसिंहनादरूपैश्च यो मदो गर्वः मुहुः वारम्वारं दहशे अस्माभिः दृष्टः; किन्तु स मदः तवेक्षणे त्वत्कर्तृके त्वद्विषयके वा दर्शने सति, क्षणादेव क्वापि गतः पलायितः प्रशान्त इत्यर्थः । गर्जनैरित्यन्ते 'प्रकृत्यादिभ्य उपसंख्यानम्' इत्यनेन तृतीया बोध्या । वैतालियं छन्दः ।

( ३८ ) समन्वयं दर्शयति—अत्रेति । उदाहृतपद्य इत्यर्थः । मदाख्यभावस्य 'सम्मोहानन्दसम्भेदो मदो मद्योपयोगजः' इति प्रतिपादितस्वरूपस्य प्रशमः समापनम् । अङ्गमिति । तेन समाहितमित्याशयः ।

( ३९ ) रसभावादियुक्तालङ्कारप्रतिपादनप्रकरणादेव भावयुक्तान् भावोदयप्रभृतीन् अलङ्कारान् प्रतिपादयति—भावस्येति । अत्र चद्वयम् , तत्राद्येन 'गुणीभूतत्वमायान्ति' इति पूर्वकारिकातोऽनुवर्त्तते, तत्र 'आयान्ति' इत्यस्य आयातीति सप्तम्येकवचनान्तत्वेन विपरिणामो विधेयः तथैव सङ्गतत्वात् । अपरश्चस्तु अत्रत्योदयादीनां समुच्चयार्थः । एवञ्च भावस्य पूर्वप्रतिपादित-'सञ्चारिणः प्रधानानि' इत्यादिस्वरूपस्य यस्य कस्यचित् , उदये उद्गमे गुणीभूतत्वमायाति सति भावोदयसंज्ञकः, सन्धौ कयोश्चित् प्रतिपादितस्वरूपयोर्भावयोः सम्बन्धे गुणीभूतत्वमायाति सति भावसन्धिसंज्ञकः; तथा केषाञ्चित् प्रतिपादितस्वरूपाणां भावानां मिश्रत्वे बलवद्भिरुत्तरोत्तरभावैः सह पूर्वपूर्वभावस्यैकपद्यस्थितिरूपसम्मिलितत्वे च गुणीभूतत्वमायाति सति भावशवलसंज्ञकः; तदाख्यका रसा भावोदयादयः गुणीभूता स्वस्वनामान एवालङ्कारा इत्यर्थः ।

( ४० ) तदाख्यका इति पदं विवृणोति—तदेत्यादिना । स्पष्टम् ।

( ४१ ) भावोदयोदाहरणं दर्शयति—मधुपानेति । इयमपि राज्ञः प्रशंसा । हे राजन् ! सुहृद्भिः मित्रैः सह मधुपाने मद्यपानकर्मणि प्रवृत्ताः परायणाः, ते तव वैरिणः रिपवः

( ४२ ) अत्र त्रासोदयो राजविषयरतिभावस्याङ्गम् ।

( ४३ ) 'जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका ।

सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥"

( ४४ ) अत्रौत्सुक्यलज्जयोश्च संधिर्देवताविषयरतिभावस्याङ्गम् ।

( ४५ ) 'पश्येत्कश्चिच्चल चपल ! रे ! का त्वराहं कुमारी

हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।

इत्थं पृथ्वीपरिवृढ ! भवद्द्विषोऽरण्यवृत्तेः

कन्या कंचित्फलकिसलयान्याददानाभिधत्ते ॥'

'रिपौ वैरिसपत्नारिः' इत्यमरः, कुतोऽपि लोकात् तत्राम श्रुत्वा, विषमां सङ्कटप्रधानां दशाम् अवस्थां लेभिरे लब्धवन्तः ।

( ४२ ) समन्वयति—अत्रेति । त्रासस्य 'निर्घातविद्युदुल्काद्यैस्त्रासः कम्पादिकारकः' इत्युक्तव्यभिचारिभावस्य 'उदयः शत्रुचित्ते उद्गमः । अङ्गं परिपोषकम् । तेन भावोदयसंज्ञकोलङ्कार इत्यभिप्रायः ।

( ४३ ) भावसन्ध्युदाहरणं दर्शयति—जन्मेति । जन्मान्तरे ( दक्षभवने जन्मनि ) भव इति जन्मान्तरीणः, यो रमणः पतिः तस्य महेश्वरस्येत्यर्थः, अङ्गसङ्गे सर्वतोऽवयवस्पर्शे आश्लेषे समुत्सुका उत्कण्ठिता, अत एव च सख्या वयस्यायाः अन्तिके निकटे सलज्जा तथा व्यापारे त्रपान्विता पार्वती नगसुता नः अस्मान् पातु अवतु ।

( ४४ ) समन्वयं दर्शयति—अत्रेति । सन्धिः एकस्यां पार्श्वयां संयोगः । तेन भावसन्धिरलङ्कार इत्याशयः । आवेगहर्षयोर्व्यङ्ग्ययोः सन्धिर्यथा पूर्वं ( २८४ पृ० ) टीकायाम्—

'असोढा तत्कालोल्लसितसहभावस्य तपसः' इत्यादि ।

( ४५ ) भावशवले उदाहरति—पश्येदिति । किञ्चिदाविर्भूतयौवनायाः प्रस्तुतनृपविरोधिवननिवासिनृपसुतायाः फलाद्याहरणकाले कस्मिंश्चित्कामुके कृतानुरागायाः कामुकेन सह उक्तिप्रत्युक्ती दर्शयित्वाऽऽत्मीयं नृपं प्रति कस्यचिदुक्तिरियम् । कश्चित् तटस्थः पुरुषः पश्येत् आवयो रहस्यस्थानस्थितिमवलोकयेत्, निरीक्ष्य चावयोर्दुश्चरित्रं सम्भावयेदित्याशयः; इयं कन्याया उक्तिः । रे चपल स्वच्छन्दाचरणशीलतरुण ! चल अपसर यद्वा मया सह जनकगृहमागच्छ, इयमपि कन्याया उक्तिः । का त्वरा इतो गमने का ते शीघ्रता ? शीघ्रगमने को हेतुः निर्जनस्थानेऽन्यस्य सहसा प्रवेशासम्भवादितिभावः, इति कामुकस्य प्रत्युक्तिः । अहं कुमारी राजकन्या 'अस्मि' इति शेषः, अतः स्वल्पमपि त्वयि प्रेम इति कश्चिज्जानीयात्तत्रा महाननर्थः सम्भवेत् विशेषतश्च फलपल्लवाद्यानयनाय इतस्ततो भ्रमणेन परिश्रान्तास्मीत्यभिप्रायः; इति कन्याया उक्तिः । हस्तालम्बं हस्तरूपमालम्बनं वितर देहि परिश्रान्तासि चेन्मम गात्र इति शेषः, इति कामुकस्योक्तिः । हहहा कष्टं कष्टम् इति कन्याया दैन्यद्योतिकोक्तिः, अहमायुष्मकुल प्रसूता राजकन्या सती अद्य कथमेवमाचरामीति भावः । व्युत्क्रमः राजकन्यायाः भवत्या सह अकिञ्चनस्य ममानर्थाचरणम्, इति कामुकस्योक्तिः, इत्यभिधाय कस्मिंश्चित् प्रदेशेऽवलीने यूनि कन्या उक्तवती क्वासि तरुण ! कुत्र वर्तसे, किं त्वं यासि व्रजसि इति

( ४६ ) अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता राजविषयरतिभावस्याङ्गम् ।

( ४७ ) इह केचिदाहुः—'वाच्यवाचकरूपालङ्करणमुखेन रसाद्युपकारका एवालङ्काराः, रसादयस्तु वाच्यवाचकाभ्यामुपकार्या एवेति न तेषामलङ्कारता भवितुं युक्ता' इति ।

( ४८ ) अन्ये तु—'रसाद्युपकारमात्रेणेहालङ्कृतिव्यपदेशो भाक्तश्चिरन्तनप्रसिद्ध्याङ्गीकार्य एव' इति ।

( ४९ ) अपरे च—'रसाद्युपकारमात्रेणालङ्कारत्वं मुख्यतो रूपकादौ तु वाच्याद्युपधानम्, अजागलस्तनन्यायेन' इति ।

---

कन्याया उक्तिः । पृथिव्याः भूमेः परिवृढः अधिपः तत्सम्बुद्धौ हे पृथ्वीपरिवृढ ! 'प्रभुः परिवृढोऽधिपः' इत्यमरः, अरण्यवृत्तेः वनवासिनः मवद्विद्विषः त्वच्छत्रोः कन्या, फलकिसलयानि फलकोमलपल्लवांश्च ( भक्षणा मलङ्कारार्थञ्च ) आददाना आहरन्ती सती, कञ्चित्तरुणं कामुकं जातानुरागा सती, इत्थमुक्तप्रकारम्, अभिधत्ते मिथो वक्तीत्यर्थः । मन्दाक्रान्ताच्छन्दः ।

( ४६ ) समन्वयं दर्शयति—अत्रेत्यादिना । 'पश्येत् कश्चित्' इत्यनेन शङ्का, 'रे चपल !' इति अधमसम्बोधनेन काकुविशेषसहकाराद्रागानुविद्धासूया, 'का त्वरा' इत्यनेन धृतिः, 'अहं कुमारी' इत्यनेन स्मृतिः, 'हस्तालम्बं वितर' इत्यनेन श्रमः, 'हहहा' इत्यनेन दैन्यम्, 'व्युत्क्रमः' इत्यनेन विबोधः, 'क्वासि यासि' इत्यनेनौत्सुक्यम्, इत्येतेषां शबलता मिश्रता । अङ्गं परिपोषकम् । अत एव भावशबलसंज्ञकोऽलङ्कार इति भावः ।

( ४७ ) सम्प्रति रसवदाद्यलङ्कारमनङ्गीकुर्वतां मतं दूषयितुं तद्दूषणेन स्वमतं व्यवस्थापयितुं च तन्मतमुत्थापयति—इहेति । वाच्योऽर्थश्च वाचकः शब्दश्चेति तयो रूपं स्वरूपं तस्य अलङ्क्रियतेऽनेनेति अलङ्करणं शोभाजननं तदेव मुखं द्वारं तेन, रसाद्युपकारकाः रसादीनां परिपोषकाः केवलशब्दार्थवृत्तिविच्छित्तिरूपा धर्मा इत्यर्थः । रसादयः रसभावरसाभासभावाभासभावप्रशमादयस्तु वाच्यवाचकाभ्याम् अर्थेन शब्देन च उपकार्याश्चमत्कार्या । तेषां रसादीनाम्, अलङ्कारता अलङ्कारव्यवहारभाक्त्वम् । सुतरां रसवदादयोऽलङ्कारा नेति तेषामभिप्रायः ।

( ४८ ) अन्ये त्विति । रसवदादीनामलङ्कारव्यवहारभाक्त्वं मन्यमानाः कुवलयानन्दकारास्त्वित्यर्थः । रसादीनां मुख्यभूतानामित्यर्थः, उपकारमात्रेण येन केनापि प्रकारेण सामान्यत एव परिपोषमात्रेण, मात्रपदेन शब्दार्थद्वारेत्यस्य व्यवच्छेदः इह रसवदादौ, अलङ्कृतिव्यपदेशः अलङ्कारत्वेन व्यवहारः, भाक्तो गौणः, चिरन्तनप्रसिद्ध्या प्राचीनमतानुरोधेन । इति 'आहुः' इति पूर्वतोऽनुवर्तते । एवञ्च शब्दार्थान्यतरयुक्तचमत्कारविशेषस्यैव मुख्यालङ्कारत्वेन रसवदादीनामङ्गिभूतानां रसादीनां यथाकथञ्चित् परिपोषापादनात् प्राचीनमतानुरोधेन च न वास्तविकालङ्कारत्वममीषां किन्तु गौणालङ्कारत्वमेवेति तेषामाशयः ।

( ४९ ) अपरे चेति । रसवदादीनामपि वास्तविकालङ्कारत्वं मन्यमानाश्चेत्यर्थः । मुख्यतः वास्तविकतः प्रधानत इत्यर्थः । रूपकादाविति । अत्रादिपदेन सन्देहादीनां परि·

( ५० ) अभियुक्तास्तु—'स्वव्यञ्जकवाच्यवाचकाद्युपकृतैरङ्गभूतै रसादिभिरङ्गिनो रसादेर्वाच्यवाचकोपस्कारद्वारेणोपकुर्वद्भिरलङ्कृतिव्यपदेशो लभ्यते ।

( ५१ ) समासोक्तौ तु नायिकादिव्यवहारमात्रस्यैवालङ्कृतिता, न त्वास्वादस्य; तस्योक्तरीतिविरहात्' इति मन्यन्ते ।

( ५२ ) अत एव ध्वनिकारेणोक्तम्—

( ५३ ) 'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥'

ग्रहः । वाच्यादेः शब्दार्थयोः उपधानं शोभाजननम् । अजायाः छाग्याः गलस्तनन्यायेन तद्वत् । एवञ्च रसादीन् यः पदार्थं उपकरोति स एव प्रधानोऽलङ्कार इति रीत्या रूपकादौ रसाद्युपकारभिन्नं यत् वाच्यवाचकयोरपि शोभाजननं तत् प्राकृतिकम् तथाच अजा गले लम्बमानः स्तनो यथा दुग्धदानासमर्थोऽपि स्तनत्वेन व्यवह्रियते तथा रूपकादौ वाच्यादिशोभाजननयुक्तमलङ्कारत्वं भाक्तमिति भावः । एतेन रसवदाद्यलङ्काराणामपि गौणालङ्कारत्वमेवेति तदाशयः ।

( ६० ) एवं परमतं प्रदर्श्य स्वमतसमर्थकं मतं दर्शयति—अभियुक्तास्त्विति । सयुक्तिकप्रतिपादनेन सर्वमान्यास्त्वित्यर्थः अस्य अग्रिमेण 'मन्यन्ते' इति क्रियया सम्बन्धः । यत्त्वत्र सिद्धान्तवागीशा आहुरिति पूर्वेण सम्बन्ध इत्याहुः तत्कथमिति त एव प्रष्टव्याः । स्वम् अङ्गभूतं रसादि तस्य व्यञ्जकं द्योतकं यत् वाच्यवाचकादि शब्दार्थादि आदिपदात् लक्ष्यलक्षकाश्च तैः उपकृताः परिपोषमापादिता अभिव्यक्तिं प्रापितास्तैरित्यर्थः, अङ्गभूतैः अप्रधानभूतैः अङ्गिनः प्रधानस्य, रसादेरिति सम्बन्धसामान्यविवक्षया कर्मणि षष्ठी । वाच्यवाचकयोः शब्दार्थयोः उपस्कारः अध्याहारः स एव द्वारं तेन शब्दार्थाध्याहारेणेत्याशयः, यथा 'अयं स रसनोत्कर्षी' इत्यादौ शृङ्गारमात्रद्योतकशब्दार्थवति श्लोके करुणाद्योतकशब्दार्थाध्याहारः, उपकुर्वद्भिः उपकारतत्परैः 'अङ्गिनो रसादेरित्यन्वयः, अलङ्कृतिव्यपदेशः अलङ्कार इति व्यवहारः लभ्यते ( रसादिभिरिति कर्तृपदम् )। तथा च शब्दार्थौ यथा रसाद्युपकारकौ तथाङ्गभूतरसादयोऽपि रसादेरुपकारका एव वैपरीत्ये कश्चिद्विशेषानुपलम्भादिति भावः ।

( ६१ ) ननु समासोक्त्यलङ्कारे रसाद्युपकारकत्वाभाव एव, तत्र हि नायिकादिव्यवहारसमारोपजन्यास्वादस्यैवालङ्कारत्वम् , आस्वादश्च रसाद्यनतिरिक्त एवेति कथमलङ्कारत्वव्यपदेश इत्यत आह—समासोक्ताविति । नायिकादिव्यवहारमात्रस्येत्यत्र मात्रपदेनानुपदवक्ष्यमाणस्यास्वादस्य व्यवच्छेदः । आस्वादस्य रसादेः । तस्य आस्वादापरपर्यायस्य रसादेः, उक्तरीतिविरहात् शब्दार्थादिद्वारा रसाद्युपकारकत्वाभावात् एवञ्च तेषां मते रसादीनामङ्गिभूतानामुपकारकत्वादङ्गभूतानां रसादीनामलङ्कारत्वस्यावश्यं विधमानत्वेन रसवदादीनामपि स्वाभिमतमलङ्कारत्वं निर्विवादमेवेति प्रतिपादितम् ।

( ६२ ) ननु कस्यचिद्रसादेरुपकारकत्वं कस्यचिच्चोपकार्यत्वं प्रकल्प्य रसवदाद्यलङ्कारत्वं कथमभ्युपेयत इत्याशङ्कां निराकर्तुमाह—अत एवेति । अङ्गिभूतानां रसादीनामुपकारकत्वेनैव अङ्गभूतानां तेषामलङ्कारव्यवहारस्य वास्तविकत्वादेवेत्यर्थः ।

( ६३ ) प्रधानत इति । यत्र यस्मिन् काव्ये अन्यत्र स्वस्माद्भिन्ने रसादौ वाक्यार्थे

( ५४ ) यदि च रसाद्युपकारमात्रेणालङ्कृतित्वं तदा वाचकादिष्वपि तथा प्रसज्येत ।

( ५५ ) एवं च यच्च कैश्चिदुक्तम्—'रसादीनामङ्गित्वे रसवदाद्यलङ्कारः । अङ्गत्वे तु द्वितीयो दात्तालङ्कारः' इति, तदपि परास्तम् ।

वा प्रधाने अलङ्कार्ये सति अन्ये रसादयस्तु अङ्गम् अङ्गभूता तयोरुपकारका वाक्यार्थीभूतश्चान्यो भवति तस्मिन् काव्ये रसादिः अङ्गभूत इत्यर्थः, स एव अलङ्कारः अलङ्कारव्यपदेश्यो भवेत् इति मे मम ध्वन्यालोकनिर्मातुरानन्दवर्धनाचार्यस्येत्यर्थः मतिः सिद्धान्तः 'वर्तते' इति शेषः । अनेन ध्वनिकृन्मते रसवदादीनामलङ्कारत्वमक्षतमेवेत्युपपादितम् ।

( ५४ ) एवं स्वसिद्धान्तं प्रदर्श्य 'इह केचित्' इत्यादिना यन्मतत्रयमुपपादितं तमेव दूषयितुमुत्थापयति—यदि चेति । चकारस्य किञ्चेत्यर्थः । रसाद्युपकारमात्रेण रसादीनां केवलमुपकारकत्वेनैव न पुनः चमत्कारातिशायित्वेनापीति मात्रपदस्यार्थः, यदि अलङ्कृतित्वम् अलङ्कारेतिनामव्यपदेश्यत्वम् 'प्रतिपाद्यते भवद्भि' रिति शेषः, वाचकादिष्वपि शब्दादिष्वपि अपिना रसादिप्रत्यायकेष्वपि आदिपदेन लक्षकपरिग्रहः, बहुवचनोपादानन्तु व्यक्तिभिन्नत्वात् । तथा रसाद्युपकारमात्रत्वमादाय अलङ्कृतित्वम् । एवञ्च 'तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः काप्यजायत' 'शृङ्गारः सखि ! कौतुमान् वितनुते मुग्धो हरिः पातु वः' इत्यादौ रसशृङ्गारादिशब्दैरपि रसादीनां प्रतिपादनेनैवोपकृतत्वादलङ्कारत्वापातात् भवन्मतेऽतिव्याप्तिर्निर्बाधैव,प्रत्युत स्वशब्दवाच्यत्वदोष एवैतेष्विति विभावनीयम् । अस्मन्मते तु चमत्कारातिशायीतिविशेषणप्रविष्टेन चमत्कारातिशायित्वाभावान्नैतेष्वतिव्याप्तिरिति रसवदादावङ्गभूतरसादिभिरेव चमत्कारातिशायित्वाद्भवति अलङ्कारलक्षणसमन्वय इत्यभिप्रायः ।

( ५५ ) सम्प्रति पूर्वप्रतिपादितसर्वमताद्भुतं कस्यचिन्मतं निराकर्त्तुमुत्थापयति—एवञ्चेति । वादिप्रतिवादिसर्वसिद्धान्ते रसाद्युपकारकत्वमेवालङ्कारत्वमितिस्वीकारे चेत्यर्थः । अङ्गित्वे मुख्यत्वे अङ्गत्वे अमुख्यत्वे उपकारकत्वे इत्यर्थः, द्वितीयोदात्तालङ्कारः 'यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत्' इति प्रतिपादितद्वितीयोदात्तालङ्कार इत्यर्थः, तथाच तन्मते प्रतिपादितलक्षणे 'महतां चरितम्' इत्यस्य प्रवेशाभावेन केवलम् 'अप्रस्तुतानां प्रस्तुताङ्गत्वमुदात्तम्' इति सामान्यलक्षणप्रतिपादनादित्यवधेयम् । परास्तमिति । रसादीनामङ्गिनां केवलोपकार्यत्वेन उपकारकत्वस्यैवासत्त्वेन अलङ्कारत्वप्राप्त्यभावात् । अङ्गत्वे तूपकारकत्वेन रसवदादीनामप्यलङ्कारत्वाच्चतेरित्याशयः ।

यद्यपि—'गुणीभूतो रसो रसवत् भावस्तु प्रेयः रसाभासभावाभासौ ऊर्जस्वि भावशान्तिः समाधिः' इत्यभिधाय प्राचीनैर्मम्मटभट्टादिभिः रसादिचतुष्टयस्यैव (क)रसवदाद्यलङ्कारत्वं न तु भावोदयादीनामिति प्रतिपादितम् तथापि परोत्कर्षकत्वस्यालङ्कारत्वव्यवहारबीजस्य गुणीभूतरसादाविव भावोदयादावपि सत्त्वात् विनिगमनाविरहेण भावोदयादीनामपि अलङ्कारत्वाच्चतिरिति विवेचनीयम् ।

---

( क ) इतः परमष्टौ प्रत्यक्षानुमानोपमानशब्दा ऐतिह्यमर्थापत्तिरनुपलब्धिः सम्भवश्चेति प्रमाणालङ्काराः कैश्चिन्निरूपिताः । तथाहि—

( १ ) 'प्रत्यक्षमिन्द्रियज्ञानवर्णनं षड्विधं तु तत्' ।

**( ५६ ) यद्येत एवालङ्काराः परस्परविमिश्रिताः ।**
**तदा पृथगलङ्कारौ संसृष्टिः सङ्करस्तथा ॥ ९७ ॥**

( ५६ ) इयता प्रबन्धेनोक्तानां सर्वेषामप्यलङ्काराणां श्रृङ्गग्राहिकया लक्षणान्यभिधाय सम्प्रति तेषामेव एकस्मिन् स्थाने बहूनां सम्भवेऽतिरिक्तावलङ्कारौ भवत इत्यभिधातुमुत्थापयति—यद्येत इति । अत्र यदिपदात् तदापदाच्चानन्तरम् अपिपदं सामर्थ्या-

उदाहरणं यथा—

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च रसित्वाघ्राय यां जनः । मोदते घृतपक्वां तां शष्कुलीमर्पयामि ते ॥

अत्रानुक्रमेण षड्विधस्यापीन्द्रियज्ञानस्य वर्णनमिति प्रत्यक्षालङ्कारः ।

**( २ ) 'प्रतीतिर्लिङ्गिनो लिङ्गादनुमानमदूषितात्' ।**

उदाहरणं यथा—

निश्वासात् सोष्मणो ज्ञातं हृदि कामाग्निरस्ति ते ।

अत्र कामाग्निलिङ्गिनः सवाष्पनिश्वासरूपलिङ्गात् प्रतीतिरुक्तेत्यनुमानालङ्कारः

**( ३ ) सादृश्याद्वस्तुनो मानमुपमानं प्रकीर्तितम् ।**

उदाहरणं यथा—

बिम्बुलं पद्मरागाभं तद्वर्णा बिम्बुलाम्बिका ।

अत्रोपमानत्रयसम्भवात्संसृष्टिः ।

**( ४ ) श्रुत्यादिवाक्यविन्यासान्निश्चयः शब्द उच्यते ।**

उदाहरणं यथा—

साम्बशम्भुः परं ब्रह्म कैवल्योपनिषच्छ्रुतेः । स्पष्टम् ।

**( ५ ) ऐतिह्यं किंवदन्ती चेत्प्रमाणत्वेन भण्यते ।**

उदाहरणं यथा—

तिलमात्रमिदं लिङ्गं वर्धते वर्षे वर्षे विदुर्जनाः ।

अत्र शिवलिङ्गस्य वर्षे वर्षे तिलमात्रवृद्धौ जनवार्ता प्रमाणमिति ऐतिह्यम् ।

**( ६ ) कल्पनं चान्यथा सिद्ध्यार्थस्यार्थापत्तिरिष्यते ।**

उदाहरणं यथा—

गङ्गा पतिव्रता साक्षादन्यथाग्निं विशेत्कथम् । स्पष्टम् ।

**( ७ ) प्रमाणत्वेन निर्दिष्टानुपलब्धिरलङ्क्रिया ।**

उदाहरणं यथा—

अयशस्तव नास्तीति सत्यं यत्र श्रुतं क्वचित् ।

अत्रायशसोऽभावं प्रति श्रवणाभावः प्रमाणत्वेन दर्शित इत्यनुपलब्धिः ।

**( ८ ) सम्भवः स्यादलङ्कारः प्रमाणत्वं प्रयाति यः ।**

उदाहरणं यथा—

स्यान्मे कदाचिदिन्द्रत्वं चित्रा कर्मगतिर्यतः । स्पष्टम् ।

अत्र चत्वारि प्रमाणानि कणादादीनाम्, षट् वेदान्तिनाम्, अष्टौ मीमांसकानामलङ्कारिकाणां चेति । परन्त्वष्टावप्येते निरूपयितुमयोग्याः केषाञ्चिदुक्तेष्वेवालङ्कारेष्वन्तर्भावात् केषाञ्चिच्चमत्कारित्वाभावादिति स्पष्टमन्यत्र ।

(५७) यथा लौकिकालङ्काराणामपि परस्परमिश्रणे पृथक्चारुत्वेन पृथगलङ्कारत्वं तथोक्तरूपाणां काव्यालङ्काराणामपि परस्परमिश्रत्वे संसृष्टिसङ्कराख्यः पृथगलङ्कारौ ।

( ५८ ) तत्र—

**( ५९ ) मिथोऽनपेक्षमेतेषां स्थितिःसंसृष्टिरुच्यते ।**

( ६० ) एतेषां शब्दार्थालङ्काराणाम् । यथा—

( ६१ ) 'देवः पायादपायान्नः स्मेरेन्दीवरलोचनः ।
संसारध्वान्तविध्वंसहंसः कंसनिषूदनः ॥'

---

ज्ञातव्यम् । तथा च यद्यपि परस्परविमिश्रिता एकत्र गद्ये पद्ये वा प्रतिबन्धकाभावात् मिथो मेलनं गताः सन्तः, एत एव दर्शिताः अलङ्काराः शुद्धाः पुनरुक्तवदाभासादयः शब्दालङ्काराः, उपमादयः, रसवदाद्यर्थालङ्काराश्चेत्यर्थः, पृथक् पार्थक्येन निर्देष्टुं योग्याः सम्भवन्तीत्यर्थः, तदापि संसृष्टिः तन्नाम्ना सङ्कर इति नाम्ना च पृथग् भिन्नावलङ्कारौ ज्ञातव्याविति शेषः, बहुविधविच्छित्तेरेकस्मिन् गद्ये पद्ये वा मिश्रणे पृथग् विच्छित्तितयैव तदुपलम्भात् तस्य भिन्ननामत्वस्यैव योग्यत्वादितिभावः ।

( ५७ ) दृष्टान्तं प्रतिपाद्य विवृणोति—यथेति । लौकिका लोकप्रसिद्धा ये अलङ्काराः कटककुण्डलाद्या तेषाम् । अयमाशयः—यथा एकस्मिन्नवयवे कण्ठादौ बहवोऽलङ्कारा अभिन्नतयोपनिबद्धा भिन्नभूतामेव कामप्यनिर्वचनीयां शोभां जनयन्ति, यथा वा केनाप्यलङ्कारनिर्मात्रा बहुविधालङ्कारकार्यकारित्वं विधातुं तत्तत्सदृश एक एवालङ्कारस्तथा विधीयते स यथा कामप्यनिर्वचनीयां शोभां जनयन् तत्तदेकतरत्वं न परित्यजति, तथा क्वचिदलौकिका अप्यलङ्कारास्तिलतण्डुलन्यायेन क्वचिन्नीरक्षीरन्यायेन मिलिताः सन्तः कामपि भिन्नभूतां शोभां सम्पादयन्तीति तेषां मिश्रणं संसृष्टिसङ्करव्यपदेश्यमिति भावुकाः ।

( ५८ ) इत्थं संसृष्टिसङ्करयोः साधारणलक्षणमभिधाय विशेषलक्षणमभिधातुमाह—तत्रेति । तयोः संसृष्टिसङ्करयोर्मध्य इत्यर्थः ।

( ५९ ) क्रमप्राप्तत्वात्प्रथमं संसृष्टिं लक्षयति—मिथ इति । एतेषां निरुक्तलक्षणानाम् । अत्र बहुत्वमविवक्षितम्, तेन ययोः कयोश्चिदलङ्कारद्वयोः येषां केषाञ्चित् अनेकालङ्काराणां वा मिथः परस्परम् अनपेक्षया उपकार्योपकारकत्वनैरपेक्ष्येण स्थितिः, एकत्र गद्ये पद्ये वा अवस्थानं तिलतण्डुलन्यायेनेतिशेषः, संसृष्टिः तन्नामालङ्कारः उच्यते आलङ्कारिकैरिति शेषः । सेयं संसृष्टिः बहुविधशब्दालङ्कारमात्रस्य, बहुविधार्थालङ्कारमात्रस्य, बहुविधशब्दार्थोभयालङ्कारस्य च मिथोऽनपेक्षया स्थितत्वे त्रिप्रकारेति बोध्यम् ।

( ६० ) काठिन्यांशं परिहर्तुमाह—एतेषामिति । शब्दार्थेत्यादि उपलक्षणञ्चैतत्, तेन रसवदादीनामलङ्काराणामपि संसृष्टिसङ्करौ ज्ञातव्यौ तुल्यन्यायात् प्रतिबन्धकासत्त्वाच्च । अत एव प्रेयोरसवदालङ्कारयोः सङ्करः ग्रन्थकृत—'आमीलितालसविवर्त्तिततारकाक्षीम्' इत्याद्युदाहृणे सङ्गच्छते ।

( ६१ ) त्रिविधसंसृष्टिरेकत्रस्थल एवोपपादयति—देव इति । स्मेरे प्रफुल्ले इन्दीवरे नीलकमले तद्वल्लोचने चक्षुषी यस्य सः, संसारश्चराचरात्मकं जगदेव ध्वान्तम् अन्धकारं

( A ) अत्र पायादपायादिति यमकम् , संसारेत्यादौ चानुप्रास इति शब्दालङ्कारयोः संसृष्टिः । द्वितीये पादे उपमा, द्वितीयार्धे च रूपकमित्यर्थालङ्कारयोः संसृष्टिः । एवमुभयोः स्थितित्वाच्छब्दार्थालङ्कारसंसृष्टिः ।

**( ६२ ) अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ ।**
**संदिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः ॥ ९८ ॥**

तस्य विध्वंसे विनाशविषये हंसः सूर्यः 'भानुर्हंसः सहस्रांशुः' इत्यमरः, तथा कंसस्य उग्रसेनसुतस्य निसूदनो निहन्ता देवः श्रीकृष्णः, न अस्मान् अपायात् क्लेशात् पायात् रक्षेत्।

( A ) लक्ष्यं सङ्गमयति—अत्रेति । 'ध्वान्तविध्वंस' इत्यत्र ध्वयोरनेकधा सकृत् साम्यात् छेकानुप्रासः, एवं 'विध्वंस हंस कंस' इत्यत्रान्त्यानुप्रासः 'संसारे' त्यादौ वृत्त्यनुप्रासश्चेत्येतेषां मिथोऽनपेक्ष्यत्वेनावस्थानात् संसृष्टिः । उपमेति समासगता लुप्तोपमेत्यर्थः । रूपकमिति श्रीकृष्णे सूर्यत्वारोपस्य संसारे ध्वान्तत्वारोपकारणमिति श्लिष्टशब्दनिबन्धनं केवलपरम्परितरूपकमित्यर्थः । उभयोरिति । यमकानुप्रासयोः उपमारूपकयोः शब्दार्थालङ्कारयोरित्यर्थः स्थितत्वात् मिथोऽनपेक्षया अवस्थानत्वादित्यर्थः । उदाहरणान्तरं यथा—

'आनन्दमन्थरपुरन्दरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु मे विजयाय मञ्जु- मञ्जीरसिञ्जितमनोहरमम्बिकायाः॥

अत्र हि अनुप्रासोपमयोः संसृष्टिः ।

( ६२ ) एवं संसृष्टयलङ्कारं निरूप्य सम्प्रत्यवशिष्टं सङ्करालङ्कारस्त्रिविधो भवतीति निरूपयति—अङ्गाङ्गित्व इति । अलङ्कृतीनामित्यत्र बहुत्वमविवक्षयित्वा सर्वत्र सम्बन्धो ज्ञेयः । तथा च विविधालङ्कारस्य अङ्गाङ्गित्वे अनुग्राह्यानुग्राहकत्वे उपकार्योपकारकत्वे सापेक्षभावेन गुणप्रधानभावेन वा, तदुक्तम्—

अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्कर इति ।

तद्वत् तथा विविधस्यालङ्कारस्य एकत्र आश्रये पदे पादे वाक्ये वा स्थाने स्थितौ, तथा विविधस्यालङ्कारस्य सन्दिग्धत्वे विविधलक्षणसमन्वयात् "अयमलङ्कारो भवेत् एष वा" इति संशयविषयत्वे तेषां साधकबाधकाभावेन स्थितत्वे चेत्यर्थः सङ्कीर्यमाणस्वरूपत्वात्सङ्करो भवति; अत एव सोऽपि पुनः सङ्करः संसृष्टिवदेव त्रिविधस्त्रिप्रकारः । उक्तानामेवालङ्काराणां चारुत्वार्थं स्वरूपनिष्पत्तये चान्यापेक्षणादात्मन्यनासादितस्वतन्त्रभावानां यत् परस्परम् अनुग्राह्यानुग्राहकत्वादिकं स तु सङ्करो नामालङ्कारः । स त्वङ्गाङ्गित्वादिना त्रिविध इति सारार्थः ।

संसृष्टेर्विषयपार्थक्याभावात् सामान्यरूपत्वम् , सङ्करस्य तु विषयपार्थक्याद् विशेषरूपत्वम्, इत्थञ्च सामान्यस्य विशेषातिरिक्तवृत्तित्वनियमाद् विविधालङ्कारस्य परस्परापेक्षाभावेनापि एकाश्रयस्थितिपक्षे सन्दिग्धत्वपक्षे च सङ्कर एव । इत्थमेव सङ्करेषु एकाश्रयस्थितिसङ्करस्यापि साधारणरूपत्वेन अङ्गाङ्गिभावसन्दिग्धसङ्करयोर्विशेषरूपयोर्भिन्नस्थल एव तस्य विषयत्वम् । तथा संसृष्टिलक्षणे एतेषामिति । अत्र च लक्षणे अलङ्कृतीनामित्युभयोरलङ्कारसामान्यपरत्वेन संसृष्टिसङ्करयोरप्युपादानात् विविधसंसृष्टेः विविधसङ्करस्य संसृष्टिसङ्करयोर्द्वयोश्च परस्परापेक्षाभावेन स्थितौ पुनः संसृष्टिः, अङ्गाङ्गिभावादौ च पुनः सङ्करः सम्भवत्येवेति धीधनैर्विद्वद्भिरेव विभावनीयम् ।

अङ्गाङ्गिभावो यथा—

( ६३ ) 'आकृष्टिवेगविगलद्भुजगेन्द्रभोग-
निर्मोकपट्टपरिवेष्टनयाम्बुराशेः ।
मन्थव्यथाव्युपशमार्थमिवाशु यस्य
मन्दाकिनी चिरमवेष्टत पादमूले ॥'

( ६४ ) अत्र निर्मोकपट्टापह्नवेन मन्दाकिन्या आरोप इत्यपह्नुतिः । सा च मन्दाकिन्या वस्तुवृत्तेन यत्पादमूलवेष्टनं तच्चरणमूलवेष्टनमिति श्लेषमुत्थापयतीति तस्याङ्गम् । श्लेषश्च पादमूलवेष्टनमेव चरणमूलवेष्टनमित्यतिशयोक्तेरङ्गम्, अतिशयोक्तिश्च मन्थव्यथाव्युपशमार्थमिवेत्युत्प्रेक्षाया अङ्गम् । उत्प्रेक्षा चाम्बुराशिमन्दाकिन्योर्नायकनायिकाव्यवहारं गमयतीति समासोक्तेरङ्गम् ।

---

( ६३ ) आकृष्टीति । समुद्रमन्थनसमये समुद्रवर्णनमिदम् । मन्दाकिनी लक्षणया गङ्गेत्यर्थः "मन्दाकिनी वियद्गङ्गा" इत्यमरः, पतिव्रता स्त्री चेति प्रतीयते, आकृष्टेर्मन्थनसमये देवादिगणैरुभयत आकर्षणस्य वेगोऽत्यन्तत्वरया विधानं तेन विगलन् दूरीभवन् यो भुजगेन्द्रभोगस्य वासुकेः कायस्य निर्मोकश्चर्मकञ्चुक एव पट्टो बन्धनवस्त्रम्, तस्य परिवेष्टनया परिवेष्टनविधानव्याजेन, अम्बुराशेः समुद्रस्य पत्युरिति च प्रतीयते, मन्थने या व्यथा तस्या व्युपशमो विशेषेणोपशमनं तदर्थमिव मन्थनोत्पादितव्यथाशान्त्यर्थमिव, आशु झटिति, यस्य समुद्रस्य पत्युरिति च व्यज्यते, पादमूले एकदेशे पक्षे चरणसमीपे च चिरं बहुकालम् अचेष्टत पर्यवहत् प्रत्यवरोध्य धारणमकरोच्च । वसन्ततिलकाछन्दः तल्लक्षणञ्चोक्तं प्राक् ( १९३ पृ० ) ।

( ६४ ) अङ्गाङ्गिभावमुपपादयति—अत्रेति । निर्मोकपट्टस्य अपह्नवेन परिवेष्टनात्मतया प्रतिपादनेनेत्यर्थः । अपह्नुतिर्वस्तुना अपह्नुतिध्वनिः, तत्प्रतिपादकस्याभावत्वादितिबोध्यम् । सा च अपह्नुतिश्च वस्तुवृत्तेन वस्तुगत्या अन्यपदार्थानुसन्धानवशेनेत्यर्थः । यस्य अम्बुराशेः पादमूल ( एकदेश ) वेष्टनमिति तथोक्तम् । तस्य श्रीपतेः पत्युश्चरणवेष्टनम् । श्लेषं विभक्तेरैक्यात् "नीतानामाकुलीभावम्" इत्यादिवत् प्रकृतिश्लेषम् उत्थापयति अर्थशक्त्या निरूपयति निर्मोकपट्टैः गङ्गारोपाभावे चरणार्थकश्लेषाप्रतीतेरित्यर्थः तस्य श्लेषस्य, अङ्गं परिपोषिका । स च श्लेषोऽतिशयोक्तेरङ्गमित्युपपादयति—श्लेषश्चेति । अतिशयोक्तिं दर्शयति—पादमूलवेष्टनमेवेति अतिशयोक्तेः समुद्रकृष्णसमीपस्थयोर्भेदेऽप्यभेदाध्यवसायरूपातिशयोक्त्यालङ्कारस्य । अतिशयोक्तिरपि वाच्योत्प्रेक्षाया अङ्गमित्युपपादयति—अतिशयोक्तिश्चेति । अयम्भावः—इवशब्दप्रतिपादनोत्प्रेक्षा, उक्तरूपातिशयोक्तिश्चात्र, तत्रोभयोर्मध्ये अतिशयोक्तिरुत्प्रेक्षायाः परिपोषकतां विनोत्तम्भिताया अप्यस्याश्चमत्काराभावात् । समुद्रस्याचेतनतया मन्थनव्यथाया असम्भवात् तत्र विष्णुसादृश्यमाश्रित्यैव गङ्गाया मन्थनव्यथाव्युपशमपरत्वोत्प्रेक्षणस्यौचित्यमिति । उत्प्रेक्षापदेनेवशब्दस्य सत्त्वेन वाच्यरूपैव न तु फलरूपेत्यवधेयम् । एवञ्च उत्प्रेक्षायाः फलोत्प्रेक्षाया इति व्याख्यानमसङ्गतमेवेत्यालोचनीयम् । उत्प्रेक्षापि समासोक्तेरङ्गमिति दर्शयति—उत्प्रेक्षा चेति । समुद्रगङ्गयोर्नायकनायिकाव्यवहारज्ञानस्य मन्थनव्यथोपशमा-

( ६५ ) यथा वा—

( ६६ ) 'अनुरागवती संध्या दिवसस्तत्पुरःसरः ।
अहो ! दैवगतिश्चित्रा तथापि न समागमः ॥'

( ६७ ) अत्र समासोक्तिर्विशेषोक्तेरङ्गम् ।

( ६८ ) संदेहसङ्करो यथा—

( ६९ ) 'इदमाभाति गगने भिन्दानं सन्ततं तमः ।
अमन्दनयनानन्दकरं मण्डलमैन्दवम् ॥'

---

र्थतोऽप्रेक्षांविनाऽचेतनयोरसम्भवादित्याशयः । समासोक्तेर्लिङ्गसादृश्यघटितायाः, अङ्ग परिपोषिका ।

( ६४ ) कारिकायामलङ्कृतीनामित्यत्र बहुत्वमविवक्षितमिति द्योतनाय बहूनामङ्गाङ्गिभावेन सङ्करमुपपाद्य द्वयोरपि तद्दर्शयितुमाह—यथा वेति ।

( ६६ ) उदाहरति—अनुरागेति । सायं सन्ध्यावर्णनमिदम् । सन्ध्या सायं कालः तदात्मना व्यवहृता काचिन्नायिका च, अनु दिवसस्य पश्चात् रागवती रक्तोत्पलादि सदृशलौहित्यवती सुरताभिलाषया प्रेमवती च, दिवसो वासरस्तदात्मना व्यवहृतो नायकश्च, तस्याः सन्ध्यायाः तदात्मना व्यवहृताया नायिकायाश्च पुरःस्सर अवसानाय सुरताय च पुरोवर्त्ती सम्मुखवर्त्तीत्यर्थः । अहो आश्चर्यम् ! तथापि तयोः पाश्चात्यपुरस्स्थयोः सन्धादिवसयोः न समागमः परस्परं मेलनं भवतीति शेषः; अत एव दैवगतिः विधिव्यवहारः, चित्रा विलक्षणा विधिवशादेव तयोर्न समागमो भवतीतिभावः ।

( ६७ ) लक्ष्यं समर्थयति—अत्रेति । समासोक्तिः रागवत् सन्ध्यापुरस्सरदिवसयोः दैवात्समागमरहितयोः लिङ्गसादृश्ययुक्ता समासोक्तिरित्यर्थः । विशेषोक्तेः सुरताय नायकस्य नायिकायाः पाश्चात्यपुरस्स्थरूपहेतौ सत्यपि सुरतात्मकसमागमरूपतत्कार्याभावादित्याशयः । अङ्गं परिपोषिका । यदि च "दैवगतिश्चित्रा" इत्येतमर्थं प्रति वाक्यान्तरार्थस्य हेतुत्वेन काव्यलिङ्गं तत्प्रति च विशेषोक्तेरङ्गत्वमिति विभाव्यते तदा—

"पुलिन्दास्ते रिपुस्त्रीणां वने हारं हरन्ति नो ।
बिम्बोष्ठकान्त्या शोणं तं गुञ्जमालां हि मन्यते ॥" इत्युदाहार्यम् ।

अत्र हारेण बिम्बोष्ठकान्तेर्ग्रहणात् तद्गुणोऽलङ्कारः । तेन च गुञ्जाहारभ्रान्त्युत्पादनात् भ्रान्तिमांस्तद्गुणस्य सम्पादकमङ्गम् । यथा वा "क सूर्यप्रभवो वंशः" इत्याद्युदाहार्यम् ।

( ६८ ) क्रमवशेन पूर्वमुदाहर्त्तुं युक्तस्यापि एकाश्रयस्थितिरूपसङ्करस्य अङ्गाङ्गिभावसन्देहसङ्करातिरिक्तो विषय इति एकाश्रयस्थितिरूपसङ्करमनुदाहृत्य प्राक् सन्देहसङ्करमेवोदाहर्त्तुमाह—सन्देहसङ्कर इति ।

( ६९ ) इदमिति । सन्ततं सम्यग्व्याप्तम्, पक्षे विपुलीभूतं च तमः अन्धकारं मद्वजनितमज्ञानं च ( कर्म ) भिन्दानं विनाशयन्, अमन्दं यथास्यात्तथा नयनयोरानन्दस्तस्य करं विधायकम्, इ ं दृश्यमानम्, ऐन्दवमिन्दुसम्बन्धि मण्डलं बिम्बम् आभाति शोभते ।

( ७० ) अत्र किं मुखस्य चन्द्रतयाऽध्यवसानादतिशयोक्तिः, उत इदमिति मुखं निर्दिश्य चन्द्रत्वारोपान्मुखम्, अथवा इदमिति मुखस्य चन्द्रमण्डलस्य च द्वयोरपि प्रकृतयोरेकधर्माभिसंबन्धात्तुल्ययोगिता, आहोस्विच्चन्द्रस्याप्रकृतत्वाद्दीपकम्, किं वा विशेषणसाम्यादप्रस्तुतस्य मुखस्य गम्यत्वात्समासोक्तिः, यद्वाप्रस्तुतचन्द्रवर्णनया प्रस्तुतस्य मुखस्यावगतिरित्यप्रस्तुतप्रशंसा, यद्वा मन्मथोद्दीपनः कालः स्वकार्यभूतचन्द्रवर्णनामुखेन वर्णित इति पर्यायोक्तिरिति बहूनामलङ्काराणां संदेहात्संदेहसङ्करः ।

( ७१ ) यथा वा—

( ७२ ) 'मुखचन्द्रं पश्यामि' इत्यत्र किं मुखं चन्द्र इत्युपमा, उत चन्द्र एवेति रूपकमिति संदेहः ।

( ७३ ) साधकबाधकयोर्द्वयोरेकतरस्य सद्भावे न पुनः संदेहः । यथा—

( ७० ) लक्षणं समर्थयति—अत्रेति । अतिशयोक्तिः इदं पदार्थस्य मुखरूपत्वेऽपि चन्द्रतयाऽध्यवसानात् भेदे अभेदाध्यवसायरूपा । निर्दिश्येत्यनेन मुखस्य अनिगरणमुपपादितम् अत एव रूपकं तद्धि निरङ्गं केवलरूपकम् । तुल्ययोगितेति । इदम्पदवाच्यं मुखम् ऐन्दवमण्डलपदवाच्यं चन्द्रबिम्बं च उभयोश्च सन्ततमोभेदनादिरूपस्य धर्मस्य तुल्यतया भाभातीत्येकक्रिययाभिसम्बन्धादित्याशयः । चन्द्रस्याप्रकृतत्वादिति । मुखस्य च प्रस्तुतत्वादिति व्यज्यते तथा च मुखस्यैव प्रक्रान्तत्वे तदुपमानतयैव चन्द्रनिर्देशे तस्याप्रकृतत्वेन तयोश्चाभातीत्येकक्रियाभिसम्बन्धात् दीपकमित्यर्थः । समासोक्तिं दर्शयति—किं वेति । विशेषणसाम्यादिति । इदम्पदवाच्यं यदीन्दुमण्डलं प्रस्तुतं विशेषणसाम्यात् मुखव्यवहारश्च यदि प्रतीयते तदा चन्द्रमण्डले मुखस्य व्यवहारसमारोपात् समासोक्तिरितिभावः । मुखवर्णनस्यैव प्रक्रान्तत्वेऽप्रस्तुतप्रशंसेत्याह—यद्वेति । अप्रस्तुतप्रशंसा समात् ( चन्द्रात् ) समुमुखरूपा । स्वकार्येति । स्वस्य कामोद्दीपनसमयस्य रात्रेरित्यर्थः कार्यभूतो यश्चन्द्रोदयस्तस्य वर्णनामुखेन वर्णनाद्वारा । तथा च इदम्पदेन सम्प्रति सुरतावसर इत्यवगतं चेत् पर्यायोक्तिरित्याशयः । इत्येवं बहूनाम् अतिशयोक्त्यादीनाम्, अलङ्काराणां साधकबाधकाभावेनेतिशेषः ।

( ७१ ) अलङ्कृतीनामितिकारिकोक्तपदस्य "सन्दिग्धत्वे" इत्यत्राप्यन्वयात्तत्रापि पूर्ववदेव बहुत्वमविवक्षितमिति बोधनाय द्वयोरप्यलङ्कारयोः सन्देहसङ्करमुपपादयितुमाह—यथा वेति ।

( ७२ ) मुखचन्द्रमिति । उपमेति । "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" २।१।५६ इत्यनेन समासे तस्य च लोपेन "क्विप्समासगता द्विधा धर्मवादिविलोपने" इत्युक्तस्वरूपा सादृश्यवाचकसाधारणधर्मयोर्लोपस्थलीया उपमितसमासगता लुप्तोपमेत्यर्थः । चन्द्र एवेतीति । मुखमिति पूर्वतोऽनुवर्तते । रूपकं निरङ्गं केवलरूपकम् । तच्च "मयूरव्यंसकादयश्च" इत्यनेन समासाश्रयणे इति बोध्यम्, उभयत्रापि दोषाभावात् समासस्योभयत्राऽप्युपपत्तिरित्याशयः, इति हेतोः सन्देहः ।

( ७३ ) ननु साधकबाधकयोरेकतरोपलम्भेऽपि किं सन्देहो भवतीत्याशङ्कायामाह—साधकेति । साधक एकतरस्य बोधकः, बाधकोऽप्येकतरस्य निषेधकः, अनयोर्द्वयोरेवोपलम्भे अथवा अनयोरेकतरस्य साधकस्य बाधकस्यैवोपलम्भे इत्यर्थः ।

( ७४ ) 'मुखचन्द्रं चुम्बति' इत्यत्र चुम्बनं मुखस्यानुकूलमित्युपमायाः साधकम् । चन्द्रस्य तु प्रतिकूलमिति रूपकस्य बाधकम् ।

( ७५ ) 'मुखचन्द्रः प्रकाशते' इत्यत्र प्रकाशाख्यो धर्मो रूपकस्य साधको मुखे उपचरितत्वेन संभवतीति नोपमाबाधकः ।

( ७६ ) 'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ।'

( ७७ ) अत्र योषित आलिङ्गनं नायकस्य सादृश्येनोचितमिति लक्ष्म्यालिङ्गनस्य राजन्यासंभवादुपमाबाधकम् , नारायणे संभवाद्रूपकम् ।

---

( ७४ ) तत्र साधकबाधकयोरुभयोरुपलम्भे दर्शयति—मुखचन्द्रं चुम्बतीति । इत्यत्र समासस्योपमारूपकोभयघटकत्वेऽपि, चुम्बनं मुखसंयोगानुकूलव्यापारः, मुखस्यानुकूलं मुखे सम्भवपरम् चन्द्रतुल्यमुख एवान्वितमित्यर्थः, न तु मुखात्मके चन्द्रे सम्भोगचुम्बनासम्भवात् । चन्द्रस्य तु प्रतिकूलं चन्द्रेऽसम्भवमित्यर्थः, तस्य नभोवर्त्तित्वादिति भावः । बाधकमिति । अतोऽत्र नालङ्कारद्वयं न वा तस्य सङ्कर इत्याशयः । अत्रेदम्बोध्यम्–उपमायां सादृश्यांशे उपमानं विशेषणीकृत्य उपमेय मुख्यत्वेन विशेष्यत्वेन प्रतिपाद्यते अतः प्राधान्यतयोपमेये सम्भवदेव विशेषणं गृह्यते । रूपके तु—अभेदेनोपमेयं गोपयित्वा उपमानमेव मुख्यत्वेन प्रतिपाद्यते । अतः प्राधान्येनोपमाने एवान्वयसमर्थविशेषणं गृह्यते । तस्य उपमेये कथञ्चिदुपचर्यते, अतो विशेषणांशस्य यदि उपमेये सम्भवस्तदोपमा, यद्युपमाने सम्भवस्तदा रूपकमेव । तेन "अव्यक्तं प्रधानगामि" इति जैमिनीयन्यायेन अन्वये अनिश्चितस्य चुम्बतीतिपदस्य प्रधानेनैव सम्बन्धो वक्तव्यः । तथा च मेदिनीस्थपुरुषकर्तृकचुम्बनस्य मुख एव सम्भवात् मुखस्य प्राधान्याभिधानाय उपमितसमासस्यैवावलम्ब्यमानतया चुम्बतीतिपदमेवोपमायाः साधकं रूपकस्य च बाधकमिति प्रतिपादितमेव । एवमग्रेऽपि ज्ञेयम् ।

( ७५ ) साधकबाधकयोर्मध्ये कस्यचिदेकतरस्योपलम्भे दर्शयति—मुखचन्द्रः प्रकाशत इति । प्रकाशाख्यः तिमिरनाशाख्यः तेजः स्फुरणारूपः । रूपकस्य साधक इति । स च प्रकाशाख्यो धर्मश्चन्द्रे एव साक्षाद्वर्त्तीत्यतो विशेष्यत्वेन प्रतीयमाने चन्द्रे साक्षादुचितत्वादिति चन्द्रान्वयार्थं "मुखमेव चन्द्र" इति चन्द्रस्य प्राधान्याभिधायकरूपकसमासस्यैवावलम्ब्यमानत्वादितिभावः । उपमायास्तु न बाधक इत्यत आह—मुखे इति । उपचरितत्वेन चन्द्रतुल्यमुखेऽपि चन्द्रधर्मप्रकाशनारोपसम्भवेन शोभन इत्यर्थकतया लक्षितत्वेन । नोपमाबाधक इति । अनेन रूपकस्य केवलं साधकत्वमेवोपपादितम् , अतोऽत्रोपमारूपकयोः सन्देहसङ्कर इति केचित्, संसृष्टिरित्यपरे ।

( ७६ ) उपमाबाधकोपलम्भेऽपि दर्शयति—राजनारायणमिति ।

'चञ्चलाऽपि चिरायात्मदूषणं परिमार्ज्य सा' इत्युत्तरार्धमिति केचित् ।

लक्ष्मीः, राजा एव नारायणस्तं त्वां निर्भरं स्थिरप्रेमपूर्वकम् आलिङ्गति ।

( ७७ ) अत्रेति । लक्ष्मीरत्र नारायणस्य पत्नी न तु सम्पत् अत आह—योषित इति । योषितो नायिकायास्तत्कर्तृकमितिभावः । नायकस्य स्वयोग्यपुरुषस्य, सदृशेन तुल्यस्थान-प्रभावजात्यादिना समानेन अन्येन नायकेन सहेत्यर्थः, उचितं योग्यम् , इति हेतोः लक्ष्म्यालिङ्गनस्य लक्ष्मीकर्तृकस्यावलेपस्य । असम्भवात् केवलमनुष्यस्य राज्ञः

( ७८ ) एवम्—

'वदनाम्बुजमेणाक्ष्या भाति चञ्चललोचनम् ।'

( ७९ ) अत्र वदने लोचनस्य सम्भवादुपमायाः साधकता, अम्बुजे चासंभवाद्रूपकस्य बाधकता । एवं—

( ८० ) 'सुन्दरं वदनाम्बुजम्' इत्यादौ साधारणधर्मप्रयोगे 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति वचनादुपमासमासो न संभवतीत्युपमाया बाधकः । एवं चात्र मयूरव्यंसकादित्वाद्रूपकसमास एव ।

( ८१ ) एकाश्रयानुप्रवेशो यथा मम—

( ८२ ) 'कटाक्षेणापीषत्क्षणमपि निरीक्षेत यदि सा
तदानन्दः सान्द्रः स्फुरति पिहिताशेषविषयः ।

---

लक्ष्मीयोग्यपुरुषापेक्षया स्थानप्रभाव–जात्यादिनात्यन्तमधमत्वादित्यभिप्रायः । उपमाबाधकं लक्ष्मीकर्त्तृकम् "आलिङ्गति" इति पदमित्यर्थः । नारायणे च सम्भवादिति रूपके नारायणस्यैव विशेष्यत्वात्तत्रैव लक्ष्म्यालिङ्गनस्यान्वयात् । रूपकम् उक्तविधरूपकसमासस्यैवाश्रयणीयत्वादितिभावः ।

( ७८ ) विशेषणस्य साधकबाधकतायां दर्शयितुमाह—एवमिति । वदनाम्बुजमिति । चञ्चले चपले लोचने नयने यत्र तत्तादृशम् , एणाक्ष्याः मृगलोचनाया नायिकायाः, वदनं मुखम् अम्बुजं पद्ममिव तद्भाति ।

( ७९ ) लक्ष्यं समर्थयति—अत्रेति । उपमायाः साधकतेति । प्रदर्शितदिशा वदनस्य प्राधान्योपपत्त्यर्थमुपमितसमासस्यैवाश्रयादित्याशयः । असम्भवात् लोचनस्येति पूर्वेणान्वयः ।

( ८० ) पुनरपि भिन्नप्रकारेण विशेषणस्य साधकबाधकतायामुदाहरति–सुन्दरमिति । उपमितं व्याघ्रादिभिरिति । सामान्याप्रयोगे साधारणधर्माप्रतिपादने सति व्याघ्रादिभिरुत्तरपदैः सुबन्तैः सह उपमितं पूर्वपदं सुबन्तं समस्यत इति सूत्रार्थः । न सम्भवतीति । वदनसुन्दराम्बुजमित्यत्र वदनमेव सुन्दराम्बुजमित्येव समासः रूपकसमासस्य मयूरव्यंसकादेराकृतिगणत्वेन तेष्वन्तर्भावात् , न तु ।वदनं सुन्दरमम्बुजमिव इति वदनं सुन्दराम्बुजमित्यपि वा समासः पाणिनिसूत्रेण साधारणधर्मवाचकाप्रयोग एवोपमितसमासविधानेन प्रकृते सुन्दरेतिसाधारणधर्मवाचकस्य प्रयोगात् । इति हेतोः उपमाया बाधकः, सुन्दरमिति सौन्दर्यरूपसाधारणधर्मप्रयोग इति शेषः । एवञ्च उपमितसमासस्य बाधकत्वे चेत्यर्थः ।। मयूरव्यंसकादित्वात् "मयूरव्यंसकादयश्च २।१।७२ इति सूत्रेणेति शेषः ।

( ८१ ) सम्प्रति पारिशेष्यादेकाश्रयस्थितिरूपसङ्करं प्रदर्शयितुमाह—एकाश्रयेति । एकत्राश्रये पदरूपे पादरूपे वाक्यरूपे वा स्थाने अनुप्रवेशः विविधशब्दालङ्कारस्य विविधार्थालङ्कारस्य विविधोभयालङ्कारस्य वा समावेशः ।

( ८२ ) कटाक्षेणापीषदिति । काञ्चिन्नवयौवनामुद्दीक्ष्य मनसा भावयतः कस्यचित् साभिलाषोक्तिरियम् । सा मनोरमतया प्रसिद्धा नायिका यदि क्षणं किञ्चित्कालमपि कटाक्षेणापि ईषत् अल्पमपि निरीक्षेत मामवलोकयेत्, तदा सान्द्रो निविडः, तथा पिहि-

सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः
परीरम्भारम्भः क इव भविताम्भोरुहदृशः ॥'

( ८३ ) अत्र कटाक्षेणापीषदपि क्षणमपीत्यत्र च्छेकानुप्रासस्य निरीक्षेतेत्यत्र क्षका-रमादाय वृत्त्यनुप्रासस्य चैकाश्रयेऽनुप्रवेशः ।

( ८४ ) एवं चात्रैवानुप्रासार्थापत्त्यलङ्कारयोः ।

( ८५ ) यथा वा—

( ८६ ) 'संसारध्वान्तविध्वंस–' इत्यत्र रूपकानुप्रासयोः ।

---

ता आच्छादिता अशेषाः समग्रा विषया येन स तथोक्तः सर्वविषयवर्त्तीत्यर्थः, आनन्दः प्रमोदः स्फुरति हृदये दीप्यते । किन्तु अम्भोरुहे कमले इव दृशौ नयने यस्याः तस्याः कमलनयनाया नायिकाया इत्यर्थः, सरोमाञ्चौ स्मरावेशात् सपुलकौ, अत एव उदञ्चन्तौ वर्धमानौ यौ कुचकलशौ ताभ्यां निर्भिन्नं छिन्नं ततः परिभ्रष्टं वा वसनं यत्र स तथोक्तः, परीरम्भस्यालिङ्गनस्यारम्भः प्रारम्भः क इव भविता कटाक्षेणैव कृतार्थोऽहं तत्परिरम्भं नापेक्ष इत्यर्थः, यद्वा कटाक्षपातनतोऽधिकतरः परिरम्भारम्भः क इव भविता तज्ज्ञातुं न शक्यते अवाङ्मनसगोचरानन्ददायको भविष्यतीतिभावः । शार्दूलविक्रीडितं छन्दस्तल्लक्षणन्तूक्तं प्राक् ( ११८ पृ० ) ।

( ८३ ) लक्ष्यं समर्थयति—अत्रेति । छेकानुप्रास इति "छेको व्यञ्जनसङ्घस्य सकृत्सा-म्यमनेकधा" इत्यनेनानेकस्य व्यञ्जनस्य स्वरूपतः क्रमतश्च साम्ये सति छेकानुप्रास-स्योक्तत्वात्, संयुक्तानेकवर्णस्य तु आनुपूर्व्यसम्भवात् तादृशोऽनेकस्य ककारषकारसं-युतक्षकारस्य सकृत्साम्याच्छेकानुप्रास इत्यर्थः । इत्यत्र स्थितमिति शेषः । तादृशस्यैव क्षकारान्तरसाहित्यादनेकधात्वे वृत्त्यनुप्रास इत्याह—"निरीक्षेत" इति । वृत्त्यनुप्रासस्य चेति । तृतीयक्षकारग्रहणे क्षकाराणामनेकत्वात् स्वरूपतः क्रमतश्च असकृत् साम्येन "असकृद्वाप्यनेकधे" तिलक्षणसमन्वयाद्वृत्त्यनुप्रास इति भावः । अनयोरेकस्मिन् पादरूपे आश्रये समावेशः । एवं च क्षकारद्वयघटितछेकानुप्रासेन क्षकारान्तरसाहित्यवशात् वृत्त्य-नुप्रासजननादङ्गाङ्गिभावसङ्करोऽप्यत्राऽस्तीत्यतः ।समासैकपादरूपाश्रयेऽसङ्कीर्णमुदाहरणं मृग्यम् । एवमेव तुरीयपादेऽपि मकारभकारयुक्तवर्णपिण्डस्य सत्त्वाच्छेकवृत्त्यनुप्रासाभ्यां सङ्करः समुन्नेयः ।

( ८४ ) आपातत उक्तोदाहरण एवानुप्रासार्थापत्त्यलङ्कारयोरेकाश्रयानुप्रवेशं दर्श-यति—एवञ्चेति । अपि चेत्यर्थः । अनुप्रास उक्तविधछेकानुप्रासवृत्त्यनुप्रासात्मकः, अर्था-पत्तिश्च पूर्णदृष्ट्याऽवलोकने का कथा कटाक्षेणापि, अधिकावलोकने का कथा ईषदपि, अधिकसमयं यावदवलोकने का कथा क्षणमपि" इत्येवं त्रिस्वरूपात्मिका तथा च कटा-क्षपातादिनापि सान्द्रानन्दस्फुरणात् दण्डापूपिकया सिद्धे स्तनपरिरम्भेऽनिर्वचनीया-नन्द इत्येवंरूपा वा तयोः एकाश्रयेऽनुप्रवेश इति पूर्वेणान्वयः ।

( ८५ ) एकपदरूपैकाश्रये विभिन्नविविधालङ्कारास्यानुप्रवेशमुपपादयितुमाह— यथा वेति ।

( ८६ ) संसारेति । संसार एव ध्वान्तं तमस्तस्य विध्वंसे विनाशे हंसः सूर्यः । अत्र कंसनिषूदने हंसत्वेन रूपणाद्रूपकम्, केवलं निरङ्गरूपकम्, धकारोत्तरधकारघटि-

( ८७ ) यथा वा—

( ८८ ) 'कुरवकारवकारणतां ययुः' इत्यत्र रवका रवका इत्येकं वकार-वकार इत्येकमिति यमकयोः।

( ८९ ) यथा वा—

( ९० ) 'अहिणअपओअरसिएसु पहिअसामाइएसु दिअहेसु।
रहसपसारिअगीआणं णच्चिअं मोरविन्दाणम्॥'

( ९१ ) अत्र 'पहिअसामाइएसु' इत्येकाश्रये पथिकश्यामायितेत्युपमा। पथिक-सामाजिकेष्विति रूपकं प्रविष्टमिति।

---

तवर्णसाम्येन छेकानुप्रासश्च तयोः, एकाश्रयेऽनुप्रवेश इति पूर्वेणान्वयः अत्रानुप्रासस्य शाब्दत्वं रूपकस्य चार्थत्वमित्युभयालङ्कारः, इत्यत्र एवंविधेन सङ्करेणापि सह "पायाद्-पायात्" इत्यत्र विद्यमानस्य यमकस्य संसृष्टिरिति ध्येयम्।

( ८७ ) एकपादरूपैकाश्रये समानानेकालङ्कारानुप्रवेशं दर्शयितुमाह—यथा वेति।

( ८८ ) कुरवकेति। अस्य पादत्रयम्—

"विरचिता मधुनोपवनश्रियामभिनवा इव पत्रविशेषकाः।
मधुलिहां मधुदानविशारदा………

रघुवंशस्य पद्यमिदम्। मधुना वसन्तकालेन विरचिताः जनिताः, उपवनश्रियाम् उद्यानश्रीणाम्, पत्रविशेषकाः पत्रावलीतिलक इव मधुदाने पुष्परसदाने विशारदाः कुशलाः, कुरवका रक्तवर्णाः कुसुमविशेषाः "तत्र शोणे कुरवक" इत्यमरः, मधुलिहां भ्रमराणाम् रवकारणतां ध्वनिपरत्वहेतुतां ययुः प्रापुः, इत्येकं "यमक" मिति शेषः। एवमुत्तरत्रापि। यमकयोरेकाश्रये अनुप्रवेश इति पूर्वेण सम्बन्धः। नचात्र पूर्वयमकेनो-त्तरयमकनिर्वाहादङ्गाङ्गिभावसङ्करोऽपीति वाच्यम्, "कारणता" मित्येतदीयरेफपर्यन्त-स्योत्तरयमकस्य पूर्वयमकेनापि निर्वाह्यत्वात्। एवं "कलकलोलकलोलदृशे" त्यत्रापि लकलोलकलोलकलोलकलोल इतियमकद्वयमनुसन्धेयमिति विज्ञप्रियादयः।

( ८९ ) एकपदरूपकाश्रये विविधार्थालङ्कारानुप्रवेशमुदाहर्तुमाह पुनः—यथा वेति।

( ९० ) अहिणअ इति। अस्य श्लोकस्य संस्कृतानुवादो द्विविधो भवितुमर्हतीति तत्र प्रथमः—अभिनवपयोदरसितेषु पथिकसामाजिकेषु दिवसेषु।

महति प्रसारितगीतानर्त्तितकं मयूरवृन्दानाम्। इति संस्कृतम्।

द्वितीयस्तु—अभिनवपयोदरसितेषु पथिकश्यामायितेषु दिवसेषु।

महतिप्रसारितग्रीवाणां नृत्तंमयूरवृन्दानाम् इति। (गाथासप्तशतीस्थपद्यमिदम्।)

अभिनवा नूतना ये पयोदा मेघाः तेषां रसितानि गर्जितानि येषु तेषु, पथिकाः प्रोषित-वासिनः कान्तावियोगिन इत्यर्थः, श्यामायिता श्यामावदाचरितवन्तः येषु तेषु यद्वा पथिकसामाजिकेषु इति पाठे पथिका एव सामाजिका नृत्योत्सवादिद्रष्टारो येषु तेषु, आहिताग्न्यादित्वात्परनिपातः दिवसेषु वर्षाकालीनाहःसु, प्रसारिता विस्तारिता ग्रीवा यैः तेषां मयूरवृन्दानां शिखिसमूहानाम्, नृत्यं ( कर्त्तृ ) महति उत्सव इव आचरति। गाथाछन्दः।

( ९१ ) उदाहरणं सङ्गमयति—अत्रेति। उपमा व्यक्तगतेत्यर्थः। रूपकं च निरङ्ग-केवलरूपम्।

(९२) श्रीचन्द्रशेखरमहाकविचन्द्रसूनु-
श्रीविश्वनाथकविराजकृतं प्रबन्धम् ।
साहित्यदर्पणममुं सुधियो विलोक्य
साहित्यतत्त्वमखिलं सुखमेव वित्त ॥ ९९ ॥

(९३) यावत्प्रसन्नेन्दुनिभानना श्रीर्नारायणस्याङ्कमलङ्करोति ।
तावन्मनः संमदयन्कवीनामेष प्रबन्धः प्रथितोऽस्तु लोके ॥ १०० ॥

इत्यालङ्कारिकचक्रवर्तिसांधिविग्रहिकमहापात्रश्रीविश्वनाथकविराजकृते
साहित्यदर्पणे दशमः परिच्छेदः ।

---

(९२) एवं सोपष्टम्भं ग्रन्थं समाप्य सम्प्रति स्वं परिचाययन् ग्रन्थसमाप्तिं द्योतयितुमाह—श्रीचन्द्रशेखरेति । हे सुधियः विद्वांसः ! सदसद्विवेचनद्वारा तत्त्वमात्रबुभुत्सव इति तात्पर्यम् । यूयम् , श्रीचन्द्रशेखर एतन्नामक एव महाकविषु नक्षत्रगणेष्विव चन्द्रः तस्य महाकविषु सर्वोत्तमस्य श्रीचन्द्रशेखरस्येत्यर्थः सूनुः आत्मजः 'आत्मजस्तनयः सूनुः इत्यमरः, यः श्रीविश्वनाथ एतत्संज्ञकः कविराजः कविश्रेष्ठ इत्यर्थः तेन कृतं निर्मितं साहित्यदर्पणं नाम अमुं प्रबन्धं ग्रन्थम् , विलोक्य आरब्धान्तं पर्यालोच्य सुखमेव अतिस्फुटत्वादक्लेशमेव यथा स्यात्तथा, अखिलम् अङ्गोपाङ्गसहितं साहित्यस्य अलङ्कारशास्त्रस्य तत्त्वं स्वरूपं बोद्धव्यविषयमित्यर्थः, वित्त जानीत, तत्त्वत एतद्ग्रन्थसमालोचनानन्तरं काव्यगतबोद्धव्यविषयाणां सर्वेषामेवानायासेन ज्ञानान्न तत्रान्यग्रन्थापेक्षेति भावः । वसन्ततिलकाच्छन्दः

(९३) ग्रन्थान्ते परमेश्वरं संस्मरन् तत्सन्निधावेव स्वरचितप्रबन्धस्य चिरस्थायितां याचते—यावदिति। प्रसन्नेन्दुनिभं स्वच्छचन्द्रसदृशम् आननं मुखं यस्याः तथोक्ता श्रीर्लक्ष्मीः यावत् नारायणस्य परमेश्वरस्य अङ्कं वक्षःस्थलम् अलङ्करोति भूषयति स्वस्थित्या शोभां जनयतीत्यर्थः तावत् तत्समयमेव एष साहित्यदर्पणनामा प्रबन्धः ग्रन्थः लोके जगति, कवीनां सुधीनां मनः सम्मदयन् ज्ञातव्यविषयबोधनेन प्रमोदं नयन् प्रथितः प्रसिद्धः अस्तु भवतु । इन्द्रवज्राच्छन्दः । (क) इदञ्च ग्रन्थान्ते मङ्गलम् ।

इति वत्सकुलावतंस–वैयाकरणकेसरि—श्रीबदरीनाथशर्मात्मज–दैवज्ञशिरोमणि–
श्रीलोकनाथात्मज–साहित्यव्याकरणाचार्य–ठक्कुरोपनामक–श्रीकृष्ण-
मोहनशास्त्रिविरचितायां "लक्ष्मी" नामिकायां
साहित्यदर्पणटीकायां दशमः परिच्छेदः ।

---

(क) ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमाचरणीयमिति भूवादिसूत्रस्थभाष्येणावगम्यते । तच्चात्र वस्तुनिर्देशात्मकं बोध्यम् ।

इति श्रीकृष्णमोहनशास्त्रिनिर्मितायां 'लक्ष्मी' टिपण्यां दशमः परिच्छेदः । २.....

# परिचयः

बभूव सत्कश्यपवंशमध्ये द्विजो महात्मा महनीयकीर्त्तिः ।
गोविन्दनामाखिलशास्त्रदक्षो विपन्नपक्षाहितदः शरण्यः ॥
बभूवुरस्याथ सुता मनोज्ञास्त्रयो जगद्गीतगुणा वरेण्याः ।
ज्येष्ठः क्रियावान् कुशलोऽतिमानी यो लालजीति प्रथितः समाजे ॥
ततः परः पञ्चमणीति नामा ततः परो गृह्मणिनामधेयः ।
'लक्ष्मी' मदीया खलु सर्वमान्या तस्यात्मजा मां सुषुवे मनोज्ञा ॥
विद्वद्वरः श्रीहरिनन्दनो हि मे मातुलः पञ्चमणेः सुतोऽस्ति ।
तदात्मजो मान्यवरश्च श्रीयुतो नाम्ना 'गुणानन्द' इति प्रसिद्धः ॥
तयोः समासाद्य दयामसीमां चिन्तां परित्यज्य गृहादिकार्ये ।
सदा सदाचारसुशिक्षयन्तो गेनादिलाला गुरवो मदीयाः ॥
शिष्योपशिष्यैरुपगीयमानाः श्रिया युताः सम्प्रवदन्ति शास्त्रम् ।
ततः समासादितसत्त्वबुद्ध्याऽज्ञानान्धचित्तोऽपि प्रकाशमेत्य ॥
शश्वच्च ताराचरणप्रसादादज्ञानराशिं व्यपनुद्य साम्प्रतम् ।
प्राचीनग्रन्थानथ नव्यग्रन्थान् स्वकीयबुद्ध्याऽखिलबालहेतवे ॥
सर्वान् समालोच्य ततस्तु सारं संगृह्य टीकां विरचय्य लक्ष्मीम् ।
काश्यां च विश्वेशपदाब्जसन्निधावस्याश्च पूर्तिं खलु याचमानः ॥
श्रीवैक्रमे बाणवियन्नभद्रिकाश्विनेऽसिताऽङ्के च तिथावपूरयम् ।
'लक्ष्मी' रियं संविदधातु नित्यं लक्ष्मीरिवार्थे खलु भावुकानाम् ॥
मद्ग्रन्थमध्ये बहवो हि दोषा नूनं भविष्यन्ति तथापि मान्याः ! ।
किं केतकीं कण्टकसंयुतामपि लोका न गृह्णन्ति वदन्तु सन्तः ॥

मिथिलामण्डलमण्डनविविधविद्वन्मण्डलमण्डित द्वारवङ्ग ( दरभङ्गा ) मण्डलान्तर्गत 'बसैठ, चानपुरा' ग्रामनिवासिवत्सकुलावतंस–वैयाकरणकेसरि–बद्रीनाथशर्मात्मज, [ सम्प्रति ] मुद्गलपुर ( मुङ्गेर ) मण्डलान्तर्गत 'बरौनी' ग्रामनिवासिश्रीलोकनाथात्मज–साहित्य व्याकरणाचार्य–मीमांसाशास्त्रि–ठक्कुरोपनामकश्री कृष्णमोहनशास्त्रिविरचिता 'लक्ष्मी' नामिका साहित्यदर्पणटीका समाप्ता ।

समाप्तश्चायं ग्रन्थः ।

१४६। सा०

## टीकाकर्त्तृवंशपरिचयः

भवानन्द ठक्कुरः

रघुनाथ ठक्कुरः

| | |
|---|---|
| महामहोपाध्याय मेहरवान ठक्कुरः | महामहोपाध्याय तेजनाथ ठक्कुरः |

व्याकरणनि० बाबूराम ठक्कुरः

हर्षदत्त ठक्कुरः, धरभरण ठक्कुरः, वेणीदत्त ठक्कुरः

नैयायिकप्रवर-भाइनाथ ठक्कुरः, वै०के०बद्रीनाथ ठक्कुरः, बबुए ठक्कुरः, ठीठर ठक्कुरः

श्रीलोकनाथ ठक्कुरः ज्यो. ती. श्री योगनाथ ठक्कुरः का. ती. श्री चेतनाथ ठक्कुरः श्रीशोभनाथ ठक्कुरः, श्रीश्यामसुन्दरठक्कुरः व्या. का. ती

श्रीकृष्णमोहन, ठक्कुरः, श्रीकमलाकान्तठक्कुरः, श्रीसर्वजित ठक्कुरः, श्रीजगदीश ठक्कुर व्या. सा. आ. मी. शा.